॥ श्री स्वामिनारायणो विजयतेतराम् ॥

संवत् २०४८

तारीख : ७–५–१९९२








श्री शतानन्द मुनि विरचित –

# श्री हरिवाक्यसुधासिन्धुप्रारम्भः

: प्रकाशक :

श्री महंत पुराणी स्वामी हरिस्वरूपदासजी

वैशाख सुद ५

गुरुवार

श्री स्वामिनारायण मंदिर, स्वामिनारायण रोड, भुज–कच्छ ३७०००१

अ. नि. स. गु. स्वामी हरिकृष्णदासजीना स्मरणार्थें गाम माधापुरना मावजी शीवजी भुडीया तथा तेमना सर्वे कुटुम्बीजनोए आ ग्रन्थ छपाववामां संपूर्णपणे मदद करेल छे, तो श्रीजी महाराज तेओने उत्तरोत्तर चडती राखी धर्मपरायणमां कायम वृत्ति राखे. અક્ષર નિવાસી ભુડીઆ કરસનભાઇ કલ્યાણની શુભ પ્રેરણાથી

॥ श्री स्वामिनारायणो विजयतेतराम् ॥

# श्री हरिवाक्यसुधासिन्धौ उपोद्घातसहितं
# श्री दुर्गपुर – प्रथम प्रकरणम्

॥ श्री स्वामिनारायणो विजयतेतराम् ॥



श्री शतानन्दमुनि विरचितः

# श्री हरिवाक्यसुधासिन्धुः

श्रीनगरनिवासिनां श्री नरनारायणदेव पीठाधिपानां सनातनधर्ममार्तण्डानां धर्मधुरन्धराचार्य श्री तेजेन्द्रप्रसादमहाराजानामाज्ञया महंत पुराणी स्वामिहरिस्वरूपदासेन श्री नरनारायणदेव प्रिन्टिङ्ग मुद्रणालये मुद्राप्य प्राकाश्यं नीतः ।

पुराणी स्वामिपतितपावनदासेन संशोधितः ।

## निवेदनम्

सर्वाविर्भावहेतुः परमखनिलयो योऽवतीर्येह लोके संसार व्यालदंशप्रसरदुरुविषादग्रवेगापहर्ता । धर्मात्मज्ञानभक्तिप्रकटपरतरस्वस्वरूपोपदेशं प्रादाद्वाक्यामृतं स्वं स जयति भगवान् स्वामिनारायणोऽयम् ॥ १ ॥ सुखयामास यः स्वीयान् स्वकीयवचनामृतैः । कृपया श्रीहरिर्मेऽस्तु सुखदायी सदैव सः ॥ २ ॥ अयं हरिवाक्य-सुधासिन्धुग्रन्थे निश्चयपूर्वकममृतमेवास्ति अतः पिपासितेभ्यो दैवजीवेभ्यः 'तमेवं विद्वानमृत इह भवति' 'य एतं विदुरमृतास्ते भवन्ति' 'रसं ह्येवायं लब्ध्वाऽऽनन्दी

भवति' 'अमृतत्वाय कल्पते' इत्यादिषु श्रुति स्मृतिषु वर्णितोऽजरामररूपो निरतिशयब्रह्मानन्दश्च परब्रह्मपरमात्मा, अलौकिकमनुत्तममनुपममभृतमनायासेनार्पितवानस्ति । इदं पीयूषं नान्येन केनचित् किन्तु 'अजरोऽमरः' 'विजरो विमृत्युः' 'अजरोऽमरोऽभयः' 'रसो वै सः' 'सर्वगन्धः सर्वरसः' 'आनन्दो ब्रह्म' अन्तर्याम्यमृतः' 'अमृतस्यैष सेतुः' इत्यादिश्रुतिषु नित्याजरामरमूर्त्तिरूपेण निरवधिकातिशयानन्दमूर्त्तित्वेन निरूपितेन परब्रह्मपरमात्मना सर्वावतारिपुरुषोत्तमेन भगवता श्रीस्वामिनारायणेन निजमुखारविन्दाद् वेदामृतवद्गीतामृतवद् दोहनं कृतमलौकिकमस्ति । धर्मज्ञानेन वैराग्येण च साधनीयाया भक्त्याः विषयीभूतं प्रत्यक्षस्वस्वरूपोपदेशरूपमिदममृतं क्षीरसागरादुन्मथितामृतवद् सर्व-वेदादि सच्छास्त्ररूपागाधदुग्धार्णवमध्यभागाद् नवनीतवदुद्धृतमस्ति । यथा देवाधिदेवो भगवान् विष्णुरसुरानुच्छिद्याजरामरत्व प्राप्त्यर्थं पात्रीभूतानमरान् पीयूषमपाययत् तथा परमकृपालुः श्रीहरिरासुरीं सम्पत्तिमनायासेनोच्छिद्य संसाराशीविषस्य करालं विषं निवार्य भक्तानजरामरान् विधातुं पात्रीभूतान् दैवीं सम्पत्तिं दधानान् मुक्तानन्दादीन् निजाश्रितजनानेतदमृतपानं कारितवान् । यस्यास्वादं स्वमासाद्यानेके मुमुक्षवो जीवाः, अजरामरा भूत्वाऽऽनन्दमयस्य परमात्मनः श्रीहरेः परमानन्दमन्वभवंश्चानुभवन्ति चानुभ-विष्यन्ति च । ईदृशं पदे पदे स्वादुतममलौकिकममृतपानं कृत्वा को रसिको जनस्तृप्तिं समाप्नुयात् 'भूयः कथय तृप्तिर्हि शृण्वतो नास्ति मेऽमृतम्' इति कोऽपि नैव तृप्तिं प्राप्नुयात् । अतोऽस्य प्रबन्धस्य यद् हरिवाक्यसुधासिन्धुरिति नामधेयं विहितं तद् यथार्थमस्ति । अस्यानुत्तमस्यामृतस्य, अस्मिन्नेव प्रबन्धे श्रीशतानन्दमुनिना, 'ग्रन्थोऽयं सकलार्थसाधनकरो दुस्तर्कमूलापहृत् भक्तिज्ञानविरागधर्मभगवन्माहात्म्यरत्नाकरः । अत्र श्रीहरिणाऽऽत्मनो ह्यनुभवः सच्छास्त्रसम्मानितः प्रोक्तोऽस्तीति भजन्निमं प्रतिदिनं स्या-त्पूर्णकामो नरः' । इति विहिता भूरि प्रशंसा सकारणं यथोचितं च । तस्य टीकाकारेण श्रीरघुवीराचार्येणापि 'हरिवाक्यसुधासिन्धुः सर्वग्रन्थशिरोमणिः । विराजतेऽयं सकलसच्छास्त्रोपरि सर्वथा । सच्छास्त्राणां यथा वेदः प्रमाणमधिकं तथा । ग्रन्थोऽयं सर्वथैवास्ति हरेरास्योद्भवत्वतः ।' इति भूरि भूरि प्रशंसा कृता । अस्य प्रब-न्धस्य मुद्रणं साधीय इति विचारयन्नहं विद्वद्भिः सद्गुरुभिश्चानुमोदितस्तदानीमेव, अस्य प्रबन्धस्य मुद्रापणे धर्मधुरन्धराचार्यपाद श्रीमत् तेजेन्द्रप्रसादमहाराजानामाज्ञाम-लभे । अनन्तरमेवैतन्मुद्रापणं प्रशस्ततरे भुजमन्दिरस्थनरनारायणदेवप्रिन्टिङ्ग मुद्रणालये विहितम् । कृतेऽपि संशोधने प्रमादादि प्रसक्ता अत्रत्या अशुद्धयः क्षमया विशोध्या इति चाभ्यर्थये विद्वद्वरान् । हरिवाक्यसुधासिन्धुग्रन्थरत्नं चेदं प्रदीपोज्ज्वलं चिरं विज्ञानालोकं प्रसारयतु मुमुक्षुलोकेष्विति चाऽऽशासेतराम् । इति शुभमस्तु सर्वेभ्यः ।

ली. पुराणी पतितपावनदासः । कच्छ–भुज स्वामिनारायण मन्दिरम् ॥

## ॥ श्री स्वामिनारायणाय नमः ॥ श्री गणेशाय नमः ॥

॥ श्री सहजानन्दस्वामिने नमो नमः ॥ श्रीहरि सकलसिद्धिदायकं मङ्गलैकनिलयं सतां पतिम् ॥ कायवाग्घृदयकैरहं सदा त्वां नमामि पितरं दयाम्बुद्धिम् ॥ १ ॥ हे स्वामिन्पुरुषोत्तमाद्य ! सकलैश्वर्याभिजुष्ट ! प्रभो ! सर्वाधीश्वरसेव्यपादकमल ! श्रीब्रह्मधामाधिप ! । हे नारायण भक्तिधर्मसुत हे श्रीकृष्ण हे श्रीहरे मह्यं देहि भवत्पदाब्जयुगले भक्तिं सदैकान्तिकीम् ॥ २ ॥ प्रीतये रचये टीकां तव च त्वत्सतां मुदा । हरिवाक्यसुधासिन्धोः सेतुमालाभिधामहम् ॥ ३ ॥ पुत्रस्य भवदीयस्य रघुवीराभिधस्य मे । मनोरथोऽयं सफलः क्रियतां कृपया हरे ॥ ४ ॥ अथात्र भवान् शतानन्दमुनिः करिष्यमाण प्रबन्ध पठन पाठनादिद्वाराऽनेकजीवानां संसृतिबन्धनिवृत्तिं दिव्यदृशा पर्यालोचयन् दुर्गपुरादिषु स्वभक्तसभासु श्रीहरिकथिता मुक्तानन्दादिमुनिभिः । श्रुत्वा यथामतिलिखिता वार्त्तासुधाः समीक्ष्य तासां पद्यबन्धग्रन्थविरचनाय स्वयं भगवता श्रीहरिणा स्वस्मै कृतामाज्ञां च संस्मृत्य तासां श्रीहरिवाक्यसुधासिन्धुनामकं ग्रन्थं विरचयंस्तत्रोपोद्घातमुखेन श्रीसत्सङ्गिजीवनग्रन्थोक्तानि श्रीहरेः सङ्क्षेपतो जन्मादिचरित्राणि तत्रानुक्ताः श्रीहरेः सचिह्नस्वाभाविकचेष्टाश्च कथयिष्यन्नादौ प्रारिप्सितग्रन्थस्य निर्विघ्नपरिसमाप्त्यर्थं । शिष्टाचारपरिप्राप्तं स्वकीयेष्टदेववस्तुनिर्देशात्मकं मङ्गलमाचरति श्लोकत्रयेण । श्रीहरिरिति । धर्मनन्दनो धर्मापरपर्यायहरिप्रसादविप्रसुतः । यद्वा । प्रादुर्भूयाधर्मोच्छेदपूर्वकं पोषणविधानेन धर्मस्य नन्दन आनन्दोत्पादकः । सर्वेषां जीवानां हितायात्यन्ति-

**श्रीहरिर्जयति धर्मनन्दनः सर्वजीवहितमानुषाकृतिः । भक्तिपोषक उदारविक्रमो ब्रह्मधामपतिः पूरुषोत्तमः ॥ १ ॥**

कनिःश्रेयसरूपं हितं कर्त्तुं मानुषस्य नरस्येवाकृति र्मूर्ति र्यस्य सः । भक्तिपोषकः स्वकीयैकान्तिकभक्तिपोषणकर्त्ता । यद्वा । भक्तिं स्वमातरं पोषयति स्वबालक्रीडाप्रदर्शनेनात्यानन्दपुष्टां करोतीति । स्वजनन्यै अत्यानन्दप्रद इत्यर्थः । यद्वा । भक्तिं स्वमातरं पुष्णाति स्वस्वरूपज्ञानोपदेशेनालौकिकानन्दपुष्टां करोतीति । स्वमात्रे हरिगीतोपदेशपूर्वकं स्वस्वरूपज्ञानप्रदानेनानन्दजनक इत्यर्थः । उदारोऽतिमहान् विक्रमः साधनसम्पत्तिनिरपेक्षं यादृशतादृशजनस्यापि महासमाधिविधापनरूपः पराक्रमो यस्य सः । यद्वा । उदारोऽतिमहान्विक्रमोऽसुरांशगुरुभूपपराभवविधानरूपः पराक्रमो यस्य सः । यद्वा । उदारेषु दातृजनेषु विक्रमोऽतिदानशूरत्वरूपः पराक्रमो यस्य सः । यद्दानवीरतामवलोक्यान्ये दातारो जनाः सशिरः कम्पयद्दानातिशयतां प्रशंसन्ति तथाविध इत्यर्थः । यद्वा । उदारा ध्यानवतां स्वस्मृतिप्रदानदक्षिणा विक्रमाः पादसंचारा यस्य सः । 'उदारो दातृमहतोर्दक्षिणेऽप्यभिधेयवदि'ति मेदिनी । ब्रह्मधाम्नोऽक्षरपदपर्याय ब्रह्मपुरस्य पतिः स्वामी । पूरुषेषु क्षराक्षरपुरुषेषूत्तमः स्वरूप—स्वभाव—गुण—विभूत्यादिभिरत्युत्कृष्ट उत्तमपुरुषः स चासौ स च । 'स्वधामनि ब्रह्मणि रंस्यते नम' इति श्रीभागवते । 'उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृत' इति भगवद्गीतायां चोक्तेः । श्रीहरिः स्वाश्रितजनानां स्वधामन्यलौकिकवैभवैश्वर्यप्रदः श्रीहरिकृष्णो भगवान् । जयति स्वस्य तिरोधानलीलाचरणसत्त्वेऽपि यथापूर्वं स्वप्रवर्तितभागवतधर्मेषु स्वभक्तजनरक्षणेन स्वभक्तानां नानापद्भ्यो रक्षणविधानादिना च सर्वोत्कर्षेण वर्तते ( रथो. वृत्तम् ) ॥ १ ॥

॥ १ ॥

गोलोकेति । निर्गतोऽतिशयो यस्याः सा चासौ दया निष्कारणकरूणा तया पूर्णः सम्भृतस्तम् । पाथसां सागर इव निरवधिकातिशयदयायाः समुद्रो यस्तमित्यर्थः । 'आनन्द एकैकस्माच्छतशतगुणतया सैषाऽऽनन्दस्य मीमांसा' । इत्यादिश्रुतिषु निरतिशयदशाशिरस्कोऽभ्यस्यमानः परमानन्दो मूर्त्तौ यस्य तम् । यद्वा । आनन्दं करोतीत्यानन्दयति आनन्दयतीत्यानन्दा स्वेक्षकजनाऽत्यानन्दकर्त्री मूर्त्तिर्यस्य तम् । यां वीक्ष्य जना आनन्दसन्दोहमग्ना भवन्ति तथाविधरमणीयमूर्त्तिमित्यर्थः । अत एव भूतले भारतभूतले भारतभूभागे । असुरगुरुभिरसुरांशसम्भूतदेशिकैर्विहतं विनाशितम् । सन् हिंसादिदोषवर्जितत्वादभ्यर्हितो यो धर्म एकान्तिकधर्मस्तस्य वर्त्म मार्गस्तत् । पातुं तद्द्रोग्धृनसुरगुरून् पराभाव्य पोषणपूर्वं रक्षितुम् । गोलोकब्रह्मधाम्नो गोलोकमध्यवर्त्त्यक्षरपत्सकाशात् कोसलेषु कोशलदेशवर्त्तिछुप्पयाऽभिधग्रामे इत्यर्थः । धर्मात् धर्मापरसंज्ञहरिप्रसादविप्रात् भक्तौ भक्त्यपरपर्यायप्रेमवतीसंज्ञायां तत्पत्न्याम् । नृमूर्त्त्या मनुष्याकारेण । समुदितमाविर्भूतम् अखिलानां सकलानां प्राणिनां स्वाश्रितजीवानां संसारं जन्ममरणप्रवाहं हरतीति तं तथाभूतम् । कलिमलान् स्वाश्रितजीवानां कामक्रोधादिकलिकल्मषाणि हरतीति तम् । स्वामिनारायण इत्याख्या नाम यस्य तम् कृष्णं श्रीहरि-

गोलोकब्रह्मधाम्नो निरतिशयदयापूर्णमानन्दमूर्तिं पातुं सद्धर्मवर्त्माऽसुरगुरुविहतं भूतले कोसलेषु । भक्तौ धर्मान्नृमूर्त्या
समुदितमखिलप्राणिसंसारहारं कृष्णं ध्यायामि चित्ते कलिमलहरणं स्वामिनारायणाख्यम् ॥ २ ॥ स जयति
सहजानन्दस्वामी सत्यो जगद्गुरुः श्रीमान् । यत्पादाश्रयमात्रात्त्रुट्यति संसारबन्धनं सद्यः ॥ ३ ॥ निजाश्रितानां
कृपया स पुंसामुन्मूलयन्संशयजालमीशः । जगाद भूयांस्यनुभूतियुञ्जि साङ्गस्वभक्त्याढ्यवचोऽमृतानि ॥ ४ ॥

कृष्णभगवन्तम् । चित्ते मानसे । ध्यायामि सर्वदा चिन्तयामि (स्रग्धरा) ॥ २ ॥ स इति । यत्पादाश्रयमात्राद्यदीयश्रणकमलसंश्रयमात्रत एव । संसारबन्धनमनादि दुर्जरसंसृतिपाशावृत्तिः सद्यस्तत्क्षणमेव । त्रुट्यति विछिन्नं भवति । सत्यः 'सत्यस्य सत्य'मिति श्रुतेः परमार्थसत्यस्वरूपः । जगद्गुरुर्जगतामेक एव परमनिःश्रेयसप्राप्त्युपायरूपहितोपदेष्टा । यद्वा । मोक्षमार्गरिपुकामक्रोधादित्याजनपूर्वकपरमनिःश्रेयसप्राप्त्युपायस्य यथार्थमुपदेशशीलत्वात्सत्यः परमार्थो जगद्गुरुः । श्रीमान् स्वाश्रयमात्रेण स्वाश्रितानां कालमायाबन्धनविनाशनशोभायुक्तः । स इत्थं भूतगुणः । सहजः स्वभावसिद्धआनन्दो यस्य सः स्वं कालमायाक्षरब्रह्मादीनां नियमनलक्षणैश्वर्यमस्यास्तीति स चासौ स च एवमन्वर्थसंज्ञः श्रीहरिकृष्णो भगवान् । जयति स्वाश्रितजनानामन्तः शत्रूनभिभावयन्सर्वोत्कर्षेण वर्त्तते ॥ ३ ॥ अथैतद्ग्रन्थविरचननिदानमाह त्रिभिः । निजेति । ईशः कालमायादिसर्वनियन्ता । स श्रीहरिः । निजाश्रितानां कृतस्वकीयैकाश्रयाणाम् । पुंसां जनानाम् । संशयजालं जीवेश-माया-ब्रह्म-परब्रह्मणां स्वधर्म-वैराग्य भक्त्यादीनां च स्वरूपज्ञानगतानेकसंशयसमूहम् । कृपया । उन्मूलयन्मूलादुत्पाटयितुमित्यर्थः । अनुभूतियुञ्जि स्वकीयानुभवयुक्तानि । भूयांसि बहूनि । साङ्गा स्वधर्मजीवादिस्वरूपज्ञानवैराग्यरूपाङ्गसहिता या स्वभक्तिः स्वस्यैकान्तिकभक्तिस्तया आढयानि सम्पन्नानि यानि वचोऽमृतानि वार्त्तासुधास्तानि । जगाद दुर्गपुरादिषु स्वभक्तजनसंसत्सु निजाश्रितान्प्रति कथयामास । (उपजाति) ॥ ४ ॥

शतेति । तेषां वचोमृतानां मध्ये । द्विषष्ट्या । अधिकम् । शतद्वयम् । मुक्तानन्दादिभिः । सद्भिः साधुभिः आदिशब्दाद्गोपालानन्दनित्यानन्दब्रह्मानन्दशुकानन्दमुनीनां ग्रहणमेतद्ग्रन्थान्ते तथैव वक्ष्यमाणत्वात् । यथाश्रुतं श्रीहर्युक्तवचनश्रवणमनतिक्रम्य । यथामनीषं यथास्वमति । साधु सम्यग्यथातथा । सर्वहिताय । स्पष्टैः । वर्णैरक्षरैः । अलेखि लिखितमभूत् ॥ ५ ॥ तावन्तीति । शतानन्दमुनिः । अहम् । तावन्ति द्विषष्ट्याधिकशतद्वयपरिमितानि । वागमृतानि वचनामृतानि । प्रभोः कालमायाक्षरादिनियमसमर्थस्य । तस्य श्रीहरेः । निदेशेन प्राक्कृतैतद्ग्रन्थविरचनाज्ञया हेतुना । तदीयतुष्ट्यै श्रीहर्याश्रितसकलसद्भक्तजनप्रीत्यै । सुसौष्ठवं शोभनशब्दसामर्थ्यं चौदार्यमर्थसंपत्तिश्च तन्मयैः प्रचुरसुसौष्ठवौदार्ययुक्तैरित्यर्थः । सुपद्यैः प्रायोऽनुष्टुब्वृत्तैः सुश्लोकैः । स्फुटं स्पष्टं यथातथा । दृभामि हरिवाक्यसुधासिन्धुग्रन्थरूपेण ग्रथ्नामि ॥ ६ ॥ इत आरभ्य प्रथमतरङ्गारम्भात्प्रागुपोद्घातमाह । अस्तीति । सर्वलोकविभूषणे महावैकुण्ठ वैकुण्ठाव्याकृतादि सकललोकानामाभरणरूपे । श्रीमति निरवधिकातिशयशोभायुक्ते । गोलोके महामायान्धतमसपरतरचिदम्बरान्तःस्थगोलोकाख्यपदे विषये । नित्याविर्भूतं सर्वदैव ध्रुवतया वर्त्तमानम् । अमलं मायाकार्यरूपदोषवर्जितम् । अत एव । उत्तमोत्तमं सर्वोत्कृष्टेभ्यो गोलोकादिधामभ्योऽप्यत्युत्कृष्टम् । कार्ष्णं कृष्णापराख्य श्रीहरिकृष्णभगवत्सम्बन्धि । धाम पदम् । अस्ति विद्यते ॥ ७ ॥ एतद्विशिनष्टि त्रिभिः । अप्र-

शतद्वयं सर्वहिताय वर्णैः स्पष्टैस्तु तेषामधिकं द्विषष्ट्या । यथाश्रुतं सद्भिरलेखि मुक्तानन्दादिभिः साधु यथामनीषम् ॥ ५ ॥
तावन्त्यहं वागमृतानि तस्य प्रभोर्निदेशेन तदीयतुष्ट्यै । सुसौष्ठवौदार्यमयैः सुपद्यैः स्फुटं शतानन्दमुनिर्दृभामि ॥ ६ ॥
अस्ति श्रीमति गोलोके सर्वलोकविभूषणे । नित्याविर्भूतममलं कार्ष्णं धामोत्तमोत्तमम् ॥ ७ ॥ अप्रमेयमनाद्यन्तं निर्गुणं
नित्यमद्वयम् । अखण्डं सच्चिदानन्दरूपं मायाऽतमः परम् ॥ ८ ॥ कोटिकोट्यर्कचन्द्राग्निप्रभाभासुरमुज्ज्वलम् । भक्तैरेका-
न्तिकैरेव प्राप्यं कृष्णप्रसादतः ॥ ९ ॥ यदुच्यते ब्रह्मपुरं ब्रह्म चामृतमक्षरम् । चिदाकाशं च परमव्योमाथ परमं पदम् ॥१०॥

मेयमिति । अप्रमेयमपरिछेद्यम् । यतः । अनाद्यन्तमाद्यन्तवर्जितम् । तत्कुतः । निर्गुणं मायाकार्यभूतसत्त्वादिगुणवर्जितम् । अत एव । नित्यं सनातनम् । अद्वयमुपमानशून्यत्वादद्वितीयम् । अखण्डं चतुर्विधलयकारणकालकृतध्वंसवर्जितम् । सच्चिदानन्दरूपं स्वरूपनिष्ठसच्चिदानन्दधर्मम् । मायातमःपरं मायामूलप्रकृतिस्तस्याः परो मायापरः स चासावतमास्तमोवर्जितत्वात्सर्वदा प्रकाशमानो गोलोकः । उत्तरपदलोपीसमासः । तस्मात्परमग्रे वर्त्तमानम् ॥ ८ ॥ कोटीति । कोटिभिर्गुणिताः कोट्यः कोटिकोटयोऽपरिमिताः ये अर्कचन्द्राग्नयः सूर्यसोमहुताशनास्तेषां प्रभावद्भासुरमतिशयेन प्रकाशमानम् । अत एव । उज्ज्वलमुत्कृष्टश्वेतदीप्तिदीप्तम् । एकान्तिकैः स्वधर्मज्ञानवैराग्यरूपमूर्धहृत्पादाङ्गत्रययुक्तसमाहात्म्यभगवद्भक्तियुक्तत्वादेकान्तिकसंज्ञैः । भक्तैश्छंदानुवृत्तितया भगवन्तं भजमानैर्भक्तजनैः । कृष्णप्रसादतः स्वेष्टदेवश्रीहरिकृष्णभगवदनुग्रहत एव । प्राप्यमुपलभ्यम् ॥ ९ ॥ यदिति । यद्धाम । ब्रह्मपुरम् । ब्रह्म । अमृतम् । अक्षरम् । चिदाकाशम् । परमव्योम । अथ च । परमंपदम् । उच्यते श्रुतिस्मृत्यादिभिः कथ्यते । तद्यथा । छान्दोग्ये 'एतत्सत्यं ब्रह्मपुरम्' 'अपहतपाप्मा ह्येष ब्रह्मलोक' इत्यादि । मुंडकोपनिषदि च । 'दिव्ये ब्रह्मपुरे ह्येष स व्योम्न्यात्मा प्रतिष्ठितः । स वै वेदैतत्परमं ब्रह्मधाम यत्र विश्वं निहितं भाति शुभ्रमित्यादि' । 'तदेतदजरममृतमि'तिश्रुतिः । 'यदक्षरं वेदविदो वदन्ती'ति भगवद्गीतायाम् । 'तदाहुरक्षरंब्रह्म सर्वकारणकारणम् ।

विष्णोर्धाम इति श्रीमद्भागवते । 'चिद्व्योमनिलय' इतिश्रीभाष्ये 'परमे व्योमन् सर्वाभूतानि' इति श्रुतिः 'तद्विष्णोः परमं पदं सदा पश्यन्ति सूरय' इति श्रुतिः ॥ १० ॥ श्रीकृष्ण इति । तत्रेत्थम्भूते स्वधामनि । स्वामी स्वं क्षराक्षरादिनियमनैश्वर्यमस्यातीति [ऐश्वर्यार्थात्स्वशब्दादामिनिच्प्रत्यये सिद्धमिदम् । तथा च सूत्रम् । स्वामिन्नैश्वर्ये इति । यद्वा । स्वामी स्वो धनेऽस्त्रियामित्यमरोक्तेः स्वं धनममति गच्छतीत्येवं शीलः स्वपूर्वागत्याद्यर्थादम् धातोस्ताच्छील्ये णिनिः] निरवधिकातिशयसम्पत्त्याढ्य इत्यर्थः । श्रीकान्तत्वादिति भावः । यद्वा । स्वामी काल मायाऽक्षरब्रह्मनित्यैश्वर्याणिमाद्यनन्तशक्तिपतिः । 'स्वामी त्वीश्वरः पतिरीशितेत्यमरः' । यद्वा । 'एक एव हरिः स्वामिशब्दवाच्योऽस्ति सर्वथा । अन्यस्तु तदुपास्त्याप्तगुणयोगात्तथोच्यत' इति बृहद्विष्णुपुराणोक्तेः । स्वयं हरिः । श्रीकृष्णः सदानन्दमयः सन् । भगवान् भगशब्दवाच्यैश्वर्यादिषड्गुणसम्पन्नः सन् । सदा । विराजते । तं विशिनष्टि सार्धद्वादशश्लोकैः । सप्रेमेति । सप्रेम निरवधिकातिशयप्रीतिसहितं यथातथा । राधालक्ष्मीभ्याम् । अर्च्यमाने पदाम्बुजे चरणकमले यस्य सः । अस्यात्र राधालक्ष्मीसाहित्यं स्कान्दश्रीवासुदेवमाहात्म्यादवगन्तव्यम् ॥ ११ ॥ अक्षरेति । अक्षरात्मा अक्षरान्तर्यामी । 'योऽक्षरमन्तरो यमयती' ति श्रुतेः । अक्षरपरः स्वरूप-स्वभाव-गुणादिभिः सर्वथाऽक्षरब्रह्मणोऽप्यत्युत्कृष्टः । 'अक्षरात्परतः पर' इति श्रुतेः । सर्वकारणकारणम् सर्वकारणानां महाप्रकृतिमहापुरुषादीनामपि कारण-

श्रीकृष्णो भगवांस्तत्र सदा स्वामी विराजते । सप्रेमराधालक्ष्मीभ्यामर्च्यमानपदाम्बुजः ॥ ११ ॥
अक्षरात्माऽक्षरपरः सर्वकारणकारणम् । कर्त्ता नियन्ता सर्वेषां स्वप्रकाशश्च सर्ववित् ॥ १२ ॥
नैकाण्डजननस्थानलयलीलश्च निर्गुणः । ब्रह्मभूतानन्तकोटिमुक्तोपास्याङ्घ्रिपङ्कजः ॥ १३ ॥
मायापुरुषकालादिस्वशक्तिप्रेरको वशी । नैकब्रह्माण्डराजाधिराजः स्वछन्दवर्त्तनः ॥ १४ ॥

भूत इत्यर्थः । सर्वेषामनन्तकोटिब्रह्माण्डानाम् । कर्त्ता मूलप्रकृत्यक्षरपुरुषद्वारोत्पादकः । नियन्ता अन्तर्यामिशक्त्या तत्तत्कर्मानुसारेण तत्तच्छरीरलोकभोगैश्वर्याणां नियामकः । स्वप्रकाशोऽन्यप्रकाशनिरपेक्षस्वतःप्रचुरप्रकाशमूर्त्तिः । सर्ववित् सदा स्वतः सर्वज्ञः । 'यः सर्वज्ञः सर्वविदि' ति । 'यो वेत्ति युगपत्सर्वं प्रत्यक्षेण सदा स्वत' इति श्रुतेः ॥ १२ ॥ नैति । नैकान्यनेकानि यान्यण्डानि ब्रह्माण्डानि तेषां जननमुत्पत्तिश्च स्थानं पालनं च लयः संहारश्च ते लीला क्रीडा यस्य सः । निर्गुणः प्राकृतगुणवर्जितः । 'योऽसौ निर्गुण इत्युक्तः शास्त्रेषु जगदीश्वरः । प्राकृतैर्हेयसंयुक्तैर्गुणैर्हीनः स उच्यते' इति पाद्मोक्तेः । ब्रह्मभूता ब्रह्मभावं प्राप्ता येऽनन्तकोटिमुक्ता अपरिमितमुक्त जनास्तैरुपास्ये सर्वदा सेवनीये अंघ्रिपङ्कजे चरणकमले यस्य सः ॥ १३ ॥ मायेति । माया मूलप्रकृतिश्च पुरुषस्तदधिभूर्महापुरुषश्च कालस्तयोर्जगत्सर्गकर्मसंयोजकोऽनेहाश्च ते आदयो यासां ता याः स्वशक्तयो राज्ञोऽमात्यादय इव स्वपरिछदरूपास्तासां प्रेरकस्तत्तत्क्रियाया नियोजकः । वशी वशंवदशौचसत्यापहतपाप्मत्वादिगुणः । नैकब्रह्माण्डराजाधिराजोऽपरिमितब्रह्माण्ड-तदन्तर्वर्त्तिनामद्वितीयभूपतिः । स्वछन्दं कर्त्तुमकर्त्तुमन्यथाकर्त्तुं समर्थतारूपं स्वेच्छानुसारिवर्त्तनं यस्य सः ॥ १४ ॥

कोटीति । कोटयः कोटिसंख्याकाः कन्दर्पाः मन्मथास्तेषामिव लावण्यं सौन्दर्यं यस्य सः । यद्वा । कोटिकन्दर्पेषु लावण्यं यस्य सः । कामोऽपि तपोभिर्यमाराध्य यतः सम्प्राप्तजगन्मोहनलावण्यो जातोऽस्तीति भावः । जलदो नवीनमेघस्तद्वच्छ्यामः स्निग्धमेचकशरीरवर्णश्चासौ सुन्दरो मनोहरः । अनर्घ्यैर्बहुमूल्यैर्दिव्यैरप्राकृतैर्विविधैर्नानाप्रकारैर्वासोभिर्वस्त्रैर्भूषणैराभरणैश्च भूषितोऽलङ्कृतः । यद्वा । अनर्घ्यदिव्यविविधवासो भूषणानि भूषितानि सम्प्राप्तशोभानि येन सः ॥ १५ ॥ रत्नेति । रत्नेन्द्रसारैर्नवविधश्रेष्ठरत्नैः खचितं यत् मुकुटं कीरीटं तत्र याः शेखरालयो मौक्तिककुसुमापीडश्रेणयस्ताभिर्विराजितः शोभितः । पूर्णः षोडशकलश्चासौ शारदचन्द्रः शरत्पूर्णिमासुधांशुस्तद्वद्यदास्यमाह्लादकरमुखं तत्र मन्दहासो मितमधुरस्मितं तेन मनोहरः स मनोहरोऽनेकजनचित्ताकर्षको यस्य स इति वा ॥ १६ ॥ सदयेति । अम्बुजपत्रे इव तरुणप्रफुल्लाम्बुजदले इव अक्षिणी नयने ते सदये निरवधिकातिशयकरुणापूर्णे यस्य सः । मकराकृतिनी अतितरुणमीनाकारे कुण्डले रत्नेन्द्रनिचितकर्णवेष्टने यस्य सः । गोप्यो गोपाङ्गनाश्च गोपा आभीराश्च तेषामानन्दकरो निःसीमसुखप्रदः । वेणुवादने वंशीरन्ध्रमुखमारुतपूरणस्वरोत्पादने तत्परः प्रसितः ॥ १७ ॥ अनेकेति । अनेककोटिनामसंख्यातानां

कोटिकन्दर्पलावण्यो जलदश्यामसुन्दरः । अनर्घ्यदिव्यविविधवासोभूषणभूषितः ॥ १५ ॥ रत्नेन्द्रसारमुकुटशेखरालिविराजितः ।
पूर्णशारदचन्द्रास्यमन्दहासमनोहरः ॥ १६ ॥ सदयाम्बुजपत्राक्षो मकराकृतिकुण्डलः । गोपीगोपानन्दकरो वेणुवादनतत्परः ॥ १७ ॥
अनेककोटिसूर्येन्दुप्रकाशातिप्रभोज्ज्वलः । चक्रादिभिर्मूर्तिमद्भिः सेवितश्च निजायुधैः ॥ १८ ॥ श्रीदामाद्यैश्चनन्दाद्यैः पार्षदप्रवरैस्तथा । अणिमादिभिरैश्वर्यैर्विद्याद्याभिश्च शक्तिभिः ॥ १९ ॥ अनन्तकल्याणगुणरत्नाब्धिर्दिव्यविग्रहः । संस्तूयमानचरितो मूर्तैश्च निगमैरपि ॥ २० ॥ व्यूहस्य वासुदेवादेः केशवादेश्च धारकः । वराहाद्यवताराणां धर्त्ता भक्तजनेष्टदः ॥ २१ ॥

सूर्येन्दुनां प्रभाकरसुधाकराणां प्रकाशेभ्यः प्रभाभ्योऽत्यतिशयिता या प्रभा प्रकाशस्तेनोज्ज्वलो दिप्यमानः । यद्वा । अनेककोटिसूर्येन्दून् प्रकाशयतीति तथाभूता याऽतिप्रभाऽतिशयितकान्तिस्तयोज्ज्वलः । 'तमेव भान्तमनुभाति सर्वमि'तिश्रुतेः । मूर्तिमद्भिः सशरीरैः । चक्रादिभिः सुदर्शनप्रभृतिभिः । निजायुधैः स्वकीयहेतिभिः । सेवितः सर्वदा कृताङ्गसंवाहनादिपरिचर्यः ॥ १८ ॥ श्रीदामेति । श्रीदामाआद्यो मुख्यो येषां द्विभुजानां वीरभान्वादीनां तैः । नन्दआद्यः प्रधानं येषां चतुर्भुजानां सुनन्दादीनां तैश्च । पार्षदप्रवरैः परिचारकप्रवेकैः । अणिमादिभिः । ऐश्वर्यैरैश्वर्यसंज्ञाभिरष्टाभिरणिमाप्रभृतिभिः सिद्धिभिरित्यर्थः । विद्याआद्या यासां श्री, पुष्टि, गिरादीनां ताभिः । शक्तिभिश्च । मूर्तिमद्भिरिति लिङ्गविपर्ययेणाणिमादिष्वपि योजनीयम् । तथा चक्राद्यायुधवत्सेवित इत्यर्थः ॥ १९ ॥ अनन्तेति । अनन्ता अपरिमिता ये कल्याणगुणाः कारुण्यवात्सल्यौदार्यादयः कल्याणकारिणः शुभा वा गुणास्त एव रत्नानि तेषामब्धिः रत्नानां समुद्रवदाधारः । दिव्यविग्रहोऽनादिसिद्धाप्राकृताकारः सुन्दरशरीरो वा । मूर्तैः मूर्तिमद्भिः । निगमैश्चतुर्भिरपि वेदैः । संस्तूयमानानि सदा गीयमानानि चरितानि चरित्राणि यस्य सः । अपिश्चार्थे । 'कृष्णं च तत्र छन्दोभिः स्तूयमानमि'ति श्रीभागवतोक्तेः ॥ २० ॥ व्यूहस्येति । वासुदेवादेर्वासुदेवादीनां चतुर्णाम् । केशवादीनां चतुर्विंशतिसंख्याकानां च । व्यूहस्य वृन्दस्य । धारक एतद्रूपेण प्रादुर्भवन् । 'व्यूहः स्याद्बलविन्यासे निर्माणे वृन्दतर्कयोरिति'

मेदिनी । अयं व्यूहोद्भवः पञ्चरात्राज्ज्ञातव्यः । आयुधभेदेन केशवादिभेदः सिद्धार्थसंहिताया ज्ञेयः । वराहाद्यवताराणाम् । धर्ता धारकः । भक्तजनानां स्वंभजमानानां लोकानामिष्टं वाञ्छितार्थं ददातीति । स्वभक्तवाञ्छितपूरणायैतेषामवताराणां धारक इति हेतुगर्भमिदं विशेषणम् ॥ २१ ॥ वेदेति । यः । असौ स्वामी । वेदादौ श्रुति, स्मृति, पुराणेतिहासादिसद्ग्रन्थेषु । परम् । ब्रह्म । परात्परः । नारायणः । वासुदेवः । तथा । परमपूरुषः ॥ २२ ॥ परमात्मेति । परमात्मा । विष्णुः । प्रधानपुरुषेश्वरः । परमेश्वरः ईशेशः । पुरुषोत्तमश्च । इतिनामभिः । प्रोच्यते वेदाद्यभिज्ञैर्व्यासादिभिः कथ्यते । इतिद्वयोरेकान्वयः ॥ २३ ॥ भगवानिति । आत्मनां सर्वक्षेत्रज्ञानाम् । आत्मान्तर्यामी भगवान् स स्वामी । भुवि पृथिव्याम् । तत्रापि । भारते । वर्षे खण्डे । युगेयुगे अनुयुगम् । सद्धर्मरक्षायै सतां धर्मस्य च रक्षणं विधातुम् । प्रादुर्भवति । अत्र प्रमाण-वाक्यानि शिक्षापत्र्यां 'धर्मेण रहिता कृष्णभक्तिः कार्या न सर्वथे' तिश्लोकस्यार्थदिपिकाटिकातः सविस्तरं बोध्यानि ॥ २४ ॥ एवं सामान्यतस्तत्प्रादुर्भावरीतिमुक्त्वा साम्प्रतं सर्वावतारधारिणः स्वयं श्रीस्वामिनः सहेतुकं प्रादुर्भावं विशेषत आह सार्द्धैस्त्रिभिः । साम्प्रतमिति । स्वेष्टदेवस्य श्रीहरेः स्वबुद्धौ साक्षाद्भावेन विद्यमानत्वाद्भूतस्य वर्त्त-

वेदादौ प्रोच्यते यश्च परंब्रह्म परात्परः । नारायणो वासुदेवस्तथा परमपूरुषः ॥ २२ ॥ परमात्मा च विष्णुश्च प्रधानपुरुषेश्वरः । परमेश्वर ईशेशः पुरुषोत्तम इत्यसौ ॥ २३ ॥ भगवानात्मनामात्मा वर्षे स भुवि भारते । प्रादुर्भवति सद्धर्मरक्षायै च युगे युगे ॥ २४ ॥ साम्प्रतं च कलेः प्राप्य बलं भुवि समेधितैः । असुरांशगुरुक्ष्मेशैः क्लिष्टं धर्मं सुरक्षितुम् ॥ २५ ॥ अधर्मं चोन्मूल-यितुं पातुं भक्तानृषींश्च सः । निजभक्तिं प्रथयितुं सर्वाभीष्टप्रदां पराम् ॥ २६ ॥ स्वदिव्यमूर्तौ जनताचेतसां च समाधये । सकलैश्वर्य जुष्टेन जीवकल्याणकारिणा ॥२७॥ आत्मीयेनैव रूपेण जज्ञे हरिरिति श्रुतः । जन्मकर्माणि तस्यादौ कथयामि समासतः ॥२८॥

मानवन्निर्देशः । भुवि पृथिव्याम् । कलेश्चतुर्थयुगस्य । बलं कामक्रोधादिसैन्यरूपं साहाय्यम् । प्राप्य । समेधितैः सम्यग्वृद्धिं गतैः असुरांशा दैत्यांशैरुत्पन्ना ये गुरुक्ष्मेशा देशिका राजानश्च तैः क्लिष्टं सुतरां पीडितम् । धर्मम् । सुरक्षितुम् सुतरां परित्रातुम् ॥ २५ ॥ अधर्ममिति । अधर्मम् धर्मविरुद्धमसुरगुरुनृपप्रवर्त्तितमुपधर्मम् । उन्मूलयितुं मूलादुत्पाट्यातीव दूरे क्षेप्तुम् । भक्तान्स्वकीयैकान्तिकभक्तजनान् । ऋषीनात्रेयशापोत्पन्नान्मरीच्यादिमुनीन् । चकाराद्भक्तिधर्मोद्धवाँश्च । पातुमसुरगुरुनृपकृतात्यर्दनादवितुम् । सर्वाभीष्टप्रदां सकलवाञ्छितार्थप्रदात्रीम् । परां स्वधर्माद्यङ्गत्रयसहितत्वात्सर्वोत्तमाम् । निजभक्तिं माहात्म्यज्ञानोपेतां स्वकीयभजनरीतिम् । प्रथयितुं विस्तारयितुम् ॥ २६ ॥ स्वेति । जनताचेतसां स्वमूर्तिप्रेक्षकजनवृन्दमानसानाम् । स्वदिव्यमूर्तौ स्वकीयाऽमायिकाकारे । समाधयेऽनायासेन निरोधं कर्तुम् । सः पूर्वोक्तो ब्रह्मपुराधिपतिः श्रीस्वामी । सकलैश्वर्यजुष्टेन पूर्वोक्तानन्तैश्वर्यशक्त्यादिनिषेवितेन । जीवकल्याणकारिणा आश्रयमात्रेणापरिमितजिवपरमनिःश्रेयसप्रापकेन ॥२७॥ आत्मीयेनेति । आत्मीयेन निजेन । रूपेणानन्तकन्दर्पदर्पहारिलावण्यार्णवेनाक्षरधामावस्थितेन सनातनेन दिव्यस्वरूपेणैव । हरिरिति हरिनाम्ना श्रुतो विख्यातः सन् । जज्ञे भक्तिधर्माभ्यां प्रादुर्बभूव इति सार्द्धत्रयाणामेकान्वयः । तस्य श्रीहरेः । जन्मकर्माणि प्रादुर्भावप्रकारं चरित्राणि चेत्यर्थः । आदौ प्रथमतः । समासतः सङ्क्षेपेण । कथयामि ॥ २८ ॥

तत्रादौ सनिमित्तं श्रीहरिप्रादुर्भावप्रकारमाह । महर्षय इत्यारभ्य आनन्द एव सर्वत्र तदाभूज्जगतीतले इत्यन्तसन्दर्भेण । एकदा कदाचित् । बदरीवने बदरीकाश्रमे । मरीच्याद्या मरीचिप्रभृतयः । महर्षयो महामुनयः । नरनारायणप्रभोर्नैष्ठिकेन्द्रनरनारायणभगवतः । दर्शनार्थं नृजन्मसफलतापूर्वकभारतवर्षगततीर्थयात्राफलरूपं समीक्षणं कर्तुमित्यर्थः । उपाजग्मुराययुः ॥ २९ ॥ दृष्ट्वेति । ते महर्षयः । विभुं स्वाश्रितानन्तदुःखनिवर्त्तनसमर्थं श्रीनारायणम् । दृष्ट्वा समीक्ष्य । अर्चयित्वा यथालब्धोपचारैः पूजयित्वा । तदन्तिके श्रीनारायणपुरोवर्त्तिसमीपप्रदेशे । निषेदुः श्रीनारायणाज्ञयोपविविशुः । तेषां स्वाश्रितजनानां हितकृद्धितकारकं तपो यस्य स तथोक्तः । प्रभुः श्रीनारायणः । नृणां भारतवर्षवासिस्वाश्रितजनानाम् । क्षेमं कुशलम् । तान्महर्षीन् अपृच्छत् ॥ ३० ॥ प्रोचुरिति । ते श्रीनारायणपृष्टा महर्षयः । भुवि भारतवर्षभूमौ । जायमानमुत्पद्यमानम् । असुरोपद्रवमसुरांशगुरुनृपकृतं स्वाश्रितजनपिडनम् । तं श्रीनारायणम् । प्रोचुः कथयामासुः । तावत्तस्मिन् क्षणे एव । धर्मः साक्षात्स्वयंधर्मप्रजापतिरपि । मूर्त्त्या मूर्तिसंज्ञया । स्वभार्यया स्वपत्न्या । सह । तत्र श्रीनारायणसमीपे । दर्शनार्थमिति शेषः । अगादाजगाम ॥ ३१ ॥ तमिति । तत्र मुनिमण्डलमध्यगतासने । निषण्ण उपविष्टः ।

महर्षयो मरीच्याद्या एकदा बदरीवने । दर्शनार्थमुपाजग्मुर्नरनारायणप्रभोः ॥ २९ ॥ दृष्ट्वाऽर्चयित्वा विभुं ते निषेदुस्तदन्तिके । तानपृच्छन्नृणां क्षेमं प्रभुस्तद्धितकृत्तपाः ॥ ३० ॥ प्रोचुस्ते जायमानं तमसुरोपद्रवं भुवि । तावद्धर्मोऽपि तत्रागात्सह मूर्त्या स्वभार्यया ॥ ३१ ॥ तं दृष्ट्वा सोद्धवस्तत्र निषण्णो भगवानपि । मानयित्वा स्वपितरमुपावेशयदासने ॥ ३२ ॥ उवाच च मुनिप्रोक्तं तस्मै तद्वृत्तमप्यसौ । तदादरात्स शुश्राव विप्रास्ते चाप्यनाकुलाः ॥ ३३ ॥ एवमेकाग्रचित्तेषु शृण्वत्सु तद्वचः । कैलासान्मुनिरभ्यागाद्दुर्वासास्तद्दिदृक्षया ॥ ३४ ॥

सोद्धव उद्धवेन सहितः । भगवान् श्रीनारायणोऽपि । तं स्वदर्शनार्थमागतम् । स्वपितरं स्वजनकं धर्मम् । दृष्ट्वा । मानयित्वा यथायोग्यं सम्भाजयित्वा । आसने तदुचितविष्टरे । उपावेशयदासयाञ्चक्रे ॥ ३२ ॥ उवाचेति । असौ श्रीनारायणः । मुनिप्रोक्तं मरीच्यादिमुनिभिरात्मने प्रथमतः कथितम् । तद्भारतवर्षवासि स्वभक्तजनानामसुरकृतोपद्रवरूपम् । वृत्तं वृत्तान्तम् । तस्मै धर्मदेवाय । उवाच सविस्तरं प्रोक्तवान् । स धर्मः । तच्छ्रीनारायणप्रोक्तं वृत्तान्तवचनम् । आदरात् । शुश्राव । चकारादुद्धवोपि शुश्रावेति योजनीयम् । ते श्रीनारायणपुरः प्रदेशोपविष्टाः । विप्रा मरीच्यादयो मुनयश्चापि । अनाकुला अव्यग्रमानसाः सन्तः । इदं पदं वचनविपरिणामेन धर्मोद्धवयोरपि योजनीयम् । तत् । आदरात् । शुश्रुवुः । स्वप्रोक्तस्यादरेण श्रवणप्रवृत्तिहेतुस्त्वतिश्रेष्ठस्वयं श्रीनारायणास्यपद्मोद्गतवचनामृतमिश्रणेन चमत्कारातिशय एवेति भावः ॥ ३३ ॥ एवमिति । एवममुनाप्रकारेण । तद्वचः श्रीनारायणवचनामृतम् । शृण्वत्सु तेषु भक्तिधर्मोद्धवसहितेषु मरीच्यादिमुनिषु । एकाग्रचित्तेषु श्रीनारायणमुखपद्मनिर्यद्वचनसुधाश्रवणैकनिष्ठानाकुलमानसेषु सत्सु । दुर्वासाः । मुनिः । तद्दिदृक्षया श्रीनारायणदर्शनेच्छया कैलासाच्छिवगिरेः सकाशात् । अभ्यागादागत्य मुनिपर्षदः पश्चात् श्रीनारायणाभिमुखं तस्थावित्यर्थः ॥ ३४ ॥

भगवदिति । भगवन्मुखे श्रीनारायणास्यपद्मे दत्तानि चन्द्रचकोरन्यायेनारोपितानि अक्षाणि नयनानि यैस्ते तथोक्ताः । तद्वचोऽमृतं श्रीनारायणवचनामृतम् । पिबन्तोऽत्यादरेणाकर्णयन्तः । ते धर्मादिसहिता मरीच्यादयो मुनयः । समाधिस्थिताः पक्वसमाधिस्थितिं प्राप्ता इव । आगतमन्तः प्रेरितश्रीनारायणेच्छया समायातम् । तं दुर्वाससं मुनिम् । न ददृशुर्न वीक्षाञ्चक्रिरे ॥ ३५ ॥ नारायणेति । नारायणः स्वयं श्रीनारायणो भगवानपि । वार्ताकरणे आसक्तं प्रसक्तमानसं यस्य स तथाभूतः सन् । तमागतं दुर्वाससं मुनिम् । नापश्यत् । तदा तस्मिन्समये । मुनिः ऋषिवरः । स दुर्वासाः । आत्मानं स्वम् । तदपमानितं तैः कृतावमानम् । मेने स्वचेतसि ज्ञातवान् ॥ ३६ ॥ मानेति । अथानन्तरम् । मानः स्वस्मिन्सर्वपूज्यत्वबुद्धिस्तस्य भङ्ग आमर्दनं तेन समुद्भूतः सम्यगुत्पन्नो यः क्रोधाग्निः कोपानलस्तेन विवशः परतन्त्रः । असौ दुर्वासामुनिः । ऊर्ध्वं उच्छ्वासो दोर्दक्षिणबाहुस्तस्मिन्नुच्चोन्नता तर्जनी प्रदेशिन्यङ्गुलिर्यस्य स तथाभूतः सन् । तान् सर्वानपि । शशाप ॥ ३७ ॥ शापमाहनेति । यस्माद्धेतोः । इह धर्मप्रवृत्तिहेतुभूतेऽस्मिन् स्थाने । भवद्भिर्नारायणादिभिर्युष्माभिः सर्वैः । मे मम । सन्मानः शिष्टाचारप्राप्ताभ्युत्थान पाद्यार्घ्यप्रदानरूपः सत्कारः । न कृतः । ततो हेतोः

भगवन्मुखदत्ताक्षाः पिबन्तस्तद्वचोऽमृतम् । तमागतं न ददृशुस्ते समाधिस्थिता इव ॥ ३५ ॥ नारायणोऽपि नापश्यत्तं वार्तासक्तमानसः । तदा मुनिः स आत्मानं मेने तदपमानितम् ॥३६॥ मानभङ्गसमुद्भूतक्रोधाग्निविवशोऽथ तान् । सर्वानपि शशापासावुर्ध्वदोरुच्चतर्ज्जनिः ॥ ३७ ॥ न सन्मानः कृतो यस्माद्भवद्भिरिह मे ततः । मानुष्य आसुरीं पीडां सर्वेऽपि प्राप्स्यथ द्रुतम् ॥ ३८ ॥ तच्छ्रुत्वा सहसा सर्वे बभूवुर्व्यग्रचेतसः । सद्यो धर्मः समुत्थाय तं प्रणम्याक्षमापयत् ॥ ३९ ॥ नापमानः कृतोऽस्माभिर्महर्षे ! बुद्धिपूर्वकम् । मान्यस्य तव तस्मात्त्वं कर्तुमर्हस्यनुग्रहम् ॥ ४० ॥ एवं सम्प्रार्थितो विप्रो धर्मेण विनयेन सः । उवाचानुग्रहं कुर्वन् शृणु धर्म ! वचो मम ॥ ४१ ॥

। सर्वेऽपि यूयम् । द्रुतं शीघ्रमेव । मानुष्ये मनुष्यभावे । आसुरीमसुरांशोत्पन्नगुरुनृपपतिकृताम् । पीडां भर्त्सनताडनादिबाधाम् । प्राप्स्यथातिशयेन गमिष्यथ । दिव्यानामपि युष्माकमयुक्ता मनुष्यदेहप्राप्तिस्तत्र च दैत्यांशगुर्वादिकृतपीडाप्राप्तिश्चेति द्वयं मच्छापेन भवत्वित्यर्थः ॥ ३८ ॥ तदिति । तद्वज्रपातसन्निभं कोपनदुर्वासोमुनिवचनम् । श्रुत्वा । सहसा तूर्णमेव । सर्वे धर्मोद्धवादयः सकला अपि । व्यग्रचेतसः क्षुभितान्तःकरणाः । बभूवुः । ततः । धर्मः । सद्यस्तत्क्षणमेव । समुत्थायाभ्युत्थानं कृत्वा । तं दुर्वाससं मुनिम् । प्रणम्य साष्टाङ्गं नत्वा । अक्षमापयत् मृदुलवचनैः सान्त्वयाञ्चकार ॥ ३९ ॥ तदेवाह । नेति । हे महर्षे । यतः । अस्माभिः । मान्यस्य सर्वदासन्मानयोग्यस्य । तव । अपमानः । बुद्धिपूर्वं ज्ञात्वैव । न कृतः । किन्तु नारायणोक्तवार्ताश्रवणैकाग्रमनस्तया तवागमनमविदित्वा जात इत्यर्थः । तस्माद्धेतोः । त्वम् । अनुग्रहं शापनिवारणरूपं प्रसादम् । कर्त्तुम् । अर्हसि योग्यो भवसि ॥ ४० ॥ एवमिति । एवममुना प्रकारेण । धर्मेण कर्त्रा विनयेन करणेन । सम्प्रार्थितः । विप्रो नितान्तमानलोलुपो ब्राह्मणः । स दुर्वासाः । अनुग्रहम् । कुर्वन्सन् । उवाच । तदेवाह सपादद्वाभ्याम् । हे धर्म । मम । वचः । शृणु ॥ ४१ ॥

अज्ञानज इति । मे मम । शापः । अज्ञानजो भवत्स्थितमदागमनाज्ञानसम्भूतोऽपि । क्वचित्कदाचिदपि । अन्यथा मिथ्या । न भविता नैव भविष्यति । किन्तु । एष युष्मन्नयनगोचरतया वर्त्तमानः । नारायणः । ततो मच्छापात् । वो युष्माकम् । मोचयितोद्धारकारकः । अस्तु भवतात् । हि निश्चितमेव ॥ ४२ ॥ मनुष्येति । असौ श्रीनारायणः । भुवि पृथिव्याम् । मनुष्यभूतयोर्मनुष्यभावं प्राप्तयोः । दम्पत्योर्जायापत्योः । वां युवयोः । पुत्रः । भूत्वा । युवां भवन्तौ । एतान् । मुनीन् । चक्राद्युद्भवमपि । असुरेभ्यः । अविता रक्षिष्यति । ध्रुवं निश्चितमेव ॥ ४३ ॥ इतीति । इत्यमुना प्रकारेण । उक्त्वा । प्रभुं श्रीनारायणम् । नत्वा अभीवन्द्य । स दुर्वासामुनिः । पुनर्भूयोऽपि । श्वेताचलं कैलासाचलम् । ययौ । अथानन्तरम् । भगवान् श्रीनारायणः । आकस्मिकादकाण्डोत्पन्नात् । शापात् भीतमतिभयं प्राप्तम् । वृषं धर्मम् । आह प्रोक्तवान् ॥ ४४ ॥ तदाह सार्द्धैस्त्रिभिः । निष्कारणमिति । हे तात । अहम् । निष्कारणं निर्हेतुकम् । इमम् । शापम् । निवारयितुं निराकर्त्तुम् । ईश्वरः समर्थः । भवामि समर्थोऽस्मि । अथापि एवं सत्यपि । असौ शापः । मया । कारणाद्वक्ष्यमाणात्कस्माचन निमित्तात् । इच्छयैव । स्वीकृतोऽङ्गीकृतः ॥ ४५ ॥ कारणमाह ।

अज्ञानजोऽपि मे शापो नान्यथा भविता क्वचित् । किन्तु नारायणो ह्येष ततो मोचयिताऽस्तु वः ॥ ४२ ॥ मनुष्यभूतयोः पुत्रो दम्पत्योर्वामसौ भुवि । भूत्वा युवां मुनींश्चैतानसुरेभ्योऽविता ध्रुवम् ॥ ४३ ॥ इत्युक्त्वा स प्रभुं नत्वा पुनः श्वेताचलं ययौ । अथाह भगवान्भीतं शापादाकस्मिकाद्वृषम् ॥ ४४ ॥ निष्कारणमिमं शापं निवारयितुमीश्वरः । भवाम्यथापीच्छयासौ कारणात् स्वीकृतो मया ॥ ४५ ॥ अधर्मश्चासुरा अस्मिन्वर्षे प्राप्य बलं कलेः । सन्त्येधितास्तदुच्छेदः साम्प्रतं मे चिकिर्षितः ॥ ४६ ॥ अतोऽहं त्वत्सुतो भूत्वा तदुच्छेदं समाचरन् । मनुष्यभूतान्सर्वान्वो रक्षिष्यामि न संशयः ॥ ४७ ॥ अतो यथेष्टं भुवि मानुषेषु सर्वेऽपि यूयं भवतापशङ्कम् । त एवमुक्ताः प्रभुणा वृषाद्याः प्रणम्य तं जन्म नरेष्वगृह्णन् ॥४८॥

अधर्म इति । अस्मिन्वर्षे भरतखण्डे । अधर्मः । असुराश्च । कलेश्चतुर्थयुगस्य । बलम् । प्राप्य । एधिता वृद्धिं गताः । सन्ति । साम्प्रतमिदानिम् । तदुच्छेदोऽधर्मासुरविनाशः । मे मम । चिकीर्षितः कर्त्तुमिष्टो भवति ॥ ४६ ॥ अत इति । अतो हेतोः अहम् । त्वत्सुतो मनुष्यभावं प्राप्तस्य तव पुत्रः । भूत्वा । तदुच्छेदमधर्मासुरविनाशनम् । समाचरन् कुर्वन्सन् । मनुष्यभूतान्मनुष्यभावम् प्राप्तान् । सर्वान् । वो युष्मान् । रक्षिष्यामि असुरगुरुनृपकृतापद्भ्यस्त्रास्ये । न । संशयः ॥ ४७ ॥ अतइति । अतोऽस्माद्धेतोः । सर्वेऽपि । यूयम् । भुवि । मानुषेषु त्रैवर्णिकमनुष्येषु । यथेष्टं यथारुचि । अपशङ्कं निःशङ्कंयथातथा । भवत उत्पद्यध्वम् । एवममुना प्रकारेण । प्रभुणा श्रीनारायणेन । उक्ताः । वृषाद्या धर्मादयः । ते सर्वेऽपि । तं श्रीनारायणम् । प्रणम्य । नरेषु भारतवर्षस्थत्रैवर्णिकाजनेषु । जन्म । अगृह्णन् उपाददुः । अत्र महर्षयो मरीच्याद्या इत्यारभ्याते यथेष्टमित्यन्तसन्दर्भस्यायमाशयः । श्रीमद्ब्रह्मपुराधिपतेः श्रीस्वामिनो भक्तिधर्माभ्यां प्रादुर्भविष्यतः श्रीहरेः प्रियैर्नैष्ठिकब्रह्मचारिसमानवेषतपो—निवृत्तधर्म—नैष्ठिकब्रह्मचर्यव्रतक्षमा—दयादिभिर्गुणैः स्वावतारनारायणर्षेरपि स्वतुल्यतया वर्त्तनशीलत्वात्तदभेदमङ्गीकृत्य तद्रुपेण श्रीहर्याविर्भावकथनमस्त्यन्यथाऽत्रैवास्ति

श्रीमति गोलोक इत्यारभ्यात्मीयेनैव रूपेण जज्ञे हरिरिति श्रुतइति पूर्वोक्तग्रन्थेन तथा हरिकृष्ण इति ख्यातः करिष्ये रक्षणं हि व इत्युत्तरग्रन्थस्थितेन वृन्दावने भक्तिधर्मावुद्दिश्य सम्प्रोक्तेन श्रीकृष्णवचनेन च सह विरोधः स्यादिति ॥ ४८ ॥ तत्र भक्तिधर्मजन्मनः श्रीभगवज्जन्महेतुत्वात्तत्कथयन्नादौ श्रीधर्मजन्माह चतुर्भिः । कोसलेष्विति । कोसलेषु देशेषु । इट्टारसंज्ञकामिट्टाराभिधम् । पुरम् । अस्ति । तत्र पुरे । बालशर्माभिधः । द्विजसत्तमो ब्राह्मणश्रेष्ठः । बभूव ॥४९॥ तं विशिनष्टि । पण्डितेति । पण्डितोपपदः पण्डितावटङ्कः । सामवेदी सामगः । सावर्णिगोत्रजो गोत्रप्रवर्त्तकसावर्णिऋषिकुलजातः । सारवङ्गातिर्ब्राह्मणजातिभेदसारवङ्गातिव्यक्तिः । अखिलानां समग्राणां शास्त्राणां चतुर्दश-विद्यानां वित् ज्ञानं यस्य सः । धर्मे वेदोदितस्ववर्णाश्रमाचारे संस्थितिः सम्यक्निष्ठा यस्य सः ॥ ५० ॥ भार्येति । तस्य बालशर्मणः । नाम्ना । भाग्यवती भाग्य-वतीति संज्ञया प्रसिद्धेत्यर्थः । पतिव्रता साध्वी । भार्या पत्नी । आसीत् । धर्मदेवो देवविशेषो धर्मप्रजापतिः । मुनिशापतो दुर्वासोमुनिदत्तशापवशतः । तयोर्भाग्यवतीबाल-शर्मणो दम्पत्योः । पुत्रः पुत्रसंज्ञान्वर्थतापादकः सुतः । बभूव ॥ ५१ ॥ तत्प्रादुर्भावदिनमाह । विक्रमेति । रसाङ्कनगभूमिते रसा इतिषट् अङ्का इति नव नगा इतिसप्त-

कोसलेष्वस्ति देशेषु पुरमिट्टारसंज्ञकम् । बालशर्माभिधस्तत्र बभूव द्विजसत्तमः ॥ ४९ ॥ पण्डितोपपदः सामवेदी
सावर्णिगोत्रजः । सारवङ्गातिरखिलशास्त्रविद्धर्मसंस्थितिः ॥ ५० ॥ भार्या भाग्यवतीनाम्ना तस्यासीच्च पतिव्रता ।
तयोः पुत्रो धर्मदेवो बभूव मुनिशापतः ॥ ५१ ॥ विक्रमार्कक्ष्मेशशके रसाङ्कनगभूमिते । एकादश्यां प्रबोधन्यां
मध्याह्ने प्रादुरास सः ॥ ५२ ॥ देवशर्मेति तन्नाम द्वादशेऽह्न्यकरोत्पिता । उपनीतो यथाकालं सोऽथासीत्सद्गुणा-
करः ॥ ५३ ॥ अस्ति तस्मिञ्जनपदे छुप्पयो ग्राम उत्तमः । कृष्णशर्माभिधस्तत्र ब्राह्मणोऽभूदुदारधीः ॥ ५४ ॥

भूरित्येकः एषां द्वन्द्वः । रसादौ निरूढलक्षणया संख्यारूपोऽर्थोऽवगम्यते । 'अङ्कानां वामतो गतिः ।' तैर्मिते परिमिते । विक्रमार्कक्ष्मेशशके विक्रमार्को विक्रमादित्य-नामाक्ष्मेशः शकवर्त्तिभूपतिस्तस्य शको धर्ममर्यादानिबन्धनकालवर्षे तस्मिन् । संवत्सप्तदशशताधिकषण्णवतितमेऽब्दे इत्यर्थः (१७९६) । प्रबोधन्याम् । एकादश्यां कार्त्तिक-शुक्लैकादशिकातिथौ । मध्याह्ने मध्याह्नसमये । स धर्मदेवः । प्रादुरास ॥ ५२ ॥ देवशर्मेति । पिता श्रीधर्मदेवजनको बालशर्मा । द्वादशेऽह्नि जन्मतो द्वादशे दिने । देवशर्मेति । तन्नाम स्वपुत्रसंज्ञाम् । अकरोत् । द्वादशेऽह्नि नामकरणे प्रमाणं सत्सङ्गिजीवनस्थैतत्प्रकरणगतश्लोकटीकाया ज्ञेयम् । अथानन्तरम् । यथाकालं जन्मतोऽष्टमे वर्षे इत्यर्थः । उपनीतः पित्रा कृतोपनयनसंस्कारः । स देवशर्मा । सद्गुणाकरः स्वधर्मभगवद्भक्तिविद्याविनयादीनां सतां गुणानां खनीभूतः । आसीत् ॥ ५३ ॥ अथ श्रीभक्तिजन्माह त्रिभिः । अस्तीति । तस्मिन् जनपदे कोसलदेशे एव । उत्तम उद्गच्छति तमस्तमआदिपश्वपर्वाविद्या यस्मात्सः । श्रीहरिप्रादुर्भावभूमित्वादिति भावः । [तमशब्दोऽत्राकारान्तः । तमोऽपि तमसासहेति द्विरूपकोशोक्तेः ।] सर्वोत्तम इति वा । छुप्पये ग्रामः । अस्ति । तत्र छुप्पयेग्रामे । उदारधीर्महामतिः । दानवीरमतिर्वा । धर्मादिपुरुषार्थोपादनदक्षिणमतिर्वा । कृष्णशर्माभिधः । ब्राह्मणः । अभूत् ॥ ५४ ॥

भार्येति । तस्य कृष्णशर्मद्विजस्य । शुद्धबुद्धिर्निर्मलमतिः । सती पतिव्रता । भवान्याख्या भवानीनाम्ना प्रसिद्धा । भार्या पत्नी । अभूत् । वृषाङ्गना धर्मदेवपत्नी । मूर्त्तिः । मुनिशापाद् दुर्वासोमुनिदत्तशापवशतः । तयोर्भवानीकृष्णशर्मणोर्दम्पत्योः । पुत्री । अभूत् ॥ ५५ ॥ अथ तत्प्रादुर्भावदिनमाह । शकेति । अष्टाङ्कसप्तेन्दुप्रमिते । शकाब्दे विक्रमार्क-नृपशकवर्षे । संवत्सप्तदशशताधिकाष्टनवतितमे संवत्सरे इत्यर्थः । (१७९८) कार्त्तिके ऊर्जमासे शुदि शुक्लपक्षे । पौर्णमास्याम् । दिनान्ते प्रदोषसमये । सा मूर्त्तिः । जज्ञे । प्रेमवतीतिनाम्ना । विख्याता । अभूदितिशेषः ॥ ५६ ॥ बाल्य इति । सा प्रेमवती । बाल्येऽपि बालभावेऽपि । कृष्णभक्तौ श्रीकृष्णस्य नवधाभजने । नितरामतिशयेन निरता प्रसक्ता । अभूत् । ततो हेतोः । जगतीतले भूपृष्ठे । भक्तिरिति भक्तिरिति नाम्ना । ख्याता प्रसिद्धा । बभूव ॥ ५७ ॥ कृष्णशर्मेति । अथानन्तरम् । कृष्णशर्मा भक्ति-पिता । बुद्धिः सन्मतिश्च शीलं सुस्वभावश्च गुणा दयादयश्च तैरन्वितां युक्ताम् । स्वां स्वकीयाम् । कन्यां भक्तिसंज्ञां सुताम् । अनुरूपाय बुद्धिशीलगुणादिभिर्योग्याय । देवशर्मणे बालशर्मसुताय देवशर्मसंज्ञकाय वराय । विधिवच्छास्त्रोक्तविधिमनतिक्रम्य । प्रददौ परिणिनाय ॥ ५८ ॥ जामातरमिति । कृष्णशर्मा च । जामातरं दुहितृपतिम् ।

भार्या तस्य भवान्याख्या शुद्धबुद्धिरभूत्सती । मूर्तिस्तयोरभूत्पुत्री मुनिशापाद्वृषाङ्गना ॥ ५५ ॥ शकाब्देऽष्टाङ्कसप्तेन्दुप्रमिते कार्त्तिके शुदि । पौर्णमास्यां दिनान्ते सा जज्ञे प्रेमवतीति ह ॥ ५६ ॥ बाल्येऽपि सा कृष्णभक्तौ निरता नितरामभूत् । ततो भक्तिरिति ख्याता बभूव जगतीतले ॥ ५७ ॥ कृष्णशर्माऽथ कन्यां स्वां बुद्धिशीलगुणान्विताम् । अनुरूपाय विधिवत्प्रददौ देवशर्मणे ॥ ५८ ॥ जामातरं च स्वगृहे सम्प्रार्थ्य तमवासयत् । पित्रा सोऽनुमतस्तत्र समुवास यथासुखम् ॥ ५९ ॥ गृहस्थधर्मानखिलान्सपत्नीको यथाविधि । आचचार ततो लोके धर्मसंज्ञामवाप सः ॥ ६० ॥ धर्मनिष्ठः कृष्णभक्त इति लोकाः सुमेधसः । तमेवैकं हि निर्दोषं सर्वदा बहु मेनिरे ॥ ६१ ॥ तदा मत्सरिणो दुष्टा असुरांशा नरा भृशम् । तं मुहुः पीडयामासुः सभार्यमतिनिर्दयाः ॥ ६२ ॥

तं देवशर्माणम् । सम्प्रार्थ्य । स्वगृहे । अवासयद् गृहजामातरं कृत्वा ररक्षेत्यर्थः । स देवशर्मा । पित्रा बालशर्मणा स्वजनकेन । अनुमतः कृतानुज्ञः सन् । तत्र कृष्णशर्मश्व-शुरगृहे । यथासुखं यथास्वस्य सुखं स्यात्तथेत्यर्थः । समुवास सम्यग्निवासं चकार ॥ ५९ ॥ गृहस्थेति । सपत्नीकः सभार्यः । स देवशर्मा । अखिलान्समग्रान् । गृहस्थधर्मान् गृहाश्रमोचितान्सदाचारान् । यथाविधि शास्त्रोक्तविधिमनतिक्रम्य । आचचारानुष्ठितवान् । ततो हेतोः । लोके जनेषु । धर्मसंज्ञां धर्म इति नामधेयम् । अवाप ॥ ६० ॥ धर्मनिष्ठ इति । धर्मनिष्ठः सर्वदा वेदोदिताचारनिष्ठः । कृष्णभक्तः । इतिहेतोः सुमेधसः सुबुद्धयः । लोकाः जनाः । निर्दोषं मानक्रोधादिदोषवर्जितम् । एकं केवलम् । तं धर्ममेव सर्वदा । सर्वकालम् बहु अधिकं यथास्यात्तथा । मेनिरे अमन्यन्त ॥ ६१ ॥ तदेति । तदा तस्मिन्समये । मत्सरिणो धर्मोत्कर्षमसहमानाः । दुष्टाः पापचेतसः । अतिनिर्दयाः सुतरां दयावर्जिताः । असुरांशा असुरांशसमुत्पन्नाः । नरा गुरुनृपादयो जनाः । सभार्यं पत्नीसहितम् तं धर्मम् । भृशमत्यन्तम् । मुहुरस कृत् । पीड्यामासुर्यथामति यावत् कल्पितोपायैरर्दयाञ्चक्रुः ॥ ६२ ॥

सपत्नीकइति । ततस्तदनन्तरम् । सपत्नीकः सभार्यः । स धर्मः । तीर्थयात्रां नानाविधतीर्थाभिव्रज्याम् । उद्दिश्य लक्षीकृत्यानुसन्धाय वा । तद्ग्रामाच्छुप्पयः संवसथात् । निर्गतो निष्क्रान्तः । धीरो महाधैर्ययुक्तः सन् । वृन्दावनं वृन्दावनसंज्ञम् । वनं काननम् । उपेयाय प्राप्तवान् । अत्रास्य वृन्दावनप्राप्तेः प्राक्तनः कथाविशेषोऽगन्तव्यः । असुरपीडितस्य धर्मस्यासुरोपद्रवेणायोध्यानिवासस्ततीर्थयात्रां विदधतोऽस्य प्रयागे श्रीरामानन्दमुनेर्वैष्णवदीक्षाप्राप्तिस्ततोऽस्य गुरूपदप्राप्तिजातसम्पत्यसहनेन मुहुरसुराचरितोपद्रवेण पुनरयोध्यावासस्तत आपन्निवृत्तये स्वकुलेष्टदेवस्य मारुतेस्तत्राराधनं तदुपदेशेनवृन्दावनप्राप्तिरिति ॥ ६३ ॥ तावदिति । तावद्धर्मस्य वृन्दावनप्राप्तिसमय एव । मुनिशप्ता दुर्वासोमुनिना दत्तशापाः । तत्र तत्र तेषु तेषु देशेषु । नृषु त्रैवर्णिकजनेषु । उत्पन्ना धृतदेहाः । मरीच्याद्याः । महर्षयः । दैत्यपीडिता असुरैर्बहुधार्दिताः सन्तः । तत्र वृन्दावने । आययुस्तीर्थयात्रानिमित्तेनाजग्मुः ॥ ६४ ॥ समेति । समदुःखैः स्वसमानासुरव्यसनैः । तैर्मरीच्यादिमुनिभिः । उपेतः सङ्गतः । महामतिः शास्त्रनिष्णातधीः । धर्मः । श्रद्धालुः प्रशस्तश्रद्धायुक्तः । दृढनिश्चयो भगवत्प्रसन्नतापर्यन्तं तपोऽनिवृत्तिनिर्णयवान्सन् । तत्र वृन्दावने । कृष्णं वृन्दावनविहारिणं श्रीवासुदेवम् । आराधयामास जपात्मकविष्णुयागेनोपासांचक्रे ॥ ६५ ॥ तस्माइति । तस्मै मुनिभिः सह स्वमाराधयते धर्माय । प्रसन्नः । श्रीकृष्णः । साक्षात् । स्वदर्शनमक्षरब्रह्मतेजःपुञ्जावस्थितस्वसमीक्षणम् ।दत्वा । उवाच । तदाह पञ्चाक्षराधिकश्लोकचतुष्टयेन । हे धर्मादयः । यूयम् । अचिरादल्पेन कालेन । निर्भया असुरोपद्रववर्जिताः । भविष्यथा वै ॥६६॥ कृष्णेति । मया । कृष्णावतारे भूरिशः प्रचुराः । असुराः पूतनादिदन्तवक्रानुजजयद्रथान्तादैत्याः । निहताः संहृताः । तत्र केचित्स्वयं निहताः केचिद्बलभीमार्जुनादिभिर्घातिता इति ज्ञेयम् । तेषु मया व्यापादितेष्वसुरेषु मध्ये । येऽसुराः । तीव्रवासनाः मनःस्थमायिकपश्चविषयभोगतीक्ष्णतृषः । ते । साम्प्रतमिदानीम् । भुवि । जाता उत्पन्नाः ॥ ६७ ॥ निबद्धेति । मयि विषये । निबद्धवैराः । तेऽसुराः । युष्मान्सर्वान् भवतः । मामकान्मदीयानेव । ज्ञात्वा । भृशमत्यन्तम् । पीड्यन्ति मद्वैरनिर्यातनमिच्छन्तोऽर्दयन्ति । तेषामसुराणाम् । उच्छेदो विनाशः । द्रुतं शीघ्रमेव । भविता भविष्यति ॥ ६८ ॥ नारायणेति । अहम् । नारायणर्षिरूपेण बदरीपतिनारायणमुन्युद्देशेन । नारायणर्षेरुद्देशादिति पाठेतु स्फुट एवार्थः । स्वरुचिनारायणर्षिरुच्योः समानत्वादवतारिणः स्वस्य स्वावतारेण नारायणर्षिणाऽत्राभेदोक्तिः पूर्वोक्तरीत्या ज्ञेया । त्वत्पुत्रतां तव पुत्रभावम् । प्राप्य । हरिकृष्ण इति हरिकृष्णनाम्ना । ख्यातः प्रसिद्धः सन् । वो युष्माकं सर्वेषाम् । रक्षणमसुरेभ्योऽवनम् । करिष्ये । हि निश्चितमेत्र ॥ ६९ ॥

सपत्नीकस्ततस्तीर्थयात्रामुद्दिश्य निर्गतः । तद्ग्रामात्स उपेयाय धीरो वृन्दावनं वनम् ॥६३॥ तावत्तत्र मरीच्याद्या मुनिशप्ता महर्षयः । तत्र तत्र नृषूत्पन्ना आययुर्दैत्यपीडिताः ॥६४॥ समदुःखैरुपेतस्तैर्धर्मस्तत्र महामतिः । कृष्णमाराधयामास श्रद्धालुर्दृढनिश्चयः ॥६५॥ तस्मै प्रसन्नः श्रीकृष्णः साक्षाद्दत्वा स्वदर्शनम् । उवाच यूयमचिरान्निर्भया वै भविष्यथ ॥६६॥ कृष्णावतारे निहता असुरा भूरिशो मया । साम्प्रतं भुवि जातास्ते तेषु ये तीव्रवासनाः ॥ ६७ ॥ निबद्धवैरा मयि ते युष्मान् ज्ञात्वैव मामकान् । पीडयन्ति भृशं तेषामुच्छेदो भविता द्रुतम् ॥६८॥ नारायणर्षिरूपेण प्राप्य त्वत्पुत्रतामहम् । हरिकृष्ण इति ख्यातः करिष्ये रक्षणं हि वः ॥६९॥

विधायेति । अहम् । तेषामसुराणाम् । उच्छेदं विनाशम् । विधाय कृत्वा । भुवि । एकान्तिकम् । धर्मम् । ज्ञानवैराग्येपेतमद्भक्तिरूपं भागवतधर्ममित्यर्थः । प्रवर्त्तयिष्यामि । इत्यमुना प्रकारेण । उक्त्वा धर्मादीन्निगद्य । कृष्णः । तिरोदधेऽन्तर्धानं प्राप्य धर्महृदयाम्भोजे आवासं चकारेत्यर्थः ॥ ७० ॥ इत्थमिति । इत्थममुना प्रकारेण । स धर्मः । हरेः श्रीकृष्णस्य । प्रसादं परमानुग्रहम् । प्राप्य । स्वग्रामं स्वकीयं छुप्पयः संवसथम् । आययौ । ततस्तदन्तरम् । क्षितौ । हरिप्रसाद इत्याख्यां हरिप्रसादोपलब्धेरन्वर्थां हरिप्रसादसंज्ञाम् । आपोपलेभे । एवकारो हरिप्रसादसंज्ञायां हरिप्रसादेतरहेतुनिरासार्थः ॥ ७१ ॥ अचिरेणेति । अथानन्तरम् । अचिरेण नातिदीर्घेण । कालेन । असुरान्तको दैत्यविनाशकः । भक्तानन्दमहोदधिः स्वभक्तजनानन्दैकसुधासागरः भगवान् ब्रह्मपुरैकराजाधिराजो वासुदेवापरसंज्ञः श्रीकृष्णसुधांशुः । ततो धर्मात् । भक्तौ । आविरासीत् प्रादुर्बभूव ॥ ७२ ॥ तत्प्रादुर्भावसमयमाह । शकइति । नगाग्निवस्विन्दुमिते । शके विक्रमार्कशकवर्षे । संवदष्टादशशताधिकसप्तत्रिंशत्तमेऽब्देइत्यर्थः । (१८३७) मधौ । मासि चैत्रमासे । शुदि शुक्लपक्षे । नवम्यां नवमीतिथौ । निशि रात्रौ । तत्रापि । पञ्चमे । मुहूर्ते । दशघटिकाराव्यतीतसमये

विधाय तेषामुच्छेदं धर्ममेकान्तिकं भुवि । अहं प्रवर्त्तयिष्यामीत्युक्त्वा कृष्णस्तिरोदधे ॥ ७० ॥ इत्थं हरेः प्रसादं स प्राप्य स्वग्राममाययौ । हरिप्रसाद इत्याख्यां तत एवाप च क्षितौ ॥ ७१ ॥ अचिरेणाथ कालेन भगवानसुरान्तकः । आविरासीत्ततो भक्तौ भक्तानन्दमहोदधिः ॥७२॥ शकनगाग्निवस्विन्दुमिते मासि मधौ शुदि । नवम्यां निश्यभूदाविर्मुहूर्ते स तु पञ्चमे ॥७३॥ तदा महोत्सवो धर्मगृहेऽभूच दिवौकसः । कुसुमान्यभिवर्षन्तो दुन्दुभीन्स्वानवादयन् ॥ ७४ ॥ हर्षादप्सरसोऽनृत्यन् जगुर्गन्धर्वकिन्नराः । आशिषो ददतश्चक्रुर्वेदघोषं महर्षयः ॥ ७५ ॥ प्रसन्नानि मनांस्यासन्सतां च त्रिदिवौकसाम् । सभयान्यसुराणां च सर्वेषां धर्मविद्विषाम् ॥७६॥ मङ्गलानि जगुर्नार्यो विप्राश्च ददुराशिषः । ववुः सुखकरा वाता निर्मलेन्दूद्बभूच खम् ॥७७॥

इत्यर्थः । सः श्रीकृष्णचन्द्रः । आविः । अभूत्प्रादुरास ॥ ७३ ॥ तदेति । तदा श्रीकृष्णप्रादुर्भावसमये । धर्मगृहे श्रीधर्मदेवभवने । महोत्सवः । अभूत् । दिवौकसो ब्रह्मेन्द्रादयो देवाः । कुसुमानि नन्दनादिदेवोद्यानसुमनांसि । अभिवर्षन्तः हरेर्यत्र प्रादुर्भावस्तस्मिन् भवनेविकिरन्तः सन्तः । स्वान् स्वकीयान् । दुन्दुभीन् । अवादयन् ॥७४॥ हर्षादिति । अप्सरस उर्वश्यादयः । सुराङ्गनाः । हर्षादानन्दभरतः । अनृत्यन् गन्धर्वकिन्नराः । जगुरुच्चैर्भगवज्जन्मपद्यान्यगायन् । महर्षयः सप्तर्षयः । आशिषः जय जीवैश्वर्यमाविःकुर्वित्यादीन्याशीर्वचनानि । ददतः सन्तः । वेदघोषं 'स्वस्तिन इन्द्रोवृद्धश्रवा' इत्यादिवेदमन्त्राणामुच्चैः पठनम् । चक्रुः ॥ ७५ ॥ प्रसन्नानीति । सतां साधुजनानाम् । त्रिदिवौकसां देवानाश्च । मनांसि । प्रसन्नानि भगवज्जन्मना स्वभयस्य सर्वथा निवृत्तत्वादनाविलानि । आसन् । धर्मविद्विषां धर्मप्रत्यनीकानाम् । सर्वेषाम् । असुराणाम् । मनांसि च । सभयानि भयहेतुसम्भवादाविलानि । आसन् ॥ ७६ ॥ मङ्गलानीति । नार्यः धर्मस्य पुत्रप्रादुर्भावमाकर्ण्यागता माङ्गलिकवस्तुकराः सुवासिन्यः स्त्रियः । मङ्गलानि मङ्गलापादकानि भगवच्चरित्रगीतानि । जगुः । विप्रा धर्मपुरोहितादयो वृद्धब्राह्मणाः । आशिषः 'शतं जीव शरद' इत्याद्याशीर्वादान् । ददुः । वाता

वायवः । सुखकराः शीतसुरभिमन्दगुणवत्त्वात्सुखोत्पादकाः सन्तः । ववुः । खमाकाशम् । इन्दुश्चन्द्रश्च उडूनि अश्विन्यादिनक्षत्राणि च निर्मलानीन्दूडूनि यस्मिंस्तत्तथाभूतम् अभूत् ॥ ७७ ॥ ददाविति । धर्मः । जातकम् । कृत्वा । विप्रेभ्यः । दानानि । ददौ । 'पुत्रे जाते व्यतीपाते दत्तं भवति चाक्षयमिति' स्मृतेस्तत्समयकृतदानस्याक्षयत्वादिति भावः । तदा श्रीहरिप्रादुर्भावसमये । जगतीतले भूतले । सर्वत्र पुर, ग्राम, सार्थ, घोष, शिविर, खेट, खर्वटादिस्थानेषु । आनन्द एव । अभूत् ॥ ७८ ॥ बालेति । षष्ठे । दिने श्रीहरेर्जन्मवासरतः षष्ठे दिवसे । तत्र धर्मगृहे । कोटरा रेवतीप्रभृतयः । बालग्रहा बालपीडकग्रहसंज्ञाः कृत्यागणाः । आययुः । बालः स्वीकृतबालनाट्यः । स श्रीहरिः । जिघांसून् स्वं हन्तुमिच्छून् । तान्बालग्रहान् । स्वदृष्ट्या स्वविलोकनेनैव । दहन् सन् । अद्रावयत्ततोऽपसारयामास ॥ ७९ ॥ मार्कण्डेय इति । अथानन्तरम् । मार्कण्डेयो मुनिः । शतरात्रव्यतिक्रमे एकोत्तरशततमे दिने । तत्र धर्मगृहे । एत्यागत्य । पित्रा श्रीहरिजनकेन धर्मेण । अभ्यर्च्य अर्घ्यपाद्यासनप्रदानपूर्वकं सम्पूज्य । अभ्यर्थितः स्वपूत्रनामकरणार्थं सम्प्रार्थितः सन् । विभोः प्रभोः श्रीहरेः । नामकर्म नामकरणसंस्कारम् । अकरोत् ॥ ८० ॥ तदेवाह चतुर्भिः । निजेति । मुनिर्ऋषिप्रवरः । स मार्कण्डेयः । निजाश्रितापद्धरणात् स्वशरणागतजीवानन्तदुःखहरणशीलत्वात् । कर्कराशिजनेः कर्कराशौ जननसम्भवाद्धेतोश्च । अपिश्चार्थे ।

ददौ दानानि विप्रेभ्यो धर्मः कृत्वा च जातकम् । आन्द एव सर्वत्र तदाऽभूज्जगतीतले ॥ ७८ ॥ बालग्रहा दिने षष्ठे
तत्रायुः कोटरादयः । जिघांसूस्तान्स्वदृष्ट्यैव स बालोऽद्रावयद्दहन् ॥ ७९ ॥ मार्कण्डेयोऽथ तत्रैत्य शतरात्रव्यतिक्रमे ।
अभ्यर्च्याभ्यर्थितः पित्रा नामकर्माकरोद्विभोः ॥ ८० ॥ निजाश्रितापद्धरणात्कर्कराशिजनेरपि । हरिरित्यभिधां
तस्य स चकारादितो मुनिः ॥ ८१ ॥ स्वस्मिन्भक्तहृदाकर्षाच्चैत्रमासजनेस्तथा । कृष्णवर्णाच्च विदधे कृष्ण इत्यभिधां
ततः ॥ ८२ ॥ चन्द्रोपमः सदाह्लादे दैत्यत्रासे यमोपमः । भवितेत्यभिधां चक्रे हरिकृष्ण इति द्विजः ॥ ८३ ॥

तस्य धर्मपुत्रस्य । आदितः प्रथमतः । हरिरित्यभिधां हरिरित्येवंभूतनामधेयम् । चकार ॥ ८१ ॥ स्वस्मिन्निति । ततस्तदनन्तरम् । स्वस्मिन्स्वस्वरूपे । भक्तहृदाकर्षात्स्वभक्तजनमानसाकर्षणाद्धेतोः । चैत्रमासजनेर्मधुमासे उत्पन्नत्वाद्धेतोः । तथा । कृष्णवर्णाच्छरीरकान्तेर्मेचकत्वाद्धेतोश्च । कृष्ण इत्यभिधां कृष्ण इत्येवंभूतात्माख्याम् । विदधे मुनिरकरोत् ॥८२॥ चन्द्रेति । अयम् । सदाह्लादे सत्पुरुषाणामाह्लादोत्पादने । चन्दति सन्तप्तजनानाह्लादयतीतिचन्द्रः स उपमायस्य स तथाभूतः । भविता भविष्यति । दैत्यत्रासे दैत्यांसोद्भूतगुरुनृपोद्वेगोत्पादने । यमयति त्रासोत्पादनेन पापकर्मभ्यो विरतान्करोतीति यमः कालः स उपमा यस्य स तथाभूतः । भविता । इति हेतोः । द्विजो मार्कण्डेयमुनिः । हरिकृष्ण इति । अभिधाम् । चक्रे । हरिकृष्णशब्दयोः सामानाधिकरण्यं विधाय हरिकृष्णेति नामाकरोदित्यर्थः । कर्षति त्रासोत्पादनेनासुरान्पापकर्मभ्यो विरतान्करोतीति कृष्णशब्दार्थः । हरिचन्द्रयोः कोशोपलब्धार्थैक्येन यमकृष्णयोर्व्युत्पत्तिगतार्थैक्येन कोशगीतावाक्यावगतकालरूपार्थैक्येन चोपमासाधर्म्याद्धरिकृष्ण इति नामकरोदिति भावः । 'हरिश्चन्द्रार्कवाताश्वे' त्यादि मेदिनी । 'यमः काले च यमजे' इत्यनेकार्थसंग्रहे हैमः । 'कालः कलयतामस्मीति' गीता । यद्वा । यमकृष्णयोः श्यामवर्णदर्शनेन जीवानामसुराणां च त्रासोत्पादनेन साधर्म्यादुपमानोपमेयभावो बोध्यः । सत्संगिजीवनोक्तहरिकृष्णशब्दार्थादयमेनस्यभिन्नार्थोऽर्थगौरवत्वेन चमत्कारद्योतनायेति प्रतिभाति ॥८३॥

त्यागेति ततस्तदनन्तरम् । असौ मार्कण्डेयः । त्यागो दानं च ज्ञानं जीवादिस्वरूपवेदनं च तपः स्वधर्माचरणपूर्वकं कृच्छ्रादिव्रताचरणं च योगोऽष्टाङ्गयोगश्च तैः । असौ । बालः । शङ्करोपमः भविता । इति हेतोः । नीलकण्ठाभिधाम् । चक्रे । एष नामार्थप्रपञ्चोमत्कृतसर्वमङ्गलटीकायाः सविस्तरं बोध्यः ॥८४॥ द्वात्रिंशदिति । ततो नामकरणानन्तरम् । मुनिर्मार्कण्डेयर्षिः । द्वात्रिंशल्लक्षणः सामुद्रिकोक्तद्वात्रिंशन्महापुरुषलक्षणोपेतः । एष तव सुतः । भूरि जनेश्वरोऽग्रे प्रचुरलोकानां नियामकः । भाव्यो भविष्यति । सामुद्रिकोक्तद्वात्रिंशल्लक्षणानि यथा बाहू नेत्रे जानुनी नासिका स्तनान्तरं चेति पञ्चदीर्घाणि । ग्रीवा प्रजननं पृष्ठं जङ्घे इति चत्वारि ह्रस्वानि । केशा अङ्गुलिपर्वाणि अस्थीनि दन्ता इति चत्वारि सूक्ष्माणि । कक्षः कुक्षिर्वक्षो घ्राणं स्कंधौ ललाटमेतानि षडुन्नतानि । नेत्रप्रांतौ नखाः तालु जिह्वा ओष्ठौ पादतले पाणितले इतिसप्त रक्तानि । उरः शिरो ललाटमेतानि त्रीणि विततानि । स्वरः सत्वं नाभिरेतानि त्रीणि गम्भीराणि इति । एतत्प्रमाणवचनानि सामुद्रिकाज्ज्ञेयानि । वो युष्माकम् । सर्वेषां स्वाश्रितजनानां च । कष्टहर्त्ता संसृत्यादिकष्टनिवारकः । भाव्यः । इत्यमुना प्रकारेण । धर्मम् । आह । चकारात् 'कथाश्रुतोहरेरेष' इत्यादिना सत्संगिजीवनोक्तान् गुणानप्या-

त्यागज्ञानतपोयोगैर्भविता शङ्करोपमः । बालोऽसावित्यसौ चक्रे नीलकण्ठाभिधां ततः ॥८४॥ द्वात्रिंशल्लक्षणश्चैष भाव्यो भूरिजनेश्वरः । सर्वेषां वः कष्टहर्तेत्याह धर्मं ततो मुनिः ॥८५॥ ततः सद्वस्त्रभूषाद्यैस्तेन सन्मानितो मुनिः । प्रयागं प्रययौ सोऽथ सभार्योऽतिमुदं ययौ ॥८६॥ मातृपितृज्ञातिजनान्सुखयन्बाललीलया । बालो हरिः प्रतिदिनं ववृधे बालचन्द्रवत् ॥ ८७ ॥ हरिप्रसादः संस्कारान् यथाकालं यथाविधि । अन्नाशनादीन् क्रमशश्चकार स महोत्सवम् ॥ ८८ ॥ चौलान्तेऽब्दे तृतीयेऽथ कालीदत्तासुरो हरिम् । जिघांसुस्तद्दृशा मुह्यन्मुहुर्भ्रान्त्वा ममार ह ॥८९॥ असुरोपद्रवाद्भीतो धर्मो ग्रामं विहाय तम् । सभार्यः ससुतोऽयोध्यामेत्यावासमथाकरोत् ॥९०॥

हेति ज्ञेयम् ॥ ८५ ॥ ततइति । ततस्तदनन्तरम् । तेन धर्मेण । सद्वस्त्रभूषाद्यैः शोभवस्त्रालङ्कारप्रभृतिवस्तुभिः । सन्मानितः सत्कृतः । मुनिर्मार्कण्डेयः । प्रयागं तीर्थराजम् । प्रययौ । अथानन्तरम् । सभार्यो भक्त्याख्यपत्नीसहितः । स धर्मः । अतिमुदमत्यानन्दम् । ययौ प्राप ॥ ८६ ॥ मात्रेति । बालो धृतबालभावः । हरिः । बाललीलया बाल्योचितखेलनादिचरित्रैः । मातृपितृज्ञातिजनान् । सुखयन्सन् । बालचन्द्रवत् द्वितीयाचन्द्र इव । प्रतिदिनमनुघस्रम् । ववृधे ॥ ८७ ॥ हरिप्रसाद इति । हरिप्रसादो देवशर्मा । अन्नाशनादीनन्नप्राशनप्रभृतीन् । संस्कारान् । स्वसुतस्येति शेषः । यथाकालं षष्ठमासादिकालमनतिक्रम्य । यथाविधि स्वगृह्योक्तविधिमनतिक्रम्य । क्रमशोऽनुक्रमेण । समहोत्सवं महोत्सवसहितं यथाभवति तथा । चकार ॥ ८८ ॥ चौलेति । अथानन्तरम् । तृतीये । अब्दे श्रीहरेर्जन्मतस्तृतीये वर्षे । चौलान्ते चौलसंस्कारकरणानन्तरम् । हरिम् जिघांसुर्हन्तुमिच्छुः । कालीदत्तासुरः तद्दृशा श्रीहरेवलोकनेन । मुह्यन्मूढभावं व्रजन्सन् मुहुर्वारंवारम् । भ्रान्त्वा वृक्षषण्डे भ्रमणं विधाय । ममार प्राणान् जहौ । ह प्रसिद्धम् ॥८९॥ असुरेति । अथानन्तरम् असुरोपद्रवादसुरकृतपीडनात् । भीतो भयं प्राप्तः । धर्मः तमसुरोपद्रवयुक्तम् । ग्रामं छुप्पयः संवसथम् । विहाय त्यक्त्वा । सभार्यः स पत्नीकः । ससुतः पुत्रद्वयसहितः सन् । अयोध्याम् । एत्य प्राप्य । आवासं स्वकीये प्राचीनस्थाने निवासम् । अकरोत् ॥ ९० ॥

तत्रेति । तत्रायोध्यायाम् । अष्टमेऽब्दे श्रीहरेर्जन्मतोऽष्टमे वर्षे । कृतोपनयनः पित्राकृतमौंजीबन्धनसंस्कारः । हरिः । धर्मतः स्वजनकधर्मात्सकाशात् । अङ्गानि शिक्षादीनि तैःसहिता वेदाः सामादयो निगमाश्च पुराणानि ब्राह्मादीनि च तान्यादयो येषां साङ्ख्य पातञ्जल मीमांसादिशास्त्राणां तान् ग्रन्थान् । अल्पेन । कालेन । अधीतवान् पपाठ ॥९१॥ ततइति । ततस्तदनन्तरम् । बुध्या स्वमनीषया । निश्चित्यैतेष्वयमेव सार इति निर्णीय । चतुर्भ्यः वक्ष्यमाणचतुर्ग्रन्थेभ्यः । सारचतुष्टयं तेषां रहस्यार्थचतुष्कम् । पृथक्कृत्य । अलेखयत् श्रीहरिस्तस्यस्वक्षरसूक्ष्मपत्रकपुस्तकलेखनं कारयामासेत्यर्थः । तत्सारचतुष्टयपुस्तकम् । निजान्तिके स्वसमीपे । अरक्षत् ॥ ९२ ॥ एतदेवाह त्रिभिः । तत्रेति । तत्र तेषु ग्रन्थेषु मध्ये । श्रीमद्भागवतात् । दशमपञ्चमौ । स्कन्धौ । सारम् । अलेखयत् । स्कान्दात्स्कन्दपुराणात् । श्रीवासुदेवमाहात्म्यम् । सारम् । अलेखयत् ॥ ९३ ॥ भारतादिति । भारताच्छ्रीकृष्णद्वैपायनकृतान्महाभारतात् । भगवद्गीताम् । विष्णुनामसहस्रकम् । तथा । विदुरनीतिम् । इत्येतम् । सारम् । अलेखयत् ॥ ९४ ॥ धर्मेति । स श्रीहरिः । सकलात्समग्रात् । धर्मशास्त्रान्मन्वादिस्मृतिग्रन्थवृन्दात् । याज्ञवल्क्यस्मृतिम् । सारम् । पृथक् । अलेखयत् । इत्येवं रूपम्

तत्र कृतोपनयनोऽष्टमेऽब्देऽधीतवान् हरिः । साङ्गवेदपुराणादीन्कालेनाल्पेन धर्मतः ॥९१॥ ततश्चतुर्भ्यो निश्चित्य बुद्ध्या सारचतुष्टयम् । अलेखयत्पृथक्कृत्य तच्चारक्षन्निजान्तिके ॥९२॥ तत्र श्रीमद्भागवतस्कन्धौ दशमपञ्चमौ । श्रीवासुदेवमाहात्म्यं स्कान्दात् सारमलेखयत् ॥ ९३ ॥ भारताद्भगवद्गीतां विष्णुनामसहस्रकम् । तथा विदुरनीतिं चेत्येतं सारमलेखयत् ॥ ९४ ॥ धर्मशास्त्राच्च सकलाद्याज्ञवल्क्यस्मृतिं स च । अलेखयत्पृथक् सारमिति सारचतुष्टयम् ॥ ९५ ॥ धर्मज्ञानविरागाढ्यां भक्तिं मात्रे स वत्सरे । एकादश उपादिश्य दिव्यां तस्यै ददौ गतिम् ॥ ९६ ॥ पित्रे यथावत्स्वज्ञानं दत्त्वा तस्माअपि प्रभुः । ददौ दिव्यां गतिं तौ च मोचितौ विप्रशापतः ॥ ९७ ॥ तत्पार्श्वे एव तावास्तां दिव्यदेहौ सदा स्थितौ । हातुमैच्छद्गृहं सोऽपि नैष्ठिकव्रतमास्थितः ॥ ९८ ॥ अनापृच्छ्यैव बन्धून्स्वांस्तीव्रवैराग्यवेगतः । तपसे कृतसङ्कल्प एकाकी निर्ययावुदक् ॥ ९९ ॥

। सारचतुष्टयम् । अलेखयत् ॥ ९५ ॥ धर्मेति । स श्रीहरिः एकादशे । वत्सरे स्वजन्मत एकादशे वर्षे । धर्मज्ञानविरागाढ्यां धर्मादिस्वरूपयुक्ताम् । भक्तिं दशविधभक्तिस्वरूपम् । मात्रे स्वजनन्यै प्रेमवत्यै । उपदिश्य साधुलक्षणनिरूपणपूर्वं कथयित्वा । तस्यै मात्रे । दिव्याम् । गतिम् । ददौ ॥ ९६ ॥ पित्र इति । प्रभुः श्रीहरिः । पित्रे स्वजनकाय धर्माय । यथावद्यथातथ्येन । स्वज्ञानं समहिमस्वस्वरूपबोधम् । दत्वा । तस्मै पित्रेऽपि । दिव्याम् । गतिम् । ददौ । तौ भक्तिधर्मौ पितरौ । विप्रशापतो दुर्वासोमुनिशापात् । मोचितौ । चकारेति शेषः । विप्रशापजन्यमनुष्यदेहत्यागपूर्वकंदिव्यदेहप्रापणेन जनकौ मुनिशापमुक्तौ चकारेत्यिर्थः ॥ ९७ ॥ तदिति । दिव्यदेहावमायिकाकारौ । तौ भक्तिधर्मौ । तत्पार्श्वे श्रीहरिसमीपप्रदेशे एव । सदा सर्वकालम् । स्थितौ वर्त्तमानौ । आस्तावभूताम् । ततः । नैष्ठिकव्रतम् । आस्थितः । स श्रीहरिरपि । गृहं स्वभवनम् । हातुं त्यक्तुम् । ऐच्छत् ॥ ९८ ॥ अनापृच्छ्येति । तीव्रवैराग्यवेगतः । स्वान्स्वकीयान् । बन्धून् रामप्रतापादीन् । अनापृच्छ्यापृष्ट्वैव । तपसे तपश्चरणार्थम् । कृतसङ्कल्पो विहितविनियोगः श्रीहरिः । एकाक्येकलः सन् । उदगुत्तरदिगभिमुखम् । निर्ययौ प्रवव्राज ॥ ९९ ॥

तं विशिनष्टि चतुर्भिः । साच्छादनमिति । साच्छादनवस्त्रसहितम् । कौपीनम् । ऐणं चर्म कृष्णमृगाजिनम् । मेखलां मौंजीम् । दण्डमाषाढम् । कमण्डलुं कुण्डीम् । भिक्षापात्रं भैक्षभाजनम् । जलगालनं जलगालनार्थकवस्त्रखण्डं च । दधदित्युत्तरेणान्वयः ॥१००॥ दधदिति । यज्ञोपवीतं ब्रह्मसूत्रम् । कण्ठे गले । द्वे द्विगुणे । तुलसीस्रजौ तुलसीकाष्ठसूक्ष्ममणिमाले । सचन्द्रकोर्ध्वपुण्ड्राङ्कं भालगतवर्त्तुलबिन्दुसहितरेखारूपोर्ध्वपुण्ड्रलक्ष्म । करे दक्षिणपाणिपद्मे । जपमालिकां च । दधत् ॥ १०१ ॥ शालग्राममिति । अल्पके लघौ । एकके एकस्मिन् । समुद्गे सम्पुटे । 'समुद्गः सम्पुट' इतिहैमः । शालग्रामम् बालकृष्णं बालमुकुन्दं च संस्थाप्य । तं समुद्गम् । वस्त्रखण्डेनाल्पनक्तकेन । बध्वा । कण्ठे । दधत् ॥ १०२ ॥ दधदिति । स्कन्धलम्बितां भुजशिरसि लम्बमानाम् । सारचतुष्कस्य पूर्वोक्तसारचतुष्टयस्य । पुस्तिकाम् । दधत् । सरयूम् उत्तरन् उत्तीर्य गन्तुमिच्छन् श्रीहरिः । स्वक्षेपकं स्वं सरय्वां प्रक्षेप्तारम् । दैत्यं हतावशिष्टमसुरम् । अमोहयत्स्वनिश्चेष्टत्वादिप्रदर्शनेन स्वमायामूढमकरोत् ॥१०३॥ हिमेति । स श्रीहरिः । हिमालयोपत्यकासु कृष्णहिमगिरेरासन्नभूमिषु । चरन् गच्छन्सन् । कतिपयैः कतिभिश्चित् । दिनैः । मुक्तनाथं पुलहाश्रमस्थितां मुक्तनाथसंज्ञां विष्णवर्चाम् । संप्राप्य । तत्र ।

साच्छादनं तु कौपीनमैणं चर्म च मेखलाम् । दण्डं कमण्डलुं भिक्षापात्रं च जलगालनम् ॥ १०० ॥ दधद्यज्ञोपवीतं च कण्ठे द्वे तुलसीस्रजौ । स चन्द्रकोर्ध्वपुण्ड्राङ्कं करे च जपमालिकाम् ॥ १०१ ॥ शालग्रामं बालकृष्णं समुद्गेऽल्पक एकके । संस्थाप्य वस्त्रखण्डेन बध्वा कण्ठे दधच्च तम् ॥ १०२ ॥ दधत्सारचतुष्कस्य पुस्तिकां स्कन्धलम्बिताम् । उत्तरन्सरयूं दैत्यं स्वक्षेपकममोहयत् ॥ १०३ ॥ हिमालयोपत्यकासु चरन्कतिपयैर्दिनैः । मुक्तनाथं स सम्प्राप्य तत्र क्षेत्रेऽकरोत्तपः ॥ १०४ ॥ उग्रेण तपसा साक्षात्प्रासादयदहस्करम् । मासान्कतिपयांस्तत्र स्थित्वाऽन्यवनमभ्यगात् ॥ १०५ ॥ महत्यरण्ये विचरन् शार्दूलादि-भयङ्करे । गोपालसंज्ञं योगीन्द्रं वटाधस्ताद्ददर्श सः ॥ १०६ ॥ तेनातिमानितः प्रीत्या वर्षमेकं तदन्तिके । वसन्नष्टाङ्गयोगस्य चकाराभ्यासमादरात् ॥१०७॥ सिद्धयोगोऽल्पकालेन तस्मै दत्वा स्ववेदनम् । प्रापय्य तं सिद्धगतिमादिवाराहमागमत् ॥१०८॥

क्षेत्रे । तपः अकरोत् ॥ १०४ ॥ उग्रेणेति । उग्रेण तीव्रतरेण । तपसा । साक्षात् । अहस्करं सूर्यनारायणम् । प्रासादयत्प्रसन्नं चकार । तत्र क्षेत्रे । कतिपयान्कांश्चित् । मासान् । स्थित्वा । अन्यवनं वनान्तरम् । अभ्यगात् ॥ १०५ ॥ महतीति । स श्रीहरिः । शार्दूलादिभयङ्करे व्याघ्रसिंहारण्यसैरिभादिभयोत्पादके । महति अरण्ये कान्तारे । विचरन्सन् । वटाधस्तादत्युच्चपरिणाहवन्न्यग्रोधतरुवरतले स्थितम् । गोपालसंज्ञम् योगीन्द्रम् । ददर्श ॥ १०६ ॥ तेनेति । तेन गोपालयोगीन्द्रेण । प्रीत्या गाढा-नुरागेण । अतिमानितोऽत्यन्तंसत्कृतः श्रीहरिः । तदन्तिके गोपालयोगीन्द्रनिकटे । एकम् । वर्षमेकाब्दपर्यन्तम् । वसन्सन् । आदरात् । अष्टाङ्गयोगस्य । अभ्यासम् । चकार ॥ १०७ ॥ सिद्धेति । अल्पकालेन । सिद्धयोगः साधिताष्टाङ्गयोगः श्रीहरिः । तस्मै गोपालयोगीन्द्राय । स्ववेदनं स्वस्वरूपज्ञानम् । दत्त्वा । तं गोपालयोगीन्द्रम् । सिद्धगतिं ब्रह्मात्मनाऽक्षरधामप्राप्तिपूर्वकंस्वसेवाप्रदानरूपदिव्यगतिम् । प्रापय्य गमयित्वा । आदिवाराहमादिवाराहसंज्ञिं तीर्थविशेषम् । आगमत्प्राप ॥ १०८ ॥

नीलकण्ठ इति । ततस्ततदनन्तरम् । निलकण्ठः श्रीहरिः । तपः । कुर्वन् । तीर्थानि । विचरन्सन् । सीरपुरमेतत्संज्ञं नगरम् । प्राप्तः । यत्र सीरपुरे । सिद्धवल्लभः । भूपः । अभूत् ॥ १०९ ॥ राज्ञेति । स श्रीहरिः राज्ञा सिद्धवल्लभभूपेन । अतिमानितः सन् । सिद्धाभिमानिनाम् । असुराणाम् । दर्पं गर्वम् । अपानुदन्निवर्त्तयन्सन् । तत्र सीरपुरे चातुर्मास्यमाषाढादिमासचतुष्टयपर्यन्तम् । उवास ॥ ११० ॥ साधुमिति । श्रीहरिः । गोपालदासाख्यम् । साधुम् । तदभिचारतः सिद्धाभिमान्यसुरकृतादाभिचारिकार्दनात् । आवद्रक्ष । दुष्प्रतिग्रहेण मातङ्गकालपुरुषलवणादिघोरदानस्वीकारेण । कृष्णाङ्गम् । प्राग्गौराङ्गमपि दानस्वीकारानन्तरं सञ्जातश्यामशरीरवर्णमित्यर्थः । विप्रं तैलिङ्गद्विजम् । अघाद् दुष्प्रतिग्रहजन्यपापात् । अमोचयत् पुनर्गौराङ्गसम्पादनपूर्वं प्रतिग्रहपापमुक्तं चकारेत्यर्थः ॥ १११ ॥ ततइति । ततस्तदनन्तरम् । स श्रीहरिः । कामाक्ष्याः कामाक्षीसंज्ञायाः । देव्याः । समीपग्रामं निकटवर्त्तिसंवसथम् । आययौ प्राप । तत्र ग्रामे । महाकाल्याः देव्याः । उपासकः । पिबैकः पिबैकनाम्ना विख्यातः । विप्रो ब्राह्मणः । अभूदासीत् ॥ ११२ ॥ मन्त्रेति । मद्यपाग्रणीः मद्यपानकर्त्तृशाक्ताग्रगण्यः । यो विप्रः । मान्त्रिकान्मन्त्रशास्त्राभिज्ञानमपि । स्वग्राममागततैर्थिकान्स्वग्रामसम्प्राप्त-

नीलकण्ठस्तपः कुर्वंस्तीर्थानि विचरंस्ततः । प्राप्तः सीरपुरं भूपो यत्राभूत्सिद्धवल्लभः ॥ १०९ ॥ राज्ञाऽतिमानितस्तत्र चातुर्मास्यमुवास सः । सिद्धाभिमानिनां दर्पमसुराणामपानुदन् ॥ ११० ॥ साधुं गोपालदासाख्यमावत्तदभिचारतः । दुष्प्रतिग्रहकृष्णाङ्गं विप्रं चाघादमोचयत् ॥ १११ ॥ ततो देव्याः स कामाक्ष्याः समीपग्राममाययौ । तत्र विप्रः पिबैकोऽभून्महाकाल्या उपासकः ॥११२॥ मन्त्रयन्त्राभिचाराद्यैः स्वग्राममागततैर्थिकान् । मान्त्रिकानपि यश्चक्रे स्वशिष्यान्मद्यपाग्रणीः ॥११३॥ महाभिमानिनं स्वस्मिन् युञ्जन्तं मन्त्रदेवताः । तं हरिः स्वौजसा चक्रे शिष्यमेवापराजितः ॥११४॥ ततो ययौ नीलकण्ठो नवलक्षाख्यपर्वतम् । स्वदर्शनेन तत्रत्यान्सिद्धसङ्घानमोदयत् ॥ ११५ ॥ गङ्गासागरमेत्याथ नावोत्तीर्य स खाडिकाम् । कपिलस्येक्षणं चक्रे तत्र मासमुवास च ॥ ११६ ॥

तीर्थाटनपरवीतराग्यादिजनानाम् । मन्त्रयन्त्राभिचाराद्यैः । स्वशिष्यान्सम्प्राप्तस्वदीक्षान् । चक्रे ॥ ११३ ॥ महेति । हरिः । महाभिमानिनं सिद्धाग्रेसरत्वादिमहाहङ्कारवन्तम् । स्वस्मिन् । मन्त्रदेवताः भैरववीरादिकालभैरववीरान्तमन्त्रदेवान् । युञ्जन्तं प्रेरयन्तम् । तं पिबैकब्राह्मणम् । स्वौजसा स्वप्रतापेन । अपराजितस्तत्प्रेरितभैरववीरादिकृतपराजयमप्राप्तः सन्नेव । शिष्यं तद्दुराचारत्याजनपूर्वं गृहीतात्मवैष्णवदीक्षम् । चक्रे ॥ ११४ ॥ ततइति । ततस्तदनन्तरम् । नीलकण्ठः श्रीहरिः नवलक्षाख्यपर्वतम् । ययौ । तत्रत्यान्नवलक्षगिरौ स्थित्वात्मार्थं तपःकुर्वाणान् । सिद्धसङ्घान् सिद्धिमतस्तपस्विव्रजान् । स्वदर्शनेन स्वकीयदर्शनदानेन । अमोदयत्तपःफलस्वमूर्त्तिदर्शनमुदितांश्चकारेत्यर्थः ॥ ११५ ॥ गङ्गेति । अथानन्तरम् । स श्रीहरिः । गङ्गासागरं गङ्गासागरसङ्गमतीर्थम् । एत्य प्राप्य । नावा तर्या । खाडिकां समुद्रखाडीम् । उत्तीर्य । कपिलस्य देवहूतिसूनोः कपिलभगवतः । कपिलाश्रमं प्राप्येतिशेषः । ईक्षणं दर्शनम् चक्रे । तत्र कपिलाश्रमे । मासमेकमासपर्यन्तम् । उवास ॥ ११६ ॥

ततइति । ततस्तदनन्तरम् । जगन्नाथपुरीम् । प्राप्य । दश । मासान् दशमासपर्यन्तमित्यर्थः । आवसंस्तत्र निवासं कुर्वन् श्रीहरिः । स्वौजसा स्वप्रतापेन । तत्रस्थासुरसङ्घानां जगन्नाथपुरीकृतनिवासदैत्यव्रजानाम् । मदं गर्वम् । अपाहरत् निवर्त्तयामास ॥ ११७ ॥ तदिति । तस्य श्रीहरेरतिक्रम उत्तोल्य तदाश्रमादन्यत्र नीत्वा भर्शनोद्यतविकोशादिप्रदर्शनगालिप्रदानाद्यपराधाचरणं तेन विभ्रान्ताः श्रीहरिमायाविमूढमतयः । ते । सहस्रशः । असुराः । शस्त्रैः । परस्परम् । निहत्य । सद्यः । निधनं विनाशम् । प्रापुः ॥ ११८ ॥ आदीति । ततस्तदनन्तरम् । असौ श्रीहरिः । आदिकूर्ममादिकूर्माख्यक्षेत्रम् । प्रायात् । ततस्तदनन्तरम् । मानसे । पुरे मानसाख्यनगरे । सत्रधर्मनृपद्वाराऽपि । असुरव्रजमसुरसमूहम् । उच्चिच्छेद विनाशयामास ॥ ११९ ॥ वेङ्कटाद्रिमिति । ततस्तदनन्तरम् । वेङ्कटाद्रिं करिगिरिम् । काञ्चीं शिवकाञ्चिविष्णुकाञ्चीसंज्ञपुरीद्वयं च । गत्वा प्राप्य । ततः श्रीरङ्गं रङ्गेश्वरक्षेत्रम् । आवसन् । तत्र निवासं कुर्वन्नित्यर्थः । श्रीहरिः । तत्रत्यान् श्रीरङ्गक्षेत्रनिवासिनः । वैष्णवव्रजान् । दुराचारात्पराङ्गनासङ्गोच्छिष्टाशनादिकाधर्माचरणात् । अमोचयत्स्वाचारसम्प्रवृत्तानकरोदित्यर्थः ॥ १२० ॥ तत्रेति । स श्रीहरिः । तत्र श्रीरङ्गक्षेत्रे । मासद्वयं द्विमास-

ततो जगन्नाथपुरीं प्राप्य मासान्दशावसन् । तत्रस्थासुरसङ्घानां स्वौजसाऽपाहरन्मदम् ॥ ११७ ॥ तदतिक्रमविभ्रान्तास्तेऽसुरास्तु परस्परम् । शस्त्रैर्निहत्य निधनं प्रापुः सद्यः सहस्रशः ॥ ११८ ॥ आदिकूर्मं ततः प्रायात्ततोऽसौ मानसे पुरे । सत्रधर्मनृपद्वाराऽप्युचिच्छेदासुरव्रजम् ॥११९॥ वेङ्कटाद्रिं ततः काञ्चीं गत्वा श्रीरङ्गमावसन् । अमोचयद् दुराचारात्तत्रत्यान्वैष्णवव्रजान् ॥ १२० ॥ तत्र मासद्वयं स्थित्वा सेतुबन्धमुपाययौ । ततः सुन्दरराजं स दृष्ट्वाऽरण्यमगान्महत् ॥ १२१ ॥ तत्र पञ्चाहमन्नाम्बु न प्राप्तः षष्ठवासरे । मध्याह्ने कूपमासाद्य नित्यकर्मसमाचरत् ॥ १२२ ॥ शालग्रामं ताम्रपात्रे निधाय निगमं पठन् । चतुःकुण्ड्युदकेनासावभिषेकं समाचरत् ॥ १२३ ॥ अतीव तृषितः शालग्रामस्तदखिलं जलम् । पीत्वाऽतृप्यत साश्चर्यं तदासौ हृद्यचिन्तयत् ॥१२४॥ तृषात्वस्य निवृत्तैव क्षुन्निवृत्तिः कथं भवेत् । नास्त्यन्नं वा फलाद्यत्र नैवेद्यं कल्पयामि यत् ॥१२५॥

पर्यन्तम् । स्थित्वा । सेतुबन्धं तीर्थम् । उपाययौ । ततस्तदनन्तरम् सुन्दरराजमेतत्संज्ञां विष्णवर्चाम् । दृष्ट्वा । महत् । अरण्यम् । अगात् प्राप्तवान् ॥ १२१ ॥ तत्रेति । तत्रारण्ये । पञ्चाहं पञ्चदिनपर्यन्तम् । अन्नाम्बु अन्नं जलं चापि । न प्राप्तो नाधिगतः श्रीहरिः । षष्ठवासरे षष्ठदिने । मध्याह्ने । कूपं प्रहिम् । आसाद्य प्राप्य । नित्यकर्म स्नानसन्ध्यावन्दनादिनित्यक्रियाम् । समाचरत् । अत्रानुक्तापि पञ्चमदिने प्रदोषे वनशिम्बीचतुष्टय जलप्राप्तिर्ज्ञेया सत्सञ्जिजीवने तथोक्तेः ॥ १२२ ॥ शालग्राममिति । असौ श्रीहरिः । ताम्रपात्रे । शालग्रामम् । निधाय । निगमं पुरुषसूक्तमन्त्ररूपवेदम् । पठन्नुच्चरन्सन् । चतुःकुण्ड्युदकेन पञ्चप्रस्थजलापूर्णकमण्डलुचतुष्टयधारया । अभिषेकं स्नानम् । समाचरदकारयत् ॥ १२३ ॥ पञ्चेति । अतीवतृषितोऽत्यन्ततृषाक्रान्तः । शालग्रामः । अखिलं सकलमपि । तच्चतुःकुण्डीपरिमितम् । जलम् । पीत्वा । अतृप्यत वितृषोऽभूत् । तदा तस्मिन्समये । असौ श्रीहरिः । हृदि स्वमनसि । अचिन्तयद्विचारमकरोत् ॥ १२४ ॥ तदेवाह । तृषेति । अस्य शालग्रामस्य

। तृषा तु । निवृत्त्यैव । क्षुन्निवृत्तिरशनायानिवर्त्तनम् । कथं केन प्रकारेण । भवेत् । कुतः । अत्रास्मिन् स्थाने । अन्नम् । अथवा । फलादि । नास्ति । यद्येनान्नादिना । नैवेद्यम् । कल्पयामि कुर्याम् ॥ १२५ ॥ इतीति । इतीत्थम् । चिन्तयतः । तस्य श्रीहरेः । सन्निधौ समीपप्रदेशे । वृषारूढः कृतनन्दिकेश्वरारोहणः । कार्पटाकृतिः कार्पटिकवेषः । स्वयम् । शङ्करः । गौर्या सह पार्वत्या साकम् । प्राक् श्रीहरेर्विष्णुनैवेद्याचरणकालात्प्रथमत एवागत्य । अस्थात् ॥ १२६ ॥ मानयित्वेति । स शिवः । ध्यानं विष्णवर्थे नैवेद्यप्राप्तिचिन्तनम् । आस्थितं कुर्वाणम् । वर्णीन्द्रं नैष्ठिकब्रह्मचारिवरं श्रीहरिम् । उपेत्य निकटे गत्वा । मानयित्वा सत्कृत्य । अस्मै वर्णीन्द्राय । सक्तुप्रस्थं प्रस्थपरिमितान्सक्तून् । ददौ । स वर्णीन्द्रः । यावदर्थं यावत्प्रयोजनम् । अग्रहीत्प्रस्थपरिमितसक्तुतस्तान् यावत्प्रयोजनमादत्तेस्मेत्यर्थः ॥ १२७ ॥ शालग्रामायेति । अथानन्तरम् । हरिकृष्णः । तेन लवक्षणमिश्रसक्तुपिण्डेन । शालग्रामाय । नैवेद्यम् । कृत्वा । तत्सक्तुनैवेद्यम् । स्वयमपि । बुभुजे । ततस्तदनन्तरम् । भूतपुरीं रामानुजार्चाक्षेत्रम् । अगात ॥ १२८ ॥ तत्रेति । तपोनिधिः । स श्रीहरिः । तत्र भूतपुर्याम् । रामानुजाचार्यस्य प्रतिमाऽर्चातस्यादर्शनं सादरमीक्षणं च अर्चनं

इति चिन्तयतस्तस्य सन्निधौ शङ्करः स्वयम् । गौर्या सह वृषारूढः प्रागस्थात् कार्पटाकृतिः ॥१२६॥ मानयित्वा स वर्णीन्द्रमुपेत्य ध्यानमास्थितम् । ददौ सक्तुप्रस्थमस्मै यावदर्थं स चाग्रहीत् ॥ १२७ ॥ शालग्रामाय नैवेद्यं तेन कृत्वाऽथ तत्स्वयम् । बुभुजे हरिकृष्णोऽपि ततो भूतपुरीमगात् ॥ १२८ ॥ तत्र रामानुजाचार्य-प्रतिमादर्शनार्चने । कृत्वा कुमारिकाक्षेत्रं स जगाम तपोनिधिः ॥१२९॥ ततो दृष्ट्वापद्मनाभमुपगम्य जनार्दनम् । प्रापादिकेशवं चायान्मलयाख्यं कुलाचलम् ॥ १३० ॥ साक्षीगोपालमालोक्य पुण्डलीकपुरं ययौ । श्रीविठ्ठलेशनिकटे तत्र मासद्वयं स्थितः ॥ १३१ ॥ ततः स दण्डकारण्ये विचरन्नासिके पुरे । श्रीरामदर्शनं कृत्वा त्र्यम्बकेश्वरमाययौ ॥ १३२ ॥ उत्तीर्य तापीं रेवां च महीं साभ्रमतीं ततः । भीमनाथेक्षणं कृत्वा गोपनाथमुपाययौ ॥ १३३ ॥

पूजनं च ते । कृत्वा । कुमारिकाक्षेत्रम् । जगाम ॥ १२९ ॥ ततइति । ततस्तदनन्तरम् । पद्मनाभाख्यां विष्णवर्चाम् । दृष्ट्वा । जनार्दनं जनार्दनाख्यां विष्णुप्रतिकृतिम् । उपगम्य प्राप्य । आदिकेशवमादिकेशवनामिकां विष्णुप्रतिमाम् । प्राप । तत्र हरिजिघांसार्थागतासुरसहस्रद्वयं तत्रत्यनृपेण निहतमिति कथाशेषः सत्संगिजीवनाद्बोध्यः । किञ्च । ततः । मलयाख्यम् । कुलाचलम् । आयात् ॥ १३० ॥ साक्षीति । ततः । साक्षिगोपालं साक्षिगोपालसंज्ञां भगवतोऽर्चाम् । आलोक्य । पुण्डलीकपुरम् । ययौ । तत्र पुण्डलीकपुरे । श्रीविठ्ठलेशनिकटे श्रीविठ्ठलाख्यभगवदर्चान्तिके । मासद्वयं द्विमासपर्यन्तम् । स्थितः श्रीहरिस्तस्थौ ॥ १३१ ॥ ततइति । ततस्तदनन्तरम् । स श्रीहरिः । दण्डकारण्ये । विचरन्सन् । नासिके । पुरे । श्रीरामदर्शनम् कृत्वा । त्र्यम्बकेश्वरमेतन्नामानं शिवम् । आययौ ॥ १३२ ॥ उत्तीर्येति । ततस्तदनन्तरम् । तापीम् । रेवाम् । महीम् । साभ्रमतीं च उत्तीर्य । भीमनाथेक्षणं भाल्लदेशान्तर्गतभीमनाथशिवदर्शनम् । कृत्वा । गोपनाथं समुद्रतीरस्थगोपनाथशंभुम् । उपाययौ ॥ १३३ ॥

पञ्चेति । ततस्तदनन्तरम् । स श्रीहरिः । पञ्चत्तीर्थीं यात्राम् । विदधत्सन् । रसेषुवस्विन्दुमिते । शके विक्रमभूपशकाऽब्दे । नभोवदि श्रावणकृष्णपक्षे । षष्ठ्यां पष्ठीतिथौ संवदष्टादशशताधिकषट्पञ्चाशत्तमेऽब्दे (१८५६) श्रावणकृष्णपष्ठीतिथावित्यर्थः । लोजपुरं सौराष्ट्रदेशान्तर्गतलोजाख्यपत्तनम् । प्रापत् ॥ १३४ ॥ तत्रेति तत्र लोजपुरे । उद्धवावतारस्य श्रीरामानन्दवर्णिनः । शिष्याः । मुक्तानन्दादयः साधवः । तं श्रीहरिम् । दृष्ट्वा । बह्वधिकं यथातथा । मेनिरे सम्मानयांचक्रुः ॥१३५॥ साध्वीति । असौ श्रीहरिः । तान्मुक्तानन्दादिसाधून् । साधुलक्षणसम्पन्नान्सच्छास्त्रोक्तसाधुलक्षणयुक्तान् । ज्ञात्वा । तान्साधून् । सदुक्तिभिः शोभनैर्धर्मज्ञानविरक्त्यष्टाङ्गयोगतपःस्वरूपादिनिरूपणवचनैः । प्रीणयन्प्रसन्नान्कुर्वन्सन् । तैः साधुभिः । सह । कतिचित् । मासान् । उवास ॥ १३६ ॥ एवमिति । प्रभुः श्रीहरिः । एवं पूर्वोक्तप्रकारेण । तीर्थानि । विचरन्सन् । तत्र तत्र तेषु तेषु तीर्थेषु । स्थितेष्विति शेषः । नृषु जनेषु । स्थितं अधर्मम् । उन्मूल्य मूलादुत्पाट्य । एकान्तधर्मम् । अस्थापयत् ॥ १३७ ॥ अथेति । अथानन्तरम् । असौ श्रीहरिः । पीप्पलाह्वये । ग्रामे । प्राप्तं भुजङ्गनगरात्समायातम् । रामानन्दमुनिम् । श्रुत्वा । तं रामानन्दमुनिम् । द्रष्टुम् । तैः साधुभिर्मुक्तान्दादिभिः

पञ्चतीर्थीं स विदधत्प्रापल्लोजपुरं ततः । रसेषुवस्विन्दुमिते शके षष्ठ्यां नभोवदि ॥१३४॥ तत्रोद्धवावतारस्य श्रीरामानन्दवर्णिनः । मुक्तानन्दादयः शिष्या दृष्ट्वा तं बहु मेनिरे ॥ १३५ ॥ साधुलक्षणसम्पन्नान् ज्ञात्वा तान्सह तैरसौ । उवास कतिचिन्मासान्प्रीणयंस्तान्सदुक्तिभिः ॥ १३६ ॥ एवं तीर्थानि विचरंस्तत्र तत्र स्थितं नृषु । उन्मूल्याधर्ममेकान्तधर्ममस्थापयत्प्रभुः ॥ १३७ ॥ अथ तैः साधुभिः सार्कं ग्रामेऽसौ पिप्पलाह्वये । प्राप्तं रामानन्दमुनिं श्रुत्वा तं द्रष्टुमाययौ ॥१३८॥ ज्येष्ठासितद्वादशिकादिनेऽसौ ददर्श तं नैष्ठिकवर्णिवेषम् । प्रणम्य भक्त्या निषसाद तस्य पार्श्वे भृशं तेन च मानितोऽसौ ॥१३९॥ दर्शनान्नीलकण्ठस्य भृशमानन्दमेत्य सः । अपृच्छत्तस्य वृत्तान्तमतिकृशतनोस्ततः ॥१४०॥ सोऽथाशेषं स्ववृत्तान्तं जन्मादितद्दिनावधि । अनुक्रमेणाकथयत् सर्वेषां शृण्वतां सताम् ॥१४१॥

सद्भिः साकम् । आययौ ॥ १३८ ॥ ज्येष्ठेति । असौ श्रीहरिः । ज्येष्ठासितद्वादशिकादिने (१८५६) ज्येष्ठमासकृष्णपक्षद्वादशीदिवसे । नैष्ठिकवर्णिवेषम् । तं श्रीरामानन्दमुनिम् । ददर्श । तेन श्रीरामानन्दमुनिना । भृशमत्यन्तम् । मानीतः सत्कृतः । असौ श्रीहरिः । भक्त्या । प्रणम्य रामानन्दमुनयेसाष्टाङ्गप्रणमान्कृत्वा । तस्य श्रीरामानन्दमुनेः । पार्श्वे । निषसाद ॥ १३९ ॥ दर्शनादिति । ततस्तदनन्तरम् । स श्रीरामानन्दमुनिः । निलकण्ठस्य । दर्शनात् । भृशमत्यन्तम् । आनन्दम् । एत्य प्राप्य । अतिकृशतनोस्तपश्चरणातिक्षीणशरीरस्य । तस्य निलकण्ठस्य । वृत्तान्तम् । अपृच्छत् ॥ १४० ॥ स इति । अथानन्तरम् । स श्रीहरिः । जन्मादि स्वजन्मप्रभृतिकम् । तद्दिनावधि यावद्रामानन्दमुनिप्राप्तिदिनपर्यन्तम् । अशेषं निःशेषम् । स्ववृत्तान्तम् । सर्वेषां मुक्तानन्दादीनाम् । सतां साधूनाम् । शृण्वतां सताम् । अनुक्रमेण । अकथयत् ॥ १४१ ॥

एतदेवाह सपादश्लोकेन । जन्मेति । स्वकम् । जन्म ब्राह्मणकुलेजनिम् । स्थानं जन्मभूमिं च । पितरौ स्वकौ जननीजनकौ । गोत्रं गोत्रर्षिम् । वेदम् । गुरुम् । इष्टदेवम् । तपः स्वकृततपश्चरणप्रकारम् । योगं स्वकृताष्टाङ्गयोगाभ्यसनम् । तथा । तीर्थयात्राक्रमं स्वाचरिततीर्थयात्रानुक्रमम् । स्वकमिति सर्वत्रान्वेतव्यम् ॥ १४२ ॥ यथावदिति । श्रीहरिः । विस्तरेण । यथावद्याथातथ्येन । आह । जन्मस्थानादिकथयामासेत्यर्थः । स श्रीरामानन्दमुनिः । तत् श्रीनीलकण्ठस्य जन्मस्थानादिवृत्तान्तम् । श्रुत्वा । मुदा अब्रवीत् । तदेवैकाक्षरन्यूनत्रिपादयुक्ताभ्यां द्वाभ्यां श्लोकाभ्यामाह । हे नीलकण्ठवर्णिन् । ते तव । भद्रं कल्याणमस्तु । त्वम् । अस्मदीयो मच्छिष्यधर्मसुतत्वान्मामकीनः । असि । अतः । निश्चितमेव । मम प्रेष्ठोऽतिप्रियः । असि ॥ १४३ ॥ प्रेष्ठत्वे हेतुमाह द्वाभ्याम् । प्रयाग इति । त्वत्पिता तव जनकः । धर्मः । प्रयागे तीर्थराजे । मन्मत्तः सकाशात् । वैष्णवीम् । दीक्षाम् । प्राप । मदाज्ञया मन्निदेशेन । मुमुक्षुभ्यः । कृष्णभक्तिम् । उपादिशन्वैष्णवदीक्षाप्रदानपूर्वं सधर्मभक्त्याचरणरीतिं बोधयन्सन् । कोसलेष्वित्युत्तरश्लोकेनान्वयः ॥ १४४ ॥ कोसलेष्विति । कोसलेषु देशेषु । अवसत् । तस्यैवं विधस्य धर्मस्य । पुत्रः । नैष्ठिकव्रती

जन्मस्थानं च पितरौ गोत्रं वेदं गुरुं स्वकम् । इष्टदेवं तपो योगं तीर्थयात्राक्रमं तथा ॥ १४२ ॥ यथावद्विस्तरेणाह
तच्छ्रुत्वा सोऽब्रवीन्मुदा । अस्मदीयोऽसि भद्रं ते प्रेष्ठोऽसि मम निश्चितम् ॥१४३॥ प्रयागे त्वत्पिता धर्मो दीक्षां मत्प्राप
वैष्णवीम् । मदाज्ञया कृष्णभक्तिं मुमुक्षुभ्य उपादिशन् ॥ १४४ ॥ कोसलेष्ववसत्तस्य पुत्रस्त्वं नैष्ठिकव्रती । ताता-
धिकोऽसि स्वगुणैः श्रुतपूर्वोऽसि सज्जनात् ॥ १४५ ॥ यथासुखं वसात्रेति श्रुत्वा तद्वचनं हरिः । प्राप्तानन्दोऽवसत्तत्रा-
नन्दयंस्तं च तच्छ्रितान् ॥ १४६ ॥ एकादश्यां प्रबोधन्यां दीक्षां भागवतीं ततः । स प्रापाथ गुरुस्तस्य नामद्वितय-
माह सः ॥ १४७ ॥ सहजानन्द इत्येकं सदानन्दस्य दर्शनात् । अन्यन्नारायणमुनिरिति तद्गुणदर्शनात् ॥ १४८ ॥

नैष्ठिकब्रह्मचर्यव्रतवान् । त्वम् । स्वगुणैः । ताताधिकः स्वजनकादत्यन्तं श्रेष्ठः । असि । नन्वावयोः साम्प्रतमेव सङ्गमसत्त्वादहं कथं पितुरधिकगुणो ज्ञात इत्यत्राह । सज्जनात्त्वत्पित्रन्तिकादागतेभ्यः केभ्यश्चित्साधुजनेभ्यः । यद्वा । पत्रं गृहीत्वा त्वदन्तिकागतमयरामविप्राख्यसत्पुरुषात्सकाशात् । श्रुतपूर्वः प्रथमाकर्णितगुणः । असि ॥ १४५ ॥ यथेति । अतः । त्वम् । अत्र मत्समीपे । यथासुखं तव यथासुखं भवेत्तथा । वस निवासं कुरु । इतीत्थं भूतम् । तद्वचनं श्रीरामानन्दमुनिवाक्यम् । श्रुत्वा । प्राप्तानन्दः । हरिः । तं श्रीरामानन्दमुनिम् । तच्छ्रितान् श्रीरामानन्दमुनिसमाश्रितजनांश्च । आनन्दयन्सन् । तत्र श्रीरामानन्दमुनिसमीपे । अवसत् ॥ १४६ ॥ एकादश्यामिति । स श्रीहरिः प्रबोधन्याम् । एकादश्यां (१८५७) कार्त्तिकशुक्लैकादशिकातिथौ । ततः श्रीरामानन्दमुनेः सकाशात् । भागवतीम् । दीक्षाम् । प्राप । अथानन्तरम् । गुरुः । स श्रीरामानन्दमुनिः । तस्य श्रीहरेः । नामद्वितयं द्वेनामनी । आह अकरोदित्यर्थः ॥ १४७ ॥ तदेवाह सहजानन्द इति । सदानन्दस्याकृत्रिमत्वात् स्वाभाविकानन्दस्य । दर्शनाद्वर्णीन्द्रश्रीहरिमूर्तौ विलोकनाद्धेतोः । सहजानन्द इति । एकं नाम । तद्गुणदर्शनाच्छ्रीबदरीपतिनारायणमुनेः तपःस्वभावाकार-वेष-क्षमा-जयादिगुणानस्मिन्समीक्षणाद्धेतोः । नारायणमुनिरिति । अन्यद् द्वितीयंनाम । स आहेति पूर्वेणान्वयः ॥ १४८ ॥

संवत्सर इति । अथ श्रीहरे र्दीक्षाप्रदानानन्तरम् । संवत्सरे एकस्मिन्वर्षे । व्यतीतेऽतिक्रान्ति सति । स्वयं श्रीरामानन्दमुनिः । तस्य श्रीहरेः । निर्दोषतां सर्वथा दोषवर्जितताम् । धर्मपालनसामर्थ्यम् । गरीयसीमतिमहतीम् । साधुतां सकलसाधुगुणसम्पन्नतां च । दृष्ट्वेत्युत्तरेण सम्बन्धः ॥ १४९ ॥ दृष्ट्वेति । सर्वसद्गुणमन्डिते । नैष्ठिकेन्द्रे । सर्वेषां साधुजनानां प्रियस्तस्मिन् । ते प्रिया यस्येति वा । तस्मिन् श्रीहरौ । स्वीयाम् । धर्मधुरां स्वाश्रितस्वामित्व तद्धर्मपालनलक्षणभारम् । न्यधादारोपयामास । इति द्वयोरेकसम्बन्धः ॥ १५० ॥ मार्गेति । स्वयं श्रीरामानन्दमुनिः । मार्गशुक्लत्रयोदश्यां संवदष्टादशशताधिकाष्टपञ्चाशत्तमेऽब्दे (१८५८) मार्गशीर्षशुक्लपक्षत्रयोदशीतियौ गुरुवारे इत्यर्थः । योगधारणया । मानुषम् । देहम् । उत्सृज्य त्यक्त्वा । पुन र्भूयः । विशालां वदरिकाश्रमम् । अगमत्प्राप्तवान् । एतेनास्य दुर्वाससः शापतो मुक्तिरुक्ता ज्ञेया पुनरस्य विशालागमनहेतुस्तु श्रीसत्सङ्गिजीवनप्रथमप्रकरणान्तिमाध्यायचतुर्थश्लोकटीकातोऽवगन्तव्यः ॥ १५१ ॥ तत इति । ततस्तदनन्तरम् । कृष्णः श्रीहरिकृष्णो भगवान् गुरोः श्रीरामानन्दमुनेः और्ध्वदैहिकम् । यथाविधि । कृत्वा । स्वस्य । प्रतापमैश्वर्यप्रदर्शनादिरूपं प्रभावम् । प्रथयन्विस्तारयन्सन् । अधर्मकृन्तन-

संवत्सरे व्यतीतेऽथ तस्य निर्दोषतां स्वयम् । धर्मपालनसामर्थ्यं साधुतां च गरीयसीम् ॥१४९॥ दृष्ट्वा धर्मधुरां स्वीयां सर्व सद्गुणमण्डिते । नैष्ठिकेन्द्रे न्यधात्तस्मिन्सर्वसाधुजनप्रिये ॥ १५० ॥ मार्गशुक्लत्रयोदश्यां योगधारणया स्वयम् । मानुषं देहमुत्सृज्य विशालामगमत्पुनः ॥ १५१ ॥ ततः कृष्णो गुरोः कृत्वा यथाविध्यौर्ध्वदैहिकम् । प्रतापं प्रथयन् स्वस्य चकाराधर्मकृन्तनम् ॥ १५२ ॥ स्वगुरोराश्रितान्साधून्वर्णिनो गृहिणश्च सः । सच्छास्त्रस्योपदेशेन समभावयदादरात् ॥ १५३ ॥ स्वप्रतापेन चेतांसि तेषां स्वस्मिन्समाकृषत् । ततो दिग्विजयं चक्रे स्वशिष्यैः परिवारितः ॥ १५४ ॥ नानादेशेषु विचरन्नुत्खनन्वृषवैरिणम् । धर्मज्ञानविरागाढ्यां भक्तिं प्रावर्त्तयद्भुवि ॥ १५५ ॥ असुरांशगुरून् जित्वा वादैः पापकृतो बहून् । सद्धर्मे वर्त्तयामास मद्यमांसादि हापयन् ॥ १५६ ॥

मधर्मोच्छेदनम् । चकार ॥ १५२ ॥ स्वेति । स श्रीहरिः स्वगुरोः स्वदेशिकस्य श्रीरामानन्दमुनेः । आश्रितान् । साधून्मुक्तानन्दादीन्सतः । वर्णिनो मुकुन्दानन्दादीन्ब्रह्मचारिणः । गृहिणो मयारामभट्टपर्वतगुप्तादिगृहस्थांश्च । सच्छास्त्रस्य श्रीवासुदेवमाहात्म्यादेः सद्ग्रन्थस्य । उपदेशेन । तदुक्तधर्मोपदेशेनेत्यर्थः । आदरात् । समभावयत्सम्भावयामास ॥ १५३ ॥ स्वेति । स्वप्रतापेन । तेषां पूर्वोक्तानां मुक्तानन्दमुन्यादीनाम् । चेतांसि स्वस्मिन्स्वस्वरूपे । समाकृषदाकर्षयामास । ततस्तदनन्तरम् । स्वशिष्यैर्मुक्तानन्दादिभिः । परिवारतः संवेष्टितः श्रीहरिः । दिग्विजयम् । चक्रे ॥ १५४ ॥ नानेति । नानादेशेषु । बहुविधदेशेषु । विचरन्पर्यटन् । वृषवैरिणं धर्मद्रुहमधर्मम् । उत्खनन् आमूलाड्डच्छेदयन् श्रीहरिः । भुवि । धर्मज्ञानविरागाढ्याम् । प्रावर्त्तयत् ॥ १५५ ॥ असुरेति । पापकृतः पराङ्गनासङ्गमद्यमांसाशनादिपापकर्मकारिणः बहूननेकशः । असुरांशगुरून् । वादैः शास्त्रार्थनिर्णयैः । जित्वा । मद्यमांसादि तन्निष्ठमद्यपानमांसभक्षणपराङ्गनासङ्गादिदुराचरणम् । हापयन् त्याजयन्सन् । सद्धर्मे भागवतधर्मे । वर्त्तयामास प्रवर्त्तयांचकार ॥ १५६ ॥

अलौकिकेति । सर्वेषु । देशेषु । नराः । नार्यश्च । स्थिता इति शेषः । तस्य श्रीहरेः । अलौकिकैश्वर्यम् । अवेक्ष्य दृष्ट्वा । साधु सम्यग्यथातथा । तदाश्रयं श्रीहरिसमाश्रयम् । विधाय कृत्वा । सर्वे नराः । सर्वा नार्यश्च । साक्षात्प्रत्यक्षपरमेश्वरस्य । तस्य श्रीहरेरेव । भक्तिम् । विदधुश्चक्रुः ॥ १५७ ॥ सद्य इति । अकृतसाधनाः समाधिसिद्ध्यर्थम् असम्पादितयमनियमादिसाधनाः । बहवोऽनेकशः । ते हर्याश्रितजनाः । तदीक्षया श्रीहरेः कृपायुक्तसमीक्षणमात्रेण । सद्यस्तत्क्षणमेव । समाधिम् । अभिलेभिरे सम्प्रापुः । ईशे सर्वनियन्तरि । तस्मिन् श्रीहरौ । दृढबुद्धिम् । बबन्धुः । निश्चलां मतिं चक्रुरित्यर्थः । तं श्रीहरिमेव । अखिलकारणं चापि । जज्ञुर्विविदुः ॥ १५८ ॥ अथेदानीं श्रीहरेरलौकिकैश्वर्यं स्ववीक्षणमात्रजन्यालौकिकसमाधिम् अखिलकारणत्वं चाह त्रयोदशभिः । कांश्चिदिति । प्रभुः । स श्रीहरिः । गोलोके । अक्षरधामनि । वर्तमाने इति शेषः । लक्ष्मीराधाद्युपेतं रमाराधादियुक्तम् । स्थितमिति शेषः । आदिशब्देनाक्षरब्रह्मरूपमुक्तवृन्दग्रहणम् । श्रीकृष्णरूपम् । स्वम् । कांश्चिज्जनान् । दर्शयामास ॥१५९॥ वैकुण्ठ इति । ईश्वरः परमेश्वरः । स श्रीहरिः । वैकुण्ठे लोके । लक्ष्मीनन्दादिसेवितं लक्ष्मीयुक्तनन्दसुनन्दादिपार्षदकृतपरिचरणम् । विष्णुरूपम् ।

अलौकिकैश्वर्यमवेक्ष्य तस्य देशेषु सर्वेषु नराश्च नार्यः । तदाश्रयं साधु विधाय सर्वे तस्यैव भक्तिं विदधुश्च साक्षात् ॥१५७॥
सद्यः समाधिं बहवोऽभिलेभिरे तदीक्षयैवाकृतसाधनास्ते । तस्मिन्बबन्धुर्दृढबुद्धिमीशे जज्ञुस्तमेवाखिलकारणं च ॥ १५८ ॥
कांश्चिच्छ्रीकृष्णरूपं च गोलोकेऽक्षरधामनि । लक्ष्मीराधाद्युपेतं स्वं दर्शयामास स प्रभुः ॥ १५९ ॥ वैकुण्ठे विष्णुरूपं स्वं लक्ष्मीनन्दादि सेवितम् । कांश्चित्प्रदर्शयामास समाधौ नॄन्स ईश्वरः ॥ १६० ॥ निरन्नमुक्तोपेतं स्वं महापुरुषरूपिणम् । श्वेतद्वीपेऽमृते कांश्चित्स समाधावदीदृशत् ॥ १६१ ॥ कांश्चिदव्याकृते युक्तं लक्ष्मीकीर्त्यादिशक्तिभिः । स्थितं स्वं भूमरूपेण दर्शयामास मानवान् ॥ १६२ ॥ नारायणर्षिरूपेण संस्थितं बदरीवने । नरादियुक्तं स्वं कांश्चित्समाधौ नॄनदर्शयत् ॥ १६३ ॥ योगेश्वरस्वरूपेण स्थितं स्वं क्षिरवारिधौ । लक्ष्म्यादियुक्तं कांश्चिचादर्शयच्छेषशायिनम् ॥ १६४ ॥

स्वम् । कांश्चित् नॄन् । समाधौ । प्रदर्शयामास ॥ १६० ॥ निरन्नेति । स श्रीहरिः । श्वेतद्वीपे क्षीरसमुद्रोत्तरतटासन्ने द्वीपविशेषे । अमृतेऽमृताख्यधामनि । वर्त्तमाने इति शेषः । निरन्नमुक्तोपेतं निरन्नमुक्तसहितम् । महापुरुषरूपिणम् । स्वम् । कांश्चित् । समाधौ । अदीदृशत् ॥ १६१ ॥ कांश्चिदिति । अव्याकृते धाम्नि । लक्ष्मीकीर्त्यादिशक्तिभिः लक्ष्मीकीर्त्तिप्रभृतिस्वपत्नीभिः । युक्तं सहितम् । निषेवितमित्यर्थः । भूमरूपेण भूमपुरुषस्वरूपेण । स्थितं वर्त्तमानम् । स्वम् । कांश्चित् । मानवान् जनान् । दर्शयामास ॥ १६२ ॥ नारायणेति । बदरीवने बदरिकाश्रमे । नरादियुक्तं नरर्षितनुनारदादिमुनिगणसहितम् । नारायणर्षिरूपेण । संस्थितं वर्त्तमानम् । स्वम् । कांश्चित् । नॄन् । समाधौ । अदर्शयत् ॥ १६३ ॥ योगेति । क्षीरवारिधौ क्षीरसमुद्रे लक्ष्म्यादियुक्तं लक्ष्मीविष्वक्सेनमूर्त्तौस्त्रादिसहितम् । शेषशायिनं शेषतल्पकृतशयनम् । योगेश्वरस्वरूपेण । स्थितम् । स्वम् । कांश्चित् । अदर्शयत् ॥ १६४ ॥

हिरण्मयेति । आदित्यमण्डले सूर्यमण्डले । हिरण्मयाख्यपुरुषरूपेण । संस्थितम् स्वम् । कांश्चित् । नरान् । समाधौ । समदर्शयत् ॥ १६५ ॥ कांश्चिदिति । भगवान् । स श्रीहरिः । आग्नेयमण्डले वह्नीमण्डले । यज्ञपुरुषरूपेण । संस्थितम् । स्वम् । कांश्चित् । मानवान् । दर्शयामास ॥ १६६ ॥ अवस्थेति । प्रभुः श्रीहरिः । अवस्थानां जाग्रदादीनां त्रितयं त्रिकं येषां जीवानां तेभ्योऽतीतं तत्तत्कर्मफलप्रदानार्थं तेषु तेषु तारतम्येनान्वयं प्राप्तमपि वस्तुतस्तद्व्यतिरिक्तम् । सच्चिदानन्दधर्मवत् द्रष्टाख्यं द्रष्टृसंज्ञम् । ब्रह्मरूपमन्तर्यामिरूपिणम् । स्वम् । कांश्चन मानवान् ऐक्षयत्समाधौ दर्शयामास ॥ १६७ ॥ कांश्चिदिति । स श्रीहरिः । वैराजरूपेण सहस्रशीर्षस्वरूपेण । स्थितम् । स्वम् । कांश्चित् । अदर्शयत् । द्वीपा जम्बूप्लक्षादयश्च खण्डा इलाव्रतादिवर्षाणि च तेषामधिदेवतास्ताः । तत्र द्वीपदेवाः सूर्यचन्द्रादयः खण्डदेवाः सङ्कर्षणहयग्रीवादयश्च यथाक्रमं ज्ञेयाः । कांश्चित् । दर्शयामास ॥ १६८ ॥ षडिति । स श्रीहरिः । षट्चक्रदेवताः आधारादिषट्चक्राधिष्ठितगणेशादिदेवान् । क्रमेणानुक्रमतः कांश्चित् । अदर्शयत् । क्वचित्कदाचित् । दूरस्थभक्तेभ्यः शतयोजनादिदूरदेशवर्त्तिस्वभक्तजनेभ्यः । साक्षात्स्वदर्शनं प्रत्यक्षभावेन स्वसमीक्षणम् । प्रादात् ॥ १६९ ॥

हिरण्मयाख्यपुरुषरूपेणादित्यमण्डले । संस्थितं स्वं नरान् कांश्चित्समधौ समदर्शयत् ॥ १६५ ॥ कांश्चिच्च यज्ञपुरुषरूपेणाग्नेयमण्डले । संस्थितं स्वं स भगवान्दर्शयामास मानवान् ॥ १६६ ॥ अवस्थात्रितयातीतं सच्चिदानन्दलक्षणम् । द्रष्टाख्यं ब्रह्मरूपं स्वमैक्षयत्कांश्चन प्रभुः ॥१६७॥ कांश्चिद्वैराजरूपेण स्थितं स स्वदर्शयत् । कांश्चिच्च दर्शयामास द्वीपखण्डाधिदेवताः ॥१६८॥ षट्चक्रदेवताः कांश्चित्क्रमेणादर्शयत्स च । क्वचिद् दूरस्थभक्तेभ्यः प्रादात्साक्षात्स्वदर्शनम् ॥ १६९ ॥ क्वचिद् दूरस्थभक्तैः स्वे गृहे स्वप्रतिमान्तिके । बुभुजे धृतनैवेद्यमाश्चर्यं जनयन्स च ॥ १७० ॥ अन्तकाले क्वचिद्भक्तान्निनीषुर्धाम चात्मनः । तद्ग्राममेत्य साक्षात्स्वमैक्षयत्स निजानिजान् ॥ १७१ ॥ अलौकिकैश्वर्यमित्थं दर्शयन्तं जनान् हरिम् । सहस्रशो जना दृष्ट्वा साश्चर्यं विविदुः प्रभुम् ॥ १७२ ॥ स्वं स्वं मतं स्वस्वगुरून् हित्वा ते दृढनिश्चयाः । तमेव भेजुः प्रत्यक्षं दीक्षाग्रहणपूर्वकम् ॥१७३॥

क्वचिदिति । स श्रीहरिः । क्वचित्कदाचित् । दूरस्थभक्तैर्देशान्तरवर्त्तिस्वभक्तजनैः । स्वे स्वकीये । गृहे । स्वप्रतिमान्तिके स्वभक्तार्च्यस्वचित्रप्रतिकृत्यादिसमीपे । धृतनैवेद्यं पुरोनिहितनैवेद्यान्नादिकम् । आश्चर्यम् । जनयन्सन् । बुभुजे ॥ १७० ॥ अन्तेति । स श्रीहरिः । क्वचित् । अन्तकाले देहावसानसमये । भक्तान् । आत्मनः स्वस्य । धाम गोलोकादिकम् । निनीषुर्नेतुमिच्छुः सन् । तद्ग्रामं प्राप्तान्तकालस्वभक्तसंवसथम् । एत्य प्राप्य । निजानिजान्स्वाश्रितान् स्वमनाश्रितांश्च जनान् । साक्षात्स्वं प्रत्यक्षतया वर्त्तमानं स्वस्वरूपम् । ऐक्षयत् ॥ १७१ ॥ अलौकिकेति । इत्थममुना प्रकारेण । अलौकिकैश्वर्यम् । जनान् । दर्शयन्तम् हरिम् । दृष्ट्वा । सहस्रशः । जनाः । साश्चर्यमाश्चर्यसहितं यथातथा । प्रभुं परमेश्वरम् । विविदुर्बुबुधिरे ॥ १७२ ॥ स्वमिति । दृढनिश्चयाः श्रीहरौ सर्वेश्वरः स्वयं परमेश्वर एवायमित्यचलनिर्णयाः । ते जनाः । स्वं स्वम् । मतम् । स्वस्वगुरूंश्च । हित्वा त्यक्त्वा दीक्षाग्रहणपूर्वकं यथातथा । प्रयत्क्षं प्रत्यक्षपरमेश्वरम् । तं श्रीहरिमेव । भेजुः ॥ १७३ ॥

वादेनेति । मतवादिनः । बहवो जनाः । संहत्य परस्परं मिलित्वा । वादेन । तं श्रीहरिम् । जेतुम् । न शेकुः । तदा । अखिलाः सर्वे ते मतवादिनः । प्राञ्जलयः कृताञ्जलयः सन्तः । नत्वा श्रीहरिं प्रणम्य । प्रोचुः ॥ १७४ ॥ तदेवाह । त्वमिति । हे हरे । भगवान् परमेश्वरः । त्वम् । एकः । एव । असि । इतीत्थम् । अद्य साम्प्रतम् । निश्चितं यथातथा । विज्ञो जानीमः । वयम् । स्वेष्टदेवान् । दिदृक्षामो द्रष्टुमिच्छामः । त्वम् । कृपया । तान्स्वेष्टदेवान् । प्रदर्शय ॥ १७५ ॥ अथेति । अथैवंविधतद्वाक्यश्रवणानन्तरम् । ते मतवादिनो जनाः । तत्कृपया श्रीहरेर्निष्कारणकरुणया । सद्योऽकस्मादेव । समाधिम् । प्राप्य । स्वस्वशास्त्रश्रुतान्स्वकीये स्वकीये शास्त्रे समाकर्णितान् । स्वस्वेष्टदेवान् । हृदि स्वस्वहृदयाम्बुजे । पृथक् भिन्नभिन्नतया । ददृशुः ॥ १७६ ॥ अथ श्रीहर्यैश्वर्यद्योतकांस्तत्तद्दृष्टांस्तत्तदिष्टदेवानाह सार्द्धैस्त्रिभिः । वल्लभीया इति वल्लभाचार्यसम्प्रदायिनः । तथा माध्वा मध्वसम्प्रदायिनः । नैम्बादित्या निम्बादित्यसम्प्रदायिनश्च । वैष्णवाः । वृन्दावनविहारिणम् । बालकृष्णं बालमुकुन्दम् । तं श्रीहरिम् । ददृशुः । श्रीहरिरेव तैर्बालमुकुन्दरूपेण दृष्ट इत्यर्थः ॥ १७७ ॥ रामेति । रामानुजाचार्यसम्प्रदायिनः श्रीवैष्णवास्तु ।

वादेन जेतुं संहत्य बहवो मतवादिनः । न शेकुस्तं तदा नत्वा प्रोचुः प्राञ्जलयोऽखिलाः ॥ १७४ ॥ त्वमेवैकोऽसि भगवानिति विज्ञोऽद्य निश्चितम् । दिदृक्षामः स्वेष्टदेवान् कृपया तान्प्रदर्शय ॥१७५॥ अथ तत्कृपया सद्यः समाधिं प्राप्य ते हृदि । स्वस्वेष्टदेवान्ददृशुः स्वस्वशास्त्रश्रुतान्पृथक् ॥१७६॥ वल्लभीयास्तथा माध्वा नैम्बादित्याश्च वैष्णवाः । तं बालकृष्णं ददृशु र्वृन्दावनविहारिणम् ॥१७७॥ रामानुजास्तु ददृशुः श्रीमन्नारायणं च तम् । रामभक्ता रामरूपं ब्रह्मज्योतिश्च शाङ्कराः ॥ १७८ ॥ शैवाश्च पार्वतीकान्तं सौरास्तं च हिरण्मयम् । देवीरूपं तथा शाक्ता गाणपत्या गणाधिपम् ॥ १७९ ॥ पिङ्गाम्बरं च यवना जैनास्तीर्थङ्करं च तम् । ददृशुर्व्युत्थितास्तेऽथ तं जज्ञुः सर्वकारणम् ॥ १८० ॥ ततस्तदाश्रयं कृत्वा भेजुः प्रत्यक्षमेव तम् । एवं प्रताप एकान्तधर्मं सोऽस्थापयत्क्षितौ ॥ १८१ ॥

श्रीमन्नारायणं लक्ष्मीकान्तनारायणस्वरूपम् । तं श्रीहरिम् । ददृशुः । रामभक्ताः श्रीरामानन्दाचार्यसम्प्रदायिनः । रामरूपं सीतापतिस्वरूपम् । तम् । ददृशुः । शाङ्कराः शङ्कराचार्यसम्प्रदायिनः । ब्रह्मज्योतिर्ब्रह्मतेजोरूपम् । तम् ददृशुः ॥१७८॥ शैवाः इति । शैवाः शिवभक्ताः । पार्वतीकान्तं पार्वतीपतिशिवरूपम् । तम् । ददृशुः । सौराः सूर्यभक्ताः । हिरण्मयं हिरण्मयपुरुषरूपम् । तम् । ददृशुः । शाक्ताः शक्त्युपासकाः । देवीरूपं त्रिपुरसुन्दर्यादिदेवीस्वरूपम् । तम् । ददृशुः । तथा । गाणपत्या गणपत्युपासकाः । गणाधिपं गणपतिरूपम् । तम् । ददृशुः ॥१७९॥ पिङ्गेति । यवना यवनजातिभवा महमदोपासकजनाः । पिङ्गाम्बरं महमदादिपिङ्गाम्बररूपम् । तम् । ददृशुः । जैनाश्चतुर्विधबौद्धसम्प्रदायान्तर्गताजनाः । तीर्थङ्कररूपमृषभाजितसम्भवादिचतुर्विंशति तीर्थङ्करस्वरूपम् । तम् । ददृशुः । अथानन्तरम् । व्युत्थिताः समाधेः सकाशादुत्थाय देहस्मृतिं प्राप्ताः । ते वल्लभीयादयः सर्वे मतवादिनः । तं श्रीहरिम् । सर्वकारणम् । जज्ञुर्विविदुः । इति द्वयोरेकसम्बन्धः ॥१८०॥ ततइति । ततस्तदनन्तरम् । सर्वे । तदाश्रयं श्रीहरिसमाश्रयम् । कृत्वा । प्रत्यक्षं प्रत्यक्षपुरुषोत्तमम् । तं श्रीहरिमेव । भेजुः । एवं प्रताप इत्थंभूतमहिमवान् । स श्रीहरिः । क्षितौ पृथिव्याम् । एकान्तधर्मम् । अस्थापयत् ॥ १८१ ॥

आढ्यैरिति । स श्रीहरिः । आढ्यैर्धनिभिः । गृहिभिर्गृहस्थाश्रमावस्थितैः । स्वभक्तैः । अन्नसत्राणि सदादानानि । अचिकरत्कारयामास । विष्णुयागाश्च महारुद्राश्च अतिरुद्राश्च तांश्चापि । यथाविधि तत्तद्विधिमनतिक्रम्य । अचीकरत् ॥ १८२ ॥ अतीतृपदिति । स श्रीहरिः । तत्र तत्र तेषु तेषु विष्णुयागादिमहायज्ञेषु । सहस्रशोऽसङ्ख्यातान् । ब्राह्मणान् । मिष्टान्नैः परमान्नशर्करालड्डुकादिमिष्टभोजनैः । अतीतृपत्तर्पयामास । भूरिशो बहूनि । दानानि गो, भू, हिरण्यादीनि महान्ति दानानि च । दापयामास ॥१८३॥ साध्विति । श्रीहरिः । भुवि पृथिव्याम् । साधवश्च ब्राह्मणाश्च देवाश्च तेषामर्चाः पूजनानि । अहिंसानजादिप्राणिहिंसावर्जितान् । मखान् यज्ञान् । अधर्मः पराङ्गनासङ्गमद्यपानादिदुराचारश्च पाषण्डो जैनकौलादिरूपधर्माध्वा च तयोरुच्छेदनं विनाशस्तच्चापि । मुहुः । कारयामास । स्वार्थेऽत्रणिच् ॥ १८४ ॥ यत्रेति । सर्ववित्सकलसच्छास्त्रार्थरहस्यज्ञः । इदं हेतुगर्भविशेषणम् । स श्रीहरिः भूमौ । यत्र यत्र येषु येषु देशेषु । अचरत् । तत्र तत्र तेषु तेषु देशेषु । सच्छास्त्राणां श्रीमद्भागवतादिसद्ग्रन्थानाम् । अखिलं समग्रम् । रहः रहस्यम् । स्वभक्तान् । बोधयामास ॥ १८५ ॥ धर्ममिति । धर्मं वर्णाश्रमोचितसदाचारम् । आत्मपरज्ञानं जीवात्मनां परमात्मनश्च स्वरूपवेदनम् ।

आढ्यैः स्वभक्तैर्गृहिभिः सोऽन्नसत्राण्यचीकरत् । विष्णुयागमहारुद्रातिरुद्रांश्च यथाविधि ॥ १८२ ॥ अतीतृपच्च मिष्टान्नैर्ब्राह्मणान्स सहस्रशः । दानानि दापयामास तत्र तत्र च भूरिशः ॥ १८३ ॥ साधुब्राह्मणदेवार्चा अहिंसांश्च मखान्मुहुः । कारयामास चाधर्मपाषण्डोच्छेदनं भुवि ॥ १८४ ॥ यत्र यत्राचरद्भूमौ तत्र तत्र स सर्ववित् । स्वभक्तान्बोधयामास सच्छास्त्राणां रहोऽखिलम् ॥१८५॥ धर्ममात्मपरज्ञानं वैराग्यं भक्तिमुत्तमाम् । यथावत्कथयामास सभेदं च सविस्तरम् ॥ १८६ ॥ एवमानन्दयन्भक्तान्सोऽवसद् दुर्गपत्तने । अभयक्ष्मेशतत्पुत्रभक्तिवश्यस्तदालये ॥ १८७ ॥ जन्माष्टम्यन्नकूटादीन्वसंस्तत्र महोत्सवान् । महद्भिरेव सम्भारैः सोऽनुवर्षमकारयत् ॥ १८८ ॥ साधवो वर्णिनस्तत्र गृहिणो नैकदेशतः । तद्दर्शनार्थमाजग्मुस्तेषु मुहुर्मुहुः ॥ १८९ ॥

वैराग्यम् । उत्तमाम् । भक्तिम् । सभेदं तत्तद्विशेषसहितं यथातथा । सविस्तरं यथातथा यथावद्यथार्थतः । कथयामास श्रीहरिः स्वभक्तान्बोधयामास ॥१८६॥ एवमिति । एवममुना प्रकारेण । भक्तान् । आनन्दयन् । स श्रीहरिः । दुर्गपत्तने पश्चिमपञ्चालान्तर्गतोन्मत्तगङ्गातीरस्थे दुर्गनगरे । अभयक्ष्मेश एतत्पुरपतिरभयनृपतिश्च तत्पुत्र उत्तमाख्ययुवराजश्च तयोर्भक्तिवश्यः सन् । तयोः स्वस्मिन्प्रेमातिशयपूर्वं नवधास्वभजनशैलीमवलोक्य तदधीनभावं प्राप्तः सन्नित्यर्थः । तदालयेऽभयराजसौधे । अवसत् ॥ १८७ ॥ जन्मेति । स श्रीहरिः । तत्र दुर्गपत्तने । वसन्सन् । अनुवर्षं प्रतिवत्सरम् । जन्माष्टम्यन्नकूटादीन् श्रीकृष्णजयन्तिकान्नकूटप्रभृतीन् । महोत्सवान् । महद्भिः । सम्भारैरेव । अकारयत् ॥ १८८ ॥ साधव इति । तत्र दुर्गपत्तने । तेषु तेषु महोत्सवेषु । साधवः । वर्णिनो ब्रह्मचारिणः । गृहिणो गृहस्थजनाः । नैकदेशतोऽनेकदेशेभ्यः सकाशात् तद्दर्शनार्थं श्रीहरेर्दर्शनं कर्त्तुम् । मुहुर्मुहुः पुनः पुनः । आजग्मुः समाययुः ॥ १८९ ॥

नानेति । देशान्तरागतहरिभक्तजनाः । नानाविधानि यान्यंशुकानि वस्त्राणि च आभूषा अलङ्काराश्च गन्धः सुगन्धिश्रीखण्डकेसराभ्यां घृष्टचन्दनं च पुष्पस्रजो नानाविधपुष्पहाराश्च ता आदयो येषां स्वर्णमुद्रा वज्राद्युपहाराण तैः । यथाशक्ति स्वस्वसम्पद्बलमनतिक्रम्य । यथोचितं यथायोग्यम् । तं श्रीहरिम् । भक्त्यानुरागतः । पुपूजुः ॥ १९० ॥ साधूनिति । स श्रीहरिः । तत्र दुर्गपत्तने । उत्सवेषु जन्माष्टम्यादिषु महेषु । सहस्रशः । साधून् । ब्राह्मणांश्च । बहुविधैः । भक्ष्यभोज्यैः । सादर- मादरयुक्तं यथातथा । तर्पयामास सुहितान्विदधे ॥ १९१ ॥ हरेरिति । तस्यैवंविधस्य । हरेर्भक्तिधर्मात्मजश्रीहरिकृष्णभगवतः । अङ्गचिह्नानि चरणाद्यङ्गवर्त्तीन्यूर्ध्व- रेखादीनि लक्ष्माणि । तथा । नैसर्गिकीः साहजिकीः । चेष्टा ब्राह्ममुहूर्त्तोत्थानादयः क्रियाः । तदीयध्यानसिद्धये श्रीहरिकृष्णभगवद्भक्तानां श्रीहरिकृष्णभगवत्स्वरूपध्यान- सिध्यर्थम् । समासेन सङ्क्षेपतः । कथयामि ॥ १९२ ॥ तत्रादौ तदङ्गचिह्नान्याह पञ्चचत्वारिंशताश्लोकैः । प्रभोरिति । प्रभोरेकान्तिकधर्मरक्षणसमर्थस्य । अस्य श्रीहरेः । शोणयोः कोकनदछव्योः । द्वयो रुभयोः । अङ्घ्रितलयोः पादाधस्तनप्रदेशयोः । मध्ये मध्यभागे । अविछिन्ने मध्यप्रदेशे समसूत्रवदखण्डिते । मूलं प्राष्णर्यधः प्रदेशभागश्च तयोः । द्विधा । जातेशरपुङ्खवद्द्विधाभूते इत्यर्थः । ऊर्ध्वरेखे पाष्णर्यधः प्रदेशादारभ्य प्रपदाधः प्रदेशपर्यन्तमायते दण्डाकारे ऊर्ध्वगतिके रेखे इत्यर्थः । स्तो भवतः । द्विवचनं पादद्वया-

नानाविधांशुकाभूषागन्धपुष्पस्रगादिभिः । पुपूजुस्ते च भक्त्या तं यथाशक्ति यथोचितम् ॥ १९० ॥ साधून्सहस्र- शस्तत्र ब्राह्मणांश्चोत्सवेषु सः । भक्ष्यभोज्यैर्बहुविधैस्तर्पयामास सादरम् ॥ १९१ ॥ हरेस्तस्याङ्गचिह्नानि चेष्टा नैसर्गि- कीस्तथा । कथयामि समासेन तदीयध्यानसिद्धये ॥१९२॥ प्रभोरस्याङ्घ्रितलयोर्मध्ये स्तः शोणयोर्द्वयोः । अविच्छिन्ने ऊर्ध्वरेखे जाते मूलाग्रयोर्द्विधा ॥१९३॥ दक्षपादतलेऽङ्गुष्ठसमीपेऽस्ति सुशोभनः । मिलन्निवोर्ध्वरेखाया भागं चैवाग्रिमं यवः ॥ १९४ ॥ तत्रैवोभयतश्चोर्ध्वरेखामस्त्यब्जमङ्कुशम् । ध्वजाष्टकोणवज्राणि स्वस्तिकश्च सजाम्बवः ॥ १९५ ॥

भिप्रायेण । एकैकस्मिन्पादतल एकैकोर्ध्वरेखास्तीति ज्ञेयम् । अत्र सर्वत्र कस्योर्ध्वरेखा न करोति राज्यमित्यादीन्यूर्ध्वरेखादिसुलक्षमफलानि सामुद्रिकादिग्रन्थान्तरादवगन्तव्यानि ग्रन्थगौरवभयादत्र न लिखितानि । अत्र खण्डान्वयेन व्याख्यावीशेषस्तु अस्मच्छ्रीहरिवाक्यसुधासिन्धोः पृथगुधृद्त्यैतेषां श्लोकानां समुदायस्य श्रीहरिध्यानाब्जभास्कर इति संज्ञां विधाय तस्य दीनानाथभट्टेन प्रकाशमालाख्याटिकाकृतास्ति ततोऽवगन्तव्यः ॥ १९३ ॥ दक्षेति । दक्षपादतले श्रीहरेर्दक्षिणचरणाधः प्रदेशे । अङ्गुष्ठसमीपे । सुशोभनोऽतिरमणीयः । उर्ध्वरेखायाः अग्रिमम्मुपरितनम् । भागम् । मिलन्निव तत्सम्पर्कं गच्छन्निव । तस्यातिनैकटयं प्राप्त इत्यर्थः । यवो यवाकृतिलेखालक्ष्म । अस्ति ॥ १९४ ॥ तत्रेति । तत्र श्रीहरेस्तस्मिन्दक्षिणपादतले एव । उर्ध्वरेखाम् । उभयतः । उर्ध्वरेखाया दक्षिणवामप्रदेशयोरित्यर्थः । अब्जं पद्माकृतिरेखाचिह्नम् । अस्ति । अङ्कुशं शृण्याकाररेखाचिह्नं च । अस्ति । एतद्द्वयमूर्ध्वरेखाया दक्षिणभागे उपर्यधोभावेन स्थितमिति ज्ञेयम् । ध्वजो ध्वजाकाररेखाचिह्नं च अष्टकोणोऽष्टास्राकाररेखाचिह्नं च वज्रं पव्याकाररेखाचिह्नं च तानि । सन्ति । उर्ध्वरेखाया उत्तरत ऊर्ध्वभागे इति ज्ञेयम् । सजाम्बवो जम्बूफलाकाररेखाचिह्नसहितः । स्वस्तिकश्चतुष्काकाररेखाचिह्नं च । अस्ति । एतच्चिह्नद्वयमुर्ध्वरेखाया उत्तरत्तोऽधः प्रदेशे ज्ञेयम् ॥ १९५ ॥

दक्षेति । दक्षपादस्य श्रीहरेर्दक्षिणचरणस्य योऽङ्गुष्ठस्तस्य यो नखस्तस्मिन् । तस्योपरितनप्रदेशे इत्यर्थः एका । पाटला श्वेततामिश्रताम्रवर्णा । रेखा रेखाकारश्चिह्नविशेषः । अस्ति । अस्य च दक्षिणपादस्थस्यैव । चकार एवार्थे । अङ्गुष्ठस्य । बहिर्भागे बाह्यतः पार्श्वप्रदेशे । तिलकः कृष्णतिलप्रतिकृतितिलकाख्यं चिह्नम् । वर्त्तते ॥ १९६ ॥ उपेति । अङ्गुष्ठस्य समीपमुपाङ्गुष्ठं तस्मिन् या अङ्गुली दक्षिणपादाङ्गुष्ठसमीपवर्त्तिन्यङ्गुलीत्यर्थः । तस्या वामं सव्यं यत्पार्श्वं पार्श्वभागस्तस्मिंश्च । अङ्गुदक्षिणपार्श्वमध्यसन्मुखप्रदेशे इत्यर्थः । तिलक एकस्तिलकालकः । अस्ति । तथा । अन्ते भवान्त्यान्तिमा सा चासावङ्गुलिश्च तस्या बहिर्भागे बाह्यतः पार्श्वप्रदेशस्तस्मिन् । तत्रापि नखान्तिके नखसमीपे । ऊर्ध्वभागे इत्यर्थः । दक्षिणपादान्तिमाङ्गुलिबाह्यपार्श्वोर्ध्वभागे नखसमीपे इति ज्ञेयम् । तिलक एकस्तिलकालकः । अस्ति ॥ १९७ ॥ वामेति । प्रभोः श्रीहरेः । वामः सव्यश्चासौ पादश्चरणश्च । तस्य तलमधो देशस्तस्मिन् । ऊर्ध्वरेखायाः । वामभागतः सव्यपार्श्वभागमध्ये । अन्योन्यं परस्परम् अस्पृष्टमतिसामीप्यात्परस्परं स्पृष्टमिव दूराद्दृश्यमानमप्यन्योन्यस्य स्पर्शरहितमित्यर्थः । श्यामबिन्दुद्वयं मेचकवर्णं बिन्दुयुग्मम् । अस्ति वर्त्तते ॥ १९८ ॥ तत्रेति । तत्र श्रीहरेर्वामपादतले एव । तत्रापि । फणाभ्याशे । अङ्गुलिमूलाधस्तनः सर्पफणासदृशः पादतलप्रदेशः सादृश्यात्फणेत्युच्यते । तस्या अभ्याशं समीपप्रदेशस्तस्मिन् । व्योम-

दक्षपादाङ्गुष्ठनखे रेखास्त्येका च पाटला । अङ्गुष्ठस्य बहिर्भागे तिलको वर्त्ततेऽस्य च ॥ १९६ ॥ उपाङ्गुष्ठाङ्गुलीवामपार्श्वेऽस्ति तिलकस्तथा । अन्त्याङ्गुलिबहिर्भागे तिलकश्च नखान्तिके ॥ १९७ ॥ वामपादतले चोर्ध्वरेखाया वामभागतः । अस्त्यसंस्पृष्टमन्योन्यं श्यामबिन्दुद्वयं प्रभोः ॥ १९८ ॥ तत्रैव च फणाभ्याशे वर्त्तते व्योमलक्षणम् । संस्पर्शमूर्ध्वरेखायास्तच्च प्राप्नुवदीक्ष्यते ॥ १९९ ॥ अन्यान्यपि च लक्ष्माणि सन्ति तत्र धनुर्घटः । मत्स्यस्त्रिकोणः सुरभिचरणश्चार्धचन्द्रकः ॥२००॥ सर्वेऽपि नखरास्तस्य पादयोरुभयोरपि । उत्तुङ्गाः शोणवर्णाश्च सन्ति तेजस्विनस्तथा ॥२०१॥

लक्षणं सूक्ष्मविवरचिह्नम् । वर्त्तते । तद्व्योमलक्षणम् । उर्ध्वरेखाया ऊर्ध्वरेखोर्ध्वभागस्य । संस्पर्शम् । प्राप्नुवत्सङ्गच्छदिव । इव शब्दोऽत्राध्याहार्यः । उर्ध्वरेखासंस्पर्शमप्राप्तमप्यतिसांनिध्यात्प्राप्तमिवेत्यर्थः । ईक्ष्यते तद्द्रष्टृभिर्भक्तैर्लक्ष्यते ॥ १९९ ॥ अन्यानीति । तत्र श्रीहरेर्वामपदतले । धनुश्चापाकाररेखाचिह्नम् । घटः कलशाकाररेखाचिह्नम् । मत्स्यो मीनाकाररेखाचिह्नम् । त्रिकोणस्त्र्याकाररेखाचिह्नम् । सुरभिचरणो धेनुखुराकाररेखाचिह्नम् । अर्द्धचन्द्रकोऽर्द्धेन्द्वाकाररेखाचिह्नम् । एतानि । अन्यानि व्योमलक्षणेतराण्यपि । लक्ष्माणि चिह्नानि । सन्ति वर्त्तन्ते । एवं श्रीहरेर्दक्षिणचरणगतानि यवोर्ध्वरेखादीनि नवचिह्नानि वामचरणगतानि व्योमधनुरादीनि सप्तचिह्नानि तानि मिलित्वा षोडशचिह्नानि पुरुषोत्तमत्वसूचकानि सन्ति । तान्युक्तानि पाद्मे ब्रह्मणा नारदं प्रति । 'षोडशैव तु चिह्नानि मया दृष्टानि तत्पदोः । दक्षिणे नव चिह्नानि इतरे सप्तसङ्ख्यया । ध्वजः पद्मं तथा वज्रमङ्कुशो यव एव च स्वस्तिकश्चोर्ध्वरेखा च अष्टकोणं च जाम्बवम् । इन्द्रचापं त्रिकोणं च कलशश्चार्धचन्द्रकः । अम्बरं मत्स्यचिह्नं च गोष्पदं चेति षोडश । अङ्कान्येतानि भो विद्वन् दृश्यन्ते यत्पदोः स्फुटम् । कृष्णाख्यं तत्परं ब्रह्म भुवि जातं न संशय' इति ॥ २०० ॥ सर्व इति । तस्य श्रीहरेः । उभयोर्द्वयोरपि । पादयोः सव्यदक्षिणचरणयोः सम्बन्धिनः । सर्वे दशापि । नखरा नखाः । उत्तुङ्गाः उन्नतमध्याः । शोणवर्णाः पाटलवर्णाः । तथा ।

तेजस्विनः कान्तिमन्तः । सन्ति ॥ २०१ ॥ उपरिष्टादिति । पादयोः श्रीहरेः सव्यदक्षिणचरणयोः । दशानामुभयाङ्गुष्ठसहितदशसंख्याकानाम् । अङ्गुलीनां करशाखानाम् । उपरिष्टात् । प्रत्यङ्गुलिनखयुक्तं यत्पर्व तदूर्ध्वं तत्समीपवर्त्तियन्मध्यमं पर्व तस्याप्यूर्ध्वं यत्पर्व तस्य पृष्ठभागे इत्यर्थः । सूक्ष्माण्यणूनि । मृदूनि कोमलान्येव न तु कर्कशानि । तनूरुहाणि रोमाणि । भवन्ति ॥ २०२ ॥ अङ्गुष्ठेति । उभयपादयोः श्रीहरेरुभयोश्चरणयोः । अङ्गुष्ठश्च तत्समीपस्थाङ्गुलिरङ्गुष्ठनिकटवर्त्तिनी करशाखा च तयोः । एतयोर्मूलतदधोवच्यूर्ध्वभागयोरित्यर्थः । पद्यते गम्यते आभ्यामिति पादुके काष्ठनिर्मितपादत्राणे तयोः कीलिके पादाङ्गुष्ठतत्समीपस्थाङ्गुलिभ्यामेव दृढधार्यौकीलकौ ताभ्यां घृष्टिर्घर्षणं तस्याः । वर्त्तुलं कीलिकोर्ध्वभागस्य वर्त्तुलत्वाद्गोलाकारम् । चिह्नम् । भवति । वर्त्तुलत्वं त्वङ्गुष्ठतत्समीस्थाङ्गुलिसंयोगे एव ज्ञेयं न तु तयोः पृथग्भावे ॥२०३॥ अष्टेति । पुरा पूर्वे वयसि । अष्टौ यम–नियमासन–प्राणायाम–प्रत्याहार–धारणा–ध्यान–समाधय इत्यष्टसङ्ख्याकानि अङ्गानि यस्य स चासौ योगो भगवति चित्तवृत्तिनिरोधलक्षणस्तस्याभ्यसनमभ्यासस्तत् । कृतवतो हिमालयोपत्यकायां विहितव्रतः । प्रभोः श्रीहरेः । गुल्फयोर्वामदक्षिणपादयो र्वामदक्षिणघुटिकयोः । तदधस्तात्तयोर्गुल्फयोरधस्तनप्रदेशयोश्च विषये । आसनघृष्टेः आसनेषु स्वेनक्रियमाणेषु सिंहासन भद्रासनादिषु या घृष्टिर्भूमौ घर्षणं तस्याः । लक्ष्मणी वामपादे दक्षिणपादे च द्वे द्वे चिह्ने । वर्त्तते इति शेषः

उपरिष्टादङ्गुलीनां दशानामपि पादयोः । तनूरुहाणि सूक्ष्माणि भवन्त्येव मृदूनि च ॥२०२॥ अङ्गुष्ठतत्समीपस्थाङ्गुल्योरुभयपादयोः । पादुकाकीलिकाघृष्टेश्चिह्नं भवति वर्त्तुलम् ॥२०३॥ अष्टाङ्गयोगाभ्यसनं पुरा कृतवतः प्रभोः । गुल्फयोस्तदधस्ताच्चासनघृष्टेश्च लक्ष्मणी ॥ २०४ ॥ पञ्चाङ्गुलोर्ध्वं गुल्फाच दक्षाङ्घ्रेस्तिलकोऽसितः । किणो वृक्षक्षतेरूरौ बाह्यतो वर्त्ततेऽस्य च ॥ २०५ ॥ पञ्चाङ्गुलोर्ध्वं वामाङ्घ्रेर्गुल्फादस्ति तिलो महान् । जङ्घायां निकटे चास्यतिलः सूक्ष्मोऽपि वर्त्तते ॥ २०६ ॥ अस्यैव चरणस्यापि जानुनो बहिरेककः । पूर्वस्मात्किञ्चन न्यूनः किणो भवति तद्विधः ॥ २०७ ॥

॥२०४॥ पञ्चेति । अस्य श्रीहरेः । दक्षाङ्घ्रेर्दक्षिणचरणस्य सम्बन्धिनः । गुल्फाद्वामघुटिकायाः सकाशात् । पञ्चाङ्गुलोर्ध्वं पञ्चभिरङ्गुलैः परिमितः प्रदेशः पञ्चाङ्गुलः तस्मात्तावन्मात्रप्रमाणात्प्रदेशादूर्ध्वमूर्ध्वभागे । नलकिन्युपरीत्यर्थः । असितः श्यामवर्णः । तिलकोऽल्पस्तिलः । सूक्ष्मतिलसदृशं चिह्नमित्यर्थः । वर्त्तते । अस्य श्रीहरेर्दक्षिणाङ्घ्रेः सम्बन्धिनि । ऊरौ सक्थिनि । बाह्यत उपरितनप्रदेशे इत्यर्थः । वृक्षक्षतेः वृक्षेण वृक्षावयवेन या क्षतिः क्षतं तस्याः । किणो रूढव्रणपदम् । 'रूढव्रणपदं स्याच्च किणस्तु पुंनपुंसके' इति हैमः । वर्त्तते ॥ २०५ ॥ पञ्चेति । वामाङ्घ्रेः श्रीहरेर्वामचरणस्य सम्बन्धिनः । गुल्फाद्वामघुटिकायाः सकाशात् । पञ्चाङ्गुलोर्ध्वं पञ्चाङ्गुलपरिमितप्रदेशादूर्ध्वभागे । जङ्घायां नलकिन्युपरि । महान् । तिलः । अस्ति । प्रसिद्धतिलकणापेक्षया महान् यस्तिलस्तत्सदृशं चिह्नमस्तीत्यर्थः । अस्य महातिलस्य । निकटे समीपे । उपरितन समीपप्रदेश एवेत्यर्थः । सूक्ष्मः प्रसिद्धतिलकणाप्रेक्षयाऽणुः । तिलोऽन्यदपि तदाकृतिचिह्नं च वर्त्तते ॥ २०६ ॥ अस्येति । अस्य वामस्यैव । चरणस्य श्रीहरेरङ्घ्रेः सम्बन्धिनः । जानुन ऊरुपर्वणः सकाशात् । बहिर्बाह्यप्रदेशे । एकक एक एव । पूर्वस्माद्दक्षोरुकिणात् । किञ्चिन किञ्चित् । न्यूनोऽल्पप्रमाणः । तद्विधो वृक्षक्षतिजातः । किणः । भवति ॥ २०७ ॥

परीति । परिधानीयं परिधानाय विहितं यद्वस्त्रं तस्य । अधोंऽशुकस्येत्यर्थः । घर्षणाद्धेतो । कटिद्वये वामककुद्मत्यां दक्षिणककुद्मत्यां चेत्यर्थः । असिता श्यामवर्णा । तिर्यक् तिरश्चीना । रेखा स्थूलरेखाकारं चिह्नम् । अस्ति पृथक्पृथक् वर्त्तते । उदरे तुन्दे । अत्र चकार उदरस्य सर्वदा शीतलत्वं ज्ञापयति । वलित्रयं त्रिवलीचिह्नम् । अस्ति । एतत्रिवल्याख्यं तु बहुजनाचार्यत्वसूचकं चिह्न ज्ञेयम् ॥ २०८ ॥ गम्भीरेति । प्रभोः श्रीहरेः । गम्भीरा निम्ना वृत्ता वर्त्तुला च या नाभिस्तस्याः । दक्षिणे दक्षिणभागे । तत्रापि । वलयाग्रं तस्या एव वलयस्योपकण्ठे इत्यर्थः । तिलस्तिलकालकः । अस्ति । वामे तस्यावामभागे । तत्रापि । ततो वलयाग्रात् । किञ्चिद्दूरे च । तिलो द्वितीयस्तिलकालकः । भवति । चकारादत्र वामभाग एव नाभ्युपकण्ठेऽन्यद्यवकणप्रमाणं सूक्ष्मं किणचिह्नमस्तीति ज्ञेयम् ॥ २०९ ॥ दक्षिण इति । अथ च । हरेः । दक्षिणे । कुक्षौ । एकः । महान् । तिलस्तिलकालकः । भवति । तदन्तिके तस्य महातिलस्य समीपवर्त्तिनि प्रदेशे । ततो महातिलात् । किञ्चित् । अल्पः सूक्ष्मः । द्वितीयस्तिलः । दृश्यते द्रष्टृभिरनुभूतोऽस्तीत्यर्थः ॥ २१० ॥ नाभेरिति । अस्य श्रीहरेः । नाभेः । ऊर्ध्वम् । द्व्यङ्गुलान्ते द्व्यङ्गुलपरिमितदूरप्रदेशे । त्रयः । तिलाः । वर्त्तन्ते । सर्वत्र तिलशब्दः कृष्णतिलसदृशतिलकालकाख्यचिह्नवाचको ज्ञेयः । तेषां व्यवस्थामाह वाम इति । तत्र तेषु त्रिषु तिलेषु मध्ये । वामे । नलके । दक्षे । नलके च । एकैकः

परिधानीयवस्त्रस्य घर्षणाच्च कटिद्वये । अस्ति रेखाऽसिता तिर्यगुदरे च वलित्रयम् ॥ २०८ ॥ गम्भीरवृत्तनाभेश्च वलयाग्रेऽस्ति दक्षिणे । तिलो वामे ततः किञ्चिद्दूरे च भवति प्रभोः ॥ २०९ ॥ दक्षिणेऽथ हरेः कुक्षौ भवत्येकस्तिलो महान् । द्वितीयस्तु ततः किञ्चिद्दृश्यतेऽल्पस्तदन्तिके ॥ २१० ॥ नाभेरूर्ध्वं द्व्यङ्गुलान्ते वर्तन्तेऽस्य तिलास्त्रयः । वामे दक्षे च नलके तत्रैकैकोऽन्तराऽपरः ॥ २११ ॥ तत्र यो मध्यमस्तस्मादूर्ध्वतो द्व्यङ्गुलान्तरे । वर्त्तते तिल एकश्च मिताहारत्वसूचकः ॥ २१२ ॥ वामे तिलानां महतां कुक्षिकक्षान्तरालगा । चतुर्णां पङ्क्तिरस्त्येका सूक्ष्माणां च तदन्तिके ॥ २१३ ॥ आवर्त्तो हृदि तस्यास्ति रोम्णां श्रीवत्ससंज्ञकः । पञ्चाङ्गुलमुरोमध्य आरक्तार्द्धेन्दुलक्षणम् ॥ २१४ ॥

एकः एकस्तिलः । वर्त्तते । परः अन्यस्तृतीयस्तिलस्तु । अन्तरा तयोर्वामदक्षनलकस्थतिलयोर्मध्ये वर्त्तते इत्यर्थः ॥ २११ ॥ तत्रेति । तत्र तेषु त्रिषु तिलेषु मध्ये । यः । मध्यमो मध्यभागवर्त्तीतिलः । तस्मात्तिलात्सकाशात् । ऊर्ध्वत ऊर्ध्वभागे । द्व्यङ्गुलान्तरे द्व्यगुलपरिमितदूरप्रदेशे । मितोऽल्प आहारो यस्य तस्य भावस्तत्त्वं तस्य सूचको लक्षकः । एकः । तिलः । वर्त्तते । 'उदरहृदयमध्ये यस्य पुंसस्तिलः स्यात्स भवति मितभोजी मृष्टभोजी च लोके' इति बृहत्सामुद्रिकसारोक्तेः ॥ २१२ ॥ वामइति । वामे श्रीहरेः सव्यपार्श्वप्रदेशे । कुक्षिश्च तस्य अन्तरालं मध्यं गच्छति प्राप्नोतीति तथोक्ता । ऊर्ध्वगामिनीत्यर्थः । महतां प्रसिद्धतिलेभ्यः स्थूलानाम् । चतुर्णां चतुः सङ्ख्याकानाम् । तिलानाम् । एका । पङ्क्तिः श्रेणिः । अस्ति । तदन्तिके तस्याश्चतुःसङ्ख्यमहातिलपङ्क्तेरन्ति बाह्यतः समीपप्रदेशस्तस्मिंश्च । सूक्ष्माणां पूर्वतिलापेक्षयाल्पानाम् । चतुर्णाम् । तिलानाम् । द्वितीया । पङ्क्तिः । अस्ति ॥ २१३ ॥ आवर्त्त इति । तस्य श्रीहरेः । हृदि हृदयप्रदेशे । 'स्तनान्तरं हृद् हृदयमि'ति हैमः श्रीवत्ससंज्ञकः श्रीवत्स इति प्रसिद्धनामा । रोम्णां ननु रुहाणाम् । आवर्त्तो भ्रमः । अस्ति । 'रोम्णां यो दक्षिणावर्त्तः स श्रीवत्साभिधो हृदी'ति विष्णुधर्मोत्तरोक्तेः । उरोमध्ये श्रीहरेर्भु-

जान्तरमध्यप्रदेशे । 'वक्षो नपुंसके' । वत्सोऽस्त्री न पुमान् क्रोडा क्लीव 'उरो भुजान्तरमि'ति हैमः पञ्चाङ्गुलं पञ्चाङ्गुलपरिमितपरिणाहम् । दक्षिणतः किञ्चिदुन्नताग्रमिति ज्ञेयम् । आ ईषद्रक्तं च तदर्धेन्दुलक्षणं च ईषद्रक्तार्धचन्द्राकारं चिह्नमित्यर्थः । अस्ति । 'कलं कांकौलाञ्छनं च चिह्नं लक्ष्म च लक्षणमि'त्यरः ॥२१४॥ तदति तस्यार्द्धेन्दु-लक्षणस्य मध्यं मध्यप्रदेशस्तस्मिन् । किञ्चित् । वामतः सव्यभागे । एकः । महान् । तिलः । भवति । ततस्तस्मान्महातिलात् । वामतो वामभागे । द्व्यङ्गुलदूरे । द्व्यङ्गुलपरिमितदूरप्रदेशे । अन्यो द्वितीयोऽपि । तिलः । अस्ति ॥ २१५ ॥ तस्मादिति । तस्मात् । तिलात् द्वितीयतिलात्सकाशात् । वामतो वामभागे एव । द्व्यङ्गुलान्ते द्व्यङ्गुलपरिमितप्रदेशान्ते । वामस्तनत ऊर्ध्वमित्यर्थः । अपरस्तृतीयः । तिलः । अस्ति । स्तनोपरि स्तनाभ्यामूर्ध्वभागे । तप्तमुद्रायास्तीर्थविशेषगृहीत तप्तमुद्रि-कायाः । लक्ष्मणी द्वे चीह्ने । वर्त्तते ॥ २१६ ॥ चतुरिति । दक्षो दक्षिणो यो बाहुर्भुजोर्ध्वभागस्तस्यान्तिकं समीपं तस्मिन् । तत्रापि । अन्तरेऽभ्यन्तरभागे । चतुस्तिलोर्ध्वपङ्क्तिश्चतुर्णां तिलानामूर्ध्वगामिनी श्रेणिः । अस्ति । बाहुमूलाद्दक्षिणभूजमूलप्रदेशात्सकाशात् । त्र्यङ्गुलाधस्त्र्यङ्गुलपरिमितप्रदेशादधो भागे । तप्तमुद्राकिण-स्तप्तमुद्राधारणजातकिणरूपचिह्नम् । अस्ति ॥ २१७ ॥ तदिति । तत्पार्श्वे तप्तमुद्राकिणपार्श्वप्रदेशे । बाह्यतो बहिर्भागे । सूक्ष्मा । चतुस्तिली चतुर्णां तिलानां समाहारः ।

तन्मध्ये वामतः किञ्चिद्भवत्येको महांस्तिलः । ततो द्व्यङ्गुलदूरे च तिलोस्त्यन्योऽपि वामतः ॥२१५॥ तस्मात्तिलाद् द्व्यङ्गुलान्ते वामतोस्त्यपरस्तिलः । लक्ष्मणी तप्तमुद्राया वर्त्तेते च स्तनोपरि ॥ २१६ ॥ चतुस्तिलोर्ध्वपङ्क्तिश्च दक्षबाह्वन्तिऽकेन्तरे । त्र्यङ्गुलाधो बाहुमूलात्तप्तमुद्राकिणोस्ति च ॥ २१७ ॥ तत्पार्श्वे बाह्यतः सूक्ष्मा वर्त्तते च चतु-स्तिली । अधस्तात्कूर्परस्योर्ध्वं मणिबन्धात्तिलद्वयी ॥ २१८ ॥ स्वामिनारायणस्यास्य कनिष्ठाङ्गुलिमूलतः । उर्ध्वमर्द्धा-ङ्गुले दूरे तिलको वर्त्ततेऽल्पकः ॥२१९॥ वामस्याऽथ भुजस्यास्य मूलतस्त्र्यङ्गुलान्तरे । अधस्तात्तप्तमुद्राया लक्षणं स्पष्ट-मीक्ष्यते ॥ २२० ॥ अधश्च कूर्पराद्धस्तोर्ध्वभागे वर्त्तते तिलः । तथैको विद्यते तस्य तर्जनीमध्यमान्तरे ॥ २२१ ॥

वर्त्तते । प्रसिद्धतिलेभ्यः सूक्ष्मा ये चत्वारस्तिलास्तत्सदृशानि चिह्नानि सन्तीत्यर्थः । कर्पूरस्य कफोणेः अधस्तात् । मणिबन्धात्पाणिप्रकोष्ठसन्धेः सकाशात् । ऊर्ध्वम् । तयोर्मध्ये इत्यर्थः । तिलद्वयी द्वौ तिलकालकौ वर्त्तेते इत्यर्थः ॥ २१८ ॥ स्वामीति । स्वामिनारायणस्य स्वामिनारायण इति नाम्ना प्रसिद्धस्य । अस्य श्रीहरेः । कनि-ष्ठाङ्गुलिमूलतो दक्षिणकरान्तिमाङ्गुलिमूलात् । ऊर्ध्वं बाह्यत ऊर्ध्वभागे । अर्द्धाङ्गुलेऽर्द्धाङ्गुलपरिमिते । दूरे दूरप्रदेशे । अल्पकः सूक्ष्मः । तिलकः । वर्त्तते ॥ २१९ ॥ दक्षिणभुजचिह्नान्युक्त्वा वामभुजचिह्नान्याह वामस्येति त्रिभिः । अथानन्तरम् । अस्य श्रीहरेः । वामस्य । भुजस्य । मूलतः । अधस्तादधः प्रदेशे । त्र्यङ्गुलान्तरे त्र्यङ्गुलपरिमितदूरप्रदेशे । तप्तमुद्रायाः । लक्षणं चिह्नम् स्पष्टं स्फुटं यथातथा । ईक्ष्यते तद्द्रष्टृभिर्लक्ष्यते ॥ २२० ॥ अधइति । तस्य श्रीहरेः । कूर्पराद्वामभुजकफोणेः । अधो द्व्यङ्गुलमधस्तात् । हस्तोर्ध्वभागे करस्योर्ध्वप्रदेशे । 'पाणिर्हस्तः करस्तथेति धनञ्जयः' । कफोणिकरयोर्मध्यवर्त्तिप्रकोष्ठस्योर्ध्वभागे कूर्परात् द्व्यङ्गुलाधस्तादित्यर्थः । एकः । तिलः । वर्त्तते । तथा च । तर्जन्यङ्गुष्ठसमीपस्था प्रदेशिन्यपरपर्यायाङ्गुलिः । मध्यमा ज्येष्ठाङ्गुलिश्च तयोरन्तरं मध्यं तस्मिन् । एकः तिलः । विद्यते वर्त्तते । 'तर्जनी च प्रदेशिनी । ज्येष्ठा मध्या च मध्यमे'ति हैमः ॥ २२१ ॥

अन्तरिति । अस्य श्रीहरेर्वामभुजस्य । तर्जन्याः प्रदेशिन्याः करजो नखस्तस्यान्तिकं समीपं तस्मिन् । तत्रापि । अन्तर्भागेऽभ्यन्तरप्रदेशे । सूक्ष्मः । तिलः । वर्त्तते । करपृष्ठं करतलोपरिभागस्तस्यान्तरालं मध्यं तस्मिन् । एकः । तिलः वर्त्तते ॥ २२२ ॥ रक्तेति । हरेः श्रीहरिकृष्णभगवतः । दोष्णोः पाण्योः । नखाः । रक्ताः पाटलवर्णाश्च ते उत्तुङ्गा उन्नतमध्यास्तथाभूताः । तीक्ष्णान्यग्राणि येषां तथाभूताः । चकारात्तेजस्विन इत्यपि ज्ञेयम् । सन्ति । तले सव्यदक्षिणकरतलप्रदेशौ । ईषच्छयामाः कृष्णमिश्ररक्तवर्णाः सुशोभना रेखा ययोस्ते तथोक्ते । कोकनदं रक्तोत्पलं तस्योपमा ययोस्ते तथोक्ते च । स्तः ॥ २२३ ॥ उभाभ्यामिति । उभाभ्यां वामदक्षिणाभ्याम् । मणिबन्धाभ्यां प्राणिप्रकोष्ठसन्धिभ्याम् । ऊर्ध्वमूर्ध्वभागे । प्रकोष्ठे इत्यर्थः । अष्टभिरङ्गुलैः परिमितो देशोऽष्टाङ्गुलस्तस्मादुत्तरे तदन्ते इत्यर्थः । तप्तमुद्राङ्कौ तप्तमुद्राचिह्ने । भवतः । उभौ वामदक्षिणौ । कूर्परौ कफोणी । असितौ श्यामवर्णौ च । भवतः ॥ २२४ ॥ तिलइति । तस्य श्रीहरेः । जत्रुणोः । उरोंसगसंधयोः । 'जत्रुसन्धिरुरोंसग इति हैमः । जत्रुवक्षोंसयोः सन्धिरि'तिहलायुधश्च । अन्तरे मध्ये । गलगर्त्ते इत्यर्थः । महान् स्थूलः । तिलः । अल्पकः

अन्तर्भागे तिलः सूक्ष्मस्तर्जनीकरजान्तिके । करपृष्ठान्तराले च तिल एकोऽस्य वर्त्तते ॥ २२२ ॥ रक्तोत्तुङ्गाश्च तीक्ष्णाग्रा दोष्णोः सन्ति नखा हरेः । ईषच्छयामसुरेखे च तले कोकनदोपमे ॥ २२३ ॥ उभाभ्यां मणिबन्धाभ्यामूर्ध्वमष्टाङ्गुलोत्तरे । भवतस्तप्तमुद्राङ्कौ कूर्परौ चासितावुभौ ॥ २२४ ॥ तिलो महानल्पकश्च जत्रुणोर्भवतोन्तरे । अधस्तात्तस्य च हनोर्वर्त्तते तिल एककः ॥२२५॥ वामस्कन्धाद्द्व्यङ्गुलाधः सरोमा पृष्ठतस्तिलः । एकश्च तदधोऽन्यश्च वर्त्तते तदधस्तिलः ॥ २२६ ॥ घाटायास्त्र्यङ्गुलाधस्ताद्वंशास्थ्नो वामस्तिलः । एकोऽथ दक्षिणांसस्य पश्चाद्भागेऽस्ति सोऽल्पकः ॥ २२७ ॥ वंशास्थिमध्यतो दक्षभागे तिलचतुष्टयम् । अस्त्यथो नासिकापार्श्वे दक्षेऽस्त्येकस्तिलो महान् ॥ २२८ ॥

सूक्ष्मस्तिलश्च । एतौ द्वौ तिलौ । भवतः । हनोश्चिबुकाधः प्रदेशात् । अधस्तादधो भागे च । एककः । तिलः । प्रवर्त्तते ॥ २२५ ॥ वामेति । वामस्कन्धात्सव्यांसात् । द्व्यङ्गुलाधः द्व्यङ्गुलपरिमितप्रदेशादधः प्रदेशे । पृष्ठतो देहस्य पृष्ठप्रदेशे । सरोमा एकेन रोम्णा सहितः । एकः श्रेष्ठः महानित्यर्थः । 'एकोऽन्यः केवलः श्रेष्ठ' इत्यनेकार्थसङ्ग्रहे हैमः । तिलः । वर्त्तते । तदधस्तस्मात्तिलादधो भागे । अन्योऽपरः । तिलः । वर्त्तते । तदधस्तस्मादपि तिलादधः प्रदेशे । अन्यस्तृतीयः तिलश्च । वर्त्तते ॥ २२६ ॥ घाटाया इति । घाटायाः कृकाटिकायाः सकाशात् । त्र्यङ्गुलाधस्तात् त्र्यङ्गुपरिमितप्रदेशादधो भागे । वंशास्थ्नः पृष्ठमध्यस्थदीर्घास्थ्नः सकाशात् । वामतो वामभागे । एकः । तिलः । अस्ति । अथ च दक्षिणांसस्य दक्षिणस्कन्धस्य । पश्चात्पश्चिमे । भागे । अल्पकः सूक्ष्मः । स एकः तिलः । अस्ति ॥ २२७ ॥ वंशेति । वंशास्थ्नः पृष्ठमध्यगतबृहत्कीकसस्य यन्मध्यं तस्मादिति ततः । दक्षभागे दक्षिणप्रदेशे तिलचतुष्टयम् । अस्ति । परस्परा संलग्नाश्चत्वारस्तिला वर्त्तन्ते इत्यर्थः । अथो चार्थे । दक्षे दक्षिणे । नासिकापार्श्वे । महान् स्थूलः । एकः । तिलः । अस्ति ॥ २२८ ॥

अस्मादिति । अस्मान्नासिकादक्षिणपार्श्वस्थस्थूलतिलात् । ऊर्ध्वमूर्ध्वभागे । नेत्रकोणाद्दक्षिणलोचनसव्यप्रान्तदेशात् । अधोऽधस्तात् । अल्पकः सूक्ष्मः । एकः । तिलः । अस्ति । नासिकोपरि नासाया उपरितनभागे च । शीतलादेवीविशेषस्तेन तत्कृतो बालानां रोगविशेषो लक्ष्यते । तस्या ये स्फोटास्तेषां सूक्ष्मा अल्पा अङ्काश्चिह्नानि ते । सन्ति ॥ २२९ ॥ चक्षुषोरिति । तस्य श्रीहरेः । उभयोः सव्यदक्षिणयोः । चक्षुषोर्लोचनयोः सम्बन्धिनोः । उभयोर्द्वयोरपि पक्ष्मणोर्नेत्ररोमराज्योः । 'नेत्ररोमणि पक्ष्मास्त्री'ति हैमः । उन्मीलने उन्मेषसमये । अधः उभयपक्ष्मणोरधो भागे । तथा । उपरि उभयपक्ष्मणोरूर्ध्वभागे । सूक्ष्माः सूक्ष्मरेखाकाराः । वलयस्त्वक्सङ्कोचाङ्काः पतन्ति जायन्ते इत्यर्थः ॥२३०॥ मुख इति । तस्य श्रीहरेः । मुखे आस्ये । दक्षिणतो । दक्षिणभागे । अधस्तादधोभागस्थदन्तपङ्क्तौ आद्यदंष्ट्रान्तरे प्रथमदाढाभ्यन्तरे । असितं श्यामम् । लक्षणं चिह्नम् । वर्त्तते । जिह्वा रसना च । अब्जदलसन्निभा रक्तकमलपत्रसदृशी विद्यादिगुणबोधिका । वर्त्तते । 'पद्मपत्रसमा जिह्वा भोगवत्स्वेष्टभोजिनः । रक्तजिह्वो भवेद्यस्तु विद्यां लक्ष्मीमवाप्नुयादि'ति सामुद्रिकोक्तेः ॥ २३१ ॥ अन्तर इति । तस्य श्रीहरेः । वामकर्णस्य । अन्तरे मध्यप्रदेशे । मेचकः श्यामः । बिन्दुर्बिन्दुसदृशं चिह्नम् । भवति । उत्तुङ्गमुन्नतमध्यं च तद्विततं पृथु च तथोक्ते । भाले ललाटमध्ये च । उर्ध्वपुण्ड्राङ्कं उर्ध्वपुण्ड्ररेखाद्वयचिह्नम् । अस्ति ॥ २३२ ॥ भाल-

अस्मादूर्ध्वं नेत्रकोणादधोऽस्त्येकस्तिलोऽल्पकः । शीतलास्फोटसूक्ष्माङ्का नासिकोपरि सन्ति च ॥ २२९ ॥ चक्षुषोरुभयोस्तस्य पक्ष्मणोरुभयोरपि । पतन्त्युन्मीलने सूक्ष्मा वलयोऽधस्तथोपरि ॥ २३० ॥ मुखे दक्षिणतोऽधस्तादाद्यदंष्ट्रान्तरेऽसितम् । लक्षणं वर्त्तते तस्य जिह्वाऽब्जदलसन्निभा ॥ २३१ ॥ अन्तरे वामकर्णस्य बिन्दुर्भवति मेचकः । भाले तस्योर्ध्वपुन्ड्राङ्कं उत्तुङ्गविततेऽस्ति च ॥ २३२ ॥ भालस्य दक्षिणे भागे केशेभ्योऽधोऽस्ति लान्छनम् । दक्षश्रवणशष्कुल्याश्चाऽधोऽस्त्येकस्तिलोऽल्पकः ॥२३३॥ तालुदेशे तिलोऽस्त्येक एकश्चास्ति शिखाग्रतः । तिलास्त्रयः शिखापश्चाद्दक्षभागेऽस्य सन्ति च ॥२३४॥ रूपसौन्दर्यमाधुर्यजुष्टा पुष्टाऽतिशोभना । मनोहरा घनश्यामा मूर्तिः शान्ताऽस्य वर्त्तते ॥२३५॥

स्येति । भालस्य ललाटस्य । दक्षिणे । भागे । केशेभ्यः शिरोरुहेभ्यः । अधोऽधस्तात् । दक्षिणभ्रूमध्यात्समसूत्रवर्तिनः पञ्चाङ्गुलदूरात्केशोदयप्रदेशादधो देशे इत्यर्थः । लांच्छनं यवसदृशसूक्ष्मकिणचिह्नम् । अस्ति । श्रवणं कर्णः शष्कुलीवेति श्रवणशष्कुली दक्षा दक्षिणा चासौ श्रवणशष्कुली च तस्याः । अधोऽधः प्रदेशवर्त्तिन्याः पालेः छिद्रार्हभागे इत्यर्थः । अल्पकः सूक्ष्मः । एकः । तिलः । अस्ति ॥ २३३ ॥ ताल्विति । अस्य श्रीहरेः । तालुदेशे तालूपरि । एको महान् । तिलः । अस्ति । शिखाग्रतः शिखायाः पुरो भागे च । एकः । तिलः । अस्ति । शिखापश्चात् शिखायाः पश्चिमप्रदेशे । तत्रापि । दक्षभागे दक्षिणप्रदेशे च । त्रयः । तिलाः सन्ति ॥ २३४॥ रूपेति । अस्य श्रीहरेः । मूर्त्तिः शरीरम् । रूपं सुस्वभावश्च सौन्दर्यं लावण्यं च माधुर्यं मनोज्ञता च तैर्जुष्टा तदतिशयवतीत्यर्थः । रूपं सामान्यतो देहसौष्ठवम् । सौन्दर्यं प्रत्यङ्ग श्लक्ष्णत्वम् । माधुर्यं प्रीतिजनकत्वमित्यन्ये । पुष्टा पुष्टसर्वाङ्गा । तथाविधाप्यतिशोभना । मनोहरा स्वप्रेक्षकजनमनसां स्वाकर्षणकर्त्री । मनइत्युपलक्षणं चक्षुरादीनामपि । घनश्यामा नवीननीरदस्निग्धसुन्दरमेचकवर्णा । शान्ता प्रेक्षकाभयदा वर्त्तते ॥ २३५ ॥

तन्मूर्त्तिप्रमाणं सदृष्टान्तमाह । अस्तीति । दुर्गपुरे । गोपीनाथस्य गोपीनाथाख्यश्रीकृष्णस्य । मूर्त्तिः प्रतिमा । यावती यत्परीमाणा । उन्नता दीर्घा । अस्ति । उपलक्षणमेतत्सकलावयवपरिमाणस्य । अस्य श्रीहरेरपि । मूर्त्तिः शरीरम् । तावती तत्परिमाणैव । उन्नता । अस्ति । हीति प्रसिद्धौ ॥ २३६ ॥ श्रीहरेः शारीरलक्ष्माण्युपसंहरति । सामुद्रिकेति । समुद्रेण प्रोक्तं शास्त्रं सामुद्रिकं तस्मिन्उक्तानि यानि सल्लक्ष्माणि त्रिगम्भीरादीनि तैर्लक्षिता अङ्किता अवयवा यस्यास्तथाभूता आकृतिमूर्त्तिर्यस्य तस्य । हरेः श्रीहरिकृष्णभगवतः । लक्ष्माण्यङ्गचिह्नानि । उक्तानि कथितानि । एतानि । उर्ध्वरेखादीनि लक्ष्माणि । चिन्तने ध्यानकाले । वीक्ष्याणि ध्यातृभिर्ध्यातायां श्रीहरिमूर्त्तावविलोकनीयानि । सामुद्रिकोक्तमहापुरुषलक्षणानि वराहसंहितायामुक्तानि । 'नाभिः स्वरः सत्त्वमतिप्रशस्तं गम्भीरमेतत्त्रितयं नराणाम् । उरो ललाटं वदनं च पुंसां विस्तीर्णमेतत्त्रितयं प्रशस्तम् । वक्षोऽथ कक्षो नखनासिकास्यं कृकाटिका चेति षडुन्नतानि । ह्रस्वानि चत्वारि च लिङ्ग पृष्ठं ग्रीवा च जङ्घ च हितप्रदानि । नेत्रान्तपादकरताल्वधरोष्ठजिह्वं रक्तं नखाश्च खलु सप्त सुखावहानि । सूक्ष्माणि पञ्च दशनाङ्गुलिपर्व केशं साकं त्वचा कररुहाश्च न दुःखितानाम् । हनु लोचन बाहु नासिकं स्तनयोरन्तरमत्र पञ्चमम् । इह दीर्घमिदं तु पञ्चकं न भवत्येव नृणामभूभृतामि'ति । अत्र कानिचित्सामुद्रिकाद्भिन्नानि भवन्ति तानि ग्रन्थभेदान्न-

अस्ति दुर्गपुरे मूर्तिर्गोपीनाथस्य यावती । उन्नताऽस्यापि मूर्तिश्च तावत्येवोन्नताऽस्ति हि ॥ २३६ ॥
सामुद्रिकोक्तसल्लक्ष्मलक्षितावयवाकृतेः । हरेरुक्तानि लक्ष्माणि वीक्ष्याण्येतानि चिन्तने ॥ २३७ ॥
भक्तिधर्मात्मजस्यास्य हरेरथ निसर्गजाः । चेष्टाविशेषाः कथ्यन्ते हृदि तत्स्मृतिहेतवः ॥ २३८ ॥
जितनिद्रः सोऽनुदिनमुपान्त्येक्षणदाक्षणे । उत्थाय कुरुते दन्तधावनं चाप्लवं ततः ॥ २३९ ॥
वासःप्रमार्जिताङ्गोऽर्ध्वमार्द्रस्नानांशुकस्य सः । कृत्वोरुमध्ये निष्पीड्य ततो मार्ष्ट्यङ्घ्रिजानु च ॥२४०॥

दोषावहानि ॥ २३७ ॥ एवमङ्गचिह्नान्युक्त्वा साम्प्रतं श्रीहरेर्निसर्गचेष्टावक्तुमारभते । भक्तीति । अथेति भिन्नोपक्रमे । भक्तिधर्मात्मजस्य प्रेमवतीहरिप्रसादसुतस्य । अस्य । हरेः । निसर्गजाः स्वाभाविकाः । हृदि ध्यातृणां हृदये । तत्स्मृतिहेतवः श्रीहरिस्मरणकारणभूताः । एतच्छ्रवणपठनाभ्यां भक्तजनानां तत्स्मरणं भवतीत्यर्थः । चेष्टाविशेषाः नानाविधक्रियाचरणरूपचेष्टाभेदाः । कथ्यन्ते । मयेति शेषः ॥ २३८ ॥ तानाह चतुरशीत्याश्लोकैः । जितेति । जितनिद्रो वशीकृतस्वापः । उन्निद्र इत्यर्थः । स श्रीहरिः । अनुदिनं दिनेदिने । उपान्त्येऽन्तस्य समीपभवे । क्षणदाक्षणे रात्रिमुहूर्त्ते ब्राह्मे मुहूर्त्ते इत्यर्थः । उत्थाय शयनादुत्थितो भूत्वा । दन्तधावनं बुब्बुलकाष्ठेन दन्तघर्षणपूर्वकं जलेन मुखशुद्धिम् । कुरुते । चकारात्ततः प्राक्शौचविधिं कुरुते इति ज्ञेयम् । ततो दन्तधावनविधानानन्तरम् । आप्लवं यथाकालं भक्तजनार्पितवारिणा स्नानम् । कुरुते । स्नानार्हपीठादावुपविश्येति शेषः ॥ २३९ ॥ वासइति । वाससा स्नानवस्त्रेतरवस्त्रेण प्रमार्जितानि शरीरस्थजलविप्रुषामुत्सारणेन शुद्धीकृतानि अङ्गान्युर्ध्वाङ्गानि येन सः । स श्रीहरिः । उत्थायेतिशेषः । आर्द्रं जलक्लिन्नं च तत्स्नानांशुकं स्नानकालपरिहितवस्त्रं च तस्य । अर्द्धमुत्तरार्द्धम् । ऊरूमध्ये सक्थिद्वयान्तराले । कृत्वा । धृत्वेति वा पाठः । निष्पीडय उभाभ्यां पाणिभ्यां तन्निष्पीडनं कृत्वा । ततस्तदनन्तरम् । अङ्घ्री पादौ च जानुनी ऊरुपर्वणी च तत् । मार्ष्टि प्रमार्जयति ॥ २४० ॥

सितेति । तत एवमङ्गमार्जनानन्तरम् । सितानां श्वेतानां वाससां वस्त्राणां धृतिर्धारणं तस्यां रुचिः प्रीतिर्यस्य सः तथोक्तः । असौ श्रीहरिः । सितं श्वेतम् । सूक्ष्मस्थूलम् । घनं निबिडम् । शुचि धौतशुष्कं च । अंशुकमधोवस्त्रम् । कट्यां बन्धोबन्धनं तेन दृढं यथा भवति तथा । परिधत्ते । कटिबन्धेति पूर्वापरकच्छयोरप्युपलक्षणम् ॥२४१॥ उत्तरियेति । अथाऽधोंशुकपरिधानानन्तरम् । श्वेतं वलक्षम् । उत्तरीयांशुकमुत्तरीयवस्त्रम् । परिवीय वसित्वा । पद्भ्यामुभाभ्यां पादाभ्याम् । पादुके अनुपदीने । धृत्वा शुचिस्थानं पवित्रस्थलम् । गत्वा प्राप्य । पीठे यज्ञीयतरुपट्टकासने । निषीदति सन्ध्यादिनित्यकर्मविधानार्थमुपाविशति ॥ २४२ ॥ सन्ध्येति । ततस्तदनन्तरम् । वर्णीन्द्रो नैष्ठिकब्रह्मचारिश्रेष्ठः । श्रीहरिः । सन्ध्यादि प्रातः सन्ध्याप्रभृतिकम् । कृष्णपूजान्तं स्वेष्टश्रीकृष्णार्चनावसानम् । स्वीयमात्मीयम् । स्वस्यावश्यविधेयमित्यर्थः । नित्यविधानं नित्यविधिम् । यथाविधि स्वगृह्योक्तविधिमनतिक्रम्य । अनुतिष्ठत्याचरति ॥ २४३ ॥ कर्णेति । भोजनक्षणे स्वकीयभोजनसमये । संव्यानमुत्तरीयम् । अंशुकं वस्त्रम् । कर्णपृष्ठे कर्णयोः पश्चाद्भागे । कृत्वा । कर्णावुद्घाटितौ विधायेत्यर्थः । वामं सव्यम् । पादम् । आकुञ्च्या कुञ्चितं कृत्वा । दक्षं दक्षिणम् । पादं च । उत्तभ्य

सितवासोधृतिरुचिः सितं सूक्ष्मं घनं शुचि । अंशुकं परिधत्तेऽसौ कटिबन्धदृढं ततः ॥ २४१ ॥ उत्तरीयांशुकं श्वेतं परिवीयाथ पादुके । धृत्वा पद्भ्यां शुचिस्थानं गत्वा पीठे निषीदति ॥२४२॥ संध्यादिकृष्णपूजान्तं वर्णीन्द्रः श्रीहरिस्ततः । स्वीयं नित्यविधानं च यथाविध्यनुतिष्ठति ॥ २४३ ॥ कर्णपृष्ठेऽशुकं कृत्वा संव्यानं भोजनक्षणे । वाममाकुञ्च्य चोत्तभ्य दक्षं पादं निषीदति ॥ २४४ ॥ पूर्वास्य उत्तरास्यो वा हरिर्दक्षिणकूर्परम् । दक्षजानूपरि दधद्भुङ्क्ते मुहुरपः पिबन् ॥ २४५ ॥ यं यं पदार्थं जानाति भुञ्जानः स्वादुसद्रसम् । तं तं निजेष्टभक्तेभ्यो दापयत्यादराद् भृशम् ॥ २४६ ॥ मितभोजनशीलोऽसौ समये भोजनस्य च । उद्गारमाचरंस्तुन्दे परिवर्त्तयते करम् ॥ २४७ ॥

तथाविधमेव तं दक्षपादमुत्तम्भितं कृत्वा । निषीदति ॥ २४४ ॥ पूर्वेति पूर्वास्याः पूर्वदिगभिमुखवदनाब्जः । अथवा । उत्तरास्य उत्तरदिगभिमुखवदनपङ्कजः । हरिः । दक्षिणकूर्परं दक्षिणहस्तकफोणिम् । दक्षजानूपरि उत्तम्भितदक्षिणपादजानूपरिष्टात् । दधद्धारयन्सन् । मुहुः । द्वित्रग्रासाशनादनन्तरमेवेत्यर्थः । अपः पानीयम् । पिबन् संश्च । भुङ्क्ते भोजनं करोति ॥ २४५॥ यमिति । भुञ्जानो भोजनं कुर्वन्सन् । यं यम् । पदार्थं भक्ष्यभोज्यादिकं वस्तु । स्वादुर्जिह्वारुचिकरः सन्तः शोभना रसा मधुरादयो यस्य स चासौ स च तं तथाभूतम् । जानाति । तं तं पदार्थम् । निजेष्टभक्तेभ्यः स्वकीयप्रियभक्तजनेभ्यः । आदरात् । भृशमतिशयितं यथातथा । दापयति तथाविधस्वग्रासादिकान्नप्रदानं कारयतीत्यर्थः ॥ २४६ ॥ मितेति । मितभोजनशीलोऽल्पाहाराचरणस्वभावः । यद्वा 'द्वौ भागौ पूरयेदन्नैस्तोयेनैकं प्रपूरयेत् । मारुतस्य प्रचारार्थं चतुर्थमवशेषयेदि'ति स्मृत्युक्तमितभोजनशीलः । असौ श्रीहरिः । भोजनस्य । समये । उद्गारमुद्गरणम् । आचरन्कुर्वन्सन् । तुन्दे उदरे । करं वामहस्तम् । परिवर्त्तयते मण्डलाकारेण परिभ्रमयति ॥ २४७ ॥

कस्मैचिदिति । असौ श्रीहरिः । कर्हिंचित्कस्मिंश्चिद्भोजनसमये । कस्मैचित् । निजभक्तजनाय स्वकीयदासाय । प्रीतः प्रसन्नः सन् । आत्मनः स्वस्य । भोजनस्थालं स्थालाख्यं सार्वं स्वभुजिपात्रम् । दत्ते भोजनान्ते स्वयमेव ददाति । अथवा । दापयति सन्ततस्वसेवानिष्ठमुकुन्दानन्दवर्ण्यादिना विश्राणयति ॥ २४८ ॥ वामेति । श्रीहरिः । वामस्कन्धे सव्यांसे । पटीमुत्तरीयवस्त्रम् । कृत्वा पृष्ठलम्बितां विधाय । तां पटीम् । कट्यां श्रोणीप्रदेशे । दृढं यथातथा । आबध्य सम्यग्बध्वा । साधून् अच्युतगोत्रिणो मुक्तानन्दादिसत्पुरुषान् । भूरिशोऽनेकविधानि । भोज्यानि पक्वान्नानि । प्रीत्या सादरमित्यर्थः । परिवेषयति भोजनसमये तत्पात्रेषु निक्षिपतीत्यर्थः ॥२४९॥ आदर इति । हरिभक्तानां मुक्तानन्दमुन्यादिस्वैकान्तिकभक्तजनानाम् । आदने नानाविधभक्ष्यभोज्याद्याशनेन सौहित्यविधाने । परिवेषणे च । आदृत आदरयुक्तः । श्राद्धः श्रद्धायुक्तः । त्वरावानित्यर्थः । प्रीतः प्रीतिमांश्च श्रीहरिः । भक्ष्याणां परिवेषणीयद्रव्याणां । संज्ञा लड्डुकादिनामानि ताः वदन् परिवेषणसमये गृह्णीत लड्डुकं गृह्णीत शष्कुलिमित्यादिव-चांस्युच्चरन्सन् । पङ्क्तिषु भोजनार्थोपविष्टसाधुश्रेणीषु । चरति गतिलाघवेन प्रसरति ॥ २५० ॥ वर्षास्विति । वर्षासु प्रावृड्ऋतुसमये । अथवा । शरत्काले घनात्ययसमये ।

कस्मैचित्कर्हिचित्प्रीतो निजभक्तजनाय च । आत्मनो भोजनस्थालं दत्ते वा दापयत्यऽसौ ॥ २४८ ॥ वामस्कन्धेपटीं कृत्वा कट्यां चाबध्यतां दृढम् । परिवेषयति प्रीत्या साधून्भोज्यानि भूरिशः ॥ २४९ ॥ आदने हरिभक्तानां चादृतः परिवेषणे । श्राद्धः प्रीतो भक्ष्यसंज्ञावदंश्चरति पङ्क्तिषु ॥ २५० ॥ वर्षासु वा शरत्काले स्नातुं भक्तजनैः सह । उन्मत्तगङ्गामच्छोदां याति दुर्गपुरान्तिके ॥ २५१ ॥ प्रशंसंस्तन्नदीतोयं साकं तैः स्वाननेक्षणैः । बहुधैव जलक्रीडां हर्षयंस्तान्करोत्यसौ ॥ २५२ ॥ दोर्द्वयाङ्गुलिसंरुद्धनासानेत्रश्रवोन्तरः । स निमज्जति नद्यादौ चिरं तत्र च वर्त्तते ॥ २५३ ॥ जलादुन्मज्जति यदा तदा दक्षिणपाणिना । परिमार्ज्य स्ववदनं गण्डूषान्कुरुते ततः ॥ २५४ ॥

कदाचिद्वर्षाकाले कदाचित् शरत्काले चेत्यर्थः । स्नातुं स्नानं कर्त्तुम् भक्तजनैः सह तैः परिवृत एवेत्यर्थः श्रीहरिः । दुर्गपुरान्तिके दुर्गपुरस्य दक्षिणोपशल्ये । वर्त्तमाना-मिति शेषः । अच्छोदां मुकुरतलवन्निर्मलजलाम् । उन्मत्तगङ्गामेतत्संज्ञां नदीं प्रति । याति गच्छति ॥ २५१ ॥ प्रशंसन्निति । तन्नदीतोयमुन्मत्तगङ्गाधुनीजलम् । प्रशंसन् स्तुवन् । असौ श्रीहरिः । तान् भक्तजनान् । हर्षयन्नानन्दयन्सन्नेव । स्वस्याननं मुखपद्मं तस्मिन्नेवेक्षणानि नेत्रवृत्तयो येषां तैस्तथोक्तैः । तैर्भक्तजनैः । साकं सह । बहुधाऽनेकप्रकाराम् । जलक्रीडां जलकेलिम् । करोति ॥ २५२ ॥ दोरिति । स श्रीहरिः । दोष्णोः करयोर्द्वयं तस्याङ्गुलिभिः संरुद्धं सम्यक्पिहितम् । नासे नासि-कापुटे च नेत्रे चक्षुषी च श्रवसी कर्णौ च तस्यान्तरं मध्यम् संरुद्धं तद्येन स तथाभूतः सन् । नद्यादौ । आदि शब्दात्तडागसरोवरादिग्रहणम् । निमज्जति निमग्नो भवति । तत्र नद्यादौ च चिरं बहुकालम् । वर्त्तते निमग्न एव तिष्ठति ॥ २५३ ॥ जलादिति । श्रीहरिः । जलाद्यत्र स्वयं निमग्नस्तदुदकात् । यदा । उन्मज्जति बहि-र्निःसरति । तदा । दक्षिणपाणिना स्ववदनं स्वकीयमुखपङ्कजम् । परिमार्ज्य । ततस्तदनन्तरम् । गण्डूषान्मुखपूर्त्तीः कुरुते ॥ २५४ ॥

नद्यामिति । क्वचित् । नद्यामुन्मत्तगङ्गायाम् । तिष्ठन्मध्येऽवस्थितः । स्वयं श्रीहरिः । गायन्स्वयमपि साधुगीतकृष्णपद्यानि कीर्त्तयन् । तालिकाः । वादयन् संश्च । साधुभिः सह स्नानार्थागतमुक्तानन्दादिमुनिभिः प्रयोज्यकर्तृभिः । कृष्णपद्यानि पद्यनिबद्धानि कृष्णयशांसीत्यर्थः । सोत्साहं सहर्षं यथातथा । गापयति उच्चैः कीर्त्तयति ॥ २५५ ॥ स्नात्वेति । श्रीहरिः । स्नात्वोक्तरीत्या स्नानं कृत्वा । स्वपाणिना स्वकीयदक्षिणहस्तेन । स्वप्रेष्ठभक्तपार्णिं रत्नजिदादिस्वप्रियभक्तजनहस्तम् । अवलम्ब्यावष्टंभार्थं तद्धस्तधारणं कृत्वेत्यर्थः । उपलक्षणमेतन्नदीप्रवेशस्यापि । प्रहृष्टवदनैः स्वकीयस्नानलीलावलोकनसंजातहर्षेण प्रहसन्मुखैरित्यर्थः । स्वकैः । स्वभक्तैस्त्यागिभिर्गृहस्थैश्च । साकं सहैव । नद्याः सकाशात् । निःसरति बहिर्निर्गच्छति ॥ २५६ ॥ बध्नन्निति । असौ श्रीहरिः । शीर्षपटं शिरोधार्यपटकम् । बध्नन् शिरसिवेष्टयन्सन् । तस्य शीर्षपटस्याग्रमञ्चलस्तेनैव । शेखरं तन्मध्यापीडम् । धत्ते सम्पादयति तेन वेष्ट्यमानशिरःपटेन यः पेचक उष्णीषैकदेशविशेषस्तम् । भृकुटौ दक्षिणभ्रूप्रदेशे । कृत्वा आनीय । दृढं यथातथा । बध्नाति तं वेष्टयति । एतच्छिरःपटनिबन्धनं तु नदीप्रवाहाद्द्वित्रिचतुर्हस्तमितविदूरवर्त्तीतच्छिलातलोपरिस्थित्वा पूर्ववत्परिहितार्द्राधोंशुकार्द्धभागं संलग्नोर्वोः सम्पीडय वस्त्रान्तरेण

नद्यां तिष्ठन् गापयति कृष्णपद्यानि साधुभिः । स्वयं च गायन्सोत्साहं तालिकावादयन् क्वचित्
॥ २५५ ॥ स्नात्वाऽवलम्ब्य स्वप्रेष्ठभक्तपार्णिं स्वपाणिना । प्रहृष्टवदनैः साकं नद्या निःसरति स्वकैः
॥ २५६ ॥ बध्नन् शीर्षपटं धत्ते तदग्रेणैव शेखरम् । तत्पेचकं च भृकुटौ कृत्वा बध्नात्यसौ दृढम्
॥ २५७ ॥ आरुह्याऽश्ववरं नद्या वृतो भक्तैः सहस्रशः । सुखयन्स्वेक्षकदृशः स्वावासं समुपेति सः
॥ २५८ ॥ यदा चलत्यसौ तर्हि वामस्कन्धे सितां पटीम् । तिर्यग्विधाय कुरुते दक्षदोश्चलनं मुहुः
॥२५९॥ सनक्तकं दक्षपार्णिं चालयंश्चलति क्वचित् । निसर्गसत्वरगतिः सोऽनुद्रुतनरव्रजः ॥२६०॥

स्वशरीरं प्रमार्ज्य धौतशुष्कश्वेताधोंशुकं दृढं परिधायोत्तरीयवस्त्रप्रावरणानन्तरं ज्ञेयम् ॥२५७॥ आरुह्येति । स श्रीहरिः । अश्ववरं माणिक्यवर्णाद्युत्तमसैन्धवम् । अत्राश्वोऽश्विन्या अप्युपलक्षणम् । आरुह्य । एतच्चाश्वारोहणं वामस्कन्धे पटीं कृत्वेति पूर्वोक्तप्रकारेणोत्तरीयवस्त्रेण कटिनिबन्धनानन्तरं ज्ञेयम् । सहस्रशः । भक्तैस्त्यागिभिर्गृहिभिश्च स्वाश्रितजनैः । वृतः परिवारितः । स्वेक्षकदृशः स्वमूर्त्तिवीक्षकजननेत्राणि । सुखयन्नानन्दयन्संश्च । नद्याः सकाशात् । स्वावासमुत्तमभूपतिदुर्गान्तःस्थनिजाश्रमम् । समुपैति सम्यक् प्राप्नोति ॥ २५८ ॥ यदेति । असौ श्रीहरिः । यदा । चलति स्वावासात्कुत्रचिद्गमनं करोति । तर्हि तदा । वामस्कन्धे स्वसव्यभुजशिरसि । सितां श्वेतवर्णाम् । पटीमुत्तरीयवस्त्रम् । तिर्यग्विधाय यज्ञोपवीतवत्कृत्वा । दक्षदोश्चालनं दक्षिणहस्तधूननम् । मुहुः । कुरुते ॥ २५९ ॥ सनक्तकमिति । निसर्गसत्वरगतिः स्वभावसत्वरगमनः । अनुद्रुताः पश्चाद्धावन्तः नराणां स्वभक्तादिजनानां व्रजाः समूहा यं यस्य वा सः । स श्रीहरिः । सनक्तकं कर्पटसहितम् । 'समौ नक्तककर्पटावि'त्यमरः । 'स्वेदादिमार्जनार्थं हस्तस्थवस्त्रखण्डो नक्तक' इति व्याख्यासुधाः । दक्षपार्णिं दक्षिणहस्तम् । चालयन् धूनयन् सन् । क्वचित्कदाचित् । चलति गच्छति ॥ २६० ॥

वामेति । क्वापि कस्मिंश्चित्समये । श्रीहरिः । वामपाणिं सव्यकरम् । वामकुक्षौ वामभुजकफोणिसमीपवर्त्युदरप्रदेशे । कृत्वा निधाय । सनक्तकं नक्तकसहितम् । अन्यं दक्षिणं पाणिम् । चालयन्धूनयन्सन् । चट्चटेत्यव्यक्तो ध्वनिः शब्दो ययोस्तथाभूते पादुके यस्य स तथाभूतः सन् । चलति ॥ २६१ ॥ क्वचिदिति । क्वचित्कस्मिंश्चित्समये । श्रीहरिः । कार्याय यत्किञ्चित्कार्यं विधातुम् । यदा । तिष्ठन् ऊर्ध्वावस्थितः भवति । अथवा । शनकैः मन्दं यथातथा । व्रजन् गच्छन् । भवति । तदा । मुष्ट्या स्वस्य दक्षिणमुष्टिना । दक्षिणम् । ऊरुम् । मन्दं मन्दं शनैः शनैः । ताडयति प्रहरति ॥ २६२ ॥ क्वचिदिति । क्वचित् । जनसंमर्दे स्वदर्शनार्थं नानादेशागतलोकसङ्घर्षे सति । क्षितेः पृथिव्याः सकाशात् । रजसि रेणौ । उत्थिते उद्गच्छति सति । मुखं च नासा नासिका च तस्याग्रे पुरोभागे । नक्तकम् । स्वस्य । पाणिना स्वकीयेन दक्षिणकरेण वामकरेण वा । दधाति रजसोऽन्तराप्रवेशाय श्रीहरिस्तत्पिदधातीत्यर्थः ॥ २६३ ॥ मञ्च इति । श्रीहरिः । क्वापि । मञ्चे पर्यङ्के । क्वापि । स्वाच्छन्ने सम्यगास्तृते । गुप्तदोरके पुष्कलनिर्बीजपिञ्जितपिचुभृततूलपटिकायाम् । क्वापि । चक्रके चक्राकारतूलपटे । वा शब्दश्चार्थे । क्वापि च । मञ्चस्थे पर्यङ्कोपरिस्वोपष्टम्भार्थं

वामकुक्षौ वामपाणिं कृत्वाऽन्यं च सनक्तकम् । चालयंश्चलति क्वापि चट्चटध्वनिपादुकः ॥ २६१ ॥ क्वचित्कार्याय
तिष्ठन्वा शनकैर्भवति व्रजन् । मन्दं मन्दं ताडयति मुष्ट्योरुं दक्षिणं तदा ॥ २६२ ॥ क्वचित्तु जनसम्मर्दे उत्थिते
रजसि क्षितेः । दधाति मुखनासाग्रे नक्तकं स्वस्य पाणिना ॥ २६३ ॥ मञ्चे निषीदति क्वापि स्वाच्छन्ने गुप्तदोरके ।
चक्रके वापि मञ्चस्थे पार्श्विके दीर्घवर्त्तुले ॥ २६४ ॥ आस्ते वीरासनेनैव क्वापि क्वापि तु वाससा । आबध्य जानुनी
प्रायश्चोपष्टभ्यैव पार्श्विकम् ॥ २६५ ॥ निषीदत्यासने यत्र तत्रावष्टभ्य पार्श्विकम् । प्रसारितैकपादेऽन्यं निधत्तेऽङ्घ्रिं
क्वचिच्च सः ॥ २६६ ॥ क्वचिन्निषणः सव्याङ्घ्रेरूर्ध्वरेखोपरि प्रभुः । दक्षपाण्यङ्गुलीमूर्ध्वं शनैरावर्त्तयत्यसौ ॥ २६७ ॥

स्थापिते । दीर्घवर्त्तुले आयतगोले । पार्श्विके पार्श्वाधारोपबर्हविशेषे । निषीदत्युपविशति ॥ २६४ ॥ आस्त इति । श्रीहरिः । क्वापि । वीरासनेनैव । इदं स्वस्तिकासनस्याप्युलक्षणम् । आस्ते मञ्चादावुपविशति । वीरासनस्वस्तिकासनयोर्लक्षणमुक्तं योगशास्त्रे 'एकं पादमथैकस्मिन्विन्यस्योरुणि संस्थितः । इतरस्मिंस्तथाचोरुं वीरासनमि' ति स्मृतम् । 'जान्वोर्वोरन्तरे पादतले द्वे अपि योगकृत् । कृत्वासीत ऋजुर्यत्तत्स्वस्तिकं परिकीर्त्तितमि'ति । क्वापि तु । जानुनी जानुद्वयम् । वाससोत्तरीयवस्त्रेण । आबध्य पर्याचेष्ट्य आस्ते । प्रायो बहुधातु । पार्श्विकम् । अवष्टभ्यैव । आस्ते ॥ २६५ ॥ निषीदतीति । स श्रीहरिः । क्वचित् । यत्र यस्मिन् । आसने मञ्चकादौ निषीदति । तत्र तस्मिन्नासने । पार्श्विकम् । अवष्टभ्य पार्श्वभागेनावलम्ब्य । प्रसारितैकपादे आयतीकृतैकाङ्घ्रौ । अन्यं द्वितीयम् । अङ्घ्रिं पादम् । निधत्ते । तं प्रसारितं विधाय तत्र निधाय निषीदतीत्यर्थः ॥ २६६ ॥ क्वचिदिति । प्रभुः । असौ श्रीहरिः । क्वचित् । निषण्ण आसने उपविष्टः सन् । सव्याङ्घ्रेर्वामचरणस्य । उर्ध्वरेखोपरि । दक्षपाणिर्दक्षिणहस्तस्तस्याङ्गुली करशाखा ताम् । उर्ध्वमूर्ध्वप्रदेशे । शनैर्मन्दमन्दम् । आवर्त्तयति परिभ्रमयति ॥ २६७ ॥

जिह्वेति । स श्रीहरिः । जिह्वैकभागं स्वरसनैकप्रदेशम् । दन्तानामोष्ठद्वयवामदक्षिणावसानान्यतरसमीपवर्त्तिनामूर्द्धाधःस्थदशनानां ये अग्राण्यग्रभागास्तैरवष्टब्धमवधृतम् । विधाय कृत्वा । प्रायो बहुधा । निषीदति । इत्येषा ईदृशी । तस्य श्रीहरेः । साहजिकी स्वाभाविकी । क्रिया । अस्ति । मत्परमेश्वरताया इव मत्साधुताया अप्यद्वितीयत्वान्मत्स्वरूपानभिज्ञजनैर्मदपराधे कृते मयाऽप्यस्यायं ग्रामो ज्वलत्वस्यायं विषय उज्जानकः स्ताच्चेति शापे दत्ते दुष्टैः सहादुष्टानामपि नाशे तन्महानर्थोदयपूर्वं क्षमालक्षणमत्साधुता सदोषास्यादिति विचार्य स्वजिह्वायास्तथाविधतया रक्षणरूपमिदं श्रीहरिचेष्टितं बोध्यम् ॥ २६८ ॥ उपविष्ट इति । कर्हिचित् । उपविष्टः स्वासने निषण्णः । असौ श्रीहरिः । चिबुकप्रान्तौ चिबुकाधोवर्त्तिहनुप्रान्तभागौ । गृहीत्वा स्वकराभ्यां धृत्वा । आत्मनः स्वस्य कन्धरा ग्रीवा ताम् । मोटयन्प्रमर्दयन्सन् । कट्कारं कड्कडित्यव्यक्तध्वनिम् । वादयति कारयतीत्यर्थः ॥२६९॥ यदेति । क्वचित् । असौ श्रीहरिः । यदा पृष्ठं स्वस्य पश्चाद्भागम् । स्वभक्तेन सबलस्वाश्रितसोमवर्मादिपूरुषेण प्रयोज्यकर्त्रा । संवाहयति मर्दयति । तर्हि तदा । स्वस्य । वक्षस्तले स्वोरोऽधः प्रदेशे । पार्श्विकम् । निदधाति निधाय मर्दयतीत्यर्थः ॥ २७० ॥ आसीन इति । असौ श्रीहरिः ।

जिह्वैकभागं दन्ताग्रावष्टब्धं च विधाय सः । प्रायो निषीदतीत्येषा तस्य साहजिकी क्रिया ॥ २६८ ॥
उपविष्टः कर्हिचिच्च मोटयन्नात्मकन्धराम् । गृहीत्वा चिबुकप्रान्तौ कट्कारं वादयत्यसौ ॥ २६९ ॥
यदा क्वचित्स्वभक्तेन पृष्ठं संवाहयत्यसौ । स्वस्य वक्षस्तले तर्हि पार्श्विकं निदधाति च ॥ २७० ॥
आसीनो यत्र कुत्रापि तुलसीजपमालिकाम् । दक्षदोर्मध्यमामध्यपर्वण्यावर्त्तयत्यसौ ॥ २७१ ॥
द्विगुणीकृत्य तां वामे करे धृत्वाऽन्यपाणिना । क्रीडन्निव क्वचिद्द्वौ द्वावाकर्षति च तन्मणी ॥ २७२ ॥
कृष्णवार्त्तारतः क्वापि मालां तां करमध्ययोः । दधानः सङ्कलीकृत्य ताभ्यां घर्षत्यसौ मुहुः ॥ २७३ ॥

यत्र कुत्रापि सभायां विजने स्थाने वा । आसिनो निषण्णः सन् । तुलसीजपमालिकां जपार्थिकां तुलसीकाष्ठरम्यमणिमालिकाम् । दक्षो दक्षिणो यो दोर्हस्तस्तस्य मध्यमा ज्येष्ठाङ्गुलिस्तस्या यन्मध्यपर्व तस्मिन् । आवर्त्तयति अङ्गुष्ठेनैकैकं मणिमाहरन्परिवर्त्तयतीत्यर्थः ॥ २७१ ॥ द्विगुणी कृत्येति । श्रीहरिः । क्वचित् । तां तुलसीजपमालिकाम् । द्विगुणीकृत्य तत्सरद्वयं परस्परसंलग्नं कृत्वा । तथाभूतमेव । वामे । करे । धृत्वा । अन्यपाणिना दक्षिणहस्तेन । द्वौ द्वौ । तन्मणी तस्या मणीकौ कर्मभूतौ । क्रीडन् क्रीडनभेदमाचरन्निव । आकर्षति आहरति । इदं श्रीहरेश्चेष्टितं न केवलं क्रीडनमात्रं किन्त्वेतत् स्वाश्रितानां युष्माकं मायिकसुखदुःखादिद्वन्द्व मयाऽपहृत्य दूरतरमुत्सादितमिति बोधयतीति प्रतिभाति ॥ २७२ ॥ कृष्णेति । असौ श्रीहरिः । क्वापि । कृष्णवार्त्तारतः स्वभक्तेभ्यः श्रीकृष्णमहिमचरित्रधर्मज्ञानादिस्वरूपबोधनप्रसक्तचित्तः सन् । ताम् । मालाम् । सङ्कलीकृत्यैकीकृत्य संक्षिप्तां कृत्वेत्यर्थः । करमध्ययोः सम्पुटीकृतकरतलमध्यभागयोः । दधानः सन् । ताभ्यां तथाभूताभ्यां करमध्याभ्याम् । मुहुः पुनः पुनः । घर्षति तद्घर्षणमाचरति । एतदपि श्रीहरिचरित्रं स्वाश्रितानामनन्तजन्मकर्मपर्वमर्दनबोधकमस्तीति ज्ञायते ॥ २७३ ॥

जपेति । श्रीहरिः । क्वचित् । यदा । स्वस्य । पार्श्वे समीपे । जपमाला । न स्यात् । तदा । अङ्गुलीनां दक्षिणहस्तकरशाखानाम् । पर्वभिः । ईशितुः श्रीकृष्णस्य । मनुमष्टाक्षरमन्त्रं नाममन्त्रं वा । गणयति सङ्ख्यापयति ॥ २७४ ॥ निमील्येति । असौ श्रीहरिः । क्वचित् । नेत्रकमले । निमील्य निमेषयित्वा । आत्मनि स्वहृदयाम्बुजे । आत्मानं स्वम् । ध्यायन् यथास्वरूपं चिन्तयन् । आस्ते । क्वचित् । उन्मीलिते उन्मेषिते विलोचने नेत्रे यस्य तथोक्तः सन् । आत्मन्यात्मानं ध्यायन्नास्ते ॥ २७५ ॥ स वाद्यमिति । क्वचित् । सत्सु मुक्तानन्दप्रेमानन्दादिसाधुषु । सवाद्यमंक्यौर्ध्वकविपञ्चिकादि–वादित्रवादनसहितं यथातथा । गायत्सु श्रीकृष्णगुणपद्यगानं कुर्वत्सु सत्सु । श्रीहरिः । ध्यायन्स्वहृदये स्वचिन्तयन्सन्नेव । निषीदति । क्वचित् । ध्यानयोगतो ध्याननाटनरूपाया योगयुक्तेः । चमत्कृत्य सोत्कम्पं यथा भवति तथेत्यर्थः । जागर्त्ति सहसा प्रबुध्यते ॥ २७६ ॥ क्वचिदिति । क्वचित् । भक्तानां निजसेवकानाम् । सदसि सभायाम् । मध्यस्थस्तारामण्डले चन्द्र इव मध्ये वर्त्तमानः । असौ श्रीहरिः । कराभ्यां द्वाभ्यामपि हस्ताभ्याम् । अथवा । करेणैकेन पाणिनापि । त्रुटिं त्रुटिसंज्ञिककालोपलक्षकमङ्गुष्ठमध्यमाङ्गुलिवाद्यम् । वादयन्सन् । तैः श्रीकृष्णपद्यगायकसाधुभिः । साकं सह । गायति स्वयमपि तत्पद्यगानं करोति ॥ २७७ ॥ तालिका इति । क्वचित् । सत्सु साधुषु । तालिकाः करतलानि ।

जपमाला क्वचित्स्वस्य पार्श्वे न स्याद्यदा तदा । गणयत्यङ्गुलीनां च पर्वभिर्मनुमीशितुः ॥ २७४ ॥ निमील्य नेत्रकमले ध्यायन्नात्मानमात्मनि । क्वचिदास्ते क्वचिच्चासावुन्मीलितविलोचनः ॥ २७५ ॥ सवाद्यं सत्सु गायत्सु क्वचिद्ध्यायन्निषीदति । चमत्कृत्यैव जागर्त्ति क्वचिच्च ध्यानयोगतः ॥ २७६ ॥ क्वचित्सदसि भक्तानां मध्यस्थो वादयंस्त्रुटिम् । कराभ्यां वा करेणापि साकं गायति तैरसौ ॥ २७७ ॥ तालिका वादयित्वोच्चैः क्वचिद्गायत्सु सत्स्वसौ । कृष्णपद्यानि तैः साकं तथाकुर्वन् सुगायति ॥२७८॥ क्वचित् कृष्णकथां शृण्वन् स्वयं पौराणिकान्तिकम् । शनैः शनै रसाद्याति प्रजहन्निजमासनम् ॥२७९॥ सवादित्रं च भक्तेषु कीर्त्तयत्सु क्वचिद्धरिम् । एवं तदन्तिकं याति वार्त्तां वा तैः सहाचरन् ॥२८०॥

वादयित्वा । कृष्णपद्यानि श्रीकृष्णस्य पद्यबन्धचरित्राणि । उच्चैरुच्चस्वरेण । गायत्सु हल्लीसत्वेन निषद्य वा तद्गानं कुर्वत्सु सत्सु । असौ श्रीहरिः । तथा कुर्वंस्तालिकावादयन्सन् तैस्तालिकावादनपूर्वकं श्रीकृष्णपद्यगानं कुर्वद्भिः साधुभिः । साकम् । सुशोभनं यथातथा । गायति ॥ २७८ ॥ क्वचिदिति । क्वचित् । कृष्णकथां श्रीमद्भागवतपुराणस्थदशमस्कन्धादिप्रोक्तां श्रीकृष्णस्य प्रबन्धकल्पनाम् । शृण्वन् । स्वयं श्रीहरिः । । रसात् भक्तिरसावेशानुकरणात् । निजम् । आसनं स्वोपवेशनपीठम् । शनैः शनैः प्रजहच्च्यजन्सन् । उपविष्ट एवासनाच्छनैः शनैरपसरन्सन्नित्यर्थः । पौराणिकान्तिकं प्रयागजिदादिपुराणवक्तृसमीपप्रदेशम् । याति प्राप्नोति ॥ २७९ ॥ सवादित्रमिति । क्वचित् । भक्तेषु सत्प्रमुखस्वभक्तजनेषु । सवादित्रं वादित्रवादनसहितं यथातथा । हरिम् । कीर्त्तयत्सु गायत्सु हरिचरित्रपद्यगानं कुर्वत्सु सत्स्वित्यर्थः । श्रीहरिः । एवं रसाच्छनैः शनैर्निजासनं प्रजहदेव । तदन्तिकं सवाद्यश्रीकृष्णपद्यगायकसत्समीपम् । याति । वेति चार्थे । क्वचिच्च । तैर्भक्तैः सह । वार्त्तां श्रीकृष्णगोष्ठीम् । आचरन्कुर्वन् सन् । एवं पूर्वोक्तरीत्यैव । तदन्तिकम् । याति स्वकीयवार्त्ताश्रोतृभक्तसमीपप्रदेशं गच्छति ॥ २८० ॥

शृण्वन्निति । श्रीहरिः । भगवतः श्रीकृष्णस्य कथाम् । शृण्वन्सन् । हरे इति शब्दम् । मुहुः पुनः पुनः । वक्ति उच्चारयति । तस्याः कथायाः रसो माधुर्यानुभवस्तस्मिन्नाविष्टं चित्तं यस्य तस्य भावस्तत्त्वं तस्मात् । अन्यासु । क्रियासु यासु कासुचिद्भोजनादिष्वपरास्वपि क्रियास्वित्यर्थः । तथा हरे इति शब्दं वक्ति । क्रियमाणं क्रियान्तरं तु विस्मरति चेति ज्ञेयम् ॥ २८१ ॥ क्रियेति । यदा तु । चकारस्त्वर्थे । क्रियान्तरं स्वेन क्रियमाणाऽन्या क्रिया । अस्य श्रीहरेः । स्मृतिपथं स्मरणमार्गम् । याति प्राप्नोति । तदा तु । असौ श्रीहरिः । पुरस्थान्स्वपुरःप्रदेशोपविष्टान् । निजान्स्वकीयान् । भक्तान् । विलोकयन्सन् । स्मयते ईषद्धसति । हीति प्रसिद्धौ ॥ २८२ ॥ वार्त्तामिति युग्मम् । असौ श्रीहरिः । क्वचित् । प्रीत्या हरेः श्रीकृष्णस्य वार्त्ताम् । कुर्वन्सन् । यदा । स्वस्थो निर्वृत्तः । आस्ते । वापि क्वचित् । प्रीत्या । हरेः । कथाम् । शृण्वन्सन् । यदा । स्वस्थः । आस्ते । अथवा । क्वापि । प्रीत्या । तं श्रीहरिम् । गापयन्साधुभिस्तत्पद्यगानं विधापयन्सन् । यदा । स्वस्थः । आस्ते । अथवा । क्वापि । प्रीत्या । अन्तः स्वमानसे । किञ्चिद्धर्मादिकृत्यम् । विचारयन्सन् । यदा । स्वस्थः । आस्ते । चकारस्तद्वार्त्तालेखनादिसमुच्चयार्थः ॥ २८३ ॥ स्वस्थ

शृण्वन् कथां भगवतो मुहुर्वक्ति हरे इति । तद्रसाविष्टचित्तत्वात्तथाऽन्यासु क्रियास्वपि ॥ २८१ ॥ क्रियान्तरं यदा चास्य याति स्मृतिपथं तदा । विलोकयन्निजान्भक्तान् पुरः स्थान् स्मयते ह्यसौ ॥ २८२ ॥ वार्त्तां कुर्वन् क्वचित्प्रीत्या शृण्वन्वापि हरेः कथाम् । गापयंस्तं च वा क्वापि किञ्चिद्धान्तर्विचारयन् ॥ २८३ ॥ स्वस्थ आस्ते यदा तर्हि भोक्तुं पृच्छेच्च वाऽर्चितुम् । पुष्पाद्यैर्योऽमुमागच्छेत्तस्मै क्रुध्यत्यसौ भृशम् ॥ २८४ ॥ क्वचित्सदसि भक्तानां निषण्णः पीठ उत्तमे । धर्मज्ञानविरागाढ्यां भक्तिं तान्बोधयत्यऽसौ ॥ २८५ ॥ तेषामेवाग्रतः क्वापि रहस्यं साङ्ख्ययोगयोः । पञ्चरात्रस्य च ब्रूते वेदान्तस्य क्वचित् स्फुटम् ॥ २८६ ॥

इति । तर्हि । तर्हीति वाक्यचतुष्टये पृथक् पृथक् सम्बध्यते । यः कश्चित्पुरुषः । अमुं श्रीहरिम् । पृच्छेत् । हरे ! भोजनसमयो जातोऽस्त्यतोऽन्नाशनं विधातुं चलेति कथयेदित्यर्थः । अथवा । पुष्पाद्यैश्चन्दनपुष्पमालादिनिरुपचारैः । अमुम् । अर्चितुं पूजयितुम् । आगच्छेत् । तस्मै पुरुषाय । असौ श्रीहरिः । भृशमत्यन्तम् । क्रुध्यति । क्रोधोऽत्रान्यशिक्षणार्थमागन्तुक इति ज्ञेयं तस्य सर्वदोपशमप्राधान्यात् ॥ २८४ ॥ क्वचिदिति । असौ श्रीहरिः । क्वचित् । भक्तानां मुक्तानन्दमुन्यादिस्वभक्तजनानाम् । सदसि । उत्तमे श्रेष्ठे । पीठे आसने । निषण्ण उपविष्टः सन् । तान् भक्तान् । धर्मः स्वधर्मश्च ज्ञानमात्मपरमात्मस्वरूपवेदनं च विरागो वैराग्यं च तैराढ्यां संपन्नाम् । साङ्गामित्यर्थः । भक्तिं भगवन्माहात्म्ययुग्नवधाभजनसम्पाद्यं भगवति गाढानुरागलक्षणं प्रेमभक्तिस्वरूपम् । बोधयत्युपदिशति ॥ २८५ ॥ तेषामिति । श्रीहरिः । क्वापि । तेषां भक्तानामेव । अग्रतोऽग्रे । साङ्ख्यं साङ्ख्यशास्त्रं च योगो योगशास्त्रं च तयोः । रहस्यं सिद्धान्तार्थम् । स्फुटं स्पष्टं यथातथा । ब्रूते निरूपयति । क्वचित् । तेषामेवाग्रतः । पञ्चरात्रस्य सात्त्वततन्त्रस्य । रहस्यं स्फुटं ब्रूते । क्वचिच्च येषामेवाग्रतः । वेदान्तस्य वेदान्तशास्त्रस्य रहस्यं स्फुटं ब्रूते ॥ २८६ ॥

धर्मेति । असौ श्रीहरिः । यदा । सदसि स्वभक्तसभायाम् । धर्मः स्वधर्मआदिर्यस्य ज्ञानवैराग्यभक्तियोगादेरुपदेशस्य तस्य वार्त्तां सदृष्टान्तकथनम् । चिकीर्षति कर्त्तुमिच्छति । तदा । आदौ प्रथमतः । उर्ध्वाभ्यामूर्ध्वीकृताभ्यां दोर्भ्यां कराभ्यां यास्तालयस्तालिकास्तासां वादनानि ध्वनयस्तैः । स्वान्सर्वान्स्वभक्तजनान् । मौनयति मौनानुपरतान्यवाचः करोतीति । तुष्णीं भूतान्स्वाननार्पितदृष्टींश्च करोतीत्यर्थः । अन्यथा सम्यक्तया तच्छ्रवणं न स्यादिति भावः ॥ २८७ ॥ यदेति । एष श्रीहरिः । यदा तु । तु शब्दो महासभायां जनमौनविधापनरीतिविशेषद्योतनार्थः । महासभायां नानादेशागतस्वभक्तत्यागिवर्णिगृहस्थसधवविधवस्त्रीगणजुष्टायां संसदि । वार्त्तां तच्छिक्षणार्थं धर्मादिवृत्तान्तम् । चिकीर्षति । तदुपक्रमं करोतीत्यर्थः । तदातु । पीठात्स्वासनात् । उत्थाय ऊर्ध्वीभूय । एवमूर्ध्वदोस्तालिवादनैरेव । स्वान्स्वकीयान्सर्वान् भक्तजनान् । मौनयति संयतवाचः करोति । अन्यथा दूरस्थानामपि तच्छ्रवणं न स्यादीति भावः । हीति प्रसिद्धौ ॥ २८८ ॥ कुर्वन्निति । श्रीहरिः । धर्मादिवार्त्ताम् । कुर्वन्सन् । तस्मिन्धर्मादिवार्त्ताकरणे एकाग्रमव्यग्रं मनो यस्य तस्य भावस्तत्ता तया हेतुना । अधःस्रंसत्स्वस्थानादधःप्रदेशे पतत् । आत्मनः स्वस्य । उत्तरीयं प्रावारवस्त्रम् ।

धर्मादिवार्तां सदसि यदाऽसौ च चिकीर्षति । तदा स्वान्मौनयत्यादावूर्ध्वदोस्तालिवादनैः ॥ २८७ ॥ यदा महासभायां तु वार्त्तामेषः चिकीर्षति । तदा तूत्थाय पीठात्स्वान्मौनयत्येवमेव हि ॥२८८॥ कुर्वन्धर्मादिवार्तां च तदेकाग्रमनस्तया । उत्तरीयमधःस्रंसन्नानुसन्धत्त आत्मनः ॥२८९॥ क्वचित्सभोपविविष्टोऽसावात्मभक्तान् परस्परम् । प्रश्नोत्तराणि बहुधा कारयत्यात्मनः पुरः ॥ २९० ॥ तत्रापि केनचित् प्रश्ने पृष्टेऽन्यैर्दुष्करोत्तरे । करोत्यानन्दयन्सर्वान्स्वयमेव तदुत्तरम् ॥ २९१ ॥ कृष्णवार्तां क्वचित्कुर्वन् पुष्पगुच्छं पुरोगतम् । कुसुमं वा महद्दोर्भ्यां विमर्दयति संसदि ॥ २९२ ॥ वार्तां कुर्वन् क्वचित्साकं निजभक्तैः पुरःस्थितैः । स्वनक्तकस्यैकदेशं धृत्वा गुणयति ह्यसौ ॥ २९३ ॥

नानुसन्धत्ते तस्यानुसन्धानं न करोतीत्यर्थः ॥ २८९ ॥ क्वचिदिति । असौ श्रीहरिः । क्वचित् । सभोपविष्टः स्वभक्तसंसदि निषण्णः सन् । आत्मभक्तान्स्वभक्तान् साधुप्रमुखान् । आत्मनः पुरः स्वस्याग्रवर्त्तिप्रदेशे । परस्परम् । बहुधा । प्रश्नोत्तराणि । कारयति ॥ २९० ॥ तत्रेति । तत्रापि परस्परप्रश्नोत्तरकारणेऽपि । केनचित्साधुना । अन्यैर्विद्वद्भिरपि साधुभिः । दुष्करोत्तरे दुष्करसमाधाने । प्रश्ने । पृष्टे सति । स्वयं श्रीहरिरेव । सर्वान् । तत्प्रश्नकर्त्तारं तदुत्तरश्रोतॄनन्यान् साधून् गृहिणश्चेत्यर्थः आनन्दयन्स्वाविज्ञातयथार्थप्रश्नोत्तरश्रवणेन साश्चर्यं सशिरोधूननं चानन्दनीभूतान्कुर्वन्सन् । तदुत्तरं तत्प्रश्नसमाधानम् करोति ॥ २९१ ॥ कृष्णेति । श्रीहरिः क्वचित् । संसदि । कृष्णवार्त्ताम् । कुर्वन्सन् । पुरोगतं स्वाग्रे पतितम् । पुष्पगुच्छं सुगन्धिसुमनोग्लुच्छम् । अथवा । पुरोगतम् । महत् । कुसुमं सहस्राल्पदलपूर्णपीतकुसुमादिमहापुष्पम् । दोर्भ्यामुभयपाणितल्पाभ्याम् । विमर्दयति । अनेन श्रीहरिर्युष्माकमन्तःशत्रवः कामादयो मयेत्थं विमर्दिताः सन्तीति स्वान् ज्ञापयतीति लक्ष्यते ॥ २९२ ॥ वार्त्तामिति । असौ श्रीहरिः । क्वचित् । पुरःस्थितैः स्वाग्रत उपविष्टः । निजभक्तैः । साकम् । वार्त्ताम् । कुर्वन्सन् । स्वनक्तकस्य । एकदेशं कोणभागम् । धृत्वाऽऽदावेकेन

पाणिनेोपादाय । गुणयति उभाभ्यां पागितलाभ्यामावर्त्तयति । तं वलयुक्तं करोतीत्यर्थः । हीति प्रसिद्धं तत्प्रेक्षकानामेतत् । श्रीहरेरेतच्चरित्रं धर्मप्रतिपक्षाणां दैत्यांश-गुरुनृपतीनामित्थंभूतस्वकृतविमर्दनं । द्योतयति ॥ २९३ ॥ नानेति । असौ श्रीहरिः । क्वचित् । उत्सवाहेषु श्रीकृष्णस्य जन्माष्टमीरामनवम्यादिमहादिनेषु । तान्निमित्तीकृत्येत्यर्थः । नानादेशागतैर्नानादेशेभ्य आयातैः । स्वीयभक्तैर्निजसेवकजनैः । प्रीत्या स्नेहेन । कृताम् । महतीमनर्घ्यवस्त्र—भूषण—छत्र—चामरादिराजोपचारैर्विहित-त्वादतिश्रेष्ठाम् । पूजामर्चाम् । अङ्गीकरोति आदरादुपादत्ते ॥ २९४ ॥ क्वचिदिति । श्रीहरिः । क्वचित् । उच्चासनस्थः श्रीकृष्णोत्सवे महासभायां यथा सर्वेषां स्वदर्शनं स्यात्तदर्थमुच्चनिबद्धमश्चारोपितोच्चसिंहासनावस्थितः सन् । भक्तैः स्वाश्रितजनैः । पूजार्थं स्वार्चनविधानार्थम् । अर्प्यमाणाः दातुमुद्यताः । कुसुमस्रजः सुगन्धिकुसुमरचितोत्तम-हारान् । यष्ट्यां स्वकरधृतरञ्जितत्वक्सारतनुदण्डेन । अथवा । दोष्णा प्रसारितस्वहस्तेन । अथवा । पदालम्बितस्वचरणेन । आदत्ते प्रीत्या गृह्णाति ॥ २९५ ॥ क्वचिदिति । श्रीहरिः । क्वचित् । पुरुषान् । योषितो नारीश्चापि । स्ववीक्षामात्रेण केवलेन स्वकृपावीक्षणेन । आशु सद्यः । समाधिम् । कारयति । तेभ्यो दिव्यदृष्टि-

नानादेशागतैः स्वीयभक्तैः प्रीत्या कृतां क्वचित् । उत्सवाहेषु महतीं पूजामङ्गीकरोत्यसौ ॥ २९४ ॥
क्वचिद्भक्तैरर्प्यमाणाः पूजार्थं कुसुमस्रजः । उच्चासनस्थ आदत्ते यष्ट्या दोष्णाऽथवा पदा ॥ २९५ ॥
क्वचित्स्ववीक्षामात्रेण पुरुषान् योषितोऽपि च । समाधिं कारयत्याशु ततश्चोत्थापयत्यथ ॥ २९६ ॥
आह्वातुं स्वान्तिके कञ्चिद्दूरस्थं सदसि क्वचित् । करोत्यसौ नेत्रसंज्ञां तर्जन्याकुञ्चनं च वा ॥ २९७ ॥
मल्लिकादिस्रजं वाऽसौ जम्बीरादिफलं क्वचित् । मन्वानः शीतलं स्वाक्ष्णोर्मुहुः स्पर्शयति प्रभुः ॥ २९८ ॥

प्रदानेन तद्देहानुसन्धानविस्मरणपूर्वं गोलोकब्रह्मपुरादिधामस्थितस्वमूर्त्तिदर्शनं विधापयतीत्यर्थः । अथानन्तरम् । ततः समाधेः सकाशात् । उत्थापयति तान् स्त्रीपुंसा-नैहिकदृष्टिप्रदानेन समाध्यनुभूतस्मरणपूर्वकं देहानुसन्धानयुक्तान्करोतीत्यर्थः ॥२९६॥ आह्वातुमिति । असौ श्रीहरिः । क्वचित् । सदसि । दूरस्थं विप्रकृष्टदेशवर्त्तिनम् । कञ्चित्पुरुषम् । स्वान्तिके स्वसमीपे । आह्वातुमाकारयितुम् । नेत्रसंज्ञां सकटाक्षाक्षिसूचनाम् । करोति । तयैवाह्वयतीत्यर्थः । 'संज्ञा नामनि गायत्र्यां चेतनायां रविस्त्रियाम् । अर्थस्य सूचनायां च हस्ताद्यैरपि कथ्यते' इति विश्वः । अथवा दूरस्थं कञ्चित्स्वान्तिकं आह्वातुम् । तर्जन्याकुञ्चनम् । करोति । तत्सन्मुखमूर्ध्वतर्जन्या कुञ्चनमुद्राप्रदर्शनेन तमाह्वयतीत्यर्थः ॥ २९७ ॥ मल्लिकेति । प्रभुः । असौ श्रीहरिः । क्वचित् । मल्लिकादिस्रजं मल्लिका—माध्य—मालती—जात्यादिकुसुमहारम् । अथवा । जम्बीरादिफलं मिष्टाम्लस्थूलसूक्ष्मजम्बीर—नारङ्गादिफलम् । 'स्यु र्जम्बीरे दन्तशठजं भजं भीरजं भला' इत्यमरः । शीतलं शैत्यकरम् । मन्वानो मन्यमानः सन् । स्वाक्ष्णोर्निजनेत्रयोर्विषये । मुहुः पुनः पुनः । स्पर्शयति तत्स्पर्शं कारयति ॥ २९८ ॥

तस्य सद्धर्माचरणस्वभावमाह युग्मेन । कृष्णस्येति । असौ श्रीहरिः । क्वापि । कृष्णस्य । कीर्त्तनं वार्त्ताम् । स्वयम् । कुर्वन् । अथवा । स्वभक्तः । कारयन्संश्च । आस्ते । क्वापि । कृष्णस्य । श्रवणं कृष्णसम्बन्धिकथावार्त्तानामाकर्णनमित्यर्थः । कुर्वन्वा कारयन्सन्नास्ते । क्वापि । कृष्णस्य । गायनं पद्यबद्धकृष्णयशसां गानम् । कुर्वन्वा कारयन्सन्नास्ते । क्वापि । कृष्णस्य । कथां प्रबन्धकल्पनाम् । कुर्वन्वा कारयन्सन्नास्ते । क्वचित् । कृष्णस्य । ध्यानं पादाद्येकैकाङ्गचिन्तनम् । कुर्वन्वा कारयन्सन्नास्ते ॥ २९९ ॥ कृष्णेति । असौ श्रीहरिः । क्वापि । कृष्णालयानि श्रीकृष्णमन्दिराणि । विधापयन्स्वभक्तजनैः कारयन् । वर्त्तते । क्वापि । साधवः स्वाश्रितास्त्यागिवर्णिनश्च ब्राह्मणा अग्रजन्मानश्च तेषां भोजनं सदन्नरसैस्तर्पणं तत् । विधापयन् । वर्त्तते । क्वचिदपि । सत्क्रियामुक्तमनुक्तं वा भगवत्सम्बन्धिकर्माचरणम् । विना । न वर्त्तते । कदाचिदपि व्यावहारिककार्यप्रसक्तो न भवतीत्यर्थः ॥ ३०० ॥ यदिति । स्वयं श्रीहरिः । भक्तिधर्मसम्बन्धि भक्तिसम्बन्धिधर्मसम्बन्धिचेत्यर्थः । यत् । कार्यम् । यत्कार्यमिति यत्तदोर्वीप्सात्रविवक्षिता तेन यद्यत्कार्यमित्यर्थः । आरभते कर्त्तुमुपक्रमते । तस्य तस्य तस्य कार्यस्य । समापनेऽन्तनयने

कृष्णस्य कीर्त्तनं क्वापि श्रवणं क्वापि गायनम् । कुर्वन्वा कारयन्नास्ते कथां ध्यानं च वा क्वचित् ॥ २९९ ॥
कृष्णालयानि च क्वापि साधुब्राह्मणभोजनम् । विधापयन्वर्त्ततेऽसौ न विना सत्क्रियां क्वचित् ॥ ३०० ॥
यद्भक्तिधर्मसम्बन्धिकार्यमारभते स्वयम् । शैघ्र्यं समापने तस्य वर्त्ततेऽस्य स्वभावतः ॥ ३०१ ॥
आदावन्विष्य झटिति करेणादाय नक्तकम् । मुखे दधदसौ छिक्कामाचरत्यायतध्वनि ॥ ३०२ ॥
द्विस्त्रिर्वा युगपच्चासौ छिक्कायत्येवमेव हि । निष्कामभक्तविहितस्वसेवातिरुचिः प्रभुः ॥ ३०३ ॥
जृम्भमाणो हरिहरीत्येवमुच्चारयन्नसौ । नयने करपद्मेन द्विस्त्रिर्वाऽऽमृशति क्वचित् ॥ ३०४ ॥

अस्य श्रीहरेः । स्वभावतः स्वभावसिद्धमेव । शैघ्र्यं त्वरा वर्त्तते ॥ ३०१ ॥ आदाविति । असौ श्रीहरिः । आदौ छिक्कायाः प्रागेव । झटिति शीघ्रमेव । नक्तकम् । अन्विष्य इतस्ततः पतितं विमृग्य । करेण विशेषतो दक्षिणपाणिना । आदाय तं गृहीत्वा मुखे मुखाग्रप्रदेशे । दधत्तं धारयन्सन् । आयतो दीर्घो ध्वनिर्ध्वानो यस्मिन्कर्मणि यथातथा । छिक्कां क्षुतम् । आचरति करोति ॥ ३०२ ॥ द्विरिति । असौ श्रीहरिः । द्विः क्वचित् द्वौ वारौ । अथवा । त्रिः क्वचित्त्रीन्वारान् । युगपदेककाल एव । एवमेव । पूर्वश्लोकोक्तप्रकारेणैवायतध्वनियथातथेत्यर्थः । छिक्कामाचरति । हीति प्रसिद्धौ । अत्र फलविशेषः पराशरवराहमिहिरोक्तो बोध्यः । किञ्च । प्रभुः श्रीहरिः । निष्कामा जितकामा ये भक्तास्तैर्विहिता कृता या स्वसेवा तस्यामेवातिरुचिरत्यन्तप्रीतता यस्य स तथाभूतः । अस्ति । एतेन तत्स्वभावान्तरोक्तिर्बोध्या ॥ ३०३ ॥ जृम्भमाण इति । क्वचित् । जृम्भमाणो जृम्भामाचरन् । असौ श्रीहरिः । हरि हरि । इत्येवमेवंविधं शब्दमित्यर्थः । उच्चारयन्सन् । करपद्मेन पद्माकारकरतलैकदेशेन । अङ्गुल्यग्रैरित्यर्थः । नयने द्वे अपि नेत्रपद्मे इत्यर्थः द्विः द्विवारम् । अथवा । त्रिर्वारत्रयम् । आमृशति ईषन्मर्दयति ॥ ३०४ ॥

क्वचिदिति । श्रीहरिः । क्वचित् । स्वैः स्वसखिभिः सह । नर्मप्रसङ्गे परिहासनाटनप्रकरणे । अतिहासविधित्सया अतिशयितहासाचरणेच्छया हेतुभूतया । अग्रत आदावेव । निजनक्तकम् । करेण स्वपाणिना । आदायेति शेषः । मुखाब्जस्य । अग्रतः पुरतः । धत्ते तं धारयति । अग्रत इत्यस्य तन्त्रेणोभयत्रान्वयः ॥३०५॥ देशेति । श्रीहरिः । क्वचित् । देशान्तरादन्यदेशात् । उपायातान्स्वसमीपमागतान् । सतो मुक्तानन्दादिसाधून् । आत्मनः स्वस्य प्रियान् प्रेष्ठान् । अन्यान्मयारामभट्टादि-गृहस्थांश्च । दृष्ट्वा दूरादेवावलोक्य । मुदा हर्षेण । सद्यो दर्शनक्षण एव । उत्थायासनादभ्युत्थानं कृत्वा । निर्भरमतिशयितं यथातथा । स्वजते तान्परिरभते । उपलक्षणमेतदुत्सवे स्वसमीपे स्थित्वा स्वाज्ञया देशान्तरं गच्छतामपि तेषां परिष्वजनस्य ॥ ३०६ ॥ क्वचिदिति । श्रीहरिः । क्वचित् । प्रीत्या स्वनिर्दिष्टमन्दिरनिर्माणादि-कार्यप्रवृत्तस्य तदनुषङ्गिस्वरुच्यनुगुणाधिककार्यसम्पादनजन्यया प्रसन्नतया । स्वभक्तस्य । शीर्ष्णि मस्तकोपरि । करद्वयं स्वकरतलयुगलम् । धत्ते आरोपयति । क्वचित् । प्रीत्या । कस्यचित्स्वभक्तस्य । हृदि हृदयोपरि । स्वाङ्घ्रितलद्वयं स्वपादपद्मद्वयाधस्तनप्रदेशौ । स्पर्शयति निधारयतीत्यर्थः ॥ ३०७ ॥ स्वेति । श्रीहरिः । क्वचित् ।

> क्वचिन्नर्मप्रसङ्गे स्वैरतिहासविधित्सया । धत्तेऽग्रतो मुखाब्जस्य करेण निजनक्तकम् ॥ ३०५ ॥ देशान्तरा-
> दुपायातान्सतोऽन्याँश्चात्मनः प्रियान् । दृष्ट्वा सद्यो मुदोत्थाय स्वजते निर्भरं क्वचित् ॥ ३०६ ॥
> क्वचित्प्रीत्या स्वभक्तस्य शीर्ष्णि धत्ते करद्वयम् । कस्यचिच्च स्पर्शयति हृदि स्वाङ्घ्रितलद्वयम् ॥ ३०७ ॥
> स्वाज्ञां सद्यो विधित्सन्तं तां वा सम्पाद्य चागतम् । कश्चिद्दृष्ट्वा मुदा तस्य हृदि धत्तेऽङ्घ्रिपङ्कजे ॥३०८॥
> अतिप्रीतोऽथ कस्मैचित्स्वधृतां कुसुमस्रजम् । ददाति शेखरं वापि क्वचित्स्वीयांशुकानि च ॥ ३०९ ॥
> अत्युदारस्वभावः स्वप्रेष्ठं बहुधनं च वा । दातुमिच्छति यत्तत्तु दत्ते पात्राय तत्क्षणम् ॥ ३१० ॥

स्वाज्ञां स्वोक्तनिदेशम् । सद्यस्तत्क्षणमेव । विधित्सन्तं कर्तुमिच्छन्तम् । कश्चित्स्वभक्तम् । अथवा । तां स्वाज्ञाम् । सम्पाद्य यथावद्विधाय । आगतं स्वान्तिकोपेतम् । कश्चित्स्वभक्तं च दृष्ट्वा । मुदा हर्षेण । तस्योभयविधस्यापि स्वभक्तस्य । हृदि हृदयोपरि । अङ्घ्रिपङ्कजे पङ्कजसदृशे स्वाङ्घ्रितले धत्ते ॥ ३०८ ॥ अतिप्रीत इति । श्रीहरिः । अथ क्वचित् । कस्मैचित्स्वभक्तजनाय । अतिप्रीतस्तद्भक्तिधर्माद्यतिरुचिदर्शनातिप्रसन्नतां प्राप्तः सन् । स्वधृतामादौ स्वेन कण्ठे धारिताम् । कुसुमस्रजं पुष्पमालाम् । ददाति स्वकण्ठादुत्तार्य स्वयमेव तत्कण्ठे निदधाति । अथवा । क्वचित् शेखरं स्वशिरःपटधृतं पुष्पापीडम् । ददाति । अथवा । क्वचित् । स्वीयांशुकानि स्वाङ्गधृतानि कटिबन्धनो-त्तरीयाङ्गरक्षकोष्णीषनीशारादिवस्त्राणि । ददाति । चकारात्स्वधृतान्स्वर्णकटक–कुण्डल–मुद्रिका–हार–केयूर–शृङ्खलादीनलङ्कारान् स्वारोह्यसोपस्कराश्वादिवाहनानि च ददातीति ज्ञेयम् ॥ ३०९ ॥ अतीति । अत्युदारो दानशीलः स्वभावो यस्य सः श्रीहरिः । स्वप्रेष्ठं स्वातिप्रियम् । यद्वस्तु । अथवा । बहुधनं बहुमूल्यं च । यद्वस्तु । दातुम् । इच्छति तद्दानसङ्कल्पं कुर्वन्सन्नित्यर्थः । तद्वस्तु तु । पात्राय । तत्क्षणं सद्य एव । दत्ते वितरति । न तु विलम्बयतीति भावः ॥ ३१० ॥

करेति । श्रीहरिः । क्वचित् करपादाङ्गुलीनां स्वहस्तचरणकरशाखानाम् । मोटनं प्रमर्दनम् । कुरुते स्वयमेव करोति । तन्मोटनेन कट्कारध्वनिमाचरतीत्यर्थः । अथवा । क्वचित् । स्वान्तिकस्थेन स्वसमीपवर्त्तिना । भक्तेन मुकुन्दानन्दवर्णि-सोमवर्मप्रभृतिस्वभक्तजनेन प्रयोज्यकर्त्राऽपि । कारयति स्वकरपादाङ्गुलीनां सकट्कारध्वनि-मोटनं विधापयति ॥ ३११ ॥ कश्चिदिति । असौ श्रीहरिः । कदाचन क्वचित् । कश्चित्कमपि देहिनम् । आर्त्तं रोगदारिद्र्यादिपीडितम् । आलोक्य दृष्ट्वा । अथवा । श्रुत्वा तथाभूतं तमाकर्ण्य । अतिदयाभृतोऽत्यन्तकरुणाव्याप्तः सन् 'क्रान्तम्' । सहसाऽकस्मादेव । राम राम इरि एवंभूतं शब्दम् । वदति उच्चारयति ॥ ३१२ ॥ दुःखितमिति । असौ श्रीहरिः । क्वचित् । यम् । कश्चिदपि । जनं प्राणिमात्रम् । दुःखितं रोगदारिद्र्यशत्रूपद्रवादिपीडितम् । वीक्ष्य दृष्ट्वा । चेतसि स्वमानसे । भृशमतिशयेन । खिद्यन् खेदं प्राप्नुवन्सन् । दयार्द्रः कृपाद्रवीभूतान्तःकरणश्च सन् । अस्मै दुःखितजनाय । प्रीत्या स्नेहेनैव । उपकुरुते । तदुपयुक्तमन्नपानवस्त्रधनादिकं ददाति दापयति चेत्यर्थः । हीति प्रसिद्धौ ॥ ३१३ ॥ क्वचिदिति । दयानिधिः करुणार्णवः श्रीहरिः क्वचित् । कञ्चन यं कमपि । देहिनं प्राणिमात्रम् । ताडयन्तं मुष्टियष्ट्यादिना प्रह-

करपादाङ्गुलीनां च कुरुते मोटनं क्वचित् । स्वान्तिकस्थेन भक्तेन कारयत्यपि वा क्वचित् ॥ ३११ ॥
कश्चिदप्यार्त्तमालोक्य श्रुत्वा वाऽसौ कदाचन । सहसा रामरामेति वदत्यतिदयाभृतः ॥ ३१२ ॥
दुःखितं तु जनं वीक्ष्य यं कश्चिदपि चेतसि । भृशं खिद्यन् दयार्द्रोऽस्मै प्रीत्योपकुरुते ह्यसौ ॥ ३१३ ॥
क्वचित्कश्चित्ताडयन्तं दृष्ट्वा कञ्चन देहिनम् । हाङ्कारेणैव तं सद्यो निषेधति दयानिधिः ॥ ३१४ ॥
अपकर्षवचः श्रुत्वा केनाप्युक्तं सतः प्रभोः । भक्तस्यान्यस्य वा खिन्नस्तद्वक्तारं जुगुप्सति ॥ ३१५ ॥
क्वापीषद्वदसञ्चारे सति स्वाङ्गे स पश्यति । दक्षदोर्नाडिकां सव्यकराङ्गुल्या सुवैद्यवत् ॥ ३१६ ॥

रन्तम् । कश्चित्कमपि जनम् । दृष्ट्वा । हाङ्कारेण हामित्येवंभूतध्वनिनैव । सद्यस्तत्क्षणम् । तं ताडयन्तं जनम् निषेधति निवारयति । इयमेव दयानिधित्वस्य पराकाष्ठा ज्ञेया ॥ ३१४ ॥ अपकर्ष इति । श्रीहरिः । क्वचित् । केनापि येन केनचित्साधुना गृहिणा वा पुरुषेण स्त्रिया वा । उक्तं स्वस्यान्यस्य वाऽग्रे कथितम् । प्रभोः श्रीकृष्णस्य । भक्तस्य । सतः साधोः । अथवा । अन्यस्य श्रीकृष्णभक्तस्य यस्य कस्यापि गृहस्थादिजनस्य । अपकर्षवचः सदोषत्वबोधकं वाक्यम् । श्रुत्वा साक्षादन्य-मुखाद्वा निशम्य । खिन्नो ग्लानहृदयः सन् । तद्वक्तारं तदपकर्षवचसः कथयितारम् । जुगुप्सति सोपालम्भं निन्दति ॥ ३१५ ॥ क्वापीति । स श्रीहरिः । क्वापि । स्वाङ्गे स्वशरीरे । ईषद्वदसञ्चारे किञ्चिज्ज्वरादिरोगप्रवेशे सति । दक्षदोर्नाडिकां दक्षिणकरमणिबन्धगतां नाडीम् । सव्यकराङ्गुल्या स्वकीयवामपाणिकरशाखाभिरित्यर्थः । जात्यभिप्रायमेकवचनम् । सुवैद्यवत् शोभननाडीचिकित्सकभिषगिव । पश्यति ॥ ३१६ ॥

उत्तिष्ठतीति । असौ श्रीहरिः । यदा । स्वावासं स्वकीयनिवासस्थलं प्रति । गन्तुं यातुम् । सदसः स्वभक्तसभायाः सकाशात् । उत्तिष्ठति । तदा । जयसच्चिदा-नन्द । इत्येवंविधं वाक्यम् । ब्रुवन्नुच्चारयन्सन् । साधून् । नमति नमनं कृत्वोत्तिष्ठतीत्यर्थः ॥ ३१७ ॥ उत्तिष्ठन्निति । क्वापि । निजाश्रमं स्वावासम् । गन्तुम् । सदसः सकाशात् । उत्तिष्ठन्नुत्थानं करिष्यन्नित्यर्थः । स श्रीहरिः । सतः साधून् । नमन्सन् । जयस्वामिनारायणगिरं जयस्वामिनारायणेत्येवंविधां वाणीम् । ब्रूते वदति ॥ ३१८ ॥ मार्ग इति । श्रीहरिः । क्वचित् । मार्गे महापथे । अश्वम् । आरुह्य । व्रजन्सन् । तत्कन्धरोपरि अश्वस्य ग्रीवाया उपरिष्टात् । एकम् । पादं सव्यं दक्षिणं वा चरणम् । लम्बयित्वा प्रसार्य । तमश्वम् । लीलया गतिचातुर्येण । चालयति धौरितकगत्या गमयति ॥ ३१९ ॥ ललाट इति । असौ श्रीहरिः । यदा । स्वपिति शयनं करोति । तर्हि तदा । ललाटे भाले । तिलकमूर्ध्वपुण्ड्रम् । कुर्वन् सन्निव । पाणेर्दक्षिणहस्तस्य अङ्गुली तर्जनीमध्यमाख्येकरशाखे तयोर्द्वयं ते उभे अङ्गुली इत्यर्थः । ऊर्ध्वं नासामूलादाकेशान्तम् । अधः केशान्तादारभ्य नासामूलपर्यन्तं च । प्रणयति परिवर्त्तयति ॥ ३२० ॥ स्वापेति । श्रीहरिः । निशि रात्रौ ।

उत्तिष्ठति यदा गन्तुं स्वावासं सदसस्तदा । जयसच्चिदानन्देति ब्रुवन्साधून्नमत्यसौ ॥ ३१७ ॥
उत्तिष्ठन्सदसः क्वापि ब्रूते गन्तुं निजाश्रमम् । सतो नमन् जयस्वामिनारायणगिरं स च ॥ ३१८ ॥
मार्गेऽश्वं क्वचिदारुह्य व्रजंस्तत्कन्धरोपरि । लम्बयित्वा पादमेकं तं चालयति लीलया ॥ ३१९ ॥
ललाटे तिलकं कुर्वन्निव पाण्यङ्गुलिद्वयम् । ऊर्ध्वं चाधः प्रणयति यदा स्वपिति तर्ह्यसौ ॥ ३२० ॥
स्वापकाले स्वतुलसीमालामादाय पाणिना । दक्षिणेन भजन् कृष्णं करोति शयनं निशि ॥ ३२१ ॥
शयनं कुरुते यर्हि तदा प्रावारवाससा । न मुखं पिदधातीति वृत्तिस्तस्य स्वभावतः ॥ ३२२ ॥
शयानं गाढनिद्राणं स्पृशेत्तं यदि कश्चन । तर्हि सद्यः प्रबुद्ध्यैनं ब्रूते कोऽसीति सम्भ्रमात् ॥ ३२३ ॥

स्वापकाले शयनसमये । स्वतुलसीमालां स्वकीयां तुलसिकाष्ठमणिमालिकाम् । दक्षिणेन । पाणिना । आदाय । कृष्णं नरनाट्यानुकरणात्स्वेष्टदेवत्वेन मतं श्रीकृष्णम् । भजन्मध्यमामध्यपर्वण्यङ्गुष्ठेन मालामण्याहरणपूर्वं स्मरन्सन् । शयनम् । करोति ॥ ३२१ ॥ शयनमिति । श्रीहरिः । यर्हि यदा । शयनम् । कुरुते । तदा । प्रावारवाससा स्वकीयोत्तरीयवस्त्रेण । मुखं स्ववदनाम्बुजम् । न पिदधाति । नाच्छादयति । अपावृतमुख एव शेते इत्यर्थः । इतीदृशी । तस्य श्रीहरेः । स्वभावतः । स्वभावादेव । वृत्तिर्वर्त्तनशैली अस्ति ॥ ३२२ ॥ शयानमिति । शयानमादौ सुप्तम् । ततो गाढनिद्रां प्राप्तम् । तं श्रीहरिम् । यदि यदा । कश्चन भक्तः । स्पृशेत् पाद-संवाहनार्थं शनैः स्पर्शं कुर्यात् । तर्हि । सद्यस्तत्क्षणमेव । सम्भ्रमात्सम्भ्रमं यथा तथेत्यर्थः । प्रबुद्ध्य जागरित्वा । एनं स्वं स्पृशन्तं भक्तम् । कोऽसि । इतीत्थम् । ब्रूते पृच्छति । एतेन तस्य जागरूकस्वभावतोक्ता ॥ ३२३ ॥

एवमिति । एवंविधा इत्थं प्रकाराः । ससुलक्षणाः शोभनोर्ध्वरेखादिचिह्नैः सहिताः । अनेके बहवः । हरेः श्रीहरिकृष्णभगवतः । चेष्टाविशेषाः स्वाभाविकक्रियाभेदाः । सन्ति वर्त्तन्ते । तान्ससुलक्षणानत्रोक्तानन्यांश्च स्वेन दृष्टान् श्रुतान्वा श्रीहरिचेष्टाविशेषान् । यो भक्तजनः । अनुघस्रं प्रतिदिनम् । हृदये स्वमानसे । भावयेच्चिन्तयेत् । तस्मै भक्तजनाय । स श्रीहरिः । निजदर्शनं स्वप्रत्यक्षेक्षणम् । दद्यात् । हीत्यवधारणे प्रभोरस्याङ्घ्रितलभ्योरित्यारभ्यैतच्छ्लोकपर्यन्तं वर्त्तमानक्रियाप्रयोगास्तूक्तोर्ध्वरेखादिलक्ष्मविशिष्टश्रीहरिमूर्त्तेर्जितनिद्रः सोऽनुदिनमित्यादिनोक्तानां तत्स्वाभाविकचेष्टानां च श्रीशतानन्दमुनेर्योगबलेन दृगग्रे सदाविद्यमानत्वात्तत्समीक्षणपूर्वमेतेषां पद्यानां ग्रथितत्वाच्च बोध्याः ॥ ३२४ ॥ एवमिति । एवंभूतेनेत्थंप्रकारेण । दुर्गपत्तने । वसता । हरिणा । यानि । भूरिशो बहूनि । सुधातुल्यान्यमृतसम्मितानि । वाक्यानि । प्रोक्तानि ॥ ३२५ ॥ तत इति । तेन श्रीहरिण । ततो दुर्गपत्तनात्सकाशात् । ग्रामान्तरम् । गत्वा । सारङ्गपुर, कार्यायन, लौहग्राम, पञ्चालग्राम, वृत्तालय, श्रीनगरेषु गत्वेत्यर्थः । यानि सुधातुल्यवाक्यानि । प्रोक्तानि । तानि विशिनष्टि । धर्मः स्वधर्मश्च ज्ञानं जीवेशमायाब्रह्मणां तद्विलक्षणस्याक्षरधामाधिपतेः पुरुषोत्तमस्य स्वस्य श्रीहरेश्च यद्वेदनं तच्च विरागो वैराग्यं च आत्मदृढभक्तिः स्वस्य माहात्म्ययुक्तं दशधाभजनं च तत्प्रधानानि ॥३२६॥ कतिचिदिति । तेषु तथाविधेषु श्रीहरेः सुधातुल्यवाक्येषु मध्ये ।

एवंविधाः सन्ति हरेरनेके चेष्टाविशेषाः ससुलक्षणा वै । यो भावयेत्तान् हृदयेऽनुघस्रं तस्मै स दद्यान्निजदर्शनं हि ॥ ३२४ ॥ एवंभूतेन वसता हरिणा दुर्गपत्तने । सुधातुल्यानि वाक्यानि यानि प्रोक्तानि भूरिशः ॥ ३२५ ॥ ततो ग्रामान्तरं गत्वा यानि प्रोक्तानि तेन च । धर्मज्ञानविरागात्मदृढभक्तिमयानि हि ॥ ३२६ ॥ कतिचित्तेषु दृभ्यन्ते यथामति यथाश्रुतम् । तदेकान्तिकभक्तानां प्रीत्यै पद्यैर्मनोरमैः ॥ ३२७ ॥ समासतः प्रोक्तमिदं चरित्रं श्रीधर्मसूनोरिह यो मनुष्यः । पठिष्यति श्रोष्यति वापि भक्त्या स लप्स्यते वै पुरुषार्थसिद्धिम् ॥ ३२८ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दविरचित्ते उपोद्घातप्रकरणम् ॥

कतिचित् द्विशताधिकद्विषष्टि परिमितानि तानि । (२६२) यथामति स्वबुध्यनुसारेण । यथाश्रुतं श्रुतशब्दवाच्यशास्त्रशैलीमनतिक्रम्यः । तदेकान्तिकभक्तानां श्रीहरेर्मुक्तानन्दमुन्याद्येकान्तिकभक्तजनानाम् । प्रीत्यै प्रसन्नतार्थम् । मनोरमैः । पद्यैरनुष्टुब्वृत्तश्लोकैः । दृभ्यन्ते मया सङ्ग्रथ्यन्ते । पुनरुक्तिरुपोद्घातप्रकरणसमाप्तिज्ञापनार्था इति त्रयाणामेकसम्बन्धः ॥३२७॥ अथैवमुपोद्घातमुखेन प्रोक्तस्य श्रीहरिचरित्रस्य पठनश्रवणफलमाह । समासत इति । समासतः सङ्क्षेपतः । प्रोक्तम् । श्रीधर्मसुनोर्धर्मावतारत्वप्रथितश्रीहरिप्रसादभूसुरसुतस्य श्रीहरेः । इदम् । चरित्रम् । इह लोके । यः मनुष्यः । भक्त्या । पठिष्यति । अथवा । श्रोष्यति । स मनुष्यः । पुरुषार्थसिद्धिं धर्मादिचतुर्वर्गप्राप्तिरूपफलम् । लप्स्यते प्राप्स्यति । वै निश्चितम् ॥३२८॥ स्वामी ब्रह्मपुराधीशः क्षराक्षरपरः प्रभुः । नियामकश्च सर्वेषां मुक्तवृन्दसमर्चितः ॥१॥ सदा दिव्यनराकारः कारुण्यादिगुणार्णवः । यः स एव हरिर्मेऽस्तु प्रीतो भक्तिवृषात्मजः ॥२॥ निःश्रेयसं कर्त्तुमिह प्रभुर्यो नृणां स्वदिव्यैश्चरितैश्चचार । प्रवर्त्तयन्भागवतं च धर्मं स श्रीहरिर्मे हृदये सदाऽस्तु ॥३॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तक श्रीहर्येकान्तिकोपासक श्रीहरिकृष्णभगवत्सूनुरघुवीराचार्यविरचितायां सेतुमालाख्यां श्रीहरिवाक्यसुधासिन्धुटीकायामुपोद्घातप्रकरणम् ॥

स्ववचोमृतपानेन निजांस्तृप्तांश्चकार यः । पितरं श्रीहरिं वन्दे तमहं करुणार्णवम् ॥ १ ॥ आद्ये तरङ्गे कठिनसाधनोत्तरमीरितम् । तथा मायादिप्रश्नानामुत्तराणि यथार्थतः ॥ २ ॥ अथात्रभवान् श्रीशतानन्दमुनिः सकलहरिभक्तहिताय मुक्तानन्दादिमुनिलिखितानां श्रीहरिवचनामृतानां श्रीहरिवाक्यसुधासिन्धुनामानं ग्रन्थं चकार तस्यो- पोद्घातप्रकरणमादौ व्याख्यायन्तदीया ये दुर्गपुरेऽष्टसप्ततिः (७८) सारङ्गपुरेऽष्टादश (१८) कार्यायने द्वादश (१२) लौहग्रामेऽष्टादश (१८) पञ्चालग्रामे सप्त (७) पुनर्दुर्गपुरे सप्तषष्टिः (६७) वृत्तालये विंशतिः (२०) श्रीनगरे त्रयः (३) पुनर्दुर्गपुरे एकोनचत्वारिंशद् (३९) एवं द्विषष्ट्यधिकशतद्वयमिताः (२६२) तरङ्गाः सन्ति तत्रादौ दुर्गपुरसम्बन्धिनो येऽष्टसप्ततिः (७८) तरङ्गास्ते व्याख्यायन्ते तत्रापि प्रथमतरङ्गविवृतिर्विधीयते । शक इति । विक्रमार्कस्य विक्रमादित्यभूपतेः । रसाश्ववसुभूमिते षट् सप्ताष्टैकसम्मिते । शकाब्दे शकवर्षे संवदष्टादशशताधिकषट्सप्ततितमे वर्षे (१८७६) इत्यर्थः । सहसो मार्गशीर्षमासस्य । शुक्ले वलक्षपक्षे चतुर्थ्यां तिथौ । इदं वक्ष्यमाणम् । हरेः श्रीहरेः श्रीहरि- कृष्णभगवतः । वचोऽमृतं वचनामृतम् । अभवदिति शेषः ॥ १ ॥ तत्रेति । तत्र तस्य चतुर्थीतिथौ दुर्गपुरे । उत्तमस्य भूपतेः । दुर्गे कोट्टे । तत्रापि । सतां साधूनाम् । मठे व्रत्यावसथे । 'मठ आवथ्यावसथावि' ति हैमः । निजभक्तसभामध्ये नानादेशागतस्वकीयत्यागिगृहिसंसदो मध्यप्रदेशे । सिताम्बरः स्वाङ्गधृतसकलश्वेतवसनः । स

शकाब्दे विक्रमार्कस्य रसाश्ववसुभूमिते । चतुर्थ्यां सहसः शुक्ले वचोऽमृतमिदं हरेः ॥ १ ॥
तत्र दुर्गपुरे दुर्गे उत्तमस्य सतां मठे । निजभक्तसभामध्ये न्यषीदत्स सिताम्बरः ॥ २ ॥
अथोवाच स्वयं साधून्प्रीतः स्वाननचक्षुषः । साधनेष्विह सर्वेषु कठिनं यत्तदुच्यताम् ॥ ३ ॥
इति पृष्टाः सदःस्थास्ते यथामति तदुत्तरम् । चक्रुस्तदयथा ज्ञात्वा स्वयमेवाब्रवीत्प्रभुः ॥ ४ ॥
अखण्डं भगवद्रूपे स्थापनं मनसः सदा । एतदेवातिकठिनं सर्वसाधनतो मतम् ॥ ५ ॥

श्रीहरिः । न्यषीदद्वासुदेवीयसान्ध्यनीराजनान्ते स्वावासादागत्य स्वास्तृते सिंहासने उपविवेश ॥ २ ॥ अथेति । अथानन्तरम् । प्रीतः साधूनां स्वैकान्तिकभक्तिदर्शनेन प्रसन्नतां प्राप्तः । स्वयं श्रीहरिः । स्वाननचक्षुषः स्वमुखचन्द्रचकोरनेत्रान् । साधून्मुक्तानन्दमुन्यादीन्सतः । उवाच वक्ष्यमाणवचनं जगाद हे साधवः । इह लोके । सर्वेषु सकलेषु । साधनेषु भगवत्प्रसन्नताहेतुषु स्वधर्मतपआदिषूपायेषु मध्ये । यत्साधनम् । कठिनं सर्वथा दुःसाध्यम् । तत्साधनम् । उच्यतां भवद्भिः कथ्यताम् ॥ ३ ॥ इतीति । इत्यमुना प्रकारेण । पृष्टा अनुयुक्ताः । सदःस्थाः सभायां निषण्णाः । ते साधवः तदुत्तरं श्रीहरिकृष्णभगवत्कृतस्य तस्य प्रश्नस्य प्रतिवाक्यम् । यथामति स्वस्वबुध्यनुसारेण चक्रुः । तत्तैः साधुभिः कृतं । स्वप्रश्नप्रतिवाक्यम् । अयथा यथार्थतया न कृतम् । ज्ञात्वा । प्रभुर्यथार्थप्रश्नोत्तरविधानसमर्थः । स्वयं श्रीहरिरेव । अब्रवीत् ॥ ४ ॥ तदेवाह पञ्चभिः । अखण्डमिति । हे साधवः । भगवद्रूपे भगवतः श्रीमूर्तौ । सदा जाग्रदाद्यवस्थात्रयेऽपि । अखण्डं तैलधारावन्निवातस्थदीपशिखावदविछिन्नतयेत्यर्थः । मनसः । स्थापनं योजनम् । यत् । एतदेव साधनम् । सर्वसाधनतः सर्वेभ्यः साधनेभ्यः । अतिकठिनमतिदुःसाध्यम् । मतं मम सम्मतम् ॥ ५ ॥

येनेति । येन भगवन्माहात्म्यातिशयज्ञेन भक्तेन । एतत्साधनम् । साधितं सिद्धं कृतम् । तस्य भक्तस्य । इतोऽस्मात्साधनात् । अधिकमुत्तमम् । अन्यदितरत् । किञ्चन किमपि साधनम् । प्राप्यं भगवत्प्रसन्नतार्थं सम्पाद्यम् । नास्ति इतीत्थं शास्त्रेषु । महर्षिभिः । निश्चित्य निर्णीय । उक्तं कथितम् । 'आलोड्य सर्वशास्त्राणि विचार्य च पुनः पुनः । इदमेकं सुनिष्पन्नं ध्येयो नारायणः सदे'ति भारते व्यासोक्तेः ॥ ६ ॥ यदिति । ध्याता तेन भक्तेन स्वमानसेऽखण्डं चिन्तिता । सा । परमात्मनः श्रीकृष्णस्य । मूर्त्तिः । भक्तेप्सितमुक्तरीत्या ध्यानकर्तृभक्तैराप्तुं वाञ्छितम् । यद्यत् । वस्तु । तत्तत् । चिन्तामणिरिव । पूरयति ददाति । ध्रुवं निश्चितमेतत् ॥ ७ ॥ एतदेवाह सार्द्धेन । जीवेति । भक्त उक्तवीधो भक्तजनः । यदि यदा । जीवाः क्षेत्रज्ञाश्च ईशा वैराजादयश्च ब्रह्माक्षरब्रह्मभावं प्राप्तो मूलप्रकृत्यधीशोऽक्षरपुरुषश्च माया मूलप्रकृतिः प्रधानप्रकृतयश्च तासाम् । स्वरूपाणि । पृथक्पृथक् । दिदृक्षुर्द्रष्टुमिच्छुः । स्यात् । तर्हि तदा । तानि जीवादिस्वरूपाणि । अधुना सद्य एव । ईक्षते साक्षात् पश्यति ॥ ८ ॥ वैकुण्ठेति । स तथाविधो भक्तः । स्वेप्सितानि स्वेन प्राप्तुमिष्टानि । वैकुण्ठादीनि । धामानि । आदिशब्दाद्गोलोकाक्षरब्रह्म श्वेतद्वीपादीनां ग्रहणम् । ईक्षते

येनैतत्साधितं तस्य त्वितोऽन्यत्किञ्चनाधिकम् । प्राप्यं नास्तीति शास्त्रेषु निश्चित्योक्तं महर्षिभिः ॥ ६ ॥ यद्यद्भक्तेप्सितं वस्तु तत्तत्पूरयति ध्रुवम् । चिन्तामणिरिव ध्याता मूर्तिः स परमात्मनः ॥ ७ ॥ जीवेशब्रह्ममायानां स्वरूपाणि पृथक्पृथक् । भक्तो यदि दिदृक्षुः स्यात्तर्हि तानीक्षतेऽधुना ॥ ८ ॥ वैकुण्ठादीनि धामानि स्वेप्सितानीक्षते च सः । अतो महच्च कठिनमेतत्साधनमीरितम् ॥ ९ ॥ इति प्रश्नोत्तरं श्रुत्वा प्रसेदुः सर्वसाधवः । अथ गोवर्द्धनो भक्तस्तमपृच्छद्वणिग्वरः ॥१०॥ या प्रोक्ता कृष्ण ! ते माया तस्या रूपमहं हरे ! । इच्छामि ज्ञातुमित्युक्तः श्रीहरिस्तं समब्रवीत् ॥ ११ ॥ यद्यदेतद्ध्यानकर्तुरन्तरायकरं भवेत् । मायैव सा तु विज्ञेया ययाऽहं मम ते नृणाम् ॥ १२ ॥

साक्षात्पश्यति । अतः कारणात् । एतत्पूर्वोक्तम् । साधनम् । महत्सर्वसाधनेभ्योऽतिश्रेष्ठं च । कठिनं च । ईरितम् ॥ ९ ॥ इतीति । इतीत्थंभूतम् । प्रश्नोत्तरमुक्तानुयोग-प्रतिवचनम् । श्रुत्वा । सर्वसाधवो मुक्तानन्दादयः सर्वेऽपि सन्तः । प्रसेदुरतिमुदिताः बभुवुः । अथानन्तरम् । वरः समाध्यादिसद्गुणैः श्रेष्ठः । वणिग्वणिकज्ञातीयः । गोवर्द्धन एतन्नामा । भक्तो मकरालयपुरवासी स्वदर्शनार्थमागतः स्वैकान्तिकः सेवकः । तं श्रीहरिम् अपृच्छत् ॥ १० ॥ येति । हे कृष्ण ! भगवन् ! हे हरे--! । या । ते तव । माया । प्रोक्ता । तस्या मायायाः । रूपं स्वरूपलक्षणम् । ज्ञातुं यथार्थतया बोद्धुम् । अहम् । इच्छामि । इत्यमुना प्रकारेण । उक्तो गोवर्द्धनभक्तन पृष्ठः । श्रीहरिः । तं गोवर्द्धनभक्तम् । समब्रवीत् ॥ ११ ॥ यदिति । हेभक्त ! । एतद् ध्यानकर्तुरेतस्या भगवन्मूर्त्तेरखण्डं चिन्तनकर्तुर्भक्तस्य । यद्यद् देह,क्षेत्र,कलत्र,सुत वित्तादिकम् । अन्तरायकरं तद्ध्याने विघ्नकरम् । भवेत् । सैव । विधेयप्राधान्यात् स्त्रीलिङ्गनिर्देशः । माया । विज्ञेया । यया मायया । नृणां मनुष्याणाम् । अहं च मम च तयोर्भावौ तत्ते । भवत इति शेषः । देहेऽहन्ता क्षेत्रादौ ममता च भवतीत्यर्थः । मायाजन्याभ्यां देहादावहंममताभ्यां जातस्य तत्सङ्कल्पस्यान्तरायरूपत्वात् । भगवतो-

ऽखण्डध्यानासम्भवो भवतीति भावः । तथा चोक्तं श्रीमद्भागवते । 'तन्नः प्रभो ! त्वं कुकलेवरार्पितां त्वन्माययाऽहंममतामधोक्षजे'ति । 'छिन्द्ध्याशु नः सुतकलत्रधनाप्तगेहदेहादिमोहरशनां भवदीयमायामि'ति । 'सोऽहं ममाहमिति मूढमतिर्विगाढस्त्वन्मायया विरचितात्मनि सानुबन्धे' इत्यादिना ॥ १२ ॥ इतीति । इतीत्थंभूतम् । प्रश्नप्रतिवचः स्वकृतप्रश्नोत्तरम् । श्रुत्वा । स गोवर्द्धनभक्तः । अतिप्रीतोऽत्यन्तप्रसन्नमनाः । आस । आसेति बभूवेत्यर्थेऽव्ययम् । अथानन्तरम् । सतां साधूनां मध्ये । वरः श्रेष्ठः । मुक्तानन्दो मुनिः । प्रश्नान्तरं गोवर्द्धनवणिक्कृतपूर्वप्रश्नापेक्षयान्यं प्रश्नम् । चकार ॥ १३ ॥ प्रभो इति । हे प्रभो ! । अत्र लोके । भागवता भगवतस्तव एकान्तिका भक्ताः । अन्ते स्वप्रारब्धकर्मावसाने । भौतिकं पञ्चभूतसमुद्भवम् । पिण्डं स्थूलं वपुः 'पिण्डो वपुरि'ति हैमः । इदं सूक्ष्मकारणवपुषोरप्युपलक्षणम् । हित्वा त्यक्त्वा । कीदृशं किंविधम् । देहम् । आप्यासाद्य । कथं केन प्रकारेण । तव । परं सर्वोत्तमम् । पदं गोलोकान्तर्वर्त्त्यक्षरधाम । यान्ति प्राप्नुवन्ति ॥ १४ ॥ तमिति । ततो मुक्तानन्दमुनिकृतैवंविधप्रश्नश्रवणानन्तरम् । स्वामी श्रीहरिकृष्णो भगवान् । तं मुक्तानन्दमुनिम् । उवाच । हे मुने ! । ते भागवताः । भौतिकपिण्डादित्यागा-

इति प्रश्नप्रतिवचः श्रुत्वाऽतिप्रीत आस सः । प्रश्नान्तरं चकाराथ मुक्तानन्दः सतां वरः ॥ १३ ॥
प्रभो ! भागवता अन्ते पिन्डं हित्वाऽत्र भौतिकम् । यान्त्याप्य कीदृशं देहं कथं तव परं पदम् ॥ १४ ॥
तमुवाच ततः स्वामी चिन्मयं दिव्यविग्रहम् । कृष्णेच्छयैव सम्प्राप्य यान्ति गोलोकधाम ते ॥ १५ ॥
तत्र कश्चित्समारुह्य तार्क्ष्यं कश्चिन्महारथम् । याति कश्चिद्विमानं च तान्समाधिस्थ ईक्षते ॥ १६ ॥
अथ तं हरजिद्भक्तः पप्रच्छ स्वबुभुत्सितम् । प्रभो ! मत्प्रश्नमाकर्ण्य कर्त्तुमर्हसि चोत्तरम् ॥ १७ ॥

नन्तरमिति शेषः । कृष्णेच्छयैव श्रीकृष्णपरमात्मनः सङ्कल्पेनैव । चिन्मयं चैतन्यप्रधानं ब्रह्ममयमिति यावत् । दिव्यविग्रहममायिकशरीरम् । सम्प्राप्य । गोलोकधाम गोलोकमध्यवर्त्त्यक्षरपदम् । यान्ति । 'गुणापाये ब्रह्मशरीरमेती'ति श्रुतेः । 'निरिछंस्त्यजति प्राणान् ब्राह्मीं संविशते तनुमि'तिस्मृतेश्च ॥ १५ ॥ तत्रेति । तत्र तेषु भागवतेषु मध्ये । कश्चिद्भागवतः । तार्क्ष्यं गरुडम् । समारुह्य । याति तद्भगवद्धाम प्राप्नोति । कश्चित् । महारथं किङ्किणीजालमण्डितं सौवर्णं स्यन्दनम् । समारुह्य । याति । कश्चित् । विमानं देवयानम् । समारुह्य । याति । नन्वेतान्कः पश्यतीत्यत्राह । तानेवंभूतयानान्यारुह्य भगवद्धामगच्छतो भागवतान् । समाधिस्थो भगवत्कृपासम्प्राप्तदिव्यदृष्टिः समाधिनिष्ठोभगवद्भक्तः । ईक्षते साक्षात्पश्यति ॥ १६ ॥ अथेति । अथानन्तरम् । हरिजिद्भक्त उत्तमनृपामात्यो हरजित्संज्ञो भक्तः । स्वबुभुत्सितं स्वेन बोद्धुमिष्टम् । स्वबोद्धव्यार्थप्रश्नमित्यर्थः । तं श्रीहरिम् । पप्रच्छ । हे प्रभो ! । मत्प्रश्नम् । आकर्ण्य श्रुत्वा । उत्तरं तत्प्रतिवचनम् । कर्त्तुम् अर्हसि ॥ १७ ॥

बह्विति । हे हरे । बहुकालं चिरकालपर्यन्तम् । सत्सङ्गं सच्छब्दवाच्यानां श्रीकृष्णतदाश्रितसाधुश्रीकृष्णप्रोक्तभागवतधर्मैतत्रिकप्रतिपादकशास्त्राणां सङ्गं सत्सङ्गिजीवनोक्त-प्रकारेण सङ्गमम् । कुर्वतो विदधतोऽपि भक्तस्य । यथा यथाविधा । स्वतनौ स्वकीये देहे । दैहिके देहसम्बन्धिनि क्षेत्र, कलत्र, पुत्र, वित्तादौ च । सम्प्रीतिर्गाढानुरागः । अस्ति । तथा तथाविधा सम्प्रीतिः । तत्र सच्छब्दवाच्यचतुष्के । न जायते । अत्र किं कारणमित्युत्तरेण सम्बन्धः । सत्सङ्गशब्दार्थ' उक्तः सत्सङ्गीजीवने तृतीयप्रकरणे द्वाविंशेऽध्याये । 'सच्छब्देन परंब्रह्म साधवश्च तदाश्रिताः प्रोक्तस्तदीयो धर्मश्च शास्त्रं चैतत्त्रिकाश्रयम् । सतः कृष्णस्य सङ्गस्तु साक्षाद्भक्तिर्दृढं स्थिरा । साधूनां च सतां सङ्गः सेवार्चा तद्वचः स्थितिः । धर्माणां तु सतां सङ्गस्तदत्यागो विपद्यपि । सतः शास्त्रस्य सङ्गस्तु कृष्णभक्त्यादिपुष्टये । श्रवणं कीर्त्तनं प्रीत्या पाठनं श्रावणं तथे'ति ॥ १८ ॥ अत्रेति । अत्रास्मिन्नर्थे । किं कारणं को हेतुरस्ति । तद्ब्रूहीति शेषः । इत्यमुना प्रकारेण । तेन हरजिद्भक्तेन । पृष्टोऽनुयुक्तः । हरिः । अब्रवीत् तदुत्तरं कथयामास । हे भक्त ! । अस्यैवंविधस्य । पुंसो भक्तस्य । अञ्जसा तत्त्वतः । भगवन्माहात्म्यज्ञानम् । नास्ति । अस्य सच्छब्दवाच्यश्रीकृष्णादिचतुष्के सम्प्रीत्यनुदय-हेतुस्तु याथार्थ्येन भगवन्माहात्म्याज्ञानमेवेति पद्यार्थः । इति द्वयोरेकसम्बन्धः ॥ १९ ॥ भगवन्माहात्म्यज्ञानहेतुस्तु निश्छद्मसाधुसमागम एवेत्याह । माहात्म्यमिति ।

बहुकालं कुर्वतोऽपि सत्सङ्गं स्वतनौ यथा । दैहिके चास्ति सम्प्रीतिस्तथा तत्र नजायते ॥ १८ ॥
अत्र किं कारणमिति तेन पृष्टोऽब्रवीद्धरिः । नास्त्यस्य पुंसो भगवन्माहात्म्यज्ञानमञ्जसा ॥ १९ ॥
माहात्म्यं ज्ञायते सम्यक् सतामेव प्रसङ्गतः । मुमुक्षुभिर्नरैः श्रद्धा तद्वाक्ये क्रियते यदि ॥ २० ॥
तत्स्वभावोपरि यदा सद्भिर्वार्त्ता विधीयते । तदा तत्यजनाशक्तो दोषं गृह्णाति सत्सु सः ॥ २१ ॥
तेन पापेन तेष्वस्य न प्रीतिर्जायते दृढम् । पुण्यतीर्थकृताघस्य वज्रलेपत्वमस्ति च ॥ २२ ॥

मुमुक्षुभिः संसाराम्बुधिनिमज्जनोन्मज्जनादात्मानं सन्तारयितुमिच्छद्भिः । नरैर्भगवद्भक्तैः । यदि यर्हि । तद्वाक्ये सदुक्तस्वहितवचने । श्रद्धा विश्वासपूर्वक आदरः । क्रियते । तर्हि । सतां साधूनाम् । प्रसङ्गत एव । माहात्म्यं भगवतो महिमा । सम्यग्याथार्थ्येन । ज्ञायते बुद्ध्यते ॥ २० ॥ साम्प्रतं साधुवाक्यविश्वासादरवर्जितस्य भगवन्माहात्म्यज्ञानाभावमाह । तदिति । सद्भिर्भगवन्माहात्म्याभिज्ञैः साधुभिः । यदा । तत्स्वभावोपरि भगवन्माहात्म्यज्ञानोदयप्रतिरोधकतन्निष्ठकामलोभादिस्वभावो-त्खनपमुद्दिश्येत्यर्थः । वार्त्ता दृष्टान्तसिद्धान्तोक्तिपूर्वं तत्स्वभावत्याजनसत्स्वभावोत्पादनोदन्तयुक्तिः । विधीयते क्रियते । तदा । तत्त्यजनाशक्तः तं स्वकीयं स्वभावं त्यक्तुमसमर्थः । स पुरुषः । सत्सु स्वस्वभावत्याजनमुद्दिश्य वार्त्ताकर्तृसाधुषु । दोषमेतेऽविवेकिन एकदेशिज्ञानवन्तोऽदीर्घदर्शिनो व्यवहारानभिज्ञा वार्त्ताकरणापटव इत्या-दिकमगुणम् । गृह्णाति कल्पयति ॥ २१ ॥ तेनेति । तेन तद्दोषग्रहणरूपेण । पापेन । तद्दोषग्रहणजातेनानिवार्याघेनेत्यर्थः । अस्य तद्दोषग्रहणकर्त्तुः पुरुषस्य । तेषु सत्सु दृढं यथातथा । प्रीतिः । न जायते । भगवन्माहात्म्यज्ञानपूर्वकं सच्छब्दवाच्यश्रीकृष्णादिचतुष्केऽस्य गाढानुरागो नोत्पद्यते इत्यर्थः । किञ्च । पुण्यतीर्थे कृताघस्य तीर्थानां तीर्थकारित्वात्पुण्यतीर्थरूपेषु साधुषु विहितदोषारोपरूपाघस्य । वज्रलेपत्वम् । अस्ति । वज्रं यथाऽनेकविधशस्त्रास्त्रैर्दुर्भेद्यं भवति तथाऽस्य जीवे

जातः पापलेपोऽनेकप्रायश्चित्तदुर्निवार्यो जायते इत्यर्थः तथा च स्मृतिः ॥ २२ ॥ अन्यत्रेति । अन्यत्र महातीर्थरूपसाधुभ्य इतरेषु सिद्धस्वधर्मनिष्ठब्राह्मणावासादिक्षेत्रेषु । कृतपापानामज्ञातपूर्वविहिताघानाम् । लयो विनाशः । सतामेकान्तिकभगवद्भक्तानां साधूनाम् । सङ्गान्निश्छद्मभावेन समागमात् । भवेत् । तेष्वेषु एवंविधेषु साधुषु । कृतानां तद्दोषग्रहणेनोत्पादितानां पापानाम् । लयस्तु । तदनुग्रहम् । विना तेषां साधूनां प्रसादमन्तरा । न भवेत् । ज्ञात्वाऽज्ञात्वा वा साधूनां दोषग्रहणजातं पापं तु विनयेनैतत्प्रसादनादेव विनश्येन्नान्यैरनेकोपायैस्तन्निवृत्तिः स्यादित्यर्थः । तथा च स्मृतिः । 'आगः कुर्यादसौ येषां तेषामेव प्रसादनात् । शुद्धिरस्य तु विज्ञेया नान्योपायेन केनचिदि'ति ॥ २३ ॥ उक्तार्थं निगमयति । दोषमिति । अङ्ग हे हरजिद्भक्त । एषः पूर्वोक्तः पुमान् । यदा । सतां साधूनाम् । दोषं पूर्वोक्तप्रकारमगुणम् । न गृह्णीत । तदैव । सत्सु सच्छब्दवाच्येषु श्रीकृष्णादिचतुर्षु । उदारहार्दं माहात्म्यज्ञानपूर्विकामहतीं प्रीतिम् । प्राप्नोति । तस्माद्धेतोः । तेषां स्वहितोपदेशकर्तृणां साधूनाम् । सदा निरन्तरम् । गुण एव । ग्राह्यः । कदापि कस्मिंश्चित्कालेऽपि । दोषः । नैव ग्राह्यः ॥ २४ ॥ श्रुत्वेति । इत्येवंविधम् । अमृतोपमानं सुधासन्निभम् हरेः । वाक्यम् श्रुत्वा । सः । भक्तो हरजिद्भक्तः । प्रसन्नोऽतिप्रीतमनाः । आसीत् । अन्ये तद्भिन्नाः । सर्वेऽपि सभानिषण्णास्त्यागिगृहिणः सकला अपि भक्तजनाः । मुदिताः

अन्यत्र कृतपापानां लयः सङ्गात्सतां भवेत् । लयस्तेषु कृतानां तु न विना तदनुग्रहम् ॥ २३ ॥ दोषं न गृह्णीत सतां
यदाऽङ्ग ! तदैव सत्स्वेष उदारहार्दम् । प्राप्नोति तस्माद्गुण एव तेषां ग्राह्यः सदा नैव कदाऽपि दोषः ॥ २४ ॥ श्रुत्वा
हरेर्वाक्यमिति प्रसन्नो भक्तः स आसीदमृतोपमानम् । अन्येऽपि सर्वे मुदितास्तमीशं नत्वोपदेशं तमधारयँश्च ॥ २५ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दविरचिते प्रथमस्तरङ्गः ॥ १ ॥

शकाब्दे विक्रमार्कस्य रसाश्ववसुभूमिते । पञ्चम्यां सहसः शुक्ले वचोऽमृतमिदं हरेः ॥ १ ॥

प्रसन्नाः । आसन् । ईशं सर्वेश्वरम् । तं श्रीहरिम् । नत्वा । तं पूर्वोक्तम् । उपदेशं श्रीहरेर्हितोपदेशवचनम् । अधारयन् हरजिदादयः सर्वेऽपि भक्ताः स्वहृदि धारयामासुः । अत्र श्रीहरिः स्वयं साक्षात् श्रीकृष्णः सन्नपि परोक्षतया यं श्रीकृष्णस्य तत्सतां च महिमानमाह तेनापि श्रीहरेरस्य च सतामेव स बोध्यः पारोक्ष्येण तदुक्तिस्तु स्वस्य स्वसाधूनां स्वमुखेन महिमकथने स्वश्लाघाभयेन सविस्तरतया तत्कथनं न स्यात्तदर्थमवधेया । तथा चास्यैवान्तेच शतानन्दो वक्ष्यति । 'पारोक्ष्येणात्र कथितं माहात्म्यं हरिणास्ति यत् । कृष्णस्य च सतां तत्तु ज्ञेयं तस्य च तत्सताम् । धर्मज्ञानविरागाढ्यभक्तिशिक्षा च या कृता । सापि साक्षात्स्वभक्तानां तद्दाढर्यायेति गम्यतामि'ति ॥ २५ ॥ प्रश्नोत्तराणि यः कृत्वा स्वाश्रितान् सुखयंश्च तान् । धामब्रह्मपुरं स्वीयं प्रापयंस्तं हरिं भजे ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासक-श्रीहरिकृष्णभगवत्सूनुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां प्रथमस्तरङ्गः ॥ १ ॥ वैराग्यस्य तु भेदानां श्रेष्ठादीनां याथार्थतः । हरिणोक्तानि लक्ष्माणि द्वितीये स्वप्रियं द्विजम् ॥ १ ॥ शकेति । शकाब्द इति पूर्वार्द्धं व्याख्यातम् । ( १८७६ ) सहसो मार्गशीर्षमासस्य । शुक्ले शुक्लपक्षे । पञ्चम्यां तिथौ । इदम् । हरेः । वचोऽमृतम् । बभूवेति शेषः ॥ १ ॥

तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमनृपालये उत्तमनृपतिदुर्गान्तर्वर्त्तिभवने । रात्रौ निशीथिन्यारम्भसमये । भगवत्सान्ध्यनिराजनान्ते इत्यर्थः । सत्संसदि मुक्तानन्दमुनिप्रभृतिहरिभक्तसभायाम् । 'सभा संसत्समाजः परिषत्सदः । पर्षत्समज्जा गोष्ठ्यास्था आस्थानं समितिर्घटे'ति हैमः । उच्चासने उन्नते स्वास्तृतरम्यसिंहासने । सिताम्बरः परिहितसकलश्वेतवसनः । स श्रीहरिः । निषण्णः सुखेनोपविष्टः । अभूत् ॥ २ ॥ तमिति । ब्राह्मणोत्तमो ब्राह्मणेषु विप्रेषूत्तमः स्वधर्मभगवद्भक्त्यादिगुणैः श्रेष्ठः । मयारामः सौराष्ट्रदेशीय एतत्संज्ञो द्विजः । तं श्रीहरिम् । प्रणम्य विनयेन नत्वा । पप्रच्छ बद्धकरसम्पुटोऽप्राक्षीत् । हे हरे । कनीयान्कनिष्ठश्च । मध्यमः कनिष्ठोत्तमतावर्जितश्च उत्तमः श्रेष्ठश्च तान् । विरक्तैर्वैराग्यस्य । भेदान्विशेषान् । मे मह्यम् । ब्रूहि पृथक्पृथक् लक्षणतः कथय ॥ ३ ॥ तमिति । तमेवं पृच्छन्तं मयारामद्विजम् । हरिः । उवाच । हे विप्र ! । तव भवतः । प्रश्नोत्तरम् । शृणु । कृष्णेतरवस्तुषु श्रीकृष्णस्वरूपभिन्नेषु मायामयेष्वैहिकामुष्मिकेषु पदार्थमात्रेषु । सर्वप्रकारेण । अरुचिरप्रीतिः । वैराग्यम् । ज्ञेयम् । तथाचोक्तं स्कान्दे । 'इत्थं प्रभोः कालशक्त्यालयैरेतैश्चतुर्विधैः । असद्बुध्वाखिलं तत्रारुचिर्वैराग्यमुच्यते' इति ॥ ४ ॥ एवमादौ वैराग्यस्वरूपमुक्त्वा साम्प्रतं तस्योत्तमादीन् भेदांस्तथाविधवैराग्यवत्पुरुषोक्त्याह सप्तभिः । औदासीन्यमिति । यत् यस्य पुरुषस्य । हृदि मानसे रमणीयेषु उत्तमत्वान्मनोहरेष्वपि ।

तत्र दुर्गपुरे रात्रौ स उत्तमनृपालये । उच्चासने निषण्णोऽभूत्सत्संसदि सिताम्बरः ॥ २ ॥
तं प्रणम्य मयारामः पप्रच्छ ब्राह्मणोत्तमः । विरक्तैर्ब्रूहि मे भेदान्कनीयो मध्यमोत्तमान् ॥ ३ ॥
तमुवाच हरिर्विप्र ! शृणु प्रश्नोत्तरं तव । वैराग्यं त्वरुचिः कृष्णेतरवस्तुषु सर्वथा ॥ ४ ॥
औदासीन्यं हृदि सदा शब्दादिविषयेषु यत् । रमणीयेष्वपि भवेदुत्तमः स प्रकीर्त्तितः ॥ ५ ॥
प्रारब्धकर्मलब्धांस्तान् भुञ्जानोऽप्याज्ञया प्रभोः । अनासक्तो जनकवद्भवेत्तेष्वेष उत्तमः ॥ ६ ॥
व्यावहारिककार्याणि साक्षाद्दृष्टफलान्यपि । आकृष्टं तन्मनः क्वापि शक्नुवन्ति न सर्वथा ॥ ७ ॥

शब्दादिविषयेष्वैहिकामुष्णिकशब्दादिविषयभोगेषु । सदा सर्वकालम् । औदासीन्यं तेषां मायामयत्वात् कालशक्त्याविनाशित्वेन तेष्वनासक्तत्वम् । भवेत् । सः । उत्तम उत्तमवैराग्यवान् । प्रकीर्त्तितः ॥ ५ ॥ इत्थंभूतवैराग्यवान्स्वस्यातिप्रियोऽस्त्ययमेव पुनरपि विशेषत आह चतुर्भिः । प्रारब्धेति । उत्तमवैराग्यवान् । एषः पुमान् । प्रारब्धकर्मलब्धान्स्वकीयेन प्रारब्धकर्मणाऽनायासेन प्राप्तान् । तान् रमणीयान् शब्दादिविषयान् । प्रभोः । आज्ञया । प्रियव्रतादिवत्प्रभोर्निदेशेनेत्यर्थः । भुञ्जानोऽपि सेवमानः सन्नपि । तेषु रमणीयविषयेषु । जनकवत् । अनासक्तो 'मिथीलायां प्रदीप्तायां न मे दह्यति किञ्चने'त्युक्तेर्जनको यथा आसक्तिवर्जितस्तथासक्तिवर्जितः । भवेत् । अनासक्तत्वे जनकं प्रियव्रतस्योपलक्षणं प्रियव्रतदृष्टान्तेन जनकस्य भगवदाज्ञया राज्ये स्थितत्वं च बोध्यम् ॥ ६ ॥ व्यावहारिकेति । साक्षात्प्रत्यक्षतया दृष्टानि फलानि येषां तानि । अपि । व्यावहारिककार्याणि तन्मन उत्तमवैराग्यवत्पुरुषमानसम् । आकृष्टुं भागवतधर्मादाहर्तुं वियोजयितुमित्यर्थः । क्वापि कदाचिदपि । सर्वथा सर्वप्रकारेण । न शक्नुवन्ति । अस्यायं भावः । यत्स्पर्शेन लोहादिकं सद्यः सुवर्णं भवेत्तथाविधमण्यादिप्रदानादिना यदि कश्चित् लोभे स्वं प्रवर्त्त्य भागवद्धर्मात्पातयितुम्-

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



युक्तो भवेत् तर्हि तेनाप्यनाकृष्टमनाः सद्यस्तं परित्यज्य स्वकीयं भागवतद्धर्ममेव रक्षेत्स उत्तम इति ॥ ७ ॥ निरन्तरमिति । स उत्तमवैराग्यवान्पुरुषः । विषयेषु रमणीयेष्वपि शब्दादिविषयभोगेषु । शत्रुवत् स्वकीयापकारकारिष्वरातिष्विव । निरन्तरम् । दोषदर्शी सन् । देशकालादिवैषम्येऽपि । विक्रियां तत्रासक्त्युत्पत्तिरूपं विकारम् । न अवाप्नोति ॥ ८ ॥ सच्छास्त्रेति । सच्छास्त्राणि सत्सङ्गिजीवने तृतीयप्रकरणे धर्मसिद्ध्याख्येऽध्याये प्रोक्तलक्षणाः सद्ग्रन्थाश्च साधवो हरिगीतोक्तलक्षणाः संतश्च भगवान् श्रीकृष्णश्च तेषां सेवा यथोचितं सेवनानि तासु । सदा निरन्तरम् । निरतोऽत्यासक्तः । तत्र सच्छास्त्रसेवा यथाकालं तेषां पठनविचारणानि । साधुसेवा यथोचितान्नवस्त्रादिना तदनुवृत्तिपूर्वकं परिचरणम् । भगवत्सेवा सप्रेमनवधाभक्त्याचरणम् । कामादिभिरन्तःशत्रुभिरलुप्तमतिरोहितं विज्ञानं भागवतधर्मस्य विशिष्टज्ञानं यस्य सः । असावुत्तमवैराग्यवान् । इत्येवंविधैः । लक्षणैर्मदुक्तलक्ष्मभिः । ज्ञेयः ॥ ९ ॥ अथ मध्यमवैराग्यवत्पुरुषलक्षणमाह । अरुच्येति । मध्यमो मध्यमवैराग्यवान्पुरुषः । रम्येषु रमणीयेषु । अर्थेषु मायिकशब्दादिपञ्चविषयेषु । अरुच्याऽननुरक्त्या । पूर्वेण प्रथमोक्तेनोत्तमवैराग्यवत्पुरुषेण । समस्तुल्य एव । किन्तु । देशादिवैषम्ये सति । अस्य मध्यमवैराग्यवत्पुरुषस्य । स्थितिर्विषयानासक्तिरूपानिष्ठा । स्थिरा निश्चला । न भवेत् । देशकालवैषम्यजातविषयासक्त्या तद्वैराग्यं मन्दतां प्राप्नुयादित्यर्थः ॥ १० ॥

> निरन्तरं दोषदर्शी शत्रुवद्विषयेषु सः । देशकालादिवैषम्येऽप्यवाप्नोति न विक्रियाम् ॥ ८ ॥
> सच्छास्त्रसाधुभगवत्सेवासु निरतः सदा । कामाद्यलुप्तविज्ञानो ज्ञेयोऽसौ लक्षणैरिति ॥ ९ ॥
> अरुच्याऽर्थेषु रम्येषु समः पूर्वेण मध्यमः । किन्तु देशादिवैषम्ये न स्थिराऽस्य स्थितिर्भवेत् ॥ १० ॥
> ज्ञेयः कनीयो वैराग्यः सामान्यार्थेषु सर्वथा । न रुची रुचिरार्थेषु सा यद्धृदि भवेदिति ॥ ११ ॥
> सतां प्रसङ्गं कृत्यैव साध्यं वैराग्यमुत्तमम् । मुमुक्षुणा यतो ज्ञानं भक्तिश्च स्याद्बलीयसी ॥ १२ ॥

अथ कनीयो वैराग्यवत्पुरुषलक्षणमाह । ज्ञेय इति । यद्धृदि यस्य कनिष्ठवैराग्यवत्पुरुषस्य चित्ते । सामान्यार्थेषु साधारणेषु विषयेषु अनायासप्राप्येषु शब्दादिविषयभोगेष्वित्यर्थः । सर्वथा सर्वप्रकारेण । रुचिः प्रीतिः । न भवेत् । रुचिरार्थेषु रमणीयेषु विषयेषु तु सा रुचिः । भवेत् । इत्येवंविधलक्षणः । कनीयः कनिष्ठं वैराग्यं यस्य सः । कनिष्ठवैराग्यवानित्यर्थः । ज्ञेयः ॥ ११ ॥ सतामिति । मुमुक्षुणा भक्तेन । सतां हर्येकान्तिकभक्तानां साधूनाम् । प्रसङ्गम् । कृत्वा । उत्तममुत्तमवैराग्यवत्पुरुषस्थितम् । वैरागम् । साध्यमुपायसहस्रैरपिसम्पाद्यम् । यतो येनोत्तमवैराग्येण । ज्ञानमात्मपरमात्मस्वरूपयथार्थवेदनम् । भक्तिः सप्रेमनवधाभगवतो भजनं च । बलीयसी बलवत्तरा । स्यात् । ज्ञानं बलवत्तरं भक्तिर्बलवत्तरा च भवेदित्यर्थः । तस्य ज्ञानभक्तिदेशकालादिवैषम्यादिना कदाचिदपि विलोपं न प्राप्नुयातामिति भावः । तथाचोक्तं हरिगीतायाम् । 'वैराग्यहीनस्य सुखं नास्ति दुःखविवर्जितम् । भक्तिर्न वर्द्धते पुंसां वैराग्येण विना द्रुतम् । मायिकेषु विरक्तानां पदार्थेषु विवर्द्धते कृष्णेऽनुरागो जननि तेन यान्ति परां गतिमि'ति ॥ १२ ॥

इतीति । इत्येवंविधम् । ईशमुखोद्गतं श्रीहरिकृष्णभगवन्मुखपद्मान्निःसृतम् । वचोऽमृतं वचनपीयूषम् । द्विजवरो ब्राह्मणश्रेष्ठः । स मयारामविप्रः । निपीय । ह स्फुटं यथातथा । तुतोष प्रसन्नोऽभूत् । मुनिजनाः सभोपविष्टा मुक्तानन्दादिमुनयोऽपि । अपि शब्दात्तथाविधागृहिणश्च । तन्निपीय तुतुषुः । ततस्तदनन्तरम् । आत्मनिवेदनपण्डिताः सर्वथा श्रीहर्यनुवृत्तितया तादधीन्येन स्ववर्त्तनकुशलाः मयारामविप्रादिसहिताः सर्वे साधवः । तद्दृढतामुत्तमवैराग्यदार्ढ्यम् । विदधुश्चक्रुः ॥ १३ ॥ योऽङ्गं स्वैकान्तभक्तेस्तु वैराग्यभेदसंयुतम् । विप्रं स्वं प्राह स हरिर्देयान्मह्यं तदुत्तमम् ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्यैकान्तिकोपासकश्रीहरिकृष्ण-भगवत्सूनुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां द्वितीयस्तरङ्गः ॥ २ ॥ हरेः स्थानं च तल्लीलास्तदाश्रितजनास्तथा । तद्भक्तैः स्मरणीया वै सदेत्युक्तं तृतीयके ॥ १ ॥ शकेति । शकाब्द इति पूर्वार्द्धे व्याख्यातम् (१८७६) मार्गशिरः शुक्ले मार्गशीर्षमासस्य शुक्लपक्षे । षष्ठ्यां तिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तस्यां तिथौ । दुर्गपुरे । उत्तमस्य नृपतेः । दुर्गे । सतां मठे साध्वावासभवने । सिताम्बरधरः परिहितसकलश्वेत-

**इति वचोऽमृतमीशमुखोद्गतं द्विजवरः स निपीय तुतोष ह । मुनिजना अपि तद्दृढतां ततो विदधुरात्मनिवेदनः पण्डिताः ॥ १३ ॥**

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनि विरचित्ते द्वितीयस्तरङ्गः ॥ २ ॥

**शकाब्दे विक्रमार्कस्य रसाश्ववसुभूमिते । षष्ठ्यां मार्गशिरःशुक्ले वचोऽमृतमिदं हरेः ॥ १ ॥ तत्र दुर्गपुरे दुर्गे उत्तमस्य सतां मठे । निषण्णोऽसौ वृतो भक्तैः सिताम्बरधरोऽब्रवीत् ॥२॥ अखण्डं दृश्यते येन कृष्णमूर्त्तिर्निजे हृदि । तेनापि सर्वदा कार्यः प्रसङ्गः कृष्णसेविनाम् ॥ ३ ॥ यत्र यत्रावताराश्च जाता भगवतो भुवि । तत्स्थानं तत्र तल्लीलाः स्मर्त्त-व्याश्च तदाश्रिताः ॥४॥ देहान्तसमये क्वापि वैषम्याद्देशकालयोः । कृष्णविस्मरणेऽप्येतत्स्मृतिस्तत्स्मारिका भवेत् ॥५॥**

वसनः । भक्तैर्नानादेशागतैर्मुनिभिर्गृहस्थैश्च हरिभक्तजनैः वृतः । नक्षत्रैश्चन्द्र इव परिवेष्टितः । निषण्णः सभामध्यगतोत्तमपीठे सान्ध्यभगवन्नीराजनान्ते उपविष्टः । असौ श्रीहरिः । अब्रवीत्स्वेच्छया स्वभक्तजनान्प्रति कथयामास ॥ २ ॥ अखण्डमिति । हे भक्ताः । येन श्रीहरेरेकान्तिकभक्तेन । निजे स्वकीये । हृदि मनसि । कृष्णमूर्त्तिः । अखण्डं निरन्तरम् । दृश्यते । साक्षादीक्ष्यते । तेन तथाविधेनैकान्तिकभक्तेनापि । कृष्णसेविनामेकान्तिकभावेन सदा कृष्णं सेवमानानां भक्तजनानाम् । प्रसङ्गः । सर्वदा सर्वकालम् । कार्यः ॥ ३ ॥ यत्रेति । भुवि पृथिव्याम् । यत्र यत्र यस्मिन् यस्मिन्स्थाने । भगवतोऽक्षरधामाधीपतेः श्रीवासुदेवस्य । अवताराः श्रीकृष्णादयः प्रादुर्भावाः । जाताः । तत्स्थानं मथुरादिस्थलम् । एतत्तन्निवासस्थानस्य वृन्दावनद्वारिकादेरप्युपलक्षणम् । तत्र तस्मिन् जन्मादिस्थाने । तल्लीलाः श्रीकृष्णभगवतश्चरित्राणि । तदाश्रिता उद्धवश्रुतदेवादयस्तदेकान्तिकभक्ताश्च । स्मर्त्तव्यास्तत्स्थानादयः पूर्वोक्तभक्तेन सर्वथा चिन्तनीयाः ॥ ४ ॥ एतच्चिन्तनफलमाह सार्द्धेन । देहेति । देहान्तसमये उक्तविधभक्तस्य देहावसानावसरे । क्वापि कदाचित् । देशकालयोः । वैषम्याद्विपरीतभावाद्धेतोः । कृष्णविस्मरणे श्रीकृष्णस्वरूपविस्मृतौ जातायां सत्यामित्यर्थः । तत्स्मृतिः श्रीकृष्णस्थानलीलाश्रितजनस्मरणम् । तत्स्मारिका श्रीकृष्णस्वरूपस्मृतिकर्त्री भवेत् ॥ ५ ॥

तत इति । ततो भगवतः स्वरूपस्मरणानन्तरम् । असौ सम्प्राप्तदेहावसानो भक्तः भौतिकं पृथिव्यादिपञ्चभूतविकारोत्पन्नम् । देहं मनुष्यशरीरम् । हित्वाऽनायासेन त्यक्त्वा । परां गतिम् । आप्नोति । भगवद्धाम्नि ब्रह्मरूपदेहेन गत्वा हरिपार्षदतां प्राप्य हरेः सेवायां तिष्ठतीत्यर्थः । अतो हेतोः । अहमपि । प्रत्यब्दं प्रतिवर्षम् । तदुत्सवान् जन्माष्टमीरामनवम्यन्नकूटादिश्रीकृष्णमहान् । कारयामि ॥ ६ ॥ जन्मेति । जन्माष्टम्याद्युत्सवेषु । सर्वान् । साधून् । वर्णिनो ब्रह्मचारिणः । सत्सङ्गिनः सत्सङ्गिशब्दवाच्यान् । गृहस्थांश्च । एकत्र वृत्तालयाद्येकस्मिन् स्थाने । सङ्गतान् श्रीकृष्णदर्शनार्थं मिलितान् । करोमि ॥ ७ ॥ एषामिति । पापकारिणोऽपि । नरस्य । अन्ते देहावसानसमये । एषां साधुप्रमुखानां मध्ये । एकतमस्य यस्य कस्याप्येकस्य । स्मरणात् । मुक्तिर्भगवद्धामप्राप्तिरूपो मोक्षः । भवेत् । इत्यमुना प्रकारेण । अवधार्यतां भवद्भिर्निश्चीयताम् । अस्यायं भावः । साध्वादिस्मरणेऽन्तकाले जाते तैः सह श्रीहरेः स्मृतिः स्यात्तया च भागवत्या तन्वा तद्धाम्नि तत्सेवाप्राप्तिः परमपुरुषार्थरूपा स्यादिति ॥ ८ ॥ इतीति । इत्येवंविधम् । ईशितुः परमेश्वरस्य श्रीहरेः मुखसरोजविनिःसृतमाननपद्मान्निष्क्रान्तम् । उत्तमं सर्वहितकारित्वाच्छ्रेष्ठम् । वचोऽमृतम् । निपीय । ते

ततोऽसौ भौतिकं देहं हित्वाऽऽप्नोति परांगतिम् । अतोऽहमपि प्रत्यब्दं कारयामि तदुत्सवान् ॥ ६ ॥
जन्माष्टम्याद्युत्सवेषु सर्वान्साधूंश्च वर्णिनः । सत्सङ्गिनो गृहस्थांश्च करोम्येकत्र सङ्गतान् ॥ ७ ॥ एषामेकतमस्यापि स्मरणात्पापकारिणः । नरस्यापि भवेन्मुक्तिरन्त इत्यवधार्यताम् ॥ ८ ॥ इति निपीय वचोऽमृतमीशितुर्मुखसरोजविनिःसृतमुत्तमम् । सकलसाधुजना गृहिणश्च ते विदधतो हि तथैव मुदं ययुः ॥ ९ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते तृतीयस्तरङ्गः ॥ ३ ॥

शकाब्दे विक्रमार्कस्य रसाश्ववसुभूमिते । सप्तम्यां सहसः शुक्ले वचोऽमृतमिदं हरेः ॥ १ ॥
तत्र दुर्गपुरे दुर्ग उत्तमस्य सिताम्बरः । नानादेशायातभक्तैः परितो हरिरब्रवीत् ॥ २ ॥

समीपविष्टाः । सकलसाधुजनाः । गृहिणश्च । तथैव यथा श्रीहरिणोक्तं तेन प्रकारेणैव । विदधतः कुर्वाणाः सन्तः । मुदं परमानन्दम् । ययुः प्रापुः ॥ ९ ॥ नानाविधोत्सवांश्चक्रे स्वलीलादर्शकान् हरिः । स्वेषां स्वध्यानसिद्ध्यै यो ध्येयो मेऽस्तु सदैव सः ॥१॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्सूनुरघुवीराचार्यविरचितायां सेतुमालाख्यां श्रीहरिवाक्यसुधासिन्धुटीकायां तृतीयस्तरङ्गः ॥ ३ ॥

ईर्ष्या कार्या न कर्त्तव्या तयोर्भेदश्चतुर्थके । दृष्टान्तकथनेनोक्तो नारदस्य च तुम्बरोः ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८७६) सहस आग्रहायणिकमासस्य । (मार्गशीर्ष) । शुक्ले वलक्षपक्षे । सप्तम्यां तिथौ । इदम् । हरेः श्रीहरिकृष्णभगवतः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमस्य नृपतेः । दुर्गे । स्वावासाङ्गणभूमाविति शेषः । नानादेशायातभक्तैर्नानाविधदेशेभ्य उपागतैः साधुभिर्गृहिभिर्भक्तजनैश्चेत्यर्थः । परितः सभायां परिवेष्टितः । सिताम्बरः परिधृतमरालपक्षधवलसकलवसनः । हरिः श्रीहरिकृष्णो भगवान् । अब्रवीत्स्वेच्छया स्वभक्तान् जगाद ॥ २ ॥

शृण्वन्त्विति । हे भक्ताः । सर्वेऽपि भवन्तः सकला अपि । शृण्वन्त्वेकाग्रेण मनसाकर्णयन्तु । ये । भागवता भगवद्भक्ताः । नराः सम्प्राप्तमनुष्य-देहा जनाः । स्युर्भवेयुः । तैस्तु । परस्परम् । ईर्ष्या अक्षान्तिः स्वसमानपराभ्युदयासहनमित्यर्थः । सर्वथा सर्वप्रकारेण । क्वचित्कदाचिदपि । न कार्या ॥ ३ ॥ तदेति । तदा एवं श्रीहरिकृष्णभगवता यदा कथितं तस्मिन्काले । आनन्दानन्दसाधुः । तं श्रीहरिम् । आहोवाच । हे प्रभो ? । स्वभावस्येर्ष्यायुक्तस्वप्रकृतेः । दुर्जयत्वाद-दान्ताश्ववज्जेतुमशक्यत्वाद्धेतोः । ईर्ष्या तु । हृदये मानसे । कर्हिचित्कदाचित् । सम्भवेदुत्पद्येत । स्वसमानेष्विति शेषः ॥ ४ ॥ स्वामीति । अथैवंविधानन्दानन्द-मुनिवाक्यश्रवणानन्तरम् । स्वामी सकलैश्वर्यैकपतिः श्रीहरिः । तमानन्दानन्दसाधुम् । उवाच । हे साधो । यदि यर्हि । ईर्ष्या । कार्या । तर्हि तु । यथा । नारदेन कृता । तथा । कार्या । यस्य यं गुणमुद्दिश्येर्ष्या जायेत तस्य तद्गुणग्रहणरूपैव सा कार्येत्यर्थः । अन्यथा तद्विपरीत्येन । न च नैव कार्या ॥ ५ ॥ अथ पुराणप्रसिद्धं नारदकृतेर्ष्याप्रकारमाहान्तश्लोकवर्जं यावत्तरङ्गसमाप्तिः । नारदर्षिरिति । एकदा कदाचित् । नारदर्षिः । देवगायक इन्द्रादिदेवानां पुरतो गानकर्ता । तुम्बुरुश्च । एता-

शृण्वन्तु भक्ताः सर्वेऽपि ये स्युर्भागवता नराः । तैः परस्परमीर्ष्या तु न कार्या सर्वथा क्वचित् ॥ ३ ॥
तदाऽऽनन्दानन्दसाधुस्तमाहेर्ष्या तु कर्हिचित् । दुर्जयत्वात्स्वभावस्य हृदये सम्भवेत्प्रभो ? ॥ ४ ॥ स्वाम्युवाचाथ तं
साधो ! कार्येर्ष्या यदि तर्हि तु । यथा कृता नारदेन तथा कार्या न चान्यथा ॥ ५ ॥ नारदर्षिस्तुम्बुरुश्चाप्येकदा
देवगायकः । दर्शनार्थं रमाभर्तुर्वैकुण्ठं धाम जग्मतुः ॥ ६ ॥ लक्ष्मीनारायणं भक्त्या दृष्ट्वा नत्वा निषेदतुः ।
वल्लकीं वादयंश्चक्रे गन्धर्वो गानमुत्तमम् ॥ ७ ॥ तेन तुम्बुरुगानेन प्रीतो लक्ष्म्या सहाच्युतः । स्ववस्त्रभूषा दानेन
प्रीणयामास तं मुदा ॥ ८ ॥ तस्मा ईर्ष्यन्नारदोऽथ गानविद्यामधीतवान् । ततश्च गायनं विष्णोरन्तिके विदधौ
मुनिः ॥ ९ ॥ तमाह भगवान्विष्णुरीर्ष्यामानमदापहः । तुम्बुरोरिव ते गानं नैतच्छ्रोतृमनोहरम् ॥ १० ॥

वुभौ । रमाभर्तुर्लक्ष्मीकान्तस्य श्रीविष्णोः । दर्शनार्थम् । वैकुण्ठम् । धाम । जग्मतुः ॥ ६ ॥ लक्ष्मीति । तौ । भक्त्या । तत्रेति शेषः । लक्ष्मीनारायणम् । दृष्ट्वा संवीक्ष्य । नत्वा साष्टाङ्गप्रणम्य । निषेदतुरुचितासने उपविविशतुः गन्धर्वो देवगायकस्तुम्बुरुः । वल्लकीं कलावतीसंज्ञां स्वकीयां विपञ्चिकाम् । वादयन्सन् । उत्तमं भगवत्प्रसन्नता-हेतुत्वाच्छ्रेष्ठम् । गानम् । चक्रे ॥ ७ ॥ तेनेति । तेन तथाविधेन । तुम्बुरुगानेन । लक्ष्म्या सह । प्रीतः प्रसन्नतां प्राप्तः । अच्युतः श्रीनारायणः । मुदा तद्गान-श्रवणजातात्यानन्देन । स्ववस्त्रभूषादानेन स्वकीयवासोऽलङ्कारार्पणेन । तं तुम्बुरुम् । प्रीणयामास सुप्रसन्नं चकार ॥ ८ ॥ तस्मा इति । अथानन्तरम् । नारदः । मुनिः । तस्मै तुम्बुरवे । ईर्ष्यन्नहमपि तुम्बुरुवद्गानं कृत्वा भगवन्तं प्रसन्नं विदध्यामेवंगुणग्रहणभूतामीर्ष्यामाचरन्सन् । गानविद्याम् । अधीतवान् गायकजनेभ्यः शिक्षयामास । ततस्तदनन्तरम् । विष्णोर्लक्ष्मीनारायणस्य । अन्तिके पुरः प्रदेशे । गायनं गानम् । विदधौ चकार ॥ ९ ॥ तमिति । ईर्ष्या अक्षान्तिश्च मानः परस्मात्स्वस्योत्कर्षत्वचिन्तने-

नौन्नत्यं च मदो गुणादिजश्चित्तोद्रेकश्च तेषामपहो विनाशकस्तान्वापहन्तीति तथा भूतः । ईर्ष्यादिदोषेष्वरुचिस्वभाव इत्यर्थः । भगवान् । विष्णुः । तं नारदम् । आह । हे नारद । ते तव । एतत् । गानम् । तुम्बुरोर्गानमिव । श्रोतृमनोहरम् । नैव जातम् ॥ १० ॥ तत इति । तत एवंविधविष्णुवचनश्रवणानन्तरम् । विप्रः । स नारदः । ईर्ष्यया तुम्बुरोरुत्कर्षासहनरूपया हेतुना । साङ्गया तालस्वरग्रामभेदादितदङ्गसहितया । गानविद्यया । तस्मात्तुम्बुरोः सकाशात् । अधिकः श्रेष्ठः । भवितुम् । तपसा । शिवम् । आराधयत्प्रीणयामास ॥ ११ ॥ प्रसन्न इति । तस्मै नारदाय । प्रसन्नः । शङ्करः साङ्गाम् । गानकलाम् । ददौ । अङ्गसहितां गानविद्यां तस्मै वरप्रदानरूपेण शिक्षयामासेत्यर्थः । ततस्तदनन्तरम् । प्रीतोऽतिहृष्टो नारदः । पुनर्भूयोऽपि । विष्णोः । अन्तिके । गानम् । आचरच्चकार ॥ १२ ॥ तमिति । तमेवं गानं कुर्वाणं नारदम् । रमाकान्तो लक्ष्मीपतिर्विष्णुः । अब्रवीत् । हे नारद ? । ते तव । गायनं गानम् । अतिशोभनमतिसमीचीनमस्ति । किन्तु तथापि । अस्य तवगानस्य । तुम्बुरुगानेन । साम्यं तुल्या तु । न विद्यते न भवति ॥ १३ ॥ इतीति । तेन श्रीविष्णुना । इत्यमुना प्रकारेण । उक्ते कथिते सति । मुनिः । स नारदः । विमना

ततः स ईर्ष्यया विप्रः साङ्गया गानविद्यया । अधिको भवितुं तस्मात्तपसाऽऽराधयच्छिवम् ॥ ११ ॥
प्रसन्नः शङ्करस्तस्मै साङ्गां गानकलां ददौ । ततः प्रीतः पुनर्विष्णोरन्तिके गानमाचरत् ॥ १२ ॥
तमब्रवीद्रमाकान्तो गायनं तेऽतिशोभनम् । किन्तु तुम्बुरुगानेन साम्यं त्वस्य न विद्यते ॥ १३ ॥
इत्युक्ते तेन स मुनिर्विमना मुहुरादरात् । अशिक्षद्गायनकलां गन्धर्वादिभ्य उत्तमाम् ॥ १४ ॥
एवमभ्यसतस्तस्य विष्णुं प्रीणयतः पुनः । कालो महान् व्यतीयाय सप्तमन्वन्तरात्मकः ॥ १५ ॥
तथापि नोक्तं हरिणा साम्यं तुम्बुरुणा यदा । निर्मानः स तदा तस्मादशिक्षत्तत्तुलाप्तये ॥ १६ ॥
ततो विष्णुमुपेत्यासौ जगौ तं भगवाँस्तदा । प्राह नारद गानं ते समं तुम्बुरुणाऽधुना ॥ १७ ॥

उदासीनः सन् । मुहुर्वारंवारम् । आदरात् । गन्धर्वादिभ्यो देवगायकादियावद्गायकजनेभ्यः । उत्तमाम् । गायनकलाम् । अशिक्षत् ॥ १४ ॥ एवमिति । एवममुना प्रकारेण । अभ्यसतो गानविद्याभ्यासं कुर्वाणस्य । पुनर्भूयो भूयः । विष्णुम् । प्रीणयतः प्रसन्नं विदधतः । तस्य नारदस्य । सप्तमन्वतरात्मकः स्वायम्भुवादिसप्तमन्वन्तरातिक्रमलक्षणः । महानतिदीर्घः । कालः । व्यतीयाय व्यतिक्रान्तोऽभूत् ॥ १५ ॥ तथेति । तथापि नारदे एवं कृतवति सत्यपि । यदा । हरिणा विष्णुना । तुम्बुरुणा । साम्यं तुम्बुरुगानेन तुल्यता । स्वगानस्येतिशेषः । नोक्तं न कथितम् । तदा । स नारदः । निर्मानो मानवर्जितः सन् । तत्तुलाप्तये स्वगानस्य तुम्बुरुगानसमता प्राप्त्यर्थम् । तस्मात्तुम्बुरोः सकाशात् । अशिक्षत् गानविद्यां शिक्षयामास ॥ १६ ॥ तत इति । ततस्तदनन्तरम् । असौ नारदः । विष्णुम् । उपेत्य प्राप्य । जगौ । तदा । भगवान् लक्ष्मीनाथो विष्णुः । तं नारदम् । प्राह । हे नारद ? । अधुना साम्प्रतम् । ते तव गानम् । तुम्बुरुणा । समं तुम्बुरुगानेन तुल्यं जातम् ॥ १७ ॥

इतीति । हे साधो ! । इत्यमुना प्रकारेण । उक्त्वा । स लक्ष्मीनारायणः । तस्मै नारदाय । वासांसि अधोवसनं विना स्वपरिहितानि सकलान्यपि उत्तमवस्त्राणि आभरणानि कटककुण्डलादीनि च । ददौ । ततस्तदनन्तरम् । प्रीतः प्रसन्नः । स नारदः । तुम्बुरुणा सह । सख्यं मित्रताम् । अकरोत् ॥ १८ ॥ एवमिति । एवमुना प्रकारेण । ईर्ष्यास्वभावेन ईर्ष्यालुप्रकृतिना पुरुषेण । अन्यगुणग्रहा यमुद्दिश्य ईर्ष्या क्रियते तद्गुणग्रहणरूपा । ईर्ष्या कार्या । क्वचित्कदाचिदपि । पश्वादिवन्महिपादिपशु, चटकादिपक्षिभिस्तुल्यतया । अन्यद्द्रोहहेतुरितरप्राणापहारकारणम् । यद्वा । यं प्रतिस्वेन ईर्ष्या क्रियते तद्वृत्तिविघातादिना यथा तस्य दुःखाद्यापत्प्राप्तिः स्यात्तत्पर्यन्तद्रोहकारणरूपा । सा ईर्ष्या । न तु नैवकार्या । पश्वादितुल्यतया येर्ष्या सा भगवद्भक्तैः सर्वथा न कार्या तस्या भगवत्प्रसन्नताविघातहेतुत्वादितिभावः ॥ १९ ॥ श्रुत्वेति । इत्येवंविधम् । सुधयाऽमृतेन । समानं तुल्यम् । हरेः । वाक्यम् । श्रुत्वा । सः । मुनिरानन्दानन्दसाधुः । सदःस्थाः सभानिषण्णाः । अन्ये इतरे त्यागिनो गृहस्थाश्चापि हरिभक्ताः । प्रणम्य श्रीहरिं नमस्कृत्य । विनीता विनययुक्ताः सन्तः । आदरेणात्यादरपूर्वकमित्यर्थः । शिरसा स्वमूर्ध्ना । हितोपदेशं श्रीहर्युक्तस्वहितोप-

इत्युक्त्वा स ददौ तस्मै वासांस्याभरणानि च । ततः प्रीतः स हित्वेर्ष्यां सख्यं तुम्बुरुणाऽकरोत् ॥ १८ ॥ एवमीर्ष्यास्वभावेन कार्येर्ष्याऽन्यगुणग्रहा । न त्वन्यद्द्रोहहेतुः सा कार्या पश्वादिवत्क्वचित् ॥ १९ ॥ श्रुत्वेति वाक्यं सुधया समानं मुनिः स चान्येऽपि हरेः सदःस्थाः । प्रणम्य भक्त्या शिरसाऽऽदरेण हितोपदेशं जगृहुर्विनीताः ॥ २० ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते चतुर्थस्तरङ्गः ॥ ४ ॥

शकाब्दे विक्रमार्कस्य रसाश्ववसुभूमिते । अष्टम्यां सहसः शुक्ले वचोऽमृतमिदं हरेः ॥ १ ॥
तत्र दुर्गपुरे स्वामी त्यागिगृहिसदोऽन्तरे । उपविष्टः शुक्लवासा उत्तमक्ष्मेशमन्दिरे ॥ २ ॥
प्रीत्या तानब्रवीत्स्वीयान् भवद्भिः सर्वदा हृदि । ध्यातव्या राधिकाकृष्णमूर्त्तिः शुद्धेन चेतसा ॥ ३ ॥

देशम् । जगृहुरुपाददुः ॥ २० ॥ स्वस्य प्रीतिकरामीर्ष्यां तथाऽप्रीतिकरां तु यः । दृष्टान्तेन निजानाह श्रीहरिः सोऽस्तु मे हृदि ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्सूनुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां चतुर्थस्तरङ्गः ॥ ४ ॥

पञ्चमे श्रीहरेर्ध्यानं कर्त्तव्यं सर्वदा हृदि । भक्तस्तस्य दयाहेतुर्हठादुक्तरितीरितम् ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८७६) सहसो मार्गमासस्य । शुक्लेऽर्जुनपक्षे । अष्टम्यां तिथौ । इदम् । हरेः । वचोऽमृतम् । आसीत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमक्ष्मेशमन्दिरे उत्तमाख्यसामन्तभूपालदुर्गान्तर्वर्त्तिभवनाङ्गणे । त्यागिगृहिसदोन्तरे नानादेशायातसाधुगृहिभक्तजनसभाया मध्यप्रदेशे । उपविष्टः स्वास्तृतसिंहासने निषण्णः शुक्लवासाः स्वाङ्गधृतसकलधवलोत्तमवसनः । स्वामी श्रीहरिः । प्रीत्या तानब्रवीदित्युत्तरेणान्वय ॥ २ ॥ प्रीत्येति । तान्समोपविष्टान् । स्वीयान्स्वकीयांस्त्यागिगृहिजनान् । प्रीत्याऽतिप्रसन्नतया । अब्रवीत्स्वेच्छया

वक्ष्यमाणवाक्यं जगाद । हे भक्ताः । भवद्भिः राधिकाकृष्णमूर्त्तिः राधिकायुक्तस्य श्रीकृष्णस्य मूर्त्तिः । शुद्धेन तदितरविषयरागवर्जितेन । चेतसा । हृदि स्वहृदयारविन्दे । सर्वदा सर्वकालम् । ध्यातव्या सकलाङ्गयुक्ततयैकाङ्गयुक्ततया वा स्मरणीया ॥ ३ ॥ यदीति । ध्यायमाना अजस्रं भक्तजनश्चिन्त्यमाना सा श्रीकृष्णमूर्त्तिः यद्यपि । न दृश्यते स्वहृदये दर्शनविषया न भवेत् । तथापि । दीर्घदृष्टिभिर्ध्यानक्रिययान्ते जनिष्यमाणतन्मूर्त्तिदर्शनरूपफलसाक्षाद्वीक्षकत्वादायतबुद्धिभिर्भक्तजनैः । विषादान्मूर्त्त्यदर्शन-जातखेदात् । तत् । ध्यानं श्रीहरिमूर्त्तिचिन्तनम् । सर्वथा सर्वप्रकारेण । न त्याज्यम् ॥ ४ ॥ इतीति । इत्यनेन प्रकारेण । आग्रहिषु श्रीहरिमूर्त्तिध्यानसदाग्रहवत्सु । धीरेषु धृतियुक्तेषु । भक्तेषु । महत्यतिशयिता । भगवत्कृपा स्वमूर्त्तिदर्शनप्रदानरूपा करुणा । जायते प्रभुः श्रीहरिः । तेषां तथाविधाग्रहवतां स्वभक्तजनानाम् । वश्यो वशंगतः । भवति ॥ ५ ॥ तस्मादिति । तस्माद्धेतोः । कृष्णः । सर्वदा । चिन्तनीयः सर्वास्वपि क्रियासु ध्येयः । यतः । भुक्तिं सकामैर्वाञ्छितान्महतो भोगान् । मुक्तिं निष्कामभक्तैः प्राप्यं ब्रह्मात्मना स्वसेवासम्प्राप्तिलक्षणं मोक्षं च । दातुं यथाधिकारमुभे अपि तेभ्यो वितरितुम् । स श्रीकृष्ण एव । ईशः समर्थः । भवति । इत्येवंविधाम् ।

यद्यपि ध्यायमाना सा न दृश्येत तथापि तत् । ध्यानं न सर्वथा त्याज्यं विषादाद्दीर्घदृष्टिभिः ॥ ४ ॥ इत्याग्रहिषु भक्तेषु धीरेषु भगवत्कृपा । महती जायते तेषां वश्यो भवति च प्रभुः ॥ ५ ॥ तस्मात्कृष्णः सर्वदाचिन्तनीयो भुक्तिं मुक्तिं दातुमीशः स एव । इत्याश्रुत्य श्रीहरेर्वाचमासन् हृष्टाः सर्वे ते सदःस्थाः सुधाभाम् ॥ ६ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दविरचिते पञ्चमस्तरङ्गः ॥ ५ ॥

शकाब्दे विक्रमार्कस्य रसाश्ववसुभूमिते । नवम्यां सहसः शुक्ले वचोऽमृतमिदं हरेः ॥ १ ॥
तत्र दुर्गपुरे राज्ञ उत्तमस्यालये हरिः । त्यागिगृहिसभान्तस्थः सितवस्त्रोऽब्रवीत्स्वकान् ॥ २ ॥

सुधाभाममृतसमानाम् । श्रीहरेः । वाचम् । आश्रुत्य । सदःस्थाः सभायां निषण्णाः । सर्वे । ते त्यागिगृहिभक्ताः । हृष्टाः प्रसन्नाः । आसन्बभूवुः ॥ ६ ॥ स्वमूर्त्तिचिन्तनं नित्यं स्वान्माहात्म्याग्रहेण यः । चिन्तये श्रीहरिं तं श्रीभक्तिधर्मसुतं सदा ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्सूनुरघुवीराचार्य-विरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां पञ्चमस्तरङ्गः ॥ ५ ॥

षष्ठे तु लक्षणं प्रोक्तं पुरुषविवेकिनः । पृथक् फलेन सहितं पुंसश्चाप्यविवेकीनः ॥ १ ॥ शकेति । शकेतिपूर्वार्द्धं व्याख्यातम् । (१८७६) सहसः वत्सरादिमासस्य । शुक्ले शुचिपक्षे । नवम्यां तिथौ । इदम् । हरेः । वचोऽमृतम् । आसीत् ॥ १ ॥ तत्रेति । तिथौ । दुर्गपुरे । उत्तमस्य । राज्ञः । आलये दुर्गमध्यवर्त्तिपिचुमन्दत-रूपशोभिभवनाजिरे । त्यागिगृहिसभान्तःस्थो नानादेशसमागतसाधुगृहस्थपरिषन्मध्यवर्त्तिस्वास्तृतोच्चसिंहासननिषण्णः । सितवस्त्रः श्वेतवस्त्रधरः । हरिः । स्वकान् समीपविष्टान्नि-भक्तजनान् । अब्रवीद्वक्ष्यमाणप्रकारेण केनाप्यपृष्टोऽप्युवाच ॥ २ ॥

विवेकिन इति । हे भक्ताः । अत्रास्मिन् । सत्सङ्गे । अत्र सत्सङ्गशब्देन श्रीकृष्णतत्साधुतद्धर्मा एतत्त्रिकप्रतिपादकसच्छास्त्रं चेत्येतत्सच्छब्दवाच्यं तत्सङ्गो यत्र विहितस्तथाभूतोद्धवसम्प्रदायोऽभिधीयते । तेनोद्धवसम्प्रदाये इत्यर्थः । ये भक्तजनाः । विवेकिनः सदसद्विवेकवन्तः । भवन्ति । ते तु धिया सदसद्विवेकवत्या मत्या । स्वागुणान्स्वस्य मान, लोभ, कामप्रमुखदोषान् । पश्यन्ति स्वत एव जानन्ति । एते मानादयो मयि दोषाः सन्ति नैते गुणा अतः सर्वथैते त्याज्या एवेति विदन्तीत्यर्थः । भगवाँश्च तज्जना भगवद्भक्ताश्च तेषाम् । गुणान् । सदा निरन्तरम् । गृह्णन्ति दोषवर्जितत्वाद्धन्या एते इति तेषां गुणानेव पश्यन्तीत्यर्थः ॥ ३ ॥ भगवदिति । भगवत्तज्जनप्रोक्तं भगवता तज्जनैश्च कथितम् । स्वागुणान्स्वनिष्ठदोषांस्त्याजयतीति तथाभूतम् । वचः । हितं ममेदं हितकारकम् । इत्यमुना प्रकारेण । मन्यन्ते विवेकिनो जनाः स्वीकुर्वन्तीत्यर्थः । अणु अल्पमात्रमपि । तद्दुःखम् । न तु नैवमन्यते । स्वदोषत्याजनरूपतद्वचः श्रवणेन स्वहितकारितन्मत्वा न परितप्यन्ते इत्यर्थः ॥ ४ ॥ ईदृशा इति । ईदृशा एवंविधाः ते विवेकिनः । पुरुषा जनास्तु । प्रतिवासरं प्रतिदिनम् । सत्सङ्गे उद्धवसम्प्रदाये । महतीमतिशयिताम् । प्रतिष्ठां पूज्यास्पदताम् ।

विवेकिनोऽत्र सत्सङ्गे पश्यन्ति स्वागुणान् धिया । भगवत्तज्जनानां तु गुणान् गृह्णन्ति ये सदा ॥ ३ ॥
भगवत्तज्जनप्रोक्तं स्वागुणत्याजनं वचः । हितमेवेति मन्यन्ते न तु तद्दुःखमण्वपि ॥ ४ ॥
ईदृशास्ते तु पुरुषाः सत्सङ्गे प्रतिवासरम् । प्रतिष्ठां महतीं यान्ति शोध्या दोषास्ततो निजाः ॥ ५ ॥
येऽत्राविवेकिनस्ते तु स्वदोषान्मन्वते गुणान् । भगवत्तज्जनगुणानगुणानेव चात्मनि ॥ ६ ॥
हितोपदेशं महतां मन्यमाना विपर्ययम् । कल्पयन्ति च तेष्वेव दोषान् युक्तिबलेन ते ॥ ७ ॥
एवंविधास्तु सत्सङ्गे प्रत्यहं यान्ति लाघवम् । गुणाभिमानोऽतस्त्याज्यः स्वस्मिन्सत्सेवयाऽऽदरात् ॥ ८ ॥

यान्ति प्राप्नुवन्ति । ततस्ततो हेतोः । निजाः स्वकीयाः । दोषाः पूर्वोक्ता अगुणाः । शोध्याः सकलपापगर्भा एते इत्येवंबोधनरूपं तत्स्वरूपशोधनं कृत्वा हेया इत्यर्थः ॥ ५ ॥ य इति । अत्र सत्सङ्गे । ये जनाः । अविवेकिनः सदसद्विवेकहीनाः । ते जनास्तु । आत्मनि सदसद्विवेकहीने स्वमनसी । स्वदोषान्मानादीन् । गुणान् गुणरूपान् । मन्वतेऽवगच्छन्ति । भगवत्तज्जनगुणान् भगवतो भगवज्जनानां च गुणान् । अगुणान् दोषरूपानेव । मन्वते ॥ ६ ॥ हितेति । तेऽविवेकिनः पुरुषाः । महतां महागुणवतां भगवत्तत्साधुपुरुषाणाम् । हितोपदेशं स्वदोषत्याजनरूपं तत्कृतस्वहितबोधकवचनम् । विपर्ययमहितरूपम् । मन्यमानाः सन्तः । तेषु स्वहितोपदेशकेषु महत्सु । युक्तिबलेन स्वनिष्ठमानतर्कितानेकविधभाषणकलाबलेन । दोषानेव । कल्पयन्ति प्रतिपादयन्ति ॥ ७ ॥ एवमिति । एवंविधा इत्थंप्रकारा अविवेकिनो जनास्तु । प्रत्यहं प्रतिदिनम् । सत्सङ्गे । लाघवं प्रतिष्ठाहीनताम् । यान्तिः । अतःकारणात् । स्वस्मिन् । गुणाभिमानो दोषेष्वपि गुणाभिमानिता । आदराच्छ्रद्धापूर्वम् । सत्सेवया साधुसमागमेन । त्याज्यः ॥ ८ ॥

य इति । अत्र सत्सङ्गे । ये पुरुषाः । श्रद्धया विश्वासपूर्वकया त्वरया । साधुपुंसः भगवदेकान्तिकसाधुपुरुषान् । सेवन्ते । तेषां पुरुषाणाम् । सर्वः सकलोऽपि । अविवेकः । लीयते मूलतो विनष्टो भवति । इत्थमेवंविधाम् । पीयूषकल्पाममृतसन्निभाम् । तस्य श्रीहरेः । वाचम् । श्रुत्वा । सदःस्थाः सभोपविष्टाः । सर्वे त्यागिगृहिणः सकला अपि भक्तजनाः । तोषमानन्दम् । आपुः ॥ ९ ॥ विवेकिनः स्वभक्तांश्च लक्षणैरविवेकिनः । यः प्राह स हरिर्देयाद्विवेकं तं तु मे दृढम् ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्पद्मनुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां षष्ठस्तरङ्गः ॥ ६ ॥

जीवेशब्रह्मकृष्णानामन्वयव्यतिरेकतः । सप्तमे पृथगुक्तानि सुस्पष्टं लक्षणानि तु ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८७६) सहसः सहो मासस्य । शुक्ले पाण्डुरपक्षे । दशम्यां तिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमक्ष्माभुज उत्तमाख्यनरेशस्य । दुर्गे । त्यागि-गृहिसभान्तःस्थो नानादेशागतानां साधुनां गृहस्थानां च समितिमध्यगतवरसिंहासनाधिष्ठितः । सितांशुकः परिधृतसकलविशदवसनः । प्रभुः श्रीहरिः । स्वीयान्सभा-

ये सेवन्ते श्रद्धया साधुपुंसस्तेषां सर्वो लीयतेऽत्राविवेकः । इत्थं श्रुत्वा तस्य पीयूषकल्पां वाचं सर्वे तोषमापुः सदःस्थाः ॥ ९ ॥

इति श्री हरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते षष्ठस्तरङ्गः ॥ ६ ॥

शकाब्दे विक्रमार्कस्य रसाश्ववसुभूमिते । दशम्यां सहसः शुक्ले वचोऽमृतमिदं हरेः ॥ १ ॥
तत्र दुर्गपुरे दुर्ग उत्तमक्ष्माभुजः प्रभुः । त्यागिगृहिसभान्तःस्थोऽब्रवीत्स्वीयान् सितांशुकः ॥ २ ॥
अध्यात्मवार्त्ता शास्त्रेषु यत्र यत्रोदितास्ति सा । तत्र तत्रापि दुर्बोधा विद्यते विदुषामपि ॥ ३ ॥
याथातथ्येन सा ज्ञेया ततो जीवादिलक्षणैः । अन्वयव्यतिरेकाभ्यां विविच्यैव सुनिश्चितैः ॥ ४ ॥
जीवादिलक्ष्मसाङ्कर्यभ्रमः स्यात्तेन न क्वचित् । स्वयम्प्रकाशानन्दोऽथ तमपृच्छत्पुरःस्थितः ॥ ५ ॥

वस्थितसकलस्वकीयजनान् । अब्रवीत् वक्ष्यमाणरीत्या निष्कारणकरुणया केनाप्यपृष्टः स्वयमेव जगाद ॥ २ ॥ अध्यात्मेति । शास्त्रेषु सोपनिषत्सु श्रीमद्भागवतादिसद्-ग्रन्थेषु । यत्र यत्र यस्मिन् यस्मिन्प्रकरणे । अध्यात्मवार्त्ता आत्मपरमात्मादिस्वरूपबोधनविषया ज्ञानवार्त्ता । उदिता कथिता । अस्ति । सा अध्यात्मवार्त्ता । तत्र तत्रापि तेषु तेषु शास्त्रीयप्रकरणेष्वपि । विदुषां पण्डितानामपि । दुर्बोधा दुःखेनापि यथार्थतया बोधुमशक्या विद्यते ॥ ३ ॥ याथातथ्येनेति । ततो हेतोः । अन्वय-व्यतिरेकाभ्यां स्वेतरवस्तुव्यापनेन स्वस्वरूपावस्थापनेन च करणेनेत्यर्थः । विविच्य पृथक्पृथक्विभज्य । सुनिश्चितैः सम्यक्कृतनिर्णयैः । जीवादिलक्षणैरेव । आदिशब्देनेश ब्रह्म परब्रह्मणां ग्रहणम् । सा अध्यात्मवार्त्ता । याथातथ्येन यथार्थभावेन । ज्ञेया ॥ ४ ॥ जीवेति । तेन तथाविधेनाध्यात्मवार्त्तावेदनेन । जीवादिलक्ष्मसाङ्कर्यभ्रमः जीवादि-चतुर्णां यानि लक्ष्माणि लक्षणानि तेषां साङ्कर्यं परस्परप्रवेशरूपा तेन सङ्करता भ्रम इदं जीवलक्षणमीश्वरलक्षणं वेत्यादिभ्रान्तिः । क्वचित्कदाचिदपि । न स्यात् । अथैवंविध-श्रीहरिवाक्यश्रवणानन्तरम् । पुरःस्थितः श्रीहरेरभिमुखप्रदेशावस्थितः । स्वयम्प्रकाशानन्दो मुनिः । तं श्रीहरिम् । अपृच्छत् ॥ ५ ॥

तदाह सार्द्धेन । जीवेति । हे स्वामिन् । जीवेशब्रह्मणां जीवाः प्राणिनश्च ईशा वैराजादयश्च ब्रह्म अक्षरब्रह्म तेषाम् । कृष्णस्य परब्रह्मणः । ते तव च । अन्वयव्यतिरेकाभ्याम् । पृथक्पृथक् । लक्षणानि । तत्त्वतो यथार्थतः । वक्तुमर्हसीत्युत्तरेणान्वयः ॥ ६ ॥ वक्तुमिति । हे सवज्ञ । वक्तुं कथयितुम् । अर्हसि योग्यो भवसि । मे मम हृदि मनसि । तद्बुभुत्साऽस्ति तेषां जीवादिलक्षणानां बोद्धुमिच्छा । अस्ति । इत्यमुना प्रकारेण । पृष्टः स्वयम्प्रकाशानन्दमुनिना कथितः । सर्वेशः सर्वेश्वरेश्वरः । स श्रीहरिः । यथागमं यथाशास्त्रम् । तं स्वयम्प्रकाशानन्दमुनिम् । जगाद ॥ ७ ॥ अथ द्वाभ्यां द्वाभ्यां श्लोकाभ्यां जीवादीनामन्वयव्यतिरेकभावेन लक्षणान्याह स्थूलेति । हे मुने स्थूलादिदेहत्रितये स्थूलसूक्ष्मकारणदेहाख्ये त्रिके । तादात्म्येन तैरेकभावेन । एतान्येवाहमित्यनाद्यज्ञानजन्याहंभावेनेत्यर्थः । अवस्थितिर्यत्सर्वदाऽनुभवनम् । सः । जीवस्य । अन्वयोऽन्वयभावेन लक्षणम् । प्रोक्तः येन तदहंभावाख्येनान्वयेन । तस्य जीवस्य संसृतिर्जन्ममरणप्रवाहभोगरूपः संसारः । अस्त्यनादिकालत एव विद्यते ॥ ८ ॥ चिदिति । चिद्रूपश्चैतन्यरूपश्च स्वप्रकाशः स्वतःप्रकाशरूपश्च तयोर्भावौ तत्त्वे । अछेद्यत्वमादिर्यस्य देहभावविलक्षणत्व सन्मात्रत्वादेस्तच्च । अस्य जीवस्य । व्यतिरेको व्यतिरेकभावेन लक्षणम् । निगदितः प्रोक्तः । यत्स्थितिः साक्षाद्भगवत्तज्जनसम्प्राप्तज्ञानबलेन स्थूलादिदेहत्रितयतो येन व्यतिरेकभावेनावस्थानम् । मुक्तिः ।

जीवेशब्रह्मणां स्वामिन् कृष्णस्य ते च तत्त्वतः । अन्वयव्यतिरेकाभ्यां लक्षणानि पृथक्पृथक् ॥ ६ ॥ वक्तुमर्हसि सर्वज्ञ तद्बुभुत्साऽस्ति मे हृदि । इति पृष्टः स सर्वेशस्तं जगाद यथागमम् ॥ ७ ॥ स्थूलादिदेहत्रितये तादात्म्येन त्ववस्थितिः । जीवस्य सोऽन्वयः प्रोक्तस्तस्य येनास्ति संसृतिः ॥ ८ ॥ चिद्रूपस्वप्रकाशत्वे अछेद्यत्वादि चास्य तु । व्यतिरेको निगदितो यत्स्थितिर्मुक्तिरुच्यते ॥ ९ ॥ विराडादिषु तादात्म्यं देहेष्वीशस्य तु त्रिषु । लक्ष्मान्वयेन गदितं तथोत्पत्त्यादिकर्त्तृता ॥ १० ॥ अवस्थानं ब्रह्मतया मायातीतत्वमस्य च । लक्षणं नित्यमुक्तत्वं व्यतिरेकेण कीर्तितम् ॥ ११ ॥ पुरुषस्य च मायायाः सूर्यादीनां प्रशास्तृता । नैकाण्डाश्रयतेत्युक्तं ब्रह्मणोऽन्वयलक्षणम् ॥ १२ ॥

उच्यते । तथा चोक्तं श्रीमद्भागवते 'मुक्तिर्हित्वाऽन्यथा रूपं स्वरूपेण व्यवस्थिति'रिति । श्लोकद्वये जीवस्येति जात्यभिप्रायमेकवचनं श्रुत्यादिषु तदनेकत्वोक्तेः ॥ ९ ॥ विराडिति । विराडादिषु विराट् सूत्रात्माऽव्याकृताख्येषु । त्रिषु । देहेषु । तादाम्यं तदेकभावेन वर्त्तनम् । तथा । उत्पत्त्यादिकर्त्तृता जगत उत्पत्तिस्थितिप्रलयकर्त्तृत्वम् । ईशस्य वैराजाख्येश्वरस्य । अन्वयेनान्वयभावेन । लक्ष्म लक्षणम् । गदितम् ॥ १० ॥ अवस्थानमिति । ब्रह्मतया ब्रह्मात्मभावेन । अवस्थानम् । मायातीतत्वं मायामयविराडादिदेहत्रयात्पृथग्भावेन वर्त्तनम् । नित्यमुक्तत्वमहं नित्यमुक्त एवास्मीतिभावनयाऽवस्थानत्वं च । अस्य वैराजाख्येश्वरस्य । व्यतिरेकेण व्यतिरेकभावेन । लक्षणम् । कीर्त्तितम् । अत्रापि श्लोकद्वये ईशस्येति जात्यभिप्रायमेकवचनम् । ब्रह्माण्डानेकत्वेनेश्वरानेकत्वस्य सकलपुराणादिषूक्तेः ॥ ११ ॥ पुरुषस्येति । पुरुषस्य पुरुषशब्दवाच्यस्य महापुरुषस्य तथाविधानां प्रधानपुरुषाणां च । मायाया मायाशब्दवाच्याया महामायायाः तथाविधानां प्रधानाख्यमायानां च । सूर्यादीनां च । आदिशब्देन विद्युच्चन्द्राग्न्यादीनां ग्रहणम् । प्रशास्तृता प्रेरकत्व नियामकत्वादि । नैकाण्डाश्रयताऽनेककोटिब्रह्माण्डाधारत्वम् । इत्येतत् । ब्रह्मणोऽक्षरब्रह्मणः । अन्वयलक्षणमन्वयभावेन लक्षणं उक्तम् ॥ १२ ॥

सर्वत्रेति । सर्वत्र मूलप्रकृतिपुरुषतत्कार्येषु । व्यापकत्वेऽपि प्रशास्तृतया वर्त्तमानत्वेऽपि । व्योमवदाकाशवत् । तदसङ्गिता । आकाशो यथा वाय्वादिपृथिव्यन्तभूतेष्वस्थितोऽपि तत्सङ्गवर्जित एव तिष्ठति । तथामूलप्रकृतिपुरुषतत्कार्येष्ववस्थितत्वेऽपि तत्सङ्गवर्जितत्वमित्यर्थः । कृष्णपरमात्मनः । अनुगधामत्वं सेवकभावेन धामभावेन चावस्थानत्वं च । अस्याक्षरब्रह्मणः । व्यतिरेको व्यतिरेकभावेन लक्षणम् । गद्यते कथ्यते ॥ १३ ॥ क्षरेति । सर्वेषाम् । क्षराक्षराणां प्रधानपुरुषतत्कार्याणामक्षराणामक्षरब्रह्म तत्स्थमुक्तमहापुरुषादीनां च । हृदि हृत्पद्मे । साक्षितयाऽन्तर्यामितया । स्थितिरवस्थानम् । पुरुषोत्तमः पुरुषोत्तमाख्यः शब्दः पर्यायो यस्य स चासौ कृष्णः श्रीकृष्णपरमात्मा तस्य । अन्वयलक्षणमन्वयभावेन लक्षणम् । गद्यते इतिपूर्वश्लोकादनुवर्त्तनीयम् ॥ १४ ॥ लीलेति । कालादेः कालस्य तन्नियम्यस्य कार्यमूलप्रकृतिपुरुषस्य च । तिरोभावेऽपि स्वेच्छयाऽदृश्यत्वेऽपि । परमधामनि अक्षरब्रह्माख्ये स्वस्थाने । राधादिभिः राधालक्ष्म्यक्षरभावापन्नमुक्तकोटिभिः सह । लीला-विहरणं विलासविहाराचरणम् । अस्य श्रीकृष्णस्य । व्यतिरेको व्यतिरेकभावेन लक्षणम् । उदितः कथितः ॥ १५ ॥ अन्वयेति । इत्थममुना प्रकारेण । अन्वयव्यतिरेकाभ्याम् । विविच्य विवेचनां कृत्वा । तत्त्वतः । जीवादीनाम् । लक्षणानि । मनिषिभिर्बुद्धिमद्भिर्भगवद्भक्तैः । ज्ञातव्यानि । हि ॥ १६ ॥ जीवेति । जीवा असुभृतश्च

सर्वत्र व्यापकत्वेऽपि व्योमवत्तदसङ्गिता । कृष्णस्यानुगधामत्वं व्यतिरेकोऽस्य गद्यते ॥ १३ ॥ क्षराक्षराणां सर्वेषां हृदि साक्षितया स्थितिः । पुरुषोत्तमपर्यायकृष्णस्यान्वयलक्षणम् ॥ १४ ॥ लीलाविहरणं राधादिभिः परमधामनि । तिरोभावेऽपि कालादेर्व्यतिरेकोऽस्य चोदितः ॥ १५ ॥ अन्वयव्यतिरेकाभ्यां विविच्येत्थं हि तत्त्वतः । जीवादीनां लक्षणानि ज्ञातव्यानि मनीषिभिः ॥ १६ ॥ जीवेशब्रह्मकृष्णानां मायायाश्चापि वास्तवः । अस्त्यनादिरयं मेद इति जानीहि निश्चितम् ॥ १७ ॥ इति हरेर्वचनं स सुधासमं मुनिगणैः सह सादरमीशितुः । मुनिवरस्तु निशम्य मुदं परामधिजगाम जनाश्च सदःस्थिताः ॥ १८ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचित्ते सप्तमस्तरङ्गः ॥ ७ ॥

ईशा वैराजादयश्च ब्रह्माक्षरब्रह्म च कृष्णः श्रीकृष्णपरमात्मा च तेषाम् । मायाया द्विविधायाः प्रकृतेश्च । अयं पुर्वोक्तः । मेदः स्वरूपतः परस्परभिन्नत्वम् । वास्तवः सत्यः । अनादिर्नित्यश्च । अस्ति । इतीत्थम् । निश्चितमेव । जानीहि । अत्र जीवाद्यन्वयव्यतिरेकभावेन लक्षणोक्तौ मायायास्तदनुक्तत्वेऽपि एषां पारमार्थिकमेदोक्तौ मायाया गणनादनुक्तमपि अस्याः कार्यकारणरूपेणान्वयव्यतिरेकभावतो लक्षणं ज्ञातव्यम् ॥ १७ ॥ इतीति । इत्येवंविधम् । ईशितुः सर्वेश्वरेश्वरस्य । हरेः । सुधासममममृततुल्यम् । वचनम् । सादरं यथातथा । निशम्य श्रुत्वा । मुनिगणैः सह । मुनिवरः । सः स्वयम्प्रकाशानन्दसाधुः । परां सर्वोत्तमाम् । मुदं हर्षम् । अधिजगाम प्राप । सदःस्थिताः सभोपविष्टाः । जना हरिभक्तागृहस्थलोकाश्च । हरेः सुधासमं वचनं सादरं निशम्य परां मुदमधिजग्मुः ॥ १८ ॥ जीवादीनां लक्षणानि स्वस्य ब्रह्मपुरेशितुः । तत्त्वतो यो निजान्प्राह तं भजे भक्तिधर्मजम् ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्तनुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां सप्तमस्तरङ्गः ॥ ७ ॥

अष्टमे कृष्णतद्भक्तसेवायामक्षवृत्तयः । योज्या न मायिकार्थेषु सर्वथेति समीरितम् ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । ( १८७६ ) मार्गशुक्ले मार्गशीर्षमासस्य शुक्लपक्षे । एकादश्यां तिथौ इदम् । हरेः । वचोऽमृतम् । । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । नृपोत्तमगृहे उत्तमनृपपतिदुर्गावस्थिततद्गृहचत्वरे । निजभक्तसभासंस्थो नानादेशसमायातत्यागिगृहिस्वकीयभक्तजनसंसदो मध्यवर्त्तिस्वास्तृतोच्चपीठे निषण्णः । सितांशुकः परिधृतधवलपिचुतन्तुरचितसकलवसनः । स्वामी श्रीहरिः । स्वयं केनाप्यपृष्टः सन्नेव । स्वान्स्वकीयभक्तजनान् । उवाच ॥ २ ॥ कृष्णेति । हे भक्ताः । यस्य भक्तस्य । सर्वाः । इन्द्रियवृत्तयः नेत्रश्रोत्रादीन्द्रियव्यापाराः । कृष्णतद्भक्तसेवायां श्रीकृष्णस्य तद्भक्तानां च परिचर्यायाम् । वर्त्तेरन् । तस्य भक्तस्य । अन्तःकरणम् । आशु शीघ्रमेव । शुचि शुद्धं रागाद्यकलुषितमित्यर्थः । स्यात् ॥ ३ ॥ अनन्तेति । तस्य स्वेन्द्रियव्यापारान् भगवत्तदीयसेवायां नियोजयतो भक्तस्य । अनन्तजन्मपापानि च द्रुतं शीघ्रमेव । नश्यन्ति । ततस्तदनन्तरम् । अस्यैवंविधभक्तस्य । भगवद्भक्तिः । अभिष्टदां वाञ्छितार्थप्रदात्रीम् । पुष्टिम् । आप्नोति । यथा विघ्नसहस्रैरप्यनिवार्या स्यात्तथाविधंबलं प्राप्नोतित्यर्थः

शकाब्दे विक्रमार्कस्य रसाश्ववसुभूमिते । एकादश्यां मार्गशुक्ले वचोऽमृतमिदं हरेः ॥ १ ॥<br>
तत्र दुर्गपुरे स्वामी नृपोत्तमगृहे स्वयम् । निजभक्तसभासंस्थः स्वानुवाच सितांशुकः ॥ २ ॥<br>
कृष्णतद्भक्तसेवायां सर्वा इन्द्रियवृत्तयः । वर्त्तेरन् यस्य तस्याशु स्यादन्तःकरणं शुचि ॥ ३ ॥<br>
अनन्तजन्मपापानि तस्य नश्यन्ति च द्रुतम् । ततोऽस्य भगवद्भक्तिः पुष्टिमाप्नोत्यभीष्टदाम् ॥ ४ ॥<br>
स्त्रीस्पर्शादिषु यस्येह वर्त्तेरन्विषयेषु ताः । तस्यान्तःकरणं याति भृशं मलिनतां खलु ॥ ५ ॥<br>
भ्रष्टो भवति कल्याणवर्त्मनः स च सर्वथा । तस्माद्योज्यानीन्द्रियाणि कृष्णवर्त्मनि सद्धिया ॥ ६ ॥<br>
स्वाधिकारानुरूपेषु सच्छास्त्रविहितेष्वतः । नियमेषु दृढं स्थित्वा भोक्तव्या विषयास्त्विह ॥ ७ ॥

॥ ४ ॥ एतदेव हेतुना द्रढयति द्वाभ्याम् । स्त्रीति । इह लोके । यस्य भक्तस्य । ता इन्द्रियवृत्तयः । स्त्रीस्पर्शादिषु शास्त्रनिषिद्धेषु स्त्र्यङ्गप्रभृतिस्पर्शादिकेषु । विषयेषु मायिकार्थेषु । वर्त्तेरन् । तस्य भक्तस्य । अन्तःकरणम् । भृशमतिशयेन । मलिनतां कामक्रोधरागादिदोषमालिन्यम् । याति । खलु निश्चितमेव ॥ ५ ॥ भ्रष्ट इति । स उक्तप्रकारेण मलिनान्तःकरणो भक्तः । कल्याणवर्त्मनो मोक्षमार्गात् । सर्वथा सर्वप्रकारेण । भ्रष्टः च्युतः । भवति । तस्माद्धेतोः । सद्धिया सन्मतियुक्तेन भक्तेन । इन्द्रियाणि । कृष्णवर्त्मनि श्रीकृष्णभगवतः तदीयानां च सेवामार्गे । योज्यानि वर्त्तनीयानि ॥ ६ ॥ स्वेति । यतः शास्त्रनिषिद्धस्त्र्यङ्गस्पर्शादिमायिकविषयेष्विन्द्रियवृत्तीर्योजयतो मलिनान्तःकरणतया कल्याणवर्त्मनः च्युतिर्भवत्यतो हेतोः । सच्छास्त्रविहितेषु सच्छास्त्रैर्विहिततयोक्तेषु । स्वाधिकारानुरूपेषु । नियमेषु । दृढं यथातथा स्थित्वा । इह लोके । विषयाः स्पर्शादयः पञ्चापीन्द्रियार्थाः । भोक्तव्याः न तु शास्त्रविहितनियमांस्त्यक्त्वा भोक्तव्या इति भावः ॥ ७ ॥

साध्विति । नियमस्थितिसिद्धये । साधुसङ्गः । सदा निरन्तरम् । कार्यः । तद्विरोधी स्वनियमच्युतिहेतुः । कुसङ्गोऽसाधुपुरुषप्रसङ्गस्तु । कदाचन क्वापि । न कार्यः ॥ ८ ॥ एवमिति । एवं मदुक्तप्रकारेण । वर्त्तमानस्य भक्तस्य । देहे । अहन्ताहंबुद्धिः । दैहिके देहसम्बन्धिनि कलत्र–पुत्र–गृह–क्षेत्रादौ । ममत्वं च । नाशम् । आयाति प्राप्नोति । कृष्णे । प्रीतिरतिशयितोऽनुरागश्च वर्द्धते ॥ ९ ॥ वैराग्यमिति । स एवंविधः । नरः । कृष्णभिन्ने स्वेष्टश्रीकृष्णपरमात्मन इतरस्मिन् । रम्ये रमणीयेऽपि । सर्वत्र सर्वस्मिन् । पदार्थे वस्तुनि । वैराग्यम् । आप्नोति । इत्येवंविधाम् । सुधाभां पीयूषसन्निभाम् । हरेः । वाचम् । श्रुत्वा । सकलाः । भक्ताः संप्राप्विष्टास्त्यागिगृहिजनाः । अतीवातिशयितम् । मोदं हर्षम् । प्रापुः ॥ १० ॥ स्वेषां स्वैकान्तभक्तेस्तु दृढता हेतुरीरितः । स्वेभ्यो येनास्तु तस्मिन्मे भक्तिरेकान्तिकी हरौ ॥ १० ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्सद्गुरुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां अष्टमस्तरङ्गः ॥ ८ ॥

प्रत्यक्षे श्रीहरौ निष्ठा कार्या ब्रह्मपुरेश्वरे । सर्वथातोऽधिकं किञ्चिन्नेत्युक्तं नवमे स्फुटम् ॥ १ ॥ शकेति । शकेति पूर्वार्द्धव्याख्यातम् । (१८७६) सहसो हेमन्तर्त्तोः

साधुसङ्गः सदा कार्यो नियमस्थितिसिद्धये । सर्वथा तद्विरोधी तु न कुसङ्गः कदाचन ॥ ८ ॥ एवं हि वर्त्तमानस्य देहेऽहन्ता च दैहिके । ममत्वं नाशमायाति कृष्णे प्रीतिश्च वर्द्धते ॥ ९ ॥ वैराग्यमाप्नोति स कृष्णभिन्ने रम्येऽपि सर्वत्र नरः पदार्थे । श्रुत्वेति वाचं सकलाः सुधाभां भक्ता हरेः प्रापुरतीव मोदम् ॥ १० ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते अष्टमस्तरङ्गः ॥ ८ ॥

शकाब्दे विक्रमार्कस्य रसाश्वसुभूमिते । द्वादश्यां सहसः शुक्ले वचोऽमृतमिदं हरेः ॥ १ ॥ तत्र दुर्गपुरे स्वामी गृह उत्तमभूभृतः । त्यागिगृहिसभान्तःस्थो जगाद स्वान् सिताम्बरः ॥ २ ॥ कृष्णस्य निश्चयो यस्य प्रत्यक्षस्य भवेद्धृदि । भक्तिं च दर्शनं तस्य कुर्वन्नपि च यः पुमान् ॥ ३ ॥ अपूर्णकाममात्मानं मन्येत न्यूनमन्तरे । इत्थं च मनसि स्वीये जानीयान्मतिजाड्यतः ॥ ४ ॥

प्रथममासस्य (मार्गशरस्य) शुक्ले विशदपक्षे । द्वादश्यां तिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमभूभृत उत्तमनृपस्य । गृहे दुर्गान्तर्वर्त्तिभवनाङ्गणभूमौ । त्यागिगृहिसभान्तःस्था नानाविधदेशायातत्यागिगृहिपर्षदो मध्यवर्त्तिस्वास्तृतमञ्चोतमावस्थितः । सिताम्बरः परिधृतसकलश्वेतवसनः । स्वामी श्रीहरिः । स्वान्सभानिषण्णस्वकीयभक्तजनान् । जगाद अपृष्टोऽपि तद्धितमाशंसन्केवलं करुणया वक्ष्यमाणप्रकारेण कथयामास ॥ २ ॥ कृष्णस्येति । हे भक्ताः यस्य भक्तस्य । हृदि मनसि । प्रत्यक्षस्य । कृष्णस्य । निश्चयः नृनाट्यधरोऽप्ययं साक्षात् श्रीकृष्ण एवास्तीति निर्णयः । भवेत् । यश्चायं भक्तः । पुमान् । तस्य प्रत्यक्षश्रीकृष्णस्य । भक्तिं सप्रेमनवधाभजनम् । दर्शनं च । कुर्वन्सन्नपि ॥ ३ ॥ अपूर्णेति । अन्तरे मनसि । आत्मानं स्वम् । अपूर्णकाममकृतकृत्यम् । अत एव । न्यूनं सर्वथोनम् । मन्येत । तस्यापूर्णकाममानितायां हेतुमाह सार्द्धेनेत्थमिति । यश्चायं भक्तः । मतिजाड्यतो भगवतो दिव्यमानुषभावैकत्वबोधने धीवृत्तेर्जडभावाद्धेतोः । स्वीये मनसि । इत्थं वक्ष्यमाणप्रकारेण । जानीयात् ॥ ४ ॥

अस्येति । अहम् । अस्य नृनाटयधरस्य श्रीकृष्णस्यैव । गोलोके गोलोकमध्यवर्त्तिन्यक्षरधाम्नि । उपलक्षणमयं वैकुण्ठाव्याकृतादिधाम्नाम् । स्थितमिति शेषः । तेजोमयं स्वाङ्गनिर्यत्प्रचुरतेजसम् । दिव्यममायिकम् । रूपम् । यदा । द्रक्ष्यामि ईक्षिष्ये । तदैव । पूर्णकामः कृतार्थः । स्यां भवेयम् । अन्यथा इत्थंभूतश्रीकृष्णरूपदर्शनाभावेन । न च पूर्णकामो नैव स्याम् ॥५॥ इतीति । इत्यज्ञानवतो दिव्य एव मानुषस्तथाविध एव दिव्य इत्थं श्रीकृष्णस्वरूपज्ञानरहितस्य । तस्य तथाविधस्य । पुंसः । आस्यान्मुखात् । भगवद्वार्त्ता प्रत्यक्षभगवत्स्वरूपज्ञानगोष्ठी अपि । अत्र लोके । मुमुक्षुणा भक्तेन । नैव । श्रोतव्या । अपिशब्दात्तत्प्रसङ्गं तु सर्वथा निषेधति । इति चतुर्णामेकसम्बन्धः ॥ ६ ॥ प्रत्यक्ष इति । अत्र लोके । नराकृतौ धृतनराकारे । प्रत्यक्षे साक्षाच्छ्रीकृष्णे । यस्य भक्तस्य । दृढनिष्ठा अयमेव गोलोकादिसकलधामाधिपतिरित्येवंभूता दृढस्थितिः । स्यात् । यश्चायं भक्तः । आत्मानं स्वम् । तद्दर्शनादिना प्रत्यक्षभगवद्दर्शनादिनैव । पूर्णं पूर्णकामम् । मन्यते ॥ ७ ॥ तदिति । निजहितेच्छुना स्वकीयपरमनिःश्रेयसरूपहितमभिवाञ्छता भक्तेन । तन्मुखात्स्वात्मानमुक्तविधया पूर्णकामत्वेन । मन्यमानस्य भगवद्भक्तस्य मुखादेव । भगवद्वार्त्ता भगवत्स्वरूपज्ञानप्रवृत्तिः ।

अस्यैव रूपं गोलोके दिव्यं तेजोमयं यदा । द्रक्ष्याम्यहं तदैव स्यां पूर्णकामो न चान्यथा ॥ ५ ॥ इत्यज्ञानवतस्तस्य पुंस आस्यात्कदाचन । श्रोतव्या नैव भगवद्वार्त्ताऽप्यत्र मुमुक्षुणा ॥ ६ ॥ प्रत्यक्ष एव यस्य स्याद्दृढनिष्ठा नरकृतौ । तद्दर्शनादिनाऽऽत्मानं पूर्णं मन्येत चात्र यः ॥७॥ तन्मुखादेव भगवद्वार्त्ता निजहितेच्छुना । श्रोतव्या तत्प्रसङ्गश्च कर्त्तव्यो भक्तिवृद्धये ॥ ८ ॥ अनिच्छतेऽपि स्वादन्यत्तस्मै प्रीतः स्वधामनि । अलौकिकं निजैश्वर्यं बलाद्दर्शयति प्रभुः ॥ ९ ॥ गोलोकाधिपतिर्यो हि स एवास्त्यत्र नेतरः । स्वतन्त्रः स्वेच्छयैवासौ नराकारेण दृश्यते ॥ १० ॥ वेषान्तरं धृतवतो नटस्येवास्य सर्वथा । स्वरूपभेदो नास्त्येव ज्ञेयमित्थं मनीषिभिः ॥ ११ ॥

श्रोतव्या । भक्तिवृद्धये स्वस्मिन्भगवत एकान्तिकभक्तिवृद्ध्यर्थम् । तत्प्रसङ्ग एवंविधभगवद्भक्तसमागमः । कर्त्तव्यः । इति द्वयोरेकसम्बन्धः ॥ ८ ॥ अनिच्छत इति । स्वात्स्वकीयप्रत्यक्षमूर्त्तिसन्दर्शनात् । अन्यदितरत्किमपि । अनिच्छते नैव वाञ्छते । द्रष्टुमिति शेषः । तस्मै उक्तविधभक्ताय । प्रीतः प्रसन्नः । प्रभुः श्रीकृष्णः । स्वधामनि गोलोकादौ । अलौकिकममायिकम् । स्थितिमिति शेषः निजैश्वर्यम् । बलात् हठात् । दर्शयति ॥ ९ ॥ भगवतो दिव्यमानुषरूपयोरभिन्नत्वं दृष्टान्तेनाह द्वाभ्याम् । गोलोकेति । यः । गोलोकाधिपतिः श्रीकृष्णः । स एव । अत्र लोके । अस्ति नृनाटयधरः सन् वर्त्तते । इतरस्तद्भिन्नः । गोलोकस्थश्रीकृष्णादन्य इत्यर्थः । न हि नैवास्ति । यतः । असौ श्रीकृष्णः । स्वतन्त्रोऽपावृतः । अतः । स्वेच्छया स्वसङ्कल्पेनैव । नराकारेण मनुष्यसमानाकारेण । दृश्यते वीक्षणीयो भवति ॥ १० ॥ वेष इति । वेषान्तरं प्रथमत एव स्वतः सिद्धं वेषं तिरोधायान्यवेषम् । धृतवतः । नटस्येव । अस्य दिव्याकारेण मनुष्याकारेण वर्त्तमानस्य श्रीकृष्णस्य । सर्वथा सर्वप्रकारेण । स्वरूपभेद उभयोः स्वरूपयोर्भिन्नत्वम् । नास्त्येव । इत्थमनेन प्रकारेण । मुनिषिभिः । ज्ञेयम् ॥ ११ ॥

अत इति । अतो हेतोः । प्रत्यक्षं साक्षात् दृश्यमानम् । कृष्णम् । आसाद्य प्राप्य । तदितरत् प्रत्यक्षश्रीकृष्णादन्यत् । वस्तु । क्वचित्कदाचिदपि । नवै नैव । वाञ्छनीयम् । अत्र च प्रत्यक्षे श्रीकृष्णे एव । दृढास्तु निश्चला । निष्ठा । कार्या ॥ १२ ॥ इतीति । इत्येवंविधम् । हरेः । वचोऽमृतं वचनसुधाम् । श्रुतिपुटेन कर्णकंसेन । आदरतः । निपीय । सदा गताः सभानिषण्णाः । हरिजनास्त्यागिनो गृहिणश्च सर्वेऽपि हरिभक्तलोकाः । परमाम् । मुदम् । अगमन् प्रापुः । प्रकटे नराकारेण प्रत्यक्षतया वर्त्तमाने । भगवति । अत्र परोक्षतया स्वस्वरूपज्ञानं कथयति श्रीहरौ । दृढाशया विशेषेण दृढनिष्ठायुक्तान्तःकरणाश्च । आसन्निति शेषः ॥ १३ ॥ सुदृढो निश्चयो यस्य स्वीयो यस्य न तद्विधः । लक्ष्माह यस्तयोर्दयात्स हरिस्तं दृढं तु मे ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवद्गनु-रघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां नवमस्तरङ्गः ॥ ९ ॥

वार्त्ता कृता कृतघ्नस्य हरिणा दशमे ततः । सङ्गतस्य सह स्वेन सेतुबन्धस्य वर्त्मनि ॥१॥ शकेति । शकेति पूर्वार्द्धे व्याख्यातम् । (१८७६) मार्गशुक्लत्रयोदश्यां मार्ग-

अतः प्रत्यक्षमासाद्य कृष्णं तदितरत्क्वचित् । वाञ्छनीयं न वै वस्तु कार्या निष्ठा दृढाऽत्र च ॥ १२ ॥ इति वचोऽमृतमादरतो हरेः श्रुतिपुटेन निपीय सदोगताः । हरिजनाः परमामगमन्मुदं भगवति प्रकटेऽत्र दृढाशयाः ॥ १३ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते नवमस्तरङ्गः ॥ ९ ॥

शकाब्दे विक्रमार्कस्य रसाश्ववसुभूमिते । मार्गशुक्लत्रयोदश्यां वचोऽमृतमिदं हरेः ॥ १ ॥ तत्र दुर्गपुरे रात्रावुत्तमक्ष्मापतेर्गृहे । त्यागिगृहिसदःसंस्थो हरिरूचे सिताम्बरः ॥ २ ॥ मामकैः पुरुषैः सङ्गः कृतघ्नस्य तु देहिनः कर्हिचिन्नैव कर्त्तव्यस्तल्लक्षणमहं ब्रुवे ॥ ३ ॥ कुर्वतस्तीर्थयात्रां मे कैशोरे दैवयोगतः । सङ्गः सेवकरामाख्यकृतघ्नस्याभवत्पथि ॥ ४ ॥ वेङ्कटाद्रेः सेतुबन्धं व्रजता स मया सह । आगतो वेषतः साधुः पुराणज्ञश्च निर्दयः ॥ ५ ॥

शीर्षमासगतशुक्लपक्षस्य त्रयोदशी तिथौ । इदम् । हरेः । वचोऽमृतम् । अभवत् ॥ १ ॥ तत्रेति तत्र तिथौ । रात्रौ प्रदोषकालविधेयभगवन्नीराजनान्ते इत्यर्थः । उत्तमक्ष्मापतेरूत्तमनृपतेः । गृहे दुर्गान्तर्वर्त्तिभवनाङ्गणप्रदेशे । त्यागिगृहिसदःसंस्थो नानादेशागतस्वकीयसाधुगृहस्थजनसभामध्यगत्तोत्तमरत्ननिचितस्वास्तृतसिंहासने निषण्णः । सिताम्बरः धृतसकलश्वेतवसनः । हरिः । ऊचे स्वभक्तजनैरप्रेरितोऽपि तद्धितार्थं तान् वक्ष्यमाणवचनं स्वयमेव जगाद ॥ २ ॥ मामकैरिति । हे भक्ताः । मामकैर्मदीयैः । पुरुषैः । कृतघ्नस्य । देहिनः । सङ्गस्तु । कर्हिचित्कदाचिदपि । नैव । कर्त्तव्यः । अहम् । तल्लक्षणं कृतघ्नपुरुषलक्ष्म । ब्रुवे विस्तरेण कथयामि ॥ ३ ॥ कुर्वत इति । कैशोरे किशोरावस्थायाम् । तीर्थयात्राम् । कुर्वतः । मे मम । दैवयोगत ईश्वरेच्छावशात् । पथि मार्गे । सेवकरामाख्यकृतघ्नस्य । सङ्गः । अभवत् ॥ ४ ॥ वेङ्कटाद्रेरिति । वेषतो बाह्यवेषमात्रेण । साधुः साधुसमानः । पुराणज्ञोऽधीतसकलपुराणशास्त्रः । तथापि । निर्दयो दयावर्जितः । स सेवकरामाख्यः कृतघ्नः । वेङ्कटाद्रेः करिगिरेः सकाशात् । सेतुबन्धं सेतुबन्धाख्यतीर्थविशेषं प्रति । व्रजता गच्छता । मया सह । आगत आयातः । मार्गे यात्रार्थमिति शेषः ॥ ५ ॥

मयेति । मया तु । साधुबुध्या अयं पण्डितः साधुर्भवतीति मत्यैव । पथि मार्गे । तस्य कृतघ्नसाधोः । सङ्गः । कृतः । रोगार्त्तो ज्वरादिबहुरोगपीडितः । स साधुः । भूरिविरेकेणात्यतिसारगदेन शिथिलावङ्घ्री पादौ यस्य सः । अभवत् ॥ ६ ॥ अशक्त इति । ज्वरितो रोगराजपीडितः । स साधुः । चलने गमने । अशक्तोऽसमर्थः सन् । मार्गे । पपात । बहुधा बहुभिः प्रकारैः । रुरोद विललाप च । तदेवाह द्व्यक्षराधिकसपादश्लोकेन । माम् । पानीयं जलमपि । कः । पास्यति ॥ ७ ॥ शतकमिति । मत्समीपे । हेममुद्राणाम् । शतकम् । सद्धनम् । अस्ति । किन्तु । मे मम । सेवाकरः परिचर्याकारकः । कश्चित्कोऽपि । नास्ति । अहम् । किम् करोमि ॥ ८ ॥ एवमिति । एवममुना प्रकारेण । रुदन्तं विलपन्तम् । तं तथाविधम् । साधुम् । अहम् । कृपया हि केवलया दययैव । प्रावोचम् । हे साधो ! । त्वम् । चिन्ताम् । मा कुरु । तव । सेवनम् । करिष्ये अहमेव करिष्यामि ॥ ९ ॥ तत इति । ततस्तदनन्तरम् । कस्यचित् । ग्रामस्य । समीपे । स्थिताम् । पुष्पवाटिकाम् । तेन साधुना । सह । शनैः गत्वा । वटाधो न्यग्रोधतरुतले । वासं निवासम् आचरमहमकरवम् ॥ १० ॥ वट इति । तत्र तस्मिन् । वटे बहुपाद्द्रुमेऽपि । बुभुक्षितशनायाकुलितम् । भूत-

मया तु साधुबुद्ध्यैव सङ्गस्तस्य कृतः पथि । रोगार्त्तः सोऽभवद्भूरिविरेकशिथिलाङ्घ्रिकः ॥ ६ ॥ अशक्तश्चलने मार्गे पपात ज्वरितश्च सः । रुरोद बहुधा को मां पानीयमपि पास्यति ॥ ७ ॥ शतकं हेममुद्राणां मत्समीपेऽस्ति सद्धनम् । किन्तु सेवाकरः कश्चिन्नास्ति मे किं करोम्यहम् ॥ ८ ॥ एवं रुदन्तं तं साधुं प्रावोचं कृपया ह्यहम् । साधो ! मा कुरु चिन्तां त्वं करिष्ये सेवनं तव ॥ ९ ॥ ततः समीपे ग्रामस्य कस्यचित्पुष्पवाटिकाम् । सह तेन शनैर्गत्वा वटाधो वासमाचरम् ॥ १० ॥ वटेऽपि भूतसाहस्रमासीत्तत्र बुभुक्षितम् । कृष्णप्रतापात्तत्त्वावां नापीडयदवाप्तभि ॥ ११ ॥ आहृत्याथ मया तत्र कदलीपत्रसञ्चयम् । तस्य शय्या कृता मृद्वी सेवा नित्यं च दासवत् ॥ १२ ॥ आहारयन्मया ग्रामादन्नमाज्यादिसोऽन्वहम् । स्वोदराभृतिपर्याप्तं दत्वा स्वधनमातुरः ॥ १३ ॥ तदन्नं पाचयित्वाऽहं यथारुचि तमादयम् । विरेकिणोऽस्याकरवमपि पायुविशोधनम् ॥ १४ ॥

साहस्रं सहस्रसंख्याः पिशाचाः । आसीत् । कृष्णप्रतापाच्छ्रीकृष्णमहिम्ना । अवाप्तभि सम्प्राप्तमहाभयम् । तद्भूतसाहस्रं तु । आवां मां तं च । नापीडयत्पीडोत्पादने नाशकत् ॥ ११ ॥ आहृत्येति । अथानन्तरम् । मया । कदलीपत्रसञ्चयं कदलीदलपुञ्जम् । आहृत्य । तत्र वटाधस्तात् । तस्य । कृते इति शेषः । तदर्थमित्यर्थः । मृद्वी कोमला । शय्या । कृता । दासवद्दासेन यथा सेवा क्रियते तथा । नित्यं प्रतिदिनम् । सेवा तत्परिचर्या च । कृता ॥ १२ ॥ आहारयदिति । आतुरो रोगपीडितः । स साधुः । स्वधनं स्वसमीपे वर्त्तमानं सुवर्णमुद्रिकाद्रव्यम् । दत्त्वा । स्वोदराभृतिपर्याप्तं यावतास्वजठरभरणं स्यात्तत्पर्याप्तम् । अन्नम् । आज्यादि घृतादिकम् । ग्रामात्सकाशात् । मया प्रयोज्यकर्त्रा । अन्वहं प्रतिदिनम् । आहारयदानाययांचकार ॥ १३ ॥ तदिति । अहम् । तत् । अन्नम् । पाचयित्वा । तं साधुम् । यथारुचि तस्य रुच्यनुसारेण । आदयमभोजयम् । विरेकिणो रुधिरातिसारवतः । अस्य साधोः । पायुविशोधनं जलेन गुदक्षालनमपि । अकरवम् ॥ १४ ॥

भैक्षेणेति । भैक्षेण भिक्षासम्प्राप्तान्नेन । वर्त्तमानः स्ववृत्तिं कुर्वन् । क्वापि कदाचित् । अलाभे भिक्षान्नस्याप्राप्तौ सति । उपोसितः कृतोपवासः । अहम् । तं साधुम् । अनुवर्त्तनैस्तच्छन्दानुसरणैः । निश्छद्म निष्कपटं यथातथा । मासद्वितयं द्विमासपर्यन्तम् । असेवे एवं सेवामकरवम् ॥ १५ ॥ तथेति । तथापि एवं द्विमासपर्यन्तं तत्सेवने कृते सत्यपि । कर्हिचित्कदाचिदपि । तेन कृतघ्नेन सेवकरामसाधुना । यद्यतो हेतोः । मम । पार्श्वे समीपे । पुष्कलम् । द्रव्यं स्वापतेयम् । अस्ति । अतः । साधिते मदर्थं त्वया निष्पादिते । अत्रास्मिन् । पाके । आवामहं त्वं च । अद्यावभुञ्जिवहि । इति । नोक्तं परिहासभावेनापि न कथितम् ॥ १६ ॥ गतप्राय इति । अथानन्तरम् । स तद्रोगे तस्य तथाविधे गदे । गतप्राये निवृत्तकल्पे जाते सति । आवामहं स च । सेतुबन्धाय सेतुबन्धतीर्थं गन्तुम् । तत्स्थानतः । निर्गतौ चलितावभूताम् । स साधुः । माम् । भारम् । अवाहयत् ॥ १७ ॥ तदेवाह । सपादेति । पथि मार्गे सपादद्रोणमानं विंशतिप्रस्थपरिमितम् । तद्भारं तस्य सकलोपस्करवीवधं तु । अहम् । उदवहम् । स साधुस्तु । दिने दिने प्रतिदिनम् । करे स्वपाणौ । मालामात्रं केवलां भगवन्नामजपमालिकाम् । धृत्वाऽऽदाय । अगच्छन्मार्गे चलति स्म ॥ १८ ॥ नीरोग

भैक्षेण वर्त्तमानोऽहं क्वाप्यलाभ उपोषितः । निश्छद्म मासद्वितयं तमसेवेऽनुवर्त्तनैः ॥१५॥ तथापि कर्हिचित्तेन नोक्तं पाकेऽत्र साधिते । आवामद्याव यद्द्रव्यं मम पार्श्वेऽस्ति पुष्कलम् ॥ १६ ॥ गतप्रायेऽथ तद्रोगे सेतुबन्धाय निर्गतौ । आवां तत्स्थानतो मार्गे स भारं मामवाहयत् ॥ १७ ॥ सपादद्रोणमानं तद्भारं तूदवहं पथि । मालामात्रं स तु करे धृत्वा गच्छद्दिने दिने ॥ १८ ॥ नीरोगोऽप्येवमकरोत्पथि पाथेयमेककः । स्वधनाप्तं स बुभुजे न स्वल्पमपि मे ददौ ॥ १९ ॥ ततस्तं दाम्भिकं ज्ञात्वा कृतघ्नमतिनिर्दयम् । सङ्गः परिहृतस्तस्य कृतघ्नो ज्ञेय ईदृशः ॥ २० ॥ यः कृतस्वाघनिर्वेशं नरं पापयुतं वदेत् । सोऽपि कृतघ्नवज्ज्ञेयो वर्ज्यस्तस्य च सङ्गमः ॥ २१ ॥

इति । नीरोगो रोगरहितत्वात्प्रस्थार्द्धपरिमिताशितघृतपाचनशक्तो जातः सन्नपि । स साधुः । एवं पूर्वोक्तरीत्या । अकरोत्तद्भारोद्वहनं मामकारयत् । स साधुः । पथि मार्गे । स्वधनाप्तं स्वधनं दत्त्वाऽऽनीतघृतगुडसुमनपिष्टकृतम् । पाथेयं सुखदादिशम्बलम् । एककः स्वयमेकाक्येव । बुभुजे आश । मे मह्यं तु । अल्पं ग्रासमात्रमपि । न ददौ ॥ १९ ॥ तत इति । ततस्तदनन्तरम् । त साधुम् । दाम्भिकं दम्भयुक्तम् । कृतघ्नमापत्कालकृतस्य स्वपरिचर्यागुणस्याज्ञत्वात्कदाचिदप्यणुमात्रस्याप्यन्नादेर्मह्यमदानात्तं मत्कृतं परिचर्यागुणं घ्नतम् । अतिनिर्दयं निःशेषतो दयावर्जितम् । ज्ञात्वा । तस्य सेवकरामाख्यकृतघ्नसाधोः । सङ्गः । परिहृतो मया त्यक्तः । ईदृश इत्थंभूतलक्षणः । कृतघ्नः । ज्ञेयः । इदं श्रीहरेश्चरित्रं यद्यपि सत्सङ्गिजीवने नोक्तं तथाप्यत्रोक्तेस्तत्र बोद्धव्यम् ॥ २० ॥ कृतघ्नलक्षणान्तरोक्तिपूर्वं तत्सङ्गत्यागमाह । य इति । यः पुरुषः । कृतस्वाघनिर्वेशं विहितस्वकृतपापयथाशास्त्रप्रायश्चितम् । नरम् । पापयुतं तत्कृततत्पातकसहितम् । वदेत् । स पुरुषोऽपि । कृतघ्नवत्कृतघ्नेन समानः । ज्ञेयः । तस्यैवंविधकृतघ्नस्य । सङ्गमश्च । वर्ज्यः ॥ २१ ॥

श्रुत्वेति । इत्येवंविधम् । सुधया अमृतेन सह । उपमेयमुपमातुं योग्यम् । हरेः । वाक्यम् । श्रुत्वा । सदःस्थाः सभायां निषण्णाः । पुरुषाः सर्वेऽपि भक्तजनाः । प्रसेदुरत्यन्तं प्रसन्ना बभूवुः । परोपकारप्रवणस्य परोपकाराचरणनम्रान्तःकरणस्य । तस्य श्रीहरेः । अङ्घ्रिद्वयं चरणपद्मयुगलम् आदरेण । प्रणेमुः ॥ २२ ॥ यो निःसीमातिशयितामाह स्वान्स्वकृपां प्रभुः । कृतघ्नलक्षणोक्त्या तं दयाब्धिं श्रीहरिं भजे ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवन्सूनुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां दशमस्तरङ्गः ॥ १० ॥

पश्चानां मायिकार्थानां वासनायाः क्षये सति । एकान्तिकत्वं सम्प्राप्यमित्येकादश ईरितम् ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८७६) मार्गशुक्लत्रयोदश्यां मार्गशीर्षमासायातशुक्लपक्षत्रयोदशीतिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमभूभुज उत्तमाख्यनृपतेः । गृहे दुर्गान्तर्वर्त्तिभवनाङ्गणे । त्यागिगृहिसभान्तःस्थो नानादेशायातसाधुगृहस्थसदो मध्यवर्त्तिमृदुलास्तरणासहासने निषण्णः । विशदांशुकः परिधृतपाण्डुरसकल-

श्रुत्वेति वाक्यं सुधयोपमेयं हरेः सदःस्थाः पुरुषाः प्रसेदुः । परोपकारप्रवणस्य तस्य प्रणेमुरङ्घ्रिद्वयमादरेण ॥ २२ ॥

इति श्री हरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते दशमस्तरङ्गः ॥ १० ॥

शकाब्दे विक्रमार्कस्य रसाश्ववसुभूमिते । मार्गशुक्लचतुर्दश्यां वचोऽमृतमिदं हरेः ॥ १ ॥
तत्र दुर्गपुरे स्वामी गृह उत्तमभूभुजः । त्यागिगृहिसभान्तस्थः स्वानाह विशदांशुकः ॥ २ ॥
वासनाया क्षयो यावन्न स्याद्धृदि मुमुक्षताम् । तावदेकान्तभक्तत्वं न स्यात्कृष्णस्य निश्चितम् ॥ ३ ॥
तं प्रणम्य पप्रच्छाथ ब्रह्मानन्दः सदुत्तमः । वासनायाः स्वरूपं त्वं वक्तुमर्हसि मामिति ॥ ४ ॥
तमुवाच हरिर्भुक्ता दृष्टा वा विषयाः श्रुताः । ये तेषां पुनराशीच्छा हृदि सा वासना मता ॥ ५ ॥

वसनः । स्वामी श्रीहरिः । स्वान्सभावस्थितस्वभक्तजनान् । आह 'अप्रेरितः शिष्यहितं विदध्यादि'ति गुरुलक्षणवाक्यात्केनाप्यपृष्टोऽपि स्वयमेव जगाद ॥ २ ॥ वासनाया इति । हे भक्ताः ! । मुमुक्षतां मोक्षेच्छावतां भक्तजनानाम् । हृदि मानसे । यावद्यावत्कालपर्यन्तम् । वासनाया मायिकार्थभावनायाः । 'भावना वासना ध्यानमि'ति अनेकार्थसंग्रहे हैमः । क्षयो विनाशः । न स्यात् । तावत्तावत्कालपर्यन्तम् । कृष्णस्य । एकान्तभक्तत्वमेकान्तिकभक्तभावः । न स्यात् । किन्तु तन्नाशे सत्येव तत्स्यात् । निश्चितमेव ॥ ३ ॥ तमिति । अथानन्तरम् । स उत्तमः सकलसाधुश्रेष्ठः । ब्रह्मानन्दो मुनिः तं श्रीहरिम् । प्रणम्य । हे हरे ! । त्वम् । वासनायाः । स्वरूपम् । माम् । वक्तुम् । अर्हसि । इतीत्थम् । पप्रच्छ । अत्र वासनाक्षयाभावे एकान्तिकभक्तत्वाभावश्रवणतो वासनास्वरूपप्रश्नोपन्यासस्तेन तन्नाशोपायप्रश्नोऽपि बोध्यः ॥ ४ ॥ वासनाया धर्मत्वात्तस्य पूर्वभुक्तदृष्टश्रुतविषयभूमित्वाद्धृदि तत्प्राप्तिध्यानं वासनेत्याह । तमिति । हरिः । तमेवं पृच्छन्तं ब्रह्मानन्दमुनिम् । उवाच । हे मुने ! । ये । विषयाः मायि-

काः पञ्चशब्दादय इन्द्रियभोग्यार्थाः । भुक्ताः प्राक् अनुभूताः । दृष्टाः पूर्वंविक्षिताः । अथवा श्रुताः कस्माच्चन पुंसः सकाशादाकर्णिताः । तेषां त्रिविधानामपि विषयाणाम् । हृदि मनसि । पुनर्भूयोऽपि । या । आप्तीच्छा तल्लब्धिवाञ्छा । पुनः पुनस्तत्प्राप्तिध्यानमित्यर्थः । सा । वासना । मता ॥ ५ ॥ अथ वासनाविनाशोपायकथनपूर्वकं वासनाविनाशेनैकान्तिकभक्तिसिद्धिमाह । कृत्वेति । महतां भगवत एकान्तिकभक्तानां साधूनाम् । प्रसङ्गम् । कृत्वा । कृष्णमाहात्म्यसंविदा श्रीकृष्णमहिम्नः सम्यगभिज्ञेन । येन भक्तेन । सा वासना । नाशिता मूलतो विनाशं गमिता । तस्य भक्तस्य । कृष्णभक्तिः । स्थिरा एकान्तिकीत्वान्निश्चला भवेत् ॥ ६ ॥ एतदेव स्पष्टमाह । कृष्णेति । यस्य भक्तस्य । हृदि मनसि कृष्णेतरपदार्थेच्छा भगवतोऽन्यपदार्थमात्रप्राप्तिवाञ्छा नष्टा । भवेत् । भगवन्महिम्नः सम्यग्वेदनेन विनष्टा स्यादित्यर्थः । ब्रह्मभूतो ब्रह्मभावं प्राप्तः । स उक्तविध एव । एकान्तिकः । कृष्णभक्तः । मतः ॥ ७ ॥ विनाशनीयेति । ततस्ततो हेतोरेव । कृष्णस्य । भक्तेन । विविक्तबुद्ध्या भगवतोऽनन्तैश्वर्यवत्त्वेन तत्स्वरूपस्थितमहासुखस्य तदितरपदार्थोपार्जननिष्ठमहादुःखस्य च विवेकेन युक्तया मत्या करणेन । सा तदितरविषयवासना । विनाशनीया अशेषतो विनाशं

कृत्वा प्रसङ्गं महतां कृष्णमाहात्म्यसंविदा । सा येन नाशिता तस्य कृष्णभक्तिः स्थिरा भवेत् ॥ ६ ॥
कृष्णेतरपदार्थेच्छा नष्टा यस्य भवेद्धृदि । ब्रह्मभूतः कृष्णभक्तः स एवैकान्तिको मतः ॥ ७ ॥ विनाशनीया तत
एव सा तु भक्तेन कृष्णस्य विविक्तबुद्ध्या । इत्थं सुधाभं वचनं निशम्य हरेः स साधुर्मुमुदे स सभ्यः ॥ ८ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते एकादशस्तरङ्गः ॥ ११ ॥

शकाब्दे विक्रमार्कस्य रसाश्ववसुभूमिते । मार्गशीर्षे पौर्णमास्यां वचोऽमृतमिदं हरेः ॥ १ ॥
हरिर्दुर्गपुरे तत्र गृह उत्तमभूभुजः । त्यागिगृहिसदोन्तःस्थो निजानूचे सिताम्बरः ॥ २ ॥

नेया । इत्थमेवंविधम् । सुधाभममृतसंमितम् । हरेः वचनं । निशम्य श्रुत्वा । स सभ्यः सभोपविष्टसकलभगवद्भक्तसहितः । सः । साधुर्ब्रह्मानन्दमुनिः । मुमुदे जहर्ष ॥ ८ ॥ स्वस्यैकान्तिकभक्तत्वमिच्छता वासनाऽखिला । हापिता येन स हरिर्नाशयत्वेवं तां मम ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्स्वनुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायामेकादशस्तरङ्गः ॥ ११ ॥

द्वादशे पुरुषादीनां लक्षणान्युदितान्यथ । सर्गादिकं तथैतेषां हरेर्धाम्नश्च लक्षणम् ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८७६) मार्गशीर्षे सहोमासे पौर्णमास्यां पूर्णिमातिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ हरिरिति । तत्र तिथौ । दुर्गपुरे । उत्तमभूभुजः । गृहे दुर्गान्तर्वर्त्तिभवनाजिरे । त्यागिगृहिसदोन्तःस्थो नानादेशागतसाधु–गृहस्थभक्तजनसभामध्यवर्तिमृदुलास्तरणमण्डितोच्च–रत्नसिंहासनोपविष्टः । सिताम्बरः स्वाङ्गधृतानर्घ्यसकलश्वेतवसनः । हरिः । निजान्स्वमुखदत्तेक्षणस्वकीयभक्तजनान् । ऊचे स्वत एव कथयामास ॥ २ ॥

पुरुषमिति । पुमान्मुमुक्षुः । यदा यर्हि । पुरुषं मुलप्रकृत्यधिष्ठातारम् । प्रकृतिं मूलमायाम् । इमौ प्रधानप्रकृतीनां तदधिष्ठातृपुरुषाणां चोपलक्षणम् । कालं प्रकृतिसाम्यावस्थाचालकम् । तत्त्वानि महदादीनि च । स्वरूपतस्तु तद्यथाविधस्वरूपतया । सम्यग्यथार्थतः । वेत्ति साक्षाद्भगवत्तद्भक्तमुखाज्जानाति । तर्हि । तद्बन्धादनादिकालतः स्वनिष्ठात्कार्यकारणरूपमायाख्याद्बन्धनात् । मुच्यते । एतेषां वेदनपूर्वं साक्षाद्भगवदेकान्तिकभक्त्याचरणेन ततो विमुक्तो भूत्वा ब्रह्मात्मना तत्सेवायां सदावस्थितो भवतीत्यर्थः ॥ ३ ॥ मुक्तानन्द इति । अथानन्तरम् । मुक्तानन्दः । साधुः । तं श्रीहरिम् । नत्वा विनयेन प्रणम्य । पप्रच्छ । हे सत्पते ! । अहम् । एतेषां पुरुषादीनाम् । स्वरूपाणि । पृथक्पृथक् । बुभुत्सामि बोद्धुमिच्छामि ॥ ४ ॥ तमिति । हरिः । तमेवं पृच्छन्तं मुक्तानन्दमुनिम् । उवाच । हे साधो ! । पुराणप्रथितैः श्रीमद्भागवतादिपुराणविख्यातैः । लक्षणैः । पृथक्पृथक् । ज्ञातव्यानि । एषां पुरुषादीनाम् । रूपाणि । ब्रूवे तुभ्यं कथयामि ॥ ५ ॥ तत्रादौ पुरुषलक्षणमाह सार्द्धेन । नियन्तेति । प्रकृतेः । नियन्ता नियामकः । तस्याः प्रकृतेः सकाशात् । विजातीयः स्वरूपतः स्वभावतश्चात्यन्तविलक्षणः । स्वयम्प्रभः स्वप्रकाशः । अनाद्यन्त आद्यन्तवर्जितः । अक्षरोऽक्षरब्रह्मस्वरूपः । सत्यः

पुरुषं प्रकृतिं कालं तत्त्वानि च यदा पुमान् । वेत्ति स्वरूपतः सम्यक् तद्बन्धात्तर्हि मुच्यते ॥ ३ ॥ मुक्तानन्दोऽथ तं साधु र्नत्वा पप्रच्छ सत्पते ! । बुभुत्साम्यहमेतेषां स्वरूपाणि पृथक्पृथक् ॥ ४ ॥ तमुवाच हरिः साधो ! रूपाण्येषां तु लक्षणैः । ब्रुवे पुराणप्रथितै र्ज्ञातव्यानि पृथक्पृथक् ॥ ५ ॥ नियन्ता प्रकृतेस्तस्या विजातीयः स्वयम्प्रभः । अनाद्यन्तोऽक्षरः सत्यः सर्वज्ञो दिव्यविग्रहः ॥ ६ ॥ क्षेत्रज्ञः सकलाकारप्रवृत्तेर्हेतुरीश्वरः । इत्येतैर्लक्षणैर्ज्ञेयः पुरुषः प्रकृतिं शृणु ॥ ७ ॥ नित्या च भगवच्छक्तिस्त्रिगुणा चिज्जडात्मिका । निर्विशेषा जीवमहत्तत्त्वादिक्षेत्रमव्यया ॥ ८ ॥

कालत्रयेऽप्यबाधितस्वरूपः । सर्वज्ञः । दिव्यविग्रहोऽमायिकः शरीरः ॥ ६ ॥ क्षेत्रज्ञ इति । क्षेत्रज्ञो मायातत्कार्यवित् । सकलाकारप्रवृतेः । हेतुः कारणम् । प्रलयकाले मायोदरे लीनानां जीवेश्वराणां तत्तत्कर्मानुगुणं करणकलेवरप्रदानतत्प्रवृत्तिहेतुरित्यर्थः । ईश्वरः सकलैश्वर्यपतिः । इत्येवंविधैः । एतैः पूर्वोक्तैः । लक्षणैः । पुरुषः । ज्ञेयः । एतत्प्रधानपत्युः पुरुषस्याप्युपलक्षणम् । एतयोर्लक्षणविशेषः सत्सङ्गिजीवनचतुर्थप्रकरणस्याष्टषष्टितमादध्यायाज्ज्ञेयः । अथ । प्रकृतिं प्रकृतिलक्षणम् । शृणु ॥ ७ ॥ नीत्येति । नित्या ध्रुवा । 'अजां ध्रुवामि'ति श्रुतेः । भगवच्छक्तिः । 'देवात्मशक्तिं स्वगुणैर्निगूढामि'ति श्रुतेः 'स्वशक्त्या मायया युक्त' इति श्रीभागवतोक्तेश्च । त्रिगुणा सत्त्वादित्रिगुणात्मिका । 'दैवी ह्येषा गुणमयी'ति श्रीभगवद्गीतोक्तेः । चिज्जडात्मिका व्यक्तस्वरूपिणी । 'प्रकृतिर्या मया ख्याता व्यक्ताव्यक्तस्वरूपिणी'ति विष्णुपुराणोक्तेः । निर्विशेषा कारणावस्थायां पृथिव्यादिविशेषवर्जिता । 'अविशेषं विशेषवदि'ति श्रीभागवते कपिलोक्तेः । जीवाश्च महत्तत्त्वादीनि च तेषां क्षेत्रं व्रीह्यादिकस्य केदार इव देहोत्पत्तिक्षेत्ररूपा । उपलक्षणमिदं स्थितिप्रलययोः । 'एषा माया भगवतः सर्गस्थित्यन्तकारिणी'ति श्रीभागवते योगेश्वरोक्तेः । अव्यया नित्यत्वाद्व्ययवर्जिता । स्वकार्यरूपजीवगताज्ञाननाशेऽपि स्वयमविनाशेत्यर्थः ॥ ८ ॥

इतीति । इत्यमुना प्रकारेण । प्रकृतिर्माया । उक्ता लक्षणैः कथिता । कार्यकारणयोरभिन्नत्वादियं प्रधानप्रकृतिरूपलक्षणम् । अथ काललक्षणमाह । तस्याः महामायाकार्यप्रधानप्रकृतेः । साम्यस्थगुणचालनः समभावावस्थितप्रकृतिगुणक्षोभकः । कालः । ज्ञेयः । 'प्रकृतेर्गुणसाम्यस्य निर्विशेषस्य मानवि । चेष्टा यतः स भगवान् काल इत्युपलक्षित' इति श्रीभागवते कपिलोक्तेः । अथ महत्तत्त्वलक्षणमाह चतुरक्षराधिकसपादश्लोकेन । महत्तत्त्वम् । चित्तैक्येन चित्तेन सहैकभावेन । प्रकीर्त्तितम् । 'चित्तं यन्महदात्मकमि'ति श्रीभागवते कपिलोक्तेः ॥ ९ ॥ शुद्धेति । शुद्धसत्वमयं रजस्तमोऽनभिभूतशुद्धसत्त्वप्रधानम् । शान्तमुपशमस्वभावम् । कूटस्थं विकारोत्पत्त्याधारवत्त्वेऽपि स्वतस्तद्विकारवर्जितम् । अतिनिर्मलमतिस्वच्छम् । जगदङ्कुररूपं जगत्कारणरूपम् । तन्महत्तत्त्वमपि । लक्षणैरुक्तविधलक्ष्मभिः । ज्ञेयम् ॥ १० ॥ अहङ्कारलक्षणमाह । शान्तेति । त्रिगुणः वैकारिक तैजस तामसरूपेण त्रिगुणात्मकः । अहङ्कारः । शान्तः घोर विमूढात्मा प्रकाशकत्व विक्षिप्तत्व मूढत्वस्वरूपः । मतः । भूतानां पृथिव्यादीनाम् । इन्द्रियाणां श्रोत्रादिकानाम् । तद्देवतानां दिगादितद्देवतानां च । कारणमपि तमो रजः सत्त्वरूपेण हेतुश्च । मतः । कर्त्तृत्वं करणत्वं च कार्यत्वं चेति लक्षणम् ।

इत्युक्ता प्रकृतिस्तस्याः साम्यस्थगुणचालनः । कालो ज्ञेयो महत्तत्त्वं चित्तैक्येन प्रकीर्त्तितम् ॥ ९ ॥
शुद्धसत्वमयं शान्तं कूटस्थं चातिनिर्मलम् । जगदङ्कुररूपं च ज्ञेयं तदपि लक्षणैः ॥ १० ॥
शान्तघोरविमूढात्माऽहङ्कारस्त्रिगुणो मतः । भूतानामिन्द्रियाणां तद्देवानां चापि कारणम् ॥ ११ ॥
मनस्तु कामनाहेतुः सर्वेन्द्रियनियन्तृ च । दुर्निग्रहं च सङ्कल्पविकल्पात्मकमुच्यते ॥ १२ ॥
ज्ञेया निश्चयकर्त्री धीर्ज्ञानविज्ञानरूपिणी । संशयश्च विपर्यासः स्मृतिर्निद्रा च तद्गुणाः ॥ १३ ॥
महत्तत्वमहङ्कारो मनो बुद्धिश्चतुष्टयम् । अन्तःकरणमित्युक्तं शुद्धे यत्र हरिः स्फुरेत् ॥ १४ ॥

'शान्त—घोर—विमूढत्वमिति वा स्यादहङ्कृतेरि'ति श्रीभागवतोक्तेः ॥ ११ ॥ अथ मनसो लक्षणमाह । मन इति । कामनाहेतुर्नानाविधविषयोपभोगेच्छाकारणम् । सर्वेषामिन्द्रियाणां नियन्तृ अनुग्राहकत्वेन नियामकम् । मनोनुग्राहकत्वं विनेन्द्रियाणां स्वस्वविषयग्रहणेऽसमर्थत्वात् । 'नान्यत्र मना अश्रौषमि'त्यादिश्रुतेः । दुर्निग्रहं चञ्चलस्वभावत्वाद्ग्रहीतुमशक्यम् । 'मनोदुर्निग्रहं चलमि'ति भगवद्गीतोक्तेः सङ्कल्पविकल्पात्मकं देहादेरात्मनश्चापृथक्त्वेन चिन्तनं सङ्कल्पः विषयचिन्तनं विकल्पस्तावात्मास्वरूपं यस्य तथा भूतम् । मनः । उच्यते । मनस एतानि लक्षणानि सन्तीत्यर्थः ॥ १२ ॥ अथ बुद्धेर्लक्षणमाह । ज्ञेयेति । धीर्बुद्धिः । निश्चयकर्त्री यथार्थनिश्चयकारिणी । ज्ञेया । ज्ञानविज्ञानरूपिणी सामान्य विशेषज्ञानरूपा च ज्ञेया । संशयो विकल्पज्ञानम् । विपर्यासो विपरीतज्ञानम् । स्मृतिरनुभूतार्थविज्ञानम् । निद्रा स्वापश्च । तद्गुणा बुद्धेर्लक्षणानि । ज्ञेयाः ॥ १३ ॥ अथान्तःकरणस्वरूपमाह । महत्त्वमिति । महत्तत्त्वं चितम् । महत्तत्त्वं चित्तैक्येन प्रकीर्त्तितमिति प्रागुक्तेः । अहङ्कारः । मनः । बुद्धिः । चतुष्टयमेतच्चतुष्कम् । अन्तःकरणमित्यन्तःकरणनाम्ना । उक्तम् । यत्र यस्मिन्नन्तःकरणे । शुद्धे भगवदितरविषयानुरागाकलुषिते सति । हरिः । स्फुरेत् तत्र हरिध्यानं सम्यक् स्यादित्यर्थः ॥ १४ ॥

अथ ज्ञानकर्मेन्द्रियाण्याह । श्रोत्रमिति । श्रोत्रं श्रवणेन्द्रियम् । त्वक् त्वगिन्द्रियम् । अक्षि चक्षुरिन्द्रियम् । रसना रसनेन्द्रियम् । घ्राणं घ्राणेन्द्रियम् । ज्ञानेन्द्रियाणि एतानि पञ्च ज्ञानेन्द्रियाणि ज्ञेयानि । वाग्वागिन्द्रियम् । पाणिः पाण्याख्येन्द्रियम् । चरणः पादेन्द्रियम् पायुर्गुदेन्द्रियम् । मेढं शिश्नेन्द्रियम् । कर्मेन्द्रियाणि एतानि पञ्च कर्मेन्द्रियाणि ज्ञेयानि ॥ १५ ॥ द्विविधानामपीन्द्रियाणां लक्षणान्याह । बाह्येति । एतेषाम् । दशानाम् । बाह्येन्द्रियाणाम् । लक्षणानि तु । पृथक्पृथक् । नियतो नियमेन तेन तेनैव ग्राह्यश्चासौ स्वस्वविषयश्च तस्य ग्राहकत्वं स्वीकर्तृत्वम् । यथा चक्षुषो रूपग्राहकत्वमेवं नियततया स्वस्वविषयग्रहणानीन्द्रियलक्षणानि ज्ञेयानीत्यर्थः ॥ १६ ॥ अथ नियतास्तत्तदिन्द्रियाणां स्वस्वविषयग्रहणलक्षणाः क्रियाः स्पष्टमाह द्वाभ्याम् । शब्देति । श्रोत्रं श्रोत्रेन्द्रियम् । शब्दग्राहि शब्दरूपनियतस्वविषयग्राहकम् मतम् । तथा । त्वक् त्वगिन्द्रियम् । स्पर्शग्राहिणी स्पर्शरूपनियतस्वविषयग्राहिका । मता । अक्षि चक्षुरिन्द्रियम् । रूपग्राहकं रूपनियतस्वविषयग्राहकम् । स्यात् । रसना रसनेन्द्रियम् । रसग्रहा रसरूपनियतस्वविषयग्राहिणी । स्यात् ॥ १७ ॥ घ्राणमिति । घ्राणं घ्राणेन्द्रियम् । गन्धग्राहकं गन्धरूपनियतस्वविषयग्रहणकर्तृ । स्यात् । इत्यनेन

**श्रोत्रं त्वक् चाक्षि रसना घ्राणं ज्ञानेन्द्रियाणि हि । वाक् पाणिश्चरणः पायुर्मेढ्रं कर्मेन्द्रियाणि च ॥ १५ ॥ बाह्येन्द्रियाणामेतेषां दशानां लक्षणानि तु । नियतस्वस्वविषयग्राहकत्वं पृथक्पृथक् ॥ १६ ॥ शब्दग्राहिमतं श्रोत्रं त्वक् स्पर्शग्रहिणी तथा । रूपग्राहकमक्षि स्याद्रसना च रसग्रहा ॥ १७ ॥ घ्राणं गन्धग्राहकं चेत्येता ज्ञानेन्द्रियक्रियाः । कर्मेन्द्रियक्रियास्तूक्तिः पणोऽर्त्युत्सर्जने रतिः ॥ १८ ॥ शब्दः स्पर्शो रूपरसगन्धा मात्रा इतीरिताः । तत्र शब्दः खस्य मात्राऽर्थाश्रयो द्रष्टृलिङ्गकः ॥ १९ ॥ शीतोष्णादिगुणः स्पर्शो मात्रा चासौ नभस्वतः । रूपं तु तेजसो मात्रा नीलपीतादिभेदवत् ॥ २० ॥**

प्रकारेण । एताः सर्वाः । ज्ञानेन्द्रियक्रियाः श्रोत्रादिज्ञानेन्द्रियकर्माणि । भवन्ति । उक्तिर्वचनम् । इयं वागिन्द्रियनियतविषयः । पणो दानादानरूपो व्यवहारः । अयं हस्तेन्द्रियनियतविषयः । अर्तिर्गतिश्च उत्सर्जनं मलत्यागश्च ते । तत्रार्त्तिः पादेन्द्रियनियतविषयः । उत्सर्जनं पाय्विन्द्रियनियतविषयः । रतिः कामोपभोगानन्दः । इयमुपस्थेन्द्रियनियतविषयः । इत्येतास्तु । कर्मेन्द्रियक्रियाः वागादिकर्मेन्द्रियकर्माणि भवन्ति ॥ १८ ॥ अथ कार्यरूपाणामाकाशादिमहाभूतानां कारणत्वेन शब्दादीनामल्पत्वात्तेषां मात्रानामोक्तिपूर्वकं तल्लक्षणान्याह त्रिभिः । शब्द इति । शब्दः । स्पर्शः । रूपं च रसश्च गन्धश्च ते । एते पञ्च । मात्राः । इति । ईरिताः । तत्र तेषु शब्दादिषु मध्ये । शब्दः खस्याकाशस्य । मात्रा असाधारणो गुणः सूक्ष्मत्वं वा । अर्थाश्रयः अर्थवाचकः द्रष्टृलिङ्गकः द्रष्टुर्ज्ञापकः । दृश्यलिङ्गकश्च । तद्यथा । कुड्याद्यन्तरितेन केनचिदुच्चैर्गजोगज इत्युक्ते यो गजद्रष्टा च तेन दृश्यो गजस्तयोर्बोधकः । ईरितः ॥ १९ ॥ शीतेति । स्पर्शः शीतोष्णादिगुणः । प्रोक्तः । आदिशब्दान्मृदुत्वकठिनत्वादीनां ग्रहणम् । असौ स्पर्शः । नभस्वतो वायोः । मात्रा च । प्रोक्तः । रूपं तु । तेजसः । मात्रा । नीलपीतादि भेदवत् नीलपीतादिषोडशप्रकारम् । प्रोक्तम् । एतस्य षोडशप्रकाराः सत्सङ्गिजीवनचतुर्थप्रकरणस्यैकोनसप्ततितमाद्ध्यायाज्ज्ञेयाः । द्रव्याकृतित्वादन्येऽप्येतस्य प्रकाराः श्रीभागवतस्थकपिलगीताया ज्ञेयः ॥ २० ॥

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.





मात्रेति । रसः । अम्भसो जलस्य । मात्रा । मधुराम्लादिभेदवान् । मधुरादिषट्प्रकारः । प्रोक्तः । ते रसभेदा यथा । मधुरो लवणस्तिक्तः कटुरम्लः कषायक इति सत्सङ्गिजीवने ज्ञानोपदेशे । गन्धः । पृथिव्याः । मात्रा । सौरभ्यादिभिदा सौरभ्यशान्तोग्रादिभेदेन । उदितः । तथा चोक्तं श्रीभागवते । 'करंभ, पूति, सौरभ्य, शान्तोग्राम्लादिभिः पृथगि'ति ॥ २१ ॥ अथाकाशादीनां महाभूतनामोक्तिपूर्वकं तल्लक्षणान्याह सार्द्धैस्त्रिभिः । नभ इति । नभ आकाशं च नभस्वान्वायुश्च तेजश्च तानि । धारि जलम् । भूः पृथिवी । इति पञ्चकम् । महाभूताख्यम् । सर्वदेहादिकारणम् । आदिशब्देन भोग्य, भोगोपकरण, भोगस्थानानां ग्रहणम् । उदितं कथितम् ॥ २२ ॥ अवकाशदमिति । आकाशम् । अवकाशम् । अवकाशदं भूतानां छिद्रदातृ । प्राणाश्च इन्द्रियाणि च आत्मा मनश्च तेषाम् । धिष्ण्यमाश्रयदातृ । उदितम् । अत्रास्य बहिरन्तरव्यवहारास्पदत्वमनुक्तमपि ज्ञेयम् । 'बहिरन्तरमेव चे'ति श्रीभागवते उक्तः । वायुः । व्यूहनस्तृणादेर्मेलनः । विभागकरण इत्येके । चलनो वृक्षशाखादेरितस्तत आन्दोलकः । शब्दगन्धादिनायकः शब्दगन्धस्पर्शानां तत्तदिन्द्रियप्रापकः । उदितः । अत्रास्य सर्वेन्द्रियात्मत्वमनुक्तमपि ज्ञातव्यम् । 'सर्वेन्द्रियाणामा-

मात्राम्भसो रसः प्रोक्तो मधुराम्लादिभेदवान् । गन्धः पृथिव्या मात्रा च सौरभ्यादिभिदोदितः ॥ २१ ॥
नभोनभस्वतेजांसि वारि भूरिति पञ्चकम् । महाभूताख्यमुदितं सर्वदेहादिकारणम् ॥ २२ ॥
अवकाशदमाकाशं धिष्ण्यं प्राणेन्द्रियात्मनाम् । व्यूहनश्चलनो वायुः शब्दगन्धादिनायकः ॥ २३ ॥
द्योतनं पाचनं पानं तेजश्च हिममर्दनम् । क्लेदनं पिण्डनं शीतं प्राणनाप्यायनं जलम् ॥ २४ ॥
आकारहेतुः पृथिवी सर्वधारणकर्त्र्यपि । एवं स्वरूपाण्येतेषांज्ञेयानि बन्धमुक्तये ॥ २५ ॥
जन्माद्यपि तथैतेषां ज्ञातव्यं तत्सहायकृत् । अतः क्रमेण तद्वच्मि सर्वे श्रुण्वन्तु साधवः ॥ २६ ॥

त्मत्वमि'ति श्रीभागवतोक्तः ॥ २३ ॥ द्योतनमिति । तेजः । द्योतनं प्रकाशनम् । पाचनं तण्डुलादेः पक्तिकरणम् । पानम् । चकाराददनम् । एतद्द्वयं पिपासाऽशनाया-द्वाराज्ञेयम् । हिममर्दनं शीतापहारकम् । उदितम् । अत्रानुक्ता अपि दुर्द्धर्षतादयस्तद्वृत्तयो ज्ञेयाः । जलम् । क्लेदनमार्द्रीकरणम् । पिण्डनं मृदादेः पिण्डीकरणम् । शीतं स्वभावतः शीतलम् । प्राणनं च आप्यायने च तयोः समाहारः । तत्र प्राणनं जीवनम् । आप्यायनं तृड्वैक्लव्यनिवर्त्तनम् । उदितम् । अत्रानुक्ता अपि तृप्तिमृदु-करणतापापनोद भूयस्त्वादयोऽस्य वृत्तयो ज्ञातव्याः ॥ २४ ॥ आकारेति । पृथिवी । आकारहेतुः सर्वेषां प्राणिनां पुंस्त्वाद्याकारविशेषकारणम् । सर्वधारणकर्त्री सर्व-प्राण्यादिनामधिकरणरूपा । उदिता । अपिश्चार्थे । तेन ब्रह्मणोभावनस्थानसद्विशेषणादेर्ग्रहणम् । एवममुना प्रकारेण । एतेषां पुरुषादीनाम् । स्वरूपाणि । बन्धमुक्तये पूर्वोक्तप्रकारेण बन्धनिवृत्तये । ज्ञेयानि ॥ २५ ॥ जन्मेति । तथा तेन प्रकारेणैव । तत्सहायकृद्बन्धनिवृत्तौ सहायकारकम् । एतेषां पुरुषादीनाम् । जन्मादि उत्पत्तिस्थिति-भङ्गमपि । ज्ञातव्यम् । अतो हेतोः । क्रमेणानुक्रमेण । तज्जन्मादि । वच्मि अहं तुभ्यं कथयामि । सर्वे । साधवः । श्रुण्वन्तु । भवन्तमेकमुद्दिश्य यद्यपि वच्मि तथाप्येतस्य मद्वाक्यस्य सर्वहितत्वात्सर्वेऽप्याकर्णयन्त्वित्यर्थः ॥ २६ ॥

श्रीकृष्णेति । हे मुने ! । भगवान्सकलैश्वर्यसम्पन्नतयाऽक्षरब्रह्माख्यस्वधामावस्थितः । श्रीकृष्णः । आदौ प्रथमम् । स्वेच्छया स्वसङ्कल्पेन । अक्षराख्यपुमात्मना पूर्वमक्षरब्रह्मतेजसि । प्रसुप्तमक्षराख्यं पुरुषं प्रबोध्य तेनाक्षरसंज्ञपुरुषरूपेण । मायायां मूलप्रकृतौ । ईक्षणेनैव वीक्षणमात्रेण । गर्भम् । आदधौ दधार ॥ २७ ॥ तत इति । हे मुने ! । ततो मूलप्रकृतेः सकाशात् । प्रधानपुरुषकोटयः । अपरिमितानि । प्रधानपुरुषद्वन्द्वानीत्यर्थः । अभवन्प्रादुर्बभूवुः । ईश्वरेच्छया परमेश्वरश्रीकृष्णसङ्कल्पेन । तेभ्यः प्रधानपुरुषद्वन्द्वेभ्यः । ब्रह्माण्डकोटयोऽसङ्ख्यातानि ब्रह्माण्डानि च । भवन्ति स्म ॥ २८ ॥ तत्रेति । तत्र तेषु ब्रह्माण्डेषु मध्ये । मया । एकतमब्रह्माण्डसम्भवः । कथ्यते । तेनैकब्रह्माण्डसम्भवकथनेन । सर्वेषाम् । अण्डानां ब्रह्माण्डानाम् । सम्भवोऽपि । अनुमेयः ॥ २९ ॥ अथैकब्रह्माण्डसम्भवमाह । कृष्ण इति । कृष्णः श्रीकृष्णपरमात्मा । पुरुषरूपेण प्रधानाधिष्ठातृपुरुषात्मना । प्रधानाख्यप्रकृतौ । ईक्षणं संवीक्षणात्मकम् । गर्भम् । दधार । अथानन्तरम् । ततः प्रधानप्रकृतेः सकाशात् । चित्तात्मकं चित्तरूपम् । महत्तत्त्वम् अभूत् ॥ ३० ॥ तस्मादिति । तस्मान्महत्तत्त्वात् । त्रिगुणः सात्त्विको राजसस्तामस इत्थं त्रिगुणात्मकः । अहङ्कारः ।

श्रीकृष्णो भगवानादावक्षराख्यपुमात्मना । मायायामीक्षणेनैव स्वेच्छया गर्भमादधौ ॥ २७ ॥ ततः प्रधानपुरुषकोटयश्चाभवन्मुने ! । ब्रह्माण्डकोटयस्तेभ्यो भवन्ति स्मेश्वरेच्छया ॥ २८ ॥ तत्रैकतमब्रह्माण्डसम्भवः कथ्यते मया । तेनानुमेयः सर्वेषामण्डानामपि सम्भवः ॥ २९ ॥ कृष्णः पुरुषरूपेण प्रधाने गर्भमीक्षणम् । दधाराथ महत्तत्त्वं चित्तात्मकमभूत्ततः ॥ ३० ॥ तस्मादभूदहङ्कारस्त्रिगुणस्तत्र सात्त्विकात् । मन इन्द्रियदेवाश्च राजसादिन्द्रियासवः ॥ ३१ ॥ तामसाच्छब्दतन्मात्राद्द्वाराकाशमजायत । ततः स्पर्शस्ततो वायुस्ततो रूपं ततोऽनलः ॥ ३२ ॥ ततो रसस्ततश्चापस्ततो गन्धस्ततश्च भूः । भिन्नभिन्नस्वभावानि तत्त्वान्येतानि देवताः ॥ ३३ ॥ अन्तर्यामितया कृष्णाविष्टान्येतानि सर्वशः । संहत्य जीवेशतनूः स्वस्वांशैः ससृजुस्ततः ॥ ३४ ॥

अभूत् । तत्र तस्मिन्सात्त्विकादित्रिविधाहङ्कारमध्ये । सात्त्विकादहङ्कारात् । मनश्च इन्द्रियदेवाश्च ते । अभूवन् । राजसादहङ्कारात् । इन्द्रियाणि च असवः प्राणाश्च ते । अभूवन् । अत्रानुक्तापि राजसाहङ्काराद्बुद्धिरभूदिति ज्ञेयम् ॥ ३१ ॥ तामसादिति । तामसादहङ्कारात् । शब्दतन्मात्राद्द्वारा आकाशम् । अजायत । तामसाहङ्कारात्प्रथमः शब्दो भवत्तत आकाशोऽजायतेत्यर्थः । तत आकाशात् । स्पर्शो वायुतन्मात्रा । अजायत । ततः स्पर्शात् । वायुः । अजायत । ततो वायोः । रूपं तेजस्तन्मात्रा । अजायत । ततो रूपात् । अनलस्तेजःपर्यायोऽग्निः । अजायत ॥ ३२ ॥ तत इति । ततोऽनलात् । रसोऽप्तन्मात्रा । अजायत । ततो रसात् । आपो जलानि । अजायन्त । ततस्ताभ्योऽद्भ्यः । गन्धो भूतन्मात्रा । अजायत । ततस्तस्माद्गन्धात् सकाशात् । भूः पृथिवी । अजायत । भिन्नभिन्नस्वभावानि । एतानि । तत्त्वानि । देवताः देवतारूपाणि । ज्ञेयानि ॥ ३३ ॥ अन्तरिति । सर्वशः सर्वाणि । एतानि तत्त्वानि । अन्तर्यामितयान्तर्यामिरूपेण । कृष्णाविष्टानि श्रीकृष्णेन कृतप्रवेशानि । अभूवन्निति शेषः ।

ततो हेतोः । संहत्यैतानि परस्परं मिलित्वा । स्वस्वांशैः स्वकीयैः स्वकीयैः कार्यैः । जीवा असुभृतश्च ईशो वैराजाख्येश्वरश्च तेषां तनूर्देहान् । समृजुरुत्पादयामासुः ॥ ३४ ॥ तत्रेशतनूराह विराडिति । ईशितुरीश्वरस्य । विराट् च सूत्रं च अव्याकृतं च तानि आख्या नामानि यस्य तत् । देहत्रितयम् । ज्ञेयम् । अथ जीवतनूराह । स्थूलं च सूक्ष्मं च कारणं च तान्येव संज्ञाः सञ्जाता अस्येति तथाविधम् । जीवानां देहत्रयम् । ज्ञेयम् ॥ ३५ ॥ ईश्वरस्य स्वरूपत एकत्वेऽपि देहत्रयसम्बन्धेन तत्संज्ञात्रयमाह सार्द्धेन । विराडिति । विराट्देहाभिमानी । वैराजो वैराजसंज्ञः । सात्त्विकः सत्त्वगुणप्रधानः । सर्वपालकः सर्वेषां स्थितिकर्त्ता । ज्ञेयः । सूत्राङ्गः सूत्राख्यशरीराभिमानी । हिरण्यगर्भ एव संज्ञः । राजसो रजोगुणप्रधानः जगत्स्रष्टा विश्वसृष्टिकर्त्ता । ज्ञेयः ॥ ३६ ॥ तामस इति । अव्याकृतात्मा अव्याकृतदेहाभिमानी । ईश ईश्वरसंज्ञः । तामसस्तमोगुणप्रधानः । सर्वसंहारकारकः सकलविश्वप्रलयकर्त्ता । ज्ञेयः । वैराजस्य । आयुषः । कालः । द्विपरार्द्धावधिर्द्विपरार्धावसानः । स्मृतः ॥ ३७ ॥ सहस्रेति । तस्य वैराजस्य । दिनं दिवसः । सहस्रयुगपर्यन्तं सहस्रवारावृत्तकृतादियुगचतुष्टयावसानमित्यर्थः । रात्रिश्च । तावती सहस्रयुगपर्यन्ता । भवति । तस्य । यावद्याव-

विराट्सूत्राव्याकृताख्यं देहत्रितयमीशितुः । जीवदेहत्रयं स्थूलसूक्ष्मकारणसंज्ञितम् ॥ ३५ ॥ विराट्देही तु वैराजः सात्त्विकः सर्वपालकः । हिरण्यगर्भः सूत्राङ्गो जगत्स्रष्टा च राजसः ॥ ३६ ॥ तामसोऽव्याकृतात्मेशः सर्वसंहारकारकः । वैराजस्यायुषः कालो द्विपरार्द्धावधिः स्मृतः ॥ ३७ ॥ सहस्रयुगपर्यन्तं दिनं रात्रिश्च तावती । तस्य यावद्दिनं तावत् त्रिलोक्या वर्त्तते स्थितिः ॥ ३८ ॥ एकस्मिन्वासरे तस्य चतुर्दश चतुर्दश । भवन्तीन्द्राश्च मनवो जगतः स्थितिहेतवः ॥ ३९ ॥ त्रैलोक्यं नाशमायाति तद्रात्रौ प्रलयेऽखिलम् । दैनंदिनः स प्रलयः प्रोक्तो नैमित्तिकस्तथा ॥ ४० ॥ द्विपरार्द्धावसाने तु विराट्लोकाश्चतुर्दश । प्रलयं यान्ति सांवर्त्तपवनानलवारिभिः ॥ ४१ ॥ महदादीनि तत्त्वानि प्रधानपुरुषौ तथा । प्रकृतौ लयमायान्ति प्राकृतः प्रलयोऽस्त्यसौ ॥ ४२ ॥

त्कालपर्यन्तम् । दिनं दिवसो भवति । तावत्तावत्कालपर्यन्तम् । त्रिलोक्याः । स्थितिः । वर्त्तते ॥ ३८ ॥ एकस्मिन्निति । तस्य वैराजस्य । एकस्मिन् । वासरे । जगतः । स्थितिहेतवः । चतुर्दश । इन्द्राः । चतुर्दश । मनवः । भवन्ति जायन्ते । उपलक्षणमेतदृषि-देव-मनुपुत्रषड्गुस्थ-भगवदवताराणाम् ॥३९॥ त्रैलोक्यमिति । तद्रात्रौ वैराजस्य निशायां जातायां सत्याम् । प्रलये जाते सति । अखिलम् । त्रैलोक्यं पातालादिस्वर्गान्ता दशलोका इत्यर्थः । नाशम् । आयाति प्राप्नोति । सः । प्रलयः । दैनंदिन एतन्नामकः । तथा । नैमित्तिक एतत्संज्ञः । प्रोक्तः ॥ ४० ॥ अथ प्राकृतप्रलयमाह द्वाभ्याम् । द्विपरार्द्धेति । द्विपरार्द्धावसाने विराट्पुरुषस्यायुषः समाप्तौ तु । विराट् वैराजपुरुषदेहः । चतुर्दश । लोकाः विराट्देहाधाराः पातालादिसत्यलोकान्ताश्चतुर्दशापि लोकाः । सांवर्त्तानि प्रलयकालभवानि यानि पवनो वायुश्च अनलोऽग्निश्च वारि जलं च तैः । प्रलयम् । यान्ति ॥४१॥ महदिति । महदादीनि । तत्त्वानि । तथा । प्रधानपुरुषौ । एतानि । प्रकृतौ मूलमायायाम् । लयम् । आयान्ति । असौ प्राकृतः । प्रलयः । ज्ञेयः ॥४२॥

अथात्यन्तिकं प्रलयमाह । कृष्णेति । यदा । कृष्णेच्छया । सा । प्रकृतिर्मूलमाया । अक्षरतेजसि । अक्षरब्रह्मणः प्रकाशे । लीयते दिवसे रात्रिरिव तिरो भवति । तदा तस्मिन्काले । यः प्रलयः । जायते । असौ । आत्यन्तिक इति । ईरितः कथितः । एवमत्रानुक्तोऽपि देव दैत्य मनुष्यादिदेहानां प्रतिक्षणं वर्त्तमानो नाशो नित्यप्रलयो ज्ञेयः ॥ ४३ ॥ एवमिति । एवममुना प्रकारेण । यः मुमुक्षुपुरुषः । विश्वभवादीनि जगदुत्पत्तिस्थितिलयान् । तत्त्वतो याथार्थ्येन । विजानाति । तस्य मुमुक्षोः । कृष्णे । भक्तिः । भवेत् । इतरत्र श्रीकृष्णेतरमायिकपदार्थेषु । विरक्तिर्वैराग्यं च । भवेत् । एतावता विश्वोत्पत्त्यादीनां तत्त्वतो ज्ञानेन तन्मुख्यफलरूपा सवैराग्या श्रीकृष्णभक्तिर्भवेत्तया तदन्वासयफलरूपाऽनादिबन्धविमुक्तिर्जायते इत्यर्थात्सिद्धं ज्ञेयम् ॥ ४४ ॥ प्रलय इति । कृष्णभक्ताः साक्षाच्छ्रीकृष्णमेकान्तिकभावेन भजन्तो जनास्तु । प्रलये चतुर्विधान्यतमे लये । भगवद्धाम श्रीकृष्णपदम् । यान्ति । अन्ये श्रीकृष्णभक्तेतरे । सर्वशः सर्वे । जीवास्तु । मायायामेव । लीयन्ते ॥ ४५ ॥ मुक्तानन्द इति । तदा यदा एवं श्रीहरिणोक्तं तस्मिन्समये । मुक्तानन्दो मुनिः । अपृच्छत् श्रीहरिं वक्ष्यमाणं प्रश्नं पुनः पप्रच्छ । हे कृष्ण ! । ते तव । धाम

कृष्णेच्छया सा प्राकृतिर्लीयतेऽक्षरतेजसि । यदा तदाऽसौ प्रलय आत्यन्तिक इतीरितः ॥ ४३ ॥ एवं विश्वभवादीनि
यो विजानाति तत्त्वतः । तस्य कृष्णे भवेद्भक्तिर्विरक्तिरितरत्र च ॥ ४४ ॥ प्रलये कृष्णभक्तास्तु भगवद्धाम यान्ति
हि । मायायामेव लीयन्ते जीवा अन्ये तु सर्वशः ॥ ४५ ॥ मुक्तानन्दस्तदाऽपृच्छत्कृष्ण ! ते धाम कीदृशम् । तन्मे
ब्रूहीत्यथ स्वामी तमुवाच सतां प्रियः ॥ ४६ ॥ नित्यमप्राकृतं दिव्यं सच्चिदानन्दमक्षरम् । ब्रह्माख्यं धाम तत्प्रोक्तं कृष्ण-
स्यानन्तमुज्ज्वलम् ॥ ४७ ॥ दृष्टान्तं कथयाम्येकमनुमेयं च तेन तत् । यदा काचमयी भूमिः स्यादियं सचराचरा
॥ ४८ ॥ तारा नभसि यावत्यस्तावन्तः स्युश्च भास्कराः । तदा यथा तैर्द्योतेत सा भूर्भूरिप्रभोज्ज्वला ॥ ४९ ॥

पदम् । कीदृशम् । तद्धामस्वरूपम् । मे मह्यम् । ब्रूहि । इति । अपृच्छदिति सम्बन्धः । अथानन्तरम् । सतां साधूनाम् । प्रियः प्रेमास्पदम् । स्वामी श्रीहरिः । तमेवं पृच्छन्तं मुक्तानन्दमुनिम् । उवाच ॥४६॥ नित्यमिति । हे मुने ! । कृष्णस्य । तत्त्वत्पृष्टम् । धाम । नित्यं सनातनम् । अप्राकृतममायिकम् । दिव्यमतिरमणीयम् । सच्चिदानन्दं सच्चिदानन्दधर्मवत् । अक्षरं क्षरणधर्मवर्जितम् । अनन्तं देशकालाद्यपरिच्छिन्नम् । उज्ज्वलं प्रकाशमयम् । ब्रह्माख्यं ब्रह्मनामकम् । प्रोक्तं श्रुतिस्मृतीतिहासपुराणैः कथितम् ॥ ४७ ॥ दृष्टान्तमिति । अहम् । एकम् । दृष्टान्तं तदुज्ज्वलत्वेऽभूतोपमानेनोदाहरणम् । 'दृष्टान्त उदाहृतौ शास्त्रे च मरणे' इति मेदिनि । कथयामि । तेन दृष्टान्तेन तद्भगवद्धाम । अनुमेयं तत्साधर्म्येण तत्तेजोमयत्वानुमानं । कर्त्तव्यम् तमेवाह सार्द्धेन । यदा यर्हि । स चराचरा स्थावरजङ्गमप्राणिसहिता । इयम् । भूमिः । काचमयी आदर्शतलसमाना । स्यात् ॥ ४८ ॥ तारा इति । नभस्याकाशे । यावन्त्यः । तारा ज्योतींषि । तावन्तः । भास्काराः सूर्याः । स्युः । तदा तर्हि । तैः सूर्यैः । सा काचमयी । भूर्भूमिः । भूरिप्रभोज्ज्वला प्रचुरकान्तिप्रकाशमाना सती । यथा येन प्रकारेण । द्योतेत दीप्ता भवेत् । तथेत्युत्तरेणान्वयः ॥ ४९ ॥

तथेति । तथा तेन प्रकारेण । तत् । धाम । तेजोमयं प्रचुरतेजोरूपम् । अनिरूपणमभूतोपमादृष्टान्तं विना निरूपयितुमशक्यम् । ज्ञेयम् । इहास्मिन् लोके वर्त्तमानाः । केचित्कृतमदेकाश्रयाः केचन । भागवता भगवत एकान्तिकभक्ताः । तद्धाम । समाधौ पश्यन्ति ॥५०॥ हित्वेति । भुवि पृथिव्याम् । कृष्णभक्ताः मदाश्रिताः सत्सङ्गिनः । स्वदेहम् । हित्वा । सुरादिवन्द्यं देवेन्द्रादिस्तुत्यम् । तद्धाम । प्रयान्ति गच्छन्ति । इत्थमेवंविधम् । हरेः । वागमृतं वचनामृतम् । पीत्वाऽतिमुदा श्रुत्वा । स साधुर्मुक्तानन्दमुनिः । तोषं महान्तमानन्दम् । आप । तथा तेन प्रकारेणैव । इतरे सभानिषण्णा अन्येऽपि त्यागिगृहिभक्तजनाः । तोषम् । आपुः ॥५१॥ तत्त्वादिलक्ष्मोक्तिपूर्वं स्वधाम बृहदक्षरम् । यो निजानाह तस्मिन्मे भक्तिधर्मसुतेऽस्तु हृद् ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्स्वनुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां द्वादशस्तरङ्गः ॥ १२ ॥

एकैकः प्रतिदेहं तु जीवो नैकेऽथवास्ति किम् । इति प्रश्नप्रतिवचो हरिणोक्तं त्रयोदशे ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८७६) मार्गासितप्रति-

तथा तेजोमयं धाम ज्ञेयं तदनिरूपणम् । समाधौ तच्च पश्यन्ति केचिद्भागवता इह ॥ ५० ॥ हित्वा स्वदेहं भुवि कृष्णभक्ताः प्रयान्ति तद्धाम सुरादिवन्द्यम् । इत्थं हरेर्वागमृतं स साधुः पीत्वाऽऽप तोषं च तथेतरेऽपि ॥ ५१ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते द्वादशस्तरङ्गः ॥ १२ ॥

शकाब्दे विक्रमार्कस्य रसाश्ववसुभूमिते । मार्गासितप्रतिपदि वचोऽमृतमिदं हरेः ॥ १ ॥ तत्र दुर्गपुरे रात्रौ दुर्गे उत्तमभूभुजः । वेद्यामधो निम्बतरोर्वासुदेवालयान्तिके ॥ २ ॥ न्यषीदन्मञ्चके स्वामी चञ्चच्छोणाम्बरद्युतिः । कण्ठलम्बितमुक्तास्रग् मुक्ताशेखरराजिमान् ॥ ३ ॥ त्यागिभिर्नैकदेशीयैर्नैकैर्भक्तजनैर्वृतः । तं प्रणम्य पप्रच्छेदं नित्यानन्दो महामुनिः ॥ ४ ॥

पदि मार्गशीर्षमासकृष्णपक्षस्याद्यतिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । रात्रौ । दुर्गपुरे । उत्तमभूभुजः । दुर्गे । वासुदेवालयान्तिके श्रीवासुदेवभगवतो मन्दिरस्य समीपे । निम्बतरोः पिचुमन्दाह्वतरुवरस्य । अधोऽधोवर्त्तिन्याम् । वेद्यां परिष्कृतभूमौ ॥ २ ॥ न्यषीददिति । मञ्चके मृदुलास्तरणास्तृतेगेन्दुकपार्श्विकयुते पर्यङ्के । स्वामी श्रीहरिः न्यषीदत् श्रीवासुदेवस्य सायंतननीराजनान्ते स्वभक्तकृततत्स्तवनप्रणामानन्तरमुपविवेशेत्यर्थः । तं विशिनष्टि सपादश्लोकेन । चञ्चती द्योतमाना शोणाम्बराणां निचोल, नीशार, शिरोवेष्टन, कटिबन्धनार्हरक्ताम्बराणां द्युतिः कान्तिर्यस्य सः । तत्र कटिबन्धनवस्त्रं शिरोवेष्टनवस्त्रं च सुवर्णतन्तवीयं ज्ञेयम् । कण्ठे मनोहरगलप्रदेशे लम्बिता लम्बमाना मुक्तास्रजो मौक्तिकमाला यस्य सः । मुक्ताशेखराणां शुद्धमौक्तिकापीडानां राजयः श्रेण्यो विद्यन्तेऽस्य तथाभूतः ॥ ३ ॥ त्यागिभिरिति । नैकदेशीयैरनेकभ्यो देशेभ्य उपागतैः । नैकैर्बहुभिः । त्यागिभिः साधुभिः । भक्तजनैः स्वभक्तगृहिलोकैश्च । वृतः सभायां परिवेष्टितः । इति सार्द्धश्लोकद्वयस्यैकसम्बन्धः । तमित्थंभूतपरमशोभाविशिष्टं श्रीहरिम् । प्रणम्य । महामुनिः । नित्यानन्दः । इदं वक्ष्यमाणम् । पप्रच्छ ॥ ४ ॥

एकेति । हे ईश्वराक्षरादिसकलनियमनसमर्थपुरुषोत्तम । जीवः । प्रतिवपुः प्रतिशरीरम् । एकैक एक एव । अस्ति । अथवा । अनेके प्रतिशरीरं बहवो जीवाः । सन्ति । चेद्यदि । एकः प्रतिशरीरं जीव एक एक एवास्ति । उच्येत एवं कथ्येत । तर्हि । प्लक्षाः पर्कटीद्रुमाश्च वटा न्यग्रोधद्रुमाश्च ते आदयो यस्य क्षीरिणीस्तुह्यादेस्तस्मिन् । विरुध्यते एकजीवत्वं विरोधं प्राप्नोति ॥ ५ ॥ विरोधमाह । छिन्नेति । छिन्ना विदारिता याः प्लक्षादिशाखास्तासाम् । अन्यत्रान्यस्मिन् स्थले । आरोपणे आलवालं कृत्वा वापने कृते सति । पुनर्भूयोऽपि । तादृग्वृक्षान्तरोत्पत्तेः तथाविधान्यवृक्षोद्भवदर्शनाद्धेतोः । तदेकत्वं शाखानामनेकत्वादेकजीववत्त्वम् । कथं केन प्रकारेण । भवेत्सम्भवं प्राप्नुयात् ॥६॥ एकस्येति । हे प्रभो ! । छेदनाद्धेतोः । एकस्य जीवस्य । बहुधाभावः प्रतिशाखं बहुधा भवनम् । इतीत्थमुच्येत । तर्ह्यपि । अक्षरत्वाज्जीवस्य क्षरभाववर्जितत्वाद्धेतोः । 'अच्छेद्योऽयम्' । इति स्मृतेर्हेतोरपि । न सम्भवेदेकस्य जीवस्य छेदेन बहुधाभवनमपि न सङ्गच्छेत । स्मृतिर्यथा । 'अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च । नित्यः सर्वगतः स्थाणुरचलोऽयं सनातन' इति 'अक्षर एष आत्मा' इति विजयध्वजकृतदशमस्कन्धटीकायां श्रुतेश्च ॥ ७ ॥ अनेक इति । अनेके प्रतिशरीरं बहवो

एकैकोस्ति प्रतिवपुर्जीवो वाऽनेक ईश्वरः । एक उच्येत चेत्प्लक्षवटादौ तद्विरुध्यते ॥ ५ ॥ छिन्नप्लक्षादिशाखानामन्यत्रारोपणे पुनः । तादृग्वृक्षान्तरोत्पत्तेस्तदेकत्वं कथं भवेत् ॥ ६ ॥ एकस्य बहुधाभावच्छेदनादित्यपि प्रभो ! । न सम्भवेदक्षरत्वादच्छेद्योऽयमिति स्मृतेः ॥ ७ ॥ अनेक इति पक्षेऽपि न जीवा देहमन्तरा । तिष्ठेत्तद्देहवाहुल्यं त्वत्र नैवोपलभ्यते ॥ ८ ॥ श्रीहरिस्तमुवाचाथ शृणु साधो ! रमापतेः । विश्वोत्पत्यादिहेतू द्वे शक्ती प्रकृतिपुरुषौ ॥ ९ ॥ ताभ्यां वैराजरूपोऽसौ ब्राह्मकल्पे निजाङ्गतः । ब्रह्मादिस्तम्बपर्यन्तं ससर्ज निखिलं जगत् ॥ १० ॥ पाद्मादौ तु ब्रह्मरूपो मरीच्यादिक्रमेण सः । देवदैत्यमनुष्यादीन् स्थावरांश्च ससर्ज ह ॥ ११ ॥

जीवाः सन्ति । इत्येवंविधे । पक्षे साध्ये सत्यपि । जीवः । देहं शरीरम् । अन्तरा विना । न तिष्ठेत् । एकैकस्य देहस्यैकैकजीववत्त्वोक्तेरिति भावः । 'देही नित्यमवध्योऽयं देहे सर्वस्य भारते'ति भगवद्गीतायां देहे देहीत्यनेनैकस्मिन्देहे एकस्यैव देहिन उक्तेः । अत्रास्मिन्नेकस्मिन्देहे । तद्देहबाहुल्यं तु तेषां जीवानां देहानां बहुत्वम् । एकस्मिन्देहेऽनेकेषां जीवानां शरीरबहुत्वमीत्यर्थः । नैव । उपलभ्यते नैव दृश्यते ॥८॥ श्रीहरिरिति । अथानन्तरम् । श्रीहरिः । तमेवं पृच्छन्तं नित्यानन्दमुनिम् । उवाच । हे साधो । शृणु एतत्प्रश्नोत्तरमाकर्णय ! । प्रकृतिपूरुषौ । विश्वोत्पत्त्यादिहेतू जगदुत्पत्तिस्थितिप्रलयानां कारणे । रमापतेः श्रीकृष्णस्य । द्वे । शक्ती । भवतः ॥ ९ ॥ ताभ्यामिति । ताभ्यां शक्तिभ्यां सहितः । असौ श्रीकृष्णः । वैराजरूपो वैराजपुरुषस्वरूपधरः सन् । ब्राह्मकल्पे । निजाङ्गतः स्वकीयाच्छरीरात्सकाशात् । ब्रह्मादिस्तम्बपर्यन्तम् । निखिलम् । जगत् । ससर्ज ॥ १० ॥ पाद्मेति । स श्रीकृष्णः । पाद्मादौ पद्मकल्पादौ तु । ब्रह्मरूपो विधिरूपधरः सन् । मरीच्यादिक्रमेण ब्रह्मणो मरीचिस्ततः कश्यप इत्येवमनुक्रमेण । देवाश्च दैत्याश्च मनुष्याश्च ते आदयो येषां पशुपक्ष्यादीनां तान् । स्थावरान्वृक्षादींश्च । ससर्ज । ह प्रसिद्धमेतच्छ्रीभागवतादिपुराणेषु ॥ ११ ॥

अन्तरिति । शक्तिद्वययुतः प्रकृतिपुरुषात्मकशक्तियुग्मसहितः । प्रभुरतिसमर्थः । स श्रीकृष्णः । अन्तर्यामिस्वरूपेण । प्रतिजीवं जीवं जीवं प्रति । स्थितः सन् । तत्तत्कर्मफलम् । दत्ते ॥ १२ ॥ केचिदिति । केचित् । जीवाः । सत्त्वमयाः सत्त्वगुणप्रधानाः । सन्ति । केचिज्जीवाः । रजोमया रजोगुणप्रधानाः । सन्ति । केचिज्जीवाः । तमोमयास्तमोगुणप्रधानाः । सन्ति । तद्गुणास्तेषां जीवानां गुणाः । कर्महेतवः क्रियाचरणकारणानि । सन्ति ॥ १३ ॥ तेषामिति । ईश्वरस्तत्तदन्तर्यामितया स्थितः श्रीकृष्णः । तादृशांस्तत्तद्गुणकर्मानुरूपान् । उच्चमध्यमाधमान् । उत्तममध्यमकनिष्ठान् । देहान् । दत्त्वा । तेषां जीवानाम् । गुणानुरूपाणां सत्त्वादिगुणानुसारिणाम् । कर्मणाम् । फलम् । ददाति ॥ १४ ॥ एतदेव स्पष्टमाह । जरेति । जरायुजान् गर्भाशये जरायुस्ततो जातान्नृगवाश्वादिकान् । अण्डजानण्डेभ्यो जातान्पक्षि, सर्प, मत्स्यादीन् । स्वेदजान् स्वेदहेतुत्वादूष्मास्वेदस्ततो जातान्कृमि, दंश, मशक, मत्कुणादीन् । तथा । उद्भिदो जायमाना भूमिमुद्भिदन्तीति तांस्तरु, गुल्म, कक्षाद्यान् । देहान् । यथाकर्म तत्तत्कर्माण्यनतिक्रम्य । दत्ते । अतः । प्रभावन्तर्यामितया तत्तत्कर्मफलप्रदातरि श्रीकृष्णे । स्वतः स्वेन कृतम् । वैषम्यं विषयमावः । न भवति ।

अन्तर्यामिस्वरूपेण शक्तिद्वययुतश्च सः । प्रतिजीवं स्थितो दत्ते तत्तत्कर्मफलं प्रभुः ॥ १२ ॥
केचित्सत्त्वमया जीवाः सन्ति केचिद्रजोमयाः केचित्तमोमयाः सन्ति तद्गुणाः कर्महेतवः ॥ १३ ॥
तेषां गुणानुरूपाणां कर्मणामीश्वरः फलम् । ददाति तादृशान्देहान्दत्त्वोच्चमध्यमाधमान् ॥ १४ ॥
जरायुजानण्डजांश्च स्वेदजानुद्भिदस्तथा । दत्ते देहान् यथाकर्म न वैषम्यं स्वतः प्रभौ ॥ १५ ॥
जीवकर्मानुसारेण देहाद्देहान्तराण्यपि । स एव सृजति यथा कश्यपाद्विविधाः प्रजाः ॥ १६ ॥
अन्तर्यामिण एवेशात्सजीववपुरुद्भवः । भवतीत्येव जानीहि जीवशक्त्या न किञ्चन ॥ १७ ॥
एकैकस्मिन्नतो देहे जीव एकैक एव हि । न त्वेको बहुधा क्वापि जायते स्वौजसा मुने ! ॥ १८ ॥

'वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथा हि दर्शयती'ति न्यायात् । 'ईशामिसृष्टं ह्यवरुन्ध्महेऽङ्ग दुखं सुखं वा गुणकर्मसङ्गात् । आस्थाय तत्तद्यदयुङ्क्तनाथश्च सुक्ष्मतान्धा इव नीयमाना' इति श्रीमद्भागवतोक्तेश्च ॥ १५ ॥ जीवेति । सोऽन्तर्यामिरूपेण प्रति-जीवमवस्थितः श्रीकृष्ण एव । जीवकर्मानुसारेण । देहादेकस्मात्कस्माचन देहात् । देहान्तराण्यन्यान्देहानपि । सृजति । यथा तदेवदर्शयति । कश्यपात् प्रजापतेः । विविधाः । प्रजाः । स एव पूर्वमसृजत्तथासृजतीति सम्बन्धः ॥ १६ ॥ अन्तरिति । अन्तर्यामिणः । ईशाच्छ्रीकृष्णादेव । सजीववपुरुद्भवो जीवसहितानां देहानामुत्पत्तिः । भवति । जीवशक्त्या जीवानां सामर्थ्येन । किञ्चन किमपि । न भवति । इत्येवैवमेव । जानीहि विद्धि ॥ १७ ॥ एकेति । हे मुने ! । अतोऽस्माद्धेतोः । एकैकस्मिन् । देहे । जीवः । एकैक एव अस्ति हि । एको जीवः । क्वापि कदाचिदपि । स्वौजसा स्वसामर्थ्येन । बहुधा बहुरूपः । न तु नैव जायते ॥ १८ ॥

ईशेति जन्तवो जीवाः । ईशशक्तिवशतः सर्वान्तर्यामिपरमेश्वरश्रीकृष्णसामर्थ्यायत्ततया । देहम् । यान्ति स्वकर्मानुसारेण लभन्ते । तं देहम् । त्यजन्त्युत स्वकर्मानुसारेण जहत्यपि । इत्थमेवंविधम् । ईशवचनामृतं श्रीहरिवचोऽमृतम् निपीय । सः । मुनिर्नित्यानन्दाख्यो महामुनिः । ते सभानिषण्णाः । अपरेऽन्ये त्यागिगृहिजनाश्च । ततृपुस्तृप्तिं जग्मुः ॥ १९ ॥ स्वस्यान्तर्यामिशक्त्या तु योऽनन्ताण्डभवादिकृत् । जीवानां कर्मफलदः सुखं मे स हरिः क्रियात् ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तक-श्रीहर्यैकान्तिकोपासक श्रीहरिकृष्णभगवत्स्नुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां त्रयोदशोस्तरङ्गः ॥ १३ ॥

भक्तयोस्त्यागिगृहिणोर्लक्षणं प्रथगीरितम् । अन्ते येति श्रुतेः सम्यगर्थश्चोक्तश्चतुर्दशे ॥ १ ॥ शकेति । शकेति पूर्वार्द्धे व्याख्यातम् (१८७६) । मार्गकृष्णद्वितीयायां मार्गशीर्षमाससम्बन्धिनः कृष्णपक्षस्य द्वितीयायां तिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमभूभुजः । दुर्गे । श्रीवासुदेवमन्दिरान्तिके इति शेषः । निम्बतरोः । अधोऽधःप्रदेशवर्त्तिन्याम् । वेद्याम् । चारुमञ्चके दन्तनिर्मिते रत्ननिचिते मृदुलास्तृततूलिकावति पार्श्विकोपवर्हणसहिते पर्यङ्के ।

ईशशक्तिवशतो हि जन्तवो यान्ति देहमुत तं त्यजन्ति च । इत्थमीशवचनामृतं मुनिः सोऽपरे च ततृपुर्निपीय ते ॥ १९ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दविरचिते त्रयोदशस्तरङ्गः ॥ १३ ॥

शकाब्दे विक्रमार्कस्य रसाश्ववसुभूमिते । मार्गकृष्णद्वितीयायां वचोऽमृतमिदं हरेः ॥ १ ॥ तत्र दुर्गपुरे दुर्गे हरिरुत्तम-भूभुजः । अधो निम्बतरोर्वेद्यां न्यषीदच्चारुमञ्चके ॥ २ ॥ अन्तरीयं चोत्तरीयं सितं शीर्षपटं दधत् । पीतपुष्पस्रगापीडावतंसाश्च मनोहरान् ॥ ३ ॥ त्यागिभिर्गृहिभिर्भक्तै र्नानादेशागतैर्वृतः । जातिपुष्पं दक्षदोष्णा भ्रामयन्नब्रवीन्मुनीन् ॥ ४ ॥ विहाय स्वगृहं त्यागी भूतो नातिविरागवान् । तदल्पवासनाश्चापि विचारेण त्यजन् हृदः ॥ ५ ॥

हरिः । न्यषीदद्दक्षिणास्यः सन्नुपविवेशेत्यर्थः ॥२॥ अन्तरीयमिति । सितं श्वेतम् अन्तरीयं परिधानवस्त्रम् । उत्तरीयं संव्यानवस्त्रम् । शीर्षपटं शिरोवेष्टनवस्त्रं च । दधद्बिभ्रत् । सितमिति । त्रिष्वन्वेतव्यम् । मनोहरान्मनोज्ञान् । स्रजो मालाश्च आपीडाः शेखराश्च अवतंसाः कर्णपुराश्च पीतपुष्पाणां ये स्रगादयस्तांश्च । दधत् ॥ ३ ॥ त्यागिभिरिति । नानादेशागतैः । भक्तैः प्रत्यक्षश्रीकृष्णस्य स्वस्योपासकैः । त्यागिभिः साधुभिः । गृहिभिस्तथाविधैर्गृहस्थैश्च । वृत्तः समाजे परिवेष्टितः । दक्षदोष्णा दक्षिणेन पाणिपद्मेन तत्करशाखाभिरित्यर्थः । जातिपुष्पं मालतीकुसुमम् । यद्वा । जातिपुष्पं भाषायां सेवति इति नाम्ना प्रसिद्धायाः स्थलपद्मावान्तरजातेः कुसुमम् । भ्रामयंस्तासां संचारेण चालयन् । एवंविधदिव्यभक्तध्येयशोभाविशिष्टः श्रीहरिः । मुनीन्मुक्तानन्दादिसाधून् । अब्रवीत् । तैः कैश्चित्कमपि प्रश्नमपृष्टोऽपि तद्धितार्थं प्रश्नमुखेन तान्स्वयमेव जगादेत्यर्थः । इति द्वयोरेकान्वयः ॥ ४ ॥ विहायेति । हे मुनयः । स्वगृहं स्वकीयं गृहाश्रमम् । विहाय त्यक्त्वा । त्यागी साधुः । भूतो जातः । नातिविरागवान्सञ्जातमन्दवैराग्यः तदल्पवासनाः स्वमनोनिष्ठाः सूक्ष्मा गृहाश्रमसुखभोगभावनाश्चापि । विचारेण तदनित्यत्व सदुःखत्व चिन्तनेन । हृदः स्वमनसः सकाशात् । त्यजन् ॥ ५ ॥

देहेनेति । सर्वान् । नियमांस्त्यागिनां सदा पाल्यतया शास्त्रेण विहितान्ब्रह्मचर्यादिधर्मान् । देहेन । यथावत् । परिपालयन् । दृढनिश्चयः प्रत्यक्षभगवत्स्वरूपज्ञानस्थिरतायुक्तः । ईदृश एवंविधः । एकः । भगवद्भक्तः । अस्ति । इति द्वयोरेकान्वयः ॥ ६ ॥ अन्य इति । कश्चित् । अन्यः । कृष्णभक्तस्तु । भगवदाज्ञया । गेहे गृहाश्रमे । निवसन् स्थितः । तथापि । उदासीनः दुःखदोषानुदर्शनेन गृहाश्रमे औदासीन्ययुतः । त्यागिवत्पूर्वोक्तसाधुरिव । अल्पवासनः । चकारात्पूर्वोक्तत्यागिवद्दृढनिश्चयः । एवंविधोऽस्ति ॥ ७ ॥ पृच्छामिति । हे मुनयः । इत्येवंविधयोः । उभयोर्द्वयोर्मध्ये । कः श्रेष्ठः । एतम् । प्रश्नम् । वो युष्मान् । पृच्छामि । तदा एवं यदा श्रीहरिणा पृष्टं तस्मिन्समये । मुक्तानन्दोमुनिः । प्राह । हे हरे । त्यागी साधुः । श्रेष्ठो द्वयोर्मध्ये उत्तमः । इतीत्थम् । मे मम । भाति मद्बुद्धावेवं प्रतिभासते इत्यर्थः ॥ ८ ॥ स्वामीति । स्वामी श्रीहरिः । उवाच मुक्तानन्दमुनिवचनश्रवणानन्तरं तं कथयामास । हे मुने । मन्दवैराग्यो नातितीव्रविरक्तिः साधुः । कथं केन हेतुना । श्रेष्ठताम् । गतः प्राप्तः । कृष्णाज्ञया गेहे गृहस्थाश्रमे । वसन् गृहिभक्तः । ततो मन्दवैराग्यात्साधोः । न्यूनः । कथं केन हेतुना । मतः । तदुच्य-

देहेन नियमान्सर्वान् यथावत्परिपालयन् । ईदृशो भगवद्भक्त एकोऽस्ति दृढनिश्चयः ॥ ६ ॥
अन्यस्तु कश्चिन्निवसन् गेहे भगवदाज्ञया । उदासीनः कृष्णभक्तस्त्यागिवच्चाल्पवासनः ॥ ७ ॥
पृच्छामि प्रश्नमेतं वः कः श्रेष्ठ उभयोरिति । मुक्तानन्दस्तदा प्राह श्रेष्ठस्त्यागीति भाति मे ॥ ८ ॥
स्वाम्युवाच कथं मन्दवैराग्यः श्रेष्ठतां गतः । कृष्णाज्ञया वसन् गेहे कथं न्यूनस्ततो मतः ॥ ९ ॥
ततः स वहुधा तस्य समाधानं वदन्नपि । नाशक्नोत्तमथाहेश त्वमेवास्योत्तरं कुरु ॥ १० ॥
उवाच श्रीहरिः साधो युक्तमत्रोत्तरं श्रृणु । तीव्रवैराग्यवान् यस्तु त्यागी स्याच्छ्रेष्ठ एव सः ॥ ११ ॥
त्यागी यो मन्दवैराग्यः स तु स्वादुरसादिकान् । सम्प्राप्य विषयान्भूयो भ्रश्यत्येव तदिच्छया ॥ १२ ॥

तामिति शेषः ॥ ९ ॥ तत इति । ततस्तदनन्तरम् । स मुक्तानन्दमुनिः । तस्य श्रीहरिकृतप्रश्नस्य समाधानं परिहारम् । बहुधा बहुप्रकारेण । वदन्कुर्वन्नपि । नाशक्नोत् समाधानं कर्त्तुं समर्थो न बभूव । अथानन्तरम् । तं स्वामिनम् । आह । हे ईश । अस्य त्वत्कृतप्रश्नस्य । उत्तरम् । त्वमेव । कुरु ॥ १० ॥ उवाचेति । ततः । श्रीहरिः । उवाच । हे साधो । अत्रास्मिन्मत्कृतप्रश्ने । युक्तं योग्यम् । उत्तरम् । श्रृणु । यः । त्यागी । तीव्रवैराग्यवान्मायिकविषयेषु सम्यक् दोषदर्शनेन तीक्ष्णविरक्तियुक्तः स्यात् । स त्याग्येव । श्रेष्ठः । स्यात् ॥ ११ ॥ त्यागीति । यः । त्यागी । मन्दवैराग्यः । स त्यागी तु । स्वादुरसादिकानतिस्वादयुक्तपरमान्नादिभक्ष्यभोज्यादिवस्तुप्रभृतीन् । विषयान्मायिकपञ्चविषयान् । भूयोऽतिशयेन । सम्प्राप्य । तदिच्छया पुनः पुनस्तदुपभोगवाञ्छया । भ्रश्यति स्वमार्गाच्च्युतो भवत्येव ॥ १२ ॥

प्राप्येति । अथवा । स मन्दवैराग्यवांस्त्यागी । दैहिकम् । दुःखं शीतोष्णसहननीरसभोजनादि शारीरकष्टम् । प्राप्य । त्यागं विषयत्यागरूपं स्वमार्गम् । जिहासति हातुमिच्छति । ईदृशान्मन्दवैराग्ययुक्तात् । त्यागिनः सकाशात् । धर्मसंस्थितो भगवत्प्रणीतस्वधर्मावस्थितः । गृहस्थः । श्रेष्ठो भवति ॥ १३ ॥ स इति । स गृहिभगवद्भक्तः । त्यागिनः साधोः सकाशात् । स्वमात्मानम् । न्यूनम् । विदन् । जानन्सन् । दैवोपपन्नेषु स्वप्रारब्धानुसारेण प्राप्तेषु । सुखदुःखेषु । नित्यदा सर्वकालम् । विचारेण सुखदुःखयोरागमापायित्वज्ञानेन । उदासीनो निर्विण्णः । उपेक्षक इत्यर्थः । भवति ॥ १४ ॥ सावधान इति । ततो हेतोः । सावधानोऽप्रमत्तो गृहिभक्तः । नित्यं प्रतिदिनम् । सादरं यथातथा । कृष्णम् । भजति । एते वक्ष्यमाणाः । श्रैष्ठ्यहेतवो गृहिणः श्रेष्ठत्वद्योतनकारणानि । तद्धर्मा गृहस्थाश्रमिभक्तलक्षणानि । मुख्याः प्रधानानि । भवन्ति ॥ १५ ॥ तानाह द्वाभ्याम् । आपदीति । आपद्यापत्कालेऽपि । यथापूर्वमनापदीव । मुदाऽत्यानन्देन । सत्सेवाचरणम् । कल्पद्रुलाभवत्कल्पतरुप्राप्तिर्यथा स्वस्य जाता स्यात्तथेत्यर्थः । साधुसङ्गमाहात्म्यवेदनं साधुसमागममहिमातिशयज्ञानम् । अत्र कल्पवृक्षलाभशब्द उत्तमचिन्तामणिलाभस्याप्युपल-

प्राप्य वा दैहिकं दुःखं स च त्यागं जिहासति । ईदृशात्यागिनः श्रेष्ठो गृहस्थो धर्मसंस्थितः ॥ १३ ॥ स हि दैवोपपन्नेषु सुखदुःखेषु नित्यदा । उदासीनो विचारेण स्वं न्यूनं त्यागिनो विदन् ॥१४॥ सावधानस्ततः कृष्णं नित्यं भजति सादरम् । एते तु मुख्यास्तद्धर्मा भवन्ति श्रैष्ठ्यहेतवः ॥ १५ ॥ आपद्यपि यथापूर्वं सत्सेवाचरणं मुदा । कल्पद्रुलाभवत्साधुसङ्गमाहात्म्यवेदनम् ॥ १६ ॥ कलत्रपुत्रवित्तादेर्नश्वरत्वावबोधनम् । महादुःखेऽप्यशैथिल्यं भगवन्निश्चयस्य तु ॥१७॥ एतद्धर्मविशिष्टत्वाच्छ्रेष्ठः प्रोक्तो गृही मया । त्यागी तु श्रेष्ठः स मतो यो नष्टाशेषवासनः ॥ १८ ॥ प्राप्नोति भगवद्धाम देहान्ते सोऽक्षराभिधम् । दृढनिश्चयबुद्धित्वाद् दुर्लभं शिथिलात्मनाम् ॥ १९ ॥ इत्युक्त्वाऽऽपयत्सद्भिर्मुक्तानन्दकृतानि सः । कृष्णतद्भक्तमाहात्म्यबोधकृत्कीर्तनानि च ॥ २० ॥

क्षणम् ॥ १६ ॥ कलत्रेति । कलत्रं भार्या च पुत्रा आत्मजाश्च वित्तं धनं च तान्यादयो यस्य गृहक्षेत्रादेस्तस्य । नश्वरत्वावबोधनं स्वाप्नकलत्रादेरिव तूर्णविनाशित्वेन वेदनम् । किञ्च । महादुःखे महत्यामापदि प्राप्तायां सत्यामपीत्यर्थः । भगवन्निश्चयस्य । अशैथिल्यमनिवर्त्तनम् ॥ १७ ॥ एतदिति । एतद्धर्मविशिष्टत्वादेतै धर्मैरस्य युक्तत्वाद्धेतोः । मया । गृही गृहस्थभक्तः । श्रेष्ठः । प्रोक्तः । त्यागी तु । सः श्रेष्ठः । मतः । यस्त्यागी । नष्टाशेषवासनो निवृत्तसकलमायिकविषयोपभोगभावनः । भवेत् ॥ १८ ॥ प्राप्नोतीति । स श्रेष्ठो गृहस्थभक्तस्तथाविधस्त्यागी च । दृढनिश्चयबुद्धित्वादुक्तप्रकारेण स्वधर्मपालनसुस्थिरनिर्णययुक्तमतित्वाद्धेतोः । शिथिलात्मनां स्वस्वधर्मपालनशिथिलबुद्धीनां गृहित्यागिभक्तजनानाम् । दुर्लभम् । अक्षराभिधम् । भगवद्धाम । देहान्ते स्वस्वदेहावसाने । प्राप्नोति ॥ १९ ॥ इतीति । इत्यमुना प्रकारेण । उक्त्वा । स श्रीहरिः । मुक्तानन्दकृतानि मुक्तानन्दमुनिना प्राकृतभाषया संदृब्धानि । कृष्णः साक्षात् श्रीकृष्णपरमात्मा च तद्भक्ताः साक्षाच्छ्रीकृष्णभक्तजनाश्च तेषां माहात्म्यं सर्वो-

त्तमत्वरूपो महिमा तस्य बोधो वेदनं तत्कुर्वन्ति ज्ञापयन्ति तथाविधानि यानि कीर्त्तनानि पद्यानि तानि । सद्भिः प्रेमानन्दादिसाधुभिः । अगापयत् ॥ २० ॥ मुक्तानन्द इति । ततस्तदनन्तरम् । मुक्तानन्दो मुनिः । अपृच्छत् श्रीहरिं वक्ष्यमाणं प्रश्नं पप्रच्छ । हे हरे ! । अन्ते मतिः या गतिः । अस्मिन्वाक्ये हिरण्यकेशिशाखीयश्रुतिगतेऽस्मिन् वचने तु । अन्तकाले अन्तशब्देनाभिहितं देहावसानं तस्य कालः समयस्तस्मिन् । यथाबुद्धिर्यथाविधामतिर्भवेत् । तथा तथाविधा । गतिर्देहलोकभोगादिप्राप्तिः । प्रोक्ताऽस्तीत्युत्तरेणान्वयः । अन्ते या यादृशी मतिर्बुद्धिः सा तादृशी गतिः कथिताऽस्तीति श्रुत्यर्थः ॥ २१ ॥ प्रोक्तेति । अथातो हेतोः । क्वचित् । अन्तकाले तु । तीव्रवेदनया देहेऽतिशयोत्पन्नव्यथया । भक्तस्यापि । मतिः । प्राग्वदन्तकालोत्थवेदनानुभवात्पूर्वकाले इव । कृष्णे त्वयि । स्थिरा । न ईक्ष्यते ॥ २२ ॥ अन्त इति । हे भगवन् ! । अन्तेऽन्तसमये । विस्मृतः कृष्णस्त्वं यस्य तथोक्तस्य । तस्य भक्तस्य । गतिः । कीदृशी किंविधा । अस्ति । एतद्यन्मयापृष्टं तदुत्तरम् । मे मह्यम् । ब्रूहि । इत्यमुना प्रकारेण । उक्तो मुक्तानन्दमुनिना कथितः । हरिः । अब्रवीत् ॥ २३ ॥ साक्षादिति । हे मुने ! । यस्य । पुंसः साक्षात्कृष्णस्य । सम्प्राप्तिः ।

मुक्तानन्दोऽपृच्छदन्ते या मतिः सा गतिस्ततः । अस्मिन् वाक्ये त्वन्तकाले यथा बुद्धिस्तथागतिः ॥ २१ ॥ प्रोक्ताऽस्याथान्तकाले तु तीव्रवेदनया क्वचित् । भक्तस्यापि मतिः कृष्णे न स्थिरा प्राग्वदीक्ष्यते ॥ २२ ॥ अन्ते विस्मृतकृष्णस्य गतिस्तस्यास्ति कीदृशी । एतन्मे ब्रूहि भगवन्नित्युक्तो हरिरब्रवीत् ॥ २३ ॥ साक्षात्कृष्णस्य सम्प्राप्तिः पुंसो यस्यास्ति तस्य तु । स्मृतौ वा विस्मृतावन्ते कृष्णस्य साक्षाच्छुभागतिः ॥२४॥ सर्वथा रक्षणं तस्य यमादिभ्यो हरिः स्वयम् । विधाय निजधामैव सद्यस्तं नयति ध्रुवम् ॥२५॥ नापमृत्युभयं तस्य कालकर्मभयं न च । जगन्नियन्तुर्भक्तो यः स एवोक्तोऽकुतो भयः ॥ २६ ॥ भगवद्विमुखो यस्तु पापबुद्धिः पुमानिह । देहान्ते नरके घोरे पात्यते स यमानुगैः ॥ २७ ॥

अस्ति । तस्य पुंसस्तु । अन्ते देहान्तसमये । कृष्णस्य । स्मृतौ सत्याम् । अथवा । विस्मृतौ सत्याम् । शुभा शोभना । गतिः । स्यात् ॥ २४ ॥ शुभगतिमाह द्वाभ्याम् । सर्वथेति । स्वयम् । हरिः । तस्य भक्तस्य । यमादिभ्यः सर्वथा सर्वप्रकारेण । रक्षणम् । विधाय कृत्वा । सद्यस्तत्क्षणमेव । तं भक्तम् । निजधामैव । नयति गमयति । ध्रुवं निश्चितमेव ॥ २५ ॥ नेति । तस्य भक्तस्य । अपमृत्युभयमकालमरणभीतिः । नास्ति । कालकर्मभयम् । न च नास्त्येव । कुतः । यः पुरुषः । जगन्नियन्तुः सकलजगदेकनाथस्य श्रीकृष्णस्य । भक्तः । पुरुष एव । अकुतोभयः नास्तिकुतश्चनापि भयं यस्य तथाविधः । प्रोक्तो द्वैपायनादिभिः कथितः । तथाचानुशासनिके पर्वणि दानधर्मेषु । 'न वासुदेवभक्तानामशुभं विद्यते क्वचित् । जन्ममृत्युजराव्याधिभयं नैवोपजायते' इति । भक्तिरसबोधन्यां भगवद्वाक्यं च । 'यदि वातादिदोषेण मद्भक्तो मां च विस्मरेत् । तर्हि स्मराम्यहं भक्तं स याति परमां गतिमि'ति ॥ २६ ॥ भगवदिति । इह लोके । यः पुमान् । भगवद्विमुखः । पापबुद्धिः । भवेत् । स पुमांस्तु । देहान्ते । यमानुगैर्वैवस्वतदूतैः । घोरे । नरके । पात्यते निःक्षिप्यते ॥ २७ ॥

अल्पेति । कश्चन । अभक्तो भगवद्विमुखः पुरुषः । यदि यर्हि । अल्पवेदनया अन्तकाले सञ्जातात्पव्यथया । अन्येन जनेन सह । भाषमाणो ब्रुवन्सन्नपि । म्रियेत देहं जह्यात् । तथापि । सोऽभक्तपुरुषः । निरये नरके । पतेत् ॥ २८ ॥ अभाषमाण इति । भगवद्भक्तः । देहान्ते देहावसानसमये । अभाषमाणः केनापि सहाब्रुवन्सन् । अथवा । मूढो बहुकालं मूर्छित इव पतितः सन् । अथवा । भूरिवेदनो बहुवेदनायुक्तः सन् । क्रोशन्वाक्रोशयुक्तः सन् । म्रियेत । तर्ह्यपि । भगवद्धामैव । याति । हि निश्चितम् ॥ २९ ॥ तस्मादिति । तस्माद्धेतोः । त्वदुक्तवाक्ये भगवदुक्तश्रुतिवचनेऽपि । नृणाम् । सर्वदा सर्वकालम् । या यादृशी । मतिः । भवेत् । सा तादृशी-मतिरेव । अन्तेऽन्तकाले । गतिदा गतिप्रदात्री । भवेत् । इत्येवंभूत एव । अर्थः । प्रमाणतः । ज्ञातव्यः प्रमाणवाक्यैर्मन्तव्यः । 'यं यं चापि स्मरन् भावं त्यजत्यन्ते कलेवरम् । तं तमेवैति कौन्तेय सदा तद्भावभावित' इति श्रीभगवद्गीतोक्तेः ॥ ३० ॥ एतदेवस्पष्टमाह द्वाभ्याम् । कृष्णेति । भक्तः । कृष्णश्च तद्भक्ताश्च तेषां सम्प्राप्तिः साक्षात्सङ्गतिस्तया । मे मम । कल्याणम् । जातम् । इतीत्थम् । सर्वदा निरन्तरम् । जानाति । स भक्तः । अन्ते देहावसाने । सद्गतिं भगवद्धामावासयोग्यदिव्य-

अल्पवेदनयाऽन्येन भाषमाणोऽपि कश्चन । यदि म्रियेत सोऽभक्तस्तथापि निरये पतेत् ॥२८॥ अभाषमाणो मूढो वा क्रोशन्वा भूरिवेदनः । देहान्ते भगवद्भक्तो भगवद्धाम याति हि ॥२९॥ तस्मात्त्वदुक्तवाक्येऽपि सर्वदा या मतिर्नृ-णाम् । सैवान्ते गतिदेत्येव ज्ञातव्योऽर्थः प्रमाणतः ॥ ३० ॥ कृष्णतद्भक्तसम्प्राप्त्या भक्तो जानाति सर्वदा । कल्याणं मे जातमिति सोऽन्ते सद्गतिमेति हि ॥ ३१ ॥ कृष्णकार्ष्णाश्रयाभावाच्छ्रेयो मे न भविष्यति । इत्यभक्तो मतौ वेत्ति ततोऽन्ते यात्यधो गतिम् ॥ ३२ ॥ अतोऽत्र सर्वैर्भगवद्भक्तैर्भाव्यं प्रयत्नतः । प्रीतिमन्यत्र हित्वैव भक्तत्वं ह्यति-दुर्लभम् ॥ ३३ ॥ भक्तो दास इति प्रोक्तस्तद्धर्मः स्वात्मनः प्रियम् । हित्वैव स्वामिनो नित्यं प्रियं कार्यमितीरितः ॥ ३४ ॥ स्वामिभोग्यपदार्थानां भोगानिच्छा च चेतसि । अनुवृत्तिः सर्वदा च तस्य रुच्यनुसारिणी ॥ ३५ ॥

देहादिप्राप्तिरूपां शुभगतिम् । एति प्राप्नोति । हि निश्चितम् ॥ ३१ ॥ कृष्णेति । अभक्तः । कृष्णश्च कार्ष्णाः श्रीकृष्णभक्ताश्च तेषामाश्रयः प्रपत्तिस्तस्याभावोऽकरणं तस्मा-द्धेतोः । मे मम । श्रेयः कल्याणम् । न भविष्यति । इतीत्थम् । मतौ स्वबुद्धौ । वेत्ति सर्वदा जानाति । ततो हेतोः । अन्तेऽन्तकाले । अधोगतिं यमयातना-भूमिम् । याति ॥ ३२ ॥ अत इति । अतो हेतोः । अत्र लोके । सर्वैर्जनैः । अन्यत्र भगवदितरपदार्थे । प्रीतिं स्नेहम् । हित्वा निःशेषतः परित्यज्यैव । प्रयत्नतः प्रचुरप्रयासैरपि । भगवद्भक्तैः । भाव्यम् । हि यतो हेतोः भक्तत्वम् । अतिदुर्लभम् । भवति ॥ ३३ ॥ भक्त इति । भक्तः । दास इति दाससंज्ञया । प्रोक्तः तद्धर्मो दास-धर्मस्तु । आत्मनः स्वस्य । प्रियम् । हित्वा । नित्यं निरन्तरम् । स्वामिनः स्वेष्टदेवस्य भगवत एव । प्रियम् । कार्यम् । इत्येवंभूतः । ईरितः प्रोक्तः ॥३४॥ स्वामीति । किञ्च । स्वामिभोग्यपदार्थानां स्वामिनः स्वेष्टदेवस्य श्रीकृष्णभगवतो भोग्यपदार्थाः शय्यासनः वासः, स्थाल, जलपात्र, निवेद्यान्नादीनि भोगार्हवस्तूनि तेषाम् । चेतसि

स्वमानसे । भोगानिच्छा प्रथमतस्तद्भोगसङ्कल्पस्याकरणम् । तस्य स्वामिनः । रुच्यनुसारिणी इच्छानुरोधिनि । सर्वदा सर्वकालम् । अनुवृत्तिश्च । दासेन कार्येति शेषः ॥ ३५ ॥ ईदृगिति । ईदृग्भक्तेनैवंविधेन भगवद्दासेन । देहात्ममतिं स्वदेहेऽहन्ताबुद्धिम् । अञ्जसा तत्त्वतस्तूर्णमेव वा । हित्वा त्यक्त्वा । विशुद्धात्मस्वरूपेण निजात्मानं ब्रह्मरूपं विभाव्येत्यर्थः । सदा सर्वकालम् । हरिः । भजनीयो नवधा सेवनीयः ॥३६॥ इतीति । इतीत्थंभूतम् । प्रभोः श्रीहरेः । वागमृतं वचनामृतम् । निपीय सादर-माकर्ण्य । सः । साधुर्मुक्तानन्दमुनिः । अन्येऽपि । सदःस्थभक्ताः सभानिषण्णास्त्यागिगृहिभक्तजनाश्च । पराम् । मुदम् प्राप्य । धृतोपदेशाः स्वीकृतश्रीहर्युपदेशवाक्याः सन्तः । तदीयपादपद्मं श्रीहरिचरणकमलद्वन्द्वम् । नमन्ति स्म ॥ ३७ ॥ स्वभक्तत्यागिगृहिणोर्लक्ष्म स्वं भजतोर्गतिम् । देहान्तेऽभजतश्चाह यः स मेऽस्तु हरिर्गतिः ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्सूनुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां चतुर्दशस्तरङ्गः ॥ १४ ॥

भक्तस्य यस्य भक्तिस्तु हरेर्माहात्म्यबोधयुक् । भवेत्तल्लक्षणं प्रोक्तं स्फुटं पञ्चदशे ततः ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८७६) मार्गकृष्णतृतीयां

ईदृग्भक्तेन हित्वैव देहात्ममतिमञ्जसा । विशुद्धात्मस्वरूपेण भजनीयो हरिः सदा ॥ ३६ ॥ इति प्रभोर्वागमृतं
निपीय साधुः स चान्येऽपि सदःस्थभक्ताः । मुदं परां प्राप्य तदीयपादपद्मं नमन्ति स्म धृतोपदेशाः ॥ ३७ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते चतुर्दशस्तरङ्गः ॥१४॥

शकाब्दे विक्रमार्कस्य रसाश्ववसुभूमिते । मार्गकृष्णतृतीयायां वचोऽमृतमिदं हरेः ॥ १ ॥
तत्र दुर्गपुरे दुर्ग उत्तमस्य नरेशितुः । त्यागिगृहिसदःसंस्थो हरिरूचे सिताम्बरः ॥ २ ॥
भक्तिर्यस्य भवेत्कृष्णे स वर्तेतेत्थमन्वहम् । यद्यद्वदिष्यति वचः स्वयं कृष्णो नराकृतिः ॥ ३ ॥
तद्भक्तो वापि तत्तन्मे कार्यमस्ति निरन्तरम् । इति निश्चयवान् कुर्यात्प्रतीक्षां तस्य सादरम् ॥ ४ ॥

मार्गशीर्षमासागतबहुलपक्षतृतीयातिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥१॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमस्योत्तमाख्यस्य । नरेशितुर्नरनाथस्य । दुर्गे । त्यागिगृहिसदःसंस्थो नानादेशायातसाधुगृहस्थपरिषदि स्वोचरत्नसिंहासनाधिरूढः । सिताम्बरः स्वाङ्गधृतसकलश्वेतवसनः । हरिः । ऊचे स्वभक्तान्प्रति स्वयमेव जगाद ॥ २ ॥ भक्तिरिति । हे भक्ताः । यस्य भक्तस्य । कृष्णे । भक्तिर्नवधा भजनपूर्वं समाहात्म्यज्ञानो गाढानुरागः । भवेत् । स भक्तः । अन्वहं प्रतिदिनम् । इत्थं वक्ष्यमाणप्रकारेण । वर्त्तेत । तद्वर्त्तनप्रकारमाह सार्द्धैरष्टभिः । नराकृतिः । स्वयम् । कृष्णः । यद्यत् । वचः । वदिष्यति । यं यं कर्त्तव्यार्थं कथयिष्यतीत्यर्थः ॥ ३ ॥ तदिति । अथवा । तद्भक्तो नराकृतिश्रीकृष्णस्यैकान्तिकोभक्तजनोऽपि । यद्यद्वचो । वदिष्यति । तत्तद्वचः । स स तदुक्तः कर्त्तव्यार्थः । मे मम । निरन्तरम् । कार्यं कर्त्तुं योग्यम् । अस्ति विद्यते । इतीत्थम् । निश्चयवान्स भक्तः । तस्य वचसः । प्रतीक्षाम् । सादरं यथातथा । कुर्यात् । इति द्वयोरेकान्वयः ॥ ४ ॥

एतावदिति । तस्य भगवतः श्रीकृष्णस्य तदेकान्तभक्तस्य च । एतावत् । वचस्तु । मया । मन्तुं स्वीकर्तुम् । न शक्यम् । इतीत्थंभूतम् । वचस्तु । सः । पुमानुक्तविधो भगवद्भक्तपुरुषः । भ्रान्त्या सम्भ्रमेणापि । क्वापि कदाचिदपि । न ब्रूयात् हि ॥ ५ ॥ हृदय इति । स पूर्वोक्तविधो भक्तः । हृदये स्वमनसि । भगवन्मूर्तेः । धारणे चिन्तनेन स्थिरीकरणे । शूरः शौर्ययुक्त एव । अस्ति । तदद्दर्शने ध्याने भगवन्मूर्त्तिदर्शने न जायमाने सत्यपि । धारणे । क्वापि कदाचिदपि । वैक्लव्यं चित्तशैथिल्यम् । नाप्नुयात् ॥ ६ ॥ नित्यमिति । नित्यं प्रतिदिनम् । तद्ध्याने श्रीकृष्णमूर्त्तिचिन्तने । नवनवश्रद्धः । प्रथमे ध्यानारम्भदिने यथा नवा श्रद्धा द्वितीयेऽहनि ततोऽधिका एवमुत्तरोत्तरमुत्पद्यमानाधिकाधिकश्रद्ध इत्यर्थः । स भक्तः । हृदयोत्थितान् ध्यानकाले स्वहृदि जायमानान् । दुःसंकल्पान् । व्ययनयेत् । भगवन्महिमानुचिन्तनपूर्वं भगवन्मूर्त्तिचिन्तनेऽपरिमितगुणानां मायिकविपर्ययोपभोगे दुःखदोषानुदर्शनपूर्वकमपरिमितानामनर्थप्राप्तीनां च दर्शनेन विनाशयेदित्यर्थः । तद्ध्यानं भगवन्मूर्त्तिचिन्तनम् । न तु नैव । उत्सृजेत्त्यजेत् ॥ ७ ॥ महदिति । ध्यानाभ्यासपरायण एवं नित्यं भगवतो ध्यानाभ्यसनतत्परः स भक्तः । ईशस्य श्रीहरेः । महदतिशयितम् । माहात्म्यमक्षर-

एतावत्तु वचस्तस्य मन्तुं शक्यं मया न हि । इति तु क्वापि न ब्रूयाद्भ्रान्त्याऽपि स वचः पुमान् ॥ ५ ॥
हृदये भगवन्मूर्त्तेर्द्धारणे शूर एव सः । वैक्लव्यं नाप्नुयात् क्वापि धारणे तदद्दर्शने ॥ ६ ॥
नित्यं नवनवश्रद्धस्तद्ध्याने हृदयोत्थितान् । दुःसङ्कल्पान्व्यपनयेन्न तु तद्ध्यानमुत्सृजेत् ॥ ७ ॥
महन्माहात्म्यमीशस्य विबुध्यात्मानमात्मना । मन्येत पूर्णकामं च ध्यानाभ्यासपरायणः ॥ ८ ॥
कृष्णमूर्तिं धारयतो हृदि तत्स्फुरणं यदि । न जायेत तथाप्येष मुहुस्तद्ध्यानमाचरेत् ॥ ९ ॥
एवं कुर्वन् दीर्घदृष्टिरादेहपतनादपि । निर्वेदं नाप्नुयात्क्वापि हृदि तद्दृढनिश्चयात् ॥ १० ॥
अनेकजन्मसंसिद्धस्ततो याति परां गतिम् । इति कृष्णवचः स्मृत्वा न ध्यानविरतो भवेत् ॥ ११ ॥

परत्वादिमहिमानम् । विबुध्य ज्ञात्वा । आत्मना स्वबुध्या । आत्मानं स्वम् । पूर्णकामं सम्प्राप्तसकलमनोरथम् । मन्येत ॥ ८ ॥ कृष्णेति । कृष्णमूर्त्तिं श्रीकृष्णस्वरूपम् । धारयतश्चिन्तयतोऽस्य भक्तस्य । हृदि मनसि । यदि यर्हि । तत्स्फुरणं तस्य मूर्त्तिस्फूर्त्तिः । न जायेत न भवेत् । तथापि । एष भक्तः । मुहुः पुनः पुनः । तद्ध्यानम् । आचरेत् ॥ ९ ॥ एवमिति । एवममुना प्रकारेण । कुर्वन् सदा ध्यानं समाचरन् । दीर्घदृष्टिः स्वकृतभगवद्ध्यानक्रियाजन्यभगवन्मूर्त्तिसदास्फुर्त्तिरूपमहाफलप्रत्यक्षवीक्षणरूपायतबुद्धिर्भक्तः । तद्दृढनिश्चयादुपायसहस्रैरपि भगवद्ध्यानाचरणस्य स्वहृदि सुस्थिरनिश्चयाद्धेतोः । आदेहपतनात्स्वदेहपातकालमवधीकृत्यापि । हृदि स्वमनसि । क्वापि कदाचिदपि । निर्वेदं ध्यानोद्यमराहित्यम् । नाप्नुयात् ॥ १० ॥ अनेकेति । अनेकजन्मसंसिद्धस्ततो याति परां गतिम् । इतीत्येवंभूतम् । कृष्णवचः । स्मृत्वा । ध्यानविरतो भगवद्ध्यानादुपरतः । न भवेत् ॥ ११ ॥

एकान्तिक इति । सद्वाक्यविश्वस्तो भगवदेकान्तिकसाधूक्तवचनविश्वासवान् । उदारबुद्धिर्महामतिः । असौ । भक्तः । एकान्तिको भगवत एकान्तिकभक्तः । उदीरितः मया युष्मभ्यं कथितः । इतीत्थंभूतम् । प्रभोः श्रीहरेः । वागमृतं वचनपीयूषम् । नीपीय । सदःस्थाः सभायां निषण्णाः । सर्वे सकला अपि त्यागिगृहिभक्तजनाः । मुदिता अतिहृष्टाः । बभूवुर्जायन्ते स्म ॥ १२ ॥ स्वस्यैकान्तिकभक्तस्य स्ववचः पालनादि यः । लक्ष्म्याह स हरिर्मह्यं देयात्स्वैकान्तभक्तताम् ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्स्नुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां पञ्चदशस्तरङ्गः ॥ १५ ॥

हरेर्भक्तस्य यस्यैव भवेत्सदसदर्थयोः । विवेको लक्षणं तस्य षोडशे तूदितं स्फुटम् ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८७६) सहसो मार्गशीर्षमासस्य । कृष्णेऽसितपक्षे । चतुर्थ्यां तिथौ । इदम् । हरेः । वचोऽमृतम् । अभवत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । आभयिक्ष्मेशमन्दिरे अभयनृपपुत्रस्योत्तमनृपतेर्दुर्गान्तर्वर्त्तिभवनाजिरे । भूरित्यागिगृहिसभासंस्थो नानादेशायातानां बहूनां त्यागिनां गृहिणां च घटायां रमणीयसौवर्णवुट्टवसनोपरिमृदुलास्तरणास्तृतोच्चसिंहासने

एकान्तिको भक्त उदीरितोऽसौ सद्वाक्यविश्वस्त उदारबुद्धिः । इति प्रभोर्वागमृतं निपीय सर्वे सदःस्था मुदिता बभूवुः ॥ १२ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते पञ्चदशस्तरङ्गः ॥ १५ ॥

शकाब्दे विक्रमार्कस्य रसाश्ववसुभूमिते । चतुर्थ्यां सहसःकृष्णे वचोऽमृतमिदं हरेः ॥ १ ॥ तत्र दुर्गपुरे कृष्ण अभयिक्ष्मेशमन्दिरे । भूरित्यागिगृहिसभासंस्थः प्राह सितांशुकः ॥ २ ॥ कृष्णभक्तस्य यस्य स्यात्सम्यक् सदसदर्थयोः विवेकः स हि जानीयात्स्वनिष्ठानगुणानपि ॥ ३ ॥ विवेकस्य बलेनैव जह्यादपि स तांस्ततः । कार्ष्णानां तु गुणानेव गृह्णीयादितरांस्त्यजन् ॥४॥ न्राकृतावपि कृष्णे तु नेक्षत ह्यगुणं क्वचित् । भगवान्वा तदीयो वा यद्यत्स्वं वचनं वदेत् ॥५॥

निषण्णः । सितांशुकः सकलश्वेतवसनधारी । कृष्णः श्रीहरिकृष्णो भगवान् । प्राहाप्रेरितः केनचिदपि तथापि भक्तजनहिताय स्वयमेव जगाद ॥ २ ॥ कृष्णेति । हे भक्ताः । यस्य । कृष्णभक्तस्य । सदसदर्थयोः सदर्थः कालादिनाऽन्यथाभावापत्त्यनर्हो मायाकार्यरूपस्तयोरित्यर्थः । सम्यग्यथार्थः । विवेको विविच्य तत्तत्स्वरूपवेदनम् । स्याद्भवेत् । स भक्तः । स्वनिष्ठान् । अगुणान् लोभादिदोषान् । जानीयात् । अपि शब्दान्निर्मानादीन् गुणानपि जानीयादिति योज्यम् ॥ ३ ॥ विवेकस्येति । ततस्तदनन्तरम् । स इत्थंभूतविवेकवान् भक्तः । विवेकस्य । बलेनैव । तान्दोषान् । जह्यात् । अपिशब्दाद्दोषपोषकजनसङ्गमपि जह्यादिति सूचितम् । कार्ष्णानां तु साक्षाच्छ्रीकृष्णभक्तानां त्यागिनां गृहिणां च । इतरान्दोषान् । त्यजन्सन् । गुणानेव । गृह्णीयात् ॥ ४ ॥ न्रिति । न्राकृतौ धृतमनुष्यसमानाकारेऽपि । कृष्णे तु । क्वचित्कदाचिदपि । अगुणं कमपि दोषम् । नेक्षेत । हि । प्रत्युत गुणानेव । वीक्षेतेत्यर्थः । भगवान्साक्षाच्छ्रीकृष्णः । अथवा । तदीयो भगवदेकान्तिकभक्तः । यद्यत् । वचनम् । स्वमात्मानं प्रति । वदेत्कथयेत् ॥ ५ ॥

तदिति । तत्तद्वचनम् । परं सत्यं परमसत्यरूपम् । ज्ञात्वा । तत्र वचने । न संशयीत संशयं न कुर्यात् । असतोऽसत्संज्ञयाऽभिहितानष्टावशुभदेश-कालादीन् । लक्षणैः । ज्ञात्वा । तत्सङ्गमसद्देशादिप्रसङ्गम् । दूरतः । त्यजेत् । चकारात्सत्संज्ञयाभिहितानष्टौ शुभदेशकालादीन् लक्षणैर्ज्ञात्वा तत्सङ्गं सर्वथा कुर्यादिति ज्ञेयम् । इति द्वयोरेकान्वयः । सद संद्देशकालादिलक्षणानि सत्सङ्गिजीवनस्थतृतीयप्रकरणस्य धर्मसिद्धिनामध्यायादवगन्तव्यानि शुकानन्दमुनिकृतबुद्धिप्रदीपग्रन्थाद्वा ॥ ६ ॥ सतामिति । सतां भगवदेकान्तिकसाधूनाम् । वाक्यादुपदेशवचनात् । वपुर्देहश्च प्राणा एतन्मुखाः पञ्चासवश्च इन्द्रियाणि चक्षुः श्रोत्रादीनि करणानि च हृन्मनश्च तेभ्यः । विलक्षणं स्वरूपस्वभावादिभिर्भिन्नम् । द्रष्टारं वपुरादिप्रेक्षकम् । आत्मानं स्वं जीवम् सम्यग्यथातथा । सत्यं सत्यरूपम् । विद्याज्जानीयात् । इतरदात्मनोऽन्ये वपुरादि-कम् । सम्यक् । मृषा असत्यम् । विद्यात् ॥ ७ ॥ एवमिति । एवमुक्तप्रकारेण आत्मस्वरूपेण । वर्त्तमानः । स विवेकी भक्तः । मनोभवैर्मनसः समुत्पन्नैः । सङ्कल्पैः सह । एकतामेकभावं तादधीन्यमित्यर्थः । कदाचन नैव प्राप्नुयात् । देहदैहिकाहंममत्वविधापनपूर्वं देहादिभोग्यविषयेषु गुणग्रदर्शकान्मनःकृतांस्तत्सङ्कल्पान्स्वानर्थ-

तत्तज्ज्ञात्वा परं सत्यं संशयीत न तत्र च । असतो लक्षणैर्ज्ञात्वा तत्सङ्गं दूरतस्त्यजेत् ॥ ६ ॥ सतां
वाक्याद्वपुःप्राणेन्द्रियहृद्भ्यो विलक्षणम् । सत्यं द्रष्टारमात्मानं सम्यग्विद्यान्मृषेतरत् ॥ ७ ॥ एवमात्मस्वरूपेण
वर्त्तमानो मनोभवैः । सङ्कल्पैरेकतां नैव प्राप्नुयात्स कदाचन ॥ ८ ॥ स्वधर्मे दूषणं येन स्यात्तत्कर्म स
नाचरेत् । सर्वं विचारं गृह्णीयात्स्वानुकूलं न चान्यथा ॥ ९ ॥ एवंविधः स्यादिह यः स भक्तो ज्ञेयः
सुधीभिः सदसद्विवेकी । इति प्रभोस्तस्य वचोऽमृतं ते निपीय सर्वे मुदिताः सदःस्थाः ॥ १० ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचित्ते षोडशस्तरङ्गः ॥ १६ ॥

करान् ज्ञात्वा ततः पृथग्भूतं सुखरूपमात्मानं विबुध्य मनःसङ्कल्पाधीनो न भवेदित्यर्थः ॥ ८ ॥ स्वेति । येन कर्मणा स्वधर्मे स्वस्यैकान्तिकधर्मे । दूषणम् । स्यात् । तत्कर्म । स विवेकी भक्तः । नाचरेत् सर्वम् । विचारम् । स्वानुकूलम् । गृह्णीयात् । अन्यथा प्रतिकूलम् । न च नैव गृह्णीयात् । यतः स्वैकान्तिकधर्मपालनेनैवात्यन्तिकमोक्षो भवत्यतो यथा तत्पुष्टिः स्यात्तादृशं स्वहितकरं विचारमुपाददीतातो विपरीतं तं सर्वथा जह्यादेवेत्यर्थः ॥९॥ एवमिति । इह लोके । यः । भक्तः । एवंविधः पूर्वोक्तप्रकारः । स्यात् । स भक्तः । सुधीभिः सुमतिभिर्हरिभक्तजनैः । सदसद्विवेकी । ज्ञेयः । इत्येवंविधम् । प्रभोः । तस्य श्रीहरेः । वचोऽमृतम् । निपीय । सदःस्थाः सभायामुप-विष्टाः । ते । सर्वे त्यागिगृहिभक्ताः । मुदिता अत्यन्तहृष्टा आसन् ॥१०॥ विवेकिनः स्वभक्तस्य लक्षणं तत्त्वतस्तु यः । प्राह देयाद्विवेकं मे भक्तिधर्मसुतः स तम् ॥१॥
इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासक श्रीहरिकृष्णभगवत्स्नुरघुवीराचार्यविरचितायां सेतुमालाख्यां श्रीहरिवाक्यसुधासिन्धुटीकायां षोडशस्तरङ्गः ॥ १६ ॥

सत्सङ्गिषु कुसङ्गोऽल्पो यः स्यात्कश्चिदवस्थितः । उक्तः सप्तदशे त्यागस्तस्य तद्रूपरूपणात् ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् (१८७६) मार्गस्य मार्गशीर्षमासस्य । कृष्णपञ्चम्यां कृष्णपक्षपञ्चममीतिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमावासप्राङ्गणे उत्तमनृपत्यावासार्हदुर्गान्तर्वर्त्तिप्रत्यङ्मुखभवनस्य गर्भागारवितर्द्यजिरभूमौ । उत्तमे । पीठे नानाविधमणिनिचिते मृदुलतूलिकोपर्यास्तृतधवलोत्तरच्छदे पार्श्विकोपबर्हमण्डिते मञ्चोत्तमे । सितानि श्वेतानि सूक्ष्माण्यणुतन्तुव्युतानि घनानि निविडानि अम्बराणि अधोंशुक, प्रावार, शिरोवेष्टनवस्त्राणि यस्य तथाभूतः । स्वामी श्रीहरिः । व्यराजतातिप्रसन्नः संस्तत्रोपविवेशेत्यर्थः । अत्र व्यराजतेत्यत्र स्थितो व्युपसर्गो भगवतः पीतपुष्पापीडधारित्वं तथाविधकुसुमाकृतबहुहारधारित्वं च द्योतयति ॥ २ ॥ कथामिति । भागवतीं श्रीमद्भागवतसम्बन्धिनीम् । नित्यानन्दमुनिवाच्यमानाम् । कथाम् । शृण्वन् । वैष्णवराजिभिर्नानादेशसमायातत्यागिगृहिभगवद्भक्तानां सभावस्थितश्रेणिभिः । वृतः परिवेष्टितः । स श्रीहरिः । हृदये स्वमनसि । किञ्चित् । विचार्य क्षणमात्रं कमपि विचारं कृत्वेत्यर्थः । कथान्ते कथासमाप्तिसमये । सतो मुक्तानन्दगोपालानन्दादिसाधून्प्रति ।

शकाब्दे विक्रमार्कस्य रसाश्वबसुभूमिते । मार्गस्य कृष्णपञ्चम्यां वचोऽमृतमिदं हरेः ॥ १ ॥
तत्र दुर्गपुरे स्वामी सितसूक्ष्मघनाम्बरः । व्यराजतोत्तमावासप्राङ्गणे पीठ उत्तमे ॥ २ ॥
कथां शृण्वन् भागवतीं वृतो वैष्णवराजिभिः । किञ्चिद्विचार्य हृदये कथान्ते सोऽब्रवीत्सतः ॥ ३ ॥
शृण्वन्तु सर्वे मद्वाक्यं साधवोऽन्ये च मच्छ्रिताः । अस्मत्सत्सङ्गिषु स्वल्पः कुसङ्गोऽपीक्ष्यते क्वचित् ॥ ४ ॥
अद्यारभ्य स निष्कास्यः सर्वतोऽपि मदाज्ञया । निरुत्साहत्वमेवास्य रूपं धर्मादिपालने ॥ ५ ॥
केचिद्वदन्ति भगवद्वाक्यं धर्मांश्च कोऽञ्जसा । शक्तो भवेत् पालयितुं शास्त्रज्ञोऽपि पुमानिह ॥ ६ ॥

अब्रवीद्वक्ष्यमाणवाक्यं जगाद ॥३॥ शृण्वन्त्विति । हे साधवः ! । सर्वे भवन्तः । मच्छ्रिता मदाश्रिताः । अन्ये गृहिजनाश्च । मद्वाक्यम् । शृण्वन्तु । अस्मत्सत्सङ्गिषु मध्ये । क्वचित्कस्मिंश्चिज्जने । स्वल्पोऽणुमात्रः । कुसङ्गोऽपि । ईक्ष्यते स्थितोऽस्तीति मयानुमीयते इत्यर्थः ॥४॥ अद्येति । अद्यारभ्यास्माद्दिनादारभ्य । स कुसङ्गः । मदाज्ञया युष्मद्देशिकस्य स्वेष्टदेवस्य मम निदेशेन । सर्वतः यत्र यत्र स वर्त्तते तथाविधैः सर्वैरपि मदाश्रितैर्युष्माभिस्त्यागिगृहिजनैः । निष्कास्यः स्वस्वान्तःकरणाद्बहिरुत्सारणीयः । कोऽसौ कुसङ्ग इत्यत्र स्वयमेव तत्स्वरूपमाह । निरुत्साहत्वमिति । धर्मादिपालने भगवत्तोषहेतुभूतस्वधर्माद्याचरणे । आदिशब्दात् ज्ञानवैराग्यभक्त्यादिग्रहणम् । यत् । निरुत्साहत्वमुत्साहवर्जितत्वम् । तदेव । अस्य कुसङ्गस्य । रूपं स्वरूपम् । ज्ञेयमिति शेषः ॥५॥ अथैतत्स्वरूपं पुनः स्पष्टमाह चतुर्भिः । केचिदिति । केचित्केचन हरिभक्ताः । वदन्ति इत्थं भाषन्ते । भगवद्वाक्यं ज्ञानवैराग्यसहितम् नवविधभक्त्याचरणरूपं भगवद्वचनम् । धर्मांस्तदुक्तानहिंसाब्रह्मचर्यपालनादिभक्तिपोषकसदाचारान् । अञ्जसा तत्त्वतो यथार्थतयेत्यर्थः । पालयितुं यावज्जीवमाचरितुम् । इहास्मिन् । लोके सत्सङ्गे वा । शास्त्रज्ञः विशेषतो विदितसकलशास्त्राभिप्रायोऽपि । कः । पुमान् । शक्तः समर्थः । भवेत् । न कोऽपीत्यर्थः ॥ ६ ॥

अत इति । अतो हेतोः । तत्पूर्वोक्तं भगवद्वाक्यम् । ते पूर्वोक्ता धर्माश्च । स्वशक्त्या स्वबलानुरूपम् । पाल्याः । अथ यथावद्भगवद्वाक्यादावपालिते सत्यपि । महाप्रभुरतिसमर्थोऽस्माकमिष्टदेवः साक्षाच्छ्रीहरिः । अधमोद्धारकोऽधमजनानामप्युद्धारकर्त्ता । अस्ति । इति हेतोः । नोऽस्माकम् । कल्याणम् । करिष्यति ॥ ७ ॥ केचिदिति । केचिदन्ये केचन हरिभक्ताः । वदन्त्यमुना प्रकारेण भाषन्ते हृदि स्वमनसि । भगवद्रूपं श्रीहरेर्मूर्त्तिम् । धारयितुं ध्यानेन स्थिरीकर्त्तुम् । ध्यातुर्ध्यानकर्तुः । कस्यापि । देहिनः । सामर्थ्यम् । न भवत्येव ॥ ८ ॥ भगवानिति । भगवान् श्रीहरिरेव । प्रीतः कृपया प्रसन्नः सन् । यम् । पुरुषम् । तत्स्वस्वरूपम् । धारयति ध्याने स्थिरं कारयति । स पूरुष एव । तस्य भगवद्रूपस्य । धारणे । शक्नुयात् । स्वेच्छया ध्यानकर्तृपुरुषसङ्कल्पेन । न तु तस्य धारणे नैवशक्नुयात् ॥ ९ ॥ कृत्वेति । हे साधवः । इत्थममुना प्रकारेण । शिथिलां निरुत्साहाम् । वार्त्ताम् । कृत्वा । ते पूर्वोक्तरीत्या निरुत्साहवार्त्ताकारकपुरुषाः । धीरान् धर्मादीनां यथावत्पालने समर्थानपि । कांश्चित् । नरान् । शिथिलान्निरुत्साहान् । कुर्वन्ति । अयमित्थंविध एव । कुसङ्गः । उदीर्यते मया कथ्यते ॥ १० ॥ अद्येति । ततो हेतोः । अद्यारभ्यैतद्दिन-

अतः स्वशक्त्या तत्ते च पाल्या अथ महाप्रभुः । अधमोद्धारकोऽस्तीतिकल्याणं नः करिष्यति ॥ ७ ॥
केचिद्वदन्ति भगवद्रूपं धारयितुं हृदि । सामर्थ्यं न भवत्येव ध्यातुः कस्यापि देहिनः ॥ ८ ॥
भगवानेव यं प्रीतस्तद्धारयति पूरुषम् । स एव शक्नुयात्तस्य धारणे स्वेच्छया तु न ॥ ९ ॥
कृत्वेत्थं शिथिलां वार्त्तां काँश्चिद्धीरान् नरानपि । कुर्वन्ति शिथिलांस्ते च कुसङ्गोऽयमुदीर्यते ॥ १० ॥
अद्यारभ्य ततो वार्त्ता निरुत्साहा तु केनचित् । पुंसा पुंसु न कर्त्तव्या स्त्रिया स्त्रिषु च कर्हिचित् ॥ ११ ॥
सोत्साहानां नराणां तु नैवासाध्यं हि किञ्चन । अत उत्साहयुग्वार्त्ता कर्त्तव्या मामकैः सदा ॥ १२ ॥
निरुत्साहां तु यो वार्त्तां कुर्यादज्ञानतः क्वचित् । सोऽपि कुर्यादेकदिनमुपवासं स्वशुद्धये ॥ १३ ॥

प्रभृति । केनचित् । पुंसा हरिभक्तनरेण । पुंसु हरिभक्तपुरुषाणां पुरत इत्यर्थः । निरुत्साहा । वार्त्ता तु । कर्हिचित्कदाचिदपि । न कर्त्तव्या । स्त्रिया हरिभक्तया कयाचिदपि नार्या स्त्रीषु हरिभक्तस्त्रीणां पुरत इत्यर्थः । निरुत्साहावार्त्ता कर्हिचिन्न कर्त्तव्या ॥ ११ ॥ सोत्साहानामिति । हि यतः । सोत्साहानां धर्मादिपालने उत्साहसहितानाम् । नराणां हरिभक्तजनानां तु । किञ्चन किमपि धर्मपालनादिकम् । असाध्यं यथार्थतयापालयितुमशक्यम् । नैवास्ति । किन्तु सर्वं साध्यमेवास्ति । अतो हेतोः । मामकैर्मदाश्रितैः सर्वैर्जनैः । निरन्तरम् । उत्साहयुक् । वार्त्ता । कर्त्तव्या । इदमेव सत्सङ्गतः कुसङ्गं निष्कासनमिति भावः ॥ १२ ॥ निरुत्साहवार्त्ताकरणे प्रायश्चित्तमाह निरुत्साहामिति । यो भगवद्भक्तः । क्वचित्कदाचित् । अज्ञानतोऽबुद्धिपूर्वम् । निरुत्साहाम् । वार्त्ताम् । कुर्यात् । सोऽपि भगवद्भक्तस्तु । स्वशुद्धये । एकदिनमहोरात्रमित्यर्थः । उपवासम् । कुर्यात् ॥ १३ ॥

इत्थमिति । इत्थमेवंविधाम् । हरेः । वाक्यसुधां वचनामृतम् । निपीय । तदीयशिष्याः श्रीहरेः शिष्यत्वं प्राप्ता भक्ताः । सर्वे पुरुषास्त्यागिगृहिपुमांसः । स्त्रियस्तथाविधाः सर्वा नार्यश्च । भूमौ । तथैव श्रीहर्युक्तप्रकारेणैव । अवर्त्तन्त । एतदेव स्पष्टमाह । धर्मादिदाढर्ये स्वधर्मादीनां दृढत्वसम्पादने । निरतास्तत्पराः । बभूवुः ॥१४॥ येऽपानुदत्स्वाश्रितेषु कुसङ्गाल्पं तु सर्वथा । कृपया श्रीहरिः पायात्कुसङ्गात्सर्वदा स माम् ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्पदानुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां सप्तदशस्तरङ्गः ॥ १७ ॥

विषयाणां सदसतां हेतूनामन्तरस्य तु । शुद्ध्यशुध्योर्लक्षणानि प्रोक्तान्यष्टादशे ततः ॥ १ ॥ शकेति शकेति पूर्वार्द्धं व्याख्यातम् । (१८७६) सहोमासे मार्गशीर्षमासे । कृष्णषष्ठ्यां कृष्णपक्षस्य षष्ठिकातिथौ । इदम् । हरेः । वचोऽमृतम् । बभूव ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । आभयेऽभयनृपतेर्दुर्गे कोट्टे । गृहाङ्गणे तस्यैव प्रत्यङ्मुखनिवासगृहाजिरभूमौ । मञ्चे स्वभक्तैस्तूलिकोत्तरच्छदाद्यास्तीर्यपरिष्कृते पर्यङ्के । स्थिते इति शेषः । स श्रीहरिः । निशो रात्रेः । अन्तिमे चरमे । यामे

इत्थं हरेर्वाक्यसुधां निपीय तदीयशिष्याः पुरुषाः स्त्रियश्च । भूभाववर्त्तन्त तथैव सर्वे धर्मादिदार्ढ्ये निरता बभूवुः ॥ १४ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते सप्तदशस्तरङ्गः ॥१७॥

शकाब्दे विक्रमार्कस्य रसाश्ववसुभूमिते । कृष्णषष्ठ्यां सहोमासे वचोऽमृतमिदं हरेः ॥ १ ॥ तत्र दुर्गपुरे दुर्गे आभये स गृहाङ्गणे । मञ्चे न्यषीदत्स्वस्थानादेत्य यामेऽन्तिमे निशः ॥ २ ॥ सितवासाः स भक्तान् स्वानाह्वयामास सर्वशः । तदन्तिकमुपेत्याशु न्यषीदंस्ते प्रणम्य तम् ॥ ३ ॥ कृत्वा विचारं स्वहृदि मुहूर्त्तमथ सोऽब्रवीत् । शृणुतैकेन मनसा यूयं सर्वे मदाश्रयाः ॥ ४ ॥ स्निग्धभक्ताः स्थ मे यूयमतो गुह्यमपि ब्रुवे । एतां बुद्धिं य आतिष्ठेद्भवेन्मुक्तः स एव हि ॥ ५ ॥

प्रहरे । स्वस्थानात्स्वावासभवनात् । एत्यागत्य । न्यषीददुपविवेश ॥ २ ॥ सितेति । सितवासाः सकलश्वेतवसनधरः । स श्रीहरिः । सर्वशः सर्वान् । स्वान्स्वकीयान् । भक्तान् नानादेशागतांस्त्यागिगृहिभक्तजनान् । आह्वयामास मयजित्पार्षदं सम्प्रेष्याकारयामास । ते हरिणा आकारिता भक्ताः । आशु शीघ्रमेव । तदन्तिकं श्रीहरिसमीपम् । उपेत्य प्राप्य । तं श्रीहरिम् । प्रणम्य । न्यषीदन्सभायां यथोचितमुपविविशुः ॥ ३ ॥ कृत्वेति । अथानन्तरम् । स श्रीहरिः । स्वहृदि । मुहूर्त्तं घटिकाद्वयपर्यन्तम् । विचारम् । कृत्वा । अब्रवीत्स्वभक्तान्प्रति स्वयमेवोवाच । हे भक्ताः ! । मदाश्रयाः । सर्वे । यूयम् । एकेनैकाग्रेण । मनसा शृणुत ॥ ४ ॥ स्निग्धेति । यूयम् । मे मम । स्निग्धभक्ता अतिप्रिया भक्तजनाः । स्थ भवथ । 'त्रिषु निष्पन्ने स्निग्धं स्नेहयुतेचिक्कणेऽपि स्यादि'ति मेदिनी । अतो हेतोः । गुह्यं रहस्यत्वादन्यसमीपेऽवाच्यमपि । ब्रुवे गुरुत्वाद्युष्मभ्यं कथयामि । 'ब्रूयुः स्निग्धस्य शिष्यस्य गुरवो गुह्यमप्युते'ति श्रीभागवतोक्तेः । यो भक्तजनः । एतां मया वक्ष्यमाणाम् । बुद्धिम् । आतिष्ठेदाश्रयेत् । स भक्तजन एव मुक्तः । भवेत् । अनाद्यज्ञानरूपमायाबन्धनवर्जितः स्यादित्यर्थः । हि निश्चितम् ॥ ५ ॥

अन्य इति । अन्यो मया वक्ष्यमाणवुद्ध्याश्रयवर्जितो भक्तजनस्तु बुद्धिकल्पितैः स्वमतिसङ्कल्पितैः । साधनैः । वेदा ऋगादयश्चत्वारोऽपि निगमाश्च शास्त्राणि द्वौ योगौ द्वे च मीमांसे द्वौ तर्कावित्येवंभूता ग्रन्थाश्च पुराणानि ब्राह्मादीन्यष्टादशापि च तान्यादयो येषामितिहासार्षरामायणादीनां तेषां पठनमध्ययनं च श्रवणं च ते आदी-येषां पाठनविचारणादीनां तैश्च । मुक्तः । न भवेत् ॥ ६ ॥ अथ स्वभक्तहृदयेभ्यो गुणकर्मसङ्गोद्भूतमायिकविषयोपभोगसङ्कल्पांस्त्याजयिष्यन् स्वस्य स्वस्वभावानुकारिस्व-भाववत्स्वभक्तप्रियत्वं च सूचयन्नादौ स्वस्वभावं प्रदर्शयति त्रिभिः । नानेति । हे भक्ताः । नानाविधपदार्थानां मायिकविषयभोगसिद्धिहेतूनामनेकविधानां रमणीयानां सुवर्णालङ्काकारादिवस्तूनाम् । वहिर्बाह्यतः । सम्बन्धे । सत्यपि । चेद्यदि । अन्तरेऽन्तःकरणे । तद्भोगेच्छा तथाविधपदार्थभोगसङ्कल्पः । न स्यात् । तदा तर्ह्येव । मम । सुखम् । भवेत् ॥ ७ ॥ तदिति । चेद्यदि । मे मम । अन्तरन्तःकरणे । कदाचन । अल्पा लेशमात्रापि । तदिच्छा पदार्थभोगसङ्कल्पः । उत्तिष्ठेदुदियात् । तदा तर्ह्येव । तत्त्यागं तथाविधपदार्थत्यागम् । कुर्याम् । अन्यथा तत्त्यागं न कुर्यां चेत्तर्हि । सुखम् । न भवेन्मदात्मनि सुखं न स्यात् ॥ ८ ॥ एवमिति । सर्वदा

अन्यस्तु न भवेन्मुक्तः साधनैर्बुद्धिकल्पितैः । वेदशास्त्रपुराणादिपठनश्रवणादिभिः ॥ ६ ॥ नानाविधपदार्थानां सम्बन्धेऽपि बहिः सति । तद्भोगेच्छाऽन्तरे न स्याच्चेत्तदैव सुखं मम ॥ ७ ॥ तदिच्छाऽल्पाऽपि चेदन्तरुत्तिष्ठेन्मे कदाचन । तदैव कुर्यां तत्त्यागमन्यथा न सुखं भवेत् ॥ ८ ॥ एवंविधः स्वभावो हि वर्त्तते मम सर्वदा । ईदृक् स्वभावो यस्य स्यात्स मुक्तः स च मे प्रियः ॥ ९ ॥ भक्तानां हृदि विक्षेपं केषांचिद्वीक्ष्य चेतसि । मया विचारितं तस्य कारणं किं भवेदिति ॥ १० ॥ न तावदन्तःकरणं तद्धेतुः सर्वथा भवेत् । किन्त्वस्ति निश्चितं ज्ञानं तत्रात्मपर-मात्मनोः ॥ ११ ॥ तद्बलं तु समासाद्य प्रमादो वर्त्तते खलु । साक्षात्कृष्णस्य सम्प्राप्तिरात्मज्ञानं ममास्ति च ॥ १२ ॥

सर्वकालम् । मम । एवंविध उक्तप्रकारः । स्वभावः । वर्त्तते । यस्य भक्तस्य । ईदृगेवंभूतः । स्वभावः । स्यात् । स भक्तः । मुक्तः । स च । मे मम । प्रियः । भवति ॥ ९ ॥ भक्तानामिति । किञ्च । केषाञ्चित् । भक्तानाम् । हृदि मनसि । विक्षेपमेकान्तिकभगवद्भक्तप्राप्य–परमपुरुषार्थसाधनोद्योगरूप–स्वहितानुसन्धानरूपं विघ्नम् । वीक्ष्य दृष्ट्वा । मया । तस्य तद्विक्षेपस्य । कारणं हेतुः । किम् । भवेत् । इतीत्थम् । चेतसि मन्मानसे । विचारितम् ॥ १० ॥ किं कारणं विचारितमि-त्याकाङ्क्षायां यद्विचारितं तदाह त्रिभिः । नेति । तद्धेतुर्विक्षेपकारणम् । तावत् । अन्तःकरणं केवलं मनोबुद्ध्यहङ्कारचित्तात्मकमन्तरिन्द्रियचतुष्टयम् । सर्वथा । न भवेत् । किन्तु । तत्रान्तःकरणे । निश्चितं निर्णीतम् । आत्मपरमात्मनोः । ज्ञानम् । अस्ति विक्षेपहेतुर्भवति ॥ ११ ॥ तज्ज्ञानस्य कथं विक्षेपहेतुत्वमित्याकाङ्क्षायां तस्य विक्षेप-हेतुत्वप्रकारमाह तदिति द्वाभ्याम् । तद्बलं तस्यात्मपरमात्मज्ञानस्य बलम् । समासाद्य प्राप्य । प्रमादोऽनवधानता । वर्तते । खलु निश्चितम् । प्रमादस्वरूपमाह साक्षादिति । साक्षात्कृष्णस्य प्रत्यक्षश्रीकृष्णभगवतः । सम्प्राप्तिः । मम । अस्ति । आत्मज्ञानमहमात्मास्मीत्येवंविधोऽनुभवश्चापि । ममास्ति । अत इत्युत्तरेणान्वयः ॥ १२ ॥

अत इति । अतो हेतोः । मम । कार्यशेषः साधनसम्पादनरूपकर्त्तव्यार्थावशेषः । नास्ति । इत्येवंविधा । प्रमादिता । एवंविधोद्धर्षरूपप्रमादवत्त्वमित्यर्थः । अस्ति । इत्येतावदेवैतत्परिमितमेव । अस्यान्तःकरणस्य । सदोषत्वं विक्षेपहेतुदोषयुक्तत्वम् । विभाव्यते ज्ञायते ॥ १३ ॥ विशेषेणेति । अत्रान्तःकरणे । विशेषेण बहुतया तु । दोषो विक्षेपहेतुदूषणम् । ज्ञानेन्द्रियागतः श्रोत्रादिज्ञानेन्द्रियद्वारा समायातः । मया । विचारेण । निश्चितः । अस्ति । तं ज्ञानेन्द्रियागतान्तःकरणदोषम् । सङ्क्षेपेण । वदामि तत्प्रकारं कथयामीत्यर्थः ॥ १४ ॥ नानेति । अनेकार्थाननेकाभिधेयान् । यथा घटशब्दस्य कम्बुग्रीवादिमत्पदार्थरूपोऽभिधेयार्थस्तथैव नानावाच्यानित्यर्थः । नानाशब्दान् । श्रोत्रे श्रोत्रेन्द्रिये शृण्वति सति । तद्गता नानाशब्दनिष्ठाः । शुभाशुभाः समीचीनासमीचीनाः । गुणाः । अन्तकरणम् । प्रविशन्ति । हि निश्चितम् ॥१५॥ तत्प्रवेशेनान्तःकरणस्य शुभाशुभत्वसम्भवप्रकारमाह चतुर्भिः । शुभेनेति । अन्तःकरणम् । शुभेन । गुणेन । नैर्मल्यं शुद्धत्वम् । याति । लेभादिदोषवर्जितं भवतीत्यर्थः । अशुभेन । गुणेन । कालुषमशुद्धत्वम् । लेभादिदोषयुक्तत्वमित्यर्थः । याति । अत्र दृष्टान्तः । वासो धवलवस्त्रम् । रङ्गवशान्महारजननीलिरङ्गसम्बन्धतः । यथा रक्तत्व,

अतो न कार्यशेषोऽस्ति ममेत्येवं प्रमादिता । अस्तीत्येतावदेवास्य सदोषत्वं विभाव्यते ॥ १३ ॥ विशेषेण तु दोषोऽत्र ज्ञानेन्द्रियागतो मया । निश्चितोऽस्ति विचारेण संक्षेपेण वदामि तम् ॥ १४ ॥ नानाशब्दाननेकार्थान् श्रोत्रे शृण्वति तद्गताः । शुभाशुभा गुणास्त्वन्तःकरणं प्रविशन्ति हि ॥१५॥ शुभेन याति नैर्मल्यं कालुष्यमशुभेन च गुणेनेवान्तःकरणं वासो रङ्गवशाद्यथा ॥ १६ ॥ हिंस्रस्वैरिणीनां निर्मर्यादनृणां यदा । श्रुणोति शब्दांस्तर्ह्येव कालुष्यमुपयाति तत् ॥ १७ ॥ यथा सुरायाः पानेन पुंसो भङ्गारसस्य वा । विदोऽपि स्याद्धि वैचित्र्यं तथा तच्छ्रावणेन च ॥ १८ ॥ श्रुतः शब्दो भगवतस्तदीयानां च शोभनः । शोधयत्यन्तरं सद्यः पानीयमिव कातकम् ॥ १९ ॥

श्यामत्व, रूपाकालुष्यकालुष्ये गच्छति तथेति ॥ १६ ॥ हिंस्रेति । हिंस्रा हिंसाशीलाश्च स्वैरिणः स्वच्छन्दचारिणो व्यभिचारिणश्च स्वैरिण्यो व्यभिचारिण्यः स्त्रियश्च तासाम् । निर्मर्यादनृणां लोकवेदमर्यादामतिक्रम्य वर्त्तमानानां पुरुषाणां च । शब्दान् । यदा । शृणोति भगवद्भक्तोऽपि कश्चन जन आकर्णयति । तर्ह्येव । तत्तस्यान्तःकरणम् । कालुष्यम् । उपयाति ॥ १७ ॥ एतद्दृष्टान्तेन स्फुटयति । यथेति । यथा । सुरायास्त्रिविधान्यतमा या मदिरायाः । अथवा । भङ्गारसस्य विजयाख्यौपधिजलस्य पानेन । विदः शास्त्रज्ञस्यापि । पुंसः । वैचित्र्यं विकलचित्तवत्त्वम् । स्यात् हि भवेदेव । तथा । तच्छ्रवणेन हिंस्रादिजनोक्तशब्दश्रवणेन । कालुष्यमुपयातीति सम्बन्धः ॥ १८ ॥ श्रुत इति । भगवतः साक्षाच्छ्रीकृष्णस्य । तदीयानां तदेकान्तिकभक्तानां च श्रुतः । शोभनो धर्मादिप्रधानत्वात्समीचीनः । शब्दः । सद्यस्तत्क्षणमेव अन्तरमन्तःकरणम् । शोधयति निर्दोषं करोति । अत्र दृष्टान्तः । पानीयं कलुषजलम् । कातकं कतकवृक्षफलमिव । भाषायां निर्मली इति प्रसिद्धतरुफलमन्तःप्रक्षिप्तं सद्यः यथा आविलं जलं शोधयति तथा स शब्दोऽन्तरं शोधयतीत्यर्थः ॥ १९ ॥

एवमिति । एवमनेन प्रकारेणैव । इह लोके । स्पृश्याः स्पर्शार्हाः । पदार्थाः । अनेकविधा बहुप्रकाराः । सन्ति । त्वगिन्द्रियम् । अनेकधा बहुप्रकारान् । तत्तत्स्पर्शान् । उपादत्ते गृह्णाति ॥ २० ॥ शुभेति । ततस्तदनन्तरम् । तेषां तत्तत्स्पर्शानाम् । शुभाशुभाः । गुणाः । अन्तःकरणम् । यान्ति प्रविशन्ति । शुभैः गुणैः कृत्वा । तस्यान्तःकरणस्य । नैर्मल्यम् । स्यात् । तथा । इतरैरशुभैर्गुणैः । तस्य । कालुष्यम् स्यात् ॥ २१ ॥ सुरेति । सुरापानादिदृष्टान्तः । पूर्ववत् । सर्वत्र स्पर्शादिषु चतुर्ष्वपि । योज्यः । पापिस्पर्शः व्यभिचारादिपापवतां स्पर्शनम् । अशुद्धिहेतुरन्तःकरणस्य कालुष्यकारणम् । सतां भगवत्तदेकान्तिकसाधूनाम् । स्पर्शः । शुद्धिकृदन्तःकरणनैर्मल्यकारणम् ॥ २२ ॥ अयोग्यतेति । यदि यर्हि । सत्स्पर्शने । स्वस्य । अयोग्यता । भवेत् । तदा । तदङ्घ्रिस्पृष्टभूरेणुः भगवत्साधुचरणस्पृष्टभूमिधूलिः । आदरात् । त्वचा त्वगिन्द्रियेण । स्प्रष्टव्यः । अयोग्यताया अयं विवेकः । स्त्रीणां सर्वदैव तत्स्पर्शायोग्यता । पुंसां तदनाज्ञया सूतकादिना चायोग्यता । अन्त्यजानां जातित एव सर्वदाऽयोग्यता एवमन्यदप्यूह्यम् ॥ २३ ॥ चक्षुरिति । एवममुना प्रकारेणैव । चक्षुर्नेत्रेन्द्रियम् । यत् । रूपम् । गृह्णाति । तद्रूपमपि । अनेकधा बहुप्रकार-

एवं स्पृश्याः पदार्थाश्च सन्त्यनेकविधा इह । त्वगिन्द्रियमुपादत्ते तत्तत्स्पर्शाननेकधा ॥ २० ॥ शुभाशुभागुणास्तेषां यान्त्यतःकरणं ततः । शुभैःस्यात्तस्य नैर्मल्यं कालुष्यमितरैस्तथा ॥ २१ ॥ सुरापानादिदृष्टान्तो योज्यः सर्वत्र पूर्ववत् । पापिस्पर्शोऽशुद्धिहेतुः सतां स्पर्शश्च शुद्धिकृत् ॥ २२ ॥ अयोग्यता भवेत्स्वस्य यदि सत्स्पर्शने तदा । तदङ्घ्रिस्पृष्टभूरेणुस्त्वचा स्प्रष्टव्य आदरात् ॥२३॥ चक्षुर्गृह्णाति यद्रूपं तदप्येवमनेकधा । शुभोऽशुभो गुणस्तस्याप्यन्तरे शुद्धाशुद्धिकृत् ॥ २४ ॥ कृष्णस्य च तदीयानां पदार्थानां समीक्षणम् । अन्तःशुद्धिकरं ज्ञेयं पापिनां तदशुद्धिकृत् ॥ २५ ॥ जिह्वया स्वादनीयो यो रसः सोऽप्यस्ति नैकधा । जिह्वा गृह्णाति तं तस्य गुणास्त्वन्तर्विशन्ति हि ॥ २६ ॥ जातिदुष्टं भावदुष्टं स्पृष्टं चाशुचिदेहिना । कृष्णानर्पितमन्नादि स्वादितं ह्यन्तराघकृत् ॥ २७ ॥

मस्ति । तस्य रूपस्यापि । शुभः । अशुभश्चापि । गुणः । अन्तरेऽन्तःकरणे । शुद्धाशुद्धिकृत् शुद्धताया अशुद्धतायाश्च कारकः । भवति ॥ २४ ॥ तदेवाह । कृष्णस्येति । कृष्णस्य प्रत्यक्षश्रीकृष्णभगवतः । समीक्षणं दर्शनम् । तदीयानां श्रीकृष्णसम्बन्धिनाम् । प्रत्यक्षश्रीकृष्णसम्बन्धं प्राप्तानामित्यर्थः । पदार्थानां वासोभूषावाहनादिवस्तूनाम् । चकारात्तदीयानामेकान्तिकसाधूनां च । समीक्षणम् । अन्तःशुद्धिकरमन्तःकरणस्य शुद्धिकारकम् । ज्ञेयम् । पापिनां ब्रह्महत्यादिपापवतां जनानाम् । समीक्षणम् । तदशुद्धिकृत् तस्यान्तःकरणस्याशुद्धिकारकम् । ज्ञेयम् ॥ २५ ॥ जिह्वयेति । जिह्वया रसनेन्द्रियेण । स्वादनीय आस्वादितुं योग्यः । यः । रसः स रसोऽपि । नैकधाऽनेकविधः । अस्ति । तमनेकविधरसम् । जिह्वा । गृह्णाति । तस्य जिह्वागृहीतरसस्य । गुणाः शुभाशुभत्वभेदभिन्नरगतधर्माः । अन्तरन्तःकरणम् । विशन्ति । हि ॥२६॥ ते अन्तःप्रविश्य यत्कुर्वन्ति तदाह द्वाभ्याम् । जातीति । जातिदुष्टं लशुनपलाण्ड्वादि । भावदुष्टं यस्मिन् दृष्टे मांसादिस्मृतिर्भवेत्तथाविधमन्नादि । अशुचिदेहिना चाण्डालादिना

सूतकाद्यशुचिदेहवता वा । स्पृष्टं साक्षात् परंपरया वा स्पर्शदूषितमन्नादि । कृष्णानर्पितं श्रीकृष्णायानिवेदितम् । अन्नादि चकारादग्राह्यान्नजलादिना पुरुषेण पक्वस्यान्नादेर्ग्रहणम् । खादितं भक्षितं सत् । अन्तरायकृत् तद्गुणोऽन्तःकरणं प्रविश्य स्वगुणानुगुणं तद्दोषरूपं करोतीत्यर्थः । हि ॥ २७ ॥ विपरीतमिति । विपरितमुक्तविधजातिदुष्टादिभ्यो विपरीतरूपम् । अजातिदुष्टमभावदुष्टमनशुचिदेहिस्पृष्टं कृष्णार्पितरूपमित्यर्थः । ग्राह्यान्नेन यस्यान्नजलादिकं ग्राह्यं स्यात्तथाविधेनैवजनेन । रन्धितं पक्वम् । एतदेवान्नादिकम् । खादितं सत् । अन्तःकरणशुद्धिकृत् । भवति । हि । इति । अवगन्तव्यम् ॥ २८ ॥ घ्राणमिति । एवममुना प्रकारेण । घ्राणं नासिकेन्द्रियम् । यम् । गन्धम् । गृह्णाति । स गन्धोऽपि । अनेकधाऽनेकविधः । अस्ति । तस्य शुभा अशुभाश्च गुणा अन्तःकरणे विशन्ति इत्यध्याहार्यं पूर्वश्लोकेषु तथैवोक्तेः । अशुचीनि स्वयमशुद्धानि स्वस्वीकारकर्त्रशुचितापादकानि यानि द्रव्याणि सुरामांसपलाण्ड्वादीनि वस्तूनि तानि च पापिष्ठा महापापादिपापवन्तः पुरुषाश्च तेषां गन्धः । नासिकया घ्रातः सन्निति ज्ञेयम् । अन्तरमलावहोऽन्तःकरणस्य मलिनत्वसम्पादकः । भवति ॥ २९ ॥ कृष्णेति । कृष्णः स्वयं श्रीकृष्णश्च तद्भक्तास्तस्यैकान्तिका भक्तजनाश्च तद्वस्तूनि श्रीकृष्णतथाविधत-

विपरीतं त्वेतदेव ह्यन्तःकरणशुद्धिकृत् । भवतीत्यवगन्तव्यं ग्राह्यान्नेनैव रन्धितम् ॥ २८ ॥ घ्राणं गृह्णाति यं गन्धं
सोऽप्यस्त्येवमनेकधा । अशुचिद्रव्यपापिष्ठगन्धोऽन्तरमलावहः ॥ २९ ॥ कृष्णतद्भक्ततद्वस्तुगन्धो घ्रातश्च नासया ।
सद्योऽन्तःकरणं शुद्धं करोतीत्यवधार्यताम् ॥ ३० ॥ एवं विज्ञाय पञ्चापि विषयाः शुद्धिहेतवः । सेव्यास्तद्विपरीतास्तु परिहार्या विदूरतः ॥ ३१ ॥ एतेषां सेवनमपि स्वस्वधर्माविरोधतः । कर्त्तव्यं न तु तं हित्वा युष्माभिर्मदुपाश्रितैः ॥ ३२ ॥ यतो ज्ञानेन्द्रियाण्येव भक्तिविक्षेपहेतवः । अतस्तानि नियम्यैव वर्तनीयानि सत्पथे ॥ ३३ ॥
दुर्दान्ताश्वानिवैतानि रज्ज्वा बुद्ध्या मदुक्तया । नियच्छेत्पुरुषो धीरः स्वार्थभ्रष्टोऽन्यथा भवेत् ॥ ३४ ॥

द्भक्तसम्बन्धसम्प्राप्तगन्धपुष्पादिपदार्थाश्च तेषां गन्धः । नासया नासिकेन्द्रियेण । घ्रातः शिङ्घितः सन् । सद्यस्तत्क्षणमेव । अन्तःकरणम् । शुद्धम् । करोति । इत्यमुना प्रकारेण । अवधार्यतां निश्चीयताम् ॥ ३० ॥ एवमिति । एवममुना प्रकारेण । विज्ञाय । शुद्धिहेतवो यैरन्तःकरणं शुद्धं भवेत्तथाविधाः । पञ्चापि । विषयाः । सेव्याः । तद्विपरीताः स्वान्तकरणस्याशुद्धिहेतवस्तु । विदूरतः । परिहार्याः । अतिदूरादेव त्याज्या इत्यर्थः ॥३१॥ एतेषामिति । मदुपाश्रितैः । युष्माभिः । एतेषां शुद्धिहेतुविषयाणम् । सेवनमपि । स्वस्वधर्माविरोधतः यैः सेवितैः स्वस्वविरोधो न भवेत्तथैवेत्यर्थः । कर्त्तव्यम् । तं स्वस्वधर्मम् । हित्वा । न तु नैव कर्त्तव्यम् ॥३२॥ यत इति । यतो हेतोः । ज्ञानेन्द्रियाण्येव । भक्तिविक्षेपहेतव उक्तरीत्या भक्तस्य भगवद्भक्त्यावन्तरायकारणानि भवन्ति । अतो हेतोः । तानि ज्ञानेन्द्रियाणि । नियम्य तेषामशुद्धिहेतुविषयेषु प्रसरणमवरुध्यैवेत्यर्थः सत्पथे शुद्धिहेतुविषयसेवनरूपे सन्मार्गे । वर्त्तनीयान्यवस्थाप्यानि ॥ ३३ ॥ दुर्दान्तेति । धीरो धैर्ययुक्तः । पुरुषो मुमुक्षुभक्तः । दुर्दान्ताश्वानतिदुःखदमनीयान्वाजिनः । रज्ज्वेव दाम्ना यथा । एतानि पञ्चापि ज्ञानेन्द्रियाणि । मदुक्तया पूर्वोक्तप्रकारेण मया कथितया । बुद्ध्या । नियच्छेदशुद्धिहेतुविषयप्रसरणात्तन्नियमनं कुर्यात् । अन्यथा एवंकरणाभावे । स्वार्थभ्रष्टः स्वपरमनिःश्रेयससाधनैकान्तिकधर्मरूपात्स्वार्थाच्च्युतः । भवेत् ॥ ३४ ॥

न केवलं मुमुक्षोरेव स्वार्थभ्रष्टत्वमपि तु मुक्तस्याप्यन्यथात्वे तथात्वप्रसङ्ग इत्याह । सनकेति । यः । योगी । सनकादिसमानः सन्नपि । प्रमादवानुक्तरीत्या स्वकीयेन्द्रियनियमने प्रमादयुक्तः भवेत् । तर्हि । स योग्यपि । इन्द्रियाणाम् । कामचारादन्तराशुद्धिहेतुविषयेषु स्वेच्छाचारप्रदानतः । अधोगतिम् । यायात् प्राप्नुयात् ॥ ३५ ॥ उक्तानुवादपूर्वमन्तःकरणशुद्धिफलमाह । इन्द्रियाणामिति । इन्द्रियाणां श्रोत्रादिकरणानाम् । स्वविषयाहारशुद्ध्या शब्दादिस्वस्वविषयरूपाहारशुद्धिविधानेनैव । अन्तःकरणम् । शुद्धताम् । याति । तत्र शुद्धान्तःकरणे । कृष्णध्यानम् । सिद्ध्यति । तथा च श्रुतिः । 'आहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा स्मृति'रिति । इदमन्येषामपि भक्त्यङ्गानामुपलक्षणम् ॥ ३६ ॥ पञ्चस्विति । पञ्चसु ज्ञानेन्द्रियाख्येषु पञ्चसु करणेषु मध्ये । एकतमस्यापि यस्य कस्याप्येकस्येन्द्रियस्यापि । मलिनाहारदापनेऽशुद्धिहेतुविषयसंचारप्रदाने कृते सति । तदन्तःकरणम् । मालिन्यमशुद्धितामेव । प्रयाति । अतो हेतोः । सकलानि पञ्चापि धीन्द्रियाणि । नियच्छेत्ततस्तन्नियमनं विदध्यात् । 'पञ्चेन्द्रियस्य मर्त्यस्य छिद्रं चेदेकमिन्द्रियम् । ततोऽस्य स्रवति प्रज्ञा दृतेः पादादिवोदकमि'ति विदुरोक्तेः ॥ ३७ ॥ अन्तःकरणेति । बाह्यसङ्गोऽपि । बहिर्वर्त्तमानः सदसद्देशादिप्रसङ्गोऽपि ।

सनकादिसमानोऽपि यस्तु योगी प्रमादवान् । कामचारादिन्द्रियाणां सोऽपि यायादधोगतिम् ॥ ३५ ॥ इन्द्रियाणां स्वविषयाहारशुद्ध्यैव शुद्धताम् । यात्यन्तःकरणं तत्र कृष्णध्यानं च सिद्ध्यति ॥ ३६ ॥ पञ्चस्वेकतमस्यापि मलिनाहारदापने । मालिन्यं तत्प्रयात्येव नियच्छेत्सकलान्यतः ॥ ३७ ॥ अन्तःकरणविक्षेपे बाह्यसङ्गोऽपि कारणम् । यादृक्सङ्गो भवेत्पुंसस्तादृशं हि मनो भवेत् ॥३८॥ सप्तभौमे महासौधे दर्पणालिविराजिते । स्रग्गन्धवासोऽलङ्कारजुष्टस्त्रैणसभा भवेत् ॥ ३९ ॥ वेश्यानृत्यं सवादित्रं चषकाश्च सुराभृताः । तत्र स्युरुपदंशाश्च धूपाश्चागुरुजा अपि ॥ ४० ॥ भक्तोऽपि तत्र गत्वा चेन्निषीदेत्तर्हि तन्मनः । शुद्धमप्यन्यथैव स्याद्दोषात्संसर्गसम्भवात् ॥ ४१ ॥

अन्तःकरणविक्षेपेऽन्तःकरणस्य शुद्धत्वाशुद्धत्वभवने । कारणं हेतुः । भवति । हि यतः । पुंसः पुरुषस्य । यादृक्सङ्गो यथाविधदेशादिप्रसङ्गः । भवेत् । मनोऽन्तःकरणम् । तादृशं तथाविधम् । भवेत् । 'यादृशैः संनिविशते यादृशांश्चोपसेवते । यादृगिच्छेच्च भवितुं तादृग्भवति पूरुष'इति विदुरोक्तेः ॥ ३८ ॥ एतदेव दृष्टान्तेनाह पञ्चभिः । सप्तेति । दर्पणालिविराजिते उज्ज्वलमुकुरश्रेणिसंशोभिते । सप्तभौमे सप्तभिर्भूमिभिर्निर्मिते । महासौधे महति राजसदने विषये । स्रजः सुगन्धिपुष्पमालाश्च गन्धा अङ्गरागार्था नानाविधगन्धपदार्थाश्च वासांसि मृदुघननानारङ्गरञ्जितवस्त्राणि च अलङ्कारा नानाविधानि सुवर्णाद्याभरणानि च तैर्जुष्टाः समलङ्कृता ये स्त्रैणाः कामुकजनास्तेषां सभा गोष्ठी । भवेत् ॥ ३९ ॥ वेश्येति । सवादित्रं नानाविधांविपंच्यादिवाद्यवादनसहितम् । वैश्यानृत्यं वारयोषिन्नर्त्तनम् । सुराभृतास्तीव्रमदिरापूर्णाः । चषकाः काचादिकृतानि तत्पानपात्राणि । उपदंश्या नानाविधानि सुस्वादून्यारनालानि । अगुरुजा अगुरुचूर्णादिकृताः । धूपाश्चापि । तत्र महासौधे । स्युर्वेश्या नृत्यादि सर्वाणि भवेयुः ॥ ४० ॥ भक्त इति । भक्तः स्वधर्मनिष्ठः साक्षाद्भगवद्भक्तजनोऽपि । तत्र तथाविधे महासौधे । गत्वा । चेद्यदि निषीदेदुपविशेत् । तर्हि । शुद्धं निर्विकारमपि ।

तन्मनस्तस्य तथाविधभक्तस्य मानसम् । संसर्गसम्भवात्तत्सम्बन्धजातात् । दोषात् । अन्यथैव शुद्धविरुद्धमशुद्धमेवेत्यर्थः । स्याद्भवेत् ॥ ४१ ॥ धर्मेति । धर्मः स्वधर्मश्च ज्ञानमात्मपरमात्मादिवेदनं च विरागो वैराग्यं च तैराढ्या सम्पन्ना भक्तिः श्रीकृष्णस्य सप्रेमनवधाभजनं तस्या वार्त्ता ताम् । कुर्वतां परस्परं स्वपुरोनिषण्णजनाग्रे वा विदधताम् । कन्था शीतनिवारणार्थाजीर्णवस्त्रखण्डनिर्मिता त्रुटितगुप्तदोरकिका च जीर्णाम्बराणि परीधानीय प्रावरणीयादीनि जीर्णवस्त्राणि च तानि धरन्तीति तेषाम् । सतां भगवदेकान्तिकसाधूनाम् । उटजे पर्णशालायाम् । सभा । स्यात् ॥ ४२ ॥ तत्रेति । कश्चन । दुराचारः पराङ्गनासङ्गादिदुराचरणशीलः पुरुषोऽपि । तत्रोटजे । गत्वा । चेद्यदि । निषीदेत् । तदा तर्हि । तस्य दुराचारपुरुषस्य । दुष्टं कामादिवासनादूषितमपि । मनः । अन्यथैव अदुष्टं शुद्धमेवेत्यर्थः । स्यात् । हि निश्चितमेव ॥ ४३ ॥ एवमिति । एवममुना प्रकारेण । संसर्गजा वाह्यासत्सत्सङ्गसम्भवाः । दोषाः । गुणाश्च । सुधिया सुमतिना पुंसा । सदा सर्वकालम् । विवेचनीया विविच्य ज्ञेयाः । ततश्च । सतां भगवदेकान्तिकसाधुपुरुषाणाम् । सङ्गः । कर्त्तव्यः । असतां स्त्रैणाद्यसाधुपुरुषाणाम् । सङ्गः । न च कदाचिदपि नैव कर्त्तव्यः ॥४४॥ सदिति । भुवि

धर्मज्ञानविरागाढ्यभक्तिवार्त्तां च कुर्वताम् । कन्थाजीर्णाम्बरधृतां सभा स्यादुटजे सताम् ॥ ४२ ॥ तत्र गत्वा निषीदेच्चेद्दुराचारोऽपि कश्चन । तदा तस्य मनो दुष्टमपि स्यादन्यथैव हि ॥ ४३ ॥ एवं संसर्गजा दोषा गुणाश्च सुधिया सदा । विवेचनीयाः कर्त्तव्यः सतां सङ्गो न चासताम् ॥ ४४ ॥ सदसद्व्यक्तिविज्ञानं सुधियामेव जायते । कुधियां पशुतुल्यत्वात्कुतस्तत्सम्भवो भुवि ॥ ४५ ॥ अतः सुधीभिर्युष्माभिस्त्यागिभिर्गृहिभिस्तथा । सत्सङ्ग एव कर्तव्यो निःश्रेयसकरो नृणाम् ॥ ४६ ॥ असदाचरणत्यागभगवद्भक्तिबोधनम् । कुधीभ्योऽपीह कर्तव्यं मन्येरंस्ते वचो यदि ॥ ४७ ॥ भक्तो भूत्वा तु यः कश्चिद्भक्तमण्डलगोऽपि सन् । दुराचारोऽत्र दृश्येत स निष्कास्यः स्वमण्डलात् ॥ ४८ ॥

पृथिव्याम् । सुधियां सुबुद्धीनां जनानामेव सदसद्व्यक्तिविज्ञानं साध्वसाधुविवेचनबोधः । जायते । कुधियां कुबुद्धीनां जनानाम् । पशुतुल्यत्वान्नृत्वेऽपि तिर्यग्भावभाक्त्वाद्धेतोः तत्सम्भवः सदसद्व्यक्तिविज्ञानसम्भवः । कुतः कथं जायते न जायते एव ॥ ४५ ॥ अत इति । अतोऽस्माद्धेतोः । सुधीभिः । युष्माभिः । त्यागिभिः तथा । गृहिभिर्गृहस्थैः । नृणाम् । निःश्रेयसकरः । सत्सङ्गः पूर्वोक्तानां सतामेव सङ्गः । कर्त्तव्यः ॥४६॥ असदिति । इह लोके । यदि यर्हि । ते कुधियः । वचस्तद्धितकरं स्वकीयं वचनम् । मन्येरन्कर्त्तव्यतया स्वीकुर्युः । तदा । असतामधर्महेतुत्वान्नरकप्राप्तिफलत्वादसाधूनां परस्त्रीसङ्गादिकर्मणामाचरणं सेवनं तस्य त्यागः सर्वथा वर्जनं स च भगवद्भक्तिः संसृतिबन्धनिवर्त्तनहेतुर्भगवतः सप्रेमनवधाभजनाचरणं सा च तयोर्वोधनमुपदेशनम् । कुधीभ्यः कुबुद्धिजनेभ्योऽपि । कर्त्तव्यम् ॥ ४७ ॥ भक्त इति । अत्र लोके । यः । कश्चित् पुमान् । भक्तः । भूत्वा प्रथमतः सत्सङ्गं स्वीकृत्य । भक्तमण्डलगः सत्सङ्गिजनमण्डले स्थितः सन्नपि । दुराचारः सत्सङ्गविरुद्धदुष्टाचरणशीलः । दृश्येत सत्सङ्गिभिर्यदि वीक्ष्येत । तर्हि । स दुराचारः पुमांस्तु । स्वमण्डलात् । निष्कास्यः । अयमस्मदीयो न भवतीत्युद्घोषप्रवर्त्तनपूर्वं सत्सङ्गिमण्डले प्रवेष्टुं न देय इत्यर्थः ॥ ४८ ॥

अन्यथेति । अन्यथा तथाविधदुराचारजननिष्कासनेऽकृते सति तु । सङ्गदोषतस्तादृशजनसङ्गजन्यदोषप्राप्तेर्हेतोः । स्वेषाम् । अभद्रमशुभम् । भवेत् । अतो हेतोः । सर्पदष्टाङ्गुष्ठ इव कृष्णाहिसन्दष्टाङ्गुष्ठवत् । स दुराचारपुमांस्तु । दूरतः । त्याज्यः । दूरादेवत्यक्तव्यः ॥ ४९ ॥ एतदिति । सर्वैर्मदाश्रितैः सकलैरपि भवद्भिः एतत्पूर्वोक्तविधम् । मम । वचः । सर्वथा सर्वप्रकारेण । माननीयं कर्त्तव्यतया स्वीकर्त्तव्यम् । तेन मद्वचो माननेनैव । अहम् । युष्मत्कृतां युष्याभिः सम्यगापादिताम् । परमां सर्वोत्कृष्टाम् । सेवां मदीयां परिचर्याम् । मंस्ये मानयिष्यामि ॥ ५० ॥ सफलीकरणादिति । मच्छ्रमस्य प्रस्वापत्यागादिपूर्वं युष्मदग्र इत्थंभूतवार्त्ताकरणादिरूपस्य ममायासस्य । सफलीकरणान्मदुक्तप्रकारेण वर्त्तनस्य मनसि दृढीकरणेन सफलत्वविधानाद्धेतोः । अहम् । वो युष्मभ्यम् । आशिष शुभानाशीर्वादान् । दास्यामि । अथानन्तरम् । वयम् । सर्वे । अन्ते प्रारब्धभोगसाधनदेहावसाने । अक्षरेऽक्षरब्रह्माख्ये मदीये धामनि । एकत्रैकस्मिन्नेवस्थाने । वत्स्यामः अत्रैव तत्रापि सहैववासं करिष्यामः ॥ ५१ ॥ सत्सङ्गमिति । यः पुमान् । मे मदीयः । भूत्वा । सत्सङ्गं पूर्वोक्तप्रकारेण सतां समागमम् । इन्द्रियायाममशुद्धिहेतुविषयेभ्यः स्वस्वेन्द्रि-

अन्यथा तु भवेत्स्वेषामभद्रं सङ्गदोषतः । सर्पदष्टाङ्गुष्ठ इव त्याज्योऽतो दूरतः स तु ॥ ४९ ॥ एतन्मम वचः सर्वैर्माननीयं हि सर्वथा । तेनैव मंस्ये परमां सेवां युष्मत्कृतामहम् ॥ ५० ॥ सफलीकरणाच्चाहं मच्छ्रमस्याऽऽशिषोऽपि वः । दास्याम्यथैकत्र सर्वे वत्स्यामोऽन्तेऽक्षरे वयम् ॥५१॥ सत्सङ्गमिन्द्रयायाममसत्यागं च यः पुमान् । नाचरिष्यति मे भूत्वा मम तस्य च दूरता ॥ ५२ ॥ ब्रह्मराक्षसतां चापि स प्राप्स्यति न संशयः । भवे भ्रमन्क्वचित्काले भक्तेः फलमवाप्स्यति ॥ ५३ ॥ मदाचारं तु यो दृष्ट्वा तथा वर्त्तिष्यते पुमान् । अल्पसत्वोऽल्पबुद्धिः स प्राप्स्यत्येवाऽऽपदं द्रुतम् ॥५४॥ पराभाव्यो न विषयैर्ऋषिर्नारायणो यथा । भवाम्यनादिमुक्तश्च स्वतन्त्रः स्वस्वरूपदृक् ॥५५॥

यनियमनम् । असत्त्यागमुक्तप्रकारेणासाधुजनपरित्यजनं च । नाचरिष्यति । तस्य पुंसः । मम च । दूरताऽतिदूरन्तरम् । भविष्यतीति शेषः ॥ ५२ ॥ ब्रह्मेति । स एतन्मद्वचनातिक्रमकारिपुरुषः । ब्रह्मराक्षसतां चापि । प्राप्स्यति । भवे संसारे । भ्रमन्स । क्वचित्काले कस्मिंश्चित्समये भक्तेः सत्सङ्गं स्वीकृत्य कृतस्य मद्भजनस्य । फलम् । अवाप्स्यति । न संशयः । अत्र संशयेनास्ति ॥ ५३ ॥ मदिति । यः । पुमान् । मदाचारं मदीयमाचरणं तु दृष्ट्वा । तथा मदाचारप्रकारेण । वर्त्तिष्यते । स पुमान् । अल्पसत्त्वोऽनीश्वरः । अल्पबुद्धिरदीर्घदर्शी च सन् । द्रुतं शीघ्रमेव । आपदं पुनः पुनः संसृतिभ्रमणरूपां महाविपत्तिम् । प्राप्स्यत्येव ॥ ५४ ॥ पराभाव्य इति । अनादिमुक्तः कालत्रयेऽपि मम मायासम्बन्धाभावान्नित्यमुक्तः । अत एव । स्वतन्त्रोऽन्येषां मत्परतन्त्रत्वान्नाहं कदाचिदपि परतन्त्रः । तत्कुतः । स्वस्वरूपदृक् लयोत्पत्त्यादिविधायककालकृतविषमदेशादिभावेऽपि सर्वदा स्वस्वरूपज्ञाता । 'यो वेत्ति युगपत्सर्वं प्रत्यक्षेण सदा स्वत' इति श्रुतेः । 'यस्यानुभूतिः कालेन लयोत्पत्त्यादिनाऽस्य वै । स्वतोऽन्यस्माच्च गुणतो न कुतश्च न रिष्यती'ति स्मृतेश्च । एवं विशेषणविशिष्टोऽहम् । नारायणः । ऋषिः । यथा मदावतारो बदरीपतिर्नरनारायणर्षिरिव ।

॥ ५२ ॥

विषयैः समीपे वर्त्तमानैः रमणीयैरपीन्द्रियार्थैः । पराभाव्यः पराभवं कर्त्तुं योग्यः । न भवामि । मदवतारो नरनारायणर्षिर्यदेन्द्रप्रेषितकामाप्सरःप्रभृतीनां वशत्वं न प्राप्तस्तदा सर्वकारणकारणमक्षरधामाधिपतिः पुरुषोत्तमः स्वयंतया गुणैश्वर्याद्यावेशतया च सर्वावतारधारी स्वतन्त्रैश्वर्योऽहं विषयपरतन्त्रः कथं स्यामिति दृष्टान्ताभिप्रायः ॥ ५५ ॥ गच्छदिति । अहम् । स्वविषयम् । गच्छन्निजविषयं प्रतिप्रसरदित्यर्थः । आत्मनः स्वस्य । अन्तःकरणम् । व्याघ्रः शार्दूलः । उरणं मेषमिव । सद्यस्तत्क्षणमेव । अनायासेनाश्रमेण । गृह्णामि ॥ ५६ ॥ नेति । अन्यस्य मद्व्यतिरिक्तस्य सर्वस्य तु । तदन्तःकरणम् । दृग्विषयो नयनगोचरः । नास्ति कदाचिदपि न भवति । तस्यान्तःकरणस्य । निग्रहः स्वायत्तीकरणम् । कुतो भवेन्न भवेदेव । अतो हेतोः । मदाचारम् । दृष्ट्वा मद्वर्त्तनं विलोक्य । तथा मदाचरणेन समानम् । केनचित् । न वृत्यं न वर्त्तनीयम् ॥ ५७ ॥ सम्प्राप्येति । तत्तद्विषयप्रसङ्गम् । सम्प्राप्य । आत्मनः स्वस्य । शुद्धता । सनकादिसमस्य सनकादितुल्यवर्त्तनस्यापि योगिनः । दुर्लभा मदुक्तप्रकारेण स्ववर्त्तनं विनोपायशतैरपि दुष्प्रापा । अन्यस्य सनकादिसमादितरस्य पुरुषस्य । काकथा कैव वार्ता ॥ ५८ ॥ तादृश इति । लोके । तादृशस्तत्तद्विषयप्रसङ्गं

गच्छत्स्वविषयं चाहमन्तःकरणमात्मनः । अनायासेन गृह्णामि सद्यो व्याघ्र इवोरणम् ॥ ५६ ॥ नास्ति दृग्विषयोऽन्यस्य तत्कुतस्तस्य निग्रहः । अतो दृष्ट्वा मदाचारं तथा वृत्यं न केनचित् ॥५७॥ सम्प्राप्य तत्तद्विषयप्रसङ्गं शुद्धताऽऽत्मनः । सनकादिसमस्यापि दुर्लभाऽन्यस्य काकथा ॥५८॥ तादृशः पुरुषो लोके न दृष्टो न श्रुतः क्वचित् । न भूतो न भविष्यश्च वर्तमानोऽपि नास्ति हि ॥५९॥ आभाषयामि चाहं प्रीत्या कञ्चन मानवम् । प्रीत्या पश्यामि वा कञ्चित्प्रीत्या कुर्वे च भोजनम् ॥ ६० ॥ वस्त्राभूषणपुष्पस्रक्शेखरादींश्च यद्दधे । तत्सर्वं कृपया कुर्वे तत्तज्जीवसुखाप्तये ॥६१॥ न तु स्वस्य सुखावाप्त्यै व्यापारो मम कश्चन । दैहिको वाचिको वापि मानसोऽप्यस्ति निश्चितम् ॥६२॥

प्राप्यात्मशुद्धतायुक्तः । पुरुषः । क्वचिदपि । न दृष्टः न श्रुतः । न भूतो न जातः । न भविष्यो नैव भाव्यः । वर्त्तमानोऽपि अधुना विद्यमानोऽपि । नास्ति । हि निश्चितम् ॥५९॥ ननु तर्हीत्थं भूतमहिमवतो भगवतः तव कथमस्मत्समानक्रियानुवर्त्तनमिति चेन्निष्कारणकरुणाशीलस्य मम तत्सर्वजनहितायास्तीति जानीतेत्याह त्रिभिः । आभाषयामिति । अहम् । कञ्चन । मानवम् । प्रीत्या स्नेहेन । यत् । आभाषयामि तेन सह भाषणं करोमि । अथवा । कञ्चिन्मानवम् । प्रीत्या । यत् । पश्यामि । अथवा । प्रीत्या । यत् । भोजनम् कुर्वे भक्तजनार्पितान्नं पक्त्वा श्रीकृष्णाय निवेद्याश्नामीत्यर्थः ॥ ६० ॥ वस्त्रेति । वस्त्राणि च आभूषणानि च स्रजो हाराश्च शेखरा आपीडाश्च पुष्पाणां ये स्रक्शेखरास्ते चादयो येषां गन्धसुगन्धितैलादीनां तान् । यत् । दधे स्वाङ्गे धारयामि तत्सर्वम् । तत्तज्जीवसुखाप्तये तेषां तेषामेवंविधार्चनकर्तॄणां जीवानां मत्कृततत्तत्स्वीकारेण यथा सुखप्राप्तिः स्यात्तदर्थम् । कृपया । कुर्वे । इति द्वयोरेकसम्बन्धः ॥ ६१ ॥ नेति । हे भक्ताः ! । मम मामकीनः । दैहिको देहेन निर्वर्त्यः । वाचिको वाचा निर्वर्त्यः । मानसो मनसा निर्वर्त्यश्चापि । कश्चन यः कोऽपि । व्यापारः क्रिया । स्वस्य । सुखावाप्त्यै । न तु । अस्ति नैव विद्यते । निश्चितमेतन्निश्चयेनैव वित्त ॥ ६२ ॥

अत इति । अतो हेतोः । विषयसेवने । मम । दृष्टान्तो मदुदाहरणम् । न ग्राह्यः । अक्षाणां चक्षुरादीन्द्रियाणाम् । आहारशुद्धिः पूर्वोक्ततत्तद्विषयशुद्धता । सर्वथैव : विधातव्या ॥ ६३ ॥ सर्वत्रेति । युष्माभिः । इयम् । मद्वार्त्ता । सर्वत्र सर्वेष्वपि सत्सङ्गिजनेषु । परमादरात् । प्रवर्त्तनीया । तेन मद्वार्त्ताप्रवर्त्तनेन । अहम् । भृशमतिशयेन । तुष्टिं सन्तोषम् । एष्यामि प्राप्स्यामि । वै निश्चितमेव ॥ ६४ ॥ इतीति । इत्यमुना प्रकारेण । उक्त्वा । गुरुः स्वशिष्याणां सत्यो देशिकः । ईश्वरः परमेश्वरः । स श्रीहरिस्तु । स्वं स्वकीयम् । प्रायाज्जयसच्चिदानन्देत्युक्त्वा जगाम । अथानन्तरम् । तदाश्रिताः । ते सभोपविष्टास्त्यागिगृहिजनाश्चापि । अमृतमिव सुधासमानम् । तद्वचः श्रीहरिवचनम् । आपीय । अवाप्तः सम्प्राप्तः भूरिः प्रचुरो हर्ष आनन्दो यैः । तथाभूताः सन्तः । तं स्वनिवासं गच्छन्तं श्रीहरिम् । प्रणम्य विनयेन नत्वा । स्वम् । निकेतमावासस्थानम् । आयुर्जग्मुः ॥ ६५ ॥ शुद्धयशुद्धयोरन्तरस्य हेतूनामसतां सताम् । विषयाणां तु पश्चानामुक्त्वा लक्ष्माणि तत्त्वतः ॥ १ ॥ सत्सु तेषु स्थापनेनासतां तेषां च वर्जनात् । योऽरक्षत्स्वाश्रितान्स्वामी कृपया मां स रक्षतु ॥ २ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्स्व-

अतो न मम दृष्टान्तो ग्राह्यो त्विषयसेवने । आहारशुद्धिरक्षाणां विधातव्यैव सर्वथा ॥ ६३ ॥ सर्वत्रेयं च मद्वार्त्ता
युष्माभिः परमादरात् । प्रवर्त्तनीया तेनाहं तुष्टिमेष्यामि वै भृशम् ॥ ६४ ॥ इत्युक्त्वा स तु गुरुरीश्वरो निवासं
प्रायात्स्वं तमथ तदाश्रिताः प्रणम्य । तेऽपि स्वं स्वमयुरवाप्तभूरिहर्षा आपीयामृतमिव तद्वचो निकेतम् ॥ ६५ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दविरचितेऽष्टादशस्तरङ्गः ॥ १८ ॥

शकाब्दे विक्रमार्कस्य रसोश्ववसुभूमिते । पौषशुक्लप्रतिपदि वचोऽमृतमिदं हरेः ॥ १ ॥
तत्र दुर्गपुरे सायं वेश्मन्युत्तमभूभुजः । त्यागिगृहिसदोऽन्तःस्थो हरिः प्राह सिताम्बरः ॥ २ ॥
मुमुक्षोः पुरुषस्येह ह्येकयैवात्मनिष्ठया । प्रीत्या वाऽप्येकया कार्यं विरक्त्या वा न सिद्धयति ॥ ३ ॥

तुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायामष्टादशस्तरङ्गः ॥ १८ ॥

स्वधर्मज्ञानवैराग्यभक्तीनां तु परस्परम् । सापेक्षतैकोनविंशे प्रोक्ता तेषां सुसिद्धये ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८७६) पौषशुक्लप्रतिपदि पौषमासस्य शुक्लपक्षाद्यतिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमभूभुजः । वेश्मनि दुर्गान्तर्वर्त्तिगृहाङ्गभूमौ । सायं सायन्तनभगवन्नीराजनान्ते । त्यागिगृहिसदोऽन्तःस्थो नानादेशायातस्वभक्तत्यागिगृहिजनसभामध्यवर्त्तिस्वास्तृतरत्नसिंहासने निषण्णः । सिताम्बरः स्वाङ्गपरिधृतसकलश्वेतवसनः । हरिः । प्राहाप्रेरितोऽपि करुणया स्वयमेव स्वभक्तान्प्रति जगाद ॥२॥ मुमुक्षोरिति हे भक्ताः ! । इह सत्सङ्गे । मुमुक्षोः । पुरुषस्य । एकया केवलया । आत्मनिष्ठयैव । कार्यं स्वपरमनिःश्रेयससंसाधनरूपं प्रयोजनम् । न सिद्धयति । अथवा । एकया । प्रीत्या प्रीतिपूर्वकेण नवधाभगवद्भजनेनापि । कार्यं न सिद्धयति । अथवा । विक्त्या वैराग्येण । कार्यं न सिद्धयति ॥ ३ ॥

एकेनेति । अथवा । श्रुतिस्मृतिभ्यां कथितेन । एकेन केवलेन । स्वधर्मेण । स्वेष्टसिद्धिः स्ववाञ्छितपरमनिःश्रेयससंसाधनरूपा सिद्धिः । नैव । भवेत् । ततो हेतोः । चतुष्टयमात्मनिष्ठादिचतुष्कम् । साध्यं मुमुक्षुणा साधनीयम् । इति द्वयोरेकसम्बन्धः ॥ ४ ॥ अथात्मनिष्ठादीनामन्यतमसंसाधनेन कार्यसिद्ध्यभावं ब्रुवश्चतुर्णां तेषां परस्परसापेक्षतामाह पञ्चभिः । सत्यामिति । आत्मनिष्ठायाम् । सत्यामपि । रमापतौ लक्ष्मीकान्ते श्रीकृष्णे । प्रीतिम् । विना । कृष्णप्रसादैकलभ्यं स्वस्मिन्सप्रेमभक्तिदर्शनसंजातकेवलश्रीकृष्णप्रसन्नताप्राप्यम् । महत्सर्वोत्तमम् । ऐश्वर्यं मायागुणानभिभवादिरूपं सामर्थ्यम् । नाप्यते ॥५॥ प्रीताविति । हरौ श्रीकृष्णे । प्रीतौ । सत्यामपि । आत्मनिष्ठाम् । विना । क्वचित्कदाचित् । देहाभिमानोद्भवतः । कदाचिदशुभदेशकालादिबलजातदेहाभिमानोदयेनेत्यर्थः । सा प्रीतिः । सिद्धिप्रदा । न भवेत् । अस्यायं भावः । स्वसम्पाद्यकार्यसिद्धेर्भगवति प्रीतिरेव हेतुरस्ति देहाभिमानोदये भगवन्तं विहायान्यत्र प्रीतिसम्भवस्यावश्यं भावः एवं च भगवतः सकाशात्स्वप्रीतेर्निवृत्तत्वेनान्यत्र प्रीतिसत्त्वेन च स्वकार्यसिध्यभाव एव स्यादिति ॥ ६ ॥ कृष्णेति । कृष्णप्रीतिः । आत्मनिष्ठा चेत्युभे । दृढवैराग्यम् । अन्तरा विना । विषयासक्तिदोषेण भगवदितरमायिकविषया-

एकेन वा स्वधर्मेण श्रुतिस्मृत्युदितेन च । स्वेष्टसिद्धिर्भवेन्नैव ततः साध्यं चतुष्टयम् ॥ ४ ॥
सत्यामप्यात्मनिष्ठायां विना प्रीतिं रमापतौ । कृष्णप्रसादैकलभ्यमैश्वर्यं नाप्यते महत् ॥ ५ ॥
प्रीतौ सत्यामपि हरावात्मनिष्ठां विना क्वचित् । देहाभिमानोद्भवतः सा न सिद्धिप्रदा भवेत् ॥ ६ ॥
कृष्णप्रीतिश्चात्मनिष्ठा दृढवैराग्यमन्तरा । विषयासक्तिदोषेण भवेतां सिद्धिदे कथम् ॥ ७ ॥
भक्तिज्ञानैकलभ्यस्यालाभाद्ब्रह्मसुखस्य च । केवलेन विरागेण नार्थसिद्धिर्हि देहिनः ॥ ८ ॥
केवलेन तु धर्मेण न त्रिलोक्या बहिर्गतिः । ऋते धर्माच्चात्मनिष्ठा भक्त्यरागौ न सिद्ध्यतः ॥ ९ ॥

नुरक्तिरूपेण दूषणेन । सिद्धिदे स्वकार्यसिद्धिदे स्वकार्यसिद्धिप्रदात्र्यौ । कथम् । भवेताम् । न भवेतामेवेत्यर्थः ॥ ७ ॥ भक्तीति । केवलेन । विरागेण । भक्तिज्ञानैकलभ्यस्य । भक्तिः श्रीकृष्णे प्रीतिः ज्ञानमात्मनिष्ठा ताभ्यां प्राप्यस्येत्यर्थः । ब्रह्मसुखस्य आत्मात्मश्रीकृष्णपरमानुभवानन्दस्य । अलाभादप्राप्तेर्हेतोः । देहिनो मुमुक्षोः पुरुषस्य । अर्थसिद्धिः स्वकार्यसंसिद्धिः । न भवेत् । निश्चितम् ॥ ८ ॥ केवलेनेति । केवलेन प्रीत्यात्मनिष्ठावैराग्यवर्जितेन । धर्मेण स्ववर्णाश्रमोचितसदाचारेण । त्रिलोक्या भूरादिस्वर्गान्तलोकत्रयात् । यद्वा । त्रिलोक्या आब्रह्मभुवनाल्लोकत्रिकात् । बहिर्गतिर्ब्रह्माण्डं भित्त्वा तद्बहिर्वर्त्तमानेऽक्षरधाम्नि गमनम् । न भवेत् । 'आब्रह्मभुवनाल्लोकाः पुनरावर्त्तिनोऽर्जुन ! । मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते' इति भगवद्गीतोक्तेः । 'त्रिलोक्यां गतयः सर्वाः कर्मणां त्रिगुणात्मनाम् । योगस्य तपसश्चैव न्यासस्य गतयोऽमलाः । महर्जनस्तपः सत्यं भक्तियोगस्य मद्गतिरि'ति श्रीभागवतोक्तेश्च । धर्मात् । ऋते स्वधर्मं विना आत्मनिष्ठा । न सिद्ध्यति भक्त्यरागौ प्रीतिविरक्ती न सिद्ध्यतः । एवमात्मनिष्ठादित्रिकासिद्धौ स्वकार्यसिद्धिः कुतः स्यादित्यर्थः ॥ ९ ॥

तदिति । तत्तस्माद्धेतोः । यस्य मुमुक्षोर्हरिभक्तस्य । सत्समागमाद्भगवदेकान्तिकसाधुप्रसङ्गात् । इदम् । चतुष्कमात्मनीष्ठादिचतुष्टयम् । दृढं सुस्थिरम् । स्याद्भवेत् । स हरिभक्त एव । हरिभक्तेषु । पूर्णः सम्पूर्णसाधनो जातः । इतीत्थम् । बुधैर्भगवदेकान्तिकभक्तजनैः । उच्यते कथ्यते ॥ १० ॥ स्यादिति । इह सत्सङ्गे । मुमुक्षोर्भक्तस्य । एतेष्वात्मनिष्ठादिचतुर्षु मध्ये । यत् । न्यूनम् । स्यात् । तत् । सदुपासनेन भगवदेकान्तिकसाधुसंसेवया । साधनीयम् । इतीत्थंभूतम् । प्रभोः श्रीहरेः । सुधाभममृतसन्निभम् । वचनम् । निशम्य श्रुत्वा । ते सदा निषण्णाः सर्वे त्यागिगृहिभक्तजनाः । तच्छ्रीहरिवचनम् । तथ्यं सत्यमेव । अमंसत मन्यन्ते स्म ॥११॥ सापेक्षतां स्वधर्मादिचतुर्णां यः परस्परम् । उक्त्वैकान्तिकभक्तत्वहेतूनां स्वस्य तत्त्वतः ॥ १ ॥ दृढतामकरोत्तेषां दयया स्वाश्रितेषु सः । दत्तात्स्वैकान्तभक्तिं मे भक्तिधर्मसुतो हरिः ॥ २ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्पदनुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायामेकोनविंशस्तरङ्गः ॥ १९ ॥

यः प्रमादो महाशत्रुर्भवत्यात्मेक्षणादिके । तं त्यक्तोद्योगिभिर्भाव्यं सदेत्युक्तं तु विंशके ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यानम् (१८७६) पौषशुक्लद्वितीयायां

तच्चतुष्कमिदं यस्य दृढं स्यात्सत्समागमात् । स एव हरिभक्तेषु पूर्ण इत्युच्यते बुधैः ॥१०॥ स्यान्न्यूनमेतेष्विह यन्मुमुक्षोस्तत्साधनीयं सदुपासनेन । इति प्रभोस्ते वचनं सुधाभं निशम्य तत्तथ्यममंसतैव ॥ ११ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते एकोनविंशस्तरङ्गः ॥ १९ ॥

शकाब्दे विक्रमार्कस्य रसाश्ववसुभूमिते । पौषशुक्लद्वितीयायां वचोऽमृतमिदं हरेः ॥ १ ॥
तत्र दुर्गपुरे दुर्गं उत्तमस्य क्षितीशितुः । प्राग्द्वारालयवेद्यां स न्यषीदत्तूलिकासने ॥ २ ॥
सितशीर्षपटे पीतपुष्पशेखरराजितः । पीतपुष्पस्रजं कण्ठे तदुत्तंसौ च कर्णयोः ॥ ३ ॥
दधत्सितान्तरीयश्च सितसूक्ष्मां चतुष्पटीम् । वसानः साधुगृहिभिर्वृतः सदसि भूरिभिः ॥ ४ ॥

सहस्यमासागतशुचिपक्षस्य द्वितीयातिथौ । इदम् । हरेः । वचोऽमृतम् । अभवत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । क्षितीशितुर्भूपतेः । उत्तमस्य । दुर्गे । प्राग्द्वारालयवेद्यां पूर्वाभिमुखभवनस्य वहिर्वितर्दिकायाम् । तूलिकासने रमणीयरक्तकोपर्यास्तृतापार्श्विकगेन्दुकयुता श्वेतोत्तरच्छदान्विता या तूलिका तद्रूपासने । स श्रीहरिः । न्यषीदत् ॥ २ ॥ तं विशिनष्टि द्वाभ्याम् । सितेति । सितशीर्षपटे शीर्ष्णि निबद्धे रमणीयमृदुघनश्वेतपटे । पीतानां पुष्पाणां शेखरः सुन्दरापीडस्तेन राजितः शोभमानः । कण्ठे त्रिरेखावतिगले । पीतपुष्पस्रजं पीतपुष्पाणां सघनमालाम् । कर्णयोः शष्कुल्याकृतिश्रवणयोः । तदुत्तंसौ च तेषां पीतपुष्पाणामवतंसौ कर्णाभरणे चेत्यर्थः । यद्यप्यत्रद्वयोरपि श्रवणयोरवतंसौ पीतपुष्पमयावुक्तावथापि तस्यावतंसस्य मध्ये महदेकं पीतपुष्पं तत्परितः सितपुष्पावलिरित्येवंविधौ बोध्यौ तदवसरे तथादर्शकसाध्वास्यश्रुतत्वात् । दधदित्युत्तरेणान्वयः ॥ ३ ॥ दधदिति । सितान्तरीयः धृतकृष्णलेखाप्रान्तवच्छ्वेतपरिधानवसनः । सितसूक्ष्माम् । चतुष्पटीं पटचतुष्कालकृतां बृहतिकाम् । वसानः

आच्छादयन् । चकाराच्छ्रीभागवतपञ्चमस्कन्धकथां वाचयन्निति ज्ञेयम् । भूरिभिः प्राज्ञैः । साधुगृहीभिर्नानादेशागतस्वाश्रितत्यागिगृहिजनैः । सदसि सभायाम् । वृतः परिवेष्टितः ॥ ४ ॥ पप्रच्छेति । अथैवं शोभाविशिष्टतया स्वासने उपवेशनान्तरम् । प्रभुः । स श्रीहरिः । स्वास्यैकदृशः केवलस्वाननाऽर्पितचक्षुषः । तान्समीपविष्टान् भक्तान् । पप्रच्छ । यदा कश्चित्किमपि नापृच्छत्तदा तेषां हितमनुसन्धाय कमपि प्रश्नमुद्भाव्य स्वयमेव पृष्टवानित्यर्थः ! । हे भक्ताः । इह लोके । सर्वेषु । अज्ञानिषु विद्या-राजनिति–द्रव्यपरीक्षाद्यनेकगुणानभिज्ञतया प्राप्ताज्ञानिसंज्ञेषु जनेषु मध्ये । भवताम् । मतः भवद्भिः सम्मतः । अधिकः । अतिशयिताज्ञानवान् । कोऽस्ति ॥ ५ ॥ इतीति । इत्यमुना प्रकारेण । पृष्टाः श्रीहरिणानुयुक्ताः । सदःस्थाः । ते भक्ताः । यदा यर्हि । तस्य श्रीहरिकृष्णप्रश्नस्य । उत्तरम् । कर्त्तुम् । नाशक्नुवन् समर्था न बभूवुः । तदा । स्वामी सकलेश्वरेश्वरः । स्वयं श्रीहरिः । तदुत्तरम् । आह ॥ ६ ॥ सदिति । हे भक्ताः ! । वपुःस्थितो मायिकपाञ्चभौतिकशरीरावस्थितः । जीव एव । सदसद्रूपद्रष्टासमीचीना समीचीनरूपाणां नेत्रेन्द्रियद्वारा सम्प्रेक्षकः । अस्ति । बाल्याद्यवस्थाद्रष्टा कालबलतः स्वशरीरागतबाल्यता, तारुण्य, वार्द्धकाख्यावस्थानां समीक्षक-

पप्रच्छ भक्तान्स्वास्यैकदृशस्तानथ स प्रभुः । अज्ञानिष्विह सर्वेषु कोऽधिको भवतां मतः ॥ ५ ॥
इति पृष्टाः सदःस्थास्ते कर्तुं तस्योत्तरं यदा । नाशक्नुवंस्तदा स्वामी स्वयमाह तदुत्तरम् ॥ ६ ॥
सदसद्रूपद्रष्टाऽस्ति जीव एव वपुःस्थितः । बाल्याद्यवस्थाद्रष्टा च नत्वात्मानं स पश्यति ॥ ७ ॥
शब्दादीन्विषयांश्चासाविन्द्रियैः श्रवणादिभिः । ज्ञात्वा भुङ्क्ते न चात्मानं वेत्ति भुङ्क्ते न तत्सुखम्
॥८॥ आत्माज्ञाता ह्यसावेव सर्वाज्ञान्यधिको मतः । असावेव जडश्चोक्तो व्याकुलोऽथ च पामरः ॥ ९ ॥
अथाह तं शुकमुनिः प्रभुं नत्वा सदःस्थितः । आत्मनो दर्शने स्वामिन् ! स्वातन्त्र्यं नेक्ष्यते नृणाम् ॥१०॥

श्चास्ति । स एवंविधोऽपि जीवः आत्मानं स्वस्वरूपम् । न तु नैव । पश्यति ॥७॥ शब्देति । असौ । वपुःस्थितो जीवः श्रवणादिभिः । इन्द्रियैः शब्दादीन् । विषयान् । ज्ञात्वा प्रियाप्रियत्वेन विबुद्ध्य । भुङ्क्ते अनुभवति । एवं सत्यपि । आत्मानं देहातिरिक्तं स्वस्वरूपम् । न वेत्ति । तत्सुखमात्मस्वरूपसम्बन्धिमहासुखम् न भुङ्क्ते नानुभवति ॥ ८ ॥ आत्मेति । आत्माज्ञाता स्वस्वरूपस्यावोद्धा । असौ जीव एव । सर्वाज्ञान्यधिकः सर्वेष्वधिकाज्ञानवान् । मतः । असावेव । जडोऽत्यन्तमूढः । उक्तः । तदुक्तम् । 'इष्टं वाऽनिष्टं वा सुखदुःखें वा न चेह यो मोहात् । विन्दति परवशगः स भवेदिह जडसंज्ञकः पुरुष' इति । स एव । व्याकुलो विहस्तः । इति कर्त्तव्यतामूढ इत्यर्थः । उक्तः । अथ च । स एव । पामरो नीचः । उक्तः । स्वात्मज्ञानं विना विद्यादिमायिकगुणाभिज्ञास्तदनभिज्ञाश्च सर्वेऽपि जना अधिकाज्ञानि जड, व्याकुल, पामरादि-संज्ञाभाजः कथिता इत्यर्थः ॥ ९ ॥ अथेति । अथानन्तरम् । सदःस्थितः सभायां मुनिमण्डलमध्यावस्थितः । शुकमुनिः शुकानन्दः साधुः । प्रभुम् । तं श्रीहरिम् । नत्वा । आह । हे स्वामिन् ! । आत्मनः स्वस्वरूपस्य । दर्शने विषये । नृणां त्वदुक्तजनानाम् । स्वातन्त्र्यं स्वतन्त्रभावः । नेक्ष्यतेऽस्माभिर्न दृश्यते ॥ १० ॥

यस्येति । यस्य मुमुक्षोस्तव भक्तस्य । आत्मदिदृक्षा स्वात्मनो दर्शनेच्छा । न स्यात् । तादृशस्तथाविधः । भुवि । कश्चन कश्चिदपि । त्वद्भक्तो मुमुक्षुः । नास्ति नैव भवति । किन्तु । अस्य त्वद्भक्तस्य मुमुक्षोः । तत्सामर्थ्यं स्वत एवात्मदर्शनसमर्थता । न विद्यते ॥ ११ ॥ यदीति । यदि यर्हि । तदात्मदर्शनसामर्थ्यम् । स्यात् । तदा तु । एष त्वद्भक्तो मुमुक्षुः । अज्ञानितामुक्तविधमज्ञानिभावम् । किमिति कस्माद्धेतोः । भजेत्प्राप्नुयात् । नैव भजेत् । इत्येवंविधम् । सतः साधोः । तस्य शुकानन्दमुनेः वाक्यम् । श्रुत्वा । श्रीहरिः । अब्रवीत् प्रत्युवाच ॥ १२ ॥ सत्सङ्ग इति । हे मुने ! । यस्य मुमुक्षुजनस्य । सत्सङ्गः । जातः । अस्ति । तस्य मुमुक्षोस्तु । स्वात्मदर्शने । परात्मदर्शने स्वात्मनि परमात्मनो ध्यानो ध्यानेन साक्षात्समीक्षणे चापि । स्वातन्त्र्यम् । विद्यते । खलु निश्चितमेव ॥ १३ ॥ एतदेव विवृणोति सार्द्धैश्चतुर्भिः । यदेति । हे मुने ! । असौ सत्सङ्गिमुमुक्षुः । यदा । तदुद्योगमात्मपरमात्मदर्शनोद्यमम् । कुर्यात् । तदा । तमात्मानं परमात्मानं च ईक्षेत । तथापि । तस्य मुमुक्षोः । आत्मनीक्षणे स्वात्मपरमात्मनोरदर्शने । हेतुः कारणं तु । प्रमादः कर्त्तव्यात्कर्मणोऽन्यत्र प्रवृत्तिहेतुभूतमनवधानमेव । अस्ति ॥ १४ ॥ माय-

यस्य नात्मदिदृक्षा स्यात्तादृशो नास्ति कश्चन । त्वद्भक्तो भुवि किन्त्वस्य तत्सामर्थ्यं न विद्यते ॥ ११ ॥ यदि तत्स्यात्तदात्वेष किमित्यज्ञानितां भजेत् । इति तस्य सतो वाक्यं श्रुत्वा श्रीहरिरब्रवीत् ॥ १२ ॥ सत्सङ्गो यस्य जातोऽस्ति तस्य तु स्वात्मदर्शने । परमात्मदर्शने चापि स्वातन्त्र्यं विद्यते खलु ॥ १३ ॥ यदा तदुद्योगमसौ कुर्यादीक्षेत तं तदा । हेतुः प्रमाद एवास्ति तस्यात्माऽनीक्षणे मुने ? ॥ १४ ॥ मायया विवशो जीवो ह्यन्तर्दृष्ट्या दिने दिने । स्वप्नं सुषुप्तिकां वाऽपि यात्यवस्थामनीप्सिताम् ॥ १५ ॥ स्वेच्छयाऽऽत्मावलोकाय त्वन्तर्दृष्टिमसौ क्वचित् । न करोतीत्यतोऽज्ञानिमुख्यः प्रोक्तस्तदीक्षकैः ॥ १६ ॥ कृष्णप्रतापमालोच्य योऽन्तर्दृष्टिं करोत्यसौ । स्वरूपं सहसा भास्वद्भासुरं वीक्षते पुमान् ॥ १७ ॥ प्रकाशे विमले तस्मिन् साक्षात्कृष्णं च वीक्षते । नारदादिरिव स्याच्च ततः सोऽतिसुखी नृषु ॥ १८ ॥

येति । जीवः । माययाऽनादिकालतः स्वात्मनि विद्यमानयाऽविद्यया । विवशः परतन्त्रतां नीतः सन् । दिने दिने । अन्तर्दृष्ट्या प्रतिलोमवृत्त्या । अनीप्सितां स्वेन प्राप्तुं नेष्टाम् । स्वप्नं स्वप्नावस्थाम् । अथवा । सुषुप्तिकाम् । अवस्थामपि । याति । हि ॥ १५ ॥ स्वेति । असौ जीवः । स्वेच्छया । आत्मावलोकायात्मपरमात्मसंदर्शनाय तु । क्वचित्कदाचिदपि । अन्तर्दृष्टिम् । न करोति । इत्यतो हेतोः । तदीक्षकैरात्मप्रमादं त्यक्त्वा ध्यानसंतताभ्यासेनात्मपरमात्मनोः साक्षात्समीक्षकैः सत्सङ्गिभिः । सः अज्ञानिजनाग्रगण्यः । प्रोक्तः ॥ १६ ॥ कृष्णेति । यः सत्सङ्गिमुमुक्षुः । कृष्णप्रतापं साक्षाच्छ्रीकृष्णप्रभावम् । आलोच्य विचार्य । अन्तर्दृष्टिम् । करोति । असौ पुमान् । सत्सङ्गिमुमुक्षुः । सहसा तूर्णमेव । भास्वद्भासुरं सूर्यप्रभाभास्वरम् । स्वरूपमात्मस्वरूपम् । वीक्षते ॥१७॥ प्रकाश इति । असौ । विमले निर्मले । प्रकाशे प्रकाशरूपे । तस्मिन्नात्मस्वरूपे । साक्षात्कृष्णं प्रत्यक्षं श्रीकृष्णम् । वीक्षते । ततस्तदनन्तरम् । स सत्सङ्गिमुमुक्षुः । नृषु मध्ये । नारदादिरिवात्मपरमात्मस्वरूपसाक्षा-

द्रीक्षकनारदादिमुनिवत् । अतिसुखी । स्यात् ॥ १८ ॥ प्रकरणार्थं निगमयत्यर्द्धेन । कार्यं इति । ततस्ततो हेतोः । अत्र सत्सङ्गे । मदाश्रितैः । भक्तैः । आत्मसमीक्षणादावात्मपरमात्मसंदर्शनादिसाधने । प्रमादः । न कार्यः । इतीत्थंभूताम् । सुधाममृतसमानाम् । हरेः । वाचम् । अमृतसमानं श्रीहरेर्वचनमित्यर्थः । श्रुत्वा सम्यगाकर्ण्य । मुनीन्द्रो मुनिवरः । स शुकानन्दसाधुः । तुतोष सुतरां तुष्टोऽभवत् । अन्ये तदितरे । सदःस्थाः सभायां निषण्णाः सर्वे भक्तजनाश्चापि । तुतुषुः ॥१९॥ आत्मादिवीक्षणे स्वेषां प्रमादं तु प्रहाप्य । यः । उद्योगं वर्द्धयामास मम सोऽस्तु हरिर्हृदि ॥१॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्सूनुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां विंशस्तरङ्गः ॥ २० ॥

स्वधर्माद्यङ्गसहिता भक्तिर्यस्य भवेद्धरेः । प्रीतः स्यात्तदुपर्येष एकविंश इतीरितम् । शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८७६) पौषशुक्लतृतीयायां तैषमाससम्बन्धिनः सितपक्षस्य तृतीयायां तिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमभूपतेः । प्राग्द्वारवेश्मनः पूर्वाभि-

कार्यः प्रमादो न ततोऽत्र भक्तैर्मदाश्रितैरात्मसमीक्षणादौ । श्रुत्वेति वाचं स सुधां मुनीन्द्रस्तुतोष चान्येऽपि हरेः सदःस्थाः ॥ १९ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते विंशस्तरङ्गः ॥ २० ॥

शकाब्दे विक्रमार्कस्य रसाश्ववसुभूमिते । पौषशुक्लतृतीयायां वचोऽमृतमिदं हरेः ॥ १ ॥
तत्र दुर्गपुरे स्वामी वेद्यामुत्तमभूपतेः । प्राग्द्वारवेश्मनः श्वेताखिलवासा उपाविशत् ॥ २ ॥
निजभक्तसभामध्ये क्रियमाणं सदुत्तमैः । वीणामृदङ्गादिवाद्योपेतं शुश्राव गायनम् ॥ ३ ॥
स्वतोषणार्थमेवाथ तद्गायनपरिश्रमम् । जानन्नन्तर्दृशा किञ्चिद्विचार्य क्षणमब्रवीत् ॥ ४ ॥

मुखस्य दुर्गान्तर्वर्त्तिगृहस्य । वेद्यामुच्चायां बहिर्वितर्द्दिकायाम् । मृदुसोत्तरच्छदतूलिकायुजि मञ्चे इति शेषः । श्वेतानि धवलानि अखिलानि वासांसि वस्त्राणि यस्य सः । यद्यपि श्वेताखिलवासा इत्युक्तं तथापि तत्रायं विवेको वोध्यः । स यथा । कृष्णसूत्ररचितार्द्धांगुलपरिणाहरेखाप्रान्तवत्तथाविधसूत्रकृतवितस्तिपरिणारेखायुक्तोहभयपल्लववच्छ्वेतमधोंशुकं परिधाय श्वेतचतुष्कालपटीं शीतनिवारणाय स्वाङ्गे प्रावृत्य मूर्ध्नि सितसूक्ष्मघनं पटं निबध्य वर्त्तमान इति केवलतच्छ्वेतत्वोक्तिस्तत्प्राचुर्यादिति । स्वामी श्रीहरिः । उपाविशत्सायाह्नसमये स्वावासादागत्य पूर्वास्यः सन्नुपविवेश ॥ २ ॥ निजेति । निजभक्तसभामध्ये नानादेशायातत्यागिगृहिस्वभक्तजनानां पर्षदो मध्यप्रदेशे । सदुत्तमैर्मुक्तानन्दप्रेमानन्दादिमुनिवरैः । क्रियमाणं श्रीहरिप्रीणनाय परमप्रेम्णा विधीयमानम् । वीणामृदङ्गादिवाद्योपेतम् । गायनं भगवद्यशोङ्कितपद्यगानम् । शुश्राव ॥ ३ ॥ स्वेति । अथानन्तरम् । तद्गायनपरिश्रमं तेषां मुक्तानन्दादिसाधूनां गानाचरणायासम् । स्वतोषणमात्मनः प्रीणनमेवार्थः प्रयोजनं यस्य तं तथाविधमेव । जानन्विदन् । अन्तर्दृशा प्रतिलोमवृत्त्या । क्षणं मुहूर्त्तपर्यन्तम् । किञ्चित् । विचार्य । अब्रवीत् । उर्ध्वदोस्तालिवादनैः सभोपविष्टजनान्मौनयित्वा तान्प्रति श्रीहरिः कथयामासेत्यर्थः ॥ ४ ॥

स्वेति । हे भक्ताः ! । स्वधमज्ञानवैराग्योपेता । दृढा निश्चला या । भक्तिः । सैवंविधा भक्तिरेव । भगवत्तोषहेतुः साक्षाद्भगवतः प्रीणनकारणम् । अस्ति । इतीत्थम् । अवगम्यतां सर्वैर्भवद्भिर्बुध्यताम् ॥ ५ ॥ साङ्गेति । अत्रास्मिन्साक्षाद्भगवति । साङ्गा स्वधर्माद्यङ्गत्रयसहिता । एषा दृढा । भक्तिरेव । एकान्तः । धर्मः । उच्यते । तद्वन्त एकान्तिकधर्मवन्तः । साधवो । अत्रास्मिन् । सत्सङ्गे । साम्प्रतमधुना । सन्ति बहव एव साक्षाद्विद्यन्ते ॥ ६ ॥ भक्ता इति । एकान्तधर्मस्थाः । भक्ताः । देहान्ते स्वदेहावसाने । वैष्णवं सर्वान्तर्यामिश्रीकृष्णसम्बन्धि । अक्षरमविनाशि । ब्रह्माख्यं ब्रह्मपुरसंज्ञम् । धाम गोलोकमध्यवर्त्तिस्थानम् । यान्ति प्राप्नु-वन्ति । यद्ब्रह्माख्यं धाम । गत्वा प्राप्य । पुनर्भवः पुनरावृत्तिः न भवति ॥ ७ ॥ अत इति । अतो हेतोः । मे मम । मदियैरित्यर्थः गृहस्थैर्गृहाश्रमस्थैर्भक्त-जनैरपि । एकान्ते । धर्मे । आदरः । सर्वथा । कर्त्तव्यः । यनैकान्तधर्माचरणादरेण । सर्वदुःखक्षयः ब्रह्मधामप्राप्तिपूर्वं पुनर्भवविनाशः । भवेज्जायेत ॥ ८ ॥ अथैका-न्तधर्मसम्पादनस्यादरपूर्वत्वात्तत्पूर्वं तत्सम्पादनप्रकारमाह यावत्तरङ्गसमाप्ति । क्रियास्विति । अत्र लोके । सर्वास्वपि । क्रियासु खानपानयातायातादिषु । क्रियमा-

स्वधर्मज्ञानवैराग्योपेता भक्तिर्दृढा तु या । सैवाऽस्ति भगवत्तोषहेतुरित्यवगम्यताम् ॥५॥ साङ्गैषा भक्तिरेवात्र धर्म एकान्त उच्यते । तद्वन्तः साधवो ह्यत्र सत्सङ्गे सन्ति साम्प्रतम् ॥६॥ भक्ता एकान्तधर्मस्था ब्रह्माख्यं धाम वैष्णवम् । अक्षरं यान्ति देहान्ते यद्गत्वा न पुनर्भवः ॥ ७ ॥ अतो गृहस्थैरपि मे धर्म एकान्त आदरः । कर्त्तव्यः सर्वथा येन सर्वदुःखक्षयो भवेत् ॥८॥ क्रियासु क्रिय-माणासु सर्वास्वप्यत्र चेतसि । चिन्तनीयः कृष्ण एव यथादृष्टो यथाश्रुतः ॥ ९ ॥ अविक्षिप्तेऽन्तरे कृष्णो द्रष्टव्योऽन्तर्दृशा चिरम् । विक्षिप्ते तु विधातव्यं बहुधा सांख्यचिन्तनम् ॥ १० ॥ देहेन्द्रियान्तःकरणदेवताविषयादितः । बोद्धव्यः पृथगात्मा तु ध्येयं शुद्धेऽन्तरे पुनः ॥ ११ ॥ देहेऽहन्ता कार्याऽत्र ममता दैहिकेषु च । यतस्तेषां न नियमो दृश्यते भ्रमतां भवे ॥ १२ ॥

णासु सतीषु । चेतसि स्वस्वान्ते । यथादृष्टः । यथाश्रुतः । कृष्ण एव । चिन्तनीयो ध्येयः ॥ ९ ॥ अविक्षिप्त इति । अविक्षिप्ते व्यावहारिककृत्यसङ्कल्पविकल्परूपविक्षेप-वर्जिते । अन्तरेऽन्तःकरणे । अन्तर्दृशा प्रतिलोमवृत्त्या । कृष्णः । चिरं बहुवेलम् । द्रष्टव्यो वीक्षणीयः । अन्तरे । विक्षिप्ते तद्विक्षेपयुक्ते सति । बहुधा तु । साङ्ख्यचिन्तन-मात्मानात्मस्वरूपविचारणम् । विधातव्यम् ॥१०॥ साङ्ख्यचिन्तनप्रकारमाह । देहेति । देहः पाञ्चभौतिकशरीरं च इन्द्रियाणि श्रोत्रादीनि दशकरणानि च अन्तःकरणं मनो, बुद्धि-रहङ्कारश्चित्तमिति चतुष्टयरूपमन्तरं च देवता दिगादयश्चतुर्दशदेवाश्च विषयाः शब्दादयः पञ्चतन्मात्राश्च ते आदयो येषां कर्मेन्द्रियक्रियादीनां तेभ्य इति ततः । आत्मा स्वक्षेत्र-ज्ञस्तु । पृथक् स्वरूपस्वभावादिभिर्व्यतिरिक्तः । बोद्धव्यः । शुद्धे एवं साङ्ख्यविचारेण सुदृढात्मनिष्ठया देहदैहिकादिसङ्कल्पविकल्पवर्जिततया शुद्धतां प्राप्ते । अन्तरेऽन्तःकरणे । पुनर्भूयः । ध्येयं श्रीकृष्णध्यानं कर्त्तव्यम् ॥ ११ ॥ देह इति । अत्रास्मिन् । देहे अहन्ता । न कार्या । दैहिकेषु देहसम्बन्धिषु । ममता च । न कार्या । यतो हेतोः । भवे संसारे । भ्रमतां जीवानाम् । तेषां देहदैहिकानाम् । नियमः सङ्ख्यानिश्चयः । न दृश्यते ॥ १२ ॥

एतदेव स्पष्टमाह पञ्चभिः । चतुरिति । चतुरशीति लक्षाणि एतत्परिमिताः । देहजातयोऽण्डजादिदेहचतुःखनीषु जन्मानि । श्रूयन्ते । सर्वैरपि । देहिभिः प्राणिभिः । सर्वाः । ता देहजातयः । अनुभूताः प्राप्ताः । हि निश्चितम् ॥ १३ ॥ नेति । यस्यां स्त्रियाम् । कश्चन यः कोऽपि । जीवः । नाजनि न जातः । सा तथाविधा । स्त्री । क्वचित्कुत्रापि स्थाने । नास्ति । सर्वेऽपि जीवाः सर्वास्वपि स्त्रीषु देहधरणेन जाताः सन्त्येवेत्यर्थः । या । स्त्री । केनचिज्जीवेन न भुक्ता स्त्रीत्वेन न स्वीकृता । सा तथाविधा । स्त्री । क्वापि । नास्त्येव । सर्वा अपि स्त्रियः सर्वैरपि जीवैर्भुक्ता भवन्त्येवेत्यर्थः ॥ १४ ॥ स इति । नारीवपुर्धृता स्त्रीशरीरधारिणा । केनचिदपि । जीवेन । यः पुमान् । अभुक्तः । भवति पतित्वेन न स्वीकृतोऽस्ति । स तथाविधः । कश्चित् । पुमान् । क्वापि । नास्ति । ध्रुवं निश्चितमेव । सर्वेऽपि पुरुषाः सर्वाभिरपि स्त्रीभिर्भुक्ता भवन्त्येवेत्यर्थः ॥ १५ ॥ तदिति । तत्तद्देहेषु वर्त्तमानदेहोपलब्धेः पूर्वकाले सम्प्राप्तेषु श्व, शूकर, कपि, क्रव्यादादिषु चतुरशीतिलक्षपरिमितेषु तेषु तेषु शरीरेषु । अथो अथ च । तत्तद्देहिकेषु तत्तद्देहसम्बन्धिषु । पुराकृतां पूर्वं विहिताम् । अहन्ताम् । ममतां च । यथा । अद्य वर्त्तमानदेहोपलब्धौ सत्याम् । केऽपि

चतुरशीतिलक्षाणि श्रूयन्ते देहजातयः । अनुभूता हि ताः सर्वाः सर्वैरपि च देहिभिः ॥ १३ ॥
नास्ति सा स्त्री क्वचिद्यस्यां जीवो नाजनि कश्चन । सा च स्त्री क्वापि नास्त्येव या न भुक्ता हि
केनचित् ॥१४॥ स च नास्ति पुमान्कश्चिद्यस्तु नारी । वपुर्धृता अभुक्तः केनचित्कापि जीवेन भवति
ध्रुवम् ॥ १५ ॥ तत्तद्देहेष्वथो तत्तद्दैहिकेषु पुराकृताम् । अहन्तां ममतां चाद्य यथा केऽपि न कुर्वते
॥ १६ ॥ तथैव वर्तमानेषु देहदेहानुबन्धिषु । अहन्ता ममता नव कर्तव्या नश्वरेष्विह ॥ १७ ॥
अतः सत्यात्मरूपः सन्नसत्स्वेतेषु सर्वथा । हित्वाऽऽसक्तिं भगवति सज्जेत पुरुषः सुधीः ॥ १८ ॥
माहात्म्यातिशयज्ञानं विना कृष्णस्य सर्वथा । प्रीतिर्न स्यादतो नित्यं सेव्याः सन्तस्तदाप्तये ॥ १९ ॥

केचनापि जनाः । न कुर्वते ॥ १६ ॥ तथेति । तथा तेन प्रकारेणैव । इह लोके वर्त्तमानेषु विद्यमानेषु । नश्वरेषु । क्षणविध्वंसिषु । देहदेहानुबन्धिष्वहन्ताममतास्पदेषु देहदैहिकेषु । अहन्ता । ममता च । नैव । कर्त्तव्या मुमुक्षुसत्सङ्गिभिर्नैव विधेया । इति द्वयोरेकसम्बन्धः ॥ १७ ॥ अत इति । अत उक्तप्रकारेण देहदैहिकादेरसत्वाद्धेतोः । सुधीः स्वधर्माचरणविशुद्धबुद्धिः । पुरुषः सत्सङ्गिजनः । सत्यात्मरूपो नित्यसत्यस्वस्वरूपनिष्ठः सन् । असत्सु परिणामित्वान्नश्वरेषु । एतेषु देहदैहिकानुबन्धिषु । आसक्तिं प्रीतिम् । सर्वथा सर्वप्रकारेण । हित्वा त्यक्त्वा । भगवति साक्षात्परमेश्वरे । सज्जेत प्रीतिं कुर्यात् ॥ १८ ॥ माहात्म्येति । साक्षाच्छ्रीकृष्णभगवतः । माहात्म्यातिशयज्ञानमतिशयेन सर्वोत्तममहिमाववोधनम् । विना । प्रीतिः श्रीकृष्णे गाढानुरागः । सर्वथा सर्वप्रकारेण । न स्यात् । अतो हेतोः । तदाप्तये श्रीकृष्णस्य माहात्म्यज्ञानातिशयप्राप्त्यर्थम् । नित्यं प्रतिदिनम् । सन्तो भगवदेकान्तिकभक्ताः साधवः । सेव्यास्तत्प्रसङ्गः कर्त्तव्य इत्यर्थः ॥ १९ ॥

ईदृगिति । इदृग्ज्ञानविहिन एवंविधैकान्तिकत्वसम्पादनज्ञानवर्जितः । सत्सङ्गी तु । पशुवच्चतुष्पादसमानः पशुवत्स्वहिताचरणानभिज्ञ इत्यर्थः । मतः । तस्य तथाविधस्यापि सत्सङ्गिनः । श्रेयः कल्याणं तु । कृष्णप्रतापात्साक्षाच्छ्रीकृष्णप्रभावेन । अग्रे शनैः शनैरेवंविधैकान्तिकत्वसम्पादने कृते सतीत्यर्थः । भविष्यति । तस्यापीहेति पाठे । इह सत्सङ्गे वर्त्तमानस्य । तस्यापि । श्रेयः । भविष्यति । साक्षाच्छ्रीकृष्णप्रतापेन पशोर्य यथापि श्रेयो भवति तथा तस्यापि भविष्यतीत्यर्थः ॥ २० ॥ किन्त्विति । किन्तु । असौ पशुसमानः सत्सङ्गी । असौ । एकान्तिकभक्तः । इत्येवंविधाम् । ख्यातिं प्रसिद्धिं तु । नैति नैव प्राप्नोति । एकान्तिकेन पूर्वोक्तेनैकान्तिकभक्तेनैव । अर्चिरध्वना छान्दोग्याद्युपनिषदुक्तार्चिरादिमार्गेण । ब्रह्मधाम । प्राप्यम् । भवति न त्वितरेणेति भावः ॥ २१ ॥ द्वधेति । अद एकान्तिकप्राप्यम् । अक्षरंब्रह्माक्षरब्रह्माख्यं धाम । मूर्त्तं दिव्यावयवविशिष्टत्वान्मूर्त्तिमत् । अमूर्त्तं कृष्णधामत्वादनन्तमुक्ताधारत्वाच्च साकारं सदपि निरवयवत्वेनामूर्त्तवत्प्रतीयमानं च । इत्यमुना प्रकारेण द्वेधा द्विविधम् । उक्तम् । तत्र तयोर्मूर्त्तामूर्त्तयोर्मध्ये । मूर्त्तं तु । दिव्यविग्रहं रूपानुरूपकरचरणाद्यवयवविशिष्टत्वेनातिसुन्दरपुरुषाकारमूर्त्तिमत् । कृष्णस्य ततोऽप्यतिनिरतिशयशरीरशोभावतः स्वेष्टदेवस्य श्रीकृष्णभगवतः । सेवायाम् । अस्ति दासवत्सदा वर्त्तते ॥ २२ ॥ अमूर्त्तमिति । अमूर्त्तं तु । कृष्णस्य । धाम निवासस्थानम् । भवति । तत्र धाम्नि । स श्रीकृष्णः । नित्यं सर्वदा । राजते । अलौकिकैश्वर्ययुतोऽनन्तमुक्तनेत्रचकोरचन्द्राननो महाराजाधिराजश्रीया विशेषेण शोभते इत्यर्थः । तदमूर्त्तमेव । चिदाकाशादिपर्यायैः । आदिशब्देन दहर, चिद्व्योम, परमव्योम, ब्रह्मपुरादिग्रहणम् । अन्यत्र श्रुतिस्मृत्यादिषु । उदितम् । अस्ति ॥ २३ ॥ भक्ता इति । यत्र धाम्नि । अक्षरसधर्माणोऽक्षरब्रह्मणः समानधर्मवन्तः । कोटिशोऽपरिमिता मुक्ताः । हरिम् । सेवन्ते । अत्र लोके । ये । एकान्तिकाः । भक्ताः । तेऽपि । देहान्ते । तदक्षरब्रह्माख्यम् । धाम । प्राप्य । अक्षरसधर्माणः सन्तः । हरिम् । सेवन्ते ॥ २४ ॥ अत इति । अतो हेतोः । सर्वैः सत्सङ्गिभिः । अक्षरंबृहदक्षरब्रह्माख्यम् । धाम । प्राप्य । तन्मुक्तपङ्क्तावक्षरधामस्थमुक्तश्रेण्याम् । स्थास्यामो निवसिष्यामः । इत्येवंभूतः । निश्चयः । अत्रास्मिन्देहे सत्येव । कार्यः ॥ २५ ॥

ईदृग्ज्ञानविहीनस्तु सत्सङ्गी पशुवन्मतः । कृष्णप्रतापाच्छ्रेयस्तु तस्याप्यग्रे भविष्यति ॥ २० ॥
किन्त्वेकान्तिकभक्तोऽसाविति ख्यातिं तु नैत्यसौ । प्राप्यमेकान्किकेनैव ब्रह्मधामाऽर्चिरध्वना ॥ २१ ॥
द्वेधोक्तमक्षरंब्रह्म मूर्तं चामूर्तमित्यदः । मूर्तं तत्रास्ति कृष्णस्य सेवायां दिव्यविग्रहम् ॥ २२ ॥
अमूर्तं धामकृष्णस्य स नित्यं तत्र राजते । चिदाकाशादिपर्यायैस्तदेवान्यत्र तूदितम् ॥ २३ ॥
भक्ता एकान्तिका येऽत्र देहान्ते तेऽपि धाम तत् । प्राप्याक्षरसधर्माणः सेवन्ते कोटिशो हरिम् ॥ २४ ॥
अतः सत्सङ्गिभिः सर्वैः प्राप्य धामाक्षरं बृहत् । तन्मुक्तपङ्क्तौ स्थास्याम इति कार्योऽत्र निश्चयः ॥ २५ ॥

सुखमिति । किञ्च । तैः । तदितरद्भगवन्मूर्त्तिसेवातिरिक्तम् । सर्वम् । सुखम् । तुच्छं लोष्टादिवदत्यल्पम् । इतीत्थम् । अवधार्य निर्णीय । एकान्तिकत्वे एकान्तिकभक्तभावे । यत् । न्यूनम् । तत् । तूर्णं शीघ्रमेव । अञ्जसा तत्त्वतः । साध्यं सम्पादनीयम् ॥ २६ ॥ विपक्षे दोषमाह अक्षरादिकसार्द्धेन । य इति । यः । नरः सत्सङ्गीजनः । अत्र लोके । मायिके मायाकार्यरूपे । कृष्णेतरद्रव्ये श्रीकृष्णव्यतिरिक्तस्त्रीधनरसादिपदार्थमात्रे । लुब्धोऽभिलाषुकः । स्यात् । स नरः । कृष्णस्य श्रीकृष्णपरमात्मनः धामाक्षरब्रह्माख्यं स्थानं तस्य मार्गोऽर्चिरादिस्तत्प्राप्तिपथस्तस्मिन्नाप्ता भगवदुपासनाबलेन सञ्जता याः सिद्धयोऽणिमाद्यैश्वर्याणि ता आदयो यस्य स्वर्गलोकादेस्तस्मिन् । सक्तिमनुरागम् । आप्नुयात् ॥ २७ ॥ तत इति । ततस्तदनन्तरम् । असौ सत्सङ्गिजनः । भगवन्मार्गाद्भगवत्प्राप्तिहेतोरेकान्तिकधर्मरूपात्पथः । भ्रष्टश्च्युतः । भूत्वा । अतिदुःखितः जायते । अतो हेतोः । कृष्णान्यवासनाः श्रीकृष्णेतरमायिकपदार्थभावनाः । प्रयत्नेनातिशयितभगवन्माहात्म्यावबोधनादिसाधनप्रयासेन । हेयाः सत्सङ्गिना त्याज्याः ॥ २८ ॥ अनन्येति । इह सत्सङ्गे । यः सत्सङ्गी । अनन्यचेता न विद्यतेऽन्यस्मिन् श्रीकृष्णेतरपदार्थे चेतो मानसं यस्य

सुखं तदितरत्सर्वं तुच्छमित्यवधार्य च । एकान्तिकत्वे यन्न्यूनं तत्साध्यं तूर्णमञ्जसा ॥ २६ ॥ योऽत्र
कृष्णेतरद्रव्ये लुब्धः स्यान्मायिके नरः । स कृष्णधाममार्गाप्तसिद्ध्यादौ सक्तिमाप्नुयात् ॥ २७ ॥ ततोऽसौ
भगवन्मार्गाद्भ्रष्टो भूत्वाऽतिदुःखितः जायतेऽतः प्रयत्नेन हेयाः कृष्णान्यवासनाः ॥ २८ ॥ अनन्यचेता भजतीह
कृष्णं यस्तस्य सौख्यं हि परत्र चात्र । इति प्रभोर्वाक्यसुधां निपीय सर्वेऽपि भक्ता मुदिता अभूवन् ॥ २९ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दविरचिते एकविंशस्तरङ्गः ॥ २१ ॥

शकाब्दे विक्रमार्कस्य रसाश्ववसुभूमिते । पौषे चतुर्थ्यां शुक्लायां वचोऽमृतमिदं हरेः ॥ १ ॥

तथाभूतः सन् । कृष्णं साक्षाच्छ्रीकृष्णपरमात्मानम् । भजति । तस्य सत्सङ्गिनः । अत्रास्मिन् लोके । परत्र भगवतो ब्रह्मपुरधाम्नि च । सौख्यमत्यन्तसुखम् । स्यात् । हि । तत्रास्यात्यन्तनैराश्यजन्यसुखस्य तु प्रत्यक्षसिद्धत्वान्न प्रमाणापेक्षा । परत्र यत्सुखं तदुक्तं मोक्षधर्मेषु । 'प्राप्यावध्यं ब्रह्मपुरं राजेव स्यामहं सुखी'ति । इतीत्थंभूताम् । प्रभोः श्रीहरेः । वाक्यसुधां वचनामृतम् । निपीय । सर्वेऽपि । भक्ताः सकला अपि त्यागिगृहिणः सभानिषण्णा भक्तजनाः । मुदिता अत्यानन्दयुक्ताः । अभवन् ॥ २९ ॥ स्वधर्मादिदृढलोक्तिपूर्वं धामाक्षरं निजम् । प्राप्यं स्वैकान्तिकैः प्राह यो हरिः सोऽस्तु मे गतिः ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्स्नुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायामेकविंशस्तरङ्गः ॥ २१ ॥

श्रीहरेः पद्यगानादि तन्मूर्त्तिस्मृतियुक्सदा । कार्यं तद्ध्यानहेतुस्तु द्वाविंश इति कीर्त्तितम् ॥१॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८७६) पौषे सहस्यमासे । शुक्लायां शुक्लपक्षागतायाम् । चतुर्थ्यां तिथौ । इदम् । हरेः । वचोऽमृतम् । अभवत् ॥ १ ॥

तत्रेति । तत्र तिथौ । दुर्गपुरे । प्रागास्योत्तमवेश्मनः पूर्वाभिमुखस्य दुर्गान्तर्वर्त्तिन उत्तमनृपतिगृहस्य । वेद्यामुच्चबर्हिर्निर्मितर्दिकायाम् । पीठोत्तमे मृदुलसश्वेतोत्तर-च्छदास्तृततूलिके सपार्श्विके उच्चमश्वरूपोत्तमासने । कृष्णः श्रीहरिकृष्णो भगवान् । नैकैर्बहुभिः । भक्तैर्नानादेशायातैस्त्यागिगृहिभिर्भक्तजनैः । वृतः सभायां परिवेष्टितः सन् । उपाविशन्मध्याह्नकाले स्वावासादागत्य पूर्वाभिमुखो निषसाद ॥ २ ॥ पुष्पेति । पुष्पाणां मन्दारकुसुमानां याः आपीडःशेखरश्च अवतंसौ कर्णपूरौ च स्त्रग्मालिका च ताभिः राजितं शोभमानम् । विशदांशुकं परिधृतसकलधवलवसनम् । तं श्रीहरिम् । साधवो मुक्तानन्दप्रेमानन्दादयो गायनदक्षा मुनयः । वादित्रोपेतगायनैरंक्यविपश्विका-दिवाद्ययुक्तगानविधानैः । उपतस्थुः परिचेरुः ॥ ३ ॥ तेभ्य इति । अथानन्तरम् । विभुरीश्वरेश्वरः । स श्रीहरिः । मुहूर्त्तं घटिकाद्वयपर्यन्तम् । वाद्यगायनं सवादित्रं तत्कृतं भगवद्यशोङ्कितपद्यगानम् । निशम्यात्यादरतः श्रुत्वा । तेभ्यो गायकसाधुभ्यः । प्रसन्नः सन् । सर्वे । साधवः ! । शृणुत । इति । वाचम् । अब्रवीत् ॥ ४ ॥ वाद्येति । हे साधवः ! । वाद्योपेते वादित्रवादनसहिते । श्रोतृरञ्जने श्रोतृजनानामानन्दोत्पादके । कृष्णपद्यगायने श्रीकृष्णयशोङ्कितपद्यगाने । क्रियमाणे सति । चेद्यदि ।

तत्र दुर्गपुरे कृष्णः प्रागास्योत्तमवेश्मनः । वेद्यां पीठोत्तमे भक्तैर्नैकैर्वृत उपाविशत् ॥ २ ॥ पुष्पापीडावतंसस्त्र-ग्राजितं विशदांशुकम् । उपतस्थुः साधवस्तं वादित्रोपेतगायनैः ॥ ३ ॥ तेभ्यः प्रसन्नः स विभुर्मुहूर्तं वाद्यगा-यनम् । निशम्याथाब्रवीद्वाचं सर्वे शृणुत साधवः ? ॥ ४ ॥ वाद्योपेते कृष्णपद्यगायने श्रोतृरञ्जने । क्रियमाणे कृष्णमूर्तिस्मृतिश्चेत्तत्सुगायनम् ॥ ५ ॥ अन्यथा त्वपगानं तत्र गायकहितावहम् । न च तेन मनःशान्ति-रभ्यस्तेनापि जायते ॥ ६ ॥ पद्यगानमतो विष्णोर्नामसङ्कीर्त्तनादि च । तन्मूर्त्तिस्मृतियुक्कार्यं ध्यानं तेन च सिद्ध्यति ॥७॥ कृष्णमूर्त्तिं स्मरन्त्येके भजनावसरेऽन्वहम् । नान्यत्र तन्मतं तुच्छमनभ्यस्तास्मृतेस्तदा ॥ ८ ॥

कृष्णमूर्त्तिस्मृतिः गायकानां साक्षाच्छ्रीकृष्णमूर्त्तिस्मरणम् । भवेत् । तर्हि । तद्गायनम् । सुगायनं शोभनं गानम् । ज्ञेयम् ॥ ५ ॥ अन्यथेति । अन्यथा गायने क्रियमाणे साक्षाच्छ्रीकृष्णमूर्त्तिस्मरणाभावे तु । तद्गानम् । अपगानमशोभनं गायनम् । ज्ञेयम् । तच्च । गायकहितावहं गानकर्तृजनहितकारकम् । न ज्ञेयम् । अभ्यस्तेन पुनः पुन-र्विहितेनापि । तेन गायनेन । मनःशान्तिः गायकचित्तशमः । तन्मनोगतमायिकविषयोपभोगनानासङ्कल्पनिवृत्तिरित्यर्थः । न जायते ॥ ६ ॥ पद्येति । अतो हेतोः । विष्णोः श्रीकृष्णस्य । पद्यगानं श्रीकृष्णचरित्राङ्कितरमणीयपद्यगायनमित्यर्थः । विष्णोः । नामसङ्कीर्त्तनादि च । तन्मूर्त्तिस्मृतियुक् साक्षाच्छ्रीकृष्णमनोज्ञमूर्त्तिचिन्तनसहितम् । कार्यम् । तेनैवं श्रीकृष्णस्मृतियुक्पद्यगानादिना । ध्यानम् । सिध्यति ॥ ७ ॥ कृष्णेति । एके केचन सत्सङ्गिनो जनाः । अन्वहं प्रतिदिनम् । भजनावसरे ध्याना-चरणसमये । कृष्णमूर्त्तिम् । स्मरन्ति ध्यायन्ति । अन्यत्र तदितरासु सर्वासु क्रियासु । न स्मरन्ति । अतः । तदा तत्कृतश्रीष्णभजनकाले । अनभ्यस्तास्मृतेः सर्वक्रियासु श्रीकृष्णमूर्त्तिस्मरणविधानाभावात् यथार्थतया तदवसरे तत्स्मृतेरभावाद्धेतोरित्यर्थः । तन्मतम् । तुच्छम् । ध्यानस्य सर्वदा यथार्थश्रीकृष्णमूर्त्तिस्मरणफलत्वात्तत्फलस्य

तेषामेकदा स्मरणेनाभावात्तन्मतं न किञ्चिदित्यर्थः ॥ ८ ॥ यस्येति । यस्य सत्सङ्गिनः । नित्यं प्रतिदिनम् । सर्वासु । क्रियासु श्रवणकीर्त्तनादिकेष्वष्टविधभक्त्यङ्ग-कर्मसु । कृष्णमूर्त्तिस्मृतिः । भवेत् । तस्य सत्सङ्गिन एव । भजनकालेऽपि । मनः । स्थिरं भगवन्मूर्त्तौ निश्चलम् । भवेत् ॥ ९ ॥ बहिरिति । प्रमादिनः सर्वकालं श्रीकृष्णमूर्त्तिचिन्तने प्रमादयुक्तस्य सत्सङ्गिनः । मनः । अभ्यासं विना सततं श्रीकृष्णमूर्त्तिचिन्तनमृते । सर्वकालम् । बहिर्बाह्येषु संसारिकपदार्थेषु । भ्रमत्सत् । ध्यानकाले । भगवन्मूर्तौ । स्थिरं निश्चलम् । कथम् । स्यात् । न स्यादेवेत्यर्थः ॥ १० ॥ अत इति । अतो हेतोः सावधानमुमुक्षुणा प्रमादरहितेन सत्सङ्गिना । सर्वेषु । कालेषु प्रातरादिषु । सर्वासु । अपि । क्रियास्वष्टविधभक्त्याचरणरूपासु गमनागमनादिषु च । कृष्णे एव । मनः धार्यम् ॥ ११ ॥ वच इति । इत्थमेवंविधाम् । आत्मगुरोः स्व-हितोपदेशकत्वात्सत्यदेशिकस्य श्रीहरेः । वचः सुधां वचनामृतम् । निपीय । अथानन्तरम् । ते । संतः मुक्तानन्दादयो गायका मुनयः । तं श्रीहरिम् । प्रणम्य ।

यस्य क्रियासु सर्वासु कृष्णमूर्त्तिस्मृतिर्भवेत् । नित्यं भजनकालेऽपि स्यात्तस्यैव मनःस्थिरम् ॥ ९ ॥ बहि-र्भ्रमत्सर्वकालं ध्यानकाले मनः कथम् । स्थिरं स्याद्भगवन्मूर्त्तौ विनाऽभ्यासं प्रमादिनः ॥ १० ॥ अतः सर्वेषु कालेषु सर्वास्वपि क्रियासु च । कृष्ण एव मनो धार्यं सावधानमुमुक्षुणा ॥ ११ ॥ वचः सुधामात्मगु-रोस्त इत्थं निपीय सन्तस्तमथ प्रणम्य । तथा करिष्याम इतीरयित्वा गानं पुनश्चक्रुरनुज्ञयाऽस्य ॥ १२ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दविरचिते द्वाविंशस्तरङ्गः ॥ २४ ॥

शकाब्दे विक्रमार्कस्य रसाश्ववसुभूमिते । सहस्यशुक्लपञ्चम्यां वचोऽमृतमिदं हरेः ॥ १ ॥
तत्र दुर्गपुरे राज्ञ उत्तमस्यालये प्रभुः । प्राग्द्वारे स वहिर्वेद्यां न्यषीदद्भक्तसंसदि ॥ २ ॥

वयम् । तथा भवदुक्तप्रकारेण । करिष्यामः । इतीत्थम् । ईरयित्वा कथयित्वा । अस्य श्रीहरेः । अनुज्ञया निदेशेन । पुनर्भूयोऽपि । गानम् । चक्रुः ॥ १२ ॥ स्वकीयध्यानसिद्ध्यै यो निजानां सर्वकर्मसु । स्मृतिं स्वमूर्त्तेस्तान्प्राह ध्येयः सोऽस्तु हरिर्मम ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासक श्रीहरिकृष्ण-भगवत्प्रिरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां द्वाविंशस्तरङ्गः ॥ २२ ॥

त्यक्त्वाऽऽत्मनिष्ठया सम्यग्देहात्मधिषणां हरेः । मूर्त्तौ सदा मनो धार्यं त्रयोविंशे इतीरितम् ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८७६) सहस्य पोष-शुक्लपक्षपञ्चमीतिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥१॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमस्य । राज्ञः । प्राग्द्वारे पूर्वाभिमुखद्वारवति । आलये दुर्गान्तर्वर्त्ति-भवने । वहिर्वेद्यां बाह्यायां वितर्दिकायाम् । भक्तसंसदि नानादेशायातत्यागिगृहिभक्तजनगोष्ठ्याम् । प्रभुः । स श्रीहरिः । न्यषीदत्स्वास्तृतमञ्चोत्तमे पूर्वास्य उपविवेश ॥ २ ॥

दधदिति । सितं श्वेतवर्णम् । शीर्षपटं शिरोवेष्टनवस्त्रम् । दधत् । तादृशं सितम् । अन्तरीयं निचोलाख्यपरिधानवसनम् सूरवालं । दधत् । कौसुम्भं महारजनरञ्जितम् । कटिपटं कटिनिबन्धनवस्त्रम् । दधत् । विशदं श्वेतवर्णनम् । अङ्गरक्षकं चोलं च । दधत् । स इत्युत्तरेणान्वयः ॥ ३ ॥ स्वयमिति । स श्रीहरिः । कारुण्यान्निष्कारणदयालुत्वाद्धेतोः । स्वयमेव । स्वीयान्प्रति सभानिषण्णानात्मीयत्यागिगृहिजनान्प्रति । वचः । अब्रवीत् । हे भक्ताः ! । सर्वैः । मदाश्रितैर्युष्माभिः । नित्यम् । सच्छास्त्रसेवनं सच्छास्त्राणां श्रवणपठनादिना परिशीलनम् । कार्यम् ॥ ४ ॥ वेदेति । इहास्मत्सत्सङ्गे । वेदादीनि । यानि । अष्टौ । सच्छास्त्राणि । मतानि । तेष्वष्टसु सच्छास्त्रेषु मध्ये । श्रीवासुदेवमाहात्म्यम् । मम । प्रेष्ठतमत्यधिकप्रियम् । भवति ॥५॥ भगवदिति । मुमुक्षूणाम् । अपेक्षिता । मुमुक्षुभिर्भगवद्भक्तैः प्राप्तुमभिवाञ्छितेत्यर्थः । या । भगवद्भक्तिरीतिः । सा तु । तत्र श्रीवासुदेवमाहात्म्ये एव । सुस्पष्टं यथातथा । उक्ता । अस्ति । इति हेतोः । मम । आदरः तत्राति प्रीतिरस्ति ॥ ६ ॥ भगवन्तमिति । तत्र श्रीवासुदेवमाहात्म्यतृतीयाध्याये । भगवन्तम् । सेवमानाः । भक्ताः सकामभक्तसंज्ञाः । एकान्तिका एकान्तिकसंज्ञाश्च । इतीत्थम् ।

दधत्सितं शीर्षपटमन्तरीयं च तादृशम् । कौसुमं च कटिपटं विशदं चाङ्गरक्षकम् ॥ ३ ॥ स्वमेव स कारु-
ण्यात्स्वीयान्प्रत्यब्रवीद्वचः । सर्वैर्मदाश्रितैर्नित्यं कार्यं सच्छास्त्रसेवनम् ॥ ४ ॥ वेदादीनि मतान्यष्टौ सच्छास्त्राणीह
यानि तु । श्रीवासुदेवमाहात्म्यं तेषु प्रेष्ठतमं मम ॥ ५ ॥ भगवद्भक्तिरीतिर्या मुमुक्षूणामपेक्षिता । सा तु
तत्रैव सुस्पष्टमुक्ताऽस्तीति ममादरः ॥ ६ ॥ भगवन्तं सेवमाना भक्तास्तत्र द्विधोदिताः । भक्ता एकान्तिका-
श्चेति ज्ञातव्यास्ते तु लक्षणैः ॥ ७ ॥ तत्राद्यानां निश्चयः स्यात्सम्यक् चेतसि । किन्तु देहात्मधीयुक्तास्ते
भजेयुरतन्द्रिताः ॥ ८ ॥ अन्ये तु देहत्रितयपरशुद्धात्मरूपिणः । अतिप्रकाशे तत्रैव साक्षात्कृष्णमुपासते
॥ ९ ॥ अतिप्रकाशात्मरूपं त ईक्षन्ते सदैव हि । कृष्णं च साक्षात्तत्रैव सदेक्षन्तेऽतितेजसम् ॥ १० ॥

द्विधा द्विप्रकाराः । उदिताः कथिताः । सन्ति । ते द्विविधा भक्तास्तु । लक्षणैर्मया वक्ष्यमाणैस्तत्तल्लक्ष्मभिः । ज्ञातव्याः ॥ ७ ॥ तत्रेति । तत्र द्विविधभक्तेषु मध्ये । आद्यानां भक्तसंज्ञानाम् । चेतसि । कृष्णस्य । निश्चयः । सम्यग्यथार्थः । स्यात् । किन्तु । ते भक्ताः । देहात्मधीयुक्ता देहाहंबुद्धिसहिताः । तथापि । अतन्द्रिता अनलसाः सन्तः । भजेयुः श्रीकृष्णभक्तिं कुर्युः ॥ ८ ॥ अन्य इति । अन्ये एकान्तिकास्तु । देहत्रितयं स्थूलसूक्ष्मकारणसंज्ञं यच्छरीरत्रिकं तस्मात्परो वस्तुतो विलक्षणः शुद्धः भगवदुपासनाबलेन ब्रह्मभावापत्त्या स्वरूपतो देहत्रयभाववर्जितो य आत्मा स्वक्षेत्रज्ञस्तद्रूपिणस्तन्निष्ठाः सन्तः । अतिप्रकाशेऽतिशयप्रकाशवति । तत्रात्मस्वरूपे एव । साक्षात्प्रत्यक्षम् । स्थितमिति शेषः । कृष्णम् । उपासते ध्यायन्ति ॥ ९ ॥ अतीति । ते एकान्तिकभक्ताः । अतिप्रकाशात्मरूपमतिशयितप्रकाशयुक्तं स्वस्वरूपम् । सदैव सर्वकालम् । ईक्षन्ते । तत्र स्वस्वरूपे । अतितेजसं स्वतेजसोऽप्यत्यधिकतेजोयुक्तम् । स्थितमिति शेषः । साक्षात्प्रत्यक्षम् । कृष्णम् । सदा । ईक्षन्ते ॥ १० ॥

सतीति । ते इत्थंभूता एकान्तिकभक्ताः । देहेऽस्मिन् शरीरे । सति विद्यमाने सत्यपि । नित्यम् । ब्रह्मपुरस्थिता अक्षरधाम्न्येवावस्थिताः । ज्ञेयाः । ततो हेतोः । सर्वैर्भक्तैः तादृग्भाव उक्तविधैकान्तिकभावः । प्रयत्नतो महतायासेनापि । साधनीयः ॥११॥ भवेदिति । इह सत्सङ्गे । श्रीपतेर्लक्ष्मीकान्तस्य श्रीकृष्णपरमात्मनः । भक्तानाम् । यावत् । देहात्मधीः स्वदेहेऽहंबुद्धिः । भवेत् । तावत् । तेषां भक्तानाम् । विघ्नभयं कामाद्यन्तरारिणा सत्सङ्गात्पतनमीतिः । अस्ति । ततो हेतोः । सा देहात्मधीस्तु । त्याज्या भगवभक्तैर्हेया ॥ १२ ॥ महतामिति । महतां लोकशास्त्रयोर्महत्त्वेन प्रख्यातानाम् । भक्तानां शिवादीनामपि । क्वचित्कदाचित् । देहात्मधीवशात् । महत्यतिशयिता । दुर्दशा । अभूत् । इतीत्थम् । मया । पुराणेषु श्रीमद्भागवतादिषु पुरातनेषु । श्रुतम् । भवति ॥ १३ ॥ एतदेवाह द्वाभ्याम् । शिवस्येति । मोहिन्यां भगवतो मोहिनिरूपे । मोहाद्देहात्मबुद्धिजातकामाकुलत्वरूपमोहवशतः । शिवस्येश्वरत्वेन प्रसिद्धस्यापि शम्भोः । सा दुर्दशा । अभूत् । सरस्वत्यां स्वसुतायां वाग्देवतायां । मोहात् । वेधसो जगत्स्रष्टुः पितामहतया प्रसिद्धस्यापि ब्रह्मणः । सा । अभूत् । अहल्यायां गौतमपत्न्याम् । मोहात् । सुरेशस्य देवानामधिपतेरिन्द्रस्य । सा । अभूत् । तारायां

सति देहेऽपि ते ज्ञेया नित्यं ब्रह्मपुरस्थिताः । तादृग्भावस्ततः सर्वैः साधनीयः प्रयत्नतः ॥ ११ ॥
भवेद्देहात्मधीर्यावद्भक्तानां श्रीपतेरिह । तावद्विघ्नभयं तेषामस्ति त्याज्या ततस्तु सा ॥ १२ ॥
महतामपि भक्तानां क्वचिद्देहात्मधीवशात् । महत्यभूद्दुर्दशेति पुराणेषु श्रुतं मया ॥ १३ ॥
शिवस्य मोहान्मोहिन्यां सरस्वत्यां च वेधसः । अहल्यायां सुरेशस्य तारायां सा विधोरभूत् ॥ १४ ॥
परीक्षितस्तथात्वेन राज्ञोऽभूत्संशयो हृदि । कृष्णस्य रासलीलयां नृत्वसम्भावनेन च ॥ १५ ॥
एकान्तिकत्वात्तु शुको लीलासु निखिलास्वपि । निःसंशयो यथावत्ताः स्वयं त्याग्यप्यवर्णयत् ॥ १६ ॥
देहात्मबुद्धिविलयो ध्यातकृष्णप्रसादतः । भवेदतः कृष्ण एव मनो धार्यं प्रयत्नतः ॥ १७ ॥

बृहस्पतिपत्न्याम् । मोहात् । विधोर्विप्रौषध्युडुगणाधिपतेरपि चन्द्रस्य । सा । अभूत् ॥ १४ ॥ परीक्षित इति । परीक्षितः । राज्ञः । तथात्वेन देहात्मधीवशतया । नृत्वसम्भावनेन मनुष्यभावसम्भावनया । कृष्णस्य गर्भे स्वपरित्राणादिदृष्टैश्वर्यस्यापि श्रीकृष्णस्य । रासलीलायां कन्दर्पदर्पापनोदाय कृतायां गोपीभिः सह रासक्रीडायाम् । हृदि स्वमानसे । संशयो धर्मावनार्थं धृतावतारस्यास्य कथमेवमयुक्ताचरणमिति सन्देहः । अभूत् ॥ १५ ॥ एकान्तिकत्वादिति । एकान्तिकत्वात् श्रीकृष्णस्य पूर्वोक्तप्रकारैणैकान्तिकभक्तत्वाद्धेतोः । शुकः । निखिलासु रासाचरणादिसकलास्वपि । लीलासु । निःसंशयः सन्देहवर्जितः सन् । स्वयम् । त्यागी निवृत्तधर्मनिष्ठः सन्नपि । ता लीलाः । यथावद्याथातथ्येन । अवर्णयत् ॥ १६ ॥ देहेति । ध्यातकृष्णप्रसादतः स्वमानससञ्चिन्तितश्रीकृष्णानुग्रहाद्धेतोः । देहात्मबुद्धिविलयः । भक्तस्येति शेषः । भवेत् । अतो हेतोः । कृष्णे श्रीकृष्णस्वरूपे एव । मनः । प्रयत्नतः । धार्यम् ॥ १७ ॥

भक्तस्येति । यत्नतः । कृष्णे श्रीकृष्णमूर्त्तौ । धार्यमाणस्य । भक्तस्य । मनसः । वृत्तिः । द्विधा द्विप्रकारा । भवेत् । तत्र द्विविधवृत्त्योर्मध्ये । एका । वृत्तिस्तु । केशवे श्रीकृष्णस्वरूपे । वर्त्तेत ॥ १८ ॥ प्रेमेति । सा केशवे वर्त्तमाना वृत्तिः । प्रेमात्मिका श्रीकृष्णमाहात्म्यज्ञानपूर्वं गाढानुरागरूपा । स्यात् । अन्या द्वितीया वृत्तिस्तु । ध्यानकर्त्तरि श्रीकृष्णस्वरूपध्यानविधायके । स्वस्मिन्स्वक्षेत्रज्ञस्वरूपे । स्यात् । सा स्वात्मस्वरूपे वर्त्तमाना वृत्तिः । सविचारा देहातिरिक्तात्मस्वरूपविचारसहिता । दुःसङ्कल्पापनोदनी श्रीकृष्णध्यानान्तरायकारकमायिकपदार्थोपभोगेच्छारूपदुष्टसङ्कल्पविनाशिका । ज्ञेया ॥ १९ ॥ एवमिति । एवममुना प्रकारेण । अभ्यसतः श्रीकृष्ण-ध्यानाभ्यासं कुर्वतो भक्तस्य । वृत्तिः । कृष्णे परमात्मन्येव । स्थिरा भवेत् । ततस्तदनन्तरम् । तस्याः स्वमनोवृत्तेः । एकान्तभावत एकस्मिन् श्रीकृष्णस्वरूप एव पर्य-वसितत्वतो हेतोः । असौ भक्तः । एकान्तिकः । स्यात् ॥ २० ॥ नेति । यो भक्तः । एवमुक्तप्रकारेण । अभ्यासम् । न करोति । तस्य भक्तस्य । मनस्तु । क्वचित्कदाचिदपि । चाञ्चल्यम् । नैव । जहाति । ततो हेतोः । असौ भक्तः । शमं भगवति मनःस्थिरतालक्षणां शान्तिम् । नाप्नोति ॥२१॥ एतदेव विवृणोति । क्षणमिति ।

भक्तस्य कृष्णे मनसो धार्यमाणस्य यत्नतः । वृत्तिर्द्विधा भवेत्तत्र वर्त्तैका तु केशवे ॥ १८ ॥
प्रेमात्मिका च साऽन्या तु स्यात्स्वस्मिन् ध्यानकर्तरि । सविचारा हि सा ज्ञेया दुःसङ्कल्पापनोदनी ॥ १९ ॥
एवमभ्यसतो वृत्तिः कृष्ण एव स्थिरा भवेत् । तत एकान्तिकोऽसौ स्यात्तस्या एकान्तभावतः ॥ २० ॥
न करोत्येवमभ्यासं यस्तु मनः क्वचित् । चाञ्चल्यं न जहात्येव ततो नाप्नोत्यसौ शमम् ॥ २१ ॥
क्षणं कृष्णे क्षणं वित्ते क्षणं देहे च दैहिके । भ्रमता मनसा नैव स्थितिरीदृगवाप्यते ॥ २२ ॥
यथा कश्चिद्ध्रदं भर्त्तुकाम एकं निषिञ्चति । एकस्मिन्दिवसे तस्मिन् गर्त्ते पानीयकुम्भकम् ॥ २३ ॥
पुनर्दिने द्वितीये वा तृतीये तत्र सिञ्चति । म्रियेत न ह्रदस्तेन शताब्देनाप्यनेहसा ॥ २४ ॥

क्षणं क्षणकालपर्यन्तम् । कृष्णे । क्षणम् । वित्ते । क्षणम् । देहे । क्षणम् । दैहिके देहसम्बन्धिपदार्थे च । भ्रमता । मनसा । ईदृक् भगवति संततस्थिरमनोलक्षणा । स्थितिर्निष्ठा । नैव । अवाप्यते ॥ २२ ॥ अथ श्रीकृष्णमूर्त्तिध्यानं कुर्वतो मनस्तत्र स्थिरं यथा न स्यात् यथा स्यात् तद्द्वयं दृष्टान्तद्वयोक्तिपूर्वमाह पञ्चभिः । यथेति । यथा । ह्रदं कालरिक्तजलं द्रहम् । 'द्रहोऽगाधजलो ह्रद' इति हैमः । भर्त्तुकामो जलेन भरणकामुकः । कश्चिन्नरः । एकस्मिन् । दिवसे । एकम् । पानीयकुम्भकम् । गर्त्ते गर्त्तरूपे । तस्मिन् ह्रदे । निषिञ्चति ॥ २३ ॥ पुनरिति । पुनर्भूयः । द्वितीये । दिने । अथवा । तृतीये । दिने । तत्र ह्रदे । सिञ्चति एकैकस्य पानीयकुम्भस्य निषेकं करोति । तेन तथाविधेन जलसेचनेन । शताब्देन शतवर्षाकेनापि । अनेहसा कालेन । ह्रदः पूर्वोक्तोगर्त्तरूपो द्रहः । न म्रियेत । यस्मिन् दिने कुम्भमितजलं निषिक्तं । तस्य तस्मिन्नेव दिने शुष्कीभावात्स सम्पूर्णजलभृतो न भवेदित्यर्थः ॥ २४ ॥

क्रियेतेति । चेद्यदि । अल्पा कनिष्ठाङ्गुलिप्रमाणापि । अम्बुधारा । अखण्डाऽविछिन्ना । क्रियेत । तदा तु । स ह्रदः । अन्वहं प्रतिदिनम् । वर्द्धमानाम्बुना एधमानेन जलेन । अल्पकालेनापि । भ्रियेत । स सम्पूर्णजलो भवेदित्यर्थः ॥ २५ ॥ तथेति । तथा । कृष्णे । क्वचित्कदाचित्कदाचित् । मनः । धारयतो युञ्जतोऽपि । भक्तस्य । तन्मनः । बहुनापि । कालेन । स्थिरं निश्चलम् । न जायते । वै निश्चितम् ॥ २६ ॥ अन्वहमिति । यो भक्तस्तु । अन्वहम् । निखिलासु गमनागमनादिसकलास्वपि । क्रियासु । भगवति । अखण्डम् । मनः । धारयेत् । तस्य भक्तस्यैव । तन्मनः । स्थिरम् । स्यात् । हि निश्चितम् ॥ २७ ॥ एकेति । नृलोके । सुधीया सुमतिना भक्तेन । एकान्तिकत्वास्पये एकान्तिकभगवद्भक्तत्वप्राप्त्यर्थमेव । सदा । यत्नः । विधेयः कार्यः । अनेन भगवति सर्वदा सुस्थिरमनस्त्वमेकान्तित्वमिति ज्ञापितम् । इत्येवंविधाम् । सुधाभाममृतसंमिताम् । तस्य श्रीहरेः । वाचम् । श्रुत्वा । मुदिता हृष्टान्तःकरणाः । ते भक्ताः सभानिषण्णास्त्यागिगृहिभक्तजनाः । तथेति यथा त्वया उक्तं तेन प्रकारेणैव वयं करिष्याम इति । अवदन्कथयामासुः ॥ २८ ॥ स्वस्यैकान्तिकभक्तत्वसाधनान्याह यो निजान् । स श्रीहरिस्त-

क्रियेताल्पाप्यखण्डा चेदम्बुधारा तदा तु सः । भ्रियेताप्यल्पकाले वर्द्धमानाम्बुनाऽन्वहम् ॥ २५ ॥ तथा कृष्णेऽपि
भक्तस्य मनो धारयतः क्वचित् । न स्थिरं जायते तद्धि कालेन बहुनाऽपि वै ॥ २६ ॥ अन्वहं धारयेद्यस्तु
क्रियासु निखिलास्वपि । मनोऽखण्डं भगवति तस्यैव स्यात्स्थिरं हि तत् ॥ २७ ॥ एकान्तिकत्वास्पय एव
यत्नः सदा विधेयः सुधिया नृलोके । श्रुत्वेति वाचं मुदिताः सुधाभां ते तस्य भक्ता अवदंस्तथेति ॥ २८ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते त्रयोविंशस्तरङ्गः ॥२३॥

शकाब्दे विक्रमार्कस्य रसाश्ववसुभूमिते । शुक्लपष्ठ्यां सहस्यस्य वचोऽमृतमिदं हरेः ॥ १ ॥
तत्र दुर्गपुरे राज्ञ उत्तमस्यैव वेश्मनः । प्राग्द्वारस्य बहिर्वेद्यां निषण्णो भक्तसंसदि ॥ २ ॥

था त्वं मे दत्ताद्भक्तिवृषात्मजः ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवद्गुरुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां त्रयोविंशस्तरङ्गः ॥ २३ ॥

स्थितिर्ज्ञानेन कृष्णे तु लभ्या माहात्म्यतोऽस्य या । सोक्ता तथाऽपूर्णतायाश्चतुर्विंशे च कारणम् ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यानम् । (१८७६) सहस्यस्य पौषमासस्य । शुक्लपक्षस्य षष्ठिकातिथौ । इदम् हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमस्य । राज्ञः । प्राग्द्वारस्य पूर्वाभिमुखगोपुरस्य । वेश्मनो दुर्गान्तर्वर्त्तिभवनोत्तमस्य । बहिर्वेद्यां बाह्यायामुच्चवेदिकायाम् । भक्तसंसदि नानादेशायातत्यागिगृहिस्वभक्तजनसभामध्यप्रदेशे । निषण्णः स्वास्तृततूलिके मञ्चे सान्ध्यभगवन्नीराजनान्तेऽवस्थितः ॥ २ ॥

अन्तरीयेति । सिते धवलवर्णे । अन्तरीयोत्तरीये दधत् श्वेतवर्णं परिधानीयवस्त्रं श्वेतवर्णं चतुष्फालपटमुत्तरीयवसनं च क्रमात्परीधाय प्रावृत्य स्थितः इत्यर्थः । तथासितम् । शीर्षपटं शिरोवेष्टनवस्त्रं च । दधत् । शोणं रक्तवर्णम् । नीशारमतिशीतकालेऽपि यत्परिधानेन किञ्चिद्घर्मसम्भवपूर्वं सम्यक् शीतनिवारणं यथा स्यात्तथाविधं पार्वतीयसत्त्वरोमोद्भूतवसनकञ्चुकं च । दधत् । प्रभुः श्रीहरिः । स्वीयान् सभानिषण्णांस्त्यागिप्रमुखस्वकीयभक्तजनान्प्रति । अब्रवीत् । इति । द्वयोरेकसन्बन्धः ॥ ३ ॥ एकेति । हे भक्ताः ! । एकान्तिकानाम् । भक्तानाम् । ज्ञानेन साक्षाद्भगवदुपासनोद्भूततत्प्रसादसम्प्राप्तेनात्मपरमात्मस्वरूपयोर्यथार्थसाक्षादनुभवरूपेणाववोधनेन । ब्रह्मण्यक्षरभावापन्ने स्वात्मनि । स्थिते साक्षात्कृष्णे इति शेषः । या । स्थितिर्निश्चलतयावस्थानम् । जायते । तां स्थितिम् । समासेन सङ्क्षेपेण भवद्भ्यः । कथयामि ॥ ४ ॥ ययेति । यया स्थित्यैव । स एकान्तिको भक्तः । मायापुरुषौ महामायामहापुरुषौ । अखिलानि समग्राणि । तत्कार्याणि ताभ्यामुत्पन्नानि स्वकार्यसहितान्यनन्तप्रधानपुरुषरूपाणि च । नेक्षेत । सच्चिदानन्दलक्षणम् । अक्षरं ब्रह्म । पश्येत् ॥५॥ तत्रेति । असावेकान्तिको भक्तः । एकरसचैतन्यप्रकाशे एकरसरूपे ज्ञानरूपे प्रकाशरूपे चेत्यर्थः । अतिमहत्यनन्ते ।

अन्तरीयोत्तरीये च सिते शीर्षपटं तथा । नीशारं च दधच्छोणं स्वीयान्प्रत्यब्रवीत्प्रभुः ॥ ३ ॥ एकान्तिकानां भक्तानां ज्ञानेन ब्रह्मणि स्थितिः । या जायते समासेन भवद्भ्यः कथयामि ताम् ॥ ४ ॥ ययैव मायापुरुषौ तत्कार्याण्यखिलानि च । नेक्षेत सोऽक्षरं पश्येत्सच्चिदानन्दलक्षणम् ॥ ५ ॥ तत्रैकरसचैतन्यप्रकाशेऽतिमहत्यसौ । कृष्णमूर्तिं विना दिव्यां नान्यमाकारमीक्षते ॥ ६ ॥ कृष्णमूर्तिमपि क्वापि नेक्षते तेजसः पृथक् । क्वचित्तु तां च तत्तेज उभयं स समीक्षते ॥७॥ एषा ज्ञानस्थितिः प्रोक्ता ज्ञानप्रलय इत्यपि । साक्षात्कृष्णे मनः स्थैर्यादेव तत्प्राप्तिरञ्जसा ॥८॥ प्रत्यक्षकृष्णमहिमा यावान्बुद्धोऽस्ति येन सः । हृदि प्रकाशं तावन्तं वीक्षते चिन्मयं पुमान् ॥९॥

तत्र स्वात्मैकभावापन्नेऽक्षरब्रह्मणि । दिव्यामतिरमणीयाम् । कृष्णमूर्त्तिम् । विना । अन्यम् । आकारम् । नेक्षते । किन्त्वेकां श्रीकृष्णमूर्त्तिमेवेक्षते इत्यर्थः ॥ ६ ॥ कृष्णेति । स एकान्तिकभक्तः । क्वापि कदाचित्तु । कृष्णमूर्त्तिमपि । तेजसोऽक्षरब्रह्मणः प्रकाशात् सकाशात् । पृथक् विभिन्नतया । नेक्षते किन्त्वक्षरब्रह्मप्रकाशेनैकभावं प्राप्तं श्रीकृष्णमूर्त्तिप्रकाशमेवेक्षते इत्यर्थः । क्वचित्तु । तां श्रीकृष्णमूर्त्तिम् । तत्तेजोऽक्षरब्रह्मप्रकाशम् । उभयमेतद्द्वयमपि । समीक्षते पृथक्पृथक् पश्यति ॥७॥ एषेति । एषोक्तप्रकारा । ज्ञानस्थितिः । ज्ञानेन भगवत्स्वरूपेऽवस्थानरीतिः । प्रोक्ता । एषः । ज्ञानप्रलयः । इत्यपि । प्रोक्तः । प्रकृतिपुरुषतत्कार्याणामस्यां स्थितावीक्षणाभावादस्याः स्थितेर्ज्ञानप्रलय-इत्यपि संज्ञा प्रोक्तास्तीत्यर्थः । अञ्जसा तत्त्वतः । तत्प्राप्तिरेवंविधस्थितेरुपलब्धिः । साक्षात्कृष्णे प्रत्यक्षे श्रीकृष्णभगवति । मनःस्थैर्यादेव । एकान्तिकभावसहितेन श्रीकृष्णमाहात्म्यज्ञानाभ्यासेन तत्र मनसः सम्यक् स्थिरीभावादेवेत्यर्थः । भवेदिति शेषः ॥ ८ ॥ अथैवंविधस्थितिप्राप्तौ श्रीकृष्णमाहात्म्यज्ञानस्य कारणत्वं वदंस्तेन तत्स्थितिप्राप्तिप्रकारमाह त्रयोदशभिः । प्रत्यक्षेति । हे भक्ताः ! । येन भक्तेन । प्रत्यक्षकृष्णमहिमा । यावान् यत्परिमितः । बुद्धो ज्ञातः । अस्ति । सः । पुमान्कृष्णभक्तः

पुरुषः । हृदि स्वमानसे । तावन्तं तत्परिमितम् । चिन्मयं चैतन्यरूपम् । प्रकाशमक्षरब्रह्मतेजः । वीक्षते ॥ ९ ॥ तावन्त इति । हृदि स्वमनसि वर्त्तमानाः । वैषयिका मायिकपञ्चविषयभोगेच्छासम्बन्धिनः । सङ्कल्पाश्चापि । तावन्तस्तत्परिमिता एव । निष्टाः । स्युः । अथ च । प्रणवध्वनिम् । तान्वतमेव । शृणोति । इति द्वयोरेकसम्बन्धः ॥ १० ॥ उक्तार्थमेव विशेषत आह त्रिभिः । यथावदिति । येन । भक्तेन कर्त्रा । सत्सच्छास्त्रनिषेवया भगवदेकान्तिकसाधूनां भगवत्तद्भक्तमहिमप्रतिपादकशास्त्राणां च प्रसङ्गेन करणेन । नष्टानि संशयमात्राणि यस्मिंस्तत् । अल्पमात्रोऽपि यत्र संशयो नास्ति तथाविधमित्यर्थः । कृष्णस्य । माहात्म्यम् । यथावद्यथार्थतया । ज्ञातम् । भवेत् । सत्वित्युत्तरेणान्वयः ॥ ११ ॥ स इति । स भक्तस्तु । सर्वत्र दशस्वपि दिक्षु । सम्पूर्णं पूर्णतया व्याप्तम् । प्रकाशमक्षरब्रह्मतेजः । परिपश्यति सर्वतो वीक्षते । अतिमहान्तम् । मधुरं मनोज्ञम् । प्रणवध्वनिं च । शृणोति ॥१२॥ कृष्णेति । तस्यैवं श्रीकृष्णमाहात्म्यविदो भक्तस्यैव । कृष्णेतरपदार्थानाम् । अखिला अपि । सङ्कल्पाः । नष्टाः । भवन्ति । स एवं श्रीकृष्णमाहात्म्यज्ञो भक्तश्च । ब्रह्मीभूतोऽक्षरब्रह्मणैकभावं प्राप्तः । उच्यते ॥ १३ ॥ एतदिति । एतदर्थावबोधाय

तावन्तश्चैव सङ्कल्पा हृदि वैषयिका अपि । नष्टाः स्युरथ तावन्तं शृणोति प्रणवध्वनिम् ॥ १० ॥ यथावद्येन माहात्म्यं सत्सच्छास्त्रनिषेवया । ज्ञातं कृष्णस्य भक्तेन नष्टसंशयमात्रकम् ॥ ११ ॥ स तु सर्वत्र सम्पूर्णं प्रकाशं परिपश्यति । शृणोत्यतिमहान्तं च मधुरं प्रणवध्वनिम् ॥ १२ ॥ कृष्णेतरपदार्थानां सङ्कल्पा अखिला अपि । भवन्ति नष्टास्तस्यैव ब्रह्मीभूतः स चोच्यते ॥ १३ ॥ एतदर्थावबोधाय दृष्टान्तः कथ्यते मया । जम्बीरशकलस्यार्द्धं यथा कश्चन चूषति ॥ १४ ॥ आम्लत्वं तस्य दंष्ट्रासु जायते न तु तन्महत् । अतः स चर्वति शनैश्चणकानपि पूरुषः ॥ १५ ॥ अथार्द्धमेकं जम्बीरं द्वे वा त्रीणि च चूषति । क्रमेणैवाम्लताधिक्यं यान्ति तस्याखिला द्विजाः ॥ १६ ॥ ततो मृद्वोदनमपि नात्तुं शक्नोत्यसौ पुमान् । कुतस्तरां तु चणकान्मुद्गान्वा शनकैरपि ॥ १७ ॥

श्रीकृष्णमाहात्म्यज्ञानन्यूनाधिकत्वावगमाय । मया । दृष्टान्तो निदर्शनम् । कथ्यते । यथा । कश्चन पुरुषः । जम्बीरशकलस्य जम्बीरफलार्द्धस्य । अर्द्धं चतुर्थभागम् । चूषति ॥ १४ ॥ अम्लत्वमिति । तस्य जम्बीरचतुर्थांशचूषकस्य पुरुषस्य । दंष्ट्रासु दाढासु । अम्लत्वम् । जायते । तदम्लत्वम् । महदतिशयितम् । न तु नैव जायते । अतो हेतोः । सः । पुरुषः । शनैः । चणकान् । अष्टहरिमन्थानपि । चर्वति ॥ १५ ॥ अथेति । अथ च । यः पुमान् । अर्द्धम् । जम्बीरम् । अथवा । एकं जम्बीरम् । अथवा । द्व जम्बीरे । अथवा । त्रीणि जम्बीराणि । चूषति । तस्य पुरुषस्य । अखिलाः समग्राः । द्विजा दन्ताः । क्रमेणानुक्रमेण । अम्लताधिक्यम् । यान्ति प्राप्नुवन्त्येव ॥ १६ ॥ तत इति । ततस्तदनन्तरम् । असौ । पुमान् । मृदु अतिकोमलतायुक्तम् । ओदनं भक्तमपि । अत्तुं भक्षितुम् । न शक्नोति समर्थो न भवति । यद्येवमोदनमप्यत्तुं न शक्नोति तर्हि । चरणकान् । अथवा । मुद्गांस्तु । शनकैर्मन्दमन्दमपि । अत्तुम् । कुतस्तराम् । शक्नोति न शक्नोत्येवेत्यर्थः ॥ १७ ॥

भूरीति । भूरिजम्बीरचूषस्य बहुदन्तशठफलचूषणकर्तुः पुरुषस्य । सकलाः समग्रा अपि । दन्तस्थादनशक्तयः दन्तस्थितानि भक्षणविधानसामर्थ्यानि । नश्यन्ति । स भूरिजम्बीरचूषकः पुरुषः । नीरदोपमो दन्तवर्जितजनोपमानः । स्यात् ॥ १८ ॥ तथेति । तथा तेन प्रकारेण । अस्य मुमुक्षोः । पुंसो भक्तस्य । श्रीकृष्णमाहात्म्यानुभवस्य साक्षाच्छ्रीकृष्णमाहात्म्यज्ञानप्राप्तेः । तारतम्यान्न्यूनाधिकभावात् । प्रकाशेक्षादिषु अक्षरब्रह्मतेजःसमीक्षणादिषु । तारतम्यम् । स्मृतम् । यथा यथाऽस्य श्रीकृष्णमाहात्म्यानुभूतिरुत्तरोत्तराधिका स्यात्तथा तथोत्तरोत्तराधिकं हृदि ब्रह्मतेजः समीक्षणं प्रणवध्वनिश्रवणं वैषयिकसङ्कल्पविनशनं च जायते इत्यर्थः ॥ १९ ॥ यस्य सर्वाधिकतया श्रीकृष्णमहिमानुभूतिरुत्पन्ना भवेत्तं तल्लक्षणोक्त्याह । कृष्णेति । यस्य भक्तस्य । कृष्णमाहात्म्यानुभूतिः । आधिक्येन निरतिशयाधिकभावतः । स्यात् । तस्य भक्तस्य सर्वथा सर्वप्रकारेण । अन्तः स्वहृदयप्रदेशे । बहिः स्वदेहाद्बहिः प्रदेशे च । प्रकाशेक्षादिकम् । भृशमतिशयेन । स्यात् । श्रीकृष्णस्य सर्वाधिकतया महिमज्ञो भक्तस्तु । स्वहृदि बहिश्च निरतिशयं ब्रह्मप्रकाशमीक्षते बाह्याभ्यन्तरयोः सर्वथा वैषयिकसङ्कल्पवर्जितः स्यात्तथैव निरतिशयतया प्रणवध्वनिं च शृणोतीत्थंभूतलक्षणः स्यादित्यर्थः

भूरि जम्बीर चूषस्य दन्तस्थादनशक्तयः । सकला अपि नश्यन्ति स च स्यान्नीरदोपमः ॥ १८ ॥
तथास्य पुंसः श्रीकृष्णमाहात्म्यानुभवस्य तु । तारतम्यात्तारतम्यं प्रकाशेक्षादिषु स्मतम् ॥ १९ ॥
कृष्णमाहात्म्यानुभूतिर्यस्याऽऽधिक्येन सर्वथा । अन्तर्बहिश्च तस्य स्यात्प्रकाशेक्षादिकं भृशम् ॥ २० ॥
बाह्यातःकरणैस्तत्तद्विषयांश्चणकानिव । अम्लदन्तैर्ग्रहीतुं स न क्षमो जायते क्वचित् ॥ २१ ॥
कृष्णमाहात्म्यवित्प्राप्या ज्ञानस्थितिरियं मया । प्रोक्ता स कृष्णस्तु विभुः कालमायानियामकः ॥ २२ ॥

॥ २० ॥ किञ्च । ब्रह्मप्रकाशेक्षायाः प्रणवध्वनिश्रवणस्य च केवलं तेनैव स्वान्तर्वेद्यत्वात्तयोरन्यैरबोध्यत्वात्तदीयं सर्वज्ञेयं बाह्यमसाधारणं लक्षणमाह । बाह्येति । स एवंलक्षणवान्भक्तः । बाह्यान्तःकरणैश्चक्षुरादिभिर्बाह्यकरणैर्मन आदिभिरन्तःकरणैश्च । तत्तद्विषयांस्तेषां तेषां करणानां भगवदितरमायिकपदार्थसम्बन्धिनः रूपादीन्सङ्कल्पादींश्च विषयान् । अम्लदन्तैर्बहुजम्बीरचूषणेनाम्लतां प्राप्तैर्दशनैः । चणकान् भर्जनमृदूद्धरिमन्थानिव । तान् चर्वितुं यथातथेत्यर्थः । ग्रहीतुमुपादातुम् । क्वचित्कदाचिदपि । क्षमः समर्थः । न जायते । अनेनासाधारणतल्लक्षणेनायमुक्तविध इति सर्वैर्ज्ञायत इति भावः ॥ २१ ॥ साम्प्रतमुक्तार्थमुपसंहरन् साक्षाच्छ्रीकृष्णमाहात्म्योक्तिपूर्वं तत्स्वरूपानभिज्ञा असुरास्तस्मिन् यथाविधान् भावान्कल्पयन्ति ते भावास्तं न स्पृशन्ति प्रत्युत तेष्वेव प्रविशन्तीत्याह पञ्चभिः । कृष्णेति । हे भक्ता ! । मया । इयम् । ज्ञानस्थितिः । कृष्णमाहात्म्यवित्प्राप्या साक्षाच्छ्रीकृष्णमाहात्म्यविद्भिर्भक्तैरधिगम्या । प्रोक्ता । स कृष्णस्तु । विभुः सर्वातिशायिलावण्येनाक्षरब्रह्म तत्स्थमुक्तकोटिचेतांस्यात्मन्याकर्षयंस्तेषामन्तःप्रविश्य तत्स्थितिप्रवृत्तिकारकः । कालो महाकालपुरुषश्च माया तच्छक्तिर्महामाया च तयोर्नियामकोऽनन्तकोटिब्रह्माण्डोत्पादनादिशक्तिप्रदानपूर्वं तन्नियन्ता । ज्ञेयः ॥ २२ ॥

गुणेति । सः । गुणातीतः स्वतोऽपरिमितदिव्यकल्याणगुणसागरोऽपि मायिकगुणवर्जितत्वान्निर्गुणः । निर्विकारः षड्ूर्मिविकारवर्जितः । सर्वेषां ब्रह्मादीनामीश्वराः प्रकृतिपुरुषादयस्तेषामीश्वरः । ज्ञेयः । एवंभूतालौकिकापरिमितैश्वर्ययुक्तः श्रीकृष्णः । जीवानामनादिकालतो मायोदरवर्त्तिनामसुभृताम् । श्रेयोऽर्थं तेभ्यः स्वज्ञानप्रदाने-नानादिमायारूपाज्ञाननिवृत्तिपूर्वं परमनिःश्रेयससम्पादनार्थमेव । स्वेच्छया स्वसङ्कल्पेन । मर्त्यवन्मनुष्यसमानतया । भाति सर्वेषां भासते ॥ २३ ॥ तस्मिन्निति । अल्पधियः सांसारिकपदार्थासक्तत्वादल्पमतयः । आसुरीम् । प्रकृतिं दम्भोदर्पोऽभिमानश्चेत्यादिना भगवद्गीतोक्तमासुरस्वभावम् । श्रिताः प्राप्ताः । मूढाः साक्षाद्भगवत्स्व-रूपानभिज्ञत्वान्मूर्खा जीवाः । निर्दोषे कामादिसकलदोषवर्जिते । तस्मिन्साक्षाच्छ्रीकृष्णे । आत्मनः स्वस्य । दृष्टान्तेनोदाहरणेन । दोषान्कामादिभावान् । कल्पयन्ति आरोपयन्ति । हि ॥ २४ ॥ दोषैरिति । तत्कल्पितैः । दोषैः । कृष्णः । दोषस्पृक् तत्कल्पितदोषयुक्तः । नैव जायते । प्रत्युत । अखिलाः । ते दोषाः । कल्पकेषु भगवति दोषारोपकेषु तेषु मूढेष्वेव । प्रविशन्ति प्राग्विद्यमाना अपि ते तेषु प्रवर्द्धन्ते एवेत्यर्थः ॥२५॥ एतदेवाह । मन्यन्त इति । येऽसुरजीवाः । कृष्णम् । कामिनम् ।

गुणातीतो निर्विकारो ज्ञेयः सर्वेश्वरेश्वरः । श्रेयोर्थमेव जीवानां स्वेच्छया भाति मर्त्यवत् ॥ २३ ॥
तस्मिन्नल्पधियो मूढा आसुरीं प्रकृतिं श्रिताः । दृष्टान्तेनात्मनो दोषान् निर्दोषे कल्पयन्ति हि ॥ २४ ॥
दोषैस्तत्कल्पितैः कृष्णो दोषस्पृग्नैव जायते । प्रत्युतप्रविशन्त्येव कल्पकेष्वेव तेऽखिलाः ॥ २५ ॥
मन्यन्ते कामिनं कृष्णं ये ते स्युः कामिनो ध्रुवम् । क्रोधिनं लोभिनं चैनं विदन्तः स्युस्तथा स्वयम् ॥ २६ ॥
अपि न्राकृतिमेनं ये विद्युर्निर्दोषमञ्जसा । सदोषा अपि ते तु स्युर्निर्दोषास्तत्प्रतापतः ॥ २७ ॥
इति ब्रुवन्तं कृष्णं तं ब्रह्मानन्दोऽब्रवीन्मुनिः । स्वामिन्! पृच्छाम्यहं किञ्चिच्छ्रुत्वा कुरु तदुत्तरम् ॥ २८ ॥

मन्यन्ते । ते असुरजीवाः । कामिनोऽतीवकामाकुलाः । स्युः । ये । एनं कृष्णम् । क्रोधिनम् । लोभिनं च विदन्तो जानन्तः । भवेयुः । स्वयं तेऽपि । तथा क्रोधिनो लोभिनश्च स्युः । ध्रुवं निश्चितमेव । उपलक्षणमेते अन्येषां दोषाणाम् । तेन येऽस्मिन्यथाविधान् दोषान्कल्पयन्ति ते तथाविधदोषयुक्ता भवन्तीत्यर्थः ॥ २६ ॥ अथ साक्षाच्छ्रीकृष्णस्वरूपयथार्थज्ञानवन्तो दैवा जीवास्तस्मिन्दिव्यभावेन तं यथा जानन्ति तथा तेऽपि भवन्तीत्याह । अपीति । ये दैविनो जीवाः । न्राकृतिं मनु-ष्यसमानाकारेण वर्त्तमानमपि । एनं श्रीकृष्णम् । अञ्जसा तत्त्वतः निर्दोषं सर्वदा कामाद्यखिलदोषवर्जितम् । विद्युर्जानीयुः ते दैविनो जीवास्तु । सदोषाः किञ्चिद्दोषसहिता अपि । तत्प्रतापतः साक्षाच्छ्रीकृष्णमहिमरूपप्रभावातिशयतः । निर्दोषाः सकलदोषवर्जिताः । स्युः ॥२७॥ इतीति । इत्यमुना प्रकारेण । ब्रुवन्तं स्वभक्तान्कथयन्तम् । कृष्णं प्रोक्तमहिमानं श्रीकृष्णम् । तं श्रीहरिम् । ब्रह्मानन्दः । मुनिः । अब्रवीत् । हे स्वामिन्! । अहम् । किञ्चित् । पृच्छामि । तत् । श्रुत्वा । उत्तरम् । कुरु ॥ २८ ॥

सतामिति । हे हरे ! । येषाम् । सतां साधूनाम् । हृदि मनसि । कृष्णस्य साक्षाच्छ्रीकृष्णभगवतः । ते तव । निश्चयः स्वरूपज्ञाननिर्णयः । अञ्जसा तत्त्वतः । माहात्म्यज्ञानेन सहित इत्यर्थः । भवेत् । सङ्कल्पा अन्तःकरणभवा भवदितरमायिकपदार्थभोगवांच्छा अपि । नष्टाः । स्युः । तथा । इन्द्रियाणि चक्षुरादीनि बाह्यकरणान्यपि । वशे वशंगतानि स्युः । भवदितरे मायिका उत्तमाः शब्दादयो विषया यद्वृत्तीर्नाकर्षयन्ति तथाभूतानि भवन्तीत्यर्थः । तेषामित्युत्तरेणान्वयः ॥ २९ ॥ अपूर्णेति । तेषां तथाविधानामपि सताम् । हृदि । अपूर्णकामताऽकृतार्थता । अवतिष्ठते । तस्याऽपूर्णकामत्वेनावस्थानस्य । किं कारणं को हेतुरस्ति । इत्यमुना प्रकारेण । पृष्टो ब्रह्मानन्द-मुनिनाऽनुयुक्तः । हरिः । तं ब्रह्मानन्दमुनिम् । उवाच ॥ ३० ॥ ईदृशानामिति । हे मुने ! । ईदृशानां भवदुक्तप्रकाराणामपि । येषाम् । सताम् । हृदि । अपूर्णत्व-मानिता । स्यात् । ते सन्तस्तु । विदुषां ज्ञानिभक्तानाम् । उपहास्यतामुपहासास्पदत्वमेव यान्ति ॥ ३१ ॥ एतदेव भंग्यन्तरेण स्पष्टमाह द्वाभ्याम् । वशेति अत्र सत्सङ्गे । प्रत्यक्षकृष्णनिश्चयाः समाहात्म्यसाक्षाच्छ्रीकृष्णस्वरूपज्ञाननिर्णयवन्तः । असङ्कल्पा अन्तःकरणे भगवदितरमायिकपदार्थभोगवांच्छा वर्जिताः । वशेन्द्रिया उक्तप्रकारेण वशंगत-

सतां येषां हृदि स्यात्ते कृष्णस्य निश्चयोऽञ्जसा । सङ्कल्पा अपि नष्टाः स्युरिन्द्रियाणि वशे तथा ॥ २९ ॥ अपूर्णकामता तेषामपि हृद्यवतिष्ठते । तस्य किङ्कारणमिति पृष्टो हरिरुवाच तम् ॥ ३० ॥ ईदृशानामपि सतां हृद्यपूर्णत्वमानिता । येषां स्यात्ते तु यान्त्येव विदुषामुपहास्यताम् ॥ ३१ ॥ वशेन्द्रिया असङ्कल्पाः प्रत्यक्षकृष्णनिश्चयाः । सन्तोऽत्र यद्यपूर्णाः स्युः पूर्णाः के तर्हि सन्मताः ॥ ३२ ॥ एत एव हि शास्त्रेषु पूर्णा धन्याश्च कीर्त्तिताः । कृतार्थाश्च ततो ज्ञेया तैरेव निजपूर्णता ॥ ३३ ॥ कामादिदावदग्धेऽत्र लोके धन्या वयं परम् । यदत्र साक्षात्कृष्णो नः प्राप्तः सन्तश्च तच्छ्रिताः ॥ ३४ ॥ तत्प्रसादेन जित्वैव कामादीनान्तरान् रिपून् । ब्रह्मरूपात्मना कृष्णोपासनां कुर्महे तथा ॥ ३५ ॥

चक्षुरादिबाह्यकरणाः । सन्तः साधवः । यदि यर्हि । अपूर्णा अकृतकृत्याः । स्युः । तर्हि । सन्मता भगवदेकान्तिकसाधुभिः सन्मताः । पूर्णाः पूर्णकामाः । के । भवेयुः । एते एव पूर्णा न तदितरे केऽपीत्यर्थः ॥ ३२ ॥ एत इति । हि यतः । शास्त्रेषु । एते उक्तविधाः सन्त एव । पूर्णाः । धन्याः । कृतार्थाश्च । कीर्त्तिताः पूर्णादिसंज्ञाभिः कथिताः । ततो हेतोः । तैस्तथाविधैः साधुभिः । निजपूर्णता । एव । ज्ञेया ॥ ३३ ॥ अथैतेषां येन विचारेण स्वस्मिन्कृतार्थमानिता भवेत्तेषां तद्विचारप्रकारमाह द्वाभ्याम् । कामेति । कामादिदावदग्धे कामादिदोषदवाग्निभर्जिते । आदिशब्देन क्रोध. लोभ, मोह मद, मत्सर, तृष्णाध्यात्मिकादित्रिविधतापादीनां ग्रहणम् । अत्रास्मिन् । लोके । वयम् । परमतिशयेन यथास्यात्तथा । धन्याः । भवामः । यद्यस्मात्कारणात् । अत्र लोके । साक्षात्कृष्णः । नोऽस्मान् । प्राप्तः । अस्ति । तच्छ्रिताः साक्षाच्छ्रीकृष्णाश्रयं प्राप्ताः साधवश्च । नः । प्राप्ताः । सन्ति ॥ ३४ ॥ तदिति । तथा । तत्प्रसादेन साक्षाच्छ्रीकृष्णस्य तदाश्रितसाधूनां चानुग्रहेण । आन्तरानन्तःकरणभवान् । कामादीन् । रिपून् । जित्वैव । ब्रह्मरूपात्मना । कृष्णोपासनाम् । कुर्महे ॥ ३५ ॥

इतीति । इत्थमुना प्रकारेण । मत्वा । तैः साधुभिः । सदा निरन्तरम् । महानन्दसम्भृतैरतिशयानन्दपूर्णान्तरैः । स्थैयम् । विद्वद्भिर्ज्ञानिभक्तैः । ते एवंविधस्थितिमन्तः सन्त एव । नारदादिवन्नारदादयो भगवद्भक्ता मुनय इव । भाग्यवन्तः । उक्ताः ॥ ३६ ॥ विपक्षे दोषमाह । य इति । ये । सन्तस्तु प्राप्तपूर्णगुणाः सम्प्राप्तसकलपूर्णताहेतुपूर्वोक्तगुणा अपि । अनेवंविद उक्तप्रकारेण पूर्णताविचारानभिज्ञाः । सन्तः । आत्मानं स्वम् । अपूर्णमिव । मन्यन्ते । ते सन्तः । बालिशा बालबुधयः । भवन्ति । हि निश्चितम् ॥ ३७ ॥ एतदेव दृष्टान्तेन द्रढयति द्वाभ्याम् । यथेति । यथा । देवादेरपि । दुर्लभम् । चिन्तामणिम् । आत्मकरे स्वहस्ते । प्राप्यापि । तद्गुणाज्ञाश्चिन्तामणिस्वरूपगुणानभिज्ञा नराः । स्वमात्मानम् । निर्धनम् । मन्येरन् । हि ॥ ३८ ॥ तथेति । स्वन्यूनताविद आत्मनोऽपूर्णत्वाभिज्ञाः । ते सन्तः साधवोऽपि तथा स्वमाहात्म्यानभिज्ञत्वात्स्वस्मिन्नपूर्णतामानिनो भवन्तीत्यर्थः । तेषु तथाविधेषु सत्सु । अपूर्णत्वम् । नास्ति । हि । किन्तु । ते सन्तः । स्वमाहात्म्यम् । न विदुः । इत्थमुना प्रकारेण । जानीहि सत्यं विद्धि । इति द्वयोरेकसम्बन्धः ॥३९॥ एत इति । एते पूर्वोक्तगुणाः । सन्तस्तु । पूर्णाः । एव । सन्ति । अत्रैतेषां पूर्णत्वे ।

इति मत्वा सदा स्थैर्यं तैर्महानन्दसम्भृतैः । भाग्यवन्तस्त एवोक्ता विद्वद्भिर्नारदादिवत् ॥३६॥ ये त्वनेवंविदः सन्तः प्राप्तपूर्णगुणा अपि । अपूर्णमिव मन्यन्त आत्मानं ते हि बालिशाः ॥ ३७ ॥ यथा प्राप्याप्यात्मकरे देवादेरपि दुर्लभम् । चिन्तामणिं तद्गुणाज्ञा मन्येरन् स्वं हि निर्द्धनम् ॥ ३८ ॥ तथा तेऽपीति जानीहि सन्तः स्वन्यूनताविदः । न हि तेष्वस्त्यपूर्णत्वं स्वमाहात्म्यं विदुर्न ते ॥३९॥ एते तु पूर्णाः सन्त्येव वक्तव्यं नात्र किञ्चन । सामान्यस्यापि भक्तस्य यन्महत्ताऽस्ति भूयसी ॥ ४० ॥ यदि कश्चित्कृष्णभक्ते दोषो दृश्येत तर्हि सः । सत्सङ्गकृष्णभक्तिभ्यां नंक्ष्यत्यस्येति गम्यताम् ॥ ४१ ॥ बुद्धिमद्भिर्महद्भाग्यं ज्ञेयं तस्यातिदुर्लभम् । प्रत्यक्षकृष्णं यदसौ प्रपन्नो दृढनिश्चयः ॥ ४२ ॥ संस्कारोऽप्यस्य विज्ञेयो महान्प्राग्जन्मसम्भवः । सत्सङ्गो यदस्याद्यजातः संसृतिखण्डनः ॥४३॥

वक्तव्यम् । किञ्चन किमपि । नास्ति । यद्यस्मात्कारणात् । सामान्यस्यापि । भक्तस्य साक्षाद्भगवदाश्रयं कृत्वा सत्सङ्गिपाल्यनियमपालनपूर्वकं तं भजमानस्य साधारणभक्तस्यापि । भूयस्यतिशयिता । महत्ता महत्त्वम् । अस्ति ॥ ४० ॥ यदीति । यदि यर्हि । कृष्णभक्ते साधारणे श्रीकृष्णभक्ते । कश्चित् । दोषः । दृश्येत । तर्हि । अस्य भक्तस्य । स दोषः । न उपादेय इति शेषः । यतः । सः । सत्सङ्गः साधुप्रसङ्गश्च कृष्णभक्तिः स्वनियमावस्थानपूर्वकश्रीकृष्णभजनादरश्च ताभ्याम् । नंक्ष्यति विनाशं गमिष्यति । इतीत्थम् । गम्यतां बुध्यताम् ॥ ४१ ॥ उक्तामेव सामान्यभक्तमहत्तां हेतुना द्रढयति द्वाभ्याम् । बुद्धिमद्भिरिति । बुद्धिमद्भिः प्रशस्तबुद्धियुक्तैर्भगवदेकान्तिकभक्तैः । तस्य सामान्यभक्तस्य । अतिदुर्लभम् । महत् । भाग्यम् । ज्ञेयम् । यद्यतो हेतोः । असौ सामान्यभक्तः । दृढनिश्चयः सन् । प्रत्यक्षकृष्णम् । प्रपन्नः ॥ ४२ ॥ संस्कार इति । अस्य सामान्यभक्तस्य । प्राग्जन्मसम्भवः पूर्वजन्मसम्भूतः । महान् । संस्कारः । अपि विज्ञेयः । यद्यतो हेतोः । अस्य सामान्यभक्तस्य । अद्यास्मिन् जन्मनि । संसृतिखण्डनः संसारबन्धविनाशकः । सत्सङ्गः सत्यानां साधूनां प्रसङ्गः । जातः ॥ ४३ ॥

भक्तस्येति । साक्षात्कमलाधवस्य प्रत्यक्षलक्ष्मीकान्तश्रीकृष्णस्य । भक्तस्य । गुणाः । ग्राह्याः । कदापि कदाचिदपि । अगुणो दोषः । न तु नैव ग्राह्यः । एकवचनादेकोऽपि दोषो न ग्राह्य इति ज्ञेयम् । इत्येवंविधाम् । हरेः । सुधां पीयूषसमानाम् । वाचम् । निपीय । सः । साधुर्ब्रह्मानन्दमुनिः । तुतोषात्यन्तं हृष्टोऽभवत् । तथा । इतरे तद्व्यतिरिक्तास्त्यागिगृहिभगवद्भक्ताश्च । तुतुषुः ॥ ४४ ॥ स्वस्यैकान्तिकभक्तानां स्वस्य माहात्म्यबोधतः । उक्ता दृढा स्थितिर्येन स्वस्वरूपेऽक्षरात्परे ॥ १ ॥ तारतम्यं च सफलं स्वमाहात्म्यस्य तत्त्वतः । येनोक्तं श्रीहरौ तस्मिन्सुदृढा रतिरस्तु मे ॥ २ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्ण-भगवत्सनुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां चतुर्विंशस्तरङ्गः ॥ २४ ॥

पुनश्च । पूर्णताहेतुर्भक्तानां पञ्चविंशके । साधनद्वयतः सम्यगुक्तं चास्या निवर्त्तनम् ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८७६) सहस्यशुक्ल-सप्तम्यां पौषमासस्य शुक्लपक्षसम्बन्धिन्यां सप्तमीतिथौ । इदम् । हरेः । वचोऽमृतम् । बभूव ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । स श्रीहरिः । प्रातरुषःकाले ।

भक्तस्य साक्षात्कमलाधवस्य ग्राह्या गुणा न त्वगुणः कदापि । हरेर्निपीयेति सुधां तु वाचं तुतोष साधुः स तथेतरे च ॥ ४४ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दविरचिते चतुर्विंशस्तरङ्गः ॥ २४ ॥

शकाब्दे विक्रमार्कस्य रसाश्ववसुभूमिते । सहस्यशुक्लसप्तम्यां वचोऽमृतमिदं हरेः ॥ १ ॥ तत्र दुर्गपुरे प्रातस्त्यागि-शालामुपेत्य सः । साधुभिः कल्पिते पीठे न्यषीदत्ते च तत्पुरः ॥ २ ॥ प्राङ्मुखः शुक्लवसनो गृहिभक्तैश्च वेष्टितः । सतः प्रत्यब्रवीत्प्रीत्या स्वयमेव दयानिधिः ॥ ३ ॥ सन्तः शृणुत यूयं वो वदाम्येकाग्रमानसाः । धर्मस्थस्यापि भक्तस्य हरेरन्त-रपूर्णता ॥ ४ ॥ परमार्थतया याऽस्ति सा तु तेनातियत्नतः । अपनेया सम्यगाभ्यां साधनाभ्यां ब्रुवे च ते ॥ ५ ॥

त्यागिशालामुत्तमनृपतेर्दुर्गे वर्त्तमानं साधुनिवासस्थानम् । उपेत्य स्वावासादागत्य । । साधुभिः । कल्पिते निम्बतरोरधःकृतायां वेदिकायां विहिते । पीठे सोत्तरच्छदस-पार्श्विकस्थलतूलिकासने । न्यषीद उपविवेष । ते साधवश्च । तत्पुरः श्रीहरेरभिमुखः प्रदेशे । न्यषीदन् ॥ २ ॥ प्राङ्मुख इति । प्राङ्मुखः पूर्वदिगभिमुखमुखकमलः । शुक्लवसवः परिधृतश्वेतपरिधानिय, प्रावरणीय, शिरोवेष्टनवसनः । गृहिभक्तैः साधूनां पश्चादवस्थितैर्गृहस्थभक्तैः । वेष्टितः परिवारितः । दयानिधिः श्रीहरिः । स्वयं कस्यापि प्रेरणां विना स्वत एव । प्रीत्या स्वभक्तेषु साधुष्वनुरागेण हेतुना । सतः स्वाभिमुखस्थितान्साधून्प्रति । अब्रवीद्वक्ष्यमाणं वाक्यमुवाच ॥ ३ ॥ सन्त इति । हे सन्तः ! । वो युष्मभ्यम् । वदामि किञ्चिद् ब्रुवे । तत् । यूयम् । एकाग्रमानसा अव्यग्रचित्ताः सन्तः । शृणुत । धर्मस्थस्य स्वधर्मनिष्ठस्यापि । हरेः । भक्तस्य । अन्तरन्तःकरणे । परमार्थतया सत्यतया । या । अपूर्णता । अस्ति ॥ ४ ॥ परमेति । साऽपूर्णता तु । तेन भक्तेन । आभ्यां मया कथ्यमानाभ्याम् । साधनाभ्याम् । अतियत्नतः । सम्यक् । अपनेया निवर्त्तनीया । ते अपूर्णता निवृत्तिहेतुसाधने । ब्रुवे वदामि । इति द्वयोरेकान्वयः ॥ ५ ॥

आत्मेति । दृढा मायिकविषयवैराग्ययुक्तत्वात्सुदृढा । आत्मनिष्ठा । श्रीकृष्णमाहात्म्यस्य प्रत्यक्षश्रीकृष्णमहिम्नः । वेदनं ज्ञानं च । एते साधने । अत्र सत्सङ्गे । यस्य श्रीकृष्णभक्तस्य । भवेताम् । स कृष्णभक्तः । सम्पूर्णोऽपूर्णता वर्जितः । जायते । इतीत्थम् । ईयतां बुध्यताम् ॥ ६ ॥ अत्रेति । अत्र सत्सङ्गे । एतयोरात्मनिष्ठा-कृष्णमाहात्म्यवेदनयोः साधनयोर्मध्ये । एकतरन्यूनत्वे यस्य कस्याप्येकस्य न्यूनतायां सत्यामित्यर्थः । भक्तस्य । हृदि । न्यूनता अपूर्णता । वर्त्तेत । ततो हेतोः । एतद्द्वयम् । दृढं यथा भवति तथा । साध्यं कृष्णभक्तेनावश्यं संसाधनीयम् ॥ ७ ॥ एतयोरिति । अस्य भक्तस्य । एतयोर्द्वयोः । न्यूनता तु । इह देहाहंभावावस्थिति-मतिजाग्रद्भावे । केवलम् । दुःखदा । नैव । किन्तु । यत् यतः । सा न्यूनता । समाधावपि । अमुं भक्तम् । भृशमतिशयेन । दुःखाकरोति दुःखयुक्तं विधाति । हि । ततः सा सर्वथा हातव्येत्यर्थः ॥ ८ ॥ एतदेव निर्दिशति द्वाभ्याम् । मयेति । हे सन्तः ! । मया । अत्र दुर्गपुरे ह्यो । गतेऽह्नि । एकभक्तस्य समाधिनिष्ठस्यैकहरि-भक्तस्य । लाडकीसंज्ञाया हरिभक्ताया इत्यर्थः । स्त्रीपुंसयोः क्षेत्रज्ञत्वाविशेषात्पुंसुनिर्देशः । महान् । समाधिः । कारितः । स भक्तः । भूरितेजः प्रचुरं प्रकाशम् ।

आत्मनिष्ठा दृढा कृष्णमाहात्म्यस्य च वेदनम् । एते भवेतां यस्यात्र स सम्पूर्ण इतीयताम् ॥ ६ ॥<br>
अत्रैतयोरेकतरन्यूनत्वे न्यूनता हृदि । भक्तस्य वर्त्तेत ततः साध्य मेतद्द्वयं दृढम् ॥ ७ ॥<br>
एतयोर्न्यूनता त्वस्य दुःखदा नेह केवलम् । समाधावपि यत्साऽमुं भृशं दुःखाकरोति हि ॥ ८ ॥<br>
मया ह्योऽत्रैकभक्तस्य समाधिः कारितो महान् । स भूरितेजः शब्दांश्च दृष्ट्वा श्रुत्वाऽत्रसद्भृशम् ॥ ९ ॥<br>
दन्दह्यते मया स्वामिन्नित्युवाच स मां ततः । आत्मज्ञानोपदेशेन मयाऽसौ बोधितश्चिरात् ॥ १० ॥<br>
आश्वासनार्थं च मया तस्य वार्त्ता कृता च ताम् । कथयाम्यवधार्या सा भवद्भिर्ध्यानवेदिभिः ॥ ११ ॥<br>
कुर्वन्समाधिं पुरुष आदौ कृष्णदृढाश्रयः । स्थानं गणपतेर्याति तत्र तं च समीक्षते ॥ १२ ॥

दृष्ट्वा विलोक्य । शब्दान्नानाविधान्महतो नादान् । श्रुत्वा । भृशमतिशयेन । अत्रसत् त्रासं प्राप ॥ ९ ॥ दन्दह्यत इति । हे स्वामिन् ! । मया । दन्दह्यते अहं भूरिते-जसाऽत्यन्तं दाहमुपैमीत्यर्थः । इतीत्थम् । स भक्तः । माम् । उवाच । ततस्तदनन्तरम् । मया । असौ भक्तः । आत्मज्ञानोपदेशेन स्थूलादिदेहभिन्ननाम, जाति, वर्जिता-च्छेद्यादिधर्मयुगात्मस्वरूपोपदेशाचरणेन । चिराद्बहुकालपर्यन्तम् । बोधितो बोधं गमितः ॥ १० ॥ आश्वासनेति । मया । तस्य भक्तस्य । आश्वासनार्थम् । वार्ता च । कृता । तां वार्त्ताम् । कथयामि युष्मभ्यं ब्रूवे । सा वार्त्ता । ध्यानवेदिभिः समाधिनिष्ठैः । 'समाधिर्ना समर्थने । ध्यानन्नी वा कनियमे' इति मेदिनी । भवद्भिः । अवधार्या मनसि धारणीया ॥ ११ ॥ तामेवाह षड्भिः । कुर्वन्निति । हे सन्तः ! । कृष्णदृढाश्रयः प्रत्यक्षश्रीकृष्णस्य सुदृढसमाश्रयवान् । पुरुषो भक्तः । समाधिम् । कुर्वन्सन् । आदौ प्रथमम् । गणपतेः । स्थानमाधारचक्रम् । याति । तत्र गणपतेः स्थाने । तं गणपतिम् । समीक्षते ॥ १२ ॥

तेज इति । असौ समाधिकृद्भक्तः । तत्र गणपतिस्थाने । तेजः । पश्यति । दिव्यं मनोज्ञम् । नादं शब्दं च । शृणोति । ततो गणपतिस्थानात् । ऊर्ध्वमुपरि-वर्तमानानि । ब्रह्माच्युतादीनां विधिविष्णुप्रभृतीनाम् । आदिशब्देन रुद्रादीनां ग्रहणम् । स्थानानि स्वाधिष्ठानमणिपूरानाहतादीनि । गच्छति प्राप्नोति ॥ १३ ॥ यथेति । एष समाधिकृद्भक्तः । यथायथा । ऊर्ध्वस्थानम् । व्रजति । तथातथा । तत्र तत्र तस्मिंस्तस्मिन् स्थाने । तेजश्च नादश्च तयोः प्रभूतताऽतिशयता ताम् । अनुभवति । तेजोऽतिशयं वीक्षते नादातिशयं च शृणोतीत्यर्थः ॥ १४ ॥ एतदेव विवृणोति द्वाभ्याम् । शतेति । यदा । शतस्फूर्जथुवत् शतपरिमिताशनिनिर्घोषतुल्यम् । शत-शब्दोऽत्रासंख्यतापरः । भीमान् महाभयङ्करान् । नादान् । निशाम्यति संशृणुते । तदा तु । अतिधीरोऽपि अधिकधैर्ययुक्तोऽपि समाधिकृत्पुमान् । अनात्मविदात्मनिष्ठो न भवति चेत् । तर्हि । भयात् महाभयं प्राप्य । त्रस्यति उद्विग्नो भवति ॥ १५ ॥ त्यक्तेति । असावनात्मवित्समाधिकृत्पुरुषः । यदा । त्यक्तमर्यादाब्धिनिभमुद्वेलसमुद्र-सदृशम् । तेजः । वीक्षते । तदा । विश्वरूपेक्षणे श्रीकृष्णसम्प्रदर्शितविश्वरूपदर्शने । अर्जुनः स्वयं नरऋष्यवतारो महाशौर्ययुक्तो मध्यमपाण्डवः । यद्वद्यथा । तद्वत् । बिभेति

तेजः पश्यति तत्रासौ दिव्यं नादं शृणोति च । ततो ब्रह्माच्युतादीनामूर्ध्वं स्थानानि गच्छति ॥ १३ ॥ यथा यथा व्रजत्युर्ध्वंस्थानमेष तथा तथा । तत्र तत्रानुभवति तेजोनादप्रभूतताम् ॥ १४ ॥ शतस्फूर्जथुवद्भीमान् यदा नादान्नि-शाम्यति । तदा तु त्रस्यति भयादतिधीरोऽप्यनात्मवित् ॥ १५ ॥ त्यक्तमर्यादाब्धिनिभं यदा तेजश्च वीक्षते । तदा बिभेत्यसौ यद्वद्विश्वरूपेक्षणेऽर्जुनः ॥ १६ ॥ आत्मज्ञानादिसम्पन्नास्त्विह भीतिं न यान्ति हि । अतस्तत्साधनोद्युक्ताः सन्ति भक्ता विवेकिनः ॥ १७ ॥ समाधिरेष गदितो द्वेधा योगविशारदैः । प्राणरोधाच्चित्तरोध एकोऽन्यस्तद्विपर्ययः ॥ १८ ॥ योगाष्टाङ्गाभ्यासतस्तु प्राणरोधेन चेतसः । भक्तानां योगिनां रोधो भगवत्येव जायते ॥ १९ ॥

भयं प्राप्नोति ॥ १६ ॥ आत्मेति । आत्मज्ञानादिसम्पन्ना आत्मनिष्ठा कृष्णमाहात्म्यज्ञानाभ्यां युक्ताः समाधिकृद्भक्तास्तु । इहैवंविधतेजोदर्शने तथाविधनादश्रवणे च । भीतिम् । न यान्ति । हि । अतो हतोः । विवेकिनः । भक्ताः । तत्साधनोद्युक्ता आत्मनिष्ठा भगवन्माहात्म्यज्ञानसम्पादनोद्योगाः । सन्ति ॥ १७ ॥ एवं भगवद्भक्त-स्यात्मनिष्ठासम्पादनप्रयोजनमुक्त्वा साम्प्रतं श्रीकृष्णे प्रेमातिशायिताप्राप्तिफलहेतुश्रीकृष्णमाहात्म्यज्ञानसम्पादनं कार्यमिति वक्तुं प्रक्रमते । समाधिरिति । हे सन्तः ! । योगविशारदैः समाधिमार्गनिष्णातैर्भगवद्भक्तैर्योगिभिः । एषः । समाधिः । द्वेधा । गदितः कथितः । प्राणरोधात् । चित्तरोधः । एकः समाधिः । तद्विपर्ययश्चि-त्तरोधात्प्राणरोधः । अन्यो द्वितीयः समाधिः । भवति ॥ १८ ॥ द्वयोः समाध्योर्लक्षणमाह द्वाभ्याम् । योगेति । योगस्य सम्प्रज्ञातसमाधेः यान्यष्टावङ्गानि यमादीनि तेषामभ्यासः परिशीलनं तस्मादिति ततस्तु । प्राणरोधेन प्राणवायोः स्थिरीभावेन । भक्तानाम् । योगिनाम् । चेतसः । भगवति साक्षात् श्रीकृष्णस्वरूपे एव । रोधः स्थिरीभावः । जायते । अनेन प्राणरोधाच्चित्तरोधलक्षणः समाधिः कथितः ॥ १९ ॥

साक्षादिति । साक्षात्कृष्णस्य प्रत्यक्षश्रीकृष्णभगवतः । माहात्म्यज्ञानतः सम्यग्महिम्नो वेदनात् । अतिहार्द्दतोऽतिशयितया प्रीत्या । जातेनेति शेषः । यथार्थतया श्रीकृष्णमाहात्म्यज्ञानसम्भूतेन तस्मिन् गाढानुरागेणेत्यर्थः । भक्तयोगिनाम् । तस्मिन् श्रीकृष्णस्वरूपे । चित्तरोधाच्चित्तस्य स्थिरीभावतः । प्राणरोधोऽसुसंयमनम् । स्यात् जायेत । अनेन चित्तरोधात्प्राणरोधलक्षणः समाधिः कथितः ॥ २० ॥ नन्वनेकविषयवासनासद्भाववतश्चेतसः प्रथमतः श्रीकृष्णे स्थिरभाव एवं कथं स्याद्यद्रोधेन प्राणरोध उच्यते इति चेत्तन्महिमातिशयवेदनेन विनिवृत्तसकलविषयवासनस्य तस्य स स्यादित्याह तदेति । हे मुनयः ! । तदा यदा श्रीकृष्णमहिमातिशयवेदनेन तस्मिन्प्रेमातिशयो जायते तस्मिन् काले । सकलाः । विषयान्तरवासनाः श्रीकृष्णेतरमायिकनानाविधविषयजोषणभावनाः । त्रुट्यन्ति निःशेषतो विनिवर्त्तन्ते । ततस्तदनन्तरम् । एकवृत्ति श्रीकृष्णस्वरूपे एवैकाग्रतां प्राप्तम् । चित्तम् । कृष्णे एव । निरुध्यते निरोधं प्राप्नोति । तेन प्राणनिरोधस्त्वनुक्तोऽपि बोध्य एव ॥ २१ ॥ अथेदानीं श्रीकृष्णभक्तो यावत्तन्माहात्म्यं यथार्थतो न वेत्ति तावत्तच्चित्तं मायिकविषयभोगाभिलाषे नानावृत्तिसत्तत्स्वरूपे स्थिरतां नैति यदा तदेव कृष्णमाहात्म्यातिशयबोधेन निवृत्ततदितरसकलविषयवासनं सत्तत्रैकाग्रवृत्ति स्यात्तदा लब्धबलं तत्तत्स्वरूपेऽवश्यमेव स्थिरं भवति तदा तु तद्रमणीयविषयसम्बन्धं प्राप्यापि कृष्णस्वरूपान्न निःसरतीत्येतद्दृष्टान्तेन द्रढयति

साक्षात्कृष्णस्य माहात्म्यज्ञानतो भक्तयोगिनाम् । चित्तरोधात्प्राणरोधस्तस्मिन्स्यादतिहार्द्दतः ॥ २० ॥ तदा त्रुट्यन्ति सकला विषयान्तरवासनाः । एकवृत्ति ततश्चित्तं कृष्ण एव निरुद्ध्यते ॥ २१ ॥ महाकूपाद्यथा कोशविंशत्या निःसरज्जलम् । भिन्नभिन्नस्त्रवैर्गच्छेन्मन्दवेगं भवेद्धि तत् ॥ २२ ॥ एकेनैव प्रवाहेण तद्गच्छेद्यदि तर्हि तु । शीघ्रवेगं चानिवार्यं नृभिः स्यात्सबलैरपि ॥ २३ ॥ तथा दशेन्द्रियद्वारा तत्तदर्थानभिव्रजत् । शुभाशुभाञ्छतविधाञ्जायते तत्सहस्रधा ॥ २४ ॥ अनैकान्तिकवृत्तित्वादस्थिरेणाबलेन च । न तेन कार्यसिद्धिः स्यान्मुमुक्षोः क्वापि देहिनः ॥ २५ ॥

पद्यैः । महेति । यथा । महाकूपाज्जलापक्षयशून्याद्ग्रहेः । कोशविंशत्या विंशतिसंख्याकैश्चर्मपुटैः । उद्धृत्य निपानेषु संभृतमिति शेषः । निःसरत्तज्जलनिर्गमद्वारा व्रजत् । जलम् । भिन्नभिन्नस्त्रवैः पृथक्पृथक् प्रवाहैः । गच्छेच्चेत् । तर्हि । तज्जलम् । मन्दवेगम् । भवेत् । हि ॥ २२ ॥ एकेनेति । यदि यर्हि । तत्पृथक्प्रवाहैर्गच्छज्जलम् । एकेन । प्रवाहेणैव । गच्छेत् । तर्हि तु । शीघ्रवेगम् । सबलैरपि । नृभिः । अनिवार्यं च । स्यात् ॥ २३ ॥ तथेति । तथा तेन प्रकारेण । तच्चित्तम् । दशेन्द्रियद्वारा श्रोत्रादिपञ्चज्ञानेन्द्रियद्वारेण वागादिपञ्चकर्मेन्द्रियद्वारेण चेत्यर्थः । शतविधाननेकप्रकारान् । शुभाशुभान्समीनासमीचीनांश्च । तत्तदर्थांस्तेषां तेषामिन्द्रियाणां शब्दादीन्वचनादींश्च मायिकविषयान् । अभिव्रजदभिमुखं गच्छत्सत् । सहस्रधाऽनेकप्रकारम् । जायते ॥ २४ ॥ अनैकेति । अनैकान्तिकवृत्तित्वाद्बहुवृत्तित्वाद्धेतोः । अस्थिरेण । अबलेन बलवर्जितेन । तेन चित्तेन । मुमुक्षोः । देहिनो भक्तस्य । क्वापि । कार्यसिद्धिः । न स्यात् । यथार्थभगवन्महिमानभिज्ञभक्तचित्तस्य मायिकविषयेष्वतिप्रवृत्तिशीलत्वाद्बहुवृत्तिमत्तत्तस्य कृष्णस्वरूपस्थिरतारूपकार्यसिद्धिं न सम्पादयतीति भावः ॥ २५ ॥

यदिति । एकवृत्ति यथार्थभगवन्माहात्म्यज्ञानेन विषयान्तरतो निवृत्तत्वाद्भगवत्येवैकाग्रतायुक्तम् । अत एव । सबलम् । यद्भक्तचित्तम् । कृष्णे एव । सुस्थिरम् । भवेच्चेत् । तर्हि । तद्भक्तचित्तम् । रम्यैरतिरमणीयैरपि । इन्द्रियार्थैर्भगवदितरैर्मायिकविषयैः । आक्रष्टुम् । नैव । शक्यते । मायिकास्ते तत्तत आहर्त्तुं न शक्नुवन्तीत्यर्थः ॥ २६ ॥ कृष्णेति । यदा । कृष्णेतरेषाम् । अर्थानां शब्दादीनां मायिकविषयाणाम् । चिन्तनवर्जितं भगवन्माहात्म्यवेदनेन स्मरणरहितम् । अत एव । निर्वासनं तद्भावनावर्जितम् । चित्तम् । भवेत्तदा । तच्चित्तम् । अच्युते श्रीकृष्णस्वरूपे । निरुद्धं निरोधं प्राप्तम् । ज्ञेयम् ॥ २७ ॥ एवमिति । एवममुना प्रकारेण । हरौ । चित्तनिरोधेन । प्राणरोधः । भवेत् । यः । प्राणरोधात् । हरौ । चित्तरोधः । स तु । प्रथितो हि योगशास्त्रे प्रसिद्ध एव । अस्ति ॥ २८ ॥ अष्टेति । अष्टाङ्गयोगस्य यमाद्यष्टाङ्गयुक्तस्य योगस्य । अभ्यासम् । विनापि । कृष्णचेतसामुक्तरीत्या तन्माहात्म्यज्ञानेन भगवति स्थिरचित्तानां भक्तानाम् । समाधिसिद्धिश्चित्तनिरोधेन प्राणनिरोध-लक्षणः पूर्वोक्तो यो द्वितीयसमाधिस्तस्य सम्प्राप्तिः । भवति । इत्यर्थ एवंभूतमदुक्तार्थः । हृदि स्वस्वमनसि । अवधार्यताम् । यूयमप्येवं भगवन्माहात्म्यविचारं विधत्तेत्यर्थः

यत्त्वेकवृत्ति सबलं कृष्ण एव च सुस्थिरम् । रम्यैरपीन्द्रियार्थैस्तदाक्रष्टुं नैव शक्यते ॥ २६ ॥ कृष्णेतरेषामर्थानां यदा चिन्तनवर्जितम् । चित्तं निर्वासनं तद्धि निरुद्धं ज्ञेयमच्युते ॥ २७ ॥ एवं चित्तनिरोधेन प्राणारोधो भवेद्धरौ । प्राणरोधाच्चितरोधो यः स तु प्रथितोऽस्ति हि ॥ २८ ॥ अष्टाङ्गयोगस्याभ्यासं विनापि कृष्णचेतसाम् । समाधिसिद्धि-र्भवतीत्यर्थो हृद्यवधार्यताम् ॥ २९ ॥ सन्तोऽतः सुधियो लोके योगं भूरिपरिश्रमम् । हित्वा कृष्णैकपूर्णार्थाः कुर्वते तदुपासनम् ॥ ३० ॥ मदुक्तसाधनद्वन्द्वबलाधिक्यमतो मतम् । यत्प्राप्तानां हृदि सदा स्थिरा स्यात्पूर्णकामता ॥ ३१ ॥ धर्मनिष्ठैस्ततो भक्तैर्भजद्भिर्नवधा हरिम् । आत्मनिष्ठा च माहात्म्यज्ञानं साध्यं हरे र्दृढम् ॥ ३२ ॥ स्नानसन्ध्यादिको धर्मो यथा विप्रस्य नैत्यकः । धर्मनिष्ठा भक्तिनिष्ठां तेषां नित्या तथाऽस्ति हि ॥ ३३ ॥

॥ २९ ॥ सन्त इति । अतो भगवन्माहात्म्यज्ञानस्यैवंविधप्रभावत्वाद्धेतोः । लोके । सुधियः । सन्तः । भूरिपरिश्रमं प्रचुरप्रयाससाध्यम् । योगमष्टाङ्गयोगम् । हित्वा । कृष्णैकपूर्णार्थाः माहात्म्यज्ञानजातसुदृढभगवत्स्वरूपानुरागसम्प्राप्तकृतकृत्यत्वाः सन्तः । तदुपासनं साक्षाच्छ्रीकृष्णभक्तिम् । कुर्वते ॥ ३० ॥ मदिति । हे सन्तः ! । अत आत्मनिष्ठायाः श्रीकृष्णमाहात्म्यज्ञानस्य चैवंविधप्रतापत्वाद्धेतोः । मदुक्तसाधनद्वन्द्वबलाधिक्यं मदुक्तात्मनिष्ठा भगवन्माहात्म्यज्ञानरूपसाधनयुग्मबलस्याधिकता । मतं मया-सम्मतम् । यत्प्राप्तानां मदुक्तसाधनद्वन्द्वसम्यगधिगतानां भक्तानाम् । हृदि मनसि । पूर्णकामता । सदा । स्थिरा । स्यात् ॥ ३१ ॥ धर्मेति । ततो हेतोः । धर्मनिष्ठैः सर्वदा स्वधर्मे वर्त्तमानैः । हरिं साक्षाच्छ्रीकृष्णम् । नवधा श्रवणादिनवप्रकारेण । भजद्भिः । भक्तैः । आत्मनिष्ठा । हरेः । माहात्म्यज्ञानं च । दृढं यथा तथा । साध्यम् ॥ ३२ ॥ स्नानेति । यथा । विप्रस्य ब्राह्मणस्य । स्नानसन्ध्यादिकः स्नानसन्ध्याजपहोमप्रभृतिकः । धर्मः । नैत्यकोऽकरणे प्रत्यवायसाधनत्वेन नित्यमेव प्राप्तः ।

तथा तेनैव प्रकारेण । धर्मनिष्ठा । भक्तिनिष्ठा च । तेषां भक्तानाम् । नित्या नित्यप्राप्ता । अस्ति । हि । ब्राह्मणेन सन्ध्यादिस्वनित्यकर्मभ्य इव भगवद्भक्तैर्धर्मनिष्ठातः । कदापि न च्यवितव्यमित्यर्थः ॥ ३३ ॥ पूर्वेति । हे सन्तः ! । पूर्वोक्तसाधनाभ्यासः पूर्वं मयाभिहितात्मनिष्ठाकृष्णमाहात्म्यवेदनरूपसाधनद्वयाभ्यसनं तु । सर्वथा । कार्यः । अपूर्णं मन्यमानानां स्वात्मानं परमार्थतया अपूर्णकामं विजानताम् । पूर्णता पूर्णकामता । तेन पूर्वोक्तसाधनाभ्यासेन । सेत्स्यति सिद्धा भविष्यति ॥ ३४ ॥ स्वेति । साधुभिरुक्तप्रकारां पूर्णतां प्राप्तैः सद्भिर्भक्तैः । स्वपूर्णताभिमानेन स्वाधिगतपूर्वोक्तपूर्णताजाताभिमत्या । क्वचित्कदाचिदपि । नोद्रिच्यमुत्सेकिभिर्न भवितव्यम् । तथा सति उद्रेकवत्त्वे सति तु । अग्न्युप्तबीजवत् । ईशकृपा । भवेत् । यथाग्नावुप्तं बीजं भस्मभावादृते किञ्चिन्नावशिष्यते तथोद्रेकवत्सु जातापि भगवत्कृपा निःशेषतो विनिवर्त्तते इत्यर्थः ॥३५॥ अत इति । अतो हेतोः । यथा । उक्तं मया यथा कथितम् । तथा । हृदि भवता मानसे । साधु सम्यग्यथा तथा । बोध्यम् । इत्यमुना प्रकारेण । उक्त्वा । कृष्णः श्रीहरिः । स्वनिकेतं स्वावासभवनम् । आयात् । उदारसत्त्वा महामनसः । सन्तः सर्वे साधवः । सदःस्थाः सभानिषण्णा अन्ये गृहिजनाश्चापि । तद्वागमृतं श्रीहरिवचना-

पूर्वोक्तसाधनाभ्यासः सन्तः कार्यस्तु सर्वथा । अपूर्णं मन्यमानानां पूर्णता तेन सेत्स्यति ॥३४॥ सम्पूर्णता-
भिमानेन नोद्रिच्यं साधुभिः क्वचित् । तथा सति त्वीशकृपा भवेदग्न्युप्तबीजवत् ॥ ३५ ॥ अतो यथोक्तं हृदि
साधु बोध्यमुक्त्वेति कृष्णः स्वनिकेतमायात् । सन्तोऽपि तद्वागमृतं सदःस्थाः पीत्वा तथेत्यूचुरुदारसत्वाः ॥ ३६ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दविरचिते पञ्चविंशस्तरङ्गः ॥ २५ ॥

शकाब्दे विक्रमार्कस्य रसाश्ववसुभूमिते । सहस्यशुक्लैकादश्यां वचोऽमृतमिदं हरेः ॥ १ ॥
तत्र दुर्गपुरे दुर्ग उत्तमेनस्य वेश्मनः । प्राग्द्वारस्य बर्हिर्वेद्यां स्वासने स उपाविशत् ॥ २ ॥

मृतम् । पीत्वा एकाग्रमनसा आश्रुत्येत्यर्थः । तथेति भगवंस्त्वया यथा कथितं तथा करिष्याम इति । ऊचुः स्वावासं व्रजन्तं भगवन्तं कथयामासुः ॥ ३६ ॥ स्वभक्तस्य स्वधर्मेण युक्तस्यापूर्णकामता । स्वस्य माहात्म्यवोधेन निरस्ता चात्मनिष्ठया ॥१॥ युक्तियुग्वचनैर्येन स्वभक्तानां हितेच्छुना । चित्ते स श्रीहरिर्मेऽस्तु भक्तिधर्मसुतोऽन्वहम् ॥२॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्स्नुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां पञ्चविंशस्तरङ्गः ॥ २५ ॥

षड्विंशे कृष्णसम्बन्धिशब्दादौ समुदीरिता । भक्तानां तु रसिकता तदन्यत्र निषेधिता ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् (१८७६) सहस्यशुक्लैकादश्यां पौषमासधवलपक्षैकादशिकातिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमेनस्योत्तमाख्यनृपतेः । 'इनः सूर्ये नृपे पत्या-वि'ति विश्वः । दुर्गे । प्राग्द्वारस्य पूर्वाभिमुखस्य । वेश्मनस्तस्यैव गृहस्य । बर्हिर्वेद्यां बाह्यायां वितर्दौ । स्वासने सद्यः पिञ्जितपिचुतूलसम्भृतसुस्पर्शतूलिकाच्छादिते श्वेतोत्तरच्छदवति मञ्चे शोभनासने । स श्रीहरिः । उपाविशद्दिनमणौ मध्याह्नतां प्राप्ते स्वावासभवनादागत्योपविष्टवानित्यर्थः ॥ २ ॥

तं विशिनष्टि सितेति । सितसर्वाम्बरः परिहितश्वेताधोवसन उत्तरीयीकृतश्वेतचतुष्फालपटो मूर्द्धसंवेष्टितसूक्ष्मघनश्वेताम्बर इत्यर्थः । शीर्षपटसत्कुन्दशेखरः शिरोवेष्टन-संनिहितकुन्दकुसुमावतंसः । 'पुंस्युत्तंसावतंसौ द्वौ कर्णपुरे च शेखरे'इत्यमरः । मन्दारकुसुमोत्तंसः भाषायां गुलदावदि इति प्रसिद्धपुष्पकृतकर्णपूरः । त्यागिगृहिव्रजै-र्नानादेशागतत्यागिगृहिनिवहैः । वृतः सभायां परिवेष्टितः ॥ ३ ॥ प्रगायत इति । स श्रीहरिः । सवाद्यं झर्झरमृदङ्गादिवाद्योपेतं यथातथा । कीर्त्तनानि भगवच्चरित्रयशो-ङ्कितमुक्तानन्दादिकविसंदब्धपद्यानि । प्रगायतः । सतः साधून् प्रति । अब्रवीत् । हे सन्तः ! । वो युष्माकम् । कीर्त्तनगानम् । क्षणं क्षणकालपर्यन्तम् । विरमय्य संस्तभ्य । मदीरितं युष्माकं हिताय मया संकथ्यमानम् ॥ ४ ॥ कीर्त्तनमिति । कीर्त्तनं वार्त्तारूपं कीर्त्तनगानम् । सर्वैर्युष्माभिः सकलैर्मुन्यादिभिः । श्रूयताम् । इत्यमुना प्रकारेण । उक्ताः श्रीहरिणा कथिताः । ते सन्तः । तथा श्रीहरिणा यथा कथितं तेन प्रकारेणैव । व्यधुश्चक्रुः । ततस्तदनन्तरम् । जगद्गुरुर्जगतां सत्य एक एव देशिकः । स श्रीहरिः । निश्चितार्थं प्रमाणनिर्णीतार्थम् । वाक्यम् । जगाद । इति द्वयोरेकसम्बन्धः ॥५॥ रसिकानीति । हे सन्तः ! । राधिकापतेः रासेश्वरीप्राणनाथस्य

सितसर्वाम्बरः शीर्षपटसत्कुन्दशेखरः । मन्दारकुसुमोत्तंसो वृतस्त्यागिगृहिव्रजैः ॥ ३ ॥
प्रगायतः कीर्त्तनानि सवाद्यं स सतोऽब्रवीत् । क्षणं कीर्त्तनगायनं वो विरमय्य मदीरितम् ॥ ४ ॥
कीर्त्तनं श्रूयतां सर्वैरित्युक्तास्ते तथा व्यधुः । निश्चितार्थं ततो वाक्यं स जगाद जगद्गुरुः ॥ ५ ॥
रसिकानि कीर्त्तनानि गायतां राधिकापतेः । तस्मिन्नेव रसः स्याच्चेत्तर्हि तद्धि सुगायनम् ॥ ६ ॥
अन्यथा तु महत्येव हानिर्भवति गायताम् । यदेषां तुल्यता जाता कृष्णे कृष्णेतरेषु च ॥ ७ ॥
बोध्या भक्तास्तु रसिकास्त एव जगतीतले । येषां कृष्णेतरार्थेषु रसः क्वापि न सम्भवेत् ॥ ८ ॥

श्रीकृष्णस्य । रसिकानि विभावानुभाव-सात्त्विक-संचार्युद्रिक्त-रति-स्थायिभावरूपं शृङ्गाररसमयानि । कीर्त्तनानि संस्कृतभाषानिबद्धानि मुक्तानन्दब्रह्मानन्दप्रेमानन्दादिकवि-निबद्धानि पद्यानि । गायतां भक्तजनानाम् । चेद्यदि । तस्मिन् श्रीकृष्णपरमात्मन्येव । रसः सप्तविधशृङ्गाररूप सप्तमभेदवर्जितप्रेमादिषड्विधोरागः । 'रसो गन्धरसे स्वादे तिक्तादौ विपरागयोः । शृङ्गारा'विति विश्वः । स्यात् । तर्हि । तद्रसिककीर्त्तनगायनम् । सुगायनं स्वनिःश्रेयसकरं समीचिनं गानम् । भवेत् । हि निश्चितम् ॥ ६ ॥ अन्यथेति । अन्यथा सर्वथा भगवति विधेयरागं परित्यज्य स्त्र्यादौ रागे जाते सति त्वित्यर्थः । गायतां रसिककीर्त्तनगानं कुर्वतां भक्तानाम् । महत्यतिशयितैव । हानिः स्वनिःश्रेयसभ्रंशरूपः स्वार्थविनाशः । भवति । तत्र हेतुमाह । यद्यास्माद्धेतोः । एषामेवंविधभक्तानाम् । कृष्णे श्रीकृष्णपरमात्मनि । कृष्णेतरेषु तद्भिन्नेषु मायिकेषु संसृति-हेतुषु स्त्र्यादिपदार्थेषु च । तुल्यता समानता । जाता ॥ ७ ॥ बोध्या इति । येषां भक्तानाम् । कृष्णेतरार्थेषु श्रीकृष्णभिन्नपदार्थमात्रेषु । रसो रागः । क्वापि कदाचिदपि । न सम्भवेदुत्पन्नो न भवेत् । ते भक्ता एव । जगतीतले । रसिकाः सत्या रसिकाः । बोध्याः ॥ ८ ॥

एतदेव सुस्पष्टमाह पञ्चभिः । कृष्णेति । यस्य भक्तस्य । कृष्णसम्बन्धवति श्रीकृष्णस्वरूपगुणचरित्रसम्बन्धभाजि । शब्दे एव । रुचिः प्रीतिपर्यायो रागो भवेत् । तद्भिन्ने कृष्णसम्बन्धभिन्ने । स्त्र्यादिशब्दे । रुचिः । न भवेत् । स भक्तः । सत्यः परमार्थः । रसिकः । मतः ॥ ९ ॥ कृष्णेति । यस्य भक्तस्य । कृष्णसम्बन्धिसंस्पर्शे । एव । रुचिः । भवेत् । अहिस्पर्शवत् कृष्णसर्पसंस्पर्शे इव । स्त्र्यादिस्पर्शे । न तु रुचिर्नैव भवेत् । स भक्तः । सन् सत्यः । रसिकः मतः । हि ॥१०॥ कृष्णेति । यस्य भक्तस्य । एका केवला । कृष्णसम्बन्धिरूपेक्षा रुचिरेव । भवेत् । स्त्र्यादिदिदृक्षा स्त्र्यादिरूपदर्शनेच्छा । न तु नैव । स्यात् । सः । भक्तः । सन् सत्यः । रसिकः । अस्ति ॥ ११ ॥ कृष्णेति । यस्य भक्तस्य । कृष्णार्पितान्नास्वादे श्रीकृष्णनिवेदितान्नास्वादने । एव । एका केवला रुचिः । स्यात् । तदन्यरसास्वादे श्रीकृष्णेतरदेवादिसमर्पिततदसमर्पितान्नरसादिस्वादने । रुचिः । न स्यात् । स भक्त एव । सन् सत्यः । रसिकः । अस्ति हि ॥ १२ ॥ कृष्णेति । यस्य भक्तस्य । कृष्णनिर्माल्यपुष्पादिघ्राणे श्रीकृष्णशेषाभूतकुसुमादेः शिङ्घणे । रुचिः । भवेत् । अन्यसौरभघ्राणे श्रीकृष्णनिर्माल्यभिन्नमायिकानेकविधपुष्पादिसुगन्धावघ्राणे । न तु

कृष्णसम्बन्धवत्येव शब्दे यस्य रुचिर्भवेत् । न तद्भिन्ने स्त्र्यादिशब्दे स सत्यो रसिको मतः ॥ ९ ॥ कृष्णसम्बन्धिसं-स्पर्श एव यस्य रुचिर्भवेत् । न त्वहिस्पर्शवत्स्त्र्यादिस्पर्शे स रसिको हि सन् ॥ १० ॥ कृष्णसम्बन्धिरूपेक्षा रुचिरेकैव यस्य च । न तु स्त्र्यादिदिदृक्षा स्यात्स भक्तो रसिकोऽस्ति सन् ॥ ११ ॥ कृष्णार्पितान्नास्वादे स्याद्रुचिरेकैव यस्य च । न तदन्यरसास्वादे स एव रसिको हि सन् ॥ १२ ॥ कृष्णनिर्माल्यपुष्पादिघ्राणे यस्य रुचिर्भवेत् । न त्वन्यसौरभ-घ्राणे स सत्यो रसिको मतः ॥ १३ ॥ एवं भागवतान् पञ्चविषयान्प्राप्य मोदते । यथा तथेतरार्थाप्त्या हृष्येत्स तु मतोऽधमः ॥ १४ ॥ एवं वृत्तस्य भक्तिस्तु व्यर्था ज्ञेया रमापतेः । सत्यत्वेऽपि हरेर्भक्तभावदोषात्तथोच्यते ॥ १५ ॥ यथा भागवतानेव विषयानुपयुञ्जताम् । पुंसां जाग्रदवस्थायां सत्या रसिकता मता ॥ १६ ॥

नैव रुचिर्भवेत् । स भक्तः । सत्यः । रसिकः मतः ॥ १३ ॥ एवमिति । एवं पञ्चधा पूर्वोक्तो यः सत्यो रसिकभक्तः सः । भागवतान् । भगवत्सम्बन्धिनः । पंच । विषयान् शब्दादीन् । प्राप्य । यथा । मोदते हृष्टो भवति । तथा । यो भक्तः । इतरार्थाप्त्या श्रीकृष्णसम्बन्धवर्जितशब्दादिविषयसम्प्राप्त्या हृष्येद्धृष्टो भवेत् । स रसिकभक्तस्तु । अधमोऽतिन्यूनोऽसत्य इत्यर्थः । मतः ॥ १४ ॥ एवमिति । एवं वृत्तस्य भगवत्सम्बन्धरहितपञ्चविषयप्राप्त्या हर्षमुपगच्छतो भक्तस्य सम्बन्धिनी । रमापतेर्लक्ष्मीकान्तस्य श्रीकृष्णस्य । भक्तिस्तु । व्यर्था आत्यन्तिककल्याणसम्पादकत्वाभावान्निष्फला । ज्ञेया । हरेस्तद्भक्त्या धारस्य श्रीकृष्णभगवतः । सत्यत्वेऽपि । भक्तभावदोषात्सर्वथा प्रीतिपर्यायभावकरणार्हे श्रीकृष्णे यथा तथान्यत्रापि भक्तस्य भावाचरणदोषतो हेतोः । तथा । उच्यते तस्य भक्तिर्व्यर्थेति कथ्यते इत्यर्थः ॥ १५ ॥ यथेति । किञ्च । यथा । जाग्रदवस्थायाम् । भागवतानेव । विषयान् । उपयुञ्जतां सेवमानानाम् । पुंसां भक्तजनानाम् । सत्या । रसिकता । मता ॥ १६ ॥

तथेति । तथा । तेनैव प्रकारेण । स्वप्ने स्वप्नावस्थायामपि । भगवत्सम्बन्ध्यर्थनिषेविणां श्रीकृष्णसम्बन्धिन एव शब्दादिविषयान्सेवमानानां जनानाम् । रसिकभक्तत्वम् । मया । सत्यम् । मतम् । अन्येषां श्रीकृष्णसम्बन्धभिन्नमायिकस्त्र्यादिसम्बन्धिविषयान्स्वप्ने सेवमानानाम् जनानाम् । रसिकभक्तत्वम् । मया । सत्यम् । न तु नैव । मतम् ॥ १७ ॥ एवमिति । एवममुना प्रकारेण । सदा सर्वकालम् । जाग्रति स्वप्ने चेत्यर्थः । एकमनसा श्रीकृष्णस्वरूपे एकाग्रमानसेन । कृष्णचिन्तनं सर्वदा श्रीकृष्णमूर्तिध्यानम् । कुर्वतां रसिकभक्तानाम् । हृदि मनसि । एका केवला । तन्मूर्त्तिः साक्षाच्छ्रीकृष्णमूर्त्तिरेव । भाति प्रतिभासते । अन्यच्छ्रीकृष्णमूर्त्तिव्यतिरिक्तम् । किञ्चन ब्रह्माण्डान्तर्वर्त्तिकिमपि पदार्थमात्रम् । न तु नैव भाति ॥ १८ ॥ तामिति । तां श्रीकृष्णमूर्त्तिमेव । पश्यतामीक्षमाणानां रसिकभक्तानाम् । अल्पकालेन हृदि हृत्पद्मे । अलौकिकम् । ब्रह्मतेजोऽक्षरब्रह्मप्रकाशः । प्रकाशते भाति । तत्र हृत्स्फुरिताक्षरब्रह्मतेजसि । सा श्रीकृष्णमूर्त्तिरेव । भासते सदा प्रकाशते ॥१९॥ तस्मादिति । तस्माद्धेतोः । रसिकैः । भवद्भिरपि । उच्चैरुच्चस्वरेण । कीर्त्तनगायने । एवं पूर्वोक्तसत्यरसिकभक्तप्रकारेण । स्वं स्वकीयम् । मानसम् । कृष्णे एव । धार्यम् । अन्यत्र भगवदित-

तथा स्वप्नेऽपि भगवत्सम्बन्ध्यर्थनिषेविणाम् । सत्यं रसिकभक्तत्वं न त्वन्येषां मतं मया ॥ १७ ॥
एवं सदैकमनसा कुर्वतां कृष्णचिन्तनम् । हृदि तन्मूर्तिरेकैव भाति नान्यत्तु किञ्चन ॥ १८ ॥
तामेव पश्यतामल्पकालेन हृद्यलौकिकम् । प्रकाशते ब्रह्मतेजस्तत्र सैव च भासते ॥ १९ ॥
तस्माद्भवद्भिरप्येवमुच्चैः कीर्त्तनगायने । रसिकैः कृष्ण एव स्वं धार्यं नान्यत्र मानसम् ॥ २० ॥
गायनं क्रियते यर्हि भवद्भिर्मम सन्निधौ । तदा मयैकाग्रहृदा कृष्ण एव विचिन्त्यते ॥ २१ ॥
कर्त्तुं तत्रान्तरायं तु नैव शक्नोति कश्चन । ईदृग्बलिष्ठो हृदये विचारो वर्त्तते मम ॥ २२ ॥
एवं तेन स्वदृष्टान्तः शिक्षार्थं हरिणोदितः । स्वयं तु तदुपास्योऽस्ति कृष्ण एव नराकृतिः ॥ २३ ॥

रस्मिन्मायिकपदार्थमात्रे । न धार्यम् ॥२०॥ गायनमिति । भवद्भिः । यर्हि । मम । सन्निधौ समीपे । गायनं कीर्त्तनगानम् । क्रियते । तदा तर्हि । मया । एकाग्रहृदा अव्यग्रेण मानसेन । कृष्ण एव । विचिन्त्यते ॥ २१ ॥ कर्त्तुमिति । तत्र श्रीकृष्णचिन्तने । अन्तरायं विघ्नम् । कर्त्तुं तु । कश्चन कोऽपि मायिकपदार्थः । नैव । शक्नोति । ईदृगेवंविधः । बलिष्ठोऽतिबलवान् । विचारः । मम । हृदये मानसे । वर्त्तते ॥ २२ ॥ एवमिति । एवममुना प्रकारेण । तेनैवं स्वभक्तेभ्य उपदेशं कृतवता । हरिणा । स्वदृष्टान्तः । शिक्षार्थं स्वभक्तोपदेशार्थम् । उदितः कथितः । स्वयं श्रीहरिस्तु । तदुपास्यः साध्वादिसकलस्वभक्तजनैः स्वपरमनिःश्रेयसार्थमुपासनीयः । नराकृतिर्निष्कारणकरुणया धृतनराकारः । कृष्णः स्वयमक्षरधामाधिपतिः श्रीकृष्णो भगवानेव । अस्ति । इत्थंभूतस्यास्य पारोक्ष्येण तन्महिमप्रदर्शनं नृनाट्यानुकारेण स्वभक्तशिक्षार्थं ज्ञेयम् ॥ २३ ॥

वचनेति । इत्थमेवंविधम् । ईशितुः परमेश्वरस्य श्रीहरेः । वचनामृत्तम् । सकलाः । ते पूर्वोक्ता गायकाः साधवः । सकलाः सभानिषण्णा अन्ये सर्वेऽपि । भक्तजनाः । निशम्य श्रुत्वा । सादरं यथातथा । हृदये स्वस्वमानसे । दधति स्म धारयामासुरेव । हितावहं स्वेषां हितबोधकम् । तं श्रीहरिम् । प्रणमन्ति स्म सादरं नमश्चक्रुः ॥ २४ ॥ रसिकत्वं स्वभक्तानां सकलेन्द्रियवृत्तिभिः । स्वस्वरूपे सर्वथोक्तं स्वप्ने जाग्रति येन च ॥ १ ॥ मायिकार्थनिषेधोक्तिपूर्वं स्वीयहितेच्छुना । स श्रीहरिः स्वमूर्त्तौ मे दत्ताद्रसिकतां सदा ॥ २ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्त्वनुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधा-सिन्धुटीकायां षड्विंशस्तरङ्गः ॥ २६ ॥

सतां कृष्णे स्थितिमतां ज्ञानेनैकान्तिनां स्फुटम् । लक्षणं सप्तविंशे तु प्रोक्तं श्रीहरिणा ततः ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८७६) सहस्य-शुक्लद्वादश्यां पौषमासीयशुक्लपक्षद्वादशिकातिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । पश्चिमेति । तत्र तिथौ । दुर्गपुरे । उत्तमस्योत्तमाख्यस्य ।

वचनामृतमित्थमीशितुः सकला भक्तजना निशम्य ते । हृदये दधति स्म सादरं प्रणमन्ति स्म च तं हितावहम् ॥ २४ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते षड्विंशस्तरङ्गः ॥ २६ ॥

शकाब्दे विक्रमार्कस्य रसाश्ववसुभूमिते । सहस्यशुक्लद्वादश्यां वचोऽमृतमिदं हरेः ॥ १ ॥ तत्र दुर्गपुरे दुर्गे उत्तमस्य महीभुजः । सतां मठे प्रभुर्वेद्यां सन्निर्मितशुभासने ॥ २ ॥ पश्चिमास्यः प्रातरेत्य त्यागिगृहिसदोन्तरे । उपविष्टः क्षणं ध्यात्वा सत ऊचे सितांशुकः ॥ ३ ॥ भजनेच्छाऽत्र सर्वेषां कृष्णस्य हृदि वर्त्तते । तथापि तत्तज्ज्ञाने तु वर्त्तते भिन्न-भिन्नता ॥ ४ ॥ तत्र ज्ञानेन येनात्र भगवान् हृदि सर्वथा । निवासं कुरुते सम्यक् श्रूयतां तद्वदामि वः ॥ ५ ॥

महीभुजो नृपतेः । दुर्गे । सतां साधूनाम् । मठे । प्रातर्ब्राह्मे मुहूर्त्ते । एत्य स्वावा-सादागमनं कृत्वा । वेद्यां वाह्यायां वितर्दौ । त्यागिगृहिसदोन्तरे नानादेशागत-त्यागिगृहिस्रभक्तसभामध्ये । सन्निर्मितशुभासने श्रीहर्यागमनं श्रुत्वा आदित एव साधुभिर्विहिते सश्वेतोत्तरच्छदे सपार्श्विके स्थूलतूलिकारूपे शोभने आसने । उपविष्टः । सितांशुकः परिहितश्वेताधोवसनः प्रावृतश्वेतचतुष्फालपटः शिरोनिबद्धसितसूक्ष्मघनवसनश्वेत्यर्थः । प्रभुः श्रीहरिः । पश्चिमास्यः पश्चिमदिगभिमुखपद्मः सन् । क्षणं क्षणकाल-पर्यन्तम् । ध्यात्वान्तर्दृष्ट्या किञ्चिद्विचार्य । सतः स्वपुरेऽवस्थितसाधून्प्रति । ऊचे वक्ष्यमाणप्रकारेण उवाच । इति द्वयोरेकान्वयः ॥ २ ॥ ३ ॥ भजनेति । हे साधवः ! । अत्र सत्सङ्गे । सर्वेषां सकलानां सत्सङ्गिजनानाम् । हृदि मनसि । कृष्णस्य साक्षाच्छ्रीकृष्णभगवतः । भजनेच्छा नवधाभक्तिविधानेच्छा । वर्त्तते । तथापि । तत्तज्ज्ञाने तेषां तेषां सत्सङ्गिनां बुद्ध्यवस्थिते वेदने तु । भिन्नभिन्नता रुचिवैचित्र्यान्नानाविधो भेदः । वर्त्तते ॥४॥ तत्रेति । अत्र सत्सङ्गे । तत्र तेषां तेषु ज्ञानेषु मध्ये । येन ज्ञानेन । भगवान् साक्षाच्छ्रीकृष्णः । हृदि मनसि । सर्वथा सर्वप्रकारेण । निवासम् । कुरुते । तत् ज्ञानम् । वो युष्मान् । सम्यक् । वदामि । श्रूयतां भवद्भिस्तदाकर्ण्यताम् ॥ ५ ॥

विधृतेति । येन भगवता । विधृता स्वतेज आधाय विन्यस्ता । पृथिवी । वारां जलानाम् । उपरि । तिष्ठति अद्यापि स्थिता भवति । तथा । येन । विधृतम् । ताराचक्रं ज्योतिश्चक्रम् । स्वर्गादयः । लोकाश्च । अन्तरिक्षे आकाशे । तिष्ठति ॥ ६ ॥ सूर्येति । यदाज्ञया यस्य भगवतो निदेशेन । सूर्याचन्द्रमसौ । उदयास्तमने । यातः प्राप्नुतः । तथा । वर्षासु प्रावृषि । मेघाः । अम्बूनि जलानि । वर्षन्ति । चकाराद्यद्भयाद्वाति वातोऽयमित्यादिश्रीभागवततृतीयस्कन्धोक्तेर्यदत्र न्यूनं ततोऽवगन्तव्यम् ॥ ७ ॥ काल इति । यदाज्ञया । तरवः औषधयश्चापीत्यपि च शब्दाद्बोध्यम् । काले काले स्वस्वसमये । पुष्पफलं पुष्पाणि फलानि चेत्यर्थः । सूयन्ते उत्पादयन्तीत्यर्थः । अब्धिः समुद्रः । वर्षासु वर्षाकालेऽपि । मर्यादाम् । न जहाति । पालीरहितः सन्नपि वेलां नाक्रमते इत्यर्थः ॥ ८ ॥ अम्बिति । यदिच्छया यत्कृतसङ्कल्पेन । स्त्रीजठरे नार्या उदरे । अम्बुबिन्दोः पुरुषनिषिक्तवीर्यात्मकजलपृषतः । अङ्घ्रिकरादयः पादपाणिप्रभृत्यवयवसमुदायात्मकं शरीरमित्यर्थः । जायन्ते । ईदृशा एवंविधा आश्चर्या विस्मयं करा गुणा यस्य सः । प्रभुरतिसमर्थः । यः । भगवान् । अस्तीति शेषः ॥ ९ ॥ स इति । स एवंभूतो भगवानेव । अद्य साम्प्रतम् । नराकारः पुरुष-

विधृता येन पृथिवी वारामुपरि तिष्ठति । ताराचक्रं चान्तरिक्षे लोकाः स्वर्गादयस्तथा ॥ ६ ॥ सूर्याचन्द्रमसौ यात उदयास्तमने तथा । वर्षन्त्यम्बूनि वर्षासु मेघाश्चापि यदाज्ञया ॥७॥ काले काले पुष्पफलं सूयन्ते तरवोऽपि च । मर्यादां न जहात्यब्धिर्वर्षास्वपि यदाज्ञया ॥ ८ ॥ अम्बुबिन्दोः स्त्रीजठरे जायन्तेऽङ्घ्रिकरादयः । यदिच्छयेदृशाश्चर्यगुणो यो भगवान् प्रभुः ॥ ९ ॥ स एवाद्य नराकारः साक्षान्मां मिलितोऽस्ति हि । यान्याश्चर्याणि प्रागासंस्तान्यनेन कृतानि च ॥ १० ॥ करोत्यद्य तथाऽग्रे च करिष्यत्ययमेव हि । एवं यद्भगवज्ज्ञानं तज्ज्ञानं मतमुत्तमम् ॥ ११ ॥ तथैवं ज्ञानिनः स्वस्य कचिन्महति पूजने । ताडने वा गजारोहे खरारोहेऽपि वा कचित् ॥ १२ ॥ स्वर्णे लोष्टे रिपौ मित्रे रम्यरूपकुरूपयोः । मानेऽपमाने च भवेत्समत्वं येन सर्वदा ॥ १३ ॥

समानाकृतिः । अत एव । साक्षात्प्रत्यक्षः सन् । माम् । मिलितः । अस्ति । हि निश्चितमेव । किञ्च । यानि । आश्चर्याणि । प्राक् । आसन् । तान्याश्चर्याणि । अनेन मया साक्षात्सङ्गतेन भगवता । कृतानि । सन्ति ॥ १० ॥ करोतीति । अयं मयोपलब्धो भगवानेव । अद्य । करोति । आश्चर्याणीति शेषः । तथा । अग्रे । करिष्यति । एवममुना प्रकारेण । यत् । भगवज्ज्ञानम् । तत् । ज्ञानम् । उत्तमम् । मतम् । मयेति शेषः ॥ ११ ॥ तथेति । तथा तेन प्रकारेणैव । एवंज्ञानिन इत्थंभूतभगवज्ज्ञानवतः । स्वस्यात्मनः । कचित् । महति उपचारातिशयवति । पूजने । अथवा । ताडने लकुटादिना प्रहारे । कचित् । गजारोहे । अथवा । खरारोहे ॥ १२ ॥ स्वर्ण इति । स्वर्णे हेम्नि । अथवा । लोष्टे पांसुपिण्डे । मित्रे । अथवा । रिपौ । रम्यरूपकुरूपयोः । रमणीयरूपवत्यां षोडशाब्दवयस्कयुवत्यामथवा कुरूपवत्यामशीतिवर्षवयस्कवृद्धनार्यामित्यर्थः । माने । अथवा । अपमाने । एवमेतेषु महापूजनताडनादिद्वन्द्वेषु । येन वैराग्योपेतेनात्मज्ञानेन । सर्वदा सर्वकालम् । समत्वं समभावः

भवेत् । इति द्वयोरेकसम्बन्धः ॥ १३ ॥ तदिति । तत्समतापादकम् । ज्ञानं वैराग्येपेतमात्मवेदनमपि । उत्कृष्टमुत्तमम् । भवति । तद्वत उभयज्ञाननिष्ठावतो भक्तस्य । हृदि । नित्यदा सर्वदा । भगवतः । वासो निवासः । ज्ञेयः । स च एवंविधो भक्तस्तु । सुरादिभिः । अर्च्यः महोपचारैः पूजनीयोऽस्ति । हि ॥ १४ ॥ स इति । स चेत्थंभूतो भक्तस्तु । स्वाश्रयिणां कृतस्वाश्रयाणाम् । नृणाम् । भवार्णवात्संसारसमुद्रात् । समुद्धर्त्तोद्धारकारकः । भवति । अनन्ता अपरिमिताः कल्याण-गुणाः स्वधर्मज्ञानवैराग्यभक्त्यादयः कल्याणकारिणो गुणा यस्य स तथाभूतः । स भक्तः । जगतां ब्रह्माण्डोदरवर्त्तिसर्वजनानाम् । आधार उपकारकत्वेनाधिकरणरूपः । अस्ति ॥ १५ ॥ तस्य जगदाधारत्वमाह । स्वेति । असौ भक्तः । स्वेन्द्रियस्थाच्युतेन । पूर्वोक्तरीत्या सम्प्राप्तोभयविधज्ञानवति एकान्तिकभक्ते स्वस्मिन् । कृतनिवासेनानन्तैश्वर्य-विशिष्टेनाच्युतेनैकाकारतामापादितेन सकलेन्द्रियगणेन स्वस्य विशिष्टत्वात्स्वेन्द्रियेष्वस्थितेन भगवतेत्यर्थः । अन्येषां स्वेतरेषाम् । सर्वदेहिनां सम्बन्धिनाम् । नेत्रादीनाम् । इन्द्रियाणाम् । प्रकाशेन भगवद्भक्तसचेतनतापादने । समर्थः । अस्ति ॥ १६ ॥ एवमिति । एवममुना प्रकारेण । शक्तस्य भगवद्विधेयकार्यकारणार्हतयात्यन्तसामर्थ्यवत-

तच्चापि ज्ञानमुत्कृष्टं तद्वतो हृदि नित्यदा । ज्ञेयो भगवतो वासः स चार्च्यो हि सुरादिभिः ॥ १४ ॥
स च स्वाश्रयिणां नृणां समुद्धर्त्ता भवार्णवात् । अनन्तकल्याणगुण आधारो जगतां स च ॥ १५ ॥
स्वेन्द्रियस्थाच्युतेनासावन्येषां सर्वदेहिनाम् । नेत्रादीनामिन्द्रियाणां समर्थोऽस्ति प्रकाशने ॥ १६ ॥
एवं शक्तस्य तदपि ज्ञेयं सामर्थ्यमेव हि । तुच्छजीवकृतस्यापि स्वापमानस्य यत्क्षमा ॥ १७ ॥
असावेव महान् प्रोक्तो न तु ज्ञत्वाभिमानिनः । स्फारदृग्भीषिताल्पज्ञाः स्वसिद्धत्वप्रदर्शकाः ॥ १८ ॥
मायायास्ते तु विज्ञेया जीवा न तु तदीशितुः । गन्तारोन्ते यमपुरं स्वाश्रितैः सह ते जनैः ॥ १९ ॥

स्तस्य भक्तस्य । तदपि । सामर्थ्यमेव । ज्ञेयम् । यत् । तुच्छजीवकृतस्यापि । स्वापमानस्य । क्षमा सहिष्णुता । अन्येषामनैश्वर्याणामपि दण्डाहतसर्पस्येवाक्षान्तिशीलत्वा-दैश्वर्यवतोऽप्यस्य नृनाट्यधृतो भगवत इव यत्परापराधसहिष्णुत्वमित्येतन्महासामर्थ्यं ज्ञेयमित्यर्थः ॥ १७ ॥ असाविति । अतः । असावुक्तविधो भक्त एव । महान् । प्रोक्तः । ज्ञत्वाभिमानिनो वयमेव ज्ञानवन्तः स इत्यभिमानवन्तः । स्फारा भर्त्सनाचरणाय व्यात्ताया दृशो नेत्राणि तैर्भीषिता भयं प्रापिता अल्पज्ञा अबहुज्ञजना यैस्ते तथोक्ताः । स्वसिद्धत्वप्रदर्शकाः स्वस्मिन् सिद्धत्वाभावेप्युपरिष्टाद्वाङ्मात्रेणान्येभ्यः स्वसिद्धतां सन्दर्शका जीवाः । न तु नैव महान्तः ॥ १८ ॥ मायाया इति । ते । जीवास्तु । मायाया मायासम्बन्धवन्तः । विज्ञेयाः । तदीशितुस्तस्या मायाया ईशिताऽधिष्ठाता परमेश्वरस्तस्य सम्बन्धिनः । न तु नैव विज्ञेयाः । ते भगवद्भक्तानैवेत्यर्थः । ते मायाजीवाः । स्वाश्रितैः । जनैः । सह । अन्ते देहावसाने । यमपुरं संयमनीमेव । गन्तारः गमिष्यन्ति ॥ १९ ॥

महत्तेति । यथा । एकाश्ववतां पादचारजनापेक्षयैकाश्वविचरणसमृद्धिमताम् । पुंसां मध्ये । पञ्चाश्वादेः पञ्च दश विंशति पञ्चाशच्छताद्यश्वसादिभिः सह विचरणसमृद्धिमतो नरस्य । महत्ता यथोत्तरश्रेष्ठत्वम् । तथैव । तेषां मायाजीवानाम् । प्राकृतेषु स्वतोऽर्वाचीनेषु पामरजनेषु मध्ये एव । महत्ता । भवति । सतां पूर्वोक्तज्ञानवतां साधुभक्तानाम् । गणे समूहमध्ये । न च नैवास्ति ॥ २० ॥ आपातेति । इह लोके । आपातरमणीयेष्विन्द्रवारुणीफलवदुपरिष्टान्मनोहरत्वेन प्रतीयमानेषु । मायिकेषु मायाकार्येषु । वस्तुषु स्त्रीवस्त्रसौधादिभोग्यपदार्थेषु । यस्य गृहस्थभक्तस्य । रम्यता धीः स्त्र्याद्येतदतिरमणीयमस्तीति मतिः । भवेत् । स गृहस्थभक्तोऽपि । असन्नसमीचीनो भक्तः । मतः । अपिशब्दात्तादृशस्त्यागी तु दूरापास्तः ॥ २१ ॥ सदिति । यद्यपि । सत्सङ्गस्य । प्रतापेन । तस्य गृहस्थभक्तस्य । श्रेयः कल्याणम् । स्यात् । तथापि । अस्य गृहस्थभक्तस्य । सात्त्वतेषु भगवत एकान्तिकभक्तेषु साधुषु । गणना परिगणनम् । नैव जायते ॥ २२ ॥ तस्मादिति । तस्माद्धेतोः । यथा । साक्षात् कृष्णः । हृदि । वासं निवासमेव । कुर्यात् । तथा त्यागिना मदाश्रितेन साधुना गृहिणा मदाश्रितेन गृहस्थेन चापि । सर्वथैव वृत्यम् । अनेकधा भगवन्तं भजमानैरपि त्यागिगृहिभक्तजनैर्येन

महत्ता प्राकृतेष्वेव तेषां च न सतां गणे । यथैकाश्ववतां पुंसां पञ्चाश्वादेस्तथैव हि ॥ २० ॥
आपातरमणीयेषु मायिकेष्विह वस्तुषु । रम्यताधीर्भवेद्यस्य स गृहस्थोऽप्यसन्मतः ॥ २१ ॥
सत्सङ्गस्य प्रतापेन स्याच्छ्रेयस्तस्य यद्यपि । तथापि सात्त्वतेष्वस्य गणना नैव जायते ॥ २२ ॥
तस्मात्साक्षात्कृष्ण एव कुर्याद्वासं यथा हृदि । सर्वथैव तथा वृत्यं त्यागिना गृहिणापि च ॥ २३ ॥
इत्युक्त्वा प्रभुरुच्चार्य नमन्साधून् पुरःस्थितान् । जयसच्चिदानन्देति स्वावासमगमत्ततः ॥ २४ ॥ इति
धर्मसूनु वचनं पीयूषं ते निपीय मुनिसङ्घाः । गृहिणश्च तत्सदःस्था ओमिति जगदुश्च तं नत्वा ॥ २५ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते सप्तविंशस्तरङ्गः ॥ २७ ॥

द्विविधज्ञानेन साक्षाद्भगवान्सर्वदा स्वहृदि निवासं विदध्यात्सर्वथा तथैव वृत्यमिति प्रकरणनिष्कर्षार्थः ॥ २३ ॥ इतीति । इत्यमुना प्रकारेण । उक्त्वा । प्रभुः श्रीहरिः । पुरःस्थितान् स्वाग्रे उपविष्टान् । साधून्मुक्तानन्दादीन्सतः । नमन्नमस्कुर्वन्सन् । जय सच्चिदानन्द ! । इतीत्थं वचनम् । उच्चार्य । ततः साधुमठात्सकाशात् । स्वावासम् । अगमद्रत्नजिदादिपार्षदैः सह जगाम ॥ २४ ॥ इतीति । इतीत्थंभूतम् । पीयूषममृतसमानम् । तत् । धर्मसूनुवचनं धर्मपुत्रस्य श्रीहरेर्वाक्यम् । निपीय । सदःस्थाः । ते । मुनिसङ्घाः । गृहिणश्च । तं स्वावासं व्रजन्तं श्रीहरिम् । नत्वा । ॐ यथा त्वयोक्तं तथा वर्त्तिष्यामः । इत्यमुना प्रकारेण । जगदुः कथयामासुः ॥ २५ ॥ स्वभक्तानां हृदि स्वस्य निवासो येन स्याद् ध्रुवम् । तज्ज्ञानं येन सम्प्रोक्तं देयात्तन्मे हरिः स हि ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्सूनु-रघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां सप्तविंशस्तरङ्गः ॥ २७ ॥

ये भविष्यति सत्सङ्गाद्भ्रष्टो यो न भविष्यति । अष्टाविंशे लक्षणानि तयोः प्रोक्तानि तत्त्वतः ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८७६) पौष-शुक्लचतुर्दश्यां पौषमासीयशुक्लपक्षस्य चतुर्दशी तिथौ । इदम् । हरेः । वचोऽमृतम् । अभवत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमस्योत्तमाख्यस्य । क्षितीशितुर्नृपस्य । दुर्गे । वासुदेवालयाङ्गणे उत्तरास्यश्रीवासुदेवभवनाजिरे । भुक्त्यै भोजनाचरणार्थम् । सतां साधूनाम् । श्रेण्यो वीथयः । आसन् ॥ २ ॥ तदेति । तदा तस्मिन्समये । तत्सन्मुखे । श्रीवासुदेवभवननिकटवर्त्तिप्रत्यगास्यभवनवेदिकायामित्यर्थः । स्वास्तृते मृदुलतूलिकाच्छादिते सपार्श्विकोपबर्हे । पीठे मञ्चरूपे शोभनासने । निषण्णः । सितानां श्वेतानां सूक्ष्माणां सूक्ष्मसूत्ररचितानामम्बराणां परिधानीयादिवसनानां धरो धारकः । हरिः । प्रीतः प्रसन्नः सन् । स्वयं केनाप्यपृष्टोऽपि स्वत एव । तान् भोजनार्थं श्रेणिभावेनावस्थितान्स्वाननचक्षुषः साधून् प्रति । प्रोवाच ॥ ३ ॥ साक्षादिति । हे सन्तः ! । भूतले । तत्रापि । इहास्मिन् भारते वर्षे । भगवान् सकलैश्वर्यसम्पन्नः । साक्षात्कृष्णः । नृणाम् । हिताय परमनिःश्रेयसरूपं हितं कर्त्तुमेव । कृपया निष्कारणकरुणयैव । नराकारं मनुष्यसमानाकारम् । धृत्वा चरति ॥ ४ ॥

शकाब्दे विक्रमार्कस्य रसाश्ववसुभूमिते । पौषशुक्लचतुर्दश्यां वचोऽमृतमिदं हरेः ॥ १ ॥ तत्र दुर्गपुरे दुर्ग उत्तमस्य क्षितीशितुः । आसन्भुक्त्यै सतां श्रेण्यो वासुदेवालयाङ्गणे ॥ २ ॥ तदा तत्सन्मुखे पीठे निषण्णः स्वास्तृते हरिः । सितसूक्ष्माम्बरधरः प्रीतः प्रोवाच तान्स्वयम् ॥ ३ ॥ साक्षात्कृष्णो हि भगवान् हितायैव नृणामिह । कृपयैव नराकारं धृत्वा चरति भूतले ॥ ४ ॥ तदाश्रिताश्च ये सन्तस्तेऽपि सन्ति दयालवः । अपृष्टा अपि भूतानां वदन्ति हितमेव हि ॥ ५ ॥ यदा तु हृद्गता दोषा नश्येयुः सकलास्तदा । हृदि स्थिरा स्याद्भगवद्भक्तिः श्रेयस्तया भवेत् ॥ ६ ॥ अतस्तद्दोषनाशार्थं कृपया हरितज्जनाः । बोधयन्ति नरान्वाक्यैः सप्रमाणैरुपागतान् ॥ ७ ॥ मुमुक्षवो नरास्तत्र सन्ति ये तु भूयसा । आदरेणैव गृह्णन्ति गुणबुद्ध्यैव तानि तु ॥ ८ ॥

तदिति । तदाश्रिताः कृतसाक्षात्कृष्णाश्रयाः । ये सन्तः । तेऽपि । दयालवः । सन्ति । हि यतो हेतोः । अपृष्टाः केनचित्किंचित् स्वहितमननुयुक्ताः सन्तोऽपि । भूतानां जनानाम् । हितं यथा तेषामपुनर्भवः स्यात्तादृशं पथ्यमेव । वदन्ति ॥ ५ ॥ यदेति । यदा । हृद्गताः स्वान्तरेऽवस्थिताः । सकलाः । दोषा लोभादयः । नश्येयुर्विनाशं प्राप्नुयुः । तदा भगवद्भक्तिः । हृदि । स्थिरा निश्चला । स्यात् । तया स्थिरभक्त्या । श्रेयः परमकल्याणम् भवेत् ॥ ६ ॥ अत इति । अतो हेतोः । तद्दोषनाशार्थं हृद्गतदोषनिवृत्त्यर्थम् । हरितज्जनाः साक्षाद्भगवांस्तत्साधुभक्ताश्चेत्यर्थः । उपागतान्स्वान्तिकप्रदेशं सम्प्राप्तान् । नरान् । कृपया । सप्रमाणैः प्रमाणवचोऽन्वितैः वाक्यैः । बोधयन्ति नानायुक्तिभिर्यथातद्दोषनिवृत्तिः स्यात्तथोपदिशन्तीत्यर्थः ॥ ७ ॥ मुमुक्षुवः इति । तत्र तेषूपागतनरेषु मध्ये । ये नराः । मुमुक्षुवः । सन्ति । ते तु । तानि तद्बोधितवचनानि । गुणबुध्याऽत्रास्माकं हितं भवतीत्येवंरूपगुणवत्या मत्यैव । भूयसा प्राज्येन । आदरेणैव । गृह्णन्ति ॥ ८ ॥

तत इति । ततस्तदनन्तरम् । तदुक्तरित्या भगवत्तद्भक्तसाधूक्तप्रकारेणैव । आत्मनः । दोषम् । जहतस्त्यजन्तः । हरिं साक्षात्कृष्णम् । भजन्तो मुमुक्षवो जनाः । निर्विघ्नं यथातथा । भवबन्धनात् । मुच्यन्ते ॥ ९ ॥ विषयेति । ये नराः । विषयासक्तमनसः । भवन्ति । ते तु । तेषु श्रीहरितज्जनेषु तद्वाक्येषु वापि । दोषमगुणम् । मत्वा । स्वस्मिन् । गुणम् । मत्वा । सदध्वनः सत्सङ्गपथात् । भ्रश्यन्त्येव ॥ १० ॥ भ्रश्यन्त्येव सदध्वन इति यदुक्तं तत्रैकस्य भविष्यद्भ्रष्टताप्रकारकथनेन तेषां तामाह त्रिभिः । भ्रष्ट इति । भ्रष्टः सत्सङ्गपथाच्च्युतः । भविष्यन् । कुधीर्दुर्मतिः । पुरुषः । सत्सङ्गिनाम् । त्यागिनाम् । तथा । गृहिणां तथाविधानां गृहस्थजनानामपि । केवलमेकम् । अगुणम् । गृह्णीयात् ॥ ११ ॥ मन्येतेति । स कुधीः । पुरुषः । आत्मानं स्वम् । सुज्ञं बहुज्ञम् । मन्येत । इतरानन्यान् सत्सङ्गिनस्तु । अज्ञान्मूढानेव । मन्येत । अहोरात्रमहर्निशम् । हृदि स्वमनसि । मुह्यन्सन् । क्वापि कुत्रचिदपि । सौख्यम् । न च नैव । आप्नुयात् ॥ १२ ॥ नेति । धूमितं सञ्जातप्रकृष्टधूममार्द्रं सरसं यदुल्मुकमलातं तदुपमोपमानं यस्य सः । कदापि कस्मिंश्चित्कालेऽपि । अक्षीणरोषोऽनिवृत्तकोपः । विवृद्धाः प्रतिदिनं वृद्धिमत्यः अशुभवासनाः स्वाशुभतोत्पादिका

ततस्तदुक्तरीत्यैव जहतो दोषमात्मनः । हरिं भजन्तो निर्विघ्नं मुच्यन्ते भवबन्धनात् ॥ ९ ॥ विषयासक्तमनसो ये नरास्ते तु तेष्वपि । दोषं स्वस्मिन् गुणं मत्वा भ्रश्यन्त्येव सदध्वनः ॥ १० ॥ भ्रष्टो भविष्यन् पुरुषो गृहिणां त्यागिनां तथा । सत्सङ्गिनामप्यगुणं गृह्णीयात्केवलं कुधीः ॥ ११ ॥ मन्येत सुज्ञमात्मानमज्ञानेवेतरांस्तु सः । हृदि मुह्यन्नहोरात्रं क्वापि सौख्यं न चाप्नुयात् ॥ १२ ॥ न निद्रां प्राप्नुयाद्रात्रौ धूमितार्द्रोल्मुकोपमः । कदाप्यक्षीण-रोषोऽसौ विवृद्धाशुभवासनः ॥ १३ ॥ चिह्नैरेवंविधैरेषभ्रष्टो भावीति बुद्ध्यताम् । एतस्माद्विपरीतस्तु भविष्यश्च महानिति ॥ १४ ॥ वासनानां भवेद्वृद्धिः शुभानामेव तद्धृदि । प्रत्यहं हरिभक्तानां गुण एवाविशेत्तथा ॥ १५ ॥ महत्तामेव विद्यात्स त्वन्येषां कृष्णसेविनाम् । न्यूनतां स्वस्य विद्याच्च वर्तेतानन्दतः सदा ॥ १६ ॥

भगवत्तद्भक्तद्रोहाचरणादिरूपा असमीचीनभावना यस्य सः । असौ कुधीः पुरुषः । रात्रौ । निद्राम् । न प्राप्नुयात् ॥ १३ ॥ चिह्नैरिति । एवंविधैरित्थंभूतैः । चिह्नैर्लक्षणैः । उपलक्षितः । एष कुधीः पुरुषः । भ्रष्टः । भावी अवश्यमेव भविष्यति । इतीत्थम् । बुध्यताम् । एतस्मादेवंविधलक्षणादमुष्मात्पुरुषात् । विपरीतः शुभमतित्वादनेवंभूतः । पूर्वोक्तमुमुक्षुपुरुषस्तु । महानतिश्रेष्ठः । भविष्यो भाव्यः । इति चैवमपि । बुध्यताम् ॥ १४ ॥ भविष्यस्य महतो लक्षणान्याह त्रिभिः । वासनानामिति । प्रत्यहं प्रतिदिनम् । तद्धृद्धि भाव्यस्य महतः पुरुषस्य मानसे । शुभानां भगवत्तद्भक्तसन्मानाचरणादिरूपाणां समीचीनानाम् । वासनानां भावनानामेव । वृद्धिः । भवेत् । तथा । हरिभक्तानां साक्षाद्भगवन्तं भजतां सत्सङ्गिनां त्यागिनां गृहिणां च जनानाम् । गुण एव । आविशेत्तद्धृदये प्रवेशं कुर्यात् ॥ १५ ॥ महत्तामिति । स पुरुषस्तु । अन्येषां सर्वेषां स्वेतरेषाम् । कृष्णसेविनां साक्षाच्छ्रीकृष्णं भजमानानां जनानाम् । महत्तामेव । विद्यात् । स्वस्य । न्यूनतां तेभ्यो निकृष्टतां च । विद्यात् ।

सदा निरन्तरम् । आनन्दतः सत्सङ्गजन्यानन्दयुक्ततया । प्रवर्त्तेत ॥ १६ ॥ यथेति । सः । पुमान् । प्रतिदिनम् । यथायथा । सत्सङ्गम् । कुर्यात् । तथातथा । अस्य पुंसः । हृदये । भृशमतिशयितम् । नैर्मल्यं लोभादिदोषरहिततया जातं शुद्धत्वम् । जायते ॥ १७ ॥ ईदृशैरिति । ईदृशैरेवंविधैः । लक्षणैः । उपलक्षितः । सः । सत्सङ्गी । पुमान् । बुधैर्विवेकिभिः सत्सङ्गिभिः । वर्द्धिष्यमाणा प्रतिदिनं वृद्धिगामिनी भक्तिर्यस्य स तथाभूतः । सत्पथात्सत्सङ्गमार्गात् । न । पपिता न पतिष्यतीत्येवंभूतश्च । ज्ञेयः । वै निश्चितम् । एतेनाऽस्य महत्त्वमुक्तम् ॥ १८ ॥ हितेति । अतो हेतोः । हितार्थिना स्वनिःश्रेयसरूपहितेच्छुना सत्सङ्गिना । हरिभक्तशिक्षावाक्यानि । हितानि मम हितकराण्येतानि सन्तीति मत्वा । चित्ते स्वमानसे । धार्याणि । इत्युक्त्वा साधूनत्वा जयसच्चिदानन्देत्युच्चार्य स्वावासं श्रीहरिर्जगामेत्यत्रानुक्तमप्यवधेयम् । इत्येवंविधाम् । प्रभोः श्रीहरेः । वाक्यसुधां वचनामृतम् । श्रवःपुटैः श्रवणपात्रैः । निपीय । ते साधवः । अन्तरे स्वमानसे । तोषमानन्दम् । अवापुः ॥ १९ ॥ यः स्वभक्तो न सत्सङ्गात्पतेद्यश्च पतेत्तयोः । उक्तानि येन लक्ष्माणि स हरिर्मेऽस्तु मानसे ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्स्वनुरघु-

यथायथा स सत्सङ्गं कुर्यात्प्रतिदिनं पुमान् । तथा तथाऽस्य हृदये नैर्मल्यं जायते शुभम् ॥ १७ ॥ ईदृशैर्लक्षणैर्ज्ञेयः सत्सङ्गी स पुमान्बुधैः । वर्द्धिष्यमाणभक्तिर्वै पतिता न च सत्पथात् ॥ १८ ॥ हितार्थिनाऽतो हरिभक्तशिक्षावाक्यानि धार्याणि हितानि चित्ते । इति प्रभोर्वाक्यसुधां निपीय ते श्रवःपुटैस्तोषमवापुरन्तरे ॥ १९ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते अष्टविंशस्तरङ्गः ॥ २८ ॥

शकाब्दे विक्रमार्कस्य रसाश्ववसुभूमिते । पौर्णमास्यां सहस्यस्य वचोऽमृतमिदं हरेः ॥ १ ॥
तत्र दुर्गपुरे प्रत्यग्द्वारोत्तमगृहाङ्गणे । त्यागिगृहिसभामध्ये सोऽराजद्धवलाम्बरः ॥ २ ॥

वीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायामष्टाविंशस्तरङ्गः ॥ २८ ॥

वृद्धिकृत्साङ्गभक्तेस्तु सद्देशादिचतुष्टयम् । असद्देशादिकचतुष्टयं तस्या विघातकम् ॥ १ ॥ संस्कारादित्रयं हेतुर्निर्मलत्वेऽन्तरस्य यत् । तल्लक्षणानि चैकोनत्रिंशे प्रोक्तमिदं स्फुटम् ॥ २ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८७६) सहस्यस्य पौषमासस्य । पौर्णमास्याम् । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । प्रत्यग्द्वारोत्तमगृहाङ्गणे पश्चिमद्वारस्य दुर्गान्तर्वर्त्तिन उत्तमनृपतिभवनस्य चत्वरे । यद्यपि अत्राङ्गणे इत्युक्तं तथाप्यङ्गणप्रवृत्तिहेतुतन्निकटवित्तर्दौं बोध्यम् । त्यागिगृहिसभामध्ये नानादेशागतत्यागिगृहिस्वभक्तजनपर्षदो मध्यप्रदेशे । धवलाम्बरः स्वाङ्गधृतश्वेतपरिधानीयप्रावरणीयशिरोवेष्टनीयवसनः । स श्रीहरिः । अराजत् । स्वास्तृतश्वेतोत्तरच्छदमृदुलतूलिके गेन्दुकपार्श्विकयुते दन्तोत्तमम्श्चे स्वावासादागत्य सायं समये प्रत्यङ्मुख उपविष्टः सुतरां शुशुभे इत्यर्थः ॥ २ ॥

सितेति । स्रजो मालाश्च आपीडः शेखरश्च सितपुष्पाणां ते यस्य तथाभूतः । स श्रीहरिः । पुरःस्थान्स्वाभिमुखप्रदेशोपविष्टान् । सतः साधून्प्रति । अब्रवीत् । हे सन्तः ! । यदि यर्हि । कस्यचित् । किञ्चित् । प्रष्टव्यम् । भवेत् । तर्हि । सः । पृच्छतु ॥ ३ ॥ गोपालानन्देति । अथानन्तरम् । गोपालानन्दसाधुः । कृतानतिः कराञ्जलिविधानपूर्वं कृतप्रणामः सन् । तं श्रीहरिम् । पप्रच्छ । हे हरे ! । तवेति शेषः । धर्मज्ञानविरागाढ्यभक्तेः । बलवृद्धिकरम् । किम् अस्ति ॥ ४ ॥ तमिति । स्वामी श्रीहरिः । तं गोपालानन्दसाधुम् । उवाच । हे साधो ! । सतः शोभना ये देशश्च कालश्च सङ्गश्च ते । सत्क्रिया च । एतच्चतुष्टयं सद्देशादिचतुष्कम् । अञ्जसा तत्त्वतः । तस्या धर्माद्यङ्गसहिताया भक्तेः । वृद्धिकृद्बलवृद्धिकारकम् । ज्ञेयम् । एतत्सद्देशादिचतुकं सतां ध्यान, शास्त्र, दीक्षा, मन्त्राणामुपलक्षणं बोध्यम् ॥ ५ ॥ असदिति । यत् । असदशुभम् । देशकालादिचतुष्कम् । तत् । मुमुक्षतां मुमुक्षूणां सत्सङ्गिजनानाम् । साङ्गाया धर्माद्यङ्गत्रयसहिताया अपि । तस्या भक्तेः । शातनकृच्छनैः शनैर्विनाशकारकम् । निश्चितमेव । ज्ञेयम् । एतदसद्देशादिकमपि असद्ध्यानादीनामुपलक्षणं बोध्यम् । अनेनासद्देशादेर्भक्तिविनाशकत्वकथनेनेत्थंभूतोऽपि गोपालानन्दमुनिकृतः प्रश्नो वोद्धव्योऽन्यथै-तत्कथनासङ्गतिसम्भवः सङ्गतः स्यात् ॥ ६ ॥ ननु तर्हि सदसद्देशादीनां लक्षणान्यपि साम्प्रतं मह्यं ब्रूहीति प्रष्टुमुद्युक्तं तमिङ्गितज्ञतया सर्वान्तरज्ञतया वा लक्ष्म स्वयमेवाह ।

सितपुष्पस्रगापीडः स पुरःस्थान्सतोऽब्रवीत् । प्रष्टव्यं कस्यचित्किञ्चिद्यदि तर्हि स पृच्छतु ॥ ३ ॥ गोपलानन्दसाधुस्तं पप्रच्छाथ कृतानतिः । धर्मज्ञानविरागाढ्यभक्तेः किं बलवर्द्धनम् ॥४॥ तं स्वाम्युवाच सद्देशकालसङ्गाश्च सत्क्रिया । एतच्चतुष्टयं तस्या वृद्धि-कृज्ज्ञेयमञ्जसा ॥ ५ ॥ असद्यद्देशकालादिचतुष्कं तन्मुमुक्षताम् । तस्याः शातनकृज्ज्ञेयं साङ्गाया अपि निश्चितम् ॥ ६ ॥ सद-सद्देशकालादिलक्षणानि तु शास्त्रतः । ज्ञातानि सन्ति भवता प्रश्नस्येत्युत्तरं तव ॥ ७ ॥ मुक्तानन्दोऽथ पप्रच्छ तं प्रणम्य विवे-कवान् । प्रभो ! पृच्छाम्यहं किञ्चिच्छ्रुत्वा कुरु तदुत्तरम् ॥८॥ कस्यचित्तव भक्तस्य पूर्वं कलुषमन्तरम् । भवत्यथाग्रे विमलं जायते साधुसंमतम् ॥ ९ ॥ तत्र किं पूर्वसंस्कारो हेतुः किं वास्ति ते कृपा । पौरुषं वास्ति किं तस्य वक्तुमेतत्त्वमर्हसि ॥ १० ॥

सदिति । हे साधो ! । सदसद्देशकालादिलक्षणानि तु । भवता । शास्त्रतोऽस्मत्सम्प्रदायग्रन्थतः । ज्ञातानि पठनपाठनादिना सम्यगवगतानि । सन्ति । इत्यमुना प्रकारेण । तव । प्रश्नस्य । उत्तरम् । भवति । तानि च सत्सङ्गिजीवनग्रन्थस्थधर्मसिद्धयध्यायाच्छुकानन्दमुनिकृतबुद्धिकृत—बुद्धिप्रदीपाख्यग्रन्थाद्वा सविस्तरं ज्ञातव्यानि ॥ ७ ॥ मुक्तानन्द इति । अथानन्तरम् । विवेकवान् सदसद्वयक्तिविभावनाचतुरः । मुक्तानन्दो मुनिः । तं श्रीहरिम् । प्रणम्य विनयेन नत्वा । पप्रच्छ । हे प्रभो ! । अहम् । किञ्चित् । पृच्छामि । श्रुत्वा तदाकर्ण्य । तदुत्तरम् । कुरु ॥ ८ ॥ कस्यचिदि । कस्यचित् । तव भक्तस्य । अन्तरमन्तःकरणम् । पूर्वं प्रथमतस्तु कलुषं लोभादिदोषाविलम् । भवति । अथानन्तरम् । अग्रे पश्चात् । विमलं लोभादिदोषरहिततया स्वच्छम् । अत एव । साधुसम्मतम् । जायते ॥९॥ तत्रेति । तत्र पूर्वाशुद्धान्तःकरणस्य पश्चाच्छुद्धता भवने । हेतुः कारणम् । पूर्वसंस्कारः । अस्ति । किम् । अथवा । ते तव । कृपा । हेतुः । अस्ति । किम् । अथवा । तस्य तव भक्तस्य । पौरुषं पुरुषकारः । हेतुः । अस्ति । किम् । एतम् । त्वम् । वक्तुम् । अर्हसि । इति द्वयोरेकसम्बन्धः ॥ १० ॥

तमिति । स्वामी श्रीहरिः । तं मुक्तानन्दमुनिं प्रति । उवाच । हे मुने ! । क्वचित्कस्यचिद्धरिभक्तस्यैवंविधान्तःकरणभावे । संस्कार एव । कारणम् । अस्ति । क्वचित् । हरेः । कृपा । कारणम् । अस्ति । क्वापि । पौरुषम् । कारणम् । अस्ति । इतीत्थम् । गम्यतां बुध्यताम् ॥ ११ ॥ एवं समासतस्तदुत्तरमुक्त्वा तल्लक्षणोक्तिपूर्वकं विस्तरेण तदाह दशभिः । प्रागिति । हे मुने ! । स्वेन । प्राग्जन्मोपार्जितम् । एतद्देहनिबन्धनमस्य देहस्योद्भवहेतुः । प्रारब्धं प्रारब्धसंज्ञम् । कर्म । संस्कारशब्देन । विवक्षितं वक्तुमिष्टं भवति ॥ १२ ॥ तदिति । तत्कारणं स संस्कारः कारणं यस्य तत्तथाभूतम् । यत् । फलम् । तत् । लोकेषु । विश्रुतं विख्यातमेव । अस्ति । यथा । आर्षभस्य ऋषभदेवपुत्रस्य । भरतस्य । मृगार्भासक्त्यादि, हरिणबालासङ्गप्रभृतिकम् । ह श्रीभागवतादौ स्फुटम् । तथा च तत्पञ्चमस्कन्धे । 'मृगदारकाभासेन स्वारब्धकर्मणा योगारम्भणतो विभ्रंशित' इत्यादि ॥ १३ ॥ यथेति । यथा वा । घोरेऽजगरव्याघ्रवनमहिषशूकरादिनिवासेन भीमे । वने कान्तारे । पर्यटतो देहानादरपूर्वं विचरतः । मम । अयम् । देहः । सङ्गतैः प्राप्तैरपि । शतशः । मृत्युकारणैः । नापतत् । अत्र हरेर्नृनाट्यानुकरणादेवमुक्तिः । यद्वा । सत्यसङ्कल्पस्य स्वस्यैतद्देह-

तं स्वाम्युवाच संस्कारः क्वचिदस्त्येव कारणम् । क्वचित्कृपा हरेः क्वापि पौरुषं चेति गम्यताम् ॥ ११ ॥
प्राग्जन्मोपार्जितं स्वेन चैतद्देहनिबन्धनम् । प्रारब्धकर्म संस्कारशब्देनात्र विवक्षितम् ॥ १२ ॥
तत्कारणं फलं यत्तल्लोकेष्वस्त्येव विश्रुतम् । यथा मृगार्भासक्त्यादि भरतस्यार्षभस्य ह ॥ १३ ॥
यथा वा मम देहोऽयं घोरे पर्यटतो वने । नापतच्छतशो मृत्युकारणैरपि सङ्गतैः ॥ १४ ॥
यथा वाऽतिदरिद्रस्य स्यादकस्माद्धनागमः । तथाऽकस्मात्सन्मतिः स्यादसद्बुद्धेर्नरस्य चेत् ॥ १५ ॥
तदा तु तत्र विज्ञेयं प्रारब्धं कर्मकारणम् । तद्धि लोके प्रसिद्धं स्यात्सर्वेषामपि चित्रकृत् ॥ १६ ॥
कृपयाऽथ हरेर्यत्स्यात्तत्राऽऽरब्धं न कारणम् । यथा सान्दीपनेः पुत्रो विमुक्तो नरकादिति ॥ १७ ॥

निबन्धनहेतुः स्वेच्छैव संस्कारशब्देन विवक्षितेति ज्ञेयम् ॥ १४ ॥ यथेति । यथा वा । अतिदरिद्रस्य पुरुषस्य । अकस्मादकाण्डत एव । धनागमो धनप्राप्तिः । स्यात् । तथा । चेद्यदि । असद्बुद्धेरसच्छब्दवाच्यलोभादिदोषाविष्टमतेः । नरस्य । अकस्मात् । सन्मतिः सच्छब्दवाच्यनिर्लोभादिगुणयुक्ता बुद्धिः स्यात् । तदेत्युत्तरेणान्वयः ॥ १५ ॥ तदेति । तदा तर्हि तु । तत्र सन्मतौ । प्रारब्धम् । कर्म । कारणम् । विज्ञेयम् । तत्सद्बुद्धिकारणम् । लोके । सर्वेषामपि जनानाम् । चित्रकृदाश्चर्यकारि । प्रसिद्धम् । स्यात् । हि निश्चितम् ॥ १६ ॥ कृपयेति । अथ किञ्च । हरेः । कृपया । यत् । स्यात् । तत्र । आरब्धं प्रारब्धकर्म । कारणम् । न भवति । यथा । सान्दीपनेः श्रीकृष्णगुरोः सान्दीपनिद्विजस्य । पुत्रः । नरकान्निजकर्मनिबन्धनसम्प्राप्तान्निरयात् । विमुक्तः । इत्येषा हरेः कृपा । तथा च श्रीमद्भागवते धर्मराजं प्रति श्रीकृष्णवाक्यम् । 'गुरुपुत्रमिहानीतं निजकर्मनिबन्धनम् । आनयस्व महाराज ! मच्छासनपुरस्कृत इति' ॥ १७ ॥

यथेति । यथा वा । पञ्चवर्षवयसः । ध्रुवस्यौत्तानपादेः । हरेः । स्तवने निमित्ते । वेदाद्यर्थस्य । स्फुरणम् । सहसा अकस्मादेव अञ्जसा तत्त्वतः । जातम् । तथा चोक्तं श्रीभागवते । सतं विवक्षं तमतद्विदं हरिर्ज्ञात्वाऽस्य सर्वस्य च हृद्यवस्थितः । कृताञ्जलिं ब्रह्ममयेनकं बुद्ध्या पस्पर्श बालं कृपया कपोले इत्यादि ॥१८॥ तथेति तथा तेन प्रकारेण । अतिशुद्धभावेन । सम्प्रीतस्य । हरेः । इच्छया । अथवा । तस्य श्रीहरेः । वरदानेन । अथवा । महात्मनां महानुभावानाम् । तत्सतामतिशुद्धभावेन सम्प्रीतानां श्रीहरेरेकान्तिकसाधूनाम् । कृपया । वरदानेन वा ॥ १९ ॥ सद्बुद्धिरिति । यस्य भक्तस्य । बुद्धिः । उदियादुत्पन्ना भवेत् । तत्र । हरेः । कृपा । ज्ञेया । अस्यार्द्धस्य पूर्वश्लोकेन सहैकान्वयः । पौरुषेण भक्तस्य पुरुषकारेण । या सद्बुद्धिप्राप्तिः । सा तु । सर्वतः सर्वेष्वपि भक्तजनेषु । अस्ति जायते ॥ २० ॥ एतदेव स्पष्टमाह । कृत्वेति । यो भक्तः । सतां श्रीहरेरेकान्तिकसाधूनाम् । सङ्गं तद्वचोऽवधारणादिरूपं प्रसङ्गम् । कृत्वा । तेभ्यः सद्भ्यः । आप्तेन समधिगतेन । ज्ञानेन । निजां स्वकीयाम् । कुमतिम् । जहाति त्यजति । तत्र । तस्य भक्तस्य । पौरुषम् । विज्ञेयम् ॥ २१ ॥ संस्कारेति । इत्थममुना प्रकारेण । नृणां भक्तजनानाम् । अन्त-

यथा वा पञ्चवर्षस्य ध्रुवस्य स्तवने हरेः । वेदाद्यर्थस्य सहसा जातं स्फुरणमञ्जसा ॥ १८ ॥
तथाऽतिशुद्धभावेनसम्प्रीतस्येच्छया हरेः । वरदानेन वा तस्य तत्सतां वा महात्मनाम् ॥ १९ ॥
सद्बुद्धिरुदियाद्यस्य तत्र ज्ञेया हरेः कृपा । या पौरुषेण सद्बुद्धिप्राप्तिः सा त्वस्ति सर्वतः ॥ २० ॥
कृत्वा सङ्गं सतां तेभ्यो ज्ञानेनाऽऽप्तेन यो निजाम् । जहाति कुमतिं तत्र विज्ञेयं तस्य पौरुषम् ॥ २१ ॥
संस्कारादित्रयस्येत्थं निर्मलीकरणे नृणाम् । अन्तरस्य स्वतन्त्रत्वं भवतीत्यवधार्यताम् ॥२२॥ पीत्वेति वाक्या-
मृतमीश्वरस्य तुष्टः स तं साधुवरो ननाम । सन्तो गृहस्थाश्च तथेतरेऽपि तमानमन्ति स्म मुदं प्रपन्नाः ॥२३॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते त्रयोविंशस्तरङ्गः ॥२९॥

रस्यान्तःकरणस्य । निर्मलीकरणे । संस्कारादित्रयस्य । स्वतन्त्रत्वं स्वस्वविषये स्वातन्त्र्यम् । भवति । इतीत्थम् । अवधार्यतां तव प्रश्नोत्तरं बुध्यताम् । एवं मुक्ता-नन्दमुनिप्रश्नोत्तरं विधाय जयसच्चिदानन्देत्युक्त्वा मन्दं मन्दं हसन् श्रीहरिः स्वावासभवनं जगामेत्यनुक्तमपि ज्ञेयम् ॥ २२ ॥ पीत्वेति । इतीत्थंभूतम् । ईश्वरस्येश्वरेश्वरस्य श्रीहरेः । वाक्यामृतं वचनामृतम् । पीत्वा । तुष्टः । साधुवरः सतां श्रेष्ठः । स मुक्तानन्दमुनिः । तं स्वावासं व्रजन्तं श्रीहरिम् । ननाम । तथा । इतरे समीपविष्टा-स्तदन्ये । सन्तः साधवः । गृहस्थाश्च । मुदमत्यानन्दम् । प्रपन्नाः सन्तः । तं तथाभूतं श्रीहरिम् । नमन्ति स्म ॥ २३ ॥ स्वभक्तानां स्वभक्तेस्तुसाङ्गाया बलवृद्धिकृत् । तस्याः शातनकृच्च संस्कारादित्रयं तथा ॥ १ ॥ अतःकरणशुद्धित्वे हेतुत्वेनास्ति यच्च तत् । येनोक्तं स हरिर्मेऽस्तु भक्तिधर्मसुतो हृदि ॥ २ ॥ इति श्रीमदेकान्तिक-धर्मप्रवर्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्सूनुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायामेकोनत्रिंशस्तरङ्गः ॥ २९ ॥

यैस्तु मानससङ्कल्पैर्वासना वध्यते दृढा । उपायस्तन्निवृत्तेर्यस्त्विशके तन्निरूपणम् ॥ १ ॥ शकेति पूर्वार्द्धे व्याख्यातम् । (१८७६) पौषकृष्णप्रतिपदि पौषमासस्य कृष्णपक्षाद्यतिथौ । इदम् । हरेः । वचोऽमृतम् । बभूव ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमभूभुजः । दुर्गे । वासुदेवालयाभ्याशवितर्द्यां श्रीवासुदेवमन्दिरान्तिकवर्त्त्युत्तरास्यभवनवाह्यवेदिकायाम् । स श्रीहरिः । सायं सायंतनभगवन्नीराजनान्ते । उपाविशत्स्वास्तृते मञ्चोत्तमे स्वावासादागत्योपविवेश ॥ २ ॥ शुक्लेति । शुक्लवासाः परिधृतशुक्लाधोंशुक–प्रावारशिरोवेष्टनीयवसनः । स्रजो हाराश्च आपीडाः शेखराश्च अवतंसकाः कर्णपुराश्च शुक्लपुष्पाणां धवलपुष्पाणां स्रगादयो यस्य तथाभूतः । सितपुष्पाणामङ्गदे केयूरे यस्य सः । त्यागिनो नानादेशागताः साधवश्च गृहिणस्तथाविधा गृहस्थजनाश्च तेषां सङ्घाः समूहास्तैः । परिश्रितो महासदसि परिवेष्टितः ॥ ३ ॥ शृण्वन्निति । साधुभिः । गीयमानानि । श्रीकृष्णपद्यानि । शृण्वन् । स श्रीहरिः । यूयम् । माम् । किञ्चित् । पृच्छत । इतीत्थम् । स्वाग्रथान् स्वपुरःप्रदेशनिषण्णान् । भक्तान् । उवाच । इति द्वयोरेकसम्बन्धः ॥ ४ ॥ दीनानाथेति । अथानन्तरम् । जीनानाथाभिधः । विप्रः । आमोदपुरनिवास्येतन्नामा ब्राह्मणश्रेष्ठ इत्यर्थः । आनतः

शकाब्दे विक्रमार्कस्य रसाश्ववसुभूमिते । पौषकृष्णप्रतिपदि वचोऽमृतमिदं हरेः ॥ १ ॥ तत्र दुर्गपुरे सायं दुर्ग उत्तमभूभुजः । वासुदेवालयाभ्याशवितर्द्यां स उपाविशत् ॥ २ ॥ शुक्लवासाः शुक्लपुष्पस्रगापीडावतंसकः । सितपुष्पाङ्गदस्त्यागिगृहिसङ्घैः परिश्रितः ॥ ३ ॥ शृण्वन् श्रीकृष्णपद्यानि गीयमानानि साधुभिः । भक्तानुवाच स्वाग्रस्थान् किञ्चिन्मां पृच्छतेति सः ॥ ४ ॥ दीनानाथाभिधो विप्रस्तमथापृच्छदानतः । सङ्कल्पा मनसि स्वामिन् ! जायन्ते शतशः क्वचित् ॥ ५ ॥ तथापि तेषां हृदये वासना नानुभूयते । कर्हिचित्तु प्रभो ! द्वित्राः सङ्कल्पाः प्रभवन्ति च ॥ ६ ॥ अथापि वासना तेषां मुहुर्हृद्यनुभूयते । अत्र यत्कारणं तन्मे वक्तुमर्हसि सर्ववित् ॥ ७ ॥ भक्तस्य तव कृष्णस्य सङ्कल्पानां मनोभुवाम् । केनोपायेन च भवेन्निवृत्तिस्तं च मे वद ॥ ८ ॥

कृतप्रणामः सन् । तं श्रीहरिम् । अपृच्छत् । हे स्वामिन् ! । क्वचित्समये । मनसि त्वद्भक्तमानसे । शतशः । सङ्कल्पाः मायिकानेकविधविषयोपभोगार्जनादिसङ्कल्पनानि । जायन्ते ॥ ५ ॥ तथेति । तथा । तेषां सङ्कल्पानाम् । हृदये त्वद्भक्तमानसे । वासना भावनासंस्कार इति यावत् । नानुभूयते अनुभवगोचरो न भवति । हे प्रभो ! कर्हिचित्तु । द्वित्रा द्वौ वा त्रयो वा । सङ्कल्पाः प्रभवन्त्युत्पद्यन्ते ॥ ६ ॥ अथेति । अथापि । तेषां द्वित्रसङ्कल्पानाम् । हृदि त्वद्भक्तमनसि । वासना । मुहुः पुनः पुनः । अनुभूयते । अत्रास्मिन्नुभयविधार्थे । यत् । कारणं वासनानुभवनानुभवयोर्हेतुः । भवेत् । तत्कारणम् । सर्ववित्सर्वज्ञः । त्वम् । मे मह्यम् । वक्तुम् । अर्हसि ॥ ७ ॥ अथ प्रश्नान्तरमाह । भक्तस्येति । हे हरे ! । कृष्णस्य साक्षात्पुरुषोत्तमस्य । तव । भक्तस्य । मनोभुवां सर्वदा मनस्युत्पद्यमानानाम् । सङ्कल्पानाम् । निवृत्तिः । केन । उपायेन । भवेत् । तमुपायं चापि । मे मह्यम् । वद त्वं ब्रूहि ॥ ८ ॥

स्वामीति । स्वामी एवं दीनानाथद्विजानुयुक्तः श्रीहरिः । उवाच । हे द्विज ! । अत्र तत्र प्रथमप्रश्ने । हेतुर्वासनानुभवानानुभवकारणं । तु तम आदिगुणत्रयम् । अस्ति । इतीत्थम् । जानीहि । तद्विवेकं तस्य तमआदिगुणत्रयस्य विवेचनाम् । ते तुभ्यम् । वदामि ॥ ९ ॥ सर्वदेति । गुणयोगेन सङ्कल्पात्मकस्य मनसः सत्त्वादिगुणसम्बन्धेन । स्वप्ने स्वप्नावस्थायाम् । जाग्रति जाग्रदवस्थायां च सर्वदा सर्वकालम् । आत्मनि मनसि । असङ्ख्याताः । सङ्कल्पाः । उत्पद्यन्ते । वियन्ति विलीयन्ते च । हि ॥ १० ॥ मनस इति । यद्यस्माद्धेतोः । मनसः । लक्ष्म लक्षणम् । सङ्कल्पात्मकं सदा सङ्कल्पोद्भवस्वरूपम् । अस्ति । इतीत्थमेव । स्मृतमत्रैव कथितम् । तथा च द्वादशे तरङ्गे । 'मनस्तु कामनाहेतुः सर्वेन्द्रियनियन्तृ च । दुर्निग्रहं च सङ्कल्पविकल्पात्मकमुच्यते' इति । तस्माद्धेतोः । अत्र मनसि । अखण्डतैलधारावदविच्छिन्नं यथातथैव । सङ्कल्पोत्पत्तिः । अस्ति । हि निश्चितम् ॥ ११ ॥ ज्ञायन्त इति । तत्र तेषु सङ्कल्पेषु मध्ये । स्थूला एव । कतिचिद्द्वित्राः पञ्चषा वा सङ्कल्पाः । भवादृशैः । धीमद्भिः प्रशस्तबुद्धिभिर्विद्वद्भिरेव । ज्ञायन्ते सूक्ष्माः सङ्कल्पास्तु । विदुषां पण्डितानामपि । दुर्ज्ञेयाः ॥ १२ ॥ एवं गुणसम्बन्धेनासङ्ख्यातमनःसङ्कल्पोद्भवलयौ तेषां

स्वाम्युवाचात्र हेतुस्तु तमआदिगुणत्रयम् । अस्तीति द्विज ! जानीहि तद्विवेकं वदामि ते ॥ ९ ॥ सर्वदा गुणयोगेन स्वप्ने जाग्रति चात्मनि । असङ्ख्याता हि सङ्कल्पा उत्पद्यन्ति वियन्ति च ॥ १० ॥ मनसो लक्ष्म सङ्कल्पात्मकमित्येव यत्स्मृतम् । तस्मादखण्डमेवात्र सङ्कल्पोत्पत्तिरस्ति हि ॥ ११ ॥ ज्ञायन्ते तत्र कतिचित् स्थूला एव भवादृशैः । धीमद्भिरेव सूक्ष्मास्तु दुर्ज्ञेया विदुषामपि ॥ १२ ॥ तमोरजः सत्त्वमिति गुणाः सन्त्येव देहिनाम् । परस्परं ते च मिश्रा वर्त्तन्ते मतिसङ्गताः ॥१३॥ एकैकस्तत्र मिश्रोऽपि प्राधान्येनावतिष्ठते । तस्यानुरूपाः सङ्कल्पा उद्भवन्ति निजान्तरे ॥१४॥ तमसस्तत्र मुख्यत्वे जाड्यस्याधिकता भवेत् । नानुसन्धिर्भवेत्तत्र सङ्कल्पानां तु तद्भवाम् ॥१५॥ ततो नैकतमस्यापि सङ्कल्पस्य पुनः स्मृतिः । सुषुप्ताविव जायेत पुंसां सूक्ष्मधियामपि ॥१६॥

सर्वदुर्ज्ञेयत्वं चोक्त्वा सम्प्रति गुणविवेकेन प्रश्नोत्तरमाह षड्भिः । तम इति । तमः । रजः । सत्त्वम् । इत्येते । गुणाः । देहिनां प्राणिमात्राणां सम्बन्धिन एव । सन्ति । मतिसङ्गताः । बुद्ध्या सह मिलिताः । ते तम आदयो गुणाः । परस्परम् । मिश्रा एकैकस्मिन्सम्पृक्ताः वर्त्तन्ते ॥१३॥ एकेति । तत्र मनसि । मिश्रो विशेषतः परस्परं मिश्रीभावं प्राप्तोऽपि । एकैकः गुणः । प्राधान्येन मुख्यभावेन । अवतिष्ठते । तस्य मुख्यभावं प्राप्तस्य गुणस्य । अनुरूपा अनुसारिणः । सङ्कल्पाः । निजान्तरे स्वमनसि । उद्भवन्ति ॥१४॥ तमस इति । तत्र तेषु तम आदिगुणेषु मध्ये तमसस्तमोगुणस्य । मुख्यत्वे सति । जाड्यस्य जडतायाः । अधिकता । भवेत् । तत्र तस्मिन् काले । तद्भुवां तमोगुणप्रधानमनःप्रभवानाम् । सङ्कल्पानाम् । अनुसन्धिः पुनःपुनरनुसन्धानम् । न भवेत् ॥ १५ ॥ तत इति । ततो हेतोः । एकतमस्यानेकसङ्कल्पानां मध्ये एकस्यापि । सङ्कल्पस्य । पुनः स्मृतिर्भूयोऽनुस्मरणम् । सूक्ष्मधियां कुशाग्रमतीनामपि विदुषाम् । पुंसाम् । सुषुप्तौ सुषुप्त्यवस्थायामिव । न जायेत । ततो मनसि तेषां स्फूर्त्तिरूपः संस्कारो न जायेतेत्युत्तरश्लोकानुरोधाच्छेषो बोध्यः ॥ १६ ॥

सत्त्वस्येति । सत्त्वस्य सत्त्वगुणस्य । मुख्यत्वे । सति । मनसि सत्त्वगुणे मुख्यतया वर्त्तमाने सतीत्यर्थः । ये । सङ्कल्पाः । भवन्ति । ते सङ्कल्पाः । विचारेण भगवदेकान्तिकसाधुसम्प्राप्तविवेकबलेन । अपनोद्यन्ते भगवद्भक्तेनोत्साधन्ते । ततो हेतोः । तेषां सङ्कल्पानां संस्कारो वासना । न वै भक्तमनसि नैव भवति ॥ १७ ॥ प्राधान्य इति । हे विप्र ! । रजसो रजोगुणस्य । प्राधान्ये मनसि मुख्यत्वे सति तु । ये सङ्कल्पाः । सम्भवमुत्पत्तिम् । यान्ति प्राप्नुवन्ति । तेषां तु । वासना संस्कारः । नृणाम् । अन्तरे मनसि । जायते । हि ॥ १८ ॥ गुणानामिति । एवममुना प्रकारेण । तत्संस्काराभावभावयोस्तेषां सङ्कल्पानां संस्कारस्यासत्त्वयोर्विषये । गुणानां सत्त्वादीनाम् । हेतुता कारणत्वम् । ज्ञातव्या अथानन्तरम् । तेषां सङ्कल्पानाम् । निवर्त्तने । उपायम् । ते तुभ्यम् । वच्मि वदामि ॥ १९ ॥ मन इति । यदा यर्हि । मनः । भगवति । लीनं प्रेम्णाऽत्यासक्तम् । स्यात् । तर्हि । हरीतरे भगवद्व्यतिरिक्ताः । सर्वशः । सङ्कल्पाः । विलयम् । यान्ति । नोत्पद्यन्ते पुनरुत्पन्ना न भवन्ति ॥२०॥ मन इति । हरौ । मनोलयस्तु । साङ्गायाः स्वधर्माद्यङ्गत्रयसहितायाः । भक्तेः । दार्ढ्यात् । भवेत् । तत्साङ्गभक्तिदार्ढ्यम् । एकान्तिकभक्तानाम् । निष्कै-

सत्त्वस्य सति मुख्यत्वे सङ्कल्पा ये भवन्ति ते । विचारेणापनोद्यन्ते तत्संस्कारस्ततो न वै ॥ १७ ॥ प्राधान्ये रजसो ये तु सङ्कल्पा यान्ति सम्भवम् । तेषां तु जायते विप्र ! वासना ह्यन्तरे नृणाम् ॥ १८ ॥ गुणानां हेतुतैवं तत्संस्काराभाव-भावयोः ज्ञातव्या चाथ तेषां ते वच्म्युपायं निवर्त्तने ॥ १९ ॥ मनो यदा भगवति लीनं स्यात्तर्हि सर्वशः । सङ्कल्पा विलयं यान्ति नोत्पद्यन्ते हरीतरे ॥ २० ॥ मनोलयस्तु साङ्गाया भक्तेर्दार्ढ्याद्धरौ भवेत् । तच्चैकान्तिकभक्तानां स्यान्निष्कैतव-सेवया ॥ २१ ॥ तस्मात्सङ्कल्पनाशेच्छुः कुर्यात्तामेव नित्यदा । नैवेदृशं नृणामन्यत्साधनं किञ्चिदस्ति हि ॥ २२ ॥ सत्सङ्गभूरिप्रथितप्रतापात्सङ्कल्पनाशोऽत्र भवेन्मुमुक्षोः । इति प्रभोर्वागमृतं स पीत्वा द्विजस्तुतोषाप्यपरे च सभ्याः ॥ २३ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते त्रिंशस्तरङ्गः ॥ ३० ॥

तवसेवया निष्कपटसेवनेन । स्यात् ॥२१॥ तस्मादिति । तस्माद्धेतोः । सङ्कल्पनाशेच्छुः स्वमनः सङ्कल्पविनाशनेच्छावान् भक्तः । नित्यदा । तामेकान्तिकभगवद्भक्तानां निष्कैतवसेवामेव । कुर्यात् । हि यतः । नृणाम् । ईदृशमेकान्तिकभगवद्भक्तनिष्कपटसेवासमानम् । अन्यत् । किञ्चिदपि । साधनम् । नैव । अस्ति ॥ २२ ॥ सदिति । अत्र लोके । सतां भगवदेकान्तिकभक्तानां साधूनां यः सङ्गः सेवनादिलक्षणः प्रसङ्गस्तस्य भूरिः प्रचुरः प्रथितो विख्यातश्च यः प्रतापः प्रभावस्तस्मात् । मुमुक्षोः । सङ्कल्पनाशो भगवदेकान्तिकभक्तिदार्ढ्यद्वारा संस्कारहेतुमनः सङ्कल्पविनाशः । भवेत् । इत्येवंविधम् । प्रभोः श्रीहरेः । वागमृतम् । पीत्वा । सः । द्विजो दीनानाथविप्रः । तुतोषात्यन्तं हृष्टोऽभूत् । अन्ये तदितरे । सभ्याः सभोपविष्टास्त्यागिनो गृहिणश्च हरिभक्ताश्च । तुतुषुः ॥ २३ ॥ हृदि सङ्कल्पसंस्कारभावाभावत्वयोस्तु यत् । स्वभक्तानां कारणं तन्निवृत्तेः साधनं च यत् ॥ १ ॥ तत्तेभ्यः कृपया प्राह यो विविच्यैव तत्त्वतः । दद्यादेकान्तिकीं भक्तिं स हरिर्मे निजां सदा ॥ २ ॥ इति श्रीमदेकान्तिकधर्म-प्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्सूनुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां त्रिंशस्तरङ्गः ॥ ३० ॥

वाचाप्यपीडकोऽन्येषां निवृत्तिपर एककः । कृष्णतद्भक्तसेव्यन्यस्तयोः श्रेष्ठस्तु यः पुमान् ॥ १ ॥ दोषदर्श्यसुरः कृष्णतद्भक्तानां गुणेषु यः । महत्त्वसूचकं कृष्णभक्तानां लक्षणं च यत् ॥ २ ॥ एतत्सर्वं विविच्यैव हरिणोक्तं यथार्थतः । एकत्रिंशे तरङ्गे तु प्रश्नोत्तरमुखेन वै ॥ ३ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८७६) पौषकृष्णद्वितीयां तिथौ । दुर्गपुरे । उत्तमस्य । भूपतेः । दुर्गे । प्रागास्यस्वावासस्य पूर्वदिगभिमुखद्वारस्य स्वनिवासभवनस्य । वेद्याम् । सितांशुकः परिधृत-श्वेतपरिधानीयादिसकलवसनः । स श्रीहरिः । न्यषीदत्सायमुपविवेश ॥ २ ॥ चार्विति । चारुपीठोपविष्टं श्वेतसूक्ष्मोत्तरच्छदयुते सपार्श्विकोपबर्हे स्थूलतूलिकारूपे आसने निविष्टम् । त्यागिगृहिगणावृतं नानादेशागतत्यागिगृहिस्वभक्तवृन्दपरिवेष्टितम् । तं श्रीहरिम् । नत्वा । तद्गुणगायकः श्रीहरेर्नानाविधसंस्कृतभाषापद्यविरचनैर्गुणानां गानकर्त्ता । योगानन्द एतन्नामा पण्डितो मुनिः । इदं वक्ष्यमाणम् । पप्रच्छ ॥ ३ ॥ साक्षादिति । हे हरे ! । इह सत्सङ्गे । कौचन । साक्षादीशस्य प्रत्यक्षपरमेश्वरस्य । ते तव । भक्तौ । भवेताम् । तत्र तयोर्द्वयोर्मध्ये । एकक एकस्तु । वाचापि वचनेनापि । अपीडकोऽन्येषामव्यथकः । निवृत्तिपरोऽहिंसोपशमादिनिवृत्तिमार्गतत्परश्च । भवेत् ॥ ४ ॥ एक

शकाब्दे विक्रमार्कस्य रसाश्ववसुभूमिते । पौषकृष्णद्वितीयायां वचोऽमृतमिदं हरेः ॥ १ ॥ तत्र दुर्गपुरे दुर्गे भूपतेरुत्तमस्य सः । वेद्यां न्यषीदत्प्रागास्यस्वावासस्य सितांशुकः ॥ २ ॥ चारुपीठोपविष्टं तं त्यागिगृहिगणा-वृतम् । योगानन्दः पप्रच्छेदं नत्वा तद्गुणगायकः ॥ ३ ॥ साक्षादीशस्य ते भक्तौ भवेतामिह कौचन । वाचाऽप्यपीडकस्तत्र निवृत्तिपर एककः ॥ ४ ॥ एकस्ते तव भक्तानां सेवनेऽन्नांशुकादिभिः । प्रवृत्तः किन्तु वाचाऽन्यं पीडयेदपि तत्कृते ॥ ५ ॥ एतयोरुभयोर्मध्ये कतरः श्रेष्ठ उच्यताम् । तेनेति पृष्टः सद्द्वारा सोऽचिकीर्षत्तदुत्तरम् ॥ ६ ॥ तेन श्रावितत्प्रश्न उत्तरार्थं च चोदितः । मुक्तानन्दः सह ब्रह्मानन्देनाह तदुत्तरम् ॥ ७ ॥ अत्रेतरः श्रेष्ठ इति प्रतिभात्यावयोर्यतः । दास्येन भजतस्तस्य भक्तिरस्त्यधिका हरेः ॥ ८ ॥

इति । एकोऽन्यस्तु । 'एके मुख्यान्यकेवला' इत्यमरः । अन्नांशुकादिभिः । ते साक्षात्पुरुषोत्तमस्य भवतः । तव । भक्तानां च । सेवने । प्रवृत्तः । भवति । किन्तु । तत्कृते तव त्वरसतां च सेवनार्थम् । अन्यं यं कमपीतरं भवद्भक्तम् । वाचाऽपि वाण्या । तु । पीडयेत् ॥ ५ ॥ एतयोरिति । एतयोः । उभयोः । मध्ये । श्रेष्ठः । कतरः को भवति । उच्यतां स त्वया कथ्यताम् । इतीत्थम् । तेन योगानन्दमुनिना । पृष्टः । स श्रीहरिः । तदुत्तरं योगानन्दमुनिप्रश्नप्रतिवचनम् । सद्द्वारा समीपविष्टमुक्ता-नन्दादिसाधुद्वारेण । अचिकीर्षत् कर्त्तुमैच्छत् ॥ ६ ॥ तेनेति । तेन श्रीहरिणा । श्रावितः श्रवणं कारितस्तत्प्रश्नो योगानन्दमुन्ययोगोऽयं सः । उत्तरार्थं तदुत्तरं विधातुं च । चोदितः प्रेरितः । मुक्तानन्दो मुनिः । ब्रह्मानन्देन सह । उभौ मिलित्वेत्यर्थः । तदुत्तरम् । आह ॥ ७ ॥ अत्रेति । हे हरे ! । अत्रानयोर्द्वयोर्मध्ये । इतरो द्वितीयः । श्रेष्ठः । इतीत्थम् । आवयोर्ब्रह्मानन्दमुनेर्मम चेत्यर्थः । प्रतिभाति । यतोः । दास्येन । भजतः । तस्य द्वितीयभक्तस्य । हरेस्तव । भक्तिः । अधिका । अस्ति ॥ ८ ॥

भक्तीति । यस्य द्वितीयभक्तस्य । भक्तिः अन्नवस्त्रादिभिर्हरेस्तव त्वत्सतां च परिचर्या तस्या आधिक्यमधिकता तेन बलम् । भवेत् । सः । बुधैर्विवेकिभिर्भक्तैः । समर्थः । मतः । कृष्णतद्भक्तसेवया साक्षात्कृष्णस्य तव त्वत्भक्तानां च परिचर्यया । हीनो रहितः । यः । अन्यः प्रथमो भक्तः । स तु । दुर्बलोऽसमर्थः मतः ॥९॥ इतीति । इतीत्थंभूतम् । तयोर्मुक्तानन्दब्रह्मानन्दमुन्योः । वाक्यम् । श्रुत्वा । स्वयम् । श्रीहरिः । अब्रवीद्योगानन्दमुनिं प्रति जगाद । हे मुने ! । आभ्याम् । साधुभ्याम् । प्रश्नोत्तरं त्वत्प्रश्नप्रतिवचनम् । यथावदेव याथार्थ्येनैव । कृतम् ॥ १० ॥ एवं तत्कृतं प्रश्नोत्तरं स्वीकृत्य तत्र न्यूनमर्थं स्वयमुक्त्वा तदेव विशदयति दशभिः । सदिति । हे मुने ! । यो भक्तः । सत्सेवने श्रीकृष्णतद्भक्तपरिचर्यायाम् । प्रवृत्तः । कृष्णाज्ञा साक्षाच्छ्रीकृष्णोपदिष्टरीत्या स्वधर्मेऽवस्थानरूपो निदेशस्तस्यां दृढा संस्थितिर्यस्य स तथा भूतश्च । भवेत् । तस्मिन् । भक्ते । यदि यर्हि । कश्चित् । दोषः केषाश्चित्तत्सेवायां प्रेरणनिमित्तकं स्वाभाविकवाक्पारुष्यादिरूपं दूषणम् । स्यात् । स दोषः । सताम् । न ग्राह्यः । भगवद्भक्तैः साधुभिस्तस्य स दोषो न मन्तव्य इत्यर्थः ॥ ११ ॥ तादृशेष्विति । यो भक्तः । तादृशेष्वपि भगवत्तद्भक्तसेवानिरतेषु स्वधर्मनिष्ठेषु चापी-

भक्त्याधिक्यबलं यस्य स समर्थो मतो बुधैः । दुर्बलोऽन्यस्तु यो हीनः कृष्णतद्भक्तसेवया ॥ ९ ॥
इति श्रुत्वा तयोर्वाक्यं श्रीहरिः स्वयमब्रवीत् । यथावदेव साधुभ्यामाभ्यां प्रश्नोत्तरं कृतम् ॥ १० ॥
सत्सेवने प्रवृत्तश्च कृष्णाज्ञादृढसंस्थितिः । यस्तस्मिन् यदि कश्चित्स्याद्दोषो ग्राह्यः सतां न सः ॥ ११ ॥
तादृशेष्वपि भक्तेषु दोषं गृह्णाति यः स तु । कृष्णेऽपि दोषं गृह्णीयान्नृनाट्यमनुकुर्वति ॥ १२ ॥
कल्याणहेतो जींवानामाविर्भावं निजेच्छया । जातं विष्णोः स च ब्रूयात्स्वदृष्टान्तेन कर्मजम् ॥ १३ ॥
तच्चरित्रेषु दिव्येषु श्रुतिमात्राघहारिषु । स कल्पयेत् प्राकृतत्वं दोषदर्शी न संशयः ॥ १४ ॥
शिशुपालादयः पूर्वमसुरांशा नरा भुवि । कृष्णचित्रचरित्राणि दोषरूपाण्यकीर्त्तयन् ॥ १५ ॥

त्यर्थः । भक्तेषु । दोषं पूर्वोक्तं दूषणम् । गृह्णाति । स भक्तस्तु । नृनाट्यं मनुष्यभावम् । अनुकुर्वति । कृष्णेऽपि । दोषम् । गृह्णीयात् ॥ १२ ॥ तत्कृतदोषग्रहणप्रकारमाह द्वाभ्याम् । कल्याणेति । जीवानाम् । कल्याणहेतोः । निजेच्छया स्वसङ्कल्पेन । जातं सम्भूतम् । विष्णोः श्रीकृष्णस्य । आविर्भावं प्रादुर्भावम् । स दोषग्राहकः पुमान् । स्वदृष्टान्तेन । कर्मजं प्रारब्धकर्मजातम् । ब्रूयात्कथयेत् ॥१३॥ तदिति । दिव्येष्वमायिकेषु । श्रुतिमात्रेण श्रवणमात्रत एवाघमनेकजन्मार्जितपापं हरन्ति निवारयन्ति तच्छीलेषु । तच्चरित्रेषु साक्षाच्छ्रीकृष्णेन जनहिताय कृतेषु बहुविधचरितेषु । दोषदर्शी । स पुमान् । प्राकृतत्वं मायिकत्वम् । कल्पयेत् । न संशयः अत्र संशयो नास्ति ॥ १४ ॥ एतदेव पुरावृत्तेन निर्दिशति । शिशुपालेति । पूर्वम् । भुवि । असुरांशा असुराणामंशैर्मनुष्येषूत्पन्नाः । शिशुपालादयः । नराः । कृष्णचित्रचरित्राणि श्रीकृष्णस्यानेकविधान्याश्चर्यकराणि चरितानि । दोषरूपाणि । अकीर्त्तयन् ॥ १५ ॥

एतदेवाह द्वाभ्याम् । बालेति । तुच्छबुद्धयः कुत्सितमतयः । ते नराः । बालग्रहवधं श्रीकृष्णकृतं बालग्रहरूपायाः पूतनाया विनाशम् । स्त्रीहत्याम् । प्राहुः । वृषाकृतेर्मत्तककुद्मयाकारस्य । दैत्यस्यारिष्टासुरस्य । वधं श्रीकृष्णेन गोपबालाद्यवनाय कृतं विनाशम् । गोहत्यामेव । प्राहुः ॥ १६ ॥ रास इति । रासे राकानिशायां श्रीकृष्णेन मन्मथगर्वपरिहाराय गोपिभिः सह कृतायां रासक्रीडायाम् । बह्वाकृतित्वं प्रतिगोपिस्वसाहित्यप्रदर्शनरूपं बह्वाकारधारणभावम् । विश्वरूपादिदर्शनं स्वमात्रे स्वास्ये अर्जुनाय स्वांगैकदेशे च विश्वरूपस्य गोपेभ्यो दावानलपानादेश्च प्रदर्शनम् । कालीयदमनादिच । ऐन्द्रजालिकमिन्द्रजालकर्म । इति । आहुः ॥ १७ ॥ तदिति । केचित्कतिचिदसुरांशनराः । तद्भक्तान् श्रीकृष्णमनन्यभावेन भजमानान् । पाण्डवान् पाण्डुनृपतिपुत्रान् युधिष्ठिरादीन् । राज्यलुब्धान् । गुरुद्रुहो भीष्मद्रोणादिगुरुद्रोहकर्तॄन् । कुलक्षयकरान्स्वकुलोच्छेदकर्तॄंश्च । आहुः । द्रौपदीं याज्ञसेनीम् । पशुधर्मिणीं पञ्चपतिपरायणत्वेन पशुसमानगुणां च । आहुः ॥ १८ ॥ नेति । एतावताऽसुरांशनराणामेवंविधकथनेन । भगवतः । तद्भक्तानां च । जगत्कल्याणकारित्वे । अण्व्यणुप्रमाणमात्रापि । विक्षति र्हानिः । कर्हिचित्कदापि । न जायते नैवोत्पद्यते ॥ १९ ॥

बालग्रहवधं प्राहुः स्त्रीहत्यां च वृषाकृतेः । वधं दैत्यस्य गोहत्यामेव ते तुच्छबुद्धयः ॥ १६ ॥ रासे बह्वाकृतित्वं च विश्वरूपादिदर्शनम् । ऐन्द्रजालिकमित्याहुः कालीयदमनादि च ॥ १७ ॥ तद्भक्तान् पाण्डवांश्चाहू राज्यलुब्धान् गुरुद्रुहः । कुलक्षयकरान् केचिद्द्रौपदीं पशुधर्मिणीम् ॥ १८ ॥ नैतावता भगवतस्तद्भक्तानां च कर्हिचित् । जगत्कल्याणकारित्वे जायतेऽण्व्यपि विक्षति ॥ १९ ॥ गुणा एव ततो ग्राह्याः सतां न त्वगुणः क्वचित् । दोषदर्शी तु विज्ञेयो ह्यसुरः शिशुपालवत् ॥ २० ॥ एवं भगवता प्रोक्तः स साधुः पुनरब्रवीत् । ग्रहणं गुणमात्रस्य सतां युक्तं त्वयोदितम् ॥ २१ ॥ महत्सु साधुषु तथा वृत्तिस्तु बहुधा नृणाम् । जायते न त्विहाल्पेषु भक्तेष्वपि तु सर्वथा ॥ २२ ॥ श्रीहरिस्तमुवाचाथ शृणु साधो ! वचो मम । भक्तानां महदल्पत्वमादौ विज्ञेयमञ्जसा ॥ २३ ॥

गुणा इति । ततो हेतोः । सतां भगवद्भक्तानां साधूनाम् । गुणा एव । ग्राह्याः । अगुणोऽल्पमात्रोऽपि दोषस्तु । क्वचित्कदाचिदपि । न तु नैव ग्राह्यः । दोषदर्शी सतां गुणेषु दोषद्रष्टा पुरुषस्तु । शिशुपालवत् । असुरः । विज्ञेयः । हि निश्चितम् ॥ २० ॥ एवमिति । एवममुना प्रकारेण । भगवता श्रीहरिणा । प्रोक्तः । स साधुर्योगानन्दमुनिः । पुनः । अब्रवीत् श्रीहरिं जगाद । हे भगवन् ! । सतां त्वदीयसाधुपुरुषाणाम् । गुणमात्रस्य दोषपरिहारेण केवलानां गुणानामित्यर्थः । ग्रहणम् । त्वया । युक्तं योग्यम् । उदितं कथितम् ॥ २१ ॥ महत्स्विति । इह सत्सङ्गे । महत्सु ज्ञानवैराग्योपेतत्वद्भक्त्यादिगुणगरिष्ठेषु । साधुषु तु । नृणां त्वद्भक्तानाम् । तथावृत्तिर्भवदुक्तप्रकारेण वर्त्तनम् । जायते । अल्पेष्वपि । भक्तेषु त्वद्भक्तजनेषु तु । सर्वथा सर्वप्रकारेण । न तु तथावृत्तिर्नैव जायते ॥ २२ ॥ श्रीहरिरिति अथानन्तरम् । श्रीहरिः । तं योगानन्दसाधुम् । उवाच । हे साधो ! । मम वचः । शृणु । आदौ प्रथमम् । भक्तानाम् । महदल्पत्वम् । महत्वमल्पत्वं चेत्यर्थः । अञ्जसा तत्त्वतः । विज्ञेयम् ॥ २३ ॥

व्यवहारेष्विति । व्यवहारेषु सांसारिकव्यवहृतिकार्येषु । नैपुण्याच्चातुर्यात् । तथा । वयसोऽवस्थाविशेषस्य । आधिक्याद्वृद्धभावात् । लोके । महत्त्वम् । अस्ति । तद्विपर्ययात् व्यवहारेष्वनैपुण्याद्वार्द्धक्याभावाच्चेत्यर्थः । अल्पत्वम् । अस्ति ॥ २४ ॥ तथेति । तथा तेन प्रकारेण । अत्रैषु भक्तेषु । तन्महत्त्वमल्पत्वं च । नास्ति । किन्तु । कृष्णस्य साक्षाच्छ्रीकृष्णभगवतः । दृढनिश्चयात् । तस्य साक्षाच्छ्रीकृष्णस्य । वाक्ये स्वधर्मपालनाद्याज्ञारूपे वचने । संस्थितेर्यावज्जीवं सम्यगवस्थानाच्च । महत्त्वम् । अन्यथैतद्द्वयाभावे । इतरदल्पत्वं च । अस्ति ॥ २५ ॥ इदानीमिति । इह । सत्सङ्गे । इदानीं साम्प्रतं तु । मामका मदीयाः । सर्वेऽपि । एते । भक्ताः । गुणद्वययुतत्वतः पूर्वश्लोकोक्तमहत्त्वबोधकगुणद्वययुक्तत्वाद्धेतोः । महान्त एव सन्ति ॥ २६ ॥ एतदेव स्पष्टमाह । कृष्ण इति । अक्षरातीतः सर्वपरं सकलशुभगुणमक्षरं ब्रह्मापि स्वभाव–गुण–विभूत्यैश्वर्यादिभिरतिक्रम्य वर्त्तमानः पुरुषोत्तमः । नराकृतिः । साक्षात् । कृष्णः । अस्मान् । प्राप्तः । अस्माभिरुपलब्ध इत्यर्थः । इतीत्थम् । निश्चित्य । अतन्द्रिता अप्रमादिनः सन्तः । तदाज्ञायां साक्षाच्छ्रीकृष्णस्य स्वधर्मपालनादिनिदेशे । वर्त्तन्ते । हि निश्चितम् ॥ २७ ॥ देहेति । अतो हेतोः । एषामित्थंभूतानां

व्यवहारेषु नैपुण्यादाधिक्यद्वयसस्तथा । महत्त्वमस्ति लोके हि चाल्पत्वं तद्विपर्ययात् ॥ २४ ॥ तथाऽत्र नास्ति तत्किन्तु कृष्णस्य दृढनिश्चयात् । संस्थितेस्तस्य वाक्ये च महत्वं चान्यथेतरत् ॥ २५ ॥ इदानीं त्विह सत्सङ्गे भक्ताः सर्वेऽपि मामकाः । महान्त एव सन्त्येते गुणद्वययुतत्वतः ॥ २६ ॥ कृष्णोऽस्मानक्षरातीतः साक्षात्प्राप्तो नराकृतिः । इति निश्चित्य वर्त्तन्ते तदाज्ञायां ह्यतन्द्रिताः ॥ २७ ॥ देहस्वभावोद्भवदोष एषां न ग्राह्य एवात इति प्रभोः सः । साधुस्तथाऽन्ये च निपीय वाचं पीयूषमापुः प्रमुदं सदःस्थाः ॥ २८ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते एकत्रिंशस्तरङ्गः ॥३१॥

शकाब्दे विक्रमार्कस्य रसाश्ववसुभूमिते । पौषकृष्णतृतीयायां वचोऽमृतमिदं हरेः ॥ १ ॥

सद्भक्तानाम् । देहस्वभावोद्भवदोषः देहाद्भवः किञ्चिदालस्यादिरूपः स्वभावोद्भवः किञ्चित्कटुकभाषणादिरूपश्च दोषः । नैव ग्राह्यः । इतीत्थंभूताम् । पीयूषममृततुल्याम् । प्रभोः श्रीहरेः । वाच्यम् । निपीय । सः । साधुर्योगानन्दमुनिः । तथा । अन्ये तदितरे । सदःस्थाः समीपविष्टास्त्यागिगृहिहरिभक्ताः । प्रमुदं प्रकृष्टहर्षम् । आपुः ॥ २८ ॥ ज्ञेयं यत् स्वस्य भक्तानां प्रश्नोत्तरमुखेन तत् । अवश्यं येन सम्प्रोक्तं स हरिर्मेऽस्तु मानसे ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्स्वनुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायामेकत्रिंशस्तरङ्गः ॥ ३१ ॥

भक्ताभक्तेन्द्रियार्थानां भेदो ध्यानस्य हेतुता । सिध्यसिध्योश्च सम्प्रोक्ता द्वात्रिंशे तु ततः स्फुटम् ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८७६) पौषकृष्णतृतीयायां पौषमासीयकृष्णपक्षतृतीयातिथौ । इदम् । हरेः । वचोऽमृतम् । अभवत् ॥ १ ॥

तत्रेति । तत्र तिथौ । दुर्गपुरे । प्रत्यगास्यस्य पश्चिमाभिमुखद्वारस्य । आभयिवेश्मनः अभयनृपसुन्दुत्तमनृपतिदुर्गान्तर्वर्त्तिभवनस्य । वेद्यां बाह्यायां वितर्द्दौ । सत्पीठे स्वास्तृते मञ्चोत्तमासने । प्रातः प्रातर्विधेयनैष्ठिकवर्ण्युचितनित्यकर्मविधानानन्तरमित्यर्थः । निषण्णः स्वावासादागत्योपविष्टः । सितानि श्वेतानि अम्बराणि परिधानीय–प्रावरणीय–शिरोवेष्टनीय–वसनानि यस्य सः ॥ २ ॥ सितेति । सितसूनानां श्वेतपुष्पाणां स्रगापीडौ हारशेखरौ यस्य सः । प्रसूनं 'कुसुमसुमम् । पुष्पं सूनं सुमनसः प्रसवश्च मणीवक'मिति हैमः । भालकेसरपुण्ड्रको ललाटकृतकेसरोर्ध्वरेखतिलकः भालकेसरपत्रक इति पाठे स्नेहाधिक्याद्भालमण्डले स्वभक्तैः कृतपीतसुरभिद्रव्ययुतगन्ध-विशेषक इत्यर्थः । नैकत्यागिगृहिवृतो नानादेशागतैरनेकैस्त्यागिभिर्गृहिभिः स्वभक्तैश्च सभायां परिवेष्टितः । स श्रीहरिः । गायतः श्रीकृष्णपद्यानि कीर्त्तयतः । साधून् । प्रोवाच । इति द्वयोरेकसम्बन्धः ॥ ३ ॥ पृच्छामीति । हे सन्तः ! । वो युष्मभ्यम् किञ्चित् पृच्छामि । तत् । श्रुत्वा । उत्तरम् । कुरुत । इतीत्थम् । तेन श्रीहरिणा । उक्ते कथिते सति । प्रीतैः प्रसन्नैः । तैः सद्भिः । अनुमोदितः हे हरे ! । बहुशोभनमेतदस्माननुयुङ्क्ष्व यथा मत्युत्तरं करिष्याम इत्यनुमोदं गमितः । स श्रीहरिः ।

तत्र दुर्गपुरे वेद्यां प्रातराभयिवेश्मनः । प्रत्यगास्यस्य सत्पीठे निषण्णः स सिताम्बरः ॥ २ ॥<br>
सितसूनस्रगापीडो भालकेसरपुण्ड्रकः । नैकत्यागिगृहिवृतः साधून्प्रोवाच गायतः ॥ ३ ॥<br>
पृच्छामि किञ्चिद्वः सन्तस्तच्छ्रुत्वा कुरुतोत्तरम् । इत्युक्ते तेन तैः प्रीतैः सोऽनुमोदित ऊचिवान् ॥ ४ ॥<br>
सन्तः शृणुत सन्त्येव देहिनो द्विविधा इह । भक्ताः संसारिणश्चेति द्वयेऽपि विषयैषिणः ॥ ५ ॥<br>
किन्त्वस्ति तेषां भोग्येषु विषयेष्वपि पञ्चसु । प्राकृताप्राकृतत्वेन भेदः सच्छास्त्रवर्णितः ॥ ६ ॥<br>
सन्ति संसारिणामाद्याभक्तानामितरे तथा । स्वस्वेषु विषयेष्वेते रमन्ति स्वेच्छयाऽनिशम् ॥ ७ ॥

ऊचिवान् ॥ ४ ॥ सन्त इति । हे सन्तः ! । शृणुत । इह लोके । भक्ता अम्बरीषादिवद्भगवदुपासकाः । संसारिणोऽभक्ताश्च । इतीत्थम् । द्विविधा एव । देहिनः । सन्ति । द्वये द्विविधा अपि ते देहिनः । विषयैषिणो विषयभोगेच्छावन्तः । सन्ति ॥ ५ ॥ किन्त्विति । किन्तु । तेषामुभयविधानां देहिनाम् । भोग्येषु भोगार्हेषु । पञ्चसु पञ्चसङ्ख्याकेष्वपि । विषयेषु शब्दादिषु । प्राकृता प्राकृतत्वेन मायिकामायिकत्वेन सगुणत्वेन निर्गुणत्वेन चेत्यर्थः । यः । भेदः । सः । सच्छास्त्रवर्णितः श्री-मद्भागवतादिसच्छास्त्रप्रतिपादितः । अस्ति । तथाचोक्तं श्रीमद्भागवते । 'सर्वे गुणमया भावाः पुरुषा व्यक्तधिष्ठिताः । दृष्टं श्रुतमनुध्यातं बुद्ध्या वा पुरुषर्षभे'त्यादि । तथा च । 'पथ्यं पूतमनायस्तमाहार्यं सात्त्विकं स्मृतम् । राजसं चेन्द्रियप्रेष्ठं तामसं चार्त्तिदाशुची'त्यादि । अत्र चकारान्मन्निवेदितं निर्गुणमिति तट्टीका । अत्र चाहार्यशब्दो रसबोधकः स च शब्दादिविषयाणामुपलक्षणमिति टीकान्तरम् ॥ ६ ॥ सन्तीति । आद्याः प्राकृता विषयाः । संसारिणाम् । सन्ति भोग्यतया वर्त्तन्ते । तथा । इतरे-ऽप्राकृता द्वितीया विषयाः भक्तानाम् । सन्ति । एते संसारिणो भक्ताश्च देहिनः । स्वस्वेषु स्वकीयेषु स्वकीयेषु । विषयेषु । स्वेच्छया । अनिशमहोरात्रम् । रमन्ते

क्रीडन्ति । संसारिणां तथात्वस्य प्रत्यक्षसिद्धत्वान्न प्रमाणापेक्षा । भक्तानां तथात्वं श्रीमद्भागवते । 'त्वयोपभुक्तस्रग्गन्ध-वासोऽलङ्कारचर्चिताः । उच्छिष्टभोजिनो दासास्तव मायां जयेमही'त्यादि ॥ ७ ॥ एतदेव सुस्पष्टमाह त्रिभिः । ग्राम्यमिति । ग्राम्यं ग्राम्यशब्दपर्यायविषयिजनसम्बन्धि । गीतं गानम् । तदुक्तनानाविधवैषयिकवार्त्ताश्रवणमित्यर्थः । स्त्र्यादिरूपस्पर्शौ स्त्रीसम्बन्धिरूपनिरीक्षणं तदङ्गस्पर्शश्चेत्यर्थः । आदिशब्देन हिरण्याभरणाम्बरादिरूपस्य बालादिस्पर्शस्य च ग्रहणम् । अशुचिभक्षणं लशुन-पलाण्डु-शुक्त पर्युषित-स्थालीपुरीष-भगवदनिवेदितादिकापवित्ररसभोजनम् । ग्राम्यम् । सुगन्धिपुष्पाद्याघ्राणं कृष्णप्रसादवर्जितसुगन्धयुक्तपुष्पादिगन्धग्रहणम् । अर्था ग्राम्यगीतादयः पञ्च-विषयाः । संसारिणाम् । मताः ॥ ८ ॥ कृष्णेति । कृष्णगीतं स्वेष्टश्रीकृष्णगुणचरित्रपद्यादिगानश्रवणमित्यर्थः । कृष्णरूपस्पर्शौ श्रीकृष्णसम्बन्धिरूपनिरीक्षणं तच्चरणा-रविन्दाद्यङ्गस्पर्शश्चेत्यर्थः । कृष्णप्रसादि श्रीकृष्णाय निवेदितत्वात्प्रसादरूपम् । अन्नोदकं चतुर्विधमन्नं शीतोदकादिकं चेत्यर्थः । समाहारद्वन्द्वः । कृष्णशेषा श्रीकृष्णेनानुग्रहेण दत्तत्वात्तन्निर्माल्यभूतं यत्पुष्पवृन्दादलादि कुसुम-तुलसीपत्रादिकं तच्च । 'शेषा निर्माल्यदाने स्या'दित्यनेकार्थसङ्ग्रहे हैमः ॥ ९ ॥ विषया इति । पञ्चविषयाः कृष्णगीतादयः

ग्राम्यं गीतं स्त्र्यादिरूपस्पर्शौ चाशुचिभक्षणम् । सुगन्धिपुष्पाद्याघ्राणमर्थाः संसारिणां मताः ॥ ८ ॥
कृष्णगीतं कृष्णस्पर्शौ कृष्णप्रसादि च । अन्नोदकं कृष्णशेषापुष्पवृन्दादलादि च ॥ ९ ॥
विषयाः पञ्चभक्तानां मतास्तेषु हि ते रताः । संसारिणो ग्राम्यगीतप्रमुखेष्विव देहिनः ॥ १० ॥
संसारिणो यथा स्वीयान् न हातुं विषयान् क्षमाः । तथा भक्ता अपि स्वांश्च संसिद्धा नारदादयः ॥ ११ ॥
भक्ताः समाधिनिष्ठाया अपि कृष्णकथादिभिः । आकृष्यन्ते हि विषयैरिति दृष्टं शुकादिषु ॥ १२ ॥

पञ्चाप्येतेऽर्थाः । भक्तानाम् । मताः । ते भक्ताः । तेषु श्रीकृष्णसम्बन्धिगीतादिपञ्चविषयेषु । रता आसक्ताः । केष्विव । संसारिणः । देहिनः । ग्राम्यगीतप्रमुखेषु ग्राम्यगीतप्रभृतिष्विव । संसारिणो यथा ग्राम्यगीतादिपञ्चविषयेषु रतास्तथा ते भक्ताः श्रीकृष्णसम्बन्धिषु विषयेष्वित्यर्थः । इति द्वयोरेकसम्बन्धः ॥ १० ॥ संसारिण इति । यथा । संसारिणः । स्वीयान् । विषयान् । हातुं त्यक्तुम् । न क्षमा न समर्थाः । तथा । संसिद्धाः सिद्धदशां प्राप्ताः । नारदादयः । भक्ता अपि । स्वान्स्वकीयान् । विषयान् । हातुम् । न क्षमाः ॥ ११ ॥ भक्ता इति । कृष्णकथादिभिः विषयैः कर्तृभिः । भक्ताः । समाधिनिष्ठायाः समाधिसम्प्राप्तात्मादिस्थितेरपि । आकृष्यन्ते । इतीत्थम् । शुकादिषु शुकसनकादिमुनिषु । दृष्टम् । श्रीभागवतादिसच्छास्त्रेषु तेषां तथात्वमस्माभिर्निरीक्षितमस्तीत्यर्थः । तथाचोक्तं श्रीमद्भागवते । 'इत्थं पृष्टः स तु बादरा-यणिस्तत्स्मारितानन्तहृताखिलेन्द्रियः । कृच्छ्रात् पुनर्लब्धबहिर्दृशिः शनैः प्रत्याह तं भागवतोत्तमोत्तमं । सतामयं सारभृतां निसर्गो यदर्थवाणीश्रुतिचेतसामपि । प्रतिक्षणं न व्यवदच्युतस्य यत्स्त्रियाविटानामिव साधुवार्त्ते'त्यादिना ॥ १२ ॥

एवमिति । हे साधवः ! । एवं हि अमुना प्रकारेणैव । यूयमपि । हरेः । भक्ताः । स्थ भवथ । वै निश्चितमेव । अतो हेतोः । स्वविषयेषु श्रीकृष्णगीतश्रवणादिस्वकीयविषयेष्वेव । रमध्वे क्रीडथ किम् ? । अथवा । इतरेषु संसारिभोग्यग्राम्यगीतादिविषयेष्वपि । रमध्वे । किंशब्दाक्षेपाभावे काक्वर्थो विधेयः । 'काकुः स्त्रियां विकारो यः शोक भीत्यादिभिर्ध्वने'रित्यमरे ॥ १३ ॥ इतीति । इत्यमुना प्रकारेण । स्वगुरुणा स्वहितोपदेशकेन श्रीहरिणा । पृष्टाः । ते । साधवः । तं श्रीहरिम् । अब्रुवन् । हे स्वामिन् ! । भक्तोचितेषु भगवतस्तव भक्तानां भोगार्हेषु । विषयेषु कृष्णगीतादिष्वर्थेष्वेव । रमामहे वयं क्रीडामः ॥१४॥ मनसेति । हे हरे ! । क्वचीत्कदाचिदपि । मनसा मनःसङ्कल्पेनापि । ग्राम्यान् संसारिजनभोग्यान् । अर्थान् ग्राम्यगीतादीन्विषयान् । नो कामयामहे नैव वाञ्छामः । एषोऽस्माकमेवं वर्त्तनरूपः । त्वत्पादसेवायास्त्वदङ्घ्रिपद्मपरिचरणस्य । प्रतापो महिमा । अस्मासु वर्त्तते ॥१५॥ साध्विति । इत्थममुना प्रकारेण । साधूदितं सकलसद्भिः कथितम् । साधु सत्यम् । वचः । निशम्य श्रुत्वा । वृषनन्दनो धर्मपुत्रः । स श्रीहरिः । हृष्टः प्रमुदितः । अभूत् । ततः साधून्नत्वा जयसच्चिदानन्देत्युक्त्वा स्वावासं जगामेति ज्ञेयम् । ते साधवोऽपि । तस्य श्रीहरेः ।

एवं हि साधवो यूयमपि भक्ताः स्थ वै हरेः । अतः स्वविषयेष्वेव रमध्वे वेतरेष्वपि ॥ १३ ॥ इति पृष्टाः स्वगुरुणा साधवस्ते तमब्रुवन् । स्वामिन्भक्तोचितेष्वेव विषयेषु रमामहे ॥ १४ ॥ मनसाऽपि क्वचिद्ग्राम्यानर्थान्नो कामयामहे । एष त्वत्पादसेवायाः प्रतापोऽस्मासु वर्त्तते ॥ १५ ॥ साधूदितं साधुवचः स इत्थं निशम्य हृष्टो वृषनन्दनोऽभूत् । सुधायमानं वचनं च तस्य निशम्य तेऽप्यापुरतीव मोदम् ॥ १६ ॥ तस्मिन्नेव दिने स्वामी पिचुमन्दतरोरधः । तद्दुर्गे एव भक्तैः स्वैर्वृतः सायमुपाविषत् ॥ १७ ॥ उच्चपीठे निषण्णं तं प्रणम्य पुरतः स्थितः । दीनानाथो द्विजवरः पप्रच्छ प्राञ्जलिः प्रभुम् ॥ १८ ॥ स्वामिन्काले क्वचिच्चित्ते हरेस्ते स्मृतिरञ्जसा । सुखेन जायते काले यत्नेनापि क्वचिन्न च ॥ १९ ॥

सुधायमानममृततुल्यम् । वचनम् । निशम्य श्रुत्वा । अतीवात्यन्तम् । मोदमानन्दम् । आपुः ॥ १६ ॥ तस्मिन्निति । तस्मिन् । दिने । एव । पौषकृष्णतृतीयादिवस एवेत्यर्थः । तद्दुर्गे एवोत्तमनृपतिदुर्गान्तरे एव । पिचुमन्दतरोः । अधोऽधस्तनवेदिकायाम् । स्वामी निखिलैश्वर्यैकाधारः श्रीहरिः । स्वैः स्वकीयैः । भक्तैर्नानादेशायातैस्त्यागिगृहिभक्तजनैः । वृतः परिवेष्टितः सन् । सायम् । अपराह्ण इत्यर्थः । 'प्राह्णापराह्णमध्याह्नास्त्रिसंध्य'मिति कोशाद्दिवसस्य त्रिकालपक्षस्वीकारे सायं शब्दोऽपराह्णार्थे लाक्षणिकः । उपाविशत्स्वावासादागत्य वेदिकास्थस्वास्तृतसोपबर्हसपार्श्विकोच्चमञ्चे उपविवेश ॥ १७ ॥ उच्चेति । उच्चपीठे मञ्चरूपे उच्चासने । निषण्णं पूर्वोक्तप्रकारेणोपविष्टम् । तं श्रीहरिम् । प्रणम्य विनयेन नत्वा । पुरतः स्थितः श्रीहरेः पुरोभागेऽवस्थितः । द्विजवरो ब्राह्मणश्रेष्ठः । दीनानाथः । प्राञ्जलिः कृताञ्जलिः सन् । प्रभुं श्रीहरिम् । पप्रच्छ ब्रह्मानन्दमुन्यनुमतेन पृष्टवान् ॥ १८ ॥ स्वामिन्निति । हे स्वामिन् ! । क्वचित् । काले कस्मिंश्चित्समये । चित्ते त्वद्भक्तमानसे । हरेः । साक्षात्परमेश्वरस्य । ते तव । स्मृतिः स्मरणम् । अञ्जसा तत्त्वतः । सुखेनाक्लेशेन । जायते भवति । क्वचित् । काले । यत्नेनेन्द्रियवृत्तिरोधनप्रयासेनापि । न च चित्ते हरेस्तव

स्मरणं नैव जायते ॥ १९ ॥ तत्रेति । तत्र तव स्मरणभवनाभवनयोः । यत्कारणम् । मे मह्यम् । तत्त्वतो यथार्थतया । वक्तुम् । अर्हसि । इत्यमुना प्रकारेण । अग्रजन्मना ब्राह्मणेन । तेन दीनानाथेन । पृष्टः । हरिः । अब्रवीत् ॥ २० ॥ कृष्णेति । हे अग्रजन्मन् ! । कृष्णध्यानस्य निष्पत्तौ सिद्धौ । अनिष्पत्तावसिद्धौ च । कारणम् । गुणः सत्त्वादिरेव । वर्त्तते । इति हेतोः । ध्यात्रा श्रीकृष्णध्यानकर्त्रा भक्तजनेन । स गुणः । तत्त्वतो यथार्थतः । बोध्यः ॥ २१ ॥ एतदेव सुस्पष्टमाह त्रिभिः । अन्तर इति । सत्त्वम् । रजः । तमः । गुणाः । अन्तरेऽन्तःकरणे । परिवर्त्तन्तेऽनुक्रमेण प्रवर्त्तन्ते । तत्र तेषु सत्त्वादिगुणेषु मध्ये । सत्त्वोदये सत्त्वगुणाविर्भावकाले । तन्नैर्मल्यादन्तःकरणस्य निर्मलत्वाद्धेतोः । ध्यानं श्रीकृष्णस्वरूपचिन्तनम् । सुसिध्यति सुखेन निष्पन्नं भवति ॥ २२ ॥ उद्गम इति । रसजो रजोगुणस्य । उद्गम आविर्भावसमये तु । अन्तरेऽन्तःकरणे । बहवः । सङ्कल्पाः । स्युः । तेन बहुसङ्कल्पोद्गमहेतुना । भगवतः । ध्यानम् । ध्यातुः । दुष्करम् । भवति ॥ २३ ॥ उद्गम इति । तमसस्तमोगुणस्य । उद्गमे तु निजान्तरं स्वमानसम् । शून्यप्रायमुज्ज्ञानकारण्यसमानत्वं सङ्कल्पवर्जितमित्यर्थः । स्याद्भवेत् । तेन निजान्तरस्य शून्यप्रायत्वहेतुना ।

तत्र यत्कारणं तन्मे वक्तुमर्हसि तत्त्वतः । इति पृष्टस्तेन हरिरब्रवीदग्रजन्मना ॥ २० ॥ कृष्णध्यानस्य निष्पत्तावनिष्पत्तौ च कारणम् । वर्त्तते गुण एवेति ध्यात्रा बोध्यः स तत्त्वतः ॥२१॥ अन्तरे परिवर्त्तन्ते गुणाः सत्त्वं रजस्तमः । तत्र सत्त्वोदये ध्यानं तन्नैर्मल्यात्सुसिद्ध्यति ॥ २२ ॥ उद्गमे रजसस्तु स्युः सङ्कल्पा बहवोऽन्तरे । तेन ध्यानं भगवतो ध्यातुर्भवति दुष्करम् ॥ २३ ॥ उद्गमे तमसस्तु स्याच्छून्यप्रायं निजान्तरम् । ध्येयस्फुर्त्तिर्न तेन स्याद्ध्याता क्लिश्यति तेन च ॥ २४ ॥ ध्यात्राऽन्तःकरणे तस्माद्विदित्वा गुणवर्त्तनम् । सति सत्त्वोदये कार्यं ध्यानं न त्वन्यथा प्रभोः ॥२५॥ उदये तमसो ध्यानं न कार्यं जाड्यसम्भवात् । सङ्कल्पानां बहुत्वाच्च रजसोऽप्युदये तथा ॥ २६ ॥ तदानीं त्वात्मनो रूपं ज्ञेयं सङ्कल्पतः पृथक् । तत्रैवास्ते कृष्ण इति स्मर्त्तव्यो बहिरेव सः ॥ २७ ॥

ध्येयस्फूर्तिर्ध्यानार्हश्रीकृष्णाकारस्फुरणम् । न स्यात् । तेन ध्येया स्फुरणेन हेतुना । ध्याता श्रीकृष्णध्यानकर्ता भक्तजनः । क्लिश्यति ॥ २४ ॥ ध्यात्रेति । तस्माद्धेतोः । ध्यात्रा । अन्तःकरणे । गुणवर्त्तनम् । विदित्वा । सत्वोदये । सति । प्रभोः श्रीकृष्णस्य । ध्यानम् । कार्यम् । अन्यथा सत्त्वोदयाभावे । न तु नैव कार्यम् ॥ २५ ॥ एतदेव विविनक्ति । उदय इति । तमसस्तमोगुणस्य । उदये सति । जाड्यसम्भवाल्लयात्मकस्तब्धत्वोद्भवाद्धेतोः । ध्यानम् । न कार्यम् । तथा । रजसो रजोगुणस्य । उदये सत्यपि । सङ्कल्पानाम् । बहुत्वाद्बाहुल्याद्धेतोः । ध्यानं न कार्यम् । विक्षेपेण तदसिद्धित्वात् ॥ २६ ॥ तदानीमिति । तदानीं रजोगुणोदयसमये तु । आत्मनः स्वक्षेत्रज्ञस्य । रूपं स्वरूपम् । सङ्कल्पतः । पृथक् तज्ज्ञातृतया भिन्नम् । ज्ञेयम् । तत्रात्मस्वरूपे एव । कृष्णः । आस्तेऽन्तर्यामितया सर्वदा तिष्ठति । इत्यपि ज्ञेयम् । इतीत्थं ज्ञात्वा । स श्रीकृष्णः । बहिरेव । स्मर्त्तव्य उच्चशब्देन तन्नामोच्चारणं कर्त्तव्यमित्यर्थः ॥ २७ ॥

एतदेव हेतुना द्रढयति त्रिभिः । सङ्कल्पेति । सद्धिया सदसद्विवेकमतिमता ध्यात्रा । सङ्कल्पोदयतः । वृथा । क्लेशः । न कार्यः । यद्यस्माद्धेतोः । मनः । निष्प्रयोजनसङ्कल्पात्मकं प्रयोजनशून्यसङ्कल्पाचरणस्वभावमेव । अस्ति ॥ २८ ॥ बालस्येति । यथा । बालस्यार्भकस्य । मर्कटादेश्च । आदिशब्देन बालकुक्कुरादिग्रहणम् । चापल्यं चलत्वम् । स्वभावजं साहजिकम् । अस्ति । तद्वत्तथा । सरजोमनसो रजोगुणयुक्तत्वान्निष्प्रयोजनसङ्कल्पयुक्तस्य मनसोपि । चापल्यं स्वभावजमस्ति । इतीत्थम् । बुध्यतां त्वया ज्ञायताम् ॥ २९ ॥ स्वभाव इति । सर्वस्य जनस्य । स्वभावः । दुस्त्यजो दुःखेनापि त्यक्तुमशक्यः । अस्ति । खलु । इतीत्थम् । निश्चयाद्धेतोः । तदा रजोगुणयुक्ततया ससङ्कल्पमनस्त्वे । क्लेशं सङ्कल्पोद्भवं खेदम् । हित्वा त्यक्त्वैव । आत्मदर्शी स्वात्मस्वरूपं सङ्कल्पज्ञातृ ततः पृथग्भूतं च मन्यमानो ध्याता । वहिः । कृष्णम् । स्मरेत् ॥ सङ्कल्पेति । वेति पक्षान्तरे । सदुपदेशतः साधुजनोपदिष्टमार्गेण । सङ्कल्पशान्त्युपायं सङ्कल्पोपशमोपायभूतम् । योगमष्टाङ्गयोगम् । धीमान्मतियुक्तो ध्याता । प्रयतः सन् । साधयेत् । क्वचित्कदाचिदपि । अकार्यं शोकमोहादिनात्मघातादि । न तु नैव । चरेद्विदध्यात् ॥ ३१ ॥ श्रुत्वेति । इतीत्थं-

सङ्कल्पोदयतः क्लेशो वृथा कार्यो न सद्धिया । निष्प्रयोजनसङ्कल्पात्मकमेवास्ति यन्मनः ॥ २८ ॥ बालस्य मर्कटादेश्च चापल्यं हि स्वभावजम् । यथाऽस्ति तद्वत्सरजोमनसोऽपीति बुध्यताम् ॥ २९ ॥ स्वभावः खलु सर्वस्य दुस्त्यजोऽस्तीति निश्चयात् । क्लेशं हित्वैवात्मदर्शी वहिः कृष्णं स्मरेत्तदा ॥३०॥ सङ्कल्पशान्त्युपायं वा योगं सदुपदेशतः । साधयेत्प्रयतो धीमान्न त्वकार्यं क्वचिच्चरेत् ॥ ३१ ॥ श्रुत्वा सुधाभामिति तस्य वाणीं जगद्गुरोः स द्विज आप तोषम् । भक्ताः सदःस्था अपरे च सर्वे तमानमन्ति स्म मुदं प्रपन्नाः ॥३२॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते द्वात्रिंशस्तरङ्गः ॥३२॥

शकाब्दे विक्रमार्कस्य रसाश्ववसुभूमिते । सहस्यकृष्णपञ्चम्यां वचोऽमृतमिदं हरेः ॥ १ ॥

भूताम् । जगद्गुरोः । तस्य श्रीहरेः । सुधाभाममृततुल्याम् । वाणीम् । श्रुत्वा । द्विजः षट्कर्मा । स दीनानाथः । तोषं महान्तमानन्दम् । आप । सदःस्थाः सभायामुपविष्टाः । अपरे तदितरे । सर्वे । भक्तास्त्यागिनो गृहिणो भक्तजनाश्च । मुदम् । प्रपन्नाः सन्तः । तं श्रीहरिम् । आनमन्ति स्म ॥३२॥ भोग्यार्थेषु स्वभक्तानामभक्तानां च पश्वसु । भेदत्वं यत्स्वभक्तानामन्तरे हेतुता च या ॥ १ ॥ स्वध्यानस्य सिद्ध्यसिद्ध्योस्ते विविच्यैव तत्त्वतः । येनोक्ते मे हरौ तस्मिन्भक्तिरूपाऽस्तु शेमुषी (बुद्धिः) ॥ २ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्स्नुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां द्वात्रिंशस्तरङ्गः ॥ ३२ ॥

चतुर्थो श्रीहरेः प्रीत्यै साधनं त्वाश्रयो महत् । इतरेभ्यः साधनेभ्य स्त्रयस्त्रिंशे समीरितम् ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८७६) सहस्यकृष्णपञ्चम्यां पौषमासस्य कृष्णपक्षसम्बन्धिन्यां पञ्चमीतिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥

तत्रेति । तत्र तिथौ । दुर्गपुरे । आभयेरभयनृपसूनोरुत्तमभूपतेः । दुर्गे । कृष्णालयः श्रीवासुदेवमन्दिरं तेन युज्यते समीपे योगं प्राप्नोतीति तस्य । श्रीवासुदेवमन्दिरस्य निरन्तरतया वर्त्तमानस्येत्यर्थः । वेश्मन उत्तमनृपावासगृहस्य । वेद्यां बहिर्वेदिकायाम् । धर्मनन्दनः । स श्रीहरिः व्यराजते शुशुभे ॥ २ ॥ निषण्णमिति । दिनात्यये दिवसस्य । प्रहरावशेषसमये । स्वास्तृते मृदुतूलिकोत्तरच्छदादिना कृतास्तरणे । पीठे मञ्चासने । निषण्णं पूर्वाभिमुखतयोपविष्टम् । सन्ति शोभनानि सितानि धवलानि वस्त्राणि यस्य तम् । तत्रायं विवेको बोधनीयः परिधानीयोत्तरीये वसने केवलं धवले एव शिरोवेष्टनवस्त्रं प्रान्तकुसुम्भरञ्जितमिति । तं श्रीहरिम् । परिवृत्य परितो वेष्टयित्वा । तदाश्रिताः । सर्वे नानादेशागताः सर्वेऽपि त्यागिगृहिजनाः । निषेदुः सभायामुपविशुः ॥ ३ ॥ मुक्तानन्द इति । मुक्तानन्दो मुनिः । प्रहसन्मुखं मन्दस्मितयुतमुखारविन्दम् । तं श्रीहरिम् । प्रणम्य । अप्राक्षीत् । हे ईश ! प्रभो ! । ते तव । प्रीत्यै प्रसन्नतार्थम् । शास्त्रेषु । भूरिशो बहूनि । साधनानि स्वधर्मादीनि करणानि उक्तानि ॥ ४ ॥ तत्रेति । तत्र तेषु साधनेषु मध्येऽपि । यत् । एकम् । बलीयो बलवत्तरम् । साधनम् । भवेत् । तत्साधनम् । मे मह्यम् । वद । एकेन । येन

तत्र दुर्गपुरे दुर्गे आभये धर्मनन्दनः । कृष्णालययुजो वेद्यां वेश्मनः स व्यराजत ॥ २ ॥
निषण्णं स्वास्तृते पीठे तं सर्वेऽपि तदाश्रिताः । परिवृत्य निषेदुः सत्सितवस्त्रं दिनात्यये ॥ ३ ॥
मुक्तानन्दस्तमप्राक्षीत्प्रणम्य प्रहसन्मुखम् । प्रीत्यै ते साधनानीश ! शास्त्रेषूक्तानि भूरिशः ॥ ४ ॥
तत्राप्येकं बलीयो यत् साधनं तत्तु मे वद । येनैकेन कृतानि स्युः साधनान्यऽखिलान्यपि ॥ ५ ॥
श्रीहरिरुवाच :- आश्रयोऽतिदृढः स्याचेच्छ्रीकृष्णस्य नृणामिह । तेनैकेनैव भगवान् सम्प्रसीदति निश्चितम् ॥ ६ ॥ कृष्णप्रसादहेतुभ्यः सर्वेभ्योऽपि महत्तरम् । एतद्धि साधनमिति ज्ञातव्यं श्रेय इच्छता ॥ ७ ॥ स चाश्रयश्चतुर्द्धैव सच्छास्त्रेषु निगद्यते । वैश्वासिकः स्वार्थिकश्च स्नैहिको ज्ञानिकस्तथा ॥ ८ ॥

बलीयः साधनेन । अखिलानि समग्राण्यपि । साधनानि । कृतानि सुविहितानि । स्युः ॥ ५ ॥ मुक्तानन्देन मुनिना पृष्टं एवं सतां पतिः । स तं संहर्षयंश्चान्यान् निजानित्यब्रवीत्प्रभुः । आश्रय इति । हे मुने ! । इह सत्सङ्गे । नृणां भक्तजनानाम् वर्त्तमानानामिति शेषः । चेद्यदि श्रीकृष्णस्य । अतिदृढः । आश्रयः । स्यात् । तर्हि । एकेन केवलेन । तेन तद्दृढाश्रयेणैव । भगवान् साक्षाच्छ्रीकृष्णः । निश्चितमेव । सम्प्रसीदति सुप्रसन्नो भवति ॥ ६ ॥ कृष्णेति । एतत्साक्षाच्छ्रीकृष्णस्यातिदृढाश्रयरूपम् । साधनम् । कृष्णप्रसादहेतुभ्यः साक्षाच्छ्रीकृष्णप्रसन्नतानिमित्तेभ्यः । सर्वेभ्यः साधनेभ्योऽपि । महत्तरमतिबलीयः । भवति । हि । इतीत्थम् । श्रेयः स्वपरमनिश्रेयसम् । इच्छता वांच्छता भक्तेन । ज्ञातव्यम् ॥ ७ ॥ स इति । सः । आश्रयः । वैश्वासिकः । स्वार्थिकः । स्नैहिकः । तथा । ज्ञानिकः । चतुर्धैव चतुर्विध एव । सच्छास्त्रेषु । निगद्यते ॥ ८ ॥

एवं चतुर्विधा आश्रयसंज्ञा अभिधाय साम्प्रतं तल्लक्षणोक्तिपूर्वं सकर्तृकांस्तान्पुनरनुक्रमेणाह त्रयोदशभिः । आद्य इति । तत्र तेषु चतुर्विधाश्रयेषु मध्ये । प्रह्लादादेरिव । सच्छास्त्रे श्रीभागवतादिसच्छास्त्रवाक्ये । महतां भगवत्प्रसन्नताहेतुगुणगरिष्ठानाम् । सतां नारदादिसाधूनाम् । वाक्ये च । विश्वासदाढर्यात् । सञ्जातो य आश्रय उत्पन्नः । स तु । आद्यः । प्रथमो वैश्वासिकाख्य आश्रयः । ईयतामवगम्यताम् ॥९॥ एनमेव सुस्पष्टमाह द्वाभ्याम् । भक्तीति । भगवान् । भक्तीष्टदः स्वभक्ताय स्वभक्त्या वांछितार्थप्रदः । अस्ति । इतीत्थंभूतायाम् । देवऋषेर्नारदस्य । गिरि वाचि । दृढं सुस्थिरम् । विश्वासम् । आपन्नः प्राप्तः । प्रह्लादः । हरिम् । आश्रयदाश्रयं कृत्वा कायवाङ्मनोभिरभजत् । तथा च श्रीमद्भागवते । 'ऋषिः । कारुणिकस्तस्याः प्रादादुभयमीश्वरः । धर्मस्य तत्त्वं ज्ञानं च मामप्युद्दिश्य निर्मल'मिति । धर्मतत्त्वं भक्तिलक्षणमिति श्रीधरस्वामिनः ॥ १० ॥ एवमिति । एवममुना प्रकारेण । प्रह्लादवदित्यर्थः । अन्येऽपि । बहवः । पुरुषाः । योषितश्चापि । महतां सताम् । वाचि । विश्वस्य सम्यग्विश्वासं कृत्वा । दृढं यथातथा । हरिम् । आशिश्रियुः ॥ ११ ॥ एवं त्रिभिर्वैश्वासिकाश्रयलक्षणमुक्त्वा द्वाभ्यां स्वार्थिकाश्रयलक्षणमाह । राज्येति । ध्रुवादीनामिव । राज्यं च ऐश्वर्याण्यणिमादीनि च आरोग्यं स्वशरीरादौ गदाभावश्च धनं द्रव्यं च तान्यादयो येषां सुतादीनां तेपामाप्तिः प्राप्तिस्तस्यै । तादर्थ्ये चतुर्थी । यः । हरेः । अचलः । आश्रयः । स आश्रयस्तु । स्वार्थिकः । इति । ज्ञेयः । तथाचोक्तं श्रीमद्भागवते । 'पदं त्रिभुवनोत्कृष्टं जिगीषोः साधुवर्त्म मे । ब्रूह्यस्मत्पितृभिर्ब्रह्मन्नन्यैरप्यनधिष्ठित'मिति ॥१२॥ ननु राज्यादिस्वार्थसिद्ध्यर्थमेवं कृतभगवदाश्रयः पुमांस्तत्सिद्ध्यनन्तरं भगवन्तं जह्यादेव तथा सतीत्थं भूत आश्रयः कृतोऽप्य कृतप्राय इति चेत्तच्छक्तिदर्शनप्रीतान्तरः कश्चनाप्यसुरादृते तं न जह्यादित्याह । स्वार्थ इति । स्वार्थे सिद्धेऽपि । ते स्वार्थिकाश्रयवन्तो भक्ताः । तस्य श्रीहरेः । शक्तिदर्शनाद्भक्तवांछितार्थप्रदानरूपसामर्थ्यसमीक्षणाद्धेतोः । आश्रयम् । आदेहपातात्स्वदेहावसानपर्यन्तम् । न तु नैव । जहति त्यजन्ति । असुरः कश्चनासुरांशः पुमांस्तु । जहात्यपि भगवदाश्रयमपि त्यजति ॥१३॥ अथ स्नैहिकाश्रयलक्षणमाह द्वाभ्याम् । सौन्दर्येति । हरेः । सौन्दर्यादीक्षणेन स्वरूपनिष्ठसुन्दरतादिविलोकनेन । स्नेहात् । जातादिति शेषः । अथवा । हरेः सौहार्देनापि सखित्वेनापि । स्नेहात् । अथवा । सम्बन्धेन सपिण्डसयौवनादिसम्बन्धबलेनापि । स्नेहात् । यः । हरेः । आश्रयः । सः । स्नैहिकः । मतः ॥ १४ ॥

आद्यस्तत्र तु सच्छास्त्रे वाक्ये च महतां सताम् । विश्वासदार्ढ्यात्सञ्जातः प्रह्लादादेरिवेयताम् ॥ ९ ॥
भक्तीष्टदोऽस्ति भगवानिति देवऋषेर्गिरि । विश्वासं दृढमापन्नः प्रह्लादो ह्यश्रयद्धरिम् ॥ १० ॥
एवमन्येऽपि बहवः पुरुषा योषितोऽपि च । विश्वस्य वाचि महतां हरिमाशिश्रीयुर्दृढम् ॥ ११ ॥
राज्यैश्वर्यारोग्यधनाद्याप्त्यै यस्त्वाश्रयो हरेः । स स्वार्थिक इति ज्ञेयो ध्रुवादीनामिवाचलः ॥ १२ ॥
स्वार्थे सिद्धेऽप्याश्रयं तु तस्य ते शक्तिदर्शनात् । न जहत्यादेहपातादसुरस्तु जहात्यपि ॥ १३ ॥
सौन्दर्यादीक्षणेनाथ सौहार्देनापि वा हरेः । सम्बन्धेनापि वा स्नेहादाश्रयः स्नैहिको मतः ॥ १४ ॥

स्निग्धा भक्ताश्च ये ते तु कृष्णं वा तत्क्रियां विना । क्षणमात्रमपि स्थातुं न शक्ता व्रजवासिवत् ॥ १५ ॥ सच्छास्त्राभ्यासतः सङ्गाद्विदुषां च सतां मुहुः । सम्यक् कृष्णस्य माहात्म्यं विदित्वा सर्वतोऽधिकम् ॥ १६ ॥ मायापुरुषरूपेण विश्वोत्पत्त्यादिकर्तृताम् । सगुणत्वं निर्गुणत्वं ज्ञात्वा भगवतस्तथा ॥१७॥ अन्वयव्यतिरेकौ च कालादीनां नियन्तृताम् । आविर्भावतिरोभावौ नृनाट्यं चास्य मोहकम् ॥ १८ ॥ परत्वं चात्मदेहत्वं पुरुषोत्तमतां च यः । ज्ञात्वा तस्याश्रयः पुम्भिः क्रियते ज्ञानिकस्तु सः ॥ १९ ॥ अयं हि कर्हिचित्कैश्चिदपि चाल्यो न तात्त्विकः । कृष्णस्य नरनाट्ये च मोहभ्रमहरो नृणाम् ॥२०॥ स्वयं कृष्णेन तद्वन्तो देवर्षिसनकादयः । प्रोक्ता ह्यात्मसमा भक्तास्ते समर्थाश्च सर्वतः ॥२१॥

स्निग्धा इति । ये । स्निग्धाः । भगवति स्नैहिकाश्रयवन्तः । भक्ताः । सन्ति । ते तु । व्रजवासिवत् । कृष्णम् । अथवा । तत्क्रियां श्रीकृष्णगुणचरित्रादिश्रवणगानादिकर्म । विना ताभ्यामृते । क्षणमात्रमपि । स्थातुमवस्थातुम् । न शक्ताः समर्था नैव भवन्ति । व्रजवासिवदित्यस्यात्रायं विवेकः । व्रजाङ्गनानां कृष्णे सौन्दर्यादीक्षणेन व्रजवासिगोपानां सौहार्देन व्रजवासिपरिवृढयोर्नन्दयशोदयोः सम्बन्धेन च स्नैहिकाश्रयो वोध्य इति ॥ १५ ॥ अथ ज्ञानिकाश्रयलक्षणमाह षड्भिः । सच्छास्त्रेति । सच्छास्त्राभ्यासतः । विदुषां ज्ञानिनाम् । सतां साधूनाम् । मुहुर्भूयो भूयः । सङ्गाच्च सर्वतः सर्वेभ्योऽप्यक्षरादिभ्यः । अधिकम् । कृष्णस्य । माहात्म्यम् । सम्यक् । विदित्वा ॥ १६ ॥ मायेति । तथा । मायापुरुषरूपेण महामायामहापुरुषरूपेण । भगवतः । विश्वोत्पत्त्यादिकर्तृतां नैकब्रह्माण्डोत्पत्तिस्थितिप्रलयकारयितृत्वम् । ज्ञात्वा । तथा । भगवतः । सगुणत्वं सत्यशौचाद्यमायिकगुणयुक्तत्वम् । अनिरुद्धादिरूपेण वा रज आदिगुणयुक्तत्वम् । ज्ञात्वा । निर्गुणत्वं स्वतः सर्वदा मायिकगुणवर्जितत्वम् । ज्ञात्वा ॥ १७ ॥ अन्वयेति । अस्य भगवतः । अन्वयव्यतिरेकौ । ज्ञात्वा । तत्र महापुरुषादिष्वन्तर्यामिशक्त्याऽन्वयः स्वतः स्वधाम्नि विद्यमानतया व्यतिरेकस्तौ विबुध्येत्यर्थः । अस्य । कालादीनाम् । नियन्तृतां नियामकत्वम् । अस्य । आविर्भावतिरोभावौ स्वेच्छया प्रादुर्भावान्तर्द्धिलीलाप्रकारौ । ज्ञात्वा । अस्य नृनाट्यं दिव्यस्य सतोऽपि नरानुकरणम् । मोहकमासुरजनमोहोत्पादकं भवति न भक्तजनमोहकमिति च । ज्ञात्वा ॥ १८ ॥ परत्वमिति । तस्य भगवतः । परत्वं स्वरूपस्वभावगुणविभूत्यैश्वर्यादिभिः सर्वपराक्षरब्रह्मणोऽप्यतिश्रेष्ठत्वम् । आत्मानौ चिदचितौ देहौ यस्य तस्य भावस्तत्त्वम् । सकलचिदचिच्छरीरित्वमित्यर्थः । पुरुषोत्तमतामक्षरब्रह्मतत्स्थमुक्तकोटिरूपपुरुषवृन्दोत्तमत्वं च । ज्ञात्वा । पुंभिर्भगवद्भक्तपुरुषैः । यः । तस्य । आश्रयः । क्रियते । स आश्रयस्तु । ज्ञानिकः । बुध्यताम् । इति चतुर्णामेकसम्बन्धः ॥१९॥ अयमिति । तात्त्विको वास्तविकः । परमार्थसत्य इत्यर्थः । अयं ज्ञानिकाश्रयः । कर्हिचित्कदाचिदपि । कैश्चिच्छुष्कवेदांत्यादिभिः कैश्चनापि मतवादिजनैः । न चाल्यश्चालयितुं न शक्यः । कृष्णस्य । नरनाट्ये नृणाम् । मोहभ्रमहरश्च । भवति ॥२०॥ स्वयमिति । स्वयम् । कृष्णेन । तद्वन्तो ज्ञानिकाश्रयिणः । देवर्षिसनकादयः । भक्ताः । आत्मसमाः स्वसमानाः । प्रोक्ताः । हि प्रसिद्धमेतत् । 'ज्ञानी त्वात्मैव मे मत'मिति भगवद्गीतायाम् । ते ज्ञानिकाश्रयिणो भक्ताः सर्वतः सर्वाश्रयवद्भ्योऽपि भक्तेभ्यः । समर्थाश्च । भवन्ति ॥२१॥

एवमिति । एवममुना प्रकारेण । आत्मनां जीवानाम् । अतिश्रेयस्करो भगवत्प्रसन्नताद्वारात्यन्तकल्याणकारकः । सर्वसाधनेभ्यः । महत्तरोऽतिमहान् । चतुर्विधः । कृष्णस्य । आश्रयः प्रोक्तः ॥ २२ ॥ एककेनेति । इह सत्सङ्गे । मुमुक्षुणा । कृतेन । एककेनापि । तेनाश्रयेणैव । अखिलान्यपि । साधनानि । कृतानि । स्युः । निश्चितम् ॥ २३ ॥ इतीति । इत्येवंविधम् । उत्तमम् । हरेः । वचनामृतम् । निपीय श्रुत्वेत्यर्थः । सः मुनिर्मुक्तानन्दमुनिः । अखिलाः सर्वे । अपरे गोपालानन्दादयोऽन्ये । मुनयश्च । अपिशब्दात्सभोपविष्टा गृहिजनाश्च । हृदि स्वस्वमनसि । दधुर्धारयामासः । तुरीयकं चतुर्थं ज्ञानिकम् । हरिसमाश्रयमेव । दृढं सुस्थिरं यथातथा । व्यधुश्चक्रुश्च ॥ २४ ॥ स्वस्याश्रयश्चतुर्द्धोक्तो जीवकल्याणकारकः । येन स श्रीहरिर्दद्यान्मह्यं तुर्यं स्वमाश्रयम् ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्ण-भगवत्स्नुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां त्रयस्त्रिंशस्तरङ्गः ॥ ३३ ॥

सुखाम्बुधिं हरिं हित्वा तुच्छेऽर्थेऽन्यत्र सक्तताम् । चेतसो वृत्तयो यान्ति तत्र कारणमस्ति यत् ॥ १ ॥ साक्षात्कृष्णस्य भक्तानां क्लेशप्राप्तौ च कारणम् ।

एवं चतुर्विधः प्रोक्तः कृष्णस्याश्रय आत्मनाम् । अतिश्रेयस्करः सर्वसाधनेभ्यो महत्तरः ॥ २२ ॥ एकके-
नापि तेनैव कृतेनेह मुमुक्षुणा । कृतानि साधनानि स्युरखिलान्यपि निश्चितम् ॥ २३ ॥ इति हरेर्वचना-
मृतमुत्तमं स च मुनिर्मुनयोऽप्यपरेऽखिलाः । हृदि निपीय दधुश्च तुरीयकं हरिसमाश्रयमेव दृढं व्यधुः ॥ २४ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते त्रयस्त्रिंशस्तरङ्गः ॥ ३३ ॥

शकाब्दे विक्रमार्कस्य रसाश्ववसुभूमिते । सहस्यकृष्णैकादश्यां वचोऽमृतमिदं हरेः ॥ १ ॥ तत्र दुर्गपुरे स्वामी दुर्गे उत्तम-
भूभुजः । तद्वेश्मनो बहिर्वेद्यां पीठोत्तम उपाविशत् ॥ २ ॥ सिताम्बरधरः पुष्पहारापीडावतंसकान् । दधद्भक्तैः परिवृतस्त्या-
गिभिर्गृहिभिस्तथा ॥ ३ ॥ सवाद्यं साधुगीतानि कृष्णपद्यानि सादरम् । श्रुत्वा प्रसन्नं पप्रच्छ ब्रह्मानन्दस्तमानतः ॥ ४ ॥

यदस्ति तद्द्वयमपि चतुस्त्रिंशे प्रकीर्त्तितम् ॥ २ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८७६) सहस्यकृष्णैकादश्यां पौषमासगतकृष्णपक्षैकादशिकातिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमभूभुजः । दुर्गे । तद्वेश्मनः प्रत्यग्द्वारस्योत्तमनृपभवनस्य । बहिर्वेद्याम् । पीठोत्तमे सश्वेतोत्तरच्छद-तूलिकास्तृते उपबर्हपार्श्विकयुते उत्तमे मञ्चासने । स्वामी श्रीहरिः उपाविशत्स्वनिवासभवनादागत्य प्रातर्दक्षिणास्यो निषसाद ॥ २ ॥ तमनुवर्णयति । सितेति । सिताम्बर-धरः परिधृतश्वेतपरिधानीयोत्तरीय - शिरोवेष्टनवसनः । हाराश्च आपीडाः शेखराश्च अवतंसाः कर्णपूराश्च पुष्पाणां ये हारादयस्तान् । दधत् । भक्तैः । त्यागिभिः । तथा । गृहिभिः । नानादेशागतैरिति शेषः । परिवृतः सभायां परिवेष्टितः ॥ ३ ॥ सवाद्यमिति । सवाद्यं विपञ्चिकादिवाद्यवादनसहितं यथातथा । साधुगीतानि मुक्ता-नन्दप्रेमानन्दादिसद्भिः संगीतानि । कृष्णपद्यानि साक्षाच्छ्रीकृष्णगुणचरित्रयुतकीर्त्तनानि । सादरं यथातथा । श्रुत्वा । प्रसन्नं प्रसन्नतामाप्तम् । तं श्रीहरिम् । आनतो

विनयेनादौ सम्यक् प्रणतः । ब्रह्मानन्दो मुनिः । पप्रच्छ ॥ ४ ॥ परादिति । हे हरे ! । कृष्णः । त्वम् । परात्परतरोऽक्षरात्परतः पर इति श्रुत्या सर्वपरादक्षरब्रह्मणोऽपि गुणैश्वर्यादिभिः परतरत्वेनोक्तः । आनन्दनिधिः श्रुतिन्यायादिभिः प्रचुरानन्दत्वेनोक्तत्वाद्यावदानन्दवार्द्धिश्च । असि । तं तथाभूतं श्रीकृष्णं त्वाम् । हित्वा । अन्यत्र श्रीकृष्णात्त्वदितरस्मिन् । अतितुच्छे । अर्थे मायिकस्त्रीधनादिपदार्थे । चित्तवृत्तयः । लगन्ते लग्ना भवन्ति ॥५॥ तत्रेति । हे सत्पते ! एकान्तिकसाधुजनैकनाथ ! । तत्र तस्मिन्नर्थे । यत् । कारणं हेतुर्भवति । तत्कारणम् । मे मह्यम् । वक्तुम् । अर्हसि । इत्यमुना प्रकारेण तेन ब्रह्मानन्दमुनिना । पृष्टः । प्रभुः श्रीहरिः । तं ब्रह्मानन्दमुनिम् । प्रोवाच । हे मुने ! । शृणु तव प्रश्नोत्तरमाकर्णय ॥६॥ यदेति । यदा । भगवता श्रीकृष्णेन । स्वमायया । एतत् । विश्वम् । सृष्टम् । तदानीं तर्ह्येव । तद्वृद्ध्यै विश्वसर्गवृद्ध्यर्थम् । स्नेहपाशोऽपि । निर्मितः । 'यः स्नेहपाशो निजसर्गवृद्धये स्वयं कृतस्ते'इति श्रीभागवतोक्तेः ॥ ७ ॥ तदिति । भुवि पृथिव्याम् । सूक्ष्मशिल्पविदः पुरुषस्य । कलया स्वबुद्धितर्कितया कयाचिद्युक्त्या । घटीयन्त्रनिष्ठा विपलपलघटीमुहूर्त्तादिबोधका सुवर्णरूप्यरीत्यादिकृता शलाका (कांटो) यथा भ्राम्यति ।

परात्परः कृष्णस्त्वमानन्दनिधिश्च तम् । हित्वाऽन्यत्रातितुच्छेऽर्थे लगन्ते चित्तवृत्तयः ॥ ५ ॥
तत्र यत्कारणं तन्मे वक्तुमर्हसि सत्पते ! । इति पृष्टः प्रभुस्तेन तं प्रोवाच मुने ! शृणु ॥ ६ ॥
यदा भगवता सृष्टं विश्वमेतत्स्वमायया । तदानीमेव तद्वृद्ध्यै स्नेहपाशोऽपि निर्मितः ॥ ७ ॥
तन्निबद्धमिदं सर्वं कलया भ्राम्यतीशितुः । घटीयन्त्रशलाकेव सूक्ष्मशिल्पविदो भुवि ॥ ८ ॥
अतः साहजिकी प्रीतिः स्त्रियाः पुंसि स्त्रियां च नुः । पुत्रवित्तगृहादौ च द्वयोरप्यत्र जायते ॥ ९ ॥
मायैव सा भगवतो ज्ञेया विश्वविवर्द्धनी । तन्निवृत्तिस्तु दुःसाध्या विदुषामपि कामिनाम् ॥ १० ॥
मायापरोऽपि भगवान्स यदा श्रेयसे नृणाम् । आविर्भवेन्नृषु क्षोण्यां श्रयेयुस्तं तदा नराः ॥ ११ ॥

तथा । तन्निबद्धं स्नेहपाशसंयतम् । सर्वम् । इदं विश्वम् । ईशितुः कालमायादिनियामकस्य श्रीकृष्णस्य । कलया तत्कर्मानुगुणं प्रवृत्तयान्तर्यामिशक्त्या । भ्राम्यति ॥ ८ ॥ अत इति । अतो हेतोः । अत्र लोके । स्त्रियाः । पुंसि । साहजिकी स्वाभाविकी । प्रीतिः । जायते । नुः पुरुषस्य । स्त्रियाम् । साहजिकी प्रीतिर्जायते । द्वयोः स्त्रीपुरुषयोरपि । पुत्रवित्तगृहादौ । साहजिकी प्रीतिर्जायते । तथा च श्रीभागवते । 'पुंसः स्त्रिया मिथुनीभावमेत'मित्यादि ॥ ९ ॥ मायेति । सा स्नेहपाशरूपा । विश्वविवर्द्धनी । भगवतः । मायैव । ज्ञेया । तन्निवृत्तिस्तथाभूतमायोपरतिस्तु । कामिनां स्नेहपाशालम्बनेन स्त्र्यादिकामुकानाम् । विदुषां शास्त्रजन्यज्ञानवतां पण्डितानामपि । दुःसाध्या । दुःखेनापि तैस्तन्निवृत्तिः कर्त्तुं न शक्यते इत्यर्थः ॥१०॥ मायेति । भगवान् स्वयं श्रीकृष्णः । मायापरः । अस्ति । स भगवान् । यदा । नृणाम् । श्रेयसे । क्षोण्यां पृथिव्याम् । नृषु मनुष्येषु । आविर्भवेत्प्रादुर्भावं प्राप्नुयात् । तदा । नराः । तं भगवन्तम् । श्रयेयुः । स्वनिःश्रेयसाय तदीयैकान्तिकसाधुद्वारा शरणं प्राप्नुयुः ॥११॥

द्विविधा इति । ते कृतसाक्षाद्भगवदाश्रया नरा अपि । द्विविधाः । सन्ति । तत्र तेषु द्विविधनरेषु मध्ये । एके आद्याः । संस्कारिणः । सन्ति । अपरे द्वितीयाः । संस्काररहिताः । सन्ति । इहास्मिन् लोके वर्त्तमानाः । ते उभयेऽपि । लक्षणैर्वक्ष्यमाणलक्ष्मभिः । ज्ञातव्याः ॥ १२ ॥ अथेदानीं संस्कारशब्दार्थोक्तिपूर्वं तद्वत्त्वेन संस्कारिलक्षणान्याह । सत्रिपादैश्चतुर्भिः । प्रागिति । श्रीकृष्णश्च तदीयाः श्रीकृष्णभक्ताश्च तेषामीक्षा भावेन समीक्षणं च अन्नादिसेवाऽन्नवासःप्रदानजलाहरणाङ्गमर्दनादिना परिचर्या सा च प्राक् पूर्वजन्मनि कृते ये श्रीकृष्णतदीयेक्षान्नादिसेवेते आदी येषां तानि यानि कर्माणि तेषाम् । संस्कारः वासना । अत्र लोके । येषां नराणाम् । भवेत् । ते नराः । संस्कारिणः । मताः ॥ १३ ॥ तेषामिति । तेषां संस्कारिनराणाम् । सतां साक्षाच्छ्रीकृष्णैकान्तिकसाधूनाम् । सङ्गे । जाते सति । तद्वार्त्तासु साधूक्त-साक्षाच्छ्रीकृष्णमाहात्म्यवृत्तान्तेषु । रुचिः प्रीतिः । भवेत् । कृष्णस्य साक्षाच्छ्रीकृष्णभगवतः । निश्चयोऽयं नृणाध्यधरः साक्षादीश्वरेश्वरः पुरुषोत्तम एवेति निर्णयपूर्वकः समाश्रयः । तूर्णमञ्जसैव । भवेत् । स निश्चयश्च । भृशमतिशयेन । दृढो निश्चलः । भवेत् ॥१४॥ अञ्जसेति । ततः । तेषाम् । तद्भक्तौ श्रवणादिनवविधभक्त्या तत्प्रीणने ।

द्विविधास्तेऽपि तत्रैके सन्ति संस्कारिणोऽपरे । संस्काररहितास्ते च ज्ञातव्या लक्षणैरिह ॥ १२ ॥ प्राक् श्रीकृष्णतदीयेक्षान्नादिसेवादि कर्मणाम् । संस्कारोऽत्र भवेद्येषां ते हि संस्कारिणो मताः ॥ १३ ॥ तेषां जाते सतां सङ्गे तद्वार्त्तासु रुचिर्भवेत् । कृष्णस्य निश्चयस्तूर्णं भवेत्स च दृढो भृशम् ॥ १४ ॥ अञ्जसैव प्रवृत्तिः स्यात्तद्भक्तावेव सर्वथा । तदन्यत्रातिवैराग्यं स्वधर्मे चाचला स्थितिः ॥ १५ ॥ समर्थाश्च भवेयुस्ते स्वीयस्निग्धान् परानपि । स्नेहपाशान्मोचयितुं प्रीतिं कारयितुं प्रभौ ॥ १६ ॥ सज्जन्ते तुच्छसौख्येषु न तेषां चित्तवृत्तयः । एवं संस्कारिणो लक्ष्यास्तदन्ये त्र विपर्ययात् ॥ १७ ॥ अत्रैव जन्मनि भवेद्येषां सङ्गः सतां हरेः । तेषां गुणात्मकस्वीयप्राक्कर्मानुसृता मतिः ॥ १८ ॥

एव । अञ्जसानायासेनैव । सर्वथा सर्वप्रकारेण । प्रवृत्तिः । स्यात् । तदन्यत्र साक्षाद्भगवदितरमायिकपदार्थमात्रे । अतिवैराग्यमतिशयिताऽप्रीतिः । स्यात् । स्वधर्मे साक्षाद्भगवदुपदिष्टे स्ववर्णाश्रमाचारे । अचला । स्थितिश्च । स्यात् ॥१५॥ समर्था इति । ते संस्कारिणो नराः । स्वीयस्निग्धान्स्वकीयकलत्रपुत्रादिषु गाढानुरागवतः । परान्-संस्कारिणोऽन्यान्नरानपि । स्नेहपाशात् । मोचयितुम् । प्रभौ साक्षाच्छ्रीकृष्णे । प्रीतिं कारयितुं च समर्थाः । भवेयुः ॥ १६ ॥ सज्जन्त इति । तेषां संस्कारिणाम् । चित्तवृत्तयः । तुच्छसौख्येषु मायिकस्त्रीधनादिफल्गुसुखेषु । न तु नैव । सज्जन्ते आसक्ता भवन्ति । एवममुना प्रकारेण । संस्कारिणो नराः । लक्ष्या लक्षितुमर्हाः । अथास्यैकेन पादेनासंस्कारिलक्षणान्याह । तदन्ये तेभ्य इतरेऽसंस्कारिणो नराः । विपर्ययादुक्तलक्षणवैपरीत्यात् । लक्ष्याः ॥ १७ ॥ एवं समासेनासंस्कारिलक्षणानि संस्कारिलक्षणविपर्ययत्वेनाभिधाय साम्प्रतमसंस्कारिणां कर्त्तव्यमाहाष्टभिः । अत्रेति । येषामसंस्कारिणां नराणाम् । अत्र विद्यमानेऽस्मिन् । जन्मन्येव । हरेर्जननिःश्रेयसार्थं प्रादुर्भूतस्य भागवतः । सतामेकान्तिकसाधूनाम् । सङ्गः । भवेत् । अत्र सङ्गशब्देन तद्वार्ताश्रवणजातरुच्या, तदभिहिततन्महिमावबोधपूर्वकं तदाश्रयो बोध्यः ।

तेषामसंस्कारिनराणाम् । मतिर्बुद्धिः । गुणात्मकानि सत्त्वादित्रिगुणमयानि स्वीयप्राक्कर्माणि तान्यनुसृता तदनुसारिणी । भवेत् ॥ १८ ॥ अभ्यस्तैरिति । अभ्यस्तैः पूर्वजन्मस्वभ्याससेवितैः । ग्राम्यविषयसौख्यैर्मायिकशब्दादिपञ्चविषयसुखैः । मुहुः पुनः पुनः । आकृष्यते भगवद्ध्यानादितो निवृत्त्य तन्मतिः स्वोपभोगाभिमुखी क्रियते । ततो हेतोः । भगवतः । भक्तौ । अन्तराया विघ्नाः । भवन्ति । हि ॥ १९ ॥ प्रागिति । प्राक्सत्संस्कृतिहीनानां पूर्वोक्तपूर्वजन्मकृतशुभसंस्कारवर्जितानाम् । तेषामसंस्कारिणां नराणां मध्ये । ये । विवेकिनः सदसद्विवेकवन्तः । सन्ति । ते तु । सद्भिः साधुभिः । बोधिताः सद्वार्त्ताभिरुपदिष्टाः सन्तः । भूयः । विषयैर्मुहुराकृष्टा अपि पुनरित्यर्थः । स्वीयसत्पथे साधूपदिष्टे स्वकीयसन्मार्गे । सत्सङ्गाध्वनीत्यर्थः वर्त्तन्ते ॥२०॥ तस्मादिति । तस्माद्धेतोः । विचक्षणैर्विवेकिभिस्तैः । स्वीयम् । अन्तःकरणम् । अञ्जसा तूर्णमेव । विषयप्रवृत्तिसमकालमेवेत्यर्थः । सर्वदा । अवधातव्यं प्रमादरहितं विधातव्यम् । यथा येन प्रकारेण । कुपथं विषयप्रवणतारूपमसन्मार्गम् । न व्रजेत् । तथाऽवधातव्यमिति सम्बन्धः ॥ २१ ॥ क्वचिदिति । चेद्यदि । तदन्तःकरणम् । क्वचित्कदाचित् । पूर्वाभ्यासवशात् । कुपथम् । व्रजेत् । तदा । सद्यस्तत्क्षणमेव । ततः

अभ्यस्तैर्ग्राम्यविषयसौख्यैराकृष्यत मुहुः । ततो भगवतो भक्तावन्तराया भवन्ति हि ॥ १९ ॥ प्राक्सत्संस्कृतिहीनानां तेषां ये तु विवेकिनः । ते सद्भिर्बोधिता भूयो वर्त्तन्ते स्वीयसत्पथे ॥ २० ॥ तस्माद्विचक्षणैः स्वीयमन्तःकरणमञ्जसा । सर्वदैवावधातव्यं यथा न कुपथं व्रजेत् ॥ २१ ॥ क्वचित्पूर्वाभ्यासवशाद्व्रजेच्चेत्कुपथं तदा । सद्यस्तत्तत आकृष्य हरौ योज्यं हठादपि ॥ २२ ॥ कृष्णमाहात्म्यातिशयविज्ञानाभावतः खलु । सत्सङ्गिनामपि मनः कृष्णादन्यत्र गच्छति ॥ २३ ॥ सतां प्रसङ्गं कृत्वाऽतः श्रोतव्यो महिमा हरेः । स्वधर्मज्ञानवैराग्यं सम्पाद्यं सह तेन च ॥२४ कुपथे व्रजतो भीतिर्यमाज्ज्ञेया च संसृतिः । कृष्ण एव रुचिः साध्या हेयमन्यत्तु सर्वथा ॥ २५ ॥

कुपथात् । आकृष्याहृत्य । हठात्प्रयत्नतोऽपि । हरौ साक्षाच्छ्रीहरिभक्तावेवेत्यर्थः । योज्यम् ॥ २२ ॥ कृष्णेति । कृष्णः साक्षाद्वर्त्तमानो यः श्रीकृष्णस्तस्य माहात्म्यातिशयोऽक्षरपरत्वादिरूपोऽतिशयितो महिमा तस्य विज्ञानं यथार्थतया वेदनं तस्याभावादिति तत्तः । सत्सङ्गिनां कृतसत्साधुसङ्गानामपि तेषाम् । मनः । कृष्णात्स्वाश्रितश्रीकृष्णभक्तितः । अन्यत्रान्यस्मिन्मायिकपदार्थे । गच्छति । खलु ॥ २३ ॥ सतामिति । अतो हेतोः । सताम् । प्रसङ्गं तदुक्त्यवधारणपूर्वकं कायवाङ्मनोभिस्तदुक्तप्रकारेण वर्त्तनरूपं प्रकृष्टं सङ्गम् । कृत्वा । हरेः । महिमा माहात्म्यम् । श्रोतव्यः । तेन हरिमहिम्ना सह । स्वधर्मज्ञानवैराग्यम् । सम्पाद्यम् ॥ २४ ॥ कुपथ इति । कुपथे । व्रजतः पुरुषस्य । यमात्संयमनीपतेः सकाशात् । भीतिः । ज्ञेया । संसृतिः पुनः पुनर्जन्ममरणप्रवाहश्च । ज्ञेया । कृष्णे एव । रुचिः प्रीतिः । साध्या । अन्यत्कृष्णरुचिविघातकं यत्किञ्चित् । सर्वथा सर्वप्रकारेण । हेयम् । अत्रास्यायं निष्कर्षार्थः । प्राक्तनसंस्कारवतां चित्तवृत्तयस्तु श्रीकृष्णं हित्वाऽन्यत्र नैव व्रजन्ति तदितरेषां संस्काराभावाद्व्रजन्त्यतस्तच्चित्तवृत्तीनां श्रीकृष्णेतरत्र व्रजने तत्प्राक्तनसंस्काराभाव एव कारणमिति ॥ २५ ॥

इतीति । इत्येवंविधम् । प्रश्नोत्तरम् । श्रुत्वा । सत्तमः साधुश्रेष्ठः ! स ब्रह्मानन्दमुनिः । प्रसन्नः । अभूत् । अथानन्तरम् । मुक्तानन्दो मुनिः । प्राञ्जलिः कृताञ्जलिः सन् । हरिम् । प्रणम्य । पप्रच्छ श्रीहरिं वक्ष्यमाणप्रश्नमप्राक्षीत् ॥ २६ ॥ निःश्रेयसायेति । हे हरे ? भगवन् ? । पुरुषोत्तमः । त्वम् । स्वकं निजम् । स्वभावमपारकारुण्य-सौशील्य-वात्सल्यौदार्यैश्वर्यादिमहोदधित्वरूपम् । अजहदत्यजन्सन्नेव । जीवानाम् । निश्रेयसाय । क्षोण्यां भूमौ । नृषु । प्रजात आविर्भूतोऽसि ॥ २७ ॥ पुर्विति । पुरुकृच्छ्रे प्रचुरदुःखैकाश्रये । अत्रास्मिन् । संसारे । कर्मभिः शुभाशुभैः पूर्वकृतैर्नानाविधैः सात्त्विकादिकर्मभिः । भ्रमतां चक्रवत्परिवर्त्तमानानाम् । नृणाम् । साक्षात्प्रत्यक्षत्वेन वर्त्तमानस्य । तव भवतः । सम्प्राप्तिः । तप आदिभिरपि । दुर्लभा दुष्प्रापैव ॥ २८ ॥ स इति । चेद्यदि । सः धृतनराकारः । भवान् । स्वयमेव । करुणया निष्कारणापारदयया । प्राप्तः । भवेत् । तदा । देहिनां जीवानाम् । अन्यत्त्वदितरत् । किमपि किञ्चनापि । प्राप्तव्यम् । नावशिष्यतेऽवशिष्टं न तिष्ठति ॥ २९ ॥ त्वदीयेति । किञ्च । त्वदीयानन्दतः श्रीमद्भगवतस्तवानन्दात् । अन्यः । आनन्दः । नावशिष्यते । यतो हेतोः । सर्वानन्दनिधिर्निरवधिकातिशयानन्दाम्बुनिधिः । त्वमेव । असि । इती-

इति प्रश्नोत्तरं श्रुत्वा प्रसन्नोऽभूत्स सत्तमः । मुक्तानन्दोऽथ पप्रच्छ प्रणम्य प्राञ्जलिर्हरिम् ॥ २६ ॥ निःश्रेयसाय जीवानां हरे ! त्वं पुरुषोत्तमः । क्षोण्यां नृषु प्रजातोऽसि स्वभावमजहत्स्वकम् ॥ २७ ॥ पुरुकृच्छ्रेऽत्र संसारे कर्मभिर्भ्रमतां नृणाम् । साक्षात्तवैव सम्प्राप्तिर्दुर्लभा तपआदिभिः ॥२८॥ स चेत्करुणया प्राप्तः स्वयमेव भवांस्तदा । प्राप्तव्यमन्यत्किमपि देहिनां नावशिष्यते ॥ २९ ॥ त्वदीयानन्दतश्चान्य आनन्दो नावशिष्यते । यतः सर्वानन्दनिधिस्त्वमेवेति श्रुतिर्जगौ ॥ ३० ॥ तथापि त्वां तमत्रापि प्राप्ताः केचन पूरुषाः । प्राप्तये तुच्छसौख्यस्य कुतः क्लिश्यन्ति मे वद ॥ ३१ ॥ तमुवाच हरिः साधो ! शृणु तत्कारणं ब्रुवे । साक्षात्कृष्णमिह प्राप्ता भवन्ति बहवो नराः ॥ ३२ ॥ तेषां ये तस्य वचने वर्त्तेरन् दृढनिश्चयाः । त एवात्र सुखं तस्य प्राप्नुयुर्न तु तेऽखिलाः ॥३३॥

त्थम् । श्रुतिः । जगौ । तथा चानन्दवल्ल्युपनिषदि श्रुतिः 'सैषानन्दस्य मीमांसा भवतीत्यारभ्य यतो वाचो निवर्त्तन्त इत्यन्ता' ॥ ३० ॥ तथेति । तथापि यद्यप्येवंविधो भवान् वर्त्तते तथापि । अत्र लोके । केचन पुरुषा भक्तजनाः । तं तथाविधम् । त्वाम् । प्राप्ता अपि । तुच्छसौख्यस्य मायिकाल्पविषयसुखस्य । प्राप्तये । कुतो हेतोः । क्लिश्यन्ति क्लेशं प्राप्नुवन्ति । मे मह्यम् । वद तद्धेतुं ब्रूहि ॥३१॥ तमिति । तमेवं पृच्छन्तं मुक्तानन्दमुनिम् । हरिः । उवाच । हे साधो ! । तत्कारणम् । ब्रूवे त्वम् । शृणु तदाकर्णय । इह लोके । साक्षात्कृष्णम् । प्राप्ताः । बहवः । नराः । भवन्ति ॥ ३२ ॥ तेषामिति । येषां साक्षाद्भगवन्तं प्राप्तानां नराणां मध्ये । अत्र लोके । ये नराः । दृढनिश्चयास्तदुपदिष्टस्वधर्माद्यापालनस्थिरनिर्णयाः सन्तः । तस्य भगवतः । वचने तथाविधाज्ञापालनवाक्ये । वर्त्तेरन् । ते नरा एव । तस्य भगवतः । सुखम् । प्राप्नुयुः । अखिलाः सकलाः । ते भगवन्तं प्राप्ता नराः । न तु तस्य सुखं नैव प्राप्नुवन्ति ॥ ३३ ॥

य इति । ये भगवन्तं प्राप्ता नराः । अन्यप्रसङ्गतो भगवदितरधनादिमायिकपदार्थासक्त्या । तस्य भगवतः । यावद्वचनं यत्परिमितां भगवदाज्ञाम् । लुम्पन्ति उल्लङ्घ्य वर्त्तन्ते । ते नराः । तुच्छार्थलिप्सया फल्गुविषयप्राप्तीच्छया हेतुना । तावन्तं तत्परिमितम् । क्लेशम् । प्राप्नुवन्ति । अत्र प्रश्नोत्तरस्यायं भावः : यद्यपि भगवांस्तु सर्वानन्दनिधिरस्त्यथापि तद्वचने दृढनिश्चयवतां तदानन्दावाप्तिर्जायते ये तमाश्रित्यापि दुर्जनसङ्गादिना तद्वचनतोऽन्यथा वर्त्तन्ते ते तदानन्दमप्राप्नुवन्तः सन्तः सांसारिके तुच्छार्थे सुखाशां बध्नन्ति तेन हेतुना क्लेशमनुभवन्तीति ॥ ३४ ॥ अत इति । अतो हेतोः । त्यागिभिर्मदाश्रितैः साधुभिर्वर्णिभिश्च । मदुदीरिता मया पाल्यत्वेन प्रोक्ताः । अष्टाङ्गब्रह्मचर्यप्रमुखाः । स्वकाः । नियमाः । प्रयत्नेन पालनीयाः ॥ ३५ ॥ मदिति । मदाश्रितैः । गृहिभिर्गृहस्थजनैश्च । परस्त्रीवर्जनादयः । स्वधर्माः मदुदीरिताः स्वसदाचाराः । यत्नेन । पाल्याः अन्यथा स्वस्वनियमपालनाभावे । भृशम् । क्लेशः । स्यात् ॥ ३६ ॥ भगवदिति । भगवद्विमुखानां साक्षाद्भगवदाश्रयवर्जितानां जीवानां तु । सुखदुःखे । स्वकर्मभिः । भवतः । भक्तानां साक्षाद्भगवदाश्रितजनानां तु । ते सुखदुःखे । हरेः । आज्ञापालनत्यागतः । भवतः । आज्ञापालनेन सुखं तत्त्यागतो दुःखं

ये यावद्वचनं तस्य लुम्पन्त्यन्यप्रसङ्गतः । ते प्राप्नुवन्ति तावन्तं तुच्छार्थलिप्सया क्लेशम् ॥ ३४ ॥ अतोऽष्टाङ्गब्रह्मचर्यप्रमुखानि यमाः स्वकाः । पालनीयाः प्रयत्नेन त्यागिभिर्मदुदीरिताः ॥ ३५ ॥ मदाश्रितैश्च गृहिभिः परस्त्रीवर्जनादयः । पाल्याः स्वधर्मा यत्नेन क्लेशः स्यादन्यथा भृशम् ॥ ३६ ॥ भगवद्विमुखानां तु सुखदुःखे । स्वकर्मभिः भक्तानां तु हरेराज्ञापालनत्यागतश्च ते ॥ ३७ ॥ अतः स्वधर्मे स्थितिरादरेण सर्वैर्विधेयेति वचो निःशम्य । सुधासमं तस्य मुनिः स चान्ये तदाश्रिता मोदमगुः सदःस्थाः ॥ ३८ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते चतुस्त्रिंशस्तरङ्गः ॥ ३३ ॥

शकाब्दे विक्रमार्कस्य रसाश्ववसुभूमिते । सहस्यकृष्णद्वादश्यां वचोऽमृतमिदं हरेः ॥ १ ॥

भवतीत्यर्थः ॥ ३७ ॥ अत इति । अतो हेतोः । सर्वैर्मदाश्रितैः सकलैर्जनैः । स्वधर्मे । स्थितिः । आदरेण । विधेया कर्त्तव्या । इतीत्थंभूतम् । सुधासमममृततुल्यम् । तस्य श्रीहरेः । वचः । निशम्य । सः । मुनिर्मुक्तानन्दमुनिः । सदःस्थाः समीपविष्टाः । अन्ये तदितरे । तदाश्रिताः श्रीहरिसंश्रितास्त्यागिनो गृहिणश्च जनाः । मोदमानन्दम् । अगुः प्रापुः ॥ ३८ ॥ स्वभक्तचित्तं स्वं हित्वा तुच्छेऽर्थेऽन्यत्र सक्तताम् । व्रजेत्तत्कारणं तेषां क्लेशाप्तौ कारणं च यत् ॥ १ ॥ ते येन विस्तरात्प्रोक्ते आनन्दनिधिना स्फुटम् । स श्रीहरिः सदा मेऽस्तु भक्तिधर्मसुतो हृदि ॥२॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्सूनुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां चतुस्त्रिंशस्तरङ्गः ॥ ३४ ॥

पञ्चत्रिंशेऽल्पबुद्धेश्च बहुबुद्धेः स्मृतः स्थितौ । श्रेयोऽध्वन्यस्थितौ हेतुस्त्यागोपायश्च दुर्द्धियः ॥ १ ॥ शकेति । पूर्वार्द्धं व्याख्यातम् । (१८७६) सहस्यकृष्णद्वादश्यां पौषमाससम्बन्धिबहुलपक्षीयद्वादशिकातिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥

तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमस्योत्तमाख्यनृपतेः । दुर्गे । निम्बद्रुमाधस्ताच्छ्रीवासुदेवमन्दिरपुरःस्थितपिचुमन्दतरुधोवर्त्तिवेदिकायाम् । उत्तमे मृदुलतूलिकापार्श्विकोपबर्हास्तरणसहितत्वादतिश्रेष्ठे । पीठे मञ्चासने । सितांशुकः स्वाङ्गपरिधृतसकलश्वेतवसनः । स श्रीहरिः । संन्यपीदत्पूर्वास्यो निषसाद ॥ २ ॥ पौष्पै-रिति । निजैरात्मीयभक्तैः । कर्तृभिः । पौष्पैस्तत्कालोचितसुगन्धिपुष्पकृतैः । हारैः । शेखरैश्च । सुवस्त्राद्यैस्तत्कालोचितनीशारचतुष्फालादिसुवसनप्रभृतिभिश्च करणैः । अर्चितः पूजितः । नानाभक्तगणैर्नानादेशायातत्यागिगृहिस्वभक्तसमूहैः । वृतः सभायां परिवेष्टितः । स श्रीहरिः । स्वयं केनाप्यननुयुक्त एव । सतः साधून् । प्रोवाच ॥ ३ ॥ पृच्छामिति । हे साधवः ! । भवतो युष्मान् । किञ्चित् । पृच्छामि । तत् । श्रुत्वा । उत्तरम् । कुरुत । कश्चित् । एकः । पुमान् । स्वल्पबुद्धिः शास्त्र-व्यवहारज्ञानाल्पमतिः । अत एव । अविश्रुतोऽविख्यातः । अस्ति ॥ ४ ॥ तथेति । तथापि । असौ पुमान् । श्रेयोऽध्वनि स्वकल्याणसम्पादके भागवतधर्मरूपे मार्गे ।

तत्र दुर्गपुदे दुर्गं उत्तमस्य स उत्तमे । पीठे निम्बद्रुमाधस्तात्संन्यसिदत्सितांशुकः ॥ २ ॥ पौष्पैर्हारैः सुवस्त्राद्यैः शेखरैश्चार्चितो निजैः । वृतो नानाभक्तगणैः सतः प्रोवाच स स्वयम् ॥ ३ ॥ पृच्छामि भवतः किञ्चित्तच्छ्रुत्वा कुरुतोत्तरम् । कश्चिदेकः पुमानस्ति स्वल्पबुद्धिरविश्रुतः ॥ ४ ॥ तथाप्यसौ वर्त्तमानः सम्यक् श्रेयोऽध्वनीक्ष्यते । द्वितीयस्तु पुमानस्ति बहुबुद्धिश्च विश्रुतः ॥ ५ ॥ महत्स्वप्यगुणं कश्चिद्भासमानं प्रदर्शयेत् । तथाऽप्यसौ भागवतमध्वानमतिगच्छति ॥ ६ ॥ अत्र को हेतुरस्तीति पृष्टास्ते साधवो यदा । सम्यक् तदुत्तरं दातुं नाजानन्सोऽब्रवीत्तदा ॥ ७ ॥ अहमेवोत्तरं वच्मि यूयं शृणुत साधवः । द्वितीयस्यास्य पुंसस्तु मतिरस्त्येव भूयसी ॥८॥ तथाऽप्यस्यास्ति हृदये श्रीहरेर्वाऽगुणः सताम् । तेन सा दूषितास्तीति प्राप्नोत्येव विपर्ययम् ॥९॥

सम्यक् । वर्त्तमानः । ईक्ष्यते दृश्यते । द्वितीयः । पुमान् । बहुबुद्धिर्लोकशास्त्रज्ञाननिष्णातमतिः । अत एव । विश्रुतः सर्वत्र विख्यातश्च । अस्ति ॥ ५ ॥ महत्स्विति । महत्सु भगवत्प्रसन्नताहेतुभूतसकलगुणगरिष्ठेषु भगवद्भक्तेष्वपि । भासमानं स्वबुध्या दृश्यमानम् । कश्चित् । अगुणम् । प्रदर्शयेत् तेभ्यः समीक्षयेत । तथापि । असौ पुरुषः । भागवतं भागवतधर्मरूपम् । अध्वानं श्रेयोमार्गम् । अतिगच्छत्यतिक्रम्य वर्त्तते ॥ ६ ॥ अत्रेति । अत्रास्मिन्नर्थे । को हेतुः किं कारणम् । अस्ति । इत्युमुना प्रकारेण । पृष्टाः श्रीहरिणानुयुक्ताः । ते । साधवः । यदा । सम्यग्यथा स्यात्तथा । तदुत्तरं श्रीहरिप्रश्नप्रतिवचनम् । दातुम् । नाजानन्नैवाविदम् । तदा । स श्रीहरिः । अब्रवीत् ॥ ७ ॥ अहमिति । हे साधवः ! । एहमेव । उत्तरम् । वच्मि । यूयम् । शृणुत । द्वितीयस्य । पुंसः । मतिस्तु । भूयस्यतिशयितैव । अस्ति ॥ ८ ॥ तथेति । तथापि । अस्य पुरुषस्य । हृदये मनसि । श्रीहरेः । अथवा । सतां महतां साधूनाम् । अगुणः । अस्ति । तेन तद्धृदयावस्थितश्रीहरितदीयमहासाध्वगुणेन । सा

तदीयाभूयसीमतिः । दूषिता तदविद्यमानस्वारोपितदोषदुष्टा । अस्ति । इति हेतोः । विपर्ययं स्वकल्याणप्रवर्त्तनरूपं वैपरित्यमेव । प्राप्नोति ॥९॥ तत्र दृष्टान्तमाह । यथा । सितायुतं शर्करायुक्तमपि । क्षीरं दुग्धम् । विषाक्तं गरलसंपृक्त सत् । पुष्टिहेतुः । शरीरपुष्टिकारणभूतम् । न भवेत् । प्रत्युत प्राणान् हरेदिति भावः । तथा । सदोषा पूर्वोक्तदोषसहिता । देहिनः पूर्वोक्तबहुबुद्धिमतः पुरुषस्य धिषणा भूयसी बुद्धिः । श्रेयोहेतुर्भागवतधर्मप्रवर्त्तनरूपस्वकल्याणकारणभूता । न भवेत् । किन्तु स्वश्रेयोविनाशहेतुर्भवेदित्यर्थः ॥ १० ॥ दुष्टेति । तस्माद्धेतोः । दुष्टधीः । पुरुषः । श्रेयोऽध्वनि । न वर्त्तते । सत्संग्यपि साक्षाद्भगवदाश्रितोऽपि । पुमान् स पुरुषः । तस्माच्छ्रेयोऽध्वनः । पतत्येव । न संशयोऽत्र संशयो नास्ति ॥ ११ ॥ जन्मेति । स पुमान् । जन्मान्तरे भाविनि जन्मन्यपि । कृष्णस्य । तत्सतां तदाश्रितसाधूनाम् । द्रोग्धा द्रोहकर्त्ता । भवेत् । तस्य पुरुषस्य । सद्गतिः । न भवेत् । असौ पुरुषः । भाषणोचितः सह सम्भाषणार्हः । न च नैव भवेत् । तद्वचः श्रोतृणामपि तथात्वापत्त्या श्रेयोऽध्वच्यवनस्यावश्यसम्भवात्तत्सङ्गो न कर्त्तव्य इति भावः ॥ १२ ॥ अदूषितेति । इह सत्सङ्गे । अल्पधिषणोऽपि । पुमान् । अदूषितमतिः पूर्वोक्तदोषादूषितबुद्धिः सन् ।

यथा विषाक्तं न क्षीरं पुष्टिहेतुः सितायुतम् । तथा सदोषधिषणा श्रेयो हेतुर्न देहिनः ॥ १० ॥
दुष्टधीः पुरुषस्तस्माच्छ्रेयोऽध्वनि न वर्त्तते । सत्संग्यपि पुमांस्तस्मात्पतत्येव न संशयः ॥ ११ ॥
जन्मान्तरेऽपि स भवेद्द्रोग्धा कृष्णस्य तत्सताम् । सद्गतिर्न भवेत्तस्य न चासौ भाषणोचितः ॥ १२ ॥
अदूषितमतिस्त्वल्पधिषणोऽपि पुमानिह । श्रेयोवर्त्मस्थितत्वेन सर्वथा सङ्गमोचितः ॥ १३ ॥
मुक्तानन्दोऽथ पप्रच्छ साधुस्तं सद्गुरुं प्रभो ! । दुष्टधीः पुरुषः क्वापि स्यान्न वा कृष्णसन्मुखः ॥ १४ ॥
तमब्रवीद्धरिः साधो ! चतुरः सन्त्यजेदिह । छद्मेर्ष्याक्रोधमानांश्चेत्कृष्णे तत्सत्सु चापि सः ॥ १५ ॥

श्रेयोवर्त्मस्थितत्वेन स्वनिःश्रेयसाध्वनि भागवतधर्मे सम्यगवस्थितत्वेन । सर्वथा । सङ्गमोचितः प्रसङ्गविधानार्हः । भवति । अत्राद्यतस्यास्यादूषितमतित्वमेव स्वकल्याणाध्वप्रवर्त्तनहेतुर्द्वितीयस्य दूषितमतित्वमेव स्वनिःश्रेयसाप्रवर्त्तनहेतुरिति प्रश्नोत्तरं बोध्यम् ॥ १३ ॥ मुक्तानन्द इति । अथानन्तरम् । मुक्तानन्दः । साधुः । सद्गुरुम् । तं श्रीहरिम् । पप्रच्छ । हे प्रभो ! । हे कृष्ण ! । दुष्टधीरुक्तरीत्या दोषदूषितमतिः । पुरुषः । क्वापि कर्हिंचिदपि । सम्मुखः सदोषमतित्यागपूर्वकं भागवतधर्मप्रवर्त्तनतया पुनर्भवदभिमुखः । स्यात् । अथवा न स्यात् ॥ १४ ॥ तमिति । तमेवं पृच्छन्तं मुक्तानन्दमुनिम् । हरिः । अब्रवीत् । हे साधो ! । इह सत्सङ्गे । स दुष्टधीः पुरुषः । चेद्यदि । कृष्णे । तत्सत्सु तदीयसाधुषु चापि । छद्म कपटं च ईर्ष्याऽक्षान्तिश्च क्रोधश्च मानश्च तान् । चतुरः स्वमतिदूषकान् हरितद्भक्तगुणग्रहणहेतुभूतान्स्वनिष्ठांश्चतुरो दोषान् । सन्त्यजेत् । कृष्णतत्सत्सु छद्मेर्ष्ये तदुपरि क्रोधं तत्पुरो मानं च जह्यादित्यर्थः तदेत्युत्तरेण सम्बन्धः ॥ १५ ॥

तदेति । तदा तर्हि तु । महतां कृष्णतत्साधूनाम् । कृपया । क्वापि कर्हिचिदपि । तदसन्मतिस्तदीयादोषदूषिता धीः । नश्यति । ततो भागवतधर्मे तस्य पुनः प्रवर्त्तनं स्यादित्यनुक्तमपि ज्ञेयम् । एषां तन्निष्ठानां छद्मादीनां चतुर्णां दोषाणां मध्ये । अन्यतमे एकस्मिन्नपि दोषे । शिष्टेऽवशेषतां गते सति तु । तत्क्षतिस्तदीयदूषितमतिविनाशः । न स्यात् । तदवशिष्टदोषदर्शनेन महत्कृपाऽनुदय एव तद्दूषितमत्यविनाशहेतुरित्यर्थः ॥ १६ ॥ आसुरीमिति । इह लोके । सः यस्यैकोऽपि दोषोऽवशिष्टस्तथाविधः स पुरुषः । आसुरीं श्रीहरितद्भक्तागुणग्रहणलक्षणाम् । मतिं दूषितबुद्धिम् । आश्रित्य । कृष्णं साक्षाद्भगवन्तम् । भजन्नपि । देहान्ते । शिवगणः शिवपार्षदः । स्यात् । अथवा दैत्यानाम् । अधिपो नृपतिश्चापि स्यात् ॥ १७ ॥ तत इति । तत एवंभावानन्तरम् । वैरधियैव । कृष्णम् । भजेत् । तस्माद्धेतोः । सकलाश्चत्वारोपि । स्वदोषाश्छद्मादयो निजदोषाः । प्रहेया आमूलात्त्येन स्वतो विनाश्याः । इत्थमेवविधम् । तस्य श्रीहरेः । अमृतं सुधातुल्यम् । वचः । श्रुत्वा । साधुवरः सकलसाधुश्रेष्ठः । स मुक्तानन्दमुनिः । मुदम् । प्राप । तथा । अन्ये समीपविष्टास्तदन्ये त्यागिगृहिजनाः । मुदम् । प्रापुः ॥ १८ ॥ बहुबुद्धेः स्वभक्तस्य श्रेयोध्वन्यस्थितौ

तदा तु क्वापि कृपया महतां तदसन्मतिः । नश्यत्येषामन्यतमे शिष्टे तु स्यान्न तत्क्षतिः ॥ १६ ॥ आसुरीं मतिमाश्रित्य भजन् कृष्णमपीह सः । देहान्ते स्याच्छिवगणो दैत्यानामधिपोऽपि वा ॥ १७ ॥ ततो भजेद्वैरधियैव कृष्णं तस्मात्स्वदोषाः सकलाः प्रहेयाः । इत्थं वचः साधुवरः स तस्य श्रुत्वाऽमृतं प्राप मुदं तथाऽन्ये ॥ १८ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते पञ्चत्रिंशस्तरङ्गः ॥ ३५ ॥

शकाब्दे विक्रमार्कस्य रसाश्वसुभूमिते । पौषकृष्णत्रयोदश्यां वचोऽमृतमिदं हरेः ॥ १ ॥
तत्र दुर्गपुरे दुर्गे उत्तमस्य स भूभुजः । न्यषीददुत्तमे पीठे पिचुमन्दतरोधरः ॥ २ ॥
सिताम्बरः पीतसितपुष्पहारान् गले दधत् । कर्णयोः श्वेतकुसुमगुलुंच्छौ च सुशोभनौ ॥ ३ ॥

तु यः । तस्मिंस्तस्याल्पबुद्धेर्यः स्थितौ हेतुर्भवेत्तथा ॥ १ ॥ त्यागोपायश्च दुर्बुद्धेर्यस्तेषां यो निरूपणम् । चक्रे स्वभक्तौ स हरिर्मम विघ्नमपक्रियात् ॥ २ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्पदानुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां पञ्चत्रिंशस्तरङ्गः ॥ ३५ ॥

षट्त्रिंशे त्यागिना तुच्छे पदार्थे वसनादिके । त्यक्त्वा प्रीतिं हरावेव कार्या सेति समीरितम् ॥ १ ॥ शकेति । शकेति पूर्वार्द्धे व्याख्यातम् (१८७६) पौषकृष्णत्रयोदश्यां पौषमासीयकृष्णपक्षसम्बन्धिन्यां त्रयोदशीतिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमस्य । भूभुजो नृपतेः । दुर्गे । पिचुमन्दतरोः श्रीवासुदेवमन्दिरान्तिकवर्त्ति–तरुराजनिम्बद्रुमस्य । अधोऽधोवर्त्तिन्यां वेदिकायाम् । उत्तमे सश्वेतोत्तरच्छद–रक्तकौशेयतूलिकास्तृते सपार्श्विकोपबर्हे श्रेष्ठे । पीठे मञ्चासने । स श्रीहरिः । न्यषीदत् ॥ २ ॥ सितेति सिताम्बरः स्वाङ्गधृतमदुघनसितसकलवसनः । गले कण्ठे । पीतसितपुष्पहारान् सितपुष्पहारांश्चेत्यर्थः । दधद्धारयन् । कर्णयोः श्रवणशष्कुल्यग्रयोः । सुशोभनौ । श्वेतकुसुमगुलंच्छौ च । दधत् ॥ ३ ॥

उष्णीष इति । उष्णीषे श्वेतशिरोवेष्टनवसने । श्वेतरक्तपुष्पावतंसकौ सितरक्तकुसुमशेखरौ च । धारयन् । दक्षे दक्षिणे । करे पाणौ । कौसुमं श्वेतपुष्पनिर्मितम् । कन्दुकं गेन्दुकं च । 'गेन्दुकोऽस्त्रिया'मित्यभिधानचिन्तामणिः । परिवर्त्तयन् भ्रामयन् ॥ ४ ॥ त्यागिभिरिति । स्वैः स्वकीयैः । भक्तैः । त्यागिभिः । गृहिभिश्चापि । परिवृत्तः सभायां परिवेष्टितः । नानादेशागतैरिति शेषः । तान्स्वभक्तान् । मुदा । निरीक्षमाणः । आनन्दयन् स्वदर्शनदानेन तान् सुखयन् । प्रभुः श्रीहरिः । स्वयमेव । ऊचे स्वाननार्पितदृशस्तान् जगाद । इति त्रयाणामेकसम्बन्धः ॥ ५ ॥ साधुरिति । हे भक्ताः ! । त्यक्तगार्हस्थ्यः गृहाश्रमत्यागेन परित्यक्ततत्सुखः । यः । साधुः । अस्ति । तस्य साधोः । चेद्यदि । कृष्णात् । अन्यत्र । तुच्छपदार्थे फल्गुनिधनवसनादिमायिकवस्तुनि । प्रीतिरनुरागः । स्यात् । तदा । स साधुः । गर्हित एकान्तिकसाधुभिर्निन्दितः । ज्ञेयः ॥ ६ ॥ आढ्यानामिति । यथा । उत्करकणोच्चयी उत्करनिपतितान्नकणान्निचीयगृह्णानः । रङ्कः । आढ्यानां धनिनाम् । अग्रतः पुरः । अतिलघुरतिशयेन तुच्छः दृश्यते । तथैव । स भगवदितरपदार्थप्रीतिः । पुमान् साधुरपि । सतां भगवदेकान्तिकसाधूनाम् । अग्रतः । अति-

उष्णीषे धारयन् श्वेतरक्तपुष्पावतंसकौ । कौसुमं कन्दुकं दक्षे करे च परिवर्त्तयन् ॥ ४ ॥
त्यागिभिर्गृहिभिश्च स्वैर्भक्तैः मुदा परिवृत्तो । निरीक्षमाणस्तानूचे स्वयमानन्दयन्प्रभुः ॥ ५ ॥
साधुर्यस्त्यक्तगार्हस्थ्यः कृष्णादन्यत्र तस्य चेत् । पीतिस्तुच्छपदार्थे स्यात्तदा ज्ञेयः स गर्हितः ॥ ६ ॥
आढ्यानामग्रतो रङ्को यथोत्करकणोच्चयी । तथैवाग्रे सतां सोऽपि दृश्यतेऽतिलघुः पुमान् ॥ ७ ॥
पापिनं मन्यते स स्वं तमन्ये च तथाविधम् । तस्मात् प्रीतिर्न कर्त्तव्या पदार्थे मायिके सता ॥ ८ ॥
क्व तुच्छावस्त्रपात्राद्याः संग्रहानुचिताः सताम् । पूर्णानन्दः क्व भगवान् सदा सच्चिन्तनोचितः ॥ ९ ॥
अतः प्रीतिर्हरावेव कार्या सद्भिः सदा मुदा । धर्मज्ञानविरागेषु तत्सेवौपयिकेषु च ॥ १० ॥

लघुः । दृश्यते ॥ ७ ॥ पापिनमिति । स तथाविधो रङ्कः साधुश्च । स्वं स्वस्वमात्मानम् । पापिनम् । मन्ये । अन्ये आढ्या भगवदेकान्तिकसाधवश्च । तं तथाविधं रङ्कं साधुं च । तथाविधं पापिनम् । मन्यन्ते । तस्माद्धेतोः । सता साधुना । मायिके । पदार्थे । प्रीतिः । न कर्त्तव्या ॥ ८ ॥ क्वेति । सतां भगवदेकान्तिकसाधूनाम् । सङ्ग्रहानुचिताः परिग्रहविधानानर्हाः । तुच्छा मायिकत्वात्फल्गवः । वस्त्रपात्राद्याः पदार्थाः । क्व । सदा सर्वकालम् । सच्चिन्तनोचितो भगवदेकान्तिकभक्त्या ब्रह्मभावापन्नसाधुभिरपि स्मरणचरणयोग्यः । पूर्णानन्दोऽनवधिकातिशयानन्दैकाधारः । भगवान् श्रीकृष्णः । क्व । द्वौ क्वशब्दौ महदन्तरं सूयतः ॥ ९ ॥ अत इति । अतो हेतोः । सद्भिः साक्षाद्भगवदाश्रितसाधुभिः । सदा । मुदा । महानन्देन । हरौ साक्षाद्भगवत्येव । प्रीतिः । कार्या । तत्सेवौपयिकेषु श्रीहरिभक्तिवृद्ध्युपयोगभूतेषु । धर्मज्ञानविरागेषु च । प्रीतिः । सदा । मुदा कार्या ॥ १० ॥

साधुरिति । इह सत्सङ्गे । यः । साधुः । कृष्णानुरक्तः श्रीकृष्णे गाढानुरागयुक्तः । समौ हेमलोष्टौ सुवर्णमृत्पिण्डौ यस्य तथाभूतः । स्यात् । स साधुः । मान्यः सर्वेषां माननीयः । भवति । इत्थमेवंविधम् । तदीयं श्रीहरिसम्बन्धि । वचनामृतम् । निपीयः । भक्ताः । ते सभोपविष्टास्त्यागिगृहिजनाः । मुदिता अत्यानन्दयुक्ताः । अभूवन् ॥ ११ ॥ यथा सर्वात्मना भाव्यं त्यागिना स्वाश्रितेन तु । तथा यः प्राह स हरिः स्वस्मिन्प्रेम ददातु मे ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्स्वनुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां षट्त्रिंशस्तरङ्गः ॥ ३६ ॥

आत्मज्ञानेन देहात्मबुद्धिं त्यक्त्वा हरेः सता । सम्पाद्यो धर्म एकान्तः सप्तत्रिंश इतीरितम् ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यानम् । (१८७६) पौषकृष्णचतुर्दश्यां पौषमासागतकृष्णपक्षीयचतुदशीतिथौ । इदम् । हरेः । वचोऽमृतम् । बभूव ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमस्य । भूपतेः । दुर्गे । निम्बतरोः । अधः अधस्तनवेदिकायाम् । उच्चेऽत्युच्चपादे । पीठे स्वास्तृते मञ्चासने । स्वामी । स श्रीहरिः । उपाविशत्प्रत्यङ्मुखो निषसाद ॥ २ ॥ सितेति । सितवासाः स्वाङ्ग-

साधुः स मान्यो भवतीह यः स्यात्कृष्णानुरक्तः समहेमलोष्टः । इत्थं तदीयं वचनामृतं ते निपीय भक्ता मुदिता अभूवन् ॥ ११ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते षट्त्रिंशस्तरङ्गः ॥३६॥

शकाब्दे विक्रमार्कस्य रसाश्ववसुभूमिते । पौषकृष्णचतुर्दश्यां वचोऽमृतमिदं हरेः ॥ १ ॥ तत्र दुर्गपुरे दुर्गे उत्तमस्य स भूपतेः । अधो निम्बतरोः स्वामी पीठ उच्च उपाविशत् ॥ २ ॥ सितवासाः पीतसितपुष्पस्रगवतंसकः । पीतपुष्पापीडधरो भूरिभक्तगणावृतः ॥ ३ ॥ वीक्षमाणो निजान्भक्तान् दृशा सदययाऽखिलान् । स्वयमेवाब्रवीत्प्रीत्या स सतः पुरतः स्थितान् ॥ ४ ॥ साधवः सन्ति बहवः परित्यक्तगृहाश्रमाः । तेषां तीव्रविरागस्य ज्ञस्य त्यागोऽत्र शोभते ॥ ५ ॥ अविरक्तस्य चाज्ञस्य त्यागस्त्वत्यागसन्निभः । यतोऽस्य जन्मभूम्यादिस्मरणं जायते मुहुः ॥ ६ ॥

धृतसितमृदुघनपरिधानीय–प्रावरणीयोष्णीषवसनः । पीतानां सितानां च पुष्पाणां स्रजो हारा अवतंसौ कर्णपूरौ च यस्य सः । पीतपुष्पापीडधरः स्वभक्तनिहितोष्णीषगतपीतकुसुमशेखरधारी । भूरिभक्तगणावृतो नानादेशायातप्रचुरस्वभक्तत्यागिगृहिवृन्देन सभायां परिवेष्टितः ॥ ३ ॥ वीक्षमाण इति । सदयया निष्कारणातिकारुण्यसम्भृतया । दृशा । अखिलान् । निजान् । भक्तान् । वीक्षमाणः । पश्यन् । स श्रीहरिः । स्वयमेव । प्रीत्याऽतिप्रसन्नतया । पुरतः । स्थितान् । सतः साधून् । अब्रवीत् । इति द्वयोरेकसम्बन्धः ॥ ४ ॥ साधव इति । हे सन्तः ! । अत्र सत्सङ्गे । परित्यक्तगृहाश्रमाः । बहवः । सन्ति । तेषां साधूनां मध्ये । तीव्रविरागस्यातितीक्ष्णवैराग्ययुक्तस्य । ज्ञस्य स्वात्मज्ञानवतः साधोः । त्यागः । शोभते ॥ ५ ॥ अविरक्तस्येति । अविरक्तस्य तीव्रवैराग्यरहितस्य । अज्ञस्य स्वात्मज्ञानरहितस्य च साधोः । त्यागस्तु । अत्यागसन्निभः यथार्थत्यागभिन्न उपरिप्रतीयमानत्यागसदृशः । अस्ति । यतो हेतोः । अस्य तादृशस्य साधोः । मुहुः । जन्मभूम्यादिस्मरणं स्वदेश–ग्राम–गृह–क्षेत्र–जाति–कुल–

सम्बन्ध्यादीनां रागपूर्वा स्मृतिः जायते ॥ ६ ॥ तुच्छेति । तुच्छार्थस्नेहबद्धत्वादतितुच्छदेह-गेहादिसांसारिकपदार्थेषु स्नेहेन सितत्वात् । अस्यैतादृशसाधोः । कृष्णे । स्नेहः । नोद्भवेन्नोत्पद्येत । ततो हेतोः । अस्य साधोः । त्यागफलम् । किञ्चिदपि । नेक्ष्यते । खलु निश्चितमेव ॥७॥ अनुभूतस्येति । अनुभूतस्य प्रथममभ्यासेनोपभुक्तस्य । अत एव । संस्कृतस्योत्पादितवासनस्य वस्तुनः । हृदये । पुनः । स्मृतिः सरागं स्मरणम् । यस्य साधुपुरुषस्य । न स्यात् ज्ञानवैराग्यबलेन न भवेत् । तादृशः । पुरुषः साधुः पुमान् । भुवि पृथिव्याम् । विरलोऽतिगवेषणेन क्वचित्कथञ्चिद्यत्नवल्लभ्यः ॥ ८ ॥ अत इति । अतो हेतोः । अत्र सत्सङ्गे । येषाम् । त्यागिनाम् । त्यक्त-गेहादिसंस्मृतिः । भवेत् । तैस्त्यागिभिः । सा त्यक्तगेहादिसंस्मृतिः । तत्त्वतो वैराग्ययुक्तत्वाद्याथार्थ्येन । स्वात्मज्ञानेन । समुन्मूल्या आमूलात्सम्यक् परित्याज्या ॥९॥ एतदेव स्पष्टमाह द्वाभ्याम् आत्मेति । आत्मा जीवस्तु । सच्चिद्रूपोऽविनाशी चैतन्यरूपश्च । अस्ति जडादचेतनात् । शरीरतो देहात् । भिन्नः पृथग्भूतः । अस्ति । तस्यैवंविध-स्यात्मनः । गृहसम्बन्धः । नास्ति । स्वजनादयश्च । नैव सन्ति ॥ १० ॥ नेति । अस्यात्मनः । जातिर्ब्राह्मणादिः । नास्ति । कुलं गोत्रम् । नास्ति । कस्यचिन्ममता-

तुच्छार्थस्नेहबद्धत्वात् कृष्णे स्नेहोऽस्य नोद्भवेत् । ततोऽस्य नेक्ष्यते किञ्चिदपि त्यागफलं खलु ॥ ७ ॥ अनुभूतस्य हृदये संस्कृतस्य पुनः स्मृतिः । यस्य न स्यात्तादृशस्तु विरलः पुरुषो भुवि ॥ ८ ॥ अतोऽत्र त्यागिनां येषां त्यक्त-गेहादिसंस्मृतिः । भवेत्तैः सा समुन्मूल्या स्वात्मज्ञानेन तत्त्वतः ॥९॥ आत्मा तु सच्चिद्रूपोऽस्ति जडाद्भिन्नः शरीरतः । न तस्य गृहसम्बन्धो न चैव स्वजनादयः ॥ १० ॥ न चास्य जातिर्न कुलं न सम्बन्धश्च कस्यचित् । स एवास्मीति निश्चित्य दैहिकं न स्मरेत्सुधीः ॥ ११ ॥ स्वजनानां स्मृतिर्नैव कर्त्तव्या दययाऽपि च । यतस्तेषां न सङ्ख्यास्ति ह्यानन्त्यादेव जन्मनाम् ॥ १२ ॥ पूर्वं देहा ह्यसंख्याता धृतास्त्यक्तास्तथात्मना । तेषां स्वजनवंशाश्च बहवः सन्ति भूतले ॥ १३ ॥ अज्ञानेन यथा तेऽत्र विस्मृताः सन्ति सर्वशः । ज्ञानेनैव तथाऽत्रत्या विस्मर्त्तव्या विवेकिभिः ॥ १४ ॥

स्पदवस्तुमात्रस्य । सम्बन्धश्च । नास्ति । स एवंविध आत्मैव । अस्म्यहं भवामि । इतीत्थम् । निश्चित्य । सुमतिः साधुपुरुषः । दैहिकं देहसम्बन्धिवस्तुमात्रम् । न स्मरेत् ॥ ११ ॥ स्वेति । किञ्च । दययापि । स्वजनानाम् । स्मृतिः । नैव । कर्त्तव्या । यतो हेतोः । जन्मनां प्राग्भूतानां स्वजनुषाम् । आनन्त्यादसङ्ख्यत्वाद्धेतोः । तेषां स्वजनानाम् । सङ्ख्या शतसहस्रादिपरिमाणम् । न ह्यस्ति नैव विद्यते ॥ १२ ॥ एतदेव सुस्पष्टमाह । पूर्वमिति । पूर्वमस्माज्जन्मनः प्राक् । आत्मना जीवेन । असङ्ख्याताः । देहाः । धृताः । तथा । त्यक्ताः । तेषां देहानाम् । स्वजनवंशाः पित्रादिस्वबन्धुजनान्वयाः । भूतले भूमौ वर्त्तमानेऽण्डजादिखनीचतुष्टये । बहवः । सन्ति ॥ १३ ॥ अज्ञानेनेति । अत्र लोके । ते स्वजनवंशाः । यथा । अज्ञानेन । सर्वशोऽखिला अपि । विस्मृताः । सन्ति । तथा । अत्रत्या एतज्जन्मभवाः स्वजनाः विवेकिभिः साधुभिः । ज्ञानेनात्मविचारेणैव । विस्मर्त्तव्याः । सन्ति ॥ १४ ॥

आत्मेति । इह सत्सङ्गे । यस्य साधोः । आत्मज्ञानेन । गृहाद्याः । विस्मृताः । स्युः । अथ च । यः साधुः । कृष्णे । गाढं दृढं यथातथा । प्रीतिमान् । स्यात् । स साधुरेव । मे मम । प्रियः । अस्ति ॥ १५ ॥ अथ स्वातिप्रियमेकान्तिनं साधुमाह षड्भिः । साक्षादिति । अत्र लोके । साक्षात्कृष्णः प्रत्यक्षतया वर्त्तमानः श्रीकृष्णो भगवान् । तत्सेवानिरतास्तत्परिचर्यायां सम्यक् प्रसक्ताः । ये पूरुषाः । यादृशाः साकाराः । भवन्ति । ते । सर्वे भगवांस्तद्भक्ताश्च । आत्यन्तिके सकार्यमहापुरुषमहाप्रकृत्योरक्षरधामतेजसि तिरोभवनलक्षणे । लये प्रलयेऽपि । तादृशा इत्युत्तरश्लोकेन सम्बन्धः ॥ १६ ॥ तादृशा इति । तादृशाः । साकारा एव । वर्त्तन्ते ब्रह्मपुरे धाम्नि तिष्ठन्ति । अलिङ्गिनो निराकाराः । पुरुषसमानाकारवर्जिता इत्यर्थः । न तु नैव वर्त्तन्ते । एवममुना प्रकारेण । यो भक्तः । सम्यक् । विद्यात् । यश्च भक्तः । कुतश्चन काल–माया–कर्मादिष्वन्यतमात्कस्माच्चनापि । न बिभीयात् ॥१७॥ शुष्केति । यद्बुद्धौ उक्तविधस्य यस्य भक्तस्य मतौ । शुष्कज्ञानिवचोभिर्निराकारब्रह्मवादिवचनैः । मोहो ब्रह्मसाकारं निराकारं वा स्यादिति विभ्रान्तत्वम् । न सम्भवेन्न जायेत । यश्च भक्तः । कृष्णम् । तज्जनान् श्रीकृष्णभक्तांश्च । क्वचित् क्वापि ।

आत्मज्ञानेन यस्य स्युर्गृहाद्या विस्मृता इह । कृष्णेऽथ प्रीतिमान् गाढं स्यात्स एवास्ति मे प्रियः ॥ १५ ॥
साक्षात्कृष्णश्च तत्सेवानिरता येऽत्र पूरुषाः । भवन्ति यादृशाः सर्वे लय आत्यन्तिकेऽपि ते ॥ १६ ॥ तादृशा एव साकारा वर्तन्ते न त्वलिङ्गिनः । एवं विद्याच्च यः सम्यग्बिभीयान्न कुतश्चन ॥ १७ ॥ शुष्कज्ञानिवचोभिर्यद्बुद्धौ मोहो न सम्भवेत् । कृष्णं च तज्जनान् विद्यान्निराकारान् न च क्वचित् ॥ १८ ॥ अयमेव जगत्कर्त्ता हरिरस्ति न चेतरः । विनेच्छामस्य न पतेच्छुष्कं पर्णमपि द्रुमात् ॥ १९ ॥ ईदृग्निश्चयमासाद्य देहभिन्नात्मवेदनः । कृष्णेतरपदार्थेषु वैराग्यं यो दृढं श्रितः ॥ २० ॥ वर्णाश्रमोचितं स्वस्य धर्मं च परिपालयन् । कृष्णं प्रीत्या भजेन्नित्यं यः स मेऽतिप्रियो मतः ॥ २१ ॥ सुखःदुखे स नाप्नोति कालमायास्वकर्मभिः । नाऽऽज्ञास्ति तेषां तस्मिन्यत्र यमस्य च कर्हिचित् ॥ २२ ॥

निराकारान् । न विद्यात् । नैव जानीयात् । पुनरुक्तिरेवं बोधस्यावश्यकत्वद्योतनार्था ॥ १८ ॥ अयमिति । अयं साक्षाद्दृश्यः । हरिरेव । जगत्कर्त्ता निखिलब्रह्माण्डोत्पादकः । इदं स्थितिप्रलययोरप्युपलक्षणम् । अस्ति । इतरः । न च जगत्कर्त्ता नैवास्ति । अस्य हरेः । इच्छां सङ्कल्पं विना । शुष्कं नीरसमपि । पर्णं पत्रम् । द्रुमात् । न पतेत् ॥ १९ ॥ ईदृगिति । यः । ईदृग्निश्चयमेवंविधं साक्षात् भगवत्स्वरूपनिर्णयम् । आसाद्य प्राप्य । देहभिन्नात्मवेदनः स्वदेहात्पृथग्भूतस्यात्मनो ज्ञानवान् । कृष्णेतरपदार्थेषु । दृढम् । वैराग्यं च । श्रितः सम्यक् प्राप्तो भवेत् । इति द्वयोरेकान्वयः ॥२०॥ वर्णेति । यश्च । वर्णाश्रमोचितम् । स्वस्य । धर्मम् । परियालयन् । प्रीत्या । नित्यम् । कृष्णम् । भजेन्नवधा सेवेत । स एवंविधः साधुः । मे मम । अतिप्रियः । मतः ॥ २१ ॥ तन्महत्त्वमाह त्रिभिः । सुखेति । स साधुः । कालमायास्वकर्मभिः । सुखदुःखे । नाप्नोति । यद्यस्मात्कारणात् । तस्मिन्साधौ । तेषां कालादीनाम् । आज्ञा । कर्हिचित्कदाचिदपि । नास्ति । यमस्य वैवस्वतस्य । आज्ञा च । कर्हिचित् ॥२२॥

कृष्णेति । स साधुः । कृष्णेच्छयैव । सर्वम् । सुखम् । सर्वम् । दुःखं च । विन्दति प्राप्नोति । सः साधुरेव । सर्वेषाम् । वन्द्यो नमस्कार्यः । मान्यः सत्कार्यः । पूज्यश्चन्दनादिभिरर्चनीयश्च । कथ्यते ॥ २३ ॥ तदिति । हे सन्तः ! । अमरैर्ब्रह्मादिदेवैः । सह अस्माभिरपि । अत्र लोके । तत्पादाब्जरजः श्रीकृष्णैकान्तिकसाधुचरणाम्बुजरेणुः । मूर्ध्ना । धार्यते । अस्माभिरिति बहुवचनं स्वाश्रितजनाभिप्रायेण । तस्य साधोः । दर्शनं च । सर्वदा । काङ्क्ष्यते वाञ्छ्यते । एतेनाऽस्य महिम्नः परमसीमोक्ता वेदितव्या ॥ २४ ॥ ईदृगिति । यः । ईदृग्निष्ठामेवंविधां स्थितिम् । भगवदेकान्तिकभक्तत्वमित्यर्थः । अनापन्नो न प्राप्तः । ईशितुः सर्वनियन्तुः श्रीकृष्णस्य । माहात्म्यम् । त्यक्त्वा । केवलम् । पौरुषेण स्वपुरुषकारेण । अष्टाङ्गयोगाभ्यासादिनेत्यर्थः । स्वस्य । कल्याणम् । इच्छति ॥२५॥ बालिश इति । बालिशोऽज्ञः पुमान् । बाहुभ्यां नौकाश्रयमकृत्वा केवलबाहुबलेनेत्यर्थः । यथा । अर्णवम् । तितीर्षति तरितुमिच्छति । पश्चादर्णवे पतित्वेति शेषः । भूयः पुनः पुनः । मज्जनाद्धेतोः । उपहास्यो नाविकजनोपहसनीयः । जायते भवति । तथा । स तूक्तविधः पुरुषोऽपि । भूयः । मज्जनोन्मज्जनाद्भवाम्बुधावुच्चावचयोनिप्राप्तिरूपमज्जनोन्मज्जनप्राप्तेर्हेतोः । एकान्तिकसतामुपहसनीयः । जायते । इति द्वयोरेकसम्बन्धः ॥२६॥ कृष्णेति । यथा । यः कश्चित्पुमान् । नौकायाम् । उपविश्य । अम्बुधेः । पारं

कृष्णेच्छयैव सर्वं स सुखं दुःखं च विन्दति । स एव वन्द्यः सर्वेषां मान्यः पूज्यश्च कथ्यते ॥ २३ ॥ तत्पादाब्जरजोऽस्माभिरपि मूर्ध्नाऽत्र धार्यते । सर्वदा दर्शनं तस्य कांक्ष्यते च सहाऽमरैः ॥ २४ ॥ ईदृग्निष्ठामनापन्नः केवलं पौरुषेण यः । इच्छति स्वस्य कल्याणं त्यक्त्वा माहात्म्यमीशितुः ॥ २५ ॥ बालिशः स तु बाहुभ्यां तितीर्षति यथाऽर्णवम् । मज्जनोन्मज्जनाद् भूय उपहास्यश्च जायते ॥ २६ ॥ कृष्णप्रतापमालंब्य कुर्वन् भक्तिं तु यः सुधीः । स तूपविश्य नौकायां पारं यात्यञ्जसाम्बुधेः ॥ २७ ॥ भक्त एवंविधो ज्ञानी देहान्ते चिन्मयाकृतिः । ब्रह्मधामैव सम्प्राप्य सेवायां वर्त्तते हरेः ॥ २८ ॥ तद्दर्शनं पातकसङ्घहर्तॄ कृष्णेक्षया तुल्यमिहेति वित्त । इति प्रभोस्ते वचनं निशम्य भक्ताः सुधाभं मुदितास्तमार्चन् ॥ २९ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते सप्तत्रिंशस्तरङ्गः ॥३७॥

परतीरम् । अञ्जसा अनायासेन । याति प्राप्नोति । तथा । कृष्णप्रतापं श्रीकृष्णप्रतापरूपां नावमित्यर्थः । आलम्ब्याश्रित्य । भक्तिमेकान्तिकभावेन भजनम् । कुर्वन्करोति । सुधीः । स तु भगवदेकान्तिकभक्तः साधुरपि । भवार्णवपरतीरभूतामन्तरश्लोकोक्तां मुक्तिमनायासेन प्राप्नोतीति सम्बन्धः ॥ २७ ॥ भक्त इति । एवंविध उक्तप्रकारः । ज्ञानी । भक्तः । देहान्ते । चिन्मयाकृतिर्ब्रह्ममयशरीरः सन् । ब्रह्मधामाक्षरब्रह्मपदमेव । सम्प्राप्य । हरेः । सेवायाम् । वर्त्तते सदा तिष्ठति ॥२८॥ तदिति । हे सन्तः ! । इह लोके । पातकसङ्घहर्तॄनृणां पापपुञ्जविनाशकारकम् । तद्दर्शनं भगवदेकान्तिकसाधुसमीक्षणम् । कृष्णेक्षया साक्षाच्छ्रीकृष्णदर्शनेन । तुल्यं समानम् । भवति । इतीत्थम् । वित्त यूयं जानीत । इत्येवंविधम् । प्रभोः श्रीहरेः । सुधाभममृतसमानम् वचनम् । निशम्य । भक्ताः । ते सभोपविष्टास्त्यागिगृहिजनाः । मुदिताः प्रहृष्टान्तराः सन्तः । तं श्रीहरिम् । आर्चश्चन्दनाद्युपहारैरिव प्रशंसनैः पुपूजुः ॥ २९ ॥ साधुमेकान्तिकं स्वस्य स्वश्रेष्ठं लक्षणोक्तितः । यः प्राह स हरिः प्रीतो मय्यस्त्वेकान्तिकप्रियः ॥ १ ॥

इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्स्नुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां सप्तत्रिंशस्तरङ्गः ॥ ३७ ॥

मनोनिर्वासनं कार्यं हरेश्चारित्रचिन्तनैः । सद्वार्त्तेत्यादिकालष्ट्त्रिंशे श्रीहरिणा कृता ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८७६) माघशुक्लप्रतिपदि माघमासागतशुक्लपक्षाद्यतिथौ ! इदम् । हरेः । वचोऽमृतम् । अभवत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । आभयिक्षितिपस्याभयनृपतिम्नोरुत्तमनृपतेः । दुर्गे । अश्वशालाग्रतो मन्दुरान्तिकवर्त्तिन्यां वेदिकायाम् । शुभे शोभने । चक्रके पिञ्जितपुरुतूलभृते वास्त्रे चक्राकारासने । स श्रीहरिः । सायं षट्घटिकावशेषे दिनोत्तरभागसमये । न्यषीदत् ॥ २ ॥ सितेति सितवासाः परिधृतश्वेतत्रिवसनः । तत्रायं विवेकः । सितसूक्ष्मघनं परिधानवसनं चतुष्पटकृतं प्रावरणीयवसनं किञ्चिद्रक्तप्रान्तमौष्णीषीयवसनं चेति । दोरकीयाङ्गरक्षकम् । परिदधत् । नानादेशसमागतैः । भक्तसंघैस्त्यागिगृहिस्वभक्तसमूहैः । परिवृतः सभायां परिवेष्टितः ॥ ३ ॥ चिरमिति । दयानिधिः श्रीहरिः । चिरम् । विचार्य । तान् भक्तसङ्घान् । स्वयमेव । ऊचे । इति सार्द्धश्लोकस्यैकान्वयः । तदेवाह । हे साधवः ! । हे गृहिणश्च । सर्वे भवन्तः । मम । वचः । शृण्वन्तु ॥ ४ ॥ यूयमिति । सर्वे । यूयम् । मदाश्रिताः सच्छब्दवाच्यमदादिचतुष्टयाश्रयवन्तः । अत एव । सत्सङ्गिनः । एव । भवथ । अतः । अत्र सत्सङ्गे ।

शकाब्दे विक्रमार्कस्य रसाश्ववसुभूमिते । माघशुक्लप्रतिपदि वचोऽमृतमिदं हरेः ॥ १ ॥ तत्र दुर्गपुरे दुर्गे आभयिक्षितिपस्य सः । न्यषीदच्चक्रके सायमश्वशालाग्रतः शुभे ॥ २ ॥ सितवासाः परिदधद्दोरकीयाङ्गरक्षकम् । भक्तसङ्घैः परिवृतो नानादेशसमागतैः ॥ ३ ॥ चिरं विचार्य तानूचे स्वयमेव दयानिधिः । शृण्वन्तु साधवः सर्वे गृहिणश्च वचो मम ॥ ४ ॥ यूयं सत्सङ्गिनः सर्वे भवथैव मदाश्रिताः । सावधानतयैवात्र स्थेयं नैव प्रमादतः ॥ ५ ॥ सत्सङ्गो यद्दिनाज्जातो भवेद्यस्यात्र मोक्षदः । तत आरभ्य तेनाशु विचारः कार्य आदरात् ॥ ६ ॥ ईदृग्गुणोऽहं प्रथमे वर्षे आसं द्वितीयके । ईदृशश्च तृतीयेऽथ तुरीयेऽभवमीदृशः ॥ ७ ॥ एवं विचारः कर्त्तव्यः प्रत्यब्दं स्वमनीषया । वृद्धिर्गुणानां द्रष्टव्या दोषाणां तत्र च क्षयः ॥८॥ सत्सङ्गस्य प्रतापेन गुणा मय्येत आगताः । एतावन्तश्च दोषा मे प्रक्षीणाः प्राक्तना हृदः ॥ ९ ॥

भवद्भिः । सावधानतयैव । स्थेयम् । प्रमादतोऽसावधानत्वेन । नैव स्थेयम् ॥ ५ ॥ सत्सङ्ग इति । अत्र लोके । यस्य जनस्य । यद्दिनाद्यद्दिनमारभ्य मोक्षदः संसृतेर्विमोक्षकरः । सत्सङ्गः । जातः । भवेत् । तेन जनेन । ततः । आरभ्य तद्दिनप्रभृति । विचारो वक्ष्यमाणं विचारणम् । आदरात् । आशु । कार्यः ॥ ६ ॥ ईदृगिति । अहम् । प्रथमे । वर्षे यद्दिनमारभ्य सत्सङ्गो जातस्तद्दिनत आरभ्याद्ये वर्षे । ईदृग्गुण एवंभूतभगवत्तोषहेतुस्वधर्मादिगुणवान् । आसमभवम् । द्वितीये । वर्षे । ईदृश ईदृग्गुणवान् । अभवम् । तृतीये । वर्षे । ईदृशः । अभवम् । अथ च । तुरीये चतुर्थे वर्षे । ईदृशः । अभवम् ॥ ७ ॥ एवमिति । एवममुना प्रकारेण । प्रत्यब्दं प्रतिवर्षम् । स्वमनीषया स्वबुध्या । विचारः । कर्त्तव्यः । तत्र विचारे । गुणानां भगवत्तोषहेतूनां स्वधर्मादीनाम् । वृद्धिः । द्रष्टव्या । दोषाणां भगवदप्रसन्नताहेतूनां लोभाद्यगुणानाम् । क्षयो निवर्त्तनं च । द्रष्टव्यः ॥ ८ ॥ सत्सङ्गस्येति । सत्सङ्गस्य । प्रतापेन । मयि । एते । गुणाः । आगताः । मे मम । प्राक्तनाः सत्सङ्गविधानात्

पूर्वं वर्त्तमानाः । एतावन्तः । दोषाः । हृदो मनसः सकाशात् । प्रक्षीणा निवृत्ताः एवमित्युत्तरेण सम्बन्धः ॥ ९ ॥ एवमिति । एवममुना प्रकारेण । निश्चित्य । ये । शुभाः । गुणाः । पूर्वोक्ताः स्वधर्मादयः शोभना गुणा इत्यर्थः । स्वस्मिन् । न भवेयुः । ते शुभा गुणाः । सत्सेवया भगवदेकान्तिकसाधुपरिचर्यया । आग्रहेण हठेन । प्रयत्नतः । सम्पाद्याः ॥ १० ॥ दोषा इति । किञ्च । ये । दोषाः । नष्टाः स्वतो निवृत्ताः । न स्युः । तन्नाशे तेषां दोषाणां विनाशेन । उद्यमः । कार्यः । मुमुक्षुणा । तत्र गुणसम्पादने दोषनिवर्त्तने च । प्रमादः । सर्वथा सर्वप्रकारेणैव । हातव्यः ॥ ११ ॥ प्रत्यब्दमिति । ये पुरुषाः । प्रत्यब्दं प्रतिवर्षम् । अथवा । प्रतिमासम् । ईदृशं पूर्वोक्तप्रकारम् । विचारम् । कुर्युः । ते पुरुषेषु । कृष्णतुष्टिदाः श्रीकृष्णप्रसन्नतोत्पादकाः । सर्वे । गुणाः । वसेयुः । दोषाश्च निवर्त्तेरन्निति ज्ञेयम् ॥ १२ ॥ विपक्षे दोषमाह । य इति । ये पुरुषाः । प्रमादतः । बहुकालं बहुकालपर्यन्तम् । एवममुना प्रकारेण विचारम् । नैव । कुर्वन्ति । तेषां पुरुषाणाम् ।

एवं निश्चित्य ये स्वस्मिन्न भवेयुर्गुणाः शुभाः । सत्सेवया चाग्रहेण ते सम्पाद्याः प्रयत्नतः ॥ १० ॥
दोषाश्च ये न नष्टाः स्युस्तन्नाशे कार्य उद्यमः । प्रमादस्तत्र हातव्यः सर्वथैव मुमुक्षुणा ॥ ११ ॥
प्रत्यब्दं प्रतिमासं वा विचारं कुर्युरीदृशम् । ये तेषु हि गुणाः सर्वे वसेयुः कृष्णतुष्टिदाः ॥ १२ ॥
य एवं नैव कुर्वन्ति बहुकालं प्रमादतः । तेषां न जायते हृत्स्थदोषाणां प्रक्षयः खलु ॥ १३ ॥
यथैवानीयमानानि नित्यं स्युर्वणिजो गृहात् । धान्यादीनि निजं नाम लेखयित्वात्मवृत्तये ॥ १४ ॥
तेषां मूल्यं मासि मासि न दीयेत प्रमादतः । यर्हि तर्हि त्वतिक्रान्ते काले भूयसि वेगिनि ॥ १५ ॥
तद्दानं जायते नूनं दुष्करं व्यवहारिणाम् । तथैव कालबाहुल्ये दुष्करं दोषनाशनम् ॥ १६ ॥
दोषस्थितौ तु हृद् दुष्टवासनावासितं भवेत् । ततः कृष्णसुखं किञ्चिदपि नाप्नोति वै भजन् ॥ १७ ॥

हृत्स्थदोषाणां स्वमनोऽवस्थितदोषाणाम् । प्रक्षयः समूलो विनाशः । न जायते । खलु निश्चितमेव ॥ १३ ॥ एतदेव दृष्टान्तेन द्रढयति त्रिभिः । यथेति । यथा । निजमात्मीयम् । नाम । लेखयित्वा । आत्मवृत्तये स्वजीविकार्थम् । धान्यादीनि अन्नवस्त्रादिवस्तूनि । वणिज आपणिकस्य । गृहाद्विपणितः । नित्यम् । आनीयमानानि क्रीतानि । स्युः ॥ १४ ॥ तेषामिति । यदि यर्हि । तेषामानीतधान्यादीनाम् । मूल्यमवक्रयः । 'मूल्यं वस्नोऽप्यवक्रय' इत्यमरः । मासि मासि । प्रमादतः । नदीयेत नार्प्येत । तर्हि तु । वेगिनि तीव्ररंहोवति । भूयसि प्रचुरे । काले अतिक्रान्ते व्यतियाते सति ॥ १५ ॥ तदिति । तद्दानं क्रीतधान्यादिमूल्यदानम् । व्यवहारिणां प्रचुरधान्यादिक्रयवद्व्यवहारिनराणाम् । दुष्करमतिकठिनम् । जायते । इति त्रयाणामेकसम्बन्धः ॥१६॥ दोषेति । दोषस्थितौ लोभादिदोषावस्थाने सति त्वित्यर्थः । हृन्मनः । दुष्टवासनावासितं जगत्सम्बन्धिमायिकपञ्चविषयभावनाभावितम् । भवेत् । ततो हेतोः । भजन् भगवन्तं भजमानः सत्सङ्गी । कृष्णसुखं भगवद्भजनानन्दम् । किञ्चिदपि । नाप्नोति । वै ॥१७॥

अन्तकाल इति । ततो हेतोः । अस्य दुष्टवासनावासितहृदो भक्तस्य । अन्तकाले । हृदि मनसि । जगदर्थस्मृतिः सांसारिकपदार्थभोगस्मरणम् । स्यात् । ततस्तेतो हेतोः । स भक्तः । तदनुरूपं यादृशो जगदर्थः स्मृतिविषयं प्राप्तस्तद्भोगोचितम् । देहम् । प्राप्नोति । ध्रुवं निश्चितमेव ॥ १८ ॥ अत्रार्थे प्रमाणमाह । राजर्षिरिति । हरेर्भगवदवतारस्य । साक्षादृषभस्य । सुतः । राजर्षिः । भरतः । अन्तकाले । मृगस्मृत्या स्वपालितमृगस्मरणेन । मृगदेहम् । अवाप । हीति प्रसिद्धमेतच्छ्रीमद्भागवतम् ॥ १९ ॥ तस्मादिति । तस्माद्धेतोः । सुधीः सुबुद्धिर्भगवद्भक्तः । यथा येन प्रकारेण । प्रयत्नेनात्यायासाचरणेनापि । स्वकीयम् । मनः । निर्वासनं दोषमूलजगदर्थवासनावर्जितम् । स्यात् । तथा तेन प्रकारेण । अत्रास्मिन्देहे सत्येव । आशु शीघ्रमेव । सर्वथा । उद्योगं निर्वासनीभवनसाधनोद्यमम् । कुर्यात् ॥ २० ॥ वासनेति । केचन । साधका मुमुक्षवो भक्ताः । वासना जगदर्थोपभोगभावनामूलं येषां ते च ते सङ्कल्पाश्च तैः क्लिष्टाः क्लेशं प्राप्ताः । अत एव । बृहद्व्रता यावज्जीवं धृतब्रह्मचर्यव्रताः सन्तः । उपवासैः । निजमात्मीयम् । देहम् । शोषयन्ति ॥२१॥ देह इति । यद्यपि । देहे । शुष्के उपवासैः कृशतां प्राप्ते सति । मनः । शुष्कं दुर्बलम् ।

अन्तकाले ततोऽस्य स्याज्जगदर्थस्मृतिर्हृदि । देहं तदनुरूपं च ततः प्राप्नोति स ध्रुवम् ॥ १८ ॥ राजर्षिर्भरतः साक्षादृषभस्य हरेः सुतः । अन्तकाले मृगस्मृत्या मृगदेहमवाप हि ॥ १९ ॥ तस्मात्सुधीः प्रयत्नेन मनो निर्वासनं यथा । स्यात्स्वकीयं तथोद्योगं कुर्यादत्राशु सर्वथा ॥२०॥ वासनामूलसङ्कल्पक्लिष्टाः केचन साधकाः । उपवासैर्निजं देहं शोषयन्ति बृहद्व्रताः ॥ २१ ॥ देहे शुष्के मनः शुष्कं भवेद्यद्यपि निःस्मरम् । तथाप्येतत्साधनं तु यावज्जीवं सुदुष्करम् ॥२२॥ शुष्को देहो भवेद्यावत्तावच्छुष्कं मनो भवेत् । देहपोषे पुनः पुष्टं मनो भवति निश्चितम् ॥२३॥ तस्मात्कृत्वा मिताहारं चरित्राणां सतां पतेः । सर्वदा चिन्तने योज्यं सावधानतया मनः ॥२४॥ नानाविधचरित्रेषु कृष्णस्यैव नराकृतेः । रममाणं मनस्तस्मिन्सज्जते प्रीतिमाप्नुवत् ॥ २५ ॥ मनोदुर्वासनानाश एतदेव हि साधनम् । उत्कृष्टं भवतीत्येव मत्वा साध्यं निरन्तरम् ॥ २६ ॥

सङ्कल्पवेगरहितमित्यर्थः । निःस्मरं कामवर्जितम् । भवेत् । तथापि । एतत्साधनमुपवासैर्देहशुष्कतासम्पादनरूपं साधनं तु । यावज्जीवम् । सुदुष्करं दुरनुष्ठेयम् । भवति ॥ २२ ॥ शुष्क इति । यतः । यावत् । देहः । शुष्कः । भवेत् । तावत् मनः । शुष्कम् । भवेत् । देहपोषे देहपुष्टतामापन्ने सति । मनः । पुनः । पुष्टम् । भवति । निश्चितमेव ॥ २३ ॥ तस्मादिति । तस्माद्धेतोः । मिताहारम् । कृत्वा । सतां पतेः श्रीहरेः । चरित्राणाम् । चिन्तने समाहात्म्यावबोधेऽनुस्मरणे । मनः । सावधानतया । सर्वदा । योज्यम् ॥ २४ ॥ नानेति । नराकृतेः । कृष्णस्य । नानाविधचरित्रेष्वेव । रममाणं सर्वदा क्रीडत् । मनः । प्रीतिं प्रतिदिनवर्द्धमानस्नेहम् । आप्नुवत् अधिगच्छत्सत् । तस्मिन् श्रीकृष्णे । सज्जते आसक्तं भवति ॥ २५ ॥ मन इति । एतदेव सर्वदा भगवच्चरित्रस्मरणरूपमेव । साधनम् । मनोदुर्वासनानाशे । उत्कृष्टमतिश्रेष्ठम् । भवति । इत्यमुना प्रकारेणैव । मत्वा निरन्तरम् । साध्यं तदेवसाधनं सम्पाद्यमित्यर्थः ॥ २६ ॥

गृहिणामिति । सर्वेषाम् । गृहिणां गृहस्थाश्रमिणां भक्तानामपि । एतद्धि एतत्साधनमेव । सुसाध्यं सुखसम्पाद्यम् । अस्ति हि । तस्माद्धेतोः । तैर्गृहिभिरपि । विरक्तवत्त्यागिभक्तवत् । यत्नेन । एतत्साधनम् । साध्यम् ॥ २७ ॥ अत्र सदाचारं प्रमाणयति । राज्यमिति । गृहाश्रमी । जनको राजा । क्षित्याम् । राज्यं कुर्वन्सन्नपि । मनोनिर्वासनत्वेन वासनावर्जितमनस्त्वाद्धेतोः । ज्ञानिनां ज्ञानिभक्तानां मध्ये । वरः श्रेष्ठः । प्रख्यातोऽतिशयेन विख्यातः । अभूत् ॥ २८ ॥ एवमिति । एवं जनकनृपतिवत् । अत्र लोके । गृहिजनैः । व्यवहारो गार्हस्थ्योचितकृत्यम् । बाह्यत उपरिष्टादेव । कार्यः । मनस्तु । तेनोक्तसाधनेन । सर्वथा सर्वप्रकारेण । वासनाहीनम् । कार्यम् ॥ २९ ॥ गृहेति । गृहदाहादिकापत्तौ । स्वगृहदहनप्रमुखापत्काले प्राप्ते सत्यपीत्यर्थः । महात्मनां महानुभावानाम् । तेषां वासनावर्जितगृहिभक्तानाम् । ममत्वाभावतो गृहादौ ममत्वरहितत्वाद्धेतोः । हृदये मनसि । शोकः ! नोदेति नैवोत्पद्यते । खलु निश्चितमेव ॥ ३० ॥ एतदपि सदाचारप्रदर्शनेन द्रढयति । यथेति । यथा । स्वनगरीदाहे । दृश्यमानेऽपि । भूपतेः । जनकस्य । शोकः । नाभूत् । तथा चोक्तं भारते मोक्षधर्मेषु । 'मिथिलायां प्रदीप्तायां

गृहिणामपि सर्वेषां सुसाध्यं ह्येतदस्ति हि । तस्मात्तैरपि यत्नेन साध्यमेतद्विरक्तवत् ॥ २७ ॥
राज्यं कुर्वन्नपि क्षित्यां जनको हि गृहाश्रमी । मनोनिर्वासनत्वेन प्रख्यातो ज्ञानीनां वरः ॥ २८ ॥
एवं कार्यो गृहिजनैर्व्यवहारोऽत्र बाह्यतः । मनस्तु वासनाहीनं कार्यं तेनैव सर्वथा ॥ २९ ॥
गृहदाहादिकापत्तावपि तेषां महात्मनाम् । नोदेति हृदये शोको ममत्वाभावतः खलु ॥ ३० ॥
यथा स्वनगरीदाहे दृश्यमानेऽपि भूपतेः । जनकस्य न शोकोऽभूत्तथा तेषां न जायते ॥ ३१ ॥
चरित्राणि हरेर्यानि स्वदृष्टानि सतां मुखात् । श्रुतानि वाऽतिमर्त्यानि नृनाट्यानुसृतानि च ॥ ३२ ॥
तान्येव सर्वदा येऽत्र मनसैवाभ्यसन्ति ते । दुःसङ्कल्पभवान् क्लेशान् नाप्नुवन्त्ययथोत्थितान् ॥ ३३ ॥

न मे दह्यति किञ्चने'ति । तथा तेषां तथाविधानां गृहिभक्तानामपि । शोकः । न जायते ॥ ३१ ॥ एवं पञ्चभिः प्रासङ्गिकमुक्त्वा पुनरपि तदेव द्रढयति द्वाभ्याम् । चरित्राणीति । अतिमर्त्यानि मनुष्येष्वसम्भावनीयानि यादृश तादृश जनानां समाधिविधापनादीनि । नृनाट्यानुसृतानि पुष्पदोलोत्सवादिमहेषु नानाविधवासो भूषादिविधारणं त्यागिगृहिसभायां धर्मज्ञानवैराग्यादियुतभक्तिपोषणवार्त्ताविधानं भक्तकृतपूजाग्रहणं नानारङ्गलेखनं सन्महापङ्क्त्यन्तःपरिवेषणपूर्वकसद्धासविधापनं चेत्यादीनि नरानुकरणानुसारीणि च । हरेः । यानि । चरित्राणि । स्वदृष्टानि । स्युः । अथवा । सतां साक्षात्तद्वीक्षकसाधूनाम् । मुखात् । श्रुतानि । स्युः ॥ ३२ ॥ तानीति । अत्र सत्सङ्गे । ये भक्ताः । तानि श्रीहरिचरित्राण्येव । सर्वदैव । मनसा । अभ्यसन्ति माहात्म्यबोधं पुनः पुनः परीशीलयन्ति । ते भक्ताः । अयथोत्थितान्मिथ्याभूतान्सतोऽप्युत्पन्नान् । दुःसङ्कल्पभवान् मायिकदुःखदविषयसङ्कल्पप्रभवान् । क्लेशान् । नाप्नुवन्ति ॥ ३३ ॥

एवमिति । एवंविधानाशक्तः स्वयं श्रीहरिचरित्रस्मरणाभ्यासेन दुःसङ्कल्पोद्भवक्लेशविनाशनं कर्त्तुमसमर्थौ भक्तस्तु । अत्र सत्सङ्गे । येषाम् । सतां साधूनाम् । हृदि मनसि । सङ्कल्पानुदयो दुःसङ्कल्पानुद्भवः । भवेत् । जीतात्मनां श्रीहरिचरित्रस्मरणाभ्यासेन वशीकृतमनसाम् । तेषां सताम् । मण्डले । एव । वर्त्तेत ॥ ३४ ॥ रज इति । रजोगुणातिवेगेनोद्रिक्तरजोगुणरंहसा । स्वे स्वकीये । आत्मनि मनसि । जायमानाः । सङ्कल्पाः । तेषामुक्तसाधूनाम् । अग्रत एव । वाच्याः । दुर्दुष्टसङ्कल्पदूषितं हृन्मानसं येषां तेषां सताम् । अग्रतः । न तु नैव वाच्याः ॥३५॥ महान्त इति । महान्तो दयाक्षमाधैर्यादिशुभगुणगरिष्ठाः । ते साधवः । यथा । स्वीयदुःसङ्कल्पप्रशान्तये । यत्ता उद्युक्ताः । स्युः । तथैव । स्वम् । प्रपन्नानां भक्तानामपि । दुःसङ्कल्पप्रशान्तये । यत्ताः । स्युः । ध्रुवं निश्चितमेव ॥ ३६ ॥ अचिरेणेति । अतः । कृपालवः । ते साधवः । स्वानुभूतसदुक्तिभिः स्वानुभूतार्थशोभनवचनैः । अचिरेण । कालेनैव । सङ्कल्पानुदयं स्वप्रपन्नजनदुःसङ्कल्पविनाशम् । कारयेयुः । हि निश्चितमेव ॥ ३७ ॥ विपक्षे दोषमाह । वहिरिति । ये पुरुषाः । वहिर्विधृतसद्वेषाः केवलमुपरिष्टादेव स्वीकृतसाधुवेषाः । दुःसङ्कल्पभृतान्तराः दुष्टसङ्क-

एवं विधानाशक्तस्तु वर्त्तेतैव जितात्मनाम् । मण्डलेऽत्र सतां येषां सङ्कल्पानुदयो हृदि ॥ ३४ ॥
रजोगुणातिवेगेन जायमानाः स्व आत्मनि । तेषामेवाग्रतो वाच्याः सङ्कल्पा न तु दुर्हृदाम् ॥ ३५ ॥
महान्तस्ते यथा स्वीयदुःसङ्कल्पप्रशान्तये । यत्ताः स्युर्हि तथैव स्वं प्रपन्नानामपि ध्रुवम् ॥ ३६ ॥
अचिरेणैव कालेन स्वानुभूतसदुक्तिभिः । सङ्कल्पानुदयं ते हि कारयेयुः कृपालवः ॥ ३७ ॥
वहिर्विधृतसद्वेषा दुःसङ्कल्पभृतान्तराः । ये तेषां तु प्रपत्तौ स्यात्फलं किन्नु मुमुक्षुताम् ॥ ३८ ॥
बोद्‌धुं पतिव्रता धर्मं यथा नारी सुवासिनी । उपेता बालविधवां फलं प्राप्नोत्यनीप्सितम् ॥ ३९ ॥
यथा वा सर्पभवनमातिथ्यसुखलिप्सया । गतो भुजङ्गमो हर्षात्प्राप्नोत्येवानभीप्सितम् ॥ ४० ॥

ल्पापूरितान्तःकरणाः । स्युः । तेषां पुरुषाणाम् । प्रपत्तौ शरणीकरणपूर्वं तदग्रतः स्वसङ्कल्पनिवेदने कृते सतीत्यर्थः । मुमुक्षतां तच्छरणं प्राप्तानां मुमुक्षुपुरुषाणाम् । किंनु किं वा । फलम् । स्यात् । न किमपि प्रत्युतानीप्सितं फलं प्राप्नुयादिति भावः ॥ ३८ ॥ तत्र दृष्टान्तावाह द्वाभ्याम् । बोद्धुमिति । यथा । सुवासिनी जीवद्भर्त्तृका । नारी । पतिव्रताधर्मम् । बोद्धुं ज्ञातुम् । बालविधवां बालभावे एव मृतभर्त्तृकाम् । उपेता प्राप्ता सती । अनीप्सितं स्वेनाप्तुं वाञ्छिताद्भिन्नम् । फलम् । प्राप्नोति । बालविधवायाः पतिव्रताधर्मानभिज्ञत्वात्स्ववर्त्तनानुसारेण बोधविधानशीलत्वाच्चदुक्तार्थौ हि पतिव्रताया अनीप्सितफलरूप इति भावः ॥ ३९ ॥ यथेति । यथा वा । भुजङ्गमः सर्पः । आतिथ्यफललिप्सया अतिथिभावार्हफलप्राप्तीच्छया । हर्षात् । सर्पभवनं भुजङ्गमनाकुम् । गतः प्राप्तः सन् । अनमीप्सितमेव । प्राप्नोति । तत्समीपे आतिथ्यार्हवस्तुनः स्वभावत एवाभावादतिथिसर्पस्य स्वाभिवाञ्छितप्राप्तिस्तु न स्यात्प्रत्युत तत्कृतताडनाद्यनीप्सितप्राप्तिरेव स्यादिति भावः ॥ ४० ॥

दुःसङ्कल्पेति । तद्वत्तेन प्रकारेणैव । इह लोके । दाम्भिकोपगमाद्वेषमात्रसाधुशरणसम्प्राप्तितः । दुःसङ्कल्परुजां दुष्टसङ्कल्परूपरोगवतां पुरुषाणाम् । इष्टलाभः दुःसङ्कल्पविनाशरूपेष्टार्थसम्प्राप्तिः । क्वापि कदाचिदपि । न भवेत् । प्रत्युत । अनीप्सितमेव । स्यात् ॥ ४१ ॥ सेव्या इति । तत्तस्माद्धेतोः । उन्मूलितमनोरुजः स्वहृदयादामूलाद्दुष्टसङ्कल्परोगान्विनाश्य वर्त्तमाना इत्यर्थः । सत्याः । त्यागिनः । सेव्याः । स्वहार्दं स्वदुष्टसङ्कल्पविनाशरूपहृद्गताभिप्रायम् । कथनीयाश्च । यतः । तत्सेवनात्तेभ्यः स्वहार्दकथनाच्च । स्वेष्टसिद्धिः स्वदुष्टसङ्कल्पविनाशरूपेष्टार्थप्राप्तिः । भवेत् ॥ ४२ ॥ त इति । येषां त्यागिनाम् । मनः । निर्वासनं भगवदितरार्थवासनावर्जितम् । भवेत् । ये त्यागिनः । त्यक्तं वैराग्यबलेन स्वेनैव परित्यक्तम् । स्वजनादि च । मलवत् । नैव । स्मरेयुः । त एव । सत्याः । त्यागिनः । मताः ॥ ४३ ॥ अन्तरायानिति । भागवतम् । धर्मम् । एकान्तिकधर्ममित्यर्थः । श्रिताः सर्वात्मना आश्रिताः । ते सत्यास्त्यागिनस्तु । ब्रह्मात्मना ब्रह्मभावापन्नेन स्वात्मना । हरेः । ध्याने । अन्तरायान्विघ्नकरान् । धर्माधर्मादिसङ्कल्पान् । जह्युस्त्यजेयुः ॥ ४४ ॥ अत्र भारतीयमोक्षधर्मोक्तप्रमाणमाह । त्यजेति ।

दुःसङ्कल्परुजां तद्वद्दाम्भिकोपगमादिह । नेष्टलाभो भवेत् क्वापि प्रत्युत स्यादनीप्सितम् ॥ ४१ ॥
सेव्यास्तत्त्यागिनः सत्या उन्मूलितमनोरुजः । स्वहार्दं कथनीयाश्च स्वेष्टसिद्धिर्यतो भवेत् ॥ ४२ ॥
त एव त्यागिनः सत्या येषां निर्वासनं मनः । त्यक्तं नैव स्मरेयुर्ये मलवत्स्वजनादि च ॥ ४३ ॥
अन्तरायान् हरेर्ध्याने जह्युर्ब्रह्मात्मना तु ते । धर्माधर्मादिसङ्कल्पान् धर्मं भागवतं श्रिताः ॥ ४४ ॥
त्यज धर्ममधर्मं चेत्यमुं श्लोकं हि नारदः । शुकं प्रोवाच तस्यापि हार्दमेतत्प्रतीयते ॥ ४५ ॥
त्यक्त्वाऽऽत्मनोऽन्यत्सकलं देहप्राणेन्द्रियात्मनाम् । द्रष्टुः कृष्ण उपास्यस्तै ब्रह्मरूपात्मना सदा ॥ ४६ ॥

'त्यज धर्ममधर्मं च उभे सत्यानृते त्यज । उभे सत्यानृते त्यक्त्वा येन त्यजसि तं त्यज' । इत्यमुम् । श्लोकम् । नारदः । शुकम् । प्रोवाच । तस्य श्लोकस्य । हार्दमभिप्रायोऽपि । एतत्पूर्वोक्तमेव । प्रतीयते बुध्यते । नारदोक्तैतच्छ्लोकार्थो । यथा । हे शुक ! । ब्रह्मरूपात्मना भगवत्स्वरूपध्यानावस्थितस्त्वम् । धर्मम् । अधर्मं च । त्यज । आत्मविचारपूर्वकभगवद्ध्यानान्तरायकर्तृधर्माधर्मसङ्कल्पान्मुञ्चेत्यर्थः । उभे । सत्यानृते । त्यज । तथाविधसत्यानृतसङ्कल्पानपि जहीत्यर्थः । एवम् । उभे सत्यानृते । त्यक्त्वा । येन विचारेण । त्यजसि धर्मादिसङ्कल्पान् जहासि तं विचारमपि । त्यजेति । अत्र न धर्मादीनां स्वरूपतस्त्याग उक्तः किन्तु भगवद्ध्यानान्तरायकरतत्सङ्कल्पत्याग उक्तो बोध्यः ॥ ४५ ॥ उक्तार्थं निगमयति । त्यक्त्वेति । देहप्राणेन्द्रियात्मनां शरीरासुविन्द्रियमनसाम् । द्रष्टुर्ज्ञातुः । आत्मनो जीवात्सकाशात् । अन्यत्तत्स्वरूपस्वभावादिभिर्व्यतिरिक्तम् । सकलं स्थूलादिदेहत्रयभावं सम्बन्ध्यादिषु ममतास्पदेषु तद्भावं चेत्येवं सर्वम् । त्यक्त्वा ज्ञानवैराग्यविचारबलेन तेषु भोग्यतादिबुद्धिं परित्यज्येत्यर्थः । ब्रह्मरूपात्मना । सदा । तैस्त्यागिभिः । कृष्णः । उपास्यः स्वधर्मसहितं समाहात्म्यबोधं सप्रेम नवधाभजनीयः ॥ ४६ ॥

आत्मानन्द इति । अथानन्तरम् । आत्मानन्दः । साधुः । तमेवंब्रुवाणम् । हरिम् । प्रणम्य । पप्रच्छ । हे ईश ! स्वान्तर्यामिशक्त्या जीवेशानां नियमनसमर्थ । देहात् । अन्यतरस्यातिशयेन पृथक्भूतस्य । आत्मनो जीवस्य । रूपं स्वरूपम् । मे मह्यम् । ब्रूहि ॥ ४७ ॥ श्रीस्वामीति । तमेवंपृच्छन्तमात्मानन्द-मुनिम् । श्रीस्वामी श्रीहरिः । उवाच । हे साधो ! । त्वम् । तदात्मरूपम् । समासतः सङ्क्षेपतः । शृणु । देहेन्द्रियादीनाम् । पृथक् पृथक् तत्तद्भेदत्वेन । ज्ञाता । अयं देह इदमिन्द्रियं इयं देवतेति विविच्य जानातीत्यर्थः । आत्मा बोध्यः ॥ ४८ ॥ एषामिति । किञ्च । एषां देहेन्द्रियादीनाम् । स्वरूपवक्ता । देहेन्द्रिया-दिस्वरूपं विविच्यान्येभ्यो वदतीत्यर्थः । श्रोता अन्येन कथ्यमानानि देहादिस्वरूपाणि शृणोतीत्यर्थः । मन्तोक्तप्रकारेण श्रुतानां देहादिस्वरूपाणामनुमननकर्त्तेत्यर्थः । प्रमापकः प्रमाणैस्तेषां प्रमातेत्यर्थः । सर्वक्रियाणां दर्शनश्रवणादिसर्वेन्द्रियकर्मणाम् । कर्त्ता । इत्थममुना प्रकारेण । आत्मा । अस्ति । इतीत्थम् । अवधार्यताम् ॥ ४९ ॥ श्रुत्वेति । इत्येवंविधम् । सुधोपमेयममृततुल्यम् । हरेः । वचः । श्रुत्वा । मुनिवरः साधूत्तमः । स आत्मानन्दः । तुष्टः । अभवत् । सभानिषण्णाः । तदीयचरणा-

आत्मानन्दोऽथ पप्रच्छ हरिं साधुः प्रणम्य तम् । देहादन्यतरस्येश ! ब्रूहि रूपं आत्मनः ॥ ४७ ॥ श्रीस्वाम्युवाच
तं साधो ! शृणु तत्त्वं समासतः । ज्ञाता देहेन्द्रियादीनामात्मा बोध्यः पृथक् पृथक् ॥४८॥ एषां स्वरूपवक्ता
च श्रोता मन्ता प्रमापकः । सर्वक्रियाणां कर्त्तेत्थमात्मास्तीत्यवधार्यताम् ॥ ४९ ॥ श्रुत्वा हरेरिति वचः स सुधोपमेयं
तुष्टोऽभवन्मुनिवरश्च सभानिनिषण्णाः । सर्वे तदीयचरणाम्बुजभक्तिभाजः सन्तश्च तं गुरुवरं स्म नमन्ति हृष्टाः ॥५०॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते अष्टत्रिंशस्तरङ्गः ॥३८॥

शकाब्दे विक्रमार्कस्य रसाश्ववसुभूमिते । तपःशुक्लतृतीयायां वचोऽमृतमिदं हरेः ॥ १ ॥
तत्र दुर्गपुरे दुर्गे उत्तमस्य स भूपतेः । न्यषीदत्स्वास्तृते मञ्चे पिचुमन्दतरोरधः ॥ २ ॥

म्बुजभक्तिभाजः । सर्वे । सन्तस्त्यागिजनाः । गृहिजनाश्च । हृष्टाः । अभवन् । गुरुवरम् । तं श्रीहरिम् । नमन्ति स्म सर्वेऽपि नमश्चक्रुः ॥ ५० ॥ रीतिर्निर्वासनत्वादेर्यः स्वेषां वर्त्तनस्य तु । विस्तरात्कृपया प्राह सोऽस्तु मद्धृदये हरिः ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्स्वनुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायामष्टत्रिंशस्तरङ्गः ॥ ३८ ॥

एकोनचत्वारिंशे तु शुष्कवेदान्तिसम्मतः । निर्विकल्पसमाध्युक्त्या सिद्धान्तः खण्डितः स्फुटम् ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८७६) तपः शुक्लतृतीयायां माघमासस्य शुक्लपक्षागततृतीयातिथौ । इदम् । हरेः । वचोऽमृतम् । अभवत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमस्य । भूपतेः । दुर्गे । पिचुमन्दतरोः । अधोऽस्तनवेदिकायाम् । स्वास्तृते सोपकरणकौशेयतूलिकाच्छादिते । मञ्चे । स श्रीहरिः । न्यषीदत् ॥ २ ॥

तं विशिनष्टि प्रीतेति । पीतपुष्पाणां ये उत्तंसौ कर्णपूरौ च हाराश्च शेखरालिरापीडश्रेणिश्च ताभिर्विभूपितोऽलङ्कृतः । श्वेतवासाः परिधृतसकलश्वेतवसनः । भूरिभिः । त्यागिभिः । गृहिभिश्च । नानादेशागतैरिति शेपः । वृतः सभायां परिवेष्टितः ॥ ३ ॥ वेदान्तेति । तत्र तस्याम् । संसदि सभायाम् । वेदान्तशास्त्रविच्छुष्कवेदान्तशास्त्रवेत्ता । कश्चित् । ब्राह्मणः । तत्र । संसदि । निषण्णः । आसीत् । तं ब्राह्मणम् । दृष्ट्वा । सर्ववित् 'यः सर्वज्ञः सर्वविदि'ति श्रुत्याऽभिहितः सर्वज्ञः । स्वयम् । स श्रीहरिः । अपृच्छत् ॥ ४ ॥ भवदिति । हे विप्र ! । भवन्मते । एकमद्वितीयम् । निर्गुणं सत्त्वादिगुणवर्जितम् । ब्रह्मैव । सत्यम् । अस्ति । जीवाश्च ईशा वैराजादय ईश्वराश्च माया प्रकृतिश्च ताः । न तु अध्यारोपमन्तरा सत्या नैव भवन्ति । शास्त्राणि वेदपुराणेतिहासागमादीनि च । न सत्यानि । जगदिदं विश्वम् । न च सत्यं नैवास्ति ॥ ५ ॥ इयमिति । इयम् । वार्त्ता तु । अस्माकम् । हृदये । निश्चयम् । न याति । श्रुता भवादृशसकाशाच्छ्रवणविषयं प्राप्ता सत्यपि । कर्हिचित् । सर्वथा सर्वप्रकारेण । मता अन्तरात्मना सम्मताऽपि । नैव भवति ॥ ६ ॥ यदीति । यदि यर्हि । सत्या । भवेत् । तर्हि । तत्र

पीतपुष्पोतंसहारशेखरालिविभूषितः । श्वेतवासास्त्यागिभिश्च गृहिभिर्भूरिभिर्वृतः ॥ ३ ॥ वेदान्तशास्त्रवित्कश्चिद् ब्राह्मणस्तत्र संसदि । निषण्ण आसीत्तं दृष्ट्वा सोऽपृच्छत्सर्ववित्स्वयम् ॥ ४ ॥ भवन्मते ह्येकमेव सत्यं ब्रह्मास्ति निर्गुणम् । न तु जीवेशमायाश्च न शास्त्राणि जगन्न च ॥ ५ ॥ इयं वार्त्ता तु नास्माकं हृदये याति निश्चयम् । श्रुताऽपि कर्हिचिन्नैव मता भवति सर्वथा ॥६॥ यदि सत्या भवेत्तर्हि प्रमाणं तत्र कथ्यताम् । श्रुतिर्वाऽपि स्मृतिः सूत्रं न त्वन्यत्कल्पितं वचः ॥ ७ ॥ व्यासवाक्ये प्रतीतिर्नो बहुधा वर्त्तते ततः । तत्प्रमाणं यदि भवेत्तर्हि निःशङ्कमुच्यताम् ॥ ८ ॥ इति सञ्चोदितस्तेन विप्रः स बहुयुक्तिभिः । कुर्वन्नप्युत्तरं नैव तच्छङ्काहरणेऽशकत् ॥ ९ ॥ स्वपृष्टार्थसमाधाने तं विलोक्याक्षमं स च । स्वयमेवाब्रवीत्स्वामी तस्योत्तरमसंशयम् ॥ १० ॥

तत्सत्यत्वे । श्रुतिर्वेदवाक्यम् । अथवा । स्मृतिः पुराणसंहितावाक्यम् । अथवा । सूत्रं बादरायणप्रणीतः शारीरको न्यायः । प्रमाणम् । कथ्यताम् । श्रुत्यादिवाक्यं प्रमाणार्थं प्रठयतामित्यर्थः । अन्यत्तदतिरिक्तम् । कल्पितं कैश्चिदाधुनिकपण्डितैः कल्पनया प्रोक्तम् । वचः । न तु प्रमाणतया न कथ्यताम् ॥ ७ ॥ व्यासेति । यतः । नोऽस्माकम् । व्यासवाक्ये वेदान् व्यस्यतः पुराणानि शारीरकसूत्राणि च विदधतः श्रीबादरायणस्य वचने । बहुधा । प्रतीतिर्विश्वासः । वर्त्तते । ततो हेतोः । यदि यर्हि । तद्व्यासवाक्यम् । प्रमाणम् । भवेत् । तर्हि । निःशङ्कं यथातथा । उच्यताम् ॥ ८ ॥ इतीति । इत्यमुना प्रकारेण । तेन श्रीहरिणा । सञ्चोदितः प्रेरितः । स वेदान्तिविप्रः । बहुयुक्तिभिः । उत्तरम् । कुर्वन्सन्नपि । तच्छङ्काहरणे श्रीहरिकृतायाः आशङ्कायाः परिहारकरणे । नैव । अशकत् समर्थो नाभूत् ॥ ९ ॥ स्वेति । स्वपृष्टार्थसमाधाने । अक्षममसमर्थम् । तं वेदान्तिब्राह्मणम् । विलोक्य । स्वामी । स श्रीहरिः । स्वयमेव । तस्य प्रश्नस्य । उत्तरम् । असंशयं निःशयं यथातथा । अब्रवीत् ॥ १० ॥

भगवद्भजनाभ्यासान्मुक्ता विदन्ति यां स्थितिम् । सा द्विधा सविकल्पैका निर्विकल्पेति चापरा ॥ ११ ॥
आद्यायां तत्र पश्यन्ति जीवेशाद्यखिलं पृथक् । द्वितीयायां तु नेक्षन्ते मुक्ताः किञ्चित्पृथग्घरेः ॥ १२ ॥
यथा हेमाद्रिमारूढा अधो दृष्ट्वा पृथक् पृथक् । नगान्वृक्षान्नरादींश्च तदाधारं च भूतलम् ॥ १३ ॥
वीक्षन्त एवमेवैते सविकल्पसमाधयः । अनुलोमदृशा सर्वं वीक्षन्ते हि पृथक् पृथक् ॥ १४ ॥
लोकालोकनगारूढास्त्वेतत्किञ्चित्क्षितेः पृथक् । न पश्यन्ति यथा तद्वदन्येऽप्येतद्धरेः पृथक् ॥ १५ ॥
यथा सूर्यरथस्थानां दिवारात्रिभिदा न हि । तथा भेदो न वै तेषामन्येषां तु स विद्यते ॥ १६ ॥
तद्दृष्ट्यैवैकमेवास्ति ब्रह्म न त्वन्यदण्वपि । तेन नासत्यता ज्ञेया जीवादीनां तु सर्वथा ॥ १७ ॥

भगवदिति । हे विप्र ! । भगवद्भजनाभ्यासाद्भगवत एकान्तिकभक्तिपरिशिलनात् । मुक्ता अनादिमायाबन्धनाद्विमुच्य ब्रह्मभावं प्राप्ता भक्ताः । याम् । स्थितिम् । विदन्ति प्राप्नुवन्ति । सा स्थितिः । द्विधा द्विप्रकारा । अस्ति । तत्र । एका प्रथमा । सविकल्पा । अपरा द्वितीया । निर्विकल्पा । इति । बुध्यताम् ॥ ११ ॥ आद्यायामिति । तत्र द्विविधस्थितिमध्ये । आद्यायां सविकल्पाख्यप्रथमस्थितौ । अखिलम् । जीवेशादि । जीवेश्वर,माया,ब्रह्म,परब्रह्माणीत्यर्थः । पृथक् भिन्नभिन्नम् । मुक्ताः । पश्यन्ति ज्ञानिमुक्ता वीक्षन्ते द्वितीयायां निर्विकल्पाख्यापरस्थितौ । जीवेशादि । किञ्चिदपि । हरेः शकाशात् । पृथक् भिन्नं भिन्नम् । मुक्ताः । नेक्षन्ते महामुक्ता नैव पश्यन्ति । एकं श्रीहरिमेव विक्षन्ते न जीवादिकमित्यर्थः ॥ १२ ॥ उभयांस्तद्वीक्षणावीक्षणभावे दृष्टान्तानाह चतुर्भिः । यथेति । यथा । हेमाद्रिं मेरुपर्वतम् । आरूढा नराः । अधोदृष्ट्याऽधःप्रसारितचक्षुषा । नगांस्ततोऽधस्तनान्पर्वतान् । वृक्षान् । नरादींश्च । तदाधारं नगाद्याश्रयभूतम् । भूतलं च । पृथक् पृथक् । वीक्षन्ते इत्युत्तरेण सम्बन्धः ॥ १३ ॥ वीक्षन्ते इति । एवममुना प्रकारेणैव । सविकल्पसमाधयः । एते ज्ञानिमुक्ताः । अनुलोमदृशा । सर्वं जीवेशादिसकलम् । पृथक् पृथक् । वीक्षन्ते ॥ १४ ॥ लोकेति । यथा । लोकालोकनगारूढा नरास्तु । एतन्नगवृक्षादिकम् । किञ्चिदपि । क्षितेः । पृथक् । न पश्यन्ति । किन्तु केवलां क्षितिमेव वीक्षन्ते इत्यर्थः । तद्वत्तथा । अन्ये निर्विकल्पसमाधिमन्तो महामुक्तास्तु । अपिस्त्वर्थे । एतज्जीवेशादिकम् । हरेः सकाशात् । पृथक् । न पश्यन्ति ॥ १५ ॥ यथेति । यथा । सूर्यरथस्थानाम् । दिवारात्रिभिदा दिनरात्रिभेदः । नहि नैव विद्यते । अन्येषां तु विद्यते इति भावः । तथा । तेषां निर्विकल्पसमाधिमतां महामुक्तानाम् । भेदो जीवादीनां भेदेन समीक्षणम् । न विद्यते । अन्येषां सविकल्पसमाधिमतां ज्ञानिमुक्तानां तु । स जीवेश्वरादिभेदः । विद्यते ॥ १६ ॥ तदिति । तद्दृष्ट्या निर्विकल्पसमाधिमन्महामुक्तदृष्ट्यैव । एकं केवलम् । ब्रह्म श्रीहरिरेव । अस्ति । अन्यज्जीवेशादिकम् । अण्वल्पमात्रमपि । न तु नैवास्ति । तेन हेतुना । जीवादिनाम् । असत्यता स्वरूपतोऽसत्यत्वम् । सर्वथा । न तु नैव ज्ञेया ॥ १७ ॥

सर्वेति । हे द्विज ! । वेदादिषु । यानि । सर्वासत्यत्ववाक्यानि 'सदेव सौम्येदमग्र आसी'देकमेवाद्वितीयं' 'नेहनानास्ति किञ्चने'त्यादीनि ब्रह्मातिरिक्तसकलासत्यत्वप्रतिपादकवचनानि । भवन्ति प्रतीयन्ते । तानि । तेषां हि निर्विकल्पसमाधिमन्महामुक्तानामेव । भवन्ति । इत्येवममुना प्रकारेण । निश्चितमेव । अस्ति ॥ १८ ॥ तत इति । ततो हेतोः । जीवेशनिगमादयः । वस्तुतो वै स्वरूपत एव । सत्याः । सन्ति । इतीत्थम् । मुमुक्षुभिः । ज्ञात्वा । हरिः । सदा । भजनीय एकान्तिकभावेनोपासनीयः ॥ १९ ॥ एवमिति । एवममुना प्रकारेण । वेदादिसिद्धान्तम् । अज्ञात्वा । एकत्ववादिनो वस्तुतो जीवाद्यसत्यत्वोक्तिपूर्वं केवलब्रह्मसत्यतावादिनः । शास्त्रवचसाम् । पूर्वापरबाधितां एकार्थप्रतिपादकनानाशास्त्रवाक्यानां परस्परबाधवत्त्वमित्यर्थः । न जानन्ति ॥ २० ॥ निर्विकल्पेति । अत्र लोके । ये पुरुषाः । निर्विकल्पस्थितिं निर्विकल्पसमाधिनिष्ठाम् । न प्राप्ता अपि । केवलमेकम् । किञ्चित् । वेदान्तम् । यादृशं तादृशं यं कमपि संस्कृतं प्राकृतं वा वेदान्तग्रन्थमित्यर्थः ।

सर्वासत्यत्ववाक्यानि यानि वेदादिषु द्विज ! । भवन्ति तानि तेषां हीत्येवमेवास्ति निश्चितम् ॥ १८ ॥
ततः सत्या वस्तुतो वै जीवेशनीगमादयः । मुमुक्षुभिरिति ज्ञात्वा भजनीयः सदा हरिः ॥ १९ ॥
एवं वेदादिसिद्धान्तमज्ञात्वैकत्ववादिनः । जानन्ति शास्त्रवचसां न पूर्वापरबाधिताम् ॥ २० ॥
निर्विकल्पस्थितिं येऽत्र न प्राप्ता अपि केवलम् । अधीत्य किञ्चिद्वेदान्तं श्रुत्वा वा प्राकृतं च तम् ॥ २१ ॥
सर्वस्यासत्यतां प्राहुर्यथेष्टाचरणे रताः । ते तु नारकिणः सन्तीत्यस्माकं निश्चितं मतम् ॥ २२ ॥
अत्र चेत्संशयः कश्चिद्भवेच्चेतसि कस्यचित् । तर्हि पृच्छा विधियेति श्रुत्वा तस्य वचः प्रभोः ॥ २३ ॥
स ब्राह्मणः प्रणम्याह नष्टा मे संशयाः प्रभो ! । त्वामेवाद्य प्रपन्नोऽस्मि सद्गुरुं श्रितमुक्तिदम् ॥ २४ ॥

अधीत्य । अथवा । प्राकृतम् । चकारात्संस्कृतमपि । तं वेदान्तग्रन्थम् । श्रुत्वा ॥ २१ ॥ सर्वस्येति । सर्वस्य परमार्थसत्यजीवादिसकलस्य । असत्यताम् । प्राहुः । यथेष्टाचरणे । रताः प्रसक्ताः । ते पुरुषाः । नारकिणः स्वदेहान्ते निरयगामिनः । सन्ति । इत्येवंविधम् । निश्चितं वेदादिप्रमाणितम् । अस्माकम् । मतं सिद्धान्तः । अस्ति । इति द्वयोरेकान्वयः । एतदर्थस्य प्रमाणविस्तरः सत्सङ्गिजीवनस्थचतुर्थप्रकरणीयैकविंशाध्यायादवगन्तव्यः ॥ २२ ॥ अत्रेति । हे द्विज ! । अत्र मदुक्तार्थे । चेद्यदि । कस्यचित् । चेतस्यन्तःकरणे । कश्चित् । संशयः । भवेत् । तर्हि । पृच्छा प्रश्नः । विधेया कार्या । इत्येवंविधम् । प्रभोः । तस्य श्रीहरेः । वचः । श्रुत्वा स इत्युत्तरेणान्वयः ॥ २३ ॥ स इति । स शुष्कवेदान्तवेत्ता । ब्राह्मणः । प्रणम्य श्रीहरिं साष्टाङ्गं नत्वा । आह । हे प्रभो ! । मे मम । संशयाः । नष्टाः निवृत्ता भवन्ति अद्य साम्प्रतम् । श्रितमुक्तिदं स्वाश्रितजनसंसृतिविमोक्षप्रदम् । सद्गुरुम् । त्वामेव । प्रपन्नः शरणं गतः । अस्मि ॥ २४ ॥

इतीति । इतीत्थम् । उक्त्वा । स ब्राह्मणः । हरिम् । शरणम् । प्रपेदे । अथानन्तरम् । पीयूषममृतायमानम् । अस्य श्रीहरेः । वचनम् । कर्णकंसैः श्रवणपानपात्रैः । 'कंसोऽस्त्री पानभाजन'मित्यमरः । पीत्वा श्रुत्वेत्यर्थः । सदो निषण्णाः सभायामुपविष्टाः । सकला अपि । तद्भक्ताः । परम मुदम् । आपुः । तं श्रीहरिम् । ववन्दिरे साष्टाङ्गं नमश्चक्रुः ॥ २५ ॥ मतान्तरनिरासार्थं स्वभक्तानां द्विधास्थितिम् । दृष्टान्तोक्त्याऽऽह यस्तस्मिन् हरौ मेऽस्तु सदैव हृद् ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्स्नुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायामेकोनचत्वारिंशस्तरङ्गः ॥ ३९ ॥

सविल्पं निर्विकल्पं समाधिं य उपागताः । उभयेषां लक्षणानि सुस्पष्टं यानि सन्ति हि ॥ १ ॥ भक्तेरुपासनायाश्च यस्तु भेदोऽस्ति शाश्वतः । तदेतदखिलं प्रोक्तं चत्वारिंशे ततः स्फुटम् ॥ २ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८७६) तपसो माघमासस्य । शुक्ले शुक्लपक्षे । चतुर्थ्यां तिथौ । इदम् । हरेः वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमस्य । भूपतेः । दुर्गे । पिचुमन्दतरोः । अधोऽधःप्रदेशवर्त्तिन्यां वेदिकायाम् । उत्तमे स्वास्तरणाच्छादित्वाच्छ्रेष्ठे । पीठे मञ्चासने । स श्रीहरिः । न्यषीदत् स्वावासादागत्य प्रातरुपविवेश ॥ २ ॥ तत्रोपविष्टं श्रीहरिं वर्णयति । सितेति । सिताम्बरधरः । पीतपुष्पहारादिभूषितः पीतपुष्पमयहारशेखरविराजमानः । नानादेशागतैः । स्वकैः । मुनिगणैः साधुसमूहैः । भक्तैर्गृहिभक्तजनैश्च । वृतः सभायां परिवेष्टितः ॥ ३ ॥ मुक्तानन्द इति । सविकल्प इति । मुक्तानन्दः । मुनिः । प्राञ्जलिः सन् । तं श्रीहरिम् । आनम्य । प्रपच्छ । हे स्वामिन् ! । योगवेदिभिः सालम्बाष्टाङ्गयोगवेदितृभिर्भवदेकान्तिकभक्तैर्योगिभिः । सविकल्पः । निर्विकल्पश्च । इत्येवम् । द्विविधः । समाधिः स्मर्यते कथ्यते । तौ सविकल्पनिर्विकल्पौ समाधी । ये योगिनस्त्वद्भक्ताः । उपागताः प्राप्ताः । भवन्ति । उभयेषां द्विविधानाम् । तेषां योगिनां त्वद्भक्तानाम् । लक्ष्माणि लक्षणानि । पृथक् भिन्नभिन्नतया । अञ्जसा तत्त्वतः । मे मह्यम् । ब्रूहि । पूर्वतरङ्गे तत्तन्मुक्तस्यज्ञानेन सविकल्पनिर्विकल्पे स्थिती उक्ते ते श्रुत्वा साम्प्रतं तल्लक्षणानि जिज्ञासुः स मुनिस्तानि पृष्टवानिति न पूर्वतरङ्गोक्तार्थे नास्य पौनरुक्त्यम् ॥ ४–५ ॥

इत्युक्त्वा स तु शरणं हरिं प्रपेदे पीयूषं वचनमथास्य कर्णकंसैः । पीत्वाऽऽपुः परम मुदं सदोनिषण्णास्तद्भक्ता अपि सकला ववन्दिरे तम् ॥२५॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते एकोनचत्वारिंशस्तरङ्गः ॥३९॥

शकाब्दे विक्रमार्कस्य रसाश्ववसुभूमिते । चतुर्थ्यां तपसः शुक्ले वचोऽमृतमिदं हरेः ॥ १ ॥
तत्र दुर्गपुरे दुर्ग उत्तमस्य स भूपतेः । न्यषीददुत्तमे पीठे पिचुमन्दतरोरधः ॥ २ ॥
सिताम्बरधरः पीतपुष्पहारादिभूषितः । वृतो मुनिगणैर्भक्तैर्नानादेशागतैः स्वकैः ॥ ३ ॥
मुक्तानन्दस्तमानम्य पप्रच्छ प्राञ्जलिर्मुनिः । समाधिर्द्विविधः स्वामिन्स्मर्यते योगवेदिभिः ॥ ४ ॥
सविकल्पो निर्विकल्पश्चेति तौ य उपागताः । उभयेषां पृथक्तेषां लक्ष्माणि ब्रूहि मेऽञ्जसा ॥ ५ ॥

इतीति । इत्यमुना प्रकारेण । तेन मुक्तानन्दमुनिना । पृष्टः । हरिः । तं मुक्तानन्दमुनिम् । उवाच । हे मुने ! । आदितः प्रथमतः । सविकल्पस्थितिमताम् । लक्षणम् । वच्मि । शृणु तत्त्वमाकर्णय ॥ ६ ॥ उपासकानामिति । येषाम् । उपासकानामेकान्तिकधर्मेण भगवन्तं भजमानानां ज्ञानिमुक्तानाम् । कृष्णमूर्तौ । मनःस्थितिः । स्यात् । तेषाम् । शुभा एव । सङ्कल्पाः । स्युः । इतरे अशुभाः सङ्कल्पाः । क्वचित्कदाचिदपि । न स्युः ॥ ७ ॥ तदीयशुभसङ्कल्पानाह द्वाभ्याम् । स्यामेति । वयम् । नारदेन देवर्षिणा । अथवा । सनकेन । एकवचनं चतुर्णां सनकादितुल्यत्वेन । ब्रह्मपुत्रैः सनकादिभिरित्यर्थः । अथवा । शुकेन बादरायणिना । तुल्याः समानाः । स्याम भवेम । अथवा । बदरीवनं श्रीनरनारायणभगवदाश्रमम् । गत्वा प्राप्य । मुनिभिस्तत्रत्यतन्वादिऋषिभिः सह । तपः । कुर्याम ॥ ८ ॥ गत्वेति । अथवा । श्वेताह्वयम् । द्वीपम् । गत्वा । तत्र श्वेतद्वीपे । तपः । विधाय । आहारवर्जिता भगवदितरसकलेन्द्रियविषयभोगवर्जिताः । श्वेतमुक्तैः समास्तुल्याः । भवेम । चकाराक्षरधाम्नि वा गत्वाऽक्षरमुक्तैः साकं भगवत्सेवायां तिष्ठेमेति ज्ञेयम् ॥ ९ ॥ समाधिभाजामिति । येषाम् । समाधिभाजां श्रीहरौ मनोनैश्चल्यस्थितिरूपसमाधिमताम् ।

इति पृष्टो हरिस्तेन तमुवाच मुने ! शृणु । सविकल्पस्थितिमतां वच्मि लक्षणमादितः ॥ ६ ॥ उपासकानां येषां स्यात् कृष्णमूर्तौ मनःस्थितिः । शुभा एव हि सङ्कल्पास्तेषां स्युर्नेतरे क्वचित् ॥ ७ ॥ स्याम तुल्या नारदेन शुकेन वा । तपः कुर्याम मुनिभिर्गत्वा वा बदरीवनम् ॥ ८ ॥ गत्वा श्वेताह्वयं द्वीपं तपस्तत्र विधाय च । भवेम वा श्वेतमुक्तैः समा आहारवर्जिताः ॥ ९ ॥ समाधिभाजां येषां स्युर्विकल्पा ईदृशाः शुभाः । योगशास्त्रे त एवोक्ताः सविकल्पसमाधयः ॥ १० ॥ समाधिभाजां येषां तु विकल्पानुदयो हृदि । ये चाप्याक्षरसाधर्म्यं श्रीकृष्णे मग्नमानसाः ॥ ११ ॥ कृष्णभक्तास्त एवोक्ता निर्विकल्पसमाधयः । श्रुत्वेति वाक्यं स हरेर्मुनिर्भूयस्तमब्रवीत् ॥ १२ ॥

ईदृशा एवंविधाः । शुभाः । सङ्कल्पाः । स्युः । ते इत्थंभूतसङ्कल्पवन्त एव । योगशास्त्रे । सविकल्पसमाधयः । उक्ताः । वागादीन्द्रियव्यापारस्य सङ्कल्पपूर्वत्वात्स्वाश्रितानां पुर इत्थं भाषणादि कुर्वन्तीति तदेव सविकल्पसामाधिभाजां लक्षणमिति भावः ॥ १० ॥ अथ निर्विकल्पसमाधिमतां लक्षणमाह सार्द्धेन । समाधीति । येषाम् । समाधिभाजाम् । भगवदेकान्तिकोपासनेन मनोनिश्चलतारूपसमाधिमतां महामुक्तानामित्यर्थः । हृदि मानसे । विकल्पानुदयः पूर्वोक्तशुभसङ्कल्पस्याप्यनुद्भवः । भवेत् । ये समाधिभाजः । अक्षरसाधर्म्यं तदैक्यभावनयाऽक्षरब्रह्मणः समानधर्मताम् । आप्याधिगम्य । श्रीकृष्णे । मग्नमानसाः सर्वदाऽविच्छेदेन संलग्नमनोवृत्तयश्च । स्युः ॥ ११ ॥ कृष्णेति । ते एवंविधाः । कृष्णभक्ता एव । निर्विकल्पसमाधयः । उक्ताः वागादीन्द्रियव्यापारस्य सङ्कल्पपूर्वत्वात् सङ्कल्पनिवृत्त्या वागादीन्द्रियव्यापारस्यापि निवृत्तत्वात् स्वाश्रितानां पुरोऽपि भाषणादिपरित्यज्य केवलं भगवत्स्वरूपे निमग्नतयावस्थानं निर्विकल्पसमाधिभाजां लक्षणमिति भावः । इत्येवंविधम् । हरेः । वाक्यम् । श्रुत्वा । सः । मुनिर्मुक्तानन्दसाधुः । भूयः पुनरपि । तं श्रीहरिम् । अब्रवीत् ॥ १२ ॥

भक्तिरिति । हे स्वामिन् ! । भक्तिः । उपासना च । इति द्वे । तव । प्राप्तये । शास्त्रे श्रीभागवतादिसद्ग्रन्थे । वर्णिते क्वचिद्भक्तिर्वर्णितास्ति क्वचिदुपासना चेत्यर्थः । तयोर्भक्त्युपासनयोः । भेदमपि । प्रसङ्गात् । वक्तुम् । अर्हसि । 'प्रसङ्गस्तूपासकानां येषां स्या'दिति 'कृष्णभक्तास्त एवोक्ता'इति च श्रुत्वा शास्त्रे क्वचित्कृष्ण-प्राप्तिहेतुत्वेनोक्तामुपासनां क्वचिद्भक्तिं च स्मृत्वा तद्भेदज्ञानबुभुत्सेति ॥१३॥ तमिति । अथानन्तरम् । हरिः । तं मुक्तानन्दमुनिम् । अब्रवीत् । हे मुने ! । ते तुभ्यम् । वदामि । शृणु । क्वचित् । भक्तिः । उपासना च । एतौ । द्वौ शब्दौ । पर्यायशब्दौ । भक्तिशब्दस्यापरः पर्याय उपासना तस्याश्च भक्तिशब्द इत्येवं तयोरेक एवार्थ इत्यर्थः ॥ १४ ॥ क्वचिदिति । क्वचित्तु । उभयोः । शब्दयोः । भेदः । अस्ति । तं भेदम् । कीर्त्तये तुभ्यं कथयामि । प्रेम्णा गाढानुरागेण । नवधा श्रवणादिनव-प्रकारेण । कृष्णस्य । भजनं सेवनम् । भक्तिः । उच्यते ॥ १५ ॥ श्रवणादिनवप्रकारानाह । श्रवणमिति । विष्णोः श्रीकृष्णस्य । श्रवणम् । कथाया इति शेषः । कीर्त्तनम् । तद्गुणचरित्राणामिति शेषः । स्मरणं तत्स्वरूपचिन्तनं नामोच्चारणं च । पादसेवनम् । अर्चनम् । वन्दनम् । दास्यम् । सख्यं तेन सह मित्रत्वम् । आत्म-

भक्तिश्चोपासना शास्त्रे वर्णिते प्राप्तये तव । तयोर्भेदमपि स्वामिन्प्रसङ्गाद्वक्तुमर्हसि ॥ १३ ॥
तमब्रवीदथ हरिर्मुने ! शृणु वदामि ते । पर्यायशब्दौ द्वावेतौ भक्तिश्चोपासना क्वचित् ॥ १४ ॥
क्वचित्त्वस्त्युभयोर्भेदः शब्दयोस्तं च कीर्त्तये । प्रेम्णा कृष्णस्य भजनं नवधा भक्तिरुच्यते ॥ १५ ॥
श्रवणं कीर्त्तनं विष्णोः स्मरणं पादसेवनम् । अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम् ॥ १६ ॥
उपासना तु श्रीकृष्णे सदा साकारभावना । ब्रह्मीभूतस्यापि भवेत्स्वस्य दृढतरान्तरे ॥ १७ ॥
श्रुतिस्मृतिप्रमावाक्यैः सा निराकारवादिनाम् । न क्वापि प्राप्नुयाद्ध्रासं प्रत्युत स्याद् दृढैव हि ॥ १८ ॥
साकारनिष्ठयेदृश्या कृष्णस्यैवान्तिके सदा । स्थितिः सेवकधर्मेण कथितोपासना बुधैः ॥ १९ ॥

निवेदनं सर्वथा तदधीनत्वम् ॥ १६ ॥ उपासनेति । ब्रह्मीभूतस्य भगवदेकान्तिकभक्त्या ब्रह्मभावं प्राप्तस्यापि । स्वस्यात्मनः । भक्तस्येत्यर्थः । अन्तरेऽन्तःकरणे । दृढतरा सुस्थिरा । या । श्रीकृष्णे । सदा । साकारभावना श्रीकृष्णः सदा किशोरवयाः पीताम्बरादिधरः अधरार्पितवंशीविभूषितपाणिः मदनमनोहरसकलावयः अक्षरभावापन्नमुक्त-वृन्दसंसेवितपदाम्बुजोऽस्तीति संस्कारः । सा तु । उपासना । भवेत् ॥१७॥ श्रुतीति । सा श्रीकृष्णे सदा साकारभावना । निराकारवादिनां श्रीकृष्णमाकृतिवर्जितं वदतां शुष्कवेदान्तिनाम् । श्रुतिस्मृतिप्रमावाक्यैः कल्पितविपरितार्थैस्तदुक्तैः श्रुतिस्मृतिप्रमाणवचनैरित्यर्थः । क्वापि कदाचिदपि । ह्रासं विनाशम् । न प्राप्नुयात् । प्रत्युत किन्तु । दृढैव । स्यात् । यथार्थतदर्थावगमनेन दृढा सत्यतिवृद्धा भवेदित्यर्थः ॥ १८ ॥ साकारेति । ईदृश्या । साकारनिष्ठया । कृष्णस्य । अन्तिके समीपे एव । सेवकधर्मेण दासभावेन सह । सदा । स्थितिः । बुधैर्भगवदेकान्तिकोपासकनारदादिमुनिभिः । उपासना कथिता । उप समीपे आसना स्थितिरुपासनेत्यन्वर्थत्वादिति भावः ॥ १९ ॥

उपासनाया इति । हे सुबुद्धे ! । इत्यमुना प्रकारेण । भक्तेः । अथ च । उपासनायाः । पृथक्त्वं भिन्नत्वम् । मया । गदितम् । इत्येवंविधम् । सुधाभममृतसन्निभम् । स्वगुरोः श्रीहरेः । वाक्यम् । श्रुत्वा । मुनिर्मुक्तानन्दो मुनिः । तुतोष । अपरे सभोपविष्टा अन्येऽपि । भक्तास्त्यागिगृहिणो भक्तजनाश्च । तुतुषुः ॥ २० ॥ सविकल्पं निर्विकल्पं समाधिमास्थितास्तु ये । स्वभक्तास्तल्लक्षणानि येनोक्तानि समासतः ॥१॥ भक्तेरुपासनायाश्च स्वस्य भेदोऽपि येन तु । वर्णितः स हरिर्भक्तिं दत्तात्स्वैकान्तिकीं तु मे ॥२॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्सद्गुरुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां चत्वारिंशस्तरङ्गः ॥४०॥

वेदान्तवाक्यमेकोऽहं बहुस्यामित्थमस्ति यत् । तस्यार्थो विस्तरादेकचत्वारिंशे उदीरितः ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् (१८७६) माघस्य मासस्य । शुक्लपञ्चम्यां शुक्लपक्षागतपञ्चमीतिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥१॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमस्य । भूपतेः । दुर्गे । निम्बतरोः । अधः । वेद्याम् । उत्तमे स्वास्तरणादिनातिशोभनत्वाच्छ्रेष्ठे । मञ्चे पर्यङ्कासने । स श्रीहरिः । न्यषीदत्स्वावासात्सायमागत्य तस्थौ ॥ २ ॥ तत्र स्थितं श्रीहरिं वर्णयति । सितेति ।

उपासनाया इति तेऽथ भक्तेर्मया पृथक्त्वं गदितं सुबुद्धे ! । श्रुत्वेति वाक्यं स्वगुरोः सुधाभं मुनिस्तुतोषाप्यपरे च भक्ताः ॥२०॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते चत्वारिंशस्तरङ्गः ॥ ४० ॥

शकाब्दे विक्रमार्कस्य रसाश्ववसुभूमिते । माघस्य शुक्लपञ्चम्यां वचोऽमृतमिदं हरेः ॥ १ ॥ तत्र दुर्गपुरे दुर्गे उत्तमस्य स भूपतेः । अधो निम्बतरोर्वेद्यां न्यषीदन्मञ्च उत्तमे ॥ २ ॥ सितसर्वाम्बरः पीतपुष्पहारालिमण्डितः । पीतपुष्पमयान्बिभ्रदापीडांश्चावतंसकौ ॥ ३ ॥ नानादेशागतैः स्वीयैर्भक्तैश्च मुनिभि र्वृतम् । नृसिंहानन्दसाधुस्तं नत्वा प्राञ्जलिरब्रवीत् ॥ ४ ॥ स्वामिन्वेदान्त एकोऽहं बहुस्यामिति पठ्यते । तस्यार्थमित्थं बहवः पण्डिताः कुर्वते भुवि ॥ ५ ॥ सर्गादौ भगवानेव स्वेच्छया बहुरूपताम् । यातीत्यतः सर्वमिदं स्थावरं जङ्गमं हरिः ॥ ६ ॥

सितसर्वाम्बरः । पीतपुष्पहारालिमण्डितः स्वधृताभिः पीतकुसुमस्रक्श्रेणिभिः शोभमानः । पीतपुष्पमयान् । आपीडान् शेखरान् । अवतंसकौ पीतपुष्पकर्णपुरौ च । बिभ्रत् ॥ ३ ॥ नानेति । नानादेशागतैः । स्वीयैरात्मीयैः मुनिभिः । भक्तैर्गृहिभिर्भक्तजनैश्च । वृतं सभायां परिवेष्टिम् । तं श्रीहरिम् । नृसिंहानन्दसाधुः । प्राञ्जलिः सन् । नत्वा । अब्रवीत् ॥ ४ ॥ स्वामिन्निति । हे स्वामिन् ! । वेदान्ते श्रुतिशिरोभागे छान्दोग्योपनिषदि । एकः । अहम् । बहु । स्याम् । इति । पठ्यते वेददर्शिभिर्मुनिभिर्यद्वाक्यं भण्यते । तस्य वाक्यस्य । अर्थम् । भुवि । बहवः । पण्डिताः शुष्कवेदान्तिनः । इत्थंवक्ष्यमाणप्रकारेण । कुर्वते ॥ ५ ॥ सर्गेति । सर्गादौ प्रथमतः सर्गारम्भे । भगवानेव । स्वेच्छया । बहुरूपतां जीवेश्वरादिभावेन बहुस्वरूपताम् । याति । इत्यतो हेतोः । स्थावरं स्थितिशीलम् जङ्गममतिशयेन गमनशीलम् । इदं जगत् । हरिः । भगवद्रूपमेव । अस्ति ॥ ६ ॥

इतीति । इत्यमुना प्रत्यारेण । तैः शुष्कवेदान्तिभिः पण्डितैः । कृतः । अर्थस्तु । इह लोके । बहुभ्यः शुष्कवेदान्तिमतानुगेभ्यो भ्रान्तधीभ्योऽनेकजनेभ्यः । रोचताम् । त्वदीयानां त्वद्भक्तानाम् । अस्माकम् । हृदि मनसि तु । स तत्कृतोऽर्थः । नोत्तरति । अस्मन्मनसि तत्कृततदर्थसत्यता न जायते इत्यर्थः ॥ ७ ॥ अच्युतस्येति । अच्युतस्य 'शाश्वतं शिवमच्युत'मिति श्रुतौ च्युतिधर्मवर्जितत्वादच्युतशब्देनाभिहितस्य भगवतः । च्युतिः क्षरता । न स्यात् । अक्षरस्य 'एतस्य वाऽक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठत' इति श्रुतौ क्षरधर्मवर्जितत्वेनाक्षरशब्दाभिहितस्य भगवतः । क्षरता च । न स्यात् । ततो हेतोः । भगवतः । जीवत्वादि जीवेश्वरादिभावेन भवनम् । कथङ्कारं केन प्रकारेण । वाच्यम् । नैव वक्तुं योग्यमित्यर्थः ॥ ८ ॥ वेदान्तेति । हे अभिज्ञ ! सर्वज्ञभगवन् ! । अतो हेतोः । अस्यैकोऽहं बहुस्यामित्येवंरूपस्य । वेदान्तवाक्यस्य । अर्थं तु । त्वमेकोऽहं बहुस्यामिति श्रुत्युदितसङ्कल्पकर्त्ता भवानेव । यथार्थतः । वक्तुम् । अर्हसि इतीत्थम् । पृष्टो नृसिंहानन्दमुनिनाऽनुयुक्तः । श्रीहरिः । अब्रवीत् ॥ ९ ॥ श्रीकृष्ण इति । हे मुने ! । भगवान् भगशब्दवाच्यैश्वर्यादिषट्कयुक्तः । श्रीकृष्ण एव । सर्वकारण-

इति कृतस्तैरर्थस्तु बहुभ्योऽपीह रोचताम् । अस्माकं तु त्वदीयानां स नोत्तरति वै हृदि ॥ ७ ॥ अच्युतस्य च्युतिर्न स्यात्क्षरता नाक्षरस्य च । जीवत्वादि कथङ्कारं वाच्यं भगवतस्ततः ॥ ८ ॥ वेदान्तवाक्यस्यास्यातस्त्वमेवार्थं यथार्थतः । वक्तुमर्हस्यभिज्ञेति पृष्टः श्रीहरिरब्रवीत् ॥ ९ ॥ श्रीकृष्णो भगवानस्ति सर्वकारणकारणम् । प्रकाशकानां सर्वेषां स चैवास्ति प्रकाशकः ॥ १० ॥ सर्गादावक्षरं ब्रह्म वीक्षते स सिसृक्षया । अबुध्येतां तदा तत्र लीनौ प्रकृतिपुरुषौ ॥ ११ ॥ ततोऽक्षरात्मना मायापुरुषाभ्यां बभूवतुः । तेनेक्षिताभ्यां प्रकटौ प्रधानपुरुषौ मुने ! ॥ १२ ॥ तदात्मना वीक्षिताभ्यां तेन ताभ्यां महानभूत् । तदात्मनेक्षितात्तस्माच्चाहङ्कारोऽभवत्त्रिवृत् ॥ १३ ॥

कारणम् । अस्ति । 'एष सर्वेश्वरः सर्वकारणकारणाधिपाधिप' इति च श्रुतेः । स श्रीकृष्णः । सर्वेषाम् । प्रकाशकानाम् । प्रकाशकः । अस्ति । 'तस्य भासासर्वमिदं विभाती'ति श्रुतेः ॥ १० ॥ सर्गेति । स श्रीकृष्णः । सिसृक्षया नैकाण्डानां सर्जनेच्छया हेतुना । सर्गादौ सृष्ट्यारम्भे । अक्षरम् । ब्रह्म । वीक्षते । तदा तर्हि । तत्राक्षरब्रह्मणि । लीनावात्यन्तिकप्रलये प्रसुप्तौ । प्रकृतिपुरुषौ महामायामहापुरुषौ । अबुध्येतां जजागरतुः ॥ ११ ॥ तत इति । हे मुने ! । ततस्तदनन्तरम् । तेन श्रीकृष्णेन । अक्षरात्मना अन्तर्यामिशक्तितयाऽक्षरब्रह्मैक्यं प्राप्तेन स्वात्मना । ईक्षिताभ्याम् । मायापुरुषाभ्यां महामायामहापुरुषाभ्यां सकाशात् । प्रधानपुरुषौ प्रधानप्रकृतितदधिष्ठातृपुरुषौ प्रकटावभिव्यक्तिं गतौ । बभूवतुः । एतौ प्रधानपुरुषावनेकेषां प्रधानपुरुषाणामुपलक्षणम् । 'तस्याः प्रधानपुरुषकोटयो जज्ञिरे मुने'इति स्कान्दोक्तेः ॥ १२ ॥ तदिति । तेन श्रीकृष्णेन । तदात्मना अन्तर्यामिशक्तितया महापुरुषैक्यं प्राप्तेनात्मना । वीक्षिताभ्याम् । ताभ्यां प्रधानपुरुषाभ्याम् । महान्महत्तत्त्वम् । अभूत् । तदात्मना अन्तर्यामिशक्तितया । प्रधानपुरुषैक्यं प्राप्तेनात्मना । ईक्षिताच्छ्रीकृष्णेन समीक्षितात् । तस्मान्महतः सकाशात् । त्रिवृत्सत्त्वादित्रिगुणात्मकः । अहङ्कारः । अभवत् ॥ १३ ॥

तदिति । कृष्णेन । तदात्मना अन्तर्यामिशक्तितया महत्तत्त्वैक्यं प्राप्तेनात्मना । ईक्षितात् । अस्मात्सात्त्विकादित्रिविधाहङ्कारात् । भूतानि आकाशादिपञ्चमहाभूतानि च अर्थाः शब्दादयो विषयाश्च इन्द्रियाणि श्रोतादीन्यक्षाणि च देवता दिगादय इन्द्रियदेवाश्च ताः आविर्भवन्ति स्म । महदादिभिर्महत्तत्त्वप्रभृतिभिः । तैस्तत्त्वसंज्ञैर्देवैः कृत्वा । श्रीकृष्णेनान्तर्यामिशक्त्या आविष्टैरिति शेषः । विराड्वैराजपुरुषदेहः । आविर्बभूव । ततो ब्रह्मादिद्वारा सकलं स्थावरजङ्गमात्मकं विश्वं बभूवेति ज्ञेयम् ॥ १४ ॥ एवमिति । एवममुना प्रकारेण । सर्वत्राप्यक्षरादिषु सर्वेष्वपि कारणरूपेणान्तर्यामिशक्तिरूपकारणस्वरूपेण । तदन्वयाच्छ्रीकृष्णस्यानुप्रवेशाद्धेतोः । स श्रीकृष्ण एव । सर्वरूपोऽक्षरादिसकलस्वरूपः । भवति । इतीत्थम् । वेदादिषु । निगद्यते । 'तत्सृष्ट्वा तदेवानुप्राविश'दिति श्रुतेः ॥ १५ ॥ प्रवेश्येति । दारुयोगाद्दीर्घकुटिल–कुब्जादिधर्मवत्काष्ठसम्बन्धात् । वह्नेस्तदन्तरावस्थितस्याग्नेरिव । अस्य श्रीकृष्णस्य । तत्र तेष्वक्षरादिष्वपि । प्रवेश्य पात्रानुगुणं प्रवेशार्हाक्षरादिभाजनानुरूपम् । तारतम्यं न्यूनाधिकत्वम् । ज्ञेयम् । वस्तुतः स्वरूपतस्तु । न च तारतम्यं नैव ज्ञेयम् ॥ १६ ॥ वेदेति । तथा हि । वेदस्तुतौ श्रीमद्भागवतीय–दशमस्कन्धस्थसप्ताशीतितमाध्यायान्त-

तदात्मनेक्षिताचास्माद्भूतार्थेन्द्रियदेवताः । कृष्णेनाविर्भवन्ति स्म तैर्विराण्महदादिभिः ॥ १४ ॥ एवं कारणरूपेण सर्वत्रापि तदन्वयात् । सर्वरूपः स एवेति वेदादिषु निगद्यते ॥ १५ ॥ प्रवेश्य पात्रानुगुणं तत्रापि ज्ञेयमस्य च । तारतम्यं दारुयोगाद्वह्नेरिव न वस्तुतः ॥ १६ ॥ वेदस्तुतौ हि स्वकृतविचित्रेत्यत्र कीर्त्तितम् । पद्य एतच्च कृष्णस्य सर्वात्मत्वविवक्षया ॥ १७ ॥ सर्वं समाप्नोषि ततोऽसि सर्व इति तं मृधे । गीतायामर्ज्जुनः प्राह जीवादित्वं न तस्य तत् ॥ १८ ॥ श्रुतौ हि नित्यो नित्यामिति तन्नित्योदिता । न त्वेवाहं जातु नासमित्यादौ च स्मृतावपि ॥ १९ ॥ अतो नित्याश्चेतनाश्च जीवा ईशाश्च सर्वशः । कृष्णाद्भिन्ना भवन्तीति श्रीभाष्ये निर्णयः कृतः ॥ २० ॥

र्गतायां वेदकृतस्तुतौ । स्वकृतविचित्रेत्यत्र स्वकृतविचित्रयोनिषु विशन्निव हेतुतया तरतमतश्चकास्त्यनलवत्स्वकृतानुकृतिरित्येतस्मिन् । पद्ये श्लोके । कृष्णस्य । सर्वात्मत्व-विवक्षयाऽन्तर्यामिशक्तिरूपेण सर्वात्मान्तरात्मत्वकथनेच्छया । एतत्तारतम्यम् । कीर्त्तितम् ॥ १७ ॥ सर्वमिति । मृधे भारते युद्धे प्रवर्त्तमाने सति । गीतायां स्वजनवधनिवृत्त-पार्थहिताय श्रीकृष्णेन प्रोक्तायामष्टादशाध्यायवत्यां श्रीभगवद्गीतायाम् । अर्जुनः । 'सर्वं समाप्नोषि ततोऽसि सर्वः' । इत्येतस्मिन् वाक्ये । तं श्रीकृष्णम् । प्राह सर्वा-न्तर्यामित्वेन जगाद । तत्तस्मात्कारणात् । तस्य श्रीकृष्णस्य । जीवादित्वं जीवेश्वराभावेन भवनत्वम् । नास्ति ॥ १८ ॥ श्रुताविति । नित्यो नित्यानाम्' इत्येतस्याम् । श्रुतो तन्नित्यता जीवादिनित्यत्वम् । उदिता । 'न त्वेवाहं जातु नाशम्' । इत्यादौ । स्मृतौ चापि । तन्नित्यता । उदिता ॥ १९ ॥ अत इति । अतो हेतोः । सर्वशः सकला अपि । जीवाः ईशा वैराजादय ईश्वराश्च । नित्या अनादिकालत एव सनातनतया वर्त्तमाना न कदाचित् प्रागसन्तो नवीना जाता इत्यर्थः । चेतनाश्चेतनधर्मवन्तः । कृष्णात् । भिन्नाः स्वरूपस्वभावादिभिः पृथग्भूताश्च । भवन्ति । इतीत्थंभूतः । श्रीभाष्ये लक्ष्मणाचार्यविरचिते शारीरकसूत्रभाष्ये । निर्णयः । कृतः । 'अधिकं तु भेदनिर्देशात् । भेदव्यपदेशाचान्य' इत्यादिसूत्रभाष्ये एतन्निश्चयः कृतोऽस्तीत्यर्थः ॥ २० ॥

उत्पत्तिरिति । कृष्णेच्छया श्रीकृष्णपरमात्मसङ्कल्पेनैव । जीवादेः । आविर्भावः । उपत्तिः । स्मृता । तिरोभावः । लयः । स्मृतः । क्वचित्कदाचिदपि । जन्मनाशौ जीवादेरसतो जन्मनाशौ । जीवादेरसतो जन्म सतो विनाशश्चेत्यर्थः । न तु नैवस्ततः ॥ २१ ॥ सर्वेषामिति । सर्वेषां जीवादीनाम् । कारणत्वेनान्तर्यामिस्वरूपतया हेतुत्वेन । प्रकाशकतया । तथा । प्रेरकत्वेन । कृष्णस्य । अन्वयः । तद्रूपता सर्वरूपत्वम् । उच्यते ॥ २२ ॥ तदिति । तानि तानि जीवेश्वरादीनि यानि प्रकाशार्हाणि वस्तूनि तेषामनुरूपमनुगुणं यथातथा । स्वप्रकाशप्रदर्शनात्स्वसामर्थ्यसन्दर्शनात् । तस्य श्रीकृष्णस्य । तारतम्यम् । उक्तम् । इतीत्थम् । अञ्जसा तत्त्वतः । बोद्धव्यं ज्ञेयम् ॥ २३ ॥ इतीति । हे साधो ! । इत्यमुना प्रकारेण । त्वदुक्तायाः । श्रुतेः । अर्थः । मया उदितः । कृष्णं साक्षात्पुरुषोत्तमम् । माम् । आश्रितैः । भक्तैर्भवदादिभिः सर्वैर्भक्तजनैः । एवं मदुक्तप्रकारेणैव । विज्ञेयम् । हि निश्चितम् ॥ २४ ॥ श्रुत्वेति । इत्येवंभूताम् । सुधोपमेयाममृतसमानाम् । धर्मात्मजस्य धर्मसूनोः श्रीहरेः । वाचम् । श्रुत्वा । मुनीन्द्रो मुनिश्रेष्ठः । स नृसिंहानन्दमुनिः । मुदम् । आप । अन्ये तदितरेऽपि । सदःस्थाः

उत्पत्तिराविर्भावश्च तिरोभावो लयः स्मृतः । कृष्णेच्छयैव जीवादेर्जन्मनाशौ तु न क्वचित् ॥ २१ ॥ सर्वेषां कारणत्वेन प्रकाशकतया तथा । प्रेरकत्वेन कृष्णस्यान्वयस्तद्रूपताच्यते ॥ २२ ॥ तत्तत्प्रकाश्यानुरूपं स्वप्रकाशप्रदर्शनात् । तारतम्यं च तस्योक्तमिति बोद्धव्यमञ्जसा ॥ २३ ॥ इति साधो ! त्वदुक्तायाः श्रुतेरर्थो मयोदितः । एवमेव हि विज्ञेयं भक्तैर्मां कृष्णमाश्रितैः ॥ २४ ॥ श्रुत्वेति वाचं स सुधोपमेयां धर्मात्मजस्याप मुदं मुनीन्द्रः । श्रुत्यर्थमन्येऽपि तमेव चित्ते दधुः सदःस्था गतसंशयाश्च ॥ २५ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते एकचत्वारिंशस्तरङ्गः ॥ ४१ ॥

शकाब्दे विक्रमार्कस्य रसाश्ववसुभूमिते । माघमासे शुक्लषष्ठ्यां वचोऽमृतमिदं हरेः ॥ १ ॥
तत्र दुर्गपुरे दुर्गे उत्तमस्य स उत्तमे । पीठेऽधस्तान्निम्बतरोर्न्यषीदद्विशदाम्बरः ॥ २ ॥

सभायामुपविष्टास्त्यागिगृहिजनाः । गतसंशयानि निवृत्तश्रुत्यर्थः सन्देहाः सन्तः । तं श्रीहर्युक्तमेव । श्रुत्यर्थम् । चित्ते । दधुः ॥ २५ ॥ स्वस्यान्तर्यामिशक्त्यैवाक्षरादिष्वन्वयः स्फुटम् । एकोऽहमिति वेदान्तवाक्यार्थोक्त्या समीरितः ॥ १ ॥ कारणानां कारणेन परेण ब्रह्मणोऽक्षरात् । येन स श्रीहरिर्मेऽस्तु स्वसेवादायकः सदा ॥ २ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्स्वनुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायामेकचत्वारिंशस्तरङ्गः ॥ ४१ ॥

विधि र्यः प्रतिषेधश्च शुष्कवेदान्तिखण्डितः । द्विचत्वारिंशके तौ तु स्थापितौ हेतुतः स्फुटम् ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८७६) माघमासे शुक्लषष्ठ्यां शुक्लपक्षीयषष्ठीतिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमस्य नृपतेः । दुर्गे । निम्बतरोः । अधस्ताद्धोवर्त्तिन्यां वेदिकायाम् । उत्तमे रत्ननिचितत्वस्वास्तरणास्तृतत्वादिगुणैरतिश्रेष्ठे । पीठे मञ्चासने । विशदाम्बरः परिधृतसकलश्वेतवसनः । स श्रीहरिः । न्यषीदत्स्वावास-

मन्दिरादागत्योपविवेश ॥ २ ॥ तं विशिनष्टि । प्रतीचीनेति । प्रतीचीमुखो वारुणीदिक्कृताननाब्जः । स्वीयभक्तसंघैर्नानादेशागतैः स्वकीयैस्त्यागिगृहिभक्तजनवृन्दैः । वृतो महासभायां परिवेष्टितः पीतपुष्पस्रगापीडान् स्थलपद्मविशेषपीतसुमनोहारशेखरान् । दधत्स्वकण्ठशिरःपटयोर्दधानः कर्णयोश्च । पुष्पगुच्छौ पीतकुसुमगुलुच्छौ । दधत् ॥३॥ उपविष्टा इति । तत्र तस्याम् । सभायाम् । शास्त्रिणः पठितसाङ्ख्यपातञ्जलाख्ययोगद्वय—पूर्वोत्तराख्यमीमांसाद्वय—गौतम—काणादप्रणीततर्कद्वयरूपषट्शास्त्राः द्विजा ब्राह्मणाः । उपविष्टाः श्रीहरिदर्शनार्थकृतोपवेशनाः । आसन् । तत्र तेषु शास्त्रिषु मध्ये । वेदान्तिनः पठितशङ्करभाष्ययुक्तोत्तरमीमांसासंज्ञशारीरकशास्त्ररूपवेदान्तग्रन्थान् द्विजान् । दृष्ट्वा । स्वयं श्रीहरिः । हसंस्तेषां विफलशास्त्रश्रमावलोकनेन कृतहासः सन् । तान्वेदान्तिद्विजान् । उवाच ॥४॥ वेदान्तेति । भो द्विजा ! हे वेदान्तिनो ब्राह्मणाः ! । यूयम् । वेदान्तशास्त्रे । निपुणा निष्णाताः । भवथ । अतो हेतोः । किञ्चित् । पृच्छामि । अहं भवतः किञ्चिदनुयुञ्ज्मीत्यर्थः । तत् । श्रुत्वा । उत्तरं मत्पृष्टार्थप्रतिवचनम् । कुरुत ॥ ५ ॥ अधीतेति । इहास्मिन् लोके । अधीतभूरिवेदान्ताः पठितकल्पितपञ्चदशीसहस्रोपदेशादिप्रचुरवेदान्तग्रन्थाः । बहवः । पण्डिता विद्वांसः । वेदोदितान् वेदत-

प्रतीचीनमुखः स्वीयभक्तसङ्घैर्वृतो दधत् । पीतपुष्पस्रगापीडान् पुष्पगुच्छौ च कर्णयोः ॥ ३ ॥ उपविष्टाश्च तत्राऽऽसन्सभायां शास्त्रिणो द्विजाः । तत्र वेदान्तिनो दृष्ट्वा तानुवाच स्वयं हसन् ॥४॥ वेदान्तशास्त्रे निपुणा यूयं भवथ भो द्विजाः ! । अतः पृच्छामि किञ्चिद्वस्तच्छ्रुत्वा कुरुतोत्तरम् ॥ ५॥ अधीतभूरिवेदान्ता बहवः पण्डिता इह । प्राहुर्विधिनिषेधांस्तु मिथ्या वेदोदितानपि ॥ ६ ॥ तद्बोधकांश्च निगमानपि मिथ्या वदन्ति ते । तत्प्राप्यान्स्वर्गनरकान् गुरुशिष्यांश्च सर्वशः ॥ ७ ॥ ब्रह्मैवैकं सत्यमस्ति न त्वन्यत्किमपीति ते । वदन्ति तत्र का तेषां वेदनाऽस्तीति कथ्यताम् ॥ ८ ॥ निःशङ्कवर्त्तमानानां यथेष्टाचरणे भुवि । शिष्यांश्च तत्रेरयतां गतिः का वाऽस्ति निश्चिता ॥ ९ ॥

दुपबृंहकस्मृतीतिहासपुराणादिभिरुपादेयतया हेयतया च कथितानपि । विधिनिषेधान् । मिथ्या अनुपादेयान् । प्राहुर्निस्त्रैगुण्ये पथि विचरतः को विधिः को निषेध इत्यादि कल्पितवाक्यैर्जगदुः ॥ ६ ॥ तदिति । ते उक्तविधपण्डिताः । तद्बोधकान्विधिनिषेधावगमकान् । निगमान् । पूर्वोक्तवेदादिवाक्यान्यपि । मिथ्या । वदन्ति । तत्प्राप्यान्निगमोदितविधिनिषेधाचरणगम्यान् । स्वर्गनरकान् । मिथ्या । वदन्ति । सर्वशः सर्वान् । गुरुशिष्यांश्च । मिथ्या । वदन्ति ॥ ७ ॥ ब्रह्मेति । ते तथाविधाः पण्डिताः । एकं केवलम् । ब्रह्मैव । सत्यम् । अस्ति । अन्यद् ब्रह्मातिरिक्तम् । किमपि यत्किञ्चिदपि जीवेश्वरमायादिवस्तुजातम् । न तु सत्यं नैवास्ति । इत्यमुना प्रकारेण । वदन्ति । तत्र तथाविधे कथने । तेषामेवं कथकानां पण्डितानाम् । का । वेदना । अस्ति । कस्तेषामेवंवेदनाऽभिप्रायोऽस्तीत्यर्थः । इत्येतत् । कथ्यताम् ॥ ८ ॥ निःशङ्कमिति । भुव्यस्यां कर्मक्षेत्ररूपभारतवर्षधरायाम् । यथेष्टाचरणे विधिनिषेधातिक्रमपूर्वं स्वेन्द्रियलालनार्थं स्वेच्छाचारे । निःशङ्कं तथाभावेऽवश्यभाव्यनिरयभोगशङ्कावर्जितं यथा स्यात्तथा । वर्त्तमानानां प्रवृत्तानाम् । शिष्यान्स्वशिष्यभावं प्राप्तान् जनान् । तत्र यथेष्टाचरणे । ईरयतां प्रवर्त्तयतामुक्तविधपण्डितानाम् । गतिर्देहान्ते प्राप्यस्थानम् । का निश्चिता । अस्ति । युष्माभिस्तद्देहान्ते क तत्प्राप्यं स्थानं निर्णीतमस्ति तत्कथ्यतामित्यर्थः ॥ ९ ॥

इत्थमिति । इत्थममुना प्रकारेण । भगवता तच्छ्रेय इच्छता श्रीहरिणा । पृष्टा दययोक्तरीत्याऽनुयुक्ताः । शास्त्रविदो वेदान्तशास्त्राभिज्ञा अपि । ते पूर्वोक्ताः । विप्राः । यदा । उत्तराय स्वकृतप्रश्नोत्तरं कर्त्तुम् । नो शेकुः शक्ता न बभूवुः । तदा । स श्रीहरिरेव । तत्स्वप्रश्नोत्तरम् । उवाच कृतवान् ॥ १० ॥ वेदान्तिनामिति । हे विप्राः ! । अत्रास्मिन् । भूतले भारतवर्षभूपृष्ठे । सर्वेषाम् । वेदान्तिनाम् । आद्याचार्यः प्रथमसम्प्रदायप्रवर्त्तकः । श्रीशङ्करः सम्प्रदायप्रवृत्तिजन्यशोभाविशिष्टः शङ्कराचार्यः । प्रसिद्धः । अस्ति । तस्य । श्रीशङ्करस्य । आचारस्तु । ईदृशो विधिनिषेधोल्लङ्घनरूपः । न विद्यते । अपि तु तत्प्रतिपादनरूपोऽस्तीत्यर्थः ॥ ११ ॥ एतदेव विस्तरेणाह त्रिभिः । स इति । स शङ्कराचार्यः । संन्यस्तान्कृतचतुर्थाश्रमस्वीकारान् । स्वशिष्यान् स्वदीक्षितजनान् । दण्डकुण्ड्यादि दण्डकमण्डलुशिक्यवेणुपात्रादिकम् । अधारयत् । गीता श्रीभगवद्गीता च विष्णुसहस्राख्या विष्णुसहस्रनामस्तोत्रं च तयोः पाठं प्रतिदिनं नियमेन पठनम् ! विष्णुपूजनं शालग्रामशिलार्चनं च । अधारयदकारयदित्यर्थः ॥ १२ ॥ ब्राह्मणस्येति । तथा ब्राह्मणस्यैव न त्वन्यस्य । गृहे भवने । भिक्षां भिक्षाचरणम् । आज्ञापयत् । स्वयं पाकानाचरणं स्वहस्तेनान्नपक्तिक्रियाया अविधानम् । गृहिचतुर्गुणं गृहस्थजनेभ्यश्चतुर्गुणितम् । । शौचं करपादशुद्ध्यादिशौचाचरणम् । आज्ञापयत् ॥ १३ ॥ चातुर्मास्यानीति । यस्य यतेः । चातुर्मास्यानि । अधिकानि । अतीतानि व्यतिक्रान्तानि । स्युः । तं यतिम् । न्यूनानि तद्वन्द्ययतेरूनानि चातुर्मास्यानि यस्य स चासौ यतिश्च । प्रणमेन्नमस्कुर्यात् । इत्यमुना प्रकारेण । अशिक्षयच्छङ्कराचार्यः स्वशिष्यसंन्यासिनः शिक्षयामास । अत्र प्रमाणवाक्यानि यतिधर्मसमुच्चय–विश्वेश्वरपद्धत्यादिग्रन्थेभ्योऽवगन्तव्यानि ॥१४॥ एवमिति । एवममुना प्रकारेण । विधिम् । निषेधं च । सम्प्रवर्त्तयता । अमुना शङ्कराचार्येण । वेदान्तार्थः । नाधिगतः । किमु न प्राप्तः किम् । अद्यतनैरधुनाभवैर्विधिनिषेधनिषेधकैर्वेदान्तिभिः । वेदान्तार्थः । अधिगतः किमु । अपि तु नैवाधिगत इत्यर्थः ॥ १५ ॥ तत इति । ततो हेतोः । लोके मनुष्येष्वित्यर्थः । केवलमेकं यद्वेदान्तग्रन्थाध्ययनं तन्मात्रादिति ततः । तदध्ययनत एवेत्यर्थः । विधिनिषेधावपनुदन्ति त्यजन्ति त्याजयन्ति वेति तथाभूतास्ते पण्डिताः । मूढतमा अतीवमूर्खाः । मताः । वेदान्तग्रन्थयाथार्थ्याभिज्ञैर्ज्ञाताः ॥ १६ ॥

इत्थं पृष्टा भगवता विप्राः शास्त्रवदोऽपि ते । यदोत्तराय नोशेकुस्तदोवाच स एव तत् ॥ १० ॥ वेदान्तिनां तु
सर्वेषामाद्याचार्योऽत्र भूतले । श्रीशङ्करः प्रसिद्धोऽस्ति तस्याऽऽचारस्तु नेदृशः ॥ ११ ॥ स हि स्वशिष्यान्सन्यस्तान्
दण्डकुण्ड्याद्यधारयत् । गीताविष्णुसहस्राख्यापाठं च विष्णुपूजनम् ॥१२॥ ब्राह्मणस्यैव च गृहे भिक्षामाज्ञापयत्तथा ।
स्वयं पाकानाचरणं शौचं गृहिचतुर्गुणम् ॥ १३ ॥ चातुर्मास्यान्यतीतानि यस्य स्युरधिकानि तम् । न्यूनचातुर्मा-
स्ययतिः प्रणमेदित्यशिक्षयत् ॥ १४ ॥ एवं विधिनिषेधं च सम्प्रवर्तयताऽमुना । वेदान्तार्थो नाधिगतोऽधिगतो-
ऽद्यतनैः किम् ॥ १५ ॥ ततः केवलवेदान्तग्रन्थाध्ययनमात्रतः । लोके विधिनिषेधापनुदो मूढतमा मताः ॥ १६ ॥

शास्त्र इति । यस्तु । शास्त्र श्रीभागवतादिसद्ग्रन्थे । विधिनिषेधापनोदो विधिनिषेधाचरणातिक्रमः । वर्णितः 'गुणदोषदृशिर्दोषोगुणस्तूभयवर्जन'मित्यादि-वचनैः कथितः । अस्ति । तद्धेतुर्विधिनिषेधापनोदकारणं तु । विषयात्मभिर्विषयोपभोगासक्तमानसैः । तैर्मूढतमपण्डितैः । सम्यक् । न ज्ञायते ॥ १७ ॥ तमिति । अहम् । तं सच्छास्त्रवर्णितविधिनिषेधापनोदे हेतुम् । निर्बाधं पूर्वापरोदितशास्त्रीयवचनबाधवर्जितं यथा स्यात्तथा । सनिदर्शनं सदृष्टान्तं यथा भवति तथा । वच्मि युष्मभ्यं कथयामि । श्रूयतां भवद्भिः स आकर्ण्यताम् । यथा । महाम्बुधेर्महासमुद्रस्य । मध्ये । महातरी विशाला नौका । व्रजन्ती । स्यात् पवनानुकूल्येन जवना भवेत् ॥ १८ ॥ तस्यामिति । तस्यां महातर्याम् । वर्त्तमाना निषण्णाः । इतस्ततः । वीक्षमाणा अवलोकयन्तः । ये । नराः । स्युः । ते नराः । अर्वाक् तटं स्वयं पश्चात्परिक्तं तीरम् । न पश्यन्ति । परं पुरोवर्त्तमानम् । तटं च । न पश्यन्ति ॥ १९ ॥ तटेति । किञ्च । ते जनाः । तटद्वयगतान्पूर्वापरतीरावस्थितान् । महतोऽत्युच्चानपि । अद्रीन् । नेक्षन्ते । तदा । वृक्षांस्तटद्वयगततरून् । मनुष्यांस्तथाविधान् जनांश्च । कुतस्तराम् । वीक्षेरन्नैव पश्येयुरित्यर्थः ॥ २० ॥ जलमिति ।

शास्त्रे विधिनिषेधापनोदो यस्त्वस्ति वर्णितः । तद्धेतुस्तु न सम्यक्तैर्ज्ञायते विषयात्मभिः ॥ १७ ॥
तमहं वच्मि निर्बाधं श्रूयतां सनिदर्शनम् । यथा महाम्बुधेर्मध्ये व्रजन्ती स्यान्महातरीः ॥ १८ ॥
तस्यां तु ये वर्तमाना वीक्षमाणा इतस्ततः । नार्वाक् तटं ते पश्यन्ति न परं च तटं नराः ॥ १९ ॥
तटद्वयगतानद्रीन्नेक्षन्ते महतोऽपि च । तदा वृक्षान्मनुष्यांश्च वीक्षेरंस्ते कुतस्तराम् ॥ २० ॥
जलमेवैकमीक्षन्ते दिक्ष्वष्टस्वपि नेतरत् । तदा वदन्ति ते त्वेकं जलमेवास्ति सर्वशः ॥ २१ ॥
तथा ब्रह्मणि ये प्राप्ता निर्विकल्पस्थितिं नराः । ते हि जीवेशमायादीन्नेक्षन्ते ब्रह्मदर्शिनः ॥ २२ ॥
ततो वदन्त्येकमेव ब्रह्मास्त्यन्यन्न किञ्चन । तद्दृष्ट्या नास्ति जीवादि वस्तुतः सर्वमस्ति तत् ॥ २३ ॥

ते जनाः । अष्टस्वपि । दिक्षु दिशासु । एकं केवलम् । जलमेव । ईक्षन्ते । इतरत्तदतिरिक्तं किञ्चिदपि । नेक्षन्ते । तदा तर्हि तु । सर्वतः परितः । एकम् । जलमेव । अस्ति । इति । वदन्ति ते कथयन्ति ॥ २१ ॥ तथेति । तथा तद्वत् । ये । नरा महामुक्तसंज्ञायोगिपुरुषाः । ब्रह्मण्यक्षरब्रह्मान्तःस्थिते महासमुद्रतुल्यप्रकाशचयावृते श्रीवासुदेवस्वरूपे । निर्विकल्पस्थितिं महानौकातुल्यां निर्विकल्पसमाधिनिष्ठाम् । प्राप्ताः समाधिगता भवन्ति । ब्रह्मदर्शिन उक्तविधश्रीवासुदेवस्वरूपप्रेक्षकाः । ते नराः । जीवेशमायादीन् जीवानीश्वरान्मायामक्षरब्रह्म चेत्येवं तटादिस्थानीयानेतानित्यर्थः । नेक्षन्ते ॥ २२ ॥ तत इति । ततो हेतोः । एकं केवलम् । ब्रह्म । एव । अस्ति । अन्यत्तदितरत् । किञ्चन किमपि । नास्ति । इति । वदन्ति ते कथयन्ति । तद्दृष्ट्या निर्विकल्पसमाधिनिष्ठयोगिपुरुषदृष्ट्या । जीवादि । नास्ति । वस्तुतः परमार्थतस्तु । सर्वम् । तज्जीवादि । अस्ति सविकल्पसमाधिनिष्ठज्ञानिमुक्तपुरुषदृष्ट्या जीवादिसर्वं सत्यमेव भवतीत्यर्थः ॥ २३ ॥

तदिति । विधिः निषेधश्च । तद्दृष्ट्या च महामुक्तसंज्ञयोगिपुरुषदृष्ट्यैव । मिथ्यास्ति । वस्तुतस्तु । मिथ्या । नास्ति । एतत्प्रपञ्चस्तु सत्सङ्गि-जीवनग्रन्थीयचतुर्थप्रकरणे पञ्चालग्रामोत्सवेऽस्ति ततो विशेषतः स बोध्यः । अतो हेतोः । तत् । स्थित्यनापन्ननृणां निर्विकल्पसमाधिस्थितिमनधिगतानां नराणाम् । तद्वचनं विधिनिषेधादिमिथ्यात्वावबोधकवाक्यम् । सत् सत्यम् । नास्ति । किन्तु विभ्रान्तजनप्रलपितवद्वस्तुत एव मिथ्या भवतीत्यर्थः ॥ २४ ॥ स्त्रीति । स्त्रीद्रव्यरस-संसक्ताः पराङ्गनासङ्ग, द्रव्यार्जन, नानारसास्वादादावत्यनुरक्ताः । सद्बुध्या प्रपञ्चसत्यत्वमत्या । अप्रमादतः सावधानतया च । व्यवहर्ति गृहाश्रमोपयोगिव्यवहारम् । कुर्वन्तो-ऽपि । तौ वेदादिशास्त्रप्रतिपादितविधिनिषेधौ । मिथ्येति । वदन्ति । अहो अत्याश्चर्यरूपमिदमेतेषां कथनमित्यर्थः । यदा गृहादावत्यासक्तानामेवंविधवाक्यं सत्यं भवे-त्तदाऽलं मुक्तजनकृतैवंविधस्थितिसाधनसम्पादनक्लेशेनेति भावः ॥ २५ ॥ अधमा इति । ते उक्तविधा नराः । अधमाः श्वपचादय इव निकृष्टाः । नास्तिका बौद्धादय इव वेदमतबाह्याः । अत एव । निरयङ्गमा देहान्तेऽवश्यमेव नरकसम्बध्यनेकयातना भोक्तार एव । ज्ञेयाः । कथमेतेषामेवंगतिरिति चेत्तत्राह यत इति । यतो हेतोः ।

तद्दृष्ट्या च विधिर्मिथ्या निषेधश्च न वस्तुतः । अतस्तत्स्थित्यनापन्ननृणां तद्वचनं न सत् ॥ २४ ॥ स्त्रीद्रव्य-रससंसक्ताः सद्बुद्ध्या चाप्रमादतः । कुर्वन्तोऽपि व्यवहर्ति तौ मिथ्येति वदन्त्यहो ॥ २५ ॥ अधमा एव ते ज्ञेया नास्तिका निरयङ्गमाः । यतो निजाचार्यपथमुल्लङ्घ्योत्पथगामिनः ॥ २६ ॥ स्वयं श्रीशङ्कराचार्यो नृणां पाषण्डि-सङ्गजम् । अपनेतुं नास्तिकत्वं देवार्चाः प्रत्यतिष्ठिपत् ॥२७॥ भज गोविन्दमित्यादीन् स्तवानू विष्णोः शिवस्य च । रवेर्गणपतेश्चासौ व्यधाद्देवाश्च भूरिशः ॥ २८ ॥ येषां श्रवणतः पुंसां देवतास्वखिलास्वपि । उद्भवेत्सत्यताबुद्धि-स्तथा चक्रे स सर्ववित् ॥ २९ ॥ ज्ञानिनो नाममात्रेण पुमांसस्त्वधुनातनाः । किञ्चित्संश्रुतवेदान्ता दूरे ब्रह्मात्म-दर्शनाः ॥ ३० ॥ अप्याहुः सर्वमिथ्यात्वं यथेष्टाचरणे रताः । न शुभं दर्शनं तेषां न च तैर्भाषणाद्यपि ॥ ३१ ॥

ते नराः । निजाचार्यपथं विधिनिषेधप्रतिपादकशङ्कराचार्याख्यस्वगुरुमार्गम् । उल्लङ्घ्य स्वाहिततर्कानुरोधेनातिक्रम्य । उत्पथगामिनः कान्तारमार्गगमनवदपथानुयायिनः । भवन्ति ॥ २६ ॥ उक्तं तदाचार्यपथं दर्शयति त्रिभिः । स्वयमिति । स्वयम् । श्रीशङ्कराचार्यः । पाषण्डिसङ्गजं बौद्धक्षपणकादिनास्तिकमतस्थजनसम्बन्धप्राप्तम् । नृणाम् । नास्तिकत्वम् । अपनेतुमन्तःकरणादपाकर्त्तुम् । देवार्चा विष्ण्वादिदेवताप्रतिमाः । प्रत्यतिष्ठिपच्छास्त्रोक्तप्रतिष्ठाविधिना स्थापितवान् ॥ २७ ॥ भजेति । भजगोविन्द-मित्यादीन् । विष्णोः । शिवस्य । रवेः सूर्यस्य । गणपतेः । देव्याः पार्वत्याश्च । भूरिशो बहून् । स्तवान् स्तोत्राणि । असौ शङ्कराचार्यः । व्यधात्कृतवान् ॥ २८ ॥ येषामिति । येषां स्तवानाम् । श्रवणतः । अखिलास्वपि । देवतासु । नृणाम् । सत्यता बुद्धिः । उद्भवेदुत्पद्येत । तथा । सर्ववित्सर्वज्ञः । स शङ्कराचार्यः । चक्रे ॥२९॥ एवं तदाचार्यपथमुक्तोत्पथगामिनां तेषां दर्शनादेरप्यशुभफलं तद्वीक्षकादीनामाह द्वाभ्याम् । ज्ञानिन इति । अपीति । नाममात्रेण । ज्ञानिनः । अधुनातनाः साम्प्रतं

वर्त्तमानकलिकालोत्पन्नाः । पुमांसः । किञ्चित् संश्रुतवेदान्ता ईषच्छ्रुतवेदान्ताभासग्रन्थाः । दूरे । ब्रह्मात्मदर्शना लेशतोप्यविद्यमान–ब्रह्म–परब्रह्मवीक्षणाः । यथेष्टाचरणे पराङ्गनासङ्गादिस्वेच्छाचारे । रताः प्रसक्ताः सन्तोऽपि । सर्वमिथ्यात्वं विधिनिषेधादिसर्ववस्तुमात्रस्य रज्जुसर्पवच्छुक्तिकारजतवदसत्यत्वम् । आहुः । तेषां वाङ्मात्रेण ज्ञानिसंज्ञानां पुंसाम् । दर्शनम् । शुभं मङ्गलम् । नास्ति । किन्तु प्रयाणे विधवादर्शनवत्सर्वथाऽमङ्गलप्रदं भवतीत्यर्थः । तैस्तथाभूतैः पुरुषैः सह । भाषणादि सञ्जल्प-स्पर्शनादिकमपि । शुभम् । नास्ति । प्रत्युतान्त्यजनैः सम्भाषणादिवदघजनकमित्यर्थः ॥ ३०–३१ ॥ एवं कल्पितवेदान्तिमतं सन्दूष्य साम्प्रतं सभास्थतत्पण्डितहिताय स्वसिद्धान्तमाहान्तिमश्लोकवर्जं यावत्तरङ्गसमाप्ति । य इति । सच्छास्त्रेषु वेदादिषु सत्सु ग्रन्थेषु । उपपादिता 'ब्राह्मणो नित्यं मद्यं वर्जयेदहरहरग्निहोत्रं जुहूया'दित्यादिना हेयोपादेयतया प्रतिपादिताः । ये । ये । विधिनिषेधाः । स्युः । ते । ते । सर्वेऽपि । सत्या एव । विज्ञेयाः । इत्येतत् सच्छास्त्रमतम् । असंशयं संशयवर्जितमस्ति ॥ ३२ ॥ जीवा इति । जीवाः क्षेत्रज्ञाः । स्वरूपतः वस्तुस्वभावत एव । नित्याः सनातनाः । न कदाचिदप्यभूताः सन्त उत्पन्ना इत्यर्थः । 'नित्यो नित्याना'मिति 'नित्यः सर्वगतः स्थाणु'रिति 'नात्माश्रुतेर्नित्यत्वाच्च ताभ्य'इत्यादि श्रुतिस्मृतिन्यायेभ्यः । अत एव । कृष्णात् ब्रह्मपरब्रह्मादिसंज्ञावतः श्रीकृष्णपरमात्मनः सकाशात् । भिन्नाः स्वरूपस्व-

ये ये विधिनिषेधाः स्युः सच्छास्त्रेषूपपादिताः । ते ते सर्वेऽपि विज्ञेयाः सत्या एवेत्यसंशयम् ॥ ३२ ॥
जीवाः स्वरूपतो नित्याः कृष्णाद्भिन्नाः परस्परम् । असंलग्नाश्च विज्ञेयाश्चिद्रूपा मायया वृताः ॥ ३३ ॥
नानायोनिषु भुञ्जानाः स्वस्वकर्मफलानि ते । भ्रमन्त्युपर्यधो मध्ये तत्तद्देहाभिमानिनः ॥ ३४ ॥

भावादिभिरात्यन्तिकप्रलयोत्पत्त्यादावपि पृथग्भूताः । 'य आत्मनि तिष्ठन्' । 'योऽक्षरे संचरन्' । 'यो विज्ञाने तिष्ठन्' 'प्रकृतिं पुरुषं चैव विध्यनादी उभावपि' । 'न कर्मा-विभागादिति चेन्नानादित्वादुपपद्यते चाप्युपलभ्यते च' । 'सूर्याचन्द्रमसौ धाता यथा पूर्वमकल्पय'दित्यादिश्रुतिस्मृतिन्यायेभ्यः । परस्परमन्योन्यम् । असंलग्नाश्चतुर्ष्वपि प्रलयेषु तोयलवणवत् संमिश्रा नैव । किन्तु तोयतिमिवत्सर्वथा पृथग्भूता इत्यर्थः । 'न त्वेवाहं जातु नासं न त्वं नेमे जनाधिपाः । न चैव न भविष्यामः सर्वे वयमतः पर'मिति श्रीभगवद्गीतायां भगवदुक्तेः । लक्ष्मणाचार्यकृतगीताभाष्ये एवं भगवतः सर्वेश्वरादात्मनां च परस्परं भेदः पारमार्थिक इति भगवतैवोक्त इति प्रतीयते इत्येवमेतत् श्लोकव्याख्याने उक्तत्वाच्च । चिद्रूपाः । 'एप आत्मा हृदये चिद्रूप'इति श्रुतेः । मायया अनाद्यविद्यया । आवृता वेष्टिताश्च । 'अनाद्यविद्योपहतात्मसंविदः । बन्धोऽस्या-विद्ययाऽनादि'रित्यादिश्रीभागवतोक्तेः । विज्ञेयाः श्रुतिस्मृतिन्यायवाक्यैरवगन्तव्याः ॥ ३३ ॥ नानेति । ते जीवाः । नानायोनिषु देवतिर्यग्मनुष्यादिनानाविधदेहो-त्पत्तिस्थानेषु । स्वस्वकर्मफलानि । भुञ्जानाः । तत्तद्देहाभिमानिनस्तेषां देवादिदेहानामभिमानभाजः सन्तः । उपरि देवलोकादौ । अधोऽतलादौ । मध्ये भूतलस्थे मर्त्यलोके । भ्रमन्ति । 'क्वचित्पुमान्क्वचिच्च स्त्री क्वचिन्नोभयमन्धधीः । देवो मनुष्यस्तिर्यग्वा यथाकर्मगुणं भव' इति श्रीभागवतोक्तेः ॥ ३४ ॥

एवं'मनादिकालतो जीवः संसारपदवीं गत'इत्याद्यागमोक्तं जीवानां तथात्वमुक्त्वा साम्प्रतं तेषां संसृतिनिवृत्त्युपायं निर्दिशति त्रिभिः। निष्कारणेति। स्वयम्। नारायणः श्रीकृष्णपरमात्मा। तेषु संसरत्सु जीवेषु। निष्कारणातिकृपया निर्हेतुकेनापारकारुण्येन। मानुष्यविग्रहं मनुष्यसमानाकारम्। धत्ते। अथापि। अतिमानवा मनुष्यानतिक्रम्यवर्त्तमानाः सत्यः श्रोतृस्मर्तृजनहितकरत्वाच्छोभनाः क्रिया यानि कानिचिच्चरित्राणि यस्य स तथाभूतः। वर्त्तते इति शेषः ॥ ३५ ॥ मनुष्येति। मनुष्यदेहं दुर्लभत्वेऽपि भगवत एव कृपया प्राप्यं मानुषशरीरम्। आपन्ना प्राप्ताः। ये। जीवाः। सन्ति। तेषु जीवेषु मध्ये। ये जीवाः। सतां साक्षाद्भगवद्भक्तानां साधूनाम्। मुखात्। तन्महत्त्वं साक्षाच्छ्रीकृष्णमाहात्म्यम्। श्रुत्वा एकाग्रमनसाकर्ण्य। तस्मिन् साक्षाद्भगवति। स्निह्यन्ति स्वधर्मादियुग्भजनेन गाढानुरागयुक्ता भवन्ति। अन्यतो भगवदितरवस्तुनि। न स्निह्यन्ति। ते इत्युत्तरेणान्वयः ॥ ३६ ॥ त इति। ते जीवा एव। संसृतेः। मुक्ताः सन्तः। अन्ते देहावसाने सति। ब्रह्मधाम भगवतोऽक्षरपदम्। यान्ति। वै। अतो हेतोः। भुवि पृथिव्याम्। ये। विचक्षणाः सदसद्विवेकनिपुणाः

निष्कारणातिकृपया तेषु नारायणः स्वयम्। मानुष्यविग्रहं धत्तेऽप्यतिमानवसत्क्रियः ॥ ३५ ॥
मनुष्यदेहमापन्ना ये जीवास्तेषु ये सताम्। मुखाच्छ्रुत्वा तन्महत्त्वं तस्मिन् स्निह्यन्ति नान्यतः ॥ ३६ ॥
त एव संसृतेर्मुक्ता यान्त्यन्ते ब्रह्मधाम वै। तस्मिन्नेवानुरज्यन्ते भुव्यतो ये विचक्षणाः ॥ ३७ ॥
तं विहायात्र येऽन्यत्र स्निह्यन्तश्च निजेच्छया। त्यक्तसच्छास्त्रमर्यादास्ते तु यान्त्येव संसृतिम् ॥ ३८ ॥
ज्ञात्वाऽज्ञात्वाऽपि ये कृष्णे स्निह्येयुर्नराकृतौ नराः। ते भूत्वैव गुणातीता यान्त्यन्ते ह्यक्षरं पदम् ॥ ३९ ॥
कृष्णस्य मायातीतत्वात्तत्सम्बन्धबलेन वै। तरन्ति मायामत्रैव प्राकृता अपि देहिनः ॥ ४० ॥

पुरुषाः सन्ति। ते पुरुषाः। तस्मिन् धृतमानुषविग्रहे भगवत्येव। अनुरज्यन्तेऽनुरक्ता भवन्ति ॥ ३७ ॥ तथाविधभगवदननुरागिणां पुनः पुनः संसरणरूपं फलमाह। तमिति। अत्र लोके। ये पुरुषाः। तं साक्षाद्भगवन्तम्। विहाय त्यक्त्वा। अन्यत्र तदितरमायिकवस्तुनि। स्निह्यन्तः सन्तः निजेच्छया स्वेच्छाचरेण। त्यक्ता उज्झिताः सच्छास्त्रमर्यादा वेदादिसच्छास्त्रोदिता विधिनिषेधपालनस्थितयो यैस्ते तथाभूताः। भवन्ति। ते पुरुषास्तु। संसृतिं पुनः पुनर्जन्ममरणप्रवाहमेव। यान्ति ॥३८॥ साम्प्रतं कृष्णानुरागफलं विस्तरेणाह चतुर्भिः। ज्ञात्वेति। ये नराः। ज्ञात्वा माहात्म्यज्ञानपूर्वकं तत्स्वरूपं यथावद्विज्ञाय। अज्ञात्वा तथाविधतयाऽविदित्वापि। नराकृतौ धृतनराकारे। कृष्णे। स्निह्येयुः। ते नराः। गुणातीताः सत्त्वादिमायागुणविरहिताः। भूत्वा। अन्ते देहावसाने सति। अक्षरम्। पदं ब्रह्माख्यं धाम। यान्त्येव। हि प्रसिद्धमेतच्छ्रीभागवते 'क्षेमं विन्दन्ति मत्स्थानं यद्ब्रह्म परमं विदुः। ब्रह्माख्यं धाम ते यान्ती'त्यादिना ॥ ३९ ॥ कृष्णस्येति। कृष्णस्य साक्षाच्छ्रीकृष्णपरमात्मनः। मायातीतत्वादतिक्रान्तमायत्वात्। तत्सम्बन्धबलेन तत्स्वरूपानुरागसामर्थ्येन। अत्र लोके। प्राकृताः प्रकृतिभावयुक्ता अपि। यद्वा। प्राकृताः पृथग्जना अपि। देहिनो

जीवाः । मायाम् । तरन्ति मायातीता निर्गुणा भवन्ति ॥ ४० ॥ अत्र निदर्शनमाह द्वाभ्याम् । कामेति । कामभावेनापि । निर्गुणे सत्त्वादिमायागुणवर्जिते । तस्मिन् श्रीकृष्णे । अतिस्निग्धा अत्यन्तस्नेहयुक्ताः । व्रजाङ्गना गोप्यः । निर्गुणाः । भूत्वा । ब्रह्मधाम । प्रपेदिरे । 'जहुर्गुणमयं देहं सद्यः प्रक्षीणबन्धना'इति श्रीभागवतोक्तेः ॥४१॥ यदिति । यद्यतो हेतोः । सच्चिदानन्दविग्रहः सच्चिदानन्दधर्माधिकरणशरीरः । कृष्णः । निर्गुणो निरवधिकातिशयकारुण्यादिदिव्यगुणयुक्तोऽपि मायागुणवर्जितत्वात्तथाभूतः । अस्ति । ततो हेतोरेव । ता व्रजाङ्गनाः । निर्गुणाः । जाताः । इत्येवम् । गम्यतां भवद्भिर्बुध्यताम् ॥ ४२ ॥ विपक्षे दोषमाह चतुर्भिः । प्रागिति । प्राक् पूर्वजन्मनि । आर्षभः ऋषभदेवपुत्रः । भरतः । ज्ञानी आत्मपरमात्मस्वरूपज्ञानवान् । त्यागी राज्यस्त्रीपुत्रादीनां भगवदर्थं त्यागवान् । योगिराट् समाधौ सदा भगवद्वीक्षकयोगिश्रेष्ठश्च सन्नपि । कृपयापि । मृगार्भके हरिणतोके । स्नेहात् । मृगत्वं मृगशरीरम् । अगमत्प्राप्तवान् ॥ ४३ ॥ तस्मादिति । तस्माद्धेतोः । सत्ये सदा सत्यस्वरूपे । कृष्णे एव । स्नेहात् । नृणाम् । सद्गतिः संसृतिनिवृत्तिरूपोत्तमगतिः । स्यात् । प्राकृते मायामयाकारे । स्त्र्यादौ कलत्रापत्यादिवस्तुनि । स्नेहात् । असद्गतिः संसृतिभ्रमण-

कामभावेनाऽपि तस्मिन्नतिस्निग्धा व्रजाङ्गनाः । निर्गुणे निर्गुणा भूत्वा ब्रह्मधाम प्रपेदिरे ॥ ४१ ॥
यदस्ति निर्गुणः कृष्णः सच्चिदानन्दविग्रहः । तत एव हि ता जाता निर्गुणा इति गम्यताम् ॥ ४२ ॥
प्रागार्षभोऽपि भरतः कृपयाऽपि मृगार्भके । स्नेहान्मृगत्वमगमज्ज्ञानी त्यागी च योगिराट् ॥ ४३ ॥
तस्मात्सत्ये कृष्ण एव स्नेहात्स्यात्सद्गतिर्नृणाम् । स्त्र्यादौ स्नेहात्प्राकृते तु स्यादेवासद्गतिः खलु ॥ ४४ ॥
अन्यथा त्वखिला लोकाः सर्वं ब्रह्मेति वादिनः । पुंसु स्त्रियः स्त्रिषु नरा मुक्ताः स्युरनुरागिणः? ॥ ४५ ॥
तथा तु न भवन्त्येते भूतयोनिं तु यान्ति ते । वलान्तोऽत्रैव दृश्यन्ते यत्र स्नेहोऽस्ति तं नृषु ॥ ४६ ॥
कृष्ण एव ततः स्नेहः कार्यस्तत्प्रतिपादिता । पाल्या विधिनिषेधाख्यमर्यादा च मनीषिभिः ॥ ४७ ॥

रूपाधमगतिरेव । स्यात् । खलु निश्चितमेव ॥ ४४ ॥ अन्यथेति । अन्यथैवं न भवेच्चेत्तर्हि तु । सर्वम् । ब्रह्म । इत्येवम् । वादिनोऽपि । स्त्रीषु । अनुरागिणः । नराः । पुंस्सु । अनुरागिण्यः । स्त्रियश्च । इत्येवंद्विविधाः । अखिलाः । लोका जनाः । मुक्ताः संसृतिबन्धाद्विमुक्ताः । स्युः ? ॥ ४५ ॥ तथेति । एते उक्तविधाः । लोकाः । तथा मुक्तभावं प्राप्तास्तु । न भवन्ति । प्रत्युत । भूतयोनिं प्रेतभावं तु । यान्ति । ते भूतयोनीं प्राप्ता लोकाः । अत्र लोके । नृषु मनुष्येषु मध्ये । यत्र यस्मिन्मनुष्ये । स्नेहः । अस्ति । तं मनुष्यम् । वलान्त एव । दृश्यन्ते सर्वैः प्रत्यक्षमनुभूयन्ते ॥ ४६ ॥ एवं विस्तरेणोक्तमर्थं समासेनाह द्वाभ्याम् । कृष्ण इति । ततो हेतोः । कृष्णे एव । स्नेहः । कार्यः । तत्प्रतिपादिता 'एतस्य महतो भूतस्य निःश्वसितं यदृग्वेद इत्यादिश्रुतेर्भगवतैव शास्त्रप्रवृत्तिरूपेण स्थापिता । विधिनिषेधाख्य-मर्यादा । मनीषिभिः । पाल्या ॥ ४७ ॥

उल्लङ्घ्येति । तां भगवत्प्रतिपादितां विधिनिषेधमर्यादाम् । उल्लङ्घ्यातिक्रम्य । वर्त्तमाना जनाः । अन्ते देहावसाने सति । यमयातना रौरवादिनिरयान् । यान्ति । इत्यमुना प्रकारेणैव । धर्मशास्त्रेषु स्मृतीतिहासपुराणेषु । बहुधा । प्रतिपादितम् । अस्ति ॥ ४८ ॥ इतीति । इत्येवंविधम् । हरिवचनम् । ते सभोपविष्टा वेदान्तिनो ब्राह्मणाः । सत्यमेव । इत्यमुना प्रकारेण । मत्वा । निजमतम् । अपहाय त्यक्त्वा । श्रेयसे स्वकल्याणार्थम् । तं श्रीहरिम् । शिश्रियुर्दीक्षाग्रहणपूर्वकं समाश्रयन् । अमृतमिव सुधायमानम् । तत् श्रीहरिवचनम् । पीत्वा । तच्छ्रिताः श्रीहर्याश्रिताः त्यागिगृहिजनाः । अपरे सभोपविष्टाः पण्डितादयोऽन्ये जनाश्चापि । परममुदं परमानन्दम् । आवापुः । ते सर्वे चापि । सत्पतिं श्रीहरिम् । नेमुर्नमश्चक्रुः ॥ ४९ ॥ असन्मतं निराकृत्य शुष्कवेदान्तिसम्मतम् । योऽस्थापयत्सन्मतं स्वं स हरिर्मोऽसतोऽवतु ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्स्नुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धु-टीकायां द्विचत्वारिंशस्तरङ्गः ॥ ४२ ॥

उल्लंघ्य ता वर्तमाना यान्त्यन्ते यमयातनाः । इत्येव धर्मशाशास्त्रेषु बहुधा प्रतिपादितम् ॥४८॥ इति हरिवचनं ते सत्यमेवेति मत्वा निजमतमपहाय श्रेयसे शिश्रियुस्तम् । अमृतमिव त्र पीत्वा तच्छ्रिताश्चापरे तत् परममुदमवापुः सत्पतिं ते च नेमुः ॥ ४९ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते द्विचत्वारिंशस्तरङ्गः ॥ ४२ ॥

शकाब्दे विक्रमार्कस्य रसाश्ववसुभूमिते । माघस्य शुक्लसप्तम्यां वचोऽमृतमिदं हरेः ॥ १ ॥
तत्र दुर्गपुरे दुर्गे उत्तमस्य च वेश्मनः । बहिर्वेद्यां शुभे मञ्चे स न्यषीदत्सितांशुकः ॥ २ ॥
वृतः स्वभक्तैर्बहुभिस्त्यागिभिर्गृहिभिस्तथा । पीतपुष्पस्रजो बिभ्रत् पीतपुष्पावतंसकः ॥ ३ ॥
पीतपुष्पमयापीडः स विलोक्याखिलान्निजान् । उवाच सर्वे शृण्वन्तु सन्तः पृच्छामि किञ्चन ॥ ४ ॥

मुक्तिं पञ्चविधां ये ते नेच्छन्त्येकान्तिका हरेः । इच्छन्ति सेवामेवेति त्रिचत्वारिंश ईरितम् ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८७६) माघमासस्य । शुक्लसप्तम्यां शुक्लपक्षागतसप्तमीतिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमस्य नृपतेः । दुर्गे । वेश्मनः प्रासादस्योत्तमनृपभवनस्य । बहिर्वेद्यां बाह्यायां वेदिकायाम् । शुभे महार्हत्वाच्छोभने । मञ्चे पर्यङ्कासने । सितांशुकः परिधृतसकलश्वेतवसनः । स श्रीहरिः । न्यषीदत् स्वावासादागत्य दिनस्य षट्घटिका शेषे काले उपविष्टवान् ॥ २ ॥ वृत इति । बहुभिर्नानादेशागतत्वात्प्रचुरैः । त्यागिभिः । तथा । गृहिभिः । स्वभक्तैः । वृतो महासदसि परिवेष्टितः । पीतपुष्पस्रजः । बिभ्रत् । पीतपुष्पावतंसको धृतपीतकुसुमकर्णपुरः ॥ ३ ॥ पीतेति । पीतपुष्पमयापीडः स्वशिरोवेष्टनधृतपीतसुमनःशेखरः । स श्रीहरिः । अखिलान् । निजान् स्वभक्तान् । विलोक्य करुणार्द्रदृशा समीक्ष्य । उवाच । हे सन्तः ! । किञ्चन् । पृच्छामि अहं वोऽनुयुञ्ज्मि । सर्वे भवन्तः । शृण्वन्तु ।

इति द्वयोरेकसम्बन्धः ॥ ४ ॥ श्रीमदिति । हरेः । एकान्तिकाः । भक्तास्तु । अन्यातिदुर्लभां भगवद्भक्तेतरदुष्प्रापाम् । चतुर्विधाम् । मुक्तिम् । नैव । वाञ्छन्ति । इति । श्रीमद्भागवते । प्रोक्तम् ॥ ५ ॥ तन्नामनिर्देशपूर्वकं तदर्थं स्वयमेवाह त्रिभिः । सालोक्येति । सालोक्यं च सार्ष्टिश्च सामीप्यं च सारूप्यं च तानि । इत्येवम् । सा चतुर्विधामुक्तिः । उदिता । तत्र चतुर्विधमुक्तिमध्ये । भगवतः । लोके स्थितिर्निवासः । सालोक्यम् । उच्यते ॥ ६ ॥ सार्ष्टिरिति । तु किञ्च । भगवत्समानैश्वर्यम् । सार्ष्टिः । मुक्तिः । ईरिता । कृष्णस्य । समीपे । स्थितिः । सामीप्यं सामीप्याख्या मुक्तिश्च । इत्येवम् । उच्यते ॥ ७ ॥ सारूप्यमिति । भगवतोरूपं चतुर्भुजाद्याकारता तेन तस्य वा तुल्यरूपं समानाकारता तस्योपलम्भनं प्राप्तिः । सारूप्यमेतदभिधा मुक्तिः । उच्यते । एताम् । चतुर्विधां मुक्तिम् । भक्ता भगवत एकान्तिका भक्तजनाः । नेच्छन्ति । सेवनं भगवच्छन्दानुसारिणीं तत्परिचर्याम् । इच्छन्ति । तथाचोक्तं श्रीमद्भागवते । 'मत्सेवया प्रतीतं च सालोक्यादि चतुष्टयम् । नेच्छन्ति सेवया पूर्णाः कुतोऽन्यत्कालविद्रुत'मिति ॥ ८ ॥ कुत इति । ते भक्ता भगवत एकान्तिका भक्तजनाः । तां चतुर्विधां मुक्तिम् । कुतो हेतोः । नेच्छन्ति । तेषां

श्रीमद्भागवते प्रोक्तं भक्तास्त्वेकान्तिका हरेः । मुक्तिं चतुर्विधां नैव वाञ्छन्त्यन्यातिदुर्लभाम् ॥ ५ ॥
सालोक्यसार्ष्टि सामीप्यसारूप्यानीति सोदिता । तत्र स्थितिर्भगवतो लोके सालोक्यमुच्यते ॥ ६ ॥
सार्ष्टिर्मुक्तिस्तु भगवत्समानैश्वर्यमीरिता । स्थितिः समीपे कृष्णस्य सामीप्यमिति चोच्यते ॥ ७ ॥
सारूप्यं भगवद्रूपतुल्यरूपोपलम्भनम् । एतां चतुर्विधां भक्ता नेच्छन्तीच्छन्ति सेवनम् ॥ ८ ॥
कुतो नेच्छन्ति तां ते तु भक्ता मे वदतोत्तरम् । इति पृष्टाः साधवस्ते यथामत्युत्तरं ददुः ॥ ९ ॥
अयथार्थं तदाश्रुत्य स्वयमेवाह तान् प्रभुः । कृष्णाद्ये किञ्चिदिच्छेयुः सकामास्ते हि तज्जनाः ॥ १० ॥
एकां विहाय तत्सेवां नेच्छेयुर्ये तु किञ्चन । निष्कामास्ते मता भक्ता उक्ताः पूर्वेभ्य उत्तमाः ॥ ११ ॥

तदनिच्छायां को हेतुरित्यर्थः । हे सन्तः ! । उत्तरमेतन्मत्प्रश्नप्रतिवचनम् । मे मह्यम् । वदत यूयं कथयत । इत्यमुना प्रकारेण । पृष्टाः श्रीहरिणाऽनुयुक्ताः । ते सभोपविष्टाः । साधवः । यथामति यथास्वमनीषम् । उत्तरम् । ददुः चक्रुरित्यर्थः ॥ ९ ॥ अयथार्थमिति । तत्साधुकृतं स्वप्रश्नोत्तरम् । अयथार्थं यथार्थतयाऽकृतम् । आश्रुत्य । प्रभुरन्यदुर्बोधप्रश्नसुबोधोत्तरदानसमर्थः । स्वयं श्रीहरिरेव । तान्साधून् । आह । हे सन्तः ! । ये । तज्जना भगवतो भक्ताः । कृष्णात्सकाशात् । किञ्चित्सालोक्यादियत्किञ्चिदपि । इच्छेयुर्यदि वाञ्छेयुः । तर्हि । ते तज्जनाः । सकामाः । भवेयुरिति शेषः । हि निश्चितमेव ॥ १० ॥ एकामिति । ये । भक्तास्तु । एकाम् । तत्सेवां भगवतः परिचर्याम् । विहाय परित्यज्य । किञ्चन सालोक्यादियत्किञ्चनाप्यैश्वर्यम् । नेच्छेयुः । एकां तत्सेवामेवेच्छेयुस्तदतिरिक्तं किमपि नैवेच्छेयुरित्यर्थः । ते । भक्ताः । निष्कामाः । उक्ताः । पूर्वेभ्यः सकामभक्तेभ्यः । अतिश्रेष्ठाः । उक्ताः ॥ ११ ॥

साम्प्रतं भगवत्सेवालब्धेराधिक्यं वक्तुं सालोक्यादिमुक्तीनामकिञ्चित्त्वमाह । सेवामिति । कृष्णस्य । सेवां परिचर्याप्राप्तिं विना तु । तल्लोके भगवतो गोलोकादौ धामनि । स्थित्या । अथवा । तदन्तिके भगवतः समीपे । स्थित्या । अथवा । अतिसमृध्या भगवत्समानैश्वर्येण । अथवा ताद्रूप्यतो भगवतः सारूप्यभावेनापि । किन्तु । फलम् । भगवतः सेवोपलब्धेः सर्वोत्तमत्वात्तदपेक्षया सालोक्यादीनां जघन्यत्वात्तत्प्राप्तिर्न किञ्चिदित्यर्थः । 'सेवानुरक्तमनसामभवोऽपि फल्गु'रिति श्रीभागवतोक्तेः ॥ १२ ॥ एकत्वेति । शास्त्रे श्रीभागवतादौ सच्छास्त्रे । एकत्वाख्याऽक्षरब्रह्मतेजसैक्यप्राप्तिलक्षणसंज्ञा । या । पञ्चमी । मुक्तिः । भवति उक्तास्ति । सा एकत्वमुक्तिरपि । सतां भगवदेकान्तिकभक्तसाधूनाम् । अनुपादेया तैर्न स्वीकर्त्तव्येत्यर्थः । कुतः । तदा एकत्वमुक्तिप्राप्तिकाले । ऐक्यतोऽक्षरब्रह्मतेजसैक्यभावापत्तेर्हेतोः । सेवासिद्धेर्भगवतः सेवाप्राप्तेः सिद्ध्यभावाद्धेतोः । तथा चोक्तं श्रीभागवते । 'सालोक्य सार्ष्टि सामीप्य सारूप्यैकत्वमप्युत । दीयमानं न गृह्णन्ति विना मत्सेवनं जनाः' । 'न किञ्चित्साधवो धीरा भक्ता ह्येकान्तिनो मम । वाञ्छन्त्यपि मया दत्तं कैवल्यमपुनर्भव'मित्यादि ॥ १३ ॥ निष्कामेति । प्रभुर्निष्कामभक्तानां महासुखप्रदान-

सेवां विना तु कृष्णस्य तल्लोके वा तदन्तिके । स्थित्या वाऽतिसमृद्ध्याऽपि किन्तु ताद्रूप्यतः फलम् ॥ १२ ॥
एकत्वाख्या च या मुक्तिः शास्त्रे भवति पञ्चमी । सतां साप्यनुपादेया सेवाऽसिद्धेस्तदैक्यतः ॥ १३ ॥
निष्कामभक्तानेतांस्तु स्वान्तिके रक्षति प्रभुः । सप्रेमतत्कृतां सेवां प्रीत्यैवाङ्गीकरोति हि ॥ १४ ॥
अनिच्छद्भ्योऽपि तेभ्योऽसौ महैश्वर्यसुखानि च । दुर्लभानि सकामानां ददाति निजधामनि ॥ १५ ॥
एत एव हि गीतायामर्ज्जुनं प्रति शौरिणा । भक्ता ज्ञानिन इत्युक्ता उत्तमा आत्मवत्प्रियाः ॥ १६ ॥

समर्थः श्रीकृष्णो भगवान् । एतानुक्तविधान् । निष्कामभक्तांस्तु । स्वान्तिके स्वसेवाविधापनोचितनिकटप्रदेशे । रक्षति । सप्रेम गाढानुरागसहितं यथा स्यात्तथा । तत्कृतां निष्कामभक्तविहिताम् । सेवाम् । प्रीत्याऽतिस्नेहेनैव । अङ्गीकरोति । हि निश्चितमेव ॥ १४ ॥ अनिच्छभ्य इति । असौ भगवान् । अनिच्छभ्यो भगवतोऽपि तत्सेवातिरिक्तेच्छामकुर्वभ्यः । तेभ्यो निष्कामभक्तेभ्यः । सकामानाम् । दुर्लभानि सकामभक्तैः प्राप्तुमशक्यानि । महैश्वर्यसुखानि । महान्त्यैश्वर्याणि महान्ति सुखानि चेत्यर्थः । निजधामनि स्वकीयेऽक्षरपदे । ददाति । 'अथो विभूतिं मम मयाविनस्तामैश्वर्यमष्टाङ्गमनुप्रवृत्तम् । श्रीयं भागवतीं वा स्पृहयन्ति भद्रां परस्य मे तेऽश्नुवते तु लोके इति श्रीभागवतोक्तेः ॥ १५ ॥ एत इति । एते । भक्ताः निष्कामा भगवत एकान्तिकजना एव । गीतायाम् । शौरिणा श्रीकृष्णेन । अर्जुनं प्रति । ज्ञानिनः । उत्तमाः । आत्मवत् । प्रियाः । इति । उक्ताः । तद्यथा । 'तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते । प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः । उदाराः सर्व एवैते ज्ञानी त्वात्मैव मे मत'मित्यादि ॥ १६ ॥

अत इति । अतो हेतोः । इह लोके । भवद्भिर्मदाश्रितैर्युष्माभिस्तु । स्वाः स्वमनोऽवस्थिताः । कृष्णस्वरूपेतरवासनाः श्रीकृष्णस्वरूपेक्षणादिक्रियेतरवस्तुमात्र-भोगवासनाः । सर्वथैव । हेयाः भगवदेकान्तिकसाधुसमागमावगतभगवन्माहात्म्यबोधेन त्याज्याः । इतीत्थंभूतम् । ईशस्य परमेश्वरस्य श्रीहरेः । वचोऽमृतम् । निपीय सादरं श्रुत्वा । सदःस्थाः समेपविष्टाः । ते त्यागिनो गृहस्थाश्च जनाः । हृष्टा मुदिताः । अभवन् ॥ १७ ॥ स्वसेवानिरतान्मुक्त्यादीच्छाविरहितान्निजान् । श्रेष्ठान् यः प्राह स हरिः स्वीयां सेवां ददातु मे ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्स्नुश्रीरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरि-वाक्यसुधासिन्धुटीकायां त्रिचत्वारिंशस्तरङ्गः ॥ ४३ ॥

ससाधनं स्नेहरूपं तथाऽहन्तामामत्वयोः । त्याग उक्तश्चतुश्चत्वारिंशे देहतदीययोः ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८७६) माघमासे । शुक्लाष्टम्यां शुक्लपक्षागताष्टमीतिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमस्य राज्ञः । दुर्गे । निम्बद्रुमतले । वेद्याम् ।

अतो भवद्भिस्त्विह सर्वथैव कृष्णस्वरूपेतरवासनाः स्वाः । हेया इतीशस्य वचोऽमृतं निपीय हृष्टा अभवन्सदःस्थाः ॥ १७ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते त्रिचत्वारिंशस्तरङ्गः ॥ ४३ ॥

शकाब्दे विक्रमार्कस्य रसाश्ववसुभूमिते । शुक्लाष्टम्यां माघमासे वचोऽमृतमिदं हरेः ॥ १ ॥ तत्र दुर्गपुरे दुर्गे उत्तमस्य व्यराजत । निम्बद्रुमतले पीठाग्र्ये स सिताम्बरः ॥ २ ॥ सितपुष्पस्रगापीडो वृतो भक्तैः सहस्रशः । त्यागिभिर्गृहिभिश्चासौ सतोऽपृच्छत्पुरःस्थितान् ॥ ३ ॥ स्नेहः कार्यो भगवति सर्वथैव तदाश्रितैः । एवमस्ति पुराणादौ रूपं तस्य नु कीदृशम् ॥४॥ अथ ब्रह्मानन्दमुनिस्तमुवाच त्वदीश्वरात् । ऋते सर्वत्र जगति निःस्पृहत्वं स उच्यते ॥ ५ ॥

पीठाग्र्ये मञ्चरूपासनश्रेष्ठे । सिताम्बरः परिधृतसकलश्वेतवसनः । स श्रीहरिः । व्यराजत प्रातःकृत्यं समाप्य स्वासनादागत्य प्रत्यङ्मुख आसनस्थः शुशुभे इत्यर्थः ॥ २ ॥ सितेति । सितपुष्पस्रगापीडः श्वेतकुसुममालामापीडायमानां दधान इत्यर्थः । सहस्रशो नानादेशागतत्वादसङ्ख्यातैरित्यर्थः । त्यागिभिः । गृहिभिश्च । भक्तैः । वृतो महासदसि संवेष्टितः । असौ श्रीहरिः । पुरःस्थितान् स्वपुरःप्रदेशे निषण्णान् । सतः साधून् । अपृच्छत् ॥ ३ ॥ स्नेह इति । हे सन्तः ! तदाश्रितैर्भगवदाश्रित-जनैः । भगवति धृतमानुषविग्रहे श्रीकृष्णे । स्नेह । सर्वथैव । कार्यः । एवममुना प्रकारेण । पुराणादौ श्रीमद्भागवतादौ । अस्त्युक्तं भवति । तत्र श्रीभागवते यथा । 'भगवान्ब्रह्मकार्त्स्न्येन त्रिरन्वीक्ष्य मनीषया । तदध्यवस्यत्कूटस्थो रतिरात्मन् यतो भवे'दिति । तस्य स्नेहस्य रूपम् । कीदृशम् । नु ॥ ४ ॥ अथेति । अथानन्तरम् । ब्रह्मा-नन्दमुनिः । तं श्रीहरिम् । उवाच । हे हरे ! । ईश्वरात् श्रीकृष्णाख्यसाक्षात्परमेश्वरात् । त्वद्भवतः । ऋते विना । सर्वत्र । जगति । निःस्पृहत्वं सांसारिकभोगोपभोगे आदरवर्जितत्वम् । औदासीन्यमित्यर्थः । सः स्नेहः । उच्यते ॥ ५ ॥

प्रेवाचेति । तमेवंवदन्तं ब्रह्मानन्दमुनिम् । हरिः । प्रोवाच । हे साधो ! । अस्य प्रश्नस्य । एतत्त्वदुक्तम् । उत्तरम् । न भवेत् । एतत्त्वया यदुक्तं तदेतत्तु । विरागस्य विरक्तेः । रूपम् । भवेत् । स्नेहस्य रूपं तु । अहम् । वदामि ॥ ६ ॥ कृष्ण इति । पुंसो भगवद्भक्तजनस्य । हृदि मानसे । यः । कृष्णे एव गाढतरः । अनुरागः । स्यात् । सः । प्राज्ञैर्भगवदेकान्तिकभक्तैर्मनीषिभिः । स्नेहः । उदितः कथितः । यस्य स्नेहस्य । प्रेम । पर्यायः । उदितः ॥७॥ यत इति । यतः स्नेहात् । हृदि भक्तमानसे । तस्य भगवत एव । स्मरणं चिन्तनम् । अखण्डं तैलधारावदविच्छिन्नं यथातथा । सदा सर्वकालम् । भवेत् । अन्यविषयो भगवदितरपदार्थसम्बन्धी । सङ्कल्पोऽपि । कदाचन कर्हिंचिदपि । नोदियादुत्पन्नो नैव । भवेत् ॥ ८ ॥ स्नेहस्येति । परिपूर्णस्य । स्नेहस्य लक्षणं स्वरूपम् । एतदेव मदुक्तमेवास्ति । हि । हि । 'अवधारणार्थहिद्वयेनैतदर्थस्य शास्त्रेऽतिप्राशस्त्यं द्योत्यते ।' यत्र यस्मिन्स्नेहे । च क्व कदाचिदपि । अन्यसङ्कल्पो भगवदितरवस्तुस्मरणम् । भवेत् । तत्र तथाविधे तस्मिन् स्नेहे । तावती । तत्परिमाणा । न्यूनता भवति ॥ ९ ॥ पूर्णेति । पूर्णस्नेहवतां भगवति सम्पूर्णस्नेहयुक्तानां भगवद्भक्तानां । क्वापि कदाचिदपि । अन्यसङ्कल्प-

प्रोवाच तं हरिः साधो ! । नैतदस्योत्तरं भवेत् । रूपं त्वेतद्विरागस्य तु वदाम्यहम् ॥ ६ ॥ कृष्ण
एवानुरागः स्यात्पुंसो गाढतरो हृदि । स्नेहः स उदितः प्राज्ञैः पर्यायः प्रेम यस्य च ॥७॥ यतोऽखण्डं हृदि
भवेत्तस्यैव स्मरणं सदा । सङ्कल्पोऽप्यन्यविषयो नोदियाच्च कदाचन ॥ ८ ॥ स्नेहस्य परिपूर्णस्य लक्षणं ह्येतदेव
हि । यत्र क्वचान्यसङ्कल्पो न्यूनता तत्र तावती ॥९॥ पूर्णस्नेहवतां क्वापि नान्यसङ्कल्पसम्भवः । देशकालादि
वैषम्ये स चेत्स्यात्तद्व्यथा भवेत् ॥१०॥ स्वादुभोक्तुर्यथा पुंसो भोज्यान्ने केनचित्कचित् । धूलिकर्करनिक्षेपे कृते
यादृग्व्यथा भवेत् ॥ ११ ॥ तादृश्येव भवेत्तेषां सति तत्स्मिन्व्यथा ध्रुवम् । एतत्तु सर्वैरपि मे भक्तैश्चिन्त्यं स्वचे-
तसि ॥ १२ ॥ अथ ब्रह्मानन्दमुनिस्तं पप्रच्छ महाप्रभो ! । ईदृक्स्नेहोद्भवे पुंसां साधनं वक्तुमर्हसि ॥ १३ ॥

सम्भवः भगवदितरपदार्थसङ्कल्पोद्भवः । न भवेत् । चेद्यदि । देशकालादिवैषम्ये देशकालक्रियासज्ञादीनां विषमीभावे सति । सोऽन्यसङ्कल्पसम्भवः । स्यात् । तत्तर्हि । व्यथा । भवेत् ॥ १० ॥ दृष्टान्तेन व्यथामाह सार्द्धेन । स्वाद्विति । यथा । स्वादुभोक्तुः सुरसान्नभोजनप्रियस्य । पुंसः । भोज्यान्ने भोक्तुमारब्धे पायस विरञ्जादिकेऽन्ने । क्वचित्कदाचित् । धूलिकर्करनिक्षेपे । कृते सति । यादृक् । व्यथा । भवेत् ॥ ११ ॥ तादृशीति । तेषां हरौ पूर्णस्नेहवतां भक्तानाम् । तस्मिन्नन्यसङ्कल्पसम्भवे । सति । तादृश्येव । व्यथा । भवेत् । ध्रुवं निश्चितमेव । एतन्मदुक्तं । स्नेहस्वरूपं तु । मे मम । सर्वेरपि । भक्तः । स्वचेतसि स्वस्वमानसे । चिन्त्यं मम भगवति कीदृशः स्नेहो भवतीति विचार्यम् ॥ १२ ॥ अथेति । अथानन्तरम् । ब्रह्मानन्दमुनिः । तं श्रीहरिम् । पप्रच्छ । हे महाप्रभो ! ईश्वरेश्वर ! । पुंसां त्वद्भक्तजनानाम् । ईदृक् स्नेहोद्भवे त्वयि त्वदुक्तविधस्नेहप्रादुर्भावे । साधनम् । वक्तुम् । अर्हसि ॥ १३ ॥

तमिति । तमेवंपृच्छन्तं ब्रह्मानन्दमुनिम् । हरिः स्वयं श्रीहरिकृष्णो भगवान् । उवाच । हे मुने ! । तत्र मदुक्तविधस्नेहोद्भवे । साधनं तु । एकमेव । अस्ति । हि निश्चितमेव । किं तदित्यत्राह नित्यमिति । नित्यं प्रतिदिनम् । सतां भगवति पूर्णस्नेहवतामेकान्तिकसाधूनाम् । प्रसङ्गेन कायवाङ्मनोभिः कृतेन प्रकृष्टसङ्गेन । तस्य भगवतो यन्माहात्म्यमक्षरपरत्वादिमहामहिमवत्त्वं तस्यावबोधनमसम्भावनाविपरीतभावनादिदोषवर्जं वेदनम् ॥ १४ ॥ ऊच इति । तदा तस्मिन् समये । सोमवर्मा स्वनिकटकृतनिवासो बुद्बुदपुरनृपतिः । ऊचे श्रीहरिं वक्ष्यमाणमुक्तवान् । हे हरे ! । नित्यदा प्रतिदिनम् । सतां त्वयि पूर्णस्नेहवतामेकान्तिकसाधूनाम् । प्रसङ्गम् । कुर्वतामपि । अस्माकम् । स भगवन्माहात्म्यज्ञानपूर्वकः स्नेहः । न जायते त्वयि नोदेति । अत्रार्थे । कः । हेतुः किं कारणमस्ति ॥ १५ ॥ हरिरिति । अथानन्तरम् । हरिः । ऊचे सोमवर्माणं वक्ष्यमाणमुवाच । हे नृपते ! । वो युष्माकम् । केवलमेकलः । सतां साधूनामेव । प्रसङ्गः ! नास्ति । किन्तु । देहदैहिकयोरपि । प्रसङ्गः । अस्ति ॥ १६ ॥ अत इति । अतो हेतोरेव । भगवति । स्नेहदाढर्यं तन्माहात्म्यज्ञानपूर्वकस्य स्नेहस्य दृढता । न प्रजायते । देहदैहिकप्रसङ्गं

तमुवाच हरिस्तत्र साधनं त्वेकमेव हि । नित्यं सतां प्रसङ्गेन तन्माहात्म्यावबोधनम् ॥ १४ ॥ ऊचे तदा सोमवर्मा प्रसङ्गं कुर्वतां सताम् । नित्यदाऽपि स नास्माकं जायते हेतुरत्र कः ॥१५॥ हरिरूचेऽथ नृपते ! सतामेव न केवलम् । प्रसङ्गो वोऽस्ति किन्त्वस्ति देहदैहिकयोरपि ॥ १६ ॥ अतो न भगवत्येव स्नेहदार्ढ्यं प्रजायते । अथ बालध्रुवो विप्रस्तं पप्रच्छ कृताननतिः ॥ १७॥ देहदैहिकयोः स्वामिन्नहन्ताममते तथा । सङ्कल्पाश्च तदीया ये तेषां नाशः कथं भवेत् ॥ १८ ॥ तमुवाच हरिस्तेषां नाशस्तु स्याद्विवेकतः । जडस्य वपुषस्तत्स्थचिद्रूपस्यात्मनस्तथा ॥ १९ ॥ जडचैतन्ययोः सम्यग्वैधर्म्येऽवगते सति । अहन्ताऽऽत्मनि चिद्रूपे दृढा स्यात्सत्प्रसङ्गतः ॥२०॥

विहाय केवलं सत्प्रसङ्गे जाते हरौ स दृढः स्नेहो जायतेऽतस्तं विधत्तामिति भावः । अथानन्तरम् । बालध्रुवः । विप्रः । वसुपुरावास एतन्नामाब्राह्मणः । कृताननतिः श्रीहरये विहितप्रणामः सन् । तं श्रीहरिम् । पप्रच्छ ॥ १७ ॥ देहेति । हे स्वामिन् ! । देहदैहिकयोः । ते । अहन्ताममते देहेऽहन्तादैहिके ममता चेत्यर्थः । तथा । तदीया अहन्ताममतासम्बन्धिनः । ये । सङ्कल्पाः । तेषां देहदैहिकाहंममत्वयोस्तत्सङ्कल्पानां च । नाशः । कथम् । भवेत् ॥ १८ ॥ तमिति । तमेवंपृच्छन्तं बालध्रुवं विप्रम् । हरिः । उवाच । हे विप्र ! । तेषाम् । नाशस्तु । जडस्याचितः । वपुषो देहस्य । तथा । तत्स्थचिद्रूपस्य देहावस्थितत्वेऽपि चिद्रूपस्य । आत्मनो जीवस्य । विवेकस्तयोर्यथार्थविवेकभावात् । स्यात् ॥ १९ ॥ जडेति । सत्प्रसङ्गतः देहात्मविवेकवतां साधूनां प्रसङ्गेन । जडचैतन्ययोर्देहात्मनोः । वैधर्म्ये चिदचित्त्वेन वैपरीत्ये । जडे परिणामिनि दुःखमये देहे जीवत्वभावनारूपे चिद्रूपेऽपरिणामिनि सुखमये जीवे देहत्वभावनारूपे च वैधर्म्ये इत्यर्थः । सम्यग्यथार्थतः । अवगते ज्ञाते । सति । उभयविधं वैधर्म्यं तवाज्ञानेन जातमस्ति त्वं तु चिद्रूप आत्माऽसि देहस्त्वचिदस्तीति देहभावं हि त्वात्मभावं स्वीकुर्विति तदुक्त्या देहात्मस्वरूपे सम्यग्विदिते सतीत्यर्थः । चिद्रूपे । आत्मनि जीवे । अहन्ता नाहं देहरूपः किन्तु क्षेत्रज्ञोऽहमित्यहंभावः । दृढा । स्यात् ॥ २० ॥

नश्येदिति । अथात्मनि सुदृढाहंमतिस्थैर्यानन्तरम् । देहाभिमानो देहोऽहमित्येवंरूपाभिमतिः । नश्येत् । तन्नाशे देहाभिमाने निवृत्ते सति । दैहिकेषु कलत्रपुत्रक्षेत्रधनादिपदार्थेषु । ममता मदीया इमे इत्येवंरूपं ममत्वम् । सद्यस्तत्क्षणमेव । लीयते विनाशं प्राप्नोति । ततस्तदनन्तरम् । अखिलाः सर्वे । तत्सङ्कल्पा अहं ममत्वसङ्कल्पाः । सद्यः । लीयन्ते ॥ २१ ॥ पुनर्देहादावहन्तादित्यागमेव भङ्ग्यन्तरेण द्रढयति द्वाभ्याम् । देहेति । इह लोके । देहाभिमानिनां पुंसामेव । दैहिकेषु । ममता । स्यात् । ततस्तदनन्तरम् । तत्सङ्कल्पाः । स्युः । वै निश्चितम् । आत्माभिमानिनां जनानाम् । न तु तद्द्वयं न भवेदेव ॥ २२ ॥ इदमिति । गृहस्थस्य शोभनसौधं निर्माय तत्र स्थितिं कृतवतः पुरुषस्य । गृहेषु तथाविधसौधे इव । देहे । अहन्ता देहोऽहमित्यहंभावः । इति यत् । इदमेव । महत् मौर्ख्यम् । वस्तुत आत्मनो भिन्ने गृहेऽहन्तां कुर्वतः सा यथा तस्य मूर्खता ज्ञापका भवति तद्वद्वस्तुतो ह्यात्मभिन्ने देहे याऽस्याहन्ता तदेवास्यातिमूर्ख्यत्वमित्यर्थः । इति हेतोः । सा देहेऽहन्ता । वृथा मिथ्यैवास्ति । अतःकरणात् । मुमुक्षुभिः । त्याज्या वृथा साऽहन्ता हेया ॥ २३ ॥ पुनरपि दृष्टान्तोक्तिपूर्वकमिममेवार्थं सम्यग्बोधाय विस्तरेणाह षड्भिः ।

नश्येद्देहाभिमानोऽथ तन्नाशे दैहिकेषु च । ममता लीयते सद्यस्तत्सङ्कल्पास्ततोऽखिलाः ॥ २१ ॥ देहाभिमानिनामेव ममता दैहिकेष्विह । तत्सङ्कल्पास्ततः स्युर्वै न त्वेवात्माभिमानिनाम् ॥ २२ ॥ इदमेव महन्मौर्ख्यं गृहस्थस्य गृहेष्विव । देहेऽहन्ता वृथैवेति साऽतस्त्याज्या मुमुक्षुभिः ॥ २३ ॥ कारितं तुन्नवायेन यथा कश्चन कञ्चुकम् । परिधायाप्यात्मभिन्नं मन्येतात्मानमेव तम् ॥ २४ ॥ ततः स तुन्नवायं तं तद्भार्यामपि चात्मनः । मन्येत पितरौ मौर्ख्यात्तथा देहाभिमान्यपि ॥२५॥ स्वस्माद्भिन्नेऽपि देहेऽसौ कृत्वाऽहन्ता तदीयकौ । पितरावात्मपितरौ मन्यतेऽतोऽज्ञ एव सः ॥ २६ ॥ यद्येतौ स्वस्य पितरौ तर्हि जन्मान्तरेष्वपि । देहानां पितरो नैका आसन्स्वस्यैव ते न किम् ॥ २७ ॥

कारितमिति । यथा । कश्चन पुरुषः । तुन्नवायेन सौचिकेन । कारितम् । कञ्चुकं वारबाणम् । लक्षणया सतूलमङ्गरक्षकमित्यर्थः । परिधाय । आत्मभिन्नं स्वदेहाद्वस्तुतः पृथग्भूतमपि । तं कञ्चुकम् । आत्मानं स्वमेव । मन्येत ॥ २४ ॥ तत इति । ततस्तदनन्तरम् । सः कञ्चुकमात्मानं मन्यमानः पुरुषः । तम् । तुन्नवायम् । तद्भार्यां तत्पत्नीं चापि । मौर्ख्यान्मूर्खत्वमालम्ब्य । आत्मनः स्वस्य । पितरौ जननीजनकौ । मन्येत । तथा तेन प्रकारेणैव देहाभिमानी ॥ २५ ॥ स्वस्मादिति । असौ पुमानपि । स्वस्मात्स्वजीवात्सकाशात् । भिन्ने वस्तुत एव पृथग्भूतेऽपि । देहे । अहन्ताम् । कृत्वा तदीयकौ देहसम्बन्धिनौ । पितरौ । मातृपितरौ । आत्मपितरौ स्वक्षेत्रज्ञजनकौ । मन्यते । अतो हेतोः । स एवंविधः पुरुषः । अज्ञो मूर्ख एव । इति द्वयोरेकान्वयः ॥ २६ ॥ यदीति । यदि यर्हि । एतौ एतद्देहसम्बन्धिनौ पितरौ । स्वस्य । भवतः । तर्हि । जन्मान्तरेषु एतद्देहातिरिक्तेष्वन्यजन्मसु । वर्त्तमानानामिति शेषः । देहानामपि । पितरो जननीजनकाः । नैका अनेके । आसन् । ते पितरः । स्वस्य । नैव । स्युः । किम् । अपि तु स्वस्यैव स्युरित्यर्थः ॥ २७ ॥

नानेति । यदि । नानायोनिगताः श्वशूकरादिनानाजन्मसु स्वेन स्वीकृताः । ते पितरः । स्वस्यैव । अवश्यं भवेयुः । तर्हि तु । एतयोर्वर्त्तमानकालीनयोः पित्रोः । तेषु नानाविधगतजन्मप्राप्तेषु पितृषु च । स्वस्य । ममतातुल्यता ममत्वस्य तुल्यत्वम् । उचिता विधेयतया योग्या ॥ २८ ॥ अत इति । अतो हेतोः । यथा । विहीनानां पूर्वजन्मसु त्यक्तानाम् । 'त्यक्तं हीनं विधुतं समुज्झितं धूतमुत्सृष्टे'इति तृतीयकाण्डे विशेष्यनिघ्नवर्गेऽमरः । वपुषां देहानाम् । अहन्ता । नहि साम्प्रतं नास्त्येव । दैहिकानां गतजन्मलब्धानां मातृपितादिनाम् । ममता च । नहि । तथा । साम्प्रतं वर्त्तमानजन्मनि विद्यमाने देहदैहिकादौ । न कार्याऽहन्ता ममता च न विधेया ॥ २९ ॥ अथाहन्ता ममतानिवृत्तये कर्त्तव्यामात्मनिष्ठावश्यकतामाह पञ्चभिः । सत्सङ्गिनामिति । सत्सङ्गिनां कायवाङ्मनोभिरात्मनिष्ठसाधुप्रसङ्गं विदधतां जनानाम् । आत्मनिष्ठाभ्यासात् । ईदृग्गतदेहदैहिकाहंममतात्यागलक्षणामतिः । भवेत् । सेत्थंभूतामतिः । गृहिजनैर्भवादृशैर्मदाश्रितैर्गृहस्थजनैः । संसाध्याऽवश्यं साधनीया । त्यागिभिर्मदाश्रितैः साध्वादित्यागिजनैस्तु । विशेषतः । संसाध्या ॥ ३० ॥ देहेति । देहाभिमानमूलः । वर्णाश्रमोद्भवश्च । मानः । त्यागिनामपि । आत्मनिष्ठां विना । नैव

नानायोनिगतास्ते हि यदि स्वस्यैव तर्हि तु । एतयोस्तेषु च स्वस्य ममतातुल्यतोचिता ॥ २८ ॥
अतो यथा विहीनानामहन्ता वपुषां न हि । ममता दैहिकानां च तथा कार्या न साम्प्रतम् ॥ २९ ॥
सत्सङ्गिनामात्मनिष्ठाभ्यासादीदृग्मतिर्भवेत् । संसाध्या सा गृहिजनैस्त्यागिभिस्तु विशेषतः ॥ ३० ॥
देहाभिमानमूलश्च मानो वर्णाश्रमोद्भवः । आत्मनिष्ठां विना नैव त्यागिनामपि नश्यति ॥ ३१ ॥
नायाति साधुता तावद्यावद्देहाभिमानिता । त्यक्तगेहादिसङ्कल्पा अपि तेषां न यान्ति हि ॥ ३२ ॥
ब्रह्मात्मना विहायैव देहदैहिकभावनाम् । कृष्णं भजेत्स्वधर्मस्थो मतः साधुः स एव मे ॥ ३३ ॥
दुर्लभस्तादृशः साधुर्न दूरे हि हरिर्यतः । स एव सेव्यः सर्वेषां भवबन्धविमोचकः ॥ ३४ ॥

नश्यति ॥ ३१ ॥ नेति । तेषां त्यागिनाम् । यावत् । देहाभिमानिता । स्यात् । तावत् । साधुता । नायाति नैवागच्छति । त्यक्तगेहादिसङ्कल्पाः परित्यक्तानां गृहादीनां संकल्पा अपि । नहि नैव । यान्ति । चेतसो न गच्छन्तीत्यर्थः ॥ ३२ ॥ ब्रह्मेति । यो भक्तः । ब्रह्मात्मना ब्रह्मभावापन्नेन स्वात्मना । देहदैहिकयोरहंममत्ववासनाम् । विहाय त्यक्त्वैव । स्वधर्मस्थः सवैराग्ये स्वस्वधर्माचरणे सदावस्थितः सन् । कृष्णम् । भजेत् । स भक्त एव । मे मम । साधुः । मतः । इत्थंभूतो भक्त एव मया साधुरिति सम्मत इत्यर्थः ॥३३॥ दुर्लभ इति । तादृशस्तथाभूतः । साधुः । दुर्लभो दुष्प्रापः । अस्ति । यतो यस्मादेवंभूतात्साधोः सकाशात् । हरिः । दूरे । नास्ति । किन्तु सर्वदा तदियहृत्पद्मे एव तिष्ठतीत्यर्थः भवबन्धविमोचकः । स साधुरेव । सर्वेषाम् । सेव्यः । भवबन्धविमोचकस्यैकस्य भगवत एतद्धृदि सर्वदा सन्निधानादेतत्सेवया नूनं भवबन्धनिवृत्तिः स्यादिति भावः ॥ ३४ ॥

निशम्येति । इत्थमेवंविधाम् । पीयुषसमाममृततुल्याम् । हरेः । वाचम् । निशम्य । सः । ब्राह्मणो बालध्रुवो विप्रः । तोषमतिप्रहर्षम् । आप । भक्ताः । सर्वे । सन्तः । सर्वे । गृहिणश्चापि । निर्भरमतिशयितम् । मोदमानन्दमेव । प्रपेदिरे ॥ ३५ ॥ स्नेहस्य लक्षणं स्वामिन् ! स्वभक्तानां च साधनम् । तत्प्राप्तेर्देहगेहादौ तथाऽहन्ताममत्वयोः ॥ १ ॥ नाशे च तत्सङ्कल्पानां साधनं येन विस्तरात् । उक्तं स श्रीहरिर्दद्यात्स्वप्रियां साधुतां तु मे ॥ २ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्सूनुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां चतुश्चत्वारिंशस्तरङ्गः ॥ ४४ ॥

हरेर्नित्या साङ्गतोक्ता तदङ्गतेजसा । अमायिकत्वतः पञ्चचत्वारिंशे निरङ्गता ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८७६) तपसो माघमासस्य । शुक्ले वलक्षपक्षे । दशम्यां तिथौ । इदम् । हरेः । वचोमृतम् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमस्य नृपतेः । दुर्गे । ईशमन्दिरे श्रीवासुदेवमन्दिरस्थासन्नप्रदेशवर्त्तिन्यामित्यर्थः । वितर्द्यां वेदिकायाम् । उत्तमे विचित्ररत्नास्तरणाद्यलङ्कृतत्वाच्छ्रेष्ठे । पीठे सिंहासने । सिताम्बरः परिहितसकलश्वेतवसनः । स श्रीहरिः ।

निशम्य पीयूषसमां स वाचमित्थं हरे र्ब्राह्मण आप तोषम् । सन्तश्च सर्वे गृहिणोऽपि भक्ताः प्रापादरे निर्भरमेव मोदम् ॥ ३५ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते चतुश्चत्वारिंशस्तरङ्गः ॥ ४४ ॥

शकाब्दे विक्रमार्कस्य रसाश्ववसुभूमिते । दशम्यां तपसः शुक्ले वचोऽमृतमिदं हरेः ॥ १ ॥ तत्र दुर्गपुरे दुर्गे उत्तमस्येशमन्दिरे । वितर्द्यामुत्तमे पीठे स न्यषीदत्सिताम्बरः ॥ २ ॥ स्वभक्तत्यागिगृहिभिर्वृतं तं दक्षिणाननम् । पप्रच्छ गोपालानन्दः साधुवर्यः कृतानतिः ॥ ३ ॥ स्वामिन्वेदान्तिनः केचित्कृष्णं त्वाऽऽहुर्निरङ्गकम् । पठन्ति च श्रुतीस्तत्र तदर्थप्रतिपादिकाः ॥४॥ नारदादिसमास्त्वन्ये भक्तास्त्वामेव साङ्गकम् । वदन्ति सप्रमाणं त्र तत्र केषां मतं हि सत् ॥५॥

न्यषीददपराह्णकाले स्वावासादागत्योपविवेश ॥ २ ॥ स्वेति । स्वभक्तत्यागिगृहिभिर्नानादेशागतैस्त्यागिभिर्गृहस्थैश्च स्वभक्तजनैरित्यर्थः । वृतं सभायां संवेष्टितम् । दक्षिणाननम् । तं श्रीहरिम् । साधुवर्यः सकलसाधुश्रेष्ठः । गोपालानन्दो मुनिः । कृतानतिस्तत्कालोचितत्वात्कृतप्रणामः सन् । पप्रच्छ ॥ ३ ॥ स्वामिन्निति । हे स्वामिन् ! । केचित् । वेदान्तिनः शङ्कराचार्यमतानुरोधेन पठितवेदान्तग्रन्थाः पण्डिताः । कृष्णम् । त्वा त्वाम् । निरङ्गकं निरवयम् । 'अङ्गं प्रतीकोऽवयवोऽपघन'इत्यमरः । आहुः । तत्र तव निरङ्गकत्वप्रतिपादने । तदर्थप्रतिपादिका भवतो निरवयवत्वसम्पादिकाः । श्रुतिरपाणिपाद इत्यादीनि निगमवचनानि । पठन्ति प्रमाणार्थं वन्ति ॥ ४ ॥ नारदेति । नारदादिसमाः । अन्ये रामानुजाचार्यमतानुसारेण पठितवेदान्तग्रन्था अपरे । भक्ता भवद्भक्ताः पण्डिताः । त्वां कृष्णं भवन्तमेव । सप्रमाणं 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात्सर्व एव सुवर्णस्तस्य कप्यासं पुण्डरीकमेवाक्षिणी'इत्यादिभिर्भवतः सावयवत्वसम्पादकश्रुतिशतप्रमाणैः सहितं यथातथा । साङ्गकं सावयवम् । वदन्ति । तत्र तेषूभयविधपण्डितेषु मध्ये । केषां पण्डितानाम् । मतम् । सत् सत्यम् । अस्ति । हि ॥ ५ ॥

तमिति । तमेवंपृच्छन्तं गोपालानन्दमुनिम् । हरिः । उवाच । हे साधो ! । भूरि प्रचुरं तेजो यस्यां तथाभूतादिव्या अमायिका मूर्त्तिर्देहो यस्य सः । भगवानपरिमितैश्वर्यसम्पन्नः श्रीकृष्णः । सदा सर्वकालम् । साङ्गकः दिव्यावयववान् । अस्ति । इतीत्थंभूतं–श्रीरामानुजाचार्यप्रतिपादितम् । मतमेव । सत्सत्यम् । हि । श्रीरामानुजाचार्यमतानुरोधिवेदान्तग्रन्थाध्येतार एव सन्मतावलम्बिन इति भावः ॥ ६ ॥ भगवतो नित्यसिद्धदिव्यावयववत्त्वदृढतां सम्पादयिष्यन्नादौ निरवयवब्रह्मवादिवीक्षणीयं तेजो भगवतः शरीरजमस्तीत्याह । सदिति । सच्चिदानन्दरूपं सच्चिदानन्दलक्षणम् । सर्वतः सर्वेषु जीवेश्वरादिक्षेत्रज्ञेषु । पूर्णं यथोचितं तत्तत्कर्मफलप्रदानायान्तर्यामित्वेन तरतमतो व्याप्तम् । यत् । ब्रह्म ब्रह्मसंज्ञम् । तेजः । अस्ति । निःप्रतीकं निरवयवम् । अनावृतं निरावरणम् । तद्ब्रह्मतेजः । तस्य सदा दिव्यावयववतः श्रीकृष्णस्यैव । ज्ञेयम् । भगवन्तं निरवयवं ब्रुवन्तः शङ्कराचार्यादयः केवलं भगवच्छारीरतेजः समीक्षका अतो भगवन्तं निरवयं ब्रुवन्ति तेन सदा दिव्यावयवो भगवान्न निरवयव इति भावः ॥ ७ ॥ किञ्च । भगवतो निरवयववत्वसावयवत्वोक्तौ कोटिद्वयमस्ति । तत्रैका कोटिस्तु केवलभगवत्तेज उक्त्या तस्य निरवयत्वं तेज आश्रयिणो भगवत उक्त्या तस्य सावयवत्वमिति । द्वितीया कोटिस्तु भगवतो मायिकामायिकावयवत्वोक्त्या निरवयवत्वसावयवत्वे इति । तत्र द्वितीयकोट्या तस्य सावयवत्वनिरवयवत्वे तावदाह सप्तभिः ।

तमुवाच हरिः साधो ! भगवान्साङ्गकः सदा । भूरितेजोदिव्यमूर्तिरस्तीत्येव मतं हि सत् ॥ ६ ॥ सच्चिदानन्दरूपं यत्पूर्णं ब्रह्मास्ति सर्वतः । तेजस्तस्यैव तज्ज्ञेयं निःप्रतिकमनावृतम् ॥ ७ ॥ स ऐक्षतेति श्रुत्युक्तं सर्गादौ प्रकृतीक्षणम् । निःप्रतीकस्य कृष्णस्य क्वापि नैवोपपद्यते ॥८॥ यस्य चक्षु र्भवेत्तस्य स्युरङ्गान्यपराण्यपि । कृष्णः साङ्गक एवेति ततो ज्ञेयो विचक्षणैः ॥९॥ शास्त्रे यत्र निःप्रतीको भगवान्वर्णितो भवेत् । स तु प्राकृतदोःपादाद्यङ्गाभावात्तथोदितः ॥१०॥ साङ्गको वर्णितो यत्र भवेच्छास्त्रे स तत्र च । दिव्यविग्रहता तस्य ज्ञेयाऽमायिकता तथा ॥ ११ ॥

स इति । स ऐक्षतेति श्रुत्युक्तं स ऐक्षतेत्येवंविधया श्रुत्या कथितम् । सर्गादौ सृष्ट्यारम्भे । प्रकृतीक्षणं पुरुषरूपेण । कृतं मायासमीक्षणम् । निःप्रतीकस्य निरवयवभगवतः । क्वापि कदाचिदपि । नैव । उपपद्यते । नैव घटते इत्यर्थः ॥८॥ यस्येति । यस्य । चक्षुः समीक्षणसाधनं नेत्रम् । भवेत् । तस्य । अपराणि अन्यानि । अङ्गानि करचरणोदराद्यवयवा अपि । स्युः । ततो हेतोः । विचक्षणैः । कृष्णः । साङ्गक एवास्ति । इत्यमुना प्रकारेण । ज्ञेयः ॥ ९ ॥ शास्त्र इति । यत्र यस्मिन् । शास्त्रे । भगवान् । निःप्रतीकः अचक्षुः श्रोत्रं तदपाणिपाद'मित्यादिश्रुतिभिरवयवर्जितः । वर्णितः । भवेत् । तत्र शास्त्रे तु । प्राकृतदोःपादाद्यङ्गाभावात् । मायिककरचरणाद्यङ्गरहितत्वात् । स भगवान् । तथा निःप्रतीकः । उदितः ॥ १० ॥ साङ्गक इति । यत्र । शास्त्रे । स भगवान् । साङ्गकः 'सत्पुण्डरीकनयनं मेघाभं वैद्युताम्बरम्' । 'द्विभुजम्' । 'तस्य कप्यासं पुण्डरीकमिवाक्षिणी' । 'पुरुषो ह वै नारायणः' । 'परात्परं पुरुषमुपैति' । 'आत्मैवेदमग्र आसीत्पुरुषविधः' । 'तेनेदं पूर्णं पुरुषेण सर्वमित्यादिश्रुतिसहस्रप्रतिपादितसदातनदिव्यावयवसहितः । वर्णितः । भवेत् । तत्र शास्त्रे । तस्य भगवतः । दिव्यविग्रहता सदा सुन्दरशरीरवत्वम् । तथा । अमायिकता मायिकभाववर्जितत्वम् । ज्ञेया ॥ ११ ॥

एकस्यैव भगवतो निरवयवत्वं सावयत्वं च वदन्तीनां श्रुतीनामविरोधं वक्तुं पुनरप्युक्तार्थमेव स्पष्टमाह त्रिभिः । निषेध इति । यत्र । सच्छास्त्रे । हरेः । अङ्गानां पाणिपादाद्यवयवानाम् । निषेधः । कृतः । स्यात् । स तदङ्गनिषेधस्तु । प्राकृतानां मायिकसत्त्वादिगुणकार्यजन्यानामङ्गानाम् । ज्ञेयः । दिव्यानामप्राकृतानां स्वतःसिद्धानां हरेरङ्गानाम् । निषेधस्तु । कुत्रचित्कस्मिंश्चिदपि सच्छास्त्रे । न ज्ञेयः । कृतो न भवतीति ज्ञेयमित्यर्थः ॥ १२ ॥ यत्रेति । यत्र सच्छास्त्रे । साङ्गकशब्देन । भगवतः । पाणिपादमुखादिभिः । अवयवैः । सहितत्वम् । प्रोक्तम् । भवेत् । हि ॥ १३ ॥ तदिति । निःप्रतीकशब्देन । तद्धीनत्वम् । इति च भगवतः पाणिपादाद्यवयवरहितत्वं चेत्येवं प्रोक्तम् भवेत् । तत्र शास्त्रे तु । अप्राकृतैरमायिकैः । दिव्यैः सनातनसुन्दरैः । अङ्गैः । विशिष्टः सर्वदा युक्तः । कृष्णः । उच्यते । अस्यायं भावः । यत्रैकदैवैकस्य हरेः सावयवत्वनिरवयवत्वोक्तिर्भवेन् न तत्रारोपिताः काल्पनिका अवयवा बोध्याः, भगवतः सर्वदा दिव्यमनोहरपुरुषाकारस्य श्रुतिसहस्रसिद्धत्वादिति । इति द्वयोरेकसम्बन्धः ॥ २४ ॥ अथ प्रथमकोट्या भगवतो निरवयवत्वे आह त्रिभिः । तदिति । यत् । तदङ्गतेजः सदा दिव्यमूर्त्तेः कोटिकोट्यर्कचन्द्राग्निभास्वरस्य भगवतो मूर्त्तिस्थं

निषेधो यत्र चाङ्गानां सच्छास्त्रे स्यात्कृतो हरेः । स तु ज्ञेयः प्राकृतानां दिव्यानां तु न कुत्रचित् ॥ १२ ॥ यत्र साङ्गकशब्देन पाणिपादमुखादिभिः । सहितत्वं ह्यवयवैः प्रोक्तं भगवतो भवेत् ॥ १३ ॥ तद्धीनत्वं निस्प्रतीकशब्दे-नेति च तत्र तु । अङ्गैरप्राकृतैर्दिव्यैर्विशिष्टः कृष्ण उच्यते ॥१४॥ तदङ्गतेजो यत्तत्तु निरङ्गं बृहदुच्यते । तत्राभेद-विवक्षैव तयोर्ज्ञेया विचक्षणैः ॥ १५ ॥ जलं यथा निस्प्रतीकं साङ्गोऽस्ति वरुणोऽमरः । यथा ज्वाला निस्प्रतीका साङ्गोऽस्त्यमिश्च देवता ॥ १६ ॥ यथा चार्कः सप्रतीक आतपोऽस्ति निरङ्गकः तथा कृष्णः सप्रतीकस्तेजो ब्रह्म-निरङ्गकम् ॥ १७ ॥ सर्वान्वयेन सर्वेषां नियन्तृत्वान्महोऽपि तत् । मूर्त्तवत्कार्यकारित्वादमूर्त्तमपि मूर्त्तवत् ॥ १८ ॥

तेजः । तत्तेजस्तु । बृहद्ब्रह्मसंज्ञम् । निरङ्गमिति च । उच्यते । जीवेश्वरादिषु तत्तत्कर्मफलप्रदानतत्तथाविधस्थित्यवनार्थमन्तर्यामितयावस्थितं भगवन्मूर्त्तिस्थं तेज एव निरवयवं ब्रह्म कथ्यते इत्यर्थः । तत्रैवंविधया निरवयवत्वोक्तौ । तयोस्तेजस्तेजस्विनोः भगवतस्तत्तेजसश्चेत्यर्थः । अभेदविवक्षा अपृग्भावकथनेच्छैव । विचक्षणैः । ज्ञेया ॥ १५ ॥ एतदेव दृष्टान्तोक्तिपूर्वं स्पष्टमाह द्वाभ्याम् । जलमिति । यथा जलं वरुणशरीरधारं नीरम् । निःप्रतीकम् । अस्ति । अमरः स्वलोकावस्थितो देवस्वरूपो जलाधारः । वरुणः । साङ्गः । अस्ति यथा वा । ज्वाला अग्निशरीरधारा अर्चिः । निःप्रतीका । अस्ति । देवता स्वलोकावस्थितो देवस्वरूपो ज्वालाधारः अग्निः । साङ्गः । अस्ति ॥ १६ ॥ यथेति । यथा वा । आतपः अर्कशरीराधारः प्रकाशः । निरङ्गकः । अस्ति । अर्कः स्वलोकावस्थितो देवस्वरूपः प्रकाशाधारः सूर्यः । सप्रतीकः । अस्ति । तथा । ब्रह्म ब्रह्मस्वरूपम् । तेजः श्रीकृष्णमूर्त्त्याधारं महः । निरङ्गकम् । अस्ति । कृष्णः स्वब्रह्मपुरधाम्नि सदावस्थितो दिव्य-स्वरूपस्तेजस आधारः श्रीकृष्णो भगवान् । सप्रतीकः । अस्ति ॥ १७ ॥ ननु निरवयवस्य तन्महसः सर्वकर्मफलप्रदाननियमनादिकार्यं कथमुपपद्यते इति चेदत्रोच्यते ।

सर्वेति । सर्वान्वयेन सर्वेषु जीवेश्वरादिषु अन्वयतयावस्थानेन । सर्वेषां जीवेश्वरादीनाम् नियन्तृत्वाद्यथोचितं कर्मफलप्रदानपूर्वं स्थितिनियमनकर्तृत्वाद्धेतोः । तत् । महः श्रीकृष्णाङ्गतेजोऽपि । मूर्त्तवत् । मूर्त्तिमतातुल्यम् । कार्यकारित्वान्नियमनादिकर्मकर्तृत्वात् । अमूर्त्तं निरवयवं सदपि । मूर्त्तवन्मूर्त्तिमदिव । ज्ञेयम् । 'मूर्त्तं स्यात्त्रिषु मूर्छाले कठिने मूर्त्तिमत्यपी'ति मेदिनी ॥ १८ ॥ तस्मादिति । हे मुने ! । तस्माद्धेतोः । कृष्णः । नित्यसिद्धदिव्यावयववान् । अस्ति । इतीत्थम् । ज्ञात्वा । भक्तैः सदा । उपास्यो भजनीयः । अयम् । सिद्धान्तः । मन्मतः श्रुत्यादिपर्यालोचनया मत्सम्मतः । अस्ति । बहुश्रुतिस्मृतिसम्मत–मन्मत–सिद्धान्तानुसारिणां मतं सत्तद्विरुद्ध-मतानुसारिणां मतमसदिति प्रश्नोत्तराशयो बोध्यः ॥ १९ ॥ इतीति । इतीत्थंभूतम् । श्रीहरेः । वचोऽमृतम् । निपीय । सः । मुनिर्गोपालानन्दः साधुः । तच्छ्रीहरिवचो-ऽमृतम् । सत्यं यथार्थम् । इतीत्थम् । अवैत् ज्ञातवान् । अन्ये सकलसाधवः । तज्जनाः सभोपविष्टाः श्रीहर्याश्रिता गृहिजनाश्चापि । मुदम् । उपेत्य प्राप्य । प्रभुम् । तं श्रीहरिम् । प्राणमन् नमश्चक्रुः ॥ २० ॥ स्वस्य ब्रह्मपुरे धाम्नि सदा दिव्याकृतेः स्फुटम् । निरूपणं कृतं येन स उपास्योऽस्तु मे हरिः ॥ १ ॥ इति श्रीमदेकान्तिक-

तस्मात्कृष्णो नित्यसिद्धदिव्यावयववानिति । ज्ञात्वोपास्यः सदा भक्तैः सिद्धान्तो मन्मतोऽस्त्ययम् ॥ १९ ॥ इति वचो-ऽमृतं श्रीहरेर्मुनिः स तु निपीय तत्सत्यमित्यवैत् । सकलसाधवोऽन्ये च तज्जना मुदमुपेत्य तं प्राणमन् प्रभुम् ॥२०॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते पञ्चचत्वारिंशस्तरङ्गः ॥४५॥

शकाब्दे विक्रमार्कस्य रसाश्ववसुभूमिते । एकादश्यां तपःशुक्ले वचोऽमृतमिदं हरेः ॥ १ ॥
तत्र दुर्गपुरे दुर्ग उत्तमस्य गृहान्तिके । हरेर्वेद्यां न्यषीदत्स सितवासा वरासने ॥ २ ॥
भक्तसङ्घैः परिवृतं नत्वा तं दक्षिणाननम् । विप्रः पप्रच्छ वेदान्ती प्रश्नं माहेश्वराह्वयः ॥ ३ ॥

धर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्पद्मनुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां पञ्चचत्वारिंशस्तरङ्गः ॥ ४५ ॥

लयोत्पत्ती न चिद्व्योम्नो भवतो भौतिकस्य ते । वियतश्चेति सुस्पष्टं षट्चत्वारिंशके स्मृतम् ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८७६) तपः-शुक्ले माघमासस्य शुक्लपक्षे । एकादश्यां तिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमस्य नृपतेः । दुर्गे । हरेः श्रीवासुदेवस्य । गृहान्तिके मन्दिरसमीपे । वेद्याम् । वरासने स्वास्तृतोत्तममश्वासने । सितवासाः परिहितसकलश्वेतवसनः । स श्रीहरिः । न्यषीदत्स्वावासादागत्यापरा-ह्णक्षणे उपविष्टवान् ॥ २ ॥ भक्तेति । भक्तसंघैर्नानादेशागतैः स्वभक्तत्यागिगृहिवृन्दैः । परिवृतं सभायां संवेष्टितम् । दक्षिणाननम् । तं श्रीहरिम् । नत्वा । वेदान्ती पठितशङ्करमतानुरोधेन वेदान्तग्रन्थः । माहेश्वराह्वयः राजकूटपुरावासो माहेश्वरनामा । विप्रः । प्रश्नम् । पप्रच्छ ॥ ३ ॥

सर्वस्येति । हे हरे !। समाधौ । सर्वस्यापि । प्रपञ्चस्य देहादिसकलविश्वस्य । विलयः । श्रूयते । तत्र तदा जायमानप्रपञ्चलयसमये । । नभस आकाशस्य । लीनता । कथं केन प्रकारेण । जायते ॥ ४ ॥ तमिति । तमेवं पृच्छन्तं माहेश्वरविप्रम् । हरिः । उवाच । हे ब्रह्मन् ! । त्वत्प्रश्नस्य । उत्तरम् । शृणु । आकाशः । अवकाशात्मकश्छिद्रप्रदातृत्वस्वरूपः । जगदाश्रयः सकलजगदाधारः । प्रोक्तः ॥ ५ ॥ स इति । आकाशश्चापि । भौतिकः । महान् । इत्येवम् । द्विविधः । प्रोक्तः । तत्र तयोर्मध्ये । आद्यो भौतिकाकाशः । सविकारः पृथिव्यादिवाय्वन्तविकारसहितः । तमोरूपो नीलवर्णः । तमसो गुणाज्जनिरुत्पत्तिर्यस्य सः । अस्ति ॥ ६ ॥ अन्य इति । अन्यो महानाकाशस्तु । सर्वतः सर्वस्मिन्प्रकृतिपुरुषतत्कार्यब्रह्माण्डबाह्याभ्यन्तरप्रदेशे । पूर्णः व्यापकः । सर्वाधारः । निराश्रय आत्माधारः । वर्त्तते । स महान् । आकाशः । योगिभिः । चिदाकाशः । इति । प्रोक्तः ॥ ७ ॥ अस्य यत्पूर्णत्वाद्युक्तं तद्विस्तरेणाह त्रयोदशभिः । स इति । स चिदाकाशः । सावरण-ब्रह्माण्डकोटिषु पृथिव्यादिप्रकृत्यन्ताष्टावरणवेष्टित कोटिब्रह्माण्डगोलेषु । व्यापकः पूर्णः । अस्ति । तासां ब्रह्माण्डकोटीनाम् । तिर्यक् परितश्चतुर्दिक्ष्वित्यर्थः । ऊर्ध्वमुपरिभागे ।

सर्वस्यापि प्रपञ्चस्य समाधौ विलयो हरे ! । श्रूयते तत्र नभसो लीनता जायते कथम् ॥४॥ तमुवाच हरिर्ब्रह्मंस्त्वत्प्रश्नस्योत्तरं शृणु । अवकाशात्मकः प्रोक्त आकाशो जगदाश्रयः ॥ ५ ॥ स चापि द्विविधः प्रोक्तो भौतिकश्च महानिति । तत्राद्यः सविकारोऽस्ति तमोरूपस्तमोजनिः ॥६॥ अन्यस्तु सर्वतः पूर्णः सर्वाधारो निराश्रयः । वर्त्तते स चिदाकाश इति प्रोक्तश्च योगिभिः ॥ ७ ॥ स सावरणब्रह्माण्डकोटिषु व्यापकोऽस्ति च । तिर्यगूर्द्ध्वमधो मध्ये बहिस्तासां च संश्रयः ॥८॥ स पदार्थस्तु नास्त्येव न व्याप्तस्तेन योऽमितः । यत्सूक्ष्मेऽणौ च तद्भागेऽप्यस्ति सोऽन्तश्च तद्बहिः ॥९॥ प्रकृतौ पुरुषे चापि ब्रह्माण्डानां स कारणे । तत्कार्येषु च सर्वेषु बहिरन्तश्च वर्त्तते ॥ १० ॥ अवकाशात्मको यर्हि स न चेत्प्रकृतौ भवेत् । पुरुषेक्षाप्तगर्भस्य तर्हि सूतिः कथं ततः ॥ ११ ॥ पुंसः प्राप्तस्य गर्भस्य प्रसवोऽत्र स्त्रिया यथा । तथैव जायते तस्या ब्रह्माण्डस्याखिलस्य हि ॥ १२ ॥

अधोऽधःप्रदेशे । मध्येऽन्तःप्रदेशे च । बहिर्बाह्यप्रदेशे च । संश्रय आधारभूतः । वर्त्तते ॥ ८ ॥ स इति । यः । पदार्थः । तेन चिदाकाशेन । अमितः । न व्याप्तः । स तादृशः पदार्थस्तु । नास्त्येव । यद्यस्मात्कारणात् । स चिदाकाशः । सूक्ष्मे । अणौ सूक्ष्मपरिमाणवति द्व्यणुके इत्यर्थः । तद्भागेऽण्वर्द्धभागे परमाणौ चापि । अन्तरन्तःप्रदेशे । तद्बहिश्च । अस्ति ॥ ९ ॥ प्रकृताविति । ब्रह्माण्डानामसङ्ख्यातानां ब्रह्माण्डगोलानाम् । कारणे । पुरुषे महापुरुषे । प्रकृतौ महामायायां चापि । सर्वेषु । तत्कार्येषु महामायामहापुरुषकार्येषु प्रधानेषु पुरुषेषु । स चिदाकाशः । बहिः । अन्तश्च । वर्त्तते ॥ १० ॥ अवकाशेति । अवकाशात्मकः । स चिदाकाशः । यर्हि । प्रकृतौ प्रधाने । न भवेच्चेत् । तर्हि । पुरुषेक्षाप्तगर्भस्य प्रधानाधिष्ठातृपुरुषवीक्षणसम्प्राप्तमहत्तत्त्वात्मकगर्भस्य । सूतिः प्रसवः । ततः प्रधानप्रकृतेः सकाशात् । कथम् । भवेत् ॥ ११ ॥ प्रधानान्महत्तत्त्वसूर्तिं दृष्टान्तेन विशदयति । पुंस इति । अत्र लोके । यथा । पुंसः पत्युः सकाशात् । प्राप्तस्य । गर्भस्य । प्रसवः । स्त्रियाः

सकाशात् । जायते । तथैव । अखिलस्य प्राग्जातप्रलयतमसाऽप्रतिहितप्रकाशशक्तेः । ब्रह्माण्डस्य ब्रह्माण्डोत्पत्तिहेतोर्महत्तत्त्वस्य । प्रसवः । तस्याः प्रधानप्रकृतेः सकाशात् । जायते ॥ १२ ॥ एवमिति । एवममुना प्रकारेण । स चिदाकाशः । हेतौ महदादिकारणप्रधानपुरुषयोरित्यर्थः । कार्ये तयोः कार्यरूपे । सर्वत्र सर्वस्मिन् । महदादौ च । सर्वतोऽन्तर्बहिः । अस्ति वर्त्तते एव । इतीत्थम् । ज्ञेयम् । अन्यथैवं न स्याच्चेत् । सर्गसम्भवः । न भवेत् ॥ १३ ॥ श्वासेति । देहिनां प्राणिनाम् । श्वासोच्छ्वासविमोकोऽपि अनुलोमप्रतिलोमभावेनासुप्रवर्त्तनमपीत्यर्थः । तेन चिदाकाशेन । जायते । अतो हेतोः प्रकाशात्मकः । असौ चिदाकाशः । जगदाधारः । उच्यते ॥ १४ ॥ प्रकृतेरिति । तस्मिंश्चिदाकाशे । वर्त्तमानयोः । प्रकृतेः । पुरुषस्य चापि । क्वापि कदाचित् । विकाशः । क्वापि । सङ्कोचश्च । हरीच्छया । जायते ॥ १५ ॥ साम्प्रतं प्रकृतिपुरुषयोर्विकाशसङ्कोचप्रकारमाह त्रिभिः । कार्येति । कार्यमहङ्कारादिश्च कारणं महत्तत्वादिश्च तयोः रूपं स्वरूपं तेन । प्रकृतेः कारणान्महत्तत्वं कार्यं तस्मात्कारणादहङ्कारः कार्यं तस्मात्त्रिविधात्कारणाद्यथोत्तरं भूतेन्द्रियदेवतारूपाणि कार्यकारणानीत्येवं चतुर्विंशति तत्त्वात्मकजीवेश्वरदेहोद्भव इत्येवं रूपेणेत्यर्थः । प्रकृतेः । विकाशः । मतः ।

एवं सर्वत्र सोऽस्त्येव हेतौ कार्ये च सर्वतः । महदादाविति ज्ञेयं नान्यथा सर्गसम्भवः ॥ १३ ॥
श्वासोच्छ्वासविमोकोऽपि देहिनां तेन जायते । अतोऽसौ जगदाधारः प्रकाशात्मकः उच्यते ॥ १४ ॥
प्रकृतेः पुरुषस्यापि तस्मिन्वै वर्त्तमानयोः । विकाशो जायते क्वापि सङ्कोचश्च हरीच्छया ॥ १५ ॥
कार्यकारणरूपेण विकाशः प्रकृतेर्मतः । तत्तदन्तर्यामितया विकाशः पुंस उच्यते ॥ १६ ॥
कृष्णेच्छया वा कालेन ब्रह्माण्डविलये सति । पुरुषाङ्गे तरोभावः सङ्कोचः प्रकृतेर्मतः ॥ १७ ॥
तदा पुंसः स्वस्वरूपस्थितिः सङ्कोच उच्यते । कूर्माङ्गानामिवैतौ च तत्र ज्ञेयो हरीच्छया ॥ १८ ॥
अन्वयो व्यतिरेकश्च प्रकृतौ प्राकृतेषु च । पुरुषस्यव भवतो न तस्यैषां भवे लये ॥ १९ ॥

पुंसः पुरुषस्य । विकाशस्तु । तत्तदन्तर्यामितया तेषां तेषामुक्तविधानां प्रकृत्युत्पन्नानां महदहङ्कारादितत्त्वानामन्तर्यामिशक्तिभावेन । उच्यते ॥ १६ ॥ कृष्णेति । अथानन्तरम् । कृष्णेच्छया हेतुना । कालेन । ब्रह्माण्डविलये सति । पुरुषाङ्गे । प्रकृतेः । तिरोभावः । सङ्कोचः । मतः । एवं प्रकृतेस्तिरोभावस्तस्याः सङ्कोचो मत इत्यर्थः ॥ १७ ॥ तदेति । तदा तस्मिन्प्रलये । पुंसः । स्वस्वरूपस्थितिः स्वस्वरूपपेणावस्थानम् । सङ्कोचः पुरुषस्य सङ्कोचावस्था । उच्यते । कूर्माङ्गानां कच्छपावयवानामिव । एतौ प्रकृतिपुरुषयोः सङ्कोचविकाशौ । तत्र चिदाकाशे । हरीच्छया । ज्ञेयौ ॥ १८ ॥ अन्वय इति । प्रकृतौ । प्राकृतेषु प्रकृतिकार्येषु महदादिषु च । अन्वयः । व्यतिरेकश्च । पुरुषस्यैव । भवतः । प्रकृतितत्कार्येषु पुरुष एवान्वयव्यतिरेकभावं प्राप्नोतीत्यर्थः । एषां प्रकृतितत्कार्याणाम् । भवे उत्पत्तिकाले । लये प्रलयकाले च । तस्य चिदाकाशस्य । अन्वयव्यतिरेकौ । न भवतः ॥ १९ ॥

तत्र हेतुमाह । प्रागिति । प्राक् सकार्यप्रकृतिपुरुषप्रादुर्भावात्प्रथमत एव । विद्यमानस्य । तस्य चिदाकाशस्य । तावन्वयव्यतिरेकौ न सम्भवतः । अण्डानामनेकेषां ब्रह्माण्डानाम् । आविर्भावतिरोभावाश्रयः । स चिदाकाशस्तु । स्थिरः सदैव निश्चलः । वर्त्तते ॥२०॥ कृष्ण इति । यः । पुमान् भगवद्भक्तयोगी पुरुषः । कृष्णप्रसादादेकान्तिकभक्तिप्रसादितश्रीकृष्णभगवदनुग्रहात् । तद्दृष्टिं सर्वत्र चिदाकाशदर्शनहेतुभूताम् । दहरसंज्ञिताम् । विद्याम् । प्राप्नुयात् । स पुमांस्तु । सर्वं सकारणब्रह्माण्डजातम् । ब्रह्मचिदाकाशरूपमेव । पश्यति । चिदाकाशमयदृष्टित्वाद्वस्तुतः सदपि सकारणब्रह्माण्डादिकं किमपि न पश्यतीति भावः ॥ २१ ॥ एवमिति । एवंभूतस्य । अनादेश्च । अस्य चिदाकाशस्य । जनुर्लयावुत्पत्तिप्रलयौ । कचित्कदाचिदपि । वक्तुम् । नैव । शक्यौ । तौ जनुर्लयौ तु । भौतिकस्य भौतिकाकाशस्यैव पञ्चभूतान्तर्गताकाशस्यैवेत्यर्थः । कीर्त्तितौ ॥ २२ ॥ तम इति । तमोरूपो नीलवर्णः । यद्वा । कारणगुणाः कार्ये संक्रामन्तीति न्यायाद् ध्वान्तरूपतमोगुणोद्भूतत्वात्स्वयमपि ध्वान्तरूपः । शून्यधर्मा अवकाशस्वरूपतः । सः । भौतिकाकाशः । प्रकाशेन प्रकाशस्वरूपेण । चिता चैतन्यरूपेण च । अप्रतिरुद्धसार्वकालिकज्ञानवता चेत्यर्थः । अनेन चिदाकाशेन । ऐक्यम् ।

प्रागेव विद्यमानस्य तस्य सम्भवतो न तौ । आविर्भावतिरोभावाश्रयोऽण्डानां स तु स्थिरः ॥ २० ॥
कृष्णप्रसादात्तद्दृष्टिं विद्यां दहरसंज्ञितम् । प्राप्नुयाद्यः स तु पुमान् सर्वं ब्रह्मैव पश्यति ॥ २१ ॥
एवं भूतस्य चानादेरस्य नैव जनुर्लयौ । वक्तुं शक्यौ क्वचित्तौ तु भौतिकस्यैव कीर्त्तितौ ॥ २२ ॥
तमोरूपः शून्यधर्मा सोऽनेनैक्यमुपेत्य वै । प्रकाशेन चिता चाण्डे बहिरन्तश्च वर्त्तते ॥ २३ ॥
अष्टाङ्गयोगाभ्यासेन कृष्णस्यैवेच्छयाऽथवा । समाधिमाप्नोति पुमांस्तत्रासौ याति लीनताम् ॥ २४ ॥
विकाशस्तस्य तूत्पत्तिः सङ्कोचश्चोदितो लयः । न तु स्वरूपनाशोऽस्य लय इत्यवधारय ॥ २५ ॥
समाधौ जीववृत्तीनां प्रातिलोम्येन वर्त्तने । जायमाने भगवति ब्रह्मतेजोविलासिनि ॥ २६ ॥

उपेत्य । अण्डे ब्रह्माण्डे । अन्तस्तन्मध्यप्रदेशे । बहिस्तस्य बहिर्भूतेषु पृथिव्याद्यावरणेषु च वर्त्तते ॥ २३ ॥ अष्टेति । अष्टाङ्गयोगाभ्यासेन यमनियमादिसालम्बाष्टाङ्गयोगाभ्यसनेन । अथवा । कृष्णस्यैकान्तिकभावोपासितसाक्षात्श्रीकृष्णभगवतः । इच्छयैव । पुमान् । समाधिम् । आप्नोति । तत्र समाधौ । असौ भौतिकाकाशः । लीनतां सङ्कोचभावम् । याति प्राप्नोति ॥ २४ ॥ विकाश इति । तस्य भौतिकाकाशस्य । विकाशः । उत्पत्तिः । उदिता । सङ्कोचः । तस्य । लयः । उदितः । लयस्त्वया पृष्टः समाधावाकाशलयः । अस्य भौतिकाकाशस्य । स्वरूपनाशः । न तु नैवोदितः । वस्तुतस्तु लयशब्देनास्य सङ्कोच एवोदितो ज्ञेय इत्यर्थः । इतीत्थम् । अवधारय त्वं जानीहि ॥ २५ ॥ एतदेव स्पष्टमाहचतुर्भिः । समाधाविति । समाधौ । ब्रह्मतेजोविलासिनी तत्तेजोमयब्रह्मधामस्थानेकमुक्तसभायां विराजमाने इत्यर्थः । भगवति श्रीकृष्णे विषये । जीववृत्तीनां मनःप्राणेन्द्रियप्रकाशकानां जीवस्य वृत्तीनाम् । प्रतिलोम्येन । वर्त्तने । जायमाने सति ॥ २६ ॥

मन इति । पुंसः समाधिमतः पुरुषस्य । मनःप्राणेन्द्रियाणाम् । प्रातिलोम्येन । कर्षणम् । स्फुरितम् । श्रीहरिं प्रति । सहसा तूर्णमेव । जायते । इति द्वयोरेकसम्बन्धः ॥ २७ ॥ नाडीनामिति । तदा तस्मिन् समये एव । वृत्तिव्याप्यानां वृत्तीनां व्यापनार्हाणाम् । वृत्तीनां व्यापनार्थं स्थानभूतानामित्यर्थः । नाडीनाम् । कर्षणम् । जायते । अथानन्तरम् । तत्स्थाकाशो नाडिछिद्रावस्थित आकाशोऽपि । सर्वतः सर्वाभ्यो नाडीभ्यः सकाशात् । सङ्कोचम् । एति प्राप्नोति ॥ २८ ॥ ध्यातुरिति । तदा तस्मिन्समये । ध्यातुः समाधिमतः । पुंसः । देहः । काष्ठवत् । जडोऽचेतनप्रायः । जायते । एषा । आकाशस्य । सङ्कोचावस्था । लय आकाशस्य लीनता । इतीत्थम् । ईर्यते कथ्यते ॥ २९ ॥ इतीति । हे द्विजवर्य ! । इत्यमुना प्रकारेण । ते तव । प्रश्नस्य । उत्तरम् । दत्तम् । त्वत्प्रश्नस्येदमेवोत्तरं भवतीत्यर्थः । यदि । अत्र त्वत्प्रश्नोत्तरे । कश्चित् । संशयः । स्यात् । तर्हि । त्वया । पृच्छाऽनुयोगः । क्रियताम् । इत्यमुना प्रकारेण । वदन्तम् । हरिम् । प्रणम्य । स माहेश्वरो विप्रः । ऊचे ॥ ३० ॥ चिरमिति । हे हरे ! । मे मम । चिरन्तनो बहुकालीनः । संशयः । अद्यास्मिन्दिने । गतो नष्टः । इति

मनःप्राणेन्द्रियाणां च प्रतिलोम्येन कर्षणम् । सहसा जायते पुंसः स्फुरितं श्रीहरिं प्रति ॥ २७ ॥ नाडीनां कर्षणं वृत्तिव्याप्यानां च तदैव हि । जायतेऽथैति सङ्कोचं तत्स्थाकाशोऽपि सर्वतः ॥ २८ ॥ ध्यातुः पुंसस्तदा देहः काष्ठवज्जायते जडः । एषाऽऽकाशस्य सङ्कोचावस्था लय इतीर्यते ॥ २९ ॥ इत्युत्तरं ते द्विजवर्य ! दत्तं प्रश्नस्य कश्चिद्यदि संशयोऽत्र । स्यात्तर्हि पृच्छा क्रियतां त्वयेति वदन्तमूचे स हरिं प्रणम्य ॥ ३० ॥ चिरन्तनो मेऽद्य गतो हि संशयो न पृच्छामत्रेत्यथ तत्सदःस्थिताः । तद्वाक्यमापीय सुधोपमं बुधास्तेऽपि प्रसन्नास्तुतुषुस्तदाऽखिलाः ॥३१॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते षड्चत्वारिंशस्तरङ्गः ॥ ४६ ॥

शकाब्दे विक्रमार्कस्य रसाश्ववसुभूमिते । द्वादश्यां तपसः शुक्ले वचोऽमृतमिदं हरेः ॥ १ ॥

हेतोः । अत्रास्मिन्नर्थे । पृच्छां पुनः प्रष्टव्यार्थः । नास्ति । अथानन्तरम् । सुधोपमम् । तद्वाक्यं श्रीहरिवचनम् । आपीय । तत्सदःस्थितास्तस्यां निषण्णाः । बुधास्त-द्वाक्यार्थविधारणनिपुणाः । अखिलाः । ते त्यागिगृहिजना अपि । तदा । प्रसन्ना निर्मलमानसाः सन्तः । तुतुषुर्महामोदं प्रापुः ॥ ३१ ॥ स्वभक्तानां समाधौ तु यथा-काशस्य लीनता । जायते सा यथा नैव जायते तत्त्वतस्तथा ॥ १ ॥ विप्रप्रश्नोत्तरोक्तौ तां य उवाच सविस्तरम् । स हरिर्ब्रह्मधामेशो भक्तिपुत्रोऽस्तु मद्धृदि ॥ २ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्स्नुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां षड्चत्वारिंशस्तरङ्गः ॥४६॥

य एकान्तिकगुणा धर्मादयस्तेषां तु वर्त्तनम् । सप्तचत्वारिंशकेऽङ्गप्रधानत्वेन वर्णितम् ॥ १ ॥ शकेति । शकेति पूर्वार्द्धे व्याख्यातम् । (१८७६) तपसो माघ-मासस्य । शुक्ले पक्षे । द्वादश्यां तिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥

तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमक्षितिपस्य । दुर्गे । निम्बतरोः । अधस्तात् तस्याधोवर्त्तमानायां वेदिकायाम् । पीठे स्वास्तृतमहार्हमश्वासने । धवलांशुकः परिधृतसकलश्वेतवसनः । स श्रीहरिः । न्यषीदत् स्वावासात्प्रातःकृत्यसमाप्त्यनन्तरमागत्योपविवेश ॥ २ ॥ नानेति । नानादेशीयभक्तौघवृतो नानादेशेभ्य आगतैर्वृन्दशस्त्यागिगृहिस्वभक्तजनैः सभायां संवेष्टितः । स्वयं श्रीहरिः । स्वान् स्वभक्तजनान् । अब्रवीत् । हे भक्ताः! । सर्वे भवन्तः सकला अपि । अवधार्य सर्वदा स्वचेतसि अवधारयितुं योग्यम् । मम । वचः । सादरं यथातथा । शृण्वन्तु ॥ ३ ॥ भक्ता इति । अत्र सत्सङ्गे । विश्रुता विख्याताः । ये । कृष्णस्य । एकान्तिकाः । भक्ताः । सन्ति । तेषु कृष्णैकान्तिकभक्तेषु । इमे वक्ष्यमाणाः । चत्वारः । गुणाः । सर्वथैव । भवेयुः ॥ ४ ॥ धर्म इति । धर्मः स्वधर्मः । ज्ञानमात्मपरमात्मनोर्यथार्थतया वेदनम् । वैराग्यं भगवद्भगवदीयेतरपदार्थेष्वरुचिः । भक्तिः श्रवणादिनवविधासम्पाद्या श्रीकृष्णे दृढा प्रीतिः । इत्येते चत्वारो गुणाः । अतिदुर्लभाः सकलभक्तैरत्यन्तदुष्प्रापाः । सन्ति । यत्र चत्वारोऽप्येते स्युस्तथाविधो भगवत्समानः स एकान्तिकभक्तोऽतिदुर्लभ इति भावः । तेषां गुणानाम् । अङ्गप्रधानभावेन गौणमुख्यभावेन । वर्त्तनं भक्तमानसे प्रवर्त्तनं तु । भवेत् । भगवद्भक्ता एकैकाङ्गप्रधानास्तु भवेयुरेवेत्यर्थः ॥ ५ ॥ अथ गुणानां मुख्यगौणभावेन वर्त्तमानप्रकारमाह । प्रधानेति । श्रीहरेः । भक्तेषु । एकस्मिन् धर्मादिषु चतुर्षु गुणेषु मध्ये यस्मिन्कस्मिंश्चिदेकस्मिन् गुणे । प्रधानभावेन मुख्यत्वेन वर्त्तमाने सति । अपरे तदन्ये । त्रयः । गुणाः । अङ्गभावेन गौणत्वेन । वर्त्तेरन् ॥ ६ ॥ इदानीं धर्माद्येकैकगुणप्रधानानां भगवद्भक्तानां लक्षणानि विवक्षन्नादौ भगवत्तद्भक्तयोः सेव्यसेवकभावसम्बन्धक्रमाहार्द्धेन । सेव्य इति । सर्वेषां भक्तानाम् । कृष्णः । सेव्यः । मतः । तद्भक्तः । सेवकः । मतः । जातित्वादेकवचनम् । तत्र तेषु चतुर्षु भगवद्भक्तेषु मध्ये । यस्य भक्तस्य । धर्मः । प्रधानं मुख्यः । स्यात् । तल्लक्षणम् । ब्रुवे ॥ ७ ॥ निर्दम्भमिति । जातिधर्मेण ब्राह्मणादिस्वस्ववर्णसदाचारेण । संयुता । कृष्णस्य । तदात्मनां श्रीकृष्णस्वरूपैकमानसानाम् । भक्तानां च । निर्दम्भं यथातथा । परिचर्या सेवनम् । इत्येव । तद्धर्मो धर्मप्रधानभगवद्भक्तसदाचारो भवति ॥ ८ ॥

तत्र दुर्गपुरे दुर्गे उत्तमक्षितिपस्य सः । पीठेऽधस्तान्निम्बतरोर्न्यषीदद्धवलांशुकः ॥ २ ॥
नानादेशीयभक्तौघवृतः स्वान्स्वयम ब्रवीत् । शृण्वन्तु सादर सर्वेऽप्यवधार्य वचो मम ॥ ३ ॥
भक्ता एकान्तिका येऽत्र सन्ति कृष्णस्य विश्रुताः । भवेयुस्तेषु चत्वारः सर्वथैव गुणा इमे ॥ ४ ॥
धर्मो ज्ञानं च वैराग्यं भक्तिश्चेत्यतिदुर्लभाः । अङ्गप्रधानभावेन भवेत्तेषां तु वर्त्तनम् ॥ ५ ॥
प्रधानभावेनैकस्मिन्वर्त्तमानेऽपरे त्रयः । अङ्गभावेन वर्त्तेरन् भक्तेषु श्रीहरेर्गुणाः ॥ ६ ॥
सेव्यः कृष्णो हि सर्वेषां तद्भक्तः सेवको मतः । तत्र धर्मः प्रधानं स्याद्यस्य तल्लक्षण ब्रुवे ॥ ७ ॥
निर्दम्भं परिचर्यैव कृष्णस्य च तदात्मनाम् । भक्तानामिति तद्धर्मो जातिधर्मेण संयुता ॥ ८ ॥

शास्त्र इति । तत्प्रधानो धर्मप्रधानः । भक्तः । शास्त्रे श्रीभागवतादौ । धर्मनिष्ठः । इत्यमुना प्रकारेण । ईर्यते । असौ धर्मप्रधानो भक्तः । यथोचितमन्नाशनजलपानादौ स्ववर्णाश्रमधर्मभङ्गो यथा न स्यात्तथेत्यर्थः । कृष्णतद्भक्तसेवायाम् । रतः प्रसक्तः । स्यात् ॥ ९ ॥ कृष्णेति । अस्य धर्मप्रधानभक्तस्य । कृष्णमन्दिरवाट्यादिनिर्माणे श्रीकृष्णसम्बन्धिनां मन्दिराणां वाट्यादीनां वाटिकाकूपवापीतडागादीनां च विरचने । रुचिः प्रीतिः । भवेत् । कृष्णस्य । नैवेद्याय । नानाभोज्यप्रसाधने नानाविधान्नपाकसम्पादने च । रुचिः । भवेत् ॥ १० ॥ कृष्णस्येति । किञ्च । अस्य धर्मप्रधानभक्तस्य । कृष्णस्य । वासे मन्दिरे । सतां तद्भक्तसाधूनाम् । वासे च । लेपसम्मार्जनादिषु गोमयविधानावकरोत्सारणादिक्रियासु । रुचिः । स्यात् । कृष्णभक्तानाम् । पादसंवाहने श्रमापनोदार्थमङ्घ्रिसम्मर्दने च । रुचिः । स्यात् ॥ ११ ॥ श्रुतीति । स धर्मप्रधानो भक्तः । प्रभोः श्रीकृष्णस्य । श्रुतिकीर्त्यर्चनादीनि गुणश्रवणनामकीर्त्तनगन्धादिसमर्चनप्रभृतीति कर्माणि । निश्छद्म निर्दम्भं यथातथा । कुर्यात् । तस्य धर्मप्रधानभक्तस्य । भागवतधर्माढ्ये भागवतधर्मसम्भृते । वर्णाश्रमधर्मसहिता सप्रेमनवधाविधेया भगवतो भक्तिर्भागवतधर्मः स यत्र

शास्त्रे भक्तस्तत्प्रधानो धर्मनिष्ठ इतीर्यते । कृष्णतद्भक्तसेवायां स्याद्रतोऽसौ यथोचितम् ॥ ९ ॥ कृष्णमन्दिरवाट्यादिनिर्माणेऽस्य रुचिर्भवेत् । नैवेद्याय च कृष्णस्य नानाभोज्यप्रसाधने ॥ १० ॥ कृष्णस्य च सतां वासे लेपसम्मार्जनादिषु । रुचिः स्यात्कृष्णभक्तानां पादसंवाहनेऽस्य च ॥ ११ ॥ श्रुतिकीर्त्यर्चनादीनि कुर्यान्निश्छद्म स प्रभोः । तस्य शास्त्रे भागवतधर्माढ्येऽति रुचिर्भवेत् ॥१२॥ शक्नुयान्न च स स्थातुमेतेष्वेकतमं विना । धर्म्येवं लक्षणैर्ज्ञेयो ज्ञानवन्तमथो ब्रुवे ॥ १३ ॥ स हि सन्मात्ररूपेण वर्त्तेताजस्रमात्मना । कृष्णं चेयात्सर्वपरं निर्दोषं दिव्यविग्रहम् ॥ १४ ॥ वार्त्तां तदाश्रयां कुर्यात्तच्छास्त्रे चानुरागवान् । सन्मात्रवृत्तिविक्षेपासहिष्णुप्रकृतिश्च सः ॥ १५ ॥

प्रचुरं वर्णितो भवेत्तथाभूते इत्यर्थः । शास्त्रे । अतिरुचिस्तच्छ्रवणवाचनादावतिशयिता प्रीतिः । भवेत् ॥ १२ ॥ शक्नुयादिति । स धर्मप्रधानो भक्तः । एतेषूक्तविधेषु कर्मसु मध्ये । एकतमं विनोक्तविधभगवन्मन्दिरनिर्माणादिकर्मान्यतमानुष्ठानमृते इत्यर्थः । स्थातुं स्वदेहधारणं कर्त्तुम् । न च नैव । शक्नुयात् । एवंलक्षणैरित्थंभूतैर्लक्ष्मभिः । धर्मी धर्मप्रधानो भक्तः । ज्ञेयः । अथो अनन्तरम् । ज्ञानवन्तं ज्ञानप्रधानं भगवद्भक्तम् । ब्रुवे लक्षणैः कथयामि ॥ १३ ॥ स इति । स ज्ञानप्रधानो भक्तः । अजस्रं निरन्तरम् । सन्मात्ररूपेण निरुपाधिना । आत्मना स्वस्वरूपेण । वर्त्तेत । देहत्रयातिरिक्तं तत्प्रकाशकं ज्ञानस्वरूपं स्वात्मानं निश्चित्य देहाद्युपाधयमिमानवर्जमात्मभावेनैव सदा वर्त्तेतेत्यर्थः । कृष्णं च सर्वपरं स्वरूपस्वभावगुणादिभिरक्षरादिभ्योऽप्यत्यन्तमुत्कृष्टम् । निर्दोषमतिशुद्धम् । 'स शुद्धः सर्वे शुद्धेभ्य'इति स्मृतेः । दिव्यविग्रहमतिरमणीयमूर्त्तिम् । ईयाज्जानीयात् ॥ १४ ॥ वार्त्तामिति । स ज्ञानप्रधानो भक्तः । तदाश्रयामात्मपरमात्मशुद्धस्वरूपप्रतिपादिनीम् । वार्त्ताम् । कुर्यात् । किञ्च । तच्छास्त्रे आत्मपरमात्मशुद्धता प्रतिपादके सच्छास्त्रे । अनुरागवान् प्रीतिमान् । सन्मात्रेण सत्तामात्रेणात्मना वृत्ति वर्त्तनं तत्र यो विक्षेपस्तं न सहते तच्छीला प्रकृतिः स्वभावो यस्य स तथाश्चापि । भवेत् ॥ १५ ॥

एवमिति । एवममुना प्रकारेण । ज्ञानप्रधानः । यः । कृष्णभक्तः । सः । ज्ञाननिष्ठः । कीर्त्यते । अथानन्तरम् । वैराग्यप्रधानं कृष्णभक्तम् । लक्षणैः । वच्मि ॥ १६ ॥ कृष्णेति । यस्य वैराग्यप्रधानभक्तस्य । सर्वेषु । कृष्णेतरपदार्थेषु श्रीकृष्णतद्भक्तभिन्नवस्तुषु । सदैव । अरुचिश्चतुर्विधप्रलयावश्यविनाशित्वरूपतद्गतदोषदर्शनजन्याऽप्रीतिः । मुख्या । भवेत् । स वैराग्यप्रधानः । भक्तः । वैराग्यनिष्ठः । प्रकीर्त्यते ॥ १७ ॥ मलेति । तस्य वैराग्यप्रधानभक्तस्य । त्यक्तगेहादेः परित्यक्तममताश्रयगृहक्षेत्रकलत्रपुत्रादेः । मलवत्पुरीषोत्सर्गसमये परित्यक्तस्य मलस्येव । विस्मृतिः । सर्वदा । स्यात् । स वैराग्यप्रधानो भक्तश्च । धरातले । त्यागिनां वैराग्यवतां भगवद्भक्तानाम् । सङ्गमेव । कुर्यात् ॥ १८ ॥ त्यागेति । स वैराग्यप्रधानो भक्तस्तु । कृष्णस्य । भक्तिमपि । त्यागाविरोधिनीम् । आचरेत् । श्रीकृष्णप्रतिमास्नापनादिकमपि मृत्काष्ठालाबूपात्रैस्तन्नैवेद्यं च पत्रपुष्पफलादिभिः कुर्यादित्येवं स्ववैराग्यानुसारिणीं भक्तिं स विदध्यादित्यर्थः । त्यागप्रधानवार्त्तां च । आचरेत् । त्यागशास्त्रे वैराग्यप्रधानग्रन्थे । रुचिः श्रवणवाचनादिप्रीतिर्यस्य स तथाभूतश्च । भवेत् ॥ १९ ॥ अरुचिरिति । तस्य वैराग्यप्रधानभक्तस्य । इह लोके । त्यागिविरोधिनः स्ववैराग्यविरोधकस्य । वैषयिकस्य मायिकपञ्चविषयसम्बन्धिनः । पदार्थस्य स्वादुभोज्यसद्वस्त्रादेर्वस्तुनः । सम्प्राप्तौ तु । अतितराम् । अरुचिः । स्यात् ॥ २० ॥ एवमिति । एवममुना प्रकारेण । वैराग्यवान् वैराग्यप्रधानो भक्तः । ज्ञेयः । अथानन्तरम् । भक्तिप्रधानो भक्तः । कथ्यते । अस्य भक्तिप्रधानस्य भक्तस्य । कृष्णस्वरूपे एव । एका केवला । दृढतरा । प्रीतिः । भवेत् । हि ॥ २१ ॥ तत इति । स भक्तिप्रधानो भक्तः । ततः कृष्णस्वरूपात् । अन्यत्रान्यस्मिन् पदार्थे तु । स्ववृत्तिं स्वमनोवृत्तिम् । धातुमारोपयितुम् । नैव क्षमेत नैव समर्थः स्यात् । कृष्णम् । वासोऽलङ्कारधारणम् । प्रेम्णाऽतिस्नेहेनैव कारयेत् ॥ २२ ॥ कृष्णेति । अस्य भक्तिप्रधानभक्तस्य । कृष्णमानुष्यचरित्रश्रवणे श्रीकृष्णेन मनुष्यभावेन कृतानां येषां केषाञ्चिच्चरित्राणामाकर्णने । भृशमतिशयिता । रुचिः । भवेत् । कृष्णमूर्त्तिनिरूपणे निरतिशयलावण्याश्रयमनोहरावयववच्छ्रीकृष्णाङ्गनिरूपके । शास्त्रे श्रीमद्भागवतादिग्रन्थेऽपि । तथैव भृशं रुचिः । भवेत् ॥ २३ ॥

एवं ज्ञानप्रधानो यो ज्ञाननिष्ठः स कीर्त्यते । कृष्णभक्तोऽथ वैराग्यप्रधानं वच्मि लक्षणैः ॥ १६ ॥ कृष्णेतर पदार्थेषु सर्वत्रैवारुचिः सदा । यस्य मुख्या स वैराग्यनिष्ठो भक्तः प्रकीर्त्यते ॥ १७ ॥ मलवत्त्यक्तगेहादेर्विस्मृतिस्तस्य सर्वदा । स्याच्च स त्यागिनामेव सङ्गं कुर्याद्धरातले ॥१८॥ त्यागाविरोधिनीं भक्तिं कृष्णस्याप्याचरेत्स तु । त्यागप्रधानवार्त्तां च त्यागशास्त्ररुचिर्भवेत् ॥ १९ ॥ अरुचिः स्यादतितरां तस्य त्यागिविरोधिनः । पदार्थस्य तु सम्प्राप्ताविह वैषयिकस्य च ॥२०॥ एवं वैराग्यवान् ज्ञेयो भक्तिमानथ कथ्यते । कृष्णस्वरूप एवैका प्रीतिर्दृढतराऽस्य हि ॥ २१ ॥ ततोऽन्यत्र स्ववृत्तिं तु धातुं नैव क्षमेत सः । प्रेम्णैव कारयेत्कृष्णं वासोलङ्कारधारणम् ॥ २२ ॥ कृष्णमानुष्यचरितश्रवणेऽस्य रुचिर्भृशम् । भवेत्तथैव शास्त्रेऽपि कृष्णमूर्तिनिरूपणे ॥ २३ ॥

प्रीतिरिति । तेषां भक्तानाम् । कृष्णानुरागितां श्रीकृष्णस्वरूपे प्रीतिमत्ताम् । दृष्ट्वैव । तस्य भक्तिप्रधानभक्तस्य । भक्तेषु श्रीकृष्णोपासकेषु । प्रीतिः । स्यात् । येषां श्रीकृष्णभक्तानां स्वस्येव स्वत उत्कृष्टानामिव वा श्रीकृष्णेऽनुरागिता स्यात्तां संवीक्ष्यायं तेषु स्निह्यतीत्यर्थः । अन्यथा कृष्णानुरागितामदृष्ट्वा तु । आत्मपुत्रादावपि । कचित्कदाचिदपि । प्रीतिः । न स्यात् ॥ २४ ॥ कृष्णेति । अस्य भक्तिप्रधानभक्तस्य । कृष्णसम्बन्धिनीषु । क्रियास्वेव । नित्यदा । प्रवृत्तिः । स्यात् । इत्येवंलक्षणः । पूरुषो भक्तिप्रधानभक्तः । भक्तिनिष्ठः प्रोक्तः । हि ॥ २५ ॥ एवमिति । एवममुना प्रकारेण । अत्र सत्सङ्गे । रमापतेः श्रीकृष्णस्य । चतुर्विधाः । भक्ताः । भवन्ति । तत्र तेषु भक्तेषु मध्ये । यस्य भक्तस्य । यः । गुणो धर्मादिः । मुख्यः । स्यात् । स गुणः । दृढो निश्चलः । कार्यः । तेनेति शेषः । वै निश्चितमेव ॥ २६ ॥ भक्त इति । कोऽपि । भक्तः । मुख्यम् । एकम् । गुणम् । विना । नैव । भवेत् । किन्तु । तस्य भक्तस्य । तदज्ञानात्स्वनिष्ठैकमुख्यगुणस्यावेदनतः । स मुख्यगुणः । व्यभिचारम् । उपैति । स्वनिष्ठगुणेतरगुणवज्जनसङ्गादात्मीयगुणो नश्यति तदीयो नायातीत्येवं स्वगुणव्यभिचारो जायते इत्यर्थः ॥ २७ ॥ तस्मादिति । हे भक्ताः ! ।

प्रीतिर्भक्तेषु तस्य स्यात्तेषां कृष्णानुरागिताम् । दृष्ट्वैव ह्यन्यथा त्वात्मपुत्रादावपि न क्वचित् ॥ २४ ॥
कृष्णसम्बन्धिनीष्वेव क्रियास्वस्य च नित्यदा । प्रवृत्तिः स्यादिति प्रोक्तो भक्तिनिष्ठो हि पूरुषः ॥ २५ ॥
एवं चतुर्विधा भक्ता भवन्त्यत्र रमापतेः । तत्र यस्य गुणो मुख्यो यः स्यात्कार्यः स वै दृढः ॥ २६ ॥
भक्तः कोऽपि भवेन्नैव मुख्यमेकं गुणं विना । किन्तु तस्य तदज्ञानाद्व्यभिचारमुपैति सः ॥ २७ ॥
तस्माद्भवद्भिरपि मे भक्तैः स्वस्वगुणो दृढः । कर्तव्योऽतिप्रयत्नेन स हि श्रेयस्करो मतः ॥ २८ ॥
इत्युक्तास्तेऽप्योमिति तं प्रोचुः सर्वेऽपि सादरम् । नित्यानन्दोऽथ साधुस्तं पप्रच्छ विनयानतः ॥ २९ ॥
चतुर्विधेष्वप्येतेषु गुणदोषविवेचनम् । अस्ति चेत्कथयेत्युक्तो हरिकृष्णस्तमब्रवीत् ॥ ३० ॥

तस्माद्धेतोः । मे मम । भक्तैः । भवद्भिरपि । स्वस्वगुणः स्वकीयस्वकीयमुख्यो गुणः । अतिप्रयत्नेन । दृढः । कर्तव्यः । स बुद्ध्वा सुस्थिरः कार्य इत्यर्थः । हि यतः । स स्वेन दृढीकृतो मुख्यगुणः । श्रेयस्करः । मतः । स्वनिष्ठमुख्यगुणः स्थिरीकृतश्चेद्भगवत्कृपया कालेन तदन्ये गौणगुणा अपि मुख्यभावं प्राप्यैकान्तिकभक्तत्वप्राप्तिहेतवो भविष्यन्त्येवेति भावः ॥ २८ ॥ इतीति । इत्यमुना प्रकारेण । उक्ताः श्रीहरिणा कथिताः । सर्वेऽपि । ते भक्ताः । सादरं यथातथा । तं श्रीहरिम् । ओमिति । प्रोचुः । श्रीहर्युक्तवचनमङ्गीचक्रुरित्यर्थः । अथानन्तरम् । नित्यानन्दः । साधुः । विनयानतो विनयेन प्रणतः सन् । तं श्रीहरिम् । पप्रच्छ ॥ २९ ॥ चक्रुरिति । हे हरे ! । चतुर्विधेषु । एतेषु त्वद्भक्तेषु । चेद्यदि । गुणदोषविवेचनमस्मिन्नयं गुणोऽयं दोष इत्येवं भूतो विवेकः । अस्ति । तर्हि । कथय तं गुणदोषत्विवेकं मह्यं ब्रुहि । इत्यमुना प्रकारेण । उक्तो नित्यानन्दमुनिनानुयुक्तः । हरिकृष्णो भगवान् । तं नित्यानन्दमुनिम् । अब्रवीत् ॥ ३० ॥

एतेषामिति । हे मुने ! । एतेषां पूर्वोक्तचतुर्विधभक्तानाम् । लक्ष्मभूता लक्षणरूपाः । ये । धर्मा धर्मादयो गुणाः । मया । प्रोक्ताः । ते धर्माः । गुणा गुणरूपाः । सन्ति । धर्मनिष्ठादिचतुर्विधभक्तानां यानि लक्षणानि मयोक्तानि तत्तल्लक्षणवत्त्वं तस्य तस्य गुण इत्यर्थः । तद्विपर्ययाः । दोषाः । ज्ञातव्याः । तस्य तस्यैकैकगुणप्रधानस्य भक्तस्य स्वस्वलक्षणभूतगुणतो विपरीतभावो दोष इत्यर्थः ॥३१॥ निर्दोषेति । निर्दोषाणामुक्तविधदोषवर्जितानां सद्गुणानामुक्तधर्मादिशोभनगुणानां यच्चतुष्टयं तेन शालन्ते शोभन्ते तच्छीलाः । ये । भक्ताः भगवत एकान्तिकभक्तजनाः । स्युः । ते भक्ता एव । हरिवत्साक्षाच्छ्रीहरिरिव । श्रितमुक्तिदाः स्वाश्रितानामेकान्तिकप्राप्यमुक्तिप्रदाः । स्युः । इत्येवंविधम् । स्वगुरोः श्रीहरेः । वचोऽमृतम् । निपीय । सदःस्थाः । सकलाः । सन्तो नित्यानन्दादयः साधवः । सकलाः । गृहिणश्च । मुदम् । प्रापुः ॥ ३२ ॥ स्वस्यैकान्तिकभक्तानां गुणा धर्मादयस्तु ये । चत्वारो वर्त्तनं तेषां गौणमुख्यतया स्फुटम् ॥ १ ॥ पृथक् पृथग्लक्षणैस्तु कृपया येन वर्णितम् । स हरिर्मे निजां भक्तिं ददात्वेकान्तिकीं सदा ॥ २ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्स्नुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधा-

एतेषां लक्ष्मभूता ये धर्माः प्रोक्ता मया मुने ! । ते गुणाः सन्ति दोषास्तु ज्ञातव्यास्तद्विपर्ययाः ॥ ३१ ॥ निर्दोषसद्गुणचतुष्टयशालिनो ये भक्तास्त एव हरिवच्छ्रितमुक्तिदाः स्युः । सन्तो वचोऽमृतमिति स्वगुरोर्निपीय प्रापुर्मुदं च सकला गृहिणः सदःस्थाः ॥३२॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते सप्तचत्वारिंशस्तरङ्गः ॥ ४७॥

शकाब्दे विक्रमार्कस्य रसाश्ववसुभूमिते । माघशुक्लत्रयोदश्यां वचोऽमृतमिदं हरेः ॥ १ ॥
तत्र दुर्गपुरे दुर्गे उत्तमक्षितिपस्य सः । पीठोत्तमे निम्बतरोरधस्तात्समुपाविशत् ॥ २ ॥
प्रत्यङ्मुखः श्वेतवस्त्रो नानाभक्तगणावृतः । स्वयमेवाब्रवीद्भक्तान्सर्वान्साधुपुरःसरान् ॥ ३ ॥
भक्तैः प्रतिदिनं प्रातः स्नात्वा कृष्णस्य पूजनम् । कर्त्तव्यमथ पूजान्ते स्तुत्वेदं याच्य ईश्वरः ॥ ४ ॥

सिन्धुटीकायां सप्तचत्वारिंशस्तरङ्गः ॥ ४७ ॥

श्रीहरेः पूजनं कृत्वा तद्भक्तैरनुवासरम् । यत्ततो याच्यमस्त्यष्टचत्वारिंशे तदीरितम् ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् (१८७६) माघशुक्लत्रयोदश्यां माघमासस्य शुक्लपक्षागतत्रयोदशीतिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ दुर्गपुरे । उत्तमक्षितिपस्य । दुर्गे । निम्बतरोः । अधस्तादधोवर्त्तिन्यां वेदिकायाम् । पीठे उत्तमे महार्हाच्छादनादिमतिश्रेष्ठे मञ्चासने । स श्रीहरिः । समुपाविशत् हरेः सायन्तननीराजनान्ते आगत्योपविष्टवान् ॥ २ ॥ प्रत्यङ्ङिति । प्रत्यङ्मुखः पश्चिमास्यः । श्वेतवस्त्रः परिधृतसकलश्वेतवसनः । नानाभक्तगणावृतो नानादेशागतत्यागिगृहिस्वभक्तवृन्दैः सभायां परिवेष्टितः श्रीहरिः । साधुपुरःसरान् साधुमुख्यान् । सर्वान् । भक्तान् । स्वयमेव केनाप्यपृष्टोऽपि स्वत एव । अब्रवीत् ॥३॥ भक्तैरिति । हे सन्तः ! । भक्तैः । प्रतिदिनम् । प्रातः । स्नात्वा । कृष्णस्य ।

पूजनम् । अथ कार्त्स्न्येन । कर्त्तव्यम् पूजान्ते । पूजासमाप्तिनिकटकाले । स्तुत्वा स्तवनं विधाय । ईश्वरः परमेश्वरः श्रीकृष्णः । इदं वक्ष्यमाणम् । याच्योऽभ्यर्थनीयः ॥ ४ ॥ यद्याच्यं तदाह नवभिः । नारायणेति । हे नारायण ! । हे हरे ! । हे स्वामिन् ! । हे शरणागतवत्सल ! । हे कृपासिन्धो ! । हे महाराज ! । मम । शरणमाश्रयो रक्षिता वा । त्वमेव । भवसि ॥ ५ ॥ कामादिति । कामाद् ब्रह्मादित्रपापहारकान्मदनात् । क्रोधान्महामुनीनामप्याजन्मकृततपोऽपहारकात्कोपात् । लोभाद्वसिष्ठमहर्षेरपि वेश्याद्युत्वहेतोरर्थगृध्नुतायाः । मोहाद्देहगेहादावात्मीयत्वोद्भवहेतोर्विपरीतज्ञानात् । देहाभिमानतो गाढमोहजन्याया देहाहंमतेः । ईर्ष्यायाः स्वसमानोत्कर्षासहनलक्षणाया अक्षान्तेः । मत्सरात्स्वसमानोत्तमाधमोत्कर्षासहनलक्षणान्मात्सर्यात् । मानाद् ब्रह्मसूनोः प्रजापतिमुख्यस्य दक्षस्य बस्तास्यता सम्पादकात्स्वस्मिन्पूज्यत्वलक्षणात् । पापकर्मणः पूर्वजन्मकृतपराङ्गनां सङ्गादिपापक्रियायाश्च । द्वितीयचकारात्स्नेहस्वादादिभ्योऽपीति । ज्ञेयम् । माम् । पाहि । एतेषां वश्यो यथा न भूयासं तथा रक्षेत्यर्थः ॥ ६ ॥ प्रत्यहमिति । प्रत्यहं प्रतिदिनम् । तव । भक्तानाम् । सङ्गम् । देहि । दिवानिशमहर्निशम् । असतां वक्ष्यमाणानामसत्पुरुषाणाम् । सङ्गमः । क्वापि

नारायण ! हरे ! स्वामिन् ! शरणागतवत्सल ! । कृपासिन्धो ! महाराज ! त्वमेव शरणं मम ॥ ५ ॥
कामात्क्रोधाच्च लोभाच्च मोहाद्देहाभिमानतः । ईर्ष्याया मत्सरान्मानात् पाहि मां पापकर्मणः ॥ ६ ॥
प्रत्यहं तव भक्तानां सङ्गं देहि दिवानिशम् । असतां सङ्गमः क्वापि स्यात्पाहि तथा सदा ॥ ७ ॥
चतुर्विधा असन्तो हि सन्ति लोकेषु विश्रुताः । कौण्डाश्च नास्तिकाः शाक्ताः शुष्कज्ञानिन इत्यमी ॥ ८ ॥
तत्र सङ्गेन कौण्डानां पारदार्ये रतिर्भवेत् । तत्र ब्रह्मचर्यव्रतं येन सद्यो नश्यति मुक्तिदम् ॥ ९ ॥
सङ्गेन नास्तिकानां तु स्यान्निरीश्वरता हृदि । कर्मणामेव सत्त्वं च भ्रष्टत्वं च सदध्वतः ॥ १० ॥
शक्तानामिह सङ्गेन मद्यमांसाशने नृणाम् । प्रवृत्तिः स्यात्स्वधर्माच्च भ्रष्टत्वमचिरेण हि ॥ ११ ॥

कदाचिदपि । यथा न स्यात् । तथा । सदा । पाहि ॥ ७ ॥ असतो निर्दिशति । चतुर्विधा इति । कौण्डाः । नास्तिकाः । शाक्ताः । शुष्कज्ञानिनः । इत्यमुना प्रकारेण । लोकेषु जनेषु । विश्रुता विख्याताः । अमी । असन्तः । चतुर्विधाः । सन्ति । हि ॥ ८ ॥ एतत्सङ्गेन जायमानमनर्थमाह चतुर्भिः । तत्रेति । तत्र तेषु चतुर्विधेष्वसत्सु मध्ये । कौण्डानाम् । सङ्गेन । पारदार्ये परदारसङ्गे । रतिः प्रीतिः । भवेत् । येन पारदार्येण । मुक्तिदम् । ब्रह्मचर्यव्रतम् । सद्यः । नश्यति । ब्रह्मचर्यस्य-मुक्तिदत्वमुक्तं छान्दोग्ये । 'ब्रह्मलोकं ब्रह्मचर्येणानुविन्दती'ति ॥ ९ ॥ सङ्गेनेति । नास्तिकानाम् । सङ्गेन तु । हृदि । निरीश्वरता कर्मसत्यतोक्तिपूर्वं तत्फलप्रदात्रीश्वराभावज्ञानवत्त्वमित्यर्थः । स्यात् । कर्मणामेव । सत्त्वं सत्यत्वम् । स्यात् । सदध्वनः सच्छास्त्रप्रतिपादितानादिसदाचाराचरणपथात् । भ्रष्टत्वं च स्यात् ॥ १० ॥ शाक्तानामिति । इह लोके । शाक्तानाम् । नृणाम् । सङ्गेन । मद्यमांसाशने । प्रवृत्तिः । स्यात् । स्वधर्माद्वेदप्रतिपादितस्ववर्णाश्रमसदाचारात् । भ्रष्टत्वं च । अचिरेण । स्यात् ॥ ११ ॥

शुष्केति । शुष्कज्ञानवताम् । सङ्गात् । त्वमनादिसिद्धसहजमनोहरलावण्याधारकरपादोदरास्याद्यवयवान् भवांश्च त्वदीया भक्तरक्षार्थं स्वेच्छया धृतास्त्वदवताराश्च तेषामङ्गानि मूर्त्तयस्तेषां खण्डनं युक्तिभिरसत्यत्वप्रतिपादनम् । स्यात् । जीवाः 'अजो नित्यः शाश्वतः' 'ज्ञाज्ञौद्वावजौ' 'नित्यो नित्यानां' 'नात्माश्रुतेर्नित्यत्वा'दिश्रुतिन्यायोक्तनित्यत्वाः क्षेत्रज्ञाश्च ईशाः 'तमीश्वराणां परमं महेश्वर'मित्यादिश्रुत्युक्ता ईश्वराश्च माया 'अजां ध्रुवामजामेका'मित्यादिना नित्यत्वेनोक्ता प्रकृतिश्च तासां मिथ्यात्वं मरीचिकाजलवद्वस्तुतोऽसत्यत्वम् । स्यात् । उपासनभ्रष्टता दर्पणनाशे त्रिम्बप्रतित्रिम्बयोरिवोपाधिनाशे स्वामिसेवकयोरेकत्वज्ञानेनानादिसिद्धमहामुक्ताचरितत्वदुपासनामार्गात् च्युतता च । स्यात् ॥ १२ ॥ चतुरिति । चतुर्विधा सतामुक्तविधानां चतुर्विधानामसत्पुरुषाणाम् । सङ्गात् । ईदृश उक्तविधः । अनर्थापातो महतामनर्थानां प्राप्तिः । भवति । इति हेतोः । हे कृष्ण ! । इह लोके । ततस्तस्माच्चतुर्विधासत्पुरुषसङ्गात् । माम् । सर्वथा । पाहि ॥ १३ ॥ एवमिति । हे सन्तः ! । एवममुना प्रकारेण । तत्पूजकैः श्रीहरिपूजनकर्तृभिः सर्वैर्भक्तैः । भक्तजनेष्टदाता स्वभक्तजनवाञ्छितार्थप्रदः । हरिः । प्रत्यहं प्रतिदिनमेव । याच्यः । इत्येवंविधम् । प्रभोः स्वाश्रिताखिलवाञ्छितार्थप्रदानसमर्थस्य । तस्य श्रीहरेः । वचोऽमृतम् । सदःस्थाः । भक्ताः साधुप्रमुखाः श्रीहरेर्भक्तजनाः । भावे मनसि । दधति स्म ॥ १४ ॥ स्वभक्तैः पूजनं कृत्वा स्वयं प्रार्थ्यो यथाऽन्वहम् । तानुवाच तथा यो मां स हरिः सर्वतोऽवतु ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्सूनुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायामष्टचत्वारिंशस्तरङ्गः ॥ ४८ ॥

शुष्कज्ञानवतां सङ्गात्त्वत्त्वदीयाङ्गखण्डनम् । जीवेशमायामिथ्यात्वं स्याच्चोपासनभ्रष्टता ॥ १२ ॥ चतुर्विधासतां
सङ्गादनर्थापात ईदृशः । भवतीति ततः कृष्ण ! पाहि मामिह सर्वथा ॥१३॥ एवं हरिः प्रत्यहमेव याच्य-
स्तत्पूजकैर्भक्तजनेष्टदाता । इति प्रभोस्तस्य वचोऽमृतं ते भक्ताः सदःस्था दधति स्म भावे ॥ १४ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते अष्टचत्वारिंशस्तरङ्गः ॥ ४८ ॥

शकाब्दे विक्रमार्कस्य रसाश्ववसुभूमिते । माघशुक्लचतुर्दश्यां वचोऽमृतमिदं हरेः ॥ १ ॥
तत्र दुर्गपुरे दुर्गे सन्ध्यायामुत्तमस्य सः । पीठोत्तमे निम्बतरोरधस्तात्समुपाविशत् ॥ २ ॥

एकोनपञ्चाशत्तमे तु मनोवृत्तेर्हरौ धृतिः । न भक्तैर्दुष्करा तस्याः साधनं चेति कीर्त्तितम् ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८७६) माघशुक्लचतुर्दश्यां माघमासस्य शुक्लपक्षागतचतुर्दशीतिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमस्य नृपतेः । दुर्गे । निम्बतरोः । अधस्तादधःप्रदेशवर्त्तिवेदिकायाम् । पीठोत्तमे उत्तमे मञ्चासने । सन्ध्यायां श्रीकृष्णस्य सायन्तननीराजनसमाप्त्यनन्तरीयसमये । स श्रीहरिः । समुपाविशत् ॥ २ ॥

तं विशिनष्टि । पीतेति । पीतपुष्पस्रगापीडान् । दधत् । पौष्पौ पीतपुष्परचिते करस्रजौ करधार्यवलयाकारमालिके । दधत् । सिताम्बरधरः परिहितसकलश्वेत-वसनः । नानाभक्तसङ्घपरिश्रितः नानादेशायातैस्त्यागिगृहिस्वभक्तसमूहैः सभायां परिवेष्टितः ॥ ३ ॥ ब्रह्मानन्द इति । तेन श्रीहरिणा । प्रचोदितः प्रश्नविधानायप्रेरितः । ब्रह्मानन्दो मुनिः । तं श्रीहरिम् । अप्राक्षीत् । हे हरे ! । त्वयि साक्षात्परमेश्वरे भवति । मनोवृत्तेः । धारणे । श्रमः । जायते । भवद्भक्तोऽप्यतिप्रयासेनापि तत्कर्त्तुं न शक्नोतीत्यर्थः ॥ ४ ॥ मायिकेष्विति । हे प्रभो ! । भक्तस्य त्वदुपासकस्यापि । सा मनोवृत्तिः । मायिकेषु । पदार्थेषु तु । स्वयमेवाप्रेरितापि स्वत एव । गच्छति । अत्रास्मिन्नर्थे । कारणम् । वक्तुम् । अर्हसि ॥ ५ ॥ तमिति । तमेवंपृच्छन्तं ब्रह्मानन्दमुनिम् । हरिः । उवाच । हे साधो ! । भक्तस्य । मनोवृत्तिस्तु । रमापतौ श्रीकृष्णे । सदा सर्वकालम् । तिष्ठेत् । अभक्तसदृशस्य भक्तस्य । सा मनोवृत्तिस्तु । रमापतौ । हठादतिबलात्कारतः । तिष्ठेत् ॥ ६ ॥ भक्तस्येति । कृष्णं विना । अन्यतोऽन्यस्मिन्मायिकपदार्थे । मनोवृत्तेः । गतिर्गमनम् । नेति न भवेदिति यत् । एतद्धि एतदेव । भक्तस्य । लक्षणम् । निगमवेदिभिः । प्रोक्तम् । तथा च श्री-

पीतपुष्पस्रगापीडान् दधत् पौष्पौ करस्रजौ । सिताम्बरधरो नानाभक्तसङ्घपरिश्रितः ॥ ३ ॥ ब्रह्मानन्दस्तमप्राक्षी-त्प्रश्नं तेन प्रचोदितः । मनोवृत्तेस्त्वयि हरे ! धारणे जायते श्रमः ॥ ४ ॥ मायिकेषु पदार्थेषु भक्तस्यापि तु सा प्रभो ! । गच्छति स्वयमेवात्र कारणं वक्तुमर्हसि ॥ ५ ॥ तमुवाच हरिः साधो ! मनोवृत्ती रमापतौ । भक्तस्य तु सदा तिष्ठेदभक्तस्य तु सा हठात् ॥ ६ ॥ भक्तस्य लक्षणं ह्येतद्विना कृष्णं तु नान्यतः । मनो-वृत्तेर्गतिरिति प्रोक्तं निगमवेदिभिः ॥ ७ ॥ सांसारिकपदार्थेषु तस्य यन्मनसोर्पणम् । तत्तु दुष्करमेवास्ति हरौ विषयिणामिव ॥ ८ ॥ नानुरागिभवेद्यस्य हरावेवात्र मानसम् । तं भक्त इति को ब्रूयात्समं वैषयिकात्मना ॥ ९ ॥ ब्रह्मानन्दोऽथ तं नत्वा भूयः पप्रच्छ सत्पते । कृष्णे त्वयि मनोवृत्तेर्धारणे किन्तु साधनम् ॥ १० ॥

भागवते । 'त्रिभुवनविभवहेतवेऽप्यकुण्ठस्मृति'रित्यादि ॥ ७ ॥ सांसारिकेति । तस्य भक्तस्य । सांसारिकपदार्थेषु । मनसः । अर्पणम् । यत् । तत्तु । विषयिणां शब्दा-दिमायिकपञ्चविषयासक्तजनानाम् । हराविव । दुष्करमेव । अस्ति ॥ ८ ॥ नेति । अत्र सत्सङ्गे । यस्य भक्तस्य । मानसम् । हरावेव । अनुरागि गाढप्रीतियुक्तम् । न भवेत् । वैषयिकात्मना विषयासक्तजीवेन । समं समानम् । तं भक्तम् । भक्त इति अयं भक्तो भवतीत्येवम् । कः । ब्रूयात् । प्रारब्धभगवद्भक्तेरस्य सद्यः स्वीकृत-शास्त्राध्ययनस्य पण्डितसंज्ञाऽज्ञातव्या भक्त्यर्थमुद्युक्तत्वादतिशयितसत्समागमेनायमप्युक्तविधयथार्थभक्तो भविष्यतीति भावः । भक्तस्यापि मायिकपदार्थेषु स्वतो मनोवृत्ति-गमने यथार्थभक्तत्वाभाव एव कारणमिति प्रश्नोत्तराशयो बोध्यः ॥ ९ ॥ ब्रह्मानन्द इति । अथानन्तरम् । ब्रह्मानन्दो मुनिः । तमेवं वदन्तं श्रीहरिम् । नत्वा । भूयः पुनरपि । पप्रच्छ । हे सत्पते ! । कृष्णे । त्वयि श्रीकृष्णस्य तव मूर्त्तावेव । मनोवृत्तेः । धारणे । साधनम् । किन्तु किं वा भवति । तद्वदेति । शेषः ॥ १० ॥

तमिति । तमेवंपृच्छन्तं ब्रह्मानन्दमुनिम् । हरिः । उवाच । हे मुने ! । तत्र श्रीकृष्णे मनोवृत्तिधारणे । निश्चितम् । साधनम् । शृणु । यस्तु । त्राकृतिः । साक्षात् । भगवान् स्वेन । दृष्टः । भवेत् ॥ ११ ॥ माहात्म्यमिति । आदौ प्रथमतः । तस्य स्वदृष्टभगवतः । माहात्म्यम् । सद्भयस्तन्माहात्म्याभिज्ञसाधुभ्यः । यथातथं यथार्थं यथा भवति तथा वोद्धव्यम् । ततस्तदनन्तरम् । प्रीत्या । वहिर्बाह्यप्रदेशे । अन्तः स्वहृत्पद्मे च । मुहुः । तद्दर्शनं स्वेन यन्माहात्म्यं यथार्थं ज्ञातं तस्य श्रीकृष्णस्य समीक्षणम् । कार्यम् ॥ १२ ॥ एवं तस्य वहिरन्तर्दर्शनमेवान्तर्दृष्टिरित्याह । तदिति । तन्मूर्त्तिः स्वदृष्टश्रीकृष्णस्वरूपम् । निर्निमेषाभ्यां मेषोन्मेषवर्जिताभ्याम् । अक्षिभ्यां नेत्राभ्याम् चिरं बहुकालपर्यन्तम् । वहिः । दृश्या अवलोचनीया । ततस्तदनन्तरम् । । सा तन्मूर्त्तिः । अन्तरे स्वमानसे । धार्या । इत्येषा । अन्तर्दृष्टिः । उदीरिता ॥ १३ ॥ एतयेति । हरिं प्रत्यक्षश्रीकृष्णम् । प्रपन्नस्य भक्तस्य । मनःस्थैर्यं तस्मिन् मनःस्थिरता । एतयान्तर्दृष्टचैव । भवेत् । तपोव्रतजपादिना । अन्येन । साधनेन । न तु नैव भवेत् ॥ १४ ॥ कृष्णमिति । कृष्णं विना एकां प्रत्यक्षश्रीकृष्णमूर्त्तिमृते । निजान्तरे स्वमानसे । तद्धामवीक्षणं भगवतो गोलोकवैकुण्ठादीनां धाम्ना समीक्षणम् ।

तमुवाच हरिस्तत्र साधनं शृणु निश्चितम् । त्राकृतिर्भगवान्साक्षात्स्वेन दृष्टो भवेत्तु यः ॥ ११ ॥ माहात्म्यं तस्य बोद्धव्यमादौ सद्भ्यो यथातथम् । ततस्तद्दर्शनं कार्यं प्रीत्यान्तश्च बहिर्मुहुः ॥ १२ ॥ तन्मूर्तिर्निर्निमेषाभ्यां दृश्याऽक्षिभ्यां चिरं वहिः । ततोऽन्तरे च सा धार्येत्यन्तर्दृष्टिरुदीरिता ॥ १३ ॥ एतयैव मनःस्थैर्यं प्रपन्नस्य भवेद्धरिम् । साधनेन तु नान्येन तपोव्रतजपादिना ॥१४॥ कृष्णं विना तु तद्धामवीक्षणं वा निजान्तरे । षट्चक्रामरवीक्षाऽपि नान्तर्दृष्टिः सतां मता ॥१५॥ अन्तर्बहिर्वा श्रीकृष्णवीक्षैवान्तर्दृशिर्मता । सैवाभ्यस्ता मनःस्थैर्यं कृष्णे कारयति ध्रुवम् ॥१६॥ निशम्य तस्येति वचः स साधुर्गुरोः सुधातुल्यमवाप तोषम् । सभ्याश्च सर्वे गृहिणश्च सन्तस्तं प्राप्ततोषा विनयेन नेमुः ॥१७॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते एकोनपञ्चाशत्तमस्तरङ्गः ॥ ४९ ॥

अथवा । षट्चक्रामरवीक्षा आधारादिषट्चक्रावस्थितगणपत्यादिदेवतासमीक्षणमपि । सतां भगवदेकान्तिकसाधूनाम् । मता । अन्तर्दृष्टिः । न भवति ॥ १५ ॥ अन्तरिति । अन्तः । अथवा । वहिः । श्रीकृष्णवीक्षैव । अन्तर्दशिरन्तर्दृष्टिः । मता । अभ्यस्ता मुहुर्मुहुरभ्यासेन साधिता । साऽन्तर्दृष्टिरेव । कृष्णे । मनःस्थैर्यम् । कारयति । ध्रुवं निश्चितमेव ॥ १६ ॥ निशम्येति । इत्येवंविधम् । सुधातुल्यम् । गुरोः स्वहितोपदेष्टुः । तस्य श्रीहरेः । वचः । निशम्य श्रुत्वा । साधुः । स ब्रह्मानन्दः । तोषम् । अवाप । सभ्याः समीपविष्टाः सर्वे । सन्तः । गृहिणश्च । प्राप्ततोषाः सम्प्राप्तानन्दाः सन्तः । विनयेन तं श्रीहरिम् । नेमुः ॥ १७ ॥ यस्मिन् सदा मनोवृत्तेर्धारणं भक्तलक्षणम् । तदुपायं च यः प्राह स हरिर्मेऽस्तु मानसे ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्पदानुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायामेकोनपञ्चाशत्तमस्तरङ्गः ॥ ४९ ॥

कुशाग्रधिषणानां च स्थूलबुद्धिमतां नृणाम् । पश्चाशत्तम उक्तानि लक्षणानि पृथक् स्फुटम् ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८७६) माघकृष्ण-प्रतिपदि माघस्य कृष्णपक्षागतप्रतिपत्तिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । उत्तमभूभुजः । दुर्गे । सौधस्य तन्मन्दिरस्य । वेद्याम् । पीठोत्तमे मश्चासने । प्रातः प्रातर्विधेयप्रथमाश्रम्युचितसन्ध्यावन्दनादिकर्मसमाप्त्यनन्तरमित्यर्थः । सितांशुकः परिधृतसकलश्वेतवसनः । स श्रीहरिः । न्यपीदत् ॥२॥ वृत इति । सहस्रशो नानादेशागतत्वाद्बहुभिः । भक्तैः । त्यागिभिः । गृहिभिश्च । वृतः सभायां परिवेष्टितः । प्रभुः । स श्रीहरिः । वाचा । सम्प्रीण-यन् । स्ववचनामृतेन स्वकीयानाप्याययन्सन्नित्यर्थः । पुरस्थान्स्वपुरःप्रदेशावस्थितान् । सतः साधून् । अपृच्छत् ॥ ३ ॥ सन्त इति । हे सन्तः ! । यः । पुरुषः । कुशाग्रबुद्धिः । तेन । परम् । ब्रह्म । आप्यते स्वात्मनि स वीक्ष्यते इत्यर्थः । इत्यमेवम् । वेदे । पुराणे । भारतादिषु श्रूयते । हि । तथा च श्रुतिः । दृश्यते त्वग्र्या बुध्येत्यादि ॥ ४ ॥ व्यावहारिकेति । यस्य पुरुषस्य । व्यावहारिककार्येषु । नैपुण्ये कौशल्यम् । अस्ति । स पुरुषः । स कुशाग्रबुद्धिः । किम् । अथवा । यः । शास्त्र-

शकाब्दे विक्रमार्कस्य रसाश्ववसुभूमिते । माघकृष्णप्रतिपदि वचोऽमृतमिदं हरेः ॥१॥ तत्र दुर्गपुरे दुर्गे सौधस्योत्तमभूभुजः ।
वेद्यां पीठोत्तमे प्रातः स न्यषीदत्सितांशुकः ॥२॥ वृत्तः सहस्रशो भक्तैस्त्यागिभिर्गृहिभिश्च सः । सतः पुरःस्थानपृच्छद्वाचा
सम्प्रीणयन्प्रभुः ॥ ३ ॥ सन्तः कुशाग्रबुद्धिर्यस्तेन ब्रह्माप्यते परम् । इति हि श्रूयते वेदे पुराणे भारतादिषु ॥ ४ ॥
व्यावहारिककार्येषु नैपुण्यं यस्य सोऽस्ति सः । किं वा शास्त्रपुराणार्थबोधने निपुणोऽस्ति सः ॥ ५ ॥ इति पृष्टास्तेन
सन्तः कर्तुं शक्तास्तदुत्तरम् । नासन् यदा तदोचुस्ते त्वमेवास्योत्तरं कुरु ॥ ६ ॥ तदाऽब्रवीत्स शृण्वन्तु सर्वेऽस्योत्तरमादरात् ।
स्वश्रेयसे य उद्युक्तः स वै ज्ञेयः कुशाग्रधीः ॥ ७ ॥ लौकिकव्यवहारेषु निपुणा अपि केचन । श्रेयोऽध्वानमनाश्रित्य
यान्त्यन्ते यमयातनाः ॥८॥ तथैव वेदशास्त्रादौ निपुणाः परबोधकाः । अप्यन्ते यान्ति निरयान् श्रेयोवर्त्मानपाश्रयात् ॥९॥

पुराणार्थबोधने । निपुणः कुशलः । अस्ति । स कुशाग्रधीः । किम् ॥ ५ ॥ इतीति । इत्यमुना प्रकारेण । तेन श्रीहरिणा । पृष्टाः । सन्तः साधवः । यदा तदुत्तरम् । कर्त्तुम् । शक्ताः । नासन् । तदा । ते सन्तः । हे हरे ! । त्वमेव । अस्य त्वत्प्रश्नस्य । उत्तरम् । कुरु । इति । ऊचुः ॥ ६ ॥ तदेति । तदा तस्मिन्समये । स श्रीहरिः । अब्रवीत् । हे सन्तः ! । सर्वे भवन्तः । अस्य मत्प्रश्नस्य । उत्तरम् । आदरात् । शृण्वन्तु । यः पुरुषः । स्वश्रेयसे साक्षाद्भगवदेकान्तिकभक्त्या स्वात्यन्तिक-कल्याणाय । उद्युक्त उद्योगे प्रवृत्तः । स वै स पुरुष एव । कुशाग्रधीः । ज्ञेयः ॥ ७ ॥ लौकिकेति । केचन पुरुषाः । लौकिकव्यवहारेषु । निपुणाः कुशाग्रधीत्वात्कुशलाः सन्तोऽपि । श्रेयोऽध्वानं स्वपरमनिःश्रेयसमार्गम् । अनाश्रित्य । अन्ते देहावसाने । यमयातनाः । यान्ति ॥८॥ तथेति । तथैव । वेदशास्त्रादौ वेदशास्त्रपुराणेतिहासार्थवेदने । निपुणाः । परबोधकाः संशयनिवृत्तिपूर्वं तदर्थोपदेष्टारः पुरुषा अपि । श्रेयोवर्त्मानपाश्रयात् स्वपरमनिःश्रेयसाध्वानाश्रयणहेतोः । अन्ते । निरयान् । यान्ति ॥ ९ ॥

अत इति । अतो हेतोः । एते उभयविधा अपि । कुशाग्रधिषणाः । नैव ज्ञेयाः । किन्तु । स्थूलबुद्धयो मुशलाग्रधियः । ज्ञेयाः । यदि । मायिकेषु । नैपुण्यैर्मायिकपदार्थकौशल्यैः । अन्ते । यमयातनाः । भवन्ति । तैर्मायिकेषु नैपुण्यैः । किं कोऽर्थः सम्यक् निष्पन्नो जातः । न कोऽपीत्यर्थः ॥ १० ॥ अत इति । अतो हेतोः । लौकिके लौकिकार्थसम्पादकव्यवहारे । अथवा । वैदिके वेदोक्तकर्मप्राप्यं स्वर्गादिसम्पादकशास्त्रार्थबोधे । धियो बुद्धेः । अतिनैपुण्यम् । अस्तु । अथवा । माऽस्तु । तथाऽपि । यः पुरुषः । स्वस्य । श्रेयसे । यत्त उद्यक्तः । सः । कुशाग्रधीः ॥ ११ ॥ सुधिय इति । सुधियो निपुणमतयः पुरुषाः । प्राकृतलोकवत्पामरजनवत् । यदि । मायिकेषु । पदार्थेषु । सक्ता अनुरक्ताः । भवेयुः । तदा तर्हि । तेषु सुधीषु पुरुषेषु । कोऽपि । विशेषः । प्राकृतेभ्यस्तेषां पृथक्त्वबोधकोऽधिकभावः । नो सम्भवेत् ॥ १२ ॥ येति । गीतायामर्जुनं प्रति श्रीकृष्णप्रोक्ते भगवद्गीताख्ये शास्त्रे । 'या निशा सर्वभूतानाम्' । इत्येतस्मिन् । श्लोके ।

अतः कुशाग्रधिषणा नैवैते स्थूलबुद्धयः किं मायिकेषु नैपुण्यैरन्ते यद्यमयातनाः ॥ १० ॥ अतो धियोऽतिनैपुण्यं लौकिके वाऽस्तु वैदिके । माऽस्तु वा श्रेयसे स्वस्य यो यत्तः स कुशाग्रधीः ॥ ११ ॥ सुधियो मायिकेष्वेव यदि प्राकृतलोकवत् । सक्ताः पदार्थेषु तदा विशेषः कोऽपि तेषु नो ॥ १२ ॥ या निशा सर्वभूतानामितिश्लोकेऽर्जुनं प्रति । उभयेषां विशेषो हि गीतायां हरिणोदितः ॥ १३ ॥ कृष्णभक्तौ स्थूलधियो निष्क्रिया निशि सुप्तवत् । स्युः कुशाग्रधियस्तस्यां जागरूका इवोद्यताः ॥ १४ ॥ तुच्छार्थेषु स्थूलधियो जागरूका इवोद्यताः । स्युः कुशाग्रधियस्तेषु निष्क्रिया निशि सुप्तवत् ॥ १५ ॥ वैधर्म्येणैवमेतेषां द्वयानामपि धीमताम् । विशेषो दर्शितस्तस्मात्कार्ष्णा दर्भाग्रबुद्धयः ॥ १६ ॥ स्वश्रेयसे येऽभिरताः पुमांसस्ते बुद्धिमन्तो ह्यपरे तु मूर्खाः । इति प्रभोर्वाक्यसुधां निपीय सर्वेऽपि भक्तास्तुतुषुः सदःस्थाः ॥ १७ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते पञ्चाशत्तमस्तरङ्गः ॥ ५० ॥

हरिणा श्रीकृष्णभगवता । अर्जुनं प्रति । उभयेषां कुशाग्रबुद्धीनां स्थूलबुद्धीनां च । विशेषो भेदः । उदितः ॥ १३ ॥ अथैतेषां विशेषं दर्शयन् गीताश्लोकाभिप्रायं स्वयमेवाह द्वाभ्याम् । कृष्णेति । निशि रात्रौ । सुप्तवत्प्रसुप्तजना यथा निष्क्रिया भवन्ति तथा । कृष्णभक्तौ श्रीकृष्णैकान्तिकभक्तिविधाने । निष्क्रिया उद्यमवर्जिताः पुरुषाः । स्थूलधियः । स्युः । जागरूका इव जाग्रदवस्थावन्तो जना व्यावहारिके यथा उद्यतास्तथा । तस्यां कृष्णभक्तौ । उद्यताः पुरुषाः । कुशाग्रधियः । स्युः ॥ १४ ॥ तुच्छेति । जागरूका इव । तुच्छार्थेषु मायिकपदार्थेषु । उद्यताः पुरुषाः । स्थूलधियः । स्युः । निशि सुप्तवत् । तेषु तुच्छार्थेषु । निष्क्रियाः । कुशाग्रधियः । स्युः ॥ १५ ॥ वैधर्म्येणेति । एवममुना प्रकारेण । द्वयानां द्विविधानामपि । एतेषाम् । धीमताम् । वैधर्म्येण परस्परविपरीतधर्मत्वेन । विशेषः । दर्शितः । तस्मात्कारणात् । कार्ष्णाः श्रीकृष्णैकान्तिकभक्त्युद्यक्ता एव । दर्भाग्रबुद्धयः कुशाग्रमतयः । भवन्ति ॥ १६ ॥ उक्तार्थानुवादेन प्रकरणार्थं निगमयत्यर्द्धेन । स्वेति । हे सन्तः ! । ये ।

पुमांसः । स्वश्रेयसे भगवदेकान्तिकभक्त्या स्वकीयात्यन्तिककल्याणं कर्त्तुम् । अभिरताः । ते पुमांसः । बुद्धिमन्तः कुशाग्रधियः । सन्ति । अपरे तदन्ये तु । मूर्खाः स्थूलधिषणत्वान्मन्दाः । सन्ति । हि निश्चितमेव । इतीत्थंभूताम् । प्रभोः श्रीहरेः । वाक्यसुधाम् । निपीय । सदःस्थाः । भक्ताः साक्षात् श्रीकृष्णोपासकाः । सर्वेऽपि त्यागिगृहिजनाः । तुतुषुः ॥ १७ ॥ कुशाग्रबुद्धीन्स्वान्भक्तान् स्वाभक्तान् स्थूलधीमतः । यः प्राह स हरिः कुर्यात्कुशाग्रमतिमेव माम् ॥१७॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तक-श्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्सूनुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां पञ्चाशतमस्तरङ्गः ॥ ५० ॥

मायिकैः करणैर्नैव ग्राह्यो हरिरमायिकैः । तैर्ग्राह्यस्त्वेकपञ्चाशत्तम इत्थं समीरितम् ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८७६) माघकृष्णद्वितीयायां माघमासस्य कृष्णागतद्वितीयातिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमक्षितिपस्य । दुर्गे । वहिर्वेद्यां श्रीवासुदेव-मन्दिरनिकटवर्त्तिप्रत्यग्द्वारनृपभवनस्य वहिर्वेदिकायाम् । पीठोत्तमे उत्तमे मञ्चासने । धवलांशुकः परिधृतसकलश्वेतवसनः । स श्रीहरिः । न्यषीदत् श्रीहरिसायन्तनीय-नीराजनान्ते आगत्योपविवेश ॥२॥ नानेति । नानादेशेभ्योऽनेकजनपदेभ्यः आगता ये त्यागिनो गृहिणश्च भक्तास्तेषां गणैर्वृन्दैरावृतः सभायां परिवेष्टितस्तम् । तं श्रीहरिम् ।

शकाब्दे विक्रमार्कस्य रसाश्ववसुभूमिते । माघकृष्णद्वितीयायां वचोऽमृतमिदं हरेः ॥ १ ॥ तत्र दुर्गपुरे दुर्ग उत्तमक्षितिपस्य सः । पीठोत्तमे वहिर्वेद्यां न्यषीदद्धवलांशुकः ॥ २ ॥ नानादेशागतत्यागिगृहिभक्तगणावृत्तम् । पूर्णानन्दस्तमप्राक्षीत्साधुः प्रश्नं पुरःस्थितः ॥ ३ ॥ साक्षात्तेऽक्षरनाथस्य गुणातीतस्य दर्शनम् । चक्षुषा गुणकार्येण निश्चयश्च धिया कथम् ॥ ४ ॥ इति मे संशयं हृत्स्थमपाकर्त्तुं त्वमर्हसि । इति पृष्टस्तेन हरिः साधुना तमभाषत ॥ ५ ॥ मायिकैः करणैर्ग्राह्याः पदार्था मायिकाः खलु । गृह्येत तैर्यदि हरिस्तदाऽसौ मायिको भवेत् ॥ ६ ॥

पुरःस्थितस्तदग्रप्रदेशनिषण्णः । पूर्णानन्दः । साधुः । प्रश्नम् । अप्राक्षीत् ॥ ३ ॥ साक्षादिति । हे स्वामिन् ! गुणातीतस्य मायिकसत्त्वादिगुणरहितस्य । साक्षा-त्प्रत्यक्षतया वर्त्तमानस्य । अक्षरनाथस्य ब्रह्मधामाधिपतेः । ते तव । दर्शनम् । गुणकार्येण मायिकरजोगुणोत्पन्नेन । चक्षुषा गुणातीतसाक्षाद्भवद्वीक्षकभक्तनेत्रेन्द्रियेण । कथम् । भवेत् । धिया मायिकरजोगुणोत्पन्नत्वाद्गुणकार्यभूतया भवद्भक्तमत्या । निश्चयः अयं साक्षाद्भगवानिति निर्णयश्च । कथम् । भवेत् । इमे नेत्रधियौ बहिरन्तरिन्द्रिये अवशिष्टस्वसजातीन्द्रियोपलक्षणम् ॥४॥ इतीति । हे हरे ! । इत्येवंविधम् । हृत्स्थं चिरकालतो मानसस्थम् । मे मम । संशयम् । अपाकर्त्तुं निवर्त्तयितुम् । अर्हसि । इत्यमुना प्रकारेण । तेन । साधुना पूर्णानन्दमुनिना । पृष्टः । हरिः । तं पूर्णानन्दमुनिम् । अभाषत ॥ ५ ॥ तत्प्रश्नाशयमन्यैरविदितं ज्ञात्वा सर्वेषां तद्बोधाय स्वयमेव तं पुष्णाति सपादेन । मायिकैरिति । हे साधो ! । मायिकैर्मायोत्पन्नसत्त्वादिगुणकार्यैः । करणैश्चक्षुर्बुध्यादिवाह्यान्तःकरणैः । मायिका गुणकार्यभूताः । पदार्थाः । ग्राह्या गृहितुं योग्याः । भवेयुः । खलु निश्चितमेव । यदि । तैर्मायिककरणैः । हरिः । गृह्येत । तदा । असौ हरिः । मायिकः । भवेत् । मायिकैरेव मायिकग्रहणसम्भवादिति भावः ॥ ६ ॥

इतीति । हे मुने ! । इत्येवंविधः । ते तव । प्रश्नाभिप्रायः । अस्ति । तत्र त्वत्प्रश्ने । उत्तरम् । वच्मि । मायिकैः । करणैः । कर्हिचिदपि । भगवान् । ग्राह्यः । नास्ति । किन्त्वमायिकैरेव करणैर्भगवान्वीक्षणादिविषयो जायते इति भावः ॥ ७ ॥ एतदिति । एतदर्थाववबोधायैतस्यार्थस्य सम्यगवगमाय । कार्याणाम् । कारणात्मता कारणानन्यत्वम् । कार्यस्य कारणसृज्यत्वात्तदनुग्राह्यत्वात्तदाश्रितत्वात्तत्ततोऽनन्यदित्यर्थः । हेतूनां कारणानाम् । व्यापकत्वं कार्येष्वन्वितत्वं च । एतद्व्यतिरेकत्वस्याप्युपलक्षणम् । व्युत्क्रमेण प्रतिलोम्येन । प्रदर्श्यते ॥ ८ ॥ पृथिवीति । इयम् । पृथिवी । पञ्चाशत्कोटियोजनविस्तृता । अस्ति । तज्जाः पृथिव्युत्पन्नाः । कुम्भपटादयो घटपटादयः । ये । पदार्थाः । ते । तस्यां पृथिव्याम् । सन्ति सर्वदा वर्त्तन्ते ॥ ९ ॥ सर्व इति । सर्वेऽपि । ते पदार्थाः । तया पृथिव्या । बहिः । अन्तः । सर्वतश्च । व्याप्ताः । सा पृथिवी । तेभ्यः पदार्थेभ्यः । पृथगपि । निजधाम्नि स्वलोके । वर्त्तते । पृथिव्यादिलोका मोक्षधर्मटीकालिखितपुराणान्तरवाक्येभ्योऽवगन्तव्याः ॥१०॥ एवमिति । एवंविधक्षितेः कारणरूपपृथिवीभावापन्नेन चक्षुपेत्यर्थः । सकला अपि । पदार्था घटपटादीनि वस्तूनि । पृथ्वीरूपा एव । सन्ति । ते पदार्थाः । स्वस्वरूपतः

इति प्रश्नाश्रयस्तेऽस्ति तत्र वच्म्युत्तरं मुने ! । मायिकैः करणैर्ग्राह्यो भगवान्नास्ति कर्हिचित् ॥ ७ ॥ एतदर्थाववबोधाय कार्याणां कारणात्मता । व्यापकत्वं च हेतूनां व्युत्क्रमेण प्रदर्श्यते ॥८॥ पृथिवीयं हि पञ्चाशत्कोटियोजनविस्तृता । तस्यां तज्जाः पदार्था ये सन्ति कुम्भपटादयः ॥९॥ सर्वेऽपि ते तया व्याप्ता बहिरन्तश्च सर्वतः । सा च तेभ्यः पृथगपि वर्त्तते निजधामनि ॥ १० ॥ एवंविधक्षितेर्दृष्टया पदार्थाः सकला अपि । पृथ्वीरूपा एव सन्ति न तु ते स्वस्वरूपतः ॥ ११ ॥ जाता हि साऽम्भसः क्षौणिरेकदेशेऽस्ति तस्य च । तच्च तां सर्वतो व्याप्तं बहिरन्तश्च वर्त्तते ॥ १२ ॥ तद्दृष्ट्या नेक्ष्यते पृथ्वी तदेवैकं तु वीक्ष्यते । तेजसस्तच्च सम्भूतमेकदेशेऽस्ति तस्य तत् १३ ॥ अन्तर्बहिश्च तद्व्याप्तं हेतुना स्वस्य तेजसा । तद्दृष्ट्या नेक्ष्यते वारि तेज एवैकमीक्ष्यते ॥ १४ ॥ एवं क्रमेण विज्ञेया कार्याणां कारणात्मता । वायौ नभस्यहङ्कारे महति प्रकृतौ तथा ॥ १५ ॥

कम्बुग्रीवादिमत्त्वरूपात्मीयस्वरूपयुक्ता इत्यर्थः । न तु नैव सन्ति ॥११॥ जातेति सा । क्षोणिः । अम्भसो जलात् । जलैश्वर्यलेशादित्यर्थः । जाता । अस्ति । तस्य जलस्य । एकदेशे च । अस्ति । तज्जलम् । तां क्षोणिम् । सर्वतः परितः । व्याप्तं सत् । बहिस्तस्या बहिर्भागे । अन्तश्च । वर्त्तते ॥१२॥ तदिति । तद्दृष्ट्या पृथ्वीकारणजलभावापन्नचक्षुषा तु । पृथ्वी । नेक्ष्यते । एकं केवलम् । तज्जलमेव । वीक्ष्यते । तज्जलम् । तेजसः । सम्भूतम् । तज्जलम् । तस्य स्वकारणतेजसः । एकदेशे । अस्ति ॥ १३ ॥ अन्तरिति । स्वस्यात्मनः । हेतुना कारणेन । तेजसा । तज्जलम् । अन्तः । बहिश्च । व्याप्तम् । सर्वत इति शेषः । तद्दृष्ट्या जलकारणतेजोभावापन्नचक्षुषा । वारि जलम् । नेक्ष्यते । एकं केवलम् । तेज एव । ईक्ष्यते ॥ १४ ॥ एवमिति । एवममुना प्रकारेण । क्रमेणानुक्रमेण । वायौ । नभस्याकाशे । अहङ्कारे । महति महत्तत्त्वे । तथा । प्रकृतौ प्रधाने । कार्याणाम् । कारणात्मता । विज्ञेया । वायुना तेज आकाशेन वायुरहङ्कारेणाकाशं महताऽहङ्कारः प्रकृत्या महत्तत्त्वमित्येवंकारणेन कार्यं सर्वतोऽन्त-

र्बहिश्चावृतमस्तीति कार्यस्य कारणात्मत्वं ज्ञेयमित्यर्थः ॥ १५ ॥ एकेति । सा प्रकृतिश्च । सर्गकाले । पुंसस्तदधिष्ठातुः पुरुषस्य । एकदेशादैश्वर्यलेशात् । समुद्गतोत्पन्ना । अस्ति । सः । पुरुषस्तु । तां प्रकृतिम् । अन्तः । बहिश्च । व्याप्य । सर्वत इति शेषः । स्थितः । अस्ति ॥ १६ ॥ तदिति । तद्दृष्ट्या प्रकृतिकारणपुरुषभावापन्नेन चक्षुषा । माया । नेक्ष्यते । एकः केवलः । पुमान् पुरुष एव । ईक्ष्यते । ईदृशा एवंविधाः । पुरुषा नैके प्रधानाधिष्ठातारः पुमांसः । महामायैकदेशतः । जाताः ॥१७॥ सेति । हे मुने ! । सा महामाया । महापुरुषस्य । एकदेशात् । उत्पद्यते । अत्र द्वयोरपि पूर्ववत्कार्यस्य कारणात्मता ज्ञेया । स महापुरुषोऽपि । आदौ सर्गारम्भे । अक्षरस्य ब्रह्मणः । एकदेशतः । आविर्भूतः । अस्ति ॥ १८ ॥ अन्तरिति । कृष्णधाम । कोटिसूर्येन्दुसंकाशम् । सच्चिदानन्दलक्षणम् । तदक्षरम् । तं महापुरुषम् । अन्तः । बहिश्च । व्याप्य । स्थितम् ॥ १९ ॥ तदेव विशिनष्टि । अनेकेति । अनेककोटिब्रह्माण्डाधारः । अनन्तमन्तवर्जितम् । अनादिनित्यसिद्धं च । अस्ति । तदीयदृष्ट्या महापुरुषकारणाक्षरब्रह्मभावापन्ननेत्रेण तु । एकं केवलम् । ब्रह्माक्षरमेव । अस्ति । पूरुषो महापुरुषः । न तु नैव । अस्ति ॥ २० ॥ तत्रेति ।

एकदेशात्सा च पुंसः सर्गकाले समुद्गता । अन्तर्बहिश्च तां व्याप्य स्थितोऽस्ति पुरुषः स तु ॥ १६ ॥
तद्दृष्ट्यो नेक्ष्यते माया पुमानेवैक ईक्ष्यते । ईदृशाः पुरुषा जाता महामायैकदेशतः ॥ १७ ॥
सा महापुरुषस्यैकदेशादुत्पद्यते मुने ! । आविर्भूतोऽस्ति सोऽप्यादावक्षरस्यैकदेशतः ॥ १८ ॥
अन्तर्बहिश्च तं व्याप्य स्थितं तत्कृष्णधाम च । कोटिसूर्येन्दुसंकाशं सच्चिदानन्दलक्षणम् ॥ १९ ॥
अनेककोटिब्रह्माण्डाधारोऽनन्तमनादि च । तदीयदृष्ट्या त्वस्त्येकं ब्रह्मैव न तु पूरुषः ॥ २० ॥
तत्र स्थितोऽस्ति भगवान्सर्वकारणकारणम् । अनेककोटिब्रह्माण्डोत्पत्तिस्थितिलयक्रियः ॥ २१ ॥
सर्वात्मात्मा स्वतन्त्रश्च सर्वशक्तिपतिः प्रभुः । परात्परतरः शुद्ध ईश्वराणामपीश्वरः ॥ २२ ॥

तत्राक्षरब्रह्माख्ये स्वधामनि । भगवान् श्रीकृष्णः । स्थितः सर्वदावस्थितः । अस्ति । तं विशिनष्टयेकपादोनद्वाभ्याम् । सर्वकारणकारणम् । सर्वकारणस्याक्षरब्रह्मणोऽपि कारणभूत इत्यर्थः । अनेककोटिब्रह्माण्डोत्पत्तिस्थितिलयाः क्रिया यस्य तथाभूतः ॥ २१ ॥ सर्वेति । सर्वात्मात्मा सकलक्षेत्रज्ञानामन्तःस्थित्वा नियन्ता । सर्वात्मनः सर्वान्तर्यामिणो महापुरुषस्याप्यात्मेति वा । 'यस्यात्माशरीर'मिति बृहदारण्ये । 'योऽक्षरमन्तरे संचर'न्निति सुबालोपनिषदि चोक्तेः । 'आत्मात्मा चाक्षरात्मा'चेति स्कान्दे । 'एष आत्मात्मनां धात'रिति श्रीभागवते । स्वतन्त्रः । सर्वेश्वरेश्वरत्वात्सर्वकारणकारणत्वाच्च कदाचिदपि परतन्त्र इत्यर्थः । सर्वशक्तिपतिः । 'पराऽस्य शक्तिर्विविधैव श्रूयते'इति श्रुतेः । प्रभुः कालमायादिनियन्ता । परात् । परतरः । 'अक्षरात्परतः पर'इति श्रुतेः । शुद्धः । 'स शुद्धः सर्वशुद्धेभ्य'इति स्मृतेः ईश्वराणामपि । ईश्वरः । 'तमीश्वराणां परमं महेश्वर'मिति श्रुतेः ॥ २२ ॥

सर्वत्रेति । स श्रीकृष्णः । स्वतेजसा स्वकीयान्तर्यामिशक्तिरूपेण । कारणत्वेन । सर्वत्राक्षरब्रह्मादिसर्वेषु कार्येषु । अन्वितोऽन्वयं प्राप्य वर्त्तमानः । अस्ति । व्यतिरिक्तो व्यतिरेकभावेन वर्त्तमानः सन् । स्वे स्वकीये । धाम्नि अक्षरब्रह्माख्ये पदे । अनेकशक्तिभिः राधारमाब्रह्मभावापन्नानेकमुक्ताद्यपरिमित-शक्तिभिः सह । राजते विराजमानो भवति ॥ २३ ॥ स इति । स एवंभूतः श्रीकृष्णः । यदा । कृपया । जीवकल्याणार्थम् । धरातले । धृतदिव्यनराकृतिः सन् । नृणाम् । प्रत्यक्षः । जायते साक्षाद्दृश्यो भवतीत्यर्थः ॥ २४ ॥ तदेति । तदा । इह लोके । ये । नराः । सतां साक्षाद्भगवन्तं समाहात्म्यज्ञानं प्राप्तानां तदेकान्तिकसाधूनाम् । सङ्गम् । कृत्वा । तस्य साक्षाद्भगवतः । ईदृशमुक्तविधम् । माहात्म्यम् । सम्यक् । अवगत्य ज्ञात्वा । आश्रयं तदीयैकशरणम् । कुर्वन्ति ॥ २५ ॥ तेषामिति । तेषामेवं भगवदाश्रयकर्तॄणां नराणाम् । अखिलानि समग्राणि । बाह्यानि चक्षुरादीनि । आन्तराणि बुध्यादीन्यपि । करणानीन्द्रियाणि । तादात्म्यं तदात्मभावं साक्षात् भगवद्भावमिति यावत् । प्राप्यं । तं भगवन्तम् । साक्षात्कुर्वन्ति । भगवद्रूपेण परिणतानि बुध्यादीनि तदिन्द्रियाणि साक्षादयं परमेश्वर इति ज्ञानादिकं

सर्वत्र कारणत्वेन सोऽन्वितोऽस्ति स्वतेजसा । व्यतिरिक्तश्च धाम्नि स्वे राजतेऽनेकशक्तिभिः ॥ २३ ॥<br>
स यदा कृपया जीवकल्याणाय धरातले । प्रत्यक्षो जायते नृणां धृतदिव्यनराकृतिः ॥ २४ ॥<br>
तदा कृत्वा सतां सङ्गं तस्य माहात्म्यमीदृशम् । अवगत्याश्रयं सम्यग्ये कुर्वन्ति नरा इह ॥ २५ ॥<br>
तेषां बाह्यान्यान्तराणि करणान्यखिलान्यपि । तादात्म्यं प्राप्य तं साक्षात्कुर्वन्तीत्यवगम्यताम् ॥ २६ ॥<br>
एवं स्वेनैव भगवान्स्वयं निश्चीयते ध्रुवम् । नान्यथा निश्चयं तस्य कर्तुं शक्यं हि मायिकैः ॥ २७ ॥<br>
वेध्यते हीरकेणैव यथा वै हीरकस्तथा । स्वयं ग्राह्योऽस्ति भगवान्स्वेनैवेत्यवगम्यताम् ॥ २८ ॥<br>
दृश्यन्ते ह्यसुरा लोके तं पश्यन्तोऽपि सर्वदा । साक्षात्कृष्णोऽयमित्येवं निश्चेतुं न क्षमा इह ॥ २९ ॥

सम्पादयन्तीत्यर्थः । इतीत्थम् । अवगम्यताम् । इति त्रयाणामेकसम्बन्धः ॥ २६ ॥ एवमिति । एवममुना प्रकारेण । स्वयम् । भगवान् । स्वेन भगवता कृत्वैव । निश्चीयते पुंसा निर्णीयते । ध्रुवं निश्चितमेव । अन्यथा इन्द्रियाणां भगवद्भावं विना । तस्य भगवतः । निश्चयम् । कर्त्तुम् । मायिकैर्मायाकार्यभूतैः करणैः । नहि । शक्यम् । नहि पुंसा मायिकेन्द्रियैर्निश्चयः कर्त्तुं शक्य इत्यर्थः ॥ २७ ॥ एतदेव दृष्टान्तेन द्रढयति । वेध्यत इति । यथा । हीरकेण वज्रमणिनैव । हीरकः । वेध्यते न त्वन्येन । तथा । भगवान् । स्वेनैव । स्वयम् । ग्राह्यः । अस्ति । न तु मायिककरणैः । इतीत्थम् । अवगम्यताम् ॥ २८ ॥ विपक्षे दोषमाह । दृश्यत इति । इह । लोके । असुरा भगवद्विमुखा असुरभावा नराः । तं भगवन्तम् । सर्वदा सर्वकालम् । पश्यन्तः सन्तोऽपि । अयम् । साक्षात् । कृष्णः धृतनराकृतिः प्रत्यक्षः परमेश्वरः । इत्येवम् । निश्चेतुम् । क्षमाः शक्ताः । न दृश्यन्ते ॥ २९ ॥

उक्तार्थं निगमयति । मायेति । हे मुने ! । मायातीतः । कृष्णः । मायिकैः । चक्षुराद्यैरिन्द्रियैः । नैव । ग्राह्यः । किन्तूक्तरीत्याऽमायिकैरेव तैः स ग्राह्य इत्यर्थः । इत्थमेवंविधम् । अमृताभं सुधातुल्यम् । हरेः । वाक्यम् । श्रुत्वा । स पूर्णानन्दमुनिः । तुतोष । तत्सदस्थाः श्रीहरिसभोपविष्टाः । तदीयाः श्रीहरेर्भक्ताः साधवो गृहिणश्च । प्रीतिम् । आपुः ॥ ३० ॥ करणैर्मायिकैः स्वस्याग्राह्यत्वं तैरमायिकैः । ग्राह्यत्वं यः स्वयं प्राह स हरिर्मेऽस्तु दृक्पथे ॥१॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्स्व नुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायमेकपञ्चाशतमस्तरङ्गः ॥ ५१ ॥

शास्त्रैश्चतुर्भिः सांख्याद्यैः पूर्णं ज्ञानं हरेस्तथा । तन्न्युनत्वे न्यूनताऽस्य द्विपाश्चशत्तमे स्मृता ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८७६) माघकृष्णतृतीयायां माघमासस्य कृष्णपक्षागततृतीयातिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमस्य नृपतेः । दुर्गे । वेश्मनोऽस्यैव सौधस्य । वितर्द्दौ वेदिकायाम् । उत्तमे सुज्ञशिल्पिनातिप्रेम्णा विहितत्वाद्रल्लकाद्याच्छादितत्वाचातिपराघ्यर्तामापन्ने । पीठे पिञ्जितबहुपिचुभृते कौशेयतूलिकासने । विशदांशुकः स्वाङ्गपरिधृतसकलश्वेतवसनः । स श्रीहरिः । न्यषीदत् स्वावासादागत्योपविवेशः ॥ २ ॥ वृत इति । भूरिभिर्बहुभिः । भक्तैर्नानादेशागतैस्त्यागिभिर्गृहि-

मायातीतो मायिकैश्चक्षुराद्यैः कृष्णो नैव ग्राह्य इत्थं हरेस्तु । वाक्यं श्रुत्वा सोऽमृताभं तुतोष प्रीतिं चापुस्तत्सदःस्थास्तदीयाः ॥३०॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते एकपञ्चाशत्तमस्तरङ्गः ॥ ५१ ॥

शकाब्दे विक्रमार्कस्य रसाश्ववसुभूमिते । माघकृष्णतृतीयायां वचोऽमृतमिदं हरेः ॥ १ ॥ तत्र दुर्गपुरे दुर्गे उत्तमस्य स वेश्मनः । वितर्द्दावुत्तमे पीठे न्यषीदद्विशदांशुकः ॥ २ ॥ वृतश्च भूरिभिर्भक्तैः कथान्ते शान्तिपर्वणः । तच्छ्रुतार्थं हृदि दधत्ततः प्रोवाच स स्वयम् ॥ ३ ॥ साङ्ख्येन योगेन च यः स्वरूपं राधिकापतेः । वेदान्तपञ्चरात्राभ्यां विद्यात्पूर्णः स नान्यथा ॥ ४ ॥ शास्त्रैश्चतुर्भिरेतैस्तत्स्वरूपं परमात्मनः । निश्चेतव्यं प्रयत्नेन स्यात्पूर्णज्ञानवान् यतः ॥ ५ ॥

भिश्च स्वभक्तजनैः । वृतः सभायां परिवेष्टितः । स श्रीहरिः । शान्तिपर्वणो महाभारतीयशान्तिपर्वान्तर्गतमोक्षधर्मस्य । कथान्ते प्रतिदिनवाचनीयकथावसाने । तच्छ्रुतार्थं कथाश्रवणावगतार्थम् । हृदि स्वमानसे । दधद्धारयन् सन् । स्वयं केनाप्यननुयुक्तः सन्नेव । सतो मुक्तानन्दादिसाधून् प्रति । प्रोवाच स्वमनोगतार्थं कथयामास ॥ ३ ॥ साङ्ख्येनेति । हे साधवः ! । यो भगवद्भक्तः । साङ्ख्येन कपिलाचार्यप्रणीतसेश्वरसाङ्ख्यशास्त्रेण । योगेन हिरण्यगर्भाचार्यप्रणीतसेश्वरयोगशास्त्रेण । वेदान्तो द्वपायनाचार्यप्रणीतोत्तरमीमांसाख्यशास्त्रं च पञ्चरात्रं श्रीनारदाचार्यप्रणितागमाख्यशास्त्रं च ताभ्यां च । राधिकापते रासेश्वरीप्राणनाथस्य श्रीकृष्णस्य । स्वरूपम् । विद्यात्साक्षाद्भगवदुपासकैकान्तिकसाधुभ्यो जानीयात् । स भगवद्भक्तः । पूर्णः सम्पूर्णतया भगवत्स्वरूपज्ञानवान् । भवेत् । अन्यथैवं भगवत्स्वरूपवेदनाभावे । पूर्णो न भवेत् ॥ ४ ॥ शास्त्रैरिति । तत्तस्मात्कारणात् । चतुर्भिः । एतैः साङ्ख्यादिभिः । शास्त्रैः । परमात्मनः श्रीकृष्णस्य । स्वरूपम् । प्रयत्नेन । निश्चेतव्यं निर्णीयज्ञेयम् । यतो येनेत्थंभूतवेदनेन । पूर्णज्ञानवान्सम्पूर्णतया भगवत्स्वरूपज्ञानी । स्यात् ॥ ५ ॥

मुक्तानन्द इति । अथैवंविधश्रीहरिवचनश्रवणानन्तरम् । मुक्तानन्दो मुनिः । तं श्रीहरिम् । पप्रच्छ प्रणतिभक्तिश्रद्धातिशयादिनानुयुक्तवान् । हे हरे ! । एतैः । शास्त्रैः । प्रभुर्भगवान् । त्वम् । यथा येन प्रकारेण । ज्ञेयो ज्ञातुमर्हः । असि । तथा तेन प्रकारेण । मह्यम् । तत्त्वतः । वक्तुम् । अर्हसि ॥ ६ ॥ पुनः प्रश्नान्तरमाह । एष्विति । हे हरे ! । एषु चतुर्षु शास्त्रेषु मध्ये । एकेन येन केनाप्येकशास्त्रेण । साक्षात्त्वद्रूपज्ञाने साक्षाच्छ्रीकृष्णस्य तव स्वरूपज्ञाने जाते सति । तद्विदामेकशास्त्रेण भगवतस्तव स्वरूपवेदिनां भवद्भक्तानाम् । अत्र भवत्स्वरूपपूर्णज्ञानित्वे । न्यूनत्वम् । किन्तु । भवति । तदपि । मे मह्यम् । ब्रूहि ॥ ७ ॥ तमिति । तमेवंपृच्छन्तं मुक्तानन्दमुनिम् । हरिः । अब्रवीत् । हे साधो ! । चतुर्णाम् । तेषां साङ्ख्यादिशास्त्राणाम् । प्रतिपाद्यार्थं येन येन शास्त्रेण यथायथा भगवद्वस्तुबोध्यमस्ति तदित्यर्थः । 'प्रतिपादनं तु दाने प्रतिपत्तौ च बोधने' इति मेदनी । अञ्जसा तत्त्वतः । मन्मत्सकाशात् । शृणु । यद्येन श्रवणेन । क्वचित्कदाचिदपि । संशयो भगवत्स्वरूपज्ञाने सन्देहः न स्यात् ॥ ८ ॥ तत्र साङ्ख्यप्रतिपाद्यार्थमाह द्वाभ्याम् । चतुरिति । कापिलैः कपिलमतानुसारिभिरासुरिप्रमुखमुनिभिः । साङ्ख्ये साङ्ख्यशास्त्रे ।

मुक्तानन्दोऽथ पप्रच्छ तं त्वमेतैः प्रभुर्यथा । शास्त्रैर्ज्ञेयस्तथा मह्यं वक्तुमर्हसि तत्त्वतः ॥ ६ ॥ एष्वेकेनापि साक्षात्त्वद्रूपज्ञानेऽत्र तद्विदाम् । न्यूनत्वं किन्तु भवति तदपि ब्रूहि मे हरे ! ॥ ७ ॥ तमब्रवीद्धरिः साधो ! प्रतिपाद्यार्थमञ्जसा । तेषां चतुर्णां शृणु मत्र स्याद्यत्संशयः क्वचित् ॥ ८ ॥ चतुर्विंशतिरुक्तानि साङ्ख्ये तत्त्वानि कापिलैः । लक्षणानि च सर्वेषां तेषामपि पृथक् पृथक् ॥ ९ ॥ ततस्तेभ्यः पृथग्भूतस्तत्प्रकाशक ईरितः । पञ्चविंशो हि पुरुषः क्षेत्रज्ञो भगवानिति ॥ १० ॥ योगे जीवः पृथक् प्रोक्तचतुर्विंशति तत्त्वतः । षड्विंशो भगवांश्चोक्तः पतञ्जलिमतानुगैः ॥ ११ ॥ मायिकाकाररहितः स्वतन्त्रो दिव्यविग्रहः । समस्तकल्याणगुणैरुपेतश्च स वर्णितः ॥ १२ ॥

तत्त्वानि । चतुर्विंशतिश्चतुर्विंशतिसङ्ख्याकानि । उक्तानि । सर्वेषाम् । तेषां तत्त्वानाम् । लक्षणान्यपि । पृथक्पृथक् । उक्तानि च ॥ ९ ॥ तत इति । ततस्तदनन्तरम् । तेभ्यस्तत्त्वेभ्यः । पृथग्भूतः स्वरूपस्वभावादिभिर्व्यतिरिक्तस्वरूपतः । तत्प्रकाशकस्तेषां तत्त्वानां चेतयिता । पुरुषः पुरुषाख्यः । क्षेत्रज्ञः चतुर्विंशतितत्त्वात्मकक्षेत्रवित्त्वात्क्षेत्रज्ञसंज्ञः । भगवान् श्रीवासुदेवः । पञ्चविंशः । इति । ईरितः कापिलैः कथितः । अत्र पञ्चविंशं जीवात्मानं त्यक्त्वा पञ्चविंशत्वेन परमात्मोक्तौ कापिलानामयमाशयः । यथा तत्त्वानि भगवन्तं विना किंचिदपि कर्तुं न शक्नुवन्ति तथैव तं विना जीवस्याप्यकिंचित्करत्वेन स न तत्त्वेभ्यः पृथग्वक्तुं योग्य इति ॥ १० ॥ अथ योगप्रतिपाद्यार्थमाह द्वाभ्याम् । योग इति । पतञ्जलिमतानुगैः प्रथमतो हिरण्यगर्भप्रतिपादितयोगस्य सकलयोगिसुबोधाय स्फुटतया प्रतिपादकशेषावतारपतञ्जलिमुनिमतानुसारिभिः । योगे योगशास्त्रे । जीवः । चतुर्विंशतितत्त्वः । पृथक् । प्रोक्तः । भगवान् श्रीवासुदेवश्च । षड्विंशः । उक्तः ॥ ११ ॥ मायिकेति । स भगवान् । मायिकाकाररहितः प्रकृतिजन्यतत्त्वकार्यकरचरणाद्यवयववन्मूर्त्तिवर्जितः । अत एव दिव्यविग्रहः स्वतः सिद्धया रूपानुरूपावयवया कोटिमन्मथमनोहरया स्वैकान्तिध्यानास्पदया मूर्त्त्योपेतः ।

स्वतन्त्रः सर्वपराक्षरादिनियामकत्वान्न कदाचिदपि परतन्त्रः । समस्तकल्याणगुणैः स्वाश्रितजीवानामनादिसंसृतिनिवर्त्तकापारकारुण्य-सौशील्यवात्सल्यापहतपाप्मत्वादिगुणगणैः । उपेतो युक्तश्च । वर्णितः पतञ्जलिमतानुगैर्निरूपितोऽस्ति ॥ १२ ॥ अथ वेदान्तप्रतिपाद्यार्थमाह । वेदान्ते श्रुतिशिरःप्रतिपाद्यशारीरकसूत्रे वेदान्तसन्दर्भे तु । भगवान् श्रीवासुदेवः । परंब्रह्म सर्वपराक्षरब्रह्मणोऽपि परत्वात्परब्रह्मसंज्ञः । सर्वकारणं सर्वेषां स्थितिप्रवृत्तिहेतुः । व्यापकः सर्वान्तरात्मा आत्मात्मेत्यर्थः । निर्गुणो गुणातीतः । निराकारः उपमानभूतस्वाकारसदृशा पराकारवर्जितत्वादनिर्वचनीयाकृतिः । अखिलाश्रयः सकलजगदेकाधारश्च । उक्तो द्वैपायनादिभिर्निरूपितः ॥ १३ ॥ अथ पञ्चरात्रप्रतिपाद्यार्थमाह । पञ्चरात्र इति पञ्चरात्रे श्रीनारदाचार्यप्रणीतागमरूपे शास्त्रे । भगवान् श्रीकृष्णः । वासुदेवादिभेदतः वासुदेवसङ्कर्षणप्रद्युम्नानिरुद्धाख्यविशेषेण । चतुर्व्यूहश्चतुर्व्यूहाख्यः । निर्गुणो वासुदेवरूपेण । सगुणः सङ्कर्षणादिरूपेण । अवतारधृद्वराहाद्यवतारधारकश्च । उक्तो नारदमतानुयायिसावर्णिमन्वादिभिः कथितः ॥ १४ ॥ एवं प्रथमप्रश्नोत्तरमुक्त्वा द्वितीयप्रश्नोत्तरमाह दशभिः । तत्रेति । हे मुने ! । तत्र तेषु साङ्ख्यादिषु शास्त्रेषु मध्ये । केवलसाङ्ख्येनैकलेन साङ्ख्यशास्त्रेण । सम्यग्यथार्थतः । ज्ञानं भगवत्स्वरूपवेदनम् । न जायते नैव निष्पद्यते । यतो हेतोः । तत्र साङ्ख्यशास्त्रे । जीवात्मा । तत्त्वतश्चतुर्विंशतितत्त्वेभ्यः सकाशात् । पृथक् भिन्नः । न हि

वेदान्ते तु परंब्रह्म भगवान् सर्वकारणम् । व्यापको निर्गुणश्चोक्तो निराकारोऽखिलाश्रयः ॥१३॥ पञ्चरात्रे चतुर्व्यूहो वासुदेवादिभेदतः । निर्गुणः सगुणश्चोक्तो भगवानवतारधृत् ॥ १४ ॥ तत्र केवलसाङ्ख्येन सम्यग्ज्ञानं न जायते । यतस्तत्र न जीवात्मा पृथगुक्तो हि तत्त्वतः ॥ १५ ॥ ज्ञायतेऽतः पञ्चविंशो जीवात्मैव हि पूरुषः । न त्वसौ परमात्मा वै तत्त्वान्यात्माऽवबोधने ॥ १६ ॥ योगेनाप्येवमेकेन सम्यग्ज्ञानं न जायते । मूर्तिमांस्तत्र यत्कृष्णः षड्विंशोऽस्ति निरूपितः ॥ १७ ॥ परिच्छिन्नत्वमेवातो मूर्तस्यास्यावगम्यते । न तु तस्यैव सर्वत्र पूर्णता च नियन्तृता ॥ १८ ॥ वेदान्तेनाप्यथैकेन सम्यग्ज्ञानं न जायते । यत्तत्र निर्गुणः कृष्णो निराकारश्च वर्णितः ॥ १९ ॥

नैवोक्तः ॥ १५ ॥ ज्ञायत इति । अतो हेतोः । तत्त्वान्यात्मावबोधने तत्त्वनिषेधविधानपूर्वं तेभ्यः स्वात्मनो भिन्नतयावगमकाले इत्यर्थः । पञ्चविंशः । जीवात्मैव । ज्ञायते । पूरुषः पुरुषसंज्ञः । परमात्मात्मा । असौ वासुदेवः । न तु पञ्चविंशो न ज्ञायते । वै ॥ १६ ॥ योगेनेति । एवममुना प्रकारेणैव । एकेन केवलेन । योगेन योगशास्त्रेणापि । सम्यक् । ज्ञानम् । न जायते । यद्यस्मात्कारणात् । तत्र योगशास्त्रे । षड्विंशः । कृष्णः । मूर्त्तिमान् दिव्यविग्रहः । निरूपितः । अस्ति ॥ १७ ॥ परिच्छिन्नत्वमिति । अतो हेतोः । मूर्त्तस्य मूर्त्तिमतः । अस्य कृष्णस्य परिच्छिन्नत्वमेकदेशवर्त्तित्वेन परिच्छेद्यत्वमेव । अवगम्यते । तस्येत्थंभूतस्य कृष्णस्यैव । सर्वत्र तत्त्वकार्यशरीरेन्द्रियादिविशिष्टेषु जीवादिषु । पूर्णताऽन्तरात्मतयाव्यापकत्वम् । नियन्तृता तथाभूतत्वेन कर्मफलप्रदानपूर्वं तत्तत्स्थितिनियमनत्वं च । न तु नैवावगम्यते ॥ १८ ॥ वेदान्तेनेति । अथ च । एकेन केवलेन । वेदान्तेन वेदान्तशास्त्रेणापि । सम्यक् । ज्ञानम् । न जायते । यद्यस्मात्कारणात् । तत्र वेदान्तशास्त्रे । कृष्णः । निर्गुणः । निराकारः । चकारात्सर्वकारणं व्यापकोऽखिलाश्रयः । वर्णितः ॥ १९ ॥

दिव्येति । अतो हेतोः । तस्य निर्गुणादिविशेषणविशिष्टस्य । कृष्णस्य । दिव्यविग्रहतां प्रेक्षकजनानन्दाम्बुधिजनक-नित्यसिद्धसकललावण्यैकाधार-यथोचितावयवाप्राकृत-सुन्दरशरीरताम् । प्राकृतेन्द्रियहीनतां मायिकचक्षुरादिकरणवर्जितत्वम् । मायागुणैर्मात्योत्पन्नैः सकार्यैः सत्त्वादिभिर्गुणैः । हीनतां रहितत्वम् । कल्याणगुणशालितामपारकारुण्य-शौशील्यवात्सल्यापहतपाप्मत्वादिभिः स्वाश्रितात्यन्तिकनिःश्रेयससम्पादकैर्गुणैः सर्वदा संशोभित्वं च ॥२०॥ कृष्णस्येति । सम्भ्रमान्निर्गुणादिशब्दैस्तद्बुद्धौ भ्रमसम्भवाद्धेतोः । एतत्सर्वम् । बोद्धु ज्ञातुम् । तेन केवलेन वेदान्तशास्त्रेण । न शक्यते वेदान्तिभिर्न समर्थीभूयते । ततस्तस्माद्धेतोः । केचिद्भ्रमयुक्तबुद्धिमन्तः केचन । वेदान्तिनः । तं कृष्णम् । निराकारमाकारवर्जितम् । वदन्ति । इति द्वयोरेकान्वयः ॥ २१ ॥ पञ्चरात्रेणेति । किञ्च । एकेन केवलेन । पञ्चरात्रेण पञ्चरात्राख्यशास्त्रेण । सम्यक् । ज्ञानम् । न जायते । यद्यतो हेतोः । तत्र पञ्चरात्रशास्त्रे । साकारस्य सदा दिव्यमूर्त्तेः । कृष्णस्य । अवतारा वराहादयः कीर्त्तिताः ॥ २२ ॥ तत इति । ततो हेतोः । उपासकानां भगवदवतारभक्तिकर्तृणाम् । नृणाम् । तेष्ववतारेषु । एकदेशस्थधीः परिच्छिन्नत्वावलम्बनेनैकदेशावासमतिः । तथा मनुष्यभावापत्तिः स्वसमानतया मनुष्य-

दिव्यविग्रहतां तस्य प्राकृतेन्द्रियहीनताम् । मायागुणैर्हीनतां च कल्याणगुणशालिताम् ॥ २० ॥ कृष्णस्यातो न बोद्धुं तु शक्यते तेन सम्भ्रमात् । वेदान्तिनस्ततः केचिन्निराकारं वदन्ति तम् ॥ २१ ॥ पञ्चरात्रेण चैकेन सम्यग्ज्ञानं न जायते । यत्साकारस्य कृष्णस्यावतारास्तत्र कीर्त्तिताः ॥२२॥ ततस्तेषूपासकानामेकदेशस्थधीस्तथा । मनुष्यभावापत्तिश्च जायते प्रायशो नृणाम् ॥ २३ ॥ न तु तेषां पूर्णतां च सर्वान्तर्यामितां तथा । शक्यते सर्वथा बोद्धुं केवलेनैव तेन तैः ॥ २४ ॥ शास्त्रैश्चतुर्भिरेवातः सम्यग्बोधस्तु जायते । नृणां कृष्णस्वरूपस्य भक्तानां धीमतामिह ॥ २५ ॥ शास्त्रेणैकेन या ज्ञाने भक्तस्य न्यूनता भवेत् । शास्त्रान्तरैः सा तु नश्येत्पूर्णं ज्ञानं च सिद्ध्यति ॥ २६ ॥ एकपादं भवेज्ज्ञानं शास्त्रेणैकेन च प्रभोः । द्वाभ्यां द्विपादं भक्तस्य त्रिपादं च त्रिभिर्ध्रुवम् ॥ २७ ॥

भावापन्नत्वम् । प्रायशो बहुधा । जायते ॥ २३ ॥ नेति । किञ्च । केवलेनैकेन । तेन पञ्चरात्रशास्त्रेण तु । तेषां भगवदवताराणाम् । पूर्णताम् । तथा । सर्वान्तर्यामिताम् । बोद्धुम् । तैरुपासकैः । सर्वथा । नैव शक्यते ॥ २४ ॥ शास्त्रैरिति । अतो हेतोः । इह लोके । धीमतां प्रशस्तबुद्धीनाम् । भक्तानाम् । नृणाम् । चतुर्भिः शास्त्रैः साङ्ख्यादिभिरेव । कृष्णस्वरूपस्य । बोधो ज्ञानम् । सम्यक् । जायते ॥२५॥ शास्त्रेति । भक्तस्य भगवन्तं भजमानस्य जनस्य । एकेन साङ्ख्यादिचतुर्णामन्यतमेन । शास्त्रेण । ज्ञाने भगवत्स्वरूपवेदने । या । न्यूनता अपूर्णता । भवेत् । साऽपूर्णता तु । शास्त्रान्तरैर्येन स्वस्यापूर्णता जाता तदितरैस्त्रिभिः शास्त्रैः । नश्येत् । पूर्णम् । ज्ञानं च सिध्यति संसिद्धतां यायात् ॥ २६ ॥ एकेति । भक्तस्य । एकेन चतुर्णां येन केनचिदेकतमेन शास्त्रेण । प्रभोः श्रीकृष्णस्य । ज्ञानं स्वरूपवेदनम् । एकपादम् । भवेत् । यथा तपः, शौच, दया, सत्याख्यचतुरङ्घ्रीणां मध्येऽन्यैः शौचादिभिस्त्रिभिः पादैर्वर्जितो धर्म एकपाद उच्यते तथेदमपीत्यर्थः । द्वाभ्यां चतुर्णां मध्ये याभ्यां

काभ्याचिदुभाभ्यां शास्त्राभ्याम् । द्विपादम् । भवेत् । त्रिभिश्चतुर्णां मध्ये यैः कैश्चित्त्रिभिः शास्त्रैः । त्रिपादम् । भवेत् । ध्रुवं निश्चितमेव ॥ २७ ॥ पूर्णमिति । चतुर्भिः साङ्ख्यादिभिश्चतुर्भिः । शास्त्रैः । ज्ञानम् । पूर्णं चतुर्भिरङ्घ्रिभिरुपेतम् । स्यात् । अतो हेतोः । शास्त्रज्ञसाधुतो मदुक्तरीत्या साङ्ख्यादिशास्त्रचतुष्टययार्थयथावदभिज्ञ-साधोः सकाशात् । चतुःशास्त्रार्थः साङ्ख्यादिचतुष्कसिद्धान्तः । आदरात् । सम्यग्यथार्थत एव । अवगन्तव्यो ज्ञातव्यः ॥ २८ ॥ विपक्षे दोषमाह । शास्त्रमिति । यः पुरुषः । शास्त्रं विनोक्तप्रकारेण साङ्ख्यादिशास्त्रचतुष्टयार्थज्ञानं विना । स्वतः स्वमनःकल्पितज्ञानयुक्तियलवत्तया । ज्ञानि साङ्ख्यवेदान्तज्ञानवान् । स्यात् । अथवा । उपासको योगपञ्चरात्रार्थाभिज्ञो भक्तः । स्यात् । तावुभौ । दाम्भिकौ दम्भेन ज्ञानिनो भक्तस्य च वेषमात्रधारकौ । स्वस्वाध्वानवबोधिनौ स्वकीयसम्प्रदायाभिप्राया-नभिज्ञौ । ज्ञेयौ ॥ २९ ॥ श्रुत्वेति । इतीत्थंभूतम् । सुधाभं पीयूषसन्निभम् । प्रभोः । तस्य श्रीहरेः । वाक्यम् । श्रुत्वा । मनीषी श्रीहर्युक्तरीत्या साङ्ख्यादिशास्त्रार्थ-विशेषज्ञबुद्धिः । स प्रश्नकर्त्ता । मुनिर्मुक्तानन्दर्षिः । मुदं महान्तमाह्लादम् । प्राप । तथा तेनैव प्रकारेण अपरेऽन्ये । सभ्यजनाः सभोपविष्टास्त्यागिगृहिहरिभक्तजनाश्च ।

पूर्णं ज्ञानं चतुर्भिः स्यादतः शास्त्रज्ञसाधुतः । सम्यगेवावगन्तव्यश्चतुःशास्त्रार्थ आरादत् ॥ २८ ॥ शास्त्रं विना
स्वतो यस्तु ज्ञानी वा स्यादुपासकः । तावुभौ दाम्भिकौ ज्ञेयौ स्वस्वाध्वानवबोधिनौ ॥ २९ ॥ श्रुत्वेति वाक्यं स
मुनिः सुधाभं तस्य प्रभोः प्राप मुदं मनीषी । तथाऽपरे सभ्यजनाश्च तोषं प्रपद्य तं ते स्म नमन्ति भक्त्या ॥३०॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते द्विपञ्चाशत्तमतस्तरङ्गः ॥५२॥

शकाब्दे विक्रमार्कस्य रसाश्ववसुभूमिते । नवम्यां तपसः कृष्णे वचोऽमृतमिदं हरेः ॥ १ ॥
तत्र दुर्गपुरे दुर्गे उत्तमस्य स वेश्मनः । वेद्यां प्रत्यङ्मुखः पीठे स्वास्तृते समुपाविशत् ॥ २ ॥

तोषमानन्दम् । प्रपद्य प्राप्य ते सर्वे । भक्त्या गाढानुरागेण । तं श्रीहरिम् । नमन्ति स्म ॥ ३० ॥ शास्त्रैश्चतुर्भिः साङ्ख्याद्यैः स्वस्य पूर्णं तु वेदनम् । येनोक्तं श्रीहरिः सोऽस्तु वेद्यः पूर्णतयैव मे ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्स्नुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धु-टीकायां द्विपञ्चाशत्तमस्तरङ्गः ॥ ५२ ॥

सत्सङ्गिनां वर्द्धमानगुणत्वे हेतुरीरितः क्षीयमाणगुणत्वे च त्रिपञ्चाशत्तमे स्फुटम् ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८७६) तपसो माघमासस्य । कृष्णे कृष्णपक्षे । नवम्यां नवमीतिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥१॥ तत्रेति । तत्र तिथौ दुर्गपुरे । उत्तमस्य नृपतेः । दुर्गे । वेश्मनः श्रीवासुदेवमन्दिरो-ऽन्तिकवर्त्तिनः प्रत्यङ्मुखस्योत्तमनृपतिसौधस्य । वेद्यां बाह्यायां वितर्दौ । स्वास्तृते स्थूलतूलिकामृदुघनसितसूक्ष्मोत्तरच्छदादिनाच्छादिते । पीठे मञ्चासने । स श्रीहरिः । प्रत्यङ्मुखः पश्चिमदिगभिमुखमुखसरोरुहः सन् । समुपाविशत्स्वावासात्सपार्षद आगत्योपविवेश ॥ २ ॥

सितमिति । सितं मरालपक्षवलक्षम् । वासो निचोलवसनम् । परिदधत् । धवलम् । अङ्गरक्षकं च । परिदधत् । कौसुम्भमग्निशिखरङ्गरञ्जितम् । उष्णीषं सुवर्णगुणगुम्फतप्रान्तपल्लवं शिरोवेष्टनवसनम् । तादृक् तथाविधम् । कटिबन्धनं श्रोणिबन्धनवसनं च । दधत् ॥ ३ ॥ पौष्पानिति । पौष्पान् सुगन्धिमाध्यकुसुमरचितान् । हारान् । शेखरानापीडांश्च । दधत् । कण्ठे हारानुष्णीषे शेखरांश्च दधदित्यर्थः । भक्तगणावृतो नक्षत्रैरुडुपतिरिव नानादेशायातत्यागिगृहिस्वभक्तवृन्दैः सभायां संवेष्टितः । सदयेक्षणो निष्कारणकरुणापूर्णनयनः श्रीहरिः । अग्रस्थान् स्वपुरः प्रदेशावस्थितान् । सतो मुक्तानन्दादीन्साधून् । प्रश्नम् । प्रष्टुम् । प्रेरयत्कमप्यनुयोगं कुरुतेति सम्प्रेरयामासेत्यर्थः । इति द्वयोरेकसम्बन्धः ॥ ४ ॥ मुक्तानन्द इति । अथैवंविधसुधाभश्रीहरिवचनश्रवणानन्तरम् । मुक्तानन्दः । साधुः । तं श्रीहरिम् । प्रणम्य विनयेन नत्वा । अपृच्छत् । हे ईश्वराक्षरकालमायादिनियमनसमर्थ ! । इह लोके । कृतसत्सङ्गा विहितत्वदुक्तचतुर्विधसम्बन्धाः । भूरिशः प्रचुराः । पुरुषास्त्वद्भक्तजनाः । वर्त्तन्ते ॥ ५ ॥ तेषामिति । तेषां तथाविधानां त्वद्भक्तपुरुषाणां मध्ये । केचित् । नरास्त्वद्भक्ताः । प्रतिदिनम् । वर्द्धमाना वृद्धिं गच्छन्तो महागुणा भक्ति-

सितं वासः परिदधद्धवलं चाङ्गरक्षकम् । दधत्कौसुम्भमुष्णीषं तादृक्च कटिबन्धनम् ॥ ३ ॥
पौष्पान् हारान् शेखरांश्च दधद्भक्तगणावृतः । प्रश्नं प्रष्टुं सतोऽग्रस्थान्प्रैरयत्सदयेक्षणः ॥ ४ ॥
मुक्तानन्दोऽथ साधुस्तं प्रणम्यापृच्छदीश्वर ! । पुरुषाः कृतसत्सङ्गा वर्त्तन्त इह भूरिशः ॥ ५ ॥
तेषां प्रतिदिनं केचिद्वर्द्धमानमहागुणाः । समीक्ष्यन्तेऽथ केचित्तु क्षीयमाणगुणा नराः ॥ ६ ॥
अत्र किं कारणमिति पृष्टस्तेनाब्रवीद्धरिः । गुणा दोषाश्च सर्वेषु भवन्ति पुरुषेष्विह ॥ ७ ॥
तत्राधिकाः केषुचित्स्युर्गुणा अल्पास्तथेतरे । केषुचित्त्वधिका दोषा गुणास्त्वल्पा नरेषु वै ॥ ८ ॥
ये सन्तोऽत्र हरेर्भक्तास्ते त्विन्द्रियदमादिना । विजित्य प्रायशो दोषान्वर्त्तयन्ति गुणान् हृदि ॥ ९ ॥

धर्मादयो येषां ते तथाभूताः । समीक्ष्यन्ते मदादिभिः सर्वैर्दृश्यन्ते । अथ च । केचित् । नरास्तु । क्षीयमाणाः प्रतिदिनं क्षयं गच्छन्तो गुणा येषां ते तथाभूताः । समीक्ष्यन्ते ॥ ६ ॥ अत्रेति । अत्रैवंविधार्थे । किं कारणं को हेतुर्भवति । इत्यमुना प्रकारेण । तेन मुक्तानन्दसाधुना । पृष्टः । हरिः । अब्रवीत् । हे मुने ! । इह लोके । सर्वेषु । पुरुषेषु । गुणाः । दोषाश्च । भवन्ति ॥ ७ ॥ तत्रेति । तत्र तथाविधेषु तेषु नरेषु मध्ये केषुचित् । नरेषु । गुणाः । अधिकाः । स्युः । तथा । इतरे दोषाः । अल्पाः । स्युः । केषुचित् । नरेषु तु । दोषाः । अधिकाः । स्युः । गुणास्तु । अल्पाः स्युः । वै ॥ ८ ॥ य इति । अत्रैषु द्विविधनरेषु मध्ये । ये नराः । सन्तः साधवः । हरेः । भक्ताः । स्युः । ते तु । इन्द्रियदमादिना चान्द्रायणादिव्रताचरणादिना विहितस्वेन्द्रियदमप्रभृतिना साधनेन । दोषान् । प्रायशो बाहुल्येन । विजित्य । हृदि स्वमानसे । गुणान् । वर्त्तयन्ति भावयन्ति । तु शब्देन येऽसाधवो नरास्ते इन्द्रियपोषणादिना प्रायशो दोषानेव हृदि वर्त्तयन्ति न गुणानिति ज्ञेयम् ॥ ९ ॥

एवमिति । एवं सति उक्तरीत्या नरद्वैविध्ये सति । अत्र लोके । ये । नराः । तेषां पूर्वश्लोकोक्तानाम् । सतां हरिभक्तानां साधूनां नराणाम् । सङ्गम् । कुर्युः । चेद्यदि । तेषां साधूनाम् । गुणानेव । गृह्णीयुः इतरान्पुनर्दोषांस्तु । अत्र पुनः शब्दस्त्वर्थे । नैव । गृह्णीयुः । तर्हीत्युत्तरेणान्वयः ॥ १० ॥ तर्हीति । तर्हि तु । ते नराः । प्रतिदिनम् । वर्द्धमानमहागुणाः । भवेयुः । अचिरेण स्वल्पेन कालेनैव । सिद्धदशामपि मुक्तभावं च । यायुः प्राप्नुयुः । इति द्वयोरेकान्वयः ॥ ११ ॥ काचित्कानिति । ये नरास्तु । तेषां साधूनाम् । भूरिमहागुणान् प्रचुरान्महतो गुणान् । हित्वा त्यक्त्वा । अल्पानल्पप्रमाणान् । क्वाचित्कान्देशकालादिसम्बन्धेन कदाकदाचिज्जायमानान् । दैहिकान्महारोगादिसञ्जातशीतालुतया सतूलगुप्तदोरकिकाप्रावरण क्षुत्पिपासाऽसहनादिरूपान्देहसम्बन्धिनः । दोषान् । अथवा । स्वाभाविकान्मन्दोच्चस्वरभाषणयथार्थभाषणादीन्नैसर्गिकान् । दोषांश्च । गृह्णीयुः । तेषामित्युत्तरेण सम्बन्धः ॥ १२ ॥ तेषामिति । तेषामेवंविधानाम् । नृणां तु । सर्वे । गुणाः । प्रत्यहम् । क्षीयमाणाः । सन्तः । अचिरेणैव । नश्यन्ति । ते एवंविधा नराः । अन्ते उत्तरकाले । हीनतामतिनिकृष्टभावम् । यान्ति लभन्ते । उक्तविधासाधुसङ्गिनां तु यथा

एवं सत्यत्र ये तेषां सङ्गं कुर्युः सतां नराः । तेषां च चेद्गुणानेव गृह्णीयुर्नेतरान् पुनः ॥ १० ॥ तर्हि ते तु प्रतिदिनं वर्द्धमानमहागुणाः । भवेयुरचिरेणैव यायुः सिद्धदशामपि ॥११॥ क्वाचित्कान् दैहिकान् दोषांस्तेषां स्वाभाविकांश्च वा । ये त्वल्पानपि गृह्णीयुर्हित्वा भूरिमहागुणान् ॥ १२ ॥ तेषां तु प्रत्यहं सर्वे क्षीयमाणा गुणा नृणाम् । अचिरेणैव नश्यन्ति यान्त्यन्ते ते च हीनताम् ॥ १३ ॥ अतो नैवागुणो ग्राह्यः सतामिह मुमुक्षुभिः । येन साहजिकेनापि विनष्टिर्महती भवेत् ॥१४॥ मर्यादामैश्वरीं हित्वा वर्त्तेरंस्ते यदि क्वचित् । तदा तु तेषां तद्दोषग्रहणं नास्त्यनर्थकृत् ॥१५॥ हरिभक्तगुणागुणग्रहस्त्विह सत्सङ्गिजनस्य केवलम् । गुणवृद्धिविनाशकारणं भवतीत्येव मुनेऽवगम्यताम् ॥ १६ ॥

पङ्के नृपंकाम्भः क्षिपतेत्पुनरिति न्यायाद्वार्त्तैव न कर्त्तुमर्हा भवतीति ज्ञेयम् ॥१३॥ अत इति । अतो हेतोः । इह लोके । मुमुक्षुभिः । सताम् । अगुणो दैहिकः स्वाभाविकश्च दोषः । नैव । ग्राह्यः । साहजिकेन सहजयापि कृतेन । येन दोषग्रहणेन । महती । विनष्टिः । भवेत् । अगणितोपायैरप्यनिवार्यः स्वगुणक्षयपूर्वकः कल्याणाभावरूपो विनाश उत्पद्येतेत्यर्थः ॥ १४ ॥ अथैतस्य सहेतुकं प्रतिप्रसवमाह । मर्यादामिति । ते सन्तः । यदि यर्हि । क्वचित्कदाचित् । ऐश्वरीं साक्षात्परमेश्वरनिबद्धाम् । मर्यादां ब्रह्मचर्यादिस्वनियमपालनरूपां स्थितिम् ।हित्वा यं कमप्येकं नियमं परित्यज्य । वर्त्तेरन् । तदा । तर्हि तु । तेषां सताम् । तद्दोषग्रहणं मर्यादातिक्रमणरूपदोषोपादानम् । अनर्थकृत्स्वगुणक्षयकारि । नास्ति नैव भवेत् ॥ १५ ॥ उक्तार्थानुवादेन प्रकरणार्थं निगमयति । हरीति । हे मुने ! । इह सत्सङ्गे । हरिभक्तगुणागुणस्तु साक्षाद्भगवन्तं भजमानानां साधूनां गुणस्य दोषस्य चोपादनं त्वित्यर्थः । सत्सङ्गिजनस्य । केवलमेकम् । गुणवृद्धिविनाशकारणं यथाऽसंख्यंगुणविवृद्धेस्तत्क्षयस्य च हेतुः । भवति । इतीत्थमेव । अवगम्यतां त्वया बुध्यताम् ॥ १६ ॥

इतीति । इत्येवंविधम् । प्रभोः श्रीहरेः । वागमृतं वचनामृतम् । पीत्वा श्रवणपुटाभ्यामापीय । सः मुनिर्मुक्तानन्दर्षिः । मुदमत्यानन्दम् । प्राप । तथा तेनैव प्रकारेण सदःस्था महासभोपविष्टाः । भक्ता भगवदेकान्तिकोपासकाः । सर्वे । सन्तः साधवः । गृहिणो गृहस्थजनाश्चापि । तोषमत्यानन्दम् । प्रपेदिरे लभन्ते स्म । अमुं स्वावासं व्रजन्तं श्रीहरिम् । प्रणेमुर्नमश्चक्रुः ॥ १७ ॥ गुणवृद्धौ स्वभक्तानां कारणं च गुणक्षये । येनोक्तं स हरिर्दद्यात्स्वधर्मादीन् गुणांस्तु मे ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्तनुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां त्रिपञ्चाशत्तमस्तरङ्गः ॥ ५३ ॥

धर्मा भागवता ये यत्तेषां पुष्टेस्तु साधनम् । साधनं विवृतत्वे यन्मोक्षद्वारस्य च स्फुटम् ॥ १ ॥ आपद्यपि । महत्यां यो न पतेत्स्वीयधर्मतः । तस्य यल्लक्ष्म च चतुःपञ्चाशत्तम ईरितम् ॥ २ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८७६) तपसो माघस्य । कृष्णपक्षे । दशम्यां तिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमक्ष्मेशितुरुत्तमाख्यक्षितिपतेः । दुर्गे । गृहे उत्तमनृपतेरेव पश्चिमास्यभवने । बहिर्वेद्यां बाह्यायां वितर्द्यां । स्वास्तृते पार्श्विको-

इति प्रभोर्वागमृतं पीत्वा मुनिर्मुदं प्राप तथा सदःस्थाः । सर्वेऽपि सन्तो गृहिणश्च भक्ताः प्रपेदिरे तोषममुं प्रणेमुः ॥ १७ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते त्रिपञ्चाशत्तमस्तरङ्गः ॥ ५३ ॥

शकाब्दे विक्रमार्कस्य रसाश्ववसुभूमिते । दशम्यां तपसः कृष्णे वचोऽमृतमिदं हरेः ॥ १ ॥ तत्र दुर्गपुरे दुर्गे उत्तमक्ष्मेशितुर्गृहे । मञ्चोत्तमे बहिर्वेद्यां स्वास्तृते स उपाविशत् ॥ २ ॥ वलक्षपरिधानीयः सत्कौसुम्भोत्तरीयकः । सहेमतन्तुकाभ्राभकौशेयोष्णीषशेखरः ॥ ३ ॥ अनेकस्वाश्रितत्यागिगृहस्थैः परितो वृतः । मुक्तानन्दस्तमप्राक्षीत्साधुवर्यः कृतानतिः ॥४॥ स्वामिन् ! श्रीमद्भागवतैकादशे निमिभूपतिः । धर्मान्भागवतान् ज्ञेयानपृच्छदाह तं कविः ॥ ५ ॥

पवर्हवति सोत्तरच्छदतूलिकाच्छादिते । मञ्चोत्तमे । स श्रीहरिः । उपाविशत्स्वावासादागत्य न्यषीदत् ॥ २ ॥ तं विशिनष्टि साद्धेन । वलक्षेति । वलक्षपरिधानीयः परिहितधवलवसन इत्यर्थः । सत्कौसुम्भोत्तरीयकः सुवर्णसूत्ररचनाप्रान्तपल्लवकुसुम्भरञ्जितोत्तरीयवसन इत्यर्थः । हेम्नः सुवर्णस्येमे हैमास्ते च ते तन्तुकास्तन्तवश्च तैः सह वर्त्तमानमभ्रस्य गगनस्येवाभा कान्तिर्यस्य तच्च तत्तच्च यत् कौशेयं कौशेयवस्त्रं तद्रचितं यदुष्णीषं शिरोवेष्टनं तस्मिन्नापीडाः पुष्पशेखरा यस्य स तथाभूतः ॥ ३ ॥ अनेकेति । अनेकस्वाश्रितत्यागिगृहस्थैर्नानादेशागतैः स्वैकाश्रयैस्त्यागिगृहस्थजनैः । परितः सर्वतः । वृतः सभायां संवेष्टितः । तमित्थंभूतशोभाविशिष्टं श्रीहरिम् । साधुवर्यः सकलमुनिप्रवरः । मुक्तानन्दो मुनिः । कृतानतिर्विनयपूर्वकं कृतप्रणामः सन् । अप्राक्षीदनुयुक्तवान् ॥ ४ ॥ स्वामिन्निति । हे स्वामिन् ! । श्रीमद्भागवतैकादशे श्रीमद्भागवतपुराणस्यैकादशे स्कन्धे । निमिभूपतिः । ज्ञेयान् स्वेनावश्यं ज्ञातुं योग्यान् । भागवतान् भगवतस्तव सम्बन्धयुक्तान् । धर्मान् । अपृच्छज्जायन्तेयान् योगिनः पप्रच्छ । तमेवंपृच्छन्तं निमिभूपतिम् । कविरेतन्नामा योगेश्वरः । आह भागवतान् । धर्मानुवाच ॥ ५ ॥

सङ्क्षेपादिति । कविना कविसंज्ञेन । मुनिना योगेश्वरेण । ते भागवता धर्माः । सङ्क्षेपात् । प्रोक्ताः । ते तथा । 'ये वै भगवता प्रोक्ता उपाया ह्यात्मलब्धये । अञ्जः पुंसामविदुषां विद्धि भागवतान् हि तान् । यानास्थाय नरो राजन् ! न प्रमाद्येत कर्हिचित् । धावन्निमील्य वा नेत्रे नस्खलेन्न पतेदिदे'ति । अग्रतस्तस्याग्रिमप्रदेशे । प्रबुद्धेनैतन्नाम्ना । योगिना । ते भागवता धर्मा एव । पुन र्भूयोऽपि । अतिविस्तारान् । कथिताः । ते यथा । 'सर्वतो मनसोऽसङ्गमादौ सङ्गं च साधुषु । दयां मैत्रीं प्रश्रयं च भूतेष्वद्धा यथोचित'मित्यादयः ॥ ६ ॥ तदिति । हे प्रभो ! । तत्पोषणं सद्गुरोः शिक्षितानां तेषां भागवतधर्माणां पुष्टिः । येन साधनेन । सम्यक् । भवेत् । मोक्षस्यात्यन्तिककल्याणस्य । गोपुरं द्वारं च । 'गोपुरं द्वारि पूर्द्वारि' इति मेदिनी । येन । विवृतमविघ्नोपहतमित्यर्थः । भवेत् । तत्साधनम् । त्वम् । मे मह्यम् । वक्तुम् । अर्हसि ॥ ७ ॥ तमिति । ततस्तदनन्तरम् । स्वामी श्रीहरिः । तमेवंपृच्छन्तं मुक्तानन्दमुनिम् । उवाच । हे साधो ! । तत्पृष्टसाधनम् । ब्रवीमि शृणु । तत्पोषणं भागवतधर्मपुष्टिः । एकान्तिकानाम् । सतां साधूनाम् । सङ्गात् । भवेत् । वै ॥ ८ ॥ एकान्तिकसाधुलक्षणं स्वयमेवाह द्वाभ्याम् । दृढमिति । ते

सङ्क्षेपात्कविना प्रोक्तास्त एव मुनिनाऽग्रतः । प्रबुद्धेनातिविस्ताराद्योगिना कथिताः पुनः ॥ ६ ॥ तत्पोषणं भवेद्येन सम्यग्मोक्षस्य गोपुरम् । विवृतं च भवेत्तन्मे प्रभो ! वक्तुं त्वमर्हसि ॥ ७ ॥ तमुवाच ततः स्वामी शृणु साधो ! ब्रवीमि तत् । सतामेकान्तिकानां वै सङ्गात्तत्पोषणं भवेत् ॥ ८ ॥ दृढं स्वधर्मं वैराग्यं ज्ञानं स्वात्मपरमात्मनोः । माहात्म्यज्ञानसहितां कृष्णभक्तिं च ते दृढाम् ॥ ९ ॥ संश्रिताः सर्वभावेन तेषां स्युः सततं मुने ! । कृष्णार्था एव सकला बाह्यान्तःकरणक्रियाः ॥ १० ॥ विवृतं तत्प्रसङ्गेन मोक्षद्वारं भवेदिति । कपिलो मातरं प्राह भगवांस्तद्वचो ब्रुवे ॥ ११ ॥ प्रसङ्गमजरं पाशमात्मनः कवयो विदुः । स एव साधुषु कृतो मोक्षद्वारमपावृतम् ॥ १२ ॥

एकान्तिकाः साधवः । दृढं विघ्नसहस्रैरप्यनिवार्यत्वात् सुस्थिरम् । स्वधर्मम् । वैराग्यं तथाविधां विरक्तिम् । स्वात्मपरमात्मनोः स्वजीवात्मनः स्वोपास्यस्य परमात्मनश्च । ज्ञानं तथाविधंवेदनम् । माहात्म्यज्ञानसहितामक्षरपरत्वादिभगवन्महिमावबोधयुक्ताम् । दृढाम् । कृष्णभक्तिं च ॥ ९ ॥ संश्रिता इति । हे मुने ! । सर्वभावेन कायवाङ्मनोभिः । संश्रिता आश्रिताः । स्युः । तेषामेकान्तिकसाधूनाम् । सकलाः सर्वाः । बाह्यान्तःकरणक्रिया ईक्षणादयो नेत्रादिबाह्येन्द्रियव्यापाराः सङ्कल्पादयो मन आद्यन्तरिन्द्रियव्यापाराश्च । सततं निरन्तरम् । कृष्णार्थाः श्रीकृष्णसेवैकप्रयोजना एव । स्युः इति द्वयोरेकान्वयः ॥ १० ॥ एवं प्रथमप्रश्नोत्तरमुक्त्वा द्वितीयप्रश्नोत्तरमाह त्रिभिः विवृतमिति । हे मुने ! । मोक्षद्वारम् । तत्प्रसङ्गेनोक्तविधसाधूनां सुदृढसङ्गेन । विवृतम् । भवेत् । इतीत्थम् । भगवान् भगवदवतारः । कपिलः कर्दमस्य नुर्मुनिः । मातरं स्वजननीं देवहूतिं प्रति । प्राह श्रीभागवततृतीयस्कन्धे जगाद । तद्वचः । ब्रुवे ॥ ११ ॥ प्रसङ्गमिति । कवयः सुधियो मुनयः । आत्मनो जीवस्य । प्रसङ्गं पुत्रवित्तकलत्रक्षेत्रगृहादिषु प्रकृष्टासक्तिम् । अजरमशिथिलम् । पाशं बन्धकम् । विदुः । स प्रसङ्ग एव । स इत्यनेन पुत्रादिविषयपरिहारेण प्रसङ्गमात्रस्य परामर्षः । साधुषु भगवदेकान्तिकसत्सु । कृतो निश्छद्मतया विहितः सन् । अपावृतमावरणवर्जितम् । मोक्षद्वारम् । भवति । अपावृतमोक्षद्वाररूपो जायते इत्यर्थः ॥ १२ ॥

अत इति । हे मुने ! । अतो हेतोः । अत्र लोके । यथा । गृहिणो द्वितीयाश्रमिणो जनस्य । पुत्रवित्तगृहादिषु । दृढः । प्रसङ्गः । अस्ति । तद्वत्तथा । मुमुक्षुभिः । सत्सूक्तविधसाधुषु । कार्यः ॥ १३ ॥ पप्रच्छेति । अथो अनन्तरम् । शुकमुनिः शुकानन्दः साधुः । तं श्रीहरिम् । पप्रच्छ । हे प्रभो ! । यो भगवतस्तव भक्तः । महत्यां देशकालादिविपर्ययरूपायाम् । आपदि आपत्कालेऽपि । स्वीयधर्मतः स्वकीयाद्धर्मात् । न चलेत् । तस्य । लक्ष्म लक्ष्मणम् । किं किमात्मकं भवति । तत्त्वं मह्यं वदेति शेषः ॥ १४ ॥ प्रोवाचेति । यमेवं पृच्छन्तं शुकानन्दसाधुम् । हरिकृष्णः । प्रोवाच । हे मुने ! । यो भगवद्भक्तः । महतो व्यभिचारो न कर्त्तव्य इत्यादिप्रकारस्य श्रेष्ठस्य । वा अथवा । अल्पस्य दृष्ट्वा शिवालयादीनि देवागाराणीत्येवंविधस्य सूक्ष्मस्यापि । कृष्णवचसः । पालने आचरणे । श्राद्धः समानश्रद्धावान् । भवेत् । सः । ततः स्वकीयधर्मात् । न चलेत् ॥ १५ ॥ ईदृगिति । ईदृक् स्वभाव इत्थंभूतसहजप्रकृतिः । पुरुषो भगवद्भक्तजनः । कृतार्थः कृतकृत्यः । भविता भविष्यति । ध्रुवं निश्चियमेव । इतीत्थम् । बुद्धिमता प्रशस्तमतिना भगवद्भक्तेन । ज्ञेयम् । स च ईदृक् स्वभावः पुरुष एव ।

अतो यथाऽत्र गृहिणः पुत्रवित्तगृहादिषु । प्रसङ्गोऽस्ति दृढस्तद्वत्कार्यः सत्सु मुमुक्षुभिः ॥ १३ ॥ पप्रच्छाथो शुकमुनिस्तं प्रभो ! स्वीयधर्मतः । आपद्यपि महत्यां यो न चलेल्लक्ष्म तस्य किम् ॥ १४ ॥ प्रोवाच हरिकृष्णस्तं योऽल्पस्य महतोऽपि वा । पालने कृष्णवचसः श्राद्धः स न चलेत्ततः ॥ १५ ॥ ईदृक्स्वभावः पुरुषः कृतार्थो भविता ध्रुवम् । इति ज्ञेयं बुद्धमता विश्वासार्हः स चेत्यपि ॥ १६ ॥ इति प्रभोर्वाक्यसुधां स साधुर्निपीय मोदं परमं जगाम । सदो निषण्णा अपरे च सर्वे तदीयभक्ता अपि तं प्रणेमुः ॥ १७ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते चतुःपञ्चाशत्तमस्तरङ्गः ॥ ५४ ॥

शकाब्दे विक्रमार्कस्य रसाश्वसुभूमिते । एकादश्यां तपःकृष्णे वचोऽमृतमिदं हरेः ॥ १ ॥

विश्वासार्ह आदेहान्तं सत्सङ्गे स्थास्यतीति विश्वासकरणार्हः । भवति । इत्यपि एवमपि । ज्ञेयम् ॥ १६ ॥ इतीति । इत्येवंविधाम् । प्रभोः श्रीहरेः । वाक्यसुधाम् । निपीय । सः साधुः शुकानन्दमुनिः । परमम् । मोदम् । जगाम प्राप । सदो निषण्णाः सभायामवस्थिताः । अपरे शुकानन्दमुनीतरे । सर्वे । तदीयभक्ताः श्रीहरेर्भक्तास्त्यागिगृहिजनाश्चापि । परमं मोदं जग्मुः । तं स्वावासं व्रजन्तं श्रीहरिम् । प्रणेमुर्नमश्चक्रुश्च ॥ १७ ॥ स्वभक्तानां भागवतधर्मपुष्टौ तु साधनम् । मोक्षद्वारापावृतत्वे साधनं यद्भवेत्तथा ॥ १ ॥ आपद्यपि चलेन्नैव यः स्वभक्तः स्वधर्मतः । तल्लक्ष्म यच्च तत्प्राह यो हरिः सोऽस्तु मद्धृदि ॥ २ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्स्नुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां चतुःपञ्चाशत्तमस्तरङ्गः ॥ ५४ ॥

पञ्चपञ्चाशत्तमे तु सद्बुद्धेश्चाप्यसन्मतेः । सन्तोऽसन्तश्च देशाद्या हेतवो हीत्थमीरितम् ॥ १ ॥ शकेति । शकेति पूर्वार्द्धे व्याख्यातम् । (१८७६) तपःकृष्णे

माघमासस्य कृष्णपक्षे । एकादश्यां तिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥१॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमस्योत्तमाख्यस्य । महीभुजः क्षितिपस्य । दुर्गे । स्वावासे पूर्वास्यस्वावाससौधवितर्दौ । उत्तमे । पीठे आसने । सितांशुकः परिधृतसकलश्वेतवसनः । स श्रीहरिः । न्यषीदत् ॥ २ ॥ वृतमिति । स्वभक्तनिकरै र्नानादेशागतैस्त्यागिगृहिस्वभक्तवृन्दैः । वृतं सभायां परिवेष्टितम् । प्रसन्नमुखपङ्कजम् । तं श्रीहरिम् । साधुवर्यः । मुक्तानन्दो मुनिः । कृतानतिर्विहिततत्कालोचितप्रणामः सन् । पप्रच्छ ॥३॥ सत्सङ्गमिति । हे हरे ! । अत्र लोके । सत्सङ्गम् । कुर्वतोऽपि । कस्यचित्त्वद्भक्तपुरुषस्य । कृष्णस्य । ते तव । भक्तौ नवविधभजने । यमानां त्वदुक्तानामहिंसादिस्वधर्माणाम् । पालने आचरणे च । दाढर्यं दृढत्वम् । नो ईक्ष्यते नैव दृश्यते ॥ ४ ॥ तत्रेति । तत्र तस्मिन्नर्थे । यत् । कारणं हेतुः । अस्ति । तत्कारणम् । मे मह्यम् । त्वम् । कृपया । वक्तुं । अर्हसि । हरिरिति । एवं मुक्तानन्दमुन्यनुयुक्तः श्रीहरिकृष्णो भगवान् । ऊचे तं प्रति जगाद । हे मुने ! । अत्र त्वदनुयुक्तार्थे । हेतुस्तु । असद्देशादिसेवनम् । अस्ति । हि ॥ ५ ॥ एतदेव विविच्याह । देशेति । हे मुने ! । देशकाल, क्रिया, सङ्गाः । सन्तः शुभाः !

तत्र दुर्गपुरे दुर्गे उत्तमस्य महीभुजः । स्वावास उत्तमे पीठे स न्यषीदत्सितांशुकः ॥ २ ॥
वृतं स्वभक्तनिकरैः प्रसन्नमुखपङ्कजम् । पप्रच्छ मुक्तानन्दस्तं साधुवर्यः कृतानतिः ॥ ३ ॥
सत्सङ्गं कुर्वतोऽप्यत्र भक्तौ कृष्णस्य ते हरे ! । पालने च यमानां नो दाढर्यं कस्यचिदीक्ष्यते ॥ ४ ॥
तत्र यत्कारणं तन्मे कृपया वक्तुमर्हसि । हरिरुचेऽत्र हेतुस्तु ह्यसद्देशादिसेवनम् ॥ ५ ॥
देशकालक्रियासङ्गाः सन्तोऽसन्तश्च सन्ति हि । सद्बुद्धेर्हेतवस्तत्र सन्तोऽसन्तस्त्वसिद्धयः ॥ ६ ॥
सत्सङ्गिनोऽपि त्रिविधा भवन्ति पुरुषा इह । उत्तमा मध्यमाश्चाथ कनिष्ठा इति विश्रुताः ॥ ७ ॥
कृष्णभक्तेस्तारतम्यात्तेषां भेदस्तु कीर्त्तितः । तत्रोत्तमाः कृष्णभक्तौ रताः स्युः सर्वथैव हि ॥ ८ ॥

असन्तोऽशुभाश्च । सन्ति । हि । एते देशादयश्चत्वारो ध्यान, शास्त्र, दीक्षा, मन्त्राणामुपलक्षणानि । तत्र देशादिषु मध्ये । सन्तो देशादयः । सद्बुद्धेर्धर्मभक्त्याचरणदृढता-सम्पादकबुद्धेः । हेतवः । सन्ति । अत्रास्मादुत्तरदानादेतदर्थः प्रश्नः प्रागननुयुक्तोऽपि ज्ञातव्यः । असन्तो देशादयस्तु । असद्धियो धर्मभक्त्याचरणादृढतासम्पादकबुद्धेः । हेतवः । सन्ति ॥ ६ ॥ एवं सामान्यतः प्रश्नोत्तरं कृत्वा पुनस्तद्दृढत्वाय युक्त्यन्तरमाह त्रिभिः । सदिति । हे मुने ! । इह लोके । सत्सङ्गिनः । पुरुषा अपि । उत्तमाः । मध्यमाः । अथ च । कनिष्ठाः । इत्यनयाऽऽख्यया । विश्रुता विख्याताः सन्तः । त्रिविधाः । भवन्ति ॥ ७ ॥ कृष्णेति । तेषां सत्सङ्गिपुरुषाणाम् । भेद उत्तमादिप्रकारस्तु । कृष्णभक्तेः स्वधर्माद्युपेतश्रीकृष्णनवधाभजनस्य । तारतम्यान् न्यूनाधिकभावाद्धेतोः । कीर्त्तितः । तत्र तेषु त्रिविधपुरुषेषु मध्ये । उत्तमाः सत्सङ्गिपुरुषाः । कृष्णभक्तौ । सर्वप्रकारेणैव । रता आसक्ताः । स्युः । हि ॥ ८ ॥

त इति । ते उत्तमा अपि सत्सङ्गिनः । असद्देशकालादिसेवया । असद्धियः पूर्वोक्तप्रकारेण असद्बुद्धियुक्ताः । स्युः । तर्हि तदा । इतरेषां मध्यमानां कनिष्ठानां च । का वार्त्ता ते तथाविधाः स्युस्तत्र किं वक्तव्यम् । ततो हेतोः । सन्तः । ते देशादयः सेव्याः ॥९॥ ननु तर्हि कथमसद्देशादौ सत्यपि केषाञ्चितद्बाधो न दृश्यते तत्राह । बलिष्ठेति । हे मुने ! । बलिष्ठप्राक्संस्कृतेरतिबलवद्भक्तिलक्षणपूर्वसंस्कारस्य । कस्यचित् । पुंसः सत्सङ्गिपुरुषस्यैव । असद्देशादिबाधः । नहि नैव । स्यात् । सर्वेषां बलिष्ठपूर्वसंस्कार-वर्जितानां सत्सङ्गिपुरुषाणां तु । कर्हिचित्कदाचिदपि । असद्देशादिबाधः । न स्यादिति न । अपित्वसद्देशादिना बाधो भवेदेवेत्यर्थः ॥ १० ॥ ननु सद्देशादिं श्रितस्यापि कस्यचिन्मतिः । कथमसत्येव तिष्ठति कथं च तस्यासतीमतिः सती स्यात्तत्राह त्रिभिः । सदिति । अत्र सत्सङ्गे । सद्देशादिम् । श्रितस्याश्रितस्यापि । कस्यचित् । पुंसः सत्सङ्गिपुरुषस्य । मतिः । यदि । निर्मला तु । न भवेन्नैव स्यात् । प्रत्युत । सा मतिः । असत्येव । तिष्ठेत् ॥११॥ तत्र तत्रेति । तन्मतेस्तथात्वे तु । सत्सङ्गिपुरुषस्य । प्राग्भवीयं पूर्वजन्मोद्भवम् । महत् । दुष्कर्म । ज्ञेयम् । वै । अथवा । इहास्मिन्नेव जन्मनि । कस्यचित् । साधोर्भगवदेकान्तिकस्य सतः । द्रोहः । जातः । इतीत्थमेव ।

तेऽप्यसद्देशकालादिसेवया स्युरसद्धियः । तर्हीतरेषां का वार्त्ता सेव्याः सन्तस्ततस्तु ते ॥ ९ ॥ बलिष्ठप्राक्संस्कृतेस्तु पुंसः कस्यचिदेव हि । नासद्देशादिबाधः स्यात्सर्वेषां न न कर्हिचित् ॥१०॥ सद्देशादिं श्रितस्यापि पुंसोऽत्र यदि कस्यचित् । असत्येव मतिस्तिष्ठेन्न तु सा निर्मला भवेत् ॥११॥ तत्र त्वस्य प्राग्भवीयं ज्ञेयं दुष्कर्म वै महत् । इह वा कस्यचिद्द्रोहः साधोर्जात इतीर्यते ॥ १२ ॥ अन्यथा न भवेदेवं वैपरीत्यं तु तस्य हि । नश्येत्तदपि सत्सेवां कुर्यान्निश्छद्म चेत्स तु ॥ १३ ॥ तां त्वकुर्वन्सतां सङ्गं कुर्वन्सङ्गं च पापिनाम् । पापकर्मरुचिर्मूर्खो वदत्येवमसङ्गतम् ॥ १४ ॥ बहुकालं करोम्यत्र सत्सङ्गमहमादरात् । तथापि मे मनो नैव स्थिरं भवति निर्मलम् ॥१५॥ इत्थं वदंस्त्वज्ञतमो बोध्यः स पुरुषो ध्रुवम् । सर्वथाऽतः सतां सङ्गः कार्यो नैवात्र पापिनाम् ॥१६॥

ईर्यते ज्ञायते ॥ १२ ॥ अन्यथेति । अन्यथोक्तरीत्या कथनाभावे । तस्योक्तविधस्य पुरुषस्य । एवमुक्तप्रकारम् । वैपरीत्यं बुद्धिनिर्मलताहेतावुपस्थितेऽपि तदभवनरूपो विपर्ययः । नहि नैव भवेत् । चेद्यदि । स उक्तविधः पुरुषः । निश्छद्म निष्कपटं यथातथा । सत्सेवां भगवदेकान्तिकसाधुपरिचर्याम् । कुर्यात् कायवाङ्मनोभिर्विदध्यात् । तर्हि । तद्वैपरीत्यमपि । नश्येत् भगवदेकान्तिकसाधुकरुणया दुष्कर्मनाशेनासन्मतिनिवृत्तिपूर्वं सन्मतिर्जायेतेत्यर्थः ॥ १३ ॥ विपक्षे दोषमाह सपादद्वाभ्याम् । तामिति । तां भगवदेकान्तिकसाधुसेवाम् । अकुर्वन्नविदधत् । सताम् । सङ्गम् । कुर्वन्नुपरिष्टाद्विदधत् । पापिनामधर्मिणां कुसङ्गिनाम् । सङ्गं च । कुर्वन् । मूर्खो विवेकवर्जित उक्तविधो मूढपुरुषः । पापकर्मरुचिः सन् । एवं वक्ष्यमाणम् । असङ्गतं पूर्वापरसङ्गतिवर्जितं वक्ष्यमाणवचनम् । वदति ॥ १४ ॥ बह्विति । अत्र लोके । अहम् । आदरात् । बहुकालं बहुसंवत्सरतः । सत्सङ्गम् । करोमि । तथापि । मे मम । मनः । निर्मलं सत् । स्थिरं भगवद्भक्तौ निश्चलम् । नैव । भवति ॥ १५ ॥ इत्थमिति । हे मुने ! । इत्थममुना प्रकारेण । वदन् । स पुरुषः । अज्ञतमोऽतिशयेन मूढः । बोध्यः । ध्रुवं निश्चितमेव । प्रकरणार्थं निगमयत्यर्द्धेन ।

अतो हेतोः । सर्वथा कायवाङ्मनोभिः । अत्र लोके । सतां भगवदेकान्तिकसाधूनाम् । सङ्गः । कार्यः । पापिनाम् । सङ्गः । नैव । कार्यः ॥ १६ ॥ इतीति । इतीत्थं-भूतम् । प्रभोः । तस्य श्रीहरेः । सुधायमानम् । वचः । निशम्य श्रुत्वा । स मुनिर्मुक्तानन्दः । साधुः । सदःस्थाः सभोपविष्टाः । भक्ताः । सर्वे । सन्तः साधवः । गृहिणश्चापि । तुतुषुः संतोषं प्रापुः । प्रसन्नवक्त्रं मुदितमुखारविन्दम् । तं श्रीहरिम् । ववन्दिरे नमश्चक्रुश्च ॥ १७ ॥ स्वभक्तस्याप्यदाढर्ये तु धर्मभक्त्योरुदीरितः । हेतुर्येन हरिर्मह्यं स दत्ताद्दृढतां तयोः ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासक - श्रीहरिकृष्णभगवत्सद्गुरुरघुवीराचार्यविरचितायां सेतुमालाख्यां श्रीहरिवाक्यसुधा-सिन्धुटीकायां पञ्चपञ्चाशत्तमस्तरङ्गः ॥ ५५ ॥

ज्ञानिभक्तस्य श्रेष्ठत्वं दौष्ट्यं मानस्य चास्ति यत् । मानत्यागे साधनं या निर्मानस्य बलिष्ठता ॥ १ ॥ आत्मनिष्ठादिहेतुर्या माहात्म्यसहिता हरेः । उपास्ति-रिति तत्सर्वं षट्पञ्चाशत्तमे स्मृतम् ॥ २ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८७६) तपसो माघमासस्य । कृष्णे कृष्णपक्षे । द्वादश्यां तिथौ । इदम् । हरेः ।

इति प्रभोस्तस्य वचो निशम्य सुधायमानं स मुनिश्च सन्तः । सर्वेऽपि भक्तास्तुतुषुः सदःस्थाः प्रसन्नवक्त्रं च ववन्दिरे तम् ॥१७॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते पञ्चपञ्चाशत्तमतस्तरङ्गः ॥ ५५ ॥

शकाब्दे विक्रमार्कस्य रसाश्ववसुभूमिते । द्वादश्यां तपसः कृष्णे वचोऽमृतमिदं हरेः ॥ १ ॥
तत्र दुर्गपुरे दुर्गं उत्तमक्ष्मेशितुर्गृहे । वेद्यां परिस्तृते मञ्चे स उपाविशदीश्वरः ॥ २ ॥
श्वेतं धोत्रं परिदधत्कौसुम्भं च शिरःपटम् । सस्वर्णतन्तुं कौसुम्भमुत्तरीयपटं दधत् ॥ ३ ॥
नानादेशागतस्वीयभक्तसङ्घपरिश्रितः । पद्यं शृण्वन् गीयमानं सवाद्यं साधुभिः प्रभोः ॥ ४ ॥

वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमक्ष्मेशितुः । दुर्गे । गृहे तस्यैव श्रीवासुदेवमन्दिरान्तिकस्थे प्रत्यग्द्वारभवने । वेद्यां बाह्यायां वितर्दौ परिस्तृते पुष्कलपिञ्जितपिचुभृतकौशेयतुलिकया सोत्तरच्छदया छादादिते । मञ्चे पर्यङ्कासने । ईश्वरः परमेश्वरः । स श्रीहरिः । उपाविशत्स्वावासात्प्रागागत्य तत्र स्थितोऽपि श्रीवासुदेवसान्ध्यनीराजनाविहितघण्टादुन्दुभिध्वनिं श्रुत्वा तन्मन्दिरे गत्वा तद्दर्शनं विधाय सतालिकावादनं श्रीकृष्णनामोच्चारणध्वनिं तत्स्तुत्यष्टकपठनं तत्प्रणामाचरणं च विधाय ततः पुनरागत्य तत्रास्थादित्यर्थः ॥ २ ॥ श्वेतमिति । श्वेतं धवलम् । धोत्रमधोवसनम् । परिदधत् । कौसुम्भमग्निशिखरङ्गरञ्जितम् । सस्वर्णतन्तुं शुद्धपुरट-सूत्रयुक्तम् । शिरःपटं शिरोवेष्टनवस्त्रम् । दधत् । कौसुम्भम् सस्वर्णतन्तुम् । उत्तरीयपटं प्रावरणीयवसनं च । दधत् ॥ ३ ॥ नानेति । नाना नानाविधा ये देशा-श्वरोत्तरप्रभृतयो विषयास्तेभ्य आगता दर्शनार्थं समायाताः स्वीयभक्ताः स्वकीयास्त्यागिगृहिभक्तजनास्तेषां सङ्घा वृन्दानि तैः परितः सभायां परिवेष्टितः । साधुभिर्मुक्तानन्दादि-मुनिभिः । सवाद्यं झर्झरमृदङ्गादिवादित्रवादनसंहितं यथातथा । गीयमानम् । प्रभोः श्रीकृष्णस्य । पद्यं प्राकृतभाषानिबद्धकीर्त्तनगायनम् । शृण्वन् ॥ ४ ॥

प्रीत इति । प्रभुरेवं विशेषणविशिष्टः श्रीहरिः । प्रीतो गायनश्रवणेनातिप्रसन्नः सन् । गायनान्ते कस्यचन पद्यस्य गानावसाने । स्वयं केनाप्यननुयुक्तत्वात्स्वत एव । सतो गायकांस्तान्मुक्तानन्दादिसाधून् । ऊचे । इति सार्द्धद्वयस्यैकान्वयः । यदूचे तदाह पादत्रयाधिकश्लोकद्वयेन । हे साधवः ! । हरिणा श्रीकृष्णेन । गीतायां महाभारते भीष्मपर्वणि वर्त्तमानायां भगवद्गीतायाम् । स्वस्य । भक्ताः । चतुर्विधाः । उदिताः ॥ ५ ॥ ते के इत्याकांक्षायां तद्बोधकतत्रत्यत्र्यक्षराधिकैकपादेन तानुत्तरार्द्धेन तेषु ज्ञान्यधिकत्वं चाह । आर्त्त इति । आर्त्तः पूर्वं तु महाप्रतिष्ठयैश्वर्येण च युक्तः सन्नपि देशकालवैषम्यादिना ताभ्यां हीनत्वात्पुनस्तल्लब्धिकामः । अर्थार्थी प्रागलब्धप्रतिष्ठैश्वर्योऽपि तद्गुणश्रवणोत्पन्नतत्प्राप्तिकामनः । अत एतयोः शास्त्रे ऐश्वर्यार्थीति संज्ञा भवतीति भावः । जिज्ञासुः प्रकृतिवियुक्तात्मस्वरूपावाप्तिमनोरथः । अतोऽस्यापि शास्त्रे कैवल्यार्थीति संज्ञास्तीति भावः । अथ च ज्ञानी भगवत्सेवाप्तिसुखाग्रे इहामुत्र भवप्रकृतिजन्यसुखानि प्रकृतिवियुक्तात्मस्वरूपसुखप्राप्त्यन्तं यत्किञ्चिदपि चाकिञ्चिन्मत्वा भगवन्तमेव परमप्राप्यं बुद्ध्वा केवलं ब्रह्मात्मना तत्सेवासुखाप्तीच्छुः । अतोऽस्य शास्त्रे भगवन्निष्ठ इति संज्ञास्तीति भावः । इत्येवम् । चतुर्विधा उदिता इति पूर्वेण सम्बन्धः । तेषु चतुर्विधेष्वपि भक्तेषु । ज्ञानी तु । नित्ययुक्तश्चैकभक्तिश्च तयोर्भावस्तत्त्वं तेन गुणेन । विशेषितः स्वयं भगवताऽतिश्रेष्ठत्वेनोक्त इत्यर्थः । तथा

प्रीतो भूत्वा गायनान्ते सत उचे स्वयं प्रभुः । भक्ताश्चतुर्विधाः स्वस्य गीतायां हरिणोदिताः ॥ ५ ॥
आर्त्तो जिज्ञासुरर्थार्थी ज्ञानी चेत्यथ तेष्वपि । ज्ञानी तु नित्ययुक्तैकभक्तित्वेन विशेषितः ॥ ६ ॥
भक्तभावो भगवतश्चतुर्णामस्त्यथापि वै । ईदृग्गुणेन श्रेष्ठत्वे ज्ञानिनो हेतुरस्ति कः ॥ ७ ॥
प्रश्नस्यास्योत्तरं ब्रूतेत्युक्तास्तेऽपि यथामति । कुर्वन्तोऽप्युत्तरं नैव यथार्थं विविदुर्यदा ॥ ८ ॥
तदोवाच स शृण्वन्तु सर्वेऽप्युत्तरमस्य मत् । माहात्म्यवेदनं विष्णोर्ज्ञानिनस्त्वस्ति सर्वथा ॥ ९ ॥

च भगवद्गीतायाम् । 'चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुन ? । आर्त्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ ? । तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते । प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः । उदाराः सर्व एवैते ज्ञानी त्वात्मैव मे मतम् । आस्थितः स हि युक्तात्मा मामेवानुत्तमाङ्गति'मित्यादि । एतदर्थो रामानुजभाष्यादवगन्तव्यम् ॥ ६ ॥ भक्तेति । भगवतः श्रीकृष्णस्य । भक्तभावो भक्तता तु । चतुर्णामार्त्तादिचतुर्विधभक्तानामपि । अस्ति । वै । अथापि । ज्ञानिनो भक्तस्य । ईदृग्गुणेन नित्ययुक्तत्वैकभक्तित्वरूपेण गुणेन श्रेष्ठत्वे । हेतुः । कः । अस्ति । किं कारणं विद्यते इत्यर्थः ॥ ७ ॥ प्रश्नस्येति । हे साधवः ! । अस्य । प्रश्नस्य । उत्तरम् । ब्रुत यूयं कथयत । इत्यमुना प्रकारेण । उक्ताः स्वानुयुक्तप्रश्नप्रतिवचनाय स्वयं हरिणा प्रेरिताः । ते साधवोऽपि । यथामति यथास्वमनीषम् । उत्तरम् । कुर्वन्तः सन्तोऽपि । यदा । यथार्थं यथायोग्यमुत्तरम् । नैव विविदुर्नैव जानन्ति स्म । तदेत्युत्तरेणान्वयः ॥ ८ ॥ तदेति । तदा । स श्रीहरिः । उवाच । हे सन्तः ! । सर्वे भवन्तः सकला अपि । अस्य प्रश्नस्य । उत्तरम् । मन्मतः सकाशात् । शृण्वन्तु । ज्ञानिनो भगवन्निष्ठभक्तस्य तु । विष्णोः श्रीकृष्णस्य । माहात्म्यवेदनं स्वरूपस्वभावगुणविभूत्यैश्वर्यादिभिरक्षरब्रह्मादिभ्योऽपि सर्वथोत्कृष्टत्वस्वरूपमहिमज्ञानम् । सर्वथा सर्वप्रकारेण । अस्ति ॥ ९ ॥

नष्टा इति । किञ्च । तस्य ज्ञानिभक्तस्य । कृष्णेतराः श्रीकृष्णसेवाव्यतिरिक्ताः । सर्वाः । वासनाः अप्राकृतस्यापि सुखस्योपभोगभावनाः । नष्टाः सर्वथा निवृत्ताः । सन्ति । अतोऽयमार्त्तादित्रिभ्यः सर्वथा श्रेष्ठ इति भावः । इतरेषामार्त्तादीनां त्रयाणां भक्तानां तु । सम्यग्यथार्थतया । तथात्वं श्रीकृष्णमाहात्म्य-वेदित्वम् । नास्ति । इतीत्थम् । गम्यतां ज्ञायताम् ॥ १० ॥ अत इति । अतो हेतोः । तेषामार्त्तादीनां त्रयाणां भक्तानाम् । कृष्णेतराः सर्वसुखरूपश्रीकृष्ण-सेवाभिन्नाः । वासना ऐश्वर्यकैवल्यसुखोपभोगभावनाः । शिष्टाः । एव । सन्ति । यथार्थभगवन्माहात्म्यावोधेन तासामनिवृत्तत्वादवशेषा विद्यन्ते इत्यर्थः । तस्मादेवं वासनाशेषत्वाद्धेतोः । त्रयाणामार्त्तादित्रिविधभक्तानाम् । ज्ञानिभक्तेन । तुल्यता समत्वम् । नास्ति ॥ ११ ॥ ननु तर्हि तेषां वासनाक्षयः कथं स्यादित्यत्राह । इच्छद्भिरिति । हे साधवः ! । इह लोके । तत्साम्यं ज्ञानिभक्ततुल्यताम् । इच्छद्भिरार्त्तादिभक्तैस्तु । एकान्तिकानामेकान्तिकसंज्ञानां भगवन्निष्ठसाधूनाम् । सङ्गं काय-वाङ्मनसामैकाग्र्येण प्रसङ्गम् । कृत्वा । ईशितुरक्षरादिसकलनियन्तुः श्रीकृष्णस्य । माहात्म्यम् । ज्ञेयमवश्यं बोद्धव्यम् । यतो यस्मात् । श्रीकृष्णमाहात्म्यज्ञानात् । वासनाक्षयः श्रीकृष्णसेवालब्धीतरसकलसुखोपभोगभावनानिवृत्तिः । स्यात् ॥ १२ ॥ इममर्थमेव सुखबोधाय पुनः स्पष्टतयाह । तेष्विति । तेष्वार्त्तादिषु त्रिषु भक्तेषु । या ।

नष्टाः कृष्णेतराः सन्ति सर्वास्तस्य च वासनाः । इतरेषां तथात्वं तु सम्यङ्नास्तीति गम्यताम् ॥ १० ॥
अतः कृष्णेतरास्तेषां शिष्टाः सन्त्येव वासनाः । तस्मान्न ज्ञानिभक्तेन त्रयाणामस्ति तुल्यता ॥ ११ ॥
इच्छद्भिस्त्विह तत्साम्यं ज्ञेयं माहात्म्यमीशितुः । सङ्गं कृत्वैकान्तिकानां यतः स्याद्वासनाक्षयः ॥ १२ ॥
तेष्वतिन्यूनतैवैषा या कृष्णेतरवासना । कृष्णमाहात्म्यबोधेन सोन्मूल्या तैः प्रयत्नतः ॥ १३ ॥
वैराग्यतीव्रतैव स्यान्निर्वासनहृदि ध्रुवम् । तद्योगाच्चेदहङ्कारः स्यात्तदा न्यूनताऽत्र सा ॥ १४ ॥
बलेन वात्मज्ञानस्य भक्तिदार्ढ्यबलेन वा । मानश्चेत्सम्भवेत्तर्हि भक्ते साऽप्यतिहीनता ॥ १५ ॥

कृष्णेतरवासना । एषा । एव । अतिन्यूनता ज्ञानिभक्ताग्रेऽतिनिकृष्टत्वम् । अस्ति । अनेन ज्ञानिभक्तस्य श्रेष्ठत्वमुक्तमिति भावः । अतः । तैरार्त्तादिभिस्त्रिभिर्भक्तैः । सा स्वात्मस्थातिन्यूनता । कृष्णमाहात्म्यबोधेन । प्रयत्नतः । उन्मूल्या आमूलाद्विनाश्या ॥ १३ ॥ एवं ज्ञानिभक्तस्य श्रेष्ठत्वहेतुं तदन्येषामार्त्तादीनां त्रयाणां भक्तानां न्यूनत्वहेतुं चोक्त्वा साम्प्रतं ज्ञानिभक्तेऽपि यदि कदाचिद्वैराग्यादिगुणमान आगच्छेत्तर्हि तस्यापि न्यूनता स्यादित्याह त्रयोदशभिः । वैराग्येति । हे साधवः ! । निर्वासन-हृदि वासनावर्जितस्य ज्ञानिभक्तस्य हृदये । वैराग्यतीव्रता तु । स्यादेव । ध्रुवं निश्चितम् । चेद्यदि । तद्योगाद्वैराग्यतीव्रतासम्बन्धात् । अहङ्कारो मत्सदृशः कोऽन्यो-ऽतिवैराग्यवानस्तीत्यभिमानः । स्याद्भवेत् । तदा तर्हि । अत्रास्मिन्निर्वासनज्ञानिभक्तेऽपि । सा वैराग्याहङ्काररूपा । न्यूनता । स्यात् ॥ १४ ॥ बलेनेति । अथवा । आत्मज्ञानस्यात्मनिष्ठायाः । बलेन तीव्रतया । अथवा । भक्तिदार्ढ्यबलेन । चेद्यदि । मानस्तदुभयतीव्रताभवोऽभिमानः । सम्भवेदुदियात् । तर्हि । भक्ते निर्वासनज्ञानि-भक्ते । सा तदुभयाभिमानरूपापि । अतिहीनतातिशयिता न्यूनता । स्यात् ॥ १५ ॥

मानीति । मान्युक्तविधगुणाभिमानवान् । ज्ञानिभक्तः । रङ्कं दीनम् । कृष्णभक्तम् । दृष्ट्वा । विनयात् विनयं स्वीकृत्य । न नमेत् । तदग्रे रङ्कश्रीकृष्णभक्ताग्रे । प्राञ्जलीः । न स्यात् । तं रङ्कं श्रीकृष्णभक्तम् । गिरा मधुरवाचा । न प्रशंसेत् त्वं धन्योऽसि वयमपि त्वद्दर्शनेन कृतार्थाः स्मो यत इत्थं कृष्णं भजसि मानुष्यं च सफलीकृतमित्येवं प्रशंसां न कुर्याच्च ॥१६॥ अत इति । अतो हेतोः । ज्ञानादिमानिनि ज्ञानादिगुणाभिमानवति । अत्रास्मिन् । भक्ते । न्यूनता । प्रोक्ता । तयैतया न्यूनतया । ज्ञानविरागाद्याः । तद्गुणा ज्ञानिभक्तगुणाः । न विवर्द्धन्ते विशेषणवृद्धिं नैव गच्छन्ति ॥ १७ ॥ मानेति । मानस्तम्भिनि स्वनिष्ठगुणगर्वेण नम्रतावर्जिते । भक्ते । गुणानाम् । अल्पता न्यूनत्वमेव । स्याद्भवेत् । हि । तेषां गुणानाम् । महत्ता वर्द्धिष्णुता तु । न स्यात् । अत्रास्मिन्नर्थे । दृष्टान्त उदाहरणमपि । निगद्यते कथ्यते ॥१८॥ दृष्टान्तमाह सत्रिपादैश्चतुर्भिः । खन्यमान इति । नृभिः सौराष्ट्रदेशीयजनैः । खन्यमाने ग्रामोपशल्यक्षेत्रादौ खनितुमारब्धे । कूपे । अधोऽधःप्रदेशे । पाषाणेऽश्मनि । उद्गते । आयाते सति । तदभिज्ञः काठिन्यमहत्त्वाल्पत्वाभ्यां पाषाणे जलानुद्गमोद्गमत्वाभिज्ञाता । टाङ्किकष्टङ्कशिल्पः । तमुद्गतपाषाणम् । दृष्ट्वा । तद्गुणान् जलोद्गमानुद्गमार्हतारूपपाषाणगुणान् ।

मानी रङ्कं कृष्णभक्तं दृष्ट्वा न विनयान्नमेत् । तदग्रे प्राञ्जलिर्न स्यान्न प्रशंसेच्च तं गिराः ॥ १६ ॥ अतोऽत्र न्यूनता प्रोक्ता भक्ते ज्ञानादिमानिनि । तया ज्ञानविरागाद्या विवर्द्धन्ते न तद्गुणाः ॥ १७ ॥ मानस्तंभिनि भक्ते स्याद् गुणानामल्पतैव हि । न तु तेषां महत्ताऽत्र दृष्टान्तोऽपि निगद्यते ॥१८॥ खन्यमाने नृभिः कूपे ह्यधः पाषाण उद्गते । तदभिज्ञष्टाङ्किकस्तं दृष्ट्वा वदति तद्गुणान् ॥ १९ ॥ अश्माऽयं सावकाशोऽस्ति टङ्काघाते यतो रवः । अस्मादुदेति गम्भीरस्तदत्रास्ति जलं महत् ॥ २० ॥ अयं त्वश्माऽस्त्यतिघनो यदस्मादुपरि ध्वनिः । टङ्काघाते जायतेऽथो स्फुलिङ्गा व्युच्चरन्त्यतः ॥ २१ ॥ अतः कोशार्द्धमात्रं वा कोशपादमितं जलम् । उद्भविष्यति कूपेऽत्र न कोशमितमप्यदः ॥ २२ ॥ काठिन्यगौरवाल्प्याभ्यामश्मनोऽत्र यथाम्बुनः । अल्पता गौरवे प्रोक्ते तथा मानेऽपि दृश्यताम् ॥ २३ ॥

वदति कूपस्वामिने कथयति ॥ १९ ॥ टाङ्किकवाक्यमाह त्रिभिः । अश्मेति । अयम् । अश्मा पाषाणः । सावकाशोऽधोऽन्तश्छिद्रः । अस्ति । यतो यस्माद्धेतोः । टङ्काघाते टंकेन प्रहते सति । अस्मादश्मनः सकाशात् । गम्भीरो निम्नमधुरः । रवः शब्दः । उदेति । तत्ततो हेतोः । अत्राश्मनि । महदतिशयितम् । जलम् । अस्ति ॥२०॥ अयमिति । अयम् । अश्मा तु । अतिघनोऽत्यन्तसान्द्रः । अस्ति । यद्यस्माद्धेतोः । टङ्काघाते सति । अस्मात्पाषाणात् । ध्वनिः शब्दःउपरि अधोऽनवकाशात्केवले उपरितनप्रदेशे । जायते । अथो अथ च । अतोऽस्मात्पाषाणात् । स्फुलिङ्गा वह्निकणाः । व्युच्चरन्ति उद्गच्छन्ति ॥ २१ ॥ अत इति । अतो हेतोः । अत्र । कूपे कोशार्द्धमात्रमर्द्धचर्मपुटप्रमाणम् । अथवा । कोशपादमितं कोशस्य चतुर्थभागपरिमितम् । जलम् । उद्भविष्यति उद्गमिष्यति । अदो जलम् । कोशमितमपि सम्पूर्णकोशपर्याप्तं तु । नोद्भविष्यति ॥ २२ ॥ काठिन्येति । अत्र दृष्टान्ते । यथा । अश्मनः । काठिन्यगौरवाल्प्याभ्यां कठिनताया महत्तयाऽल्पतया चेत्यर्थः । अम्बुनो जलस्य ।

अल्पतागौरवे अल्पत्वं प्रचुरत्वं चेत्यर्थः । प्रोक्ते । तथा । माने ज्ञानिभक्तस्य गुणाभिमानेऽपि । दृश्यताम् । मानाल्पत्वे गुणगौरवत्वं मानगौरवे गुणाल्पत्वं चानुमीयतामित्यर्थः ॥ २३ ॥ इममेवार्थं भंग्यन्तरेणाह द्वाभ्याम् । भक्त इति । मानस्तंभवति स्वगुणाभिमानन्यजन्यमदेनानम्रतायुक्ते । भक्ते । गुणाल्प्यमल्पगुणयुक्तत्वम् । अवर्द्धनं गुणवृध्यभावश्च । स्यात् । सोऽपि मानस्तंभवान् भक्तस्तु । अल्पोदकमहाकूप इव विशालोऽप्यल्पोदकः कूपो यथा । महान् । मतः । यथाविशालतया दृश्यमानः स्वल्पजलः कूप उपरिष्टान्महानपि न किञ्चित्तथाऽल्पगुण उपरिष्टादतिमहानिव दृश्यमानोऽपि यथार्थभक्तैरकिञ्चिद्गण्य इत्यर्थः ॥ २४ ॥ भक्त इति । गलितमानः साधनबलेन निवर्त्तितगुणाभिमानः । भक्तस्तु । वर्द्धमानमहागुणः प्रतिदिनं वृद्धिं गच्छन्तो महान्तो गुणा यस्य तथाविधः सन् । भूर्यम्बुनिभृतः प्राज्यजलापूर्णः । अक्षयः कोशैर्मुहुरुद्धरणेऽपि पुनरुद्गमसम्भवादक्षिणजलः । महाकूप इव विशालः प्रहिर्यथा । महान् । मतः । अक्षयजलाभिज्ञैः कर्षुकैरक्षयजलो महाकूप इव महत्त्वेऽप्युपरिष्टात्स्वगुणादर्शनीयशीलत्वात्स्वगुणगौरवेणैवान्यैस्तद्गुणाभिज्ञैरेकान्तिकभक्तैर्महानयं भवतीति मत्वा स बहुमानमतिश्रेष्ठत्वेन मानित इत्यर्थः ॥ २५ ॥ निस्तंभस्येति । निस्तंभस्य गुण-

भक्ते मानस्तम्भवति स्याद् गुणाल्पमवर्द्धनम् । अल्पोदकमहा कूप इव सोऽपि महान्मतः ॥ २४ ॥
भक्तो गलितमानस्तु वर्द्धमानमहागुणः । महान्महाकूप इव भूर्यम्बुनिभृतोऽक्षयः ॥ २५ ॥
निःस्तंभस्यैव हृदये साक्षान्नारायणः सदा । भक्तस्य कुरुते वासं निःस्तम्भः स ततो भवेत् ॥ २६ ॥
मुक्तानन्दोऽथ पप्रच्छ मानः सद्गुणसम्भवः । केनोपायेन जेतव्यस्तं वदाथाब्रवीद्धरिः ॥ २७ ॥
माहात्म्यं कृष्णभक्तानां सद्भ्यः सच्छास्त्रतस्तथा । यथावदेव ज्ञातव्यं मानं स्वस्य जिहासता ॥ २८ ॥
साष्टाङ्गप्रणतिः कार्या कृष्णभक्तेभ्य आदरात् । कार्या तत्परिचर्या च ताभ्यां मानो विलीयते ॥ २९ ॥

मानजन्यस्तब्धतावर्जितस्यैव । भक्तस्य । हृदये । साक्षान्नारायणः प्रत्यक्षः श्रीकृष्णो भगवान् प्रसन्नः सन्निति शेषः । सदा सर्वकालम् । वासं निवासम् । कुरुते । ततो हेतोः । स भक्तः । निःस्तंभः । भवेत् ॥ २६ ॥ मुक्तानन्द इति । अथानन्तरम् । मुक्तानन्दो मुनिः । पप्रच्छ श्रीहरिमनुयुक्तवान् । हे हरे ! । सद्गुणसम्भवः त्वद्भक्तस्य स्वनिष्ठज्ञानवैराग्यादिशोभनगुणोद्भवः । मानः । केन । उपायेन साधनेन जेतव्यः पराभाव्यः । तमुपायम् । वद मह्यं ब्रूहि । अथैवंविधमुक्तानन्दमुन्यनुयुक्तप्रश्नश्रवणानन्तरम् । हरिः स्वाश्रितशङ्कापरिहरणशीलत्वादन्वर्थनामा श्रीहरिकृष्णो भगवान् । अब्रवीत्तदुत्तरं कथयामास ॥ २७ ॥ माहात्म्यमिति । हे मुक्तानन्दमुने ! । स्वस्य । मानं स्वनिष्ठगुणगर्वमित्यर्थः । जिहासता त्यक्तुमिच्छता भक्तेन । सद्भ्यो निर्मानिभगवन्निष्ठसाधुभ्यः । तथा । सच्छास्त्रतः श्रीवासुदेवमाहात्म्यादिसद्ग्रन्थेभ्यः सकाशाच्च । कृष्णभक्तानाम् । माहात्म्यम् । यथावद्यथार्थतयैव । ज्ञातव्यम् ॥ २८ ॥ साष्टाङ्गेति । ततः । कृष्णभक्तेभ्यः । आदरात् । साष्टाङ्गप्रणतिः । कार्या । तत्परिचर्या कृष्णभक्तानामनुवृत्तिपूर्वकं कायवाङ्मनसामेकभावेन सेवा । कार्या । ताभ्यां तथाविधप्रणतिपरिचर्याभ्याम् । मानः । विलीयते ॥ २९ ॥

एवं द्वाभ्यां मानविलयनोपायमुक्त्वा साम्प्रतं तत्फलमाह । तीव्रेति । तीव्रवैराग्यतः । अथवा । अनन्यभक्तेरेकान्तिकभावसाध्यायाः प्रेमलक्षणाया भक्तेः । अथवा । ब्रह्मनिष्ठया ब्रह्मात्मैकभावेन । जात उत्पन्नः । मानः । यस्य भक्तस्य । नश्येत् । तस्मै । हरिः । प्रसीदति ॥३०॥ मानस्यान्तःकरणधर्मत्वेनान्यैः स्वेन च दुर्बोध्यत्वात्सः स्वस्मान्नष्टोऽनष्टश्चेति बोधाय प्रत्यक्षप्रमाणमाह द्वाभ्याम् । प्रमाणमिति । अत्र माननाशानाशयोः । ध्यानिनां सर्वदा भगवत्स्वरूपध्याननिष्ठानाम् । नृणां भगवदेकान्तिकभक्तजनानाम् । अनुभवः स्वकृतो निश्चयः । प्रमाणभूतः । ज्ञातव्यः । मानोद्गमे स्वाज्ञाततीव्रवैराग्यादिगुणमानोदये सति । ध्याने ध्यानकाले । अन्तःस्फुरितस्य इतिशेषः । कृष्णस्य । दृक् दृष्टिः । अतितीव्राऽतितीक्ष्णा । दृश्यते ध्यानिभक्तेन वीक्ष्यते ॥३१॥ निर्मानैरिति । निर्मानैर्विलीनगुणमानैर्ध्यानिभक्तैः । हृत्कजे स्वहृद्दयकमले । अस्य श्रीकृष्णस्य । स्फुरितस्येति शेषः । सा दृष्टिः । अतिमधुरा स्नेहभृत्वेनातिमनोज्ञा । दृश्यते । अतो हेतोः । मुमुक्षुणा भक्तेन । मानस्तंभः । सर्वथा सर्वप्रकारेण । प्रहातव्य उक्तसाधनाभ्यां त्याज्यः ॥ ३२ ॥ ननु लोके तु मानिनमेव जना महान्तं जानन्ति निर्मानिनं च न तथेत्येतन्न तेषां युक्तं वेदनमित्याह । लोकेति । अत्र लोके । यद्यपि

तीव्रवैराग्यतोऽनन्यभक्तेर्वा ब्रह्मनिष्ठया । जातो मानो यस्य नश्येद्धरिस्तस्मै प्रसीदति ॥ ३० ॥ प्रमाणमत्रानुभवो ज्ञातव्यो ध्यानिनां नृणाम् । मानोद्गमेऽतितीव्रा दृग्ध्याने कृष्णस्य दृश्यते ॥ ३१ ॥ निर्मानैः साऽतिमधुरा दृश्यतेऽस्य च हृत्कजे । सर्वथाऽतः प्रहातव्यो मानस्तम्भो मुमुक्षुणा ॥ ३२ ॥ लोकदृष्ट्या समानोऽत्र बलवान् यद्यपीक्ष्यते । तथापि स बली नैव निर्मानो बलवान्मतः ॥ ३३ ॥ महत्त्वसूक्ष्मताधिक्यात्पृथ्व्यादीनि यथोत्तरम् । बलवन्तीह भूतानि सन्ति चत्वारि यद्यपि ॥ ३४ ॥ आकाशः शून्यधर्मत्वान्निर्बलश्च जनेक्षया । तथाप्यसौ बली ज्ञेयस्तेभ्यो यत्स तदाश्रयः ॥ ३५ ॥ बलिष्ठोपि यथाकाशो लोकदृष्ट्याऽस्ति निर्बलः । निर्मानोऽतिबली तद्वद्ज्ञैर्निर्बलवन्मतः ॥ ३६ ॥

समानः स्वगुणमानयुक्तो भक्तः । लोकदृष्ट्या जनचक्षुषा । बलवान् । ईक्ष्यते । आटाटोपकृतवाक्चातुर्यादिबलेन महानिव दृश्यते इत्यर्थः । तथापि । स मानी भक्तः । बली महान् । नैव । मतः । भगवन्निष्ठभक्तैर्महानिति न स्वीकृत इत्यर्थः । किन्तु । निर्मानः स्वगुणमानवर्जितो भक्त एव । बलवान् । मतः । ज्ञानादिभिर्बलिष्ठगुणैर्युक्तत्वात्तैर्महानिति इत्यर्थः । भगवद्भक्तमहत्त्वामहत्त्वयोर्ज्ञानं लौकिकदृष्टिमतां न भवेदिति भावः ॥ ३३ ॥ इममर्थमेव दृष्टान्तेन द्रढयति त्रिभिः । महत्त्वेति । इह लोके । पृथ्व्यादीनि । चत्वारि । भूतानि । यद्यपि । यथोत्तरमेकैकोत्तरोत्तरमित्यर्थः । महत्त्वसूक्ष्मताधिक्यान्महत्त्वस्य सूक्ष्मत्वस्य चाधिकभावाद्धेतोः । बलवन्ति । सन्ति ॥ ३४ ॥ आकाश इति । आकाशश्च पञ्चमं भूतं नभस्तु । शून्यधर्मत्वात् । जनेक्षया लोकदृष्ट्या । निर्बलः । अस्ति । तथापि । असावाकाशः । तेभ्यः पृथ्व्यादिचतुर्भ्यो भूतेभ्यः । बली बलवान् । ज्ञेयः । यद्यतो हेतोः । स आकाशः । तदाश्रयः । पृथ्व्यादिचतुर्भूतानामाधारभूतो वर्त्तते इत्यर्थः ॥ ३५ ॥ दृष्टान्तानुवादेन सिद्धान्तमाह । बलिष्ठ इति । यथा । आकाशः । बलिष्ठः पृथ्व्यादिभूतचतुष्टयाश्रयत्वाद्बलवानपि । लोकदृष्ट्या । निर्बलः । अस्ति । तद्वत्तथा । अज्ञैर्निर्मानभक्तबलमजानद्भिर्जनैः । निर्बलवद्बलवर्जित-

सदृशतया । अमहत्त्वेनेत्यर्थः । मतोऽपि । निर्मानो गुणमानवर्जितो भक्तः । अतिवली अतिस्थिरप्रतिदिनवृद्धिमद्गुणयुक्तत्वाद तिमहान् । अस्ति ॥ ३६ ॥ प्रकरणार्थमुपसंहरति । वलिष्ठगुणयुक्तो निर्मानतास्थिरवर्द्धिष्णुवलवद्गुणसहितो भगवन्निष्ठभक्तः । बलवान् । हि । अतिमहानेवेत्यर्थः । इतीत्थंभूतात् । निश्चयाच्छास्त्रप्रमाणितयथार्थज्ञानि-भक्तकृतनिर्णयाद्धेतोः । मानम् । हित्वा । आत्मनिष्ठो ब्रह्मात्मैकभावयुक्तः । सुधीः स्वधर्मवैराग्यादिगुणैरचिततया केवलस्वात्मैकनाथपरमेश्वरप्रसन्नतास्थिरमतिः । पुमान् भगवन्निष्ठभक्तः । कृष्णं भजेत् । प्रतिदिनवर्द्धिष्णुस्नेहातिशयपूर्वं श्रवणादि नवधा भक्त्या श्रीकृष्णं परिचरेदित्यर्थः ॥ ३७ ॥ पप्रच्छेति । मुक्तानन्दो मुनिः । पुन-र्भूयोऽपि । तं श्रीहरिम् । पप्रच्छ । हे स्वामिन् ! । आत्मा जीवः । वपुस्त्रयात् स्थूलसूक्ष्मकारणदेहेभ्यः । भिन्नः स्वरूपस्वभावादिभिः पृथग्भूतः । अस्ति विद्यते । इतीत्थम् । सतां सच्छास्त्रहार्दाभिज्ञानां भगवदेकान्तिकसाधूनाम् । मुखात् साधूदितवचनानि श्रुत्वेत्यर्थः । सम्यग्यथार्थत एव । जानीमः । बहुवचनं स्वसतीर्थ्याभिप्रायेण ॥ ३८ ॥ तथेति । तथापि एवमात्मरूपे ज्ञाते सत्यपि । तत्साहचर्यात्स्थूलादिवपुस्त्रयसङ्गं प्राप्य । नानासङ्कल्पयोगतः । देहस्वभावादिकमुद्दिश्यान्यजनोदितवाक् श्रवणोद्-भूतानेकविधसङ्कल्पवशत्वादित्यर्थः । स आत्मा । दुःखी । कथं केन हेतुना । जायते । देहत्रयविलक्षणमात्मानं बुध्वापि तदभिमानं धृत्वा कुतो दुःखी भवतीत्यर्थः ।

बलिष्ठगुणयुक्तो हि बलवानिति निश्चयात् । मानं हित्वा भजेत्कृष्णमात्मनिष्ठः सुधीः पुमान् ॥ ३७ ॥
पप्रच्छ मुक्तानन्दस्तं पुनः स्वामिन्वपुस्त्रयात् । भिन्नोऽस्त्यात्मेति जानीमः सम्यगेव सतां मुखात् ॥ ३८ ॥
तथापि तत्साहचर्यान्नानासङ्कल्पयोगतः । कथं स जायते दुःखीत्युक्तस्तं हरिरब्रवीत् ॥ ३९ ॥
पक्वता ज्ञाननिष्ठाया यदा पुंसो भवेत्तदा । दैहिकं सकलं दुःखं सुखं चापि विलीयते ॥ ४० ॥
सच्छास्त्रश्रुतिमात्रेण सद्वाक्यश्रवणेन वा । न जायते सा तु सम्यक् किन्तूपासनया हरेः ॥ ४१ ॥
ये ये सिद्धदशां प्राप्ताः सार्वज्ञ्यं वापि देवताम् । ते ते सर्वेऽपीष्टदेवोपासनेनैव नान्यथा ॥ ४२ ॥

इत्यमुना प्रकारेण । उक्तो मुक्तानन्दमुनिनानुयुक्तः हरिः । तं मुक्तानन्दमुनिम् । अब्रवीत् ॥ ३९ ॥ पक्वतेति । हे मुने ! । यदा । पुंसो भगवद्भक्तजनस्य । ज्ञाननिष्ठाया भक्तेरङ्गभूताया देहत्रयविलक्षणात्मविचारस्थितेः । पक्वता । भवेत् । तदा । दैहिकं देहत्रयसम्बन्धि । सकलम् । दुःखम् । सुखं चापि । विलीयते विशेषतः क्षीणं जायते ॥४०॥ ननु तर्हि ज्ञाननिष्ठायाः पक्वता कथं स्यादिति पिपृच्छिषन्तं तं मुनिमालक्ष्य तत्पक्वता—साधनमाह त्रिभिः । सदिति । हे मुने । सा आत्मनिष्ठा-पक्वता तु । सच्छास्त्रश्रुतिमात्रेण केवलेन सच्छास्त्रोदितात्मनिष्ठाप्रकारश्रवणेन । अथवा । सद्वाक्यश्रवणेन साधूदितात्मनिष्ठाप्रकारस्य केवलेनाकर्णनेन । सम्यक् । न जायते । किन्तु । हरेः उपासनया । सर्वदा दिव्यावयवविशिष्टत्वेन साकारत्वस्थिरनिश्चयपूर्वं तन्माहात्म्यवेदनपूर्वं च भगवतः श्रवणादिनवधाभक्त्येत्यर्थः । सम्यक् । जायते ॥४१॥ अत्र सदाचारं प्रमाणयति । य इति । ये पुरुषाः । सिद्धदशामात्मनिष्ठाया दृढस्थितिम् । प्राप्ताः । अथवा । सार्वज्ञ्यमुत्पत्त्याद्यभिज्ञतादिषडैश्वर्यवत्त्वम् । अथवा । देवता-मिन्द्रादिदेवभावम् । प्राप्ताः । अपि शब्दात्परमधामप्राप्त्यादिग्रहणम् । ते । ते । सर्वेऽपि । इष्टदेवोपासनयैव । प्राप्ताः । अन्यथा भगवदुपासनामृते नैव प्राप्ताः ॥ ४२ ॥

उपासनातारतम्येनात्मनिष्ठातारतम्यमाह । यावदिति । यस्य भक्तस्य । यावद्यावत्प्रमाणम् । उपास्तिबलं भगवदुपासनासामर्थ्यम् । स्यात् । तस्य भक्तस्य । तावत्तावत्प्रमाणमेव । आत्मसुखमात्मनिष्ठा सुखाप्तिः । स्यात् । दुःखकार्श्यं दुःखानुसन्धानन्यूनत्वं च । स्यात् । अस्यार्थस्य स्फुटतया बोधाय पुनरपीममर्थमेवाह । अल्पेऽल्पप्रमाणे उपास्तिबले सति । अल्पमल्पप्रमाणमात्मसुखं दुःखकार्श्यं च स्यात् । भूरिणि प्रचुरे उपास्तिबले सति । भूरि प्रचुरमात्मसुखं दुःखकार्श्यं च स्यात् ॥ ४३ ॥ कृष्णेति । अतो हेतोः । ज्ञाननिष्ठासुसिद्धये । कृष्णोपास्तिः । साध्या । यतः । साधनसम्पदं साधनसम्पत्तिम् । विना । साध्यस्य फलस्य । सिद्धिः । नैव स्यात् ॥ ४४ ॥ ननु साधनाचरणस्य कश्चिदवधिर्विद्यते न वेत्याशङ्कायां तदवधिमाह व्रजेति । यस्यैकान्तिकभक्तस्य । व्रजाङ्गनावद्गोपीजनानामिव । हरौ । स्वाभाविकं नैसर्गिकम् । प्रेम । स्यात् 'क्षणं युगशतमिव यासां येन विनाऽभव'दित्युक्तप्रकारः स्नेहो भवेदित्यर्थः । तस्य तथाविधस्य भक्तस्यैव । किञ्चित्किमपि । कर्त्तव्यम् । नास्ति । अन्यस्य तथाभूतस्य भक्तस्य तु । विद्यते साधनं कर्त्तव्यं भवति । गोपीनामिव भगवति गाढानुराग एव साधनावधिभूतोऽस्तीत्यर्थः ॥ ४५ ॥ ननु

यावद्यस्योपास्तिबलं तस्य स्यात्तावदेव हि । दुःखकार्श्यं चात्मसुखमल्पेऽल्पं भूरि भूरिणि ॥ ४३ ॥
कृष्णोपास्तिरतः साध्या ज्ञाननिष्ठासुसिद्धये । साध्यस्य सिद्धिर्नैव स्याद्विना साधनसम्पदम् ॥ ४४ ॥
व्रजाङ्गनावद्यस्य स्यात्प्रेम स्वाभाविकं हरौ । तस्यैव किञ्चित्कर्त्तव्यं नास्त्यन्यस्य तु विद्यते ॥ ४५ ॥
उपासनायाः सिद्धिश्च कृष्णस्य स्यात्तदैव हि । माहात्म्यवेदनं सम्यग्यदा स्यात्सन्निषेवया ॥ ४६ ॥
अक्षराद्यधिपो योऽस्ति स एवात्र नराकृतिः । निजभक्तसुखायैव स्वेच्छया भाति नान्यथा ॥ ४७ ॥
नराकृतिर्दृश्यमानोऽपि स एवास्ति न चेतरः । अयमेव समाधौ यद्दृश्यतेऽतिप्रकाशवान् ॥ ४८ ॥

तर्हि भगवदुपासनायाः सिद्धिः कथं स्यादिति पिपृच्छिषन्तं तं मुनिमालक्ष्य तत्सिद्धिसाधनमपि स्वयमेवाह सार्द्धैः सप्तभिः । उपासनाया इति । हे मुने ! । यथा सन्निषेवया भगवदेकान्तिकसाधुनिश्छद्मसम्यक् परिचर्यया । कृष्णस्य प्रत्यक्षस्य श्रीकृष्णभगवतः । माहात्म्यवेदनम् । सम्यक् यथार्थतः । स्यात् । तदैव । कृष्णस्य । उपासनायाः । सिद्धिः । स्यात् । हि ॥ ४६ ॥ श्रीकृष्णमाहात्म्यवेदनप्रकारमाह पञ्चभिः । अक्षरेति । यः श्रीकृष्णो भगवान् । अक्षराद्यधिपोऽक्षरब्रह्मधामाद्यधिनाथः । आदिशब्दात्तदर्वाचीन - गोलोक - महावैकुण्ठादिधाम्नामप्यधिपतिर्बोध्यः । अस्ति । स इत्थंभूतैश्वर्यविशिष्ट एव । अत्र लोके । निजभक्तसुखायाणुमात्रस्वविरहाक्षमधर्मादि-सदृशस्वैकान्तिकभक्तेभ्यः सुखरूपस्वमूर्त्तिदर्शनादिसुखं प्रदातुम् । स्वेच्छया स्वसङ्कल्पेनैव । नराकृतिर्मनुष्याकारस्वभक्तसदृशमनुजाकारः सन् । भाति प्रतीयते । अन्यथा । न । मनुष्यसमानतया प्रतीयमानोऽपि कर्मपरतन्त्रजनसमानो नास्तीत्यर्थः ॥ ४७ ॥ दिव्यं सन्तं मनुजरूपमभिधाय साम्प्रतं मनुजं सन्तमपि तं दिव्यरूपमाह । नराकृतीति । नराकृतिर्मनुष्यसमानाकारः । दृश्यमानो लोकदृष्ट्या प्रतीयमानोऽपि । स दिव्याकृतिरक्षरब्रह्मपुराद्यधिप एव । अस्ति । इतरस्तद्भिन्नः । न च नैवास्ति । यद्य-

स्माद्धेतोः । समाधौ तत्कृपाप्राप्तसमाधिसिद्धिमद्भक्तजनहृत्पद्मे इत्यर्थः । अयं मनुजाकारतया प्रतीयमानो भगवानेव । अतिप्रकाशवान्सर्वोत्कृष्टप्रकाशवतोऽक्षरब्रह्मणः प्रकाशोऽपि यत्प्रकाशाग्रे खद्योतायते तथाविधातिशयितप्रकाशयुक्तः । दृश्यते । अत एव मनुजाकृतिरपि दिव्याकृतिभिन्नो नास्तीति भावः ॥ ४८ ॥ स्पष्टबोधायोक्तार्थं पुनराह द्वाभ्याम् । कोटीति । ईश्वरोऽक्षरब्रह्मादिनियन्ता । यः श्रीकृष्णः । अक्षरादौ ब्रह्मधामगोलोकादिषु धामसु कोटयर्का अपरिमितसूर्यास्तेषामिवाभा कान्तिर्यस्य तथाविधो नखद्योत एकैकनखप्रकाशो यस्य स तथाविधः सन् । राधालक्ष्म्यादिभिः कर्त्रीभिः । आदिशब्देन ब्रह्मभावापन्नमुक्तवृन्दग्रहणम् । दिव्यसामग्र्याऽमायिकगन्धपुष्पनैवेद्याद्युपचारेण करणेन । अनिशं सर्वकालम् । सेव्यते । हि प्रसिद्धम् ॥ ४९ ॥ स इति । स एवंविधमहिमः श्रीकृष्ण एव । अत्र मनुष्यलोके । दिवारात्रौ दिवसे रजन्यां च । सूर्येन्दुभ्यामुष्णभानुशीतभानुभ्याम् । प्रकाशितः सन् । प्राकृतजनैः सकलमनुष्यसाधारणभक्तजनैः । सेवितो लौकिकचन्दनपुष्पनैवेद्यादिभिः परिचरितः सन् । नरो यथा मनुष्य इव । वर्त्तते । इति द्वयोरेकसम्बन्धः ॥ ५० ॥ एष इति । एष आत्यन्तिकलयेऽनेककोटिब्रह्माण्डविनाशावसरेऽपि । स्वधाम्नि मुक्तकोटिकृतपरिचर्योऽयं

कोट्यर्काभनखद्योतो ह्यक्षरादौ य ईश्वरः । राधालक्ष्म्यादिभिर्दिव्यसामग्र्या सेव्यतेऽनिशम् ॥ ४९ ॥ स एवात्र दिवारात्रौ सूर्येन्दुभ्यां प्रकाशितः । सेवितः प्राकृतजनैर्वर्त्तते च नरो यथा ॥ ५० ॥ एष एव हि सर्गादौ जगत्कर्त्ताऽथ पोषकः । भवतीत्यादिमाहात्म्यं ज्ञेयं साश्चर्यमीशतुः ॥ ५१ ॥ देहान्तेऽपि महापापी यन्नामस्मरणादपि । मुच्यते सर्वपापेभ्यः स साक्षान्मिलितोऽस्ति माम् ॥ ५२ ॥ इति निश्चित्य कर्त्तव्या निश्छद्मोपास्तिरीशितुः । तयाऽऽत्मनिष्ठादार्ढ्यं स्यान्न दुःखं दैहिकं ततः ॥ ५३ ॥

मनुजाकृतिर्भगवानेव सर्गादौ सृष्टिसमये । जगत्कर्ता मूलप्रकृतिपुरुषद्वाराऽनेककोटिब्रह्माण्डसर्गविधाता । अथ च । पोषकस्तेषां स्थितिकर्त्ता । इदं प्रलयस्याप्युपलक्षणम् । भवति इत्थंभूतो विद्यते । इत्यादि इत्थंविधतया प्रोक्तप्रभृतिकम् । ईशितुः सर्वेश्वरस्य प्रत्यक्षभगवतः । माहात्म्यम् । साश्चर्यं यथातथा । ज्ञेयम् ॥ ५१ ॥ देहेति । महापापी ब्रह्महत्यादिमहापापकर्त्ता जनोऽपि । देहान्ते स्वदेहावसानसमयेऽपि । यन्नामस्मरणात् स्वामिनारायणेति पञ्चवर्णात्मकनामादि यदीयनाममात्रोच्चारणादपि । सर्वपापेभ्यः । मुच्यते । स इत्थंभूतोक्तमहिमवान् भगवान् । माम् । साक्षात्प्रत्यक्षः सन् । मिलितो निष्कारणकरुणया सङ्गतः । अस्ति । इतीत्युत्तरेणान्वयः ॥ ५२ ॥ इतीति । हे मुने ! । इत्यमुना प्रकारेण । निश्चित्य । ईशितुरीश्वरेश्वरसाक्षाद्भगवतः । उपास्तिरुपासना । निश्छद्म निष्कपटं यथा । कर्त्तव्या । तयेत्थंविधयोपास्त्या । आत्मनिष्ठादार्ढ्यम् आत्मनिष्ठाया दृढता । स्यात् । ततस्तेनात्मनिष्ठादार्ढ्येन । दैहिकम् । दुःखम् । न स्यात् ॥ ५३ ॥

इतीति । इत्येवंविधम् । प्रभोरतिसमर्थस्य । तस्य श्रीहरेः । सुधोपमेयं पीयूषसमानम् । वचः । नीशम्यादरेण श्रुत्वा । स मुनिर्मुक्तानन्दमुनिः । तोषं संतोषम् । आप । सदःस्थाः समीपविष्टाः । अपरे । सर्वे । भक्तास्त्यागिगृहिभक्तजनाः । हृदये मनसि । मोदमानन्दम् । आप्ताः । प्राप्ताः सन्तः । तं स्वावासं व्रजन्तं श्रीहरिम् । प्रणेमुर्नमश्चक्रुः ॥ ५४ ॥ श्रैष्ठ्यं स्वज्ञानिभक्तस्य दौष्ठ्यं मानस्य तज्जये । साधनं स्वस्य निर्मानिभक्तस्य बलिताऽधिका ॥ १ ॥ स्वमाहात्म्ययुतोपास्तिरात्मनिष्ठादिकारणम् । एतान्युक्तानि येन श्रीहरिर्मेऽस्त्विष्टदो हि सः ॥ २ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्सूनुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटिकायां षट्पञ्चाशत्तमस्तरङ्गः ॥ ५६ ॥

मुक्तिहेतुस्तथा स्नेहद्वैविध्यं वैरिताधिका । दुःस्वभावे तथा सप्तपञ्चाशतम इरिता ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८७६) फाल्गुनाद्यद्वितीयायां तपस्य मासस्य शुक्लपक्षीयद्वितीयातिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥१॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमस्य नृपस्य । दुर्गे । सतां साधुजनानाम् । आश्रमे मठे ।

इति प्रभोस्तस्य सुधोपमेयं वचो निशम्याप मुनिः स तोषम् । भक्ताः सदःस्था अपरे च सर्वे मोदं प्रणेमुर्हृदये तमाप्ताः ॥ ५४ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते षट्पञ्चाशत्तमतस्तरङ्गः ॥ ५६ ॥

शकाब्दे विक्रमार्कस्य रसाश्ववसुभूमिते । फाल्गुनाद्यद्वितीयायां वचोऽमृतमिदं हरेः ॥ १ ॥
तत्र दुर्गपुरे दुर्गे उत्तमस्याश्रमे सताम् । सितवासा वृतो भक्तैर्न्यषीदत्सोंऽशुकासने ॥ २ ॥
साधून्स ऊचे प्रष्टव्यं स्याच्चेत्किञ्चन कस्यचित् । स तर्हि पृच्छत्वित्युक्ते मुक्तानन्दस्तमब्रवीत् ॥ ३ ॥
स्वामिन्संसृतिमुक्तेर्यदसाधारणकारणम् । स्यात्तद्ब्रूहीति पृष्टोऽसौ प्रोवाच शृणु सन्मते ! ॥ ४ ॥
राधापतेः स्वरूपस्य माहात्म्यस्य च तत्त्वतः । वेदनं यत्तदेवोक्तं परमं मुक्तिकारणम् ॥ ५ ॥

अंशुकासने अतियुक्त्यास्तृते द्वित्रवस्त्रविष्टरे । सितवासाः परिधृतसकलश्वेतवसनः । भक्तैर्नानादेशागतैस्त्यागिगृहिभक्तजनैः । वृतः सभायां परिवारितः । स श्रीहरिः । न्यषीदत्स्वावासादागत्योपविवेश ॥ २ ॥ साधूनिति । स श्रीहरिः । साधून्मुक्तानन्दादीन्परमहंसान् । ऊचे । हे साधवः । चेद्यदि । कस्यचित्समीपविष्टस्य यस्य कस्यचित्परमहंसस्य । किञ्चन यः कश्चित्प्रश्न इत्यर्थः । प्रष्टव्यं प्रष्टुं व्यसितम् । स्यात् । तर्हि । स परमहंसः । पृच्छतु । इत्यमुना प्रकारेण । उक्ते श्रीहरिणा कथिते सति । मुक्तानन्दो मुनिः । तं श्रीहरिम् । अब्रवीत् ॥३॥ स्वामिन्निति । हे स्वामिन् ! । संसृतिमुक्तेर्जीवानामनादिकालावर्त्तितजन्ममरणप्रवाहनिवृत्तेः । यत् । असाधारणकारणम् । स्यात् । तत् । ब्रूहि मह्यमुपादिश । इत्यमुना प्रकारेण । पृष्टो मुक्तानन्दमुनिनानुयुक्तः । असौ श्रीहरिः । प्रोवाच । हे सन्मते ! । शृणु त्वत्प्रश्नोत्तरमवधेहि ॥४॥ राधेति । राधापते रासेश्वरीप्राणनाथस्य प्रत्यक्षश्रीकृष्णस्य । स्वरूपस्य सदाकिशोरस्यानन्तमन्मथमनोहरिलावण्या–पूर्णमुखबाहूरुपादाद्यवयवस्य प्रतीकोद्गच्छदानन्दोत्तरोत्तराधिकत्वस्य

सनातनदिव्याकारस्य । माहात्म्यस्य पूर्वतरङ्गोदितस्याक्षरपरत्वादेर्महिमातिशयस्य च । तत्त्वतो यथार्थतया । यत् । वेदनं बोधनम् । तदेव । परममसाधारणम् । मुक्तिकारणम् । उक्तम् । अत्र यद्यपि भगवत्स्वरूपमाहात्म्यज्ञाने परममुक्तिकारणत्वेनाभिहिते तथापि तयोः स्वधर्मात्मनिष्ठा वैराग्योपेतभक्त्युत्पत्तिहेतुत्वादनयोः सर्वदा तद्युक्तत्वमस्त्येवं सति स्वधर्मादियुक्तया भक्त्यैव परमा मुक्तिरित्यभिहितमिति भावः ॥ ५ ॥ ननु भगवत्स्वरूपज्ञानादेः कथं परममुक्तिहेतुत्वमुच्यते यतो भगवति प्रेमातिशयवतामपि तथात्वस्मरणादिति चेत्तत्रापि तद्धेतुत्वमस्तीत्याह । गाढेति । भगवति । गाढस्नेहात् । देहिनां जीवानाम् । मुक्तिः । भवति । इत्यपीत्थमपि । श्रूयते । शास्त्रेष्वितिशेषः । तथा च शाण्डिल्यसूत्रे । 'अथातो भक्तिजिज्ञासा । सापरानुरक्तिरीश्वरे । तत्संस्थस्यामृतत्वोपदेश'इति । तत्र गाढस्नेहे । अस्य श्रीकृष्णस्वरूपमाहात्म्यज्ञानस्यैव । हेतुता कारणता । ज्ञातव्या । 'माहात्म्यज्ञानपूर्वस्तु सुदृढः सर्वतोऽधिकः । स्नेहो भक्तिरिति प्रोक्तस्तया मुक्तिर्न चान्यथे'ति तत्त्वदीपनिबन्धे श्रीवल्लभाचार्योक्तेः ॥६॥ ननु स्नेहोऽपि माहात्म्यज्ञानभवः स्वाभाविकश्चेति द्विधा भवति तत्राद्यस्य माहात्म्यज्ञानमूलत्वात्तेन परमा मुक्तिर्भवतु द्वितीयस्य तु तन्मूलत्वाभावात्कथं कुत्रचित्तेनापि मोक्षोऽभिहितोऽस्तीति चेन्माहात्म्यज्ञानमूलस्नेहस्य

गाढस्नेहाद्भगवति मुक्तिर्भवति देहिनाम् । इत्यपि श्रूयते तत्र ज्ञातव्याऽस्यैव हेतुता
॥ ६ ॥ स्नेहोऽपि द्विविधो ज्ञेयस्तत्राद्यो गुणवित्तिजः । श्रीकृष्णस्य द्वितीयश्च ज्ञेयः
साहजिको मुने ! ॥ ७ ॥ यथा स्त्रीपुत्रवित्तादौ स्नेहः स्वाभाविको दृढः । तथैव
साक्षात्कृष्णे स्यात्स साहजिक उच्यते ॥ ८ ॥ अविचारित एवासौ यः स्नेहः
स्याद्धरौ स तु । तथैव सर्वदा रक्ष्यो न कार्याऽत्र विचारणा ॥ ९ ॥ न च तर्कबले-
नापि स्थापनोत्थापने क्वचित् । कर्त्तव्ये तस्य भक्तेन देहपातावधि ध्रुवम् ॥ १० ॥

स्थिरत्वात्स तु सर्वोत्तम एव द्वितीयस्तु विघ्नसम्भवे नश्यत्यतोऽपकृष्टस्तथापि तत्र विघ्नानुदये तेनापि मोक्षसम्भवात्तस्य भगवद्विषयत्वेन गरीयस्त्वाच्च तथाविधोऽपि स स्थिरीकर्त्तव्य इत्याह चतुर्भिः । स्नेह इति । हे मुने ! । स्नेहोऽपि । द्विविधः । ज्ञेयः । तत्र तयोर्मध्ये । आद्यः प्रथमः । श्रीकृष्णस्य । गुणवित्तिजो भगवन्निष्ठगुणज्ञानजन्यः । भगवन्महिमावबोधोद्भव इत्यर्थः । ज्ञेयः । द्वितीयश्च । साहजिकः ज्ञेयः ॥ ७ ॥ प्रथमस्नेहस्य तु गुणवित्तिजत्वं लक्षणमभिहितं द्वितीयस्य लक्षणं दृष्टान्तोक्तिपूर्वमाह । यथेति यथा । स्त्री पुत्र वित्तादौ । स्वाभाविकः । दृढः । स्नेहः स्यात् । तथैव । साक्षात्कृष्णे । यः स्वाभाविकः दृढः स्नेहः स्यात् । स स्नेहः । साहजिकः । उच्यते ॥ ८ ॥ अविचारित इति । अविचारितो भगवद्गुणज्ञानमन्तरापि जात एव । यः । असौ साहजिकः । स्नेहः । हरौ । स्यात् । स स्नेहस्तु । तथैवाविचारित एव । सर्वदा । रक्ष्यः स्थिरीकर्त्तव्यः । अत्र साहजिकस्नेहे । विचारणा विचारः । न कार्या ॥ ९ ॥ नेति । भक्तेन हरौ साहजिकस्नेहवता भक्तजनेन । देहपातावधि स्वदेहपातपर्यन्तम् । क्वचित्कदाचिदपि । तर्कबलेन नृनाव्यधृतो भगवतश्चरित्रगुणागुणयोरूहापोहसामर्थ्येनापि तस्य साहजिकस्नेहस्य । स्थापनोत्थापने । न कर्त्तव्ये । ध्रुवं निश्चितमेव ॥ १० ॥

ननु माहात्म्यज्ञानोद्भवस्नेहवन्तोऽपि कुशाग्राल्पधीत्वेन द्विविधास्तत्राद्यानां तु श्रेष्ठत्वेन हरेर्नरानुकरणदर्शने सत्यपि मोहाभावात्तत्स्नेहविनाशो न जायते द्वितीयानां तु तथाविधहरिचरित्रदर्शने मोहो भवेदतः स स्नेहो नश्यत्यतस्तेषां तत्फलं कदा स्यादिति चेज्जन्मान्तरे तेषां तद्भविष्यतीत्याह सार्द्धैस्त्रिभिः । गुणेति । येषां भगवद्भक्तपुरुषाणाम् । गुणज्ञानोद्भवो हरिमहिमावबोधजः । स्नेहः । स्यात् । ते । पूरुषास्तु । कुशाग्रधिषणाः सूक्ष्ममतयः । अल्पधियः स्थूलमतयश्च । इतीत्थम् । द्विधा । उदिता उक्ताः सन्ति ॥ ११ ॥ तत्रेति । तत्र तेषु द्विविधेषु मध्ये । आद्यानां कुशाग्रधिषणानाम् । स गुणज्ञानोद्भवः स्नेहः । प्रतिदिनम् । वर्द्धमानः सन् । पुष्यति सुतरां पुष्टो भवति । सुदृढो जायते इत्यर्थः । हरेः । नरानुकरणे श्रीहरिणा मनुष्यभावानुसरणत्वेन कृतस्य चरित्रस्य दर्शने सत्यपीत्यर्थः । असावुक्तविधः स्नेहः । क्वचित्कदाचिदपि । न ह्रसति क्षिणो न भवति ॥ १२ ॥ इतरेषामिति । इतरेषामल्पधियां भगवद्भक्तपुरुषाणां तु । क्वचित्कदाचित् । त्राकृतेर्धृतमनुष्यसमानाकारस्य । कृष्णस्य । प्राकृतक्रियां लौकिकजनसमानं भयभावनादिकर्म । दृष्ट्वा । अनीशतर्कादनीश्वरत्वसम्भावनतः । सद्य एव । स उक्तप्रकारो गुणोद्भवः स्नेहः । लीयते तिरोभावं प्राप्नोति ॥ १३ ॥

गुणज्ञानोद्भवः स्नेहो येषां स्यात्ते तु पूरुषाः । कुशाग्रधिषणा अल्पधियश्चेति द्विधोदिताः ॥ ११ ॥ तत्राद्यानां प्रतिदिनं वर्द्धमानः स पुष्यति । हरेर्नरानुकरणेऽप्यसौ न ह्रसति क्वचित् ॥ १२ ॥ इतरेषां तु कृष्णस्य त्राकृतेः प्राकृतक्रियाम् । क्वचिद्दृष्ट्वाऽनीशतर्कात्सद्य एव स लीयते ॥ १३ ॥ जन्मान्तरे ततस्तेषां तत्फलं तु भविष्यति । कुशाग्रधिषणैर्भाव्यं सर्वैर्भक्तैरतो ध्रुवम् ॥ १४ ॥ कुशाग्रधिषणानां तु माहात्म्यज्ञानसम्भवे । दुःस्वभावो महाविघ्नः स्नेहेऽप्यस्तीति गम्यताम् ॥ १५ ॥ कार्यः प्रयत्नो भक्तैः स्वदुःस्वभावापनुत्तये । अतः प्रागभवन् भक्ताश्च्युताः श्रेयोध्वनो यतः ॥ १६ ॥ स एव मुक्तिमार्गैकप्रतिबन्धोऽस्ति सर्वथा । दुःखसम्पादितमहागुणेषु स कलङ्ककृत् ॥ १७ ॥

जन्मेति । ततोऽस्मिन् जन्मनि स्नेहस्य लयभावानन्तरम् । तेषामल्पधियां भगवद्भक्तानाम् । तत्फलं लयभावात्पूर्वं वर्त्तमानस्य भगवति कृतस्य स्नेहस्य व्युष्टिं तु । जन्मान्तरेऽन्यजन्मनि । भविष्यति । अतो हेतोः । सर्वैः । भक्तैः । कुशाग्रधिषणैः । भाव्यं भवितव्यम् । ध्रुवं निश्चितमेव ॥ १४ ॥ कुशेति । कुशाग्रधिषणानाम् । माहात्म्यज्ञानसम्भवे । स्नेहे विषयेऽपि । दुःस्वभावः ब्रह्मचर्यादिस्वनियमेषु यथार्थावर्त्तनेन सत्सङ्गाद्बहिर्निष्कासिका सत्सङ्गानुचिता स्वाप्रकृतिः । महाविघ्नोऽतिशयितविघ्नरूपः । अस्ति । इतीत्थम् । गम्यताम् ॥ १५ ॥ कार्य इति । अतो हेतोः । भक्तैः । स्वदुःस्वभावापनुत्तये भगवदेकान्तिकसाधुभिः प्रोक्तया युक्त्या स्वकीयदुष्टप्रकृतिनिवृत्त्यै । प्रयत्नः कार्यः । यतो दुःस्वभावात् । प्राक् पूर्वम् । भक्ताः । श्रेयोऽध्वनः स्वकल्याणपथात् । च्युता भ्रष्टाः । अभवन् ॥ १६ ॥ पुनरपि दुःस्वभावं विशिनष्टि । स इति । स दुःस्वभाव एव । सर्वथा । मुक्तिमार्गैकप्रतिबन्धः सत्सङ्गरूपमोक्षपक्षे प्रतिरोधार्गलारूपः । अस्ति । स दुःस्वभाव एव । दुःखेनातिदुःखसहनेन सम्पादिता अर्जिता ये महागुणाः स्वधर्मज्ञानवैराग्यादयस्तेषु । कलङ्ककृदवर्णजनकः । अपवादोत्पादक इत्यर्थः । अस्ति ॥ १७ ॥

अथो इति । अथो एवंभूतश्रीहरिवचनश्रवणानन्तरम् । शिवानन्दमुनिः । सतां पतिं साधुजनैकनाथम् । तं श्रीहरिम् । पप्रच्छ । हे हरे ! । मुक्तिमार्गस्त्वयोक्तो मोक्षपथस्तु । सत्सङ्गः । भवति । अत्र तथाभूते सत्सङ्गे । दुःस्वभावः । विघ्नकृत् । भवति ॥ १८ ॥ मुक्तीति । मुक्तिवर्त्मस्थितिरुचेरादेहपातं सत्सङ्गावस्थानप्रीतेरपि । पुंसस्त्वद्भक्तजनस्य । स दुःस्वभावः । वर्त्तते । तस्य दुःस्वभावस्य । निवृत्तिः । कथं केन साधनेन । स्यात् । इत्यमुना प्रकारेण । पृष्टः शिवानन्दमुनिना कृतपृच्छः । हरिः । अब्रवीत् ॥ १९ ॥ भवेदिति । हे मुने ! । यस्य भक्तस्य । यः । स्वभावो दुःस्वभावः । मुक्तिवर्त्मनि सत्सङ्गे । विघ्नकृत् । भवेत् । यदि यर्हि । तस्मिन् दुःस्वभावे । अतिशत्रुधिया ममायं महान् शत्रुर्भवतीति मत्या । अरुचिरप्रीतिः । न भवेत् ॥ २० ॥ तर्हीति । तर्हि । तस्य भक्तस्य । सत्सङ्गप्रेप्सा आदेहपातं सत्सङ्गे स्थित्वा भगवत्प्रीतिहेतुगुणप्राप्तीच्छा । पूर्णा सम्पूर्णा । नास्ति । तेन भक्तेन । दुष्टः । स्वभावोऽपि । शत्रुवत् । न च नैव ।

अथो शिवानन्दमुनिस्तं पप्रच्छ सतां पतिम् । मुक्तिमार्गस्तु सत्सङ्गो दुःस्वभावोऽत्र विघ्नकृत् ॥ १८ ॥
मुक्तिवर्त्मस्थितिरुचेरपि पुंसः स वर्त्तते । कथं तस्य निवृत्तिः स्यादिति पृष्टोऽब्रवीद्धरिः ॥ १९ ॥
भवेत्स्वभावो यो यस्य मुक्तिवर्त्मनि विघ्नकृत् । अतिशत्रुधिया तस्मिन्न भवेदरुचिर्यदि ॥ २० ॥
तर्हि तस्य न सत्सङ्गप्रेप्सा पूर्णाऽस्ति निश्चितम् । तेन दुष्टः स्वभावोऽपि शत्रुवद्विदितो न च ॥ २१ ॥
यथा स्वमित्रं कश्चित्स्यात्तेन चात्मसहोदरः । हन्येत चेत्तदा तस्मिन्मित्रधीः स्यान्न पूर्ववत् ॥ २२ ॥
किन्तु तन्मारणाद्योग एव वर्त्तेत सोऽन्वहम् । मित्रसम्बन्धतो भ्रातृसम्बन्धस्याधिकत्वतः ॥ २३ ॥
तथैव दुःस्वभावोऽत्र येन स्वक्षेमवर्त्मभित् । विदितः स्यात्स तु सदा तस्मिन्स्यादतिवैरिधीः ॥ २४ ॥

विदितः । अस्ति । निश्चितम् । यदि शत्रुवद्विदितः स्यात्तर्हि तस्मिन्न रुचिर्भवेदेवेत्यर्थः । अनेन स्वदुःस्वभावो महान् रिपुरस्तीति वेद्यं ततस्तन्निवृत्तिर्भवेदिति प्रश्नोत्तरं कृतमिति ज्ञेयम् । इति द्वयोरेकसम्बन्धः ॥ २१ ॥ एतदेव दृष्टान्तेन सुस्पष्टतयाह चतुर्भिः। यथेति । यथा कश्चित् । स्वमित्रम् । स्यात् । चेद्यदि । तेन मित्रेण । आत्मसहोदरः स्वकीय एकोदरो भ्राता । हन्येत । तदा । तस्मिन्मित्रे । मित्रधीर्ममायं सखा भवतीति मतिः । पूर्ववद्भ्रातृहननात्प्राग्यथा । न स्यात्किन्तु वैरिधीरेव भवेदित्यर्थः ॥ २२ ॥ किंत्विति । किन्तु । स उक्तरीत्या मित्रे वैरिधीः पुमान् । तन्मारणोद्योगे वैरिभावापन्नमित्रमारणोपाये एव । अन्वहं प्रतिदिनम् । वर्त्तेत । अत्र हेतुमाहार्द्धेन । मित्रसम्बन्धतः । भ्रातृसम्बन्धस्य । अधिकत्वतो गरीयस्त्वाद्धेतोः ॥ २३ ॥ तथेति । तथैव तेन प्रकारेणैव । अत्र सत्सङ्गे । येन भक्तेन । दुःस्वभावः । स्वक्षेमवर्त्मभित्स्वकीयात्यन्तिककल्याणाध्वविनाशकः । विदितः । स्यात् । स भक्तस्तु । तस्मिन् दुःस्वभावे । सदा । अतिवैरिधीरयं मम महान् शत्रुर्भवतीति मतिमान् । स्यात् ॥ २४ ॥

नित्येति । स दुःस्वभाववैरिधीर्भक्तः । तन्नाशे स्ववैरितया विदितस्य दुःस्वभावस्य विनाशने नित्योद्युक्तो नित्यमुपायान्वेषणोद्यमी । भवेत् । दृष्टान्ते इवात्र सिद्धान्ते हेतुमाह । यद्यस्माद्धेतोः । अस्य भक्तस्य । ततोऽज्ञानभावे मित्रभावेन स्वीकृतात्पश्चात्कल्याणाध्वरूपस्वभ्रातृविनाशकतया वैरिभावेन विदितदुःस्वभावसकाशात् । सत्सङ्गे स्वक्षेमवर्त्मभूते भ्रातृसमाने सत्सङ्गे । बह्वी स्वदुःस्वभावादधिका । रुचिः । अस्ति । सा तथाविधा रुचिः । तस्मिन् दुःस्वभावे । न विद्यते ॥ २५ ॥ एवं दुःस्वभावस्य वैरित्वेन बोधनमभिधाय साम्प्रतं तदवश्यविनाश्यत्वमाह । सत्सङ्गेति । हे मुने ! । तस्मात्कारणात् । सत्सङ्गरुचिना सत्सङ्गेऽतिशयितप्रीतिमता । पुंसा भक्तजनेन । स दुःस्वभावः । यत्नतोऽतिमहतायासेनापि । हेयः दुःस्वभावे भ्रात्रादिमारकारिबुद्धिं कृत्वा स सर्वथा त्याज्यः । ननु 'स्वभावो दुस्त्यजो नाथ ? प्रकृतिर्हि बलीयसी'त्याद्युक्तस्तत्त्यागे कथं समर्थेन भवितव्यमिति चेज्जीवस्तु तथाकर्त्तुं समर्थ एवास्तीत्याह सार्द्धेन । जीवः । तथा कर्त्तुं दुस्त्यजस्यापि दुःस्वभावस्य त्यागं विधातुम् । समर्थः शक्तः । अस्ति । दुर्बलस्तत्त्यागं कर्त्तुमशक्तस्तु नास्त्येव ॥ २६ ॥ इन्द्रियाणीति । इन्द्रियाणि चक्षुरादीनि दश । मनोऽन्तःकरणम् । क्षेत्रम् । अस्ति । स जीवात्मा तु ।

नित्योद्युक्तश्च तन्नाशे स भवेद्यत्ततोऽस्य तु । सत्सङ्गेऽस्ति रुचिर्बह्वी सा च तस्मिन्न विद्यते ॥ २५ ॥ सत्सङ्गरुचिना तस्मात् पुंसा हेय :स यत्नतः । तथा कर्तुं समर्थोऽस्ति जीवो नास्त्येव दुर्बलः ॥ २६ ॥ इन्द्रियाणि मनः क्षेत्रं स त्वस्ति क्षेत्रवित्परः । अतो यदिच्छेत्तत्कुर्यादत्र नास्त्येव संशयः ॥ २७ ॥ गिरं सुधां तस्य स इत्युदारां निपीय साधुश्च तथा सदःस्थाः । अन्येऽपि भक्ताः सकलाः प्रतोषं सम्प्राप्य तं भक्तपतिं प्रणेमुः ॥२८॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते सप्तपञ्चाशत्तमस्तरङ्गः ॥ ५७ ॥

शकाब्दे विक्रमार्कस्य रसाश्ववसुभूमिते । तपस्यशुक्लपञ्चम्यां वचोऽमृतमिदं हरेः ॥ १ ॥

क्षेत्रवित्तस्य ज्ञाता । परः स्वरूपस्वभावादिभिस्ततो भिन्नत्वेनोत्कृष्टः । अस्ति । अतो हेतोः । क्षेत्रज्ञः । यद्यत्कार्यं कर्त्तुम् । इच्छेत् । तत्तत् । कुर्यात् । अत्रास्मिन्नर्थे । संशयः । नास्त्येव ॥ २७ ॥ गिरमिति । इत्येवंभूताम् । तस्य श्रीहरेः । उदारां महागुणयुक्तां दाक्षिण्योदितां वा । सुधाममृतसन्निभाम् । गिरं वाणीम् । निपीय । साधुः परमहंसः । स शिवानन्दमुनिः । तथा । सदःस्थाः सभोपविष्टाः । भक्ताः । सकलाः । अन्ये परमहंसा गृहस्थजनाश्चापि । प्रतोषमतिशयितसन्तोषम् । सम्प्राप्य । भक्तपतिं तं स्वावासं गच्छन्तं श्रीहरिम् । प्रणेमुर्विनयेन ववन्दिरे ॥ २८ ॥ स्वस्वरूपस्वमाहात्म्यवेदनं मोक्षकारणम् । स्वस्मिन् स्नेहस्य द्वैविध्यं तल्लक्ष्माणि च तत्त्वतः ॥ १ ॥ स्वभक्तानां दुःस्वभावत्यजनं तस्य साधनम् । यः प्राहैतानि स हरिर्वासं मद्धृदये क्रियात् ॥ २ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्स्वनुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां सप्तपञ्चाशत्तमस्तरङ्गः ॥ ५७ ॥

हेतुत्रयं गुणोद्रेके तन्निवर्त्तनसाधनम् । उपायवृन्दं महतां प्रसन्नत्वस्य यत्सताम् ॥ १ ॥ दोषनाशे भक्तिवृद्धौ तथा साधनमस्ति यत् । एतत्सर्वं त्वष्टपञ्चाशत्तमे

समुदीरितम् ॥ २ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८७६) तपस्यशुक्लपञ्चम्यां फाल्गुनशुक्लपक्षीयपञ्चमीतिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमस्य भूपतेः । दुर्गे । सदाश्रमे साधूनां मठे । स्वासने वस्त्रनिर्मिते शोभनविष्टरे । सितवासाः परिधृतसकलश्वेतवसनः । निजैर्नानादेशागतैः स्वकीयैस्त्यागिगृहिभक्तजनैः । वृतः सभायां संवेष्टितः । स्वामी श्रीहरिः । न्यषीदत् श्रीवासुदेवस्य सायन्तनीयनीराजनदर्शनं कर्तुं स्वावासादागत्य सम्यक् तद्विधाय तत्रोचितं कृत्वा तत आगत्योपविवेश ॥ २ ॥ पप्रच्छेति । मुक्तानन्दः स्वसमक्षं नयनाब्जसंयोजनपूर्वं प्रश्नकरणार्थं श्रीहरिणा प्रेरितो मुक्तानन्दमुनिः । तं श्रीहरिम् । पप्रच्छ । हे प्रभो ! । भक्तजनाः । रहःस्थले एकान्तस्थाने । निषद्योपविश्य । हृदये स्वमानसे । कृष्णम् । त्वां स्वेष्टदेवं साक्षाच्छ्रीकृष्णं भवन्तम् । सदा । ध्यायन्ति ॥ ३ ॥ तेषामिति ! तेषामित्थं श्रीकृष्णस्य तव ध्यानमाचरतां भक्तजनानाम् । मध्ये । केषांचिद्भक्तजनानाम् । हृदि अपि अन्तःकरणे तु । राजसतामसा रजोगुणतमोगुणसम्बन्धिनः । वेगा रागमौढ्यादयस्तत्कार्यजवाः । तदा ध्यानकाले । उद्भवन्ति निर्झरजलधारावत्सन्ततधारयोत्पद्यन्ते । इति हेतोः । ध्यान-

तत्र दुर्गपुरे दुर्गे उत्तमस्य सदाश्रमे । न्यषीदत्स्वासने स्वामी सितवासा वृतो निजैः ॥ २ ॥ पप्रच्छ मुक्तानन्दस्तं प्रभो ! भक्तजनाः सदा । ध्यायन्ति कृष्णं हृदये निषद्य त्वां रहःस्थले ॥ ३ ॥ तेषां मध्येऽपि केषाञ्चिद् हृदि राजसतामसाः । वेगास्तदोद्भवन्तीति न ध्यानसुखमाप्यते ॥ ४ ॥ तद्वेगशान्त्युपायं मे वक्तुमर्हसि तत्त्वतः । इति पृष्टो हरिस्तेन साधुना तं जगाद ह ॥ ५ ॥ गुणोद्रेके हेतवस्तु त्रयः सन्ति सतां मताः । देहाध्यासः कुसङ्गश्च तथा प्राक्कर्मसंस्कृतिः ॥ ६ ॥ आत्मानात्मविचारेण तत्राद्यस्तु निवर्त्तते । सत्सङ्गेन द्वितीयोऽपि दृढेन विनिवर्त्तते ॥ ७ ॥

सुखं ध्यानकाले ध्येयभवन्मूर्त्तेरेकाग्रभावेन सन्दर्शनानन्दः । नाप्यते तैर्नाधिगम्यते ॥ ४ ॥ तदिति । हे हरे ! । तद्वेगशान्त्युपायं रजोगुणतमोगुणकार्यरागमौढ्यादिजवोपशमोपायम् । तत्त्वतो याथार्थ्येन । मे मह्यम् । वक्तुम् । अर्हसि । इत्यमुना प्रकारेण । साधुना । तेन मुक्तानन्देन । पृष्टः । हरिः । तं मुक्तानन्दमुनिम् । ह स्फुटं यथातथा । जगाद ॥ ५ ॥ गुणेति । हे मुने ! । गुणोद्रेके रजस्तमोगुणकार्यरागाद्युज्जृम्भणे । सतां मता गुणवेगाभिज्ञैस्तन्निवृत्त्युपायप्रवीणैः साधुभिर्मानिताः । हेतवः कारणानि तु । त्रयः । सन्ति । ते यथा । देहाध्यासो देहात्ममतिः । कुसङ्गोऽसाधुजनप्रसङ्गः । तथा च । प्राक्कर्मसंस्कृतिः पूर्वजन्मकृतानेकविधरजस्तमोगुणकर्मसंस्कारः ॥ ६ ॥ आत्मेति । तत्र तेषु देहाध्यासादिषु त्रिषु मध्ये । आद्यः प्रथमो देहाध्यासस्तु । आत्मानात्मविचारेणाहं त्वात्माऽस्मि न देहोऽतो देहसम्बन्धजाता इमे मानापमानादयो धर्मास्तद्भिन्ने ज्ञातृत्वादिधर्मिण्यात्मनि मयि मया कथं स्वीक्रियते इत्येवंभूतेन देहात्मनोर्विवेकाचरणेन निवर्त्तते · शनैः शनैर्निवृत्तिं गच्छति । द्वितीयः कुसङ्गोऽपि । दृढेन कायवाङ्मनसामैकाग्र्यकृतत्वात्सुस्थिरेण । सत्सङ्गेन भगवदेकान्तिकसाधुप्रसङ्गेन । विनिवर्त्तते । भगवदेकान्तिकसाधवः स्वानर्थकरान्कुसङ्गदोषान् श्रावयन्ति तेनामूलाचत्रात्यरुचिपूर्वं स विनिवृत्तिं गच्छतीत्यर्थः ॥ ७ ॥

आभ्यामिति । यः । अन्तिमः । प्राक्कर्मसंस्कृतिरूपस्तृतीयः । स च तृतीयस्तु । उभाभ्याम् । आभ्यामात्मानात्मविचारसत्सङ्गाभ्यां करणाभ्याम् । दुर्निवार्यो दुःखेनापि निवारयितुमशक्यः । अस्ति । स इत्थमनिवार्योऽपि तृतीयो हेतुः । महतामेकान्तिकसाधुष्वप्यतिगरिष्ठानाम् । सतां साधूनाम् । भृशमतिशयितया । प्रसत्त्या प्रसन्नतया । निवर्त्तते । तृतीयहेतुनिवृत्तिसाधनं तु केवला महतां सतां प्रसन्नतैवास्ति न तत्रोपायान्तरं विद्यते इत्यर्थः ॥ ८ ॥ भगवदेकान्तिकमहासाधुसामर्थ्योक्तपूर्वमुक्तार्थं द्रढयति । तयेति । तया महतां सतां भृशं प्रसत्त्या । मलिना अपि भगवद्ध्यानविघ्नरूपत्वानर्थकरत्वेनातिदुष्टा अपीत्यर्थः । संस्काराः प्राक्तनरजस्तमोगुणकर्मसंस्कृतयः । शुभतामौषधियोगेन मलिनं ताम्रं कांचनतामिवातिशोभनताम् । यान्ति प्राप्नुवन्ति । हि । दत्तात्रेयप्रसत्त्या कदर्यपिङ्गलादय इवेति भावः । रङ्को दीनजनोऽपि । राजतां नृपतिभावम् । यायात् । मूर्खो वैधेयोऽपि । पण्डितः शास्त्रपारगो विद्वान् । भवेत् । अपि शब्देनागामिविघ्नस्य विनाशः स्यादिति ज्ञेयम् । रजस्तमोगुणवेगहेतुत्रयनिवृत्तिरेव तद्वेगनिवृत्त्युपाय इति प्रश्नोत्तरं कृतमिति ज्ञेयम् ॥ ९ ॥ इतीति । इत्यमुना प्रकारेण उक्तवन्तं मुक्तानन्दमुनिप्रश्नोत्तरं कथयन्तम् । श्रीहरिम् । आनन्दानन्दः । साधुः ।

आभ्यामुभाभ्यामपि यो दुर्निवार्यः स चान्तिमः । निवर्तते सोऽपि सतां प्रसत्त्या महतां भृशम् ॥ ८ ॥
तया हि शुभतां यान्ति संस्कारा मलिना अपि । रङ्कोऽपि राजतां यायाद्भवेन्मूर्खोऽपि पण्डितः ॥ ९ ॥
इत्युक्तवन्तं तं साधुरानन्दानन्द ऊचिवान् । अतिप्रसन्नता स्वस्मिन्केन स्यान्महतां सताम् ॥ १० ॥
श्रीस्वामी तमुवाचाथ सतां प्रीतिमभीप्सता । सर्वदा तेषु निश्छद्म वर्त्तितव्यमनाकुलम् ॥ ११ ॥
यत्र यत्र रुचिस्तेषां तत्तत्साध्यं प्रयत्नतः । यत्र यत्रारुचिश्चैषां तत्तद्धेयं च सर्वथा ॥ १२ ॥
लोकलज्जामहङ्कारं हित्वा मानं च सर्वथा । तद्दास्यमेव कर्त्तव्यं तद्वाचश्चावधारणम् ॥ १३ ॥

ऊचिवान्वक्ष्यमाणं प्रश्नं पप्रच्छेत्यर्थः । हे हरे ! । स्वस्मिन् । महतां स्वधर्मज्ञानादिगुणगरीष्ठानाम् । सतां त्वदेकान्तिकसाधूनाम् । अतिप्रसन्नता । केन कीदृशोपायेन । स्यात् ॥ १० ॥ श्रीस्वामीति । अथैवंविधानन्दानन्दमुनिप्रश्नश्रवणानन्तरम् । स्वामी श्रीहरिः । तमानन्दानन्दसाधुम् । उवाच । हे साधो ! । महतां साधूनाम् । प्रीतिं प्रसत्तिम् । अभीप्सता अभित आप्तुमिच्छता । सर्वथा प्राप्तुं वांच्छता भगवद्भक्तेनेत्यर्थः । तेषु महत्सु साधुषु । सर्वदा सर्वकालम् । निश्छद्म निष्कपटं यथा-तथा । अनाकुलमव्यग्रं यथातथा । वर्त्तितव्यम् ॥ ११ ॥ यत्रेति । तेषां महतां सताम् । यत्र यत्र यस्मिन् यस्मिन् । कृत्ये । रुचिः प्रीतिः । स्यात् । तत्तत्कृत्यम् । प्रयत्नतः । साध्यमाचरणीयम् । एषां महतां सताम् । यत्र यत्र अरुचिः । तत्तत् । सर्वथा । हेयं त्याज्यम् ॥ १२ ॥ लोकेति । लोकलज्जां लौकिकीं त्रपाम् । अहङ्कारं स्वनिष्ठगुणगर्वम् । मानमात्मनि पूज्यतामतिं च । सर्वथा । हित्वा परित्यज्य । लोकलज्जादित्रयाणामगुणानां दासभावे सर्वथा विरोधित्वात्तत्त्यागः सर्वथोक्तः । तद्दास्यं महासतां दासभाव एव । कर्त्तव्यम् । तद्वाचः स्वहितार्थं तैरुक्ताया गिरः । अवधारणं स्वबुद्धाववस्थापनं च । कर्त्तव्यम् ॥ १३ ॥

काम इति । कामः । क्रोधः । मद औद्धत्यम् । मोहः । लोभः । ईर्ष्या । मत्सरश्च । तृष्णाद्याः । आद्यशब्देन स्पृहा रसास्वादादिग्रहणम् । धर्मविरोधिनः स्वधर्मविरोधिनः स्वधर्मविनाशकाः । दोषाः कामाद्या उक्ता अगुणाः । दूरत आरादेव । हेयाः ॥ १४ ॥ एवमिति । एवममुना प्रकारेण । निश्छद्मादिगुणान्विते निश्छद्मताप्रभृत्युक्तशुभगुणयुक्ते । दोषविहीने उक्तकामादिदोषवर्जिते । नित्यं सर्वकालम् । अनुव्रते छन्दानुवृत्तितया वर्त्तमाने । पुंसि भगवद्भक्तपुरुषे । सन्तो महान्तः साधवः । भृशमत्यन्तम् । प्रसीदन्ति ॥ १५ ॥ महानुभावानन्द इति । अथानन्तरम् । महानुभावानन्द एतन्नामा । साधुः । तं श्रीहरिम् । पप्रच्छ । हे प्रभो ! । सत्सङ्गिन औद्धवाध्वाश्रयेण सत्सङ्गिसंज्ञां प्राप्तस्य भवद्भक्तस्य । हृद्गता मनोऽवस्थिताः । सर्वे । दोषाः पूर्वोक्ताः कामादयोऽगुणाः । केन साधनेन । नश्येयुः ॥१६॥ हरे इति । हे हरे ! । तस्य सत्सङ्गिनः । अन्वहं प्रतिदिनम् । त्वद्भक्तिवृद्धिश्च । केन साधनेन । स्यात् । इत्यमुना प्रकारेण । तेन महानुभावानन्दसाधुना । पृष्टः श्रद्धाभक्तिविनयपूर्वमनुयुक्तः । ईशः कालमायादिनियन्ता । स श्रीहरिः । प्रोवाच । हे सन्मते ! । शृणु ॥१७॥ सन्त इति । हे मुने ! । अत्र सत्सङ्गे । ये ।

कामः क्रोधो मदो मोहो लोभ ईर्ष्या च मत्सरः । तृष्णाद्या दूरतो हेया दोषा धर्मविरोधिनः ॥ १४ ॥
एवं दोषविहीने च निश्छद्मादिगुणान्विते । प्रसीदन्ति भृशं सन्तः पुंसि नित्यमनुव्रते ॥ १५ ॥
महानुभावानन्दोऽथ साधुः पप्रच्छ तं प्रभो ! । दोषाः सत्सङ्गिनः सर्वे नश्येयुः केन हृद्गताः ॥ १६ ॥
हरे त्वद्भक्तिवृद्धिश्च केन स्यात्तस्य चान्वहम् । इति पृष्टः स तेनेशः प्रोवाच शृणु सन्मते ! ॥ १७ ॥
सन्तो महान्तो येऽत्र स्युस्तेषामेव निषेवया । तद्‌गुणग्रहपूर्वं वै दोषा नश्यन्ति हृद्गताः ॥ १८ ॥
यथा यथा गुणानेव तेषां गृह्णाति पूरुषः । तथा तथा भक्तिरपि वृद्धिमेत्यस्य चान्वहम् ॥ १९ ॥
श्ववत्काम्यपि निष्कामः स्यात्तन्निष्कामताग्रहात् । तथा क्रोध्यपि निष्क्रोधः स्यात्तन्निष्क्रोधताग्रहात् ॥ २० ॥

महान्तः । सन्तः । स्युः । तेषां महतां सताम् । तद्‌गुणग्रहपूर्वं प्रसिद्धानां निष्कामादीनां गुणानां ग्रहणपूर्वकम् । निषेवया छन्दानुवृत्तिपूर्वया निश्छद्मपरिचर्ययैव हृद्गताः । दोषाः । नश्यन्ति । इति प्रथमप्रश्नोत्तरम् ॥ १८ ॥ यथेति । पूरुषः सत्सङ्गिजनः । यथायथा । तेषां महतां सताम् । गुणानेव । गृह्णाति उक्तविधसेवापूर्वमुपादत्ते । तथातथा । अस्य सत्सङ्गिपुरुषस्य । अन्वहम् । भक्तिरपि । वृद्धिम् । एति प्राप्नोति । इति द्वितीयप्रश्नोत्तरम् ॥ १९ ॥ महतां सतां सेवापूर्वं गुणग्रहणप्रकारं तेनैव जायमानभक्तिवृद्ध्या सत्सङ्गिन उत्तमभक्तत्वं चाह चतुर्भिः । श्ववदिति श्ववद्धपकसदृशः । कामी कामाकुलः सन्नपि । तन्निष्कामताग्रहादहो एतेऽतिनिष्कामिनो भवन्तीत्येवं तेषां साधूनां निष्कामतागुणग्रहणाद्धेतोः । निष्कामः स्वयमपि तथैव कामवर्जितः । स्यात् । तथा । क्रोधी सर्पवदतिक्रोधशीलः सन्नपि । तन्निष्क्रोधताग्रहात्तेषां साधूनां क्रोधराहित्यगुणोपादानाद्धेतोः निष्क्रोध एवं तद्‌गुणग्रहणकर्त्ता सत्सङ्ग्यपि तद्वत्क्रोधरहितः । स्यात् ॥ २० ॥

एवमिति । एवममुना प्रकारेणैव । सत्सङ्गिनः । पुंसः । अन्ये लोभादय इतरेऽपि । दोषाः । तेषां सताम् । गुणग्रहान्निर्लोभत्वादिगुणग्रहणात् । नश्यन्ति । अथानन्तरम् । तयोक्तरीत्या गुणग्रहणपूर्वं कृतया महासाधुसेवया । वृद्धिं गतयेति शेषः । भक्त्या । भक्तः सत्सङ्गिपुमान् । उत्तम एकान्तिको भक्तः । स्यात् ॥ २१ ॥ उत्तमभक्तलक्षणमाह द्वाभ्याम् । पदार्थ इति । दुःखदे स्वप्राणवियोगादिकष्टप्रदे । पदार्थे गरलादिवस्तुनि । इव । शुभे रमणीये । शब्दादौ । विषये । शब्दस्पर्शरूपरसगन्धेषु विषयेष्वित्यर्थः । सहजः स्वाभाविकः । अभावोऽरुचिः यस्योत्तमभक्तस्य । हृदि मनसि । सर्वदा सर्वकालम् । वर्त्तेत ॥२२॥ स्यादिति । हे सदुत्तम ! महानुभवानन्दमुने ! । यस्योत्तमभक्तस्य । कृष्णे स्वकीयेष्टदेवे साक्षाच्छ्रीकृष्णभगवत्येव । अतिरुचिरतिशयिता प्रीतिः । स्यात् । तदीयेषु साक्षाच्छ्रीकृष्णैकान्तिकभक्तेषु साधुषु च । अतिरुचिः । स्यात् । स इत्थंभूतः सत्सङ्गी । सद्भिरेकान्तिकसाधुभिः । उत्तमः । कृष्णभक्तः । कथितः ॥२३॥ प्रकरणार्थं निगमयत्यर्द्धेन । सदिति । हे मुने ! । ततो हेतोः । दोषनाशस्य । अथो अथ च । हरिभक्तिवृद्धेः । साधनम् । एकम् । सद्दास्यं गुणग्रहणपूर्वं महतां सतां निश्छद्मपरिचरणम् । अवधेहि जानीहि । इत्थमेवंभूताम् । प्रभोः श्रीहरेः । अमृतवाचं सुधासमानां वाणीम् ।

एवमन्येऽपि नश्यन्ति दोषास्तेषां गुणग्रहात् । पुंसः सत्सङ्गिनोऽथ स्याद्भक्त्या भक्तस्तयोत्तमः ॥ २१ ॥ पदार्थे दुःखद इव शब्दादौ विषये शुभे । अभावः सहजो यस्य वर्त्तेत हृदि सर्वदा ॥ २२ ॥ स्यात् कृष्ण एवातिरुचिस्तदीयेषु च यस्य सः । उत्तमः कथितः कृष्णभक्तः सद्भिः सदुत्तमः ॥ २३ ॥ सद्दास्यमेकमवधेहि ततस्तु दोषनाशस्य साधनमथो हरिभक्तिवृद्धेः । इत्थं प्रभोरमृतवाचमसौ निपीय सर्वे च मोदमगमन्नपरे सदःस्थाः ॥२४॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते अष्टपञ्चाशत्तमस्तरङ्गः ॥ ५८ ॥

शकाब्दे विक्रमार्कस्य रसाश्ववभूमिते । तपस्याद्यचतुर्दश्यां वचोऽमृतमिदं हरेः ॥ १ ॥
तत्र दुर्गपुरे दुर्गे उत्तमस्य महीभुजः । वेद्यां न्यषीदत् पीठेऽसौ वासुदेवालयान्तिके ॥ २ ॥

निपीय । असौ महानुभावानन्दमुनिः । सदःस्थाः । अपरेऽन्ये साधवः । सर्वे गृहिणो हरिभक्तजनाश्च । मोदं महान्तं हर्षम् । अगमन्प्रापुः ॥ २४ ॥ हेतुत्रयं गुणोद्रेके स्वेषां तन्नाशसाधनम् । सतां च महतां स्वस्य प्रसन्नत्वस्य साधनम् ॥१॥ स्वेषां स्वभक्तिवृद्धौ च दोषनाशे च । साधनम् । य एतान्याह स हरिर्मन्मतौ वसतात्सदा ॥२॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्स्वनुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायामष्टपञ्चाशत्तमस्तरङ्गः ॥ ५८ ॥

प्रियताया हरौ तस्य माहात्म्यज्ञानमञ्जसा । एकोनषष्टितमके हेतुः सङ्कीर्त्तितस्ततः ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् (१८७६) तपस्याद्यचतुर्दश्यां फाल्गुनमासस्य शुक्लपक्षस्य चतुर्दशीतिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥१॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमस्यास्य । महीभुजः । दुर्गे । वासुदेवालयान्तिके । वेद्याम् । श्रीवासुदेवमन्दिरान्तिकवर्त्तिप्रत्यग्द्वारसौधस्य बाह्यवेदिकायामित्यर्थः । पीठे कौयतूलिकाश्वेतसूक्ष्मोत्तरच्छदास्तृते पार्श्विकोपबर्हवति मञ्चासने । असौ श्रीहरिः ।

न्यपीदत्स्वावासागत्योपविवेश ॥ २ ॥ सितेति । सिताम्बरधरं परिधृतसकलार्जुनवसनम् । नानाभक्तसङ्घैर्नानादेशागतत्यागिगृहिस्वभक्तजनसमूहैः । वृतं सभायां परिवेष्टितम् । चन्दनचर्चितं पीतसुगन्धिगन्धसमर्चितं च । इदं नानाविधतत्कालोचित-कुसुमहारादिकृतसमर्चनस्याप्युपलक्षणम् । तं श्रीहरिम् । मुक्तानन्दः प्रश्नविधानार्थं स्वदृशा सम्प्रेरितो मुक्तानन्दनामा । साधुः । पृच्छति स्म ॥ ३ ॥ प्रेम्ण इति । हे हरे ! । त्वय्यक्षरधामाधिपतौ पुरुषोत्तमे भवति । असाधारणस्योपमावर्जितस्य प्रेम्णो गाढानुरागस्य । हेतुं कारणम् । मे मह्यम् । वद ब्रूहि । इत्यमुना प्रकारेण । तेन मुक्तानन्दमुनिना । पृष्टः । हरिः । तं मुक्तानन्दमुनिम् । उवाच । हे मुने ! । शृणु ॥ ४ ॥ य इति । हे मुने ! । यः । हरिः । स्वकीयाक्षरब्रह्मधाम्न्यक्षरभावापन्नमुक्तकोटिभिर्मूर्तेनाक्षरब्रह्मणा च छन्दानुवृत्तितया कृतपरिचर्यः स्वरूपस्वभावगुणविभूत्यैश्वर्यादिभिरक्षरब्रह्मादिभ्योऽप्यत्युत्कृष्टः सदा दिव्यमनोहराकृतिर्यः स्वयं श्रीकृष्णो भगवानस्तीत्यर्थः । सः । साक्षात् । अयम् । एव । अस्ति । इत्येवममुना प्रकारेणैव । आत्मप्राप्ते स्वेन साक्षादधिगते त्राकृतौ धृतमनुष्यसमानाकारे । प्रभौ श्रीहरौ । या । प्रतीतिः सुस्थिरो विश्वासः । सा । तद्धेतुस्तस्मिन्नसाधारणगाढानुरागकारणम् । उदीरिता । स्वाधिगतसाक्षाद्भगवति सर्वकारणकारणपुरुषोत्तमोऽयं भगवानिति बुद्धिरेव तस्मिन्नसाधारणप्रेमहेतुरित्यर्थः ॥ ५ ॥ तस्येति । तस्य तथाविधस्य स्वप्राप्तत्राकृति-

सिताम्बरधरं नानाभक्तसङ्घैर्वृतं च तम् । मुक्तानन्दः पृच्छति स्म साधुश्चन्दनचर्चितम् ॥ ३ ॥ प्रेम्णो हेतुं त्वयि हरे ! वदासाधारणस्य मे । इति पृष्टस्तेन हरिस्तमुवाच मुने ! शृणु ॥ ४ ॥ योऽयमेव हरिः साक्षादित्येवं त्राकृतौ प्रभौ । आत्मप्राप्ते प्रतीतिर्या सा तद्धेतुरुदीरिता ॥ ५ ॥ तस्य माहात्म्यविज्ञानमप्यन्यो हेतुरस्ति च । कालादिभ्यो महत्त्वं यत्तन्माहात्म्यमितीरितम् ॥ ६ ॥ मायापुरुषकालानां स्वभावगुणकर्मणाम् । तत्त्वादीनां च कर्तृत्वं ब्रह्माण्डानां न विद्यते ॥७॥ किन्तु स्वतन्त्रकर्तृत्वमेकस्यैव रमापतेः । अस्त्यन्यस्य तु तच्छक्त्या कर्तृतोक्ताऽस्ति न स्वतः ॥ ८ ॥

प्रभोः । माहात्म्यविज्ञानं यथावस्थितमहिमाववोधनमपि । अन्यो द्वितीयः । हेतुरसाधारणप्रेमकारणं च । अस्ति । यत् । कालादिभ्यः कालमहापुरुषमहामायाप्रभृतिभ्यः सकाशात् । महत्त्वं स्वरूपस्वभावादिभिरुत्कृष्टत्वम् । तत् । माहात्म्यम् । इति । ईरितम् ॥ ६ ॥ एवं सामान्येन माहात्म्यलक्षणमभिधाय तदेव पुनर्विशेषत आह त्रिभिः । मायेति । मायापुरुषकालानां स्वकार्यानन्तप्रधानपुरुषसहितमूलप्रकृतिमहापुरुषकालानाम् । स्वभावगुणकर्मणाम् । तत्त्वादीनां वैराजोत्पत्तिहेतुमहत्तत्त्वप्रभृतीनां च । आदिशब्देनानेकवैराजान्तर्वर्त्तिब्रह्म–विष्णु–रुद्राणां ग्रहणम् । ब्रह्माण्डानाम् । ब्रह्माण्डशब्दस्तदन्तर्वर्त्तिस्थावरजङ्गमानामप्युपलक्षणम् । कर्तृत्वं सृष्टृत्वम् । इदं स्थितिप्रलययोरुपलक्षणम् । न विद्यते ॥ ७ ॥ किंत्विति । किन्तु ननु मायापुरुषादीनां तत्कर्तृत्वं तु शास्त्रे दृश्यते तत्कुतो नेत्युच्यते इति चेत्सत्यं तेषु कर्तृत्वं विद्यते परन्तु । स्वतन्त्रकर्तृत्वम् । एकस्य स्वनिष्ठानन्यसिद्धगुणैश्वर्यादिभिर्युक्तस्यान्यस्य स्वसदृशस्याभावात्केवलस्य । रमापतेर्महापुरुषलक्षणाया लक्ष्म्याः कान्तस्य श्रीकृष्णस्यैव । अस्ति । अन्यस्य तदितरस्य मायापुरुषादेस्तु । तच्छक्त्या तद्दृढोपासनोपलब्धतत्तथाविधसामर्थ्येन । कर्तृता ब्रह्माण्डकर्तृत्वादिकम् । उक्ता शास्त्रे कथिता । अस्ति । स्वतो भगवदुपासनोपलब्धशक्तिं विना केवलस्वातन्त्र्यतः । नोक्तास्ति । 'तदविमुच्य नियन्तृ भवे'दिति श्रीभागवतोक्तेः ॥ ८ ॥

इतीति । इत्यमुना प्रकारेण । निश्चित्य । यो भक्तः । त्र्याकृतिम् । कृष्णं स्वेष्टदेवं श्रीहरिम् । सर्वकारणम् । सर्वेषामक्षर माया पुरुष कालादीनाम् । नियन्तारं स्वशक्त्या तत्तत्स्वरूपस्थितिप्रवृत्तिनियामकं च । ज्ञात्वा । सादरमादरसहितं यथातथा । भजति सर्वथा तमेव श्रवणादिनवविधभक्त्योपास्ते । तस्येत्युत्तरेण सम्बन्धः ॥ ९ ॥ तस्येति । तस्य तथाविधस्य । पुंसो भक्तस्य । भगवति स्वेष्टदेवे साक्षात्परमेश्वरे । सर्वतः । अधिकम् । प्रेम । स्यात् । अतो हेतोः । तदिच्छुना भगवति सर्वाधिकप्रेमोद्भवाभिलाषुकभक्तेन । तस्य भगवतः । महत्त्वमुक्तविधो महिमा । अञ्जसा तत्त्वतः । बोध्यम् ॥ १० ॥ इतीति । इत्यमुना प्रकारेण । उक्तवन्तं स्वप्रश्नोत्तरं कृतवन्तम् । तं श्रीहरिम् । भूयः पुनरपि । स मुनिर्मुक्तानन्दनामा साधुः । पप्रच्छ । हे प्रभो ! । एवं भवदुक्तप्रकारेण । कृष्णमहत्त्वादि कृष्णस्य तव माहात्म्यप्रभृतिकम् । कश्चन यः कोऽपि तव भक्तः । जानात्येव । हि निश्चितमेव । अवधारणद्वयं तद्वेदनदृढत्वद्योतनार्थम् ॥ ११ ॥ तथेति । तथापि । तस्य भक्तस्य । त्वयि स्वेष्टदेवे साक्षात् श्रीकृष्णे भवति । नितरामतिशयिता । प्रीतिः प्रेम । न दृश्यते । अत्रास्मिन्नर्थे । किं कारणं को हेतुरस्ति ।

इति निश्चित्य यः कृष्णं त्र्याकृतिं सर्वकारणम् । सर्वेषां च नियन्तारं ज्ञात्वा भजति सादरम् ॥ ९ ॥
तस्य पुंसो भगवति प्रेम स्यात्सर्वतोऽधिकम् । अतस्तदिच्छुना तस्य महत्त्वं बोध्यमञ्जसा ॥ १० ॥
इत्युक्तवन्तं तं भूयः पप्रच्छ स मुनिः प्रभो ! । एवं कृष्णमहत्त्वादि जानात्येव हि कश्चन ॥ ११ ॥
तथापि तस्य न प्रीतिर्दृश्यते नितरां त्वयि । अत्र किं कारणमिति पृष्टः प्रोवाच तं हरिः ॥ १२ ॥
माहात्म्यवेदिनः यद्यपि पुंसो प्रेम बाह्यतः । न दृश्यते हरौ भूरि तथाप्यस्ति तदन्तरे ॥ १३ ॥
स च भक्तः स्वयमपि तन्न जानाति तत्त्वतः । तथाप्यन्येन विदुषा बोधितो वेत्ति स ध्रुवम् ॥ १४ ॥
समुद्रोल्लङ्घने शक्तिं यथा स्वस्थां मरुत्सुतः । यथा च नाविदच्छक्तिं प्रलम्बघ्नीं निजां बलः ॥ १५ ॥

तद्वदेति शेषः । इत्यमुना प्रकारेण । पृष्टो मुक्तानन्दमुनिना विनयातिशयपूर्वमनुयुक्तः । हरिः । तं मुक्तानन्दमुनिम् । प्रोवाच ॥ १२ ॥ माहात्म्येति । हे मुने ! । माहात्म्यवेदिनो यथार्थतया स्वेष्टदेवश्रीकृष्णमहिमाभिज्ञस्य । पुंसो भक्तस्य । हरौ । भूरि प्रचुरम् । प्रेम । यद्यपि । बाह्यतः । न दृश्यते । तथापि । तद्भूरिप्रेम । अन्तरे माहात्म्याभिज्ञभक्तान्तःकरणे । अस्ति सर्वथा विद्यते ॥ १३ ॥ स इति । किञ्च । स तथाविधः । भक्तः । स्वयमपि । तद्भूरिप्रेम । तत्त्वतो वस्तुतः । न जानाति । तथापि । विदुषा तन्निष्ठभगवत्प्रेमाभिज्ञेन । अन्येन भक्तेन । बोधितो ज्ञापितः । स भक्तः । वेत्ति स्वनिष्ठं तत्प्रेम जानाति । ध्रुवं निश्चितमेव ॥ १४ ॥ एतदेव दृष्टान्ताभ्यां द्रढयति द्वाभ्याम् । समुद्रेति । यथा । मरुत्सुतो वायुपुत्रो हनुमान् । स्वस्थां स्वस्मिन्विद्यमानाम् । समुद्रोल्लङ्घने उत्प्लुत्य समुद्रातिक्रमेण । शक्तिं सामर्थ्यम् । नाविदत्स्वयं नाज्ञासीत् । यथा च । बलो रौहिणेयः । प्रलम्बघ्नीं प्रलम्बासुरविनाशिनीम् । निजामात्मीयाम् । शक्तिम् । नाविदत् ॥ १५ ॥

तावितिं । तौ मरुत्सुतबलभद्रौ । अन्यबोधितौ जाम्बवदाकाशगीर्भ्यां कृतबोधौ सन्तौ । तां स्वस्वशक्तिम् । सम्यग्याथातथ्येन । विविदतुः । खलु प्रसिद्धमस्तीदं शास्त्रे । तत्र हनूमतो जाम्बवत्कृतबोधेन समुद्रोत्प्लवनसामर्थ्यवेदनं त्वस्ति आर्षे रामायणे । बलस्य प्रलम्बहननसामर्थ्यवेदनमाकाशगीर्बोधेन यत्तत्पाद्माज्ज्ञातव्यम् । तथा तेनैव प्रकारेण । स भगवन्माहात्म्यावित् भक्तोऽपि । अन्यबोधितः स्वेतरभगवद्भक्तकृतबोधनः सन्नेव । तत् स्वनिष्ठभगवत्प्रेम । वेत्स्यति ज्ञास्यति । न संशयः अत्र संशयो नास्ति ॥१६॥ इतीति । इत्येवंविधम् । तस्य श्रीहरेः । वचोऽमृतममृतसन्निभं वचनम् । निपीय । मतिमान्प्रशस्तबुद्धिः । स साधुर्मुक्तानन्दमुनिः । भूरितोषं प्रभूतं सन्तोषम् । आप । तत्सदःस्थास्तस्यां सभायां निषण्णाः । तदीयभक्तिभाजस्तस्य साक्षाद्भगवतः एवै-कान्तिकभक्तिं कुर्वन्तः । अपरेऽन्ये । अगृहिणः साधवः । गृहिणो गृहस्था भक्तजनाश्चापि । भूरितोषम् । आपुः ॥ १७ ॥ स्वस्मिन् प्रेम्णः स्वभक्तानां यः स्वमाहात्म्यवेदनम् । कारणं प्राह स हरिर्दत्तात्तद्वेदनं तु मे ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्यैकान्तिकोपासकश्रीहरिकृष्णभगवत्स्नुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायामेकोनषष्टितमस्तरङ्गः ॥ ५९ ॥

तावन्यबोधितो तां च सम्यग्विविदतुः खलु । तथाऽन्यबोधितः सोऽपि तद्वेत्स्यति न संशयः ॥ १६ ॥ इति तस्य वचोऽमृतं स साधुर्मतिमानाप निपीय भूरितोषम् । गृहिणोऽगृहिणश्च तत्सदःस्था अपरे चापि तदीयभक्तिभाजः ॥१७॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचित्ते एकोनषष्टितमस्तरङ्गः ॥५९॥

शकाब्दे विक्रमार्कस्य रसाश्ववसुभूमिते । तपस्य कृष्णाद्य तिथौ वचोऽमृतमिदं हरेः ॥ १ ॥ तत्र दुर्गपुरे दुर्ग उत्त मस्य महीभुजः । न्यषीदुत्तमे पीठे सितवासाः स सन्मठे ॥ २ ॥ सितपुष्पस्रगापीडो वृतो भक्तव्रजैश्च सः । स्वयमेवाब्रवीत्साधून्स्वपुरःस्थान् दयानिधिः ॥३॥ साध्येषु साधनेष्वत्र भक्तैर्निजहितैषिभिः । वासनाक्षय एवैकः सर्वथा साध्य आदरात् ॥४॥

प्रकारो मायिकार्थेषु वासनानां क्षयस्य च । मुख्योपायास्तद्विनाशे ततः षष्टितमे स्मृताः ॥१॥ शकेति पूर्वार्द्धं व्याख्यातम् । (१८७६) तपस्यकृष्णाद्यतिथौ फाल्गुनमासापरपक्षीयप्रतिपत्तिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥१॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमस्य । महीभूजो नृपस्य । दुर्गे । सन्मठे साधूनामाश्रमे । उत्तमे । पीठे प्रचुरवस्त्रास्तरणेन कृते मृदुन्यासने । सितवासाः परिधृतसकलश्वेतवसनः । स श्रीहरिः । न्यषीदत्स्वावासादागत्योपविवेश ॥२॥ सितेति । सितपुष्पस्रगापीडः । स्वकण्ठधृतस्वभक्तार्पितश्वेतपुष्पहारः स्वशिरोवेष्टने धृतशुक्लपुष्पशेखरश्चेत्यर्थः । भक्तव्रजैर्नानादेशागतैस्त्यागिगृहिस्वभक्तनिकरैः । वृतः सभायां समन्ततः परिवेष्टितः । दयानिधिर्निष्कारणकरुणाम्बुधिः । इदं हेतुगर्भं विशेषणम् । स श्रीहरिः । स्वपुरः स्थान्स्वाभिमुखप्रदेशावस्थितान् । साधून् । स्वयमेव कैश्चिदप्यननुयुक्त एव अब्रवीत् ॥३॥ साध्येष्विति । हे सन्तः ! । अत्र सत्सङ्गे । निजहितैषिभिः स्वकीयं हितं कर्तुमिच्छद्भिः । भक्तैः साक्षाद्भगवद्भक्तजनैः । साध्येषु साधितुं योग्येषु । साधनेषु मध्ये । एकः । वासनाक्षयः स्वनिष्ठमायिकविषयोपभोगभावनाविनाश एव । आदरादतिशयितां सर्वथा तद्विनाशश्रद्धामालम्ब्येत्यर्थः । सर्वथा । साध्यः संसाधनीयः ॥ ४ ॥

वासनाक्षयसाधनभूतं विचारमाह द्वाभ्याम् । तमिति । हे सन्तः ! । तं वासनाक्षयम् । सम्पादयता संसाधयता भक्तेन । आदौ प्रथमतस्तु । निजा स्वकीया । रुचिः प्रीतिः । विवेक्तव्या अतिशयेन विवेचनीया । रुचिविवेचनप्रकारमाह सार्द्धेन । सा मम रुचिः । इन्द्रियार्थेषु श्रोत्रादीन्द्रियभोग्येषु मायिकशब्दादिविषयेषु । कियती किं परिमाणा । अस्ति । कृष्णे ममेष्टदेवे साक्षाच्छ्रीकृष्णभगवति । सा रुचिः । कियती । अस्ति । इतीत्थं विवेक्तव्येति सम्बन्धः ॥ ५ ॥ अर्थेष्विति । सा प्रीतिः । अर्थेषु मायिकेन्द्रियार्थेषु । अधिका । कृष्णे । न्यूना । अस्ति । किम् । अथवा । हरौ श्रीकृष्णे । अधिका । अर्थेषु । न्यूना । अस्ति । किम् । अथवा । उभयत्र हरावर्थेषु चेत्यर्थः । तुल्या समाना । वर्त्तते । किम् । इति च विवेक्तव्येति सम्बन्धः ॥ ६ ॥ एवं स्वरुचिविवेचनाप्रकारमुक्त्वा यत्कर्त्तव्यं तदाह । तत्रेति । हे सन्तः ! । तत्र तासु त्रिविधासु रुचिषु मध्ये । सा स्वरुचिः । यदि यर्हि । कृष्णे । न्यूना । इन्द्रियार्थेभ्य इति शेषः । अथवा । समा समाना । कृष्णे इन्द्रियार्थेषु चेति शेषः । भवेत् । तदा । यत्नेन प्रचुरप्रयासेनापि । वर्द्धनीया अवश्यमेव वृद्धिं नेया । कृष्णे इति शेषः । परत्रेन्द्रियार्थेषु । ह्रसनीया

तं सम्पादयता त्वादौ विवेक्तव्या रुचिर्निजा । कियत्यस्तीन्द्रियार्थेषु कृष्णे सा कियतीति च ॥ ५ ॥
अर्थेष्वस्त्यधिका कृष्णे न्यूना किं वाऽधिका हरौ । न्यूना साऽर्थेषु वा तुल्या वर्त्तते ह्युभयत्र च ॥ ६ ॥
तत्र कृष्णे यदि न्यूना समा वा सा भवेत्तदा । यत्नेन वर्द्धनीयैव ह्रसनीया परत्र च ॥ ७ ॥
मानुष्याणां च दिव्यानां विषयाणामशेषतः । क्षयिष्णुत्वं च दुःखत्वं सुनिश्चित्य प्रमाणतः ॥ ८ ॥
महद्भिरपि भूपालैः कृष्णसौख्याय सर्वथा । कृतं तत्त्यागमपि च निश्चित्यात्ममनीषया ॥ ९ ॥
न कर्त्तव्या रुचिस्तेषु मुक्तानामपि बन्धनी । तदरुच्यैव नूनं स्यात् पुंसां तद्वासनाक्षयः ॥ १० ॥

शनैः शनैर्ह्रासं नेया । भगवद्भक्तेनेन्द्रियार्थेषु रुचेः सर्वथा त्यागः कृष्णे सर्वथा तद्वृद्धिविधानं यत्तदेव कर्त्तव्यमिति फलितार्थः ॥ ७ ॥ इन्द्रियार्थरुचिह्रासे कृष्णे च तद्वृद्धिविधाने विचारकरणप्रकारमाह पञ्चभिः । मानुष्याणामिति । मानुष्याणां मनुष्यसम्बन्धिनां । दिव्यानां देवसम्बन्धिनां च । अशेषतो निःशेषाणां प्रकृतिपुरुषलोकपर्यन्तानामपीत्यर्थः । विषयाणाम् । क्षयिष्णुत्वं कालविनाश्यत्वात्परिणामे क्षयशीलत्वम् । दुःखत्वं विद्यमानावस्थायामपि प्रचुरदुःखनिभृतत्वं च । प्रमाणतः प्रत्यक्षादिभिश्चतुर्भिरपि प्रमाणैः । सुनिश्चित्य ॥८॥ महद्भिरिति । महद्भिर्धराया ऐकपत्यभाग्भिरपि । भूपालैरङ्गभरतादिनृपतिभिः । कृष्णसौख्यायाविनाशिश्रीकृष्णसम्बन्धिसुखप्राप्त्यै । सर्वथा । कृतम् । तत्त्यागमिन्द्रियार्थत्यजिमपि । आत्ममनीषया शास्त्रानुसारिण्या स्वमत्या । निश्चित्य । एतेन सदाचारेणापि तन्निश्चयविधानमुक्तम् ॥९॥ नेति । तेष्विन्द्रियार्थेषु । रुचिः । न कर्त्तव्या । यतः सा रुचिः । मुक्तानां मुक्तभावं प्राप्तानां सतामपि । बन्धनी स्वासक्तिजननेन संसृतिफलप्रदतया बन्धनकर्त्री । भवति । अतो न कर्त्तव्येति सम्बन्धः । तदरुच्या एवं सर्वथा कृतया विषयारुच्यैव । पुंसां भगवद्भक्तजनानाम् । तद्वासनाक्षयो निःशेषतो विषयभोगभावनाविनाशः । स्यात् । इति त्रयाणामेकसम्बन्धः ॥ १० ॥

कृष्णे रुचिवृद्धाविन्द्रियार्थेषु तत्क्षयाचरणे च पुनरपि विषयान्तरमाह । सदिति । सत्सङ्गकृष्णसत्कीर्त्तिश्रवणं श्रीकृष्णसम्बन्धिनां सद्यशसामन्वहं श्रवणाचरणं च ते आदीयेषां मनननिदिध्यासादीनान्तैः । कृष्णे । रुचिः । एधते वर्द्धते । विषयातिरुश्चि । ह्रासम् । एति । हि निश्चितम् ॥ ११ ॥ तदिति । तदभ्यासवत उक्तार्थविचाराभ्यासयुक्तस्य । पुंसो भक्तस्य । पुरा आदौ तु । रुचिसाम्यं कृष्णे विषयेषु च रुचितुल्यता । भवेत् । ततस्तदनन्तरम् । सा रुचिश्च । ग्राम्ये प्राकृते । शब्दादौ विषये । द्रुतमञ्जसैव । न्यूना । भवति ॥ १२ ॥ तत इति । ततस्तदनन्तरम् । जागता जगत्सम्बन्धिनः । शोभनाः रुचिरा अपि । पञ्चापि । विषयाः । भगवद्रसवेदिने सकलरसरूपभगवन्मूर्त्तिसेवारसज्ञात्रे भक्ताय । मलवत्स्वपरप्रोज्झितगूथवत् । नैव रोचन्ते स्वेषु रुचिजनका नैव भवन्ति ॥ १३ ॥ तत इति । ततस्तदनन्तरम् । शुभा रमणीयाः । अशुभा अरमणीयाश्च । ते विषयास्तु । तस्य भक्तस्य । स्वभावतः सहजतया । समास्तुल्यतया भासमाना एव । भवन्ति । इतीत्थं-भूते स्ववर्त्तने जाते सति । वासनाक्षयः । ज्ञातव्यः ॥ १४ ॥ एवमिति । एवममुना प्रकारेण । सर्वदा सर्वकालमेव । यत् । निर्वासनतया । वर्त्तनम् । सः । एकान्ति-

सत्सङ्गकृष्णसत्कीर्त्तिश्रवणादिभिरेधते । कृष्णे रुचिश्च विषयातिरुचिर्ह्रासमेति हि ॥ ११ ॥ तदभ्यासवतः पुंसो रुचिसाम्यं भवेत्पुरा । शब्दादौ च ततो ग्राम्ये न्यूना भवति सा द्रुतम् ॥ १२ ॥ ततः पञ्चापि विषया जागताः शोभना अपि । मलवन्नैव रोचन्ते भगवद्रसवेदिने ॥ १३ ॥ ततः शुभाश्चाशुभाश्च ते तु तस्य स्वभावतः । समा एव भवन्तीति ज्ञातव्यो वासनाक्षयः ॥१४॥ एवं निर्वासनतया वर्त्तनं सर्वदैव यत् । एकान्तिकस्य भक्तस्य स धर्मः परमो मतः ॥१५॥ स्थितस्तु वासनाशेषः समाधिस्थमपि द्रुतम् । देहाभिमानिनं कुर्यात्ततो निर्वासनो भवेत् ॥ १६ ॥ मुक्तानन्दस्तमूचेऽथ नत्वा साधुः सतांपते ! । वासनानाशने मुख्यानुपायान्वक्तुमर्हसि ॥ १७ ॥ अस्माकमिदमेवैकं साध्यं भवति वै सताम् । इत्युक्तवन्तं तं सन्तं हरिरूचे मुने ! शृणु ॥ १८ ॥

कस्य । भक्तस्य । परमः । धर्मः । मतः ॥ १५ ॥ उक्तार्थं दृढीकुर्वन्विपक्षे दोषमाह । स्थित इति । स्थितः समाधिमत्यपि भक्ते वर्त्तमानः । वासनाशेषोऽल्पप्रमाणोऽपि वासनांशस्तु । समाधिस्थं ध्यानकाले भगवन्मूर्त्तावेकाग्रभावं प्राप्तमपि भगवद्भक्तम् । द्रुतं तूर्णमेव । देहाभिमानिनं भगवन्मूर्त्तिदर्शनसुखादाकृष्य पुनर्देहानुसन्धानवन्तम् । कुर्यात् । ततो हेतोः । निर्वासन उक्तरीत्या सर्वथा वासनावर्जितः । भवेत् ॥ १६ ॥ मुक्तानन्द इति । अथानन्तरम् । मुक्तानन्दः । साधुः । तं श्रीहरिम् । नत्वा । ऊचे । हे सतांपते ! । वासनानाशने त्वदितरवासनानिवर्त्तने । मुख्यान् । उपायान् वक्तुम् । अर्हसि ॥ १७ ॥ अस्माकमिति । हे हरे ! । सताम् । अस्माकम् । इदं वाशनानाशनमेव । एकं केवलम् । साध्यं संसाधनीयम् । भवति । वै । इत्यमुना प्रकारेण । उक्तवन्तम् । तं सन्तं मुक्तानन्दमुनिम् । हरिः । ऊचे । हे मुने ! । शृणु ॥ १८ ॥

आत्मेति । हे मुने ! । एकं प्रथमम् । आत्मनिष्ठादार्ढ्यम् । अथ द्वितीयम् । विषयेषु मायिकेषु शब्दादिष्विन्द्रियार्थेषु । वैराग्यम् । तृतीयं च । कृष्णमाहात्म्यातिशयज्ञानमतिशयेन श्रीकृष्णमहिम्नो वेदनम् । इतीत्थंभूताः । त्रयस्त्रिसङ्ख्याकाः । ते वासनानाशनमुख्योपायाः । भवन्ति हि ॥ १९ ॥ उक्तप्रकारेण विनष्टवासनस्य तत्प्राग्भावप्रतीतिमाह । एभिरिति एभिरात्मनिष्ठादार्ढ्यादिभिस्त्रिभिः पूर्वोक्तोपायैः । भक्तस्य । चेतसि । वासनानाम् । क्षये समूलविनाशे । जाते सति । मे मम । काऽपि । वासना । नाभूदितः पूर्वमपि नैवाभवत् । इत्येवममुना प्रकारेणैव । स्फुटं यथातथा । भासतेऽनुभव उत्पद्यते । अनेनावस्थात्रयेऽपि तत्सङ्कल्पानुदयरूपा वासनाक्षयस्य पराकाष्ठा दर्शिता ज्ञातव्या ॥ २० ॥ आत्मनिष्ठाद्युपायत्रयप्राप्तिहेतुमाह सार्द्धेन । सद्भ्य इति । हे मुने ! । एवम् । निर्वासनत्वं तु । निर्वासनेभ्यः । सद्भ्यो भगवदेकान्तिकसाधुभ्यः । प्राप्तैः । एभिः पूर्वोक्तैस्त्रिभिः सुसाधनैः । जायते उत्पद्यते । हि । अन्यथा सवासनिकभक्तोपदिष्टसाधनैः स्वतो ग्रन्थावलोकनादिभिर्वेत्यर्थः । क्वचित्कदाचिदपि । न जायते ॥ २१ ॥ उक्तार्थं निगमयत्यर्द्धेन । ग्राम्य इति । ग्राम्यः प्राकृतोऽपि । नरो भगवद्भक्तजनः । निश्छद्म निष्कपटं

आत्मनिष्ठादार्ढ्यमेकं वैराग्यं विषयेष्वथ । कृष्णमाहात्म्यातिशयज्ञानं चेति त्रयो हि ते ॥ १९ ॥ एभिर्जाते
वासनानां क्षये भक्तस्य चेतसि । काऽपि मे वासना नाभूदित्येवं भासते स्फुटम् ॥ २० ॥ सद्भ्यो निर्वासनेभ्यो
हि प्राप्तैरेभिः सुसाधनैः । एवं निर्वासनत्वं तु जायते नान्यथा क्वचित् ॥ २१ ॥ ग्राम्योऽपि निर्वासनिको
नरः स्यान्निश्छद्म निर्वासनसत्प्रसङ्गात् । इति प्रभोर्वाचमसौ निशम्य हृष्टः सुधाभां ससदःस्थ आसीत् ॥ २२ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते षष्ठितमस्तरङ्गः ॥ ६० ॥

शकाब्दे विक्रमार्कस्य रसाश्ववसुभूमिते । तपस्यान्त्यतृतीयायां वचोऽमृतमिदं हरेः ॥ १ ॥
तत्र दुर्गपुरे दुर्गे उत्तमस्य महीभुजः । वेद्यां मञ्चे न्यसीदत्स पिचुमन्दतरोरधः ॥ २ ॥

यथातथा । निर्वासनसत्प्रसङ्गाद्वासनावर्जितानामेकान्तिकसाधूनां प्रकृष्टसङ्गात् । निर्वासनिकः । स्यात् । इतीत्थंभूताम् । प्रभोः श्रीहरेः । सुधाभाममृतसमानाम् । वाचम् । निशम्य । ससदःस्थः समीपविष्टत्यागिगृहिभक्तजनैः सहितः । असौ मुक्तानन्दमुनिः । हृष्टः प्रमुदितः । आसीत् ॥ २२ ॥ स्वभक्तानां मायिकार्थवासनानां तु संक्षये । विवेकं यस्तथोपायान्मुख्यांस्तासां विनाशने ॥ १ ॥ श्रीहरिः कृपया प्राह स्वभक्तेभ्यः स मां निजम् । सम्यग्निर्वासनं कुर्याद्भक्तिधर्मसुतः प्रभुः ॥२॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्सद्गुरुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां षष्टितमस्तरङ्गः ॥ ६० ॥

एकषष्टितमे धैर्यलोपो यस्य भवेन्न च । प्राप्ताः स्युः सिद्धयो भक्तं यं तल्लक्षणमीरितम् ॥ १ ॥ शकेति पूर्वार्द्धं व्याख्यातम् । ( १८७६ ) तपस्यान्त्यतृतीयायां फाल्गुनमासान्तिमपक्षीयतृतीयातिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमस्योत्तमाख्यस्य । महीभुजो

नृपस्य । दुर्गे । पिचुमन्दतरोः श्रीवासुदेवमन्दिराङ्गणस्थनिम्बद्रुमस्य । अधोऽधःप्रदेशवर्त्तिन्याम् । वेद्याम् । मञ्चे स्वास्तृतपर्यङ्कासने । स श्रीहरिः । न्यपीदत्स्वावासागत्योपविवेश ॥ २ ॥ सितेति । सिताम्बरं परिहितसकलश्वेतवसनम् । श्वेतपुष्पहारापीडधरम् । भक्तसंघैर्नानादेशागतैस्त्यागिगृहिस्वभक्तजनवृन्दैः । वृतं सभायां परिवेष्टितं च । तं श्रीहरिम् । मुक्तानन्दो मुनिः । सन्नतः कृतप्रणामः सन् । पप्रच्छ ॥ ३ ॥ कामेति । हे स्वामिन् ! । कामलोभक्रुधां स्वान्तःशत्रूणाम् । भीतेर्भयहेतोश्च । योगात्सम्बन्धं प्राप्यापि । कामाद्युदयकाले इत्यर्थः । नस्त्वदाश्रितानामस्माकम् । क्वचित्कदाचिदपि । धैर्यस्य तदधीनाभवनरूपाया धृतेः । अपगमस्तद्वशीभवनरूपो विनाशः । केन कतमेन । उपायेन साधनेन । न स्यात् । तमुपायम् । वद मह्यमभिधेहि ॥ ४ ॥ इतीति । इत्यमुना प्रकारेण । तेन मुक्तानन्दमुनिना । पृष्ठः । सः । हरिः । तं सन्तं मुक्तानन्दमुनिम् । प्रत्युवाच । हे साधो ! । आत्मनीष्ठायुजा आत्मनिष्ठासहितया । भक्त्या भगवत एकान्तिकोपासनया । धैर्यस्य । विप्लवः कामादिसंयोगेऽप्यपगमः । न स्यात् ॥ ५ ॥ एतदेव स्पष्टमाह । आत्मेति । अहम् । आत्मा स्वरूपतो देहेन्द्रियादेः पृथग्भूतस्तस्य द्रष्टा ज्ञानधर्मा क्षेत्रज्ञः । अस्मि । अहम् ।

सिताम्बरं श्वेतपुष्पहारापीडधरं वृतम् । भक्तसङ्घैश्च तं मुक्तानन्दः पप्रच्छ सन्नतः ॥ ३ ॥ कामलोभक्रुधां स्वामिन् !
योगाद्भीतेश्च नः क्वचित् । धैर्यस्यापगमो न स्यात्केनोपायेन तं वद ॥ ४ ॥ इति पृष्टस्तेन हरिस्तं सन्तं प्रत्युवाच
सः । आत्मनिष्ठायुजा भक्त्या न स्याद्धैर्यस्य विप्लवः ॥ ५ ॥ आत्मैवाहं न देहोस्मीत्येवं या दृढभावना । सैवैका
कृष्णभक्तस्य धैर्यस्थैर्येऽस्ति कारणम् ॥ ६ ॥ आत्मनिष्ठायुजा भक्त्या त्वन्तकालेऽपि मापतेः । भवेन्न धैर्यापगमो
नूनमन्यत्र किं पुनः ॥ ७ ॥ प्रश्नस्योत्तरमित्युक्तं तव साधो ! मयाऽञ्जसा । अन्यश्चेत्संशयः कश्चित्तर्हि पृच्छोत्तरं ब्रुवे
॥ ८ ॥ सोऽपृच्छत्तं पुनः साधुस्त्वां भजन्तं हरिं प्रभो ! । सिद्धयो ह्युपतिष्ठन्त इति भागवते श्रुतम् ॥ ९ ॥

देहः क्षेत्रसंज्ञाभाग्देवतेन्द्रियपञ्चभूतसमुदायरूपं शरीरम् । नास्मि । इत्येवमित्थंभूता । या । दृढभावना सुदृढो निश्चयः । एका केवला । सा दृढभावनैव । कृष्णभक्तस्यैकान्तिककृष्णभक्तिमतो जनस्य । धैर्यस्थैर्ये कामाद्युदयेऽपि तदवश्यतारूपानाकुलत्वे । कारणं हेतुः । अस्ति ॥ ६ ॥ एतदेव पुनः कैमुत्यन्यायेन द्रढयति । आत्मेति । अन्तकाले धृतिमतां धैर्यविघातहेतौ मृत्युसमये प्राप्ते सत्यपि । आत्मनिष्ठायुजा । मापते रमाकान्तस्य श्रीकृष्णस्य । भक्त्या । धैर्यापगमः । न भवेत् । नूनम् । अन्यत्र । पुनः । किम् । कामादिसंयोगे धृतिविघातो न भवतीत्यत्र किं वक्तव्यमित्यर्थः ॥ ७ ॥ प्रश्नस्येति । हे साधो ! । इत्यमुना प्रकारेण । तव । प्रश्नस्य । उत्तरम् मया । अञ्जसा तत्त्वतः । उक्तम् । चेद्यदि । कश्चित् । अन्यः । संशयः । स्यात् । तर्हि । पृच्छ प्रश्नं कुरु । उत्तरम् । ब्रुवे कथयिष्यामीत्यर्थः ॥ ८ ॥ स इति । सः । साधुः श्रीहरिणैवमुक्तो मुक्तानन्दमुनिः । तं श्रीहरिम् । पुनर्भूयः । अपृच्छत् । हे प्रभो ! । हरिं साक्षात् श्रीकृष्णम् । त्वाम् । भजन्तमेकान्तिकभावेनोपासीनं भवद्भक्तम् । सिद्धयोऽणिमाद्यैश्वर्याणि । उपतिष्ठन्ते प्राप्नुवन्ति । हि । इत्यमुना प्रकारेण । भागवते श्रीमद्भागवतैकादशस्कन्धे । श्रुतम् । तत्र तथाविधं भगवद्वचनं यथा 'जितेन्द्रियस्य युक्तस्य जितश्वासस्य योगिनः । मयि धारयतश्चित्तमुपतिष्ठन्ति सिद्धय' इति ॥ ९ ॥

भक्तीति । भक्त्यन्तरायरूपाः प्रारब्धान्ते भवत्सेवासम्बन्धकालोपगमेऽपि विलम्बसम्पादनरूपविघ्नाचरणेन तत्रान्तरायोत्पादिकाः । ताः सिद्धयः । अपक्वम् । भक्तमेव । उपयान्ति प्राप्नुवन्ति । अथवा । पक्वमपि । भक्तम् । उपयान्ति । इतीत्थंभूतं प्रश्नम् । पृच्छामि । अस्य प्रश्नस्य । उत्तरम् । वद मह्यं ब्रूहि ॥ १० ॥ 'एवं स मुक्तानन्देन कृतप्रश्नस्तु सद्गुरुः । प्रसन्नस्तमुवाचेत्थं हर्षयंश्च निजान् परान् ।' पक्वमिति । हे साधो ! । ताः सिद्धयः । योगधारणाविदं भगवत्स्वरूपे स्वचेतोधारणरूपयोगाभिज्ञमित्यर्थः । पक्वम् । भागवतं भगवदेकान्तिकभक्तम् । उपयान्ति अपक्वस्य तु । अतिदुर्लभास्ताः सुतरामसुलभाः । अपक्वं भक्तं तु सिद्धयः कदापि नोपतिष्ठन्ते इत्यर्थः ॥ ११ ॥ परीक्षेति । हे मुने ! । ताः । सिद्धयोऽपि । तस्य पक्वभागवतस्य परीक्षार्थम् । सिद्धीनाम् । पत्युः स्वामिनः । हरेः । आज्ञयैव । आयान्ति पक्वं भगवद्भक्तमुपतिष्ठन्ते । स्वातन्त्र्यतो भगवदाज्ञामन्तरापि स्वतन्त्रभावतः । न तु नैवायान्ति ॥ १२ ॥ तत्रेति । तत्र तासु सिद्धिषु विषये । निर्वासनो भगवत्सेवोपर्द्धि विना तदितरा मायिकैश्वर्यप्राप्तिवाच्छावर्जित इत्यर्थः । भक्तः पक्वो भागवतः । ताः सिद्धीः । क्वचित्कदाचिदपि । न पश्यति । इतरोऽपक्वभक्तस्तु ।

भक्त्यन्तरायरूपास्ता अपक्वं भक्तमेव वा । पक्वमप्युपयान्तीति पृच्छाम्यस्योत्तरं वद ॥ १० ॥ श्रीहरिरुवाच – पक्वं भागवतं योगधारणविदमेव ताः । उपयान्ति ह्यपक्वस्य भक्तस्य त्वतिदुर्लभाः ॥ ११ ॥ परीक्षार्थं तस्य हरेराज्ञयैव हि ता अपि । आयान्ति पत्युः सिद्धीनां न तु स्वातन्त्र्यतो मुने ! ॥ १२ ॥ तत्र निर्वासनो भक्तो न ताः पश्यत्यपि क्वचित् । इतरस्तु प्रसह्यैव वशे तासां भवत्यरम् ॥ १३ ॥ यदा निर्वासनो भक्तः सिद्धीरपि न वीक्षते । तदा तस्य वशे कृष्णः स्वयमेव भवत्यलम् ॥ १४ ॥ यस्त्वन्यवासनाहीनः कृष्णार्पितनिजाखिलः । गृह्णाति सादरं नित्यं कृष्णवाचोऽप्रिया अपि ॥१५॥ तस्याधीनो भवत्येव प्रीतो भक्तप्रियो हरिः । यथा पुरा दैत्यपतेर्बलेरात्मनिवेदिनः ॥१६॥

प्रसह्य प्रसन्नो भूत्वैव । अरं द्रुतम् । तासां सिद्धीनाम् । वशे आयत्तीभावे । भवति । तदधीनो जायते इत्यर्थः ॥ १३ ॥ यदेति । निर्वासनः । भक्तः । यदा । सिद्धीरपि । न वीक्षते । तदा । कृष्णः । स्वयमेव । तस्य भक्तस्य । वशेऽविघ्नत्वे । अलमतिशयेन । भवति ॥ १४ ॥ यथा यो भक्तः स्वभक्तपरीक्षार्थं श्रीहरिप्रेषितसिद्ध्यधीनो न भवेत्तस्याधीनो हरिर्भवति तथैवात्मनि तत्स्नेहपरीक्षार्थं तदुदिताप्रियवचांस्यपि यः सादरमुपादत्ते तस्यापि सः अधीनो भवतीति दृष्टान्तं प्रदर्शयन्नाह द्वाभ्याम् । य इति अन्यवासनाहीनो भगवदितरवासनावर्जितः । कृष्णाय स्वेष्टदेवाय श्रीहरयेऽर्पितानि निजानि स्वकीयान्यखिलानि देहगेहादीनि समग्रवस्तूनि येन स तथाभूतः । यो भक्तः । अप्रियाः स्वरुच्यननुरोधित्वात्स्वस्यारोचका अपि । कृष्णवाचः । नित्यं प्रतिदिनम् । सादरं यथातथा । गृह्णाति कर्त्तव्यत्वेनोपादत्ते ॥ १५ ॥ तस्येति । प्रीतं एवंभूततद्वर्त्तनेन प्रसन्नतां प्राप्तः । भक्तप्रियः । हरिः । तथाविधस्य भक्तस्य । अधिन एव । भवति । तत्र दृष्टान्तमाह । यथा । पुरा पूर्वम् । दैत्यपतेः । आत्मनिवेदिनः । बलेर्वैरोचनेः । अधीनोऽभवत्तथाधीनो भवतीति सम्बन्धः ॥ १६ ॥

साक्षादिति । ततो हेतोः । साक्षात्कृष्णस्य प्रत्यक्षस्य श्रीकृष्णभगवतः । भक्तेन । अप्रियाण्यपि । तदुतानि साक्षात्स्वेष्टदेवश्रीकृष्णोक्तानि । वाक्यानि तु । सादरम् । सद्यस्तच्छ्रवणसमकालमेव । ग्राह्याणि ॥१७॥ एवमिति । एवममुना प्रकारेण । स्वस्मिन् । अतिप्रेम्णा प्रचुरप्रेमवतः । भक्तस्य । हृदयात्सकाशात् । प्रेमरज्ज्वा प्रणयपाशेन । बद्धपादः सिताङ्घ्रिः । हरिः । क्वचित्कदाचिदपि । गन्तुम् । न शक्नोति । तद्धृदयमपहायान्यत्र यातुं समर्थो न भवतीत्यर्थः ॥१८॥ ब्रह्मेति । हे मुने ! । भक्तैः । ब्रह्माद्यर्थ्यं विरिञ्च्यादिभिरपि तदुक्तप्रकारेण स्ववर्त्तनं विधातुं प्रार्थनीयम् । कृष्णवाक्यम् । देहदुःखादिभीत्या । न प्रत्याख्येयं न निराकरणीयम् । इत्थमेवंविधम् । पीयूषतुल्यममृतसदृशम् । तस्य श्रीहरेः । वाक्यम् । पीत्वा । स साधुर्मुक्तानन्दमुनिः । अहृष्यत्प्रहृष्टो बभूव । अपरे तदितरे सभोपविष्टास्त्यागिगृहिभक्तजनाश्चापि । अहृष्यन् ॥१९॥ धैर्यलोपः स्वभक्तस्य यस्य नो तस्य लक्षणम् । सिद्धयश्चोपतिष्ठन्ति स्वभक्तं यादृशं तथा ॥१॥ लक्षणं तस्य कथितं येन श्रीहरिणा स माम् । कुर्यादेकान्तिकं भक्तं स्वकीयं भक्तिधर्मजः ॥२॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्सूनुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायामेकषष्टितमस्तरङ्गः ॥ ६१ ॥

साक्षात्कृष्णस्य भक्तेन ततस्तदुदितानि तु । अप्रियाण्यपि वाक्यानि सद्यो ग्राह्याणि सादरम् ॥ १७ ॥ एवं स्वस्मिन्नतिप्रेम्णो भक्तस्य हृदयाद्धरिः । प्रेमरज्ज्वा बद्धपादो गन्तुं शक्नोति न क्वचित् ॥ १८ ॥ ब्रह्माद्यर्थ्यं देहदुःखादिभीत्या प्रत्याख्येयं कृष्णवाक्यं न भक्तैः । इत्थं वाक्यं तस्य पीयूषतुल्यं पीत्वा साधुः सोऽहृषच्चापरेऽपि ॥ १९ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते एकषष्टिश्चमस्तरङ्गः ॥ ६१ ॥

शकाब्दे विक्रमार्कस्य रसाश्वसुभूमिते । चतुर्थ्यां फाल्गुनस्यान्ते वचोऽमृतमिदं हरेः ॥ १ ॥
तत्र दुर्गपुरे दुर्गे नृपतेः सौधचत्वरे । उच्चपीठे न्यषीदत्स सितसूक्ष्मांशुकत्रयः ॥ २ ॥
सितपुष्पस्रगापीडं भक्तसङ्घैः परिश्रितम् । स्वयम्प्रकाशानन्दस्तं पप्रच्छ प्राञ्जलिः प्रभुम् ॥ ३ ॥

हरेर्गुणाविर्भावस्तु येषु स्याद्येषु नैव च । उभयेषां लक्षणानि द्विषष्टितम ईर्यते ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८७६) फाल्गुनस्य मासस्य । अन्तेऽन्तिमपक्षे । चतुर्थ्यां तिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । नृपतेरुत्तमभूभुजः । दुर्गे । सौधचत्वरे तस्यैव वेश्माङ्गणमध्यप्रदेशे । उच्चपीठे सुतूलिकाद्यास्तृते उच्चपादे मञ्चासने । सितानि वलक्षाणि सूक्ष्माण्यणुतन्तूनि यान्यंशुकानि तेषां त्रयं परिधानीय–प्रावरणीय–शिरोवेष्टनीयरूपं त्रिकं यस्य तथाभूतः । स श्रीहरिः । न्यषीदत्सपरिचारकः स्वावासादागत्योपविवेश ॥२॥ सितेति । सितपुष्पाणां वलक्षकुसुमानां स्रगापीडं हारशेखरसमाहृतिर्यस्य तथोक्तः । कण्ठे श्वेतपुष्पहारान् शिरोवेष्टने तथाविधोत्तंसांश्च दधान इत्यर्थः । भक्तसङ्घैर्नानादेशागतैस्त्यागिगृहिस्वभक्तवृन्दैः । परिश्रित महासभायां संवेष्टितम् । प्रभुम् । तं श्रीहरिम् । स्वयम्प्रकाशानन्द एतन्नामासाधुः । प्राञ्जलिर्विनयार्थं कृतकरसम्पुटः सन् । पप्रच्छ ॥ ३ ॥

श्रीमदिति । हे स्वामिन् ! । सत्यशौचादयः । शुभा जनकल्याणकारित्वादतिशोभनाः । गुणाः । भगवति श्रीवासुदेवे । त्वयि । नित्या अपृथक्स्थितित्वेन ध्रुवाः । सन्ति । इत्यमुना प्रकारेण । श्रीमद्भागवते । उदीरितं तत्प्रथमस्कन्धे पृथ्वीधर्मसंवादे कथितम् ॥ ४ ॥ त इति । हे सत्पते ! । ते सत्यादयो भवद्गुणाः । त्वां भवन्तम् । सेवमानेषु भजत्सु । भक्तेषु । त्वत्प्रसादतः स्वेष्टदेवश्रीकृष्णाख्यत्वदनुग्रहात् । आविर्भवन्ति । इत्यपीत्थमपि । तत्र श्रीमद्भागवते । श्रूयते । तद्यथा । 'सत्यं शौचं दया क्षान्तिस्त्यागः सन्तोष आर्जवम् । शमो दमस्तपः साम्यं तितिक्षोपरतिः श्रुतम् । ज्ञानं विरक्तिरैश्वर्यं शौर्यं तेजो बलं स्मृतिः स्वातन्त्र्यं कौशलं कान्तिर्धैर्यमार्दवमेव च । प्रागल्भ्यं प्रश्रयः शीलं सह ओजो बलं भगः । गाम्भीर्यं स्थैर्यमास्तिक्यं कीर्त्तिर्मानोऽनहङ्कृतिः । एते चान्ये च । भगवन्नित्या यत्र महागुणाः । प्रार्थ्या महत्त्वमिच्छद्भिर्न वियन्ति स्म कर्हिचि'दिति ॥ ५ ॥ स इति । ते भवद्गुणाः । कीदृशेषु किंविधेषु । भक्तेषु । आविर्भवन्ति । कथं केन प्रकारेण च । आविर्भवन्ति । तदेतद्द्वयम् । ब्रूहि मह्यं कथय । इत्यमुना प्रकारेण । उक्तः स्वयम्प्रकाशानन्दमुनिना पृष्टः । स्वामी परमेश्वरत्वबोधकसाक्षाद्दृष्टैश्वर्यः । स श्रीहरिः ।

श्रीमद्भागवते स्वामिन् ! सत्यशौचादयस्त्वयि । शुभा गुणा भगवति नित्याः सन्तीत्युदीरितम् ॥ ४ ॥
ते च त्वां सेवमानेषु भक्तेषु त्वत्प्रसादतः । आविर्भवन्तीत्यपि च श्रूयते तत्र सत्पते ! ॥ ५ ॥
ते कीदृशेषु भक्तेषु कथं चाविर्भवन्ति तत् । ब्रूहीत्युक्तः स तं स्वामी प्रोवाच शृणु सन्मते ! ॥ ६ ॥
कृष्णस्य त्र्यकृतेः साक्षाद्यथार्थो यस्य निश्चयः । भवेद्भक्तस्य तस्मिन् हि गुणा आविर्भवन्ति ते ॥ ७ ॥
कालकर्मस्वभावानां प्रकृतेः पुरुषस्य च । कर्त्ता नियन्ता तद्भिन्नः स्वतन्त्रः कृष्ण एव हि ॥ ८ ॥
उत्पत्तिस्थितिसंहारकर्त्ताण्डानामपि स्वयम् । निर्लेप एव भवतीत्येवं यस्यास्ति निश्चयः ॥ ९ ॥

तं स्वयम्प्रकाशानन्दमुनिम् । प्रोवाच । हे सन्मते ! । शृणु ॥ ६ ॥ तत्पृष्टप्रश्नद्वयमध्ये प्रथमप्रश्नोत्तरमाह चतुर्भिः । कृष्णस्येति । हे मुने ! । यस्य । भक्तस्य । त्र्यकृतेः स्वेच्छाविष्कृतमनुष्यसमानाकारस्य । साक्षात्स्वप्रत्यक्षस्य । कृष्णस्य । यथार्थः । निश्चयः । भवेत् । तस्मिन्भक्ते । ते भगवति नित्यत्वेन वर्त्तमानाः । गुणाः सत्यशौचादयः । आविर्भवन्ति ॥ ७ ॥ यथार्थनिश्चयस्वरूपमाह त्रिभिः । कालेति । कृष्णो मदिष्टदेवो मया यः साक्षात्प्राप्तः सोऽयं श्रीकृष्णो भगवानेव । कालकर्मस्वभावानाम् । प्रकृतेः । पुरुषस्य च । कर्त्ता । कालादित्रयाणां तत्तत्क्रियाशक्तिप्रदानेनात्यन्तिकप्रलयेऽक्षरतेजसि दिवारात्रिवद्विलीयस्थितयोरनयोर्मूलप्रकृतिपुरुषयोर्जागरूकता विधापनपूर्वमुत्थापनेन च स्रष्टेत्यर्थः । नियन्ता क्षालादीनां स्थितिप्रवृत्त्यादिना नियामकः । तद्भिन्नः स्वरूपस्वभावगुणविभूत्यैश्वर्यादिभिस्तेभ्यः पृथग्भूतः । स्वतन्त्रः कदाचिदपि न कालादिपरतन्त्रश्च । अस्ति । हि ॥८॥ उत्पत्तीति । अण्डानामसंख्यानां ब्रह्माण्डानाम् । उत्पत्तिस्थितिसंहारकर्त्तापि । प्रकृतिपुरुषद्वारोत्पत्त्यादिविधापनेन तेषां स्वयमसाक्षात्कर्त्तास्तथापि स्वाज्ञया स्वदत्तैश्वर्येण च तेषां तथात्वात्स्वयं मुख्यकर्त्ता सन्नपीत्यर्थः । स्वयं श्रीकृष्णः । निर्लेपस्तदहङ्कृतवर्जित-

त्वादतिशुद्ध एव । भवति । इत्येवममुना प्रकारेण । यस्य भक्तस्य । निश्चयः साक्षाच्छ्रीकृष्णस्वरूपनिर्णयः । अस्ति ॥ ९ ॥ नेति । तस्य भक्तस्य । स उक्तविधः साक्षाच्छ्रीकृष्णस्वरूपनिश्चयः । कुतर्कैस्तन्मानुष्यनिरीक्षणेन स्वान्तःकरणकृतैरयं परमेश्वरः सन्नपि परेभ्यो भयभावनादिकं कथं करोतीत्यादिरूपैः कुत्सितैर्वितर्कैः । अपनोद्यो निराकरणीयः । न भवेत् । पाषण्डैः क्षपणकवादश्रवणैः । अपनोद्यो न भवेत् । मतान्तरवादिभिः शुष्कवेदान्त्यादिवादैः । अपनोद्यो न भवेत् । असच्छास्त्रैर्निरीश्वरत्वबोधकैर्वैतण्डिकवादवद्भिर्ग्रन्थैश्च । सर्वथा । अपनोद्यो न भवेत् । सर्वथेति पदं प्रतितृतीयान्तपदं योजनीयम् ॥ १० ॥ द्वितीयप्रश्नोत्तरमाह पञ्चभिः । ईदृगिति । हे मुने ! । ईदृग्निश्चयिनः साक्षात्कृष्णस्येत्थंभूतेन निश्चयेन युक्तस्य । पुंसो भक्तजनस्य । राधिकापतेः रासेश्वरीप्राणपतेः प्रत्यक्षस्य कृष्णस्य । सम्बन्धः । सञ्जातः । इतीत्थम् । बोद्धव्यम् । यतो यस्मादेवंभूतात्सम्बन्धात् । यं सम्बन्धं प्राप्येत्यर्थः । भजतां सप्रेमनवधा तं सेवमानानां जनानाम् । भक्तता सत्यं भगवद्भक्तत्वम् । जायते ॥ ११ ॥ सम्बन्ध इति । अत्रास्मिन् लोके । यस्य । पुंसः । यस्य । वस्तुनः । सम्बन्धः । स्यात् । तस्य वस्तुनः । गुणाः । तस्मिन्पुंसि । प्रवर्त्तन्ते । इतीत्थम्

न कुतर्कैर्न पाषण्डैर्न मतान्तरवादिभिः । नासच्छास्त्रैश्चापनोद्यो भवेत्तस्य स सर्वथा ॥ १० ॥ ईदृग्निश्चयिनः पुंसः सम्बन्धो राधिकापतेः । सञ्जात इति बोद्धव्यं भजतां भक्तता यतः ॥ ११ ॥ सम्बन्धो वस्तुनो यस्य पुंसः स्याद्यस्य तस्य तु । गुणास्तस्मिन्प्रवर्त्तन्त इति लोकेऽत्र दृश्यते ॥१२॥ चक्षुर्दीपस्य सम्बन्धं साक्षाद्याति यथा यदा । तत्प्रकाशगुणं प्राप्य तमस्यर्थांस्तदेक्षते ॥ १३ ॥ तथा कृष्णस्य सम्बन्धं भक्तः प्राप्यैव तद्गुणान् । अनायासेन सत्यादीन् प्राप्नोत्यमरदुर्लभान् ॥ १४ ॥ कृष्णवच्च ततो भक्तो निर्बन्धः सन्निजेप्सितम् । कार्यं विधातुं शक्नोति स्वतन्त्रस्तत्प्रसादतः ॥ १५ ॥ एवं वदन्तं सदसि कृष्णनिश्चयिनः फलम् । निर्विकारानन्दसाधुर्नत्वा पप्रच्छ तं प्रभुम् ॥ १६ ॥

दृश्यते ॥ १२ ॥ एतदेव दृष्टान्तेन स्फुटयति । चक्षुरिति । यथा । यदा । चक्षुर्नेत्रम् । दीपस्य । साक्षात् । सम्बन्धम् । याति लभते । तदा । तत्प्रकाशगुणं दीपसम्बन्धिनं प्रकाशरूपं धर्मम् । प्राप्य । तमस्यन्धकारे । अर्थान् घटपटादिपदार्थान् । स्थितानिति शेषः । ईक्षते चक्षुः साक्षात्पश्यति ॥ १३ ॥ तथेति । तथा तेनैव प्रकारेण । भक्तः साक्षाच्छ्रीकृष्णनिश्चयवानुक्तविधो भक्तजनः । कृष्णस्य स्वेष्टदेवस्य साक्षाच्छ्रीकृष्णभगवतः । सम्बन्धम् । प्राप्य । अमरदुर्लभान्-भक्तदेवदुष्प्रापान् । सत्यादीन् । तद्गुणान् । अनायासेनैव । प्राप्नोति ॥ १४ ॥ कृष्णवदिति । ततस्तदनन्तरम् । तत्प्रसादतः स्वेष्टदेवसाक्षाच्छ्रीकृष्णानुग्रहेण । स्वतन्त्रो भगवद्दत्कालाद्यनधीनः । भक्तः । निर्बन्धो यत्र भगवता नियुक्तस्तत्कुर्वन्नपि तदहन्ताममताबन्धनवर्जितः । सन् । निजेप्सितं स्वेष्टदेवेन कर्त्तव्यत्वेनाप्तुं वांछितम् । कार्यं यत्किमपि कृत्यम् । कृष्णवत् । विधातुं स्वेष्टदेववत्कर्त्तुम् । शक्नोति समर्थो । भवति ॥ १५ ॥ एवमिति । एवममुना प्रकारेण । सदसि निजभक्तसभायाम् । कृष्णनिश्चयिनः पूर्वोक्तरीत्या साक्षाच्छ्रीकृष्णनिश्चयवतो भक्तस्य । फलम् । वदन्तम् । प्रभुम् । तं श्रीहरिम् । निर्विकारानन्दसाधुः । नत्वा । पप्रच्छ ॥ १६ ॥

ईदृगिति । हे हरे ! । अत्र सत्सङ्गे । ईदृग्निश्चयवन्तं एवंविधत्वत्स्वरूपनिश्चययुक्ता अपि । के केचित् । सन्तः साधवः । ते तव ! गुणान् सत्यादीन् भवतो गुणान् । न प्राप्नुवन्ति । प्रत्युत । ते सन्तः । मानेर्ष्यामुख्यान् । दोषांस्तु । यान्ति लभन्ते ॥ १७ ॥ तत्रेति । हे प्रभो ! । तत्रैवं विपरीतार्थप्राप्तौ । किंकारणं को हेतुरस्ति । तद्वदेति शेषः । इत्यमुना प्रकारेण । पृष्टो निर्विकारानन्दसाधुनानुयुक्तः । स्वामी श्रीहरिः । तं निर्विकारानन्दसाधुम् । जगाद । हे साधो ! । लोके । जीवास्तु । दैवाः । तथा । असुराः । इति । द्विविधाः । ज्ञेया ॥१८॥ अभयेति । तेषां दैवानामासुराणां च जीवानाम् । अभयाद्याः । गुणाः । दम्भाद्याः । दोषाश्च । गीतायाम् । श्रीकृष्णेन । अर्जुनं प्रति पृथक् पृथक् । उदिताः । ते यथा । 'अभयं सत्त्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः । दानं दमश्च यज्ञश्च स्वाध्यायस्तप आर्जव'मित्याद्या गुणाः । 'दम्भो दर्पोऽभिमानश्च क्रोधः पारुष्यमेव च । अज्ञानं चे'त्याद्या दोषाः ॥१९॥ प्राप्येति । ते स्वस्वगुणदोषयुक्ताः । उभये दैवा आसुराश्चेत्येवंद्विविधा अपि जीवाः । कृष्णसम्बन्धम् । प्राप्यापि । स्वाभाविकान् स्वस्वात्मनि निसर्गत एव वर्त्तमानान् । निजान् स्वकीयान् । गुणान् । दोषांश्च । हातुं सर्वथा त्यक्तुम् । न शक्नुवन्ति । हि ॥२०॥

ईदृग्निश्चयवन्तोऽत्र केऽपि सन्तो न ते गुणान् । प्राप्नुवन्त्युत मानेर्ष्यामुख्यान् दोषांस्तु यान्ति ते ॥१७॥ तत्र किंकारणमिति पृष्टः स्वामी जगाद तम् । जीवास्तु द्विविधा ज्ञेया लोके दैवास्तथाऽसुराः ॥१८॥ अभयाद्याश्च दम्भाद्या गुणा दोषाः पृथक् पृथक् । गीतायामुदितांस्तेषां श्रीकृष्णेनार्ज्जुनं प्रति ॥ १९ ॥ प्राप्यापि कृष्णसम्बन्धमुभयेऽपि निजान् गुणान् । स्वाभाविकाँश्च दोषाँस्ते न हातुं शक्नुवन्ति हि ॥ २० ॥ गुणिनस्तत्र दैवास्तु सम्बन्धाद्राधिकापतेः । तद्गुणान्प्राप्नुवन्त्येव दोषवन्तस्तु नेतरे ॥२१॥ आसुरेषु तु जीवेषु कश्चिदेव क्वचित्पुमान् हित्वा स्वदोषान् गुणवान्भवेन्महदनुग्रहात् ॥२२॥ अज्ञानतो वा दम्भाद्वा शुश्रूषा महतां सताम् । जाता दोषान्निहन्त्येव महान्तो ह्यत एव ते ॥२३॥

गुणिन इति । तत्र तेषु द्विविधेषु जीवेषु मध्ये । गुणिनोऽभयादिगुणयुक्ताः । दैवा जीवास्तु । राधिकापतेः । सम्बन्धात् । तद्गुणान् । प्राप्नुवन्त्येव । दोषवन्तो दम्भादिदोषयुक्ताः । इतरे आसुरा जीवास्तु राधिकापतेः सम्बन्धात्तद्गुणान्न प्राप्नुवन्त्येव ॥ २१ ॥ ननु द्विविधे जीवसर्गेऽनादीभूते सत्यपि कश्चिदासुरो जीवः कदाचिदपि दैवतां प्राप्नोति नवेति पिपृच्छिषुं तं मुनिमालक्ष्य स्वयमेवाह द्वाभ्याम् । । आसुरेष्विति । हे मुने ! । आसुरेषु । जीवेषु मध्ये तु । कश्चिदेव । पुमान् । क्वचित्कदाचित् । महदनुग्रहात् । स्वदोषान् । हित्वा । गुणवान्दैवगुणयुक्तः । भवेत् । एवंसति तस्मिन्नपि भगवद्गुणा आविर्भवेयुरिति भावः ॥ २२ ॥ महदनुग्रहोद्भवहेतुमाह । अज्ञानत इति । हे मुने ! । अज्ञानतोऽबुद्धिपूर्वम् । अथवा । दम्भात्स्वयशःख्यातिमङ्गीकृत्य । जाता आसुरजनैः कृता । महताम् । शुश्रूषा तच्छन्दानुवृत्तिपूर्वापरिचर्या । दोषान् परिचर्याकारकासुरजनागुणान् । निहन्त्येव । ते सन्तस्तत्कृतां सेवां दृष्ट्वा तेषु प्रसन्नाः सन्तोऽनुग्रहं कृत्वा तद्दोषान्विनाशयन्त्येवेत्यर्थः । अत एव । ते सन्तः । महान्तो महानुभावाः । ज्ञेयाः । हि ॥ २३ ॥

ननु कदाचित्कश्चिद्दैवो जीवोऽप्यासुरतां प्राप्नोति नवेति पिपृच्छिषुं तं पुनरालक्ष्य स्वयमेवाह द्वाभ्याम् । दैवेष्विति । हे मुने ! । दैवेषु । जीवेषु मध्येऽपि । कश्चित् । यदि । क्वचित्कदाचित् । प्रमादतोऽनवधानतः । अथवा । बुध्या बुद्धिपूर्वम् । रङ्कं महागुणमपि दीनवद्वर्त्तमानम् । हरेः । भक्तमेकान्तिकभक्तजनम् । अवजानाति ॥२४॥ स इति । स तादृशो दैवजीवोऽपि । आसुर इव गुणहीनो दैव्या सम्पदा वर्जितः । दोषयुक् आसुर्या सम्पदा युक्तश्च । स्याज्जायेत । तस्मिन्नपि । कृष्णस्य । गुणाः । नाविर्भवन्ति । ध्रुवं निश्चितमेव ॥२५॥ अत इति । अतो हेतोः । क्वापि कदाचिदपि । दुर्बलदेहिनो दीनस्य भगवद्भक्तस्य । अपमानः । न कार्यः । यतो हेतोः । तेन दुर्बलभगवद्भक्तापमानेन । बहवः । योगिनः । आशु । नाशम् । आपन्नाः प्राप्ताः । अभूवन् ॥ २६ ॥ एवं दीनभक्तानपमानमर्थान्तरन्यासेन समर्थयित्वा साम्प्रतं भगवतो दीननाथत्वात्तदपमानं सोऽपि न सहते प्रत्युत स्वयमन्येन वा तद्विनाशं कुरुते कारयतीत्याह द्वाभ्याम् । अन्तरिति । हे मुने ! । तस्मिन् रङ्कभक्ते । अन्तर्यामितया । वर्त्तमानः । दीनानाथः । इत्यनयाभिधया श्रुतः प्रथितः । रमापतिः श्रीकृष्णः । तं दीनापमानम् । क्वापि कदाचिदपि । नैव । सहते ॥२७॥ रुष्ट इति । रुष्टो दीनाप-

दैवेष्वपि च जीवेषु यदि कश्चित्प्रमादतः । अवजानाति बुद्ध्या वा रङ्कं भक्तं हरेः क्वचित् ॥२४॥ सोऽपि
स्यादासुर इव गुणहीनश्च दोषयुक् । नाविर्भवन्ति कृष्णस्य गुणास्तस्मिन्नपि ध्रुवम् ॥ २५ ॥ अतोऽपमानो
न क्वापि कार्यो दुर्बलदेहिनः । बहवो नाशमापन्ना यतस्तेनाऽऽशु योगिनः ॥ २६ ॥ अन्तर्यामितया
तस्मिन्वर्त्तमानो रमापतिः । सहते नैव तं क्वापि दीननाथ इति श्रुतः ॥२७॥ रुष्टः स तस्य सहसा विनाशं
कुरुते स्वयम् । कारयत्याशु वाऽन्येन तस्मात्कार्यो न स क्वचित् ॥ २८ ॥ प्रीतः कृष्णो रुष्टतां याति
यस्माद्दीनावज्ञा नैव कार्या तदत्र । इत्थं वाचं तस्य साधुः सुधाभां पीत्वा हृष्टः सोऽभवच्चान्यभक्ताः ॥२९॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते द्विषष्ठितमस्तरङ्गः ॥ ६२ ॥

मानकर्त्तरि कृतकोपः । स श्रीकृष्णः । तस्य दीनापमानकर्त्तुः पुरुषस्य । विनाशम् । सहसा तूर्णमेव । स्वयमेव । कुरुते । अथवा । अन्येन । आशु शीघ्रमेव । कारयति तस्माद्धेतोः । स दीनापमानः । क्वचित्कदाचिदपि । न कार्यः ॥२८॥ प्रकरणार्थं निगमयत्यर्द्धेन । प्रीत इति । यस्माद्धेतोः । प्रीतः प्राक्केनचिद्गुणेन प्रसन्नतां प्राप्तोऽपि । कृष्णः । रुष्टतां दीनावज्ञया क्रुद्धत्वम् । याति प्राप्नोति । तत्तस्माद्धेतोः । अत्र सत्सङ्गे । दीनावज्ञा । नैव । कार्या इत्थमेवंविधाम् । तस्य श्रीहरेः । सुधाममृतसमानाम् । वाचम् । पीत्वा । साधुः । स निर्विकारानन्दः । हृष्टः । अभवत् । अन्यभक्ताः समीपविष्टास्त्यागिगृहिण इतरे भक्तजनाश्च । हृष्टाः । अभवन् ॥२९॥ येषु स्वकीयभक्तेषु स्वगुणानां भवेद् ध्रुवम् । आविर्भावो भवेद्येषु सत्यादीनां क्वचिन्न च । उभयेषां लक्षणानि तेषां येन यथार्थतः । उक्तानि श्रीहरिः सोऽस्तु नित्यं मन्मानसे प्रभुः ॥ २ ॥
इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्पत्नुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां द्विषष्ठितमस्तरङ्गः ॥ ६२ ॥

न्यूननिश्चियिनः पुंसो दृढनिश्चयिनो हरेः । भक्तस्य हृदि सङ्कल्पा यादृशाः स्युश्च यादृशाः ॥ १ ॥ नराकृतिधृतः साक्षाच्छ्रीहरेस्तत्त्वतश्च यः । निश्चयो दृढ इत्येतत्रिषष्टितम ईरितम् ॥ २ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८७६) फाल्गुनस्य मासस्य । अन्तेऽन्तिमे बहुले पक्षे इत्यर्थः । सप्तम्यां तिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमक्षितिपस्य । दुर्गे । प्रत्यङ्मुखनिकेतस्य श्रीवासुदेवमन्दिरान्तिकवर्त्तिनः प्रत्यग्द्वारस्योत्तमनृपसौधस्य । वेद्याम् । मञ्चे सोत्तरच्छदतूलिकास्तृतपर्यङ्कासने । स श्रीहरिः । उपाविशत्स्वावासाच्चटचट्ध्वनिपादुकं सपार्षद एत्य प्रत्यङ्मुखो न्यषीदत् ॥ २ ॥ तं विशिनष्टि । सितेति । सितधोत्रः परिधृतसुश्वेताधोंशुकः । सितोष्णीषः रक्तप्रान्तं श्वेतं सूक्ष्मधोत्रं शिरसि बन्धनचातुर्येण निबध्य वर्त्तमान इत्यर्थः । सितप्रावरणः प्रावृतश्वेतप्रच्छदपटिः । सितपुष्पस्रक् श्वेतपुष्पहारहारिकण्ठः । आपीडाः स्थलकमलशेखराः सन्त्यस्येत्यापीडः । 'अर्शआदित्वादच्' । तथा । भक्तसङ्घैर्नानादेशागतैस्त्यागिगृहिस्वभक्तव्रजैः । परिश्रितः सभायां संवेष्टितः ॥ ३ ॥ तमिति । तमित्थंभूतालौकिकजनमनोनयनवृत्तिहारिशोभाविशिष्टं श्रीहरिम् । नत्वा । नृसिंहानन्दमुनिः । पप्रच्छ ।

शकाब्दे विक्रमार्कस्य रसाश्ववसुभूमिते । सप्तम्यां फाल्गुनस्यान्ते वचोऽमृतमिदं हरेः ॥ १ ॥ तत्र दुर्गपुरे दुर्ग उत्तमक्षितिपस्य सः । प्रत्यङ्मुखनिकेतस्य वेद्यां मञ्च उपाविशत् ॥ २ ॥ सितधोत्रः सितोष्णीषः सितप्रावरणस्तथा । सितपुष्पस्रगापीडो भक्तसङ्घैः परिश्रितः ॥३॥ तं नृसिंहानन्दमुनिर्नत्वा पप्रच्छ भो हरे ! । कुर्वन्ति बहवस्तेऽत्र साक्षात्कृष्णस्य निश्चयम् ॥ ४ ॥ तत्र त्वन्निश्चये यस्य न्यूनता हृदये भवेत् । सङ्कल्पाः कीदृशांस्तस्य भवेयुरिति मे वद ॥ ५ ॥ तमुवाच हरिर्यस्य निश्चये न्यूनता भवेत् । तस्य कृष्णातिमर्त्यैहादर्शनाद् हृदि मुद्भवेत् ॥ ६ ॥ क्वचिन्नृनाट्ये कृष्णस्य दुर्बलत्वादिवीक्षणे । खेदः स्यादनुतापश्च दुःसङ्कल्पाश्च भूरिशः ॥ ७ ॥

भो हरे ! । अत्र सत्सङ्गे । बहवस्त्वद्भक्तजनाः । साक्षात्कृष्णस्य प्रत्यक्षपुरुषोत्तमस्य । ते तव । निश्चयम् । कुर्वन्ति ॥ ४ ॥ तत्रेति । हे प्रभो ! । तत्र तेषु बहुषु त्वद्भक्तजनेषु मध्ये । यस्य त्वद्भक्तजनस्य । हृदये मनसि । त्वन्निश्चये स्वेष्टदेवस्य साक्षाच्छ्रीकृष्णभगवतः स्वरूपनिश्चये । न्यूनता । भवेत् । तस्य त्वद्भक्तजनस्य । कीदृशाः । सङ्कल्पाः । भवेयुः । इत्येतत् । मे मह्यम् । वद ॥ ५ ॥ तमिति । तमेवंपृच्छन्तं नृसिंहानन्दमुनिम् । हरिः । उवाच । हे मुने ! । यस्य भक्तस्य । निश्चये । न्यूनता । भवेत् । तस्य भक्तस्य । हृदि मनसि । कृष्णातिमर्त्यैहादर्शनात् साक्षाच्छ्रीकृष्णस्यामानुषचरित्रवीक्षणतः । स्वेष्टदेवो यदा यादृशांस्तादृशांश्च समाधिं विधापयति तत उत्थापयति स्वावासाद्दूरदेशस्थितस्वभक्तनिवेदितान्नाद्यश्नाति तेभ्यः स्वनक्तकादींश्च ददाति केभ्यो मनोगतं कथन्तीत्येवमादिप्रत्यभिज्ञानेक्षणादित्यर्थः । मुद् महानन्दः । भवेत् ॥ ६ ॥ क्वचिदिति । क्वचित्कदाचित् । कृष्णस्य । नृनाट्ये नरानुकरणे विषये । दुर्बलत्वादिवीक्षणे प्राकृताल्पजनकृतभर्त्सनादिसहनभयभावनप्रतिकारणदेशाचारादि विरुद्धक्रियाचरणादिदुर्बलत्वद्योतकभावादिसमीक्षणे सतीत्यर्थः । खेदोऽयं भगवांश्चेत्कथमेवं करोति यदि करोति तर्हि भगवान्स्यान्न वेति मनोदैन्यमित्यर्थः ।

स्यात् । अनुतापः मयैतदाश्रयः किमर्थं कृत इत्येवंभूतः पश्चात्तापश्च । स्यात् । भूरिशो बहुशः । दुःसङ्कल्पाः अर्थादिग्राम्यविषयोपभोगानुध्यानरूपाः स्वानर्थकरा दुष्टा मनोरथाश्च । स्युः ॥ ७ ॥ अनिवार्यैरिति अनिवार्यैः स्वेन हठादप्यप्रत्याख्येयैः । तैर्दुःसङ्कल्पैः । पीडितः । स भक्तः । कृष्णस्य । अगुणान्दोषान् । वदेत् वक्ष्यमाणप्रकारेण कथयेत् । मया । बहुकालं बहुकालपर्यन्तम् । भावतः स्नेहेन । कृष्णस्य । सेवा । कृता ॥ ८ ॥ दुःसङ्कल्पानिति । तथापि । एषः । कृष्णः । मे मम । हृदो मनःसम्बन्धिनः । दुःसङ्कल्पान् न नाशयति । हे मुने ! । स्वदोषं स्वनिष्ठोक्तविधागुणम् । अविदन्नजानन् भक्तः । एवममुना प्रकारेण । प्रभौ साक्षाच्छ्रीकृष्णे । दोषान् । कल्पयति ॥ ९ ॥ स्वेति । स एवंविधो भक्तः । स्वदृष्टान्तेन । कृष्णेऽपि । कामादीन् । आन्तरानन्तःकरणावस्थितान् । रिपून् । अनिवार्यान्भगवताप्यपरिहार्यान् । विजानाति । ततो हेतोः । तं कृष्णम् । मर्त्यवन्मनुष्यसमानम् । वेत्ति ॥ १० ॥ न्यूनेति । एवममुना प्रकारेण । न्यूननिश्चयो भक्तः । कृष्णे । प्राकृतमर्त्यधीरितरकर्माधीनग्राम्यजनसमानबुद्धिः सन् । त्यक्ततद्दिव्यभावनः स्वमनस्तः परिहृतभगवत्सम्बन्धिदिव्यभावश्च सन् । कृष्णे । दोषसत्त्वं विद्यमानं दोषसत्यताम् । तर्कयति

अनिवार्यैः पीडितस्तैर्वदेत्कृष्णस्य सोऽगुणान् । बहुकालं मया सेवा कृता कृष्णस्य भावतः ॥८॥ दुःसङ्कल्पांस्तथाप्येष न नाशयति मे हृदः । एवं स्वदोषमविदन् दोषान्कल्पयति प्रभौ ॥ ९ ॥ स्वदृष्टान्तेन कृष्णेऽपि कामादीनान्तरान्रिपून् । सोऽनिवार्यान्विजानाति ततस्तं वेत्ति मर्त्यवत् ॥१०॥ न्यूननिश्चय एवं हि कृष्णे प्राकृतमर्त्यधीः । दोषसत्त्वं तर्कयति त्यक्ततद्दिव्यभावनः ॥ ११ ॥ इत्युक्तवन्तं परमचैतन्यानन्द आह तम् । दृढनिश्चयिनो नुस्ते सङ्कल्पाः कीदृशा हरेः ॥ १२ ॥ तमुवाच हरिः स स्वं पूर्णं मन्येत सर्वदा । न मे प्राप्यं च साध्यं च किञ्चिदस्तीति चान्तरे ॥ १३ ॥ अस्ति साक्षाद्धरिर्यत्र तद्धामाप्यस्ति तत्र हि । एते सन्तश्च तद्भक्ता नारदादिसमाः किल ॥ १४ ॥

सम्भावयति । य इत्थंभूतान् सङ्कल्पान्करोति स न्यूननिश्चयो ज्ञेय इति प्रश्नोत्तरं कृतम् ॥ ११ ॥ इतीति । इत्यमुना प्रकारेण । उक्तवन्तं नृसिंहानन्दमुनिप्रश्नोत्तरं कुर्वन्तम् । तं श्रीहरिम् । परमचैतन्यानन्द एतन्नामासाधुः । आह प्रश्नं पप्रच्छ । हे हरे ! । हरेः श्रीवासुदेवस्य भगवतः । ते तव । दृढनिश्चयिनः । नुर्भक्तस्य । कीदृशाः । सङ्कल्पाः । स्युः । तन्मह्यं वदेति शेषः ॥ १२ ॥ तमिति । तमेवंपृच्छन्तं परमचैतन्यानन्दसाधुम् । हरिः । उवाच । हे साधो ! । स दृढनिश्चयी भक्तः । मे मम । किञ्चित्किमपि । प्राप्यमतःपरं प्राप्तव्यम् । साध्यमतः संसाधनीयं च । नास्ति । इतीत्थम् । अन्तरे स्वान्तःकरणे । सर्वदा सर्वकालम् । स्वमात्मानम् । पूर्णं सम्पूर्णमनोरथम् । मन्येत ॥ १३ ॥ एवं स्वात्मानं पूर्णकामं ज्ञात्वा वर्त्तमानस्य तस्य भक्तस्य यादृशाः सङ्कल्पा जायन्ते तानाह द्वाभ्याम् । अस्तीति । यत्र स्थले । साक्षात् । हरिः । अस्ति वर्त्तते । तत्र हि तस्मिन् स्थले एव । तद्धाम तदीयं ब्रह्मपुरपदमपि । अस्ति । तद्भक्ताः साक्षाच्छ्रीहरिं भजमानाः । एते । सन्तः साधवश्च । नारदादिसमाः । सन्ति । किल निश्चितम् ॥ १४ ॥

सन्तीति । तद्भक्ताः । एते । सत्सङ्गिनश्च । उद्धवाक्रूरसन्निभाः । सन्ति । तद्भक्ताः । एताः । स्त्रियश्चापि । द्रौपदी गोपिकासमाः । सन्ति ॥१५॥ एवमिति । एवममुना प्रकारेण । हरेः । दृढनिश्चयिनः । तस्य भक्तस्य । सङ्कल्पाः । स्युः । तस्य भक्तस्य । हृदि च मनसि तु । सर्वदा । आनन्द एव । वर्त्तेत ॥१६॥ अत इति । अतो हेतोः । भक्तेन । तत्त्वतो याथार्थ्येन । कृष्णस्य । दृढनिश्चयः । कर्त्तव्यः । स कृष्णदृढनिश्चयः । क्वापि कदाचिदपि । केनापि कर्त्रा । केनचित् करणेन । अनिर्वार्योऽपरिहार्यः । भवेत् । हि ॥ १७ ॥ एवं परमचैतन्यानन्दसाधुकृतप्रश्नोत्तरकरणानन्तरं तत्त्वतः कृष्णस्य स्वस्य दृढनिश्चयस्वरूपं बोद्धुमिच्छतः सर्वान् साधूनालक्ष्य तत्स्वरूपं तान् स्वयमेवाह शृण्वन्तु इति । हे साधवः ! । अहम् । तं तत्त्वतः कृष्णदृढनिश्चयम् । स्फुटं यथातथा । वो युष्मभ्यम् । वच्मि । सर्वे भवन्तः । शृण्वन्तु । येन तत्त्वतः कृष्णदृढनिश्चयेन । नराकारे । कृष्णे । संशयः । क्वापि कदाचिदपि । नैव । स्यात् । तं वच्मीति सम्बन्धः ॥ १८ ॥ सर्वेभ्य इति । श्रुतिस्मृतिपुराणाद्यैः । वरिष्ठेभ्योऽतिशयेनोरुभ्यः सर्वथा महद्भ्य इत्यर्थः । सर्वेभ्योऽक्षरब्रह्ममूलपुरुषादिभ्योऽपि । राधिकापतेः श्रीराधिकानाथस्य साक्षाच्छ्रीहरेः । भृशमतिशयितम् । महत्त्वम् ।

सन्ति सत्सिङ्गिनश्चैत उद्धवाक्रूरसन्निभाः । तद्भक्ताश्च स्त्रियोऽप्येता द्रौपदीगोपिकासमाः ॥ १५ ॥ एवं स्युस्तस्य सङ्कल्पा दृढनिश्चयिनो हरेः । आनन्द एव वर्त्तेत हृदि तस्य च सर्वदा ॥ १६ ॥ अतो भक्तेन कृष्णस्य तत्त्वतो दृढनिश्चयः । कर्त्तव्यः सोऽनिवार्यो हि क्वापि केनापि केनचित् ॥ १७ ॥ शृण्वन्तु साधवः सर्वे तमहं वच्मि वः स्फुटम् । येन कृष्णे नराकारे क्वापि स्यान्नैव संशयः ॥१८॥ सर्वेभ्योऽपि वरिष्ठेभ्यो महत्त्वं राधिकापतेः । श्रुतिस्मृति-पुराणाद्यैर्वर्णितं वर्त्तते भृशम् ॥ १९ ॥ यथेह राजकीयानां सौधयानादिवैभवः । यः स्यात्ततो महानेव तत्पतेः स्यात्स भूभुजः ॥ २० ॥ तथैव ब्रह्मविष्ण्वादेः पुराणादिषु वर्णितः । कृष्णाज्ञावर्त्तमानस्य वैभवोऽपार एव हि ॥ २१ ॥

वर्णितम् । वर्त्ततेऽस्ति । 'अक्षरात्परतः परः' । 'एष सर्वेश्वरः' । 'न तत्समश्चाभ्यधिकश्च दृश्यते' । 'तमीश्वराणां परमं महेश्वर'मित्याद्याः श्रुतयः । 'मत्तः परतरं नान्यत्किञ्चिदस्ति धनंजय' । अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्त्तते' । वेदैश्च सर्वैरहमेव वेद्य'इत्याद्याः स्मृतयः । 'त्रय्याचोपनिषद्भिश्च' । 'गूढं परं ब्रह्म मनुष्यलिङ्गम् ।' रूपं यत्तत्प्राहुरव्यक्तमाद्यम् ।' 'मत्वा परंब्रह्म सुतानपाय'मित्यादिपुराणवाक्यानि ॥ १९ ॥ एवं शाब्देन प्रमाणेन महत्त्वमभिधायानुमानप्रमाणेनापि तदाह त्रिभिः । यथेति । हे साधवः ! । यथा । इह लोके । राजकीयानाममात्यादीनां नृपतिसेवकानाम् । यः सौधयानादिवैभवो भवननरयानाश्वारामादिविभवः । स्यात् । ततस्तस्माद्राज-कीयवैभवात् । तत्पतेरमात्यादिराजकीयस्वामिनः । भूभुजो नृपस्य । स वैभवः । महानतिश्रेष्ठ एव स्यात् ॥ २० ॥ तथेति । तथैव । कृष्णाज्ञावर्त्तमानस्य । ब्रह्म-विष्ण्वादेरेकब्रह्माण्डग्रामस्थत्रिकानां ब्रह्मादित्रयाणाम् । आदिशब्देन वैराजपुरुष–प्रधानपुरुष–मूलप्रकृतिपुरुषादेर्ग्रहणम् । वैभवः । अपार उत्तरोत्तराधिक एवेत्यर्थः । पुराणादिषु । वर्णितोऽस्ति । हि ॥ २१ ॥

कृष्णस्येति । तन्नियन्तुस्तेषां ब्रह्मादीनां स्थितिप्रवृत्त्याश्रयत्वेन सर्वथा नियामकस्य । कृष्णस्य । स वैभवस्तु । ततो ब्रह्मादिवैभवादपि । अधिक एवास्ति । इत्येव-मनेन प्रकारेण । अनुमातव्यमनुमानेन ज्ञातव्यम् । यतः । स कृष्णः । पुरुषोत्तमः । अस्ति । नरेषु सामन्तास्तेषु सम्राडिव पुरुषशब्दवाच्येषु ब्रह्मादिषु सामन्तेषु सम्राट्स्थानीय एकः कृष्ण एवास्तीत्यर्थः । एतेन श्रीकृष्णोऽनेककोटिब्रह्माण्डाधिपाधिपोऽस्तीति ज्ञापितम् ॥ २२ ॥ अथ प्रकारान्तरेणापि पुनस्तन्महत्त्वमाह द्वादशभिः । क्रमेणेति । हे साधवः ! । अनेन वक्ष्यमाणेन । क्रमेणानुक्रमेण । कमलापतेः श्रीकृष्णस्य । महत्त्वम् । सूक्ष्मत्वम् । कारणत्वं च । बोद्धव्यम् । तथा । कार्यव्यापकता । बोद्धव्या ॥ २३ ॥ इहेति इह लोके । सर्वाभ्यः । आकृतिभ्यो घटपटाद्याकारेभ्यः । मही तदाधारापृथ्वी । महती । दृश्यते । ततस्तथाविधाया मह्याः सकाशादपि । वार्यावरणजलम् । महत् । सूक्ष्मम् । व्यापि तदन्तर्बहिश्च व्यापकम् । कारणं च । अस्ति ॥ २४ ॥ तत इति । ततो वारिणः सकाशात् । तेजः । महत् । अस्ति । तद्धेतुर्वारिकारणम् । अस्ति । तस्य वारिणः । आश्रय आधारश्चास्ति । ततो वारिणः सकाशात् । सूक्ष्मं चास्ति । तद्व्यापि व्यापकं

कृष्णस्य तन्नियन्तुस्तु ततोऽप्यधिक एव सः । इत्येवमनुमातव्यं यतः स पुरुषोत्तमः ॥ २२ ॥ क्रमेणानेन बोद्धव्यं महत्त्वं कमलापतेः । सूक्ष्मत्वं कारणत्वं च कार्यव्यापकता तथा ॥ २३ ॥ इहाकृतिभ्यः सर्वाभ्यो महती दृश्यते मही । ततोऽप्यस्ति महद्वारि सूक्ष्मं व्यापि च कारणम् ॥ २४ ॥ ततोऽप्यस्ति महत्तेजस्तद्धेतुस्तस्य चाश्रयः । ततः सूक्ष्मं च तद्व्यापि तस्मादस्ति महान्मरुत् ॥२५॥ सूक्ष्मः स तेजसस्तस्य कारणं च तदाश्रयः । तद्व्यापकोऽथ तस्मात् खं महत्सूक्ष्मं च कारणम् ॥ २६ ॥ अहं महान् प्रधानेशौ मूलप्रकृतिपुरुषौ । उत्तरो-त्तरतश्चैते वर्तन्तेऽनुक्रमात्ततः ॥ २७ ॥ पूर्वपूर्वाधिकं चैषां महत्त्वं सूक्ष्मता तथा । कारणत्वं च कार्येषु व्यापित्व-मपि वर्त्तते ॥ २८ ॥ पुरुषादक्षरं ब्रह्म वर्त्तते हि महत्तरम् । अणुवत्परिवर्तन्ते यत्र ब्रह्माण्डकोटयः ॥ २९ ॥

च । अस्ति । तस्मात्तेजसः सकाशात् । मरुद्वायुः । महान् । अस्ति ॥२५॥ सूक्ष्म इति । स मरुत् । तेजसः सकाशात् । सूक्ष्मः । अस्ति । तस्य तेजसः । कारणं चास्ति । तदाश्रयस्तेजस आधारः । तद्व्यापकस्तेजोव्यापी च । अस्ति । अथ च । तस्माद्वायोः सकाशात् । खमाकाशः महत् । सूक्ष्मम् । कारणं च । अस्ति ॥ २६ ॥ अहमिति । ततः खात् । अहमहङ्कारः । महान्महत्तत्त्वम् । प्रधानं प्रधानप्रकृतिश्च ईशस्तदधिष्ठाता पुरुषश्च तौ । मूलप्रकृतिपुरुषौ महामायामहापुरुषौ । एतेऽहमादयः । अनुक्रमात् । उत्तरोत्तरत एकैकस्मादग्रेऽग्रे । वर्त्तन्ते ॥ २७ ॥ पूर्वेति । एषामहमादीनाम् । पूर्वपूर्वाधिकं पूर्वस्मात्पूर्वस्मादधिकमधिकम् । महत्त्वम् । सूक्ष्मता । तथा । कारणत्वम् । कार्येषु । व्यापित्वं चापि । वर्त्तते ॥ २८ ॥ पुरुषादिति । पुरुषान्महापुरुषात्सकाशात् । अक्षरम् । ब्रह्म । महत्तरम् । वर्त्तते । हि । यत्राक्षरब्रह्मणि । ब्रह्माण्डकोटयः । अणुवत् । परिवर्त्तन्ते समन्ततोऽवस्थिता भवन्ति ॥ २९ ॥

प्रकाशकानामिति । तदक्षरं ब्रह्म । सर्वेषाम् । प्रकाशकानां सूर्यसोमादीनां जगत्प्रकाशनकर्तॄणाम् । प्रकाशम् । अस्ति । 'तज्ज्योतिषां ज्योति'रिति श्रुतेः । 'यद्भासाभासितः सूर्यो वह्निरिन्दुश्च तारकाः । भासयन्ति जगत्सर्वं स्वतप्रकाशं तथाऽमृत'मिति स्कान्दोक्तेश्च । सर्वेषाम् । कारणानाम् । कारणम् । चास्ति । 'तदाहुरक्षरं ब्रह्म सर्वकारणकारण'मिति श्रीभागवतोक्तेः । तदक्षरं ब्रह्म । सच्चिदानन्दम् । अव्ययमविनाशि चास्ति ॥ ३० ॥ अग्रत इति । तन्महत्ताया अक्षरब्रह्मणो महत्त्वस्य । अग्रतः । सर्वशः सर्वेषाम् । इतरेषां पुरुषादीनाम् । महत्त्वं तु । करिणो हस्तिनः । महत्त्वस्य । अग्रे । यूकानां केशकीटानाम् । महत्त्वमिव । दृश्यते ॥ ३१ ॥ अत इति । अतो हेतोः । तस्याक्षरब्रह्ममहत्तां महत्त्वम् । इयत्तया देशतः कालतो वा केनचिन्मानेन । वर्णयितुं तु । वेदाः । शास्त्रपुराणेतिहासादयः । तत्र शास्त्राणि मीमांसादीनि । पुराणानि श्रीभागवतादीनि । इतिहासो महाभारतम् । आदिशब्देन पञ्चरात्रादिकं ग्राह्यम् । न शक्ताः । वै ॥ ३२ ॥ ईदृगिति । ईदृगेवंविधम् । तदक्षरब्रह्मापि । यदा । ईशेश्वरस्य सकलेश्वरेश्वरस्य । कृष्णस्य । धाम निवासपदम् । अस्ति । तदा । तस्य तथाविधमहिम्नः कृष्णस्य । महत्त्वम् । वर्णयितम् । को वा को नु सहस्रवदनोऽपि

प्रकाशकानां सर्वेषां तदेवास्ति प्रकाशकम् । कारणानां कारणं च सच्चिदानन्दमव्ययम् ॥ ३० ॥
अग्रतस्तन्महत्ताया इतरेषां तु सर्वशः । महत्त्वमग्रे करिणो यूकानामिव दृश्यते ॥ ३१ ॥
अतस्तस्य महत्तां तु शक्ता वर्णयितुं न वै । वेदाः शास्त्रपुराणेतिहासादय इयत्तया ॥ ३२ ॥
ईदृक् तदपि कृष्णस्य धामास्तीशेश्वरस्य हि । महत्त्वं तस्य तु तदा को वा वर्णयितुं क्षमः ॥ ३३ ॥
स एव पुरुषद्वारा जगत्सर्गावनाप्ययान् । करोत्यतः सर्वकर्ता नियन्ता चाश्रयः परः ॥ ३४ ॥
किञ्च लोकेऽन्यसापेक्षं यन्महत्त्वं निगद्यते । तदप्यहं ब्रुवे येन हरेर्ज्ञायेत तत् परम् ॥ ३५ ॥
मध्ये पिपीलिकादीनां सूक्ष्माणामिह देहिनाम् । महत्त्वं दृश्यते नूनं दंशस्य स्थूलदेहिनः ॥ ३६ ॥

पुमान् । क्षमः समर्थोऽस्ति । न कोऽप्यस्तीत्यर्थः ॥ ३३ ॥ स इति । सोऽसाधारणैश्वर्यादिः श्रीकृष्ण एव । पुरुषद्वारा महापुरुषद्वारेण । जगत्सर्गावनाप्ययाननन्तकोटिब्रह्माण्डोत्पत्तिस्थितिनाशान् । करोति । अतो हेतोः । स कृष्ण एव । सर्वकर्ता । नियन्ता अन्तर्यामितया सर्वेषां स्थितिप्रवृत्त्यादिनियामकः । आश्रयः सर्वाधारः । परः स्वरूपस्वभावादिभिः सर्वोत्कृष्टश्च अस्ति ॥ ३४ ॥ अन्यसापेक्षमहत्त्वोक्तिद्वारापि पुनस्तन्महत्त्वमाहैकादशभिः । किञ्चेति । किञ्च । हे साधवः ! । लोके । यत् । अन्यसापेक्षं वक्ष्यमाणप्रकारेणान्यापेक्षया सहितम् । महत्त्वम् । निगद्यते कथ्यते । तन्महत्त्वमपि । अहम् । ब्रुवे युष्मभ्यं कथयामि । येनैवंविधमहत्त्वकथनेन । हरेः । परमतिश्रेष्ठम् । तन्महत्त्वम् ज्ञायेत सर्वैर्बोद्धुं शक्येत ॥ ३५ ॥ मध्य इति । इह लोके । पिपीलिकादीनां रक्तहीनाङ्गीप्रभृतीनाम् । सूक्ष्माणां सूक्ष्मदेहानाम् । देहिनां प्राणिनाम् । मध्ये स्थूलदेहिनः पिपीलिकाद्यपेक्षया स्थूलदेहवन्तः । दंशस्य वनमक्षिकायाः । महत्त्वम् । दृश्यते । नूनम् ॥ ३६ ॥

महत्त्वमिति । अथ च । दंशानाम् । मध्यतो मध्येऽपि । चटकस्य कलविङ्कस्य । महत्त्वम् । दृश्यते । पिपीलिकाद्यपेक्षया दंशस्य महत्त्वं चटकाद्यपेक्षया तु सूक्ष्मत्वमित्थमग्रेऽपि बोध्यम् । अथो च । चटकानाम् । मध्ये । वायसस्य बलिभुजः । महत्त्वम् । दृश्यते ॥ ३७ ॥ महत्त्वमिति । तथा च । वायसानाम् । अन्तरे मध्ये । मेषस्योर्णायोः । महत्त्वम् । अस्ति । तथा च । मेषाणाम् । मध्ये । अश्वस्य घोटकस्य । महत्त्वमस्ति । तथा च । अश्वानाम् । मध्ये । करिणो गजस्य । महत्त्वम् । अस्ति ॥ ३८ ॥ करीति । किञ्च । करिमध्ये हस्तिनामन्तरे । लघुशैलस्य रैवताद्यल्पमहीभृतः । महत्त्वम् । दृश्यते । लघूनाम् । शैलानाम् । मध्ये । महतः शैलस्य मेर्वादिचापि । महत्त्वम् । दृश्यते ॥ ३९ ॥ लोकालोकस्येति । किञ्च । महताम् । शैलानाम् । मध्येऽपि । लोकालोकस्य चक्रवालगिरेः । महत्त्वम् । अस्ति । ततो लोकालोकाचलात्सकाशात् । विश्वदेहस्यान्तर्वर्त्तिचतुर्दशलोकात्मकब्रह्माण्डशरीरस्य । वैराजस्य । महत्त्वम् । अस्ति ॥ ४० ॥ उक्तार्थमेव द्रढयति । नाभीति । वेधसो वैराजनाभिपद्मभवस्य ब्रह्मणः । नाभ्यब्जनालमूलस्य वैराजनाभिकमलनालमूलस्य । अनुपलम्भाच्छतवर्षमन्तःप्रवेशेनाप्यप्राप्तेर्हेतोः । विश्वरूपस्य वैराजस्य । महत्ता । लोकवेदयोः । प्रसिद्धा ।

महत्त्वं चटकस्याथ दंशानामपि मध्यतः । चटकानामथो मध्ये महत्त्वं वायसस्य च ॥ ३७ ॥ महत्वमस्ति मेषस्य वायसानां तथान्तरे । अश्वस्य मध्ये मेषाणामश्वानां करिणस्तथा ॥ ३८ ॥ करिमध्ये महत्वं च लघुशैलस्य दृश्यते । मध्ये लघूनां शैलानां शैलस्य महतोऽपि च ॥ ३९ ॥ लोकालोकस्य शैलानां मध्ये च महतामपि । महत्त्वं विश्वदेहस्य वैराजस्य ततोऽस्ति च ॥ ४० ॥ नाभ्यब्जनालमूलस्यानुपलम्भात्तु वेधसः । महत्ता विश्वरूपस्य प्रसिद्धा लोकवेदयोः ॥ ४१ ॥ ब्रह्माण्डविग्रहानेककोटिवैराजपुरुषाः । एकैकस्मिन् रोमकूपे वर्तन्ते यस्य चाणुवत् ॥४२॥ तदक्षरं ब्रह्म ततो महदेवेति कीर्त्तितम् । तद्वैभवं वर्णयितुं सहस्रास्योऽपि न क्षमः ॥४३॥ महद्भ्योऽप्यस्य महतो दिव्याकारवतोऽपि च । रूपं दृग्विषयो नास्ति सूक्ष्मस्यैवातिसूक्ष्मतः ॥४४॥

अस्ति । तथा चोक्तं श्रीभागवते । 'स इत्थमुद्वीक्ष्य तदब्जनालनाडीभिरन्तर्जलमाविवेशे'त्यादिना ॥४१॥ ब्रह्माण्डेति । ब्रह्माण्डविग्रहा एकैकब्रह्माण्डशरीरा ये अनेककोटिवैराजपुरुषा अपरिमितकोटिसङ्ख्याविराडभिमानिनः पुरुषाः । यस्याक्षरस्य ब्रह्मणः । एकैकस्मिन् रोमकूपे । अणुवदणव इव । वर्त्तन्ते । तदित्युत्तरेणान्वयः ॥ ४२ ॥ तदिति । तत्तथाविधम् । अक्षरं ब्रह्म । ततो वैराजपुरुषेभ्यः । महदेव । इतीत्थम् । कीर्तितमणुवत्परिवर्त्तन्ते यत्र ब्रह्माण्डकोटय इत्यनेन मयात्रैव पूर्वमभिहितमस्ति । तद्वैभवमक्षरब्रह्मैश्वर्यमहत्त्वम् । वर्णयितुम् । सहस्रास्यः शेषोऽपि । क्षमः समर्थः । नास्ति ॥ ४३ ॥ महद्भ्य इति । महद्भ्यः परममहदाख्येभ्योऽनन्तवैराजपुरुषेभ्योऽपि । महतः । अतिसूक्ष्मतः सर्वसूक्ष्मेभ्योऽप्यतिसूक्ष्मात्परमाणोः सकाशात् । सूक्ष्मस्य । दिव्याकारवतः सर्वाधारधामरूपामायिकसुन्दराकृतिमतोऽपि । अस्याक्षरस्य । रूपमाकारः । दृग्विषयस्तद्भावानापन्नप्राकृतजनचक्षुर्गोचरः । नैवास्ति ॥ ४४ ॥

एतदेव दृष्टान्तेन द्रढयति । वैराजस्येति । हे साधवः ! । यथा । वैराजस्य । विराट्संज्ञम् । रूपम् । अतिमहत्त्वतो हेतोः । दृग्गोचरः । नास्ति । तथा । अस्याक्षरस्य । रूपम् । अतिमहत्त्वतः । दृग्गोचरः । नास्ति ॥४५॥ सङ्कोच इति । सङ्कोचः । विकाशश्च । इतीत्थंभूतम् । यत् । अवस्थाद्वितयम् । तदपि । सर्वदैव । एकरूपस्य । अस्याक्षरस्य तु । नास्ति । हि ॥४६॥ मायेति । मायाधिष्ठातृपुरुषपर्यन्ता विधिमारभ्य मूलमायाधिपतिमहापुरुषावसानाः । केऽपि । पुरुषाः । आकाशस्येव–जनाभौतिकाकाशस्य यथा । अस्याक्षरस्य । सर्वतः परितः । पारं तु । न यान्ति नैवाधिगच्छति ॥ ४७ ॥ अत इति । अतो हेतोः । तदक्षरम् । अरूपं कस्यापि समानतया निरूपयितुमशक्यत्वात्कस्मिंश्चिच्छास्त्रेऽरूपमिति । उच्यते । अलिङ्गं प्राकृतेन केनापि लिङ्गेन वक्तुं न शक्यतेऽतः कस्मिंश्चिच्छास्त्रेऽलिंगमिति । उच्यते । निराकारं मूलप्रकृतिपुरुषकार्यं यदाकारसमानाकाराभावात्तदाकारावलोकनदृष्टिमप्राप्तैः कुत्रचिच्छास्त्रे निराकारमिति च । उच्यते । तदक्षरम् । कृष्णधामत्वाद्यथानृपधाम्नस्तत्प्रजासहितनृपते-र्भोग्यभोगोपकरणभोगस्थानादिमत्त्वेन धामत्वं तथास्य स्वभक्तमुक्तसहितश्रीकृष्णस्य दिव्यभोगस्थानादिमत्वेन धामत्वाद्धेतोः । मुक्ताधारतया यथा नृपतिसभामध्यवर्त्ति-

वैराजस्य विराट्संज्ञं रूपं चातिमहत्त्वतः । यथा दृग्गोचरो नास्ति तथाऽस्यातिमहत्त्वतः ॥ ४५ ॥
सङ्कोचश्च विकाशश्चेत्यवस्थाद्वितयं तु यत् । तदप्यस्य तु नास्त्येकरूपस्यैव हि सर्वदा ॥ ४६ ॥
मायाधिष्ठातृपुरुषपर्यन्ताः पारमस्य तु । न कोऽपि यान्ति पुरुषा आकाशस्येव सर्वतः ॥ ४७ ॥
अतोऽरूपमलिङ्गं च निराकारं तदुच्यते । मूर्तं च कृष्णधामत्वान्मुक्ताधारतया च तत् ॥ ४८ ॥
तेजोमयं तत् कृष्णस्य सेवकत्वाच्च साकृति । क्वचिद्दिव्यैरवयवैः पाणिपादमुखादिभिः ॥ ४९ ॥
तस्मिन् हि परमे धाम्नि सदा कृष्णो विराजते । स्वसधर्मैरसङ्ख्यातैर्महामुक्तैरुपासितः ॥ ५० ॥
उपासकानां कृष्णस्य तेषामेकान्तभावतः । एकैकरोम्णि तेजोऽस्ति कोटिकोट्यर्कसन्निभम् ॥ ५१ ॥

सिंहासनालङ्कृतस्तम्भादिमण्डिता स्वावस्थितजनाधारा भवेत्तथास्य मध्यवर्त्तिश्रीकृष्णदिव्यसिंहासनान्वितदिव्यस्तंभाल्यादिविराजितसभावस्थितानेकमुक्ताश्रयत्वेन हेतुना च । मूर्त्तं साकारम् । तेजोमयं कोटिकोटिचन्द्रसूर्यप्रकाशं च । उच्यते ॥ ४८ ॥ तेजोमयमिति । किञ्च । तदक्षरम् । कृष्णस्य । सेवकत्वान्मुख्यपरिचारकत्वाद्धेतोः । दिव्यैरतिमनोहरैः । पाणिपादमुखादिभिः । अवयवैः प्रतीकैः उपलक्षितत्वात् । साकृति पुरुषाकारमपि । क्वचित्कस्मिंश्चिच्छास्त्रे । उच्यते । इति द्वयोरेकान्वयः ॥४९॥ तस्मिन्निति । परमे 'तद्विष्णोः परमं पदमि'ति श्रुतौ परमशब्देन विशेषिते । धाम्नि तत्रैव पदशब्देनाभिहिते स्थानरूपे । तस्मिन्नक्षरे । स्वसधर्मैः स्वसाधर्म्यमुपगतैः । असङ्ख्यातैरपरिमितैः । महामुक्तैः । उपासितः सर्वकालं दिव्योपचारैः सेवितः । कृष्णः पुरुषोत्तमो भगवान् । सदा विराजते ॥ ५० ॥ उपासकानामिति । एकान्तभावत एकान्तिकभावेन । कृष्णस्य । उपासकानाम् । तेषां महामुक्तानामपि । एकैकरोम्णि । कोटिकोट्यर्कसन्निभम् । तेजः प्रकाशः । अस्ति ॥ ५१ ॥

तदेति । एवंभूतमुपासकानामङ्गतेजो यदाऽस्ति तदा । कृष्णाङ्गजं तैरुपास्यश्रीकृष्णभगवत्स्वरूपभवम् । महस्तेजः । वर्णयितुम् । केन । शक्यम् । न कश्चिदपि तद्वर्णयितुं समर्थो भवेदित्यर्थः । स इत्थंभूतमहिमवान् कृष्णः । स्वेन । महसा । स्वकीययान्तर्यामिशक्त्येत्यर्थः । पुरुषादिषु पुरुषाकृत्यक्षरब्रह्मप्रभृतिषु । आदिशब्दान्महापुरुषप्रधानपुरुषादिग्रहणम् । अन्वितः । अस्ति ॥ ५२ ॥ ईदृगिति । ईदृगेवंविधः । अतिमहाः सर्वातिशायितेजाः । अतिसमर्थः । अतिमहान् स्वरूपस्वभावगुणविभूत्यैश्वर्यादिभिरतिश्रेष्ठः । प्रभुः कर्तुमकर्तुमन्यथाकर्तुं समर्थः । स श्रीकृष्णः । कचित्कदाचित् । कृपावशतया निष्कारणात्यन्तकरुणापरतन्त्रतया । जीवश्रेयोऽनादिकालमायापरतन्त्रानेकजीवकल्याणम् । विधित्सति कर्तुमिच्छति ॥ ५३ ॥ तत इति । ततस्तदनन्तरम् । स श्रीकृष्णः । तेजः पूर्वोक्तं सर्वातिशायिस्वमहः । ऐश्वर्यं देशकालाद्यनभिभवनीयान्यपरिमितानि स्वैश्वर्याणि चेत्यर्थः । स्वस्मिन्स्वरूपे । सङ्गोप्येत्थंभूतस्वैश्वर्येणैव समावेश्य । तिरोभावयित्वेत्यर्थः । इच्छया स्वसङ्कल्पेन । धृतदिव्यनराकारः सन् । नृषु मनुष्येषु । नरवन्मनुष्यसदृशतया । वर्तते । युष्मदग्रे स्वतात्त्विकनिश्चयं ब्रुवन् युष्मद्दृग्विषयतयाऽवस्थितो भवतीत्यर्थः ॥ ५४ ॥ एतदेव दृष्टान्तेन दृढयति । ज्वालेति ।

तदा वर्णयितुं शक्यं केन कृष्णाङ्गजं महः । स कृष्णो महसा स्वेनान्वितोऽस्ति पुरुषादिषु ॥ ५२ ॥ ईदृक्सोऽतिमहांश्चातिसमर्थोऽतिमहान्प्रभुः । कचित्कृपावशतया जीवश्रेयो विधित्सति ॥ ५३ ॥ ततः स तेजश्चैश्वर्यं स्वस्मिन्सङ्गोप्य चेच्छया । धृतदिव्यनराकारो नरवन्नृषु वर्तते ॥ ५४ ॥ ज्वालामालाकुलं रूपं तिरोधाय पुरा यथा । विप्राकृतिरभूद्वह्निस्तथाऽस्ति न्राकृतिर्हरिः ॥ ५५ ॥ नराकृतिरपि स्वीयसकलैश्वर्यसंयुतः । हरिरस्तीति यज्ज्ञानं स हि तात्त्विकनिश्चयः ॥ ५६ ॥ ईदृक् स्यान्निश्चयो यस्य हृदि तं तु कदाचन । कालः कर्म च मायाऽपि बद्धुं न प्रभवन्ति हि ॥ ५७ ॥ एवं निश्चयिनः पुंसो लक्ष्म वच्मि समासतः । तस्याग्रहः स्याद्भगवद्वाक्यपालन एव हि ॥ ५८ ॥

हे साधवः ! । यथा । पुरा पूर्वम् । वह्निः । ज्वालामालाकुलमर्चिश्रेणिभिः परितो व्याप्तम् । रूपम् । तिरोधाय सङ्गोप्य । विप्राकृतिर्ब्राह्मणसमानाकारः । अभूत् । तथा तेन प्रकारेण । हरिः । न्राकृतिः । अस्ति वर्तते । एतद्विशेषः सत्सङ्गिजीवनतृतीयप्रकरणस्थस्वरूपाद्वैताध्यायाज्ज्ञेयः ॥ ५५ ॥ तात्त्विकनिश्चयोक्त्या प्रकरणार्थं निगमयति । नरेति । हे साधवः ! । हरिः । नराकृतिः सन्नपि । स्वीयसकलैश्वर्यसंयुतः । अस्ति सर्वदा विद्यते । इत्यमुना प्रकारेण । यत् । ज्ञानम् । सः । तात्त्विकनीश्चयः साक्षाच्छ्रीहरेस्तत्त्वतो दृढनिश्चयः । बोध्यः । हि ॥ ५६ ॥ एवं विधनिश्चयफलमाह । ईदृगिति । यस्य भक्तस्य । हृदि मनसि । ईदृगेवंविधः । निश्चयः । स्यात् । तं भक्तं तु । कालः सर्वविनाशिका भगवतः कालाख्या शक्तिः । कर्म स्वकृतानि गुणात्मकानि कर्माणीत्यर्थः । माया चापि । बद्धुम् । कदाचन । न प्रभवन्ति समर्था न भवन्ति । हि ॥ ५७ ॥ एवमिति । एवंनिश्चयिनं इत्थंतात्त्विकनिश्चयवतः । पुंसो भक्तस्य । लक्ष्म लक्षणम् । समासतः सङ्क्षेपतः । वच्मि । तस्य तथाविधभक्तस्य । भगवद्वाक्यपरिपालने स्वेष्टदेवसाक्षाच्छ्रीहर्यभिहितयावज्जीवस्वधर्माद्याचरणाज्ञारूपवचनधारणे एव । आग्रहः । स्यात् । हि ॥ ५८ ॥

अतीति । असौ तात्त्विकनिश्चयवान् भक्तः । अतित्याग्यत्यन्तं विरक्तः । साधुरपि । क्वापि कदाचित् । हरिणा । प्रवृत्ते प्रवृत्तिप्रधाने । कर्मणि । प्रेरितो नियुक्तः सन् । तत्प्रवृत्तं कर्म । अविक्लवचेतसाऽव्याकुलान्तःकरणेन । कुर्यात् । अतिप्रसन्नः सन्विदध्यादित्यर्थः । तादृशो भक्तः प्रवृत्तिप्रधानगृहाश्रमावस्थितोऽपि तत्प्रेरितः संस्त्यागी भवेदित्यपि ज्ञेयम् ॥ ५९ ॥ स्वस्येति । यदि । स्वस्य । कश्चित् । दुःस्वभावो मानलोभादिदोषप्रधानतारूपा नैसर्गिकी प्रकृतिः । हर्यरोचकः स्वेष्टदेवभगवदप्रीतताजनकः । स्यात् । तदा । असौ तात्त्विकनिश्चयवान् भक्तः । तं स्वदुःस्वभावमपि । अतिप्रयत्नतो महतायासेनापि । शीघ्रं सत्वरमेव । जह्यात् त्यजेत् ॥ ६० ॥ कृष्णेति । स तात्त्विकनिश्चयवान् भक्तः । कृष्णतद्भक्तसम्बन्धां कृष्णः साक्षात्स्वयं श्रीकृष्णभगवांश्च तद्भक्तास्तदीयैकान्तिकाः साधुभक्ताश्च तेषां सम्बन्धो यस्यां ताम् । क्रियामेव । सर्वदा । कुर्यात् । इत्येवंविधम् । तल्लक्ष्म तात्त्विकनिश्चयवद्भक्तलक्षणम् । अस्ति । हि । स तात्त्विकनिश्चयवान् । भक्तः । त्र्याकृतिहरेर्धृतमनुष्यसमानाकारश्रीकृष्णस्य । प्रियः प्रेमास्पदम् । अस्ति ॥ ६१ ॥ नित्यानन्द इति । अथानन्तरम् । नित्यानन्दः । साधुः । तं साधून्स्वत एव स्वतात्त्विकनिश्चयवद्भक्तलक्षणं कथयन्तम् । हरिम् । पप्रच्छ ।

अतित्याग्यप्यसौ साधुः प्रवृत्ते क्वापि कर्मणि । प्रेरितः कुर्यात्तदविक्लवचेतसा ॥ ५९ ॥ स्वस्य कश्चिद् दुःस्वभावो यदि स्याद्धर्यरोचकः । तदा तमप्यसो शीघ्रं जह्यादेवातियत्नतः ॥ ६० ॥ कृष्णतद्भक्तसम्बन्धां क्रियामेव स सर्वदा । कुर्यादिति हि तल्लक्ष्म स त्र्याकृतिहरेः प्रियः ॥ ६१ ॥ नित्यानन्दोऽथ साधुस्तं पप्रच्छ हरिमीश्वर ! । यदा कृष्णोऽवतरसि त्वं धाम्नः श्रेयसे नृणाम् ॥ ६२ ॥ तदा पुरुषवैराजादिभावं प्राप्नुवन्निह । क्रमेण जायसे किं वा सहसैव नराकृतिः ॥ ६३ ॥ इति पृष्टः स तं प्रोचे नियमोऽत्र न विद्यते । स्वतन्त्रत्वाद्भगवतो यथेच्छमिह जायते ॥ ६४ ॥ इति प्रभोर्वागमृतं स पीत्वा सर्वे च सन्तस्तदन्यभक्ताः । प्रापुर्मुदं भूरितरां सदःस्था यान्तं निजावासममुं प्रणेमुः ॥ ६५ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते त्रिषष्टितमस्तरङ्गः ॥ ६१ ॥

हे ईश्वर ! प्रत्यक्षपरमेश्वर ! । कृष्णः । त्वम् । नृणाम् । श्रेयसे । धाम्नः स्वकीयाक्षराख्यपदात्सकाशात् । यदा । अवतरसि । अवतरितुमिच्छसि ॥ ६२ ॥ तदेति । तदा तस्मिन्काले । पुरुषवैराजादिभावम् । प्राप्नुवन्सन् । क्रमेण । इह लोके । नराकृतिः । जायसे । किम् । अथवा । सहसा अकस्मादेव । इह नराकृतिः । जायसे किम् । तन्मह्यं ब्रूहीति शेषः । इति द्वयोरेकसम्बन्धः ॥ ६३ ॥ इतीति । इत्यमुना प्रकारेण । पृष्टो नित्यानन्दसाधुनानुयुक्तः । स श्रीहरिः । तं नित्यानन्दसाधुम् । प्रोचे । हे मुने ! । अत्र त्वदुक्तार्थे । नियमः । न विद्यते । कुतः भगवतः श्रीहरेः । स्वतन्त्रत्वाद्धेतोः । यथेच्छं स्वेच्छानुसारेण । इह लोके । जायते भगवान्मनुष्याकारेण प्रादुर्भवति ॥६४॥ इतीति । इत्येवंविधम् । प्रभोः श्रीहरेः ! । वागमृतं वचनामृतम् । पीत्वा । स नित्यानन्दमुनिः । तदनन्यभक्ताः श्रीहरेरेकान्तिकभक्ताः । सदःस्थाः समेपविष्टाः । सर्वे । सन्तः साधवः । गृहिजनाश्च । भूरितरामतिशयिताम् । मुदम् । प्रापुः । निजावासम् । यान्तं गच्छन्तम् । अमुं श्रीहरिम् ।

प्रणेमुर्नमश्रकुः ॥ ६५ ॥ स्वभक्तानां तु पुरतः स्वस्य तात्त्विकनिश्चयम् । सर्वोत्तमं कथितवान् येऽत्यन्तदययैव सः ॥ १ ॥ अक्षरब्रह्मधामेशः सर्वैश्वर्ययुतो मुदे । भक्तिधर्मसुतो मेऽस्तु श्रीहरिः पुरुषोत्तमः ॥ २ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्स्वनुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां त्रिषष्टितमस्तरङ्गः ॥ ६३ ॥

आत्माऽक्षरं शरीरं च शरीरी कृष्ण एतयोः । यथा तथा चतुःषष्टितमे सम्यग्निरूपितम् ॥ १ ॥ शकेति । शकेति । पूर्वार्द्धं व्याख्यातम् । (१८७६) फाल्गुनस्य मासस्य । अन्तेऽन्तिमे कृष्णपक्षे । नवम्यां तिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥१॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमस्य नृपतेः । दुर्गे । तदालये प्राग्द्वारे उत्तमनृपतिभवने । बहीर्वेद्याम् । पीठवरे स्वास्तृते पार्श्विकोपबर्हगेन्दुकादियुते उत्तमे मञ्चासने । सितांशुकः स्वाङ्गपरिधृतसकलश्वेतवसनः । एवं सामान्यत उक्तेऽपि परिधानीयं श्वेतमेव प्रावरणीयं श्वेतमपि प्रान्तपल्लवयोर्द्व्यङ्गुलपरिणाहकृष्णलेखं शिरोवेष्टनं प्रान्तपल्लवयोस्त्र्यङ्गुलपरिणाहरक्तलेखमिति विशेषो बोध्यः । स श्रीहरिः । न्यषीदत्स्वावासात्स्वदर्शनायातवर्णिसाधुपद्गैः सहागत्योपविवेश ॥ २ ॥ कण्ठ इति । सूक्ष्ममर्णि सर्षपप्रमाणाल्पमणिकाम् । नवीनां वास्तुतक्ष्णा प्रेम्णा निष्पाद्यानीयसमर्पित-

> शकाब्दे विक्रमार्कस्य रसाश्ववसुभूमिते । नवम्यां फाल्गुनस्यान्ते वचोऽमृतमिदं हरेः ॥ १ ॥
> तत्र दुर्गपुरे दुर्गे उत्तमस्य तदालये । बहिर्वेद्यां पीठवरे न्यषीदत्स सितांशुकः ॥ २ ॥
> कण्ठे बिभ्रत्सूक्ष्ममर्णि नवीनां तुलसीस्रजम् । नानादेशागतैर्भक्तैस्त्यागिभिर्गृहिभिर्वृतः ॥ ३ ॥
> प्रश्नव्याजेन गुह्यार्थं बोधयंस्तान् दयानिधिः । उवाच किञ्चित्प्रच्छामि युष्मांस्तच्छृणुतादरात् ॥ ४ ॥
> आत्मा यस्य शरीरं च शरीरं यस्य चाक्षरम् । इति श्रुतिभ्यां वपुषी कृष्णस्य द्वे अपीरिते ॥ ५ ॥

त्वान्नूत्नाम् । तुलसीस्रजम् । कण्ठे कम्बुवत्त्रिरेखावतिगले । बिभ्रद्धारयन् । नानादेशागतैः । भक्तैः साक्षात्कृष्णं स्वं भजद्भिः । त्यागिभिः साधुभिः । गृहिभिर्गृहस्थैश्च । वृतः सभायां परिवेष्टितः ॥ ३ ॥ प्रश्नेति । प्रश्नव्याजेन स्वप्रष्टव्यप्रश्नमिषेण । गुह्यार्थं वक्ष्यमाणार्थस्य केवलं स्वेनैव विदितत्वादन्यैश्चाविदितत्वाद्रहस्यार्थम् । तांस्त्यागिप्रभृतीन्स्वभक्तान् । बोधयन् ज्ञापयितुम् । दयानिधि निष्कारणकरुणासागरः श्रीहरिः । उवाच स्ववक्ष्यमाणार्थस्य विक्षिप्तचित्तैर्गृहिभिः सद्यो गृहितुमशक्यत्वात्प्रतिभान्वितान्साधूनुद्दिश्यावदत् । हे साधवः ! । युष्मान् । किञ्चित् । पृच्छामि । तत् । आदरादेकाग्रमनस्तया । शृणुत । इति द्वयोरेकसम्बन्धः ॥ ४ ॥ आत्मेति । हे साधवः ! । आत्मा जीवः । यस्य कृष्णस्य । शरीरम् । अक्षरं ब्रह्म च । यस्य । शरीरम् । इत्येवंविधाभ्याम् श्रुतिभ्यां । द्वे आत्माक्षरे अपि । कृष्णस्य । वपुषी शरीरे । ईरिते कथिते । तत्र प्रथमा श्रुतिर्बृहदारण्ये यथा । 'य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति स त आत्मान्तर्याम्यमृत'इति । द्वितीया सुबालोपनिषदि यथा । 'योऽक्षरमन्तरे सञ्चरन् यस्याक्षरं शरीरं यमक्षरं न वेदे'ति ॥ ५ ॥

शरीरमिति । तत्र शरीरशरीरिणोर्मध्ये । शरीरम् । विकृतं विकारवत् । निषेकादिनवावस्थारूपविकारवत्त्वेन सततपरिणामित्यर्थः । भवेत् । शरीरवान् शरीराभिमानी क्षेत्रज्ञजीवदेहिशरीरिपर्याय आत्मा । निर्विकारो नवावस्थारूपपरिणामवर्जितः । भवेत् । इत्येवंविधैव । सर्वतः सर्वेषु । लोकेषु पुराणेषु । वेदे च । निगमेष्वित्यर्थः जात्यभिप्रायमेकवचनम् । प्रसिद्धिः । अस्ति । वै । तथा श्रीभागवते । 'निषेकगर्भजन्मानि बाल्यकौमारयौवनम् । वयोमध्यं जरा मृत्युरित्यवस्थास्तनोर्नवे'ति । 'आत्मा नित्योऽव्ययः शुद्ध एकः क्षेत्रज्ञ आश्रयः । अविक्रियः स्वदृग्धेतुर्व्यापकोऽसंग्यनावृत'इति ॥ ६ ॥ आत्मेति । आत्माक्षरे परमात्मशरीरतया श्रुत्यभिहिते जीवात्मा क्षरब्रह्मणी । निर्विकारे निषेकादिनवावस्थावर्जिते । अमायिके स्तवरूपतो मायासम्बन्धवर्जिते । अतएव व्युपाधिनी सत्त्वादिगुणत्रयरूपोपाधिवर्जिते । भवतः । तयोस्तथाविधयोरात्माक्षरयोः । राधिकापतेः श्रीकृष्णस्य । शरीरत्वम् । कथं केन प्रकारेण सम्भवेत् । शीर्यते तच्छरीरमिति व्युत्पत्त्या यः शरीरशब्दार्थस्तयोस्तद्वाचकत्वाभावादिति भावः ॥७॥ वै लक्षण्यमिति । किञ्च । देहदेहिनः । सर्वथा । वैलक्षण्यं विरुद्धधर्मवत्त्वम् । दृश्यते । तद्वैलक्षण्यम् । अत्रानयोः शरीरशरीरिणोः । कथं केन प्रकारेण । विज्ञेयम् । इत्येवंविधस्य । अस्य मत्कृतप्रश्नद्वयस्य । उत्तरम् । कुरुत ॥ ८ ॥ इतीति । इत्यमुना प्रकारेण । तेन श्रीहरिणा । पृष्टाः । सन्तः सर्वेऽपि मुनयः । हे हरे ! । अस्यातिसूक्ष्मस्य

शरीरं तत्र विकृतं निर्विकारः शरीरवान् । इत्येवास्ति प्रसिद्धिर्वै लोके वेदे च सर्वतः ॥ ६ ॥
आत्माक्षरे निर्विकारे व्युपाधिनी त्वमायिके । तयोः कथं शरीरत्वं सम्भवेद्राधिकापतेः ॥ ७ ॥
वैलक्षण्यं दृश्यते च सर्वथा देहदेहिनोः । कथं तदत्र विज्ञेयमित्यस्य कुरुतोत्तरम् ॥ ८ ॥
इति पृष्टास्तेन सन्तस्त्वमेवास्योत्तरं कुरु । इत्याहुस्तं तदा स्वामी प्रोवाचाहं करोमि तत् ॥ ९ ॥
शरीरता तयोः कृष्णव्याप्याधीनत्वधर्मतः । व्याप्यत्वं परतन्त्रत्वं शारीरो धर्म उच्यते ॥ १० ॥

असन्मतिदुर्ग्राह्यविषयस्य त्वत्प्रश्नस्य । उत्तरम् । त्वमात्माक्षरस्वरूपसाक्षाद्द्रष्टा सर्वप्रकाशकः सर्वस्थितिप्रवृत्तिनियामकः सर्वेश्वरः स्वतन्त्रो भवानेव । कुरु । इत्यमुना प्रकारेण । तं श्रीहरिम् । आहुः प्राञ्जलयः सन्तोऽतिविनयेनोचुः । तदा तस्मिन्समये । स्वामी क्षराक्षरादिसकलसहजनियन्तृत्वाद्यनन्तैश्वर्यैकाम्बुधिः श्रीहरिः । प्रोवाच । हे सन्तः ! । अहं युष्मद्भक्तिवशः परमेश्वरोऽहम् । तदुत्तरं तस्य मत्पृष्टप्रश्नस्योत्तरम् । करोमि ॥ ९ ॥ शृणाति शीर्यते वेति व्युत्पत्तिजः शरीरशब्दार्थोऽत्र मुख्यो न भवति कुतः । 'गुणापाये ब्रह्मशरीरमेति । ब्राह्मीं संविशते तनु'मित्यादिशतशः प्रबलवचनोदितब्रह्ममयशरीरस्यापि तथात्वापत्तेस्तस्य तथात्वानुचितत्वाच्च । अतः शरीरत्वं नाम शरीर्यधीनत्वं तद्व्याप्यत्वं तदग्रेऽसमर्थत्वं चेति । एवं सत्यात्माक्षरयोः व्याप्याधीनासमर्थत्वधर्मैः श्रीकृष्णशरीरत्वं तस्य शरीरित्वमित्याह द्वाभ्याम् । शरीरतेति । हे मुनयः ! । कृष्णव्याप्याधीनत्वधर्मतः व्याप्ये अन्तःप्रवेशार्हे च ते अधीने आयत्ते च तयोर्भावस्तत्त्वं कृष्णस्यान्तर्यामिशक्त्या यद्व्याप्याधीनत्वं तदेव धर्मस्तस्मादिति ततः । तयोरात्माक्षरयोः । शरीरता श्रीकृष्णस्य शरीरत्वम् । यतः । व्याप्यत्वम् । परतन्त्रत्वमन्याधीनत्वम् । शारीरः शरीरसम्बन्धी । धर्मः । उच्यते ॥ १० ॥

शरीरीति । शरीर्यपेक्षया शरीरिणोऽग्रे । शरीरकम् । असमर्थम् । स्यात् । शरीरी तु समर्थः स्यात् । अतः । शरीरी तु । निजेप्सितं स्वमनसाप्तुं वांच्छितम् । सर्वमपि । साधयेदेव । एतेनाक्षरस्यात्मवर्गस्य च स्वान्तर्यामिशक्त्या कृष्णव्याप्यत्वं कृष्णाधीनत्वं कृष्णाग्रासमर्थत्वं चोक्तम् । कृष्णस्य च तद्व्यापकत्वं तदनधीनत्वं ताभ्यां सकाशात्समर्थत्वं चोक्तम् ॥ ११ ॥ एवं सामान्यतोऽचक्षुर्विषयाणां द्रष्टृणामात्मनां कृष्णशरीरत्वमभिधाय साम्प्रतमन्तर्यामिब्राह्मणादिषु कृष्णस्य द्रष्ट्रात्मतया चोक्तत्वात्पुनः सहैव द्रष्टादृश्ययोस्तच्छरीरत्वं तस्य च तच्छरीरित्वमाह चतुर्भिः । मूर्त्तिमानिति मूर्त्तिमान् स्वाश्रितमनोनयनानन्दनावयवनित्यसिद्धशरीरवान् । भगवान् सकलैश्वर्यसंपन्नः । कृष्णः । सर्वेषामपि । आत्मानामात्मशब्दवाच्यानां शरीरिणाम् । तद्व्याप्यदृश्यदेहानामात्माभिर्व्याप्यानां दृश्यानां च शरीराणां चापि । आत्मतयान्तर्यामितया । स्थितः । अस्ति ॥ १२ ॥ शास्त्रेष्विति । शास्त्रेषु शासकत्वेनान्वर्थेषु श्रुतिस्मृतिपुराणेतिहासागमादिष्वपि । यत्र येषु । क्वचित्केषुचित्प्रकरणेषु । स श्रीकृष्णः । दृश्यरूपो 'यस्य पृथ्वी शरीर'मित्यादिश्रुत्या चक्षुर्विषयपृथिव्यादिरूपः । वर्णितः । भवेत् । तत्र तेषु प्रकरणेषु । अस्य कृष्णस्यैव । दृश्यात्मता दृश्यान्तर्यामिता । । वर्णिता ज्ञातव्या । अन्तःस्थित्वा तं तं पृथिव्यादिपदार्थं तत्तत्स्वरूपस्थित्यवस्थापनेन यामयति धारयतीति व्युत्पत्त्या दृश्यपृथ्वीपर्वतादेर्नीरसकाष्ठाश्मादेश्च परमाणुभावापन्नता-

शरीर्यपेक्षया च स्यादसमर्थं शरीरकम् । साधयेत्सर्वमेवापि शरीरी तु निजेप्सितम् ॥ ११ ॥
मूर्तिमान् भगवान् कृष्णः सर्वेषामपि चात्मनाम् । तद्व्याप्यदृश्यदेहानामप्यस्यात्मतया स्थितः ॥ १२ ॥
शास्त्रेष्वपि क्वचिद्यत्र दृश्यरूपः स वर्णितः । भवेद् दृश्यात्मता तत्र ज्ञातव्याऽस्यैव वर्णिता ॥ १३ ॥
देहद्रष्ट्रात्मरूपेण यत्रारूपः स वर्णितः । भवेद् द्रष्ट्रात्मात्मतया ज्ञेयस्तत्र तु वर्णितः ॥ १४ ॥
वस्तुतस्तु स भिन्नोऽस्ति दृश्येभ्यः सर्वदेहतः । तद्द्रष्टृभ्योऽस्यरूपेभ्य आत्मभ्यो दिव्यविग्रहः ॥ १५ ॥

पूर्वकं धारणात्कृष्णस्यात्मताशब्दपर्यायमन्तर्यामित्वं प्रसिद्धमेवास्तीति भावः ॥ १३ ॥ देहेति । यत्र येषु शास्त्रप्रकरणेषु । स श्रीकृष्णः । देहद्रष्ट्रात्मरूपेण स्थूलादिदेहद्रष्टारो य आत्मानस्तद्रूपेण । 'यस्यात्मा शरीर'मित्यादिश्रुत्युदितपृथिव्यादिक्षेत्रज्ञान्तर्यामितयेत्यर्थः । अरूपोऽचक्षुर्विषयः । वर्णितः । भवेत् । तत्र तेषु प्रकरणेषु तु । द्रष्टात्मात्मतया स्थूलादिदेहद्रष्टृणामात्मनामन्तर्यामिरूपेणेत्यर्थः । वर्णितः । ज्ञेयः ॥ १४ ॥ वस्तुत इति । दिव्यविग्रहो नित्यसिद्धरूपानुरूपावयवकोटिमन्मथमनोमथन–सदाकिशोरैश्वर्यधाम ब्रह्मभावापन्नमुक्तोपास्यमनोहरशरीरः । स श्रीकृष्णः । वस्तुतः स्वरूपतस्तु । दृश्येभ्यः । सर्वदेहतः सर्वेभ्यो देहेभ्यः सकाशात् । तद्द्रष्टृभ्यस्तेषां देहानां साक्षिभ्यः । अरूपेभ्योऽचक्षुर्ग्राह्याकारेभ्यः । आत्मभ्यः क्षेत्रज्ञेभ्यः सकाशादपि । भिन्नः पृथग्भूतः । अस्ति । अन्तर्यामिशक्त्या सर्वान्तरात्मासन्स्वयं स्वकीयेऽक्षरधामनि दिव्यसौध-दिव्यचतुष्कदिव्यसिंहासने सदावस्थितो वर्त्तते इत्यर्थः । अत्र प्रमाणार्थाः श्रुतयो । 'यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीर'मि-त्यारभ्य । 'य आत्मनि तिष्ठन् आत्मनोन्तरो यमात्मा न वेद यस्यात्मा शरीर'मित्यन्ता बृहदारण्योपनिषदन्तर्यामिब्राह्मणाज्ज्ञातव्याः ॥ १५ ॥

सर्वेषामिति । असौ श्रीकृष्णः । सर्वेषामक्षरात्मादीनाम् । प्रेरकः । स्वतन्त्रः । नियामकोन्तर्यामितया सर्वेषां नियन्ता । सकलैश्वर्यसम्पन्नः । सर्वशेषी यस्याग्रेऽक्षरब्रह्मादिस्तम्बपर्यन्तं सकलमप्यप्रधानं तथाभूतः । परात्परः सर्वपरादक्षरब्रह्मणोऽपि परः स्वरूपस्वभावादिभिरत्यन्तविलक्षणश्च । अस्ति ॥ १६ ॥ एवं प्रश्नद्वयोत्तरं कृत्वैवंभूतोऽतिविप्रकृष्टो भगवान्कथं प्राप्यस्तदुपासना च कथं कार्येति तेषां पिपृच्छिषामालक्ष्य तदुत्तरमपि वक्ष्यमाणद्विविधोपासनाफलोक्तिपूर्वं स्वयमेवाह सार्द्धैश्चतुर्भिः । ईदृश इति । ईदृश एवंभूतमहिमः । स श्रीकृष्णः । यर्हि । कृपया । देहिनां शरीरिणाम् । कल्याणाय । भूमौ । आकृतिर्मनुष्यसमानाकारः । जायते । नृनाट्यं स्वाश्रितसुखाय नरानुकरणं च । विदधाति करोति । उदेत्युत्तरेणान्वयः ॥ १७ ॥ तदेति । तदा तर्हि । ये जनाः । तं आकृतिं श्रीकृष्णम् । यथापूर्वं सर्वदा दिव्यमूर्त्तिमनन्तकल्याणगुणयुतं मुक्तकोट्युपासितचरणारविन्दं सकलचिदचिच्छरीरिणं ततः पृथग्भूतं चेत्येवमनन्तैश्वर्याधारमुक्तविधमित्यर्थः । निश्चित्य । दृढं यथातथा । उपासते एकान्तिकभावेन सेवन्ते । ते जना एव । तस्य साक्षाद्भगवतः । साधर्म्यं सत्यशौचादिगुणैः स्वरूपेण च समानत्वम् । ऐश्वर्यं मायागुणानभिभवनीयत्वादिकं सामर्थ्यं च । आप्नुवन्ति । हि प्रसिद्धम् । तथा च श्रुतिः । 'निरञ्जनः परमं साम्यमुपैती'त्यादिः । स्मृतिश्च । 'इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागता'इत्यादिः । 'यदात्मन्यर्पितं चित्तं शान्तं सत्त्वो-

सर्वेषां प्रेरकश्चासौ स्वतन्त्रोऽस्ति नियामकः । सकलैश्वर्यसम्पन्नः सर्वशेषी परात्परः ॥ १६ ॥
ईदृशः कृपया यर्हि स कल्याणाय देहिनाम् । जायते आकृतिर्भूमौ नृनाट्यं विदधाति च ॥ १७ ॥
तदा तं ये यथापूर्वं निश्चित्योपासने दृढम् । त एव तस्य साधर्म्यमैश्वर्यं चाप्नुवन्ति हि ॥ १८ ॥
ते ब्रह्मभावापन्नेन स्वात्मनाऽथ निरन्तरम् । सप्रेमकृष्णसेवायां वर्त्तन्ते परमादरात् ॥ १९ ॥
मत्वा ये तु निराकारं तं ध्यायन्त उपासते । लीना ब्रह्मसुषुप्तौ ते नोद्गच्छन्ति पुनः क्वचित् ॥ २० ॥
ऐश्वर्यं किञ्चिदपि ते लभन्ते नैव कृष्णतः । एषा वार्त्ता मया प्रोक्ता स्वेन दृष्टैव न श्रुता ॥ २१ ॥

पबृंहितम् । धर्मं ज्ञानं स वैराग्यमैश्वर्यं चाभिपद्यते'इत्यादिश्च ॥ १८ ॥ त इति । अथैवमत्र भगवन्तमुपास्य देहान्ते भगवद्धामप्राप्त्यनन्तरम् । ते पूर्वोक्ता भगवन्निष्ठा भक्ताः । ब्रह्मभावापन्नेन । स्वात्मना । ब्राह्मया तन्वेत्यर्थः । निरन्तरम् । परमादरात् । सप्रेम प्रेमातिशयसहितं यथातथा । कृष्णसेवायाम् । वर्त्तन्ते ॥ १९ ॥ मत्वेति । ये जनास्तु । तं आकृतिं भगवन्तम् । निराकारं साम्प्रतं साकारतया प्रतीयतेऽथाप्ययं निरवयवस्तेजोमय एव भवतीत्याकारवर्जितम् । मत्वा निश्चिय । ध्यायन्तः साकारमपि निराकारतया चिन्तयन्तः सन्तः । उपासते सेवन्ते । ते तथाविधाः कैवल्यार्थिनो भक्ताः । ब्रह्मसुषुप्तौ सुषुप्तिसदृशेऽक्षरब्रह्मतेजसि लीना लयं प्राप्ताः सन्तः । देहान्ते इति शेषः । क्वचित्कदाचिदपि । पुनर्भूयः । नोद्गच्छन्ति बहिर्नैव निःसरन्ति ॥ २० ॥ ऐश्वर्यमिति । ते तादृशाः कैवल्यार्थिनो भक्ताः । कृष्णतोऽनन्तैश्वर्यवतः पूर्वोक्ताच्छ्रीकृष्णात्सकाशात् । किञ्चिदपि । ऐश्वर्यम् नैव । लभन्ते । भगवत्सेवासुखं नाप्नुवन्तीत्यत्र किंवक्तव्यमिति भावः । नन्वियं वार्त्ता केवलशास्त्रप्रमाणा भवति वास्त्यत्रानुभवः प्रमाणमित्याशङ्कायामाह । मया सर्वेश्वरेण सकलावतारहेतुनावतारिणा परमेश्वरेण युष्मदिष्टदेवेन पूर्वोक्तसकलैश्वर्यवता । प्रोक्ता युष्मभ्यं

कथिता । एषा । वार्त्ता । स्वेन स्वयमेव । दृष्टा साक्षात्समीक्ष्यैव कथिता । अस्ति । न श्रुता केभ्यश्चिदाश्रुत्य नैव कथितास्ति । अत्र न केवलं शास्त्रमेव प्रमाणमस्ति किन्तु शास्त्रमनुभवश्चेत्युभयप्रमाणेनोक्तास्तीत्यर्थः ॥ २१ ॥ नन्वियं केवला त्वत्त एवावगम्यास्त्यथवा सन्त्यन्येऽप्यस्याः कथका इति चेत्तत्र वचम्यर्द्धेन । कृष्णेति । हे मुनयः ! । एषा वार्त्ता । कृष्णात् । मत्तः साक्षाच्छ्रीकृष्णभगवतो मत्तः सकाशात् । मम । भक्तिभाग्भ्यो मत्स्वरूपसुदृढनिश्चयपूर्वकमेकान्तिकभावेन भक्तिनिष्ठां प्राप्तेभ्यो मदीयः साधुभ्यश्च सकाशादेव । लभ्या प्राप्या । अस्ति । परान्मत्तो ममैकान्तिकोक्तविधसाधुभ्यश्चान्यस्मात् कैवल्यार्थ्यादिभक्तात् । न लभ्यास्ति । किल निश्चितमेव । इत्येवंविधाम् । तस्य श्रीहरेः । पीयूषमिवामृतसमानाम् । वाचम् । निपीय । अखिलाः सर्वे । ते सन्तः । चकारात्सभोपविष्टाः सर्वे गृहिभक्ताः । तुतुषुः सन्तोषं प्रापुः ॥ २२ ॥ समूहेषु चिदचितां योऽन्तर्यामितयान्वितः । व्यतिरिक्तो ब्रह्मपुरे स्वपदे पुरुषोत्तमः ॥ १ ॥ सदा दिव्यनराकारो मुक्तवृन्दैरुपासितः । तस्मिन्नेकान्तिकीभक्तिर्हरौ भक्तिसुतेऽस्तु मे ॥ २ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्स्वनुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां चतुःषष्टितमस्तरङ्गः ॥ ६४ ॥

**कृष्णाच्च मत्तो मम भक्तिभाग्भ्यो लभ्याऽस्ति वार्त्ता न परात् किलैषा । निपीय पीयूषमिवेति वाचं तस्याखिलास्ते तुतुषुश्च सन्तः ॥ २२ ॥**

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते चतुःषष्टितमस्तरङ्गः ॥ ६४ ॥

**शकाब्दे विक्रमार्कस्य रसाश्ववसुभूमिते । चतुर्दश्यां तपस्यान्ते वचोऽमृतमिदं हरेः ॥ १ ॥ तत्र दुर्गपुरे दुर्गे उत्तमस्य वेश्मनः । वितर्द्यावुत्तमे पीठे न्यषीदत्स सितांशुकः ॥२॥ निजभक्तैः परिवृतं साधुभिर्गृहिभिस्तथा । स्वयंप्रकाशानन्दस्तं पप्रच्छ प्रश्रयानतः ॥ ३ ॥ नाडी सुषुम्णा देहस्य वर्त्ततेऽतश्च तद्बहिः । सा कीदृशी कथं चास्ते तत्त्वं योगेश ? मे वद ॥ ४ ॥**

देहस्यान्तर्बहिर्नाडीसुषुम्णाख्या यथा स्थिता । याऽवस्थानां च तिसृणां समाधौ प्राग्विलीयते ॥ १ ॥ ज्ञानशक्त्यादित्रितयं श्रीहरौ वर्त्तते यथा । एतत्सर्वं पञ्चषष्टितमे सम्यक् प्रकीर्त्तितम् ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८७६) तपस्यान्ते फाल्गुनमासस्य कृष्णपक्षे । चतुर्दश्यां तिथौ । इदम् । हरेः । वचोऽमृतम् ! अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमस्य नृपस्य । दुर्गे । स्ववेश्मनः स्वनिवासभवनस्य । वितर्द्यौ बहिर्वेद्याम् । उत्तमे पूर्वरल्लकुथमास्तीर्य तदुपरि बहुतूलसम्भृतकौशेयवसनतूलिकामाछाद्य तां श्वेतोत्तरच्छदेनापवार्य पार्श्वक गेन्दुकादि तत्र निधाय रचितत्त्वाच्छ्रेष्ठे । पीठे आसने । सितांशुकः स्वाङ्गधृतसकलश्वेतवसनः । स श्रीहरिः । न्यषीदत् ॥ २ ॥ निजेति । निजभक्तैः । साधुभिः । तथा । गृहिभिः । नानादेशागतैरिति शेषः । परिवृतं सभायां संवेष्टितम् । तं श्रीहरिम् । प्रश्रयानतो विनयेन कृतप्रणामः । स्वयंप्रकाशानन्द एतन्नामासाधुः । पप्रच्छ ॥३॥ नाडीति । हे योगेश ! स्वतःसिद्धयोगत्वाद्योगवित्पत्त्वित्वाच्च नाड्यादियुतदेहादिस्वरूपसाक्षाद्वीक्षकेत्यर्थः । सुषुम्णैतदाख्या । नाडी । देहस्य । अन्तः । वर्त्तते । तद्बहिश्च । वर्त्तते । सा सुषुम्णा नाडी । कीदृशी कीदृग्रूपा । अस्ति । कथं चास्ते देहस्यान्तर्बहिः केन प्रकारेणावस्थितास्ति । तदित्थंभूतमत्प्रश्नोत्तरम् । त्वम् । मे मह्यम् । वद ॥ ४ ॥

इतीति । इत्यमुना प्रकारेण । पृष्टः स्वयंप्रकाशानन्दमुनिनानुयुक्तः । हरिः । तं स्वयंप्रकाशानन्दाख्यम् । साधुं मुनिम् । उवाच । हे मुने ! । शृणु । पिण्ड-ब्रह्माण्डयोरस्मदादिशरीरयोः । संस्थानं रचनाविशेषः । तुल्यं समानम् । वर्त्तते । ध्रुवं निश्चितमेव ॥ ५ ॥ इममेवार्थं प्रश्नोत्तरार्थं पुनर्विविनक्ति । ब्रह्माण्ड इति । हे मुने ! । ये । अर्था वस्तूनि । ब्रह्माण्डे । सन्ति । अखिलाः सर्वे । तेऽर्थाः । पिण्डेऽपि । सन्ति । एकत्र द्वयोर्मध्ये एकस्मिन्ब्रह्माण्डे । स्थूलाः । सन्ति । अन्यत्र पिण्डे । सूक्ष्माश्च । सन्ति । इत्येवंविधैव । तद्भिदा पिण्डब्रह्माण्डस्थितार्थभेदः । अस्ति ॥ ६ ॥ ब्रह्माण्ड इति । ब्रह्माण्डे । नद्यः । स्थिताः । सन्ति । तथा । अत्र देहेऽस्मिन्नस्मदादिशरीरे । नाड्यः । स्थिताः । सन्ति । तत्र ब्रह्माण्डे । अब्धिः समुद्रः । स्थितोऽस्ति । अत्र देहे । कुक्षिर्जठरं च । स्थितोऽस्ति । इत्येवमादि एतत्प्रभृतिकम् । विभाव्यतां बुध्यताम् ॥ ७ ॥ वैराजेति । ब्रह्माण्डम् । वैराजदेहः । अस्ति । तस्य ब्रह्माण्डरूपवैराजदेहस्य । तत्त्वतो यथार्थतः । वर्णनम् । श्रीमद्भा-गवतस्य । द्वितीयस्कन्धे । आदितः प्रथमाऽध्याये एव । अस्ति । तथा च तत्रैव । 'पातालमेतस्य हि पादमूल'मित्यादि ॥ ८ ॥ अत्रत्येति । अत्रत्येन्द्रियनाडीनामस्मिन्

इति पृष्टो हरिः साधुं तमुवाच मुने ? शृणु । पिण्डब्रह्माण्डयोस्तुल्यं संस्थानं वर्त्तते ध्रुवम् ॥ ५ ॥ ब्रह्माण्डे सन्ति ये त्वर्थाः सन्ति पिण्डेऽपि तेऽखिलाः । स्थूला एकत्र सूक्ष्माश्चान्यत्रेत्येवास्ति तद्भिदा ॥ ६ ॥ ब्रह्माण्डे सन्ति नद्योऽत्र देहे नाड्यस्तथा स्थिताः । तत्राब्धिरत्र कुक्षिश्चेत्येवमादि विभाव्यताम् ॥ ७ ॥ वैराजदेहो ब्रह्माण्डं वर्णनं तस्य तत्त्वतः । श्रीमद्भागवतस्यास्ति द्वितीयस्कन्ध आदितः ॥ ८ ॥ अत्रत्येन्द्रियनाडीनां वैराजस्येन्द्रियैः सह । एकता वर्त्तते तां च वीक्षन्ते योगवेदिनः ॥ ९ ॥ अन्तमाप्नोति जिह्वा या यदा योगी तदा स तु । प्राप्नोति वरुणं देवं वैराजरसना-त्मकम् ॥ १० ॥ एवं वाचो यदा सोऽन्तं याति तर्ह्यग्निदेवताम् । त्वचोऽन्तं च यदा तर्हि वायुमाप्नोति देवताम् ॥ ११ ॥

देहेऽवस्थितानामिन्द्रियसम्बन्धिनीनां धमनीनाम् । वैराजस्य । इन्द्रियैरिन्द्रियनाडिभिः । सह । एकता एकभावः । वर्त्तन्ते । तां तदेकताम् । योगवेदिनः समाधिमन्तो योगिजनाः । वीक्षन्ते साक्षात्पश्यन्ति ॥ ९ ॥ अन्तमिति । योगी समाधिनिष्ठो भगवद्भक्तः । यदा । जिह्वाया जिह्वाख्यगोलकावस्थितयो रसनावागिन्द्रिययोर्मध्ये रसनेन्द्रियाधाररूपायास्तत्रावस्थितताया वारुणाख्याया नाड्याः । अन्तं प्रान्तम् । नाभिकन्दस्थतत्प्रवृत्तिस्थानात्तस्यामाविश्य जिह्वामूले यत्र तदवसानमस्ति तत्स्थान-मित्यर्थः । आप्नोति । तदा स योगी तु । वैराजरसनात्मकं वैराजपुरुषरसनेन्द्रियरूपम् । वरुणम् । देवम् । प्राप्नोति ॥ १० ॥ एवमिति । एवमनुना प्रकारेणैव । स योगी । यदा । वाचो जिह्वागोलकावस्थितताया वागिन्द्रियाधाररूपायाः सरस्वतीसंज्ञाया नाड्याः । अन्तं पूर्वश्लोकोक्तप्रकारेणावसानम् । याति लभते । तर्हि । अग्निदेवतां वैराजवागिन्द्रियरूपमग्निदेवम् । आप्नोति । किञ्च । स योगी । यदा । त्वचश्चर्मरूपगोलकावस्थितायास्त्वगिन्द्रियाधाररूपायाः सर्वाङ्गाख्यनाड्याः । अन्त-मुक्तरीत्यावसानम् । याति । तर्हि । वायुम् । देवता वैराजत्वगिन्द्रियरूपं वायुदेवम् । आप्नोति ॥ ११ ॥

एवमिति । एवम् । सर्वत्र सर्वेषु । इन्द्रियेषु श्रोत्रादिषु । विचक्षणैर्भगवद्भक्तयोगिभिः । विज्ञेयम् । तत्तदिन्द्रियगोलकावस्थिततत्तदिन्द्रियाधारनाडया अन्तःप्राप्त्या तत्तद्द्वैराजेन्द्रियरूपदेवप्रापणं बोध्यमित्यर्थः । इडा इडाख्या । नाडी धमनी । वामे नाभिकन्दमध्या ऊर्ध्वं हृदयाद्यामूर्द्धान्तमूर्ध्वगामिन्याः सुषुम्णानाडयाः सव्यप्रदेशे । स्थिता ऊर्ध्वं व्रजन्ती सती वामनासान्तपर्यन्तमवस्थिता । अस्ति । तथा । तेनैव प्रकारेण । पिङ्गला एतत्संज्ञा । नाडी । दक्षिणे सुषुम्णाया दक्षिणप्रदेशे । स्थिता ऊर्ध्वं व्रजन्ती सति दक्षिणनासापर्यन्तमवस्थिताऽस्ति ॥ १२ ॥ तयोरिति । तयोरिडापिङ्गलयोर्नाडयोः । मध्ये मध्यभागे । सुषुम्णानाडी । हृदो नाभिकन्दमध्यादुद्गच्छन्ती सती प्राक् हृदयं प्राप्य ततः सकाशादित्यर्थः । उर्ध्वम् । विनिःसृता । अस्ति । योगवित् । यदा । तस्याः सुषुम्णायाः । अन्तम् । मूर्द्धानम् । प्राप्नोति । अस्यास्ततोऽप्यूर्ध्वगमनसत्त्वेऽपि देहे तु मूर्द्धाख्यतदवसानं प्राप्नोतीत्यर्थः । तदेत्युत्तरेणान्वयः ॥ १३ ॥ तदेति । तदा । स योगी । शिशुमारस्थं श्रीमद्भागवतपञ्चमस्कन्धोक्तशिशुमारचक्राधिष्ठितम् । वैश्वानरम् । देवमग्न्यभिमानिनी देवतामित्यर्थः । एत्य प्राप्य । तेजोमयीम् । मार्गरूपां भगवद्धामप्राप्तिमार्गभूताम् ।

एवं सर्वत्र विज्ञेयमिन्द्रियेषु विचक्षणैः । इडा वामे स्थिता नाडी पिङ्गला दक्षिणे तथा ॥१२॥ तयोर्मध्ये सुषुम्णास्ति हृद ऊर्ध्वं विनिःसृता । तस्या अन्तं तु मूर्द्धानं यदा प्राप्नोति योगवित् ॥ १३ ॥ तदा वैश्वानरं देवं शिशुमारस्थमेत्य सः । तेजोमयीं सुषुम्णां च मार्गरूपां समीक्षते ॥ १४ ॥ सा तु दीर्घा ब्रह्मरन्ध्रान्मायेशपुरुषावधि । अस्तीत्युक्ता सुषुम्णा ते यथाऽन्तश्च बहिः स्थिता ॥ १५ ॥ अथ तं परमानन्दः पप्रच्छ हरिमानतः । तिसृणां बुद्ध्यवस्थानां समाधौ जायते लयः ॥ १६ ॥ तत्रादौ कतमा लीना भवतीत्यस्य मे प्रभो ? । वक्तुमर्हसि प्रश्नस्योत्तरं तं हरिरब्रवीत् ॥ १७ ॥ स्नेहातिशयतो यस्य कृष्णे जाग्रति जायते । समाधिर्लीयते तस्य पूर्वं जाग्रत्ततोऽपरे ॥ १८ ॥

सुषुम्णाम् । समीक्षते साक्षात्पश्यति ॥ १४ ॥ सेति । सा सुषुम्णा तु । ब्रह्मरन्ध्रान्मूर्द्धन्यवस्थितं ब्रह्मरन्ध्रमारभ्य । मायेशपुरुषावधि महामायाधिष्ठातृमहापुरुषलोकपर्यन्तम् । दीर्घाऽऽयता । अस्ति वर्त्तते । इत्यमुना प्रकारेण । सुषुम्णानाडी । यथा । अन्तः शरीरस्यान्तरे । बहिर्ब्रह्माण्डे च । स्थिताऽस्ति । तथा । ते तुभ्यम् । उक्ता मया कथिता ॥ १५ ॥ अथेति । अथानन्तरम् । परमानन्द एतन्नामा साधुः । आनतः कृतप्रणामः सन् । तं स्वयंप्रकाशानन्दमुनिकृतप्रश्नोत्तरं कृत्वा तूष्णीं भावेनावस्थितम् । हरिं धर्मात्मजं श्रीहरिकृष्णभगवन्तम् । पप्रच्छ । हे हरे ! । तिसृणाम् । बुद्ध्यवस्थानां जाग्रत्स्वप्नसुषुप्त्याख्यानाम् । समाधौ त्वदङ्गस्य त्वत्स्वरूपचित्तनिरोधाख्ययोगे । लयः । जायते ॥ १६ ॥ तत्रेति । हे प्रभो ! । तत्र तासु तिसृष्ववस्थासु मध्ये । आदौ प्रथम् । कतमावस्था । लीना । भवति । इत्येवंविधस्य । अस्य मत्कृतस्य । प्रश्नस्य । उत्तरम् । मे मह्यम् । वक्तुम् । अर्हसि । तमेवंपृच्छन्तं परमानन्दमुनिम् । हरिः । अब्रवीत् ॥ १७ ॥ स्नेहेति । हे मुने ! । कृष्णे साक्षाच्छ्रीकृष्णभगवति । स्नेहातिशयतः प्रीत्यतिशयोद्रेकाद्धेतोः । यस्य तथाविधस्य साक्षात्कृष्णं निरीक्षमाणस्यैव भक्तस्य । जाग्रति जाग्रदवस्थायाम् । समाधिः । जायते । तस्य तथाविधस्य भक्तस्य । पूर्वम् । जाग्रदवस्था । लीयते । ततस्तदनन्तरम् । अपरेऽन्ये द्वे स्वप्नसुषुप्ती अवस्थे लीयते ॥ १८ ॥

कृष्णमिति । हृदा मनसा कृष्णं साक्षाच्छ्रीकृष्णभगवन्तम् । चिन्तयतः स्नेहातिशयेन ध्यायतः । यस्य भक्तस्य । समाधिः । जायते । स्वप्नावस्थायामिति शेषः । तस्य भक्तस्य । प्राक् प्रथमतः । स्वप्नः स्वप्नावस्था । लीयते । ततस्तदनन्तरम् । जाग्रज्जाग्रदवस्था । सुषुप्तिका सुषुप्त्यवस्था च । लीयते ॥१९॥ यदेति । यदा यर्हि । उपशमवान् देहेन्द्रियान्तःकरणातिरिक्तात्मस्वरूपावस्थितो भक्तः । कृष्णचिन्तनात्प्रतिलोमभावेन स्वात्मावस्थितसाक्षात् श्रीकृष्णस्वरूपध्यानात् । समाधिम् । याति प्राप्नोति । तदा । अस्यैवंविधभक्तस्य । आदौ प्रथमम् । सुषुप्त्यवस्था । लीयते । ततस्तदनन्तरम् । उभे द्वे । अन्ये जाग्रत्स्वप्नावस्थे । लीयते ॥ २० ॥ इतीति । इत्येवंविधम् । प्रश्नोत्तरं स्वकृतप्रश्नप्रतिवचनम् । श्रुत्वा । स साधुः परमानन्दमुनिः । मुदितः । अभवत् । ततस्तदनन्तरम् । स्वयंप्रकाशानन्दः साधुः । पुनर्भूयोऽपि । प्रभुम् । तं श्रीहरिम् । अपृच्छत् ॥ २१ ॥ ज्ञानेति । हे हरे ! । त्वयि सर्वशक्तिस्वामिनि श्रीकृष्णे भवति । ज्ञानशक्तिः । क्रियाशक्तिः । इच्छाशक्तिः । वर्त्तन्ते सर्वकालमेतच्छिक्तित्रयं तिष्ठतीत्यर्थः । ताः शक्तयः । कथं केन प्रकारेण । ज्ञेयः । एतासां किं स्वरूपमित्यर्थः । इत्यमुना प्रकारेण । पृष्टः स्वयंप्रकाशानन्दमुनिनानुयुक्तः । स श्रीहरिः । जगाद-

कृष्णं हृदा चिन्तयतः समाधिर्यस्य जायते । प्राक् स्वप्नं लीयते तस्य ततो जाग्रच्च सुप्तिका ॥ १९ ॥
यदोपशमवान् याति समाधिं कृष्णचिन्तनात् । तदाऽस्य लीयते सुप्तिरादावन्ये उभे ततः ॥ २० ॥
इति प्रश्नोत्तरं श्रुत्वा साधुः स मुदितोऽभवत् । स्वयंप्रकाशानन्दस्तं ततोऽपृच्छत्पुनः प्रभुम् ॥ २१ ॥
ज्ञानशक्तिः क्रियाशक्तिरिच्छाशक्तिस्तथा त्वयि । वर्त्तन्ते ताः कथं ज्ञेया इति पृष्टो जगाद सः ॥ २२ ॥
जीवा एते तु यत् सत्त्वप्रधानं कर्म चक्रिरे । स्थानं तत्फलभोगस्य तेऽवस्थां यान्ति जाग्रतम् ॥ २३ ॥
रजःप्रधानं यत्कर्म प्राग्जीवाश्चक्रुरस्य तु । फलोपभोगस्थानं ते स्वप्नावस्थां प्रयान्ति हि ॥ २४ ॥
तमःप्रधानमेते तु प्राग्यत्कर्म स्म कुर्वते । ते सुषुप्तिं तत्फलोपभोगस्थानं व्रजन्ति वै ॥ २५ ॥

॥ २२ ॥ यद्यपि जीवेष्वप्येतास्तिष्ठन्ति तथापि तास्ववस्थासु लयभावाच्चेषु जीवेषु ता अविद्यमाना इव तिष्ठन्ति अवस्थाबललीनास्तेषां जीवानां ताः स्वस्मिन्नवस्थाभावात्कदापि लयासम्बन्धादलुप्तसामर्थ्याभिर्नित्याभिश्च ताभिर्भगवान्यथा प्रेरयति तत्प्रकारोक्तिपूर्वकं ताः क्रमेणाहैकादशभिः । जीवा इति । हे मुने ! । एते मनुष्यादिभावं प्राप्ता इमे । जीवाः । सत्त्वप्रधानं सत्त्वगुणो यत्र प्रधानतया वर्त्तेत तथाभूतम् । यत् । कर्म चक्रिरे प्राक् कुर्वन्ति स्म । ते जीवास्तु । तत्फलभोगस्य सात्त्विककर्मफलोपभुक्तेः । स्थानमाधारभूताम् । जाग्रतमेतत्संज्ञाम् । अवस्थाम् । यान्ति प्राप्नुवन्ति ॥ २३ ॥ रज इति । जीवाः । प्राक् पूर्वम् । रजः प्रधानम् । यत् । कर्म । चक्रुः । ते जीवास्तु । अस्य रजःप्रधानकर्मणः । फलोपभोगस्थानम् । स्वप्नावस्थाम् । प्रयान्ति । हि ॥ २४ ॥ तम इति । एते जीवाः । प्राक् । तमःप्रधानम् । यत् । कर्म । कुर्वन्ते स्म । ते जीवास्तु । तत्फलोपभोगस्थानम् । सुषुप्तिमवस्थाम् । व्रजन्ति प्राप्नुवन्ति । वै निश्चितम् ॥ २५ ॥

स्वापमिति । ते जीवाः । यदा । स्वापं सुषुप्त्यमवस्थाम् । यान्ति । तदा । अश्मोपमाः पाषाणशिलासदृशजडभावा इत्यर्थः । भवन्ति जायन्ते । ततः । मूर्खा मूढाः । अथवा । पण्डिता विद्वांसोऽपि । सर्वेऽपि जीवाः । स्वं मूर्खं पण्डितं वा निजनिजात्मानम् । न जानन्ति ॥ २६ ॥ स्वेति । ते सुषुप्त्यवस्थां गता जीवाः । स्ववर्णं ब्राह्मणादिम् । स्वाश्रमं ब्रह्मचर्यादिम् । स्वार्थं स्वकर्त्तव्यार्थम् । स्वरूपं गौरादिस्वशरीरवर्णम् । स्वाभिधां देवदत्तविष्णुमित्रादिकां स्वसंज्ञाम् । स्ववयो यौवनादिस्वावस्थाम् । तथा । स्वक्रियादीनि गमनागमनादिस्वव्यापारप्रभृतीनि । नैव जानन्ति । खलु प्रसिद्धमेतत् ॥ २७ ॥ तदेति । तदा सुषुप्तौ तद्भोग्यतामसकर्मफलोपभोगसमाप्त्यनन्तरीयकाले इत्यर्थः । द्रष्टृरूपोऽन्तर्यामितया साक्षिरूपः । स्वयम् । भगवान् । श्रीवासुदेवः । तान् सुषुप्त्यवस्थावस्थित-जीवान् । ज्ञानशक्त्या सार्वकालिकया नित्यया स्वगुणरूपया ज्ञानाख्यया स्वशक्त्या । बोधयित्वा सात्त्विककर्मफलभोगस्थानजाग्रद्भावं गमयित्वा । तदीयकं जीवसम्बन्धि । सर्वम् । पूर्वोक्तमूर्खत्वपण्डितत्वादिकं सकलमित्यर्थः । बोधयत्यवगमयति । तेभ्यस्तत्तज्ज्ञानं ददातीत्यर्थः । हि ॥ २८ ॥ एवमिति । एवममुना प्रकारेण । प्रभौ

स्वापं यान्ति यदा ते हि भवंत्यश्मोपमास्तदा । स्वं न जानन्ति सर्वेऽपि मूर्खा वा पण्डिता अपि ॥ २६ ॥
स्ववर्णं स्वाश्रमं स्वार्थं स्वरूपं स्वाभिधां तथा । स्ववयः स्वक्रियादीनि नैव जानन्ति ते खलु ॥ २७ ॥
तदा तान्बोधयित्वैव ज्ञानशक्त्या तदीयकम् । सर्वं बोधयति द्रष्टृरूपो हि भगवान्स्वयम् ॥ २८ ॥
एवं प्रभौ ज्ञानशक्तिः स्थिताऽस्तीत्यवगम्यताम् । क्रियाः कारयते सर्वान् क्रियाशक्तिश्च तत्स्थिता ॥ २९ ॥
इच्छाशक्तिः प्रभुस्था या सेच्छां कारयतेऽखिलान् । ब्रह्मांण्डानां च सर्गादि मुहुर्भवति वै तया ॥ ३० ॥
एकस्यां वर्त्तमानानामवस्थायां तथाऽऽत्मनाम् । अवस्थान्तरयानं यत्तदप्यस्ति तयैव हि ॥ ३१ ॥

सर्वशक्तिपतौ श्रीकृष्णे । ज्ञानशक्तिः । स्थिता । अस्ति । इतीत्थम् । अवगम्यताम् किञ्च । तत्स्थिता तस्मिन्नन्तर्यामिणि श्रीकृष्णेऽवस्थिता । क्रियाशक्तिः जीवानामीक्षण-श्रवणाघ्राण, गमनादानादि, क्रियाप्रवृत्ति, विधापिका क्रियाख्यशक्तिः । सर्वान् जीवान् । क्रिया ईक्षणादिव्यापरान् । कारयते विधापयति ॥ २९ ॥ इच्छेति । प्रभुस्था अन्तर्यामिश्रीकृष्णावस्थिता । या । इच्छाशक्तिस्तत्तत्कर्मानुसारेण तत्स्थानादिवाञ्छितार्थोपभोगप्रदायिकेच्छाख्या शक्तिः । अस्ति । सेच्छा शक्तिः । अखिलान् सर्वानपि जीवान् । इच्छामव्यक्ततयावस्थितामपि व्यक्तिभावप्रापणेन स्फुटतया प्रतीत्यर्हां स्थानभोगादिवांच्छाम् । कारयते । तया श्रीवासुदेवेच्छाशक्त्या । ब्रह्माण्डानाम् । सर्गादि उत्पत्तिस्थितिप्रलयाः । मुहुः पुनः पुनः भवति । वै निश्चितमेव ॥ ३० ॥ एकस्यामिति । तथा । एकस्यां कर्मोपभोगायान्तर्यामिणा प्रापितायां जाग्रदाद्यन्यत-मायां यस्यां कस्याश्चित् । अवस्थायाम् । वर्त्तमानानाम् । आत्मनां जीवानाम् । यत् । अवस्थान्तरयानमनुभूयमानावस्थेतरावस्थां प्रति गमनम् । अस्ति जायते । तदपि अवस्थान्तरयानमपि । तयाऽन्तर्यामिश्रीवासुदेवेच्छाशक्त्यैव । अस्ति हि ॥ ३१ ॥

उक्तार्थमेव पुनः स्पष्टतया स्फुटबोधायाह द्वाभ्याम् । नेति । कर्मवशाः स्वकृतप्रारब्धकर्माधीनाः । जीवाः । स्वसंश्रितां तत्र भोगार्हकर्मोपभोगाय स्वेनाधिष्ठिताम् । भोग्यावस्थां तदानीं वर्त्तमानां भोगार्हावस्थाम् । हित्वा त्यक्त्वा । निजेच्छयाऽऽत्मेच्छाशक्त्या । अन्यावस्थाम् । यातुं प्राप्तुम् । क्वचित्कदाचिदपि । क्षमाः समर्थाः । नहि नैव जायन्ते ॥ ३२ ॥ फलेति । सर्वेषां जीवानाम् । कर्मणाम् । फलप्रदाता । ईश्वरोऽन्तर्यामी परमेश्वरः । अस्ति वर्त्तते । हि प्रसिद्धमेतच्छ्रुतिस्मृतिन्यायेषु । अतो हेतोः । एते जीवाः । तदिच्छयान्तर्यामिणः श्रीपरमेश्वरस्येच्छयैव । कर्मजं स्वस्वकृतकर्मजन्यम् । फलम् । भुञ्जतेऽनुभवन्ति ॥ ३३ ॥ एता इति । एताः । शक्तयः । भगवत इच्छाज्ञानादयः शक्तय इत्यर्थः । नृणां सर्वेषां जीवानाम् । गुणकर्मानुसारतः सत्त्वादिगुणानुसारेण कृतानां कर्मणामनुरोधेन । ज्ञानादीन् । अवस्थावलतिरोहितजीवगतज्ञानादिशक्तीः । प्रेरयन्ति । इति हेतोः । जगत्पतेरन्तर्यामिणो जगदेकनाथस्य परमेश्वरस्य । वैषम्यं समताऽभावः । नास्ति । तथा च सूत्रम् । 'वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथाहि दर्शयतीति' । 'ईशाभिसृष्टं ह्यवरुन्ध्महेऽङ्ग! दुःखं सुखं वा गुणकर्मसङ्गा'दित्यादिश्रीभागवतोक्तेश्च ॥ ३४ ॥ एवमिति । हे मुने ! । एवममुना प्रकारेण

न हि कर्मवशा जीवा भोग्यावस्थां स्वसंश्रिताम् । हित्वा निजेच्छया यातुमन्यावस्थां क्षमाः क्वचित् ॥ ३२ ॥
फलप्रदाता सर्वेषां कर्मणामस्ति हीश्वरः । अतस्तदिच्छयैवैते भुञ्जते कर्मजं फलम् ॥ ३३ ॥ एतास्तु शक्तयो
नृणां गुणकर्मानुसारतः । ज्ञानादीन्प्रेरयन्तीति वैषम्यं न जगत्पतेः ॥ ३४ ॥ एवं हि शक्तित्रयवर्तनस्य
रीतिर्मयोक्तेति वचः सुधाभम् । निपीय तस्याप मुदं स साधुरन्ये च सन्तो गृहिणश्च तत्र ॥ ३५ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते पञ्चषष्टितमस्तरङ्गः ॥ ६५ ॥

शकाब्दे विक्रमार्कस्य रसाश्ववसुभूमिते । अमायां फाल्गुनस्यान्ते वचोऽमृतमिदं हरेः ॥ १ ॥
तत्र दुर्गपुरे दुर्ग उत्तमस्य तदालये । प्राग्द्वारे स बहिर्वेद्यां न्यषीदन्मञ्च आसने ॥ २ ॥

शक्तित्रयवर्त्तनस्य पारमेश्वरीयज्ञानादिशक्तित्रिकप्रवृत्तेः । रीतिः प्रकारः । मया । उक्ता । इत्येवंभूतम् । तस्य श्रीहरेः । सुधाभममृतायमानम् । वचः । निपीय । सः । साधुः स्वयंप्रकाशानन्दो मुनिः । मुदमत्यानन्दम् । आप । तत्र तस्यां संसदि । वर्त्तमाना इति शेषः । अन्ये स्वयंप्रकाशानन्द मुनीतरे । सन्तो गोपालानन्दादयः साधवः । गृहिणो मयरामभट्टहेमन्तसिंहादयो गृहस्थभक्ताश्च । मुदम् । आपुः ॥३५॥ सुषुम्णाप्राप्यधामेशः समाध्याधारमूर्त्तिकः । शक्तित्रयप्रेरकश्च श्रीहरिर्मेऽस्तु हृत्कजे ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्यैकान्तिकोपासकश्रीहरिकृष्णभगवत्पदानुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां पञ्चषष्टितमस्तरङ्गः ॥ ६५ ॥

कथनेन निर्गुणादिशब्दार्थानां तु तत्त्वतः । हरेराकृतिमत्त्वं यत्तत् षट्षष्टितमे स्मृतम् ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८७६) फाल्गुनस्य मासस्य । अन्ते बहुलपक्षावसानभूतायाम् । अमायाममावास्यातिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमस्याभयखनोर्नृपतेः । दुर्गे । प्राग्द्वारे पूर्वदिगभिमुखगोपुरे । तदालये उत्तमनृपतिभवने । बहिर्वेद्यां बाह्यायां वितर्दौ । मञ्चे तूलिकोपबर्हपार्श्विकवत्यर्जुनोत्तराच्छदास्तृते उच्चे

पर्यङ्के । आसने । स श्रीहरिः । न्यषीदत्स्वनिवासभवनान्मुकुन्दानन्दवर्णिदत्तकरावलम्ब आगत्योपविवेश ॥ २ ॥ सितेति । सितांशुकः स्वाङ्गधारितसकलधवलक्षवसनः । नैकदेश्यभक्तसङ्घैर्नानादेशेभ्य आगतैस्त्यागिगृहिस्वभक्तजनव्रजैः । परिश्रितः गगनमण्डले तारकव्रजैरुडुपधिपतिरिव सभायां परिवेष्टितः । हितोद्यतः समीपविष्टानां स्वाननारोपितनेत्रवृत्तीनां स्वभक्तानां तेषां हितविधाने पुत्राणां पितेवोद्युक्तः । इदं हेतुगर्भं विशेषणम् । स्वयं निष्कारणकरुणासागरः स श्रीहरिरेव । स्वाग्रस्थान् स्वपुरोनिषण्णान् । साधून्मुक्तानन्दादिमुनीन् । उवाच । उद्दिश्य वक्ष्यमाणं वचस्तान्प्रत्यब्रवीदित्यर्थः ॥ ३ ॥ श्रीमदिति । हे साधवः ! । श्रीमद्भागवते पुरातने । वासुदेवादेः चतुर्व्यूहस्य वासुदेव, सङ्कर्षण, प्रद्युम्नानिरुद्धानामित्यर्थः । वर्णनम् । अस्ति विशेषतस्तत्र तत्र प्रकरणेषु वर्त्तते । तज्ज्ञानरीतिं स्वतो बोद्धुमशक्यां तत्स्वरूपावबोधशैलीम् । समासतो विस्तारोक्त्यादुरवगमत्वात्सङ्क्षेपतः । वच्मि युष्मद्धिताय कथयामि ॥ ४ ॥ निर्गुणमिति । क्वापि श्रीमद्भागवतस्य कस्मिंश्चित्प्रकरणे तु । निर्गुणम् । वर्णनम् । तस्य निर्गुणभावेन कथनमित्यर्थः । अस्ति । क्वापि तत्रैव कुत्रचित्प्रकरणे । सगुणम् । तद्वर्णनं सगुणभावेन तस्य कथनमित्यर्थः । अस्ति । तत्र तयो-

सितांशुको नैकदेश्यभक्तसङ्घैः परिश्रितः । उवाच साधून्स्वाग्रस्थान् स्वयमेव हितोद्यतः ॥ ३ ॥
श्रीमद्भागवते वासुदेवादेरस्ति वर्णनम् । चतुर्व्यूहस्य तज्ज्ञानरीतिं वच्मि समासतः ॥ ४ ॥
निर्गुणं वर्णनं क्वापि क्वाप्यस्ति सगुणं च तत् । तत्राद्यं वासुदेवस्य सर्वोपास्यस्य वर्त्तते ॥ ५ ॥
अन्यत्सङ्कर्षणादीनां त्रयाणामस्ति निश्चितम् । तत्र भ्राम्यति धीः श्रोतृवक्तॄणां निर्गुणे पदे ॥ ६ ॥
आकारो वासुदेवस्य नास्तीत्येवावयन्ति ये । ते भ्रान्ता इति विज्ञेया अनुपासितसात्त्वताः ॥ ७ ॥
तेषामेव हि दुर्बोधाः शब्दाः शास्त्रेषु सन्ति हि । निर्गुणव्यापकारूपज्योतीरूपाक्रियादयः ॥ ८ ॥

र्निर्गुणसगुणभावेन कृतवर्णनयोर्मध्ये । आद्यं निर्गुणवर्णनम् । सर्वोपास्यस्याक्षरब्रह्मादिसकलैरुपासनीयस्य । वासुदेवस्य । वर्त्तते यत्र यत्र निर्गुणभावेन वर्णनं कृतं भवेत्तत्र तत्र तथाविधतया वासुदेव एव वर्णितोऽस्तीत्यर्थः ॥ ५ ॥ अन्यदिति । अन्यत् द्वितीयं सगुणवर्णनमित्यर्थः । त्रयाणाम् । सङ्कर्षणादीनां सङ्कर्षणप्रद्युम्नानिरुद्धानाम् । अस्ति । निश्चितमेवमेव निश्चयेन विद्धीत्यर्थः । तत्र तयोर्मध्ये । निर्गुणे । पदे । निर्गुणपदस्यार्थे इत्यर्थः । श्रोतृवक्तॄणां निर्गुणपदार्थश्रवणकर्तॄणां तद्वक्तॄणां चेत्यर्थः । धीर्मतिः । भ्राम्यति भ्रान्तिं गच्छति ॥ ६ ॥ बुद्धिधर्मं भ्रमं तद्वत्यारोप्य तथाविधपुरुषोक्त्या भ्रमार्थमाह । आकार इति । अनुपासितसात्त्वताः कदाप्यसेवितभगवदेकान्तिकभक्ताः । ये पुरुषाः । वासुदेवस्य । आकारः पाणिपादोदरास्याद्यवयवयुक्तमूर्त्तिरूपाकृतिः । नास्ति । इतीत्थमेव । अवयन्ति जानन्ति । ते पुरुषाः । भ्रान्ता भ्रान्तमतयः । इतीत्थंभूताः । विज्ञेयाः । भगवतः श्रीवासुदेवस्य निरवयववत्त्वेन वेदनं भ्रान्तशब्दार्थ इत्यर्थः ॥७॥ तेषामिति । शास्त्रेषु वेदेतिहासश्रीभागवतपुराणादिसद्ग्रन्थेष्वित्यर्थः । निर्गुणश्च व्यापकश्चारूपश्च ज्योतीरूपश्चाक्रियश्च ते आदयो येषां निरञ्जननिराकारादीनां ते । शब्दाः । तेषां भ्रान्तमतीनां पुरुषाणामेव । दुर्बोधा यथार्थतयार्थतो बोद्धुमशक्याः । सन्ति । हि ॥८॥

भक्ता इति । हरेः साक्षाच्छ्रीकृष्णस्य । एकान्तिकाः स्वधर्मादियुक्ता ज्ञानिपर्याया भगवन्निष्ठसंज्ञा एकान्तिकनामानश्च । भक्ता । एव । अत्र परमार्थतया निर्गुणादिशब्दार्थे । नहि नैव । मुह्यन्ति । निर्गुणादिशब्दानां यथार्थावगमनेन भगवदेकान्तिकभक्तानां तत्र कदाचिदपि भ्रमो नोत्पद्यते इत्यर्थः । अत्रार्थे हेतुमाह । तेषां भगवदेकान्तिकभक्तानाम् । सदुपासनया सच्छब्दवाच्यानां साक्षाद्भगवत्तदेकान्तिकसाधुः तत्सद्भमैतत्रिकप्रतिपादकसच्छास्त्रमित्येतेषां चतुर्णां निरुपधिसेवनेनेत्यर्थः । शब्दयाथार्थ्यनिश्चयानिर्गुणादिशब्दानां वास्तविकार्थनिर्णयाद्धेतोः । नैव मुह्यन्तीति सम्बन्धः ॥९॥ साम्प्रतं निर्गुणादिशब्दानां भगवदेकान्तिकवेद्यं यथार्थमर्थं स्वयमेव ब्रुवन्नेवंविधं तदर्थमेकान्तिका विदित्वा भगवन्तं भजन्तीत्याह सप्तमिः । मायेति । मायागुणैः प्रकृत्युत्पन्नैः सत्त्वादिभिस्त्रिभिस्तत्कार्यैश्च । विहीनत्वाद्वस्तुत एव सदा वर्जितत्वात् । परमेश्वरः श्रीवासुदेवो भगवान् । निर्गुणः । अस्ति । एवं मायिकगुणवर्जितत्वेन निर्गुणत्वं निर्गुणशब्दार्थो न तु तेन भगवतोऽमूर्त्तत्वं तदर्थः । दिव्याः सत्यशौचादयोऽपहतपाप्मत्वादयश्च गुणास्तु नित्यमेव तत्र तिष्ठन्तीति ज्ञेयम् । तथाचोक्तं पाद्मे । 'योऽसौ निगुण इत्युक्तः शास्त्रेषु जगदीश्वरः । प्राकृतैर्हेयसंयुक्तैर्गुणैर्हीनः स उच्यते'इति । विष्णुपुराणे च । 'सत्त्वादयो न सन्तीशे यत्र च प्राकृता गुणा'इति । विष्णुधर्मोत्तरे च । 'नहि तस्य गुणाः सर्वे सर्वैर्मुनिगणैरपि । वक्तुं शक्या वियुक्तस्य सत्त्वाद्यैरखिलैर्गुणै'रिति । किञ्च । असौ परमेश्वरः । निजधामस्थो रूपानुरूपदिव्यकरपादोदरास्याद्यवयवः अन्तकोटिब्रह्मरूपमुक्तोपासितचरणकमलो महाराजाधिराजो निजपार्षदैश्छत्रचामरादिभिर्यथाकालं यथाछन्दं कृतपरिचर्यः स्वाक्षरब्रह्माख्यधाम्नि सदा वर्त्तमानः सन्नेव । सर्वत्राक्षरब्रह्म तत्स्थमुक्तकोटिसकार्यमहापुरुषमहामायादिषु सर्वेषु । व्यापकोऽन्तर्यामिशक्तिसंज्ञस्वतेजसा व्याप्य स्थितः । अस्ति ॥ १० ॥ एतत्तस्य सर्वत्रव्यापकत्वं दृष्टान्तेनाह । मूर्त्त इति । यथा । मूर्त्तो मूर्त्तिमान् स्ववीक्षकमनोनयनानन्दनपाणिपादाद्यवयव इत्यर्थः । सूर्यः प्रभाकरः । स्वतेजोभिः । जगत् ब्रह्माण्डम् । व्याप्य । तत्पृथक् जगतः पृथग्भूतः । अस्ति । तथा । मूर्त्तः सर्वदा दिव्यमूर्त्तिमान् । स परमेश्वरोऽपि । कान्त्याऽन्तर्यामिसंज्ञस्वशरीरतेजसा । व्याप्याक्षरादिसर्वेष्वन्वीय । तत्पृथगक्षरादिसर्वेभ्यः पृथग्भूतः । अस्ति । एवमन्तर्यामिसंज्ञस्वाङ्गतेजसा अक्षरादिसर्वत्र व्यापकत्वं व्यापकशब्दार्थो न तु तेन भगवतोऽमूर्त्तत्वं तदर्थः ॥ ११ ॥ सदेति । यद्यतो हेतोः । सदा दिव्यकृतेः सर्वकालमेकरूपावस्थावस्थितसनातनदिव्यविग्रहस्येत्यर्थः । अस्य श्रीवासुदेवस्य । रूपमपरिमितलावण्यैकाधारः सार्वकालिककिशोरावस्थावस्थित आकारस्तु । अपरिणामि कालकृतपरिणामवर्जितम् । अस्ति अतो हेतोः । स श्रीवासुदेवः । अरूप इति प्रोक्तः । क्वचित् केषुचिच्छ्रुतिस्मृतिपुराणेषु । निराकारो रूपशब्दस्य कोशप्रतिपादिताकारार्थत्वाचत्त्वेन निराकारश्चापि । प्रोक्तः । एवं श्रीवासुदेवस्य भगवतोऽपरिणामिरूपत्वमरूपो निराकारशब्दार्थो न तु ताभ्यां भगवतोऽमूर्त्तत्वं तदर्थः ॥ १२ ॥

भक्ता एकान्तिका एव हरेर्मुह्यन्ति नात्र हि । सदुपासनया तेषां शब्दयाथार्थ्यनिश्चयात् ॥ ९ ॥
मायागुणैर्विहीनत्वान्निर्गुणः परमेश्वरः । निजधामस्थ एवासौ सर्वत्र व्यापकोऽस्ति च ॥ १० ॥ मूर्त्तः
सूर्यः स्वतेजोभिर्जगद्व्याप्यास्ति तत्पृथक् । यथा तथा सोऽपि मूर्त्तः कान्त्या व्याप्यास्ति तत्पृथक् ॥ ११ ॥
सदा दिव्याकृतेरस्य रूपं त्वपरिणामि यत् । अतोऽरूप इति प्रोक्तो निराकारश्च स क्वचित् ॥ १२ ॥

कोटीति । कोटिकोटयर्कवत्स्वाङ्गतेजोव्याप्ततया कोटिगुणितकोटिसूर्यप्रभाभास्वरेण स्वशरीरतः प्रसरता महसा परितो व्याप्तत्वेन हेतुना । दुर्लक्ष्यावयवत्वतोऽतिदुःखाकलनीयकरपादाद्यङ्गत्वाद्धेतोः । स श्रीवासुदेवः । ज्योतीरूपस्तेजोरूप इति । प्रोक्तः । एवं भगवतः श्रीवासुदेवस्याङ्गस्य तेजोबाहुल्येन दुराकलनीयत्वात्कैवल्यार्थ्यादिभिस्तेजोमात्रत्वेन दृश्यत्वाच्च तद्दृष्ट्या तेजोरूपत्वं ज्योतीरूपशब्दार्थौ न तु तेन भगवतोऽमूर्त्तत्वं तदर्थः ॥ १३ ॥ तेजस्तेजस्विनोराधेयाधारसम्बन्धत्वात्पृथक् स्थित्यनर्हत्वात्तात्स्थ्याताच्छब्द्यमिति न्यायाच्च भगवतो यथाविधा ब्रह्मसंज्ञास्ति तथाविधा तत्तेजसोऽपि साऽस्तीति वदन्नुक्तार्थमेव भङ्ग्यन्तरेणाह । निराधारमिति । यतो हेतोः । कुत्रापि केषुचिदपि स्थानविशेषेषु । तेजो ज्योतिः । निराधारमाधारवर्जितम् । नैव । दृश्यते । अतो हेतोः । तदङ्गाधारं ब्रह्मशब्दवाच्यभगवच्छरीराश्रयम् । तत्पूर्वोक्तम् । तेजः । ब्रह्मेति ब्रह्मसंज्ञमिति । कथ्यते । अयमर्थः पञ्चचत्वारिंशत्तरङ्गात्सविस्तरं बोध्यः ॥१४॥ अलिप्तत्वादिति । देवासुरनरादिवत् देवा असुरा नरादयश्च यदा कर्मभिर्लिप्यन्ते तथेत्यर्थः । कर्मभिः क्रियाभिः । अलिप्तत्वादनुपदिग्धत्वादनावृतत्वाद्धेतोरित्यर्थः । प्रभुः । स श्रीवासुदेवः । सर्वकर्त्ता महाप्रकृतिपुरुषद्वारानन्तकोटिब्रह्माण्डोत्पत्तिस्थितिलयानां विधाता सन्नपि । शास्त्रे । अक्रियः । कथितः । एवं भगवतः श्रीवासुदेवस्य प्रयोजकतयाऽपरिमिताण्डसर्गादेर्मुख्यकर्त्तृत्वे सत्यपि प्रकृतिपुरुषद्वारा तद्विधापनं तत्क्रियाजन्यलेपा-

कोटिकोट्यर्कवत्स्वाङ्गतेजोव्याप्ततया स च । ज्योतीरूप इति प्रोक्तो दुर्लक्ष्यावयवत्वतः ॥ १३ ॥
निराधारं यतस्तेजो नैव कुत्रापि दृश्यते । अतस्तदङ्गाधारं तत्तेजो ब्रह्मेति कथ्यते ॥ १४ ॥
अलिप्तत्वात्कर्मभिश्च देवासुरनरादिवत् । अक्रियः कथितः शास्त्रे सर्वकर्ताऽपि स प्रभुः ॥ १५ ॥
एवं ह्येकान्तिका भक्ताः सप्रमाणमवेत्य तम् । सदा दिव्यनराकारं भजन्तेऽनन्यभक्तितः ॥ १६ ॥
दिव्यविग्रह एवास्ति हरिस्तत्सङ्गतस्ततः । दिव्यतां यान्ति बहवः प्राकृता अपि देहिनः ॥ १७ ॥

सम्बन्धस्य हेतुरस्तीत्यतो देवादिवत्कर्मजन्यलेपासम्बन्धेनाक्रियत्वमक्रियशब्दार्थौ न तु भगवतस्तेनामूर्त्तत्वं तदर्थः ॥ १५ ॥ एवमिति । एवममुना प्रकारेण । एकान्तिकाः । भक्ताः । सप्रमाणं वेदादिसहस्रशःप्रमाणवाक्यसहितं यथातथा । तं स्वोपास्यं श्रीवासुदेवं भगवन्तम् । सदा । दिव्यनराकारम् । अवेत्य ज्ञात्वा । अनन्यभक्तितः एकान्तिकभक्त्या । भजन्ते सेवन्ते ॥ १६ ॥ उक्तरीत्या ज्ञानिनां भगवद्दिव्याकारत्वबोधकानां भगवत्स्वरूपं यथार्थतयाऽविदुषां कैवल्यार्थ्यादीनां भगवन्निराकारत्वबोधकानां च निर्गुणादिशब्दानां यथार्थमर्थं बोधयित्वा तदर्थसिद्धस्य भगवद्दिव्यविग्रहस्य पुनर्गुणातीतत्वं समर्थयन्निर्गुणस्य तस्य सम्बन्धेन गुणवद्वस्त्वपि निर्गुणपर्यायदिव्यतां यातीति च ब्रुवन् भगवतो दिव्याकृतिनराकृत्योरभिन्नत्वं च ब्रुवन् तन्निराकारत्ववादिनां भ्रान्तत्वान्निरालम्बास्ते संसरन्ति तद्दिव्याकारत्वज्ञानवन्त एकान्तिका भवन्तीत्याह सार्द्धसप्तभिः । दिव्येति । हे साधव ! । हरिः साक्षाच्छ्रीकृष्णोभगवान् । दिव्यविग्रहो निर्गुणामायिकपर्यायदिव्यशब्दार्थद्योतितानन्तानङ्गमोहकनित्यसिद्धमूर्त्तिरेव । अस्ति । ततो हेतोः । तत्सङ्गतो दिव्यविग्रहभगवत्सम्बन्धेन । प्राकृता मायिकाकृतयोऽपि । बहवः । देहिनः । दिव्यताम् । यान्ति ॥ १७ ॥

इममर्थं दृष्टान्तेनाह चतुर्भिः । द्विजेति । सार्जुनो द्विजपुत्रानयनप्रतिज्ञाभङ्गस्वाङ्गदाहनोद्युक्तमध्यमपाण्डवसहितः । कृष्णो वसुदेवनन्दनः साक्षाच्छ्रीकृष्णो भगवान् । द्विजपुत्राहृतौ स्वपुरीस्थद्विजमृतसुतानयननिमित्तमित्यर्थः । प्राकृतैर्मायिकैः । वाजिभिरश्वैः । युक्तं योजितम् । प्राकृतं मायिकम् । रथम् । आरुह्याधिष्ठाय । वारुणीं पश्चिमदिशम् । अगाज्जगाम ॥ १८ ॥ स इति । स श्रीकृष्णः । सप्त । द्वीपान् । सप्त । अब्धीन्समुद्रान् । लोकालोकं चक्रवालपर्वतं चकार दृशोत्तराधिकानि पृथिव्यादीनि सप्ताप्यावरणानि च । व्यतीत्यातिक्रम्य । मायारूपं प्राकृतम् । तमो दुर्भेद्यं निबिडान्धकारम् । छित्त्वा सुदर्शनचक्रेण निर्भिद्य । परं मायातीतम् । ब्रह्माक्षरब्रह्मात्मकम् । तेजः सच्चिदानन्दरूपं ज्योतिः ज्योतिर्मयाक्षरब्रह्मधामेत्यर्थः । अगमत्प्राप ॥ १९ ॥ तत्रेति । तत्र तस्मिंस्तेजोमयधाम्नि । वर्त्तमानादिति शेषः । भगवत उत्तमात्यैश्वर्ययुक्तात् । भूम्नो भूमाख्यपुरुषात् सकाशात् । द्विजपुत्रान् । समानयच्छ्रीकृष्णः स्वयमानीय स्वगोपुरान्तरे परिदिव्यते ब्राह्मणायार्पयामास । तदा तस्मिन् समये । रथाश्वादिप्राकृतं रथाश्वप्रभृतिकम् । आदिशब्देन युगाक्षकीलादिग्रहणम् । सर्वं सकलम् । वस्तु । दिव्यरूपताम् । आपत् ॥ २० ॥ उक्तार्थदृढत्वाय विपक्षे दोषमाह । प्राकृतमिति । अन्यथा एवंकथनाभावे । प्राकृतं प्रकृतिकार्यत्वान्मायिकम् । वस्तु । प्रकृतौ स्वकारणभूतायां मायायाम् । कथं केन हेतुना । न लीयेत लयं न प्राप्नुयात् ।

द्विजपुत्राहृतौ कृष्णः सार्ज्जुनः प्राकृतं रथम् । प्राकृतैर्वाजिभिर्युक्तमारुह्यागाच्च वारुणीम् ॥ १८ ॥
स द्वीपान् सप्त सप्ताब्धीन् लोकालोकं व्यतीत्य च । मायारूपं तमश्छित्त्वा ब्रह्म तेजोऽगमत्परम् ॥ १९ ॥
तत्र भूम्नो भगवतो द्विजपुत्रान् समानयत् । रथाश्वादि तदा सर्वं वस्त्वापद् दिव्यरूपताम् ॥ २० ॥
प्राकृतं प्रकृतौ वस्तु न लीयेतान्यथा कथम् । कथं वा प्राकृतस्य स्याद् ब्रह्मणः प्राप्तिरञ्जसा ॥ २१ ॥
अतो नराकृतिरपि कृष्णोऽस्त्येवाक्षरात्परः । अमायिकाकृतिर्दिव्यरूप इत्यस्ति सन्मतम् ॥ २२ ॥
भ्रान्तास्त्वन्ये निराकारं ब्रह्मेत्येव विदुस्ततः । संसरन्ति निरालम्बास्ते तद् ग्राह्यं सतां मतम् ॥ २३ ॥

किन्तु लयं प्राप्नुयादेवेत्यर्थः । प्राकृतस्य प्रकृतिकार्यस्य रथाश्वादेर्वस्तुनः । ब्रह्मणः । सकार्यप्रकृतिसम्बन्धवर्जिताक्षरब्रह्मणो धाम्नः । अञ्जसा तत्त्वतः । प्राप्तिः । कथं वा केन हेतुनात्तु । स्याज्जायेत । किन्तु नैव जायेतेत्यर्थः । इयं कथा सविस्तरं तु श्रीभागवतीयदशमस्कन्धनवाशीतितमाध्यायाद्धरिवंशाच्चावगन्तव्या ॥ २१ ॥ अत इति । अतो हेतोः । कृष्णः । नराकृतिर्मनुष्याकारः सन्नपि । अक्षरात् । परः स्वरूपस्वभावादिभिर्मायापराक्षरब्रह्मणोऽपि परमार्थात्युत्कृष्टः । अमायिकाकृतिर्मायाकार्यतत्त्वजन्याकारवर्जितः । अत एव । दिव्यरूप एव । अस्ति सर्वकालं वर्त्तते । इत्येवं भूतम् । सन्मतं भगवदेकान्तिकभक्तसिद्धान्तः । अस्ति ॥ २२ ॥ भ्रान्ता इति । अन्ये भगवदेकान्तिकभक्तेतरे तु । भ्रान्ता भगवत्स्वरूपयथार्थज्ञाने विभ्रान्तमतयः सन्तः । ब्रह्म सकलेश्वरेश्वरोऽक्षरब्रह्मादिभ्योऽपि सर्वथा बृहत्सकलगुणादित्वाद्ब्रह्मसंज्ञो भगवान् । निराकारममूर्त्तं तेजोरूपं । अस्ति । इतीत्यमेव । विदुः । ततो हेतोः । निरालम्बा भगवन्मूर्त्त्याश्रयवर्जिताः । ते भ्रान्तपुरुषाः । संसरन्ति जन्ममरणप्रवाहरूपसंसारसागरे निमज्जनोन्मज्जने अधिगच्छन्ति । तत्तस्मात्कारणात् । सतामेकान्तिकभक्तानां साधूनाम् । मतम् । ग्राह्यं सर्वथोपादेयम् ॥ २३ ॥

एकान्तिका इति । ये पुरुषाः । ब्रह्मानन्तरश्लोके विशेषितं ब्रह्मसंज्ञं भगवन्तम् । दृढं शास्त्रान्तरागतछलशब्दानिवार्यभगवत्साकारताधिषणत्वात्सुस्थिरं यथातथा । साकृति सदादिव्याकारम् । विदन्ति जानन्ति । ते पुरुषाः । एकान्तिकाः । भक्ताः । भगवत इति शेषः । भवन्ति जायन्ते । हि निश्चितमेव । इत्येवंभूतम् । प्रभोरुक्तमहिम्नोऽतिसमर्थस्य । तस्य श्रीहरेः । सुधाभममृतप्रतिमम् । वचः । निशम्य श्रवणपुटैरापीय । सर्वे । सन्तः समीपविष्टा मुक्तानन्दादयो मुनयः । अपिशब्दात्तथाविधा गृहस्था अपि । तुतुषुः सन्तुष्टा बभूवुः ॥ २४ ॥ निरूपितं निर्गुणादिशब्दार्थैः स्वस्य येन तु । सदा दिव्याकारत्वं हरौ तत्रास्तु मन्मतिः ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्पद्म नुरघुवीराचार्यविरचितायां सेतुमालाख्यायां षट्षष्टितमस्तरङ्गः ॥ ६६ ॥

हरेरेकान्तिकभक्तस्य मुमुक्षौ सद्गुणा यथा एयुर्नायायुरेतच्च सप्तषष्टितमे स्मृतम् ॥१॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् (१८७६) । चैत्रस्य मधुमासस्य । शुक्लसप्तम्यां शुक्लपक्षागतसप्तमीतिथौ । इदं हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे उत्तमस्य नृपत्तेः । दुर्गे । सदाश्रमे सतां मठे । साधुकृते

एकान्तिकास्ते हि भवन्ति भक्ता ये साकृति ब्रह्म दृढं विदन्ति । इति प्रभोस्तस्य वचो निशम्य सर्वेऽपि सन्तस्तुतुषुः सुधाभम् ॥२४॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते षट्षष्टितमस्तरङ्गः ॥ ६६ ॥

शकाब्दे विक्रमार्कस्य रसाश्ववसुभूमिते । चैत्रस्य शुक्लसप्तम्यां वचोऽमृतमिदं हरेः ॥ १ ॥
तत्र दुर्गपुरे दुर्गे उत्तमस्य सदाश्रमे । वास्त्रासने साधुकृते न्यषीदत्स सिताम्बरः ॥ २ ॥
सद्भिश्च गृहिभिर्भक्तैर्वृतः स स्वयमब्रवीत् । साधवः शृणुताहं वः सर्वान्पृच्छामि किञ्चन ॥ ३ ॥
कश्चिदस्ति पुमानेको विरक्तश्चैहिके सुखे । श्रीकृष्णसेवासौख्येच्छुः स्वधर्मज्ञानभक्तिमान् ॥ ४ ॥

साधुभिः प्रेम्णा स्वस्वकन्था आस्तीर्य तदुपरि कस्यचित्पदातेः श्वेतवस्त्रमाछाद्य सुविहिते । वास्त्रासने । सिताम्बरः स्वाङ्गलावण्यातिशयद्योतमानाङ्गपरिधृतनिबिडसकलश्वेतवसनः । स श्रीहरिः न्यषीदत्स्वीयहितकरार्थोपदेशाय स्वावासात्सनक्तकपाणिः कटिनिहितापरपाणिरागत्योपविवेश ॥ २ ॥ सद्भिरिति । भक्तैः स्वं भजद्भिः । नानादेशागतैररिति शेषः । सद्भिर्मुक्तानन्दादिमुनिभिः । गृहिभिस्तथाविधैर्मयारामभट्टादिगृहस्थजनैश्च । वृतः सभायां परिवेष्टितः । स श्रीहरिः । स्वयं केनाप्यपृष्ट एव । अब्रवीन्मुक्तानन्दादिसाधूनुद्दिश्य जगाद । हे साधवः ! । अहम् । वो युष्मान् सर्वान् । किञ्चन किमपि । पृच्छामि । शृणुत यूयं तदादरादाकर्णयत ॥ ३ ॥ कश्चिदिति । एकः । कश्चित् । पुमान् । ऐहिके इह लोकभवे । चकारान्मायिके पारलौकिके । सुखे । विरक्तो दोषदृष्ट्या कालकृतविनाशित्वदृष्ट्या च वैराग्यवान् । श्रीकृष्णसेवासौख्येच्छुर्महिमातिशयवेदित्वात्कैवल्यसुखस्यापि जघन्यतया वेदित्वाच्च केवलं साक्षाच्छ्रीकृष्णसेवामेव महासुखरूपामिछन्नित्यर्थः । स्वधर्मज्ञानभक्तिमान् वर्णाश्रमोचितस्वधर्मोपेतः स्वात्मपरमात्मस्वरूपस्य यथार्थवेदनवान्सप्रेमश्रवणादिनवभक्तिभेदेन च भगवन्तं भजमान इत्यर्थः । अस्ति एवंविधैकान्तिकगुणैरुपेतो वर्त्तते इत्यर्थः ॥ ४ ॥

यदिति । किञ्च । सः । यत् । किञ्चित् । कर्म । कुर्यात् । तत्कर्म । भगवत्प्रीतिहेतुकं कुर्यात् । केवल स्वेष्टदेव साक्षाच्छ्रीकृष्णप्रीणननिमित्तकं विदध्यान्नतु स्वात्मादि तदितरप्रसन्नताकारणकमित्यर्थः । स्वसङ्गिपुरुषस्य कायवाङ्मनोभिःकृतस्वसमागमस्य जनस्य । स्वावृत्तितुल्यवृत्तिच्छुः स्ववर्त्तनसमानवर्त्तनभवनेच्छावान् । स्वसत्सङ्गिनं जनं दयया स्वसमानं कर्त्तुमिच्छन्नित्यर्थः । अस्ति ॥ ५ ॥ गुणा इति । हे सत्तमाः ! प्रवरामुनयः । अत्र लोके । तस्योक्तलक्षणस्यैकान्तिकसाधोः । गुणा वैराग्यादयः । कीदृशे कीदृग्विधलक्षणे । मोक्षेच्छौ मुमुक्षाववति । पुंसि पुरुषे । आयायुरागच्छेयुः । कीदृशे च । नैवायायुः । तदेतन्मत्प्रश्नोत्तरम् । मे मह्यम् । वदत कथयत ॥ ६ ॥ उवाचेति । तमेवमनुयुक्तवन्तं श्रीहरिम् । मुक्तानन्दो मुनिः । उवाच । हे भगवन् ! । तद्गुणेच्छेनोक्तविधभवदेकान्तिकभक्तगुणानामात्मन्यागमनेच्छावता । मुमुक्षुणा तत्सङ्गिना मुमुक्षभक्तेन तु । गुणमण्डित उक्तविधवैराग्यादिगुणशोभितः । असौ त्वदेकान्तिकसाधुः । सुरवद्देववत् । मान्यः विष्णवादिदेवभावेनाच्चर्य इत्यर्थः ॥ ७ ॥ तदिति । किञ्च । तद्वाक्यानि स्वहिताय तेनोक्तानि वचनानि । सत्यानि स्वहितकारित्वात्तथान्येव । सन्ति । इतीत्थम् । मान्यानि स्वीकार्याणि । इन्द्रियाणि ।

यत्किञ्चित्कर्म कुर्यात्तद्भगवत्प्रीतिहेतुकम् । स्ववृत्तितुल्यवृत्तीच्छुः स्वसङ्गिपुरुषस्य च ॥ ५ ॥ गुणास्तस्यात्र मोक्षेच्छावायायुः पुंसि कीदृशे । नैवायायुः कीदृशे च तन्मे वदत सत्तमाः ॥६॥ उवाच मुक्तानन्दस्तं भगवंस्तद्गुणेच्छुना । मुमुक्षुणा तु सुरवन्मान्योऽसौ गुणमण्डितः ॥ ७ ॥ तद्वाक्यानि च मान्यानि सत्यान्येवेति सर्वदा । वृत्यं तथैव निश्छद्म संनियम्येन्द्रियाणि च ॥ ८ ॥ मुमुक्षौ चेदृशे नूनमायायुस्तस्य ते गुणाः । इत्युत्तरं मया स्वामिन्दत्तं तुभ्यं यथामति ॥ ९ ॥ तमुवाच पुनः स्वामी युक्तं दत्तं त्वयोत्तरम् । न्यूनमत्रास्ति यत्तत्तु मुने ! तुभ्यमहं ब्रुवे ॥ १० ॥ तादृग्गुणं नरं दृष्ट्वा बोध्यमित्थं निजान्तरे । अयं महान् हि पुरुषो भक्तः सर्वात्मना हरेः ॥ ११ ॥

सन्नियम्य स्वधर्मानुसारेण तत्तद्विषयेभ्यः प्रत्याहृत्य । सर्वदा सर्वकालम् । निश्छद्म निष्कपटं यथातथा । तथा तदुक्तवचनानुसारेणैव । वृत्यं वर्त्तितव्यम् ॥ ८ ॥ मुमुक्षाविति । हे स्वामिन् । ईदृशे ईदृग्विधलक्षणे । मुमुक्षौ । तस्योक्तविधस्यैकान्तिकसाधोः । ते वैराग्यादयः । गुणाः । नूनं निश्चितमेव । आयायुः । चकारादनेवंभूते नायायुरिति ज्ञेयम् । इत्यमुना प्रकारेण । मया तुभ्यम् । यथामति मन्मत्यनुसृतम् । उत्तरम् । दत्तम् ॥ ९ ॥ तमिति । तमेवं स्वप्रश्नोत्तरं कुर्वन्तं मुक्तानन्दमुनिम् । स्वामी तत्कृतप्रश्नोत्तरन्यूनतावेदनादिसकलैश्वर्यसम्पन्नः श्रीहरिः । पुनः । उवाच । हे मुने ! । त्वया । युक्तम् । उत्तरम् । दत्तम् । अत्र त्वद्दत्तोत्तरे । यत् । न्यूनम् । अस्ति । तत्तु । अहम् । तुभ्यम् । ब्रुवे ॥ १० ॥ तादृगिति । तादृग्गुणमुक्तविधवैराग्यादिगुणयुक्तम् । नरमेकान्तिकसाधुम् । दृष्ट्वा । निजान्तरे स्वकीयान्तःकरणे । इत्थं वक्ष्यमाणप्रकारेण । बोध्यमादौ तद्गुणग्रहणस्यात्मनिर्दोषसमीक्षणस्य च प्रकारो ज्ञेय इत्यर्थः । तत्रादौ तद्गुणग्रहणप्रकारमाह सार्द्धेन । अयं मया सेव्यमानः साधुः । महान् । पुरुषः लोकशास्त्रप्रसिद्धमहापुरुषगुणवान्नित्यर्थः । हरेः साक्षाद्भगवतः । सर्वात्मनैकान्तिकभावेन । भक्तः । अस्ति ॥ ११ ॥

सहस्रश इति । सहस्रशः । जनाः सुमतयः पुरुषाः । एवं महापुरुषम् । मन्यन्ते नानाविधोपहारार्पणेन सत्कुर्वन्ति । पूजयन्त्यगुरुचन्दनोचमकुसुमादिभिरर्चयन्ति च । तथापि । अविक्रियस्तदनहङ्कृत्येन्द्रियक्षोभवर्जितः । मानपूजाजन्यमानमहत्त्वेनापराभूत इत्यर्थः अत एव । दैहिकं स्वदेहसम्बन्धि । किञ्चित्किमपि । सुखम् । नेच्छति ॥१२॥ अथ स्वदोषसमीक्षणप्रकारमाह । अहमिति । पामरो नीचः । अहं तु । ऐहिकमेतल्लोकभवम् । अल्पकं तुच्छम् । सौख्यं मायिकविषयसुखम् । इच्छामि उपभोक्तुं वांच्छामि । मयि । भगवद्भक्तस्य । लक्ष्म लक्षणम् । किञ्चित्किमपि । नास्ति हि नैव वर्त्तते ॥ १३ ॥ एवमिति । एवममुना प्रकारेण । यो मुमुक्षुः । तद्गुणान् । एव । गृह्णीयात् । तथा । स्वागुणान्स्वदोषान् । समीक्षेतेति शेषः । तस्मिंस्तथाविधमुमुक्षुजने । साधोरुक्तविधैकान्तिकसाधुपुरुषस्य । सर्वशः । गुणाः । शनैः शनैः । आयान्ति ॥ १४ ॥ एवं कीदृशे तद्गुणा आगच्छेयुरिति स्वकृतप्रश्नस्य मुक्तानन्दमुनिकृते उत्तरे न्यूनं तद्गुणग्रहणं स्वदोषसमीक्षणं चाभिधाय साम्प्रतं कीदृशे

सहस्रशो जना एवं मन्यन्ते पूजयन्ति च । तथाप्यविक्रियः किञ्चित्सुखं नेच्छति
देहिकम् ॥ १२ ॥ अहं तु पामरः सौख्यमिच्छाम्यैहिकमल्पकम् । लक्ष्म किञ्चिच भगव-
द्भक्तस्य मयि नास्ति हि ॥ १३ ॥ एवं यस्तद्गुणानेव गृह्णीयात्स्वागुणांस्तथा । शनैः
शनैर्गुणास्तस्मिन् साधोरायान्ति सर्वशः ॥ १४ ॥ यस्तु साधोर्गुणान् हित्वा शोभनानन्य-
दुर्लभान् । कल्पयेदगुणांस्तस्मिँल्लौकिके पुरुषे यथा ॥१५॥ भोक्तुं पातुं च वसनं परिधातुं
च भाषितुम् । महानपि वेत्त्येष विवेकं लौकिकं त्विति ॥ १६ ॥ तस्मिंस्तु पुरुषे
क्वापि भक्ते वेदान्तगेऽपि च । कालेन महताऽप्येव नायात्येकोऽपि सद्गुणः ॥ १७ ॥

तद्गुणा नायायुरित्यस्योत्तरमाह त्रिभिः । य इति । यो मुमुक्षुस्तु । साधोरुक्तविधैकान्तिकभगवद्भक्तस्य सतः । अन्यदुर्लभांस्तथाविधान्यसद्दुष्प्रापान् । शोभनान्समीचीनान् । गुणान् । हित्वा सर्वथा परित्यज्य । लौकिके । पुरुषे । यथा । इत्तरस्मिन् लौकिके जने इवेत्यर्थः । तस्मिन्साधौ । अगुणान्दोषान् । कल्पयेत् ॥ १५ ॥ तत्कृतदोषकल्पनप्रकारमाह । भोक्तुमिति । एषः साधुः । महान्सन्नपि । भोक्तुं विवेकनाशनं कर्त्तुम् । पातुं तथैव जलपानं कर्त्तुम् । वसनं वस्त्रम् । परिधातुं स्वाङ्गे सम्यक् परिहितुम् । भाषितुं विवेकपूर्वकं भाषणं कर्त्तुं च । न वेत्ति नैव जानाति । लौकिकं लोके वर्त्तमानम् । विवेकं पात्रभूरिदानापात्राल्पमात्रप्रदानादिव्यवहारविचारं च । न वेत्ति । इतीत्थंभूतान् । अगुणान् कल्पयेदिति पूर्वेण सम्बन्धः ॥ १६ ॥ तस्मिन्निति । तस्मिन्नुक्तरीत्यैकान्तिकसाधौ दोषकल्पके । पुरुषे । भक्ते भगवद्भक्ते सत्यपि । वेदान्तगे वेदान्तशास्त्रपारीणे सत्यपि । क्वापि कदाचिदपि । महता कालेन बहुकालातिक्रमेणापि । एकोऽपि । सद्गुणो वैराग्यादितच्छोभनगुणः । नैव । आयाति ॥ १७ ॥

निपीयेति । इत्येवंविधम् । उदारं महागुणयुक्तम् । धर्मात्मजस्य धर्मापरसंज्ञहरिप्रसादद्विजसूनोः श्रीहरेः । वाक्यामृतं वचनसुधाम् । निपीय श्रवणपुटैः पानपर्यायश्रवणं कृत्वा । स साधुर्मुक्तानन्दमुनिः । मुदम् । आप । सदा निषण्णाः सभोपविष्टाः । तदीयभक्ताः साक्षाच्छ्रीहरेरनन्योपासकाः । अन्ये मुक्तानन्दमुनीतरे । सर्वे चापि । सन्तः साधवः । गृहस्थास्तथाविधागृहिजनाश्च । मुदम् । आपुः ॥१८॥ स्वस्यैकान्तिकसाधोस्तु गुणागमनकारणम् । तत्सेविनि तथा तस्य गुणानागमकारणम् ॥ १ ॥ निजेभ्यः कृपया प्राह यो भक्तिधर्मजः प्रभुः । स श्रीहरिर्विदध्यान्मां भक्तमेकान्तिकं निजम् ॥ २ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्सूनुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां सप्तषष्टितमस्तरङ्गः ॥ ६७ ॥

अर्चायां श्रीहरेस्तस्य साधुष्वेकान्तिकेषु च । हरिबुद्धिर्न मर्यादा तस्यास्तेषां न यस्य च ॥ १ ॥ साक्षाद्धरेर्निश्चयोऽपि हृदये तस्य नास्ति हि । कल्याणं तस्य नास्त्येव भाव्यो नास्तिक एव सः ॥ २ ॥ यथा नास्तिकता स्याच्च भवेदास्तिकता यथा । एतत्सर्वमष्टषष्टितमे सम्यक् प्रकीर्त्तितम् ॥ ३ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८७६) चैत्रिकस्य चैत्रमासस्य । आद्ये प्रथमे शुक्लपक्षे । नवम्यां श्रीहरेर्जन्मतिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र

निपीय वाक्यामृतमित्युदारं धर्मात्मजस्याप मुदं स साधुः । अन्ये च सर्वेऽपि सदोनिषण्णाः सन्तो गृहस्थाश्च तदीयभक्ताः ॥१८॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते सप्तषष्टितमस्तरङ्गः ॥ ६७ ॥

शकाब्दे विक्रमार्कस्य रसाश्ववसुभूमिते । नवम्यां चैत्रिकस्याद्ये वचोऽमृतमिदं हरेः ॥ १ ॥
तत्र दुर्गपुरे दुर्गे उत्तमस्य महीभुजः । स न्यषीदत्पीठवरे वेद्यां धृतसितांशुकः ॥ २ ॥
भक्तव्रजैः परिवृतः स पुरःस्थान्सतोऽब्रवीत् । किञ्चित्पृच्छाम्यहं सन्तः साधून्वो भगवत्प्रियान् ॥ ३ ॥
ततोऽनुमोदितः सद्भिस्तान् पप्रच्छ स सद्गुरुः । कृष्णार्चा कृष्णवन्मान्येत्येवं घण्टापथोऽस्ति हि ॥ ४ ॥

तिथौ । दुर्गपुरे । महीभुजो धराधीश्वरस्य । उत्तमस्य । दुर्गे । वेद्यां श्रीवासुदेवमन्दिराङ्गणस्थाक्षररूपतरुराजपिचुमन्दाधस्तनवितर्द्यौ पीठवरे स्वभक्तैरतिप्रेमपूर्वं सोपकरणमृदुतूलिकाद्यास्तृते मञ्चोत्तमासने । धृतसितांशुकः घर्मर्त्तुसंमानायपरिधृततत्कालोचितमृदुघनसकलसितसूक्ष्मवसनः । स श्रीहरिः । न्यषीदच्चटचटायितपादुकाङ्घ्रिर्गुच्छपाणिः स्वावासादागत्य पार्षदपाणिमलवम्ब्योवविवेश ॥ ३ ॥ भक्तेति । भक्तव्रजैर्नानादेशायातैस्त्यागिगृहिस्वभक्तौघैः । परिवृतः सुधर्मायां सुरैः सुरराज इव सभायां परिवेष्टितः । स श्रीहरिः । पुरःस्थान्स्वपुरःप्रदेशनिषण्णान् । सतो मुक्तानन्दादिसाधून् । अब्रवीत् । हे सन्तः ! । अहम् । भगवत्प्रियान्साक्षाच्छ्रीकृष्णप्रीतिमतः । साधूनेकान्तिकसतः । वो युष्मान् । किञ्चित् । पृच्छामि ॥ ३ ॥ तत इति । तत एवंभूतसाक्षात्स्वेष्टदेवश्रीहरिवाक्यश्रवणानन्तरम् । सद्भिर्मुक्तानन्दादिभिस्तैः साधुभिः । अनुमोदितः हरे ! महाननुग्रहोऽद्य सम्पादित इत्युक्तिपूर्वं कृतानुमोदिनः । सद्गुरुर्हितोपदेशाचरणेन सत्यो गुरुः । स श्रीहरिः ।ताननुमोदयतो मुक्तानन्दादिसाधून् । पप्रच्छ । हे सन्तः ! । कृष्णार्चा साक्षाच्छ्रीकृष्णस्य प्रतिकृतिः । कृष्णवत्साक्षाच्छ्रीकृष्णेन तुल्यम् । मान्या आदर्तव्या । इत्येवमेवंविधः । घण्टापथः संसरणं राजमार्ग

इति यावत् । अस्ति । राजमार्गो यथा सर्वजनप्रसिद्धस्तथाऽयमपि लोकशास्त्रप्रसिद्धः पन्था वर्त्तते इति भावः ॥ ४ ॥ इममर्थं स्वानुभवप्रत्यक्षशाब्दैतिह्यप्रमाणैः साधयति चतुर्भिः । दुर्भिक्षेति । अत्र लोके । प्राक् पूर्वम् । दुर्भिक्षकाले संवदष्टादशशताधिकैकोनसप्ततितमम् (१८६९) वर्षीयमहर्घतासमये । मासमविच्छेदेनैकमासपर्यन्तम् । मे मम । समाधिः । आस बभूव । तत्र समाधौ । अहम् । नित्यं प्रतिदिनम् । पुरुषोत्तमपत्तनं जगन्नाथपुरीम् । अगमं गतवान् ॥ ५ ॥ तत्रेति । तत्र पुरुषोत्तमपत्तने । रमापतेर्लक्ष्मीकान्तस्य जगन्नाथभगवतः । काष्ठमयीं दार्वीम् । मूर्त्तिमर्चाम् । अहम् । प्रविश्य । आसमतिष्ठम् । तद्द्वारेण तन्मूर्त्तिद्वारा । तत्रत्यभक्तहार्दं तत्र निवासिनां पूजकादिभक्तजनानां हृद्गतं सन्तं चाभिप्रायम् । समाविदं सम्यगासमन्ताद्विदितवान् ॥ ६ ॥ समाधीति । अत्रौद्धवीये । वर्त्मनि मार्गे सम्प्रदाये इत्यर्थः । भूरिशो बहवो जनाः । समाधिनिष्ठाः मत्कृपया सम्प्राप्तसमाधिस्थितयः । सन्ति । ये समाधिनिष्ठपुरुषाः । अन्यदेहमन्यजनान्तःकरणम् । प्रविश्य । तद्धार्दं तदीयहृद्गताभिप्रायम् । अञ्जसा तत्त्वत एव । विद्युर्जानन्ति ॥ ७ ॥ योगीन्द्र इति । योगीन्द्रः समाधिमद्योगिजनमुख्यः । शुको व्याससूनुः । द्रुमान् । आविश्य । तातं स्वानुयायिनं पितरम् । अब्रवीन्नाहं पुनर्गेहमायामीत्युत्तरमवदत् । एवमित्थंभूता । लौकिकी लोकप्रथिता । तथा । वैदिकी वेदार्थभूतेतिहासपुराणप्रथिता च । प्रसिद्धः । अस्ति

दुर्भिक्षकाले प्रागत्र समाधिर्मासमास मे । तत्राहमगमं नित्यं पुरुषोत्तमपत्तनम् ॥ ५ ॥ तत्र काष्ठमयीं मूर्त्तिं प्रविश्यासं रमापतेः तद्द्वारेण च तत्रत्यभक्तहार्दं समाविदम् ॥ ६ ॥ समाधिनिष्ठा अत्रापि सन्ति वर्त्मनि भूरिशः । येऽन्यदेहं प्रविश्यैव विद्युस्तद्धार्दमञ्जसा ॥ ७ ॥ योगीन्द्रोऽपि शुकस्तातं द्रुमानाविश्य चाब्रवीत् । एवमस्ति प्रसिद्धिर्हि लौकिकी वैदिकी तथा ॥ ८ ॥ कृष्णो महान्तः सन्तश्च प्राप्तयोगमहोदयाः । इच्छा स्वस्य भवेद्यत्र तत्र कुर्युः प्रवेशनम् ॥ ९ ॥ अतः कृष्णः स्वयं दत्ते स्वार्चां भक्तजनाय याम् । तस्यां निजेच्छया साक्षात्प्रविश्यैव विराजते ॥ १० ॥ अतः साक्षाद्भगवतो मर्यादा पाल्यते यथा । तथैव पालनीयाऽत्र तस्या अपि च पूजकैः ॥ ११ ॥

॥ ८ ॥ एवमर्चायां सर्वदा भगवन्निवासोक्त्यै योगिनो यदाऽन्यत्र प्रवेशं कुर्वन्ति तर्हि भगवानर्चादौ प्रवेशं कृत्वा तिष्ठेत्तत्र किं वक्तव्यमिति कैमुत्यन्यायद्योतनाय स्वानुभवादिप्रमाणचतुष्टयमुक्त्वा पुनरपि तमेवार्थं द्रढयति कृष्ण इति । कृष्णो योगेश्वरेश्वरः साक्षात्स्वयं श्रीकृष्णो भगवान् । प्राप्तयोगमहोदयाः साक्षाच्छ्रीकृष्णोपासनासम्प्राप्तयोगसंसिद्धिरूपमहासमुन्नतयः । 'उदयस्तु पुमान्पूर्वपर्वते च समुन्नता'विति मेदिनी । महान्तः । सन्तश्च । यत्र यस्मिन् स्थाने । स्वस्यात्मनः । इच्छा प्रवेशविधान वांच्छा । भवेत् । तत्र तस्मिन् स्थाने । प्रवेशनम् । कुर्युः ॥ ९ ॥ अत इति । अतो हेतोः । स्वयम् । कृष्णः साक्षात्स्वयं श्रीकृष्णो भगवान् । भक्तजनाय । याम् । स्वार्चां चित्रादिस्वप्रतिकृतिम् । दत्ते । तस्यां स्वार्चायाम् । साक्षात्प्रत्यक्षः कृष्णः । निजेच्छया । प्रविश्य । विराजते स्वैश्वर्येण भ्राजमानस्तिष्ठत्येव ॥ १० ॥ अत इति । अतो हेतोः । अत्र लोके । पूजकैः साक्षाद्भगवदर्पितार्चाऽर्चकैः । साक्षाद्भगवतः । मर्यादा तदग्रे स्वीययथेष्टानाचरणरूपा स्थितिः । पाल्यते रक्ष्यते । तथैव । तस्या भगवद्दत्तलेख्याद्यर्चाया अपि । मर्यादा । पालनीया ॥ ११ ॥

सतामिति । किञ्च । सतां भगवदेकान्तिकसाधूनाम् । हृदये स्वान्ते । साक्षात्प्रत्यक्षः । हरिः । आविश्य । वर्त्तते निरन्तरं तिष्ठति । ततो हेतोः । तेषां तथाविधानां साधूनामपि । मर्यादा । तादृशी प्रत्यक्षभगवत इव । सदा निरन्तरम् । पाल्या ॥ १२ ॥ एवमिति । एवं सत्यपीत्थंभूतलोकवेदादिवर्त्तमानायां सत्यायां रीतौ सत्यामपीत्यर्थः । यः । भक्तः । यथेष्टाचरणे । रत आसक्तः सन् । कृष्णवत्साक्षात्कृष्णस्येव । तस्या भवद्दत्ताचायाः । तेषां भगवन्निवासानामेकान्तिनां साधूनां च । मर्यादाम् । नैव । पालयेत् ॥ १३ ॥ मन्येतेति । कृष्णदत्तार्चाम् । चित्रधात्वश्मरूपिणीं । चित्ररूपां रीत्यादिधातुरूपां दृषद्रूपां चेत्यर्थः । मन्येत । एकान्तिकान् । सतः साधूनपि । अन्यनरानिवेतरजनसमानान् मन्येत ॥ १४ ॥ सदेति । तथा । अहम् । स्वार्चासु । अनन्येष्वेकान्तिकेषु । भक्तेषु च । सदा । वसामि । इतीत्थंभूतम् । कृष्णस्य । वचो वचनमपि । तत्स्तावकं तासां तेषां च स्तुतिरूपार्थवादमात्रम् । वदेत् । इममर्थमुद्दिश्य मल्लिङ्गमद्भक्तजनदर्शनस्पर्शनार्चनम् इत्यादिना श्रीभागवतैकादशस्कन्धेऽर्चादौ स्वनिवासत्वेन तेषां स्वपूजापदत्वमुक्तं वेदितव्यम् ॥ १५ ॥ तस्येति । तस्य पूर्वोक्तश्लोकत्रयोदितलक्षणस्य । भक्तस्य । हृदये

सतां च हृदये साक्षाद्धरिराविश्य वर्त्तते । तेषामपि ततः पाल्या मर्यादा तादृशी सदा ॥ १२ ॥ एवं सत्यपि यो भक्तस्तस्यास्तेषां च कृष्णवत् । मर्यादां पालयेन्नैव यथेष्टाचरणे रतः ॥ १३ ॥ मन्येत कृष्णदत्तार्चां चित्रधात्वश्मरूपिणीम् । एकान्तिकानपि सतो मन्येतान्यनरानिव ॥१४॥ सदा स्वार्चास्वनन्येषु भक्तेषु च वसाम्यहम् । इति कृष्णस्यापि वचो वदेत्तत्स्तावकं तथा ॥ १५ ॥ तस्य भक्तस्य हृदये साक्षात्कृष्णस्य निश्चयः । वर्त्तते नास्ति वेत्येष प्रश्नो ब्रूत तदुत्तरम् ॥ १६ ॥ इति पृष्टास्तेन सन्तस्तमूचुस्तस्य चेतसि । निश्चयो नास्ति कृष्णस्य साक्षात्तव नराकृतेः ॥ १७ ॥ हरिरूचेऽथ कल्याणं भविष्यत्यस्य वा न हि । सन्तस्तमूचुर्नैवेति ततो हरिरुवाच तान् ॥ १८ ॥ तस्मिन् दौर्मत्यमेतावदेवास्तीति न किन्तु सः । यमिष्टदेवं भजते स्यात्तस्मिन्नप्यनीशधीः ॥ १९ ॥

मानसे । साक्षात्कृष्णस्य । निश्चयः । वर्त्तते । अथवा । नास्ति न वर्त्तते । इत्येवंविधः । एषः । प्रश्नः । अस्ति । तदुत्तरम् । ब्रूत यूयं कथयत ॥ १६ ॥ इतीति । इत्यमुना प्रकारेण । तेन श्रीहरिणा । पृष्टाः । सन्तो मुक्तानन्दादयः । साधवः । तं श्रीहरिम् । उचुः । हे हरे ! । तस्य भवदभिहितस्य भक्तस्य । चेतसि । नराकृतेः । साक्षात् प्रत्यक्षस्य । कृष्णस्य । तव । निश्चयः । नास्ति ॥ १७ ॥ हरिरिति । अथैवंविधसाधुवचनश्रवणानन्तरम् । हरिः । ऊचे । हे सन्तः ! । अस्यैवंविधभक्तस्य । कल्याणं मोक्षः । भविष्यति । अथवा । नहि नैव । भविष्यति । तमेवमुक्तवन्तं श्रीहरिम् । सन्तस्ते साधवः । नैव कल्याणं न भविष्यत्येव । इतीत्थम् । ऊचुः । तत एवंविधसाधुवचनश्रवणानन्तरम् । हरिः । तान् साधून् । उवाच ॥ १८ ॥ तस्मिन्निति । हे साधवः ! । तस्मिंस्तथाविधभक्ते । एतावदेतत्परिमितमेव । दौर्मत्यं कुमतित्वम् । अस्ति । इतीत्थम् । नैव बोद्धव्यम् । किन्तु । स तादृशो भक्तः । यम् । इष्टदेवं प्रत्यक्षं भगवन्तम् । भजते । तस्मिन्निष्टदेवेऽपि ।

अनीशधीरयं मदिष्टदेवः परमेश्वरो न भवतीति मतियुक्तः । स्यात् जायेत ॥ १९ ॥ तस्येति । तस्य स्वेष्टदेवानीशधियो । भक्तस्य । अक्षरादिषु । धामसु । नास्तिकधीर्नास्तिकतामतिश्च । स्यात् । स नास्तिकमतिर्भक्तः । विश्वभवादीन् जगदुत्पत्तिस्थितिप्रलयान् । मायाकालकर्मजान् । विद्यात् । विश्वभवादीनां सर्वेश्वरभगवदिच्छाजन्यतां परित्यज्य केवलमायाभवान् केवलकालभवान् केवलकर्मभवान्वा जानीयादित्यर्थः ॥ २० ॥ एवमिति । एवमुक्तप्रकारेण । स पुरुषः । नास्तिको नास्तिकानामपि मुख्यः । भावी भविष्यति । इत्यमुना प्रकारेण । उक्तवन्तम् । हरिम् । नत्वा प्रणम्य । तत्पुरतः । स्थितः । मुक्तानन्दाभिधः । मुनिः । अपृच्छत् ॥ २१ ॥ ईदृगिति । हे हरेः ! । तस्मिन्नुक्तविधे पुरुषे । ईदृगेवंविधा । नास्तिकता । प्राक्तनेन प्राग्भवेन । कुकर्मणा तत्कृतेन केनचित्कुत्सितकर्मणा । जायेत । किमिति शेषः । अथवा । अत्र लोके । कुकर्मणां कृतकुत्सितकर्मणाम् । नास्तिकानाम् । सङ्गेन । किम् । जायेत ॥ २२ ॥ हरिरिति । तमेवंपृच्छन्तं मुक्तानन्दमुनिम् । हरिः । प्रोवाच । हे साधो ! । सा नास्तिकता तु । नास्तिकसङ्गतो नास्तिकजनानां सङ्गेन । भवेत् । अथ च । नास्तिकग्रन्थसंश्रुतेर्नास्तिकग्रन्थानामेकाग्रचेतसा श्रवणाद्धेतोः । नास्तिकग्रन्थ-

तस्य नास्तिकधीश्च स्यादक्षरादिषु धामसु । विद्याद्विश्वभवादींश्च स मायाकालकर्मजान् ॥ २० ॥
एवं स नास्तिको भावीत्युक्तवन्तं हरिं मुनिः । मुक्तानन्दाभिधोऽपृच्छन्नत्वा तत्पुरतः स्थितः ॥ २१ ॥
ईदृग्नास्तिकता तस्मिन्प्राक्तनेन कुकर्मणा । जायेत वा नास्तिकानां सङ्गेनात्र कुकर्मणाम् ॥ २२ ॥
हरिः प्रोवाच तं सा तु भवेन्नास्तिकसङ्गतः । नास्तिकग्रन्थरुच्याऽथ नास्तिकग्रन्थसंश्रुतेः ॥ २३ ॥
कामलोभक्रोधमानाहङ्कारेर्ष्याश्च मत्सरः । हृद्येतेषामेकतमोद्भवेऽपि प्रभवेद्धि सा ॥ २४ ॥
कामाद्यन्यतमे दोषे स्थिते वार्ता हरेर्हृदि । नारदादिसमोक्तापि नायायान्मन्तुमञ्जसा ॥ २५ ॥

रुच्या तत्रोक्तरीत्या स्ववर्त्तनप्रियता पूर्वकं जातया नास्तिकग्रन्थप्रीत्येत्यर्थः । भवेत् । तस्य नास्तिकतोद्भवे इदं हेतुत्रयमस्तीत्यर्थः ॥ २३ ॥ कामेति । हृदि स्वान्ते । कामलोभक्रोधमानाहङ्कारेर्ष्याः । मत्सरश्च । एतेषां मध्ये । एकतमोद्भवे एकस्योदये जाते सत्यपि । सा नास्तिकता । प्रभवेत् उत्पन्ना स्यादेव ॥ २४ ॥ नन्वेवं नास्तिकतोदये भवदुक्तं हेतुत्रयं परमार्थमस्त्वत्रान्यत्पृच्छ्यते कामाद्युक्तदोषान्यतमवतः कृतसत्सङ्गस्य तस्य सदुपदेशेन नश्येन्न वा इति तत्पिपृच्छिषामवगत्य श्रीहरिः स्वयमेवाह । कामेति । हे साधो ! । हृदि । कामाद्यन्यतमे । दोषे । स्थिते सति । नारदादिसमोक्तापि नारदादिसत्पुरुषसमानभगवद्भक्तगदितापि । हरेः । वार्त्ता आत्मन्येकान्ततापादनरूपा हरितत्सन्महिमगोष्ठी । अञ्जसा तत्त्वतः । मन्तुम् । नायायात् । तेन तेषां सा न मन्यते इत्यर्थः । सत्या तेन न मन्यते इति पाठान्तरे तु स्फुट एवार्थः । अतोऽस्य नास्तिकता न नश्येदिति भावः । यद्यसौ स्वकल्याणमिच्छन् सन् सर्वथा स्वनिष्ठान्कामादीन् दोषान् जह्यात्तर्ह्यस्य सद्वार्त्तामाननपूर्वं नास्तिकता नश्येत्ततः कल्याणं भवेदिति ज्ञेयम् ॥ २५ ॥

हरे इदं शोभनमुक्तं प्रश्नप्रकरणादन्यदपि पृच्छ्यते कश्चित्पूर्वजन्मोपार्जितसुकृतोऽपि केनचिद्दुष्कर्मबलेन नास्तिककुले उत्पन्नो भवेत्तस्य तथाविधानां सङ्गेऽपि पूर्वसुकृतेन आस्तिकधर्मरुचिः स्यात् स किं कुर्वन् दृढास्तिकमतिर्भवेदित्येवंभूतामपि तत्पिपृच्छिषामालक्ष्य पुनः श्रीहरिः स्वयमेवाह द्वाभ्याम् । य इति । इह लोके । यस्तु पुरुषः । आस्तिकान् भगवत्तद्भक्तप्रभृतिसत्यता प्रतिपादकान् । श्रीमद्भागवतमुख्यान् । ग्रन्थान् । शृणुयात् । कृष्णभक्तानां साक्षाच्छ्रीकृष्णोपासकानामेव । सङ्गमं च । कुर्यात् ॥२६॥ य इति । यः पुरुषश्च । कृष्णं साक्षाद्भगवन्तमेव । सर्वस्य । कर्त्तारम् । तत्त्वतो यथार्थतः । विद्याज्जानीयात् । अस्य प्रत्यक्षकृष्णस्य । माहात्म्यं च । तत्त्वतः । जानीयात् । स एवंविधः पुरुषः । दृढं यथातथा । आस्तिकधीः स्याद्भवेत् ॥ २७ ॥ धर्मेति । इत्येवंभूताम् । धर्मात्मजस्य श्रीहरेः । सुधायमानाममृतसमानाम् । वाचम् । निशम्य । स मुनिर्मुक्तानन्दः साधुः जहर्ष हृष्टोऽभूत् । सदःस्थिताः सभोपविष्टाः । सर्वे । भक्तजनास्त्यागिगृहिसकलस्वभक्तजना इत्यर्थः । चेतसि । भूरितोषं प्रचुरमानन्दम् । प्रपेदिरे प्रापुः ॥ २८ ॥ स्ववद्भावश्च मर्यादा स्वार्चासु स्वस्य साधुषु । रक्ष्येति प्राह यो दद्यात्स हरिस्तेषु ते च मे ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तक-

यस्तु श्रीमद्भागवतमुख्यान् ग्रन्थानिहास्तिकान् । शृणुयात्कृष्णभक्तानामेव कुर्याच्च सङ्गमम् ॥ २६ ॥ यः कृष्णमेव
कर्त्तारं विद्यात्सर्वस्य तत्त्वतः । माहात्म्यं चास्य जानीयात्स स्यादास्तिकधी र्दृढम् ॥ २७ ॥ धर्मात्मजस्येति
निशम्य वाचं सुधायमानां स मुनिर्जहर्ष । सदःस्थिता भक्तजनाश्च सर्वे प्रपेदिरे चेतसि भूरि तोषम् ॥ २८ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचितेऽष्टषष्टितमस्तरङ्गः ॥ ६८ ॥

शकाब्दे विक्रमार्कस्य रसाश्ववसुभूमिते । चैत्रस्य शुक्लद्वादश्यां वचोऽमृतमिदं हरेः ॥ १ ॥
तत्र दुर्गपुरे दुर्ग उत्तमस्य महीभुजः । स न्यषीदत्पीठवरे प्रत्यग्द्वारगृहाङ्गणे ॥ २ ॥
सिताम्बरं भक्तसङ्घवृतं तं सर्वसन्मतात् । मुक्तानन्दः पुरो नत्वा पप्रच्छ प्राञ्जलिः प्रभुम् ॥ ३ ॥

श्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्सूनुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायामष्टषष्टितमस्तरङ्गः ॥ ६८ ॥

धर्माद्धिंसासमायुक्तादहिंसो धर्म एव तु । एकोनसप्ततितमे श्रेष्ठः श्रेयस्करः स्मृतः ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८७६) चैत्रस्य मधुमासस्य । शुक्लद्वादश्यां शुक्लपक्षीयद्वादशीतिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमस्योत्तमनाम्नः । महीभुजो नृपतेः । दुर्गे । प्रत्यग्द्वारगृहाङ्गणे श्रीवासुदेवनारायणमन्दिरनिकटवर्त्तिनः पश्चिमाभिमुखद्वारवतो नृपभवनस्याङ्गणोपलक्षितवितर्द्दिकायामित्यर्थः । पीठवरे सोपस्करे मञ्चासनोत्तमे । स श्रीहरिः । न्यषीदत् । स्वावासात्सपार्षदः प्रागागतोऽपि तत्क्षणे श्रीवासुदेवसान्ध्यनीराजनोचितवाद्यध्वनिमाश्रुत्य तत्र गत्वा तन्नीराजनकालोचितं विधाय भूयस्तत्रागत्योपविवेशेत्यर्थः ॥ २ ॥ सितेति । सिताम्बरं स्वाङ्गपरिधृतधर्मकालोचितसकलश्वेतवसनम् । भक्तसङ्घवृतं नानादेशागतैस्त्यागिगृहिस्वभक्तजनवृन्दैः सभायां परिवेष्टितम् ।

प्रभुं प्रश्नप्रतिवचनसमर्थम् । तं श्रीहरिम् । मुक्तानन्दो मुनिः । प्राञ्जलिः कृताञ्जलिः सन् । पुरो नत्वा प्रथमं नमस्कृत्य । सर्वसन्मतात्सर्वेषां साधूनां मतमालम्ब्य । पप्रच्छ श्रीहरिमनुयुयोज ॥ ३ ॥ शास्त्रेष्विति । हे हरे ! । शास्त्रेषु वेदादिषु सद्ग्रन्थेषु । हिंसासहितः । यथा 'पशुमालभेत' । 'या वेदविहिता हिंसा न सा हिंसे'-त्यादिवाक्यैर्हिंसायुक्ततयोदित इत्यर्थः । तथा । अहिंसो हिंसावर्जितः । 'न हिंस्यात्सर्वाभूतानि' । 'अहिंसैव परो धर्म'इत्यादिवचनैर्हिंसारहितत्वेनोक्त इत्यर्थः । इती-त्थम् । द्विविधो द्विप्रकारः । शिष्टैः प्रमाणवचनैर्महाजनैः । प्रमाणितः प्रमाणवचनैः प्रतिपादितः सन् । दृश्यते उभयथापि शास्त्रेषु वीक्ष्यते इत्यर्थः । श्रूयतेऽपि च सत्पुरुषमुखादाकर्ण्यते चापीत्यर्थः ॥ ४ ॥ क इति । तत्र तयोर्द्विविधधर्मयोर्मध्ये । को धर्मः । श्रेयान् त्वत्प्रियत्वेनातिश्रेष्ठः । भवति । इत्यमुना प्रकारेण । पृष्टो मुक्तानन्दमुनिनानुयुक्तः । प्रभुः श्रीहरिः । अब्रवीत् । हे मुने ! । अहिंसः प्राणीमात्रहिंसावर्जितः । धर्मः । परमो मत्प्रियत्वेन सर्वोत्तमत्वादतिश्रेष्ठः । भवति । इति हेतोः । स हि अहिंसधर्म एव । श्रेयस्करः परमनिःश्रेयससम्पादकः । अस्ति । तथा चोक्तं महाभारते । 'अहिंसा सर्वभूतेभ्यो धर्मेभ्यो ज्यायसी मते'ति । 'न भूतानाम-हिंसाया ज्यायान् धर्मोऽस्ति कश्चने'ति च ॥ ५ ॥ नन्वेवमहिंसाधर्म एव सर्वधर्मपरश्चेच्छास्त्रे केवलं तमेवानुक्त्वा निकृष्टो हिंसायुक्तधर्मोऽपि कथमुक्त इति चेत्स त्वधि-

शास्त्रेषु द्विविधो धर्मो दृश्यते श्रूयतेऽपि च । हिंसायुक्तस्तथाऽहिंस इति शिष्टैः प्रमाणितः ॥ ४ ॥
कस्तत्र भवति श्रेयानिति पृष्टोऽब्रवीत्प्रभुः । अहिंसः परमो धर्म इति श्रेयस्करः स हि ॥ ५ ॥
अधिकार्यनुसारेण देशकालौ विचिन्त्य च । धर्मो द्वेधा निगदितस्तत्रापि बलवान् परः ॥ ६ ॥
मांसप्रियाणां क्षत्राणां हिंसा प्राप्तास्ति रागतः । तत्सङ्कोचाय निगमे यज्ञ एवोदिताऽस्ति सा ॥ ७ ॥
रजस्तमःस्वभावस्य त्रिवर्गनिरतस्य च । क्षत्रियस्यैवाधिकारो हिंस्रयज्ञेऽस्ति वैदिके ॥ ८ ॥

कारिपरत्वेनोक्त इत्याह पञ्चभिः । अधिकारीति । देशकालौ हिमालयनिकटवासित्व दशद्वादशवर्षपर्यन्तानावृष्टित्वरूपौ धान्यादिसम्पन्नगुर्जरादिदेशवासित्व सुवृष्टिमत्त्वरूपौ च देशसमयौ । विचिंत्य । तथात्वे यथाजननिर्वाहः स्यात्तथाविचार्येत्यर्थः । अधिकार्यनुसारेण राजसतामससात्त्विकान् अधिकारिणोऽनुसृत्येत्यर्थः । धर्मः । द्वेधा हिंस्राहिंस्रभेदेन द्विविधः । निगदितः शास्त्रेषु मुनिभिः कथितः । तत्रापि उभयविधधर्मयोर्मध्येऽपि । परोऽहिंस्रधर्मः । बलवान् श्रेष्ठोऽस्ति ॥ ६ ॥ मांसेति । मांसप्रियाणां स्वभावत एव राजसतामसतया पश्वादिमांसाशनप्रीतिमताम् । क्षत्राणां क्षत्रियाणाम् । हिंसा । रागतोऽनुरक्त्या । प्राप्ता नित्यं सङ्गता अस्ति । तत्सङ्कोचाय स्वभावतोऽत्यन्तप्रसृतायास्तस्या अधिकार्युक्तिपूर्वं सङ्कोचं कर्तुमित्यर्थः । निगमे वेदे । सा हिंसा । यज्ञे एव । उदिता । अस्ति । राजसतामसानां क्षत्रियाणां यदि हिंसायां रागः स्यात्तर्हि यज्ञं सम्पाद्य तैः सा तत्रैव विधेयेति सङ्कोचाय कथितास्तीत्यर्थः । तदुक्तं श्रीभागवते । 'लोके व्यवायामिप मद्यसेवा'इति । 'तीर्थेषु प्रतिदृष्टेषु'इत्यादिना ॥ ७ ॥ रज इति । रजस्तमःस्वभावस्य राजसतामसप्रकृतेः । त्रिवर्गनिरतस्य धर्मार्थकाममात्रसम्पादनप्रसक्तस्य च । क्षत्रियस्यैव । वैदिके वेदविहिते । हिंस्रयज्ञे । अधिकारः । अस्ति ॥ ८ ॥

क्षत्रस्येति । सत्त्ववृत्तेः सात्त्विकप्रकृतेः । मुमुक्षोश्चरमपुरुषार्थनिरतस्य । सदयस्य हिंसावीभत्सोस्तद्दर्शनमात्रेऽपि शिरः कम्पयतो दयापूर्णान्तरस्य । क्षत्रियस्य तु । तत्र वैदिकेऽपि हिंस्रयज्ञे । अधिकारः । नास्त्येव । किन्तु । अहिंसमखे वेदोदिते हिंसावर्जिते यज्ञे । सोऽधिकारः । अस्त्येव ॥ ९ ॥ सात्त्विकानामिति । सात्त्विकानां सत्त्वप्रकृतीनाम् । मुमुक्षूणां संसृतिबन्धादात्मानं मोक्तुमिच्छूनाम् । सर्वेषां जनानाम् । तथैव । ब्राह्मणानां च वैराजमुखोत्पन्नानामग्रजन्मनां तु । विशेषतोऽधिकत्वेन । अहिंसः सर्वथा हिंसावर्जितः । धर्मः । सदा सर्वकालम् । उदितो मुनिभिः कथितः ॥ १० ॥ अत्र सदाचारं प्रमाणयति द्वाभ्याम् । राजेति । पुरा पूर्वम् । वसुर्वसुसंज्ञः । राजा नृपतिः । क्षत्रियोऽपि क्षत्रजातिः सन्नपि । अहिंसनं प्राणिहिंसावर्जितम् । यज्ञं मखानित्यर्थः । एकवचनं जात्यभिप्रायम् । आचचार । ततस्तथाविधयज्ञाचरणप्रीतविष्णुकृपाप्राप्तः नभश्चरतया हेतुनेत्यर्थः । उपरिचर इति संज्ञया । ख्यातः सर्वजगत्प्रसिद्धः बभूव । ह स्फुटमेतत्स्कान्दमात्स्यभारतादिषु ॥ ११ ॥ एवमिति । एवममुना प्रकारेण । सद्धियोऽहिंसतारूपसन्मतयः । श्रेयस्कामा मुमुक्षवः । अन्येऽपि । बहवः । क्षत्रिया अपि । हिंसाविवर्जितान् । मखान् । विदधिरे चक्रुः

क्षत्रस्य सत्त्ववृत्तेस्तु मुमुक्षोः सदयस्य च । तत्राधिकारो नास्त्येव किन्त्वहिंसमखेऽस्ति सः ॥ ९ ॥
सात्त्विकानां तु सर्वेषां मुमुक्षूणां विशेषतः । तथैव ब्राह्मणानां च धर्मोऽहिंसः सदोदितः ॥ १० ॥
राजा वसुः क्षत्रियोऽपि पुरा यज्ञमहिंसनम् । आचचारोपरिचरस्ततः ख्यातो बभूव ह ॥ ११ ॥
एवमन्येऽपि बहवः क्षत्रिया अपि सद्धियः । श्रेयस्कामा विदधिरे मखान् हिंसाविवर्जितान् ॥ १२ ॥
अहिंस एव धर्मोऽतो निःश्रेयसकरो नृणाम् । अन्यस्तु सन्मतो नैव साधुस्तं सर्वथा त्यजेत् ॥ १३ ॥
यत्तु कायेन वाचा वा मनसाऽपि च सर्वथा । परहिंसानाचरणं साधोर्मुख्यो वृषः स हि ॥ १४ ॥
क्रोधाहङ्कारमानाद्या दोषा ये च पुरोदिताः । विवर्ज्यास्तेऽपि यत्नेन स्थैर्यं शान्ततया सता ॥ १५ ॥

॥ १२ ॥ अहिंस इति । अतो हेतोः । अहिंसः । धर्मः । एव । नृणाम् । निःश्रेयसकर आत्यन्तिकमोक्षप्रापकः । सन्मतः प्रमाणवचनैः साधुभिः श्रेष्ठत्वेन मानितः । अस्ति । अन्यः सहिंसधर्मस्तु । सन्मतः । नैवास्ति । साधुस्त्यागी गृही वा सुधर्मनिष्ठः भगवद्भक्तः सत्पुरुषः । तं सहिंसम् । धर्मम् । सर्वथा सर्वप्रकारेण । त्यजेत् ॥ १३ ॥ यदिति । कायेन देहचेष्टया । वाचा वाक्चेष्टयापि । मनसा मनःसङ्कल्पेनापि च । सर्वथा । परहिंसानाचरणं परहननस्याकरणम् । यत् । सः । 'विधेयप्राधान्यात्पुंस्त्वम्' । साधोः । मुख्यः । वृषो धर्मः । अस्ति । हि निश्चितम् ॥ १४ ॥ क्रोधेति । किञ्च । क्रोधाहङ्कारमानप्रभृतयः । ये । दोषा अधर्मसर्गजा अगुणाः । पुराऽस्य तरङ्गस्य पूर्ववर्त्तितरङ्गे । उदिता नास्तिकतोदयहेतुत्वेन कथिताः । सन्ति । ते दोषा अपि । सता भगवदेकान्तिकसाधुना । यत्नेन प्रचुरप्रयासेनापि । विवर्ज्या विशेषतो हेयाः । शान्ततया क्रोधाद्यनाविष्काररूपशान्तप्रकृतितया । स्थैर्यं वृत्यम् ॥ १५ ॥

सहस्रश इति । यद्यपि । स्वस्य । सहस्रशो जनाः । शिष्याः । स्युः । तथापि । ते शिष्याः । स्वसाधुतां क्रोधादित्यागपूर्वशान्ततया वर्त्तनरूपं स्वकीयं साधुभावम् । अहित्वाऽपरिहायैव । धर्मे । स्थाप्याः । अन्यथा क्रोधाद्युदयपूर्वं भर्त्सनताडनादिना । न च धर्मे नैव स्थाप्याः । 'इत्थं विमन्युरनुशिष्यादतज्ज्ञा'निति श्रीभागवतोक्तेः ॥ १६ ॥ इत्थंभूतसाधोर्दुर्लभतामाहार्द्धेन । निःशेषेति । निःशेषदोषरहितः क्रोधादिसकला धर्मान्वयोद्भूतागुणवर्जितः । अत एव शान्तस्वभावः सौम्यप्रकृतिः । हरिपादनिष्ठ एकान्तिकभावेन साक्षाच्छ्रीकृष्णचरणारविन्दाविरतसेवापरायणः । साधुः । इह लोके । दुर्लभो दुष्प्राप एव । अस्ति । इत्येवंभूतम् । अत्युदारं प्रचुरगुणमहत् । हरेः । वचोऽमृतममृतायमानं धर्मात्मजस्य श्रीहरेर्वचनमित्यर्थः । पीत्वा श्रवणपुटाभ्यामापीय । साधुः । स मुक्तानन्दमुनिः । सभ्यपुरुषैः समीपविष्टभगवद्भक्तत्यागिगृहिजनैः सह । तोषं सन्तोषम् । आपत् ॥ १७ ॥ यो हिंसारहितं धर्मं स्वस्यातिप्रियमाह च क्रोधादिहीनदौर्लभ्यं हरिः सोऽस्तु ममान्तरे ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्स्वनुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायामेकोनसप्ततितमस्तरङ्गः ॥ ६९ ॥

सहस्रशो यद्यपि स्युः शिष्याः स्वस्य तथापि ते । स्वसाधुतामहित्वैव धर्मे स्थाप्या न चान्यथा ॥ १६ ॥ निःशेषदोषरहितो हरिपादनिष्ठः शान्तस्वभाव इह दुर्लभ एव साधुः । पीत्वा हरेरिति वचोऽमृतमत्युदारं साधुः स सभ्यपुरुषैः सह तोषमापत् ॥ १७ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते एकोनसप्ततिमस्तरङ्गः ॥ ६९ ॥

शकाब्दे विक्रमार्कस्य रसाश्ववसुभूमिते । पौर्णमास्यां चैत्रशुक्ले वचोऽमृतमिदं हरेः ॥ १ ॥
तत्र दुर्गपुरे दुर्गे उत्तमाख्यस्य वेश्मनः । प्राङ्मुखस्य बहिर्वेद्यां मञ्चाग्र्ये स उपाविशत् ॥ २ ॥
मुनिभिर्नैकदेशीयैर्भक्तसङ्घैः परिश्रितः । सितवासा दक्षकरे वृन्दाकाष्ठस्रजं दधत् ॥ ३ ॥

राज्ञः काकुभयस्याथ जीवाख्यक्षत्रियस्य च । प्रश्नानां सप्ततितमे । विहितान्युत्तराणि तु ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८७६) चैत्रशुक्ले चैत्रमासस्य शुक्लपक्षे । पौर्णमास्यां तिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमाख्यस्य राज्ञः । दुर्गे । प्राङ्मुखस्य पूर्वाभिमुखस्य । वेश्मन उत्तमनृपतिसौधस्य । बहिर्वेद्यां बाह्यायां वितर्द्दौ । मञ्चाग्र्ये तूलिकोत्तरच्छदाद्युपस्करसहितोत्तममञ्चासने । स श्रीहरिः । उपाविशत्स्वावासादागत्योपविवेश ॥ २ ॥ तं विशिनष्टि । मुनिभिरिति । नैकदेशीयैर्नानादेशागतैः । मुनिभिः । साधुभिः । भक्तसङ्घैस्तथाविधैर्गृहिभिः स्वभक्तव्रजैः । परिश्रितः सभायां यथायथोपवेशनपूर्वं संवेष्टितः । सितवासाः स्वाङ्गपरिधृतमृदुसूक्ष्मसकलश्वेतवसनः । दक्षकरे स्वकीयदक्षिणपाणौ । वृन्दाकाष्ठस्रजं तुलसीकाष्ठीयमञ्जुलाक्षमालिकाम् । दधद्भगवन्नामावृत्तिसंख्यावबोधाय धरन् ॥ ३ ॥

भक्तानिति । स श्रीहरिः । भक्तान्समीपविष्टान्सकलस्वभक्तजनान् । ऊचे । हे भक्ताः ! । यदि यर्हि । वो युष्माकम् । कश्चित्संशयः । स्यात् । तर्हि । तं संशयम् । एतान्मत्पुरः समीपविष्टान् । सतो मुक्तानन्दगोपालानन्दनित्यानन्दादिसाधून् । पृच्छत । महान्तः । सन्तः एते साधवः । यदि कश्चिन्नपृच्छेदितिशेषः । परस्परमन्योऽन्यम् । पृच्छन्तु । महान्तः साधवः परस्परं प्रश्नोत्तराणि विदधत इत्यर्थः ॥४॥ तदेति । तदा एवंविधश्रीहरिवाक्यश्रवणकाले । काकुभयः । राजा । रोचकग्रामाधिपः काकुभयाख्यो नृपतिरित्यर्थः । नित्यानन्दमुनिम् । पृच्छति स्म । हे मुने ! । स्वकीये । हृदये मानसे । अन्योन्यविरुद्धे परस्परवचनविरोधोत्पादके । उक्ती भाषणे ययोस्तौ । कौचिदविज्ञातनामगोत्रस्वरूपस्वभावौ । द्वौ । स्तः ॥५॥ तयोरन्योन्यविरुद्धोक्तिकथनपूर्वं तत्स्वरूपनामबुभुत्सार्थमाह । तत्रेति । तत्र तयोर्द्वयोर्मध्ये । एकः । ग्राम्यान्मायिकान् । विषयान् शब्दादीन् । भुञ्जीयानुभवेयम् । इतीत्थम् । वदति । अथ च । द्वितीयः । न च ग्राम्यान्विषयान्नैव भुञ्जीय । इति । ब्रूते । तौ द्वौ । तत्त्वतो यथार्थतः । बुभुत्सामि बोद्धुमिच्छामि ॥ ६ ॥ उवाचेति । तमेवंपृच्छन्तं काकुभयनृपतिम् । नित्यानन्दो मुनिः । उवाच । हे नृपते ! । तत्र त्वदुक्तयोर्द्वयोर्मध्ये । आद्यः

भक्तानूचे स वः कश्चित्संशयो यदि तर्हि तम् । पृच्छतैतान्सतः सन्तो महान्तश्च परस्परम् ॥ ४ ॥
तदा काकुभयो राजा नित्यानन्दं स्म पृच्छति । द्वावन्योन्यविरुद्धोक्ती कौचित्स्तो हृदये निजे ॥ ५ ॥
तत्रैको विषयान् ग्राम्यान् भुञ्जीयेति वदत्यथ । द्वितीयो नेति च ब्रूते तौ बुभुत्सामि तत्त्वतः ॥ ६ ॥
उवाच नित्यानन्दस्तं तत्राद्यस्तु निजं मनः । द्वितीयो जीव इत्युक्ते श्रीस्वामी स्वयमब्रवीत् ॥ ७ ॥
प्रश्नस्यास्योत्तरमहं वच्मि त्वं शृणु भूपते ! । विषयप्रेरिका ज्ञेया लौकिकोक्तिजवासना ॥ ८ ॥
सदुक्तिजा वासना तु वर्त्तते तन्निवर्त्तिका । स्वसुहृद्बोधनादादौ पुमान्बुद्ध्यति लौकिकम् ॥ ९ ॥

प्रथमस्तु । निजं स्वकीयम् । मनः । अस्ति । द्वितीयः । जीवः स्वात्मा । अस्ति । इत्यमुना प्रकारेण उक्ते नित्यानन्दमुनिना कथिते सति । स्वयम् । श्रीस्वामी । अब्रवीत् । जीवस्याविशुद्धकर्तृलोक्तेर्यावज्ज्ञानप्राप्तिमनःसम्बन्धाविरहितत्वान्मनसश्च तत्सम्बन्धव्यतिरेकेणानवस्थानात्त्वक्तण्डुलयोरिव तयोर्नित्यसम्बन्धात् तत्पृथग्भावं स्वीकृत्य मनो विषयान् भुंक्ते इति वक्तुमशास्त्रीयत्वेनायुक्तत्वान्नित्यानन्दमुनिकृतनृपप्रश्नोत्तरमयथार्थमालोच्य तत्प्रश्नोत्तरं स्वयमेव तं जगादेत्यर्थः ॥ ७ ॥ प्रश्नस्येति । हे भूपते ! । अस्य त्वत्कृतस्य । प्रश्नस्य उत्तरम् । अहम् । वच्मि । त्वम् । शृणुत त्वमाकर्णयेत्यर्थः । लौकिकोक्तिजवासना स्वसुहृदादिलोकोक्तलौकिकार्थश्रवणजन्या तद्भावनेत्यर्थः । विषयप्रेरिका अन्तःकरणेन्द्रियप्रेरणापूर्वकं जीवस्य विषयोपभोगाय प्रवृत्तिकारिकेत्यर्थः । ज्ञेया ॥ ८ ॥ सदिति । सदुक्तिजा लौकिकार्थस्य मायिकत्वेन नश्वरत्वात्तन्मिथ्यात्वस्य भगवदाश्रयजन्यसुखस्याविनाशित्वात्तत्सत्यत्वस्य च प्रदर्शनपूर्वं भगवदेकान्तिकसाधूदितवचनश्रवणजन्येत्यर्थः । वासना तु । तन्निवर्त्तिका जीवस्य मायिकविषयोपभोगप्रवृत्तिप्रतिबन्धिका । वर्त्तते । लौकिकोक्तिजवासनाकृतं जीवस्य विषयोपभोगप्रवृत्तिप्रकारं सुविस्तरमाह सार्द्धैश्चतुर्भिः । पुमान् जनः । आदौ बाल्यावस्थायाम् । स्वसुहृद्बोधनात्

स्वकीयमातृपित्रादिसम्बन्धिजनकृतलौकिकार्थावगमनात् । लौकिकं लोकसिद्धमर्थम् । बुध्यति जानाति । 'दिवादेराकृतिगणत्वाद्धौवादिकास्स्वरितेतो बोधतेः श्यन्' ॥ ९ ॥ लौकिकार्थावगमनप्रकारमाह द्वाभ्याम् । अयमिति । अयम् । ते तव । पिता जनकः । इयम् । ते । माता जननी । अयम् । ते । भ्राता सहोदरः । इयम् । ते । स्वसा भगिनी । अयम् । ते । पितृव्यः पितृभ्राता । अयम् । ते । मातुलो मातृभ्राता । इयम् । ते । महिषी सैरिभी । इयम् । ते । गौः धेनुः । वर्त्तते इति प्रत्येकं शेषो बोध्यः ॥ १० ॥ इदमिति । इदम् । तव । गृहं भवनम् । अयम् । तव । अश्वो घोटकः । इदम् । तव । वस्त्रं वसनम् । इदम् । तव । धनं वित्तम् । अस्ति । इत्याद्येतत्प्रभृतिकम् । सुहृद्भिः । अर्भको द्वित्रादिवर्षीयो बालः । बाल्ये बाल्यावस्थायाम् । बहुधा बहुभिः प्रकारैः । बोध्यते ज्ञाप्यते ॥ ११ ॥ लौकिकैरिति । लौकिकैर्ग्राम्यैः । तैः सुहृद्भिः । लौकिकार्थान् ग्राम्यान् पदार्थान् । बोधितो ज्ञापितः । लौकिको ग्राम्यमतिः । पुमान् । तैर्लौकिकैः सुहृद्भिस्तथाविधैरर्थैश्च । सदा सर्वकालम् । व्यवहरन्व्यवहारं कुर्वन्सन् । तद्वासनावासितहृल्लौकिकार्थभावनाभावितान्तःकरणः । जायते ॥ १२ ॥ देह इति । किञ्च । स लौकिकः पुमान् । देहे स्वशरीरे ।

अयं पिता ते मातेयमयं भ्राता स्वसा त्वियम् । पितृव्योऽयं मातुलोऽयमियं ते महिषी च गौः ॥ १० ॥
इदं गृहं तवाश्वोऽयमिदं वस्त्रमिदं धनम् । इत्यादि बहुधा बाल्ये सुहृद्भिर्बोध्यतेऽर्भकः ॥ ११ ॥
लौकिकैस्तैर्लौकिकार्थान्बोधितो लौकिकः पुमान् । तद्वासनावासितहृत्सदा व्यवहरंश्च तैः ॥ १२ ॥
देहेऽहन्तां च ममतां दैहिके विदधच्च सः । अतिक्रामति बाल्याद्या देहावस्थाः क्रमेण वै ॥ १३ ॥
स प्राप्नोति सतां सङ्गं यदा कल्याणकारिणाम् । तदा तु तेषां वाक्यानि सुधीर्धारयते हृदि ॥ १४ ॥
नायं पिता न मातेयं न गृहं न धनं तव । नित्यसिद्धश्च चिद्रूपस्त्वं तु दासोऽसि वै हरेः ॥ १५ ॥

अहन्तामहंभावम् । विदधत्कुर्वन् । दैहिके देहसम्बन्धिनि पित्रादिलौकिकपदार्थे । ममतां च । विदधत्सन् । बाल्याद्याः । देहावस्थाः । क्रमेण । अतिक्रामति । वै ॥ १३ ॥ अथ सदुक्तिजवासनाकृतं जीवस्य विषयोपभोगनिवृत्तिप्रकारमाह चतुर्भिः । स इति । स लौकिकः पुमान् । यदा । कल्याणकारिणां भगवत्स्वरूपज्ञानाद्युपदेशेनात्यन्तिकनिःश्रेयससम्पादकानाम् । सतां साक्षाद्भगवदेकान्तिकसाधूनाम् सङ्गं समागमम् । प्राप्नोति । तदा तु । सुधीस्तत्सङ्गजातसुमतिः सन् । तेषां सताम् । वाक्यानि आत्मपरमात्मज्ञानाद्युपदेशशब्दान् । हृदि स्वमनसि । धारयेत् ॥ १४ ॥ तदुपदेशरूपाणि सद्वाक्यान्याह द्वाभ्याम् । नेति । अयम् । तव । पिता । न । इयम् । तव । माता । न । इदम् । तव । गृहम् । न । इदम् । तव । धनम् । न । त्वं तु । नित्यसिद्धः सनातनः । चिद्रूपो ज्ञानाधाराकृतिः । 'आकारो रूपमाकृति'रिति वैजयन्ती । ज्ञातृस्वरूप इत्यर्थः । मातृपितृप्रभृतीनां देहसम्बन्धित्वाद्देहानामागमापायित्वाद्देहजन्मना न जातः सनातनश्चिद्रूपस्त्वं न मात्राद्यभिमानार्हं इतिभावः । किन्तु । एतादृशस्त्वम् । हरेः । दासः । असि । अतः अहं तु भगवद्दासोऽस्मि न मम देहदैहिकादिकमिति बुध्यस्वेत्यर्थः ॥ १५ ॥

बन्ध इति । विषयासक्त्या विषयोपभोगानुरागेण । बन्धः । स्यात् । विषयवर्जनाद्विषयोपभोगानुरागवर्जनात् । तद्रागवर्जनपूर्वं भगवत्यनुरागविधानादित्यर्थः । मोक्षः । स्यात् । तथा चोक्तं श्रीमद्भागवते । 'चेतः खल्वस्य बन्धाय मुक्तये चात्मनो मतम् । गुणेषु सक्तं बन्धाय रतं वा पुंसि मुक्तये'इति । दुःखरूपे त्रिविधतापादिप्रभूतदुःखाश्रये । अत्रास्मिन् । संसारे । सुखं तु । कृष्णाश्रयात्सुखसिन्धोः सर्वनियन्तुः साक्षाच्छ्रीहरिकृष्णस्य पदाम्भोजाश्रयणादेव । भवेत् ॥ १६ ॥ इतीति । इत्याद्या एवंप्रभृतयः । तेषां सताम् । बहवः । शब्दा उपदेशवाक्यानि । तद्धृदये साधुसङ्कर्त्तुस्तद्वचांसि धारयतः पुरुषस्य मानसे । मुहुर्मुहुर्भूयो भूयः । प्रविशन्ति । अथानन्तरम् । तस्य सद्वार्त्ताविष्टहृदयस्य पुंसः । हृन्मानसम् । तैस्तथाविधैः सच्छब्दैः । वासितं संस्कृतम् । जायते ॥ १७ ॥ एवमिति । एवममुना प्रकारेण । द्विविधाः सुहृदाद्युदिताः लौकिकाः साधूदिता अलौकिकाश्चेत्येवंद्विप्रकाराः । शब्दाः । तद्वक्तारो द्विविधशब्दकथकाः सुहृदः साधवश्च । तद्धृदि द्विविधशब्दश्रोतृपुरुषमानसे । प्रविष्टाः । सन्ति । ते द्विविधशब्दवक्तारः पुरुषाः । अन्योन्यं परस्परम् । विरोधिनः शत्रुभावयुक्ता एव । भवन्ति ॥ १८ ॥ एतदेव

बन्धः स्याद्विषयासक्त्या मोक्षो विषयवर्जनात् । दुःखरूपेऽत्र संसारे सुखं कृष्णाश्रयाद्भवेत् ॥ १६ ॥
इत्याद्या बहवस्तेषां शब्दास्तद्धृदये मुहुः । प्रविशन्त्यथ तैस्तस्य जायते वासितं हि हृत् ॥ १७ ॥
एवं हि द्विविधाः शब्दास्तद्वक्तारश्च तद्धृदि । प्रविष्टाः सन्ति तेऽन्योन्यं भवन्त्येव विरोधिनः ॥ १८ ॥
कुरुपाण्डवसैन्यानि कुरुक्षेत्रे यथा पुरा । युक्तान्यभूवन् वैरीणि तथा तेऽन्योन्यवैरिणः ॥ १९ ॥
सैनिकानां यथा युद्धं तेषां शस्त्रैरभून्महत् । तथा सदसतां शब्दैर्जायतेऽत्र परस्परम् ॥ २० ॥
येषां भवेद्बलोद्रेकः साहाय्यं च महीयसः । आपद्यपि तथा धैर्यं युद्धे तेषां जयो भवेत् ॥ २१ ॥

दृष्टान्तेन द्रढयति द्वाभ्याम् । कुर्विति । यथा । पुरा पूर्वम् । कुरुक्षेत्रे । कुरुपाण्डवसैन्यानि दुर्योधनयुधिष्ठिरसेनाः । युक्तानि परस्परं युद्धाय मिलितानि सन्ति । वैरीणि परस्परवैरयुक्तानि । अभूवन् । तथा । ते सुहृद्रूपाः साधुरूपाश्च द्विविधाः पुरुषाः । हृदि युक्ताः सन्तः । अन्योन्यवैरिणः परस्परविरोधवन्तः । जायन्ते ॥ १९ ॥ सैनिकानामिति । यथा । सैनिकानां कुरुपाण्डवसेनासमवेतानाम् । तेषां भीष्मादीनां धृष्टद्युम्नादीनां च । शस्त्रैर्धनुराद्यनेकायुधैः । परस्परम् । महदतिसंकुलम् । युद्धम् । अभूत् । तथा । सदसतां साधूनां सुहृदाद्यसाधूनां च । शब्दैः शस्त्ररूपैस्तत्तद्वाक्यैः । अत्र कुरुक्षेत्रसदृशे लौकिकपुरुषहृदये । परस्परम् । युद्धम् । जायते ॥ २० ॥ बलिष्ठोभयविधसैनिकदर्शनकम्पमानमनसं भगवन्नत्र के विजयलक्ष्मीमेष्यन्तीति प्रष्टुमिच्छन्तं तमालक्ष्य नृपते ! त्वया न भेतव्यं यतो भगवदाश्रयाणां साधूनामेव विजयो भविष्यतीत्याह चतुर्भिः । येषामिति । हे भूपते ! । येषां पुरुषाणाम् । बलोद्रेकः सामर्थ्याधिक्यम् । भवेत् । महीयसोऽतिबलिष्ठस्यान्यस्य । साहाय्यं पक्षपातश्च । भवेत् । तथा । आपद्यपि महत्यापत्काल आपतिते सत्यपि । धैर्यमक्षोभ्यत्वम् । भवेत् । तेषां पुरुषाणाम् । युद्धे । जयः । भवेत् । प्रभूतज्ञानवैराग्यादिबलोद्रिक्तत्वान्मही-

यसो भगवतः साहाय्यादापत्कालेऽपि धैर्यवत्त्वाच्च साधूनामेव जयो भवितेति भावः ॥ २१ ॥ इममर्थं भगवद्गीतावाक्येन द्रढयति । यत्रेति । यत्र युधिष्ठिरपक्षे । योगेश्वरः सर्वयोगसिद्धिपतिः सर्वज्ञः सर्वेश्वर इत्यर्थः । कृष्णः स्वाश्रितदुःखकर्षणो नारायणः श्रीवासुदेवः । तिष्ठति । यत्र । धनुर्धरो गाण्डीवधन्वा । पार्थो नरऋषिरर्जुनः । तिष्ठति । तत्र युधिष्ठिरपक्षे । श्री राज्यलक्ष्मीः । विजयः शत्रुपराजयनिमित्त उत्कर्षः । भूतिरुत्तरोत्तरं राज्यलक्ष्म्या विवृद्धिः । नीतिर्नयः । ध्रुवाऽवश्यं भाविनी । अस्य सर्वत्रान्वयः । एवंभूता । मम । मतिर्निश्चयोऽस्ति ॥२२॥ एवमिति । एवमित्थंभूतम् । भगवद्गीतावचनम् । वर्त्तते । हि । ततो हेतोः । साधूनामेव । सर्वथा सर्वप्रकारेण । विजयः । भविता भविष्यति । नूनं नात्र कश्चन संशयः ॥ २३ ॥ नन्वस्तु कृष्णसाहाय्येन पाण्डवजयः परन्तु साधूनां तत्साहाय्यं कया रीत्याऽस्तीति चेत्प्रणयरज्जुनिबद्धाङ्घ्रिः सर्वसद्गुणसागरः स तद्धृदये सदाऽऽस्ते इत्याह कृष्ण इति । हे भूपते ! । कृष्णः साक्षाच्छ्रीकृष्णो भगवान् । साधुहृदये । सर्वदा सर्वकालम् । वर्त्तते तदेकान्तिकभक्तिवशतस्तिष्ठति । ततो हेतोः । हृत्स्थाः साधुसमागमकर्तृपुरुषहृदये शब्दद्वाराप्रविष्टाः । ते साधवः । बलिनो विजयहेतूक्तविधत्रिविधगुणबलवन्तः ।

यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः । तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम ॥ २२ ॥
एवं हि भगवद्गीतावचनं वर्त्तते ततः । भविता विजयो नूनं साधूनामेव सर्वथा ॥ २३ ॥
कृष्णो हि साधुहृदये सर्वदा वर्त्तते ततः । हृत्स्थास्ते बलिनः सन्तीत्येवं निश्चिनु भूपते ! ॥ २४ ॥
इत्युक्तः स नृपो भूयस्तं पप्रच्छ जगद्गुरुम् । कथं बलं सतामेव हृत्स्थानां वृद्धिमाप्नुयात् ॥ २५ ॥
असतां लौकिकानां तु ह्रासमीयाच्च तद्वद । इति पृष्टो हरिस्तेन प्रोवाच शृणु मे वचः ॥ २६ ॥
ये त्वन्तःकरणे सन्ति सन्तोऽसन्तश्च देहिनः । बहिश्च ये तेऽप्युभये न भिन्ना एक एव हि ॥ २७ ॥

सन्ति । इत्येवममुना प्रकारेण । निश्चिनु निश्चयं विधत्स्व ॥ २४ ॥ इतीति इत्यमुना प्रकारेण । उक्तः श्रीहरिणा कृतप्रश्नोत्तर इत्यर्थः । स नृपः काकुभयनृपतिः । भूयः पुनरपि । जगद्गुरुं सर्वजनैकहितोपदेष्टारम् । तं श्रीहरिम् । पप्रच्छ । नन्वस्त्वेवं कृष्णाश्रयिसतां बलिष्ठत्वं किन्तु अन्तरवस्थितकृष्णाश्रयिसता पुंसा तावतैव स्थातव्यमथवा पुनस्तत्सद्बलवृद्धिरसद्बलह्रासश्च विधेयौ यद्युच्यते तौ विधेयौ तर्हि कथं तौ विधेयाविति तत्प्रकारजिज्ञासया पुनः पृच्छति स्मेत्यर्थः । हे हरे ! । हृत्स्थानां पुरुषहृदयावस्थितानाम् । सतामेव । बलम् । वृद्धिम् । कथं केन प्रकारेण । आप्नुयात् ॥ २५ ॥ असतामिति । किञ्च । लौकिकानाम् । असतां तस्य हृत्स्थानामसाधूनाम् । बलम् । ह्रासं क्षयम् । कथम् । ईयात्प्राप्नुयात् । तद्वद तदेतन्मत्प्रश्नोत्तरं ब्रूहि । इत्यमुना प्रकारेण । तेन काकुभयनृपतिना । पृष्टः । हरिः । प्रोवाच । हे नृपते ! । मे मम । वचः । शृणु ॥ २६ ॥ य इति । हे भूपते ! । देहिनः सत्समागमकर्त्तुः पुरुषस्य । अन्तःकरणे । ये । सन्तः । येऽसन्तश्च । सन्ति । बहिस्तस्य बाह्यप्रदेशे च । ये सन्तोऽसन्तश्च सन्ति । उभये द्विविधा अपि । ते सन्तोऽसन्तश्च । भिन्नाः पृथग्भूताः । न सन्ति । किन्तु । एकेऽपृथग्भूता एव । सन्ति । हि ॥ २७ ॥

बाह्यानामिति । बाह्यानां पुरुषस्य बाह्यप्रदेशवर्त्तमानानां सतां च । पोषणात्प्रचुरसङ्गेन पोषणविधानादेव । आन्तरपोषणं तदन्तःप्रदेशवर्त्तमानानां सतां च पुष्टिः । भवेत् । अत्र दृष्टान्तः । यथा । विम्बार्चनेन प्रतिविम्बिपूजयैव । प्रतिविम्बार्चनं प्रतिविम्बपूजा । भवेत् । तथा । बाह्यानां तेषां पोषणेनान्तराणां तेषां पुष्टिः स्यादिति सम्बन्धः ॥२८॥ पुष्टानामिति । पुष्टानां बाह्यसदतिप्रसङ्गेन पुष्टिं प्राप्तानामान्तरसताम् । बलवृद्धिः । स्यात् । अपुष्टानां बाह्यासदतिप्रसङ्गानाचरणेन पुष्टिमप्राप्तानामान्तराणामसाधूनाम् । बलक्षयो बलह्रासः । स्यात् । अतो हेतोः । सन्तोऽन्तःस्थिता साधवः । पोषणीया बाह्यसाध्वतिप्रसङ्गाचरणेन बलवृद्ध्यर्थं पुष्टिं नेतव्या । असाधवोऽन्तःस्थिता असन्तः । न पोष्टव्याः बाह्यासाधुप्रसङ्गस्य सर्वथानाचरणेन बलक्षयार्थं ह्रासं नेयाः । बाह्यसदतिप्रसङ्गेनान्तरवस्थितसाधूनां बलवृद्धिः स्यात् । बाह्यासाधुप्रसङ्गानाचरणेनान्तरासाधुबलह्रासश्च स्यादिति तत्तद्बलवृद्धिह्रासप्रकारप्रश्नोत्तरं बोध्यम् ॥ २९ ॥ नन्वस्यान्तःसाधवः पुष्टिं प्राप्ता इति केन लक्षणेन ज्ञेयमिति चेद्बाह्यसाधूनामनुवृत्तिपूर्वं सेवया वचनानुसारेण वर्त्तनेन च यदा पुमान्वर्त्तते तदा तेऽतिप्रसन्नाः स्युरेवं तत्प्रसन्नत्वमेवान्तरसाधुपुष्टिलक्षणमित्याह । यथेति । भो भूपते ! । सन्तो बाह्याः साधवः । यथा यथा येन येन प्रकारेण । प्रसन्ना अनुवृत्तिपूर्वं सेवया तद्वचनानुसारेण वर्त्तनेन च प्रीताः । स्युः ।

बाह्यानां पोषणादेव भवेदान्तरपोषणम् । यथा विम्बार्चनेनैव प्रतिविम्बार्चनं तथा ॥ २८ ॥ पुष्टानां बलवृद्धिः स्याद-पुष्टानां बलक्षयः । अतः सन्तः पोषणीया न पोष्टव्या ह्यसाधवः ॥ २९ ॥ यथा यथा प्रसन्नाः स्युः सन्तः कार्यं तथा तथा । पोषणं ह्येतदेवोक्तं तेषामित्यवगच्छ भोः ॥ ३० ॥ इत्युक्तो हरिणा भूपः स भूयस्तं स्म पृच्छति । बलवृद्धिः सतामेव जाता यस्य भवेद्धृदि ॥३१॥ पराजयोऽसतां च स्यात्तस्य पुंसो वपुःक्षये । सम्प्राप्तिर्भवतो धाम्नो विद्यते नात्र संशयः ॥ ३२ ॥ युद्ध एवोभयेषां तु वर्त्तमाने पतेद्वपुः । यस्य तस्य भवेत्पुंसो गतिः का वेति मे वद ॥ ३३ ॥ तमुवाच हरिर्योऽत्र योद्धाऽतिबलिभिर्नृभिः । तीक्ष्णशस्त्रैश्च युद्ध्येत जयः स्यात्तस्य वाऽजयः ॥ ३४ ॥

तथा तथा । कार्यं साधुप्रसङ्गमाचरता पुसा विधेयम् । एतदेव बाह्यसाधूनामुक्तरीत्या प्रसन्नत्वमेव । तेषामान्तरसाधूनाम् । पोषणम् । उक्तम् । इत्येवम् । अवगच्छ विद्धि ॥ ३० ॥ इतीति । इत्यमुना प्रकारेण । हरिणा श्रीस्वामिना । उक्तः कृतप्रश्नोत्तरः । स भूपः काकुभयनृपतिः । भूयः पुनरपि । तं श्रीहरिम् । पृच्छतिस्म । हे हरे ! । यस्योक्तप्रकारेण सत्प्रसङ्गकर्त्तुः पुंसः । हृदि । सतामेव । बलवृद्धिः । जाता । भवेत् ॥ ३१ ॥ पराजय इति । किञ्च । यस्य । हृदि । असताम् । पराजयो बलह्रासः । जातः । स्यात् । तस्य तथाविधस्य । पुंस स्तवभक्तस्य । वपुःक्षये देहपाते सति । भवतः सर्वकारणकारणस्य पुरुषोत्तमस्य तव । धाम्नोऽक्षरपदस्य । सम्प्राप्तिः । विद्यते । अत्रार्थे । संशयः सन्देहः । नास्ति ॥३२॥ युद्ध इति । यस्य । पुंसस्त्वद्भक्तस्य तु । उभयेषां हृदिस्थितानां सदसताम् । युद्धे परस्पर सङ्ग्रामे । वर्त्तमाने सत्येव । वपुः । पतेत् । तस्य । पुंसः । का वा किंविधा नु । गतिः । भवेत् । स कं लोकं यास्यतीत्यर्थः । इत्येतत् । मे मह्यम् । वद ॥ ३३ ॥ तमिति । तमेवंपृच्छन्तं काकुभयनृपतिम् । हरिः । उवाच । हे राजन् ! । अत्र प्रकरणे । यः पुरुषः । अतिबलिभिर्बहुबलवद्भिः । तीक्ष्णशस्त्रैस्तीव्रायुधैः

नृभिः स्वशत्रुभिः सह । युध्येत । सः । योद्धा । ज्ञेयः । तस्य तादृशस्य योद्धुः । जयः । स्यात् । अथवा । अजयः । स्यात् । अतस्तेन तयोरनुसन्धानं विहाय केवलं योद्धव्यमेवेत्यर्थः ॥ ३४ ॥ असन्त इति । अस्य सत्समागमं कुर्वतो योद्धुर्जनस्य । हृत्स्थाः । ये । असन्तः शत्रुरूपा असाधवः । सन्ति । तेऽसन्तः । अशस्त्र-वणिजां समाः । न सन्ति । शस्त्रवर्जितजनैरबलैर्वणिग्जनैश्च समाना न भवन्तीत्यर्थः । किन्तु । धानुष्कैस्तीव्रधनुराद्यायुधधारिभिः । आर्बुदैः । कोलिकैर्वा निषादैश्च । सन्निभाः सदृशाः । सन्ति । अत्र धानुष्कैरिति विशेषणेनैषामतिबलिष्ठत्वमपि बोध्यम् ॥ ३५ ॥ तैरिति । तैस्तादृशैर्हृत्स्थासद्भिः सह । युद्धात् । यो योद्धा । अनिवृत्तोऽपरावृत्तः । यावत्तज्जयं परावृत्तिमनाचरन् । युध्यते एवेत्यर्थः । अथवा । युद्धमानस्तैर्युद्धं कुर्वन्सन्नेव । मृतोऽपि स्वदेहावसानमपि प्रारब्धसमाप्तिजातायुःक्षयतयाधिगच्छतीत्यर्थः । तथापि । तस्य योद्धुर्भक्तस्य । स्वामी उपासनीयः साक्षाच्छ्रीकृष्णो भगवान् । तं तथा योद्धारं स्वभक्तम् । जितमेवायं जयं प्राप्त इत्येव । स्वहृदि स्वकीये मानसे मन्यते जानाति । एवं दारुणान्तःस्थासाधुभिः सहापराङ्मुखतया युध्यमानस्य प्रारब्धावसानप्राप्तमरणे सत्यपि तत्पतिना जयस्वीकारात्स्वपतिधामप्राप्तिर्जायते इति भावः ॥ ३६॥ यस्तु स्ववैर्यभिमुखं यथातथा तैर्युध्यमानः सन्नपि प्रारब्धावसानजन्यमरणं न प्राप्नोति तमपि दारुणैरयं युध्यतेऽतो धन्य इति तत्पतिर्मन्यते इत्याह । धन्य इति ।

असन्तो येऽस्य हृत्स्थास्ते नाशस्त्रवणिजां समाः । किन्त्वार्बुदैः कोलिकैर्वा धानुष्कैः सन्ति सन्निभाः ॥३५॥ तैर्युद्धादनिवृत्तो यो युध्यमानो मृतोऽपि वा । जितमेव हि तं तस्य स्वामी स्वहृदि मन्यते ॥ ३६ ॥ धन्योऽयं बलिभिः साकं युद्ध्यते मत्प्रियेहया । पराङ्मुखो न भवतीत्येवं वेत्ति हि तत्पतिः ॥३७॥ असद्भिर्युध्यमानेन चिन्ता कार्या न वै ततः । जितमेवेति मन्तव्यं योद्धव्यं तैश्च सर्वदा ॥ ३८ ॥ इति प्रश्नोत्तरं श्रुत्वा हृष्टोऽभूत्स नराधिपः । जीवाख्यो भूमिपोऽथैतन्नित्यानन्दं स पृच्छति ॥ ३९ ॥ नराकृतेर्हरेरस्य कथं स्यान्निश्चयो दृढः । इति पृष्टः स साधुस्तं प्रोवाच शृणु सन्मते ! ॥ ४० ॥

अयं मद्भक्तः । मत्प्रियेहया मम प्रसन्नतायाः प्राप्तीच्छया । बलिभिर्बलिष्ठैस्तैः स्वान्तःस्थासाधुशत्रुभिः । साकम् । युध्यते । पराङ्मुखः स्ववैरीक्षितपृष्ठभागः । न भवति । स्वशत्रुभ्यः स्वपृष्ठभागं न दर्शयतीत्यर्थः । इति हेतोः । धन्योऽयं कृतकृत्यः । एवममुना प्रकारेण । तत्पतिः । वेत्ति कृतज्ञत्वाज्जानाति ॥ ३७ ॥ असद्भिरिति । ततो हेतोः । असद्भिः । युध्यमानेन भक्तेन । चिन्ता मम का गतिर्भविष्यतीति खेदः । नवै नैव । कार्या । जितमेव जीवता मृतेनापि वा सता मया जयः प्राप्त एव । इतीत्थमेव । मन्तव्यम् । तैरन्तःस्थबल्यसाधुशत्रुभिः । सर्वदा । योद्धव्यम् ॥ ३८ ॥ इत्येवंविधम् । प्रश्नोत्तरम् । श्रुत्वा । नराधिपः । स काकुभयः । हृष्टः । अभूत् । अथानन्तरम् । जीवाख्यः । भूमिपो जासकग्रामाधिपतिर्जीववर्मनृपतिः । नित्यानन्दमुनिम् । एतद्वक्ष्यमाणम् । पृच्छति स्म ॥३९॥ नरेति । हे मुने ! । नराकृतेः । हरेर्हरिसंज्ञस्य । अस्य पुरो वर्त्तिनो भगवतः । निश्चयः स्वहृदि वर्त्तमानोऽयमेव परमेश्वर इति निर्णयः । दृढः सुस्थिरः विघ्नसहस्रैरप्यनिवार्य इत्यर्थः । कथम् । स्यात् । कं हेतुमुद्दिश्य कृतः सन्स सुस्थिरः स्यादित्यर्थः । इत्यमुना प्रकारेण । पृष्टः । स साधुर्नित्यानन्दमुनिः । तं जीववर्मनृपम् । प्रोवाच । हे सन्मते ! । शृणु ॥ ४० ॥

कुसङ्गादिति । हे नृपते ! । कुसङ्गाच्चतुर्विधकुसङ्गिजनप्रसङ्गात् । परावृत्त्या तैः सह प्रसङ्गानाचरणेनेत्यर्थः । सतां चतुर्विधसत्सङ्गिसंज्ञकसाक्षाद्भगवदेकान्तिकसाधूनामेव । प्रसङ्गतः । सद्वाक्यावधृतेः उक्तविधसतां वचनानां स्वस्वान्ते सुस्थिरीकरणेन चेत्यर्थः । कृष्णस्य । अस्य साक्षाच्छ्रीहरेः । दृढनिश्चयः स्यात् । चतुर्विधसत्सङ्गिकुसङ्गिलक्षणानि सत्सङ्गिजीवनग्रन्थस्थ सत्सङ्गदीपाख्याध्यायाज्ज्ञेयानि ॥४१॥ एवमिति । एवममुना प्रकारेण । साधौ नित्यानन्दमुनौ । वदति तत्प्रश्नोत्तरं निगदति सति । तं जीववर्म-नृपतिं प्रति । स्वयम् । हरिः । उवाच । कुसङ्गात्परावृत्तौ सत्प्रसङ्गे तद्वचनावधृत्यां च सत्यामपि कयाचित्कामनया कृतस्य भगवन्निश्चयस्य तदसिद्धावामूलतो लयदर्शनात्त-त्प्रश्नोत्तरं हेत्वनुक्त्या यथार्थं न जातं बुध्वा श्रीहरिः स्वयमेव तत्प्रश्नोत्तरमाहेत्यर्थः । हे नृपते ! । कृष्णस्य साक्षाद्भगवतः । निश्चयो निश्चयपूर्वक आश्रयः । स्वस्य । निःश्रेयसायात्यन्तिककल्याणायैव । कार्यः । स्वनिःश्रेयसार्थं कृत एव भगवन्निश्चयो नित्यानन्दमुन्युक्तसाधनैः सुस्थिरः स्यात्काश्चित्कामनामुद्दिश्य कृतः स तु तथा न स्यादिति तत्प्रश्नोत्तराशयो ज्ञेयः ॥ ४२ ॥ इममेवार्थं विस्तरेणाहाष्टादशभिः । नेति । मनीषिणा स्वनिःश्रेयससम्पादकमतिमता जनेन । स भगवन्निश्चयः । दैहिकाय । सौख्याय । स्वशरीरस्थमहारोगनिवृत्त्यादिस्वकीयदेहसुखप्राप्तये । न कर्त्तव्यः । पुत्रवित्ताप्तये पुत्रप्राप्त्यर्थं धनप्राप्त्यर्थं च । न कर्त्तव्यः । अथवा । राज्यादिहेतोः स्ववैरीहृत-

कुसङ्गात्स्यात् परावृत्त्या सतामेव प्रसङ्गतः । सद्वाक्यावधृतेश्चास्य कृष्णस्य दृढनिश्चयः ॥ ४१ ॥
एवं वदति साधौ तं प्रत्युवाच हरिः स्वयम् । स्वस्य निःश्रेयसायैव कार्यः कृष्णस्य निश्चयः ॥ ४२ ॥
न दैहिकाय सौख्याय पुत्रवित्ताप्तये न च । न च राज्यादिहेतोर्वा कर्त्तव्यः स मनीषिणा ॥ ४३ ॥
काम्यो हि कृष्णसम्बन्धः संसिद्धौ कामितस्य तु । असिद्धौ वापि लीयते न त्वसौ मुक्तिसाधनम् ॥ ४४ ॥
केचित्तु सुधियः स्वस्य कामसिद्धौ स्वनिश्चयम् । हर्षेण सुदृढीकृत्य भजन्ते हरिमञ्जसा ॥ ४५ ॥

राज्यादिप्राप्त्यर्थं चापि । न कर्त्तव्यः । आदिशब्देन स्त्रीप्राप्त्यायुर्विवृध्याादिग्रहणम् ॥ ४३ ॥ विपक्षे दोषमाह । काम्य इति । काम्यो रोगमुक्त्यादिकामनया कृतः । कृष्णसम्बन्धो निश्चयपूर्वकः श्रीकृष्णाश्रयः । कामितस्य रोगमुक्त्यादिवाञ्छितार्थस्य । संसिद्धौ सम्प्राप्तौ सत्याम् । अथवा । असिद्धौ कामितार्थाप्राप्तौ सत्याम् । लीयते विनश्यति । कामितार्थसिद्धौ तदतिसुखभोगासक्त्या निवर्त्तते तदसिद्धौ च किमेतदाश्रयेण वांच्छितार्थसिद्धिस्त्वेतावत्कालं न जातेति विपरीतविचारेणेत्येवमुभयथापि कामनाकृतः कृष्णनिश्चयो निवर्त्तते इत्यर्थः । अतः । असौ काम्यः कृष्णसम्बन्धः । मुक्तिसाधनं निःश्रेयसप्राप्तिहेतुः । न तु नैव जायते । निःश्रेयसोदयस्य कृष्णनिश्चयमूलत्वात्तस्य च विनिश्चत्वान्निवृत्तः स तद्धितंकरो नैव जायते इत्यर्थः ॥ ४४ ॥ एवं सामान्यतः कामितसिध्यसिद्धिमतां निश्चयनिवृत्तिमुक्त्वा पुनः केषुचित्कामितसिद्धिमत्सु प्रायशस्तं दृष्ट्वा पक्षान्तरेण कामनाकृतनिश्चयस्यापि मुक्तिसाधनत्वमाह । केचिदिति । हे नृपते ! । सुधियो विवेकित्वाद्गुणग्रहणमतयः । केचित्पुरुषाः । स्वस्य । कामसिद्धौ कामितार्थसंसिद्धौ जातायां सत्याम् । स्वनिश्चयम् । हर्षेण । सुदृढीकृत्य । हरिम् । अञ्जसा तत्त्वतः । भजन्ते । श्रीहरिकृष्णभजनेन स्वनिःश्रेयसं सम्पादयन्ते इत्यर्थः ॥ ४५ ॥

कामेति । कामासिद्धौ कामितार्थस्य सिद्धौ न जातायां सत्यां तु । सतो भगवदेकान्तिकसाधोः । वचनाच्चैश्वर्यप्रदर्शनवचनामाश्रुत्येत्यर्थः । जातापि । ईशमतिरयं साक्षात्परमेश्वर इति । बुद्धिः नश्येदेव । ततो हेतोः । धीमान्स्वकल्याणनिष्ठमतिमान्पुमान् । हरिम् । निर्निमित्तं रोगादिनिवृत्तिहेतुमननुसन्धायेत्यर्थः । श्रयेत् आश्रयेत् ॥ ४६ ॥ यदुक्तमसिद्धौ वापि लीयेतेत्यत्र स्वयमेवाशंक्य परिहरति चतुर्भिः । नन्विति । नन्वित्याशंकायाम् । भो हरे ! । कृष्णः । भगवान् सकलैश्वर्याधिपतित्वादतिसमर्थः । अस्ति । अतः । यो नरः । तमेवंविधंकृष्णम् । कामेन कामितप्राप्तिहेतुना । भजेत् । तस्य । नरस्य । कामः कामितम् । संसिद्धिम् । कथं केन हेतुना । न यायान्न प्राप्नुयात् । अपि तु यायादेवेत्यर्थः । इतीत्युत्तरेणान्वयः ॥ ४७ ॥ इतीति । इति यद्येवंब्रूयाश्चेत् । तर्हि । शृणु मया कृतमेवंविधशङ्कोत्तरमाकर्णय । हे नृपते ! । कृष्णः । सर्वाकर्त्ताऽनेककोटिब्रह्माण्डसृष्ट्यादिविधाता । अधीश्वरः कालमायापुरुषादीश्वरेश्वरनियन्ता च । अस्ति । हि । तेनैवं विधानिवार्यसामर्थ्येन । कृष्णेनैव । शरीरिणां जीवानाम् । कर्ममर्यादा यैर्जीवैर्यथाविधानि कर्माणि कृतानि स्युस्ते तथाविधतत्फलानि तत्तद्भोगावसरसमयेऽनुभवन्त्वेवंविधाः स्थितयः । बद्धाः स्थापिताः । सन्ति ॥ ४८ ॥ ननु सन्त्वेवं कृष्णकृता मर्यादाः परन्तु जीवाः स्वपूर्वजन्मकृतकर्माण्यन्यजन्मनि न विदन्ति ते तत्फलानि

कामासिद्धौ त्वीशमतिर्जाताऽपि वचनात्सतः । नश्येदेव ततो धीमान् निर्निमित्तं श्रयेद्धरिम् ॥ ४६ ॥ ननु कृष्णोऽस्ति भगवांस्तं कामेन भजेत्तु यः । कथं न तस्य संसिद्धिं कामो यायान्नरस्य भोः ॥ ४७ ॥ इति चेच्छृणु कृष्णो हि सर्वकर्त्ताऽस्त्यधीश्वरः । तेनैव कर्ममर्यादा बद्धाः सन्ति शरीरिणाम् ॥ ४८ ॥ प्रारब्धकर्मानुसृतं फलं स ह्यन्तरे स्थितः । ददाति सर्वजीवेभ्यः समवृत्तिरधीश्वरः ॥ ४९ ॥ ईश्वरत्वादतिक्रामेत्स ता यदि तदा त्विदम् । जगत्सर्वममर्यादं नश्येन्नाक्रामतीति ताः ॥ ५० ॥ ननु तर्हि हरिं साक्षादीश्वरं भजतोऽत्र नुः । अनीश्वरं च भजतः को विशेषो नृपादिकम् ॥ ५१ ॥

कथमनुभवन्तीति चेत्तदन्तःस्थो विषमभाववर्जितः कृष्णस्तत्तत्फलोभोगसमये तत्तत्कृतकर्मफलान्यनुभावयतीत्याह । प्रारब्धेति । अधीश्वरः । अन्तरे । स्थितः सकलजीवेष्वन्तर्यामीशक्त्यावस्थितः । स कृष्णः । समवृत्तिर्वैषम्यवर्जितः सन् । सर्वजीवेभ्यः । प्रारब्धकर्मानुसृतं यस्य कर्मणः फलोपभोगकालः सम्प्राप्तस्तथाविधकर्मानुगुणम् । फलम् । ददाति । हि ॥ ४९ ॥ ननु स कर्तुमकर्तुमन्यथाकर्तुं समर्थ ईश्वरेश्वरत्वात्स्वकृतमर्यादा अप्यतिक्राम्येत् कस्तर्हि तन्निवारयितेति चेज्जगत्स्थितिभङ्गभयान्महद्भ्यो महान्सत्यप्रतिज्ञः स तथानाचरेदेवेत्याह । ईश्वरत्वादिति । यदि यर्हि । स श्रीकृष्णः । ईश्वरत्वात्समर्थत्वात् । ताः स्वकृतकर्ममर्यादाः । अतिक्रामेदन्यथा कुर्यात् । तदा तर्हि तु । इदम् । सर्वम् । जगत् । अमर्यादं कर्मजातराजवाहकत्वादिस्थितवर्जितं सत् । नश्येत् । अकृताभ्यागमकृतविप्रणाशद्वाराविनष्टस्थितिः स्यादित्यर्थः । इति हेतोः । ताः स्वकृतकर्ममर्यादाः । नाक्रामति नोल्लङ्घते । अतो भगवान्स्वभजनकर्तॄनपि जनांस्तत्प्रारब्धकर्मानुसारेणैव वर्त्तयति न सद्योऽन्यथा करोतीति भावः ॥ ५० ॥ नन्विति । नन्वित्याशङ्कायाम् । हे हरे ! । तर्हि यद्येवंचेत्तदा । अत्र लोके साक्षात्प्रत्यक्षतयावस्थितम् । ईश्वरमतिसमर्थम् । हरिम् । भजतः । नुर्जनस्य । अनीश्वरमैश्वर्यविहीनत्वादसमर्थम् । नृपादिकम् । भजतो नुश्च । को विशेषः । फलतारतम्याभावात्कश्चनापि विशेषस्तयोर्न बुध्यते इत्यर्थः । इतीत्युत्तरेणान्वयः ॥ ५१ ॥

इतीति । इति चेदेवंब्रूया यर्हि । तर्हि । शृणु एवंविधशङ्कानिरासमाकर्णय । हे भूपते ! । कृष्णः । स्वतन्त्रः स्वैकाधीनसकलैश्वर्यः । परमेश्वरः । ईश्वरेश्वरः । अस्ति । सः श्रीकृष्णः । स्वेच्छया स्वसङ्कल्पेन । जगतः । स्थित्यै । ताः कर्ममर्यादाः । यथावद्यथायथमेव । रक्षति पालयते ॥ ५२ ॥ तत्रेति । तत्रापि एवंविधस्थितौ सत्यामपि । स्वं भजन्तमभजन्तं च तत्प्रारब्धानुसारेण वर्त्तयति तथापीत्यर्थः । भूरि दुष्कर्मा प्राग्विहितातिदुष्टकर्मा जनः । यदि यर्हि । स्वम् । भजेत् । तर्हि तु । प्रभुरति-समर्थः । स श्रीकृष्णः । तद्दुष्कर्माणि । कृपया तद्दुःखदर्शनजातकरुणया । सङ्कोचयति । बहुकालं बहुभोग्यानि तान्यल्पकालमल्पभोग्यानि करोतीत्यर्थः ॥ ५३ ॥ सङ्कोचप्रकारमाह । कुर्यादिति । स श्रीकृष्णः । भक्तस्य निष्कपटतया स्वं भजतो जनस्य । भोग्यामनुभवनीयाम् । शूलव्यथां शूलारोपानुभवनीयपीडाम् । कण्टकव्यथां पादलग्नकण्टकव्यथामात्रानुभवनियाम् । कुर्यात् । शूलारोपं कर्मलिखितं पादे बुब्बुलकण्टकासङ्गमात्रेणानुभवतीत्यर्थः । आढ्यस्य धनिनो भक्तस्य । भोग्यं पूर्वप्रारब्धकर्मा-नुसारेणावश्यं भोक्तव्यम् । दारिद्र्यमन्नवस्त्रादिराहित्यम् । अल्पधनं दारिद्र्यप्राप्तावपि तदल्पधनवत् । कुर्यात् । बहुधनवतोऽपि पूर्वदुष्कृतभोगकालप्राप्त्या जातदारिद्र्येण मृत्पात्रदुर्लभतासमयागमेऽपि यथाशतगुर्दशगुः स्यात्तथातदनुभवतीत्यर्थः ॥ ५४ ॥ एवमिति । एवममुना प्रकारेण । स श्रीकृष्णः । भोग्यं स्वभक्तेनावश्यं भोक्तव्यम् ।

इति चेच्छृणु कृष्णोऽस्ति स्वतन्त्रः परमेश्वरः । स्वेच्छया जगतः स्थित्यै यथावत्ताः स रक्षति ॥५२॥ तत्रापि भूरि-दुष्कर्मा स्वं भजेद्यदि तर्हि तु । तद्दुष्कर्माणि कृपया सङ्कोचयति स प्रभुः ॥५३॥ कुर्याच्छूलव्यथां भोग्यां भक्तस्य कण्टकव्यथाम् । आढ्यस्य भोग्यं दारिद्र्यं कुर्यादल्पधनं स च ॥५४॥ एवं भोग्यं महद्दुःखं कुर्यात्स कृपयाऽल्पकम् । तत्तु कश्चिद्विजानीयात्सुधीरेव पुमानिह ॥ ५५ ॥ अन्यस्तु तस्योपकृतिमगृह्णन् प्रत्युतागुणान् । वदन्ननीशं तं मत्वा जहात्येव तदाश्रयम् ॥ ५६ ॥ एवं मत्वा प्रभुं भूरि व्ययितं द्रविणं मया । सतामपि कृता सेवा सद्भोज्यवसनादिभिः ॥ ५७ ॥ तथाप्यनेन न हृतः शिरोरोगोऽल्पकोऽपि मे । ममोपकारो न ज्ञात एषोऽग्रे किं विधास्यति ॥ ५८ ॥

महत् । दुःखम् । कृपया । अल्पकम् । कुर्यात् । तत्कृष्णेन कृपया कृतं दुःखसङ्कोचनं तु । इह लोके । सुधीर्भगवन्माहात्म्यातिशयज्ञानवत्त्वनिर्मलान्तरत्वाद्विवेक-युक्तमतिः । कश्चिद्विरलः । पुमानेव । विजानीयात् ॥ ५५ ॥ अन्य इति । अन्यो दुर्बुद्धिः पुमांस्तु । तस्य श्रीकृष्णस्य । उपकृतिं दुःखसङ्कोचनरूपोपकारम् । अगृह्ण-ननुपाददत् । न गृह्णातीत्यर्थः । प्रत्युत । अगुणान् श्रीकृष्णदोषान् । वदन् सन् । तं श्रीकृष्णम् । अनीशमपरमेश्वरम् । मत्वा । तदाश्रयम् । जहाति परित्यजत्येव । अगुणवदनप्रकारमाह द्वाभ्याम् । एनमिति । एनं हरिम् । प्रभुं परमेश्वरम् । मत्वा । मया । भूरि प्रचुरम् । द्रविणम् । व्ययितं विनियोजितमपगमितमित्यर्थः । सद्भोज्यवसनादिभिः । सतामेतदीयसाधूनाम् । सेवापि । कृता ॥ ५७ ॥ तथेति । तथापि एवंधनव्ययादौ कृते सत्यपि । अनेन हरिणा । मे मम । अल्पकोऽल्प-मात्रोऽपि । शिरोरोगः । न हृतो नैव निवर्त्तितः । मम मत्कृतः । उपकारस्तदर्थं तत्सदर्थं च धनव्ययीकरणरूपोपकृतिः । न ज्ञातः । अतः । एष हरिः । अग्रे देहपातानन्तरम् । किं विधास्यति संसृतिदुःखं कथं निवर्त्तयिष्यतीत्यर्थः ॥ ५८ ॥

इतीति । हे राजन् ! । इत्यादीन्येतत्प्रभृतीनि । बहून्येव । अव्यवस्थितवाक्यानि अनन्वयवचनानि । मायिकार्थधीर्मायिकपदार्थसत्यतामतिः । सः पुरुषः । वदेत् । ततस्तदनन्तरम् । प्राकृततामतिनीचभावम् । व्रजेत्प्राप्नुयात् ॥ ५९ ॥ प्रकरणार्थं निगमयति । एवमिति । हे नृपते ! । एवममुना प्रकारेण । स्वकामनासिध्यै । कृष्णसंश्रयम् । कुर्वतः पुरुषस्य । गतिः । अस्ति । अतो हेतोः । स श्रीकृष्णः । केवलम् । श्रेयसे स्वकल्याणप्राप्तये । श्रयणीयः ॥ ६० ॥ इत्थमिति । इत्थमेवंविधम् । सुधासन्निभममृतसमानम् । ईशवाक्यं श्रीहरिवचनम् । निशम्य । भक्तः । स जीववर्मनृपतिः । तत्सदःस्थास्तस्यां सभायामुपविष्टाः । सन्तः साधवः । गृहस्थाः । जनाश्च । प्रहर्षम् । सम्प्राप्य । प्रभवे स्वावासं प्रति व्रजते श्रीहरये । नमो नमनम् । चक्रुः ॥ ६१ ॥ स्वकीयानुभवाढ्यानि कृत्वा प्रश्नोत्तराणि यः । नृपं काकुभयं जीववर्माणं भक्तमात्मनः ॥ १ ॥ सतः स्वभक्तान् गृहिणस्तथान्यान् सदसि स्थितान् हर्षयामास स स्वामी श्रीहरिर्हर्षदोऽस्तु मे ॥ २ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तक-श्रीहर्येकान्तिकोपासक श्रीहरिकृष्णभगवत्पद्मनुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां सप्ततितमस्तरङ्गः ॥ ७० ॥

इत्यादीनि बहून्येव स वदेन्मायिकार्थधीः । अव्यवस्थितवाक्यानि ततः प्राकृततां व्रजेत् ॥ ५९ ॥ एवं स्वकामना-सिद्धये कुर्वतः कृष्णसंश्रयम् । गतिरस्ति श्रेयसेऽतः श्रयणीयः स केवलम् ॥ ६० ॥ इत्थं सुधासन्निभमी-शवाक्यं निशम्य भक्तः स च तत्सदःस्थाः । सन्तो गृहस्थाश्च जनाः प्रहर्षं सम्प्राप्य चक्रुः प्रभवे नमश्च ॥ ६१ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते सप्ततितमस्तरङ्गः ॥ ७० ॥

शकाब्दे विक्रमार्कस्य रसाश्ववसुभूमिते । चैत्रासितचतुर्थ्यां च वचोऽमृतमिदं हरेः ॥ १ ॥
तत्र दुर्गपुरे दुर्गे उत्तमस्यैव वेश्मनः । प्रत्यग्द्वारस्य वेद्यां स न्यषीदन्मञ्च उत्तमे ॥ २ ॥
सितसर्वाम्बरो नैकदेशायातनिजाश्रितैः । वृतः सद्भिश्च गृहिभिः शृण्वन् सत्कृतगायनम् ॥ ३ ॥

अक्षम्यो हरिणा भक्तद्रोहरूपोऽपराधकः । हरेः सदा साकृतिता सिद्धान्तत्वेन या मता ॥ १ ॥ श्रीहरेर्दिव्यभावस्य नृभावस्य च यैकता । एतत्सर्वं त्वेक-सप्ततिनमे स्फुटमीरितम् ॥ २ ॥ शकेति । शकेति । पूर्वार्द्धं व्याख्यातम् । (१८७६) चैत्रासितचतुर्थ्यां चैत्रमासस्य कृष्णपक्षसम्बन्धिन्यां चतुर्थ्यां तिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमस्य । राज्ञः । दुर्गे । प्रत्यग्द्वारस्य पश्चिमाभिमुखस्य । वेश्मन उत्तमनृपभवनस्य । वेद्याम् । उत्तमे स्वास्तरणाच्छादनादिश्रेष्ठे । मञ्चे पर्यङ्कासने । स श्रीहरिः । न्यषीदत् दिनस्य षट्घटिकावशेषे काले स्वावासादागत्योपविवेश ॥ २ ॥ सितेति । सितानि मरालगरु-द्धवलानि सर्वाण्यम्बराणि वसनानि यस्य सः । नैकेभ्योऽनेकेभ्यो देशेभ्य आयाताः समागता ये निजाश्रिताः स्वाश्रितास्तैः । सद्भिर्मुनिभिः । गृहिभिश्च । वृतः सभायां परिवेष्टितः । सत्कृतगायनं मुक्तानन्दप्रेमानन्दादिमुनिकृतविपञ्च्यादिवाद्ययुतगानम् । शृण्वन्नेकाग्रतानुनाटनपूर्वकमाकर्णयन् ॥ ३ ॥

कृष्णेति । कृष्णपद्यश्रुतिप्रीतः श्रीकृष्णयशोऽङ्कितब्रह्मानन्दादिकविकृतोदारपद्यश्रवणमुदितः । स श्रीहरिः । स्वयं केनाप्यननुयुक्त एव । निजान् समीपविष्ट-स्वभक्तजनान् । उवाच । हे भक्ताः ! । यदि । कस्यचिदस्य कस्यापि भक्तस्य । कश्चित् यः कोऽपि । संशयः सन्देहः । स्यात् । तर्हि पृच्छतु । इति द्वयोरेकसम्बन्धः ॥ ४ ॥ सोमवर्मेति । अथानन्तरम् । सोमवर्मा बुद्दद्पुराधीश्वरसोमवर्मनृपतिः । कृताञ्जलिर्विनयार्थं कृतकरसम्पुटः सन् । तं श्रीहरिम् । प्रणम्य । पप्रच्छ । हे हरे ! । देहिभिर्भवद्भक्तैः शरीरिभिः । हरेः प्रत्यक्षपुरुषोत्तमस्य । ते तव । बहवः । अपराधाः क्रियन्ते प्रतिक्षणं विधीयन्ते । ते च "शिक्षा-पत्र्याः शैली वा धातुजा मूर्त्तिरि"ति श्लोकस्यार्थदीपिकाटीकातो 'यानेन वा पादुकाभ्या'मित्यादयो ज्ञेयाः ॥ ५ ॥ त्वमिति । करुणानिधिः । हेतुगर्भमिदं विशेषणम् । त्वं श्रीहरिः । भक्तवात्सल्यात्स्वभक्तेषु स्निग्धत्वाद्धेतोः । तान्स्वभक्तापराधान् । क्षमते सहसे । तत्र तेष्वपराधेष्वपि । कश्चित् । मन्तुरपराधः । त्वया । अक्षम्यः क्षन्तुम-शक्यः । अस्ति । विद्यते । अथवा । नैवास्ति ॥ ६ ॥ इतीति । इत्यमुना प्रकारेण । पृष्टः सोमवर्मणानुयुक्तः । स श्रीहरिः । तं सोमवर्माणं नृपम् । ऊचे । हे नृपते ! ।

कृष्णपद्यश्रुतिप्रीतः स उवाच स्वयं निजान् । कस्यचित्संशयः कश्चिद्यदि स्यात्तर्हि पृच्छतु ॥ ४ ॥ सोमवर्माऽथ पप्रच्छ तं प्रणम्य कृताञ्जलिः । अपराधा देहिभिस्ते क्रियन्ते बहवो हरेः ॥ ५ ॥ त्वं तु तान् भक्तवात्सल्यात्क्षमसे करुणा-निधिः । तत्रापि कश्चिदक्षम्यो मन्तुरस्ति त्वया न वा ॥ ६ ॥ इति पृष्टः स ऊचे तं मन्तून्भक्तस्य सत्पतिः । क्षमते निजभक्तस्य द्रोहमेकं विनाऽखिलान् ॥ ७ ॥ अतोऽल्पस्यापि भक्तस्य हरेः कार्यो न सर्वथा । अपराधस्तं भजताऽन्यथा स्यात्संसृतिभ्रमः ॥ ८ ॥ किञ्च सर्वापराधेषु कृष्णस्याकारखण्डनम् । महापराधो विज्ञेयः स कार्यः सर्वथा न वै ॥ ९ ॥ निजेऽक्षरे परे धाम्नि कोटिसूर्यादिभास्वरे । सदा दिव्याकृतिः कृष्णो भगवान् पुरुषोत्तमः ॥ १० ॥

सत्पतिः श्रीकृष्णः । निजभक्तस्य स्वीयभक्तजनस्य । एकं केवलम् । द्रोहं विना । भक्तस्य । अखिलान् । मन्तून् । क्षमते । केवलं स्वभक्तद्रोहरूपमपराधं तु न सहते अन्यांस्तदपराधांस्तु न गणयतीत्यर्थः ॥ ७ ॥ अत इति । अतो हेतोः । तं यः स्वभक्तद्रोहरूपापराधं न क्षमते तथाविधं श्रीहरिम् । भजता जनेन । अल्पस्यापि । हरेः । भक्तस्य । अपराधो द्रोहरूपो मन्तुसर्वथा कायवाङ्मनोभिः । न कार्यः । अन्यथा तद्‌द्रोहरूपापराधाचरणे सति तु । संसृतिभ्रमः संसारपर्यावर्त्तः । स्याज्जायेत् ॥ ८ ॥ नन्वयमेव महापराधो भवत्यथवाऽस्त्यतोऽप्यन्यो महापराध इत्याशङ्कायां तन्निवृत्तये स्वयमेवाह । किञ्चेति । किञ्च । सर्वापराधेषूक्तेषु सकलेष्वपराधेषु मध्ये । कृष्णस्य सर्वदा नित्यसिद्धदिव्याकृतेः श्रीकृष्णस्य । आकारखण्डनं स्वकीयाक्षरधामस्थस्य तस्य निराकारत्वेन तन्त्राकृतेर्मायामयत्वेन च कथनपूर्वकं सर्वथाऽऽकारा-भावोक्त्याऽमूर्त्तत्वेन प्रतिपादनमित्यर्थः । महापराधः । विज्ञेयः । स तथाविधो महापराधः । सर्वथा । न कार्यः । वै ॥ ९ ॥ साम्प्रतं स्वाक्षरधामस्थस्य भगवतः सदा शोभनावयववद्दिव्याकृतिमत्त्वं तथाविधस्यैव त्राकृतिधरत्वादुभयविधाकारस्यैकत्वं चाह चतुर्भिः । निज इति । हे नृपते ! । निजे स्वकीये । परे मूलप्रकृतितमः-

परस्मिन् । कोटिसूर्यादिभास्वरे अपरिमितभास्करज्योत्स्नाकराग्न्यादिभ्यः अप्यतिभास्करे । अक्षरेऽक्षरब्रह्माख्ये । धाम्नि मनोहरपदे । सदा सर्वकालम् । दिव्याकृतिः रमणीयालौकिकावयववदाकारः भगवाननन्तैश्वर्यसम्पन्नः । पुरुषोत्तमोऽक्षरपुरुषादिभ्योऽप्यत्युत्तमः पुरुषः । कृष्णः ॥ १० ॥ मुक्तैरिति । दिव्यमतिसुन्दरं ब्रह्मरूपं ब्रह्ममयाकारो येषां तैः । मुक्तैः पुरुषैः । निषेवितो दिव्योपचारैर्यथाकालं कृतपरिचर्यः सन् । विराजते राजाधिराजश्रिया संशोभते । इति सार्द्धस्यैकान्वयः । स एवं-भूतापरिमितैश्वर्यः श्रीकृष्ण एव । कृपया स्वविरहाक्षमभक्तदयया । अत्र । भूमौ । भारतीयभूवर्त्तिन्यस्मिन्मनुजलोके इत्यर्थः । नराकृतिः स्वातिदिव्यैश्वर्यगोपनपूर्वं विहित-मनुष्यसमानाकारः । जायते प्रादुर्भवति ॥ ११ ॥ ब्रह्मरूप इति । ब्रह्मरूपः स्वोपासकानां स्वसम्बन्धमात्रेण स्पर्शमणिवद्ब्रह्मभावप्रापकत्वादमायिकः । तद्देहो मनुष्य-समानाकारतया दृश्यमानः श्रीकृष्णदेहः । भौतिको यथा पञ्चभूतोत्पन्न इव । दृश्यते प्राकृतजनदृष्ट्या वीक्ष्यते । तथापि । असौ साक्षाच्छ्रीकृष्णदेहः । भौतिकः पञ्चभूता-त्मकः । न तु नैव भवति । किन्तु दिव्यो यथाविधोऽक्षरधाम्नि वर्त्तते तथाविध एवास्ति । इतीत्थम् । अवधार्यतां निश्चीयताम् ॥ १२ ॥ तदमायिकत्वं विवृणोति चतुरिति । चतुर्विंशति तत्त्वानि तमोरजःसत्त्वकार्याणि भूतेन्द्रियदेवतात्मकानि । तथा । देहावस्थात्रिके स्थूलादिदेहत्रिकं जाग्रदाद्यवस्थात्रिकं चेत्यर्थः । एतत्सर्वम् । कृष्णाङ्गे

मुक्तैर्विराजते दिव्यब्रह्मरूपैर्निषेवितः । स एव कृपया भूमौ जायतेऽत्र नराकृतिः ॥ ११ ॥
ब्रह्मरूपो हि तद्देहो दृश्यते भौतिको यथा । न त्वसौ भौतिकः किन्तु दिव्य इत्यवधार्यताम् ॥ १२ ॥
चतुर्विंशतितत्त्वानि देहावस्थात्रिके तथा । कृष्णाङ्ग एतत्सर्वं तु दृश्यमानं बृहद्ध्रुवम् ॥ १३ ॥
इत्युक्त्वा ब्रह्मसाकारनिराकारत्ववादिनी । लक्ष्यीकृत्य मते साधून् सोऽपृच्छन्महतः प्रभुः ॥ १४ ॥
सन्तः ! पृच्छामि वः किञ्चिच्छ्रुत्वा कुरुतोत्तरम् । रामानुजः शङ्करश्च महाचार्यावुभौ श्रुतो ॥ १५ ॥

साक्षाच्छ्रीकृष्णशरीरे । दृश्यमानं प्राकृतचक्षुर्भिर्वीक्ष्यमाणं सत् । बृहद्ब्रह्मरूपत्वादमायिकमेवास्ति ध्रुवं निश्चितम् । तथाचोक्तं विष्णुपुराणे । 'निर्दोषपूर्णगुणविग्रह आत्मतन्त्रो निश्चेतनात्मकशरीरगुणैश्च हीनः । आनन्दमात्रकरपादमुखोदरादिः सर्वत्र च स्वगतभेदविवर्जितात्मे'ति ॥ १३ ॥ इतीति । इत्यमुना प्रकारेण । उक्त्वा सोमवर्म-नृपप्रश्नोत्तरं कृत्वेत्यर्थः । ब्रह्मसाकारनिराकारत्ववादिनी श्रीहरेः साकारताया निराकारतायाश्च बोधके । मते रामानुजशङ्कराचार्यसिद्धान्तौ । लक्ष्यीकृत्य स्वमनस्यभि-सन्धाय । प्रभुः । स श्रीहरिः । महतः । साधून्मुक्तानन्दादिमुनीन् । अपृच्छत् । भगवदाकारस्य श्रुत्यादिभिः सर्वथा नित्यसिद्धत्वेऽपि केचनानधिगतश्रुत्यादितात्पर्या भगवन्तं निराकारं मन्वते चाधिगतश्रुत्यादिरहस्यास्तं साकारं मन्वते तत्रापि भगवदाकारासत्त्वसत्त्वादिमुख्यौ शङ्कररामानुजाचार्यौ लोकप्रसिद्धौ स्तस्तत्र रामानुजा-चार्यसिद्धान्तं स्वप्रियं द्योतयितुं प्रश्नमप्राक्षिदिति भावः ॥ १४ ॥ सन्त इति । हे सन्तः ! । वो युष्मान् । किञ्चित् । पृच्छामि । तत् । श्रुत्वा । उत्तरम् । कुरत । रामानुजः श्रीलक्ष्मणाचार्यः । शङ्करः शङ्कराचार्यश्च । उभौ । महाचार्यौ । श्रुतौ जगद्विख्यातौ भवतः ॥ १५ ॥

परस्परेति । इह लोके । तयो रामानुजशङ्करयोः । उभे । मते सिद्धान्तौ । परस्परविरुद्धेऽन्योऽन्यविरुद्धोक्तियुक्ते । स्तो भवतः । तयोः परस्परविरुद्धत्वं दर्शयति । एकं तत्राद्यं रामानुजाचार्यमतम् । ब्रह्म श्रीकृष्णो भगवान् साकारं सदा नित्यसिद्धदिव्याकारं यस्मिंस्तत् । इतीत्थंभूतम् । अस्ति । अन्यत्तत्र द्वितीयं शङ्कराचार्यमतम् । ब्रह्मनिराकृति तेजोमयत्वादलिङ्गत्वान्निराकारं यस्मिंस्तत् । इत्येवंविधम् । अस्ति ॥ १६ ॥ कतरदिति । तत्र तयोस्तयोर्मतयोर्मध्ये । कतरत्किं मतम् । सताम् । युष्माकं भवताम् । हृदये । अभिमतं प्रियम् । भवति । इत्यमुना प्रकारेण । पृष्टाः श्रीहरिणाऽनुयुक्ताः । ते मुक्तानन्दादयो मुनयः । यथाशास्त्रं शास्त्रमनतिक्रम्य । सुनिश्चितं यथातथा । तं श्रीहरिम् । आहुः ॥ १७ ॥ साकारमिति । हे हरे ! । यत्र रामानुजाचार्यमते । कृष्णाख्यम् । ब्रह्म । साकारं सदैव नित्यसिद्धदिव्याकारम् । उक्तम् । तन्मतम् । नोऽस्माकम् । प्रियं सम्मतम् । अस्ति । हि आसुरसम्पदाविष्टजनैर्महाचार्यतया सन्मतस्यापि शङ्कराचार्यस्य सिद्धान्तस्य सच्छाशास्त्रानुभवपर्यालोचनेन जनमोहनाय स्वतर्ककल्पितत्वदर्शनात् तन्मतं नास्माकं प्रियतया सम्मतमस्तीत्यवधारणार्थहिशब्देन प्रतीयते । नराकृतेः । तस्य परब्रह्मणः

परस्परविरुद्धे स्तस्तयोरिह मते उभे । ब्रह्मसाकारमित्येकमन्यद्ब्रह्मनिराकृति ॥ १६ ॥ कतरत्तत्र युष्माकं हृदयेऽभिमतं
सताम् । इति पृष्टास्तमाहुस्ते यथाशास्त्रं सुनिश्चितम् ॥ १७ ॥ साकारं यत्र कृष्णाख्यं ब्रह्मोक्तं तत्प्रियं हि नः ।
नराकृतेस्तस्य ते लब्ध्वा परं निःश्रेयसं भवेत् ॥ १८ ॥ इत्युक्ते तैः प्रहृष्टोऽसौ तानुवाच पुनः प्रभुः । प्रियं यदस्ति
युष्माकं तदेवास्ति प्रियं मम ॥ १९ ॥ तस्याप्तिरिह सर्वेषां भक्तानामद्य वर्त्तते । तस्मात्परन्तु नैवास्ति ज्ञेयं
प्राप्यं च किञ्चन ॥ २० ॥ तथापि तस्य गोलोकमुख्यधाम्नां ससम्पदाम् । दिदृक्षा यस्य वर्त्तेत तेजस्वित्वस्य च
प्रभोः ॥ २१ ॥ ईदृशस्येह भक्तस्य भगवन्निश्चयो हरौ । नराकृतावस्ति वा नेति पृच्छामि वदतोत्तरम् ॥ २२ ॥

श्रीकृष्णस्य । ते तव । लब्ध्वा प्राप्त्या । परमात्यन्तिकम् । निःश्रेयसं कल्याणम् । भवेत् ॥ १८ ॥ इतीति । इत्यमुना प्रकारेण । तैर्मुक्तानन्दादिसाधुभिः । उक्ते कथिते सति । प्रभुः । असौ श्रीहरिः । प्रहृष्टोऽतिमुदितः सन् । पुनर्भूयः । तान्साधून् । उवाच । हे मुनयः ! । युष्माकम् । यद्रामानुजाचार्यमतम् । प्रियम् । अस्ति । तत्तन्मतमेव । ममापि । प्रियम् । अस्ति ॥ १९ ॥ तस्येति । इह सत्सङ्गे । अद्य साम्प्रतम् । सर्वेषाम् । भक्तानाम् । तस्य नराकृतेः श्रीकृष्णस्य । आप्तिरुपलब्धिः । वर्त्तते । तस्माद्भवत्प्राप्तसाक्षाच्छ्रीकृष्णात् । परमन्यत्तु । किञ्चनापि । ज्ञेयं शास्त्रश्रवणेन ज्ञातव्यम् । प्राप्यं प्रचुरसाधनैरधिगम्यं च । नैवास्ति ॥ २० ॥ तथेति । तथापि एवं सत्यपि । ससम्पदां दिव्यामायिकानेकसम्पत्तियुक्तानाम् । तस्य प्रत्यक्षश्रीकृष्णस्य । गोलोकमुख्यधाम्नां गोलोकाक्षरवैकुण्ठादिलोकानाम् । दिदृक्षा द्रष्टुमिच्छा । यस्य भक्तस्य । वर्त्तेत । प्रभोरस्यैव भगवतः । तेजस्वित्वस्य च कोटिसूर्यप्रतीकाशमित्यादिवचनेन शास्त्रे भगवतस्तथाश्रवणाद्भगवन्मूर्त्तेस्तेजोमयत्वस्येत्यर्थः । दिदृक्षा । वर्त्तेत ॥ २१ ॥ ईदृशस्येति । इह सत्सङ्गे । ईदृशस्येत्थंविधभगवदैश्वर्यदर्शनेच्छोः । भक्तस्य । नराकृतौ । हरौ स्वेन सम्प्राप्ते नराकारे भगवतीत्यर्थः ।

भगवन्निश्चयोऽयं साक्षाद्भगवानक्षरधामाधिपतिरस्तीत्येवंभूतो दृढनिर्णयः । अस्ति विद्यते । अथवा । नास्ति । इत्येतत् । पृच्छामि । हे सन्तः ! । उत्तरं मत्प्रश्नप्रति वाक्यम् । वदत ॥ २२ ॥ सन्त इति । तदैवंविधश्रीहरिवाक्यश्रवणसमकालम् । सन्तो मुक्तानन्दादयो मुनयः । ऊचुः । हे हरे ! । अस्य त्वदैश्वर्यदर्शनेच्छोः साक्षाद्भवद्भक्तस्य हृदि इति शेषः । हरेः । तव निश्चयः । नास्त्येव । यद्यस्माद्धेतोः । असावेवंविधो भक्तः । कृष्णात्सकलैश्वर्यैकाश्रयात् साक्षाच्छ्रीकृष्णभगवतः । त्वत्तः । इतरदन्यत् । वस्त्वैश्वर्यादिकम् । दिदृक्षते द्रष्टुमिच्छति ॥ २३ ॥ हरिरिति । तानेवमुत्तरयतः सतः । हरिः । आह । हे सन्तः ! । अस्यैवंविधभक्तस्य । अत्र भगवदैश्वर्यदर्शनेच्छायाम् । कः । दोषः । अस्ति । कश्चनापि दोषो न दृश्यते इत्यर्थः । यद्यस्माद्धेतोः । असौ । पुमान् भक्तः । कृष्णस्यैव स्वेष्टदेवसाक्षाद्भगवत एव । धामादि । दिदृक्षति इतरत्तत्सम्बन्धभिन्नम् । न च नैव दिदृक्षति ॥ २४ ॥ य इति । यः । यस्य । सेवकः । भवेत् । सः । तस्य स्वस्वामिन एव । वैभवम् । दिदृक्षेच्चेद्द्रष्टुं वाञ्छेद्यदि । तर्हि । अत्र तथाविधदर्शनेच्छायाम् । का हानिः को वाऽस्यानर्थः । प्रत्युत । असौ तद्वैभवदर्शनेच्छारूपः । गुणः । मतः ॥ २५ ॥ इतीति । इत्यमुना प्रकारेण । तेन

सन्तस्तदोचुर्नास्त्येव निश्चयोऽस्य हरेस्तव । यदसावितरत्कृष्णाद्वस्तु त्वत्तो दिदृक्षते ॥२३॥ हरिस्तानाह कोऽस्त्यत्र दोषोऽस्य यदसौ पुमान् । कृष्णस्यैव हि धामादि दिदृक्षति न चेतरत् ॥ २४ ॥ यो भवेत्सेवको यस्य स चेत्तस्यैव वैभवम् । दिदृक्षेदत्र का हानिः प्रत्युतासौ गुणो मतः ॥ २५ ॥ इति पृष्टास्तेन सन्तस्तमूचुः सर्वविद्भवान् । करोत्वस्योत्तरमिति तदा तान् हरिरब्रवीत् ॥ २६ ॥ भक्तस्य कृष्णधामादि दिदृक्षा तूचितैव हि । किन्तु यत्र विधेया सा तत्र नास्तीत्ययोग्यता ॥ २७ ॥ साक्षात्कृष्णो नराकारो वर्त्तते यत्र भूतले । तत्रैव तस्य धामादि सर्वं भवति वैभवम् ॥ २८ ॥ यदा प्रादुर्भवत्यत्र कृपया श्रेयसे नृणाम् । तदा सह स्वधाम्ना च परिवारेण जायते ॥ २९ ॥

श्रीहरिणा । पृष्टाः । सन्तः । तं श्रीहरिम् । हे हरे ! । सर्ववित्सकलशास्त्रसिद्धान्तज्ञः । भवान् । अस्य भवत्प्रश्नस्य । उत्तरम् । करोतु । इत्यमुना प्रकारेण । ऊचुः । तदा । हरिः । तान् । अब्रवीत् ॥ २६ ॥ भक्तस्येति । भक्तस्य साक्षाच्छ्रीकृष्णसेवकस्य । कृष्णधामादिदिदृक्षा । उचिता योग्या भवत्येव किन्तु । सा कृष्णधामादिदिदृक्षा । यत्र स्थाने । विधेया कर्त्तुं योग्या । तत्र स्थाने । नास्ति न कृता भवति । इति हेतोः । अयोग्यता तद्दिदृक्षाया अनुचितत्वं भवति ॥ २७ ॥ यत्र कृष्णधामादि दिदृक्षा कर्त्तव्या तत्स्थानमाह । साक्षादिति । नराकारो मनुष्यसमानाकृतिः । साक्षात् । कृष्णः । भूतले । यत्र स्थाने । वर्त्तते तिष्ठति । तत्र स्थाने । एव । तस्य कृष्णस्य धामादि । सर्वम् । वैभवम् । भवति ॥ २८ ॥ इममर्थमेव स्फुटबोधाय विविच्याह चतुर्भिः । यदेति । यदा यस्मिन् समये । नृणाम् । श्रेयसे कल्याणं विधातुम् । कृपया निष्कारणापारकरुणया । अत्र भूलोके । प्रादुर्भवति स्वयंश्रीकृष्णः प्रादुर्भावं गच्छति । तदा । स्वधाम्ना । सह । गोलोकमध्यस्थस्वकीयाक्षरपदेन साकमित्यर्थः । परिवारेण पार्षदादिपरिजनेन च । सह जायते प्रादुर्भवति ॥ २९ ॥

ननु यद्येवं तदा तत्तथा सर्वेषां कथं न दृश्यते तत्राह । स्वस्य सकलैश्वर्यसंपन्नस्याक्षरपदैकनाथस्य साक्षाच्छ्रीकृष्णस्य । नराकृतिता मनुष्यसमानाकारतयाऽन्येभ्यः स्वदर्शनप्रदत्वम् । धाम्नः स्वस्याक्षरपदस्य । भौमत्वं भूलोकस्थभूमिविकारसौधादिसमानतया प्रदर्शयितृत्वम् । पार्षदानां स्वाक्षरधामस्थब्रह्मरूपपार्षदादिपरिजनानाम् । नरादिता मनुष्यादिसमानतया प्रदर्शित्वम् । आदिशब्देन तार्क्ष्यादेर्वाहादित्वेनेत्यादेर्ग्रहणं कार्यम् । इतीत्थम् । तस्य नराकृतिश्रीकृष्णस्य मोहनी अमायिकानामपि मायिकत्वप्रदर्शनरूपेण जनानां मोहोत्पादिका । मायाऽलौकिका योगकलैव । ज्ञेया ॥ ३० ॥ ननु यद्येवं भगवतस्तथात्वं तद्योगमायया न पश्यन्ति तर्हि कथमन्येषां तत्प्रतीतिः स्यादतः केऽपि तथा पश्यन्ति चेत्तर्हि तान्नो ब्रूहीत्यत्राह । नृत्वेति । तेषां प्रत्यक्षश्रीकृष्णादीनाम् । नृत्वदिव्यत्वयोः । भेदः । सर्वथा । नास्त्येव । यद्यतो हेतोः । समाधिस्थाः साक्षाद्भगवत्कृपाजातसमाधिस्वातन्त्र्येण दिव्यदृष्टितां प्राप्ता जनाः । तान्नराकृतित्वेन वर्तमानान् । भगवदादीनेव । दिव्यरूपानक्षरधामस्थसुन्दरामायिकाकारान् । विचक्षते पश्यन्ति । नराकृतिं हरिं सकलैश्वर्यसम्पन्नत्वेन दिव्यामायिकाकारत्वेन च भूमिस्थभूविकारःसौधादिकममायिकाक्षरपदत्वेन नराकृतिपार्षदादीनमायिकब्रह्मरूपदिव्याकारत्वेन च वीक्षन्ते

स्वस्य नराकृतिता धाम्नो भौमत्वं च नरादिता । पार्षदानामिति ज्ञेया तस्य मायैव मोहनी ॥ ३० ॥
नृत्वदिव्यत्वयोर्भेदस्तेषां नास्त्येव सर्वथा । यत्तानेव समाधिस्था दिव्यरूपान्विचक्षते ॥ ३१ ॥
अतो यत्र भवेत्कृष्णस्तस्य तत्रैव सर्वशः । पार्षदाः शक्तयो धाम सन्तीत्येवावगम्यताम् ॥ ३२ ॥
तस्मै भगवते दत्तमन्नवस्त्रधनादि यत् । तत्स गृह्णाति कृपया प्रीत्या भक्तहिताय वै ॥ ३३ ॥
तत्स्वीकृतं च तत्सर्वं दिव्यतामुपयाति तत् । तद्धाम्नि लभते दाता दिव्यदेहमवाप्य च ॥ ३४ ॥

इत्यर्थः ॥ ३१ ॥ अत इति । अतो हेतोः । यत्र स्थले । कृष्णः प्रत्यक्षः स्वयं श्रीकृष्णो भगवान् । भवेद्वर्तेत । तत्रैव । तस्य कृष्णस्य । सर्वशः । सर्वे । पार्षदाः । शक्तयो राधारमाद्याः । धामाक्षरपदं च । सन्ति । इतीत्थमेव । अवगम्यतां बुध्यताम् ॥३२॥ ननु यदि नराकृतित्वेऽपि भगवान् सर्वथा दिव्यरूप एवास्ति ततो दिव्यस्य तस्य दिव्या एवोपचारादयोऽर्हाः स्युरेवंसति दिव्यरूपोऽसावत्रत्यमनुष्यभक्तदत्तमन्नादिप्रीत्या कथमुपादत्ते इति चेत्तथाविधांस्तानपि ब्रह्मरूपान्विधाय स्वधाम्नि दिव्यं तल्लम्भयितुं तथा चरतीत्याह द्वाभ्याम् । तस्मा इति । तस्मै नराकृतये । भगवते । दत्तं मनुष्यभक्तजनैरर्पितम् यत् । अन्नवस्त्रधनादि । तत् । स नराकृतिर्भगवान् । भक्तहिताय मनुजानां तेषां भक्तानां हितं कर्तुम् । कृपया । प्रीत्या । गृह्णात्युपादत्ते । वै ॥३३॥ तदिति । तत्स्वीकृतं तेन नराकृतिभगवताङ्गीकृतम् । सर्वम् । तदन्नादिकम् । दिव्यतां दिव्यभावम् । उपयाति प्राप्नोति । दाता नराकृतिभगवतेऽन्नादिसमर्पयिता मनुष्यभक्तः । दिव्यदेहं ब्रह्ममयशरीरम् । अवाप्य प्राप्य । तद्दिव्यतामाप्तमन्नादिकम् । तद्धाम्नि साक्षाच्छ्रीकृष्णस्याक्षरब्रह्मपदे । लभते ॥ ३४ ॥

पीयूषेति । इत्येवंविधाम् । तस्य श्रीहरेः । पीयूषकल्पाममृतसमानाम् । वाचम् । निशम्य । सदःस्थाः । भक्ताः । सकलाः । ते साधुजना मुक्तानन्दादयो मुनयः । गृहस्थाश्च । महान्तम् । तोषमानन्दम् । लब्ध्वा । तं स्वावासं व्रजन्तं श्रीहरिम् । प्रणमन्ति स्म सादरं नमश्चक्रुः ॥ ३५ ॥ स्वभक्तद्रोहरूपं तु स्वाक्षम्यमपराधकम् । सदैव दिव्याकारं स्वस्य ब्रह्मपुरेशितुः ॥ १ ॥ स्वस्यैकत्वं नराकारदिव्याकारत्वयोस्तथा । यो हरिः प्राह कृपया स क्रियान्मां स्ववल्लभम् ॥ २ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्स्नुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायामेकसप्ततितमस्तरङ्गः ॥ ७१ ॥

वार्त्तोत्तमस्य राज्ञोऽग्रे कृता श्रीहरिणा तु या । अनुवादस्वरूपास्य माहात्म्यज्ञानपूर्विका ॥ १ ॥ हरेः क्रियासु सर्वासु शुकस्य च परीक्षितः । निर्दोषत्वे सदोषत्वे दृष्टान्तो यः सहेतुकः ॥ २ ॥ माहात्म्यज्ञानसहितो यस्य स्यान्निश्चयो हरेः । तथाभूतो न यस्य स्यात्तयोर्लक्ष्माणि यानि च ॥ ३ ॥ श्रेष्ठमध्यमहीनानां भक्तानां लक्षणानि यत् एतत्सर्वं समाख्यातं द्विसप्ततितमे । स्फुटम् ॥ ४ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८७६) मधोश्चैत्रमासस्य । कृष्णे कृष्णपक्षे । एकादश्यां

पीयूषकल्पामिति तस्य वाचं निशम्य ते साधुजनाः सदःस्थाः । भक्ता गृहस्थाः सकलाश्च लब्ध्वा तोषं महान्तं प्रणमन्ति तं स्म ॥ ३५ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते एकसप्ततितमस्तरङ्गः ॥ ७१ ॥

शकाब्दे विक्रमार्कस्य रसाश्ववसुभूमिते । एकादश्यां मधोः कृष्णे वचोऽमृतमिदं हरेः ॥ १ ॥ तत्र दुर्गपुरे दुर्गे उत्तमस्य महीभुजः । सौम्यास्यवेश्मनो वेद्यां न्यषीदत्स वरासने ॥ २ ॥ प्राङ्मुखं श्वेतवसनं नानाभक्तगणावृत्तम् । मुक्तानन्दः पुरस्थस्तं प्रोवाच प्रणतः प्रभुम् ॥ ३ ॥ स्वामिस्त्वया गतदिने राज्ञोऽग्रेऽतिहितावहा । वार्त्ता कृतेत्यशृणुम शुश्रूषामो वयं च ताम् ॥४॥ तं प्रत्युवाच भगवान् सर्वे शृण्वन्तु साधवः ! । कृष्णतद्भक्तमाहात्म्यं सम्यग्वेद्यं मनीषिणा ॥ ५ ॥

तिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमस्योत्तमनाम्नः । महीभुजो नृपस्य । दुर्गे । सौम्यास्यवेश्मनः । श्रीवासुदेवमन्दिरान्तिकवर्तिन उत्तरदिगभिमुखस्योत्तमनृपभवनस्य । वेद्यां बाह्यायां वितर्दिकायाम् । वरासने स्वास्तृते पर्यङ्कोत्तममासने श्रीहरिः । उपाविशत्स्वावासादागत्योपविवेश ॥२॥ प्राङ्मुखमिति । प्राङ्मुखं प्रागास्यतया निषण्णम् । श्वेतवसनं कौमुदीधवलानि वसनानि स्वाङ्गे दधानम् । नानाभक्तगणावृतमनेकदेशागतत्यागिगृहिस्वभक्तवृन्दैः सभायां परिवेष्टितम् । प्रभुमक्षरकालमायादिनियन्तारम् । तं श्रीहरिम् । पुरःस्थः स्वाग्रप्रदेशे निषण्णः । मुक्तानन्दो मुनिः । प्रणतः कृतप्रणामः सन् । प्रोवाच ॥३॥ स्वामिन्निति । हे स्वामिन् ! । त्वया । गतदिने दशमीदिवसे । राज्ञ उत्तमाख्यनृपस्य । अग्रे । अतिहितावहा श्रोतृजनात्यन्तहितकर्त्री । वार्त्ता । कृता । इतीत्थम् । वयम् । अशृणुम शुश्रुविम । तां वार्त्ताम् । वयम् शुश्रूषामः श्रोतृमिच्छामः ॥ ४ ॥ तमिति । तमेवंपृच्छन्तं मुक्तानन्दमुनिम् । प्रति । भगवान् श्रीहरिः । उवाच । हे साधवो ! मुक्तानन्दादयो मुनयः । सर्वे भवन्तः । शृण्वन्तु । मनीषिणा प्रशस्तबुद्धिमता भगवद्भक्तेन । कृष्णतद्भक्तमाहात्म्यम् । सम्यक् । वेद्यम् ॥ ५ ॥

कृष्णतद्भक्तमाहात्म्यवेदनफलमाह द्वाभ्याम् । भगवदिति । हे साधवः ! । यस्य भक्तस्य । भगवन्निश्चयः प्रत्यक्षश्रीकृष्णस्वरूपज्ञाननिर्णयः । माहात्म्यज्ञानयुगक्षरपरत्वादितन्महिमाववोधयुक्तः । भवेत् । योऽयं भक्तः । सतां तदेकान्तिकसाधूनाम् । सत्सङ्गिनां तदाश्रितानां गृहिणाम् । नृणां जनानां च । माहात्म्यमहो इमेऽक्षरधामाधिपसाक्षात्कृष्णस्योपासका इत्येवंविधं महिमानम् । विद्याद्यथार्थं जानीयात् ॥६॥ तस्येति । तस्यैवं कृष्णतद्भक्तमाहात्म्यवेदिनो भक्तस्य । प्रभोः सर्वोत्तमाक्षरपदाधिनाथसाक्षात्कृष्णस्य । भक्तिभूयस्त्वतः सर्वोत्तमप्रचुरभगवद्भक्तिबलवत्वाद्धेतोः । क्वचित्कदाचित् । कालकर्मकाठिन्याप्तौ महर्घत्वप्रियविनाशगृहदाहादिसुदुःसहसमयस्य अनिवार्यराजयक्ष्मपवनादिकासह्यव्याध्युद्भवज्ञेयानिरसनीयपूर्वकृतदुष्कर्मफलभोगस्य च प्राप्तौ जातायां सत्यामपि । किञ्चित् स्वल्पमात्रमपि । अनर्थः सत्सङ्गशैथिल्यरूपमशुभम् । न जायते नैव भवेत् ॥७॥ साम्प्रतं कृष्णतद्भक्तमाहात्म्यवेदनशैथिल्यवतो भक्तजनस्य तदितरत्राभिनिवेशात् सद्देशादिसत्त्वेऽप्यशुभताप्तिमाह सार्द्धेन । कृष्णेति । हे साधवः ! । यस्य । पुंसो भक्तजनस्य । कृष्णस्य । निश्चये माहात्म्यज्ञानसहितस्वरूपवेदननिर्णये । तत्सद्भक्तमाहात्म्यवेदने साक्षाच्छ्रीकृष्णाश्रयित्यागिगृहिमहिम्नः सम्यग्बोधने च । शैथिल्यमयथार्थरूपं

भगवन्निश्चयो यस्य माहात्म्यज्ञानयुग्भवेत् । विद्यात्सतां च माहात्म्यं यश्च सत्सङ्गिनां नृणाम् ॥ ६ ॥
तस्य क्वचित्कालकर्मकाठिन्याप्तावपि प्रभोः । भक्तिभूयस्त्वतः किञ्चिदप्यनर्थो न जायते ॥ ७ ॥
कृष्णस्य निश्चये तत्सद्भक्तमाहात्म्यवेदने । शैथिल्यं यस्य पुंसः स्यादन्यत्राभिनिवेशतः ॥ ८ ॥
शुभं तस्य तु नैव स्यात्सद्देशादौ भवत्यपि । दुर्बलं पीडयेद्यश्च तस्य तु क्वापि तन्न वै ॥ ९ ॥
भीष्मो हि भारते धर्मराजमित्थमशिक्षयत् । सान्वयो भस्मसाद्भावी दुर्बलावमतेरिति ॥ १० ॥ भक्तो
वाऽन्योऽपि यो रङ्कः सोऽवमान्यो न तत्क्वचित् । राज्ञा वाऽऽढ्येन विदुषा मच्छ्रितेन च केनचित् ॥ ११ ॥

मान्द्यम् । स्यात् । अन्यत्राभिनिवेशतस्तस्य तयोः शैथिल्यजाताच्छ्रीकृष्णतदीयेतरत्रप्रीतिबन्धाद्धेतोः ॥ ८ ॥ शुभमिति । तस्योक्तविधभक्तस्य तु । सद्देशादौ शुभदेशकालादिके । भवति वर्त्तमाने सत्यपि । शुभं सत्सङ्गविवृद्धिरूपं भद्रम् । नैव स्यात् । इति सार्द्धस्यैकान्वयः । किञ्च । यो भक्तः । दुर्बलं यं कमपि रङ्कजनम् । पीडयेत् । तस्य दुर्बलपीडकस्य तु । क्वापि कदाचिदपि । तच्छुभम् । न स्यात् । वै ॥ ९ ॥ इममर्थं सदाचारेण द्रढयति । भिष्म इति । भारते द्वैपायनप्रणीते महाभारते । भीष्मः । धर्मराजं युधिष्ठिरम् । इत्थं वक्ष्यमाणप्रकारेण । अशिक्षयच्छिक्षयामास । हे राजन् ! । दुर्बलावमतेर्दुर्बलजनावमानं विधाय । त्वम् । सान्वयो वंशसहितः । भस्मसाद्भस्मावशेषः । भावी भविष्यसि । इति अशिक्षयदिति सम्बन्धः ॥ १० ॥ भक्त इति । हे सन्तः ! । तदेवंविधभीष्मवचनाद्धेतोः । भक्तः साक्षाच्छ्रीकृष्णाश्रितः । अथवा । अन्यस्तदितरोऽपि । यो जनः । रङ्को दीनो भवेत् । मच्छ्रितेन सम्प्राप्तमच्छरणेन विदुषा सदसद्विवेकबुद्धीमता । राज्ञा नृपतिना । अथवा । आढ्येन धनिना । केनचिदुभयभिन्नेन येन केनापि जनेन च । स रङ्कः । क्वचित्कदाचिदपि । नावमान्यो नैवावज्ञेयः ॥ ११ ॥

ननु रङ्कावमानस्य भीष्मः कथमतितीव्रदोषत्वमाह यदालम्ब्य त्वमपि स्वाश्रितराजादींस्तन्निषेधसीति चेत् तस्य ब्रह्महत्यासमत्वादिति ब्रुवंस्तत्प्रसङ्गेन यत्कर्मकर्त्रोः सा भवेत्तावप्याह रङ्केति । रङ्कावमन्तुर्दीनजनावमानिनः । पुंसः । मिथ्याभिशंसिनः कस्यचिन्मूर्ध्नि मिथ्यापवादस्य धर्त्तुः । पुंसः । स्त्रीधर्मभङ्गकर्त्तुश्च । पुंसः । ब्रह्महत्या ब्रह्महत्यासमपापम् । भवेत् । ध्रुवं निश्चितमेव ॥ १२ ॥ ननु हे हरे ! रङ्कावमानादित्रयं दोषवत्त्वान्न कर्त्तव्यमिति तु त्वद्वचनेन सत्यमेव ज्ञातं किन्तु तदपि अज्ञभावेन केनचित्कृतं भवेत्तच्च कर्तृव्यतिरेकेणान्याविदितं भवेत्तत्कर्त्ता रहस्यागत्य विश्वासेन यदि ब्रूयात्तदा किंकार्यमित्यत्राह । कस्यचिदिति । कस्यचिद्यस्य कस्यापि पुंसः । दोषे रङ्कावमाननादिदोषत्रयान्यतमे पापे । जाते सति तु । तं विश्वासेन स्वं पृच्छन्तं दोषकर्त्तारं पुरुषम् । रहसि एकान्तस्थले । आहूय । सुधीर्लोकशास्त्रानुभवकुशलमतिर्भगवद्भक्तः । शनकैः कोपानुत्पादनपूर्वमित्यर्थः । धर्मं धर्मशास्त्रोक्तं प्रायश्चित्तरूपं सदाचारम् । शिक्षयेदुपदिशेत् । तत्पापं तत्कृतं रहस्याघम् । न प्रकाशयेदन्यजनानां पुरो न कथयेत् ॥ १३ ॥ यासां सङ्गेन ब्रह्महत्यातुल्यं स्त्रीधर्मभङ्गकर्तृत्वं भवेन्मातृतुल्यास्ताः पञ्चविधा स्त्रीर्निर्दिशन्

रङ्कावमन्तुः पुंसश्च पुंसो मिथ्याभिशंसिनः । स्त्रीधर्मभङ्गकर्त्तुश्च ब्रह्महत्या भवेद् ध्रुवम् ॥ १२ ॥
कस्यचित्सति दोषे तु रहस्याहूय तं सुधीः । शिक्षयेच्छनकैर्धर्मं न तत्पापं प्रकाशयेत् ॥ १३ ॥
पतिव्रता च विधवा विश्वस्ता शरणं गता । सङ्गानिच्छुश्च पञ्चैता योषा ज्ञेयाः स्वमातृवत् ॥ १४ ॥
आसामन्यतमां गच्छन् धर्मभङ्गकरो भवेत् । तस्माद्रङ्कावमानादि न कर्त्तव्यं हि सर्वथा ॥ १५ ॥
एवं वार्त्ता नृपस्याग्रे प्रोक्ता ह्यः साधवो मया । अथ ते मुदिताः सन्तो रासलीलां जगुर्हरेः ॥ १६ ॥

स्त्रीधर्मभङ्गकर्तृलक्षणमाह सार्द्धेन । पतिव्रतेति । पतिव्रता साध्वी स्त्री । विधवा मृतभर्तृका स्त्री । विश्वस्ताऽयं मां धर्मान्न च्यावयिष्यतीति ज्ञात्वा तत्सहायनिश्चिन्ता तद्विश्वासवती प्रोषितपतिका स्त्री । शरणं गता धर्मिणां पितृमातृश्वशुरपक्षीयाणामभावाद्धर्मस्थित्यै शरणं प्राप्ता स्त्री । सङ्गानिच्छुर्व्रताचरणादिना स्वपतिसङ्गमप्यनिच्छन्ती स्वाङ्गना च । एताः । पञ्चविधाः । योषाः स्त्रियः । स्वमातृवत् । ज्ञेयाः ॥ १४ ॥ आसामिति । आसां पञ्चविधस्त्रीणां मध्ये । अन्यतमामेकाम् । गच्छन्स्तत्सङ्गं कुर्वन्नित्यर्थः । धर्मभङ्गकरः स्त्रीधर्मभङ्गकर्त्ता । भवेत् । अतो धर्मवृद्धिर्धीरैर्गृहस्थजनैर्धर्मोपदेशैस्ताः सर्वदा धर्म एव स्थाप्या इति भावः । तस्माद्धेतोः । रङ्कावमानादि रङ्कजनावमाननं मिथ्याभिशंसनं स्त्रीधर्मभङ्गश्चेत्यर्थः । सर्वथा सर्वप्रकारेण । न कर्त्तव्यम् । हि ॥ १५ ॥ एवमिति । हे साधवः ! । एवममुना प्रकारेण । ह्यो गतदिने । मया । नृपस्योत्तमनृपतेः । अग्रे । वार्त्ता । प्रोक्ता । अस्ति । अथैवंविधश्रीहरिवाक्यश्रवणानन्तरम् । मुदिता हर्षं प्राप्ताः ते मुक्तानन्दादयः । सन्तः साधवः । हरेः श्रीकृष्णस्य । रासलीलां श्रीमद्भागवतदशमस्कन्धोक्तभगवद्रासक्रीडापद्यानि । जगुर्विपञ्च्यादिवाद्यवादनपूर्वं गापयन्ति स्म ॥ १६ ॥

श्रुत्वेति । तां मुक्तानन्दादिमुनिगीतां रासक्रीडाम् । श्रुत्वा । स्वामी श्रीहरिः । मुदान्वितः प्रहृष्टः सन् । पुनर्भूयः । साधून् गायतस्तान्मुनीन् । अब्रवीत् । हे साधवः ! । भूतले । हरेः श्रीकृष्णभगवतः । जन्म प्रादुर्भावः । नृणाम् । श्रेयोऽर्थे कल्याणायैव । अस्ति । हि । तथा चोक्तं श्रीभागवते । 'नृणां निःश्रेयसार्थाय व्यक्तिर्भगवतो नृपे'ति ॥ १७ ॥ सर्वा इति । तस्य साक्षाच्छीकृष्णस्य । सर्वा अपि । क्रियाः । नृणामिव मनुष्यसमानाः । भवन्ति । ता मनुष्यसमानतया प्रतीयमानाः प्रत्यक्षभगवत्क्रियाः । सर्वशस्तु सकला अपि । भक्तोत्तमा भगवदेकान्तिकभक्ताः । चरित्राणि दिव्यमूर्त्तिश्रीकृष्णकृतत्वात्तस्य सकलजनश्रेयः कर्त्र्यो दिव्या लीलाः । इत्येवम् । विदुर्जानन्ति । वै ॥१८॥ भगवदिति । भगवद्विमुखाः साक्षाद्भगवतः प्रतिकूलाः । जीवाः । अपक्वा यथार्थभगवत्स्वरूपज्ञानवर्जिताः । तज्जना अपि साक्षाद्भगवदाश्रितजनाश्च । प्रभोः साक्षाच्छ्रीकृष्णस्य । माहात्म्यवेदनान्महिम्नः सम्यगपरिज्ञानाद्धेतोः । तासु साक्षाद्भगवत्क्रियासु । दोषान्मनुष्यसमानतारूपागुणान् कल्पयत्यारोपयन्ति ॥ १९ ॥ यदुक्तं भक्तोत्तमाश्चरित्राणि विदुस्तदाह । रासेति । विष्णोः साक्षाच्छीकृष्णस्य । सम्यग्माहात्म्यविद्यथार्थमहिमाभिज्ञः । शुको भगवदेकान्तिकभक्तो वैयासकिः । कामदर्पापनोदाय ब्रह्मादि तत्सृष्टसकलजयजाताखर्वगर्वमदनमदविनाशाय । हरेः श्रीकृष्णस्य । इयं रासक्रीडारूपा । लीला दिव्यचरित्रमेव । अस्ति । इत्येवंनिश्चित्य । रासलीलां पञ्चाध्यायीप्रोक्तां रासक्रीडाम् । जगौ भगवन्महिमावगाढधिषणः प्रेमद्रवद्धृदयो वर्णयामास ॥ २० ॥ ननु मानुषीं तत्क्रियां लीलेति कथमुच्यते इति चेन्नैषा मानुषी किन्तु अस्यां भूरिरूपावधृत्यादिकर्मणोऽमानुषत्वादमानुषी सा भवतीत्याह । अमानुषीति । सा रासलीलारूपा । क्रिया भगवतः चरित्रम् । अमानुषी मनुष्येष्वसम्भावनीयत्वाद्दिव्यास्ति । हि यतः । यतो यस्यां क्रियायाम् । भूरिरूपधृतिर्यावत्यो गोप्यस्तावद्रुपधारणात्मकममानुषं तदैश्वर्यम् । अस्ति । स्त्रैणस्य गोपस्त्र्यनुरञ्जनपटुत्वात्तदधीनवत्प्रतीयमानस्यापि भगवतः । ऊर्ध्वमन्थित्वमूर्ध्वरेतस्त्वेनावस्थानरूपमैश्वर्यम् । अस्ति । यच्छ्रुतेर्जुगुप्सितवन्मनुष्यदृष्टया प्रीतीयमानाया अपि यस्या रासक्रीडायाः कथाश्रवणात् । कामनाशनं कथाश्रोतृजनकन्दर्पविनाशो जायते तथाविधं यस्यामैश्वर्यमस्ति । ततः सा अमानुषीति सम्बन्धः ॥ २१ ॥ नन्वस्या यद्यमानुषत्वं तदा तद्भक्तः परीक्षित्कथं तत्र संशयमकृतेति चेत्तस्यापक्वभक्तत्वादिति हेतुं प्रदर्शयन्नपक्वास्तज्जना अपीति यदुक्तं तदेव स्पष्टमाह द्वाभ्याम्

श्रुत्वा तामब्रवीत्स्वामी पुनः साधून्मुदान्वितः । श्रेयोऽर्थमेव हि नृणां हरेर्जन्मास्ति भूतले ॥ १७ ॥
सर्वा अपि क्रियास्तस्य नृणामिव भवन्ति वै । भक्तोत्तमा विदुस्तास्तु चरित्राणीति सर्वशः ॥ १८ ॥
भगवद्विमुखा जीवा अपक्वास्तज्जना अपि । तासु दोषान्कल्पयन्ति माहात्म्यावेदनात्प्रभोः ॥ १९ ॥
रासलीलां जगौ विष्णोः सम्यग्माहात्म्यविच्छुकः । कामदर्पापनोदाय लीलैवेयं हरेरिति ॥ २० ॥
अमानुषी क्रिया सा हि भूरिरूपधृतिर्यतः । स्त्रैणस्याप्यूर्द्धमन्थित्वं यच्छ्रुतेः कामनाशनम् ॥ २१ ॥
शुकाभिप्रायमेतं तु न परीक्षिदबुध्यत । सोऽपक्वः कृष्णभक्तत्वे ततस्तत्रासंशयम् ॥ २२ ॥

शुकेति । हे साधवः ! । एतं पूर्वोक्तम् । शुकाभिप्रायं भगवच्चरित्रस्य दिव्यतारूपं शुकाशयम् । परीक्षिन्नृपस्तु । नाबुध्यत । यतः । परीक्षित् । कृष्णभक्तत्वे श्रीकृष्णैकान्तिकभक्तभावे । अपक्वः । अभूत् । ततः । तत्र श्रीकृष्णकृतायां रासक्रीडायाम् । संशयम् । आप ॥ २२ ॥ श्रीभागवतोक्तं तत्कृतं संशयमाह । स इति । हे ब्रह्मन् ! । धर्मसेतूनां धर्ममर्यादानाम् । वक्ताऽन्येभ्य उपदेष्टा । कर्त्ता स्वयमाचरिता । अभिरक्षिता तद्विघातकविनाशनेन परित्राता । स श्रीकृष्णः । प्रतीपमधर्मरूपम् । परदाराभिमर्शनं पराङ्गनाङ्गसङ्गम् । कथम् । आचरत् कृतवान् ॥ २३ ॥ जीवेति । हे साधवः ! । इत्थममुना प्रकारेण । जीवसाधर्म्यबुध्या भगवति मनुष्यसमानतामत्या । संशयम् । पृच्छन्तम् । नृपं परीक्षिद्राजानम् । शुकः । तच्छिदे तथाविधसंशयापनोदं कर्त्तुम् । कृष्णस्य । माहात्म्यमग्न्यादिदृष्टान्तेन निर्लेपत्वादिरूपं महिमानम् । बोधयामास ॥ २४ ॥ नरेति । एवममुना प्रकारेण । अत्र लोके । ये जनाः । नराकृतेर्नराकारेण प्रत्यक्षतया वर्त्तमानस्य । भगवतः । चरित्रेषु । दोषम् । सम्भावयेयुः कल्पेरन् । ते जनाः परीक्षितः । पङ्क्तौ । परीक्षिन्नृपतिसमानापक्वभक्तश्रेण्यामित्यर्थः । ज्ञेयाः ॥ २५ ॥ येति । या । काचित् मेहनादीनि वास्ताविल्यादिका

स कथं धर्मसेतूनां वक्ता कर्त्ताऽभिरक्षिता । प्रतीपमाचरद्ब्रह्मन् ! परदाराभिमर्शनम् ॥२३॥ जीवसाधर्म्यबुद्ध्येत्थं पृच्छन्तं संशयं ते नृपम् । माहात्म्यं बोधयामास शुकः कृष्णस्य तच्छिदे ॥२४॥ नराकृतेर्भगवतश्चरित्रेष्वेवमत्र ये । सम्भावयेयुर्दोषं पङ्क्तौ ज्ञेयाः परीक्षितः ॥ २५ ॥ या काचिद्भगवल्लीला सा सर्वाप्यस्ति देहिनाम् । श्रेयस्करीति विद्युर्ये शुकपङ्क्तौ स्थिता हि ते ॥ २६ ॥ स्वतन्त्रः स्वेच्छया कृष्णः श्रेयसे सर्वदेहिनाम् । धृत्वा नराकृतिं भूमौ करोति नरवत्क्रियाः ॥२७॥ क्वचित्कामं क्वचित्क्रोधं क्वचित्लोभं भयं क्वचित् । मोहादींश्च क्वचित्स्वस्मिन् ! दर्शयत्यस्वतन्त्रवत् ॥ २८ ॥ सर्वा अपि क्रियास्तस्य नृणां मङ्गलदा मताः । श्रुता वा कीर्तिता दृष्टा ध्याता वाऽप्यनुमोदिताः ॥ २९ ॥

या कापि । भगवल्लीला श्रीकृष्णचरित्रम् । सा । सर्वापि लीला । देहिनाम् । श्रेयस्करी गीता श्रुता कथिता ध्याता सती निःश्रेयसोत्पादिका । अस्ति । इतीत्थम् । ये जनाः । विद्युर्जानीयुः । ते जनाः । शुकपङ्क्तौ शुकसमानपक्वैकान्तिकभक्तश्रेण्यामित्यर्थः । स्थिताः । ज्ञेयाः । हि ॥ २६ ॥ श्रेयस्करीस्तत्क्रियाः प्रदर्शयंस्ताः श्रवणादिविषयीकृतास्तथाविधाः स्युरित्याह त्रिभिः । स्वतन्त्रः स्वाधीनसकलैश्वर्यः । कृष्णः । सर्वदेहिनाम् । श्रेयसे । स्वेच्छया । भूमौ । नराकृतिम् । धृत्वा । नरवन्मनुष्यसमानतया । क्रियाः । करोति ॥ २७ ॥ ता आह । क्वचिदिति । क्वचित् । कामम् । क्वचित् । क्रोधम् । क्वचित् । लोभम् । क्वचित् । भयम् । क्वचित् । मोहादींश्च । आदिशब्देन मदशोकाशातृष्णेर्ष्यादीनां ग्रहणम् । अस्वतन्त्रवत् । स्वस्मिन् । दर्शयति । अन्यजनस्येति शेषः ॥ २८ ॥ सर्वा इति । तस्य भगवतः । सर्वाः पूर्वोक्ताः सकला अपि । क्रियाः । श्रुताः श्रवणविषयं प्रापिताः । अथवा । कीर्त्तिता वाग्विषयं प्रापिताः । अथवा । दृष्टाश्चक्षुर्विषयं प्रापिताः । अथवा । ध्याताश्चेतोविषयं प्रापिताः । अथवा । अनुमोदिता अन्यैः कीर्त्तिताः प्रशंसिता अपि सत्यः । नृणाम् । मङ्गलदा निःश्रेयससम्पादिकाः । मताः ॥ २९ ॥

एवमिति । हे साधवः ! । विरागिभि र्भगवत्तद्भक्तेतरत्रदोषदृष्ट्या वैराग्यवद्भिः । भवद्भिरपि । एवमुक्तप्रकारेण । सुदृढं यथातथा । निश्चित्य । शुकवत् । कृष्णरसिकलीला श्रीकृष्णरासक्रीडा । गेया ॥ ३० ॥ साम्प्रतं यथा भगवत्स्वरूपं ज्ञात्वा भगवद्भक्तः सम्पूर्णभक्तो भवेत्तत्प्रकारमाहाष्टभिः । परिछिन्न इति । हे साधवः ! । अपरिच्छिन्नवपुर्मनुजादीश्वरान्तैः कैश्चिदप्यपरिमेयमूर्त्तिः । स्वयम् । कृष्णः । नृणां स्वभक्तजनानाम् । स्वेक्षणादिसुखाप्तये स्वदर्शनस्पर्शनाशनादिसुखं प्रापयितुम् । स्वेच्छया । परिछिन्नवपुर्मनुजादिसर्वैश्चक्षुरादिपरिमेयमूर्त्तिः । भवति जायते ॥ ३१ ॥ उक्तार्थविशेषाववोधायापरिच्छिन्नवपुसः स्वस्य परिछिन्नवपुर्भवने पुनरपि हेतुमाह त्रिभिः । क्षरेति । स श्रीकृष्णः । क्षरात्मा क्षरशब्दनिर्दिष्टानां जीवशब्दाभिलपनीयानां ब्रह्मादिस्तम्बपर्यन्तानां क्षरणस्वभावाचित्प्रकृतिसंसृष्टानां सर्वभूतानामात्माऽन्तर्यामी । अक्षरात्मा अक्षराणां भगवदेकान्तिकोपासनयाऽचित्संसर्गवियुक्तानां ब्रह्मभावापन्नानां मुक्तानामात्माऽन्तर्यामी । क्षराक्षरपरः स्वरूपस्वभावादिभिः क्षरेभ्योऽक्षरेभ्यश्च पुरुषेभ्यः परोऽत्यन्तोत्कृष्टतया विलक्षणश्च । अस्ति । एकैकस्मिन् रोमकूपे । अनन्ताण्डनिवासात्सावरणानन्तकोटिब्रह्माण्डावसतेर्हेतोः ।

एवं निश्चित्य सुदृढं भवद्भिरपि साधवः !। शुकवत् कृष्णरसिकलीला गेया विरागिभिः ॥ ३० ॥
परिच्छिन्नवपुर्नृणां स्वेक्षणादिसुखाप्तये । भवति स्वेच्छया कृष्णोऽपरिच्छिन्नवपुः स्वयम् ॥ ३१ ॥
क्षरात्मा चाक्षरात्मा च क्षराक्षरपरोऽस्ति सः । एकैकरोम्ण्यनन्ताण्डनिवासान्महतो महान् ॥ ३२ ॥
तादृशस्येक्षणं कर्त्तुं जीवा ईशाश्च नेशते । अतस्तेषां दर्शनाय परिच्छिन्न इवास्ति सः ॥ ३३ ॥
नराकारेण तेनैव नृणां श्रेयो भवेदिह । अल्पानां नातिमहता रूपेण तु कथञ्चन ॥ ३४ ॥
अन्धकारे निवसतां गृहकार्यं नृणां यथा । सांवर्त्तकाग्निना न स्याद् ब्रह्माण्डक्षयकारिणा ॥ ३५ ॥

महतोऽतिविशालाद् अनन्तकोटिपुरुषाकृतिमुक्ताधाराद् भगवद्धामभूतादक्षरब्रह्मणोऽपि । महान् स्वभावादिभिरत्युत्कृष्टश्चास्ति ॥ ३२ ॥ तादृशस्येति । तादृशस्य तथाविधापारमहिम्नः श्रीकृष्णस्य । ईक्षणं साक्षाद्दर्शनम् । कर्त्तुम् । जीवा अनाद्यविद्योपहतात्मसंविदो मनुष्यादयः । ईशा ब्रह्मादय ईश्वराश्च । नेशते समर्था न भवन्ति । अतो हेतोः । तेषां जीवेशानाम् । दर्शनाय यथा स्वदर्शनं साक्षात्स्यात्तदर्थमित्यर्थः । स श्रीकृष्णः । परिच्छिन्न इव परिमेयमनुष्यसमानाकारो यथा । अस्ति जायते ॥ ३३ ॥ नरेति । इहास्मिन्मनुष्यलोके वर्त्तमानानाम् । अल्पानां गरुडाग्रे पुत्तिकावत्सांवर्त्ताग्नेः पुरो दीपशिखावदतिनिकृष्टानाम् । नृणां मनुजानाम् । श्रेयः कल्याणम् । नराकारेण स्वेच्छया धृतमनुष्यसमानाकृतिना । तेन परिच्छिन्नवपुषा श्रीकृष्णेनैव । भवेज्जायेत । अतिमहता पूर्वतरश्लोकोक्तेनात्युत्कृष्टेन । रूपेणापरिच्छेद्यभगवदाकारेण तु । कथंचन केनापि प्रकारेण । श्रेयो न भवेदेव ॥ ३४ ॥ एतदेव दृष्टान्तेन द्रढयति द्वाभ्याम् । अन्धकार इति । यथा । अन्धकारे गाढध्वान्तवति गर्भागारे । निवसताम् । नृणां जनानाम् । गृहकार्यम् । ब्रह्माण्डक्षयकारिणा त्रुटिमात्रकालेन ब्रह्माण्डविनाशकर्त्रा । सांवर्ताग्निना प्रलयानलेन । न स्यात् । यत्सन्निधिमात्रेण सर्वभस्मीभावस्तेन गृह-

कार्यसिद्धिर्न स्यादत्र किं वक्तव्यमित्यर्थः ॥ ३५ ॥ किन्त्विति । किन्तु । दीपरूपेण दीपात्मना कृत्वा । अल्पवपुषाऽल्पप्रमाणाकारेण । तेन सांवर्त्ताग्निना । तद्गृहकार्यम् । भवेत् । तथैव । अत्र लोके । नृणाम् । श्रेयः । अल्पवपुर्धृता मनुष्यसमानपरिमेयवपुर्धारिणा । तेन श्रीकृष्णेन । स्यात् ॥ ३६ ॥ ननु सांवर्त्ताग्नेर्दीपभावेऽल्पवातविनाश्यत्ववन्मनुष्यभावापन्नो भगवानपि । असमर्थतां प्राप्त इति चेन्नेत्याह । नृनाट्येति । प्रभुरतिसमर्थः । स मनुष्यसमानतया प्रतीयमानः श्रीकृष्णः । नृनाट्याचरणान्मनुष्यभावानुकरणाद्धेतोः । असमर्थ इव । भाति लोकदृष्ट्या दृश्यते । तथापि । तादृशोऽसमर्थः । न तु नैव । अस्ति । किन्तु स्वधाम्नीवात्रापि सकलैश्वर्यसम्पन्न एवास्तीत्यर्थः । इति हेतोः । तत्क्रिया मनुष्यसमानतया वर्त्तमानस्य भगवतः सर्वाण्यपि चरित्राणि । मङ्गलावहाः श्रोतृवक्त्रादिजनकल्याणकारिण्यः । भवन्ति ॥ ३७ ॥ एवमिति । एवममुना प्रकारेण । यो भक्तः । हरिं साक्षाच्छ्रीकृष्णम् । निर्दोषसकलक्रियं गुणातीतत्वात्सकलदोषवर्जितचरित्रम् । विद्याद्यथार्थतया जानीयात् । स भक्तः । पूर्णभक्त एकान्तिकभक्तः । विज्ञेयः । तस्यैवंविधभक्तस्य । इतरत् । ज्ञेयम् । नहि । भगवत्स्वरूपस्य यथार्थतया विदितत्वादतः परं तत्र तस्य ज्ञेयशेषो

किन्त्वल्पवपुषा तेन दीपरूपेण तद्भवेत् । तथैवात्र नृणां श्रेयः स्यात्तेनाल्पवपुर्धृता ॥ ३६ ॥
नृनाट्याचरणाद्भाति सोऽसमर्थ इव प्रभुः । न त्वस्ति तादृश इति तत्क्रियो मङ्गलावहाः ॥ ३७ ॥
एवं यस्तु हरिं विद्यान्निर्दोषसकलक्रियम् । सम्पूर्णभक्तो विज्ञेयस्तस्य ज्ञेयं न हीतरत् ॥ ३८ ॥
इत्युक्त्वोपरतं कृष्णमूचे काकुभयो नृपः । निश्चित्यैव भवन्तं यो भजेद्भक्तः स उच्यते ॥ ३९ ॥
मोहात्म्यज्ञानपूर्वः स्याद्धृदि ते यस्य निश्चयः । विपरीतश्च यस्य स्यात्तयोर्लक्ष्माणि मे वद ॥ ४० ॥
तमुवाच हरी राजन्नाद्यो यस्तस्य मानसे । इत्थं भवेयुः सङ्कल्पा यद्दिने निश्चयस्ततः ॥ ४१ ॥

नास्त्येवेत्यर्थः ॥ ३८ ॥ इतीति । इत्यमुना प्रकारेण । उक्त्वा मुक्तानन्दादिसाधून्प्रत्यभिधाय । उपरतं विरतिं प्राप्तम् । कृष्णं प्रत्यक्षं श्रीहरिकृष्णभगवन्तम् । काकुभयः नृपो रोचकग्रामाधिप एतन्नामा नृपतिः । ऊचेऽप्राक्षीदित्यर्थः । हे हरे ! । यो जनः । भवन्तं नराकारेण वर्त्तमानं साक्षाच्छ्रीहरिं त्वाम् । निश्चित्य भवद्भक्तत्यागिगृहिवाक्यात् प्रत्यभिज्ञानश्रवणाच्च सामान्यतोऽयमेव भगवानिति निर्णीयैव । भजेत् । स जनः । भक्तः । उच्यते ॥ ३९ ॥ माहात्म्येति । यस्य भक्तस्य । हृदि । माहात्म्यज्ञानपूर्वस्त्वदुक्तभवन्महिमज्ञानपूर्वकः । ते तव । निश्चयो भवत्स्वरूपज्ञाननिर्णयः । स्यात् । यस्य भक्तस्य । हृदि । विपरीत उक्तविधत्वन्माहात्म्यज्ञानरहितो निश्चयः । स्यात् । तयोस्तथाभूतयोर्भक्तयोः । लक्ष्माणि लक्षणानि । मे मह्यम् । वद ॥४०॥ तमिति । तमेवंपृच्छन्तं काकुभयनृपतिम् । हरिः । उवाच । हे राजन् ! । यो भक्तः । आद्यो माहात्म्यज्ञानसहितनिश्चययुक्तः । अस्ति । तस्य भक्तस्य । मानसे । यद्दिने यस्मिन्दिवसे । निश्चयस्तथाभूतो भगवत्स्वरूपज्ञाननिर्णयो जातः । ततस्तद्दिनादारभ्य । इत्थं वक्ष्यमाणप्रकारेण । सङ्कल्पाः । भवेयुः ॥ ४१ ॥

तत्सङ्कल्पानाह द्वाभ्याम् । जातमिति । मम तु । कल्याणम् । जातमेव । हि अथ च । अत्र लोके । यः । कश्चिज्जनः । मे मम । वचः । मानयिष्यति मद्वचनेन साक्षाद्भगवन्निश्चयं कृत्वा तं भजिष्यति । तस्य जनस्यापि । तत्कल्याणम् । भविष्यति ॥४२॥ कृतेति । अहं तु । कृतार्थः कृतकृत्यः । अस्मि । अथ च । आदरात् स्नेहपूर्वकम् । यत् । किञ्चित् । साधनं तपश्चरणादिकम् । कुर्वे । तद्धि तत्साधनाचरणं तु । कृष्णस्य प्रत्यक्षस्य श्रीहरेः । प्रीतये प्रसन्नतार्थम् । कुर्वे । कस्मैचित् । आशिषे कल्याणन्यूनतायाः पूर्णतासम्पादनाय भगवदितरफलाप्तये वा । न तु तत्साधनं नैव कुर्वे ॥४३॥ एवमिति । हे नृप ! । एवममुना प्रकारेण । आद्यस्य प्रथमस्य भक्तस्य । सङ्कल्पाः । स्युः । अन्यस्य माहात्म्यज्ञानरहितनिश्चययुक्तस्य भक्तस्य । तान्मनःसङ्कल्पान् । वदामि । तानाह सार्द्धेन । साक्षात्प्रत्यक्षः । कृष्णः श्रीहरिकृष्णो भगवांस्तु । मिलितो मया सङ्गतः । अस्ति । अत्रास्मिन्नर्थे । संशयः कश्चिदपि सन्देहः । नास्ति नैव भवति ॥ ४४ ॥ नेति तथापि । मया । शोभनमतिप्रशस्तम् । किञ्चित्किमपि ।

जातमेव हि कल्याणं मम त्वथ वचोऽत्र यः । मानयिष्यति मे कश्चित्तत्स्यापि भविष्यति ॥ ४२ ॥
कृतार्थोऽस्म्यथ यत्किञ्चित्कुर्वे साधनमादरात् । कृष्णस्य प्रीतये तद्धि न तु कस्यैचिदाशिषे ॥ ४३ ॥
एवमाद्यस्य सङ्कल्पाः स्युरन्यस्य वदामि तान् । कृष्णस्तु साक्षान्मिलितोऽस्त्यत्र नास्त्येव संशयः ॥ ४४ ॥
न श्रेयःसाधनं किञ्चिच्छोभनं क्रियते मया । अतो भविष्यति श्रेयो मम वा न भविष्यति ॥ ४५ ॥
माहात्म्यज्ञानहीनस्य सङ्कल्पा एवमादयः । भवेयुरिति जानीहि जपतोऽपि हरेर्मनुम् ॥ ४६ ॥
अथ भूयः काकुभयो हरिकृष्णं स्म पृच्छति । मुख्यमध्यमहीनांस्ते भक्तान् बोधय लक्षणैः ॥ ४७ ॥
तमुवाच हरिर्यस्य साक्षात्स्यादात्मदर्शनम् । आत्मानमेव यो विद्यात्सच्चिद्रूपं स्वमक्षरम् ॥ ४८ ॥

श्रेयःसाधनं कल्याणोपायभूतं तपश्चरणादिकम् । न क्रियते । अतो हेतोः । मम । श्रेयः । भविष्यति । अथवा । न भविष्यति ॥ ४५ ॥ माहात्म्येति । हे राजन् ! । एवमादय एतत्प्रभृतयः । सङ्कल्पाः । हरेः । मनुं स्वामिनारायणेति मूलमन्त्रम् । जपतो नियमपूर्वं मालिकया आवर्त्तयतोऽपि । माहात्म्यज्ञानहीनस्य भक्तस्य । भवेयुः । इतीत्थम् । जानीहि अवगच्छ । इत्थंभूतैर्द्विविधैः सङ्कल्पैरेव तयोर्लक्षणानि ज्ञेयानि । न तल्लक्षणवेदनेऽन्यः प्रकारोऽस्ति इति भावः ॥ ४६ ॥ अथेति । अथानन्तरम् । भूयः पुनरपि । काकुभयो नृपः । हरिकृष्णं भगवन्तम् । पृच्छति स्म । हे हरे ! । मुख्यमध्यमहीनानुत्तममध्यमकनिष्ठान् । ते तव । भक्तान् । लक्षणैः । बोधय मह्यं ज्ञापय ॥ ४७ ॥ तमिति । तमेवंपृच्छन्तं काकुभयनृपतिम् । हरिः । उवाच । हे राजन् ! । यस्य भक्तस्य । साक्षात्प्रत्यक्षतया । आत्मदर्शनं स्वजीवात्मस्वरूपनिरीक्षणम् । स्यात् । यो भक्तः । स्वं स्वकीयम् । आत्मानम् । सच्चिद्रूपं सच्चिदानन्दधर्मम् । अक्षरमेव । विद्यात् । सच्चिदानन्दाक्षरब्रह्मभावापन्नं जानीयादित्यर्थः ॥ ४८ ॥

नेति । किञ्च । विवेकवानात्मानात्मस्वरूपयथार्थाभिज्ञो भक्तः । दैहिकान्देहसम्बन्धिनः । कांश्चित् । गुणान् अनित्यत्वछेद्यभेद्यक्लेद्यशोष्यजडत्वादीन् धर्मान् । स्वस्मिन् स्वरूपे । कर्हिचित्कदाचिदपि । न मन्येत । नित्यत्वादीन् अविनाशित्वाछेद्याभेद्याशोष्याक्लेद्यत्वादीन् । आत्मगुणान् स्वजीवधर्मान् । देहे । नैव मन्येत ॥ ४९॥ आत्मेति । किञ्च । साक्षात् प्रत्यक्षतया स्वेनेक्षितम् । भगवन्तम् । हृदि विषये । आत्मस्थम् । अवलोकयेत् । हृदये वर्त्तमाने स्वात्मनि संपश्येदित्यर्थः । अन्यदेहस्थान् स्वेतरजनशरीरावस्थितान् । आत्मनो जीवानपि । तत्त्वतो यथास्वरूपावस्थितान् । वीक्षेत ॥ ५० ॥ प्राप्येति । यो भक्तः । इहास्मिन् भौतिके शरीरे विद्यमाने सत्येव । एवमुक्तप्रकारेण । आत्मनिष्ठायाः । परां काष्ठां चरमां दिशम् । प्राप्यापि । अनहंकृतिः स्वागततथाभूतैश्वर्याहंकाररहितः सन् । कृष्णं स्वेष्टदेवं साक्षाद्भगवन्तमेव । अधिकमतिश्रेष्ठम् । विद्यात् । तद्भक्तान् साक्षाद्भगवन्तं भजतो जनांश्च । अधिकान् । विद्यात् ॥५१॥ स इति । स इत्थंभूत एव । कृष्णस्य । भक्तः । उत्तमः । परमैकान्तिकश्च । परिकीर्त्तितः । सः । सच्छास्त्रवर्णितः श्रीमद्भागवतभगवद्गीतादिसच्छास्त्रप्रशंसितः । हरेः । आत्माऽऽत्मवत्प्रियश्च । भवति । 'ज्ञानिनस्त्वहमेवेष्टः स्वार्थो हेतुश्च सम्मतः । ज्ञानी त्वात्मैव

न गुणान् दैहिकान् कांश्चित्स्वस्मिन् मन्येत कर्हिचित् । देहे चात्मगुणानैव नित्यत्वादीन् विवेकवान् ॥ ४९ ॥
आत्मस्थं भगवन्तं च साक्षाद्धृद्यवलोकयेत् । आत्मनश्चान्यदेहस्थानपि वीक्षेत तत्त्वतः ॥ ५० ॥
प्राप्यैवमात्मनिष्ठायाः परां काष्ठामपीह यः । कृष्णमेवाधिकं विद्यात्तद्भक्तांश्चानहंकृतिः ॥ ५१ ॥
स एव भक्तः कृष्णस्य परिकीर्त्तित उत्तमः । परमैकान्तिकश्चात्मा हरेः सच्छास्त्रवर्णितः ॥ ५२ ॥
भगवन्निश्चयश्चात्मनिष्ठा स्यात्तदपि प्रभोः । ईर्ष्या स्याच्छ्रेष्ठभक्तेभ्यः कृष्णभक्तस्य यस्य तु ॥ ५३ ॥
स्वामापने कृते क्वापि दोषदृष्टिर्हरावपि । यस्य स्याच्च स विज्ञेयो मध्यमोऽस्थिरधीर्नृप ! ॥ ५४ ॥
आत्मनिष्ठाविरहितो भगवन्निश्चयो भवेत् । हरौ च जगति प्रीतिर्यस्य स्यात्स तृतीयकः ॥ ५५ ॥

मे मत'मिति ॥ ५२ ॥ एवमुत्तमभक्तलक्षणमुक्त्वा मध्यमभक्तलक्षणमाह द्वाभ्याम् । भगवदिति । यस्य । कृष्णभक्तस्य । भगवन्निश्चयः । आत्मनिष्ठा च । स्यात् । उभे अपि सामान्यतया स्यातामित्यर्थः । तदपि तथापि । प्रभोः साक्षात्कृष्णस्य । श्रेष्ठभक्तेभ्यः । उत्तमभक्तानामुपरीत्यर्थः । ईर्ष्या तद्गुणाक्षान्तिः । स्यात् ॥ ५३ ॥ स्वेति । हे नृप ! । यस्य भक्तस्य । क्वापि कदाचित् । स्वापमाने सभामध्ये स्वमानभङ्गे । कृते हरिणा विहिते सति । हरौ स्वेष्टदेवे श्रीकृष्णेऽपि । दोषदृष्टिरयं भगवान्सन्कथं सदसि मदपमानं करोतीति दोषदर्शनम् । स्यात् । स एवंविधो भक्तः । अस्थिरधीरनिश्चलमतिः । मध्यमः । विज्ञेयः ॥ ५४ ॥ अथ कनिष्ठभक्तलक्षणमाह । आत्मेति । यस्य भक्तस्य । आत्मनिष्ठाविरहितः । भगवन्निश्चयः । भवेत् । यस्य । हरौ स्वेष्टदेवे कृष्णे । जगति जगदन्तर्वर्त्तिनि स्वसम्बन्धिवर्गादौ च । प्रीतिस्तुल्यः स्नेहः । स्यात् । स एवंभूतो भक्तः । तृतीयकः कनिष्ठः । विज्ञेयः ॥ ५५ ॥

इतीति । इत्येवंविधम् । ईशितुः सर्वनियन्तुः । हरेः । वचनामृतम् । निपीय । स नृपः काकुभयनृपतिः साधुभिर्मुक्तानन्दादिमुनिभिः । सह । सदःस्थिताः सभोपविष्टाः । निखिलभक्तजनाश्च । परमहर्षम् । अवाप्य । तं स्वावासं गच्छन्तं श्रीहरिम् । आनमन् प्रणमन्ति स्म ॥५६॥ कृतां स्वेन नृपाग्रे यो वार्त्तां प्राह सतां पुरः । स्वस्य सर्वाः क्रियाश्चाह निःश्रेयसकरीर्नृणाम् ॥ १ ॥ माहात्म्यज्ञानयुक्तः स्यान्निश्चयः स्वस्य यस्य सः । तथाविधो न यस्य स्यात्तयोर्लक्ष्माणि चाह यः ॥ २ ॥ स्वस्योत्तमादिभक्तानां लक्षणान्याह यः स्फुटम् । स श्रीहरिर्विदध्यान्मां भक्तमेकान्तिकं निजम् ॥ ३ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्सू नुरघुवीराचार्य-विरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां द्विसप्ततितमस्तरङ्गः ॥ ७२ ॥

वीर्यमेव कामरूपमुक्त्वा तज्जयसाधनम् । दुःसाध्यं तज्जयस्यापि साधनं सुदृढं च यत् ॥ १ ॥ येनार्पितं मनः स्वीयं हरौ तद्येन नार्पितम् । तयोर्यल्लक्षणं चैत-त्रिसप्ततितमे स्मृतम् ॥ २ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । ( १८७६ ) मधुमासान्ते चैत्रमासस्यावसाने । अमायाममावास्यातिथौ । इदम् । हरेः । वचोऽ-

इति हरेर्वचनामृतमीशितुः स तु नृपश्च निपीय सदःस्थिताः । निखिलभक्तजनाः सह साधुभिः परमहर्षमवाप्य तमानमन् ॥ ५६ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते द्विसप्ततितमस्तरङ्गः ॥ ७२ ॥

शकाब्दे विक्रमार्कस्य रसाश्ववसुभूमिते । अमायां मधुमासान्ते वचोऽमृतमिदं हरेः ॥ १ ॥ तत्र दुर्गपुरे दुर्गे उत्त-मस्य निजाश्रमे । उदङ्मुखे बहिर्वेद्यां स्वासने स उपाविशत् ॥ २ ॥ वृत्तं सद्भिर्गृहस्थैश्च निजभक्तैः सिताम्बरम् । गोपालानन्दसाधुस्तं पप्रच्छ विनयानतः ॥३॥ स्वामिन् ! कामस्य किं रूपमस्त्यथो हरिरब्रवीत् । देहे चरमधातुर्यः प्रोक्तः कामः स एव हि ॥४॥ पुनः स साधुः पप्रच्छ वीर्यं त्वन्नरसोद्भवम् । भवेत्कामस्य तद्रूपं कथं हरिरथाब्रवीत् ॥५॥

मृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमस्य नृपतेः । दुर्गे । उदङ्मुखे उत्तरास्ये । निजाश्रमे स्वकीयावासभवने । बहिर्वेद्यां बाह्यायां वितर्दौ । स्वासने उत्तरच्छदाद्युपकरणसंशोभिते निजविष्टरे । स श्रीहरिः । उपाविशच्छ्रीवासुदेवसान्ध्यनीराजनान्ते उपविवेश ॥ २ ॥ वृतमिति । निजभक्तैर्नानादेशत आगतैः स्वाश्रितैः । सद्भिर्मुक्तानन्दादिसाधुभिः । गृहस्थैर्मयरामभट्टादिगृहिजनैश्च । वृतं सभायां परिवेष्टितम् । सिताम्बरं परिधृतसकलधवलवसनम् । तं श्रीहरिम् । गोपालानन्दसाधुः । विनयानतो विनयपूर्वं कृतप्रणामः सन् । पप्रच्छ ॥ ३ ॥ स्वामिन्निति । हे स्वामिन् ! । कामस्य मन्मथस्य । रूपं स्वरूपम् । किम् । अस्ति । अथो एवंविध-गोपालानन्दमुनिकृतप्रश्नश्रवणानन्तरम् । हरिः । अब्रवीत् । हे मुने ! । देहे सकलप्राणिशरीरे । यः । चरमधातुर्वीर्यम् । अस्ति । स चरमधातुरेव । कामः । प्रोक्तः । अस्ति । हि ॥ ४ ॥ पुनरिति । पुनर्भूयोऽपि । स साधुर्गोपालानन्दमुनिः । पप्रच्छ । हे हरे ! । वीर्यं भवदुक्तचरमधातुस्तु । अन्नरसोद्भवमशितान्नरसोत्पन्नम् । अस्ति । तत्तथाविधंकार्यम् । कामस्य रूपम् । कथम् । भवेत् । अथैवंविधगोपालानन्दमुनिकृतप्रश्नश्रवणानन्तरम् । हरिः । अब्रवीत् ॥ ५ ॥

नाडीति । हे मुने ! । देहे । मनोवहाख्या । नाडी । अस्ति । तत्र मनोवहाख्यनाड्याम् । मनः । स्थितम् । अस्ति । तन्मनः । तत्स्थं मनोवहानाड्यवस्थितं सदेव । स्वशक्त्या । अखिलाङ्गेषु शरीरावस्थितसकलावयवेषु । व्याप्तम् । अस्ति ॥ ६ ॥ कामेति । किञ्च । सूक्ष्मः । कामात्मकः कामरूपः । अन्नसारोऽशितान्नस्थिरांशः । सर्वाङ्गसंस्थितः शरीरस्थितसकलावयवास्थितः । अस्ति । तत्स्थस्त्रीभोगसङ्कल्पमन्थेन मनोवस्थितस्त्र्युपभोगसङ्कल्परूपमथनदण्डेन । वपुर्दध्याधारमन्थनीवद्वर्त्तमानान्नसाराधारं शरीरम् । मथ्यते । मन एव स्त्र्युपभोगात्मकस्वसङ्कल्पमथनदण्डेन देहावस्थितान्नसारमालोडयतीत्यर्थः ॥७॥ अत्र दृष्टान्तमाह । नवनीतमिति । हे मुने ! । यथा । मथा मथनदण्डेन । मथितादालोडितात् । दध्नः सकाशात् । नवनीतम् । उदेति घनीभूयोर्ध्वं गच्छति । तथा । अन्नसारः । अखिलाङ्गत उक्तरीत्या मथितशरीरस्थसकलावयवेभ्यः । रेतो वीर्यरूपः । सन् । उद्गच्छत्युर्ध्वं प्रयाति ॥ ८ ॥ मनोवहायामिति । तद्वीर्यम् । सर्वतः सकलाङ्गतः । मनोवहायां मनसः पूर्वोक्तरीत्याधारभूतायां मनोवहाख्यायाम् । नाड्याम् । एकीभूय मनसा सम्भूयैव मनसा सह मिलित्वैवेत्यर्थः । मनोवेगात्स्त्र्युपभोगसङ्कल्परूपविकारवतो मनसो रंहसो हेतोः । शरीरतो देहात्सकाशात् । शिश्नद्वारोपस्थ-

नाडी मनोवहाख्यास्ति देहे तत्र मनः स्थितम् । तत्स्थमेवाखिलाङ्गेषु स्वशक्त्या व्याप्तमस्ति तत् ॥ ६ ॥ कामात्मकोऽन्नसारश्च सूक्ष्मः सर्वाङ्गसंस्थितः । तत्स्थस्त्रीभोगसङ्कल्पमन्थेन मथ्यते वपुः ॥ ७ ॥ नवनीतं यथा दध्न उदेति मथितान्मथा । अन्नसारस्तथा रेत उद्गच्छत्यखिलाङ्गतः ॥ ८ ॥ मनोवहायां नाड्यां तदेकीभूयैव सर्वतः । शिश्नद्वारा वहिर्याति मनोवेगाच्छरीरतः ॥ ९ ॥ तद्रोधं योगकलया योगिनो येऽत्र कुर्वते । त एव कामजेतारो नैष्ठिका ब्रह्मचारिणः ॥ १० ॥ मनोवहायाश्चाधस्ताच्छिश्ने पातो न रेतसः । येषां त एव शास्त्रेषु कथिता उर्द्ध्वमन्थिनः ॥११॥ एवं वीर्यजयः कामजय इत्युच्यते ततः । वदाम्यहं वीर्यमेव रूपं कामस्य नेतरत् ॥१२॥ गोपालोनन्द ऊचेऽथ यद्येवं तर्हि वर्ष्मणः । अन्तकाले कृते दाहे तत्स्थं रेतस्तु दह्यते ॥१३॥

द्वारेण । बहिः । याति । शरीरात्पृथग्भवतीत्यर्थः ॥ ९ ॥ तदिति । अत्र लोके । ये । योगिनोऽष्टाङ्गयोगयुक्तास्त्यागिनो भवद्भक्ताः । योगकलयाऽष्टाङ्गयोगयुक्त्या । तद्रोधं वीर्यावरोधम् । शिश्नद्वारावीर्यस्यानिष्क्रमणरूपावरोधनमित्यर्थः । कुर्वते । ते तथाभूता योगिन एव । कामजेतारः कन्दर्पविजयिनः । नैष्ठिकाः ब्रह्मचारिणः । प्रोक्ताः ॥ १० ॥ एतदेव स्पष्टमाह । मनोवहाया इति । येषां योगिनाम् । मनोवहाया नाड्याः सकाशात् । अधस्तात् । शिश्ने मेहने । रेतसो वीर्यस्य । पातः । न स्यात् । ते योगिन एव । शास्त्रेषु योगायुर्वेदादिषु । ऊर्ध्वमन्थिन ऊर्ध्वरेतसः । कथिताः ॥ ११ ॥ एवमिति । एवममुना प्रकारेण । वीर्यजयो वीर्यावरोधः । कामजयः । इति । उच्यते योगशास्त्रज्ञैः कथ्यते । ततो हेतोः । अहम् । वीर्यमेव । कामस्य । रूपम् । वदामि । इतरद्वीर्यादन्यत् । कामरूपं नैव वदामि ॥ १२ ॥ गोपालानन्द इति । अथैवंविधश्रीहरिवाक्यश्रवणानन्तरम् । गोपालानन्दो मुनिः । ऊचे श्रीहरिं प्रश्नमप्राक्षीत् । हे हरे ! । यदि । एवं वीर्यमेव कामरूपम् । तर्हि । वर्ष्मणो देहस्य । अन्तकाले परासुत्वे जाते सति । दाहे तदनन्तरं तस्य दहने । कृते सति । तत्स्थं देहावस्थितम् । रेतो वीर्यं तु । दह्यते भस्मीभावं प्राप्नोति ॥ १३ ॥

तदेति । हे प्रभो ! । तद्दाहे वीर्यदहने सति । कामदाहोऽपि । जातः । इत्यागतमेवंविधः सिद्धान्तो जातः । तथा सति । अस्य । जीवस्य । देहान्तरेऽन्यदेहप्राप्तौ सत्यामित्यर्थः । स कामः । कुतोऽस्ति कथमुत्पद्यते इत्यर्थः ॥ १४ ॥ तमिति । तमेवंपृच्छन्तं गोपालानन्दमुनिम् । स्वामी श्रीहरिः । उवाच । हे मुने ! । वीर्यं तु । सूक्ष्मदेहे । अवतिष्ठते । स्थूलदेहे प्राग्दग्धेतरस्मिन्सूक्ष्मदेहाश्रितस्थूलशरीरे तु । तद्योगात् सूक्ष्मदेहसम्बन्धात् । तस्य वीर्यस्य । सम्भव उत्पत्तिः । वर्त्तते ॥ १५ ॥ ननु स्थूलदेहेन सह सूक्ष्मदेहदाहः कथं न भवेदिति चेत्तत्संयोगे सजीवत्वेन तद्दाहस्यासम्भवात्तत्तो निःसृत्य भूतवदन्यं स्थूलदेहमाश्रित्य यदाऽवतिष्ठते तदा त्यक्तस्थूलदेहासम्भवान्न सूक्ष्मदाहसम्भव इत्याह । अग्निनेति । अग्निना चितानलेन । स्थूलम् । अङ्गं देहः । एव । दह्यते भस्मसाद्विधीयते । अन्यत् सूक्ष्माङ्गं तु । तद्बहिः स्थूलदेहाद् बहिर्भागे । निर्गत्य । भूतवद् भूतइव । अन्यम् । स्थूलदेहम् । प्रविश्य । आस्ते ततस्तत्त्यक्तस्थूलदेहदाहसम्भवान्न तेन सूक्ष्मदेहदाहसम्भव इति भावः ॥ १६ ॥ अत इति । अतो हेतोः । तत्स्थकामस्य सूक्ष्मदेहावस्थितवीर्यरूपमदनस्य । दाहः । नास्ति । इतीत्थम् । अवधारय निश्चिनु ।

तद्दाहे कामदाहोऽपि जात इत्यागतं प्रभो ! । तथा सत्यस्य जीवस्य कुतो देहान्तरेऽस्ति सः ॥ १४ ॥ तं स्वाम्युवाच वीर्यं तु सूक्ष्मदेहेऽवतिष्ठते । तद्योगात्स्थूलदेहे तु वर्त्तते तस्य सम्भवः ॥ १५ ॥ अग्निना स्थूलमेवाङ्गं दह्यतेऽन्यत्तु तद्बहिः । निर्गत्यान्यं स्थूलदेहं प्रविश्यास्ते हि भूतवत् ॥१६॥ अतो न तत्स्थकामस्य दाहोऽस्तीत्यवधारय । इत्युक्तः स पुनः साधुस्तमपृच्छज्जगद्गुरुम् ॥ १७ ॥ एवं वीर्यस्य नित्यत्वे कामरूपस्य सत्पते !। निष्कामत्वं मुमुक्षूणां कथं स्याद् ब्रह्मचारिता ॥१८॥ सति वीर्ये च देहेऽस्मिन् क्वचित्कालेऽपि योगिनः । स्वप्ने जाग्रति वा तस्य पातः स्यान्नात्र संशयः ॥ १९ ॥ योगीन्द्रस्येश्वरस्यापि शङ्करस्य स्मरद्विषः । लक्षाब्दान्तेऽप्यभूद्वीर्यपातो मोहिन्यवेक्षणात् ॥ २० ॥

इत्यमुना प्रकारेण । उक्तः श्रीहरिणा कथितः । सः । साधुर्गोपालानन्दमुनिः । पुनर्भूयोऽपि । जगद्गुरुं जनानामेकं हितोपदेष्टारम् । तं श्रीहरिम् । अपृच्छत् ॥१७॥ एवमिति । हे सत्पते ! । एवमुक्तप्रकारेण । कामस्वरूपभूतस्य । वीर्यस्य । नित्यत्वे सूक्ष्मशरीरस्य नित्यत्वात् ध्रुवत्वे सति । मुमुक्षूणां योगनिष्ठत्यागिनाजनानाम् । निष्कामत्वं वीर्योर्ध्वमन्थित्वरूपो निष्कामभावः । ब्रह्मचारिता तद्रूपं नैष्ठिकब्रह्मचारित्वम् । कथम् । स्यात् । न स्यादेवेत्यर्थः ॥ १८ ॥ पुनरपि नित्यसूक्ष्मदेहस्थवीर्यसत्त्वे निष्कामत्वाभावं सदृष्टान्तं भंग्यन्तरेणाह सार्द्धद्वाभ्याम् । सतीति । हे हरे ! । अस्मिन् । देहे विषये । वीर्ये । सति । योगिनः । क्वचित्कालेऽपि । स्वप्ने स्वप्नावस्थायाम् । अथवा । जाग्रति जाग्रदवस्थायाम् । तस्य वीर्यस्य । पातः शिश्नद्वाराऽधःपतनम् । स्यात् । अत्रास्मिन्नर्थे । संशयः । नास्ति ॥ १९ ॥ योगीन्द्रस्येति । योगीन्द्रस्याष्टाङ्गयोगसिद्धिमत्सकलयोगिमुख्यस्य । स्मरद्विषः सकलजगदुःखदकामदेहदाहकस्य । अत एव । ईश्वरस्यातिसमर्थस्य । शङ्करस्य पार्वतीपतेः शिवस्यापि । लक्षाब्दान्ते लक्षशो वर्षावसानेऽपि । मोहिन्यवेक्षणाद्भगवतो मोहीनीस्वरूपावेक्षणमात्रत एव । वीर्यपातः । अभूज्जायते स्म ॥ २० ॥

अत इति । अतो हेतोः । निष्कामतासिद्धिः । न स्यादेव । इतीत्थम् । मे मम । भाति । मच्चित्ते इत्थं प्रतिभासते इत्यर्थः । इत्यमुना प्रकारेण । उक्तवन्तं श्रीहरिं कथयन्तम् । साधुं गोपालानन्दमुनिम् । भक्तिनन्दनः श्रीहरिः । अब्रवीत् । एवं निष्कामतायाः सर्वथाऽसिद्धत्वान्मुमुक्षूणां ताम्ृते सर्वथाऽर्थसिध्यभावात्तदर्थं साधनान्यवश्यमपेक्षन्ते तानि च कानीति गोपालानन्दमुन्यन्तःस्थाशयं सर्वान्तरात्मत्वादाकल्पय्य तदुक्तार्थानुमोदनपूर्वमेतदर्थं साधनस्य दुष्करतां चोक्त्वा तत्सम्पादनसाधनानि विवक्षुः श्रीहरिराहेति भावः ॥ २१ ॥ सत्यमिति । हे साधो ! । त्वम् । सत्यम् । वदसि । निष्कामत्वम् । सुदुर्लभं सुदुष्प्रापम् । अस्ति । शिवस्यापि । एतावती । योगकला । न्यूना । उदिता । मोहिनीदर्शनवीर्यस्त्रावोक्त्या शास्त्रेण शिवस्य योगकलान्यूनत्वमुदितमित्यर्थः ॥ २२ ॥ सन्त्यक्तेति । सन्त्यक्तस्त्रीप्रसङ्गानां परिहृताष्टविधाङ्गनासम्बन्धानाम् । अन्येषां शिवेतरेषाम् । ब्रह्मचारिणाम् । क्वचित्स्त्रीस्मरणादौ । स्वप्ने । वीर्यपाताद्रेतःस्त्रावाद्धेतोः । ब्रह्मचारिता । शुद्धा यथार्था । नास्त्येव ॥ २३ ॥ अत इति । अतः शुद्धब्रह्मचारिताभावाद्धेतोः । श्रीमद्भागवते । भगवान् । कपिलः कर्दमसूनुर्मुनिः । नारायणम् ।

अतो निष्कामतासिद्धिर्न स्यादेवेति भाति मे । इत्युक्तवन्तं साधुं तमब्रवीद्भक्तिनन्दनः ॥ २१ ॥ सत्यं वदसि साधो ! त्वं निष्कामत्वं सुदुर्लभम् । एतावती शिवस्यापि न्यूना योगकलोदिता ॥ २२ ॥ सन्त्यक्तस्त्रीप्रसङ्गानामन्येषां ब्रह्मचारिणाम् । स्वप्ने क्वचिद्वीर्यपातान्न शुद्धा ब्रह्मचारिता ॥ २३ ॥ अतः श्रीमद्भागवते कपिलो भगवान् जगौ । सर्वे स्त्रीखण्डितधियो नारायणमृषिं विना ॥२४॥ अतो मदात्मकः सोऽस्ति ह्यूर्ध्वरेताश्च नैष्ठिकः । अन्येऽपि तत्प्रतापेन तादृशाः सन्ति तत्पदे ॥२५॥ यूयं मदाश्रिताः सर्वे समाराधितमत्पदः । मत्प्रतापात्तादृशा वै भविष्यथ जितस्मराः ॥२६॥

ऋषिम् । विना । ऋषिसमानाकारं नारायणमृते इत्यर्थः । सर्वे ब्रह्मादयः सकला अपि । स्त्रीखण्डितधियो योषित्समाकृष्टमतयः । भवन्ति । इति । जगौ स्वमातरं देवहूतिं जगाद । श्रीभागवते यथा । 'प्रजापतिः स्वां दुहितरं दृष्ट्वा तद्रूपधर्षितः । रोहिद्भूतां सोऽन्वधावदृष्यरूपी हतत्रपः । तत्सृष्टसृष्टसृष्टेषु कोन्वखण्डितधीः पुमान् । ऋषिं नारायणमृते योषिन्मय्येह मायये'ति ॥ २४ ॥ अत इति । अतो हेतोः । मदात्मको मदवताररूपः । स नारायणऋषिः । ऊर्ध्वरेताः । नैष्ठिक ब्रह्मचारी ! अस्ति हि । तत्पदे नारायणर्षिस्थानभूतायां विशालायाम् । अन्ये तदितरे मुनयोऽपि । तत्प्रतापेन नारायणर्षिप्रभावेन । तादृशा ऊर्ध्वरेतसो नैष्ठिकब्रह्मचारिणः । सन्ति विद्यन्ते ॥ २५ ॥ ननु नारायणर्ष्याश्रितानां तथात्वमस्तु त्वामाश्रितानां नस्तत्ता कथंभवेदिति चेन्मदवतारनारायणर्ष्याश्रितानां यदेवं तदा तत्कारणस्य सर्वावतारधारिणोऽक्षरधामाधिपतेस्तथाविधमुक्तकोट्युपासितचरणकमलस्य नैष्ठिकराजस्य प्रत्यक्षकृष्णस्य ममैव कृताश्रया यूयं तु तथाविधा नूनमेव भविष्यथेत्याह त्रिभिः । यूयमिति । हे मुने ! । मदाश्रिता ईश्वरेश्वरस्य ममैवैकस्य कृताश्रयाः । समाराधितमत्पद एकान्तिकभावेन संसेवितमच्चरणकमलाः । यूयम् । सर्वे । मत्प्रतापात् । जितस्मरा उन्मथितवीर्यरूपकामाः सन्तः । तादृशा ऊर्ध्वरेतसो नैष्ठिकाः । भविष्यथ । वै निश्चितम् ॥ २६ ॥

मदाश्रिताः समाराधितमत्पदश्चेति विशेषणाभ्यां त्यागिनां गृहिणां च सामान्येन नैष्ठिकत्वं प्राप्तं तन्निवृत्तयेऽष्टधास्त्रीवर्जनवतां त्यागिनामेवैतत्स्यादित्याह । स्त्रीति । मद्भजने प्रेमपूर्वं श्रवणादिनवविधमत्सेवने । रतैरासक्तैः । यैस्त्यागिभिः । अष्टधा श्रवणाद्यष्टप्रकारेण । स्त्रीप्रसङ्गः । त्यक्तः । ते तथाभूतास्त्यागिन एव । मत्प्रतापेन । शनैः । तद्‌गतिं नैष्ठिकभावम् । यास्यन्ति ॥ २७ ॥ अष्टधा स्त्रीत्यागाद्युक्तप्रकारसत्त्वेऽपि मच्छन्दानुवृत्यभावात् प्रागप्राप्तमत्प्रसादानां ततस्तत्प्राप्त्यै सम्पादितमच्छन्दानुवृत्तीनां तत्सम्पादनेन जातमत्प्रसादानामेव त्यागिनां तल्लभ्यमित्याह । वीर्येति । हे मुने ! । वीर्यावरोध उक्तरीत्या वीर्यनिरोधनमेव । ब्रह्मचर्यस्य नैष्ठिकबृहद्व्रतस्य । लक्षणम् । अस्ति । तत्तथाविधंब्रह्मचर्यम् । मम । प्रसादाच्छन्दानुवृत्तिपूर्वकसेवाजातमदनुग्रहादेव । लभ्यं प्राप्यम् । भवति । अन्यथा प्रकारान्तरेण । क्वचित्कदाचिदपि । न तु लभ्यं नास्त्येव ॥ २८ ॥ एवं नैष्ठिकत्वस्योक्तरीत्या स्वप्रसादलभ्यत्वं सम्पाद्य साम्प्रतं न केवलमुपस्थेन वीर्यस्रावः किन्तु स्वेदेन सह रोमविवरेऽपि तत्प्रस्रवतीति तदपि रोध्यमिति ब्रुवन्कामजयसाधनस्य च दुष्करत्वं ब्रुवन्नृभावाचरितस्वचरित्रोद्देशेन स्वीयांस्तत्साधनमुपशिक्षयन्नाहाष्टभिः । स्त्रीति । हे मुने ! ।

स्त्रीप्रसङ्गोऽष्टधा यैस्तु त्यक्तो मद्भजने रतैः । त एव मत्प्रतापेन शनैर्यास्यन्ति तद्गतिम् ॥ २७ ॥
वीर्यावरोध एवास्ति ब्रह्मचर्यस्य लक्षणम् । प्रसादादेव मम तल्लभ्यं न त्वन्यथा क्वचित् ॥ २८ ॥
स्त्रीसङ्कल्पं विनापि स्यात्स्वेदेन सह रेतसः । देहाद्बहिर्निःसरणं रोध्यं तदपि योगिभिः ॥ २९ ॥
एतच्छ्रुतं मया बाल्ये स्त्रीगन्धमप्यगृह्णता । शुद्धं बृहद्व्रतं पाल्यमिति व्यवसितं ततः ॥ ३० ॥
ततोऽभ्यस्तं मया बस्तिकर्म द्विविधमादरात् । कौञ्जरी च क्रिया सम्यगूर्ध्वरेतस्त्वसिद्धये ॥ ३१ ॥
निशि स्वापे च गोरक्षासनं नित्यमकार्यत । येन स्वप्नेऽपि नैव स्यात्पातो वीर्यस्य वर्णिनः ॥ ३२ ॥

स्त्रीसङ्कल्पं विनापि । स्वेदेन घर्मोदकेन सह । रेतसः । देहात् । बहिः । निःसरणं रोमविवरद्वारानिष्क्रमणम् । स्यात् । तत्तथानिःसरद्वीर्यमपि । योगिभिः । रोध्यम् । एतदित्युत्तरेणान्वयः ॥ २९ ॥ एतदिति । एतदेवंविधं योगशास्त्रवचनम् । मया । बाल्ये गृहत्यागातिशोभने बालभावे । श्रुतं पुलहाश्रमाद् व्रजता मया कस्यचन योगिनो मुखादाकर्णितमित्यर्थः । ततस्तदनन्तरम् । स्त्रीगन्धं स्त्र्यङ्गस्पृष्टवायुगततदङ्गपरिमलमपि । अगृह्णता घ्राणेन्द्रियेणाजिघ्रता मया । शुद्धं स्वेदेन सहापि वीर्यनिष्क्रमणनिरोधान्निर्मलम् । बृहद्व्रतं नैष्ठिकब्रह्मचर्यव्रतम् । पाल्यं सर्वथा यावज्जीवं धारणीयम् । इतीत्थम् । व्यवसितं स्वमनसा निश्चितम् ॥ ३० ॥ तत इति । ततस्तदनन्तरम् । मया । सम्यगूर्ध्वरेतस्त्वसिद्धये यथार्थब्रह्मचर्यव्रतसिध्यर्थम् । द्विविधं द्विप्रकारम् । बस्तिकर्म । तत्र नाभिमात्रे जले स्थित्वा गुदेन जलमाकृष्य बस्तिं क्षालयित्वा गुदेनैव तत्त्यजनरूपमाद्यम् । शिश्नेन सलिलमाकृष्य पुनः शिश्नेनैव विरेचनरूपं गुदेन वा विरेचनरूपं द्वितीयम् । आदरात् । अभ्यस्तम् । कौञ्जरी आदौ मुखेन जलं पीत्वा पुनर्मुखेनैव तद्वमनरूपा गजकरण्याख्या । क्रिया च अभ्यस्ता ॥ ३१ ॥ निशीति । किञ्च । मया । नित्यम् । निशि रात्रौ । स्वापे शयनसमये । गोरक्षासनं भाषायां

गोरखासनमिति प्रसिद्धमासनविशेषम् । अकार्यत । 'स्वार्थेऽत्र णिच्' । येन गोरक्षासनेन । वर्णिनः । स्वप्नेऽपि । वीर्यस्य । पातः । नैव स्यात् । गोरक्षासनलक्षणं योगिजनेषु प्रसिद्धम् ॥ ३२ ॥ कामेति । किञ्च । मया । कामजित्युपयोगिनी कामविषये उपयोगभूतानि । अपराणि सिद्धासनादीन्यन्यानि । आसनानि च । साधितानि । गुरूक्तं गोपालयोगिसंज्ञदेशिककथितम् । साधनान्तरं वीर्योर्द्ध्वाकर्षणलक्षणकामजयसाधनविशेषश्च साधितम् ॥ ३३ ॥ एवमिति । एवमुक्तविधेन । साधनजातेन साधनसमूहेन । मे मम । वपुः । निःस्वेदं स्वेदरहितम् । अभवत् । ततस्तदनन्तरम् । अहम् । सतां साधुजनानाम् । पतिं पालकम् । रामानन्दगुरुम् । प्राप्तः ॥ ३४ ॥ उपाय इति । तेन श्रीरामानन्दगुरुणा । मे मम । पुनः स्वेदोद्गमाय निवृत्तस्य स्वेदस्य पुनरुदयं कर्त्तुम् । शरीरे इति शेषः । उपायः पीतपुष्पापत्राणि किञ्चिदुष्णीकृत्य तेषां सर्वाङ्गे पट्टकनिबन्धनरूपं साधनम् । कारितः । तथापि । प्राक्साधनस्य प्रथमं योगाभ्यासकाले सम्पादितसाधनस्य । दार्ढ्यात् दृढत्वाद्धेतोः । अङ्गे मम शरीरे । स्वेदो घर्मोदकोदयः । नाभूदुदितो न बभूव ॥ ३५ ॥ अत इति । अतो हेतोः । यत् । कामजयसाधनम् । तत् । योगमष्टाङ्गम् । साधयतां निष्पादयताम् ।

कामजित्युपयोगीनि ह्यासनान्यपराणि च । साधितानि मया चान्यद् गुरूक्तं साधनान्तरम् ॥ ३३ ॥
एवं साधनजातेन निःस्वेदं मेऽभवद्वपुः । ततो रामानन्दगुरुमहं प्राप्तः सतां पतिम् ॥ ३४ ॥
उपायः कारितस्तेन पुनः स्वेदोद्गमाय मे तथापि । नाभूत्स्वेदोऽङ्गे दार्ढ्यात्प्राक्साधनस्य हि ॥ ३५ ॥
अतोऽन्यसाधनेभ्योऽपि यत्कामजयसाधनम् । तदहं दुष्करं मन्ये योगं साधयतामपि ॥ ३६ ॥
दृढं कृष्णोपास्तिबलं विषयेषु च पञ्चसु । अतिनिर्वासनत्वस्य ग्रन्थिर्यस्य भवेद्धृदि ॥ ३७ ॥
तस्यैव पुंसो भगवत्प्रसादेन महीयसा । सम्यक्कामजयः सिद्ध्येन्न त्वन्यस्य कदाचन ॥ ३८ ॥
नित्यानन्दोऽथ साधुस्तं नत्वा पप्रच्छ सत्पतिम् । निर्वासनत्वे वैराग्यं हेतुरस्त्यथ वेतरः ॥ ३९ ॥

योगिनामपि । अन्यसाधनेभ्यो रसजयादीतरोपायेभ्योऽपि । अहम् । दुष्करं दुःसाध्यम् । मन्ये ॥ ३६ ॥ एवं स्वीयांस्त्यागिनः शिक्षयितुं स्वाचरणेन कामजयस्य दुष्करं साधनद्वयमाह द्वाभ्याम् । दृढमिति । दृढं सुस्थिरं यथार्थसाक्षाद्भगवन्माहात्म्यज्ञानयुक्तत्वाद्विघ्नसहस्रैरप्यधृष्यमित्यर्थः । कृष्णोपास्तिबलं स्वाधिगतप्रत्यक्षश्रीकृष्णोपासनासामर्थ्यम् । यद्बलालम्बनेन तदग्रेऽणुमात्रमपि महत्त्ववेदनं न भवेत्तथाभूतं तदुपास्तिसामर्थ्यमित्यर्थः । यस्य भक्तस्य । हृदि मानसे । भवेत् । पञ्चसु पञ्चविधेषु । विषयेषु मायिकेषु शब्दादिषु । अतिनिर्वासनत्वस्य । ग्रन्थिश्च । यस्य । हृदि । भवेत् । जाग्रदाद्यवस्थात्रयेऽपि मायिकविषयभोगेच्छोदयो न भवेत्तथाविधभावभावितं यस्यान्तःकरणं स्यादित्यर्थः । तस्येत्युत्तरेण सम्बन्धः ॥ ३७ ॥ तस्येति । तस्य तथाविधस्य । पुंसो भक्तस्यैव । महीयसाऽतिमहता । भगवत्प्रसादेनोक्तसाधनदर्शनजातसाक्षाद्भगवदनुग्रहेण । सम्यक्कामजयो यथार्थः । कामविजयः । सिध्येत् । अन्यस्योक्तविधभक्तेतरभक्तस्य । कदाचन कदाचिदपि । न तु कामजयः सम्यक् नैव सिध्येत् ॥ ३९ ॥

नित्यानन्द इति । अथैवंविधश्रीहरिवाक्यश्रवणानन्तरम् । नित्यानन्दः । साधुः । सत्पतिं साधुजनैकपालकम् । तं श्रीहरिम् । नत्वा । पप्रच्छ । हे हरे ! । निर्वासनत्वे उक्तविधविषयवासनारहितत्वे । हेतुः । वैराग्यम् । अस्ति । अथवा । इतरस्तद्भिन्नोऽपि हेतुरस्ति ॥ ३९ ॥ 'नित्यानन्देन मुनिना स इत्थं पुरुषोत्तमः पृष्टः प्रोवाच तं तुष्टो मोदयंश्चापरा'निति ॥ १ ॥ केवलेनेति । हे मुने ! । केवलेन । विरागेण वैराग्येण । निर्वासनतोक्तविधं निर्वासनत्वम् । न भवेत् । किन्तु । कृष्णोपास्त्यात्मनिष्ठाभ्यां वक्ष्यमाणलक्षणया साक्षाच्छ्रीकृष्णोपासनयाऽऽत्मनिष्ठया च । युक्तः सहितः । असौ विरागः । तत्र निर्वासनतायाम् । कारणम् । अस्ति ॥४०॥ तत्रादौ स्वभक्तमुखेनात्मनिष्ठास्वोपास्तिस्वरूपे आह द्वाभ्याम् । आत्मेति । वपुषः स्थूलादिदेहत्रयात् । परः स्वरूपतो विलक्षणः । आत्मा तत्प्रकाशकः क्षेत्रज्ञः । अहम् । सच्चिदानन्दरूपः । अस्मि साक्षात्सम्प्राप्ताक्षरपरपरब्रह्मोपासनया सम्प्राप्तसच्चिदानन्दाक्षरब्रह्मभावो भवामीत्यर्थः । पिण्डः स्थूलादित्रिविधं मच्छरीरम् । अण्डमष्टावरणसहितं ब्रह्माण्डं च । एतदगणितान्यब्रह्माण्डानामुपलक्षणम् । उभे द्वयेऽपि । मायामये प्रकृतिविकारभूते । स्तः विद्येते । अतो हेतोः । विनश्वरे चतुर्विधप्रलयेऽवश्यविनाशिनी ।

श्रीहरिरुवाच – केवलेन विरागेण न निर्वासनता भवेत् । कृष्णोपास्त्यात्मनिष्ठाभ्यां युक्तोऽसौ तत्र कारणम् ॥ ४० ॥ आत्माऽहं सच्चिदानन्दरूपोऽस्मि वपुषः परः । पिण्डश्चाण्डमुभे मायामये स्तोऽतो विनश्वरे ॥ ४१ ॥ मदिष्टदेवो भगवाननेकाण्डसमाश्रयात् । अक्षरादप्यस्ति परस्तस्य मेऽस्ति दृढाश्रयः ॥ ४२ ॥ ईदृग्निष्ठाद्वयोपेतं वैराग्यं सुदृढं मतम् । कालेन तन्नैति लयमन्यत्तु क्षणिकं मतम् ॥ ४३ ॥ और्वो यथा जलस्थोऽपि न निर्वाति जलं पिबन् । तथा विषययोगेऽपि न वैराग्यं दृढं क्षयेत् ॥ ४४ ॥ वैराग्यमन्यत्तु यथा जलेनाग्निः प्रशाम्यति । तथा विषययोगेन सद्य एव विलीयते ॥ ४५ ॥

स्तः ॥४१॥ मदिति । मदिष्टदेवः । भगवान्साक्षाच्छ्रीहरिः । अनेकाण्डसमाश्रयादनेककोटिब्रह्माण्डैकाधारात् । अक्षरात्स्वपदादक्षरब्रह्मणोऽपि । परः स्वरूपस्वभावादिभिरत्युत्कृष्टः । अस्ति । तस्यैवंविधमहिम्नः साक्षाद्भगवतः । मे मम । दृढाश्रय एकान्तिकभावेन सुस्थिरोपासना । अस्ति ॥४२॥ ईदृगिति । हे मुने ! । ईदृग्निष्ठाद्वयोपेतमेवंविधनिष्ठाद्वययुक्तम् । वैराग्यम् । सुदृढं सुस्थिरम् । मतम् । तत्सुदृढवैराग्यम् । कालेन चतुर्विधप्रलयैः सकलमायाकार्यविनाशहेतुनाऽनेहसा । लयं विनाशम् । नैति न प्राप्नोति । अन्यदुक्तनिष्ठाद्वयवर्जितं वैराग्यं तु । क्षणिकं क्षणकालविनाशि । मतम् ॥ ४३ ॥ दृढादृढवैराग्ययोरविनाशित्वविनाशित्वे दृष्टान्ताभ्यां द्रढयति द्वाभ्याम् । और्व इति । यथा । जलस्थः क्षारोदध्यन्तरावस्थितोऽपि । और्वो वडवानलः । जलं रत्नाकरपानीयम् । पिबन्सन् । न निर्वाति विनाशं न प्राप्नोति । तथा । दृढम् । वैराग्यम् । विषयभोगे मायिकरमणीयशब्दादिपञ्चविषयसम्बन्धे सत्यपि । न क्षयेद्विनाशं नैव प्राप्नुयात् ॥ ४४ ॥ वैराग्यमिति । यथा । अग्निर्लौकिकोऽङ्गारधान्यादिस्थो वह्निः । जलेन स्वल्पजलप्रक्षेपमात्रेणापि । प्रशाम्यति निर्वाणमृच्छति । तथा । अन्यददृढम् । वैराग्यं तु । विषययोगेन । सद्यस्तत्क्षणमेव । विलीयते उपशाम्यति ॥ ४५ ॥

अत इति । अतो हेतोः । हृदि भक्तमानसे । निर्वासनता । सामान्यवैराग्यात्पूर्वोक्तनिष्ठाद्वयवर्जितत्वाद्दृढाद्विरागात् । यावज्जीवमादेहपातमपि । न सिध्यति । वै । ततो हेतोः । तद्दृढतोक्तरीत्या वैराग्यदृढत्वम् । साध्या ॥ ४६ ॥ साम्प्रतमौर्वदृष्टान्तोदितवैराग्यवतो दुर्लभत्वान्नूनाटयानुक्तिमति स्वस्मिंस्तद्वत्त्वं तथाविधस्वस्वरूपवेदिनो मुकुन्दानन्दवर्ण्यादेस्तथाविधस्वस्वरूपवेदनेन तथात्वं दृष्टान्तीकृत्य तत्प्रसङ्गेन स्वाश्रितसाध्ववस्थितवैराग्यादिगुणग्राहिणोऽपि तत्समाना जायन्ते ये च स्वस्य स्वाश्रितसतां च दोषग्राहिणस्ते दोषयुक्ता भवन्तीति चोक्त्वा पुनरपि स्वस्य निष्कामवत्त्वादिगुणवेदिनां मुकुन्दानन्दवर्णिदृष्टान्तेन तथात्वं चाह सप्तभिः । और्वेति । हे मुने ! । और्वदृष्टान्तवैराग्यमौर्वदृष्टान्तप्रोक्ताविरक्तिस्तु । मे मम । हृदि । सर्वथा । अस्ति वर्त्तते । तत्तथाविधं मम वैराग्यं तु । वर्णिराड्वर्णीन्द्रः । अयं सर्वदा मत्सेवानिरतः । मुकुन्दो मुकुन्दानन्दाख्यः । यथावद्यथार्थतया । जानाति ॥ ४७ ॥ अन्य इति । पार्श्वस्थाः सर्वदा मत्समीपनिवासिनः । विचक्षणा लोकशास्त्रविचक्षणत्वेन मत्स्वरूपस्वभावगुणयाथार्थ्यवेदिन इत्यर्थः । अन्ये मुक्तानन्द, गोपालानन्द, शुकानन्दादयः साधवः सोमवर्मरत्नजिदादयो भक्ताश्च । केचिन्मयरामभट्टादयो गृहस्थाश्चापि । तदौ-

अतः सामान्यवैराग्यान्न निर्वासनता हृदि । यावज्जीवं सिध्यति वै साध्या तद्दृढता ततः ॥४६॥ और्वदृष्टान्तवैराग्यं हृदि मे त्वस्ति सर्वदा । यथावत्तत्तु जानाति मुकुन्दो वर्णिराडयम् ॥ ४७ ॥ अन्येऽपि केचित्पार्श्वस्थास्तज्जानन्ति विचक्षणाः । ये जानन्ति च तेऽप्येतं प्राप्नुवन्ति गुणं मम ॥ ४८ ॥ ये भवेयुर्गुणाः सत्सु महत्सूपशमादयः । तान् यथावद्विजानीयुर्ये केचिदिह पुरुषाः ॥ ४९ ॥ तेऽपि तान् प्राप्नुवन्त्येव दुर्लभानपि निश्चितम् । दोषारोपास्तु ये तेषु कामादीनगुणांश्च ते ॥ ५० ॥ ततस्तैरर्द्यमानास्ते दुःसङ्कल्पाकुला नराः । कुर्वन्तोऽपि सदा सङ्गं तेषां स्युर्ह्यतिदुःखिनः ॥ ५१ ॥ वर्णीन्द्रस्तु यथावन्मे निष्कामत्वमुखान् गुणान् । सम्यग्वेत्तीति तान्सर्वान्प्राप्य जातोऽस्ति मत्समः ॥ ५२ ॥

र्वदृष्टान्तोदितं मत्स्थवैराग्यम् । जानन्ति । ये मुक्तानन्दादयो भक्ताः । जानन्ति ममैतादृशं गुणं विदन्ति । ते भक्ताश्चापि । मम । एतं दृढवैराग्यलक्षणम् । गुणम् । प्राप्नुवन्ति ॥ ४८ ॥ य इति । किञ्च । हे मुने ! । महत्सु वैराग्यादिगुणगरिष्ठेषु । सत्सु मुक्तानन्दादिमदाश्रितसाधुषु । उपशमादयो दृढविरक्तिसम्भूतोपशमप्रभृतयः । ये । गुणाः । भवेयुः । इह सत्सङ्गे । ये । केचित् । पुरुषाः । तान् गुणान् । यथावद्यथार्थतया । विजानीयुः । त इत्युत्तरेणान्वयः ॥ ४९ ॥ त इति । ते तथाविधाः पुरुषाश्चापि । दुर्लभानपि । तान् गुणान् । प्राप्नुवन्ति । निश्चितमेव । ये पुरुषाः । तेषु महत्सु साधुषु । दोषारोपा दोषानारोपयन्ति । ते पुरुषास्तु । कामादीन् । अगुणान्दोषांश्च । प्राप्नुवन्ति ॥ ५० ॥ तत इति । ततस्तदनन्तरम् । तैरगुणैः । अर्द्यमानाः पीड्यमानाः । दुःसङ्कल्पाकुलाः कामाद्युपभोगान्तरायमनुष्यमारणादिपर्यन्तैरतिदुष्टसङ्कल्पैर्व्याकुलाः । ते । नराः । तेषां महतां सताम् । सङ्गम् । सदा निरन्तरम् । कुर्वन्तः सन्तोऽपि । अतिदुःखिनः । स्युः । हि ॥ ५१ ॥ वर्णीति । वर्णीन्द्रो मुकुन्दानन्दस्तु । मे मम । यथावद्यथार्थान् । निष्कामत्वमुखान् । गुणान् । सम्यगसंशयम् । वेत्ति । इति हेतोः । सर्वान् । तान्निष्कामत्वादिमद्गुणान् । प्राप्य । मत्समो मया सदृशो नैष्ठिकः । जातः । अस्ति ॥ ५२ ॥

तमिति । मदाश्रिताः । सर्वे पुमांसः सोमवर्मादयो भक्ताः । सर्वा स्त्रियो रमाद्या योषितश्चापि । गुणिनं निष्कामादिमद्गुणवन्तम् । तम् । एतं ब्रह्मचारिणम् । विजानन्ति । अयं यथार्थनिष्कामादिगुणो भवतीति सर्वे विदन्तीत्यर्थः । तस्माद्धेतोः । महद्गुणाः । ज्ञेयाः । आत्मन्युत्तमगुणप्राप्त्यै मयि सत्सु च वर्त्तमाना ये शुभा गुणास्ते वेद्या न तु मयि तेषु च कदाचिदपि दोषारोपः कार्यो गुणवेदनस्य महार्थसिद्धिमूलत्वाद्दोषारोपस्य महानर्थमूलत्वादिति भावः ॥ ५३ ॥ अथ पूर्वोक्तनिर्वासनभक्तस्वरूपं दृष्टान्तेन दर्शयन्निर्वासनत्वस्य दुःसाध्यतोक्तिपूर्वं समाधिमतोऽपि या वासना ततो बहिर्निःसारयतीत्युक्त्यै समाधितो बहिर्निःसरणे हेतुत्रयं ब्रुवन्सर्वथा वासनाविनाशसिध्यै पूर्वोक्तं साक्षाद्भगवदाश्रयेण तथात्वं दर्शयंस्तेनैव सर्वकार्यसिद्धिमाह दशभिः । उक्तेति । हे मुने ! । यो भक्तः । उक्तसाधनसम्पत्त्या पूर्वोक्तनिष्ठाद्वयोपेतदृढवैराग्यप्राप्त्या । निर्वासनः । जातः । तस्यैवंविधभक्तस्य । सर्वाणि । इन्द्रियाणि । कुण्ठितानि । भवन्ति । स्वस्वमायिकविषयग्रहणतीक्ष्णता रहितानि जायन्ते इत्यर्थः ॥ ५४ ॥ अत्र दृष्टान्तमाह । प्रारब्धेति । यथा । जम्बीराम्लितदन्तस्य जम्बीरचूषणसञ्जाताम्लत्वद्विजस्य पुरुषस्य । चणकचर्वणं भर्जितहरिमन्थादनम् । तथा ।

तमेतं गुणिनं सर्वे पुमांसश्च स्त्रियोऽपि च । मदाश्रिता विजानन्ति तस्माज्ज्ञेया महद्गुणाः ॥ ५३ ॥
उक्तसाधनसम्पत्त्या जातो निर्वासनस्तु यः । तस्येन्द्रियाणि सर्वाणि कुण्ठतानि भवन्ति हि ॥ ५४ ॥
प्रारब्धफलभोगोऽस्य पुंसो ज्ञेयस्तथा बुधैः । जम्बीराम्लितदन्तस्य यथा चणकचर्वणम् ॥ ५५ ॥
निर्वासनोऽसौ पुरुषो ज्ञानिभक्त इतीरितः । उक्तसाधनहीनैश्च दुःसाध्यो वासनाक्षयः ॥ ५६ ॥
समाधिनिष्ठेऽपि नरे ग्राम्यसौख्यस्य वासना । अवशिष्यत इत्येषा दुस्त्यजेति प्रकीर्त्तिता ॥ ५७ ॥
समाधौ ब्रह्मसौख्यं यद्धित्वा यान्ति पुनर्बहिः । भवन्ति हेतवस्तत्र त्रयस्तान् शृणु कीर्त्तये ॥ ५८ ॥

अस्य निर्वासनस्य । पुंसो भक्तस्य । प्रारब्धफलभोगः स्वप्रारब्धकर्मफलभूतेन्द्रियविषयोपभोगः । बुधैः । ज्ञेयः । बहुजम्बीरचूषणाम्लितदन्तो यथा क्षुधया भर्जितचणकाशने प्रवृत्तोऽपि दन्ताम्लताजाततदशनारुच्या तानशितुं न शक्नोति तथा निर्वासनभक्तोऽपि प्रारब्धकर्मवशतया यथाविहितविषयग्रहणे प्रवर्त्तते तथापि तत्र तस्यात्यरुचिमत्त्वान्न तत्र शक्तो भवतीत्यर्थः ॥ ५५ ॥ निर्वासन इति । निर्वासन एवंविधनिर्वासनतायुक्तः । असौ । पुरुषो भक्तः । ज्ञानिभक्तः । इत्येवंविधनामा । ईरितः कीर्त्तितः । किञ्च । उक्तसाधनहीनैः पूर्वोक्तसाधनवर्जितैर्भक्तैः । वासनाक्षयः । दुःसाध्यो दुरनुष्ठेयः ॥ ५६ ॥ समाधीति । समाधिनिष्ठे । नरे भक्तेऽपि । ग्राम्यसौख्यस्य मायिकविषयभोगसुखस्य । वासना भावना । अवशिष्यते । इति हेतोः । एषा वासना । दुस्त्यजा । भवति । इतीत्थम् । प्रकीर्त्तिता ॥ ५७ ॥ समाधाविति । समाधौ । ब्रह्मसौख्यं स्वात्मपरमात्मदर्शनसुखम् । जातमिति शेषः । हित्वा । पुनर्भूयः । बहिः । यान्ति समाधिमन्तः समाधेर्बहिर्निःसरन्ति । इति । यत् । तत्र । त्रयः । हेतवः । भवन्ति । तांस्त्रीन्हेतून् । कीर्त्तये तुभ्यं ब्रवीमि । शृणु तांस्त्वमवधारय ॥ ५८ ॥

स्वतन्त्रस्येति । स्वतन्त्रस्य प्रत्यक्षभगवतः कृपया समाधौ स्वातन्त्र्यं सम्प्राप्तस्य भक्तस्य । निजेच्छा समाधेर्बहिर्निःसरणे स्वकीयेच्छा । अयं प्रथमो हेतुः । अथ च । अन्यस्य यथार्थसमाधिस्वातन्त्र्यवर्जितसमाधिमद्भक्तस्य । अल्पसुखवासना समाधेर्बहिर्निःसरणे ग्राम्यविषयोपभोगसुखभावना । अयं द्वितीयो हेतुः । कृष्णेच्छा अतिसमर्थस्य साक्षाच्छ्रीकृष्णस्येच्छा च । अयं तृतीयो हेतुः । कृष्णेच्छा तु स्वतन्त्रसमाधिमन्तमस्वतन्त्रसमाधिमन्तं चेत्युभावपि ततो बहिर्निःसारयतीति भावः । इतीत्थम् । ते समाधेर्बहिर्निःसरणहेतवः । ज्ञेयाः । तत्तस्माद्धेतोः । ग्रामवासना । त्याज्योक्तसाधनेन सर्वथा हेया ॥ ५९ ॥ समाधाविति । किञ्च । इह सत्सङ्गे । यो भक्तः । समाधौ । कोटिसूर्याभतेजोब्रह्मेक्षणात् कोटिभास्करसदृशप्रकाशवदक्षरब्रह्मसन्दर्शनात्सकाशात् । प्रत्यक्षभगवन्मूर्त्तौ । न्यूनताम् । जानीयात् । यत्प्रतापात् समाधौ स्वस्याक्षरब्रह्मप्रकाशावलोको जातो नृनाट्यधृतस्तस्य हरेर्यथार्थमहिमानभिज्ञो भक्तस्तत्र न्यूनतां विद्यादित्यर्थः । तस्येत्युत्तरेणान्वयः ॥ ६० ॥ तस्येति । तस्यैवं-यथार्थतया प्रत्यक्षभगवन्महिमानभिज्ञस्य भक्तस्यापि । वासनाशेषः । हृदयात् । नापसर्पति न निवर्त्तते । अतो हेतोः । साक्षात्कृष्णस्य । सर्वतोऽक्षरब्रह्मणोऽपि ।

स्वतन्त्रस्यनिजेच्छाऽथान्यस्याल्पसुखवासना । कृष्णेच्छा चेति ते ज्ञेयास्तत्त्याज्या ग्राम्यवासना ॥ ५९ ॥ समाधौ कोटिसूर्याभतेजो ब्रह्मेक्षणाच्च यः । प्रत्यक्षभगवन्मूर्त्तौ जानीयान्न्यूनतामिह ॥ ६० ॥ तस्यापि वासनाशेषो हृदयान्नापसर्पति । विज्ञेयमत आधिक्यं साक्षात्कृष्णस्य सर्वतः ॥६१॥ तेनैव सर्वकार्याणि संसिद्ध्यन्ति न संशयः । एतदेव हि विज्ञेयं कृत्वा सत्सङ्गमादरात् ॥ ६२ ॥ यः सद्भावेन मय्येव मनोऽर्पयति बुद्धिमान् । तद्धृत्स्था वासनाः सर्वा नाशयाम्यहमेव हि ॥ ६३ ॥ मुक्तानन्दोऽथ साधुस्तं नत्वा पप्रच्छ हे प्रभो ! । मनस्त्वय्यर्पितं येन तस्य लक्ष्माणि मे वद ॥६४॥ येन वा नार्पितं तत्स्याद् ब्रूहि लक्ष्माणि तस्य च । इति पृष्टो हरिः साधुं तमुवाच मुने ! शृणु ॥६५॥

आधिक्यमधिकमहिमवत्त्वम् । विज्ञेयम् ॥ ६१ ॥ तेनेति । तेन प्रत्यक्षभगवतः सर्वाधिकमहिमवेदनेनैव । सर्वकार्याणि निर्वासनत्वादयः सर्वेऽर्थाः । संसिध्यन्ति । न संशयोऽत्र संशयो नास्ति । ततो हेतोः । आदरात् । सत्सङ्गं यथार्थभगवन्महिमाभिज्ञैकान्तिसाधुसमागमम् । कृत्वा । एतत्प्रत्यक्षभगवन्महिमाधिक्यमेव । ज्ञेयं सर्वथा वेद्यम् ॥६२॥ प्रत्यक्षस्य स्वस्य सर्वाधिकतया माहात्म्यवेदनस्य फलं स्फुटतया स्वमुखेनैवाह । य इति । बुद्धिमान्सर्वाधिकमन्महिमवेदनयुक्तमतिमान् । यो मद्भक्तः । सद्भावेनैकान्तिकभावेन । मय्येव । मनः । अर्पयति । तद्धृत्स्थास्तस्य मनस्यवस्थिताः । सर्वाः । वासनाः । अहमेव । नाशयामि । हि ॥ ६२ ॥ मुक्तानन्द इति । अथैवंविधश्रीहरिवाक्यश्रवणानन्तरम् । मुक्तानन्दः । साधुः । तं श्रीहरिम् । नत्वा । पप्रच्छ । हे प्रभो ! । येन त्वद्भक्तेन । मनः । त्वयि । अर्पितम् । तस्य त्वद्भक्तस्य । लक्ष्माणि लक्षणानि । मे मह्यम् । वद ॥ ६४ ॥ येनेति । येन त्वद्भक्तेन । तन्मनः । अर्पितं त्वयि समर्पितम् । न स्यात् । तस्य त्वद्भक्तस्य । लक्ष्माणि । चापि । ब्रूहि । इत्यमुना प्रकारेण । पृष्टो मुक्तानन्दमुनिनानुयुक्तः । हरिः । साधुम् । तं मुक्तानन्दमुनिम् । उवाच । हे मुने ! । शृणु ॥ ६५ ॥

तत्रादौ स्वस्मिन् येन मनोऽर्पितं तस्य लक्षणान्याह चतुर्भिः । ममेति । हे मुने ! । यस्मिन्समये । मम । वार्त्ता । मया कृता या काचिदपि वार्त्तेत्यर्थः । स्यात् । अथवा । मम । दर्शनम् । स्यात् । तदा तस्मिन्समये । यर्हि स्वयं भक्तः । आगतः । न स्यात् । तर्हि । हृदये यन्मनसि । महानतिशयितः । दाहः परितापः । स्यात् ॥ ६६ ॥ यदेति । यदा यर्हि । तां मत्कृतां वार्त्ताम् । शृणुयात् । अथवा । तन्मम दर्शनम् । कुर्यात् । तर्ह्येव । यद्धृदि यस्य मानसे । शान्तिर्दाहनिवृत्तिः । स्यात् । अन्यथा मद्वार्त्ताश्रवणमद्दर्शनविधानमन्तरा । शान्तिर्न स्यात् । यस्य । नित्यं प्रतिदिनम् । मद्दिदृक्षा मम दर्शनेच्छा । अधिकोत्तरोत्तराधिक्यवती । भवेत् ॥ ६७ ॥ मदिति । किञ्च । यस्य । मद्वार्त्ताश्रवणादौ श्रवणादिनवविधमद्भक्तिविधाने । प्रीतिः । भूरितराऽतिशयिता । भवेत् । दुष्करे स्वेन साधयितुमशक्येऽपि । मदादेशस्य यस्याः कस्याश्चिन्ममाज्ञायाः । आचरणे सम्पादने । हृदुत्सवो मनसि महानुत्साहः । भवेत् ॥ ६८ ॥ मदिति । हे मुने ! । यस्य । मत्सम्बन्धिनि । कार्ये यस्मिन्कस्मिंश्चिदपि कृत्ये । भृशमतिशयिता । रुचिः प्रीतिश्च । सर्वदा । सर्वकालमेव । स्यात् । तेनैवं वर्त्तनवता भक्तेन तु । मयि ।

मम वार्त्ता दर्शनं वा यस्मिन् स्यात्समये तदा । नागतः स्यात्स्वयं तर्हि दाहः स्याद्धृदये महान् ॥ ६६ ॥ यदा तां शृणुयात्तद्वा कुर्यात्तर्ह्येव यद्धृदि । शान्तिः स्यान्नान्यथा नित्यं मद्दिदृक्षाऽधिका भवेत् ॥ ६७ ॥ मद्वार्त्ताश्रवणादौ च प्रीतिर्भूरितरा भवेत् । मदादेशस्याचरणे दुष्करेऽपि हृदुत्सवः ॥६८॥ मत्सम्बन्धिनि कार्ये च सर्वदैव रुचिर्भृशम् । यस्य स्यात्तेन तु मनो ज्ञेयं मय्यर्पितं मुने! ॥६९॥ मदाज्ञया दूरगोऽपि वर्त्तते स ममान्तिके । उक्तलक्ष्मविपर्यासो यत्र ज्ञेयः स चेतरः ॥७०॥ सोऽन्तिकस्थोऽपि भूरिदूरस्थ इति गम्यताम् । न तदीयास्ति मे चिन्ता स चिरेणाप्स्यतीप्सितम् ॥७१॥ वचनामृतमित्युदारमैशं स निपीयाप मुनिर्महाप्रतोषम् । अपरे च तदीयपादभक्ता गृहिणश्चागृहिणः सदोनिषण्णाः ॥७२॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते त्रिसप्ततिमस्तरङ्गः ॥ ७३ ॥

मनः । अर्पितम् । ज्ञेयम् ॥ ६९ ॥ मदिति । स मदर्पितमना भक्तः । मदाज्ञया दूरगो दूरदेशावस्थितः सन्नपि । मम । अन्तिके समीपे एव । वर्त्तते । येन स्वस्मिन् मनो नार्पितं तल्लक्षणान्याहार्द्धेन । हे मुने ! । यत्र यस्मिन्मद्भक्ते । उक्तलक्ष्मविपर्यास उक्तलक्षणवैपरीत्यं भवेत् । स मद्भक्तः । इतरो मय्यनर्पितमनाः । ज्ञेयः ॥ ७० ॥ स इति । स मय्यनर्पितमना मद्भक्तः । मे मम । अन्तिकस्थः समीपे वर्त्तमानः सन्नपि । भूरिदूरस्थोऽतिदूरप्रदेशावस्थितः । अस्ति । इतीत्थम् । गम्यताम् । मे मम । तदीया मय्यनर्पितमनसः सम्बन्धिनी । चिन्ता । नास्ति । स इत्थंभूतो भक्तः । चिरेण भूरिकालेन । ईप्सितं स्वेनाप्तुं वाञ्छितम् । आप्स्यति । मद्भक्तत्वाद्बहुना कालेनापि गमिष्यति ॥ ७१ ॥ वचनेति । इत्येवंविधम् । ऐशं प्रत्यक्षपरमेश्वरस्य श्रीहरेः । सम्बन्धि । उदारं प्रचुरार्थभृतम् । वचनामृतम् । निपीय श्रवणपुटैरत्यादरादाकर्ण्य । स मुनिर्मुक्तानन्दमुनिः । महाप्रतोपमत्यानन्दम् । आप । सदोनिषण्णाः सभायामुपविष्टाः । तदीयपादभक्ताः श्रीहरिचरणकमलोपासकाः । अपरे

तदितरे । गृहस्थाः । अगृहिणस्त्यागिनश्च । महाप्रतोषम् । आपुः ॥ ७२ ॥ उक्त्वा निष्कामताया यो दुःसाध्यं साधनं ततः । तस्याः सिध्यै स्वकीयोपासनाप्रभृतिसाधनम् ॥ १ ॥ उचे मनोऽर्पितं येन स्वस्मिन् येन च नार्पितम् । लक्षणानि तयोः स्वामी तस्मिन्मेऽस्त्वर्पितं मनः ॥२॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्सत्त्वनुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां त्रिसप्ततिमस्तरङ्गः ॥ ७३ ॥

हरेरिच्छानुसारेण वृत्यं भक्तैर्हि सर्वथा । नान्यथेति चतुःसप्ततितमे तु ततः स्मृतम् ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८७६) राधशुक्ले वैशाखमासस्य शुक्लपक्षे । एकादश्यां तिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥१॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमस्योत्तमाख्यस्य । महीक्षितो नृपतेः । दुर्गे । पिचुमन्दतरोरक्षरस्वरूपतरुराजारिष्टवृक्षस्य । अधोऽधःप्रदेशवर्त्तिन्यां रमणीयवेदिकायाम् । पीठोत्तमे कौशेयतूलिकास्तृते सोत्तरच्छदे सपार्श्विके पल्यङ्कासने । स श्रीहरिः । न्यषीदत्प्रातर्विधेयस्वनित्यकृत्यं विधाय स्वावासात्तरवारिपाणिभिः स्वपार्षदवरैः रत्नजिदादिभिः सहागत्योपविवेश ॥ २ ॥ सितेति । सितवासाः स्वाङ्गलावण्यशोभितपरिधृतसकलश्वेतवसनः । बहुभिर्नानादेशागतैस्त्यागिभिर्गृहिभिश्चानेकैः । भक्तैः । परितः समन्ततः । वृतो महासभायां संवेष्टितः । स श्रीहरिः । भक्तान्समीपविष्टसकलस्वभक्तजनान् । वचसा स्ववचनामृतेन । भृशमत्यन्तम् । प्रीणयंस्तर्पन्सन् । स्वयं केनाप्यननुयुक्तत्वात्स्वत एव । अब्रवीत् ॥३॥ वैराग्यमिति । हे भक्ताः ! । यस्य । भक्तस्य । मानसे । सविवेकं ज्ञानसहितम् । वैराग्यम् । सुदृढं सुस्थिरम् । स्यात् । अदृढमस्थिरं च । स्यात् । तस्य तथाविधस्य वैराग्यस्य । लक्षणम् । आदितः प्रथमतः । ज्ञेयमवश्यं बोध्यम् ॥ ४ ॥ स्वतो वोद्धुमशक्यत्वात्तल्लक्षणं चापि स्वयमेवाह । सम्यगिति । भक्ताः । हे हरे ! । प्रत्यक्षकृष्णस्य । सम्यग्यथार्थतः । माहात्म्यबोधेनाक्षरपरत्वादेर्महिम्नो ज्ञानेन । तद्वैराग्यम् । सुदृढम् । मतम् । तस्य साक्षाद्भगवन्माहात्म्यज्ञानस्य । न्यूनतायां सत्याम् । तद्वैराग्यम् । अदृढम् । मतम् । इतीत्थम् । गम्यतां सत्यमेव बुध्यताम् ॥५॥ नन्वेतत्सुदृढमेतददृढं वैराग्यमिति तद्बोधकालः कदेत्यत्राह । परीक्षेति । हे भक्ताः ! । तस्य द्विविधवैराग्यस्य । परीक्षा वेदनं तु । आपत्काले कस्मिंश्चिन्महत्यापत्तिसमये । उपागते प्राप्ते सति । भवेत् । आपत्काल एव तत्सुदृढत्वादृढत्वबोधनकाल इत्यर्थः । साम्प्रतं सुदृढादृढयोस्तयोर्वेदनप्रकारमाह । सुदृढम् । तद्वैराग्यम् । न निवर्त्तेतापद्यपि निवृत्तिं न यायात् । अदृढम् । वैराग्यं तु । निवर्त्तते आपत्काले निवृत्तिं याति । आपदि तन्निवर्त्तनानिवर्त्तने तददृढत्वसुदृढत्वयोर्वेदनप्रकारावित्यर्थः ॥ ६ ॥

शकाब्दे विक्रमार्कस्य रसाश्ववसुभूमिते । एकादश्यां राधशुक्ले वचोऽमृतमिदं हरेः ॥ १ ॥ तत्र दुर्गपुरे दुर्गे उत्तमस्य महीक्षितः । पीठोत्तमे न्यषीदत्स पिचुमन्दतरोरधः ॥ ३ ॥ सितवासा वृतो भक्तैर्बहुभिः परितः स च । स्वयमेवाब्रवीद्भक्तान् वचसा प्रीणयन्भृशम् ॥ ३ ॥ वैराग्यं स विवेकं स्याद्यस्य भक्तस्य मानसे । सुदृढं चादृढं तस्य ज्ञेयं लक्षणमादितः ॥ ४ ॥ सम्यग्माहात्म्यबोधेन हरेस्तत्सुदृढं मतम् । तस्यैव न्यूनतायां तददृढं चेति गम्यताम् ॥ ५ ॥ परीक्षा तस्य तु भवेदापत्काल उपागते । सुदृढं न निवर्त्तेत त्वदृढं तन्निवर्त्तते ॥ ६ ॥

साम्प्रतमिति । अत्र दुर्गपत्तने । साम्प्रतम् । भूपतेरुत्तमनृपस्य । शात्रवी शत्रुसम्बन्धिनी । आपद्विपत्तिः । उपागता प्राप्ता । अभूत् । तदा तु तर्ह्येव । वो युष्माकम् । चित्ते । तस्य स्ववैराग्यसुदृढादृढत्वस्य । परीक्षणं वेदनम् । जातमेव । यस्य सुदृढवैराग्यं तस्य तन्निविष्टं यस्य तददृढं तद्विनष्टमित्यर्थः ॥ ७ ॥ अथेति । अथैवंविधश्रीहरिवाक्यश्रवणानन्तरम् । मुक्तानन्दो मुनिः । सर्वानुमत्त्येन सदोनिषण्णसर्वभक्तसम्मतत्वेन । तं श्रीहरिम् । अब्रवीत् । नृपापदर्शनजातं नो व्याकुलत्वमालक्ष्य श्रीहरिरेवं वदतीत्यनुसन्धाय स मुनिराहेत्यर्थः । हे हरे ! । अस्य । नृपस्योत्तमभूपतेः । त्वद्भक्तत्वात् । नोऽस्माकम् । पक्षपातः । अस्ति ॥ ८ ॥ बुद्धिपूर्वं इति । हे प्रभो ! । स पक्षपातः । बुद्धिपूर्वो ज्ञानपूर्व एव । अस्ति । अबुद्धिकृतोऽज्ञानविहितः । न तु नैवास्ति । नृपस्य त्वदेकभक्तत्वेन तत्पक्षपातः सत्सङ्गपक्षपातः स गुणरूपत्वादवश्यं विधेयोऽतस्तत्पक्षपाताचरणे गुणं तदनाचरणे दोषं चाह पादत्रयेण । हे हरे ! । त्वदीयानामुत्तमनृपसदृशत्वद्भक्तानाम् । उत्कर्षे उदये सति । बहवो जनाः । त्वदाश्रिताः । स्युः ॥ ९ ॥ अन्यथेति । अन्यथा तदनुदये सति । वैपरीत्यं बहुजनानां त्वदनाश्रयणता रूपा विपरीतता ।

साम्प्रतं भूपतेरत्र शात्रव्यापदुपागता । अभूत्तदा तु चित्ते वस्तस्य जातं परीक्षणम् ॥ ७ ॥ अथ सर्वानुमत्येन मुक्तानन्दस्तमब्रवीत् । त्वद्भक्तत्वान्नृपस्यास्य पक्षपातोऽस्ति नो हरे ! ॥ ८ ॥ बुद्धिपूर्वः स एवास्ति नत्वबुद्धिकृतः प्रभो ! । सत्युत्कर्षे त्वदीयानां बहवः स्युस्त्वदाश्रिताः ॥ ९ ॥ अन्यथा वैपरीत्यं स्यादित्यापद्यस्य भूपतेः । किञ्चिच्छोकोऽभवदथो हर्षोऽस्य विजयेऽस्ति हि ॥ १० ॥ श्रुत्वेति साधुवचनं हरिः प्रोवाच तद्गुरुः । यूयं श्रीकृष्णभक्ताः स्थ सर्वकर्त्ता च स प्रभुः ॥ ११ ॥ न तदिच्छां विना वृक्षात्पक्वं पर्णमपि क्षितौ । वायुः पातयितुं शक्तो बलिष्ठोऽपीति बुद्ध्यताम् ॥ १२ ॥ न तदिच्छां विना यर्हि कार्यं किमपि जायते । हर्षशोकौ तदा भक्तोऽप्यज्ञवत्कुरुते मृषा ॥ १३ ॥

स्यात् । इत्येवंभूतेन विचारेण । अस्य । भूपतेरुत्तमनृपस्य । आपद्यात्काले सति । किञ्चिदल्पप्रमाणः । शोकोऽदृढवैराग्यता बोधकं शोचनम् । अभवत् । अथो नृपापन्निवृत्त्यनन्तरम् । अस्य नृपस्य । विजये उदये सति । हर्ष आनन्दः । अस्ति । हि ॥ १० ॥ श्रुत्वेति । इतीत्थंभूतम् । साधुवचनं मुक्तानन्दमुनिवाक्यम् । श्रुत्वा । तद्गुरुस्तेषां मुक्तानन्दादिसाधूनां हितोपदेष्टाः । हरिः । प्रोवाच । अस्माकं तु सुदृढमेव वैराग्यमस्ति तदभावप्रतीतिजनकः पक्षपातस्तु गुणरूपत्वादस्त्यत्र चेद्दोषत्वमदोषत्वं वास्ति तर्हि तद्याथार्थ्यं त्वमेव वदेति तत्पिपृच्छिषामालक्ष्य श्रीहरिः स्वयमुक्तवानित्यर्थः । हे मुने ! । यूयम् । श्रीकृष्णभक्ताः प्रत्यक्षश्रीकृष्णस्य ममैकान्तिकभक्ताः । स्थ भवथ । प्रभुरतिसमर्थः । स श्रीकृष्णः । सर्वकर्त्ता प्रकृतिपुरुषद्वारा सकलविश्वोत्पादकः । अस्ति ॥ ११ ॥ नेति । बलिष्ठोऽपि समये ब्रह्माण्डविनाशंकत्वादतिबलवानपि । वायुः । तदिच्छां श्रीकृष्णसङ्कल्पम् । विना । पक्कमीपचालनेन पतनार्हमपि । पर्णं पत्रम् । वृक्षात्सकाशात् । क्षितौ । पातयितुम् । न शक्तः समर्थो नास्ति ॥ १२ ॥ नेति । यर्हि यदा । तदिच्छां तस्य सङ्कल्पम् । विना । किमपि । कार्यम् । न जायते । तदा । भक्त एवंविधमहिमाभिज्ञः प्रत्यक्षभगवद्भक्तजनोऽपि ।

अज्ञवदुक्तमहिमाऽनभिज्ञवत् । हर्षशोकौ सत्सङ्गोदये हर्षं तदपकर्षे शोकं चेत्यर्थः । मृषा मिथ्यैव । कुरुते ॥ १३ ॥ वृद्धिरिति । सत्सङ्गिनाम् । पुंसाम् । वृद्धिः । अथवा । क्षयस्तेषां न्यूनत्वमपि । हरेः । इच्छया । भविता भविष्यति । इतीत्थमेव । निश्चित्य सम्यक् निर्णीय । सः श्रीहरिरेव । सर्वदा सर्वकालमेव । सेव्य एकान्तिकभावेन प्रीत्योपासनीयः । प्राचीननारदादिभगवदेकान्तिकभक्ताचारत्वात् सत्सङ्गपक्षपातेन तदुत्कर्षापकर्षाभ्यां हर्षशोकप्राप्तिर्यद्यप्युत्तमाऽस्त्यथापि तया यथात्मनः कश्चिदनर्थः स्यात्तथाभूतौ तौ न कार्यौ यतः सत्सङ्गोदयानुदययोः प्रत्यक्षपरमेश्वरैकाधीनत्वमस्त्यतः स्वनिःश्रेयसायैकान्तिकभावेन तद्भजनमेव कर्त्तव्यमिति भावः ॥ १४ ॥ श्रुत्वेति । इत्येवंभूताम् । सुधासमानाममृतसन्निभाम् । हरेः । वाचम् । श्रुत्वा । स मुक्तानन्दमुनिः । भक्ताः । सर्वे । सन्तो मुनयः । गृहिणो गृहस्थाश्चापि । परममत्युत्कृष्टम् । तोषमानन्दम् । प्रपद्य प्राप्य । तां श्रीहरिवाचम् । स्वे स्वकीये । हृदम्बुजे हृत्पद्मे धारयन्ति स्म ॥ १५ ॥ स्वस्य भक्तैर्यथा वृत्यं स्वकीयेच्छानुसारतः । तथा यः प्राह स हरिर्ममास्तु शरणं सदा ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्पदानुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधा-

वृद्धिः सत्सङ्गिनां पुंसां क्षयो वापीच्छया हरेः । भवितेत्येव निश्चित्य सदा सेव्यः स एव हि ॥ १४ ॥ श्रुत्वेति वाचं
स सुधासमानां हरेस्तु सन्तो गृहिणश्च भक्ताः । सर्वेऽपि तोषं परमं प्रपद्य तां धारयन्ति स्म हृदम्बुजे स्वे ॥ १५ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते चतुःसप्ततिमस्तरङ्गः ॥ ७४ ॥

शकाब्दे विक्रमार्कस्य रसाश्ववसुभूमिते । एकादश्यां राधकृष्णे वचोऽमृतमिदं हरेः ॥ १ ॥
तत्र दुर्गपुरे दुर्ग उत्तमस्य नरेशितुः । मञ्चासने न्यषीदत्स वेद्यां निम्बतरोरधः ॥ २ ॥
पीतपुष्पस्रगापीडं वृतं भक्तैः सहस्रशः । पप्रच्छ सूरो नृपतिस्तं प्रणम्य सितांशुकम् ॥ ३ ॥

सिन्धुटीकायां चतुःसप्ततितमस्तरङ्गः ॥ ७४ ॥

हरिभक्तस्य कुलजा उद्धरन्ति यथा भवात् । नोद्धरन्ति यथा तस्य रीतिः स्पष्टतयाऽस्ति या ॥ १ ॥ अल्पो वा परिपूर्णो वा श्रीहरेर्निश्चयस्तु यः । तल्लक्ष्मै-तत्पञ्चसप्ततितमे स्पष्टमीरितम् ॥ २ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८७६) राधकृष्णे वैशाखमासस्य कृष्णपक्षे । एकादश्यां तिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमस्यैतन्नाम्नः । नरेशितुर्नृपस्य । दुर्गे । निम्बतरोः । अधोऽधस्तनायाम् । वेद्यां महामणिपरिष्कृत-वेदिकायाम् । मञ्चासने विचित्रचित्ररत्ननिचितसोपकरणपर्यङ्कविष्टरे । स श्रीहरिः । न्यषीदत् स्वावासादागत्य मुकुन्दानन्दवर्णिदत्तहस्तावलम्ब उपविवेश ॥ २ ॥ पीतेति । पीतपुष्पस्रगापीडं पीतवर्णसहस्रदलकुसुमहारशेखरधरम् । सहस्रशः । भक्तैर्नानादेशागतैस्त्यागिगृहिभिर्निजभक्तजनैः । वृतं सभायां परिवेष्टितम् । सितांशुकं परिधृत-सकलश्वेतवसनम् । तं श्रीहरिम् । प्रणम्य । सूरः । नृपतिर्नागटङ्कपुराधिनाथः सूरनामाभूपतिः । पप्रच्छ ॥ ३ ॥

कुल इति । हे हरे ! । साक्षात्कृष्णस्य प्रत्यक्षस्य श्रीकृष्णभगवतः । ते तव । भक्तः । यत्र यस्मिन् । कुले । स्याज्जायेत । तद्भवास्तस्मिन्कुले उत्पन्नाः । एकविंशति । पुरुषाः । संसाराद्भवाम्बुधेः । उद्धरन्ति मुच्यन्त एव ॥ ४ ॥ संशय इति । हे प्रभो ! । तत्र तथाभूतार्थे । संशयो द्विविधः संदेहः । जायते । तत्र संशयमाह । ते प्रत्यक्षकृष्णभगवद्भक्तकुलोद्भवाः पुरुषाः । कीदृशाः किंलक्षणाः । उद्धरन्ति । द्वितीयं संशयमाह चतुरक्षराधिकैकश्लोकेन । हे हरे ! । तत्कुले प्रत्यक्षकृष्णभवद्भक्तगोत्रे । साक्षात् प्रत्यक्षस्य । ते तव । श्रीहरेः । त्वत्सतामपि त्वदेकान्तिकसाधूनां च । द्वषिणो द्रोहकर्त्तारोऽपि । स्युर्भवेयुः ॥ ५ ॥ तेषामिति । दुष्कर्मणां भवद्भवद्भक्तद्रोहरूपदुष्कर्मवताम् । तेषां भक्तकुलोत्पन्नजनानाम् । मुक्तिः संसृतेरुद्धाररूपो मोक्षः । साधनसंपदम् । विना साक्षाद्भवदाश्रयाद्युपायसम्पत्तिमृते । कथम् । स्यात्केन प्रकारेण भवेत् । इत्यमुना प्रकारेण । आपृष्टः सूरनृपतिनानुयुक्तः । धर्मनन्दनो धर्मावतारहरिप्रसादसूनुः श्रीहरिः । तं सूरनृपतिम् । ऊचे ॥ ६ ॥ कृष्णेति । हे नृप ! । यदि यर्हि । कुलजानां साक्षाद्भगवद्भक्तकुलोत्पन्नानाम् । नृणाम् । कृष्णभक्ते स्वकुलोत्पन्ने साक्षाच्छ्रीकृष्णाश्रिते । स्नेहः स्वधन्यता मानिता

कुले स्याद्यत्र ते भक्तः साक्षात्कृष्णस्य तद्भवाः । उद्धरन्त्येव संसारात्पुरुषा एकविंशतिः ॥ ४ ॥ संशयो जायते तत्र कीदृशा उद्धरन्ति ते । तत्कुले द्वेषिणोऽपि स्युः साक्षात्ते त्वत्सतामपि ॥ ५ ॥ तेषां दुष्कर्मणां मुक्तिर्विना साधनसम्पदम् । कथं भवेदित्यापृष्टस्तमूचे धर्मनन्दनः ॥ ६ ॥ कृष्णभक्ते यदि स्नेहः कुलजानां नृणां भवेत् । तदा तु कृष्णमाहात्म्यात्तेषां मुक्तिर्भवेद्भवात् ॥ ७ ॥ दशभूता भविष्याश्च दश ये कुलपुरुषाः । तेऽपि तद्भक्तमाहात्म्यं जानीयुर्यदि लोकतः ॥ ८ ॥ अहो अस्मत्कुले कृष्णभक्तो जातो महामतिः । अतोऽस्माकं महद्भाग्यमिति ये विद्युरञ्जसा ॥ ९ ॥ सर्वे ते कुलजास्तर्हि कृष्णस्यैव प्रतापतः । संसृतेरुद्धरन्त्येव विपरीतास्तु नैव ते ॥ १० ॥

पूर्वकोऽनुरागः । भवेत् । तदा तु । कृष्णमाहात्म्याद्भक्तोपास्यप्रत्यक्षश्रीकृष्णप्रतापात् । तेषां तथाविधानां नृणाम् । भवात्संसारात् । मुक्तिः । भवेत् ॥ ७ ॥ एकविंशतिपुरुषान्दर्शयन्सामान्येनोक्तमर्थं पुनर्विशेषेणाह त्रिभिः । दशेति । हे नृप ! । ये । दश दशसङ्ख्याकाः । भूताः प्रत्यक्षभगवद्भक्तजन्मनः सकाशात्पूर्वकालजाताः । पुण्यबलेन स्वर्गावस्थितास्तत्पितरः । ये च । भविष्या उक्तविधभगवद्भक्तादग्रे भविष्यन्ति । ते सर्वेऽपि । कुलपूरुषाः । यदि । लोकतो जनमुखात् । तद्भक्तमाहात्म्यं तस्य स्वकुलतोत्पन्नस्य भक्तस्य महिमानम् । जानियुः ॥ ८ ॥ एवं स्वकुलभक्तमाहात्म्यवेदनमुक्त्वा भक्तमाहात्म्यवेदनेन स्वेषामपि महाभाग्यवेदिता प्रकारमाह । अहो इति । अस्मत्कुले । महामतिः साक्षात्कृष्णमाहात्म्यज्ञानपूर्वं तदेकान्तिभावेन भजने प्रसक्तत्वादत्युदारमतिः । कृष्णभक्तः । जातः । अहो अत्याश्चर्यमिदम् । अत एवंविधैतन्माहात्म्याद्धेतोः । अस्माकमेतत्कुलोत्पन्नानां नः पुरुषाणाम् । महद्भाग्यम् । जातम् । इत्यमुना प्रकारेण । ये कृष्णभक्तकुलपुरुषाः । अञ्जसा तत्त्वतः सस्नेहमित्यर्थः । विद्युर्यदि जानीयुः ॥ ९ ॥ सर्वं इति । तर्हि । सर्वे एकविंशतिसङ्ख्यासङ्ख्यातपुरुषेषु मध्यवर्त्तिनो भक्तत्वात्तत्पूर्वापरजाता दश दशेत्येवंविंशतिसङ्ख्याकाः । कुलजा

भक्तकुलोत्पन्नाः । ते पुरुषाः । कृष्णस्य । प्रतापत एव । संसृतेः संसारात् । उद्धरन्त्येव । विपरीता उक्तलक्षणवर्जितास्तु । ते भक्तवंशजपूरुषाः । नैवोद्धरन्ति । विंशतिसङ्ख्याका अपि तत्कुलजास्तन्माहात्म्यं तेन स्वभाग्यवत्त्वं च यदि न विद्युस्तर्हि ते संसारान्नैवोद्धरन्तीत्यर्थः । इति त्रयाणामेकसम्बन्धः ॥ १० ॥ एवं संशयरूपप्रथमप्रश्नोत्तरं कृत्वा द्वितीयस्य तस्योत्तरमाह द्वाभ्याम् । कृष्णेति । या । तद्वंश्यानां साक्षात्कृष्णभक्तवंशोद्भवानां पूरुषाणाम् । मुक्तिः । ईरिता कथिता । सा । कृष्णभक्ते । स्नेहवशादुक्तप्रकारेण तन्माहात्म्यवेदनोद्भूतानुरागवशत एवेरिता । अतः । कुलजानां भक्तकुलोत्पन्नानामपि । तद्द्वेषिणां कृष्णतत्सद्द्वेषकर्तृणां तु । सा मुक्तिः । न स्यात् । ध्रुवं निश्चितमेव ॥ ११ ॥ तेषां केवलं मुक्तिर्न भवेदिति न प्रत्युत यमयातना एव ते यान्तीत्याह । तदिति । तद्वंशजा । नराः । अपि । तद्द्वेषात् । भ्रष्टमतयो धर्माध्वच्युतमतयः सन्तः । अन्ते स्वस्वदेहावसाने । यमयातनाः । यान्ति अत्रास्मिन्नर्थे । संशयः । न विद्यते नास्त्येव ॥ १२ ॥ उक्तार्थानुवादेन भगवद्भक्तस्नेहवत्तत्कुलजानामेवोद्धार इति न किन्तु तस्मिन्स्नेहकर्तृणामन्येषामप्युद्धारः स्यादिति साक्षाद्भक्तमाहात्म्यमाह । भक्त इति । हे नृप ! । असम्बन्धा भगवद्भक्तगोत्रजाति-

कृष्णभक्ते स्नेहवशाद्वंश्यानां मुक्तिरीरिता । तद्द्वेषिणां तु सा न स्यात्कुलजानामपि ध्रुवम् ॥ ११ ॥
तद्द्वेषाद् भ्रष्टमतयो यान्त्यन्ते यमयातनाः । तद्वंशजा अपि नराः संशयो नात्र विद्यते ॥ १२ ॥
भक्ते स्नेहादसम्बन्धा अप्यन्ये देहिनो भवात् । मुच्यन्ते तर्हि तत्कुल्या मुच्येरन्नित्यसंशयम् ॥ १३ ॥
अथ पप्रच्छ नाञ्जस्तं क्षत्रियो हरिमानतः । हरे ! त्वन्निश्चयः पुंसां श्रेयसः साधनं परम् ॥ १४ ॥
सोऽल्पो वा परिपूर्णो वा कथं बोध्यो विचक्षणैः । तमुवाच हरिर्भक्तं श्रूयतां क्षत्रियर्षभ ! ॥ १५ ॥
स्वधर्मज्ञानवैराग्यभक्तिभिः सहितो हरेः । नराकृतेर्निश्चयो यः परिपूर्णः स उच्यते ॥ १६ ॥

सम्बन्धवर्जिता अपि । देहिनो जनाः । भक्ते । स्नेहाद्धेतोः । भवात्संसाराम्बुधेः । मुच्यन्ते । तर्हि । तत्कुल्यास्तद्वंश्या जनाः । भवात् । मुच्येरन् । इत्येतत्तु । असंशयं संशयवर्जितमेव भवति ॥ १३ ॥ अथेति । अथैवंविधश्रीहरिवाक्यश्रवणानन्तरम् । क्षत्रियः क्षत्रजातीयः । नाञ्ज एतन्नामाभक्तः । आनतः कृतप्रणामः सन् । तमुक्तप्रकारेण वदन्तम् । हरिम् । पप्रच्छ । हे हरे ! । त्वन्निश्चयः । पुंसां त्वदाश्रितजनानाम् । परमसाधारणम् । श्रेयस आत्यन्तिककल्याणस्य । साधनमुपायः । भवति ॥ १४ ॥ स इति । स भगवन्निश्चयः । अल्पोऽसम्पूर्णः । अथवा । परिपूर्णः सर्वाङ्गसम्पूर्णः । विचक्षणैस्तद्विवेकनिपुणैर्भक्तैः । कथं केन प्रकारेण । बोध्यो ज्ञेयः । तमेवंपृच्छन्तम् । भक्तं स्वैकाश्रयं नाञ्जनामानं स्वसेवकम् । हरिः । उवाच । हे क्षत्रियर्षभ ! । श्रूयताम् ॥ १५ ॥ स्वेति । स्वधर्मज्ञानवैराग्यभक्तिभिः स्वधर्मः स्ववर्णाश्रमोचितः सदाचारश्च ज्ञानमात्मपरमात्मस्वरूपयोर्यथार्थवेदनं च वैराग्यं भगवदितरवस्तुष्वरुचिश्च भक्तिर्माहात्म्यज्ञानसहितं नवविधभजनं च ताभिः । सहितो युक्तः । नराकृतेः । हरेः । यः । निश्चयः । सः । परिपूर्णः । उच्यते ॥ १६ ॥

एतेष्विति । एतेषु स्वधर्मादिषु मध्ये । एकतमस्य यस्य कस्याप्येकस्य । न्यूनत्वे । स निश्चयः । अल्पकोऽपरिपूर्णः । मतः । इत्येवंविधम् । ते तव । प्रश्नस्य । उत्तरम् । कथितम् । हे नाज्ञ ! । हृदि स्वमनसि चिन्तय मम निश्चयः कीदृशोऽस्तीति विचारय ॥ १७ ॥ श्रुत्वेति । इत्येवंविधाम् । सुधाभाममृतसन्निभाम् । हरेः । वाचम् । श्रुत्वा । क्षत्रर्षभः क्षत्रियश्रेष्ठः । स नाज्ञभक्तः । चित्ते स्वमानसे । हर्षम् । अवाप । सदोगता महासभोपविष्टाः । ससाधवो मुनिमण्डलसहिताः । सर्वे । भक्तजना गृहिणश्च । तोषमानन्दमेव । अवापुः ॥ १८ ॥ स्वभक्तान्वयजा जीवा यान्त्युद्धारं यथा भवात् । नोद्धारं च यथा तस्य प्रकारं प्राह यः स्फुटम् ॥ १ ॥ परिपूर्णं निश्चयं च स्वस्याल्पं प्राह यस्तु तम् । श्रीहरिर्मे स दद्याद्वै परिपूर्णं स्वनिश्चयम् ॥ २ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्पदानुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां पञ्चसप्ततितमस्तरङ्गः ॥ ७५ ॥

हरेः प्रियस्य भक्तस्य तथा तस्याप्रियस्य च । षट्सप्ततितमे प्रोक्तं लक्षणं तु ततः स्फुटम् ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८७६)

एतेष्वेकतमस्यापि न्यूनत्वे स मतोऽल्पकः । इति प्रश्नस्योत्तरं ते कथितं हृदि चिन्तय ॥ १७ ॥ श्रुत्वेति वाचं स हरेः सुधाभां क्षत्रर्षभो हर्षमवाप चित्ते । सदोगता भक्तजनाश्च सर्वे ससाधवस्तोषमवापुरेव ॥ १८ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते पञ्चसप्ततिमस्तरङ्गः ॥ ७५ ॥

शकाब्दे विक्रमार्कस्य रसाश्ववसुभूमिते । प्राग्जेष्ठशुक्लैकादश्यां वचोऽमृतमिदं हरेः ॥ १ ॥ तत्र दुर्गपुरे दुर्ग उत्तमस्य महीभुजः । पीठोत्तमे निजावासे स व्यराजत्सितांशुकः ॥ २ ॥ मुख्यैः सद्भिः परिमितैर्वृतश्च ब्रह्मचारिभिः । तानुवाच स्वयं प्रीतः स्वस्वभावं प्रकाशयन् ॥३॥ मम भक्तजनेष्वस्ति प्रीतिरत्र न संशयः । ते तु ज्ञेयाश्चतुर्दोषरहिता एव नेतरे ॥ ४ ॥

प्राग्जेष्ठशुक्लैकादश्यां प्रथमज्येष्ठमासस्य शुक्लपक्षसम्बन्धिन्यामेकादश्यां तिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमस्य । महीभुजो नृपतेः । दुर्गे । निजावासे स्वकीये निवासभवने । पीठोत्तमे मुकुन्दानन्दवर्णिपरिष्कृतमञ्चोत्तमासने । सितांशुकः स्वाङ्गधृतसकलश्वेतवसनः । स श्रीहरिः । व्यराजत् चातुर्यविहितोपवेशनक्रियावीक्षकचेतांसि आत्मन्याकर्षयन् सुतरां शुशुभे ॥ २ ॥ मुख्यैरिति । मुख्यैः स्वधर्मज्ञानवैराग्यमाहात्म्ययुग्भक्तिगुणनिष्ठतया मुख्यतां प्राप्तैः । परिमितैः शत सार्द्धशतादिसङ्ख्यया परिमेयैः । सद्भिर्मुक्तानन्द, गोपालानन्द, नित्यानन्द, शुकानन्दादिमुनिभिः । ब्रह्मचारिभिर्मुकुन्दाखण्डानन्द, जयानन्दादिभिर्वर्णिमिश्च । चकारात्सोमवर्मरत्नजिदादिपार्षदप्रवरैरपि । वृत उडुभिः पूर्णेन्दुरिव सभायां परिवेष्टितः । स्वयमक्षरधामाधिपत्तिरेव नृभावे हरिनाम्ना प्रसिद्धः । स्वामी । प्रीतः स्वैकान्तिकभक्तेक्षणेनात्यानन्दं प्राप्तः । स्वस्वभावं स्वकीयां साहजिकप्रकृतिम् । प्रकाशयन्नन्यैः स्वतो वोदुधुमशक्यत्वात्स्वयमेव ज्ञापयन् सन् । तान्मुक्तानन्दादिस्वभक्तजनान् । उवाचाननुयुक्तोऽपि स्वयमेव कृपया प्रोचे ॥ ३ ॥ ममेति । हे भक्ताः ! । अत्र सत्सङ्गे वर्त्तमानेषु । भक्तजनेषु । मम । प्रीतिः । अस्ति । अत्रा-

सिन्नर्थे । संशयः । नास्ति । ते मत्प्रीतिभाजनभूता भक्तजनास्तु । चतुर्दोषरहिता एव । ज्ञेयाः । नेतरेऽन्ये नैव ज्ञेयाः । मां भजन्तोऽपि वक्ष्यमाणचतुर्दोषरहिताः स्युश्चेत्तदा तु मम प्रीत्याधारभूता बोध्याश्चतुर्णां मध्ये एकस्मिन्नपि दोषे विद्यमाने सति तु तथाभूता नैवेत्यर्थः ॥ ४ ॥ चतुर्दोषानाह । दोषा इति । हे भक्ताः ! । दोषास्तु । अमी । क्रोधः । ईर्ष्या । कपटः । मानश्च । इत्येते चत्वारो बोध्याः । तत्र तेषु चतुर्षु दोषेषु मध्ये । क्रोधः । तथा । इर्ष्या । द्वावित्येतावुभौ दोषौ । मानम् । आश्रित्य । तिष्ठतोऽवस्थितौ भवतः ॥ ५ ॥ एतेष्विति । एतेषु चतुर्षु दोषेषु मध्ये । एकतम एकोऽपि दोषः । यस्मिन् जने भवेत् । स जनः । भक्तो मां भजन्नपि । मे मम । प्रियः । नास्ति । कामी कामाकुलस्तु । मे मम । नितरामत्यन्तमेव । क्वचित्कदाचिदपि । प्रियः । नैवास्ति ॥ ६ ॥ यमानिति । अहिंसा-प्रमुखान् । यमान् । 'हिंसा, स्तेय, सुरात्मघात, विधवास्पर्शामिषास्वादनान्यस्त्रीसङ्गम, देवनिन्दन, कलङ्कारोप, साङ्कर्यकम् । हर्यन्याश्रयतत्कथाश्रुतिमिह त्यक्त्वा च सम्यग्भवान् श्रीकृष्णं व्रजताच्छरण्यमरणं धर्मात्मजं सर्वथे'ति शुकानन्दमुन्यभिहितैकादशनियमानित्यर्थः । नित्यम् । पालयतः । तथा । सत्सङ्गे । तिष्ठतो वर्त्तमानस्यापि । अस्य कामिनो भक्तस्य । विश्वासो यावज्जीवं सत्सङ्गे स्थास्यतीति प्रतीतिः । मे मम । नास्ति । किल निश्चितमेव ॥ ७ ॥ ज्ञात्वेति । इतीत्थंभूतम् । मत्स्वभावम् ।

दोषास्तु क्रोध ईर्ष्या च कपटो मान इत्यमी । तत्र क्रोधस्तथेर्ष्या द्वौ मानमाश्रित्य तिष्ठतः ॥ ५ ॥ एतेष्वेकतमो यस्मिन् स भक्तोऽपि न मे प्रियः । कामी तु नितरामेव नैव मेऽस्ति प्रियः कचित् ॥ ६ ॥ यमानहिंसाप्रमुखान् नित्यं पालयतस्तथा । सत्सङ्गे तिष्ठतोऽप्यस्य विश्वासो नास्ति मे किल ॥ ७ ॥ ज्ञात्वेति मत्स्वभावं यो हित्वा दोषानिमान् द्रुतम् । स्वाप्रियेऽपि च मद्वाक्ये मत्प्रियायैव तिष्ठति ॥ ८ ॥ स पक्कः खलु सत्सङ्गी तस्मिन् स्वाभाविको मम । वर्त्तते नितरां स्नेह इति जानीत सत्तमाः ॥९॥ इति साधुजना वचोऽमृतं निजनाथस्य निपीय हर्षिताः । हृदयाम्बुरुहे निधाय तत्प्रणमन्ति स्म तमादरेण ते ॥१०॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते षट्सप्ततितमस्तरङ्गः !! ७६ ॥

ज्ञात्वा । यः सत्सङ्गीभक्तः । इमान् । दोषान् क्रोधादिकानगुणान् । द्रुतं शीघ्रमेव । हित्वा त्यक्त्वा । स्वाप्रिये स्वस्य प्रीत्यजनकेऽपि । मद्वाक्ये स्वधर्मादिपालनप्रेरणरूपे मद्वचने । मत्प्रियाय मां प्रसन्नं कर्त्तुमित्यर्थः । तिष्ठति तन्मद्वचनानुसारेणैव सदा वर्त्तते इत्यर्थः । स इत्युत्तरेणान्वयः ॥ ८ ॥ स इति । हे सत्तमाः ! सद्भक्ताः ! । स एवंलक्षणः । सत्सङ्गी । परिपूर्णः । ज्ञेयः । खलु निश्चितमेव । तस्मिन्पक्कसत्सङ्गिनि । मम । स्वाभाविकः साहजिकः । नितरां स्नेहोऽतिशयिता प्रीतिः । वर्त्तते सर्वकालं तिष्ठति । इतीत्थम् । जानित ॥ ९ ॥ इतीति । इत्येवंविधम् । निजनाथस्य स्वस्वामिनः श्रीहरेः । वचोऽमृतम् । निपीय श्रुत्वा । हर्षिता मुदं प्राप्ताः । ते पूर्वोक्ताः । साधुजनाः । तच्छ्रीनिजनाथहरिवचोऽमृतम् । हृदयाम्बुरुहे । निधायास्माभिरित्थमेव वृत्यमिति मनसि निश्चित्येत्यर्थः । तं श्रीहरिम् । आदरेण । प्रणमन्ति स्म ॥ १० ॥ स्वप्रियस्य स्वभक्तस्य तस्य स्वस्याप्रियस्य च । लक्ष्म यः प्राह स हरिर्मां क्रियात्स्वप्रियं सदा ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्सूनुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां षट्सप्ततितमस्तरङ्गः ॥ ७६ ॥

हेतुर्युगतिदाढर्थं तु स्वधर्माचरणस्य यत् । भक्तस्य श्रीहरेर्देहावसानसमयेऽपि च ॥ १ ॥ मूर्तिर्यथा शोभते च शोभते नैव सा यथा । एतत्सर्वं समसप्ततितमे स्पष्टमीरितम् ॥ २ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८७६) द्वितीयज्ज्येष्ठामावस्यां द्वितीयजेष्ठमासस्यामावास्यतिथौ । 'अप्यमावस्यमावासी चामामास्यमामसीति शब्दार्णवः' । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमस्योत्तमनृपतेः । दुर्गे । प्रत्यग्द्वारस्य । वेश्मनः । श्रीवासुदेवभगवन्मन्दिरान्तिकवर्तिनः पश्चिमाभिमुखस्योत्तमनृपतेर्भवनस्य । वेद्यां बाह्यायां वितर्द्दौ । सत्पीठे श्वेतोत्तरच्छदापार्श्विकोपबर्हास्तृतमहातूलिकावति शोभने पर्यङ्कासने । सिताम्बरः परिधृतसकलश्वेतवसनः । स श्रीहरिः । अराजत् परिमितपद्गैः सह स्वावासादागत्य तत्रोपवेशनचातुर्येण स्वेक्षकमनोवृत्तीर्हरन्नुपविष्टः सन् शुशुभे इत्यर्थः ॥ २ ॥ सद्भिरिति । भक्तैः स्वैकाश्रयैः । सद्भिः साधुजनैः । गृहिभिर्गृहस्थाश्रमिभिश्च । नानादेशागतैरिति शेषः । वृतः सभायां परिवेष्टितः । स्वयं श्रीहरिः । तान् स्वभक्तान् । अब्रवीत् केनाप्यननुयुक्तोऽपि गुरुत्वात्स्वयमेव । भाषत । हे भक्ताः ! । सर्वेषाम् । वो युष्माकम् । दृढं सुस्थिरम् । भगवन्निश्चयबलं साक्षात्परमेश्वरस्य मम स्वरूपनिश्चयसामर्थ्यम् ।

शकाब्दे विक्रमार्कस्य रसाश्ववसुभूमिते । द्वितीयज्ज्येष्ठामावस्यां वचोऽमृतमिदं हरेः ॥ १ ॥
तत्र दुर्गपुरे दुर्गे उत्तमस्य स वेश्मनः । प्रत्यग्द्वारस्य वेद्यां सत्पीठेऽराजत्सिताम्बरः ॥ २ ॥
सद्भिश्च गृहिभिर्भक्तैर्वृतस्तानब्रवीत्स्वयम् । भगवन्निश्चयबलं सर्वेषामस्ति वो दृढम् ॥ ३ ॥
तेन क्वापि स्वधर्मस्य न कार्यं खण्डनं धिया । यतस्तदासुरं कर्म तत्कर्त्ता चासुरो मतः ॥ ४ ॥
भगवन्निश्चयवति पुंसि भागवता गुणाः । आयान्ति निजधर्मस्थे धर्मं प्रति धरोदिताः ॥ ५ ॥
ततः साधोः कृष्णेन प्रोक्तैरौपगविं प्रति । गुणैः स्यादिह विख्यातः स्वाश्रितस्यापि मुक्तिदः ॥ ६ ॥

अस्ति वर्त्तते ॥ ३ ॥ तेनेति । तेन मत्स्वरूपनिश्चयबलेन हेतुना । स्वधर्मस्य वर्णाश्रमोचितस्य स्वस्वसदाचारस्य । खण्डनं भगवत्स्वरूपनिश्चयश्चेत्किं वर्णाश्रमधर्मपालनेनेति मूलोत्कृतनम् । धिया मनसा बुद्धिपूर्वमिति वा । क्वापि कदाचिदपि । न कार्यम् । यतो हेतोः । तद्धर्मखण्डनलक्षणम् । कर्म । आसुरमसुरसम्बन्धि भवति । अतः । तत्कर्त्ता धर्मखण्डनलक्षणासुरकर्मकर्त्ता । असुरः । मतः ॥ ४ ॥ ननु भगवन्निश्चयिनमेनमसुरं कथं ब्रुवे इति चेद्धर्मस्य भगवतो ममाज्ञारूपत्वात्तद्वन्तो दैवास्तद्विपरीता असुरा इति कृष्णेन मयैवोक्तत्वान्मदाज्ञारूपधर्मखण्डनकर्त्तुर्मद्द्रोहित्वाच्च मदाज्ञारूपस्वधर्माश्रयोत्पन्नदैवभाववता मद्भक्तेन मन्मदीयगुणाविर्भावहेतोः स्वधर्मस्य खण्डनं मन्निश्चयरूपज्ञानभक्त्याश्रयेण न कार्यमित्याह त्रिभिः । भगवन्निश्चयवति । निजधर्मस्थे । पुंसि भक्ते । धर्मम् । प्रति । धरोदिताः पृथिव्या कथिताः । भागवता भगवत्सम्बन्धिनः । गुणाः सत्यं शौचं दया क्षान्तिरित्यादिना श्रीभागवतप्रथमस्कन्धे उक्ता नित्या गुणाः । आयान्ति समागच्छन्ति ॥ ५ ॥ तत इति । ततस्तदनन्तरम् । स तथाविधो भक्तः । कृष्णेन । औपगविमुद्धवं प्रति । प्रोक्तैः । साधोः । गुणैः कृपालुरकृतद्रोह इत्यादिभिः । इह सत्सङ्गे । विख्यातः । स्वाश्रितस्य स्वाश्रयं कुर्वतो

जनस्य । मुक्तिदो मोक्षप्रदोऽपि स्यात् ॥ ६ ॥ अत इति । अतो हेतोः । ज्ञानस्य भगवन्निश्चयपर्यायस्य बोधस्य स्वात्मज्ञानस्य वा । अथवा । भक्तेः । बलम् । आश्रित्य । मनसा मनःसङ्कल्पाचरणेन । वचसा वाग्व्यापारेण चापि । कर्हिचित्कदाचिदपि । धर्मखण्डनम् । न कार्यम् । यदा वाङ्मनसेन धर्मखण्डनं न कार्यं तदा देहेन तत्खण्डनं न कर्त्तव्यमिति त्ववश्यमेव प्राप्तमिति भावः ॥ ७ ॥ य इति । भक्तलिङ्गधरः काश्मीरचन्द्रकोपेतदण्डाकारोर्ध्वपुण्ड्रादिसत्सङ्गिचिह्नधरोऽपि । यो भक्तः । धर्मभङ्गवार्त्ताकृत् । स्यात् । स तथाविधो भक्तः । मद्विमुखो मत्प्रतिकूलवर्त्ती । यतः । गुरुद्रोही स्वधर्मादिशिक्षकत्वाद्गुरोर्मम द्रोहकर्त्ता । अत एव । नारकी अन्ते नरकगामी च । ज्ञेयः । नूनं निश्चितमेव ॥ ८ ॥ स्वेति । अत्र सत्सङ्गे । यः । नरः । स्वधर्मम् । पालयन्सन् । प्रीत्या । कृष्णम् । भजेत् । स तथाविधो नर एव । भौतिकं पञ्चभूतोत्पन्नम् । देहम् । त्यक्त्वा परंपदम् । याति । मद्धामाधिगच्छतीत्यर्थः ॥ ९ ॥ सन्त इति । अथैवंविधश्रीहरिवाक्यश्रवणानन्तरम् । सन्तो मुनयः । तं श्रीहरिम् । पप्रच्छुः । हे स्वामिन् ! । अत्र सत्सङ्गे । कश्च कश्चन । एकान्तिकोऽपि । ते तव । भक्तः । देहान्ते । भृशमतिशयेन । अर्त्तिं पीडाम् । व्रजन्प्राप्नुवन् ।

अतो ज्ञानस्य भक्तेर्वा बलमाश्रित्य कर्हिचित् । न धर्मखण्डनं कार्यं मनसा वचसाऽपि च ॥ ७ ॥ यो धर्मभङ्गवार्त्ता-कृद्भक्तलिङ्गधरोऽपि सः । ज्ञेयो मद्विमुखो नूनं गुरुद्रोही च नारकी ॥ ८ ॥ स्वधर्मं पालयन् कृष्णं भजेत्प्रीत्याऽत्र यो नरः । स एव भौतिकं देहं त्यक्त्वा याति परं पदम् ॥ ९ ॥ सन्तस्तमथ पप्रच्छुः स्वामिन्भक्तोऽत्र कश्च ते । एका-न्तिकोऽपि देहान्ते दृश्यतेऽर्तिं व्रजन् भृशम् ॥ १० ॥ वाच्यमानोऽपि शक्नोति भाषितुं नैव किञ्चन । द्वित्राण्यहानि न ब्रूते तमोलीन इव स्वपन् ॥ ११ ॥ दृश्यमानोऽपक्व इव भक्तस्ते कश्च कुत्रचित् । अन्तकाले व्यथाहीनो दृश्यतेऽति-समर्थवत् ॥१२॥ आत्मीयैः सह सम्भाष्य म्रियते च स्वतन्त्रवत् । अत्र यत्कारणं तन्नो वक्तुमर्हसि सत्पते ! ॥ १३ ॥

दृश्यते ॥ १० ॥ वाच्यमान इति । स भक्तः । वाच्यमानोऽन्यभक्तादिभिः सम्भाष्यमाणः सन्नपि । किञ्चन किमपि वचनम् । भाषितुं वक्तुम् । नैव शक्नोति समर्थो नैव भवति । तमोलीन इव गाढध्वान्तनिमग्न इव । स्वपन् शयानः सन् । द्वित्राणि । अहानि । द्वित्रिदिनपर्यन्तमित्यर्थः । न ब्रूते वाग्व्यापारं न करोति ॥ ११ ॥ दृश्यमान इति । कुत्रचित् सत्सङ्गसम्बन्धिनि क्वापि स्थाने । कश्च कश्चित् । ते तव । भक्तस्तु । अपक्व इव । दृश्यमानोऽपि । अन्तकाले । व्यथाहीनः पीडया वर्जितः सन् । अतिसमर्थवत् । दृश्यते आगामिन्यमुष्मिन्दिनेऽहं देहं त्यक्ष्यामि यदि मया सह यः कोऽप्यागमिष्यति तदैनमपि भगवद्धाम नेष्यामीत्याद्यतिसाम-र्थ्यप्रदर्शनेन पक्व इव वीक्ष्यते इत्यर्थः ॥ १२ ॥ आत्मीयैरिति । हे सत्पते ! । स भक्तः । आत्मीयैः स्वकीयजनैः । सह । सम्भाष्य । स्वतन्त्रवत्स्वच्छन्दवत् । जयस्वामिनारायण एतैर्भगवत्तत्पार्षदैः सह विमानमधिरुह्यैतद्देहत्यागपूर्वं भगवद्धामगच्छामीति ब्रुवन्नात्मतन्त्रवदित्यर्थः । म्रियते देहं त्यजति । अत्रैवंविधाश्चर्ये । यत्कारणं यो हेतुर्भवेत् । तत्कारणम् । नोऽस्मभ्यम् । वक्तुम् । अर्हसि ॥ १३ ॥

सद्भिरिति । इत्यमुना प्रकारेण । सद्भिर्मुनिभिः । सम्पृष्टः । स श्रीहरिः । ऊचे तानुवाच । हे साधवः ! । शृणुत । द्वयोरुक्तविधद्विविधभक्तयोः । अन्ते देहावसानसमये । इत्थंभावे उक्तविधत्वे । द्वौ । हेतू कारणे । स्तो विद्येते तौ हेतू । वदामि ॥१४॥ काल इति । एकस्तयोर्मध्ये आद्यो हेतुः । कालः । अपरो द्वितीयो हेतुः । अवस्था जाग्रदादिका । ते कालावस्थे । शुभे शोभने । अशुभे अशोभने च । मते । तयोरुक्तद्विविधभक्तयोः । मृती मृत्युसमयौ । शुभाभ्याम् । ताभ्यां कालावस्थाभ्याम् । शोभेते । अशुभाभ्याम् । ताभ्याम् । न शोभते ॥ १५ ॥ एवं सामान्यत उक्त्वा शुभाशुभे कालावस्थे विशदयन्नुक्तमेवार्थं विस्तरेण वदन्नादौ कालस्य शुभाशुभत्वमाह त्रिभिः । कृष्णेति । हे मुनयः ! । तत्र तयोः कालावस्थयोर्मध्ये । कृष्णशक्तीरितः साक्षात्कृष्णेनान्तर्यामिशक्त्या तत्कर्मानुगुणं प्रेरितः । कालः । सर्वत्र । सञ्चरन्सन् । चतुर्युगात्मकः कृतादिचतुर्युगरूपश्च सन् । नृणां जनानाम् । हृदये । परिवर्त्तते सत्त्वादिगुणपर्यायद्वारा प्रवर्त्तते । तथाचोक्तं श्रीभागवते । 'सत्त्वं रजस्तम इति दृश्यन्ते पुरुषे गुणाः । कालसञ्चोदितास्ते वै परिवर्त्तन्त आत्मनी'त्यादिना । एतदग्रे सप्ताशीतितमे तरंगे (८७) स्पष्टीभविष्यति ॥१६॥ तत्रेति । तत्रोक्तविधकृतादिचतुर्युगेषु

सद्भिरित्थं सम्पृष्ट ऊचे शृणुत साधवः ! । इत्थं भावे द्वयोरन्ते द्वौ हेतू स्तो वदामि तौ ॥ १४ ॥ काल एकोऽपरोऽवस्था शुभे ते चाशुभे मते । ताभ्यां शुभाभ्यां शोभेते नाशुभाभ्यां तयोर्मृती ॥ १५ ॥ कृष्णशक्तीरितस्तत्र कालः सर्वत्र सञ्चरन् । चतुर्युगात्मको नृणां हृदये परिवर्त्तते ॥ १६ ॥ तत्रान्ते यदि सत्यं स्यात्तदा मृत्युः सुशोभते । स्यातां युगे मध्यमे चेत्तदा किञ्चित्स शोभते ॥ १७ ॥ कलिश्चेदन्तकाले स्यात्तदा मृत्युर्न शोभते । कालस्य परिवृत्त्येत्थं सत्यासत्यौ मृती मते ॥ १८ ॥ अग्रे गतिस्तयोः स्वानुष्ठितधर्मानुसारिणी । भवतीत्यवगन्तव्यं नात्र कालप्रधानता ॥ १९ ॥ अथावस्थाः शरीरेषु जाग्रत्स्वप्नसुषुप्तयः । परिवर्त्तन्त इत्यासु मृत्यावेकतमा भवेत् ॥ २० ॥

मध्ये । यदि । अन्तेऽन्तकालसमये । सत्यं कृतयुगम् । स्यात् । तदा । मृत्युर्मरणम् । सुशोभते । चेद्यदि । मध्यमे त्रेताद्वापराख्ये । युगे । स्याताम् । तदा । स मृत्युः । किञ्चित् । शोभते ॥ १७ ॥ कलिरिति । चेद्यदि । अन्तकाले । कलिरन्तिमं कलियुगम् । स्यात् । तदा । मृत्युः । न शोभते । इत्थमनुना प्रकारेण । कालस्य सत्यादियुगरूपानेहसः । परिवृत्त्या गुणानुसारेण परिवर्त्तनेन । मृती मरणे । सत्यसत्यौ शोभनाशोभने । मते ॥ १८ ॥ ननु भवत्वेवं कालेन शोभनाशोभने तन्मृती परन्तूत्कृष्टापकृष्टयोस्तयोरग्रे गती अपि किं कालप्रवर्त्तितगुणानुसारिण्यौ स्यातामन्यथा वेत्यत्राह । अग्र इति । तयोः पक्वापक्वभक्तयोः । अग्रे मरणानन्तरम् । गतिः प्राप्तिः । स्वानुष्ठितधर्मानुसारिणी स्वेनात्र यथाविध एकान्तिको धर्मः सम्पादितः स्यात्तदनुरोधिनीत्यर्थः । भवति । इतीत्थम् । अवगन्तव्यं निश्चयेनैव ज्ञेयम् । अत्र तयोर्मरणानन्तरं भवितव्यगतौ । कालप्रधानता । नास्ति ॥ १९ ॥ अथावस्थायाः शुभाशुभत्वमाह चतुर्भिः । अथेति । अथेति भिन्नोपक्रमे । जाग्रत्स्वप्नसुषुप्तयः । अवस्थाः । शरीरेषु प्राणिदेहेषु । परिवर्त्तन्ते अन्तर्यामिप्रेरिततत्तत्कर्मानुगुणफलभोगार्थं पर्यायेणानुवर्त्तन्ते । इति हेतोः । आस्ववस्थासु मध्ये ।

एकतमा या काऽप्येकावस्था । मृतौ मृत्युसमये । भवेदवश्यं स्यात् ॥ २० ॥ तत्रेति । तत्र तासु मध्ये । यदि । अन्ते देहावसानसमये । जाग्रत्सत्त्वगुणात्मिका जाग्रदवस्था । स्यात् । तदा । तद्वान् जाग्रदवस्थावान् । पूरुषस्तु । अन्यजनैः सह । यथातथं यथार्थम् । वदन्सन्नेव । देहं स्वशरीरम् । जहाति ॥ २१ ॥ स्वप्नमिति । चेद्यदि । देहान्ते । स्वप्नो रजोगुणात्मिका स्वप्नावस्था । वर्त्तेत । तर्हि । स स्वप्नावस्थावानपि । पूरुषः । किञ्चित्किञ्चिद्वचनम् । अयथार्थं पूर्वापरानुसन्धानवर्जितं यथातथा । भ्रान्तवद्विकलवत् । वदन्नन्यजनैर्ब्रुवन्सन् । वपुः स्वशरीरम् । त्यजति ॥ २२ ॥ सुषुप्तिरिति । यदि । अन्ते देहान्तसमये । सुषुप्तिस्तमोगुणात्मिका सुषुप्त्यवस्था । वर्त्तेत । तर्हि । स सुषुप्त्यवस्थावानपि । पूरुषः । तमोलीनो गाढध्वान्तनिमग्नः । किञ्चन किमपि । अब्रुवाणोऽन्यजनैः सहावदंश्च सन् । म्रियते स्वदेहं त्यजति ॥२३॥ एवमिति । एवममुना प्रकारेण । अवस्थाभेदेन । शुभाशुभे । मृती । उक्ते । तयोः पक्वापक्वभक्तयो । अग्रे । गतौ । हेतुः कारणम् । अवस्था जाग्रदाद्यात्मिका । नैवास्ति । इतीत्थम् । गम्यताम् । अग्रे गतिस्तु तयोः स्वानुष्ठितधर्मानुसारिणी भवतीति भावः ॥ २४ ॥ पक्वापक्वभक्तयोर्गतिप्रकारमाह । पक्वेति । पक्वभक्त एकान्तिकभक्तः ।

तत्रान्ते यदि जाग्रत्स्यात्तदा तद्वांस्तु पूरुषः । देहं जहात्यन्यजनैर्वदन्नेव यथातथम् ॥ २१ ॥
स्वप्नं वर्तेत चेत्तर्हि देहान्ते सोऽपि पूरुषः । अयथार्थं वदन्किञ्चित्त्यजति भ्रान्तवद्वपुः ॥ २२ ॥
सुषुप्तिर्यदि वर्त्तेत तदान्ते सोऽपि पूरुषः । म्रियते हि तमोलीनस्त्वब्रुवाणश्च किञ्चन ॥ २३ ॥
एवं त्ववस्थाभेदेन मृती उक्ते शुभाशुभे । तयोरग्रे गतौ हेतुर्नैवावस्थेति गम्यताम् ॥ २४ ॥
पक्वभक्तो हरेर्धाम देहान्ते सद्य एव हि । प्राप्नोत्यथापक्वभक्तः कालेनेति तयोर्भिदा ॥ २५ ॥
मृत्युना शोभनेनापि नाभक्तस्य गतिः शुभा । अशोभनेन तेनापि नास्ति भक्तस्य दुर्गतिः ॥ २६ ॥
सम्यगाराधितः कृष्णो देहान्ते भक्तमात्मनः । स्वधाम प्रापयत्येव देवानामपि दुर्लभम् ॥ २७ ॥

देहान्ते । सद्य एव । हरेः । धाम । प्राप्नोति । अथ च । अपक्वभक्तस्त्वेकान्तिकभाववर्जितो भक्तः । कालेन बहुकालसम्पादितयथार्थैकान्तिकभावानन्तरमित्यर्थः । हरेर्धाम प्राप्नोति । इतीत्थंभूता । तयोः पक्वापक्वभक्तयोः । भिदा गतिभेदोऽस्ति । हि ॥ २५ ॥ ननु कालावस्थाभेदेन केचनाभक्ताः शोभनमृत्यवो भक्ताश्चाशोभनमृत्यवो दृश्यन्ते तेषां शोभनाशोभनमृत्युभ्यां तथाविधे गती स्यातामन्यथा वेत्यत्राह: त्रिभिः । मृत्युनेति । हे मुनयः ! । शोभनेनोक्तप्रकारेण शोभावतापि । मृत्युना । अभक्तस्य । शुभागतिः । नास्ति । अशोभनेनोक्तरीत्याऽशोभावतापि । तेन मृत्युना । भक्तस्य । दुर्गतिरशुभागतिः । नास्ति ॥ २६ ॥ सम्यगिति । सम्यक् । आराधित उपासितः । कृष्णः । देहान्ते लोके शोभनेनाशोभनेन वा मृत्युना देहपाते जाते सति । आत्मनः स्वस्य । भक्तम् । देवानामपि । दुर्लभं दुष्प्रापम् । स्वधाम । प्रापयत्युक्तरीत्या गमयत्येव ॥ २७ ॥

जात इति । शोभने । मृत्यौ । जाते सत्यपि । कृष्णाभक्तं प्रत्यक्षश्रीकृष्णस्याभक्तजनं तु । भास्करेः सूर्यसूनोर्यमस्य । दूताः । यमपुरं संयमनीम् । नीत्वा प्रापय्य । यथाकर्म तत्कर्मानुसारेण । अर्दयन्ति पीडयन्ति । हि ॥ २८ ॥ अथोक्तार्थानुवादपूर्वमुक्तद्विविधभक्तेषु य आद्या एकान्तिका भक्ता उक्तास्तेष्वप्यत्युत्तमस्य भक्तस्य सामर्थ्यं कथयंस्तस्य विरलतामाह त्रिभिः । एवमिति । हे मुनयः ! । एवममुना प्रकारेण । कृष्णभक्तस्य । शुभे शोभने । अशुभे अशोभने वा । देहपाते जाते सति तु । लोकरीत्या । संशयः । कर्हिचित्कदाचिदपि । न कर्त्तव्यः ॥ २९ ॥ ब्रह्मेति । य एकान्तिकश्रेष्ठः । नरो भक्तः । दृढं सुस्थिरम् । देशकालाववस्थादि-भिरपरिहार्यमित्यर्थः । ब्रह्मात्मैक्यं देहावस्थात्रयपरस्यात्मनोऽक्षरब्रह्मणैकभावम् । प्राप्य । कृष्णं प्रत्यक्षं श्रीहरिम् । भजन् सन् । हरेः । माहात्म्यं च । वर्णयन्सन् । स्वातन्त्र्येण । वपुः स्वशरीरम् । जह्यात्प्रारब्धावसाने त्यजेत् ॥ ३० ॥ सामर्थ्यमिति । तस्य जितत्र्यवस्थस्येत्थंभूतभक्तस्य । सामर्थ्यमीदृशं समर्थत्वं तु । ईश्वरस्येव प्रत्यक्षपरमेश्वरस्य यथा । दुर्लभमित्थंभूतेतरभक्तदुष्प्रापम् । ज्ञेयम् । विरलो दुर्लभः । तादृक् । भक्तस्तु । भूतले । क्वचित्कस्मिंश्चित्स्थले । भवति ॥ ३१ ॥ इतीति ।

जातेऽपि शोभने मृत्यौ कृष्णाभक्तं तु भास्करेः । दूता नीत्वा यमपुरं यथाकर्मार्दयन्ति हि ॥ २८ ॥ एवं शुभे चाशुभे वा देहपाते तु संशयः । लोकरीत्या न कर्त्तव्यः कृष्णभक्तस्य कर्हिचित् ॥ २९ ॥ ब्रह्मात्मैक्यं दृढं प्राप्य यस्तु कृष्णं भजन्नरः । स्वातन्त्र्येण वपुर्जह्यान्माहात्म्यं वर्णयन् हरेः ॥ ३० ॥ सामर्थ्यं तस्य तु ज्ञेयमी-श्वरस्येव दुर्लभम् । तादृग्भक्तस्तु विरलः क्वचिद्भवति भूतले ॥ ३१ ॥ इति श्रीहरिवाक्यपीयूषमन्तर्निपीय प्रसन्नास्त आसन् सदःस्थाः । गृहस्थाश्च सन्तः स्ववासं व्रजन्तं नमन्ति स्म भक्त्या तमीशेश्वरेशम् ॥ ३२ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते सप्तसप्ततिमस्तरङ्गः ॥ ७७ ॥

शकाब्दे विक्रमार्कस्य जगाश्ववसुभूमिते । शुचिशुक्लतृतीयायां वचोऽमृतमिदं हरेः ॥ १ ॥

इत्येवंविधम् । श्रीहरेः । वाक्यपीयूषम् । निपीय । सदःस्थाः । ते । सन्तः । गृहस्थाश्च । अन्तरन्तःकरणे । प्रसन्ना अत्यन्तं मुदिताः । आसन् । स्ववासं स्वकीय-निवासनिकेतनम् । व्रजन्तं गच्छन्तम् । ईशेश्वरेशमीश्वरेश्वरेश्वरम् । तं श्रीहरिम् । भक्त्याऽत्यादरेणानमन्ति स्म ॥ ३२ ॥ स्वभक्तानां स्वस्वधर्माचरणं तु सहेतुकम् । ऊचे यश्च स्वभक्तानां देहान्तसमये सृतिः ॥ १ ॥ यथा संशोभते नैव शोभते सा यथाऽत्र तु । तद्धेतुं प्राह स हरिर्मद्रक्षां सर्वतः क्रियात् ॥ २ ॥ इति श्रीमदेकान्तिक-धर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्सूनुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां सप्तसप्ततितमस्तरङ्गः ॥ ७७ ॥

एकविंशतिसङ्ख्यानां सतां प्रश्नोत्तराणि तु । ततोऽष्टसप्ततितमे कृतानि हरिणा स्फुटम् ॥ १ ॥ शकेति । विक्रमार्कस्य विक्रमादित्यभूपतेः । नगाश्ववसुभूमिते सप्त-सप्ताष्टैकसंमिते । शकाब्दे शकवर्षे । संवदष्टादशशताधिकसप्तसप्ततितमे वर्षे इत्यर्थः । (१८७७) शुचिशुक्लतृतीयायामाषाढमासस्य शुक्लपक्षागततृतीयातिथौ । इदम् । हरेः ।

वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमस्योत्तमाख्यनृपतेः । दुर्गे । अस्योत्तमनृपस्य । प्रत्यङ्मुखस्य पश्चिमास्यस्य । वेश्मनः श्रीवासुदेवमन्दिरान्तिकवर्त्तिनो भवनस्य । वेद्यां बाह्यायां वितर्द्दौ । मञ्चोत्तमे सोपस्करे उत्तमे पल्यङ्कासने । स श्रीहरिः । उपाविशत् स्वावासादागत्य पूर्वाह्ण उपविवेश ॥ २ ॥ सितेति । कण्ठे । सितपुष्पस्रजं श्वेतकुन्दकुसुममालाम् । दधत् । सितनवांशुकः परिधृतसकलनवीनश्वेतवसनः । तथा । त्यागिभिः । गृहिभिः । सहस्रशः । भक्तैर्नानादेशागतैः स्वाश्रितजनैः । वृतः सभायां परिवेष्टितः ॥ ३ ॥ परीक्ष्यमाण इति । निजान् स्वकीयान् । विद्यार्थिनः स्वाज्ञया सच्छास्त्रविद्याभ्यासप्रसक्तान् । सतः सभोपविष्टशिवानन्दादिमुनीन् । परीक्षमाणः । प्रश्नोत्तराचरणप्रसङ्गेन तन्मतिपरीक्षां कुर्वाण इत्यर्थः । स श्रीहरिः । अब्रवीत्तानुद्दिश्योवाच । हे सन्तः ! । वो युष्माकम् । यत् । प्रष्टव्यम् । भवेत् । तत् । पृथक् पृथक् । एकैक इत्यर्थः । माम् । पृच्छत । इति द्वयोरेकसम्बन्धः ॥ ४ ॥ शिवानन्द इति । तदैवंविधश्रीहरिवाक्यश्रवणकाले । ज्येष्ठो वक्ष्यमाणशिवानन्दद्वयोऽधिकः । शिवानन्दः साधुः । नत्वा । तं श्रीहरिम् । पप्रच्छ । हे प्रभो ! । तव भक्तानां साक्षाच्छ्रीकृष्णस्य तवोपासकानां

तत्र दुर्गपुरे दुर्गे उत्तमस्यास्य वेश्मनः । वेद्यां प्रत्यङ्मुखस्यासौ मञ्चोत्तम उपाविशत् ॥ २ ॥
सितपुष्पस्रजं कण्ठे दधत्सितनवांशुकः । वृतः सहस्रशो भक्तैस्त्यागिभि र्गृहिभिस्तथा ॥ ३ ॥
परीक्षमाणः स निजान्सतो विद्यार्थिनोऽब्रवीत् । प्रष्टव्यं वो भवेद्यत्तन्मां पृच्छत पृथक्पृथक् ॥ ४ ॥
शिवानन्दस्तदा ज्येष्ठो नत्वा पप्रच्छ तं प्रभो ! । कथं ज्ञायेत भक्तानामचलस्तव निश्चयः ॥ ५ ॥
श्रीहरिरुवाच–हृदि पुंसो भवेद्यस्य कृष्णस्याचलनिश्चयः । हरेः सर्वाः क्रियास्तस्य भासेरन् हि शुभावहाः
॥६॥ कामः क्रोधो भयं शोकः प्रीतिर्जयपराजयौ । इत्यादि यद्धरेः कर्म तत्सर्वं तस्य मङ्गलम् ॥ ७ ॥
न दोष बुद्धिः क्वापि स्याद्धरेर्निन्द्येऽपि कर्मणि । तस्य पुंसः विज्ञेयः श्रीकृष्णाचलनिश्चयः ॥ ८ ॥

सम्बन्धी । अचलः परिपक्वः । निश्चयो भगवत्स्वरूपनिर्णयः । कथं केन प्रकारेण । ज्ञायेत । अस्माभिः स कैर्लक्षणैर्बोद्धुं शक्येतेत्यर्थः ॥ ५ ॥ 'एवं कृतानुयोगः स शिवानन्देन साधुना श्रीकृष्ण इत्थमूचे तं हर्षयंश्चापरान्मुनीन्' । १ हृदीति । हे मुने ! । यस्य । पुंसो भक्तस्य । हृदि मनसि । कृष्णस्य साक्षाद्धरेः । अचलनिश्चयः । भवेत् । तस्य भक्तस्य । हरेः । सर्वाः शुभा अशुभाश्चापि । क्रियाश्चरित्राणि । शुभावहाः कल्याणकारिण्यः । भासेरन् ॥ ६ ॥ ता दर्शयति । काम इति । कामः । क्रोधः । भयम् । शोकः । प्रीतिः । जयपराजयौ । इत्यादि एवंप्रभृति । हरेः । यत् । कर्म क्रिया । तत्सर्वम् । तस्याचलकृष्णनिश्चयस्य भक्तस्य । मङ्गलं कल्याणरूपं भासेतेत्यर्थः ॥ ७ ॥ नेति । तस्य तथाविधस्य । पुंसो भक्तस्य । हरेः । निन्द्ये लोकदृष्ट्या जुगुप्सितेऽपि । कर्मणि । क्वापि कदाचिदपि । दोषबुद्धिः । न स्यात् । स एवंविधः । श्रीकृष्णाचलनिश्चयः श्रीकृष्णसम्बन्धी परिपक्वो निश्चयः । विज्ञेयः । भगवद्भक्तानामेवंविधो यः कृष्णस्वरूपनिश्चयः स त्वचलो निश्चयो बोध्य इत्यर्थः ॥ ८ ॥

निर्मानानन्द इति । अथानन्तरम् । निर्मानानन्दो मुनिः । उचे श्रीहरिं पप्रच्छेत्यर्थः । हे हरे ! । त्वयि साक्षाद्भगवति श्रीहरौ । त्वत्पुरुषेषु श्रीहरेस्तव भक्तजनेषु च । येन साधनेन । क्वापि कदाचिदपि । दोषधीर्दोषग्राहिणी मतिः । न भवेत् । तत्तथाविधम् । साधनम् । किम् । नु । किं वा भवेदित्यर्थः ॥ ९ ॥ 'निर्मानानन्द-मुनिना पृष्ट एवं स सद्गुरुः । तमित्थमुक्तवान्स्वामी प्रीणयंश्चापरान् सतः' । सम्यगिति । हे मुने ! । ये भक्तजनाः । सद्भ्यो भगवदेकान्तिकसाधुभ्यः सकाशात् । कृष्णस्य प्रत्यक्षस्य श्रीहरेः । माहात्म्यम् । सम्यक् तत्त्वतः । विज्ञाय । निश्चयं तत्स्वरूपज्ञाननिर्णयम् । कुर्युः । तेषां भक्तजनानाम् । क्वापि कदाचिदपि । तस्मि-न्प्रत्यक्षश्रीकृष्णे । दोषधीः । न भवेत् । हि निश्चितम् ॥ १० ॥ एवमिति । एवममुना प्रकारेण । ये । नरा भक्तजनाः । सद्भ्यः । कृष्णस्य । भक्तानाम् । महत्तां माहात्म्यम् । । सम्यगेव । विद्युर्जानीयुः । तेषामेवंकृष्णभक्तमाहात्म्यवेदिनां नराणाम् । तेषु कृष्णभक्तेषु । दोषधीः । न भवेत् । हरितद्भक्तमाहात्म्यज्ञानमेव तस्मिंस्तेषु च दोषबुध्यभावस्य साधनमिति भावः ॥ ११ ॥ प्रज्ञानानन्देति । अथानन्तरम् । प्रज्ञानानन्दसाधुः । तं श्रीहरिम् । अपृच्छत् । हे महाप्रभो ! । सदा

निर्मानानन्द ऊचेऽथ त्वयि त्वत्पुरुषेषु च । न दोषधीर्भवेत् क्वापि येन तत्साधनं नु किम् ॥ ९ ॥ श्रीहरिरुवाच–सम्यक् कृष्णस्य माहात्म्यं सद्भ्यो विज्ञाय निश्चयम् । ये कुर्युर्दोषधीस्तेषां तस्मिन् क्वापि भवेन्न हि ॥ १० ॥ एवं कृष्णस्य भक्तानां महत्तां सद्भ्य एव ये । सम्यग्विद्युर्नरास्तेषां भवेत्तेषु न दोषधीः ॥ ११ ॥ प्रज्ञानन्दसाधुस्तमथापृच्छन्महाप्रभो ! । तिसृष्व-वस्थास्वीक्षा स्यात्कथं कृष्णस्य ते सदा ॥ १२ ॥ तमुवाच हरिर्यस्य प्राक्संस्कारः शुभो बली । स्यात्तस्य वीक्षा तिसृषु स्यादवस्थासु वै हरेः ॥ १३ ॥ अतिस्नेहेन वा सा स्यात्कामेन च भयेन च । द्रौपद्या इव गोपीनामिव कंसस्य वा यथा ॥ १४ ॥ कनिष्ठोऽथ शिवानन्दो नत्वा पप्रच्छ तं प्रभो ! । बद्धमूलः कथं ज्ञेयः सत्सङ्गो हृदि ते नृणाम् ॥ १५ ॥

नित्यदा प्रतिदिनमित्यर्थः । तिसृषु । अवस्थासु जाग्रदादिषु । कृष्णस्य । ते तव । ईक्षा दर्शनम् । कथं कस्य केन प्रकारेण चेत्यर्थः । स्याद्भवेत् ॥ १२ ॥ तमिति । तमेवंपृच्छन्तं प्रज्ञानानन्दमुनिम् । हरिः । उवाच । हे मुने ! । यस्य भक्तस्य । बल्यतिबलवान् । शुभः शोभनः । प्राक्संस्कारः पूर्वजन्मोपार्जितसप्रेमनवधाभक्ति-लक्षणाभावना । स्यात् । तस्य भक्तस्य । तिसृषु । अवस्थासु । हरेः । वीक्षां संततदर्शनम् । स्यात् । इति कस्य स्यादित्युत्तरम् ॥ १३ ॥ अतीति । वेति । किञ्चार्थे । द्रौपद्या याज्ञसेन्या इव । अतिस्नेहेन । साऽवस्थात्रये कृष्णवीक्षा । स्यात् । गोपीनां व्रजाङ्गनानामिव । कामेन कामभावेन च । सा । स्यात् । कंसस्य यथा उग्रसेन-पुत्रस्येव । भयेन मरणभीत्या च । सा । स्यात् । वा शब्द एवार्थे । इति केन प्रकारेण स्यादित्युत्तरम् ॥ १४ ॥ कनिष्ठे इति । अथानन्तरम् । कनिष्ठः पूर्वोक्त-ज्येष्ठापेक्षया न्यूनवयाः शिवानन्दो मुनिः । नत्वा । तं श्रीहरिम् । पप्रच्छ । हे प्रभो । ते तव । नृणां भक्तजनानाम् । हृदि । सत्सङ्गः । बद्धमूलोऽचलः । कथं केन प्रकारेण । ज्ञेयः ॥ १५ ॥

कामेति । किञ्च । अत्र सत्सङ्गे । मुमुक्षतां मुमुक्षूणां तव भक्तानाम् । कामक्रोधादयः । अन्तःशत्रवः । केन उपायेन । नश्येयुः । तदुभयविधमत्प्रश्नोत्तरम् । त्वं । मे मह्यम् । वक्तुम् । अर्हसि ॥ १६ ॥ हरिरिति । अथैवंविधशिवानन्दमुनिप्रश्नश्रवणानन्तरम् । हरिः । तं शिवानन्दमुनिम् । ऊचे । हे मुने ! । यस्य भक्तस्य । कुटुम्बिनः स्वदेहसम्बन्धिनः पित्रादिजनस्येव । सत्सङ्गिनः । पुंसो भक्तस्य । पक्षपातः स्नेहपूर्वं कायवाङ्मनोभिः सर्वथा सहायाचरणम् । आदरात् श्रद्धातः । दृढं यथातथा । भवेत् । तस्येत्युत्तरेण सम्बन्धः ॥ १७ ॥ तस्येति । तस्य तथाविधस्य भक्तस्य । हृदये एव । सत्सङ्गः । बद्धमूलः । अस्ति । इति । ईयतां त्वया बुध्यताम् । किञ्च । आन्तरा अन्तःकरणभावाः । शत्रवः कामक्रोधादयोऽरयोऽपि । तस्य बद्धमूलसत्सङ्गवतो भक्तस्यैव । विनश्येयुः । हि । बद्धमूलसत्सङ्गवद्भक्तोपरि प्रीतस्य तदन्तःकरणावस्थितस्य हरेः करुणया तथाविधं तमन्तरारयो न पीडयन्तीति भावः ॥ १८ ॥ विपक्षे दोषमाह । पक्षपातमिति । हे मुने ! । अत्र सत्सङ्गे । सत्सङ्गिप्रवरः सत्सङ्गिजनेषु श्रेष्ठः । सन्नपि । पक्षपातं विना तु । अन्तेऽग्रिमकाले । सत्सङ्गम् । हास्यति त्यक्ष्यति । इतीत्थमेव । मे मम । प्रति-

कामक्रोधादयश्चान्तःशत्रवोऽत्र मुमुक्षताम् । केनोपायेन नश्येयुस्तन्मे त्वं वक्तुमर्हसि ॥ १६ ॥ हरिरुचेऽथ तं यस्य
पक्षपातो भवेद्दृढम् । पुंसः सत्सङ्गिनः स्वीयकुटुम्बिन इवादरात् ॥ १७ ॥ तस्यैव हृदये बद्धमूलः सत्सङ्ग ईयताम् ।
तस्यैव हि विनश्येयुरान्तराः शत्रवोऽपि च ॥ १८ ॥ पक्षपातं विना त्वत्र सत्सङ्गिप्रवरोऽपि सन् । अन्ते हास्यति
सत्सङ्गमित्येव प्रतिभाति मे ॥१९॥ एवमुक्तः स हरिणा साधुस्तुष्टोऽभवत्ततः । आत्मानन्दो यवीयास्तं पप्रच्छ कृत-
वन्दनः ॥२०॥ स्वं तिरस्कृत्य सन्तस्ते ब्रूयुः शिक्षावचस्तु यत् । तत्तथ्यमिति मन्येत कीदृक्पुंसाऽत्र सादरम् ॥२१॥
श्रीहरिरुवाच—मुमुक्षुर्यश्च निर्मानो महत्तां च सतां विदन् । स एव सद्वचस्तथ्यं हितं मन्येत नेतरः ॥ २२॥

भाति भासते ॥ १९ ॥ एवमिति । एवममुना प्रकारेण । हरिणा । उक्तो दत्तोत्तरः । सः । साधुः शिवानन्दमुनिः । तुष्टः प्रसन्नः । अभवत् । ततस्तदनन्तरम् । यवीयान् ज्येष्ठात्मानन्दमुन्यपेक्षया वयोऽवरः । आत्मानन्दो मुनिः । कृतवन्दनो हरये विहिताः नतिः सन् । तं श्रीहरिम् । पप्रच्छ ॥ २० ॥ स्वमिति । हे हरे ! । ते तव । सन्तो भगवदेकान्तिकसाधवः । स्वमात्मानम् । तिरस्कृत्य भर्त्सयित्वापि । यत् । शिक्षावचः सर्वदा दृढतया स्वधर्माद्याचरणसम्बन्धिहितोपदेशवाक्यानीत्यर्थः । ब्रूयुः कथयेयुः । तच्छिक्षावचः । अत्र सत्सङ्गे । कीदृक्पुंसा किंविधेन हरेस्तव भक्तेन । सादरं यथातथा । तथ्यं सत्यम् । इत्यमुना प्रकारेण । मन्येत । कीदृशो भक्तो निर्भ-त्सर्याप्यात्मने साधुकथितं शिक्षावचः सत्यं मत्वाऽऽदरेण स्वीकुर्यादित्यर्थः ॥ २१ ॥ 'स एवात्मानन्देन मुनिना पृष्ट ईश्वरः । तमित्थं कथयामास नन्दयंश्चापरान् मुनीन्' । मुमुक्षुरिति । यो भगवद्भक्तः । मुमुक्षुः स्वमोक्षेच्छावान् । निर्मानो मानवर्जितः । सतां स्वशिक्षावचनवक्तॄणां साधूनाम् । महत्तां माहात्म्यम् । विदन् सम्यक् जानंश्च । भवेत् । स एवंविधगुणत्रययुक्तो भक्त एव । सद्वचः शिक्षारूपं साधुवचनम् । तथ्यं सत्यम् । हितं हितकारी । मन्येत । इतर उक्तलक्षणभक्तभिन्नः । न मन्येत ॥२२॥

अथेति । अथानन्तरम् । दहरानन्दः साधुः । सन्नतः कृतप्रणामः सन् । तं श्रीहरिम् । पप्रच्छ । हे हरे ! । त्वम् । अक्षरातीतः सर्वपरादक्षरादपि स्वरूपस्वभावादिभिर्व्यतिरिक्तः । वाङ्मनसात् । परः । अभक्तानां वाचो मनसश्चात्यन्तविप्रकृष्ट इत्यर्थः । कृष्णः श्रीपुरुषोत्तमः । असि भवसि ॥ २३ ॥ स इति । स इत्थंभूतमहिमः । त्वं कृष्णो भवानेव । अत्र लोके । नाकृतिर्मनुष्यसमानाकारः । भूत्वा । नृणां सकलजनानाम् । प्रत्यक्षतां नयनादीन्द्रियगोचरताम् । गतः प्राप्तः । भवसि । अतेन्द्रियाद्यगोचरस्य तवेन्द्रियगोचरतापत्तौ । यत्कारणं यो हेतुर्भवेत् । तत्कारणम् । मे मह्यम् । ब्रूहि । इत्यमुना प्रकारेण । उक्तो दहरानन्दमुनिनानुयुक्तः । हरिः । अवदत् ॥ २४ ॥ अगोचर इति । हे मुने ! । अगोचर उक्तप्रकारेणेन्द्रियान्तःकरणाविषयोऽपि । भगवान् । नृणां स्वाश्रितजीवानाम् । श्रेयसे परमनिःश्रेयसाय । कृपया निष्कारणकरुणया । स्वेच्छया स्वसङ्कल्पेनैव । नराकारं मनुष्यसमानाकृतिम् । दधत्सन् । भूतले । चरति । इन्द्रियान्तःकरणागोचरस्य भगवत इन्द्रियान्तःकरणगोचरीभवने तस्य कृपासङ्कल्पौ कारणे स्त इति भावः ॥ २५ ॥ त्यागानन्द इति । अथानन्तरम् । त्यागानन्दो मुनिः । तं श्रीहरिम् । पप्रच्छ । हे प्रभो ! । त्वं साक्षा-

अथ तं दहरानन्दः साधुः पप्रच्छ सन्नतः । असि त्वमक्षरातीतः कृष्णो वाङ्मनसात्परः ॥२३॥ सोऽत्र त्वं नाकृति र्भूत्वा नृणां प्रत्यक्षतां गतः । अत्र यत्कारणं तन्मे ब्रूहीत्युक्तोऽवदद्धरिः ॥ २४ ॥ अगोचरोऽपि भगवान् श्रेयसे कृपया नृणाम् । स्वेच्छयैव नराकारं दधच्चरति भूतले ॥२५॥ त्यागानन्दोऽथ पप्रच्छ तं प्रभो ! त्वं जनास्तव । कथं भवेयुः सुप्रीता इत्युक्तो हरिरब्रवीत् ॥ २६ ॥ अनिच्छन् दैहिकं सौख्यं केवलं वाक्यपालने । हरेः सदोत्सुको यः स्यात्प्रीयन्ते तत्र ते भृशम् ॥२७॥ अथ तं लक्ष्मणानन्दो नत्वा पप्रच्छ हे प्रभो ! । ईदृग्भगवतस्ते त्वत्सतां चेह समागमः ॥२८॥ आश्चर्यदोऽस्ति मर्त्यानां कर्मभिर्भ्रमतां भवे । स सदैव कथं चित्ररूप इत्येव संस्फुरेत् ॥ २९ ॥

च्छ्रीकृष्णो भवान् । तव । जनाः साक्षाद्भगवतस्तव भक्ताश्च । सुप्रीत्या अत्यन्तं प्रसन्नाः । कथं केन साधनेन । भवेयुः । इत्यमुना प्रकारेण । उक्तस्त्यागानन्दमुनिनाऽनुयुक्तः । हरिः । अब्रवीत् ॥ २६ ॥ अनिच्छन्निति । हे मुने ! । यो भक्तः । दैहिकं देहसम्बन्धि । सौख्यं यत्किमपि सुखम् । अनिच्छन् तद्भोगेच्छावर्जितः सन् । केवलम् । हरेः । वाक्यपालने आज्ञानुसारेण वर्त्तने । सदा । उत्सुक उत्साहवान् । स्यात् । तत्र तस्मिंस्तथाविधे भक्ते । ते कृष्णस्तद्भक्ताश्च । भृशमत्यन्तम् । प्रीयन्ते सुप्रसन्ना भवन्ति । स्वदैहिकसुखेच्छात्यागपूर्वकं श्रीकृष्णाज्ञानुसारेण वर्त्तनं तस्य तेषां चातिप्रसन्नतासाधनमिति भावः ॥ २७ ॥ अथेति । अथानन्तरम् । लक्ष्मणानन्दो मुनिः । नत्वा । तं श्रीहरिम् । पप्रच्छ । हे प्रभो ! । ईदृग्भगवतो दहरानन्दमुनिप्रश्नोक्तमहिमवतः । ते साक्षात्कृष्णस्य तव । त्वत्सतामेवंविधस्य भगवतः तव सम्बन्धिनाम् । सतां साधूनां च । इह लोके । समागमः ॥ २८ ॥ आश्चर्येति । भवे संसारे । कर्मभिः स्वकृतशुभाशुभरूपैः । भ्रमतामुच्चावचयोनिषु बम्भ्रम्यमाणानाम् आश्चर्यदः । अस्ति । अप्राप्यस्य प्राप्तत्वादाश्चर्यावहत्वमस्यास्तीति भावः । स इत्थंभूतस्त्वत्त्वत्सत्समागमः । चित्ररूप आश्चर्यरूपोऽस्ति । इतीत्थमेव । सदैव सर्वकालमेव ।

कथं केन प्रकारेण । संस्फुरेत् स्मृतिपथं यायादित्यर्थः । इत्युभयोरेकसम्बन्धः ॥ २९ ॥ 'स इत्थं कृतसम्प्रश्नो लक्ष्मणानन्दसाधुना । ब्रूते स्म भगवान्प्रीतस्तं चेत्यानन्दयन्परान्' । अयमिति । हे मुने ! । अयं मयाधिगतः । कृष्णः साक्षाच्छ्रीहरिः । इमे मयाधिगताः । सन्तस्तदाश्रिताः साधवश्च । सर्वे सकला अप्येते । ब्रह्मनिवासिनः सर्वपराक्षरब्रह्मापराख्यब्रह्मपुरावासाः । भवन्ति । इत्यमुना प्रकारेण । यो भक्तः । वेत्ति यथार्थतया जानाति । यत्र स्थले । कृष्णः साक्षादयं भगवान् । अस्ति । तत्र तस्मिन् स्थले एव । तद्धाम तदीयं ब्रह्मपुरसंज्ञं पदम् । अस्ति । इति च । यः वेत्ति ॥ ३० ॥ महदिति । किञ्च । एभिरीदृग्माहात्म्यवद्भिरेतैः । अनेन भगवतैभिःसद्भिश्चेत्यर्थः । सह । मम । स्थितिरवस्थानम् । यत् । तदिदम् । मे मम । महत् । भाग्यम् । अस्ति । एवममुना प्रकारेण । यो भक्तः । वेत्ति । तस्योक्तरीत्या द्विधा वेदिनो भक्तस्य । चेतसि । चित्रमाश्चर्यम् । वर्त्तेत । उक्तरीत्या द्विधा वेदिनो भक्तस्य चित्ते साक्षात्कृष्णतत्सतसमागमः सदैवाश्चर्यरूपः संस्फुरेदिति भावः ॥३१॥ परमेति । ततस्तदनन्तरम् । परमात्मानन्दमुनिः । प्रभुम् । तं श्रीहरिम् । पप्रच्छ । हे हरे ! । शास्त्रोक्तानि श्रीमद्भागवतादिसच्छास्त्रोदितानि । साधु-

श्रीहरिरुवाच—अयं कृष्ण इमे सन्तः सर्वे ब्रह्मनिवासिनः । यत्र कृष्णोऽस्ति तत्रैव तद्धामेति च वेत्ति यः ॥ ३० ॥ महद्भाग्यमिदं मे यदेभिः सह मम स्थितिः । एवं च वेत्ति यस्तस्य चित्रं वर्त्तेत चेतसि ॥३१॥ परमात्मानन्दमुनिस्ततः पप्रच्छ तं प्रभुम् । आयायुः साधुलक्ष्माणि शास्त्रोक्तानि कथं नरे ॥३२॥ उवाच श्रीहरिस्तं च शास्त्रोक्तैः साधुलक्षणैः । सम्पन्नाः स्युर्नरा ये तान् यः सेवेतात्र देववत् ॥ ३३ ॥ आयायुः साधुलक्ष्माणि तस्मिन्सर्वाणि निश्चितम् । शान्तानन्दोऽथ पप्रच्छ साधुस्तं विनयानतः ॥ ३४ ॥ भक्त एकोऽस्ति कृष्ण त्वद्रूपध्यानपरायणः । अन्यस्तु नवधा भक्तिं कुर्यात्कृष्णस्य ते सदा ॥ ३५ ॥

लक्ष्माणि कृपालुत्वादीनि सतां लक्षणानि । नरे साक्षाद्भगवतस्तव भक्ते । कथं केनोपायेन । आयायुरागच्छेयुः ॥ ३२ ॥ उवाचेति । तमेवंपृच्छन्तं परमात्मानन्द-मुनिम् । श्रीहरिः । उवाच । हे मुने ! । ये । नरा भक्ताः शास्त्रोक्तैः । साधुलक्षणैः । सम्पन्नाः । स्युः । तान् भक्तान् । अत्र सत्सङ्गे । यो भक्तः । देववत् । सेवेत । स्वोपास्यदेवमिव कायवाङ्मनोभिः परिचरेदित्यर्थः । तस्मिन्नित्युत्तरेणान्वयः ॥ ३३ ॥ आयायुरिति । तस्मिन्नुक्तविधे भक्ते । सर्वाणि । साधुलक्ष्माणि । आयायुः । निश्चितमेव भवति । कृपालुत्वादिलक्षितसतां स्वेष्टदेववत्सेवनमेव तल्लक्षणागमनोपाय इति भावः । अथानन्तरम् । शान्तानन्दः । साधुः । विनयानतो विनयेन कृतप्रणामः सन् । तं श्रीहरिम् । पप्रच्छ ॥ ३४ ॥ भक्त इति । हे कृष्ण हरे ! । एकः । भक्तः । त्वद्रूपध्यानपरायणः साक्षाद्भवतो मनोहरावयवाया मूर्त्तेः सर्वदा चिन्तन-तत्परः । अस्ति । अन्यो द्वितीयो भक्तस्तु । कृष्णस्य । ते तव । नवधा श्रवणादिनवप्रकारेण । भक्तिम् । सदा नित्यदा । कुर्यात् ॥ ३५ ॥

उभयोरिति । उभयोर्द्विप्रकारयोर्भक्तयोर्मध्ये । कतरः । श्रेष्ठः । को वोत्तम इत्यर्थः । इत्यमुना प्रकारेण । पृष्टः शान्तानन्दमुनिनानुयुक्तः । हरिः । अब्रवीत् । हे मुने ! । चेद्यदि । आद्यः प्रथमो भक्तः । निर्विकल्पसमाधिम् । प्राप्तः सन् । अशरीरवित् स्वदेहभानरहितः । भवेत् ॥ ३६ ॥ तदेति । तदा तु । स तथाविध आद्यो भक्तः । श्रेष्ठ उत्तमः । इत्येवम् । ज्ञातव्यः । स भक्तः । दुर्लभश्चेतिज्ञातव्यः । यो भक्तस्तु । यथाशक्ति । ध्यानं साक्षाद्भगवत्स्वरूपचिन्तनम् । कृत्वा । उत्थाय ततो विरम्येत्यर्थः । सकलाः । वपुः क्रियाः स्नानपानादिकादैहिकीः क्रियाः । यदि । कुर्वीत ॥ ३७ ॥ सकला इति । हरेः । श्रवणादिकाः कथाश्रवणप्रभृतयः क्रियाः । न कुर्वीत । तदा तु । तस्मादीदृशाद्भक्तात् । अपरो द्वितीयः । भक्तः । श्रेष्ठः । इतीत्थम् । ईयतां बुध्यताम् । इतिसार्द्धद्वयस्यैकान्वयः ॥ ३८ ॥ अथेति । अथानन्तरम् । आधारानन्दमुनिः । कृतानतिः कृतप्रणामः सन् । तं श्रीहरिम् । अपृच्छत् । हे हरे ! । त्वं साक्षात् श्रीहरिः । तव । जनाः श्रीहरेस्त्वैकान्तिकाः साधुजनाश्च । कीदृग्वृत्त्या कीदृशेन वर्त्तनेन । प्रसीदेयुः प्रसन्ना भवेयुः ॥ ३९ ॥ तमिति । तमेवंपृच्छन्तमाधारानन्दमुनिम् । हरिः । उवाच । हे मुने ! । यः साधुः ।

उभयोः कतरः श्रेष्ठ इति पृष्टोऽब्रवीद्धरिः । निर्विकल्पसमाधिं चेदाद्यः प्राप्तोऽशरीरवित् ॥ ३६ ॥
तदा तु स श्रेष्ठ इति ज्ञातव्यो दुर्लभश्च सः । यस्तु ध्यानं यथाशक्ति कृत्वोत्थाय वपुःक्रियाः ॥ ३७ ॥
सकला यदि कुर्वीत न हरेः श्रवणादिकाः । तदा तु तस्मादपरो भक्तः श्रेष्ठ इतीयताम् ॥ ३८ ॥
अथाधारानन्दमुनिस्तमपृच्छत्कृतानतिः । कीदृग्वृत्त्या हरे ! त्वं च प्रसीदेयुर्जनास्तव ॥ ३९ ॥
तमुवाच हरिः कृष्णप्रोक्तेषु नियमेषु यः । दृढं वर्त्तेत तस्मिंस्ते प्रसीदेयुरसंशयम् ॥ ४० ॥
वेदान्तानन्दनामासन्नथ पप्रच्छ तं प्रभो ! । दुःस्वभाववशात्क्वापि कापथे स्वस्य वर्त्तनम् ॥ ४१ ॥
जातं स्यात्तेन कृष्णस्त्वं साधवोऽपि त्वदाश्रिताः । जाता भवेयुरप्रीताः सुप्रीताः स्युः कथं च ते ॥ ४२ ॥

कृष्णप्रोक्तेषु साक्षाद्भगवता स्वमुखेनोदितेषु । नियमेषु लोभादिपञ्चदोषवर्जनहेतुषु । दृढं यथातथा । वर्त्तेत । तान् यथावत्पालयेदित्यर्थः । तस्मिन्साधौ । ते हरिस्तदेकान्तिकाः साधवश्च । प्रसीदेयुः । असंशयमत्र संशयो नैव विद्यते इत्यर्थः । पूर्वोक्तः त्यागानन्दमुनिप्रश्नस्तदुत्तरं च त्यागिगृहिसाधारणमयमाधारानन्दमुनिप्रश्नस्तदुत्तरं च केवलं साधुविषयमिति तस्मादस्य भेदः ॥ ४० ॥ वेदान्तानन्देति । अथानन्तरम् । वेदान्तानन्दनामा । सन् साधुः । तं श्रीहरिम् । पप्रच्छ । हे प्रभो ! । क्वापि कदाचित् । दुःस्वभाववशात्स्वकीयलोभादिदुष्टप्रकृतिवशतः । स्वस्य कापथे प्रच्छन्नं धनरक्षणादिकुमार्गे । वर्त्तनम् । जातं स्यादित्युत्तरेण सम्बन्धः ॥ ४१ ॥ जातमिति । तेनोक्तरीत्या जातेन कापथवर्त्तनेन । कृष्णः । त्वम् । त्वदाश्रिताः । साधवश्चापि । अप्रीता अप्रसन्नाः । जाताः । भवेयुः । तेऽप्रीततां प्राप्ताः कृष्णतदाश्रितासाधवः । सुप्रीताः पुनरपि पूर्ववत्सुप्रसन्नाः । कथं केनोपायेन । स्युः ॥ ४२ ॥

'एवं पृष्टः स वेदान्तानन्देन मुनिना प्रभुः । आनन्दयन्मुनींश्चान्यांस्तं जगादेत्थमीश्वरः' । यमिति, । हे मुने ! । ते कृष्णतदाश्रितसाधुजनाः । यम् । दुःस्वभावम् । कापथवर्त्तनहेतुकां दुष्टां प्रकृतिमित्यर्थः । दृष्ट्वा । स्वस्मिन् । अप्रीतताम् । गताः प्राप्ताः । भवन्ति । तस्मिन् । दुःस्वभावे । अतिवैरधिया ममात्यन्तानर्थकरोऽयं रिपुर्भवतीतिमत्येत्यर्थः तत्त्यागे कृते सतीति शेषः । पूनर्भूयः । ते कृष्णतदाश्रितसन्तः । प्रीताः स्वस्मिन् सुप्रसन्नाः । भवन्ति जायन्ते ॥ ४३ ॥ न केवलं दुःस्वभावातिवैरधीफलं तत्प्रसन्नतैवास्ति किन्तु तथात्वे तत्कृपा ततोऽन्तःसुखित्वं ततः श्रेयोध्वव्रजनशक्तिवर्द्धनं ततोऽन्तःशत्रुविनाशश्चेत्यान्यपि फलानि जायन्त इत्याह द्वाभ्याम् । अतीति । दुःस्वभावे। अतिवैरम् । बध्नति कुर्वीति । पुंसि साधुपुरुषे । तत्कृपा कृष्णतत्साधुकरुणा । जायते । अथ च । तया तत्कृपया । तस्य तथाविधसाधोः । हृदये । सुखम् । वर्त्तेत ॥ ४४ ॥ श्रेय इति । किञ्च । तया तत्कृपया । श्रेयोध्वगमने स्वकल्याणमार्गप्रयाणे । शक्तिः सामर्थ्यम् । वर्द्धते । ततस्तदनन्तरम् । सर्वे । आन्तराः । शत्रवो लोभादयः । नश्यन्ति । इतीत्थम् । अवगम्यताम् ॥ ४५ ॥ तत इति । ततस्तदनन्तरम् । भगवदानन्दः । साधुः । हरिम् । पृच्छति स्म । हे प्रभो ! । यादृशी । भवतः ।

श्रीहरिरुवाच – यं दुःस्वभावं दृष्ट्वा ते स्वस्मिन्नप्रीततां गताः । अतिवैरधिया तस्मिन्पुनः प्रीता भवन्ति ते ॥४३॥ अतिवैरं दुःस्वभावं पुंसि बध्नति तत्कृपा । जायतेऽथ तया तस्य वर्त्तेत हृदये सुखम् ॥ ४४ ॥ श्रेयोध्वगमने शक्तिर्वर्द्धते च तया ततः । आन्तराः शत्रवः सर्वे नश्यन्तीत्यवगम्यताम् ॥ ४५ ॥ ततो भगवदानन्दो हरिं साधुः स्म पृच्छति । यादृशी भवतो भीतिः सान्निध्ये वर्त्तते प्रभो ! ॥ ४६ ॥ तादृशेव परोक्षेऽपि कथं वर्त्तेत तद्वद । इति तेन सता पृष्टो धर्मसुनुर्जगाद तम् ॥४७॥ सम्यक् कृष्णस्य माहात्म्यं ज्ञायेत यदि तर्हि तु । प्रत्यक्ष इव भीतिः स्यात्परोक्षेऽपि हरौ हृदि ४८॥॥ नराकृतिर्योऽत्र भगवान्स एवास्त्यक्षरात्परः । नैकाण्डकोटिजन्मादिहेतुश्च पुरुषोत्तमः ॥४९॥

भीतिर्मदीयं सर्वमयं भगवान् साक्षात्पश्यतीति त्वत्तो भयम् । सान्निध्ये भवतः समीपत्वे सति । वर्त्तते । तादृशीत्युत्तरेण सम्बन्धः ॥ ४६ ॥ तादृशीति । तादृशी तथाविधैव भवतो भीतिः । परोक्षे भवतोऽसान्निध्येऽपि । कथं केन साधनेन । वर्त्तेत । तद्भवत्प्रत्यक्षाप्रत्यक्षत्वयोः समानतया त्वद्भयवर्त्तनसाधनम् । वद मह्यं ब्रूहि । इत्यमुना प्रकारेण । तेन । सता भगवदानन्दसाधुना । पृष्टः । धर्मसूनुः श्रीहरिः । तं भगवदानन्दसाधुम् । जगाद ॥ ४७ ॥ सम्यगिति । हे साधो ! । यदि । कृष्णस्य साक्षाद्भगवतः । माहात्म्यम् । सम्यक् तत्त्वतः । ज्ञायेत येन भक्तेन बुध्येत । तर्हि तु । हरौ । प्रत्यक्षे सन्निधौ वर्त्तमाने सतीव । हरौ । परोक्षे-असन्निधौ वर्त्तमाने सत्यपि । हृदि माहात्म्यवेदितृभक्तमानसे । भीतिस्ततो भयम् । स्यात् वर्त्तेत ॥ ४८ ॥ साम्प्रतं साक्षाद्भगवन्माहात्म्यवेदनप्रकारमाह षड्भिः । नराकृतिरिति । अत्रास्मिन् लोके वर्त्तमाने सत्सङ्गे । यः । नराकृतिर्मनुष्यसमानाकारः । भगवान् । अस्ति । स एव । अक्षरादक्षरब्रह्मणः । परः । नैकाण्डकोटिजन्मादि-हेतुः मूलप्रकृतिपुरुषद्वारानैकब्रह्माण्डसर्गादिकारणमित्यर्थः । पुरुषोत्तमश्च । अस्ति ॥ ४९ ॥

सर्वेति । सर्वकर्त्ता नैककोटिब्रह्माण्डोत्पत्त्यादिहेतुमूलप्रकृतिपुरुषाविर्भावहेतुत्वादेवंविधः । सर्वत्र मूलप्रकृतिपुरुषयोस्तत्कार्यभूतेषु प्रधानपुरुषादिषु सकलेषु । अन्वयेन स्वकीयाधारशक्तिसमन्वयेन । परमाश्रयोऽनुत्तमाधारभूतः । सर्वेभ्यः सकार्यप्रकृतिपुरुषादिभ्यः । व्यतिरिक्तः स्वरूपस्वभावादिभिरर्थान्तरभूतः सन् । अक्षरधामनि स्वकीयाक्षरब्रह्मपदे । रमते ब्रह्मभावापन्नपार्षदमुक्तकोटिभिः सह सम्यग्विहरते ॥ ५० ॥ प्रत्यक्षमिति । ईशिताऽक्षरकालादिनियन्ता । स एवंविधमहिमो भगवान् । यादृग्यथाविधः । प्रत्यक्षं यथातथा । वीक्ष्यते भक्तजनैर्दृश्यते । तादृक् तथाविध एव । स्थावरे स्थितिशीलेषु भूधरवृक्षादिषु । जङ्गमे गतिशीलेषु मनुष्यपश्वादिषु । स्थूले कार्ये । सूक्ष्मे कारणे च । नियामकोऽन्तर्यामिशक्त्या नियमनशीलः सन् । अस्ति वर्त्तते ॥ ५१ ॥ नेति । मरुद्वायुः । तदिच्छां विना । पर्णचालने पक्वस्यापि न्यग्रोधादिपत्रस्य पातने इत्यर्थः । क्षमः समर्थः । नास्ति । स भगवान् । सर्वेषाम् जनानाम् । शुभाशुभानाम् । कर्मणाम् । फलदो यथायोग्यं फलसम्प्रतिपादकः । अस्ति ॥ ५२ ॥ तिष्ठन्निति । स भगवान् । पृथ्व्याम् । तिष्ठन् पृथिव्याधारेण वर्त्तमानः सन्नपि । शक्त्या स्वकीयेनालौकिकसामर्थ्येन । पृथ्वीं वृक्षपर्वतादिसहितां धराम् । धृत्वा । तिष्ठति । चन्द्रा-

सर्वकर्त्ता च सर्वत्रान्येन परमाश्रयः । व्यतिरिक्तश्च सर्वेभ्यो रमतेऽक्षरधामनि ॥ ५० ॥
प्रत्यक्षं वीक्ष्यते यादृक् तादृगेव स ईशिता । स्थावरे जङ्गमे चास्ति स्थूले सूक्ष्मे नियामकः ॥ ५१ ॥
न तदिच्छां विना पर्णचालनेऽपि क्षमो मरुत् । शुभाशुभानां सर्वेषां कर्मणां फलदश्च सः ॥ ५२ ॥
तिष्ठन् पृथ्व्यामपि पृथ्वीं शक्त्या धृत्वा स तिष्ठति । चन्द्रार्काग्निप्रकाश्याङ्गोऽप्यस्तीन्द्वादिप्रकाशकः ॥ ५३ ॥ ईदृगद्भुतसामर्थ्योऽप्यस्मास्वतिकृपावशात् । नराकृत्या दर्शनं दत्ते वर्त्तते च मनुष्यवत्॥ ५४ ॥
एवं यस्तस्य माहात्म्यं विद्यात् सम्यक् पुमानिह । प्रत्यक्षे वा परोक्षेऽपि भीतिस्तस्य भवेत् प्रभौ ॥ ५५ ॥
पुनर्भगवदानन्दः पृच्छति स्म हरिं प्रभो ! । एवं समर्थो हि भवानस्त्येव जगदीश्वरः ॥ ५६ ॥

र्काग्निप्रकाश्याङ्गश्चन्द्रादिप्रभाप्रकाश्यशरीरोऽपि । इन्द्वादिप्रकाशकः । अस्ति । तथा च श्रुतिः । 'तस्य भासा सर्वमिदं विभाति' । स्मृतिश्च । 'गामाविश्य च भूतानि धारयाम्यहमोजसा' । 'यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामक'मिति ॥ ५३ ॥ ईदृगिति । ईदृगद्भुतसामर्थ्य एवंविधाश्चर्यकारिकानन्तशक्तिः सन्नपि । अस्मासु । अतिकृपावशात् । नराकृत्या मनुष्यसमानाकारेण । दर्शनम् । दत्ते । मनुष्यवत् मनुष्यसमानक्रिय इव । वर्त्तते च ॥ ५४ ॥ एवमिति । एवममुना प्रकारेण । इह सत्सङ्गे । यः । पुमान् । भक्तः । तस्य प्रत्यक्षभगवतः । माहात्म्यम् । सम्यग्यथार्थतया । विद्यात् जानीयात् । तस्य भक्तस्य । प्रभौ । प्रत्यक्षेव । प्रत्यक्षतया वर्त्तमाने सतीव । प्रभौ । परोक्षे सत्यपि । भीतिस्ततो भयम् । भवेत् ॥ ५५ ॥ पुनरिति । पुनर्भूयोऽपि । भगवदानन्दः साधुः । हरिम् । पृच्छति स्म । हे प्रभो ! । जगदीश्वरो जगदेकनाथः । भवान् साक्षात्परमेश्वरस्त्वम् । एवमुक्तप्रकारेण । समर्थः । अस्त्येव । हि ॥ ५६ ॥

देशेति । असावेवंसमर्थोऽपि भवान् । स्वस्य । अथवा । स्वजनस्य स्वाश्रितजनस्य च । देशकालादिवैषम्ये तत्कृतदुःखे । सतीत्यर्थः । परित्राणे ततो रक्षणे । स्वसामर्थ्यम् । कथं केन हेतुना । नाविष्करोति न प्रकटयति ॥ ५७ ॥ उवाचेति । तमेवंपृच्छन्तं भगवदानन्दसाधुम् । हरिः । उवाच । हे साधो ! । यदा । कृष्णः । नराकृतिम् । धत्ते । तदा य छन्नपौरुष आच्छादितस्वपरमैश्वर्यः सन् । नरवन्मनुष्यसमानतया । चेष्टते स्वक्रियां करोति ॥ ५८ ॥ एवमिति । नराकृतेः । भगवतः । लीलाश्चरित्राणि । सर्वशास्त्रेषु । एवं हि मनुष्यभावानुकरणेनैव । उपवर्णिताः । सन्ति । तत्तस्माद्धेतोः । अत्रैवंविधभगवच्चरित्रे । संशयः । न कार्यः ॥ ५९ ॥ तत्रेति । तत्र नराकृतिभगवज्जन्मस्वपि । ब्रह्मजातौ ब्राह्मणकुले । अवतीर्णः । यः । प्रभुः । साधुवेषः साधुसमानवेषभाक् । भवेत् । तस्य तथाविधस्य प्रभोः । क्षमैव । भूषा आभरणभूता । अस्ति । पराक्रमः सामर्थ्याविष्कारः । नो आभरणभूतो नैवास्ति । इत्येवंविधा । स्थितिः स्वकृतामर्यादा वर्त्तते ॥ ६० ॥ अथेति । अथानन्तरम् । तमेवं वदन्तम् । हरिम् । निर्मलानन्दः साधुः । आनतः कृतप्रणामः सन् । पप्रच्छ । हे हरे ! । अत्र सत्सङ्गे । ते तव । सतां साधूनाम् । वर्त्तमानानामिति शेषः ।

देशकालादिवैषम्ये स्वस्य वा स्वजनस्य च । परित्राणे स्वसामर्थ्यं कथं नाविष्करोत्यसौ ॥ ५७ ॥ उवाच तं हरिः साधो ! यदा कृष्णो नराकृतिम् । धत्ते तदा तु नरवच्चेष्टते छन्नपौरुषः ॥५८॥ एवं हि सर्वशास्त्रेषु लीलाः सन्त्युपवर्णिताः नराकृतेर्भगवतस्तत्कार्यो नात्र संशयः ॥ ५९ ॥ तत्रापि ब्रह्मजातौ यः साधुवेषः प्रभुर्भवेत् । क्षमैव तस्य भूषा नो पराक्रम इति स्थितिः ॥ ६० ॥ अथ तं निर्मलानन्दः पप्रच्छ हरिमानतः । महिमातिशयो वेद्यः सतां तेऽत्र कथं वद ॥६१॥ तमुवाच हरिर्योऽत्र भगवान्वर्त्तते भुवि । सर्वावतारधर्ताऽसौ सर्वजीवोद्धृतिक्षमः ॥ ६२ ॥ तस्य साक्षात्प्रभोः सन्त एते सन्त्यात्मवत्प्रियाः स । च स्वसद्गुणैरेभिः सर्वथाऽहो वशीकृतः ॥ ७३ ॥

महिमातिशयोऽतिशयितं माहात्म्यम् । कथं केन प्रकारेण । वेद्यो बोध्यः । वद तद्वेदनप्रकारं त्वं ब्रूहीत्यर्थः ॥ ६१ ॥ तमिति । तमेवंपृच्छन्तं निर्मलानन्दसाधुम् । हरिः । हरिः । उवाच । हे साधो ! । भुवि पृथिव्यां वर्त्तमाने अत्रास्मिन्सत्सङ्गे । यः । भगवान् । वर्त्तते । असौ भगवान् । सर्वावतारधर्त्ता मत्स्यकच्छादिसकलावतारधारकः । सर्वेषां जीवानामुद्धृतिः संसाराम्बुधेरुद्धारस्तस्मिन् क्षमः समर्थः । । अस्ति । यः स्वाश्रयमात्रेण स्वाश्रितसकलजीवानामनादिसंसृतिबन्धनहेत्वज्ञानविनाशपूर्वकं परमनिःश्रेयसप्रापको भवतीत्यर्थः ॥ ६२ ॥ तस्येति । एते मद्दृग्विषया । सन्तः उक्तमहिमवतः साक्षाद्भगवतः सम्बन्धवन्तः साधवः । तस्योक्तविधमहिम्नः । साक्षात्प्रत्यक्षस्य । प्रभोर्मदिष्टदेवस्य श्रीहरेः । आत्मवत्प्रियाः स्वप्राणतो देहतो वाऽतिशयितप्रीतिपात्रभूताः । सन्ति । एभिः । साक्षाद्भगवदात्मप्रियैः साधुभिः कर्तृभिः । स्वसद्गुणैः स्वधर्म, ज्ञान, वैराग्य, समाहात्म्यसप्रेमनवधाभक्ति, दया, क्षमोपशमादिभिः स्वशोभनगुणैः करणैः । स उक्तविधः स्वेष्टदेवो भगवान् । सर्वथा सर्वप्रकारेण । वशीकृतः स्वाधीनीकृतः । अहो आश्चर्यमेतत् । अजितोऽपि जित इत्यतिचित्रमित्यर्थः ॥ ६३ ॥

तस्येति । तस्य स्वेष्टदेवस्य श्रीहरेः । प्रतापान्महाप्रभावात् । एते । सन्तोऽपि । जीवकल्याणकारिणः सम्प्राप्तस्वसम्बन्धानेकजीवपरमोक्षप्रदाः । भवन्ति । एवममुना प्रकारेण । साधुमाहात्म्यातिशयः । अञ्जसा तत्त्वतः । वेद्यः । भवेत् । सर्वेश्वरेश्वरस्य साक्षाद्भगवतोऽतिदुर्लभत्वान्निष्कारणकरुणासुलभस्य तस्यैते सन्तोऽपि तत्परमोपासनया स्वाविर्भूततद्गुणत्वाज्जनकल्याणकारिणः सन्तीति वेदनं तन्माहात्म्यातिशयवेदनप्रकार इति भावः ॥ ६४ ॥ अथेति । अथानन्तरम् । नारायणानन्दः साधुः । तं श्रीहरिम् । पप्रच्छ । हे जगद्गुरो ! । जीवः । देहत्रये स्थूलादिषु त्रिषु देहेषु । अन्वयव्यतिरेकाभ्याम् । कथं केन प्रकारेण स्थितोऽस्ति । जीवस्यान्वयव्यतिरेकभावेन देहत्रयेऽवस्थानं केन प्रकारेण ज्ञेयमित्यर्थः ॥ ६५ ॥ । तमिति । तमेवंपृच्छन्तं नारायणानन्दसाधुम् । हरिः । उवाच । हे साधो ! । जीवः । यदा । दैहिकं देहत्रयसम्बन्धि । सुखम् । दुखं च । स्वस्मिन् । मन्येत । देहाहंभावेन स्वं सुखिनं दुखिनं विद्यादित्यर्थः । तदा तु । अन्वयस्थितः । ज्ञेयः । दैहिकसुखादेः स्वात्मन्यनुसन्धानं जीवस्यान्वयभावेनावस्थानमित्यर्थः ॥ ६६ ॥ देहेभ्य इति । एष जीवः । देहेभ्यः स्थूलादिदेहत्रयात् । दैहिकेभ्यो देहत्रयसम्बन्धिसुखदुःखादिभ्यश्च ।

तस्य प्रतापादेतेऽपि जीवकल्याणकारिणः । एवं वेद्यो भवेत्साधुमाहात्म्यातिशयोऽञ्जसा ॥ ६४ ॥ अथ नारायणानन्दस्तं पप्रच्छ जगद्गुरो ! । अन्वयव्यतिरेकाभ्यां जीवो देहत्रये कथम् ॥६५॥ तमुवाच हरिर्जीवः सुखं दुःखं च दैहिकम् । स्वस्मिन् यदा तु मन्येत तदा ज्ञेयोऽन्वयस्थितः ॥६६॥ देहेभ्यो दैहिकेभ्यश्च स्वं मन्येत यदा पृथक् । सच्चिद्रूपं तदा त्वेष व्यतिरेकस्थितो मतः ॥ ६७ ॥ शून्यातीतानन्दमुनिरथापृच्छद्धरिं हरे ! । पुमान्करोति सत्सङ्गं यदा तर्हि तु भूयसी ॥ ६८ ॥ सत्सु सत्सङ्गिषु प्रीतिः सादरा दृश्यतेऽथ सा । कालेन क्षीयते तत्र हेतुर्यस्तं वद प्रभो ! ॥ ६९ ॥ श्रीहरिरुवाच–करोति यर्हि सत्सङ्गं तदा धीरस्त्यलौकिकी । सत्स्वथो तत्परिचयं करोति प्रत्यहं पुमान् ॥ ७० ॥

स्वमात्मानम् । पृथक् स्वरूपस्वभावादिभिर्विलक्षणम् । सच्चिद्रूपं सत्यरूपं ज्ञातृरूपं चेत्यर्थः । मन्येत । तदा तु । व्यतिरेकस्थितः । मतः । देहदैहिकसुखदुःखादेरात्मन्यननुसन्धानं जीवस्य व्यतिरेकभावेनावस्थानमित्यर्थः । पूर्वं सप्तमे तरङ्गे त्वन्वयव्यतिरेकाभ्यां जीवलक्षणे उक्तेऽत्र तु तदा भावेन तदवस्थानप्रकार इति ततोऽस्य भेदो बोध्यः ॥ ६७ ॥ शून्येति । अथानन्तरम् । शून्यातीतानन्दमुनिः । हरिम् । अपृच्छत् । हे हरे ! । पुमान् भवद्भक्तजनः । यदा । सत्सङ्गम् । करोति उद्धवसम्प्रदायस्थपाल्यनियमानां यावज्जीवं पालनप्रतिज्ञां स्वगुरोः पुरेऽङ्गिकारोतीत्यर्थः । तर्हि तु । भूयसी बहुतरा ॥ ६८ ॥ सत्स्विति । सत्सु साक्षाद्भगवद्भवदाश्रितेषु साधुषु । सत्सङ्गिसंज्ञेषु तथाविधेषु सत्सङ्गिसंज्ञेषु गृहस्थेषु भक्तेषु च । प्रीतिः स्नेहः । सादरा आदरेण सहिता । दृश्यते । अथानन्तरम् । सा तथाविधा प्रीतिः । कालेन कालातिक्रमेण । बहुभिरहोभिरित्यर्थः । क्षीयं प्राप्नोति । तत्र प्रीतिक्षये । यः । हेतुः कारणम् । भवेत् । तं हेतुम् । प्रभो ! । वद मह्यं ब्रूहि । इति द्वयोरेकान्वयः ॥ ६९ ॥'एवं स साधुना शून्यातीतानन्देन सत्पतिः । सम्पृष्टस्तं जगादेत्थं हर्षयंश्चापरान् मुनीन्' । करोतीति । हे मुने ! । पुमान् । यर्हि । सत्सङ्गम् । करोति ।

तदा । सत्सु साधुषु सत्सङ्गिषु च । अलौकिकी अहो इमे साक्षाद्भगवतः श्रीहरेः सम्बन्धवन्त इति तन्महिमवेदनयुक्तत्वादमायिकेत्यर्थः । धीर्मतिः । अस्ति । अथो अनन्तरम् । प्रत्यहं प्रतिदिनम् । तत्परिचयं साधुसत्सङ्गिजनसंस्तवम् । करोति ॥ ७० ॥ स्वभावेति । अथैवंभूतपरिचयोद्भवानन्तरम् । असौ पुमान् । तेषां साधूनां सत्सङ्गिजनानां च । दैहिकं देहसम्बन्धिनम् । अल्पमल्पप्रमाणम् । स्वभावदोषमल्पभाषण बहुभाषणेपत्क्रोधोदयादिकं साहजिकमगुणम् । दृष्ट्वा । तं तथाविधं दोषं तु । स्वीयकुबुध्या स्वकीयया कुमत्या । हृदि स्वमनसि । महान्तमतिशयितम् । मन्यते ॥ ७१ ॥ तत इति । अतोऽल्पदोषस्य महत्त्वेन स्वीकाराद्धेतोः । असद्वासनाविष्टहृदयात्तदगुणभावनायुक्तात्तदीयान्मानसात् सकाशात् । प्रतिदिनम् । क्षीयमाणा । सत्सु । प्रीतिः । अपसर्पति दूतेः पादादुकमिव निःशेषं विनिवर्त्तते । इतीत्थम् । गम्यतां । बुध्यताम् । साधुसत्सङ्गिजनाल्पदोषस्य महत्त्वेव स्वीकारोद्भूतासद्वासनाविष्टान्तःकरणत्वं प्रीतिक्षयहेतुरित्यर्थः ॥ ७२ ॥ अथेत्थंभूतस्ववाक्यश्रवणानन्तरं तथाविधभक्तजनस्य पूर्ववत्तेषु प्रीतिप्रादुर्भावप्रकारस्य तदीयां बुभुत्सामालक्ष्य तदुत्तरमपि स्वयमेवाह । विचारेणेति । सः सत्सु क्षीणप्रीतिर्भक्तः । यदा । विचारेण मत्कृतैवंविध-

स्वभावदोषं दृष्ट्वाऽथ तेषामल्यं च दैहिकम् । तं तु स्वीयकुबुद्ध्याऽसौ महान्तं मन्यते हृदि ॥ ७१ ॥
ततोऽसद्वासनाविष्टहृदयादपसर्पति । सत्सु प्रीतिः प्रतिदिनं क्षीयमाणेति गम्यताम् ॥ ७२ ॥
विचारेण यदा चासद्वासनां तु जहाति सः । तदा सत्सेवया नित्यं यथा पूर्वस्थितिर्भवेत् ॥ ७३ ॥
प्रसादानन्दसाधुस्तमथापृच्छत्प्रभो ! नृणाम् । मोक्षस्य साधनं मुख्यं ब्रूहीत्युक्तोऽवदद्धरिः ॥ ७४ ॥
सन्तो यथा वदेयुः स्वं तथा कार्यमसंशयम् । एतदेव हि मोक्षस्य मुख्यं जानीहि साधनम् ॥ ७५ ॥
ततस्तं त्रिगुणातीतानन्दः पप्रच्छ सत्पते ! । देशकालादिवैषम्ये कथं स्थेयं त्वदाश्रितैः ॥ ७६ ॥

सद्दोषग्रहणस्यात्यनर्थहेतुतास्तीति स्वेनैव पुनः कृतेन विचारबलेनेत्यर्थः । असद्वासनाम् । जहाति शनैः शनैः परित्यजति । तदा । नित्यं प्रतिदिनम् । सत्सेवया समाहात्म्यं निष्कपटं स्वकृतया तत्परिचर्यया । यथापूर्वस्थितिः पूर्ववत्तेषु प्रीत्यतिशययुक्ततयावस्थानवान् । भवेत् जायेत् ॥ ७३ ॥ प्रसादेति । अथानन्तरम् । प्रसादानन्दसाधुः । तं श्रीहरिम् । अपृच्छत् । हे प्रभो ! । नृणां जनानाम् । मोक्षस्य । मुख्यम् । साधनम् । ब्रूहि । इत्यमुना प्रकारेण । उक्तः प्रसादानन्दसाधुनानुयुक्तः । हरिः । अवदत् ॥ ७४ ॥ सन्त इति । हे साधो ! । सन्तः साक्षाद्भगवदाश्रिता एकान्तिकाः साधवः । स्वमात्मानं प्रति । यथा येन प्रकारेण । वदेयुः साक्षाद्भगवत्स्वरूपसमाहात्म्यनिश्चयविधापनपूर्वकं स्वधर्माचरणादि यद्ब्रूयुः । तथा तेन प्रकारेण । असंशयं संशयरहितं यथातथा । कार्यं स्वेन वर्त्तनीयम् । एतदेवेदमेव । मोक्षस्य । मुख्यम् । साधनम् । जानीहि । हि निश्चितम् ॥ ७५ ॥ तत इति । ततस्तदनन्तरम् त्रिगुणातीतानन्दो मुनिः । तं श्रीहरिम् । पप्रच्छ । हे सत्पते ! । त्वदाश्रितैर्विहितत्वदेकाश्रयैः । अस्माभिरिति शेषः । देशकालादिवैषम्ये देशकालादिविषमताजातापद्युपस्थितायां सत्यामित्यर्थः । कथम् । स्थेयम् । स्वधर्मः कथं पाल्यः क्व वागम्यमित्यर्थः ॥ ७६ ॥

तमिति । तमेवंपृच्छन्तं त्रिगुणातीतानन्दमुनिम् । हरिः । उवाच । हे मुने ! । यर्हि । काचिद्देशकालादिविषमताजाता या कापि । आपच्चौरप्राचुर्यं कङ्कादिघाटिभय वर्षप्रतिबन्धमहर्घताद्यापत्कालः । उपात्रजेदायायात् । तदा । आपद्धर्मः महाभारतीयशान्तिपर्वोक्तापत्कालपाल्याचारः । पाल्यः सेव्यः । सर्वथा सर्वप्रकारेण । अन्यत्र देश-कालादिविषमतावर्जितस्थाने । गम्यं च ॥७७॥ अथेति । अथानन्तरम् । अवरः कनिष्ठः । निर्विकारानन्दो मुनिः । तं श्रीहरिम् । अपृच्छत् । हे प्रभो ! । कृष्णनिश्च-यिनः साक्षाच्छ्रीकृष्णस्य तव निश्चयवतो भक्तस्य । असती । वासना । मायिकविषयोपभोगभावनेत्यर्थः । कथं केन हेतुना । नाप्येति हृदयान्न निवर्त्तते ॥ ७८ ॥ 'पृष्ट एवं निर्विकारानन्देन स सता प्रभुः । तमित्थं चोक्तवान्सर्वान् सदःस्थानानन्दयन्परान्' । कृष्णेति । हे मुने ! । कृष्णनिश्चयिनोऽपि । अस्य भक्तस्य । कृष्णमाहात्म्यवेदनम् । सम्यग्यथार्थतः । नास्ति न विद्यते । इत्येवंविधम् । तस्या असद्वासनायाः । स्थितौ हृदयादनिवर्त्तने । हेतुम् । जानीहि ॥७९॥ योगानन्द इति । ततस्तदनन्तरम् । ज्येष्ठः । योगानन्दो मुनिः । तं श्रीहरिम् । अपृच्छत् । हे हरे ! । प्रभोः । तव साक्षाच्छ्रीहरेर्भवतः । निश्चये । सत्यपि । त्वत्कथादौ कथाश्रवणप्रभृतिषु त्वदीयनवधाभक्तौ ।

तमुवाच हरिर्यर्हि काचिदापदुपाव्रजेत् । आपद्धर्मस्तदा पाल्यो गम्यं चान्यत्र सर्वथा ॥ ७७ ॥ अथापृच्छन्निर्विकारानन्द-स्तमवरः प्रभो ! । कृष्णनिश्चयिनोऽप्येति नासती वासना कथम् ॥ ७८ ॥ श्रीहरिरुवाच–कृष्णनिश्चयिनोऽप्यस्य कृष्ण-माहात्म्यवेदनम् । सम्यङ्नास्तीति जानीहि हेतुं तस्याः स्थितौ मुने ! ॥ ७९ ॥ योगानन्दस्ततो ज्येष्ठस्तमपृच्छत्प्रभो-स्तव । निश्चये सत्यपि प्रीतिस्त्वत्कथादौ कथं न हि ॥८०॥ धार्मिस्तं प्राह तस्यापि कृष्णमाहात्म्यवेदनम् । सम्यङ्ना-स्तीति न प्रीतिः कथादौ जायते प्रभोः ॥ ८१ ॥ माहात्म्यावगमो यर्हि तु । तं विनाऽन्यत्र न प्रीतिः क्रियमाणापि जायते ॥ ८२ ॥ सत्सु कृष्णे तत्कथादौ प्रीतिः साहजिकी भवेत् । ततः प्रतोषानन्दस्तं पप्रच्छ हरिमानतः ॥ ८३ ॥

प्रीतिः श्रद्धातिशयपूर्वकं प्रेम । कथं केन हेतुना । नहि त्वद्भक्तमनसि नैव जायते ॥ ८० ॥ धार्मिरिति । तमेवंपृच्छन्तं योगानन्दमुनिम् । धार्मिर्धर्मावतारहरिप्रसाद-विप्रसुतः श्रीहरिः । प्राह । हे मुने ! । तस्यापि निश्चये सत्यपि भगवत्कथादौ प्रीतिवर्जितस्य भक्तस्य च । कृष्णमाहात्म्यावेदनम् । सम्यक् । नास्ति । इति हेतोः । प्रभोः श्रीकृष्णस्य । कथादौ । प्रीतिः । न जायते । सम्यक्कृष्णमाहात्म्यावेदनेन हेतुना तत्कथादौ तस्य प्रीत्यनुदयस्तद्वेदनेन तदुदय इत्यर्थः ॥ ८१ ॥ न केवलं कृष्णमाहात्म्यवेदनं तत्कथादौ प्रीत्युदयहेतुः किन्तु तेन तदन्यत्र प्रीत्यभावादयो महान्तोऽन्ये गुणा अपि जायन्ते इति कृष्णमाहात्म्यवेदनमहिमानं स्वयमेवाह सार्द्धेन । माहात्म्येति । हे मुने ! । यर्हि । कृष्णस्य । माहात्म्यावगमः । भवेत् सम्यग्जायेत । तर्हि तु । तं श्रीकृष्णम् । विना । अन्यत्रेतरस्मिन्मायिकपदार्थमात्रे । प्रीतिः । क्रियमाणा सत्यपि । न जायते ॥ ८२ ॥ सत्स्विति । कृष्णे साक्षाद्भगवत्स्वरूपे । सत्सु तदेकान्तिकसाधुषु । तत्कथादौ च । प्रीतिः । साहजिकी स्वा-भाविकी । भवेज्जायेत । ततस्तदनन्तरम् । तमेवंवदन्तम् । हरिम् । प्रतोषानन्दः साधुः । आनतः कृतप्रणामः सन् । पप्रच्छ ॥ ८३ ॥

नवधेति । हे हरे ! । कृष्णे साक्षाच्छ्रीहरौ । त्वयि । नवधा । भक्तिः । अचला देशकालादिवैषम्येऽपि निश्चला । कथं केनोपायेन । भवेज्जायेत । तमेवंपृच्छन्तं प्रतोषानन्दसाधुम् । हरिः । उवाच । हे साधो ! । सा अचलाकृष्णभक्तिः । तन्माहात्म्यावबोधनात् । स्यात् । कृष्णमाहात्म्यावबोधनं नवधाभक्त्यचलतोपाय इत्यर्थः ॥८४॥ श्रीहरिमाहात्म्यवेदनप्रकारोक्तिपूर्वकमुक्तार्थं दृढत्वाय पुनराह द्वाभ्याम् । वासुदेवेति । वासुदेवादयः । व्यूहाः—वासुदेव—सङ्कर्षणानिरुद्ध—प्रद्युम्नरूपा व्यूहाख्याश्चतस्रो मूर्त्तयः । केशवाद्याः । मूर्त्तयः व्यूहसंज्ञानि केशवादीनि चतुर्विंशतिरूपाणि । सर्वे । मत्स्याद्याः । अवताराश्चापि । अस्य मदिष्टदेवस्य साक्षाच्छ्रीहरेरेव । सन्ति । हि । सर्वपराक्षरधामाधिपेनानेककोटिमुक्तचकोरचन्द्रायमाणास्येन पुरुषोत्तमेन मदिष्टदेवेनानेन श्रीहरिणा स्वेच्छया वासुदेवादिव्यूहरूपाद्या उक्तमूर्त्तयो जगत्सर्गाद्यनेकविधकार्यार्थं प्रादुर्भाविताः । सन्तीत्यर्थः ॥ ८५ ॥ इत्थमिति । इत्थममुना प्रकारेण । प्रत्यक्षकृष्णस्य । माहात्म्याधिक्यवेदनात् । तस्मिन् प्रत्यक्षकृष्णे । नवविधा । भक्तिः । अचला । स्यात् ।

नवधा भक्तिरचला भवेत्कृष्णे कथं त्वयि । तमुवाच हरिः सा स्यात्तन्माहात्म्यावबोधनात् ॥ ८४ ॥ वासुदेवादयो व्यूहाः केशवाद्याश्च मूर्त्तयः । मत्स्याद्या अवताराश्च सर्वेऽप्यस्यैव सन्ति हि ॥ ८५ ॥ इत्थं प्रत्यक्षकृष्णस्य माहात्म्याधिक्यवेदनात् । तस्मिन्नवविधा भक्तिरचला स्यान्न संशयः ॥ ८६ ॥ इति हरेरतुलं वचनामृतं सकलसाधुजनास्तु निपीय ते । गृहिजनाश्च गताखिलसंशयाः परमतोषमवाप्य तमानमन् ॥ ८७ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते अष्टसप्ततिमस्तरङ्गः ॥ ७८ ॥

न संशयोऽत्र संशयो नास्तीत्यर्थः ॥ ८६ ॥ इतीति । इत्येवंभूतम् । हरेः । अतुलमनुपमम् । वचनामृतम् । ते पूर्वोक्ताः । सकलसाधुजनाः शिवानन्दादयः सर्वेऽपि साधुपुरुषाः । गृहिजनाः सभोपविष्टा गृहस्थजनाश्च । निपीय । गताखिलसंशया निवृत्तहृत्स्थसकलसन्देहाः सन्तः परमतोषं सर्वोत्तममानन्दम् । अवाप्य । तं स्वावासं व्रजन्तं श्रीहरिम् । आनमन् प्रणमन्ति स्म ॥ ८७ ॥ स्वभक्तानां शिवानन्दमुख्यानां त्यागिनां सताम् । एकविंशतिसङ्ख्यानां कृत्वा प्रश्नोत्तराणि यः ॥ १ ॥ हर्षयामास तान् स्वामी भक्तिधर्मसुतो हरिः । स्वसेवाहर्षदः सोऽस्तु मह्यं ब्रह्मपुरेशिता ॥ २ ॥ यो दिव्याक्षरधाम्नि राजति सदा संसेवितो भावतो दिव्यैर्वस्तुभिरक्षरात्मभिरनन्तैर्मुक्तवृन्दैर्मुदा । दिव्यैश्वर्यैर्गुणादिभिः परतरः सर्वेभ्य ईशीश्वरस्तस्मिन्मे मतिरस्तु भक्तितनये भक्त्यात्मिका श्रीहरौ ॥ ३ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्सूनुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायामष्टसप्ततितमस्तरङ्गः ॥ ७८ ॥ हरिवाक्यसुधासिन्धुप्रथमप्रकरणं समाप्तम्

## श्री गढडा प्रथम प्रकरण समाप्तम्

श्रीहरिकृष्णाय नमो नमः । श्रीहरिं पितरं वन्दे क्षराक्षरपरं प्रभुम् । स्ववाक्यमृतपानेन तर्पयन्ति निजान्बहून् ॥ १ ॥ ये लष्टादश सारङ्गपुरीयाः सन्ति वीचयः । हरिवाक्यसुधासिन्धोस्तद्व्याख्यां कुर्व आदरात् ॥ २ ॥ तत्र तु प्रथमे यत्स्यात्स्वमनोजयलक्षणम् । विषयेभ्यो निवृत्तेर्यदिन्द्रियाणां तु साधनम् ॥३॥ आत्मनिष्ठा च माहात्म्यज्ञानं भगवतश्च यत् । तयोर्लक्षणमित्येतत्सर्वं संकथितं स्फुटम् ॥४॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८७७) श्रावणासितपञ्चम्यां श्रावणमासायातकृष्णपक्षस्य पञ्चम्यां तिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । सारङ्गनगरे सारङ्गाख्यपुरे । जीववर्मण एतत्संज्ञस्य नृपतेः । दुर्गे । सौम्यास्यस्योदङ्मुखस्य । वेश्मनो जीववर्मनृपभवनस्य । बहिर्वेद्यां बाह्यायामुच्चवितर्दौ । पार्श्विकादिभिः पार्श्विकोपबर्हगेन्दुक श्वेतोत्तरच्छदादिभिः ॥ २ ॥ शोभमान इति । शोभमाने । पीठवर्येऽत्युत्तमे मञ्चासने । त्यागिगृहिगणावृतो नानादेशागतत्यागिगृहिवृन्दैः सभायां परिवेष्टितः । श्वेतवसनः परिधृतसकलवलक्षवस्त्रः । प्रहसद्वदनाम्बुज उत्तमपुरुषत्वात्सहास्यमुखपद्मः । असौ श्रीहरिः । न्यषीदुपवेशनचातुर्येणोपविवेश । इति द्वयोरेकान्वयः ॥ ३ ॥ मुक्तानन्द इति । तदग्रसंस्थः श्रीहरेः पुरो निषण्णः ।

शकाब्दे विक्रमार्कस्य नगाश्ववसुभूमिते । श्रावणसितपञ्चम्यां वचोऽमृतमिदं हरेः ॥१॥ तत्र सारङ्गनगरे दुर्गेऽसौ जीववर्मणः । सोम्यास्यस्य बहिर्वेद्यां वेश्मनः पार्श्विकादिभिः ॥ २ ॥ शोभमाने पीठवर्ये गृहित्यागिगणावृतः । न्यषीदच्छ्वेतवसनः प्रहसद्वदनाम्बुजः ॥ ३ ॥ मुक्तानन्दस्तमप्राक्षीत्प्रश्नमेतं कृताञ्जलिः । तदग्रसंस्थः सुमतिः साधुवर्यः प्रणम्य च ॥ ४ ॥ जितं जगत्केन मनो हि येनेत्यस्ति सत्पते ! । पद्यं प्राचीनमस्यार्थो मनोजेता हि विश्वजित् ॥ ५ ॥ एवं सति मनः स्वीयं मया जितमिति प्रभो ! । कथं ज्ञेयं भक्तियोगमभ्यसद्भिस्त्वदाश्रितैः ॥ ६ ॥ श्रीस्वाम्युवाच तं साधो ! शृणु वच्म्येतदुत्तरम् । शब्दादिपञ्चविषयनिवृत्तं तु मनो जितम् ॥ ७ ॥

सुमतिः श्लाघ्यबुद्धिः । साधुवर्यः सकलसाधुश्रेष्ठः । मुक्तानन्दो मुनिः । कृताञ्जलिः सन् । तं श्रीहरिम् । प्रणम्य । एतं वक्ष्यमाणम् । प्रश्नम् । अप्राक्षीत् ॥४॥ जितमिति । हे सत्पते ! । 'जितं जगत्केन मनो हि येन' । इत्येवंविधम् । प्राचीनं प्राचीनाभियुक्तगदितम् । पद्यं मणिरत्नमालाख्यग्रन्थश्लोकैकचरणः । अस्ति । अस्य पद्यैकपादस्य । अर्थः । मनो जेता येन स्वमनो वशीकृतं स इत्यर्थः । विश्वजित्सकलजगज्जेता । भवति । हि ॥ ५ ॥ एवमिति । हे प्रभो ! । एवं सति इत्थंभूतानियुक्तसिद्धान्ते सति । भक्तियोगं स्वमोक्षहेतुकं सधर्मनवधाभवद्भक्त्याचरणरूपमुपायम् । अभ्यसद्भिर्निरन्तरं परिशीलयद्भिः । त्वदाश्रितैर्मुमुक्षुभिर्भवद्भक्तजनैः । मया । स्वीयम् । मनः । जितम् । इतीत्थम् । कथं कथंभूतेन तदवस्थानेन । ज्ञेयम् । कथंभूतया तदवस्थित्या तैस्तज्जितमिति बोध्यमित्यर्थः ॥ ६ ॥ श्रीस्वामीति । तमेवंपृच्छन्तं मुक्तानन्दमुनिम् । श्रीस्वामी सकलेश्वरेश्वरत्वात् श्रीमान् श्रीहरिः । उवाच । हे साधो ! । एतदुत्तरमस्य त्वत्प्रश्नस्य प्रतिवचनम् । वच्मि तुभ्यं कथयामि । शृणु तत्त्वमवधारय । मनः । शब्दादिपञ्चविषयनिवृत्तं सत् मायिकशब्दादिनिजार्थप्रवृत्तेन्द्रियानुगतिपरावृत्तं सदित्यर्थः । जितम् । मतम् । मया वशीकृतमिति-

मुमुक्षुणा बोध्यमित्यर्थः ॥ ७ ॥ अर्थत उपस्थितं विपक्षार्थं स्फुटबोधाय स्वयमेवाह । प्रवृत्तानि । निजार्थेषु स्वस्वविषयेषु । स्वभावतः स्वसाहजिकप्रकृतितः । प्रवृत्तानि । हृषीकाणीन्द्रियाणि कर्माणि । मनः कर्त्तृ । यदा यर्हि । अनुयाति । तदा । तन्मनः । अजितं चापि । मतम् ॥ ८ ॥ साम्प्रतं मुनेस्तस्य ततः परावृत्तिसाधनजिज्ञासामालक्ष्य स्वयमेव तद्वदन्नुक्तार्थं सम्यग्बोधायानुवदति त्रिभिः । साध्विति । हे मुने ! । यदा । दृढेन सुस्थिरेण । साधुप्रसङ्गसम्प्राप्तसाधनेन प्रकृष्टसाधुसङ्गावगतेन विषयेषु दोषदृष्टिरूपेणोपायेनेत्यर्थः । इन्द्रियाणि । तेभ्यो विषयेभ्यः । परावृत्तानि । स्युः । तदेत्युत्तरेण सम्बन्धः ॥ ९ ॥ तदेति । तदा । आत्मनः स्वस्य । मनोऽपि । तेभ्यो विषयेभ्यः । परावृत्तम् । ज्ञेयम् । स्वस्थानस्थं हृदयाख्यस्वस्थानावस्थितं च । ज्ञेयम् । 'हृत्प्रतिष्ठं यदजिरं जविष्ठ'मिति श्रुतौ तस्य हृदयं स्थानमुक्तम् । तत्तथाविधमनः । जितम् । इतीत्थम् । बुध्या विवेकवत्या मत्या । अवधार्यतां निश्चयताम् ॥ १० ॥ अन्यथेति । अन्यथोक्तवैपरीत्ये तु । तन्मनः । अजितम् । ज्ञेयम् । अतो हेतोः । मनोनिग्रहोद्यतैः स्वमनसो नियमने उद्युक्तैः । महात्मभिर्महानुभावैर्मुमुक्षुभिः सद्भिः । तज्जयाय स्वमनोनिग्रहार्थम् । प्रत्याहारो दोषदृष्ट्येन्द्रियाणां स्वस्वविषयेभ्यः प्रत्याहरणम् । साध्यते ॥ ११ ॥ इतीति । इत्येवंविधम् । हरिवचः परमकरुणयोक्तं श्रीहरिवचनम् । श्रुत्वा । प्रीतः प्रसन्नमनाः । मुक्तानन्दमुनिः । सर्वसंशयनाशनम् । प्रभुम् । तं श्रीहरिम् । पुनर्भूयः । अप्राक्षीत् ॥ १२ ॥ एवं स्वजिज्ञासितं विषयेभ्यो मनः परावृत्तिसाधनं सामान्यतः श्रीहर्युक्तं श्रुत्वा विशेषतस्तद्दृढतरसाधनबुभुत्सया पृच्छति । इन्द्रियाणामिति । हे प्रभो ! । इन्द्रियाणाम् । विषयनिवृत्तेः स्वक्रियविषयपरावृत्तेः । दृढतरम् । यत् । साधनम् । स्यात् । तत्तथाविधं साधनम् । मे मह्यम् । कृपया । वक्तुम् । अर्हसि ॥ १३ ॥ दृढतरविशेषणावगमिते साधनानेकत्वे सति श्रीहर्यभिमतस्य तस्य सम्यक् ज्ञानाय तत्पक्षान् स्वयमेवाह । केचिदिति । हे ईश्वर ! । केचिन्मुनयः । इहेन्द्रियाणां स्वस्वविषयेभ्यः परावृत्तौ । वैराग्यम् । साधनम् । वदन्ति । एके केचन मुनयस्तु । कृष्णे साक्षाच्छ्रीकृष्णभगवति । त्वयि । प्रीतिं स्नेहम् । साधनम् । वदन्ति । एते स्वधर्मस्याप्युपलक्षणभूते । त्वं सर्वज्ञो भवान् । सुनिश्चितं त्वया सम्यक् निर्णीतम् । तत्साधनम् । ब्रूहि मह्यं कथय ॥ १४ ॥

प्रवृत्तानि निजार्थेषु हृषीकाणि स्वभावतः । मनोऽनुयाति च यदा तदा तदजितं मतम् ॥ ८ ॥ साधुप्रसङ्गसम्प्राप्तसाधनेन दृढेन तु । परावृत्तानि तेभ्यः स्युरिन्द्रियाणि यदा मुने ! ॥ ९ ॥ तदा तेभ्यः परावृत्तं मनोऽपि ज्ञेयमात्मनः । स्वस्थानस्थं च तद्बुद्ध्या जितमित्यवधार्यताम् ॥ १० ॥ अन्यथा त्वजितं ज्ञेयं तन्मनोनिग्रहोद्यतैः । प्रत्याहारः साध्यतेऽतस्तज्जयाय महात्मभिः ॥११॥ इति श्रुत्वा हरिवचो मुक्तानन्दमुनिः पुनः । प्रीतस्तं प्रभुमप्राक्षीत्सर्वसंशयनाशनम् ॥ १२ ॥ इन्द्रियाणां स्वविषयनिवृत्ते साधनं प्रभो ! । यत्स्याद्दृढतरं तन्मे कृपया वक्तुमर्हसि ॥ १३ ॥ केचिद्वदन्ति वैराग्यमिह साधनमीश्वर ! । प्रीतिं कृष्णे त्वयि त्वेके तत्त्वं ब्रूहि सुनिश्चितम् ॥ १४ ॥

'एवं स मुक्तानन्देन सम्पृष्ट ईश्वरेश्वरः' । अवदत् कृपासिंधुश्चान्यान् संहर्षय'न्निति । आत्मेति । हे मुने ! । अत्रेन्द्रियाणां स्वस्वविषयेभ्यः प्रत्याहरणे । आत्मनिष्ठा वक्ष्यमाणा देहात्मविवेकेनात्मन्यवस्थितिः । साक्षात्प्रत्यक्षस्य । रमापतेर्लक्ष्मीकान्तस्य भगवतः । माहात्म्यज्ञानं वक्ष्यमाणलक्षणो महिमावबोधश्च । इत्येतद्द्वयम् । परमत्युत्कृष्टम् । निश्चितं मया सम्यक् निर्णीतम् । साधनम् । जानीहि । आत्मनिष्ठायां वैराग्यस्यान्तर्गतत्वान्माहात्म्यज्ञाने स्वधर्मप्रीत्योरन्तर्गतत्वाच्च त्वदुक्तवैराग्यादिसाधनत्रयादात्मनिष्ठामाहात्म्यज्ञाने एव परे साधने अवगच्छेत्यर्थः ॥ १५ ॥ उक्तसाधनद्वयस्य मध्ये देहात्मविवेकोक्तिपूर्वकमात्मनिष्ठास्वरूपमाह द्वाभ्याम् । तत्रेति । हे मुने ! । तत्र तयोर्द्वयोः साधनयोर्मध्ये । देहात्मविवेकेन देहस्वरूपस्यात्मस्वरूपस्य च विवेचनेन । आत्मनि स्वस्वरूपे । स्थितिरवस्थानम् । आत्मनिष्ठा । ज्ञेया । देहात्मविवेकमाह । अहममिमत्या देहेन्द्रियादिधारको जीवात्मा । चिद्रूपो ज्ञातृस्वरूपोऽस्मि । देहो मया चेतयितव्यं स्थूलादि शरीरत्रयम् । जडोऽचेतनोऽस्ति । अहम् । नित्यः स्वरूपतः कालत्रयाविनाशी चास्मि । वपुः सततपरिणामिशरीरम् । नश्वरं विनाशस्वभावमस्ति ॥ १६ ॥ शुद्ध इति । अहम् । शुद्धः स्वरूपतः शरीरत्रयविकारवर्जितो-

श्रीहरिरुवाच–आत्मनिष्ठा च माहाम्यज्ञानं साक्षाद्रमापतेः । परं साधनमत्रेति मुने! जानीहि निश्चितम्
॥ १५ ॥ तत्रात्मनिष्ठा देहात्मविवेकेनात्मनि स्थितिः । चिद्रूपोऽहं जडो देहो नित्योऽहं नश्वरं वपुः
॥ १६ ॥ शुद्धोऽहमशुचिर्देहो वपुर्दुःखमहं सुखम् । एवं विवेकतो देहात्पृथगात्मस्थितिर्भवेत् ॥ १७ ॥
देहाभिमानविलयात्तया पुंसो विवेकिनः । विषयेभ्यो निवर्त्तन्ते हृषीकाण्यखिलान्यपि ॥ १८ ॥
भक्तिं हरौ विदधता माहात्म्यं तस्य सर्वथा । यथा ज्ञेयं तथा वच्मि येन भक्तिर्भवेद् दृढम् ॥ १९ ॥
आत्माऽहं परमात्माऽसौ साक्षात्कृष्णः परात्परः । अनन्तकोटिब्रह्माण्डाधीशो राधारमेश्वरः ॥ २० ॥

ऽस्मि । देहः । अशुचिर्मलमूत्रादिविकारास्पदत्वादपवित्रोऽस्ति । अहम् । सुखमानन्दरूपोऽस्मि । वपुर्देहः । दुःखं सकलदुःखैकभाजनमस्ति । एवममुना प्रकारेण । विवेकतः सच्छास्त्रवाक्य साक्षाद्भगवदेकान्तिकसाधूपदिष्टसद्सद्विवेकबलेन । देहात्सकाशात् । पृथगात्मस्थितिः स्वरूपभावादिभिः पृथग्भूते स्वात्मन्यवस्थानम् । भवेत् ॥ १७ ॥ देहेति । तयाऽऽत्मस्थितिपर्यायया आत्मनिष्ठया । देहाभिमानविलयादिन्द्रियद्वाराविषयाभिमुखीभवनहेतुदेहाहंमतिविनाशाद्धेतोः । विवेकिन उक्तप्रकारेण देहात्मविवेकवतः । पुंसो मुमुक्षोर्भगवद्भक्तजनस्य । अखिलानि सकलान्यपि । हृषीकाणि । विषयेभ्यो मायिकशब्दाद्यर्थेभ्यः । निवर्त्तन्ते परावृत्तानि भवन्ति ॥ १८ ॥ भक्तिमिति । हरौ । भक्तिं श्रवणादिनवप्रकारं । सेवाम् । विदधता कुर्वता भक्तेन । तस्य श्रीहरेः । माहात्म्यम् । सर्वथा सर्वप्रकारेण । यथा यद्वत् । ज्ञेयम् । तथा । वच्मि तुभ्यं कथयामि । येन श्रीहरिमाहात्म्यज्ञानेन । भक्तिः । दृढं यथातथा । भवेत् । साक्षाद्भगवन्महिम्नो यथार्थावबोधेनैव जातयेन्द्रियाणां विषयेभ्यः परावृत्त्या तद्भक्तिः सुस्थिरा स्यादित्यर्थः ॥ १९ ॥ अथेदानीं श्रीहरिमाहात्म्यावबोधनप्रकारमाहाष्टभिः । आत्मेति । अहम् । आत्मोक्तविधचिद्रूपादिविशेषणबोधितो देहात्पृथग्भूतो जीवात्मास्मि । असौ

मत्स्वरूपस्थितिप्रवृत्तिहेतुर्मदिष्टदेवोऽयम् । साक्षात्प्रत्यक्षः । कृष्णः श्रीहरिकृष्णो भगवान् । परमात्मा आत्मात्मा परमेश्वर इत्यर्थः । परात्परः सर्वपरादक्षरब्रह्मणोऽपि स्वरूपस्वभावादिभिरत्युत्कृष्टः । अनन्तकोटिब्रह्माण्डाधीशः अपरिमितकोटिगुणितब्रह्माण्डेश्वराणां प्रधानपुरुषाणामीश्वरयोर्मूलप्रकृतिपुरुषयोरपि स्थितिप्रवृत्तिहेतुत्वादधीश्वर इत्यर्थः । राधारमेश्वरो राधालक्ष्मीपतिः । अस्ति ॥ २० ॥ गोलोकेति । असौ श्रीहरिः । गोलोकश्चिद्वयोमान्तर्वर्त्तिगोलोकधाम च वैकुण्ठो लक्ष्मीप्रीतिहेतुवैकुण्ठधाम च बृहत्पुरं गोलोकमध्यवर्त्त्यक्षरब्रह्माख्यं धाम च श्वेतः सितान्तरीपाख्यं धाम च ते आदयो येषामव्याकृत, बदरीवन, क्षीराब्धि, सूर्यमण्डलाग्निमण्डलादीनां तानि यानि धामानि तानि पाति रक्षतीति तथाभूतः । गोलोकादिधामपतिरित्यर्थः । ब्रह्मादीनामक्षरब्रह्मप्रभृतीनाम् । नियन्ताऽन्तर्यामितया नियामकः । पुरुषोत्तमः क्षराक्षरपुरुषेभ्य उत्तमत्वादुत्तमः पुरुष इत्यर्थः । अस्त्येव । हि ॥ २१ ॥ असाविति । सर्वदः स्वभक्तवाञ्छिताखिलार्थप्रदः । सच्चिदानन्दविग्रहः सच्चिदानन्दाख्यधर्माधारमूर्त्तिः । साक्षात्प्रत्यक्षः । असौ श्रीहरिरेव । मदात्मन्यपि । सततं सर्वकालम् । विराजते तिष्ठति । हि ॥ २२ ॥ नीमेषेति । अस्य प्रत्यक्षस्य श्रीहरेः । निमेषमात्रं त्रिलवकालमात्रपर्यन्तमपि ।

गोलोकवैकुण्ठबृहत्पुरश्वेतादिधामपः । ब्रह्मादीनां नियन्ताऽसौ पुरुषोत्तम एव हि ॥ २१ ॥
असावेव हरिः साक्षान्मदात्मन्यपि सर्वदः । विराजते हि सततं सच्चिदानन्दविग्रहः ॥ २२ ॥
निमेषमात्रमप्यस्य दर्शनं देवदुर्लभम् । अनन्ताण्डस्थविषयसुखादप्यधिकं च तत् ॥ २३ ॥
एकरोम्णि स्थितं यत्तु सुखमस्यास्ति तेन च । न साम्यं यान्ति संहत्य कोट्यण्डस्थसुखान्यपि ॥ २४ ॥
बृहद्धाम्नोऽन्तिके चास्य देवधामानि सर्वशः । प्रयान्ति निरयौपम्यं मोक्षधर्मेष्वितीरितम् ॥ २५ ॥

दर्शनम् । देवदुर्लभं सात्त्विकतयाख्यायमानानां देवानामपि दुष्प्रापम् । तन्निमेषमात्रमपि श्रीहरिदर्शनम् । अनन्ताण्डस्थविषयसुखादनेककोटिब्रह्माण्डान्तर्वर्त्तिविषयोपभोगजन्य-सुखादपि । अधिकमधिकसुखं चास्ति ॥ २३ ॥ अहो निमेषमात्रीययत्सकलाङ्गदर्शनसुखमनेकब्रह्माण्डस्थसुखाधिकसुखमिति न विस्मितव्यं यतो यदेकरोमस्थसुखस्याप्य-नन्ताण्डस्थविषयसुखसाम्यं नास्तीत्याह । एकेति । अस्य साक्षाद्भगवतः श्रीहरेः । एकरोम्णि एकस्मिन् । रोमकूपे । यत् । सुखम् । स्थितम् । अस्ति । कोटयण्डस्थ-सुखान्यपि । संहत्यैकीभूय । तेन श्रीहर्येकरोमस्थसुखेन । साम्यं तुल्यताम् । न यान्ति नैव प्राप्नुवन्ति ॥ २४ ॥ किञ्च यद्धामाग्रेऽन्यदेवधामानि निरयतुल्यतां यान्ति तन्महत्त्वं वक्तुं कः शक्नुयादिति वक्तुं महाभारतीयमोक्षधर्मोक्तां तद्धाम्नः पुरोऽन्यदेवधामनिरयतुल्यताकथामनुसारयति । बृहदिति । अस्य साक्षाच्छ्रीहरेः सम्बन्धिनः । बृहद्धाम्नो ब्रह्मपुराख्यपदस्य । अन्तिके समीपे । सर्वशः सर्वाण्यपि । देवधामानि । निरयौपम्यं नरकतुल्यताम् । प्रयान्ति प्राप्नुवन्ति । इतीत्थम् । मोक्ष-धर्मेषु । ईरितं कथितमस्ति । तद्यथा । 'चतुर्णां लोकपालानां शुक्रस्याथ बृहस्पतेः । मरुतां विश्वदेवानां साध्यानामश्विनोरपि । रुद्रादित्यवसूनां च तथान्येषां दिवौकसाम् । स्थानानि निरया एव स्थानस्य परमात्मन'इति ॥ २५ ॥

एवमिति । एवममुना प्रकारेण । परमानन्दरूपिणं निरवधिकातिशयसुखमयमूर्त्तिम् । साक्षाद्धरिं प्रत्यक्षं श्रीहरिकृष्णभगवन्तम् । हित्वा । तुच्छान् । नरकोपमान् । विषयान् मायिकविषयभोगसुखानि । कथम् । इच्छामि । किमर्थं वाञ्छेयं नैव वाञ्छेयमित्यर्थः ॥ २६ ॥ एवमिति । एवममुना प्रकारेण । यो मुमुक्षुभक्तः । कृष्णमाहात्म्यं साक्षाच्छ्रीहरिमहिमानं । हृदि स्वमानसे । बुध्या विवेकयुक्तया स्वस्वमत्त्या । चिन्तयतेऽहर्निशं विचारयति । तस्य मुमुक्षुभक्तस्य । सर्वेन्द्रियाणि । विषयेभ्यः । निवर्त्तन्ते ॥ २७ ॥ यदुक्तं केचिद्वदन्ति वैराग्यमिह साधनमीश्वरेति तद्वैराग्यमप्यात्मज्ञानभगवन्माहात्म्यज्ञानाभ्यां जातं स्याच्चेत्तदा त्विन्द्रियाणां विषयेभ्यो निवृत्तेः साधनं तदपि स्यादित्याह द्वाभ्याम् । आत्मेति । हे मुने ! । आत्मज्ञानात् । भगवन्माहात्म्यावगमाच्च । इहैहिकामुष्मिकविषयभोगेषु । जातं दोषदृष्टिदार्ढ्येन परमार्थतयोत्पनम् । वैराग्यम् । अखिलाः । वासनाः प्राचीनाधुनिकमायिकविषयभोगभावनाः । निवर्त्तयति निःशेषतो विनिवर्त्तयते ॥ २८ ॥ पुंस इति । हे साधो ! । अस्यैवंविधस्य । पुंसो भक्तस्य । पुनः । विषयैषणा विषयोपभोगवाञ्छाः । नैव । जायन्ते । अस्यैवंविधस्य भक्तस्यैव । मनः । जितम् । इतीत्थम् । बुधैः । उच्यते । एवंविधो

एवं साक्षाद्धरिं हित्वा परमानन्दरूपिणम् । कथमिच्छामि विषयांस्तुच्छांश्च नरकोपमान् ॥ २६ ॥ एवं यं कृष्णमाहात्म्यं बुद्ध्या चिन्तयते हृदि । विषयेभ्यो निवर्त्तंते तस्य सर्वेन्द्रियाण्यपि ॥ २७ ॥ आत्मज्ञानाच्च भगवन्माहात्म्यावगमादिह । जातं वैराग्यमखिला निवर्त्तयति वासनाः ॥ २८ ॥ पुंसोऽस्य च पुनर्नैव जायन्ते विषयैषणाः । अस्यैव च मनः साधो ! जितमित्युच्यते बुधैः ॥२९॥ एतत्साधनहीनस्तु प्रीतिं कुर्वन्नपीश्वरे । चारुशब्दादिसम्प्राप्तौ हित्वा तं तत्र सज्जते ॥ ३० ॥ क्वापि पुत्रकलत्रादिप्रसक्त्या वा हरिं त्यजेत् । रोगादिपीडया वाऽसौ विषयाप्राप्तितोऽपि वा ॥३१॥ यावत्स्याद्विषयप्राप्तिस्तावदस्य तु केशवे । प्रीतिः स्यात्तदभावे तु यात्यसौ पामरोपमाम् ॥३२॥

भक्त एव विद्वद्भिर्जितमना इति कथ्यते इत्यर्थः ॥२९॥ यदुक्तं प्रीतिं भगवति त्वेके इति तत्साधनत्वेनोदिता प्रीतिरप्युक्तसाधनद्वयवर्जिता चेद्वाञ्छितार्थासम्पादकत्वेन निरर्थकैव यतस्तस्या उक्तसाधनद्वयवत्त्वाभावेन पुत्रकलत्राद्यासक्त्याऽन्तेऽनर्थकरत्वादित्याह चतुर्भिः । एतदिति । एतत्साधनहीन उक्तसाधनद्वयवर्जितो भक्तस्तु । ईश्वरे साक्षात्परमेश्वरे श्रीहरौ । प्रीतिम् । कुर्वन्नपि । चारुशब्दादिसम्प्राप्तौ रमणीयानां मायिकशब्दादिपञ्चविषयाणामुपलब्धौ सत्याम् । तमीश्वरम् । हित्वा परित्यज्य । तत्र तेषु चारुशब्दादिविषयेषु । सज्जते आसक्तो भवति ॥ ३० ॥ क्वापीति । अथवा । असौ मदुक्तसाधनद्वयवर्जितभगवत्प्रीतिमानम् । भक्तः । क्वापि कदाचित् । पुत्रकलत्रादिप्रसक्त्या । हरिम् । त्यजेत् । अथवा । रागादिपीडया स्वारब्धकर्मप्राप्तमहारोगादिभोगजन्यातिदुःखेन । हरिं । त्यजेत् । अथवा । विषयाप्राप्तितः स्वाभिलषितविषयभोगालब्धेर्हेतोरपि । हरिम् । त्यजेत् । अयमेवास्य महानर्थ इति भावः ॥ ३१ ॥ ननु विषयाप्राप्तितोऽस्य हरित्यागोऽस्तु किन्तु यावत्तत्प्राप्तिस्तत्त्यागो न स्यादिति चेद्देशकालादेरनैकान्त्यात्तदनुपलब्धेरप्यवश्यं भावात्तदप्राप्तिवेलायां स तं परित्यजन् पामरतामेव यायादित्याह । यावदिति । हे मुने ! । अस्यैवंविधस्य भक्तस्य । यावत् ।

विषयप्राप्तिः । स्यात् । तावत्तु । केशवे साक्षाद्धरौ । प्रीतिः । स्यात् । तदभावे देशकालादिवैषम्येन विषयप्राप्त्यभावे सति तु । असावेवंविधभक्तः । पामरोपमां भगवत्त्यागेन पृथग्जनसादृश्यम् । याति प्राप्नोति ॥३२॥ तत इति । ततो हेतोः । असावेवंविधो भक्तः । भक्तवेषधृत् सचन्द्रकोर्ध्वपुण्ड्रादिसाक्षाद्भगवद्भक्तवेषधरः सन्नपि । श्वा भषकः । बाल्ये बालभावे रमणीयः सन्नपि । वार्द्धके वृद्धभावे । विकृतः कुरूपः सन् । यथा । न शोभते । तथा । पूर्ववत् । नैव शोभेत । एवमात्मनिष्ठा-भगवन्माहात्म्यज्ञानवर्जितः स्वधर्मोऽपि नैव शोभते इत्यपि ज्ञेयम् ॥ ३३ ॥ प्रकरणार्थं निगमयत्यर्द्धेन । इतीति । हे साधो ! । इत्यमुना प्रकारेण । मया । विषय-निवृत्तेः । साधनम् । ते तुभ्यम् । उक्तम् । इह सत्सङ्गे । तत्साधनम् । समवगत्य सम्प्राप्य । उग्रं चञ्चलस्वभावत्वेन दुर्दान्तवाजिवत्तीव्रम् । स्वं स्वकीयम् । मनः । जेयम् । इत्थमेवंविधम् । श्रीहरेः । अमृतं सुधासमम् । वचनम् । साधुवर्यः सकलमुनिश्रेष्ठः । स मुक्तानन्दमुनिः । सकलसभ्यैः सभावस्थितैः समग्रैस्त्यागिभिर्गृहिभिश्च । सह । चित्ते स्वमानसे । धारयामास प्रथमतः पीत्वा ततस्तथैवाधारयदित्यर्थः ॥ ३४ ॥ विषयेभ्यः स्वभक्तानां निवृत्तेः साधनं परम् । आत्मज्ञानं स्वमाहात्म्य-

ततोऽसौ नैव शोभेत पूर्ववद्भक्तवेषधृत् । बाल्ये श्वा रमणीयोऽपि वार्द्धके विकृतो यथा ॥ ३३ ॥ इति विषयनिवृत्तेः साधनं ते मयोक्तं तदिह समवगत्य स्वं मनो जेयमुग्रम् । वचनामृतमित्थं श्रीहरेः साधुवर्यः स सह सकलसभ्यैर्धारयामास चित्ते ॥ ३४ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते नवसप्ततिमस्तरङ्गः ॥ ७९ ॥

शकाब्दे विक्रमार्कस्य नगाश्ववसुभूमिते । षष्ठीतिथौ नभःकृष्णे वचोऽमृतमिदं हरेः ॥ १ ॥
तत्र सारङ्गपुरनगरे भवने जीववर्मणः । वेद्यां न्यषीदत्पीठेऽसौ धृतसर्वसितांशुकः ॥ २ ॥
स्वयम्प्रकाशानन्दस्तं गृहित्यागिगणावृत्तम् । उदङ्मुखं च पप्रच्छ प्रणम्यैव तदाज्ञया ॥ ३ ॥

वेदनं कृपया प्रभुः ॥ १ ॥ य उवाच स्फुटं स्वामी भक्तिधर्मात्मजो हरिः । मह्यं स देयात्त्वरितं महत्तत्साधनद्वयम् ॥ २ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्ये-कान्तिकोपासकश्रीहरिकृष्णभगवत्स्नुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायामेकोनाशीतितमस्तरङ्गः ॥ ७९ ॥

भक्तानां च हरौ स्नेहस्तस्य तेषु यथा भवेत् । तादृशाः सद्गुणाः स्पष्टं द्वितीये सम्प्रकीर्त्तिताः ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८७७) नभःकृष्णे श्रावणमासस्य कृष्णपक्षे । षष्ठीतिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । सारङ्गनगरे । जीववर्मणः । दुर्गे इति शेषः । भवने तस्योत्तरास्य वेश्मनि । वेद्यां बहिर्वेद्याम् । पीठे पार्श्विकोपबर्हश्वेतोत्तरच्छदादिसहिते मञ्चासने । धृतसर्वसितांशुकः । असौ श्रीहरिः । न्यषीदत् ॥ २ ॥ स्वयमिति । गृहित्यागिगणावृतं नानादेशागतैस्त्यागिगृहिवृन्दैः सभायां परिवेष्टितम् । उदङ्मुखमुत्तरदिगभिमुखाननाब्जम् । तं श्रीहरिम् । प्रणम्य । स्वयम्प्रकाशानन्दः साधुः । तदाज्ञया श्रीहरिनिदेशेनैव । पप्रच्छ ॥ ३ ॥

साक्षादिति । हे हरे ! । क्षोण्यां भारतवर्षधरित्र्याम् । करुणया निरवधिकातिशयया निष्कारणदयया आत्ता गृहिता नराकृतिर्मनुष्यसमानाकारो येन स तस्मिन् । साक्षात्कृष्णे प्रत्यक्षे श्रीकृष्णभगवति । त्वयि श्रीहरौ । मुमुक्षोः भक्तस्य । मुमुक्षावतस्त्वदाश्रितजनस्येत्यर्थः । गाढतरोऽन्तःदृढः । स्नेहः । कथं केन हेतुना । भवेज्जायेत ॥ ४ ॥ तस्मिन्निति । तस्मिन्मुमुक्षौ स्वभक्ते । तव साक्षाद्भगवतो भवतः । गाढतरः स्नेहः । कथम् । भवेत् । इत्येवंविधमत्प्रश्नद्वयोत्तरम् । ब्रूहि । इत्यमुना प्रकारेण । उक्तः स्वयम्प्रकाशानन्दसाधुनानुयुक्तः । हरिः । तं स्वयम्प्रकाशानन्दसाधुम् । अब्रवीत् । स्नेहसम्भवे रूपादिपञ्चकस्य हेतुत्वं वदंस्तदन्तर्गतस्य गुणदर्शनजस्य स्नेहस्य दृढत्वविवक्षया रूपादिदर्शनजस्य तस्य तदन्यथात्वे विनाशित्वाददृढत्वमाह स्वरूपेत्यादिभिः सार्द्धैश्चतुर्भिः । हे मुने ! । रूपं शरीरसौन्दर्यं च कामः शृङ्गारलब्ध्यभिलाषश्च स्वार्थः पुत्रप्राप्त्यादिनिजार्थसिद्धिश्च लोभो धनस्योत्तरोत्तरवृद्धिवाञ्छा च गुणाः सर्वकारणभगवत्त्वबोधकाः सत्यशौचादयो भगवतो नित्या गुणा वक्ष्यमाणाभक्तसद्गुणाश्च तेभ्यः । स्नेहसम्भवः स्नेह उत्पन्नो भवति ॥ ५ ॥ तत्रेति । तत्र तेषु रूपादिषु पञ्चसु मध्ये । कृष्णे । रूपविशेषात्सौन्दर्याधिक्यदर्शनात् ।

साक्षात् कृष्णे त्वयि क्षोण्यां करुणात्तनराकृतौ । भवेन्मुमुक्षोर्भक्तस्य स्नेहो गाढतरः कथम् ॥ ४ ॥
तस्मिंस्तवेति च ब्रूहीत्युक्तस्तं हरिरब्रवीत् । रूपकामस्वार्थलोभगुणेभ्यः स्नेहसम्भवः ॥ ५ ॥
तत्र रूपविशेषाद्यः कृष्णे स्नेहो भवेन्नृणाम् । स तु तस्मिन् कचिद्दृष्टे वैरूप्ये नश्यति ध्रुवम् ॥ ६ ॥
एवं कामस्वार्थलोभजातः स्नेहो महानपि । स्वस्वहेतोरसिद्धौ हि नश्यत्येवेति दृश्यते ॥ ७ ॥
स्नेहोदयतिरोधाने नृणामित्थं नराकृतौ । कृष्णे भवेतां भक्तानां तन्माहात्म्यमजानताम् ॥ ८ ॥
कृष्णस्य तु न रूपाद्यैर्भक्तेषु स्नेहसम्भवः । तेषां मायामयत्वाच्च स्वस्य मायापरत्वतः ॥ ९ ॥

नृणां भक्तजनानाम् । यः । स्नेहः । भवेत् । स रूपविशेषदर्शनजः स्नेहस्तु । कचिन्मनुष्यानुकरणाज्जरादिप्राप्तौ । तस्मिन्कृष्णे । वैरूप्ये जरादिकृतकेशशुक्लतादिविकृतरूपोदयो दृष्टे सति । ध्रुवं निश्चितमेव । नश्यति ॥ ६ ॥ एवमिति । एवममुना प्रकारेण । कामश्च स्वार्थश्च लोभश्च तेभ्यो जातः उत्पन्नः । महानतिशयितोऽपि । स्नेहः । स्वस्वहेतोः कामस्वार्थलोभेषु यमुद्दिश्य स्नेहः कृतस्तत्कारणस्य कामादेरित्यर्थः । असिद्धावप्राप्तौ सत्याम् । नश्यत्येव । इतीत्थम् । दृश्यते । हि ॥ ७ ॥ स्नेहेति । इत्थममुना प्रकारेण । तन्माहात्म्यं प्रत्यक्षकृष्णमहिमानम् । अजानताम् । भक्तानाम् । नृणाम् । नराकृतौ । कृष्णे । स्नेहोदयतिरोधाने स्नेहोत्पत्तिविनाशौ । भवेतां जायेयाताम् ॥ ८ ॥ रूपादिजातस्नेहविनाशप्रसङ्गतो भक्ते कृष्णस्य रूपादिजातस्नेहाभावमाह । कृष्णस्येति । कृष्णस्य साक्षाद्भगवतस्तु । भक्तेषु । रूपाद्यैः रूपप्रभृतिभिश्चतुर्भिः । स्नेहसम्भवः । नास्ति । अत्र हेतुमाह । तेषां भक्तानाम् । मायामयत्वाद्भक्तगतरूपादेर्मायाकार्यत्वादित्यर्थः । स्वस्य भगवतः कृष्णस्य च । मायापरत्वतः विकाररूपमायातत्कार्यवर्जितत्वादित्यर्थः । मायाया गुणरूपत्वाद्भगवतस्तद्गुणवर्जितत्वात्सगुणनिर्गुणयोः परस्परविसदृशत्वेन निर्गुणस्य सगुणे स्नेहोदया-

सम्भवादिति भावः ॥ ९ ॥ साम्प्रतं गुणदर्शनजस्नेहस्य दृढत्वमाह चतुर्भिः । जात इति । यः । स्नेहः । सद्भ्यः शोभनेभ्यः । गुणेभ्यः । जातः । स स्नेहस्तु । दृढः स्थिरः । भवेत् । तत्र स्नेहोदयहेतुषु शोभनेषु गुणेषु मध्ये तु । कृष्णे तु । ते सन्तो गुणाः । नित्यसिद्धाः स्वतः सिद्धाः । अनपायिनो नित्यसिद्धत्वादाविर्भावतिरोभाव-वर्जिताः । सन्ति विद्यन्ते ॥ १० ॥ पृथिवीति । श्रीमद्भागवते पुराणे । पृथिवीधर्मसंवादे । ते भगवति नित्यसिद्धाः सत्यशौचादयः शोभनगुणाः । वर्णिताः । सन्ति । तान् भगवद्गुणान् । कृष्णाश्रयिणः कृतसाक्षाच्छ्रीकृष्णाश्रयाः । ये भक्तजनाः । सद्भ्यस्तदेकान्तिकसाधुभ्यः । विदुः । तेषामित्युत्तरेणान्वयः ॥ ११ ॥ तेषां भक्तानाम् । तत्सम्यग्ज्ञानतो भगवत्सम्बन्धिनां गुणानां सम्यक् ज्ञानाद्धेतोः । कृष्णे साक्षाद्भगवति । दृढः । स्नेहः । भवेत् । प्रभोः । तस्य साक्षाद्भगवतोऽपि । भक्तेषु । स्नेहः । गुणैरेव । भवेत् ॥ १२ ॥ एवं सामान्यतो गुणानां दृढस्नेहहेतुत्वमुक्त्वा साम्प्रतं भक्तनिष्ठवक्ष्यमाणगुणानां भक्तभगवतोः परस्परस्नेहे हेतुत्वमप्याह । यैरिति । अत्र सत्सङ्गे । यैर्भक्तैः । ते गुणाः । सद्वार्त्ताश्रवणादिभिः । सम्पादिताः स्वात्मन्युत्पादिताः स्युः । तेषु भक्तेषु । हरेः । दृढः । स्नेहः । भवेत् । तेषां

जातो गुणेभ्यः सद्भ्योः यः स्नेहः स तु भवेद्दृढः । तत्र कृष्णे नित्यसिद्धाः सन्ति ते त्वनपायिनः ॥ १० ॥<br>
पृथ्वीधर्मसंवादे श्रीमद्भागवते हि ते । वर्णिताः सन्ति तान्सद्भ्यो ये कृष्णाश्रयिणो विदुः ॥ ११ ॥<br>
तत्सम्यग्ज्ञानतः कृष्णे तेषां स्नेहो भवेद्दृढः । भक्तेषु तस्य स्नेहोऽपि गुणैरेव भवेत्प्रभोः ॥ १२ ॥<br>
यैस्ते सम्पादिता अत्र सद्वार्त्ताश्रवणादिभिः । हरेस्तेषु भवेत्स्नेहस्तस्मिंस्तेषां च वै दृढः ॥ १३ ॥<br>
ऊचेऽथ सोमवर्मा तं विद्मस्तव गुणान्हरे ! । त्वद्भक्तानां गुणान्सम्यग्न विद्मस्तव सन्मतान् ॥ १४ ॥<br>
गुणा अपि श्रुता द्वेधाऽलौकिका लौकिका इति । भवन्ति तत्र के स्वामिन्भवत्स्नेहस्य हेतवः ॥ १५ ॥

भक्तानां च । तस्मिन्हरौ । दृढः । स्नेहः । भवेत् । वै ॥ १३ ॥ ऊच इति । अथैवंविधश्रीहरिवाक्यश्रवणानन्तरम् । सोमवर्मा बुंद्दपुराधीशः सोमवर्मानृपतिः । तं श्रीहरिम् । ऊचे । हे हरे ! । तव गुणान् साक्षात्कृष्णस्य तव सम्बन्धिनः सत्यशौचादीन्नित्यसिद्धगुणान् । विद्मस्त्वत्पुरो नित्यानन्दादिमुनिवाचितश्रीभागवतकथाया मुहुः श्रवणाद्वयं जानीमः । स्वसमानान्यभक्तापेक्षं बहुवचनम् । तव संमतान् । त्वया प्रमाणीकृतानित्यर्थः । त्वद्भक्तानाम् । गुणांस्तु । सम्यग्यथार्थतः । न विद्मः ॥ १४ ॥ ननु यदि ब्रूषे सत्सङ्गे भगवदेकान्तिकसाधूदितबहुविधसच्छास्त्रश्रवणसत्त्वाद् एतावत्कालपर्यन्तं किं तद्गुणज्ञानमेव न जातमस्तीति चेल्लौकिकालौकिकभेदेन तद्द्वैविध्यात्त्वद-भिमततज्ज्ञानाय पृच्छयत इत्याह । गुणा इति । हे स्वामिन् ! । गुणा अपि । अलौकिकाः । लौकिकाः । इतीत्थम् । द्वेधा । श्रुताः । भवन्ति । तत्रालौकिकाः स्वधर्म-ज्ञानवैराग्यभक्त्यादयः । लौकिकराज्यभारादिनिर्वाहोपयोगिनः अर्थार्जनाद्युपयोगाश्च व्यावहारिकक्रियाकौशल्यादय इति विवेकः । तत्र तेषु द्विविधगुणेषु मध्ये । भवत्स्नेहस्य । हेतवो भक्तस्य भवति त्वयि भवतस्तव भक्ते वा प्रेमोदयस्य कारणानीत्यर्थः । के कतरे । गुणाः । भवति ॥ १५ ॥

तमिति तमेवंपृच्छन्तं सोमवर्मनृपतिम् । हरिः । उवाच । हे नृपते ! । लौकिकैः । तैस्त्वदभिहितव्यावहारिकगुणैस्तु । किं स्यात् । भगवद्विमुखेष्वपि तेषां दर्शनाद्भक्तेष्वपि तेषां भगवति स्नेहाभावदर्शनाच्च न ते भगवत्स्नेहहेतव इत्यर्थः । स्नेहस्य भगवति कर्त्तव्यस्य प्रेम्णः । दाढर्यं तु । वपुर्देहश्च वाणीं वाक्च मनो मानसं च तेभ्यो भवन्तीति तैः । अलौकिकैः । तैः स्वधर्मादिभिर्गुणैः । भवेत् ॥ १६ ॥ तत्र वपुर्भवान् गुणानाह पञ्चभिः । तत्रेति । तत्र वपुर्भवादिगुणेषु मध्ये । कृष्णेन साक्षाद्भगवता । सद्भिस्तदेकान्तिकसाधुभिश्च । निषिद्धानाम् । कर्मणां हिंसाचौर्यादीनाम् । क्वापि कदाचिदपि । तन्वा देहेन । अनाचरणमविधानम् । यत् । असौ । दैहिकः । गुणः । मतः ॥ १७ ॥ आतारुण्यमिति । तथा आतारुण्यं यावद्यौवनम् । षोडशं वर्षमारभ्य चत्वारिंशवर्षपर्यन्तमित्यर्थः । क्वचित्कदाचित् । देहे । उन्मादस्य बलजोन्मत्ततायाः । सम्भवे प्रादुर्भावे सति तु । कृच्छ्रैश्चान्द्रायण, पाराक, धारणापारणादिभिः कृच्छ्रव्रतैः । तत्तनूकरणं स बलरहितो यथा स्यात्तथा तत्कृशीकरणम् । यत् । असौ । दैहिकः । गुणः । मतः ॥ १८ ॥ ननु वपुषो धर्मादिसाधनं कृत्वा कृच्छ्रैस्तत्कृशीकरणेन तत्पातसमयदर्शनेऽपि तत्त्यागेन तद्रक्षणं कर्त्तव्यं नवेत्याशङ्कायां

तमुवाच हरिः किं स्याल्लौकिकैस्तैस्त्वलौकिकैः । भवेत्स्नेहस्य दाढर्यं तु वपुर्वाणीमनोभवैः ॥१६॥ तत्र कृष्णेन सद्भिश्च निषिद्धानां तु कर्मणाम् । तन्वाऽनाचरणं क्वापि दैहिकोऽसौ गुणो मतः ॥ १७ ॥ आतारुण्यं क्वचिद्देह उन्मादस्य तु सम्भवे । तत्तनूकारणं कृच्छ्रैर्दैहिकोऽसौ गुणस्तथा ॥ १८ ॥ क्रियमाणे व्रते कृच्छ्र आहाराल्याद्वपुर्यदि । पतिष्यतिति ज्ञायेत तथापि तदवर्जनम् ॥ १९ ॥ यः स्वस्य शरणं कृष्णो महान्तश्च तदाश्रिताः । ते तस्य रक्षणं कुर्युः कार्या चिन्ता न तस्य तत् ॥ २० ॥ कृष्णस्य तच्छ्रितानां च निश्छद्म निजशक्तितः । शुश्रूषणं श्रद्धया यत्स च देहगुणो महान् ॥२१॥ एतैर्देहगुणैः कृष्णे स्नेहो गाढो भवेन्ननु । भक्तस्य च हरेस्तस्मिन् वाचो वच्म्यथ ते गुणान् ॥ २२ ॥

भगवत्तज्जनास्तत्कुर्युश्चेत्कुर्वन्तु स्वेन तु तदनुसन्धानं न कार्यमित्याह द्वाभ्याम् । क्रियमाण इति । कृच्छ्रे । व्रते । क्रियमाणे सति । आहाराल्प्यादाहारस्याल्पीभावा-द्धेतोः । वपुर्देहः । पतिष्यति । इतीत्थम् । यदि । ज्ञायेत स्वेन बुध्येत । तथापि । तदवर्जनं कृच्छ्रादिव्रताचरणत्यागो न कर्त्तव्यः । इत्यर्थः ॥ १९ ॥ य इति । स्वस्य । शरणमात्मनः सर्वथा रक्षक इत्यर्थः । कृष्णः । तदाश्रितास्तदेकाश्रयाः । महान्तो महानुभावाः । ये सन्तश्च । स्युः । ते कृष्णस्तदाश्रिताः साधवश्च । तस्य कृच्छ्रादिव्रतचारिभक्तवपुषः । रक्षणं यथा तद्देहस्थितिः स्यात्तथाहाराचरणाज्ञाप्रदानादिना परित्राणम् । कुर्युर्दयालुत्वात्स्वत एव विदध्युः तत्तस्माद्धेतोः । तस्य देहस्य । चिन्ता रक्षणविचारः । न कार्या ॥ २० ॥ कृष्णस्येति । किञ्च । कृष्णस्य साक्षाद्भगवतः । तच्छ्रितानां तदेकाश्रयाणां साधूनां च । निजशक्तितः स्वसामर्थ्यानुसारेण । निश्छद्म निष्कपटं यथातथा । श्रद्धया आदरेण । यत् । शुश्रूषणं सेवनाचरणम् । स च सोऽपि । महानतिश्रेष्ठः । देहगुणः । मतः ॥ २१ ॥ एतैरिति । एतैः । देहगुणैः । भक्तस्य । कृष्णे । गाढः सुदृढः । स्नेहः । भवेत् । हरेः । तस्मिन्नेवंविधगुणवति भक्ते । गाढः । स्नेहः । भवेत् । ननु निश्चितमेव । अथैवंविधवपुर्गुण-

कथनानन्तरम् । वाचः । गुणान् । ते तुभ्यम् । वच्मि ॥२२॥ तानाह सप्तभिः । कस्येति । हे नृपते ! । येन वचसा । कस्यापि प्रकृतित्रयमध्यगतस्य यस्य कस्यापि । प्राणिनो जन्तोः । दुःखम् । स्यात् । तादृशस्य वचसस्तु । क्वापि कदाचिदपि । अनुक्तिरनुच्चारणं यत् । असौ । वाचः । गुणः । कथितः ॥ २३ ॥ सद्भिरिति । हे नृप ! । क्वचित्कदाचित् । संसदि सभायाम् । महद्भिः स्वतो गुणैरतिश्रेष्ठैः । सद्भिः साधुभिः सह । स्वस्य । शास्त्रवादः शास्त्रीयार्थैर्थनिमित्तो विवादः । स्यात् । तत्र शास्त्रवादे । स्वस्यैव । जयः । मुहुः पुनः पुनः । जायेत ॥ २४ ॥ तथापीति । तथापि । तत्र शास्त्रवादे । निर्मानं मानरहितं यथातथा । सप्रणामं तच्चरणयोः स्वशिरोधृतिरूपप्रणतिसहितं यथातथा च । भाषणं तत्कृतप्रश्नप्रतिवचनोच्चरणम् । तदुत्कर्षापादनं क्व यूयं महान्तः सन्तः क्व चाहं वराको भवच्छिष्य इत्याद्युक्त्या तन्महत्ताया एव सम्पादनं च । यत् । असौ । अपरो द्वितीयः । वाचः । गुणः । कथितः । इति द्वयोरेकसम्बन्धः ॥ २५ ॥ किञ्चेति । किञ्च । क्वचित्कदाचित् । भगवता स्वेष्टदेवेन साक्षाच्छ्रीहरिणा । अथवा । महद्भिः । सद्भिः । स्वामात्मानं प्रति । ईरितं कथितम् । यत् । विधिवाक्यमवश्यपाल्यनियमादिवचनम् । तस्य वाक्यस्य । करिष्ये

कस्यापि प्राणिनो येन दुःखं स्यात्तादृशस्य तु । अनुक्तिर्वचसः क्वापि वाचोऽसौ कथितो गुणः ॥ २३ ॥ सद्भिर्महद्भिः स्वस्य स्याच्छास्त्रवादो नृप ! क्वचित् । जायेत च मुहुस्तत्र जयः स्वस्यैव संसदि ॥ २४ ॥ तथापि तत्र निर्मानं सप्रणामञ्च भाषणम् । तदुत्कर्षापादनं च वाचोऽसावपरो गुणः ॥ २५ ॥ किञ्च क्वचिद्भगवता महद्भिर्वा स्वमीरितम् । विधिवाक्यं तस्य सद्यः करिष्य इति माननम् ॥२६॥ यद्यपि स्वस्य तद्वाक्यं कार्यार्हं न भवेदिह । तथापि तस्य वचसा तदानीं त्वादराद् ग्रहः ॥२७॥ अयोग्ये तत्र वचसि स्वस्याशङ्का तु या भवेत् । समये सा तु प्रष्टव्या प्रभुं वा सत एव वा ॥ २८ ॥ तस्यास्ते हि समाधानं कुर्युर्लोकहितोद्यताः । योग्यमेव वदेयुश्च वचसोऽसौ गुणोऽपरः ॥ २९ ॥ गुणैरेतैर्हि वचसो गाढस्नेहो भवेद्धरौ । भजतस्तत्र च हरेर्मनसोऽथ गुणान् शृणु ॥ ३० ॥

भवदुक्तरीत्यैव करिष्यामि । इतीत्थम् । सद्यस्तत्क्षणमेव । माननं स्वीकारणम् ॥२६॥ यद्यपीति । यद्यपि यदि कदाचित् । इह सत्सङ्गे । तद्वाक्यं तैरुक्तं विधिवचनम् । स्वस्य । कार्यार्हं स्वेन कर्त्तुं योग्यमित्यर्थः । न भवेत् । तथापि । तदानीं तदुक्तीसमकाले तु । तस्य वाक्यस्य । वचसा बाढं करिष्यामिति वचनेन । आदरात् । ग्रह उपादानम् ॥२७॥ अयोग्य इति । अयोग्ये स्वस्य कर्त्तुमनर्हे । तत्र तथाविधे । वचसि । स्वस्य । या आशङ्का । भवेत् । सा आशङ्का तु । समये तदेकान्तावस्थानरूपे प्रश्नावसरे । प्रभुम् । अथवा । सतः साधून् । प्रष्टव्या ॥ २८ ॥ तस्या इति । लोकहितोद्यताः स्वाश्रितसकलजनहिताचारणोद्युक्ताः । ते साक्षात्प्रभुः सन्तश्च । तस्या आशङ्कायाः । समाधानम् । कुर्युः । योग्यं स्वकार्यार्हमेव । वदेयुश्च । असौ त्रिप्रकारोऽयम् । वचसः । अपरस्तृतीयः । गुणः । कथितः ॥ २९ ॥ गुणैरिति । एतैः । वचसः । गुणैः । हरौ । भजतो भक्तस्य । गाढस्नेहः । तत्र भक्ते । हरेश्च । गाढस्नेहः । भवेत् । अथैवंविधवचो गणकथनान्तरम् । मनसः । गुणान् । शृणु ॥ ३० ॥

दर्शन इति । रमापतेर्लक्ष्मीकान्तस्य साक्षाच्छीहरेः । दर्शने । श्रवणे गुणाद्याकर्णने । ध्याने स्वरूपचिन्तने । पूजादौ अर्चनवन्दनादिभक्तौ च । ऐकाग्र्यं तदितरसङ्कल्पवर्जनेनाव्याकुलत्वम् । तस्य मनसः । गुणः । प्रोक्तः । यतो यस्मादेवंविधान्मनोगुणात् । स्वेष्टसिद्धिर्भगवति गाढस्नेहरूपवाञ्छितार्थप्राप्तिः । भवेत् ॥ ३१ ॥ साम्प्रतं भगवतो दर्शनादौ मनस एकाग्रतायाः सदृष्टान्तं लक्षणं तस्य तथात्वे गुणान् अतथात्वे दोषांश्चेत्येतत्सविवेचनं वदति द्वात्रिंशत्याश्लोकैः । दर्शन इति । हे नृप ! । तत्र दर्शनादिषु मध्ये । कृष्णस्य । दर्शने । यत् । तस्य मनसः । एकाग्र्यम् । अस्ति । तत्तु । अल्पज्ञैरल्पमतिभिः । अपि । पुंभिः । लक्षणैर्वक्ष्यमाणैर्लक्ष्मभिः । विज्ञायते । ह स्फुटमेवैतत् ॥ ३२ ॥ एकाग्रमिति । यस्य । पुंसो भक्तस्य । मनः । हरेः । वीक्षणे दर्शने । एकाग्रम् । स्यात् । स पुमान् । दृशा नेत्राभ्याम् । एकं वस्त्वन्तरसङ्कल्पवर्जितत्वात्केवलम् । हरिमेव । वीक्षते । अन्यद्धरीतरत् । किञ्चन किमपि । न वीक्षते नैव पश्यति ॥ ३३ ॥ मुहुरिति मुहुर्भूयो भूयः । दृष्टमपि आनखाग्रशिखं वीक्षितमपि । ईश्वरं साक्षाच्छीहरिम् प्रेम्णा निरवधिकातिशयस्नेहेन । नवं नवमिव प्रथमं दृष्टमिव । वीक्षते निमेषोन्मेषवर्जितं पश्यति । यतः । तस्यैकाग्र-

दर्शने श्रवणे ध्याने पूजादौ च रमापतेः । तस्यैकाग्र्यं गुणः प्रोक्तः स्वेष्टसिद्धिर्यतो भवेत् ॥ ३१ ॥ दर्शने तत्र कृष्णस्य तस्यैकाग्र्यं यदस्ति ह । तत्तु विज्ञायते पुंभिरल्पज्ञैरपि लक्षणैः ॥ ३२ ॥ एकाग्रं हि मनो यस्य पुंसः स्याद्वीक्षणे हरेः । सदृशा हरिमेवैकं वीक्षतेऽन्यन्न किञ्चन ॥ ३३ ॥ मुहुर्दृष्टमपि प्रेम्णा नवं नवमिवेश्वरम् । वीक्षतेऽनुसवं तस्यालौकिकत्वं हृदि स्थिरम् ॥ ३४ ॥ कृष्णं स पश्यन् वस्त्वन्यद्यत्किञ्चिद्दृक्पथागतम् । स्यात्तन्नैवानुसन्धत्ते स्थावरं वापि जङ्गमम् ॥ ३५ ॥ इष्वेकाग्रमना यद्वद् व्रजन्तं स्वाग्रतो नृपम् । नापश्यदात्रेयगुरुरिषुकारस्तथा हि सः ॥ ३६ ॥ यदीदृगेकमनसा दर्शनं तद्धि दर्शनम् । प्रशस्यते सत्पुरुषैर्भक्तिपोषणमुत्तमम् ॥ ३७ ॥

मनसा भक्तस्य । हृदि । अनुसवं प्रतिक्षणम् । अलौकिकत्वमपूर्वापूर्वानन्याधारसुखमयत्वादिरूपं तस्य दिव्यत्वम् । स्थिरमचलमस्ति ॥ ३४ ॥ ननु भगवतः सपरिजनत्वात्तेन साकं सोऽपि तदीक्षणपथमायायादेवेति चेदिषुकारस्येवापाविव तस्य तदेकचित्तत्वान्नायायादित्याह द्वाभ्याम् । कृष्णमिति । कृष्णं साक्षाच्छीहरिम् । पश्यन्वीक्षमाणः । स भक्तः । स्थावरं सिंहासनादि । अथवा । जङ्गमं पार्षदादि । अन्यद्भगवन्मूर्त्तीतरम् । यत्किञ्चित् । वस्तु । दृक्पथागतम् । स्यात् । स्ववीक्षणविषयं भवेदित्यर्थः । तद्वस्तु । नैव । अनुसन्धत्ते । भगवन्मूर्त्तिं विहाय तदनुसन्धानं न करोतीत्यर्थः ॥ ३५ ॥ इष्विति । तद्वद्यथा । आत्रेयगुरुरत्रिऋषिसूनुना दत्तमुनिना गुरुत्वेन स्वीकृतः । इषुकारः । इष्वेकाग्रमनाः शरसूत्रनिबन्धनैकचेताः सन् । स्वाग्रतः स्वपुरः प्रदेशे । व्रजन्तं । नृपम् । नापश्यत् । तं ससैन्यदुन्दुभिध्वानमपि न वीक्षितवानित्यर्थः । तथा । स भगवन्मूर्त्त्येकाग्रमना भक्तः । तदन्यन्नानुसन्धत्ते । हि ॥ ३६ ॥ यदिति । एकमनसैकाग्रचेतसा । यत् । ईदृगुक्तविधम् । दर्शनं भगवद्वीक्षणम् । अस्ति । भक्तिपोषणं भगवति प्रेमपुष्टिकर्त्तृ । उत्तमम् । तत् । दर्शनम् । सत्पुरुषैर्भगवदेकान्तिकसज्जनैः । प्रशस्यते । हि ॥ ३७ ॥

एवमिति । एवमुक्तप्रकारेण । बहिः । पश्यतो भगवन्तं वीक्षमाणस्य भक्तस्य । अन्तरे हृत्पद्मेऽपि । हरेः । ईक्षणम् । स्यात् । अन्तः स्वहृदये । बहिः स्वचक्षुषोः पुरोभागे च । ईक्षणं श्रीहरिमूर्त्तेर्दर्शनम् । यत् । तत् । सम्यग्यथार्थम् । दर्शनम् । मतम् ॥ ३८ ॥ अत इति । अतो हेतोः । प्रयतात्मभिर्निश्चलमानसैः मुमुक्षुभिः । पुंभिर्भक्तैः । साक्षात्कृष्णस्य । दर्शनम् । बहिः । अन्तश्च । नित्यदा सर्वकालमेव । क्रियते ॥ ३९ ॥ पश्यन्तमिति । ईदृशमेवंविधम् । पश्यन्तं भगवन्तं वीक्षमाणं भक्तम् । वीक्ष्य । भगवान्साक्षाच्छ्रीहरिः । तदाश्रिता हर्येकशरणा एकान्तिकाः साधवश्च । हृदये स्वस्वमनसि । अत्यन्तम् । प्रीयन्ते तदुपरि प्रसन्ना भवन्ति । अथानन्तरम् । तं तथाविधं भक्तम् । आत्मीयम् । मन्वते । सर्वथाऽयमास्माकीनो भवतीति विदन्तीत्यर्थः ॥ ४० ॥ इह इति । इह सत्सङ्गे । यो भक्तः । इतस्ततः । चलद्दृष्टिश्चञ्चलनेत्रः सन् । कृष्णम् । ईक्षते । स भक्तस्तु । कृष्णम् । अन्यच्चदितरम् । वस्तु च । साधारण्येन समानत्वेन । पश्यति ॥ ४१ ॥ नेति । तस्य तथाविधस्य भक्तस्य । दृग्दृष्टिः । कृष्णे । स्थिरा निश्चला । न भवेत् । हरेः । ईक्षणसुखं दर्शनसुखाविर्भावश्च । न भवेत् । तस्मिन्नुक्तविधे भक्ते । हरेः । प्रीतिः । न भवेत् ।

एवं बहिः पश्यतः स्यादन्तरेऽपीक्षणं हरेः । अन्तर्बहिश्चेक्षणं यत्तत्सम्यग्दर्शनं मतम् ॥ ३८ ॥ अतो मुमुक्षुभिः पुंभिर्बहिरन्तश्च नित्यदा । दर्शनं क्रियते साक्षात् कृष्णस्य प्रयतात्मभिः ॥ ३९ ॥ पश्यन्तमीदृशं वीक्ष्य भगवांश्च तदाश्रिताः । प्रीयन्ते हृदयेऽत्यन्तमात्मीयं मन्वतेऽथ तम् ॥ ४० ॥ इतस्ततश्चलद्दृष्टिर्यस्तु कृष्णमिहेक्षते । स तु कृष्णं च वस्त्वन्यत्साधारण्येन पश्यति ॥ ४१ ॥ न तस्य दृक् स्थिरा कृष्णे न चेक्षणसुखं हरेः । न प्रीतिश्च हरेस्तस्मिन्न सतां च तदात्मनाम् ॥ ४२ ॥ नालौकिकत्वं कृष्णस्य हृदि तस्य च सम्भवेत् । यत्तस्य कृष्णवीक्षापि भवत्यन्येक्षया समा ॥ ४३ ॥ कृष्णाद्दृग्वृत्तिमाकृष्य प्राकृते नरि वा स्त्रियाम् । पश्चादौ वा योजयतो भक्तत्वं तस्य न प्रभोः ॥ ४४ ॥ ध्यानादावपि कृष्णं स प्राकृतैर्मनुजादिभिः । सहितं तुल्यभावेन वीक्षते न त्वलौकिकम् ॥ ४५ ॥

तदात्मनां श्रीहर्येकमानसानाम् । सतां साधूनाम् । प्रीतिश्च । न भवेत् ॥४२॥ नेति किञ्च । तस्य भक्तस्य । हृदि । कृष्णस्य । अलौकिकत्वम् । न सम्भवेत् । यद्यतो हेतोः । तस्य भक्तस्य । कृष्णवीक्षा कोटिसाधनदुष्प्रापं साक्षाच्छ्रीहरिदर्शनमपि । अन्येक्षया । समा । हगीतरतुच्छपदार्थदर्शनेन तुल्येत्यर्थः । भवति ॥४३॥ कृष्णादिति । कृष्णात्साक्षाच्छ्रीहरिमूर्त्तेः सकाशात् । दृग्वृत्तिं चक्षुर्व्यापारम् । आकृष्य । प्राकृते मायाकार्ये । नरि पुरुषे । अथवा । स्त्रियाम् । अथवा । पश्वादौ । योजयतः दृग्वृत्तिं प्रेरयतः । तस्य भक्तस्य । प्रभोः । भक्तत्वम् । न भवेत् ॥ ४४ ॥ ध्यानेति । स उक्तविधो भक्तः । ध्यानादौ भगवतो मानसबाह्यपूजनादिकर्मण्यपि । प्राकृतैः । मनुजादिभिः । सहितं युक्तम् । कृष्णम् । मनुजैः सह स्फूर्त्तिं प्राप्तं भगवन्तमित्यर्थः । तुल्यभावेन मनुजादिभिः समभावेन । वीक्षते । अलौकिकं दुष्प्रापोऽयं करुणया मद्ध्यानविषयतां प्राप्तो भवतीति दिव्यतासहितम् । न तु नैव । वीक्षते ॥ ४५ ॥

बह्विति । बहुधारेण संततधाराम्भोवदविच्छिन्नभगवदितरसङ्कल्पवता । मनसा । चपलेक्षणं चञ्चलनेत्रं यथा स्यात्तथा । ईक्षकं भगवन्मूर्त्तिवीक्षकम् । अमुं भक्तम् । अहम् । अयं भक्तः । लौकिकेक्षो भगवत इतरलोकैः समानतया दर्शनकर्त्ता । भवति । इत्यमुना प्रकारेण । वेद्मि जानामि । अन्ये । सत्तमा महान्तः साधवश्च । विदन्ति ॥ ४६ ॥ भाव इति । तस्योक्तविधस्य । कृष्णे । भावः प्रीतिः । अनुवासरं प्रतिदिनम् । कार्श्यं मन्दीभावमेव । उपैति प्राप्नोति । ततस्तदनन्तरम् । स भक्तः । तदीयमर्यादां भगवन्निबद्धां धर्मस्थितिमपि । अतिक्रम्योल्लङ्घ्य । याति कुमार्गे व्रजति ॥ ४७ ॥ दिन इति । स भक्तः । दिने दिने । औद्धवाध्वनो मदीयादुद्धवसम्प्रदायात्सकाशात् । परावृत्तिं पराङ्मुखत्वम् । प्राप्नुवन्सन् । अचिरादल्पकालेन । प्राकृतजनैः कुसङ्गिसंज्ञैः पामरजनैः । साम्यं तुल्यताम् । याति । न संशयः ॥ ४८ ॥ तस्मादिति । तस्माद्धेतोः । यथा । कामी कामाकुलः । नरः । तरुणीं यौवनवन्तीनारीम् । एकचेतसैकाग्रेण मनसा । सप्रेमात्यनुरागसहितं यथाँतथा । चिरं बहुकालम् । पश्यति । अन्तरागतं तद्दर्शनमध्यपातिस्त्रीपुरुषपश्वादिकम् । अन्यच्चदितरद्वस्तु तु । नैव पश्यति । तथैवेत्युत्तरेण सम्बन्धः ॥ ४९ ॥ तथेति । तथा तेन प्रकारेणैव ।

बहुधारेण मनसा चपलेक्षणमीक्षकम् । वेद्म्यहं सत्तमाश्चान्ये लौकिकेक्षोऽयमित्यमुम् ॥ ४६ ॥ भावः कार्श्यमुपैत्येव तस्य कृष्णेऽनुवासरम् । ततस्तदीयमर्यादामप्यतिक्रम्य याति सः ॥४७॥ दिने दिने परावृत्तिं प्राप्नुवन्नौद्धवाध्वनः । सोऽचिरात्प्राकृतजनैर्याति साम्यं न संशयः ॥ ४८ ॥ तस्माद्यथा नरः कामी तरुणीमेकचेतसा । सप्रेम पश्यति चिरं नैवान्यत्त्वन्तरागतम् ॥ ४९ ॥ तथैव दर्शनं प्रीत्या कार्यं कृष्णस्य सर्वदा । तदन्तरागतं त्वन्यन्नानुसन्धेयमण्वपि ॥ ५० ॥ एवं हि पश्यतः कृष्णमाद्येक्षायामिवान्वहम् । अलौकिकत्वनूतनत्वे दृशः स्यातां न जीर्णता ॥ ५१ ॥ कृष्णस्य दर्शन इव श्रुत्यर्चाचिन्तनादिषु । ऐकाग्र्यं मनसः कार्यं तद्गुणोऽसौ महान् यतः ॥५२॥ श्रवणं पूजनं ध्यानं विधिनापि कृतं नृणाम् । स्थैर्यं विना तु मनसः शास्त्रोक्तफलदं न हि ॥ ५३ ॥

कृष्णस्य । दर्शनम् । सर्वदा । प्रीत्या । कार्यम् । तदन्तरागतं तद्दर्शनमध्ये समापतितं स्त्रीपुरुषपश्वादिकम् । अन्यत्तदितरद्वस्तु तु । अणु अणुमात्रमपि । नानुसन्धेयम् ॥ ५० ॥ एवमिति । एवममुना प्रकारेण । कृष्णम् । पश्यतो भक्तस्य । आद्येक्षायां प्रथमदिनजाते दर्शने इव । अन्वहम् । दृशः साक्षाद्धरिदर्शनस्य । अलौकिकत्वं च नूतनत्वं नवीनत्वं च ते । स्यातां भवेताम् । जीर्णता बहुकालसमीक्षितवस्तुनीव दर्शनारुचिः । न स्यात् ॥ ५१ ॥ कृष्णस्येति । कृष्णस्य । दर्शने इव । श्रुत्यर्चाचिन्तनादिषु कृष्णकथाश्रवणपूजनध्यानादिषु । मनसः । ऐकाग्र्यम् । कार्यम् । यतो हेतोः । असौ भगवतः श्रुत्यादौ तदेकाग्रतारूपः । महानतिश्रेष्ठः । तद्गुणो मनोगुणः । अस्ति ॥ ५२ ॥ श्रवणमिति । श्रवणं भगवतो गुणादिकथाकर्णनम् । पूजनं चन्दनपुष्पादिभिस्तदर्चनम् । ध्यानं समग्रतयैकैकावयवतया वा तत्स्वरूपचिन्तनम् । विधिना तत्तद्विधानेन । कृतं सदपि । मनसः । स्थैर्यमेकाग्रताम् । विना तु । शास्त्रोक्तफलदम् । नहि न स्यादेव ॥ ५३ ॥

एवं मनस ऐकाग्र्यलक्षणं तथात्वे गुणदोषौ चोक्त्वेन्द्रियवर्गस्य विषयाभ्याकर्षणेन तदेकाग्रताया विघातहेतुत्वे सत्यप्यन्येन्द्रियापेक्षया चक्षुःश्रोत्रयोरेव प्रचुरतया तथात्वमस्तीति तज्जयार्थं यतितव्यमित्याह सप्तदशभिः श्लोकैः । इन्द्रियेष्विति । हे नृपते ! । इह लोके । सर्वेषु । इन्द्रियेषु मध्ये । चक्षुर्नेत्रेन्द्रियम् । श्रोत्रं श्रवणेन्द्रियं च । चेतसो मनसः । इतस्ततः । द्रुतं शीघ्रम् । विशेषेण । आकर्षकमाकर्षणकर्तृ भवति ॥ ५४ ॥ तस्मादिति तस्माद्धेतोः । मुमुक्षुणा भक्तेन । तत्तद्विषयधावनान्नानाविधरूपेक्षणशब्दश्रवणवेगात्सकाशात् । तयोश्चक्षुःश्रोत्रेन्द्रिययोः । नियमनम् । विशेषेणाधिक्येन । तत्रापि । सर्वथा सर्वैरप्युपायै-रेव । कर्त्तव्यम् ॥ ५५ ॥ अन्यथेति । अन्यथा तन्नियमनाभावे । क्लेशहेतवः भगवद्ध्यानादिकर्त्तुः पुरुक्लेशकारणानि । मुहुर्दृष्टानि प्रचुरसम्बन्धाद्वारंवारमीक्षितानि । ग्राम्यरूपाणि मायिकानि स्त्र्यादिरूपाणि । मुहुः । श्रुताः । ग्राम्याः व्यवहारविषया अर्थाद्यर्जनयुक्तिरूपाश्च । शब्दाः । ध्यानकाले भगवद्ध्यानावसरे । स्फुरन्ति स्मृति-विषया भवन्ति ॥ ५६ ॥ दर्शन इति । ततः । चक्षुःश्रवणवृत्तयः । विषयान्तरधावनाद्भगवदितरविषयप्रसरणं परित्यज्य । विष्णोः । दर्शने । श्रवणे च । प्रयत्ने-

इन्द्रियेष्विह सर्वेषु चक्षुः श्रोत्रं च चेतसः । आकर्षकं विशेषेण भवतीतस्ततो द्रुतम् ॥ ५४ ॥ तस्मात्तयो-र्नियमनं तत्तद्विषयधावनात् । मुमुक्षुणा विशेषेण कर्तव्यं सर्वथैव हि ॥५५॥ अन्यथा ग्राम्यरूपाणि मुहुर्दृष्टानि च श्रुताः । ग्राम्याः शब्दा ध्यानकाले स्फुरन्ति क्लेशहेतवः ॥ ५६ ॥ दर्शने श्रवणे विष्णोश्चक्षुःश्रवणवृत्तयः । नियन्तव्याः प्रयत्नेन विषयान्तरधावनात् ॥ ५७ ॥ नियम्यमाना अपि ता यायुश्चेद्विषयान्तरम् । तदेन्द्रियद्वयं सम्यगुपदेष्टव्यमात्मना ॥५८॥ साक्षाद्भगवतो हित्वा प्रेक्षणं श्रवणं च वा । धावतो ग्राम्यविषयान्को लाभस्तव दुःखदा ॥ ५९ ॥ आनन्दमूर्त्तिः श्रीकृष्णस्तत एव सुखोदयः । तद्भिन्ना विषयाः सर्वे दुःखदा मायिकत्वतः ॥ ६० ॥

नात्यायासेन । नियन्तव्या रोधनीयाः ॥ ५७ ॥ नियम्यमाना इति । चेद्यदि । नियम्यमाना नियन्तुमारब्धा अपि । ताश्चक्षुःश्रवणवृत्तयः । विषयान्तरं भगवदितरं यं कमपि स्वस्वार्हविषयम् । यायुः प्राप्नुयुः । तदा । इन्द्रियद्वयं चक्षुःश्रोत्रे द्वे अपीन्द्रिये । आत्मना स्वेन जीवात्मना । सम्यग्बहुदृष्टान्तप्रदर्शनेन यथार्थतः उपदेष्टव्यं शिक्षितव्यम् ॥ ५८ ॥ उपदेशप्रकारमाह द्वादशभिः । साक्षादिति । हे चक्षुः । ! हे श्रोत्रं ! । साक्षाद्भगवतः । प्रेक्षणं प्रकर्षेण दर्शनम् । अथवा । श्रवणं तत्स्वरूपगुण-चरित्रवाचामाकर्णनम् । हित्वा परित्यज्य । दुःखदान् दर्शनश्रवणमात्रेणाप्यपारदुःखप्रदान् । ग्राम्यविषयान् । प्रति । धावतो व्रजतः । तव । को लाभः कस्यार्थस्य प्राप्तिः । न कस्याप्यर्थस्योपलब्धिर्दृश्यते इत्यर्थः ॥ ५९ ॥ भगवद्दर्शनश्रवणादिषु । सुखस्य तदितरवस्तुदर्शनश्रवणादिषु दुःखस्य च प्राप्तिमाह । आनन्देति । श्रीकृष्णः साक्षात्स्वयं श्रीहरिकृष्णो भगवान् । आनन्दमूर्त्तिर्निरवधिकातिशयानन्दैकाधारतनुः । अस्ति । ततस्तथाविधाच्छ्रीकृष्णादेव । सुखोदयो वाञ्छितसकलसुखाविर्भावोऽस्ति । तद्भिन्ना भगवद्व्यतिरिक्ताः । सर्वे । विषयाः । मायिकत्वतः सततपरिणामिमायाकार्यजन्यत्वाद्धेतोः । दुःखदाः प्रचुरदुःखदायिनः । भवन्ति ॥ ६० ॥

ननु वशवर्त्यणिमाद्यैश्वर्यत्वेन सिद्धदशावतो मम कथं ते दुःखदाः भविष्यन्ति परिणामिनोऽपि तानपरिणामिनः करिष्यामीतिचेत्कृष्णस्वरूपस्थितिमत एव सिद्धदशा न तदितरासक्तस्येत्याह । नेति । ते तव । सिद्धदशा । नास्ति । यद्यया सिद्धदशया सर्वत्र सर्वेष्वपि स्थानेषु । आत्मनेप्सितं स्वेन प्राप्तुं वाञ्छितम् । सिध्येत् । तत्र तु । अद्यापि । साधनदशा । दृश्यते । वै । न तु सिद्धदशां प्राप्तोऽसीति भावः ॥६१॥ इत इति । इतस्ततः । भ्रमतः । ते तव । स्वेप्सितस्य । सिद्धिः । नहि नैव स्यात् । तर्हि अन्यत्र साक्षाद्भगवन्मूर्त्तिदर्शनादेरितरत्र । सुखेहया सुखप्राप्तिवाञ्छया । मृषा मिथ्यैव । कुतो हेतोः । दुःखायसे दुःखीभवसि ॥६२॥ यदीति । यदि यर्हि । तत्र भगवदितरत्र यत्र कुत्रापि विषये । क्वचित्कदाचित् । किञ्चित्किमपि । तुच्छम् । सुखम् । अवाप्स्यसि । तदा । तत्कर्मफलं तुच्छविषयार्जनार्थकृतपापक्रियाफलम् । अन्युग्रमतितीव्रम् । नरकम् । प्राप्स्यसि । ध्रुवं निश्चितमेव ॥ ६३ ॥ तस्मादिति । तस्माद्धेतोः । मायिकान्मायाकार्यभूतान् । दुःखान् नानाविधदुःखप्राप्तिहेतून् । तुच्छान् । अन्यविषयान् । हित्वा । सर्वेश्वरेश्वरे । कृष्णे आनन्दवार्द्धौ प्रत्यक्षे श्रीहरौ । सर्वथा । नैश्चल्यम् । कुरु ॥ ६४ ॥ स्थैर्यमिति । कृष्णे । स्थैर्यं नैश्चल्यम् । लब्ध-

न चास्ति ते सिद्धदशा यत्सर्वत्रात्मनेप्सितम् । सिद्ध्येद्वै साधनदशा तव त्वद्यापि दृश्यते ॥ ६१ ॥ इतस्ततस्ते भ्रमतो न सिद्धिः स्वेप्सितस्य हि । दुःखाय स कुतस्तर्हि मृषान्यत्र सुखेहया ॥६२॥ यदि किञ्चित्कचित्तत्र सुखं तुच्छमवाप्स्यसि । तत्कर्मफलमत्युग्रं नरकं प्राप्स्यसि ध्रुवम् ॥ ६३ ॥ तस्माद्धित्वाऽन्यविषयांस्तुच्छान् दुःखांश्च मायिकान् । सर्वेश्वरेश्वरे कृष्णे नैश्चल्यं कुरु सर्वथा ॥ ६४ ॥ स्थैर्यं लब्धवतः कृष्णे तव सिद्धदशा द्रुतम् । भविष्यति ततः सर्वं वाञ्छितं सिद्धिमेष्यति ॥६५॥ यद्यद्रूपं च शब्दो वा ब्रह्माण्डे ते जिघृक्षितम् । तत्तत्प्राप्स्यसि सद्यस्त्वं तदा त्वत्र न संशयः ॥६६॥ ब्रह्मादिरूपतुल्यं स्वरूपं श्रीराधयोरिव । भक्तिं वा यदि कृष्णे त्वं वाञ्छिष्यसि तदाप्स्यसि ॥ ६७ ॥ यदि सिद्धदशाप्राप्तेः प्रागेवारब्धकर्मणः । समाप्त्या देहपातः स्याद्देहान्ते तां तदाप्स्यसि ॥६८॥

वतः प्राप्तवतः । तव । सिद्धदशा । द्रुतं शीघ्रम् । भविष्यति । ततः सिद्धदशाभवनानन्तरम् । सर्वम् । वाञ्छितम् । सिद्धिम् । एष्यति गमिष्यति ॥ ६५ ॥ यदिति । तदा तु सिद्धदशाप्राप्तौ सत्यां तु । ब्रह्माण्डे । ते तव । जिघृक्षितं त्वयोपादातुमिष्टमित्यर्थः । यद्यद्रूपम् । यो यः शब्दश्च । भवेत् । तत्तत् तत्तद्रूपं तं तं शब्दं चेत्यर्थः । त्वम् । सद्यस्तत्क्षणमेव । प्राप्स्यसि । अत्रास्मिन्नर्थे । न संशयः ॥ ६६ ॥ ब्रह्मेति । यदि । त्वम् । स्वम् । रूपम् । ब्रह्मादिरूपतुल्यं ब्रह्मविष्णुशिवादिरूपसमानम् । वाञ्छिष्यसि । अथवा । श्रीराधयो रमाराधिकयोरिव । कृष्णे । भक्तिम् । वाञ्छिष्यसि । तदा । तद्ब्रह्मादिसदृशरूपं श्र्यादिसमभक्तिं चेत्यर्थः । आप्स्यसि ॥ ६७ ॥ यदिति । यदि । सिद्धदशाप्राप्तेः । प्राक् प्रथमत एव । आरब्धकर्मणः स्वप्रारब्धकर्मभोगस्य । समाप्त्या । देहपातः । स्यात् । तदा । देहान्ते देहपातानन्तरम् । तां सिद्धदशाम् । आप्स्यसि ॥ ६८ ॥

वृत्तीति । कृष्णे । वृत्तिस्थैर्यं भवद्वृत्तिनैश्चल्यम् । विना । कस्यचित्कस्यापि भक्तस्य । क्वापि कदाचिदपि । ईप्सितं स्वेन प्राप्तुं वाञ्छितम् । सुखम् । नैव भवेत् । साक्षात्कृष्णे वृत्तिस्थिरत्वेन सिद्धदशा तयेप्सितसुखाप्तिर्भवेदित्यर्थः । तस्माद्धेतोः । तं साक्षात्कृष्णम् । त्यक्त्वा । अन्यत्र तदितरेषु मायिकविषयेषु । न व्रजेर्मदुपरिकृपां कृत्वा न यायाः ॥६९॥ चक्षुरिति । हे नृपते ! । इत्थममुना प्रकारेण । कृष्णे । स्नेहम् । अमीप्सता स्वतोऽभ्याप्तुं वाञ्छता । मुमुक्षुणा भक्तेन । चक्षुः श्रोत्रेन्द्रिये । उपदेक्ष्ये । उपदेष्टव्ये । उक्ता अत्रैव पूर्वमुदिताः । गुणा देहवाङ्मनसां सद्गुणाः । संसाध्याः सम्यक् सम्पाद्याः ॥७०॥ उक्तार्थं निगमयति । कायिकेति । हे राजन् ! । अत्र सत्सङ्गे । कायिकादिगुणशालिनि । भक्ते । अनुवासरं प्रतिदिनम् । हरेः । सतां तदेकान्तिकसाधूनां च । स्नेहवृद्धिः । स्यात् । खलु । हरौ । सद्गुणरतेः कायिकादि-सद्गुणप्रीतिमतः । तस्य भक्तस्यापि । स्नेहवृद्धिः । स्यात् । नूनं निश्चितमेव ॥७१॥ सुधामिति । इत्येवंविधम् । सुधामिवामृतसमानमित्यर्थः । हरेः । वचनम् । निपीय । भक्तः । स सोमवर्मानृपतिः । सदःस्थिताः सभोपविष्टाः । तदाश्रिताः श्रीहर्येकशरणाः । ये त्यागिनो गृहिणश्च भक्ताः । ते चापि । ईशं साक्षात्परमेश्वरम् । तं

वृत्तिस्थैर्यं विना कृष्णे कस्यचित्क्वापि वेप्सितम् । सुखं नैव भवेत्तस्मात्तं त्यक्त्वाऽन्यत्र न व्रजेः ॥ ६९ ॥
चक्षुःश्रोत्रेन्द्रिये इत्थमुपदेक्ष्ये मुमुक्षुणा । उक्ता गुणाश्च संसाध्याः कृष्णे स्नेहममिप्सता ॥ ७० ॥ कायिकादिगुण-
शालिनि भक्ते स्नेहवृद्धिरनुवासरमत्र । स्याद्धरेः खलु सतां च हरौ सा तस्य सद्गुणरतेरपि नूनम् ॥७१॥ सुधामि-
वेत्थं वचनं निपीय हरेः स भक्तश्च सदःस्थिता ये । तदाश्रितास्तेऽपि सहर्षमीशं प्रणम्यं तं तद्धृदये दधुः स्वे ॥७२॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते अशीतितमस्तरङ्गः ॥८०॥

शकाब्दे विक्रमार्कस्य नगाश्ववसुभूमिते । नभसः कृष्णसप्तम्यां वचोऽमृतमिदं हरेः ॥ १ ॥
तत्र सारङ्गनगरे भवने जीववर्मणः । मञ्चासने बर्हिवेद्यामसौ सायं व्यराजत ॥ २ ॥

श्रीहरिकृष्णं भगवन्तम् । सहर्षं सानन्दं यथातथा । प्रणम्य । तत्तथाविधं श्रीहरिवचनम् । स्वे । हृदये स्वकीये स्वकीये मानसे । दधुर्निश्चलतया धारयामासुः ॥ ७२ ॥ स्नेहः स्वस्मिन्स्वभक्तानां स्वस्य तेषु यथा भवेत् । तथोक्ताः सद्गुणा येन तान् ददातु स मे हरिः ॥ १ ॥ इतिश्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरि-कृष्णभगवत्स्नुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायामशीतितमस्तरङ्गः ॥ ८० ॥

हरेः पूजां तु यः प्रेम्णा कुर्याद्बाह्यैश्च वान्तरैः । उपचारैः श्रेष्ठ एव स च तल्लक्षणं तु यत् ॥ १ ॥ श्रवणादिचतुर्णां तु यानि लक्ष्माणि तत्त्वतः । एतत्सर्वं स्पष्टतया तृतीये सम्प्रकीर्त्तितम् ॥ २ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८७७) नभसः श्रावणमासस्य । कृष्णसप्तम्यां कृष्णपक्षीयसप्तमीतिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । सारङ्गनगरे । जीववर्मणः । दुर्गे इति शेषः । भवने तदुत्तरास्यमन्दिरे । बर्हिर्वेद्याम् । मञ्चासने स्वास्तृते सोपस्करे पल्यङ्कविष्टरे । असौ श्रीहरिः । सायं षड्घटिकाशेषदिनात्मके सायङ्काले व्यराजतोपविश्यातिशुशुभे ॥ २ ॥

तं विशिनष्टि । सितेति । सितवासाः परिधृतसकलश्वेतवसनः । गृहित्यागिनिजभक्तजनावृतो नानादेशागतैर्गृहिभिस्त्यागिभिश्च स्वीयभक्तजनैः सभायां संवेष्टितः । प्रसन्नं श्रिया मन्दहासशोभया विशिष्टं मुखाम्भोजं वदनपद्मं यस्य सः । करे स्वकीयदक्षिणपाणिपद्मे पुष्पगुच्छं कुन्दकुसुमगुलुंच्छम् । दधत्तदर्पकभक्तप्रीत्यै दधानः ॥ ३ ॥ स्वयमिति । तदानीमेवंविधश्रीहरिशोभाप्रवृत्त्यवसरे । साधुसत्तमः क्षमोपशमादिगुणैः साधुषु श्रेष्ठः । स्वयम्प्रकाशानन्दो मुनिः । प्राञ्जलिः कृताञ्जलिः सन् । तं श्रीहरिम् । प्रणम्य । एतं वक्ष्यमाणम् । प्रश्नम् । सादरमादरातिशयसहितं यथातथा । पप्रच्छ ॥ ४ ॥ उपचारैरिति । हे हरे ! । एकः । भक्तः । नराकृतिं धृतमनुजसमानाकारम् । साक्षात् । कृष्णम् । त्वाम् । बहुविधैश्चन्दनपुष्पाद्यनेकप्रकारैः । उपचारैर्बाह्यैरूपहारैः । अर्चेत् । पूजयेत् । तथा । अन्यो द्वितियः । भक्तः । मानसिकैर्मनःसङ्कल्पकल्पितैर्बहुविधैरूपचारैः । त्वाम् । अर्चेत् । ॥ ५ ॥ तयोरिति । हे सत्पते ! । तयोस्तथाविधयोर्द्वयोर्भक्तयोर्मध्ये । कतरः कः । विशिष्टः । इत्येवंविधस्य मत्प्रश्नस्योत्तरम् । मे मह्यम् । ब्रूहि । इत्यमुना प्रकारेण । पृष्टः स्वयम्प्रकाशानन्दमुनिनानुयुक्तः । भगवाननन्तैश्वर्यैकपतिः । स श्रीहरिः । साधुवर्यं सकलमुनिवरम् ।

सितवासा गृहित्यागिनिजभक्तजनावृतः । प्रसन्नश्रीमुखाम्भोजः पुष्पगुच्छं करे दधत् ॥ ३ ॥ स्वयम्प्रकाशानन्दस्तदानीं साधुसत्तमः । प्रणम्य प्राञ्जलिः प्रश्नमेतं पप्रच्छ सादरम् ॥ ४ ॥ उपचारैर्बहुविधैः कृष्णं साक्षान्नराकृतिम् । त्वामर्चेद्भक्त एकोऽन्यो भक्तो मानसिकैस्तथा ॥ ५ ॥ तयोर्विशिष्टः कतर इति मे ब्रूहि सत्पते ! । इति पृष्टः स भगवान्साधुवर्यं तमब्रवीत् ॥ ६ ॥ यो भक्तः पूजयन्कृष्णं प्रेम्णा हृष्टतनूरुहः भवेद्गद्गदकण्ठश्च तत्स्वरूपैकचिन्तनः ॥ ७ ॥ स बाह्यैरुपचारैर्वा मानसैः कृष्णमर्चतु । भक्तो विशिष्ट एवासौ ज्ञातव्यः साधुसम्मतः ॥ ८ ॥ तथाविधत्वरहितः साक्षात्कृष्णस्य पूजकः । द्विविधोऽपि स भक्ताख्यो न श्रेष्ठो न च सन्मतः ॥ ९ ॥ यैर्यैः साक्षाद्धरेः पूजा बाह्यैर्वाऽत्र मनोमयैः । कृतोपचारैः सप्रेम ते ते भक्ता हि विश्रुताः ॥ १० ॥

तं स्वयम्प्रकाशानन्दमुनिम् । अब्रवीत् ॥ ६ ॥ य इति । हे मुने ! । यः । भक्तः । कृष्णम् । पूजयन्सन् । प्रेम्णा कृष्णेऽनुरागेण । हृष्टतनूरुहः पुलकितगात्रः । गद्गदकण्ठो गद्गदाक्षरवाक् । तत्स्वरूपस्य श्रीहरिमूर्त्तेरेवैकश्चिन्तनमन्यवस्तुसङ्कल्पाव्यधानेन ध्यानं यस्य स तथोक्तः । भवेत् । स इत्युत्तरेण सम्बन्धः ॥ ७ ॥ स इति । स एवंविधो भक्तः । कृष्णम् । बाह्यैः । उपचारैः । अर्चतु । अथवा । मानसैः । उपचारैः । अर्चतु । तथापि । असावेवंविधः । भक्तः । एव । विशिष्टः । साधुसम्मतो भगवदेकान्तिकसाधुभिः सम्मानितश्च । ज्ञातव्यः ॥ ८ ॥ तथेति । तथाविधत्वरहित उक्तलक्षणवर्जितः । द्विविधोऽपि । भक्ताख्यः । साक्षात्कृष्णस्य । पूजकः । स पुरुषः । श्रेष्ठः । नास्ति । सन्मतः साधुसम्मतश्च । नास्ति ॥ ९ ॥ यैरिति । अत्र सत्सङ्गे । यैर्यैर्भक्तैः । बाह्यैः । उपचारैः । अथवा । मनोमयैर्मनःसङ्कल्पकल्पितैः । उपचारैः । साक्षाद्धरेः । पूजा । सप्रेम प्रेमसहितं यथातथा । कृता । ते ते भक्ताः । विश्रुता लोकशास्त्रयोः प्रसिद्धा जाताः । हि ॥ १० ॥

अथेति । अथैवंविधं श्रीहरिवाक्यश्रवणानन्तरम् । अग्रतः श्रीहरेः पुरतो निषण्णः । सोमवर्मा । प्रणतः सन् । तमेवंब्रुवन्तम् । हरिम् । अपृच्छत् । हे हरे ! । प्रेम्णा । त्वदर्चां साक्षाच्छ्रीहरेस्तव पूजाम् । विदधत्कुर्वन् । पुमान् । भक्तः । कैः । लक्ष्मभिर्लक्षणैः । ज्ञेयः ॥ ११ ॥ तमिति । तमेवंपृच्छन्तं सोमवर्माणम् । हरिः । उवाच । हे धीमन् प्रशस्तबुद्धे । तस्य प्रेम्णा कृष्णपूजकस्य । लक्षणम् । ते तुभ्यम् । ब्रुवे । तस्य तथाविधभक्तस्य । विष्णोः साक्षाच्छ्रीहरेः । पूजने गन्धपुष्पादिभिरर्चने । सेवने पादसंवाहनादिनापरिचरणे । भूयसी प्रचुरा । श्रद्धा आदरातिशयः । स्यात् ॥ १२ ॥ कथेति । कृष्णस्य । कथा वार्त्ता कीर्त्तनादौ । अत्यतिशयिताश्रद्धा आदृता स्वीकृता येन स तथाभूतः । स भक्तः । कृष्णस्य । भूरिमाहात्म्यं प्रचुरमहिमानम् । विदन्सन् । तद्भक्तसख्यभाक् श्रीहरिरेकान्तिकभक्तैः सह मैत्रीयुक्तः स्यात् ॥ १३ ॥ कृष्णेति । स भक्तः । कृष्णार्चादौ । व्यतीतमतियातम् । भूरिकालं द्वि त्रि चतुः प्रहरात्मकं बहुकालमपि । प्रेम्णा । क्षणार्द्धवत्पञ्चपलात्मककालातिक्रमणवत् । अन्तरे स्वमानसे । विद्यात् । ततः कृष्णार्चादेः सकाशात् । अन्यत्र व्यावहारिककार्ये । विपर्ययम् । विद्यात् । व्यवहारकर्मणि व्यतीतं क्षणार्द्धकालं भूरिकालव्यतिक्रमणवज्जानीयादित्यर्थः ॥ १४ ॥

अथापृच्छत्सोमवर्मा तं हरिं प्रणतोऽग्रतः । त्वदर्चां विदधत्प्रेम्णा ज्ञेयः कैर्लक्ष्मभिः पुमान् ॥ ११ ॥
तमुवाच हरिर्धीमन् लक्षणं तस्य ते ब्रुवे । पूजने सेवने विष्णोः श्रद्धा स्यात्तस्य भूयसी ॥ १२ ॥
कथावार्ताकीर्त्तनादावतिश्रद्धादृतः स च । कृष्णस्य भूरिमाहात्म्यं विदंस्तद्भक्तसख्यभाक् ॥ १३ ॥
कृष्णार्चादौ भूरिकालं व्यतीतमपि सोऽन्तरे । विद्यात् क्षणार्द्धवत्प्रेम्णा ततोऽन्यत्र विपर्ययम् ॥ १४ ॥
नवधाऽपि भवेद्भक्तिर्नूत्नत्नेवास्यानुवासरम् । नत्वेकापि क्वचिज्जीर्णा गौणी वाऽपि महात्मनः ॥ १५ ॥
मुक्तानन्दोऽत्र दृष्टान्तो ज्ञेयः साधुः सदग्रणीः । श्रद्धाभक्तिर्भवत्यस्य नूतना नूतनाऽन्वहम् ॥ १६ ॥
आयातोऽहं यदा पूर्वं सौराष्ट्रे लोजपत्तनम् । तत्रास्य यादृशी श्रद्धा भक्तिर्माहात्म्ययुग्घरेः ॥ १७ ॥

नवधेति । महात्मनो महामहिम्नः । अस्य भक्तस्य । नवधा श्रवणादिनवप्रकारापि । भक्तिः । अनुवासरं प्रतिदिनम् । नूत्ना नवीनेव । भवेत् एका श्रवणाद्यन्यतमापि । भक्तिः । क्वचित्कदाचिदपि । जीर्णा शिथिला । अथवा । गौण्यमुख्यापि । न तु नैव भवेत् ॥ १५ ॥ मुक्तानन्द इति । अत्रैवंविधभक्तलक्षणज्ञाने । सदग्रणीः सकलसाधुश्रेष्ठः । मुक्तानन्दः । साधुः । दृष्टान्त उदाहरणभूतः । ज्ञेयः । अस्य मुक्तानन्दमुनेः । श्रद्धा कथाश्रवणादावादरः । भक्तिस्तत्पूर्वकं सप्रेम समाहात्म्यज्ञानं नवधाभजनं च । अन्वहं प्रतिदिनम् । नूतना नूतना । भवति ॥ १६ ॥ अस्यैवंविधत्वे प्रत्यक्षं प्रमाणमाह पडक्षराधिकसार्द्धश्लोकेन । आयात इति । अहम् । पूर्वम् । यदा । सौराष्ट्रदेशे । लोजपत्तनम् । आयातः । अभवम् । तत्र लोजपत्तने । अस्य मुक्तानन्दमुनेः । यादृशी । श्रद्धा । यादृशी । हरेः । माहात्म्ययुक् । भक्तिः । मयाऽवलोकितेत्युत्तरेण सम्बन्धः ॥ १७ ॥

मयेति । मया । अवलोकिता दृष्टाऽऽसीत् । अद्यैतावत्कालपर्यन्तमपि । अनुवासरं प्रतिदिनम् । तादृश्येव । नूत्नेव । दृश्यते मयाऽवलोक्यते । एवं मुक्तानन्दमुनेः समानैः । लक्षणैः । स पूर्वोक्तः । भक्तः । ज्ञेयः ॥ १८ ॥ ईदृगिति । ईदृक् श्रद्धामीदृशीं श्रद्धाम् । तथा । ईदृशम् । कृष्णमाहात्म्यज्ञानम् । अन्तरा विना । कृष्णान्तिकस्थाः साक्षाच्छ्रीकृष्णसमीपवर्त्तिनोऽपि जनाः । यादवा इव श्रीकृष्णसमीपे सर्वदावस्थिता यदव इव । भक्ताः । नो स्युर्नैव भवेयुः ॥ १९ ॥ दृष्टान्तं विवृणोति । नित्यमिति । अर्थिनोऽर्थार्थिनः । ते यादवाः । अन्यं लौकिकम् । भूपं राजानमिव । कृष्णम् । नित्यम् । सेवमानासन्तोऽपि । अत्र लोके । ख्यातिं भगवद्भक्तत्वप्रसिद्धिम् । नापुः । भक्ताभिधां भक्तसंज्ञां चापि । नापुः । तथा चोक्तं श्रीभागवते । "दुर्भगो बत लोकोऽयं यदवो नितरामपि । ये संवसन्तो न विदुर्हरिं मीना इवोडुपम् । इङ्गितज्ञाः पुरुप्रौढा एकारामाश्च सात्त्वताः । सात्त्वतामृषभं सर्वे भूतावासममंसतेति" ॥ २० ॥ उक्तेति । उक्तलक्षणसम्पन्नः प्रागुक्तसकलभगवद्भक्तलक्षणसंयुक्तः । उद्धवस्तु । इह लोके । सर्वतः सर्वेषु लोकेषु चापि । प्रभोः श्रीकृष्णस्य । भक्तोत्तमः भक्तश्रेष्ठ इति । आत्मवत्प्रिय इति चापि । ।

मयाऽवलोकिताऽद्यापि तादृश्येवानुवासरम् । नूत्नेव दृश्यते ह्येवं भक्तो ज्ञेयः स लक्षणैः ॥ १८ ॥ ईदृक्श्रद्धां तथा कृष्णमाहात्म्यज्ञानमन्तरा । कृष्णान्तिकस्था अपि नो भक्ताः स्युर्यादवा इव ॥ १९ ॥ नित्यं कृष्णं सेवमानास्तेऽन्यं भूपमिवार्थिनः । अपि नात्र ख्यातिमापुर्न च भक्ताभिधामपि ॥ २० ॥ उक्तलक्षणसम्पन्न उद्धवस्त्विह सर्वतः । भक्तोत्तम इति ख्यातः प्रभोश्चाप्यात्मवत्प्रियः ॥ २१ ॥ अतस्तादृक्प्रीतिसिद्ध्यै श्रवणं मननं तथा । अभ्यसन्ति निदिध्यासं श्रद्धावन्तो मुमुक्षवः ॥ २२ ॥ इति श्रुत्वा हरेर्वाक्यं साधुः पप्रच्छ सन्मतिः । निर्विकारानन्दनामा तं प्रणम्य कृताञ्जलिः ॥ २३ ॥ श्रवणं मननं स्वामिन्निदिध्यासं त आत्मनः । साक्षात्कारे साधनानीत्याहुर्वेदान्तवेदिनः ॥ २४ ॥ तेषामहं लक्षणानि शुश्रूषामि त्वदाननात् । साक्षात्कृते त्वयि कृष्णे प्रीतिः सिद्ध्यति तैर्यथा ॥ २५ ॥

ख्यातो विश्रुतः । अभूत् ॥ २१ ॥ अत इति । अतो हेतोः । तादृक्प्रीतिसिध्यै उक्तलक्षणभक्तवद्भगवति प्रेमप्राप्त्यै । श्रवणम् । मननम् । तथा । निदिध्यासम् । श्रद्धावन्तः । मुमुक्षवो भक्ताः । अभ्यसन्ति ॥ २२ ॥ इतीति । इत्येवंविधम् । हरेः । वाक्यम् । श्रुत्वा । सन्मतिः । निर्विकारानन्दनामा । साधुः । कृताञ्जलिः सन् । तं श्रीहरिम् । प्रणम्य । पप्रच्छ ॥ २३ ॥ श्रवणमिति । हे स्वामिन् ! । श्रवण मननम् । निदिध्यासम् । इत्येतानि । साधनानि । आत्मनः परमात्मनः । ते श्रीहरेस्तव साक्षात्कारे । वेदान्तवेदिन 'आत्मा वारे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य'इति श्रुतिशिरो वाक्यवेत्तारः । आहुः ॥ २४ ॥ तेषामिति । तेषां श्रवणादीनाम् । लक्षणानि । अहम् । त्वदाननाद्भवन्मुखपद्मात्सकाशात् । शुश्रूषामि श्रोतुमिच्छामि । तैः श्रवणादिभिः । साक्षात्कृते । कृष्णे श्रीकृष्णभगवति । त्वयि । प्रीतिः प्रेम । यथा यथावत् । सिध्यति ॥ २५ ॥

इतीति । इत्यमुना प्रकारेण । साधुना । तेन निर्विकारानन्देन । सम्पृष्टः । धर्मनन्दनः । स श्रीहरिः । तं निर्विकारानन्दसाधुम् । उवाच । हे मुने ! । तेषां श्रवणादीनाम् । लक्ष्माणि । ते तुभ्यम् । ब्रुवेऽहं कथयामि । शृणु । त्वं तान्याकर्णयः ॥२६॥ तत्र श्रवणलक्षणमाह सपादश्लोकेन । कृष्णेति । शुचिस्थले पवित्रस्थाने । कृष्णभक्तमुखात्प्रत्यक्षभगवदेकान्तिकभक्तवदनादेव । एवकार इतरव्यावृत्त्यर्थः । अव्यग्रचेतसाऽव्याकुलेन मनसा । अञ्जसा तत्त्वतः । यत् । कृष्णस्यैव । कथावार्ताकर्णनम् ॥ २७ ॥ श्रवणमिति । तत् । श्रवणम् । समाख्यातम् । इति सपादश्लोकस्यैकान्वयः । मननलक्षणमाह पादत्रयेण । श्रुतस्योक्तप्रकारेणाकर्णितस्य । अर्थस्य भगवन्माहात्म्यादेर्वस्तुनः । रहसि । मनसा । पुनः पुनः । अभ्यसनं मुहुर्मुहुश्चिन्तनं यत् । तत् । मननम् । मतम् ॥२८॥ निदिध्यासलक्षणमाह । अथ च । स्वहृदि । मननेनोक्तविधमननाभ्यासेन । आप्तसंस्कारस्य सम्प्राप्तभावनस्य । तस्यार्थस्य । सर्वकालम् । यत् । स्मरणम् । स्यात् । तत् । निदिध्यासनम् । मतम् ॥२९॥ एवमिति । एवममुना प्रकारेण । अभ्यसतः श्रवणाद्यभ्यासं कुर्वतः । पुंसो भक्तस्य । परमात्मनः । प्रसादादनुग्रहात् । हृदि । त्र्याकृतेः । तस्य परमात्मन एव । नित्यम् । सहजा स्वाभाविकी । या ।

इति तेन स सम्पृष्टः साधुना धर्मनन्दनः । तमुवाच शृणु मुने तेषां लक्ष्माणि ते ब्रुवे ॥ २६ ॥ कृष्णभक्तमुखादेव कृष्णस्यैव शुचिस्थले । कथावार्त्ताकर्णनं यदञ्जसाऽव्यग्रचेतसा ॥ २७ ॥ श्रवणं तत्समाख्यातं मननं तु पुनः पुनः । श्रुतस्यार्थस्य रहसि मनसाऽभ्यसनं मतम् ॥२८॥ मननेन स्वहृद्याप्तसंस्कारस्याथ तस्य यत् । स्मरणं सर्वकालं स्यात्तन्निदिध्यासनं मतम् ॥ २९ ॥ एवमभ्यसतः पुंसः प्रसादात्परमात्मनः । स्फूर्तिः स्यात्सहजा नित्यं तस्यैव त्र्याकृतेर्हृदि ॥ ३० ॥ साक्षात्कारः स कथितो दर्शनं च तदुच्यते । श्रवणादिभिरेतैर्हि कृष्णे प्रीतिर्दृढा भवेत् ॥ ३१ ॥ आत्मनः श्रवणाद्यैश्च तीव्रवैराग्यशालिनः । दर्शनं स्यादात्मनोऽपि ब्रह्मचर्यदृढस्थितेः ॥ ३२ ॥ कृष्णाश्रयं विना तत्तु दुष्करं विदुषामपि । श्रवणादीन्यतो भक्ताः कृष्णस्य चात्र कुर्वते ॥ ३३ ॥

स्फूर्त्तिर्भगवन्मनोहरमूर्त्तिपरिस्फूर्त्तिः । स्यात् ॥ ३० ॥ साक्षादिति । सः तथाविधतत्स्फूर्त्तिरूपः । साक्षात्कारः । कथितः । तत् स्फूर्त्तिरूपम् । दर्शनम् । चापि । उच्यते । एतैः । श्रवणादिभिः । कृष्णे दृढा । प्रीतिः । भवेत् । हि ॥ ३१ ॥ आत्मन इति । किञ्च । तीव्रवैराग्यशालिनोऽतितीक्ष्णविरक्त्याशोभमानस्य ब्रह्मचर्ये यावज्जीवं ब्रह्मचर्यव्रतपालने दृढं स्थितिर्यस्यतथोक्तस्य । पुरुषस्य आत्मनः स्वक्षेत्रज्ञस्य । श्रवणाद्यैः । आत्मनः । दर्शनं साक्षात्कारोऽपि । स्यात् ॥ ३२ ॥ कृष्णेति । तदात्मदर्शनम् । कृष्णाश्रयं साक्षाच्छ्रीकृष्णशरणम् । विनाऽन्तरा तु । विदुषां ज्ञात्वा श्रवणादिविदधतामपि पुंसाम् । दुष्करं दुःसाध्यम् । भवति । अतो हेतोः । अत्र सत्सङ्गे । भक्ताः साक्षात्कृष्णाश्रयिणो भक्तजनाः । कृष्णस्य । साक्षाच्छ्रीहरेः । चकारात्तदङ्गत्वङ्गतया स्वात्मनोऽपि । साक्षात्कारार्थमिति शेषः । श्रवणादीनि साधनानि । कुर्वते ॥ ३३ ॥

साम्प्रतं श्रवणादिसाधनत्रयेऽपि मनननिदिध्यासयोर्मुख्यत्वमाह । मननमिति । अत्र भगवत्साक्षात्कारे । मननम् । निदिध्यासश्च । द्वे साधने मुख्ये भवतः । ते द्वे मुख्ये साधने । विना तु । श्रवणमात्रतः । केवलेन श्रवणेनैव । पुंसो भक्तस्य । इष्टसिद्धिः साक्षात्कारप्राप्तिः । न भवेत् ॥३४॥ प्रत्यक्षस्येति । प्रत्यक्षस्य । कृष्णस्य । दर्शनमपि । तद्द्वयं विना साक्षाद्दृष्टभगवन्मूर्त्तेरेकैकाङ्गमनननिदिध्यासाभ्यामृते । श्रवणवत् मनननिदिध्यासरहितं केवलं श्रवणं यथा । नृणाम् भक्तानाम् । साक्षात्कार-फलं "भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे'इति श्रुत्युक्तां हृदयग्रन्थिभेदादिरूपां तद्व्युष्टिम् । नैव धत्ते नैव सम्पादयति ॥ ३५ ॥ तदिति । अत्र सत्सङ्गे । येषां भक्तानाम् । कृष्णस्य प्रत्यक्षस्य श्रीहरेः । तद्युतं मनननिदिध्याससहितम् । दर्शनम् । वर्त्तते । भक्ताः । पूर्णकामाः साक्षाद्दृष्ट-भगवन्मूर्तेः स्वस्वान्तेऽपि निरन्तरं चिन्तनसमकालं दर्शनेन पूर्णमनोरथाः सन्तः । मोदन्ते नितरां हृष्टा भवन्ति । अन्ये केवलं दर्शनमात्रकर्त्तारो भक्तास्तु । अभक्तवत् । क्लिश्यन्ति ॥ ३६ ॥ इममेवार्थं पुनः स्पष्टमाह सार्द्धेन । साक्षादिति । येषां भक्तानाम् । अन्तरे । साक्षाद्दृष्टस्य प्रत्यक्षतयेक्षितस्य । कृष्णस्य । मननम् । इदं निदि-

मननं च निदिध्यासे द्वे मुख्ये ह्यत्र साधने । नेष्टसिद्धिर्विना ते तु पुंसः श्रवणमात्रतः ॥ ३४ ॥ प्रत्यक्षस्यापि कृष्णस्य दर्शनं तद्वयं विना । साक्षात्कारफलं नैव धत्ते श्रवणवन्नृणाम् ॥ ३५ ॥ तद्युतं दर्शनं येषामत्र कृष्णस्य वर्त्तते । ते पूर्णकामा मोदन्ते क्लिश्यन्त्यऽन्ये त्वभक्तवत् ॥३६॥ साक्षाद्दृष्टस्य कृष्णस्य येषां मननमन्तरे । वर्त्तते स्मृतिमात्रेण तेषां स स्फुरति द्रुतम् ॥ ३७ ॥ इतरेषां तु दृष्टोऽपि ध्याने स्फुरति नैव सः । केचिदेतदविद्वांसो वदन्तीत्थं मदाश्रिताः ॥ ३८ ॥ वयं तु नित्यं ध्यायामो बहुकालं हरिं हृदि । तथापि नैव पश्यामस्तस्यैकाङ्गमपि ध्रुवम् ॥ ३९ ॥ मद्रूपादर्शने तेषां हेतुरुक्तोऽवगम्यताम् । अनुभूतस्य मननं तत्स्फूर्त्तौ बीजमस्ति यत् ॥ ४० ॥

ध्यासस्याप्युपलक्षणम् । वर्त्तते । तेषां भक्तानाम् । स साक्षाद्दृष्टो भगवान् । स्मृतिमात्रेण स्मरणसमकालमेव । द्रुतं शीघ्रम् । स्फुरति ॥३७॥ इतरेषामिति । इतरेषां साक्षाद्भगवन्मूर्त्तिदर्शनं कृत्वा तदेकैकावयवस्य यथादृष्टतया मनननिदिध्यासौ न कुर्वाणानामन्येषां भक्तजनानां तु । दृष्टोऽपि मुहुर्मुहुर्विलोकितोऽपि । स भगवान् । ध्याने ध्यानकाले । नैव स्फुरति । अत्रार्थे ऐतिह्यप्रमाणमाह सार्द्धेन । एतदिमं मदुक्तार्थमित्यर्थः । अविद्वांसोऽजानन्तः । केचित् । मदाश्रिताः । इत्थं वक्ष्यमाणप्रकारेण । वदन्ति ॥ ३८ ॥ वयमिति । वयं तु । नित्यम् । हृदि । बहुकालं पञ्चघटिकापर्यन्तं षट्घटिकापर्यन्तं वेत्यर्थः । हरिम् । ध्यायामः । तथापि । तस्य ध्यातस्य श्रीहरेः । एकाङ्गमपि पादाद्येकावयवमपि । नैव पश्यामः । ध्रुवं निश्चितमेतत् ॥ ३९ ॥ मदिति । हे मुने ! तेषामेवंवदतां भक्तानाम् । मद्रूपादर्शने ध्याने मन्मूर्त्त्यसाक्षात्कारे । उक्तो मनननिदिध्यासाभावरूपः पूर्वं मयाऽभिहितः । हेतुः । अवगम्यताम् । यद्यस्मात्कारणात् । अनुभूतस्य साक्षाद्दृष्टस्य वा श्रुतस्यार्थस्य । मननम् । इदं निदिध्यास-स्योपलक्षणम् । तत्स्फूर्त्तौ अनुभूतार्थस्फुरणे । बीजं कारणम् । अस्ति ॥ ४० ॥

उक्तार्थं कैमुत्यन्यायेन साधयति । मायिक इति । अत्र लोके । मायिको मायाकार्यपञ्चभूतात्मकः । पदार्थोऽपि । अमतो मननादिविषयं न गमितः सन् । क्वचित्कदाचिदपि । हृदि । न स्फुरति । तर्हि । दिव्योऽमायिकः । भावो भगवन्मूर्त्यात्मकं वस्तु । अनभ्यस्तो मनननिदिध्यासाभ्यामसाधितः । सन् । हृदि । कुतः । संस्फुरेन्न संस्फुरेदेवेत्यर्थः ॥ ४१ ॥ तदिति । तत्तस्मात्कारणात् । श्रुतस्य । दृष्टस्य च । प्रभोः प्रत्यक्षस्य श्रीहरेः । साक्षात्कारकृते साक्षात्कारार्थम् । भुवि । सत्सङ्गिना भक्तेन । अन्वहम् । मनने मनननिदिध्यासयोरित्यर्थः । यत्नः प्रयासः । विधेयः कर्त्तव्यः ॥ ४२ ॥ उक्तार्थं निगमयत्यर्द्धेन । श्रद्धेति । हे मुने ! । श्रद्धावद्भिरादरयुक्तैः । सुधीभिः सुमतिभिः सत्सङ्गिभक्तैः । श्रवणमुखमहासाधनैः श्रवणप्रभृतिभिर्महद्भिः साधनैः । स्वीयभावे स्वकीये मानसे । मुरारेः प्रत्यक्षस्य कृष्णस्य । साक्षात्कारे । अवगते प्राप्ते सति । एषामेवंविधानां सत्सङ्गिनाम् । इह मुरारौ । दृढा । प्रीतिः । स्यात् । वै । इत्थमेवंविधम् । अनुपममतुलम् । हरेः । वागमृतम् । पीत्वा । स निर्विकारानन्दः । सदःस्थाः । भक्ताः श्रीहरेराश्रिताः । ते त्यागिगृहिजनाश्च । प्रीताः प्रसन्नमनसः । प्रणामं श्रीहरये नमस्कारम् । कृत्वा । तदुदितमनने श्रीहर्य्युदितार्थमनननिदिध्यासयोरित्यर्थः । आशु तूर्णमेव । प्रयत्नम् । चक्रुः ॥ ४३ ॥ यः स्वभक्तस्तु पूजां स्वां बाह्यैः प्रेम्णाऽथवान्तरैः । कुर्यात्तस्य विशिष्टत्वं लक्षणं तस्य यच्च तत् ॥ १ ॥ स्वस्मिन्प्रेम्णश्च हेतूनां श्रुत्यादीनां यथार्थतः । लक्ष्माणि प्राह यः स्वामी तस्मिन्प्रेमास्तु मेऽचलः ॥ २ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभसवत्स्नुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायामेकाशीतितमस्तरङ्गः ॥ ८१ ॥

मायिकोऽपि पदार्थोऽत्र नामतः स्फुरति क्वचित् । दिव्यो भावस्तर्हि कुतोऽनभ्यस्तो हृदि संस्फुरेत ॥ ४१ ॥
तच्छ्रुतस्य च दृष्टस्य साक्षात्कारकृते प्रभोः । विधेयो मनने यत्नो भुवि सत्सङ्गिनाऽन्वहम् ॥ ४२ ॥ श्रद्धावद्भिः
सुधीभिः श्रवणमुखमहासाधनैः स्वीयभावे साक्षात्कारे मुरारेरवगत इह वै श्याद् दृढा प्रीतिरेषाम् । इत्थं पीत्वा
हरेर्वागमृतमनुपमं ते स भक्ताः सदःस्थाः प्रीताः कृत्वा प्रणामं तदुदितमनने चक्रुराशु प्रयत्नम् ॥ ४३ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते एकाशीतितमस्तरङ्गः ॥ ८१ ॥

शकाब्दे विक्रमार्कस्य नगाश्ववसुभूमिते । कृष्णाष्टम्यां नभोमासे वचोऽमृतमिदं हरेः ॥ १ ॥

आत्मानात्मविवेकेन याऽऽत्मनिष्ठा दृढा तथा । निर्वासनत्वे भक्तानां साधनानि च यानि तु ॥ १ ॥ साधनेभ्यस्तु सर्वेभ्यः श्रेष्ठं यत्साधनं दृढम् । सवासनस्य भक्तस्य देहान्ते या गतिर्भवेत् ॥ २ ॥ सर्वमेतच्च सुस्पष्टं लक्षणैस्तु यथार्थतः । चतुर्थे स्वीयसाधुभ्यो हरिणा समुदीरितम् ॥३॥ शकेति । शकेति पूर्वार्द्धं व्याख्यतत्म् । (१८७७) नभोमासे श्रावणमासे कृष्णाष्टम्यां कृष्णपक्षस्याष्टमीतिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥

सारङ्गेति । तत्र तिथौ । सारङ्गपत्तने । जीववर्मनृपस्य । दुर्गे इति शेषः । गृहवेद्यां तदीयोत्तरास्यभवनबाह्यवेदिकायाम् । उच्चे उच्चपादे । पीठे स्वास्तृतसपरिच्छदपर्यङ्कासने । धवलांशुकः परिधृतसकलश्वेतवसनः । स श्रीहरिः । न्यषीददुपविवेश ॥ २ ॥ त्यागिभिरिति । स्वैः स्वभक्तैः । नानादेशागतैः । त्यागिभिः । गृहिभिश्च । वृतं सभायां परिवेष्टितम् । तं श्रीहरिम् । स्वयम्प्रकाशानन्दः साधुः । आनतः कृतप्रणामः सन् । अपृच्छत् ॥ ३ ॥ गृह इति । हे स्वामिन् ! । गृहे । गृहीव तत्रस्थो जन इव । अस्मिन् । देहे । आत्मा जीवः । पृथग्देहात्पृथग्भूत एव । अस्ति । हि एतदात्मोपनिषदि प्रसिद्धमस्ति । तथापि । तयोर्देहात्मनोः । ऐक्यमेकभावः । सर्वदैव । अनुभूयते प्रतीयते ॥ ४ ॥ अत इति । अतो हेतोः । यथा । तयोर्देहात्मनोः । ऐक्यम् । कर्हिचित्कदाचिदपि । नानुभूयेत । तथा । कृपया । माम् । शाधि उपदिश । सर्वे सभोपविष्टा इमे सकलास्त्वद्भक्ता अपि । एतन्मत्पृष्टार्थोत्तरम् । बुभुत्सवो बोद्धुमिच्छवः । सन्ति ॥ ५ ॥ तमिति । तमेवंपृच्छन्तं स्वयम्प्रकाशानन्दमुनिम् । हरिः । प्रीतः प्रसन्नः सन् । उवाच । हे मुने ! । एतत्त्वत्प्रश्नोत्तरम् । ते तुभ्यम् । कथयामि । शृणु । एतन्मया क्रियमाणं

सारङ्गपत्तने तत्र जीववर्मनृपस्य सः । गृहवेद्यां पीठउच्चे न्यषीदद्धवलांशुकः ॥ २ ॥ त्यागिभिर्गृहिभिश्च स्वैर्नानादेशागतैर्वृतम् । स्वयम्प्रकाशानन्दस्तमपृच्छत्साधुरानतः ॥ ३ ॥ गृहे गृहीव देहेऽस्मिन्नात्माऽस्ति पृथगेव हि । तथाप्यैक्यं तयोः स्वामिन् सर्वदैवानुभूयते ॥४॥ अतो यथा तयोरैक्यं नानुभूयेत कर्हिचित् तथा मां कृपया शाधि सर्वेऽप्येतद्बुभुत्सवः ॥ ५ ॥ तमुवाच हरिः प्रीतः शृण्वेतत्कथयामि ते । ज्ञेयमेतद्धि सर्वेषां सर्वथैव मुमुक्षताम् ॥६॥ श्रुत्वा वाऽधीत्य सच्छास्त्रं सेवित्वा च गुरुं सतः । श्लोकेनैकेन वाऽनेकैर्ज्ञे-यमस्त्येतदञ्जसा ॥७॥ ययाऽऽत्मानात्मनो रैक्यभ्रमः स्यान्न हृदि क्वचित् । सैव संवित्सुखं धत्ते दुःखामिश्रं न चेतरा ॥८॥ स्वरूपलक्षणं तस्मात्तयोर्भेदावबोधकम् । बोद्धव्यमादितः सद्भिर्वैलक्षण्यं ततः स्फुरेत् ॥९॥

तत्प्रश्नोत्तरम् । सर्वेषाम् । मुमुक्षतां भक्तानाम् । सर्वथैव । ज्ञेयम् । अस्ति । हि ॥ ६ ॥ श्रुत्वेति । सच्छास्त्रं श्रीमद्भागवतादिकम् । श्रुत्वा । अथवा । अधीत्य पठित्वा । गुरुं स्वाचार्यम् । सतो भगवदेकान्तिकसाधूंश्च । सेवित्वा कायवाङ्मनोभिः परिचर्य । एकेन । श्लोकेन । अथवा । अनेकैर्बहुभिः श्लोकैः । एतत् । अञ्जसा तत्त्वतः । ज्ञेयम् । अस्ति ॥ ७ ॥ ययेति । यया संविदा । आत्मानात्मनोर्जीवस्य देहस्य चेत्यर्थः । ऐक्यभ्रम एकत्वभ्रान्तिः । हृदि स्वहृदये । क्वचित्कदाचिदपि । न स्यात् । सा तथाभूतासंविद् । ज्ञानमेव । दुःखामिश्रं दुःखवर्जितम् । सुखम् । धत्ते करोति । इतरा अतथाभूतासंवित् । न च दुःखामिश्रं सुखं नैव धत्ते । 'संविद् स्त्रियां प्रति-ज्ञायामाचारज्ञानसङ्गर' इति मेदिनि ॥ ८ ॥ स्वरूपेति । तस्माद्धेतोः । तयोरात्मानात्मनोः । भेदावबोधकं परस्परभेदप्रकाशकम् । स्वरूपलक्षणम् । सद्भिर्भगवद्भक्तैः । आदितः प्रथमतः । बोधव्यं ज्ञेयम् । ततस्तयोः स्वरूपलक्षणज्ञानानन्तरम् । वैलक्षण्यं तयोर्धर्मभेदः । स्फुरेत्सम्यग्भासेत ॥ ९ ॥

तत्रादावनात्मपर्यायस्य देहस्य स्वरूपलक्षणमाह द्वाभ्याम् । जड इति । जडोऽचेतनः । दुःखमयो दुःखात्मकः । शश्वन्नश्वरः सततपरिणामी । विकारवान् जायतेऽस्ति वर्द्धते विपरिणमतेऽपक्षीयते नश्यतीत्येवंविधषड्विकारयुक्तः । मलमूत्रादिनिभृतो विट्प्रस्राव स्नायु वसाऽसृग्मज्जा मेदोऽस्थि मांसादिपूर्णकोष्ठलरूपः । व्याप्यः क्षेत्रत्वात् क्षेत्रज्ञस्यानखादाशिखं व्यापनार्हः । रोगाद्युपद्रुतोऽनेकैर्ज्वरादिरोगैरादिशब्दग्राह्य क्षुत् पिपासाद्युर्मिभिश्च सम्पीडितश्च ॥ १० ॥ आदीति । आद्यन्तवान्सादिः सान्तश्च । सावयवः करचरणाद्यवयववान् । नैकानि मनुष्यपशुपक्ष्यादिभेदेनानेकानि रूपाणि यस्य सः । यद्वा । प्रकृतित्रयात्मनानेकरूपः । मायिको मायायाः कार्यरूपः । दृश्यो यावदायुःस्थितिचक्षुर्ग्राह्यत्वाद्दृश्यरूपः । भौतिकः पिण्डः । पञ्चभूतविकारगोलात्मकश्च । देह एवंभूतलक्षणं जीवशरीरम् । अनात्माऽनात्मसंज्ञोऽस्ति । इतीत्थम् । दृश्यतां बुध्यताम् ॥ ११ ॥ आत्मपर्यायस्य जीवस्य स्वरूपलक्षणमाह द्वाभ्याम् । चिदिति । चिद्रूप आनखादाशिखं शरीरव्यापनेन तच्चेतयितृत्वाच्चिद्रूपः । 'आशिखादानखाग्रं प्रविष्ट' इति श्रुतेः । ज्ञानवान् ज्ञातृरूपः । 'ज्ञोऽत एवे'ति न्यायात् । नित्यः सनातनः । 'नित्यो नित्याना'मिति श्रुतेः । निर्विकारो जन्मादिषड्विकार-

जडो दुःखमयः शश्वन्नश्वरश्च विकारवान् । मलमूत्रादिनिभृतो व्याप्यो रोगाद्युपद्रुतः ॥ १० ॥
आद्यन्तवान्सावयवो नैकरूपश्च मायिकः । दृश्यश्च भौतिकः पिण्डो देहोऽनात्मेति दृश्यताम् ॥ ११ ॥
चिद्रूपो ज्ञानवान्नित्यो निर्विकारः सुखात्मकः । स्थिरः सदैकरूपश्च स्वप्रकाशोऽतिनिर्मलः ॥ १२ ॥
असङ्गी व्यापको द्रष्टा दिव्योऽच्छेद्यादिलक्षणः । अनङ्गोऽमायिकोऽमृत्युरात्माऽस्तीत्यवधार्यताम् ॥ १३ ॥
इत्यात्मानात्मनोः सम्यक् सच्छास्त्रप्रसङ्गतः । स्वरूपलक्षणं बुद्ध्वा कार्यं तत्परिशीलनम् ॥ १४ ॥

वर्जितत्वाच्छुद्धः । सुखात्मकः सुखस्वरूपः । स्थिरोऽपरिणामिस्वरूपः । यद्वा । कालाकलनीयस्वरूपः । सदैकरूप उत्पत्त्यादिकालत्रयेऽपि सर्वदैकरूपः । स्वप्रकाश इन्द्रियादिकृतस्वरूपप्रकाशवर्जितत्वात्स्वतःप्रकाशरूपः । अतिनिर्मलो मलमूत्रादिविकारमयदेहावस्थितोऽपि तन्मलानां स्वस्वरूपेऽविद्यमानत्वादत्यन्तनिर्मलश्च ॥ १२ ॥ असङ्गीति । असङ्ग्यनेकदेहविधृतौ सत्यामपि तत्सङ्गवर्जितः । व्यापको व्याप्ये देहे व्यापनशीलः । द्रष्टा देहेन्द्रियादिसाक्षी । दिव्य आश्चर्यमयस्वरूपः । अच्छेद्यादीनि लक्षणानि यस्य सः । 'नैनं छिन्दन्ति शस्त्राणी'त्यादिभगवद्गीतोक्तेः । अनङ्गः प्रकृतित्रयत्वबोधकाङ्गवर्जितः । अमायिकोऽप्रकृतिकार्यरूपः । अमृत्युर्मरणधर्मवर्जितः । 'देहवत्त्वं न नंक्ष्यसी'ति श्रीभागवतोक्तेः । इतीत्थंभूतलक्षणः । आत्मा जीवः । अस्ति । इति । अवधार्यतां त्वया बुध्यताम् ॥ १३ ॥ इतीति । इत्यमुना प्रकारेण । आत्मानात्मनो र्जीवदेहयोः । स्वरूपलक्षणम् । सत्सच्छास्त्रप्रसङ्गतो भगवदेकान्तिकसाधूनां नित्यसमागमेन तद्द्वारा बुद्धसच्छास्त्रस्य नित्यमभ्यासेन चेत्यर्थः । सम्यग्यथार्थतः । बुध्वा । तत्परिशीलनं तन्मननिदिध्यासावित्यर्थः । कार्यम् ॥ १४ ॥

तेनेति । तेन तत्परिशीलनेन । देहदेहिनोः शरीरशरीरिणोः । भेदविज्ञानम् । पक्वं दृढम् । भवेत् । ततस्तयोः परिपक्वभेदविज्ञानानन्तरम् । वपुषो देहस्य । धर्मा जडत्वादयो गुणाः । आत्मनि चिद्रूपत्वादिधर्मवति स्वजीवात्मनि । कचित्कदाचिदपि । न दृश्येरन्मुमुक्षुभिर्न बुध्येरन् । मुमुक्षवस्तान्स्वात्मनि न पश्येयुरित्यर्थः ॥ १५ ॥ उक्तविधज्ञानस्थितिमतो मुमुक्षोः कचिद्देशकालादिविपर्ययजाते देहदुःखाद्यनुभवकाले जायमानं विचारमाह । सदिति । अहं क्षेत्रज्ञः । सच्चिदानन्दरूपोऽविनाशिज्ञानवत्सुखरूपस्वरूपः । अस्मि । शरीरं मदधिष्ठितोऽयं देहः । तद्विपर्ययः विनाशि अज्ञानयुक्तमसुखं चेत्यर्थः । अस्ति । तेजस्तिमिरयोरिव प्रकाशध्वान्तयोर्यथा । द्वयोरात्मशरीरयोः । ऐक्यम् । कथं भवेत् न भवेदेवेत्यर्थः ॥१६॥ अनेनेति । अनेनैवंविधेन । दृढीभूतेन पक्वतां प्राप्तेन । सर्वदा सर्वकालमनुवर्त्तमानेन । अनुभवेन ज्ञानेनैव । आत्मनि स्वजीवे । देहधर्मानुभवः । कापि कदाचिदपि । नोदेति नैवोत्पद्यते । ध्रुवं निश्चितमेव ॥१७॥ आत्मेति । अयम् । आत्मानात्मविवेकः । यावत् । दृढीकृतो मुमुक्षुभिः स्थिरीकृतः । न स्यात् । तावत् । अत्र सत्सङ्गे । मुमुक्षवो भक्ताः । देहधर्मैः । प्रपीड्यन्ते पीडिता भवन्ति ॥ १८ ॥ एतदिति । सतां भगवद्भक्तानां साधूनामपि । एतदभ्या-

तेन पक्वं भवेद् भेदविज्ञानं देहदेहिनोः । ततो न वपुषो धर्मा दृश्येरन्नात्मनि क्वचित् ॥ १५ ॥ सच्चिदानन्दरूपोऽहं शरीरं तद्विपर्ययः । कथं भवेद् द्वयोरैक्यं तेजस्तिमिरयोरिव ॥ १६ ॥ अनेनानुभवेनैव दृढीभूतेन सर्वदा । न देहधर्मानुभवः काप्युदेत्यात्मनि ध्रुवम् ॥ १७ ॥ आत्मानात्मविवेकोऽयं यावन्न स्याद्दृढीकृतः । देहधर्मैः प्रपीड्यन्ते तावदत्र मुमुक्षवः ॥ १८ ॥ एतदभ्यासशैथिल्यात्सतामपि क्वचित्क्वचित् । देहधर्मानुभूतिः स्यात्तया च पशुधीरपि ॥ १९ ॥ देहेऽहन्ता च ममता दैहिके यर्हि जायते । तदा स्त्रीरसवित्तादौ सक्तिर्भवति दुःखदा ॥ २० ॥ यथाऽमृतसमे भोज्ये गरोऽल्पोऽप्यतिदुःखदः । एवमात्मसुखे क्वापि देहाहन्धीर्हि दुःखदा ॥२१॥ सुधिया येन यत्नेन विवेकोऽसौ दृढीकृतः । आत्मनिष्ठः स वै मुक्तो बद्धोऽन्यो निरयं व्रजेत् ॥२२॥

सशैथिल्यादेवंविधज्ञानाभ्यासशिथिलत्वतो हेतोः । कचित्कचित्कदाचित् कदाचित् । देहधर्मानुभूतिरात्मनि देहधर्मानुभूत्या । पशुधीरहं ममेति बुद्धिश्चापि । स्यात् । पशुबुद्धिरुक्ता श्रीभागवते । 'न वै तेऽजित भक्तानां ममाहमिति माधव । त्वं तवेति च नानाधीः पशूनामिव वै कृते'ति ॥ १९ ॥ देह इति । यर्हि । देहे । अहंता । दैहिके । ममता च । जायते । तदा । स्त्रीरसवित्तादौ । दुःखदा । सक्तिरासक्तिः । भवति जायते ॥ २० ॥ एतद्दृष्टान्तेन द्रढयति । यथेति । यथा । अमृतसमे पीयूषतुल्ये । भोज्ये परमान्नादौ भोज्यपदार्थे । अल्पोऽल्पप्रमाणोऽपि । गरो विषम् । अतिदुःखदः । स्यात् । एवं तथा । आत्मसुखे । क्वापि कदाचिदपि । देहाहंधीर्देहेऽहन्ताबुद्धिः । इयं ममताया अप्युपलक्षणम् । दुःखदा हि ॥२१॥ सुधियेति । सुधिया सुमतिना । येन मुमुक्षुणा भक्तेन । यत्नेन प्रयत्नपूर्वकात्यभ्यासेन । असौ मदुक्तः । विवेको देहात्मनोः स्वरूपविवेचनम् । दृढीकृतः । स मुमुक्षुर्भक्तः । आत्मनिष्ठः । मुक्तश्च । ज्ञेयः । वै । अन्य उक्तविवेकवर्जितो मुमुक्षुः । बद्धो वपुरात्ममतिः सन् ।

निरयं मोक्षधर्मोक्तेन्द्रादिलोकरूपनरकम् । व्रजेत् प्राप्नुयात् ॥ २२ ॥ तस्मादिति । तस्माद्धेतोः । अभ्यासयोगेन मदुक्तविवेकदृढीकरणाभ्यासरूपसाधनेन । आत्मवेदिनामात्मनिष्ठानां भगवदेकान्तिकसाधूनाम् । सेवया छन्दानुवृत्तिपूर्वकपरिचरणेन च । विजातीयनिरासत आत्मनो विजातीयस्य देहादिभावस्य परित्यागेन । आत्मनिष्ठैव । संसाध्या ॥ २३ ॥ उक्तार्थं निगमयति । य इति । यो भक्तः । सदुपासनेन भगवदेकान्तिकसाधुसेवया । देहदैहिकगणे देहे दैहिकपदार्थवृन्देषु च । निर्वासन आत्मनिष्ठया तद्भावनावर्जितः सन् । भारभरेण प्रीतातिशयेन । कृष्णं प्रत्यक्षं श्रीहरिम् । भजति नवधा सेवते । स इत्थंभूत एव । भक्तोऽन्वर्थभक्तसंज्ञः । गदितः कथितः । स च स एव भक्तः । देहपाते स्वदेहावसाने सति । भगवतः । परमं सर्वधामोत्तमम् अक्षरमक्षरब्रह्माख्यम् । धाम सर्वदा निवासपदम् । याति प्राप्नोति ॥ २४ ॥ मुक्तानन्द इति । अथैवंविधश्रीहरिवाक्यश्रवणानन्तरम् । मुक्तानन्दो मुनिः । प्राञ्जलिः कृतकरसम्पुटः सन् । नत्वा । प्रभुम् । तं श्रीहरिम् । पप्रच्छ । हे स्वामिन् । निर्वासनत्वस्य मायिकविषयभोगेच्छाहेतुकाहंममत्वभावनावर्जितत्वस्य । आत्यन्तिकसाधनम् । किं किमात्मकम् । अस्ति ॥२५॥ कृतेनेति । कृतेन साधितेन । एकेनापि । येनात्य-

तस्मादभ्यासयोगेन सेवया चात्मवेदिनाम् । आत्मनिष्ठैव संसाध्या विजातीयनिरासतः ॥ २३ ॥ यो देहदैहिकगणे सदुपासनेन निर्वासनो भजति भावभरेण कृष्णम् । भक्तः स एव गदितः स च देहपाते यात्यक्षरं भगवतः परमं हि धाम ॥ २४ ॥ मुक्तानन्दोऽथ तं नत्वा पप्रच्छ प्राञ्जलिः प्रभुम् । स्वामिन्निर्वासनत्वस्य किमात्यन्तिकसाधनम् ॥ २५ ॥ कृतेन येनैकनापि साधनान्यखिलान्यपि । कृतानि स्युः साधनं मे तादृशं वक्तुमर्हसि ॥ २६ ॥ तमुवाच हरिः साधो शृणु ते वच्मि साधनम् । यन्निर्वासनतासिद्धेरसाधारणमीरितम् ॥२७॥ श्रद्धा च भक्तिः कृष्णे वाचि तस्य च तत्सताम् । ग्राह्यबुद्धिश्च शास्त्रोक्तनमाहात्म्यावबोधनम् ॥२८॥

न्तिकसाधनेन । अखिलान्यपि । साधनानि । कृतानि साधितानि । स्युः । तादृशं तथाविधम् । साधनम् । मे मह्यम् वक्तुम् । अर्हसि । अस्यायं भावः । हरे आत्मनिष्ठैवैका त्वदुक्ता निर्वासनत्वसाधनमस्त्यन्यानि वा सन्ति यदि ब्रूषे सन्त्यन्यान्यपीति चेत्तेष्वेकमसाधारणमस्ति चेत्तद्ब्रूहीति ॥ २६ ॥ तमिति । तमेवंपृच्छन्तं मुक्तानन्दमुनिम् । हरिः । उवाच । हे साधो ! । निर्वासनतासिद्धेः । यत् । असाधारणमात्यन्तिकम् । साधनम् । ईरितं प्रोक्तमस्ति । तत्साधनम् । ते तुभ्यम् । वच्मि कथयामि । शृणु ॥ २७ ॥ यद्यपि सन्ति श्रद्धादीनि तत्साधनानि परन्तु माहात्म्यज्ञानसदृशमन्यन्नास्तीति वक्तुं श्रद्धादीनि गणयति । श्रद्धेति । श्रीकृष्णे साक्षाच्छ्रीहरौ । श्रद्धा अयमेव सर्वपरः साक्षात्परमेश्वर इति सुदृढो विश्वासः । भक्तिः सप्रेमतदीयभजनम् । तस्य साक्षाच्छ्रीकृष्णस्य । तत्सतां तदेकान्तिकसाधूनां च । वाचि स्वहितार्थमुक्तेषु वचनेष्वित्यर्थः । ग्राह्यबुद्धिर्हितार्थं मयेमान्येव हृद्यवधार्य तथैवावश्यं वृत्यमिति मतिः । शास्त्रोक्तनमाहात्म्यावबोधनं च ॥ २८ ॥

निरिति । महर्षयो नारदाद्या महामुनयः । एतानी श्रद्धादीनि । चत्वारि । निर्वासनत्वसंसिद्धेः । साधनानि । जगदुः बभणुः । तत्र तेषु चतुर्षु साधनेषु मध्ये । अन्तिमं शास्त्रोक्ततन्माहात्म्यावबोधनाख्यं साधनम् । आत्यन्तिकमुक्तसर्वसाधनश्रेष्ठं भवति इति द्वयोरेकसम्बन्धः ॥२९॥ सद्भ्य इति । येन भक्तेन । सद्भ्यो भगवदेकान्तिकसाधुकृतोपदेशतः । श्रीकृष्णमाहात्म्यम् । चित्ते स्वमानसे । अवधारितं स्थिरीकृतम् । स पुमान् भक्तः । अल्पान्यसाधनोऽल्पाल्पसंसाधितश्रद्धाद्यन्यसाधनः सन्नपि । आशु । निर्वासनः । भवेत् ॥ ३० ॥ ननु 'श्रद्धा मातेव सर्वेषा'मित्याद्युक्तेर्माहात्म्यज्ञानस्यापि श्रद्धामूलत्वात्कथं माहात्म्यज्ञानश्रेष्ठत्वमुच्यते इति चेल्लोकेऽपि धनादिपदार्थमहिमावबोधनान्तरं तत्र श्रद्धादर्शनादल्पानां श्रद्धादीनामपि वृद्धिहेतुर्माहात्म्यज्ञानमेवास्तीत्याह । माहात्म्येति । हे मुने ! । चेद्यदि । एकम् । माहात्म्यज्ञानम् । दृढम् । स्यात् । तर्हि । इतराणि । त्रीणि श्रद्धादीनि । साधनानि तु । दुर्बलान्यपि । तद्बलान्माहात्म्यज्ञानबलादेव । बलवन्ति । स्युः ॥ ३१ ॥ ननु श्रद्धाद्युपोद्बलकमाहात्म्यज्ञानेन विनापि केषांचित्साक्षाद्धरौ भक्तिर्विवर्द्धमाना कथं दृश्यते इति चेत्साऽपि तेन विना परिणामविनाशिनीति सदृष्टान्तमाह त्रिभिः । माहात्म्येति । वर्द्धमानाऽऽरम्भदशायां

निर्वासनत्वसंसिद्धेः साधनानि महर्षयः । चत्वार्येतानि जगदुस्तत्रात्यन्तिकमन्तिमम् ॥ २९ ॥ सद्भ्यः श्रीकृष्णमाहात्म्यं येन चित्तेऽवधारितम् । सोऽल्पान्यसाधनोऽप्याशु भवेन्निर्वासनः पुमान् ॥ ३० ॥ माहात्म्यज्ञानमेकं चेद्दृढं तर्हीतराणि तु त्रीणि स्युर्बलवन्त्येव दुर्बलान्यपि तद्बलात् ॥ ३१ ॥ माहात्म्यज्ञानरहिता भक्तिः साक्षाद्धरावपि । वर्द्धमानपि सा नाशं परिणामे ह्यवाप्स्यति ॥ ३२ ॥ बाला कन्या वर्द्धमाना क्षयोपेता भवेद्यदि । प्रागेव यौवनप्राप्तेर्यथा पञ्चत्वमृच्छति ॥ ३३ ॥ तथा भक्तिर्वर्द्धमाना माहात्म्याज्ञानयुग्यदि । कृष्णप्रसादात्प्रागेव रक्ष्यमाणापि नश्यति ॥३४॥ यत्नेनाप्यर्जिताः शान्तिदान्तिमुख्या गुणा अपि । माहात्म्यज्ञानहीनस्य पुंसोऽन्ते यान्ति हि क्षयम् ॥३५॥

वर्द्धिष्णुरपि । सा श्रद्धादिसाधनेषूदिता । साक्षात्प्रत्यक्षेऽपि । हरौ । भक्तिः । माहात्म्यज्ञानरहिता सती । परिणामे आयत्याम् । नाशं । अवाप्स्यति ॥ ३२ ॥ बालेति । यथा । बाला । कन्या । वर्द्धमानासत्यपि । यदि । क्षयोपेता क्षयरोगान्विता । भवेत् । तर्हि । यौवनप्राप्तः । प्रागेव । पञ्चत्वं मरणम् । ऋच्छति प्राप्नोति । तथेत्युत्तरेण सम्बन्धः ॥ ३३ ॥ तथेति । तथा । वर्द्धमाना । भक्तिः । यदि । माहात्म्याज्ञानयुक् माहात्म्यज्ञानवर्जिता भवेत् । तर्हि । रक्ष्यमाणा भक्तेन रक्षितुं कृतप्रयत्ना सत्यपि । कृष्णप्रसादात् । प्रागेव साक्षात्कृष्णप्रसन्नताबोधकस्य तत्र गाढप्रेमोदयतः प्रथमत एव । नश्यती ॥ ३४ ॥ न केवलं तदभावे भक्तिरेव नश्यति किन्तु 'यस्यास्ति भक्तिर्भगवत्यकिञ्चना सर्वैर्गुणैस्तत्र समासते सुरा' इत्युक्तेरतत्सहचराः शान्त्यादयो गुणा अपि तोयनाशे मीनादय इव नश्यन्तीत्याह यत्नेनेति । यत्नेन महता प्रयासेनापि । अर्जिताः सम्पादिताः । शान्तिदान्तिमुख्याः शमदमप्रभृतयः । माहात्म्यज्ञानहीनस्य । पुंसो भक्तस्य । गुणा अपि । अन्ते परिणतकाले । क्षयं नाशम् । यान्ति । हि ॥ ३५ ॥

माहात्म्येति । कल्याणकारिणस्तद्वतः कल्याणसम्पादकाः । सर्वे । ते शान्त्यादयः । गुणाः । यत्नमन्तरा प्रयासं विनैव । माहात्म्यज्ञानयुक्तस्य भक्तस्य । हृदि । आगत्य । वर्त्तन्ते तिष्ठन्ति ॥३६॥ तस्मादिति । तस्माद्धेतोः । सत्प्रसङ्गतो भगवदेकान्तिकसाधूनां प्रसङ्गात् । सच्छास्त्रसेवनाद्वा सच्छास्त्रश्रवणमननाभ्यां चेत्यर्थः । श्रीकृष्ण-माहात्म्यम् । अञ्जसा तत्त्वतः । प्रयत्नतो महतायासेनापि । वेदितव्यम् ॥ ३७ ॥ तदिति । तद्युक्ता माहात्म्यज्ञानसहिता । ईशस्य प्रत्यक्षस्य श्रीहरेः । भक्तिः । भक्तस्य । हृदि । सद्गुणान् शान्त्यादीन् । सम्पादयन्त्युत्पादयन्ती सती । सकलाः । वासनाः । नाशयत्येव ॥ ३८ ॥ अत इति । हे साधुसत्तम ! । अतो हेतोः । भक्तस्य । वासनानाशे । ईशितुः प्रत्यक्षपरमेश्वरस्य । माहात्म्यज्ञानम् । आत्यन्तिकम् । साधनम् । वच्मि । भक्तवासनानाशेऽन्येऽन्यानि साधनानि ब्रुवन्त्वहं तु तत्र साक्षा-द्भगवन्माहात्म्यज्ञानमेवात्यन्तिकं तद्वदामीत्यर्थः ॥ ३९ ॥ योगानन्द इति । अथैवंविधश्रीहरिवाक्यश्रवणानन्तरम् । तद्गुणगायकः संस्कृतपद्यैस्तद्गुणवर्णनशीलः । पुरः-

माहात्म्यज्ञानयुक्तस्य सर्वे ते यत्नमन्तरा । आगत्य हृदि वर्त्तन्ते गुणाः कल्याणकारिणः ॥ ३६ तस्माच्छ्रीकृष्ण-माहात्म्यमञ्जसा सत्प्रसङ्गतः । सच्छास्त्रसेवनाद्वापि वेदितव्यं प्रयत्नतः ॥ ३७ ॥ तद्युक्ता भक्तिरीशस्य भक्तस्य हृदि सद्गुणान् । सम्पादयन्ती सकला नाशयत्येव वासनाः ॥ ३८ ॥ अत आत्यन्तिकं वच्मि माहात्म्यज्ञान-मीशितुः । भक्तस्य वासनानाशे साधनं साधुसत्तम ! ॥ ३९ ॥ योगानन्दोऽथ साधुः श्रीहरिं तद्गुणगायकः । प्रणम्य विनयेनैव पृच्छति स्म पुरःस्थितः ॥४०॥ श्रद्धया भजतः साक्षात्कृष्णं त्वामात्मनिष्ठया । निर्वासनत्वपक्व-त्वमसम्पन्नं भवेद्यदि ॥४१॥ तथाभूतस्य देहान्ते का गतिर्भविता प्रभो ! । श्रूयते निरयप्राप्तिर्वपुरात्मधियस्त्विह ॥४२॥ इति तेन सता पृष्टो भगवान्भक्तिनन्दः । प्रोवाच शृणु साधो ! त्वं भक्तस्य भगवान् गतिः ॥४३॥

स्थितः श्रीहरेः पुरःप्रदेशावस्थितः । योगानन्दः । साधुः । श्रीहरिम् । प्रणम्य । विनयेनैव । पृच्छति स्म ॥ ४० ॥ श्रद्धयेति । हे हरे ! । श्रद्धया । साक्षात्कृष्णम् । त्वाम् । भजतो भक्तस्य । यदि । आत्मनिष्ठया । इयं माहात्म्यज्ञानस्याप्युपलक्षणम् । निर्वासनत्वपक्वत्वम् । असम्पन्नमसंसिद्धम् । भवेत् ॥४१॥ तथेति । हे प्रभो ! । तर्हि । तथाभूतस्यापक्वनिर्वासनत्वस्य भक्तस्य । देहान्ते । का गतिः । स कान् लोकान् गमिष्यतीत्यर्थः । इहात्रैव बद्धोऽन्यो निरयं व्रजेदिति त्वदुदिते वाक्ये तु । वपुरात्मधियो देहाभिमानवतो भक्तस्य । निरयप्राप्तिः । श्रूयते ॥ ४२ ॥ इतीति । इत्यमुना प्रकारेण । सता साधुना । तेन योगानन्देन । पृष्टः । भगवाननन्तैश्वर्य-पतिः । भक्तिनन्दनो भक्तिपुत्रः श्रीहरिः । भक्तिसुतत्वात्स्वल्पमात्रामपि भक्तकृतस्वभक्तिं बहुमन्यमान इत्यर्थः । प्रोवाच । हे साधो ! । त्वम् । शृणु । भक्तस्य यथा-तथास्वभक्तिं कुर्वतो जनस्य । भगवान् निष्कारणापारकरुणः श्रीहरिः । गतिः सर्वथा रक्षको जायते ॥ ४३ ॥

भजतेति । हे मुने ! । श्रद्धया । कृष्णम् । भजता भक्तेन । अत्रास्मिन् । लोके । परत्र स्वर्गादौ परस्मिंश्च । लोके । सुखावहा आत्मनिष्ठा । इयं माहात्म्यज्ञानस्याप्युपलक्षणम् । अतियत्नतः । सम्पादनीया ॥ ४४ ॥ प्रयत्नत इति । प्रयत्ने आत्मनिष्ठामाहात्म्यज्ञानसम्पादनप्रयासे । क्रियमाणे सत्यपि । यदि । तत्सिद्धेः । प्राक् । वपुः क्षयः । स्यात् । तर्ह्यपि तथासत्यपि । हरिः । स्वभक्तम् । रक्षति । ध्रुवं निश्चितमेव ॥ ४५ ॥ अत्र भगवद्गीताप्रमाणमाह । नेति । हे ताताऽनुकम्पार्जुन ! । कल्याणकृद्यथातथाभक्तिविधानादिरूपस्वनिःश्रेयसम्पादककर्मोद्युक्तः । कश्चिदपि भक्तः । दुर्गतिमसद्गतिम् । न गच्छति । हि । हे मुने ! । इत्येवंविधम् । भगवद्वाक्यं भगवता श्रीकृष्णेनार्जुनं प्रत्युक्तं वचनम् । अस्ति । अतो हेतोः । असौ भक्तः । अधोगतिं यमयातनां श्वशूकरादियोनिं च । न याति नैव प्राप्नोति ॥ ४६ ॥ अपक्वस्येति । आत्मनिष्ठायाम् । अपक्वस्य । भक्तस्य । या निरयश्रुतिः । निरयप्राप्तिश्रवणम् । अस्ति । तत्र वाक्ये । निरयशब्दार्थमपि । ते तुभ्यम् । कथयामि ॥ ४७ ॥ वैभवा इति । देवलोकानां सम्बन्धिनः । विमानाप्सर आदयः । सर्वे । वैभवाः । मोक्षधर्मेषु । निरयशब्देन । कीर्त्तिताः । सन्ति ॥ ४८ ॥ तत्र हेतुमाह । त इति ।

भजता श्रद्धया कृष्णमात्मनिष्ठाऽतियत्नतः । सम्पादनीया लोकेऽत्र परत्र च सुखावहा ॥ ४४ ॥ प्रयत्ने क्रियमाणेऽपि तत्सिद्धेः प्राग्वपुःक्षयः । यदि स्यात्तर्ह्यपि हरिः स्वभक्तं रक्षति ध्रुवम् ॥४५॥ न हि कल्याणकृत्कश्चिद्दुर्गतिं तात ! गच्छति । इत्यस्ति भगवद्वाक्यं नातोऽसौ यात्यधोगतिम् ॥ ४६ ॥ अपक्वस्यात्मनिष्ठायां भक्तस्य निरयश्रुतिः । याऽस्ति तत्रापि निरयशब्दार्थं कथयामि ते ॥ ४७ ॥ वैभवा देवलोकानां विमानाप्सरआदयः । सर्वे निरयशब्देन मोक्षधर्मेषु कीर्त्तिताः ॥ ४८ ॥ ते हि तुच्छसुखाः कृष्णधाम्नोऽत्यानन्दरूपिणः । पुरतो निरयैस्तुल्याः सन्तीति निरया मताः ॥४९॥ तान् यान्ति शिथिला भक्ता न तु ते यमयातनाः । देवा भूत्वा देवलोके तत्स्थान्भोगान् हि भुञ्जते ॥ ५० ॥ देवत्वान्तेऽथ मानुष्यं पुनस्ते प्राप्य भूतले । चोदिताः पूर्वसंस्कारैः साङ्गां भक्तिं वितन्वते ॥ ५१ ॥

अत्यानन्दरूपिणा निरवधिकातिशयानन्दमयस्वरूपस्य । कृष्णधाम्नः श्रीहरेरक्षरब्रह्माख्यपदस्य । पुरतोऽग्रे । तुच्छसुखाः । ते देवलोकवैभवाः । निरयैर्नारकयोनिग्रामशूकरादिसुखैः । तुल्याः समानाः । सन्ति । इति हेतोः । निरया निरयशब्दवाच्याः । मताः ॥ ४९ ॥ तानिति । शिथिला आत्मनिष्ठामाहात्म्यज्ञानादिसम्पादनेऽसमर्थाः । भक्ताः । तान्निरयशब्दवाच्यान्देवलोकवैभवान् । यान्ति । ते भक्ताः । यमयातनाः । न तु नैव यान्ति । ते भक्ताः । देवलोके । देवाः । भूत्वा । तत्स्थान् देवलोकावस्थितान् । भोगान् वैभवान् । भुञ्जते प्राप्नुवन्ति । हि ॥ ५० ॥ देवत्वेति । अथानन्तरम् । ते देवभावापन्ना भक्ताः । देवत्वान्ते देवभावावसाने । पुनः । भूतले भारतवर्षमध्ये । मानुष्यं मनुष्यजन्म । प्राप्य । पूर्वसंस्कारैः पूर्वजन्मकृतभक्त्यादिभावनाभिः । चोदिताः प्रेरिताः सन्तः । साङ्गां स्वधर्मवैराग्यात्मनिष्ठोपेताम् । भक्तिम् । वितन्वते उत्तरोत्तरवृद्धिमतीं कुर्वते ॥ ५१ ॥

सम्यगिति । ते भक्ताः । सम्यक् । निर्वासनाः । भूत्वा । देहान्ते । ब्रह्मधामाक्षरपदम् । यान्ति । इत्येवंविधा । अपक्वज्ञानस्यापरिपक्वात्मनिष्ठामाहात्म्यज्ञानवतः । भक्तस्य । गतिः । गदिता ॥ ५२ ॥ तत इति । ततो हेतोः । अत्र सत्सङ्गे । अल्पवासनेन । कृष्णभक्तेन । चेतसि स्वमानसे । न्यूनत्वशङ्कया । स्वस्य । धैर्यम् । कर्हिचित्कदाचिदपि । न हाप्यं न त्याज्यम् ॥५३॥ नेति । अहम् । देहः । नास्मि । चिद्रूपश्चैतन्यरूपः । आत्मैवास्मि । इतीत्थम् । निजान्तरे स्वकीये मनसि । भावयद्भिः सततं विचारयद्भिः । भक्तैः स्वधर्मनिष्ठैर्हरिभक्तजनैः । हरिः । सेव्यो माहात्म्यज्ञानपूर्वमुपासनीयः । स श्रीहरिः । इष्टसिद्धिदः स्ववाञ्छितनिर्वासनत्वरूपार्थसिद्धिप्रदः । अस्ति ॥ ५४ ॥ प्रकरणार्थं निगमयत्यर्द्धेन । हे मुने ! । इह सत्सङ्गे । मदीयैर्मदाश्रितजनैः । हरिहरिजनवाचि हरेस्तदेकान्तिकसाधूनां च स्वहितार्थोपदिष्टवचने श्रद्दधानैस्तदवधारणे आदरवद्भिः सद्भिः । अविरतं निरन्तरम् । वासनानाशयत्नः । कार्यः । इत्येवंभूताम् । तस्य श्रीहरेः । वचनसुधाम् । पीत्वा । असौ योगानन्दसाधुः । तथा । सदसि महासभायाम् । संस्थिता निषण्णाः । ते । सकलभक्तास्त्यागिनो गृहिणश्च हरिभक्तजनाः । तोषमत्यानन्दम् । आपुः ॥ ५५ ॥ स्वभक्तानां स्वतोऽन्यत्र वासनानां

सम्यङ्निर्वासना भूत्वा देहान्ते ब्रह्मधाम ते । यान्तीत्यपक्वज्ञानस्य भक्तस्य गदिता गतिः ॥ ५२ ॥ ततोऽल्पवासनेनात्र कृष्णभक्तेन चेतसि । न्यूनत्वशङ्कया स्वस्य धैर्यं हाप्यं न कर्हिचित् ॥ ५३ ॥ नाहं देहोऽस्मि चिद्रूप आत्मैवेति निजान्तरे । भावयद्भिर्हरिः सेव्यो भक्तैः सोऽस्तीष्टसिद्धिदः ॥ ५४ ॥ हरिहरिजनवाचि श्रद्दधानैर्मदीयैरविरतमिह कार्यो वासनानाशयत्नः । इति वचनसुधां ते तस्य पीत्वा तथाऽसौ सदसि सकलभक्ताः संस्थितास्तोषमापुः ॥ ५५ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते द्व्यशीतितमस्तरङ्गः ॥ ८२ ॥

शकाब्दे विक्रमार्कस्य नगाश्ववसुभूमिते । नवम्यां नभसः कृष्णे वचोऽमृतमिदं हरेः ॥ १ ॥
तत्र सारङ्गनगरे निशान्ते जीववर्मणः । व्यराजतोच्चपीठेऽसौ वेद्यां धृतसिताम्बरः ॥ २ ॥

निवृत्तये । आत्मनिष्ठां स्वमाहात्म्यज्ञानं च साधनं परम् ॥ १ ॥ यः प्राह कृपया स्वामी श्रीहरिर्भक्तवत्सलः । स मह्यं तां च तद्देयाद्भक्तिधर्मसुतः प्रभुः ॥ २ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्स्नुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां द्व्यशीतितमस्तरङ्गः ॥ ८२ ॥

हर्याख्योच्चारणादीनां कृतानां मनसा सह । फलमस्त्यन्यथा नैव पञ्चमे त्विति कीर्त्तितम् ॥१॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८७७) नभसः श्रावणमासस्य । कृष्णे कृष्णपक्षे । नवम्यां तिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । सारङ्गनगरे । जीववर्मणो नृपस्य । दुर्गे इति शेषः । निशान्ते तस्यैवोचरास्यभवने । वेद्यां बाह्यायां वितर्दौ । उच्चपीठे सोत्तरच्छदतूलिकाद्यास्तृते उन्नते मञ्चासने । धृतसिताम्बरः स्वाङ्गपरिधृतसकलश्वेतवसनः । असौ श्रीहरिः । व्यराजत तत्रोपविष्टः सन्नुपवेशनचातुर्येणातिशुशुभे ॥ २ ॥

त्यागिति । अथानन्तरम् । त्यागिगृहिवृन्दवृतं नानादेशागतैस्त्यागिनां गृहिणां च गणैः सभायां परिवेष्टितम् । सत्पतिं सकलसाधुजनैकनाथम् । संशयच्छिदं स्वाश्रित-सकलसंशयविनाशकम् । तं श्रीहरिम् । प्रणम्य । सदुत्तमः साधुश्रेष्ठः । मुक्तानन्दो मुनिः । पप्रच्छ ॥३॥ नाकृत इति । हे स्वामिन् ! । भुवि । त्वाकृतेः । जगदात्मनः सकलजगदेकनाथस्य । कृष्णस्य । ते तव । नामस्पर्शेक्षणादीनां नामोच्चारणाङ्गस्पर्शमूर्त्तीक्षणादीनाम् । महिमा । महान् । श्रूयते । तथा च विष्णुपुराणश्रीभागवतयोः । 'यन्नामकीर्त्तनं भक्त्या विलायनमनुत्तमम् । मैत्रेयाशेषपापानां धातूनामिव पावकः । स यैः स्पृष्टोऽभिदृष्टो वा संविष्टोऽनुगतोऽपि वा । कौसलास्ते ययुः स्थानं यत्र गच्छन्ति योगिन' इत्यादि ॥४॥ स इति । इह लोके । स भवन्नामोच्चारणादिमहिमा । त्वदीयभक्तानामेव फलदायको यथोक्तफलप्रदः । अस्ति । किम् । अथवा । सर्वेषामपि । जीवानाम् । फलदायकोऽस्ति । इत्यस्यैवंविधस्य मत्प्रश्नस्य उत्तरम् । वद यथार्थतो मह्यं ब्रूहि ॥ ५ ॥ तमिति । तमेवंपृच्छन्तं मुक्तानन्दमुनिम् । हरिः । उवाच । हे साधो ! । अस्य त्वत्प्रश्नस्य उत्तरम् । अञ्जसा तत्त्वतः । शृणु कथयतो मत्तोऽवधारय । मनसा सह नामोच्चारणादिजातं चेत्तर्हि तेनैव शास्त्रोक्तं तत्फलं स्यादिति

त्यागिगृहिवृन्दवृतं तं प्रणम्य सदुत्तमः । मुक्तानन्दोऽथ पप्रच्छ सत्पतिं संशयच्छिदम् ॥ ३ ॥
त्वाकृतेस्ते भुवि स्वामिन्! कृष्णस्य जगदात्मनः । नामस्पर्शेक्षणादीनां महिमा श्रूयते महान् ॥ ४ ॥
स किं त्वदीयभक्तानामेवास्ति फलदायकः । जीवानां वेह सर्वेषामपीत्यस्योत्तरं वद ॥ ५ ॥
तमुवाच हरिः साधो ! शृण्वस्योत्तरमञ्जसा । इन्द्रियाणां क्रिया नृणां शास्त्रेषूक्ता द्विधाऽखिलाः ॥ ६ ॥
समनस्काश्चामनस्का इति तत्रादिमा हृदि । वासनां जनयन्त्येव निश्चलाश्चाविनश्वराः ॥ ७ ॥
विषयाणां स्मृतिस्तासां चिरकालेऽपि जायते । विस्मर्यमाणा अपि ते शक्या विस्मर्त्तुमेव नो ॥ ८ ॥
अमनस्काः क्रियास्तु स्वान्विषयान् हृदि दुर्बलाः । नैव स्मारयितुं शक्ता दूरितान्कालवेगतः ॥ ९ ॥

वक्तुमिन्द्रियक्रियाणां समनस्का मनस्कत्वात्समनस्कानां तासां मनसि संस्कारोदयममनस्कानां तदभावं चाह सार्द्धैस्त्रिभिः । हे मुने ! । नृणां जनानाम् । इन्द्रियाणाम् । अखिलाः । क्रियाः । शास्त्रेषु । द्विधा । उक्ताः ॥ ६ ॥ समनस्का इति । समनस्का मनसा सहिताः । अमनस्का मनसा रहिताः इत्येवंद्विधोक्ताः सन्ति । तासु द्विविधक्रियासु मध्ये । आदिमाः समनस्काः क्रियाः । हृदि मनसि । निश्चलाः स्थिराः । अत एव । अविनश्वरा अविनाशिनीः । वासनाः । जनयन्त्यैव ॥ ७ ॥ विषयाणामिति । तासां समनस्कक्रियाणां सम्बन्धिनाम् । विषयाणां शब्दादीनाम् । स्मृतिः । चिरकाले बहुकाले व्यतीते सत्यपि । जायते । ते समनस्कक्रियाविषयाः । विस्मर्यमाणाः स्मृतिपथमनीयमाना अपि । विस्मर्त्तुम् । नो एव । शक्याः ॥ ८ ॥ अमनस्का इति । अमनस्काः । अत एव । दुर्बला वासनाचरणेऽसमर्थाः । क्रियास्तु । कालवेगतो व्यतीतबहुकालेन । दूरितानतिदूरतां गमितान् । स्वान् । विषयान् । हृदि मनसि । स्मारयितुम् । शक्ताः । नैव भवन्ति ॥ ९ ॥

एवमिति । एवमुक्तप्रकारेणेन्द्रियक्रियाणां द्वैविध्ये सति । अत्र लोके । भक्ताः । अथवा । अभक्ता अपि । ये मानवाः । विष्णोः प्रत्यक्षस्य भगवतः । नामाभिधाम् । उच्चरेयुः । अथवा । तत्स्पर्शनादिकम् । कुर्युः ॥ १० ॥ मनसेति । तन्नामोच्चारणादिकम् । चेद्यदि मनसा सह । स्यात् । तेषां मानवानां तु शास्त्रोक्तम् । सर्वम् । तत्फलम् । स्यादेव । विष्णोः साक्षाद्धरेः । सर्वदा । स्मृतिश्च । स्यादेव ॥ ११ ॥ मन इति । मनोवृत्तिविहीनम् । नामसंकीर्त्तनादिकं तु । भक्तानामपि । यथोक्तफलदम् । नैव स्यात् । खलु ॥ १२ ॥ कृष्णस्येति । प्रत्यहं प्रतिदिनम् । कृष्णस्य साक्षाद्धरेः । दर्शनम् । कुर्वतामपि । तेषां मनोवृत्तिविहीनतया दर्शनं विदधतां भक्तानाम् । रहसि विजनस्थाने उपवेशने कृते सत्यपि । ध्यानकाले तन्मूर्त्तिचिन्तनसमये । तस्य कृष्णस्य । स्फूर्त्तिर्यथादृष्टसाक्षाद्भगवदनुभवः । नैव भवेत् । ननु तर्हि भक्ताभक्तयोर्दर्शनादेः समानत्वादभक्ताद्भक्तस्य को विशेष इति चेत्तत्राह ॥१३॥ नेति । हे मुने ! । एवंसति भक्ताभक्तयोस्तद्दर्शनादेरमनस्कत्वेन समानत्वे सति । भक्तानाम् । अभक्तैः सह । तुल्यता । न ज्ञेया । यतो हेतोः । उभयेषां भक्ताभक्तानां तु । महान् । विशेषो भेदः । अस्ति ॥ १४ ॥ तयोर्विशेषमाह चतुर्भिः ।

एवं सत्यत्र ये भक्ता अभक्ता वापि मानवाः । विष्णोर्नामोच्चरेयुर्वा कुर्युस्तत्स्पर्शनादिकम् ॥ १० ॥ मनसा सह तच्चेत्स्यात्तर्हि तेषां तु तत्फलम् । स्यादेव सर्वं शास्त्रोक्तं स्मृतिर्विष्णोश्च सर्वदा ॥ ११ ॥ मनोवृत्तिविहीनं तु नामसंकीर्त्तनादिकम् । भक्तानामपि नैव स्याद्यथोक्तफलदं खलु ॥१२॥ कृष्णस्य दर्शनं तेषां प्रत्यहं कुर्वतामपि । ध्यानकाले भवेन्नैव स्फूर्त्तिस्तस्य रहस्यपि ॥ १३ ॥ न चैवं सति भक्तानामभक्तैः सह तुल्यता । ज्ञेयोभयेषां तु यतो विशेषोऽस्ति महान् मुने ! ॥ १४ ॥ साक्षात्कृष्णमिह ज्ञात्वा संश्रित्य नवधा च तम् । ये भजेयुस्त एवोक्ता भक्ता इति हि मानवाः ॥ १५ ॥ ते तु कृष्णप्रतापेन देहान्ते सद्य एव हि । प्राप्स्यति भगवद्धाम मुक्ताः संसृतिबन्धनात् ॥१६॥ अन्येषां तु भवेत् पुण्यं कृष्णेक्षाकीर्त्तनादिजम् । यत्संस्कारात्करिष्यन्ति भक्तिं जन्मान्तरेऽपि ते ॥१७॥ ततः कालेन यास्यन्ति सद्गतिं ते तु पूरुषाः । एवं विशेषो विज्ञेय उभयेषां महामते ! ॥१८॥

साक्षादिति । इह लोके । ये । मानवाः । साक्षात्कृष्णम् । ज्ञात्वाऽयमेव साक्षात्परमेश्वर इति बुद्ध्वा संश्रित्य तदाश्रयं कृत्वा । तं साक्षात्कृष्णम् । नवधा श्रवणादिनवप्रकारैः । भजेयुः । ते मानवा एव । भक्ता इति भक्तसंज्ञया । उक्ताः । हि ॥ १५ ॥ त इति । ते भक्तास्तु । कृष्णप्रतापेन साक्षाद्धरेर्निरवधिकातिशयमहाप्रभावेन । संसृतिबन्धनाज्जन्ममरणप्रवाहरूपसंसारबन्धात् । मुक्ताः । सन्तः । देहान्ते । सद्यस्तत्क्षणमेव । भगवद्धाम गोलोकपदम् । प्राप्स्यति ॥ १६ ॥ अन्येषामिति । अन्येषामभक्तानां तु । कृष्णेक्षाकीर्त्तनादिजम् । पुण्यम् । भवेत् । यत्संस्कारात्तदीक्षादिजन्यपुण्यभावनातः । ते अभक्ता अपि । जन्मान्तरेऽन्यजन्मनि । भक्तिम् । करिष्यन्ति । साक्षात्कृष्णेक्षादिजन्यपुण्येन पुनर्मनुष्यदेहप्राप्तेः सम्भवादिति भावः ॥ १७ ॥ तत इति । हे महामते ! । ततो भक्तिविधानानन्तरम् । ते पूरुषास्तु । कालेन । सद्गतिं सतां प्राप्यं भगवद्धाम । यास्यन्ति । एवममुना प्रकारेण । उभयेषां भक्ताभक्तानाम् । विशेषः । विज्ञेयः ॥ १८ ॥

तस्मादिति । तस्माद्धेतोः । येषां भक्तजनानाम् । कृष्णेक्षणादीनि । मनसा सह । स्युः । ते भक्तजना एव । सर्वम् । तत्फलं कृष्णेक्षणादिसुकृतम् । लभन्ते । इत्येवंविधः । निश्चयो मत्कृतो निर्णयोऽस्ति ॥ १९ ॥ इममर्थमेव सदाचारेण द्रढयति द्वाभ्याम् । यथेति । यथा । व्रजे । गोप्यः । रमापतेः श्रीकृष्णस्य । स्पर्शम् । ईक्षां दर्शनम् । कीर्त्तनं च । समनस्कं मनःसहितं यथातथा । चक्रुः । सर्वम् । तत्फलं च । प्रापुः ॥२०॥ श्रीमदिति । तदेतत् । श्रीमद्भागवतादौ । विस्तरेण । वर्णितमस्ति । हि । तद्यथा । 'यर्ह्यम्बुजाक्ष ! तव पादतलं रमाया दत्तक्षणं क्वचिदरण्यजनप्रियस्य । अस्प्राक्ष्म तत्प्रभृति नान्यसमक्षमङ्ग ! स्थातुं त्वयाभिरमिता बत पारयामः । अटति यद्भवान्ह्नि काननं त्रुटिर्युगायते त्वामपश्यताम् । कुटिलकुन्तलं श्रीमुखं च ते जड उदीक्षतां पक्ष्मकृद् दृशा'मित्यादि । तथा । अत्र सत्सङ्गे । येषां भक्तानाम् । तानि प्रत्यक्षकृष्णस्पर्शादीनि । स्युः । ते भक्ताः । तत्फलभागिनः । स्युः ॥ २१ ॥ कृतानीति । अन्यथा अमनस्कतया । कृतानि । अपि । तानि कृष्णस्पर्शादीनि । कालतः । विस्मृतिम् । यान्ति । ततो हेतोः । पुनर्भूयः । तत्स्मृत्यसम्भवाद्धेतोः । अकृतानीव । स्युः ॥२२॥ प्रकरणार्थं निगमयत्यर्द्धेन। शास्त्रेति । हे मुने ! । इह सत्सङ्गे ।

तस्मात्कृष्णेक्षणादीनि येषां स्युर्मनसा सह । त एव तत्फलं सर्वं लभन्त इति निश्चयः ॥ १९ ॥ यथा गोप्यो व्रजे चक्रुः समनस्कं रमापतेः । स्पर्शमीक्षां कीर्त्तनं च प्रापुः सर्वं च तत्फलम् ॥ २० ॥ श्रीमद्भागवतादौ तद्वर्णितं विस्तरेण हि । तथाऽत्र तानि येषां स्युस्तत्फलभागिनः ॥२१॥ कृतान्यप्यन्यथा तानि विस्मृतिं यान्ति कालतः । ततः स्युरकृतानीव पुनस्तत्स्मृत्यसम्भवात् ॥ २२ ॥ शास्त्रोक्तभक्तिफलसिद्धय ईशवीक्षामुख्यं विधेयमिह कर्म मनोनुयातम् । श्रुत्वेति वाक्यममृतं स हरेस्तु साधुः प्रापन्मुदं च सकला अपि तत्सदःस्थाः ॥ २३ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते त्र्याशीतितमस्तरङ्गः ॥ ८३ ॥

शकाब्दे विक्रमार्कस्य नगाश्ववसुभूमिते । दशम्यां नभसः कृष्णे वचोऽमृतमिदं हरेः ॥ १ ॥

शास्त्रोक्तभक्तिफलसिद्धये । ईशवीक्षामुख्यं प्रत्यक्षश्रीहरिदर्शनादिकम् । कर्म क्रिया । मनोनुयातं समनस्कम् । विधेयं कार्यम् । इत्येवंविधम् । अमृतममृतसदृशम् । हरेः । वाक्यम् । श्रुत्वा । सः साधुर्मुक्तानन्दमुनिः । तत्सदःस्थास्तस्यां सदस्यवस्थिताः । सकलास्त्यागिनो गृहिणश्चेति सर्वे चापि भक्ताः । मुदमानन्दम् । प्रापन्नधिजग्मुः ॥२३॥ स्वनामोच्चारणादीनां यथावत्फलमाह यः । श्रीहरिः समनस्कानां सोऽस्तु मन्मानसे सदा ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्पदानुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां त्र्याशीतितमस्तरङ्गः ॥ ८३ ॥

अवस्थानां स्वरूपाणि तिसृणां यानि सन्ति तु । एकैकस्यां यथा द्वे द्वे अवस्थे स्तश्च तत्त्वतः ॥ १ ॥ यथा परादिवाणीनां रूपाणि च परा यथा । वैखर्यामस्ति तत्सर्वं षष्ठे तु समुदीरितम् ॥ २ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८७७) नभसः श्रावणमासस्य । कृष्णे कृष्णपक्षे । दशम्यां तिथौ । इदम् । हरेः । वचोऽ

मृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । सारङ्गनगरे । जीववर्मणो नृपस्य । दुर्गे इति शेषः । सदने तस्यैवोच्चरास्यभवने । वेद्यां बाह्यायां वेदिकायाम् । सत्पीठे सपरिच्छदास्तृतपर्यङ्कासने । सितवासाः परिधृतसकलश्वेतवसनः । सत्पतिः । स श्रीहरिः । न्यषीददुपविवेश ॥ २ ॥ नैकदेशीयभक्तौघवृतं नानादेशागतत्यागिगृही-सकलस्वभक्तवृन्दैः सभायां परिवेष्टितम् । तं श्रीहरिम् । सन्मुखे श्रीहरेः पुरःप्रदेशे । तिष्ठन्नवस्थितः । सदग्रणीः साधुश्रेष्ठः । नित्यानन्दो मुनिः । कृतवन्दनो विहिता-नतिः सन् । पप्रच्छ ॥ ३ ॥ जाग्रदिति । हे स्वामिन् ! । जाग्रदादिषु । तिसृष्वपि । अवस्थासु । जाग्रत्स्वप्नसुषुप्तिसंज्ञेऽवस्थात्रये इत्यर्थः । इतरे अपरे । द्वे द्वे अवस्थे वर्त्तेते जाग्रति स्वप्नसुषुप्त्यौ सुषुप्तौ जाग्रत्स्वप्ने इत्येवं जाग्रदाद्येकैकस्यामवस्थायां द्वे द्वे अवस्थे विद्येते इत्यर्थः । इत्येवम् । वेदान्तिन उपनिषदर्थाभिज्ञाः । विदुर्जानन्ति ॥ ४ ॥ तासामिति । तासां तथाविधानामवस्थानाम् । रूपाणि लक्षणानि । अहम् । विविच्य पृथक् पृथगित्यर्थः । अञ्जसा तत्त्वतः । विवित्सामि वेदितुमिच्छामि । इत्य-मुना प्रकारेण । पृष्टो नित्यानन्दमुनिनानुयुक्तः । सर्वार्थवेत्ता शास्त्रयोनित्वात्सकलशास्त्रार्थभिज्ञः । स श्रीहरिः । उवाच । हे मुने ! । शृणु ॥५॥ जाग्रदिति । जाग्रत् ।

तत्र सारङ्गनगरे सदने जीववर्मणः । वेद्यां न्यषीदत्सत्पीठे सितवासाः स सत्पतिः ॥ २ ॥ नैकदेशीयभक्तौघवृतं तं कृतवन्दनः । पप्रच्छ सन्मुखे तिष्ठन्नित्यानन्दः सदग्रणीः ॥ ३ ॥ जाग्रदादिष्ववस्थासु वर्त्तेते इतरे अपि । द्वे द्वे तिसृष्वपि स्वामिन्निति वेदा-न्तिनो विदुः ॥ ४ ॥ तासां विविच्य रूपाणि विवित्साम्यहमञ्जसा । इति पृष्टः स सर्वार्थवेत्तोवाच मुने ! शृणु ॥ ५ ॥ जाग्रत्स्वप्नं सुषुप्तिश्च तिस्रोऽमिश्रगुणात्मिकाः । अवस्था गुणसाङ्कर्यात्सन्ति मिश्राः परस्परम् ॥ ६ ॥ वैराजस्थित्यवस्थायाः कार्यं सत्त्वगुणात्मिका । नेत्रस्थानकृतावासाऽवस्था जाग्रदितीरिता ॥ ७ ॥ स्थूलदेहाभिमानेन विश्वसंज्ञस्य चात्मनः । बाह्यान्तःकरणै-र्यत्र सविवेकं यथार्थतः ॥ ८ ॥ शब्दादिबाह्यविषयभोगः स्यात्पूर्वकर्मणाम् । अनुसारेण तत्सत्त्वप्रधानं जाग्रदुच्यते ॥ ९ ॥

स्वप्नः । सुषुप्तिश्चेति । तिस्रः । अवस्थाः । अमिश्रगुणात्मिकाः परस्परममिलितसत्त्वादिगुणकार्यरूपाः । सन्ति । गुणसाङ्कर्यात्सत्त्वादिगुणमिश्रीभावतः । परस्परमन्यो-ऽन्यम् । मिश्राः सम्पृक्ता अपि । सन्ति ॥ ६ ॥ वैराजेति । वैराजस्थित्यवस्थाया वैराजपुरुषस्य या स्थित्यवस्था स्थितिकालीनमवस्थानं तस्याः । कार्यं कार्यरूपा । सत्त्व-गुणात्मिका सत्त्वगुणकार्यरूपा । नेत्रस्थानकृतावासा नेत्रेन्द्रियगोलोकस्थाने कृतनिवासा । अवस्था अवस्थीयतेऽस्यां जीवेन भोगार्थमिति तथाभूता । जाग्रदिति जाग्रत्संज्ञिका । ईरिता कथिता ॥ ७ ॥ एवं जाग्रत्स्वरूपमुक्त्वा तल्लक्षणमाह द्वाभ्याम् । स्थूलेति । यत्र यस्यां जाग्रदवस्थायाम् । विश्वसंज्ञस्य । आत्मनो जीवस्य । स्थूलदेहाभिमानेन । बाह्यान्तःकरणैः इन्द्रियान्तःकरणैश्चेत्यर्थः । सविवेकं विवेकसहितं यथातथा । यथार्थतो यथार्थभावेन ॥ ८ ॥ शब्देति । पूर्वकर्मणां जीवेन कृतानां प्राक्तनकर्मणाम् । अनुसारेण । शब्दादिबाह्यविषयभोगः शब्दप्रभृतिबाह्यविषयभोगानुभवः । स्यात् । तत् । सत्त्वप्रधानम् । जाग्रत् । उच्यते । अस्यायं भावः इन्द्रियान्तःकरणदेवताभिर्विश्व-संज्ञजीवस्य बाह्यशब्दादिविषयपञ्चकप्रवृत्तिर्यत्र सा जाग्रदवस्थेत्यर्थः । इति द्वयोरेकसम्बन्धः ॥ ९ ॥

अत्रेति । अत्र जाग्रदवस्थायाम् । आत्मा जीवः । चेद्यदि । भ्रान्त्याऽनवस्थित्या हेतुना । अयथार्थतोऽयाथातथ्येन । विषयान् बाह्यान् शब्दादिविषय-भोगान् । भुङ्क्ते । तर्हि । सः । रजोगुणः प्रधानं मुख्यं यस्मिंस्तद्यत्सत्त्वात्मजाग्रत्सत्त्वात्मिकाजाग्रदवस्था तस्मिन्स्वप्नः स्वप्नावस्था । उच्यते ॥ १० ॥ भुञ्जान इति । जाग्रति जाग्रदवस्थायामेव । शब्दादीन् । विषयान् । बाह्यशब्दादिविषयभोगानित्यर्थः । भुञ्जानोऽनुभवन्नपि । जीवः । शोकश्रमादिना हेतुना । विवेकाभावतस्तेषां सदसद्विवेकाभावात् । चेद्यदि । न विद्यात् । मयेदमनुभूतमिति । न बुध्येत ॥११॥ तम इति । तर्हि । तत् । तमस्तमोगुणः प्रधानं यस्मिंस्तद्यत्सत्त्वात्मजाग्रत्सत्त्वात्मिका जाग्रदवस्था तस्मिन्सुप्तं सुषुप्त्यवस्था । उच्यते । एवममुना प्रकारेण । एकस्याम् । अवस्थायां जाग्रत्संज्ञिकायामवस्थायाम् । अन्ये स्वप्नसुषुप्त्याख्ये अपरे अवस्थे । उदीरिते । इति द्वयोरेकसम्बन्धः ॥ १२ ॥ हिरण्येति । हिरण्यगर्भाख्यस्य सूत्रात्मशरीराभिमानिनो वैराजपुरुषस्य । उत्पत्त्यवस्थाकार्यमुत्पत्तिकालीनावस्थायाः कार्यरूपा । गलस्थितिः कण्ठस्थानकृतवासा । रजोगुणात्मिका रजोगुणकार्यरूपा । अवस्था । स्वप्नसंज्ञया । सम्प्रोक्ता ॥ १३ ॥ एवं स्वप्नावस्थास्वरूपमुक्त्वा तल्लक्षणमाह द्वाभ्याम् ।

अत्र चेद्विषयान्भ्रान्त्या भुङ्क्त आत्माऽयथार्थतः । रजःप्रधानसत्त्वात्मजाग्रत्स्वप्नः स उच्यते ॥ १० ॥ भुञ्जान एव विषयान् शब्दादीनपि जाग्रति । शोकश्रमादिना विद्याद्विवेकाभावतो न चेत् ॥११॥ तमः प्रधानसत्त्वात्मजाग्रत्सुप्तं तदुच्यते । एकस्यामप्यवस्थायामेवमन्ये उदीरिते ॥ १२ ॥ हिरण्यगर्भस्योत्पत्त्यवस्थाकार्यं गलस्थितिः । रजोगुणा-त्मिकाऽवस्था सम्प्रोक्ता स्वप्नसंज्ञया ॥ १३ ॥ आत्मनस्तैजसाख्यस्य सूक्ष्मदेहाभिमानिनः । विनाश्यस्थिरभोगाप्तिः पूर्वकर्मानुसारतः ॥ १४ ॥ समनस्केन्द्रियैर्यत्र बुद्ध्या च स्यात् प्रियाऽप्रिया । रजःप्रधान तत् प्रोक्तः स्वप्न इत्यवधारय ॥ १५ ॥ स्वप्नेऽपि जाग्रति यथा शब्दादीन्विषयांस्तथा । विवेकेनैव भुञ्जीत जानन्नात्मा यदा तदा ॥ १६ ॥ सत्वमुख्यरजोवृत्तिस्वप्नजाग्रत्तदुच्यते । प्राप्तिरप्यत्र मन्त्रादेः सत्या भवति कर्हिचित् ॥ १७ ॥

आत्मन इति । समनस्केति । यत्र यस्यामवस्थायाम् । तैजसाख्यस्य । सूक्ष्मदेहाभिमानिनः । आत्मनो जीवस्य । समनस्केन्द्रियैर्मनसा सहितैरिन्द्रियैः । बुद्ध्या च । पूर्वकर्मानुसारतः । प्रिया । अप्रिया च विनाशिनः क्षणविध्वंसिनोऽत एवास्थिराश्चंचला ये भोगाः शब्दादिविषयभोगास्तेषामाप्तिरुपलब्धिः । स्यात् । तत् । रजःप्रधान रजोगुणमुख्यः । स्वप्नः स्वप्नावस्था । प्रोक्तः । इतीत्थम् । अवधारय बुद्ध्यस्व । अस्यायं भावः इन्द्रियान्तःकरणदेवताभिस्तैजससंज्ञजीवस्याभ्यन्तरविनाश्यस्थिरशब्दादिविषय-पञ्चकप्रवृत्तिर्यत्र सा स्वप्नावस्थेत्यर्थः ॥ १४ ॥ १५ ॥ स्वप्न इति । यथा । आत्मा जीवः । जानन्सन् । विवेकेनैव । शब्दादीन् । विषयान् । जाग्रति जाग्रदवस्थायाम् । भुङ्क्ते । तथा । स्वप्नेऽपि । यदा । भुञ्जीत । तदा ॥१६॥ सत्त्वेति । तत् । सत्त्वं सत्त्वगुणो मुख्यं प्रधानं यस्मिन् । स रजोवृत्ती रजोगुणात्मकश्च यः स्वप्नः स्वप्ना-वस्था तस्मिन् जाग्रज्जाग्रदवस्था । उच्यते । अत्र स्वप्नवर्त्तिन्यां जाग्रदवस्थायाम् । मन्त्रादेः । प्राप्तिरपि । कर्हिचित् । सत्या । भवति । इति द्वयोरेकसम्बन्धः ॥ १७ ॥

भुञ्जान इति । यत्र । स्वाप्नभोगान् । स्वप्नप्राप्तशब्दादिपञ्चविषयभोगान् । भुञ्जानोऽपि जीवः । जाड्येन तमःकार्यजडभावेन । तान्स्वाप्नभोगान् न विद्यात् । प्रियाप्रियत्वेन न जानीयात् । सा तमस्तमोगुणः प्रधानं मुख्यो यस्मिन् । स यो । रजआत्मकस्वप्नस्तस्मिन्सुषुप्त्यवस्था । उच्यते ॥ १८ ॥ ईश्वरेति । ईश्वराख्यस्याव्याकृतशरीराभिमानिनो वैराजपुरुषस्य या प्रलयावस्था प्रलयकालीनावस्थितिस्तस्याः कार्यरूपा । तमआत्मिका तमोगुणकार्यरूपा । हृदयस्थानगा हृदयस्थानकृतावासा । अवस्था । सुषुप्तिरिति सुषुप्तिसंज्ञा । कीर्तिता कथिता ॥ १९ ॥ एवं सुषुप्त्यवस्थास्वरूपमुक्त्वा तल्लक्षणमाह द्वाभ्याम् । वृत्तय इति । यत्र यस्यां सुषुप्त्यवस्थायाम् । अन्तर्बहिःखानां करणसंज्ञानां मनआदीनामन्तरिन्द्रियाणां चक्षुरादीनां बाह्येन्द्रियाणां चेत्यर्थः । वृत्तयो व्यापाराः । विषयवासना भोगार्हशब्दादिपञ्चविषयभावनाः । तथा । कर्तृत्ववेतृते । तत्र कर्तृत्वमहंवृत्त्या जीवस्य विषयार्थककर्मकर्तृत्वम् । वेतृता जीवस्य विषयज्ञातृभावः । एताः सर्वाः । कारणदेहे । लीनाः । स्युः ॥ २० ॥ तयेरति । हे मुने ! । तस्य कारणदेहस्य । अभिमन्तुरभिमानकर्तुः । प्राज्ञस्य प्राज्ञसंज्ञजीवात्मनः । सगुणब्रह्मणः प्रधानमायायुक्तस्य सगुणब्रह्मसंज्ञस्य प्रधानपुरुषस्य ।

भुञ्जानोऽपि स्वाप्नभोगान्विद्याज्जाड्येन तान्न सा । तमःप्रधानकरजआत्मकस्वप्नसुप्तिका ॥ १८ ॥ ईश्वरप्रलयावस्थाकार्यं च तमआत्मिका । हृदयस्थानगाऽवस्था सुषुप्तिरिति कीर्तिता ॥ १९ ॥ वृत्तयोऽन्तर्वहिःखानां तथा विषयवासनाः । यत्र कारणदेहे स्युर्लीनाः कर्तृत्ववेतृते ॥ २० ॥ तस्याभिमन्तुः प्राज्ञस्य सगुणब्रह्मणो मुने ! । सुखलेशेऽतिलीनत्वं भवेत्सा सुप्तिरीरिता ॥२१॥ कर्मसंस्कारतः कर्तृवृत्तेरुत्थानमत्र यत् । स्वप्नो रजोमुख्यतमोमयसुप्तौ च स स्मृतः ॥ २२ ॥ जाग्रतस्वप्नव्यथातापाद्विशंत्यास्तत्र यत्सुखे । कर्तृवृत्तेः प्रातिलोम्यज्ञानं भवति कर्हिचित् ॥२३॥ सत्त्वमुख्यतमोमय्यां सुप्तौ तज्जाग्रदुच्यते । धीमन्तस्तद्धि जानन्ति पुरुषाः सूक्ष्मदर्शिनः ॥२४॥

सुखलेशे । अतिलीनत्वमत्यन्तया लयभावः । भवेत् । सा । सुप्तिः सुषुप्त्यवस्था । ईरिता कथिता । अस्यायं भावः इन्द्रियान्तःकरणदेवताभिर्भोगार्हशब्दादिविषयवासनादिमिश्र सह प्राज्ञसंज्ञजीवस्य यत्र लीनत्वं सा सुषुप्त्यवस्थेत्यर्थः । इति द्वयोरेकसम्बन्धः ॥ २१ ॥ कर्मेति । अत्र सुषुप्तौ । कर्मसंस्कारतो जाग्रत्यभिनिवेशतः कृतक्रियावासनावशतया । कर्तृवृत्तेः कर्मकर्तुर्जीवस्य वृत्तेः । यत् । उत्थानमुद्भवनम् । सः । रजोगुणो मुख्यं प्रधानं यस्यां सा चासौ तमोमयसुप्तिस्तमोगुणात्मिका सुषुप्त्यवस्था तस्याम् । स्वप्नः । स्मृतः ॥२२॥ जाग्रदिति । जाग्रति जाग्रदवस्थायां स्वप्ने स्वप्नावस्थायां च या व्यथा पीडा तया यस्तापस्तस्माद्धेतोः । तत्र सुखे पूर्वं सुषुप्त्यवस्थानभूतमायाशबलब्रह्मसम्बन्धिन्यानन्दे इत्यर्थः । विशन्त्याः प्रवेशं कुर्वत्याः । कर्तृवृत्तेः । यत् । प्रातिलोम्यज्ञानं प्रतिलोमवर्तनत्ववेदनम् । कर्हिचित् । भवति ॥२३॥ सत्त्वेति । तत् प्रातिलोम्यज्ञानम् । सत्त्वं सत्त्वगुणो मुख्यं यस्यां सा चासौ तमोमयी तमःप्रधाना तस्याम् । सुप्तौ सुषुप्त्यवस्थायाम् । जाग्रज्जाग्रदवस्था । । उच्यते । तत् ज्ञानम् । धीमन्तोऽतिप्रशस्तमेधायुक्ताः । अत एव । सूक्ष्मदर्शिनो बाह्यान्तःकरणसूक्ष्मवृत्तिवीक्षकाः । पुरुषाः । जानन्ति । हि । इति द्वयोरेकसम्बन्धः ॥ २४ ॥

एकेति । एवममुना प्रकारेण । वेदार्थवेदिभिः । एकैकस्याम् । अवस्थायाम् । अन्येऽपरे । द्वे । द्वे । अवस्थे । विवेकेन । प्रकीर्त्तिते । हि ॥ २५ ॥ जाग्रदादिष्ववस्थास्विति नित्यानन्दमुनिप्रश्नेऽवस्थीयतेऽस्यां जीवेन ज्ञानपूर्वकं तत्फलभोगार्थमित्यवस्थाशब्दनिरुक्तावुक्तं जीवस्य तज्ज्ञानपूर्वकमवस्थानं स्वतो न सम्भवतीति तस्य ज्ञानपूर्वं तत्रावस्थापको वासुदेवो भगवानपेक्षते स च वेदान्तेषु तुरीयादिनामभिरुक्त इत्याह द्वाभ्याम् । अवस्थेति । एवममुना प्रकारेण । अवस्थाभेदविज्ञानं जाग्रदादिषु तिसृष्ववस्थासु मध्ये एकैकस्यामवस्थायां स्वतः परयोर्द्वयोरवस्थयोः स्वरूपस्य भिन्नभिन्नतयाऽवबोधनमित्यर्थः । आत्मनो ज्ञातृत्वेनावस्थात्रयपरस्य जीवस्य । यतो यस्मात् । स्यात् तत् । वेदान्तेषु श्रुतिशिरस्सु । तुरीयं तुरीयाख्यम् । वासुदेवाख्यमित्यर्थः । परं पदं परं स्वतःस्वरूपादिभिरत्यन्तविलक्षणं । पदं क्षेत्रज्ञवृन्दमन्तर्यामितया पद्यते गच्छतीति तत् । स्थितम् इत्यर्थः विभक्तेरलुक् । इति च । प्रोक्तं कथितम् । 'शिवमद्वैतं चतुर्थं मन्यते'इति श्रुतेः ॥ २६ ॥ द्रष्टेति । तत्तुरीयमेव । द्रष्टेति द्रष्टृसंज्ञम् । आगमाः अध्यात्मशास्त्राणि । आहुः । तत्तत्कर्मफलपदं चाहुः । अन्तर्यामिसंज्ञं चाहुः । ब्रह्मेति ब्रह्मसंज्ञं चाहुः । परब्रह्मेति चाहुः ॥ २७ ॥ श्रुत्वेति । इत्थममुना

एकैकस्यामवस्थायामेवं वेदार्थवेदिभिः । अन्ये द्वे द्वे अवस्थे हि विवेकेन प्रकीर्त्तिते ॥ २५ ॥ अवस्थाभेदविज्ञानमेवं स्यादात्मनो यतः । तत्तुरीयमिति प्रोक्तं वेदान्तेषु परं पदम् ॥ २६ ॥ द्रष्टेति च तदेवाहुस्तत्तत्कर्मफलप्रदम् । अन्तर्यामीति ब्रह्मेति परब्रह्मेति चागमाः ॥ २७ ॥ श्रुत्वाऽवस्थाभेदमीशोक्तमित्थं नित्यानन्दो भूय एवं तमूचे । बुद्धोऽवस्थाभेद एष त्वदुक्तो वाचो भेदाञ्छ्रोतुमिच्छामि नाथ ! ॥ २८ ॥ परादिभेदतो वाचं बुधाः प्राहुश्चतुर्विधाम् । बुभुत्सामि स्फुटं च जीववैराजदेहयोः ॥ २९ ॥ तमुवाच हरिः प्रीतो विदंस्तत्सूक्ष्मदर्शिताम् । मुने ! परा च पश्यन्ती मध्यमा वैखरीति वाक् ॥ ३० ॥ भेदैश्चतुर्विधा प्रोक्ता जीववैराजयोर्बुधैः । तत्र वैराजपुरुषे तस्या भेदान्वदामि ते ॥ ३१ ॥

प्रकारेण । ईशोक्तं साक्षात्परमेश्वरेण श्रीहरिणा कथितम् । अवस्थाभेदम् । श्रुत्वा । नित्यानन्दो मुनिः । भूयः पुनरपि । तं श्रीहरिम् । एवं वक्ष्यमाणप्रकारेण । ऊचे । हे नाथ ! स्वामिन् ! । त्वदुक्तस्त्वया प्रोक्तः । एषः । अवस्थाभेदः । बुद्धः सम्यक् मया ज्ञातः । अथ । वाचः परादेर्वाण्याः । भेदान् । श्रोतुम् । इच्छामि ॥ २८ ॥ स्फुटबोधायोक्तार्थमेवानुवदति । परेति । हे हरे ! । बुधा ज्ञानिनः । वाचं वाणीम् । परादिभेदतः परापश्यन्तीमध्यमावैखरीभेदेन । चतुर्विधां चतुःप्रकाराम् । प्राहुः । जीववैराजदेहयोर्जीवानां देहेषु वैराजस्य च देहे इत्यर्थः । वर्त्तमानामिति शेषः । तां चतुर्विधां वाणीम् । स्फुटं यथातथा । बुभुत्सामि बोद्धुमिच्छामि ॥ २९ ॥ तामिति । तमेवंपृच्छन्तं नित्यानन्दमुनिम् । हरिः । तत्सूक्ष्मदर्शितां नित्यानन्दमुनेरतिसूक्ष्मशास्त्रार्थेषु शीघ्रमतिप्रवेशशालितामित्यर्थः । विदन् जानन् । अत एव । प्रीतः प्रसन्नः सन् । उवाच । हे मुने ! । परा । पश्यन्ती । मध्यमा । वैखरी । इत्येतैः ॥ ३० ॥ भेदैरिति । भेदैः । वाग्वाणी । बुधैः । जीववैराजदेहयोः ।

चतुर्विधा । प्रोक्ता । तत्र जीववैराजदेहयोर्मध्ये । वैराजपुरुषदेहे । तस्या वाचः । भेदान् परादिचतुःप्रकारान् । ते तुभ्यम् । वदामि । इति द्वयोरेकान्वयः ॥ ३१ ॥ आदाविति । आदौ सर्गारम्भकाले । सहस्रदलं सहस्रपत्रपङ्कजं कमलं यस्मिंस्तस्मिन् । वैराजशिरसि वैराजशिरोऽन्तःस्थिते ब्रह्मरन्धे । स्वयम् । कृष्णः श्रीवासुदेवः । विष्टा प्रविश्य । अक्षरब्रह्मात्मकं स्वपदाक्षरब्रह्मद्वारा प्रादुर्भावितम् । नादं स्फोटाख्यध्वनिम् । व्यधात्कृतवान् ॥ ३२ ॥ सुषुम्णेति । स नादः । सुषुम्णाख्यनाडीमार्गेण । तस्य वैराजपुरुषस्य । नाभिकन्दं नाभिस्थानेऽन्तर्वर्त्तिनाभिपद्माधारमांसपिण्डरूपं नाड्युत्पत्तिस्थानं शैलूषविशेषम् । सद्यस्तत्क्षणमेव । व्याप्य । महाप्राणेन सूत्राख्य-वायुना । संयुतः सम्पृक्तः सन् । तस्माच्चाभिकन्दात् । उद्ध्र्वमूद्र्ध्वप्रदेशे । ववृधे । ॥ ३३ ॥ अध इति । कदलीकोशवत् शिलिन्ध्राख्येन वारणपुषायाः कुड्मलेन सदृश-तयेत्यर्थः । स्थितम् । अधोमुखम् । नाभिपद्मम् । तेन नादेनैव । तस्य वैराजपुरुषस्य । हृदयावधि हृदयपर्यन्तम् । ऊर्ध्वमुखम् । अभूत् ॥ ३४ ॥ तस्येति । तस्य वैराजपुरुषस्य । नाभिकन्दे । यः । नादः । अभूत् । सः परेति परानाम्ना शास्त्रप्रसिद्धा । वाग्वाणी । अभूत् । सा परावाक् । भगवता श्रीवासुदेवेन । वेदोत्पत्त्यै ।

आदौ वैराजशिरसि सहस्रदलपङ्कजे । कृष्णो विष्टाऽक्षरब्रह्मात्मकं नादं व्यधात्स्वयम् ॥ ३२ ॥ सुषुम्णावर्त्मना सद्यो नाभिकन्दं स तस्य तु । व्याप्योद्ध्र्वं ववृधे तस्मान्महाप्राणेन संयुतः ॥ ३३ ॥ अधोमुखं नाभिपद्मं कदलीकोश-वत्स्थितम् । तेनैवाभूदूद्ध्र्वमुखं हृदयावधि तस्य च ॥ ३४ ॥ तस्य यो नाभिकन्दे तु नादोऽभूत्सा परेति वाक् । वेदोत्पत्त्यै भगवता बीजत्वेन प्रकाशिता ॥ ३५ ॥ तेजःप्रवाहरूपाऽथ नाभिकन्दात्तु तस्य सा । सम्प्राप्य हृदयाकाशं पश्यन्त्याख्यामवाप च ॥ ३६ ॥ मध्यमाख्यां कण्ठदेशं प्राप्यालभत तस्य सा । वदनं प्राप्य याति स्म वैखर्याख्यां च सा ततः ॥३७॥ ऊद्ध्र्वं गच्छत्यधो गत्वा जलयन्त्रे यथा जलम् । नाभिमेत्य मुखं याति नादोऽपि शिरसस्तथा ॥ ३८ ॥ अर्द्धमात्रा मकारश्चाप्युकारोंऽकार इत्यमी । वर्णास्ताभ्यः समभवंस्तत्तत्स्थानेषु भासुराः ॥ ३९ ॥

बीजत्वेन कारणतया । प्रकाशिता ॥ ३५ ॥ तेज इति । अथानन्तरम् । तेजःप्रवाहरूपा । सा परावाक् । नाभिकन्दात्सकाशात् । तस्य वैराजपुरुषस्य । हृदयाकाशम् । सम्प्राप्य । पश्यन्त्याख्यां पश्यन्तीसंज्ञाम् । अवाप ॥ ३६ ॥ मध्येति । सा परावाक् । तस्य वैराजपुरुषस्य कण्ठदेशं गलप्रदेशम् । प्राप्य । मध्यमाख्यां मध्यमा-संज्ञाम् । अलभत । ततस्तदनन्तरम् । सा परावाक् । वदनं वैराजमुखपद्मम् । प्राप्य । वैखर्याख्यां वैखरीसंज्ञाम् । याति स्म प्राप ॥ ३७ ॥ नादस्यादावूद्ध्र्वप्रदेशादधोग-त्वोद्ध्र्वगमने दृष्टान्तमाह । ऊद्ध्र्वमिति । तथा । जलयन्त्रे । जलम् । अध ऊद्ध्र्वप्रदेशादधःप्रदेशम् । गत्वा । ऊद्ध्र्वमूद्ध्र्वप्रदेशम् । गच्छति । तथा । नादोऽपि । शिरसो वैराजमूर्ध्नः सकाशात् । नाभिम् । एत्य प्राप्य । मुखम् । याति । स्मेत्यध्याहार्यम् ॥ ३८ ॥ अर्द्धेति । अर्द्धमात्रा । मकारः । उकारः । अकारश्च । इतीत्थम् । भासुराः प्रकाशवन्तः । अमी । वर्णा अक्षराणि । तत्तत्स्थानेषु नाभ्यादिमुखान्तेषु चतुर्षु स्थानेषु । ताभ्यः परादिभ्यश्चतसृभ्यो वाग्भ्यः । समभवन् क्रमेणाविरासन् ॥ ३९ ॥

कृष्णेति । कृष्णेच्छया । संहतेभ्यः परस्परं मिलितेभ्यः । तेभ्योऽर्धमात्रादिवर्णेभ्यः प्रणवध्वनिः । अभूत् । तस्मात्प्रणवात्सकाशात् । सकलाः । वर्णाः शिक्षोक्तानि द्विपञ्चाशदप्यक्षराणीत्यर्थः । अभवन् । तेभ्यो वर्णेभ्यः । वेदा ऋगादयश्चत्वारो निगमाः । अभवन् । इतीत्थंभूतः । क्रमो वेदोत्पत्त्यनुक्रमः । बोध्यः ॥ ४० ॥ नाभीति । एवममुना प्रकारेण । जीवस्यापि । नाभिहृत्कण्ठवक्त्रेषु । कृष्णेच्छावशादेव । वाचो वाण्याः । चतुर्विधश्चतुःप्रकारः । उद्भवः । भवति ॥ ४१ ॥ आन्तर इति । तत्र चतुर्विधे वागुद्भवे । आन्तरः शरीरान्तर्भवः । त्रिविधः परादित्रिप्रकारो वाग्भेदः । विदुषां ज्ञानिनामपि । दुर्ज्ञेयो दुर्बोधः । भवति । अखिलाः । नरास्तु । तुरीयं वैखर्याख्यं चतुर्थम् । वाग्भेदमेव । जानन्ति ॥ ४२ ॥ वैखर्यामिति । जीवस्य । वैखर्यां वैखर्याख्यवाण्यामेव । वाचो वाण्याः । भेदचतुष्टयम् । मया । निश्चितं भवति । गुह्यं रहस्यमपि । तद्भेदचतुष्टयम् । स्पष्टं यथातथा । वदामि ॥ ४३ ॥ य इति । अन्तर्यामी सकलजीवानामन्तःस्थित्वा वागादीन्द्रिय-प्रवर्त्तकः । कर्मफलप्रदाता तत्कृताखिलकर्मणां फलस्य यथाकालं प्रापकः । यः । पुरुषोत्तमोऽस्ति । स पुरुषोत्तम एव । जीवश्रेयोऽर्थं साधुद्वारा स्वस्वरूपज्ञानप्रदानेन

कृष्णेच्छया संहतेभ्यस्तेभ्योऽभूत्प्रणवध्वनिः । तस्माच्च वर्णाः सकलास्तेभ्यो वेदा इति क्रमः ॥ ४० ॥ नाभि-
हृत्कण्ठवक्त्रेषु जीवस्याप्येवमुद्भवः । वाचो भवति कृष्णेच्छावशादेव चतुर्विधः ॥ ४१ ॥ आन्तरस्त्रिविधस्तत्र दुर्ज्ञेयो
विदुषामपि । तुरीयमेव जानन्ति वाग्भेदं त्वखिला नराः ॥ ४२ ॥ वैखर्यामेव जीवस्य वाचो भेदचतुष्टयम् ।
मया तु निश्चितं गुह्यमपि स्पष्टं वदामि ते ॥ ४३ ॥ योऽन्तर्यामी कर्मफलप्रदाता पुरुषोत्तमः । स एव
जीवश्रेयोऽर्थं जायते त्वाकृतिर्भुवि ॥ ४४ ॥ तदा तद्रूपचरितधामादिवर्णयेद्यया । जीवब्रह्मेशादिरूपं विविच्यात्सा
तु वाक् परा ॥ ४५ ॥ पदार्थान्मायिकानत्र विषयांश्च यथार्थतः । वर्णयेत्सविवेकं च यया सा वैखरी तु वाक्
॥ ४६ ॥ यया तु वर्णयेदेतान् भ्रान्तिमानयथार्थतः । पुरुषः सा तु कथिता मध्यमासंज्ञिका हि वाक् ॥ ४७ ॥

स्वाश्रितजीवानामात्यन्तिकमोक्षं कर्तुमित्यर्थः । भुवि पृथिव्याम् । त्वाकृतिर्मनुष्यसमानाकारः । जायते ॥ ४४ ॥ तदेति । तदा । यया वाण्या । तद्रूपचरितधामादि अक्षरपरस्य तस्य साक्षाद्भगवतः स्वरूपचरित्रधामगुणैश्वर्यप्रभृतिकम् । वर्णयेत् भगवदात्ममतिस्तदाश्रितजनो निरूपयेत् । जीवाः क्षेत्रज्ञवृन्दानि च ब्रह्माण्यक्षरपदस्थमुक्तवृन्दानि च ईशा वैराजवृन्दानि च ते आदयो येषां महापुरुषादीनां तेषां रूपमाकार स्वभाव सौन्दर्यप्रभृतिकम् । विविच्यात्पृथक् पृथक् विविच्यानुकीर्त्तयेत् । सा तथाविधा तु । परा । वाक् पराख्या वाणी बोध्याः ॥ ४५ ॥ पदार्थानिति । यया वाण्या । अत्र लोके । मायिकान्मायाकार्यरूपान् । पदार्थान् घटपटादीनि वस्तूनि । विषयान् शब्दादीन्पञ्चापीन्द्रियार्थांश्च । सविवेकं तत्तत्स्वरूपविवेकोक्तिपूर्वं यथातथा । यथार्थतो याथातथ्येन । वर्णयेत् । सा तथाविधा तु । वैखरी । वाक् वैखर्याख्या वाणी बोध्या ॥४६॥ ययेति । यया वाण्या । पुरुषः । भ्रान्तिमाननुभूतार्थस्यानुभूतवत्कथनोद्युक्तत्वादेवं स्यान्न वेति स्वस्वान्ते सम्भ्रमयुक्तः सन् । एतान्मायिकान् पदार्थान्विषयांश्च । अयथार्थतः ।

वर्णयेत् । सा तथाविधा तु । मध्यमासंज्ञिका । वाक् । कथिता । हि ॥ ४७ ॥ ययेति । यया वाण्या । क्वचित्कदाचित् । बालवत् । जाड्येन मतिगताज्ञानेन । अव्यक्तवर्णकमस्फुटोच्चारिताक्षरं यथातथा । एतान् । ब्रूयात् । सा तथाविधा तु । पश्यन्तीसंज्ञिका । वाक् । गदिता ॥४८॥ एवमिति । एवममुना प्रकारेण । जाग्रदवस्थायाम् । चतुर्विधा वाणी । प्रोक्ता । अन्यत्रान्ययोः । अवस्थयोः स्वप्नसुषुप्तिसंज्ञयोः । सा चतुर्विधावाणी तु । समाधिस्थैः समाधिनिष्ठपुरुषैः । अभीयते ज्ञायते ॥ ४९ ॥ श्रुत्वेति । इत्येवंभूताम् । सुधाभाममृतसन्निभाम् । हरेः । वाचम् । श्रुत्वा । विवेकशाली । सः । साधुर्नित्यानन्दमुनिस्तु । तुतोष सर्वातिशयं संतोषमाप । तत्पदभक्तिभाजः श्रीहरेश्चरणारविन्दसेवापरायणाः । सदःस्थिताः । सर्वे । जनास्त्यागिनो गृहिणश्च लोकाः । अदभ्रतोषं महान्तं सन्तोषम् । आपुः ॥ ५० ॥ एकैकस्यामवस्थायां द्वे द्वे ते स्तो यथा तथा । तल्लक्ष्माणि परादीनां गिरां तानि च तत्त्वतः ॥ १ ॥ तज्ज्ञानसिध्यै भक्तानां स्वेषां स्वामी जगाद यः । दद्यात्स श्रीहरिर्मह्यं ज्ञानं मोक्षार्थसाधनम् ॥ २ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्सूनुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां चतुरशीतितमस्तरङ्गः ॥ ८४ ॥ ६ ॥

यया त्वेतान् क्वचिद्ब्रूयाज्जाड्येनाऽव्यक्तवर्णकम् । बालवत्सा तु गदिता पश्यन्तीसंज्ञिका च वाक् ॥ ४८ ॥ एवं जाग्रदवस्थायां प्रोक्ता वाणी चतुर्विधा । अन्यत्रावस्थयोः सा तु समाधिस्थैरभीयते ॥ ४९ ॥ श्रुत्वेति वाचं स हरेः सुधाभां तुतोष साधुस्तु विवेकशाली । सदःस्थितास्तत्पदभक्तिभाजः सर्वे जनाश्चापुरदभ्रतोषम् ॥ ५० ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते चतुरशीतिमस्तरङ्गः ॥ ८४ ॥ ६ ॥

शकाब्दे विक्रमार्कस्य नगाश्ववसुभूमिते । एकादश्यां नभःकृष्णे वचोमृतमिदं हरेः ॥१॥ तत्र सारङ्गनगरे वसतौ जीववर्मणः । वेद्यां पीठोत्तमे स्वामी स न्यषीदत्सिताम्बरः ॥ २ ॥ नानादेशागतस्वीयभक्तमण्डलमध्यगम् । मुक्तानन्दस्तमानम्य पप्रच्छेत्थं सतां वरः ॥ ३ ॥ श्रीमद्भागवतस्याद्याध्यायश्रीधरटिप्पणे । नैमिशारण्यशब्दार्थे लेखिताऽऽख्यायिकाऽस्ति हि ॥ ४ ॥

क्षेत्रस्य नैमिषारण्यसंज्ञस्यार्थो यथार्थतः । सप्तमे हरिणा प्रोक्तः स्वीयानुभवतस्ततः ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८७७) नभःकृष्णे श्रावणमासस्य कृष्णपक्षे । एकादश्यां तिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । सारङ्गनगरे । जीववर्मणो नृपतेः । दुर्गे इति शेषः । वसतौ तस्यैवोदङ्मुखभवने । वेद्यां बाह्यायां वेदिकायाम् । पीठोत्तमे श्वेतोत्तरच्छदाद्युपस्करसहिते पर्यङ्कोत्तमासने । सिताम्बरः परिधृतसकलधवलवसनः । स्वामी । स श्रीहरिः । न्यषीदद्भगवत्सान्ध्यनीराजनान्ते उपविवेश ॥ २ ॥ नानेति । नानादेशागता अनेकविधदेशेभ्य उपायाता ये स्वीयभक्तास्त्यागिगृहिणो निजभक्तजनास्तेषां मण्डलस्य मध्यगस्तम् । तथाविधस्वभक्तसभामध्यप्रदेशावस्थितमित्यर्थः । तं श्रीहरिम् । आनम्य सतां वरः साधुश्रेष्ठः । मुक्तानन्दो मुनिः । इत्थं वक्ष्यमाणप्रकारेण । पप्रच्छ ॥ ३ ॥ श्रीमदिति । हे हरे ! । श्रीमद्भागवतस्य पुराणस्य । आद्याध्यायश्रीधरटिप्पणे प्रथमाध्यायस्य नैमिशेऽनिमिषक्षेत्र इति श्लोकस्य श्रीधरकृतटीकायाम् । नैमिशारण्यशब्दार्थे नैमिशारण्यशब्दार्थसोक्तौ । आख्यायिका वायुपुराणोक्ताख्यानम् । लिखिता । अस्ति । हि ॥ ४ ॥

मन इति । मनोमयस्य । चक्रस्य । नेमिः प्रधिः । यत्र क्षेत्रे । शीर्येत । कुण्ठी भवेत् । तत्क्षेत्रम् । पुण्यतमम् । धर्मानुष्ठानसिद्धिदम् । ज्ञेयम् । इतीत्युत्तरेण सम्बन्धः ॥५॥ इतीति । इत्यमुना प्रकारेण । तत्र तस्यामाख्यायिकायाम् । उक्तम् । अस्ति । अस्य मनोमयचक्रनेमिविशीर्णतोक्तिरूप–रूपकेणोक्तस्य नैमिशशब्दस्य । अर्थम् । अञ्जसा तत्त्वतः । बुभुत्सामि बोद्धुमिच्छामि । इत्यमुना प्रकारेण । तेन मुक्तानन्दमुनिना पृष्टः । दयानिधिर्दयासागरः । हरिः । तं मुक्तानन्दमुनिम् । उवाच ॥ ६ ॥ अस्येति । हे मुने ! । स्वीयानुभवनिश्चितं स्वकीयानुभवज्ञाननिर्णीतम् । अस्योक्तप्रकारस्य नैमिशशब्दस्य । अर्थम् । ते तुभ्यम् । वच्मि । शृणु । मनोमयम् । यत् । चक्रम् । तत् । मन इति मन एवोक्तमिति । अवधारय जानीहि ॥७॥ दशेति । तस्य मनोरूपस्य चक्रस्य । दशेन्द्रियगणश्चक्षुरादीनां दशानामिन्द्रियाणां समूहः । भ्रमणाश्रयः । नेमिः परिभ्रमणाधारप्रधिभूतः । अस्ति । तस्येन्द्रियगणरूपनेमेः । स्वार्थेभ्यो मनश्चक्रपरिभ्रमणाधारेन्द्रियनेम्याधारभूतमार्गरूपशब्दादिस्वस्वविषयेभ्यः । पराङ्मुखत्वं परावृत्तिता तेष्वप्रवर्त्तनमित्यर्थः । शीर्णता कुण्ठीभावः । प्रोक्ता । मनसोविषयग्रहणे इन्द्रियाणामनुग्राहकत्वात्तेषां स्वस्वविषयग्रहणाप्रवृत्तौ मनश्चक्रणेमेर्विशीर्णतया मनसस्तत्र परिभ्रमणा-

मनोमयस्य चक्रस्य नेमिः शीर्येत यत्र तत् । क्षेत्रं पुण्यतमं ज्ञेयं धर्मानुष्ठानसिद्धिदम् ॥ ५ ॥
इति तत्रोक्तमस्त्यस्य बुभुत्साम्यर्थमञ्जसा । इति पृष्टो हरिस्तेन तमुवाच दयानिधिः ॥ ६ ॥
अस्यार्थं शृणु ते वच्मि स्वीयानुभवनिश्चितम् । चक्रं मनोमयं यत्तन्मन इत्यवधारय ॥ ७ ॥
दशेन्द्रियगणो नेमिस्तस्यास्ति भ्रमणाश्रयः । पराङ्मुखत्वं स्वार्थेभ्यस्तस्य प्रोक्ता च शीर्णता ॥ ८ ॥
तद्धेतुस्त्विह सत्सङ्गः पुण्यक्षेत्रं ततस्तु सः । सत्कर्मणां हि संसिद्धिस्तत्रैवाशु भवेन्नृणाम् ॥ ९ ॥
तत्क्षेत्रसेविनां पुंसामिन्द्रियाणां निजार्थतः । वैमुख्यं भवति क्षिप्रं धर्मवृद्धिश्च जायते ॥ १० ॥
खानां विषयवैमुख्ये मुमुक्षूणां मनो हरौ । स्थिरं स्यान्नष्टचाञ्चल्यं विषयासक्तिवर्जितम् ॥ ११ ॥

प्रवृत्तिरिति भावः ॥ ८ ॥ तद्धेतुरिति । इह लोके । तद्धेतुर्मनश्चक्रनेमिविशीर्णताकारणभूतं स्थानं तु । सत्सङ्गः साक्षाद्धर्म्यैकान्तिकसाधूनां समागमोऽस्ति । ततो हेतोः । स तु सत्सङ्ग एव । पुण्यक्षेत्रं नैमिशारण्यशब्दवाच्योऽस्ति । हि यतः । तत्र सत्सङ्गाख्यनैमिशक्षेत्रे एव । नृणां भगवदाश्रितजनानाम् । सत्कर्मणामेकान्तिकता-सम्पादकधर्मादिसत्क्रियाणाम् । संसिद्धिरबह्वायासेन सिद्धता । आशु शीघ्रमेव । भवेत् ॥ ९ ॥ साम्प्रतं सत्सङ्गाख्यक्षेत्रमहिमानमाह पञ्चभिः । तदिति । हे मुने ! । तत्क्षेत्रसेविनां तद्वचोऽवधारणतत्परिचर्याचरणादिना क्षेत्रशब्देदितानां तेषां साधूनां प्रसङ्गवतामित्यर्थः । पुंसां भगवद्भक्तजनानाम् । इन्द्रियाणाम् । निजार्थतः स्वस्व-विषयेभ्यः । वैमुख्यं पराङ्मुखत्वम् । क्षिप्रं शीघ्रमेव । भवति । धर्मवृद्धिश्च । जायते ॥ १० ॥ खानामिति । खानामिन्द्रियाणाम् । विषयवैमुख्ये विषयेभ्यः पराङ्मुखत्वे सति । मुमुक्षूणां भक्तानाम् । मनः । विषयासक्तिवर्जितम् । अत एव । नष्टचाञ्चल्यं चञ्चलतारहितं सत् । हरौ । स्थिरम् । स्यात् ॥ ११ ॥

एतदेव दृष्टान्ताभ्यां द्रढयति द्वाभ्याम् । शीर्णेति । यथा । चक्रम् । शीर्णनेमि सत् । अभ्रमं परिभ्रमणवर्जितम् । स्यात् । तथा । मनः । विषयेभ्यः । परावृत्तेन्द्रियगणं सत् । अभ्रम् । भवेत् । विषयपरावृत्तेन्द्रियगणरूपनेमेर्मनश्चक्रस्य पृथग्भावादनेमिमनश्चक्रं विषयवाटे प्रवृत्तिरूपभ्रमणवर्जितं भवेदित्यर्थः ॥ १२ ॥ यथेति । यथा । बाणः शरः । निष्फलकः शल्यवर्जितं सन् । लक्ष्यं शरव्यम् । वेद्धुं भेत्तुम् । न शक्नुयात्समर्थो न भवेत् । तद्वत्तथा । मनः । निरिन्द्रियमिन्द्रियसाहाय्यवर्जितं सत् । विषयग्रहणे । अक्षममसमर्थम् । भवेत् ॥ १३ ॥ जितेति । ये भगवद्भक्तजनाः । सत्सङ्गक्षेत्रसंश्रयात्प्रतिदिनं साधुसमागमाचरणादित्यर्थः । जितेन्द्रियमनोवेगाः । भवन्ति । तेषां भगवद्भक्तजनानामेव । सद्धर्माचरणमेकान्तिकधर्मानुष्ठानम् । द्रुतं शीघ्रमेव । सिध्येत् । वै ॥ १४ ॥ प्रश्नेति । हे मुनिवर्य ! । ते तव । प्रश्नोत्तरम् । इत्थममुना प्रकारेण भवति । इत्येवंविधम् । सुधाममृतरूपम् । प्रभोः । तस्य श्रीहरेः । वचो वचनम् ।

शीर्णनेमि यथा चक्रमभ्रमं स्यात्तथा मनः । परावृत्तेन्द्रियगणं विषयेभ्योऽभ्रमं भवेत् ॥ १२ ॥ यथा निष्फलको बाणं लक्ष्यं वेद्धुं न शक्नुयात् । निरिन्द्रियं मनस्तद्वद्विषयग्रहणेऽक्षमम् ॥ १३ ॥ जितेन्द्रिय-मनोवेगाः सत्सङ्गक्षेत्रसंश्रयात् । ये तेषामेव सिद्ध्येद्वै सद्धर्माचरणं द्रुतम् ॥ १४ ॥ प्रश्नोत्तरं ते मुनिवर्य ! चेत्थमिति प्रभोस्तस्य वचो निपीय । सुधां स तोषं सह तत्सदःस्थैः प्रापद् गृहस्थैश्च विरक्तपुंभिः ॥ १५ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते पञ्चाशीतितमस्तरङ्गः ॥ ८५ ॥ ७ ॥

शकाब्दे विक्रमार्कस्य नगाश्ववसुभूमिते । द्वादश्यां नभसःकृष्णे वचोऽमृतमिदं हरेः ॥ १ ॥
तत्र सारङ्गनगरे मन्दिरे जीववर्मणः । स न्यषीदत्पीठवरे बहिर्वेद्यां सितांशुकः ॥ २ ॥

निपीय । स मुक्तानन्दमुनिः । तत्सदःस्थैस्तस्यां सभायामुपविष्टैः । गृहस्थैः । विरक्तपुंभिस्त्यागिजनैश्च । सह । तोषं महान्तमानन्दम् । प्रापत् ॥ १५ ॥ सत्सङ्ग-मेव यः प्राह नैमिशं क्षेत्रमुत्तमम् । सद्धर्महेतुं स हरिर्वासं देयात्तु तत्र मे ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्पदानुरघुवीराचार्य-विरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां पञ्चाशीतितमस्तरङ्गः ॥ ८५ ॥ ७ ॥

त्याज्याः सर्वथा भक्तैरीर्ष्याया लक्षणं यथा । अष्टमे हरिणा चैतन्यानन्दाय प्रकीर्त्तितम् ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८७७) नभसः श्रावण-मासस्य । कृष्णे कृष्णपक्षे । द्वादश्यां तिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥१॥ तत्रेति । तत्र तिथौ । सारङ्गनगरे । जीववर्मणो नृपस्य । दुर्गे इति शेषः । मन्दिरे तस्यैवोत्तरास्यभवने । बहिर्वेद्याम् । पीठे वरे उपबर्हपार्श्विकश्वेतोत्तरच्छदादिसहितोत्तममश्वासने । सितांशुकः परिधृतसकलश्वेतवसनः । स श्रीहरिः । न्यषीदत् ॥ २ ॥

नैकेति । नैकदेशागतैरनेकदेशेभ्य उपायातैः । भक्तैः स्वाश्रितैः । त्यागिभिः । गृहिभिश्च । वृतं सभायां परिवेष्टितम् । तं श्रीहरिम् । चैतन्यानन्दः । साधुः । कृतानतिः कृतप्रणामः सन् । पप्रच्छ ॥ ३ ॥ ईर्ष्येति । भो स्वामिन् ! । ईर्ष्या । त्याज्या सर्वथा हेया । इत्येवंविधा । तव । आज्ञा । नोऽस्मान्प्रति । वर्त्तते । हि । तस्या । ईर्ष्यायाः । यथार्थम् । लक्षणम् । शुश्रूषामि श्रोतुमिच्छामि । इत्येतदीर्ष्यालक्षणम् । माम् । वद । अत्रेर्ष्याशब्दो मत्सरवाचको बोध्यः । यत्रेर्ष्यामत्सरयोः पृथग्भावेनोक्तिस्तत्रेर्ष्या स्वसमान्योत्कर्षासहनलक्षणा मत्सरः स्वसमासमान्योत्कर्षासहनलक्षण इति भेदेन तदर्थौ ज्ञेयः ॥ ४ ॥ तमिति । तमेवंपृच्छन्तं चैतन्यानन्दम् । हरिः । उवाच । हे साधो ! । मानमूलम् । तापकृदन्तःकरणसन्तापकर्त्तृ । यत् । परोत्कर्षासहिष्णुत्वं स्वसमासमान्यजनोत्कर्षासहनता सैव । ईर्ष्या । ज्ञातव्या ॥ ५ ॥ न केवलं मानादिर्ष्योत्पद्यतेऽपि तु तस्मादन्येऽपि क्रोधादयो दोषा उत्पद्यन्ते इत्याह । मान इति । यस्य पुरुषस्य । हृदि । मानः । भवेत् ।

नैकदेशागतैर्भक्तैस्त्यागिभिर्गृहिभिश्च तम् । वृतं पप्रच्छ चैतन्यानन्दः साधुः कृतानतिः ॥ ३ ॥
ईर्ष्या त्याज्येति भो स्वामिंस्तवाज्ञा वर्त्तते हि नः । यथार्थं लक्षणं तस्याः शुश्रूषामीति मां वद ॥ ४ ॥
तमुवाच हरिः साधो ! ज्ञातव्येर्ष्या तु सैव यत् । परोत्कर्षासहिष्णुत्वं मानमूलं च तापकृत् ॥५॥ मानो
हृदि भवेद्यस्य तस्य चेर्ष्या क्रुधादयः । दोषाः समुद्भवन्त्यन्ये हातव्यास्ते प्रयत्नतः ॥६॥ ईर्ष्यावान् पुरुषः
क्वापि स्वसमस्यासमस्य वा । सन्माननादिमुत्कर्षं न सोढुं शक्नुयात्खलु ॥७॥ ज्ञात्वेत्थमीर्ष्यामिह लक्षणेन
सत्सङ्गिना साऽऽशु हृदः प्रहेया । इति प्रभोर्वागमृतं स पीत्वा मुनिस्तुतोषाप्यपरे च सभ्याः ॥ ८ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते षडशीतितमस्तरङ्गः ॥ ८६ ॥ ८ ॥

तस्य पुरुषस्य । हृदि । ईर्ष्या । क्रुधादयः कोपासूयाप्रभृतयः । अन्ये । दोषाश्च । समुद्भवन्त्युत्पद्यन्ते । ते ईर्ष्या क्रुधादयः । दोषाः । प्रयत्नतः । हातव्या मद्भक्तेन तूर्णमेव हेयाः ॥ ६ ॥ पूर्वं धर्मतयेर्ष्यालक्षणमुक्त्वा साम्प्रतं तत्स्पष्टबोधाय धर्म्युक्त्या तल्लक्षणमाह । ईर्ष्येति । ईर्ष्यावान् । पुरुषः । स्वसमस्य गुणैः स्वसमानस्य । अथवा । असमस्य गुणैः स्वतो न्यूनस्य पुरुषस्य । सन्माननादि सर्वतः सत्कारप्राप्त्यादिकम् । उत्कर्षं महत्ताम् । सोढुं क्षन्तुम् । क्वापि कदाचिदपि । न शक्नुयात् समर्थो न भवेत् । खलु निश्चितम् ॥ ७ ॥ ज्ञात्वेति । इह सत्सङ्गे । इत्थममुना प्रकारेण । ईर्ष्याम् । लक्षणेन । ज्ञात्वा । सत्सङ्गिना जनेन । सेर्ष्या आशु शीघ्रमेव । हृदः स्वमनसः सकाशात् । प्रहेया प्रयत्नतस्त्याज्या । इतीत्थंभूतम् । प्रभोः श्रीहरेः । वागमृतं वचनसुधाम् । पीत्वा । सः । मुनिश्चैतन्यानन्दसाधुः । तुतोष । सभ्याः समीपविष्टाः । अपरे त्यागिनो गृहिणो जनाश्चापि । तुतुषुः ॥ ८ ॥ स्वस्याप्रसन्नताहेतोः स्वभक्तेषु तु लक्षणम् ।

नैकेति । नैकदेशागतैरनेकदेशेभ्य उपायातैः । भक्तैः स्वाश्रितैः । त्यागिभिः । गृहिभिश्च । वृतं सभायां परिवेष्टितम् । तं श्रीहरिम् । चैतन्यानन्दः । साधुः । कृताननतिः कृतप्रणामः सन् । पप्रच्छ ॥ ३ ॥ ईर्ष्येति । भो स्वामिन् ! । ईर्ष्या । त्याज्या सर्वथा हेया । इत्येवंविधा । तव । आज्ञा । नोऽस्मान्प्रति । वर्त्तते । हि । तस्या । ईर्ष्यायाः । यथार्थम् । लक्षणम् । शुश्रूषामि श्रोतुमिच्छामि । इत्येतदीर्ष्यालक्षणम् । माम् । वद । अत्रेर्ष्याशब्दो मत्सरवाचको बोध्यः । यत्रेर्ष्यामत्सरयोः पृथग्भावेनोक्तिस्तत्रेर्ष्या स्वसमान्योत्कर्षासहनलक्षणा मत्सरः स्वसमासमान्योत्कर्षासहनलक्षण इति भेदेन तदर्थो ज्ञेयः ॥ ४ ॥ तमिति । तमेवंपृच्छन्तं चैतन्यानन्दम् । हरिः । उवाच । हे साधो ! । मानमूलम् । तापकृदन्तःकरणसन्तापकृत् । यत् । परोत्कर्षासहिष्णुत्वं स्वसमासमान्यजनोत्कर्षासहनता सैव । ईर्ष्या । ज्ञातव्या ॥ ५ ॥ न केवलं मानादिर्ष्योत्पद्यतेऽपि तु तस्मादन्येऽपि क्रोधादयो दोषा उत्पद्यन्ते इत्याह । मान इति । यस्य पुरुषस्य । हृदि । मानः । भवेत् ।

नैकदेशागतैर्भक्तैस्त्यागिभिर्गृहिभिश्च तम् । वृतं पप्रच्छ चैतन्यानन्दः साधुः कृताननतिः ॥ ३ ॥
ईर्ष्या त्याज्येति भो स्वामिंस्तवाज्ञा वर्त्तते हि नः । यथार्थं लक्षणं तस्याः शुश्रूषामीति मां वद ॥ ४ ॥
तमुवाच हरिः साधो ! ज्ञातव्येर्ष्या तु सैव यत् । परोत्कर्षासहिष्णुत्वं मानमूलं च तापकृत् ॥५॥ मानो
हृदि भवेद्यस्य तस्य चेर्ष्या क्रुधादयः । दोषाः समुद्भवन्त्यन्ये हातव्यास्ते प्रयत्नतः ॥६॥ ईर्ष्यावान् पुरुषः
क्वापि स्वसमस्यासमस्य वा । सन्माननादिमुत्कर्षं न सोढुं शक्नुयात्खलु ॥७॥ ज्ञात्वेत्थमीर्ष्यामिह लक्षणेन
सत्सङ्गिना साऽऽशु हृदः प्रहेया । इति प्रभोर्वागमृतं स पीत्वा मुनिस्तुतोषाप्यपरे च सभ्याः ॥ ८ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते षडशीतितमस्तरङ्गः ॥ ८६ ॥ ८ ॥

तस्य पुरुषस्य । हृदि । ईर्ष्या । क्रुधादयः कोपासूयाप्रभृतयः । अन्ये । दोषाश्च । समुद्भवन्त्युत्पद्यन्ते । ते ईर्ष्या क्रुधादयः । दोषाः । प्रयत्नतः । हातव्या मद्भक्तेन तूर्णमेव हेयाः ॥ ६ ॥ पूर्वं धर्मतयेर्ष्यालक्षणमुक्त्वा साम्प्रतं तत्स्पष्टबोधाय धर्म्युक्त्या तल्लक्षणमाह । ईर्ष्येति । ईर्ष्यावान् । पुरुषः । स्वसमस्य गुणैः स्वसमानस्य । अथवा । असमस्य गुणैः स्वतो न्यूनस्य पुरुषस्य । सन्माननादि सर्वतः सत्कारप्राप्त्यादिकम् । उत्कर्षं महत्ताम् । सोढुं क्षन्तुम् । क्वापि कदाचिदपि । न शक्नुयात् समर्थो न भवेत् । खलु निश्चितम् ॥ ७ ॥ ज्ञात्वेति । इह सत्सङ्गे । इत्थममुना प्रकारेण । ईर्ष्याम् । लक्षणेन । ज्ञात्वा । सत्सङ्गिना जनेन । सेर्ष्या आशु शीघ्रमेव । हृदः स्वमनसः सकाशात् । प्रहेया प्रयत्नतस्त्याज्या । इतीत्थंभूतम् । प्रभोः श्रीहरेः । वागमृतं वचनसुधाम् । पीत्वा । सः । मुनिश्चैतन्यानन्दसाधुः । तुतोष । सभ्याः समीपविष्टाः । अपरे त्यागिनो गृहिणो जनाश्चापि । तुतुषुः ॥ ८ ॥ स्वस्याप्रसन्नताहेतोः स्वभक्तेषु तु लक्षणम् ।

ईर्ष्याया यो हरिः प्राह स मां कुर्यात्तयोज्झितम् ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्त्वनुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटिकायां षडशीतितमस्तरङ्गः ॥ ८६ ॥ ८ ॥

हेतुर्युगानां प्रवृत्तेर्गुणानां च तथास्ति सः । नाशोपायः कलेः स्थानार्थ एतन्नवमे स्मृतम् ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८७७) नभःकृष्णे श्रावणमासस्य कृष्णपक्षे । त्रयोदश्यां तिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । आस्त इति । तत्र तिथौ । सारङ्गनगरात् । कुण्डलग्रामम् । आगतः अमरक्षत्रादिस्वभक्तेभ्यः स्वदर्शनादिसुखप्रदानाय सम्प्राप्तः । शुभ्रवसनः स्वाङ्गपरिधृतसकलश्वेतवसनः । भक्तसङ्घसमावृतो नानादेशायातत्यागिगृहिस्वाश्रितजनवृन्दैः सभायां परिवृतः । स श्रीहरिः । अमरक्षत्रगेहस्य पश्चिमास्यस्यामराख्यक्षत्रियभवनस्य । वितर्द्यां बाह्यायां वितर्दौ । उत्तमे तूलिकोपबर्हाद्यास्तरणशोभाश्रेष्ठे । पीठे मञ्चासने । आस्ते स्मोदङ्मुख उपविवेश । तं तथाविधासनोपविष्टं श्रीहरिम् । आनम्य । महामतिः । मुक्तानन्दो मुनिः । पृच्छति स्म । इति द्वयोरेकान्वयः ॥ २ ॥ ३ ॥

शकाब्दे विक्रमार्कस्य नगाश्ववसुभूमिते । त्रयोदश्यां नभःकृष्णे वचोऽमृतमिदं हरेः ॥ १ ॥
तत्र सारङ्गनगरात्कुण्डलग्राममागतः । सोऽमरक्षत्रगेहस्य वितर्द्यां पीठ उत्तमे ॥ २ ॥
आस्ते स्म शुभ्रवसनो भक्तसङ्घसमावृतः । मुक्तानन्दस्तमानम्य पृच्छति स्म महामतिः ॥ ३ ॥
महाराजात्र मर्त्यानां हृदयेषु युगान्यपि । प्रवर्त्तन्त इति स्वामिन् ! श्रुतं प्राग्भवदास्यतः ॥ ४ ॥
क्वचित्सत्यं क्वचित्त्रेता क्वचिच्च द्वापरः कलिः । प्रवर्त्ततेऽत्र को हेतुस्तन्मे त्वं वक्तुमर्हसि ॥ ५ ॥
इति पृष्टस्तमवदत्स्वामी त्वं शृणु सत्तम ! । गुणेभ्यो हृदयस्थेभ्यः प्रवर्त्तन्ते युगानि तु ॥ ६ ॥

महाराजेति । हे महाराज ! राजाधिराज ! । हे स्वामिन् ! । अत्र लोके । वर्त्तमानानामिति शेषः । मर्त्यानां मनुष्याणाम् । हृदयेष्वपि । युगानि कृतादीनि । प्रवर्त्तन्ते । न केवलं बहिरेवेति भावः । इतीत्थम् । प्राक् पूर्वम् । सप्तसप्ततितमे तरङ्गे इत्यर्थः । भवदास्यतस्त्वन्मुखपद्मात् । श्रुतं मयाकर्णितमस्ति ॥ ४ ॥ एतदेव स्पष्टमाह । क्वचिदिति । क्वचित्कदाचित् । सत्यं सत्ययुगम् । प्रवर्त्तते । क्वचित् । त्रेता त्रेतायुगम् । प्रवर्त्तते । क्वचित् । द्वापरे द्वापरयुगम् । प्रवर्त्तते । क्वचित् । कलिः कलियुगम् । प्रवर्त्तते । अत्र मर्त्यान्तःकरणेषु युगप्रवृत्तौ । को हेतुः किं कारणमस्ति । तदेतदन्तर्युगप्रवृत्तिनिमित्तम् । त्वम् । मे मह्यम् । वक्तुम् । अर्हसि ॥ ५ ॥ इतीति । इत्यमुना प्रकारेण । पृष्टो मुक्तानन्दमुनिनानुयुक्तः । स्वामी श्रीहरिः । तं मुक्तानन्दमुनिम् । अवदत् । हे सत्तम ! साधुश्रेष्ठ ! । त्वम् । शृणु । युगानि सत्यादीनि तु । हृदयस्थेभ्यः सर्वजनान्तःकरणावस्थितेभ्यः । गुणेभ्यः सत्त्वादिभ्यः । प्रवर्त्तन्ते । सत्त्वादयः पुरुषहृदयावस्थिता गुणा एव युगप्रवृत्तिहेतव इत्यर्थः ॥ ६ ॥

एतदेव पुनः स्पष्टतयाह । सत्त्वादिति । सत्त्वात्सत्त्वगुणात् । सत्यं कृतयुगम् । प्रभवति । मनोबुद्धीन्द्रियाणां सत्त्वगुणकार्ये ज्ञानतपआदौ रुचौ जातायां सत्यां मद्धृदये कृतयुगं प्रवृत्तं भवतीति जानीयादित्यर्थः । रजसः । गुणात् । त्रेता त्रेतायुगम् । प्रभवति । मन आदीनां रजोगुणकार्ये काम्यकर्मादौ रूचौ जातायां मद्धृदये त्रेतायुगं प्रवृत्तं भवतीति जानीयादित्यर्थः । रजस्तमोभ्यां रजोगुणतमोगुणाभ्याम् । द्वापरः । युगम् । प्रभवति । मन आदीनां रजोगुणकार्ये काम्यकर्मादौ तमोगुणकार्ये लोभादौ च रुचौ जातायां मद्धृदये द्वापरयुगं प्रवृत्तं भवतीति जानीयादित्यर्थः । तमसस्तमोगुणात् । कलिः कलियुगम् । प्रभवति । मनआदीनां तमोगुणकार्ये मायाऽनृततन्द्रादौ रुचौ जातायां मद्धृदये कलियुगं प्रवृत्तं भवतीति जानीयादित्यर्थः । तथा चोक्तं श्रीमद्भागवते । 'सत्त्वं रजस्तम इति दृश्यन्ते पुरुषे गुणाः । कालसञ्चोदितास्ते वै परिवर्त्तन्त आत्मनि । प्रभवन्ति यदा सत्त्वे मनोबुद्धीन्द्रियाणि च । तदा कृतयुगं विद्याज्ज्ञाने तपसि यद्रुचिः । यदा कर्मसु काम्येषु भक्तिर्भवति देहिनाम् । तदा त्रेतारजोवृत्तिरिति जानीहि बुद्धिमन् ! । यदा लोभस्त्वसन्तोषो मानो दम्भोऽथ मत्सरः । कर्मणां चापि काम्यानां द्वापरं तद्रजस्तमः । यदा मायाऽनृतं तन्द्रा निद्रा हिंसा विषादनम् । शोको मोहो भयं दैन्यं स कलिस्तामसः स्मृत'इति ॥ ७ ॥ एवमिति । एवममुना प्रकारेण । चत्वारि । युगानि । गुणत्रयात् । प्रभवन्ति जनानां हृदयेषू-

सत्त्वात्सत्यं प्रभवति त्रेता च रजसो गुणात् । रजस्तमोभ्यां तु युगं द्वापरस्तमसः कलिः ॥ ७ ॥
एवं युगानि चत्वारि प्रभवन्ति गुणत्रयात् । अथ मुक्तानन्दमुनिः पुनः पप्रच्छ तं प्रभुम् ॥ ८ ॥
युगप्रवृत्तिमूलानां गुणानां हेतुमीश्वर ! । ब्रूहि भक्तिविशेषं च कर्त्तव्यं गुणिनां नृणाम् ॥ ९ ॥
हरिरूचेऽथ तं साधो ! कर्म स्वीयं पुरा कृतम् । हेतुर्गुणप्रवृत्तेस्तु ज्ञातव्यो हि शुभाशुभम् ॥ १० ॥
सात्त्विकं कर्म यस्य स्यात्स सत्त्वप्रकृतिर्भवेत् । यस्य स्याद्राजसं कर्म स भवेच्च रजोगुणी ॥ ११ ॥
कर्म स्यात्तामसं यस्य भवेत्स च तमोगुणी । गुणानुरूपाः कुर्युस्ते क्रियाः सर्वे शुभाशुभाः ॥ १२ ॥

त्पद्यन्ते । अथैवंविधश्रीहरिवाक्यश्रवणानन्तरम् । मुक्तानन्दमुनिः । पुनर्भूयोऽपि । प्रभुम् । तं श्रीहरिम् । पप्रच्छ ॥ ८ ॥ युगेति । हे ईश्वर ! सर्वनियामक ! । युगप्रवृत्तिमूलानामुक्तप्रकारेण कृतादियुगप्रवृत्तिहेतुभूतानाम् । गुणानां सत्त्वादीनाम् । हेतुं प्रवृत्तेर्निमित्तम् । ब्रूहि । इति प्रथमः प्रश्नः । गुणिनां सत्त्वादिगुणवताम् । नृणाम् । कर्त्तव्यम् । भक्तिविशेषं च । ब्रूहि । यादृग्गुणवता यादृशी भक्तिः कार्या स्यात्तत्प्रकारं कथयेत्यर्थः । इति द्वितीयः प्रश्नः ॥ ९ ॥ हरिरिति । अथैवंविधमुक्तानन्दमुनिप्रश्नश्रवणानन्तरम् । हरिः । तं मुक्तानन्दमुनिम् । ऊचे । हे साधो ! । पुराकृतं पूर्वजन्मनि निष्पादितम् । स्वीयं स्वकीयम् । शुभाशुभम् । कर्म । गुणप्रवृत्तेर्जनानां हृदयेषु सत्त्वादिगुणप्रवर्त्तनस्य । हेतुः कारणम् । ज्ञातव्यः ॥१०॥ एतदेव स्पष्टमाह द्वाभ्याम् । सात्त्विकमिति । यस्य जनस्य । सात्त्विकं सत्त्वप्रधानम् । कर्म । स्यात् । स जनः । सत्त्वप्रकृतिः सत्त्वगुणी । भवेत् । यस्य । राजसं रजःप्रधानम् । कर्म । स्यात् । सः । रजोगुणी । भवेत् ॥११॥ कर्मेति । यस्य । तामसं तमःप्रधानम् । कर्म । स्यात् । सः । तमोगुणी । भवेत् । ते सत्त्वादिगुणवन्तः । सर्वे जनाः । गुणानुरूपाः स्वस्वगुणानुसारिणीः । शुभाशुभाः । क्रियाः । कुर्युः ॥ १२ ॥

एवं प्रथमप्रश्नोत्तरं कृत्वा द्वितीयप्रश्नोत्तरमाह । तत्रेति । तत्र तेषु गुणत्रयवत्सु जनेषु मध्ये । ये जनाः । सात्त्विकाः । स्युः । तैः सात्त्विकजनैस्तु । बुद्धिनैर्मल्यात्सात्त्विकबुद्धे रजस्तमःकार्यरागतन्द्रादिदोषरहितत्वाद्धेतोः । श्रीराधिकापतेः रमाराधाकान्तस्य श्रीहरेः । ध्यानाभ्यासः । प्रीत्याऽतिस्नेहेन । विशेषतः पुनः पुनरित्यर्थः । कर्त्तव्यः ॥ १३ ॥ राजसानामिति । ध्यानम् । साधयतां श्रीहरिमूर्त्तिध्यानं संसाधयितुमुद्युक्तानामपीत्यर्थः । राजसानाम् । जनानाम् । चित्ते । मालिन्यदोषतो रागादिदोषाविलत्वाद्धेतोः । क्वापि कदाचिदपि । तत्सिद्धिर्ध्यानसंसिद्धिः । न भवेत् ॥ १४ ॥ तस्मादिति । तस्माद्धेतोः । तैः राजसतामसजनैस्तु । हरेः । श्रवणादिका गुणचरित्राकर्णनप्रमुखा । भक्तिः । कर्त्तव्या । ध्यानम् । संसाधयितुं तु । यत्नः प्रयासः । नैव कर्त्तव्यः । आग्रहस्तदर्थं हठात्कारश्च । नैव कर्त्तव्यः ॥ १५ ॥ आत्मेति । तै राजसतामसजनैः । आत्मनिष्ठा संसाध्या । प्रभुः । अजामिलादिपतितपावनः । भवति । खलु । इत्येवंभूतः । प्रभोः साक्षाच्छ्रीहरेः । महिमा चापि । ज्ञेयः ॥ १६ ॥ तत्कर्त्तव्यश्रीहरिमहिमविचारणप्रकारमाह चतुरक्षराधिकसार्द्धेन । सांकेत्येनेति । यः श्रीहरिः । सांकेत्येन पुत्रादौ संकेतितेन ।

तत्र ये सात्त्विकास्तैस्तु ध्यानाभ्यासो विशेषतः । कर्त्तव्यो बुद्धिनैर्मल्यात्प्रीत्या श्रीराधिकापतेः ॥ १३ ॥
राजसानां तामसानां ध्यानं साधयतामपि । न तत्सिद्धिर्भवेत्क्वापि चित्ते मालिन्यदोषतः ॥ १४ ॥
तस्मात्तैस्तु हरेर्भक्तिः कर्त्तव्या श्रवणादिका । ध्यानं तु संसाधयितुं नैव यत्नश्च नाग्रहः ॥ १५ ॥
आत्मनिष्ठा च संसाध्या ज्ञेयश्च महिमाऽपि तैः । अजामिलादिपतितपावनः खल्विति प्रभोः ॥ १६ ॥
सांकेत्येनापि नाम्नैव पतितान् पाति यः स हि । प्रत्यक्षो मां तु मिलितस्तन्नामानि गृणामि च ॥ १७ ॥
अतो मे भजतः कृष्णं भीतिर्नास्त्येव संसृतेः । कृतार्थोऽस्मीति मन्तव्यं सन्तः सेव्याश्च भावतः
॥ १८ ॥ रजस्तमोगुणैरेवं पुरुषैर्धर्मसंस्थितैः । कार्या विशेषतो भक्तिरिति प्रश्नोत्तरे तव ॥ १९ ॥

नाम्नाऽपि । पतितान्महापापाचरणेन पतिततां प्राप्तान् जनान् । पाति रक्षत्येव । अजामिलादयः पतितजना अपि पुत्रादौ संकेतितयन्नामोच्चारणमात्रतो यमभयाद्येन रक्षिताः सन्तो महापापनिचयाद्विमुक्ता जातास्तथाविधो य इत्यर्थः । स हि स एव भगवान् । प्रत्यक्षः सन् । मां तु । मिलितः सङ्गतः । तन्नामानि तथाविधस्य साक्षाद्भगवतोऽभिधाः । गृणामि संततमुच्चारयामि च ॥ १७ ॥ अत इति । अतो हेतोः । कृष्णं प्रत्यक्षं श्रीहरिम् । भजतः । मे मम । संसृतेः । भीतिर्भयम् । नास्त्येव । अहम् । कृतार्थः कृतकृत्यः । अस्मि । इतीत्थम् । मन्तव्यम् । भावतः प्रीत्यतिशयतः । सन्तः साक्षाद्भगवत्सङ्गतास्तदेकान्तिकसाधवश्च । सेव्याः ॥ १८ ॥ रज इति । एवममुना प्रकारेण । रजस्तमोगुणै रजोगुणतमोगुणवद्भिः । पुरुषैः । धर्मसंस्थितैः स्वसङ्गतसाक्षाद्भगवदुदितस्ववर्णाश्रमोचिताचारनिष्ठैः सद्भिः । विशेषतः । भक्तिः । कार्या । इतीत्थंभूते । तव । प्रश्नोत्तरे । त्वत्कृतप्रश्नयोरेते प्रतिवाक्ये भवत इत्यर्थः ॥ १९ ॥

मुक्तानन्द इति । अथैवंविधश्रीहरिवाक्यश्रवणानन्तरम् । मुक्तानन्दो मुनिः । भूयः पुनरपि । तं स्वकृतप्रश्नोत्तरं कृत्वा जोषमासीनम् । हरिम् । पप्रच्छ । हे ईश्वर ! । तमोगुणप्रधानानाम् । पुंसां भक्तानाम् । हृदि । कलिः कलिधर्मा मायाऽनृततन्द्रानिद्रादय इत्यर्थः । अस्ति सर्वदा तिष्ठति ॥ २० ॥ स इति । स कलिः । केनचित् । उपायेन साधनेन । निवृत्तिं विनाशम् । प्राप्नुयात् । अथवा । न प्राप्नुयात् । इत्यमुना प्रकारेण । पृष्टो मुक्तानन्दमुनिनानुयुक्तः । सः श्रीहरिः । तं मुक्तानन्दमुनिम् । प्राह । हे मुने ! । कलेस्तामसस्यापि पुरुषस्य हृदि वर्त्तमानानां कलिधर्माणामित्यर्थः । निवृत्तिरपि । स्यात् ॥ २१ ॥ कलिनिवृत्त्युपायनाह । कृष्णेति । यस्य भक्तस्य । कृष्णतत्साधुवचने स्वयं कृष्णेन तदीयैकान्तिकसाधुभिश्चोक्तेषु कलिनिवृत्त्युपायवाक्येष्वित्यर्थः । दृढोऽचलः । विश्वासः । स्यात् । अवश्यमेव कृष्णतत्सद्वचनानुसारिवर्त्तनेन मद्धृदयात्कलिनिवृत्तिर्भविष्यतीति सुस्थिर आदरो भवेदित्यर्थः । तेषु भगवत्तत्साधुषु । स्थिरा दृढा । प्रीतिश्च । स्यात् । तद्धृदयात्तथाविधतामसभक्तान्तःकरणात् । कलिः । नश्येद्वै निश्चितमेव नाशं प्राप्नुयात् ॥ २२ ॥ कलिमिति । तस्माद्धेतोः । अत्र सत्सङ्गे । कलिम् । तन्मूलं कलिहेतुम् ।

मुक्तानन्दोऽथ तं भूयः पप्रच्छ हरिमीश्वर ! । तमोगुणप्रधानानां पुंसामस्ति कलिर्हृदि ॥ २० ॥
केनचिदुपायेन निवृत्तिं प्राप्नुयान्न वा । इति पृष्टः स तं प्राह निवृत्तिः स्यात्कलेरपि ॥ २१ ॥
कृष्णतत्साधुवचने विश्वासो यस्य वै दृढः । तेषु प्रीतिः स्थिरा च स्यान्नश्येत्तद्धृदयात्कलिः ॥ २२ ॥
कलिं तमश्च तन्मूलं तस्मादत्र जिहासता । स्थाने स्थित्वैव सत्सङ्गः कर्त्तव्यः शुद्धभावतः ॥ २३ ॥
स्वयम्प्रकाशानन्दोऽथ पुरःस्थो हरिमब्रवीत् । भगवन्स्थानशब्दार्थं वक्तुमर्हसि मेऽञ्जसा ॥ २४ ॥
तमुवाच हरिः साधो ! स्वधर्मः स्थानमुच्यते । वर्णानामाश्रमाणां च स एव परमाश्रयः ॥ २५ ॥
तत्र स्थित्वैव गृहिभिर्भवद्भिः साधुभिस्तथा । कर्त्तव्या भगवद्भक्तिः स्थानभ्रष्टत्वमन्यथा ॥ २६ ॥

तमस्तमोगुणं च । जिहासता आमूलाद्धातुमिच्छता भक्तेन । स्थाने । स्थित्वैव । शुद्धभावतो निष्कपटयेत्यर्थः । सत्सङ्गः । कर्त्तव्यः ॥ २३ ॥ स्वयमिति । अथैवंविधश्रीहरिवाक्यश्रवणानन्तरम् । पुरःस्थः श्रीहरेरग्रप्रदेशावस्थितः । स्वयंप्रकाशानन्दो मुनिः । हरिम् । अब्रवीत् । हे भगवन् ! । स्थानशब्दार्थं स्थाने स्थित्वेति मुक्तानन्दमुनिप्रश्नोत्तरे भवतोक्तस्य स्थानशब्दस्यार्थम् । मे मह्यम् । अञ्जसा तत्त्वतः । वक्तुम् । अर्हसि ॥ २४ ॥ तमिति । तमेवंपृच्छन्तं स्वयम्प्रकाशानन्दमुनिम् । हरिः । उवाच । हे साधो ! । स्वधर्मो यथाधिकारं सच्छास्त्रोक्तः स्वस्वसदाचारः । स्थानम् । उच्यते अत्र स्थानशब्देन कथ्यते । स स्वधर्म एव । वर्णानां ब्राह्मणादीनाम् । आश्रमाणां ब्रह्मचार्यादीनां च । परमाश्रयः यमाश्रित्य वर्णाश्रमस्थितिरस्तीत्यर्थः ॥२५॥ तत्रेति । गृहिभिर्मदाश्रितैर्गृहस्थाश्रमिजनैः । तथा । भवद्भिः । साधुभिः । तत्र स्वस्वधर्मे । स्थित्वैव । भगवद्भक्तिः । कर्त्तव्या । अन्यथा स्थानशब्दवाच्यस्वधर्मातिक्रमणे । स्थानभ्रष्टत्वं स्वस्थानच्युतिता स्यादित्यर्थः ॥ २६ ॥

तस्मादिति । तस्माद्धेतोः । मदाज्ञया अपि । आपद्यापत्काले चापि । एष स्वस्वधर्मः । कर्हिंचित्कदाचिदपि । नैव त्याज्यो भवद्भिर्नैव हेयः । अन्यथा स्वस्वधर्मत्यागे सति । भक्तिः । फलदा भगवत्प्रसन्नतारूपफलदात्री । नैव जायते । तथा चोक्तं विष्णुपुराणे । 'वर्णाश्रमाचारवता पुरुषेण परः पुमान् । विष्णुराराध्यते पन्था नान्यस्तत्तोषकारक'इति ॥ २७ ॥ मदिति । यद्वद्यथा । गृहिभिर्मदाश्रितगृहस्थजनैः । वस्त्रभूषाधनादिभिर्नानाविधवस्त्रालङ्कारद्रव्यादिभिः । मत्पूजा ममार्चनम् । क्रियते । तद्वत्तथा । साधुभिर्मदाश्रितैस्त्यागिभिर्भवद्भिः । पुष्पदलादिभिः पुष्पपत्रफलजलादिभिः । मत्पूजा । कार्या । न तु गृहस्थवत् वस्त्रादिभिस्त्यागिनां तथातद्विधाननिषेधादिति भावः ॥ २८ ॥ एवं साधूनां गृहियोग्यवस्त्रादिना स्वपूजाचरणं निषिध्य तत्प्रसङ्गेन यत्किमपि गृहस्थोचितं वस्तु भवेत्तत्स्वीकृतिं तेषां निषेधति । एवमिति । एवममुना प्रकारेण । सर्वत्र सर्वास्वपि क्रियासु । बोद्धव्यम् । नान्यधर्मस्वीकार्य इत्यर्थः । अतो हेतोः । तं स्वधर्मम् । हित्वा परित्यज्य । अण्वणुमात्रमपि । कर्म न कार्यम् । इत्येवंविधा । मम । वाक् । हृदये । अवधार्यताम् ॥ २९ ॥ श्रुत्वेति । इत्येवंविधाम् । अमृतायमानाममृतवदाचरन्तीं सुधासमानामित्यर्थः । हरेः । वाणीम् । श्रुत्वा ।

तस्मान्मदाज्ञयाऽप्येष आपद्यपि च कर्हिचित् । नैव त्याज्योऽन्यथा भक्तिः फलदा नैव जायते ॥ २७ ॥
मत्पूजा गृहिभिर्यद्वद्वस्त्रभूषाधनादिभिः । क्रियते साधुभिस्तद्वत्कार्या पुष्पदलादिभिः ॥ २८ ॥ एवं सर्वत्र
बोद्धव्यं नातो हित्वा तमण्वपि कार्यं कर्मेति हृदये मम वागवधार्यताम् ॥ २९ ॥ श्रुत्वेति वाणीममृताय-
मानां हरेः स चान्येऽपि तदीयभक्ताः । तथा करिष्याम इति स्वशीर्ष्णा तां धारयामासुरवाप्ततोषाः ॥३०॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते सप्ताशीतितमस्तरङ्गः ॥ ८७ ॥ ९॥

शकाब्दे विक्रमार्कस्य नगाश्ववसुभूमिते । चतुर्दश्यां नभःकृष्णे वचोऽमृतमिदं हरेः ॥ १ ॥

स स्वयम्प्रकाशानन्दसाधुः । तदीयभक्ताः श्रीहरेराश्रिताः । अन्ये त्यागिगृहिजनाश्चापि । अवाप्ततोषाः सम्प्राप्तमहानन्दाः सन्तः । तथा त्वदुक्तप्रकारेण । करिष्यामः । इतीत्थमुक्त्वा । तां श्रीहरिवाणीम् । स्वशीर्ष्णा स्वस्वमस्तकेन । धारयामासुः । तथैवावर्त्तन्तेत्यर्थः ॥ ३० ॥ युगप्रवृत्त्यादिपञ्चप्रश्नप्रतिवचांसि यः । शिक्षयन्स्वाश्रितानाह हरिः कुर्यात्प्रियं स माम् ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्सूनुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां सप्ताशीतितमस्तरङ्गः ॥ ८७ ॥ ९ ॥

धार्मिकाणां तु लक्ष्माणि यान्यधर्मवतां तथा । अक्षरादीनि धामानि सन्ति येषां विदूरतः ॥ १ ॥ तानि सन्ति समीपे तु येषां तेषां यथार्थतः । उभयेषां लक्षणानि यान्येतद्दशमे स्मृतम् ॥ २ ॥ शकेति । शकेति पूर्वार्द्धे व्याख्यातम् । (१८७७) नभःकृष्णे श्रावणमासस्य कृष्णपक्षे । चतुर्दश्यां तिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥

तत्रेति । तत्र तिथौ । असौ श्रीहरिः । कुण्डलग्रामात् । पुनर्भूयः । सारङ्गपत्तनं सारङ्गनगरं प्रति । व्रजन्सन् । मार्गे । स्तम्भनाख्यम् । ग्रामम् । स्वकैः स्वाश्रितैस्त्यागिगृहिजनैः सह । आपत् सम्प्राप्तवान् ॥ २ ॥ तस्येति । तस्य स्तंभनग्रामस्य । उपशल्ये उपकण्ठे । प्लक्षस्य पर्कटीतरोः । छायायाम् । ग्राम्यानीते स्तम्भनग्रामीणजनाहृते । उत्तमे स्वास्तरणादिशोभाश्रेष्ठे । पीठे मञ्चासने । निषण्ण उपविष्टः । स श्रीहरिः । भूरिभिर्बहुभिः । जनैः स्वाश्रितत्यागिगृहिजनैः स्वदर्शनार्थमुपागतैः स्तम्भनग्रामीणजनैश्च । वृतः सभायां परिवेष्टितः । अभूत् ॥ ३ ॥ सितेति । तद्भक्ताः श्रीहरेराश्रिताः । गानकोविदाः परिवादिन्यादिवाद्यवादनपूर्वं भगवत्कीर्त्तनगायननिपुणाः । पुरःस्थिताः श्रीहरेरभिमुखप्रदेशावस्थिताः । प्रेमानन्दादयः प्रेमानन्दयोगानन्दप्रभृतयः । सन्तः साधवः । सिताम्बरधरं सकलश्वेतवस्त्रधारिणम् । तं श्रीहरिम् । उपतस्थुः श्रीहरिचरित्रपद्यगानेनासेवन्त ॥ ४ ॥ महेति । असौ श्रीहरिः । तत्र तस्याम् । महासदसि महत्याम् सभायाम् । अवस्थितानितिशेषः । प्राञ्जलीन् सम्पुटीकृतकरान् । विनयानम्रान् । स्ववचोऽमृतम् । पिपासन् पातुमिच्छन् । तद्ग्रामवासिनः स्तम्भनग्रामनिवासिजनान् । वीक्ष्य ॥ ५ ॥

तत्रासौ कुण्डलग्रामात्पुनः सारङ्गपत्तनम् । व्रजन्मार्गे स्तम्भनाख्यं ग्राममापत्सह स्वकैः ॥ २ ॥ तस्योपशल्ये प्लक्षस्य छायायां पीठ उत्तमे ग्राम्यानीते निषण्णोऽभूत्स वृतो भूरिभिर्जनैः ॥३॥ सिताम्बरधरं तं च तद्भक्ता गानकोविदाः । प्रेमानन्दादयः सन्त उपतस्थुः पुरःस्थिताः ॥४॥ महासदसि तत्रासौ वीक्ष्य तद्ग्रामवासिनः । प्राञ्जलीन्विनयानम्रान् पिपासन्स्ववचोऽमृतम् ॥ ५ ॥ विरमय्याशु सद्गानं तानुवाच स्वयं प्रभुः । शृण्वन्तु सर्वे मद्वाचं पुरुषा योषितोऽपि च ॥ ६ ॥ जनाः सन्ति भुवि द्वेधा धार्मिकाश्चाप्यधार्मिकाः । लक्षणैस्ते तु बोधव्याः स्वहिताय मनीषिभिः ॥ ७ ॥ तत्र ये धार्मिकास्ते न स्याच्चौर्यं न पैशुनम् । न पारदार्यं नाभक्ष्यभक्षणादि च पातकम् ॥ ८ ॥ तेषु स्वधर्मो नित्यं स्यात्सच्छास्त्रप्रत्ययस्तथा । भीत्येशस्य न ते क्वापि कुर्युस्तत्सेत्वतिक्रमम् ॥ ९ ॥

विरमय्येति । आशु शीघ्रम् । सद्गानं प्रेमानन्दादिसाधुकृतगायनम् । विरमय्य निषिध्य । प्रभुः । स्वयं श्रीहरिः । तांस्तद्ग्रामवासिजनान् । उवाच । हे जनाः ! । सर्वे सकला अपि भवन्तः । पुरुषाः । योषितश्चापि । मद्वाचं मम वचनम् । शृण्वन्तु । इति द्वयोरेकसम्बन्धः ॥ ६ ॥ जना इति । भुवि पृथिव्याम् । धार्मिकाः । अधार्मिकाश्च । इत्येवम् । द्वेधा द्विप्रकाराः । जनाः । सन्ति । मनीषिभिः प्रशस्तबुद्धिमद्भिर्जनैः । स्वहिताय निजकल्याणार्थम् । ते धार्मिका अधार्मिकाश्च पुरुषाः । लक्षणैः । बोधव्याः ॥ ७ ॥ तत्रेति । तत्र तेषु द्विविधपुरुषेषु मध्ये । ये । धार्मिकाः पुरुषाः सन्ति । तेषु । चौर्यम् । न स्यात् । पैशुनं सूचकत्वम् । न स्यात् । पारदार्यं पराङ्गनासङ्गाचरणम् । न स्यात् । अभक्ष्यभक्षणादि मांसभक्षणमद्यपानादिरूपाभक्ष्यभक्षणप्रभृतिनिन्द्यकर्माचरणरूपं चेत्यर्थः । पातकम् । न स्यात् ॥ ८ ॥ तेष्विति । तेषु धार्मिकपुरुषेषु । स्वधर्मः । नित्यमापद्यप्यपरित्याज्यत्वात्सर्वदा । स्यात् । तथा । सच्छास्त्रप्रत्ययः सच्छास्त्रोक्तधर्माधर्मस्वर्गनरकाद्यर्थसत्यत्वविश्वासः ।

स्यात् । ते धार्मिकाः पुरुषाः । ईशस्य सर्वनियन्तुः परमेश्वरस्य । भीत्या भयेन । तत्सेत्वतिक्रममीशनिबद्धधर्ममर्यादोल्लङ्घनम् । क्वापि कदाचिदपि । न कुर्युः ॥ ९ ॥ ग्राम्या इति । ग्राम्या ग्रामीणाः । पौराः पुरवासिनः । जनाः । स्वीयबान्धवा धार्मिकबन्धुवर्गाश्चापि । तेषां धार्मिकाणाम् । विश्वासम् । असंशयं निःसंशयं यथा तथा । कुर्वते । तेषाम् । वचो वाक्यमपि । ऋतं सत्यमेव जानन्ति ॥ १० ॥ तेभ्य इति । तेभ्यो धार्मिकेभ्य एव । सत्यानां सच्छास्त्रोक्तलक्षणवत्त्वात्परमार्थानाम् । सतां साधूनाम् । सङ्गः । रोचते । ध्रुवं निश्चितमेव । ये तु । अधार्मिकाः पुरुषाः सन्ति । तेषु । एतद्विपर्ययो धार्मिकपुरुषोक्तलक्षणवैपरीत्यम् । भवेत् ॥ ११ ॥ तं विपर्ययमाह त्रिभिः । प्राणीति । तेष्वधार्मिकेषु पुरुषेषु । नित्यदा । प्राणिहिंसा च चौर्यं च मदोऽल्पगुणेऽपि महागुणगर्वश्च नास्तिकत्वं सच्छास्त्रोक्तार्थाविश्वासश्च अनृतं मुहुर्मुहुरसत्यभाषणं च तानि । अपेयपानं शास्त्रनिषिद्धं भङ्गागञ्जादिपानं यस्य जलपानं स्वस्यायोग्यं तदीयजलपानं वा । अभक्ष्यभक्षणं शास्त्रनिषिद्धलशुनपलाण्ड्वशनं यस्यान्नाशनं स्वस्यायोग्यं तदीयान्नाशनं वा । एतानि वर्त्तन्ते ॥ १२ ॥ परेति । परस्त्रीलुब्धमनसां पराङ्गनासङ्गासक्तचेतसाम् । सुरामद्यामिषाशिनां त्रिविधसुरैकादशविधमद्य-

ग्राम्याः पौरा जनाः स्वीयबान्धवाश्चाप्यसंशयम् । विश्वासं कुर्वते तेषां जानन्ति च ऋतं वचः ॥ १० ॥ तेभ्य एव सतां सङ्गः सत्यानां रोचते ध्रुवम् । अधार्मिकास्तु ये तेषु भवेदेतद्विपर्ययः ॥ ११ ॥ प्राणिहिंसा चौर्यमदनास्तिकत्वा-नृतानि च । अपेयपानं चाभक्ष्यभक्षणं तेषु नित्यदा ॥ १२ ॥ परस्त्रीलुब्धमनसां सुरामद्यामिषाशिनाम् । तेषां कोऽपि न विश्वासं करोति स्वः परोऽपि वा ॥ १३ ॥ सत्सङ्गे रुचिस्तेषां न स्यान्मलिनचेतसाम् । सत्सङ्गिभ्यः परेभ्योऽपि ते दुह्यन्ति कलिप्रियाः ॥ १४ ॥ धर्माधर्मवतामित्थं ज्ञात्वा लक्ष्माणि बुद्धिमान् । मुमुक्षुः श्रेयसे स्वस्य धर्मिमार्गमनु-व्रजेत् ॥१५॥ कृत्वा प्रसङ्गं साधूनां ज्ञात्वा कृष्णं भजेत्तु यः । स एव संसृतेर्मुक्तो भवेन्नान्यस्तु कर्हिचित् ॥ १६ ॥

पानमांसाशनकर्तृणाम् । तेषामधार्मिकाणाम् । विश्वासम् । स्वः स्वकीयः । अथवा । परः परकीयोऽपि । कोऽपि जनः । न करोति ॥१३॥ सदिति । मलिनचेतसां कामादि-दोषमलिनान्तःकरणानाम् । तेषामधार्मिकाणाम् । सत्सत्सङ्गे सत्यानां साधूनां प्रसङ्गाचरणे । रुचिः । न स्यात् । कलिप्रिया मायाऽनृततन्द्रादिषु कलिधर्मेषु कलहाचरणे वा प्रीतिमन्तः । तेऽधार्मिकाः । परेभ्यः स्वसजातीयेभ्योऽन्येभ्यः । सत्सङ्गिभ्यः सत्सङ्गं कुर्वद्भ्यो जनेभ्योऽपि । द्रुह्यन्ति ॥ १४ ॥ धर्मेति । इत्थममुना प्रकारेण । धर्माधर्मवतां पुरुषाणाम् । लक्ष्माणि लक्षणानि । ज्ञात्वा । बुद्धिमान् प्रशस्तमतिः । मुमुक्षुर्जनः । स्वस्य । श्रेयसे । धर्मिमार्गं धार्मिकजनपथम् । अनुव्रजेदनुसरेत् ॥ १५ ॥ कृत्वेति । यो मुमुक्षुजनः । साधूनां साक्षाद्भगवदुपासकानां सत्यानां सताम् । प्रसङ्गम् । कृत्वा । कृष्णं जीवकल्याणार्थं नराकृतिधरं भगवन्तम् । ज्ञात्वा अयमेवाक्षरादिपरः परमेश्वर इति । निश्चित्य । भजेत्तदुक्तधर्मे स्थित्वा तच्छन्दानुवृत्त्या तं परिचरेत् । स एवंभूतो मुमुक्षुरेव । संसृतेर्जन्ममरणप्रवाहरूपात्संसारात् । मुक्तः । भवेत् । अन्य एवंविधमुमुक्षोर्भिन्नः पुरुषस्तु कर्हिचित्कदाचिदपि । संसृतेर्मुक्तो न भवेत् ॥ १६ ॥

इतीति । इत्येवंविधया । वचःसुधया श्रीहरिवचनामृतेन । पुरुतर्पिता अत्यन्तं तृप्तिमाप्ताः जनाः स्तम्भनग्रामीणा लोकाः । तं श्रीहरिम् । परमेश्वरं साक्षाच्छ्रीकृष्णभगवन्तम् । अविदन् बुबुधिरे । निजहिताय स्वात्यन्तिककल्याणाय । तदाश्रयम् । आचरन् चक्रुः । स श्रीहरिश्चापि । तत्तत्तो ग्रामात् । जीवनृपस्य जीववर्मनृपतेः । पुरं सारङ्गनगरम् । अगात्प्राप ॥१७॥ अथेति । अथानन्तरम् । सारङ्गनरे । जीववर्मणो नृपस्य । दुर्गे इति शेषः । निकाये तस्यैवोत्तरास्यभवने । बहिर्वेद्यां वाह्यां वाह्यायां वेदिकायाम् । शुभासने सश्वेतोत्तरच्छदमास्तृते शोभने पर्यङ्कविष्टरे । शुक्लवासाः परिधृतसकलश्वेतवसनः । स श्रीहरिः । न्यषीददुपविवेश ॥ १८ ॥ भक्तेति । भक्तमण्डलमध्यस्थो नानादेशायातत्यागिगृहिसभामध्यावस्थितः । प्रभुः श्रीहरिः । सतः सभायां स्वपुरोऽवस्थितान् साधून् । निरीक्षमाणः करुणार्द्रदृशा पश्यन्सन् । स्वयं केनाप्यपृष्ट एव । प्रोवाच तानेवोद्दिश्य वदत् । हे साधवः ! । सर्वे भवन्तः सकला अपि । शृण्वन्तु ॥ १९ ॥ सत्सङ्गमिति । अत्र लोके । ये जनाः । सत्सङ्गम् । कृत्वा । प्रयता वशीकृतस्वसकलेन्द्रियाः । स्वधर्मस्थाः सन्तः । श्रद्धयाऽत्यादरतः । अनन्यभावतो भगवदितरत्रासद्बुध्या ततः प्रीतिनिवृत्तिपूर्वं केवलं हरावेव गाढानुरागेण ।

इति वचःसुधया पुरुतर्पिता निजहिताय तदाश्रयमाचरन् । तमविदंश्च जनाः परमेश्वरं पुरमगात्स च जीवनृपस्य तत् ॥ १७ ॥ अथ सारङ्गनगरे निकाये जीववर्मणः । वहिर्वेद्यां शुक्लवासाः स न्यषीदच्छुभासने ॥ १८ ॥ भक्तमण्डलमध्यस्थः स्वयमेव प्रभुः सतः । निरीक्षमाणः प्रोवाच सर्वे शृण्वन्तु साधवः ॥१९॥ सत्सङ्गमत्र ये कृत्वा श्रद्धयाऽनन्यभावतः । भजन्ति कृष्णं प्रयताः स्वधर्मस्थाश्च नित्यदा ॥२०॥ देहान्ते ते व्रजन्त्येव धाम तस्याक्षराभिधाम् । गोलोकं वापि वैकुण्ठं श्वेताख्यं वा यथारुचि ॥ २१ ॥ अतिदूरे तानि सन्तीत्याहुः केचन पण्डिताः । समीप एवेति विदुर्योगीन्द्रा इह केचन ॥२२॥ अत्र वो निश्चितं वच्मि स्वानुभूतिप्रमाणतः । बहिर्दृष्ट्येक्षमाणानां तानि दूरे भवन्ति हि ॥२३॥ अन्तर्दृष्ट्या पश्यतां तु समीपे सन्ति तानि वै । एतेषां हि मतिः सूक्ष्मा स्थूला ज्ञेया बहिर्दृशाम् ॥२४॥

नित्यदा । कृष्णं साक्षाद्भगवन्तम् । भजन्ति ॥ २० ॥ देहेति । ते तथाविधा जनाः । देहान्ते । तस्य श्रीहरेः । अक्षराभिधम् । धाम । व्रजन्ति प्राप्नुवन्त्येव । अथवा । गोलोकं गोलोकाख्यं धाम । अथवा । वैकुण्ठधाम । अथवा । श्वेताख्यं श्वेतद्वीपाख्यं धाम । व्रजन्त्येव । यथारुचीति सर्वत्रान्वेतव्यम् ॥ २१ ॥ अतीति । तान्यक्षरादीनि धामानि । अतिदूरे । सन्ति । इत्येवम् । इह सत्सङ्गे । केचन । पण्डिताः शास्त्रविदोऽपि स्थूलमतिमन्तो भक्तजनाः । आहुः । केचन । योगीन्द्राः सूक्ष्ममतिमन्तो भगवन्निष्ठजनाः । समीपे तानि स्वनिकटे एव सन्ति । इतीत्थम् । विदुः ज्ञात्वा कथयन्तीत्यर्थः ॥ २२ ॥ अत्रेति । अत्रैवंविधयोरुभयपक्षयोर्मध्ये । स्वानुभूतिप्रमाणतः केवलेन स्वानुभवप्रमाणेन । निश्चितं मया निर्णीतं पक्षम् । वो युष्मभ्यम् । वच्मि कथयामि । वहिर्दृष्ट्या स्वदेहाद्बहिर्वर्त्तमानया लौकिकदृष्ट्या । ईक्षमाणानां पुरुषाणाम् । तानि धामानि । दूरे । भवन्ति । हि ॥ २३ ॥ अन्तरिति । अन्तर्दृष्ट्या नेत्रनिमीलनपूर्वं स्वस्वान्ते कृतया देहत्रयविलक्षणस्वात्मस्थभगवद्दृष्ट्या ।

पश्यतां पुरुषाणां तु । तानि धामानि । समीपे । सन्ति । वै । एतेषामन्तर्दृष्टिमताम् । मतिः । सूक्ष्मा । ज्ञेया । बहिर्दृशां बहिर्दृष्टिमताम् । मतिः । स्थूला । ज्ञेया ॥ २४ ॥ अन्तर्दृष्ट्या स्वसमीपे भगवद्धामसमीक्षणप्रकारमाह द्वाभ्याम् । जड इति । यथा । जडेऽचेतने । देहे । चिद्रूपोऽचेतनस्यापि देहस्य चेतयिता संस्तज्ज्ञातेत्यर्थः । जीवः । विलक्षणो देहाद्विलक्षणभावः । अस्ति । एवं तथा । जीवेऽपि । स्वप्रकाशो जीवस्य प्रकाशयिता ततो विलक्षणः स्वतः प्रकाशवांश्चेत्यर्थः । भगवान् । सर्वदा । अस्ति ॥ २५ ॥ एवमिति । एवमसुना प्रकारेण । आत्मशरीरिणं शरीरभूतस्य जीवस्य शरीरिणमात्मानम् । कृष्णम् । अन्तर्दृशोऽन्तर्दृष्टिमन्तो भक्तजनाः । विदुर्जानन्ति । यत्र स्वजीवे । कृष्णः । अस्ति । तत्र स्वजीवे एव । तद्धामादि श्रीकृष्णधाम शक्ति पार्षदैश्वर्यादिकम् । अस्ति । इतीत्थम् । निश्चितमेवं सत्यमेव भवतीत्यर्थः ॥ २६ ॥ सर्वथेति । इत्थमसुना प्रकारेण । अत्र सत्सङ्गे । ये कृष्णभक्ताः । सर्वथा । विदुः । तेभ्यः कृष्णभक्तेभ्यः सकाशात् । सपार्षदः । कृष्णः । तद्धामादि । दूरे । नास्त्येव । इतीत्थम् । अवधार्यताम् ॥ २७ ॥ ईदृशा इति । ये । कृष्णभक्ताः । ईदृशा उक्तप्रकारेण सूक्ष्मदृष्टिमन्तः । भवन्ति । ते । श्वेतमुक्तैः श्वेतद्वीपावस्थितनिर-

जडे देहे यथा जीवश्चिद्रूपोऽस्ति विलक्षणः । एवं जीवेऽपि भगवान् स्वप्रकाशोऽस्ति सर्वदा ॥ २५ ॥ एवमन्तर्दृशः कृष्णं विदुरात्मशरीरिणम् । यत्र कृष्णोऽस्ति तत्रैव तद्धामादीति निश्चितम् ॥२६॥ सर्वथेति विदुर्येऽत्र तेभ्यः कृष्णः सपार्षदः । तद्धामादि च नास्त्येव दूर इत्यवधार्यताम् ॥२७॥ ईदृशाः कृष्णभक्ता ये श्वेतमुक्तैः समा हि ते । तद्दर्शनं च भगवद्दर्शनेन समं मतम् ॥ २८ ॥ अनीदृशास्तु ये भक्तास्तेऽप्येतेषां समागमम् । यदि कुर्युर्दृढं तर्हि तत्समाः स्युरसंशयम् ॥२९॥ यथाऽहिफेनं व्यसनी पुमानापद्यपि क्वचित् । त्यक्तुं न शक्नुयात्तद्वद्ये कुर्युस्तत्समागमम् ॥ ३० ॥ निर्मानवर्त्तनास्ते हि तेषु स्नेहेन सेवया । यान्ति तत्पदवीमन्ते ज्ञात्वा कृष्णं यथार्थतः ॥ ३१ ॥

न्मुक्तैः । समास्तुल्याः । मताः । तद्दर्शनम् । भगवद्दर्शनेन । समं तुल्यम् । मतम् । हि ॥ २८ ॥ अनीदृशा इति । ये । भक्ताः । अनीदृशाः सूक्ष्मदृष्टिमद्भक्तेतरे स्थूलदृष्टिमन्तः । सन्ति । तेऽपि । यदि । एतेषां सूक्ष्मदृष्टिमतां भक्तानाम् । समागमम् । दृढं निष्कपटं यथातथा । कुर्युः । तर्हि । तत्समाः सूक्ष्मदृष्टिमद्भक्तत्तुल्याः । स्युः । असंशयमत्र संशयो नास्ति ॥ २९ ॥ उक्तार्थमेव । दृष्टान्तेन दृढयति द्वाभ्याम् । यथेति । यथा । व्यसन्यहिफेनभक्षणव्यसनवान् । पुमान् । आपद्यापत्कालेऽपि । क्वचित्कदाचिदपि । अहिफेनम् । त्यक्तुम् । न शक्नुयात्समर्थो न भवेत् । तद्वत्तथा । ये भक्ताः । तत्समागमं सूक्ष्मदृष्टिमद्भक्तप्रसङ्गम् । कुर्युर्निरन्तरं विदध्युः कदाचिदपि तं त्यक्तुं न शक्नुयुरित्यर्थः ॥ ३० ॥ निर्मानेति । तेषु सूक्ष्मदृष्टिमद्भक्तेषु । निर्मानवर्त्तनास्तत्कृतभर्त्सनादिसहनपूर्वं मानत्यागेन वर्त्तमानाः । ते भक्ताः । स्नेहेन प्रीतिपूर्विकयेत्यर्थः । सेवया छन्दानुवृत्त्या तत्परिचरणेन । कृष्णम् । यथार्थतः । ज्ञात्वा सूक्ष्मदृष्टिमद्भक्तवत्तं स्वात्मशरीरिणं विबुध्येत्यर्थः । अन्ते देहावसाने तत्पदवीं सूक्ष्मदृष्टिमद्भक्तगतिम् । यान्ति ॥ ३१ ॥

श्रुत्वेति । इत्येवंविधम् । पीयूषकल्पममृतसन्निभम् । हरिकृष्णवाक्यम् । श्रुत्वा । भक्ताः साक्षाद्भगवदाश्रिताः । सदसि । निषण्णा इति शेषः । सर्वे । सन्तः । गृहिणो गृहस्थाश्रमस्थाः । लोका जनाश्चापि । प्रसन्नाः । बभूवुः । ईशं परमेश्वरम् । तं श्रीहरिम् । प्रणमन्ति स्म ॥ ३२ ॥ लक्षणान्याह यः स्वामी धर्मिणां चाप्यधर्मिणाम् । अन्तर्बहिर्दृष्टिमतां स्वधामान्तिकदूरताम् ॥ १ ॥ यश्चाहापारकृपया स्वभक्तेषु यथार्थतः । स हरिर्भक्तितनयः सर्वदाऽस्तु ममात्मनि ॥ २ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तक-श्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्सूनुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायामष्टाशीतितमस्तरङ्गः ॥ ८८ ॥ १० ॥

पुरुषस्य प्रयत्नेन यत्स्याद्यत्कृपया हरेः । एतत्सर्वं विविच्यैकादशे संकथितं स्फुटम् ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् : (१८७७) । नभसः श्रावण मासस्य । कृष्णे कृष्णपक्षे । अमायाममावस्यातिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । सारङ्गनगरे । जीववर्मणो नृपस्य । दुर्गे इति शेषः । गृहे उत्तरास्ये तस्यैव भवने । स्वसभान्तरे नानादेशागतस्वाश्रितत्यागिगृहिसभामध्यप्रदेशे । पीठवरे वहिर्वेद्यां वर्त्तमाने सोत्तरच्छदतूलिकाद्यास्तृते श्रेष्ठे मञ्चासने ।

श्रुत्वेति सर्वे हरिकृष्णवाक्यं पीयूषकल्पं सदसि प्रसन्नाः । सन्तश्च भक्तगृहिणोऽपि लोका बभूवुरीशं प्रणमन्ति तं स्म ॥ ३२ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते अष्टाशीतितमस्तरङ्गः ॥ ८८ ॥ १० ॥

शकाब्दे विक्रमार्कस्य नगाश्ववसुभूमिते । अमायां नभसःकृष्णे वचोऽमृतमिदं हरेः ॥ १ ॥ तत्र सारङ्गनगरे गृहेऽसौ जीववर्मणः । सिताम्बरः पीठवरे न्यषीदत्स्वसभान्तरे ॥२॥ अब्रवीद्विनयानम्रो मुक्तानन्दः प्रणम्य तम् । पृच्छामि त्वामहं स्वामिन् ! यत्कुरुष्व तदुत्तरम् ॥३॥ पौरुषेण कियानर्थो मनुष्याणां भवेदिह । तव कृष्णस्य कृपया कियानर्थश्च सत्पते ! ॥ ४ ॥ इति पृष्टः सता तेन स उवाच जगद्गुरुः । तव प्रश्नोत्तरं साधो ! ब्रवीमि शृणु सादरम् ॥५॥ यः शास्त्रगुरुवाक्याभ्यां दृढवैराग्यवान् भवेत् । श्रद्धालुरात्मनिष्ठश्चाहिंस्रो धर्मप्रियः शुचिः ॥ ६ ॥

सिताम्बरः परिधृतसकलश्वेतवसनः । असौ श्रीहरिः । न्यषीदत् ॥ २ ॥ अब्रवीदिति । तं श्रीहरिम् । प्रणम्य । मुक्तानन्दो मुनिः । विनयानम्रः सन् । अब्रवीत् । हे स्वामिन् ! । अहम् । त्वाम् । यत् । पृच्छामि । तदुत्तरम् । कुरुष्व ॥ ३ ॥ पौरुषेणेति । हे सत्पते ! । इह सत्सङ्गे । मनुष्याणां भवद्भक्तजनानाम् । पौरुषेण पुरुषप्रयत्नेन । कियान्किंपरिमाणः । अर्थः प्रयोजनम् । भवेत्सिद्धिं यायात् । कृष्णस्य । तव । कृपया । कियान् । अर्थश्च । भवेत् ॥ ४ ॥ इतीति । इत्यमुना प्रकारेण । तेन । सता मुक्तानन्दमुनिना । पृष्टः । जगद्गुरुः । स श्रीहरिः । उवाच । हे साधो ! । तव । प्रश्नोत्तरम् । ब्रवीमि । सादरमादरसहितं यथातथा । शृणु ॥ ५ ॥ य इति । यो भक्तः । शास्त्रगुरुवाक्याभ्यां सच्छास्त्रवचनेन स्वसद्गुरुवचनेन च । दृढवैराग्यवान् । श्रद्धालुः श्रद्धावान् । आत्मनिष्ट आत्मनिष्ठावान् । अहिंस्रः कायवाङ्मनोभिः प्राणिपीडानुत्पादकः । धर्मप्रियः स्वधर्मप्रीतिमान् । शुचिर्बाह्याभ्यन्तरशुद्धियुक्तश्च । भवेत् जायेत ॥ ६ ॥

अष्टाङ्गमिति । हे मुने ! । अष्टाङ्गयुग्ब्रह्मचर्यः स्त्रीगुणादिश्रवणकीर्त्तनादिवर्जनरूपाष्टाङ्गोपेतदृढब्रह्मचर्यव्रतवान् । तथा कृष्णमाहात्म्यवित् । भवेत् । अस्मिन्नयं कृष्ण-माहात्म्यवेत्तृतारूपो गुणो दृढवैराग्याद्येतत्प्राग्वर्त्तिसप्तगुणोत्पत्तिहेतुरूपो बोध्यः । स भक्तः । एवंविधगुण इत्थंभूतदृढवैराग्याद्यष्टगुणवान् । पौरुषेणैव । भवेत् । अस्य श्लोकद्वयस्यायं भावः । यः सच्छास्त्रसद्गुरुवाक्येषु विश्वासी स तदुदितसुदृढवैराग्याद्यष्टगुणानात्मनि सम्पादयितुमुद्युक्तः स्याच्चेत्तर्हि स्वपौरुषेणात्मनि तान् सम्पादयेदेवेति ॥७॥ अहमिति । असौ येन स्वपौरुषेण स्वात्मन्यष्टगुणाः सम्पादिताः स एकान्तिकतामापन्नो भक्तः । देहदैहिकयोः । अहंममत्वमायायाः । नष्टत्वान्निःशेषतो विनिवृत्तत्वाद्धेतोः । जन्ममृत्युसंसृतितः पुनः पुनर्जन्ममरणरूपात्संसारात् । मुच्यते । खलु ॥८॥ एतादृश इति । एतादृशे एवंविधैकान्तिकतागुणवति । पुरुषे भक्ते । भगवतः । कृपा । भवेत् । तया भगवत्कृपया । स एकान्तिकभक्तः । तस्य भगवतः । अक्षरमक्षरब्रह्माभिधम् । पदं धाम । प्राप्य । इति गुणवान् वक्ष्यमाणभगवत्साधर्म्यादिगुणयुक्तः । स्याद्भवेत् ॥९॥ निरञ्जन इति । निरञ्जन इति 'निरञ्जनः परम साम्यमुपै'तीत्यनया । श्रुत्या । अस्यैवंविधस्यैकान्तिकभक्तस्यैव । महिमा । वर्ण्यते । यद्यस्मात्कारणात् । मायाञ्जनविहीनेन

अष्टाङ्गयुग्ब्रह्मचर्यः कृष्णमाहात्म्यवित्तथा । स एवैवंविधगुणः पौरुषेण भवेन्मुने ! ॥ ७ ॥ अहंममत्वमायाया देहदैहिकयोरसौ नष्टत्वान्मुच्यते जन्ममृत्युसंसृतितः खलु ॥ ८ ॥ एतादृशे हि पुरुषे कृपा भगवतो भवेत् । तयेति गुणवान्स स्यात्प्राप्य तस्याक्षरं पदम् ॥ ९ ॥ निरञ्जन इति श्रुत्या महिमाऽस्यैव वर्ण्यते । मायाञ्जन-विहिनेन साम्यं यत्प्राप्यते हरेः ॥ १० ॥ साम्यं साधर्म्यमित्युक्तं प्राप्नोति परमं स तत् । न बद्ध्यतेऽतो हरिवत्कर्मभिश्च शुभाशुभैः ॥११॥ अतिस्नेहेन लक्ष्मीवत्प्राप्नोत्यैक्यं क्वचिद्धरौ । क्वचित्पृथक् स्थितो भक्त्या सेवते तद्वदेव तम् ॥ १२ ॥ क्रियासु च स्वतन्त्रत्वं प्राप्नोति भगवानिव । ईदृक्सामर्थ्यसम्प्राप्तिः कृपया भवति प्रभोः ॥ १३ ॥ इति प्रश्नोत्तरं श्रुत्वा साधुः स प्रीतिमानभूत् । नित्यानन्दोऽथ पप्रच्छ प्रणम्य तमुदारधीः ॥ १४ ॥

देहदैहिकाहंममतारूपमायाञ्जनवर्जितेनानेनभक्तेन । हरेः । साम्यम् । प्राप्यते ॥१०॥ उक्तार्थमेव सम्यग्बोधाय पुनः स्पष्टतयाह । साम्यमिति । साम्यम् । साधर्म्यं सत्य शौचापहतपाप्मत्वादिगुणवत्त्वम् । इतीत्थम् । उक्तं श्रुतियाथार्थ्यवेदिभिः कथितम् । स भक्तः । परमं सर्वोत्तमम् । तत्साधर्म्यम् । प्राप्नोति । अतो हेतोः । स च । हरिवद्भगवानिव । शुभाशुभैः । कर्मभिः । न बध्यते ॥११॥ अतीति । स च । क्वचित् । लक्ष्मीवत् । अतिस्नेहेन । हरौ । ऐक्यम् । पाप्नोति । क्वचित् । पृथक् स्थितः सन् । तद्वत् लक्ष्मीवत् । तं हरिम् । भक्त्या । सेवते चन्दन पुष्पनैवेद्यादिनानोपचारैः परिचरति ॥ १२ ॥ क्रियास्विति । स च । भगवानिव । क्रियासु । स्वतन्त्रत्वम् । प्राप्नोति । ईदृक्सामर्थ्यसम्प्राप्तिः सामर्थ्यशब्दवाच्यैवंविधगुणोपलब्धिः । प्रभोः । कृपया । भवति ॥ १३ ॥ इतीति । इत्येवंविधम् । प्रश्नोत्तरम् । श्रुत्वा । सः । साधु-र्मुक्तानन्दमुनिः । प्रीतिमान्प्रसन्नतायुक्तः । अभूत् । अथैवंविधश्रीहरिवाक्यश्रवणानन्तरम् । उदारधीर्महामतिः । नित्यानन्दो मुनिः । तं श्रीहरिम् । प्रणम्य । पप्रच्छ ॥१४॥

उक्तेति । हे हरे ! । उक्तसर्वाङ्गसम्पन्ने दृढवैराग्याद्युक्ताष्टगुणयुक्ते । भक्ते । हरेः । ते तव । कृपा । स्यात् । कस्यचिद्भक्तस्य । कस्मिंश्चिदेकस्मिन् । अङ्गे गुणे । न्यूने सति । का गतिः तस्य कस्य धाम्नः प्राप्तिः । भवेत् ॥ १५ ॥ स्वामीति । अथानन्तरम् । तमेवंपृच्छन्तम् । सन्तं नित्यानन्दमुनिम् । स्वामी श्रीहरिः । उवाच । हे महामते ! । हे साधो ! । स एकाङ्गन्यूनः पुरुषो भक्तस्तु । आत्यन्तिकीम् । मुक्तिम् । अक्षरधाम्नि साधर्म्यादिप्राप्तिपूर्वं लक्ष्मीवत्सेवया प्राप्तिलक्षणां मुक्तिमित्यर्थः । न तु न प्राप्नोति । ॥ १६ ॥ वैराग्येति । वैराग्यं च ब्रह्मचर्यं च आत्मनिष्ठा च श्रद्धा च ता आदयो येषामहिंसास्वधर्मशुचित्वकृष्ण-माहात्म्यज्ञानान्तानि तेषु । अङ्गेषु गुणेषु मध्ये । यो भक्तः । एकेनाप्यङ्गेन । हीनो न्यूनः । स्यात् । स भक्तः । अक्षरेतरदक्षरधामभिन्नम् । धाम भगवतो वैकुण्ठादि-लोकम् । इयात्प्राप्नुयात् ॥ १७ ॥ द्वित्रेति । द्वित्राङ्गहीनो द्वाभ्यामङ्गाभ्यां त्रिभिर्वाङ्गैर्न्यूनः । पुमान् भक्तस्तु । देवलोकान् । अवाप्नुयात् । ये देवलोकाः । अक्षरस्य धाम्नः । अग्रतः । भारते महाभारतीयशान्तिपर्वस्थमोक्षधर्मेषु । निरयोपमा नरकसमानाः । प्रोक्ताः ॥ १८ ॥ देव इति । हे अनघ ! । असौ भक्तः । देवः ।

उक्तसर्वाङ्गसम्पन्ने स्यात्ते कृपा हरेः । न्यूनेऽङ्गे सति कस्मिंश्चित्कस्यचित्का भवेद्गतिः ॥ १५ ॥ स्वाम्युवाचाथ सततं तं शृणु साधो ! महामते ! । स तु नात्यन्तिकीं मुक्तिं प्राप्नोति पुरुषो न तु ॥१६॥ वैराग्यब्रह्मचर्यात्मनिष्ठा श्रद्धादिकेषु यः । अङ्गेष्वेकेन हीनः स्याद्धामेयात्सोऽक्षरेतरत् ॥१७॥ द्वित्राङ्गहीनस्तु पुमान् देवलोकानवाप्नुयात् । येऽक्षरस्याग्रतः प्रोक्ता भारते निरयोपमाः ॥१८॥ देवो भूत्वा पुनरसौ मानवीं योनिमाप्नुयात् । पुनर्देवः पुनर्मर्त्यः स इत्थं जायतेऽनघ ! ॥ १९ ॥ भक्तत्वाद्धीनयोनिं तु नैवासौ लभते क्वचित् । अनेकजन्मसंसिद्धस्ततो याति परां गतिम् ॥ २० ॥ यदोक्तलक्षणैर्युक्तो भवेत्सद्गुरुसंश्रयात् । कृपया स हरेस्तर्हि यात्यन्तेऽस्याक्षरं पदम् ॥ २१ ॥ भक्तस्तत्र गुणातीते स चोक्तगुणवान् भवेत् । तस्मान्मदाश्रितैर्भाव्यं सर्वाङ्गनिभृतैरिह ॥ २२ ॥

भूत्वा । पुनः । मानवीं मनुष्यसम्बन्धिनीम् । योनिं जन्म । आप्नुयात् । स भक्तः । पुनः । देवः । पुनः । मर्त्यः । इत्थम् । जायते मुहुर्मुहुरुत्पद्यते ॥१९॥ भक्तत्वादिति । असौ पुरुषः । भक्तत्वाद्धेतोः । हीनयोनिं पश्वादिषु जन्म त्वित्यर्थः । क्वचित्कदाचिदपि । नैव लभते । तत एवंपुनः पुनर्देवमनुष्ययोर्जन्मधारणानन्तरम् । अनेकजन्मसंसिद्ध एवंभूतानेकजन्मार्जितभगवद्भक्तिरूपपुण्यसञ्चयैः संशुद्धकिल्बिषः संसिद्धश्च सञ्जातः सन् । परां गतिमक्षरधाम । याति ॥ २० ॥ इममर्थमेव पुनः स्पष्टमाह सार्द्धेन । यदेति । यदा यर्हि । सद्गुरुसंश्रयात् । स भक्तः । उक्तलक्षणैर्वैराग्यादिभिरुक्तगुणैः । युक्तः । भवेत् । तर्हि । हरेः । कृपयैव । अन्ते स्वदेहावसाने । अस्य हरेः । अक्षरमक्षराभिधम् । पदं धाम । याति प्राप्नोति ॥ २१ ॥ भक्त इति । सः । भक्तः । गुणातीते सत्त्वादिमायिकगुणवर्जिते । तत्राक्षरधाम्नि । उक्तगुणवान् । भगवत्साधर्म्यादिगुणयुक्तः । भवेत् । तस्माद्धेतोः । इह सत्सङ्गे । मदाश्रितैर्भक्तैः । सर्वाङ्गनिभृतैरष्टगुणयुक्तैः । भाव्यमवश्यमेव भवितव्यम् ॥ २२ ॥

इत्थंभूतभक्तताप्राप्तौ स्वावधारितमुक्तसाधनसाध्यमेकमेव साधनमाह यदेति । यदा यर्हि । कृष्णेतराः श्रीकृष्णस्वरूपैकसेवनभिन्नाः । सर्वाः । वासना भक्तान्तःकरणस्था मायिकार्थभोगभावनाः । नाशमामूलाद्विनष्टिम् । एष्यन्ति । तदा । ब्रह्मगतिरक्षरधामप्राप्य भगवत्साधर्म्यादिगुणोदयपूर्वं भगवतः सेवावस्थितिः । भाव्या । अन्यथेतरोपायैः । ब्रह्मगतिः कल्पकोटयतिक्रान्त्यापि न भाव्या । इत्येवंभूतः । विनिश्चयो मया कृतो विनिर्णयोऽस्ति ॥ २३ ॥ इतीति । इतीत्थंभूतम् गुरोः श्रीहरेः । वाक्यम् । श्रुत्वा । सः । नित्यानन्दः साधुः । तुतोष हृष्टो बभूव । अथानन्तरम् । नृसिंहानन्दनामा । साधुः । तं श्रीहरिम् । नतः कृतप्रणामः सन् । पप्रच्छ ॥ ॥४ ॥ देहेति । हे प्रभो ! । भवद्भक्तः । अनेन । देहेनैव । केन । उपायेन । निर्वासनो विनिवृत्तभवदितरसकलवासनः । भवेत् । मे मह्यम् । ब्रूहि तमुपायं कथय । अथैवंविधनृसिंहानन्दमुनिप्रश्नश्रवणानन्तरम् । हरिः । अब्रवीत् ॥२५॥ विदित्वेति । हे मुने ! । यो भक्तः । सद्भ्यो हरेरेकान्तिकसाधुभ्यः । कृष्णमाहात्म्यम् । आदरात् । यथावद्यथार्थतया । विदित्वा । अप्रमत्तः सावधानः । जितेन्द्रियः सन् । एकान्तभक्त्या । तं श्रीकृष्णम् । भजेत् ॥ २६ ॥ तस्येति । नित्योद्युक्त-

यदा कृष्णेतराः सर्वा नाशमेष्यन्ति वासनाः । तदा ब्रह्मगतिर्भाव्या नान्यथेति विनिश्चयः ॥ २३ ॥ इति वाक्यं गुरोः श्रुत्वा नित्यानन्दस्तुतोष सः । नृसिंहानन्दनामाऽथ साधुः पप्रच्छ तं नतः ॥२४॥ देहेनानेनैव भवद्भक्तो निर्वासनः प्रभो ! । उपायेन भवेत्केन ब्रूहि मेऽथाब्रवीद्धरिः ॥ २५ ॥ विदित्वा कृष्णमाहात्म्यं यथावत्सद्भ्य आदरात् । भजेदेकान्तभक्त्या तं योऽप्रमत्तो जितेन्द्रियः ॥ २६ ॥ तस्यास्मिन्नेव देहे वै नित्योद्युक्तस्य देहिनः । हरेः प्रतापात्सर्वासां वासनानां क्षयो भवेत् ॥ २७ ॥ वासनानां क्षयो यस्य न जातो वार्द्धकावधि । मृत्यूपान्त्यमुहूर्तेऽपि यदि तस्यापि माधवे ॥ २८ ॥ एकान्तिकी भवेद्भक्तिस्तदाऽसौ तत्प्रसादतः । भूत्वा निर्वासनः सद्यो ब्रह्मधामाप्नुयात्प्रभोः ॥ २९ ॥ तस्माद्विधाय सत्सङ्गं नित्यं माहात्म्यमीशितुः । श्रुत्वा दृढतरा भक्तिः कार्याऽस्मिन्निष्टसिद्धिदा ॥ ३० ॥

स्यैवंश्रीकृष्णभजने प्रतिदिनमुद्योगवतः । तस्य । देहिनो भक्तस्य । अस्मिन् । देहे सत्येव । हरेः । प्रतापात् । सर्वासाम् । वासनानाम् । क्षयः । भवेत् । इति द्वयोरेकसम्बन्धः ॥ २७ ॥ वासनानामिति । यस्य भक्तस्य । वार्द्धकावधि वृद्धत्वपर्यन्तम् । वासनानाम् । क्षयो निवृत्तिः । न जातः । तस्य वृद्धत्वपर्यन्तंसवासनस्य भक्तस्यापि । यदि । मृत्यूपान्त्यमुहूर्त्ते मृत्युकालात्प्राग्वर्त्तिनिघटिकाद्वयेऽपि । माधवे श्रीकृष्णे ॥ २८ ॥ एकेति । एकान्तिकी । भक्तिः । भवेत् । तदा । असौ । भक्तः । तत्प्रसादतः श्रीहरेरनुग्रहात् । निर्वासनः । भूत्वा सद्यस्तत्क्षणमेव । देहपतनानन्तरमेवेत्यर्थः । प्रभोः श्रीहरेः । ब्रह्मधामाक्षरपदम् । आप्नुयात् । इति द्वयोरेकसम्बन्धः ॥ २९ ॥ तस्मादिति । तस्माद्धेतोः । सत्सङ्गं भगवदेकान्तिकसाधुसमागमम् । विधाय कृत्वा । नित्यम् । ईशितुः सर्वनियन्तुः श्रीहरेः । माहात्म्यम् । श्रुत्वा । अस्मिन् श्रीहरौ । इष्टसिद्धिदा वासनाक्षयपूर्वं ब्रह्मधामप्राप्तिलक्षणवाञ्छितार्थसाधयित्री । दृढतरैकान्तिकी । भक्तिः । कार्या ॥ ३० ॥

इतीति । इत्येवंविधाम् । सुधासमाम् । प्रभोः श्रीहरेः । वाचम् । निशम्य श्रुत्वा । असौ नृसिंहानन्दमुनिः । पुरुप्रहर्षमतिशयितानन्दम् । प्राप्य । कृष्णे श्रीहरौ । दृढामेकान्तिकीम् । भक्तिम् । आचरति स्म । ये । तत्पदसंश्रयाः कृतश्रीहरिचरणशरणाः । अपरे सभोपविष्टास्त्यागिगृहिजनाः । ते च । पुरु प्रहर्षं प्राप्य तस्मिन् दृढां भक्तिमाचरन्ति स्म ॥ ३१ ॥ स्वभक्तेन पौरुषेणैव प्राप्यानाह गुणांश्च यः । कृपया स्वस्य तान् स्वामी तद्गुणाढ्यं क्रियात्स माम् ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्स्वनुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायामेकोननवतितमस्तरङ्गः ॥ ८९ ॥ ११ ॥

कर्त्तव्यः स्वात्मरूपस्य विचारस्तु यथातथा । द्वादशे कीर्त्तितः सम्यक् तदन्यस्य निरासतः ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८७७) भाद्रशुक्लप्रतिपदि भाद्रपदमासस्य शुक्लपक्षागतप्रतिपत्तिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥१॥ तत्रेति । तत्र तिथौ । सारङ्गनगरे । जीववर्मणो नृपस्य । दुर्गे इति शेषः । निलये तस्यैवोचरास्य भवने । वेद्यां वाह्यायां वेदिकायाम् । मञ्चोत्तमे स्वास्तृते श्रेष्ठपर्यङ्कासने । सिताम्बरः परिधृतसकलश्वेतवसनः स्वाम्यनन्तैश्वर्यवान् । स श्रीहरिः ।

इति प्रभोर्वाचमसौ निशम्य सुधासमां प्राप्य पुरुप्रहर्षम् । भक्तिं दृढामाचरति स्म कृष्णेऽपरे च य तत्पदसंश्रयास्ते ॥ ३१ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते एकोननवतितमस्तरङ्गः ॥ ८९ ॥ ११ ॥

शकाब्दे विक्रमार्कस्य नगाश्ववसुभूमिते । भाद्रशुक्लप्रतिपदि वचोऽमृतमिदं हरेः ॥ १ ॥
तत्र सारङ्गनगरे निलये जीववर्मणः । वेद्यां मञ्चोत्तमे स्वामी स न्यषीदत्सिताम्बरः ॥ २ ॥
त्यागिभिर्गृहिभिर्भक्तैरनेकैः परितो वृत्तम् । निर्विकारानन्दनामा साधुः पप्रच्छ तं नमन् ॥ ३ ॥
स्वामिंस्त्वत्सज्जने के के गुणा नित्यमवस्थिताः । आयान्ति च पुनर्यान्ति के के तद्वक्तुमर्हसि ॥ ४ ॥
सोऽब्रवीच्छृणु सद्बुद्धे! सत्सु नित्यास्त्विमे गुणाः । आत्मनिष्ठा स्वधर्मश्च दृढनिश्चय ईशितुः ॥ ५ ॥

न्यषीदत् ॥ २ ॥ त्यागिभिरिति । भक्तैः स्वाश्रितैः । अनेकैर्नानादेशेभ्य उपागतत्वादसङ्ख्यातैः । त्यागिभिः । गृहिभिश्च । परितः सर्वतः । वृतं सभायां संवेष्टितम् । तं श्रीहरिम् । निर्विकारानन्दनामा । साधुः । नमन्प्रणामं कुर्वन्सन् । पप्रच्छ ॥३॥ स्वामिन्निति । हे स्वामिन् ! । त्वत्सज्जने त्वदाश्रितेषु साधुष्वित्यर्थः । के । के । गुणाः । नित्यं नित्यतया । अवस्थिताः । सन्ति । के । के । गुणाः । आयान्ति । पुनः । यान्ति । त्वदाश्रितसाधुषु सर्वकालं निश्चलतया के गुणास्तिष्ठन्ति देशकालादिसम्बन्धेन यातायातताभाजः के गुणाः सन्तीत्यर्थः । तदेतन्मत्प्रश्नोत्तरम् । वक्तुम् । अर्हसि ॥ ४ ॥ स इति । स इत्थंनिर्विकारानन्दमुनिनानुयुक्तः श्रीहरिः । अब्रवीत् । हे सद्बुद्धे ! । शृणु । आत्मनिष्ठा । अस्या वैराग्यमूलत्वादनया वैराग्यमपि ज्ञेयम् । स्वधर्मः । ईशितुः साक्षाच्छ्रीहरेः । दृढनिश्चयोऽयमेवाक्षरधामाधिपतिः पुरुषोत्तमोऽस्तीत्येवंभूतस्तत्स्वरूपज्ञानस्य सुस्थिरनिर्णयश्च । भगवतः स्वरूपज्ञानसुदृढनिर्णयस्य सप्रेममाहात्म्यज्ञानं तन्नवधाभक्तेर्मूलत्वादनेन भक्तिरपि ज्ञातव्या । इमे आत्म-

निष्ठादयः । गुणाः । सत्सु मदाश्रितेषु साधुषु । नित्याः सर्वदैव तिष्ठन्ति ॥ ५ ॥ आगच्छेयुरिति । अन्ये एकान्तिकतापादकेभ्य आत्मनिष्ठादिभ्य इतरे । गुणाः कृपालुत्वादीनि साधुलक्षणानि तु । क्वचित्सद्देशकालादिसंयोगे । आगच्छेयुः । क्वचिदसद्देशकालादिसंयोगे । गच्छेयुः स्वकार्यानाचरणेन गतप्राया भवेयुः । हे मुने ! । तव । प्रश्नोत्तरं तु । इत्थम् । अस्ति । इत्येवम् । अवधारय ॥ ६ ॥ मुक्तानन्द इति । ततस्तदनन्तरम् । मुक्तानन्दो मुनिः । अपृच्छत् । हे स्वामिन् ! । देहात्मनोः । पृथक् भिन्नभिन्ना । व्यक्तिर्विनाश्यविनाशित्वादिरूपं विवेचनम् । ज्ञाता बुद्धा सत्यपि । नोऽस्माकम् । पुनर्भूयः । विस्मृतिम् । कथं केन हेतुना । प्राप्नोति ॥ ७ ॥ तमिति । तत इत्थंभूतमुक्तानन्दमुन्युक्तप्रश्नश्रवणानन्तरम् । तं मुक्तानन्दमुनिम् । स्वामी श्रीहरिः । उवाच । हे मुने ! । यदि । देहात्मनोः । पृथक् । व्यक्तिः । सम्यग्यथार्थतया । ज्ञाता भवेत् । तर्हि । सा देहात्मनोः पृथग्व्यक्तिः । विस्मृतिम् । नैति न प्राप्नोति । देहात्मस्वरूपयोः पृथक्पृथक् सम्यग्ज्ञातृत्वाभाव एव तद्व्यक्तिविस्मृतौ हेतुरित्यर्थः ॥ ८ ॥ उक्तार्थमेव दृष्टान्तेन साधयति । यथेति । हे मुने ! । यथा । अत्र सत्सङ्गे । कृष्णस्वरूपस्य साक्षाद्भगवत्स्वरूपस्य । निश्चयः ।

आगच्छेयुर्गुणास्त्वन्ये गच्छेयुश्च क्वचित् क्वचित् । मुने ! प्रश्नोत्तरं त्वित्थं तवास्तीत्यवधारय ॥ ६ ॥ मुक्तानन्दस्ततो-ऽपृच्छद्व्यक्तिर्देहात्मनोः पृथक् । ज्ञाताऽपि नः पुनः स्वामिन् ! कथं प्राप्नोति विस्मृतिम् ॥ ७ ॥ तमुवाच ततः स्वामी व्यक्तिर्देहात्मनोर्यदि । पृथग्ज्ञाता भवेत्सम्यक् तर्हि सा नैति विस्मृतिम् ॥ ८ ॥ यथा कृष्णस्वरूपस्य सम्यग्जातोऽत्र निश्चयः । नापयाति क्वचित्तद्वद्देषाऽपि सुदृढा मुने ! ॥९॥ यदि मन्येत देहोऽहमिति क्वचिदसौ पुमान् । तथाप्यसौ न दृश्येत स्वस्वरुपतयाऽस्य हि ॥ १० ॥ देहात्मबुद्धेराभासः क्वचिद् दृश्येत चेदसौ । मनोभ्रमोऽतो मिथ्यैव न तु सा तस्य तात्त्विकी ॥११॥ पक्वज्ञानवतः पुंसः सदाऽऽत्माहमिति स्थितिः । आत्माऽपि ब्रह्मरूपश्च तत्र कृष्णं स पश्यति ॥ १२ ॥

सम्यग्जातो दिव्यमानुषभावाभेदज्ञानोत्पन्नः सन् । क्वचित्कदाचिदपि । नापयाति न निवर्त्तते । तद्वत्तथा । एषा देहात्मनोः पृथग्व्यक्तिरपि । सुदृढा तत्तत्स्वरूपयोः पृथक् सम्यक् ज्ञानेनोत्पन्नत्वात्सुस्थिरा सती । नापयति ॥ ९ ॥ यदीति । असौ देहात्मपृथग्व्यक्तिसम्यक् ज्ञानवान् । पुमान् भक्तः । यदि । क्वचित्कदाचित् । अहम् । देहोऽस्मि । इति । मन्येत । तथापि । असौ देहः । अस्यैवंविधभक्तस्य । स्वस्वरूपतयाऽऽत्मस्वरूपतया । न दृश्येत । हि ॥ १० ॥ देहेति । चेद्यदि । क्वचित् । देहात्मबुद्धेः स्वदेहे आत्मतामतेः । आभासः स्फूर्तिः । दृश्येतोदयमापद्येत । तर्हि । असावाभासः मनोभ्रमो मनस्युत्पन्ना केवला भ्रान्तिः । अतो हेतोः । मिथ्यैव स मिथ्याभूत एवोत्पद्यते इत्यर्थः । तस्य तथाविधभक्तस्य । सा देहात्मबुद्धिः । तात्त्विकी सत्या । न तु नैव भवति ॥ ११ ॥ पक्वेति । पक्वज्ञानवतो देहात्मज्ञानवतो देहात्मज्ञानस्य परिपक्वतावतः । पुंसो भक्तस्य । अहम् । आत्मा । भवामि । इत्येवंविधा । स्थितिः । सदा । तिष्ठति । आत्माऽपि स्वक्षेत्रज्ञोऽपि । ब्रह्मरूपो ब्रह्मभावापन्नः । प्रतीयते । इति स्थितिः । सदा तिष्ठति । स पक्वज्ञानवान् भक्तः । तत्र ब्रह्मस्वरूपे स्वात्मनि । कृष्णं प्रत्यक्षं श्रीहरिम् । पश्यति ॥ १२ ॥

स्वयमिति । अथानन्तरम् । स्वयम्प्रकाशानन्दः । साधुः । हरिम् । नमन्नमस्कुर्वन्सन् । अपृच्छत् । हे ईश्वर ! । आत्मरूपस्य । विचारः । कीदृक् किंविधः । कर्त्तव्यः ॥ १३ ॥ स्वामीति । स्वामी स्वयम्प्रकाशानन्दमुनिनैवं पृष्टः श्रीहरिः । उवाच । हे मुने ! । यदा । द्रष्टा । जीवः । अन्तःकरणेक्षणः स्वकीयान्तःकरणसमीक्षकः सन् । आस्ते तिष्ठति । तदा । असौ जीवः । बहिर्बहिर्वर्त्तमानान् स्थूलदेहश्च अर्थास्तत्सम्बन्धिविषयाश्च तान् । विस्मरति ॥ १४ ॥ अन्तरिति । तदा तस्मिन्समये । अन्तःकरणं च तद्द्रष्टा जीवश्च तयोः । अन्तरे मध्ये । यः । स्थिरः स्थिरतां प्राप्तः । विचारः सद्गुरुरूपदिष्टस्य ज्ञातृत्वादिलक्षणस्य जीवरूपस्य योऽखण्डाववोधस्तद्रूपा विचारशक्तिः । वर्त्तते । तेन विचारेण । मनोबुध्यादिवृत्तयः सङ्कल्प, विकल्प, निश्चय, स्मृत्यभिमानाख्या अन्तःकरणवृत्तयः । संवीक्ष्याः । अस्यायं भावः । सद्गुरूपदेशतः स्वात्मनो ज्ञातृतादिगुणवत्ता दृढता येन विचारेण कृता तेनैव मनो यान्विषयान्प्राप्तुं सङ्कल्पयति बुद्धिश्च यान्प्राप्तुं निश्चिनोति चित्तं यान्स्मरति अहङ्कारो यानभिमन्यते ते मनआदयश्चत्वारस्तद्भोग्यार्थाश्च नात्मा तेषां सदा दुःखरूपत्वादात्मनश्च सदा सुखरूपत्वादिति सदा विचार्यमिति ॥ १५ ॥ एवं संवीक्षणफलमाहार्द्धेन ।

स्वयम्प्रकाशानन्दोऽथापृच्छत्साधुर्हरिं नमन् । विचार आत्मरूपस्य कीदृक्कर्तव्य ईश्वर ! ॥ १३ ॥
स्वाम्युवाच यदा द्रष्टा जीवोऽन्तःकरणेक्षणः । आस्ते तदा बहिः स्थूलदेहार्थान् विस्मरत्यसौ ॥ १४ ॥
अन्तःकरणतद्द्रष्ट्रोरन्तरे यस्तदा स्थिरः । विचारस्तेन संवीक्ष्या मनोबुद्ध्यादिवृत्तयः ॥ १५ ॥
एवं समीक्षमाणस्य लीयन्ते ता अशेषतः । तदैव भगवन्मूर्तिध्यानं तेन विधीयताम् ॥ १६ ॥
यावन्न वृत्तयो लीना भवेयुस्तावदेव तु । ता एव वीक्ष्याः परितः कार्यं ध्यानं तु न प्रभोः ॥ १७ ॥
ज्ञानेन्द्रियाणि स्थूलेऽथ यदा स्वविषयान् प्रति । गच्छेयुश्च तदा कार्यो विचारः सुधिया द्विधा ॥ १८ ॥

एवमिति । एवममुना प्रकारेण । समीक्षणमाणस्य सर्वकालं विचारयतो भक्तस्य । ता अन्तःकरणवृत्तयः । अशेषतः । लीयन्ते विषयासक्तिं त्यजन्ति । बीभत्सदर्शनेन ततो दृगिव विषयाणामतिदुःखरूपदर्शनेन सर्वा अप्यन्तःकरणवृत्तयस्तेभ्यः परावृत्य केवलात्माकारेण तिष्ठन्तीत्यर्थः । तथात्वे करणवृत्तीनामतिविषयोन्मुखीभावेन यावदा यत्कर्त्तव्यं तदाह । तदात्माकारान्तःकरणवृत्तिभवनवेलायामेव । तेनैवंविचारवता भक्तेन । भगवन्मूर्त्तिध्यानम् । विधीयतां कर्त्तव्यमित्यर्थः ॥ १६ ॥ पूर्वावासनाबलादन्तःत्माकारता न स्यात्तावत्तेन किं कर्त्तव्यमित्यत्राह । यावदिति । यावद्यावत्कालपर्यन्तम् । वृत्तयः । लीनाः । नैव भवेयुः । तावत्तावत्कालपर्यन्तं तु । ता वृत्तय एव । परितः सर्वतः । वीक्ष्या विचारेणावलोकनीयाः । प्रभोः । ध्यानं तु । न कार्यम् ॥ १७ ॥ एवं सूक्ष्मदेहे कर्त्तव्यं विचारमुक्त्वा साम्प्रतं स्थूलदेहे कर्त्तव्यं विचारमाह । ज्ञानेति अथ च । स्थूल स्थूलशरीरे । वर्त्तमानानीति शेषः । ज्ञानेन्द्रियाणि चक्षुरादीनि । यदा । स्वविषयान्प्रति रूपादीन्स्वस्वार्थानुद्दिश्येत्यर्थः । गच्छेयुः । तदा । सुधिया सुमतिनाऽऽत्मविचारवता भक्तेन । विचारः । द्विधा । कार्यः ॥ १८ ॥

युक्तत्वेन साधुवदसार्वत्रिकत्वाज्ज्ञेयम् ॥ ३२ ॥ आत्मरूपविचारं यो भक्तैः स्वैः कार्यमादरात् । स्पष्टं प्राह हरिः सोऽस्तु ध्येयो ब्रह्मात्मना मया ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासश्रीहरिकृष्णभगवत्सूनुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां नवतितमस्तरङ्गः ॥ ९० ॥ १२ ॥

साक्षात्कृष्णस्वरूपस्य निश्चयस्य यथार्थतः । शास्त्रमूलमेवोक्तं सम्यग्दाढर्ये त्रयोदशे ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८७७) भाद्रशुक्लद्वितीयायां भाद्रपदमासस्य शुक्लपक्षागतद्वितीयातिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । सारङ्गनगरे । जीववर्मणो नृपस्य । दुर्गे इति शेषः । निलये तस्यैवोदगास्य भवने । वहिर्वेद्याम् । वरे स्वास्तरणास्तृतत्वादतिश्रेष्ठे । पीठे पर्यङ्कासने । सितांशुकः स्वाङ्गपरिहितसकलधवलवसनः । स श्रीहरिः । न्यषीदत् ॥ २ ॥ भक्तेति । भक्तसङ्घैर्नानादेशायातनिजाश्रितत्यागिगृहिजनवृन्दैः । परिवृतं सभायां संवेष्टितम् । प्रसन्नं प्रसन्नमुखपङ्कजम् । उदङ्मुखमुदगास्यतया वर्त्तमानम् । तं श्रीहरिम् । नमस्कृत्य । सुधीः । मुक्तानन्दो मुनिः । प्राञ्जलिः सन् । पप्रच्छ ॥ ३ ॥ भगवन्निति हे भगवन् ! । यस्य जनस्य । प्राक् प्रथमं तु । प्रभोः । ते तव ।

शकाब्दे विक्रमार्कस्य नगाश्ववसुभूमिते । भाद्रशुक्लद्वितीयायां वचोऽमृतमिदं हरेः ॥ १ ॥
तत्र सारङ्गनगरे निलये जीववर्मणः । बहिर्वेद्यां वरे पीठे स न्यषीदत्सितांशुकः ॥ २ ॥
भक्तसङ्घैः परिवृतं प्रसन्नं तमुदङ्मुखम् । मुक्तानन्दो नमस्कृत्य पप्रच्छ प्राञ्जलिः सुधीः ॥ ३ ॥
भगवन्निश्चयो यस्य प्राक् तु ते भवति प्रभोः । तिरोहितः स च पुनर्भवतीतीह दृश्यते ॥ ४ ॥
स किं प्रागेव हृदये न जातः किन्तु बाह्यतः । यद्वा स हृदि जातोऽपि नश्यति क्वापि कारणात् ॥ ५ ॥
यद्वा स ते प्रभो भक्तैः कार्यते शास्त्रसम्मतैः । आश्चर्यकादिभिस्ते सच्चरितैरतिमानुषैः ॥ ६ ॥
तं च क्वचिद्विदधतो नृनाट्यं जनमोहनम् । वीक्ष्य तच्चरितं ते तु तुच्छं प्राकृतकर्मवत् ॥ ७ ॥

निश्चयः । भवति । स निश्चयः । पुनः । तिरोहितः । भवति । इतीत्थम् । इह सत्सङ्गे । दृश्यते ॥४॥ स इति । सः यः प्राग्भूत्वा तिरोभावं प्राप्तोऽसौ निश्चयः । हृदये निश्चयं विदधतस्तव भक्तस्य मानसे । प्रागुत्पत्तिसमय एव । न जातः । किम् । अथवा । स बाह्यत उपरिष्टादेव । जातः । किम् । यद्वा । स निश्चयः । हृदि जातोऽपि । क्वापि कदाचित् । कारणात्प्रकृष्टकुसङ्गादिनिमित्तात् । नश्यति । किम् ॥ ५ ॥ यद्वेति । यद्वा । स निश्चयः । प्रभोः । ते तव । भक्तैः । कर्तृभिः । शास्त्रसंमतैः । अतिमानुषैर्मनुष्येष्वसम्भावितैः । अत एव । आश्चर्यकारिभिः । ते तव सच्चरितैर्यादृशतादृशमनुष्याणां साधनमन्तरापि सद्यः समाधिविधापनादिशोभनचरित्रैः करणैः । कार्यते विधाप्यते ॥ ६ ॥ तमिति । क्वचित्कदाचित् । जनमोहनं त्वद्विमुखलोकानां मोहोत्पादकम् । नृनाट्यमतिशयितमानुषभावानुकरणम् । विदधतः कस्माच्चन हेतोः कुर्वतः । ते तव श्रीहरेः । प्राकृतकर्मवत्पामरजनक्रियावत् । तच्चरितम् । तुच्छम् । वीक्ष्य ॥ ७ ॥

अनीश्वरेति । एषा । अनीश्वरक्रिया ईश्वरतावर्जितप्राकृतमनुष्यसमानं कर्म । शास्त्रसम्मता । कुतः स्यात् । न स्यात् । शास्त्रे तु तस्याद्भुतचरित्रतोक्तिरिति भावः । तस्माद्धेतोः । अयम् । भगवान् । नहि नैव भवति । इतीत्थम् । ज्ञात्वा स्वयमेव बुध्वा । तं तद्भगवत्तानिश्चयम् । त्यजन्ति । किम् । इति द्वयोरेकान्वयः ॥ ८ ॥ इतीति । इत्यमुना प्रकारेण । तेन । सता मुक्तानन्दमुनिना । पृष्टः । वृषाङ्गभूर्धर्मनन्दनः श्रीहरिः । तं मुक्तानन्दमुनिम् । उवाच । हे मुने ! । तादृक् यो भूत्वा तिरोधत्ते तथाविधः । स भगवन्निश्चयः । प्राक् प्रथमत एव । न जातोऽस्ति । वाऽथ च । वाह्यतोऽपि । न जातोऽस्ति ॥ ९ ॥ कुसङ्गेनेति । किञ्च । स तादृक् निश्चयः । कुसङ्गेन निमित्तेन । न नष्टोऽस्ति । मानुष्यदृष्ट्या भगवतो मनुष्यभावानुकरणवीक्षणेनापि । न नष्टोऽस्ति । अतो हेतोः । त्राकृतेः । कृष्णस्य । सत्यः । निश्चयः । शास्त्रेणैव । स्यात् ॥ १० ॥ अशास्त्रेति । निश्चयः । अशास्त्रसम्मतः शास्त्रवचनसंमतिवर्जितः । क्वापि कदाचिदपि । नैव । सम्भवेत् । कस्यचिद्भक्तस्य । क्वापि कदाचित् । जातो वा अशास्त्रसंमतः स जातश्चेत् । तर्हि । अल्पकालतः । तिरोधत्ते विनाशं गच्छति ॥ ११ ॥ यस्येति । यस्य यस्य भक्तस्य । स निश्चयः ।

अनीश्वरक्रिया ह्येषा कुतः स्याच्छास्त्रसम्मता । तस्मान्नायं हि भगवानिति ज्ञात्वा त्यजन्ति किम् ॥ ८ ॥
इति पृष्टः सता तेन तमुवाच वृषाङ्गभूः । प्राक् स तादृग्न जातोऽस्ति वाह्यतोऽपि न वा मुने ! ॥ ९ ॥
कुसङ्गेन न मानुष्यदृष्ट्या नष्टो न सोऽस्त्यतः । कृष्णस्य त्राकृतेः सत्यः स्याच्छास्त्रेणैव निश्चयः ॥ १० ॥
अशास्त्रसम्मतः क्वापि निश्चयो नैव सम्भवेत् । जातो वा कस्यचित्क्वापि तिरोधत्तेऽल्पकालतः ॥ ११ ॥
यस्य यस्यास्ति स दृढः स ज्ञेयः शास्त्रसभवः । भगवद्भक्तवाक्यानि शास्त्रवाह्यानि न कचित् ॥ १२ ॥
वहुधा नरनाट्यानि शास्त्रेष्वेव रमापतेः ! । वर्णितानि चरित्राणि सन्ति खल्वद्भुतानि च ॥ १३ ॥
अतो नास्त्येव चरितं त्राकृतेर्ननु तस्य तत् । यत्स्याच्छास्त्रवहिर्भूतं पुंसो निश्चयनाशकृत् ॥ १४ ॥

दृढः । अस्ति । स दृढनिश्चयः । शास्त्रसम्भवः । ज्ञेयः । यतः । भगवद्भक्तवाक्यानि साक्षाद्भगवत्स्वरूपज्ञानवतो जनस्य तद्विधानि पक्वभक्तजनोदितानि तन्निश्चयविधापनहेतूनि वचनानि । कचित्कदाचिदपि । शास्त्रवाह्यानि । न सन्ति । किन्तु शास्त्रानुरोधीन्येव सन्तीत्यर्थः ॥ १२ ॥ वहुधेति । शास्त्रेष्वेव । रमापतेः श्रीकृष्णस्य । नरनाट्यानि नरनाट्यरूपाणि मानुषानुकरणेन स्वभक्तसुखदानार्थमसुरमोहनार्थं च कृतानीत्यर्थः । चरित्राणि । वहुधा । वर्णितानि । सन्ति । खलु ॥ १३ ॥ अत इति । अतो हेतोः । त्राकृतेः । तस्य श्रीहरेः । यत् । चरितम् । शास्त्रवहिर्भूतम् । अत एव । पुंसो भक्तस्य । निश्चयनाशकृत् भगवत्ताज्ञानविनाशकरम् । स्यात् । तत्तथाविधम् । चरितम् । नास्त्येव । ननु । प्रश्नोत्तरस्यात्रायमाशयः । शास्त्रजन्योऽपि भगवन्निश्चयो द्विधा । भगवद्दिव्यभावज्ञानजन्यो भगवद्दिव्यमानुषभावज्ञानजन्यश्चेति । तत्र केवलदिव्यभावज्ञान-जन्यो दिव्यभावस्य भगवत्यदर्शनेन निवर्त्तते । दिव्यमानुषभावज्ञानजन्यो न कदाचिदपि निवर्त्तत इति ॥ १४ ॥

ननु यद्वाक्येभ्यो भगवन्निश्चयः क्रियते तद्भक्तलक्षणानि लोकतः शास्त्रतो वा प्रतीयते इति चेच्छास्त्रप्रतीतान्येव तानि सत्यानीत्याह भगवदिति । भगवद्भक्तलक्ष्माणि साक्षाद्भगवन्निश्चयविधापकानां तद्भक्तानामहिंसाब्रह्मचर्यनिर्मानत्वप्रमुखानि लक्षणानि । शास्त्रात् । सम्यक् सत्यतया प्रतीयते न तु लोकतः । लोकवाक्यानां स्वरुच्यनुरोधित्वेनाग्राह्यत्वादिति भावः । अतो हेतोः । शास्त्रमेव प्रमाणं येषां तेषां जनानाम् । कृष्णनिश्चयः । जायते ॥ १५ ॥ साम्प्रतं यैर्भक्तैः शास्त्रवाक्यैर्भगवत्स्वरूपनिश्चयः कार्यते ते भक्ता अपि धर्मवन्तश्चेत्तर्हि तेषां वाक्यैः सोऽचलः स्यात्तस्य धर्मस्यापि मूलं शास्त्रमेवास्तीत्याह द्वाभ्याम् । धर्मेति । हे मुने ! । धर्मप्रवृत्तेः मूलं कारणम् । सर्वथा । शास्त्रमेव । अस्ति । अतः । शास्त्रज्ञा भक्तपुरुषाः । धर्मम् । सम्यग्यथार्थतया । विदुर्जानन्ति । आचरन्त्यनुतिष्ठन्ति च ॥१६॥ एवंचेदशास्त्रज्ञेषु सा धर्मप्रवृत्तिः कथमस्तीत्यत्राह । अगम्येति । अन्यत्राशास्त्रज्ञेष्वपि । अगम्यस्त्रीवर्जनादिः । यः । धर्मः । दृश्यते । स धर्मोऽपि । धर्मज्ञाः शास्त्रोक्तधर्मवेदिनो ये पूर्वजाः पूर्वकालवर्त्तिनो महर्ष्यादयो जनास्तेषां या परंपरोपदेशपरिपाटी तया सम्प्राप्तोऽधिगत एव । दृश्यते ॥ १७ ॥ उक्तार्थं निगमयति । नेति ।

भगवद्भक्तलक्ष्माणि शास्त्रात्सम्यक् प्रतीयते । अतः शास्त्रप्रमाणानां जायते कृष्णनिश्चयः ॥ १५ ॥
धर्मप्रवृत्तेर्मूलं च शास्त्रमेवास्ति सर्वथा । सम्यग्धर्मं विदुरतः शास्त्रज्ञा आचरन्ति च ॥ १६ ॥
अगम्यस्त्रीवर्जनादिर्यो धर्मोऽन्यत्र दृश्यते । धर्मज्ञपूर्वजपरंपरासम्प्राप्त एव सः ॥ १७ ॥ नैव
शास्त्रप्रतीतिः स्याद्यस्य चेतसि तस्य तु । कृष्णस्य निश्चयो न स्याद्दृढं धर्मे च न
स्थितिः ॥ १८ ॥ वाचं सुधामिति निपीय गुरोः स साधुर्नष्टस्वसंशय उवाह मुदं तथाऽन्ये ।
भक्ता जनाः सदसि साधुगृहस्थसंज्ञाः सर्वे च तं सुखनिधिं मुदिताः प्रणेमुः ॥ १९ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते एकनवतितमस्तरङ्गः ॥ ९१ ॥ १३ ॥

यस्य जनस्य । चेतसि । शास्त्रप्रतीतिः शास्त्रोक्तवचनविश्वासः । नैव । स्यात् । तस्य जनस्य चेतसि तु । कृष्णस्य निश्चयः । दृढम् । न स्यात् । धर्मे । स्थितिरवस्थानं च । दृढम् । न स्यात् ॥ १८ ॥ वाचमिति । इत्येवंविधाम् । गुरोः श्रीहरेः । सुधाममृततुल्याम् । वाचम् । निपीय । स साधुर्मुक्तानन्दमुनिः । नष्टस्वसंशयो निवृत्तात्मसंदेहः सन् । मुदं हर्षम् । उवाह प्राप । तथा । अन्ये तदितरे । सदसि । वर्त्तमाना इति शेषः । साधुग्रहस्थसंज्ञाः । भक्ताः । जनाः । मुदमुहुः । सर्वे मुक्तानन्दादयः सकलाश्चापि भक्ताः । मुदिताः सन्तः । सुखनिधिम् । तं श्रीहरिम् । प्रणेमुः ॥ १९ ॥ स्वभक्तानां स्वस्वरूपनिश्चयस्य जगाद यः । सच्छास्त्रमूलकं दार्ढ्यं श्रीहरिः सोऽस्तु मन्मतौ ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्सूनुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायामेकनवतितमस्तरङ्गः ॥ ९१ ॥ १३ ॥

भगवद्धाम सम्प्राप्य यथा कोऽपि पतेन्न तु । प्रमादमोहयोस्त्यागो भक्तैः कार्यो यथा दृढम् ॥ १ ॥ तत्त्वानां गणना स्थूलसूक्ष्मयोर्देहयोर्यथा । एतत्सर्वं विविच्यैव सम्यगुक्तं चतुर्दशे ॥ २ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८७७) भाद्रशुक्लतृतीयायां भाद्रपदमासस्य शुक्लपक्षागततृतीयातिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । सारङ्गनगरे । जीवाख्यभूपतेः । दुर्गे इति शेषः । गृहे तस्यैवोत्तरास्य । वहिर्वेद्याम् । पीठोत्तमे सश्वेतोत्तरच्छदंसुतूलिकाद्यास्तृतत्वात् श्रेष्ठे मञ्चासने । सिताम्बरः स्वाङ्गपरिधृतसकलार्जुनवसनः । स श्रीहरिः । न्यषीदत् ॥ २ ॥ तं विशिनष्टि । पितेति । पीतपुष्पमयोत्तंसः पद्मभेदसहस्रदलपीतकुसुममयकर्णपूरः । पीतपुष्पाणां सुशोभनाः शेखरा आपीडा यस्य सः । सतां सहस्रपत्रैरभ्यर्हितानां पीतपुष्पाणां हारालिरापादलम्बिनीहारश्रेणिर्यस्य सः । प्रतीचीनं प्रतीच्यमिमुखं मुखाम्बुजं वदनपद्मं यस्य सः ॥ ३ ॥ स्वेति । नानादेशागतैः । स्वभक्तैः स्वाश्रितैः । साधुगृहिभिस्त्यागिगृहिजनैः । वृतं सभायां परिवेष्टितम् । सद्गुरुं स्वाश्रितहितोपदेशकम् । तं श्रीहरिम् । स्वयम्प्रकाशानन्दो मुनिः । प्रश्नम् । पप्रच्छ ॥ ४ ॥ प्राप्तानामिति । हे हरे ! । तव । सद्धाम । प्राप्तानाम् ।

शकाब्दे विक्रमार्कस्य नगाश्ववसुभूमिते । भाद्रशुक्लतृतीयायां वचोऽमृतमिदं हरेः ॥ १ ॥ तत्र सारङ्गनगरे गृहे जीवाख्यभूपतेः । पीठोत्तमे बहिर्वेद्यां न्यषीदत्स सिताम्बरः ॥ २ ॥ पीतपुष्पमयोत्तंसः पीतपुष्पसुशेखरः । सत्पीतपुष्पहारालिः प्रतीचीनमुखाम्बुजः ॥ ३ ॥ स्वभक्तैः साधुगृहिभिर्नानादेशागतैर्वृतम् । स्वयम्प्रकाशानन्दस्तं प्रश्नं पप्रच्छ सद्गुरुम् ॥ ४ ॥ प्राप्तानां तव सद्धाम भक्तानां पतनं ततः । भवतीत्यत्र को दोषस्तेषां तिष्ठति हृद्गतः ॥५॥ श्रूयते हि पुराणेषु धाम्नो वैकुण्ठतस्तव । पतनं द्वाःस्थयोर्भूमौ जयस्य विजयस्य च ॥ ६ ॥ तथा गोलोकधाम्नोऽपि राधाश्रीदामभक्तयोः । अन्योन्यशापात्पतनं हेतुरत्रास्ति कः प्रभो ! ॥७॥ इति पृष्टो हरिः साधुं तमुवाच मुने ! शृणु । यः प्राप्तो भगवद्धाम भक्तः स न पतेत्ततः ॥८॥

भक्तानाम् । ततो भवत्सद्धाम्नः सकाशात् । पतनम् । भवति । इत्यत्र । तेषां ततः पततां भक्तानाम् । हृद्गतो हृदयावस्थितः । कः । दोषः । तिष्ठति ॥ ५ ॥ ननु 'यद्गत्वा न निवर्त्तन्ते' इत्युक्तेः के ततः पतिताः येन तान्दोषयुक्तान्ब्रवीषीति चेत्तत्र वच्मि श्रूयत इति द्वाभ्याम् । तव । धाम्नः । वैकुण्ठतः । जयस्य । विजयस्य चेति । द्वयोः । द्वाःस्थयोर्दौवारिकयोः । भूमौ । पतनम् । पुराणेषु श्रीभागवतादिषु । श्रूयते । हि । तद्यथा । 'पार्षदप्रवरौ विष्णोर्विप्रशापात्पदाच्च्युता'वित्यादि ॥ ६ ॥ यथेति । हे प्रभो ! । तथा तेनैव प्रकारेण । गोलोकधाम्नोऽपि । राधाश्रीदामभक्तयोः । अन्योऽन्यशापाद्धेतोः । पतनम् । पुराणेषु श्रूयते । प्रसिद्धं चैतद्ब्रह्मवैवर्त्तपुराणे । अत्र ततः पतने । हेतुः । कः । अस्ति ॥ ७ ॥ इतीति । इत्यमुना प्रकारेण । पृष्टः स्वयम्प्रकाशानन्दमुनिनानुयुक्तः । हरिः । तम् । साधुं स्वयम्प्रकाशानन्दमुनिम् । उवाच । हे मुने ! । शृणु । यः । भक्तः । भगवद्धाम । प्राप्तः । सः । भक्तः । ततो भगवद्धाम्नः सकाशात् । न पतेत् ॥ ८ ॥

वैकुण्ठादिति । हे मुने ! । द्वाःस्थयोर्जयविजययोर्दौवारिकयोः । वैकुण्ठात् । भूमौ । यत् । पतनम् । अभूत् । तत्तु । कृष्णस्य । इच्छया तत्स्थमानादिदोषं समीक्ष्य तत्फलप्रदानार्थकसङ्कल्पेनैव । अभूत् । तत्र पतने । अन्यत्तदिच्छातिरिक्तम् । कारणम् । न तु नास्त्येव ॥ ९ ॥ स्वेनेति । भक्तानां स्वैकान्तिकानां सनकादिसदृशानां भक्तजनानां योऽपराधस्तस्य यदसहनं तदेव यः स्वस्वभावस्तस्य प्रदर्शनं तत् । कुर्वता । तेन कृष्णेन । स्वेन स्वयमेव । स्वस्य । पार्षदौ । पातितौ ॥ १० ॥ वैकुण्ठादिति । किञ्च । सद्द्रोही मदेकान्तिकसाधुद्रोहकर्त्ता पुरुषः । वैकुण्ठादपि । पतत्येव । इत्येवंविधम् । सन्माहात्म्यं स्वैकान्तिकसाधुमहिमा । सात्त्वतां स्वैकान्तिकभक्तानाम् । पतिना स्वामिना । तेन भगवता । विस्तारितम् । खलु ॥११॥ कृष्णेति । यत् । कृष्णेच्छया । पतनम् । तत् । लौकिकं कर्मपरवशा यथा स्वर्गादिलोकात्पतन्ति तथाविधमित्यर्थः । पतनम् । नास्ति । किन्तु । एषा । भगवतः । लीला चरित्रमेव । इतीत्थम् । तद्विदो भगवदेकान्तिकभक्त्या तद्धार्दविदो भक्ताः । जानन्ति ॥१२॥ जन्मेति । किञ्च । तौ जयविजयाख्यौ द्वाःस्थौ । जन्मत्रयान्ते जन्मत्रयावसाने । पुनः । तस्य भगवतः । तदेव धाम यतः स्वयं पातितौ तदेव वैकुण्ठाख्यं पदम् ।

वैकुण्ठाद्द्वाःस्थयोर्भूमौ पतनं यदभून्मुने ! । तत्तु कृष्णस्येच्छयैव न त्वन्यत्तत्र कारणम् ॥९॥ स्वेनैव पार्षदौ स्वस्य पातितौ तेन कुर्वता । भक्तापराधासहनस्वस्वभावप्रदर्शनम् ॥१०॥ वैकुण्ठादपि सद्द्रोही पतत्येवेति तेन च । विस्तारितं सन्माहात्म्यं सात्त्वतां पतिना खलु ॥११॥ कृष्णेच्छया यत्पतनं पतनं तन्न लौकिकम् । लीलैवैषा भगवत इति जानन्ति तद्विदः ॥१२॥ जन्मत्रयान्ते च पुनस्तस्य धाम तदेव तौ । प्रतिपन्नौ यथापूर्वं तत्सेवायां च तस्थतुः ॥१३॥ पतितस्तु स विज्ञेयो यो न पूर्वस्थितिं व्रजेत् । तस्मात्तत्पतने नैव कर्त्तव्यः संशयो मुने ! ॥१४॥ एवमेव हि गोलोकाद्राधाश्रीदामपातने । कृष्णस्येच्छैव विज्ञेया न तु रीतिर्हि लौकिकी ॥१५॥ भुवि लीलेच्छया तेन सद्धर्मं पातुमासुरात् । स्वयमेवावतरता ततस्ताववतारितौ ॥१६॥

प्रतिपन्नौ प्राप्तौ सन्तौ । यथा । पूर्वम् । तत्सेवायाम् । तस्थतुः । तथा चोक्तं श्रीभागवते । 'वैरानुबन्धतीव्रेण ध्यानेनाच्युतसात्मताम् । नीतौ पुनर्हरेः पार्श्वं जग्मतुर्विष्णुपार्षदा'विति ॥१३॥ पतित इति । हे मुने ! । यो भक्तः । पूर्वस्थितिं पतनपूर्वभावम् । न व्रजेत् नाप्नुयात् । स भक्तस्तु । पतितो भगवद्धामच्युतः । विज्ञेयः । तस्माद्धेतोः । तत्पतने जयविजयपतने । संशयः । नैव कर्त्तव्यः ॥१४॥ एवमिति । एवममुना प्रकारेणैव । गोलोकात् । राधाश्रीदामपातने । कृष्णस्य । इच्छा तत्स्थमानादिदोषफलप्रदानतारूपः सङ्कल्प एव । विज्ञेया । लौकिकी उक्तप्रकारेण लोकसमाना । रीतिः प्रचारः । न तु नैव विज्ञेया । हि ॥ १५ ॥ भुवीति । भुवि पृथिव्याम् । लीलेच्छया लोककल्याणहेतु नानाविधस्वस्वचरित्रविधानसङ्कल्पेन हेतुना । आसुरादसुरसमूहात् । सद्धर्मं भागवतधर्मम् । पातुं रक्षितुम् । तल्लुप्तस्य तस्य प्रवृत्तिविधानविश्रापनपूर्वं स्थापयितुमित्यर्थः । अवतरता कृष्णरूपेण प्रादुर्भावता । तेन भगवता । स्वयमेव । ततो गोलोकात् । तौ राधाश्रीदामभक्तौ । अवतारितौ प्रादुर्भावितौ ॥ १६ ॥

कृष्णेति । एकां केवलाम् । कृष्णेच्छाम् । अन्तरा विना तु । केनापि । हेतुना येन केनाप्यन्येन निमित्तेनेत्यर्थः । वैकुण्ठादेः । धामतः । कस्यचिद्भक्तस्य । पातस्तु । क्वापि कदाचिदपि । न भवेत् ॥ १७ ॥ कृष्णेति । कृष्णेच्छा श्रीकृष्णसङ्कल्पस्तु । स्वतन्त्रा । अस्ति । या । जडमचेतनम् । चेतनम् । कुर्यात् । पुनः किञ्च । चेतनम् । जडम् । कुर्यात् । सेच्छा । किं किम् । न विदधीत । अपि तु सर्वमपि विदधीतेत्यर्थः ॥ १८ ॥ ज्ञानेति । ज्ञानवैराग्यधर्मैः । युक्ताम् । हरेः । एकान्तिकीम् । भक्तिम् । ये भक्ताः । विदधते कुर्वन्ति । तेषां भक्तानाम् । कुत्रचिदत्र परत्र च । पातशङ्का पतनसन्देहः । नास्ति ॥१९॥ श्वेतेति । इह सत्सङ्गे ते तादृशा एकान्तिकभक्तास्तु । श्वेतद्वीपस्थभक्तैः सह । तुल्यतां समानताम् । लभन्ते । इत्यमुना प्रकारेण । ते तव । प्रश्नोत्तरम् । अस्ति । अत्रायं प्रश्नोत्तराशयः । भगवद्धामप्राप्तिस्तु जनकल्याणार्थं स्वेच्छया भूमौ मनुष्याद्याकारेण प्रादुर्भूतस्य साक्षाद्भगवतः प्रपत्त्यैव । तद्धामप्राप्ता भक्ता द्विविधाः । सम्पूर्णैकान्तभावा असम्पूर्णैकान्तभावाश्च । तत्र सम्पूर्णैकान्तभावानां तु मानादिदोषाभावात् न ततः कदाचिदपि पुनरावृत्तिः । असम्पूर्णैकान्तभावानामन्तःस्थमानादिदोषसत्त्वात्तन्निवृत्तये भगवदिच्छया ततः कदा-

कृष्णेच्छामन्तरा त्वेकां वैकुण्ठादेस्तु धामतः । केनापि हेतुना क्वापि भवेत्पातो न कस्यचित् ॥१७॥ कृष्णेच्छा तु स्वतन्त्राऽस्ति किं किं न विदधीत सा । जडं कुर्याच्चेतनं या चेतनं च जडं पुनः ॥ १८ ॥ ज्ञानवैराग्यधर्मैर्युक्तामेकान्तिकीं हरेः । भक्तिं विदधते तेषां पातशङ्का न कुत्रचित् ॥१९॥ श्वेतद्वीपस्थभक्तैस्ते लभन्ते तुल्यतामिह । इति प्रश्नोत्तरं तेऽस्ति किञ्चित्पृच्छामि वोऽप्यथ ॥२०॥ कृतानुमोदनः सद्भिस्तान्स पप्रच्छ सर्ववित् । जिहीर्षुस्तद्बुद्धिगतं विपर्यासांशमीश्वरः ॥२१॥ उक्तं सनत्सुजातीये भारतोद्योगपर्वणि । त्यजेत्प्रमादमोहौ यस्तरेन्मृत्युं स वा इति ॥२२॥ तावेव मृत्यू चेत्युक्तं ततस्तौ भगवज्जनैः । सर्वथा परिहातव्यो मृत्युमाशु तितीर्षुभिः ॥२३॥

चित्पुनरावृत्तिः केवलभगवदिच्छयैव ततः । पतनोक्तौ भगवति वैषम्यादिदोषापत्तिरायायात् । एवंसति ततः पतनापतनवचनानां न विरोधइति । अथानन्तरम् । वो युष्मभ्यमपि । किञ्चित् । कञ्चित्प्रश्नमित्यर्थः । पृच्छामि ॥ २० ॥ कृतेति । सद्भिरित्थंभूतहरिवचनसुधां पिबद्भिर्मुक्तानन्दादिसकलसाधुभिः । कृतानुमोदनः वाढं पृच्छेति कृतानुमतिः । सर्ववित्सर्वान्र्यामित्वात्सर्वजनहृद्गतामिप्रायज्ञः । अत एव । तद्बुद्धिगतं स्वाश्रितेषु येषां केषांचिन्मत्यवस्थितम् । विपर्यासांशं विपरीतावबोधभागम् । जिहीर्षुर्हर्तुमिच्छुः । ईश्वरः । परमेश्वरः । स श्रीहरिः । तान् साधून् । पप्रच्छ ॥ २१ ॥ उक्तमिति । यः पुरुषः । प्रमादमोहौ । त्यजेत् । सः । मृत्युं जन्ममरणप्रवाहरूपामविद्याम् । तरेत् । वै । इतीत्थम् । भारतोद्योगपर्वणि । सनत्सुजातीये । उक्तम् । तत्र प्रमादो नाम स्वकीयनिःश्रेयससाधनरूपात्कर्तव्यात्कर्मणोऽन्यत्र प्रवृत्तिः । मोहो विपरीतज्ञानम् ॥२२॥ ताविति । किञ्च । तौ प्रमादमोहावेव । मृत्यू जन्ममरणप्रवाहलक्षणाविद्यारूपौ स्तः । इत्यपि । उक्तं तत्रैव कथितमस्ति । ततो हेतोः । मृत्युम् । आशु शीघ्रम् । तितीर्षुमिस्तरीतुमिच्छुभिः । भगवज्जनैः । तौ प्रमादमोहौ । सर्वथा । परिहातव्यौ । तद्यथा । 'मोहो मृत्युः संमतो यः कवीनाम्' । 'प्रमादं वै मृत्युमहं

ब्रवीमी'त्यादि ॥ २३ ॥ एवमिति । एवंसत्यपि । अत्र सत्सङ्गे । त्यक्तगृहाः परित्यक्तगृहाश्रमा अपि । ये । भक्ताः साधुजनाः । कृष्णस्य साक्षाद्भगवतः । माहात्म्यं महिमबलम् । अवलम्ब्याश्रित्य । तौ प्रमादमोहौ । हातुं त्यक्तुम् । न यतन्ते उद्युक्ता न भवन्ति ॥ २४ ॥ तेषामिति । हे साधवः ! । तेषां साधूनाम् । एवंविधे । ज्ञाने । हेतुः । को वा । अस्ति । तं हेतुम् । आदौ प्रथमतः । सम्यक् । विचार्य । ततस्तदनन्तरम् । स हेतुः । मह्यम् । कथ्यताम् ॥ २५ ॥ इतीति । इत्यमुना प्रकारेण । पृष्ट्वा । हरौ । तुष्णीम् । स्थिते सति । तस्य हरेः । पुरःस्थितः । स्वयम्प्रकाशानन्दः साधुः । विनयानतः सन् । तं श्रीहरिम् । प्रोवाच ॥ २६ ॥ य इति । हे प्रभो ! । यः साधुः । भवतः प्रत्यक्षस्य श्रीहरेस्तव । भक्तः । स्यात् । स साधुः । त्वन्माहात्म्यगौरवात्साक्षाद्भगवतस्तव महिम्नो महत्तामाश्रित्य । प्रमादमोहनाशादौ । यत्नं प्रयासम् । कुतो हेतोः । कुर्यात् । किन्तु न कुर्यादित्यर्थः ॥ २७ ॥ अनायासेनेति । हे प्रभो ! । चेद्यपि । अनायासेन प्रयत्नमन्तरा ।

एवं सत्यपि कृष्णस्य माहात्म्यमवलम्ब्य ये । तौ हातुं न यतन्तेऽत्र भक्तास्त्यक्तगृहा अपि ॥ २४ ॥
तेषामेवं विधे ज्ञाने हेतुः को वाऽस्ति साधवः । आदौ विचार्य तं सम्यक् ततो मह्यं स कथ्यताम् ॥ २५ ॥
इति पृष्ट्वा स्थिते तूष्णीं हरौ तस्य पुरः स्थितः । स्वयम्प्रकाशानन्दस्तं प्रोवाच विनयानतः ॥ २६ ॥
यः स्याद्भक्तस्तु भवतः स त्वन्माहात्म्यगौरवात् । प्रमादमोहनाशादौ यत्नं कुर्यात्कुतः प्रभो ॥ २७ ॥
अनायासेन तन्नाशो भवेच्चेद्भवतु प्रभो ! । अनष्टौ वा वराकौ तौ किं कर्त्तारौ प्रभोः पुरः ॥ २८ ॥
एवं ब्रुवन्तं तं साधुं हरिः प्रोवाच सस्मितम् । तयोर्नाशे न यत्नं यः कुर्याद्भक्तो यथाबलम् ॥ २९ ॥
विदध्याद्यश्च तं साधो ! तयोः कतर उत्तमः । इति सञ्चोदितस्तेन साधुः प्रोवाच तं पुनः ॥ ३० ॥

तन्नाशः प्रमादमोहनिवृत्तिः । भवेत् । तर्हि । भवतु । अथवा । तौ । अनष्टौ सन्तौ । प्रभोः । पुरः । भगवतस्तव महिम्नोऽग्रे इत्यर्थः । वराकावतिरङ्कौ । तौ । किं कर्त्तारौ । तद्वतो भवद्भक्तसाधोः कमनर्थं विधास्यतो न कमपीत्यर्थः ॥ २८ ॥ एवमिति । एवममुना प्रकारेण । ब्रुवन्तं कथयन्तम् । साधुं स्वयम्प्रकाशानन्दमुनिम् । हरिः । सस्मितं समन्दहासं यथातथा । प्रोवाच ! हे मुने ! । भक्तः साक्षाद्धर्याश्रितः । यः साधुः । तयोः प्रमादमोहयोः । नाशे । यथाबलं स्वसामर्थ्यानुसारिणम् । यत्नं प्रयत्नम् । न कुर्यात् । भगवन्माहात्म्यबलमालम्ब्य न विदध्यात् ॥ २९ ॥ विदध्यादिति । हे साधो ! । यः साधुः । तं तन्नाशप्रयत्नम् । विदध्याद्भगवतोऽतिप्रसन्नतामङ्गीकृत्य यथाबलं कुर्यात् । तयोर्द्वयोर्भक्तयोर्मध्ये । कतरः उत्तमः श्रेष्ठः । इत्यमुना प्रकारेण । तेन श्रीहरिणा । सञ्चोदितः प्रेरितः । साधुः स्वयम्प्रकाशानन्दो मुनिः । पुनर्भूयः । तं श्रीहरिम् । प्रोवाच ॥ ३० ॥

अत्रेति । हे हरे ! । अत्रानयोर्मध्ये । आद्यः प्रथमः । तव माहात्म्यबलग्राही प्रत्यक्षपुरुषोत्तमस्य तव महिम्नो बलस्य ग्राहकः । भवति । अतो हेतोः । उत्तमः । भवति । अन्यो द्वितीयः । साधनबलग्राही । अतः । न तु उत्तमो नैव भवति । इत्यमुना प्रकारेण । उक्तः स्वयम्प्रकाशानन्दमुनिना कथितः । हरिः । अब्रवीत् ॥३१॥ पतिव्रतेति । हे साधो ! । पतिव्रतानारी । पतिं स्वस्वामिनमिव । यो जनः । अनन्यभावेनैकान्तिकभावेन । हरिम् । भजते । स जन एव । सन्मतां भगवदेकान्तिसाधुसंमताम् । भक्त इति । आख्यामभिधाम् । आप्नोति । न तु प्रमादमोहवानिति भावः ॥ ३२ ॥ प्रमादेति । हे मुने ! । यस्य भक्तस्य । प्रमादमोहयोः । त्यागे निवर्त्तने । चिन्ता । सर्वथा । नास्ति । स भक्तः । त्यागिना । भवता । श्रेष्ठ इति । उक्तः ॥ ३३ ॥ तदुक्तां श्रेष्ठतां परिहासाय दृष्टान्तेन स्फुटयन् निराकरोति सार्द्धेन । यथेति । हे मुने ! । यथा यद्वत् । पतिव्रता पातिव्रत्यं नाटयन्ती । नारी । पुरुषान्तरं स्वपतीतरपुरुषम् । पश्यन्ती सती । करताल्याद्यैस्तेन हस्ततालप्रदानादिभिः । रञ्जयेत्तं स्वात्मनि प्रीतियुक्तं कुर्यात् । कुतश्चन स्वपतेः स्वव्रतभङ्गाद्वेत्यर्थः । न विभियाद्भयं न प्राप्नुयात् ॥ ३४ ॥ सेति । सैवंविधानार्यपि ।

अत्राद्यस्तव माहात्म्यबलग्राह्योऽत उत्तमः । न त्वन्यः साधनबलग्राहीत्युक्तोऽब्रवीद्धरिः ॥ ३१ ॥
पतिव्रता पतिमिवानन्यभावेन यो हरिम् । भजते भक्त इत्याख्यां स एवाप्नोति सन्मताम् ॥ ३२ ॥
प्रमादमोहयोस्त्यागे यस्य चिन्ता न सर्वथा । स भक्तः श्रेष्ठ इत्युक्तो भवता त्यागिना मुने ! ॥ ३३ ॥
यथा पतिव्रता नारी पश्यन्ती पुरुषान्तरम् । रञ्जयेत्करताल्याद्यैर्विभियान्न कुतश्चन ॥ ३४ ॥
सापि श्रेष्ठा भवेत्तद्वत्स श्रेष्ठो भवता मतः । यथार्थभक्तो यस्त्वन्यः स तु न्यूनस्ततो मतः ॥ ३५ ॥
यथा सत्यन्यपुरुषवीक्षास्पर्शौ त्यजेत्सुधीः । स्वधर्मभङ्गात् पत्युश्च भीता तिष्ठेच्च सर्वदा ॥ ३६ ॥
तथा प्रमादमोहौ यस्त्यजेत्सद्धर्मभङ्गतः । धर्मरक्षककृष्णाच्च भीतस्तिष्ठेच्च सत्पथे ॥ ३७ ॥

श्रेष्ठा । भवेत् । तद्वत् । भवता । मतः । स प्रमादमोहवान् भक्तः । श्रेष्ठः । भवेत् । यथैवंविधा नारी लोकशास्त्ररीतीक्षया न कदापि श्रेष्ठा तथायमपीति भावः । किञ्च । यः । अन्यो द्वितीयः । यथार्थभक्तो मन्मतः श्रेष्ठभक्तः । अस्ति । स तु । ततस्त्वन्मताच्छ्रेष्ठभक्तात् । न्यूनः । मतो भवता संमतः ॥ ३५ ॥ एवं सामान्यतः सोपहासमिवोक्त्वा साम्प्रतं तदुक्तां श्रेष्ठस्याश्रेष्ठतामपि सपरिहासं दृष्टान्तेन स्फुटयन् निराकरोति सत्रिपादद्वाभ्याम् । यथेति । यथा । सुधीः स्वधर्मपालनाचलनिश्चयत्वात्सुमतिः । सती पतिव्रतानारी । अन्यपुरुषवीक्षास्पर्शौ स्वपतीतरपुरुषदर्शनस्पर्शने । त्यजेत् । स्वधर्मभङ्गात् । पत्युः स्वस्वामिनः सकाशाच्चापि । सर्वदा । भीता भीतिमती च । तिष्ठेत् वर्त्तेत ॥ ३६ ॥ तथेति । तथा । यो भक्तः । प्रमादमोहौ । त्यजेत् । सद्धर्मभङ्गतः स्वैकान्तिकधर्मभङ्गात् । धर्मरक्षककृष्णात्स्वैकान्तिकधर्मरक्षकश्रीकृष्णभगवतश्च । भीतः सन् । सत्पथे प्रमादमोहवर्जितभगवदेकान्तिकसाधुमार्गे च । तिष्ठेत्सदा वर्त्तेत ॥ ३७ ॥

वदतामिति । तमेवंविधं श्रेष्ठं भक्तमपि । न्यूनम् वदताम् । त्यागिनाम् । युष्माकम् । मतिः । विपर्यस्ता विपरीतभावं प्राप्ता । इतीत्थम् । मे मम । भाति भासते । यथोक्तविधा सद्धर्मवती पतिव्रता स्त्री लोकशास्त्ररीतीक्षया न कदापि न्यूना भवेत्तथैव प्रमादमोहत्यागोद्युक्तभक्तोऽप्यतस्तं न्यूनं ब्रुवतस्तवावश्यमेव मतिविपर्यासो जात इति भासत इत्यर्थः । तस्माद्धेतोः । ईदृशं यथा त्वया बुद्ध्यते तादृशम् । नहि नैव । वेद्यं ज्ञातव्यम् । त्वन्निर्द्धारितैवंविधनिश्चयस्य सच्छास्त्रैकान्तिकसाधुनिश्चयवैपरीत्यादिति भावः ॥ ३८ ॥ एवं स्वयम्प्रकाशानन्दमुनिमतविपरीतार्थखण्डनं विधाय साम्प्रतं स्वभक्तावश्यवेद्यं स्वसिद्धान्तमाह पञ्चभिः । प्रमादेति । सद्भिर्मदाश्रितसाधुभिः । प्रमादमोहौ । द्वौ । शत्रू । प्रयत्नतः । हेयौ । अन्यथा तत्प्रहाणाभावे । असतोऽसाधोर्यथा मद्विमुखस्यासाधोर्यद्वदित्यर्थः । तथा । सतो मदाश्रितसाधोरपि । तौ प्रमादमोहरूपौ शत्रू । दुःखदौ । स्याताम् ॥ ३९ ॥ एतदेव दृष्टान्तेन द्रढयति द्वाभ्याम् । यथेति । यथा । भक्षितम् । मादकं मदजनकम् । वस्तु महाजिह्व भङ्गा गञ्जादि । बालम् । युवानम् । वृद्धं वा । पण्डितम् । अपण्डितं वापि । मत्तयेन्मत्तं कुर्यात् । ध्रुवं निश्चितमेव ॥ ४० ॥ शत्रुद्वयमिति । तथा तेन

वदतां तमपि न्यूनं युष्माकं त्यागिनां मतिः । विपर्यस्तेति मे भाति तस्माद्वेद्यं न हीदृशम् ॥३८॥ प्रमादमोहौ शत्रू द्वौ सद्भिर्हेयौ प्रयत्नतः । अन्यथा दुःखदौ स्यातां तौ सतोऽप्यसतो यथा ॥ ३९ ॥ यथा हि मादकं वस्तु भक्षितं मत्तयेद्ध्रुवम् । बालं युवानं वृद्धं वा पण्डितं वाप्यपण्डितम् ॥ ४० ॥ शत्रुद्वयं तथैवैतत्पीडयेदात्मधारकम् । असज्जनं सज्जनं वा पुमांसं योषितं तथा ॥४१॥ विशेषं सदसत्पुंसोरेतावन्तं विबुद्ध्यताम् । आद्यः शक्नोति तौ हातुं साधनैर्नेतरस्त्विति ॥४२॥ अतः सता प्रयत्नेन हेयौ मायेति तावुभौ । स्थूलादिदेहभिन्नेन कार्या भक्तिस्तथाऽऽत्मना ॥ ४३ ॥ इति श्रीहरिवाक्येन नष्टबुद्धिविपर्ययाः । स्वयंप्रकाशानन्दाद्या बभूवुस्तत्र साधवः ॥ ४४ ॥

प्रकारेणैव । एतत्प्रमादमोहरूपम् । शत्रुद्वयम् । आत्मधारकं स्ववशवर्त्तिनम् । असज्जनम् । अथवा । सज्जनम् । पुमांसम् । तथा । योषितमसतीं सतीं वा नारीम् । पीडयेत् दुःखं दद्यात् ॥ ४१ ॥ विशेषमिति । सदसत्पुंसोः साध्वसाधुपुरुषयोर्विषये । एतावन्तमेतत्परिमितम् । विशेषं भेदम् । अवबुध्यताम् । आद्यो मदाश्रितः साधुपुरुषः । साधनैर्भगवदेकान्तिकसाधूदितैर्ज्ञानादिभिरुपायैः । तौ प्रमादमोहावरी । हातुम् । शक्नोति । इतरो मद्विमुखोऽसाधुपुरुषः । न तु हातुं नैव शक्नोति । इत्येतं विशेषं विबुध्यतामिति सम्बन्धः ॥ ४२ ॥ अत इति । अतो हेतोः । सता मदाश्रितसाधुना । तौ । उभौ प्रमादमोहरूपौ शत्रू । मायाऽज्ञानरूपाऽविद्यास्ति । इतीत्थं सम्यगवगत्य । हेयौ त्याज्यौ । तथा तथैवास्थूलादिदेहभिन्नेन स्थूलसूक्ष्मकारणदेहेभ्यः स्वरूपस्वभावादिभिर्व्यतिरिक्तेन । आत्मना । भक्तिः । कार्या । निजात्मानं देहत्रयविलक्षणं ब्रह्मरूपं विभाव्य स्वधर्मवैराग्यसहिता साक्षात्कृष्णभक्तिः कर्त्तव्येत्यर्थः ॥ ४३ ॥ इतीति । तत्र सभायां स्थिताः । स्वयम्प्रकाशानन्दाद्याः । साधवः । इतीत्थंभूतेन । श्रीहरिवाक्येन । नष्टबुद्धिविपर्ययाः । बभूवुः ॥ ४४ ॥

प्रहृष्टा इति । अथानन्तरम् । प्रहृष्टा अत्यन्तं मुदिताः । ते साधवः । प्रभूम् । तं श्रीहरिम् । नत्वा । संशयम् । पप्रच्छुः । हे सत्पते ! । तत्त्वात्मके तत्त्वमये । स्थूलदेहे । सूक्ष्मदेहे च ॥ ४५ ॥ समानीति । तत्त्वानि । समानि समसङ्ख्यानि । सन्ति । अथवा । द्वयोः स्थूलसूक्ष्मदेहयोः । न्यूनाधिकानि परस्परापेक्षयान् यूनाधिकसख्यानीत्यर्थः । सन्ति । इति सार्द्धश्लोकस्यैकान्वयः । इत्यमुना प्रकारेण । पृष्टः साधुभिरनुयुक्तः । सर्वज्ञः । स श्रीहरिः । ऊचे । हे साधवः ! । शृणुत ॥४६॥ स्थूलेति । स्थूलदेहे तु । महाभूतानि पृथिव्यप्तेजोवाय्वाकाशात्मकमहाभूतसंज्ञानि । पञ्च । तत्त्वानि । भवन्ति । सूक्ष्मदेहे तु । एकोनविंशतिरेकोनविंशतिसङ्ख्याकानि । तत्त्वानि । भवन्ति ॥ ४७ ॥ एकोनविंशतितत्त्वानि गणयति । ज्ञानेति । पञ्च । ज्ञानेन्द्रियाणि श्रोत्र त्वक् चक्षुर्जिह्वा घ्राणाख्यानि । पञ्च । कर्मेन्द्रियाणि वाक् पाणि पाद पायूपस्थाख्यानि । पञ्च । प्राणाः प्राणापानव्यानोदानसमानाख्याः । अन्तःकरणचतुष्कं मनोबुद्धि चित्ताहङ्काराख्यमन्तःकरणचतुष्टयम् । इतीत्थम् । तान्येकोनविंशति तत्त्वानि सन्ति । चित्ताहङ्कारौ मनोबुध्द्ध्यो रारोप्य केचित्सप्तदशापि तत्त्वानि सूक्ष्मदेहे वदन्ति ॥ ४८ ॥ एवं स्थूलसूक्ष्मशरीरगतां तत्त्वसङ्ख्यामुक्त्वा साम्प्रतं

प्रहृष्टास्तेऽथ तं नत्वा पप्रच्छुः संशयं प्रभुम् । तत्त्वात्मके स्थूलदेहे सूक्ष्मदेहे च सत्पते ! ॥ ४५ ॥ समानि
सन्ति तत्त्वानि द्वयोर्न्यूनाधिकानि वा । इति पृष्टः स सर्वज्ञ ऊचे शृणुत साधवः ! ॥४६॥ स्थूलदेहे तु तत्त्वानि
महाभूतानि पञ्च वै । सूक्ष्मदेहे तु तत्त्वानि भवन्त्येकोनविंशति ॥ ४७ ॥ ज्ञानेन्द्रियाणि पञ्चैव पञ्चकर्मेन्द्रि-
याणि च । प्राणाः पञ्चातःकरणचतुष्कमिति तानि वै ॥४८॥ स्थूलेऽपि स्यादनुस्यूतं यदा सूक्ष्मं तदा क्रियाः ।
सर्वा अपि यथार्थाः स्युरन्यथा तु न वै तथा ॥ ४९ ॥ तथा हि स्थूलकर्णेन विना सूक्ष्मगतं भवेत् । श्रोत्रेन्द्रियं
तु शब्दस्य न यथार्थावबोधनम् ॥ ५० ॥ एवं दृगादौ सर्वत्र तदीयविषयग्रहः । न जायते विना सूक्ष्मं स्थूल-
मात्रेण देहिनाम् ॥ ५१ ॥ स्थूलदेहेऽप्यतः पञ्चतत्त्वे सूक्ष्मशरीरकम् । एकोनविंशतितत्त्वात्मकमस्त्यनुसंहितम् ॥५२॥

स्थूले सूक्ष्मं सूक्ष्मे स्थूलमित्येवंपरस्परसंपर्काभावे व्यावहारिकादिकार्यासिद्धेस्ते परस्परमनुस्यूते भवतोऽतस्तयोस्तत्त्वसमसङ्ख्यावत्त्वादेकैकं चतुर्विंशतिसङ्ख्याकमप्यस्तीत्याहाष्टभिः । स्थूल इति । यदा । स्थूले पञ्चतत्त्वात्मके स्थूलशरीरेऽपि । सूक्ष्ममेकोनविंशतितत्त्वात्मकं सूक्ष्मशरीरम् । अनुस्यूतमनुगतम् । स्यात् । तदा । सर्वा अपि । क्रियाः श्रवणदर्शनाद्याः । यथार्था यथायोग्याः । स्युः । अन्यथा स्थूले सूक्ष्मानुगमनाभावे तु । तथा यथार्थाः । न स्युः । वै ॥४९॥ तथेति । तथा हि तदेव दर्शयति । सूक्ष्मगतं सूक्ष्मशरीरावस्थितम् । श्रोत्रेन्द्रियम् । विना तु । स्थूलकर्णेन स्थूलशरीरावस्थितेन कर्णगोलकेन । शब्दस्य । यथार्थावबोधनम् । न भवेत् ॥ ५० ॥ एवमिति । एवममुना प्रकारेण । दृगादौ नेत्रादौ । सर्वत्र सर्वेष्वपि गोलकेषु । सूक्ष्मं सूक्ष्मदेहावस्थितं चक्षुरादितत्तदिन्द्रियं विना । स्थूलमात्रेण स्थूलदेहावस्थितेन केवलेन गोलकेन । देहिनाम् । तदीयविषयग्रहश्चक्षुरादीन्द्रियाणां सम्बन्धिनो रूपादेर्विषयस्य ग्रहणम् । न जायते ॥ ५१ ॥ स्थूलेति । अतो हेतोः । पञ्चतत्त्वे । स्थूलदेहेऽपि । एकोनविंश-

तितत्त्वात्मकम् । सूक्ष्मशरीरकम् । अनुसंहितमनुस्यूतम् । अस्ति ॥ ५२ ॥ एवमिति । एवंसतीत्थंपरस्परसापेक्षत्वे सति । विवेकिभिः । स्थूलदेहे । चतुर्विंशतितत्त्वानि । ज्ञातव्यानि । यतः । तैस्तत्त्वैः । मिश्रैः सम्पृक्तैः सद्भिः । क्रिया तत्तदिन्द्रियकर्माणीत्यर्थः । जायते ॥ ५३ ॥ एवमिति । एवममुना प्रकारेणैव । सूक्ष्मे सूक्ष्मशरीरे अपि । स्थूलं स्थूलशरीरम् । अञ्जसा तत्त्वतः । अनुगतमनुस्यूतम् । ज्ञातव्यम् । हि यतः । उभाभ्यां स्थूलसूक्ष्माभ्याम् । मिश्रिताभ्यां सम्पृक्ताभ्यां सद्भ्याम् । तद्भोग-सिद्धिस्तत्तच्छरीरार्थभोगसिद्धिः । जायते ॥ ५४ ॥ स्वप्न इति । अतो हेतोः । स्वप्ने स्वप्नावस्थाप्रधाने सूक्ष्मशरीरेऽपि । स्त्रिया नार्या सह । सङ्गे सङ्कल्पात्मकसम्भोगे कृते सति । यः । वीर्यपातः । उद्गत उत्पन्नो भवति । स वीर्यपातः । स्थूलदेहे । दृश्यते परिहितवस्त्रार्द्रीभावक्रियादिना वीक्ष्यते । ततो हेतोः । तयोः स्थुलसूक्ष्मशरी-रयोः । ऐक्यमेकीभावः । ज्ञेयम् ॥ ५५ ॥ तस्मादिति । तस्माद्धेतोः । मनीषिभिः । सूक्ष्मशरीरेऽपि । चतुर्विंशतितत्त्वानि । विज्ञेयानि । इत्यमुना प्रकारेण । उभयोः

एवं मति स्थूलदेहे ज्ञातव्यानि विवेकिभिः । चतुर्विंशतितत्त्वानि मिश्रैस्तैर्जायते क्रिया ॥ ५३ ॥ एवं सूक्ष्मेऽप्य-नुगतं ज्ञातव्यं स्थूलमञ्जसा । उभाभ्यां मिश्रिताभ्यां तद्भोगसिद्धिर्हि जायते ॥५४॥ स्वप्नेऽप्यतः स्त्रिया सङ्गे वीर्य-पातो य उद्गगः । स दृश्यते स्थूलदेहे ज्ञेयमैक्यं ततस्तयोः ॥५५॥ तस्मात्सूक्ष्मशरीरेऽपि विज्ञेयानि मनीषिभिः । चतुर्विंशति तत्त्वानीत्युभयोस्तत्त्वतुल्यता ॥ ५६ ॥ इति प्रश्नोत्तरं श्रुत्वा सन्तस्तं पुनरूचिरे । देहयोरुभयोस्तौल्यं त्वयोक्तं स्थूलसूक्ष्मयोः ॥ ५७ ॥ तदा तु क्रियमाणानां कर्मणां स्थूलसूक्ष्मयोः । सम्बन्धेऽपि भवेत्तौल्यं तत्तथा-ऽस्त्यन्यथाऽस्ति वा ॥ ५८ ॥ तानुवाच हरिः सन्तः कर्मसम्बन्धतुल्यता । उभयोरस्ति वपुषोर्नृणां तदभिमानिनाम् ॥ ५९ ॥ दृढाभिमाने स्थूलस्य लेपः स्यात्तज्जकर्मणाम् । यथा तथैव सूक्ष्मस्याप्यभिमाने भवेत्स च ॥ ६० ॥

स्थूलसूक्ष्मशरीरयोः । तत्त्वतुल्यता तत्त्वानां समसङ्ख्यता । ज्ञेया ॥ ५६ ॥ इतीति । इत्येवंविधम् । प्रश्नोत्तरम् । श्रुत्वा । सन्तः सर्वेऽपि साधवः । तं श्रीहरिम् । पुनः । ऊचिरे । हे हरे ! । त्वया । स्थूलसूक्ष्मयोः । उभयोः । देहयोः । तौल्यं समानत्वम् । उक्तम् ॥ ५७ ॥ तदेति । तदा तु । स्थूलसूक्ष्मदेहयोः । क्रियमाणानां जनैर्विधीयमानानाम् । कर्मणाम् । सम्बन्धेऽपि । तौल्यं साम्यम् । भवेत् । तत् । तथाऽस्ति । अथवा । अन्यथाऽसाम्यमस्ति ॥ ५८ ॥ तानिति । तानेवं पृच्छन्तः साधून् । हरिः । उवाच । हे सन्तः ! । तदभिमानिनां तत्तद्देहयोर्दृढाभिमानवताम् । नृणाम् । उभयोरपि । वपुषोः । कर्मसम्बन्धतुल्यता । अस्ति ॥ ५९ ॥ दृढेति । यथा । स्थूलस्य स्थूलशरीरस्य । दृढाभिमाने सति । तज्जकर्मणां स्थुलदेहसम्भूतकर्मणाम् । स्थूलदेहेन कृतानां कर्मणामित्यर्थः । लेपो वासनात्मना कारणदेहे लेपनम् । स्यात् । तथैव । सूक्ष्मस्य सूक्ष्मशरीरस्यापि । अभिमाने दृढाभिमत्यां सत्यामित्यर्थः । स लेपः । भवेत् । सूक्ष्मदेहकृतानामपि कर्मणां वासनात्मना कारणदेहे लेपो भवेदित्यर्थः ॥ ६० ॥

कर्मणामिति । क्वचित्प्रायश्चित्तबोधकेष्वार्षग्रन्थेषु । सूक्ष्मजातानां सूक्ष्मशरीरोद्भवानाम् । सूक्ष्मशरीरेण कृतानामित्यर्थः । कर्मणाम् । यत् । आल्प्यं पुण्यपापतारतम्येन पुण्यफलपापप्रायश्चित्ताल्पत्वम् । ईरितम् । तत् । जीवस्य । धैर्यदानाय । ज्ञेयम् । तत्त्वतः । न च । वस्तुतस्तु सूक्ष्मदेहकृतकर्मापि स्थूलदेहकृतकर्मवदेव फलदमस्तीति भावः । अनेनाभिप्रायेणैव भारते मोक्षधर्मेषु नवनवतितमाध्याये सत्यसंज्ञस्योञ्छवृत्तिब्राह्मणस्य हिंसासङ्कल्पमात्रेणापि महातपोनाश उक्तः ॥ ६१ ॥ यस्येति । यस्य भगवद्भक्तस्य । अहङ्कृतः स्थूलसूक्ष्मदेहदृढाभिमानकृतः । भावः । नास्ति । तस्य भक्तस्य तु । स्थूलदेहजैः । कर्मभिः । बन्धनम् । नास्ति । सूक्ष्मशरीरजैः । कर्मभिश्च । बन्धनम् । नास्ति ॥ ६२ ॥ आत्मेति । स भक्तः । अहम् । आत्मैव । अस्ति । देहो द्विविधंशरीरम् । नास्ति । इत्येवममुना प्रकारेणैव सदा सर्वकालम् । मनुते मन्यते । ततो हेतोः । अस्यैवंविधभक्तस्य । शरीरजैः स्थूलसूक्ष्मदेहभवैः । सुखदुःखैस्तयोर्हेतुभिः कर्मभिः । सम्बन्धः । नास्ति ॥ ६३ ॥ देहेति । देहाभिमानिनः स्थूलसूक्ष्मदेहाभिमानवतो जनस्य तु । द्वयोरपि । वपुषोः स्थूलसूक्ष्मयोः शरीरयोर्विषये । तत्सम्बन्धः कर्मसम्बन्धः । अस्ति । स्वप्नजाग्रतोः ।

कर्मणां सूक्ष्मजातानां क्वचिदाल्प्यं यदीरितम् । धैर्यदानाय जीवस्य तद्धि ज्ञेयं न तत्त्वतः ॥ ६१ ॥ यस्य नाहङ्कृतो भावस्तस्य तु स्थूलदेहजैः । बन्धनं कर्मभिर्नास्ति न च सूक्ष्मशरीरजैः ॥ ६२ ॥ आत्मैवाहं न देहोऽस्मीत्येवं स मनुते सदा । ततोऽस्य नास्ति सम्बन्धः सुखदुःखैः शरीरजैः ॥ ६३ ॥ देहाभिमानिनस्त्वस्ति सम्बन्धो द्वयोरपि । वपुषोस्तद्भवं सुखं च स्वप्नजाग्रतोः ॥ ६४ ॥ देहाभिमानिनस्त्वन्ते यमदूतेक्षणं भवेत् । ततो मूर्छादेहपातौ भवेतां नरकस्ततः ॥ ६५ ॥ आत्मनिष्ठस्य भक्तस्य त्वन्तकाले भवेद्धरेः । दर्शनं वा तदीयानां देहपातस्ततो भवेत् ॥ ६६ ॥ देहे मृतेऽसौ धृतदिव्यमूर्तिर्ज्ञानी तु भक्तोऽक्षरधाम याति । इति प्रभोस्तेऽमृततुल्यवाचं निशम्य सन्तो मुदिता बभूवुः ॥६७॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते द्विनवतितमस्तरङ्गः ॥ ९२ ॥ १४ ॥

तद्भवं स्थूलसूक्ष्मदेहकृतकर्मसम्भवम् । दुःखम् । सुखं च । अस्ति ॥ ६४ ॥ देहेति । देहाभिमानिनो भगवद्विमुखजनस्य तु । अन्ते देहावसानसमये । यमदूतेक्षणम् । भवेत् । ततस्तदनन्तरम् । मूर्छादेहपातौ । भवेताम् । ततस्तदनन्तरम् । नरकः संयमिन्यां नानानरकभोगप्राप्तिः । भवेत् ॥ ६५ ॥ आत्मेति । आत्मनिष्ठस्य भक्तस्य तु । अन्तकाले देहावसानसमये । हरेः । अथवा । तदीयानां साक्षाद्धर्याश्रितानां भक्तानाम् । दर्शनम् । भवेत् । ततस्तदनन्तरम् । देहपातः । भवेत् ॥ ६६ ॥ देह इति । देहे स्वशरीरे । मृते पतिते सति । असौ । ज्ञानी भगवन्निष्ठः । भक्तस्तु । धृतदिव्यमूर्त्तिः साक्षाद्भगवत्कृपयोपलब्धभागवतीसंज्ञतनुः सन् । अक्षरधाम । याति । देहाभिमान्यपि साक्षाद्भगवद्भक्तस्तु देहपातावसरे तीव्रगदादिना श्रीहरिणैव त्याजितदेहाभिमानादिस्तत्कृपोपलब्धभागवतीतनुः सन्नक्षरधाम यातीति तु शब्दो द्योतयति । इत्येवंविधाम् । प्रभोः श्रीहरेः । अमृततुल्यवाचम् । निशम्य श्रुत्वा । ते समीपविष्टाः प्रश्नकर्त्तारः । सन्तः । मुदिता हृष्टाः । बभूवुः । इदं समीपविष्टान्य-

हरिभक्तानामप्युपलक्षणम् ॥ ६७ ॥ स्वधाम्नोऽपतनं स्वानां भक्तानामाह यस्तथा । प्रमादमोहौ भक्तैः स्वैस्तक्तव्यावाह सर्वथा ॥ १ ॥ प्रसङ्ख्यानं च तत्त्वानां देहयोः स्थूलसूक्ष्मयोः । स्थूलसूक्ष्मदेहकृतकर्मणां च समानताम् ॥ २ ॥ स्वभक्ताभक्तयोः कर्माभावभावौ च तत्त्वतः । य आह श्रीहरिः कुर्यात्स मामैकान्तिकं निजम् ॥ ३ ॥ इतिश्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवतत्सूनुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां द्विनवतितमस्तरङ्गः ॥९२॥१४॥

आत्मनिष्ठाविरक्तिभ्यां युक्ताद्भक्तात्तु येनता । केवलप्रेमिभक्तस्य सा पञ्चदश ईरिता ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८७७) प्रौष्ठपच्छुक्ले भाद्रपदमासस्य शुक्ले । चतुर्थ्यां तिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । सारङ्गनगरे । जीववर्माख्यभूभुजः । दुर्गे इति शेषः । गेहे तस्यैवोत्तरास्य भवने । वेद्यां वेदिकायाम् । महापीठे श्वेतोत्तरच्छदतूलिकादिसमास्तृते पर्यङ्कासने । धृतसितांशुकः परिधृतसकलश्वेतवसनः । स श्रीहरिः । व्यराजच्चातुर्येणोपविशन्नतिशुशुभे ॥ २ ॥ नानेति । नानादेशेभ्यो नैकजनपदेभ्य आगताः स्वदर्शनार्थमुपायाता ये स्वीयभक्तास्त्यागिनो गृहस्थाश्चाश्रित-

> शकाब्दे विक्रमार्कस्य नगाश्ववसुभूमिते । चतुर्थ्यां प्रोष्ठपच्छुक्ले वचोऽमृतमिदं हरेः ॥ १ ॥ तत्र सारङ्गनगरे गेहे जीवाख्यभूभुजः । स व्यराजन्महापीठे वेद्यां धृतसितांशुकः ॥ २ ॥ नानादेशागतस्वीयभक्तमण्डलमध्यगः । उवाच स्वयमेवासौ साधून्प्रति पुरःस्थितान् ॥ ३ ॥ सन्तः शृणुत वः प्रश्नं पृच्छाम्येकं तदुत्तरम् । विचार्य कुरुतेत्युक्त्वा पृष्टवान् संशयापहृत् ॥ ४ ॥ द्वौ कौचिद्भवतो भक्तौ साक्षात्कृष्णस्य सेवकौ तत्रातिप्रीतिमान् कृष्णे भवत्येको नराकृतौ ॥ ५ ॥ कृष्णेक्षणं विना स्थातुं शक्नुयान्नाप्यसौ क्षणम् । लोकेऽपि प्रेम वहुलं तस्य दृश्येत सर्वथा ॥६॥ अन्यस्तु भक्त आत्मज्ञस्तीव्रवैराग्यवांस्तथा । कृष्णेऽपि प्रीतिमानस्ति स्वधर्मं परिपाति च ॥ ७ ॥

जनास्तेषां मण्डलं चक्रवदुपविष्टासभा तस्य मध्यगः कमलदलानां कर्णिकेव मध्यवर्त्ती । असौ श्रीहरिः । पुरःस्थितान् । साधून् मुक्तानन्दादिमुनीन् प्रति । स्वयमेव । उवाच ॥ ३ ॥ सन्त इति । हे सन्तः ! । शृणुत । वो युष्मभ्यम् । एकम् । प्रश्नम् । पृच्छामि । तदुत्तरम् । विचार्य । कुरुत । इतीत्थम् । उक्त्वा । संशयापहृत्प्रश्नमिषेण स्वाश्रितसंशयापहारको हरिः । पृष्टवान् ॥ ४ ॥ द्वाविति । हे सन्तः ! । साक्षात्कृष्णस्य प्रत्यक्षस्य श्रीहरेः । सेवकौ सेवानिष्ठौ । कौचिदनिर्देश्यनामानौ । द्वौ । भक्तौ । भवतः । तत्र तयोर्द्वयोर्भक्तयोर्मध्ये । एकः । नराकृतौ । कृष्णे अतिप्रीतिमान् । भवति ॥ ५ ॥ कृष्णेति । असौ कृष्णेऽतिप्रीतिमान् भक्तः । कृष्णेक्षणं साक्षाच्छ्रीकृष्णदर्शनम् विना । क्षणं क्षणमात्रकालपर्यन्तमपि । स्थातुम् । न शक्नुयात् । तस्य तथाविधभक्तस्य । वहुलमतिशयितम् । प्रेम । लोकेऽपि । सकलजनेषूपरिष्टादपीत्यर्थः । सर्वथा । दृश्येत ॥ ६ ॥ अन्य इति । अन्यो द्वितीयः । भक्तस्तु । आत्मज्ञ आत्मनिष्ठः । तीव्रवैराग्यवान् । तथा । कृष्णे । प्रीतिमाँश्चापि । अस्ति । स्वधर्मं च । परिपाति सम्यक् पालयति ॥ ७ ॥

किन्त्विति । किन्तु । तस्यात्मनिष्ठादिमतो भक्तस्य । प्रेम स्वान्तर्वर्त्तमानो भगवति गाढानुरागः । पूर्ववत्प्रागुक्तभक्तस्येव । लोके । विदितं प्रसिद्धम् । न स्यात् । पूर्वभक्ते प्रथमोक्ते प्रेमिभक्ते तु । आत्मनिष्ठा । वैराग्यं च । न वर्त्तते ॥८॥ तथेति । तथाऽपि । तस्य प्रेमिभक्तस्य । सा । भक्तिः आत्मनिष्ठावैराग्यवर्जिताकेवलाभक्तिः । लोके । अत्यन्तम् । शोभते । हि । तद्वत्तथा । अस्य । भक्तस्य आत्मनिष्ठादिमतो द्वितीयस्य भक्तस्य । भक्तिस्तु । लोके । अत्यन्तम् । न शोभते ॥ ९ ॥ एवमिति । एवंविधावित्थंभूतप्रकारौ । उभौ द्वौ । भक्तौ । भवतः । तयोर्द्वयोः । मध्ये । उत्तमः श्रेष्ठः । कः । अत्र प्रश्ने । यथोचितं यथायोग्यम् । उत्तरम् । भवन्तः । मे मह्यम् । कथयन्तु ॥१०॥ इतीति । इत्यमुना प्रकारेण । तेन श्रीहरिणा । पृष्टे सति । सर्वसतां सर्वेषां साधूनाम् । अनुमतेन संमत्या । स्वयम्प्रकाशानन्दाख्यः । साधुः । सन्नतः कृतप्रणामः सन् । तं श्रीहरिम् । प्रोवाच ॥ ११ ॥ ज्ञानेति । हे हरे ! । यो भक्तस्तु । ज्ञानवैराग्यहीनः सन्नपि । त्वयि साक्षाच्छ्रीकृष्णे । भवति । अतिप्रीति-

किन्तु लोके न विदितं प्रेम स्यात्तस्य पूर्ववत् । पूर्वभक्ते त्वात्मनिष्ठा वैराग्यं च न वर्त्तते ॥ ८ ॥ तथापि तस्य सा भक्तिर्लोकेऽत्यन्तं हि शोभते । तद्वदस्य तु भक्तस्य भक्तिर्लोके न शोभते ॥ ९ ॥ एवं विधावुभौ भक्तौ तयोर्मध्ये क उत्तमः । अत्रोत्तरं भवन्तो मे कथयन्तु यथोचितम् ॥ १० ॥ इति पृष्टे तेन सर्वसतामनुमतेन तम् । स्वयंप्रकाशानन्दाख्यः साधुः प्रोवाच सन्नतः ॥ ११ ॥ ज्ञानवैराग्यहीनोऽपि त्वय्यतिप्रीतिमांस्तु यः । श्रेष्ठः स एव इत्युक्ते तेन तं हरिरब्रवीत् ॥ १२ ॥ आत्मनिष्ठाविरक्तिभ्यां रहितं भक्तमुत्तमम् । मन्यसे तन्न वै सम्यग्मतं तव विचारितम् ॥१३॥ आत्मनिष्ठाविहीनस्य पुंसो देहाभिमानिनः । न चिरस्थायिनी भक्तिः कृष्णे प्रेमवतोऽपि यत् ॥ १४ ॥ देहेऽतिसुखदान् पञ्चविषयान् यर्ह्येवाप्स्यति । असौ तदा तु तेष्वेव सद्यः प्रीतिं करिष्यति ॥ १५ ॥

मान्सकलसाधनसाध्यातिशयितप्रीतियुक्तः । अस्ति । स भक्त एव । श्रेष्ठः । अस्ति । इत्यमुना प्रकारेण । तेन स्वयम्प्रकाशानन्दसाधुना । उक्ते सति । तं स्वयम्प्रकाशानन्दसाधुम् । हरिः । अब्रवीत् ॥ १२ ॥ आत्मेति । हे साधो ! । आत्मनिष्ठाविरक्तिभ्याम् । रहितं वर्जितम् भक्तम् । उत्तमम् । मन्यसे । तव । तत् । मतम् । सम्यक् । विचारितम् । नास्ति । वै । विचारं विनैवोक्तत्वात्त्वन्मतं समीचीनं नास्तीत्यर्थः ॥ १३ ॥ आत्मेति । यद्यस्माद्धेतोः । आत्मनिष्ठाविहीनस्यात्मनिष्ठाया वैराग्यमूलत्वाद्वैराग्यात्मनिष्ठाभ्यां रहितस्येत्यर्थः । अत एव । देहाभिमानिनः । कृष्णे प्रेमवतोऽपि । पुंसो भक्तस्य । भक्तिः । चिरस्थायिनी बहुकालं स्थितिमती । न । कदाचिदपि न भवेदेवेत्यर्थः ॥ १४ ॥ इममर्थमेव हेतुना द्रढयति सार्द्धेन । देह इति । असौ केवलप्रीतिमान् भक्तः । यर्हि । देहे । अतिसुखदानतिसुखप्रापकान् । रमणीयानित्यर्थः । पञ्च । विषयान्मायिकान् शब्दादीन् । अवाप्स्यति । तदा सद्यस्तत्क्षणमेव । तेषु तथाविधविषयेष्वेव । प्रीतिम् । करिष्यति ॥ १५ ॥

तत इति । ततस्तदनन्तरम् । अस्यैवंविधभक्तस्य । कृष्णे । प्रीतिः । नैव स्थास्यति निश्चितमेव । अतो हेतोः । स तथाविधभक्तः । श्रेष्ठः । कथम् । स्यात् । न स्यादेवेत्यर्थः । इत्यमुना प्रकारेण । उक्तः श्रीहरिणा कथितः । सः स्वयम्प्रकाशानन्दः साधुः । तं श्रीहरिम् । प्राह ॥ १६ ॥ यस्येति । हे हरे ! । यस्य भक्तस्य । विषयप्रीतिः । स्यात् । सः । भक्तः । अस्मन्मतः । नहि न भवत्येव । वयं तु । तं भक्तम् । गोपिकातुल्यप्रीतिं 'क्षणं युगशतमिव यासां येन विना भव'दित्युक्तलक्षण-गोपाङ्गनासमानतया त्वयि प्रीतिमन्तम् । कथयामहे ॥ १७ ॥ तमिति । तमेवंवदन्तं स्वयम्प्रकाशानन्दमुनिम् । हरिः । उवाच । हे साधो ! । गोप्यः । सकलैः । गुणैरात्मनिष्ठादिभिः । सम्पन्ना युक्ताः । आसन् । हि । प्रेम मात्रेण केवलप्रेम्णा । संयुताः । न तु नैव । आसन् ॥ १८ ॥ इममर्थमेव विशेषत आह सार्द्धसप्तभिः । वाक्य इति । राजनीतिविदां जनानाम् । वाक्ये इव । तासां गोपीनाम् । वाक्ये । नैपुण्यं लोकशास्त्रव्यवहारवेदनकौशल्यम् । अभूत् । ताश्च । कृष्णं श्रीकृष्णभग-वन्तमपि । सम्यग्यथाशास्त्रम् । यथोचितं यथायोग्यम् । यथा भगवन्माहात्म्यादिबोध्यं तथैव तं तद्वन्तमित्यर्थः । विविदुः ॥ १९ ॥ यासामिति । लौकिकालौकि-

ततोऽस्य कृष्णे प्रीतिश्च नैव स्थास्यति निश्चितम् । अतः श्रेष्ठः कथं स स्यादित्युक्तः प्राह तं स सन् ॥१६॥ यस्य स्याद्विषयप्रीतिर्भक्तो नास्मन्मतो हि सः । वयं तु गोपिकातुल्यप्रीतिं कथयामहे ॥१७॥ तमुवाच हरिः साधो ! सम्पन्नाः सकलैगुणैः । आसन् गोप्यो हि नत्वेव प्रेममात्रेण संयुताः ॥ १८ ॥ वाक्ये तासां हि नैपुण्यं राजनीतिविदामिव । अभूच्च विविदुः कृष्णमपि सम्यग्यथोचितम् ॥ १९ ॥ यासां विज्ञत्वमालोक्य लौकिकालौकिकार्थवित् । उद्धवोऽपि यदुश्रेष्ठः साश्चर्यं प्रणनाम ताः ॥ २० ॥ कृष्णाज्ञयोपदेष्टुं ता व्रजं यातः सुधीः स च । तद्वाक्यश्रुतिनिर्मानस्ता एव स्वगुरुं व्यधात् ॥ २१ ॥ तत्पार्श्वे प्रेषणं स्वस्य कृष्णेन विहितं तु यत् । तमनुग्रहमेवासौ महान्तं हृद्यवैन्मुने ॥ २२ ॥ नन्वीदृग्बुद्धिमत्यस्तु सवास्ता न भवन्ति चेत् । शृणु तास्त्रिविधा आसन्मुग्धाः प्रोढाश्च मध्यमाः ॥२३॥

कार्थवित् लौकिकव्यवहारभगवदेकान्तिकभक्तव्यवहाराभिज्ञ इत्यर्थः । यदुश्रेष्ठः । उद्धवोऽपि । यासां गोपीनाम् । विज्ञत्वं लौकिकालौकिकार्थनिष्णातत्वम् । आलोक्य दृष्ट्वा । साश्चर्यं यथातथा । ता गोपीः । प्रणनाम । प्रसिद्धमेतच्छ्रीभागवते भ्रमरगीते ॥ २० ॥ कृष्णेति । सुधीः । स उद्धवः । कृष्णाज्ञया । ता गोपीः । उपदेष्टुम् । व्रजम् । यातः सन् । तद्वाक्यश्रुतिनिर्मानो गोपीजनवचनश्रवणनिवृत्तमानः संश्च । ता गोपीरेव । स्वगुरुं दत्तात्रेयवत्तद्गुणग्रहणेन गुरुसमा इत्यर्थः । व्यधात्कृतवान् ॥ २१ ॥ तदिति । हे मुने ! । कृष्णेन स्वेष्टदेवेन साक्षाच्छ्रीकृष्णभगवता । तत्पार्श्वे गोपीजननिकटे । स्वस्यात्मनः । यत् । प्रेषणम् । विहितं कृतम् । असावुद्धवः । तं तत्प्रेषणमित्यर्थः । महान्तम् । अनुग्रहमेव । हृदि । अवैत् जानाति स्म ॥ २२ ॥ नन्विति । ननु आशङ्कायाम् । सर्वाः । ता गोप्यः । ईदृग्बुद्धिमत्य एवंविधमति-युक्तास्तु । न भवन्ति । स्मेत्यध्याहार्यम् । चेत् । तर्हि । शृणु । ता गोप्यः । मुग्धाः । मध्यमाः । प्रौढाश्चेति । त्रिविधाः । आसन् ॥ २३ ॥

अत इति । हेतोः । तासां गोपीनाम् । वाक्येषु । भेदः अज्ञत्वज्ञत्वरूपो विशेषः । वर्णितः श्रीभागवते रासपञ्चाध्यायादिषु कथितः । भगवति । कृष्णे । अतिशयितप्रेम्णि समाहात्म्यज्ञाने गाढानुरागे । भेदस्तु । कुत्रचित्कस्मिंश्चिदपि शास्त्रे । न तु नैव वर्णितोऽस्ति ॥२४॥ सर्वास्विति । सर्वासु गोपीषु । कृष्णमाहात्म्यज्ञानातिशयः । आस बभूव । तेन कृष्णमाहात्म्यज्ञानातिशयेनैव । तासु गोपीषु । आत्मनिष्ठा वैराग्यं च । अञ्जसाऽनायासेन । अभवत् ॥२५॥ एकेति । तस्माद्धेतोः । ता गोप्यः । एकान्तिक्यः । अत एव । पूर्णभक्ताः । अवगम्यताम् । ईदृग्भक्तानां गोपीजनसमानभक्तिमतां भक्तजनानाम् । मनः । ग्राम्यसुखे मायिकपञ्चविषयसुखे । क्वचित्कदाचिदपि । न हि नैव । गच्छेत् ॥ २६ ॥ शब्देति । इह लोके । ते एकान्तिकभक्ताः । शब्दादीन् । विषयान् । कृष्णसम्बन्धान् श्रीकृष्णसम्बन्धिन एव । दासभावेन । इच्छन्ति । तत्प्रसादस्वीकारमाहात्म्येन वाञ्छन्तीत्यर्थः । न तु विषयेति भावः । कर्हिचित्कदाचिदपि । अन्यदीयान् भगवत्सम्बन्धवर्जितमायिकविषयांस्तु । नेच्छन्ति ॥ २७ ॥ मनसेति । तेषामेकान्तिकभक्तानाम् । मनसापि । अन्यविषयाकांक्षा भगवदितरमायिकविषयभोगवाञ्छा । न विद्यते । ज्ञानवैराग्ययुक्ताः । त एकान्तिकभक्ताः ।

अतो हि तासां वाक्येषु भेदो भवति वर्णितः । न तु कृष्णेऽतिशयितप्रेम्णि भेदस्तु कुत्रचित् ॥ २४ ॥ सर्वासु कृष्णमाहात्म्यज्ञानातिशयः आस च । तेनैव तास्वात्मनिष्ठा वैराग्यं चाञ्जसाऽभवत् ॥ २५ ॥ एकान्तिक्यः पूर्णभक्तास्तस्मात्ता अवगम्यताम् । मनो न हीदृग्भक्तानां गच्छेद् ग्राम्यसुखे क्वचित् ॥ २६ ॥ शब्दादीन्कृष्णसम्बन्धानेव ते विषयानिह । इच्छन्ति दासभावेन नान्यदीयांस्तु कर्हिचित् ॥२७॥ मनसाऽप्यन्यविषयाकांक्षा तेषां न विद्यते । ज्ञानवैराग्ययुक्तास्ते पश्यन्तीश्वरमात्मनि ॥ २८ ॥ भक्तेषु तेष्वतिप्रीतिः कृष्णे यद्यपि बाह्यतः । न दृश्यते तथाप्यस्या मूलबन्धो दृढोऽस्ति हि ॥ २९ ॥ अतः क्वापि कुसङ्गाद्यैस्तद्ध्रासो नैव जायते । भक्तः श्रेष्ठो मतस्तस्माज्ज्ञानवैराग्यभक्तिभाक् ॥ ३० ॥ केवलप्रेमभाजस्तु परिणामो न तादृशः । यतः स्त्रैणादिसम्बन्धे तन्नाशो बहुधेक्ष्यते ॥ ३१ ॥

ईश्वरं साक्षात्परमेश्वरम् । आत्मनि स्वजीवात्मनि । पश्यन्ति ध्यानेन सदा वीक्षन्ते ॥ २८ ॥ भक्तेष्विति । कृष्णे । प्रीतिः प्रेम । यद्यपि । तेषु एकान्तिकेषु । भक्तेषु । बाह्यत उपरितः । न दृश्यते । तथापि । अस्याः प्रीतेः । मूलबन्धः । दृढो गाढः । अस्ति । हि । यथा स्थिरमूलबन्धोऽङ्घ्रिपो वायुनापि न चाल्यस्तथेयं प्रीतिरपि विघ्नैर्न निवार्यत इति भावः ॥ २९ ॥ अत इति । अतो हेतोः । कुसङ्गाद्यैः कुसङ्गप्रभृतिभिर्विघ्नैः । तद्ध्रासः प्रीतिक्षयः । नैव जायते । तस्माद्धेतोः । ज्ञानवैराग्यभक्तिभाक् आत्मनिष्ठावैराग्यभक्तिसहितः । भक्तः । श्रेष्ठः । मतः ॥ ३० ॥ केवलेति । केवलप्रेमभाजो भगवति केवलस्नेहयुक्तस्य भक्तस्य । प्रीतेः । परिणाम उत्तरकालः । तादृशो ज्ञानादियुक्तभक्तिमज्जनप्रीत्युत्तरकालसमानः । न तु नैव भवति । यतो हेतोः । स्त्रैणादिसम्बन्धे स्त्रीप्रभृतिमायिकविषयसंयोगे सति । तन्नाशः केवलप्रीतिमतो भक्तस्य भगवत्सम्बन्धिप्रीतिविनाशः । बहुधा प्रायः । ईक्ष्यते ॥ ३१ ॥

इममर्थं दृष्टान्तेन द्रढयति द्वाभ्याम् । यथेति । यथा । ग्रीष्मे निदाघकाले । अत्रास्याम् । भुवि पृथिव्याम् । तृणबीजाभावः । वीक्ष्यते । तथापि । अम्बुदयोगे मेघवृष्टजलसम्बन्धे सति । अस्यां पृथिव्याम् । आशु शीघ्रम् । तदुद्भवोऽनेकविधबहुतृणोद्गमः । भवति ॥ ३२ ॥ तथेति । तथा । प्रेमवतो भगवति केवलप्रीतियुक्तस्य । अस्य भक्तस्यापि । विषयेहा मायिकविषयभोगवाञ्छा । न दृश्यते । तथापि । स्त्रैणयोगादौ स्त्र्यादिविषयसम्बन्धे सति । तदुद्भवो विषयेहाप्रादुर्भावः । भवेदेव ॥ ३३ ॥ प्रकरणार्थं निगमयत्यर्द्धेन । मुमुक्षुणेति । अतो हेतोः । अत्र सत्सङ्गे । मुमुक्षुणा जनेन । सतो भगवदेकान्तिकसाधून् । निषेव्य । अजस्याजन्मनो हरेः । ज्ञानादियुगात्मनिष्ठावैराग्यादिसहिता । भक्तिः । साध्या साधनीया । इत्येवंविधाम् । सुधाममृतसमानाम् । ईशवाचं श्रीहरिवाणीम् । निपीय । ससभ्यः सभोपविष्टत्यागिगृहिभक्तजनसमेतः । स साधुः स्वयम्प्रकाशानन्दमुनिः । अतिमुदमत्यानन्दम् । प्रपेदे ॥ ३४ ॥ आत्मनिष्ठादिरहितात्केवलप्रेमिणः स्वकात् । आत्मनिष्ठादियुक्तस्य श्रेष्ठतां स्वाश्रितस्य यः ॥ १ ॥ श्रीहरिः प्राह कृपया हेतुदर्शनतोऽञ्जसा । आत्मनिष्ठादिगुणकं भक्तं मां विदधातु सः ॥ २ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्ण-

यथा ग्रीष्मे भुवि तृणबीजाभावोऽत्र वीक्ष्यते । तथाप्यम्बुदयोगेऽस्यां भवत्याशु तदुद्भवः ॥ ३२ ॥ तथा प्रेमवतोऽप्यस्य विषयेहा न दृश्यते । तथापि स्त्रैणयोगादौ भवेदेव तदुद्भवः ॥ ३३ ॥ मुमुक्षुणाऽतोऽत्र सतो निषेव्य ज्ञानादियुग्भक्तिरजस्य साध्या । इतीशवाचं स सुधां ससभ्यः साधुर्निपीयातिमुदं प्रपेदे ॥ ३४ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते त्रिनवतितमस्तरङ्गः ॥ ९३ ॥ १५ ॥

शकाब्दे विक्रमार्कस्य नगाश्ववसुभूमिते । नभस्य शुक्लपञ्चम्यां वचोऽमृतमिदं हरेः ॥ १ ॥
तत्र सारङ्गनगरे निलये जीववर्मणः । वेद्यां पीठोत्तमे स्वामी स न्यषीदत्सितांशुकः ॥ २ ॥
त्यागिभिर्गृहिभिर्नैकैर्नानादेशागतैर्निजैः । वृतं तं परमानन्दः साधुः पप्रच्छ सन्नतः ॥ ३ ॥

भगवत्स्वरुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां त्रिनवतितमस्तरङ्गः ॥ ९३ ॥ १५ ॥

नरनारायणतपः स्वभक्तानुग्रहाय यत् । तस्य प्रकारः सम्प्रोक्तः षोडशे तु प्रमाणतः ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८७७) नभस्यशुक्लपञ्चम्यां भाद्रपदमासस्य शुक्लपक्षागतपञ्चमीतिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । सारङ्गनगरे । जीववर्मणो नृपस्य । दुर्गे इति शेषः । नीलये तस्यैवोदगास्य भवने । वेद्यां बाह्यवेदिकायाम् । पीठोत्तमे स्वास्तृतोत्तममश्वासने । सितांशुकः स्वाङ्गपरिधृतसकलवलक्षवसनः । स्वामी अपरिमितैश्वर्यैकाधारः । स श्रीहरिः । न्यषीदत् ॥ २ ॥ त्यागिभिरिति । नानादेशागतैः । निजैः स्वकीयैः । नैकैर्बहुदेशागतलादसङ्ख्यैः । त्यागिभिः । गृहिभिः । वृतं महासभायां परिवेष्टितम् । तं श्रीहरिम् । परमानन्दः । साधुः । सन्नतः कृतप्रणामः । सन् । पप्रच्छ ॥ ३ ॥

श्रीमदिति । क्षेमायेति । हे स्वामिन् ! । धर्मनन्दनो धर्मप्रजापतिसूनुः । भगवान् । नरनारायणऋषिः ऋषिमूर्त्ती त्वदवतारविशेषौ नरनारायणावित्यर्थः । बदरीवने बदरिकाश्रमे । नृणां जनानाम् । क्षेमाय मोक्षाय । स्वस्तये ऐहिकसुखाय च । महत् । तपः । विदधाति । इति । श्रीमद्भागवते गदितम् । तद्यथा 'यो वै भारतवर्षेऽस्मिन् क्षेमाय स्वस्तये नृणाम् । धर्मज्ञानशमोपेतमाकल्पादास्थितस्तप'इति । तर्हि । सर्वेऽपि । नराः । श्रेयसे मोक्षाय । कुतो हेतोः । न यतन्ते प्रयत्नं न कुर्वन्ति । इति द्वयोरेकान्वयः ॥४॥५॥ तेनेति । तेन । मुनिना परमानन्दसाधुना । इत्यमुना प्रकारेण । पृष्टः । हरिः । तं परमानन्दमुनिम् । प्रोवाच । हे मुने ! । अस्य त्वत्प्रश्नस्य । उत्तरं तु । तत्र श्रीमद्भागवते । पञ्चमे । स्कन्धे । भवति 'भारतेऽपि वर्षे'इति गद्ये विद्यते । तद्यथा । 'भारतेऽपि वर्षे भगवन्नरनारायणाख्य आकल्पान्तमुपचित धर्म ज्ञान वैराग्यैश्वर्योपशमोपरमात्मोपलम्भनम् अनुग्रहायात्मवतामनुकम्पया तपोऽव्यक्तगतिश्चरती'ति ॥६॥ मानुष्यमिति । भारताह्वये भारतनाम्नि । अस्मिन् । वर्षे खण्डे । ये जनाः । मानुष्यं मनुष्यजन्म । दुर्लभं दुष्प्रापम् । ज्ञात्वा । सर्वजीवानाम् । आत्मानमन्तर्यामिणम् । स्वम् । शरणम् । आप्नुयुः ॥ ७ ॥ अनुग्रहायेति ।

श्रीमद्भागवते स्वामिन् । गदितं बदरीवने । नरनारायणऋषिर्भगवान् धर्मनन्दनः ॥ ४ ॥ क्षेमाय स्वस्तये नृणां विदधाति तपो महत् । तर्हि सर्वेऽपि न कुतो यतन्ते श्रेयसे नराः ॥ ५ ॥ तेनेति पृष्टो मुनिना हरिः प्रोवाच तं मुदा । अस्योत्तरं तु तत्रैव स्कन्धे भवति पञ्चमे ॥ ६ ॥ मानुष्यं दुर्लभं ज्ञात्वा वर्षेऽस्मिन्भारताह्वये । आत्मानं सर्वजीवानां ये स्वं शरणमाप्नुयुः ॥ ७ ॥ अनुग्रहाय तेषां हि त्यक्तदेहानुबन्धिनाम् । तपस्विवेषः कृपया करोति स तपो महत् ॥ ८ ॥ धर्मज्ञानविरागोपशमैश्वर्यादिभिर्गुणैः । युक्तं ह्युपचितैस्तच्च प्रलयावधि संश्रितः ॥ ९ ॥ तेनैवात्मवतां तेषां नृणां धर्मादयो गुणाः । स्वल्पा अपि विवर्द्धन्ते न चिरादेव सन्मते ! ॥ १० ॥ ततस्तेषां सुहृदये ब्रह्मतेजसि भूयसि । उपलम्भो भवेत्साक्षात्कृष्णस्य जगदात्मनः ॥ ११ ॥

त्यक्तदेहानुबन्धिनां परित्यक्तदेहदैहिकाहंममत्वानाम् । आत्मवतामित्यर्थः । तेषां स्वाश्रितजनानाम् । अनुग्रहाय । तपस्विवेषः ऋषिमूर्त्तिधरः । स नरनारायणो भगवान् । कृपया तदुपरि परमानुकम्पया । महत् । तपः । करोति ॥ ८ ॥ धर्मेति । उपचितैर्वृद्धिं गमितैः । धर्मश्च ज्ञानं च विरागश्च उपशम इन्द्रियमश्च ऐश्वर्यं प्रभावश्च तान्यादयो येषां निरहङ्कारतादीनां तैः । गुणैः । युक्तम् । तत्तपः । प्रलयावध्याकल्पान्तम् । संश्रितः स भगवानाश्रितः ॥ ९ ॥ तेनेति । हे सन्मते ! । आत्मवतां देहदैहिकाहंममत्ववर्जितत्वात्केवलं ब्रह्मात्मना भगवद्ध्यानं कुर्वताम् । तेषाम् । नृणां भक्तानाम् । धर्मादयः । गुणाः । स्वल्पा अपि । तेन धर्मादिगुणयुक्तेन श्रीनरनारायणर्षितपसैव । न चिरात्स्वल्पकालेनैव । विवर्द्धन्ते विशेषेण वृद्धिं गच्छन्ति ॥१०॥ तत इति । ततो हेतोः । तेषां प्रवृद्धधर्मादीनां भक्तानाम् । सुहृदये सांसारिकविषयभोगवासनारूपमलरहितत्वाच्छोभमानेऽन्तःकरणे । स्फुरिते इति शेषः । भूयसि महति । ब्रह्मतेजस्यक्षरब्रह्मप्रकाशे । जगदात्मनः सकलजनान्तर्यामिणः । साक्षात्कृष्णस्य

इममर्थं दृष्टान्तेन द्रढयति द्वाभ्याम् । यथेति । यथा । ग्रीष्मे निदाघकाले । अत्रास्याम् । भुवि पृथिव्याम् । तृणबीजाभावः । वीक्ष्यते । तथापि । अम्बुदयोगे मेघवृष्टजलसम्बन्धे सति । अस्यां पृथिव्याम् । आशु शीघ्रम् । तदुद्भवोऽनेकविधबहुतृणोद्गमः । भवति ॥ ३२ ॥ तथेति । तथा । प्रेमवतो भगवति केवलप्रीतियुक्तस्य । अस्य भक्तस्यापि । विषयेहा मायिकविषयभोगवाञ्छा । न दृश्यते । तथापि । स्त्रैणयोगादौ स्त्र्यादिविषयसम्बन्धे सति । तदुद्भवो विषयेहाप्रादुर्भावः । भवेदेव ॥ ३३ ॥ प्रकरणार्थं निगमयत्यर्द्धेन । मुमुक्षुणेति । अतो हेतोः । अत्र सत्सङ्गे । मुमुक्षुणा जनेन । सतो भगवदेकान्तिकसाधून् । निषेव्य । अजस्याजन्मनो हरेः । ज्ञानादियुगात्मनिष्ठावैराग्यादिसहिता । भक्तिः । साध्या साधनीया । इत्येवंविधाम् । सुधाममृतसमानाम् । ईशवाचं श्रीहरिवाणीम् । निपीय । ससभ्यः समीपविष्टत्यागिगृहिभक्तजनसमेतः । स साधुः स्वयम्प्रकाशानन्दमुनिः । अतिमुदमत्यानन्दम् । प्रपेदे ॥ ३४ ॥ आत्मनिष्ठादिरहितात्केवलप्रेमिणः स्वकात् । आत्मनिष्ठादियुक्तस्य श्रेष्ठतां स्वाश्रितस्य यः ॥ १ ॥ श्रीहरिः प्राह कृपया हेतुदर्शनतोऽञ्जसा । आत्मनिष्ठादिगुणकं भक्तं मां विदधातु सः ॥ २ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्ण-

यथा ग्रीष्मे भुवि तृणबीजाभावोऽत्र वीक्ष्यते । तथाप्यम्बुदयोगेऽस्यां भवत्याशु तदुद्भवः ॥ ३२ ॥ तथा
प्रेमवतोऽप्यस्य विषयेहा न दृश्यते । तथापि स्त्रैणयोगादौ भवेदेव तदुद्भवः ॥ ३३ ॥ मुमुक्षुणाऽतोऽत्र सतो
निषेव्य ज्ञानादियुग्भक्तिरजस्य साध्या । इतीशवाचं स सुधां ससभ्यः साधुर्निपीयातिमुदं प्रपेदे ॥ ३४ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते त्रिनवतितमस्तरङ्गः ॥ ९३ ॥ १५ ॥

शकाब्दे विक्रमार्कस्य नगाश्ववसुभूमिते । नभस्य शुक्लपञ्चम्यां वचोऽमृतमिदं हरेः ॥ १ ॥
तत्र सारङ्गनगरे निलये जीववर्मणः । वेद्यां पीठोत्तमे स्वामी स न्यषीदत्सितांशुकः ॥ २ ॥
त्यागिभिर्गृहिभिर्नैकैर्नानादेशागतैर्निजैः । वृतं तं परमानन्दः साधुः पप्रच्छ सन्नतः ॥ ३ ॥

भगवत्पत्नुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां त्रिनवतितमस्तरङ्गः ॥ ९३ ॥ १५ ॥

नरनारायणतपः स्वभक्तानुग्रहाय यत् । तस्य प्रकारः सम्प्रोक्तः षोडशे तु प्रमाणतः ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८७७) नभस्यशुक्लपञ्चम्यां भाद्रपदमासस्य शुक्लपक्षागतपञ्चमीतिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । सारङ्गनगरे । जीववर्मणो नृपस्य । दुर्गे इति शेषः । नीलये तस्यैवोदगास्य भवने । वेद्यां बाह्यवेदिकायाम् । पीठोत्तमे स्वास्तृतोत्तममश्वासने । सितांशुकः स्वाङ्गपरिधृतसकलवलक्षवसनः । स्वामी अपरिमितैश्वर्यैकाधारः । स श्रीहरिः । न्यषीदत् ॥ २ ॥ त्यागिभिरिति । नानादेशागतैः । निजैः स्वकीयैः । नैकैर्बहुदेशागतलादसङ्ख्यैः । त्यागिभिः । गृहिभिः । वृतं महासभायां परिवेष्टितम् । तं श्रीहरिम् । परमानन्दः । साधुः । सन्नतः कृतप्रणामः । सन् । पप्रच्छ ॥ ३ ॥

श्रीमदिति । क्षेमायेति । हे स्वामिन् ! । धर्मनन्दनो धर्मप्रजापतिसूनुः । भगवान् । नरनारायणऋषिः ऋषिमूर्त्ती त्वदवतारविशेषौ नरनारायणावित्यर्थः । बदरीवने बदरिकाश्रमे । नृणां जनानाम् । क्षेमाय मोक्षाय । स्वस्तये ऐहिकसुखाय च । महत् । तपः । विदधाति । इति । श्रीमद्भागवते गदितम् । तद्यथा 'यौ वै भारतवर्षेऽस्मिन् क्षेमाय स्वस्तये नृणाम् । धर्मज्ञानशमोपेतमाकल्पादास्थितस्तप'इति । तर्हि । सर्वेऽपि । नराः । श्रेयसे मोक्षाय । कुतो हेतोः । न यतन्ते प्रयत्नं न कुर्वन्ति । इति द्वयोरेकान्वयः ॥४॥५॥ तेनेति । तेन । मुनिना परमानन्दसाधुना । इत्यमुना प्रकारेण । पृष्टः । हरिः । तं परमानन्दमुनिम् । प्रोवाच । हे मुने ! । अस्य त्वत्प्रश्नस्य । उत्तरं तु । तत्र श्रीमद्भागवते । पञ्चमे । स्कन्धे । भवति 'भारतेऽपि वर्षे'इति गद्ये विद्यते । तद्यथा । 'भारतेऽपि वर्षे भगवान्नरनारायणाख्य आकल्पान्तमुपचित धर्म ज्ञान वैराग्यैश्वर्योपशमोपरमात्मोपलम्भनम् अनुग्रहायात्मवतामनुकम्पया तपोऽव्यक्तगतिश्चरती'ति ॥६॥ मानुष्यमिति । भारताह्वये भारतनाम्नि । अस्मिन् । वर्षे खण्डे । ये जनाः । मानुष्यं मनुष्यजन्म । दुर्लभं दुष्प्रापम् । ज्ञात्वा । सर्वजीवानाम् । आत्मानमन्तर्यामिणम् । स्वम् । शरणम् । आप्नुयुः ॥ ७ ॥ अनुग्रहायेति ।

श्रीमद्भागवते स्वामिन् । गदितं बदरिवने । नरनारायणऋषिर्भगवान् धर्मनन्दनः ॥ ४ ॥ क्षेमाय स्वस्तये नृणां विदधाति तपो महत् । तर्हि सर्वेऽपि न कुतो यतन्ते श्रेयसे नराः ॥ ५ ॥ तेनेति पृष्टो मुनिना हरिः प्रोवाच तं मुदा । अस्योत्तरं तु तत्रैव स्कन्धे भवति पञ्चमे ॥ ६ ॥ मानुष्यं दुर्लभं ज्ञात्वा वर्षेऽस्मिन्भारताह्वये । आत्मानं सर्वजीवानां ये स्वं शरणमाप्नुयुः ॥ ७ ॥ अनुग्रहाय तेषां हि त्यक्तदेहानुबन्धिनाम् । तपस्विवेषः कृपया करोति स तपो महत् ॥ ८ ॥ धर्मज्ञानविरागोपशमैश्वर्यादिभिर्गुणैः । युक्तं ह्युपचितैस्तच्च प्रलयावधि संश्रितः ॥ ९ ॥ तेनैवात्मवतां तेषां नृणां धर्मादयो गुणाः । स्वल्पा अपि विवर्द्धन्ते न चिरादेव सन्मते ! ॥ १० ॥ ततस्तेषां सुहृदये ब्रह्मतेजसि भूयसि । उपलम्भो भवेत्साक्षात्कृष्णस्य जगदात्मनः ॥ ११ ॥

त्यक्तदेहानुबन्धिनां परित्यक्तदेहदैहिकाहंममत्वानाम् । आत्मवतामित्यर्थः । तेषां स्वाश्रितजनानाम् । अनुग्रहाय । तपस्विवेषः ऋषिमूर्त्तिधरः । स नरनारायणो भगवान् । कृपया तदुपरि परमानुकम्पया । महत् । तपः । करोति ॥ ८ ॥ धर्मेति । उपचितैर्वृद्धिं गमितैः । धर्मश्च ज्ञानं च विरागश्च उपशम इन्द्रियमश्च ऐश्वर्यं प्रभावश्च तान्यादयो येषां निरहङ्कारतादीनां तैः । गुणैः । युक्तम् । तत्तपः । प्रलयावध्याकल्पान्तम् । संश्रितः स भगवानाश्रितः ॥ ९ ॥ तेनेति । हे सन्मते ! । आत्मवतां देहदैहिकाहंममत्ववर्जितत्वात्केवलं ब्रह्मात्मना भगवद्ध्यानं कुर्वताम् । तेषाम् । नृणां भक्तानाम् । धर्मादयः । गुणाः । स्वल्पा अपि । तेन धर्मादिगुणयुक्तेन श्रीनरनारायणर्षितपसैव । न चिरात्स्वल्पकालेनैव । विवर्द्धन्ते विशेषेण वृद्धिं गच्छन्ति ॥१०॥ तत इति । ततो हेतोः । तेषां प्रवृद्धधर्मादीनां भक्तानाम् । सुहृदये सांसारिकविषयभोगवासनारूपमलरहितत्वाच्छोभमानेऽन्तःकरणे । स्फुरिते इति शेषः । भूयसि महति । ब्रह्मतेजस्यक्षरब्रह्मप्रकाशे । जगदात्मनः सकलजनान्तर्यामिणः । साक्षात्कृष्णस्य

उपलम्भः सदा दर्शनरूपा प्राप्तिः । भवेत् ॥११ ॥ एवमिति । एवममुना प्रकारेण । स्वाश्रयं स्वशरणम् । कुर्वताम् । नृणाम् । श्रेयो मोक्षः । तस्य श्रीनरनारायणस्य । तपसा निर्विघ्नम् । भवति । सर्वेषाम् । देहिनाम् स्वाश्रयमकुर्वाणानां सकलानां जनानाम् । न तु श्रेयो नैव भवति । एवं पञ्चमस्कन्धीयभारतेऽपि वर्षे इति गद्यार्थः स्वयमेव विवृतो बोध्यः ॥ १२ ॥ वच इति । इत्थमेवंविधम् । स्वस्य । गुरोः श्रीहरेः । वचोऽमृतं वाक्यसुधाम् । निपीय । सः । मुनिः । परमानन्दसाधुः । मोदमानन्दम् । आप । अन्ये परमानन्दमुनीतरे । सभ्याः समीपविष्टाः । जनास्त्यागिगृहिणो भक्तजनाश्च । मोदम् । आपुः । संशयशल्यहीना नरनारायणपर्यीयतपसः सर्वपरताज्ञानरूपस्वहृदयस्थसन्देहकर्णिवाणरहिताः । हृष्टा मुदिताश्च । भूत्वा । सर्वेऽपि । तं श्रीहरिम् । प्रणमन्ति स्म नमश्चक्रु ॥१३॥ नरनारायणाख्यस्य स्वावतारस्य यत्तपः । मोक्षायैव स्वभक्तानां न सर्वेषां नृणामिति ॥ १ ॥ प्रमाणयुक्तं तत्प्राह श्रीहरिः पुरुषोत्तमः । यः स मे भवताद्धर्मज्ञानादिगुणवृद्धिकृत् ॥ २ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्स्नुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां चतुर्नवतितमस्तरङ्गः ॥ ९४ ॥ १६ ॥

एवं हि तपसा तस्य स्वाश्रयं कुर्वतां नृणाम् । श्रेयो भवति निर्विघ्नं सर्वेषां तु न देहिनाम् ॥ १२ ॥ वचोऽमृतं स्वस्य
गुरोः स इत्थं निपीय मोदं मुनिराप चान्ये । सभ्या जनाः संशयशल्यहीना हृष्टाश्च भूत्वा प्रणमन्ति तं स्म ॥ १३ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते चतुर्नवतितमस्तरङ्गः ॥ ९४ ॥ १६ ॥

शकाब्दे विक्रमार्कस्य नगाश्ववसुभूमिते । सायं षष्ठ्यां भाद्रशुक्ले वचोऽमृतमिदं हरेः ॥ १ ॥
तत्र सारङ्गनगरेऽगारे जीवाख्यभूपतेः । पीठोत्तमे बहिर्वेद्यां स न्यषीदत्सितांशुकः ॥ २ ॥
भक्तसङ्घसभामध्ये स्थितोऽसौ सदयेक्षणः । प्रोवाच साधून् सम्भाष्य महत्त्वं स्वस्य बोधयन् ॥ ३ ॥

यथायथैव भक्तानां शुद्धता हर्युपास्तितः । तथातथा परत्वं च महत्त्वं च तस्य ते विदुः ॥ १ ॥ एतत्सप्तदशे प्रोक्तं बोधनाय यथार्थतः नानोदाहरणैः स्वस्य भक्तानां हरिणा ततः ॥ २ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८७७) भाद्रशुक्ले भाद्रपदमासस्य शुक्लपक्षे । षष्ठ्यां तिथौ । सायं सायन्तनीयभगवन्नीराजनान्ते इत्यर्थः । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । सारङ्गनगरे । जीवाख्यभूपतेः । दुर्गे इति शेषः । अगारे तस्यैवोत्तरास्य भवने । बहिर्वेद्याम् । पीठोत्तमे स्वास्तृते उत्तमपर्यङ्कासने । सितांशुकः परिधृतसकलार्जुनवसनः । स श्रीहरिः । न्यषीदत् ॥ २ ॥ भक्तेति । भक्तसङ्घसभामध्ये नानादेशायातस्वाश्रितत्यागिगृहिजनवृन्दसदसो मध्यप्रदेशे । स्थितः । सदयेक्षणः करुणापूर्णनयनाब्जः । असौ श्रीहरिः । स्वस्य श्रीकृष्णनाम्नः स्वस्य । महत्त्वं सर्वपरत्वादिमाहात्म्यातिशायिताम् । बोधयन् अवगमयितुम् । साधून् । सम्भाष्य हे सन्तः ! शृणुतेत्यभिमुखीकृत्य । प्रोवाच ॥ ३ ॥

परादिति । हे सन्तः ! । कृष्णः । परात्परतरः । इतीत्थम् । शास्त्रेषु वेदादिषु । गीयते । 'अक्षरात्परतः पर' इति श्रुतेः । कृष्णस्य । तत् । परत्वं तु । यथाधिकृति स्वाधिकारानुसारेण । बुद्ध्यते ॥ ४ ॥ एवं सामान्यत उक्त्वा यदुक्तं यथाधिकृति तद्विस्तरेणाह पञ्चभिः । यथेति । भजनाभ्यासतः प्रपत्त्याचरण-पूर्वकं स्वधर्मादिवृद्धिपूर्वकं च सप्रेमश्रवणादिनवधाभक्त्यभ्यसनतः । धियो भक्तबुद्धेः । यथातथा । नैर्मल्यम् । स्यात् । तथातथा । पुमान् भक्तः । सूक्ष्मदर्शी जायमानमतिसौक्ष्म्येण दुर्ज्ञेयार्थावगाहनमतिः सन्नित्यर्थः । तत्परतां भगवतः कृष्णस्य सर्वपरभावम् । वेत्ति ॥ ५ ॥ देहेति । देहाभिमानी । भक्तस्तु । अच्युतः श्रीकृष्णो भगवान् । अवस्थाभ्यो जाग्रदाद्यवस्थात्रितयात् । परः । तत्साक्षी अवस्थात्रयस्य साक्षात् द्रष्टा च । भवति । इतीत्थम् । हरेः । परत्वम् । हृदये स्वमनसि । जानाति । स्वात्मनो देहाभिन्नत्वेन ज्ञानात्कृष्णस्यात्र तत्परत्वबोध उक्तः ॥६॥ भक्तीति । अत्र सत्सङ्गे । यो भक्तः । भक्त्यभ्यासवशात् । देहत्रितयतः स्थूलादिदेहत्रिकात् । परम-न्यम् । क्षेत्रज्ञम् । सत्यमविनाशिस्वरूपम् । आत्मानं जीवम् । स्वम् । रूपम् । मन्यते । देहत्रयादवस्थात्रयाच्च परं विद्यादित्यर्थः । स भक्तस्तु ॥ ७ ॥ आत्मन इति ।

परात्परतरः कृष्ण इति शास्त्रेषु गीयते । परत्वं तत्तु कृष्णस्य यथाधिकृति बुद्ध्यते ॥ ४ ॥
यथायथा स्यान्नैर्मल्यं भजनाभ्यासतो धियः । तथातथा सूक्ष्मदर्शी वेत्ति तत्परतां पुमान् ॥ ५ ॥
देहाभिमानो भक्तस्तु त्र्यवस्थाभ्यः परोऽच्युतः । तत्साक्षी चेति जानाति परत्वं हृदये हरेः ॥ ६ ॥
भक्त्यभ्यासवशाद्योऽत्र देहत्रितयतः परम् । क्षेत्रज्ञं सत्यमात्मानं स्वं रूपं मन्यते स तु ॥ ७ ॥
आत्मनः पर एवास्ति तत्साक्षी भगवानिति । परत्वं बुध्यते विष्णोर्महत्त्वं च ततोऽधिकम् ॥ ८ ॥
एवं यावद्यस्य बुद्धिनैर्मल्यं तावदेव सः । सूक्ष्मं हरेः परत्वं च महत्त्वमपि बुद्ध्यते ॥ ९ ॥
पिपीलिकात आरभ्य तिमिंगिलगिलावधि । पिबन्तः सलिलं वार्द्धेः स्थूलाङ्गा उत्तरोत्तरम् ॥ १० ॥

भगवान्कृष्णः । आत्मनः स्वजीवात् । पर एव । तत्साक्षी स्वजीवस्वरूपस्य साक्षाद्द्रष्टा च । अस्ति । इतीत्थम् । विष्णोरन्तर्यामिणः श्रीकृष्णस्य । परत्वम् । महत्त्वं च । ततः प्रागुक्तभक्तात् । अधिकम् । बुद्ध्यते जानाति । इति द्वयोरेकान्वयः ॥८॥ एवमिति । एवममुना प्रकारेण । यस्य भक्तस्य । यावद्यत्परिमितम् । बुद्धिनैर्मल्यं भगवद्भक्त्यभ्यासतो बुद्धेर्निर्मलता । स्यात् । स भक्तः । तावत्तत्परिमितमेव । हरेः । सूक्ष्मं दुर्ज्ञेयम् । परत्वम् । महत्त्वं चापि । बुद्ध्यते ॥ ९ ॥ एतदेव दृष्टान्तद्वयेन निर्दिशत्येकादशभिः । पिपीलिकात इति । पिपीलिकातो हीनाङ्ग्याः । आरभ्य । तिमिंगिलगिलावधि महामत्स्यपर्यन्तम् । 'महामत्स्यास्तु चीरिल्लितिमिंगिलगिलादय' इत्यभिधानचिन्तामणौ । केचित्तु शतयोजनविस्तीर्णो मत्स्यस्तिमिरुदाहृतः । तिमिंगिलोऽपि मत्स्योऽस्ति तद्गिलोऽप्यस्ति राघव इति पठन्ति । सर्वे जन्तव इति शेषः । वार्द्धेः शुद्धोदसमुद्रस्य । सलिलं मिष्टोदकम् । पिबन्तः सन्तः । उत्तरोत्तरम् । स्थूलाङ्गाः स्थूलशरीराः । भवन्ति ॥ १० ॥

स्वेति । यथा । ते । सर्वेऽपि जन्तवः । स्वस्वशक्त्यानुसारेण । अम्बुधेः । अगाधत्वमतलस्पर्शत्वम् । महत्त्वं महत्तां च । विदुर्जानन्ति । तथा । भक्ताः । हरेः परत्वं महत्त्वं च । विदुरिति सम्बन्धः ॥ ११ ॥ यथेति । किञ्च । यथा । खे आकाशे । पतन्त उड्डीयमानाः । अल्पाः । महांतश्च । पतत्रिणः पक्षिणः । यथाशक्ति स्वस्वपक्षबलानुसारेण । तदानन्त्यमाकाशस्यानन्तताम् । विदुः । तथा । भक्ताः । हरेः । परत्वम् । महत्त्वं च । विदुः ॥ १२ ॥ एवं सामान्येन पूर्वश्लोकोक्तौ दृष्टान्तसिद्धान्तौ विशेषतो विवृणोत्यष्टभिः । मशका इति । मशकाः । चटकाः । चिल्ला आतापिनः । श्येनाः शशादनाश्च अनला अनलपक्षिणश्च पतत्रिपा गरुडाश्च ते । नभस आकाशस्य । महत्त्वमानन्त्यम् । तारतम्येन न्यूनाधिकभावेन । अवयन्ति यथा जानन्ति । हि ॥ १३ ॥ उपासका इति । एवममुना प्रकारेण हरेः । उपासका भक्ताः । रमापतेः श्रीकृष्णस्य । महत्त्वम् । तारतम्येन । यथाशक्ति विदुः । तस्य रमापतेः । अन्तं स्वरूपगुणविभूतिबलैश्वर्यादिपारं तु । न विदुः । वै । तथा चोक्तं श्रीभागवते । 'अहं हि पृष्टोऽर्यमणो भवद्भिराचक्ष आत्मावगमोऽत्र यावान् । नभःपतन्त्यात्मसमं पतत्त्रिणस्तथा समं विष्णुगतिं विपश्चित'इति

स्वस्वशक्त्यनुसारेण ते सर्वेऽपि यथाम्बुधेः । अगाधत्वं महत्वं च विदुर्भक्तास्तथा हरेः ॥ ११ ॥
यथा चाल्पा महांतश्च खे पतन्तः पतत्त्रिणः । यथाशक्ति तदानन्त्यं विदुर्भक्तास्तथा हरेः ॥ १२ ॥
मशकाश्चटकाश्चिल्लाः श्येनानलपतत्त्रिपाः । तारतम्येन नभसो महत्त्वमवयन्ति हि ॥ १३ ॥
उपासका हरेरेवं यथाशक्ति रमापतेः । महत्त्वं तारतम्येन विदुर्नान्तं तु तस्य वै ॥ १४ ॥
मरीच्यादिसमास्तत्र केचिद्भक्ता भवन्ति च । ब्रह्मादिसदृशाः । केचिद्वैराजसदृशाः परे ॥ १५ ॥
सन्ति केचित्समा भक्ताः प्रधानपतिपूरुषैः । शुद्धप्रकृत्यधिष्ठातृपुरुषैः सदृशाः परे ॥ १६ ॥
अक्षरब्रह्मधामस्थैर्मुक्तैः सन्त्यक्षरात्मभिः । समा भक्ता हरेः केचिदक्षराधिपतेः प्रभोः ॥ १७ ॥

॥ १४॥ मरीचीति । तत्र तेषु हरेरुपासकेषु मध्ये । केचित् । भक्ताः । मरीच्यदिसमा मरीच्यादिसमानतयोपासनकर्त्तारः । भवन्ति । केचिद्भक्ताः । ब्रह्मादिसदृशा विधिशिवादिसमानतयोपासनकर्त्तारः । भवन्ति । परे तेभ्य उत्कृष्टाः केचिदन्ये भक्ताः । वैराजसदृशा नैकब्रह्माण्डपतिवैराजपुरुषसमतयोपासनकर्त्तारः । भवन्ति ॥ १५ ॥ सन्तीति । केचित् । भक्ताः । प्रधानपतिपूरुषैः । समाः । नैकप्रधानपतिपुरुषसमानतयोपासनकर्त्तार इत्यर्थः । सन्ति । परे तेभ्य उत्कृष्टाः केचिदन्ये भक्ताः । शुद्धप्रकृत्यधिष्ठातृपुरुषैः । सदृशाः नैकमूलप्रकृतिपुरुषसमानतयोपासनकर्त्तार इत्यर्थः । सन्ति ॥ १६ ॥ अक्षरेति । अक्षराधिपतेरक्षरब्रह्माख्यधामैकनियन्तुः । प्रभोः । हरेः । केचित् । भक्ताः । अक्षरब्रह्मधामस्थैरक्षरब्रह्माख्यधामावस्थितैः । अक्षरात्मभिरक्षरब्रह्मभावं प्राप्तैः । मुक्तैरसङ्ख्यैर्मुक्तपुरुषैः । समाः । अक्षरब्रह्मधामात्रस्थितानन्तमुक्तसमानतयोपासनकर्त्तार इत्यर्थः । सन्ति ॥ १७ ॥

तत्रेति । तत्र तेषु मरीच्यादिषड्विधभक्तेषु मध्ये । आद्या प्रथमाः । हरेः । भक्ताः । मरिच्यादिसमतयोदिता प्रथमा भक्ता इत्यर्थः । मशकैः । तुल्याः । ब्रह्माद्यग्रे उपासनाल्प्यान्मशकसदृशाः । ज्ञातव्याः । द्वितीयाः । हरेः । भक्ताः । ब्रह्मादिसमतयेोदिता द्वितीया भक्ता इत्यर्थः । चटकैः । तुल्याः । वैराजाद्यग्रे उपासनाल्प्याच्चटकसदृशाः । ज्ञातव्याः । तृतीयाः । हरेः । भक्ताः । वैराजादिसमतयोदितास्तृतीया भक्ता इत्यर्थः । चिल्लकोपमाः । प्रधानपतिपूरुपाद्यग्रे उपासनाल्प्याच्चिल्लकसदृशाः । ज्ञातव्याः ॥१८॥ श्येनेति । तुरीयकाश्चतुर्थाः । हरेः । भक्ताः । प्रधानपतिपुरुपादिसमतयोदिताश्चतुर्था भक्ता इत्यर्थः । श्येनोपमाः । शुद्धप्रकृतिपुरुपाद्यग्रे उपासनाल्प्यात् श्येन सदृशाः विज्ञेयाः । पञ्चमाः । हरेः । भक्ताः । शुद्धप्रकृतिपुरुषसमतयोदिताः पञ्चमा भक्ता इत्यर्थः । अनलैः । तुल्याः । अक्षरधामावस्थितमुक्तपुरुपाग्रे उपासनाल्प्यादनलपक्षिसदृशाः । विज्ञेयाः । षष्ठाः । हरेः । भक्तास्तु । अक्षरधामावस्थितमुक्तसमतयोदिताः षष्ठा भक्तास्त्वित्यर्थः । गरुडोपमाः । धामरूपाक्षरब्रह्मोपासनाग्रे उपासनाल्प्याद्गरुडसमानाः । विज्ञेयाः ॥ १९ ॥ एत इति । एते पूर्वोक्ताः । हरेः । भक्ताः । तस्य हरेः । महत्त्वम् । तारतम्यतः । यथाशक्तिः । विदुः । तस्य हरेः हरिमहत्त्वस्य वा । अन्त-

तत्राद्यास्तु हरेर्भक्ता ज्ञातव्या मशकोपमाः । द्वितीयाश्चटकैस्तुल्यास्तृतीयाश्चिल्लकोपमाः ॥ १८ ॥ श्येनोपमाश्च विज्ञेया हरेर्भक्तास्तुरीयकाः । पञ्चमाश्चानलैस्तुल्याः षष्ठास्तु गरुडोपमाः ॥ १९ ॥ एते भक्ता हरेस्तस्य महत्त्वं तारतम्यतः । यथाशक्ति विदुस्तस्य त्वन्तं केऽप्याप्नुवन्ति नो ॥२०॥ यो यः कृष्णोपासनेन सामर्थ्याधिक्यमाप्तवान् । स स कृष्णस्य महिमाधिक्यमेवावगच्छति ॥ २१ ॥ स्वामिसेवकभावोऽतस्तस्य तस्याधिकं दृढः । जायते न तु कस्यापि महिम्ना कृष्णतुल्यता ॥ २२ ॥ भजतः कृष्णमादौ तु प्रकाशः स्वस्य जायते । खद्योतवदथो भूयः कुरुते स उपासनाम् ॥ २३ ॥ यथा यथोपासना च वर्द्धतेऽस्य तथा तथा । आवृतिर्भेदमाप्नोति प्रकाशो वृद्धिमेति च ॥ २४ ॥ दीपवद्दीपिकावच्च होलावद्दाववत्ततः । विद्युच्चन्द्रार्कसंवर्तवह्निवच्चैधते क्रमात् ॥ २५ ॥

मुक्तरीत्या पारं तु । केऽपि केचन भक्ता अपि । नो आप्नुवन्ति ॥२०॥ य इति । यः । यः । भक्तः । कृष्णोपासनेन । सामर्थ्याधिक्यम् । आप्तवान् । सः । सः । भक्तः । कृष्णस्य । महिमाधिक्यम् । अवगच्छति जानात्येव ॥ २१ ॥ स्वामीति । अतो भगवतो माहात्म्याधिक्यज्ञानात् । तस्य । तस्य । भक्तस्य । स्वामिसेवकभावोऽयं साक्षाच्छ्रीहरिरेव मत्स्वामी अहं च तस्यानन्यः सेवक इति मतित्वम् । अधिकं यथातथा । दृढो गाढः । जायते । कस्यापि भक्तस्य । महिम्ना । कृष्णतुल्यता । न तु नैव । जायते ॥ २२ ॥ भङ्ग्यन्तरेण दृष्टान्तयन्नुक्तार्थमेवाह पञ्चभिः । भजतः इति । कृष्णम् । भजतो भक्तजनस्य । आदौ प्रथमतस्तु । स्वस्य । प्रकाशः खद्योतज्योतिरिङ्गणस्येव । जायते । अथो अनन्तरम् । स भक्तः । भूयः । उपासनां कृष्णभक्तिम् । कुरुते ॥ २३ ॥ यथेति । अस्य भक्तस्य । यथातथा । उपायना । वर्द्धते वृद्धिं गच्छति । तथातथा । आवृतिर्मायावरणम् । भेदं विनाशम् । आप्नोति । प्रकाशश्चापि । वृद्धिम् । एति गच्छति ॥ २४ ॥ प्रकाशवृद्धिक्रममाह सार्द्धेन ।

दीपेति । दीपवत् । ततः । दीपिकावत् । ततः । होलावत् । ततः । दाववह्वनाग्निवत् । ततः । विद्युच्च चन्द्रश्च अर्कश्च संवर्त्तवह्निः प्रलयाग्निश्च तेषामिवेति तद्वत् । प्रकाशः । क्रमादनुक्रमेण । एधते वृद्धिं गच्छति ॥ २५ ॥ महेति । अन्ते यतः परं प्रकाशस्य वृद्धिदशा नास्ति तथाभूतेऽवसाने । अस्य भक्तस्य । प्रकाशः । महाभूताग्निवन्मध्यमहाभूतसमानः । वर्द्धते । एवं खद्योतदीपादिप्रकाशवृद्धिक्रमप्रकारेण । सामर्थ्यम् । सुखं च । क्रमेण । वृद्धिम् । एति । वै ॥ २६ ॥ यस्येति । यस्य । यस्य । भक्तस्य । प्रकाशादेः । आधिक्यम् । जायते । सः । सः । भक्तः । शक्त्यनुसारतः । कृष्णमहत्त्वस्य । आधिक्यम् । वेति ॥ २७ ॥ प्रकाशेति । प्रकाशादिवृद्धिभेदाद्धेतोः । मुक्तेषु भगवदेकान्तिकभक्त्या मुक्तभावं प्राप्तेषु भक्तेषु । भेदा विशेषाः कीर्त्तिताः । सन्ति । यस्य भक्तस्य । पूर्वस्मात्प्रथमभक्तात् । प्रकाशादेः । आधिक्यम् । स भक्तः । अधिकः पूर्वभक्ताच्छ्रेष्ठोऽस्ति ॥ २८ ॥ इतीति । इत्यमुना प्रकारेण । उक्त्वा सङ्घश्य आदिश्य । प्रोत्थितः स्वासनात्कृतोत्थानः । धार्मिर्धर्मपुत्रः श्रीहरिः । ऊर्ध्वदक्षिणपाणिनोन्नमितस्वदक्षिणहस्तेन । अम्लिकाशाखां चिञ्चातरुलताम् । अवलम्ब्योपादाय । प्राङ्मुख ऐन्द्रीदिगभिमुखवदनपद्मः सन् । पुनर्भूयः । अब्रवीत् साधु-

महाभूताग्निवचान्ते प्रकाशो वर्द्धतेऽस्य च । सामर्थ्यं च सुखं चैव वृद्धिमेति क्रमेण वै ॥ २६ ॥ यस्य यस्य प्रकाशादेराधिक्यं जायते स सः । वेत्ति कृष्णमहत्वस्याधिक्यं शक्त्यनुसारतः ॥ २७ ॥ प्रकाशादिवृद्धिभेदाद्भेदा मुक्तेषु कीर्त्तिताः । यस्याधिक्यं प्रकाशादेः पूर्वस्मादधिको हि सः ॥२८॥ इत्युक्त्वा प्रोत्थितो धार्मिरूर्ध्वदक्षिणपाणिना । अवलम्ब्याम्लिकाशाखां प्राङ्मुखः पुनरब्रवीत् ॥ २९ ॥ चन्द्रबिम्बमिदं सन्तः! पौर्णमास्यां विदूरतः । स्वर्णाल्पस्थालवल्लोकैरल्पमात्रकमीक्ष्यते ॥ ३० ॥ यथा यथा तत्समीपं गच्छेत्कश्चन पूरुषः । तथातथा वीक्षतेऽसौ तन्महत्तामनुक्रमात् ॥३१॥ अतिसान्निध्यमाप्तस्तु महत्त्वाधिक्यमस्य सः । अतिदृग्वीक्षते यद्वत्तथा मुक्तः पुमान् हरेः ॥ ३२ ॥ भक्त्यभ्यासप्रतापेन नष्टमायामहावृतिः । यथा यथैति सान्निध्यमक्षरात्परतो हरेः ॥३३॥ तथा तथा वीक्षते वै तन्महत्तामुपासकः । उत्तरोत्तरमाधिक्यादपारामेव निश्चितम् ॥ ३४ ॥

नुद्दिश्योवाच ॥ २९ ॥ चन्द्रेति । हे सन्तः ! । इदं प्राच्यां गगनगतम् । चन्द्रबिम्बम् । पौर्णमास्यां पूर्णिमारात्रौ । लोकैर्जनैः । विदूरतोऽतिदूरप्रदेशात् । स्वर्णाल्पस्थालवत् । अल्पमात्रकम् । ईक्ष्यते ॥ ३० ॥ यथेति । कश्चन । पूरुषः । यथातथा । तत्समीपं चन्द्रमण्डलसमीपप्रदेशम् । गच्छेत्प्राप्नुयात् । तथातथा । असौ पुरुषः । अनुक्रमात् । तन्महत्तां चन्द्रबिम्बमहत्त्वम् । वीक्षते पश्यति ॥ ३१ ॥ अतीति । अतिसान्निध्यं चन्द्रमण्डलातिनैकट्यम् । आप्तः । स पूरुषस्तु । अस्य चन्द्रबिम्बस्य । अतिदृक् दृशमतिक्रान्तम् । चक्षुषा गृहीतुमशक्यमित्यर्थः । महत्त्वाधिक्यम् । यद्वद्यथा । वीक्षते । तथा । मुक्तोऽनुक्रमेण मायावरणाद्विमोक्षं प्राप्तः । पुमान् भक्तः । हरेः । महत्त्वाधिक्यम् । वीक्षते ॥ ३२ ॥ इममर्थमेव पुनर्विशेषेणाह । भक्तीति द्वाभ्याम् । हे सन्तः ! । भक्त्यभ्यासप्रतापैनैकान्तिकभक्त्यावृत्तिप्रभावतः । नष्टमायामहावृत्तिर्विनष्टमायारूपमहावरणः । उपासको भक्तः । यथायथा । अक्षरात् । परतो वर्त्तमानस्य । हरेः । सान्निध्यम् । एति ॥ ३३ ॥ तथेति । तथा तथा । तन्महत्तां श्रीहरेर्महत्त्वम् । उत्तरोत्तरम् । आधिक्यात् । अपारामनन्तामेव । वीक्षते । निश्चितमेव । इति द्वयोरेकान्वयः ॥ ३४ ॥

प्रकरणार्थं निगमयत्यर्द्धेन । एवमिति । हे साधवः ! । एवममुना प्रकारेण । कृष्णस्य । परत्वम् । महत्तमत्वं च । ज्ञात्वा श्रीहरेरेकान्तिकसाधुसङ्गेन बुद्ध्वा । स श्रीकृष्णः । सेवनीयः स्वामिसेवकभावेनोपासनीयः । इत्येवंविधम् । प्रभोः । तस्य श्रीहरेः । वागमृतं वचनामृतम् । पीत्वा । सदःस्थाः । ते । सन्तः । चकाराद्गृहिणोऽपि । तुतुषुर्हृष्टा अभवन् ॥ ३५ ॥ ज्ञेयां स्वभक्तैः परतां महत्तां स्वस्य चाञ्जसा । दृष्टान्तैराह यः स्वामी स मे सेव्योऽस्तु सर्वदा ॥१॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्स्नुनुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां पञ्चनवतितमस्तरङ्गः ॥ ९५ ॥ १७ ॥

यथा सतां प्रसङ्गेन गुणा दोषा यथाऽसताम् । उद्गच्छन्ति प्रसङ्गेन श्रद्धायुक्तेषु पुंसु च ॥ १ ॥ यथा स्वाभाविका दोषा नश्यन्ति च क्रुधादयः । सतां सङ्गं कुर्वतोऽपि हेतुर्दोषोद्भवे तु यः ॥२॥ रजस्तमो गुणो नश्येद्यथा स्वाभाविकोऽपि च । एतदष्टादशे सर्वं विविच्य कथितं ततः ॥ ३ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्या-

एवं हि कृष्णस्य महत्तमत्वं ज्ञात्वा परत्वं च स सेवनीयः । इति प्रभोर्वागमृतं सदःस्थास्ते तस्य पीत्वा तुतुषुश्च सन्तः ॥ ३५ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते पञ्चनवतितमस्तरङ्गः ॥ ९५ ॥ १७ ॥

शकाब्दे विक्रमार्कस्य नगाश्वसुभूमिते । शुक्लाष्टम्यां भाद्रपदे वचोऽमृतमिदं हरेः ॥ १ ॥
तत्र सारङ्गनगरे दुर्गे जीवस्य चालये । वेद्यां पीठोत्तमे स्वामी सितवासा उपाविशत् ॥ २ ॥
नानादेशागतस्वीयभक्तसङ्घसमावृतः । स्वयमेव सतो भक्तान्वीक्षमाणोऽब्रवीद्वचः ॥ ३ ॥ श्रद्धावान्
पुरुषो यः स्यात्सविवेकमतिः स चेत् । तर्हि सत्सङ्गतस्तस्य श्रद्धा सद्वचने भवेत् ॥ ४ ॥
स्वधर्मज्ञानवैराग्यादयः कल्याणकारिणः । गुणा अप्यस्य हृदये शीघ्रमाविर्भवन्ति हि ॥ ५ ॥

तम् । (१८७७) भाद्रपदे नभस्यमासे । शुक्लाष्टम्यां शुक्लपक्षपाताष्टमीतिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । सारङ्गनगरे । जीवस्य जीवाख्यनृपस्य । दुर्गे । आलये तस्यैवोत्तरास्यभवने । वेद्यां चाह्यायां वेदिकायाम् । पीठोत्तमे स्वास्तृते उत्तमे मञ्चासने । सितवासाः परिधृतसकलश्वेतवसनः । स्वामी श्रीहरिः । उपाविशित् ॥ २ ॥ नानेति । नानादेशागता अनेकदेशेभ्य उपायाता ये स्वीयभक्तास्त्यागिनो गृहिणश्च स्वाश्रितजनास्तेषां सङ्घैर्वृन्दैः समावृतः सभायां परिवेष्टितः श्रीहरिः । भक्तान्स्वोपासकान् । सतः साधून् । वीक्षमाणः सन् । स्वयमेव । वचः । अब्रवीत् ॥ ३ ॥ श्रद्धावानिति । हे सन्तः ! । यः । पुरुषः । श्रद्धावान् । स्यात् । स श्रद्धावान् पुरुषः । सविवेकमतिः सदसद्विवेकयुक्तबुद्धिः । स्याच्चेत् । तर्हि । तस्य पुरुषस्य । सत्सङ्गतः साक्षाद्भगवदेकान्तिकसाधुसङ्गतः । सद्वचने भगवदेकान्तिकसाधुवाक्ये । श्रद्धा । भवेत् ॥ ४ ॥ स्वेति । कल्याणकारिणो मोक्षसहायिशुभोत्पादकाः । स्वधर्मज्ञानवैराग्यादयः । गुणा अपि । अस्य पुरुषस्य । हृदये । शीघ्रम् । आविर्भवन्ति । हि ॥ ५ ॥

कामेति । कामक्रोधादयः । सर्वेऽपि । दोषाः । नश्यन्ति । तद्धृदयाद्विनाशं गच्छन्त्येव । शुक्ले शुक्लपक्षे । चन्द्रकला । यथा । तथा । भक्तिः कृष्णे नवधाभजनपूर्वाप्रीतिः । अनुदिनम् । वर्द्धते ॥ ६ ॥ श्रद्धावानिति । यः । मर्त्यः पुरुषः । श्रद्धावान्सन्नपि । निर्विवेकमतिर्विवेकवर्जितबुद्धिः । भवेत् । स मर्त्यस्तु । असत्सु धर्माभासिष्वसाधुष्वपि । विश्वासं श्रद्धाम् । करोति । विवेकवर्जितत्वात्तत्कुटवाक्येषु सत्यता श्रद्धां विदधते इत्यर्थः । अथानन्तरम् । विनश्यति ॥ ७ ॥ तद्विनाशप्रकारमाह । गुणा इति । तस्मिन्नसाधुवचनविश्वासवति पुरुषे । स्वधर्मप्रमुखाः । गुणाः । सर्वथा । नोद्यन्ति प्राग्विद्यमानाः स्युश्चेद्विलीयन्ते नवीनाश्च न प्रादुर्भवन्तीत्यर्थः । अस्यैवंविधस्य पुरुषस्य । हृदये कामक्रोधादयः । अरयो दोषरूपाः शत्रवः । विवर्द्धन्ते । प्रागविद्यमाना अपि नवीना उत्पद्यातिशयेनैधन्ते इत्यर्थः ॥८॥ इममर्थं दृष्टान्तेन द्रढयति चतुर्भिः । क्षारेति । यथा । क्षारभूमावूषवत्यां पृथिव्याम् । सुवृष्ट्यापि । तृणाद्युद्भवः । न भवति । अथापि ।

कामक्रोधादयो दोषा नश्यन्त्येव च सर्वशः । वर्द्धतेऽनुदिनं भक्तिः शुक्ले चन्द्रकला यथा ॥ ६ ॥ श्रद्धावानपि यो मर्त्यो निर्विवेकमतिर्भवेत् । स त्वसत्स्वपि विश्वासं करोत्यथ विनश्यति ॥७॥ गुणाः स्वधर्मप्रमुखास्तस्मिन्नोद्यन्ति सर्वथा । विवर्द्धन्तेऽस्य हृदये कामक्रोधादयोऽरयः ॥ ८ ॥ क्षारभूमौ सुवृष्ट्यापि न तृणाद्युद्भवो यथा । भवत्यथ नदीपूरस्तस्यां चेत्प्रवहेत्क्वचित् ॥ ९ ॥ तदा तस्यां पङ्किलता सबीजा स्यात्ततो द्रुमाः । उद्गच्छन्ति महान्तोऽपि बद्धमूला भवन्ति च ॥ १० ॥ तथा श्रद्धादिगुणके न स्याद्दोषोद्गमः पुरा । असज्जनप्रसङ्गेऽस्य पुंसो जाते तु कर्हिचित् ॥ ११ ॥ कामादियुग्जगद्वार्त्ताप्रवेशो जायते हृदि । ततो महान्तः पाप्मान उद्गच्छन्त्येव भूरिशः ॥ १२ ॥ असत्प्रसङ्गो हातव्यस्तत एव मुमुक्षुणा । कार्यः सतां प्रसङ्गश्च तेन हेया निजाऽगुणाः ॥ १३ ॥

क्वचित्कादाचित् तस्यां क्षारभूमौ । नदीपुरः । चेद्यदि । प्रवहेत् ॥ ९ ॥ तदेति । तदा । तस्यां क्षारभूमौ । सबीजा नदीप्रवाहागतनानावृक्षबीजसहिता । पङ्किलता कर्द्दमस्थिरता । स्यात् । ततो हेतोः । महान्तो न्यग्रोधप्लक्षादयोऽत्युच्चा अपि । द्रुमाः । उद्गच्छन्त्युत्पद्यन्ते । बद्धमूलाः भूमौ बहुप्रसृतयास्थिरपादाश्च । भवन्ति ॥ १० ॥ तथेति । तथा तेन प्रकारेण । श्रद्धादिगुणके श्रद्धादिगुणवति पुरुषे । पुरा प्रथमम् । दोषोद्गमः । न स्यात् । अस्य । पुंसः । कर्हिचित् । असज्जनप्रसङ्गे नदीप्रवाहस्थानीयेऽसाधुपुरुषप्रसङ्गे जाते सति तु ॥ ११ ॥ कामेति । हृदि तस्यान्तःकरणे । कामादियुक् वृक्षबीजस्थानीयकामादियुक्ता या जगद्वार्त्ता पङ्कास्थानीयाग्राम्यगोष्ठी तस्याः प्रवेशः । जायते । ततो हेतोः । महान्त उच्चतरुतुल्याः । भूरिशो बहुधाः । पाप्मानः कामादिबीजोद्भवानि पापानि । उद्गच्छन्ति प्रादुर्भवन्त्येव । प्रथमं कामादिदोषा उत्पद्यन्ते ततस्तेभ्यः पापान्युत्पद्यन्त इत्यर्थः ॥ १२ ॥ असदिति । ततो हेतोः । मुमुक्षुणा जनेन । असत्प्रसङ्गः । हातव्यः सर्वथा त्याज्य एव । सताम् । प्रसङ्गश्च । कार्यः । येन सत्प्रसङ्गेन । निजाऽगुणाः स्वकीयदोषाः । हेयाः ॥ १३ ॥

दोष इति । यो दोषः । सत्सङ्गात् । न संक्षयेद्विनाशं न प्राप्नुयात् । स तथाविधः । दोषः । नास्त्येव । खलु । यद्यतो हेतोः । यतमानस्य पूर्वपापकर्मजातान् । कामाकुलत्वादिस्वदोषान् यातनाप्राप्तिहेतून्विज्ञाय तद्विनाशाय यत्नं कुर्वतो मुमुक्षोः । तेन सत्सङ्गेन । दुःस्वभावः पूर्वपापजाता कामाकुलत्वादिरूपा दुष्टप्रकृतिरपि । नश्यन्ति ॥ १४ ॥ दुःस्वभावेति । दुःस्वभावोपशमनम् । यथा । सत्सङ्गेन । भवेत् । तथा । विदुषां बहूपायाभिज्ञानां पण्डितानामपि । अन्योपायेन सत्सङ्गातिरिक्तसाधनेन तु । नैव स्यात् । दुःस्वभावोपशमनं नैव भवेदित्यर्थः ॥ १५ ॥ य इति । अनेवंविद एवंविधसत्सङ्गमहिमाऽनभिज्ञाः । अत एव । मूर्खाः । ये जनाः । स्युः । ते तु । तेन दुःस्वभावेन । प्रपीडिताः सन्तः । मुह्यन्ति । कुसङ्गतः कुसङ्गिजनप्रसङ्गात् । मुहुर्वारंवारम् । अकार्याणि तद्विनाशानुपयोगिकर्माणि । कुर्वते ॥ १६ ॥ अकार्याण्याह । शयनमिति । शयनं प्रभूतस्वापम् । अथवा । रोदनं भूताविष्टवत्प्रचुराश्रुविमोचनम् । अथवा । कलहमन्येन सह कलहाचरणम् । अथवा । उपोषणं लङ्घनम् । कुर्वते । अथवा । अतिसंक्लिष्टाः स्वदुःस्वभावेनातिक्लेशं गमिताः । ते पुरुषाः । विषादिना गरलाशनोद्बन्धकूपपतनादिना । म्रियन्ते ॥ १७ ॥ अकार्येति । इत्थममुना प्रका-

दोषः खलु नास्त्येव यः सत्सङ्गान्न संक्षयेत् । यत्तेन दुःस्वभावोऽपि यतमानस्य नश्यति ॥ १४ ॥ दुःस्वभावो-पशमनं सत्सङ्गेन यथा भवेत् । अन्योपायेन तु तथा नैव स्याद्विदुषामपि ॥ १५ ॥ ये त्वनेवंविदो मूर्खास्ते तु तेन प्रपीडिताः । मुह्यन्त्यकार्याणि मुहुः कुर्वते च कुसङ्गतः ॥ १६ ॥ शयनं रोदनं वापि कलहं वाप्युपोषणम् । कुर्वते वाऽतिसंक्लिष्टा म्रियन्ते ते विषादिना ॥ १७ ॥ अकार्याचरणेनेत्थं दुःस्वभावो न शाम्यति । न च दुःखं ततः कार्यः सत्सङ्गो हि विवेकिभिः ॥ १८ ॥ विना विवेकं धर्मादिसम्पन्नोऽपि कुसङ्गतः । नश्येद्यथाऽतिमहती वह्निज्वालाऽम्बुदाम्बुना ॥ १९ ॥ अल्पधर्मविरागादिर्विवेकी तेन न क्षयेत् । विद्युल्लेखाम्बुदेनेव स्यान्नरोऽतो विवेकवान् ॥ २० ॥ निर्विकारानन्दसाधुरथ पप्रच्छ तं प्रभो ! । कथं स्वाभाविका दोषाः क्रोधाद्या नाशमाप्नुयुः ॥ २१ ॥

रेण । अकार्याचरणेन । दुःस्वभावः । न शाम्यति । दुखं चापि न शाम्यति । ततो हेतोः । विवेकिभिः सदसत्पुण्यपापादिविवेकवद्भिर्जनैः । सत्सङ्गः । कार्यः । हि ॥ १८ ॥ विनेति । धर्मादिसम्पन्नोऽपि पुरुषो धर्मज्ञानवैराग्यादिगुणाढ्यः सन्नपि । विवेकं विना । कुसङ्गतः कुजनप्रसङ्गेन । अतिमहती । वह्निज्वाला । अम्बुदा-म्बुना घनाघनोदकेन । यथा । तथा । नश्येत् । धर्मादिगुणवर्जिततया नष्टप्रायो भवेदित्यर्थः ॥ १९ ॥ अल्पेति । अल्पधर्मविरागादिर्विद्यमानाल्पधर्मविरक्त्यादिगुणः सन्नपि । विवेकी यो विवेकवान् भवेत्सः । तेन कुसङ्गेन । विद्युल्लेखा राजिसमानतया प्रतीयमानो वैद्युतोऽग्निः । अम्बुदेन हस्तिहस्तस्थूलधाराप्रवर्षन्मेघेनेव । नैव नश्येत् न क्षयेत् अतो हेतोः । नरो भगवद्भक्तजनः । विवेकवान् । स्यात् । भगवद्भक्तजनेन विवेकवता भाव्यमित्यर्थः ॥ २० ॥ निरिति । अथैवंविधश्रीहरिवचनश्रवणानन्तरम् । निर्विकारानन्दसाधुः । तं श्रीहरिम् । पप्रच्छ । हे प्रभो ! । स्वाभाविकाः पूर्वसंस्कारवशतः साहजिकत्वया वर्त्तमानाः । क्रोधाद्याः । दोषाः । कथं केनोपायेन । नाशम् ।

आप्नुयुः । यद्यपि स्वाभाविकक्रोधादिदोषनाशोपायस्त्वया तु सत्सङ्ग उक्तस्तथापि सत्सङ्गं कृतवतस्त्वत्प्रपत्तिं गतवतश्चापि तद्दर्शनान्मनसंशया विनाशात्तत्रान्योपायो विद्यते चेत्तं वदेत्यर्थः ॥ २१ ॥ तमिति । तमेवंपृच्छन्तं निर्विकारानन्दमुनिम् । स्वामी श्रीहरिः । उवाच । यो भक्तः । तन्नाशे क्रोधादिदोषविनाशे । नित्यम् । प्रयत-स्तत्परः । भवेत् । तं भक्तम् । ते दोषाः । जाग्रन्नरवेश्म जागरूकनरगृहम् । तस्कराश्चौरा इव । त्यजन्ति । ते तं न पराभावयन्तीत्यर्थः ॥ २२ ॥ तन्नाशप्रयती-भवनप्रकारमाह नवभिः । प्रायेति । क्रोधाद्याः । इमे । दोषाः । प्रापरूपाः । पापरूपत्वात्स्वस्वीकारिणां पापकर्मप्रवर्त्तका इत्यर्थः । अत एव । नरकप्रदाः । भवन्ति । इतीत्थम् । अवेत्य ज्ञात्वा । तेषां दोषाणाम् । त्यागे, एव । दृढं यथातथा । उद्यत उद्युक्तः । भवेत् ॥ २३ ॥ तदिति । सुधीः सुमतिर्भक्तः । स्वमनसि । तदा-वेशं क्रोधादिदोषप्रवेशम् । ज्ञात्वा । नारायणं तद्बलविनाशकं श्रीहरिम् । स्मरन् स्वामिन् ! हरे ! हरिकृष्ण ! स्वामिनारायणेत्युच्चैर्जल्पन् । सावधानोऽप्रमतः । सन् । धैर्येण । तद्वशस्तेषां । प्रवेशावसरमयच्छन्नित्यर्थः ॥ २४ ॥ दिवेति । दिवा दिवसे । निशि रात्रौ च । उद्यतस्तज्जयोद्युक्तो भक्तः । तान् क्रोधादि दोषान् । स्वान्ते

तं स्वाम्युवाच यो नित्यं तन्नाशे प्रयतो भवेत् । तं ते त्यजन्ति वै जाग्रन्नरवेश्मेव तस्कराः ॥ २२ ॥

पापरूपा इमे दोषाः क्रोधाद्या नरकप्रदाः । इत्यवेत्य दृढं तेषां त्याग एवोद्यतो भवेत् ॥ २३ ॥

तदावेशं स्वमनसि ज्ञात्वा नारायणं स्मरन् । धैर्येण सावधानः संस्तद्वशो न भवेत्सुधीः ॥ २४ ॥

प्रवेष्टुं न ददत्स्वान्ते तान्दिवा निशि चोद्यतः । देहभिन्नस्वरूपानुसन्धाने प्रयतो भवेत् ॥ २५ ॥

पश्येद्दोषवतां लोके शास्त्रे चापि विगर्हणाम् । क्रोधादिर्येषु कार्यस्तान्कालग्रस्तांश्च नित्यदा ॥ २६ ॥

देहाभिमाने सत्येव तत्प्रवेशो भवेद्धृदि । नत्वात्मवेदने क्वापि त्याज्याऽहन्ता जडे ततः ॥ २७ ॥

अहमात्माऽस्मि सद्रूपः कृष्णभक्त इतीह यः । विद्यात्सदा सावधानो दोषा नश्यन्ति तस्य ते ॥ २८ ॥

स्वमनसि । प्रवेष्टुम् । न ददत् । देहभिन्नस्वरूपानुसन्धाने स्थूलादिदेहत्रयभिन्नात्मस्वरूपविचारे । प्रयतस्तत्परः । भवेत् ॥ २५ ॥ पश्येति । दोषवतां क्रोधा-दिदोषयुक्तानां पुरुषाणाम् । लोके । शास्त्रे च । विगर्हणां निन्दामपि । पश्येत् । येषु द्रव्यादिषु पदार्थेषु निमित्तभूतेषु सत्सु । क्रोधादिर्दोषः । कार्यः । तान् द्रव्यादिपदार्थान् । नित्यदा । कालग्रस्तान् कालविनाश्यांश्च पश्येत् ॥ २६ ॥ देहेति । देहाभिमाने स्थूलदेहाभिमतौ । सत्येव । हृदि । तत्प्रवेशः । भवेत् । आत्म-वेदने देहात्पृथग्भूतस्वात्मस्वरूपज्ञाने सति । क्वापि कदाचिदपि । न तु तत्प्रवेशो हृदि नैव भवेत् । ततो हेतोः । जडेऽचेतने देहे । अहन्ता देह एवाहमस्मीत्यहंभावः । त्याज्या ॥ २७ ॥ अहमिति । सद्रूपोऽविनाशिस्वरूपः । आत्मा । अहम् । कृष्णभक्तः साक्षाच्छ्रीहर्युपासकः । अस्मि । इतीत्थम् । इह सत्सङ्गे । यो भक्तः । सदा । सावधानः सन् । विद्याज्जानीयात् । तस्य भक्तस्य । ते क्रोधादयः । दोषाः । नश्यन्ति विनाशमधिगच्छन्ति ॥ २८ ॥

अप्रमत्तमिति । स्वाभाविकः । दोषाः । अपि । अप्रमत्तमुक्तरीत्या सावधानं भक्तम् । नार्दयन्ति न पीडयन्ति । आगन्तुकाः केनचिन्निमित्तेन बाह्यत आगता अपि । ते दोषाः । प्रमत्तमसावधानं भक्तं तु । अर्दयन्ति ॥२९॥ इममेवार्थं दृष्टान्तेन दृढयति द्वाभ्याम् । वणिगिति । यथा । क्रयविक्रयी धान्यादिवस्तुप्रतिग्रहप्रदानप्रसक्तः । वणिक् । नामलेखे । अप्रमत्तः सावधानः सन् । कैश्चित्प्रकृष्टबुद्धिबलवद्भिरपि जनैः । पराभाव्यः । न स्यात् । अन्यो नामलेखे प्रमतो वणिक् तु । अबलैर्बुद्धिबलवर्जितैरपि जनैः । पराभाव्यः । स्यात् ॥ ३० ॥ तथेति । तथा । यः । पुमान् भक्तः । आत्मवेदनादौ । अप्रमत्तः । स्यात् । स भक्तस्तु । तैः स्वाभाविकैः । दोषैरपि । अभिभाव्यः पराभाव्यः । न स्यात् । अपर आत्मवेदनादौ प्रमत्तो भक्तस्तु । तैरागन्तुकैरपि दोषैः । अभिभाव्यः । स्यात् ॥३१॥ दोषजयोपायान्तरमाह । साधूनिति । यो भक्तः । गतकैतवः सर्वथा कपटवर्जितः सन् । उपशमस्थानात्मनिष्ठाद्यैकान्तिकधर्मावस्थितान् । साधून् । सेवेत छन्दानुवृत्त्या परिचरेत् । स भक्तस्तु । तत्प्रसादादुपशमस्थसाध्वनुग्रहतः । अशेषतः समग्रान् । दोषान् । शीघ्रम् । जयेत् ॥ ३२ ॥ मुक्तानन्द इति । अथानन्तरम् । एवंवादिनमुक्तप्रकारेण निर्विकारानन्दप्रश्नोत्तरं कुर्वन्तम् । तं श्रीहरिम् । मुक्तानन्दो

अप्रमत्तं नार्दयन्ति दोषाः स्वाभाविका अपि । आगन्तुका अपि मुहुः प्रमत्तं त्वर्दयन्ति ते ॥ २९ ॥ वणिग्यथा नामलेखेऽप्रमत्तः क्रयविक्रयीः । पराभाव्यो न कैश्चित्स्यात्स्यादन्यस्त्वबलैरपि ॥ ३० ॥ तथात्मवेदनादौ स्यादप्रमत्तस्तु यः पुमान् । स नाभिभाव्यस्तैर्दोषैरभिभाव्योऽपरस्तु तैः ॥ ३१ ॥ साधूनुपशमस्थान् यः सेवेत गतकैतवः । स तु शीघ्रं तत्प्रसादाज्जयेद्दोषानशेषतः ॥ ३२ ॥ मुक्तानन्दोऽथ पप्रच्छ तमेवंवादिनं नमन् । दुःस्वभावात्मका दोषा भवेयुर्हि कुसङ्गिनः ॥ ३३ ॥ सत्सङ्गं कुर्वतोऽप्यत्र पुरुषस्य हृदि क्वचित् । त उद्भवन्तो दृश्यन्ते तत्र किं कारणं प्रभो ! ॥ ३४ ॥ स्वाम्युवाचात्र यो बाल्ये कुर्यात्सत्सङ्गमादरात् । तस्य प्रीतिर्भगवति स्यात्तद्भक्तेषु चाधिका ॥ ३५ ॥ तस्य तस्यामवस्थायां कामादीनां न सम्भवः । भवेदरीणामाल्प्यं वा स्यात्ततोऽस्ति रतिर्हरौ ॥ ३६ ॥

मुनिः नमन्नमस्कुर्वन्सन् । पप्रच्छ । हे हरे ! । कुसङ्गिनः कुसङ्गं कुर्वतो भक्तस्य । दुःस्वभावात्मकाः कामक्रोधादिदुःस्वभावरूपाः । दोषाः । भवेयुः । हि ॥ ३३ ॥ सत्सङ्गमिति । हे प्रभो ! । अत्र सत्सङ्गे । सत्सङ्गं प्रतिदिनं त्वत्साधुसमागमम् । कुर्वतोऽपि । पुरुषस्य त्वद्भक्तस्य । हृदि । क्वचित्कदाचित् । दोषाः । उद्भवन्तः सत्सङ्गविधानात्प्रागसन्तोऽपि तदाचरणानन्तरमुदयं प्राप्नुवन्तः । दृश्यन्ते । तत्र सत्सङ्गाचरणे सत्यपि दोषोद्भवे । किं कारणं को हेतुर्भवति ॥३४॥ स्वामीति । स्वामी मुक्तानन्दमुनिनैवंपृष्टः श्रीहरिः । उवाच । हे मुने ! । अत्र सत्सङ्गे । यो भक्तः । बाल्ये बालभावे । सत्सङ्गम् । आदरात् । कुर्यात् । तस्यैवंविधभक्तस्य । भगवति । तद्भक्तेषु च । अधिका । प्रीतिः । स्यात् ॥ ३५ ॥ तस्येति । तस्य भक्तस्य । तस्याम् । अवस्थायां बाल्ये इत्यर्थः । कामादीनाम् । अरीणाम् । सम्भवः । न भवेत् । अथवा । आल्प्यं कामाद्यरीणामल्पता । स्यात् । ततो हेतोः । हरौ । रतिः प्रीतिः । अस्ति । तद्भक्तेष्वपि रतिरस्तीति ज्ञेयम् ॥ ३६ ॥

कामेति । कामाद्युद्दीपके कामाद्यन्तःशत्रूद्बोधके । तरस्विनि शारीरादिबलोद्बलके । तारुण्ये यौवने । प्राप्ते सति तु । स भक्तः । चेद्यदि । सत्सङ्गे साधुसमागमे । प्रमत्तः । स्यात् । तदा तु । ते । दोषाः । उद्भवन्ति ॥३७॥ कामेति । तस्याम् । अवस्थायां । तारुण्यदशायाम् । कामो मनोभूश्च देहाभिमानो देहाहंभावश्च तावादी यस्य मानमदादेस्तस्य । उद्भवः । बलिष्ठता प्रतिदिनमुपचयश्च । स्यात् । ते कामादयो दोषाः । प्रमत्तम् । तं भक्तम् । अर्हयन्ति पीडयन्ति ॥३८॥ ईदृगिति । ईदृक्तारुण्ये । लब्धावेवंविधतरुणावस्थाप्राप्तौ सत्याम् । युवा यौवनस्थो भक्तः । चेद्यदि । प्रशान्तानुपशमावस्थितान् । दोषवर्जितानैकान्तिकत्वात्कामादिदोषगन्धवर्जितान् । साधून् सत एव । अन्वहम् । आदरात् । श्रद्धया तद्वचनविश्वासेन । निषेवेत ॥ ३९ ॥ तदेति । तदा तु । विकृतिवर्जितो यौवनविकारभूतकामादिदोषवर्जितः सन् । यौवनस्य अन्तं पारम् । निर्विघ्नं विघ्नवर्जिततयैव । लभते प्राप्नोति । अन्यथोक्तवैपरीत्ये सति तु । स यौवनस्थो भक्तः । भ्रष्टः । स्यात् । इति द्वयोरेकसम्बन्धः ॥ ४० ॥ तारुण्य इति । यस्य पुरुषस्य । तारुण्ये तरुणावस्थायामेव । सत्सङ्गः । स्यात् । सः पूरुषस्तु । यदि । स्वीयदृष्टान्तेन । महत्सु कामादिदोषविजयादिगुणगरिष्ठेषु । सत्स्वपि ।

कामाद्युद्दीपके प्राप्ते तारुण्ये तु तरस्विनि । स चेत्प्रमत्तः सत्सङ्गे स्यात्तदा तूद्भवन्ति ते ॥ ३७ ॥ कामदेहाभिमानादेरुद्भवश्च बलिष्ठता । स्याद्धि तस्यामवस्थायां प्रमत्तं तेऽर्हयन्ति तम् ॥३८॥ इदृक् तारुण्ये लब्धौ चेत्प्रशान्तान्दोषवर्जितान् । साधूनेव निषेवेत श्रद्धयाऽन्वहमादरात् ॥३९॥ तदा तु यौवनस्यान्तं युवा विकृतिवर्जितः । निर्विघ्नेनैव लभते भ्रष्टः स्यादन्यथा तु सः ॥ ४० ॥ तारुण्य एव सत्सङ्गो यस्य स्यात्स तु पूरुषः । महत्सु सत्स्वपि स्वीयदृष्टान्तेन यदि क्वचित् ॥ ४१ ॥ कामादीन्कल्पयेद्दोषानसतोऽपि कुतर्कतः । तदा तु तेन पापेन स भ्रष्टो भवति ध्रुवम् ॥ ४२ ॥ दुःखभावात्मकैर्दोषैस्ततोऽसावपि पीड्यते । एवं सत्सङ्गिनो दोषोद्गमे हेतुद्वयं स्मृतम् ॥ ४३ ॥ यं यं दोषं पुमान् सत्सु कल्पयत्यविवेकतः । तेन तेन स दोषेण स्वयमेव प्रपीड्यते ॥ ४४ ॥

क्वचित्कदाचित् ॥ ४१ ॥ कामेति । कुतर्कतः । असतस्तेष्वविद्यमानानपि । कामादीन् । दोषान् । कल्पयेत् । स्वस्यावस्थागुणेन कामादिदोषवत्त्वादात्मदृष्टान्तेन तरुणाः किं कामादिवर्जिताः स्युरेवंविधकुतर्केण तेषु तान्विभावयेदित्यर्थः । तदा तु । तेन साधुष्वविद्यमानदोषकल्पनरूपेण पापेन । स भक्तः । भ्रष्टः सत्सङ्गाच्च्युतः । भवति । ध्रुवं निश्चितमेव । इति द्वयोरेकान्वयः ॥ ४२ ॥ दुरिति । ततो हेतोः । असौ भ्रष्टतां प्राप्तो भक्तोऽपि । दुःस्वभावात्मकैः । दोषैः । पीड्यते । एवममुना प्रकारेण । सत्सङ्गिनः सत्सङ्गकुर्वतोऽपि भक्तजनस्य । दोषोद्गमे । हेतुद्वयम् । स्मृतं कथितम् ॥ ४३ ॥ एवं सत्सङ्गकुर्वतः प्रागसतामपि सत्सङ्गाचरणानन्तरमुदयं प्राप्नुवतां दोषाणां हेतुद्वयमुक्त्वा साम्प्रतं तदीयां तद्विनाशनोपायप्रश्नचिकीर्षामालक्ष्य तदपृष्ट एवोक्तार्थानुवादपूर्वं तद्विनाशनोपायमाह सप्तभिः । यमिति । पुमान् । अविवेकतः । सत्सु । यम् । दोषं कामादिम् । कल्पयति । स पुरुषः । तेन । तेन । दोषेण । स्वयमेव । प्रपीड्यते ॥ ४४ ॥

सदोष इति । सदोष उक्तविधदोषसहितोऽपि । एषः । पुमान् भक्तः । यदि । तद्दोषनाशनम् । चीकीर्षेत्कर्तुमिच्छेत् । तर्हि तु । सतो येषां दोषः स्वेन गृहीतस्तान्साधून् । प्रणम्य । आशु शीघ्रम् । क्षमापयेत् ॥ ४५ ॥ गृह्णीयादिति । तेषां साधूनाम् । गुणानेव । गृह्णीयात् । अगुणान्दोषांस्तु । क्वचित्कदाचिदपि । न तु नैव गृह्णीयात् । यदि । तेषु साधुषु । दृश्यमानोऽपि । अगुणः सहजक्षीजनादिरूपो दोषः । भवेत् । तदा ॥ ४६ ॥ मदिति । अयम् । दोषः । मत्क्रमत्यैव । दृश्यते । तेषु साधुषु । सदोषः । न तु नैव सम्भवेत् । इतीत्थम् । मुमुक्षुणा भक्तेन । सर्वथैव । मन्तव्यम् । इति द्वयोरेकान्वयः ॥ ४७ ॥ यदीति । किञ्च । यदि । तेषु साधुषु । कश्चित् । सत्यः परमार्थोऽपि । दोषः । प्रतीयेत तस्य दृष्टिपथं यायादित्यर्थः । तर्हि । एतैः सद्भिः । स सत्यो दोषोऽपि । कार्यवशात् । धर्मस्थित्यादिनिमित्तेनेत्यर्थः । रक्षितः । भवति । इतीत्थमेव । चिन्तयेद्विचारयेत् ॥ ४८ ॥ तदिति । तद्रक्षणे तथाविधदोषस्वीकारे सत्यपि । एषां साधू-

सदोषोऽपि पुमानेष यदि तद्दोषनाशनम् । चिकीर्षेत्तर्हि तु सतः प्रणम्याशु क्षमापयेत् ॥४५॥ गृह्णीयाच्च गुणानेव तेषां नत्वगुणान् क्वचित् । अगुणो दृश्यमानोऽपि यदि तेषु भवेत्तदा ॥ ४६ ॥ मत्कुमत्यैव दोषोऽयं दृश्यते न तु तेषु सः । सम्भवेदिति मन्तव्यं सर्वथैव मुमुक्षुणा ॥४७॥ यदि कश्चित् प्रतीयेत दोषः सत्योऽपि तेषु च । सोऽप्येतै रक्षितः कार्यवशादित्येव चिन्तयेत् ॥ ४८ ॥ तद्रक्षणेऽपि नास्त्येषामेव तद्वशता क्वचित् । गुणबुद्धिर्यतस्त्वेषां न तस्मिन् किन्तु दोषधीः ॥ ४९ ॥ एवं वर्त्तेत यो नित्यं गुणग्राही पुमानिह स । सर्वदोषमुक्तः सन्प्राप्नुयाद्गतिमुत्तमाम् ॥ ५० ॥ महानुभावानन्दोऽथ साधुः पप्रच्छ तं प्रभुम् । स्वाभाविको गुणो नश्येन्न वा नश्येद्रजस्तमः ॥५१॥ यदि नश्येत्तदानीं तु कथं दुर्वास आदिषु । मुक्तेष्वपि न नष्टोऽसौ सिद्धेषु तपआदिभिः ॥ ५२ ॥ नैव नश्येद्यदि तदा मुक्तेषु स्यात्सदोषता । मायिकस्यापि तस्य स्याद्गौरवं चात्मवेदनात् ॥ ५३ ॥

नाम् । क्वचित्कदाचिदपि । तद्वशता तदधीनता । नास्त्येव । यतो हेतोः । एषां साधूनाम् । तस्मिन् स्वरक्षितदोषे । गुणबुद्धिः । नास्ति । किन्तु । दोषधीः । अस्ति । इति चिन्तयेदिति पूर्वेण सम्बन्धः ॥ ४९ ॥ एवमिति । एवममुना प्रकारेण । इह सत्सङ्गे । यः । पुमान् भक्तः । नित्यम् । गुणग्राही सतां गुणग्रहणशीलः सन् । वर्त्तेत । स भक्तः । सर्वदोषमुक्तः । सन् । उत्तमाम् । गतिम् । प्राप्नुयात् ॥ ५० ॥ महेति । अथैवंविधश्रीहरिवाक्यश्रवणानन्तरम् । महानुभावानन्दः । साधुः । प्रभुम् । तं श्रीहरिम् । प्रपच्छ । हे हरे ! । स्वाभाविकः । रजः । गुणः । तमः । गुणः । नश्येत् । अथवा । न नश्येत् ॥ ५१ ॥ यदीति । यदि । नश्येत् । तदानीम् । तपआदिभिः । सिद्धेषु सिद्धगतिं प्राप्तेषु । दुर्वास आदिषु । मुक्तेष्वपि । असौ गुणः । कथम् । न नष्टः ॥ ५२ ॥ नेति । यदि । नैव नश्येत्स गुणो विनाशं न प्राप्नुयात् । तदा । मुक्तेषु दुर्वासः प्रभृतिषु । सदोषता सर्वदा रजस्तमोगुणरूपदोषसाहित्यम् । स्यात् । मायिकस्यापि । तस्य गुणस्य । आत्मवेदनात्प्रागु-

कृतमिवर्त्तकात्मज्ञानादिसाधनात् । गौरवं महत्त्वं च । स्यात् ॥ ५३ ॥ तमिति । तमेवंपृच्छन्तं महानुभावानन्दसाधुम् । हरिः । उवाच । हे साधो ! । पुमान् भक्तः । यदि । तत्प्रहाणे रजआदिगुणनिवर्त्तने । अप्रमत्तः सावधानः । भवेत् । तदा । तन्निवृत्तिः । भवेत् । खलु ॥ ५४ ॥ गुणनिवृत्तिसाधनान्याह त्रिभिः । देहेति । देहत्रयात्स्थूलादिदेहत्रिकात्पृथग्भूतो वस्तुतया व्यतिरिक्तो यः स्वात्मा स्वजीवस्तस्य ज्ञानं सच्चिदानन्दादिस्वरूपेणावगमस्तस्यातिदाढर्यम् अतिशयिताद्दढता तेनेति ततः । स्वदुर्गुणे रजस्तमआत्मके स्वकीये दुष्टगुणे । अत्यरुच्या अतिशयितया अप्रीत्या । शान्तसाधुनिषेवयैकान्तिकसाधुसंसेवनेन च ॥ ५५ ॥ स्वस्मिन्निति । स्वस्मिन् । दोषे रजआदिरूपे दुर्गुणे । सति विद्यमाने सति तु । हरिः । प्रीतः प्रसन्नः । नैव । भविष्यति । इति मत्वा । स्वस्मिन् । तत्प्रवेशादाने चापि । अप्रमादतः । सावधानवर्त्तनेन दोषयोः प्रवेशरन्ध्राप्रदानेनेत्यर्थः ॥ ५६ ॥ निश्छद्मेति । सर्वथा कायवाङ्मनोभिः । निश्छद्म निष्कपटं यथातथोपासितो यो हरिस्तस्य प्रतापेन च ।

तमुवाच हरिः साधो ! तन्निवृत्तिर्भवेत्खलु । अप्रमत्तो यदि भवेत्तत्प्रहाणे पुमांस्तदा ॥ ५४ ॥
देहत्रयपृथग्भूतस्वात्मज्ञानातिदार्ढ्यतः । स्वदुर्गुणेऽत्यरुच्या च शान्तसाधुनिषेवया ॥ ५५ ॥
स्वस्मिन्दोषे सति हरिः प्रीतो नैव भविष्यति । इति स्वस्मिंस्तत्प्रवेशादाने चाप्यप्रमादतः ॥ ५६ ॥
निश्छद्मोपासितहरिप्रतापेन च सर्वथा । सर्वोऽपि दुर्गुणो नश्येत्कार्यो नैवात्र संशयः ॥ ५७ ॥
एतैर्व्यस्तैः समस्तैर्वा साधनैर्निजदुर्गुणः । मुमुक्षुणाऽऽशु हातव्योऽन्यथा नास्त्येव सद्गतिः ॥ ५८ ॥
वर्त्तते दुर्गुणो यश्च मुक्तदुर्वासआदिषु । स तु दुर्जनशिक्षायै ज्ञात्वा तै रक्षितोऽस्ति हि ॥ ५९ ॥
तथाऽपि तद्वशत्वं तु तेषामस्तीति गम्यते । यतोऽस्ति गुणधीस्तेषां तस्मिन्न त्याज्यधीर्दृढा ॥ ६० ॥

सर्वोऽपि । दुर्गुणः । नश्येत् । अत्र । संशयः । नैव कार्यः ॥ ५७ ॥ एतैरिति । व्यस्तैः । अथवा । समस्तैः । एतैः पञ्चभिः । साधनैः । निजदुर्गुणः । मुमुक्षुणा भक्तेन । आशु शीघ्रम् । हातव्यः । अन्यथा दुर्गुणप्रहाणाभावे । सद्गतिरैकान्तिकसाधुगम्या गतिः । नास्त्येव न भवेदेव ॥ ५८ ॥ वर्त्तत इति । मुक्तदुर्वासआदिषु मुक्तभावं प्राप्तेषु दुर्वासो मुनिप्रभृतिषु । यः । दुर्गुणः । वर्त्तते । स दुर्गुणस्तु । तैः । ज्ञात्वा बुद्धिपूर्वमित्यर्थः । दुर्जनशिक्षायै दुर्जननियमनाय । रक्षितः । अस्ति । हि प्रसिद्धमेतत् ॥ ५९ ॥ तथेति । तथापि ज्ञात्वा रक्षिते सत्यपि । तेषां दुर्वासःप्रभृतीनाम् । तद्वशत्वं दुर्गुणाधीनत्वम् । अस्ति । इतीत्थम् । गम्यते प्रतीयते । यतो हेतोः । तेषाम् । तस्मिन् दुर्गुणे । गुणधीरयमपि समीचीनोऽस्तीति गुणरूपा मतिः । अस्ति । दृढा । त्याज्यधीर्दोषबुद्ध्यात्यागार्हमतिः । नास्ति ॥ ६० ॥

ज्ञानेति । तेषां दुर्वासःप्रभृतीनामपि । मुक्तिस्तु । ज्ञानदार्ढ्येन । दृढज्ञानोदयेन दोपनिवृत्तौ सत्यामेवेत्यर्थः । भविष्यति । किन्तु । ते दुर्वासःप्रभृतयः । मुमुक्षूणाम् । आश्रयार्हा आत्यन्तिककल्याणार्थं समाश्रयणयोग्याः । नैव भवन्ति ॥६१॥ इतीति । इत्यवंविधाम् । सद्गुरोः श्रीहरेः । वाक्यसुधां वचनामृतम् । निपीय । सः । मुनिर्महानुभावानन्दसाधुः । अन्ये । साधवश्च । गृहिणश्च । पराम् । मुदम् । अयुः प्रापुः । दयानिधिं निष्कारणकरुणासागरम् । तं श्रीहरिम् । प्रणमन्ति स्म

ज्ञानदार्ढ्येन मुक्तिस्तु तेषामपि भविष्यति । किन्तु नैव मुमुक्षुणामाश्रयार्हा भवन्ति ते ॥ ६१ ॥ इति वाक्य-
सुधां स सद्गुरोर्मुनिरन्ये च निपीय साधवः । गृहिणश्च मुदं परामयुः प्रणमन्ति स्म च तं दयानिधिम् ॥६२॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते षण्णवतितमस्तरङ्गः ॥ ९६ ॥ १८ ॥

॥ ६२ ॥ शिक्षावाक्यामृतैः स्वीयैः स्वाश्रितानां सतां हरिः । विदधे हितपुष्टिं यः स्युस्तस्यैतानि मद्धृदि ॥ १ ॥ योऽक्षरात्परतरः परमेश्वरो ब्रह्मरूपमुनिभिः सुपूजितः । सर्वजीवदयया नराकृतिः श्रीहरिं तमहमानतोऽस्मि हि ॥ २ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्सद्गुरुरघुवीराचार्यविरचितायां सेतुमालाख्या-यां श्रीहरिवाक्यसुधासिन्धुटीकायां षण्णवतितमस्तरङ्गः ॥ ९६ ॥ १८ ॥

## ॥ सारङ्गपुरप्रकरणं समाप्तम् ॥

॥ श्री स्वामिनारायणो विजयतेतराम् ॥

# श्री हरिवाक्यसुधासिन्धौ
# श्री कारीयाणी – प्रकरणम्

श्रीस्वामिनारायणाय नमो नमः । यः स्ववाक्सुधया तृप्तान्विदधे स्वान्बहुन्प्रभुः । क्षराक्षरपरो मेऽस्तु स हरिर्बुद्धये पिता ॥ १ ॥ ये तु कार्यायनग्राम्यास्तरङ्गा द्वादश स्मृताः । हरिवाक्यसुधासिन्धोस्तद्व्याख्या क्रियते मया ॥ २ ॥ तत्र तु प्रथमे जीवे चेन्द्रियेपु तथान्तरे । यथा यथा हि भगवन्निश्चयो जायते नृणाम् ॥ ३ ॥ कल्याणायात्र जीवानां श्रीहरिर्दयया यथा । आविर्भवति तत्सर्वं विविच्य कथितं स्फुटम् ॥ ४ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । ( १८७७ ) भाद्रमासाद्ये भाद्रपदमासस्य शुक्लपक्षे । द्वादश्यां तिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । कार्यायने ग्रामे । वास्तोर्वास्तुसंज्ञस्य । राज्ञो नृपतेः । दुर्गे । उदगास्यस्य । वेश्मनस्तस्यैव गृहस्य । वितर्द्यां वाह्यायां वेदिकायाम् । छत्रिमञ्चे सूर्यपुरीययादवजिद्भक्तानीते कौशेयतूलिकापार्श्विकोपबर्हगेन्दुकादिमति श्वेतोत्तरच्छदे उपरि छत्रसहिते पर्यङ्कासने । श्रीहरिः । उपाविशत् ॥ २ ॥ सितेति । सितवासस्त्रयः स्वाङ्गपरिधृतश्वेतवसनत्रिकस्यायं विवेकः । तत्र परिधानीयं प्रान्ताद्धाङ्गुलपरिणाहकृष्णसूत्रलेखं वितस्तिपरिणाहकृष्णसूत्रलेखपल्लवं च । प्रावरणीयं सुवर्णसूत्रप्रान्तपल्लवलेखम् । शिरोवेष्टनीयं चापि तथाविधमेवेति । भक्तसङ्घैर्नानादेशागत-

शकाब्दे विक्रमार्कस्य नगाश्ववसुभूमिते । द्वादश्यां भाद्रमास्याद्ये वचोऽमृतमिदं हरेः ॥ १ ॥ तत्र कार्यायने दुर्गे
वास्तो राज्ञः स वेश्मनः । वितर्द्यामुदगास्यस्य छत्रीमञ्च उपाविशत् ॥२॥ सितवासस्त्रयो भक्तसङ्घैश्च परितो वृतः ।
उवाच स सतोऽग्रस्थान् स्वाननैकसमीक्षणान् ॥ ३ ॥ प्रश्नोत्तराणि कुरुत यूयं सुज्ञाः परस्परम् । अथ सन्भूधरा-
नन्दः शिवानन्दं स्म पृच्छति ॥४॥ कृष्णस्य निश्चयोऽस्यान्तःकरणे जायतेऽथवा । आत्मन्येवेति प्रश्नस्य साधुः
सोऽप्युत्तरं ददौ ॥ ५ ॥ तदजातमिवालक्ष्य स्वयमेवाब्रवीत्प्रभुः । जीवो बुद्ध्याऽखिलं वेत्ति सा सर्वज्ञानकारणम्
॥ ६ ॥ अन्तःकरणमध्ये च ज्ञानकर्मेन्द्रियेषु च । नखाग्रादाशिखं साऽस्ति तस्यां जीवस्तु वर्त्तते ॥ ७ ॥

त्यागिगृहिस्वभक्तवृन्दैः । परितः सर्वतः । वृतः सभायां परिवेष्टितः । स श्रीहरिः ॥ अग्रस्थान्स्वपुरोनिषण्णान् । स्वाननैकसमीक्षणान् चन्द्रचकोरन्यायेन स्वमुखारविन्दार्पितैकनेत्रवृत्तीन् । सतो मुक्तानन्दादिसाधून् । उवाच ॥ ३ ॥ प्रश्नेति । हे साधवः ! । सुज्ञा विचक्षणाः । यूयं भवन्तः । परस्परमन्योऽन्यम् । प्रश्नोत्तराणि कमपि पक्षमुद्भाव्य प्रश्नांस्तदुत्तराणि चेत्यर्थः । कुरुत । अथैवंविधश्रीहरिवाक्यश्रवणानन्तरम् । भूधरानन्द एतन्नामा । सन् साधुः । शिवानन्दमुनिम् । पृच्छति स्म ॥ ४ ॥ कृष्णस्येति । हे मुने ! । अस्य । कृष्णस्यास्माकमिष्टदेवस्यैतस्य साक्षाच्छ्रीहरेः । निश्चयोऽयमेवाक्षरातीतः पुरुषोत्तमोऽस्तीति निर्णयः । अन्तःकरणे । जायते । अथवा । आत्मनि स्वजीवे एव । जायते । इत्येवंविधस्य । प्रश्नस्य । उत्तरम् । सः । साधुः शिवानन्दमुनिरपि । ददौ यथामति चकार ॥ ५ ॥ तदिति । तद् भूधरानन्दमुनिप्रश्नस्य शिवानन्दमुनिकृतोत्तरम् । अजातं यथार्थतया न कृतमिव । आलक्ष्यावबुध्य । प्रभुः श्रीहरिः । स्वयमेव । अब्रवीत् । हे मुने ! । जीवः । बुद्ध्या । अखिलम् । वेत्ति । सा बुद्धिः । सर्वज्ञानकारणं सकलपदार्थावबोधहेतुरस्ति ॥ ६ ॥ अन्तरिति । सा बुद्धिः । अन्तःकरणमध्ये अन्तःकरणवाच्यमनश्चित्ताहंकाराणामन्तरे इत्यर्थः ।

ज्ञानकर्मेन्द्रियेषु ज्ञानेन्द्रियेषु कर्मेन्द्रियेषु च । नखाग्रावरणनखराग्रमारभ्य । आशिखं शिखापर्यन्तम् । अस्ति । तस्यां बुद्धौ । जीवः । वर्त्तते ॥ ७ ॥ ज्ञायत इति । तत्र तयोर्बुद्धिजीवयोर्मध्ये । एका । धीर्बुद्धिः । अखिलैर्जनैः । ज्ञायते यथासमययथाकार्यानुकूलविचारस्फूर्त्या बुध्यते । तत्स्थो बुद्धिस्थः । आत्मा जीवस्तु । न ज्ञायते । अत्र दृष्टान्तमाह । यथा । ह्रस्वदीर्घीभवती पवनेन ह्रस्वदीर्घभावं प्राप्नुवती या वह्निज्वाला तस्यां तिष्ठतीति तथाभूतो यः पवनो वायुः । न ज्ञायते । तथाभूताग्निज्वाला ज्ञायते तथा । ज्वालाया ह्रस्वदीर्घीभावौ यद्यपि पवनेन भवतस्तत्र ज्वालायास्तथात्वं यद्वत् सर्वदृग्विषयं भवति न तद्वत्पवनः प्रतीयते तथाबुद्धिः सर्वबोध्यास्ति न तत्प्रेरक आत्मेत्यर्थः ॥ ८ ॥ बाह्येति । बुद्धिगो बुद्धाववस्थितः । एष आत्मा । बाह्यान्तःकरणानि बाह्यकरणानि चक्षुरादीनीन्द्रियाणि अन्तःकरणानि मनआदीनि तान्युभयानि । तथा । तदीयानुभयकरणसम्बन्धिनः । विषयान् रूपादीन्सङ्कल्पादींश्च । तद्व्यक्तिकर्त्तृदेवान् रूपादिसङ्कल्पादितत्तदिन्द्रियविषयव्यक्तिविधातृसूर्यादिचन्द्रादिदेवतांश्च । युगपदेककालम् । वेत्ति ॥ ९ ॥ हृत्स्थ इति । हृत्स्थो हृदयैकदेशस्थितः । अतिसूक्ष्मः । इत्येवममुना प्रकारेण । ज्ञायमानो बुद्ध्या निश्चीयमानोऽपि । असा-

ज्ञायते तत्र धीरेका तत्स्थ आत्मा तु नाखिलैः । ह्रस्वदीर्घीभवद्वह्निज्वालास्थपवनो यथा ॥ ८ ॥ बाह्यान्तःकरणान्येष तदीयान्विषयांस्तथा । तद्व्यक्तिकर्त्तृदेवांश्च युगपद्वेत्ति बुद्धिगः ॥ ९ ॥ हृत्स्थोऽतिसूक्ष्म इत्येवं ज्ञायमानोऽप्यसौ धियि । स्वशक्त्या व्यापकत्वेन महान्देहेन्द्रियादितः ॥ १० ॥ बुद्ध्यैक्यमापन्न इव दृश्यमानोऽप्यसौ ततः । पृथगस्तीति विद्वद्भिरनुमानेन गम्यते ॥ ११ ॥ नित्यानन्दोऽथ तं प्राह स्वामिन्नेतावत्त्वया । प्रश्नोत्तरं कृतं यत्तन्नैव हृद्यागतं हि नः ॥ १२ ॥ श्रीहरिरुवाच – भगवन्निश्चयो बुद्धौ यो जायेत स एव हि । जीवेऽपि जात इत्येव ज्ञेयमैक्यस्थितेस्तयोः ॥ १३ ॥ तत्राप्येवं क्रमो बोध्यः साक्षात्कृष्णस्य निश्चयः । इन्द्रियेषु भवत्यादौ ततोऽन्तःकरणेषु च ॥ १४ ॥

वात्मा । धियि पूर्वोक्तरीत्या सर्वाङ्गव्यापकायां बुद्धौ । स्वशक्त्या प्रकाशपर्यायया स्वप्रभया । व्यापकत्वेन तिलेषु तैलवद्व्यापनभावेन । देहेन्द्रियादितः । महान् । अस्ति ॥ १० ॥ बुद्ध्येति । बुद्ध्या सह । ऐक्यमेकताम् । आपन्नः प्राप्त इव । दृश्यमानोऽपि । असावात्मा । ततो बुद्धेः सकाशात् । पृथक् भिन्नः । अस्ति । इतीत्थम् । विद्वद्भिर्मनीषिभिः । अनुमानेन । गम्यते ॥ ११ ॥ नित्यानन्द इति । अथेति प्रश्नारम्भे । तमेतावदुक्त्वा विरतं श्रीहरिम् । नित्यानन्दो मुनिः । प्राह । हे स्वामिन् ! । त्वया । एतावता कालेन वचनेन सन्दर्भेण वा । यत् । प्रश्नोत्तरम् । कृतम् । तत् । नोऽस्माकम् । हृदि मनसि । नैवागतम् । हि । यथार्थं तद्बोधो न जात इत्यर्थः ॥१२॥ “एवं स नित्यानन्देन सम्प्रोक्तः पुरुषोत्तमः । जगादेत्थं मुनिं तं च हर्षयन्नितरानिजान्” ॥ भगवन्निति । हे मुने ! । यो भगवन्निश्चयः । बुद्धौ । जायेत । सन्निश्चयः । जीवेऽपि । जात एव । इत्येवेत्थमेव । तयोर्बुद्धिजीवयोः । ऐक्यस्थितेरेकतयावस्थानाद्धेतोः । ज्ञेयम् ॥१३॥ तत्रेति । तत्राप्युक्तविधनिश्चयेऽपि । एवं वक्ष्यमाणप्रकारेण । क्रमोऽनुक्रमः । बोध्यः । साक्षात्कृष्णस्य । निश्चयः । आदौ प्रथमतः । इन्द्रियेषु । भवति जायते । ततस्तदनन्तरम् । अन्तःकरणेषु मनआदिषु च । भवति ॥१४॥

स इति । ततस्तदनन्तरम् । स भगवन्निश्चयः । जीवे । भवेत् । इत्यमुना प्रकारेण । हरिणा । उक्ते सति । पुनर्भूयः । नित्यानन्दो मुनिः । तं श्रीहरिम् । पप्रच्छ । हे हरे ! । निश्चयम् । क्रमादनुक्रमतः । लक्षय लक्षणैर्बोधय ॥ १५ ॥ इममर्थं पुनः स्पष्टमाह । इन्द्रियेष्विति । सः । निश्चयः । इन्द्रियेषु । कथं केन प्रकारेण । ज्ञेयः । अन्तःकरणे । कथम् । ज्ञेयः । जीवे च । कथं । ज्ञेयः । इतीत्थम् । पृष्टो नित्यानन्दमुनिनानुयुक्तः । हरिः । अब्रवीत् ॥ १६ ॥ पदार्था इति । हे मुने ! । अत्र लोके । इन्द्रियैश्चक्षुरादिभिः । ग्राह्याः । ये । शुभाशुभाः शुभा अशुभाश्च । सुखदाः । दुःखदाः । योग्यायोग्या योग्या अयोग्याश्च । प्रियाप्रियाः प्रिया अप्रियाश्च । पदार्थाः । सन्ति ॥ १७ ॥ सर्वानिति । सर्वानपि । तान् पदार्थान् । कृष्णे । दृष्ट्वाऽपि । कोऽपि । संशयः । न भवेत् । एवंविधः । यः । निश्चयः । स निश्चयः । इन्द्रियेषु । ईयतां बुध्यताम् । अस्यायं भावः । शुभा युधिष्ठिरद्वारा धर्मप्रवर्त्तनादयोऽशुभास्तद्द्वाराछद्मादिना भूभारभूतनृपनिकन्दनादयः सुखदा अम्भौ द्वारिकानिर्माणादयो दुःखदा नृपैर्वैरबन्धनादयो योग्या यातावला व्रजं काममित्युक्त्यादयोऽयोग्यास्ताभी रमणरूपादयः प्रिया अघासुराद्यसुरेभ्यो गोपबालावना-

स भवेच्च ततो जीव इत्युक्ते हरिणा पुनः । पप्रच्छ नित्यानन्दस्तं निश्चयं लक्षय क्रमात् ॥ १५ ॥
इन्द्रियेषु कथं चान्तःकरणे निश्चयः कथम् । जीवे च स कथं ज्ञेय इति पृष्टोऽब्रवीद्धरिः ॥ १६ ॥
पदार्था इन्द्रियैर्ग्राह्याः सन्ति येऽत्र शुभाशुभाः । सुखदा दुखदाश्चापि योग्यायोग्याः प्रियाप्रियाः ॥ १७ ॥
सर्वान् दृष्ट्वापि तान् कृष्णे भवेत्कोऽपि न संशयः । एवंविधो निश्चयो य इन्द्रियेषु स इयताम् ॥ १८ ॥
शमाद्याः सात्विकाभावाः कामाद्या राजसास्तथा । क्रोधाद्यास्तामसा ये च दृश्यन्ते मनुजेष्विह ॥ १९ ॥
नराकृतौ भगवति तान् दृष्ट्वाऽपि न मानसे । संशयः स्याद्यदि तदा ज्ञेयः आन्तरनिश्चयः ॥ २० ॥

दयोऽप्रिया मातुलकंसवधादय एवमादीन्मनुष्यसमानान् भावान्कृष्णे विक्षेयमस्य श्रोतृवक्तृजनमङ्गलावहा सर्वा लीला भवतीति विचारपूर्वकं तत्स्वरूपे संशयानुदयरूप इन्द्रियनिश्चयो बोध्य इति ॥ १८ ॥ शमेति । शमाद्याः । सात्त्विकाः सत्त्वगुणकार्यरूपाः । ये । भावा धर्माः । तथा । कामाद्याः । राजसा रजोगुणकार्यरूपाः । ये । भावाः । क्रोधाद्याः । तामसास्तमोगुणकार्यरूपाश्च ये । भावाः । इह लोके । मनुजेषु । दृश्यन्ते ॥ १९ ॥ नरेति । तान् शमाद्यान् गुणकार्यभावान् । नराकृतौ । भगवति । दृष्ट्वापि । यदि । मानसे । संशयः । न स्यात् । तदा । आन्तरनिश्चयोऽन्तःकरणसम्बन्धिनिश्चयः । ज्ञेयः । अस्यायं भावः । गुणकार्याणां शमादीनामन्तःकरणाधारत्वान्नरान्तःकरणेष्विव भगवदन्तःकरणेषु कार्यद्वारा शमादिदर्शने सतीयं भगवतो जनकल्याणहेतुर्लीला भवतीतिविचारपूर्वकं तत्स्वरूपे संशयाऽनुदयोऽन्तःकरणनिश्चयो बोध्य इति । सत्त्वादिगुणकार्यरूपाः शमादय उक्ताः श्रीभागवते । "शमो दमस्तितिक्षेक्षा तपः सत्यं दया स्मृतिः । तुष्टिस्त्यागोऽस्पृहा श्रद्धा ह्रीर्दयादिः स्वनिर्वृतिः । काम ईहा मदस्तृष्णा स्तंभ आशीर्भिदासुखम् । महोत्साहो यशः प्रीतिर्हास्यं वीर्यं बलोद्यमः । क्रोधो लोभोऽनृतं हिंसा याञ्चा दम्भः क्लमः

कलिः । शोकमोहौ विषादार्त्ती निद्राऽऽशा भीरनुद्यमः । सत्वस्य रजसश्चैतास्तमसश्चानुपूर्वशः । वृत्तयो वर्णितप्रायाः" इति ॥ २० ॥ देहेति । स्वतन्त्रस्यापि । भगवतः । ऋषभस्यैव । गर्हितं पुरीषलिप्तगात्रस्यैव दावाग्निदग्धत्वेन दुर्मरणाभासान्निन्दितम् । देहत्यागम् । दृष्ट्वापि । हृदि । संशयः । न भवेत् ॥ २१ ॥ लीलेति । स्वस्यात्मनः । इच्छया । इयम् । लीला । इत्येवम् । यः । निश्चयः । भवेत् । सः । जीवे । जातः । इति । विज्ञेयः । अयं त्रिविधोऽपि निश्चयः । बद्धमूलः । अद्रिनिश्चलोऽचलवदचलः । विज्ञेयः । अस्यायं भावः । निर्विकल्पसमाधिस्थित्यालम्बनपूर्वमात्मन्युन्मत्तादिभावप्रदर्शको भगवान् ऋषभदेवो यथात्मारामाणां गुणातीतस्थितिप्रदर्शनाय कृताश्मकवलमुखरितदीर्घं स्वशरीरं दवाग्निना दाहयन्नवर्त्तत्तथैव साक्षाद्भगवान् यद्याचरेत्तथाप्यात्मनिष्ठस्वभक्तशिक्षणार्था तन्निःश्रेयसकारिणीयं भगवता स्वेच्छया दर्शिता लीलेति विचारपूर्वकं तत्स्वरूपे संशयानुदयो जीवगतो निश्चय इत्येवमिन्द्रियान्तकरणजीवेषु बद्धमूलो निश्चयोऽचलस्थिरो बोध्य इति ॥ २२ ॥ पुनरपीन्द्रियादिगतनिश्चयस्य स्थिरत्वं दृष्टान्तान्तरेणाह । तरीमिति । यथा । तरीं महानौकाम् । श्रिताऽऽलम्ब्यवर्त्तमाना । वार्द्धौ महार्णवोदके । मग्नाऽधोवर्त्तिनिपङ्केऽत्यन्तनिमग्नतां प्राप्ता । स्थूला प्रचुरलोहकृतलादतिमहती । विलायनी भाषायां लाङ्गलबलाडी इत्यादिसंज्ञया प्रसिद्धा । दाशैः कैवर्त्तैः । कष्टुमाकर्षणेन पङ्काद्बहिर्निष्कासयितुम् ।

देहत्यागं भगवतः स्वतन्त्रस्यापि गर्हितम् । ऋषभस्येव दृष्ट्वाऽपि संशयो भवेद्धृदि ॥ २१ ॥ लीलेयमिच्छया स्वस्येत्येवं यो निश्चयो भवेत् । स जीव इति विज्ञेयो बद्धमूलोऽद्रिनिश्चयः ॥ २२ ॥ तरीं श्रिता यथा वार्द्धौ मग्ना स्थूला विलायनी । कष्टुं न शक्यते दाशैस्तथाऽसावपि कैश्चन ॥२३॥ चैतन्यानन्दसाधुस्तमथापृच्छत्प्रभो भवान् । गुणातीतोऽक्षरातीतो ह्यस्ति वाङ्मनसात्परः ॥ २४ ॥ स कथं मायिकैस्तत्त्वैर्भुवि साक्षादवाप्यते । इति पृष्टोऽवदत्कृष्ण आदौ वच्मि त्वदाशयम् ॥ २५ ॥ देहेन्द्रियान्तःकरणैः साकं तेषां प्रकाशकः । तिरोभवति जीवोऽपि सुषुप्तौ यर्हि तर्हि तम् ॥ २६ ॥

न शक्यते । तथा । असाविन्द्रियादिगतो भगवन्निश्चयः । कैश्चन लोकैः शास्त्रैः पाषण्डैर्वापि कष्टुम् । न शक्यते । भक्तं ततश्चालयितुं लोकादयः समर्था न भवन्तीत्यर्थः ॥ २३ ॥ चैतन्यानन्दसाधुः । तं श्रीहरिम् । अपृच्छत् । हे प्रभो ! । भवान् साक्षाच्छ्रीहरिस्त्वम् । गुणातीतो मायोत्पन्नसत्त्वादिगुणकार्यतत्त्वसम्बन्धवर्जितमूर्त्तिः । अक्षरातीतस्तथाविधात्सर्वपरादक्षरादपि स्वरूपस्वभावादिभिरत्यन्तविलक्षणः । अत एव । वाङ्मनसादिन्द्रियान्तःकरणात् । परः । 'यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सहे'ति श्रुतेः । अस्ति । हि ॥ २४ ॥ स इति । स इत्थंभूतमहिमो भवान् । मायिकैर्मायोत्पन्नैः तत्त्वैस्तत्त्वकार्यदेहेन्द्रियान्तःकरणैः । जनानामिति शेषः । भुवि । साक्षात्प्रत्यक्षतया । कथं केन प्रकारेण केन हेतुना वा । अवाप्यते । इत्यमुना प्रकारेण । पृष्टश्चैतन्यानन्दमुनिनानुयुक्तः । साक्षात्स्वयं श्रीहरिकृष्णो भगवान् । अवदत् । हे मुने ! । आदौ । त्वदाशयं भवदभिप्रायम् । वच्मि । त्वत्प्रश्नस्फुटविवेचनपूर्वं हार्दं वदामीत्यर्थः ॥ २५ ॥ देहेति । हे मुने ! । तेषां देहेन्द्रियान्तःकरणानाम् । प्रकाशकश्चेतयिताऽपि । जीवः । यर्हि । सुषुप्तावेतत्संज्ञावस्थायाम् । देहेन्द्रियान्तःकरणैर्देहादिभावैः । साकम् । तिरोभवति लीयते । देहादीनां विद्यमानत्वेऽप्यत्र तदहंभावलय एव तल्लय इत्युच्यते । तर्हि । तं तथाभूतं जीवम् ॥ २६ ॥

अन्तरिति । अन्तःस्थस्तस्यान्तर्यामितयावस्थितः । निर्गुणः स्वयं तु गुणातीतः । भगवान् श्रीहरिरेव । प्रकाशयति तामसकर्मफलरूपान् भोगानव्यक्ततया जीवमनुभावयतीत्यर्थः । तथा । प्रभुरेवंविधसामर्थ्यवान् । सोऽन्तर्यामिभगवान् । स्वप्ने स्वप्नावस्थायामपि । स्वाप्नभोगैः सह । जीवम् । प्रकाशयति राजसकर्मफलभूतान् स्वाप्नभोगैः सह । जीवम् । प्रकाशयति राजसकर्मफलभूतान् स्वाप्नभोगान् जीवमनुभावयतीत्यर्थः । इति द्वयोरेकान्वयः ॥ २७ ॥ जाग्रदिति । एवममुना प्रकारेणैव । विश्वात्मा सकलविश्वान्तर्वर्त्तिजीवान्तर्यामी । स्वप्रकाशः स्वतःप्रकाशपर्यायज्ञानवान् । अखिलेश्वरः । प्रभुः । जाग्रति जाग्रदवस्थायामपि । जाग्रद्भोगैः सह । आत्मानं जीवम् । प्रकाशयति । सात्त्विककर्मफलभूतान् जागद्भोगान् जीवमनुभावयतीत्यर्थः ॥ २८ ॥ य इति । यः । स्वयंभगवान् । एवममुना प्रकारेण । रूपिणं जाग्रत्स्वप्नयोर्देहेन्द्रियादिभावसहितम् । अरूपिणं सुषुप्तौ देहेन्द्रियादिभावरहितमपि । जीवम् । प्रकाशयति । असावेव भगवान् । अखिलानि सकलानि । तत्त्वानि प्रधानमहत्तत्त्वाहंकारेन्द्रियादीनि । चापि । प्रकाशयति ज्ञानप्रदानेन स्वस्वकार्यक्षमाणि करोति ॥२९॥ तत्त्वैरिति । स भगवान् । तत्त्वैः प्रधानादिभिः । स्वस्वांशरचितं स्वस्वकार्योत्पादि-

अन्तःस्थो भगवानेव प्रकाशयति निर्गुणः । स्वप्नेऽपि स तथा जीवं स्वप्नभोगैः सह प्रभुः ॥ २७ ॥ जाग्रद्भोगैः सहात्मानमेवं जाग्रत्यपि प्रभुः । प्रकाशयति विश्वात्मा स्वप्रकाशोऽखिलेश्वरः ॥ २८ ॥ य एवं रूपिणं जीवमरूपिणमपि स्वयम् । प्रकाशयत्यसावेव तत्त्वान्यप्यखिलानि च ॥ २९ ॥ तत्त्वैः स्वस्वांशरचितं विराजं चैतदाश्रयम् । मायां प्रकाशयति च कालं तत्क्षोभकं च सः ॥ ३० ॥ एतादृशो हि भगवांस्तत्त्वैर्ग्राह्यः कथं भवेत् । इति प्रश्नाशयस्तेऽस्ति शृणु तस्योत्तरं मुने ! ॥ ३१ ॥ उत्पत्तिस्थितिसंहारान्करोति जगतः प्रभुः । सुखायैव हि जीवानां नात्र स्वार्थोऽस्य कश्चन ॥ ३२ ॥ बुद्धीन्द्रियमनःप्राणान् जनानामसृजत्प्रभुः । मात्रार्थं च भवार्थं च ह्यात्मने कल्पनाय च ॥ ३३ ॥

तम् । विराजं विराट्देहाभिमानिनं वैराजपुरुषम् । प्रकाशयति । एतदाश्रयं प्रलयकाले एतेषां सर्वेषामाश्रयभूताम् । मायाम् । प्रकाशयति । तत्क्षोभकं सृष्टिसमये मायायाः । संक्षोभकारकम् । कालं च । प्रकाशयति ॥ ३० ॥ एतादृश इति । एतादृशः कालमायादिप्रकाशकः । भगवान् । तत्त्वैस्तत्त्वकार्यभूतैर्जनानां देहेन्द्रियान्तःकरणैः । ग्राह्यउपादेयः । कथम् । भवेत् । नहि प्रकाशकः प्रकाश्यविषयो भवतीत्यर्थः । हे मुने ! । इत्येवंविधः । ते तव । प्रश्नाशयः । अस्ति । तस्य तथाविधस्य प्रश्नस्य । उत्तरम् । शृणु ॥ ३१ ॥ उत्पत्तीतिः । प्रभुः साक्षाच्छ्रीकृष्णः । जीवानाम् । सुखाय । जगतो विश्वस्य । उत्पत्तिस्थितिसंहारान् । करोति । अत्रोत्पत्त्यादिकरणे । अस्य प्रभोः । कश्चन कश्चिदपि । स्वार्थः । नहि नैव विद्यते ॥ ३२ ॥ बुद्धीति । प्रभुः । जनानाम् । बुद्धीन्द्रियमनःप्राणान् । मात्रार्थं मीयन्ते जीवैः करणद्वारानुभूयन्ते इति मात्रा विषयास्तदर्थम् । भवार्थं भूयते सत्कर्मभिर्देवादियोनिषु प्रादुर्भूयते इति भवो जन्म तदर्थम् । आत्मने परमात्मप्राप्तिलक्षणमोक्षार्थम् । कल्प्यते धर्मादिसम्पादनार्थं समर्थी भूयतेऽनेनेति कल्पनमर्थस्तदर्थम् । कामधर्ममोक्षार्थाख्यपुरुषार्थसिध्यर्थमित्यर्थः । असृजत् ॥ ३३ ॥

इतीति । इत्येवंविधे । भागवतश्लोके । पुरुषार्थचतुष्टयम् । जीवान् । प्रापयितुम् । ईशः परमेश्वरः । सृष्टिम् । करोति । प्रलयकाले स्वस्वकर्माण्युपादाय मायायां लीलान् जीवान् सृष्टिकाले यथाकर्म देहेन्द्रियादीन्प्रापयतीत्यर्थः । इतीत्थम् । ईरितं कथितम् ॥ ३४ ॥ पुनरपि स्फुटत्वोधायेोक्तार्थमनुवदति । सृष्टिरिति । तत्कृता सृष्टिः । जीवानाम् । सुखाय । अस्ति । तत्कृता स्थितिश्चापि । तादृशी जीवसुखार्था । अस्ति । तत्कृतो भगवता विहितः । लयः प्रलयोऽपि । सृतिखिन्नानां जन्ममरणप्रवाहलक्षणसंसारखेदयुक्तानां जीवानाम् । विश्रामाय दिवाकार्यभारखिन्नानां रात्रिरिव श्रमापोहतायेत्यर्थः । अस्ति ॥ ३५ ॥ एवमिति । एवममुना प्रकारेण । प्रभुः । जीवानाम् । हिताय । सदा । प्रवृत्तः । अस्ति । स तु स एव भगवान् । तेषां जीवानाम् । कल्याणायैव । महत्या । कृपया ॥ ३६ ॥ यदेति । यदा । नराकृतिः । भूत्वा । नरवत् । क्रियाः । कुरुते । तदा । भुवि मानवाः । सत्सङ्गं नराकृतिसाक्षाद्भगवत्प्राप्तसाधुसमागमम् । विधाय कृत्वा । तं नराकृतिं भगवन्तम् । विदुरयमेवाक्षरधामाधिपतिः स्वयंपुरुषोत्तमो भगवानस्तीति जानन्ति । इति द्वयोरेकान्वयः ॥ ३७ ॥ ननु प्राकृतदेहेन्द्रियभाववन्तो जना अप्राक-

इति भागवतश्लोके पुरुषार्थचतुष्टयम् । जीवान्प्रापयितुं सृष्टिं करोतीश इतीरितम् ॥ ३४ ॥ सृष्टिः सुखाय जीवानां
स्थितिश्चाप्यस्ति तादृशी । लयोऽपि सृतिखिन्नानां विश्रामायास्ति तत्कृतः ॥ ३५ ॥ एवं हिताय जीवानां प्रवृतो-
ऽस्ति सदा प्रभुः । कल्याणायैव तेषां च महत्या कृपया स तु ॥ ३६ ॥ यदा नराकृतिर्भूत्वा नरवत्कुरुते क्रियाः ।
तदा विधाय सत्सङ्गं तं विदुर्मानवा भुवि ॥ ३७ ॥ जना जानन्तु मां सर्व इतीच्छैवास्ति यत्प्रभोः । तत एव च तं
साक्षात्पश्यन्ति प्राकृता अपि ॥३८॥ इत्युक्ते हरिणा साधुर्भजनानन्द आह तम् । एवं चेत् किं न बाधेत यतो वाच
इति श्रुति ॥ ३९ ॥ तमुवाच हरिर्यद्वत्पृथिव्यादिचतुष्टयम् । अप्याकाशे वर्त्तमानं तद्भावं तु न याति हि ॥ ४० ॥

तदेहेन्द्रियभाववन्तं भगवन्तं सत्सङ्गाचरणमात्रेण कथं जानन्ति पश्यन्ति चेत्याशङ्कायां तथाविधतदिच्छयैव ते तं जानन्ति पश्यन्ति चेत्याह । जना इति । यद्यस्माद्धेतोः । सर्वे । जनाः । माम् । जानन्तु सत्सङ्गाचरणमात्रेण । मामवगच्छन्तु पश्यन्तु च । इत्येवंविधा । प्रभोर्नृनाट्यधृतो भगवतः । इच्छा सङ्कल्प एव । अस्ति । ततो हेतोः । प्राकृता मायिकदेहेन्द्रियभाववन्तो जना अपि । तं प्रभुम् । साक्षात्प्रत्यक्षतयैव । पश्यन्ति । जानन्ति च ॥ ३८ ॥ इतीति । इत्यमुना प्रकारेण हरिणा । उक्ते सति । भजनानन्दः साधुः । तं श्रीहरिम् । आह । हे हरे ! । एवंचेदिच्छयाऽपि भगवतः सर्वनयनगोचरत्वं चेत् । तर्हि । यतो वाच इति श्रुतिः यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सहेति निगमवाक्यम् । किम् । न बाधेत । बाधयुक्ता न भविष्यति किमपि तु भविष्यत्येवेत्यर्थः ॥ ३९ ॥ तमिति । तमेवंवदन्तं भजनानन्दसाधुम् । हरिः । उवाच । हे साधो ! । यद्वद्यथा । आकाशे । वर्त्तमानं साम्प्रतं स्थितिसमये आकाशावस्थितमपीत्यर्थः । पृथिव्यादिचतुष्टयं पृथ्व्यप्तेजोवायवः । तद्भावमाकाशस्य सूक्ष्मतां त्वित्यर्थः । न याति न प्राप्नोति । हि ॥ ४० ॥

वागिति । तथैव । वागादीनि श्रुत्युक्तजनेन्द्रियान्तःकरणानि । ईशं परमेश्वरभावम् । नाप्नुवन्ति । इत्येवम् । सा श्रुतिः । वदति । इति हेतोः । न बाधः बाधो नैवास्ति । पृथिव्यादिचतुर्णां भूतानामाकाशभावाभावाद्यथानाकाशगोचरत्वं तथा परमेश्वरापेक्षया वागादीनामतिस्थूलत्वान्न भगवद्विषयत्वमिति भावः । अथैवंविधश्रीहरिवाक्यश्रवणानन्तरम् । नित्यानन्दो मुनिः । तं श्रीहरिम् । अब्रवीत् ॥ ४१ ॥ निरञ्जन इति । हे हरे ! । निरञ्जनः । सन् । परमम् । साम्यम् । यात्युपैति । इत्येतदर्थप्रतिपादिका । श्रुति र्निरञ्जनः परमं साम्यमुपैतीति वेदवचनम् । अस्ति । ज्ञानतपसा । पूताः । मद्भावम् । आगताः । इत्येदर्थप्रतिपादिका । स्मृतिः बहवो ज्ञानतपसा पूता मद्भावमागता इति स्मृतिवचनम् । चास्ति ॥ ४२ ॥ वागिति । हे प्रभो ! । वागादीनाम् । अतद्भावे भगवत्स्वरूपस्यागोचरत्वे सति । एतयोरुक्तश्रुतिस्मृत्योः । बाधः स्यात् । हरे ! यतो वाच इत्यस्याः श्रुतेर्भवत्कृतार्थांगीकृतौ मदुक्तश्रुतिस्मृत्योरुक्तस्य भवत्स्वरूपेन्द्रियगोचरत्वस्य विद्यमानत्वादुभयविधवाक्ययोः परस्परं विरोध आयायादित्यर्थः । इत्यमुना प्रकारेण । उक्तो नित्यानन्दमुनिना कथितः हरिः । तं नित्यानन्दमुनिम् । ऊचे । हे मुने ! । स वागादीनामतद्भावः । अभक्तदेहिनाम् ।

वागादीनि तथैवेशं नाप्नुवन्तीति सा श्रुतिः । वदतीति न बाधोऽथ नित्यानन्दस्तमब्रवीत् ॥ ४१ ॥
निरञ्जनः स परमं साम्यं यातीति हि श्रुतिः । स्मृतिश्च ज्ञानतपसा पूता मद्भावमागताः ॥ ४२ ॥
वागादीनामतद्भावे बाधः स्यादेतयोः प्रभो ! । इत्युक्तो हरिरूचे तं स प्रोक्तोऽभक्तदेहिनाम् ॥ ४३ ॥
भक्तानां त्विन्द्रियादीनि तद्भावं यान्ति सर्वथा । खस्थं यथा खतां याति लये क्ष्मादिचतुष्टयम् ॥ ४४ ॥
दिव्यमूर्तेर्भगवतः सम्बन्धादिन्द्रियादिकम् । दिव्यतां याति भक्तस्य ततस्तन्नैव मायिकम् ॥ ४५ ॥
कीटः पेशस्कृता दष्टो याति तत्समतां यथा । तथैव कृष्णसंदष्टो भक्तोऽप्यत्र न संशयः ॥ ४६ ॥

प्रोक्तो मया कथितः ॥ ४३ ॥ भक्तानामिति । भक्तानाम् । इन्द्रियादीनि तु । लये प्रलयकाले । खस्थमाकाशावस्थितम् । क्ष्मादिचतुष्टयं पृथिव्यादीनि चत्वारि महाभूतानीत्यर्थः । खतामाकाशभावम् । यथा । याति प्राप्नोति । तथा । तद्भावं भगवद्भावम् । सर्वथा । यान्ति । अस्यायं भावः । स्थितिकाले पृथिव्यादीनि भगवदिच्छाया अभावादाकाशभावमनाप्नुवन्ति सन्त्याकाशं न विषयी कुर्वन्ति प्रलयकाले तानि भगवदिच्छया तद्भावापत्त्या यथा तं विषयी कुर्वन्ति तथा भगवत्प्रादुर्भावकाले भगवदिच्छाया बलवत्तरत्वात्साधुद्वाराभगवत्प्रेरितेच्छया भक्तेन्द्रियाणि भगवद्भावं प्राप्य तत्स्वरूपग्रहणसमर्थानि भवन्ति । अभक्तेन्द्रियाणां तथात्वाभावात्तानि भगवत्त्वेन तद्ग्रहणक्षमाणि न भवन्त्येवमुभयवाक्यपरस्परविरोधपरिहार इति ॥ ४४ ॥ इममर्थमेव दृष्टान्तप्रदर्शनेन स्फुटमाह द्वाभ्याम् । दिव्येति । हे मुने ! । भक्तस्य । इन्द्रियादिकम् । दिव्यमूर्त्तः । भगवतः साक्षाद्धरेः । सम्बन्धात्तत्साधुद्वारासंयोगात् । दिव्यताम् । याति । ततो हेतोः । तद्भक्तेन्द्रियादिकम् । मायिकम् । नैवास्ति । किन्त्वमायिकमेव जातमस्तीत्यर्थः ॥ ४५ ॥ कीट इति । यथा । कीटः । पेशस्कृता । दष्टः सन् । तत्समतां पेशस्कृतः समभावम् । याति ।

तथैव । भक्तोऽपि । अत्र सत्सङ्गे । कृष्णसंदृष्टः साधुद्वारासाक्षाद्भगवत्संवीक्षितः सन् । तत्समताममायिकभावम् । याति । न संशयोऽत्र संशयो नास्ति ॥ ४६ ॥ साम्यमिति । कृष्णमूर्त्या साक्षाच्छ्रीहरिमूर्त्तिसम्बन्धेन । देहेन्द्रियादीनाम् । यत् । साम्यं दिव्यत्वम् । ईरितम् । तत्साम्यम् । आत्मनिष्ठभक्तस्य । ज्ञेयम् । अथवा । परं केवलम् । भक्तस्यात्मनिष्ठारहितत्वेऽपि भगवन्माहात्म्यज्ञानपूर्वं तस्मिन्निरतिशयप्रेमवतो भक्तस्य । ज्ञेयम् ॥ ४७ ॥ केवलमिति । केवलम् । आत्मनिष्ठस्य कैवल्यार्थिनः । पुंसो भक्तस्य तु । तद्भगवत्साम्यम् । नैव । भवेत् । स आत्मनिष्ठो भक्तस्तु । आत्मना । केवलमेकाम् । ब्रह्मसत्तां निराकाराक्षरभावमेव । याति । पूर्वोक्तभक्तौ त्वक्षरधाम्न्यक्षरभावमापन्नौ सन्तौ पार्षदप्रवरतया तत्सेवायां तिष्ठत इति ज्ञेयम् ॥ ४८ ॥ निशम्येति । इत्येवंविधाम् । सुधोपमाममृततुल्यनाम् । धर्मसूनोः । श्रीहरेः । वाणीम् । निशम्य । तद्भक्तिभाजः श्रीहरेरेकान्तिकभक्तिं कुर्वाणाः । अत एव । तदेकचित्ताः श्रीहरिस्वरूपैकमानसाः । ते सभोपविष्टाः । सकलाः । सन्तो नित्यानन्दादयो मुनयः । चकारात्सभोपविष्टा गृहिणो भक्ताश्च । अतिमुदम् । प्रपद्य प्राप्य तं श्रीहरिम् । आनमन्ति स्म ॥ ४९ ॥ वेद्यं स्वभक्तैर्ज्ञानं यत्स्वस्य ग्राहाञ्जसा

साम्यं देहेन्द्रियादीनां कृष्णमूर्त्या यदीरितम् । तदात्मनिष्ठभक्तस्य ज्ञेयं वा परम् ॥ ४७ ॥ केवलं ह्यात्मनिष्ठस्य पुंसस्तु नैव तद्भवेत् । स तु याति ब्रह्मसत्तामेव केवलमात्मना ॥ ४८ ॥ निशम्य वाणीमिति धर्मसूनोः सुधोपमां ते सकलाश्च सन्तः । तद्भक्तिभाजोऽतिमुदं प्रपद्य तमानमन्ति स्म तदेकचित्ताः ॥४९॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते सप्तनवतितमस्तरङ्गः ॥ ९७ ॥ १ ॥

शकाब्दे विक्रमार्कस्य नगाश्ववसुभूमिते । इषशुक्लद्वितीयायां वचोऽमृतमिदं हरेः ॥ १ ॥
तत्र कार्यायने वास्तोरुदगास्यस्य वेश्मनः । वेद्यां न्यषीदत्पीठेऽसौ सितवासा वृतो निजैः ॥ २ ॥

हरिः । यः स ब्रह्मपुरंशो मे देयात्तद्भक्तिधर्मजः ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्सूनुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां सप्तनवतितमस्तरङ्गः ॥ ९७ ॥ १ ॥

सतां दोषग्रहा बुद्धिः शप्ता दुष्टा च या तु सा । यैः साश्वनैर्विशुद्धा स्यात्तान्युक्तानि द्वितीयके ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८७७) इषशुक्लद्वितीयायामश्विनमासस्य शुक्लपक्षागतद्वितीयातिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । कार्यायने कार्यायनग्रामे । वास्तोर्नृपस्य । दुर्गे इति शेषः । उदगास्यस्य । वेश्मनस्तस्यैव भवनस्य । वेद्यां वहिर्वेदिकायाम् । पीठे स्वास्तृतमश्वोत्तमासने । सितवासाः परिधृतसकलश्वेतवसनः । निजैर्नानादेशायातैस्त्यागिगृहिभिरात्मीयभक्तजनैः । वृतः सभायां परिवेष्टितः । असौ श्रीहरिः । न्यषीदत् ॥ २ ॥

प्रश्नेति । तत्सभायां तस्यां सदसि । वयोवरा मुक्तानन्दादिमुनिवयोऽपेक्षया वयसातिकनिष्ठाः । सन्तः शिवानन्दादयः शास्त्राध्येतारो मुनयः । तदाज्ञया श्रीहरिनिदेशेन । प्रश्नोत्तराणि प्रश्नाचरणतत्प्रतिवचनविधापानि । विदधुश्चक्रुः । अथैवंविधावसरे । असौ श्रीहरिः । शिवानन्दमुनिम् । पृच्छन्ति स्म तत्प्रतिभावावबोधाय पृच्छत ॥ ३ ॥ अस्तीति । हे मुने ! । एकः । मतिमान् । साधुः । अस्ति । सः । यद्दिने यस्मिन्दिवसे । सत्सङ्गः । कृतः । ततस्तस्माद्दिनात् । आरभ्य हरेः । तत्सतां च । माहात्म्यम् । वेद यथार्थतया जानाति ॥ ४ ॥ किन्त्विति । किन्तु । स साधुस्तु । साधुषु साक्षाद्भगवदाश्रितसत्सु । ईक्ष्यमाणम् । गुणम् । दोषम् । पृथक् । गृह्णीयात् । तयोः साधुषु स्वेक्षितयोर्गुणदोषयोर्मध्ये । अगुणं दोषम् । गृहीत्वाऽपि । धिया विवेकवत्या स्वबुद्ध्या । त्यजेत् ॥ ५ ॥ ताविति । स साधुः । तौ गुणदोषौ । नित्यम् । गृह्णन्नपि । सतां साधूनाम् । सङ्गम् । नहि नैव त्यजेत् । यतो हेतोः । तन्माहात्म्यं साधूनां महिमानम् । तादृग्दुर्लभतां तथाविधसाधूनां दुष्प्रापतामपि । वेत्ति ॥ ६ ॥ एकस्येति । एकस्यान्यस्य साधोः । 'एके मुख्यान्य केवला' इत्यमरः । हृदि तु । क्वापि कदाचिदपि । सताम् । अगुणः ।

प्रश्नोत्तराणि विदधुस्तत्सभायां वयोवराः । सन्तस्तदाज्ञयाऽथासौ शिवानन्दं स्म पृच्छति ॥ ३ ॥ अस्त्येको मतिमान्साधुः सत्सङ्गो यद्दिने कृतः । तत आरभ्य माहात्म्यं हरेर्वेद च तत्सताम् ॥ ४ ॥ किन्तु साधुष्वीक्ष्यमाणं गुणं दोषं पृथक् स तु । गृह्णीयादगुणं तत्र गृहीत्वाऽपि त्यजेद्धिया ॥ ५ ॥ तौ गृह्णन्नपि नित्यं स त्यजेत्सङ्गं सतां न हि । तन्माहात्म्यं यतो वेत्ति तादृग्दुर्लभतामपि ॥ ६ ॥ एकस्य तु हृदि क्वापि प्रविशेन्नागुणः सताम् । एवं द्वौ भवतो भक्तौ तुल्यप्रज्ञेशनिश्चयौ ॥ ७ ॥ तत्रापरः श्रेष्ठ एव सद्दोषाग्रहणान्मतः । आद्यस्य दोषग्रहणे सतां किं कारणं वद ॥ ८ ॥ इत्युक्ते हरिणा साधुः शिवानन्दो यदोत्तरम् । कर्तुं न शेके भगवदानन्दस्तं तदाऽब्रवीत् ॥९॥ सद्दोषग्राहिणः पुंसो मतिस्त्वस्यास्ति केनचित् । शप्ता तपस्विनेत्येव भात्यत्रोत्तरमीश्वर ! ॥१०॥ तमुवाच हरिः साधो ! युक्तं दत्तं त्वयोत्तरम् । अनिक्रमेण महतां धीः सतोऽपि प्रदुष्यति ॥ ११ ॥

न प्रविशेत् । एवमेवंविधौ । द्वौ साधू । तुल्यौ समानौ प्रज्ञेशनिश्चयौ बुद्धिबलभगवत्स्वरूपनिर्णयौ ययोस्तौ तथाभूतौ । भक्तौ साक्षाद्भगवदुपासकौ । भवतः ॥ ७ ॥ तत्रेति । तत्र तयोर्द्वयोर्मध्ये । अपरोऽन्यः । सद्दोषाग्रहणाद्धेतोः । श्रेष्ठ एव । मतः । आद्यस्य प्रथमस्य । सताम् । दोषग्रहणे । किं कारणम् । सद्दोषग्रहणोपात्ताश्रेष्ठत्वस्यास्य सद्दोषग्रहणवद्बुद्धिमत्त्वे को हेतुरस्तीत्यर्थः । तत् । वद ब्रूहि ॥८॥ इतीति । इत्यमुना प्रकारेण । हरिणा । उक्ते सति । शिवानन्दः । साधुः । यदा । उत्तरम् । कर्तुम् । न शेके शक्तो नाभूत । तदा । भगवदानन्दः साधुः । तं श्रीहरिम् । अब्रवीत् ॥ ९ ॥ सदिति । हे ईश्वर ! । सद्दोषग्राहिणः । अस्य । पुंसः साधोः । मतिस्तु । केनचित् । तपस्विना साधूना । शप्ता । निर्निमित्तं स्वातिपीडाकरमेनं व्यालक्ष्य दुःखितान्तःकरणः कश्चित्तपस्व्येनमशपत्स एवास्यैवंविधत्वे हेतुरित्यर्थः । इत्येवैवंविधमेव । अत्र त्वत्प्रश्ने । उत्तरम् । भाति प्रतिभासते ॥ १० ॥ तमिति । तमेवमुत्तरं वदन्तं भगवदानन्दसाधुम् । हरिः । उवाच । हे साधो ! । त्वया ।

युक्तं योग्यम् । उत्तरम् । दत्तम् । यतः । महतां तपआदिगुणगरिष्ठानां साधूनाम् । अतिक्रमेणापराधजातशापेन । सतः साधोरपि । श्रीमतिः प्रदुष्यति सद्दोषग्रहणरूप-दोषयुक्ता जायते इत्यर्थः ॥ ११ ॥ एवं सद्दोषग्रहणशीलमतित्वे सामान्यतः सदतिक्रमं हेतुमुक्त्वा न केवलमर्दिताः सन्त एव शापप्रदातारः किन्त्वर्दितास्ते तथाभूतो दीनोऽसेवितौ पितरौ चापि शापं ददते तेनापि दोषधीर्भवतीत्याह स्वेति । हे मुने ! । स्वार्दितस्य स्वेन निर्निमित्तं पीडितस्य । सतः साधोः । शापात् । अथवा । अत्र लोके । स्वार्दितस्य दुर्बलस्यातिरङ्कस्य । नुः पुंसः । शापादपि । अथवा । अशुश्रूषितयोः सेवासमर्थेनापि पुत्रेणासेवितयोः । पित्रोर्मातृपित्रोः । शापात् । दोषधीः सद्दोषग्रहणमतिः । भवेत् ॥ १२ ॥ अथो इति । अथो एवंविधश्रीहरिवाक्यश्रवणानन्तरम् । भगवदानन्दः साधुः । तं श्रीहरिम् । पप्रच्छ । हे महाप्रभो ! । पुंसः । शापदुष्टा । मतिः । पूर्वसम्प्राप्ततच्छापसञ्जातसद्दोषग्रहणदोषाबुद्धिरित्यर्थः । भूयः पुनरपि । शुद्धा तद्दोषरहिता । कथं केनोपायेन । भवेत् ॥ १३ ॥ तमिति । तमेवंपृच्छन्तं भगवदानन्दसाधुम् । हरिः । प्रोवाच । हे साधो ! । सैवंशापदूषिता । मतिस्तु । नित्योद्युक्तस्य तदपोहे नित्योद्योगिनः । पुसो भक्तस्य । प्रबलैर्बलवत्तरैः ।

स्वार्दितस्य सतः शापाद्दुर्बलस्यात्र वापि नुः । अशुश्रूषितयोः पित्रोः शापाद्वा दोषधीर्भवेत् ॥ १२ ॥
अथो भगवदानन्दस्तं पप्रच्छ महाप्रभो ! । शापदुष्टा मतिर्भूयः पुंसः शुद्धा कथं भवेत् ॥ १३ ॥
तं प्रोवाच हरिः सा तु साधनैः प्रबलैर्मतिः । नित्योद्युक्तस्य शुद्धा स्यात्र तु पुसः प्रमादिनः ॥ १४ ॥
स्याद्याद्दृग्मलिनं वस्त्रं तादृक् तत्क्षालनं मतम् । नैवातिमलिनं तत्स्यादल्पक्षालनतोऽमलम् ॥ १५ ॥
एवं शापातिमलिनाबुद्धिः साधारणेन तु । न साधनेन शुद्धा स्यात्किन्तु भूरितरेण हि ॥ १६ ॥
अहिंसाब्रह्मचर्यादीन् पालयन्ति यमानिह । सन्तस्तपोजपादींश्च नियमानपि ये दृढम् ॥ १७ ॥

साधनैः । शुद्धा । स्यात् । प्रमादिनस्तदपोहाल्पोद्योगस्य । पुसो भक्तस्य । न तु सा मतिः शुद्धा नैव स्यात् ॥ १४ ॥ इममेवार्थं दृष्टान्तेन विशदयति द्वाभ्याम् । स्यादिति । हे साधो ! । वस्त्रम् । यादृग्मलिनं यथाविधमलयुक्तम् । स्यात् । तत्क्षालनं तथाविधवस्त्रधावनम् । तादृक् तथाविधोपायवत् । मतम् । यतः । अतिमलिनम् । तद्वस्त्रम् । अल्पक्षालनतः । अमलं निर्मलम् । नैव स्यात् ॥ १५ ॥ एवमिति । एवममुना प्रकारेण । शापातिमलिना शापेन मलिनतातिशयवती । बुद्धिः । साधारणेन सामान्येन । साधनेन । शुद्धा । न तु नैव स्यात् । किन्तु । भूरितरेणातिशयितेन साधनेन शुद्धा । स्यात् हि ॥ १६ ॥ एतदेव विशेषेणाह त्रिभिः । अहिंसेति । इह सत्सङ्गे । ये । सन्तः साधवः । अहिंसा ब्रह्मचर्यादीन् । यमान् । तपोजपादीन् । नियमांश्चापि । दृढं यथातथा । पालयन्ति । यमनियमा उक्ताः श्रीभागवते । 'अहिंसा सत्यमस्तेयमसङ्गो ह्रीरसञ्चयः । आस्तिक्यं ब्रह्मचर्यं च मौनं स्थैर्यं क्षमाऽभयम् । शौचं जपस्तपो होमः श्रद्धातिथ्यं मदर्चनम् । तीर्थाटनं परार्थेहा तुष्टिराचार्यसेवनम् । एते यमाः सनियमा उभयोर्द्वादशस्मृताः । पुसामुपासितास्तात ! यथाकामं दुहन्ति वै' इति । एते निर्लोभनिष्कामादिसद्धर्माणामुपलक्षणम् ॥ १७ ॥

तैभ्यइति । तेभ्यः साधुभ्योऽपि । शास्त्रधीशुद्धिमिच्छता शापवत्स्वमतिशुद्धतां वाञ्छता साधुना । ते यमनियमाः । विशेषतोऽधिकतया । पालनीयाः । वैराग्यमपि । तेभ्यः । अधिकमतिशयितम् । दृढम् । पालनियम् ॥१८॥ एवमिति । एवममुना प्रकारेण । प्रयतमानस्य यत्नं कुर्वतः साधोः । दुष्कर्ममलिना शापमूलभूतमहदवमानसम्प्राप्तसद्दोषग्रहणरूपमालिन्या । मतिः । कालेन । सताम् । प्रसादतोऽनुग्रहादेव । शुद्धिम् । आप्नोति ॥१९॥ वच इति । इतीत्थंभूतम् । श्रीहरिवक्त्रनिःसृतम् । वचोऽमृतम् । निपीय । सः । साधुर्भगवदानन्दमुनिः । तथा । इतरे सभोपविष्टाः साधवः । गृहस्थलोका । अपिश्चार्थे । तोषं संतोषम् । आप्य सम्प्राप्य । प्राञ्जलयः सन्तः । अतिहर्षितो महानन्देन । तं श्रीहरिम् । ववन्दिरेऽभिवादयांचक्रुः ॥२०॥ स्वभक्तानां दोषमतिः शुद्धा स्यात्साधनैस्तु यैः । तान्याह यः स मे स्वामी निवासं कुरुतान्मतौ ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्पद्मनुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायामष्टनवतितमस्तरङ्गः ॥ ९८ ॥ २ ॥

नृणां गुणागुणानां च परीक्षा दोषनिर्जयः । प्रोक्तः शमदमाभ्यां तु विविच्यैव तृतीयके ॥१॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८७७) इषस्याश्विनमासस्य ।

तेभ्योऽपि शास्त्रधीशुद्धिमिच्छता ते विशेषतः । पालनीयाश्च वैराग्यमपि तेभ्योऽधिकं दृढम् ॥ १८ ॥ एवं प्रयतमानस्य दुष्कर्ममलिना मतिः । कालेन शुद्धिमाप्नोति सतामेव प्रसादतः ॥ १९ ॥ वचोऽमृतं श्रीहरिवक्त्रनिःसृतं निपीय साधुः स इतीतरे तथा । गृहस्थलोका अपि तोषमाप्य तं वन्दिरे प्राञ्जलयोऽतिहर्षतः ॥ २० ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते अष्टनवतितमस्तरङ्गः ॥ ९८ ॥ २ ॥

शकाब्दे विक्रमार्कस्य नगाश्ववसुभूमिते । इषस्यासितसप्तम्यां वचोऽमृतमिदं हरेः ॥ १ ॥ तत्र कार्यायने दुर्गे वास्तुभूपस्य वेश्मनः । वेद्यामस्योदगास्यस्य स न्यषीत्सदासने ॥ २ ॥ सितधोत्रः सितोष्णीषः सितप्रावरणांशुकः । वृतश्च सद्भिर्गृहिभिरनेकैः सोऽब्रवीत्स्वयम् ॥ ३ ॥ सन्तो ये साधुलक्ष्माणः सन्ति ते ह्येव मे प्रियाः तादृशा अपि भूयांसो वर्त्तन्त इह साम्प्रतम् ॥ ४ ॥

असितसप्तम्यां कृष्णपक्षीयसप्तमीतिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥१॥ तत्रेति । तत्र तिथौ । कार्यायने ग्रामे । वास्तुभूपस्य । दुर्गे । अस्य वास्तुभूपस्य उदगास्यस्योदङ्मुखस्य । वेश्मनो भवनस्य । वेद्यां बाह्यायां वितर्द्यां । सदासने सश्वेतोत्तरस्थूलतूलिकास्तृते पार्श्विकोपबर्हवतिशोभने पर्यङ्कासने । स श्रीहरिः । न्यषीददुदङ्मुख उपविवेश ॥ २ ॥ सितेति । सितधोत्रः परिहितश्वेताधोंशुकः । सितोष्णीषः शिरोनिबद्धातिधवलशिरःपटः । सितं वलक्षं प्रावरणांशुकं प्रावारवस्त्रं यस्य स तथाभूतः । अनेकैर्नानादेशागतत्वाद् बहुभिः । सद्भिस्त्यागिभिः । गृहिभिश्च । वृतः । स श्रीहरिः । स्वयं केनाप्यपृष्टः सन्नेव । अब्रवीत् सामान्यतः साधूनुद्दिश्यावदत् ॥ ३ ॥ सन्त इति । हे सन्तः ! । ये । सन्तः साधवः । साधुलक्ष्माणः कृपाल्वादिसाधुलक्षणलक्षिताः । सन्ति । ते साधव एव । मे मम । प्रियाः । सन्ति । हि । तादृशाः साधुलक्ष्माणः । भूयांसो बहवः साधवः । इह सत्सङ्गे । साम्प्रतमपि । वर्त्तन्ते सन्त्येव ॥ ४ ॥

साम्प्रतं वर्त्तन्ते इति यदुक्तं तद्दृढत्वायैकं स्वकृतातिपरीक्षमतिस्वान्तिकावासं साधुमुद्दिश्याह त्रिभिः । बाल इति । अयं मत्पुरोनिषण्णः । शुकमुनिः शुकानन्दः साधुः । बालोऽपि मुक्तानन्दादिमहामुन्यपेक्षयाऽवरवयाः सन्नपि । मुक्तानन्द इव साधुत्वप्रसिद्धिपरमसीमभूतमुक्तानन्दमुनिरिव । अखिलैः समग्रैः । सल्लक्षणैः साधुलक्ष्मभिः । उपेतो युक्तः । भवति । अत एव । मे मह्यम् । चेतसि मानसे । अतीवात्यन्तमेव । रोचते ॥ ५ ॥ संवत्सरा इति । मे मम । समीपे निकटे । वसतोऽव्यवधानेन कृतावासस्य । अस्य शुकमुनेः । बहुशो बहवः । संवत्सरा वर्षाणि व्यतीता अतिक्रान्ताः । तत्र तेषु संवत्सरेषु । सन्मतिः साधुलक्षणसम्पन्नास्य सद्बुद्धिः । वर्द्धमाना यद्दिनमारभ्य मन्निकटे स्थितस्तद्दिनमारभ्य पूर्वपूर्वसंवत्सरादुत्तरोत्तरसंवत्सरेऽतिवृद्धिमत्येवेत्यर्थः । दृश्यते मया साक्षात्स्वत एवानुभूयते ॥ ६ ॥ तस्मादिति । तस्माद्धेतोः । एष शुकमुनिः । अग्रे । महान् महागुणः । साधुवर्यः साधुश्रेष्ठः । भविष्यति । एतदेवंविधमस्य साधुत्वगुणवर्द्धनम् । मया । परिचर्याद् बहुवार्षिकसंस्तवादेव । हृदये । निश्चितं निर्णीतं भवति ॥ ७ ॥ एवं स्वविवक्षितार्थसिद्ध्यै उपोद्घातमुक्त्वा साम्प्रतं स्वविवक्षितार्थं प्रस्तावयति । पुंसामिति । पुंसां भगवद्भक्त-

बालोऽप्ययं शुकमुनिर्मुक्तानन्द इवाखिलैः । सल्लक्षणैरुपेतो मे रोचतेऽतीव चेतसि ॥ ५ ॥ संवत्सरा मे बहुशः समीपे वसतोऽस्य हि । व्यतीताः सन्मतिस्तत्र वर्द्धमानेव दृश्यते ॥ ६ ॥ तस्मादग्रे महानेष साधुवर्यो भविष्यति एतत्परिचयादेव निश्चितं हृदये मया ॥ ७ ॥ पुंसां गुणाश्च दोषा वा सम्यक् परिचयं विना । निश्चेतुं नैव शक्यन्ते केवलं बाह्यलक्षणैः ॥८॥ सन्ति केचिद् भुवि जना बिडालबकवृत्तयः । तान् दृष्ट्वाऽल्पधियः केचिन्मन्यते महतः सतः ॥ ९ ॥ केचिन्निर्मलहृत्कृष्णध्याननिष्ठा जितेन्द्रियाः । अपि स्फारेक्षणत्वाद्यैर्धर्मैः सन्त्याङ्गिकैर्युक्ताः ॥ १० ॥ तेन तान्केचिदल्पज्ञा असाधूनेव मन्वते । अतः परिचयादेव पुंपरीक्षा सती भवेत् ॥ ११ ॥

जनानाम् । गुणाः । अथवा । दोषाः । सम्यक् । परिचयं विना । केवलमेकलैः । बाह्यलक्षणैः । निश्चेतुम् । नैव । शक्यन्ते ॥८॥ एतदेव स्पष्टमाह त्रिभिः । सन्तीति । भुवि पृथिव्याम् । केचित् । जनाः । बिडाला मार्जाराश्च बकाः कह्वाश्च तेषामिव वृत्तिर्येषां तथाविधाः बिडालबकौ यथाऽधोदृशा चलन्तावुपविष्टौ वा सन्तावपि मुषिकामत्स्यसञ्चारं समीक्षाते तथाऽधोदृशः सन्तोऽपीप्सितार्थसमीक्षका इत्यर्थः । सन्ति । तांस्तथाविधान् जनान् । दृष्ट्वा । अल्पधियः । केचिज्जनाः । महतोऽतिध्यानिनः । सतः साधून् । मन्यन्ते । इमे बहुध्यानासक्ताः साधवः सन्तीति तान्मन्वते इत्यर्थः ॥ ९ ॥ केचिदिति । केचित् साधवः । निर्मलहृदि लोभादिदोषानाविलान्तःकरणे कृष्णध्याननिष्ठा साक्षाच्छ्रीकृष्णस्वरूपचिन्तनस्थितिर्येषां तथाभूताः । जितेन्द्रिया वशीकृतेन्द्रियवर्गाः सन्तोऽपि । स्फारेक्षणत्वं सहजतया व्यात्तनेत्रत्वमाद्यं मुख्यं येषु तैः । आङ्गिकैर्दैहिकैः । धर्मैः । युता युक्ताः । सन्ति ॥ १० ॥ तेनेति । तेन स्फारेक्षणत्वादिदैहिकधर्महेतुना । तान् साधून् । केचित् । अल्पज्ञा अल्पबुद्धयो जनाः । असाधूनेव । मन्वते । अतो हेतोः । सती यथार्था । पुंपरीक्षा पुंसो धर्म्यधर्मित्वादिपरीक्षणम् । परिचयादेव । भवेत् ॥ ११ ॥

सहेति । नृणाम् । सहवासे । सति । भाषा भाषणं च ईक्षा दर्शनं च खाद्यमशनं च पेयं पीतिश्च तैरिति ततः । मानः सन्माननं च अपमानः सन्मानाभावश्च सङ्गः शयनासनादौ केनचित् सहवासश्च ते आद्या येषां चलनोत्थानादीनां तैः कर्मभिः । अन्तर्गतम् । मनः । लक्ष्यते शुभमशुभं वेतीक्ष्यते ॥ १२ ॥ बाल्यमिति । बाल्यं जन्म-आषोडशाब्दम् । यौवनमाचत्वारिंशद्वर्षं च वार्द्धक्यमामरणान्तवयश्च ते । इमाः । तिस्रः । अवस्थाः । मताः । तत्र तासु तिसृष्ववस्थास्वपि । यौवने । पुंगुणागुणाः पुरुषस्य गुणा दोषाश्च । प्रायो बाहुल्येन । लक्ष्यन्ते ॥ १३ ॥ इममर्थमेव स्फुटमाह । कश्चिदिति । कश्चित् । पुमान् । बाल्ये । दुष्क्रियोऽसत्कर्मासन्नपि । यौवने । सत्क्रियारतः सत्कर्मप्रसक्तः । दृश्यते । अथ च । कश्चित् । पुमान् । बाल्ये । सन् सत्कर्मासन्नपि । यौवने तु । असन्नसत्कर्मा । दृश्यते ॥ १४ ॥ यस्य बाल्यसत्कर्मवतो यौवने तथात्वं भवेत्तल्लक्षणमाह । य इति । इह सत्सङ्गे । यस्तु पुमान् । बाल्येऽपि । अघात्पापाचरणात् । भीतः सन् । स्वधर्मे । अचलस्थितिः । भवेत् । स पुमांस्तु । तारुण्ये । महान्महागुणयुक्तः । सन् साधुः । भवेदेव । हि ॥ १५ ॥ दृष्टान्त इति । अत्रास्मिन्नर्थे । युष्माभिः । ममैव । दृष्टान्त उदाहरणम् । अवसेयो विज्ञेयः ।

सहवासे सति नृणां भाषेक्षाखाद्यपेयतः । मानापमानसङ्गाद्यैर्लक्ष्यतेऽन्तर्गतं मनः ॥ १२ ॥ बाल्यं यौवनवार्द्धक्ये तिस्रोऽवस्था इमा मताः तत्रापि यौवने प्रायो लक्ष्यन्ते पुंगुणागुणाः ॥ १३ ॥ कश्चिद्बाल्ये दुष्क्रियोऽपि यौवने सत्क्रियारतः । दृश्यतेऽथ पुमान् कश्चिद्बाले सन् यौवने त्वसन् ॥ १४ ॥ यस्तु बाल्येऽप्यघाद्भीतः स्वधर्मे चाचल-स्थितिः । भवेत्स त्विह तारुण्ये भवेदेव महान् हि सन् ॥१५॥ दृष्टान्तोऽत्र तु युष्माभिरवसेयो ममैव हि । इत्युक्त्वा तपआदि स्वं बालचारित्रमाह तान् ॥ १६ ॥ तं श्रुत्वा साधवो ज्ञानवैराग्यादिभरं हरेः । साश्चर्यं जहृषुः सर्वे दुष्प्रापं तं च मेनिरे ॥१७॥ अथ तं भजनानन्दः साधुः पप्रच्छ सद्गुरो ! । अस्ति हेतुः शमः किं वा दमः साधुत्वसाधने ॥१८॥ हरिरुचे विचारेण मनसो निग्रहः शमः । बाह्येन्द्रियाणामर्थेभ्यो निग्रहस्तु दमः स्मृतः ॥१९॥

इत्यमुना प्रकारेण । उक्त्वा । तपआदि । आदिशब्दात् स्वधर्मज्ञानवैराग्यभक्तिशमदमोपशमाष्टाङ्गयोगादिग्रहणम् । स्वं स्वकीयम् । बालचारित्रम् । तान्साधून्प्रति । आह । श्रीहरेर्बालचरित्राणि सत्सङ्गिजीवनप्रथमप्रकरणाद्बोध्यानि ॥ १६ ॥ तमिति । सर्वे । साधवः । हरेः साक्षाद्भगवतः स्वस्य । तं स्वेनोक्तम् । ज्ञानवैराग्यादिभरं ज्ञान-विरक्त्यादिपूर्वोक्तगुणातिशयम् । साश्चर्यं यथातथा । श्रुत्वा । जहृषुर्मुदिता अभूवन् । तं श्रीहरेस्ताद्दशज्ञानवैराग्यादिभरम् । दुष्प्रापम् तदन्यदुर्लभम् । मेनिरे ॥ १७ ॥ अथेति । अथानन्तरम् । भजनानन्दः । साधुः । तं श्रीहरिम् । पप्रच्छ । हे सद्गुरो ! । साधुत्वसाधने साधुलक्षणसंसिद्धौ । हेतुः कारणम् । शमः । अस्ति । किम् । अथवा । दमः । अस्ति । किम् ॥ १८ ॥ हरिरिति । हरिर्भजनानन्दसाधुनैवमनुयुक्तः श्रीहरिकृष्णो भगवान् । ऊचे तं जगाद । हे साधो ! । विचारेणा-त्मानात्मस्वरूपविवेकेन । मनसः । निग्रहो मायिकविषयेषु दोषदृष्ट्या तत्सङ्कल्पेभ्यः प्रत्याहरणम् । शमः । स्मृतः । बाह्येन्द्रियाणां चक्षुरादीनाम् । अर्थेभ्यो मायिक-

रूपादिविषयेभ्यः । निग्रहस्तेषु दोषदृष्ट्या ततः प्रत्याहरणं तु । दमः । स्मृतः ॥ १९ ॥ तत्रेति । तत्र तयोः शमदमयोर्मध्ये । शमः । मानसदोषाणां वक्ष्यमाणानां मनः-सम्बन्धिनामगुणानाम् । निवर्त्तने विनाशे । हेतुः । अस्ति । शारीरदोषहानौ वक्ष्यमाणशारीरदोषनिवृत्तौ । कारणं तु । दम एव । अस्ति ॥ २० ॥ शारीराणामिति । शारीराणां शरीरसम्बन्धिनाम् । आन्तराणां मानसानां च । दोषाणाम् । संक्षये विनाशे सति । साधुत्वम् । ध्रुवं निश्चितमेव । सिद्ध्यति । एकतरहानितो मानस-शारीरान्यतरदोषविनाशे सति । न तु साधुत्वं नैव सिध्यति ॥ २१ ॥ बुभूषणेति । अतो हेतोः । साधुना साधुगुणवता । बुभूषुणा भवितुमिच्छुना भक्तेन । बाह्यान् शारीरान् । तथा । आन्तरान्मानसान् । दोषान् । ज्ञात्वा । अप्रमादिना सावधानेन सता । ते द्विविधा दोषाः । दमशमाभ्याम् । हातव्यास्त्याज्याः ॥ २२ ॥ तत्र शारीरदोषानाह सार्द्धेन । बह्विति । अल्पकालेन । बह्वालोको बहुपदार्थसंनिरीक्षणम् । तथाल्पकालेन । बहुगन्धग्रहोऽनेकविधवस्त्वामोदोपादानम् । तद्वदल्पकालेनैव । बह्व-ध्वातिक्रमो विंशतिपञ्चविंशतिक्रोशदीर्घमार्गातिक्रमणम् । स्वप्ने । रेतसो वीर्यस्य । पातः पतनं च ॥ २३ ॥ उपस्थवेगः शिश्नवातप्रवेशेन प्रतिमुहूर्त्तं तदभ्युत्थानं प्रमुख-

तत्र मानसदोषाणां शमो हेतु निवर्त्तने । शारीरदोषहानौ तु दम एवास्ति कारणम् ॥ २० ॥ शारीराणां चान्तराणां दोषाणां सति संक्षये । ध्रुवं सिद्ध्यति साधुत्वं नत्वेकतरहानितः ॥ २१ ॥ बुभूषुणा साधुनाऽतो बाह्यांस्तथान्तरान् । ज्ञात्वा दमशमाभ्यां ते हातव्या अप्रमादिना ॥२२॥ बह्वालोकोऽल्पकालेन बहुगन्धग्रहस्तथा बह्वध्वातिक्रमस्तद्वत्स्वप्ने पातश्च रेतसः ॥ २३ ॥ उपस्थवेगप्रमुखा दोषा ज्ञेयाः शरीरजाः । सङ्कल्पा इन्द्रियार्थानां दोषा ज्ञेयाश्च मानसः ॥ २४ ॥ जेया दमशमाभ्यां ते सर्वेऽप्यत्र मुमुक्षुणा । स एव साधुरुभयदोषहीनो भवेत्तु यः ॥ २५ ॥ अतो न शममात्रेण दममात्रेण वा मुने ! । संसिद्ध्येत्साधुता किन्तु द्वाभ्यामेवेति निश्चयः ॥ २६ ॥ उभावेतौ तु गृहिणामपि सत्सङ्गिनां हितौ । किं पुनस्त्यागिनां तर्हि नृणां साधुत्वसाधकौ ॥ २७ ॥

मादिर्येषां तत्कण्डूप्रभृतीनां ते । शरीरजाः शरीरसम्बन्धिनः । दोषाः । ज्ञेयाः । मानसदोषानाहार्द्धेन । इन्द्रियार्थानां चक्षुरादीन्द्रियमायिकविषयाणाम् । सङ्कल्पाः । मानसाः । दोषाः । ज्ञेयाः ॥ २४ ॥ जेया इति । अत्र सत्सङ्गे । मुमुक्षुणा साधुना । सर्वेऽपि । ते दोषाः । दमशमाभ्याम् । जेयाः । यतः । यो भक्तः । उभयदोषहीनः । भवेत् । स एव । साधुः । भवेत् ॥ २५ ॥ अत इति । हे मुने ! । अतो हेतोः । शममात्रेण केवलेन शमेन । साधुता । न संसिद्ध्येत् । अथवा । दममात्रेण केवलेन दमेन । साधुता न संसिद्ध्येत् । किन्तु । द्वाभ्यां शमदमाभ्यामेव । साधुता । संसिद्ध्येत् । इत्येवंविधः । निश्चयस्त्वत्प्रश्नोत्तरनिर्णयोऽस्ति ॥ २६ ॥ उभाविति । साधुत्वसाधकौ साधुतायाः निष्पादकौ । एतौ । उभौ शमदमौ तु । गृहिणां गृहस्थाश्रमस्थानाम् । सत्सङ्गिनामपि । हितौ हितकारकौ । भवतः । तर्हि । त्यागिनां साधूनाम् । नृणां जनानाम् । हितौ । भवतस्तत्र पुनः किं वक्तव्यम् ॥ २७ ॥

साध्विति । एतौ शमदमौ । साधूसङ्गवतां निरन्तरं भगवदेकान्तिकसाधुप्रसङ्गं कृतवतां भक्तानाम् । आशुसिद्धिप्रदौ द्विविधदोषजयरूपशीघ्रसिद्धिविधायिनौ । मतौ । यो भक्तः । सत्सङ्गी साधुसमागमं कुर्वन्सन्नपि । निर्दोषः शमदमाभ्यामुभयविधदोषवर्जितः । न स्यात् । स भक्तस्तु । महाघकृत्पूर्वकृतब्रह्महत्यादिमहापापवान् । ज्ञेयः ॥ २८ ॥ एवं त्यागिनां दोषजयार्थं संसाध्यशमदमसंसाधनावश्यकतामुक्त्वा तत्साधनं विहाय ग्राम्यार्थेच्छावतस्तान्सोपालम्भं शिक्षयन्नाह द्वाभ्याम् । त्यागीति । अल्पधीरल्पमतिः । यस्तु त्यागी । त्यागी भूत्वा साधूदीक्षामुपादाय । गृहस्थार्हान् गृहिजनयोग्यान् । भोगान् सुस्वादुखानपानादीन् । इच्छेत् । स त्यागी । लोकेषु । शास्त्रेषु च । उपहास्यः । विगर्हितो निन्दितश्च । स्यात् ॥ २९ ॥ पथीति । हि यतः । औद्धवे । पथि । तिष्ठतः । त्यागिनस्तु । ते गृहस्थार्हभोगाः । न प्राप्याः । कदाचिदपि ते त्यागिना नाधिगम्या इत्यर्थः । तस्माद्धेतोः । स त्यागी । नियमस्थितिदार्ढ्येन निर्लोभत्वादिहेतुत्यागिनियमाचलस्थित्येत्यर्थः । तान् गृहस्थार्हभोगान् । न तु नैव । इच्छेत् ॥ ३० ॥ अन्य इति । क्वचित्कदाचित् । इच्छन्नौद्धवाध्वानं विहायापि ग्राम्यभोगान्प्राप्तुं वाञ्छन् । अत एव । अन्य औद्धवा-

साधुसङ्गवतामेतावाशु सिद्धिप्रदौ मतौ । सत्सङ्ग्यपि न निर्दोषो यः स्यात्स तु महाघकृत् ॥ २८ ॥ त्यागी भूत्वा गृहस्थार्हान् भोगानिच्छेत्तु योऽल्पधीः । उपहास्यः स लोकेषु शास्त्रेषु च विगर्हितः ॥ २९ ॥ पथ्यौद्धवे तिष्ठतस्तु न प्राप्यास्त्यागिनो हि ते । नियमस्थितिदार्ढ्येन तस्मादिच्छेन्न तान्स तु ॥ ३० ॥ अन्यस्त्विच्छन्क्वचित् क्लेशा-त्तुच्छान्प्राप्यापि तानिह । वान्ताशिना याति साम्यं शुना भ्रष्टः स्वधर्मतः ॥ ३१ ॥ दुर्गं यथा तस्करभीत आश्रयेत्साधूंस्तथैवोभयदोषभीतः । इति प्रभोस्तस्य सुधाभवाचं निपीय सोऽन्ये जहृषुश्च सन्तः ॥ ३२ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते नवनवतितमस्तरङ्गः ॥ ९९ ॥ ३ ॥

ध्वच्युतस्त्यागी तु । इह लोके । तुच्छान् । तान् । क्लेशात् । प्राप्यापि । स्वधर्मतः । भ्रष्टः सन् । वान्ताशिना । शुना भषकेण । साम्यम् । याति । 'यः प्रव्रज्य गृहात्पूर्वं त्रिवर्गावपनात्पुनः । यदि सेवेत तान् भिक्षुः स वै वान्ताश्यपत्रप' इति श्रीभागवतोक्तेः ॥ ३१ ॥ प्रकरणार्थं निगमयत्यर्द्धेन । दुर्गमिति । हे मुने ! । यथा । तस्करभीतः पुमान् । दुर्गं कोट्टम् । आश्रयेत् । तथा । उभयदोषभीतः साधुः । साधूनुभयविधदोषवर्जितभगवदेकान्तिकान्सत एव । आश्रयेत् । यथा दुर्गाश्रित एव तस्करादिभयनिवृत्तः स्यात्तथा भगवदेकान्तिकसदाश्रय्येवोभयदोषवर्जितः स्यादित्यर्थः । इत्येवंविधाम् । प्रभोः । तस्य श्रीहरेः । सुधाभवाचं पियूषसमानां वाणीम् । निपीय । स भजनानन्दसाधुः । अन्ये तदितरेः । सन्तः समेपविष्टाः साधवः । चकारात्तथाविधागृहिणः । जहृषुर्हृष्टा अभूवन् ॥ ३२ ॥ साधुत्वसिद्धये स्वेषां सतां साधन-मस्ति यत् । तदाह यो हरिः सोऽस्तु मह्यं तत्साधनप्रदः ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्स्नुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां नवनवतितमस्तरङ्गः ॥ ९९ ॥ ३ ॥

ऐक्येन वेदनं प्रोक्तं चतुर्थे साक्षिजीवयोः मूर्तस्य साक्षिणश्चापि व्यापकत्वं स्फुटवतः ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८७७) अश्विनस्याश्विनमासस्य । असिताष्टम्यां कृष्णपक्षीयाष्टमीतिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । कार्यायने ग्रामे । वास्तोर्भूपस्य । दुर्गे । उदङ्मुखे । सौधेऽस्यैव भवने । बहिर्वेद्याम् । महापीठे सूर्यपुरीयसछत्रमञ्चे । सितांशुकः स्वाङ्गधृतसकलश्वेतवसनः । स श्रीहरिः । न्यषीदत्सङ्क्रान्तकाले स्वावासादागत्योपविवेश ॥ २ ॥ त्यगीति । त्यागिगृहिसन्दोऽन्तःस्थं नानादेशायातत्यागिगृहिस्वभक्तसभामध्यावस्थितम् । तं श्रीहरिम् । प्रणम्य । सन्मुखस्थस्तत्पुरःप्रदेशावस्थितः । सदग्रणीः सकलसाधुश्रेष्ठः । गोपालानन्द एतन्नामा । महामुनिः । अपृच्छत् ॥ ३ ॥ अस्मिन्निति । हे प्रभो ! । अस्मिन् । वपुषि शरीरे । जीवस्य । वेदितृत्वं ज्ञातृभावः । कियत्किं परिमाणमस्ति । साक्षिणस्तदन्तर्यामिणो हरेस्तव । वेदितृत्वम् । कियदस्ति । तदेतद्द्वयोर्वेदितृत्वम् । मे मह्यम् । तत्त्वतः । वक्तुम् । अर्हसि ॥ ४ ॥ 'स एवं कृतसम्प्रश्नो गोपालानन्दसाधुना । हरिकृष्णस्तमन्यांश्च प्राहेत्यानन्दयन्निजान्' । आनखादीति । हे मुने ! । बुद्धिः । अस्मिन् । देहे । आनखात् । आशिखम् ।

शकाब्दे विक्रमार्कस्य नगाश्ववसुभूमिते । अश्विनस्यासिताष्टम्यां वचोऽमृतमिदं हरेः ॥ १ ॥ तत्र
कार्यायने दुर्गे वास्तोः सौधउदङ्मुखे । बहिर्वेद्यां महापीठे न्यषीदत्स सितांशुकः ॥ २ ॥ त्यागिगृहि-
सदोऽन्तःस्थं तं प्रणम्य महामुनिः । सन्मुखस्थश्च गोपालानन्दोऽपृच्छत्सदग्रणीः ॥ ३ ॥ अस्मिन्वपुषि
जीवस्य वेदितृत्वं कियत्प्रभो ! । साक्षिणश्च कियत्तन्मे वक्तुमर्हसि तत्त्वतः ॥ ४ ॥ श्रीहरिरुवाच –
आनखादाशिखं बुद्धिर्देहेऽस्मिन्व्याप्य वर्त्तते । सर्वेन्द्रियक्रियाः सा च जानाति युगपन्मुने ! ॥ ५ ॥
तां च व्याप्तोऽस्ति जीवात्मा ततस्तद्वेदनोक्तितः । बुद्धेस्तु वेदनं प्रोक्तं व्याप्य साक्षी च तं स्थितः
॥ ६ ॥ साक्षिणो वेदनोक्त्याऽतो जीववेदनमीरितम् । ऐक्येनैव ततो ज्ञेयं वेदनं साक्षीजीवयोः ॥ ७ ॥

व्याप्य । वर्त्तते । सा बुद्धिः । सर्वेन्द्रियक्रियाः युगपदेककालम् । जानाति ॥ ५ ॥ तामिति । यतः । तां बुद्धिम् । जीवात्मा ज्ञाता स्वयं जीवः । व्याप्तः । अस्ति । ततो हेतोः । तद्वेदनोक्तितो जीवस्य ज्ञातृतोक्त्या । बुद्धेः । वेदनम् । प्रोक्तम् । साक्षी स्वतः साक्षात्स्वयं ज्ञाता तदन्तर्यामिपरमात्मा । तं जीवम् । व्याप्य । स्थितः । अस्ति ॥ ६ ॥ साक्षिण इति । अतो हेतोः । साक्षिणः । वेदनोक्त्या । जीववेदनं जीवस्य ज्ञातृता । ईरितम् । ततो हेतोः । साक्षिजीवयोः । वेदनम् । ऐक्येनैव । ज्ञेयम् । अस्यायं भावः । जडत्वाद्बुद्धेः स्वतो वेदनं न सम्भवति तस्या जीवज्ञातृतया ज्ञातृत्वात् । एवं सति यावद्बुद्धेर्व्याप्तिपूर्वज्ञानं तावज्जीवज्ञानम् । किञ्च । ज्ञातुर्जीवस्यापि । ज्ञातृता स्वतो ज्ञातुः परमात्मनः सम्बन्धेनैवास्ति । यतस्तदीयस्वाभाविकज्ञातृतासम्बन्धमृतेऽकिञ्चित्करत्वात् । एवंसत्यसङ्ख्यजीवेषु यावज्ज्ञातृत्वं तावत्परमात्मज्ञातृताधीनम् । एवं च बुद्धेर्ज्ञातृत्वं जीवबुद्ध्यो र्व्यापकव्याप्यतया यथैक्येनास्ति तथा जीवस्य ज्ञातृत्वं परमात्मजीवयोर्व्यापकव्याप्यतयैक्येनेनि ॥ ७ ॥

नित्यानन्द इति । अथैवंविधश्रीहरिवाक्यश्रवणानन्तरम् । नित्यानन्दो मुनिः । आनतः कृतप्रणामः सन् । स्वामिनम् । तं श्रीहरिम् । अप्राक्षीत् । हे हरे ! । यः । साक्षात् । पश्येत् । स एव । बुधैः । साक्षी । कथितः ॥ ८ ॥ तथेति । तथाविधः साक्षात् द्रष्टा तु । मूर्त्तो मूर्त्तिमान् । स्यात् । तत्त्वे साक्षिणो मूर्त्तत्वे सति । असौ साक्षी । व्यापकः । कथं केन प्रकारेण । भवेत् । इत्यमुना प्रकारेण । उक्तो नित्यानन्दमुनिना कथितः । हरिः । तं नित्यानन्दमुनिम् । ऊचे । हे मुने ! । मूर्त्तोऽपि । व्यापकः । भवेत् ॥ ९ ॥ यथेति । यथा । स्वधाम्नि स्वकीये लोके । मूर्त्तो मूर्त्तिमान् । अग्निः । स्वशक्तितस्तेजोरूपेण । एधस्सु काष्ठेषु । व्याप्य । अवस्थितोऽस्ति । तथा । परे सर्वोत्कृष्टे । अक्षरेऽक्षरब्रह्माख्ये स्वधाम्नि । मूर्त्तः । हरिः । स्वशक्तितोऽन्तर्यामिस्वरूपस्वैश्वर्येण । जीवेषु । व्याप्य । अवस्थितोऽस्ति । अस्यायं भावः । मूर्त्तस्यापि हरेरग्निदृष्टान्तेन सूक्ष्मेषु जीवेषु व्यापकत्वे बाधाभावः 'अणोरणीया'निति श्रुतौ भगवदन्तर्यामिशक्तेरणुभ्यो जीवेभ्योऽपि सूक्ष्मत्वोक्तेस्तस्याश्च प्रभाप्रभावतोरिवाव्यतिरेकत्वोक्तेश्चेति ॥ १० ॥ सुधेति । इत्येवंविधाम् । सुधासमानाममृततुल्यताम् । तस्य श्रीहरेः । वाचम् । निशम्य । स मुनिर्नित्यानन्दसाधुः ।

नित्यानन्दस्तमप्राक्षीदथ स्वामिनमानतः । साक्षी तु साक्षात्पश्येद्यः स एव कथितो बुधैः ॥ ८ ॥ तथाविधस्तु
मूर्त्तः स्यात्तत्त्वेऽसौ व्यापकः कथम् । इत्युक्तो हरिरुचे तं मूर्त्तोऽपि व्यापको भवेत् ॥ ९ ॥ यथामूर्त्तः स्वधाम्न्य-
ग्निर्व्याप्यैधस्सु स्वशक्तितः । तथा परेऽक्षरे मूर्त्तो हरिर्जीवेष्ववस्थितः ॥ १० ॥ सुधासमानामिति तस्य वाचं
निशम्य तोषं स मुनिः प्रपेदे । वेदान्तविद्यानिपुणाः सदःस्था अन्ये च सन्तो गृहिणश्च सर्वे ॥ ११ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते शततमस्तरङ्गः ॥ १०० ॥ ४ ॥

शकाब्दे विक्रमार्कस्य नगाश्ववसुभूमिते । इषकृष्णचतुर्दश्यां वचोऽमृतमिदं हरेः ॥ १ ॥
तत्र कार्यायनग्रामे वास्तुभूपस्य वेश्मनः । वितर्द्यावुदगास्यस्य पीठाग्र्ये स उपाविशत् ॥ २ ॥

तोषमानन्दम् । प्रपेदे । वेदान्तविद्यानिपुणाः । सदःस्थाः । अन्ये तदितरे । सर्वे । सन्तो गोपालानन्दादयो मुनयः । सर्वे । गृहिणो मयारामभट्टादयः गृहस्थजनाश्च । तोषं प्रपेदिरे ॥ ११ ॥ जीवात्मसु स्वयं साक्षिरूपो यद्वद्य आस्थित तद्वत्प्राह हरिः सोऽस्तु सदा साक्षान्मदात्मनि ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्ये-कान्तिकोपासकश्रीहरिकृष्णभगवत्प्रत्नुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां शततमस्तरङ्गः ॥ १०० ॥ ४ ॥

आविर्भावे तु नृत्वेन श्रीहरेर्जगतीतले । प्रश्नोत्तरमिषेणैव पञ्चमे हेतुरीरितः ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८७७) इषकृष्णचतुर्दश्या-मश्विनमासीयकृष्णपक्षागतचतुर्दशीतिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । कार्यायनग्रामे । वास्तुभूपस्य । दुर्गे इति शेषः । उदगास्यस्य । वेश्मनस्तस्यैव भवनस्य । वितर्द्यां बाह्यवेदिकायाम् । पीठाग्र्ये सूर्यपुरीयभक्ताहृते सछत्रे स्वास्तृते उत्तमे पर्यङ्कासने । स श्रीहरिः । उपाविशत् ॥ २ ॥

सितेति । सितवासाः परिहितसकलार्जुनवसनः । त्यागिभिः । तथा । गृहिभिः । अनेकैर्नानादेशागतत्वाद्बहुभिः । भक्तैः । वृतः सभायां परिवेष्टितः । सुप्रसन्नास्योऽतिप्रसन्नमुखपङ्कजः । प्रभुः श्रीहरिः । स्वयं केनाप्यपृष्टः सन्नेव । सतः साधून् । अपृच्छत् ॥३॥ कल्याणेति । भगवानक्षरधामाधिपतिः स्वयं श्रीपुरुषोत्तमः । कल्याणमूर्त्तिः स्वाश्रितात्यन्तिकनिःश्रेयससम्प्रापकस्वरूपः । अस्ति । असावेवंविधमहिमो भगवान् । जीवानाम् । श्रेयसे । भूमौ । नृषु । प्रादुर्भवति । इतीत्थम् । शास्त्रविदो निगमागमादिशास्त्रज्ञाः । विदुर्ज्ञात्वा वदन्तीत्यर्थः ॥ ४ ॥ स्वेति । असौ भगवान् । स्वधामस्थितः स्वीयाक्षरधाम्न्यवस्थितः सन्नेव । तज्जीवनिःश्रेयसम् । कर्त्तुं सङ्कल्पमात्रेण विधातुम् । क्षमः समर्थः । न किमु नास्ति किम् । अत्र लोके । धृतावतारः सन्नेव । तत्कृतौ जीवनिःश्रेयसकरणे । क्षमते शक्तो भवति किमु ॥ ५ ॥ नेति । ईशे ईश्वरेश्वरे । सर्वदा । समर्थे । अच्युते भगवति । एवमुक्तप्रकारेण । वाच्यं वक्तुं योग्यम् । न भवेत् । अतो हेतोः । अवतारग्रहणे । यः । हेतुः । सः । उदीर्यताम् । अस्यायं भावः । धामस्थस्य सतो भगवतो जनकल्याणाचरणोक्तौ तस्यावतारधृतिता व्यर्था स्यादवतीर्य तदाचरणोक्तौ तस्यासमर्थत्वं स्यादित्युभयथापि भगवति

सितवासा वृतो भक्तैरनेकैस्त्यागिभिस्तथा । गृहिभिः सुप्रसन्नास्यः सतोऽपृच्छत्स्वयं प्रभुः ॥ ३ ॥ कल्याणमूर्त्तिर्भगवानितिशास्त्रविदो विदुः । जीवानां श्रेयसे भूमौ नृषु प्रादुर्भवत्यसौ ॥ ४ ॥ स्वधामस्थित एवासौ तत्कर्तुं न क्षमः किमु । धृतावतार एवात्र क्षमते किमु तत्कृतौ ॥५॥ नैवं वाच्यं भवेदीशे समर्थे सर्वदाऽच्युते । अतोऽवतारग्रहणे यो हेतुः स उदीर्यताम् ॥ ६ ॥ इति ते हरिणा पृष्टा यदा तत्सम्यगुत्तरे । न शेकुः साधवस्तर्हि स्वयमेव जगाद सः ॥ ७ ॥ कृष्णः सङ्कल्पमात्रेण यद्यपि श्रेयसे क्षमः । नृणामस्ति तथाप्यत्रावतारे वच्मि कारणम् ॥ ८ ॥ भक्ताः स्वस्मिन्प्रेमवन्तो ये स्युः केचन भूतले । तेषां भक्तिवशो भूत्वा तेभ्यो दातुं सुखं हरिः ॥ ९ ॥ तदिच्छानुसृतं रूपं स्वतन्त्रः सन् दधात्यथ । सकलान् पूरयत्येव भक्तानां स मनोरथान् ॥ १० ॥

दोषागमं वीक्ष्य तस्यातिसमर्थतोक्तिपूर्वं प्रकारद्वयं निषिध्य तत्प्रादुर्भावहेतुं सतोऽपृच्छदिति ॥ ६ ॥ इतीति । इत्यमुना प्रकारेण । हरिणा । पृष्टाः । ते । साधवः । यदा । तत्सम्यगुत्तरे श्रीहरिकृतप्रश्नस्य यथार्थोत्तरविधाने । न शेकुः समर्था नाभूवन् । तर्हि । स श्रीहरिः । स्वयमेव । जगाद सतः प्रति तदुत्तरं कथयामास ॥ ७ ॥ कृष्ण इति । हे साधवः ! कृष्णः । यद्यपि । सङ्कल्पमात्रेण । नृणाम् । श्रेयसे कल्याणं कर्त्तुम् । क्षमः समर्थः । अस्ति । तथापि । अत्र लोके । अवतारे भगवतोऽवतारधारणे । कारणम् । वच्मि ॥ ८ ॥ भक्ता इति । भूतले । केचन । ये । भक्ताः । स्वस्मिन् । प्रेमवन्तः । स्युः । तेषां भक्तानाम् । भक्तिवशः प्रीतिपरतन्त्रः । भूत्वा । हरिः । तेभ्यो भक्तेभ्यः । सुखं स्वदर्शनप्रदानादिनानन्दम् । दातुम् ॥ ९ ॥ तदिति । स्वतन्त्रः सन्नपि । तदिच्छानुसृतं स्वभक्तसङ्कल्पानुगुणम् । रूपं स्वमूर्त्तिम् । दधाति । अथानन्तरम् । स धृतावतारो भगवान् । भक्तानाम् । सकलान् । मनोरथान् । पूरयत्येव । इति द्वयोरेकान्वयः ॥ १० ॥

तदिच्छानुसृतमिति यदुक्तं तत्स्फुटमाह । प्रेमेति । भूतले । भक्तानाम् । नृणाम् । स्वस्मिन् नराकारे स्वस्वरूपे । प्रेमवृद्धिर्भवेत् । इति हेतोः । कृष्णः । स्वयम् । कृपया दयया । तत्सजाति नृजातियभक्तसमानजातिः । जायते ॥११॥ सजाताविति । देहिनाम् । सजातौ स्वसमानजातीये । परमातिशयिता । प्रीतिः स्नेहः । जायते । तत्रापि सजातावपि । हृद्ये मनोज्ञे । तत्रापि । गुणिनि गुणवति । विशेषेण । जायते । ध्रुवं निश्चितमेव ॥१२॥ अनन्तेति । अतो हेतोः । अत्र नृलोके । सुबुद्धयो विवेकयुक्तमतयो जनाः । मायिके पदार्थे । स्नेहम् । उत्सृज्य त्यक्त्वा । अनन्तकल्याणगुणमपरिमितोदारकल्याणकारिगुणसागरम् । कृष्णं साक्षाच्छ्रीहरिमेव । प्रेम्णा । भजन्ति ॥ १३ ॥ स्वतन्त्र इति । तदा यस्मिन्काले एवंभूतः कृष्णः प्रादुर्भवति तस्मिन्काले । कृष्णः । स्वतन्त्रः सन्नपि । तत्तद्भक्तमनोरथान् ये ये शरणागता भवन्ति तेषां भक्तानां वाञ्छितार्थान् । सम्पूरयन् सम्पूर्णान्विधातु । अस्वतन्त्र इव । तद्वशे । आस्ते । खलु ॥ १४ ॥ पुत्रत्वेनेति । स भगवान् । भक्तान् । सुखयन् । स्व-

प्रेमवृद्धिर्भवेत्स्वस्मिन्भक्तानां भूतले नृणाम् । इति कृष्णस्तत्सजातिर्जायते कृपया स्वयम् ॥ ११ ॥
सजातौ परमा प्रीतिर्देहिनां जायते ध्रुवम् । तत्रापि विशेषेण हृद्ये गुणिनि जायते ॥ १२ ॥
अनन्तकल्याणगुणमतः प्रेम्णा सुबुद्धयः । कृष्णमेव भजन्त्यत्र स्नेहमुत्सृज्य मायिके ॥ १३ ॥
स्वतन्त्रोऽपि तदा कृष्णस्तत्तद्भक्तमनोरथान् । सम्पूरयन्नस्वतन्त्र इवास्ते खलु तद्वशे ॥ १४ ॥
पुत्रत्वेन सुहृत्त्वेन स सखित्वादिना क्वच । वर्त्तते सुखयन्भक्तान्स्वस्मिंस्तत्प्रेमवर्द्धयन् ॥ १५ ॥
एतद्धर्यवतारस्य मुख्यमुक्तं हि कारणम् । विनाऽवतारं पूर्येरन्नैव भक्तमनोरथाः ॥ १६ ॥
अनेकजीवश्रेयश्च धर्मरक्षाऽसुरक्षयः । इत्यादि कर्म विष्णोस्तु ज्ञायतामानुसङ्गिकम् ॥ १७ ॥

स्मिन् । तत्प्रेम तेषामनुरागम् । वर्द्धयन्सन् । क्वच कदाचित् । पुत्रत्वेन सुतभावेन । वर्त्तते । क्वच । सुहृत्त्वेन पितृभ्रातृपतित्वादिना । वर्त्तते । क्वच । सखित्वादिना । आदिशब्दाद्गुरुशिष्यादिना भावेन । वर्त्तते ॥ १५ ॥ एतदिति । हर्यवतारस्य । मुख्यम् । कारणम् । एतत् । उक्तम् । हि यतः । अवतारमवतारधारणं विना । भक्तमनोरथाः । नैव । पूर्येरन् पूर्णा न स्युरेव ॥१६॥ अनेकेति । अनेकजीवश्रेयोऽपरिमितजीवनिःश्रेयसविधानम् । धर्मरक्षा धर्मपरित्राणम् । असुरक्षयः साधुधर्मद्रुहां दैत्यानां वधः । इत्याद्येतत्प्रभृतिकम् । विष्णोर्भगवतः । कर्म चरित्रं तु । आनुषङ्गिकं प्रासङ्गिकम् । ज्ञायताम् । अस्यायं भावः यद्यपि प्रायशो धर्मरक्षार्थं भगवदवतारस्तत्र तत्र श्रूयतेऽथापि स्वभक्तप्रीणनमेव तदवतारस्य मुख्यं प्रयोजनम् । यतो भगवदेकान्तिकभक्तानां वसुदेवधर्मदेवसदृशानां धर्मित्वाद्धर्मविरोध्यसुराणां तदर्दनशीलत्वादसुरविनाशेन साधूनां तेषां परित्राणपूर्वकं प्रीणनं भवेदेतदभिप्रायं भगवद्वचनं 'परित्राणाय साधूना'मित्यतो भक्तप्रीणनं मुख्यं तदवतारस्य प्रयोजनं धर्मस्थापनाद्यानुषङ्गिकमिति ॥ १७ ॥

वचनमिति । इत्येवंविधम् । सुधामममृतसमानम् । हरेः । वचनम् । निपीय । सदसि । स्थिताः । तत्पदसरोजरताः श्रीहरिचरणाब्जानुरक्ताः । विनयनम्रकन्धराः । मुनिजनाः । गृहिणस्तथाविधागृहस्थजनाश्च । परमाम् । मुदम् । प्रपेदिरे ॥१८॥ येन मुख्यः स्वावतारहेतुः सङ्कथ उदीरितः । स भक्तितनयो मेऽस्तु स्वेक्षणादिसुखप्रदः ॥१॥ इति श्रीमदेकान्तिकधर्मप्रवर्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्स्नुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां शताधिकैकस्तरङ्गः ॥१०१॥५॥

हरेः प्रसन्नताहेतुर्मत्सरस्य च दुष्टता । सहेतुकतया षष्ठे ते उभे सम्प्रकीर्त्तिते ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८७७) अश्विनस्य मासस्य । असिते कृष्णपक्षे । दर्शेऽमावास्यातिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । दीपेति । तत्र तिथौ । कार्यायने ग्रामे । वास्तोर्भूपस्य । दुर्गे इति शेषः । उदगास्यगृहाङ्गणेऽस्यैवोदङ्मुखभवनचत्वरे । चारुछत्रसुशोभिते । दीपराजिसहस्रेण सहस्रशो दीपश्रेणिभिः । अभितः परितः । वृते वेष्टिते । उच्चमञ्चमहापीठे उच्चचतुःस्तंभनिबद्धेऽधिरोहिणीभङ्गिराजिते श्वेतोत्तरच्छदतूलिकापार्श्विकोपबर्हगेन्दुकयुक्ते पर्यङ्के महासने । स्वर्णबुट्टं सुवर्णतन्तुरचितरूपामुद्रास्थूलविन्दुम् । रक्तं रक्तवर्णम् । नवं

वचनं सुधामिति निपीय हरेः परमां मुदं मुनिजनाः प्रपेदिरे । गृहिणश्च तत्पदसरोजरताः सदसि स्थिता विनयनम्रकन्धराः ॥ १८ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते शताधिकैकस्तरङ्गः ॥ १०१ ॥ ५ ॥

शकाब्दे विक्रमार्कस्य नगाश्ववसुभूमिते । अश्विनस्यासिते दर्शे वचोऽमृतमिदं हरेः ॥ १ ॥ तत्र कार्यायने वास्तोरुदगास्य गृहाङ्गणे । उच्चमञ्चमहापीठे चारुछत्रशुशोभिते ॥ २ ॥ दीपराजिसहस्रेण न्यषीदत्सोऽभितो वृते । सुरवारं स्वर्णबुट्टं रक्तं परिदधन्नवम् ॥ ३ ॥ नरनारायणस्वामिनारायणसुवर्णकैः । स्वर्णसूत्रीयकैः श्यामकौशनीशारमादधत् ॥ ४ ॥ स्वर्णसूत्रीयसत्पार्श्ववल्लरीदीर्घपल्लवम् । दधत्कौसुम्भमुष्णीषमभ्रामं च कटीपटम् ॥ ५ ॥ पीतपुष्पस्रगापीडो गृहित्यागिगणावृतः । भूरिकारुण्यनयनः सायं भक्तगणानतः ॥ ६ ॥

नवीनम् । सुरवारं कौशेयनिचोलम् । परिदधत् । स श्रीहरिः । न्यषीदत् । इति द्वयोरेकान्वयः ॥ २ ॥ ३ ॥ तत्र निषण्णं श्रीहरिं विशिनष्टि चतुर्भिः । नरेति । स्वर्णसूत्रीयकैश्चातुर्येण सुवर्णसूत्ररचितैरित्यर्थः । नरनारायणस्वामिनारायणसुवर्णकैर्नरनारायणस्वामिनारायणपदबोधकशोभनाक्षरैः । उपलक्षितम् । श्यामकौशनीशारं श्यामवर्णकौशेयनीशारम् । आदधत् ॥ ४ ॥ स्वर्णेति । स्वर्णसूत्रीये पुरटतन्तुरचिते सत्यौ दीप्यमाने पार्श्ववल्ल्यौ प्रान्तवल्ल्यौ दीर्घपल्लवौ च यस्य तत्तथाभूतम् । कौसुम्भमग्निशिखरंजितम् । उष्णीषं शिरोवेष्टनवस्त्रम् । दधत् । अभ्राभमाकाशसमानवर्णम् । कटीपटं सुवर्णतन्तुव्यूतवल्लरीकपार्श्वपल्लवं कटिबन्धनवस्त्रं च । दधत् ॥ ५ ॥ पीतेति । पीतपुष्पाणां सहस्रदलपीतकुसुमानां स्रगापीडौ हारशेखरौ यस्य सः । गृहित्यागिगणावृतो नानादेशागतगृहित्यागिस्वभक्तवृन्दैः सभायां परिवेष्टितः । भूरिकारुण्यनयनः प्रचुरकारुणापूर्णनयनाब्जः । सायं सायन्तनीयभगवन्नीराजनान्ते । भक्तगणानतस्तत्कालोचितत्वात्पुनर्गृहित्यागिस्वभक्तवृन्दविहितानतिः ॥ ६ ॥

देवेति । देवपुर्यागतस्वीयगृहिभक्तैः क्षारोदद्वीपान्तर्वर्त्ति देवनगर्यायातात्मीयगृहस्थभक्तजनैः । समर्पितामतिप्रेम्णा विहिताम् । महापूजां महावस्त्राभरणचन्दनहारमहोपदादियुतां महतीमर्चाम् । प्रीत्या तद्गाढानुरागेक्षणसञ्जातस्वातिप्रेम्णा । आदाय स्वीकृत्य । तेषां भक्तानाम् । भक्तिं सानुरागार्चारूपां सेवां च । वर्णयन्सभायां मुक्तानन्दादिमुनिनां पुरोऽतिप्रशंसन् ॥ ७ ॥ दीनेति । तदा यदा स्वार्चकतद्भक्तातिप्रशंसां करोति तस्मिन्समये । दीनानाथाख्यविप्रेण काह्नमदेशान्तर्गतामोदपुरनिवासिना पण्डितप्रवरेण दीनानाथाख्यभूसुरेण । आगत्य तन्निकटमेत्य । सत्पतिः । स श्रीहरिः । विनयेनैव । प्रणेमे नमस्कृतः । स श्रीहरिः । मानयामास सत्कृतवान् ॥ ८ ॥ महेति । अथानन्तरम् । प्रभुः श्रीहरिः । क्षणं क्षणकालपर्यन्तम् । भक्ततुष्ट्यै स्वभक्तप्रसन्नतार्थम् । महावस्त्रादि देवपुरीयभक्तार्पितमहावस्त्रादिकम् । दधत् सन् । तीव्रवैराग्यशालित्वात् । अस्मयः करिष्यमाणदानादिगर्वरहितश्च सन् । पात्राय शास्त्रोक्तपात्रताशालिने । आदित्सदातुमैच्छत् ॥ ९ ॥ तस्मा इति । ततस्तदनन्तरम् । स श्रीहरिः । विदुषे सकलशास्त्रविद्याशालिपण्डिताय । तस्मै दीनानाथभट्टनाम्ने । विप्राय स्वानन्यभक्तब्राह्मणाय । तन्महावस्त्रादि । प्रादात् । तदा तस्मिन्समये । सर्वे । जनाः ।

देवपुर्यागतस्वीयगृहिभक्तैः समर्पिताम् । प्रीत्याऽऽदाय महापूजां तेषां भक्तिं च वर्णयन् ॥ ७ ॥ दीनानाथाख्यविप्रेण तदाऽऽगत्य स सत्पतिः । प्रणेमे विनयेनैव मानयामास तं स च ॥८॥ महावस्त्राद्यथ दधद्भक्ततुष्ट्यै क्षणं प्रभुः । तीव्रवैराग्यशालित्वात्पात्रायादित्सदस्मयः ॥ ९ ॥ तस्मा एव ततः प्रादाद्विप्राय विदुषे स तत् । तदौदार्यं जनाः सर्वे दृष्ट्वाऽऽपुरतिविस्मयम् ॥ १० ॥ मुक्तानन्दोऽथ तं साधुः प्रणम्यापृच्छदीश्वर ! । भक्तानां कैर्गुणैस्तेषु भगवांस्त्वं प्रसीदसि ॥ ११ ॥ तमुवाच हरिर्येषु कामलोभछलक्रुधाम् । मानेर्ष्यामत्सराणां च त्यागः स्यात् सर्वथा मुने ! ॥ १२ ॥ स्यादप्रतिहता कृष्णे भक्तिः सप्रेम येषु च । तेष्वीदृशैर्गुणैरेव सम्प्रसीदति हि प्रभुः ॥ १३ ॥ त्याज्येषूक्तेषु दोषेषु मत्सरो य उदीरितः । सर्वेषां स विकाराणामाधार इति मे मतम् ॥ १४ ॥

औदार्यं श्रीहरेरमानुर्षी महतीमुदारताम् । दृष्ट्वा । अतिविस्मयमत्याश्चर्यम् । आपुः ॥ १० ॥ मुक्तानन्द इति । अथानन्तरम् । मुक्तानन्दः । साधुः । तं श्रीहरिम् । प्रणम्य । अपृच्छत् । हे ईश्वर ! प्रत्यक्षपरमेश्वर ! । भगवान् सकलैश्वर्यनिधिः । त्वं श्रीहरिः । भक्तानाम् । कैः कीदृशैः । गुणैः । तेषु भक्तेषु । प्रसीदसि प्रसन्नो भवसि ॥ ११ ॥ तमिति । तमेवंपृच्छन्तं मुक्तानन्दमुनिम् । हरिः । उवाच । हे मुने ! । येषु भक्तेषु । कामलोभछलक्रुधाम् । मानेर्ष्यामत्सराणां च । सर्वथा । त्यागः । स्यात् ॥ १२ ॥ स्यादिति । येषु भक्तेषु । सप्रेम प्रीतिसहितं यथा स्यात्तथा । कृष्णे । अप्रतिहता विषमदेशकालादिविघ्नैरपराभूता । भक्तिरेकान्तिकभावेन तद्भजनं च । स्यात् । ईदृशैरेवंविधैः । गुणैरेव तेषु भक्तेषु । प्रभुः श्रीहरिः । सम्प्रसीदति । हि निश्चितमेव ॥ १३ ॥ त्याज्येष्विति । उक्तेषु । त्याज्येषु स्वहितार्थभक्तैः सर्वथा हेयेषु । दोषेषु कामादिषु मध्ये । यः । मत्सरः । उदीरितः । स मत्सरः सर्वेषाम् । विकाराणां दोषाणाम् । आधार आश्रयोऽस्ति । इतीत्थंभूतम् । मे

मम । मतं सिद्धान्तोऽस्ति ॥ १४ ॥ अत इति । अतो हेतोः । स्वयम् । व्यासः श्रीभागवतादिपुराणवक्ता भगवदवतारः कृष्णद्वैपायनो मुनिः । श्रीमद्भागवततत्त्वज्ञानाधिकारिणः श्रीमद्भागवतपुराणप्रतिपाद्यश्रीकृष्णस्वरूपयथार्थज्ञानाधिकारवतः । निर्मत्सरान्मत्सरवर्जितानेव । सतः साधून् । उदाहरन्निर्मत्सराणां सतां वेद्यमित्यचकथत् ॥ १५ ॥ दोषेभ्य इति । स मत्सराख्यदोषः । सर्वेभ्यः । दोषेभ्यः कामादिभ्यः सूक्ष्मोऽत्यणुः । अस्ति । इति हेतोः । दुस्त्यजोऽत्यायासेनापि त्यक्तुमशक्यः । अस्ति । स मत्सराख्यदोषः । मनीषिभिः सदसद्विवेकमतिभिर्भगवदेकान्तिकसाधुभिः । सन्मार्गस्थितिदाढर्येन भगवदेकान्तिकसाधुक्षुणाध्वसम्यगवस्थानेन । जीयते ॥१६॥ पुनरिति । मुक्तानन्दो मुनिः । तं श्रीहरिम् । पुनः । पप्रच्छ । हे हरे ! । मत्सरसम्भवो मत्सरोदयः । कुतः कस्मात् । निमित्ताद्धेतोः । भवति । तन्मत्सरोदयनिमित्तम् । ब्रूहि इति पप्रच्छेति सम्बन्धः । अथानन्तरम् । स श्रीहरिः । अब्रवीन्मुक्तानन्दमुनिं जगाद ॥ १७ ॥ स्त्रीति । हे मुने ! । स्त्रीद्रव्यस्वादुभोज्यानि । इत्येते ।

अतः श्रीमद्भागवततत्त्वज्ञानाधिकारिणः । निर्मत्सरानेव सतो व्यासः स्वयमुदाहरन् ॥ १५ ॥ दोषेभ्यः
स च सर्वेभ्यः सूक्ष्मोऽस्तीत्यस्ति दुस्त्यजः । सन्मार्गस्थितिदाढर्येन जीयते स मनीषिभिः ॥ १६ ॥
पुनः पप्रच्छ तं मुक्तानन्दो मत्सरसम्भवः । कुतो निमित्ताद्भवति तद्ब्रूहीत्यथ सोऽब्रवीत् ॥ १७ ॥
स्त्रीद्रव्यस्वादुभोज्यानि त्विति तद्धेतवस्त्रयः । येषां नैतत्त्रिकं तेषु मानस्तद्धेतुरस्ति हि ॥ १८ ॥
स्वार्थसिद्धिं विनैवान्योत्कर्षेक्षामात्रतोऽपि च । उदेति स नृणां हृत्सु स्वार्थलब्धौ तु किं पुनः ॥ १९ ॥
अस्मै भट्टाय विदुषे मयाऽद्य स्वेच्छयाऽर्पितम् । महावस्त्रादि दृष्ट्वाऽपि स जातोऽस्तीह केषुचित् ॥ २० ॥
स्वार्थोऽल्पोऽप्यत्र नास्त्येव तथापि व्यर्थमेव सः । आत्मावबोधशैथिल्याज्जात इत्यवगम्यते ॥ २१ ॥

त्रयः । तद्धेतवो मत्सरसम्भवनिमित्तानि । सन्ति । येषां नृणाम् । एतत्त्रिकं स्त्र्यादित्रयम् । नास्ति । स्त्र्यादित्रिकापेक्षा येषां न भवतीत्यर्थः । तेषु नृषु । मानः । तद्धेतुर्मत्सरसम्भवनिमित्तभूतः । अस्ति । हि ॥ १८ ॥ स्वेति । स मत्सरः । स्वार्थसिद्धिं विनोक्तविधस्वार्थनिष्पत्तिनिमित्तमन्तरापि । अन्योत्कर्षेक्षामात्रतोऽन्यदीयोत्कर्षदर्शनमात्रेणापि । नृणाम् । हृत्सु । उदेत्युत्पन्नो भवत्येव । तर्हि । स्वार्थलब्धौ स्वार्थसिद्धौ सत्यां तु । किं पुनः । स्वार्थसिद्धौ जायमानानां सत्यां स उदेति तत्र किं वाच्यमित्यर्थः ॥ १९ ॥ एतदेव स्पष्टमाह द्वाभ्याम् । अस्मा इति । विदुषे पण्डिताय । भट्टाय भट्टाबटङ्काय । अस्मै दीनानाथाख्यविप्राय । मया । अद्य साम्प्रतमेव । स्वेच्छया । अर्पितं पात्रं बुद्ध्वा दत्तम् । महावस्त्रादि । दृष्ट्वापि । इहास्यां सभायाम् । केषुचिज्जनेषु । स मत्सरः । जात उत्पन्नः । अस्ति ॥२०॥ स्वेति । अत्रास्मिन्नर्थे । अल्पोऽल्पमात्रोऽपि । स्वार्थः । नास्त्येव । तथापि । आत्मावबोधशैथिल्याद्धेतोः । स मत्सरः । व्यर्थमेव । जातः । इतीत्थम् । अवगम्यते ॥ २१ ॥

सन्मार्गे स्थितिदार्ढ्येनेति यदुक्तं तदेव सल्लक्षणोक्त्या विशदयति महान्त इति । अत्रास्यां सभायाम् । सन्मार्गे । नेमिवृत्तयः गच्छन्तः । ज्ञानिन आत्मानात्मविवेककुशलाः । महान्तो निर्लोभनिर्मानत्वादिमहागुणाः । सन्तः साधवस्तु । सत्कर्मदर्शनात्मत्कृतदानात्मकसत्क्रियादर्शनतः । आनन्दभृतो महानन्दपूर्णाः । दृश्यन्ते ॥ २२ ॥ तेषामिति । तेषां तथाविधानां साधूनाम् । ईदृग्वक्ष्यमाणः । विवेकः । अस्ति । इति हेतोः । तेषु साधुषु । तज्जनिर्मत्सरोद्भवः । नास्ति । विवेकमाह सार्द्धेन । इहास्यां सभायाम् । हरेः साक्षाद्भगवतः । ईदृग्महापूजनकृदेवंविधमहापूजाकर्त्ता । भक्तः । धन्यः कृतार्थः । अस्ति ॥ २३ ॥ हरिरिति । हरिः । महानतिशयितः । दाता दानशूरः । अस्ति । यतः । तीव्रवैराग्यशालिना । येन हरिणा । अक्लिष्टचेतसाऽत्युत्साहवन्मनसा सता । तन्महावस्त्रादिकम् । विप्राय । सद्यः । दत्तम् ॥ २४ ॥ एवमिति । एवममुना प्रकारेण । विवेकिनो विवेकवन्तः । अमलचेतसो मत्सरादिदोषवर्जितमानसाः । ते साधवः । जानन्त्यवयन्ति । अल्पधियोऽल्पप्रज्ञाः । अपरेऽसाधुजनाः । व्यर्थं निर्निमित्तमेव । हृदये । परितप्यन्ते ॥ २५ ॥ किञ्चिदिति । किञ्च । कश्चन जनः । किञ्चिद्वस्तु । कस्मैचिज्जनाय । दत्ते । स प्रति-

महान्तो ज्ञानिनः सन्तस्त्वत्र सत्कर्मदर्शनात् । दृश्यन्त आनन्दभृतः सन्मार्गे नेमिवृत्तयः ॥ २२ ॥ तेषामीदृग्विवेकोऽस्तीत्यस्ति तेषु न तज्जनिः । ईदृग्महापूजनकृद्धन्यो भक्तो हरेरिह ॥ २३ ॥ हरिश्चास्ति महान् दाता तीव्रवैराग्यशालिना । येन विप्राय तत्सद्यो दत्तमक्लिष्टचेतसा ॥२४॥ एवं विवेकिनस्ते हि जानन्त्यमलचेतसः । हृदये परितप्यन्ते व्यर्थमल्पधियोऽपरे ॥ २५ ॥ किञ्चित्कश्चन कस्मैचिद्दत्तेऽन्यस्मै स चापि तत् । अत्रास्माकं गतं किन्तु विदुरित्थं हि सज्जनाः ॥ २६ ॥ मया तु कामलोभेर्ष्याः क्रोधो मानश्च मत्सरः । हृदि प्रवेशं नो दत्ता दोषा एते कदाचन ॥ २७ ॥ शब्दाद्या विषयाः पञ्च रमणीया अपि क्वचित् । न मे रुचिकराः सन्ति तेष्वभावोऽस्ति वै भृशम् ॥२८॥ यत्तु तान् कर्हिचिदहं स्वीकरोम्यादरात् क्षणम् । यत्तु स्वभक्ततोषार्थं न तु क्वापि स्वतुष्टये ॥ २९ ॥ दैहिको व्यवहारो मे सर्वो देहश्च सर्वथा । रक्षितोऽस्ति हि भक्तार्थं नात्र स्वार्थोऽस्ति कश्चन ॥ ३० ॥

गृहीता जनोऽपि । तदुपात्तं वस्तु । अन्यस्मै पात्रजनाय । दत्ते । अत्र । अस्माकम् । किन्तु किं वा । गतम् । इत्थममुना प्रकारेण । सज्जनाः । विदुर्जानन्ति । हि ॥ २६ ॥ सम्प्रति स्ववर्त्तनोक्त्या महतां सतां रीतिं निर्दिशति पञ्चभिः । मयेति । मया तु । कामलोभेर्ष्याः । क्रोधः । मानः । मत्सरश्च । एते । दोषाः । कदाचन कदाचिदपि । हृदि मानसे । प्रवेशम् । नो दत्ताः । मनस्येषां प्रवेशावकाशो न दत्त इत्यर्थः ॥ २७ ॥ शब्देति । रमणीयाः । शब्दाद्याः । पञ्च । विषया मायिका अर्था अपि । क्वचित्कदाचिदपि । मे मम । रुचिकराः प्रीत्युत्पादकाः । न सन्ति । तेषु रमणीयविषयेषु । भृशमतिशयितः । अभावः । अस्ति । वै ॥२८॥ यदिति । यत्तु । अहम् । तान्विषयान् । कर्हिचित् । आदरात् । क्षणं क्षणमात्रकालपर्यन्तम् । स्वीकरोमि । तत्तु । स्वभक्ततोषार्थम् स्वभक्तप्रीतिजननायास्ति । क्वापि कदाचिदपि । स्वतुष्टये स्वात्मप्रीत्यर्थं । न तु नैवास्ति ॥ २९ ॥ दैहिक इति । मे मम । सर्वः । दैहिको देहसम्बन्धी । व्यवहारो नानाविधाचतुर्विधान्नखानपान

सद्वस्त्रपरिधान प्रावरण भक्तार्पितोपदेक्षणतत्प्रशंसनादिः क्रिया । देहो ममेदं शरीरं च । सर्वथा सर्वप्रकारेण । भक्तार्थं स्वभक्तप्रीत्यर्थमेव । रक्षितः स्वीकृतोऽस्ति । अत्र मद्देहदैहिकव्यवहारयोः । कश्चन । स्वार्थः स्वप्रयोजनम् । नास्ति । हि ॥३०॥ निःस्पृहत्वेति । मे मम । निःस्पृहत्वस्वभावम् । मत्पार्श्ववर्त्तिनोऽनिशंमत्समीपवासिनः । एते । मुकुन्दसोमवर्माद्या मुकुन्दसोमवर्मपार्षदप्रभृतयो भक्ताः । जानन्ति । इतीत्थम् । अवगम्यताम् ॥३१॥ यथेति । भक्ताः साक्षाद्भगवदुपासकाः । ये साधवः । रम्येषु रमणीयेषु । अर्थेषु मायिकपञ्चविषयेषु । विरागिणोऽनुरागवर्जिताः । यथा कथंचिद्यथातथाविधाप्तवस्तुना । स्वं स्वकीयम् । देहम् । वर्त्तयन्तो निर्वहन्तः । भवन्ति । ते साधवस्तु । पूर्णाः कृतकृत्याः । भवन्ति । इत्येवंविधः । निश्चयः शास्त्रानुभवसिद्धान्तः । अस्ति ॥ ३२ ॥ वच इति । इत्येवंविधम् । उदारं महार्थयुक्तम् । स्वामिनः श्रीहरेः । वचोऽमृतम् । निपीय । सः । साधुर्मुक्तानन्दमुनिः । तथा । सदःस्थाः । अपरे तदितरे । सन्तः साधवः । तथाविधगृहिणश्च । भूरितरप्रतोषं प्रचुरतरानन्दम् । प्रपेदिरे । ते सर्वे । तं श्रीहरिम् । ववन्दिरे नमश्चक्रुः ॥३३॥ स्वस्य प्रसन्नताहेतून् यो जगाद गुणान् हरिः । मयि तद्गुणदृष्ट्यैव प्रसन्नः सोऽस्तु धर्मजः ॥१॥

निःस्पृहत्वस्वभावं मे ह्येते मत्पार्श्ववर्त्तिनः । मुकुन्दसोमवर्माद्या जानन्तीत्यवगम्यताम् ॥ ३१ ॥ यथा कथञ्चित्स्वं देहं वर्त्तयन्तो विरागिणः । रम्येष्वर्थेषु ये भक्तास्ते पूर्णा इति निश्चयः ॥ ३२ ॥ वचोऽमृतं स्वामिन इत्युदारं निपीय साधुः स तथा सदःस्थाः । सन्तोऽपरे भूरितरप्रतोषं प्रपेदिरे तं च ववन्दिरे ते ॥ ३३ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते शताधिकद्वितीयस्तरङ्गः ॥ १०२ ॥ ६ ॥

शकाब्दे विक्रमार्कस्य नगाश्ववसुभूमिते । ऊर्जशुक्लप्रतिपदि वचोऽमृतमिदं हरेः ॥ १ ॥
तत्र कार्यायनग्रामे वास्तुभूपालयाङ्गणे । उच्चमञ्चमहापीठे दीपराजिपरिश्रिते ॥ २ ॥
न्यषीदत्स प्रसन्नास्यः सितवासा वृत्तोऽखिलैः । मुनिभिर्नैकदेशीयैर्निजभक्तगणैः प्रभुः ॥ ३ ॥

इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्सद्गुरुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां शताधिकद्वितीयस्तरङ्गः ॥१०२॥६॥

गृहस्थानां मनोवृत्तिर्हरौ स्यात्सुस्थिरा यतः । वैराग्योत्पत्तिहेतुर्यः श्रेयसो लक्षणं च यत् ॥१॥ आत्यन्तिकस्य भगवन्माहात्म्यसहितं स्फुटम् । एतत्सर्वं सप्तमे तु याथार्थेन प्रकीर्त्तितम् ॥२॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८७७) ऊर्जशुक्लप्रतिपदि कार्त्तिकमासस्य शुक्लपक्षीयप्रतिपत्तिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । न्यषीददिति । तत्र तिथौ । कार्यायनग्रामे । वास्तुभूपालयाङ्गणे दुर्गान्तर्वर्त्तिवास्तुभूपोदङ्मुखभवनाजिरे । दीपराजिपरिश्रिते परितः सहस्रशो दीपश्रेणियुक्ते । उच्चमञ्चे चतुःस्तम्भनिबद्धोच्चपर्यङ्कात्मके । महापीठे स्वास्तृते महत्यासने । प्रसन्नास्यः सुप्रसन्नमुखाम्बुजः । सितवासाः परिधृतसकलश्वेतवसनः । अखिलैर्नानादेशेभ्य उत्सवोपर्यागतत्वात्सकलैः । मुनिभिः साधुभिः । नैकदेशीयैः नैकजनपदागतैः । निजभक्तगणैः स्वकीयगृहस्थभक्तजनवृन्दैश्च । वृतः सभायां परिवेष्टितः । प्रभुः । स श्रीहरिः । न्यषीदत् । इति द्वयोरेकान्वयः ॥ २ ॥ ३ ॥

काशीति । सम्मुखस्थितः । गृहाश्रमी द्वितीयाश्रमस्थः । काशिदासाभिधो गुर्जरदेशान्तर्वर्तिचरोत्तरजनपदान्तःस्थव्युच्यासनग्रामतः श्रीहरिदर्शनार्थमागतो वैश्यजातीय एतन्नामा । भक्तः । प्राञ्जलिः कृताञ्जलिः । विनीतो विनययुक्तः । भूत्वा । तं श्रीहरिम् । प्रणम्य । पप्रच्छ ॥४॥ भगवन्निति । हे भगवन् ! । त्यागिभक्तानां त्वदुपासकानां साध्वादिभक्तजनानाम् । विक्षेपकृदभावतस्त्वन्मूर्तौ ध्यानेन स्वमनोवृत्तिस्थिरतायां विघ्नकर्त्रन्यव्यावहारिककार्यादिसङ्कल्पाभावाद्धेतोः । मनसः । वृत्तिः । ईश्वरे साक्षाद्भगवति । त्वयि । सुस्थाप्या सुखेन स्थापयितुं शक्यैव । भवेत् ॥५॥ व्यावहारिकेति । व्यावहारिककार्येषु । निरन्तरम् । प्रसक्तानाम् । गृहस्थानां गृहस्थाश्रमे वर्त्तमानां मत्प्रमुखानां त्वद्भक्तानां तु । विक्षेपहेतवः । बहवः । सन्ति ॥६॥ अत इति । अतो हेतोः । तेषां गृहस्थभक्तानाम् । मनोवृत्तिः । त्वयि । सुस्थिरा । कथं केनोपायेन । स्यात् । तत् । मे मह्यम् । वद । इत्यमुना प्रकारेण । सम्पृष्टः काशिदासभक्तेनानुयुक्तः । सत्पतिः । स श्रीहरिः । तं काशिदासभक्तम् । प्रोवाच ॥ ७ ॥ मन इति ।

काशिदासाभिधो भक्तस्तं प्रणम्य गृहाश्रमी । पप्रच्छ प्राञ्जलिर्भूत्वा विनीतः सम्मुखस्थितः ॥ ४ ॥ भगवंस्त्यागिभक्तानां विक्षेपकृदभावतः सुस्थाप्या मनसो वृत्तिर्भवेदेवेश्वरे त्वयि ॥ ५ ॥ व्यवहारिककार्येषु प्रसक्तानां निरन्तरम् । गृहस्थानां तु बहवः सन्ति विक्षेपहेतवः ॥ ६ ॥ अतस्तेषां मनोवृत्तिः कथं स्यात्सुस्थिरा त्वयि । तन्मे वदेति सम्पृष्टः स तं प्रोवाच सत्पतिः ॥ ७ ॥ मनःस्थैर्यं भगवति वाञ्छद्भिर्गृहिभिर्जनैः । इत्थं विचारः स्वहृदि दृढः सम्पाद्य आदरात् ॥ ८ ॥ जन्मान्यनेकानि मम व्यतीतानि भवार्णवे । भ्रमतस्तेषु सम्बन्धिजना आसन्पृथक्पृथक् ॥ ९ ॥ कर्मभिर्भ्राम्यमाणेषु यत्र कुत्रापि तेषु मे । यथा नास्त्येव ममता स्नेहश्चापि कदाचन ॥ १० ॥ तथा न स्नेहममते योग्ये अद्यतनेष्वपि । एवं विचार्य स्वधिया दैहिकेष्वखिलेष्वपि ॥ ११ ॥ मायामयेषु तुच्छेषु हित्वा प्रीतिं विचक्षणः । सत्सङ्गं नित्यदा कुर्वन् यो भजेत्कृष्णमादरात् ॥१२॥ गृहस्थस्यापि तस्य स्यात्त्यागिपुंस इव स्थिरा । मनोवृत्तिर्भगवतीत्युक्तोऽसौ मुदितोऽभवत् ॥ १३ ॥

हे भक्त ! । भगवति । मनःस्थैर्यं मनोवृत्तिस्थिरताम् । वाञ्छद्भिः । गृहिभिः । जनैर्भक्तैः । इत्थं वक्ष्यमाणप्रकारेण । स्वहृदि । दृढः । विचारः । आदरात् । सम्पाद्यः संसाध्यः ॥ ८ ॥ जन्मानीति । भवार्णवे संसारसागरे । भ्रमतः । मम । अनेकानि बहूनि । जन्मानि । व्यतीतान्यतिक्रान्तानि । अभवन् । तेषु जन्मसु । सम्बन्धिजनाः पितृमातृभ्रातृकलत्रसुतादयः सम्बन्धवन्तो जनाः । पृथक्पृथक् प्रतिदेहं भिन्नभिन्नाः । आसन्बभूवुः ॥ ९ ॥ कर्मभिरिति । कर्मभिः स्वकृतसाद्विकाद्यनेकविधैः कर्मभिः । यत्र कुत्रापि यस्मिन्कस्मिन्देहे । भ्राम्यमाणेषु तत्तद्देहाहन्तां स्वीकृत्य भ्रमणं कुर्वत्सु । तेषु सम्बन्धिजनेषु । यथा । मे मम । ममता । स्नेहश्च । कदाचनापि । नास्त्येव । तथेत्युत्तरेण सम्बन्धः ॥ १० ॥ तथेति । मायेति । गृहस्थस्येति । तथा तेन प्रकारेणैव । अद्यतनेषु साम्प्रतकालीनदेहभवेषु सम्बन्धिजनेष्वपि । स्नेहममते । योग्ये उचिते । न भवतः । एवममुना प्रकारेण । स्वधिया विवेकवत्या स्वमत्या । विचार्य । मायामयेषु मायाकार्येषु । परिणामिष्वित्यर्थः ।

तुच्छेषु । अखिलेष्वपि । दैहिकेषु देहसम्बन्धिषु । प्रीतिम् । हित्वा । विचक्षणः । यो भक्तः । नित्यदा । सत्सङ्गं भगवदेकान्तिकसाधुसमागमम् । कुर्वन्सन् । आद-रात् । कृष्णम् । भजेत् सप्रेमनवधा सेवेत । गृहस्थस्य गृहाश्रमे वर्त्तमानस्यापि । तस्य भक्तस्य । मनोवृत्तिः । त्यागिपुंसः साधुजनस्येव । भगवति । स्थिरा निश्चला । स्यात् । इत्यमुना प्रकारेण । उक्तः श्रीहरिणोक्तप्रश्नोत्तरः । असौ काशीदासभक्तः । मुदितः सुप्रीतः । अभवत् । इति त्रयाणामेकान्वयः ॥ ११ ॥ १२ ॥ १३ ॥ तदानीमिति । तदानीं तस्मिन्समये । गृहिणः । बहवः । भक्ताः । सद उत्थिताः सभायां कृतोत्थानाः । बद्धाञ्जलिपुटा विहिताञ्जलयश्च सन्तः । कृष्णं श्रीहरिकृष्ण-भगवन्तम् । प्रणम्य । जगदुः ॥ १४ ॥ प्रवृत्तेति । हे प्रभो ! । इह । सत्सङ्गे । गृहिणाम् । येषां भक्तानाम् । प्रवृत्तकर्मविक्षेपात्त्वदुक्तसाधनसम्पत्त्यभावोद्भूतव्यावहा-रिककार्यासक्तिरूपविक्षेपसत्त्वाद्धेतोः । त्वयि । मनःस्थैर्यम् । न भवेत् । तेषां तथाविधानां गृहस्थभक्तानाम् । का गतिः कस्य लोकस्य प्राप्तिः । भविता भविष्यति । इति द्वयोरेकान्वयः ॥ १५ ॥ तानिति । तानेवंवदतो भक्तजनान् । हरिः । उवाच । तैस्तथाविधैर्गृहिभक्तैस्तु । कृष्णाश्रयः साक्षादक्षरधामाधिपतिर्यः पुरुषोत्तमो भगवान् स

तदानीं बहवो भक्ता गृहिणः सद उत्थिताः । बद्धाञ्जलिपुटाः कृष्णं प्रणम्य जगदुः प्रभो ! ॥ १४ ॥
प्रवृत्तकर्मविक्षेपान्मनः स्थैर्यमिह त्वयि । गृहिणां न भवेद्येषां तेषां का भविता गतिः ॥ १५ ॥
तानुवाच हरिस्तैस्तु कार्यः कृष्णाश्रयो दृढः । सद्भ्यश्च कृष्णमाहात्म्यं श्रुत्वा हृद्यवधार्यताम् ॥ १६ ॥
अधमोद्धारकः कृष्णो नूनं पतितपावनः । इति निश्चित्य ते साक्षाद्भजेयुर्नियमस्थिताः ॥ १७ ॥
अथ तान्स्वप्रतापेन यमादिभ्यो दयानिधिः । रक्षित्वा दास्यति हरिः सतीं गतिमितीयताम् ॥ १८ ॥
इत्याश्रुत्य हरेर्वाचं प्रसन्नास्त उपाविशत् । पप्रच्छुरथ सन्तस्तं प्रणम्य जगतां गुरुम् ॥ १९ ॥

एवास्माभिः कृतशरण इत्येवंसोत्साहः श्रीहर्याश्रयः । दृढोऽचलः । कार्यः । सद्भ्यस्तदेकान्तिकसाधुभ्यश्च । कृष्णमाहात्म्यम् । श्रुत्वा । हृदि स्वमनसि । अवधार्यताम् ॥ १६ ॥ अधमेति । कृष्णो मयाधिगतः साक्षाद्धरिः । अधमोद्धारको निकृष्टजात्युत्पन्नगुणहीनशरणागतसंसृत्युद्धारकारकः । पतितपावनोऽज्ञातज्ञातजातमहापापसम्प्राप्त-पतितभावानां स्वशरणगतजनानामपि पवित्रताकारकश्चास्ति । नूनम् । इतीत्थम् । निश्चित्य । नियमस्थिताः सत्सङ्गे पाल्यत्वेन प्रसिद्धेष्वहिंसा ब्रह्मचर्यादिषु गृह्युचित-धर्मेषु सम्यग्वर्त्तमानास्ते भक्ताः । साक्षात्प्रत्यक्षम् । तं श्रीकृष्णम् । भजेयुः ॥ १७ ॥ अथेति । अथैवंविधतत्कृतसाक्षात्कृष्णभजनानन्तरम् । दयानिधिर्निष्कारणापारकरुणा-सागरः । हरिः । तानेवंस्वभजनकर्तृभक्तजनान् । स्वप्रतापेन । यमादिभ्यः । रक्षित्वा । सतीम् । गतिं स्वधामनयनरूपां शोभनगतिम् । दास्यति । इतीत्थम् । ईयतामव-गम्यताम् ॥ १८ ॥ इतीति । इत्येवंविधाम् । हरेः । वाचम् । आश्रुत्य । प्रसन्नाः । ते गृहिणो भक्ताः । उपाविशन्सभायां निषेदुः । अथानन्तरम् । सन्तः सभोप-विष्टाः साधवः । जगतां जगदन्तर्वर्तिसर्वजनानाम् । गुरुं हितोपदेष्टारम् । तं श्रीहरिम् । प्रणम्य । पप्रच्छुः ॥ १९ ॥

वैराग्यस्येति । हे प्रभो ! । वैराग्यस्य मायिकविषयेषु विरक्त्युदयस्य । हेतुः कारणम् । कोऽस्ति । इत्यमुना प्रकारेण तैः पृष्टः । स श्रीहरिः । अथ तेषामेवंविधवचनश्रवणानन्तरम् । तान्साधून् । आह । हे साधवः ! । इहास्मिन् सत्सङ्गे । केषाञ्चिद्भक्तजनानां तु । तद्वैराग्यम् । प्राक्संस्कारबलात् । जायते ॥ २० ॥ बाल्यादिति । तेषां प्राक्संस्कारबलवतां भक्तजनानाम् । बाल्याद्बालावस्थामारभ्यैव । विषयेषु मायिकार्थेषु । विरागा वैराग्ययुक्ता । धीर्मतिः । भवेत् । शुद्धचेतसां शुद्धान्तःकरणानां तेषां भक्तानाम् । तत् । वैराग्यम् । प्रत्यहं प्रतिदिनम् । वर्द्धते साधुसङ्गेन विवर्द्धमानं जायते ॥ २१ ॥ विषयेति । किञ्च । इह सत्सङ्गे । केषाञ्चित् । विषयासक्तपुंसाम् । मुहुः । संसृतिबोधकैः । पुनः पुनर्वोभूयमानजन्ममरणप्रवाहदुःखज्ञापकैरित्यर्थः । सन्तो भगवदेकान्तिकाः साधवश्च सच्छास्त्राणि श्रीभागवतादिसद्ग्रन्थाश्च तेषां वचांसि वाक्यानि तैः । तद्वैराग्यम् । जायते ॥ २२ ॥ तदिति । तद्वैराग्यमपि । मन्दतिव्रविभेदतो मन्दवैराग्यं तीव्रवैराग्यमिति विभेदेन । द्विविधं द्विप्रकारं । ज्ञेयम् । मन्दमल्पधियां मन्दवैराग्यम् । प्रत्यहं प्रतिदिनम् । ह्रसति कृष्णपक्षीयचन्द्रवत्क्षीणं जायते । सद्धियां महामतीनाम् । अन्यत्तीव्रवैराग्यं तु ।

वैराग्यस्य प्रभो ! हेतुः कोऽस्तीत्यथ स आह तान् । प्राक्संस्कारबलात्तत्तु केषाञ्चिदिह जायते ॥ २० ॥ बाल्यादेव भवेत्तेषां विरागा विषयेषु धीः । वैराग्यं वर्द्धते तच्च प्रत्यहं शुद्धचेतसाम् ॥ २१ ॥ विषयासक्तपुंसां च मुहुः संसृति-बोधकैः । सत्सच्छास्त्रवचोभिस्तत्केषाञ्चिदिह जायते ॥ २२ ॥ तदपि द्विविधं ज्ञेयं मन्दतीव्रविभेदतः । ह्रसति प्रत्यहं मन्दं वर्द्धतेऽन्यत्तु सद्धियाम् ॥ २३ ॥ येषां स्यान्मन्दवैराग्यं ते सद्यः स्वगृहादिकम् । हित्वैव त्यागिनो भूत्वा कञ्चित्कालं चरन्ति ह ॥ २४ ॥ ततो भ्रष्टा भवन्त्येते विद्वान्सोऽपि कुसङ्गतः । इतरेषां तु सत्सङ्गात्सद्धीरन्वहमेधते ॥ २५ ॥ बाधितुं शक्यते नैव सा च क्वापि बुधैरपि । भवत्येव हि निर्विघ्नं श्रेय आत्यन्तिकं ततः ॥ २६ ॥

प्रत्यहम् । वर्द्धते शुक्लपक्षीयचन्द्रवद्वृद्धिं गच्छति ॥ २३ ॥ एतदेव स्फुटबोधाय पुनः स्पष्टमाह त्रिभिः । येषामिति । येषां भक्तानाम् । मन्दवैराग्यम् । स्यात् । ते भक्ताः । सद्यः सत्सच्छास्त्रवचःश्रवणे एव । स्वगृहादिकम् । हित्वा परित्यज्यैव । त्यागिनः । भूत्वा । कञ्चित्कालं कियत्कालपर्यन्तम् । ह सर्वजनप्रसिद्धस्फुटसाधु-वेषाः सन्तः । चरन्ति ॥ २४ ॥ तत इति । ततस्तदनन्तरम् । विद्वांसः सर्वज्ञसाधुमण्डलावस्थानेन विज्ञातबहुशास्त्रार्थत्वात्सम्प्राप्तविद्वत्संज्ञा अपि । एते मन्दवैरा-ग्यवन्तो भक्ताः । कुसङ्गतोऽसत्पुरुषसङ्गेन रसनारञ्जनाशनादिकुत्सितवस्तुसङ्गेन वा । भ्रष्टा गृहित्वत्यागित्वच्युता एव । भवन्ति । इतरेषां तीव्रवैराग्यवतां भक्तानां तु । सत्सङ्गात् वैराग्यवदेकान्तिकसाधुप्रसङ्गतः । सद्धीः स्वसाधुतोत्पादिका महामतिः । अन्वहं प्रतिदिनम् । एधते उपचीयमाना जायते ॥ २५ ॥ बाधितुमिति । सा सद्धीः । बुधैः शास्त्रज्ञत्वान्मतिपरीक्षाचरणकुशलनानायुक्त्यानयनप्रवीणपण्डितैरपि । क्वापि कदाचिदपि । बाधितुमन्यथा कर्त्तुम् । नैव । शक्यते । तां बाधितुं ते न शक्नु-वन्तीत्यर्थः । ततस्तेषामित्थंभूतमतिसद्भावाद्धेतोः । निर्विघ्नं यथातथा । आत्यन्तिकम् । श्रेय एव । भवति । ते भक्ता यावज्जीवं त्यागिधर्मेषु यथावत्स्थित्वाऽन्ते आत्यन्तिकं

श्रेयः समधिगच्छन्तीत्यर्थः ॥२६॥ तत इति । तत एवंविधश्रीहरिवाक्यश्रवणानन्तरम् । सन्तः । पुनर्भूयोऽपि । अपृच्छन् । हे प्रभो ! । आत्यन्तिकम् । श्रेयः । किं-लक्षणम् । आत्यन्तिकश्रेयसः स्वरूपं किमित्यर्थः । तत्सिद्धाः संसिद्धात्यन्तिकश्रेयसो भक्ताः । किं लक्ष्माणः कैर्लक्षणैर्ज्ञेयाश्चेत्यर्थः । तत । वद ॥ २७ ॥ 'इत्थं सद्भिर्निजैः पृष्टः श्रीकृष्णः सोऽखिलेश्वरः । प्रसन्नस्तान् जगादेति हर्षयंश्चापरान्निजान्' । जगदुत्पत्त्यादिविधानादिमहिमाववोधपूर्वं साक्षाद्भगवति या सर्वपरभगवत्तानिष्ठा तदेवात्य-न्तिकं श्रेय इत्याह । आत्यन्तिक इति । यर्हि । आत्यन्तिकः । लयः । जायते । तर्हि । स्वकार्यैः प्रधानपुरुषादिभिः । सह । प्रकृतिर्महामाया । पुरुषे महापुरुषे । लीयते । स महापुरुषश्चापि । अक्षरेऽक्षरब्रह्मतेजसि । लीयते ॥ २८ ॥ तदेति । तदा तस्मिन्समये । सच्चिदानन्दरूपम् । एकम् । तेजः । प्रकाशते । ब्रह्माख्येऽक्षरब्रह्मनाम्नि । तत्र तेजसि । पुरुषोत्तमः । भगवान् । राजते ब्रह्मभावापन्नमुक्तकोटिभिः सह संशोभते इत्यर्थः ॥ २९ ॥ तं विशिनष्टि । दिव्येति । दिव्य-मूर्त्तिरतिसुन्दराकृतिः । कृष्णसंज्ञः । दिव्यान्यतिसुन्दराणि वासांसि वस्त्राणि विभूषणान्यलङ्काराश्च यस्य सः । ब्रह्मभूतैरक्षरब्रह्मभावापन्नैः । सहस्रशः । महामुक्तैः ।

ततोऽपृच्छन्पुनः सन्तः श्रेय आत्यन्तिकं प्रभो ! । किं लक्षणं च तत्सिद्धाः किं लक्ष्माणश्च तद्वद ॥२७॥
श्रीहरिरुवाच – आत्यन्तिको लयो यर्हि जायते तर्हि लीयते । सह स्वकार्यैः प्रकृतिः पुरुषे सोऽपि
चाक्षरे ॥ २८ ॥ तदैकं सच्चिदानन्दरूपं तेजः प्रकाशते । ब्रह्माख्ये तत्र भगवान् राजते पुरुषोत्तमः
॥ २९ ॥ दिव्यमूर्त्तिः कृष्णसंज्ञो दिव्यवासोविभूषणः । सेव्यमानो महामुक्तैर्ब्रह्मभूतैः सहस्रशः ॥ ३० ॥
अनन्तशक्त्यधिष्ठाता स एव स्वेच्छया पुनः । वीक्षामात्रेण पुरुषद्वाराऽण्डान्यखिलान्यपि ॥ ३१ ॥
सृजत्यथैषु भ्रमतः कर्मतन्त्रान्स देहिनः । खिन्नान् दृष्ट्वाऽतिकृपया तेषां निःश्रेयसाय वै ॥ ३२ ॥
भूत्वा नराकृतिर्भूमौ चरत्यद्भुतचेष्टितः । नृनाट्यं विदधानं तं निर्गुणं दिव्यविग्रहम् ॥ ३३ ॥

सेव्यमानो नानागन्धपुष्पाद्यैरर्चनपूर्वं स्तुत्वा नत्वा कृतपादसंवाहनः । तथाभूतः सन् राजत इति पूर्वेण सम्बन्धः ॥ ३० ॥ अनन्तेति । अनन्तशक्त्यधिष्ठाताऽपरिमिताणि-मादिशक्तिपतिः । स पुरुषोत्तम एव । स्वेच्छया । वीक्षामात्रेण । पुरुषद्वारा महापुरुषद्वारेण । अखिलान्यपि । अण्डानि । पुनर्भूयः । सृजतीत्युत्तरेण सम्बन्धः ॥ ३१ ॥ सृजतीति । अथैवंब्रह्माण्डसर्गविधानान्तरम् । स भगवान् । एषु ब्रह्माण्डेषु । भ्रमतः । कर्मतन्त्रान् कर्मपरवशान् । अत एव । खिन्नान्कर्मणां नानाविधत्वात्सकलानां तेषां भोगेनातिदीनतां प्राप्तान् । देहिनो जीवान् । दृष्ट्वा । अतिकृपया । तेषां देहिनाम् । निःश्रेयसाय ॥ ३२ ॥ भूत्वेति । नराकृतिर्मनुष्यसमानाकारः । भूत्वा । अद्भुत-चेष्टितोऽत्याश्चर्यकारिदिव्यचरित्रः सन् । भूमौ । चरति । नृनाट्यं स्वाश्रितजनसुखदानाय मनुष्यानुकरणम् । विदधानं कुर्वन्तम् । निर्गुणं मायिकगुणातीतगुणम् । दिव्यविग्रहममायिकसुन्दरशरीरम् । तं साक्षाद्भगवन्तम् ॥ ३३ ॥

असुरा इति । मूढधिषणा भगवन्मूर्त्तिमपि मोहेन स्वसमानां मन्वाना इत्यर्थः । असुरा आसुरसम्पत्तियुक्ता जीवाः । मायिकाङ्गं प्राकृतशरीरम् । वदन्ति । सुधियो भगवत्स्वरूपयथार्थज्ञानयुक्तमतयः । दैवा दैव्या सम्पदा युक्ता भक्तास्तु । मायागुणातीतमतिक्रान्तमायागुणम् । परमक्षरादिभ्योऽप्यत्युत्तमम् । विदुर्जानन्ति । हि । इति त्रयाणामेकान्वयः ॥ ३४ ॥ एष इति । जीवबुद्धिगं भगवत्स्वरूपाज्ञानिजनबुद्धिं प्राप्तम् । मायिकं भगवत्स्वरूपमपि मायामयमित्येवंरूपम् भावमभिप्रायम् । सम्यक् । निराकर्तुं निषेधितुम् । वेदान्ते उपनिषत्सु । एष नराकृतिर्भगवानेव । निर्गुणो गुणातीतः । अरूपो मायामयाकारवर्जितत्वान्निराकारः । उच्यते वस्तुतस्तु दिव्यगुणयुक्तत्वाद्दिव्यरूपवत्त्वात्सगुणः साकारश्चास्तीति भावः ॥ ३५ ॥ स्वातन्त्र्येणेति । अखिलाण्डानामनेककोटिब्रह्माण्डानाम् । स्वातन्त्र्येण । उत्पत्तिस्थितिविनाशकृत् । एषः प्रत्यक्षतया मां मिलितो मनोहराकृतिः श्रीहरिरेवास्ति । इत्येवंविधा । या । निष्ठा साक्षाद्भगवत्स्वरूपज्ञानस्थितिः । तत् । आत्यन्तिकम् । श्रेयः । ज्ञेयम् । हि । भगवत्यचलयैवंभूतनिष्ठया तमेकान्तिकभावेन भजतो ब्रह्मात्मना भगवत्सेवाप्राप्तिलक्षणात्यान्तिककल्याणसत्त्वाचादर्थ्यात्ताच्छब्द्यमितिन्यायेन निष्ठैवात्यन्तिकनिःश्रेयसरूपोक्तेति भावः ॥ ३६ ॥ एवमा-

असुरा मूढधिषणा मायिकाङ्गं वदन्ति हि । दैवास्तु सुधियो मायागुणातीतं परं विदुः ॥ ३४ ॥ एष एव हि वेदान्ते मायिकं जीवबुद्धिगम् भावं सम्यग्निराकर्तुं निर्गुणोऽरूप उच्यते ॥ ३५ ॥ स्वातन्त्रेणाखिलाण्डानामुत्पत्तिस्थितिनाशकृत् । एष एवेति या निष्ठा श्रेय आत्यन्तिकं हि तत् ॥ ३६ ॥ एतस्याः पक्वतां सिद्धिं प्राप्ताः स्युर्ये तु ते नराः । दृग्गोचरे सदेक्षन्ते तमेव पुरुषोत्तमम् ॥ ३७ ॥ इति तद्वचनं सुधया सदृशं मुनयः सुनिशम्य मुदं परमाम् । ययुरानतमौलय आदरतो गृहिणोऽपि च नेमुरमुं सकलाः ॥ ३८ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते शताधिकतृतीयस्तरङ्गः ॥ १०३ ॥ ७ ॥

त्यन्तिकनिःश्रेयसस्वरूपमुक्त्वा तत्सिद्धलक्षणमाह । एतस्या इति । ये । नरा भगवद्भक्तजनाः । एतस्या उक्ताया निष्ठायाः । पक्वतां पक्वतारूपाम् । सिद्धिम् । प्राप्ताः । स्युः । ते भक्तजनास्तु । दृग्गोचरे यो यो दृग्विषयः पदार्थस्तस्मिंस्तस्मिन्नित्यर्थः । पुरुषोत्तममक्षरब्रह्मस्थं सकलैश्वर्यसम्पन्नम् । तं नराकृतिं श्रीहरिमेव । सदा । ईक्षन्ते साक्षात्पश्यन्ति न तु तं तं पदार्थमित्यर्थः ॥ ३७ ॥ इतीति । इत्येवंविधम् । सुधया पीयूषे । नसदृशम् । तद्वचनं श्रीहरिवाक्यम् । सुनिशम्य सम्यक् श्रुत्वा । मुनयः । गृहिणश्चापि । परमाम् । मुदम् । ययुः । सकलाः सर्वेऽपि । आनतमौलयो नामितशिरसः सन्तः । 'उत्तमाङ्गं शिरः पण्ढे मौलि'रिति हैमः । आदरतः । अमुं श्रीहरिम् । नेमुः ॥ ३८ ॥ गृहस्थानां स्वभक्तानां यथा स्वस्मिन्मनः स्थिरम् । यथोत्पन्नो विरागः स्यान्मायिकेषु च वस्तुषु ॥ १ ॥ स्वभक्तैरधिगम्यस्यात्यन्तिकश्रेयसो यथा। लक्षणं तत्प्राप्तलक्ष्म यथाऽस्त्येतच्चतुष्टयम् ॥ २ ॥ श्रीहरिः स्वीयभक्तेभ्यो यो जगाद दयानिधिः । श्रेय आत्यन्तिकं दद्याद्भक्तिधर्मसुतः स मे ॥ ३ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्यकान्तिकोपासकश्रीहरिकृष्णभगवत्पद्मनुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां शताधिकतृतीयस्तरङ्गः ॥१०३॥७॥

अणीयस्त्वमणोश्चापि महीयस्त्वं तथा हरेः । महतोऽपि स्वशक्तिभ्यामष्टमे सफलं स्मृतम् ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८७७) ऊर्जशुक्ले कार्तिकमासस्य शुक्लपक्षे । तुरीयेऽह्नि चतुर्थ्यां तिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । कार्यायनग्रामे । वास्तुभूपस्य । दुर्गे इति शेषः । उदगास्यस्य । वेश्मनस्तस्यैव भवनस्य वितर्दौ बाह्यवेदिकायाम् । महासने स्वास्तृते मञ्चासने । स श्रीहरिः । न्यषीदद्रुपविवेश ॥ २ ॥ वृतमिति । सद्भिर्नाना-देशायातैः साधुभिः । गृहिभिस्तथाविधैर्गृहस्थजनैश्च । परितः सर्वतः । वृतं सभायां संवेष्टितम् । सितवाससं परिधृतसकलश्वेतवसनम् । तं श्रीहरिम् । प्रणम्य । पुरतोऽग्रे । स्थितः । मुक्तानन्दो मुनिः । पप्रच्छ ॥ ३ ॥ वेदेति । हे प्रभो ! । वेदशास्त्रपुराणेषु । भगवान् । परमेश्वरः । त्वम् । अणोरणीयान्सूक्ष्मादप्यतिसूक्ष्मः । महतः स्थूलात् । महीयानतिस्थूलश्चासि । इतीत्थम् । कीर्त्यसे । हि ॥ ४ ॥ एकस्येति । एकस्यैव । ते भवतः । द्विधाभावोऽणुत्वेन महत्त्वेन च भवनम् । परस्परम् ।

शकाब्दे विक्रमार्कस्य नगाश्ववसुभूमिते । ऊर्जशुक्ले तुरीयेऽह्नी वचोऽमृतमिदं हरेः ॥१॥ तत्र कार्यायनग्रामे वास्तुभूपस्य वेश्मनः । वितर्दावुदगास्यस्य न्यषीदन्महासने ॥ २ ॥ वृतं सद्भिश्च गृहिभिः परितः सितवास-सम् । पप्रच्छ मुक्तानन्दस्तं प्रणम्य पुरतः स्थितः ॥ ३ ॥ वेदशास्त्रपुराणेषु भगवांस्त्वं हि कीर्त्यसे । अणोरणीयान्महतो महीयानिति च प्रभो ! ॥ ४ ॥ एकस्यैव द्विधाभावो विरुद्धस्ते परस्परम् । कथं सम्भवतीत्ये-तत्कृपया वक्तुमर्हसि ॥ ५ ॥ तज्ज्ञानेन च भक्तानां फलं निष्पद्यते कियत् । तच्च ब्रूहीति सम्पृष्टस्तेनोवाच स सर्ववित् ॥६॥ एकस्य वस्तुतो नास्ति द्विधाभावः सदुत्तम ! । स्थूलता सूक्ष्मता चेति द्वे शक्ती भवतः प्रभोः ॥ ७ ॥ स्थूलान् पदार्थान्तत्राद्या धारयित्वाऽस्ति संस्थिता । सूक्ष्मांश्च सकलान्सूक्ष्मा भगवांस्तूभयाश्रयः ॥ ८ ॥

विरुद्धोऽस्ति । अतः । कथम् । सम्भवति । एकस्य ते स कथं घटेतेत्यर्थः । इत्येतत्तस्य तवैतद्द्विधाभवनम् । कृपया । वक्तुम् । अर्हसि ॥ ५ ॥ तदिति । तज्ज्ञानेन भवतोऽणुत्वमहत्त्ववेदनेन । भक्तानाम् । फलं च । कियत्किमात्मकम् । निष्पद्यते सम्पन्नं जायते । तच्च । ब्रूहि । इत्यमुना प्रकारेण । तेन मुक्तानन्दमुनिना । सम्पृष्टः । सर्ववित्सर्वज्ञः । स श्रीहरिः । उवाच मुक्तानन्दमुनिं जगाद ॥ ६ ॥ एकस्येति । हे सदुत्तम ! । एकस्य भगवतः । वस्तुतः स्वरूपतः । द्विधाभावः । नास्ति । किन्तु । स्थूलता महत्त्वरूपा । सूक्ष्मताऽणुत्वरूपा च । इत्येवंविधाद्वे । प्रभोः श्रीकृष्णस्य । द्वे । शक्ती । भवतः ॥ ७ ॥ स्थूलानिति । तत्र तयोर्द्वयोः शक्त्योर्मध्ये । आद्या स्थूलतारूपा शक्तिः । स्थूलान् महतः । सकलान् । पदार्थान्वक्ष्यमाणान् । धारयित्वा । संस्थिता । अस्ति । सूक्ष्मा सूक्ष्मतारूपा द्वितीया शक्तिः । सूक्ष्मानणुरूपान् । सकलान् । पदार्थान्वक्ष्यमाणान् । धारयित्वा । संस्थिता । अस्ति । भगवान् श्रीकृष्णस्तु । उभयाश्रयः शक्तिद्वयाधारः । अस्ति ॥ ८ ॥

तत्रेति । तत्र तेषु स्थूलसूक्ष्मेषु पदार्थेषु मध्ये । स्थास्नुजङ्गमानि स्थावराणि जङ्गमानि च । सर्वदेहिनाम् । वपूंषि देहाः । तथा । चतुर्दशसङ्ख्याकाः । लोकाः पातालादिसत्यान्तानि भुवनानि । सावरणः विशेषशब्दवाच्यपृथिव्याद्यष्टावरणसहितः । विराड्विराट्संज्ञः । देहो वैराजपुरुषशरीरम् ॥ ९ ॥ प्रधानेति । प्राधानाधिष्ठातृदेहः प्रधानपुरुषशरीरम् । आदिमम् । तत्त्वम् । प्रधानं प्रधानप्रकृतिः । एतत् । एकम् । ब्रह्माण्डम् । तादृशानि तथाविधानि । अनेकशोऽपरिमितानि । ब्रह्माण्डानि ॥ १० ॥ महेति । महापुरुषदेहः । मूलप्रकृतिश्च । इत्यमीत्येते । स्थूलाः । पदार्थाः । कथिता । ते च । स्थूलदृष्टिभिस्तत्तल्लोकवासिभिः स्थूलदृग्भिर्जनैः । दृश्याः वीक्षणीयाः । सन्ति । इति त्रयाणामेकसम्बन्धः ॥ ११ ॥ अथेति । अथ च । एतेषां स्थास्न्वादिमूलप्रकृत्यन्तानाम् । शरीराणां सम्बन्धिनः । ये । पृथक् पृथक् भिन्नभिन्नाः । आत्मनो जीवाः । ते । सर्वे । सूक्ष्माः । स्वतः । शुद्धाः । निर्गुणाश्च । सन्ति ॥ १२ ॥ एतेषामिति । एतेषाम् । सर्वेषामपि आत्मनाम् । आधारः । यत् । अक्षरम् । बृहद्ब्रह्म । तत् । अतिसूक्ष्मम् । अस्ति । इत्येते आत्मादि बृहदन्ताः सूक्ष्मभावाः सूक्ष्मपदार्थाः । उदाहृताः ॥ १३ ॥ तत्रेति । यत्र तेषु द्विविधपदार्थेषु मध्ये ।

तत्र स्थास्नुजङ्गमानि वपूंषि सर्वदेहिनाम् । लोकाश्चतुर्दश तथा देहः सावरणो विराट् ॥ ९ ॥ प्रधानाधिष्ठातृदेहः प्रधानं तत्त्वमादिमम् । एतद्ब्रह्माण्डमेकं हि तादृशानि त्वनेकशः ॥ १० ॥ महापुरुषदेहश्च मूलप्रकृतिरित्यमी । पदार्थाः कथिताः स्थूला दृश्याश्च स्थूलदृष्टिभिः ॥११॥ अथैतेषां शरीराणामात्मानो ये पृथक् पृथक् । सर्वे सूक्ष्मा हि ते सन्ति स्वतः शुद्धाश्च निर्गुणाः ॥ १२ ॥ एतेषामपि सर्वेषामाधारश्चाक्षरं बृहत् । अतिसूक्ष्मं तदस्तीति सूक्ष्मभावा उदाहृताः ॥ १३ ॥ तत्र स्थूलान् पदार्थांस्तु स्थूलशक्ती रमापतेः ! । व्याप्य प्रकाशयत्येव तेभ्यः स्थूलान्तरे बहिः ॥ १४ ॥ सूक्ष्मशक्तिस्तथा सूक्ष्मान् पदार्थांश्चान्तरे बहिः । व्याप्य प्रकाशयत्यस्याः सूक्ष्मेभ्योऽस्त्यतिसूक्ष्मता ॥१५॥ प्रकाशकेभ्यः सर्वेभ्योऽतिप्रकाशेयमस्ति च । अतिशुद्धा च शुद्धेभ्य आकाश इव निर्मला ॥ १६ ॥ स्थूलाः पदार्थाः सगुणा भवन्ति सकला अपि । सगुणेत्यप्यतः प्रोक्ता शक्तिस्तेषां प्रकाशिकाः ॥ १७ ॥

स्थूलान् । पदार्थांस्तु । तेभ्यः स्थूलपदार्थेभ्योऽपि । स्थूला । रमापतेः श्रीकृष्णस्य । स्थूलशक्तिः । अन्तरे तन्मध्ये । बहिस्ततो बहिर्भागे । व्याप्यैव । प्रकाशयति ॥१४॥ सूक्ष्मेति । तथा तथैव । सूक्ष्मशक्ति हरेः सूक्ष्माभिधानाशक्तिः । सूक्ष्मान् । पदार्थान् । अन्तरे । बहिश्च । व्याप्य । प्रकाशयति । अस्याः सूक्ष्मशक्तेः । सूक्ष्मेभ्यः सूक्ष्मपदार्थेभ्यः । अतिसूक्ष्मता । अस्ति ॥१५॥ प्रकाशेभ्य इति । इयं हरेः सूक्ष्मशक्तिः । सर्वेभ्यः । प्रकाशकेभ्योऽक्षरब्रह्मादिसूक्ष्मपदार्थेभ्योऽपि । अतिप्रकाशाऽत्यन्तप्रकाशरूपा । अस्ति । शुद्धेभ्यो शुद्धिमद्भ्यस्तेभ्यः । अतिशुद्धाऽत्यन्तशुद्धिमती चास्ति । आकाश इव नभोवत् । निर्मला । असङ्गिनी चास्तीत्यर्थः ॥ १६ ॥ स्थूला इति । सकला अपि । स्थूलाः । पदार्थाः । सगुणाः सगुणसंज्ञाः । भवन्ति । अतो हेतोः । तेषां सगुणस्थूलपदार्थानाम् । प्रकाशिका । शक्तिर्हरेः स्थूलशक्तिः । सगुणा सगुणसंज्ञा । इत्यपीत्थमपि । प्रोक्ता ॥ १७ ॥

तथेति । तथा तेन प्रकारेणैव । सर्वेऽपि । सूक्ष्माः । पदार्थाः । निर्गुणा निर्गुणसंज्ञाः । सन्ति । ततो हेतोः । तेषां निर्गुणसूक्ष्मपदार्थानाम् । प्रकाशिका । शक्तिर्हरेः सूक्ष्मशक्तिः । निर्गुणा निर्गुणसंज्ञा । इतीत्थम् । उदिता ॥ १८ ॥ एतदिति । यस्य भगवतः । एतत्स्थूलसूक्ष्मात्मकम् । शक्तिद्वयम् । अस्ति । सः शक्तिद्वयाधारः । भगवान् । कीदृशः किंविधः । अस्ति । इतीत्थं पृच्छसि चेत् । तर्हि । वदामि । स्वयम् । कृष्णः । स भगवान् । नराकृतिः सन् । प्रकटो भवदादिसकलभक्तनयनविषयः । अस्ति ॥ १९ ॥ यद्यप्युक्तमहिमः कृष्णः स्वयं श्रीहरिरेवास्त्यथापि शास्त्रीयं स्वमुखेनात्मश्लाघानिषेधं स्वस्य परोक्षप्रियत्वं चाङ्गीकृत्योक्तविधे स्वस्थे द्वे शक्ती श्रीकृष्णे निर्दिशंस्तदात्मत्वात्स्वस्य भङ्ग्यात्मनि कथयति नवभिः । स्वेति । भूमौ । सर्वदेहिनाम् । श्रेयसे । नृत्वं मनुष्यभावम् । नाव्यताऽनुकुर्वता । तेन श्रीकृष्णेन भगवता । स्वनिष्ठे स्वस्मिन्वर्त्तमाने । द्वे । अपि । शक्ती । दर्शिते स्वस्वरूपे एव सम्प्रदर्शिते । अभवताम् । हि ॥ २० ॥ अल्पक इति । अल्पके बालत्वादल्पप्रमाणेऽपि । स्वस्य । मुखे । स्वमातरं यशोदाम् । विश्वरूपमन्तर्गतनानाविधरचनाविशिष्टं ब्रह्माण्डम् । दर्शयन्सन् । निजेच्छया स्वकीयसङ्क-

तथा सूक्ष्माः पदार्थाश्च सन्ति सर्वेऽपि निर्गुणाः । तेषां प्रकाशिका शक्तिर्निर्गुणेत्युदिता ततः ॥ १८ ॥ एतच्छक्तिद्वयं यस्य भगवान्सोऽस्ति कीदृशः । इति चेत्प्रकटः सोऽस्ति स्वयं कृष्णो नराकृतिः ॥ १९ ॥ स्वनिष्ठे दर्शिते एव शक्ती द्वे अपि तेन हि । नृत्वं नाव्यता भूमौ श्रेयसे सर्वदेहिनाम् ॥ २० ॥ अल्पकेऽपि मुखे स्वस्य विश्वरूपं स्वमातरम् । दर्शयन्स्थूलशक्तिमाविश्चक्रे निजेच्छया ॥ २१ ॥ गोपदेहस्थिताञ्जीवान् धाम नीत्वा निजं परम् । ततः प्रत्यानयन्सूक्ष्मशक्तिमाविश्चकार सः ॥ २२ ॥ स्थूलशक्तिः सूक्ष्मभावान् श्रीकृष्णस्येच्छया क्वचित् । तत्क्षणं वाऽनुक्रमेण स्थूलतामपि लम्भयेत् ॥ २३ ॥ तथैव सूक्ष्मशक्तिश्च स्थूलभावान्कदाचन । सुक्ष्मतां प्रापयेदेव वाञ्छया परमात्मनः ॥ २४ ॥ एतद्द्वयमपि क्षोण्यां तेनैवाक्लिष्टकर्मणा । मनुष्यभावं दधता स्वेच्छयैव प्रदर्शितम् ॥ २५ ॥

ल्पेन । स्थूलताशक्तिम् । आविश्चक्रे प्रकटयामास ॥ २१ ॥ गोपेति । स श्रीकृष्णः गोपदेहस्थितान्नन्दोपनन्दादिव्रजवासिगोपशरीरस्थितान् जीवान् । निजं स्वकीयम् । परम् । धाम लोकम् । नित्वा । ततो निजधाम्नः सकाशात् । प्रत्यानयन् परावृत्तान्कुर्वन् सन् । सूक्ष्मशक्तिम् । आविश्चकार ॥ २२ ॥ स्थूलेति । क्वचित्कदाचित् । स्थूलशक्तिः । श्रीकृष्णस्य । इच्छया । सूक्ष्मभावान्सूक्ष्मपदार्थान् । तत्क्षणम् । अथवा । अनुक्रमेण । स्थूलतामपि । लम्भयेत्प्रापयेत् ॥ २३ ॥ तथेति । तथैव तेन प्रकारेणैव । कदाचन । सूक्ष्मशक्तिः । परमात्मनः श्रीकृष्णस्य । वाञ्छयेच्छया । स्थूलभावान्स्थूलपदार्थान् । सूक्ष्मभावम् । प्रापयेदेव ॥ २४ ॥ एतदिति । एतत् । द्वयम् । सूक्ष्मपदार्थानां स्थूलशक्त्या स्थूलतापादनं स्थूलपदार्थानां सूक्ष्मशक्त्या सूक्ष्मतापादनमिति द्वयमपीत्यर्थः । क्षोण्यां पृथिव्याम् । मनुष्यभावम् । दधता । अक्लिष्टकर्मणाऽनायासेनैव सहसा सर्वकार्याणि निष्पादयता । तेन कृष्णनैव । स्वेच्छयैव । प्रदर्शितम् ॥ २५ ॥

द्वार्वतीवासिविप्रस्य । भूमहृतानव्याकृतधामवासिना भूमपुरुषेणापहृतान् । पुत्रान् । पुनर्भूयः । प्रत्यानेतुं ततः प्रत्याहर्त्तुम् । स श्रीकृष्णः सार्जुनो द्विजपुत्रानयनप्रतिज्ञावतार्जुनेन सहितः सन् । रथेन रथमारुह्येत्यर्थः । भूमधाम । अगाज्जगाम ॥ २६ ॥ साश्वमिति । तदा तस्मिन्समये । साश्वमश्वसहितम् । स्थूलम् । रथम् । सूक्ष्मशक्त्यैव । सूक्ष्मताम् । प्रापय्य । चक्रेण सुदर्शनेन । मायामयम् । तमः । छित्त्वा । ययौ तद्धाम प्राप्तवान् ॥ २७ ॥ भूमेति । दिव्यममायिकम् । सौक्ष्म्यं सुक्ष्मभावम् । उपागतान्सम्प्राप्तान् । भूमान्तिकस्थान् भूमपुरुषसमीपावस्थितान् । विप्रार्भान् द्वारवतीयब्राह्मणसुतान् । स्थूलशक्त्या । स्थूलभावम् । प्रत्यानीय पुनः सङ्गमय्य । अन्यथा विनष्टकर्म जन्म स्थूलदेहानां तेषामकस्मात्पुनः स्थूलदेहसम्बन्धानुपपत्तेरिति भावः । पुनः । अनयत् द्वारवतीस्थविप्रं सङ्गमयां चकार ॥ २८ ॥ एवमिति । भूतले । नराकृतावपि । भगवति । एवंविधा इत्थंप्रकाराः । अन्या अपि । सहस्रशः । शक्तयः । भवन्त्येव । हि ॥ २० ॥ अत इति । अतो हेतोरेव । नराकृतेरपि । अस्य भगवतः । महिम्नः । पारमन्तम् । केऽपि । न यान्ति । हि । नराकृतेः । अस्य भगवतः । दिव्यत्वं दिव्यभावोऽपि । एतदेव ।

द्वार्वतीवासिविप्रस्य पुत्रान्भूमहृतान्पुनः । प्रत्यानेतुं भूमधाम रथेनागात्स सार्ज्जुनः ॥२६॥ सार्श्वं रथं तदा स्थूलं सूक्ष्मशक्त्यैव सूक्ष्मताम् । प्रापय्य छित्वा चक्रेण तमो मायामयं ययौ ॥ २७ ॥ भूमान्तिकस्थान्विप्रार्भान् दिव्यं सौक्ष्म्यमुपागतान् । प्रत्यानीय स्थूलभावं स्थूलशक्त्याऽनयत्पुनः ॥ २८ ॥ एवंविधा भवति नराकृतावपि भूतले । अन्या अपि भवन्त्येव शक्तयो हि सहस्रशः ॥२९॥ अत एव महिम्नोऽस्य पारं यान्ति न केऽपि हि । एतदेव हि दिव्यत्वमप्यस्योह्यं नराकृतेः ॥३०॥ शक्तिशक्तिमतोः शास्त्रेष्वभेदस्य विवक्षया । शक्तिमान्भगवानेव सूक्ष्मः स्थूलश्च कीर्त्यते ॥३१॥ अतो न संशयः कार्यः सूक्ष्मस्य स्थूलता कथम् । स्थूलस्य सूक्ष्मता चेति शक्तिकोटिपतिः प्रभुः ॥ ३२ ॥ एवं ज्ञात्वा भजन्ते ये तेषां कालकर्मतः । मायायाश्च भयं नास्ति वर्त्तेताश्चर्यमन्तरे ॥ ३३ ॥

उह्यं विचारणीयम् । हि ॥ ३० ॥ शक्तीति । शास्त्रेषु । शक्तिशक्तिमतोः । अभेदस्य । विवक्षया वक्तुमिच्छया । शक्तिमान् । भगवानेव । स्थूलः । सूक्ष्मश्च । कीर्त्यते । शक्तिशक्तिमतोरभेदउक्तः कूर्मपुराणे । 'शक्तिशक्तिमतोर्भेदं वदन्त्यपरमार्थतः । अभेदमनुपश्यन्ति मुनयस्तत्त्वचिन्तका'इति ॥ ३१ ॥ अत इति । अतो हेतोः । सूक्ष्मस्याणोर्भगवतः । स्थूलता महत्ता । कथम् । स्थूलस्य महतो भगवतः । सूक्ष्मताऽणुता च । कथम् । इत्येवंविधः । संशयः । न कार्यः । यतः । प्रभुः साक्षाच्छ्रीकृष्णः । शक्तिकोटिपतिरपरिमितैवंविधशक्तिस्वामी । अस्ति । ततोऽस्मिन्सर्वं युक्तमेवास्तीति भावः ॥ ३२ ॥ द्वितीयप्रश्नोत्तरमाह । एवमिति । ये भक्ताः । तं साक्षाद्धरिम् । एवमेवंविधैश्वर्ययुक्तम् । ज्ञात्वा । भजन्ते स्वस्वधर्मावस्थिताः सन्तो नवधा परिचिन्ति । तेषां भक्तानाम् । कालकर्मतः कालात्कर्मभ्यश्च । मायायाश्च सकाशाच्च । भयम् । नास्ति । अन्तरे तेषामन्तःकरणे । आश्चर्यम् । वर्त्तेत ॥ ३३ ॥

निपीयेति । इत्येवंविधाम् । पीयूषमिवामृतसदृशीम् । वाचस्पतेः शास्त्रयोनेः । तस्य श्रीहरेः । वाचम् । निपीय । सः । मुनिर्मुक्तानन्दसाधुः । परम् । तोषम् । प्रापत् । सदोनिषण्णाः । ये । अपरे । सन्तः गृहस्थाश्च । तेऽपि । परं तोषं प्रापुः ॥ ३४ ॥ स्वशक्तिभ्यामणीयस्त्वं महीयस्त्वं स्वकीयम् । सफलं प्राह यः स्वामी स मे दृग्गोचरोऽस्तु वै ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्स्तुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां शताधिकश्चतुर्थस्तरङ्गः ॥ १०४ ॥ ८ ॥

कोपस्य दुष्टता तस्य जेयता सर्वथा सताम् । भक्तागुणाग्रहश्चोक्तो नवमे तु सहेतुकः ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८७७) कार्त्तिकसिते कार्त्तिकमासस्य शुक्लपक्षे । पञ्चम्यां तिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । कार्यायनग्रामे । वास्तुभूपतेः । दुर्गे इति शेषः । सौम्यास्यस्योदङ्मुखस्य । वेश्मनस्तस्यैव । भवनस्य । बहिर्वेद्याम् । वरासने स्वास्तृते मञ्चोत्तमविष्टरे । स श्रीहरिः । न्यषीदत् ॥ २ ॥ नैकेति । नैकदेशागतैर्नानादेशा-

निपीय पीयूषमिवेति वाचं वाचस्पतेस्तस्य मुनिः स तोषम् । प्रापत् परं ये च सदोनिषण्णाः सन्तो गृहस्था अपरे च तेऽपि ॥ ३४ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते शताधिकश्चतुर्थस्तरङ्गः ॥ १०४ ॥ ८ ॥

शकाब्दे विक्रमार्कस्य नगाश्ववसुभूमिते । पञ्चम्यां कार्त्तिकसिते वचोऽमृतमिदं हरेः ॥ १ ॥ तत्र कार्यायनग्रामे वेश्मनो वास्तुभूपतेः । सौम्यास्यस्य बहिर्वेद्यां न्यषीदत्स वरासने ॥ २ ॥ नैकदेशागतैर्भक्तैः सद्भिश्च गृदिभिर्वृतः । सितवासा दधत्पाणौ दक्षे तुलसिकास्रजम् ॥३॥ सन्तौ ब्रह्मानन्दनित्यानन्दौ प्रति स केषुचित् । सत्सु किञ्चिच्छिष्टदोषं निराकुर्वन्नुवाच ह ॥ ४ ॥ सतां त्यक्तगृहादीनां कोपतद्ग्रन्थिवन्धने । यदि स्यातां हृदि तदा वाच्यास्ते साधवो न वा ॥ ५ ॥ तावूचतुः प्रभो नैते साधवः साधुलक्षणाः । भूर्यनर्थावहक्रोधवशं यान्ति यतोऽत्र ते ॥ ६ ॥

यातैः । भक्तैः साक्षाद्भगवन्तं स्वमाश्रितैः । सद्भिस्त्यागिभिः । गृहिभिश्च । वृतः सभायां परिवेष्टितः । सितवासाः परिधृतसकलश्वेतवसनः । दक्षे दक्षिणे । पाणौ । तुलसिकास्रजं जपार्थकां तुलसीकाष्ठमणिमालिकाम् । दधत् ॥ ३ ॥ सन्ताविति । स श्रीहरिः । केषुचित् । सत्सु । किञ्चिच्छिष्टदोषमल्पमात्रावशेषं वक्ष्यमाणदोषम् । निराकुर्वंस्तेभ्योऽपनेतुम् । ब्रह्मानन्दनित्यानन्दावेतन्नामानौ । सन्तौ साधू । ह स्फुटं यथातथा । उवाच । इति द्वयोरेकान्वयः ॥ ४ ॥ सतामिति । हे साधू ! । त्यक्तगृहादीनाम् । सतां साधूनाम् । हृदि मानसे । यदि कोपतद्ग्रन्थिवन्धने क्रोधस्तत्सम्बन्धिग्रन्थिबन्धनं च । स्यातां वर्त्तेयाताम् । तदा । ते कोपतद्ग्रन्थिमन्तः सन्तः । साधवः साधुसंज्ञाः । वाच्याः । न वा । ते साधुसंज्ञया व्यवहर्त्तव्याः स्युर्न स्युः किमित्यर्थः ॥ ५ ॥ ताविति । तौ श्रीहरिणैवमनुयुक्तौ ब्रह्मानन्दनित्यानन्दौ साधू । ऊचतुः । हे प्रभो ! । अत्र सत्सङ्गे । एते कोपतद्ग्रन्थिमन्तो ये ते । साधुलक्षणाः । साधवः । नैव स्युः । यतो हेतोः । ते तथाभूताः साधवः । भूर्यनर्थावहक्रोधवशं प्रचुरानर्थसम्पादककोपाधीनताम् । यान्ति ॥ ६ ॥

क्षुधिति । क्षुच्च तृट्च त्रिकालगुणाः शीतोष्णवर्षाणि च मारुतः प्राणो बाह्यो वा वायुश्च जैह्वा जिह्वोपभोगाश्च शैश्नाः शिश्नोपभोगाश्च तान् । अस्मान् । अपारजलधीनगाधसमुद्रतुल्यान् । केचिन्मुनयः । अतितीर्य विलङ्घ्य पराभाव्येत्यर्थः । गोः पदे । मज्जन्ति । कुतः । विफलस्य काममोक्षादिफलवर्जितस्य । क्रोधस्य । वशमधीनताम् । यान्ति गच्छन्ति । दुश्चरतपः । वृथा निष्प्रयोजनमेव । उत्सृजन्ति शापादिना त्यजन्ति । 'क्रोधिनां तपो न कामभोगाय नापि मोक्षाय जायतेऽतस्ते मन्दा'इत्यर्थः ॥ ७ ॥ इतीति । इत्यमुना प्रकारेण । भागवते श्रीमद्भागवतैकादशस्कन्धे क्रोधवशत्वस्य । निन्दा । श्रुताऽस्ति । अतो हेतोः । सद्भिस्सदाश्रितसाधुभिरस्माभिः । रिपुरन्तर्वैरी । स क्रोधः । क्षमया गुणेन । प्रयत्नेन प्रयासेनापि । जेयः साधुत्वसिद्धये पराभाव्यः ॥ ८ ॥ तयोरिति । इतीत्थंभूतम् । तयोर्ब्रह्मानन्दनित्यानन्दयोः । वचः । श्रुत्वा । प्रसन्नः । प्रभुः । स श्रीहरिः । क्षमाम् । प्रशशंसा श्रीभागवतादिसच्छास्त्रवाक्यैर्बहुधा क्षमाप्रशंसां कृतवानित्यर्थः । अथानन्तरम् । मुक्तानन्दः । सन्साधुः । तं श्रीहरिम् । प्रभो इति संबुध्याभिमुखीकृत्य । पप्रच्छ ॥ ९ ॥ भक्त इति । हे हरे ! । तव भक्ते त्वदुपासकजनेऽपि । कश्चित् देशकाल-

क्षुत्तृट्त्रिकालगुणमारुतजैह्वशैश्नानस्मानपारजलधीनतितीर्य केचित् । क्रोधस्य यान्ति विफलस्य वशं पदे गोर्मज्जन्ति दुश्चरतपश्च वृथोत्सृजन्ति ॥ ७ ॥ इति क्रोधवशत्वस्य निन्दा भागवते श्रुता । अतः सद्भिः प्रयत्नेन स जेयः क्षमया रिपुः ॥ ८ ॥
तयोरिति वचः श्रुत्वा प्रसन्नः स क्षमां प्रभुः प्रशशंसाऽथ तं मुक्तानन्दः पप्रच्छ सन् प्रभो ! ॥ ९ ॥ भक्तेऽपि तेऽगुणं कश्चिद् दृष्ट्वा क्रोधोदयो भवेत् । स केन नैव गृह्येत साधनेनानुशाधि तत् ॥१०॥ श्रीहरिरुवाच—यस्तु कृष्णस्य भक्तोऽस्ति तस्मिंश्चेदगुणो भवेत् । तदा कृष्णस्य माहात्म्यवेत्ता गृह्णाति तं न हि ॥११॥ अवरस्यापि भक्तस्य गुणा एव मनीषिभिः । गृह्यन्ते नागुणः क्वापि कृष्णमाहात्म्यवेदिभिः ॥ १२ ॥ उद्धवेन महाभागवतेनापि व्रजे गुणाः । गृहीता वर्णिताश्चापि मुहुर्वल्लवयोषिताम् ॥१३॥ तासां पादरजः स्पर्शं तत्र प्राप्नुवतां क्वचित् । अपि गुल्मतृणादीनां मध्ये जन्मार्थितं स्वकम् ॥ १४ ॥

सम्बन्धजं दैहिकं स्वाभाविकं वा यं कमपि । अगुणं दोषम् । दृष्ट्वा । क्रोधोदयः । भवेत् । स तथाविधस्त्वद्भक्तागुणः । केन । साधनेन । नैव गृह्येत । तत्तथाविधं साधनम् । अनुशाधि मह्ममुपदिश ॥ १० ॥ 'मुक्तानन्देन मुनिना पृष्ट इत्थं स सत्पतिः । तं स्वामी सुखयन्प्रोचे स्वाश्रितांश्चापरा'निति । य इति । हे मुने ! । यो जनः । कृष्णस्य साक्षाद्धरेः । भक्तः । अस्ति । चेद्यदि । तस्मिन् भक्ते । अगुणो देशकालादिजः कश्चिद्दोषः । भवेत् । तदा । कृष्णस्य । माहात्म्यवेत्ता । दोषम् । न हि नैव । गृह्णाति ॥ ११ ॥ अवरस्येति । माहात्म्यवेदिभिः । मनीषिभिर्विवेकीहरिभक्तजनैः । अवरस्य स्वस्मान्नीचजातेरपि । भक्तस्य । गुणाः स्वधर्मभक्तिप्रमुखा एव । गृह्यन्ते । अगुणः । क्वापि कदाचिदपि । न गृह्यते ॥ १२ ॥ उद्धवेनेति । महाभागवतेन । उद्धवेनापि । व्रजे । वल्लवयोषितां गोपीनाम् । गुणाः । गृहीताः । मुहुः । वर्णिताश्चापि ॥ १३ ॥ तासामिति । तत्र व्रजे । तासां गोपीनाम् । पादरजः स्पर्शम् । क्वचित्कदाचित् । प्राप्नुवताम् । गुल्मतृणादीनां स्तम्बघासादीनाम् ।

मध्येऽपि । स्वकं स्वीयम् । जन्म । अर्थितं प्रार्थितम् । तथा चोक्तं श्रीभागवते । 'आसामहो चरणरेणुजुषामहं स्या'मित्यादिना ॥ १४ ॥ ब्रह्मणेति । त्वकेषु त्वदीयेषु । व्रजवासिषु । देहिषु मनुष्यपशुपक्ष्यादिषु शरीरिषु मध्ये । यत्र कुत्रापि । अहम् । भूत्वा । त्वाम् । भजै । इत्यमुना प्रकारेण । ब्रह्मणाऽपि । कृष्णः । अर्थितो वरं याचितः । तथा चोक्तं श्रीभागवते । 'तदस्तु मे नाथ ! स भूरिभाग'इत्यादिना ॥१५॥ एवमिति । एवममुना प्रकारेण । यः । कोऽपि । सुधीर्विवेकयुक्ता मतिः । पूरुषो भक्तः । भगवन्माहात्म्यम् । वेत्ति । स पुरुषस्तु । क्वापि कदाचिदपि । भक्तस्य । अगुणम् । न गृह्णीयात् ॥ १६ ॥ कृष्णेति । सुज्ञा भगवन्महिमातिशयाभिज्ञाजनास्तु । कृष्णसम्बन्धम् । आपन्नान् । पशुपक्षिद्रुमादिकानपि । देववत् । पूजनोचितान्पूजनार्हान् । जानन्ति । एतदप्युक्तं श्रीभागवते । 'अहो अमी देववरामरार्चित'मित्यादिना ॥ १७ ॥ तदेति । तदा । कृष्णस्य साक्षाद्धरेर्ध्यानं च पूजा च नामस्मृतिश्च ता आदयो येषां दासत्वादीनां तेषां कारकास्तान् । मानवान् । देवतुल्यान् । जानीयुः । इत्यत्र तु । पुनः । किं वाच्यम् ॥ १८ ॥ सद्भ्य इति । ये तु । सद्भ्यो भगवदेकान्तिकसाधुभ्यः । कृष्णमाहात्म्यम् । न विदुः । असद्धियोऽविवेक-

ब्रह्मणाऽप्यर्थितः कृष्णो व्रजवासिषु देहिषु । भूत्वाऽहं यत्र कुत्रापि त्वत्केषु त्वां भजा इति ॥ १५ ॥
एवं यः कोऽपि भगवन्माहात्म्यं वेत्ति पूरुषः । सतु क्वापि न भक्तस्य गृह्णीयादगुणं सुधीः ॥ १६ ॥
कृष्णसम्बन्धमापन्नान् पशुपक्षिद्रुमादिकान् । अपि सुज्ञास्तु जानन्ति देववत्पूजनोचितान् ॥ १७ ॥ तदा कृष्णध्यानंपूजानामस्मृत्यादिकारकान् । जानीयुर्मानवान्देवतुल्यानिति तु किं पुनः ॥ १८ ॥ सद्भ्यो ये कृष्णमाहात्म्यं न विदुस्ते त्वसद्धियः । कृष्णस्याप्यगुणान् ब्रूयुस्तद्भक्तानां तु किं पुनः ॥१९॥ कृष्णतज्जनमहत्त्ववेदिनो भक्तशब्दकथिता न हीतरे । तस्य वाचमिति सत्पतेः सुधां तोषमाप स निपीय चापरे ॥२०॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते शताधिकपञ्चमस्तरङ्गः ॥ १०५ ॥ ९ ॥

मतयः । ते तु । कृष्णस्यापि । अगुणान्दोषान् । ब्रुयुः । तर्हि तद्भक्तानाम् । अगुणान् । ब्रूयुः । तत्र । पुनः । किं वक्तव्यम् ॥ १९ ॥ उक्तार्थं निगमयत्यर्द्धेन । कृष्णेति । हे मुने ! । कृष्णः साक्षाच्छ्रीहरिश्च तज्जनास्तदेकान्तिकभक्तजनाश्च तेषां यन्महत्त्वं माहात्म्यं तद्विदन्तीति तथाभूता जनाः । भक्तशब्दकथिताः । इतरे तद्भिन्ना जनाः । न हि भक्तशब्दकथिता नैव भवन्ति । इत्येवंविधाम् । सुधां पीयूषसमानाम् । सत्पतेः । तस्य श्रीहरेः । वाचम् । निपीय । स मुक्तानन्दमुनिः । तोषं सन्तोषम् । आप । अपरे समीपविष्टाः साधवो गृहिणश्च । तोषम् । आपुः ॥ २० ॥ कोपदौष्ट्यं तज्जयं च स्वीयभक्तगुणग्रहम् । यः प्राह श्रीहरिर्मेऽस्तु रक्षकः स हि सर्वतः ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्सूनुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीवाक्यसुधासिन्धुटीकायां शताधिकपञ्चमस्तरङ्गः ॥ १०५ ॥ ९ ॥

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.

भगवत्प्रीतये भक्तैस्तपस्तु रुचियुक् सदा । कर्त्तव्यमिति सम्प्रोक्तं दशमे हरिणा ततः ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८७७) कार्त्तिकसिते कार्त्तिकमासस्य शुक्लपक्षे । दशम्यां तिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । कार्यायनग्रामे । वास्तुभूपस्य । दुर्गे इति शेषः । प्राङ्मुखस्य । वेश्मनस्तस्यैव भवनस्य । बहिर्वेद्याम् । मञ्चके स्वास्तृते पर्यङ्कासने । स श्रीहरिः । व्यराजतोपवेशनचातुर्येण शुशुभे ॥ २ ॥ नानेति । नानादेशागतैः । भक्तैः । त्यागिभिः । गृहिभिश्च । वृतः सभायां परिवेष्टितः । सिताम्बरधरः स्वाङ्गपरिधृतसकलश्वेतवसनः । स श्रीहरिः । स्वाग्रे स्वपुरःप्रदेशे । निषण्णानवस्थितान्। सतो मुक्तानन्दादिसाधून् । अब्रवीत् स्वत एव जगाद ॥ ३ ॥ शास्त्रेष्विति । हे साधवः ! । शास्त्रेषु । भगवत्प्रीतिहेतुः । तपोऽस्ति । इतीत्थम् । ईर्यते मुनिभिः कथ्यते । तथा च स्मृतयः । 'ब्रह्मचर्यं जपो मौनं निराहारत्वमेव च । इत्येतत्तपसो मूलं सुघोरं तद्दुरासदम् । अहिंसा सत्यवचनमानृशंस्यं दमो घृणा । एतत्तपो विदुर्धीरा न शरीरस्य शोषणम् । मनसश्चेन्द्रियाणां च ऐकाग्र्यं परमं तपः । तज्जापः सर्वधर्मेभ्यः स धर्मः पर उच्यते । व्रतोपवासकृच्छ्राणि स्वधर्मश्च तपो मतम् । तपश्च

शकाब्दे विक्रमार्कस्य नगाश्ववसुभूमिते । दशम्यां कार्तिकसिते वचोऽमृतमिदं हरेः ॥ १ ॥ तत्र कार्यायनग्रामे
वास्तुभूपस्य वेश्मनः । प्राङ्मुखस्य बहिर्वेद्यां व्यराजत् स मञ्चके ॥ २ ॥ नानादेशागतैर्भक्तैस्त्यागिभिर्गृहि-
भिर्वृतः । सिताम्बरधरः स्वाग्रे निषण्णान् सोऽब्रवीत् सतः ॥ ३ ॥ शास्त्रेषु भगवत्प्रीतिहेतुस्तप इतीर्यते ।
प्रसादितो विश्वसृजा तपसैवादितो हरिः ॥ ४ ॥ बहुकालं तपस्तप्तं नारदेन महर्षिणा । प्रीत्यै नारायणस्यैव
सोढ्वा शीतातपक्षुधः ॥ ५ ॥ विष्णुस्तेन प्रसन्नोऽभूदतो येऽत्र विवेकिनः । ते तु तत्प्रीतये बुद्ध्या तप
एवाचरन्ति हि ॥ ६ ॥ ज्ञात्वेति युष्माभिरपि देहेन्द्रियदमोद्यमे । नित्यं बुद्ध्या वर्त्तितव्यं भगवत्प्रीतिकामुकैः
॥ ७ ॥ कष्टं दैह्यं यदा कर्मफलदेशेच्छयाऽऽव्रजेत् । तदा तु तन्मुदा ग्राह्यं प्रतीकार्यं कुतो बुधैः ॥ ८ ॥

शास्त्रविहितभोगसङ्कोचलक्षण'मित्यादिकाः । आदितः प्रथमत एव । विश्वसृजा ब्रह्मणा । तपसैव । हरिः । प्रसादितः प्रसन्नः कृतः । तथाचोक्तं श्रीभागवते । 'त्वयाऽहं तोषितः सम्यग्वेदगर्भसिसृक्षया । चिरं भृतेन तपसा दुस्तोषः कूटयोगिना'मिति ॥४॥ बह्विति । महर्षिणा । नारदेन । नारायणस्य । प्रीत्यै प्रसन्नतार्थम् । शीतातपः क्षुधः । सोढ्वा मृषित्वैव । बहुकालं प्रभूतकालपर्यन्तम् । तपः । तप्तन् ॥ ५ ॥ विष्णुरिति । तेन तपसा । विष्णुर्नारायणः । प्रसन्नो नारदोपरि प्रीतिमान् । अभूत् । अतो हेतोः । अत्र लोके । ये भक्ताः । विवेकिनः । सन्ति । ते भक्तास्तु तत्प्रीतये भगवत्प्रसन्नतार्थम् । बुद्ध्या विवेकयुक्तया स्वमत्या । तप एव । आचरन्ति । हि ॥ ६ ॥ ज्ञात्वेति । इत्यमुना प्रकारेण । ज्ञात्वा । भगवत्प्रीतिकामुकैः । युष्माभिरपि । नित्यम् । बुद्ध्या । देहेन्द्रियदमोद्यमे देहेन्द्रियदमनोद्योगेन तपश्चरणे । वर्त्तित-व्यम् ॥ ७ ॥ कष्टमिति । यदा । फलदेशेच्छया स्वकर्मफलप्रदातुः परमेश्वरस्य सङ्कल्पेन । दैह्यं स्वदेहसम्बन्धि । कष्टं ज्वरोदयादिदुःखम् । आव्रजेदागच्छेत् । तदा तु ।

मुदा हर्षेण । ग्राह्यं तपोबुद्ध्योपादेयम् । तद्देह्यं कष्टम् । बुधैस्तपसो भगवत्प्रसन्नताहेतुतावेदिभिर्ज्ञानिभक्तैः । कुतः कस्माद्धेतोः । प्रतीकार्यं निवर्त्तनोपायैर्निवर्त्तनीयं भवेत् । किन्तु प्रतीकार्यं न भवेदित्यर्थः ॥ ८ ॥ भक्तैरिति । साधुभिः । भक्तैस्तु । चित्ते स्वमानसे । दृढतपोरुचिः । कार्या । क्वचित्कदाचिदपि । वैकुण्ठलोकादिनानाभोगैषणा वैकुण्ठलोक–ब्रह्मलोक–देवलोकादिनानाविधमायिकपञ्चविषयभोगेच्छा । न तु नैव कार्या ॥ ९ ॥ ममेति । मम तु । अनेन । देहेन । तप एव । विधेयं यावद्देहपातं तप एव कर्त्तव्यमित्यर्थः । देहत्यागात् । अनन्तरम् । बदर्य्यां बदरिकाश्रमे । श्वेतद्वीपे च । तप एव विधीयम् । हि ॥ १० ॥ एकेनेति । एकेन । जन्मना । अथवा । अनेकेन । जन्मनापि बहुभिर्जन्मभिरपीत्यर्थः । पुरुषोत्तमः श्रीहरिः । यावद्यावता कालेन । प्रीतः प्रसन्नः । भवेत् । तावत्तावत्कालपर्यन्तम् । तपः कुर्याम् इतरत्तद्भिन्नं किमप्यन्यत्कार्यम् । न च नैव कुर्यात् ॥ ११ ॥ इतीति । इति श्लोकद्वयोक्तरीत्या । मामकैर्मदाश्रितैः । नरैः साधुभक्तैः । हृदये स्वमानसे । नित्यं प्रतिदिनम् । इच्छा । कर्त्तव्या । किञ्च । साक्षात्प्रत्यक्षः । हरिः । सर्वकर्त्ता स्वतन्त्रतया महापुरुषादिद्वारा सकलविश्वोत्पत्त्यादिविधाताऽस्ति । इत्येवम् । सर्वथा । ज्ञेयम्

भक्तैस्तु साधुभिश्चित्ते कार्या दृढतपोरुचिः । न तु वैकुण्ठलोकादिनानाभोगैषणा क्वचित् ॥ ९ ॥
मम त्वनेन देहेन विधेयं तप एव हि । श्वेतद्वीपे बदर्यां च देहत्यागादनन्तरम् ॥ १० ॥
एकेन वाप्यनेकेन जन्मना पुरुषोत्तमः । यावत्प्रीतो भवेत्तावत्तपः कुर्यां न चेतरम् ॥ ११ ॥
इतीच्छा हृदये नित्यं कर्त्तव्या मामकैर्नरैः । साक्षाद्धरिः सर्वकर्त्तेत्येवं ज्ञेयं च सर्वथा ॥ १२ ॥
कालः कर्म च मायाऽपि तदधीना भवन्ति हि । न स्वतन्त्राः क्वचित्तस्मान्मुख्यः कर्त्ता स ईश्वरः
॥ १३ ॥ श्रेयोहेतुरिदं ज्ञानं नृणामित्यवगम्यताम् । एवं यो न विजानाति स पापिष्ठतमो मतः
॥ १४ ॥ भक्तिज्ञानप्रतापेन शुकब्रह्मशिवैः समाः । भवेयुः पुरुषेणापि केचिच्चाक्षरसन्निभाः ॥ १५ ॥

॥ १२ ॥ एतदेवस्पष्टमाह । काल इति । कालः । कर्म । मायापि । कालादिकं शक्तित्रयमित्यर्थः । तदधीनाः साक्षाद्धरिपरतन्त्राः । भवन्ति । क्वचित्कदाचिदपि । स्वतन्त्राः । न भवन्ति । तस्माद्धेतोः । ईश्वरः परमेश्वरः । स हि श्रीहरिरेव । मुख्यः । कर्त्ता । भवति ॥ १३ ॥ श्रेय इति । इदम् । ज्ञानं श्रीहरिस्वरूपवेदनम् । नृणाम् । श्रेयोहेतुरात्यन्तिककल्याणकारणमस्ति । इतीत्थम् । अवगम्यताम् । एवममुना प्रकारेण । यः पुरुषः । न विजानाति साक्षाद्भगवन्तमेव स्वतन्त्रविश्वकर्त्तारं न विद्यात् । सः पुरुषः । पापिष्ठतमोऽतिपापवतोऽप्यतिपापवानित्यर्थः । मतः ॥ १४ ॥ भक्तीति । केचित् । भक्तिज्ञानप्रतापेन साक्षाद्भगवतो भक्तेर्ज्ञानस्य च प्रभावेन । शुकब्रह्मशिवैः । समाः । भवेयुः । शुकादिसमानसामर्थ्यवन्तः स्युरित्यर्थः । केचित् । पुरुषेण प्रधानप्रकृत्यधिष्ठात्रा पुरुषेण समाश्च । भवेयुः । केचित् । अक्षरसन्निभा मूलप्रकृत्यधिष्ठात्रा पुरुषेण धामरूपाक्षरेण च समानाः । भवेयुः ॥ १५ ॥

नेति । कोऽपि कश्चिदपि । क्वापि कदाचिदपि । पुरुषोत्तमसन्निभः । न तु नैव भवेत् । अतो हेतोः । स पुरुषोत्तमः । एक एव । अनुपम इति च । वेदैः । गीयते । हि । 'न तत्समश्चाभ्यधिकश्च दृश्यते । एकमेवाद्वितीयम् । न सदृशे तिष्ठति रूपमस्ये'त्यादिश्रुतिभ्यः ॥ १६ ॥ तमिति । ईश्वरेश्वरम् । स्वतन्त्रम् । सर्वशासनम-क्षरादिसर्वनियन्तारम् । तं श्रीहरिम् । हित्वा । अन्यं तदितरं कालादिकम् । कर्त्तारम् । यः । जानीयात् । तदीक्षा तस्य दर्शनमपि । अघकृद्दर्शनकर्त्तॄमहैनःप्रदा । मता ॥ १७ ॥ एतदिति । भुवि पृथिव्याम् । ये । पण्डिताः शास्त्रज्ञाः । एतद्विरुद्धवादा भगवान्कर्त्ता न भवति किन्तु कालादयः इति वादिनः । भवेयुः । अथवा यानि । शास्त्राणि । तदर्थानि भगवन्तं हित्वा कालादेः कर्त्तृता प्रतिपादकानि । भवेयुः । तानि । शास्त्राणि । आराद्दूरादेव । त्याज्यानि । ते पण्डिताश्च । आरात्त्याज्याः ॥ १८ ॥ एवमिति । यः पुरुषः । एवम् । न कुरुते । उक्तविधपण्डितादित्यागं न करोतीत्यर्थः । हरिम् । कर्त्तारं च । नो वेत्ति । स पुरुषः । महानास्तिको नास्तिकशिरोमणिः । श्वपाकवच्चाण्डालवत् । वर्ज्यछायः । ज्ञेयः । यथा चाण्डालो नातिक्रम्यच्छायस्तथाऽयमपि तदतिक्रमे महाघसम्भवादिति भावः ॥ १९ ॥ मुक्तानन्द

न तु कोऽपि भवेत् क्वापि पुरुषोत्तमसन्निभः । एक एवेत्यतो वेदैर्गीयतेऽनुपमो हि सः ॥१६॥ तमीश्वरेश्वरं हित्वा स्वतन्त्रं सर्वशासनम् । कर्त्तारमन्यं जानीयात्तदीक्षाप्यघकृन्मता ॥ १७ ॥ एतद्विरुद्धवादा ये भवेयुर्भुवि पण्डिताः । शास्त्राणि वा तदर्थानि त्याज्यान्याराच्च तानि ते ॥ १८ ॥ एवं न कुरुते यश्च कर्त्तारं वेत्ति नो हरिम् । स महानास्तिको वर्ज्यछायो ज्ञेयः श्वपाकवत् ॥ १९ ॥ मुक्तानन्दस्तदा साधुस्तमुवाच तदेकधीः । हरिः प्रसाद्यस्तपसे-त्युक्तं हि भगवंस्त्वया ॥२०॥ स्रक्चन्दनांशुकाभूषाभोज्याद्यैः सद्भिरादरात् । हरिं त्वाऽऽराधयेद्धित्वा तपोऽत्र किमु बाधकम् ॥ २१ ॥ तमुवाचाथ स स्वामी प्रायो नास्त्यत्र बाधकम् । किन्त्वेका विषयासक्तिर्बाधिका प्रतिभाति मे ॥ २२ ॥ तत्तत्पदार्थोपभोगलालसेन स्वचेतसा । प्रसादीकरणं विष्णोः पदार्थानां तु बाधकम् ॥ २३ ॥

इति । तदा तस्मिन्समये । तदेकधीः श्रीहरावेवाक्षरपरत्वरूपनिश्चलमतिस्तपस्येवैकमतिर्वा । मुक्तानन्दः । साधुः । तं श्रीहरिम् । उवाच । हे भगवन् ! । तपसा । हरिः । प्रसाद्यः । इत्येवम् । त्वया । उक्तम् । हि ॥ २० ॥ स्रजिति । हे हरे ! । तपः । हित्वा । सद्भिरतिश्रेष्ठैः । स्रजो नानाविधपुष्पहाराश्च चन्दनानि विविध-गन्धाश्चांशुकानि नानाविधवस्त्राणि च आभूषा महार्घ्याणि सौवर्णादीन्यनेकविधाभरणानि च भोज्यानि चतुर्विधान्नानि च तान्याद्यानि येषां वाहनादीनां तैः । आदरात् । हरिम् । त्वा त्वाम् । आराधयेत् । अत्रास्मिन्पक्षे । बाधकम् । किमु । को वा बाधः स्यादित्यर्थः ॥ २१ ॥ तमिति । अथैवंविधमुक्तानन्दमुनिप्रश्नश्रवणानन्तरम् । स्वामी । स श्रीहरिः । तं मुक्तानन्दमुनिम् । उवाच । हे मुने ! । अत्र त्वदुक्तपक्षे । प्रायो बहुधा तु । बाधकम् । नास्ति । किन्तु । एका केवला । विषयासक्तिः । बाधि-आस्ति । इति । मे मम । प्रतिभाति ॥ २२ ॥ एतदेव स्पष्टबोधाय पुनर्विस्तरेणाह द्वाभ्याम् । तदिति । तेषां तेषां पदार्थानां स्रक् चन्दनादीनामुपभोग उपभोगाचरणं

तत्र लालसेच्छा यस्य तेन । स्वचेतसा निजान्तःकरणेन । पदार्थानां स्रक्चन्दनादिवस्तूनाम् । विष्णोर्भगवतः । प्रसादीकरणम् । बाधकम् ॥ २३ ॥ यत इतिः । यतो हेतोः । पुमान् भक्तः । तत्तत्पदार्थोपभोगात् । विषयी पञ्चेन्द्रियविषयाभिलाषवान् । स्यात् । ततस्तदनन्तरम् । भक्तिमार्गात् प्रभुप्रसन्नताहेतोर्भक्तिपथात् । भ्रष्ट-श्च्युतः । स्यात् । अतो हेतोः । तत्प्रसादिमाहात्म्येनापि स्रगादिविषयभोगाचरणम् । बाधकम् । हि ॥ २४ ॥ यदीति । यदि । निष्कामभावेन । सत्स्रगादिभिः । कृष्णार्चां साक्षात्कृष्णपूजाम् । कुर्यात् । तर्हि तु । सा कृष्णार्चा । बाधिका । नास्त्येव । हि यतः । तन्निष्कामभावेन कृष्णार्चनम् । तपस्तपःसमानमेव भवति ॥२५॥ पदार्थेति । अतो हेतोः । पदार्थसङ्गं भगवत्प्रासादिकसत्स्रगादिपदार्थभोगासक्तिम् । त्यक्त्वा । अच्युतं श्रीहरिम् । कर्त्तारमुक्तरीत्या स्वतन्त्रतया सर्वविधातारम् । ज्ञात्वा । सद्भिर्मदाश्रितसाधुभिस्तु । तस्याच्युतस्य । प्रीत्यै प्रसन्नतार्थम् । तपः । कार्यम् । इतीत्थभूतमेव । मे मम । मतं सिद्धान्तोऽस्ति ॥ २६ ॥ राधेति । तपोऽपि । राधालक्ष्म्यादिवत् । प्रेमभक्तियुक् । कार्यम् । केवलमेकलः । देहदमः । न कार्यः । इतीत्थंभूता । मम । सिद्धान्तवाक् । अस्ति ॥ २७ ॥ अथेति ।

यतस्तत्तत्पदार्थोपभोगात्स्याद्विषयी पुमान् । भक्तिमार्गात्ततो भ्रष्टः स्याच्चातो बाधकं हि तत् ॥ २४ ॥
यदि निष्कामभावेन कृष्णार्चां सत्स्रगादिभिः । कुर्यात्तर्हि तु नास्त्येव बाधिका सा तपो हि तत् ॥ २५ ॥
पदार्थसङ्गं त्यक्त्वाऽतो ज्ञात्वा कर्त्तारमच्युतम् । तस्य प्रीत्यै तपः कार्यं सद्भिरित्येव मे मतम् ॥ २६ ॥
राधालक्ष्म्यादिवत्कार्यं तपोऽपि प्रेमभक्तियुक् । न केवलं देहदम इति सिद्धान्तवाङ्मम ॥ २७ ॥
अथ पप्रच्छ तं नत्वा ब्रह्मानन्दः सदुत्तमः । यथेहामुत्र शुभमस्माकं स्यात्तथा वद ॥ २८ ॥
तमुवाच हरिः प्रीतो मदुक्तमिदमेव हि । इहामुत्र च सर्वेषां निःश्रेयसकरं खलु ॥ २९ ॥
प्रणम्याथ तमप्राक्षीद्गोपालानन्द आत्मदृक् । स तं तवैतद्भगवन् ! रोचते मह्यमञ्जसा ॥ ३० ॥

अथैवंविधश्रीहरिवाक्यश्रवणानन्तरम् । सदुत्तमः । सकलसाधुश्रेष्ठः । ब्रह्मानन्दो मुनिः । तं श्रीहरिन् । नत्वा । पप्रच्छ । हे हरे ! । इह । अमुत्र च । यथा । अस्माकम् । शुभं परमहितम् । स्यात् । तथा । वद ॥ २८ ॥ तमिति । तमेवं पृच्छतं ब्रह्मानन्दमुनिम् । हरिः । प्रीतः सन् । उवाच । हे मुने ! । मदुक्तं मया यत्साम्प्रतं कथितम् । इदमेव । इह । अमुत्र च । सर्वेषाम् भवताम् । निःश्रेयसकरमात्यन्तिककल्याणकारकम् । खलु हि निश्चितमेव । अस्यायं भावः । यद्यपि स्वाश्रित-सकलजनात्यन्तिकनिःश्रेयसहेतुः स्वसिद्धान्तः श्रीहरिणाऽभिहित एवाथापि कश्चिदतोऽपि सुकरोपायं श्रीहरिः स्वाश्रितकल्याणार्थं कथयिष्यतीत्याशयेन ब्रह्मानन्दमुनिरपृच्छत्सोऽपि तद्धार्दं बुद्ध्वा प्रागभिहितमेवोपायं तदर्थमाहेति ॥ २९ ॥ प्रणम्येति । अथैवंविधश्रीहरिवाक्यश्रवणानन्तरम् । आत्मदृगात्मनिष्ठज्ञानिभक्तः । गोपालानन्दमुनिः । तं श्रीहरिम् । प्रणम्य । अप्राक्षीत् । हे भगवन् ! । तव । एतत् । मतम् । मह्यम् । अञ्जसा तत्त्वतः । रोचते ॥ ३० ॥

त्यागस्येति । हे हरे ! । यस्य भक्तस्य । हृदि । त्यागस्य भगवदुक्तलक्षणस्य । तथाचोक्तं श्रीभागवते । "त्यागः संन्यास उच्यत"इति । संन्यासोऽत्र कायवाङ्मनोभिर्निषिद्धसर्ववस्तुपरित्यागः । यद्वा त्यागोऽत्र स्ववर्णाश्रमोचितकर्मफलत्यागः । तपसः पूर्वोक्तलक्षणस्य च । भृशमतिशयिता । एषणेच्छा रुचिरितियावत् । स्यात् । यदि । तत्करणे त्यागतपसोः सम्पादने । कश्चित् । विघ्नः । अत्र विघ्नसम्भवे । किम् । कार्यम् ॥३१॥ इतीति । इत्येवंविधम् । तस्य गोपालानन्दमुनेः । वचः । श्रुत्वा । प्रसन्नः । सतां पतिः । स श्रीहरिः । हृदि स्वमानसे । साधुवर्यम् । तं गोपालानन्दमुनिम् । तद्रसज्ञं त्यागतपसो रसाभिज्ञम् । विदन् जानन्सन् । प्रोवाच ॥ ३२ ॥ भृशेति । हे मुने ! । यस्य जनस्य । यस्य । कस्यापि । वस्तुनः । भृशैषणा । भवेत् । तदुद्युक्तस्तत्सम्पादनोद्योगः । स जनः । विघ्नौघैरपि । रोद्धुं निवारयितुम् । न शक्यते । अस्यायं भावः । यस्य त्यागतपश्चरणे भृशैषणा स्यात्तत्सम्पादनोद्युक्तः स तत्र समायातान्विघ्नान्निम्नाभिमुखपयोवदगणयित्वा ते सम्पाद्यैवात्र तिष्ठतेऽतस्तथात्वे धैर्यमष्टभ्य तत्सम्पादने व्याकुलीभूय ततो न निवर्त्तितव्यमिति ॥३३॥ अहमिति । हे अनघ ! । अत्रार्थे । भवता । तपस्त्यागरुचित्वात् । क्वचित्कस्मिंश्चिदपि । विषये । नासक्त आसक्ति

त्यागस्य तपसश्च स्याद्भृदि यस्यैषणा भृशम् । विघ्नस्तत्करणे कश्चिद्यदि स्यात्कार्यमत्र किम् ॥ ३१ ॥ इति तस्य वचः श्रुत्वा प्रसन्नः स सतांपतिः । प्रोवाच तं साधुवर्यं तद्रसज्ञं विदन् हृदि ॥ ३२ ॥ भृशैषणा यस्य भवेद्यस्य कस्यापि वस्तुनः । तदुद्युक्तः स विघ्नौघैरपि रोद्धुं न शक्यते ॥३३॥ अहमेवात्र दृष्टान्तो द्रष्टव्यो भवताऽनघ ! । तपस्त्यागरुचित्वाद्धि नासक्तो विषये क्वचित् ॥ ३४ ॥ श्रीमद्रामानन्दगुरोः प्राप्तस्यान्तिकमत्र मे । एकविंशतिसंख्याका व्यतिक्रान्ता हि वत्सराः ॥ ३५ ॥ तत्र नानाविधद्रव्यस्वर्णलङ्कारवाससाम् खाद्यपेयरसानां च सेवकानां सहस्रशः ॥ ३६ ॥ सम्बन्धे सत्यपि क्वापि मनो लुभ्यति नैव मे । त्यागैषणैव तत्रास्ति हेतुरित्यवगम्यताम् ॥ ३७ ॥ रण्डा अपि स्त्रियः काश्चिदत्र कामैषणातुराः । मृतेशं बहु शोचन्ति सज्जन्तेऽन्यनरेषु च ॥ ३८ ॥

न प्राप्तः । अहमेव । दृष्टान्त उदाहरणरूपः । द्रष्टव्यः ॥३४॥ एतदेव स्पष्टबोधाय पुनर्विस्तरेणाह त्रिभिः । श्रीमदिति । हे मुने ! । अत्रास्मिन्देशे । श्रीमद्रामानन्दगुरोः । अन्तिकं समीपम् । प्राप्तस्य । मे मम । एकविंशतिसंख्याकाः । वत्सरा वर्षाणि । व्यतिक्रान्ता व्यतीताः । हि ॥ ३५ ॥ तत्रेति । तत्र वत्सरेषु विषये । नानाविधान्यनेकप्रकाराणि यानि द्रव्याणि स्वर्णादिधनानि च स्वर्णालङ्काराश्च वासांसि च तेषाम् । खाद्यपेयरसानामन्नपानागतनानाविधरसास्वादानाम् । सहस्रशः । सेवकानां परिचारकाजनानां च ॥ ३६ ॥ सम्बन्ध इति । सम्बन्धे योगे । सत्यपि । मे मम । मनः । क्वापि कस्मिंश्चिदपि द्रव्यादिपदार्थे । नैव । लुभ्यति । तत्र तेषु मनसो लोभासम्भवे । त्यागैषणा सुस्थिरा त्यागतपोरुचिरेव । हेतुः कारणम् । अस्ति । इतीत्थम् । अवगम्यताम् । इति द्वयोरेकान्वयः ॥ ३७ ॥ अत्रार्थेऽन्यानपि दृष्टान्तानुक्त्वा पुनरुक्तार्थमेव द्रढयति पञ्चभिः । रण्डा विधवा अपि । काश्चित् । स्त्रियः । कामैषणातुराः सत्यः । मृतेशं मृतमपि भर्त्तारम् । बहु अतिशयितं यथातथा ।

शोचन्ति । अन्यनरेषु च । सज्जन्ते ॥३८॥ काश्चिदिति । तरुण्यः युवत्यः । सधवा अपि । काश्चित् । स्त्रियः । कृष्णैषणा भक्त्या भगवत्प्रसन्नतेच्छायुक्ताः । अत एव । त्यक्तभर्तृसुखाः सत्यः । नित्यम् । आदरात् । हरिम् । भजन्ति ॥ ३९ ॥ विद्वांस इति । भुवि । विद्वांसः शास्त्रज्ञा अपि । केचित् । नराः । भृशकामैषणाः सन्तः । मृताम् । स्त्रीं स्वपत्नीम् । अतिशोचन्ति । वार्द्धक्ये वृद्धत्वे । अन्यां मृतेतरां स्त्रियं च उद्वहन्ति ॥४०॥ तारुण्य इति । अशास्त्रज्ञाः शास्त्राध्ययनवर्जिताः । केचित् । नराः । तारुण्ये यौवनावस्थायामपि । हरीषणा भक्त्या साक्षाद्भगवत्प्रसन्नताचरणेच्छायुक्ता । अत एव । त्यक्तस्वतरुणीसौख्याः सन्तः । अन्वहम् । ईश्वरं साक्षाच्छ्रीहरिम् । भजन्ति ॥४१॥ एवमिति । हे साधो ! । एवममुना प्रकारेण । मनुष्याणाम् । एषणाः । पृथक्पृथक् । सन्ति । यः । पुरुषः । यदेषणो यस्य वस्तुन एषणायुक्तः । अस्ति । स पुरुषः । अन्वहम् । तदुद्युक्तः । अस्ति । तदन्तरागतान्विघ्रान् न गणयित्वा तदुद्योगमेव करोतीत्यर्थः ॥ ४२ ॥ उक्तार्थं निगमयति द्वाभ्याम् । एवमिति । हे मुने ! ।

काश्चित्तरुण्यः सधवा अपि कृष्णैषणाः स्त्रियः । त्यक्तभर्तृसुखा नित्यं भजन्ति हरिमादरात् ॥ ३९ ॥
विद्वांसोऽपि नराः केचिद्भृशं कामैषणा भुवि । मृतां स्त्रीमतिशोचन्ति वार्द्धक्येऽन्यामुद्वहन्ति च ॥ ४० ॥
तारुण्येऽपि नराः केचिदशास्त्रज्ञा हरीषणाः । त्यक्तस्वतरुणीसौख्या भजन्त्यन्वहमीश्वरम् ॥ ४१ ॥
एवं सन्त्येषणाः साधो ! मनुष्याणां पृथक्पृथक् । यदेषणो यः पुरुषस्तदुद्युक्तोऽस्ति सोऽन्वहम् ॥ ४२ ॥
एवं निश्चित्य भवता सद्भिरन्यैश्च मामकैः । भगवत्प्रीतये कार्यं तपस्तत्प्रेमभक्तियुक् ॥४३॥ ज्ञेयः स सर्व-
कर्त्तेति स्वामी चैकोऽखिलात्मनाम् । सेव्यश्च दासभावेन सर्वैर्मान्येति वाङ्मम ॥ ४४ ॥ श्रुत्वेति वाक्यं स
सुधोपमेयं सर्वेऽपि ते भक्तजनास्तु तस्य । प्रणम्य तं तच्च मुदा शिरोभिः संधारयामासुरुदारचित्ताः ॥४५॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते शताधिकषष्ठस्तरङ्गः ॥ १०६ ॥ १० ॥

एवममुना प्रकारेण । निश्चित्य । भवता त्वया । मामकैः । अन्यैः । सद्भिश्च । भगवत्प्रीतये । तत्प्रेमभक्तियुक् । तपः । कार्यम् ॥ ४२ ॥ ज्ञेय इति । अखिलात्मनां सकलजीवेश्वरादीनाम् । स्वामी पतिः । एकोऽद्वितीयः । असमाधिक इत्यर्थः । स श्रीहरिः । सर्वकर्त्ता । इति । ज्ञेयः । दासभावेन । सेव्य एकान्तिकधर्मेणोपासनीयश्च । इत्येवंविधा । मम । वाक् । सर्वैर्भवदादिसकलमदाश्रितसाधुभिः । मान्या ॥४४॥ श्रुत्वेति । इत्येवंविधम् । सुधोपमेयम् । तस्य श्रीहरेः । वाक्यम् । श्रुत्वा । स गोपालानन्दमुनिः । ते सभोपविष्टाः । सर्वे त्यागिनो गृहिणश्चापि । भक्तजनाः । उदारचित्ता महामनसः । सन्तः । तं श्रीहरिम् । प्रणम्य । तच्छ्रीहरिवचनम् । मुदा हर्षेण । शिरोभिः । सन्धारयामासुः ॥ ४५ ॥ स्वप्रीत्यर्थं स्वभक्तानां तपः कार्यमुपादिशेत् । यः श्रीहरिः स दद्यान्मे तपस्येव रुचिं सदा ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्सूनुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां शताधिकषष्ठस्तरङ्गः ॥१०६॥१०॥

हरौ प्रीतिमतो लक्ष्म तस्याप्याज्ञा यथा हरेः । पालनीया तदेतत्तु प्रोक्तमेकादशे ततः ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८७७) प्रबोधन्याम् । एकादश्याम् । कार्त्तिकमासस्य शुक्लपक्षीयैकादशीतिथावित्यर्थः । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । कार्यायनग्रामे । वास्तोः । राज्ञः । दुर्गे इति शेषः । प्रागास्यस्य । गृहस्य । तस्यैव भवनस्य । बहिर्वेद्याम् । मञ्चके स्वास्तृतपर्यङ्कासने । स श्रीहरिः । निशि भगवतः सान्ध्यनीराजनान्तरमित्यर्थः । न्यषीदत् ॥ २ ॥ तं विशिनष्टि द्वाभ्याम् । वलक्षेति । वलक्षपरिधानीयः परिहितश्वेताधोंऽशुकः । सितशीर्षपटः शिरोनिबद्धमुकुटाकृतिश्वेतसूक्ष्मपटः । सितः श्वेतश्चित्रोऽल्पश्यामबिन्दुयुक्तत्वाच्चित्रवर्णः सुनीशारो यस्य स तथाविधः । सितं श्वेतवर्णं प्रावारणांशुकमुत्तरीयवसनं यस्य सः ॥ ३ ॥ पार्श्वेति । पार्श्वस्थावुभयपार्श्वगौ यौ क्षुरिणौ दिवाकीर्त्ती तयोर्हस्तस्थे ये दीपिके ताभ्यां चञ्चन्ति तत्प्रभया द्योतमानान्यंशुकानि वस्त्राणि यस्य सः । पीतपुष्पाणां मन्दारविशेषसहस्रदलसुमनसां स्रगापीडा हारशेखरा यस्य सः । त्यागिगृहिगिणावृतो नानादेशायातत्यागिगृहिजनौघैः सभायां परिवेष्टितः ॥ ४ ॥ तमिति । तं तथाविधशोभाविशिष्टश्रीहरिम् । नत्वा । सच्चिदा-

शकाब्दे विक्रमार्कस्य नगाश्ववसुभूमिते । एकादश्यां प्रबोधन्यां वचोऽमृतमिदं हरेः ॥ १ ॥ तत्र कार्यायनग्रामे वास्तो राज्ञो गृहस्य सः । प्रागास्यस्य बहिर्वेद्यां न्यषीदन्मञ्चके निशि ॥ २ ॥ वलक्षपरीधानीयः सितशीर्षपटस्तथा । सितचित्रसुनीशारः सितप्रावरणांशुकः ॥ ३ ॥ पार्श्वस्थक्षुरिहस्तस्थदीपिकाचञ्चदंशुकः पीतपुष्पस्रगापीडस्त्यागिगृहिगिणावृतः ॥ ४ ॥ तं सच्चिदानन्दमुनिर्नत्वा पप्रच्छ हे प्रभो ! । किं लक्षणं प्रीतिमतः कृष्णे त्वय्यस्ति न तद्वद ॥ ५ ॥ श्रीहरिरुवाच – यस्य प्रीतिर्भवेत्कृष्णे स्वप्रेष्ठे स तु सर्वदा । तदाज्ञायामेव मुदा वर्त्तेत तदनुव्रतः ॥ ६ ॥ यद्यत्प्रियं भवेत्तस्य तत्तदेव समाचरेत् । तदप्रियं तु स क्वापि नाचरेदण्वपि ध्रुवम् ॥ ७ ॥ दृष्टान्तत्वेन गोप्योऽत्र ज्ञेयास्ता हि सदा प्रियम् । तस्याचरन्न तु क्वापि किञ्चिदप्यप्रियं मुने ! ॥ ८ ॥

नन्दमुनिः । पप्रच्छ । हे प्रभो ! । कृष्णे साक्षाच्छ्रीकृष्णभगवति । त्वयि । प्रीतिमतो गाढप्रेमयुक्तस्य । लक्षणम् । किम् । अस्ति । तत् । वद ॥ ५ ॥ 'सच्चिदानन्दमुनिना सोऽनुयुक्त इति प्रभुः । प्राहेत्थं नन्दयंस्तं च निजान् भक्तिसुतोऽपरान्' । यस्येति । हे मुने ! । यस्य भक्तस्य । स्वप्रेष्ठे स्वातिप्रिये । कृष्णे । प्रीतिः । भवेत् । स भक्तस्तु । तदनुव्रतस्तस्य श्रीकृष्णस्यानुव्रतो वर्त्तमानः सन् । मुदा हर्षेण । सर्वदा । तदाज्ञायामेव । वर्त्तेत ॥ ६ ॥ यदिति । स भक्तः । तस्य श्रीकृष्णस्य । यत् । प्रियम् । भवेत् । तत् । तदेव । समाचरेत् । तदप्रियं तस्य तदप्रियं भवेत्तत्तु । अण्वणुमात्रमपि । क्वापि कदाचिदपि । नाचरेत् । ध्रुवं निश्चितमेव ॥७॥ दृष्टान्तत्वेनेति । हे मुने ! । अत्र मदुक्तार्थे । गोप्यो व्रजाङ्गनाः । दृष्टान्तत्वेन । ज्ञेयाः । हि यतः । ता गोप्यः । सदा । तस्य श्रीकृष्णस्य । प्रियम् । आचरन् । यस्य । अप्रियं तु । किञ्चिदपि । क्वापि । नाचरन् ॥ ८ ॥

सहेति । तस्मिन् श्रीकृष्णे । अक्रूरेण श्वाफल्किना । सह । मथुरां पुरीं प्रति । गन्तुम् । समुद्यते उद्युक्ते सति । लोकलज्जाम् । विहाय । पथि स्थिता रोद्धुमध्यवस्थिताः । ताः । तं श्रीकृष्णम् । निषेद्धुम् । ऐच्छन् ॥९॥ निवारिता इति । अथानन्तरम् । भगवता श्रीकृष्णेन । कटाक्षेणापाङ्गदर्शनेन । निवारिताः । ता गोप्यः । प्रभोः श्रीकृष्णस्य । दृढामेव । जिगमिषां गन्तुमिच्छाम् । विदित्वा । ततः स्वकर्त्तव्यश्रीकृष्णप्रयाणनिषेधात् । न्यवर्त्तन्त निवृत्ता आसन् ॥१०॥ स्वेति । तदप्रिये श्रीकृष्णस्याप्रियताहेतौ गमननिषेधे । कृते सति । स्वासु । तत्स्नेहत्यागशङ्किताः श्रीकृष्णोऽस्मदुपरि स्नेहं न रक्षिष्यतीतिसञ्जाताशङ्काः । ता गोप्यः । स्वप्रियं तद्गमननिवारणरूपमात्मप्रियम् । विहाय त्यक्त्वा । तस्य श्रीकृष्णस्यैव । प्रियम् । चक्रुः । हि ॥११॥ क्रोशेति । तद्दिदृक्षाकुलाः श्रीकृष्णदर्शनेच्छाव्यग्रा अपि । एता गोप्यः । तस्य श्रीकृष्णस्य । तादृशीं गोप्यो मत्समीपे दर्शनार्थमपि माऽऽगच्छेयुरित्येवंविधाम् । रुचिमभिलापम् । ज्ञात्वा । क्रोशत्रयान्तरे क्रोशत्रयविदूरेऽपि । स्थितामिति शेषः । मथुराम् । नैव । जग्मुः ॥ १२ ॥ एवमिति । हे सन्मते ! । एवममुना प्रकारेण । कृष्णे । प्रीतिमतो भक्तस्य । लक्षणम् । विद्धि । तस्य भगवतः । रुच्यनुसारेणाभिलषिता-

सहाक्रूरेण मथुरां तस्मिन् गन्तुं समुद्यते । लोकलज्जां विहायैच्छन्निषेद्धुं तं पथि स्थिताः ॥ ९ ॥ निवारिता भगवता कटाक्षेणाथ तास्ततः । न्यवर्तन्त विदित्वैव दृढां जिगमिषां प्रभोः ॥ १० ॥ स्वप्रियं ता विहायैव चक्रुस्तस्यैव हि प्रियम् । तदप्रिये कृते स्वासु तत्स्नेहत्यागशङ्किताः ॥ ११ ॥ क्रोशत्रयान्तरेऽप्येतास्तद्दिदृक्षाकुला अपि । न जग्मुर्मथुरां तस्य रुचिं ज्ञात्वेव तादृशीम् ॥ १२ ॥ एवं प्रीतिमतः कृष्णे लक्षणां विद्धि सन्मते ! । तस्य रुच्यानुसारेण वृत्यं नित्यं न चात्मनः ॥१३॥ यदि स्वनिकटस्थित्यां तद्रुचिश्चेत्तदान्तिके । तस्य स्थेयं दूरतश्चेत्तथा स्थेयं तु दूरतः ॥ १४ ॥ स्वाप्रिये जायमानेऽपि सोढ्वा तत्तत्प्रियेहया । तदाज्ञायां सदा स्थेयमिति प्रश्नोत्तरं तव ॥ १५ ॥ इत्युक्त्वा तं प्रभुः सर्वान्सतोऽपृच्छत्स एव हि । कश्चिद्भक्तो भगवति प्रेमवानस्ति निर्भरम् ॥ १६ ॥ न क्षमो विरहं सोढुं क्षणमात्रमपि प्रभोः । ग्राम्येभ्यो विषयेभ्यश्च रम्येभ्योऽपि विरागभाक् ॥ १७ ॥

नुरोधेन । नित्यम् । वृत्यं प्रीतिमता भक्तेन वर्त्तनीयम् । आत्मनः स्वस्य । रुच्यनुसारेण । न च नैव वृत्यम् । यदीति । यदि यर्हि । स्वनिकटस्थित्यां स्वान्तिकावासे । तद्रुचिस्तस्याभिलाषश्चेत् तदा । तस्य भगवतः । अन्तिके समीपे । स्थेयम् । चेद्यदि । दूरतः स्वतो दूरदेशावस्थाने । तथा तद्रुचि । स्यात् । तदा तु । दूरतः । स्थेयम् ॥१४॥ स्वेति । स्वाप्रिये । जायमानेऽपि । तत्स्वाप्रियम् । सोढ्वा । तत्प्रियेहया भगवत्प्रसन्नतावाञ्छया । सदा । तदाज्ञायाम् । स्थेयं प्रीतिमता भक्तेन वृत्यम् । इत्येवंविधम् । तव । प्रश्नोत्तरम् । भवति ॥ १५ ॥ इतीति । इत्यमुना प्रकारेण । तं सच्चिदानन्दमुनिम् । उक्त्वा । प्रभुः । स श्रीहरिरेव । सर्वान् । सतः साधून् । अपृच्छत् । हे साधवः ! । कश्चिद्भक्तः । भगवति । निर्भरमतिशयितं यथातथा । प्रेमवान् । अस्ति ॥१६॥ नेति । स भक्तः । प्रभोः । विरहं वियोगम् । क्षणमात्रं क्षणमात्रकालपर्यन्तमपि । सोढुम् । न क्षमः समर्थो नैव भवति । रम्येभ्योऽपि । ग्राम्येभ्यो मायिकेभ्यः । विषयेभ्यः पञ्चेन्द्रियार्थेभ्यः । विरागभाक् । तेषु तीव्रवैराग्यं प्राप्त इत्यर्थः ॥ १७ ॥

पञ्चेति । स भक्तः । कार्ष्णान्साक्षाच्छ्रीहरिसम्बन्धिनः । पञ्चेन्द्रियार्थान् । सेवमानस्तु जुपन्सन्नेव । जीवति । तदप्राप्तौ भगवत्सम्बन्धिपञ्चेन्द्रियार्थानुपलम्भे सति त्वत्यर्थः । स्वदेहं स्वशरीरमपि । रक्षितुं धारयितुम् । न क्षमते समर्थो न भवति । ध्रुवं निश्चितमेव ॥ १८ ॥ तमिति । यदि । तं तथाविधं भक्तम् । त्राकृतिः । प्रत्यक्षः । स्वयम् । कृष्णः । किञ्चित्कार्यार्थं कस्यचित्तत्साध्यस्य कार्यस्य सिद्ध्यर्थम् । आत्मनः स्वसमीपप्रदेशात्सकाशात् । विप्रकृष्टे दूरवर्त्तिनि । पदे स्थाने । स्थातुं निवासं कर्त्तुम् । यदा । आज्ञापयेत् ॥ १९ ॥ तर्हीति । तर्हि । तेन भक्तेन । तस्य भगवतः । सा तथाविधा । आज्ञा । पाल्या । न वा पाल्या । आद्ये आज्ञायाः प्राधान्यात्सा पाल्यैवेति प्रथमपक्षे । तत्सङ्गभङ्गः । स्यात् । तत्सम्बन्धत्यागेन स्वजीवितविभङ्गः स्यादित्यर्थः । तथा । अन्यतः स्वजीवितरक्षणार्थं सा न पाल्येति द्वितीयपक्षे । आज्ञाभङ्गः । स्यात् । आज्ञाभङ्गेन स्वस्मिन्भगवतोऽप्रसन्नता स्यादित्यर्थः । इत्येवंविधः । संशयः । संशयनिवृत्यै अयं प्रश्नोऽस्तीत्यर्थः ॥ २० ॥ इतीति । इत्येवंविधम् । हरेः । प्रश्नम् । श्रुत्वा । ते साधवः । यदा । यथावद्यथार्थतया । तदुत्तरम् । कर्त्तुम् । नाभ्यजानन्नैवाविदन् ।

पञ्चेन्द्रियार्थान् कार्ष्णांस्तु सेवमानः स जीवति । तदप्राप्तौ न स्वदेहं क्षमते रक्षितुं ध्रुवम् ॥ १८ ॥
तं यदि त्वाकृतिः कृष्णः किञ्चित्कार्यार्थमात्मनः । विप्रकृष्टे पदे स्थातुं स्वयमाज्ञापयेन्मुदा ॥ १९ ॥
तर्हि साऽऽज्ञा तस्य तेन पाल्या वा नेति संशयः । तत्सङ्गभङ्गः स्यादाद्य आज्ञाभङ्गस्तथाऽन्यतः ॥ २० ॥
इति प्रश्नं हरेः श्रुत्वा यथावत्ते तदुत्तरम् । कर्तुं यदा नाभ्यजानन्नूचे तर्हि स एव तान् ॥ २१ ॥
तादृशेनापि भक्तेन पाल्यैवाज्ञाऽऽत्मनः प्रभोः । यद्यत्करोति कृष्णस्तत्तज्ज्ञात्वैव हि सर्ववित् ॥ २२ ॥
जानाति भजतः स्नेहं स्वस्मिन्सर्वाधिकं प्रभुः । स तच्चिन्तां विहायातः कुर्यात्प्रेयः प्रियं सदा ॥ २३ ॥
यथैव निजभक्तस्य प्रियमेव भवेत्तथा । करोति कृष्णो न क्वापि ह्यप्रियं भक्तवत्सलः ॥ २४ ॥

तर्हि । सः । हे हरे ! । तत्प्रश्नोत्तरं कर्त्तुं वयं न पारयामोऽतस्त्वमेव कुर्विति तैरुक्तः श्रीहरिरेव । तान् साधून् । ऊचे ॥ २१ ॥ तादृशेति । हे साधवः ! । तादृशेनोक्तविधेनापि । भक्तेन । आत्मनः स्वस्य । प्रभोः स्वामिनः । आज्ञा । पाल्यैव । ननु तथासति तन्मरणं स्यादिति चेत्तत्राह । सर्ववित्सर्वज्ञः । कृष्णः । यद्यत् । करोति । तत्तत् । ज्ञात्वा विचार्यैव । करोति । हि । तत्रापि वक्ष्यमाणतदन्तिकावासेन यथा तन्मरणं न स्यात्तथा विदधातीत्यर्थः ॥ २२ ॥ जानातीति । प्रभुः । भजतो भक्तस्य । स्वस्मिन् । सर्वाधिकम् । स्नेहम् । जानाति । अतो हेतोः । स भक्तः । तच्चिन्तां मम भगवद्वियोगो भविष्यतीति चिन्ताम् । विहाय । सदा । प्रेयः प्रियं स्वातिप्रियभगवत आज्ञापालनरूपं प्रियम् । कुर्यात् ॥ २३ ॥ यथेति । भक्तवत्सलः सर्वदा स्वभक्तेषु स्निग्धः । कृष्णः । यथा । निजभक्तस्य । प्रियं हितमेव । भवेत् । तथैव । करोति । क्वापि कदाचिदपि । अप्रियं स्वभक्ताहितम् । नैव । करोति । हि ॥ २४ ॥

प्रियमेवाह त्रिभिः । भक्तीति । भक्तिभाक् स्वस्मिन् प्रीत्यतिशययुक्तः । असौ भक्तः । स्वाज्ञया । भूतले । यत्र यत्र . यस्मिन् यस्मिन् दूरप्रदेशे । याति गच्छति । तत्र तत्र । तत्प्रेमगुणसंयतस्तदियप्रीतिरज्ज्वावबद्धः । स भगवान् । यात्येव ॥ २५ ॥ अत इति । अतो हेतोः । तस्य भक्तस्य । कृष्णस्य । विरहः । क्वचित्कदाचिदपि । न भवति । स भक्तः । कार्ष्णान् कृष्णसम्बन्धिनः । पञ्चापि । विषयान् । यथेष्टम् । लभते ॥ २६ ॥ भक्त इति । यथा । भगवतः । विरहम् । सोढुम् । भक्तः । अक्षमः । तथैव । भक्तस्य । विरहम् । सोढुम् । कृष्णः । न क्षमः समर्थो न भवति ॥ २७ ॥ अत इति । अतो हेतोः । अत्र सत्सङ्गे । भक्तमात्रेण । यावन्तो भक्ता स्युस्तैरित्यर्थः । कृष्णस्य । आज्ञैव । सर्वथा । पालनीया । इत्यमुना प्रकारेण । हे सन्तः ! । मया । प्रश्नस्य । उत्तरम् । प्रोक्तम् ॥२८॥ सुधेति । इत्येवंविधाम् । सुधोपमेयाम् । तस्य श्रीहरेः । वाचम् । श्रुत्वा । सदःस्थाः । अखिलाः । साधुजनाः । सर्वे । गृहिणश्च । प्रहर्षम् । प्रापुः । ते । सर्वे

भक्तिभाग्यत्र यत्रासौ स्वाज्ञया याति भूतले । तत्र तत्र स यात्येव तत्प्रेमगुणसंयतः ॥ २५ ॥ अतो न तस्य विरहः कृष्णस्य भवति क्वचित् । कार्ष्णान्स पञ्चविषयान् यथेष्टं लभतेऽपि च ॥ २६ ॥ भक्तो यथा भगवतो विरहं सोढुमक्षमः । तथैव सोढुं विरहं कृष्णो भक्तस्य न क्षमः ॥ २७ ॥ अतोऽत्र भक्तमात्रेण कृष्णस्याज्ञैव सर्वथा । पालनीयेति प्रश्नस्य सन्तः ! प्रोक्तं मयोत्तरम् ॥ २८ ॥ सुधोपमेयामिति तस्य वाचं श्रुत्वाऽखिलाः साधुजनाः सदःस्थाः । प्रापुः प्रहर्षं गृहिणश्च सर्वे तमानमन्ति स्म च ते विनीताः ॥ २९ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते शताधिकसप्तमस्तरङ्गः ॥ १०७ ॥ ११ ॥

शकाब्दे विक्रमार्कस्य नगाश्वसुभूमिते । ऊर्जमासे पौर्णमास्यां वचोऽमृतमिदं हरेः ॥ १ ॥
तत्र कार्यायनग्रामे वेश्मनो वास्तुभूपतेः । प्राङ्मुखस्य बहिर्वेद्यां न्यषीदत्स सुमञ्चके ॥ २ ॥

भक्ताः । विनीता विनययुक्ताः सन्तः । तं श्रीहरिम् । आनमन्ति स्म नमश्चक्रुः ॥ २९ ॥ स्वस्मिन् प्रीतिमतो लक्ष्म तेनाप्याज्ञां च यः स्वकाम् । पाल्यां प्राह हरिर्दद्यात्प्रीतिमाज्ञायुतां स मे ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्पद्मगुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां शताधिकसप्तमस्तरङ्गः ॥ १०७ ॥ ११ ॥

येन कारणदेहात्तु पृथक्ता स्वात्मनो भवेत् । सत्त्वात्मके जाग्रति स्यात्र ज्ञानं तु यथार्थतः ॥१॥ रजःप्रधाने स्वप्ने तु मननाच्चयथार्थतः । स्याच्च तद्धेतुरित्येतद्द्वादशे सम्प्रकीर्त्तितम् ॥२॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८७७) ऊर्जमासे कार्त्तिकमासे । पौर्णमास्यां तिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥१॥ तत्रेति । तत्र तिथौ । कार्यायनग्रामे । वास्तुभूपतेः । दुर्गे इति शेषः । प्राङ्मुखस्य । वेश्मनस्तस्यैव भवनस्य । बहिर्वेद्याम् । सुमञ्चके स्वास्तृते शोभने पर्यङ्कासने । स श्रीहरिः । न्यषीदत् ॥ २ ॥

तं विशिनष्टि द्वाभ्याम् । सितेति । सितसर्वाम्बरः परिधृतसकलश्वेतवसनः । नानाभक्तसङ्घपरिश्रितो नानादेशायातत्यागिगृहिभक्तवृन्दैः सभायां परिवेष्टितः । स्वकैः स्वभक्तैः । चारुचन्दनपुष्पस्रक्शेखरैः । पूजितः ॥३॥ स्वेति । साधुभक्तैः स्वैकान्तिकोपासकैर्मुनिभिः । स्वाज्ञया । परस्परम् । क्रियमाणानि । देहत्रयानुबन्धीनि जीवानां स्थूलसूक्ष्मकारणाख्यदेहत्रिकसम्बन्धीनि । प्रश्नोत्तराणि च । शृण्वन् ॥४॥ तत इति । ततः साधुकृतप्रश्नोत्तरश्रवणेन । प्रीतः । स्वयं श्रीहरिः । तृतीयाङ्गविवेकं कारणशरीरस्वरूपविवेचनम् । तान् प्रश्नोत्तरकर्तृसाधून् । आह । हे साधवः ! । स्थूलम् । सूक्ष्मम् । कारणं चेति । त्रीणि । जीवस्य । वपूंषि शरीराणि । सन्ति ॥ ५ ॥ जीवस्येति । मायामयानि मायारूपाणि । तानि शरीराणि । जीवस्य । बन्धनानि बन्धनरूपाण्येव । सन्ति । तत्र तेषु त्रिषु शरीरेषु मध्ये । अन्त्यमन्तिमम् । कारणं कारणशरीरमेव । स्थूलसूक्ष्मताम् । लभते । कारणमेव प्रथमं सूक्ष्मशरीरात्मना परिणामं प्राप्य ततः स्थूलशरीरेण परिणमतीत्यर्थः ॥ ६ ॥ पृथगिति । तमोमयमनाद्यज्ञानरूपम् । वज्रसारवद्धीरकवत् । कठिनम् । अत एव । दुर्भेद्यम् । कार्ष्णायसघनैर्हीरक इव वक्ष्यमाणसाधनैर्विनाऽन्योपायैर्भेत्तुमशक्यमित्यर्थः । तत्कारणशरीरम् । मुमु-

सितसर्वाम्बरो नानाभक्तसङ्घपरिश्रितः । चारुचन्दनपुष्पस्रक्शेखरैः पूजितः स्वकैः ॥ ३ ॥
स्वाज्ञया क्रियमाणानि साधुभक्तैः परस्परम् । देहत्रयानुबन्धीनि शृण्वन् प्रश्नोत्तराणि च ॥ ४ ॥
ततः प्रीतस्तृतीयाङ्गविवेकं स्वयमाह तान् । वपूंषि त्रीणि जीवस्य स्थूलं सूक्ष्मं च कारणम् ॥ ५ ॥
जीवस्य बन्धनान्येव तानि मायामयानि वै । तत्र कारणमेवान्त्यं लभते स्थूल सूक्ष्मताम् ॥ ६ ॥
पृथक्त्वेन न तज्जीवाद्वेत्तुं शक्यं मुमुक्षुभिः । तमोमयं च दुर्भेद्यं कठिनं वज्रसारवत् ॥ ७ ॥
यदा मुमुक्षुः सत्सङ्गं कृत्वा साक्षाद्धरिं हृदि । दृढं निश्चित्य रहसि प्रेम्णा ध्यायति निश्चलः ॥ ८ ॥
हृदि तस्य च वाक्यानि धत्ते तं चानुवर्त्तते । तथा तु तत्प्रतापेन भवत्यात्मा ततः पृथक् ॥ ९ ॥

क्षुभिः । जीवात् । पृथक्त्वेन । वेत्तुं ज्ञातुम् । न शक्यम् ॥ ७ ॥ एवं कारणशरीरस्वरूपमुक्त्वा साम्प्रतं जीवस्य ततः पृथग्भवनसाधनान्याह द्वाभ्याम् । यदेति । यदा । मुमुक्षुः पुमान् । सत्सङ्गं साक्षाद्भगवदेकान्तिकसाधुसमागमम् । कृत्वा । साक्षाद्धरिम् । हृदि । दृढम् । निश्चित्य । अयमेव साक्षादक्षरधामाधिपतिः पुरुषोत्तमः स्ववियोगासहैकान्तिकस्वभक्तोपरि कृपया कृतमनुष्यानुकरणो विराजते इति निर्णीयेत्यर्थः । निश्चलस्तत्स्वरूपैकस्थिरमनाः सन् । रहसि एकान्तस्थले । प्रेम्णा गाढानुरागेण । ध्यायति चिन्तयति ॥ ८ ॥ हृदिति । तस्य श्रीहरेः । वाक्यान्येकान्तिकधर्मसम्बन्धिवचनानि । हृदि स्वमनसि । धत्ते । मयैतदनुसारेणैव वृत्यमिति निश्चित्य तथैवोत्तरोत्तराधिकतया वर्त्तते इत्यर्थः । तं श्रीहरिम् । अनुवर्त्तते छन्दानुसारेण सेवते । तदा । तत्प्रतापेनालौकिकातिशयिततन्महिम्ना । तत्प्रसादेनेति पाठे तु तदनुग्रहेणेत्यर्थः । आत्मा मुमुक्षुभगवद्भक्तजीवः । ततः कारणदेहात् । पृथक् । भवति । ततो ब्रह्मात्मना हरिं भजते इति भावः इति द्वयोरेकसम्बन्धः ॥ ९ ॥

जीवस्य कारणशरीरात्पृथग्भावे दृष्टान्तमाह । चिञ्चेति । यथा । चिञ्चाबीजस्याम्लिकाबीजस्य । त्वग्गर्भौ । एकत्वेन परस्परैकभावेन । स्थितावपि । अग्नितापेन । भिन्नौ परस्परपृथग्भूतौ । स्तो जायेते । तथैव । तावेकत्वेन स्थितौ कारणदेहात्मनौ । तेन पूर्वोक्तरीत्या स्वसेवितश्रीहरिप्रतापेन । भिन्नौ । स्तः ॥ १० ॥ नेति । अस्य जीवस्य । कारणमायाया अनादिभूतकारणशरीररूपाज्ञानात् । पृथक् स्थितौ भिन्नतयावस्थाने । पृथग्भवने इत्यर्थः । एनं स्वसेवितश्रीहरिप्रतापं विना । अन्यः । उपायः । नास्ति । हि । इतीत्थम् । निश्चितम् । जानीत ॥११॥ इतीति । इत्यमुना प्रकारेण । उक्त्वा । अज्ञानमूलहृत् स्वाश्रितानामामूलादनाद्यज्ञानविनाशकः । स्वामी श्रीहरिः । पुनर्भूयः । तान्साधून् । पप्रच्छ । हे साधवः ! । स्थूलं स्थूलशरीरम् । जाग्रज्जाग्रदवस्था च । सत्त्वकार्यम् । सत्त्वगुणकार्यरूपे भवत इत्यर्थः । सूक्ष्मं सूक्ष्मशरीरम् । स्वप्नः स्वप्नावस्था च । राजसम् । रजोगुणकार्यरूपौ भवत इत्यर्थः ॥ १२ ॥ प्रकाशेति । प्रकाशगुणके प्रकाशधर्मवति । सत्त्वे गुणे । यथार्थम् । ज्ञानम् । अस्ति ।

चिञ्चाबीजस्य त्वग्गर्भावेकत्वेन स्थितावपि । अग्नितापेन भिन्नौ स्तो यथा तेन तथैव तौ ॥ १० ॥<br>
नास्ति कारणमायाया जीवस्यास्य पृथक् स्थितौ । एनं विना ह्युपायोऽन्य इति जानीत निश्चितम् ॥ ११ ॥<br>
इत्युक्त्वा तान् पुनः स्वामी पप्रच्छाज्ञानमूलहृत् । स्थूलं जाग्रत्सत्त्वकार्यं सूक्ष्मं स्वप्नश्च राजसम् ॥ १२ ॥<br>
प्रकाशगुणके सत्त्वे यथार्थं ज्ञानमस्ति हि । अयथार्थं च भवति मलिने तु रजोगुणे ॥ १३ ॥<br>
एवं सत्यपि सात्त्विक्यामवस्थायां तु जाग्रति । श्रुतस्यार्थस्य मननं यदा सूक्ष्मे प्रजायते ॥ १४ ॥<br>
तदैव तस्य दार्ढ्यं तु भवतीत्यनुभूयते । प्रकाशे तत्कथं नाभूदभूच्च मलिने कथम् ॥ १५ ॥<br>
इति तत्प्रश्नमाश्रुत्य सन्तस्ते कर्त्तुमुत्तरम् । यदा यथावन्नाजानंस्तदा चक्रे स एव तत् ॥ १६ ॥

मलिने रागमदकामविक्षेपादिकचरे । रागादिदोषयुक्ते इत्यर्थः । रजोगुणे तु । अयथार्थम् । ज्ञानम् । भवति ॥ १३ ॥ एवमिति एवं सत्यपि । सात्त्विक्यां सत्त्वगुणकार्यरूपायाम् । जाग्रति । अवस्थायाम् । श्रुतस्य । अर्थस्य यस्य कस्यापि वस्त्वभिधेयस्य । यत्किञ्चिच्छ्रुतं तस्येत्यर्थः । मननम् । यदा । सूक्ष्मे रजोगुणात्मके सूक्ष्मशरीरे । प्रजायते । तदेत्युत्तरेण सम्बन्धः ॥ १४ ॥ तदेति । तदैव । तस्य श्रुतार्थस्य । दार्ढ्यम् । भवति जायते । इतीत्थम् । अनुभूयते । तद्दार्ढ्यम् । प्रकाशे प्रकाशगुणकसत्त्वगुणकार्यरूपजाग्रदवस्थायाम् । कथम् । नाभूत् । मलिने रागविक्षेपादिदोषमलिमसरजोगुणकार्यरूपस्वप्नावस्थायाम् । कथम् । अभूत् । तद्वदतेति शेषः ॥ १५ ॥ इतीति । इत्येवंविधम् । तत्प्रश्नं श्रीहरिकृतानुयोगम् । आश्रुत्य । ते । सन्तः । उत्तरम् । कर्त्तुम् । यदा । यथावद्यथार्थतया । नाजानन् नैवाविदन् । तदा । स श्रीहरिरेव । तदुत्तरम् । चक्रे ॥ १६ ॥

क्षेत्रज्ञ इति । हे सन्तः ! । आत्मा जीवः । देहिनाम् । हृत्पद्मे हृदयाब्जे । सदा वर्त्तते । स क्षेत्रज्ञ एव । बाह्यान्तःकरणानाम् । प्रवर्त्तकश्चेतयिता । भवति ॥ १७ ॥ तदिति । तदात्मक इन्द्रियान्तःकरणात्मकः । सूक्ष्मदेहः । तस्य जीवस्य । निकटे । वर्त्तते । अतो हेतोः । ज्ञानस्य । अतिशयः । तत्र सूक्ष्मदेह एव । विशेषतः । अस्ति ॥ १८ ॥ तदिति । यत् । क्षेत्रज्ञप्रमापितं क्षेत्रज्ञेन बुद्धिपूर्वं प्रमाणीकृतम् । तदेव । दृढम् । सत्यं च । स्यात् । इतीत्थम् । स्वानुभूतिप्रमाणतः स्वानुभवप्रामाण्यात् । प्रश्नोत्तरम् । प्रोक्तम् । अयमयं भावः । स्थूलशरीरं पञ्चभूतात्मकं सूक्ष्मशरीरमेकोनविंशतितत्त्वात्मकं तत्र तमोगुणकार्यस्यापि स्थूलशरीरस्य प्रकाशगुणकसत्त्वगुणकार्यजाग्रदवस्थासम्बन्धेन सत्त्वकार्यत्वं न तु स्वभावतः । सूक्ष्मशरीरस्य तु सत्त्वगुणकार्यमनःसम्बन्धप्रधानत्वेन सात्त्विकत्वेऽपि रागादिदोषवद्रजोगुणकार्यस्वप्नावस्थासम्बन्धेन रजः कार्यत्वं न तु स्वभावतः । अतो जाग्रतः सत्त्वकार्यत्वेऽपि तमःकार्यपृथिव्यादिप्रधानत्वादात्मसम्बन्धस्य दूरत्वेन विक्षेपप्रधानत्वाच्च न तत्र यथार्थज्ञानदार्ढ्यम् । स्वप्नस्य रजःकार्यत्वेऽपि सत्त्वकार्यमनःसम्बन्धप्राधान्यादात्मसम्बन्धस्यासन्नत्वाद्विक्षेपाभावाच्च तत्र यथार्थज्ञानदार्ढ्यमतो

क्षेत्रज्ञ आत्मा हृत्पद्मे देहिनां वर्त्तते सदा । बाह्यान्तःकरणानां स भवत्येव प्रवर्त्तकः ॥ १७ ॥
तदात्मकः सूक्ष्मदेहो निकटे तस्य वर्त्तते । अतो ज्ञानस्यातिशयस्तत्रैवास्ति विशेषतः ॥ १८ ॥
तदेव स्याद् दृढं सत्यं यत्क्षेत्रज्ञप्रमापितम् । इति प्रश्नोत्तरं प्रोक्तं स्वानुभूतिप्रमाणतः ॥ १९ ॥
ईदृक्प्रश्नोत्तरं स्थैर्यं मनसश्च बुभुत्सवः । स्वनिर्वासनतां सम्यगिच्छेयुर्येऽत्र मानवाः ॥ २० ॥
तैः श्रद्धया मुहुः श्रव्याः सादरं प्रयतात्मभिः । ईदृश्यो भगवद्वार्त्ताः सर्वाभीष्टार्थसिद्धिदाः ॥ २१ ॥
दानव्रततपोयोगध्यानादिभ्योऽपि सर्वथा । एता एव गरीयस्यः परमार्थप्रसाधने ॥ २२ ॥

नात्र मुख्ये जाग्रत्स्वप्नावस्थे ग्राह्ये किन्तूक्तरीत्या जाग्रत्येव स्वप्नावस्था बोध्येति ॥१९॥ ईदृगिति । अत्र सत्सङ्गे । ईदृक् प्रश्नोत्तरमेवंविधानां प्रश्नानामित्थंभूतान्युत्तराणीत्यर्थः । मनसः । स्थैर्यं निश्चलतां च । बुभुत्सवः । ये । मानवा भक्तजनाः । सम्यग्यथार्थतया स्वनिर्वासनतां स्वमनोगतमायिकविषयभोगभावनावर्जितत्वम् । इच्छेयुः । तैरित्युत्तरेण सम्बन्धः ॥ २० ॥ तैरिति । तैस्तथाविधैर्भक्तैः । प्रयतात्मभिर्नियतान्तःकरणैः सद्भिः । सर्वाभीष्टार्थसिद्धिदाः । ईदृश्य एवंविधामदुक्तप्रकारा इत्यर्थः । भगवद्वार्त्ताः । श्रद्धया विश्वासेन । सादरं यथातथा । मुहुर्वारंवारम् । श्रव्याः ॥ २१ ॥ दानेति । दानानि च व्रतान्येकादश्युपोषणादीनि च तपांसि कृच्छ्रचान्द्रायणादीनि च योगोऽष्टाङ्गयोगश्च ध्यानं च तान्यादयो येषां साङ्ख्यविचारादीनां तेभ्योऽपि । एता भगवद्वार्त्ता एव । परमार्थप्रसाधने भगवन्माहात्म्यवेदनपूर्वकं तदेकान्तिकभक्तता निष्पत्तिनिमित्तम् । सर्वथा । गरीयस्यः । परमार्थं साधयितुमतिशयेन समर्था इत्यर्थः ॥ ॥ २२

इतीति । इत्येवंविधाम् । हरेः । वचनसुधाम् । निपीय । सदसि सभायाम् । निषण्णाः । तदाश्रिताः । समस्ताः । सन्तः । गृहिणश्च । तां हरिवचनसुधाम् । सचित्रमाश्चर्यसहितं यथातथा । हृदि स्वस्वमानसे । दधतो धारयन्तः । परममुदमेव । अवापुः ॥ २३ ॥ पृथक्तां कारणाद्देहात्स्वभक्तानां ससाधनाम् । स्व-

इति वचनसुधां हरेर्निषण्णाः सदसि निपीय तदाश्रिताः समस्ताः । परममुदमवापुरेव सन्तो हृदि दधतो गृहिणश्च तां सचित्रम् ॥२३॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते शताधिकाष्टमस्तरङ्गः ॥ १०८ ॥ १२ ॥

वार्त्तानां च दिव्यानां माहात्म्यं सर्वतोऽधिकम् ॥ १ ॥ यः प्राह श्रीहरिः स्वामी भक्तिधर्मसुतः प्रभुः । तस्य ता हृदये सन्तु सुस्थिराः सर्वदा मम ॥ २ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्सूनुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां शताधिकाष्टमस्तरङ्गः ॥ १०८ ॥ १२ ॥

## श्री कार्याणिप्रकरणं सम्पूर्णम्

॥ श्री स्वामिनारायणो विजयतेतराम् ॥

# श्री हरिवाक्यसुधासिन्धौ
# श्री लोया – प्रकरणम्

यश्चकार बहूंस्तत्प्रान्स्वान्स्ववाक्सुधया हरिः । स्वयं ब्रह्मपुरेशो मे बुद्धिदाता पिताऽस्तु सः ॥ १ ॥ लोहग्राम्यास्तरङ्गा ये सन्त्यष्टादशसङ्ख्यया । हरिवाक्यसुधासिन्धोस्तेषां व्याख्यां करोम्यहम् ॥ २ ॥ तत्र तु प्रथमे कोपहेयतापूर्वकं सताम् । अष्टानां येऽनुयोगास्तदुत्तराण्युदितानि हि ॥ ३ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८७७) कार्त्तिकस्य । अन्ते कृष्णपक्षे । दशम्यां तिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ ग्राम इति । तत्र तिथौ । लोहाभिधे । सूरवर्मनृपालये दुर्गान्तर्वर्त्तिसूरवर्मनृपतिभवने । उत्तमे सुतूलिकाद्यास्तरणश्रेष्ठे । पीठे मञ्चासने । स्वकीयैः । भक्तगणैर्नानादेशायातैस्त्यागिगृहिभक्तौघैः । वृतः सभायां परिवेष्टितः । स श्रीहरिः । न्यषीदत् ॥ २ ॥ सितमिति । सितं श्वेतम् । आप्रपदीनं भाषायां सुरवाल पायजांमा इत्यादिसंज्ञाप्रसिद्धम् । दधत् । सितोष्णीषं श्वेतं शीर्षपटं च । दधत् । तथा । चित्रं श्यामाल्पबिन्दुश्रेणिविचित्रम् । श्वेतम् । तूलगर्भाङ्गरक्षकं पिञ्जिताल्पाल्पभृतपिचुनीशारम् । परिदधत् ॥ ३ ॥ सितेति । सितप्रावारवसनः श्वेतोत्तरीयवासाः । मितस्मितेन मन्दहासेन लसच्छोभमानं मुखं यस्य सः । स्वकीयहितकृत्स्वाश्रितजनहितकारकः । प्रभुः श्रीहरिः । पुरःस्थान्स्वाग्रप्रदेशावस्थितान् । साधून् ।

शकाब्दे विक्रमार्कस्य नगाश्ववसुभूमिते । दशम्यां कार्त्तिकस्यान्ते वचोऽमृतमिदं हरेः ॥ १ ॥ ग्रामे लोहाभिधे तत्र सूरवर्मनृपालये । न्यषीददुत्तमे पीठे स स्वैर्भक्तगणैर्वृतः ॥ २ ॥ सितमाप्रपदीनं च सितोष्णीषं तथा दधत् । चित्रं परिदधच्छ्वेतं तूलगर्भाङ्गरक्षकम् ॥ ३ ॥ सितप्रावारवसनो मितस्मितलसन्मुखः साधून् पुरस्थानवदत्स्वकीयहितकृत्प्रभुः ॥ ४ ॥ भक्तैर्नारायणस्येह क्रोधाख्यो बलवान् रिपुः । सर्वथैव विजेतव्यः सुकृतक्षयकारणम् ॥ ५ ॥ रोगितश्वसमक्रोधो यं यं दशति देहिनम् । तं तं विरूपयित्वैव दुर्दशां नयति द्रुतम् ॥ ६ ॥ यदाविष्टात्सतोऽपीह कालसर्पादिवापरे । बिभ्यत्यन्यप्राणहरं तं त्यजन्सुखभाग्भवेत् ॥ ७ ॥ अथापृच्छच्छुकमुनिस्तं प्रभो ! यदि सोऽल्पकः । हृदि जातोऽथ विज्ञातः प्रहियेनात्मसंविदा ॥ ८ ॥ तदा स किञ्चित्कुर्यात्किं मुमुक्षोरहितं न वा । तमुवाच पुनः स्वामी दुष्टो दौष्ट्यं नहि त्यजेत् ॥ ९ ॥

॥ ४ ॥ भक्तैरिति । हे साधवः ! । इह सत्सङ्गे । नारायणस्य । भक्तैः । सुकृतक्षयकारणमुपार्जितपुण्यमात्रविनाशहेतुः । क्रोधाख्यः । बलवान् । रिपुः । सर्वथा सर्वप्रकारेणैव । विजेतव्यः ॥५॥ रोगितेति । रोगितश्वसमक्रोधोऽलर्कसमानः कोपः । यं यम् । देहिनम् । दशति । तं तं देहिनम् । विरूपयित्वा विपरीतरूपं कृत्वा । द्रुतं शीघ्रमेव । दुर्दशाम् । नयति ॥ ६ ॥ यदिति । इह लोके । यदाविष्टाद्येन कोपेन कृतावेशात् । सतः साधोरपि । कालसर्पात्कृष्णाहेरिव । अपरे जनाः । बिभ्यति भयं प्राप्नुवन्ति । अन्यप्राणहरम् । तं क्रोधम् । त्यजन्परिहरन् साधुः । सुखभाक् । भवेत् ॥ ७ ॥ अथेति । अथैवंविधश्रीहरिवाक्यश्रवणानन्तरम् । शुकमुनिः नित्यं तन्निकटस्थः शुकानन्दसाधुः । तं श्रीहरिम् । अपृच्छत् । हे प्रभो ! । यदि । अल्पकोऽल्पमात्रः । स क्रोधः । हृदि जातः । अथानन्तरम् । विज्ञातः सन् । आत्मसंविदा तद्दोषेक्षापूर्वं स्वेनैव कृतविचारेण । प्रहियेतापनीयेत । तदेत्युत्तरेण सम्बन्धः ॥ ८ ॥ तदेति । तदा । सः । अल्पमात्रोऽपि क्रोधः । मुमुक्षोः ।

किञ्चित् । अहितम् । कुर्यात् । किम् । न वा कुर्यात् । तमेवं पृच्छन्तं शुकानन्दमुनिम् । स्वामी श्रीहरिः । पुनः । उवाच । हे मुने ! । दुष्टः । दौष्ट्यम् । न हि नैव । त्यजेत् ॥ ९ ॥ अल्पमात्रस्यापि तस्य भयजनकत्वं दृष्टान्तद्वयेन वदन् तावतोऽपि तस्य त्याज्यत्वमाह त्रिभिः । उपशल्य इति । यथा । उपशल्ये पुरसमीपप्रदेशेऽपि हुङ्कारम् । कुर्वन् । व्याघ्रः शार्दूलः । पुरौकसां पुरवासिनाम् । अमारकः सन्नपि । सर्वेषाम् । भयङ्करः । एव । अस्ति ॥ १० ॥ यथेति । यथा वा । अत्रास्यामेव । सदसि । कश्चन जलव्यालादिषु कश्चित् । भुजङ्गः । आपतेदायायात् । सः । अदशन्सन्नपि । भयेन । सर्वेषाम् । द्रावकोऽस्याः सदसोऽपि पलायकः । भवेत् ॥ ११ ॥ अल्पक इति । तथा । अल्पकोऽपि । क्रोधः । परमन्यम् । न मारयन्सन्नपि । भीतिप्रदो भयोत्पादक एव । भवेत् । ततो हेतोः । सोऽल्पमात्रक्रोधोऽपि । अन्यवद्भूरिक्रोधवत् । त्याज्यः । भूरिक्रोधो यथाऽवश्यं परिहेयस्तथाऽयमपि परिहेय एवेत्यर्थः ॥ १२ ॥ इतीति । इत्यमुना प्रकारेण । तं शुकानन्दमुनिम् । उक्त्वा । प्रभुः । स श्रीहरिः । सर्वानपि । साधून् । जगाद । हे साधवः ! । चेद्यदि । कस्यचिद्यस्य कस्यापि । किञ्चित् । प्रष्टव्यम् । स्यात् ।

उपशल्येऽपि हुङ्कारं कुर्वन्व्याघ्रः पुरौकसाम् । अमारकोऽपि सर्वेषां यथाऽस्त्यैव भयङ्करः ॥ १० ॥ यथा वाऽत्रैव सदसि भुजङ्गः कश्चनापतेत् । अदशन्नपि सर्वेषां भयेन द्रावको भवेत् ॥ ११ ॥ अल्पकोऽपि तथा क्रोधो न परं मारयन्नपि । भीतिप्रदो भवेदेव सोऽपि त्याज्यस्ततोऽन्यवत् ॥ १२ ॥ इत्युक्त्वा तं प्रभुः साधून्सर्वानपि जगाद सः । प्रष्टव्यं कस्यचित्किञ्चित्स्याच्चेत्तर्हि स पृच्छतु ॥ १३ ॥ तदाऽपृच्छत्कनिष्ठस्तं निर्मानानन्द ईश्वर ! । कामस्योन्मूलनं केन साधनेन भवेद्वद ॥ १४ ॥ श्रीस्वाम्युवाच तं साधो ! दृढयैवात्मनिष्ठया । अष्टाङ्गब्रह्मचर्येण वैराग्येण दृढेन च ॥ १५ ॥ माहात्म्यातिशयज्ञानपूर्वकेण रमापतेः । उपासनेन कामस्य भवेदुन्मूलनं ध्रुवम् ॥ १६ ॥ अपृच्छद्भजनानन्दस्तं विरक्तस्य मे प्रभो ! । कनिष्ठमध्यमोत्कृष्टभेदान्कथय लक्षणैः ॥ १७ ॥ तमुवाच हरिर्यस्तु त्यक्त्वा स्त्रीसङ्गमष्टधा । वर्त्तमानः स्वधर्मेऽपि क्वचित्स्त्र्यङ्गस्य दर्शने ॥ १८ ॥

तर्हि । सः । पृच्छतु ॥ १३ ॥ तदेति । तदा तस्मिन्समये । कनिष्ठः । निर्मानानन्दः साधुः । तं श्रीहरिम् । अपृच्छत् । हे ईश्वर ! । कामस्यान्तःशत्रोर्मन्मथस्य उन्मूलनम् । केन । साधनेन । भवेत् । वद तत्साधनं ब्रूहि ॥ १४ ॥ श्रीस्वामिति । तमेवंपृच्छन्तं निर्मानानन्दसाधुम् । श्रीस्वामी । उवाच । हे साधो ! । दृढयैव । आत्मनिष्ठया । दृढेन । अष्टाङ्गब्रह्मचर्येण । दृढेन । वैराग्येण च ॥ १५ ॥ माहात्म्येति । माहात्म्यातिशयज्ञानपूर्वकेण । रमापतेः श्रीकृष्णस्य । उपासनेन । कामस्य । उन्मूलनम् । भवेत् । ध्रुवम् । इति द्वयोरेकसम्बन्धः ॥ १६ ॥ अपृच्छदिति । अथ । भजनानन्दः साधुः । तं श्रीहरिम् । अपृच्छत् । हे प्रभो ! । विरक्तस्य वैराग्यवतः साधुभक्तस्य । कनिष्ठमध्यमोत्कृष्टभेदान् । मे मह्यम् । लक्षणैः । कथय ॥ १७ ॥ तमिति । तमेवं पृच्छन्तं भजनानन्दसाधुम् । हरिः । उवाच । यः साधुः । अष्टधा । स्त्रीसङ्गम् । त्यक्त्वा । स्वधर्मे । वर्त्तमानः सन्नपि । क्वचित्कदाचित् । स्त्र्यङ्गस्य । दर्शने सति ॥ १८ ॥

विक्रियामिति । सद्यः । विक्रियाम् । प्राप्नुयात् । स साधुः । कनिष्ठः । विरागवान् । सः । यदि । सत्सङ्गात् । दूरे स्यात् । तदा । पतेत्स्वधर्माच्च्युतो भवेत् । न संशयः । इति द्वयोरेकान्वयः ॥ १९ ॥ योषामिति । इह सत्सङ्गे । यः । विवाससं नग्नामपि । योषां स्त्रियम् । पशुमिव । आलोक्य । विक्रियाम् । नाप्नुयात् । तां विवासोयोषाम् । रहास्थले । दृष्ट्वा तु । विक्रियाम् । इयात्प्राप्नुयात् ॥ २० ॥ स इति । मध्यमः । सः । विरक्तः । कुसङ्गाभ्यासतः कुसङ्गिजनानां प्रसङ्गबाहुल्येन । पतेत् । उत्तमो विरागवांस्तु । स्त्रीक्षादौ एकान्ते नग्नस्त्रीदर्शनादौ सति । क्वापि । क्षोभम् । नैति । हि ॥ २१ ॥ पुनरिति । पुनर्भूयः । भजनानन्दः । साधुः । तं श्रीहरिम् । पप्रच्छ । हे सत्पते ! । विरक्तवद्वैराग्यवत इव । ज्ञानिनः साक्षाद्भगवत्स्वरूपज्ञानवतो भक्तस्यापि । त्रैविध्यम् । वक्तुम् । अर्हसि ॥ २२ ॥ 'भजनानन्दमुनिना पृष्ट इत्थं स सत्पतिः । हर्षयन्निति तं चाह हरिकृष्णोऽपराजितान्' । वीक्ष्येति । हे साधो ! । त्राकृतेः । कृष्णस्य । अतिमानुषं मनुष्येष्वसम्भाव्यम् । प्रतापम् । वीक्ष्य । अयं मच्चक्षुर्विषयः । साक्षात्प्रत्यक्षः । हरिः । परमेश्वर एवास्ति । इतीत्थम् । तं त्राकृतिं

विक्रयां प्राप्नुयात्सद्यः कनिष्ठः स विरागवान् । सत्सङ्गाद्यदि दूरे स्यात्पतेदेव न संशयः ॥१९॥ योषां पशुमिवालोक्य विवाससमपीह यः । विक्रयां नाप्राप्नुयाद्येयात्तां तु दृष्ट्वा रहःस्थले ॥ २० ॥ स विरक्तो मध्यमो वै कुसङ्गाभ्यासतः पतेत् । उत्तमस्तु न वै क्वापि स्त्रीक्षादौ क्षोभमेति हि ॥ २१ ॥ पुनस्तं भजनानन्दः साधुः पप्रच्छ सत्पते ! । विरक्तवज्ज्ञानिनोऽपि त्रैविध्यं वक्तुमर्हसि ॥ २२ ॥ श्रीहरिरुवाच – वीक्ष्य प्रतापं कृष्णस्य त्राकृतेरतिमानुषम् । अयं साक्षाद्धरिरिति तं विदित्वा य आश्रयेत् ॥ २३ ॥ प्रतापानाविष्करणं क्वचिद्दृष्ट्वा नृनाटनम् । कुर्वतोऽस्य च शङ्केत कनीयान् ज्ञानवान्स तु ॥ २४ ॥ विदित्वाऽपि कनीयोवत्कृष्णं नरतनुं प्रभुम् । शुभाशुभचरित्राणि वीक्ष्य मुह्येत्तु तस्य यः ॥ २५ ॥ स मध्यमोऽथोत्तमस्तु पर्वतप्रायनिश्चयः । सर्वकर्मसु कृष्णस्य नैव मुह्येत्स कर्हिचित् ॥ २६ ॥

कृष्णम् । विदित्वा । यो जनः । आश्रयेत्तदाश्रयं कुर्यात् ॥ २३ ॥ प्रतापेति । क्वचिद्दुर्जनकृतस्वद्रोहादावपि । नृनाटनम् । कुर्वन्तः । अस्य हरेः । प्रतापानाविष्करणं प्रभावस्याप्रकटनम् । दृष्ट्वा । शङ्केतायमीश्वरः स्यान्न वेति शङ्कां प्राप्नुयात् । स तु । कनीयान् । ज्ञानवान् । ज्ञेयः । इति द्वयोरेकसम्बन्धः ॥२४॥ विदित्वेति कनीयोवत् । नरतनुम् । कृष्णम् । प्रभुं प्रतापदर्शनेन परमेश्वरम् । विदित्वाऽपि । तस्य कृष्णस्य । शुभाशुभचरित्राणि नृभावसंशोभनार्थानि समीचीनासमीचीनचरितानि वीक्ष्य । यः । मुह्येन्मोहं प्राप्नुयात् । स इत्युत्तरेणान्वयः ॥ २५ ॥ स इति । स सम्प्राप्तमोहो भक्तः । मध्यमो मध्यमज्ञानवान् । भक्तस्तु । पर्वतप्रायनिश्चयः । पर्वतो यथा न चलेत्तथा त्राकृतौ भगवति कृतः परमेश्वरत्वनिश्चयोऽपि यस्याचलो भवेत्तथाविध इत्यर्थः । ज्ञेयः । स तथाविध उत्तमभक्तः । कृष्णस्य । सर्वकर्मसु शुभाशुभासु सर्वास्वपि क्रियासु । कर्हिचित्कदाचिदपि । नैव । मुह्येत् ॥ २६ ॥

निश्चय इति । येन साक्षाद्भगवद्भक्तेन । कृष्णस्य । निश्चयः । स्वस्य । कारितः । स्यात् । स भक्तोऽपि । दुःसङ्गनष्टधीः कुसंङ्गसम्बन्धेन साक्षाद्भगवतो विनष्टपरमेश्वरतामतिः सन् । चेद्यदि । अयम् । प्रभुः । न । इतीत्थम् । स्वं प्रति । वदेत् । तदेत्युत्तरेण सम्बन्धः ॥ २७ ॥ तदेति । तदा तर्हि । तं स्वं प्रत्येवं वदन्तं भक्तम् । विपर्ययमतिं जातविपरीतबुद्धिमेव । जानीयात् । ध्रुवम् । क्वचित् । स्वनिश्चयम् अणुमात्रमपि । न तु नैव । जह्यात् ॥ २८ ॥ प्राप्नुयादिति । उत्तमो भक्तः । अस्मिन्नेव जन्मनि । सिद्धिमात्यन्तिककल्याणम् । प्राप्नुयात् । मध्यमो भक्तः । द्वित्रैर्द्वाभ्यां त्रिभिर्वा । जन्मनि । सिद्धिम् । प्राप्नुयात् । तृतीयकः कनिष्ठभक्तः । अनेकैर्जन्मभिः । सिद्धिम् । प्राप्नुयात् । अनयोत्तमभक्तादेस्त्रिविधसिद्ध्युक्त्या भजनानन्दमुनिकृत एतदर्थः प्रश्नोऽपि ज्ञातव्यः ॥ २९ ॥ शिवानन्द इति । अथानन्तरम् । ज्येष्ठः । शिवानन्दः साधुः । प्रभुम् । तं श्रीहरिम् । आनतो विहितप्रणतिः सन् पप्रच्छ । हे हरे ! । तव । ज्ञाने । पूर्णे भवदुक्तोत्तमभक्तवत् सम्पूर्णे सत्यपि ।

निश्चयः कारितः स्वस्य येन कृष्णस्य सोऽपि चेत् । नायं प्रभुरिति स्वं च वदेद्दुःसङ्गनष्टधीः ॥ २७ ॥
तदा तमेव जानीयाद्वीपर्ययमतिं ध्रुवम् । न तु स्वनिश्चयं जह्यादणुमात्रमपि क्वचित् ॥ २८ ॥
प्राप्नुयादुत्तमः सिद्धिमस्मिन्नेव हि जन्मनि । मध्यमो जन्मभिर्द्वित्रैरनेकैस्तु तृतीयकः ॥ २९ ॥
शिवानन्दोऽथ तं ज्येष्ठः पप्रच्छ प्रभुमानतः । पूर्णे ज्ञाने तवाप्यन्तर्नेयते स्वकृतार्थता ॥ ३० ॥
अत्र हेतुं न जानीमस्तं भवान्वक्तुमर्हति । इति पृष्टः सता तेन तमूचे भक्तिनन्दनः ॥ ३१ ॥
कामलोभस्वादमानस्नेहाद्यान्तरशत्रुभिः । दग्धाशयस्य पुंसो हि न स्यादन्तःकृतार्थता ॥ ३२ ॥
पप्रच्छ नित्यानन्दोऽथ साधुस्तं प्रणतः प्रभो ! । केनोपायेन कामाद्या नश्यन्त्यान्तरशत्रवः ॥ ३३ ॥

अन्तरन्तःकरणे । स्वकृतार्थता स्वकृतकृत्यत्वम् । नेयते न ज्ञायते ॥ ३० ॥ अत्रेति अत्रार्थे । हेतुम् । न जानीमः । तं हेतुम् । भवान् । वक्तुम् । अर्हति । इत्यमुना प्रकारेण । सता साधुना । तेन शिवानन्देन । पृष्टः । भक्तिनन्दनः श्रीहरिः । तं शिवानन्दसाधुम् । ऊचे ॥ ३१ ॥ कामेति । हे साधो ! । कामश्च लोभश्च स्वादश्च मानश्च स्नेहश्च ते आदयो येषां क्रोधादीनां ते च ते आन्तरशत्रवस्तैः । दग्धाशयस्य पराभूतान्तःकरणस्य । पुंसः सम्पूर्णकृष्णज्ञानवतोऽपि साधुभक्तस्य । अन्तः कृतार्थता । न स्यात् । हि । अत्रास्य प्रश्नोत्तरस्यायं भावः । पूर्णे कृष्णज्ञाने सति तु कामाद्यन्तर्वैरविप्लुष्टाशयत्वाभावादन्तःकरणे स्वकृतार्थतामतिः स्यादेव । यदा तथाविधा सा न स्यात्तदाऽस्य तावती तत्र तन्न्यूनतैव बोध्या साऽपि तेन भगवन्माहात्म्यवेदनादिनापनेयेति ॥ ३२ ॥ पप्रच्छेति । अथानन्तरम् । नित्यानन्दः । साधुः । तं श्रीहरिम् । प्रणतः सन् । पप्रच्छ । हे प्रभो ! । कामाद्याः । अन्तरशत्रवः । केन । उपायेन । नश्यन्ति । तं वदेति शेषः ॥ ३३ ॥

प्रोवाचेति । तमेवं पृच्छन्तं नित्यानन्दमुनिम् । हरिः । प्रोवाच । हे साधो ! । यः साधुः । अर्कजः संयमनीपतिर्यमः । पापिष्विव । अर्कजग्रहणं निर्दयत्वातिशज्ञापनार्थम् । तेष्वन्तःशत्रुषु । नित्यम् । दण्डोद्यतो दण्डप्रदानोद्युक्तः । स्यात् । तस्य । साधोः । ते कामाद्याः । अरयोऽन्तःशत्रवः । नश्येयुः ॥३४॥ देहेति । देहश्च वाक् च मनश्च तेषाम् । दण्डाद्दण्डप्रदानात् । तेषां कामाद्यन्तःशत्रूणाम् । दण्डः । कृतः । भवेत् । तत्र देहदण्डादिषु त्रिषु दण्डेषु मध्ये । कृच्छ्रचान्द्रायणादिभिः । देहस्य । दण्डः । मतः ॥ ३५ ॥ वाच इति । मौनेन यथोचितभाषणेन विहितस्थातेषु तूष्णीं भावेन वा । सत्येन स्वपरद्रोहवर्जितयथार्थभाषणेन । कृष्णसङ्कीर्त्तनेन च । वाचः । दण्डः । मतः । विवेक आत्मानात्मस्वरूपविचारश्च कृष्णध्यानमेकाग्रभावेन साक्षाद्धरिमूर्त्तेः समग्रतयैकैकावयवतया च चिन्तनं च ताभ्याम् । मनसः । दण्डः । मतः ॥३६॥ एवमिति । एवममुना प्रकारेण कृतेन । दण्डेन देहादीनां दण्डनेन । माहात्म्यज्ञानपूर्वम् । आदरात् । कृष्णम् । भजतः साधोः । कामादयः । अरयः शत्रवः । हृदो मनसः सकाशात् । नष्टाः । स्युः ॥ ३७ ॥ मुक्तानन्द इति । अथानन्तरम् । मुक्तानन्दो मुनिः । पप्रच्छ तमप्राक्षीत् । हे हरे ! । बहवः । नराः । सत्सङ्गम् । कुर्वते । तेषु

प्रोवाच तं हरिः साधो ! नश्येयुस्तस्य तेऽरयः । नित्यं दण्डोद्यतो यः स्यात्तेषु पापिष्विवार्कजः ॥ ३४ ॥ देहवाङ्मनसां दण्डात्तेषां दण्डो भवेत्कृतः । तत्र देहस्य दण्डस्तु कृच्छ्रचान्द्रायणादिभिः ॥ ३५ ॥ वाचो मौनेन सत्येन कृष्णसङ्कीर्त्तनेन च । विवेककृष्णध्यानाभ्यां दण्डस्तु मनसो मतः ॥ ३६ ॥ एवं दण्डेन नष्टाः स्युर्हृदः कामादयोऽरयः । माहात्म्यज्ञानपूर्वं तु कृष्णं भजत आदरात् ॥३७॥ मुक्तानन्दोऽथ पप्रच्छ सत्सङ्गं कुर्वते नराः । बहवस्तत्र यत्पूर्णो ज्ञेयः कैर्लक्षणैः स तु ॥ ३८ ॥ श्रीहरिरुवाच–यस्यात्मनिष्ठा सुदृढा क्षेत्रासङ्गित्ववर्त्तनम् । स्यात्तथापि यो जह्यादावपुः स्मरणाद्यमान् ॥ ३९ ॥ ब्रह्मभूतोऽपि वर्त्तेत दास्य एव हरेश्च यः । न तिष्ठेच्च क्षणमपि क्रियां कार्ष्णीं विना क्वचित् ॥४०॥ शुभाशुभाः क्रिया यश्च कुर्वन्तमपि मर्त्यवत् । कृष्णं मन्येत प्रत्यक्षमाकाशवदसङ्गिनम् ॥४१॥

बहुषु सत्सङ्गकर्तृनरेषु मध्ये । यद्यस्य भक्तस्य । पूर्णः सम्पूर्णः सत्सङ्गः । स्यात् । स सत्सङ्गस्तु । कैः । लक्षणैः । ज्ञेयः ॥ ३८ ॥ 'मुक्तानन्देन मुनिनासोऽनुयुक्त इतीश्वरः । तं नन्दयन् जगादेत्थं निजान्सर्वान् परांस्तथा' । यस्येति । हे मुने ! । यस्य भक्तस्य । क्षेत्रासङ्गित्ववर्त्तनं देहेन्द्रियादिरूपक्षेत्रे वर्त्तमानत्वेऽपि ततः स्वस्यासङ्गितया वर्त्तनरूपा । अत एव । सुदृढा । आत्मनिष्ठा । स्यात् । तथापि । यः । आवपुःस्मरणात्स्वदेहस्मृतिपर्यन्तम् । यमानहिंसाब्रह्मचर्यादीन् । एते स्वधर्मस्याप्युपलक्षणम् । न जह्यात् । अवश्यं पालयेदित्यर्थः ॥३९॥ ब्रह्मेति । यश्च । ब्रह्मभूतो ब्रह्मात्मभावं प्राप्तः सन्नपि । हरेः । दास्ये दासभावे एव । वर्त्तेत । यश्च । कार्ष्णीं साक्षाच्छ्रीकृष्णसम्बन्धिनवधाभक्तिलक्षणम् । क्रियाम् । विना । क्वचित्कदाचिदपि । क्षणं क्षणमात्रकालपर्यन्तमपि । न तिष्ठेत् ॥ ४० ॥ शुभेति । यश्च । मर्त्यवत् । शुभाशुभाः । क्रियाः । कुर्वन्तमपि । प्रत्यक्षम् । कृष्णम् । आकाशवत् । असङ्गिनम् । मन्येत । आकाशो यथा चतुर्ष्वपि पृथिव्यादिभूतेष्वनुस्यूततया स्थितोऽपि तेषां सर्वाः क्रियाः

स्तस्मिन् जायन्तेऽथापि तद्विकारवर्जित एव तिष्ठति तथा साक्षाद्धरिरपि शुभाशुभक्रियालेपवर्जित एवास्तीति जानीयादित्यर्थः ॥ ४१ ॥ नरेति । नराकारोऽपि । एषः प्रत्यक्षकृष्ण एव । अनन्तब्रह्माण्डकारणं महाप्रकृतिपुरुषद्वाराऽनन्तब्रह्माण्डोत्पत्त्यादिहेतुः । अक्षरादिधामपतिः । आदिशब्देन गोलोकवैकुण्ठश्वेतद्वीपादिधामग्रहणम् । सकलैश्वर्यसंयुतश्च ॥ ४२ ॥ अक्षरेति । अक्षरात्मकमुक्तौघसेविताङ्घ्रिरक्षरभावापन्नाक्षरधामस्थमुक्तव्रजदिव्यनानोपचारपरिचरितपादपद्मश्च । वर्त्तते । एवममुना प्रकारेण । यः । कृष्णमाहात्म्यम् । विदित्वा । तं प्रत्यक्षश्रीकृष्णम् । निषेवते प्रेम्णा भजते । इति द्वयोरेकसम्बन्धः ॥ ४३ ॥ तस्येति । तस्य पञ्चश्लोकोक्तलक्षणस्य । पुंसो भक्तस्यैव । सत्सङ्गः । पूर्णः सम्पूर्णः । जातः । इतीत्थम् । ईयतां बुद्ध्यताम् । अथानन्तरम् । कनिष्ठः । शिवानन्दः साधुः । तं श्रीहरिम् । कृताननतिः कृतप्रणामः सन् । अपृच्छत् ॥ ४४ ॥ इहेति । हे कृष्ण ! । इह सत्सङ्गे । केचित् । भक्तजनाः । ते तव । भक्तानाम् । महताम् । सताम् । भूरिमाहात्म्यम् । हृदये स्वमानसे । अञ्जसा तत्त्वतः । विदन्ति ॥ ४५ ॥ केचिदिति । केचित् । भक्तास्तु । एषां त्वद्भक्तमहासताम् । माहात्म्यमपि । कर्हिचित् । विदुः । क्वापि । अज्ञवदज्ञानिजनवत् । न

नराकारोऽप्येष एवानन्तब्रह्माण्डकारणम् । अक्षरादिधामपतिः सकलैश्वर्यसंयुतः ॥४२॥ अक्षरात्मकमुक्तौघसेविताङ्घ्रिश्च
वर्त्तते । एवं यः कृष्णमाहात्म्यं विदित्वा तं निषेवते ॥ ४३ ॥ तस्यैव पुंसः सत्सङ्गः पूर्णो जात इतीयताम् ।
कनिष्ठोऽथ शिवानन्दस्तमपृच्छत्कृतानतिः ॥ ४४ ॥ इह भक्तजनाः केचित्कृष्ण ! ते महतां सताम् । भक्तानां भूरि
माहात्म्यं विदन्ति हृदयेऽञ्जसा ॥ ४५ ॥ केचित्तु भक्ता अप्येषां माहात्म्यं कर्हिचिद्विदुः । न चाज्ञवद्विदुः क्वापि
तत्र किं कारणं वद ॥ ४६ ॥ प्रभुः प्रोवाच तं साधो ! धर्मनिष्ठा हि साधवः । धर्मएव प्रियस्तेषामाश्रितानां
जगद्गुरुम् ॥ ४७ ॥ तन्माहात्म्यावगन्तारो जनास्तु द्विविधा मताः । कुशाग्रबुद्धयस्तत्र केचिच्च स्थूलबुद्धयः
॥ ४८ ॥ आद्यास्तत्र विनष्टाहङ्कारा स्युः साधुसेवया । अन्येषां क्वापि लीना स्यादहन्ता क्वापि चोद्गता ॥ ४९ ॥

च नैव विदुः । तत्र तेषां तन्माहात्म्यवेदनावेदने । किं कारणम् । वद ॥४६॥ प्रभुरिति । तमेवं पृच्छन्तं शिवानन्दसाधुम् । प्रभुः श्रीहरिः । प्रोवाच । हे साधो ! । साधवः । धर्मनिष्ठाः । सन्ति । हि । जगद्गुरुं स्वाश्रितेभ्यः स्वधर्मपालनरूपहितोपदेष्टारं श्रीहरिम् । आश्रितानाम् । तेषां सताम् । धर्म एव । प्रियोऽस्ति ॥ ४७ ॥ तदिति । तन्माहात्म्यावगन्तार उक्तविधसाधुमहिमवेत्तारः । जना भक्तास्तु । द्विविधाः । मताः । तत्र तेषु द्विविधभक्तजनेषु । केचिज्जनाः । कुशाग्रबुद्धयः सूक्ष्ममतयः । केचिज्जनाश्च । स्थूलबुद्धयः । सन्ति ॥ ४८ ॥ आद्या इति । तत्र तेषु द्विविधभक्तजनेषु मध्ये । आद्याः कुशाग्रबुद्धयः । साधुसेवया भगवदेकान्तिकसाधुसेवनेन । विनष्टाहङ्काराः सर्वथाविनष्टदेहाभिमानाः । स्युः । अन्येषां स्थूलबुद्धिभक्तानाम् । अहन्ता देहाभिमानः । क्वापि कदाचित् । लीना । स्यात् । क्वापि उद्गतोदयं प्राप्ता च । स्यात् । ॥ ४९ ॥

उभयानिति । क्वचित्कदाचित् । उत्पथवर्त्तने स्वधर्मं परित्यज्याधर्माध्वनि चलने कृते सति । सन्तः । उभयान् द्विविधान् । तान्स्वप्रसङ्गिभक्तजनान् । अप्रियैररोचकैरपि । वचनैः । तत उत्पथवर्त्तनात् । निवर्त्तयेयुः । वै ॥ ५० ॥ तत्रेति । तत्र तेषुभयविधेषु मध्ये । आद्या विनष्टाहङ्काराः । मुमुक्षवो जनाः । तद्वचांसि उत्पथवर्त्तननिवृत्तिहेत्वप्रियतद्वचनानि । हितान्येव । विदन्तः सन्तः । तेषां सताम् । माहात्म्यम् । यथावद्यथावस्थितमेव । विद्युः ॥ ५१ ॥ अन्य इति । अन्ये कदा कदाचिल्लीनोद्गताहन्ताः । जनास्तु । यर्हि । सत्सङ्गात्प्रचुरसाधुप्रसङ्गतः । लीनाहंमतयः । भवेयुः । तर्हि तु । सताम् । माहात्म्यम् । अञ्जसा तत्त्वतः । विद्युः ॥ ५२ ॥ निवर्त्तकानीति । ते जनाः । अधर्मादुत्पथवर्त्तनरूपात् । निवर्त्तकानि । तद्वचांसि । अप्रियाण्यपि । स्वहितानि । इतीत्थम् । अवेत्य ज्ञात्वा । प्रीत्यैव । बह्वधिकं यथातथा । मन्येरन् ॥ ५३ ॥ कुदेशेति । तेषां जनानाम् । यदा । कुदेशकालसङ्गाद्यैः । देहाहन्तोद्गमः । भवेत् ।

उभयानपि तान्सन्तः क्वचिदुत्पथवर्त्तने । ततो निवर्त्तयेयुर्वै वचनैरप्रियैरपि ॥ ५० ॥ तत्राद्याः स्वहितान्येव विदन्तस्तद्वचांसि हि । तेषां यथावन्माहात्म्यं विद्युरेव मुमुक्षवः ॥५१॥ अन्ये तु यर्हि सत्सङ्गाल्लीनाहंमतयः क्वचित् । भवेयुस्तर्हि तु सतां विद्युर्माहात्म्यमञ्जसा ॥ ५२ ॥ निवर्त्तकान्यधर्माच्च तद्वचांस्यप्रियाण्यपि । प्रीत्यैव बहु मन्येरन्स्वहितानीत्यवेत्य ते ॥ ५३ ॥ कुदेशकालसङ्गाद्यैर्देहाहन्तोद्गमो यदा । तेषां भवेत्तदानीं तु भवेयुस्तेऽन्यथा धियः ॥ ५४ ॥ देहाभिमानदोषेण स्युश्च ते स्वैरचारिणः । सन्तोऽपि यावत्तत्कर्मानुमोदेरन् शुभाशुभम् ॥ ५५ ॥ तावत्तु तेषां माहात्म्यं ते विद्युर्भूरिचेतसि । सन्तोऽपि नः स्तुवन्तीति स्वांश्च विद्युस्ततोऽधिकम् ॥५६॥ निवर्त्तयेयुः स्वान् दोषाद्यदा ते त्वप्रियोक्तिभिः । तदा विद्युस्तद्वचांसि हितान्यप्यहितानि ते ॥५७॥ तन्महत्त्वस्य च ज्ञानं तेषां ह्रसति चेतसः । दोषानेव ततस्तेषां ते क्षिपन्ति गुणेष्वपि ॥५८॥ सूर्येरजः क्षेपइव दोषाक्षेपो महत्स्वपि । क्षेप्तुरेव विनाशाय परावृत्तो हि जायते ॥५९॥

तदानीं तु । ते जनाः । अन्यथा धियो विपरीतमतयः । भवेयुः ॥ ५४ ॥ देहेति । ते जनाः । देहाभिमानदोषेण । स्वैरचारिण उत्पथगाः । स्युः । सन्तोऽपि । यावत् शुभाशुभम् । तत्कर्म । अनुमोदेरन् ॥ ५५ ॥ तावदिति । तावत्तु । ते जनाः । तेषां सताम् । माहात्म्यम् । चेतसि । भूरि प्रचुरम् । विद्युः । सन्तोऽपि । नोऽस्मान् । स्तुवन्ति । इतीत्थम् । स्वान् । ततः सद्भ्यः सकाशात् । अधिकं यथातथा । विद्युः । इति द्वयोरेकसम्बन्धः ॥ ५६ ॥ निवर्त्तयेयुरिति । ते सन्तः । यदा । अप्रियोक्तिभिः । स्वान् । दोषादुत्पथवर्त्तनरूपात् । निवर्त्तयेयुः । तदा । ते जनाः । हितान्यपि । तद्वचांसि साधुवचनानि । अहितानि । विद्युः ॥ ५७ ॥ तदिति । तेषां जनानाम् । चेतसः सकाशात् । तन्महत्त्वस्य साधुमाहात्म्यस्य । ज्ञानम् । ह्रसति क्षीयते । ततो हेतोः । ते जनाः । तेषां सताम् । गुणेष्वपि । दोषानेव । क्षिपन्त्यारोपयन्ति ॥ ५८ ॥ सूर्य इति । सूर्ये । रजःक्षेप इव । महत्सु साधुष्वपि । दोषाक्षेपः । परावृत्तः सन् । क्षेप्तुर्जनस्य । विनाशायैव । जायते । यथा सूर्ये

प्रति केनचित्कृतो धूलिपुञ्जप्रक्षेपस्तमनाप्नुवन् क्षेप्तुरेवाक्ष्णोर्निपतति तद्वत्साधुगुणेपु प्रेरिता दोषाः प्रेरयितुर्जनस्यैव परावृताः सन्तो विनाशका भवन्तीत्यर्थः ॥५९॥ महेति । महापातकिनो ब्रह्महत्यादिमहापापकर्तुर्जनस्यापि । निष्कृतिः प्रायश्चित्तम् । धर्मशास्त्रेषु याज्ञवल्क्यादिस्मृतिषु । अस्ति । सदवमन्तुर्दोषाक्षेपेण साध्वपमानकर्त्तुः । पुंसस्तु । सा दोषनिष्कृतिः । नास्त्येव । इतीत्थंभूतः । निश्चयोऽस्ति ॥ ६० ॥ प्रतिकार इति । यथा । राजयक्ष्मणः । 'राजयक्ष्मा क्षयरोगस्य क्षयः पुमा'निति हैमः । प्रतीकारो निवारणोपायः । कुत्रचित् केषुचिदप्यायुर्वेदग्रन्थेषु । नास्ति । तथैव । सत्सु । दोषारोपस्य । प्रतीकारः । नास्ति । इतीत्थम् । बुद्ध्यताम् ॥ ६१ ॥ पुंस इति । अत्र सत्सङ्गे । सत्सङ्गिनः । पुंसः । पाल्यस्यानुष्ठेयस्य । यस्य । कस्यापि । नियमस्य । विच्युतिर्भङ्गः । स्यात् । तया नियमविच्युत्या । पतितः सत्सङ्गाच्च्युतः । न भवेत् । प्रायश्चित्ताचरणेन नियमभङ्गशुद्धिसम्भवादिति भावः ॥ ६२ ॥ स्यादिति । इह सत्सङ्गे । आरूढयोगः सिद्धदशां प्राप्तोऽपि । पुमान् भक्तः । सद्दोषग्रहणात् । सद्यः । पतित एव । स्यात् । तर्हि । अल्पकृतिः साधनदशावस्थितोऽल्पसुकृतकर्मा । कुधीर्देहात्मबुद्धिर्जनः । सद्दोषग्रहणात् । सद्यः पतितः एव स्यात् ।

महापातकिनोऽप्यस्ति धर्मशास्त्रेषु निष्कृतिः । पुंसः सदवमन्तुस्तु सा नास्त्येवेति निश्चयः ॥ ६० ॥
प्रतीकारो यथा नास्ति कुत्रचिद्राजयक्ष्मणः । तथैव दोषारोपस्य सत्सु नास्तीति बुद्ध्यताम् ॥ ६१ ॥
पुंसः सत्सङ्गिनोऽत्र स्याद्यस्य कस्यापि विच्युतिः । नियमस्य च पाल्यस्य न तया पतितो भवेत् ॥ ६२ ॥
स्यादेव पतितः सद्यः सद्दोषग्रहणात्त्विह । आरूढयोगोऽपि पुमान्किमुताल्पकृतिः कुधीः ॥ ६३ ॥
अङ्गुल्याद्यङ्गविच्छेदसमाऽन्यनियमच्युतिः । महत्सु दोषदृष्टिस्तु शिरश्छेद इवान्तकृत् ॥ ६४ ॥
अनात्मानं ततो देहं जडं निश्चित्य सर्वथा । तत्राभिमानः सन्त्याज्यः सन्महत्त्वावबोधहृत् ॥ ६५ ॥
अथो भगवदानन्दस्तमपृच्छत्कृताननतिः । हृद्यागतः सदगुणः केनोपायेन नश्यति ॥ ६६ ॥

तत्र किमुत किं वक्तव्यमित्यर्थः ॥ ६३ ॥ अङ्गुलीति । अन्यनियमच्युतिः । अङ्गुल्याद्यङ्गविच्छेदसमा । यथाङ्गुल्याद्यवयवविच्छेदे देहपातो न भवेत्तथा सद्दोषग्रहणेतरनियमच्युत्या सत्सङ्गतः पातो न भवेदित्यर्थः । महत्सु साधुषु । दोषदृष्टिस्तु । शिरश्छेद इव । अन्तकृत् । यथा शिरश्छेदे तु देहपातोऽवश्यमेव भवेत्तथा सत्सु दोषेक्षया मरणतुल्यः सत्सङ्गतः पातो भवेदित्यर्थः ॥ ६४ ॥ अनात्मानमिति । ततो हेतोः । देहम् । अनात्मानमात्मधर्मचेतनतावर्जितम् । अत एव । जडम् । निश्चित्य । सन्महत्त्वावबोधहृत्साधुमहत्त्वाज्ञानापहारकः । तत्र देहे । अभिमानः । सर्वथा । सन्त्याज्यो मुमुक्षुणा भक्तेनात्मनिष्ठादिसाधनबलेन सर्वथा परिहेयः ॥ ६५ ॥ अथो इति । अथो अनन्तरम् । भगवदानन्दः साधुः । तं श्रीहरिम् । कृतानतिः कृतप्रणामः सन् । अपृच्छत् । हे हरे ! । हृदि स्वमनसि । आगतः । सदगुणस्त्वत्सतां दोषः । केन । उपायेन । नश्यति ॥ ६६ ॥

'इत्थं भगवदानन्दमुनिना पृष्ट ईश्वरः । स तं प्रहर्षयंश्चान्यान् प्राह सर्वान्निजा'निति । उपाय इति । हे साधो ! । अत्र हृदयागतसद्दोपनाशे । उपायस्तु । भवति । किन्तु । असावुपायः । सुकरः सुसाध्यः । न हि नास्त्येव । तथापि । तमुपायम् । वो युष्मभ्यम् । कथये । अत्रानुयोक्तुः सत एकत्वेऽपि सर्वसदनुमत्याऽनेन प्रश्नः कृतोऽस्ति तदभिप्रायं बहुवचनम् । यतः । स उपाय । श्रद्धालोस्तद्दोपनिवर्त्तनश्रद्धावतो भक्तस्य । न दुष्करो दुःसाध्यो न भवति ॥ ६७ ॥ हृदीति । यस्य साधोः । अगुणो दोपः । हृदि । आगतः । स्यात् । असौ साधुः । ईशितुः साक्षात्परमेश्वरस्य । महानेकान्तिक एव । भक्तः । अस्ति । इतीत्थम् । निश्चित्य । अतिदैन्यतः । सम्प्रसाद्यः । अहं दीनस्त्वद्दासानुदासोऽस्मि दयालवो यूयमतिमहान्तः स्थातो दीनस्य मन्दस्य ममापराधान् क्षन्तुमर्हथेत्येवं रङ्कभाववचनसम्भापणेन सम्प्रसादनीय इत्यर्थः ॥ ६८ ॥ वृत्यमिति । तदग्रे तस्य साधोः पुरतः । निश्छद्म निष्कपटं यथातथा । वृत्यं वर्त्तनीयम् । मनोवाक्कायवृत्तिभिः । तत्प्रियम् । सर्वथा । कार्यम् । तदागसः स्वकृतसाध्वपराधात् । अनुतप्यम् । स्वकृततदपराधं स्मृत्वा मयाऽत्यसाधुकृतमिति मनसि परितापः कार्य इत्यर्थः ॥ ६९ ॥

श्रीहरिरुवाच—उपायस्तु भवत्यत्र किन्त्वसौ सुकरो न हि । तथापि तं वः कथये श्रद्धालोः स न दुष्करः ॥ ६७ ॥ हृद्यागतः स्यादगुणो यस्यासौ भक्त ईशितुः । महानेवेति निश्चित्य सम्प्रसाद्योऽतिदैन्यतः ॥६८॥ वृत्यं तदग्रे निश्छद्म मनोवाक्कायवृत्तिभिः । सर्वथा तत्प्रियं कार्यमनुतप्यं तदागसः ॥ ६९ ॥ अहो मया महत्पापं कृतं यदगुणः सतः । ब्रह्मरूपस्य भक्तस्य धृतो हृदि हरेरिति ॥ ७० ॥ ईदृग्विधानुतापेन खाद्यपेयशयादिषु । न स्वास्थ्यं प्राप्नुवन्नित्यं भक्त्या परिचरेच्च तम् ॥ ७१ ॥ उपाय एष एवैको हृत्स्थसद्दोपवर्जने । वर्त्तते नेतर इति साध्योऽसौ स्वहितार्थिना ॥ ७२ ॥ इत्थं हि वाक्यानि सुधोपमानि हरेर्निशम्यात्महितस्य सन्तः । प्रपेदिरे तेऽतिमुदं च भक्ताः सदोनिषण्णा इतरेऽपि सर्वे ॥ ७३ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते शताधिकनवमस्तरङ्गः ॥ १०९ ॥ १ ॥

अनुतापप्रकारमाह । अहो इति । अहो कष्टे । मया । महत् । पापम् । कृतम् । यद्यतो हेतोः । ब्रह्मस्वरूपस्य प्रत्यक्षभगवदुपासनया ब्रह्मभावं प्राप्तस्य । हरेः । भक्तस्य । सतः साधोः । अगुणः । हृदि । धृतो गृहीतः । इति । अनुतप्यमिति पूर्वेणान्वयः ॥ ७० ॥ ईदृगिति । ईदृग्विधानुतापेनाहर्निशं हृदि कृतेनैवंविधपरितापेन । खाद्यपेयशयादिषु अन्नाशनजलपानस्वापाचरणादिकर्मसु । स्वास्थ्यम् । न प्राप्नुवन् सन् । नित्यम् । भक्त्या स्नेहेन । तं साधुम् । परिचरेत् तदनुवृत्त्या सेवेत ॥७१॥ उपाय इति । हृत्स्थसद्दोषवर्जने । एपः । एक एव । उपायः । वर्त्तते । इतरस्तद्भिन्नः । न वर्त्तते । इति हेतोः । स्वहितार्थिना सद्दोषवर्जनरूपस्वहितैपिणा भक्तेन । असावुपायः । साध्यः सम्पाद्यः ॥ ७२ ॥ इत्थमिति । इत्थमेवंविधानि । सुधोपमान्यमृतकल्पानि । आत्महितस्य स्वहितकरस्य । हरेः । वाक्यानि । निशम्य । सदोनिषण्णाः । भक्ताः । ते । सर्वे । सन्तः । इतरे सर्वे गृहस्थाश्चापि । अतिमुदम् । प्रपेदिरे ॥ ७३ ॥ आनन्दयन्स्वानष्टानां सतां प्रश्नोत्तराणि यः । कुर्वंश्चक्रे हितं

. वा.
ु. टी.
ा. त. २
॥ ५ ॥

स्थानां स हरिर्मेद्धितं क्रियात् ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्सूनुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधा-सिन्धुटीकायां शताधिकनवमस्तरङ्गः ॥ १०९ ॥ १ ॥

चतुर्विधानां भक्तानां ज्ञान्यादीनां द्वितीयके । लक्षणानि च कार्यात्तु कारणस्य बलं स्मृतम् ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८७७) ऊर्जकृष्णे कार्त्तिकमासस्य कृष्णपक्षे । एकादश्यां तिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ लौहेति । तत्र तिथौ । लौहग्रामे । सूरनृपवेश्मनि दुर्गान्तःस्थसूरवर्मनृपति-भवने । स्वास्तृते । मञ्चके पर्यङ्कासने । सहस्रसः । भक्तैर्नानादेशायातैस्त्यागिगृहिभिरपरिमितैः स्वभक्तजनैरित्यर्थः । वृतः सभायां परिवेष्टितः । स्वामी श्रीहरिः । न्यषीदद्दक्षिणाभिमुख उपविवेश ॥ २ ॥ तं विशिनष्टि त्रिभिः । नीशारमिति । स्वर्णसूत्रीयानि गुम्फनचातुर्येण स्वर्णसूत्ररचितानि नरनारायणेत्यक्षराणि यस्मिंस्तत् । नर-नारायणेत्युपलक्षणं तेन नरनारायणस्वामिनारायणेति स्वर्णसूत्राक्षरयुक्तमित्यर्थः । श्यामं श्यामवर्णम् । नीशारम् । दधत् । स्वर्णबुट्टाङ्कं सुवर्णसूत्रीयसुवर्णमुद्रास्थूलबुट्टावलि-

शकाब्दे विक्रमार्कस्य नगाश्ववसुभूमिते । एकादश्यामूर्जकृष्णे वचोऽमृतमिदं हरेः ॥ १ ॥
लौहग्रामे तत्र सूरनृपवेश्मनि मञ्चके । न्यषीदत्स्वास्तृते स्वामी वृतो भक्तैः सहस्रशः ॥ २ ॥
नीशारं स्वर्णसूत्रीयनरनारायणाक्षरम् । श्यामं शोणं दधत्स्वर्णबुट्टाङ्कं सुरवारकम् ॥ ३ ॥
प्रान्ताग्रस्वर्णसूत्राढ्यमुष्णीषं चाभ्रवर्णकम् । कौसुम्भं स्वर्णसूत्राढ्यं दधत् कटिपटं शुभम् ॥ ४ ॥
मुक्तानन्दादिभिः सद्भिर्वाद्यवादनपूर्वकम् । गीयमानानि कृष्णस्य शृण्वन् पद्यानि सादरम् ॥ ५ ॥
कीर्त्तिनान्ते सतोऽग्रस्थान् प्रत्युवाच स सर्ववित् । प्रश्नव्याजेन सर्वेषां हरन्सकलसंशयान् ॥ ६ ॥
भक्तस्य कीदृशस्यात्र न स्यान्मरणतो भयम् । श्रेयो मे जातमेवेति माननं च भवेद्धृदि ॥ ७ ॥

चिह्नितम् । शोणं रक्तवर्णम् । सुरवारकमाप्रपदीनं च । दधत् ॥ ३ ॥ प्रान्ते । प्रान्ताग्रस्वर्णसूत्राढ्यं प्रान्तपल्लवयोः सुवर्णसूत्रसम्पन्नम् । अभ्रवर्णकं नभोनीलम् । उष्णीषं च । दधत् । कौसुम्भरञ्जितम् । स्वर्णसूत्राढ्यम् । शुभं शोभनम् । कटिपटं कटिबन्धनवसनं च । दधत् ॥ ४ ॥ मुक्तानन्देति । मुक्तानन्दादिभिः । सद्भिः । वाद्यवादनपूर्वकं मंक्योर्ध्वविपञ्चिकादिवादित्रवादनसहितं यथातथा । गीयमानानि । कृष्णस्य । पद्यानि । सादरम् । शृण्वन् ॥ ५ ॥ कीर्त्तनेति । सर्ववित्सर्वज्ञः । प्रश्नव्याजेन पृच्छामिषेण । सर्वेषां भक्तानाम् । सकलसंशयान् । हरन् । स श्रीहरिः । कीर्त्तनान्ते सद्गीतकीर्त्तनावसाने । अग्रस्थान्स्वसन्मुखोपविष्टान् । सतो मुक्तानन्दादिसाधून् । प्रति उवाच ॥ ६ ॥ भक्तस्येति । हे साधवः ! । अत्र सत्सङ्गे । कीदृशस्य किंविधस्य । भक्तस्य । हृदि । मरणतो जन्ममृत्युप्रवाहरूपसंसारादित्यर्थः । भयम् । न स्यात् । मे मम । श्रेयः कल्याणम् । जातमेव । इत्येवंविधम् । हृदि । माननं मानिता च । स्वकृतार्थत्वमित्यर्थः । भवेत् ॥ ७ ॥

इतीति । इत्यमुना प्रकारेण । जिज्ञासुना ज्ञातुमिच्छुनान्यजनेनेव । तेन श्रीहरिणा । पृष्टैः । तैः । साधुभिस्तु । हे स्वामिन् ! । अस्य त्वत्कृतप्रश्नस्य । उत्तरम् । त्वमेव । कुरु । इतीत्थम् । उक्तः । प्रभुः श्रीहरिः । अब्रवीत् ॥ ८ ॥ चतुरिति । ज्ञानी । शूरः । विश्वस्तः । तुरीयकश्चतुर्थः । स्निग्धः । इत्यमीत्येते । चतुर्विधाः । राधिकापतेः साक्षाच्छ्रीकृष्णस्य । ये । भक्ताः । भवेयुः ॥ ९ ॥ तेषामिति । तेषां चतुर्विधानां भक्तानाम् । चेतसि तु । मरणात् । भीतिः । सर्वथा । नास्ति । आत्मकृतार्थतायां मम कल्याणं जातमस्त्येवेति निश्चये इत्यर्थः । संशयः सन्देहः । क्वापि कदाचिदपि । नास्त्येव ॥ १० ॥ तत्रेति । तत्र ज्ञान्यादिचतुर्विधभक्तेषु मध्ये । ज्ञानी । कृष्णभक्तः । ब्रह्मीभूतात्मसंस्थितेः स्वात्मनो ब्रह्मभावेन स्थितियुक्तत्वाद्धेतोः । क्वापि कदाचिदपि । मृतेर्मरणात् । न बिभेति । अहम् । कृतार्थः । अस्मि । इतीत्थम् । मन्यते । अत्रास्य कृष्णभक्तत्वेन भक्तिरस्मिन्प्रत्यक्षैव । वैराग्यं स्वधर्मस्थितिं च विना ब्रह्मीभूतात्मसंस्थितेरभावादेतत्पदेन ज्ञानवैरागस्वधर्मा उक्तास्तेनास्यैकान्तिकत्वं सिद्धं ततोऽस्य मरणभयाभावः कृतार्थता चास्त्येवेति भावः ॥ ११ ॥ देहेति । यत् । देहेन्द्रियान्तःकरणम् । उत्पथगामि

इति पृष्टैः साधुभिस्तु तेन जिज्ञासुनेव तैः । त्वमेवास्योत्तरं स्वामिन्कुर्वित्युक्तोऽब्रवीत्प्रभुः ॥ ८ ॥ चतुर्विधास्तु ये भक्ता भवेयू राधिकापतेः । ज्ञानी शूरश्च विश्वस्तस्तुरीयः स्निग्ध ईत्यमी ॥९॥ तेषां तु मरणाद्भीतिः सर्वथा नास्ति चेतसि । आत्मकृतार्थतायां च नास्त्येव क्वापि संशयः ॥ १० ॥ तत्र ज्ञानी कृष्णभक्तो ब्रह्मीभूतात्मसंस्थितेः । न बिभेति मृतेः क्वापि कृतार्थोऽस्मीति मन्यते ॥ ११ ॥ देहेन्द्रियान्तःकरणं यत्स्यादुत्पथगामि तत् । सद्यो नियच्छेदुद्युक्तः शूरो भक्तः स कथ्यते ॥ १२ ॥ आन्तराः शत्रवस्तस्मात्तमांस्यर्कादिवाखिलाः । बिभ्यत्यसौ कृतार्थं स्वं मन्यते गतमृत्युभीः ॥ १३ ॥ नराकृतेर्भगवतो वचनेषु च तत्सताम् । विश्वासं परमापन्नो भक्तो विश्वस्त उच्यते ॥ १४ ॥ अयं सर्वेश्वरः कृष्णस्तस्यास्मीति सुनिश्चितः । असावपि कृतार्थत्वान्मरणान्न बिभेति हि ॥ १५ ॥

कुमार्गगम् । स्यात् । तत् । यः । उद्युक्त उत्पथगदेहादिदण्डप्रदानोद्यतः सन् । सद्यस्तत्क्षणमेव । नियच्छेत्प्रत्याहरेत् । सः । शूरः । भक्तः । कथ्यते ॥ १२ ॥ आन्तरा इति । आन्तराः । अखिलाः । शत्रवः कामाद्याः । तमांसि तमस्तोमाः । अर्कात् सूर्यादिव । तस्माच्छूरभक्तात् । बिभ्यति भयं प्राप्नुवन्ति गतमृत्युभीर्निवृत्तमरणभयः ; असौ शूरभक्तः । स्वम् । कृतार्थम् । मन्यते । अत्रास्यापि कृष्णभक्तत्वात्कृष्णभक्तिः प्रसिद्धैव । देहादीनामुत्पथनिवृत्त्युक्त्या स्वधर्मोऽपि प्रसिद्धः । अस्मादन्तरारिभयोक्त्या ज्ञानवैराग्ये अपि स्फुटे एव । तेनास्यैकान्तिकत्वसिद्ध्या मृतिभयाभावकृतार्थते भवत एवेति भावः ॥ १३ ॥ नरेति नराकृतेः । भगवतः वचनेषु । तत्सतां तदेकान्तिकसाधूनाम् । वचनेषु च । परं सर्वोत्तमम् । विश्वासमादरम् । आपन्नः प्राप्तः । भक्तः । विश्वस्तः । उच्यते ॥ १४ ॥ अयमिति । अयं मयाश्रितः । कृष्णः श्रीहरिकृष्णो भगवान् । सर्वेश्वरः सकलेश्वराणामपीश्वरः पुरुषोत्तमः । अस्ति । तस्यैवंविधभगवतः । अहम् । अस्मि । तदेकान्तिकभक्तो भवामीत्यर्थः । इतीत्थम् । सुनिश्चितः स्थिरनिश्चयः ।

असौ विश्वस्तभक्तोऽपि । कृतार्थत्वात् । मरणात् । न बिभेति । हि । अत्रापि यः साक्षाद्भगवतोऽक्षरपरत्वज्ञानवान्संस्तदाश्रितो भवेत् स नैरन्तर्येण सत्सङ्गे भगवता तदीयैश्च क्रियमाणासु स्वधर्मज्ञानविरक्त्युपेतभगवद्भक्तिवार्त्तास्वादरयुक्तत्वात् तत्सम्पन्नो भवेत्तेनास्याप्येकान्तिकत्वसिद्धेर्मरणाभावकृतार्थत्वे स्त इति भावः ॥ १५ ॥ स्निग्ध इति । स्निग्धो भक्तस्तु । पतिव्रता साध्वी स्त्री । पत्यौ स्वस्वामिनीव । कृष्णे साक्षाद्भगवति । प्रीतिमान् माहात्म्यानुवेदनपूर्वं गाढानुरागवान्सन् । मनसाऽपि । कदाच-नापि । अन्यस्य भगवदितरवस्तुमात्रस्य । चिन्ता चिन्तनम् । न कुरुते ॥ १६ ॥ कृष्ण इति । कृष्णे साक्षाद्भगवत्येव । रतस्यासक्तस्य । तेन साक्षात्कृष्णेनैव । कृतार्थस्य । अस्य स्निग्धभक्तस्य । तदन्यतो भगवत इतरस्मात् । कस्मादपि । हृदये भीतिः । नास्ति वै । अत्रापि पतिव्रता यथा स्वस्वामिने यद्रोचते तदेवाचरति न त्वितरत् तद्वत् तद्दृष्टान्तोदितोऽयं स्निग्धभक्तोऽपि स्वेष्टदेवस्य श्रीहरेः प्रियां स्वधर्मज्ञानविरक्तियुतभक्तिमेव सम्पादयंस्तस्मिन् स्निह्यति तेनास्याप्येकान्तिकत्वसिध्या मृति-भीतिनिवृत्तिकृतार्थत्वे भवत एवेति भावः ॥ १७ ॥ चतुरिति । एतेभ्यः । चतुर्विधेभ्यो भक्तेभ्यः । अन्ये इतरे । ये । दुर्बलाः । भक्ताः । सन्ति । येषूक्तविध-भक्तगुणान्यतमो गुणो न विद्यते इत्यर्थः । तेषां तु । मृत्योः । भयम् । अस्ति । अन्तरे मानसे । कृतार्थत्वं च । नास्ति ॥ १८ ॥ एता इति । तस्माद्धेतोः ।

स्निग्धस्तु प्रीतिमान् कृष्णे पत्याविव पतिव्रता । नान्यस्य चिन्तां कुरुते मनसाऽपि कदाचन ॥ १६ ॥ कृष्ण एव रतस्यास्य कस्मादपि तदन्यतः । भीतिर्नास्त्येव हृदये कृतार्थस्य च तेन वै ॥१७॥ चतुर्विधेभ्य एतेभ्यो येऽन्ये भक्तास्तु दुर्बलाः । तेषामस्ति भयं मृत्योः कृतार्थत्वं च नान्तरे ॥१८॥ एता एव विधास्तस्माच्चतस्रः कृष्णसंश्रितैः । भवद्भिः सुदृढाः कार्यास्तदेकान्तित्वहेतवः ॥ १९ ॥ प्रश्नोत्तरमिति प्रोक्तमथान्यद्यदि कस्यचित् । प्रष्टव्यं किञ्चन भवेत्तर्हि पृच्छतु सोऽपि माम् ॥ २० ॥ ब्रह्मानन्दस्तमप्राक्षीत्ततो नत्वा जगद्गुरो ! । महत्वं कारणस्यैव स्वकार्यादुचितं खलु ॥ २१ ॥

कृष्णसंश्रितैः । भवद्भिः । तदेकान्तित्वहेतवः । एताः । चतस्रः । विधा एव । सुदृढाः । कार्याः । येन या सम्पाद्या स्यात्तेन सा सम्पादनीयेत्यर्थः ॥ १९ ॥ प्रश्नेति । इत्यमुना प्रकारेण । प्रश्नोत्तरम् । प्रोक्तम् । अथ च । यदि । कस्यचित् । किञ्चन । अन्यत् । प्रष्टव्यम् । भवेत् । तर्हि । सोऽपि । माम् । पृच्छतु ॥२०॥ ब्रह्मानन्द इति । ततस्तदनन्तरम् । ब्रह्मानन्दो मुनिः । तं श्रीहरिम् । नत्वा । अप्राक्षीत् । हे जगद्गुरो ! । कारणस्य । स्वकार्यात् । महत्त्वमेव । उचितं योग्यम् । खलु ॥ २० ॥ कथमिति । तत्तदा । राजिकासूक्ष्मात् राजिकाकणाणोः । बीजात् । अतिमहान् । वटः । कथम् । उद्गच्छति । अत्रैतत्प्रश्नस्यायं भावः । पृथिव्या-दिषु पृथ्वीतो जलस्य सूक्ष्मता ततस्तेजसस्ततो वायोस्ततो नभसस्ततस्तामसाहङ्कारस्य ततो महत्तत्त्वस्य ततः प्रधानपुरुषस्य ततो मूलप्रकृतिपुरुषस्य ततोऽक्षरब्रह्मणस्ततः पुरुषोत्तमस्य सूक्ष्मता शास्त्रोदिताऽस्ति ततो हेतोः सूक्ष्माद्वटबीजात्स्थूलवटोत्पत्तिर्यथाऽयुक्ता तथा पुरुषोत्तमात्सूक्ष्मादयं स्थूलप्रपञ्चोद्गमोऽयुक्त इति भात्यतः कथमेवं वैपरीत्यमित्येतत्प्रश्नस्योत्तरं ब्रूहीति । इत्यमुना प्रकारेण । सम्पृष्टो ब्रह्मानन्दमुनिनानुयुक्तः । धर्मनन्दनः श्रीहरिः । तं ब्रह्मानन्दमुनिम् । ऊचे ॥ २१ ॥

यदिति । हे मुने ! । यत् । कारणम् । तत्तु । सूक्ष्मम् । यत्कार्यम् । तत् स्थूलम् । इत्येवंभूता । स्थितिरनादिर्मर्यादा । अस्ति । यद्यतो हेतोः । आदौ सर्गारम्भ-काले । सूक्ष्मभूतेभ्यः शब्दादिभ्यः । महान्ति । भूतानि पृथिव्यादीनि । आसन् । हि प्रसिद्धमेतच्छ्रीमद्भागवतादौ । तद्यथा । 'तामसाच्च विकुर्वाणाद्भगवद्वीर्यचोदितात् शब्द-मात्रमभूत्तस्मान्नभः श्रोत्रं तु शब्दग'मित्यादि ॥ २३ ॥ नेति । इह कार्यकारणविचारे । स्थूलसूक्ष्माकाराभ्याम् । महत्त्वाल्प्ये । नोदिते । किन्तु । कार्यात् । कारणे । शक्त्याधिक्यम् । स्यात् । इतीत्थम् । ईयताम् । अल्पवत्प्रतीयमानमपि कारणमैश्वर्याधिक्येन महदेव तथैव महत्तया प्रतीयमानमपि कार्यमैश्वर्याल्प्येनाल्पमेव न तु स्थूल-सूक्ष्मत्वदर्शनेन महत्त्वाल्प्यव्यवहारः कार्यकारणविचारे स्वीकर्त्तव्य इति भावः ॥ २४ ॥ इममर्थमेव स्पष्टमाह द्वाभ्याम् । शक्तिरिति । तन्मात्रासु शब्दादिषु । यावती । स्वाभाविकी । शक्तिरैश्वर्यम् । नित्यम् । अस्ति । तावती । शक्तिः । तासां तन्मात्राणाम् । कार्येषु । महाभूतेषु । नैवास्ति ॥ २५ ॥ कारणत्वमिति । यत्कारणम् ।

कथं तद्राजिकासूक्ष्माद्बीजादति महान् वटः । उद्गच्छतीति सम्पृष्टस्तमूचे धर्मनन्दनः ॥२२॥ यत्कारणं तत्तु सूक्ष्मं कार्यं स्थूलमिति स्थितिः । यदादौ सूक्ष्मभूतेभ्यो भूतान्यासन्महान्ति हि ॥ २३ ॥ न स्थूलसूक्ष्माकाराभ्यां महत्त्वाल्प्ये इहो-दिते । किन्तु कार्यात्कारणे स्याच्छक्त्याधिक्यमितीयताम् ॥२४॥ शक्तिः स्वाभाविकी नित्यं तन्मात्रास्वस्ति यावती । महाभूतेषु नैवास्ति तासां कार्येषु तावती ॥ २५ ॥ कारणत्वं कारणस्य ह्येतदेव प्रकीर्त्तितम् । यत्सूक्ष्ममप्यतिस्थूलं कार्यमुत्पादयेदिति ॥ २६ ॥ एवं सूक्ष्मान्नराकारात्पुंप्रकृत्यण्डकोटयः । उत्पद्यन्ते हरेर्योगैश्वर्यतः सर्वकारणात् ॥ २७ ॥ यथाऽग्नेर्ज्वालनिकरा वरुणाद्वाम्बुराशयः । सूर्याच्चोद्यान्ति तेजांसि तथेशात्ततस्तु ताः ॥२८॥ स स्वामिनारायणवाक्य-मित्थं मुनिर्निशम्याप सुधोपमेयम् । तोषं महान्तं च परे सदःस्थाः सन्तो गृहस्था अपि तस्य भक्ताः ॥ २९ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते शताधिकदशमस्तरङ्गः ॥ ११० ॥ २ ॥

सूक्ष्मं कार्यापेक्षयाऽणुसदपि । अतिस्थूलम् । कार्यम् । उत्पादयेत् । इत्येतदेव । कारणस्य । कारणत्वम् । प्रकीर्त्तितम् । हि ॥ २६ ॥ एवमिति । एवमनुना प्रका-रेण । सूक्ष्मात् । नराकारान्मनुष्यसमानाकृतेः । सर्वकारणात् । हरेः श्रीकृष्णात् । योगैश्वर्यतोऽसमाधिकया स्वयोगशक्त्या । पुंप्रकृत्यण्डकोटयः । मूलप्रकृतिपुरुषौ ततः प्रधानपुरुषास्ततो महत्तत्त्वाहङ्कारादिद्वारा ब्रह्माण्डकोटय इत्यर्थः । उत्पद्यन्ते ॥ २७ ॥ एतदेव दृष्टान्तैः स्पष्टमाह । यथेति । यथा । अग्नेर्नराकृतिवह्निदेवात् । स्वैश्वर्येण । ज्वालनिकरा ज्वालासमूहाः । उद्यान्त्युत्पद्यन्ते । यथावा । वरुणान्नराकृतिवरुणदेवात् । स्वैश्वर्येण । अम्बुराशयो जलनिकराः । उद्यान्ति । यथा वा । सूर्यान्नराकृतिसूर्यदेवात् । स्वैश्वर्येण । तेजांसि प्रभासमूहाः । उद्यान्ति । तथा । ईशेशात् । ततो नराकृतेः श्रीकृष्णात् । ताः पुंप्रकृत्यण्डकोटयः उद्यान्ति पूर्वोक्त-प्रकारेणोद्भवन्ति ॥ २८ ॥ स इति । इत्थमेवंविधम् । सुधोपमेयम् । स्वामिनारायणवाक्यम् । निशम्य । सः । मुनिर्ब्रह्मानन्दसाधुः । महान्तम् । तोषम् । आप ।

सदःस्थाः । तस्य श्रीहरेः । भक्ताः । परे तदन्ये । मन्तः साधवः । गृहस्थाश्चापि । तोषमापुः ॥ २९ ॥ चतुर्विधानां भक्तानां स्वस्य लक्ष्माणि यो हरिः । सर्वेहेता-श्चाह बलं स्वस्य मद्धृदि सोऽस्तु वै ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्सूनुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरि-वाक्यसुधासिन्धुटीकायां शताधिकदशमस्तरङ्गः ॥ ११० ॥ २ ॥

माहात्म्यज्ञानसहितः कृष्णतद्भक्तनिश्चयः । यस्य स्यात्तस्य लक्ष्माणि तृतीये कीर्त्तितानि तु ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८७७) ऊर्जे-कृष्णत्रयोदश्यां कार्त्तिकमासीयकृष्णपक्षागतत्रयोदशीतिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ लौहेति । तत्र तिथौ । लौहग्रामे । सूरनृपवेश्मनि दुर्गा-न्तःस्थसूरनृपभवने । समास्तृते सोत्तरच्छदकौशतूलितया सम्यगास्तीर्णे । मञ्चके पर्यङ्कासने । सितसर्वाम्बरः स्वाङ्गपरिधृतसकलश्वेतवसनः । स्वामी । स श्रीहरिः । न्यषीदद्भगवतः सायन्तननीराजनादिक्रियां समाप्योपविवेश ॥ २ ॥ नैकेति । नैकदेशागतैः । भक्तैः स्वाश्रितैः । त्यागिभिः । गृहिभिश्च । वृतं सभायां परिवेष्टितम् ।

शकाब्दे विक्रमार्कस्य नगाश्ववसुभूमिते । ऊर्जकृष्णत्रयोदश्यां वचोऽमृतमिदं हरेः ॥ १ ॥ लौहग्रामे
तत्र सूरनृपवेश्मनि मञ्चके । सितसर्वाम्बरः स्वामी स न्यषीदत्समास्तृते ॥ २ ॥ नैकदेशागतैर्भक्तै-
स्त्यागिभिर्गृहिभिर्वृतम् । नत्वा भगवदानन्दस्तमपृच्छत्पुरः स्थितः ॥ ३ ॥ त्वत्त्वत्सद्भक्तमाहात्म्य-
ज्ञानयुग्यद्धृदि निश्चयः । स भवेद्यस्य बुध्येत पुमान्कैर्लक्षणैरिह ॥ ४ ॥ श्रीहरिरुवाच– तादृशः
पुरुषः साधो ! कृष्णतद्भक्ततुष्टये । वर्त्तेत सर्वथा किञ्चिन्नाकार्यं चास्य तत्कृते ॥ ५ ॥ कृष्णस्य
वा सतां प्रीत्यै जह्यात्सद्यः स्वकं गृहम् । राज्यं स्त्रियं वाऽन्यभोगान्कुर्यान्नैव तदप्रियम् ॥ ६ ॥

तं श्रीहरिम् । नत्वा । पुरःस्थितः स्वाग्रप्रदेशनिषण्णः । भगवदानन्दो मुनिः । अपृच्छत् ॥ ३ ॥ त्वदिति । हे हरे ! । इह सत्सङ्गे । यस्य भक्तस्य । हृदि । त्वं स्वयं श्रीहरिश्च त्वत्सद्भक्तास्त्वदेकान्तिकाः साधवश्च तेषां माहात्म्यज्ञानं सम्यङ्महिमावबोधस्तेन युज्यत इति तथोक्तः । निश्चयः । भवेत् । स तथाविधः । पुमान् भक्तः । कैः । लक्षणैः । बुध्येत ॥ ४ ॥ 'पृष्टो भगवदानन्दमुनिनैवं स सत्पतिः । जगादानन्दयंस्तं च सर्वानित्थं निजान्परान्' । तादृश इति । हे साधो ! । तादृशस्तथाविधः कृष्णतद्भक्तमाहात्म्यावबोधयुक्तनिश्चयवानित्यर्थः । पुरुषो भक्तः कृष्णतद्भक्ततुष्टये साक्षाद्भगवत्तदीयसाधुप्रीणनार्थम् । सर्वथा । वर्त्तेत । तत्कृत तदर्थम् । अस्य भक्तस्य । किञ्चित्किमपि । अकार्यं कर्त्तुमशक्यम् । न स्यात् ॥५॥ एतदेव स्पष्टमाह । कृष्णस्येति । सः । कृष्णस्य । प्रीत्यै प्रसन्नतार्थम् । अथवा । सतां तदेकान्तिक-साधूनाम् । प्रीत्यै । सद्यः । स्वकम् । गृहम् । राज्यम् । अथवा । स्त्रियम् । अथवा । अन्यभोगान् । जह्यात् । तदप्रियं कृष्णतद्भक्तप्रियविरुद्धम् । नैव कुर्यात् ॥ ६ ॥

इतीति । इत्यमुना प्रकारेण । उक्त्वा । हरिः । पुंसु पुरुषभक्तेषु मध्ये । तादृशानुक्तविधान् । मुकुन्दादीन्मुकुन्दानन्दवर्णर्यादीन् । आदिशब्देन मुक्तानन्दमुनि गोपालानन्दमुनि पर्वत गुप्त सोमवर्म गल्लजिदुत्तमनृपेत्यादीनां ग्रहणम् । कतिचित् । भक्तान्निजाश्रितजनान् । स्त्रीषु भक्तासु नारीषु मध्ये च । तादृशान् । रमामुखान् रमादीन् । आदिशब्देन जया ललिता कुशलाराज्ञी कमलादीनां ग्रहणम् । कतिचित् । भक्तान् । प्रदर्शयामास ॥ ७ ॥ पुनरिति । किञ्च । स श्रीहरिः । पुनः । आह । हे साधो ! । तादृङ्निश्चय उक्तविधभगवत्तद्भक्तमाहात्म्यबोधयुक्तनिश्चयः । यः । पुरुषो भक्तः । भवेत् । तस्य भक्तस्य । क्वापि कदाचिदपि । हरेः । किमपि । वचः । अकार्यमपालनीयम् । न स्यात् । अतिकठिनान्यपि नियमपालनादिरूपाणि तद्वचनानि सोत्साहमेवानुपालयेदित्यर्थः ॥ ८ ॥ इतीति । इत्यमुना प्रकारेण । उक्त्वा । तत्राकार्यहरिवचनपालने । असौ श्रीहरिः । दुष्करे दुःसाध्येऽपि । गुरोः श्रीरामानन्दस्वामिनः । वाक्ये मयरामभट्टानीतपत्रलिखितसन्मण्डलावस्थानरूपे वचने । निस्तर्कस्थितिलक्षणं निःसङ्कल्पतयाऽवस्थानात्मकम् । स्वस्यैव । दृष्टान्तम् । अवर्णयत् ॥ ९ ॥ पुनरिति । स श्रीहरिः । पुनश्च पुनरपि । आह । यस्य भक्तस्य । हरेः ।

इत्युक्त्वा कतिचिद्भक्तान् पुंसु स्त्रीषु च तादृशान् । प्रदर्शयामास हरिर्मुकुन्दादीन् रमामुखान् ॥ ७ ॥ पुनराह च यस्तादृङ्निश्चयः पुरुषो भवेत् । न तस्य क्वापि किमपि स्यादकार्यं हरेर्वचः ॥ ८ ॥ इत्युक्त्वा तत्र दृष्टान्तं स्वस्यैवासाववर्णयत् । दुष्करेऽपि गुरोर्वाक्ये निस्तर्कस्थितिलक्षणम् ॥ ९ ॥ पुनश्चाह स यस्य स्यान्माहात्म्यज्ञानयुग्घरेः । निश्चयश्च तदीयानां मत्तः स्याद्दिक्करीव सः ॥ १० ॥ न देहदैहिकासक्तः स च कायाधवो यथा । कृष्णग्रहगृहीतात्मा न विद्याज्जगदीदृशम् ॥ ११ ॥ स देहदैहिकत्राणं कृष्णान्नेच्छेच्च कर्हिचित् । इच्छेच्चेदान्तरारिभ्यो रक्षामेव न चेतरत् ॥ १२ ॥ स च भक्तोत्तमो भूरिकष्टं प्राप्याथवाऽब्रुवन् । सद्यो म्रियेत तदपि यायाद्भागवतीं गतिम् ॥ १३ ॥

तदीयानां च । माहात्म्यज्ञानयुक् । निश्चयः । स्यात् । स भक्तः । दिक्करी दिग्गज इव । मत्तः । स्यात् । यथा तारुण्यसम्प्राप्तबलातिशयत्वसञ्जातगम्भीरवेदितो दिग्गजः कांश्चिदप्यविगणयन्मत्तोऽरण्ये विचरति तथा भगवत्तद्भक्तमाहात्म्यावबोधयुग्निश्चयवान् भक्तोऽपि तत्त्वप्राप्तैश्वर्यमत्तः कालकर्ममायायमभीत्याद्यननुसन्दधानः स्वसङ्गिनस्तेभ्यो विमोचयन् भूमावटतीति भावः ॥ १० ॥ नेति । न देहदैहिकासक्तो देहदैहिकयोरासक्तिवर्जितः । स भक्तः । कृष्णग्रहगृहीतात्मा । कायाधवः प्रह्लादो यथा । तथा । ईदृशमेवं विधानेकविचित्रतायुक्तम् । जगत् । नविद्यात्सत्यतया न जानीयात् ॥ ११ ॥ स इति । किञ्च । भक्तः । देहदैहिकत्राणं देहतत्सुखहेतुभूतस्त्रीपुत्रधनरसराज्यभोगादिदैहिकवस्तुरक्षणम् । कर्हिचित्कदाचिदपि । कृष्णात् । नेच्छेत् । चेद्यदि । इच्छेत् । तर्हि । आन्तरारिभ्यः कामाद्यन्तःशत्रुभ्यः । रक्षामेव । इच्छेत् । इतरत् तदन्यत्किमपि । न च नैवेच्छेत् ॥ १२ ॥ स इति । भक्तोत्तमः । स भक्तः । भूरि । कष्टं दुःखम् । प्राप्य प्रारब्धभोगायानुभूय । म्रियेत । अथवा । अब्रुवन् किमप्यवदन्सन् । सद्यः । म्रियेत । एतत्सर्पदंश शस्त्राघात भीचिपतन व्याघ्रहनन जलब्रुडनोल्कापातमरणादेरुपलक्षणम् । तदपि तथापि ।

भागवतीम् । गतिम् भगवदक्षरधामप्राप्तिरूपं मोक्षम् । यायात् ॥ १३ ॥ सुदेश इति । स भक्तः । सुदेशे प्रयागपुष्करभगवदर्चादिमति शोभनदेशे । कुदेशे कीकट सिन्ध्वर्बुदादि कुत्सितदेशेऽपि । मृतः । अथवा । संस्कृतः अध ऊर्ध्वोच्छिष्टादि दोषनिवृत्त्यै कृतद्वादशाब्दादिप्रायश्चित्तसंस्कारः । असंस्कृतः संस्कारवर्जितोऽपि वा । मृतः सन् । भगवद्धामाक्षरपदम् । याति । अत्रास्मिन्नर्थे । संशयः । नास्ति ॥१४॥ अन्य इति । अन्य उक्तविधभगवद्भक्तभिन्नः । कश्चन कोऽप्यभक्तजनः । कष्टम् । अप्राप्य । म्रियमाणः । दृश्येत । तदपि । सोऽभक्तजनः । नरकान् । गन्ता गमिष्यति । इतीत्थम् । ज्ञेयम् ॥ १५ ॥ उक्तार्थं निगमयत्यर्द्धेन । हरीति । भक्तिभाजां भगवद्भक्तानां मध्ये । हरिहरिजनमाहात्म्यावबोद्धा । अत एव । महीयानतिश्रेष्ठः । भक्तः । जगति । दुर्लभः । भवति । इत्येवंविधम् । अमृतं सुधासमम् । हरिवाक्यम् । आपीय । सः । साधुर्भगवदानन्दमुनिः । तत्सदःस्थाः । सन्तः साधवः । अपरे गृहस्थाश्च । प्रमुदमतिशयानन्दम् । आपुः ॥१६॥ स्वस्य च स्वसतां यस्य माहात्म्यज्ञानयुग्भवेत् । निश्चयस्तस्य लक्ष्माणि स्वभक्तस्य यथार्थतः ॥१॥ यः श्रीहरिः स्वयं स्वामी जगाद पुरुषोत्तमः । स्वभक्तं कुरुतादेव दयया तादृशं स माम् ॥ २ ॥ इति श्रीमदेकान्तिक-

सुदेशे वा कुदेशेऽपि संस्कृतोऽसंस्कृतोऽपि वा । मृतः स भगवद्धाम याति नास्त्यत्र संशयः ॥ १४ ॥ अन्यस्तु कष्टमप्राप्य म्रियमाणोऽपि कश्चन । दृश्येत तदपि ज्ञेयं स गन्ता नरकानिति ॥ १५ ॥ हरिहरिजनमाहात्म्यावबोद्धा महीयान् जगति भवति भक्तो दुर्लभो भक्तिभाजाम् । इति स तु हरिवाक्यं साधुरापीय सन्तः प्रमुदममृतमापुश्चापरे तत्सदःस्थाः ॥ १६ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते शताधिकैकादशस्तरङ्गः ॥ १११ ॥ ३ ॥

शकाब्दे विक्रमार्कस्य नगाश्ववसुभूमिते । ऊर्जकृष्णचतुर्दश्यां वचोऽमृतमिदं हरेः ॥ १ ॥
ग्रामे लौहाभिधे तत्र सूरभूपनिकेतने । सितसर्वाम्बरः स्वामी न्यषीदत्स वरासने ॥ २ ॥
नानादेशागतस्वीयभक्तसङ्घपरिश्रितम् । अखण्डानन्दसाधुस्तमपृच्छत्सत्पुरस्कृतम् ॥ ३ ॥

धर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्स्नुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां शताधिकैकादशस्तरङ्गः ॥ १११ ॥ ३ ॥

बहुधा भवने हेतुः सदैकरूपिणो हरेः । योगैश्वर्येण चेत्यादि चतुर्थे सन्निरूपितम् ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८७७) ऊर्जकृष्णचतुर्दश्यां कार्त्तिकमासस्य कृष्णपक्षीय भूततिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ ग्राम इति । तत्र तिथौ । लौहाभिधे । ग्रामे । सूरभूपनिकेतने । वरासने श्रेष्ठे स्वास्तृतमश्वासने । सितसर्वाम्बरः परिधृतसकलश्वेतवसनः । स्वामी । स श्रीहरिः । न्यषीदत्सङ्गवान्ते उपविवेश ॥ २ ॥ नानेति । नानादेशागता नैकविधदेशेभ्य उपायाता ये स्वीयभक्तसङ्घाः स्वाश्रितत्यागिगृहिभक्तजनसमूहास्तैः परिश्रितः सभायां परिवेष्टितस्तम् । सन्तः साधवः पुरस्कृता स्वाग्रप्रदेशे उपावेशिता येन तम् । तं श्रीहरिम् । अखण्डानन्दसाधुः । अपृच्छत् ॥ ३ ॥

य इति । अक्षरधामेशोऽक्षरधामाधिपतिः । अनन्तमुक्तैरक्षरधामस्थैर्ब्रह्मभावापन्नानेकमुक्तैरर्च्ये सर्वकालं सस्नेहं पूजनीये पत्कजे चरणकमले यस्य सः । अनन्तैश्वर्यसम्पन्नः । रम्या सदाकिशोरवयउपेतत्वाद्रमणीयाऽवयवा दिव्या अमायिका नराकृतिर्मनुष्यसमानमूर्त्तिर्यस्य सः । यः । त्वं श्रीहरिः ॥४॥ स्वेति । स्ववियोगाक्षमिणां निमेषमात्रमपि स्ववियोगासहिष्णूनाम् । स्वभक्तानां स्वैकान्तिकभक्तजनानाम् । स्वेक्षादिदानेन स्वदर्शन सम्भाषणादिप्रदानेन । सुखहेतवे सुखोत्पादननिमित्ताय । अत्रास्मिन्ब्रह्माण्डे । यथा । प्रादुर्भूतः । असि । तथा ॥ ५ ॥ ब्रह्माण्डेष्विति । अनेकेष्वस्मादन्येष्वसङ्ख्यातेषु ब्रह्माण्डेष्वपि । प्रादुर्भवसि । किं वा । न प्रादुर्भवसि । इति सार्द्धद्वयस्यैकान्वयः । इत्यमुना प्रकारेण । तेन । सता अखण्डानन्दमुनिना । पृष्टः । दयानिधिः । स श्रीहरिः । प्रोवाच ॥ ६ ॥ यदेति । हे साधो ! । यदा । तत्र तेषु ब्रह्माण्डेषु । ईदृशा उक्तविधाः । स्वभक्ताः । स्युः । तदा । प्रभुरतिसमर्थः । हरिः । तेषां स्वभक्तानाम् । सुखाय स्वदर्शनादिसुखं प्रदातुम् । कृपया निष्कारणापारदयया हेतुना । स्वेच्छया स्वसङ्कल्पेन । जायते प्रादुर्भवति ॥ ७ ॥ यथेति । कृष्णस्तत्र प्रादुर्भूतः श्रीहरिः । तेषां तत्रत्यस्वभक्तानाम् । यथा यथा । सुखम् । स्यात् । तथा तथा ।

यस्त्वमक्षरधामेशोऽनन्तमुक्तार्च्यपत्कजः । अनन्तैश्वर्यसम्पन्नो रम्यदिव्यनराकृतिः ॥ ४ ॥ स्वभक्तानां स्ववियोगाक्षमिणां सुखहेतवे । अत्र स्वेक्षादिदानेन प्रादुर्भूतो यथा तथा ॥ ५ ॥ ब्रह्माण्डेष्वप्यनेकेषु प्रादुर्भवसि वा न किम् । इति पृष्टः सता तेन प्रोवाच स दयानिधिः ॥ ६ ॥ यदेदृशाः स्वभक्ताः स्युस्तत्र तत्र तदा हरिः । तेषां सुखाय कृपया जायते स्वेच्छया प्रभुः ॥ ७ ॥ यथा यथा सुखं तेषां कुर्यात्कृष्णस्तथा तथा । किमप्यशक्यं नास्त्यस्य सर्वयोगकलानिधेः ॥ ८ ॥ पुनः स साधुः पप्रच्छ हरिं नारायणो भवान् । नराकृतिः सदाऽस्तीति निश्चयोऽस्त्येव वैदिकः ॥९॥ मत्स्यकूर्मादिरूपाणि तेनैव हरिणा त्वया । धृतानि सन्ति भूरीणि कथं तानि घटेत भोः ॥१०॥ रीतिश्च श्रेयसः स्वामिन् ! सर्वत्रैकविधाऽस्ति वा । बहुधाऽथ भवन्मूर्त्तिरेकधा नैकधा कथम् ॥११॥

कुर्यात् । ननु भगवत एकत्वाद्ब्रह्माण्डानामनेकत्वात्तेन च भक्तानां बाहुल्यादेकस्यास्य प्रतिब्रह्माण्डप्रादुर्भावः कथं सम्भवेदत आह । सर्वयोगकलानिधेः । अस्य भगवतः । किमपि । अशक्यम् । नास्ति । रासमण्डले प्रतिगोपि मिथिलायां श्रुतदेवबहुलाश्वयोः स्वदर्शनप्रदानमिवास्य स्वयोगैश्वर्येण सर्वत्रैवंविधता युक्तैवेति भावः ॥ ८ ॥ पुनरिति । पुनर्भूयोऽपि । स साधुरखण्डानन्दमुनिः । हरिम् । पप्रच्छ । हे हरे ! । नारायणः । भवान् श्रीहरिः । सदा सर्वकालम् । नराकृतिः । अस्ति । इतीत्थंभूतः । वैदिको वेदादितः । निश्चयो निर्णयः । अस्त्येव । 'वेदाहमेतं पुरुषं महान्तम् । तेनेदं पूर्णं पुरुषेण सर्वम् । पुरुषविध'इत्यादिश्रुतिभ्यः ॥ ९ ॥ मत्स्येति । भो हरे ! । तेन नराकृतिना । हरिणा । त्वया भवतैव । भूरीणि बहूनि । मत्स्यकूर्मादिरूपाणि । धृतानि । सन्ति । तानि रूपाणि । कथम् । घटेत । सदा तव नराकृतित्वे कथमुचितानि स्युरित्यर्थः ॥ १० ॥ रीतिरिति । हे स्वामिन् ! । सर्वत्र सकलेष्वपि ब्रह्माण्डेषु । श्रेयस आत्यन्तिककल्याणस्य । रीतिः प्रकारः । एकविधैकप्रकारा । अस्ति । अथवा । बहुधा बहुप्रकारा । अस्ति । अथ च । एकधा द्विभुजत्वादियुग्नराकारेणैकप्रकारा । भगवन्मूर्त्तिः । नैकधा चतुर्भुजाष्टभुजादिभेदेनानेकप्रकारा ।

यद्वा । प्रतिजीवमन्तर्यामितया सकलब्रह्माण्डेषु विद्यमानत्वेनानेकप्रकारा । कथम् ॥ ११ ॥ प्रोवाचेति । तमेवं पृच्छन्तमखण्डानन्दमुनिम् । हरिः । प्रोवाच । हे साधो ! । अनन्तैश्वर्यनिधिरनवधिकातिशययोगैश्वर्याम्बुराशिः । हरिः । क्वापि कदाचित् । कार्यतः कस्माच्चन कार्यवशात् । मत्स्यकूर्मादिरूपः । जायते । तथात्वसाध्यं किमपि कार्यमुद्दिश्य योगैश्वर्योल्लसितस्वेच्छया तथाविधो भवतीत्यर्थः ॥ १२ ॥ यावदिति । तत्र तत्र तेषु तेषु मत्स्यकूर्मादिप्रादुर्भावेषु । यावदर्थं यावत्प्रयोजनम् । स्वैश्वर्यमपि । दर्शयति । प्रभुः । स्वयं श्रीहरिस्तु । नित्यम् । द्विभुजः । नराकृतिः । वर्त्तते । अत्रास्य भगवतोऽवतारधारणप्रकारस्तु शताधिकषड्विंशतितमतरङ्गात्स्पष्टं बोध्यः ॥ १३ ॥ साक्षादिति । साक्षाद्भगवतः प्रत्यक्षस्य श्रीहरेः । प्राप्त्या । आत्यन्तिकम् । श्रेयः । भवेत् । इत्येवंविधा । श्रेयस आत्यन्तिककल्याणस्य । रीतिस्तु । सर्वत्र सकलेष्वपि ब्रह्माण्डेषु । एकविधैकप्रकारा अस्ति । हि ॥१४॥ भक्तानामिति । भक्तानाम् । रुचिवैचित्र्यात्सात्त्विकादिस्वभावजन्याभिलापानेकत्वतः । भक्तिभेदात् सात्त्विकादिभेदेन भक्तेरनेकविधत्वाद्धेतोस्तु । शास्त्रेषु नारदपञ्चरात्रागमादिषु । महात्मभिर्महानुभावैर्मुनिभिः । श्रेयसः । रीतिः । अनेकधाऽनेकप्रकारा । वर्णितास्ति ॥ १५ ॥

प्रोवाच तं हरिः साधोऽनन्तैश्वर्यनिधिर्हरिः । मत्स्यकूर्मादिरूपस्तु जायते क्वापि कार्यतः ॥ १२ ॥ यावदर्थं तत्र तत्र स्वैश्वर्यं दर्शयत्यपि । स्वयं तु द्विभुजो नित्यं वर्त्तते नराकृतिः प्रभुः ॥ १३ ॥ साक्षाद्भगवतः प्राप्त्या श्रेय आत्यन्तिकं भवेत् । इति तु श्रेयसो रीतिः सर्वत्रैकविधाऽस्ति हि ॥ १४ ॥ भक्तानां रुचिवैचित्र्याद्भक्तिभेदात्त्वनेकधा । शास्त्रेषु श्रेयसो रीतिर्वर्णिताऽस्ति महात्मभिः ॥१५॥ द्विभुजोऽपि क्वचित्कार्यवशाद्भवति नैकधा । चतुर्भुजोऽष्टबाहुर्वा स च क्वापि सहस्रदोः ॥ १६ ॥ श्रेयोहेतुः कृष्णमूर्त्तिर्याऽत्रस्था सा निजेच्छया । तत्तद्भक्तेच्छया वापि तत्र तत्रास्त्यनैकधा ॥ १७ ॥ एकत्रस्थस्य कृष्णस्य यद्ब्रह्मण्डेषु वर्त्तनम् । तत्तु तस्य महैश्वर्यमिति ज्ञेयं कृपानिधेः ॥ १८ ॥

अखण्डानन्दमुनिना द्वितीयवारं कृतेषु त्रिषु प्रश्नेषु मध्ये आद्यप्रश्नद्वयोत्तरं कृत्वा तृतीय प्रश्ननैकधापदेऽर्थद्वयप्रतीतेः सम्भवादादितः प्रतीयमानार्थोत्तरमाह द्वाभ्याम् । द्विभुज इति । स श्रीहरिः । द्विभुजः सन्नपि । क्वचित्कदाचित् । कार्यवशात् । चतुर्भुजः । अथवा । अष्टबाहुः । क्वापि । सहस्रदोः सहस्रबाहुः । इति । नैकधा । भवति ॥ १६ ॥ हेतुप्रदर्शनायोक्तार्थमनुवदति । श्रेय इति । श्रेयोहेतुरात्यन्तिककल्याणहेतुभूता । या । कृष्णमूर्त्तिः । अत्रस्थाऽस्यां सभायामवस्थिता भवति । सा कृष्णमूर्त्तिः । तत्र तत्र तेषु तेष्वनेकेषु ब्रह्माण्डेषु विषये । तत्तद्भक्तेच्छया । अथवा । निजेच्छया । अनेकधा चतुर्भुजत्वादिना नैकविधा । अस्ति ॥ १७ ॥ नैकधापदप्रतीतद्वितीयार्थोत्तरमाह द्वाभ्याम् । एकत्रेति । एकत्रस्थस्याक्षरधाम्नि नराकृतितयैकस्थाने वर्त्तमानस्य । कृष्णस्य प्रत्यक्षस्यास्य हरेः । यत् । ब्रह्मण्डेषु । वर्त्तनम् । प्रतिब्रह्माण्डस्थानेकजीवेष्वन्तर्यामितया विद्यमानत्वमित्यर्थः । तत्तु । कृपानिधेरनाद्यज्ञानविशिष्टतया किं कर्म कदा भोक्तव्यमिति स्वकर्मभोगं स्वस्वरूपस्थित्यादि चाप्यजानतां जीवानां यथाकालभोग्यकर्मफलप्रदानं कर्त्तुं स्वमृतेऽन्याशक्यत्वात्तत्प्रदातुं तत्तत्स्वरूपस्थितिप्रवृत्त्यर्थं जाताया निष्कारणापारकरुणायाः समुद्रस्य । तस्य कृष्णस्य । महैश्वर्यम् । भवति । इत्येवम् । ज्ञेयम् ॥ १८ ॥

एतदेव स्पष्टमाह । स्थूलेति । स्थूलसूक्ष्माकृतीन् । सर्वान् । अनेकाण्डस्थदेहिनः । एकत्र संस्थितः । स श्रीहरिः । अन्तर्यामिस्वरूपेण स्वयोगैश्वर्यरूपयाऽन्तर्यामिशक्त्या । व्याप्नोति ॥ १९ ॥ क्वचिदिति । योगवान् श्रीकृष्णैकान्तिकोपासनासंजातयोगैश्वर्यः । शुकादिर्वैयासकिप्रभृतिर्योगी अपि । क्वचित्कदाचित् । कार्याय स्वपितृमोहनिवृत्त्यादिप्रयोजनार्थम् । स्थावरान् । जङ्गमान्देहिनः । व्याप्नोति । तर्हि । योगेश्वरः सकलयोगैश्वर्यपतिः । हरिः । व्याप्नोति । तत्र किमु वक्तव्यम् ॥ २० ॥ क्रिया इति । हि यतः । योगमायां स्वयोगैश्वर्यम् । वितन्वतो विस्तारयतः । कृष्णस्य । सर्वा अपि । क्रियाः । आश्चर्यरूपाः । भवन्ति । इतीत्थम् । अवधार्यतां ज्ञायताम् ॥ २१ ॥ अत इति । अतो हेतोः । स्वौपम्यहतबुद्धयः । स्वयं यथाऽसमर्थास्तथात्वं भगवत्यप्युपकल्प्य तेन विनष्टधिय इत्यर्थः । अत एव । ताः कृष्णक्रियाः । तत्त्वतो यथार्थतया । न जानन्तः । पण्डिताः शास्त्रज्ञा अपि । पूरुषाः । तत्र विचित्रासु तासु कृष्णक्रियासु । विमुह्यन्ति मूढा

स्थूलसूक्ष्माकृतीन् सर्वाननेकाण्डस्थदेहिनः । सोऽन्तर्यामिस्वरूपेण व्याप्नोत्येकत्र संस्थितः ॥ १९ ॥ क्वचिद्व्याप्नोति कार्याय शुकादिरपि योगवान् । स्थावरान् जङ्गमांस्तर्हि किमु योगेश्वरो हरिः ॥२०॥ क्रिया आश्चर्यरूपा हि योगमायां वितन्वतः । सर्वा अपि हि कृष्णस्य भवन्तीत्यवधार्यताम् ॥ २१ ॥ अतस्तत्र विमुह्यन्ति पण्डिता अपि पुरुषाः । तत्त्वतस्ता न जानन्तः स्वोपम्यहतबुद्धयः ॥ २२ ॥ ऐन्द्रजालिकमायायामपि मुह्यन्ति पण्डिताः । कथं तद्योगमायायां न मुह्येयुर्महेशितुः ॥ २३ ॥ कृष्णाश्रयबलास्तत्र न मुह्यन्ति सुबुद्धयः । विबुधा अपि मुह्यन्ति कृष्णाश्रयबलोज्झिताः ॥ २४ ॥ स्वतन्त्रोऽतिसमर्थश्च हरिर्यद्यत्समाचरेत् । तत्तद्युक्तं सर्वमपीत्येवंज्ञा मोहवर्जिताः ॥२५॥ ईशो भूत्वा किमित्येवं करोत्यनुचितक्रियाम् । इत्यादितर्कवन्तस्तु ज्ञेया मोहेन संयुताः ॥२६॥ बुद्ध्वा महत्तां परमेश्वरस्य सेव्यः स निस्तर्कमिहेति वाचम् । सुधासमानां स्वगुरोर्निशम्य प्रापन्मुदं सोऽप्यपरे च सन्तः ॥ २७ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते शताधिकद्वादशस्तरङ्गः ॥ ११२ ॥ ४ ॥

भवन्ति ॥ २२ ॥ ऐन्द्रेति । पण्डिता धीमन्तोऽपि । ऐन्द्रजालिकमायायाम् । मुह्यन्ति । तर्हि । महेशितुरीश्वरेश्वरस्य श्रीहरेः । योगमायायाम् । कथम् । न मुह्येयुरपि तु मुह्येयुरेवेत्यर्थः ॥ २३ ॥ ये तत्र न मुह्यन्ति च तेषां लक्षणमाह । कृष्णेति । कृष्णाश्रयबला माहात्म्यज्ञानयुक्तकृष्णाश्रयबलवन्तः । सुबुद्धय एकान्तिकधर्मनिष्ठसन्मतयो भक्ताः । तत्र योगमायायाम् । न मुह्यन्ति । कृष्णाश्रयबलोज्झिता उक्तविधकृष्णाश्रयबलवर्जिताः । विबुधाः पण्डिता अपि । तत्र । मुह्यन्ति ॥ २४ ॥ स्वतन्त्र इति । स्वतन्त्रः । अतिसमर्थश्च । हरिः । यद्यत् । समाचरेत् । तत्तत् । सर्वमपि । युक्तमस्य योग्यमेवास्ति । इत्येवंज्ञा इत्थंविदः । मोहवर्जिताः । ज्ञेयाः ॥ २५ ॥ ईश इति । ईशः समर्थः । भूत्वा । एवम् । अनुचितक्रियाम् । किमिति । करोति । इत्यादितर्कवन्तस्तु । मोहेन । संयुताः । ज्ञेयाः ॥ २६ ॥ उक्तार्थं निगमयति त्र्यक्षरन्यूनार्द्धेन । बुद्ध्वेति । इह सत्सङ्गे । परमेश्वरस्य श्रीहरेः । महत्तां योगैश्वर्यादिलक्षणं माहात्म्यम् । बुद्ध्वा । निस्तर्कमुक्तविधतर्कवर्जितं यथातथा । स

परमेश्वरः । सेव्य एकान्तिकभावेन परिचर्यः । इन्त्येवंविधाम् । सुधासमानाम् । गुरोः श्रीहरेः । वाचम् । निशम्य । सोऽखण्डानन्दमुनिः । अपरे । सन्तः । गृहस्थाश्चापि । मुदम् । प्रापन् ॥ २७ ॥ सर्वावतारधारित्वं योगैश्वर्यं तथाऽऽत्मनः । वर्णितं येन स हरिः सर्वदाऽस्तु मदात्मनि ॥ १ ॥ इति श्रीमदेकान्तिकधर्म-प्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्सूनुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां शताधिकद्वादशस्तरङ्गः ॥ ११२ ॥ ४ ॥

प्रश्नान्पृष्ट्वा स्वयं साधूनष्टकृत्वो हरिस्ततः । स्वयमेवोत्तराण्याह तेषां तान्पञ्चमेऽविदः ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८७७) कार्त्तिकान्त्य-तिथेः कार्त्तिकमासस्यामावास्यातिथेः । रात्रौ सायन्तनभगवन्नीराजनान्तसमये । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । लौहाह्वयग्रामे । सूरवर्मणो नृपस्य । निकेते दुर्गान्तर्वर्त्तिभवने । महापीठे स्वास्तृतोत्तममश्वासने । श्वेतवसनः परिधृतसकलधवलवसनः । प्रभुः । स श्रीहरिः । निषण्ण आसीनः । अभूत् ॥ २ ॥ त्यागिभिरिति । अनेकैर्नानादेशेभ्य उपायातत्वादसङ्ख्यैः । त्यागिभिः । गृहिभिश्च । भक्तैः । परितो वृतः सभायां परिवेष्टितः । स्वयं श्रीहरिः सर्वान् ।

शकाब्दे विक्रमार्कस्य नगाश्ववसुभूमिते । कार्त्तिकान्त्यतिथे रात्रौ वचोऽमृतमिदं हरेः ॥ १ ॥ तत्र लौहाह्वयग्रामे निकेते सूरवर्मणः । निषण्णोऽभून्महापीठे स श्वेतवसनः प्रभुः ॥ २ ॥ त्यागिभिर्गृहिभिर्भक्तैरनेकैः परितो वृतः स्वयं पप्रच्छ साधूंस्तान्सर्वांस्तत्संशयान् नुदन् ॥ ३ ॥ सतां पुरस्तान्महतां सङ्कल्पान्कीदृशान् ब्रुवन् पुमान्भवेन्निष्कपटो विपरितोऽब्रुवंश्च कान् ॥ ४ ॥ स्वमुखादेव शुश्रूषनेतत्प्रश्नोत्तरं सतः । विलोक्य तत्स्वयं स्वामी कथयामास तत्त्वतः ॥ ५ ॥ आत्मनोऽवश्यपाल्येषु ब्रह्मचर्यव्रतादिषु । यमेषु कस्यचित् क्वापि विभ्रंशो मनसा भवेत् ॥ ६ ॥ स्वविचारानिवार्योऽसौ स्त्र्यादिसङ्कल्प उत्थितः । वाच्य एव सतामग्रे तद्दोषरहितात्मनाम् ॥ ७ ॥

तत्संशयान्साधूनां मानससन्देहान् । नुदन्नपनयन्सन् । तान्सभोपविष्टान् । साधून् । पप्रच्छ ॥ ३ ॥ सतामिति । हे साधवः । पुमान् भक्तः । महताम् । सतां साधूनाम् । पुरस्तात् । कीदृशान् । सङ्कल्पान् ब्रुवन्सन् । निष्कपटः । भवेत् । कान् किंविधान् । सङ्कल्पान् । अब्रुवन् सन् । विपरीतः स कपटः । भवेत् ॥ ४ ॥ स्वेति । एतत्प्रश्नोत्तरम् । स्वमुखादेव । शुश्रूषन् श्रोतुमिच्छन् । सतः साधून् । विलोक्य । स्वयम् । स्वामी श्रीहरिः । तदुत्तरम् । तत्त्वतो यथार्थतः । कथयामास ॥ ५ ॥ आत्मन इति । हे साधवः ! । आत्मनः स्वस्य । अवश्यपाल्येषु । ब्रह्मचर्यव्रतादिषु । यमेषु मध्ये । इदमन्येषामपि स्वधर्माणामुपलक्षणम् । कस्यचिद्यमस्य । क्वापि कदाचित् । मनसा स्वमनःसङ्कल्पेन । विभ्रंशो भङ्गः । भवेत् ॥ ६ ॥ स्वेति । उत्थितः स्वमनस्युदितः । स्वविचारानिवार्यः स्वेन विचारं कृत्वापि निवर्त्ति-तुमशक्यः । असौ स्वनियमभङ्गहेतुः । स्त्र्यादिसङ्कल्पः । तद्दोषरहितात्मनां स्त्र्यादिसङ्कल्परूपदोषवर्जितमानसानाम् । सतां भगवदेकान्तिकसाधूनाम् । अग्रे पुरः । वाच्यः कथनीय एव ॥ ७ ॥

देहिकेति । कस्यचन । साधोः साक्षाद्धर्मैकान्तिकस्य सतः । दैहिकागुणवीक्षातो देहसम्बन्ध्यतिभापित्वादिदोपदर्शनमात्रतः । अगुणे तद्दोषे । हृदि स्वमानसे । आगते सति । तदसाधुत्वलक्षकस्तस्य साधोरसाधुत्वावगमकः । सङ्कल्पः । स्यात् ॥ ८ ॥ स इति । स तथाविधः सङ्कल्पोऽपि । तद्धीनसाधूनां साधावसाधुत्वावगमकसङ्कल्पवर्जितसताम् । अग्रतः । वाच्य एव । तथा भगवन्निश्चये प्रथमतो भगवत्त्वस्य स्वकृते निश्चये । अनिश्चयसङ्कल्पो मयाऽस्याश्रयस्तु कृतः परन्त्वेवंविधासमीचीनाचरणत्वाद्भगवानयं भविष्यति न वेति तत्र निश्चयराहित्यसन्देहसङ्कल्पः । स्यात् । सोऽपि तद्धीनसाधूनामग्रतो वाच्य एव ॥ ९ ॥ एत इति । शल्यसंमिता अन्तर्निमग्नकर्णिबाणतुल्याः । एते उक्तविधाः । सङ्कल्पाः । एतादृशाः अन्ये सङ्कल्पाश्च । सत्पुरुषैः । अखानिताः । सत्पुरुषान्प्रत्युक्त्वा तत्कृतवार्त्ताद्वारा नोन्मूलिता इत्यर्थः । प्राणान्तदुःखदा मरणपर्यन्तदुःखदायिनः । सन्ति । मरणं यथा दुःखदं तथैतेऽपि स्वमोक्षमार्गविरोधित्वेन दुःखप्रदा भवन्तीत्यर्थः ॥ १० ॥ तदिति । तत्तो हेतोः । ईदृशान् । तर्कान्सङ्कल्पान् । ब्रुवन्सतामग्रे वदन् । पुमान् भक्तः । निष्कपटः । मतः । दम्भमानमदादिभिः । आदिशब्देन लज्जादेर्ग्रहणम् ।

दैहिकागुणवीक्षातः साधोः कस्यचनागुणे । हृद्यागते स्यात्सङ्कल्पस्तदसाधुत्वलक्षकः ॥ ८ ॥ सोऽपि तद्धीनसाधूनामग्रतो
वाच्य एव हि । तथाऽनिश्चयसङ्कल्पो भगवन्निश्चयेऽपि च ॥ ९ ॥ एत एतादृशाश्चान्ये सङ्कल्पाः शल्यसंमिताः
अखानिताः सत्पुरुषैः सन्ति प्राणान्तदुःखदाः ॥ १० ॥ तदीदृशान् ब्रुवंस्तर्कान्मतो निष्कपटः पुमान् ।
विपरीतोऽब्रुवन् ज्ञेयो दम्भमानमदादिभिः ॥ ११ ॥ इति प्रश्नोत्तरं कृत्वा पुनः पप्रच्छ तान्प्रभुः । एतत्सङ्कल्पवानन्तः
साधुवेषधरो बहिः ॥ १२ ॥ बुद्धिमद्भिः कथं बोध्यो दम्भदर्शितसत्क्रियः इति प्रश्नोत्तरमपि स तानवदतो
ऽब्रवीत् ॥ १३ ॥ बकवृत्तिर्दाम्भिकोऽसौ शीघ्रं ज्ञातुं न शक्यते । बुद्धिमद्भिः परिचर्याच्चिरेण त्वव-
गम्यते ॥ १४ ॥ खानपानगतिस्थानशयनश्रवणादिषु । असत्पदार्थे तत्प्रीतेर्दर्शनाद्वाऽन्यतः श्रुतेः ॥ १५ ॥

अब्रुवन्सतामग्रे ईदृशान्स्वसङ्कल्पानवदन् । पुमान् । विपरीतः स कपटः । ज्ञेयः ॥ ११ ॥ इतीति । इत्यमुना प्रकारेण । प्रश्नोत्तरम् । कृत्वा प्रभुः श्रीहरिः । पुनः । तान्साधून् । पप्रच्छ । हे साधवः ! । अन्तरन्तःकरणे । एतत्सङ्कल्पवानेवंविधसङ्कल्पयुक्तः । बहिर्बाह्यतः । साधुवेषधरः ॥ १२ ॥ बुद्धीति । दम्भेन बुद्धिमत्त्वा-त्त्प्रवर्त्तितकपटेन दर्शितोपरिष्टात्प्रदर्शिता सत्क्रिया महासाधुसमानक्रिया येन स तथाभूतः । यः । सः । बुद्धिमद्भिः । कथं बोध्योऽयं स कपटो भवतीति कथं ज्ञेयः । इत्यमुना प्रकारेण । प्रश्नोत्तरं स्वकृतप्रश्नप्रतिवचनमपि । अवदतोऽकुर्वाणान् । तान्साधून् । स श्रीहरिः । अब्रवीत् । इति द्वयोकान्वयः ॥ १३ ॥ बकेति । हे साधवः ! । बकवृत्तिः । दाम्भिकः । असौ पुरुषः । बुद्धिमद्भिः । शीघ्रम् । ज्ञातुम् । न शक्यते । चिरेण बहुकालकृतात् । परिचयात्संस्तवात्तु । अवगम्यते ज्ञायते ॥ ४१ ॥ एतदेव स्पष्टमाह पञ्चाक्षराधिकसार्द्धद्वाभ्याम् । खानेति । खानमन्नाशनं च पानं जलादिपीतिश्च गतिर्गमनं च स्थानमुपवेशश्च शयनं स्वापश्च श्रवणं वार्त्ताश्रुतिश्च

तान्यादयो येषु कर्मसु । असत्प्रदार्थे स्वानुचितद्रव्यादिवस्तूनि । तत्प्रीतेस्तदीयस्नेहस्य . दर्शनात् । अथवा । अन्यतोऽन्यजनात् । श्रुतेः श्रवणात् ॥१५॥ स्त्रीति । कर्हिचित् । रहस्येकान्ते । स्त्रीरसादेः पदार्थस्य । सम्बन्धे । जाते सति । क्षुब्धवृत्तीक्षणात् क्षोभयुक्तद्वृत्तिदर्शनात् । तथा । स्त्रैणवार्त्तारुचेः । स्त्रीसम्बन्धिन्याः स्त्रैणैः सह वा वार्त्तायास्तदीयश्रवणाचरणाभिलापदर्शनत इत्यर्थः ॥ १६ ॥ औदासीत्यादिति । सद्वाक्ये सदुदितस्वहितकारिवचनेष्वित्यर्थः । औदासीन्याच्छ्रवणावधारणादावप्रीतेश्च हेतोः । बुधैर्बुद्धिमद्भिः साधुभक्तैः । तादृशः कपटवानपि । पुमान् । ध्रुवं निश्चितमेव । ज्ञायते । इत्यमुना प्रकारेण । उक्त्वा । हरिः । पुनः । तान्साधून् । पप्रच्छ ॥ १७ ॥ दम्भेनेति । हे साधवः ! । अत्र सत्सङ्गे । यः । पुमान् भक्तः । दम्भेन । विहितभगवन्निश्चयः । यद्यपि भगवन्निश्चयोऽन्तर्नास्त्यथाप्यहमप्येतेषु महान्स्यामिति मानप्राप्त्यै दम्भेनोपरिष्टाद्वार्त्तायां भगवन्निश्चयं वहुदर्शयन्नित्यर्थः । यश्च । दम्भेनैव । सद्धर्मान् । साधुवत् । पालयेत् ॥ १८ ॥ मानीति । मानी । बुद्धिमान् । दक्षः सर्वक्रियापटुः । यः । स्वनिश्चयवृषस्थिती स्वकीयं भगवन्निश्चयं स्वकीयं धर्मावस्थानं चेत्यर्थः । सद्भ्यो निष्कपटनिश्चयवृषस्थितिमद्भ्यः साधुभ्योऽपि । अधिके ।

स्त्रीरसादेश्च सम्बन्धे जाते रहसि कर्हिचित् । क्षुब्धवृत्तीक्षणाच्चापि स्त्रैणवार्त्तारुचेस्तथा ॥ १६ ॥
औदासीन्याच्च सद्वाक्ये तादृशोऽपि पुमान्बुधैः । ज्ञायते ध्रुवमित्युक्त्वा पुनः पप्रच्छ तान्हरिः ॥ १७ ॥
दम्भेन योऽत्र विहितभगवन्निश्चयः पुमान् । दम्भेनैव हि सद्धर्मान् पालयेद्यश्च साधुवत् ॥ १८ ॥
मानी च बुद्धिमान् दक्षः स्वनिश्चयवृषस्थिती । अधिके दर्शयेत्सद्भ्यः सप्रमाणवचाश्च यः ॥ १९ ॥
स दम्भभक्तोऽयमिति कथं ज्ञेयो मनीषिभिः । इति पृष्टास्तेन सन्तः कर्तुं शेकुर्न तूत्तरम् ॥ २० ॥
तदोवाच हरिस्तस्य मानभङ्गो यदा भवेत् । तदैवायं हि दम्भीति ज्ञायते शुश्रुषादिभिः ॥ २१ ॥
न ज्ञायतेऽन्यथा त्वेष धीमद्भिरपि दाम्भिकः । इत्युक्त्वा तान् पुनः स्वामी साधून् पप्रच्छ धीमतः ॥ २२ ॥

दर्शयेत् । यश्च । सप्रमाणवचा यावन्ति वचनानि वदेत्तावन्ति शास्त्रवचनप्रमाणसहितानि वदेदित्यर्थः ॥ १९ ॥ स इति । स एतादृशः पुमान् । पूर्वश्लोकद्वयोक्तलक्षणो भक्त इत्यर्थः । अयम् । दम्भभक्तोऽस्ति । इतीत्थम् । मनीषिभिः साधुभिः । कथम् । ज्ञेयः । इत्यमुना प्रकारेण । तेन श्रीहरिणा । पृष्टाः । सन्तः साधवः । उत्तरम् । कर्त्तुम् । श्रीहरिप्रश्नोत्तरं विधातुमित्यर्थः । न तु । शेकुः । यदा समर्था नैवाभूवन्नित्यर्थः ॥ २० ॥ तदेति । तदा । हरिः । उवाच । हे साधवः ! । यदा । तस्य दम्भभक्तस्य । मानभङ्गः । भवेत् । तदैव । शुश्रुषादिभिः शोकक्रोपोदयादिलक्ष्मभिः । अयम् । दम्भी भक्तः । इतीत्थम् । ज्ञायते ॥ २१ ॥ नेति । अन्यथा मानभङ्गाभावे तु । धीमद्भिरपि । एषः । दाम्भिकः । न ज्ञायते । इतीत्थम् । उक्त्वा । स्वामी श्रीहरिः । पुनः । धीमतो बुद्धियुक्तान् । तान् । साधून् । पप्रच्छ ॥ २२ ॥

भगवदिति । हे साधवः । कीदृक्किंविधः । किमवधिः किंकालावसानः । तर्कों मनःसङ्कल्पः । पुरुषं भक्तम् । भगवन्निश्चयात् । धर्मपालनाच्चापि । पातयेत् । न पातयेच ॥ २३ ॥ इतीति । इत्यमुना प्रकारेण । पृष्टाः श्रीहरिणाऽनुयुक्ताः । ते । सन्तः । यदा । सम्यक् । तदुत्तरम् । कर्त्तुम् । नैव । विदुः । तर्हि । स श्रीहरिरेव । तदुत्तरम् । चकार । हि ॥ २४ ॥ भगवदिति । बुद्धौ भक्तजनमतौ । भगवन्निश्चये । जाते सत्यपि । क्वचित्कदाचित् । ईशितुः साक्षाद्भगवतः । त्रानुकृतौ नरत्वानुकरणे निमित्ते । प्रदर्शिताम् । असामर्थ्यलीलामसमर्थत्वचरितम् । दृष्ट्वा ॥ २५ ॥ अनीश्वरेति । भक्तस्यापि । हृदि । अनीश्वरत्वसङ्कल्पः । उदीयात् । एवममुना प्रकारेणैव । दैह्यसुखैषिणः स्त्रीसङ्ग स्वादुभोजनादिजन्यदैहिकसुखेच्छोर्भक्तस्य । धर्मे स्त्रीधनरसत्यागादौ स्वधर्मे । अधर्मतर्कः स्त्रीधनरसाद्यन्यतमभोगेच्छारूपोऽधर्मसङ्कल्पः । स्यात् । इतिद्वयोरेकसम्बन्धः ॥ २६ ॥ तर्काविति । ईदृशौ । उभौ । तर्कौ । क्वचित्कदाचित् । हृदि । जातावुत्पन्नौ

भगवन्निश्चयाद्धर्मपालनाच्चापि पूरुषम् । कीदृक् किमवधिस्तर्कः पातयेच्च न पातयेत् ॥ २३ ॥ इति पृष्टा यदा सन्तस्ते तु कर्तुं तदुत्तरम् । सम्यग्नैव विदुस्तर्हि तच्चकार स एव हि ॥ २४ ॥ भगवन्निश्चये बुद्धौ जातेऽपि क्वचिदीशितुः । त्रानुकृतावसामर्थ्यलीलां दृष्ट्वा प्रदर्शिताम् ॥ २५ ॥ अनीश्वरत्वसङ्कल्पो भक्तस्याप्युदियाद्धृदि । अधर्मतर्को धर्मे स्यादेवं दैह्यसुखैषिणः ॥ २६ ॥ तर्कावुभावीदृशौ तु हृदि जातावपि क्वचित् । विचारेण सदाप्तेन विनश्येतां च मूलतः ॥ २७ ॥ नोद्गच्छेतां पुनस्तौ चेत्कदाचन कथं च न । तदा न पातयेतां वै भक्तं भागवतात् पथः ॥ २८ ॥ न भवेतां पक्षमेकं मासं वा तौ पुनर्यदि । उद्भवेतां तदा त्वेनं पातयेतां न संशयः ॥ २९ ॥ इति प्रश्नोत्तरं श्रुत्वा हृष्टान् पप्रच्छ तान् पुनः । हरिः कस्यात्र विज्ञेया न विज्ञेया बद्धमूलता ॥३०॥ इति प्रश्नोत्तरमपि स ऊचे तानतद्विदः । बद्धमूलोऽत्र स ज्ञेयः सद्गुणादानधीस्तु यः ॥३१॥

स्यातामथापि । सदाप्तेन भगवदेकान्तिकसाधूपदेशलब्धेन । विचारेण । मूलतः । विनश्येताम् ॥ २७ ॥ नेति । तौ तथाभूतौ । तर्कौ । चेद्यदि । कदाचन कदाचिदपि । कथंचन येन केन प्रकारेणापि । पुनः । नोद्गच्छेतामुत्पपन्नौ न भवेताम् । तदा । भक्तम् । भागवतात् । पथः । भगवन्निश्चयतद्धर्मपालनरूपाद्वर्त्मनः । न पातयेताम् । वै ॥ २८ ॥ नेति । तौ तर्कौ । एकं पक्षमेकपक्षपर्यन्तम् । अथवा । एकं मासमेकमासपर्यन्तम् । न भवेताम् । यदि । पुनः । उद्भवेताम् । तदा तु । एनं भक्तम् । पातयेताम् । न संशयः । एवं सति भागवतपथात् पतने सन्देहो नास्तीत्यर्थः ॥ २९ ॥ इतीति । इत्येवंविधम् । प्रश्नोत्तरम् । श्रुत्वा । हृष्टान् । तान्साधून् । हरिः । पुनः । पप्रच्छ । हे साधवः ! । अत्र सत्सङ्गे । कस्य । भक्तस्य । बद्धमूलता । विज्ञेया । कस्य भक्तस्य । बद्धमूलता न ज्ञेया ॥३०॥ इतीति । इति प्रश्नोत्तरमेवंविधस्य स्वकृतप्रश्नस्योत्तरमपि । तान्साधून् । अतद्विदो यथार्थोत्तरानभिज्ञत्वेन स्वप्रश्नोत्तरमकुर्वाणानित्यर्थः । ज्ञात्वेतिशेषः । स श्रीहरिः । ऊचे ।

तान् जगादेत्यर्थः । यो भक्तः । सद्गुणादानधीः सतां गुणग्रहणमतिः । भवेत् । स भक्तः । अत्र सत्सङ्गे । बद्धमूलः । ज्ञेयः ॥ ३१ ॥ इममर्थं दृष्टान्तेनाह । रसेति । यथा । मधुपो भ्रमरः । पुष्पेभ्यः । रसमात्रम् । आदत्ते गृह्णाति । तथा । यो भक्तः । सद्गुणग्रहणशीलः सतां केवलगुणग्रहणस्वभावः । भवेत् । सः । अत्र सत्सङ्गे । बद्धमूलः । ज्ञेयः । ध्रुवम् ॥ ३२ ॥ गुणेति । यस्य भक्तस्य । स्वभावः । सताम् । गुणग्राही । न भवेत् । स भक्तस्तु । अचिरादल्पकालत एव । सत्सङ्गात् । भ्रष्टोऽबद्धमूलत्वेन च्युतः । भविष्यति । अत्र । संशयः । नास्ति ॥ ३३ ॥ इतीति । इतीत्थम् । उक्त्वा । प्रभुः । स श्रीहरिः । प्रहसन्सन् । पुनः । साधून् । पप्रच्छ । हे साधवः ! । इन्द्रियाणाम् । निग्रहेण । भक्तिः । ज्ञानं च । सिद्ध्यति । हि ॥ ३४ ॥ साध्विधाति । स इन्द्रियनिग्रहः । साधवो भगवदेकान्तिकाः सन्तश्च शास्त्राणि श्रीभागवतादयः सद्ग्रन्थाश्च विचारः पदार्थसदसत्त्वपर्यालोचनं च तेभ्य आप्ता लब्धा या युक्तयस्ताभिः । जायते । तत्र तेषु साध्वादिषु मध्ये । सदादिभ्यः

रसमात्रं यथाऽऽदत्ते पुष्पेभ्यो मधुपस्तथा । सद्गुणग्रहशीलो बद्धमूलोऽत्र ध्रुवम् ॥ ३२ ॥
गुणग्राही सतां यस्य स्वभावो न भवेत्स तु । भ्रष्टो भविष्यत्यचिरात्सत्सङ्गान्नात्र संशयः ॥ ३३ ॥
इत्युक्त्वा स पुनः साधून् पप्रच्छ प्रहसन्प्रभुः । निग्रहेणेन्द्रियाणां हि भक्तिर्ज्ञानं च सिद्ध्यति ॥ ३४ ॥
साधुशास्त्रविचाराप्तयुक्तिभिः स तु जायते । तत्र प्राप्याः सदादिभ्यः काः का युक्तय उच्यताम् ॥ ३५ ॥
इति ते स्वामिना पृष्टाः सन्तः कर्तुं तदुत्तरम् । तमेव प्रैरयंस्तर्हि स ऊचे शृणुतानघाः ! ॥ ३६ ॥
दृक्संयमध्यानमुद्रायमादीनां तु पालने । नासाग्रालोकनमुखाः सद्भ्यः शिक्ष्या हि युक्तयः ॥ ३७ ॥
रमाभर्तुश्च साधूनां तदीयानां महात्मनाम् । माहात्म्यातिशयं सम्यगवगन्तुं तु शास्त्रतः ॥ ३८ ॥
विचित्रविश्वसर्गाद्यास्तीर्थशुद्ध्यादयस्तथा । युक्तयः प्रतिपत्तव्या अधमोद्धारणादयः ॥ ३९ ॥

साध्वाद्येकैकेभ्यः । काः । काः । युक्तयः । प्राप्याः । उच्यताम् ॥ ३५ ॥ इतीति । इतीत्थम् । स्वामिना श्रीहरिणा । पृष्टाः । ते । सन्तः । तदुत्तरं श्रीहरिकृतप्रश्नोत्तरम् । कर्तुम् । तं श्रीहरिमेव । प्रैरयन् । तर्हि । स श्रीहरिः । ऊचे । हे अनघाः ! । शृणुत ॥ ३६ ॥ दृगिति । दृक्संयमो दृष्टिनियमनं च ध्यानमुद्रा स्वस्तिकासनोपवेशनोत्तानपाण्युत्सङ्गाधानर्ज्वङ्गावस्थानादिरूपध्यानमुद्रयावस्थानं च यमा ब्रह्मचर्यादयश्च ते आदयो येषां श्रोत्रादीन्द्रियनिग्रहादीनां तेषाम् । पालने आचरणे नासाग्रालोकनं मुखमादिर्यासां ताः । युक्तयः । सद्भ्यो भगवदेकान्तिकसाधुभ्यः । शिक्ष्याः । हि ॥ ३७ ॥ रमेति । रमाभर्तुर्लक्ष्मीकान्तस्य श्रीहरिकृष्णस्य । तदीयानाम् । महात्मनां महानुभावानाम् । साधूनां च । माहात्म्यातिशयम् । सम्यक् । अवगन्तुं ज्ञातुम् ॥ ३८ ॥ विचित्रेति । विचित्रविश्वसर्गाद्याः । तीर्थशुद्ध्यादयः । तथा । अधमोद्धारणादयः । युक्तयः । शास्त्रतः । प्रतिपत्तव्याः प्राप्याः । इति द्वयोरेकान्वयः ॥ ३९ ॥

सदिति । पदार्थानां चिज्जडवस्तूनाम् । सदसत्त्वं सत्यत्वासत्यत्व विनाशित्वाविनाशित्व परिणामित्वापरिणामित्व रूपम् । विनिश्चित्य । सुखदुःखफलैक्षणैरात्मनन्यवस्थानस्य सुखं फलं विषयसेवनस्य दुःखं फलं तद्दर्शनैः । दृष्टान्ययुक्तयः । विचारतः । प्राप्याः ॥ ४० ॥ एवमिति । एवंममुना प्रकारेण । त्रिभ्यः साध्वादिभ्योऽपि । सम्प्राप्तनानायुक्तिभिः । दुर्जयान्यपि । बाह्यान्तःकरणानि । अञ्जसा तत्त्वतो यथार्थत इति यावत् । आशु शीघ्रमेव । जीयन्ते ॥ ४१ ॥ पुनरिति । धार्मिर्धर्मपुत्रः श्रीहरिः । पुनः । तान् साधून् । पप्रच्छ । हे साधवः ! । देहिनाम् । देहेषु । बाह्यानि चक्षुरादीनि । आन्तराणि मनआदीनि च । इत्येवम् । करणानि । द्विधा द्विप्रकाराण्येव । सन्ति । हि ॥ ४२ ॥ तत्रेति । तत्र द्विविधकरणेषु मध्ये । आन्तराणि करणानि । बाह्यानां करणानाम् । निग्रहेण । जीयन्ते । किम् । अथवा । आन्तराणां करणानाम् । जयेन निग्रहेणैव । इतराणि बाह्यानि करणानि । जीयन्ते ॥ ४३ ॥ इतीति । इत्यमुना प्रकारेण । तेन श्री-

सदसत्त्वं विनिश्चित्य पदार्थानां विचारतः । दृष्टान्तयुक्तयः प्राप्याः सुखदुःखफलेक्षणैः ॥ ४० ॥ एवं त्रिभ्योऽपि
सम्प्राप्तनानायुक्तिभिरञ्जसा । बाह्यान्तःकरणान्याशु जीयन्ते दुर्जयान्यपि ॥ ४१ ॥ पुनः पप्रच्छ धार्मिस्तान्सन्ति
देहेषु देहिनाम् । बाह्यानि चान्तराणीति करणानि द्विधैव हि ॥ ४२ ॥ तत्रान्तराणि जीयन्ते बाह्यानां निग्रहेण
किम् । आन्तराणां जयेनैव जीयन्त इतराणि वा ॥ ४३ ॥ इति पृष्टास्तेन सन्तो यदा तस्योत्तराय तु । ते
विचारपरा आसंस्तदा तत्प्राह स स्वयम् ॥ ४४ ॥ बाह्येन्द्रियजयेनैव दमाख्येनान्तराणि तु । करणानि जितानि
स्युः पुंसो नियमवर्त्तिनः ॥ ४५ ॥ करणानामान्तराणां केवलेन जयेन तु । न स्याज्जयो हि बाह्यानां पुंसोऽत्र
स्वैरवर्त्तिनः ॥४६॥ यो द्वाररोधो बाह्यानां जयस्तेनान्तराणि तु । बहिर्विषयनैराश्यं प्राप्य स्थैर्यं व्रजन्ति वै ॥ ४७ ॥
इत्युक्त्वा तान् पुनः स्वामी मुनीन्सर्वान् स पृच्छति । जीयन्ते केन बाह्यानि करणान्यान्तराणि च ॥ ४८ ॥

हरिणा । पृष्टाः । ते । सन्तः । यदा । तस्य प्रश्नस्य । उत्तरायोत्तरं कर्त्तुम् । विचारपरा विचारासक्ताः । आसन् । तदा । स्वयम् । स श्रीहरिः । तदुत्तरम् । प्राह ॥ ४४ ॥ बाह्येति । हे साधवः ! । दमाख्येन । बाह्येन्द्रियजयेनैव । नियमवर्त्तिनोऽयोग्यासमीक्षणादिनियमयुक्तस्य । पुंसो भक्तस्य । आन्तराणि । करणानि तु । जितानि । स्युः ॥ ४५ ॥ करणानामिति । आन्तराणाम् । करणानाम् । केवलेन । जयेन तु । अत्र लोके । स्वैरवर्त्तिनो नियमानपालयतः । पुंसः । बाह्यानां करणानाम् । जयः । न स्यात् ॥ ४६ ॥ य इति । यः । द्वाररोधो बाह्यानामिन्द्रियाणां निषिद्धविषयेभ्यो निवर्त्तनम् । सः । बाह्यानां करणानाम् । जयः । तेन तथाभूतेन बाह्यकरणजयेन । आन्तराणि करणानि तु । बहिर्विषयनैराश्यम् । प्राप्य स्थैर्यमचञ्चलत्वम् । व्रजन्ति वै ॥४७॥ इतीति । इतीत्थम् । उक्त्वा । स्वामी श्रीहरिः । पुनः । सर्वान् । तान् । मुनीन् । पृच्छति स्म । हे मुनयः ! । बाह्यानि । करणानि केन साधनेन । जीयन्ते । आन्तराणि । करणानि च । केन साधनेन । जीयन्ते ॥४८॥

एतदिति । एतत्प्रश्नोत्तरमपि । स्वयम् । हरिः । सतः स्वप्रश्नोत्तरानभिज्ञत्वेन तूष्णीमवस्थितान्मुनीन् । ऊचे । शास्त्रोक्तैः । बाह्यैः स्थूलशरीरसाध्यैः । नियमैः । बाह्यानां करणानाम् । जयः । भवेत् ॥ ४९ ॥ आहारेति । अथ च । आहारनियमेन । कृच्छ्रचान्द्रायणादिना । तपसा । अथ च द्वन्द्वानां शीतोष्णादीनाम् । सहनेन । तज्जयो बाह्यकरणजयः । भवेत् ॥ ५० ॥ आसनेति । आसनाभ्यासतः स्वस्तिकाद्यासनविधानाभ्यासेन । तान्युक्तानि सत्सङ्गिजीवने । 'स्वस्तिकं गोमुखं वीरं योगं पद्मं च कौक्कुटम् । कौर्मं चापं च मायूरं तथा पश्चिमतानकम् । शावं सिद्धं तथा सैहं भद्रं चेति चतुर्दश'ेति । कृष्णकथासङ्कीर्त्तनादिभिश्च । सावधानमुमुक्षुणा । बाह्येन्द्रियाणि । जीयन्ते ॥५१॥ माहात्म्यस्येति । हरेः । माहात्म्यस्य । विचारेण । चेतसि । हरेः । ध्यानेन । दृढया । आत्मनिष्ठया च । आन्तराणि करणान्यपि । जीयन्ते ॥ ५२ ॥ वचनमिति । इतीत्थंभूतम् । सुधयाऽमृतेन । तुलितं संमितम् । हरेः । वचनम् । साधु सम्यग्यथातथा । निपीय । साधुजनाः । गृहिजनाश्च । परमाम् । मुदम् ।

एतत्प्रश्नोत्तरमपि स्वयमूचे हरिः सतः । शास्त्रोक्तैर्नियमैर्बाह्यानां तु जयो भवेत् ॥४९॥ आहारनियमेनाथ कृच्छ्रचान्द्रायणादिना । तपसा सहनेनाथ द्वन्द्वानां तज्जयो भवेत् ॥ ५० ॥ आसनाभ्यासतः कृष्ण-कथासङ्कीर्त्तनादिभिः । बाह्येन्द्रियाणि जीयन्ते सावधानमुमुक्षुणा ॥ ५१ ॥ माहात्म्यस्य विचारेण हरेर्ध्या-नेन चेतसि । आन्तराण्यपि जीयन्ते दृढया चात्मनिष्ठया ॥ ५२ ॥ वचनं सुधया तुलितं तु हरेरिति साधु निपीय हि साधुजनाः । परमामलभन्त मुदं मुदिताः प्रणमन्ति च तं स्म गुरुं परमम् ॥ ५३ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते शताधिकत्रयोदशस्तरङ्गः ॥ ११३ ॥ ५ ॥

शकाब्दे विक्रमार्कस्य नगाश्ववसुभूमिते । मार्गशुक्लप्रतिपदि वचोऽमृतमिदं हरेः ॥ १ ॥
तत्र लौहाभिधग्रामे सूरवर्मनृपालये । सिताम्बरधरः स्वामी स व्यराजद्वरासने ॥ २ ॥

अलभन्त । मुदिताः । सन्तः । परमं सकलानां सकलसंशयनाशम् । गुरुम् । तं श्रीहरिम् । प्रणमन्ति स्म ॥ ५३ ॥ स्वकीयानष्टकलस्तु प्रश्नान्पृष्ट्वा सतः स्वयम् । प्राहोत्तराणि यः स्वामी तद्वाचः सन्तु मद्धृदि ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्पदानुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां शताधिकत्रयोदशस्तरङ्गः ॥ ११३ ॥ ५ ॥

श्रीहरिर्नवकलस्तु प्रश्नान् पृष्ट्वा स्वयं सतः । षष्ठे तेषामुत्तराणि स्वयमेवाब्रवीत्ततः ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८७७) मार्गशुक्लप्रतिपदि मार्गशीर्षमासस्य शौक्लपक्षीयाद्यतिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥१॥ तत्रेति । तत्र तिथौ । लौहाभिधग्रामे । सूरवर्मनृपालये दुर्गान्तर्वर्त्तिसूरवर्मनृपनिभवने । वरासने स्वास्तृते श्रेष्ठे पर्यङ्कासने । सिताम्बरधरः स्वाङ्गधृतसकलश्वेतवसनः । स्वामी । स श्रीहरिः । व्यराजत्सायन्तनभगवन्नीराजनान्ते निषद्यातिशुशुभे ॥ २ ॥

उष्णीषेति । उष्णीषे शिरोनिबद्धकीरीटाकृतिश्वेतशीर्षपटे लम्बमानं शेखरवदधःस्रंसमानमग्रं प्रान्तभागो यस्मिन्कर्मणि यथा तथा बद्धः श्वेतः श्रवःपटः कर्णनिबन्धनीयान्यवस्त्रं येन सः । भक्तगणावृतो नानादेशागतत्यागिगृहिस्वाश्रितजनवृन्दैः सभायां परिवेष्टितः । स श्रीहरिः । स्वयमेव । साधून् । पप्रच्छ ॥ ३ ॥ पुंसामिति । हे साधवः ! । अत्र सत्सङ्गे । सत्सङ्गिनाम् । पुंसां भक्तानाम् । अतिदुर्लभमतिदुःसाध्यम् । किम् । साध्यं साधनियम् । भवति । अस्य । प्रश्नस्य । उत्तरम् । चिन्तयतो वयमत्र किं ब्रूम इति विचारयतः । सतः साधून् । असौ श्रीहरिः । अब्रवीत् ॥ ४ ॥ साध्यमिति । हे साधवः ! । तेषां सत्सङ्गिनाम् । कृष्णैकान्तिकत्वं श्रीकृष्णस्यैकान्तिकभक्तत्वम् । अतिदुर्लभम् । साध्यम् । अस्ति । नन्वेकान्तित्वं किं लक्षणमित्याकांक्षायां स्वयमेवाह । सधर्मज्ञानवैराग्या स्वधर्मज्ञानवैराग्यसहिता । भक्तिः सप्रेम नवधा श्रीहरिपरिचर्या । एकान्तिकत्वकृदेकान्तिकताजनिका । स्वधर्मादिचतुष्टयवत्त्वमेकान्तिकलक्षणमित्यर्थः । सधर्मज्ञानवैराग्यभक्त्यैकान्तिकता भवेदिति पाठे तु प्रसिद्ध एवार्थः ॥ ५ ॥ इतीति । इतीत्थम् । उक्त्वा । पुनः । स्वामि श्रीहरिः । निजान् । तान् । त्यागिनः । पप्रच्छ । हे साधवः ! । इह सत्सङ्गे ।

उष्णीषलम्बमानाग्रवद्धश्वेतश्रवः पटः । स्वयमेव स पप्रच्छ साधून् भक्तगणावृतः ॥ ३ ॥ पुंसां सत्सङ्गिनामत्र साध्यं किमतिदुर्लभम् । प्रश्नस्यास्योत्तरमसौ सतश्चिन्तयतोऽब्रवीत् ॥ ४ ॥ साध्यं कृष्णैकान्तिकत्वं तेषामस्त्यपि दुर्लभम् । सधर्मज्ञानवैराग्या भक्तिरेकान्तिकत्वकृत् ॥ ५ ॥ इत्युक्त्वा तान् पुनः स्वामी पप्रच्छ त्यागिनो निजान् । धर्माणामिह पाल्यानां सर्वाधिकतमोऽस्ति कः ॥ ६ ॥ सुरक्षितेन येन स्युर्धर्माः सर्वेऽपि रक्षिताः । तथा भक्तेः साधनानां किमग्र्यं साधनं मतम् ॥ ७ ॥ येनैकेन स्थितेन स्युः साधनान्यखिलान्यपि । मुमुक्षुणा रक्षितानि तन्मे वदत सत्तमाः ! ॥ ८ ॥ एतत्प्रश्नोत्तरमपि स्वयमूचे कृपानिधिः । सर्वधर्मेषु मुख्याऽस्ति ब्रह्मचर्यव्रतस्थितिः ॥ ९ ॥ तयैकयैव सर्वेऽपि ज्ञेया धर्माः सुरक्षिताः । तथा भक्तेः साधनेषु मुख्यः कृष्णस्य निश्चयः ॥ १० ॥

पाल्यानाम् । धर्माणां मध्ये । सर्वाधिकतमः । को धर्मः । अस्ति ॥ ६ ॥ सुरक्षितेनेति । सुरक्षितेन । येन सर्वाधिकतमधर्मेण । सर्वेऽपि । धर्माः । रक्षिताः । स्युः । तथा । भक्तेः प्रेमलक्षणायाः श्रीहरिभक्तेः । साधनानां श्रवणादीनां मध्ये । अग्र्यं मुख्यम् । साधनम् । किम् । मतम् ॥ ७ ॥ येनेति । स्थितेनात्मनि स्थिरतां प्राप्तेन । एकेन । येन भक्तेरग्र्यसाधनेन । अखिलान्यपि । भक्तेः । साधनानि । मुमुक्षुणा । रक्षितानि । स्युः । हे सत्तमाः ! । तत् । मे मह्यम् । वदत ॥ ८ ॥ एतदिति । एतत्प्रश्नोत्तरमपि । कृपानिधिः । स्वयं श्रीहरिः । ऊचे । हे साधवः ! । सर्वधर्मेषु । ब्रह्मचर्यव्रतस्थितिः । मुख्या अस्ति ॥ ९ ॥ तयेति । एकया केवलया । तया ब्रह्मचर्यव्रतस्थित्यैव । सर्वेऽपि । धर्माः । सुरक्षिताः । ज्ञेयाः । तथा । भक्तेः । साधनेषु । मुख्यः । कृष्णस्य साक्षाद्धरेः । निश्चयो माहात्म्यज्ञानयुतः स्वरूपयथार्थावबोधनिर्णयः । ज्ञेयः ॥ १० ॥

. वा.
. टी.
ा. त. ६
। १४ ॥

येनेति । हृत्स्थेन भक्तजनमनोऽवस्थितेन । अचलेन निश्चलेन । एकेन केवलेन । येन कृष्णनिश्चयेनैव । अपराणि श्रवणकीर्त्तनादीनि सर्वाण्यपि । भक्तेः । साधनानि। रक्षितानि । भवेयुः । हि । 'भक्त्या सञ्जातया भक्त्ये'त्यादिना यद्यपि प्रेमलक्षणाया भक्तेः श्रवणादीनि साधनान्यभिहितानि तथापि तेपामपि निश्चयमूलत्वादत्र निश्चयस्यापि साधनत्वमुक्तमतोऽस्य साधनत्वे मूलत्वे च न दोप इति भावः ॥११॥ एवमिति । एवममुना प्रकारेण । उक्त्वा । पुनः । भक्तिनन्दनः श्रीहरिः । साधून् । अपृच्छत् । हे साधवः ! । कीदृशी । मतिवृत्तिः ! कदाचन कदाचिदपि । न परावर्त्त्या अन्यथात्वं न नेया कीदृशीति । कीदृशी । सा मतिवृत्तिः । सद्वाक्यैर्भगवदेकान्तिकसाधुपदिष्टवचनैः । मुहुः पुनः पुनः । परावर्त्त्या । मता । इति प्रश्नोत्तरमेवंभूतस्वकृतप्रश्नप्रतिवाक्यमपि । तान्साधून् । अतद्विदो यथार्थोत्तरानभिज्ञत्वेन स्वप्रश्नोत्तरमकुर्वाणानित्यर्थः । ज्ञात्वेति शेषः । स श्रीहरिः । उवाच ॥ १३ ॥ कृष्णेति । कृष्णनिश्चयरूपा । मतिवृत्तिस्तु । कदाचन । न परावर्त्तनीया । वै । अन्यथेत्थंभूतमतिवृत्तिपरावर्त्तने तु । अनिष्टमेव । स्यात् ॥ १४ ॥ अत इति । अतो हेतोः । सा कृष्णनिश्चयरूपा मतिवृत्तिः । अन्वहं प्रतिदिनम् । कृष्णमाहात्म्यश्रवणादिभिः । यत्नेनापि । पोषणीयैव । यतो हेतोः । सैवंभूता मतिवृत्तिः । भक्तेः । मूलं कारणम् । अस्ति ॥ १५ ॥ क्रियास्विति । क्रियासु सर्वेन्द्रियव्यापारेषु । यः । स्वधीक्लृप्तकार्याकार्यत्वनिश्चयः स्वबुद्धिकल्पितः कर्त्तव्याकर्त्तव्यत्वविनिर्णयरूपा वृत्तिः । सः । चेद्यदि । सद्वचोविरुद्धः साधूक्तोपदेशवचनविरुद्धः । स्यात् । तर्हि । मुहुः । परावर्त्त्यः । मतः ॥ १६ ॥ यथेति । देहिनां सकलप्राणिनाम् । हिता हितोपदेष्टारः । साधवः । स्वम् । यथा यथा । वदेयुः । तथा तथैव । कार्यम् । अकार्यं च । अञ्जसा तत्त्वतः । बोद्धव्यम् ॥ १७ ॥ सदिति । अत्र सत्सङ्गे । ये भक्ताः । सद्वाक्यम् । अनुसृत्यैव । कार्यम् । अकार्यं च । हृदि । निश्चित्य । वर्त्तन्तेऽकार्यं त्यजन्तीत्यर्थः । ते भक्ता एव । सुखिनः । स्युः । हि ॥ १८ ॥ भवेदिति । यतः । मुहुः । स्वैरवर्त्तिनां सतां वचनान्यतिक्रम्य स्वच्छन्दंवर्त्तमानानाम् । पुंसां भक्तानाम् । अशुभमभद्रमेव भवेत् । अतो हेतोः । शुभेप्सुभिः शुभं प्राप्तुं वाञ्छद्भिर्भक्तैः । सदनुरोधेन सद्वचनानुसारेण वर्त्तितव्यम् ॥ १९ ॥

येनैकेनाचलनैव साधनान्यपराण्यपि । भक्तेः सर्वाणि हृत्स्थेन भवेयू रक्षितानि हि ॥११॥ एवमुक्त्वा पुनः साधूनपृच्छद्भक्तिनन्दनः । कीदृशी न परावर्त्या मतिवृत्तिः कदाचन ॥१२॥ कीदृशी सा च सद्वाक्यैः परावर्त्या मुहुर्मता । इति प्रश्नोत्तरमपि सोऽतद्विद उवाच तान् ॥ १३ ॥ कृष्णनिश्चयरूपा तु मतिवृत्तिः कदाचन । न परावर्त्तनीया वै स्यादेवानिष्टमन्यथा ॥ १४ ॥ अतः सा कृष्णमाहात्म्यश्रवणादिभिरन्वहम् । पोषणीयैव यत्नेन मूलं भक्तेर्यतोऽस्ति सा ॥ १५ ॥ क्रियासु यः स्वधीक्लृप्तकार्याकार्यनिश्चयः स सद्वचोविरुद्धश्चेत्परावर्त्यो मुहुर्मतः ॥ १६ ॥ यथा यथा वदेयुः स्वं साधवो देहिनां हिताः । तथा तथैव बोद्धव्यं कार्यं चाकार्यमञ्जसा ॥ १७ ॥ सद्वाक्यमनुसृत्यैव कार्यं चाकार्यमत्र ये । हृदि निश्चित्य वर्तन्ते सुखिनः स्युस्त एव हि ॥ १८ ॥ भवेदेवाशुभं पुंसां मुहुर्वै स्वैरवर्त्तिनाम् । अतः सदनुरोधेन वर्त्तितव्यं शुभेप्सुभिः ॥ १९ ॥

इतीति । इत्यमुना प्रकारेण । हरिणा । उक्ताः । अखिलाः । साधवः । हृष्टाः । बभूवुः । पुनः । नृणां स्वभक्तानाम् । हिताय हितं कर्तुमेव । उद्यन उद्युक्तः । स्वामी श्रीहरिः । तान्साधून् । पप्रच्छ ॥ २० ॥ त्यागीति । त्यागी । अथवा । गृही । यः पुमान् । स्वधमस्थः सन् । हरेः । भक्तः । भवेत् । तथापि । स पुमान् । केन । दोषेण । सङ्गयोग्यः प्रसङ्गकरणार्हः । न भवेत् ॥ २१ ॥ एतस्येति । एतस्य प्रश्नस्यापि । उत्तरम् । वक्तुम् । विलम्बं कुर्वतः । तान्साधून् । स श्रीहरिः । आह । हे साधवः ! । स उक्तविधो भक्तः । चेद्यदि । लौकिकार्थेषु लौकिकव्यवहारेषु । सक्त आसक्तः । स्यात् । तर्हि । सङ्गार्हः । न मतः । वै ॥ २२ ॥ देहेति । किञ्च । यः । देहाभिमानी । स्यात् । अथवा । मानी । स्यात् । अथवा । पौरुषे स्वकल्याणार्थकपुरुषकारे । शिथिलः शिथिलप्रयत्नः । स्यात् । एतद्दोषविगर्ह्यत्वादेतैर्दोषैर्युक्तत्वेन विगर्हणीयत्वाद्धेतोः । सः । महानपि । उक्तदोषान्यतमयुक्तः श्रेष्ठो भवेदथापीत्यर्थः सङ्गार्हः । न स्यात् ॥ २३ ॥ उक्तचतुर्विधसङ्गानर्हत्वे हेतुमाह षड्भिः । व्यावहारिकेति । निवृत्तिधर्मा निवृत्तधर्मनिष्ठः । पुमांस्त्यागिभक्तोऽपि । व्यावहारिकसङ्गेन

इत्युक्ताः साधवो हृष्टा बभूवुर्हरिणाऽखिलाः । पप्रच्छ तान् पुनः स्वामी हितायैवोद्यतो नृणाम् ॥२०॥ त्यागी गृही वा यो भक्तः स्वधर्मस्थो भवेद्धरेः । तथापि केन दोषेण सङ्गयोग्यो भवेन्न सः ॥ २१ ॥ एतस्याप्युत्तरं वक्तुं तान्विलम्बिन आह सः । लौकिकार्थेषु सक्तश्चेत्स सङ्गार्हो न वै मतः ॥ २२ ॥ देहाभिनी मानी वा शिथिलो यश्च पौरुषे । एतद्दोषविगर्ह्यत्वात्सङ्गार्हो न महानपि ॥२३॥ व्यावहारिकसङ्गेन प्रवर्त्तेतैव लौकिके । निवृत्तधर्मापि पुमांस्तस्मात्तद्वर्ज्यता मता ॥ २४ ॥ देहाभिमानं मानं वा यदा सन्तोऽथवा प्रभुः । खनेयुस्तर्हि तद्वांस्तु स्याद्वै तदगुणग्रहः ॥ २५ ॥ ततस्तदगुणानेव बोधयेत्स स्वसङ्गिनम् । कुर्याच्च विमुखप्रायं तत्सङ्गोऽतः प्रहाप्यते ॥ २६ ॥ धैर्योत्साहविहीनस्तु गुणवानपि पूरुषः । स्वस्य निःश्रेयसप्राप्तिं मन्येत बहुजन्मभिः ॥ २७ ॥

लौकिकव्यवहारनिष्ठपुंप्रसङ्गेन । लौकिके लौकिकव्यवहारे एव । प्रवर्त्तेत । तस्माद्धेतोः । तद्वर्ज्यता तत्प्रसङ्गवर्जनम् । मता । 'वासो यथा रङ्गवशं प्रयाती'ति न्यायेन लौकिकव्यवहारनिष्ठसङ्गे स्वस्य तद्भावापत्त्या स्वश्रेयश्रावनानर्थसम्भवात्तत्प्रसङ्गत्याग उक्त इत्यर्थः ॥ २४ ॥ देहेति । यदा । सन्तः । अथवा । प्रभुः स्वयं श्रीहरिः । देहाभिमानम् । अथवा । मानम् । खनेयुः । तर्हि । तद्वान्देहाभिमानवान्मानवांश्च पुमांस्तु । तदगुणग्रहः । स्यात् । वै । स सतां प्रभोश्च दोषान् निश्चितमेव गृह्णीयादित्यर्थः ॥ २५ ॥ तत इति । ततस्तदनन्तरम् । स सत्प्रभुदोषग्रहः पुमान् । स्वसङ्गिनं स्वसङ्गकर्त्तारं भक्तम् । तदगुणान् सतां प्रभोश्च दोषानेव । बोधयेत् । विमुखप्रायं कुसङ्गिसदृशं च । कुर्यात् । अतो हेतोः । तत्सङ्गो मानिदेहाभिमानिनोः प्रसङ्गः । प्रहाप्यते मया त्याज्यते ॥ २६ ॥ धैर्येति । गुणवानपि स्वधर्मभगवद्भक्तिप्रमुखगुणयुक्तोऽपि । धैर्योत्साहविहीनः स्वनिःश्रेयसशीघ्रसम्पादने धृत्युद्यमविवर्जितः । पूरुषः पौरुषशिथिलभक्तः । स्वस्य । निःश्रेयसप्राप्तिम् । बहुजन्मभिः । मन्येत ॥ २७ ॥

निष्कामेति । किञ्च । आत्मनः स्वस्य । निष्कामादिगुणाप्तिर्भगवत्प्रसन्नताहेतुनिष्कामादिगुणोपलब्धिः । अनेकजन्मभिः । भगवत्कृपया । भवेत् । इतीत्थम् । अन्तरे स्वान्तःकरणे । मन्येत ॥२८॥ वार्त्तामिति । स पौरुषशिथिलभक्तः । स्वसङ्गिनः स्वसङ्गं कुर्वतो भक्तस्य । पुरतोऽग्रे । तादृशीमुक्तप्रकारेण । शिथिलतायुक्तामेव । वार्ताम् । कुर्यात् । ततस्तदनन्तरम् । तद्दोषः पौरुषशिथिलभक्तदोषाः । तन्नरे तथाविधपुरुषसङ्गिपुरुषे । प्रविशेयुः ॥२९॥ अत इति । अतो हेतोः । तत्सङ्गं पौरुषशिथिलभक्तप्रसङ्गम् । विहाय । मुमुक्षुणा भक्तेन । धैर्योत्साहवतः । सतः साधोः । गृहिण एवंविधगृहस्थभक्तस्यापि । सङ्गः । सर्वदा कर्त्तव्यः ॥ ३० ॥ धैर्योत्साहवद्भगवद्भक्तलक्षणोक्तिपूर्वमवश्यं तत्सङ्गकर्त्तव्यतामाह द्वाभ्याम् । कृष्णेति । कृष्णतत्सत्प्रतापेन साक्षाच्छ्रीहरितदीयसाधुमहिमातिशयत्वेन हेतुना । अनेन । जन्मना । अनेन देहेनैवेत्यर्थः । कामादिनाशपूर्वं कामादिदोषनिवृत्तिपूर्वकम् । श्रेयःसिद्धिः स्वपरमनिःश्रेयसनिष्पत्तिः । भविष्यति । इत्युत्तरेण सम्बन्धः ॥३१॥ इतीति । इतीत्थम् । निश्चित्य । यो भक्तः । सम्प्रोक्तसाधनेष्वेव । सर्वदा । उद्युक्तः भवेत् । तस्य तथाविधभक्तस्य । सङ्गः । कर्हिचित्कदाचिदपि । न हेयो न त्याज्यः किन्त्ववश्यमेव स विधेय इत्यर्थः ॥ ३२ ॥

निष्कादिगुणाप्तिश्च भगवत्कृपयाऽऽत्मनः । भवेदनेकजनिभिरिति मन्येत चान्तरे ॥ २८ ॥ वार्त्ता च तादृशीमेव पुरतः स्वसङ्गिनः । कुर्यात्ततश्च तद्दोषाः प्रविशेयुर्हि तन्नरे ॥ २९ ॥ अतो विहाय तत्सङ्गं धैर्योत्साहवतः सतः । कर्त्तव्यः सर्वदा सङ्गो गृहिणोऽपि मुमुक्षुणा ॥ ३० ॥ कृष्णतत्सत्प्रतापेन ह्यनेनैव हि जन्मना । कामादिनाशपूर्वं मे श्रेयः सिद्धिर्भविष्यति ॥ ३१ ॥ इति निश्चित्य सत्प्रोक्तसाधनेष्वेव सर्वदा । य उद्युक्तो भवेत्तस्य सङ्गो हेयो न कर्हिचित् ॥ ३२ ॥ तादृशोऽपि स्वाश्रितं यः शैथिल्यस्थितमञ्जसा । नोत्तेजयेत्सद्वचोभिस्तत्सङ्गोऽपि न वै हितः ॥ ३३ ॥ कृष्णतत्सत्प्रतापं च हित्वा केवलपौरुषम् । श्रेयो हेतुं बोधयेद्यः कार्यः सङ्गो न तस्य च ॥ ३४ ॥ स्नानार्चादौ प्रमादी च ध्याने निद्रालुरस्ति यः । सोऽपि साधुर्न सङ्गार्हो मुमुक्षोर्गुणवानपि ॥ ३५ ॥ स्वोत्कर्षख्यापनपरो यश्चान्येषु महत्स्वपि । दोषं प्रदर्शयेत्किञ्चित्सङ्गार्हो न स दोषवाक् ॥ ३६ ॥

तादृश इति । यो भक्तः । तादृशो धैर्योत्साहवान् सन्नपि । शैथिल्यस्थितं पौरुषशिथिलतायुक्तम् । स्वाश्रितं स्वसङ्गिनं भक्तम् । सद्वचोभिः । अञ्जसा तत्त्वतः शीघ्रं वा । नोत्तेजयेत् धैर्योत्साहयोर्यथोत्तराधिकतायुतं न कुर्यात् । तत्सङ्गोऽपि । हितः स्वहितकारकः । नास्ति । वै ॥ ३३ ॥ कृष्णेति । यो भक्तः । कृष्णतत्सत्प्रतापम् । हित्वा । केवलपौरुषमेकं स्वपुरुषकारमेव । श्रेयो हेतुम् । बोधयेत् । तस्य च तस्यापि भक्तस्य । सङ्गः । न कार्यः ॥ ३४ ॥ स्नानेति । यो भक्तः । स्नानार्चादौ स्नानपूजनादिनियमेषु । प्रमादी । अस्ति । यश्च । ध्याने । निद्रालुः । अस्ति । सः । साधुरपि । गुणवान् शास्त्राध्ययनस्वधर्मनिष्ठत्वादिगुणयुतः सन्नपि । मुमुक्षोः । सङ्गार्हो विशेषतः सङ्गं कर्त्तुम् योग्यः । न भवति ॥३५॥ स्वेति । यश्च । स्वोत्कर्षख्यापनपरः धर्मज्ञानादिषु सर्वेभ्यः स्वश्रेष्ठत्वप्रख्यापनसक्तः । यश्च । महत्सु स्वतः सर्वथा गुणगरिष्ठेषु । किञ्चित् । दोषम् । प्रदर्शयेत् । दोषवाक् यद्वाचि सर्वथाऽऽत्मश्लाघाऽन्यदोषप्रदर्शनरूपदोष एवायाति तथाविधवचनः । स साधुः । सङ्गार्हः । न भवति ॥३६॥

उक्तेति । उक्तदोषान्यतमयुक्त प्रोक्तदोषेष्वन्यतमेन दोषेण युक्तः । सन् साधुः । गुणयुक्तत्वात् । लोकेषु । ख्यातः प्रसिद्धोऽपि । श्रेयसे स्वकल्याणाय । न सेव्यः । सङ्गमे । नार्हः । हि ॥ ३७ ॥ उक्तेति । उक्तदोषविहीनः । सदा । धर्मस्थितः । भक्तः । यद्यपि । लोके । अत्यतिशयेनख्यातः प्रसिद्धः । न भवत्यथापि । असौ भक्तः । मुमुक्षताम् । सङ्गार्हः । भवति । हि ॥ ३८ ॥ इतीति । इत्यमुना प्रकारेण । उक्त्वा । पुनः । धार्मिर्धर्मपुत्रः । स श्रीहरिः । हृष्टान्सुप्रसन्नान् । तान् । सतः । पप्रच्छ । हे साधवः ! । मानः । कस्य । पुरः । न रक्ष्यः । कस्य । पुरः । रक्ष्यः । इत्येतत् । कथ्यताम् ॥ ३९ ॥ प्रश्नस्येति । अस्य । प्रश्नस्यापि । उत्तरम् । हसंस्तेभ्य उत्तरानाप्त्या किञ्चिद्धासं कुर्वन् सन् । तानुत्तरानवबोधेन तूष्णीमवस्थितान्सतः । ऊचे । हे साधवः ! । हरिभक्तस्य यस्य कस्यापि भगवद्भक्तजनस्य । पुरतः । मानः । कर्हिचित् । न रक्ष्यः ॥ ४० ॥ सदिति । यो भक्तः । क्वचित्कदाचित् । सत्सङ्गात् । परावृत्तः केनचित्स्वनिष्ठदोषेण परावृत्तिं प्राप्तः । स्यात् । अस्यैवंविधभक्तस्य । पुरतस्तु । मानः । सदैव । रक्ष्यः । निर्भयं यथातथा । वार्ता कार्या । अन्यथा तद्दोषाः स्वान्तः समाविशेयुरिति भावः ॥४१॥

उक्तदोषान्यतमयुक् सेव्यो न श्रेयसे हि सन् । लोकेषु गुणयुक्तत्वात्ख्यातोऽप्यर्हो न सङ्गमे ॥ ३७ ॥ उक्तदोषविहीनस्तु भक्तो धर्मस्थितः सदा । नातिख्यातोऽपि लोकेऽसौ सङ्गार्हो हि मुमुक्षुताम् ॥३८॥ इत्युक्त्वा स पुनर्धार्मिर्हृष्टान् पप्रच्छ तान् सतः । मानो रक्ष्यः कस्य पुरो न रक्ष्य इति कथ्यताम् ॥ ३९ ॥ प्रश्नस्यास्योत्तरमपि हसन्नूचे स एव तान् । हरिभक्तस्य पुरतो मानो रक्ष्यो न कर्हिचित् ॥ ४० ॥ सत्सङ्गाद्यः परावृत्तः क्वचित्स्यात्पुरतोऽस्य तु । रक्ष्य एव सदा मानो वार्त्ता कार्या च निर्भयम् ॥ ४१ ॥ एवमुक्त्वा पुनरपि साधून् पप्रच्छ तान्प्रभुः । हरेरपि वचः कीदृङ्नैव मान्यं तदाश्रितैः ॥४२॥ इति पृष्ठा स एवास्य प्रश्नस्योत्तरमाह तान् । धर्मो यत्र च्यवेत्स्वस्य मान्यं तन्न वचः प्रभोः ॥४३॥ अर्जुनेन यथा पूर्वमश्वत्थामवधात्मकम् । न मानितं वचो विष्णोः प्रसत्त्या वदतोऽपि हि ॥४४॥ तथैव वाक्यं कृष्णस्य स्वोक्तधर्मविरोधि चेत् । स्यात्तदा नैव मान्यं तद्वाक्यं च चिरकारिणा ॥४५॥

एवमिति । एवममुना प्रकारेण । उक्त्वा । पुनर्भूयोऽपि । प्रभुः श्रीहरिः । तान् । साधून् । पप्रच्छ । तदाश्रितैः कृतप्रत्यक्षभगवदाश्रयैर्भक्तैः । हरेरपि । कीदृक्किंविधम् वचः । नैव । मान्यम् ॥ ४२ ॥ इतीति । इत्यमुना प्रकारेण । पृष्ठा । अस्य । प्रश्नस्य । उत्तरमपि । तान्मुनीन् । स श्रीहरिरेव । आह । हे साधवः ! । यत्र यस्मिन् प्रभोर्वचसि । स्वस्य । धर्मः । च्यवेत् च्युतो भवेत् । प्रभोः स्वभक्तस्य धर्मपरीक्षां कुर्वतः श्रीहरेरपि । तत् । वचः । न मान्यम् ॥ ४३ ॥ एतदेव दृष्टान्तेन द्रढयति द्वाभ्याम् । अर्जुनेनेति । यथा । पूर्वम् । अर्जुनेन । प्रसत्त्या प्रसन्नतया । वदतोऽपि । विष्णोः श्रीकृष्णस्य । अश्वत्थामवधात्मकं द्रौणिव्यापादनरूपम् । वचः । न मानितम् । हि प्रसिद्धं श्रीमद्भागवते । तद्यथा । 'मैनं पार्थार्हसि त्रातुं ब्रह्मबन्धुमिमं जहीति श्रीकृष्णवाक्यम् । अर्जुनः सहसाऽऽज्ञाय हरेर्हार्दमथासिना । मणिं जहार मूर्द्धन्यं द्विजस्य सह मूर्द्धजमि'त्यादि ॥ ४४ ॥ तथेति । तथैव । कृष्णस्य । वाक्यम् । चेद्यदि । स्वोक्तधर्मविरोधि । स्यात् । तदा । तत्कृष्णवचः ।

नैव । मान्यम् । चिरकारिणा तत्स्वीकारे विलम्बता । भाव्यम् ॥ ४५ ॥ तेनेति । तेन स्ववाक्यामानेन । कृष्णस्य साक्षाद्धरेः । अपरितोषे । ईक्ष्यमाणे सत्यपि । ततः कृष्णात् । सर्वथा । न भेतव्यम् । यस्माद्धेतोः । स कृष्णः । धर्मातिवत्सलो धर्मिजनातिस्निग्धः । अस्ति ॥ ४६ ॥ अथेति । अथानन्तरम् । पुनः । स्वामी श्रीहरिः । सतः साधून् । अपृच्छत् । हे साधवः ! । रमापतेः श्रीकृष्णस्य । ध्याने स्वरूपचिन्तने । क्रियमाणे सति । यदि । अन्तरे । अशुभाः । तर्काः । सङ्कल्पाः । उद्यायु रुद्भवेयुः ॥ ४७ ॥ समुद्र इति । समुद्रे । कल्लोला महान्तस्तरङ्गा इव । मुहुः पुनः पुनः । जायमानाः । तेऽशुभतर्काः । केन । उपायेन । शम्याः शान्तिं नेयाः । तत् । ब्रूत कथयत । इत्यमुना प्रकारेण । उक्ताः श्रीहरिणाभिहिताः । ते साधवः । ऊचिरे ॥ ४८ ॥ अस्येति । हे ईश परमेश्वर ! । अस्य त्वत्प्रश्नस्य । उत्तरम् । त्वमेव । ब्रूहि । इतीत्थम् । उक्तः साधुभिरभिहितः । स श्रीहरिः । तान्साधुन् । आह । हे साधवः ! । कुतर्कोदयकालेऽशुभसङ्कल्पोदय-समये तु । ईशितुः परमेश्वरस्य श्रीहरेः । ध्यानम् । न कार्यम् ॥ ४९ ॥ ध्यानमिति । तदा कुतर्कोदयसमये । ध्यानम् । हित्वा । वाचा । प्रभोः । नामसङ्कीर्त्तनं

तेनेक्ष्यमाणे कृष्णस्यापरितोषेऽपि सर्वथा । न भेतव्यं ततो यस्मात्सोऽस्ति धर्मातिवत्सलः ॥ ४६ ॥ अथापृच्छत्पुनः स्वामी सतो ध्याने रमापतेः ! । क्रियमाणे यद्यशुभास्तर्का उद्यायुरन्तरे ॥ ४७ ॥ समुद्र इव कल्लोला जायमाना मुहुश्च ते । केनोपायेन शम्या-स्तद्ब्रूतेत्युक्तास्त ऊचिरे ॥४८॥ अस्योत्तरं त्वमेवेश ब्रूहीत्युक्तः स आह तान् । कुतर्कोदयकाले तु न ध्यानं कार्यमीशितुः ॥४९॥ ध्यानं हित्वा तदा वाचा नामसंकीर्त्तनं प्रभोः । कर्त्तव्यमुच्चैर्निर्लज्जं तालीवादनपूर्वकम् ॥ ५० ॥ प्रार्थनीयोऽथ भगवान् दीनबन्धो ! दयानिधे ! । नारायण ! हरे ! कृष्ण ! तवाहं पाहि मामिति ॥५१॥ एकान्तिकास्तु भक्ता ये हरेस्तदभिधा अपि । कीर्त्तनी-याश्च ते प्रार्थ्यास्तेन शाम्यन्ति ते द्रुतम् ॥ ५२ ॥ हरिकृष्णोऽथ भूयस्तान् सतः पप्रच्छ तोषयन् । सतां कः सर्वथा हेयो दोष एकोऽस्ति वै महान् ॥५३॥ त्यक्ते यस्मिन्नेककेऽपि दोषा अन्येऽखिला अपि । त्यक्ता भवेयुस्तं दोषं ब्रूत मां साधुसत्तमा ! ॥५४॥

स्वामिनारायणेत्यादिनाम्नामुच्चारणम् । निर्लज्जम् । तालीवादनपूर्वकं च यथातथा । उच्चैरुच्चस्वरेण । कर्त्तव्यम् ॥ ५० ॥ प्रार्थनीय इति । अथानन्तरम् । हे दीनबन्धो ! । हे दयानिधे ! । हे नारायण ! । हे हरे ! । हे कृष्ण ! । अहम् । तव । अस्मि । माम् । पाहि । इतीत्थम् । भगवान् । प्रार्थनीयः ॥ ५१ ॥ एकान्तिका इति । ये । हरेः । एकान्तिकाः । भक्ता मुक्तानन्दमुनिसमाना महान्तः साधवो भक्तजनाः । स्युः । तदभिधास्तेषां नामान्यपि । कीर्त्तनीयाः । ते एकान्तिकाभक्ताश्च । प्रार्थ्याः । तेन हरिहरिभक्तानां नामसङ्कीर्त्तनेन प्रार्थनेन च । तेऽशुभतर्काः । द्रुतं शीघ्रमेव । शाम्यन्ति ॥ ५२ ॥ हरिकृष्ण इति । अथानन्तरम् । हरिकृष्णः । भूयः । तान् । सतः । तोषयन्प्रहर्षयन्सन् । पप्रच्छ । हे साधवः ! । सताम् । सर्वथा । हेयः । एकः । महान् । कः । दोषः । अस्ति ॥ ५३ ॥ त्यक्त इति । हे साधु-सत्तमाः ! । एककेऽपि । यस्मिन्महति दोषे । त्यक्ते सति । अन्ये । अखिला अपि । दोषाः । त्यक्ताः । भवेयुः । तं तथाविधम् । दोषम् । माम् । ब्रूत ॥ ५४ ॥

तथेति । तथा महानित्यर्थः । एकः । गुणोऽपि । कः । अस्ति । यस्मिन्नेकस्मिन्महति गुणे । सत्सु साधुषु । उपागते समायाते सति । अन्ये । शोभनाः सकला अपि । गुणाः । प्राप्ताः । स्युः ॥ ५५ ॥ एतदिति । एतत्प्रश्नोत्तरम् । वक्तुम् । चिरयतो । विलम्बं कुर्वाणान् । सतः साधून् । दृष्ट्वा । प्रभुः श्रीहरिः । सच्छास्त्रेषु । सुनिश्चितम् । तत्स्वकृतप्रश्नोत्तरम् । स्वयमेव । आह ॥ ५६ ॥ देहेति । एकः । देहाभिमानो देहाहंमतिरूपो महान्दोषः । सर्वदोषाकरः सर्वेषां दोषाणां खनिरूपः । मतः । तथैव । एकापि । आत्मनिष्ठाऽऽत्मनिष्ठारूपो महागुणः । सर्वगुणाकरः सर्वेषां गुणानां खनिरूपा । ज्ञेया ॥ ५७ ॥ आद्य इति । अतो हेतोः । सद्भिर्मदाश्रितसाधुभिः । आद्यो देहाभिमानरूपः । दोषः । सर्वथा । हातव्यः । ईरितः । द्वितीयाऽऽत्मनिष्ठा । गुणः । द्वितीय आत्मनिष्ठारूपो गुण इत्यर्थः । सर्वथा । उपादेयो ग्राह्यः । उक्तः । इतीत्थम् । अवगम्यताम् ॥५८॥ पुनरिति । पुनः । स्वामी श्रीहरिः । तान्साधून् । पप्रच्छ । हे साधवः ! ।

तथैकोऽपि गुणः कोऽस्ति सत्सु यस्मिन्नुपागते । गुणा हि शोभना अन्ये प्राप्ताः स्युः सकला अपि ॥ ५५ ॥
एतत्प्रश्नोत्तरं वक्तुं सतश्चिरयतः प्रभुः । दृष्ट्वा तत्स्वयमेवाह सच्छास्त्रेषु सुनिश्चितम् ॥ ५६ ॥ देहाभिमान एको हि
सर्वदोषाकरो मतः । तथैवैकाऽप्यात्मनिष्ठा ज्ञेया सर्वगुणाकरः ॥५७॥ आद्योऽतः सर्वथा सद्भिर्हातव्यो दोष ईरितः ।
उपादेयो गुणश्चोक्तो द्वितीयेत्यवगम्यताम् ॥ ५८ ॥ पुनः पप्रच्छ तान्स्वामी कीदृग्देशोऽत्र साधुभिः । हर्याज्ञयाऽपि
नो सेव्यः कीदृक् शास्त्रं च सर्वथा ॥ ५९ ॥ इति पृष्टोत्तरमपि तस्य स स्वयमाह तान् । यत्र स्वधर्मभङ्गः स्यान्न
स्थेयं तत्र साधुभिः ॥ ६० ॥ यत्र कृष्णेक्षणे सम्यग्भवत्यपि मुहुर्भवेत् । स्त्रीणामपीक्षणं तत्र सद्भिः स्थेयं न
कर्हिचित् ॥ ६१ ॥ स्वजनानां भवेद्यत्र मुहुर्योगो गृहात्मनाम् । यत्र चाधर्मबाहुल्यं यत्र मार्यामयादि च ॥ ६२ ॥

अत्र लोके । साधुभिर्मदाश्रितैस्त्यागिभिः । हर्याज्ञया स्वेष्टदेवस्य श्रीहरेर्निर्देशे सत्यपि । कीदृक् । देशः । सर्वथा । नो सेव्यः । कीदृक् । शास्त्रं च । सर्वथा । नो सेव्यम् । तत्र देशस्य सेवनं तत्र स्थितिरूपम् । शास्त्रस्य सेवनं तु तस्य पठन पाठन श्रावणादिरूपम् ॥ ५९ ॥ इतीति । इतीत्थम् । पृष्टा । तस्य स्वकृतप्रश्नस्य । उत्तरमपि । तान्साधून् । स श्रीहरिः । स्वयमेव । आह । हे साधवः ! । यत्र देशे । स्वधर्मभङ्गः । स्यात् । तत्र देशे । साधुभिः । न स्थेयम् ॥ ६० ॥ यत्रेति । यत्र देशे । कृष्णेक्षणे श्रीकृष्णदर्शने । सम्यक् । भवति जायमाने सत्यपि । स्त्रीणामपि । ईक्षणम् । मुहुः । भवेत् । तत्र देशे । सद्भिः । कर्हिचित् । न स्थेयम् ॥ ६१ ॥ स्वेति । यत्र देशे । गृहात्मनां गृहाश्रमिणाम् । स्वजनानां पितृभ्रात्रादिस्वसम्बन्धिजनानाम् । योगो भाषणेक्षणादिसम्बन्धः । मुहुः । भवेत् । यत्र देशे । अधर्मबाहुल्यं प्रचुराधर्मिजननिवासः । भवेत् । यत्र । मार्यामयादि मारीरोगादिबहुरोगप्रवर्तनं च । भवेत् ॥ ६२ ॥

नृपेति । यत्र । नृपाद्युपद्रवो मानुष्या दैव्या चापदा मुहुःप्रपीडनम् । भवेत् । दैव्याद्यापदुक्ता कामंदकीये । 'हुताशनो जलं व्याधिर्दुर्भिक्षं मरणं तथा । इतिपञ्चविधं दैवं मानुषं व्यसनं ततः । आयुक्तकेभ्यश्चोरेभ्यः परेभ्यो राजवल्लभात् । पृथिवीपतिलोभाच्च नराणां पञ्चधा मतमि'ति । तत्रायुक्तका वञ्चकाः । यत्र । अशुचिवस्तुनो मद्यमांसादेः । गन्धोऽपि दुर्गन्धश्च । भवेत् । यत्र । अपशब्दानां गुह्याङ्गोच्चारणयुक्ताश्लीलशब्दानाम् । श्रवणं च । मुहुः । भवेत् ॥ ६३ ॥ हरीति । तत्र मुहुर्जायमानस्वजनयोगादिरूपे । देशे तु । साधुभिः । हर्याज्ञयापि । न स्थेयम् । अर्थात्प्राप्तमपि स्थेयदेशं बोधाय स्वयमेवाह । यत्र देशे । धर्मभक्त्योः । दार्ढ्यमतिदृढत्वम् । स्यात् । तत्र देशे । सर्वथा । स्थेयम् ॥ ६४ ॥ स्वाज्ञायां सत्यामपि न सेव्यं शास्त्रमाह । कृष्णेति । यत्र शास्त्रे । कृष्णाकारक्षतिर्युक्तिभिः कृष्णकृष्णावताराकारखण्डनम् । भवेत् । यत्र । कामस्य कामसेवार्हशृङ्गाररसस्य । वार्त्ता च । भवेत् । तत् । शास्त्रम् । चेद्यदि । आर्षं निर्बीजसाङ्ख्यप्रवर्त्तककपिलवात्सायनादिमुनिप्रणीतमपि । भवेत् । तथापि । साधुभिः । क्वचित्कदाचिदपि । न सेव्यम् ॥ ६५ ॥ अर्थात्प्राप्तमपि सेव्यशास्त्रं

नृपाद्युपद्रवो यत्र गन्धोऽप्यशुचिवस्तुनः यत्र यत्रापशब्दानां श्रवणं च मुहुर्भवेत् ॥६३॥ हर्याज्ञयाऽपि न स्थेयं तत्र देशे तु साधुभिः । धर्मभक्त्योर्यत्र दार्ढ्यं स्यात्स्थेयं तत्र सर्वथा ॥ ६४ ॥ कृष्णाकारक्षतिर्यत्र वार्त्ता कामस्य यत्र च । तदार्षमपि शास्त्रं चेन्न सेव्यं साधुभिः क्वचित् ॥ ६५ ॥ कृतं यत्र भवेत्प्रेम्णा भगवन्मूर्तिवर्णनम् । अवद्धमप्याधुनिकं तच्छास्त्रं सेव्यमादरात् ॥ ६६ ॥ हरिवचनसुधामिति श्रुतिभ्यां सदसि निपीय सदुत्तमा भृशं ते । निजहृदि परितोषमाप्य तस्मै सह गृहिभिर्विदधुर्नमस्क्रियां च ॥६७॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते शताधिकचतुर्दशस्तरङ्गः ॥ ११४ ॥ ६ ॥

शकाब्दे विक्रमार्कस्य नगाश्ववसुभूमिते । मार्गशुक्लतृतीयायां वचोऽमृतमिदं हरेः ॥ १ ॥

स्फुटबोधाय स्वयमेवाह । कृतमिति । यत्र शास्त्रे । प्रेम्णा । भगवन्मूर्त्तिवर्णनम् । कृतम् । भवेत् । तच्छास्त्रम् । अवद्धं गद्यपद्यादिबन्धचातुर्यवर्जितम् । आधुनिकमधुनातनपण्डितकृतमपि । आदरात् । सेव्यम् ॥ ६६ ॥ इत्येवंविधाम् । हरिवचनसुधाम् । श्रुतिभ्यां कर्णकंसाभ्याम् निपीय । सदसि स्थिताः । ते । सदुत्तमाः । गृहिभिर्गृहस्थभक्तैः । सह । निजहृदि । भृशमत्यन्तम् । परितोषम् । आप्य । तस्मै श्रीहरये । नमस्क्रियां नमस्कारम् । विदधुश्चक्रुः । चकारात्तद्वचनसुधाप्रशंसां च चक्रुरिति बोध्यम् ॥ ६७ ॥ नवकृत्वो य आत्मीयान्प्रश्नान्पृष्ट्वा सतो हरिः । स्वयं तदुत्तराण्याह ताः स्युर्मद्धृदि तद्गिरः ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्स्व गुरुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां शताधिकचतुर्दशस्तरङ्गः ॥ ११४ ॥ ६ ॥

माहात्म्यसहितं साक्षात्तद्दर्शनयुतं हरेः । ज्ञानं स्याद्यस्य पूर्णः स ज्ञानीत्युक्तं तु सप्तमे ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८७७) मार्गशुक्लतृतीयायां मार्गशीर्षमासे शुक्लपक्षागततृतीयातिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥

लौहेति । तत्र तिथौ । लेहग्रामे । सूरभूपवेश्मनि दुर्गान्तर्वर्त्तिसूरखर्मनृपतिभवने । मञ्चके स्वास्तृते पर्यङ्कोत्तमासने । सितवासाः परिधृतसकलश्वेतवसनः । स्वभक्तनिकरैर्नानादेशागतत्यागिगृहिस्वभक्तवृन्दैः । वृतः सभायां परिवेष्टितः । स श्रीहरिः । न्यषीदत् ॥ २ ॥ तदिति । अथोपवेशनानन्तरम् । सद्गुरुः सकलसाधुश्रेष्ठः । मुक्तानन्दो मुनिः । तदाज्ञया श्रीहरिकृतनिदेशेन । तं श्रीहरिम् । पप्रच्छ । हे प्रभो ! । ज्ञानात् ऋते ज्ञानं विना । मुक्तिः । न स्यात् । इतीत्थम् । श्रुत्योपनिषद्वचसा । उच्यते ॥ ३ ॥ ज्ञानेनेति । हे हरे ! । चेद्यदि । ज्ञानेनैव । मुक्तिः । स्यात् । तर्हि । शास्त्रेषु । अस्यै मुक्तये । भूरिशः । साधनानि तपयोगादीनि । प्रोक्तानि । सन्ति । तेषां साधनानाम् । प्रयोजनम् । किन्तु स्यात् । न किमपीत्यर्थः ॥ ४ ॥ 'मुक्तानन्देन मुनिना पृष्ट इत्थं महाप्रभुः । सोऽवदन्नन्दयंश्चेति तं दयार्द्रदृशाऽपरान्' । ज्ञेति । हे मुने ! । ज्ञाधातोर्ज्ञाऽवबोधने इत्यस्य धातोः । भावेऽर्थे केवले भावे । ज्ञानम् । इत्येतत् । रूपम् । अस्ति । अतो हेतोः । ज्ञानम् । वेदनपर्यायम् । इतीत्थम् । बुद्धैः । उच्यते ॥ ५ ॥ पदार्थेति । पदार्थविषयत्वात्तस्य यत्किंचिद्वस्तुनिष्ठत्वात् । तत् ज्ञानम् । अनेकविधं पदार्थानामनेकविधत्वादनेकप्रकारम् । मतम् । अनेकविधत्वमेवाह । रूपज्ञानम् । रसज्ञानम् । इत्याद्याः । तद्भिदा ज्ञानप्रकाराः । सन्ति ॥ ६ ॥ तत्रेति । तत्र पदार्थालम्ब्यनेकविधज्ञानेषु मध्ये । किं वस्तुनिष्ठम् । ज्ञानम् । मुक्तिकारणम् । मन्यसे । यतः । भवदुक्तश्रुतौ ऋते ज्ञानान्नमुक्तिरित्येवंरूपे त्वदुक्ते हिरण्यकेशीशाखीयश्रुतिवचने तु । अस्य ज्ञानस्य । विषयः । स्फुटं यथातथा । नोदितः ॥ ७ ॥ तदेति । तदेवंविधश्रीहरिवचनश्रवणकाले । सः । साधुर्मुक्तानन्दमुनिः । तं श्रीहरिम् । प्राह । हे हरे ! । श्रुतेर्मदुक्तश्रुतिवचनसम्बन्धिनः । ज्ञानस्य । विषयः । भवान् हरिस्त्वम् । अभिप्रेतः संमतः । अस्ति । तेन त्वद्विषयज्ञानेनैव । मुक्तिः । जायते ॥ ८ ॥ मायिकानामिति । हि यस्मात् । मायिकानाम् । पदार्थानाम् । ज्ञानं तु । अज्ञानमेवास्ति । अतो हेतोः । साक्षात् । भवतः प्रत्यक्षस्य तव । ज्ञानम् । मुक्त्येकसाधनं मुक्तेर्मुख्यं साधनम् । अस्ति । 'तमेव विदित्वाति मृत्युमेति' । 'ज्ञात्वा देवं मुच्यते सर्वपाशैः' । 'तमेव विद्वानमृत इह भवती'त्यादिश्रुत्युक्तेः ॥ ९ ॥

लौहग्रामे तत्र सूरभूपवेश्मनि मञ्चके । सितवासा न्यषीदत्स स्वभक्तनिकरैर्वृतः ॥ २ ॥ तदाज्ञयाऽथ तं मुक्तानन्दः पप्रच्छ सद्गुरुः । ऋते ज्ञानान्न मुक्तिः स्यादिति श्रुत्योच्यते प्रभो ! ॥ ३ ॥ ज्ञानेनैव हि मुक्तिश्चेत्तर्हि शास्त्रेषु भूरिशः । प्रोक्तानि साधनान्यस्यै तेषां किंतु प्रयोजनम् ॥ ४ ॥ श्रीहरिरुवाच–ज्ञाधातोर्ज्ञानमित्येतद्भावेऽर्थे रूपमस्ति हि । अतो वेदनपर्यायं ज्ञानमित्युच्यते बुधैः ॥ ५ ॥ पदार्थविषयत्वाच्च तदनेकविधं मतम् । रूपज्ञानं रसज्ञानमित्याद्याः सन्ति तद्भिदाः ॥ ६ ॥ तत्र किं विषयं ज्ञानं मन्यसे मुक्तिकारणम् । भवदुक्तश्रुतौ त्वस्य विषयो नोदितः स्फुटम् ॥ ७ ॥ तदा साधुः स तं प्राह ज्ञानस्य विषयो भवान् । अभिप्रेतः श्रुतेरस्ति मुक्तिस्तेनैव जायते ॥ ८ ॥ मायिकानां पदार्थानां ज्ञानं त्वज्ञानमेव हि । अतः साक्षात्तु भवतो ज्ञानं मुक्त्येकसाधनम् ॥ ९ ॥

धार्मिरिति । अथैवंविधमुक्तानन्दमुनिवाक्यश्रवणानन्तरम् । धार्मिर्धर्मपुत्रः श्रीहरिः । तं मुक्तानन्दमुनिम् । ऊचे । हे मुने ! । कीदृशः । भगवान् । ज्ञेयः । मतः । यतो हेतोः । तस्य भगवत्तरूपाणि । बहुविधान्येव । सन्ति ॥१०॥ भगवद्रूपाणां बहुविधत्वमाह त्रिभिः । यत्रेति । यत्र यत्र येषु येषु स्थानेषु । स्वसाध्यकं केवलं स्वेनैव साधनीयं नान्येन तथाविधमित्यर्थः । यादृग्यादृग्यथा यथाविधम् । कार्यम् । भवेत् । तत्सिद्धये तथा तथाविधकार्यसिद्ध्यर्थम् । तत्र तत्र तेषु तेषु स्थानेषु । स भगवान् । अस्य । ब्रह्माण्डस्य । उपलक्षणमेतदनेकब्रह्माण्डानाम् । उत्पत्तये । अनिरुद्धोऽनिरुद्धस्वरूपः । प्रजायते । स्थितये । प्रद्युम्नः प्रद्युम्नस्वरूपः । प्रजायते । संहृतये । सङ्कर्षणस्वरूपश्च । प्रजायते ॥ १२ ॥ मत्स्येति । स भगवान् । वेदोद्धृत्यादिसिद्धयेऽसुरापहृतवेदोद्धरणादिकार्यसिद्ध्यर्थम् । मत्स्यकूर्मादिरूपः । जायते ध्यानसमाध्यादौ । अतीन्द्रियाकृतिः । जायते । स्वान्तरे ध्यानवता समाधिमता च केवलस्वानुभववेद्यत्वात्ध्यानवतः समाधिमतस्तदन्येषां चेन्द्रियान्तःकरणागोचरस्वरूपआदिशब्दोदितान्तर्यामितया च तथाविधो भवतीत्यर्थः ॥ १३ ॥ बाह्येति । एवममुना प्रकारेण । स भगवान् । कचित्कदाचित् । बाह्यान्तःकरणैः । ग्राह्यः । भवति ।

धार्मिरूचेऽथ तं ज्ञेयो भगवान्कीदृशो मतः । यतो बहुविधान्येव सन्ति रूपाणि तस्य तु ॥ १० ॥
यत्र यत्र भवेद्यादृग्यादृक् कार्यं स्वसाध्यकम् । तत्सिद्धये तत्र तत्र तादृक्तादृक् स जायते ॥ ११ ॥
उत्पत्तयेऽनिरुद्धोऽसौ प्रद्युम्नः स्थितयेऽस्य च । सङ्कर्षणः संहृतये ब्रह्माण्डस्य प्रजायते ॥ १२ ॥
मत्स्यकूर्मादिरूपश्च वेदोद्धृत्यादिसिद्धये । अतीन्द्रियाकृतिर्ध्यानसमाध्यादौ स जायते ॥ १३ ॥
बाह्यन्तःकरणैर्ग्राह्य एवं स भवति क्वचित् । क्वचित् केवलेनैव वेद्यः स्वानुभवेन सः ॥ १४ ॥
तत्र कीदृग्विधस्य स्यात्प्रभोर्ज्ञानेन देहिनाम् । बन्धमुक्तिः पृष्ट इति मुक्तानन्दस्तमब्रवीत् ॥ १५ ॥
एतैः सर्वैरपि ग्राह्योऽभिप्रेतोऽस्ति भवान् हि नः । इत्युक्तः प्रहसन् स्वामी तमुवाच महामतिम् ॥ १६ ॥

क्वचित्तु । स भगवान् । केवलेन । स्वानुभवनेनैव । वेद्यः । भवति । अस्यायं भावः भगवाननिरुद्धादिरूपश्चेत्तदा तु तदाश्रयिणां चक्षुरादिबाह्यकरणैश्चित्ताद्यन्तःकरणैश्च ग्राह्यः स्यादन्यथा तु ध्यानसमाध्यादौ । तत्तद्वतां बाह्यान्तरेन्द्रियागोचरः सन् केवलस्वानुभवसंवेद्य एव भवेदिति ॥ १४ ॥ तत्रेति । तत्र तेष्वनिरुद्धादिस्वरूपेषु मध्ये । कीदृग्विधस्य । प्रभोः । ज्ञानेन । देहिनाम् । बन्धमुक्तिः । स्यात् । इत्यमुना प्रकारेण । पृष्टः श्रीहरिणानुयुक्तः । मुक्तानन्दो मुनिः । तं श्रीहरिम् । अब्रवीत् ॥ १५ ॥ एतैरिति । एतैः पूर्वोक्तैः । सर्वैर्बाह्यान्तःकरणानुभवैरपि । ग्राह्यः । भवान् । नोऽस्माकम् । अभिप्रेतः संमतः । अस्ति । हि । एवंविधस्य सर्वकारणस्य हरेस्तवास्माकं साक्षात्सम्बन्धसत्त्वात्त्वज्ज्ञानस्यापि यथार्थतः सत्त्वाच्च त्वमेवास्माकं सर्वथाऽभिप्रेतोऽसीति भावः । इतीत्थम् । उक्तो मुक्तानन्दमुन्यभिहितः । स्वामि श्रीहरिः । प्रहसन्सन् । महामतिम् । तं मुक्तानन्दमुनिम् । उवाच ॥ १६ ॥

ईदृगिति । हे मुने ! । ईदृग्विधः । भगवांस्तु । नराकृतिः । श्रीकृष्णः । अस्ति । स श्रीकृष्णस्तु । गीतायाम् । स्वमात्मानम् । अर्जुनं प्रति । इत्थं वक्ष्यमाणप्रकारेणैव । आहोक्तवान् । हि ॥१७॥ गीतावाक्यान्याह । यस्मादिति । यस्माद्धेतोः । अहम् । क्षरं क्षरपुरुषम् । अतीतोऽतिक्रम्य स्थितः । अक्षरादक्षरपुरुषाच्चापि । उत्तमः । अस्मि । अतो हेतोः । लोके । वेदे च । पुरुषोत्तमः । प्रथितः ख्यातः । अस्मि ॥ १८ ॥ पश्येति । हे पार्थ ! अर्जुन ! । नानाविधानि नानाप्रकाराणि । दिव्यान्यप्राकृतानि । नानाऽनेकविधा वर्णाः शुक्लरक्तकृष्णादय आकृतयोऽवयवसंस्थानविशेषा येषां तानि । शतशः । अथ । सहस्रशः । अपरिमितानीत्यर्थः । मे मम । रूपाणि । पश्य ॥ १९ ॥ मत्त इति । हे धनञ्जय ! । मत्तः सर्वकारणान्मत्सकाशात् । परतरं श्रेष्ठम् । अन्यत् । किञ्चित्किमपि । नास्ति । किन्त्वहमेवाक्षरादिसर्वपर इत्यर्थः । सूत्रे । मणिगणा इव । इदम् । सर्वम् । मयि । प्रोतम् । मालाया मणीनामाधारः सूत्रं यथा तथाऽक्षराद्याधारोऽहमेवास्मीत्यर्थः ॥ २० ॥ विष्टभ्येति । इदम् । कृत्स्नम् । जगत् । एकांशेनान्तर्यामिशक्तिरूपेण । अवष्टभ्य धृत्वा व्याप्येत्यर्थः अहम् । स्थितः । अस्मि । कारणावस्थं कार्यावस्थं चिदचिदात्मकं जगन्मदेकायत्तस्वरूपस्थिति-

ईदृग्विधस्तु भगवान् श्रीकृष्णोऽस्ति नराकृतिः । स तु स्वमर्ज्जुनं प्राह गीतायामित्थमेव हि ॥ १७ ॥ यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः । अतोऽस्मि लोके वेदे च प्रथितपुरुषोत्तमः ॥ १८ ॥ पश्य मे पार्थ ! रूपाणि शतशोऽथ सहस्रशः । नानाविधानि दिव्यानि नानावर्णाकृतीनि च ॥ १९ ॥ मत्तः परतरं नान्यत् किञ्चिदस्ति धनञ्जय ! । मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव ॥ २० ॥ विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत् । इत्यादिभिः स्ववचनैः स्वं तथाविधमाह सः ॥ २१ ॥ एवमेव च यो वेद प्रत्यक्षं तं भजेत्ततः । स एव पूर्णो ज्ञानी स्यादन्यस्तु न्यूनवेदनः ॥२२॥ ईदृग्विधेन भगवज्ज्ञानेन भवबन्धनात् । मुच्यते सर्वथा देही नान्यथेत्यस्ति निश्चयः ॥ २३ ॥ ईदृग्ज्ञानस्य संसिद्ध्यै तपोयोगादिकानि तु । बह्न्युक्तानि शास्त्रेषु साधनानीति गम्यताम् ॥२४॥ ज्ञानस्य साधनत्वेन मुक्तिहेतोः शरीरिणः । इतरेषां साधनानामप्युक्ता मुक्तिहेतुता ॥२५॥

प्रवृत्तिमदस्तीति भावः । हे मुने ! । इत्यादिभिः । स्ववचनैः । स श्रीकृष्णः । स्वम् । तथाविधं सर्वकारणम् आह ॥ २१ ॥ एवमिति । एवममुना प्रकारेण । यो भक्तः । प्रत्यक्षम् । तं श्रीकृष्णम् । वेद । ततस्तदनन्तरम् । भजेदैकान्तिकभावेन तं सेवेत । स भक्त एव । पूर्णः । ज्ञानी । सम्पूर्णज्ञानवानित्यर्थः । स्यात् । अन्योऽनेवंभूतस्तु । न्यूनवेदनोऽपूर्णज्ञानवान् भक्त इत्यर्थः ॥ २२ ॥ ईदृगिति । ईदृग्विधेन । भगवज्ज्ञानेन । देही भक्तजनः । भवबन्धनात् । सर्वथा । मुच्यते । अन्यथा तु न मुच्यते । इत्येवंभूतः । निश्चयः शास्त्रानुभवनिर्णयः । अस्ति ॥ २३ ॥ ईदृगिति । ईदृग्ज्ञानस्यैवंविधभगवत्स्वरूपवेदनस्य । संसिध्यै । तपोयोगादिकानि । बहूनि । साधनानि । शास्त्रेषु । उक्तानि । इतीत्थम् । गम्यताम् ॥ २४ ॥ ज्ञानस्येति । शरीरिणो भक्तस्य । मुक्तिहेतोः । ज्ञानस्य । साधनत्वेन । इतरेषाम् । साधनानां तपआदीनामपि । मुक्तिहेतुता । उक्ता ॥ २५ ॥

एवं मुक्तानन्दमुनिप्रश्नोत्तरोद्देशेनात्यन्तिकमुक्तिहेतुतया स्वस्वरूपज्ञानं परोक्षतया संक्षेपत उक्त्वा साम्प्रतं तदेव पुरुषोत्तमस्य स्वस्य समाहात्म्यं स्वरूपज्ञानं विशेषत आह चतुर्विंशत्या श्लोकैः । ईदृगिति । हे मुने ! । भगवतः श्रीकृष्णस्य । ईदृग्ज्ञानम् । विना भक्तिसहितज्ञानमन्तरेत्यर्थः । ब्रह्मात्मवेदिना निजात्मानं ब्रह्मरूपं विजानताम् । ज्ञानस्यापि । सर्वथा । न्यूनता । मता । नूनम् ॥ २६ ॥ अत इति । अतो हेतोः । शुकादयः । एवंभूता ब्रह्मात्मवेदिनः सन्तोऽपि । हरेः । भक्त्या युक्तेन । ज्ञानेन । आत्मनः स्वस्य । न्यूनताम् । जहुः । ध्रुवम् । तथा च श्रीभागवते । 'परिनिष्ठितोऽपि नैर्गुण्ये उत्तमश्लोकलीलया । गृहीतचेता राजर्षे ! आख्यानं यदधीतवान् । कस्य वा बृहतीमेतामात्मारामः समभ्यसत् । आत्मारामाश्च मुनयो निर्ग्रन्था अप्युरुक्रमे'इत्यादि ॥ २७ ॥ भगवदिति । भगवज्ज्ञानसहिता श्रीहरेः स्वरूपज्ञानसंयुक्ता । भक्तिः । ज्ञानस्य ब्रह्मात्मवेदनस्य । फलं फलरूपास्ति । तां भक्तिम् । विना । निष्फलम् । तत् । ज्ञानं तु । मनिषिभिर्भगवन्निष्ठभक्तैः । न स्तूयते नैव प्रशस्यते ॥ २८ ॥

ईदृग्ज्ञानं भगवतो विना ब्रह्मात्मवेदिनाम् । ज्ञानस्यापि मता नूनं न्यूनता सर्वथा मुने ! ॥ २६ ॥ अतः शुकादयोऽप्येवंभूताः सन्तो हरेर्ध्रुवम् । ज्ञानेन भक्त्या युक्तेन न्यूनतां जहुरात्मनः ॥ २७ ॥ भगवज्ज्ञानसहिता भक्तिर्ज्ञानस्य वै फलम् । तां विना निष्फलं तत्तु स्तूयते न मनीषिभिः ॥ २८ ॥ ज्ञाने प्रयासमुदपास्य नमन्त एव जीवन्ति सन्मुखरितां भवदीयवार्त्ताम् । स्थाने स्थिताः श्रुतिगतां तनुवाङ्मनोभिर्ये प्रायशोऽजित ! जितोऽप्यसि तैस्त्रिलोक्याम् ॥ २९ ॥ श्रेयःस्रुतिं भक्तिमुदस्य ते विभो ! क्लिश्यन्ति ये केवलबोधलब्धये । तेषामसौ क्लेशल एव शिष्यते नान्यद्यथा स्थूलतुषावघातिनाम् ॥ ३० ॥

तां विना निष्फलं तत्त्विति यदुक्तं तत्र श्रीभागवतसंमतिमाह त्रिभिः । ज्ञान इति । हे अजित ! । ज्ञाने केवलब्रह्मात्मवेदने । प्रयासम् । उदपास्येपदप्यकृत्वा । स्थाने स्वस्वधर्मे । स्थिताः । ये पुरुषाः । सन्मुखरितां त्वद्वार्त्ताकरणस्य स्वधर्मत्वाद्भवदेकान्तिकसाधुभिः स्वत एवोदीरिताम् । श्रुतिगतां श्रवणेन्द्रियविषयं प्राप्ताम् । भवदीयवार्त्तां त्वत्स्वरूपगुणचरित्रसम्बन्धिनीं गोष्ठीम् । तनुवाङ्मनोभिः । नमन्तः सत्कुर्वन्तः सन्तः । जीवन्ति । केवलया तयैव प्राणान् धारयन्तीत्यर्थः । तैः पुरुषैः । प्रायशः । त्रिलोक्याम् । अजितोऽपि । त्वम् । जितो वशीकृतः । असि ॥ २९ ॥ श्रेय इति । हे विभो ! । श्रेयःस्रुतिं श्रेयसामभ्युदयापवर्गलक्षणानां स्रुतिः सरसो निर्झरणामिव स्रवणं यस्यास्ताम् । ते तव भक्तिम् । उदस्य त्यक्त्वा । ये पुरुषाः । केवलबोधलब्धये केवलात्मज्ञानप्राप्तये क्लिश्यन्ति । तेषां पुरुषाणाम् । स्थूलतुषावघातिनामन्तःकणहीनस्थूलधान्याभासतुषान् कण्डयताम् । यथा । तथा । असौ । क्लेशलः क्लेश एव । शिष्यते । अन्यत् । न शिष्यते ॥ ३० ॥

नैष्कर्म्यमिति । निरञ्जनं रागद्वेषाद्यञ्जनरहितम् । नैष्कर्म्यं निर्गतं कर्मणो निष्कर्मैव नैष्कर्म्यम् । आत्मयाथात्म्यज्ञानमित्यर्थः । अच्युतस्य भगवतो भावेन भक्तियोगेन वर्जितं चेत् । ज्ञानमलं पदार्थानां मलो यथा हीनत्वान्नोपादेयस्तथा ज्ञानानां मध्ये मलतुल्यत्वाद्धीनमिदं विवेकिनां नोपादानार्हमित्यर्थः । अत एव न शोभते तदा । शश्वत्सदा । साधनदशायां फलदशायां चेत्यर्थः । अभद्रं दुःखरूपम् । तत्र साधनदशायां कायक्लेशाद्यावहत्वेन फलदशायां पुनः पतनभयशङ्कावहत्वेन चाभद्रमित्यर्थः । कर्म काम्यकर्म । यच्च । अकारणं नित्यकर्म । तदपि । ईश्वरे । नार्पितं न विनियोजितं चेत् । कुतः । पुनः । शोभते । न शोभते इत्यर्थः ॥ ३१ ॥ कृष्ण इति । ततो हेतोः । ब्रह्मात्मज्ञानिना ब्रह्मणा सह निजात्मैक्यज्ञानवतापि । कृष्ण एव । सेव्यः । हि । ब्रह्मवित् । परं परमात्मानम् । आप्नोति । इत्यादिश्रुतिशासनाच्चापि । कृष्ण एव । सेव्यः । सा यथा । 'ब्रह्मविदाप्नोति पर'मित्यादिका ॥ ३२ ॥ ब्रह्मेति । ब्रह्मभूतः प्रसन्नात्मा । इत्यादिगीतोक्तितः । ब्रह्मभूतः प्रसन्नात्मा न शोचति न कांक्षति । समः सर्वेषु भूतेषु मद्भक्तिं लभते परामिति भगवद्गीतावाक्यादपि । श्वेतमुक्तैः श्वेतद्वीपाख्यधामवासिनिरन्नमुक्तैरिव । ब्रह्मविद्भिर्ब्रह्मात्मभावं प्राप्तैः ।

नैष्कर्म्यमप्यच्युतभाववर्जितं न शोभते ज्ञानमलं निरञ्जनम् । कुतः पुनः शश्वदभद्रमीश्वरे न चार्पितं कर्म यदप्यकारणम् ॥ ३१ ॥
कृष्ण एव ततः सेव्यो ब्रह्मात्मज्ञानिनापि हि । ब्रह्मविदाप्नोति परमित्यादिश्रुतिशासनात् ॥ ३२ ॥ ब्रह्मभूतः प्रसन्नात्मेत्यादिगीतोक्तितोऽपि च । सेव्यः कृष्णो ब्रह्मविद्भिः श्वेतमुक्तैरिवादरात् ॥ ३३ ॥ ब्रह्मनिष्ठस्य भगवद्भक्त्या पूर्णं सुखं मतम् । केवलं ब्रह्मनिष्ठस्य सुख आल्प्यं ध्रुवोऽवदत् ॥ ३४ ॥ या निर्वृतिस्तनुभृतां तव पादपद्मध्यानाद्भवज्जनकथाश्रवणेन वा स्यात् । सा ब्रह्मणि स्वमहिमन्यपि नाथ ! माभूत्किन्त्वन्तकासिलुलितात् पततां विमानात् ॥३५॥ भक्त्याश्रयः परंब्रह्म प्रत्यक्षः पुरुषोत्तमः । कृष्णः स एव प्रकृतिद्वयस्याधार ईयताम् ॥३६॥ भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च । अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा ॥ ३७ ॥

आदरात् । कृष्णः । सेव्यः ॥ ३३ ॥ ब्रह्मेति । ब्रह्मनिष्ठस्य पुरुषस्य । भगवद्भक्त्या । पूर्णम् । सुखम् । मतम् । केवलम् । ब्रह्मनिष्ठस्य । सुखे । आल्प्यमल्पत्वम् । ध्रुव औत्तानपादिः । अवदद्भगवद्दत्तज्ञानेन जगाद ॥ ३४ ॥ तदेव ध्रुववचनं श्रीभागवतोक्तं दर्शयति । येति । हे नाथ ! । तनुभृतां त्वद्भक्तानाम् । तव । पादपद्मध्यानात् । अथवा । भवज्जनकथाश्रवणेन त्वदेकान्तिकजनेभ्यस्त्वत्स्वरूप गुण चरित्रवर्णनवत्सन्दर्भकथाकर्णनेन । या । निर्वृतिर्निरवधिकातिशयं सुखम् । स्यात् । सा निर्वृतिः । स्वमहिमनि त्वदैश्वर्यलेशवति । ब्रह्मण्यक्षरात्मैकभावेऽपि । माभून्नैव भवतीत्यर्थः । अन्तकासिलुलितादसितीक्ष्णसूक्ष्मगतिमत्कालखण्डितात् । विमानात् । पततां देवानाम् । किन्तु सा नास्तीति किमु वक्तव्यम् ॥ ३५ ॥ भक्तीति । भक्त्याश्रयो भक्तेराधारभूतः । परंब्रह्म । यः । प्रत्यक्षः । पुरुषोत्तमः । कृष्णः । अस्ति । स एव । प्रकृतिद्वयस्य व्याप्य व्यापकतया वर्त्तमानस्य पराऽपराख्यस्वप्रकृतिद्वयस्य । आधारः आश्रयः । अस्ति । इति । ईयताम् ॥ ३६ ॥ प्रकृतिद्वयमाह द्वाभ्याम् । भूमिरिति । भूमिः । आपः । अनलस्तेजः । वायुः । खमाकाशः । अत्र गन्धादिपञ्चविषयाणां भूम्यादिपञ्चस्वन्तर्भावः । मनः । अत्र चक्षुरादिदशेन्द्रियाणामन्तर्भावः ।

बुद्धिः अस्यां चित्तान्तर्भावः । अहङ्कारः । इतीत्थम् । अष्टधा । भिन्ना । इयं बद्धजीवानां भोग्य भोगोपकरण भोगस्थानभूता । प्रकृतिर्माया । मे मम मदीया । मच्छक्तित्वान्मदायत्तेत्यर्थः ॥ ३७ ॥ अपरेति । इयं पृथिव्यादिरूपेणाष्टधाभिन्ना प्रकृतिः । अपराऽपराख्याऽचेतनपर्याया जडप्रकृतिः । अस्ति । इतोऽस्या अपराप्रकृतेः सकाशात् । अन्यां स्वरूपस्वभावादिभिर्विलक्षणाम् । जीवभूतां सर्वचेतयितृत्वाज्जीवपर्यायाक्षरब्रह्मात्मकपुरुषरूपाम् । मे मम । परां पराख्याम् । प्रकृतिम् । विद्धि । अनन्ताण्डोत्पत्तिस्थितिप्रवृत्त्यर्थं मया मदीयैश्वर्यलेशं विश्राण्य प्रेरितत्वान्मच्छक्तिरूपां मदायत्तां जानीहीत्यर्थः । हे महाबाहो ! । यया पराप्रकृत्या । इदम् । जगच्चेतनाचेतनात्मकविश्वम् । धार्यते ॥ ३८ ॥ प्रकृतीति । इत्थममुना प्रकारेण । गीतायाम् । प्रकृतिद्वयम् । स्पष्टम् । ईरितम् । जडाजडमचेतनचेतनात्मकम् । तत्प्रकृतिद्वयम् । आधारस्य तदाश्रयस्य । कृष्णस्य । सृज्यमेवास्ति । प्रलये नामरूपविभागानर्हस्य प्रकृतिद्वयस्य सर्गकाले कृष्णस्य यन्नामरूपविभागार्हकरणत्वं तत्तस्य सृज्यत्वम् । तत्र जडायाः प्रकृतेः कार्यरूपेण सर्गः । अजडायाः प्रकृतेस्तदन्तःप्रेरणं सर्ग इति भावः ॥ ३९ ॥ इत्थं तत्सृष्ट्वा तदेवानुप्राविशत् । अनेन जीवेनात्मनाऽनुप्रविश्य

अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम् । जीवभूतां महाबाहो ! ययेदं धार्यते जगत् ॥ ३८ ॥
प्रकृतिद्वयमित्थं हि गीतायां स्पष्टमीरितम् । तत्सृज्यमेव कृष्णस्य चाधारस्य जडाजडम् ॥ ३९ ॥
पृथिव्यादिचतुष्कस्य धारकव्यापकत्वतः । आधारोऽस्ति यथाऽऽकाशः शक्तिद्वययुतः सदा ॥ ४० ॥
जायमाने पृथिव्यादेः सङ्कोचेऽस्य विकाशने । भजन्नपि स तद्भावं निर्लेपोऽस्ति स्वशक्तितः ॥ ४१ ॥
प्रकृतिद्वितयस्यायं धारकव्यापकत्वतः । हरिस्तथाऽस्ति चाधारः सर्वदैव शक्तितः ॥ ४२ ॥

नामरूपे व्याकरवाणि । तदनु त्वं ह्यप्रविष्टः प्रविष्ट इव भाव्यसे इत्यादिश्रुतिस्मृत्युदितं श्रीकृष्णस्य प्रकृतिद्वयसृज्यत्वमुक्त्वाऽथाक्षरं तमसी लीयते तमः परे देव एकी भवति । परमात्मा च सर्वेषामाधारः परमेश्वर इत्यादिश्रुतिस्मृत्युदितं तस्य तदाधारत्वं सदृष्टान्तमाह चतुर्भिः । पृथिवीति । यथा । सदा । शक्तिद्वययुतो धारकव्यापकत्वाख्या शक्तिद्वययुक्तः । आकाशः । पृथिव्यादिचतुष्कस्य पृथिव्यप्तेजोवायूनाम् । धारकव्यापकत्वतः सर्वदा धारकत्वेन व्यापकत्वेन चेत्यर्थः । आधार आश्रयः । अस्ति ॥ ४० ॥ जायमान इति । अस्या पृथिव्यादेः । सङ्कोचे । विकाशने च । जायमाने सत्यपि । स आकाशः । तद्भावं पृथिव्यादिभिः सह सङ्कोच विकाशभावम् । भजन्प्राप्नुवन्सन्नपि । स्वशक्तितः स्वसामर्थ्येन । निर्लेपस्तद्गतलेपवर्जितः । अस्ति ॥ ४१ ॥ प्रकृतीति । तथा । अयं धारकव्यापकत्वाख्यशक्तिद्वययुक्तः । हरिः । प्रकृतिद्वितयस्य जडाजडाख्यप्रकृतिद्वयस्य । धारकव्यापकत्वतः । स्वशक्तितः । सर्वदैव । आधारः । अस्ति । श्रीहरेरनन्तशक्तियुक्तत्वेऽपि स चिदाकाशाख्यस्वशक्त्या सकार्यप्रकृतिद्वयं सर्वदा धारयत्यन्तर्यामिरूपस्वशक्त्या तत्स्वरूपस्थितिप्रवृत्त्याद्यर्थमन्तर्व्याप्नोतीति भावः ॥ ४२ ॥

जायमान इति । अस्य प्रकृतिद्वयस्य । विकाशे । सङ्कोचे च । जायमाने सत्यपि । स श्रीहरिः । तौ सङ्कोचविकाशभावौ । भजन्सन्नपि । सर्वदा । अलिप्तस्तद्गतलेपवर्जितः । अस्ति । ततो हेतोः । सः । सर्वस्य स्वशरीरभूतसकार्यप्रकृतिद्वयस्य । आत्माऽऽधारः । श्रुतः श्रुतिभिर्वर्णितः । अस्ति । 'स वा अयमात्मा सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपति'रित्याद्याः श्रुतयः ॥ ४३ ॥ शरीरमिति । किञ्च । हे मुने ! । यस्य भगवतः । पृथिवी । शरीरम् । यस्य । अक्षरम् । शरीरम् । एवमाद्या एतत्प्रभृतिकाः । श्रुतयः अन्तर्यामिब्राह्मणादिश्रुतिवचनानि । अत्रास्मिन्नेवार्थे । प्रमाणं प्रमाणभूताः । भवन्ति । तथा च बृहदारण्योपनिषदि । 'यः पृथिव्यां तिष्ठन्पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयति स त आत्मान्तर्याम्यमृत' इत्याद्याः । सुबालोपनिषदि च । 'योऽक्षरमन्तरे सञ्चरन् यस्याक्षरं शरीरं यमक्षरं न वेदेत्याद्याः ॥४४॥ अन्नमिति । अन्नम् । ब्रह्म । मनः । ब्रह्म । इत्यादयः । एनेकशः । ब्रह्मविद्या अपि । एतमन्तर्यामित्वरूपमेव । अर्थम् । फलेन पर्यवसानेन । वदन्ति । अन्नादीनां वस्तुतः परब्रह्मत्वाभावेऽपि परब्रह्माधारत्वाच्छरीरशरीरिभावाचान्नादीनामप्यर्था-

जायमाने विकाशेऽस्य सङ्कोचे तौ भजन्नपि । अलिप्तः सर्वदा सोऽस्ति सर्वस्यात्मा ततः श्रुतः ॥ ४३ ॥ शरीरं
पृथिवी यस्य शरीरं यस्य चाक्षरम् । एवमाद्या भवन्त्यत्र प्रमाणं श्रुतयो मुने ! ॥ ४४ ॥ अन्नं ब्रह्म मनो ब्रह्मे-
त्यादयश्चाप्यनेकशः । ब्रह्मविद्या एवमेव वदन्त्यर्थं फलेन वै ॥ ४५ ॥ सर्वाधारश्च सर्वात्मा सर्वरूपस्ततः प्रभुः ।
पुरुषोत्तम एवासौ साक्षात्सेव्योऽस्ति वः सदा ॥ ४६ ॥ नराकृतिश्चैष एव स्वयं ब्रह्मपुरेश्वरः । अनन्तैश्वर्यसम्पन्नः
श्रुतिसङ्गीतसद्यशाः ॥ ४७ ॥ ईदृग्महिमवानेष भगवानिति वेदनम् । सम्यग्ज्ञानं मुक्तिहेतुरिति ज्ञेयं मुमुक्षुणा
॥ ४८ ॥ तच्छेषभूतान्यन्यानि साधनानि तु सन्ति हि । स्वतन्त्रत्वं तु नास्त्येव तेषां मुक्तिं प्रति ध्रुवम् ॥ ४९ ॥

त्परब्रह्मत्वमत्र फलशब्देनाभिधीयते । तथा च भृगुवल्लीश्रुतिः । भृगुर्वै वारुणिर्वरुणं पितरमित्यारभ्यान्नं ब्रह्मेतिव्यजानात् । प्राणो ब्रह्मेति व्यजानात् । मनो ब्रह्मेति व्यजानादित्यादिः ॥ ४५ ॥ सर्वेति । ततो हेतोः । प्रभुः । पुरुषोत्तमः साक्षाच्छ्रीकृष्ण एव । सर्वाधारः । सर्वात्मा सर्वान्तर्यामी । सर्वरूपः प्रकृतिद्वयस्य सकार्यस्य तच्छरीरत्वादन्तर्यामितया तस्य शरीरित्वात्सर्वरूपतयोपदिष्टः । अस्ति । असौ पुरुषोत्तमः । वो युष्माकम् । सदा । साक्षात्सेव्यः प्रत्यक्षतयोपासनीयः । अस्ति ॥ ४६ ॥ नरेति । नराकृतिः । एषः पुरुषोत्तम एव । स्वयम् । ब्रह्मपुरेश्वरः । अनन्तैश्वर्यसम्पन्नः । श्रुतिभिर्निगमैः संगीतं सत्सत्यं यशो यस्य स तथाभूतः । अस्तीति पूर्वेण सम्बन्धः ॥ ४७ ॥ ईदृगिति । एषः प्रत्यक्षः । भगवान् । ईदृग्महिमवानेवंविधानन्तमाहात्म्यः । अस्ति । इतीत्थम् । सम्यक् । वेदनम् । मुक्तिहेतुः । ज्ञानम् । अस्ति । इतीत्थम् । मुमुक्षुणा भक्तेन । ज्ञेयम् ॥ ४८ ॥ तदिति । अन्यानि । साधनानि तु । तच्छेषभूतान्येवंविधस्य मुक्तिहेतोर्ज्ञानस्याङ्गभूतानि । सन्ति । तेषां साधनानाम् । मुक्तिं प्रति । स्वतन्त्रत्वं स्वातन्त्र्येण हेतुत्वं तु । नास्त्येव । ध्रुवम् ॥ ४९ ॥

ईदृगिति । येषां भक्तानाम् । ईदृगेवंविधम् । ज्ञानम् । भवेत् । तथैव यथाज्ञानं तेन प्रकारेणैव । तदीक्षणं भगवतो दर्शनं च । भवेत् । ते । भक्ताः । पूर्णज्ञानिनः । भवन्ति । तेषां पूर्णज्ञानिभक्तानाम् । किञ्चन किमपि । न्यूनमपूर्णत्वम् । नास्ति ॥ ५० ॥ इतीति । इत्यमुना प्रकारेण । उक्तः श्रीहरिणाभिहितः । सः । साधुर्मुक्तानन्दमुनिः । पुनर्भूयः । तं स्वमहिमानं परोक्षतया वदन्तम् । हरिकृष्णम् । उवाच । हे हरे ! । यस्य भक्तस्य । ईदृगेवंविधम् । ज्ञानं त्वत्स्वरूप-वेदनं तु । स्यात् । चेद्यदि । तथाज्ञानसदृशम् । दर्शनं तु । न स्यात् । तर्हीत्युत्तरेण सम्बन्धः ॥ ५१ ॥ तर्हीति । हे प्रभो ! । तदा । स भक्तस्त्वदुपासको जनः । पूर्णः । स्यात् । अथवा । पूर्णकल्पः । पूर्णादीषन्न्यूनः । स्यात् । तमेवं पृच्छन्तं मुक्तानन्दमुनिम् । जगत्स्वामी श्रीहरिः । प्रोवाच । हे मुने ! । स उक्त-विधज्ञानवान् संस्तथाऽदर्शको भक्तः । पूर्णकल्पः । ईयताम् । ईषदपूर्णो ज्ञेय इत्यर्थः ॥ ५२ ॥ एतदेव दृष्टान्तेन द्रढयति द्वाभ्याम् । गर्भेति । यथा । यः । पुमान् । तमसाऽन्धकारेण । पिहितान्याच्छादितानि । गर्भागारस्थवस्तून्यपवरकावस्थितपदार्थान् । त्वचा त्वगिन्द्रियेण । जानन्सन्नपि केवलं स्पर्शमात्रेण विदन्नपि । स पुमान् । साक्षाद्द्रष्टा ।

ईदृग्ज्ञानं भवेद्येषां तथैव च तदीक्षणम् । ते पूर्णज्ञानिनो भक्तास्तेषां न्यूनं न किञ्चन ॥५०॥ इत्युक्तः स पुनः साधु-र्हरिकृष्णमुवाच तम् । ईदृग्ज्ञानं तु यस्य स्याद्दर्शनं तु तथा न चेत् ॥५१॥ तर्हि भक्तः स पूर्णः स्यात्पूर्णकल्पोऽथ-वा प्रभो ! । तं प्रोवाच जगत्स्वामी पूर्णकल्पः स ईयताम् ॥ ५२ ॥ गर्भागारस्थवन्तूनि तमसाऽपि हि तानि यः । त्वचा जानन्नपि पुमान साक्षाद्द्रष्टा यथा न सः ॥ ५३ ॥ तथा भक्तोऽनुमानेन विदन्नैश्वर्यमीशितुः । न पूर्णः कथ्यते सद्भिः क्वचित्संशयसम्भवात् ॥ ५४ ॥ एवं विधस्यापि यस्य निश्चयः स्याद्दृढः प्रभुः । ऐश्वर्यमस्त्येव सर्वं हरौ नास्त्यत्र संशयः ॥ ५५ ॥ किन्त्वमौ स्वेच्छया स्वामी न मां दर्शयते हि तत् । ईच्छेदृश्येवास्य नूनमिति यो वेत्ति तत्त्वतः ॥५६॥ सोऽपि ज्ञानी पूर्ण इति ज्ञातव्यो नात्र संशयः । तन्निश्चयः प्रसन्नो हि हरिस्तद्दर्शयत्यरम् ॥ ५७ ॥

न भवति ॥ ५३ ॥ तथेति । तथा । भक्तः । ईशितुः सर्वनियन्तुः श्रीहरेः । ऐश्वर्यम् । अनुमानेनानुमितिजन्यज्ञानेन । विदन् जानन्सन्नपि । क्वचित् । संशय-सम्भवाद्धेतोः । सद्भिर्भगवदेकान्तिकसाधुभिः । पूर्णः । न कथ्यते ॥ ५४ ॥ एवमिति । एवंविधस्योक्तविधापूर्णतायुक्तस्यापि । यस्य भक्तस्य । प्रभोः । निश्चयः । दृढः । स्यात् । दृढनिश्चयं प्रपञ्चयति सार्द्धेन । हरौ । सर्वम् । ऐश्वर्यम् । अस्त्येव । अत्र । संशयः । नास्ति ॥ ५५ ॥ किंत्विति । किन्तु । असौ । स्वामी । श्रीहरिः । तत्स्वस्थमैश्वर्यम् । स्वेच्छया । माम् । न दर्शयते । हि । अस्य हरेः । ईदृश्येवंविधा । इच्छैवास्ति । नूनमेतन्निश्चितम् । इतीत्थम् । यो भक्तः । तत्त्वतो याथार्थ्येन । वेत्ति । स इत्युत्तरेण सम्बन्धः ॥ ५६ ॥ स इति । स भक्तोऽपि । पूर्णः । ज्ञानी । अस्ति । इति । ज्ञातव्यः । अत्र । संशयः । नास्ति । हि यतः । तन्निश्चयप्रसन्न एवंविधेन भक्तदृढनिश्चयेन प्रसन्नतां प्राप्तः । हरिः । तत्स्वैश्वर्यम् । अरं शीघ्रमेव । दर्शयति तं तद्दर्शयते इत्यर्थः ॥ ५७ ॥

ईदृश इति । ईदृशः । ज्ञानिभक्तः । श्रीकृष्णेन । अर्जुनं प्रति । मम । आत्मैव । इतीत्थम् । गदितः कथितः । स ज्ञानिभक्त एव । अनन्यभक्त एकान्तिकभक्तः । ज्ञेयः । तथा च भगवद्गीतायाम् । 'ज्ञानी त्वात्मैव मे मत'मिति ॥५८॥ ईदृगिति । ईदृक्ज्ञानविहिनस्य । अहम् । ब्रह्मास्मि । इत्येवम् । मानिनः केवलं वाङ्मात्रेण ब्रुवत इत्यर्थः ब्रह्मकुद्दालकस्य । शिश्नोदरपरायणत्वेन तत्पोषणायाहं ब्रह्मास्मीति वाङ्मात्रेणोक्त्वा सर्वत्र ब्रह्मैव पूर्णं नान्यदिति चोक्त्वा भगवत्तदवतारखण्डकत्वात्परंब्रह्म कुद्दालकेनेवोत्खनयत इत्यर्थः । पुरुषस्य । निरयेतरा नरकयातना भिन्ना । गतिः । नास्ति । किन्तु तस्याकल्पं निरययातनाभोग एव तज्ज्ञानफलप्राप्तिरूपः स्यादित्यर्थः ॥ ५९ ॥ पीयूषमिति । इत्येवंविधम् । प्रीत्युक्तं प्रसन्नतयोक्तम् । स्वदेशिकस्य स्वगुरोः श्रीहरेः । पीयूषममृतसदृशम् । वचनम् । पीत्वा । सदसि । सताम् । मतः । सर्वसाधुसंमान्य इत्यर्थः । स मुक्तानन्दमुनिः । परमम् । संतोषम् । अवाप । अपरे । ये । तद्भक्ताः । मुनिगृहिणः । ते । सर्वे चापि । परमं सन्तोषमवापुः ॥ ६० ॥ मुक्तिहेतुं स्वस्वरूपज्ञानं माहात्म्ययुक् युतः । तद्दर्शनयुतं प्राह स हरिस्तद्ददातु मे ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्स्नुरघु-

ईदृशो ज्ञानिभक्तो हि श्रीकृष्णेनार्जुनं प्रति । ममात्मैवेति गदितोऽनन्यभक्तः स एव च ॥ ५८ ॥ ईदृग्ज्ञानविहिनस्य ब्रह्माहमिति मानिनः । ब्रह्मकुद्दालकस्यास्ति न गतिर्निरयेतरा ॥ ५९ ॥ पीयूषं वचनमिति स्वदेशिकस्य प्रीत्युक्तं सदसि सतां मतः स पीत्वा । सन्तोषं परममवाप चापरे ये तद्भक्ता मुनिगृहिणश्च तेऽपि सर्वे ॥ ६० ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते शताधिकपञ्चदशस्तरङ्गः ॥ ११५ ॥ ७ ॥

शकाब्दे विक्रमार्कस्य नगाश्ववसुभूमिते । सहसः शुक्लपञ्चम्यां वचोऽमृतमिदं हरेः ॥ १ ॥
लौहग्रामे तत्र सूरनृपतेर्मन्दिरे प्रभुः । भक्तव्रजैः परिवृतो मञ्चोत्तम उपाविशत् ॥ २ ॥
तं श्वेतवसनं मुक्तानन्दोऽपृच्छत्सदग्रणीः । स एव सन् स्वभावो हि परदोषाग्रहो यतः ॥ ३ ॥

वीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां शताधिकपञ्चदशस्तरङ्गः ॥ ११५ ॥ ७ ॥

कृत्वा मुक्तानन्दमुनेः प्रश्नोत्तरमादितः । द्विस्ततस्तु स्वयं प्रश्नौ दृष्ट्वा कृत्वा तदुत्तरे ॥ १ ॥ कपिलानन्दप्रश्नस्य कृत्वोत्तरमथो हरिः । पट्कृत्वस्तु ततः प्रश्नान्पृष्ट्वा साधून्स्वयं शुभान् ॥ २ ॥ अजानतः सतस्तेषामुत्तराण्यपि च स्वयम् । आनन्दयन्नञ्जसैव चकारेत्युक्तमष्टमे ॥ ३ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८७७) सहसो मार्गशीर्षमासस्य । शुक्लपञ्चम्यां शुक्लपक्षीयपञ्चमीतिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ लौहेति । तत्र तिथौ । लोहग्रामे । सूरनृपतेः । मन्दिरे दुर्गान्तर्वर्त्तिनि भवने । मञ्चोत्तमे स्वास्तृते श्रेष्ठे पर्यङ्कासने । भक्तव्रजैर्नानादेशागतैस्त्यागिगृहिस्वभक्तवृन्दैः । परिवृतः सभायां संवेष्टितः । प्रभुः श्रीहरिः । उपाविशत्सान्ध्यभगवन्नीराजनान्ते उपविवेश ॥ २ ॥ तमिति । श्वेतवसनं परिधृतसकलधवलाम्बरम् । तं श्रीहरिम् । सदग्रणीः सकलसाध्वग्रग्यः । मुक्तानन्दो मुनिः ।

अपृच्छत् । हे हरे ! । यतो येन । स्वभावेन । परदोषाग्रहः स्वेतरभवद्भक्तदोषस्याग्रहणम् । भवेत् । सः । स्वभाव एव । सन्नत्युत्तमः । भवति ॥ ३ ॥ तत इति । ततो हेतोः । अल्पज्ञस्याल्पमतेस्त्वद्भक्तस्य तु । अन्यदोषग्रहणम् । सम्भवेत् । बहुविदो बहुबुद्धेरपि । सतो भगवदेकान्तिकसाधोः । क्वापि कस्मिंश्चित्समये । एतत् परदोषग्रहणम् । दृश्यते । तत्कथं तस्मिन्नेतत्कथं घटेत । यदल्पबुद्धयोऽन्यदोषान् गृह्णन्ति तत्तु तेषां मत्यभावात्सत्स्वभावरहितत्वाच्च युक्तमेव किन्तु ये बहुबुद्धियुक्ताः तेषां तु मतिप्राचुर्यात्सत्स्वभावयुक्तत्वा परदोषग्रहणमयुक्तमथापि कदाचित्तेषां तद्दृश्यते तत्र को हेतुरस्तीति भावः ॥ ४ ॥ 'सम्पृष्ट इत्थं मुनिना मुक्तानन्देन सद्गुरुः । स कृष्णो हर्षयंस्तं च जगादान्यान्निजानि'ति । बहुविदिति । बहुवित् । यः । साधुः । पुमान् । अस्ति । स साधुस्तु । स्वनिष्ठान् । परनिष्ठांश्च । सर्वशः सर्वान् । दोषान् । तथा । गुणान् । यथावत् । वेत्ति ॥ ५ ॥ तत इति । ततो हेतोः । तस्य तथाविधस्य साधोः । स्वनिष्ठदोषेषु । वैरिधीः शत्रुमतिः । जायते । तन्निवारणयत्नं दोषनिवर्त्तनप्रयासं चापि । यथाशक्ति करोति ॥ ६ ॥ तादृगिति । स साधुः । यदा । तादृग्दोषान् येषु स्वस्य वैरिधीस्तथाविधदोषान् । अन्यत्रान्येषु ।

ततोऽन्यदोषग्रहणमल्पज्ञस्य तु सम्भवेत् । सतो बहुविदोऽप्येतद् दृश्यते क्वापि तत्कथम् ॥ ४ ॥
श्रीहरिरुवाच–बहुविद्यः पुमान्साधुः स तु दोषान् गुणांस्तथा । स्वनिष्ठान् परनिष्ठांश्च यथावद्वेत्ति सर्वशः
॥ ५ ॥ ततः स्वनिष्ठदोषेषु जायते तस्य वैरिधीः । तन्निवारणयत्नं च यथाशक्ति करोत्यपि ॥ ६ ॥
तादृग्दोषांश्च सोऽन्यत्र यदा सत्स्वपि पश्यति । तदा तेष्वरुचिस्तस्य जायते हृदि नान्यथा ॥ ७ ॥
अल्पज्ञो यः स तु पुमानपश्यन् दोषमात्मनः । मौर्ख्येणैवान्यगं दोषं गृह्णातीत्यबुधो मतः ॥ ८ ॥
इति प्रश्नसमाधानं साधोस्तस्य विधाय सः । साधून् यवीयसोऽपृच्छत्प्रश्नान् कुर्वंस्तदुत्तरम् ॥ ९ ॥
कामक्रोधादयः सन्ति देहिनां येऽन्तरारयः । तेषां वेगस्य तीव्रत्वं मन्दत्वं च यदीक्ष्यते ॥ १० ॥

सत्सु साधुष्वपि । पश्यति । तदा । तस्य साधोः । हृदि मनसि । तेषु दोषवत्सु साधुषु । अरुचिरप्रीतिः । जायते । अन्यथाऽन्यसत्सु तथाविधदोषाभावे सति तु । न जायते ॥ ७ ॥ अल्पज्ञ इति । अल्पज्ञः । यः । पुमान्साधुरस्ति । स तु । आत्मनः स्वस्य । दोषम् । अपश्यन्सन् मौर्ख्येण स्वमौढ्येनैव । अन्यगं स्वेतरसाधुनिष्ठम् । दोषम् । गृह्णाति । इति हेतोः । अबुधोऽज्ञः । मतः । अस्यायं भावः । स्वनिष्ठबहुदोषान् एकदोषवदप्यपश्यन्नन्त्यजश्च सन्नन्यस्य बहूनपि गुणानगणयित्वा अल्पमात्रं देहिकादिकश्वनतद्दोषमुद्दिश्य तदगुणानेवोपादत्ते तदेवास्यावुधत्वमिति ॥८॥ इतीति । इत्यमुना प्रकारेण । साधोः । तस्य मुक्तानन्दमुनेः । प्रश्नसमाधानम् । विधाय । स श्रीहरिः । तदुत्तरं स्वपृष्टप्रश्नोत्तरम् । कुर्वन्सन् । यवीयसो वयसा कनिष्ठान् । साधुन् । प्रश्नान् । अपृच्छत् ॥ ९ ॥ कामेति । देहिनां जीवानाम् । कामक्रोधादयः । ये । अन्तरारयोऽन्तःशत्रवः । सन्ति । तेषां कामक्रोधाद्यन्तरारीणाम् । वेगस्य । यत् । तीव्रत्वम् । मन्दत्वं च । ईक्ष्यते । तदित्युत्तरेणान्वयः ॥ १० ॥

तदिति । तत्तेषां वेगस्य तीव्रत्वं मन्दत्वं च । अवस्थावशादेव । भवति । इतीत्थम् । अनुभूयते । एतदेव दर्शयति । बाल्यवार्द्धकयोः । मान्द्यं तद्वेगस्य मन्दत्वम् । तथा । यौवने । तीव्रत्वं तद्वेगस्य तीक्ष्णत्वम् । भवति ॥ ११ ॥ एवमिति । एवं सत्यपि । तेषां कामादीनाम् । वेगस्येति शेषः । यौवने । यत् । तीव्रत्वम् । अस्ति । तत्तीव्रत्वम् । सद्विचारेण । मन्दत्वम् । प्राप्नुयात् । किंवा । नैव प्राप्नुयात् । उच्यतां तत्कथ्यताम् ॥ १२ ॥ इतीति । इत्यमुना प्रकारेण । पृष्ट्वा । स्वामी श्रीहरिः । स्वयमेव । तदुत्तरं स्वपृष्टप्रश्नप्रतिवचनम् । तान् साधून् । उवाच । हे साधवः ! । विचारेणापि । तेषां कामाद्यन्तरारीणाम् । मन्दत्वम् । स्यात् । तं विचारम् । वो युष्मभ्यम् । वदामि ॥ १३ ॥ बाल्येति । बाल्यवार्द्धकयोः । आहारलाघवादन्नाशनाल्पत्वाद्धेतोः । तेषां कामादीनाम् । माद्यम् । अस्ति । तारुण्ये । आहारवृद्ध्या हेतुना । तेषाम् । तीव्रत्वं च । अस्ति । निश्चितमेव ॥१४॥ एवमिति । एवममुना प्रकारेण । विचार्य । यः साधुः । सर्वथा । आहारलाघवं तारुण्येऽप्यन्नाशनाल्पत्वम् । कुर्यात् । आत्मविचारं च । कुर्यात् । तस्य साधोः । तन्मन्दता यौवनेऽपि कामादिमन्दत्वम् । भवेत् ॥ १५ ॥ पुनरपि तत्तीव्रता

तत्त्ववस्थावशादेव भवतीत्यनुभूयते । बाल्यवार्द्धकयोर्मान्द्यं तीव्रत्वं यौवने तथा ॥११॥ एवं सत्यपि तीव्रत्वं तेषां यद्यौवनेऽस्ति तत् । सद्विचारेण मन्दत्वं प्राप्नुयाद्वा न वोच्यताम् ॥१२॥ इति पृष्ट्वा स्वयं स्वामी तदुत्तरमुवाच तान् । विचारेणापि मन्दत्वं स्यात्तेषां तं वदामि वः ॥ १३ ॥ बाल्यवार्द्धक्योस्तेषां मान्द्यमाहारलाघवात् । आहारवृद्ध्या तारुण्ये तीव्रत्वं चास्ति निश्चितम् ॥ १४ ॥ एवं विचार्य यः कुर्यात्सर्वथाऽऽहारलाघवम् । कुर्यादात्मविचारं च तस्य तन्मन्दता भवेत् ॥१५॥ आत्मैवास्मीति बुद्ध्या स्वमवधीरयतो वपुः । सत्सङ्गं कुर्वतस्तस्य नश्येत् तत्तीव्रता ध्रुवम् ॥ १६ ॥ इति प्रश्नोत्तरं दत्त्वा पप्रच्छ पुनरप्यसौ । व्यसनानि भवन्तीह बहून्यपि वपुष्मताम् ॥ १७ ॥ भङ्गायाः कस्यचिन्माध्व्या अहिफेनस्य कस्यचित् । द्यूतादेः कस्यचित्पुंसो व्यसनं जायते भृशम् ॥ १८ ॥ प्रारब्धकर्मवशतो जायते तन्नृणां किमु । क्रियमाणं कर्म वेति पृष्ट्वा प्राह तदुत्तरम् ॥ १९ ॥

निवृत्तिप्रकारमाह । आत्मेति । अहम् । आत्मैव । अस्मि । इत्येवंविधया । बुद्ध्या । स्वं स्वकीयम् । वपुर्देहम् । अवधीरयतः क्षुत्पिपासा–शीतोष्ण–वात--वर्षसहनपूर्वम् अनादृतवतः । सत्सङ्गं भगवदेकान्तिकसाधुसमागमम् । कुर्वतः । तस्य साधोः । तत्तीव्रता कामादितीव्रत्वम् । नश्येत् । ध्रुवम् ॥ १६ ॥ इतीति । इत्यमुना प्रकारेण । प्रश्नोत्तरम् । दत्त्वा । असौ श्रीहरिः । पुनर्भूयोऽपि । पप्रच्छ । हे साधवः ! । इह लोके । वपुष्मतां देहिनाम् । स्थितानामिति शेषः । बहून्यप्यनेकविधान्येव । व्यसनानि स्वयमेव निर्दिशति । भङ्गाया इति । कस्यचित् । पुंसः । भङ्गाया भङ्गापानस्य । व्यसनम् । कस्यचित् । पुंसः । माध्व्याः सुरायाः पानस्य । व्यसनम् । कस्यचित् । पुंसः । अहिफेनस्य । व्यसनम् । कस्यचित् । पुंसः । द्यूतादेः । व्यसनं च । भृशम् । जायते ॥१८॥ प्रारब्धेति । तद्व्यसनम् । नृणाम् । प्रारब्धकर्मवशतो यद्भोगायायं देहस्तथाविधपूर्वकर्माधीनतया । जायते । किमु । अथवा । तत् । क्रियमाणम् । कर्म । इत्यमुना प्रकारेण । पृष्ट्वा । तदुत्तरम् । प्राह स्वयमेव जगाद ॥ १९ ॥

एतदिति । हे साधवः ! । एतद्व्यसनं तु । पुंसः । कुसङ्गतो दुर्जनपुरुषप्रसङ्गात् । क्रियमाणम् । भवेत् । अतो हेतोः । आगमापायि । ज्ञेयम् । सज्जनैः । हातुं त्यक्तुम् । शक्यं च । ज्ञेयम् ॥ २० ॥ सज्जनानामेतत्त्यागशक्यतां स्पष्टमाह । श्रद्धालुनेति । श्रद्धालुना । आग्रहवता । धीरेण धैर्यगुणयुक्तेन सज्जनेन । दोषबुध्या । एतद्व्यसनम् । शनैरेव । त्यज्यते । अश्रद्धप्रमादिना श्रद्धावर्जितेनाग्रहवर्जितेन धैर्यवर्जितेन चेत्यर्थः । न तु नैव त्यज्यते । यतः श्रद्धाल्वादिगुणवता हातुं शक्यतेऽत एतत्क्रियमाणमेव न प्रारब्धजन्यं तस्य तु तेनापि हातुमशक्यत्वादिति भावः ॥ २१ ॥ अथेति । अथानन्तरम् । कपिलानन्दः साधुः । कृताननतिः कृत-प्रणामः सन् । तं श्रीहरिम् । अपृच्छत् । हे प्रभो ! । स्वस्य । प्राक्कर्मजः । दुःस्वभावोऽव्यक्तकामलोभाद्यासक्तिरूपा दुष्टारुचिः । कथम् । ज्ञेयः । अयं मम प्राक्कर्मजन्यो दुःस्वभाव इति कथं बोध्य इत्यर्थः ॥२२॥ कथमिति । अद्यतनः क्रियमाणकर्मजन्यो दुःस्वभावः । कथं वा । ज्ञेयः । इत्यमुना प्रकारेण । पृष्टः कपिला-नन्दमुनिनानुयुक्तः । प्रभुः श्रीहरिः । अब्रवीत् । हे मुने ! । प्राक्कर्मजः । आधुनिकश्च । स दुःस्वभावस्तु । मनीषया विवेकवत्या स्वबुध्या । लक्ष्यो ज्ञेयः ॥ २३ ॥

एतत्तु क्रियामाणं हि भवेत्पुंसः कुसङ्गतः । आगमापाय्यतो ज्ञेयं शक्यं हातुं च सज्जनैः ॥ २० ॥
श्रद्धालुनाऽऽग्रहवता धीरेणैतच्छनैः शनैः । त्यज्यते दोषबुद्ध्यैव न त्वश्रद्धप्रमादिना ॥ २१ ॥
अथ तं कपिलानन्दोऽपृच्छत्साधुः कृताननतिः । प्राक्कर्मजो दुःस्वभावो ज्ञेयः स्वस्य कथं प्रभो ! ॥ २२ ॥
कथं वाऽद्यतनो ज्ञेय इति पृष्टोऽब्रवीत्प्रभुः । प्राक्कर्मजश्चाधुनिकः स तु लक्ष्यो मनीषया ॥ २३ ॥
सत्सङ्गेन तत्त्यागोपायदाढर्येन यः क्षयम् । शनैः सम्प्राप्नुयात्सोऽसौ ज्ञेयः प्राक्कर्मसम्भवः ॥ २४ ॥
यः सत्सङ्गेन तत्त्यागोपायाल्प्येनापयाति सः । ज्ञेय आधुनिकः साधो ! दुःस्वभावः कुसङ्गजः ॥ २५ ॥
इति प्रश्नोत्तरं दत्त्वा पुनः पप्रच्छ तान् प्रभुः । चाञ्चल्यमिन्द्रियाणां यत्सद्भिस्तज्जेयमञ्जसा ॥ २६ ॥

सदिति । यो दुःस्वभावः । सत्सङ्गेन भगवदेकान्तिकसाधुसमागमेन । तत्त्यागोपायदार्ढ्येन तत्परित्यागोपायानां सुदृढतया सम्पादनेन च । शनैः । क्षयम् । सम्प्रा-प्नुयात् । सोऽसौ दुःस्वभावः । प्राक्कर्मसम्भवः । ज्ञेयः ॥ २४ ॥ य इति । हे साधो ! । यो दुःस्वभावः । सत्सङ्गेन । तत्त्यागोपायाल्प्येन किञ्चित्सम्पादित-तत्त्यागोपायेन च । अपयाति सद्यो निवर्त्तते । सः । दुःस्वभावः । कुसङ्गजो दुर्जनप्रसङ्गजातः । अत एव । आधुनिकः । ज्ञेयः ॥ २५ ॥ इतीति । इत्यमुना प्रकारेण । प्रश्नोत्तरं कपिलानन्दमुनिकृतप्रश्नप्रतिवचनम् । दत्त्वा । पुनः । प्रभुः श्रीहरिः । तान्कनीयसः साधून् । पप्रच्छ । हे साधवः ! । इन्द्रियाणां चक्षुरादीनाम् । यत् । चाञ्चल्यम् । तत् । सद्भिर्मदाश्रितैः साधुभिः । अञ्जसा तत्त्वतस्तूर्णं वा । जेयं स्थिरं विधेयम् । मायिकेभ्यस्तत्तद्विषयेभ्यः प्रत्याहाराभ्यासेन यथा तेषु तानि न प्रवर्त्तेरंस्तथा तत्स्थिरीकरणमत्र जयशब्देनाभिहितम् ॥ २६ ॥

अत इति । अतो हेतोः । चलानां स्वस्वविषयेषु स्वभावतश्चञ्चलानाम् । सर्वेषाम् । इन्द्रियाणाम् । स्थैर्योपायान् । मुमुक्षुभक्तजनानाम् । हितायैव । मे मह्यम् । पृथक् । पृथक् । वदत कथयत ॥२७॥ इतीति । इत्यमुना प्रकारेण । पृष्ट्वा तान् । सतः । स्वानन्दर्शिन उत्तरमुक्त्वा केवलं स्वास्यपद्मसमीक्षकान् । दृष्ट्वा । स श्रीहरिः । प्रहसन्सन् । स्वयमेव । उत्तरम् । कथयामास ॥ २८ ॥ तत्रादौ चक्षुरिन्द्रियस्थैर्योपायमाह चतुर्भिः । नासेति । हे साधवः ! । यः साधः । आत्मनः स्वस्य । दृग्वृत्तिं चक्षुरिन्द्रियवृत्तिम् । नासाग्रे एव । स्थिराम् । कुर्यात् । इतस्ततश्च । नेक्षेत । तथाविध एवं नियमितचक्षुर्वृत्तिः सन् । भक्तिं भगवतः श्रवणादि नवविध-भजनम् । कुर्यात् ॥ २९ ॥ अथवेति । अथवा । निर्निमेषे मेषोन्मेषवर्जिते अक्षिणी यस्य सः । स्थिरं निश्चलं गात्रमङ्गं यस्य स तथाभूतः सन् । एकम् । वस्तु यं कमप्येकं पदार्थमेव । घटिकामेकघटिकापर्यन्तम् । अथवा । मुहूर्तं घटिकाद्वयपर्यन्तम् । यथाबलम् । अवलोकयेत् ॥ ३० ॥ नेत्रेति । यावत् । नेत्रदाहः । भवेत् । नेत्रतः सकाशात् । अश्रुधारा च । भवेत् । तावत्तावत्कालपर्यन्तमेव । अनाकुलः सन् । एवं पूर्वोक्तप्रकारेण । मुहुः पुनः पुनः । समीक्षेत ॥ ३१ ॥ एवमिति ।

अतश्चलानां सर्वेषामिन्द्रियाणां पृथक्पृथक् । स्थैर्योपायान्वदत मे हितायैव मुमुक्षताम् ॥ २७ ॥ इति पृष्टा सतस्तांश्च दृष्ट्वा स्वाननदर्शिनः । प्रहसन्कथयामास स्वयमेव स उत्तरम् ॥२८॥ नासाग्र एव यः कुर्यात् स्थिरां दृग्वृत्तिमात्मनः । इतस्ततश्च नेक्षेत भक्तिं कुर्यात्तथाविधः ॥ २९ ॥ अथवा निर्निमेषाक्षः स्थिरगात्रोऽवलोकयन् । वस्त्वेकमेव घटिकां मुहूर्तं वा यथाबलम् ॥ ३० ॥ नेत्रदाहो भवेद्यावदश्रुधारा च नेत्रतः । तावदेव समीक्षेत मुहुरेवमनाकुलः ॥ ३१ ॥ एवं प्रतिदिनं प्रीत्या कुर्वतोऽभ्यासमस्य हि । चक्षुस्त्यजति चाञ्चल्यं वशं भवति सर्वथा ॥ ३२ ॥ सुगन्धलाभ आह्लादो जायतेऽथ नासया । अरुचिः पूतिगन्धाप्ताविति स्वाभाविकी स्थितिः ॥ ३३ ॥ तत्र खेदे जायमाने दुर्गन्धाप्तौ तु धीमता । स्वाङ्गधातुमलादीनि विभाव्यानि स्वरूपतः ॥ ३४ ॥ एवं भावयतः पुंसो नासा चाञ्चल्यमुज्झति । अथ श्रवणचाञ्चल्यजयोपायं वदामि वः ॥ ३५ ॥

एवममुना प्रकारेण । प्रतिदिनम् । प्रीत्या स्नेहेन । अभ्यासम् । कुर्वतः । अस्य साधोः । चक्षुः । चाञ्चल्यम् । त्यजति । सर्वथा । वशे । भवति जायते ॥ ३२ ॥ अथ घ्राणेन्द्रियस्थैर्योपायमाह सार्द्धद्वाभ्याम् । सुगन्धेति । नासया घ्राणेन्द्रियेण । सुगन्धलाभे शोभने कुन्दकुसुमादिसौरभ्योपलम्भे सति । आह्लादो मनस्यानन्दः । जायते । अथ च । नासया । पूतिगन्धाप्तौ दुर्गन्धोपलम्भे सति । अरुचिर्मनस्यप्रीति । जायते । इत्येवंविधा । स्वाभाविकी । स्थितिः ॥ ३३ ॥ तत्रेति । तत्र तयोर्मध्ये । दुर्गन्धाप्तौ । खेदे । जायमाने सति । धीमता साधुना । स्वाङ्गधातुमलादीनि स्वशरीरभृतमलमूत्रस्नायुकफशिंघाणपूयादीनि । स्वरूपतस्तत्तत्स्वरूपेण । विभाव्यानि विचार्याणि । तु शब्देन तत्र त्वङ्मासमज्जास्थिस्नाय्विति क्ष्माऽस्ति पञ्चधेत्युक्तेः सुगन्धाधारायाः पृथिव्या अपि देहे त्वगादिरूपेण सत्त्वात् सुगन्धवन्ति वस्तून्यपि स्वरूपतस्त्वगादिरूपेण विभाव्यानीत्यपि ज्ञेयम् ॥ ३४ ॥ एवमिति । एवममुना प्रकारेण । भावयतः प्रतिदिनं विचारयतः । पुंसः साधोः ।

नासा घ्राणेन्द्रियम् । चाञ्चल्यं चपलत्वम् । उज्झति त्यजति । अथानन्तरम् । श्रवणचाञ्चल्यजयोपायम् । युष्मभ्यम् । वदामि ॥ ३५ ॥ ग्राम्येति । इतस्ततः । ग्राम्यवार्त्तारतां ग्राम्यवार्त्ताश्रवणासक्ताम् । श्रुतिवृर्त्ति श्रवणेन्द्रियवृत्तिम् । यत्नात् । समाकृष्य दोपेक्षणपूर्वं प्रत्याहृत्य । सा श्रुतिवृत्तिः । कृष्णवार्त्तासु । इमाः कृष्णकथानामुपलक्षणम् । मुहुः । दृढं यथा तथा । योज्या ॥ ३६ ॥ निद्रेति । तत्र कृष्णवार्त्ताश्रवणे । निद्रालस्योदये निद्राया आलस्यस्य च सम्भवे सति । पीठात्स्वासनात् । सत्वरं शीघ्रम् । उत्थाय । यः साधुः । एकेन । पदा । तिष्ठन् सन् । उच्चैरुच्चस्वरेण । हरिम् । कीर्त्तयेत् तन्नामोच्चारणं कुर्यात् ॥ ३७ ॥ पुंस इति । श्रद्धावतः श्रीकृष्णवार्त्ताश्रवणनामकीर्त्तनादौ श्रद्धायुक्तस्य । तस्य साधोः । पुंसः । श्रवणेन्द्रियम् । चाञ्चल्यम् । विहाय । अल्पेन । कालेन । आत्मनः । वशे । वर्त्तेत ॥३८॥ अथ त्वगिन्द्रियस्थैर्योपायमाह । ज्ञात्वेति । ज्ञात्वा ज्ञात्वा विबुध्य विबुध्यैव । शितोष्णसहनम् । भुवि अनास्तृते भूतले । शयनात् । वपुशः स्वशरीरस्य । अनादराच्च । त्वक् त्वगिन्द्रियमपि । चाञ्चल्यम् । जहाति ॥ ३९ ॥ अथ पाणीन्द्रियस्थैर्योपायमाह पङ्भिः । करेति । करचाञ्चल्यहानाय । श्वासोच्छ्वसमनु

ग्राम्यवार्त्तारतां यत्नाच्छ्रुतिवृत्तिमितस्ततः । समाकृष्य मुहुर्योज्या कृष्णवार्त्तासु सा दृढम् ॥ ३६ ॥ निद्रालस्योदये तत्र पीठादुत्थाय सत्वरम् । तिष्ठन् पदैकेन हरिमुच्चैः सङ्कीर्त्तयेच्च यः ॥ ३७ ॥ पुंसः श्रद्धावतस्तस्य चाञ्चल्यं श्रवणेन्द्रियम् । विहायाल्पेन कालेन वर्तेत वश आत्मनः ॥३८॥ ज्ञात्वा ज्ञात्वैव शीतोष्णसहनाच्छयनाद्भुवि । अनादराच्च वपुषश्चाञ्चल्यं त्वग्जहात्यपि ॥ ३९ ॥ करचाञ्चल्यहानाय श्वासोच्छ्वासमनु प्रभोः । नामोच्चार्यैकैकमणिराकृष्यस्तज्जपस्रजः ॥ ४० ॥ जपे त्वरा न कर्त्तव्या मण्याकर्षः शनैः शनैः । यथाविधि विधातव्यो भक्तेन भगवन्मनोः ॥ ४१ ॥ केचिद्वदन्ति मनसा भृशं नामग्रहो भवेत् । न तथा जिह्वयेत्येतन्मतं मम मतं न हि ॥ ४२ ॥ गृह्यन्ते कृष्णनामानि जपे यावन्ति जिह्वया । तावन्त्येवापि गृह्यन्ते मनसा नाधिकानि तु ॥४३॥ अतः सहैव मनसा जिह्वयोच्चार्य मापतेः । स्पष्टं नामोच्चार्य माला दोष्णाऽऽवर्त्या शनैः शनैः ॥ ४४ ॥

प्रतिश्वासोच्छासम् । प्रभोः । नाम । उच्चार्य । तज्जपस्रजो भगवन्नाममन्त्रजपार्थकमालिकायाः । एकैकमणिः । आकृष्यः ॥ ४० ॥ जप इति । भगवन्मनोः । जपे । भक्तेन । त्वरा शीघ्रता । न कर्त्तव्या । मण्याकर्षो जपमालामणिकाकर्षणम् । यथाविधि जपविधिशास्त्रीयप्रकारमनतिक्रम्य । शनैः । शनैः । विधातव्यः ॥ ४१ ॥ केचिदिति । केचित् । मनसा । नामग्रहो भगवन्नामोच्चारणम् । भृशम् । यथा । भवेत् । तथा । जिह्वया । न भवेत् । इतीत्थम् । वदन्ति । एतत् । मतम् । मम । मतं संमतम् । नहि न भवत्येव ॥ ४२ ॥ गृह्यन्त इति । जपे । जिह्वया । यावन्ति । कृष्णनामानि । गृह्यन्ते । मनसाऽपि । तावन्त्येव । गृह्यन्ते । अधिकानि तु । न गृह्यन्ते ॥ ४३ ॥ अत इति । अतो हेतोः । मनसा । सहैव । जिह्वया । मापतेर्लक्ष्मीकान्तस्य हरेः । नाम । स्पष्टं यथा तथा । उच्चार्य । उच्चार्य । माला । दोष्णा पाणिना । शनैः । शनैः । आवर्त्त्या । मध्यमामध्यपर्वणि मालां संरक्ष्य तर्जन्यस्पर्शपूर्वमङ्गुष्ठाग्रपर्वणा मालामण्याहरणं कार्यमित्यर्थः ॥ ४४ ॥

एवमिति । एवममुना प्रकारेण । नित्यम् । विदधतो मालिकया जपं कुर्वाणस्य । देहिनः साधोः । पाणीन्द्रियस्य । चापल्यम् । अल्पेन । कालेन । अपयाति । पाणीन्द्रियं स्थिरतामुपगच्छतीत्यर्थः ॥ ४५ ॥ अथ पादेन्द्रियस्थैर्योपायमाह । अथेति । अथ किञ्च । अन्वहम् । आसनाभ्यासतः स्वस्तिकपद्माद्यासनस्थिरीकरणाभ्यसनात् । तीर्थीभूतसतां भगवदेकान्तिकोपासनासम्प्राप्ततीर्थत्वानां साधूनाम् । पार्श्वे एव स्थित्याऽवस्थानेन च । पादस्य पादेन्द्रियस्य । चाञ्चल्यम् । अपयाति । हि ॥ ४६ ॥ अथोपस्थेन्द्रियस्थैर्योपायमाह द्वाभ्याम् । उपस्थस्येति । अकण्डूयोपवासतः शिश्नकण्डूत्यविधानोपोषणविधानाभ्यामित्यर्थः । आहारलाघवादन्नाशनस्याल्प्यात् । सिद्धासनादिभिश्च । उपस्थस्य । चाञ्चल्यम् । नश्येत् । सिद्धासनलक्षणमुक्तं योगोपदेशे । 'निपीडय सीवनीं वामपार्ष्णिना वामगुल्फके विन्यसेद्दक्षिणं गुल्फमेतत्सिद्धासनं स्मृत'मिति ॥ ४७ ॥ हेतुप्रदर्शनपूर्वं कण्डूजयं विशेषत आह । कण्डूयनमिति शिश्नस्य । कण्डूयनं तु । खर्ज्वाः कण्ड्वाः । कण्डूयनमिव । पुनः । व्यथाम् । करोति । इति हेतोः । तच्छिश्नकण्डूयनम् । सुधीः साधुः । न कुर्यात् । कण्डूं शिश्नकण्डूतिं च । सहेत । तस्यैव शास्त्रे धीरत्वमुक्तम् । कण्डूतिवन्मनसिजं विषहेत

एवं विदधातो नित्यं कालेनाल्पेन देहिनः । पाणीन्द्रियस्य चाञ्चल्यमपयाति न संशयः ॥ ४५ ॥ अथ पादस्य चाञ्चल्यमासनाभ्यासतोऽन्वहम् । तीर्थीभूतसतां पार्श्व एव स्थित्याऽपयाति हि ॥४६॥ उपस्थस्य तु चाञ्चल्यमकण्डूयोपवासतः । आहारलाघवाच्चापि नश्येत्सिद्धासनादिभिः ॥ ४७ ॥ कण्डूयनं तु शिश्नस्य खर्ज्वा इव पुनर्व्यथाम् । करोतीति न तत्कुर्यात्सुधीः कण्डूं सहेत च ॥ ४८ ॥ युक्ताहाराच्च जिह्वायो अभीष्टयाप्रदानतः । अपयात्येव चाञ्चल्यं कृष्णोच्छिष्टनिषेवणात् ॥ ४९ ॥ महद्भिः क्रियमाणायां कथायां राधिकापतेः । स्वदाक्ष्यभाषणत्यागान्मानसाच्च जपान्मुहुः ॥ ५० ॥ क्वचिन्महत्कथामध्ये कृते दाक्ष्येण भाषणे । पञ्चविंशतिमालानामावृत्त्या कृष्णमन्त्रतः ॥ ५१ ॥ आवश्यकस्यैव ऋतवचमो भाषणात्तथा । वागिन्द्रियस्य चाञ्चल्यं मुमुक्षोरपयाति हि ॥ ५२ ॥

धीर इति श्रीभागवतोक्तेः ॥ ४८ ॥ अथ जिह्वेन्द्रियस्थैर्योपायमाह । युक्तेति । युक्ताहारान्मिताशनात् । तथा च स्मृतिः । द्वौ भागौ पूरयेदन्नैस्तोयेनैकं प्रपूरयेत् । मारुतस्य प्रचारार्थं चतुर्थमवशेषये'दिति । अभीष्टस्य जिह्वाप्रियपदार्थस्य । अप्रदानतो जिह्वायै अनर्पणात् । कृष्णोच्छिष्टनिषेवणाच्छ्रीकृष्णप्रासादिकान्नाद्यशननियमाच्च । जिह्वायाः । चाञ्चल्यम् । अपयात्येव ॥ ४९ ॥ अथ वागिन्द्रियस्थैर्योपायमाह त्रिभिः । महद्भिरिति । महद्भिर्भगवदेकान्तिकसाधुभिः । क्रियमाणायाम् । राधिकापतेः । कथायाम् । इयं वार्त्ताया अप्युपलक्षणम् । स्वदाक्ष्यभाषणत्यागात्स्वकीयशास्त्रादिप्रावीण्यद्योतक – तन्मध्यसम्भाषणादिसंपरिहारात् । मुहुः पुनः पुनः । मानसात् । जपाच्च ॥ ५० ॥ क्वचिदिति । क्वचित्कदाचित् । महत्कथामध्ये महद्भिः कर्त्तुमारब्धायाः कथाया वा वार्त्ताया अन्तरा । दाक्ष्येण । भाषणे । कृते सति । पञ्चविंशतिमालानाम् । कृष्णमन्त्रतः साक्षाच्छ्रीकृष्णनाममात्रेण । आवृत्त्या ॥ ५१ ॥ आवश्यकस्येति । तथा । आवश्यकस्यावश्यप्राप्तस्य । ऋतवचतः सत्यवचनस्य । भाष-

णात् । मुमुक्षोः साधोः । वागिन्द्रियस्य । चाञ्चल्यम् । अपयाति । हि । इति त्रयाणामेकसम्बन्धः । अत्रानुक्तमपि पायुचाञ्चल्यस्थैर्यमाहारनियमेन ज्ञातव्यम् । अत्रेन्द्रियजयक्रमानुक्तिस्त्वेतेषां चाञ्चल्यस्यावश्यजयोक्ति शैघ्र्यव्यग्रत्वतो ज्ञेया ॥ ५२ ॥ इन्द्रियाणामिति । एवममुना प्रकारेण । इन्द्रियाणां चक्षुरादीनाम् । यथोचितम् । जयोपायाः । ज्ञेयाः । इत्यमुना प्रकारेण । उक्त्वा । पुनः । स्वामी श्रीहरिः । निजात्मीयान् । तान्कनीयसः । सतः साधून् । पृच्छति स्म ॥ ५३ ॥ इन्द्रियाणीति । हे साधवः ! । अखिलान्यपि । इन्द्रियाणि । दुर्जयान्येव । भवन्ति । तत्रापि तेष्विन्द्रियेषु मध्येऽपि । एकस्मिन् । कस्मिंश्चिन्द्रिये । अत्र सत्सङ्गे । मुमुक्षुणा साधुना । विजिते सति ॥ ५४ ॥ जितानीति । सकलानि समग्राण्यपीन्द्रियाणि । जितानि । स्युः । इतीत्थम् । पृष्ट्वा । तदुत्तरमपि । असौ श्रीहरिः । स्वयमेव । आह । हे साधवः ! । तादृक् तथाविधम् । तदिन्द्रियं तु । रसनं रसनाख्यम् । मतम् । 'जितं सर्वं जिते रसे' इति । श्रीभागवतोक्तेः । इति द्वयोरेकान्वयः ॥ ५५ ॥ पप्रच्छेति । अथानन्तरम् । भूयः । स श्रीहरिः । तान्साधून् । पप्रच्छ । हे साधवः ! । यस्य पुंसः । हृदि मनसि । मनोभवः कामः । व्याप्तः । स्यात् । सः ।

इन्द्रियाणां जयोपाया एवं ज्ञेया यथोचितम् । इत्युक्त्वा तान् पुनः स्वामी पृच्छति स्म सतो निजान् ॥५३॥ इन्द्रियाणि भवन्त्येव दुर्जयान्यखिलान्यपि । तत्रापि कस्मिन्नेकस्मिन्विजितेऽत्र मुमुक्षुणा ॥ ५४ ॥ जितानि सकलानि स्युरिति पृष्ट्वा तदुत्तरम् । अप्यसौ स्वयमेवाह तादृक्तद्रसनं मतम् ॥५५॥ पप्रच्छाथ स तान्भूयो हृदि यस्य मनोभवः । व्याप्तः स्यात्स कथं लक्ष्यो वासश्छन्नाङ्गकः पुमान् ॥ ५६ ॥ इति पृष्ट्वोत्तरं तस्याप्यसावेवावदत्प्रभुः । दृगादीन्द्रियचाञ्चल्याल्लक्ष्यते स तु धीमता ॥ ५७ ॥ इत्युक्त्वा तान् पुनरपि पप्रच्छानन्दयन् हरिः । विचारेण भवेत्केन पुमान् शान्तोऽपि चञ्चलः ॥ ५८ ॥ चञ्चलोऽपि भवेच्छान्तो विचारेण च केन वा । इति पृष्ट्वोत्तरं तस्याप्याह स स्वयमेव तान् ॥ ५९ ॥ शान्तस्तु कृष्णतद्भक्तमाहात्म्यं चिन्तयेन्मुहुः । ततोऽसौ नवधा भक्तौ प्रवर्तेतादराद्धरेः ॥ ६० ॥

पुमान् । वासश्छन्नाङ्गकः परिहितवस्त्राच्छादितशरीरः सन् । कथम् । लक्ष्यः । अयं कामव्याप्तोऽस्तीत्यन्यैः केन प्रकारेण ज्ञेय इत्यर्थः ॥ ५६ ॥ इतीति । इतीत्थम् । पृष्ट्वा । तस्य प्रश्नस्य । उत्तरमपि । प्रभुः । असौ श्रीहरिरेव । अवदत् । स तथाविधः पुमांस्तु । धीमता बुद्धिमता । दृगादीन्द्रियचाञ्चल्यात् । लक्ष्यते ज्ञायते ॥ ५७ ॥ इतीति । इतीत्थम् । उक्त्वा । पुनरपि । हरिः । तान्साधून् । आनन्दयन्सन् । पप्रच्छ । हे साधवः ! । पुमान् भक्तः । शान्तः स्वभावत उपशमवत्प्रकृतिरपि । केन । विचारेण । चञ्चलश्चपलप्रकृतिः । भवेत् ॥ ५८ ॥ चञ्चल इति । चञ्चलः स्वभावतश्चपलप्रकृतिरपि पुमान् । केन । विचारेण वा । शान्तः । भवेत् । इतीत्थम् । पृष्ट्वा । तस्य प्रश्नस्य । उत्तरमपि । स श्रीहरिः । स्वयमेव । तान्साधून् । आह ॥ ५९ ॥ शान्त इति । हे साधवः ! । शान्तो भक्तस्तु । कृष्णतद्भक्तमाहात्म्यम् । मुहुः । चिन्तयेत् । ततस्तदनन्तरम् । असौ शान्तो भक्तः । हरेः । नवधा । भक्तौ । आदरात् । प्रवर्त्तेत ॥ ६० ॥

परिचर्यामिति । स तथाविधो भक्तः । अन्वहं प्रतिदिनम् । भक्तानाम् । परिचर्याम् । प्रीत्या । कुर्वीत । एवममुना प्रकारेण । स शान्तः । पुमान् भक्तः । शान्ततोम् हित्वा । चाञ्चल्यम् । लभते ॥ ६१ ॥ कुर्यादिति । चञ्चलः । पुमान् भक्तस्तु । मुहुः । आत्मविचारप्रकारमाहार्द्धेन । अहम् । आत्मा । अस्मि । अहम् । ब्रह्म । अस्मि । अहम् । अलिङ्गो देवमनुष्याद्याकृतिरहितः । अस्मि । अहम् । आकाशवत् । सदा । स्थिरोऽचञ्चलः । अस्मि ॥ ६२ ॥ एवमिति । एवममुना प्रकारेण । मुहुः । चिन्तयतो विचारयतश्चञ्चलभक्तस्य । चाञ्चल्यम् । अपयाति । स चञ्चलो भक्तः । शान्तः । भवेत् । इतीत्थम् । उक्त्वा । पुनः । हरिः । तान् । साधून् । पप्रच्छ ॥६३॥ श्रीमदिति । हे साधवः ! । नोऽस्माकम् । मते इति शेषः । श्रीमद्भागवतादीनि । अष्ट । सच्छास्त्राणि । सन्ति । तत्र तेष्वष्टसच्छास्त्रेषु मध्ये । किञ्चित् किमपि । प्रकरणम् । बुधैर्विवेकिभिर्भक्तैः । हेयं त्याज्यम् । अस्ति । नास्ति वा ॥ ६४ ॥ सर्वमिति । अथवा । सर्वं सर्वमपि प्रकरणम् । उपादेयं ग्राह्यम् । अस्ति । किम् । इतीत्थम् । उक्ताः श्रीहरिणाऽभिहिताः । ते सन्तः । यर्हि । उत्तरम् । कर्तुम् ।

परिचर्यां च भक्तानां प्रीत्या कुर्वीत सोऽन्वहम् । एवं स शान्ततां हित्वा चाञ्चल्यं लभते पुमान् ॥ ६१ ॥ कुर्यादात्मविचारं च चञ्चलस्तु पुमान्मुहुः । ब्रह्मास्म्यात्मास्म्यलिङ्गोऽस्मि स्थिरोऽस्म्याकाशवत्सदा ॥ ६२ ॥ एवं मुहुश्चिन्तयतश्चाञ्चल्यमपयाति हि । शान्तो भवेत्स चेत्युक्त्वा पुनः पप्रच्छ तान् हरिः ॥ ६३ ॥ श्रीमद्भागवतादीनि सच्छास्त्राण्यष्ट सन्ति नः । तत्रास्ति किञ्चिद्धेयं वा नास्ति प्रकरणं बुधैः ॥६४॥ सर्वमप्यस्त्युपादेयं किं वेत्युक्तास्त उत्तरम् । कर्तुं व्यचारयन् यर्हि तदा तत्स्वयमाह सः ॥६५॥ बहून्येतेषु शास्त्रेषु सन्ति प्रकरणानि ह । प्रमाणान्येव सर्वाणि सन्ति तानि बुध्यताम् ॥ ६६ ॥ भगवन्तं प्रपन्ना ये भक्तास्तेषां पृथक् पृथक् । यथाधिकारं स्थितयः सन्ति तेषूपवर्णिताः ॥ ६७ ॥ अतो ग्राह्याणि सर्वाणि किन्तु तत्रात्मनः स्थितिः । यथाधिकारं ग्राह्याऽन्या नैवान्यविषयत्वतः ॥ ६८ ॥ पप्रच्छाथ स तान्भूयः सतो यूयं हि साधवः । सर्वेऽपि तुल्यवयसः सतीर्थ्या भवथानघाः ! ॥ ६९ ॥

व्यचारयन् । तदा । तदुत्तरम् । स श्रीहरिः । स्वयमेव । आह ॥ ६५ ॥ बहूनीति । हे साधवः ! । एतेषु अष्टसु । शास्त्रेषु । बहूनि । प्रकरणानि । सन्ति । सर्वाणि । तानि प्रकरणानि । प्रमाणान्येव । सन्ति । इतीत्थम् । बुध्यताम् ॥६६॥ भगवन्तमिति । भगवन्तम् । प्रपन्नाः । ये । भक्ताः । सन्ति । तेषां भक्तानाम् । यथाधिकारं स्वस्वाधिकारमनतिक्रम्य । पृथक् । पृथक् । स्थितयो निष्ठाः । उपवर्णिताः । सन्ति ॥ ६७ ॥ अत इति । अतो हेतोः । सर्वाणि प्रकरणानि । ग्राह्याणि । किन्तु । तत्र तेषु प्रकरणेषु मध्ये । उपवर्णितेति शेषः । यथाधिकारम् । आत्मनः । स्थितिः । ग्राह्या अन्या स्थितिः । अन्यविषयत्वतः । नैव ग्राह्या ॥ ६८ ॥ पप्रच्छेति । अथानन्तरम् । स श्रीहरिः । भूयः । तान् । सतः । पप्रच्छ । हे अनघाः ! । यूयम् । सर्वेऽपि । तुल्यवयसः समानवयस्काः । सतीर्थ्या एकगुरुशिष्याः । साधवः । भवथ ॥ ६९ ॥

तुल्येति । किञ्च । तुल्यसङ्गाः समानमहापुरुषप्रसङ्गाः । तुल्यशास्त्राः समानशास्त्राध्ययनाः । तुल्यानि भोजनानि वासांसि च येषां तथाभूताः । तुल्यः समान उपदेशो मत्कृतो धर्मोपदेशो मन्त्रो मन्त्रोपदेशश्च येषां तथाभूताः । त्यक्तं दैहिकं देहसुखं यैस्तथाभूताश्च । भवथ ॥ ७० ॥ तथेति । तथापि । विचक्षणाः सदसद्विवेकनिपुणाः । सन्तो मुक्तानन्दादयः साधवः । युष्मासु विषये । तारतम्यं न्यूनाधिकभावम् । कथं केन हेतुना । पश्यन्ति गृह्णन्ति । तत् । निजान्तरे स्वस्वमनसि । विचार्यैव । ब्रूत यूयं कथयत ॥ ७१ ॥ सन्त इति । ते मुक्तानन्दादयः । सन्तः साधवस्तु । वृद्धा ज्ञानादिगुणवृद्धाः । धार्मिकाः स्वधर्मनिष्ठाः । समदर्शिनः । सन्ति । अतो हेतोः । तेषु तथाविधसाधुषु । पक्षपातोऽपि । वक्तुम् । नैव । शक्यते । हि ॥ ७२ ॥ इतीति । इतीत्थम् । भगवता श्रीहरिणा । पृष्टाः । ते साधवः । यदा । तदुत्तरम् । नाजानन् । तदा । असौ श्रीहरिः । तेषां सताम् । श्रद्धाम् । विवर्द्धयन् सन् । तदुत्तरम् । ऊचे स्वयमेव जगाद ॥ ७३ ॥ श्रद्धाया इति । हे सन्तः ! । यथार्थदर्शिनः स्वपरनिष्ठगुणदोषाणां यथार्थसमीक्षकाः । सन्तः । भवत्सूक्तविधेषु युष्मास्वपि । श्रद्धायाः । तारतम्येन । न्यूनाधिक्यम् ।

तुल्यसङ्गास्तुल्यशास्त्रास्तुल्यभोजनवाससः । तुल्योपदेशमन्त्राश्च भवथ त्यक्तदैहिकाः ॥ ७० ॥ तथापि सन्तो युष्मासु तारतम्यं विचक्षणाः । कथं पश्यन्ति तद्ब्रूत विचार्यैव निजान्तरे ॥ ७१ ॥ सन्तस्तु सन्ति ते वृद्धा धार्मिकाः समदर्शिनः । तेष्वतः पक्षपातोऽपि वक्तुं नैव हि शक्यते ॥ ७२ ॥ इति पृष्टा भगवता नाजानंस्ते तदुत्तरम् । यदा तदा तदूचेऽसौ तेषां श्रद्धां विवर्द्धयन् ॥ ७३ ॥ श्रद्धायास्तारतम्येन न्यूनाधिक्यं भवत्स्वपि । यथार्थदर्शिनः सन्तो गृह्णन्तीत्यवगम्यताम् ॥ ७४ ॥ येषु श्रद्धाऽधिका तांस्ते पश्यन्तीह समेधितान् । सा न्यूना येषु तान्न्यूनांस्ते पश्यन्ति न चान्यथा ॥ ७५ ॥ येषां सत्परिचर्यायां सद्वचस्सु च सत्पतेः । श्रद्धाऽधिका स्याद्भक्तौ च रक्षेयुस्तेऽधिकं वृषम् ॥ ७६ ॥ अतोऽधिका मतास्ते तु धर्मवृद्धैर्हि साधुभिः । सत्सङ्गिनोऽपि येऽश्रद्धास्ते तु न्यूना मता हि तैः ॥ ७७ ॥

गृह्णन्ति । इतीत्थम् । अवगम्यताम् ॥ ७४ ॥ एतदेव स्पष्टमाह त्रिभिः । येष्विति । येषु सत्सु । श्रद्धा । अधिकास्ति । तान्सतः । ते सन्तः । इह सत्सङ्गे । समेधितान्प्रवृद्धधर्मादिगुणान् । पश्यन्ति । येषु सत्सु । सा श्रद्धा । न्यूना । तान्सतः । ते सन्तः । न्यूना न प्रवृद्धधर्मादिगुणान् । पश्यन्ति । अन्यथा वैपरीत्येन । न च नैव पश्यन्ति ॥ ७५ ॥ येषामिति । येषां सताम् । सत्परिचर्यायां साधुसेवने । सद्वचस्सु साधूनां सद्धर्मोपदेशवचनेषु । सत्पतेः श्रीहरेः । वचस्सु । भक्तौ श्रवणकीर्त्तनादिलक्षणायां च । अधिका । श्रद्धा । स्यात् । ते सन्तः । अधिकम् । वृषं स्वधर्मम् । रक्षेयुः पालयेयुः ॥ ७६ ॥ अत इति । अतो हेतोः । धर्मवृद्धैः । साधुभिः । तेऽधिकश्रद्धावन्तः सन्तः । अधिकाः । मताः । हि । ये । सत्सङ्गिनो गृहस्थभक्ता अपि । अश्रद्धाः सत्परिचर्यादौ श्रद्धावर्जिताः । सन्ति । ते सत्सङ्गिनोऽपि । तैर्धर्मवृद्धसाधुभिः । न्यूनाः श्रद्धारहिततया धर्मपालने तान्न्यूनाः । मताः । हि ॥ ७७ ॥

वचनेति । इत्येवंविधम् । अनेकभक्तप्रियकर्त्तुः । वृषनन्दनस्य श्रीहरेः । वचनामृतम् । श्रवणेन श्रुतिकंसेन । निपीय । सर्वे । साधुगृहस्थभक्तसङ्घाः । परमम् । तोषम् । आपुः ॥ ७८ ॥ प्रश्नोत्तरात्मकैर्वाक्यैः स्वस्य स्वान् यः सतो हरिः । चक्रे हर्षान्वितांस्तस्य तानि सन्त्वेव मे हृदि ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तक-श्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्स्नुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां शताधिकषोडशस्तरङ्गः ॥ ११६ ॥ ८ ॥

धर्मज्ञानविरागाणां भक्तेश्चापत्तिहेतवः । उक्ताः पृथक् पृथक् सम्यग्नवमे हरिणा ततः ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८७७) । सहोमासे मार्गशीर्षमासे । शुक्लषष्ठ्यां शुक्लपक्षीयषष्ठीतिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । लोहाभिधग्रामे । सूरवर्मणः । निलये दुर्गान्तर्वर्त्तिभवने । पीठोत्तमे स्वास्तृते श्रेष्ठे मञ्चासने । सितसर्वाम्बरः परिधृतसकलश्वेतवसनः । स्वामी श्रीहरिः । उपाविशत् ॥ २ ॥ साधुभिरिति । बहुभिर्नानादेशा-

वचनामृतमित्यनेकभक्तप्रियकर्त्तुर्वृषनन्दनस्य सर्वे । श्रवणेन निपीय तोषमापुः परमं साधुगृहस्थभक्तसङ्घाः ॥ ७८ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते शताधिकषोडशस्तरङ्गः ॥ ११६ ॥ ८ ॥

शकाब्दे विक्रमार्कस्य नगाश्ववसुभूमिते । सहोमासे शुक्लषष्ठ्यां वचोऽमृतमिदं हरेः ॥ १ ॥
तत्र लौहाभिधग्रामे निलये सूरवर्मणः । सितसर्वाम्बरः स्वामी पीठोत्तम उपाविशत् ॥ २ ॥
साधुभिर्गृहिभिर्भक्तैर्बहुभिः परितो वृतः । प्रश्नोत्तराणि कुरुत मिथ इत्यवदत्सतः ॥ ३ ॥
आत्मानन्दस्तदाऽखण्डानन्दं पप्रच्छ तत्पुरः । धर्मज्ञानविरागाणां हेतुं भक्तेश्च मां वद ॥ ४ ॥
ततस्तदुत्तराशक्तं तं दृष्ट्वा सोऽब्रवीत्स्वयम् । तत्तदर्थकशास्त्राणां श्रवणात्तत्तदुद्भवः ॥ ५ ॥
मन्वादिभिः प्रणीतानां स्मृतीनां श्रवणान्नृणाम् । उदियाद्धर्मनिष्ठा च भयं स्यात्पापकर्मणः ॥ ६ ॥

गतत्वादनेकैः । भक्तैः स्वाश्रितैः । साधुभिः । गृहिभिः । परितः सर्वतः । वृतः सभायां संवेष्टितः श्रीहरिः । हे साधवः ! । यूयम् । मिथः परस्परम् । प्रश्नोत्तराणि । कुरुत । इतीत्थम् । सतः साधून् । अवदत् ॥ ३ ॥ आत्मानन्द इति । तदा तस्मिन् समये । तत्पुरः श्रीहरेः पुरः प्रदेश एव । आत्मानन्दो मुनिः । अखण्डानन्दं मुनिम् । पप्रच्छ । हे मुने ! । धर्मज्ञानविरागाणाम् । भक्तेश्च । हेतुमुत्पत्तिकारणम् । माम् । वद ॥ ४ ॥ तत इति । ततस्तदनन्तरम् । तमखण्डानन्दमुनिम् । तदुत्तराशक्तमात्मानन्दमुनिप्रश्नोत्तरप्रदानेऽसमर्थम् । दृष्ट्वा । स श्रीहरिः । स्वयमेव । अब्रवीत्तदुत्तरमुवाच । हे मुने ! । तत्तदर्थकशास्त्राणाम् । श्रवणात् । तत्तदुद्भवो धर्माद्युदयः । भवेत् ॥ ५ ॥ एवं सामान्यतस्तत्प्रश्नोत्तरं कृत्वा स्फुटबोधाय पुनर्विशेषतस्तदुत्तरं करोति नवभिः । मन्वादिभिरिति । हे मुने ! । मन्वादिभिः । प्रणीतानां कृतानाम् । स्मृतीनाम् । श्रवणात् । नृणाम् । धर्मनिष्ठा । उदियात् । पापकर्मणः पापाचरणात् । भयं च । स्यात् ॥ ६ ॥

बृहदिति । बृहदारण्यमुख्यानाम् । उपनिषदाम् । श्रुतेः श्रवणात् । तथा । गीताशारीरकादेः । आदिशब्देन वासुदेवमाहात्म्यादेर्ग्रहणम् । श्रुतेश्च । ज्ञाननिष्ठोदयः । भवेत् । तत्रोपनिषदो गीता शारीरकसूत्राणि रामानुजाचार्यकृतभाष्योपेतानि ग्राह्याणि ॥७॥ ज्ञानादिति । कालस्वरूपस्य । ज्ञानात् । वैराग्यस्य । उदयः । भवेत् । एवं सामान्यत उक्त्वा स्फुटबोधाय पुनर्विशेषत आह सार्द्धद्वाभ्याम् । नित्यनैमित्तिकादयः । लयाः । कालेन । जायन्ते । नित्यो नैमित्तिकः प्राकृतिक आत्यन्तिकश्च प्रलयः कालतो भवतीत्यर्थः ॥८॥ ब्रह्मेति । ब्रह्मादितृणपर्यन्तम् । जगत् । कालस्य । भक्ष्यम् । भवति । वै । सकार्यमूलप्रकृतिपुरुषपर्यन्तं सकलं कालो विनाशयतीत्यर्थः । एवममुना प्रकारेण । नानापुराणेषु । कालतीव्रतां कालस्यातितीक्ष्णताम् । शृण्वतः ॥ ९ ॥ उदेतीति । पुंसः । तुच्छतेक्षणात्सकलविश्वस्य नश्वरत्वेन तुच्छत्वदर्शनात् । विरक्तानां सर्वतो वैराग्यं प्राप्तानां साधूनाम् । प्रसङ्गेन । मिथ्यात्वस्य सर्वेषामसत्यत्वस्य । निश्चयाच्च । सर्वतः । वैराग्यम् । उदेति । इति द्वयोरेकान्वयः ॥ १० ॥ भगवदिति । भग-

बृहदारण्यमुख्यानां तथोपनिषदां श्रुतेः । गीताशारीरकादेश्च ज्ञाननिष्ठोदयो भवेत् ॥ ७ ॥ ज्ञानात्कालस्वरूपस्य वैराग्यस्योदयो भवेत् । लयाः कालेन जायन्ते नित्यनैमित्तिकादयः ॥ ८ ॥ ब्रह्मादितृणपर्यन्तं भक्ष्यं कालस्य वै जगत् । एवं नानापुराणेषु शृण्वतः कालतीव्रताम् ॥ ९ ॥ उदेति सर्वतः पुंसो वैराग्यं तुच्छतेक्षणात् । विरक्तानां प्रसङ्गेन मिथ्यात्वस्य च निश्चयात् ॥ १० ॥ भगवद्भक्तमुखतः श्रीमद्भागवतश्रुतेः । श्रुतेश्च पञ्चरात्रस्य भवेद्भक्त्युदयो नृणाम् ॥ ११ ॥ विश्वसर्गादिरूपाया लीलायाश्च रमापतेः । विभावनात्समाहात्म्यतद्धामैश्वर्ययोस्तथा ॥ १२ ॥ प्रतिखण्डं भगवत उपास्यत्वावधारणात् । प्रीत्या कृष्णावताराणां श्रवणाच्चरितस्य च ॥ १३ ॥ भक्तिः पुष्टिमवाप्नोति धर्माद्यैः सहिता त्रिभिः । एवं चतुर्णां विज्ञेयं धर्मादीनां तु कारणम् ॥ १४ ॥

वद्भक्तमुखत एकान्तिकधर्मनिष्ठश्रीहरिभक्तास्यात् । श्रीमद्भागवतश्रुतेः । पञ्चरात्रस्य नारदर्षिप्रणीतपञ्चरात्रागमस्य । श्रुतेश्च । नृणाम् । भक्त्युदयः । भवेत् ॥ ११ ॥ सम्प्रत्युदितभक्तिपुष्टिप्रकारमाह सार्द्धद्वाभ्याम् । विश्वेति । रमापतेः साक्षाच्छ्रीकृष्णस्य विश्वसर्गादिरूपायाः । लीलायाः । तथा । तद्धामैश्वर्ययोः श्रीहरेर्ब्रह्मपुरादिलोकानामणिमाद्यैश्वर्याणां चेत्यर्थः । समाहात्म्यं तन्माहात्म्यसहितं यथातथा । विभावनाद्विचारणात् ॥ १२ ॥ प्रतिखण्डमिति । प्रतिखण्डं जम्बूद्वीपस्थभारतादिषु खण्डेष्वित्यर्थः । भगवतो श्रीनरनारायणादिरूपस्य । उपास्यत्वावधारणादुपास्यत्वज्ञानात् । कृष्णावताराणां वराहादीनाम् । चरितस्य । प्रीत्या श्रवणाच्च ॥ १३ ॥ भक्तिरिति । धर्माद्यैः । त्रिभिः । सहिता । भक्तिः । पुष्टिम् । अवाप्नोति । इति सार्द्धश्लोकद्वयस्यैकसम्बन्धः । एवममुना प्रकारेण । धर्मादीनाम् । चतुर्णाम् । कारणमुदयहेतुः । विज्ञेयम् ॥ १४ ॥

धर्मेति । इत्येवंविधाम् । धर्मनन्दनस्य श्रीहरेर्मुखाब्जमाननसरोरुहं तस्मान्निःसृतामुद्गताम् । वाक्सुधां वचनपीयूषम् । निपीय । तावात्मानन्दाखण्डानन्दौ मुनी । तथा । ये । अपरेऽपि । सगृहिणो गृहस्थसहिताः । साधवः । अखिला अपि । ते । तोषम् । प्रपेदिरे ॥ १५ ॥ यो हेतुं प्राह धर्मादिचतुर्णां स्वान् सतो हरिः । स्वैकान्तिभक्तेर्हेतूनां तत्पुष्टिर्मे ददातु सः ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्सूनुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां शताधिकसप्तदशस्तरङ्गः ॥ ११७ ॥ ९ ॥

सामान्यस्य च गाढस्य हेतुः स्नेहस्य यस्तथा । मन्दो मध्यस्तीव्र इति वृत्तिवेगात्त्रिधा तु ये ॥ १ ॥ तद्धेतुर्यश्च तेषां तु लक्षणान्यपि यानि च । तत्प्रसङ्गाज्ज्ञाननिष्ठादार्ढ्यं जीवपरात्मनोः ॥२॥ माया यथा दुःखदाऽस्ति सुखदा च यथाऽस्ति सा । एतत्सर्वं विविच्यैव दशमे परिकीर्त्तितम् ॥ ३ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८७७) सहसो मार्गशीर्षमासस्य । शुक्ले धवलपक्षे । अष्टम्यां तिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ ग्राम इति । तत्र तिथौ ।

धर्मनन्दनमुखाब्जनिःसृतां वाक्सुधामिति निपीय तौ तथा । साधवः सगृहिणोऽपरेऽपि ये तेऽपि तोषमखिलाः प्रपेदिरे ॥ १५ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते शताधिकसप्तदशस्तरङ्गः ॥ ११७ ॥ ९ ॥

शकाब्दे विक्रमार्कस्य नगाश्ववसुभूमिते । अष्टम्यां सहसः शुक्ले वचोऽमृतमिदं हरेः ॥ १ ॥ ग्रामे लौहाभिधे तत्र सूरक्षितिपमन्दिरे । स व्यराजत सत्पीठे सितसर्वाम्बरः प्रभुः ॥ २ ॥ नानादेशागतैर्भक्तैः सद्भिश्च गृहिभिर्वृतम् । नित्यानन्दस्तमप्राक्षीत्साधुवर्यः कृतानतिः ॥ ३ ॥ स्निग्धानां स्त्र्यादिषु नृणां स्नेहो द्वेधाऽत्र दृश्यते । गाढः साधारणश्चेति वियोगासहनात्मकः ॥ ४ ॥ येषां तत्रादिमस्ते तु स्वाभीष्टविरहे सति । प्राणानपि जहत्येव विवशाः किमुतेतरत् ॥ ५ ॥ अन्ये तु स्वेष्टविरहे वर्त्तन्ते विकला इव । न तु प्राणांस्त्यजन्तीति तेषां भेदोऽपि दृश्यते ॥ ६ ॥

लौहाभिधे । ग्रामे । सूरक्षितिपमन्दिरे दुर्गान्तर्वर्त्तिसूरनृपतिभवने । सत्पीठे स्वास्तृते श्रेष्ठे पर्यङ्कासने । सितसर्वाम्बरः परिधृतसकलश्वेतवसनः । प्रभुः । स श्रीहरिः । व्यराजत्प्रातःकृत्यं विधायागत्योपवेशनचातुर्येणातिशुशुभे ॥ २ ॥ नानेति । नानादेशागतैः । भक्तैः स्वाश्रितैः । सद्भिः साधुभिः । गृहिभिश्च । वृतं सभायां परिवेष्टितम् । तं श्रीहरिम् । साधुवर्यः । नित्यानन्दो मुनिः । कृतानतिः कृतप्रणामः सन् । अप्राक्षीत् ॥ ३ ॥ स्निग्धानामिति । हे हरे ! । अत्र लोके । स्त्र्यादिषु स्त्रीप्रभृतिपदार्थेषु । स्निग्धानां स्नेहवताम् । नृणाम् । वियोगासहनात्मकः । स्नेहः । गाढः । साधारणः । इतीत्थम् । द्वेधा द्विप्रकारः । दृश्यते ॥ ४ ॥ तेषामिति । तत्र तयोर्द्विविधस्नेहयोर्मध्ये । येषां नृणाम् । आदिमो गाढस्नेहोऽस्ति । ते नरास्तु । स्वाभीष्टविरहे स्वातिप्रियस्त्र्यादिपदार्थवियोगे । सति । विवशा अस्वतन्त्राः सन्तः । प्राणान्स्वानसूनपि । जहति त्यजन्त्येव । तदा । इतरत्प्राणान्यवस्तु । जहति । तत्र किमु वक्तव्यम् ॥ ५ ॥ अन्य इति । अन्ये येषां साधारणः स्नेहस्ते तु । स्वेष्ट-

विरहे सति । विकला विक्लवाः । इव । वर्त्तन्ते । प्राणांस्तु । न त्यजन्ति । इतीत्थम् । तेषामुभयेषां स्नेहवताम् । भेदोऽपि । दृश्यते ॥ ६ ॥ एवमिति । एवममुना प्रकारेण । कृष्णे । त्वयि स्निग्धाः । भक्ताः । अपि । द्विधा । मताः । तत्र । केचित् । साधरणस्नेहाः । केचन । गाढस्नेहाश्च । सन्ति ॥ ७ ॥ तत्रेति । तत्र तेषु द्विविधेषु मध्ये । आद्याः साधारणस्नेहा भक्ताः । ते तव । विरहे सति । विकला इव । वर्त्तन्ते । अन्ये गाढस्नेहा भक्तास्तु । स्वीयान् । असून्प्राणानपि । जहाति । इत्येवमपि । दृश्यते ॥ ८ ॥ एवमिति । हे विभो ! । लौकिके । वर्त्मनि । अलौकिके । वर्त्मनि चापि । स्निग्धत्वे । तुल्यवृत्तयः । द्विविधाः । जीवाः । भवन्ति ॥ ९ ॥ स्वकीयेति । एते उभयविधा जीवाः । स्वकीयकर्मणैव । एतादृशाः । भवन्ति । किमु । अथवा । स्वभावतः । अनादिकालीनाः । ईदृशाः । सन्ति । किम् ॥ १० ॥ इतीति । इत्यमुना प्रकारेण । पृष्टो नित्यानन्दमुनिनानुयुक्तः । प्रेमवतीसुतो भक्त्यात्मजः श्रीहरिः । प्रसन्नः सन् । तं नित्यानन्दमुनिम् । ऊचे । हे मुने ! । जीवाः । स्वभावतः । ईदृशवृत्तयः । नैव भवन्ति ॥११॥ किन्त्विति । किन्तु । एते जीवाः । स्वकर्मभिः । एतादृशाः । भवन्ति । ध्रुवम् ।

एवं कृष्णे त्वयि स्निग्धा भक्ता अपि मता द्विधा । केचित्साधारणस्नेहा गाढस्नेहाश्च केचन ॥ ७ ॥ तत्राद्यास्ते तु विरहे वर्त्तन्ते विकला इव । अन्ये त्वसूनपि स्वीयान् जहतीत्यपि दृश्यते ॥ ८ ॥ एवं हि द्विविधा जीवा लौकिके चाप्यलौकिके । भवन्ति वर्त्मनि विभो! स्निग्धत्वे तुल्यवृत्तयः ॥ ९ ॥ स्वकीयकर्मणैवैते भवन्त्येतादृशाः किमु । किं वा स्वभावतोऽनादिकालीनाः सन्ति हीदृशाः ॥ १० ॥ इति पृष्टः प्रसन्नस्तमूचे प्रेमवतीसुतः । जीवाः स्वभावतो नैव भवन्तीदृशवृत्तयः ॥ ११ ॥ किन्तु स्वकर्मभिर्वै ते भवन्त्येतादृशा ध्रुवम् । यथा भवन्ति कर्माणि तान्यहं वच्मि वस्तथा ॥ १२ ॥ विशेषसत्तया जीवो हृत्स्थः सामान्यसत्तया । व्याप्तोऽस्ति करणान्येष वाह्यान्याभ्यतराणि च ॥१३॥ तस्य सत्तां विना तानि क्रियाः कर्तुं स्वतः क्वचित् । जडत्वान्नैव शक्तानि सन्ति चापशरादिवत् ॥ १४ ॥ जीवानां वृत्तयस्त्रेधा कथ्यतेऽतो महर्षिभिः । स्वकीयांश्चान्तःकरणानुगाश्चेन्द्रियगा इति ॥ १५ ॥

यथा । कर्माणि । भवन्ति । तथा । तानि कर्माणि । अहम् । वो युष्मभ्यम् । वच्मि । यथा तेषां तथाविधानि कर्माण्युद्भवन्ति तथा तानि वोऽहं वदामीत्यर्थः ॥ १२ ॥ विशेषेति । हे मुने ! । जीवः । विशेषसत्तया विशेषतो विद्यमानतया । हृत्स्थो हृदयमध्यावस्थितः । अस्ति । एष जीवः । सामान्यसत्तया । वाह्यानि । करणानि चक्षुरादीनि । आभ्यन्तराणि । करणानि मनआदीनि च । व्याप्तः । अस्ति ॥ १३ ॥ तस्येति । तस्य जीवस्य । सत्ताम् । विना । तानि वाह्यान्तःकरणानि । चापशरादिवत् सधनुर्बाणादिवत् । जडत्वात् । स्वतः । क्रियाः । कर्त्तुम् । क्वचित्कदाचिदपि । शक्तानि समर्थानि । नैव । सन्ति ॥ १४ ॥ जीवानामिति । अतो हेतोः । जीवानाम् । वृत्तयः । स्वकीयाः । अन्तःकरणानुगा अन्तःकरणानुसारिण्यः । इन्द्रियगा इन्द्रियानुसारिण्यश्च । इतीत्थम् । त्रेधा त्रिप्रकाराः । महर्षिभिर्हिरण्यगर्भादिमुनिभिः । कथ्यते ॥ १५ ॥

वेग इति । अथ च । कर्मणाम् । करणे । जीववृत्तीनामुक्तविधानां त्रिविधानांजीववृत्तीनाम् । वेगः । योगशास्त्रे । त्रिधा त्रिप्रकारः । उदीरितः कथीतः । भवति । इतीत्थम् । अवगन्तव्यः ॥ १६ ॥ जीववृत्तीवेगत्रैविध्यमाह । आद्य इति । आद्यः प्रथमो वेगः । मन्दः । ततो द्वितीयो वेगः । मध्यो मध्यमः । तृतीयो वेगः । तीव्रश्च । उक्तः । तत्रायं विवेकः । इन्द्रियानुसारिजीववृत्तिवेगो मन्दः । इन्द्रियान्तःकरणनुसारिजीववृत्तिवेगो मध्यमः । इन्द्रियान्तःकरण स्वकीयविशेषसत्तानुसारिजीववृत्तिवेगस्तीव्र इति । तत्तद्वेगविशिष्टा मन्दादिना तेन तेन वेगेन युक्ता । वृत्तिर्जीववृत्तिरेव । वस्तुनि पदार्थे । सज्जति सक्ता भवति ॥ १७ ॥ यादृगिति । जीववृत्तिः । यादृग्वेगा मन्दादि यथाविधवेगवती सती । यत्र । पदार्थे । सज्जति । तत्र तस्मिन्पदार्थासक्तिनिमित्ते सति । कर्मापि । तत्क्षणम् । तादृक् मन्दादिगुणवदेव जायते । हि ॥ १८ ॥ त्रैविध्यादिति । इत्थममुना प्रकारेण । कर्मणाम् । त्रैविध्यान्मन्दादिभेदेन त्रिविधत्वात् । तज्जस्तथाविधकर्मोद्भूतः । देहिनाम् स्नेहोऽपि । मन्दः । मध्यः । तथा । तीव्रः । भवति । इतीत्थम् । अवगम्यताम् ॥ १९ ॥ पदार्थेष्विति । यथा । शरीरिणां देहिनाम् । पदार्थेषु । स्नेहतारतम्यम् ।

वेगोऽथ जीववृत्तीनां कर्मणां करणे त्रिधा । भवतीत्यवगन्तव्यो योगशास्त्र उदीरितः ॥ १६ ॥ आद्यो मन्दस्ततो मध्यस्तीव्रश्चोक्तस्तृतीयकः । तत्तद्वेगविशिष्टैव वृत्तिर्वस्तुनि सज्जति ॥१७॥ यादृग्वेगा जीववृत्तिः पदार्थे यत्र सज्जति । तादृगेव हि कर्मापि जायते तत्र तत्क्षणम् ॥ १८ ॥ त्रैविध्यात्कर्मणामित्थं तज्जः स्नेहोऽपि देहिनाम् । मन्दो मध्यस्तथा तीव्रो भवतीत्यवगम्यताम् ॥१९॥ पदार्थेषु यथा स्नेहतारतम्यं शरीरिणाम् । तथैव कृष्णे भक्तानामपि तद्भवति ध्रुवम् ॥ २० ॥ इत्युक्तो हरिणा नित्यानन्दः पप्रच्छ तं पुनः । त्रैविध्यं वृत्तिवेगानां गुणैर्वाऽस्त्यन्यहेतुना ॥ २१ ॥ श्रीहरिरुवाच – भेदास्तु वृत्तिवेगानां नैव सन्ति गुणैः कृताः । सामग्रीतारतम्येन भवन्ति गुणिनां हि ते ॥ २२ ॥ इन्द्रियाण्येव गच्छेयुः पदार्थान् यर्हि तर्हि तु । मन्दो वेग इति ज्ञेयं वृत्तीनां सूक्ष्मबुद्धिभिः ॥ २३ ॥

भवति । तथैव । भक्तानामपि । कृष्णे । तत्स्नेहतारतम्यम् । भवति । ध्रुवं निश्चितमेव ॥ २० ॥ इतीति । इत्यमुना प्रकारेण । हरिणा । उक्तो दत्तोत्तरः । नित्यानन्दो मुनिः । पुनः । तं श्रीहरिम् । पप्रच्छ । हे हरे ! । वृत्तिवेगानामुक्तविधजीववृत्तिवेगानाम् । त्रैविध्यं मन्दादित्रिप्रकारत्वम् । गुणैः सत्त्वादिगुणरूपैर्हेतुभिः कृतम् । अस्ति । अथवा । अन्यहेतुना गुणभिन्नेनान्येन केनापि हेतुनाऽस्ति । तत्कथ्यतामिति शेषः ॥ २१ ॥ 'पृष्टः स एवं मुनिना नित्यानन्देन धर्मज्ञः । तं हर्षयन् जगादेति स्वाश्रितानपरांस्तथा' । भेदा इति । हे मुने ! । वृत्तिवेगानाम् । भेदा मन्दादयः प्रकारास्तु । गुणैः । कृताः । नैव सन्ति । किन्तु । गुणिनां सत्त्वादिगुणवतां पुंसाम् । सामग्रीतारतम्येनेन्द्रियान्तःकरणादिसाहित्यतरतमभावेन । ते वृत्तिवेगभेदाः । भवन्ति ॥ २२ ॥ सामग्रीः प्रदर्शयंस्तत्सम्बन्धेन जीववृत्तीनां मन्दादिभावमाह पञ्चभिः । इन्द्रियाणीति । यर्हि यदा । इन्द्रियाण्येव । पदार्थान्प्रति । गच्छेयुः । न तु मन इति भावः । तर्हि । वृत्तीनाम् । मन्दः । वेगः ।

जायते । इतीत्थम् । सूक्ष्मबुद्धिभिः । ज्ञेयम् ॥ २३ ॥ यदेति । यदा । इन्द्रियाणि । मनसा । सह । पदार्थान्प्रति । गच्छेयुः । तदा तु । तासां वृत्तीनाम् । मध्यमः । वेगः । मनीषया । ज्ञेयः ॥ २४ ॥ विशेषेति । यर्हि । आत्मनो जीवस्य । विशेषसत्तया । साकम् । समनस्कानि मनःसहितानि । तानीन्द्रियाणि । अर्थान्पदार्थान् । गच्छेयुः । तदा । अन्तिमस्तीव्रः । वेगः । ज्ञेयः ॥ २५ ॥ मन इति । किञ्च । जीवेन विशेषसत्तारूपेणात्मना । अनुगतमनुसृतम् । मनः । यत् । अक्षमिन्द्रियम् । अधितिष्ठति । तद्वृत्तिवेगस्तस्येन्द्रियस्य वृत्तेर्वेगः । तीव्रः । स्यात् । इतराणि तद्भिन्नानीन्द्रियाणि । तत्तीव्रवेगवदिन्द्रियं प्रति । अन्वीयुरनुवर्त्तेरन् ॥ २६ ॥ एकस्मिन्निति । सर्वस्य सर्वजनस्य । एकस्मिन् । इन्द्रिये । वृत्तिवेगस्य । तीव्रता । प्रायो बाहुल्येन । दृश्यते । अथ च । तदनुसारतस्तीव्रवेगवदेकेन्द्रियवृत्त्यनुसारात् । स्नेहः । स्यात् ॥ २७ ॥ मुक्तानन्द इति । अथैवंविधश्रीहरिवाक्यश्रवणानन्तरम् । मुक्तानन्दो मुनिः । अपृच्छत् श्रीहरिं प्रश्नमप्राक्षीत् । हे प्रभो ! । एकस्मिन् । इन्द्रिये । वृत्तीवेगान्मन्दादिवृत्तिवेगत्रिप्रकारान् । स्पष्टं यथा तथा । वद । येनैकेन्द्रियवृत्तिमन्दादिवेगज्ञानेन । अन्यत्रान्येष्वपीन्द्रियेषु । तान्वृत्तिवेगान् ।

यदेन्द्रियाणि गच्छेयुः पदार्थान्मनसा सह । तदा तु मध्यमो वेगस्तासां ज्ञेयो मनीषया ॥ २४ ॥ विशेषसत्तया साकमात्मनो यर्हि तानि तु । समनस्कानि गच्छेयुरर्थान्वेगस्तदान्तिमः ॥ २५ ॥ मनो जीवेनानुगतमक्षं यदधितिष्ठति । तद्वृत्तिवेगस्तीव्रः स्यादन्वीयुश्चेतराणि तत् ॥ २६ ॥ एकस्मिन्निन्द्रिये प्रायो वृत्तिवेगस्य तीव्रता । सर्वस्य दृश्यतेऽथ स्यात्स्नेहस्तदनुसारतः ॥ २७ ॥ मुक्तानन्दस्त्वथापृच्छदेकस्मिन्निन्द्रिये प्रभो ! । वृत्तिवेगान्वद स्पष्टं विद्यामन्यत्र येन तान् ॥ २८ ॥ तमुवाच हरिर्वेगं त्रिविधं वच्मि लोचने । बालास्तरुण्यो वृद्धाश्च सन्त्यत्र त्रिविधा स्त्रियः ॥ २९ ॥ चक्षुषा दर्शने तासां समभावो भवेद्यदि । वृत्तिवेगस्तदा मन्दः केवलेन्द्रियदर्शनात् ॥ ३० ॥ तरुण्या वीक्षणाद्यर्हि विकारः स्याच्च नान्ययोः । समनस्केन्द्रियेक्षातो वृत्तिवेगः स मध्यमः ॥ ३१ ॥ सङ्कल्पाः स्युर्यदा दुष्टाः सर्वासामपि वीक्षणात् । तीव्रो वेगः स वै जीवमनश्चक्षुभिरीक्षणात् ॥ ३२ ॥

विद्यां जानीयाम् ॥ २८ ॥ तमिति । तमेवंपृच्छन्तं मुक्तानन्दमुनिम् । हरिः । उवाच । हे मुने ! । लोचने चक्षुरिन्द्रिये । त्रिविधम् । वेगम् । वच्मि । अत्र लोके । बालाः । तरुण्यः । वृद्धाश्च । इति । त्रिविधाः । स्त्रियो नार्यः । सन्ति ॥ २९ ॥ चक्षुषेति । तासां त्रिविधनारीणाम् । चक्षुषा । दर्शने । यदि । समभावः । भवेत् । तदा । केवलेन्द्रियदर्शनाद्धेतोः । वृत्तिवेगः । मन्दः । ज्ञेयः ॥ ३० ॥ तरुण्या इति । यर्हि । तरुण्या यौवनावस्थावस्थिताया नार्याः । वीक्षणात् । विकार उपभोगादिसङ्कल्परूपा विकृतिः । स्यात् । अन्ययोर्बालावृद्धयोर्नार्योः । वीक्षणात् । विकारः । न स्यात् । तर्हि । समनस्केन्द्रियेक्षातो मनःसहितचक्षुरिन्द्रियवीक्षणाद्धेतोः । सः । वृत्तिवेगः । मध्यमः । ज्ञेयः ॥ ३१ ॥ सङ्कल्पा इति । यदा । सर्वासां बालादित्रिविधानामपि स्त्रीणाम् । वीक्षणात् । दुष्टाः । सङ्कल्पाः । स्युः । तदा । जीवमनश्चक्षुभिर्विशेषसत्तावज्जीवमनश्चक्षुरिन्द्रियैः । ईक्षणाद्धेतोः । सः । तीव्रः । वेगः । ज्ञेयः ॥ ३२ ॥

इतीति । इत्येवंविधम् । कृष्णोक्तं साक्षाच्छ्रीहरिकृष्णभगवदुक्तम् । प्रश्नोत्तरम् । श्रुत्वा । सः । सन् मुक्तानन्दमुनिः । तुतोष । अथानन्तरम् । ब्रह्मानन्दः । साधुः । ईश्वरं साक्षात्पुरुषोत्तमम् । तं श्रीहरिम् । प्रणम्य । अपृच्छत् ॥ ३३ ॥ रूपेति । हे हरे ! । कदाचन । बालायुवतिवृद्धानाम् । सुन्दरीणां रूपवन्नारीणाम् । रूपव्यक्त्या । वयोव्यक्त्या सह । वीक्षणे । जाते सत्यपि ॥ ३४ ॥ हृदीति । तरुणस्य यूनः । कस्यचिद्भक्तजनस्य । हृदि मनसि । चेद्यदि । क्षोभः । नैव । भवेत् । तर्हि । तल्लोचने तरुणभक्तजनचक्षुरिन्द्रिये । त्रिषु त्रिप्रकारवेगेषु मध्ये । कतमः । वेगः । ज्ञातव्यः । इति द्वयोरेकसम्बन्धः ॥ ३५ ॥ सम्यगिति । सम्यग्ज्ञानाद्रूपादिव्यक्तिबोधस्य विशेषसत्तायुतजीवमनश्चक्षुरिन्द्रियैः कृतदर्शनस्य ज्ञानसम्भवाद्धेतोः । तीव्रवेगः । स्यात् । इतीत्थं तु । नोऽस्माकम् । प्रतिभाति । किन्तु तत्कार्यमान्द्येन तीव्रवेगकार्यस्य क्षोभोदयस्याभावरूपमन्दीभावेन कृत्वा । तत्र तस्मिन्वेगे । संशयः । जायते । त्रिविधवेगेषु मध्ये कोऽयं वेगः स्यादिति संशय उत्पद्यते इत्यर्थः ॥ ३६ ॥ तमिति । तमेवं पृच्छन्तं ब्रह्मानन्दमुनिम् । हरिः । उवाच । हे मुने ! । एषः । वेगः । तीव्र एव ।

इति प्रश्नोत्तरं श्रुत्वा कृष्णोक्तं स तुतोष सन् । ब्रह्मानन्दोऽथ तं साधुः प्रणम्यापृच्छदीश्वरम् ॥३३॥ रूपव्यक्त्या वयोव्यक्त्या सह जातेऽपि वीक्षणे । बालायुवतिवृद्धानां सुन्दरीणां कदाचन ॥३४॥ हृदि क्षोभो भवेन्नैव कस्यचित्तरुणस्य चेत् । तर्हि तल्लोचने वेगो ज्ञातव्यः कतमस्त्रिषु ॥ ३५ ॥ सम्यग्ज्ञानात्तीव्रवेग इति तु प्रतिभाति नः । किन्तु तत्कार्यमान्द्येन जायते तत्र संशयः ॥ ३६ ॥ तमुवाच हरिर्वेगस्तीव्र एवैष ईयताम् । तथापि तत्सदोषत्वात्तत्कार्ये नास्ति तीव्रता ॥ ३७ ॥ शीघ्रशील्पोऽपि पुरुषो वातरुद्धवपुर्यथा । कुर्यात्कार्यं मन्दमेव ज्ञेयो वेगोऽप्यसौ तथा ॥ ३८ ॥ यथाऽत्र दोषसञ्चारो जायते तन्निशम्यताम् । स्त्रीषु दोषा भृशं सन्ति मोक्षाध्वप्रतिबन्धकाः ॥ ३९ ॥ सद्भ्यः सच्छास्त्रतस्ते च श्रुताः सन्त्यमुना पुरा । मननं च ततस्तेषां सर्वेषां हृदये कृतम् ॥ ४० ॥

इति । ईयताम् । तथापि । तत्सदोषत्वात् तस्य तीव्रवेगस्य स्त्रीनिरीक्षणनिष्ठदोषयुक्तत्वात् । तत्कार्ये तीव्रवेगकार्यभूते मनःक्षोभे । तीव्रता । नास्ति ॥ ३७ ॥ एतदेव दृष्टान्तेन द्रढयति । शीघ्रेति । यथा । शिघ्रशिल्पः प्रतिमाचित्रनिर्माणादिशिल्पकर्मणि हस्तलाघवेन युक्तोऽपि । पुरुषपष्टाङ्किकादिः । वातरुद्धवपुर्वायुना जडीकृताङ्गः सन् । मन्दं शनैः शनैरेव । कार्यम् । कुर्यात् । तथा । असौ सदोषतीव्रतावान् । वेगोऽपि । ज्ञेयः । अयमर्थः । यथा प्राक् शीघ्रतया शिल्पकर्मपटुरपि वातरुद्धाङ्गतादोषाविष्टतया प्रतिमादिनिर्माणार्थं मनोवेगं कुर्वन्नपि हस्तेन टङ्कादिगृहीतुं न शक्नोति तथा प्राक् तीव्रोऽपि चक्षुर्वेगो दोषयुक्तत्वेन मनःक्षोभं कर्तुं न शक्नोतीति ॥ ३८ ॥ यथेति । यथा येन प्रकारेण । अत्र वेगे । दोषसञ्चारः । जायते । तत्तं दोषसञ्चारप्रकारमित्यर्थः । निशम्यतां श्रूयताम् । मोक्षाध्वप्रतिबन्धकाः मोक्षमार्गप्रतिरोधकाः । स्त्रीषु । दोषाः । भृशमतिशयिताः । सन्तिः ॥ ३९ ॥ सद्भ्य इति । ते दोषाः । अमुना त्रिविधस्त्रीवीक्षणेऽप्यक्षुब्धहृदा तरुणभक्तपुरुषेण । पुरा प्रथमम् । सद्भ्यो

भगवदेकान्तिकसाधुभ्यः । सच्छास्त्रतः श्रीमद्भागवतादिसच्छास्त्राच्च । श्रुताः । सन्ति । ततस्तदनन्तरम् । सर्वेषाम् । तेषां दोषाणाम् । हृदये । मननं च । कृतम् ॥४०॥ स्त्रीति । ततो मननाद्धेतोः । तस्य तरुणभक्तस्य । बुद्धौ । स्त्रीदौष्ट्यनिश्चयः स्त्रीणां सदोषताया निर्णयः । जातः । अस्ति । अथ च । असौ निश्चयः । जीवे । प्रविष्टः । अस्ति । स च । साक्षिणातदन्तर्यामिणाऽपि । प्रमाणितः प्रमाणीकृतः । प्रमाणित इत्यस्यायं भावः । सर्वाणि जीवकर्माणि द्विविधानि । फलप्रदात्रान्तर्यामिणा फलदर्शनादर्शनाभ्यां प्रमाणितान्यप्रमाणितानि च । तत्र जीवस्य स्वकृतकर्मस्मरणसामर्थ्याभावाद्यानि जीवे स्फूर्त्तिमायान्ति नान्यन्तर्यामिप्रमाणितानि यानि न स्फुरन्ति तानि तेनाप्रमाणितानीति ॥ ४१ ॥ एवमिति । एवममुना प्रकारेण । स निश्चयः । पक्कतां दार्ढ्यं प्राप्य । आत्मनो जीवस्य । वृत्तिषु । वर्त्तते । जीवः । ताभिर्वृत्तिभिः । श्रवणवीक्षाद्याः । क्रियाः । करोति ॥ ४२ ॥ प्रवर्त्तेत इति । यदा । स्त्रीणां त्रिविधानां नारीणाम् । आकारे । लोचनं नेत्रेन्द्रियम् । प्रवर्त्तते । तदा । मनः । तल्लोचनम् । अन्वेति पश्चाद्व्रजति । जीवोऽपि । परवान् परतन्त्र इव । तन्मनः । अन्वेति ॥ ४३ ॥ जीवेति । तर्हि । जीववृत्तिगतः । सः । तद्दोष-

स्त्रीदौष्ट्यनिश्चयो बुद्धौ ततो जातोऽस्ति तस्य च । प्रविष्टोऽस्त्यथ जीवेऽसौ साक्षिणाऽपि प्रमाणितः ॥४१॥ एवं स पक्कतां प्राप्यात्मनो वृत्तिषु वर्त्तते । क्रियाः श्रवणवीक्षाद्यास्ताभिर्जीवः करोति च ॥ ४२ ॥ प्रवर्त्तते यदा स्त्रीणामाकारे लोचनं तदा । तदन्वेति मनस्तच्च जीवोऽपि परवानिव ॥ ४३ ॥ जीववृत्तिगतस्तर्हि सोऽपि तद्दोषनिश्चयः । ता एतीत्यरुचिस्तत्र जायते न तु कामधीः ॥ ४४ ॥ सशर्करेऽपि पयसि पतितेऽहिगरे सति । तद्भोग्यधीर्न तद्द्रष्टुर्यथाऽस्यापि तथा न सा ॥ ४५ ॥ तत्क्षीरद्रष्टा तत्पाने प्राणनाशादिकान् यथा । दोषान् ज्ञात्वा निवर्त्तेत तथा वेत्त्येवमेष च ॥ ४६ ॥ रक्तास्थिमलमांसादिभृता स्त्री निर्दयान्तरा । सर्पिणीव त्वचा मृद्वी श्रेयोऽध्वपरिपन्थिनी ॥ ४७ ॥

निश्चयस्त्रिविधस्त्र्यगुणनिर्णयोपि । तास्त्रिविधनारीः । एति प्राप्नोति । इति हेतोः । तत्र तासु त्रिविधनारीषु । अरुचिरप्रीतिः । जायते । कामधीः कामोपभोगमतिः । न तु नैव जायते ॥ ४४ ॥ एतदेव दृष्टान्तेन स्फुटयति । सशर्कर इति । यथा । सशर्करे दलितशर्कराचूर्णसहितेऽपि । पयसि क्षीरे । अहिगरे सर्पविषे । पतिते सति । तद्द्रष्टुः पयःपतितविषवीक्षकस्य पुरुषस्य । तद्भोग्यधीस्तथाविधपयःपानमतिः । न जायते । तथा । अस्य स्त्रीदोषवीक्षकभक्तस्यापि । सा न कामधीः । न जायते ॥ ४५ ॥ तदिति । तथा । तत्क्षीरद्रष्टा सविषपयो वीक्षकः पुरुषः । तत्पाने सविषपयःपीतौ । प्राणनाशादिकान् । दोषान् । ज्ञात्वा । निवर्त्तेत तत्पानं न करोति । तथा । एष भक्तः । एवं वक्ष्यमाणप्रकारेण । वेत्ति स्त्रीदोषान् । जानाति । अतस्ततो निवर्त्तेत ॥४६॥ अथ तस्य स्त्रीदोषवेदनप्रकारमाह चतुर्भिः । रक्तेति । स्त्री नारी । रक्तास्थिमलमांसादिभृता । निर्दयान्तरा । सर्पिणीव । त्वचा । मृद्वी कोमलता युक्ता । श्रेयोऽध्वपरिपन्थिनी मोक्षमार्गविघ्नरूपा । अस्ति । यथा मृदुतया प्रतीयमानाऽपि सर्पिणीपत्स्पृष्टा सत्यपि दष्ट्वा स्प्रष्टुः प्राणहारिणी भवेत्तथा नार्यपि मृदुभावेन स्पृष्टा सती धर्माच्च्यावयित्वा मोक्षविघातरूपप्राणहारिणी भवेदित्यर्थः ॥ ४७ ॥

संसृतीति । एषा स्त्री । संसृतिभ्रमहेतुर्भवाम्बुधौ निमज्जनप्रवाहकारणभूता । परत्र स्वर्गादिपरलोकेषु । अत्रास्मिन् । लोके च । दुःखदाऽनेकविधकष्टप्रदात्री । दुष्पूरकामा यथोत्तराधिकवाञ्छितार्थलाभेऽपि सर्वदाऽपूर्णमनोरथा । सर्वस्वहर्त्री धर्मोपयोगिसकलधनहारिणी च । इति हेतोः । मे मम । हिता हितकारिणी । न भवत्येव ॥ ४८ ॥ नेति । स्त्री । क्वापि कासुचिदपि योनिषु । दुर्लभा दुष्प्रापा । नास्ति किन्तु । सर्वयोनिषु श्वविड्वराहादिसकलयोनिषु । सुलभाऽयत्नलभ्या । अस्ति । अतः । सा स्त्री । बहुजन्मसु । भुक्ता । भवति । तत्तेन हेतुना । भवे संसारे । मुहुर्भ्रमामि मुहुर्भ्रमणं करोमि ॥ ४९ ॥ एक इति । सर्वजन्मसु देवमनुष्यादिसकलयोनिषु । एकः केवलः । सत्सङ्ग एव । दुर्लभः । अस्ति । हि । तत्र दुर्लभसत्सङ्गे । एका केवला । इयं नार्य्येव । विघ्नरूपा । अस्ति । न संशयः ॥ ५० ॥ इतीति । इत्यमुना प्रकारेण । ज्ञात्वा । सदोषोक्तविधदोषसहितैवेक्षा दर्शनं यस्य सः । पक्वधीरुक्तविधदोषदर्शने परिपक्वमतिः । स भक्तः पुमान् । तास्त्रिविधनारीः । पश्यन्नपि । काष्ठपुत्तलिकाम् । पश्यन्निव । तेन तद्दर्शनेन । क्षोभम् । नाप्नोति ॥ ५१ ॥ वेगेति । हेमुनिसत्तम ! । एतत् । वेगप्रश्नोत्तरम् । दत्तम् ।

संसृतिभ्रमहेतुश्च परत्रात्र च दुःखदा । दुष्पूरकामा सर्वस्वहर्त्रीत्येषा न मे हिता ॥ ४८ ॥ नास्ति स्त्री दुर्लभा क्वापि सुलभा सर्वयोनिषु । बहुजन्मसु सा भुक्ता तद्भ्रमामि भवे मुहुः ॥ ४९ ॥ एक एव हि सत्सङ्गो दुर्लभः सर्वजन्मसु । इयमेवास्ति तत्रैका विघ्नरूपा न संशयः ॥ ५० ॥ इति ज्ञात्वा सदोषेक्षः काष्ठपुत्तलिकामेव । पश्यन्नपि स तास्तेन क्षोभं नाप्नोति पक्वधीः ॥ ५१ ॥ वेगप्रश्नोत्तरं त्वेतद्दत्तं मुनिसत्तम ! । स्त्रीक्षणेऽप्यमनःक्षोभे वच्मि हेत्वन्तरं शृणु ॥ ५२ ॥ यस्य स्यादात्मनिष्ठायाः पक्वता जनकादिवत् । तस्यापि स्त्रीक्षणात्क्षोभो न स्याद्राज्यादितोऽपि च ॥ ५३ ॥ आत्मैकः सुखरूपोऽस्ति न तु स्त्रीवपुरादि तु । अन्यत्र यत्सुखं तत्तु स्वात्मजं न तु तद्भवम् ॥ ५४ ॥ देहादात्मा यदाऽप्येति वपुरादि तदाऽखिलम् । जगुप्सितं हेयमेव भवतीक्ष्यतेऽखिलैः ॥ ५५ ॥

स्त्रीक्षणे वयोरूपादिज्ञानसहितस्त्रीदर्शने सत्यपि । अमनःक्षोभे मनसः क्षोभाभावे । हेत्वन्तरमन्यं हेतुम् । वच्मि । शृणु ॥ ५२ ॥ यस्येति । हे मुने ! । यस्य भक्तस्य । जनकादिवत् । आत्मनीष्ठायाः । पक्वता । स्यात् । इयं परमात्मनिष्ठाया अप्युपलक्षणम् । तस्य भक्तस्यापि । स्त्रीक्षणात् । राज्यादितो राज्यप्राप्त्यादितश्चापि । क्षोभः । न स्यात् ॥ ५३ ॥ एतदेव विशेषेणाह दशभिः । आत्मेति । एकः केवलः । आत्मा मम जीव एव । सुखरूपः । अस्ति । स्त्रीवपुरादिस्त्रीशरीरस्वशरीरप्रभृतिकं तु । न तु कालत्रयेऽपि सुखरूपं नैवास्ति । अन्यत्र स्त्रीवपुरादिषु । यत् । सुखम् । तत्तु । स्वात्मजं स्वजीवात्मभवम् । अस्ति । तद्भवं वपुरादिभवम् । न तु नैवास्ति ॥ ५४ ॥ एतदेव प्रत्यक्षप्रमाणेन दर्शयति । देहादिति । यदा । देहात्सकाशात् । आत्मा जीवः । अप्येति गच्छति । तदा । वपुरादि । अखिलम् । जुगुप्सितं बीभत्सम् । हेयं त्याज्यमेव । भवति । इतीत्थम् । अखिलैर्जनैः । ईक्ष्यते ॥ ५५ ॥

आत्मेति । आत्मा । अहम् । महापुरुषसेवया साक्षाद्भगवत्तदेकान्तिकसाधुपरिचर्यया । ब्रह्मरूपो ब्रह्मभावं प्राप्तः । अस्मि । तथाविधः सम्प्राप्तब्रह्मभावः सन्नपि । अहम् । राधिकापतेः । कृष्णस्य साक्षाद्भगवतः । दासः । अस्मि ॥ ५६ ॥ आत्मेति । स साक्षान्मत्स्वामी । कृष्णः । आत्मात्मा सकलजीवेश्वरान्तर्यामी । अक्षरात्माऽक्षरधामाधिपतिः । परात्परः सर्वपरादक्षरादपि स्वरूपस्वभावादिभिरुत्कृष्टः । ब्रह्मरूपा अक्षरब्रह्मभावं प्राप्ता येऽनन्तकोटिमुक्तास्तेषां सङ्घैर्वृन्दैर्निषेवितो दिव्यस्रक्चन्दनाद्युपचारैः परिचरितः । अस्ति ॥५७॥ द्युपतय इति । द्युपतयो ब्रह्मादयो देवा अपि । ते तव । अनन्ततया स्वरूपगुणादीनामनन्त्वाद्धेतोः । अन्तं स्वरूपगुणादिपारम् । न ययुर्न प्रापुः । किं बहुना । त्वं सर्वदेवमुक्ताद्यधिपो भवानपि । अन्तम् । न ययिथ । यदन्तरा त्वच्छरीरभूतस्याक्षरस्य शरीरे । सावरणा अष्टभिः पृथिव्यादिभिरावरणैः सहिताः । अण्डनिचया ब्रह्माण्डसमुहाः । वयसा आयुरुपलक्षकेन कालेन सह । खे आकाशे । रजांसि रेणव इव । वान्ति भ्रमन्ति । यद्यस्मात् । त्वमेतादृशापरिमितमहिमवानतःकारणादित्यर्थः । श्रुतयो वयं वेदाः । अतन्निरसनेन । त्वत्समानाधिकान्याभावात्त्वदुपमानप्रदानेऽन्यस्य सर्वस्य निषेधवचनेनेत्यर्थः । भवन्निधनास्त्वदुप-

आत्माऽहं ब्रह्मरूपोऽस्मि महापुरुषसेवया । तथाविधोऽपि कृष्णस्य दासोऽहं राधिकापतेः ॥ ५६ ॥ आत्मात्मा चाक्षरात्मा च सोऽस्ति कृष्णः परात्परः । ब्रह्मरूपानन्तकोटिमुक्तसङ्घनिषेवितः ॥५७॥ द्युपतय एव ते न ययुरन्तमनन्ततया त्वमपि यदन्तराण्डनिचया ननु सावरणाः । ख इव रजांसि वान्ति वयसा सह यच्छ्रुतयस्त्वयि हि फलन्त्यतन्निरसनेन भवन्निधनाः ॥५८॥ यस्यैवं महिमानं च श्रुतयो वर्णयन्त्यपि । कारुण्येन नराकारः स कृष्णः शरणं मम ॥५९॥ आत्मानं च परात्मानमेवं यो बुद्ध्यतेऽञ्जसा । न तस्यापि भवेत्क्षोभः स्त्रीसमीक्षादिना मुने ! ॥ ६० ॥ मानेऽपमाने राज्ये या भिक्षायां प्रतिवेश्म च । स्वर्णे लोष्टे च ममता भवत्यस्यारिमित्रयोः ॥ ६१ ॥ ब्रह्मीभावादात्मनश्च परब्रह्मदृढाश्रयात् । दृष्टिरस्यातिमहती वर्त्तते सर्वतोऽधिका ॥ ६२ ॥

मानं त्वामेवानन्वयेन ज्ञात्वा त्वत्स्वरूपकृतावासाः सत्यः । त्वयि सर्वकारणे त्वय्येव स्वामिनि सति सफलमनोरथा भवन्ति ॥ ५८ ॥ यस्येति । एवममुना प्रकारेण । श्रुतयो वेदा अपि । यस्य श्रीहरेः । महिमानम् । वर्णयन्ति । कृष्णः । स श्रीहरिः । कारुण्येन निष्कारणापारकरुणया । नराकारः सन् । मम । शरणमिष्टदेवत्वेन मयाश्रितो भवतीत्यर्थः ॥ ५९ ॥ आत्मानमिति । हे मुने ! । एवममुना प्रकारेण । यो भक्तः । आत्मानम् । परमात्मानं च । अञ्जसा तत्त्वतः । बुध्यते । तस्य भक्तस्यापि । स्त्रीसमीक्षादिना । आदिशब्दाद्धनखानपानादिविषयग्रहणम् । क्षोभः । न भवेत् ॥ ६० ॥ मान इति । अस्यैवंविधभक्तस्य । माने । राज्ये । प्रतिवेश्म प्रतिगृहाङ्गणम् । भिक्षायाम् । स्वर्णे हेम्नि । लोष्टे मृत्पिण्डे । अरिमित्रयोर्वा । समता साम्यमतिः । भवति जायते ॥ ६१ ॥ ब्रह्मीभावादिति । आत्मनः स्वजीवस्य । ब्रह्मीभावाद्ब्रह्मैकभावेनावगमात् । परब्रह्मदृढाश्रयात्साक्षात्परमेश्वरस्य सुदृढशरणीकरणाच्च हेतोः । अस्य भक्तस्य । दृष्टिः । अतिमहती । सर्वतः । अधिका । वर्त्तते । प्राग्दीनस्यापि निध्याप्ताविव ब्रह्मात्मैकभावापत्तिपूर्वकमनवधिकातिशयसुखरूपपरब्रह्मसेवादिसुखानुभवाढ्यता जाता सर्वाधिका महती ज्ञानदृगस्य जायते इत्यर्थः ॥ ६२ ॥

अत इति । अतो हेतोः । तस्यैवंविधज्ञानिभक्तस्य । दिव्यभोगानाममायिकानां गोलोकादिधामसुखानामपि । इच्छा । न वर्त्तते । तदा । स्त्र्यादीनाम् । लौकिकभोगानाम् । गणना । कुतो वर्त्तेत । तांस्त्वतितुच्छान्मन्येतेत्यर्थः ॥ ६२ ॥ पक्केति । एवममुना प्रकारेण । यः । पुमान् । पक्कज्ञानी । भवेत् । स पुमान् । सुखी । प्रोक्तः । यो वा यश्च पुमान् । सत्सु भगवत्तदीयसाधुषु । विश्वस्य तद्वचनेषु सम्यक् विश्वासं प्राप्येत्यर्थः । ईशं साक्षाद्भगवन्तम् । भजेत्तच्छन्दानुवृत्तिपूर्वमुपासीत । स विश्वासवान् भक्तश्चापि सुखी प्रोक्तः । इतर उक्तोभयविधान्यः । न च सुखी नैव प्रोक्तः ॥ ६४ ॥ य इति । यस्तु भगवद्भक्तः । लोके श्रुतिस्मृत्यर्थज्ञाने । मूढतमोऽतिशयेनाज्ञः । शास्त्रीयबुद्ध्यभावेन तज्ज्ञानाभावेऽपि केवलं भगवत्तदीयवचनदृढविश्वासेन तदुक्तरीत्या भगवन्तं भजमान इत्यर्थः । यश्च । बुद्धेः । परमात्मपरमात्मस्वरूपम् । गतः । शास्त्रीयबुद्धियुक्तत्वाच्छ्रुतिस्मृत्यर्थावगमपूर्वं साक्षाद्भगवदेकान्तिकोपासनयाऽऽत्मपरमात्मस्वरूपयथार्थज्ञानं प्राप्तः । तावुभौ । सुखं यथातथा । एधेते वृद्धिं गच्छतः । भगवत्सेवारूपां मुक्तिं प्राप्नुत इत्यर्थः । अन्तरितः । जनः । श्रुतिस्मृत्यर्थज्ञानवान् सन्नपि न च भगवत्तदीयवचनविश्वासवान् न च भगवदेकान्ति-

अतो न दिव्यभोगानामपीच्छा तस्य वर्त्तते । तदा लौकिकभोगानां स्त्र्यादीनां गणना कुतः ॥६३॥ पक्कज्ञानी भवेदेवं यः स प्रोक्तः सुखी पुमान् । यो वापि विश्वस्य सत्स्वीशं भजेत्स च न चेतरः ॥ ६४ ॥ यश्च मूढतमो लोके यश्च बुद्धेः परं गतः । तावुभौ सुखमेधेते क्लिश्यत्यन्तरितो जनः ॥ ६५ ॥ इत्यादिवचसामर्थो ह्ययमेवास्ति निश्चितः । इति प्रश्नोत्तरं श्रुत्वा मुनिराप मुदं स च ॥ ६६ ॥ ब्रह्मानन्दादयः सन्तस्ततस्तं प्रोचुरीश्वर ! । ईदृक्प्रश्नोत्तरं कर्त्तुं शक्तः कोऽप्यत्र नास्ति हि ॥ ६७ ॥ स्वयमेवाथ पप्रच्छ भगवान्महतः सतः । दुःखमेवास्ति मायायां सुखं वाऽप्यस्ति किञ्चन ॥ ६८ ॥ इति श्रुत्वा प्रभोः प्रश्नं मुक्तानन्द उवाच तम् । केवलं दुःखदा माया दुःखरूपैव साऽस्ति यत् ॥ ६९ ॥

कोपासनयाऽऽत्मपरमात्मज्ञानवान् जन इत्यर्थः । क्लिश्यति भगवत्सेवासुखप्राप्त्यभावादन्यलोकभोगक्लेशमात्रफलमनुभवतीत्यर्थः ॥ ६५ ॥ इतीति । इत्यादिवचसामेवमादिश्रीभागवतादिशास्त्रीयवचनानाम् । अर्थः । अयं मदुक्तप्रकार । एव । निश्चितः । अस्ति । इत्येवंभूतम् । प्रश्नोत्तरम् । श्रुत्वा । सः । मुनिर्ब्रह्मानन्दसाधुः । मुदम् । आप । चकारादन्ये सन्तोऽपि मुदमापुः ॥ ६६ ॥ ब्रह्मानन्देति । ततस्तदनन्तरम् । ब्रह्मादयः । सन्तः साधवः । तं श्रीहरिम् । प्रोचुः । हे ईश्वर ! । ईदृक्प्रश्नोत्तरमेवंविधप्रश्नप्रतिवचनम् । कर्त्तुम् । अत्र लोके । कोऽपि त्वदन्यःकश्चिदपि । शक्तः । समर्थः । नास्ति । हि निश्चितमेव ॥ ६७ ॥ स्वयमिति । अथैवविधब्रह्मानन्दादिमुनिवाक्यश्रवणानन्तरम् । भगवान् श्रीहरिः । स्वयमेव । महतः । सतो मुक्तानन्दादीन्साधून् । पप्रच्छ । हे साधवः ! । मायायाम् । दुःखमेव । अस्ति । अथवा । किञ्चन । सुखमपि । अस्ति ॥ ६८ ॥ इतीति । इत्येवंविधम् । प्रभोः श्रीहरेः । प्रश्नम् । श्रुत्वा । मुक्तानन्दो मुनिः । तं श्रीहरिम् । उवाच । हे हरे ! । यद्यतो हेतोः । माया । दुःखरूपैव । अस्ति । अतो हेतोः । सा माया । केवलम् । दुःखदा । अस्ति । सिकतायां तैलाशेव मायायां सुखाशा कुत इति भावः ॥ ६९ ॥

इतीत्थम् । तेन मुक्तानन्दमुनिना । उक्ते सति । स्वामी श्रीहरिः । तं मुक्तानन्दमुनिम् । प्राह । हे मुने ! । सत्त्वम् । रजः । तमश्चेति । गुणाः । मायाया एव सन्ति । तत्र तेषु गुणेषु मध्ये । सत्त्वम् । सुखात्मकम् । अस्ति ॥७०॥ ज्ञानेति । किञ्च । ज्ञानवैराग्यशान्त्याद्या । तत्सम्पत्सत्त्वगुणसम्पत्तिः । सुखात्मिका । अस्ति । एवं सति । माया । दुःखदैव । इतीत्थम् । कथम् । कथ्यते ॥ ७१ ॥ विद्येति । किञ्च । सा माया । विद्याशक्त्या । बद्धदेहिनाम् । मोक्षकरी । उक्ता । तथा चोक्तं श्रीभागवते । 'विद्याविद्ये मम तनू विध्युद्धव शरीरिणाम् । बन्धमोक्षकरी आद्ये मायया मे विनिर्मिते' इति । अतो हेतोः । सा । दुःखरूपा । इतीत्थम् । विवेकिभिः । वक्तुम् । न शक्या ॥ ७२ ॥ इतीति । इतीत्थम् । तेन श्रीहरिणा । उक्ते सति । सर्वेऽपि । सन्तो मुक्तानन्दादयः । साधवः । तं श्रीहरिम् । आहुः । हे हरे ! । अस्य । प्रश्नस्य । उत्तरम् । त्वमेव । ब्रूहि । इतीत्थम् । उक्तो मुक्तानन्दादिभिरभिहितः । नारायणः श्रीहरिः । अब्रवीत् ॥ ७३ ॥ ज्ञेयेति । हे सन्तः ! । माया । सुखदा । दुःखदा । इत्येवम् । द्विरूपैव । ज्ञेया । सा माया । कृष्णभक्तानाम् । सुखदा । अन्येषां

इत्युक्ते तेन तं स्वामी प्राह सत्त्वं रजस्तमः । गुणाः सन्त्येव मायायास्तत्र सत्त्वं सुखात्मकम् ॥ ७० ॥ ज्ञानवैराग्य-शान्त्याद्या तत्सम्पच्च सुखात्मिका । एवं सति कथं माया दुःखदैवेति कथ्यते ॥ ७१ ॥ विद्याशक्त्या मोक्षकरी सा चोक्ता बद्धदेहिनाम् । अतो न दुःखरूपेति वक्तुं शक्यो विवेकिभिः ॥ ७२ ॥ इत्युक्ते तेन सन्तः सर्वेऽप्याहुस्त्वमेव हि । प्रश्नस्यास्योत्तरं ब्रूहीत्युक्तो नारायणोऽब्रवीत् ॥ ७३ ॥ ज्ञेया माया द्विरूपैव सुखदा दुःखदेति च । सुखदा कृष्णभक्तानामन्येषां दुःखदैव सा ॥७४॥ सौम्यरूपश्चोग्ररूपः संयमिन्यां यथा यमः । पुण्यात्मनां पापिनां च वर्त्ततेऽसौ तथेयताम् ॥ ७५ ॥ देहेन्द्रियान्तःकरणं मायायाः कार्यमस्ति यत् । बन्धकृन्नास्ति तदपि भक्तानां भक्तिपुष्टिकृत् ॥ ७६ ॥ इत्युक्तवन्तं तं मुक्तानन्दः प्राह प्रभो ! यदि । माया त्वदाश्रितानां तु सुखदैवेति कथ्यते ॥ ७७ ॥

तदभक्तानाम् । दुःखदैव । ज्ञेया ॥ ७४ ॥ एतदेव दृष्टान्तेन द्रढयति । सौम्येति । यथा । संयमिन्यां पुर्याम् । यमो वैवस्वतः । पुण्यात्मनां सुकृतिनां जनानाम् । सौम्यरूपः । पापिनां दुष्कृतिनां जनानाम् । उग्ररूपश्च । वर्त्तते । तथा । असौ माया । ईयतां भक्तानां सुखदा अभक्तानां दुःखदा च ज्ञायताम् ॥ ७५ ॥ देहेति । मायायाः । कार्यम् । यत् । देहेन्द्रियान्तःकरणम् । अस्ति । तत् । भक्तानाम् । बन्धकृत् । नास्ति । अपि तु । भक्तिपुष्टिकृत् । भक्ता देहेन्द्रियादीनि भगवदा-ज्ञानुसारेण प्रवर्त्तयन्त्यतस्तेषां भक्तिपुष्टिद्वारा तानि सुखहेतूनि जायन्तेऽभक्तास्तानि तदाज्ञाप्रतिकूलतया विषयेषु प्रवर्त्तयन्त्यतस्तेषां बन्धाचरणद्वारा तानि दुःखप्रदानि जायन्ते इत्यर्थः ॥ ७६ ॥ इतीति । इत्यमुना प्रकारेण । उक्तवन्तम् । तं श्रीहरिम् । मुक्तानन्दो मुनिः । प्राह । हे प्रभो ! । यदि । माया । त्वदाश्रितानां जना-नाम् । सुखदैव । इतीत्थम् । कथ्यते । तर्हीत्युत्तरेणान्वयः ॥ ७७ ॥

तर्हीति । तर्हि । भक्ताः । विजने एकान्तस्थाने । यदा । तव । ध्यानम् । कुर्वन्ति । तदा । मनोरूपा । माया । सङ्कल्पैर्दृष्टश्रुतपदार्थविषयैस्तर्कैः । दुःखदा ध्यानविक्षेपोत्पादनेन दुःखप्रदा । कथं जायते ॥७८॥ 'इति पृष्टः स मुनिना मुक्तानन्देन सादरम् । श्रीकृष्ण इत्थं तं चाह नन्दयन्नपरान्निजान्' । कृष्णेति । हे मुने ! । येषां भक्तानाम् । माहात्म्यज्ञानपूर्वकः । अत एव । दृढः । कृष्णाश्रयः । भवेत् । तेषां भक्तानां तु । सा मनोरूपा माया । सङ्कल्पैः । दुःखदा । न भवेदेव । इतीत्थम् । अवगम्यताम् ॥७९॥ भक्तस्येति । भक्तस्यापि । यस्य पुंसः । रमापतेः साक्षात्कृष्णस्य । आश्रये माहात्म्यज्ञानपूर्वकाश्रयविधाने । शैथिल्यमपरिपक्वता । स्यात् । तस्य भक्तस्य तु । दुःखदा मनोरूपा माया दुःखप्रदा । भवेत् । विमुखस्य साक्षाद्भगवतो बहिर्मुखस्य पुंसः । विशेषतः । दुःखदा भवेत् ॥८०॥ श्रुत्वेति । इत्येवंविधाम् । तस्य श्रीहरेः । अमृततुल्यवाचम् । श्रुत्वा । स मुक्तानन्दमुनिः । सदःस्थिताः । अन्ये । सन्तः साधवश्च । ये गृहिणो गृहस्थभक्ताश्च । ते सर्वेऽपि । बहुतोषम् । आपुः ।

तर्हि भक्ता यदा ध्यानं कुर्वन्ति विजने तव । मनोरूपा तदा माया सङ्कल्पैर्दुःखदा कथम् ॥ ७८ ॥ श्रीहरिरुवाच—कृष्णाश्रयो दृढो येषां माहात्म्यज्ञानपूर्वकः । तेषां तु सा न सङ्कल्पैर्दुःखदेत्यवगम्यताम् ॥७९॥ भक्तस्याप्याश्रये यस्य स्याच्छैथिल्यं रमापतेः । दुःखदा तस्य तु भवेद्विमुखस्य विशेषतः ॥ ८० ॥ श्रुत्वेति तस्यामृततुल्यवाचं सोऽन्ये च सन्तो बहुतोषमापुः । सदःस्थिता ये गृहिणश्च तेऽपि ततः प्रणेमुर्जगतां गुरुं तम् ॥८१॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते शताधिकाष्टादशस्तरङ्गः ॥ ११८ ॥ १० ॥

शकाब्दे विक्रमार्कस्य नगाश्ववसुभूमिते । कृष्णाष्टम्यां मार्गशीर्षे वचोऽमृतमिदं हरेः ॥ १ ॥
ग्रामे लौहाह्वये तत्र सूरभूपस्य वेश्मनि । उपाविशच्छुभे मञ्चे स्वास्तृतेऽसौ सिताम्बरः ॥ २ ॥
वृतं त्यागिगृहस्थौघैः शुकानन्दः पप्रच्छ तम् । असतां च सतां बुद्धिरस्त्यन्योन्यविरोधिनी ॥ ३ ॥

ततस्तदनन्तरम् । जगतां गुरुम् । तं श्रीहरिम् । प्रणेमुर्नमश्चक्रुश्च ॥८१॥ स्वसतामनुयोगानामुत्तराणि विधाय यः । हरिस्तान्हर्षयामास मम हर्षप्रदेऽस्तु सः ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्यैकान्तिकोपासकश्रीहरिकृष्णभगवत्स्नुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां शताधिकाष्टादशस्तरङ्गः ॥११८॥१०॥

सच्छास्त्राणां तु सिद्धान्तमसन्तः सन्त एव च । यथा विदुस्तथैवैकादशे प्रोक्तं पृथक् पृथक् ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८७७) मार्गशीर्षमासे । कृष्णाष्टम्यां कृष्णपक्षीयाष्टमीतिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ ग्राम इति । तत्र तिथौ । लौहाह्वये । सूरभूपस्य । वेश्मनि दुर्गान्तर्वर्त्तिभवने । स्वास्तृते । शुभे शोभने । मञ्चे पर्यङ्कासने । सिताम्बरः परिधृतसकलश्वेतवसनः । असौ श्रीहरिः । उपाविशत्प्रातःकृत्यं विधाय स्वावासत आगत्योपविवेश ॥ २ ॥ वृतमिति । त्यागिगृहस्थौघैर्नानादेशायातस्वभक्तत्यागिगृहिजनवृन्दैः । वृतं महासभायां परिवेष्टितम् । तं श्रीहरिम् । शुकानन्दो मुनिः । पप्रच्छ । हे हरे ! ।

असतामासुरसम्पद्युक्तानामसत्पुरुषाणाम् । सतां देवसम्पद्युक्तानां सत्पुरुषाणां च । बुद्धिः । अन्योऽन्यविरोधिनी परस्परविरोधकर्त्री । अस्ति ॥ ३ ॥ श्रीमदिति । इह लोके । उभयेऽसन्तः सन्तश्च । श्रीमद्भागवतादीनि । सर्वशः सर्वाणि । सच्छास्त्राणि । सम्यक् । पठन्ति । शृण्वन्ति । चिन्तयन्त्यपि विचारयन्ति च ॥ ४ ॥ असन्त इति । तत्र तेष्वसत्सु सत्सु मध्ये । सन्तः । ततस्तेभ्यः सच्छास्त्रेभ्यः । कीदृशम् । सिद्धान्तम् । गृह्णन्ति । तदेतत् । मे मह्यम् । पृथक् । गदितुम् । अर्हसि ॥ ५ ॥ 'स सम्पृष्टः शुकानन्दमुनिनेत्थं महाप्रभुः । सुखयंस्तं जगादेति स्वाश्रितानपरानपि' । दूषितेति । हे मुने ! । असताम् । बुद्धिः । दुःसङ्गनिजकर्मभिर्दुर्जनसङ्गतिजन्यात्मीयाशुभकर्मभिः । दूषिता सदोषा । अस्ति । अतो हेतोः । तेऽसन्तः । तथा दूषितया स्वबुद्ध्या । अखिलम् । तत्सिद्धान्तम् । अयथार्थम् । गृह्णन्ति ॥ ६ ॥ असद्गृहीतमयथार्थसिद्धान्तं कथयति चतुर्भिः । सर्व इति । सर्वे । पुमांसः । सर्वाः । योषा नार्यश्च । तथा । अखिलाः । स्थावराः । जङ्गमाश्च देहिनः । विराड्देहादिपुरुषाद्विराट्शरीराभिमानिनो नारायणात् । मायया । उत्पन्नाः । सन्ति ॥ ७ ॥ अत इति । अतो हेतोः । सर्वा पुमादिरूपाः । आकृतयः ।

श्रीमद्भागवतादीनि सच्छास्त्राणीह सर्वशः । सम्यक् पठन्ति ह्युभये शृण्वन्ति चिन्तयन्त्यपि ॥ ४ ॥
असन्तस्तत्र सिद्धान्तं ततो गृह्णन्ति कीदृशम् । सन्तश्च कीदृशं तन्मे पृथग्गदितुमर्हसि ॥ ५ ॥
श्रीहरिरुवाच–दूषिताऽस्त्यसतां बुद्धिर्दुःसङ्गनिजकर्मभिः । तेऽतोऽयथार्थं गृह्णन्ति तत्सिद्धान्तं तयाऽखिलम् ॥ ६ ॥ सर्वे पुमांसो योषाश्च स्थावरा जङ्गमास्तथा । विराड्देहादिपुरुषादुत्पन्ना माययाऽखिलाः ॥ ७ ॥ अत आकृतयः सर्वाः सन्ति नारायणस्य हि । ब्रह्मैव सकलं विश्वमिति वेदा वदन्ति च ॥ ८ ॥ अतो मुमुक्षुभिः स्वीयं वशे कार्यं मनस्ततः । यत्रासक्तं भवेत्तच्च ध्यातव्यं वस्तु नेतरत् ॥ ९ ॥ पुंसु वा स्त्रीषु पश्चादौ यत्र तस्य रुचिर्भवेत् । ध्येयं तदेव निःशङ्कं समाधिर्भविता ततः ॥ १० ॥

नारायणस्य । सन्ति । किञ्च । सकलम् । विश्वम् । ब्रह्मैव । इतीत्थम् । वेदाः । वदन्ति ॥ ८ ॥ अत इति । अतो हेतोः । मुमुक्षुभिः स्वनिःश्रेयसं वाञ्छद्भिर्जनैः स्वीयम् । मनः । ततो नारायणाकारे । वशे । कार्यम् । स्थिरं विधेयमित्यर्थः । नारायणाकारस्योक्तरीत्या बहुविधत्वात्कुत्र स्थिरं विधेयमित्यत्राह । तन्मनः । यत्र नारायणाकृतिभूते यस्मिन्वस्तूनि । आसक्तम् । भवेत् । तद्वस्तु । ध्यातव्यं सर्वस्यापि तस्य ब्रह्मरूपत्वात्ध्येयम् । इतरद्यत्रासक्तं मनो न भवेत्तदित्यर्थः । न ध्यातव्यम् ॥ ९ ॥ स्फुटबोधायैतदेव पुनराह । पुंस्विति । पुंसु पुरुषेषु । अथवा । स्त्रीषु । अथवा पश्चादौ मध्ये । यत्र यस्मिन्वस्तूनि । तस्य मनसः । रुचिः प्रीतिः । भवेत् । तद्वस्त्वेव । निःशङ्कं शङ्कारहितं यथातथा । ध्येयम् । यदि पुंसः स्त्रियां प्रीतिः पुंसि वा स्त्रियास्तर्हि ताभ्यां परस्परं तत्तद्ध्यानं कार्यमुभयोर्ब्रह्मरूपत्वादित्यस्याशयः । ततस्तदनन्तरम् । समाधिर्मनःस्थिरतालक्षणश्चित्तनिरोधः । भविता भविष्यति ॥ १० ॥

एवमिति । हे मुने ! । एवममुना प्रकारेण । स्वानुभवेन स्वबुद्धिकल्पिततर्कबलेनैव । शास्त्रसिद्धान्तकल्पकाः । असन्तः पुरुषाः । मृत्वा देहं त्यक्त्वा । निरयान्नरकान् । यान्ति । इत्यत्रास्मिन्नर्थे । संशयः । नास्ति ॥ ११ ॥ अथेति । अथेति भिन्नोपक्रमे । सन्तस्तु । सच्छास्त्रसिद्धान्तम् । ईदृशं वक्ष्यमाणप्रकारम् । विदुर्जानन्ति गृह्णन्तीत्यर्थः । एकः समाभ्यधिकरहितत्वादद्वितीयः । हरिरेव । ध्येयः । तस्य हरेः । ये । अवताराः । ते च । ध्येयाः ॥ १२ ॥ देवस्येति । देवस्य ब्रह्मादेः । अथवा । अन्यस्य तद्भिन्नस्य । ब्रह्मविदो ब्रह्मात्मैकभावं प्राप्तस्य भक्तस्यापि । या । आकृतिः । सा । सद्यः फला अपि । पारतन्त्र्यतः सर्वेषां सकलनियन्तृभगवदधीनत्वाद्धेतोः । नैव । ध्यातव्या । तथा चाह भगवान् शौनकः । 'आब्रह्मस्तम्बपर्यन्ता जगदन्तर्व्यवस्थिताः । प्राणिनः कर्मजनितसंसारवशवर्त्तिनः । यतस्ततो न ते ध्याने ध्यानिनामुपकारकाः । अविद्यान्तर्गताः सर्वे ते हि संसारगोचराः । पश्चादुद्भूतबोधाश्च ध्याने नैवोपकारकाः । नैसर्गिको न वै बोधस्तेषामप्यन्यतो यतः । तस्मात्तदमलं ब्रह्म निसर्गादेव बोधव'दित्यादिना ॥ १३ ॥ कृतेति । यर्हि । कृतावतारः । स्वयम् । भगवान् हरिः । मिलेत् । तदा । तस्य भगवतः । रूपा-

एवं स्वानुभवेनैव शास्त्रसिद्धान्तकल्पकाः । असन्तो निरयान् यान्ति मृत्वेत्यत्र न संशयः ॥ ११ ॥ अथ सन्तस्तु सच्छास्त्रसिद्धान्तं विदुरीदृशम् । एक एव हरिर्ध्येयोऽवतारास्तस्य ये च ते ॥ १२ ॥ देवस्य वा ब्रह्मविदोऽप्यन्यस्य त्वाकृतिस्तु या । सद्यः फलाऽपि सा नैव ध्यातव्या पारतन्त्र्यतः ॥१३॥ कृतावतारो भगवान् मिलेद्यर्हि स्वयं तदा । तस्य रूपान्तरमपि न ध्येयं ध्येय एव सः ॥ १४ ॥ प्रभुः स यत्र वर्त्तेत परिवारोऽखिलोऽपि च । तस्य तत्रैव विज्ञेयो लक्ष्यस्तस्येच्छया क्वचित् ॥ १५ ॥ तत्स्थानमक्षरं ज्ञेयं सेवकास्तस्य पार्षदाः । शक्तयः परिचारिण्य ऐश्वर्यं चाक्षिसङ्गतम् ॥ १६ ॥ अनन्तकोटिसूर्येन्दुभासुरं यन्महश्च तत् । तस्मिन्नैवास्तीति बोध्यं क्वचिद्दृश्यं तदिच्छया ॥ १७ ॥ एवं माहात्म्यसहितं ज्ञात्वा तं तस्य सर्वदा । भक्तिः कार्याऽत्र सुधिया लक्ष्म्येवानन्यभावतः ॥ १८ ॥

न्तरमन्यावताराकारोऽपि । न ध्येयम् । सः स्वमिलितो भगवानेक एव । ध्येयः ॥ १४ ॥ प्रभुरिति । प्रभुः । स प्रत्यक्षो भगवान् । यत्र स्थले । वर्त्तेत । तस्य । अखिलोऽपि । परिवारः । तत्रैव । विज्ञेयः । स च । तस्य भगवतः । इच्छया । क्वचित्कस्मिंश्चित्समये । लक्ष्यो दृश्यः । भवेत् ॥ १५ ॥ तत्परिवारमाह द्वाभ्याम् । तदिति । तत्स्थानं यत्र साक्षाद्भगवांस्तिष्ठति । तत्पदम् । अक्षरमक्षरधाम । ज्ञेयम् । तस्य साक्षाद्भगवतः । सेवकाः परिचारकाः । पार्षदा अक्षरधाम्नि ये पार्षदास्त एव । ज्ञेयाः । तस्य । परिचारिण्यः परिचर्यावस्थितनार्यः । शक्तयो राधारमादिशक्तिरूपाः । ज्ञेयाः । ऐश्वर्यं तस्याणिमादिसिद्धयश्च । अक्षिसङ्गतं निमेषोन्मेषरूपेण नेत्रयोरवस्थितम् । ज्ञेयम् ॥ १६ ॥ अनन्तेति । अनन्तकोटिसूर्येन्दुभासुरम् । यत् । महस्तेजः । तत् । तस्मिन्प्रत्यक्षे भगवत्येव । अस्ति । तच्च । तदिच्छया । क्वचित् । दृश्यम् भवेत् । इतीत्थम् । बोध्यम् ॥ १७ ॥ एवमिति । एवममुना प्रकारेण । माहात्म्यसहितम् । तं प्रत्यक्षं भगवन्तम् । ज्ञात्वा । अत्र लोके । सुधिया

सुमतिना भक्तेन । तस्य । भक्तिः । लक्ष्म्या रमयेव । अनन्यभावत एकान्तिकभावेन । सर्वदा । कार्या ॥ १८ ॥ तमिति । तं प्रत्यक्षं हरिम् । विना । अक्षरपर्यन्तम् । यत् । स्थूलम् । सूक्ष्मम् । अस्ति । तत् । परतन्त्रम् । अस्ति । इतीत्थम् । ज्ञेयम् । स्वतन्त्रस्तु । स हरिः । एक एव । ज्ञेयः ॥ १९ ॥ सर्वेति । स प्रत्यक्षो हरिः । सर्वात्मा सकलजीवेश्वरादीनामन्तर्यामी । अक्षरादीनाम् । नियन्ता नियामकः । ईश्वरेश्वरः । कालकालश्च । अस्ति । इति हेतोः । स प्रत्यक्षो हरिरेव । ध्येयः । प्रोक्तः । हि ॥ २० ॥ इतीति । हे मुने ! । इतीत्थंभूतम् । सच्छास्त्रसिद्धान्तम् । सन्तः । यथार्थतः । विदुः । अतो हेतोः । मुमुक्षुभिर्मदाश्रितजनैः । स सच्छास्त्रसिद्धान्तः । तेभ्यः सद्भ्य एव । श्रव्यः । अन्यतस्तद्भिन्नेभ्योऽसाधुभ्यस्तु । क्वचित्कदाचिदपि । न श्रव्यः ॥ २१ ॥ इतीति । इत्येवंविधाम् । हरिमुखनिःसृताम् । वाक्सुधाम् । निपीय । मुनिवरः सकलसाधुश्रेष्ठः । स शुकानन्दः साधुः । प्रहर्षम् । आप । तत्र तस्मिन् । महति । सदसि । निषण्णाः । ये मुनिगृहिभक्तजनाः । ते । सर्वे चापि । प्रहर्षम् । आपुः ॥ २२ ॥ असत्सम्मतसच्छास्त्रसिद्धान्तत्यागपूर्वकम् । सत्सम्मतं च सच्छास्त्रसिद्धान्तं कृपया निजान् ॥ १ ॥ यो हरिर्ग्राह-

तं विनाऽक्षरपर्यन्तं स्थूलं सूक्ष्मं यदस्ति तत् । परतन्त्रमिति ज्ञेयं स्वतन्त्रस्त्वेक एव सः ॥ १९ ॥ सर्वात्मा चाक्षरादीनां नियन्ता चेश्वरेश्वरः । कालकालश्च सोऽस्तीति ध्येयः प्रोक्तः स एव हि ॥ २० ॥ इति सच्छास्त्रसिद्धान्तं विदुः सन्तो यथार्थतः । अतो मुमुक्षुभिः श्रव्यः स तेभ्यो नान्यतः क्वचित् ॥ २१ ॥ इति हरिमुखनिःसृतां प्रहर्षं मुनिवर आप निपीय वाक्सुधां सः । महति सदसि तत्र ये निषणा मुनिगृहिभक्तजनाश्च तेऽपि सर्वे ॥ २२ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते शताधिकोनविंशतितमस्तरङ्गः ॥११९॥११॥

शकाब्दे विक्रमार्कस्य नगाश्ववसुभूमिते । नवम्यां सहसः कृष्णे वचोऽमृतमिदं हरेः ॥ १ ॥
लौहग्रामे तत्र सूरवर्मणो मन्दिरोत्तमे । उपाविशदसौ पीठे भूरिभक्तगणावृतः ॥ २ ॥

यामास स्वयं ब्रह्मपुरेश्वरः । सिद्धान्तं सन्मतं कुर्यात्सुदृढं तं स मद्धृदि ॥ २ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्सूनुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां शताधिकोनविंशतितमस्तरङ्गः ॥ ११९ ॥ ११ ॥

सविकल्पो निर्विकल्पो द्वेधा यः कृष्णनिश्चयः । द्विविधः स त्रिधा भेदैः कनीयो मध्यमोत्तमैः ॥ १ ॥ पृथक् त्रेधा भवेत्तस्य लक्षणानि पृथक् पृथक् । प्रोक्तानि द्वादशे तत्र हेतवश्च यथातथम् । शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८७७) सहसो मार्गशीर्षमासस्य । कृष्णे कृष्णपक्षे । नवम्यां तिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ लौहेति । तत्र तिथौ । लौहग्रामे । सूरवर्मणः । मन्दिरोत्तमे दुर्गान्तर्वर्त्तिन्युत्तमभवने । पीठे स्वास्तृते श्रेष्ठे मञ्चासने । भूरिभक्तगणावृतो नानादेशागतैस्त्यागिभिर्गृहिभिश्च बहुभिः स्वाश्रितजनैः सभायां संवेष्टितः । असौ श्रीहरिः । उपाविशत्सायन्तनभगवन्नीराजनान्ते उपविवेश ॥ २ ॥

अरुणेति । अरुणोष्णकनीशारोऽरुणवर्णोष्णगुणनीशारधरः । सितानि धवलान्यन्यानि नीशारेतराणि वसनानि परिधानीयादिवासांसि यस्य सः । स श्रीहरिः । सदसि । पुरोनिषण्णान्स्वपुरःप्रदेशावस्थितान् । महतः । सतो मुक्तानन्दादिमुनीन् । पप्रच्छ ॥ ३ ॥ कृष्णस्येति । हे मुनयः । इह सत्सङ्गे । नृणाम् । चित्ते । यः । कृष्णस्य । निश्चयः । जायते । स निश्चयः । सविकल्पः । निर्विकल्पः । इतीत्थम् । द्विविधः मतः ॥ ४ ॥ स इति । सद्विविधोऽपि निश्चयः । उत्तमः । मध्यमः । कनीयान् । इत्येवंभूतैः । भेदता भेदैः । पृथगेकैकः । त्रिधा त्रिप्रकारः । अस्ति । अतः । तेषां भेदानाम् । लक्ष्माणि लक्षणानि । मे मह्यम् । पृथक् भिन्नभिन्नतया ब्रूत कथयत । सविकल्पनिश्चयोत्तमभेदलक्षणं सविकल्पनिश्चयमध्यमभेदलक्षणं सविकल्पनिश्चयकनिष्ठभेदलक्षणं निर्विकल्पनिश्चयोत्तमभेदलक्षणं निर्विकल्पनिश्चयमध्यमभेदलक्षणं निर्विकल्पनिश्चयकनिष्ठभेदलक्षणं च पृथक्पृथग्वदतेत्यर्थः ॥ ५ ॥ इतीति । इत्यमुना प्रकारेण । तेन श्रीहरि । पृष्टाः । ते महान्तः । सर्वे । साधवो मुक्तानन्दादयो मुनयः । तदुत्तरं श्रीहरिकृतप्रश्नोत्तरम् । कर्त्तुम् । तं श्रीहरिमेव । प्रैरयन् । हरे ! त्वत्प्रश्नोत्तरं कर्त्तुं त्वमेव समर्थोऽसि यतोऽत्र नास्माकं मतिप्रवेशो जायत इत्यूचुरित्यर्थः । तदा । स श्रीहरिः । तान्साधून् ।

अरुणोष्णकनीशारः सितान्यवसनः स त्र । पुरो निषण्णान् सदसि पप्रच्छ महतः सतः ॥ ३ ॥ कृष्णस्य निश्चयश्चित्ते जायते नृणामिह । सविकल्पो निर्विकल्प इति स द्विविधो मतः ॥ ४ ॥ सोऽप्युत्तमो मध्यमश्च कनीयानिति भेदतः । पृथक् त्रिधाऽस्त्यतस्तेषां ब्रूत लक्ष्माणि मे पृथक् ॥५॥ इति पृष्टाः साधवस्ते तेन कर्त्तुं तदुत्तरम् । तमेव प्रैरयन्सर्वे तदुवाच तदा स तान् ॥ ६ ॥ भगवान् त्राकृतिर्यावत् कामक्रोधरसादिषु । समं मनुष्यैरितरैः प्रवर्त्तेत न चाधिकम् ॥७॥ तावत्तिष्ठेन्निश्चयो यो न तिष्ठेच्च ततोऽधिकम् । सविकल्पस्य भेदोऽयं कनीयान्निश्चयस्य तु ॥ ८ ॥ अन्येभ्यो द्विगुणं नृभ्यः कामादौ वर्त्तनावधि । यस्तिष्ठेन्निश्चयो विष्णोः स भेदोऽस्यास्ति मध्यमः ॥ ९ ॥

तत्स्वप्रश्नोत्तरम् । उवाच ॥ ६ ॥ अत्र सविकल्पनिर्विकल्पशब्दौ यथाश्रुतार्थौ न ग्राह्यौ किन्तु स्वात्माज्ञानजन्यदैहिकभावे सविकल्पशब्दो रूढः सत्समागमजन्यस्वात्मज्ञानस्थितौ निर्विकल्पशब्दो रूढस्तत्र दैहिकभावतारतम्यतो निश्चयतारतम्येन सविकल्पनिश्चये स्वात्मज्ञानस्थितितारतम्येन निर्विकल्पनिश्चये च कनिष्ठमध्यमोत्तमास्त्रयो भेदाः सन्ति तत्र दैहिकभावयुतसाक्षाद्भगवद्भक्तज्ञानभेदतः सविकल्पनिश्चयभेदलक्षणान्याहाष्टभिः । तत्रादौ सविकल्पनिश्चयकनिष्ठभेदलक्षणमाह द्वाभ्याम् । भगवानिति । हे मुनयः ! । त्राकृतिर्निष्कारणापारकरुणया धृतनराकृतिः । भगवान् । यावत् । कामक्रोधरसादिषु । इतरैः । मनुष्यैः । समं तुल्यं यथातथा । प्रवर्त्तेत । अधिकमितरमनुष्येभ्यो विशेषतः । न च नैव प्रवर्त्तेत । तावदित्युत्तरेण सम्बन्धः ॥७॥ तावदिति । तावत् । यः । निश्चयः । तिष्ठेत् । तत इतरमनुष्येभ्यः । अधिकं कामक्रोधादिष्वधिकप्रवृत्तौ सत्यां त्वित्यर्थः । न तिष्ठेत् । अयम् । सविकल्पस्य । निश्चयस्य । कनीयान् । भेदः । अस्ति ॥ ८ ॥ अथ सविकल्पनिश्चयमध्यमभेदलक्षणमाह । अन्येभ्य इति । कामादौ । अन्येभ्यः । नृभ्यो मनुष्येभ्यः । द्विगुणं यथातथा । विष्णोः । वर्त्तनावधि साक्षाद्भगवतो वर्त्तनपर्यन्तम् । यः । निश्चयः । तिष्ठेत् । सः । अस्य सविकल्पनिश्चयस्य ।

मध्यमः । भेदः । अस्ति ॥ ९ ॥ अथ सविकल्पनिश्चयोत्तमभेदलक्षणमाह पञ्चभिः । मद्येति । लोकशास्त्रविगर्ह्येषु लोके शास्त्रेषु च निन्द्येषु । मद्यमांसपरस्त्र्यादिभोगमुख्येषु । कर्मसु क्रियासु । हरेः प्रत्यक्षभगवतः । स्वच्छन्दवर्त्तनम् । दृष्ट्वेत्युत्तरेण सम्बन्धः ॥१०॥ दृष्ट्वेति । दृष्ट्वा सम्यग्विलोक्यापि । यः । निश्चयः । हृदि भक्तमनसि । यथापूर्वं पूर्ववदेव । वर्त्तेत । सः । सविकल्पस्य । निश्चयस्य । उत्तमः । भेदः । स्मृतः ॥ ११ ॥ अस्यैवंविधनिश्चयत्वे हेतुमाह त्रिभिः । एतदिति । एतन्निश्चयवान्- सविकल्पनिश्चयोत्तमभेदवान् भक्तः । ईशितुः साक्षात्परमेश्वरस्य । भृशमतिशयेन । माहात्म्यम् । वेत्ति वक्ष्यमाणप्रकारेण जानाति । स प्रत्यक्षो भगवान् । सर्वकर्त्ता । अत एव । सर्वभोक्ता वाञ्छापूर्वं सकलदिव्यादिव्यभोगानां स्वतन्त्रतयोपभोक्ता । अन्तर्याम्यन्तःस्थित्वा जीवानां कर्मफलप्रदाता । अत एव । सर्वगः । अस्ति ॥ १२ ॥ सर्वेति । सर्वान्वितेनान्तर्यामित्वात्सर्वगत्वाच्च सर्वेषु चिदचिद्भावेषु तत्तत्तथाविधस्वरूपस्थितिप्रवृत्त्यर्थमन्वयं प्राप्तेन । तेन प्रयोजकर्त्रा भगवतैव । सर्वेऽपि जीवाः । सकलाः । क्रियाः । कुर्वन्ति । इति हेतोः । अस्य भगवतः । कापि काचिदपि । क्रिया । बाधिका बाधकर्त्री । न भवति । सर्वप्रयोजकतया सर्वान्सर्वाः क्रियास्तत्तत्कर्मानु- सारेण कारयन्नपि यः कश्चिदपि बाधं नैति स निन्द्यया यया कयाचित्स्वकृतक्रियया कथं बाधं यायादित्यर्थः ॥ १३ ॥ माहात्म्येति । एवममुना प्रकारेण । माहात्म्य-

मद्यमांसपरस्त्र्यादिभोगमुख्येषु कर्मसु । लोकशास्त्रविगर्ह्येषु हरेः स्वच्छन्दवर्त्तनम् ॥ १० ॥ दृष्ट्वाऽपि यो यथापूर्वं वर्त्तेत हृदि निश्चयः । निश्चयस्योत्तमो भेदः सविकल्पस्य स स्मृतः ॥ ११ ॥ एतन्निश्चयवान्वेत्ति माहात्म्यं भृशमीशितुः । सर्वकर्त्ता सर्व- भोक्ता सोऽन्तर्याम्यस्ति सर्वगः ॥ १२ ॥ सर्वान्वितेन तेनैव सर्वेऽपि सकलाः क्रियाः । कुर्वन्तीति न काऽप्यस्य क्रियाः भवति बाधिका ॥ १३ ॥ माहात्म्यविद एवं हि तस्य निश्चयचालकः । न कोऽपि संशयो बुद्धौ जायते बुद्धिशालिनः ॥ १४ ॥ क्रियाः शुभा वाऽप्यशुभाः कुर्वन्तमिह यद्धरिम् । आकाशमिव निर्लेपं ब्रह्म मन्येत निष्क्रियम् ॥ १५ ॥

विदः साक्षाद्भगवन्महिमाभिज्ञस्य । बुद्धिशालिनो व्यवसायात्मकमतिशोभिनः । तस्य सविकल्पनिश्चयोत्तमभेदवतो भक्तस्य । बुद्धौ । निश्चयचालको निश्चयनिवर्त्तकः । कोऽपि कश्चिदपि । संशयः । न जायते । हि यस्य निश्चयो न कदाचिदपि निवर्त्ततैवंभूतोऽयमस्त्यथाप्येतस्मिन्सविकल्पभावस्तु यथा स्वयं सर्वकर्त्तृभोक्तृभाववानस्ति तथा तं भावमात्मारामे स्वतः पूर्णकामे भगवत्यपि कल्पयति न तु भक्तसुखार्थं तत्तस्मिन्नस्तीति जानातीति भावः ॥ १४ ॥ अथात्राप्युक्तरीत्या साक्षाद्भगवद्भक्तज्ञानभेदतो निर्विकल्पनिश्चयभेदलक्षणानि वदन् देहाभिमानतारतम्येन सविकल्पनिश्चयवतां यथा त्रैविध्यमुक्तं तथात्मभावतारतम्येन निर्विकल्पनिश्चयवतां त्रैविध्यं ज्ञापयितुं त्रिविधप्रल- योक्त्या तेषामात्मभावतारतम्यमाहैकादशभिः । तत्रादौ निर्विकल्पनिश्चयकनिष्ठभेदलक्षणमाह चतुर्भिः । क्रिया इति । इह लोके । शुभाः । अथवा । अशुभा अपि । क्रियाः । कुर्वन्तम् । हरिं साक्षाद्भगवन्तम् । यद्यतो निश्चयाद्धेतोः । आकाशमिव । निर्लेपम् । निष्क्रियं प्राकृतक्रियाशून्यम् । ब्रह्मरूपम् । मन्येत स्वात्मानं ब्रह्मरूपं मत्वा भगवन्तमुपासमानो भक्तो जानीयात् ॥ १५ ॥

कनिष्ठ इति । सः । निर्विकल्पस्य । निश्चयस्य । कनिष्ठः । भेदो । दशा स्थितिरिति यावत् । ज्ञातव्यः । यत्र निर्विकल्पकनिष्ठनिश्चये सति । कृष्णे । साक्षाद्भगवति । अणुरपि । संशयः । नास्त्येव ॥ १६ ॥ इमं निश्चयं सदाचारेण दृष्टान्तयति । रासेति । रासलीलायाः श्रीकृष्णेन पराङ्गना-भिर्गोपीभिः कृताया रासक्रीडायाः श्रुतिः श्रवणं तेन प्राप्तः संशयो धर्मरक्षको भगवान्कथं परदाराभिमर्शनाधर्मं चकारेति सन्देहो येन तस्य । परीक्षितो राज्ञः । बुद्धौ । शुकेन मुनिना । यथा । कारितः । तादृशः । अयं कनिष्ठभेदवान्निर्विकल्पनिश्चयो भवति । खलु निश्चतम् । स्वस्य । ब्रह्मभावेन निर्लेपत्वज्ञानाद्भग-वति तत्त्वं ज्ञात्वा तेजीयसां न दोषाय वह्नेः सर्वभुजो यथेत्युक्त्वा राजबुद्धावपि भगवन्निर्लेपत्वनिश्चयो यथा शुकेन विधापितस्तथाऽयमपीत्यर्थः ॥ १७ ॥ अस्येति । एतन्निश्चयवतो निर्विकल्पनिश्चयकनिष्ठभेदवतः । अस्य भक्तस्य । समाधौ । नैमित्तिकाभिधे दैनंदिनसंज्ञिके । लये प्रलये । जायमाने सति । क्वचित्कदाचिदपि । अल्पोऽल्पमात्रोऽपि विकारो भगवत्स्वरूपाचलनरूपा विकृतिः । न स्यात् । अस्यात्मनिष्ठायाः कनिष्ठत्वान्नैमित्तिकप्रलये दशलोकविनाशपर्यन्तं तु स निर्विकारः सन् भग-

कनिष्ठो निर्विकल्पस्य स भेदो निश्चयस्य तु । ज्ञातव्यो यत्र नास्त्येव कृष्णेऽणुरपि संशयः ॥ १६ ॥ रासलीला-श्रुतिप्राप्तसंशयस्य परीक्षितः । शुकेन कारितो बुद्धौ यथाऽयं तादृशः खलु ॥ १७ ॥ अस्यैतन्निश्चयवतो लये नैमित्तिकाभिधे । जायमाने समाधौ स्याद्विकारोऽल्पोऽपि न क्वचित् ॥१८॥ षडूर्मिरहितश्वेतमुक्तवद्येन पूरुषः । भूत्वा-ऽत्यन्तं विशुद्धात्मरूपोऽनन्येन चेतसा ॥ १९ ॥ अतिनिर्दोषवपुषं कृष्णं ज्ञात्वा भजेद्दृढम् । स भेदो निर्विकल्पस्य निश्चयस्यास्ति मध्यमः ॥ २० ॥ एतन्निश्चयिनः पुंसो लये प्राकृतिकाभिधे । समाधौ जायमानेऽपि न स्यादल्पापि विक्रिया ॥ २१ ॥ अणुवद्यत्र दृश्यन्ते साष्टावृत्यण्डकोटयः । यच्चोक्तं भगवद्धाम ब्रह्म चामृतमक्षरम् ॥ २२ ॥

वन्तं ध्यायेत्किन्तु ततः परे प्राकृतिकप्रलयारम्भे तु क्षुब्धो भवेदेतदस्य निर्विकल्पनिश्चयकनिष्ठभेदवत्त्वमिति भावः ॥ १८ ॥ अथ निर्विकल्पनिश्चयमध्यमभेदलक्षण-माह त्रिभिः । षडिति । अतीति । येन निश्चयेन । पूरुषो भक्तः । षडूर्मिरहितश्वेतमुक्तवत् क्षुत्पिपासादिषडूर्मिवर्जितश्वेतद्वीपस्थनिरन्नमुक्तवत् । अत्यन्तम् । विशुद्धात्म-रूपः सम्प्राप्तनिजात्मब्रह्मैकभावः सन् । कृष्णं प्रत्यक्षं भगवन्तम् । अतिनिर्दोषवपुषं स्वतोऽप्यतिशयेन सुविशुद्धमूर्त्तिम् । ज्ञात्वा । अनन्यैनैकान्तिकभाववता । चेतसा । दृढं यथातथा । भजेत् । सः निर्विकल्पस्य । निश्चयस्य । मध्यमः । भेदः । अस्ति । इति द्वयोरेकान्वयः ॥ १९ ॥ २० ॥ एतदिति । एतन्निश्चयिनो निर्वि-कल्पनिश्चयमध्यमभेदवतः पुंसो भक्तस्य । समाधौ । प्राकृतिकाभिधे । लये प्रलये । जायमाने सत्यपि । अल्पापि । विक्रिया । न स्यात् । अस्यात्मनिष्ठाया मध्यम-त्वात्प्राकृतिकप्रलये प्रधानप्रकृतितत्कार्यमहदादिविनाशपर्यन्तं तु स निर्विकारः सन् भगवन्तं चिन्तयेत्किन्तु ततः परे आत्यन्तिकप्रलयारम्भे तु क्षोभं प्राप्नुयादेतदस्य निर्विकल्पस्य निश्चयमध्यमभेदवत्त्वमिति भावः ॥ २१ ॥ अथ निर्विकल्पनीश्चयोत्तमभेदलक्षणमाह चतुर्भिः । अण्विति । साष्टावृत्यण्डकोटयः पृथिव्याद्यष्टावरणसहितब्रह्मा-

षडकोटयः । यत्राक्षरे । अणुवत् । दृश्यन्ते । यत् । अक्षरम् । भगवद्धाम उक्तम् । यत् । अमृतममृतसंज्ञं चाप्युक्तम् । एतादृशम् । यत् । अक्षरम् । ब्रह्मास्ति ॥२२॥ तेनेति । तेनाक्षरब्रह्मणा सह । ऐक्यमेकभावम् । प्रापितेन । अत एव । अतिशुद्धेनैव स्वात्मना । राधिकापतेः साक्षाच्छ्रीकृष्णस्य । सेवायाम् । येन निश्चयेन । निन्यदा सततम् । वर्त्तेत ॥ २३ ॥ स इति । सः । निर्विकल्पस्य । निश्चयस्य । उत्तमः । भेदः । मतः । एष एवंविधनिश्चयः । महतां भगवदेकान्तिकोपासनया महत्त्वं प्राप्तानाम् । योगिनां ध्यानयोगनिष्ठानां भक्तानामपि । सर्वथा । दुर्लभ एवास्ति ॥ २४ ॥ एतदिति । एतन्निश्चयिनो निर्विकल्पनिश्चयोत्तमभेदवतः । पुंसो भक्तस्य । समाधौ । आत्यन्तिकाभिधे । लये प्रलये । जायमाने सत्यपि । अल्पोऽपि । विकारः । नोद्भवेन्नैवोदियात् । अस्यात्मनिष्ठाया उत्तमत्वादात्यन्तिकप्रलयेऽनन्तप्रधानपुरुषैः सह मूलप्रकृतिपुरुषयोरक्षरब्रह्मातितेजसि तिरोभावे जायमाने सत्यपि किञ्चिदपि क्षुब्धत्वं न भवेदेतदस्य निर्विकल्पनिश्चयोत्तमभेदत्त्वमिति भावः ॥ २५ ॥

तेनैक्यं प्रापितेनैव स्वात्मना राधिकापतेः । अतशुद्धेन सेवायां येन वर्त्तेत नित्यदा ॥ २३ ॥
स भेदो निर्विकल्पस्य निश्चयस्योत्तमो मतः । दुर्लभः सर्वथैवैष योगिनां महतामपि ॥ २४ ॥
एतन्निश्चयिनः पुंसो लय आत्यन्तिकाभिधे । समाधौ जायमानेऽपि विकारोऽल्पोऽपि नोद्भवेत् ॥ २५ ॥
एवं भेदा निश्चयस्य षड्भवन्ति पृथक्तया । ते विविच्य मयोक्ता वः स्वस्वनिश्चयबुद्धये ॥ २६ ॥
उत्तरोत्तरतः श्रैष्ठ्यं ज्ञात्वैतेषां मनीषिभिः । क्रमेण श्रेष्ठतां नेयः साधनैः स्वस्वनिश्चयः ॥ २७ ॥
यथा यथा भवेत् पुंसो दृढता निश्चयस्य तु । निर्भयत्वं सुखाधिक्यं वर्द्धेत हि तथा तथा ॥ २८ ॥
निर्विकल्पोत्तमो यर्हि निश्चयः स्याद् द्रढो हरेः । तदा हि कृतकृत्यत्वं जातमत्र न संशयः ॥ २९ ॥
निश्चयानां लक्षणानि प्रोक्तान्येतानि ध्रुवम् । धीमद्भिर्भगवद्भक्तैर्बोद्‌धुं शक्यानि नेतरैः ॥ ३० ॥

एवमिति । हे मुनयः ! । एवममुना प्रकारेण । निश्चयस्य । षट् । भेदाः । भवन्ति । ते भेदाः । मया । विविच्य । पृथक्तया । वो युष्मभ्यम् । स्वस्वनिश्चयबुद्धये । उक्ताः ॥ २६ ॥ उत्तरेति । मनीषिभिर्मेदाश्रितैर्बुद्धिमद्भिर्भक्तैः । एतेषां निश्चयभेदानाम् । उत्तरोत्तरतः । श्रैष्ठ्यं श्रेष्ठत्वम् । ज्ञात्वा । स्वस्वनिश्चयः । साधनैर्भगवदेकान्तिकभक्तदर्शितोपायैः । क्रमेण । श्रेष्ठताम् । नेयः प्राप्यः ॥२७॥ यथेति । पुंसो भक्तस्य । निश्चयस्य । यथायथा । दृढता । भवेत् । तथातथा । निर्भयत्वम् । सुखाधिक्यं च । वर्द्धेत । हि ॥ २८ ॥ निर्विकल्पेति । यर्हि । हरेः । निर्विकल्पोत्तमः । निश्चयः । दृढः । स्यात् । तदा हि तर्ह्येव । अत्र लोके सत्सङ्गे देहे भक्तत्वे वा । कृतकृत्यत्वं कृतार्थत्वम् । जातम् । न संशयः । अत्रार्थे संशयो नास्ति ॥ २९ ॥ निश्चयानामिति । निश्चयानां षड्विधनिश्चयभेदानाम् । एतानि । लक्षणानि तु । प्रोक्तानि । तथापि । तानि । धीमद्भिः प्रशस्तबुद्धिभिः । भगवद्भक्तैः । बोद्‌धुम् । शक्यानि । इतरैरल्पबुद्धिभिर्भगवद्भक्तैः । बोद्‌धुम् । न शक्यानि । ध्रुवम् ॥ ३० ॥

चैतन्यानन्देति । अथैवंविधश्रीहरिवचनश्रवणानन्तरम् । चैतन्यानन्दसाधुः । कृतानतिर्विहितप्रणामः सन् । तं श्रीहरिम् । अपृच्छत् । हे हरे ! । निश्चयस्य । षट् । भेदाः । उक्तास्त्वया कथिताः । तत्र तेषु षड्भक्तभेदेषु विषये । हेतवः कारणानि । के । सन्ति । कैर्हेतुभिरेते भेदा नाना भवन्तीत्यर्थः ॥ ३१ ॥ 'चैतन्यानन्दमुनिना श्रीकृष्णः पृष्ट इत्यसौ । तमाहानन्दयन्नित्थं परान्साधूनपि स्वकान्' । श्रद्धेति । हे साधो ! । शिष्ये । वर्त्तमानयोरिति शेषः । श्रद्धामुमुक्षयोः श्रद्धायाः मोक्षेच्छायाश्चेत्यर्थः । गुरौ । वर्त्तमानयोः । ज्ञानविज्ञानयोः सद्गुरुसच्छास्त्रोपदिष्टात्मस्वरूपयोर्यथार्थावबोध साक्षादनुभवयोश्च । मन्दमध्योत्तमत्वैः । निश्चयस्य । भिदाः । मताः ॥ ३२ ॥ देश इति । किञ्च । देशः । कालः । क्रिया । सङ्गः । शास्त्रम् । दीक्षा । तथा । मनुर्मन्त्रः । भगवन्मनुजपस्य ध्यानसाहित्यान्मनुना ध्यानमपि बोध्यम् । एते देशादयोऽष्टौ । अशुभाः । अथवा । शुभाः । स्युश्चेत् । स्वानुगुणं स्वगुणानुसृतम् । फलम् । दद्युः ॥ ३३ ॥ शुभेष्विति । शिष्यस्य ।

चैतन्यानन्दसाधुस्तमथापृच्छत्कृतानतिः । षड्भेदा निश्चयस्योक्ताः सन्ति के तत्र हेतवः ॥ ३१ ॥
श्रीहरिरुवाच–श्रद्धामुमुक्षयोः शिष्ये ज्ञानविज्ञानयोर्गुरौ । मन्दमध्योत्तमत्वैस्तु निश्चयस्य भिदा मताः ॥ ३२ ॥
देशः कालः क्रिया सङ्गः शास्त्रं दीक्षा मनुस्तथा । अशुभा वा शुभा एते दद्युः स्वानुगुणं फलम् ॥ ३३ ॥
शुभेष्वेतेषु शिष्यस्य गुरोश्च गुणसम्पदि । उत्कृष्टायां भवेदेव निश्चयोत्तमतैव हि ॥ ३४ ॥
तस्यां तु मध्यमायां स्यान्निश्चयस्यापि मध्यता । कनिष्ठता भवेत्तस्यां कनिष्ठायां च सर्वथा ॥ ३५ ॥
मुमुक्षुभिरतो यत्नाच्छ्रद्धादिगुणशालिभिः । भाव्यं शुभाश्च देशाद्याः सेवनीया न चेतरे ॥ ३६ ॥
सम्यग्ज्ञानादिसम्पन्नाद् गुरोश्चोपशमस्थितेः । प्राप्यं ज्ञानं भगवत इष्टसिद्धिर्भवेत्ततः ॥ ३७ ॥
श्रद्धाधिक्येन शिष्यस्य देशकालादिभिः शुभैः । गुरोस्तथोत्कृष्टतया कनिष्ठोऽप्युत्तमो भवेत् ॥ ३८ ॥

गुरोश्च । एतेषु देशादिषु । शुभेषु सत्सु । गुणसम्पदि शास्त्रोक्तगुरुशिष्यगुणानां सम्पत्तौ । उत्कृष्टायां सत्यामेव । निश्चयोत्तमता निश्चयस्योत्तमभाव एव । भवेत् । हि ॥ ३४ ॥ तस्यामिति । तस्यां गुरुशिष्यगुणसम्पदि । मध्यमायां सत्याम् । निश्चयस्यापि । मध्यता मध्यमभाव एव । स्यात् । तस्याम् । सर्वथा । कनिष्ठायां सत्याम् । कनिष्ठता कनिष्ठभावः । भवेत् ॥ ३५ ॥ मुमुक्षुभिरिति । अतो हेतोः । मुमुक्षुभिः शिष्यैः । यत्नात् । श्रद्धादिगुणशालिभिः । भाव्यम् । शुभाः । देशाद्याः । सेवनीयाः । इतरे अशुभा देशाद्याः । न च नैव सेवनीयाः ॥ ३६ ॥ सम्यगिति । सम्यग्ज्ञानादिसम्पन्नात् । उपशमस्थितेः सदात्मभावेन वर्त्तमानात् । गुरोः सकाशात् । भगवतः साक्षाद्धरेः । ज्ञानम् । प्राप्यम् । ततस्तदनन्तरम् । इष्टसिद्धिः । भवेत् ॥ ३७ ॥ श्रद्धेति । शिष्यस्य । श्रद्धाधिक्येन । देशकालादिभिः । शुभैः । तथा । गुरोः । उत्कृष्टतयोत्कृष्टज्ञानविज्ञानादिमत्तया च । कनिष्ठो निश्चयोऽपि । उत्तमः । भवेत् ॥ ३८ ॥

अपक्क इति । यस्य भक्तस्य । निश्चये । अपक्वे सत्यपि । क्वचित्कदाचित् । मरणम् । भवेत् । तस्य भक्तस्य तु । जन्मान्तरेऽन्यजन्मनि । स निश्चयः । पक्वः । भवेत् । न संशयः ॥ ३९ ॥ इतीति । इत्येवंविधम् । सुधया । समम् । गुरोः श्रीहरेः । वचः । निशम्य श्रुत्वा । सः । मुनिश्चैतन्यानन्दसाधुः । परमहर्षम् । अगात्प्राप्तवान् । तथा । इतरे । तदनुव्रताः साक्षाद्भगवदाश्रिताः । मुनिगणाः । गृहिणश्च । मुदिताः सम्प्राप्तमहानन्दाः सन्तः । तं श्रीहरिम् । अनमन् ॥४०॥ निश्चयं स्वस्वरूपस्य सविकल्पं त्रिधा तथा । निर्विकल्पं त्रिधा प्राह तं पृथक् लक्षणैस्तु यः ॥१॥ स श्रीहरिर्भक्तिधर्मसुतोऽक्षरपदेश्वरः । उत्तमं निर्विकल्पं मे ददातु स्वस्य निश्चयम् ॥ २ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्पदानुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां शताधिकविंशतितमस्तरङ्गः ॥ १२० ॥ १२ ॥

असद्भिरपि देशाद्यैर्येषां बाधश्च नैव सः । हरेरक्षरमुक्तानां भेदश्चोक्तस्त्रयोदशे ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८७७) सहसो मार्गशीर्षमासस्य ।

अपक्वेऽपि भवेद्यस्य निश्चये मरणं क्वचित् । जन्मान्तरे भवेत्तस्य स तु पक्वो न संशयः ॥ ३९ ॥
इति निशम्य मुनिः स गुरोर्वचः परमहर्षमगात्सुधया समम् । मुनिगणा गृहिणश्च तथेतरे तमनमन् मुदितास्तदनुव्रताः ॥४० ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते शताधिकविंशतितमस्तरङ्गः ॥ १२० ॥ १२ ॥

शकाब्दे विक्रमार्कस्य नगाश्व वसुभूमिते । दशम्यां सहसः कृष्णे वचोऽमृतमिदं हरेः ॥ १ ॥
तत्र लौहाभिधग्रामे स सूरनृपवेश्मनि । वृतोऽनेकैर्भक्तसङ्घैरुच्चासन उपाविशत् ॥ २ ॥
सितधोत्रः सितोष्णीषः सितकर्णपटस्तथा । उष्णकारुणनीशारो वसानश्च चतुष्पटीम् ॥ ३ ॥
गोपालानन्दसाधुस्तं नत्वाऽपृच्छत्तदाज्ञया । स्वामिन् ! पृच्छाम्यहं किञ्चित्तच्छ्रुत्वा देयमुत्तरम् ॥ ४ ॥

कृष्णे कृष्णपक्षे । दशम्यां तिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥१॥ तत्रेति । तत्र तिथौ । लौहाभिधग्रामे । सूरनृपवेश्मनि दुर्गान्तर्वर्त्तिसूरनृपतिभवने । उच्चासने स्वास्तृतोच्चपर्यङ्कासने । अनेकैर्नानादेशागतत्वाद्बहुभिः । भक्तसङ्घैस्त्यागिगृहिस्त्र्याश्रितवृन्दैः । वृतः सभायां परिवेष्टितः स श्रीहरिः । उपाविशत्प्रातः कृत्यं विधाय न्यषीदत् ॥ २ ॥ तं विशिनष्टि । सितेति । सितधोत्रः परिहितश्वेताधोवसनः । सितोष्णीषः शिरोनिबद्धश्वेतसूक्ष्मघनपटकः । सितः श्वेतः कर्णपटः कर्णनिबन्धार्थको वस्त्रविशेषो यस्य सः । तथा । उष्णकारुणनीशारः शीतकालेऽपि यद्धारणाद्घर्मोदयो भवेत्तथाभूतरक्तवर्णवस्त्रविशेषनीशारपरिधानवान् । चतुष्पटीं चतुष्फालवस्त्रविशेषम् । वसानः प्रावृण्वंश्च ॥ ३ ॥ गोपालानन्देति । गोपालानन्दसाधुः । तं श्रीहरिम् । नत्वा । तदाज्ञया श्रीहरेरेव निदेशेन । अपृच्छत् । हे स्वामिन् ! अहम् । किञ्चित्कमपि प्रश्नम् । पृच्छामि । तत् । श्रुत्वा । उत्तरम् । देयम् ॥ ४ ॥

कीदृशमिति । हे हरे ! । अशुभा असन्तः । देशकालसङ्गादयः । कीदृशम् । पुरुषम् । बाधन्ते । अथ च । कीदृशम् पुरुषम् । न बाधन्ते । तदेतत् । अञ्जसा तत्त्वतः । वद ॥५॥ न च वाच्यं प्रत्यक्षमेवास्योत्तरमस्ति ते ब्रह्मादीनीश्वरान्न बाधन्तेऽन्यान्बाधन्त इति यतस्तेषामपि तैर्दुर्दशाश्रवणादित्याह । श्रूयन्त इति । हे हरे ! । पुरा । ब्रह्मरुद्रादयः । ईशा ईश्वराः सन्तोऽपि । देशकालाद्यैरशुभैर्देशकालप्रभृतिभिः । पराभूताः सम्यग्बाधिताः । कृतदुर्दशा इत्यर्थः । श्रूयन्ते । अन्ये । सुरादयः । किमुत । यदा ब्रह्मादीनामप्येवंविधा दशा तैः कृता तदा तदन्यसुरादीनां तत्कृतपराभवस्य का वार्त्तेत्यर्थः ॥ ६ ॥ 'मुनिनेत्थं स गोपालानन्देन पुरुषोत्तमः । पृष्टस्तं नन्दयंश्चान्यानाह वाक्सुधया त्विति' । नाडिकेति । हे मुने ! । यस्य भक्तस्य । नाडिकाप्राणसङ्कोचपूर्वकम् । साक्षान्नारायणपदाम्बुजे । निर्विकल्पस्थितिः निर्विकल्पसमाधिनावस्थानम् । जायते । तस्येत्युत्तरेण सम्बन्धः ॥ ७ ॥ तस्येति । तस्य तथाविधस्यैव । पुंसो यस्य कस्यापि भक्तजनस्य । देशाद्यैरसद्देशकालादिभिः । बाधः । क्वचित्कदाचिदपि । न जायते । अन्यस्योक्तस्थितिमप्राप्तस्य । ईश्वरस्य ब्रह्मशिवादीश्वरस्यापि । जीवस्य च । असावसद्देशादिभिर्बाधः । भवति ॥ ८ ॥ एतदेव स्फुटबोधाय पुनराह द्वाभ्याम् । याव-

कीदृशं पुरुषं देशकालसङ्गादयोऽशुभाः । बाधन्तेऽथ न बाधन्ते कीदृशं तद्वदाञ्जसा ॥ ५ ॥ श्रूयन्ते देशकालाद्यै ब्रह्मरुद्रादयः पुरा । ईशा अपि पराभूताः किमुतान्ये सुरादयः ॥ ६ ॥ श्रीहरिरुवाच – नाडिकाप्राणसङ्कोचपूर्वकं यस्य जायते । निर्विकल्पस्थितिः साक्षान्नारायणपदाम्बुजे ॥ ७ ॥ तस्यैव पुंसो देशाद्यैर्न बाधो जायते क्वचित् । अन्यस्य त्वीश्वरस्यापि जीवस्य च भवत्यसौ ॥ ८ ॥ यावत्तादृक्स्थितिं प्राप्य वर्त्तन्ते द्रुहिणादयः । तावत्तु तैर्न बाध्यन्ते बाध्यन्ते तेऽन्यथा तु तैः ॥ ९ ॥ प्राकृतोऽपि पुमान् यावद्भगवच्चरणाम्बुजे । स्यान्निमग्नमनास्तावन्न बाधं याति तैः खलु ॥ १० ॥ सर्वदाऽकृतबाधस्तैरेको नारायणः प्रभुः । स्वतन्त्रो वर्त्ततेऽथाह कपिलो मातरं प्रति ॥ ११ ॥ प्रजापतिः स्वां दुहितरं दृष्ट्वा तद्रूपधर्षितः । रोहिद्भूतां सोन्वधावदृष्यरूपी हतत्रपः ॥ १२ ॥-

दिति । द्रुहिणादयो ब्रह्मरुद्रादय ईश्वराः । यावद्यावत्कालपर्यन्तम् । तादृक् स्थितिम् । प्राप्य । वर्त्तन्ते । तावत्तावत्कालपर्यन्तं तु । तैरसद्देशादिभिः । ते द्रुहिणादयः । न बाध्यन्ते । अन्यथोक्तस्थित्यप्राप्तौत्वित्यर्थः । तैरसद्देशादिभिः । ते द्रुहिणादयः । बाध्यन्ते ॥ ९ ॥ प्राकृत इति । प्राकृतः पामरोऽपि । पुमान् भक्तजनः । यावत् । भगवच्चरणाम्बुजे प्रत्यक्षहरिचरणपद्मे । निमग्नमना निर्विकल्पसमाधिस्थित्या संलग्नमानसः । स्यात् । तावत् । तैरसद्देशादिभिः । बाधं पराभवम् । न याति । खलु ॥ १० ॥ सर्वदेति । सर्वदा सर्वकालम् । तैरसद्देशादिभिः । आकृतबाधो न विहितपराभवः । एकः । प्रभुः । स्वतन्त्रः । नारायणः । वर्त्तते । अथात एव । कपिलो देवहूतितनुः । मातरं देवहूतिं प्रति । आह श्रीमद्भागवते जगाद ॥ ११ ॥ प्रजापतिरिति । प्रजापतिर्ब्रह्मा । स्वाम् । दुहितरं सरस्वतीम् । दृष्ट्वा । तद्रूपेण दुहितृसरस्वतीदेहसौन्दर्येण धर्षितो मोहितः । अभूत् । रोहिद्भूतां पितृतथाभावदर्शनलज्जया मृगीभूतामपि । तां दृष्ट्वा । ऋष्यरूपी स्वयमपि मृगरूपः । हतत्रपो

गतलज्जः । स ब्रह्मा । अन्वधावदन्ववर्त्तत ॥ १२ ॥ तदिति । तेन ब्रह्मणा सृष्टा मरीच्यादयस्तैः सृष्टाः कश्यपादयस्तैरपि सृष्टा देवमनुष्यादयस्तेषु मध्ये । इह लोके । कः । पुमान् । नारायणम् । ऋषिं बदरिकाश्रमवासिनं भगवन्तं नारायणर्षिमृते । योषिन्मय्या । मायया । अखण्डितधीरनाक्रष्टमनाः । अस्ति । सर्वोऽपि खण्डितधीरेवास्तीत्यर्थः । भगवन्मायाया मोहकत्वाद्योषितस्तत्समानधर्मत्वात्सा मायात्वेनाभिहिता ॥ १३ ॥ बलमिति । स्त्रीमय्याः स्त्रीरूपायाः । मे मम । मायायाः । बलं मोहकत्वरूपं सामर्थ्यम् । पश्य । या स्त्री । केवलम् । भ्रूविजृम्भेण भ्रुकुटीविक्षेपेणैव । दिशाम् । जयिनः । दिग्विजयिनः शूरानपीत्यर्थः । पदाक्रान्तान्स्वाधीनान् । करोति ॥ १४ ॥ मायिकैरिति । मायिकैरसद्भिः । देशाद्यैः । सर्वस्यापि । बाधः । जायते । साक्षाद्भगवतस्तु । तैर्बाधो न जायते । इतीत्थम् । सूतो रौमहर्षणिरुग्रश्रवाः । मुनीन् शौनकादीनृषीन् । अब्रवीच्छ्रीमद्भागवते एव जगाद ॥ १५ ॥ उद्दामेति । यासां स्त्रीणाम् । उद्दाम उदारो भावोऽभिप्रायश्च पिशुनश्चित्ताकर्षणसूचकोऽमलो निर्मलो वल्गुः सुन्दरो यो हासः स च व्रीडापूर्वमवलोकोऽवलोकनं च तैर्निहतोऽभिभूतः । अमदनः शिवोऽपि । संमुह्य मोहं प्राप्य । चापं स्वीयं पिनाकं धनुः । अजहाच्चत्याज । तास्तथाविधाः । प्रमदोत्तमाः । स्त्रियः । कुहकैर्वचनोपायैः । यस्य श्रीकृष्णभगवतः । इन्द्रियं मनः । विमथितुं पराभावयितुम् ।

तत्सृष्टसृष्टसृष्टेषु कोन्वखण्डितधीः पुमान् । ऋषिं नारायणमृते योषिन्मय्येह मायया ॥ १३ ॥ बलं मे पश्य मायायाः स्त्रीमय्या जयिनो दिशाम् । या करोति पदाक्रान्तान् भ्रूविजृम्भेण केवलम् ॥१४॥ मायिकैरपि देशाद्यैर्बाधः सर्वस्य जायते । न साक्षाद्भगवत इति सूतोऽब्रवीन्मुनीन् ॥१५॥ उद्दामभावपिशुनामलवल्गुहासव्रीडावलोकनिहतोऽमदनोऽपि यासाम् । सम्मुह्य चापमजहात्प्रमदोत्तमास्ता यस्येन्द्रियं विमथितुं कुहकैर्न शेकुः ॥१६॥ तमयं मन्यते लोको ह्यसङ्गमपि सङ्गिनम् । आत्मौपम्येन मनुजं व्यापृण्वानमतोऽबुधः ॥ १७ ॥ एतदीशनमीशस्य प्रकृतिस्थोऽपि तद्गुणैः । न युज्यते सदात्मस्थैर्यथा बुद्धिस्तदाश्रयाः ॥ १८ ॥ भगवन्तं प्रपन्ना ये न त्वन्यमनसः क्वचित् । तेऽपि तैर्नैव बाध्यन्त इति कृष्णोऽर्जुनं जगौ ॥ १९ ॥

न शेकुर्नैव प्राभवन् ॥ १६ ॥ तमिति । मनुजम् । व्यापृण्वानं मनुजवच्चेष्टमानम् । मनुष्यभावेन स्वयाथात्म्यमाच्छादयन्तमित्यर्थः । असङ्गं वस्तुतो निसङ्गमपि । सङ्गिनं सङ्गिनमिव भासमानम् । तमिमं भगवन्तम् । अयम् । लोको जनः । आत्मौपम्येन स्वतुल्यत्वेन । मन्यते । अतो हेतोः । सोऽयं लोकः । अबुधः सुतरामज्ञः ॥१७॥ एतदिति । यथा । असदात्मस्थैरचिचिदवस्थितैर्हेयगुणैः । तदाश्रया भगवत्स्वरूपाधारा । बुद्धिस्तत्तत्कर्मफलप्रदानाय चिदचिदवस्थितान्तर्यामिशक्तिः । न युज्यते । तथा । प्रकृतिस्थः स्वेच्छया मनुष्यभावावस्थितोऽपि भगवान् । तद्गुणैर्मनुष्यभावैः । न युज्यते इति यत् । एतदेव । ईशस्य परमेश्वरस्य । ईशनमीश्वरत्वम् ॥ १८ ॥ भगवन्तमिति । हे मुने ! । भगवन्तं प्रत्यक्षं हरिम् । प्रपन्नाः । ये भक्ताः । क्वचित्कदाचिदपि । अन्यमनसो न तु भगवदितरपदार्थसक्तमानसा नैव स्युः । किन्तु निर्विकल्पसमाधिना केवलं साक्षाद्भगवत्स्वरूपमात्रासक्तमनसो भवेयुरित्यर्थः । ते तथाविधाभक्ता अपि । तैरसद्देशकालादिभिः । नैव बाध्यन्ते । इतीत्थम् । कृष्णः । अर्जुनम् । जगौ गीतायामाह ॥ १९ ॥

दैवीति । दैवी देवेन जीवेश्वरादिसुखार्थं सर्गादिक्रीडनोद्युक्तेन मया जगत्सर्गादिकर्मणि पुरुषद्वारा प्रेरिता । गुणमयी सत्त्वादिगुणात्मिका । मम मदीया शक्तिः । एषा । माया । दुरत्यया मदनन्यप्रपत्तिमृते सर्वैरपि दुरतिक्रमा । भवति । एवं मायादुरत्ययतामुक्त्वा तद्विमोचनोपायमपि स्वयमेवाह । ये जनाः । मामेव । प्रपद्यन्ते सर्वात्मना शरणं प्रपद्यानन्यमनसो मां भजन्ति । ते जनाः । एताम् । मायाम् । तरन्ति । तस्या विमुक्ता भवन्तीत्यर्थः ॥ २० ॥ एवमिति । हे मुने ! । एवममुना प्रकारेण । कृष्णं साक्षात्परमेश्वरम् । निर्विकल्पस्थितीन् । तद्भक्तांश्च । विना । अन्ये । सर्वेऽपि सविकल्पा भक्ता ब्रह्मादयश्च । प्रबलैरतिबलिष्ठैः । देशाद्यैरसद्देशकालादिभिः । बाध्यन्ते ॥ २१ ॥ अथेति । अथैवंविधश्रीहरिवाक्यश्रवणानन्तरम् । नित्यानन्दो मुनिः । हरिम् । अपृच्छत् । हे प्रभो ! । मायामयैः । गुणैः सत्त्वादिभिः । सम्बद्धानां सविकल्पभाववर्त्तनरूपमायागुणसंयतानां सर्वेषाम् । देशादिभिरसद्देशकालादिभिः पराभवः । भवेदेव ॥ २२ ॥ हरेरिति । हरेः । ते तव गुणसम्बन्धे सत्यपि । स्वतन्त्रता । अस्ति । अतो हेतोः । तैरसद्देशादिभिः । बाधः । नास्त्येव । इत्येतत् । यत् ।

दैवी ह्येषा गुणमयी मम माया दुरत्यया । मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ॥ २० ॥ एवं कृष्णं च तद्भक्तान् निर्विकल्पस्थितीन्विना । अन्ये सर्वेऽपि बाध्यन्ते देशाद्यैः प्रबलैर्मुने ॥ २१ ॥ अथापृच्छद्धरिं नित्यानन्दो मायामयैर्गुणैः । सम्बद्धानां भवेदेव बाधो देशादिभिः प्रभो ॥२२॥ हरेस्ते गुणसम्बन्धे सत्यप्यस्ति स्वतन्त्रता । अतो नास्त्येव तैर्बाध इति युक्तमुदीरितम् ॥ २३ ॥ त्वं कृष्णोऽतोऽखिलैः सेव्यो गुणबन्धमुमुक्षुभिः । त्वत्प्रसादेन नैर्गुण्यं यायुस्ते त्वद्दृढाश्रयाः ॥ २४ ॥ ये तु नैर्गुण्यमापन्नाः स्थिता अक्षरधामनि । मुक्ता भवत्सधर्माणः कालमायाभयोज्झिताः ॥ २५ ॥ तेषां च तत्र भवतो वर्त्तमानस्य धामनि । भेदः केन विशेषेण ज्ञेयश्चैतन्यरूपिणाम् ॥ २६ ॥ तमुवाच हरिस्तेषां विशेषोऽस्ति महान्मुने । राजेव कृष्णो विज्ञेयस्ते तु तत्सेवका इव ॥ २७ ॥

उदीरितं भवता कथितम् । तत् । युक्तं योग्यमेवास्ति ॥ २३ ॥ त्वमिति । अतो हेतोः । गुणबन्धमुमुक्षुभिर्मायायाः सत्त्वाद्यनादिगुणबन्धादात्मानं मोक्तुमिच्छुभिः । अखिलैर्जनैः । कृष्णः । त्वम् प्रत्यक्षो भगवान् भवान् । सेव्य एकान्तिकभावेनोपासनीयः । असि । त्वद्दृढाश्रयाः । ते तथाविधा भक्ताः । त्वत्प्रसादेन साक्षाद्भवदनुग्रहेण । नैर्गुण्यं गुणातीतब्रह्मभावेन त्वत्पार्षदवत् सेवासुखम् । यायुः प्राप्नुयुः ॥ २४ ॥ य इति । नैर्गुण्यम् । आपन्नाः । अक्षरधामनि । स्थिताः । भवत्सधर्माणः श्रीकृष्णस्य तव साधर्म्यं प्राप्ताः । कालमायाभयोज्झिताः । ये । मुक्ताः ॥ २५ ॥ तेषामिति । चैतन्यरूपिणां ब्रह्मशरीराणाम् । तेषां मुक्तानाम् । तत्राक्षरब्रह्माख्ये । धामनि पदे । वर्त्तमानस्य । भवतः श्रीकृष्णस्य च तव । भेदः । केन । विशेषेण । ज्ञेयः । इति द्वयोरेकसम्बन्धः ॥ २६ ॥ तमिति । तमेवं पृच्छन्तं नित्यानन्दमुनिम् । हरिः । उवाच । हे मुने ! । तेषां तस्य तेषां चेत्यर्थः । महान् । विशेषो भेदः । अस्ति । तं विशेषं दृष्टान्तद्वयेन स्पष्टमाह सार्द्धैस्त्रिभिः । कृष्णः ।

श्रीहरिः । राजा इव । विज्ञेयः । ते मुक्तास्तु । तत्सेवका राजभृत्या इव । विज्ञेयाः ॥ २७ ॥ तेज इति । यद्यपि । तेजोविग्रहतासाम्यात् तेजोमयशरीरत्वसाम्यतः । चन्द्रः । ताराश्च । तुल्या इव । समीक्ष्यन्ते । तथापि । तद्भिदा तस्य तासां च परस्परं भेदः । अस्त्येव ॥ २८ ॥ भिदामाह सार्द्धेन । तारेति । तारामण्डलतः । चन्द्रमण्डलम् । महत् । वर्त्तते । नैशतमसो रात्रिभवान्धकारस्य । निवृत्तिः । शशिना चन्द्रेणैव । क्रियते । हि ॥ २९ ॥ औषधीनामिति । सर्वासाम् । औषधीनाम् । पोषणम् । अमुना चन्द्रेण । जायते । एवममुना प्रकारेण । ऐश्वर्यातिशयादनवधिकातिशयैश्वर्यतः । मुक्तेभ्योऽपि । कृष्णस्य । भिदा भेदोऽस्ति ॥ ३० ॥ कृष्णैश्वर्यातिशयमाह । कृष्ण इति । कृष्णः । सर्वनियन्ता । सर्वकृदगणितब्रह्माण्डोत्पादनादिकर्त्ता । सर्वकारणम् । अतिरूपः सर्वातिशायिशरीरसौन्दर्यः । अतितेजाः । भूरिसामर्थ्यवान् । अत एव । प्रभुः । अस्ति ॥ ३१ ॥ कर्त्तुमिति । स्वयं श्रीकृष्णः । कर्त्तुम् । समर्थः । अकर्त्तुम् । समर्थः । अन्यथा कर्त्तुं चापि । समर्थः ।

तेजोविग्रहतासाम्याच्चन्द्रस्ताराश्च यद्यपि । तुल्या इव समीक्ष्यन्ते तथाप्यस्त्येव तद्भिदा ॥ २८ ॥
तारामण्डलतश्चन्द्रमण्डलं वर्त्तते महत् । निवृत्तिर्नैशतमसः क्रियते शशिनैव हि ॥ २९ ॥
ओषधीनां पोषणं च सर्वासां जायतेऽमुना । एवं कृष्णस्य मुक्तेभ्योऽप्यैश्वर्यातिशयाद्भिदा ॥ ३० ॥
कृष्णः सर्वनियन्ताऽस्ति सर्वकृत्सर्वकारणम् । अतिरूपोऽतितेजाश्च भूरिसामर्थ्यवान्प्रभुः ॥ ३१ ॥
कर्त्तुं समर्थोऽकर्त्तुं चान्यथा कर्त्तुमपि स्वयम् । स्वतेजसि विलाप्यैतानेकः स्थातुं च स क्षमः ॥ ३२ ॥
स्वपदे चाक्षरे त्वेतैः कृतां नानोपचारकैः । स्वसेवां स्वेच्छया सोऽङ्गीकुरुते पुरुषोत्तमः ॥ ३३ ॥
स्वावासमक्षरमपि प्रत्याकृष्यात्मनि स्वयम् । निजशक्त्यैव तान् धर्तुं स्वतन्त्रः क्षमतेऽखिलान् ॥ ३४ ॥
यथाऽऽह पृथुरूपोऽसौ पृथ्वीं त्वामन्तराऽप्यहम् । धर्त्ताऽस्मि लोकानखिलान्स्वसामर्थ्येन निश्चितम् ॥ ३५ ॥

अस्ति । स श्रीकृष्णः । एतान्मुक्तान् । स्वतेजसि । विलाप्य विलीनतां नीत्वा । एक एकाक्येव । स्थातुम् । क्षमः समर्थः । अस्ति । अनेनास्य कर्त्तुं समर्थतोक्ता ॥ ३२ ॥ स्वेति । किञ्च । पुरुषोत्तमः । स श्रीहरिः । अक्षरेऽक्षरब्रह्माख्ये । स्वपदे निजधामनि । एतैर्मुक्तैः । नानोपचारकैः । कृताम् । स्वसेवाम् । स्वेच्छया । अङ्गीकुरुते । अनेनास्याकर्त्तुं समर्थतोक्ता ॥३३॥ स्वेति । स्वयं श्रीकृष्णः । स्वावासं स्वस्य निवासभूतम् । अक्षरं धामापि । आत्मनि स्वस्वरूपे । प्रत्याकृष्य । प्रविलाप्य । निजशक्त्या स्वसामर्थ्येनैव । अखिलान् । तान्मुक्तान् । स्वतन्त्रः सन् । धर्तुम् । क्षमते समर्थो भवति । अनेनास्यान्यथाकर्त्तुं समर्थतोक्ता ॥३४॥ एतदेव पृथुरूपभगवदुक्त्या द्रढयति । यथेति । यथा । अहम् । त्वाम् । अन्तरा विनापि । स्वसामर्थ्येन । अखिलान् । लोकान् । निश्चितमेव । धर्त्ताऽस्मि धारयिष्यामि । इति । पृथुरूपः । असौ भगवान् । पृथ्वीम् । आह । तदुक्तं श्रीभागवते । 'त्वां स्तब्धां दुर्मदां नीत्वा मया गां तिलशः शरैः । आत्मयोगबलेनेमा धारयिष्याम्यहं प्रजा' इति ॥ ३५ ॥

एवमिति । अधियो मतिवर्जिताः । ये पुरुषाः । एवंभूतेन । हरिणा सह । अक्षरस्य धामरूपाक्षरब्रह्मणः । मुक्तानां तत्स्थमुक्तवृन्दानां च । साम्यं तुल्यत्वम् । जानन्ति । ते पुरुषास्तु । अज्ञा मूढमतयः । पापरूपिणश्च । ज्ञेयाः ॥ ३६ ॥ ईश्वरत्वमिति । यत्र येषु ग्रन्थेषु । अन्येषां भगवदितरेषाम् अक्षर-महापुरुषप्रधानपुरुषतत्त्ववैराजब्रह्मादीनाम् । ईश्वरत्वं भगवत्त्वम् । महत्त्वं च । उदीरितम् । तत्र तेषु ग्रन्थेषु । अस्य हरेरेव । अन्वयेनानुप्रवेशनैव । तदीश्वरत्वं महत्त्वं च । प्रोक्तम् । इतीत्थम् । दृश्यतां ज्ञायताम् ॥ ३७ ॥ एतदेव सहेतुकं स्पष्टमाह । कार्येति । प्रभोः अस्य हरेः । कार्यार्थं सृष्ट्यादिप्रयोजनसिध्यर्थम् । यत्र यत्र । अनुप्रवेशोऽन्वयः । अस्ति । सः । सः । भगवान् । इतीत्थम् । प्रोक्तः । अस्ति । स्वतः श्रीहर्यन्वयं विना । क्वचित्कदाचिदपि । भगवानिति नैव प्रोक्तः ॥ ३८ ॥ तमिति । तं श्रीहर्यन्वयं विना तु । अक्षरस्यापि । भगवत्त्वम् । न विद्यते । तर्हि विरिञ्चादेः । कुतस्तराम् । सनकादेः । कुतस्तमाम् । भगवत्त्वं स्यान्न

एवं भूतेन हरिणा साम्यं जानन्ति येऽधियः । अक्षरस्य च मुक्तानां ते त्वज्ञाः पापरूपिणः ॥ ३६ ॥
ईश्वरत्वं महत्त्वं च यत्रान्येषामुदीरितम् । तत्रास्यैवान्वयेनैव तत्प्रोक्तमिति दृश्यताम् ॥ ३७ ॥
कार्यार्थं यत्र यत्रास्यानुप्रवेशोऽस्ति च प्रभोः । स स प्रोक्तोऽस्ति भगवानिति नैव स्वतः क्वचित् ॥ ३८ ॥
तं विना त्वक्षरस्यापि भगवत्त्वं न विद्यते । कुतस्तरां विरिञ्चादेः सनकादेः कुतस्तमाम् ॥ ३९ ॥
अत एवापरिमिता ध्रुवास्तनुभृतो यदि । इति श्लोकेऽयमेवार्थः प्रोक्तो वेदैर्निजस्तुतौ ॥ ४० ॥
एक एवास्ति भगवान् कृष्णो नान्यस्तु तत्समः । न कोऽपि तत्त्वमाप्नोति महद्भिरपि साधनैः ॥ ४१ ॥
तत्सेवामेव सम्प्राप्ताः साधनैस्तदुपासकाः । सैवास्ति दुर्लभा मुक्तेरपीत्याहुर्विचक्षणाः ॥ ४२ ॥
धर्मज्ञानविरागाढ्या वयमप्येतदाप्तये । भक्तिं नवविधां तस्य सादरं कुर्महे सदा ॥ ४३ ॥

स्यादेवेत्यर्थः ॥ ३९ ॥ अत इति । अतो हेतोरेव । अपरिमिता ध्रुवास्तनुभृतो यदि इति श्लोके । अयमेव । अर्थः । वेदैः । निजस्तुतौ श्रीभागवतीयदशमस्कन्धस्थ-वेदस्तुत्यध्याये वेदप्रोक्तस्वस्तुतावित्यर्थः प्रोक्तः ॥ ४० ॥ एक इति । भगवांस्तु । कृष्णः । एक एव । अस्ति । तत्समः । अन्यस्तु । नास्त्येव । महद्भिरपि । साधनैः । कोऽपि कश्चिदपि । तत्त्वं भगवदसाधारणभगवत्त्वम् । नाप्नोति ॥ ४१ ॥ तदिति । तदुपासकाः श्रीहरेरेकान्तिकभक्ताः । साधनैर्निष्कामैकान्तिकभक्त्याद्युपायैः । तत्सेवां श्रीहरिचरणपद्मपरिचर्यामेव । सम्प्राप्ताः । सा तत्सेवैव मुक्तेरपि । दुर्लभा । अस्ति । अस्ति । इतीत्थम् । विचक्षणा भगवन्माहात्म्यातिशयाभिज्ञाः शुकादयः । आहुः ॥ ४२ ॥ धर्मेति । धर्मज्ञानविरागाढ्याः स्वधर्मादिसम्पन्नाः । वयमपि । एतदाप्तये एवंविधभगवत्सेवाप्राप्त्यर्थम् । तस्योक्तविधमहिम्नो हरेः । नवविधाम् । भक्तिम् । सादरं यथातथा । सदा । कुर्महे ॥ ४३ ॥

एवमिति । एवममुना प्रकारेण । स श्रीहरिः । ईशोऽक्षरधामाधिपतिरक्षरधामस्थानन्तमुक्तसंवाहितपदाम्बुजः स्वयं पुरुषोत्तमः सन्नपि । अखिलशिक्षणार्थं निखिलस्वाश्रितजनशिक्षायै । परोक्षवत् । वार्त्ताम् । चकार । इत्येवंविधम् । तस्य श्रीहरेः । वाक्यामृतम् । निपीय । सः । साधुर्नित्यानन्दमुनिः । तदीयाः श्रीहर्याश्रिताः । अन्ये त्यागिगृहिजनाश्च । तुतुषुर्हृष्टा बभूवुः ॥ ४४ ॥ येषां बाधो न बाधः स्याद्देशाद्यैरशुभैरपि । तद्भेदमुक्त्वा यः स्वस्याक्षरतोऽपि परस्य च ॥ १ ॥ मुक्तानामक्षरस्थानां भेदमत्यन्तमाह सः । श्रीहरिः स्वस्य भक्तिं मे देयाद्ब्रह्मात्मना पराम् ॥ २ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्स्नुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां शताधिकैकविंशतितमस्तरङ्गः॥ १२१ ॥ १३ ॥

प्रोक्तोऽन्याचार्याशयोक्तिपूर्वं स्वस्याशयः स्फुटम् । चतुर्दशे श्रीहरिणा स्वभक्तशिक्षणाय वै ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८७७) सहःकृष्णे मार्गशीर्षमासस्य कृष्णपक्षे । एकादश्यां तिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ ग्राम इति । तत्र तिथौ । लौहाभिधे । ग्रामे । सूरवर्मनृपालये

एवं चकाराखिलशिक्षणार्थमीशोऽपि वार्त्तां तु परोक्षवत्सः । वाक्यामृतं तस्य निपीय चेति साधुः स चान्ये तुतुषुस्तदीयाः ॥ ४४ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते शताधिकैकविंशतितमस्तरङ्गः ॥ १२१ ॥ १३ ॥

शकाब्दे विक्रमार्कस्य नगाश्ववसुभूमिते । एकादश्यां सहःकृष्णे वचोऽमृतमिदं हरेः ॥ १ ॥
ग्रामे लौहाभिधे तत्र सूरवर्मनृपालये । सिताम्बरधरः स्वामी मञ्चोत्तम उपाविशत् ॥ २ ॥
भक्तैश्च त्यागिभिर्नैकैर्गृहिभिः परितो वृतः । स्वाग्रोपविष्टान्सदसि महतः सोऽब्रवीत्ततः ॥ ३ ॥
शङ्कराचार्यमुख्या य आचार्या अभवन्निह । वच्म्यादावाशयं तेषां ततश्चाहं ममापि वः ॥ ४ ॥
शुद्धाद्वैताख्यसिद्धान्तः शङ्करस्वामिना मतः । ऐकात्म्यं जीवपरयोर्विरागाद्यस्य साधनम् ॥ ५ ॥

दुर्गान्तर्वर्त्तिनि सूरनृपतिभवने । मञ्चोत्तमे स्वास्तृते पर्यङ्कोत्तमासने । सिताम्बरधरः परिहितसकलश्वेतवसनः । स्वामी श्रीहरिः । उपाविशत् ॥ २ ॥ भक्तैरिति । नैकैर्नानादेशागतत्वाद्बहुभिः । भक्तैः स्वाश्रितैः । त्यागिभिः । गृहिभिश्च । परितः समंततः । वृतः सभायां वेष्टितः । स श्रीहरिः । सदसि । स्वाग्रोपविष्टान्स्वपुरःप्रदेशावस्थितान् । महतः । सतो मुक्तानन्दादिसाधून् । अब्रवीत् ॥ ३ ॥ शङ्करेति । इह लोके । ये । शङ्कराचार्यमुख्याः । आचार्याः । अभवन् । तेषामाचार्याणाम् आशयमभिप्रायम् । भगवत्स्वरूपाववोधप्रकारतत्प्रीणनसाधनमुक्तिप्रकारनिर्णयादिरूपं सिद्धान्तमित्यर्थः । अहम् । आदौ प्रथमतः । वो युष्मभ्यम् । वच्मि । ततस्तदनन्तरम् । मम । आशयमपि । वच्मि ॥ ४ ॥ शुद्धेति । शङ्करस्वामिना । शुद्धाद्वैताख्यसिद्धान्तः सजातीय—विजातीय—स्वगतभेदवर्जितनिराकारब्रह्मस्वरूपाववोधरूपः । मतः । जीवपरयोर्जीवब्रह्मणोः । ऐकात्म्यमभिन्नत्वम् । मतम् । मुक्तित्वेनाभिमतमित्यर्थः । अस्यैकात्म्यस्य । साधनम् । विरागादिमतम् ॥ ५ ॥

विशिष्टेति । रामानुजेन । विशिष्टाद्वैतसिद्धान्तः शरीरभूतजीवेश्वरादिचिद्वर्गस्य शरीरभूतमायातत्कार्यपृथिव्याद्यचिद्वर्गस्य च कार्यकारणोभयावस्थायामपि तदन्तर्यामितया शरीरिणोऽनन्तमुक्तोपासितचरणाब्जस्य रूपानुरूपावयवस्य सर्वदा पुरुषाकृतेर्भगवतः स्वरूपाववोधनरूपः । मतः । अत एव । जीवेशमायाभेद आत्मनां परब्रह्मणो मायायाश्च भेदः । तात्त्विको वास्तविकः । मतः । कल्पितोऽज्ञानोपाधिकृतः । न तु नैव मतः ॥ ६ ॥ आकार इति । भगवतः श्रीपुरुषोत्तमस्य । आकारः । दिव्योऽमायिकः । तथा । वैभवैश्वर्यं विभूत्यणिमादिरूपम् । दिव्यम् । जीवैः । तस्य भगवतः । उपासना दास्येन दासभावेन । सदा ब्रह्मभावं प्राप्यापि । कार्या । मता । ब्रह्मभावं प्राप्य दासत्वेन भगवत्परिचरणं मुक्तिस्तत्साधनं चापि दास्यमेव मतमित्यर्थः । इति चेत्थंभूतमेव रामानुजाचार्यमतम् ॥ ७ ॥ मनुत इति । वल्लभाचार्यः । ईशितुः पुरुषोत्तमस्य भगवतः । विशुद्धाद्वैतं सदाद्वैतं सदा दिव्यपुरुषाकृतितयाऽद्वैतभावम् । मनुते । वालकृष्णस्य । सेवाम् । मनुते । सेवायाः फलरूपगाढप्रेम्णा भगवत्यावेशं मुक्तिं मन्यते इत्यर्थः । आत्मनिवेदनमेकान्तिकभक्तिम् । मुख्यं मुक्तौ मुख्यसाधनम् । मनुते ॥ ८ ॥ अथेति । अथानन्तरम् । अस्मदाशयमस्माकमभिप्रायमपि । सर्वे

विशिष्टाद्वैतसिद्धान्तो मतो रामानुजेन तु । जीवेशमायाभेदश्च तात्त्विको न तु कल्पितः ॥ ६ ॥ आकारो वैभवै-श्वर्यं दिव्यं भगवतस्तथा । दास्येनोपासना तस्य कार्या जीवैः सदेति च ॥ ७ ॥ मनुते वल्लभाचार्यो विशुद्धा-द्वैतमीशितुः । वालकृष्णस्य सेवां च मुख्यमात्मनिवेदनम् ॥ ८ ॥ अथास्मदाशयमपि सर्वे शृण्वन्तु सादरम् । श्रुतप्रायः स युष्माभिर्वार्त्तास्वनुगतो मुहुः ॥ ९ ॥ आशयो यस्य यादृक् स्यात्सर्वामपि तद्गिरम् । सूचीं वा स्रग्म-णीन् सूत्रमिव नित्यमनुव्रजेत् ॥ १० ॥ प्रायो रामानुजस्वामिसिद्धान्तोऽस्ति मतो मम । ब्रह्मात्मना कृष्णसेवा भक्तिर्मुक्तिस्तथेप्सिता ॥११॥ कृष्णसम्बन्धहीनेषु विषयेष्वपि पञ्चसु । अरुचि भूयसी मेऽस्ति विश्वासो मनसो न च ॥ १२ ॥ ऐकात्म्यं वासुदेवेन प्राप्तोऽपि भगवानपि । ऋषभो नाग्रहीत्सिद्धीः शिक्षाया एव नः किल ॥ १३ ॥

भवन्तः सकला अपि मदाश्रिताः । सादरं यथातथा । शृण्वन्तु । सोऽस्मदाशयः । वार्त्तासु मत्कृतासु नानाविधवार्त्तासु । मुहुर्भूयो भूयः । अनुगतोऽनुसृतः सन् । युष्माभिः श्रुतप्रायो वहुधा श्रुतः ॥ ९ ॥ एतदेव दृष्टान्ताभ्यां स्फुटमाह । आशय इति । यस्य । यादृक् यथाविधः । आशयः । स्यात् । स आशयः । सर्वामपि । तद्गिरं तस्य वाणीम् । सूत्रम् । सूचीं सीवनीम् । इव । स्रग्मालाधारसूत्रम् । मणींस्तत्स्थमणिकानिव वा । नित्यम् । अनुव्रजेत् ॥ १० ॥ प्राय इति । प्रायो वहुधा तु । रामानुजस्वामिसिद्धान्तः । मम । मतो मयाभिमतः । अस्ति । ब्रह्मात्मना स्वात्मनो ब्रह्मभावेन । कृष्णसेवा । मम । ईप्सिता । भक्तिः । तथा । मुक्तिः । अस्ति ॥ ११ ॥ कृष्णेति । कृष्णसम्बन्धहीनेषु श्रीकृष्णसम्बन्धवर्जितेषु । पञ्चस्वपि । विषयेषु मायिकेषु शब्दादिषु । मे मम । भूयस्यतिशयिता । अरुचिरप्रीतिः । अस्ति । किञ्च । मे मनसः । विश्वासः । नास्ति ॥ १२ ॥ ऐकात्म्यमिति । वासुदेवेन सह । ऐकात्म्यमेकात्मभावम् । प्राप्तोऽपि । भगवान् भगवदवतारविशेषो-

ऽपि । ऋषभो नाभिसूनुः । नोऽस्मदादीनाम् । शिक्षायै मनो विश्वासानाचरणशिक्षणार्थमेव । सिद्धिर्मनोजवपरकायप्रवेशनादीन्यैश्वर्याणि । नाग्रहीन्नोपादत्त ॥ १३ ॥ वशेति । वशस्थस्य स्ववशवर्त्तिनोऽपि । मनसः । विश्वासस्तु । मुमुक्षुणा साधनदशावता भक्तेन । अथवा । मुक्तेन सिद्धदशावता भक्तेन । कर्हिचित्कदाचिदपि । न कर्त्तव्यः । इति । हेतोः । सा शिक्षा । मता मया स्वीकृताऽस्ति ॥ १४ ॥ एतस्येति । श्रीमद्भागवते । एतस्य ऋषभदेवस्यैव । चरित्रे । तां शिक्षाम् । शुको वैयासकिः । संदिग्धनृपबोधार्थं स्वयं भगवान् सन्नृषभदेवः स्वतः प्राप्ताः सिद्धीः कथं नाग्रहीदेवंविधसन्देहयुक्तपरीक्षिन्नृपतिबोधनाय । प्राग्गिरा प्राचीनवाक्यैः । स्पष्टं यथातथा । ऊचिवान् ॥ १५ ॥ नेति । अनवस्थितेऽतिचञ्चलत्वादेकरूपतया स्थित्यभाववति । मनसि जितेऽपि स्वकीये मानसे विषये । सख्यं सख्यहेतुकं विश्वासम् । कर्हिचित्कदाचिदपि । न कुर्यात् । स्वनिःश्रेयसार्थिना स न विधेय इत्यर्थः । यद्विस्रम्भाद्यस्य मनसो विश्वासात् । चिराच्चीर्णं बहुकालसञ्चितम् । ऐश्वर्यं शिवसौभर्यादिसमर्थसम्बन्धि । तपः । चस्कन्द सुस्राव ॥ १६ ॥ तत्र सदृष्टान्तं हेतुमाह । नित्यमिति । कृतमैत्रस्य कृतस्वमनोविश्वासस्य । योगिनः स्वनिःश्रेयसार्थिकभक्तियोगादिनिष्ठस्य भक्तजनस्य । मनः । कामस्य । तं काममनु तत्पश्चादुत्पत्तिभाजः । ये । अरयो वक्ष्यमाणाः शत्रवस्तेषां च । छिद्रं स्वस्मिन्प्रवेशावकाशम् । नित्यं सदैव । ददाति प्रयच्छति । तत्र दृष्टान्तः । पत्युः । पुंश्चली । जाया पत्नी । इव । यथा कृतपुंश्चलीपत्नीविश्वासस्य पत्युः पुंश्चलीजाया जाराणामवकाशं दत्त्वा स्वपतिं घातयति तथा तन्मनोपि कामादिभिर्योगिनं स्वनिःश्रेयसमार्गाद्भ्रंशयतीत्यर्थः ॥१७॥ कामपूर्वकांस्तदनुवर्त्तिनोऽरीन्कथयति । कामं इति । कामः । मन्युः क्रोधः । मदो गर्वः । लोभः । शोकश्च मोहश्च भयं च तान्यादयो येषां दान मत्सरादीनां ते । यन्मूलाः कृतविश्वासमनोनिमित्ता भवन्ति । कर्मबन्धश्च । यन्मूलः । कामादिसेवनेन नानाविधपापकर्मभिर्बन्धनं यन्मूलं भवतीत्यर्थः । तन्मनः । कोनु । बुधो ज्ञानिभक्तः । स्वीकुर्यात् । स्वाधीनं ज्ञानमिति मन्येत न मन्येतैवेत्यर्थः ॥ १८ ॥ अत इति । अतो मनोविश्वासस्य सकलानर्थहेतुत्वादेव । ईदृशे मनोविश्वासरहिते । त्यागे वैराग्यलक्षणे । मम । सर्वदा सर्वकालम् । रुचिरभिलापः प्रीतिरिति यावत् । अस्ति । ईदृक्त्यागिषु मनोविश्वासवर्जितविरक्तिमद्भक्तजनेषु । मम । साहजिकी स्वाभाविकी । प्रीतिः । अस्ति ॥ १९ ॥

वशस्थस्यापि मनसो न विश्वासस्तु कर्हिचित् । मुमुक्षुणा वा मुक्तेन कर्त्तव्य इति सा मता ॥ १४ ॥
एतस्यैव चरित्रे तां श्रीमद्भागवते शुकः । संदिग्धनृपबोधार्थं प्राग्गिरा स्पष्टमूचिवान् ॥ १५ ॥
न कुर्यात्कर्हिचित्सख्यं मनसि ह्यनवस्थिते । यद्विस्रम्भाच्चिराच्चीर्णं चस्कन्द तप ऐश्वरम् ॥ १६ ॥
नित्यं ददाति कामस्य छिद्रं तमनु येऽरयः । योगिनः कृतमैत्रस्य पत्युर्जायेव पुंश्चली ॥ १७ ॥
कामो मन्युर्मदो लोभः शोक मोहभयादयः । कर्मबंधश्च यन्मूलः स्वीकुर्यात्को नु तद्बुधः ॥ १८ ॥
अत एवेदृशे त्यागे सर्वदाऽस्ति रुचिर्मम । ईदृक्त्यागिषु च प्रीतिरस्ति साहजिकी मम ॥ १९ ॥

श्वेतेति । श्वेतद्वीपे । अथवा । बदर्यां बदरिकाश्रमे । स्थित्वेति शेषः । तपसि तपश्चरणे । मे मम । यादृग्यादृशी । रुचिः । दिव्यलोकेषु वैकुण्ठादिषु । स्थितेषु । दिव्येषु । भोगेष्वपि । नास्ति । अमायिकेषु वैकुण्ठादिधामवर्त्तिदिव्यभोगेषु मन्मानसं कदाचिदपि किञ्चिदप्युपभोगाभिलाषं न करोतीत्यर्थः ॥ २० ॥ सर्वेष्विति । भूमौ पृथिव्याम् । जातेष्विति शेषः । भगवतः । सर्वेष्वपि । अवतारेषु वराहमत्स्यादिप्रादुर्भावेषु मध्ये । ऋषभे नाभिसूनौ भगवति । मम । वह्वी प्रचुरा । रुचिः । अस्ति । यत्र ऋषभे भगवति । सताम् । गुणाः क्षमादयः । सन्ति ॥ २१ ॥ किञ्चिदिति । दत्तेऽत्रितनुजे दत्तभगवति । कपिले कर्दमसूनौ कपिलभगवति च । मे मम । सा रुचिः । ततः ऋषभात् । किञ्चित् । न्यूना । अस्ति । कृष्णे वसुदेवनन्दने भगवति तु । हृदये मम मानसे । रुचिः । सर्वाधिकतमा सर्वेभ्योऽपि भगवदवतारेभ्योऽतिशयिता । सदा सर्वकालम् । अस्ति ॥ २२ ॥ यद्यपि स्वयं ब्रह्मपुराधीशोऽवतारी पुरुषोत्तमोऽनन्ताक्षरमुक्तोपासितचरणाब्जोऽस्त्यथापि नृनाट्यशोभनायेष्टदेवत्वेन श्रीकृष्णस्य स्वेन स्वीकृतत्वात्तस्य सर्वावतारमहत्त्वाच्च स्वकीयं पुरुषोत्तमत्वं तत्रारोप्योपासनाप्रदर्शनार्थमाह ।

श्वेतद्वीपे बदर्यां वा यादृक्तपसि मे रुचिः । दिव्यलोकेषु दिव्येषु भोगेष्वपि न तादृशी ॥ २० ॥ सर्वेष्वप्यवतारेषु भूमौ भगवतो मम । ऋषभेऽस्ति रुचिर्वह्वी सन्ति यत्र गुणाः सताम् ॥ २१ ॥ किञ्चिन्न्यूना ततः सा च दत्ते च कपिलेऽस्ति मे । रुचिः कृष्णे तु हृदये सर्वाधिकतमा सदा ॥ २२ ॥ सदा मङ्गलरूपो हि श्रीकृष्णो भगवान् स्वयम् । अवतारावतारित्वभेदो नैवात्र विद्यते ॥ २३ ॥ स्वामी नारायणः सोऽयं नित्यं हृदि मयेक्ष्यते । तिर्यगूर्द्ध्वमधोऽपारे स्थितः कोट्यर्कतेजसि ॥ २४ ॥ दिव्यसिंहासनारूढं नैकमुक्तगणैर्वृतम् । अतितेजस्विदिव्याङ्गं दिव्यवासोविभूषणम् ॥ २५ ॥ दिव्यचन्दनपुष्पस्रक्शेखरैरर्चितं निजैः । अतिप्रीत्या तमीक्षेऽहं सादरं पुरुषोत्तमम् ॥ २६ ॥

सदेति । स्वयम् । श्रीकृष्णः । भगवान् । सदा । मङ्गलरूपः । अस्ति । हि । अत्र श्रीकृष्णे । अवतारावतारित्वभेदः । नैव । विद्यते ॥ २३ ॥ स्वामीति । तिर्यक् । ऊर्ध्वम् । अधः । अपारेऽनन्ते । कोट्यर्कतेजसि कोटिकोट्यर्कादितेजस्वितेजोऽहेपयत्यक्षरब्रह्मप्रकाशे । स्थितः । स्वामी । नारायणः । सोऽयं पुरुषोत्तमः कृष्णः । मया । हृदि । नित्यम् । ईक्ष्यते ॥ २४ ॥ यथादृष्टं तमेव विशेषयन्नुक्तार्थमेव स्फुटमाह द्वाभ्याम् । दिव्येति । दिव्यसिंहासनारूढमपाराक्षरतेजोमध्यगतातिदिव्यमन्दिरान्तःस्थचतुष्कावस्थितातिदिव्यसिंहासनाधिष्ठितम् । नैकमुक्तगणैरक्षरब्रह्मभावापन्नानन्तमुक्तवृन्दैः । वृतं सर्वतः परिवेष्टितम् । अतितेजस्वीन्यक्षरतेजसोऽप्यधिकतेजोयुक्तानि दिव्यान्यपारसौन्दर्याण्यङ्गानि पादादिमूर्धान्ता अवयवा यस्य तम् । दिव्यानि वासांसि परिधानीयादिवस्त्राणि विभूषणानि कटक केयूराद्यलङ्काराश्च यस्य तम् ॥२५॥ दिव्येति । निजैरात्मीयाक्षरमुक्तभक्तैः । दिव्यचन्दनपुष्पस्रक्शेखरैः । अर्चितम् । पुरुषोत्तमम् । तं श्रीकृष्णम् । अहम् । अतिप्रीत्या । सादरं यथातथा । ईक्षे पश्यामि । इति द्वयोरेकसम्बन्धः ॥ २६ ॥

तदिति । किञ्च । तन्मूर्त्तिदर्शनेनैव । मे मम । हृदि । सदा । आनन्दः । अस्ति । अत एव । प्रतिक्षणम् । नवं नवमिव । प्रभुं तं श्रीकृष्णम् । पश्यामि ॥२७॥ तेज इति । क्वापि कदाचित् । तेजोऽतिशयतः । यदा । तदाकृतिं श्रीकृष्णमूर्त्तिम् । नेक्षे । तदा तु । मम । अन्तरेऽन्तःकरणे । महानेव । खेदः । जायते ॥२८॥ तेज इति । तेजःपुञ्जोऽक्षरब्रह्मप्रकाशचयस्तु । मे मम । दृशि दृगग्रप्रदेशे । अखण्डं निरन्तरम् । गोचरः प्रत्यक्षभूतः । वर्त्तते । तथापि । केवले एकले । तत्र तेजःपुञ्जे । मम । रुचिः । न जायते ॥२९॥ मूर्त्तिमिति । तत्र तेजःपुञ्जे । श्रीराधिकापतेः लक्ष्मीराधाकान्तस्य श्रीकृष्णस्य । मूर्त्तिम् । यदा । पश्यामि । तदैव । मे मम । स्वभावतः सहजतया । तत्र श्रीकृष्णमूर्तौ । अतिरुचिः । जायते ॥ ३० ॥ अथेति । अथ च । तस्मिन् श्रीकृष्णे । मे मम । भक्तिस्तु । गोपीनां व्रजाङ्गनानामिव । गाढस्नेहमयी 'क्षणं युगशतमिव यासां येन विनाऽभव'दित्युक्तप्रचुरस्नेहरूपा । निष्कामा भगवत्स्वरूपसततेक्षणादिकेतरकामनावर्जिता । पर्वताचलाऽचलस्थिरा । नित्यम् । वर्त्तते

तन्मूर्तिदर्शनेनैव सदानन्दोऽस्ति मे हृदि । प्रतिक्षणं च पश्यामि नवं नवमिव प्रभुम् ॥ २७ ॥ तेजोऽतिशयतः क्वापि यदा नेक्षते तदाकृतिम् । तदा तु जायते खेदो महानेव ममान्तरे ॥ २८ ॥ तेजःपुञ्जस्त्वखन्डं मे वर्त्तते दृशि गोचरः । तथाऽपि केवले तत्र न रुचिर्मम जायते ॥ २९ ॥ मूर्त्तिं तु तत्र पश्यामि यदा श्रीराधिकापतेः । तदैव तत्रातिरुचिर्जायते मे स्वभावतः ॥ ३० ॥ अथ भक्तिस्तु तस्मिन् मे गोपीनामिव वर्त्तते । गाढस्नेहमयी नित्यं निष्कामा पर्वताचला ॥ ३१ ॥ यदा तु कामिनः पुंसः कस्यचिद्रम्ययोषिति । कामिन्या यूनि वा स्नेहं गाढं पश्याम्यखण्डितम् ॥ ३२ ॥ यदा वा कस्यचित्स्नेहं गाढं पुत्रे धनेऽपि वा । पश्यामि तर्हि सङ्कल्प एवं मे जायते हृदि ॥ ३३ ॥ ईदृगेव हि मे स्नेहो नित्यं कृष्णे भवेदिति । कृष्णस्यानन्यभक्तेषु स्नेहः साहजिको मम ॥ ३४ ॥ प्रेम्णा कृष्णयशः कश्चिद्यदि गायेददम्भतः । तच्छ्रुत्वा तर्हि हृदये ममानन्दो भवत्यलम् ॥ ३५ ॥

॥ ३१ ॥ यदेति । किन्तु । कस्यचित् । कामिनः कामाकुलस्य । पुंसः । रम्ययोषिति रूपवत्यामङ्गनायाम् । अथवा । कामिन्याः कस्याश्चित्कामाकुलाया योषितः । यूनि सुरूपतरुणपुरुषे । अखण्डितमविछिन्नम् । गाढम् । स्नेहम् । यदा । पश्यामि ॥३२॥ यदेति । अथवा । कस्यचित्पुंसः । पुत्रे । अथवा । धनेऽपि । गाढम् । स्नेहम् । यदा । पश्यामि । तर्हि । मे मम । हृदि । एवं वक्ष्यमाणप्रकारेण । सङ्कल्पः । जायते ॥ ३३ ॥ ईदृगिति । कृष्णे । मे मम । ईदृक् कामाकुलपुरुषादिसमान एव स्नेहः । नित्यम् । भवेत् । इत्येवंविधः सङ्कल्पो जायते इति सम्बन्धः । एवं सार्द्धद्वाभ्यां स्वस्नेहं दृष्टान्तीकृत्य स्वीयं भगवद्भक्तेषु स्नेहमर्द्धेनाह । कृष्णस्य । अनन्यभक्तेष्वैकान्तिकभक्तजनेषु । मम । साहजिकोऽकृत्रिमः । स्नेहः । अस्ति ॥३४॥ सम्प्रति स्वीयां भगवद्यशःश्रवणरुचिं भङ्ग्याह द्वाभ्याम् । प्रेम्णेति । कश्चिद्यः कोऽपि भक्तजनः । प्रेम्णा स्नेहभरेण । अदम्भतो निर्दम्भतया । कृष्णयशः । यदि । गायेत् । तर्हि । तत्तद्गीतकृष्णयशः । श्रुत्वा । मम । हृदये । आनन्दः । अलमतिशयितः । भवति ॥ ३५ ॥

धन्य इति । गायति सप्रेमोच्चैः कृष्णयशः पद्यगानं करोति । अतः । धन्यः कृतकृत्यः । अयं जनः । कः किंनामा भवति । इति । मनसि विचार्य । तं भक्तजनम् । ज्ञातुम् । कञ्चन । नरम् । तदन्तिकं तत्समीपम् । प्रेषयामि नियोजयामि । अथवा । स्वयमहमेव । गत्वा तदन्तिकमुपेत्य । विद्यां तं जानीयाम् ॥ ३६ ॥ दम्भेति । किञ्च । दम्भश्च ईर्ष्या च मानश्च कामश्च क्रुधू कोपश्च लोभश्च स्वादश्च ते आदयो येषां स्नेहदयादीनां तैर्वर्जिते रहिते । धर्मभक्तियुते स्वधर्मभगवत्सप्रेमनवधाभक्तियुक्ते । पुंसि भक्तजने । मे मम । स्वाभाविकी । रुचिः । अस्ति ॥ ३७ ॥ तेनेति । अखिलासु । क्रियासु यानासनादिकर्मसु । मे मम । तेन तथाविधेन भक्तेन सहैव । सौमनस्यं प्रसन्नमनस्त्वम् । स्यात् । अन्यथोक्तलक्षणवर्जिते भक्ते तु । अन्तिकस्थे निकटवर्त्तिनि सत्यपि । तत्सौमनस्यम् । न स्यात् । रुचिश्च । क्वचित् । न स्यात् ॥ ३८ ॥ कामीति । पूर्वं तु । कामिपुंसि कामवासनावत्यगृहस्थभक्ते एव । मम । अरुचिः । अवर्त्तत । साम्प्रतं तु । मानेर्ष्याक्रोधित्यागिषु मानवत्सु ईर्ष्यावत्सु क्रोधवत्सु त्यागिभक्तेषु । साऽरुचिः । भृशमतिशयिता । अस्ति ॥ ३९ ॥ कामीति । कामवासनावांस्तु । गृहिवद्गृहस्थभक्तजन इव । मानम् ।

धन्यः कोऽयं गायतीति प्रेषयामि तदन्तिकम् । तं ज्ञातुं कञ्चन नरं विद्यां गत्वाऽथवा स्वयम् ॥ ३६ ॥ दम्भेर्ष्यामानकामक्रुल्लोभस्वादादिवर्जिते । धर्मभक्तियुते पुंसि रुचिः स्वाभाविकी च मे ॥ ३७ ॥ तेनैव सौमनस्यं च स्यात्क्रियास्वखिलासु मे । अन्यथा त्वन्तिकस्थेऽपि न तन्न च रुचिः क्वचित् ॥ ३८ ॥ कामिपुंस्येव पूर्वं तु ममारुचिरवर्त्तत । साम्प्रतं त्वस्ति मानेर्ष्याक्रोधित्यागिषु सा भृशम् ॥३९॥ कामी तु गृहिवन्मानं हित्वा सत्सङ्गमाचरेत् । मानादिमांस्तु भ्रष्टः स्यान्नूनमुद्धववर्त्मनः ॥४०॥ अतस्तेषु रुचिर्नेति प्रोक्तः सर्वो ममाशयः । संक्षेपाच्च तमेवाहं सुबोधं वच्मि वः पुनः ॥ ४१ ॥ शङ्कराचार्यसिद्धान्तं तत्र जानाम्यरोचकम् । रामानुजाचार्यमतश्चोपास्यः पुरुषोत्तमः ॥ ४२ ॥

हित्वा । सत्सङ्गम् । आचरेत् । मानादिमान्मानेर्ष्याक्रोधयुक्तस्त्यागी तु । उद्धववर्त्मनः सत्सङ्गलक्षणात्सदुद्धवसम्प्रदायात् । नूनमेव । भ्रष्टश्च्युतः । स्यात् ॥ ४० ॥ अत इति । अतो हेतोः । तेषु मानादिमत्सु त्यागिषु । रुचिर्मम प्रीतिः । नास्ति । इत्यमुना प्रकारेण । सर्वः । मम । आशयः । प्रोक्तः । हे मुनयः ! । पुनः । अहम् । तं ममाशयमेव । सुबोधं यथातथा । संक्षेपात् । वो । युष्मभ्यम् । वच्मि । विस्तारेणोक्तमदाशयस्याल्पधीभिर्दुर्बोध्यत्वाद्यथा स सर्वेषां सुबोधः स्यात्तदर्थं भूयो वदामीत्यर्थः ॥ ४१ ॥ शङ्करेति । तत्र पूर्वोक्तशङ्कराचार्यादिसिद्धान्तेषु मध्ये । शङ्कराचार्यसिद्धान्तं शुद्धाद्वैताख्यं शङ्कराचार्यमतम् । अरोचकं जनमोहनाय कल्पितस्वोहरचितत्वान्ममाप्रीतिकरम् । जानामि सच्छास्त्रतात्पर्यालोचनानुभवादिभिर्वेद्मि । रामानुजाचार्यमतः शेषावतारलक्ष्मणाचार्यैः श्रुतिस्मृत्यादिप्रमाणैः क्षराक्षरपरतया निश्चितः । पुरुषोत्तमः । उपास्यः । मतः । अनेन रामानुजाचार्योक्तरीत्या भगवत्स्वरूपावबोधो ममाभीष्टोऽस्तीति सूचितम् । चकारात्स्वात्मनोऽक्षरब्रह्मणैक्यं विभाव्य तत्तया दास्येन भगवत्परिचरणं मुक्तिरित्येवंविधा तन्मता मुक्तिरपि ममाभीष्टाऽस्तीत्यपि सूचितम् ॥ ४२ ॥

तस्मिन्निति । तस्मिन्पुरुषोत्तमे । भक्तिः गोपीवद्व्रजाङ्गनानामिव । वल्लभाचार्यसमता । मता । यथा वल्लभाचार्येण भगवत्परमप्रीणनसाधनतया गोपीनामिव गाढानुरागरूपा भक्तिरभिहिता तथा भगवत्यतिशयितस्नेहरूपा भक्तिः ममापि प्रियाऽस्तीत्यर्थः । वैराग्यम् । आत्मनिष्ठा च । जडार्षभशुकादिवत् । अस्ति । जडभरतस्येव वैयासकेरिव च विरक्त्यात्मनिष्ठे मम प्रिये भवत इत्यर्थः ॥ ४३ ॥ धर्मेति । ज्येष्ठपाण्डवनिश्रिता युधिष्ठिरसम्मता । धर्मनिष्ठा । मम । अभीष्टा प्रियास्ति । एवं सार्द्धश्लोकेन । स्वधर्मज्ञानविरक्त्युपेता सप्रेमनवधा भगवद्भक्तिर्मम प्रियाऽस्तीति । सूचितम् । इत्यमुना प्रकारेण । मे मम । आशयः । स्वमुखेनैव । संक्षेपात् । कीर्त्तितः ॥४४॥ मयेति । मया । मतानाम् । अष्टानाम् । सच्छास्त्राणां वेदादीनामपि । अयं मदुक्त एव । आशयः । स्फुटं यथातथा । अस्ति । इतीत्थम् । बुद्धिमद्भिर्मि-दाससन्मतिभिर्भवद्भिः । विभाव्यतां ज्ञायताम् ॥४५॥ इतीति । इत्यमुना प्रकारेण । स्वयं श्रीहरिः । ईशः क्षराक्षरपरः पुरुषोत्तमः सन्नपि । भक्तजनप्रशासनार्थं स्वाभिप्रा-येोक्तमिषेण स्वीयेभ्यस्तथाभिप्रायाचरणशिक्षणार्थम् । स्वत आत्मनः । अन्यं परम् । ईशं परमेश्वरम् । अवदत् । इत्थमेवंविधम् । अस्य श्रीहरेः । वचनामृतम् । निपीय ।

तस्मिन् भक्तिश्च गोपीवद्वल्लभाचार्यसम्मता । वैराग्यमात्मनिष्ठा च जडार्षभशुकादिवत् ॥ ४३ ॥ धर्मनिष्ठा ममामीष्टा ज्येष्ठपाण्डवनिश्रिता । इत्याशयो मे संक्षेपात्स्वमुखेनैव कीर्त्तितः ॥ ४४ ॥ मया मतानामष्टानां सच्छास्त्राणामपि स्फुटम् । अयमेवाशयोऽस्तीति बुद्धिमद्भिर्विभाव्यताम् ॥ ४५ ॥ इति भक्तजनप्रशासनार्थं स्वयमीशोऽप्यवदत्स्वतोऽन्यमीशम् । वचनामृतमित्थमस्य सन्तः सकलास्ते च निपीय तोषमापुः ॥ ४६ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते शताधिकद्वाविंशतितमस्तरङ्गः ॥ १२२ ॥ १४ ॥

शकाब्दे विक्रमार्कस्य नगाश्ववसुभूमिते । त्रयोदश्यां सहःकृष्णे वचोऽमृतमिदं हरेः ॥ १ ॥
तत्र लौहाभिधग्रामे सूराख्यनृपवेश्मनि । स न्यषीदत्पीठवरे सर्वैर्भक्तगणैर्वृतः ॥ २ ॥

सकलाः । ते महान्तः । सन्तस्त्यागिजनाः । चकारात्सर्वे गृहिजनाः । तोषम् । आपुः ॥ ४६ ॥ संशिक्षणार्थं यः स्वानां स्वस्याक्षरपदेशितुः । अनन्ताक्षरमुक्तौघैः सेवित-स्यातिभावतः ॥१॥ सदा दिव्याकृतेः कृष्णाख्यस्याशयमशेषतः । कृपया प्राह स हरिमां कुर्याच्चदनुव्रतम् ॥ २ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्यैकान्तिकोपासकश्रीहरि-कृष्णभगवत्स्वनुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां शताधिकद्वाविंशतितमस्तरङ्गः ॥ १२२ ॥ १४ ॥

देहव्यापकरूपेण यथा जीवो व्यवस्थितः जीवे यथा च भगवानुक्तं पञ्चदशे तथा ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८७९) सहः कृष्णे मार्ग-शीर्षमासस्य कृष्णपक्षे । त्रयोदश्यां तिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । लौहाभिधग्रामे । सूराख्यनृपवेश्मनि दुर्गान्तर्वर्त्तिसूर-नृपतिभवने । पीठवरे स्वास्तृतोत्तममञ्चासने । सर्वैर्नानादेशागतैस्त्यागिभिर्गृहिभिश्च । भक्तगणैः । वृतः सभायां परिवेष्टितः । स श्रीहरिः । न्यषीदत्सांध्यभगवन्नीराजनान्ते स्वावासादागत्योपविवेश ॥ २ ॥

सितेति । सिताधोवसनः परिहितश्वेतधोत्रः । श्वेतोत्तमाङ्गपटकः शीर्षनिबद्धोपरिमुकुटाकृतिश्वेतसूक्ष्मघनपटः । उष्णकृद्रक्तनीशारः स्वाङ्गपरिहितोष्णगुणशोणवर्णहिमानिलनिवारणः । तथा । सितप्रावरणद्वयो नीशारोपरिप्रावृतान्तःस्थप्रच्छदपटीयुतचतुष्फालपटः ॥ ३ ॥ सितेति । सितश्रवोबन्धपटः सितसूक्ष्मघनाल्पपरिणाहायतपटनिबद्धश्रवणयुगलः । सत्पतिः । स श्रीहरिः । स्वाग्रतः स्वपुरः प्रदेशे । निषण्णान् । निजान् । साधून्मुक्तानन्दीन्सतः । कृपया । आलोकयन् पश्यन्सन् । प्रत्युवाच । इति द्वयोरेकसम्बन्धः ॥ ४ ॥ आत्मेति । हे साधवः ! । आत्मा सर्वेषां स्वस्वजीवात्मा । देहत्रयात्स्वस्वस्थूलादिदेहत्रितयात् । भिन्नः स्वरूपस्वभावतः पृथग्भूतः सन् । स्वस्वहृदि । अवतिष्ठते विशेषसत्तया तिष्ठति । सः । प्रकाशकत्वाद्देहेन्द्रियादेश्चेतयितृत्वात् । चिद्रूपः । उच्यते । जीवनात्प्राणधारणेन देहादिजीवनहेतुत्वात् । जीवः । उच्यते ॥ ५ ॥ एतदेवस्पष्टमाह । आनखादिति । आनखात्पादांगुष्ठनखामारभ्य । आशिखं शिखापर्यन्तम् । व्याप्तः सामान्यसत्तया व्याप्त आत्मा । स्वतेजसा स्वप्रभया । अध्यात्मम् । अधिभूतम् । अधिदैवं च । सर्वतः । प्रकाशयति ॥ ६ ॥ अध्यात्माद्यर्थान्स्वयमेवाह । अध्यात्ममिति । इन्द्रियाणि चक्षुरादि-

सिताधोवसनः श्वेतोत्तमाङ्गपटकस्तथा । उष्णकृद्रक्तनीशारः सितप्रावरणद्वयः ॥३॥ सितश्रवोबन्धपटः कृपयाऽऽलोकयन्निजान् । निषण्णान्स्वाग्रतः साधून्प्रत्युवाच स सत्पतिः ॥४॥ आत्मा देहत्रयाद्भिन्नः स्वस्वहृद्यवतिष्ठते । प्रकाशकत्वाच्चिद्रूपो जीवनाज्जीव उच्यते ॥ ५ ॥ आनखादाशिखं व्याप्तः प्रकाशयति सर्वतः । अध्यात्ममधिभूतं चाधिदैवं च स्वतेजसा ॥ ६ ॥ अध्यात्ममिन्द्रियाण्याहुरधिभूतं च गोलकान् । अधिदैवं देवताश्च तेषामन्तर्बहिश्च तम् ॥ ७ ॥ देवतेन्द्रियरूपेण भोक्तृत्वं तस्य कथ्यते । स्वतो निराकृतेस्तस्य न तत्सम्भवति क्वचित् ॥ ८ ॥ एवं वदन्तमप्राक्षीन्नित्यानन्दमुनिः प्रभुम् । विशेषसत्तया जीवो देहे हृद्यवतिष्ठते ॥ ९ ॥ अन्यत्र तु प्रकाशने व्याप्तः सामान्यतोऽस्ति चेत् । तर्हि ज्ञाने तारतम्यं कथमङ्गेषु वर्तते ॥ १० ॥

करणानि । अध्यात्मम् । आहुः सांख्यादिशास्त्रज्ञा वदन्ति । गोलकान्नेत्रादीनि तदधिष्ठानानि । अधिभूतम् । आहुः । देवताः सूर्यादीश्चक्षुरादीन्द्रियदेवान् । अधिदैवम् । आहुः । तमात्मानम् । तेषामध्यात्मादीनाम् । अन्तः । बहिश्च । व्याप्तमाहुः ॥ ७ ॥ देवतेति । तस्य जीवस्य । भोक्तृत्वम् । देवतेन्द्रियरूपेण देवतेन्द्रियद्वारा । कथ्यते । निराकृतेर्वस्तुतो देवमनुष्याद्याकारवर्जितस्य । अस्य जीवस्य । स्वतः । तद्भोक्तृत्वम् । क्वचित्कदाचिदपि । न सम्भवति ॥ ८ ॥ एवमिति । एवममुना प्रकारेण । वदन्तम् । प्रभुं श्रीहरिम् । नित्यानन्दमुनिः । अप्राक्षीत् । हे हरे ! । जीवः । देहे । तत्रापि । हृदि हृत्प्रदेशे । विशेषसत्तया । अवतिष्ठते ॥ ९ ॥ अन्यत्रेति । अन्यत्राध्यात्मादिषु तु । प्रकाशने । सामान्यतः सामान्यसत्तया । व्याप्तोऽस्ति । इति त्वयाभिहितं चेत् । तर्हि । अङ्गेषु करचरणादिषु । वर्त्तमाने । ज्ञाने प्रकाशपर्यायतज्ज्ञप्तौ । तारतम्यं न्यूनाधिकभावः । कथं केन हेतुना । वर्त्तते ॥ १० ॥

'इत्थं स नित्यानन्देन सम्पृष्टः पुरुषोत्तमः । सुखयंस्तं जगादेति निजान्साधूंस्तथापरान्' । आत्मेति । हे मुने ! । आत्मप्रकाशेऽध्यात्मादौ सामान्यसत्ताव्याप्तात्मज्ञाने । स्वतः । तारतम्यम् । नास्त्येव । किन्तु । इन्द्रियगतमिन्द्रियावस्थितम् । तद्व्याप्ते इन्द्रियेषु सामान्यतया वर्त्तमाने । तत्रात्मप्रकाशे । लक्ष्यते दृश्यते । इन्द्रिरूपाधारतारतम्येन प्रकाशतारतम्यमवभासते न तु तस्य तत्स्वत इत्यर्थः ॥ ११ ॥ इममेवार्थं सामान्यतो दृष्टान्तेनाह द्वाभ्याम् । गगनस्थ इति । यथा । गगनस्थ आकाशावस्थितः । सूर्यः । तेजसा स्वप्रकाशेन । विश्वं जगत् । व्याप्नोति । तद्विश्वव्याप्तं सूर्यतेजः । प्रकाश्यानुसारेण तेजसा प्रकाशयितुं योग्यस्य वस्तुन आनुगुण्येन । महत् । अल्पं च । दृश्यते ॥ १२ ॥ सामान्यत इति । तथा तेन प्रकारेणैव । सामान्यतः । सर्वत्रेन्द्रियादिषु । आत्मसत्ता जीवप्रकाशः । संस्थिता भवति । तथापि । प्रकाश्यभेदेनात्मसत्ताप्रकाशनीयेन्द्रियादिभेदेन । तस्यामिन्द्रियादौ स्थितायां समानायामात्मसत्तायाम् । भेद इव । ईयते महदल्पतारूपो भेदो यथा स्यात्तथा ज्ञायते ॥ १३ ॥ पुनरपीमेवार्थं स्फुटबोधाय भङ्ग्या दृष्टान्तविवरणेनाह द्वाभ्याम् । स्थल इति । यथा । स्थले । जले । काचभूमौ । मण्यादिषु । स्फटिकमणिप्रभृतिषु

श्रीहरिरुवाच —आत्मप्रकाशे नास्त्येव तारतम्यं स्वतो मुने !। किन्त्विन्द्रियगतं तत्तु तद्व्याप्ते तत्र लक्ष्यते ॥ ११ ॥ गगनस्थो यथो सूर्यो विश्वं व्याप्नोति तेजसा । तत्प्रकाश्यानुसारेण महदल्पं च दृश्यते ॥ १२ ॥ सामान्यतस्तथैवात्मसत्ता सर्वत्र संस्थिता । अतिप्रकाश्यभेदेन तस्यां भेद इवेयते ॥ १३ ॥
स्थले जले काचभूमौ मण्यादिषु यथा रवेः । स्थितं समतया तेजस्तद्योगाद् दृश्यतेऽन्यथा ॥ १४ ॥
देहेन्द्रियान्तःकरणदेवतास्वेवमेव हि । समोऽप्यात्मप्रकाशोऽस्ति तद्योगाद्विषमोपमः ॥ १५ ॥
इन्द्रियाणां गोलकेभ्यः स्वच्छताऽस्तीति तत्र सः । विलोक्यतेऽधिक इव न तु सोऽस्त्यधिकः स्वतः ॥ १६ ॥
अन्योन्यमिन्द्रियाणां च समत्वं नास्ति तेन च । प्रकाशे दृश्यते भेदो घ्राणचक्षुःकरादिषु ॥ १७ ॥

। समतया सामान्यभावेन । स्थितम् । रवेः । तेजः । तद्योगात्स्थलजलादिसम्बन्धात् । अन्यथा विषमता स्थितम् । दृश्यते ॥ १४ ॥ देहेति । एवममुना प्रकारेणैव । देहेन्द्रियान्तःकरणदेवतासु । समः सामान्यतयाऽवस्थितोऽपि । आत्मप्रकाशः । तद्योगाद्देहेन्द्रियादिसम्बन्धात् । विषमोपमो न्यूनाधिकप्रतीतितुल्यः । अस्ति । अत्रायं विवेकः । देहोपमानं स्थलमिन्द्रियोपमाने जलकाचभूमी अन्तःकरणोपमानानि मण्यादय इति ॥१५॥ पुनरप्येनमर्थं विशदयति चतुर्भिः । इन्द्रियाणामिति । गोलकेभ्यो नेत्रादिभ्यः । इन्द्रियाणां चक्षुरादीनाम् । स्वच्छताऽधिकनिर्मलता । अस्ति । इति हेतोः । तत्र तेष्विन्द्रियेषु । स आत्मप्रकाशः । अधिक इव । विलोक्यते । तथापि । स आत्मप्रकाशः । स्वतः । अधिकस्तु । नास्ति ॥ १६ ॥ अन्योऽन्यमिति । इन्द्रियाणां चक्षुरादीनाम् । अन्योऽन्यं परस्परम् । समत्वं स्वच्छतातौल्यम् । नास्ति । तेन हेतुना । घ्राणचक्षुःकरादिषु । प्रकाशे सामान्यतया स्थिते जीवज्ञाने । भेदः । दृश्यते ॥ १७ ॥

करणानामिति । इन्द्रियेभ्यश्चक्षुरादिभ्योऽपि । आन्तराणाम् । करणानां मनःप्रभृतीनाम् । स्वच्छताऽधिकनिर्मलता । वर्त्तते । अतो हेतोः । तत इन्द्रियेभ्योऽपि । तेष्वन्तःकरणेषु । प्रकाशस्य जीवज्ञानस्य । आधिक्यम् । वर्त्तते । हि ॥ १८ ॥ जीवेति । अतो हेतोः । ज्ञानत्वभेदतो देहादाववस्थितप्रकाशपर्यायज्ञानताभेदात् । जीवसामान्यसत्तायाम् । भेदो न्यूनाधिकभेदः । नैवावगन्तव्यः । यद्यतो हेतोः । सा जीवसामान्यसत्ता । स्वतः । विषमा । नास्ति । स्वच्छतातरतमतावदिन्द्रियाद्याधारे भेद एवात्मज्ञाने तरतमताया हेतुरस्तीति प्रश्नोत्तराशयः ॥१९॥ इतीति । इत्यमुना प्रकारेण । उक्त्वा उपरतं तूष्णीभावं प्राप्तम् । तं श्रीहरिम् । ब्रह्मानन्दो मुनिः । पप्रच्छ । हे प्रभो ! । अन्तर्दृष्टयो निजात्माभिमुखदृग्वृत्तयः । एके केचिद्भगवद्भक्ता योगिनः पुरुषाः । हृदि । जीवरूपं स्वात्मस्वरूपम् । विचक्षते पश्यन्ति ॥ २० ॥ तत्रेति । तत्र तेषु योगिषु मध्ये । केचिद्योगिनस्तु ताराभं तारकाज्योतिःसमानम् । परेऽन्ये योगिनः । दीपज्वालानिभं प्रदीपज्योतिर्मण्डलसदृशम् । केचिद्योगिनः । रत्नदीपनिभं मुकुरादिसमानतेजोमण्डलमणिप्रदीपसमानम् । अपरे योगिनः । मध्याह्नार्कमिव दिनमध्यगतार्कबिम्बनिभं च । विचक्षते ॥ २१ ॥

करणानामान्तराणामिन्द्रियेभ्योऽपि वर्त्तते । स्वच्छताऽतः प्रकाशस्याधिक्यं तेषु ततोऽपि हि ॥ १८ ॥ जीवसामान्यसत्तायामतो ज्ञानत्वभेदतः । भेदो नैवावगन्तव्यो यत्सा न विषमा स्वतः ॥ १९ ॥ इत्युक्त्वोपरतं ब्रह्मानन्दः पप्रच्छ तं प्रभोः । एकेऽन्तर्दृष्टयो जीवरूपं हृदि विचक्षते ॥ २० ॥ तत्र केचित्तु ताराभं दीपज्वालानिभं परे । रत्नदीपनिभं केचिन्मध्याह्नार्कमिवापरे ॥ २१ ॥ वस्तुतः कीदृशं तस्य रूपं भवति तद्वद । तमुवाच हरिः सम्यग्दर्शिनो नैत ईरिताः ॥ २२ ॥ हृत्स्थोऽपि स्वप्रकाशेन वपुषोऽन्तर्बहिश्च सः । स्थितोऽस्ति सर्वतो व्याप्य ह्याकाश इव निर्मलः ॥ २३ ॥ यो योऽत्र पुरुषः साक्षाद्भगवद्ध्यानयोगतः । अन्तर्दृष्टिमुपेतः स्याद्यावतीं स्वाधिकारतः ॥ २४ ॥

वस्तुत इति । हे हरे ! । तस्य जीवस्य । रूपं स्वरूपप्रमाणम् । कीदृशं तारादिषु मध्ये केन समानम् । भवति । तद्वद । तमेवं पृच्छन्तं ब्रह्मानन्दमुनिम् हरिः । उवाच । हे मुने ! । एते त्वयोक्ता आत्मदर्शियोगिनः । सम्यग्दर्शिनो यथार्थात्मस्वरूपद्रष्टारः । नेरिता नैवोक्ताः ॥ २२ ॥ हृत्स्थ इति । हृत्स्थः श्रुत्या हृदयस्थितित्वेनोक्तोऽपि । 'एष आत्मा हृदये चित्स्वरूप'इति श्रुतिः । स आत्मा । स्वप्रकाशेन । वपुषः स्वदेहस्य । अन्तः । बहिः । सर्वतश्च । व्याप्य । स्थितः । निर्मलश्च । अत एव । आकाश इव । अस्ति । आकाशो यथा पृथिव्यादिभूताधारस्तदन्तर्बहिः सर्वतो व्याप्तस्तल्लेपरहितश्चास्ति तथा मुक्तावस्थायामयमात्मापि देहादेरन्तर्बहिः सर्वतो व्याप्तस्तल्लेपरहितश्च भवतीत्यर्थः ॥ २३ ॥ अथात्मदर्शिताऽपि साक्षाद्भगवदुपासनातारतम्यतस्तरतमभावेन भवन्तीत्युक्तप्रकारासम्पूर्णा सा तु सम्पूर्णोपासनया जायत इति ब्रुवंस्तत्तारतम्यं वक्तुमुपक्रमते पञ्चदशभिः । य इति । अत्र सत्सङ्गे । यः । पुरुषो योगिभक्तः । साक्षाद्भगवद्ध्यानयोगतः । यावतीं यत्परिमाणाम् । अन्तर्दृष्टिम् । स्वाधिकारतः साक्षाद्भगवद्ध्यानयोगतरतमतारूपनिजाधिकारतरतमतानुरोधतः । उपेतः प्राप्तः । स्यात् ॥ २४ ॥

स इति । सः । योगी भक्तः । अन्तरे । स्फुरितम् । तावन्तं तत्प्रमाणमेव । एनमात्मानम् । वीक्षते । अतो हेतोः । ते योगिनस्तु । आत्मनः स्वस्वरूपस्य । एकदेशदर्शिनः । ईरिताः । हि ॥ २५ ॥ प्राप्ता इति । ये योगिभक्ताः । अक्षिविद्यां चक्षुर्नाडीरन्ध्रावस्थितभगवद्ध्यानयुक्तिमित्यर्थः । प्राप्ताः । स्युः । ते तु । तं स्वात्मानम् । नेत्रद्वारा नेत्रनाडयवकाशद्वारेण । तं स्वात्मानम् । विचक्षते पश्यन्ति । तस्मिन्स्वात्मनि । तदात्मकतया तदन्तर्यामिभावेन । स्थितम् । भगवन्तं च । विचक्षते ॥ २६ ॥ एवमिति । एवममुना प्रकारेण । ये योगिनः । समाधिना । स्वैकैकाङ्गेऽपि । धारणाम् । कुर्वते । ते योगिनस्तु । तत्तदङ्गावकाशस्य श्रोत्रनासाकरादि तत्तदङ्गावस्थितनाडीरन्ध्रावकाशस्य । अनुसारतः ॥ २७ ॥ आत्मेति । तारतम्येन । आत्मज्योतिः । प्रपश्यन्ति । अत्रैवं-विधार्थे । दृष्टान्तमुदाहरणम् । कथये । तेन दृष्टान्तेन । एतत्तरतमभावेनात्मस्वरूपदर्शनम् । अनुमीयताम् । इति द्वयोरेकान्वयः ॥ २८ ॥ दृष्टान्तमाह चतुर्भिः । यथेति । यथा । सुकाचैः । पुरुषप्रतिमा । रचिता । भवेत् । तस्याः सुकाचीयपुरुषप्रतिमायाः । सर्वाणि । अङ्गानि करचरणाद्यवयवाः । रोमादितनुरुहनखा-

स स तावन्तमेवैनं स्फुरितं वीक्षतेन्तरे । अतस्ते त्वात्मनो ह्येकदेशदर्शिन ईरिताः ॥२५॥ प्राप्ता ये त्वक्षिविद्यां ते नेत्र-द्वारा विचक्षते । तं तस्मिन्भगवन्तं च तदात्मकतया स्थितम् ॥२६॥ एवं समाधिना ये तु स्वैकैकाङ्गेऽपि धारणम् । कुर्वते ते तत्तदङ्गावकाशस्यानुसारतः ॥ २७ ॥ आत्मज्योतिः प्रपश्यन्ति तारतम्येन योगिनः । दृष्टान्तमत्र कथये तेनैतदनुमीयताम् ॥ २८ ॥ यथा सुकाचै रचिता पुरुषप्रतिमा भवेत् । सर्वाण्यङ्गानि रोमादि तस्याः काचमयानि च ॥ २९ ॥ तदन्तःस्थं भवेज्ज्योतिः सर्वाङ्गव्यापकं महत् । एकैकमङ्गं तस्याश्च पश्येयुरथ पूरुषाः ॥ ३० ॥ तत्र यो यो यदङ्गं तस्याः पश्येत्स स ध्रुवम् । तत्तत्प्रतीकनलिकानुरूपं तेज ईक्षते ॥ ३१ ॥ न त्वङ्गसंस्थं सर्वं तद्वीक्षितुं क्षमते पृथक् । दृष्टं स्याद्येन यावत्तत्स तावत्कथयेद्धि तत् ॥ ३२ ॥ एवमेकैकाङ्गसंस्थं यावद्यावत्तदीक्षते । यो यः स स ब्रवीत्यत्र तावत्तावत्स्वकं महः ॥ ३३ ॥

स्थ्यादिकं च । काचमयानि । भवेयुः ॥ २९ ॥ तदिति । सर्वाङ्गव्यापकम् । अत एव । महत्प्रचुरम् । ज्योतिर्दीपादितेजः । तदन्तःस्थं सुकाचीयपुरुषप्रतिमान्तर्हृदय-स्थानावस्थितम् । भवेत् । अथानन्तरम् । पूरुषाः सुकाचीयपुरुषप्रतिमायाः । एकैकम् । अङ्गम् । पश्येयुः ॥ ३० ॥ तत्रेति । तत्र तस्यास्तेष्वङ्गेषु मध्ये । यः । यः पुरुषः । तस्याः । यत् । यत् । अङ्गम् । पश्येत् । सः । सः पुरुषः । तत्प्रतीकनलिकानुरूपं सुकाचीयपुरुषप्रतिमापादाद्यवयवनलिकारन्ध्रावकाशानुसारि । तत्तदन्त-र्गतम् । तेजः । ईक्षते । ध्रुवम् ॥ ३१ ॥ नेति । पृथक् पृथक्पृथक्तया । अङ्गसंस्थं सुकाचप्रतिमासर्वावयवावस्थितम् । तत्तेजः । सर्वं समग्रं यथा तथा । वीक्षितुम् । न क्षमते । किन्तु । येन पुरुषेण । तत्तेजः । यावत् । दृष्टम् । स्यात् । स पुरुषः । तत्तेजः । तावत् । कथयेत् । हि ॥ ३२ ॥ एवमिति । एवममुना प्रकारेण । अत्र । यः । योगी भक्तः । एकैकाङ्गसंस्थम् । स्वकम् । तत् । महस्तेजः । यावद्यावत् । ईक्षते । सः । सः । योगी । तावत् । ब्रवीति ॥ ३३ ॥

निरिति । यो योगी । कृष्णोपासनदार्ढ्यतः । निरावरणदृष्टिं सकार्यमायातम आवृतिपरस्वात्मसमीक्षणदृष्टिम् । प्राप्तः । भवेत् । सः । योगी । यथास्थितं मुक्तभावावस्थितम् । आत्मानं स्वजीवम् । प्रपश्यति ॥ ३४ ॥ इन्द्रियेति । इन्द्रियस्थानभूताः । ये । गोलकाः । ते तु । तस्यैवंभूतस्य योगिनः । दृक्पथे दृष्टिविषये । नायान्ति अतो हेतोः । सः । शुद्धम् । परं देहत्रयात्पृथग्भूतत्वात्केवलम् । तमात्मानम् । पूर्णं साकल्येन । पश्यति ॥ ३५ ॥ इममर्थं दृष्टान्तेन विशदयति द्वाभ्याम् । आकाशेति । यथा । अत्र लोके । यः । आकाशदृष्टिमाकाशतया ऽभावनया तदात्मदृष्टिम् । प्राप्तः । भवेत् । स पुरुषस्तु । अपराणि । चत्वारि । महाभूतानि वाय्वादिपृथिव्यन्तानि । नेक्षते न पश्यति ॥ ३६ ॥ आत्मन इति । तथा तेन प्रकारेणैव । निरावरणदृष्टिमान् । असौ योगी । आत्मनः सकाशात् । अन्यत्किमपि । न पश्यति । इति हेतोः । स योगी । सम्यग्दर्शी । इतीत्थम् । प्रोक्तः । इतरे एकैकाङ्गस्थात्मज्योतिर्दर्शिनस्तु । सम्यग्दर्शिनो न प्रोक्ताः ॥ ३७ ॥ यथेति । यस्य योगिभक्तस्य ।

निरावरणदृष्टिं यः कृष्णोपासनदार्ढ्यतः । प्राप्तो भवेत्स आत्मानं प्रपश्यति यथास्थितम् ॥ ३४ ॥
इन्द्रियस्थानभूता ये गोलकास्ते तु दृक्पथे । तस्य नायान्त्यतः शुद्धं पूर्णं पश्यति तं परम् ॥ ३५ ॥
आकाशदृष्टिं प्राप्तो यः पुरुषोऽत्र भवेत्स तु । यथाऽपराणि चत्वारि महाभूतानि नेक्षते ॥ ३६ ॥
आत्मनोऽन्यत्तथैवासौ निरावरणदृष्टिमान् । न पश्यतीति स प्रोक्तः सम्यग्दर्शीति नेतरे ॥ ३७ ॥
यथा यथा यस्य यस्य भवेद् दृष्टिर्निरावृतिः । तथा तथा स स पुमांस्तन्महत्तां समीक्षते ॥ ३८ ॥
कृष्णोपासनहीनस्तु स्वल्पमप्यात्मनो महः । द्रष्टुं न शक्तस्तर्ह्येनं साकल्येन कुतः पुनः ॥ ३९ ॥
नित्यानन्दोऽथ पप्रच्छ तमात्मा तु निराकृतिः । करपादादिहीनत्वादस्ति ज्योतिर्मयो यदि ॥ ४० ॥
तर्ह्यन्तःस्थस्तत्र भवान् साकारो वा निराकृतिः । आस्त इत्यमुना पृष्टः प्रावोचद्भक्तिनन्दनः ॥ ४१ ॥

दृष्टिः । यथा यथा । निरावृतिः कृष्णोपासनेन निरावरणा । भवेत् । सः । पुमान् योगी । तथा तथा । तन्महत्तां स्वात्मस्वरूपमहत्त्वम् । समीक्षते ॥ ३८ ॥ कृष्णेति । कृष्णोपासनहीनः साक्षाच्छ्रीहर्युपासनावर्जितो योगी तु । स्वल्पमल्पमात्रमपि । आत्मनः स्वजीवस्य । महस्तेजः । द्रष्टुम् । न शक्तः समर्थो न भवेत् । तर्हि । एनमात्मानम् । साकल्येन पूर्णतया तु । कुतः पुनः कुतः शक्तो भवेत् ॥ ३९ ॥ नित्यानन्द इति । अथैवंविधश्रीहरिवाक्यश्रवणानन्तरम् । नित्यानन्दो मुनिः । तं श्रीहरिम् । पप्रच्छ । हे हरे ! । आत्मा जीवस्तु । यदि । करपादादिहीनत्वात् । निराकृतिर्देवमनुष्याद्याकारवर्जितः । ज्योतिर्मयस्तेजःस्वरूपः । अस्ति । तर्हीत्युत्तरेण सम्बन्धः ॥ ४० ॥ तर्हीति । तर्हि । अन्तःस्थस्तत्रान्तर्यामितया विद्यमानः परमेश्वरः । भवान् । तत्रात्मनि । साकारो मूर्त्तिमान् । आस्ते । अथवा । निराकृतिःअमूर्त्तः । आस्ते । इत्यमुना प्रकारेण । अमुना नित्यानन्दमुनिना । पृष्टः । भक्तिनन्दनः श्रीहरिः । प्रावोचत् ॥ ४१ ॥

कृष्ण इति । हे मुने ! । दिव्याकृतिः सदा सकलसौन्दर्यैकाधारामायिकमूर्त्तिः । कृष्णो भगवान् । जीवेषु निराकृतिषु जीवेष्वित्यर्थः । अन्तर्यामितया । स्थितः सन् । अमूर्त्तोऽपि । मूर्त्तवन्मूर्त्तिमता तुल्यतया । कार्यकारित्वात् तत्तत्कर्मानुसारेण तत्तत्कर्मफलस्य यथा समयप्रदानादिरूपमूर्त्तसमानकार्यविधानाद्धेतोरित्यर्थः । मूर्त्तिमान् । अस्ति । सदा दिव्यमूर्त्तिमतः कृष्णस्यान्तर्यामिशक्तिर्जीवेषु निराकारतया स्थिताऽपि तस्या मूर्त्तवत्कार्यकारित्वात्तदाधारस्य कृष्णस्य मूर्त्तत्वाच्च समूर्त्तोऽमूर्त्तश्चेत्युभयधर्मवानुच्यत इति भावः ॥ ४२ ॥ एतदेव भङ्ग्यन्तरेण विशदयति । जीवेति । स भगवान् । स्वेन स्वकीयेन । तेजसान्तर्यामिशक्तिरूपमहसा । जीवेन्द्रियान्तःकरणदेवताः । प्रकाशयंस्तत्तत्कर्मणि प्रवर्त्तयन् सन् । तेषां जीवादीनाम् । नियामकः स्वस्वस्थितावव्स्थापकः । आश्रय आधारः च । अस्ति ॥ ४३ ॥ पप्रच्छेति । अथैवंविधश्रीहरिवाक्यश्रवणानन्तरम् । सः । साधुर्नित्यानन्दमुनिः । तं श्रीहरिम् । पुनः । पप्रच्छ । अत्र कृष्णस्य स्वस्यैवान्तर्यामित्वमुक्तं श्रुत्या तु 'एतस्य वा अक्षरस्य प्रशासने गार्गि ! सूर्याचन्द्रमसौ विधृतौ तिष्ठत' इत्यक्षरस्य तदुक्तं श्रीभागवते 'चानादिरात्मा पुरुष' इत्यनेन पुरुषस्य तदुक्तं

कृष्णो दिव्याकृतिर्जीवेष्वन्तर्यामितया स्थितः । मूर्त्तवत्कार्यकारित्वादप्यमूर्त्तोऽस्ति मूर्त्तिमान् ॥ ४२ ॥
जीवेन्द्रियान्तःकरणदेवताः स्वेन तेजसा । प्रकाशयन्नाश्रयश्च तेषां सोऽस्ति नियामकः ॥ ४३ ॥
पप्रच्छाथ पुनः साधुः स तं जीवेषु सर्वशः । केन रूपेण भगवन्वर्त्तसे त्वं नियामकः ॥ ४४ ॥
स्वयमेव हि साक्षात्किं त्वं किं वाऽक्षररूपतः । किं वा पुरुषरूपेण वर्त्तसेऽन्तर आत्मनाम् ॥ ४५ ॥
हरिराहाऽथ पुरुषरूपेणैव स वर्त्तते । अन्तरेषु हि सर्वेषां देहिनां तत्प्रकाशकः ॥ ४६ ॥
असावेवान्तरात्मा च वेदान्ते योगसांख्ययोः । यथारुचि यथाबुद्धि वर्णितोऽस्ति महर्षिभिः ॥ ४७ ॥
उद्धवस्वामिमुखतः श्रुता स्वेन च निश्चिता । मया त्वेषा कृता वार्त्ता साऽवधार्या मदाश्रितैः ॥ ४८ ॥

तत्र तत्केन रूपेणास्तीति बोद्धुं पुनरप्राक्षीदित्यर्थः । हे भगवन् ! । हरे ! । त्वम् । सर्वशः सर्वेष्वपि । जीवेषु । केन । रूपेण । नियामकः सन् । वर्त्तसे ॥४४॥ एतदेव प्रविवृणोति स्वयमिति । त्वम् । आत्मनां जीवानाम् । अन्तरोऽन्तर्यामी सन् । स्वयम् । साक्षात्पुरुषोत्तम एव । वर्त्तसे । किम् । अथवा । अक्षररूपतः । वर्त्तसे । किम् । अथवा । पुरुषरूपेण । वर्त्तसे । किम् ॥४५॥ हरिरिति । अथैवंविधनित्यानन्दमुनिप्रश्नश्रवणानन्तरम् । हरिः । आह । हे मुने ! । स कृष्णः । सर्वेषाम् । देहिनाम् । अन्तरेषु । तत्प्रकाशको जीवभोग्यकर्मप्रकाशकः सन् । पुरुषरूपेणैव । वर्त्तते । हि ॥ ४६ ॥ असाविति । अन्तरात्मा पुरुषरूपेण सर्वजीवान्तर्यामी । असौ कृष्णो भगवानेव । वेदान्ते उपनिषत्सु । साङ्ख्ययोगयोः । महर्षिभिः । यथारुचि । यथाबुद्धि । वर्णितः । अस्ति ॥ ४७ ॥ अत्र सदाचारं प्रमाणयति । उद्धवेति । उद्धवस्वामिमुखतो मद्गुरोः श्रीरामानन्दस्वामिवदनात् । श्रुता । स्वेन स्वयम् । निश्चिता । एषा । वार्त्ता । मया । कृता । सा वार्त्ता । मदाश्रितैर्भवद्भिः । अवधार्या ॥ ४८ ॥

वार्त्तामिति । इत्येवंविधाम् । उदारां प्रचुरार्थभृतत्वादतिमहतीम् । सुधासमाम् । हरेः । वार्त्ताम् । निशम्य । सः । साधुर्नित्यानन्दमुनिः । मुदम् । प्राप । सदः-स्थाः । अन्ये साधवो गृहिणश्च । मुदं प्रापुः । ततस्तदनन्तरम् । सर्वेऽपि । अतिहर्षात् । तां श्रीहरिकृतां वार्त्तामेव । अन्तरेषु । सम्यक् । दधुः ॥ ४९ ॥ उक्त्वा यो व्यापकत्वं तु देहे जीवस्य तत्त्वतः । अन्तर्यामितया जीवे व्यापकतां यथा ॥१॥ जगाद श्रीहरिः स्वामी प्रश्नोत्तरविधानतः । मदात्मनि सदा सोऽस्तु दर्शनादिसुख-प्रदः ॥ २ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्स्नु रघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां शताधिक-त्रयोविंशतितमस्तरङ्गः ॥ १२३ ॥ १५ ॥

तीक्ष्णकुण्ठितनिर्मूलायास्तु विषयवासनाः । तल्लक्षणानि निर्मूला यथा स्युः कुण्ठिताश्च ताः ॥ १ ॥ माहात्म्यज्ञानभक्तेर्महत्वा साधनान्तरात् । या दम्भिनो वेदनत्वे यानि लक्ष्माणि तस्य च ॥ २ ॥ दोषायन्ते गुणाः सर्वे येन दोषः स तादृशः । सतामभावहेतुर्यो मानो दोषो महान् मतः ॥ ३ ॥ हरेर्माहात्म्यबोधेन

वार्त्तां निशम्येति हरेरुदारां सुधासमां प्राप मुदं स साधुः । अन्ये सदःस्थाश्च ततोऽतिहर्षात्तामेव सम्यग्दधुरन्तरेषु ॥ ४९ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते शताधिकत्रयोविंशतितमस्तरङ्गः ॥ १२३ ॥ १५ ॥

शकाब्दे विक्रमार्कस्य नगाश्ववसुभूमिते । सहःकृष्णचतुर्दश्यां वचोऽमृतमिदं हरेः ॥ १ ॥ तत्र लौहाभिधग्रामे सूरवर्मनृपालये । स न्यषीदत्पीठवरे वृतोऽखिलनिजाश्रितैः ॥ २ ॥ वलक्षपरिधानीयः शुक्लमौर्द्धन्यवेष्टनः । अरुणोष्णक-नीशारः सितप्रावरणांशुकः ॥ ३ ॥ श्रवणाबद्धविशदपटकः करुणानिधिः । अग्रोपविष्टान् पप्रच्छ स्वयमेव सतः प्रभुः ॥ ४ ॥ भवेयुर्हृदये यस्य तीक्ष्णा विषयवासनाः । कुन्ठिता यस्य ताः स्युश्च नष्टा यस्य च मूलतः ॥ ५ ॥

माननाशो यथा भवेत् । एतत्सर्वं षोडशे तु प्रोक्तं श्रीहरिणा स्फुटम् ॥ ४ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८७७) सहःकृष्णचतुर्दश्यां मार्गशीर्षमाससम्बन्धि-कृष्णपक्षवर्त्तिन्यां चतुर्दशीतिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । लौहाभिधग्रामे । सूरवर्मनृपालये दुर्गान्तर्वर्त्तिसूरनृपतिभवने । पीठवरे स्वास्तृश्रेष्ठे मञ्चासने । अखिलनिजाश्रितैर्नानादेशायातत्यागिगृहिस्वाश्रितसकलजनैः । वृतः सभायां परिवेष्टितः । स श्रीहरिः । न्यषीदत्सायन्तनभगव-न्नीराजनान्ते स्वावासादागत्योपविवेश ॥ २ ॥ वलक्षेति । वलक्षं धवलं परिधानीयमधोंऽशुकं यस्य सः । शुक्लमर्जुनवर्णं मौर्धन्यवेष्टनं शिरोवेष्टनवसनं यस्य सः । अरुणो रक्तवर्ण उष्णको धर्मगुणो नीशारो यस्य सः । सितमुज्ज्वलवर्णं प्रावरणांशुकं यस्य सः ॥ ३ ॥ श्रवणेति । श्रवणाबद्धपटकः सूक्ष्मसान्द्रायताल्पपरिणाह पटकाबद्ध-सहन्वधःप्रान्तकर्णयुगलः । करुणानिधिर्निष्कारणापारकरुणासागरः । प्रभुः । स श्रीहरिः । अग्रोपविष्टान्स्वपुरःप्रदेशावस्थितान् । सतो मुक्तानन्दादिसाधून् । स्वयमेव । पप्रच्छ । इति द्वयोरेकसम्बन्धः ॥ ४ ॥ भवेयुरिति । हे मुनयः ! । यस्य भक्तस्य । हृदये । विषयवासना मायिकार्थभावनाः । तीक्ष्णाः । भवेयुः । यस्य

भक्तस्य हृदये । ता विषयवासनाः । कुण्ठिताः । स्युः । यस्य भक्तस्य हृदये च । ताः । मूलतः । नष्टाः । स्युः ॥ ५ ॥ लक्षणानीति । तेषां त्रिविधानां भक्तानाम् । लक्षणानि । विचार्य । यूयम् । माम् । पृथक् । ब्रूत इत्यमुना प्रकारेण । तेन श्रीहरिणा । पृष्टाः । सन्तः साधवः । यदा । तदुत्तरं स्वकृतप्रश्नोत्तरम् । सम्यक् । नाहुः ॥ ६ ॥ अथेति । अथ तदा । स्वामी । स्वयं श्रीहरिः । तत्स्वकृतप्रश्नोत्तरम् । आह । हे मुनयः ! । यस्य भक्तस्य । वासना विषयभोगभावनाः । तीक्ष्णाः । स्युः । तस्य भक्तस्य तु । इन्द्रियवृत्तयः । विषयेषु । प्रसक्ताः । स्युः । यत्र गतास्तत्रैव लग्ना भवेयुः ॥ ७ ॥ विचारेणेति । त्यागिनापि । तेन । नरेण भक्तेन । महतापि । विचारेण । ता इन्द्रियवृत्तयः । तेभ्यो विषयेभ्यः । आक्रष्टुं प्रत्याहर्त्तुम् । कथंचन । न शक्यन्ते । वै ॥ ८ ॥ अर्थानिति । यस्य भक्तस्य । इन्द्रियवृत्तयः । अर्थान्विषयान् । गत्वा प्राप्यापि । न आसक्तास्तत्र न लग्नाः । अथवा । सक्ताः कथंचित्तत्र लग्नाः स्युश्चेत् । तथापि । क्रष्टुं प्रत्याहर्त्तुम् । सुशकाः । सुसाध्याः । स्युः । तस्य तथाविधस्य भक्तस्य । ता विषयवासनाः । कुण्ठिताः । वित्त यूयं जानीत ॥ ९ ॥ अर्थानामिति । यस्य भक्तस्य । अन्तः-

लक्षणानि पृथक् तेषां ब्रूत यूयं विचार्य माम् । इति पृष्टास्तेन सन्तः सम्यग्नाहुस्तदुत्तरम् ॥ ६ ॥ अथाह तत्स्वयं स्वामी तीक्ष्णाः स्युर्यस्य वासनाः । प्रसक्ता विषयेषु स्युस्तस्य त्विन्द्रियवृत्तयः ॥ ७ ॥ विचारेणापि महता तेभ्यस्ताश्च कथंचन । तेनाक्रष्टुं न शक्यन्ते त्यागिनाऽपि नरेण वै ॥ ८ ॥ अर्थान् गत्वाऽपि नासक्ता यस्य त्विन्द्रियवृत्तयः । सक्ता वा सुशकाः क्रष्टुं तस्य ता वित्त कुण्ठिताः ॥ ९ ॥ अर्थानामपि पञ्चानां सुषुप्ताविव जाग्रति । अभाव एव वर्त्तेत यस्यान्तःकरणे सदा ॥ १० ॥ रमणीया अरम्याश्च यस्य स्युर्विषयाः समाः । नैर्गुण्ये वर्त्तमानस्य तस्योन्मूला मताश्च ताः ॥ ११ ॥ इत्युक्त्वोपरतं तं च गोपालानन्द ऊचिवान् । निर्मूलाः स्युः कथं सर्वाः कुण्ठिता अपि वासनाः ॥ १२ ॥ श्रीहरिरुवाच—स्वधर्मो ज्ञानवैराग्ये सम्यग्माहात्म्यबोधयुक् । भक्तिर्भगवतश्चेति साधनानि महान्ति हि ॥ १३ ॥

करणे । पञ्चानामपि । अर्थानां मायिकविषयाणाम् । सुषुप्ताविव । जाग्रति जाग्रदवस्थायाम् । अभावोऽरूचिरेव । सदा । वर्त्तेत ॥ १० ॥ रमणीया इति । रमणीयाः । अरम्या अरमणीयाश्च । विषयाः । यस्य भक्तस्य । अन्तःकरणे । समास्तुल्याः । स्युः । नैर्गुण्ये गुणातीतभावे । वर्त्तमानस्य । तस्य भक्तस्य । ता विषयवासनाः । उन्मूला मूलतो विनष्टाः । मताः । गुणातीतभाव उक्तो भगवद्गीतायाम् । 'समदुःखसुखः स्वस्थः समलोष्टाश्मकाञ्चन' इत्यादिना ॥ ११ ॥ इतीति । इत्यमुना प्रकारेण । उक्त्वा । उपरतं जोषमास्थितम् । तं श्रीहरिम् । गोपालानन्दो मुनिः । ऊचिवान् पप्रच्छ । हे हरे ! । कुण्ठिता अपि । सर्वाः । वासनाः । निर्मूला मूलतो निवृत्ताः । कथं केनोपायेन । स्युः ॥ १२ ॥ 'गोपालानन्दमुनिना पृष्टः स इति सद्गुरुः । प्राहेत्थं हर्षयंस्तं च स्वाश्रितान्सकलान्परान् ।' स्वेति । हे मुने ! । स्वधर्मः । ज्ञानवैराग्ये । सम्यग्माहात्म्यबोधयुक् यथार्थतया भगवन्माहात्म्यज्ञानसहिता । भगवतः । भक्तिश्च । इत्येतानि । महान्ति । साधनानि । भवन्ति ॥ १३ ॥

चत्वारीति । एतानि स्वधर्मादीनि । चत्वारि साधनानि । यस्य । पुरुषस्य भक्तस्य । दृढानि । स्युः । तस्य भक्तस्यैव । सर्वाः । वासनाः । अशेषतः । निर्मूलाः । स्युः ॥ १४ ॥ यस्येति । यस्य भक्तस्य । एतेषु चतुर्षु साधनेषु । न्यूनता । स्यात् । तस्य भक्तस्य । ता वासनाः । तथा निर्मूलाः । नैव स्युः । अतो हेतोः । तथात्वकामेनाऽऽमूलात्स्ववासनोच्छेदेच्छावता भक्तेन । तानि स्वधर्मादिसाधनानि । सर्वथा सर्वप्रकारेण दृढतयेत्यर्थः । साध्यानि ॥ १५ ॥ इतीति । इत्यमुना प्रकारेण । उक्त्वा गोपालानन्दमुनिप्रश्नोत्तरम् कृत्वेत्यर्थः । श्रीहरिः । तान् । साधून् । अपृच्छत् ! । हे साधवः । मुमुक्षुपुंसो भक्तस्य । रमापतेर्लक्ष्मीकान्तस्य श्रीकृष्णस्य । प्रीत्यै । महद्यतोधिकं नास्ति तथाविधम् । किन्तु । साधनम् । स्यात् ॥ १६ ॥ येनेति । एकेन केवलेनापि । येन महासाधनेन । सकलाः अगुणा लोभादयो । दोषाः । हृदो मनसः सकाशात् । नश्येयुः । धर्मज्ञानादयः । सकलाः । गुणाः । सम्पन्नाः प्राप्ताः । स्युः ॥ १७ ॥ इतीति । इतीत्थम् । पृष्ट्वा । तस्यावोधानैरकृतोत्तरस्य स्वप्रश्नस्य । उत्तरमपि । स्वयम् । स श्रीहरिरेव । उवाच । हे मुनयः ! । तादृशी महासाधनरूपा तु । माहात्म्ययुक्र भगवतः सकलजगन्नियन्तृत्वादिमहिमावबोधसहिता । कृष्णस्य । भक्तिः । मता ॥ १८ ॥ तयेति । एकया केवलयापि । तया तथाविधकृष्णभक्त्या । मानसा मनःसम्बन्धिनः । सकलाः । दोषाः । नश्यन्ति । सकलाः । गुणाः । आयान्ति । आगताः समायातास्ते गुणाः । भृशमतिशयेन । वर्द्धन्ते ॥ १९ ॥ उक्त्वेति । इतीत्थम् । उक्त्वा ! प्रभुः श्रीहरिः । पुनः । पप्रच्छ । हे साधवः ! । कपटवान् । नरो भक्तः । यदि । बुद्धिमान् स्वकपटगोपनचतुरः । स्यात् । तर्हि । कीदृशलक्षणैः । ज्ञेयोऽयं कपटवान् । भवतीति वोध्यः ॥ २० ॥ ब्रह्मानन्द इति । अथैवंविधश्रीहरिवाक्यश्रवणानन्तरम् । ब्रह्मानन्दो मुनिः । तं श्रीहरिम् । ऊचे । हे हरे ! । स कपटवान् भक्तः । तत्त्वत्सद्भक्तविद्विषाम् । साहचर्येण यानोपवेशवार्त्ताचरणादिषु सहचारित्वेन । तद्रुच्या केनचिदन्तरायेण तत्सहचरत्वाभावेऽपि तथाविधैः साहचर्यस्य तद्वार्त्तानुगतया रुच्या । मनीषिभिर्भक्तैः । ज्ञायेत ॥ २१ ॥ इतीति । इत्येवंविधम् । तस्य । मुनेर्ब्रह्मानन्दसाधोः । उत्तरम् । मानयित्वा स्वीकृत्य । स श्रीहरिः ।

चत्वार्येतानि यस्य स्युर्दृढानि पुरुषस्य तु । तस्यैव वासनाः सर्वा निर्मूलाः स्युरशेषतः ॥ १४ ॥ यस्यैतेषु न्यूनता स्यान्नैव स्युस्तस्य तास्तथा । अतस्तथात्वकामेन तानि साध्यानि सर्वथा ॥१५॥ इत्युक्त्वा श्रीहरिः साधूंस्तानपृच्छद्रमापतेः । प्रीत्यै मुमुक्षुपुंसः स्यात्साधनं किन्तु वै महत् ॥१६॥ येनैकेनापि सकला नश्येयुरगुणा हृदः । सम्पन्नाः स्युश्च सकला धर्मज्ञानादयो गुणाः ॥ १७ ॥ इति पृष्ट्वोत्तरमपि तस्य स्वयमुवाच सः । माहात्म्यज्ञानयुग्भक्तिर्मता कृष्णस्य तादृशी ॥ १८ ॥ तयैकयाऽपि सकला दोषा नश्यन्ति मानसाः । गुणाश्चायान्ति सकला वर्द्धन्ते चाऽऽगता भृशम् ॥१९॥ उक्त्वेति पप्रच्छ पुनः प्रभुः कपटवान्नरः । यदि स्याद् बुद्धिमांस्तर्हि ज्ञेयः कीदृशलक्षणैः ॥ २० ॥ ब्रह्मानन्दस्तमूचेऽथ त्वत्त्वत्सद्भक्तविद्विषाम् । साहचर्येण तद्रुच्या स ज्ञायेत मनीषिभिः ॥ २१ ॥ इत्युत्तरं मुनेस्तस्य मानयित्वा स आह तम् । वक्रत्साधुवृत्तिश्चेत्स ज्ञेयः केन लक्ष्मणा ॥ २२ ॥

तं ब्रह्मानन्दमुनिम् । आह । हे मुने ! । स कपटवान् । भक्तः । बकवत् । साधुवृत्तिश्चेत् । बको यथा ध्यानमुद्रया स्वहिंस्रतां गोपयन्सन्नपि मीननैकटयेऽर्थं साधयति तथायमपि साधुजनस्यैतस्ततो गमनादिकाले कृष्णतत्सङ्गक्तविद्विट्साहचर्यरूपमर्थं संसाध्य पुनः स्वसाधुता नाटनावस्थितो भवेच्चेदित्यर्थः । तर्हि । केन । लक्ष्मणा लक्षणेन । ज्ञेयः ॥ २२ ॥ तमिति । तमेवं वदन्तं श्रीहरिम् । स मुनिर्ब्रह्मानन्दः साधुः । आह । हे हरे ! । स तथाविधः । दम्भ्यपि । धीमता । ज्ञायेत । यतः । देशकालयोः । वैषम्ये । तच्छद्म तदीयकपटम् । गोप्तुम् । शक्यम् । न भवेत् । देशकालवैषम्यमेव तत्कपटज्ञानावसरो बोध्यो नातोऽन्यत्तज्ज्ञानलक्ष्मास्तीत्यर्थः ॥ २३ ॥ इतीति । इत्येवंविधम् । उत्तरं ब्रह्मानन्दमुन्यभिहितं स्वप्रश्नप्रतिवचनम् । हरिः । तथ्यं त्वया सत्यमेवाभिहितम् । इतीत्थम् । उक्त्वा । पुनः । तान् । सतः साधून् । पप्रच्छ । हे साधवः ! । यतो यस्मादेकस्माद्दोषात् । गुणाः सर्वेऽपि सद्‌गुणाः । दोषायन्ते दोषरूपा भवन्ति । तथाविधः । एकः । कः । दोषः । अस्ति ॥ २४ ॥ देवानन्द इति । तदा । देवानन्द एतन्नामा । दण्डी सत्सभावस्थितः पुरातनः संन्यासी । तं श्रीहरिम् । उवाच । हे हरे ! । तव श्रीहरेः ।

तमाह स मुनिः सोऽपि दम्भी ज्ञायेत धीमता । गोप्तुं शक्यं न तच्छद्म वैशम्ये देशकालयोः ॥२३॥ इत्युत्तरं हरिस्तथ्यमित्युक्त्वा तान् पुनः सतः । पप्रच्छैकोऽस्ति को दोषो दोषायन्ते यतो गुणाः ॥ २४ ॥ देवानन्दस्तदा दण्डी तमुवाच हरे ! तव । भक्तद्रोहेण सर्वेऽपि गुणाः स्युर्दोषरूपिणः ॥२५॥ इत्युत्तरं मानयित्वा तस्य तं प्राह स प्रभुः । कृष्णालिङ्गत्वबोधोऽपि गुणानां दोषताकरः ॥ २६ ॥ इत्युक्त्वा स पुनः साधून् पृच्छति स्म महत्स्वपि । साधुष्वभाव आयाति पुंसस्तत्केन हेतुना ॥ २७ ॥ इति पृष्टा क्षणं स्थित्वा तस्याप्युत्तरमाह सः । सदभावोत्पादने तु मान एवास्ति कारणम् ॥२८॥ मानो यस्मिन् भवेत्पुंसि स हि स्वस्तावकस्य नुः । बहुं मन्येतैकगुणं हित्वा दोषान् सहस्रशः ॥२९॥

भक्तद्रोहेण । हरेस्तव भक्तद्रोहलक्षणेन दोषेणेत्यर्थः । सर्वेऽपि । गुणाः । दोषरूपिणः । स्युः ॥ २५ ॥ इतीति । इत्येवंविधम् । तस्य दण्डिनः । उत्तरम् । मानयित्वा । प्रभुः । स श्रीहरिः । तं दण्डिनम् । प्राह । हे यते ! । कृष्णालिङ्गत्वबोधः श्रीकृष्णस्य निराकारत्वेन ज्ञानमपि । गुणानाम् । दोषताकरो दोषत्वसम्पादकः । अस्ति ॥ २६ ॥ इतीति । इतीत्थम् । उक्त्वा । स श्रीहरिः । पुनः । साधून् । पृच्छति स्म । हे साधवः ! । पुंसो भक्तस्य । महत्स्वपि । साधुषु । अभावोऽप्रीतिः । आयात्युत्पद्यते । तन्महासाधुष्वप्रीत्युत्पादनम् । केन । हेतुना । भवति ॥ २७ ॥ इतीति । इतीत्थम् । पृष्टा । क्षणं क्षणकालपर्यन्तम् । स्थित्वा सत्कृतोत्तरश्रवणप्रतीक्षया मौनमालम्ब्येत्यर्थः । तस्य सदकृतोत्तरस्य स्वप्रश्नस्य । उत्तरमपि । स श्रीहरिः । आह । हे साधवः ! । सदभावोत्पादने महासाधुष्वरुचिसम्पादने तु । मान एव । कारणं हेतुः । अस्ति ॥ २८ ॥ इममर्थमेव व्यक्तबोधाय स्पष्टयति त्रिभिः । मान इति । यस्मिन् । पुंसि । मानः । भवेत् । स पुमान् । स्वस्तावकस्य स्वगुणप्रशंसकस्य । नुः असाधोरपि पुरुषस्य । सहस्रशः । दोषान् । हित्वा । एकगुणं यथा तथाविधमेव तद्‌गुणम् । बहुम् अतिशयितम् । मन्येत ॥ २९ ॥

य इति । यस्तु साधुपुमान् । स्वम् । न प्रसंसेत् स्वगुणप्रशंसां न कुर्यात् । तस्य साधोः पुंसः । सहस्रशः । गुणान् । हित्वा । अल्पकमल्पमात्रमपि । एकम् । दोषम् । बहुम् । मन्येत । वै ॥३०॥ तत इति । ततस्तदनन्तरम् । स मानी पुरुषः । तस्य स्वमप्रशंसतः साधुजनस्य । द्रोहम् । मनसा । करोति । ततः । वाचा । करोति । ततः । वपुषा देहेन । करोति । तस्माद्धेतोः । स मानः । महान् । दोषः । ज्ञेयः । हि ॥ ३१ ॥ सुरूपाद्यनेकगुणसम्पन्नानां गुणान् । श्वित्र इव विद्यादिगुण-सम्पन्नानां मानो दोषोऽपि सर्वांस्तद् गुणान्दोषायते इत्याह । प्रवीणमिति । प्रवीणं सर्वकलाकुशलम् । गुणसम्पन्नं विद्यादिगुणयुक्तम् । पुमांसम् । अथवा । योषितं तथा-विधां नारीमपि । मानः । प्रविश्य । तद् गुणान् । दोषसन्निभान् । कुरुते । यदा प्रवीणादीनां मान इत्थमनर्थकरस्तदाऽप्रवीणानां तस्य तथाकरत्वे किं वक्तव्यमिति भावः ॥ ३२ ॥ पप्रच्छेति । अथैवंविधश्रीहरिवाक्यश्रवणानन्तरम् । मुक्तानन्दो मुनिः । तं श्रीहरिम् । पप्रच्छ । हे प्रभो ! । ईदृशः । मानः । केन । उपायेन साध-नेन । नश्येत् । तमुपायम् । ब्रूहि । इतीत्थम् । उक्तो मुक्तानन्दमुनिनानुयुक्तः । हरिः । अवदत् ॥ ३३ ॥ राधेति । हे साधो ! । राधारमणमाहात्म्यातिशयस्य ।

यस्तु स्वं न प्रशंसेच गुणास्तस्य सहस्रशः । हित्वैकमल्पकमपि दोषं मन्येत वै बहुम् ॥ ३० ॥ ततश्च मनसा वाचा द्रोहं तस्य करोति सः । ततश्च वपुषा तस्माज्ज्ञेयो दोषो महान्हि सः ॥ ३१ ॥ प्रवीणं गुणसम्पन्नं पुमांसं वाऽपि योषितम् । प्रविश्य मानः कुरुते तद्गुणान् दोषसन्निभान् ॥ ३२ ॥ पप्रच्छ मुक्तानन्दोऽथ तं प्रभो ! मान ईदृशः । केनोपायेन नश्येत्तं ब्रूहीत्युक्तोऽवदद्धरिः ॥ ३३ ॥ राधारमणमाहात्म्यातिशयस्यावबोधतः । अपसर्पति मानोऽयं विद्यादिगुणिनोऽपि नुः ॥ ३४ ॥ उद्धवः कृष्णमाहात्म्यं जानन् स्वजनिमार्थयत् । कृष्णस्निग्धव्रजस्त्रीपद्रजःस्पृश्य-लतादिषु ॥ ३५ ॥ नीतिशास्त्रविदस्तस्य गुणिनोऽपि च धीमतः । कृष्णमाहात्म्यबोधेन नाभून्मानोऽल्पकोऽपि हि ॥ ३६ ॥ तथैव तुलसीदासो भक्तो दाशरथेरभूत् । सोऽपि श्रीराममाहात्म्यं विवेद भूशमात्मनि ॥ ३७ ॥

अवबोधतः । स्वाङ्गनाया अपि राधिकायाः प्रवृद्धमानमर्दनस्य श्रीकृष्णस्यातिशयितमहिमावगमनेनेत्यर्थः । विद्यादिगुणिनोऽपि । नुर्भक्तजनस्य । अयम् । मानः । अपसर्पति विनश्यति ॥ ३४ ॥ इममेवार्थं सदाचारेण द्रढयति चतुर्भिः । उद्धव इति । कृष्णमाहात्म्यम् । जानन् । उद्धवः । कृष्णस्निग्धानां श्रीकृष्णस्वरूपगाढप्रीतिमतीनां व्रजस्त्रीणां नन्दव्रजस्थगोपवधूनां यानि पद्रजांसि पादस्पष्टधूलयस्तैः स्पृश्याः स्पर्शार्हा ये लतादयो लतागुल्माद्यास्तेषु । स्वजनिं स्वकीयं जन्म । आर्थयत्प्रार्थयामास । तथा-चोक्तं श्रीभागवते । 'आसामहो चरणरेणुजुषामहं स्यां वृन्दावने किमपि गुल्मलतौषधीना'मित्यादिना ॥ ३५ ॥ नीतीति । नीतिशास्त्रविदः । गुणिनो विद्याविनयाद्य-नेकगुणसम्पन्नस्य । धीमतो महाबुद्धेश्चापि । तस्योद्धवस्य । कृष्णमाहात्म्यबोधेन । अल्पकोऽल्पमात्रोऽपि । मानः । नाभूत् । हि ॥ ३६ ॥ तथेति । तथा तेनैव प्रकारेण । तुलसीदासः कोसलविषयावासो विप्रजातीयभक्तविशेषः । दाशरथेः श्रीरामस्य । भक्तः । अभूत् । सोऽपि । आत्मनि स्वमनसि । श्रीराममाहात्म्यम् ।

भृशम् । विवेद ॥ ३७ ॥ स इति । अतो हेतोः । स तुलसीदासभक्तः । आह । यस्य जनस्य । वक्त्रतो मुखात् । अज्ञानतोऽपि । रामनाम । निःसरेत् । तदङ्घ्रयोः तदीयपादयोः । उपानहौ पादत्राणरूपम् । मच्चर्म मच्छरीरत्वक् । स्तां भवेताम् । मच्छरीरचर्म रामनामोच्चारकभक्तस्य पादत्राणतायामुपयुज्यतामित्यर्थः । इतीत्थम् । आहेति सम्बन्धः ॥ ३८ ॥ एवमिति । एवममुना प्रकारेणैव । यो भक्तः । हरेः । माहात्म्यम् । भृशम् । जानीयात् । तस्य भक्तस्य । नवधाभक्तिभाक्पुरो भगवतो नवधाभक्तिं कुर्वतो जनस्याग्रे । मानः । कथम् । तिष्ठेत् । न तिष्ठेदेव ॥ ३९ ॥ माहात्म्यमिति । ततो हेतोः । आत्मनः स्वस्य । मानजिहासुना मानं त्युक्तमिच्छुना । पुंसा भक्तेन । ईशस्य सर्वेश्वरस्य श्रीहरेः । माहात्म्यम् । अत्यतिशयेन । वेद्यम् । इत्येवंविधम् । प्रभोः श्रीहरेः । सुधामिवामृतसदृशम् । वचनम् । निपीय । ते । सन्तो मुक्तानन्दादयो मुनयः । चकाराद्गृहिणोऽपि । प्रमुदं प्रकृष्टं हर्षम् । आपुः ॥ ४० ॥ प्रश्नोत्तरात्मकैः स्वस्यातर्पयद्यो वचोऽमृतैः । सतः स्वान् श्रीहरेस्तस्य तानि मद्धृदि सन्तु वै ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्सूनुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधा-

सोऽत आहाजानतोऽपि निःसरेद्यस्य वक्त्रतः । रामनाम तदङ्घ्र्योः स्तां मच्चर्मोपानहाविति ॥ ३८ ॥ एवमेव
हि माहात्म्यं जानीयाद्यो भृशं हरेः । तस्य मानः कथं तिष्ठेन्नवधाभक्तिभाक्पुरः ॥ ३९ ॥ माहात्म्यमीशस्य
ततोऽतिवेद्यं पुंसाऽऽत्मनो मानजिहासुना तु । इति प्रभोस्ते वचनं निपीय सुधामिवापुः प्रमुदं च सन्तः ॥४०॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते शताधिकचतुर्विंशतितमस्तरङ्गः ॥ १२४ ॥ १६ ॥

शकाब्दे विक्रमार्कस्य नगाश्ववसुभूमिते । अमायां सहसः कृष्णे वचोऽमृतमिदं हरेः ॥ १ ॥
तत्र लौहाभिधग्रामे राज्ञः सूरस्य वेश्मनि । पीठोत्तमे व्यराजत्स त्यागिगृहिगणैर्वृतः ॥ २ ॥
सितधोत्रः सितोष्णीषः सितश्रवणबन्धनः । दधद्रक्तोष्णनीशारं सश्वेताण्वङ्गरक्षकम् ॥ ३ ॥

सिन्धुटीकायां शताधिकचतुर्विंशतितमस्तरङ्गः ॥ १२४ ॥ १६ ॥

देशकालादि वैषम्ये यो भक्तो विपरीतताम् । नाप्नुयात्तस्य यान्येव साधनानि सुनिश्चितम् ॥ १ ॥ अरुचिर्मायिकार्थेषु यस्य लक्ष्माणि तस्य च । तथा तेष्वरुचिश्चैतत्सर्वं सप्तदशे स्मृतम् ॥२॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८७७) सहसो मार्गशीर्षमासस्य । कृष्णे बहुलपक्षे । अमायाममावास्यातिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । लौहाभिधग्रामे । सूरस्यैतन्नाम्नः । राज्ञो नृपस्य । वेश्मनि दुर्गान्तर्वर्त्तिभवने । पीठोत्तमे स्वास्तृतोत्तमे मञ्चासने । त्यागिगृहिणैर्नानादेशागतस्वाश्रितत्यागिगृहिव्रजैः । वृत्तः सभायां परिवेष्टितः । स श्रीहरिः । व्यराजत्सान्ध्यभगवन्निराजनान्ते उपवेशनचातुर्येण आसनमलंकुर्वन्नतिशुशुभे ॥ २ ॥ तं विशिनष्टि द्वाभ्याम् । सितेति । सितधोत्रः परिहितधवलाधोवसनः । सितोष्णीषः शिरोनिबद्धश्वेतपटः । सितश्रवणबन्धनः सिताल्पपटनिबद्धसहनुश्रवोयुगलः । सश्वेताण्वङ्गरक्षकं श्वेतवर्णसूक्ष्मवसनीयाङ्गरक्षकेनान्तःसहितमित्यर्थः । रक्तोष्णनीशारं लाक्षाद्रवरक्तवर्णग्रीष्मगुणहिमानिलनिवारणम् । दधत् ॥ ३ ॥

पीतेति । श्वेतो धवलवर्णश्चतुष्फालपटः सीवितचतुःखण्डद्विगुणवसनमन्तरे यस्यास्ताम् । पीततूलपटीं भाषायां रजाइ इति संज्ञां पीतवसनगुम्फदोरिकाम् । वसानः शीतनिवृत्त्यै प्रावृण्वन् । सुप्रसन्नास्योऽतिप्रसन्नमुखपङ्कजः । कृपया । निजान् स्वभावस्थितस्वाश्रितजनान् आलोकयत्पश्यत् ॥ ४ ॥ बद्धेति । बद्धाञ्जलिपुटः । नित्यानन्दो मुनिः । आनतः सन् । तं श्रीहरिम् । अपृच्छत् । हे स्वामिन् ! । अत्र सत्सङ्गे । भगवतः । ते तव । भक्ताः । बहुशोऽपरिमिताः । वर्त्तन्ते ॥ ५ ॥ तत्रेति । तत्र तेषु भक्तेषु मध्ये । केचन भक्ताः । आरम्भदशायां साक्षाद्भवच्छरणस्वीकरणाख्यसत्सङ्गित्वाद्यावस्थायां तु । साधव इव । उत्तमवृत्तयः । त्वाम् । ते तव जनांश्च । स्तुवन्तः । दृश्यन्ते ॥ ६ ॥ देशेति । ते तथाविधा भक्ता एव । देशकालादिवैषम्ये सति । विपरीतताम् । प्राप्नुवन्तः सन्तः । त्वत्त्वत्सद्भक्तनिन्दकाः । इह सत्सङ्गे । ईक्ष्यन्ते ॥ ७ ॥ अत इति । अतो हेतोः । कश्चित् । देशादिवैषम्ये । जाते सत्यपि । येन । साधनेन । भवत्पदाद्यस्यां श्रीकृष्णस्य तव चरणसेवाऽस्ति तथाविधायास्त्वदेकान्तिकोपासनायाः । बुद्धिः । सर्वथा । न चलेत् ॥ ८ ॥ साधुरिति । येन साधनेन च । साधुः । स्यात् । साधुर्यथोत्तमवृत्तिमान्

पीततूलपटीं श्वेतचतुष्फालपटान्तराम् । वसानः सुप्रसन्नास्यः कृपयाऽऽलोकयन्निजान् ॥ ४ ॥ बद्धाञ्जलिपुटोऽपृच्छन्नित्यानन्दस्तमानतः । भक्ता भगवतः स्वामिन्वर्त्तन्ते बहुशोऽत्र ते ॥५॥ तत्रारम्भदशायां तु केचनोत्तमवृत्तयः । दृश्यन्ते साधव इव स्तुवन्तस्त्वां च ते जनान् ॥ ६ ॥ देशकालादिवैषम्ये त एव विपरीतताम् । प्राप्नुवन्त इहेक्ष्यन्ते त्वत्त्वत्सद्भक्तनिन्दकाः ॥ ७ ॥ अतो देशादिवैशम्ये कश्चिज्जातेऽपि सर्वथा । येन भवत्पदाद्बुद्धिः साधनेन चलेन्न हि ॥८॥ साधुश्च साधुरेव स्यान्न तु दुष्येत्कदाचन । तत्त्वं मे कृपया ब्रूहीत्युक्तः श्रीहरिरब्रवीत् ॥ ९ ॥ देहस्यानादरश्चात्मनिष्ठा वैराग्यमुत्तमम् । माहात्म्यज्ञानयुक्कृष्णनिश्चयश्च दृढो हृदि ॥ १० ॥ चतुर्भिः साधनैरेतैः साधितैस्तु कदाचन । देशादिविषमत्वेऽपि मतिः कृष्णाच्चलेन्न वै ॥ ११ ॥ न साधोः साधुता दुष्येत्सर्वदा श्रेष्ठ एव सः । महतां च कृपापात्रं भवेन्नारायणस्य च ॥ १२ ॥

भवति तथा भक्तोऽप्युत्तमवृत्तिमानेव तिष्ठेदेत्यर्थः । किन्तु । कदाचन देशकालादिवैषम्ये सत्यपि । न तु नैव । दुष्येत् । विपरीततां न प्राप्नुयादित्यर्थः । तत्तथाविधं साधनम् । त्वम् । कृपया । मे मह्यम् । ब्रूहि । इत्यमुना प्रकारेण । उक्तो नित्यानन्दमुनिनाभिहितः । श्रीहरिः । अब्रवीत् । इति द्वयोरेकसम्बन्धः ॥ ९ ॥ देहस्येति । हे मुने ! । हृदि । यस्य भक्तस्य । देहस्य । अनादरः । अनेन स्वधर्म उक्तः । आत्मनिष्ठा । उत्तमं तीव्रम् । वैराग्यम् । माहात्म्यज्ञानयुक् । अत एव । दृढः । कृष्णनिश्चयश्च । स्यात् । अनेन भक्तिरप्युक्ता ॥ १० ॥ चतुर्भिरिति । साधितैर्यथार्थतया सम्पादितैः । एतैः स्वधर्मज्ञानवैराग्यभक्त्याख्यैः । चतुर्भिः । साधनैः कृत्वा । कदाचन । देशादिविषमत्वे सत्यपि । मतिस्तस्य बुद्धिः । कृष्णाच्छ्रीकृष्णोपासनायाः सकाशात् । न चलेत् । वै । इति द्वयोरेकसम्बन्धः ॥ ११ ॥ नेति । एतैः । साधोरुत्तमवृत्तिमतो भक्तस्य । साधुतोत्तमवृत्तिता । न दुष्येत् । स उक्तचतुःसाधनयुक्तो भक्तः । सर्वदा । श्रेष्ठ एव । ज्ञेयः । किञ्च । सः । महतां

भगवदेकान्तिकसाधूनाम् । नारायणस्य साक्षाद्धरेश्च । कृपापात्रम् । भवेत् ॥ १२ ॥ विपक्षे दोषमाह द्वाभ्याम् । उक्तेति । उक्तसाधनहीनस्य । अत एव । विषयासक्तचेतसो भक्तस्य । तैः सद्भिः । विषयखण्डने । कृते सति तु । सत्सु विषयखण्डनकर्तृषु तेषु साधुषु अरुचिरभावः । स्यात् ॥ १३ ॥ तत इति । ततस्तदनन्तरम् । तस्य सदरुचिमतो भक्तस्य । त्राकृतौ । कृष्णेऽपि । अरुचिः । स्यात् । ततः । सः । सदध्वनः सत्सङ्गात् । भ्रष्टश्च्युतः । तन्निन्दां कृष्णतद्भक्तनिन्दनम् । कुर्वन्सन् । भ्रमेद्भवाम्बुधौ निमज्जनोन्मज्जनतामेव यायादित्यर्थः ॥ १४ ॥ यस्येति । यस्य भक्तस्य । श्रीकृष्णस्य । निश्चयमात्रं केवलो निश्चय एव । स्यात् । विषयेषु । अरुचिर्वैराग्यम् । न स्यात् । इयं स्वधर्मात्मनिष्ठामाहात्म्यज्ञानानामुपलक्षणम् । स तथाविधः । पुमान् भक्तोऽपि । तथा सति सद्भिर्विषयखण्डने कृते सति । भ्रष्टः । स्यात् । भगवत्तद्भक्तजनेष्वरुचिं गत्वा सत्सङ्गविमुखो भवेदित्यर्थः ॥ १५ ॥ दृढीति । अतो हेतोः । मुमुक्षुणा भक्तेन । चत्वार्यपि । तानि स्वधर्मादीनि साधनानि । दृढीकार्याणि । हि यतः । तद्वतः स्वधर्मादिसाधनचतुष्टयवतो भक्तस्य । क्वचित्कदाचिदपि । औद्धवाध्वनः सत्सङ्गलक्षणादुद्धवपथात् । पातशङ्का विमुखीभवनसन्देहः ।

उक्तसाधनहीनस्य विषयासक्तचेतसः । सत्सु स्यादरुचिस्तैस्तु कृते विषयखण्डने ॥ १३ ॥
ततः कृष्णेऽपि तस्य स्यादरुचिर्त्राकृतौ ततः । भ्रष्टः सदध्वनः कुर्वंस्तन्निन्दामेव स भ्रमेत् ॥ १४ ॥
यस्य निश्चयमात्रं स्याच्छ्रीकृष्णस्य न चारुचिः । विषयेषु पुमान्सोऽपि भ्रष्टः स्याद्धि तथा सति ॥ १५ ॥
दृढीकार्याण्यतस्तानि चत्वार्यपि मुमुक्षुणा । तद्वतो हि क्वचिन्नास्ति पातशंकौद्धवाध्वनः ॥ १६ ॥
पप्रच्छाथ पुनस्तं स कश्चिद्देहाभिमान्यपि । विषयेषु प्रसक्तोऽपि कुर्वन्सत्सङ्गमीक्ष्यते ॥ १७ ॥
स कथं तादृशोऽस्तीति पृष्टः प्रोवाच तं हरिः । भविताऽल्पेन कालेन सोऽपि भ्रष्टो न संशयः ॥ १८ ॥
यदाऽस्य प्रेष्ठविषयान्महान्तः साधवोऽञ्जसा । खनिष्यन्ति तदैवासौ तेषां द्रोहं करिष्यति ॥ १९ ॥

नास्ति ॥१६॥ पप्रच्छेति । अथैवंविधश्रीहरिवाक्यश्रवणानन्तरम् । स नित्यानन्दः मुनिः । पुनः । तं श्रीहरिम् । पप्रच्छ । हे हरे ! । कश्चिद्भक्तः । देहाभिमानी आत्मनिष्ठाऽभावाद्देहाहंमतियुक्तः सन्नपि । विषयेषु । प्रसक्तः वैराग्याभावाद्विषयभोगेषु सम्प्रवृत्तः सन्नपि । सत्सङ्गम् । कुर्वन् । ईक्ष्यते ॥ १७ ॥ स इति । स देहाहंमतिप्रसक्तो भक्तः । तादृशः सत्सङ्गे वर्तमानः । कथमस्ति केन हेतुनाऽविद्यते । इत्यमुना प्रकारेण । पृष्टो नित्यानन्दमुनिना कृतपृच्छः । हरिः । तं नित्यानन्दमुनिम् । प्रोवाच । हे मुने ! । स तथाविधो भक्तोऽपि । अल्पेन । कालेन । भ्रष्टः सत्सङ्गाच्च्युतः । भविष्यति । न संशयः ॥ १८ ॥ एतस्य सत्सङ्गाच्च्यवनाल्पकालमाह । यदेति । यदा । महान्तो गुणगरिष्ठाः । साधवः । अस्य भवदुक्तभक्तस्य । प्रेष्ठविषयान् । अञ्जसा तत्त्वतः । समूलं यथातथेत्यर्थः । खनिष्यन्ति । तदैव । असौ भक्तः । तेषां स्वप्रेष्ठविषयखनकमहासताम् । द्रोहम् । करिष्यति । द्रोहस्य सत्सङ्गतः पतनहेतुत्वात्तं कुर्वंस्ततः पतितेत्यर्थः ॥ १९ ॥

स्पष्टबोधायेममेवार्थं दृष्टान्तसिद्धान्तोक्त्याह द्वाभ्याम् । यदेति । यथा । यः पुरुषः । सविषं हालाहलयुतम् । पयो दुग्धम् । पिबेत् । स पुमान् । यदा । तदा । मर्त्ता क्षणघटीमुहूर्त्तान्तेऽपि मरिष्यत्येव । तथा । देहाभिमानी । विषयी विषयासक्तः । भक्तोऽपि । पतिता । मत्कृततत्प्रियविषयखण्डनसमकालमेव सत्सङ्गतो विमुखः स्यादित्यर्थः ॥ २० ॥ ननु साधूत्खातप्रियविषयोऽपि सः सत्सङ्गे वर्त्तमान इव दृश्यते इति चेन्नदीप्रवाहरयखातमूलः प्रवाताभावात्कश्चित्कालं दृश्यमानो द्रुम इव सोऽद्यादिकाले पतितैवेत्याह । स इति । हे मुने ! । छिन्नमूलः । द्रुम इव । स भक्तः अद्यास्मिन्नेवाहनि । अथवा । श्वोऽनागतेऽह्नि । अथवा । परश्वस्ततः परेऽहनि । अथवा । पक्षमासाब्दतः पक्षेण मासेनाब्देन वेत्यर्थः । अथवा । अन्ततो देहान्तसमयेऽपि । पतिष्यति ॥ २१ ॥ एवं यः पतेत्तमुक्त्वा कीदृशो न पतेदित्यपि पुनर्मुनिः पृष्टेतितदिङ्गितज्ञत्वेन बुध्वा स्वयमेव तमाह चतुर्भिः । देहेति । हे मुने ! । यो भक्तः । विषयेषु । अनासक्तः । विषयविरक्त इत्यर्थः । तथा । देहाभिमानहीनः । अत एव । स्वम् । सद्रूपं स्वसत्तया देहेन्द्रियान्तःकरणप्रकाशकम् । आत्मानं क्षेत्रज्ञमेव । दृढं यथातथा । मन्यते ॥ २२ ॥ स्त्रीति । किञ्च । अहम् । प्राप्तैर्यदृच्छयाऽभ्युपगतैः

यदा तदा स मर्त्तैव यः पिबेत्सविषं पयः । देहाभिमानी विषयी भक्तोऽपि पतिता तथा ॥ २० ॥
सोऽद्य वा श्वः परश्वो वा पक्षमासाब्दतोऽन्तः । पतिष्यति न संदेहश्छिन्नमूल इव द्रुमः ॥ २१ ॥
देहाभिमानहीनो योऽनासक्तो विषयेषु च । तथा सद्रूपमात्मानमेव स्वं मन्यते दृढम् ॥ २२ ॥
स्त्रीधनाद्यैः सुखी प्राप्तैः स्यामहं तैश्च वा गतैः । दुःखी स्यामीदृशो नाहं किन्तु स्वेन सुखी सदा ॥ २३ ॥
इत्यात्मनिष्ठां सम्प्राप्त आत्मस्थं च रमापतिम् । उपासीनो भवेद्भक्तः स तु नैव पतेत्क्वचित् ॥ २४ ॥
क्रियमाणेऽपि विषयखण्डने सद्भिरञ्जसा । नारुचिस्तस्य सत्सु स्याद्विषयेषु तु सा भवेत् ॥ २५ ॥
इत्युक्तो हरिणा साधुः स भूयस्तं स्म पृच्छति । विषयेष्वरुचिर्यस्य स्यात्स ज्ञेयः कथं पुमान् ॥ २६ ॥

। स्त्रीधनाद्यैर्विषयाप्तिहेतुभूतपदार्थैः । सुखी । स्यात् । अथवा । गतैर्विनष्टैः । तैः स्त्रीधनाद्यैः । दुःखी । स्याम् । ईदृश एवंविधः । अहम् । नास्मि । किन्तु । स्वेन स्वस्वरूपेणैव । सदा । सुखी । अस्मि । इतीत्युत्तरेण सम्बन्धः ॥ २३ ॥ इतीति । इत्येवंविधाम् । आत्मनिष्ठाम् । सम्प्राप्तः सन् । आत्मस्थं स्वस्वरूपे सदा वर्त्तमानम् । रमापतिं साक्षात् कृष्णम् । उपासीन उपासनां कुर्वन् । भवेत् । स एतादृशः । भक्तस्तु । कचित्कदाचिदपि । नैव पतेत् सत्सङ्गतश्च्युतो न भवेत् ॥ २४ ॥ क्रियमाण इति । किञ्च । सद्भिः । विषयखण्डने । अञ्जसाऽऽमूलात् । क्रियमाणे सत्यपि । तस्य तथाविधभक्तस्य । सत्सु । अरुचिः । न स्यात् । साऽरुचिः । विषयेषु तु । भवेत् । अतः स कदाचिदपि न पतेदेवेति भावः ॥ २५ ॥ इतीति । इत्यमुना प्रकारेण । हरिणा । उक्तः । सः । साधुर्नित्यानन्दमुनिः । भूयः पुनरपि । तं श्रीहरिम् । पृच्छति स्म । हे हरे ! । यस्य भक्तस्य । विषयेषु । अरुचिः । स्यात् । सः । पुमान् भक्तः । कथं कैर्लक्षणैः । ज्ञेयः ॥ २६ ॥

'एवं स नित्यानन्देन सम्पृष्टः परमेश्वरः । जगाद सुखयंस्तं च सतोऽन्यान्स्वानिति प्रभुः । विषयेष्विति । हे मुने ! । इह सत्सङ्गे । यस्य भक्तस्य । विषयेषु । अरुचिः । भवेत् । स तथाविधः । पुमान् भक्तस्तु । तदीयास्वादसमये विषयोपभोगकाले । लक्षणैर्वक्ष्यमाणलक्ष्मभिः । अवगम्यते ॥२७॥ लक्षणान्याह चतुरक्षराधिकसार्द्धेन । यादृश इति । यादृशे तादृशे यथा तथाविधे । रूपे । वसने वस्त्रे । शयने शय्यायाम् । अशने भोजने च । रूपस्पर्शरसेष्वित्यर्थः । एते गन्धशब्दयोरुपलक्षणम् । अस्य विषयारुचेर्भक्तस्य । यादृशी । प्रीतिः । भवेत् । तथा तादृशी प्रीतिः । रम्येषु । तेषु रूपादिषु । नो भवेत् ॥ २८ ॥ एवमिति । एवममुना प्रकारेण । रम्यपदार्थेषु । तस्य । सर्वथा । अरुच्यैव । सः । ज्ञायते । स्वदेहनिर्वाहार्थमरमणीयविषयभोगेषु प्रीतिः रम्यविषयभोगेष्वप्रीतिश्च विषयारुचिमतो भक्तस्य लक्षणमित्यर्थः । तथा तेन प्रकारेणैव । अन्यो विषयरुचिमान् । पुरुषो भक्तः । वैपरीत्येनारम्यविषयेष्वरुच्या चेत्यर्थः । ज्ञायते । अनेनोत्तरकथनेनैतल्लक्षणज्ञानप्रश्नोऽप्यवगन्तव्यः ॥ २९ ॥ मुक्तानन्द इति । अथैवंविधश्रीहरिवाक्यश्रवणानन्तरम् । मुक्तानन्दो मुनिः । पप्रच्छ । हे हरे ! । पञ्चस्वपि । विषयेषु । पुंसो भक्तस्य । अरुचिः । कथं केन साधनेन ।

श्रीहरिरुवाच– विषयेष्वरुचिर्यस्य भवेत्स पुमानिह । तदीयास्वादसमये लक्षणैरवगम्यते ॥ २७ ॥
यादृशे तादृशे रूपे वसने शयनेऽशने । यादृश्यस्य भवेत्प्रीतिस्तथा रम्येषु तेषु नो ॥ २८ ॥
एवं रम्यपदार्थेषु तस्यारुच्यैव सर्वथा । स जायते तथैवान्यो वैपरीत्येन पूरुषः ॥ २९ ॥
मुक्तानन्दोऽथ पप्रच्छ विषयेष्वरुचिः कथम् । पञ्चस्वपि भवेत्पुंस इति पृष्टोऽब्रवीत्प्रभुः ॥ ३० ॥
सम्यक् कृष्णस्य माहात्म्यं यो विद्यात्तस्य सर्वथा । तुच्छत्वधीर्भवेत्तेषु ततः स्यादरुचिर्भृशम् ॥ ३१ ॥
कृष्णो हि साक्षाद्भगवान् वर्त्तते पुरुषोत्तमः । सर्वेषामात्मनामात्मा स्वप्रकाशोऽखिलाश्रयः ॥ ३२ ॥
तद्भयाद्वाति वातोऽपि सूर्यस्तपति तद्भयात् । फलन्त्योषधयः सर्वास्तद्भयाच्च यथाऋतु ॥ ३३ ॥

भवेत् । इतीत्थम् । पृष्टो मुक्तानन्दमुनिनानुयुक्तः । प्रभुः श्रीहरिः । अब्रवीत् ॥३०॥ सम्यगिति । हे मुने ! । यो भक्तः । कृष्णस्य । माहात्म्यम् । सम्यक् यथार्थतः । विद्यात् । तस्य भक्तस्य । तेषु विषयेषु । सर्वथा । तुच्छत्वधीः । भवेत् । ततस्तदनन्तरम् । तेषु । भृशमतिशयेन । अरुचिः । स्यात् ॥ ३१ ॥ माहात्म्यवेदनप्रकारमाह षड्भिः । कृष्ण इति । हे मुने ! । साक्षात्प्रत्यक्षः । भगवान्सकलैश्वर्यनिधिः । पुरुषोत्तमः । कृष्णः । सर्वेषाम् । आत्मानां जीवानाम् । आत्माऽन्तर्यामी । स्वप्रकाशः स्वत एव प्रकाशवान् । अखिलाश्रयोऽक्षरादिसर्वाधारः । वर्त्तते । मनुष्यतया प्रतीयमानोऽप्येवंभूतोऽस्तीत्यर्थः ॥ ३२ ॥ तदिति । वातः पवनोऽपि । तद्भयात्साक्षात्कृष्णभयात् । वाति सदा सञ्चरति । सूर्यो मार्त्तण्डः । तद्भयात् । तपति विश्वं प्रकाशयति । सर्वाः । ओषधयः । तद्भयात् । यथाऋतु स्वस्वर्त्तुकालमनतिक्रम्य । फलन्ति ॥ ३३ ॥

प्रकाशयतीति । चन्द्रः । वह्निश्च । तद्भयात् । लोकान् भुवनानि । प्रकाशयति । अब्धिः । तद्भयादेव । तत्कृतां भगवता वेलाऽनतिक्रमणतया निबद्धाम् । मर्यादाम् । न जहाति ॥ ३४ ॥ रक्षन्तीति । लोकपाला इन्द्रादयः । तद्भयात् । स्वस्वमर्यादां वर्षासु जलवर्षणादिस्वस्वस्थितिम् । रक्षन्ति पालयन्ति । मृत्युश्चान्तकोऽपि । तस्य भगवतः । मर्यादाम् । हातुं त्यक्तुम् । कचित्कदाचिदपि । न शक्नोति ॥ ३५ ॥ काल इति । कालः । कर्म । स्वभावः । माया । पुरुषः । अक्षरं ब्रह्म च । एताः कालादयः । तच्छक्तयोऽनेकाण्डसर्गादावुपकरणभूतानि तदैश्वर्याणि । सन्ति । ततो हेतोः । असौ साक्षाच्छ्रीकृष्णः । परमेश्वरः । अस्ति । 'तमीश्वराणां परमं महेश्वर'मित्यादिश्रुतिभ्यः । सर्वैश्वर्याणि यदपि स्वस्यैव तदपि प्रभुः । हरिः । परोक्षत्वेनाह स्वपरोक्षप्रियत्वतः ॥ ३६ ॥ कृष्णस्येति । श्रीकृष्णस्य सम्बन्धिनः । सुखस्य । अग्रे पुरः । तदन्यानि भगवन्मूर्त्तीक्षणसुखेतराणि । अखिलानि स्वर्गसुखादारभ्याक्षरसुखान्तानि सर्वाण्यपि । सुखानि तु । परिछिन्नानि परिछेदयुक्तानि । परमेयानीत्यर्थः । तुच्छानि अल्पानि । क्षय्याणि चतुर्विधप्रलयैः क्षयवन्ति च । सन्ति । महातेजसोऽग्रे दीपप्रभावद्भगव-

प्रकाशयति लोकांश्च चन्द्रो वह्निश्च तद्भयात् । मर्यादां न जहात्यब्धिस्तद्भयादेव तत्कृताम् ॥३४॥ रक्षन्ति स्वस्वमर्यादां लोकपालाश्च तद्भयात् । मृत्युश्च तस्य मर्यादां हातुं शक्नोति न कचित् ॥ ३५ ॥ कालः कर्मस्वभावश्च माया च पुरुषोऽक्षरम् । एतास्तच्छक्तयः सन्ति ततोऽसौ परमेश्वरः ॥ ३६ ॥ श्रीकृष्णस्य सुखस्याग्रे तदन्यान्यखिलान्यपि । परिच्छिन्नानि तुच्छानि क्षय्याणि च सुखानि तु ॥ ३७ ॥ एवं निश्चित्य वैराग्यं कार्ष्णेतरसुखेषु तु सम्प्राप्त आत्मनिष्ठां च यः पुमान् कृष्णभक्तिभाक् ॥३८॥ तस्य पुंसस्तु सर्वेषु विषयेष्वैहिकेषु च । आमुष्मिकेष्वपि सदा वर्त्तेतारुचिरेव हि ॥ ३९ ॥ तथा महत्तां कृष्णस्य ज्ञात्वा तस्य दृढाश्रयम् । कुर्वतः कामलोभादिशत्रुभ्यो न भयं भवेत् ॥ ४० ॥ तं कोऽपि कृष्णनिष्ठाया नास्ति चालयितुं क्षमः । वलं भागवतं प्राप्तं मानवो वाऽमरोऽपि वा ॥ ४१ ॥

त्सुखाग्रेऽक्षरसुखमपि तुच्छं तदा तदर्वागर्वाक् सुखस्याल्पत्वस्य क्षययुक्तत्वस्य च का वार्त्तेत्यर्थः ॥ ३७ ॥ एवमिति । एवममुना प्रकारेण । निश्चित्य भगवन्माहात्म्यनिश्चयं कृत्वा । कार्ष्णेतरसुखेषु । वैराग्यम् । सम्प्राप्तः । आत्मनिष्ठां च । सम्प्राप्तः यः । पुमान् स्वधर्मयुक्तो भक्तः । कृष्णभक्तिभाक् सप्रेमनवधाश्रीकृष्णभक्तियुक्तः । भवेत् । तस्येत्युत्तरेण सम्बन्धः ॥ ३८ ॥ तस्येति । तस्य तथाविधस्य । पुंसो भक्तस्य तु । ऐहिकेषु इह लोकभवेषु । आमुष्मिकेषु परलोकभवेष्वपि । सर्वेषु । विषयेषु । सदा । अरुचिरेव । वर्त्तेत । इदमेव तस्यारुचिसाधनमित्यर्थः ॥ ३९ ॥ कृष्णप्रीत्यै एवमिहामुत्रसुखेष्वरुचिं सम्पादयतस्तस्यावान्तरफलप्राप्तिमाह । तथेति । तथा तेन प्रकारेणैव । कृष्णस्य । महत्तां माहात्म्यम् । ज्ञात्वा । दृढाश्रयमुक्तरीत्या सुदृढतदेकान्तिकभक्तिम् । कुर्वतः । तस्य भक्तस्य । कामलोभादिशत्रुभ्यः । भयमपि । न भवेत् ॥ ४० ॥ तमिति । किञ्च । भागवतम् । वलं साक्षाद्भगवन्माहात्म्यज्ञानसम्बन्धिसामर्थ्यमित्यर्थः । प्राप्तम् । तं तथाविधं भक्तम् । कृष्णनिष्ठायाः

उक्तविश्वश्रीकृष्णस्वरूपस्थितेः । चालयितुम् । मानवो नृपादिर्जनः । अथवा । अमरो ब्रह्मेन्द्रादिर्देवः । अथवा । कोऽपि ब्रह्मादिभ्यो महान् यः कश्चनापि । क्षमः समर्थः । नास्ति ॥ ४१ भगवानिति । साक्षात्प्रत्यक्षः । भगवानपि । निजमाहात्म्यवेदिनम् तं स्वभक्तम् । वैरोचनिं बलिमिव । स्वतः स्वस्वरूपात् । चालयितुम् । शक्तः क्षमः । नैव भवेत् । अनेन भगवति विद्यमानाया भक्तस्य निष्ठायाश्चरमा काष्ठोक्ता ॥ ४२ ॥ भक्त इति । एवंविधः । भक्तः । अन्येषां स्वेतरेषाम् । महतां गुणगरिष्ठानाम् । सतां साक्षाद्भक्तसाधूनाम् । भक्तानां साक्षाद्भगवदाश्रयिणां सत्सङ्गिनां च । माहात्म्यम् । अधिकं स्वस्मादतिशयितम् । उद्धवः । गोपिनाम् । यथा । तथा । विद्याज्ज्ञानीयात् ॥ ४३ ॥ निर्मान इति । स भक्तः । तेषां साधूनाम् । अग्रे पुरः । दासवत् । निर्मान एव । वर्त्तेत । एवं वक्ष्यमाणप्रकारेण । विचार्य । परुषां कर्कशामपि । तद्वाचं साधुवचनम् । सहेत ॥ ४४ ॥ विचारमाह द्वाभ्याम् । धन्य इति । यद्यस्माद्धेतोः । अहम् । सताम् । परुषाम् । वाचम् । सहे । अतः । धन्यः कृतार्थ एव । अस्मि । एवं सदुदितपरुषवाक्सहने स्वकृतार्थतां विचार्य तेषां महिमानं विचारयति । ये । एते सन्तः । नराकारम् । साक्षात्कृष्णम् । समुपासते एका-

भगवानपि तं साक्षान्निजमाहात्म्यवेदिनम् । नैव चालयितुं शक्तो वैरोचनिमिव स्वतः ॥ ४२ ॥
भक्त एवंविधोऽन्येषां भक्तानां महतां सताम् । माहात्म्यमधिकं विद्याद्गोपीनामुद्धवो यथा ॥ ४३ ॥
निर्मान एव वर्त्तेत तेषामग्रे स दासवत् । परुषामपि तद्वाचं सहेतैवं विचार्य च ॥ ४४ ॥
धन्य एवास्मि यद्वाचं सहेऽहं परुषां सताम् । कृष्णं साक्षान्नराकारं य एते समुपासते ॥ ४५ ॥
यद्येवं नाकरिष्यं तज्ज्ञातिबन्धुनृपद्विषाम् । असहिष्ये तिरस्कारान् पापिनां स्वार्थदर्शिनाम् ॥ ४६ ॥
सत्सभायां क्वचिन्मानमप्राप्यापि स्वचेतसि । स खेदं प्राप्नुयान्नैव स्वस्यैवावरतां विदन् ॥ ४७ ॥
यथा सभायां सम्राजो रङ्कः कश्चित्पुमान् गतः । अप्राप्य मानं नो खिद्येज्जानन्स्वानधिकारिताम् ॥ ४८ ॥

न्तिकभावेन सेवन्ते । साक्षाद्भगवद्यथार्थमहिमाभिज्ञाः स्वधर्माद्यङ्गचतुष्टयवत्त्वेन तदेकान्तिकभक्तास्ते एतेऽतिमहान्तः सन्त इति भावः ॥ ४५ ॥ यदीति । यदि । एवमुक्तप्रकारेण सदुदितपरुषवचनसहनम् । अहम् । नाकरिष्यम् । तर्हि । पापिनाम् । स्वार्थदर्शिनां स्वस्वार्थसमीक्षकाणाम् । ज्ञातयश्च बन्धवः पितृव्यादयश्च नृपश्च द्विषः शत्रवश्च तेषाम् । तिरस्कारान्परुषवचनानि । असहिष्ये ॥ ४६ ॥ सदिति । हे मुने ! । स तथाविधो भक्तः । क्वचित् । सत्सभायाम् । मानम् । अप्राप्यापि । स्वस्य । अवरतां सभानिषण्णसाधुभ्यो हीनतामेव । विदन् जानन्सन् । स्वचेतसि । खेदम् । नैव । प्राप्नुयात् ॥ ४७ ॥ एतदेव दृष्टान्तेन विशदयति द्वाभ्याम् । यथेति । यथा । सम्राजश्चक्रवर्त्तिनृपस्य । सभायाम् । गतः । कश्चित् । रङ्कः । पुमान् । मानम् । अप्राप्य । स्वानधिकरितां स्वकीयां तत्र मानानर्हताम् । जानन् सन् । नो खिद्येत्स्वमनसि खेदं न प्राप्नुयात् ॥ ४८ ॥

तथेति । तथैव । नष्टदेहात्मधीः स्वदेहे आत्मबुद्धिवर्जितः । सः । भक्तोऽपि । स्वस्यैव । अनधिकारिताम् । जानीयात् । सतां स्वस्मै मानमददतां साधूनाम् । अगुणं दोषं तु । कचित्कदाचिदपि । न जानीयात् । अतः स्वमनसि खेदं नाप्नुयादिति भावः ॥४९॥ उक्तार्थं निगमयति । एवमिति । हे मुने ! । एवममुना प्रकारेण । कृष्णमाहात्म्यसम्यग्ज्ञानेन । देहिनां भक्तानाम् । कः । कः । सद्गुणः । न सिध्येत् । अपि तु सर्वे सद्गुणाः सिध्येयुरित्यर्थः । कः । कः । दुर्गुणो दोषः । न नश्येत् । अपि तु सर्वेऽपि दोषा विनश्येयुरित्यर्थः ॥ ५० ॥ हरीति । इत्थमेवंविधाम् । हरिवदनविनिःसृताम् । वचनसुधाम् । निपीय । स मुक्तानन्दमुनिः । भूरिम् । तोषम् । अगमत् । सदसि । उपविष्टाः । तदितरे मुक्तानन्दमुनेरन्ये । ये विरक्तास्त्यागिजनाः । तदनु तेषां पश्चान्निषण्णाः । ये गृहाश्रमिणश्च । ते सर्वे चापि । भूरिं तोषमगमन् ॥ ५१ ॥ नित्यानन्दमुनेर्मुक्तानन्दस्य च महामुनेः । प्रश्नोत्तराणि यः कृत्वा तावन्यांश्च सतो निजान् ॥ १ ॥ श्रीहरिर्हर्षयामास भृशं प्रश्नोत्तरैस्तु तैः । तस्य तान्येव वाक्यानि सन्तु मद्धृदि सर्वथा ॥ २ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्स्नुरघुवीराचार्यविरचितायां सेतुमाला-

तथैव सोऽपि जानीयात्स्वस्यैवानधिकारिताम् । नष्टदेहात्मधीर्भक्तो नागुणं तु सतां कचित् ॥ ४९ ॥ एवं हि
कृष्णमाहात्म्यज्ञानेन देहिनाम् । कस्को न सद्गुणः सिध्येन्नश्येत्कस्को न दुर्गुणः ॥ ५० ॥ हरिवदनविनिःसृतां
स इत्थं वचनसुधामगमन्निपीय तोषम् । सदसि तदितरे च ये विरक्तास्तदनुगृहाश्रमिणश्च तेऽपि भूरिम् ॥ ५१ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते शताधिकपञ्चविंशतितमस्तरङ्गः ॥ १२५ ॥ १७ ॥

शकाब्दे विक्रमार्कस्य नगाश्ववसुभूमिते । पौषशुक्लप्रतिपदि वचोऽमृतमिदं हरेः ॥ १ ॥
ग्रामे लौहाह्वये तत्र निलये सूरभूपतेः । मञ्चोतमे निषण्णोऽभूत्स त्यागिगृहिभिर्वृतः ॥ २ ॥
सुश्वेतपरिधानीयवासाः श्वेतशिरःपटः । उष्णकारक्तनीशारः श्वेतश्रवणवन्धनः ॥ ३ ॥

ख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां शताधिकपञ्चविंशतितमस्तरङ्गः ॥ १२५ ॥ १७ ॥

निश्चयः पक्वतां यायाच्छ्रीहरेस्तु नराकृतेः । यथा तथा स्पष्टमेव प्रोक्तमष्टादशे ततः ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८७७) पौषशुक्लप्रतिपदि पौषमासस्य शुक्लपक्षसम्बन्धिन्यां प्रतिपत्तिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ ग्राम इति । तत्र तिथौ । लौहाह्वये । ग्रामे । सूरभूपतेः । निलये दुर्गान्तर्वर्तिभवने । मञ्चोत्तमे स्वास्तृतश्रेष्ठपर्यङ्कासने । त्यागिगृहिभिर्नानादेशसमायातैस्त्यागि गृहिभक्तवृन्दैः । वृतः सभायां परिवेष्टितः । स श्रीहरिः । निषण्णः । अभूत् । स्वान्ध्यभगवन्नीराजनान्ते सत्कृतां सतालिकोच्चध्वनिं स्तुतिं च श्रुत्वोपविवेश ॥ २ ॥ सुश्वेतेति । सुश्वेतमत्युज्ज्वलं परिधानीयवासोऽधोवसनं यस्य सः । श्वेतो वलक्षः शिरःपटः उष्णीषं यस्य सः । उष्णक उष्णतोत्पादनगुण आरक्त ईषद्रक्तवर्णश्च नीशारो यस्य सः । श्वेतं श्रवणवन्धनं कर्णवन्धनवासो यस्य सः ॥ ३ ॥

पीतामिति । श्वेतचतुष्फालेन । संयुतामन्तर्युक्ताम् । पीतां रजनीपीतवर्णाम् । तूलपटीम् । वसानः प्रावृण्वन् । स श्रीहरिः । मुदा स्वनिदेशसद्गीतपद्याकर्णनहर्षेण । सतो मुक्तानन्दादिसाधून् । पश्यन्सन् । स्वयमेव । अब्रवीत् । इति द्वयोरेकसम्बन्धः ॥४॥ अथाक्षरधामाधिपतेः पुरुषोत्तमस्य कृष्णस्य भगवतोऽवतारिणो मम केचित्स्वयंतया केचिदेकान्तिकभक्तमुक्तेषु मद्गुणैश्वर्याद्यावेशेनेत्येवमनेकेऽवताराः सन्ति तेषां मद्गुणैश्वर्यमयत्वेन मदनन्यत्वात्कार्यार्थधृतवराहाद्याकृति मयीव प्रतीयमानं मनुष्यभावं ये मयि मन्येरंस्तेषां मत्स्वरूपयथार्थनिश्चयाभावादात्यान्तिककल्याणं न भवेदतो मनुष्यसदृशतया प्रतीयमाने मयि मनुष्यसमानधीर्न कार्या किन्त्वक्षरधाम्नि महामुक्तसेवितपादपद्मो यः सर्वपरः परमेश्वरः स एवायमस्तीति मत्स्वरूपं निश्चेतव्यमित्यर्थोक्त्यै स्वस्य परोक्षप्रियत्वेन परोक्षोक्त्या तथाविधं स्वं स्वयमेव कथयितुमारभते । भक्त्येति । हे साधवः ! । इह सत्सङ्गे । सर्वेषां भक्तानाम् । भगवतः साक्षाद्धरेः । भक्त्यैकान्तिकोपासनाया । श्रेय आत्यन्तिककल्याणम् । जायते । तस्या भक्तेः । मूलमुत्पत्तिकारणम् । तन्निश्चयः साक्षाद्भगवतोदिव्यमानुषभावैक्यज्ञाननिर्णयः । अस्ति । तं तथाविधनिश्चयं तु । अहम् । सुदुष्करं सुदुःसाध्यम् । मन्ये ॥ ५ ॥ वार्त्तामिति । निश्चयसम्बन्द्धां निश्चयसम्बन्धिनीम् । वार्त्ताम् । आवश्यकत्वतः । करोमि । तच्छ्रवणं क्रियमाणमद्वार्त्ताऽऽकर्णनम् । विना । निश्चयस्य स्वोपास्यभगवत्स्वरूपावबोधनिर्णयस्य ।

पीतां तूलपटीं श्वेतचतुष्फालेन संयुताम् । वसानः स सतः पश्यन् स्वयमेवाब्रवीन्मुदा ॥ ४ ॥
भक्त्या भगवतः श्रेयः सर्वेषामिह जायते । तस्यास्तन्निश्चयो मूलं तं तु मन्ये सुदुष्करम् ॥ ५ ॥
वार्त्तां निश्चयसम्बन्द्धां करोम्यावश्यकत्वतः । विना तच्छ्रवणं न स्यान्निश्चयस्य तु पक्वता ॥ ६ ॥
अतः प्रियाऽप्रिया वैषा मनो दत्त्वैव सादरम् । युष्माभिरञ्जसा श्रव्या न तन्निर्दोषताऽन्यथा ॥ ७ ॥
नराकृतौ भगवति यस्य स्यान्निश्चयो दृढः । तेन तन्मूलरूपं तु नरधर्मीति नेयताम् ॥ ८ ॥
भेदस्तु सर्वथा नास्ति मूलैतद्रूपयोर्हरेः । सकलैश्वर्ययुक्तत्वे सोऽस्ति तद्धर्मयोः परम् ॥ ९ ॥

पक्वता सुदृढा । न स्यात् ॥ ६ ॥ अत इति । अतो हेतोः । एषा मद्वार्त्ता । प्रिया । अथवा । अप्रिया । अस्तु । मत्स्वरूपदिव्यमानुषभावैकत्वविदां तु प्रीतिहेतुर्यथातथाविधोऽप्ययं भगवानेवेति साधारणतया मत्स्वरूपविदामेतदाकर्णनेन स्वस्थितिविपर्यासादप्रीतिहेतुर्वा भवत्वित्यर्थः । तथापि । युष्माभिः सर्वैः । मनोदत्त्वैकाग्रं मनो विधायैवेत्यर्थः । सादरं यथातथा । अञ्जसा तत्त्वतः । श्रव्या । अन्यथैतन्मद्वार्त्ताश्रवणमन्तरा । तन्निर्दोषता स्वोपास्यभगवत्स्वरूपनिश्चयनिर्दोषत्वम् । न स्यात् ॥ ७ ॥ नरेति । नराकृतौ । भगवति । यस्य भक्तस्य । दृढः । निश्चयः । स्यात् । तेन भक्तेन । तन्मूलरूपं नराकृतेर्भगवतोऽक्षरधामस्थं स्वरूपम् । नरधर्मि निस्तेजस्त्वादिमनुष्यधर्मयुक्तम् । भवति । इतीत्थम् । नेयतां न ज्ञायताम् ॥ ८ ॥ भेद इति । हरेः । मूलैतद्रूपयोः मूलस्वरूपे मनुष्यस्वरूपे चेत्यर्थः । वर्त्तमाने इति शेषः । सकलैश्वर्ययुक्तत्वे । भेदस्तु । सर्वथा सर्वप्रकारेणैव । नास्ति । किन्तु । स भेदः । तद्धर्मयोर्मूलरूपे मनुष्यरूपे च विद्यमानयोर्धर्मयोः । परं केवलम् । अस्ति । तत्र सच्चिदानन्दत्वापारतेजोमयत्वादयो मूलरूपधर्माः । निस्तेजस्त्व बाल्याद्यवस्थावत्त्वादयो मनुष्यरूपधर्माः ॥ ९ ॥

नराकृतौ स्वस्मिन् स्वेच्छया नरधर्मदर्शित्वं नटदृष्टान्तेनाह द्वाभ्याम् । स्वेति । नट इति । नटः । वेषान्तरं स्वस्वरूपेतरनानाविधवेषानिव । प्रभुः श्रीहरिः । स्वेच्छया । स्वस्मिन् । नरवन्मनुष्यतुल्यतया । निस्तेजस्त्वं तेजोरहितत्वम् । विकारितां विकारवत्त्वम् । विकारा उक्ता मोक्षधर्मेषु । 'ज्ञानेन्द्रियाणि पञ्चैव पञ्चकर्मेन्द्रियाणि च । विषयाः पञ्च चैकं विकारे षोडशं मन'इति । बाल्याद्यवस्थावत्त्वं बाल्ययौवनवार्द्धकाद्यवस्थायुक्तत्वम् । काम क्रोध भयादि च । आदि-शब्देन क्षुत्पिपासादिमत्त्वं ग्राह्यम् । लोकान् जनान् । दर्शयते । किन्तु । परमात्मनः । तस्य श्रीहरेः । तन्निस्तेजस्त्वादिकम् । स्वभावसिद्धं साहजिकम् । न तु नैवास्ति । अपि तु स्वस्मिन्स्वेच्छया तत्प्रदर्शितमस्तीति भावः । इति द्वयोरेकान्वयः ॥ १० ॥ ११ ॥ तदिति । प्रभुः श्रीहरिः । तदपि उक्तविधमनुष्यधर्मवत्त्वमपि । नृणाम् । श्रेयसे स्वभक्तानां सुखप्रदानायेत्यर्थः । यद्वा । साक्षात्स्वज्ञानप्रदानेनानेकजीवानामात्यन्तिकनिश्रेयसविधानायेत्यर्थः । कृपयाऽनन्यनिष्ठनिष्कारणापारकरुणया । ईक्षयति दर्शयते । अतो हेतोः । तद्भगवन्मनुष्यधर्मवत्त्वम् । दिव्यममायिकमेवास्ति । इतीत्थम् । ज्ञातव्यम् । लौकिकं मायिकम् । न तु नैव ज्ञातव्यम् । तथाविधत्वस्य स्वेच्छाप्रदर्शितत्वात्स्वस्मिन्मायासम्बन्धाभावाच्चेति भावः । 'जन्म कर्म च मे दिव्यम् । 'न मां कर्माणि लिम्पन्ति' । 'अजोऽपि सन्नव्ययात्मे'त्यादिभगवदुक्तेः । 'अजस्य

स्वेच्छया नरवत्स्वस्मिन्निस्तेजस्त्वं विकारिताम् । बाल्याद्यवस्थावत्त्वं च कामक्रोधभयादि च ॥ १० ॥
नटो वेषान्तरमिव लोकान् दर्शयते प्रभुः । नतु स्वभावसिद्धं तत्तस्यास्ति परमात्मनः ॥ ११ ॥
तदपि श्रेयसे नृणां कृपयेक्षयति प्रभुः । अतस्तद्दिव्यमेवेति ज्ञातव्यं नतु लौकिकम् ॥ १२ ॥
केवलं मानुषो भाव ईदृगेव हि तस्य चेत् । नित्यसिद्धस्तदा भक्त्या फलं किन्नु भवेन्नृणाम् ॥ १३ ॥
वराहरूपं धृतवान् हरिः प्रागतिकुत्सितम् । एकोर्ध्वदंष्ट्रं च खररोमशत्वक्चतुष्पदम् ॥ १४ ॥

जन्मोत्पथनाशनाये'त्यादि श्रीभागवतोक्तेश्च ॥ १२ ॥ विपक्षे दोषमाह । केवलमिति । तस्य नराकृतेर्भगवतः । ईदृक् दृष्टविधः । मानुषः । भावः मनुष्यधर्मवत्त्वमित्यर्थः केवलम् । नित्यसिद्धः स्वतः सिद्ध एव । भवेत् । चेत् । तदा । नृणां साक्षाद्भगवद्भक्तानाम् । भक्त्या तथाविधभगवद्भजनेन । किन्नु किंवा । फलम् । भवेत् । अस्यायं भावः । मनुष्यभावभाजं भगवन्तं दिव्यभावेन भजमानानां जनानां तस्मिन् यथा यथाविधैश्वर्याद्यवबोधस्तस्मिंस्तस्मिन् जने तथा तथाविधैश्वर्याविर्भावः स्यात्केवल-मनुष्यभावेन तं भजमानानां तु मानुष्यात् नाधिको भावः स्यादिति ॥ १३ ॥ वराहाद्यवताराकारास्तत्तत्कार्यार्थं धृतास्ते यथा मूलरूपे न सन्ति । तथा साम्प्रतं नराकृतौ भगवति निस्तेजस्त्वादिर्यो मनुष्यभावः कृपाविष्कृतः स मूलरूपे नास्ति । अन्यथा वराहादिभक्तानां तत्सारूप्यमुक्तिभाक्त्वेन यथा वराहादिभावः स्यात्तथा नराकृतिभगवदुपासकानामपि मनुष्यभावः स्यादिति वक्तुं वराहाद्यवतारान् दृष्टान्तयत्यष्टभिः । वराहेति । हरिः । प्राक् पुरा । अतिकुत्सितम् । एकोर्ध्वदंष्ट्रमेकोन्न-तदाढम् । खराणि तीव्राणि रोमशानि बहुरोमाणि यस्यां सा त्वक् यस्य तत् । चतुष्पदम् चतुरङ्घ्रिकम् । वराहरूपम् । धृतवान् ॥ १४ ॥

मत्स्येति । मत्स्यरूपः । कूर्मरूपः । अतिभयानकः । नृसिंहो नृहरिरूपः । हयग्रीवो हयास्यरूपः । वामनः खर्वरूपश्च । इत्येवम् । हरिः । कुरूपधृत् आसीत् ॥१५॥ य इति । तेन हरिणा । यदा यदा । यादृशः । यः । यः । अवतारः । धृतः । तदा तदा । लोका जनाः । तादृशम् । तम् । तमवतारम् । समुपासत ॥ १६ ॥ भक्ता इति । भक्तास्तत्तदुपासकाः । ते जनाः । वपुषः स्वस्वदेहस्य । अन्तेऽवसाने । तद्धाम तत्पदम् । प्राप्ताः । तदा । तत्र । धामनि । तं भगवन्तम् । तादृशं तादृशं वराहादिरूपम् । वीक्षन्ते । किन्तु । अपि तु तथा तं नैव वीक्षन्ते इत्यर्थः ॥१७॥ तदिति । ये भक्ताः । तत्तद्रूपं वराहमत्स्यादिरूपम् । हरिम् । पतिभावेन । भेजिरे । ते भक्ताः । तदा देहं त्यक्त्वा भवद्धामप्राप्तिसमये । स्वेषां स्वस्वात्मानम् । वराहादिभावं शूकरीमत्सीप्रभृतिभावम् । लेभिरे किम् । अपि तु तं नैव लेभिरे ॥१८॥ तदिति । ये । भक्ता मित्रभावेन तत्तद्वराहादिरूपं भजमाना जनाः । तदा तस्मिन्समये । तत्तत्सरूपतामुक्तिं वराहमत्स्यादीनां तेषां तेषां स्वेष्टदेवानां सम्बन्धिसमानरूपताप्तिलक्षणां सारूप्यमुक्तिम् । प्रापुः । ते भक्ताः । अत्र लोके । मनुष्यं मनुष्यभावम् । विहाय । शूकरादितां वराहमत्स्यादिभावम् । प्रापुः ! किम् । अपि तु वराहादिभावं ते न

मत्स्यरूपः कूर्मरूपो नृसिंहोऽतिभयानकः । हयग्रीवो वामनश्चेत्येवमासीत्कुरूपधृत् ॥ १५ ॥ यो यो यदा यदा तेनावतारो यादृशो धृतः । तं तं तदा तदा लोकास्तादृशं समुपासत ॥१६॥ भक्तास्ते वपुषोऽन्ते तद्धाम प्राप्तास्तदा तु तम् । तादृशं तादृशं किन्तु वीक्षन्ते तत्र धामनि ॥ १७ ॥ तत्तद्रूपं हरिं ये च पतिभावेन भेजिरे । ते वराहादिभावं किं तदा स्वेषां च लेभिरे ॥ १८ ॥ तत्तत्सरूपतामुक्तिं प्रापुर्भक्ताश्च ये तदा । ते विहायात्र मानुष्यं प्रापुः किं शूकरादिताम् ॥ १९ ॥ तादृशे मूलरूपे तु सम्भवेदेवमेव हि । न त्वस्ति तादृशत्वं हि रमाकान्तस्य सर्वथा ॥२०॥ यादृशं तु भवेत्कार्यं स धृत्वा तादृशं वपुः । तद्विधाय पुनः स्वेन रूपेणास्ते विहाय तत् ॥ २१ ॥ यादृग्रूपो हरिर्नित्यं वर्त्ततेऽक्षरधामनि । तादृशं श्रूयतां वच्मि नोपमा यस्य कुत्रचित् ॥ २२ ॥

प्रापुरेव ॥१९॥ तादृश इति । मूलरूपेऽक्षरधामस्थे भगवतः सनातनदिव्यरूपे । तादृशे वराहमत्स्यादिसमाने सति तु । एवमुक्तरीत्या तद्भक्तास्तं तथाद्रष्टारः स्वयं तथाभावाश्चेत्येवम् । सम्भवेत् । अतः । रमाकान्तस्याक्षरधामावस्थितश्रीकृष्णस्य । तादृशत्वं वराहमत्स्यादिरूपत्वम् । सर्वथा । न तु नैवास्ति । हि द्वयमस्यार्थस्यैव सत्यत्वं वदति ॥ २० ॥ यादृशमिति । सोऽक्षरधामस्थो हरिः । यादृशम् । कार्यं प्रयोजनम् । भवेत् । तादृशम् । वपुर्वराहादिशरीरम् । धृत्वा । तत्कार्यम् । विधाय कृत्वा । तद्वपुर्वराहादि शरीरम् त्यक्त्वा । पुनः । स्वेन । रूपेण । आस्ते तिष्ठति ॥ २१ ॥ यादृगिति । हे साधवः ! । अक्षरधामनि । हरिः । यादृग्रूपो यथाविधस्वरूपः । नित्यम् । वर्त्तते । तादृशं तथाविधस्वरूपं हरिम् । वच्मि । श्रूयतां तत्स्वरूपं मन्मुखादाकर्ण्यताम् । यस्य तत्रत्यहरिरूपस्य । उपमोपमानभूतमन्यत्स्वरूपम् । कुत्रचित् केपुचिदपि धामसु लोकेषु चेत्यर्थः । नास्ति । तथा च श्रुतिः । 'न सदृशे तिष्ठति रूपमस्ये'ति । 'न तत्समश्चाभ्यधिकश्च दृश्यते'इत्यादिश्च ॥ २२ ॥

सदिति । यो हरिः । सच्चिदानन्दरूपः । अतिलावण्यः । लावण्यलक्षणमुक्तं पालने । 'मुक्ताफलेषु छायायास्तरलत्वमिवान्तरा । प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यत' इति । दिव्यविग्रहोऽमायिकसनातनमूर्त्तिः । अप्राकृतेन्द्रियो दिव्यचक्षुःश्रोत्रादिकरणः । दिव्यैरमायिकैर्वासोभिरलङ्कारैश्च मण्डितोऽतिशोभनः । यद्वा । दिव्यावासोऽलङ्कारा-मण्डिता येन सः ॥२३॥ दिव्येति । यः । दिव्यानि चन्दनानि चर्चितघृष्टागुर्वादिगन्धाश्च पुष्पस्रक्शेखरोत्तंसाः पुष्पसम्बन्धिनो ये हारापीडावतंसाश्च तैः राजितः शोभमानः । कोटिकन्दर्पाणामपरिमितमन्मथानामिव सौन्दर्यं यस्य सः । कोटिकन्दर्पेषु सौन्दर्यं यस्येति वा । शान्तमूर्त्तिः सौम्याकृतिः । दयानिधिर्निरवधिकातिशयादया-ऽम्बुद्धिः ॥ २४ ॥ एकेति । यः । एकैकरोमभ्यः शारीरैकैकलोमभ्यो निर्गच्छन्निर्यद्यत्कोटिकोट्यर्कतेजस्तेन । अनेकान्तिकदुर्दृश्य एकान्तिकभक्तभिन्नभक्तैर्दुःखेनापि द्रष्टुमनर्हः । अनन्तानामपरिमितानां शक्तीनां राधारमादीनां कलानामणिमाद्यैश्वर्याणामधिप एक एव पतिः ॥ २५ ॥ अनन्तेति । यः । अनन्तकोटिब्रह्माण्डमहाराजो नैक-कोट्यण्डप सामन्तमौलिकिरीटसङ्घघृष्टपादपीठो महाराजाधिराजः । महेश्वर ईश्वरेश्वरः । 'तमीश्वराणां परमं महेश्वर'मिति श्रुतेः । कालकालः सर्वकालनस्य कालस्यापि कालनः

सच्चिदानन्दरूपोऽतिलावण्यो दिव्यविग्रहः । योऽप्राकृतेन्द्रियो दिव्यवासोऽलङ्कारमण्डितः ॥ २३ ॥ दिव्यचन्दन-पुष्पस्रक्शेखरोत्तंसराजितः । कोटिकन्दर्पसौन्दर्यः शान्तमूर्तिर्दयानिधिः ॥ २४ ॥ एकैकरोमनिर्गच्छत्कोटिकोट्यर्क-तेजसा । अनेकान्तिकदुर्दर्शोऽनन्तशक्तिकलाधिपः ॥२५॥ अनन्तकोटिब्रह्माण्डमहाराजो महेश्वरः । कालकालः स्वतन्त्रश्च नियन्ता सकलात्मनाम् ॥२६॥ सुरूपकोटियोषेक्षासुखादिविषयोद्भवम् । सुखं यदीयसौख्याग्रे प्रयात्येवा-तितुच्छताम् ॥२७॥ सोऽसौ कृष्णः सदैवास्ते द्विभुजो मुक्तमोदनः । चतुर्दोः स्वेच्छया क्वापि क्वापि चाष्टभुज-स्तथा ॥ २८ ॥ स एव हि वराहादिरूपं रामादि चेच्छया । तत्तत्कार्याय धत्ते स्वं सकलैश्वर्यमत्यजन् ॥ २९ ॥

। 'ज्ञः कालकालो गुणी'ति श्रुतेः । स्वतन्त्रः स्वैकाधीनसकलैश्वर्यः । सकलात्मनां सर्वेषां जीवेश्वराणाम् । नियन्ता स्वीयान्तर्यामिशक्त्या नियामकः । 'य आत्मान-मन्तरो यमयतीति श्रुतेः । 'अहमात्मनां धात'रिति स्मृतेश्च ॥ २६ ॥ सुरूपेति । सुरूपाणामतिशयितरूपवतीनां कोटियोषाणामपरिमितसुन्दरीणामीक्षासुखं रूपदर्शनसुख-मादिर्येषां ते च ते विषया महान्ति रसादिविषयसुखानि तेभ्य उद्भव उत्पत्तिर्यस्य तम् । सुखम् । यदीयसौख्याग्रे निरवधिकातिशयसुखरूपस्य कोटिमदनमनो मोहनस्य भग-वतो मूर्त्तीक्षणादिजन्यसुखस्य पुरत इत्यर्थः । अतितुच्छतामत्यल्पत्वमेव । प्रयाति । अत्र पञ्चश्लोकीस्थयच्छब्दानामनन्तरश्लोकस्थतच्छब्देन सम्बन्धः ॥ २७ ॥ स इति । स उक्तविशेषणविशिष्टः । असौ भवन्नयनविषयस्थः । कृष्णः । सदैव । द्विभुजः । आस्ते । मुक्तमोदनोऽक्षरब्रह्मभावापन्नानन्तमुक्तात्यानन्दजनकः । सः । क्वापि कदाचित् । स्वेच्छया स्वभक्तेच्छया । चतुर्दोश्चतुर्भुजः । आस्ते । क्वापि । तथा । स्वेच्छयैव । अष्टभुजः । आस्ते । चकारात्स्वेच्छासहस्रभुजोऽप्यास्ते इति बोध्यम् ॥ २८ ॥ स इति । स श्रीहरिरेव । स्वं स्वकीयम् । सकलैश्वर्यम् । अत्यजन्सकलैश्वर्यसहितः सन्नेवेत्यर्थः । तत्तत्कार्याय तत्तद्भूम्युद्धरणादि रावणवधादि

च यत्प्रयोजनं तदर्थमित्यर्थः । इच्छया स्वसङ्कल्पेन । वराहादि रामादि च । रूपम् । धत्ते ॥ २९ ॥ यथेति । असौ हरिः । तत्र तत्र तेषु तेषु वराहादिषु रामादिषु च स्वीयरूपेषु । यथोपयोगं यावत्प्रयोजनम् । स्वैश्वर्यम् । निजेच्छया । आविष्कृत्य । पुनः । तत्स्वैश्वर्यम् । स्वस्मिन् । तिरोधापयत्यन्तर्धत्ते ॥ ३० ॥ एतमर्थं श्रीकृष्णे दर्शयन्नाह द्वाभ्याम् । कृष्ण इति । यथा । कृष्णो वसुदेवनन्दनः । स्वपितृभ्यां वसुदेवदेवकीभ्याम् । स्वजन्मकाले । अक्रूराय । यमुनातोये । उद्धवाय । प्रभासे । रुक्मिण्यै । प्रेमकलहावसरे च । चतुर्भुजम् । निजरूपम् । अदीदृशद्दर्शयामास ॥३१॥ द्वीति । द्विबाहुः सर्वदा द्विभुजः । स कृष्णः । अर्जुनाय । चतुर्बाहु । रूपम् । अष्टबाहु । रूपम् । सहस्रबाहु । रूपं च । इच्छया । समदीदृशत् । अनया चतुःश्लोक्या समभिहितस्यार्थस्यायं भावः । सर्वेषामपि भगवदवताराणामवतारतया तुल्यत्वेऽपि तेष्वेतावान् भेदोऽस्ति । स तु केचित्स्वयंतयाऽवताराः केचिद्ब्रह्मात्मभावापन्नैकान्तिकमुक्तेषु स्वगुणैश्वर्याद्यावेशेनावतारा इति । तत्र स्वयंतयाऽवतारास्तु स्वीयेभ्यः सकलैश्वर्यप्रदर्शनं कारयन्ति । आवेशावतारास्तु स्वाश्रितेभ्यो यथोपयुक्तपरिमितैश्वर्यं प्रदर्शयन्तीति ॥ ३२ ॥ एवं पूर्वोक्तसन्दर्भेणावतारिणः स्वस्य स्वस्यावताराणां च भेदं

यथोपयोगं स्वैश्वर्यं तत्र तत्र निजेच्छया । आविष्कृत्य पुनः स्वस्मिंस्तत्तिरोधापयत्यसौ ॥ ३० ॥
कृष्णो यथा स्वपितृभ्यामक्रूरायोद्धवाय च । अदीदृशच्च रुक्मिण्यै निजरूपं चतुर्भुजम् ॥ ३१ ॥
द्विबाहुश्च चतुर्बाहु सोऽष्टबाह्वर्जुनाय तु । सहस्रबाहु रूपं च समदीदृशदिच्छया ॥ ३२ ॥
अतः स सकलैश्वर्यसम्पन्नो हि नराकृतिः । अस्तीत्येवावधातव्यं न ह्यसौ मर्त्यधर्मवान् ॥ ३३ ॥
नृत्वेऽपि दिव्यतैवास्य बोधव्या सर्वदाऽस्ति सा । एनमेवार्ककोट्याभं यदीक्षन्ते समाधिगाः ॥ ३४ ॥
सुखिदुःखिविकारित्वं यत्तु तस्मिन्समीक्ष्यते । स्वेच्छाप्रदर्शिता सा तु लीलैवास्येति गम्यताम् ॥ ३५ ॥

तदैक्यं चोक्त्वा साम्प्रतमुत्तरग्रन्थेन सर्वावतारधरः सदाऽक्षरधामनिवासी स्वसकलैश्वर्यसम्पन्नः नराकृतिर्भक्तिधर्मात्मजः । साक्षात्स्वयं श्रीहरिः स्वस्मिन्प्रतीयमानमनुष्यभावनिषेधपूर्वकं स्वकीयदिव्यभावं स्थापयन्सन् स्वस्वरूपनिश्चयस्य स्वभक्तकर्त्तव्यां दृढतां पुनर्विशेषत आह । इति । अत इति । अतो हेतोः । नराकृतिः । स उक्तविधः । असौ युष्मन्नयनविषयः श्रीहरिः । सकलैश्वर्यसम्पन्नः । अस्ति । मर्त्यधर्मवान्केवलमनुष्यधर्मयुक्तः । नास्ति । हि । इत्यमेव । अवधातव्यं निश्चेतव्यम् ॥ ३३ ॥ नृत्वे इति । अस्य श्रीहरेः । नृत्वे मनुष्यभाववत्त्वेऽपि । सर्वदा । सोक्तविधा । दिव्यतैव । बोधव्या । यद्यतो हेतोः । समाधिगा एतत्कृपया समाधिं प्राप्ता जनाः । एनं साक्षाच्छ्रीहरिमेव । अर्ककोट्याभं कोटिकोटिसूर्यप्रभाभास्वरम् । ईक्षन्ते । अत्रोक्तार्ककोट्याभमिति विशेषणं पूर्वोक्तदिव्यताबोधकविशेषणमात्राणामुपलक्षणम् ॥३४॥ सुखीति । तस्मिन्नराकृतौ हरौ । यत् । सुखिदुःखिविकारित्वं सुखित्वं दुखित्वं विकारित्वं चेत्यर्थः । एतानि पूर्वोक्तनिस्तेजस्त्वादीनामुपलक्षणानि । समीक्ष्यते । सा सुखित्वादिकं त्वित्यर्थः । विधेयप्राधान्यात्स्त्रीलिङ्गनिर्देशः । स्वेच्छाप्रदर्शिता स्वकीयेच्छया प्रकाशिता । अस्य नराकृतेर्भगवतो हरेः । लीलैवास्ति । इतीत्थम् । गम्यताम् ॥ ३५ ॥

सेति । सा लीलापि । नृणां स्वभक्तानाम् । कल्याणरूपैवास्ति । अन्यमर्त्यवत् कर्माधीनेतरमनुष्यसमाना सती । प्राकृता । न तु नास्त्येव । एवम-मुना प्रकारेण । ज्ञानिनो भगवदेकान्तिकभक्ताः । विदुर्जानन्ति । इतीत्थम् । अवधातव्यं भवद्भिर्निश्चेतव्यम् ॥ ३६ ॥ अतीति । तस्य साक्षाद्धरेः । अतिप्रकाशयुक् दिव्यभावयुक्तम् । दर्शनम् । सर्वेषाम् । न जायते । यत् । सापि । स्वतन्त्रस्य । तस्य हरेः । इच्छा सङ्कल्पोऽस्ति । इतीत्थम् । दृश्यतां ज्ञायताम् ॥ ३७ ॥ एष इति । प्रभुः श्रीहरिः । एष जनः । मम मदीयम् । दिव्यत्वमतिप्रकाशमयरूपादिमत्त्वम् । पश्यतु । इतीत्थम् । यदि । इच्छेत् । तदा । प्राकृतः पामरोऽपि । असाधनो वैराग्यादिसाधनसम्पत्तिरहितोऽपि । स जनः । तद्दिव्यत्वम् । वीक्षेत ॥ ३८ ॥ अत इति । अतो हेतोः । त्राकारे मनुष्याकृतौ । साक्षात्प्रत्यक्षे । भगवति श्रीहरौ । सर्वदा सर्वकालम् । दिव्यभावना विधातव्या । मर्त्यभावस्तु । क्वचित्कदाचिदपि । न विधातव्यः ॥ ३९ ॥ सामान्यत इति । प्रभौ प्रत्यक्षे श्रीहरौ । मर्त्यभावम् । सामान्यतः साधारणतया तु । सर्वे जनाः । पश्यन्ति । अयं जनः । भक्तः स्वधर्मादियुक्ततया हरेरुपासकः । इत्याख्यैवंभूता संज्ञा तु ।

साऽपि कल्याणरूपैव नृणां न त्वन्यमर्त्यवत् । प्राकृतेत्यवधातव्यमेवं हि ज्ञानिनो विदुः ॥ ३६ ॥ अतिप्रकाशयुक् तस्य यत्सर्वेषां न दर्शनम् । जायते साऽपि तस्येच्छा स्वतन्त्रस्येति दृश्यताम् ॥ ३७ ॥ एष पश्यतु दिव्यत्वं ममे तीच्छेद्यदि प्रभुः । तदा तु तत्स वीक्षेत प्राकृतोऽसाधनोऽपि ना ॥ ३८ ॥ अतः साक्षाद्भगवति दिव्यभावना । सर्वदैव विधातव्या मर्त्यभावस्तु न क्वचित् ॥३९॥ सामान्यतो मर्त्यभावं सर्वे पश्यन्ति हि प्रभौ । अयं तु भक्त इत्याख्या दिव्यभावेक्षितुर्भवेत् ॥ ४० ॥ मर्त्यभावेक्षणे स्यातां दृष्टान्तेनात्मनो हरौ । विकारित्वादिदोषौघनित्यता-कर्मतन्त्रते ॥ ४१ ॥ तद्दर्शी तु पुमान्नूनमचिरेणौद्धवाध्वनः । पतितः स्यान्न सन्देहस्तदीक्ष्या दिव्यताऽस्य वै ॥ ४२ ॥ भक्तास्तदीया वर्त्तेरन्ननन्या ये च तेष्वपि । तत्पार्षदमतिः कार्या नान्यमर्त्यसमत्वधीः ॥ ४३ ॥

दिव्यभावेक्षितुः हरेरुक्तविधदिव्यभावेक्षकस्य जनस्यैव । भवेद्यथार्था जायेत ॥ ४० ॥ विपक्षे दोषमाह । मर्त्येति । हरौ साक्षाद्भगवति । आत्मनः स्वस्य । दृष्टान्तेन । मर्त्यभावेक्षणे मनुष्यभावपूर्वकसमीक्षणे कृते सतीत्यर्थः । विकारित्वं विकारयुक्तत्वमादिर्मुख्यं येषां ते ये दोषास्तेषामोघाः समूहास्तेषां नित्यताऽवश्ययुक्तता सा च कर्मतन्त्रऽतानेकविधकर्माधीनत्वं सा च ते । स्याताम् ॥४१॥ न केवलमुक्तदोषमात्रमेव किन्तूद्धवाध्वनः पतनमपि तस्य स्यादतो दिव्यतेक्षणं विधेयमित्याह । तदिति । तद्दर्शी साक्षाद्धरौ केवलमर्त्यभावसमीक्षकः । पुमान् भक्तस्तु । अचिरेणाल्पकालतः । औद्धवाध्वनः सत्सङ्गात् । पतितो विमुखः । स्यात् । नूनम् । न सन्देहः । अव-धारणद्वयमुक्तार्थस्य सर्वथा निश्चयार्थम् । तत्ततो हेतोः । अस्य सर्वेषां युष्माकं साक्षात्तया दृगग्रवर्त्तमानस्य श्रीहरेः । दिव्यता दिव्यभावः । ईक्ष्या दर्शनीया । वै ॥ ४२ ॥ भक्ता इति । किञ्च । तदीयाः । साक्षाद्भगवत्सम्बन्धिनः । ये । भक्ताः । अनन्या एकान्तिकाः । वर्त्तेरन् स्युः । तेष्वपि । तत्पार्षदमतिरक्षरधामस्थमुक्तभग-

वत्परिचारकधीः । कार्या । अन्यमर्त्त्यसमत्वधीः । न कार्या ॥ ४३ ॥ उक्तार्थमेव हेतूक्त्या द्रढयति । मर्त्येति । यतो हेतोः । ते तथाविधाः साक्षाद्भगवद्भक्ताः । इह मर्त्त्यलोके । मर्त्त्यभावान् । विहाय । दिव्यतां तत्पार्षदतामेव । यान्ति । इतीत्थंभूतः । सर्वसच्छास्त्रसिद्धान्तः । अस्ति । इतीत्थम् । दृश्यताम् । तथा चोक्तं 'इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः । सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति चे'ति । 'गुणापाये ब्रह्मशरीरमे'तीति श्रुतेः । 'प्राप्यावध्यं ब्रह्मपुरं राजेव स्यामहं सुखी'ती स्मृतेश्च ॥ ४४ ॥ अत इति । अतो हेतोः । इह सत्सङ्गे । ये भक्तजनाः । हरेः प्रत्यक्षस्य श्रीहरिकृष्णस्य भगवतो मम । नृत्वे मनुष्यभावेऽपि । दिव्यत्वम् । निश्चित्य । भक्तिम् । कुर्वन्ति । ते भक्तजनाः । पूर्णभक्ताः । ज्ञेयाः । इतरे उक्तविधभक्तभिन्ना भक्तजनाः । नहि पूर्णभक्ता नैव ज्ञेयाः ॥ ४५ ॥ अद्येति । अद्यास्मिन्नहनि । अथवा । अब्दशतान्ते । यदा । एवं मदुक्तप्रकारेण । निश्चयः साक्षाद्भगवतो मम स्वरूपज्ञाननिर्णयः । भवेत् । तदैव । भवपाशेभ्यः संसारबन्धनात् ।

मर्त्यभावान्विहायैव यतस्ते चेह दिव्यताम् । यान्तीति सर्वसच्छास्त्रसिद्धान्तोऽस्तीति दृश्यताम् ॥ ४४ ॥ अतो नृत्वेऽपि दिव्यत्वं ये निश्चित्य हरेरिह । भक्तिं कुर्वन्ति ते ज्ञेयाः पूर्णभक्ता नहीतरे ॥ ४५ ॥ अद्य वाऽब्द-शतान्ते वा यदैवं निश्चयो भवेत् । तदैव भवपाशेभ्यो मुक्तिः स्यान्नान्यथा क्वचित् ॥ ४६ ॥ एषा वार्त्ता सर्व-दैवावधार्या कार्याऽन्योन्यं चेति मान्या मदाज्ञा । इत्थं सन्तस्ते हरेर्वाक्सुधां वै पीत्वा हृष्टा धारयामासुरन्तः ॥ ४७ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते शताधिकषड्विंशतितमस्तरङ्गः ॥ १२६ ॥ १८ ॥

मुक्तिः । स्यात् । अन्यथैवंविधनिश्चयाभावे । क्वचित्कदाचिदपि । मुक्तिर्न स्यात् ॥ ४६ ॥ एषेति । हे साधवः ! । एषा मदुक्ता । वार्त्ता । सर्वदैव अवधार्या भवद्भिः । सर्वैः स्वचित्ते सुदृढी कार्याः । अन्योन्यं परस्परम् । कार्या । वक्तव्या श्रोतव्या चेत्यर्थः । इतीत्थंभूता । मदाज्ञा । मान्या । इत्थमेवंविधाम् । हरेः । वाक्सुधां वचनामृतम् । पीत्वा सादरं श्रुत्वा । ते मुक्तानन्दादयः । सन्तः साधवः । गृहस्थाश्च । हृष्टा सन्तः । अन्तः स्वस्वान्तःकरणे । धारयामासुः । वै ॥ ४७ ॥ ऊक्तैक्यं दिव्यमनुजभावयोः स्वस्य तत्त्वतः । दार्ढ्यं स्वनिश्चयस्याह यो हरिः सोऽस्तु मद्धृदि ॥ १ ॥ नैकावतारैर्विहितस्वभक्तकार्यं कृपासागरमात्मतन्त्रम् । पदेऽक्षरे स्वेऽर्चितम-क्षरात्मभक्तैः स्वकैः श्रीहरिकृष्णमीडे ॥ २ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्स्वरनुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरि-वाक्यसुधासिन्धुटीकायां शताधिकषड्विंशतितमस्तङ्गः ॥ १२६ ॥ १८ ॥

## लोयाप्रकरणं सम्पूर्णम्

श्रीहरिकृष्णाय नमो नमः । श्रीहरिर्वचनामृतैर्निजान्स्वान्बहूनतिसुखाश्चकार यः । बुद्धिदोऽस्तु हरिकृष्ण ईशिता मह्यमाशु करुणाम्बुधिः पिता ॥ १ ॥ हरिवाक्यसुधा-सिन्धोस्तरङ्गाः सप्त ये शुभाः । कुर्वे पञ्चालखेटीयास्तद्व्याख्यानं यथामति ॥ २ ॥ तत्र तु प्रथमे येन विचारेणैव मायिकाः । रम्याः पश्चापि विषयास्तुच्छाः स्युः स उदीरितः ॥ ३ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८७७) फाल्गुनशुदि फाल्गुनमासस्य शुक्लपक्षे । चतुर्थ्यां तिथौ । इदम् । हरेः । वचोऽमृतम् ॥ १ ॥ पञ्चालेति । तत्र तिथौ । पञ्चालखेटे प्रचुरकृपीवलप्रधाने पञ्चालग्रामे । हेमन्तनृपवेश्मनो दुर्गान्तर्वर्त्तिहेमन्तसिंहनृपतिभवनस्य । वेद्यां बाह्यायां वेदिकायाम् । महति सुतूलिकाद्या-स्तरणेनातिश्रेष्ठे । पीठे पर्यङ्कासने । सूक्ष्मसिताम्बरः परिधृतसकलाणुश्वेतवसनः । तत्र तदा शिरोवेष्टनपेचकः किञ्चिद्दक्षभ्रूस्रंसन् बोध्यः । असौ श्रीहरिः । न्यषीदत् ॥ २ ॥ त्यागिभिरिति । नानादेशागतैः । गृहिभिः । भक्तैः । वृतः सभायां परिवेष्टितः । स श्रीहरिः । सान्ध्यनीराजनस्य । अन्ते । महता गुणगरिष्ठान् । सतो मुक्ता-नन्दादिसाधून् सन्तोऽत्रान्येषां मयरामभट्टादिहरिभक्तानामुपलक्षणम् । अप्राक्षीत् । पार्श्चिकमथिरुद्धेति विज्ञेयं तस्मिन्काले तस्य तथात्वेक्षकैः साधुभिरुक्तत्वात् ॥ ३ ॥

शकाब्दे विक्रमार्कस्य नगाश्ववसुभूमिते । चतुर्थ्यां फाल्गुनशुदि वचोऽमृतमिदं हरेः ॥ १ ॥
पञ्चालखेटे तत्रासौ हेमन्तनृपवेश्मनः । वेद्यां न्षीदन्महति पीठे सूक्ष्मसिताम्बरः ॥ २ ॥
त्यागिगृहिभिर्भक्तैर्नानादेशागतैर्वृतः । सान्ध्यनीराजस्यान्ते सोऽप्राक्षीन्महतः सतः ॥ ३ ॥
भक्तेन धर्मनिष्ठेन प्रीतिभाजा रमापतौ । विचारः कीदृशः कार्योऽखिले स्नेहं जिहासता ॥ ४ ॥
येन पञ्चापि विषया रमणीया अपीतरैः । समा भवेयुरथवा तद्धीना ब्रूत तं च माम् ॥ ५ ॥
इति पृष्टा महान्तस्ते सन्तः स्वस्वविनिश्चितम् । विचारमवदन्कृत्स्नं श्रुत्वा तं प्रभुरब्रवीत् ॥ ६ ॥
श्रुतो विचारो भवतामथ मेऽपि सुनिश्चितम् । तं वदामि यथार्थं वो मनो दत्त्वा निशम्यताम् ॥ ७ ॥

भक्तेनेति । हे साधव ! । धर्मनिष्ठेन सम्यक्स्वधर्मावस्थितेन । रमापतौ साक्षाच्छ्रीकृष्णे । प्रीतिभाजा प्रीतिपूर्वं नवधाभक्तिकर्त्रा । भक्तेन । अखिले । भगवदितर-मायिकसकलविषयेष्वित्यर्थः । स्नेहमनुरागम् । जिहासता हातुमिच्छता सता । कीदृशः । विचारः । कार्यः ॥४॥ येनेति । येन विचारेण । रमणीया अपि । पञ्चापि । विषयाः । इतरैररमणीयैः कुत्सितैरित्यर्थः विषयैः । समा तुल्याः । भवेयुः । अथवा । तद्धीनाः कुत्सितविषयेभ्योऽप्यपकृष्टाः । भवेयुः । तं विचारम् । माम् । ब्रूत यूयं कथयत ॥ ५ ॥ इतीति । इत्यमुना प्रकारेण । पृष्टाः श्रीहरिणानुयुक्ताः । ते । महान्तः । सन्तः । स्वस्वनिश्चितं स्वेन स्वेन विनिर्णीतम् । कृत्स्नं समग्रम् । विचारम् । अवदन् । तं तत्तदुक्तविचारम् । श्रुत्वा । प्रभुः श्रीहरिः । अब्रवीत् ॥ ६ ॥ श्रुत इति । हे साधवः ! । भवताम् । विचारः । श्रुतः सम्यग्मयाकर्णितः । अथ साम्प्रतम् । सुनिश्चितम् । यथार्थम् । मे ममापि । तं विचारम् । वो युष्मभ्यम् । वदामि । मनो दत्त्वा मानसमेकाग्रं विधाय । निशम्यतां स श्रूयताम् ॥ ७ ॥

सच्छास्त्रेति । हे साधवः ! । यर्हि । सच्छास्त्रवचनैः । कृष्णसौख्यम् । विचार्यते । तर्हि । सर्वं रमणीयमप्यखिलम् । मायिकार्थसुखं मायिकविषयसौख्यम् । तुच्छतामत्यल्पतामेव कुत्सिततामेवेत्यर्थः । याति प्राप्नोति ॥ ८ ॥ एवं सामान्यत उक्तमर्थं पुनर्विशेषत आह । सच्छास्त्रेति । पूर्वेषां पुरातनानाम् । महतां नारदशुकध्रुवेन्द्रादीनाम् । सच्छास्त्रस्थैः श्रीमद्भागवतादिसच्छास्त्रावस्थितैः । वचनैरपि । कार्ष्णसौख्यमहत्ता श्रीकृष्णसम्बन्धिनो निरवधिकातिशयितसुखस्य श्रेष्ठता निश्चीयते । अन्यतुच्छता भगवत्सुखेतरमायिकसुखाल्पता च । निश्चीयते । तथा च श्रीभागवते । 'तस्यैव हेतोः प्रयतेत कोविद'इति । 'प्रेमातिशयनिर्भिन्नपुलकाङ्गोऽतिनिर्वृत'इति । 'निरस्तसाम्यातिशयनेराधसे'ति । 'विचक्षणा यच्चरणोपसादना'दिति । 'या निर्वृतिस्तनुभृतां तव पादपद्मध्याना'दिति । 'यस्य भक्तिर्भगवति हरौ निःश्रेयसेश्वरे । विक्रीडतोऽमृताम्भोधौ किं क्षुद्रैः खातकोदकै'रित्यादि ॥ ९ ॥ एवं सच्छास्त्रस्थमहद्वचनैः कार्ष्णसौख्यातिशायितामुक्त्वा साम्प्रतं 'रसो वै स रसं ह्येवायं लब्ध्वानन्दी भवति । एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ती'त्यादिश्रुत्यर्थं 'त्वं वै समस्तपुरुषार्थमयः फलात्मे'त्यादिश्रीभागवतश्लोकानामर्थं च मनसि निधाय यथोत्तराधिकेभ्यः स्वर्गाद्यक्षरान्तसुखेभ्योऽपि भगवतः सुखं सर्वोत्तममत्यधिकं चेति विवक्षुराह चतुर्विंशत्या श्लोकैः । भारत इति । हे साधवः ! । भारते । पुराणादौ श्रीभागवतादिषु

सच्छास्त्रवचनैः कृष्णसौख्यं यर्हि विचार्यते । मायिकार्थसुखं तर्हि सर्वं यात्येव तुच्छताम् ॥ ८ ॥
सच्छास्त्रस्थैर्हि वचनैः पूर्वेषां महतामपि । निश्चीयते कार्ष्णसौख्यमहत्ता चान्यतुच्छता ॥ ९ ॥
भारते च पुराणादौ कृष्णः प्रोक्तोऽस्ति साकृतिः । जगत्सर्गादिकर्तृत्वमत एवास्य च प्रभोः ॥ १० ॥
सच्चिदानन्दरूपं यद्ब्रह्म निर्गुणमक्षरम् । अनाद्यन्तं च तत्त्वस्य धामेति प्रोक्तमस्ति हि ॥ ११ ॥
ईदृक्स्वयंप्रकाशोऽसौ जीवान् मायात उत्थितान् । बुद्धीन्द्रियमनःप्राणैः संयोजयति च प्रभुः ॥ १२ ॥

पुराणेषु च । कृष्णः श्रीहरिः । साकृतिः सर्वदा सनातनदिव्यमूर्त्तिः प्रोक्तः । अस्ति । अतस्तस्य साकृतित्वाद्धेतोरेव । प्रभोः । अस्य कृष्णस्य । जगत्सर्गादिकर्तृत्वं च । प्रोक्तम् । भारते भगवद्गीतायाम् । 'अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्त्तते' इत्यादि । श्रीभागवते । 'स वा अयं सख्यनुगीतसत्कथ'इत्यादि । पुराणान्तरे च । 'यस्याज्ञया जगत्सर्वं ब्रह्मा सृजति सुव्रत । हरिश्च पालको रुद्रो नाशकः स हि मोक्षद' इत्यादि ॥ १० ॥ सदिति । सच्चिदानन्दरूपम् । निर्गुणं सत्त्वादिमायिकगुणवर्जितम् । अनाद्यन्तमाद्यन्तरहितम् । यत् । अक्षरम् । ब्रह्म । तत्तु । अस्य श्रीहरेः । धाम निवासस्थानमस्ति । इतीत्थम् । प्रोक्तमस्ति । हि । तथा चोक्तं श्रीभागवते । 'दर्शयामास लोकं स्वं गोपानां तमसः परम् । सत्यं ज्ञानमनन्तं यद्ब्रह्मज्योतिः सनातनम् । तदाहुरक्षरं ब्रह्म सर्वकारणकारणम् । विष्णोर्धाम परं साक्षात्पुरुषस्य महात्मन'इत्यादि ॥ ११ ॥ ईदृगिति । ईदृगेवंविधाक्षरधामाधिपतिः । स्वयंप्रकाशः स्वतोऽतिशयितप्रकाशाधारमूर्त्तिः । प्रभुरतिसमर्थः । असौ श्रीहरिः । मायातः । उत्थितान्स्वप्रेरितपुरुषेक्षणवशतोऽनुशायितात्यागपूर्वकमुत्पत्त्यभिमुखतां प्राप्तान् । जीवान् । बुद्धीन्द्रियमनःप्राणैः । संयोजयति । तथा चोक्तं श्रीभागवते । 'बुद्धिन्द्रियमनःप्राणान् । जनानामसृजत्प्रभुरिति ॥ १२ ॥

श्रेष्ठेति । ततस्तदनन्तरम् । विभुरतिसमर्थः । स श्रीहरिः । तत्कृते तेषां जीवानां सुखार्थम् । श्रेष्ठमध्यमहीनान् । भोगान्विषयोपभोगसुखानि । अखिलानि समग्राण्यपि । भोगस्थानानि च । विदधाति करोति ॥१३॥ ब्रह्मेति । ब्रह्माद्या विरिञ्चिप्रमुखाः । सूक्ष्मकीटान्ताः । सर्वशः सर्वे । देहिनो जीवाः । तान् भोगान् । स्वस्वकर्मानुसारेण । पर्यायेणानुक्रमेणैव । भुञ्जन्ते प्राप्नुवन्ति ॥१४॥ उत्तमा इति । तत्र श्रेष्ठमध्यमहीनेषु विषयेषु मध्ये । ये । उत्तमाः । विषयाः । तेन कृष्णेन । रचिताः । ते तु । हीनार्थभोगोत्थदुःखस्य निकृष्टविषयभोगोत्पन्नक्लेशस्य । प्रशान्तये निवृत्त्यर्थमेव । रचिताः । भवन्ति ॥ १५ ॥ इममेवार्थं दृष्टान्तेन विशदयति चतुर्भिः । यथेति । यथा । कश्चित् । आढ्योऽतिशयितधनसम्पन्नः । सुधीर्धर्मनिष्ठमतिः । श्रेष्ठिकः श्रेष्ठो वणिक् । भाषायां शाउकार शेठियो इत्यादिसंज्ञया प्रसिद्धः । रङ्कपान्थसुखाप्तयेऽतिदीनपथिकजनसुखप्राप्त्यर्थम् । पन्थानं मार्गम् । उभयत उभयोः पार्श्वयोः । छायावृक्षान्प्रचुरछायाप्रधानान्न्यग्रोधादितरून् । रोपयेत् ॥ १६ ॥ प्रपा । इति । किञ्च । मार्गे । प्रपाः पानीयशालिकाः । कारयेत् । शोभनाः । धर्मशालाः पान्थजननिवासयोग्य भवनानि च । कारयेत् । तत्र तत्र तासु धर्मशालासु । यथोचितं वर्णाश्रमधर्मबाधरहितं यथा तथा । अन्नसत्राणि सदा दानानि च । कारयेत् ॥ १७ ॥ तथेति । तथा । कृष्णः स्वयं श्रीहरिरपि । केषांचित् । पुण्यभाजां सुकृतिनाम् । देवतानां ब्रह्मेन्द्रादिदेवानाम् । नृणामपि तथाविधानां नृपाढ्यादिनराणां च । सुखाय सुखं कर्त्तुमेव । शोभनान् । अर्थान् विषयान् । निर्माति रचयति ॥ १८ ॥ अनेकेति । अनेककोटिब्रह्माण्डाधीश्वरस्य । हरेः । पुरोऽग्रे । महान्तोऽपि । विधीन्द्राद्याः । रङ्कजना इव । सन्ति । यथा भोगेच्छावन्तोऽपि दीनजना इभ्यार्पितस्ववाञ्छितभोगेन पूर्णमनोरथाः स्युस्तथा विध्यादयोऽपि श्रीहर्यार्पितभोगेन पूर्णमनोरथाः स्युर्न स्वातन्त्र्येणेति भावः ॥ १९ ॥ अथ कार्ष्णसुखस्याधिक्यतां दृष्टान्तेन दर्शयति द्वाभ्याम् । यथेति । यथा । आढ्येन । मार्गे । कृतं रचितम् । पान्थसुखं पान्थार्थकभवनादि सुखम् । दृष्ट्वा । बुधा धिमन्तः । आढ्यस्य पान्थसुखकर्त्तुरिभ्यस्य । गेहे तु । ततः पान्थसुखात् । अधिकम् । सुखम् । निश्चिन्वन्ति निश्चयपूर्वं जानन्ति ॥ २० ॥

श्रेष्ठमध्यमहीनांश्च ततो भोगान्स तत्कृते । भोगस्थानानि च विभुर्विदधात्यखिलान्यपि ॥ १३ ॥ ब्रह्माद्याः
सूक्ष्मकीटान्ता देहिनस्तांश्च सर्वशः । स्वस्वकर्मानुसारेण पर्यायेणैव भुञ्जते ॥ १४ ॥ उत्तमास्तत्र विषया रचिता-
स्तेन पञ्च ये । ते तु हीनार्थभोगोत्थदुःखस्यैव प्रशान्तये ॥ १५ ॥ यथाऽऽढ्यः श्रेष्ठिकः कश्चिद्रङ्कपान्थसुखाप्तये ।
छायावृक्षानुभयतः पन्थानं रोपयेत्सुधीः ॥ १६ ॥ प्रपाश्च कारयेन्मार्गे धर्मशालाश्च शोभनाः । तत्र तत्रान्नसत्राणि
कारयेच्च यथोचितम् ॥ १७ ॥ तथा कृष्णोऽपि केषाञ्चिद्देवतानां नृणामपि । पुण्यभाजां सुखायैव निर्मात्यर्थान् हि
शोभनान् ॥१८॥ अनेककोटिब्रह्माण्डाधीश्वरस्य हरेः पुरः । महान्तोऽपि विधीन्द्राद्याः सन्ति रङ्कजना इव ॥ १९ ॥
यथा पान्थसुखं मार्गे दृष्ट्वाऽऽढ्येन कृतं बुधाः । आढ्यस्य तु सुखं गेहे निश्चिन्वन्ति ततोऽधिकम् ॥ २० ॥

तथेति । तथा । ब्रह्मेन्द्रमुख्यानाम् । आत्मनां जीवानाम् । सच्छास्त्रवर्णितम् । रम्यार्थसुखं रमणीयपश्वविषयसुखम् । बुद्ध्वा साक्षाद्वर्यपितं ज्ञात्वा । बुधाः । कार्ष्णं श्रीहरिसम्बन्धि । तत्सुखं तु । अधिकं ब्रह्मसुखादत्युकृष्टम् । विदुर्जानन्ति ॥ २१ ॥ उक्तार्थस्यैव दृढतायै पुनरपि तमेवार्थमाह । धीमन्त इति । इत्थममुना प्रकारेण । धीमन्तो भगवदेकान्तिकभक्ताः । सत्सच्छास्त्रनिषेणाद्भगवदेकान्तिकसाधूनां सच्छास्त्राणां च संशीलनात् । भगवद्धामसौख्यस्य । सर्वसौख्यातिशायिताम् । जानीयुः ॥ २२ ॥ अनेनेति । अनेन कृष्णतदितरसुखयोरतिमहत्त्वात्यल्पत्वज्ञानलक्षणेन विचारेणैव । प्रीत्या । रमाकान्तं साक्षाच्छ्रीहरिम् । भजतो नवधासेवमानस्य । पुरुषस्य स्वधर्मनिष्ठभक्तजनस्य । रमणीयार्थतुच्छता रमणीयविषयाल्पता । भवेत् । हि ॥२३॥ रमणीयेति । यस्य । यस्य । देहिनः । रमणीयार्थातिसुखं रम्यविषयसम्बन्ध्यधिकसौख्यम् । अस्ति । तस्य । तस्य देहिनः । तद्रमणीयार्थातिसुखमपि । भक्तियुग्धर्मजं साक्षाद्भगवतोऽल्पमात्रयापि भक्त्या युक्तस्य स्वधर्मस्य निषेवणेन जातमित्यर्थः । फलं फलरूपम् । अस्ति ॥ २४ ॥ साक्षादिति । यादृशम् । साक्षात्कृष्णस्य प्रत्यक्षश्रीहरेः । समीपे । सुखम् । सदा । वर्त्तते । तादृक् । सुखं तु । क्वापि कस्मिंश्चि-

तथा ब्रह्मेन्द्रमुख्यानां रम्यार्थसुखमात्मनाम् । सच्छास्त्रवर्णितं बुद्ध्वा कार्ष्णं तत्त्वधिकं विदुः ॥ २१ ॥ धीमन्त इत्थं जानीयुः मत्सच्छास्त्रनिषेवणात् । भगवद्धाम सौख्यस्य सर्वसौख्यातिशयिताम् ॥ २२ ॥ अनेनैव विचारेण रमणीयार्थतुच्छता । भवेत्प्रीत्या रमाकान्तं भजतः पुरुषस्य हि ॥ २३ ॥ रमणीयार्थातिसुखं यस्य यस्यास्ति देहिनः तस्य तस्यापि तदपि भक्तियुग्धर्मजं फलम् ॥२४॥ साक्षात्कृष्णस्य तु सुखं यादृशं वर्त्तते सदा । तादृक्सुखं तु कस्यापि नास्त्येव क्वापि सर्वथा ॥ २५ ॥ यथैवास्या दीपिकायाः समीपेऽस्ति महन्महः । न तादृग्नातिदूरेऽस्यास्ततो दूरे तु किं पुनः ॥ २६ ॥ पूर्णानन्दनिधेस्तद्वत्साक्षात्कृष्णस्य सन्निधौ । भक्तस्यास्ति सुखं यादृक् ततो दूरे न तादृशम् ॥ २७ ॥ भक्तेनातो बुद्धिमता यथा कृष्णस्य सन्निधौ । वर्त्तनं स्वस्य तु भवेत्तथा कार्यं प्रयत्नतः ॥ २८ ॥

त्स्थानेऽपि । कस्यापि कस्यचिज्जनस्यापि । सर्वथा सर्वप्रकारेण । नास्त्येव ॥२५॥ एतदेव दृष्टान्तेन विशदयति । यथेति । यथा । अस्या मदन्तिकवर्त्तिन्याः । दीपिकायाः । समीपे । महत् । महस्तेजः । अस्ति । तादृक् तथाविधं महः । अस्या दीपिकायाः । नातिदूरे समीपप्रदेशात्किञ्चिद्दूरप्रदेशे । नास्त्येव । ततोऽस्या नातिदूरप्रदेशात् । दूरे दूरप्रदेशे तु । पुनः । किम् । दूरे नास्ति तत्र किं वक्तव्यमित्यर्थः ॥२६॥ पूर्णेति । तद्वत्तथैव । पूर्णानन्दनिधेः सम्पूर्णानन्दसमुद्रस्य । साक्षात्कृष्णस्य । सन्निधौ समीपे । भक्तस्यैकान्तिकभगवद्भक्तजनस्य । यादृक् । सुखम् । अस्ति । तादृशं सुखम् । ततः कृष्णसन्निधेः सकाशात् । दूरे दूरप्रदेशे । नास्ति ॥ २७ ॥ भक्तेनेति । अतो हेतोः । बुद्धिमता । भक्तेन । यथा येन प्रकारेण । कृष्णस्य । सन्निधौ । स्वस्य । वर्त्तनमवस्थानम् । भवेत् । तथा । प्रयत्नतः । कार्यम् । स्वस्यैकान्तिकधर्मे यथा स्थितिर्भवेत्तथा साधनप्रयासः कार्य इत्यर्थः ॥ २८ ॥

रम्येति । ये भक्ताः । रम्यग्राम्यार्थसक्त्या रमणीयमायिकविषयभोगप्रसक्त्या । ततः कृष्णात् । दूरे । भवन्ति । कायवाङ्मनोभिस्तदेकान्तिकभक्तिं न कुर्वन्तीत्यर्थः । ते भक्ताः । कालध्वस्तमनोरथाः सन्तः । विषयैः । सह । नश्यन्ति ॥२९॥ कालेति । अतो हेतोः । विचक्षणा बुद्धिमन्तो भगवदेकान्तिकभक्ताः । कालग्रस्तेषु कालेन विनाश्येषु । रम्येषु रमणीयेष्वपि । मायिकार्थेषु मायिकविषयेषु । सर्वथैव । प्रीतिम् । विहाय । तं साक्षात्कृष्णम् । भजन्ति ॥३०॥ एतद्दार्ढ्यार्थं पुनरपि यथोत्तराधिकसुखोक्त्या भगवत्सुखाधिकतामाह त्रिभिः । नृणामाढ्यादिजनानाम् । सुखात् । राज्ञः क्षोणीपतेः । सुखम् । अधिकम् । तस्माद्राजसुखात् । दिवौकसां देवानाम् । सुखम् । अधिकम् । ततो देवसुखात् । इन्द्रस्य । सुखम् । अधिकम् । तस्मादिन्द्रसुखात् । विधेर्ब्रह्मणः । सुखं चापि । अधिकम् । अस्ति ॥ ३१ ॥ वैराजस्येति । तस्माद्विधिसुखात् । वैराजस्य वैश्वानरापरपर्यायस्य सहस्रशीर्ष्णः पुरुषस्य । तत्सुखम् अधिकम् । ततो वैराजसुखात् । प्रधानपुरुषस्य । सुखम् । अधिकम् । ततः प्रधानपुरुषसुखात् । मूलप्रकृतिभर्त्तुर्महामायाधिपस्य महापुरुषस्य तत्सुखं च । अधिकम् । वर्त्तते ॥ ३२ ॥ तत इति । ततो मूलप्रकृतिभर्त्तृसुखात् । अक्षरब्रह्मसुखम् । अधिकम् ।

रम्यग्राम्यार्थसक्त्या ये ततो दूरे भवन्ति ते । विषयैः सह नश्यन्ति कालध्वस्तमनोरथाः ॥ २९ ॥
कालग्रस्तेष्वतः प्रीतिं मायिकार्थेषु सर्वथा । रम्येष्वपि विहायैव तं भजन्ति विचक्षणाः ॥ ३० ॥
नृणां सुखात्सुखं राज्ञोऽधिकं तस्माद्दिवौकसाम् । ततोऽपीन्द्रस्य तस्माच्च विधेरस्त्यधिकं सुखम् ॥ ३१ ॥
वैराजस्याधिकं तस्मात्प्रधानपुरुषस्य तत् । मूलप्रकृतिभर्त्तुस्तद्वर्त्तते च ततोऽधिकम् ॥ ३२ ॥
ततोऽक्षरब्रह्मसुखं वर्त्ततेऽत्यधिकं त्विति । वेदादौ गीयते तस्मात्कार्ष्णं यत् स सुखाम्बुधिः ॥ ३३ ॥
एवं हि भगवन्मूर्तिभूरिसौख्यविचारतः । तद्भिन्ने सकले सौख्ये तुच्छताऽस्ति मतौ मम ॥ ३४ ॥
यस्यास्ति बुद्धिर्विमला तस्यैवेदृग्विचारतः । ग्राम्यरम्यसुखेषु स्यादौदासीन्यं हि सर्वथा ॥ ३५ ॥

वर्त्तते । तस्मादक्षरब्रह्मसुखात् । कार्ष्णं श्रीकृष्णसम्बन्धि । सुखम् । अत्यधिकम् । वर्त्तते । यस्माद्धेतोः । स कृष्णः । सुखाम्बुधिर्निरवधिकातिशयसुखसागरः । वर्त्तते इतीत्थम् । वेदादौ निगमागमपुराणादिषु । गीयते मूर्त्तिमद्भिर्वेदादिभिः कथ्यते । तथा चानन्दवल्लीश्रुतिः । 'सैषानन्दस्य मीमांसा भवती'त्यारभ्य यतो वाचो निवर्त्तन्त' इत्यन्ता । आनन्दमयोऽभ्यासादिति न्यायश्च ॥३३॥ एवमिति । एवममुना प्रकारेण । भगवन्मूर्त्तिभूरिसौख्यविचारतः । तद्भिन्ने श्रीहरिमूर्त्तिसुखेतरत्र । सकले । सौख्ये । तुच्छताऽल्पता । मम । मतौ बुद्धौ । अस्ति । हि । मत्कृतो विचार एवंभूतोऽस्त्येवेत्यर्थः ॥३४॥ यस्येति । यस्य हर्येकान्तिकभक्तस्य । बुद्धिः । विमला तदेकान्तिकभक्त्या निर्मला । अस्ति । तस्य तथाविधभक्तस्यैव । ईदृग्विचारत एवंविधभगवत्स्वरूपविचारात् । ग्राम्यरम्यसुखेषु मायिकेषु रमणीयविषयसुखेषु । सर्वथा । औदासीन्यम् । स्यात् । हि । बीभत्सितदर्शनेनेव तद्दर्शनेन तेष्वत्युद्विग्नतैव स्यादित्यर्थः ॥३५॥

बुद्धिमानिति । अतोऽस्माद्धेतोरेव । बुद्धिमान्विमलमतिः । पुरुषो हर्येकान्तिकभक्त एव । मे मम । प्रियः । अस्ति । हि । यद्यतो हेतोः । अस्यैवंविधभक्तस्य । कृष्णसौख्येहया साक्षाच्छ्रीहरिसुखप्राप्तिवाञ्छया । अन्यत्र श्रीहरिमूर्तीतरेषु मायिकरम्यविषयेष्वपि । रुचिः प्रीतिः । क्वचित्कदाचिदपि । नास्ति ॥ ३६ ॥ यूयमिति । हे सन्तः ! । यूयम् । सर्वे । बुद्धिमन्तः । स्थ भवथ । अतो हेतोरेव । वो युष्माकम् । सर्वविचारेभ्यः । वरमतिश्रेष्ठम् । मे मम । अमुं पूर्वोक्तम् । विचारम् । गृह्णीत । हि ॥ ३७ ॥ स्वोक्तविचारदृढतावतां तत्फलमाह द्वाभ्याम् । एतदिति । मुमुक्षोः । यस्यैकान्तिकभक्तस्य । चेतसि । एतद्विचारदार्ढ्यम् । स्यात् । स भक्तः । कान्तारस्थो महारण्यावस्थितः सन्नपि । 'कान्तारोऽस्त्री महारण्ये विले दुर्गमवर्त्मनि । पुंसि स्यादिक्षु भेद'इति मेदिनि । स्वमात्मानम् । भूरिजनावृतम् । मनुते । भूरिजनावृतो यथाऽऽत्मानं सुखिनं मन्यते न तु दुखिनं तथाऽयमपीत्यर्थः ॥३८॥ एष इति । एष एतद्विचारदृढतावानेव । पुमान् भक्तः । इन्द्रलोकस्थः सन्नपि । आत्मानम् । वनस्थमेव । मन्यते । तत्सुखेनेन्द्रलोकसौख्येन । सुखिनम् । क्वचित्कदाचिदपि । न तु नैव मन्यते ॥ ३९ ॥ प्रकरणार्थं निगमयत्यर्द्धेन । हरीति ।

बुद्धिमानेव पुरुषो ह्यत एवास्ति मे प्रियः । कृष्णसौख्येहयाऽन्यत्र नास्त्यस्य यद्रुचिः क्वचित् ॥३६॥ यूयं च बुद्धिमन्तः स्थ सन्तः सर्वेऽत एव मे । अमुं विचारं गृह्णीत विचारेभ्यो वरं हि वः ॥३७॥ एतद्विचारदार्ढ्यं स्यान्मुमुक्षोर्यस्य चेतसि । कान्तारस्थोऽपि मनुते स स्वं भूरिजनावृतम् ॥ ३८ ॥ एष एवेन्द्रलोकस्थोऽप्यात्मानं मन्यते पुमान् । वनस्थमेव न तु तत्सुखेन सुखिनं क्वचित् ॥ ३९ ॥ हरिसुखभरप्राप्त्यै प्राप्तं विचारममुं मुदा नयत दृढतां सुज्ञा यूयं विहीनगृहाश्रमाः । इति हरिवचः पीयूषं ते निपीय तदोमिति प्रमुदितहृदः प्रोच्य प्रीत्या प्रभुं च ववन्दिरे ॥ ४० ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते शताधिकसप्तविंशतितमस्तरङ्गः ॥ १२७ ॥ १ ॥

हे साधवः ! । हरिसुखभरप्राप्त्यै साक्षात्कृष्णसुखातिशयप्राप्त्यर्थम् । 'अतिशयो भर इत्यमरः' । प्राप्तं मत्तः समधिगतम् । भवद्भिरिति शेषः । अमुम् । विचारम् । सुज्ञा मतिमन्तः । विहीनगृहाश्रमाः समुज्झितगृहाश्रमसुखाः । 'त्यक्तं हीनं विधुतमुत्सृष्टे'इत्यमरः । युयम् । मुदा हर्षेण । दृढतां स्थिरताम् । नयत गमयत । इतीत्थंभूतम् । हरिवचःपीयूषम् । निपीय । ते मुक्तानन्दादयः साधवः । अन्ये मयरामभट्टादयो गृहस्थाश्च । प्रमुदितहृदः प्रहृष्टमानसाः सन्तः । तत्पीयूपसमं हरिवचः । ओमिति हरे ! त्वं यथा वदसि तथा वयं करिष्याम इति । प्रोच्योक्त्वा । प्रीत्या गाढानुरागेण । प्रभुं श्रीहरिम् । ववन्दिरे ॥ ४० ॥ यः स्वभक्तान्स्वसौख्यस्य निरवध्यतिशायिताम् । अब्रवीच्छ्रीहरिर्मह्यं दत्तात्स्वसुखमेव सः ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्स्नुरघुवीराचार्यविरचितायां श्रीहरिवाक्यसुधासिन्धुटीकायां शताधिकसप्तविंशतितमस्तरङ्गः ॥ १२७ ॥ १ ॥

साङ्ख्यशास्त्रस्य हार्द यद्योगशास्त्रस्य यत्तथा । उभे ते सुविनिश्चित्य द्वितीये परिकीर्त्तिते ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८७७) तपस्यशुक्ल-सप्तम्यां फाल्गुनमाससम्बन्धिनः शुक्लपक्षस्य सप्तमीतिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । पञ्चालखेटे । हेमन्तनृपवेश्मनो दुर्गान्तर्वर्त्तिहेमन्तनृपतिभवनस्य । वेद्यां चाह्यायां वितर्दौ । पीठे स्वास्तृते पर्यङ्कासने । सितांबर परिधृतश्वेताम्बरः । भक्तौघैर्नानादेशायातैस्त्यागिगृहिस्वाश्रितजनसमूहैः । वृतः सभायां परिवेष्टितः । असौ श्रीहरिः । न्यषीदत् ॥ २ ॥ आनाय्येति । स श्रीहरिः । मोक्षधर्मं महाभारतीयशान्तिपर्वस्थमोक्षधर्मस्य पुस्तिकाम् । आनाय्य सदा स्वान्तिक-स्थशुकानन्दमुनिना तदानयनं कारयित्वा । नित्यानन्देन । साधुना । साङ्ख्ययोगाध्यायकथाम् । संसदि सभायाम् । कारयामास ॥ ३ ॥ तत इति । ततस्तदध्याय-समाप्त्यनन्तरम् । स श्रीहरिः । तदर्थः साङ्ख्ययोगशास्त्रार्थः । सर्वेषाम् । दुर्बोधः । इतीत्थं । अवेत्य ज्ञात्वा । स्वयं वा स्वयमेव । तं तदर्थम् । स्फुटं यथातथा । तत्त्वतो यथार्थतः । भक्तान्मुक्तानन्दादिस्वाश्रितजनान् । बोधयामास ॥ ४ ॥ परमात्मेति । हे साधवः ! । साङ्ख्यशास्त्रे । परमात्मा । पञ्चविंशः । प्रकीर्त्तितः ।

शकाब्दे विक्रमार्कस्य नगाश्ववसुभूमिते । तपस्यशुक्लसप्तम्यां वचोऽमृतमिदं हरेः ॥ १ ॥ तत्र पञ्चालखेटेऽसौ हेमन्तनृप-वेश्मनः । वेद्यां न्यषीदद्भक्तौघैर्वृतः पीठे सिताम्बरः ॥ २ ॥ आनाय्य मोक्षधर्मं स नित्यानन्देन साधुना । सांख्ययोगाध्या-यकथां कारयामास संसदि ॥ ३ ॥ ततस्तदर्थो दुर्बोधः सर्वेषामित्यवेत्य सः । स्वयं वा तं स्फुटं भक्तान्बोधयामास तत्त्वतः ॥४॥ परमात्मा पञ्चविंशः सांख्यशास्त्रे प्रकीर्त्तितः । योगशास्त्रे तु षड्विंश इति भेदस्तयोर्मतः ॥ ५ ॥ आद्ये जीवेश्वरौ तूक्तौ तत्त्वेष्वन्तर्गतावुभौ । चतुर्विंशतिसंख्येषु न तु भिन्नौ ततो हि तौ ॥ ६ ॥ मुक्तिस्तु देवमर्त्यादिगतीर्बुद्ध्वा विरज्य च । सर्वत्र देहत्रितयपृथगात्मावबोधतः ॥ ७ ॥ यतो वाचो निवर्त्तन्ते इत्यादिश्रुतिबोधितः । तदा स्वानुभवेनैव परमात्मा-ऽवगम्यते ॥ ८ ॥ योगे तूक्तः पञ्चविंशो जीवैः सहित ईश्वरः । परमात्मा तु षड्विंशस्तद्भक्त्या मुक्तिरात्मनाम् ॥ ९ ॥

योगशास्त्रे तु । परमात्मा । षड्विंशः । प्रकीर्त्तितः । इतीत्थम् । तयोः साङ्ख्ययोगशास्त्रयोः । भेदः । मतः ॥ ५ ॥ आद्य इति । आद्ये साङ्ख्यशास्त्रे तु । उभौ । जीवेश्वरौ विश्ववैश्वानरौ । चतुर्विंशतिसङ्ख्येषु । तत्त्वेषु । अन्तर्गतौ । उक्तौ । ततस्तत्त्वेभ्यः । तौ जीवेश्वरौ । भिन्नौ पृथग्भूतौ । न तु नैवोक्तौ ॥ ६ ॥ मुक्तिरिति । देवमर्त्यादिगतीः कर्मप्राप्यदेवमनुष्यादिदेहलोकभोगानां कालान्यथाकरणादिरूपा अवस्थाः । बुद्ध्वा । सर्वत्र देवमनुष्यादिगतिषु । विरज्य सम्यग्वैराग्यं प्राप्य । देहत्रितयपृथगात्मावबोधतः स्थूलादिदेहत्रिकभिन्नस्वात्मज्ञानेन । मुक्तिः संसृतिनिवृत्तिः । स्यात् ॥ ७ ॥ यत इति । तदा मुक्तिकाले । 'यतो वाचो निव-र्त्तन्ते' इत्यादिश्रुतिबोधितः । परमात्मा । स्वानुभवेन सर्वहितेच्छुभगवदेकान्तिकोपदिष्टया ब्रह्मात्मतया परमात्मोपासनया सम्प्राप्तसाक्षात्तदनुभवेनैवेत्यर्थः । अवगम्यते ॥ ८ ॥ योग इति । योगे योगशास्त्रे तु । जीवैः । सहितः । ईश्वरः । पञ्चविंशः उक्तः । जीवसमूह ईश्वरश्च तत्त्वेभ्यः पृथगभिहितोऽस्तीत्यर्थः । परमात्मा तु ।

पञ्चविंशः । उक्तः । तद्भक्त्या जीवहितार्थं प्रादुर्भूतसाक्षाद्भगवतः सप्रेमनवधोपासनया । आत्मनां जीवानाम् । मुक्तिः । उक्ताः ॥ ९ ॥ मतेति । हे साधवः ! । अथानन्तरम् । मतद्वये साङ्ख्ययोगाख्यमतद्वितये । यः । दोपः । स्यात् । सद्भ्यो भगवदेकान्तिकसाधुभ्यः । अवबुद्धाभिः । युक्तिभिः । तन्निवृत्तिर्दोपविनाशश्च । स्यात् । तं मतद्वयस्थं दोषम् । ता दोपनिवृत्त्यर्थका युक्तीश्च । अहम् । वदामि युष्मभ्यं कथयामि ॥ १० ॥ साङ्ख्य इति । साङ्ख्ये साङ्ख्यशास्त्रे । जीवः । ईश ईश्वरश्च । तत्त्वेभ्यः । भिन्नः । नोदितो नैवोक्तः । तत्त्वानि । मिथ्या मिथ्याभूतानि । इतीत्थम् । उक्तानि । तत्रैवंविधोदितसाङ्ख्यसिद्धान्ते । ईदृग्वक्ष्यमाणा । दोपधीः । भवेत् ॥ १२ ॥ दोषधियमाह द्वाभ्याम् । यदीति । यदि यर्हि । तत्त्वानि । मिथ्यैव मिथ्याभूतान्येव स्युः । तर्हि तदा । तदात्मकस्तत्त्वान्तःस्थतया तत्त्वरूपः । आत्मा जीवोऽपि । मिथ्यैव स्यात् । इति तर्हि एवंचेत्तदा ज्ञानेन देहात्मवेदनेन । परमात्मानम् । कः । इति प्राप्नोति ॥ १२ ॥ यमा इति । यमा ब्रह्मचर्यादयः । श्रवणादीनि च । निगमेन वेदेन । उदितानि 'तद्य एवैतं ब्रह्मलोकं ब्रह्मचर्येणानुविन्दति । आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य'इत्यादिसामयजुःशिरोभागभूतछान्दोग्य बृहदारण्योक्तानि । साधनानि परमात्मप्राप्त्युपायाश्चापि । आश्रयासिद्धदोपत आश्रयासिद्धदोपसम्प्राप्तेर्हेतोः । मृपा मिथ्याभूतानि । स्युः । तत्राश्रयासिद्धदोपप्रकारो

मतद्वयेऽथ यो दोषस्तन्निवृत्तिश्च युक्तिभिः । याभिः सद्भ्योऽवबुद्धाभिः स्यात्तं ताश्च वदाम्यहम् ॥१०॥ सांख्ये हि भिन्नस्तत्त्वेभ्यो जीवईशश्च नोदितः । तत्त्वान्युक्तानि मिथ्येति तत्रेदृग्दोषधीर्भवेत् ॥ ११ ॥ यदि तत्त्वानि मिथ्यैव तर्ह्यात्माऽपि तदात्मकः । मिथ्येति तर्हि ज्ञानेन परमात्मानमेति कः ॥ १२ ॥ यमाश्च श्रवणादीनि निगमेनोदितान्यपि । साधनानि मृषा च स्युराश्रयासिद्धदोषतः ॥ १३ ॥ अतोऽत्र युक्तयः शिक्ष्याः साधुभ्यस्तन्निवृत्तये । तत्वानि देहरूपाणि देह्यात्मा तद्विलक्षणः ॥ १४ ॥ वैलक्षण्यं प्रकाश्यत्वप्रकाशकतयाऽपि च । अस्त्येतयोस्तथाप्यैक्यं तप्तायोगोलकादिवत् ॥ १५ ॥

यथा । गगनारविन्दं सुरभि अरविन्दत्वात्सरोजारविन्दवदित्यादिः । आश्रयासिद्धदोपप्रदर्शनस्यायं भावः । सर्वेपां शास्त्राणां वेदप्रामाण्यवर्जितत्वेऽशास्त्रतापत्तिः स्यादतस्तदुदितसाधनानां स्वीकार्यत्वं साङ्ख्यानामपि युक्तमेव । तत्स्वीकारे चतुर्विंशतितत्त्वत आत्मनः पृथग्ज्ञानवेलायां तस्य तु तत्त्वैः सह मिथ्यात्वेन निपिद्धत्वान्निपेधशेपस्य प्रमाणवाक्यावगतमायासम्बन्धाभावात्स न कदाचिदपि तत्त्वयोगेन जीवभावं यायादतो निपेधशेपो हि परमात्मोपपन्नस्तथा सति तज्ज्ञाता तत्त्वबद्धो जीवो निपिधस्तस्य परमात्मप्राप्त्यै साधनान्यपेक्षन्ते तत्कर्त्रभावोक्तावाश्रयासिद्धदोपता प्राप्तिरिति ॥ १३ ॥ अत इति । अतो हेतोः । अत्र साङ्ख्यशास्त्रे । तन्निवृत्तये उक्तदोपनिवृत्त्यर्थम् । युक्तयः । साधुभ्यः । शिक्ष्याः । दिग्मात्रेण ता आह सार्द्धद्वाभ्याम् । तत्त्वानि । देहरूपाणि । सन्ति । देहानां कारणभूततत्त्वकार्यत्वात्कार्यकारणयोरनन्यत्वादिति भावः देही देहस्थितिप्रवृत्तिहेतुः । आत्मा जीवः । तद्विलक्षणः स्वरूपस्वभावादिभिर्देहभिन्नोऽस्ति ॥ १४ ॥ वैलक्षण्यमिति । किञ्च । प्रकाश्यत्व प्रकाशकतयाऽपि । एतयोर्देहात्मनोः । वैलक्षण्यम् । अस्ति । तथापि । तप्तायोगोलोकादिवदग्निसन्तापितलोहपिण्डादिवत् । तयोः । ऐक्यमेकत्वम् । अस्ति ॥ १५ ॥

विनेति । आत्मानं विना । देहस्य । वृद्धिः । कर्हिचित् । न भवति । अतो हेतोः । साङ्ख्यशास्त्रविशारदाः । तदैक्यं देहात्मनोरेकभावम् । ब्रुवते कथयन्ति ॥१६॥ तदिति । इत्थममुना प्रकारेण । सुबुद्धयः । ये साङ्ख्यशास्त्रविशारदाः । युक्तिभिः । तद्भेदं देहदेहिनोर्भिन्नताम् । अवयन्ति जानन्ति । ते । प्रतिपक्षान् । वादिनः । जयन्त्येव । इतरे मदुक्तयुक्त्यनभिज्ञाः । नहि नैव जयन्ति ॥ १७ ॥ योग इति । योगे योगशास्त्रे तु । जीवेश्वरयोः । चिद्रूपत्वाविशेषतश्चैतन्यमयरूपतया भेदाभावेन । द्वौ जीवेश्वरावपि । पञ्चविंशौ । तत्त्वदेहौ चतुर्विंशतितत्त्वमयशरीरौ । अभेदतः पञ्चविंशत्वेन तत्त्वदेहत्वेन च भेदाभावेन । उक्तौ ॥ १८ ॥ जीवेति । किञ्च । अत्र योगे । जीवेशदेहरूपाणि जीवेश्वरयोर्देहरूपेण जातानि । चतुर्विंशतिश्चतुर्विंशतिसङ्ख्याकानि । तत्त्वानि तु । वैजात्याज्जीवेश्वरयोस्तद्देहरूपतत्त्वानां च विजातीयत्वात् । ततो जीवेश्वराभ्याम् । पृथग्भिन्नतया । प्रोक्तानि । खलु ॥ १९ ॥ एवमिति । एवंसति । अत्र योगे । जीवेशैक्यमतिर्यथाभूतो जीवस्तथाभूत ईश्वर इतिबुद्धिरूपः । दोषः । विराडादितनूनां विराट् सूत्रात्माऽव्याकृतसंज्ञानां वैश्वानरहिरण्यगर्भेश्वराख्येश्वरदेहानाम् । स्थूलाद्यैः स्थूल सूक्ष्म कारणाख्यैर्विश्वतेजसप्राज्ञाख्यजीवदेहैः सह । तुल्यतामतिः

विनाऽऽत्मानं न देहस्य वृद्धिर्भवति कर्हिचित् । अतस्तदैक्यं ब्रुवते सांख्यशास्त्रविशारदाः ॥१६॥ तद्भेदमवयन्तीत्थं युक्तिभिर्ये सुबुद्धयः । वादिनस्ते जयन्त्येव प्रतिपक्षान्न हीतरे ॥ १७ ॥ योगे तु जीवेश्वरयोश्चिद्रूपत्वाविशेषतः । पञ्चविंशौ तत्त्वदेहौ द्वावप्युक्तावभेदतः ॥१८॥ जीवेशदेहरूपाणि तत्त्वानि तु ततः पृथक् । प्रोक्तानि खलु वैजात्याच्चतुर्विंशतिरत्र च ॥१९॥ एवं सत्यत्र दोषस्तु जीवेशैक्यमतिर्मतः । विराडादितनूनां च स्थूलाद्यैस्तुल्यतामतिः ॥२०॥ कर्त्तव्यः परिहारोऽस्य साधुसम्प्राप्तयुक्तिभिः । भेदोऽस्ति जीवेश्वरयोः सत्यस्तद्वपुषोस्तथा ॥ २१ ॥ परतन्त्रोऽल्पविज्जीवः स्वतन्त्रोऽन्यस्तु सर्ववित् । चिद्रूपयोरपि तयोर्विशेषो भवतीदृशः ॥ २२ ॥ पृथिव्यादीनि तत्त्वानि पञ्चापीश्वरविग्रहे । महान्ति भूतसंज्ञानि जीवदेहधराणि च ॥ २३ ॥ जीवदेहे तु पञ्चापि तान्यल्पानि भवन्ति च । एवं देहविशेषोऽपि तयोर्ज्ञेयश्च तात्त्विकः ॥ २४ ॥

समानतावुद्धिरूपश्च । दोषः । मतः । इदमीश्वरस्योत्पत्त्याद्यवस्थानां जीवस्य जाग्रदाद्यवस्थानां च साम्योपलक्षणम् ॥ २० ॥ कर्त्तव्य इति । अस्यैवंविधदोषस्य । परिहारो निवर्त्तनम् । साधुसम्प्राप्तयुक्तिभिः । कर्त्तव्यः । युक्तीराह सार्द्धैः पञ्चभिः । जीवेश्वरयोः । तथा । तद्वपुषोः । भेदः सत्यः । अस्ति ॥ २१ ॥ परतन्त्र इति । जीवः । परतन्त्रः । अल्पविदल्पज्ञः । अस्ति । अन्य ईश्वरस्तु । स्वतन्त्रः । सर्ववित् । अस्ति । ईदृश एवंविधः । चिद्रूपयोश्चैतन्यस्वरूपयोरपि । तयोर्जीवेश्वरयोः । विशेषो भेदः । भवति ॥ २२ ॥ पृथिवीति । पृथिव्यादीनि । पञ्चापि । तत्त्वानि । ईश्वरविग्रहे । महान्ति महत्तया । सन्ति । भूतसंज्ञानि भूताख्यानि । जीवदेहधराणि सर्वेषां जीवदेहानां धारकाणि च । सन्ति ॥ २३ ॥ जीवेति । पञ्चापि । तानि पृथिव्यादितत्त्वानि । जीवदेहे तु । अल्पानि । चकारादनन्यधारकाणि । भवन्ति । एवममुना प्रकारेण । तात्त्विकः सत्यः । तयोर्जीवेश्वरयोः । देहविशेषोऽपि देहभेदोऽपि । ज्ञेयः ॥ २४ ॥

जीवेति । तत्परः षड्विंशत्वेन जीवेश्वराभ्यामन्यः । परमात्मा तु । जीवेशयोः । उपास्यः । अस्ति । स परमात्मा । कारणानां मूलप्रकृति पुरुषादीनाम् । कारणम् । ईश्वराणामपि । ईश्वरः । अस्ति ॥ २५ ॥ अत इति । अतो हेतोः । स परमात्मैव । नानावतारधृत् वराहाद्यनेकविधावतारधरः । सर्वेषां जीवेश्वरादीनाम् । प्रभुर्नियन्ता । साक्षादुपास्यः प्रत्यक्षतयोपासनीयः । अस्ति । इत्येवमेवंविधाः । युक्तयः । योगिनां योगशास्त्रविदाम् । सन्ति प्रतिवादिभ्य उत्तर-प्रदानाय शिक्षणीया भवन्ति ॥ २६ ॥ मतेति इदं मतद्वयं तु । अन्यमतेभ्यः पाशुपतादिमतेभ्यः । समञ्जसं समीचीनम् । अस्ति । अतो हेतोः । पूर्वैः । महर्षिप्रवरै-र्महर्षिश्रेष्ठैर्व्यासाद्यैरपि । मानितम् । अस्ति ॥ २७ ॥ उभयत्रेति । उभयत्रोभयोरेतयोः साङ्ख्ययोगमतयोः । साधनानि तु । समानि तुल्यानीव । सन्ति । या । उपासनायाः । रीतिः । सा तु । भृशमतिशयेन । विसदृशी विलक्षणा । अस्ति ॥ २८ ॥ इतीति । इत्यमुना प्रकारेण । उक्त्वा । हरिः । तान्मुक्तानन्दादीन् । साधून् । कृष्णगायने श्रीकृष्णगुणचरित्रयुतपद्यगाने । आदिश्य । तानि गातुमाज्ञाप्येत्यर्थः । मुहूर्त्तं द्विघटिकाकालपर्यन्तमित्यर्थः । ध्यानस्थो विचारस्तिमितः ।

जीवेशयोरुपास्योऽस्ति परमात्मा तु तत्परः । कारणं कारणानां स ईश्वराणामपीश्वरः ॥ २५ ॥ अतः स एव सर्वेषां प्रभुर्नानावतारधृत् । साक्षादुपास्य इत्येवं युक्तयः सन्ति योगिनाम् ॥ २६ ॥ मतद्वयमिदं त्वन्यमतेभ्योऽपि समञ्जसम् । अतोऽस्ति मानितं पूर्वैर्महर्षिप्रवरैरपि ॥ २७ ॥ उभयत्र समानीव साधनानि तु सन्ति हि । उपासनाया या रीतिः साऽस्ति विसदृशी भृशम् ॥ २८ ॥ इत्युक्त्वा तान् हरिः साधूनादिश्य कृष्णगायने । मुहूर्त्तमासीद्ध्या-नस्थः प्रबुद्धोऽथाब्रवीत्पुनः ॥ २९ ॥ विचारिते मया सम्यक् सांख्ययोगमते हृदि । पुनस्तदीयतात्पर्यं कथयामि समासतः ॥ ३० ॥ योगे कृष्णोऽस्य रूपाणि ध्येयान्युक्तानि भूरिशः । तेषु कृष्णान्वयेनैव सत्यत्वाच्छ्रेयसे नृणाम् ॥ ३१ ॥ आदावक्षरधामस्थः कृष्णो ध्येय उदीरितः । ततस्तदवरो ध्येय उक्तः प्रकृतिपुरुषः ॥ ३२ ॥

आसीत् अथानन्तरम् । प्रबुद्धो ध्यानाद्बहिरायातः सन् । पुनः । अब्रवीत् ॥२९॥ विचारित इति । हे साधवः ! । मया । साङ्ख्ययोगमते । हृदि । सम्यक् । विचारिते । अतः । पुनरपि । तदीयतात्पर्यं साङ्ख्ययोगहार्दम् । समासतः । कथयामि ॥ ३० ॥ योग इति । योगे योगशास्त्रे । कृष्णोऽक्षरधामाधिपः स्वयं श्रीहरिः । नृणाम् । श्रेयसे । ध्येयः । उक्तः । तथा । अस्य कृष्णस्य । भूरिशो बहूनि । रूपाणि महाप्रकृत्यधिपतिमहापुरुषादीनि ध्येयानि । उक्तानि । ननु स्वयं कृष्णस्तु ध्येयोऽस्तु कथं तद्रूपाणां ध्येयत्वमिति चेत्तत्र हेतुमाह । तेषु महापुरुषादिषु कृष्णरूपेषु । कृष्णान्वयेन ब्रह्माण्डसर्गाद्यर्थं श्रीकृष्णस्य गुणैश्वर्याद्यन्वयेनैव । सत्य-त्वात्सद्रूपकृष्णमूर्त्तित्वात् । तानि रूपाणि ध्येयान्युक्तानीति सम्बन्धः ॥ ३१ ॥ एतदेव विस्तरेणाह त्रिभिः । आदाविति । आदौ प्रथमतः । अक्षरधामस्थः । कृष्णो-ऽवतारी श्रीहरिः । ध्येयः । उदीरितः । ततस्तदनन्तरम् । तदवरः श्रीकृष्णादर्वाचीनः । प्रकृतिपूरुषो महाप्रकृतिपुरुषात्मकः कृष्णः । ध्येयः । उक्तः ॥ ३२ ॥

प्रधानेति । ततः । प्रधानेशः प्रधानप्रकृतिपतिरूपः कृष्णः । ततः । तत्त्वानि तत्त्वात्मकः कृष्णः ततः । ईशोऽव्याकृतशरीरेश्वरात्मा कृष्णः । ततः । सूत्रविराट्-तनू सूत्रशरीरहिरण्यगर्भात्मकः कृष्णः ततो विराटशरीरवैश्वानरात्मकः कृष्ण इत्यर्थः । ततः । ब्रह्मादिरूपो ब्रह्मात्मको विष्णवात्मकः शिवात्मकश्च कृष्णः । ततः । मत्स्यादि रूपः स्वयंतया स्वीयैकान्तिकभक्तेषु स्वगुणैश्वर्याद्यावेशतया चेति भगवदवतारद्वैविध्याद्द्विविधस्वीयमत्स्याद्यवतारात्मकः कृष्णश्च । ध्येयः । कीर्त्तितः ॥३३॥ शालग्रामेति । ततः । स कृष्णः । शालग्रामादिरूपः शालग्रामधात्वश्मार्चाद्यात्मकः । ध्येयः । इरितः । एवममुना प्रकारेण । योगस्य । तात्पर्यम् । अस्ति । इतीत्थंभूता । मे मम । विचारणा विचारः । आसीत् ॥ ३४ ॥ सांख्य इति । साङ्ख्ये तु । विचारेणात्मानात्मविवेकेन । आकारमात्रं मायिकाः सकला आकृतय इत्यर्थः । निराकृतमात्मस्वरूपान्निषेधितम् । विचारस्य । कर्त्ता । आत्मैव । सत्यः सद्रूपः । ध्येयो देहेन्द्रियादिभावनिवृत्तिपूर्वं केवलात्मतापादनाय चिन्तनीयः । इतीत्थम् । ईरितम् ॥ ३५ ॥ तदिति । तन्मतात्साङ्ख्यमतात् । अयं पूर्वोक्तः । योगमार्गः । सालम्बनः साक्षाद्भगवन्मूर्त्तिध्यानाद्यालम्बन सहितः । अत एव । निर्विघ्नः । सर्व-

प्रधानेशस्ततस्तत्त्वानीशः सूत्रविराट्तनू । ब्रह्मादिरूपो मत्स्यादिरूपो ध्येयश्च कीर्त्तितः ॥ ३३ ॥ शालग्रामादिरूपश्च ततो ध्येयः स ईरितः । एवं योगस्य तात्पर्यमित्यासीन्मे विचारणा ॥ ३४ ॥ सांख्ये त्वाकारमात्रं विचारेण निराकृतम् । कर्त्ता विचारस्यात्मैव सत्यो ध्येय इतीरितम् ॥ ३५ ॥ तन्मताद्योगमार्गोऽयं समीचीनोऽवगम्यताम् । सालम्बनश्च निर्विघ्नः सर्वजीवहितावहः ॥ ३६ ॥ अंशांशिभावज्ञानं तु दोषोऽप्यत्रेति गम्यताम् । अंशः कृष्णस्य पुरुषोऽन्यस्तस्येत्यादिको हि सः ॥ ३७ ॥ स न ग्राह्यो भगवतोऽच्युतत्वाच्चाक्षरत्वतः । अखण्डत्वान्निरंशत्वान्निर्विकारत्वतस्तथा ॥३८॥ यथेह भक्ताः कृष्णस्य ध्यानाद्यान्ति तदात्मताम् । तथा ते प्रकृतीशाद्यास्तद्भक्त्यैव तदात्मकाः ॥३९॥

जीवहितावहः । समीचीनः । अवगम्यताम् ॥ ३६ ॥ एवं साङ्ख्ययोगमतसिद्धान्तमुक्त्वा सम्प्रति तयोर्दोषान्दर्शयित्वा तन्निषेधार्थं तद्रहस्यमाह नवभिः । अंशेति । अत्र योगशास्त्रमते । अंशांशिभावज्ञानमपि । दोषः । अस्ति । अपि शब्दः पूर्वोक्तजीवेश्वरसमता ज्ञानादिरूपदोषसंग्रहार्थः । पुरुषो महाप्रकृत्यधिष्ठाता महापुरुषः । कृष्णस्य । अंशः । अन्यः प्रधानाधिष्ठातापुरुषः । तस्य महापुरुषस्य । अंशः । इत्यादिकः । स दोषः । इतीत्थम् । गम्यताम् ॥ ३७ ॥ स इति । भगवतः कृष्णस्य । अच्युतत्वात् । अक्षरत्वतः । अखण्डत्वात् । निरंशत्वाच्च । तथा । निर्विकारत्वतः । केषु केषुचिच्छास्त्रवाक्येषु भगवतोऽच्युतादिशब्दैरभिहितत्वादित्यर्थः । सोऽंशांशित्वज्ञानरूपो दोषः । न ग्राह्यो योगशास्त्रहार्दाभिज्ञैर्नोपादेयः ॥ ३८ ॥ ननु यद्येवं तेषामंशांशिभावं खण्डयसि तर्ह्युक्तरीत्योक्ता तदात्मकता कथं सम्भविष्यति तदभावे शास्त्रोक्ततत्तद्ध्यानादिकं कथं सम्भविष्यति चेति चेत्तत्तदात्मकत्वमत्र ध्यानप्राप्तकृष्णात्मैकतया तद्गुणैश्वर्यादेस्तेष्वन्वयेनेति पूर्वाभिहितसरणाय तदन्वयताहेतुं तद्ध्यानातिशयं ब्रुवंस्तदन्वयत्वेन तदात्मकत्वमाह । यथेति । यथा । इह लोके । भक्तास्तदेकान्तिकभक्तिं कुर्वन्तो मनुष्यादयः । कृष्णस्य साक्षाद्धरेः । ध्यानात् ।

तदात्मतां कृष्णस्वरूपैकवृत्तिताम् । यान्ति । तथा । ते पूर्वोक्ताः । प्रकृतीशाद्या महाप्रकृत्यधिपतिमहापुरुषादयः । तद्भक्त्या श्रीकृष्णैकान्तिकभक्त्यैव । तदात्मकाः । याताः । तद्गुणैश्वर्यविशिष्टतया तेषां ध्यानास्पदत्वमिति भावः ॥ ३९ ॥ ननु भक्तोपमया भगवद्ध्यानेन प्रकृतीशादेस्तदात्मकत्वोक्तौ प्रकृतीशादेरिव भक्तानामपि भगवद्रूपतया ध्येयत्वमुपपन्नमिति चेत्तत्राह । तत्रेति । तत्र भक्तप्रकृतीशादिषु मध्येऽपि । अनादिबोधाः । ते भगवदात्मकाः । पुरुषादयो महापुरुषप्रभृतयस्तु । ध्येयाः । प्रोक्ताः । अधुनातनाः । भक्ताः । तदात्मका ध्यानेन भगवदात्मकाः सन्तोऽपि । ध्येयाः । नैव प्रोक्ताः । 'पश्चादुद्भूतबोधाश्च ध्याने नैवोपकारकाः । नैसर्गिको न वै बोधस्तेषामप्यन्यतो यत'इति शौनकोक्तेः ॥ ४० ॥ भवत्वेवं शास्त्रनिषेधाद्भक्तानां ध्येयत्वाभावः परन्तु महापुरुषादयोऽपि सर्वे ध्येया उत केचिद्ध्येयाः केचिन्न ध्येयाश्च सन्तीचेत्तत्राह । तेष्विति । तेषु श्रीहर्यादिषु पुर्वोक्तेषु सर्वेषु ध्येयेषु मध्येऽपि । हरिरक्षरधामाधिपतिः स्वयं श्रीकृष्णः । ध्यातव्यः । अस्ति । तस्य श्रीहरेः । अवतारा रामकृष्णादयः सर्वेऽपि प्रादुर्भावाः । तथा । प्रतिमाः श्रीहर्यादेरर्चावताराः । ध्यातव्याः । सन्ति । अन्ये महापुरुषादयस्तु । नैव ध्यातव्याः सन्ति । श्रीहरितदवतारतत्प्रतिकृतीनां तत्तदवसरे साक्षात्त्वेन नयनविषयतया ध्यानसौकर्याद्ध्येयत्वं महापुरुषादेरचक्षुर्विषयत्वेन तदसौकर्यादध्येयत्वमिति भावः । इतीत्थं-

तत्राप्यनादिबोधास्ते ध्येयास्तु पुरुषादयः । अपि तदात्मका भक्ताः प्रोक्ता नैवाधुनातनाः ॥ ४० ॥ तेष्वप्यस्ति हरिस्तस्यावताराः प्रतिमास्तथा । ध्यातव्या एव न त्वन्य इति योगस्य वै रहः ॥ ४१ ॥ सांख्येऽप्याकारमात्रस्य खण्डनादल्पबुद्धयः । ध्येयान्कृष्णस्यावतारानपि मिथ्याऽवयन्ति हि ॥४२॥ अस्य दोषस्य महतो निवृत्त्यर्थं सुबुद्धिभिः । तद्रहस्यमपि ज्ञेयं वदाम्यद्य विचारितम् ॥ ४३ ॥ मायिकत्वादनात्मत्वात्तत्त्वानां देहरूपिणाम् । तन्मिथ्यात्वं दृढीकृत्य शुद्ध आत्माऽत्र वर्णितः ॥ ४४ ॥ ब्रह्मरूपेण तेनैव परमात्मा ततः परः । सेव्य इत्येव तात्पर्यमस्येति ज्ञेयमञ्जसा ॥ ४५ ॥

भूतम् । योगस्य योगशास्त्रस्य । रहो रहस्यम् । अस्ति । वै ॥ ४१ ॥ साङ्ख्य इति । साङ्ख्यशास्त्रेऽपि । आकारमात्रस्य । खण्डनात्खण्डनविधानाद्धेतोः । अल्पबुद्धयः साङ्ख्यशास्त्रहार्दानभिज्ञमतयः पुरुषाः । ध्येयान्स्वनिःश्रेयसार्थं ध्यातव्यान् । कृष्णस्य । अवतारानपि । मिथ्याऽमायिकानपि मायिकाकारत्वेन मिथ्याभूतान् । अवयन्ति जानन्ति । हि ॥ ४२ ॥ अस्येति । महतोऽतिप्रभूतस्य । अस्य भगवदाकारखण्डनरूपस्य । दोषस्य । निवृत्त्यर्थम् । सुबुद्धिभिः स्वनिःश्रेयसार्थकमतिभिः साङ्ख्याभिज्ञैः । ज्ञेयमवश्यबोध्यम् । अद्यास्मिन्काल एव । विचारितम् । तद्रहस्यं साङ्ख्यशास्त्रस्य हार्दमपि । वदामि ॥ ४३ ॥ मायिकत्वादिति । अत्र साङ्ख्ये । देहरूपिणां देहाकारेण परिणतानाम् । तत्त्वानाम् । मायिकत्वात् । अनात्मत्वाज्जडत्वाच्च हेतोः । तन्मिथ्यात्वं तत्त्वासत्वम् । दृढीकृत्य । शुद्धः । आत्मा । वर्णितः । अस्ति ॥ ४४ ॥ ब्रह्मेति । ब्रह्मरूपेण तत्त्वनिषेधपूर्वमात्मनस्ततः पृथगवस्थितिरूपब्रह्मभावप्राप्तेन । तेनात्मनैव । ततः स्वात्मनः । परः स्वरूपस्वभावादिभिरन्यः । परमात्मा श्रीहरिः । सेव्यः सप्रेम नवधा भजनीयः । इत्येवंभूतमेव । अस्य साङ्ख्यशास्त्रस्य । तात्पर्यं हार्दम् । अस्ति । इतीत्थम् । अञ्जसा तत्त्वतः । ज्ञेयम् ॥ ४५ ॥

एवं स्वविचारितसाङ्ख्ययोगहार्दं उक्त्वा साम्प्रतं साङ्ख्ययोगयोः परस्परसापेक्षत्वमाहाष्टभिः । योगेति । हे साधवः ! । साङ्ख्येन साङ्ख्यशास्त्रोक्तप्रकृतिविविक्तात्मविचारेण । शुद्धस्य ब्रह्मभावं प्राप्तस्य । आत्मन । एव । योगोपदेशः योगशास्त्रोदितसप्रेमनवधाभक्तिपूर्वकमेकाग्रतया भगवन्मूर्त्तिध्यानमित्यर्थः । मतः । अतो हेतोः सांख्यविदः साङ्ख्यशास्त्राभिज्ञस्य । योगापेक्षा योगशास्त्राकांक्षा । अस्ति । एवं योगशास्त्राभिज्ञस्यापि साङ्ख्यमन्तरा देहाभिमानवत्तया भक्तिध्यानासौकर्यात्तन्निवृत्तये तदपेक्षास्तीति चकाराज्ज्ञेयम् ॥ ४६ ॥ एतदिति । हे सन्तः । एवदिदं मदुक्तमेव । मुमुक्षून् । नॄन् भक्तान् । बोधयितुम् । श्रीहरिगीतायाम् । श्रीमद्भागवतेचापि । स्फुटं यथातथा । उक्तम् ॥ ४७ ॥ ब्रह्मेति । ब्रह्मभूतः साङ्ख्यविचारेण ब्रह्मभावं प्राप्तः । अत एव । प्रसन्नात्मा देहावस्थितसुखदुःखाद्यननुसन्धानादात्मन्यतिशयितसुखयुक्तो भक्तः । न शोचति विनष्टस्य देहसुखोचितवस्तुनः शोकं न विदधाति । न कांक्षति अप्राप्तस्य देहसुखोचितवस्तुनः सम्प्राप्त्याकांक्षां न करोति । सर्वेषु । भूतेषु भूतविकारेष्वैहिकामुष्मिकसकलवस्तुमात्रेष्वित्यर्थः । समोऽनादरणीयतया तुल्यत्वेन वर्त्तमानः सन् । परां सर्वोत्कृष्टाम् । मद्भक्तिम् । लभते प्राप्नोति ॥ ४८ ॥

योगोपदेशः सांख्येन शुद्धस्यैवात्मनो मतः । अतः सांख्यविदो योगापेक्षा चास्तीति गम्यताम् ॥ ४६ ॥
एतदेव मुमुक्षून्नॄन्सन्तो बोधयितुं स्फुटम् । उक्तं श्रीहरिगीतायां श्रीमद्भागवतेऽपि च ॥ ४७ ॥
ब्रह्मभूतः प्रसन्नात्मा न शोचति न कांक्षति । समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम् ॥ ४८ ॥
आत्मारामाश्च मुनयो निर्ग्रन्था अप्युरुक्रमे । कुर्वन्त्यहैतुकीं भक्तिमित्थंभूतगुणो हरिः ॥ ४९ ॥
परिनिष्ठितोऽपि नैर्गुण्ये उत्तमश्लोकलीलया । गृहीतचेता राजर्षे आख्यानं यदधीतवान् ॥ ५० ॥
ब्रह्मात्मज्ञानिनामेवं योगोक्ता भक्तिरीशितुः । शोभते न तु सा क्वापि पुंसो देहाभिमानिनः ॥ ५१ ॥

आत्मारामा इति । आत्मारामाः साङ्ख्यश्रवणमनननिदिध्यासदार्ढ्येन ब्रह्मरूपशुद्धस्वस्वरूपाधिष्ठिताः । अत एव । निर्ग्रन्थाः निवृत्तः क्रोधाहङ्कारादिरूपो ग्रन्थो येषां तथाभूता अपि । मुनयः । उरुक्रमे श्रीहरौ । अहैतुकीं भगवत्प्रसन्नतेतरफलानुसन्धानवर्जिताम् । भक्तिम् । कुर्वन्ति । ननु सच्चिदानन्दादिधर्मैस्तत्साम्यवतां किं तद्भक्त्येतिचेत्तत्राह । हरिः । इत्थंभूतगुणः । तथाविधा अपि यथा तद्भक्तिमेव विदध्युस्तथाविधाऽनवधिकातिशयालौकिककारुण्यसौशील्यवात्सल्यादिगुणमयो हरिरेव न ते इति भावः ॥ ४९ ॥ परिनिष्ठित इति । हे राजर्षे ! । अहम् । नैर्गुण्ये साङ्ख्योक्तसत्त्वादिगुणकार्यदेहत्रयातिरिक्तात्मस्वरूपे । परिनिष्ठितोऽभ्यासदार्ढ्येन सर्वतो निष्ठां प्राप्तः सन्नपि । उत्तमश्लोकलीलया उत्तमैरक्षरब्रह्मभावापन्नमुक्तवृन्दैरपि श्लोक्यते तस्य दीनताद्योतनपूर्वं स्वरूपस्वभावगुणाद्यपारत्वोक्त्या स्तूयते इत्युत्तमश्लोको हरिस्तस्य लीलाऽलौकिककल्याणरूपचरित्राणि तया । गृहीतचेता आकृष्टचित्तः सन् । यत् । आख्यानं श्रीभागवतपुराणम् । तत् । अधीतवान् । अस्मि ॥ ५० ॥ ब्रह्मेति । हे साधवः ! । इत्थममुना प्रकारेण । ब्रह्मात्मज्ञानिनां स्वात्मानं साङ्ख्यविचारेण ब्रह्मरूपं विजानताम् । योगोक्ता योगशास्त्रोदिता । ईशितुः सर्वनियन्तुः श्रीहरेः ।

भक्तिः । शोभते । देहाभिमानिनः । पुंसो योगशास्त्रविदो भक्तस्य । सा भक्तिः । क्वापि कदाचिदपि । न तु नैव शोभते ॥ ५१ ॥ बाह्येति । अत्र लोके । बाह्यान्तःकरणैः । ग्राह्या उपादेयाः । ये । मायिकाः । पदार्थाः । सन्ति । तेषु । सम्यग्यथार्थतया । असद्बुद्धिर्मिथ्यात्वमतिः । साङ्ख्यविद एव । स्यात् । हि ॥ ५३ ॥ तादृशस्येति । तादृशस्य तथाविधस्य साङ्ख्यविचारवत एव । योगशास्त्रेण । सम्प्रोक्ता । भगवद्भक्तिः । माहात्म्यज्ञानपूर्विका । अत एव । सुदृढा । उत्तमा । स्यात् ॥ ५२ ॥ एवमिति । एवममुना प्रकारेण । शास्त्रद्वयस्य । एतत् । सनातनमनादिसिद्धम् । हार्दं रहस्यम् । मया । विचार्य । निश्चितं सत् । तत्पात्रत्वाद्युष्माकं तद्योग्यत्वात् । वो युष्मभ्यम् । अञ्जसा तत्त्वतः । प्रोक्तम् । हि ॥ ५४ ॥ विदुरिति । कुसङ्गिनो दुर्जनसङ्गिनो मदुक्ततद्भासमानदोषेषु सम्यग्बोधाय युष्मभ्यं मयाऽभिहितेषु साङ्ख्ययोगयोः प्रतीयमानेषु पूर्वोक्तदोषेष्वेवेत्यर्थः । गुणभ्रमा गुणत्वभ्रान्तयः । अधुनातनपण्डिताः साङ्ख्ययोगशास्त्राध्येतार आधुनिकपण्डिताः । एतन्मदुक्तं हार्दम् । न विदुर्नैव जानन्ति ॥ ५५ ॥ उभय इति । उभये उभयविधाः । ते पण्डिताः । स्वकं निजनिजम् । मार्गम् । उल्लङ्घ्य । उत्पथं

बाह्यान्तःकरणैर्ग्राह्याः पदार्था येऽत्र मायिकाः । तेषु सम्यगसद्बुद्धिः स्यात्सांख्यविद एव हि ॥ ५२ ॥
तादृशस्यैव भगवद्भक्तिः स्यात्सुदृढोत्तमा । सम्प्रोक्ता योगशास्त्रेण माहात्म्यज्ञानपूर्विका ॥ ५३ ॥ एवं
शास्त्रद्वयस्यैतन्मया हार्दं सनातनम् । विचार्य निश्चितं प्रोक्तं तत्पात्रत्वाद्धि वोऽञ्जसा ॥ ५४ ॥ विदुः
कुसङ्गिनो नैतदधुनातनपण्डिताः । मदुक्ततद्भासमानदोषेष्वेव गुणभ्रमाः ॥ ५४ ॥ उभये ते स्वकं मार्गमुल्लङ्घ्यैवोत्पथं गताः ॥ सन्तीत्यन्ते गमिष्यन्ति निरयन्न तु सद्गतिम् ॥ ५६ ॥ सांख्ययोगमतमित्थमादराद्वित्त यूयममलाशया इति । ते निपीय वचनामृतं हरेः साधवो मुमुदिरेऽपरेऽपि च ॥ ५७ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते शताधिकाष्टविंशतितमस्तरङ्गः ॥ १२८ ॥ २ ॥

कुमार्गमेव । गताः । सन्ति । इति हेतोः । अन्ते देहावसाने । निरयान्नरकान् । गमिष्यन्ति । सद्गतिं सत्प्राप्यं मोक्षाख्यानम् । न तु नैव गमिष्यन्ति ॥ ५६ ॥ प्रकरणार्थं निगमयत्यर्द्धेन । साङ्ख्येति । हे साधवः ! । इत्थममुना प्रकारेण । साङ्ख्ययोगमतम् । अमलाशयाः साङ्ख्ययोगप्रतिपाद्यसाक्षाद्भगवदेकान्तिकोपासनयाऽतिनिर्मलान्तःकरणाः । यूयम् । आदरात् । वित्त जानीत । इत्येवंविधम् । हरेः । वचनामृतम् । निपीय । ते मुक्तानन्दादयः । साधवः । अपरे सभोपविष्टा अन्ये गृहस्थभक्ताश्चापि । मुमुदिरे हर्षं प्रापुः ॥ ५७ ॥ साङ्ख्ययोगमते उक्त्वा स्वैरूपास्यमुवाच यः । हरिः स्वीयं स्वरूपं स्वान् स उपास्यः सदास्तु मे ॥१॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासक श्रीहरिकृष्णभगवत्स्नुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां शताधिकाष्टविंशतितमस्तरङ्गः ॥ १२८ ॥ २ ॥

स्यातां सत्सङ्गिनो यस्यापीर्ष्यामानौ तयोस्तु या । विनाशे मतिरत्यन्तं प्रशस्ता साधुसम्मता ॥ १ ॥ मनीषिभिर्यथा भक्तैः कार्या प्रीतिर्हरौ दृढा । तृतीये उभे तूक्ते प्रश्नोत्तरमुखेन वै ॥ २ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८७७) व्याख्यातम् । तपस्यस्य फाल्गुनमासस्य । शुक्लाष्टम्यां शुक्लपक्षीयाष्टमीतिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ पञ्चालेति । तत्र तिथौ । पञ्चालखेटे । हेमन्तभूभुजः । दुर्गे । वेद्यां तद्गृहसम्बन्धिन्यां बाह्यवेदिकायाम् । उत्तमे स्वास्तरणादि-श्रेष्ठे । पीठे मञ्चासने । सितसर्वाम्बरः स्वाङ्गपरिधृतसकलश्वेतवसनः । असौ श्रीहरिः । न्यषीदत् ॥ २ ॥ त्यागिभिरिति । नैकैर्नानादेशेभ्य आगतत्वादनेकैः । निजैः स्वा-श्रितैः । त्यागिभिः । गृहिभिश्च । परितः सर्वतः । वृतस्य सभायां वेष्टितस्य । तस्य श्रीहरेः । आज्ञया निदेशेन । सन्तो ब्रह्मानन्दादयः साधवः । अन्योऽन्यम् । प्रश्नोत्तराणि । चक्रुः ॥ ३ ॥ ब्रह्मानन्दमिति । तत्र प्रश्नोत्तरकर्तृसाधुषु मध्ये । मुनिर्मुनिसंज्ञः । साधुः । ब्रह्मानन्दं मुनिम् । पप्रच्छ । हे सत्तम ! साधुश्रेष्ठ ! । ईदृक्सत्सङ्गतो यत्रायं साक्षादक्षरपरो भगवांस्तदीया भवादृशा एकान्तिकाः साधवश्चेत्येवंविधादस्मात्सत्सङ्गात् । नृणां सत्सङ्गिभक्तजनानाम् । बहवः । दोषाः कामलोभरसा-

शकाब्दे विक्रमार्कस्य नगाश्ववसुभूमिते । शुक्लाष्टम्यां तपस्यस्य वचोऽमृतमिदं हरेः ॥ १ ॥ पञ्चालखेटे तत्रासौ
दुर्गे हेमन्तभूभुजः । सितसर्वाम्बरो वेद्यां न्यषीदत्पीठ उत्तमे ॥ २ ॥ त्यागिभिर्गृहिभिर्नैकैर्वृतस्य परितो निजैः ।
सन्तस्तस्याज्ञयाऽन्योन्यं चक्रुः प्रश्नोत्तराणि च ॥३॥ ब्रह्मानन्दं तत्र मुनिः साधुः पप्रच्छ सत्तम ! । ईदृक्सत्सङ्गतो
दोषा नश्यन्ति बहवो नृणाम् ॥ ४ ॥ तत्रेर्ष्यामानयोर्नाशः कस्यचिन्नैव दृश्यते । वसतोऽपि सदा सत्सु तत्र
हेतुश्च को वद ॥ ५ ॥ एतत्प्रश्नोत्तरं ब्रह्मानन्दश्चक्रे यथामति । तत्रातुष्टं मुनिं वीक्ष्य स्वयमूचे हरिस्तु तत्
॥ ६ ॥ कुर्वतोऽपि सतां सङ्गं हृदये यस्य तावुभौ । दोषौ स्यातां स तु पुमान्बुद्धिहीनो हि भाति मे ॥ ७ ॥
जानात्येव गुणान्दोषाबुद्धिमांस्त्वात्मनि स्थितान् । अन्यस्थांश्च ततो दोषान्स्वीयानाशु जिहासति ॥ ८ ॥

स्वादादयोऽगुणाः । नश्यन्ति ॥ ४ ॥ तत्रेति । तत्र तेषु दोषेषु मध्ये । ईर्ष्यामानयोर्दोषयोः । नाशः । सदा सर्वकालम् । सत्सु साधुषु । वसतो निवासं कुर्वतो-ऽपि । कस्यचित्सत्सङ्गिजनस्य । नैव दृश्यते । कस्यचित् । दृश्यते च । तत्र तयोर्दोषयोरविनाशे विनाशे च । हेतुः कारणम् । कः । को वा हेतुरस्तीत्यर्थः । वद मह्यं त्वं ब्रूहि ॥ ५ ॥ एतदिति । एतत्प्रश्नोत्तरमेतस्य मुनिसंज्ञसाधोः प्रश्नस्य प्रतिवचनम् । ब्रह्मानन्दो मुनिः । यथामति स्वमत्यनुसारेण । चक्रे । तत्र ब्रह्मानन्द-कृतप्रश्नोत्तरे । अतुष्टं सन्तोषमप्राप्तम् । मुनिमेतन्नामकं साधुम् । वीक्ष्य । स्वयम् । हरिः । तत्तत्प्रश्नोत्तरम् । ऊचे ॥ ६ ॥ कुर्वत इति । हे मुने ! । सताम् । सङ्गम् कुर्वतोऽपि । यस्य सत्सङ्गिजनस्य । हृदये । तावीर्ष्यामानसंज्ञौ । उभौ द्वौ । दोषौ । स्याताम् । स तथाविधः । पुमान्सत्सङ्गिजनस्तु । मे मम । बुद्धिहीनः । भाति । हि । यस्मिंस्तौ दोषौ स्यातां स बुद्धिहीनो यस्मिंश्च तौ न स्यातां स बुद्धिमानिति मे भासते इत्यर्थः ॥ ७ ॥ जानाति इति । बुद्धिमान्सत्सङ्गिजनस्तु ।

आत्मनि स्वस्मिन् । स्थितान् । गुणान् । दोषांश्च । जानात्येव । अन्यस्थान्स्वेतरसत्सङ्गिजनावस्थितान् । गुणान् । दोषांश्चापि जानात्येव । ततः स्वनिष्ठपरनिष्ठ गुणदोषज्ञानानन्तरम् । स्वीयान्स्वनिष्ठान् । दोषान् । आशु सम्यगवबोधसमकालमेव । जिहासति हातुमिच्छति ॥ ८ ॥ साधनेति । सदुक्तेन भगवदेकान्तिसाध्वभिहितेन । येन । साधनेन । तेषां दोषाणाम् । क्षयो मूलाद्विनाशः । भवेत् । तत्तथाविधं साधनम् । स बुद्धिमान्सत्सङ्गी । तन्निर्मूलनावधि यावदीर्ष्यामानादिदोषोन्मूलनं भवेत्तदवधि । अतिशययत्नेन । कुर्यात् ॥ ९ ॥ निरिति । स सत्सङ्गी । यावद्यावत्कालपर्यन्तम् । अन्तरे स्वान्तःकरणे । तच्छेष ईर्ष्यामानादिदोषलेशः । स्यात् । तावत् । निरुद्योगस्तन्नाशोद्योगवर्जितः । न स्यात् । सन्मुखात्तथाविधदोषवर्जितैकान्तिकसाध्वास्यात् । तन्नाशवार्त्तास्तद्विनाशयुक्तिगर्भितवार्त्तोदितोपायानित्यर्थः । आदरात् । शृणुयात् । ईर्ष्यामानाद्युक्तदोषविनाशेऽस्यैवंविधत्वं हेतुरिति प्रथम द्वितीयप्रश्नोत्तरं कृतमिति बोध्यम् ॥ १० ॥ गुणानिति । अन्यो बुद्धिहीनस्तु सत्सङ्गी । स्वस्य । गुणानेव । जानीयात् । अगुणान् दोषान् । नैव जानीयात् । स बुद्धिहीनः । सदोषमपि । स्वात्मानं तु । सनकादिमुनितुल्यम् । मन्येत । हि ॥ ११ ॥

साधनेन सदुक्तेन येन तेषां क्षयो भवेत् । तत्कुर्यादतियत्नेन स तन्निर्मूलनावधि ॥ ९ ॥
निरुद्योगो न तावत्स्यात्तच्छेषो यावदन्तरे । तन्नाशवार्त्ताः शृणुयादादरात्सन्मुखात्स च ॥ १० ॥
गुणानेव हि जानीयादन्यस्तु स्वस्य नागुणान् । सदोषमपि स स्वं तु मन्येत सनकादिवत् ॥ ११ ॥
सनकादिसमं त्वन्यं महान्तं सन्तमप्यसौ । मन्येताल्पगुणं स्वस्मान्नास्य स्याद्दोषनाशनम् ॥ १२ ॥
बुद्धिमानपि चेत्कश्चिन्नोद्यतः स्वागुणक्षतौ । तर्ह्यसावपि विज्ञेयो बुद्धिहीनसमः पुमान् ॥ १३ ॥
बुद्धिस्तस्य च विज्ञेया भूरिदाक्ष्येण विश्रुता । अर्थेषु लौकिकेष्वेव नतु मोक्षार्थसाधने ॥ १४ ॥

सनकेति । असौ बुद्धिहीनः । सनकादिसमम् । महान्तं सद्गुणगरिष्ठमपि । अन्यं स्वेतरम् । सन्तं तु । स्वस्मात् । अल्पगुणम् । मन्येत । अतस्तदुक्ततन्नाशोपायवार्त्तामपि न शृणुयात्कुतस्तन्नाशोद्योगं कुर्यादिति भावः । अस्यैवंविधस्य बुद्धिहिनस्य । दोषनाशनमीर्ष्यामानादिदोषनिवृत्तिः । न स्यात् । ईर्ष्यामानादिदोषाविनाशेऽस्यैवंविधत्वं हेतुरिति प्रथमप्रश्नोत्तरं बोध्यम् ॥१२॥ नात्र प्रसङ्गे दृश्यमानबुद्धिमत्वबुद्धिहीनत्वे स्वान्वर्थता ज्ञापके किन्तु स्वदोषविनाशोद्युक्तत्वानुद्युक्तत्वे एव तदन्वर्थता हेतुभूते इत्याह । बुद्धिमानिति । हे मुने ! । कश्चित् । बुद्धिमानपि । चेद्यदि । स्वागुणक्षतौ स्वदोषविनाशे । उद्यत उद्योगसहितः । न स्यात् । तर्हि । असौ । बुद्धिमानपि । बुद्धिहीन समः । विज्ञेयः । यः स्वागुणक्षतावुद्युक्तः । स बुद्धिहीनोऽपि बुद्धिमानित्यर्थ इति सिद्धम् ॥१३॥ उक्तार्थमेव विशदयति द्वाभ्याम् । बुद्धिरिति । तस्य स्वदोषानविनाशयतो भक्तस्य । बुद्धिः । लौकिकेषु व्यावहारिकेषु । अर्थेषु कार्येष्वेव । भूरिदाक्ष्येण प्रचुरप्रावीण्येन । विश्रुता विख्याता विज्ञेया । मोक्षार्थसाधने स्वदोषविनाशपूर्वं स्वतुरीयपुरुषार्थरूपकार्यसम्पादने । विश्रुता न विज्ञेया ॥ १४ ॥

अल्पेति । यस्य भक्तस्य । अल्पापि मतिः । मोक्षार्था स्वदोषविनाशनपूर्वं मोक्षरूपकार्यसम्पादनप्रयोजना । स्यात् । सा तथाविधा । बुद्धिरेव । सज्जनैर्भगवदेकान्तिकसाधुपुरुषैः । हितावहा तद्धितसम्पादनकर्त्री । उक्ता । इतरा लौकिकार्थसम्पादनदाक्षिण्यवती बुद्धिः । पशुबुद्धिः पशुसमानामतिः । मता तैः सम्मता ॥१५॥ इतीति । इत्यमुना प्रकारेण । उक्त्वा मुनिप्रश्नसम्यगभिधाय । ज्ञानभास्कर आत्मेशादिस्वरूपाणामक्षरपरस्वस्वरूपस्य चाववोधप्रकाशकमिहिरः । श्रीहरिः । कृष्णस्नेहार्थकानि भगवति स्वस्मिन् भक्तप्रीत्यतिशयावगमकानीत्यर्थः । पद्यानि कीर्त्तनानि । गापयितुम् । तान्ब्रह्मानन्दादीन् । साधून् । आजिज्ञपदाज्ञापयामास ॥१६॥ कीर्त्तनेति । कीर्त्तनान्ते सद्गीततथाविधकीर्त्तनगानसमाप्तौ सत्यामित्यर्थः । स्वामी । स श्रीहरिः । पुनः । भक्तान् । तान् । सतः । अब्रवीत् । हे सन्तः ! । युष्मद्गीतेषु । पद्येषु । स्नेहातिशयो भगवति भक्तकर्त्तव्यप्रीत्यतिशयः । ईरितः कीर्त्तितः ॥ १७ ॥ अथ मायिकस्त्र्याद्यमायिककृष्णस्वरूपरूपस्नेहस्थान द्वैविध्यात्स्त्र्यादिविषयः स्नेहोऽनर्थहेतुः कृष्णविषयः स्नेहो मोक्षहेतुरिति वक्तुमुपक्रमते । य इति । यः । स्नेहः श्रीकृष्णे । भवेत् । स स्नेहस्तु मोक्षैकसाधनम् । अस्ति । यः । स्नेहः । हरेः । अन्यत्रमायिकहरिस्वरूपेतरमायिकस्त्र्यादिष्वित्यर्थः । भवेत् । सा तु । स स्नेहस्त्वित्यर्थः । 'विधेयप्राधान्यात्स्त्रीलिङ्गनिर्देशः । मायैवास्ति । इतीत्थम् । बुद्ध्यतां भवद्भिर्ज्ञायताम् ॥ १८ ॥ यादृगिति । विक्षाभाषणादिभिः । पुंसाम् । स्त्रीषु । यादृक् । स्नेहः । भवेत् । तासां स्त्रीणाम् । तेषु पुंसु चापि । यादृक् । स्नेहः । भवेत् । तादृक् । स्नेहः । तेषां स्त्रीणां पुंसां च । अन्योऽन्यं पुंसां पुंसु स्त्रीणां स्त्रीषु चेत्यर्थः । न स्यात् ॥ १९ ॥ स इति । सः पुंसां स्त्रीषु स्त्रीणां पुंसु च जातः स्नेहः । संसृतिहेतुत्वात्पुनः पुनर्जन्ममरणनिमित्तत्वात् । मायापाशः । कीर्त्तितः । कृष्णे । स्नेहस्तु । भक्तिः । इति । उक्तः । संसृतिमोचनश्चापि । उक्तः ॥ २० ॥ कृष्ण इति । ततो हेतोः । अत्र सत्सङ्गे । मुमुक्षुभिर्भक्तैः । तदितरत्र भगवदन्येषु स्त्र्यादिष्वित्यर्थः । मायिकत्वेन । तुच्छत्वम् । ज्ञात्वा । कृष्णे एव साक्षाच्छ्रीहरिमूर्त्तावेव । स्नेहः । कर्त्तव्यः ॥ २१ ॥ एवमिति । एवं यथा श्रीकृष्णे एव स्नेहः कार्यस्तथेत्यर्थः । पञ्चापि । विषयाः शब्दादयः । कार्ष्णाः श्रीहरिसम्बन्धिन एव । काम्याः स्पृह-

अल्पापि यस्य मोक्षार्था मतिः स्यात्सैव सज्जनैः । हितावहा बुद्धिरुक्ता पशुबुद्धिर्मतेतरा ॥ १५ ॥ इत्युक्त्वा श्रीहरिः साधून् कृष्णस्नेहार्थकानि तान् । अजिज्ञपद्गापयितुं पद्यानि ज्ञानभास्करः ॥ १६ ॥ कीर्त्तनान्ते स तान्स्वामी पुनर्भक्तान्सतोऽब्रवीत् । पद्येषु युष्मद्गीतेषु स्नेहातिशय ईरितः ॥१७॥ यः श्रीकृष्णे भवेत्स्नेहः स तु मोक्षैकसाधनम् । यस्तु स्नेहोऽन्यत्र हरेः सैव मायेति बुद्ध्यताम् ॥ १८ ॥ यादृक् स्नेहो भवेत्पुंसां स्त्रीषु तासां च तेष्वपि । तादृक्तेषां तु नान्योऽन्यं स्याद्वीक्षाभाषणादिभिः ॥ १९ ॥ स हि संसृतिहेतुत्वान्मायापाशश्च कीर्त्तितः । कृष्णे तु भक्तिरित्युक्तः स्नेहः संसृतिमोचनः ॥२०॥ कृष्ण एव ततः स्नेहः कर्त्तव्योऽत्र मुमुक्षुभिः । मायिकत्वेन तुच्छत्वं ज्ञात्वा तदितरत्र तु ॥ २१ ॥ एवं पञ्चापि विषयाः काम्याः कार्ष्णा न चेतरे । तत्कामनायां भक्तत्वे महती भवति क्षतिः ॥ २२ ॥

णीयाः । इतरे कृष्णभिन्ना मायिकविषयाः । न च नैव काम्याः । कृष्णेतरविषयकामनायामनर्थमाह । तत्कामनायां श्रीहरिसम्बन्धीतरविषयस्पृहायां सत्याम् । भक्तत्वे महत्यतिशयिता । क्षतिर्हानिः । भवति जायते ॥ २२ ॥ प्राचीनदृष्टान्तेन क्षतिमाह द्वाभ्याम् । यथेति । यथा । शताधिकम् । षोडशसाहस्रम् । कृष्णपत्न्यः । साम्बरूपेक्षया जाम्बवतीसूनोरतिशयितरूपदर्शनेन । मोहम् । प्राप्य । विगर्हणां निन्दाम् । प्रापुः ॥ २३ ॥ अष्टेति । ताः कृष्णपत्न्यः । तपस्तुष्टस्य पूर्वजन्मन्य-त्सराभावे स्वविहितप्रचुरतपःप्रीतस्य । अष्टावक्रस्य मुनेः । विधेर्ब्रह्मणश्च । वरात् । कृष्णम् । स्वपतिम् । प्राप्यापि । इतरेहया श्रीकृष्णेतरेण साम्बेन सहोपभोगवाञ्छया । व्यमुह्यन् । इयं कथा महाभारतीयहरिवंशतः पुराणादेश्चावगन्तव्या ॥ २४ ॥ अत इति । अतो हेतोरेव । कार्ष्णेभ्यः । विषयेभ्योऽपि । अपरेऽन्येविषयाः । अधिकं यथातथा । रमणीयाः । स्युश्चेत् । तर्हि तथापि । ते कृष्णेतरे रमणीयविषयाः । अन्यवदरमणीयविषया इव । हेयाः सर्वथा त्याज्या एव ॥ २५ ॥ रमणीयवत्प्रतीय-मानानां कृष्णेतरविषयाणां परिणामदुःखप्रदत्वं दृष्टान्तेनाह । रम्या इति । गवाक्षीफलवदिन्द्रवारुणीफलमिव । विषमोदकवद्गरलयुक्तघृतखण्डलड्डुका इव । बहिर्बाह्यतः ।

यथा षोडषसाहस्रं कृष्णपत्न्यः शताधिकं । साम्बरूपेक्षया मोहं प्राप्य प्रापुर्विगर्हणाम् ॥ २३ ॥
अष्टावक्रस्य च विधेस्तपस्तुष्टस्य ता वरात् । प्राप्यापि स्वपतिं कृष्णं व्यमुह्यन्नितरेहया ॥ २४ ॥
अत एव हि कार्ष्णेभ्यो विषयेभ्योऽपरेऽधिकम् । रमणीया अपि स्युश्चेद्धेयास्तर्ह्यपि तेऽन्यवत् ॥ २५ ॥
रम्या गवाक्षीफलवद्विषमोदकवद्बहिः । कार्ष्णेतरा हिं विषयाः परिणामेऽतिदुःखदाः ॥ २६ ॥
कार्ष्णास्त्वरम्या इव ते भासमाना अपि ध्रुवम् । निर्गुणाः कृष्णसम्बन्धाद्दिव्याक्षयसुखप्रदाः ॥ २७ ॥
सत्सच्छास्त्रोदितं तेषां माहात्म्यमवगत्य ये । यथोचितं तान् गृह्णीयुर्बुद्धिमन्तस्त एव हि ॥ २८ ॥
कृष्णे च कृष्णसम्बन्द्धे वस्तुन्येव भवेत्सदा । प्रीतिर्बुद्धिमतां सन्तो नान्यत्र पुरुषावधि ॥ २९ ॥

रम्या रमणीयाः कार्ष्णेतराः । विषयाः । परिणामे । अतिदुःखदाः पुनः पुनः संसृतिमहाकष्टप्रदाः । स्युः ॥ २६ ॥ कार्ष्णा इति । कार्ष्णाः कृष्णसम्बन्धिनः । ते विषयाः । अरम्या इव । भासमाना बहिर्दृश्यमानाः सन्तोऽपि । कृष्णसम्बन्धात् । निर्गुणाः सत्त्वादिमायिकगुणभाववर्जिताः । दिव्याक्षयसुखप्रदा अमायिकानन्ता-लौकिकभगवत्स्वरूपसुखदायिनः । स्युः ॥ २७ ॥ सदिति । ये भक्ताः । सत्सच्छास्त्रोदितं भगवदेकान्तिकसाधुश्रीभागवतादिसच्छास्त्रप्रोक्तम् । तेषां कार्ष्णविषयाणाम् । माहात्म्यम् । अवगत्य ज्ञात्वा । तान्कार्ष्णविषयान् । यथोचितं स्वस्ववर्णाश्रमधर्माविरोधेन । गृह्णीयुः । ते भक्ता एव । बुद्धिमन्तः । विज्ञेयाः । हि ॥ २८ ॥ कृष्ण इति । हे सन्तः ! । बुद्धिमतां भक्तानाम् । कृष्णे श्रीहरौ । कृष्णसम्बन्द्धे श्रीहरिसम्बन्धिनि । वस्तुन्येव । प्रीतिः । सदा । भवेत् । पुरुषावधि । अन्यत्र मूलप्रकृतीशं महापुरुषमारभ्य सर्वस्मिन् भगवदितरस्मिंस्तत्कार्ये इत्यर्थः । प्रीतिः । न भवेत् ॥ २९ ॥

प्रीतिरिति । मनीषिभिः । भक्तैः । कृष्णे । प्रीतिः । यथा येन प्रकारेण । कर्त्तव्या । तथा । वदामि शृणुत । यया श्रीहरौ कृतया प्रीत्या । हरेः । प्रेयस्त्वमतिप्रियत्वम् । स्यात् ॥ ३० ॥ चतुरिति । हे साधवः ! । चतुर्विंशतितत्त्वेभ्यः । आत्मा स्वजीवः । पृथक् भिन्नः । परः स्वप्रकाश्येभ्यस्तत्त्वेभ्य-स्तत्प्रकाशकत्वेन विजातीयः । ज्ञेयः । तल्लग्ना अनादिकालस्तस्मिन्नात्मनि लग्नाः सम्बद्धाः । इन्द्रियाणाम् । वृत्तयः । उन्मूलनीयाः । पञ्चभूतात्मगोलकाश्रयाणि दशे-न्द्रियाण्यन्तःकरणचतुष्कसहायेन पञ्चविषयान्वृत्तिद्वाराऽनुभवन्त्यतः साक्षाद्भगवदाश्रिततदेकान्तिकसाधुशिक्षितसदसद्विवेकेन तद्वृत्त्युन्मूलनेनात्मनः सम्यक् ततः पृथ-ग्भावकरणमित्यर्थः ॥ ३१ ॥ एतदेव स्पष्टमाह । भूतेति । भूतेन्द्रियान्तःकरणदेवताः । तमोरजःसत्त्वजन्यास्तमआदिगुणत्रयादुत्पन्नाः । अत एव गुणात्मका गुण-प्रकृतयः । ज्ञेयाः । स्वस्तत्प्रकाशकः स्वीय आत्मा । ततो गुणकार्यभूतेन्द्रियादिभ्यः । पृथक् । ज्ञेयः ॥ ३२ ॥ एवमिति । एवममुना प्रकारेण । निर्गुणसद्रूपात्मना सत्त्वादिगुणातिरिक्तसत्तात्मकस्वीयात्मभावनेनैव । श्रीराधिकाकान्ते रमाराधास्वामिनि श्रीकृष्णे । अखिलाधिका सर्वेभ्योऽधिका । प्रीतिः । आदरात् । यथाशक्ति

प्रीतिश्च कृष्णे कर्तव्या यथा भक्तैर्मनीषिभिः तथा वदामि शृणुत प्रेयस्त्वं स्याद्यया हरेः ॥ ३० ॥ चतुर्विंशतितत्वेभ्य आत्मा ज्ञेयः पृथक् परः । उन्मूलनीयास्तल्लग्ना इन्द्रियाणां च वृत्तयः ॥ ३१ ॥ भूतेन्द्रियान्तकरणदेवतास्तु गुणा-त्मकाः । तमोरजःसत्वजन्या ज्ञेयाः स्वश्च ततः पृथक् ॥ ३२ ॥ एवं निर्गुणसद्रूपात्मनैव प्रीतिरादरात् । कार्या श्रीराधिकाकान्ते यथाशक्त्यखिलाधिका ॥ ३३ ॥ नैर्गुण्यस्था रमन्ते स्म गुणानुकथने हरेः । इत्यादि श्रीभागवतवा-क्यमस्त्येतदर्थकम् ॥ ३४ ॥ देहत्रयं तथाऽवस्थात्रयं क्षेत्रमितीरितम् । तज्ज्ञाता क्षेत्रवित् प्रोक्त आत्मा स हि ततः परः ॥ ३५ ॥ सच्चिद्रूपः स एवास्मि हरेर्दासः सदा शुचिः । विलक्षणोऽतिमलिनात् क्षेत्रादस्मि जडादहम् ॥ ३६ ॥ इति निश्चित्य भगवत्यचलां प्रीतिमुद्वहन् । ज्ञानिभक्त इति प्रोक्तो गीतायां हरिणोत्तमः ॥ ३७ ॥

यथातन्माहात्म्यज्ञानबलम् । कार्या ॥ ३३ ॥ नैर्गुण्येति । नैगुण्यस्था गुणातीतब्रह्मभावापन्नस्वात्मस्वरूपावस्थिताः । मुनयः । हरेः । गुणानुकथने । रमन्ते स्म । इत्यादि । श्रीभागवतवाक्यम् । एतदर्थकम् । अस्ति ॥ ३४ ॥ देहेति । देहत्रयं स्थूलादिदेहत्रिकम् । तथा । अवस्थात्रयं जाग्रदाद्यवस्थात्रिकम् । क्षेत्रम् । इतीत्थम् । ईरितम् । तज्ज्ञाता क्षेत्रद्रष्टा । आत्मा । क्षेत्रवित् । इति । प्रोक्तः । स क्षेत्रविदात्मा । ततः क्षेत्रात् । परः पृथग्भूतः । प्रोक्तः । हि ॥ ३५ ॥ सदिति । अहम् । सच्चिद्रूपः सच्चिदात्मकः । अतिमलिनात् । जडात् । क्षेत्रात् । विलक्षणः स्वरूपभावादिभिर्भिन्नः । अत एव । सदा । शुचिः शुद्धः । अस्मि । स शुद्धस्वरूप एवाहम् । हरेः । दासः सस्नेहं छन्दानुवृत्तिपूर्वं तत्परिचारकः । अस्मि । इतीत्युत्तरेणान्वयः ॥ ३६ ॥ इतीति । इतीत्थम् । निश्चित्य । भगवति श्रीहरौ । अचलामतिस्थिराम् । प्रीतिम् । उद्वहन्कुर्वन्सन् । गीतायाम् । हरिणा श्रीकृष्णेन । उत्तमः । ज्ञानिभक्तः । इति । प्रोक्तः ॥ ३७ ॥

तेपामितिं । तेपामार्त्तादिचतुर्विधभक्तानां मध्ये । ज्ञानी भक्तः । विशिष्यते । कुतः । नित्ययुक्तो मय्येव सर्वथा संसक्तः । अत एव । एकभक्तिरेकस्मिन्मय्ये-वानुरागवान् । एते आर्त्तादयः । सर्वे त्रिविधा अपि । उदारा महान्तः । ज्ञानी तु । मे मम । आत्मैवात्मवत्प्रेष्ठ एवास्ति । इति । मनसीत्यहं मन्ये ॥ ३८ ॥ अनेनेति । अनेन ज्ञानिभक्तेन । ज्ञानदार्ढ्येनात्मपरमात्मस्वरूपाववोधातिदृढत्वेन । इन्द्रियमूलानि मायिकविषयभोगेच्छारूपाः स्वेन्द्रियावस्थिता वासना इत्यर्थः । यावत् । सर्वथा । अनुत्खातानि आत्मनो नोन्मूलितानि । स्युः । अथवा । आत्मनि । अल्पशेषाण्युन्मूलितानि सन्त्यप्यव्यक्ताल्पशेषभागानि । स्युः ॥ ३९ ॥ सर्वैरिति । तावत् सर्वैरपि । इन्द्रियैः । कार्ष्णानां श्रीहरिसम्बन्धिनामेव । विषयाणाम् । ग्रहणम् । प्रयत्नतः । कारणीयम् । इतरत्कार्ष्णेतरविषयग्रहम् । न कारणीयम् । संस्कारशेषा-त्कृष्णेतरविषयेषु व्रजन्तीरिन्द्रियवृत्तीः प्रत्याहृत्य कार्ष्णविषयग्रहणे एव प्रयत्नतो नियुञ्ज्यादित्यर्थः ॥ ४० ॥ स्वेति । स्वप्राप्यस्य ब्रह्मात्मभावेन स्वेनाधिगम्यस्योत्कृष्ट-भगवत्सुखस्याक्षरसुखादपि निरवधिकातिशयत्वेनाधिकस्य हरिसम्बन्धिनः सौख्यस्य लोभप्रदर्शनं शास्त्रानुभवयुक्तिभिः प्रकृष्टतया दर्शनविधानं तस्मात् । तेषामिन्द्रियाणाम्

तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते । उदारः सर्व एवैते ज्ञानी त्वात्मैव मे मतम् ॥ ३८ ॥ अनेनैन्द्रियमूलानि ज्ञानदार्ढ्येन सर्वथा । अनुत्खातानि यावत्स्युरल्पशेषाणि वाऽऽत्मनि ॥ ३९ ॥ सर्वैरपीन्द्रियैस्तावत्कारणीयं प्रयत्नतः । ग्रहणं विषयाणां तु कार्ष्णानामेव नेतरत् ॥ ४० ॥ स्वप्राप्योत्कृष्टभगवत्सुखलोभप्रदर्शनात् । तुच्छग्राम्यसुखासक्ति-स्तेषां हाप्या विवेकतः ॥ ४१ ॥ दर्शनं स्पर्शनं घ्राणं रसनं श्रवणादि च । कृष्णसम्बन्धहीनस्य कारणीयं न तैः क्वचित् ॥ ४२ ॥ एवं कृष्णपरत्वेन सुहृद्वच्चरतामपि । इन्द्रियाणां न विश्वासः कर्त्तव्यः क्वापि धीमता ॥ ४३ ॥ शत्रुत्वमिन्द्रियाणां हि निश्चितं पूर्वसूरिभिः । योगसिद्धा अपि यतो नीता एभिरिहोत्पथम् ॥ ४४ ॥

तुच्छग्राम्यसुखासक्तिरत्यल्पमायिकविषयसुखभोगानुरागः । विवेकतः । हाप्या त्याजनीया यथा यथा भगवत्सुखप्राप्तिलोभोऽधिकाधिकः स्यात्तदितरविषयसुखस्यातितुच्छता च यथा यथोत्तराधिका स्यात्तथाविधविवेकबलेन त्याजनीयेत्यर्थः ॥ ४१ ॥ दर्शनमिति । कृष्णसम्बन्धहीनस्य वस्तुनः दर्शनम् । घ्राणम् । रसनम् । श्रवणादि च । आदि-शब्देन भाषणादि कर्मेन्द्रियक्रियाग्रहणम् । तैरिन्द्रियैः । क्वचित्कदाचिदपि । न कारणीयम् । किन्तु कार्ष्णमेव दर्शनादि कार्यमित्यर्थः ॥ ४२ ॥ एवमिति । एवममुना प्रकारेण । कृष्णपरत्वेन । सुहृन्मित्रवत् । चरतां वर्त्तमानानामपि । इन्द्रियाणाम् । विश्वासः । धीमता स्वहितकृन्मतिमज्ज्ञानिभक्तेन । क्वापि कदाचिदपि । न कर्त्तव्यः ॥ ४३ ॥ एतदेव सदाचारेण द्रढयति । शत्रुत्वमिति । पूर्वसूरिभिः प्राचीनसौभर्यैलादिमनीषिभिः । इन्द्रियाणाम् । शत्रुत्वमेव । निश्चितम् । तथा च श्रीभागवते नवमे सौभरिवाक्यम् । 'सर्वात्मना न विसृजेद्बहिरिन्द्रियाणी'ति । एकादशे ऐलवाक्यम् । 'विदुषां चाप्यविस्रब्धः षड्वर्गः किमु मादृशा'मिति । यतो हेतोः । एभिरिन्द्रि-यारिभिः । इह लोके । योगसिद्धा भक्तियोगादिभिः सिद्धगतिं प्राप्ता अपि मुनयः । उत्पथं कुमार्गम् । नीताः प्रापिताः ॥ ४४ ॥

पुरुषमिति । अजितान्यनुन्मूलितानि । अत एव । गूढशत्रवो गुप्तशत्रुरूपाणि । एतानीन्द्रियाणि । प्रमत्तमनवहितम् । अत एव । कृतविश्वासं कृतस्वेन्द्रियविस्रम्भम् । पुरुषं भक्तम् । किं किमात्मकम् । अशुभममङ्गलकारकमकार्यम् । न नयेयुर्न प्रापयेयुः । अपि तु सर्वमप्यशुभं नयेयुरित्यर्थः ॥ ४५ ॥ एवमिन्द्रियाणामविश्वसनीयशत्रुतामुक्त्वा साम्प्रतं राजानो यथा शत्रून्निगडादिना निबध्य तैर्मार्गनिबन्धनादिकार्यं विधापयन्ति तथा भक्तोऽपि मायिकविषयसञ्चाररोध-निगडावस्थापनेन वशीकृत्य तैर्भगवद्भक्तिं कारयेदित्याह द्वाभ्याम् । यथेति । यथा । राजा । आत्मनः । शत्रुम् । निगडैः । निगृह्य निबध्यैव । ईप्सितं स्वेन प्राप्तुं वाञ्छितं चिकीर्षितमित्यर्थः । कर्म क्रियाम् । कारयति । स्वेच्छाविचारिणं निर्निगडतया यथेच्छाचारिणम् । तं शत्रुम् । कर्म । न कारयति । ॥ ४६ ॥ तथेति । तथा । इन्द्रियाणि शत्रुरूपाणि नेत्रादिस्वेन्द्रियाण्यपि । वशे कृत्वा विषयेभ्यः पुनः पुनः प्रत्याहरणेनायत्तानि विधाय । तैरिन्द्रियैः । बुद्धिमता ज्ञानिभक्तेन । ईशितुः श्रीहरेः । भक्तिः श्रवणादिका । विधातव्या कारणीया । कदाचन कदाचिदपि । अन्यथा । न तु । तान्यवशीकृत्य नैव विधातव्येत्यर्थः ।

पुरुषं कृतविश्वासमेतानि ह्यजितानि तु । न नयेयुः किमशुभं प्रमत्तं गूढशत्रवः ॥ ४५ ॥ यथा राजा निगृह्यैव निगडैः शत्रुमात्मनः । कर्मेप्सितं कारयति न तं स्वेच्छाविचारिणम् ॥ ४६ ॥ तथेन्द्रियाण्यपि वशे कृत्वा तैर्भक्तिरिशितुः । विधातव्या बुद्धिमता नान्यथा तु कदाचन ॥ ४७ ॥ प्रायशो दुर्हृदो घ्नन्ति शत्रुं विश्वस्तमेव हि । अतो नैव गुणा ग्राह्या इन्द्रियाणां स्ववैरिणाम् ॥ ४८ ॥ यथा यथा निवृत्तिः स्यात्तेषां स्वविषयग्रहात् । तथा विधातव्यं साधनं यत्नतो द्रुतम् ॥ ४९ ॥ तच्च स्वधर्मो वैराग्यं कृष्णदितरवस्तुषु । कृष्णमाहात्म्यविज्ञानप्रमुखं ज्ञेयमञ्जसा ॥ ५० ॥ वैरित्वमेव निश्चित्य तेषामुन्मूलनं सुधीः । कृत्वाऽऽत्मनः स्वयं भूत्वा सद्रूपः श्रीहरिं भजेत् ॥ ५१ ॥ देहावस्थेन्द्रियादीनां द्रष्टाऽऽत्मैवास्म्यहं शुचिः । इत्येव सर्वदा वृत्यं दास्येन भजता हरिम् ॥ ५२ ॥

॥ ४७ ॥ प्रायश इति । प्रायशो बहुधा तु । दुर्हृदः शत्रवः । विश्वस्तं स्वविश्वासं प्राप्तमेव शत्रुम् । घ्नन्ति । अतो हेतोः । स्ववैरिणां स्वं विषयसुखलोभप्रदर्शनादिना विश्वास्य यातनाभोगादिफलप्रदानेन घातकरिपूणाम् । इन्द्रियाणाम् । गुणाः । नैव । ग्राह्याः । एभिरिन्द्रियैर्भगवद्भक्तिर्भवतीत्येवंविधतद्गुणोपादानं कृत्वा तद्विश्वासो न कर्त्तव्य इत्यर्थः ॥ ४८ ॥ यथेति । तेषां स्ववैरिणामिन्द्रियाणाम् । स्वविषयग्रहान्मायिकविषयोपादानात् । यथा । यथा । निवृत्तिः । स्यात् । तथा । तथा । साधनम् । यत्नतः । द्रुतं शीघ्रमेव । विधातव्यम् ॥ ४९ ॥ तदिति । तत्साधनं तु । स्वधर्मः । कृष्णात् । इतरवस्तुषु । वैराग्यम् । कृष्णमाहात्म्यविज्ञानप्रमुखम् । अञ्जसा तत्त्वतः । ज्ञेयम् ॥ ५० ॥ वैरित्वमिति । तेषामिन्द्रियाणाम् । आत्मनः स्वस्य । वैरित्वं सहजशत्रुत्वमेव । निश्चित्य । उन्मूलनं निकृन्तनम् । कृत्वा । सुधी ज्ञानी भक्तः । स्वयम् । सद्रूप आत्मभावेन वर्त्तमानः सन् । श्रीहरिम् । भजेत् ॥ ५१ ॥ सद्रूपताविचारमाह । देहेति । देहावस्थेन्द्रियादीनाम् । द्रष्टा । शुचिः

सदा स्वरूपतः शुद्धः । आत्मैव । असि । इतीत्थमेव । दास्येन दासभावेन । । हरिम् । भजता ज्ञानिभक्तेन । सदा । वृत्त्यम् ॥ ५२ ॥ देहेति । देहेन्द्रियादि-सम्बन्धम् । विवेकेनोक्तविधेन । जिहासता । हातुमिच्छता । आत्मस्थितेरात्मनिष्ठायाः । दार्ढ्यम् । कुर्वता ज्ञानिभक्तेन । रमापतिः । श्रीहरिः । प्रार्थनीयः ॥ ५३ ॥ प्रार्थनामत्र महेति । हे महाराज ! सर्वदोत्सवैः समंततोऽतिशोभिन् । यद्वा । महाराजा महापुरुपादय ईश्वरेश्वरा नियम्याः सन्त्यस्येति तत्सम्बुद्धिः । हे स्वामिन् ! । हे दयालो ! । हे भक्तवत्सल ! । हे हरे ! । तव । सेवकम् । माम् । इन्द्रियादिभ्यः । शत्रुभ्यः । पाहि रक्ष ॥ ५४ ॥ सम्प्रार्थ्यमान इति । इत्थममुना प्रकारेण । भक्तेन । अनुदिनम् । सम्प्रार्थ्यमानः । तत्पतिर्भक्तपतिः । भगवान् श्रीहरिः । तस्य भक्तस्य । सर्वत इन्द्रियादिभ्यः सर्वेभ्यः शत्रुभ्यः । रक्षणम् । कुरुते । ध्रुवम् ॥ ५५ ॥ इतीति । इत्येवंविधम् । हरेः । मुखात् । गलितं निःसृतम् । वागमृतं वचनामृतम् । निपीय । तदियसेवकाः श्रीहरेर्भक्ताः । ते ब्रह्मानन्दादयः । साधुजनाः । इतरे गृहिजनाश्च । आनताः श्रीहरये कृतप्रणामाः सन्तः । परमम् । हर्षम् । अवापुः ॥ ५६ ॥ ईर्ष्यामानादयो दोषा नाशं

देहेन्द्रियादिसम्बन्धं विवेकेन जिहासता । कुर्वताऽऽत्मस्थितेर्दार्ढ्यं प्रार्थनीयो रमापतिः ॥ ५३ ॥
महाराज ! हरे ! स्वामिन् ! दयालो ! भक्तवत्सल ! । शत्रुभ्य इन्द्रियादिभ्यः पाहि मां तव सेवकम् ॥ ५४ ॥
सम्प्रार्थ्यमानोऽनुदिनमित्थं भक्तेन सत्पतिः । भगवान्सर्वतस्तस्य रक्षणं कुरुते ध्रुवम् ॥ ५५ ॥ इति
वागमृतं हरेर्मुखाद्गलितं साधुजना निपीय ते । इतरे च तदीयसेवकाः परमं हर्षमवापुरानताः ॥ ५६ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते शताधिकैकोनत्रिंशतितमस्तरङ्गः ॥ १२९ ॥ ३ ॥

शकाब्दे विक्रमार्कस्य नगाश्ववसुभूमिते । तपस्यान्त्यतृतीयायां वचोऽमृतमिदं हरेः ॥ १ ॥
पञ्चालखेटके तत्र दुर्गे हेमन्तभूभुजः । वेद्यां व्यराजत स स्वामी स्वास्तृते मञ्चकोत्तमे ॥ २ ॥

यायुर्यथाऽखिलाः । तदुपायं स्वभक्तानामुक्त्वा यो दयया हरिः ॥ १ ॥ मनीषिभिः स्वभक्तैस्तु स्वस्मिन्प्रीतिर्यथा दृढा । कार्या तत्प्रीतिमाचख्यौ तस्मिन् सा प्रीतिरस्तु मे ॥ २ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्स्नुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां शताधिकै-कोनत्रिंशत्तमस्तरङ्गः ॥ १२९ ॥ ३ ॥

हरेरभेदज्ञानेन दिव्यमानवरूपयोः । सम्यक् निःसंशयस्तस्य चतुर्थे निश्चयः स्मृतः ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८७७) तपस्यान्त्यतृती-यायां फाल्गुनमासीयकृष्णपक्षायाततृतीयातिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ पञ्चालेति । तत्र तिथौ । पञ्चालखेटके । हेमन्तभूभुजः । दुर्गे । वेद्यां तद्गृहीयबाह्यवेदिकायाम् । स्वास्तृते । मञ्चकोत्तमे । स्वामी । स श्रीहरिः । व्यराजदुपविष्टः सन्नतिशुशुभे ॥ २ ॥

श्वेतमिति । श्वेतम् । वासः । परिदधद्वसानः । श्वेतशीर्षपटः शिरोनिबद्धधवलपटः । श्वेताम् । पटीं प्रच्छदपटिकाम् । वसानः प्रावृण्यम् । करे दक्षपाणिपद्मे । वृन्दास्रजं जपार्थकां तुलसीकाष्ठमणिमालिकाम् । दधत् ॥ ३ ॥ मणीनिति । तस्या वृन्दास्रजः । मणीन्मणिकान् । आवर्त्तयन्मध्यमामध्यपर्वण्यङ्गुष्ठाग्रेणाहरन् । हृदि स्वहृदयाम्बुजे मनसीत्यर्थः । नारायणं नरस्य धर्मदेवस्यापत्यं नारायणः श्रीहरिस्तम् । स्मरन् । स्वयं स्वस्वरूपमेव चिन्तयन्नित्यर्थः । यद्वा । नारं जीवेश्वरवृन्दमयते मनुष्यनाट्यधरः सन्नपि स्वान्तर्यामिशक्त्या प्राप्नोतीति नारायणस्तम् । स्मरन् । मानुषनाट्यधरं स्वस्वरूपमेवाक्षरपरं चिन्तयन्नित्यर्थः । यद्वा । नृनाट्यानुकरणे स्वेष्टदेवत्वेन स्वीकृतं श्रीकृष्णाख्यनारायणं स्मरन् । प्रभुः श्रीहरिः । पुरःसंस्थां स्वाग्रप्रदेशावस्थिताम् । निजभक्तसभां स्वाश्रितत्यागिगृहिपर्षदम् । मुदाऽत्यानन्देन । व्यलोकत ददर्श । इति द्वयोरेकान्वयः ॥ ४ ॥ नानेति । नानादेशसभायाताः । तद्भक्ताः । ये । गृहिणः । तथा । त्यागिनः । ते । सर्वेऽपि । तं श्रीहरिम् । पश्यन्तः । सन्तः । अतिमुदम् । ययुः ॥ ५ ॥ प्रीत इति । अथानन्तरम् । प्रीतोऽतिप्रसन्नः । हरिः । यूयम् । परस्परम् । प्रश्नोत्तरम् । विधत्त

श्वेतं वासः परिदधच्छ्वेतशीर्षपटः प्रभुः । श्वेतां वसानश्च पटीं दधद्वृन्दास्रजं करे ॥ ३ ॥ मणीनावर्त्तयंस्तस्याः स्मरन्नारायणं हृदि । व्यलोकत पुरः संस्थां निजभक्तसभां मुदा ॥४॥ नानादेशसमायाता गृहिणस्त्यागिनस्तथा । तद्भक्तास्तेऽपि सर्वे तं पश्यन्तोऽतिमुदं ययुः ॥५॥ प्रीतोऽथ त्यागिनः प्राह हरिर्यूयं परस्परम् । प्रश्नोत्तरं विधत्तेति ततस्तेऽपि तथा व्यधुः ॥६॥ ब्रह्मानन्दं पप्रच्छेदं तत्र साधुं मुनिस्तु सन् । साधुवर्य ! मम प्रश्नं श्रुत्वा कुरु तदुत्तरम् ॥ ७ ॥ एतस्मिन्निश्चयं प्राप्य प्राक् कश्चिन्नाकृतौ हरौ । तन्नृलीलामथो वीक्ष्य सन्दिग्धे हेतुरत्र कः ॥ ८ ॥ इति पृष्टः स मुनिना कर्तुं तस्योत्तरं यदा । न शशाक तदा स्वामी सुविचार्याब्रवीत्स्वयम् ॥ ९ ॥ प्रश्नोत्तरं तव मुने ! कुर्वेऽहं शृणु सादरम् । संशयो निश्चये यस्मिन् ज्ञातव्योऽपक्क एव सः ॥ १० ॥

कुरुत । इतीत्थम् । त्यागिनः साधून् । प्राह । तत एवंविधश्रीहरिवाक्यश्रवणानन्तरम् । ते त्यागिनोऽपि । तथा श्रीहर्य्युक्तप्रकारेणैव । व्यधुः प्रश्नोत्तराणि चक्रुः ॥ ६ ॥ ब्रह्मानन्दमिति । तत्र तेषु प्रश्नोत्तरकर्त्तृषु साधुषु मध्ये । मुनिर्मुनिसंज्ञः । सन् साधुः । ब्रह्मानन्दम् । साधुम् । इदं वक्ष्यमाणं प्रश्नन् । पप्रच्छ । हे साधुवर्य ! । मम । प्रश्नम् । श्रुत्वा । तदुत्तरम् । कुरु ॥ ७ ॥ एतस्मिन्निति । हे साधो ! । कश्चिद्भक्तः । प्राक् प्रथमम् । नाकृतौ । एतस्मिन्नस्माकं सर्वेषां नयनविषयेऽस्मिन् । हरौ । निश्चयमयमेवाक्षरपरः पुरुषोत्तमोऽस्तीति निर्णयम् । प्राप्य । अथो निश्चयप्राप्त्यनन्तरम् । तन्नृलीलां श्रीहरेर्नृनाट्यानुगतं चरित्रम् । वीक्ष्य । सन्दिग्धे एतस्य भगवत्त्वे संशयं प्राप्नोति । अत्रास्मिन्नर्थे । हेतुः । कः किंकारणमस्तीत्यर्थः ॥ ८ ॥ इतीति । इत्यमुना प्रकारेण । मुनिना मुनिसंज्ञसाधुना । पृष्टः । स ब्रह्मानन्दमुनिः । यदा । तस्य मुनिप्रश्नस्य । उत्तरम् । कर्त्तुम् । न शशाक । तदा । स्वामी । स्वयं श्रीहरिः । सुविचार्य सम्यग्विचारं कृत्वा । अब्रवीत् ॥ ९ ॥ प्रश्नेति । हे मुने ! । तव । प्रश्नोत्तरम् । अहम् । कुर्वे । सादरम् । शृणु । यस्मिन् । निश्चये । संशयः । सः संशययुक्तो निश्चयः । अपक्वोऽदृढ एव । ज्ञातव्यः ॥ १० ॥

संशयनिवृत्तिप्रकारमाह । रूप इति । हे मुने ! । भगवतः । दिव्यमानवे दिव्यं मानुषं चेति संज्ञावती । द्वे । रूपे । भगवतः । तयोर्दिव्यमानवरूपयोः । अभेदेनैकत्वेन । सम्यक् । ज्ञानम् । संशयनाशनं भगवत्स्वरूपगतसंशयनिवर्त्तकम् । भवति ॥११॥ श्रीहरेर्दिव्यमानवयो रूपयोः सम्यगभेदज्ञानप्रकारं वक्तुमुपक्रमते श्रुतीति । हे मुने ! । श्रुतिस्मृतीतिहासेषु । अक्षरधामगम् । सनातनम् । मूलभूतं सर्वकारणरूपम् । हरेः साक्षाद्भगवतः । रूपम् । दिव्यम् । इतीत्थमेव । प्रोक्तम् ॥ १२ ॥ देहिभिरिति । हे मुने ! । देहिभिरत्रत्यजनैः । चक्षुषा चक्षुरिन्द्रियेण । यत् । किञ्चित् । रूपम् । अनुभूयते दृश्यते । भगवतोऽक्षरधामस्थश्रीहरेः । तत् दिव्यम् । रूपम् । तादृशं लोकानां मायिकचक्षुरिन्द्रियग्राह्यरूपसदृशम् । न भवति ॥ १३ ॥ एवमिति । एवममुना प्रकारेणैव । लोकेषु । देहिभिः । श्रुत्या श्रवणेन्द्रियेण । यः । शब्दः । श्रुयते । तस्याक्षरधामस्थस्य । भगवतः । शब्दोऽपि । तादृशो लोकानां मायिकश्रवणेन्द्रियग्राह्यशब्दसदृशः । न भवति ॥ १४ ॥ स्पर्श इति । लोकैर्जनैः । त्वचा त्वगिन्द्रियेण । यः । स्पर्शः । गृह्यतेऽनुभूयते । तस्योक्तविधस्य । भगवतः । स स्पर्शः । तादृशो लोकमायिकत्वगिन्द्रियग्राह्यस्पर्शसदृशः । नास्ति । लोकैः घ्राणेन

रूपे भगवतो द्वे वै दिव्यमानवे । तयोः सम्यगभेदेन ज्ञानं संशयनाशनम् ॥ ११ ॥ श्रुतिस्मृतीतिहासेषु मूलभूतं सनातनम् । प्रोक्तं रूपं हरेर्दिव्यमित्येवाक्षरधामगम् ॥ १२ ॥ देहिभिश्चक्षुषा रूपं यत्किञ्चदनुभूयते । न तादृशं भगवतो रूपं भवति तन्मुने ॥ १३ ॥ एवं यः श्रूयते श्रुत्या शब्दो लोकेषु देहिभिः । शब्दो भगवतस्तस्य तादृशो न भवत्यपि ॥ १४ ॥ स्पर्शस्त्वचा गृह्यते यस्तादृशस्तस्य नास्ति सः । घ्राणेन गृह्यते गन्धो लोकैस्ता दृङ्न चास्य सः ॥ १५ ॥ न जिह्वया वर्णयितुं शक्यः कैश्चिदपि प्रभुः । मनः सङ्कल्पविषयः स च नास्त्येव देहिनाम् ॥ १६ ॥ निश्चेतुं न धिया शक्यो न चिन्त्यश्चेतसाऽपि सः । न चाहङ्कारविषयस्ततोऽधोक्षज उच्यते ॥ १७ ॥ उपमीयेत येनास्य रूपं भगवतो मुने । ब्रह्माण्डे तादृशं रूपं नास्ति दृष्टं न च श्रुतम् ॥ १८ ॥

घ्राणेन्द्रियेण । यः । गन्धः । गृह्यते घ्रायते । अस्योक्तविधस्य भगवतः । स गन्धः तादृग्लोकमायिकघ्राणेन्द्रियग्राह्यगन्धसदृशः । नास्ति ॥ १५ ॥ नेति । कैश्चिदपि । जनैः जिह्वया रसनेन्द्रियेण । स उक्तविधः । प्रभुः श्रीहरिः । वर्णयितुम् । न शक्यः । स श्रीहरिः । देहिनां जनानाम् । मनःसङ्कल्पविषयः । नास्त्येव ॥ १६ ॥ निश्चेतुमिति । स भगवान् । धिया जनानां मत्या । निश्चेतुम् । न शक्यः । चेतसा जनानां चित्तेनापि । चिन्त्यश्चिन्तयितुं शक्यः । नास्ति । सः । अहङ्कारविषयो जनकृताहंभावगोचरः । नास्ति । ततः सर्वेन्द्रियाविषयत्वाद्धेतोः । सः । अधोक्षजः अधोऽक्षजं ज्ञानं यस्य सः । यमिन्द्रियजन्यं ज्ञानं न स्पृशति तथाभूत इत्यर्थः । उच्यते ॥ १७ ॥ एवं श्रीहरिरूपादेर्जनचक्षुरादीन्द्रियग्राह्यत्वाभावमुक्त्वा साम्प्रतं ब्रह्माण्डशब्दाभिहितप्रकृतिकार्यमात्रेऽपि तदीयरूपाद्युपमानाभावमाह द्वाभ्याम् । उपमीयेतेति । हे मुने ! । अस्याक्षरधामस्थभगवतः । रूपम् । येन । रूपेण सह । उपमीयेत । तादृशम् । रूपम् । ब्रह्माण्डे । दृष्टम् । नास्ति । श्रुतं च । नास्ति ॥ १८ ॥

एवमिति । एवममुना प्रकारेणैव । । तस्योक्तविधभगवतः । शब्दादयः शब्द सुगन्ध स्पर्शा इत्यर्थः । बुधैर्मनीषिभिः । यैः शब्दादिभिः सह । उपमीयेरन् । तादृशाः । शब्दः । सुगन्धः । स्पर्शश्चापि । कुत्रचित्कस्मिंश्चिदपि प्रकृतिकार्ये । न सन्ति ॥ १९ ॥ सम्प्रति भगवद्धाम्नोऽप्युपमानाभावमाह । ब्रह्माण्ड इति । अस्य भगवतः । स्थानमक्षरधामापि । येन स्थानपर्यायधाम्ना । उपमीयते । तादृक् । धाम । अत्रास्मिन् । ब्रह्माण्डे । केषांचिदपि । ब्रह्मेन्द्रादि दिवौकसाम् । नास्ति ॥ २० ॥ अथ भगवद्धाम्नः सुखस्याप्युपमानाभावमाह । यदिति । भगवद्धामवासिभिः श्रीहरेरक्षरधामनिवासिभिः । भक्तैः । यत् । सौख्यम् । अनुभूयते । तस्य सुखस्यापि । तुलना उपमा । ब्रह्माण्डे । कचित्कस्मिंश्चित्स्थानेऽपि । नास्त्येव ॥ २१ ॥ साम्प्रतं भगवन्मूर्त्युपमानाभावमाह । आकृतिरिति । अस्य । हरेः । आकृतिर्मूर्त्तिः । यादृशी । अस्ति । तादृशी तथाविधा आकृतिः । अत्र ब्रह्माण्डे । कस्यापि । नास्ति । कोविदैर्मनीषिभिः । अस्य हरेः । साऽऽकृतिः । यया ब्रह्मा-

एवं शब्दः सुगन्धश्च स्पर्शश्चापि न कुत्रचित् । सन्ति यैरुपमीयेरंस्तस्य शब्दादयो बुधैः ॥ १९ ॥ ब्रह्माण्डेऽत्र तु केषांचिद्ब्रह्मेन्द्रादिदिवौकसाम् । तादृग्धाम न येनास्य स्थानमप्युपमीयते ॥ २० ॥ यच्चानुभूयते सौख्यं भगवद्धामवासिभिः । भक्तैस्तस्यापि नास्त्येव ब्रह्माण्डे तुलना कचित् ॥ २१ ॥ आकृतिर्यादृशी चास्य हरेरस्ति न तादृशी । कस्याप्यत्र यया साऽस्य समा प्रोच्येत कोविदैः ॥ २२ ॥ या या आकृतयः सन्ति ब्रह्माण्डे प्राकृता हि ताः । जाताः प्रकृतिपुंयोगादस्य त्वप्राकृताऽस्ति सा ॥ २३ ॥ अप्राकृतप्राकृतयोर्दिव्यादिव्यत्वतो महत् । वैलक्षण्यं भवत्येव सादृश्यं न ततस्तयोः ॥ २४ ॥ पशुपक्ष्यादिभिः साम्यं विजातीयत्वतो भुवि । मनुष्यजातेर्न भवेद्यथा तद्वत्तयोरपि ॥ २५ ॥ साजात्येऽपि मनुष्याणां समत्वं न परस्परम् । प्रायशो दृश्यते लोके व्यवहारो भिदा यतः ॥ २६ ॥

ण्डस्थजनाकृत्या समा तुल्या । प्रोच्येत ॥ २२ ॥ य । इति । हि यतः । ब्रह्माण्डे । या । याः । आकृतयः । सन्ति । तास्ताः । प्रकृतिपुंयोगान्मायापुरुषसम्बन्धात् । जाताः । अतः । प्राकृता मायिकाः । सन्ति । अस्य भगवतः । सा आकृतिस्तु । अप्राकृता । अस्ति ॥ २३ ॥ अप्राकृतेति । अप्राकृतप्राकृतयोः अमायिकमायिकवस्तुनोः । दिव्यादिव्यत्वतोऽलौकिकलौकिकत्वेन । महदतिशयितम् । वैलक्षण्यं भिन्नत्वम् । भवति । ततो हेतोः । तयोः प्राकृताप्राकृतयोः । सादृश्यं समानत्वम् । नास्त्येव ॥२४॥ एतदेव दृष्टान्तेन द्रढयति । पश्विति । यथा । भुवि । मनुष्यजातेः पशुपक्ष्यादिभिः । साम्यं तुल्यत्वम् । विजातीयत्वतो भिन्नजातित्वेन । न भवेत् । तद्वत्तथा । तयोः प्राकृताप्राकृतयोरपि । साम्यम् । न भवेत् ॥ २५ ॥ साजात्य इति । लोके । मनुष्याणाम् । साजात्ये समानजातीयत्वे सत्यपि । परस्परम् । समत्वम् । प्रायशो बहुधा । न दृश्यते । यतः । व्यवहारः । भिदा भेदेन । अस्ति ॥ २६ ॥

भेदाभावे व्यवहारसिध्यभावं कैमुत्येनाह । आगत इति । अयम् । देवदत्तः । अधुना । आगतः । अयम् । विष्णुदत्तः । अधुना । गतः । इत्यादिभेदविज्ञानमेतदादिभेदत्वसाध्यार्थावबोधः । भेदकमन्यविलक्षणधर्मं विना । कथम् । स्यान्न स्यादेव ॥ २७ ॥ पुनर्युक्त्यन्तरेण भेदमेव द्रढयति त्रिभिः । इहेति ! इहास्यामेव सभायाम् । वैश्यौ वैश्यजातीयौ । भगमूलाभिधौ । इमौ प्रत्यक्षौ । भ्रातरौ । वर्णाकृतिसमौ शारीरवर्णाकृतिभ्यां तुल्यौ । स्तः । अतो हेतोः । अनयोर्द्वयोर्विषये । नृणाम् । विवर्त्तोऽन्यस्मिन्नन्यावभासः । अस्ति जायते ॥ २८ ॥ तथेति । तथापि । एतत्परिचये एतयोरतिशयितसंस्तवे सति । भेदकस्तयोर्भेदद्योतको धर्मोऽपि । अवगम्यते ज्ञायते । यद्येन भेदकज्ञानेन । अयम् । भगः । अथ च । अयम् । मूलः। इतीत्थम् । व्यवहार्यते ॥ २९ ॥ एवमिति । एवममुना प्रकारेण । यदा । यर्हि । नृणामपि । परस्परम् । सादृश्यम् । नास्ति । तर्हि । प्राकृताप्राकृतयोः । तत् । सादृश्यम् । कुतस्तरां कुत एव । जायते । न जायत एवेत्यर्थः ॥ ३० ॥ अत इति । अतः प्राकृताप्राकृतयोर्विलक्षणत्वाद्धेतोः । भगवानक्षरधामाधिपतिः स्वयं श्रीहरिः । तस्य श्रीहरेः । धामाक्षरब्रह्माख्यं पदं च । इति । द्वे । अन्योपमे । न मते ।

आगतो देवदत्तोऽयं विष्णुदत्तो गतोऽधुना । इत्यादिभेदविज्ञानं कथं स्याद्भेदकं विना ॥ २७ ॥ इह हि भ्रातरौ वैश्यौ भगमूलाभिधाविमौ । वर्णाकृतिसमौ स्तोऽतो विवर्त्तोऽस्त्यनयोर्नृणाम् ॥ २८ ॥ तथाप्येतत्परिचये भेदकोऽप्यवगम्यते । भगोऽयमथ मूलोऽयमिति यद्व्यवहार्यते ॥ २९ ॥ एवं नृणामपि यदा सादृश्यं न परस्परम् । अप्राकृतप्राकृतयोर्जायते तत्कुतस्तराम् ॥ ३० ॥ अतो न भगवांस्तस्य धाम चान्योपमे मते । बाह्यान्तःकरणानां चागोचरे ते प्रकीर्त्तिते ॥ ३१ ॥ अनेककोटिब्रह्माण्डाधीश्वरो दिव्यविग्रहः । अक्षरब्रह्मणि स्वीये धाम्नि नित्यं स राजते ॥ ३२ ॥ दिव्याभिः सर्वसम्पद्भिः पार्षदैर्दिव्यविग्रहैः । शक्तिभिः सेव्यमानश्च स्वतन्त्रोऽस्तीश्वरेश्वरः ॥ ३३ ॥ भूरिपुण्यो यथा कश्चिच्चक्रवर्त्ती नृपाधीपः । नहुषादिरिवाज्ञायां त्रींल्लोकानपि वर्त्तयेत् ॥ ३४ ॥

इतरस्वसदृशाधिकोपमानभूतवस्त्वभावादेते द्वेऽनन्वयार्हे भवत इति भावः । ते द्वे । बाह्यान्तःकरणानां ब्रह्माण्डान्तर्वर्त्तिसर्वजनबाह्यान्तरिन्द्रियाणाम् । अगोचरे उक्तरीत्या अविषयभूते । प्रकीर्त्तिते ॥ ३१ ॥ अनेकेति । अनेककोटिब्रह्माण्डाधीश्वरः । दिव्यविग्रहः सनातनस्वतःसिद्धदिव्यमूर्त्तिः । स श्रीहरिः । अक्षरब्रह्मण्यक्षरब्रह्मसंज्ञे । स्वीये । धाम्नि । नित्यम् । राजते ॥ ३२ ॥ दिव्याभिरिति । दिव्याभिरमायिकाभिः । सर्वसम्पद्भिः सम्पच्छब्दवाच्यैः सर्ववस्तुभिरित्यर्थः । दिव्यविग्रहैर्ब्रह्मशरीरैः । पार्षदैः । दिव्याभिः । शक्तिभी राधारमादिभिश्च । सेव्यमानः । स्वतन्त्रः । ईश्वरेश्वरः । अस्ति स भगवान्वर्त्तते ॥ ३३ ॥ अथास्यानेककोटिब्रह्माण्डाधीश्वरत्वं दृष्टान्तेन दर्शयति चतुर्भिः । भूरीति । यथा । नहुषादिरिव भूरिपुण्यः । नृपाधिपः खण्डमण्डलनृपत्यधिपतिः । कश्चित् । चक्रवर्त्ती सम्राड्भूपतिः । आज्ञायां स्वनिदेशे । त्रीनपि । लोकान् । वर्त्तयेत् ॥ ३४ ॥

शास्या इति । निजग्रामजनसङ्घार्चितैः स्वीयग्रामीणजनसमूहपूजितैः । पट्टलाख्यैः । ग्रामाधिपैः सह । असङ्ख्या अपि । ग्रामाः । तस्य चक्रवर्त्ति-नृपस्य । शास्या नियम्याः । स्युः ॥ ३५ ॥ तथेति । तथा । नृसुराद्यर्च्यैः स्वस्वब्रह्माण्डवासिमनुष्यदेवादिपूज्यैः तदीश्वरैः स्वस्वब्रह्माण्डपतिभिः । ब्रह्माद्यैर्ब्रह्म-विष्णुशिवैः सह । अनेकब्रह्माण्डानि । भगवतः । शास्यानि । सन्ति । वै ॥ ३६ ॥ विरिञ्चीति । ब्रह्माण्डेशैः स्वस्वब्रह्माण्डपतिभिः । विरिञ्चिविष्णु-गिरिशैः । स्वनायकः स्वस्वामी । पुरुषोत्तमः । स श्रीहरिरेव । भक्त्या । सर्वदा । सेव्यते ॥ ३७ ॥ स्वेति । हे मुने ! । बद्धाञ्जलिपुटैः । पट्टलैः । स्व-ग्रामागमार्थमिति शेषः । चक्रवर्त्ती नृप इव । बद्धाञ्जलिपुटैः । तैर्ब्रह्मादिभिः । स्वस्वब्रह्माण्डागमार्थम् । स श्रीहरिः । मुहुः । प्रार्थ्यते ॥ ३८ ॥ प्रार्थनामाह । हे प्रभो ! । त्वम् । ब्रह्माण्डग्राममस्मदीयं ब्रह्माण्डसंवसथम् । एत्यागत्य । नोऽस्मान् । कृतार्थान् । कुरु । वयम् । शक्त्या स्वसामर्थ्यानुसारेण । सेवां तव परिचर्याम् ।

शास्या ग्रामा असंख्याः स्युस्तस्य ग्रामाधिपैः सह । पट्टलाख्यैर्निजग्रामजनसङ्घार्चितैरपि ॥३५॥ तथा भगवतोऽनेक-ब्रह्माण्डानि तदीश्वरैः । ब्रह्माद्यैर्नृसुराद्यर्च्यैः सह शास्यानि सन्ति वै ॥ ३६ ॥ विरिञ्चिविष्णुगिरिशैर्ब्रह्माण्डेशैः स्वनायकः । स एव सेव्यते भक्त्या सर्वदा पुरुषोत्तमः ॥ ३७ ॥ स्वस्वब्रह्माण्डागमार्थं तैश्च स प्रार्थ्यते मुहुः । पट्टलैश्चक्रवर्त्तीव बद्धाञ्जलिपुटैर्मुने ! ॥ ३८ ॥ ब्रह्माण्डग्राममेत्य त्वं कृतार्थान्कुरु नः प्रभो ! शक्त्या सेवां करिष्यामो देहीक्षां कृपया त्विति ॥ ३९ ॥ एवं सम्प्रार्थ्यमानस्तैस्तत्तद्ब्रह्माण्ड ईश्वरः । स्वतन्त्र आविर्भवति यथाकार्यं वपुर्दधत् ॥ ४० ॥ देवयादःपशुत्रादिजातीनां यत्र जायते । क्रियां तदनुरूपां स करोत्येव न चान्यथा ॥ ४१ ॥ उपेन्द्रः सन्नशात्स्वर्गं देववत्स नभश्चरः । मत्स्यः सन्व्यचरत्तोये मत्स्यवन्नतु भूतले ॥ ४२ ॥

करिष्यामः । त्वम् । कृपया । ईक्षां दर्शनम् । देहि । इत्येवं तैः प्रार्थ्यते इति पूर्वेण सम्बन्धः ॥ ३९ ॥ एवमिति । हे मुने ! । एवममुना प्रकारेण । तैर्ब्रह्मा-दिभिः । सम्प्रार्थ्यमानः । ईश्वरः परमेश्वरः श्रीहरिः । स्वतन्त्रः सन् । यथाकार्यम् । वपुर्मूर्त्तिम् । दधत्सन् । तत्तद्ब्रह्माण्डे । आविर्भवति । अस्यायं भावः । भग-वान्स्वयंतया स्वैकान्तिकमुक्तभक्तेषु स्वगुणैश्वर्यावेशतया च प्रादुर्भवतीति ॥ ४० ॥ देवेति । स भगवान् । देवयादःपशुत्रादिजातीनां मध्ये । यत्र जातौ । जायते आविर्भवति । तदनुरूपां तस्या जातेरनुसारिणीम् । क्रियाम् । करोति । अन्यथा तज्जात्यननुरूपां क्रियाम् । नैव करोति ॥ ४१ ॥ एतदेव स्पष्टमाह त्रिभिः । उपेन्द्र इति । उपेन्द्रो वामनरूपः । स श्रीहरिः । देववत् । नभश्चर आकाशचारी सन् । स्वर्गं लोकम् । अशात्पालयामास । सः । मत्स्यो मीनरूपः सन् । मत्स्यवत् । तोयेऽब्धिजले । व्यचरत् । भूतले । न तु नैव व्यचरत् ॥ ४२ ॥

वराह इति । असौ श्रीहरिः । वराहो वराहवपुः सन् । वराहवत् । घ्राणेन नासिकया । क्ष्मां पृथिवीम् । अवाघ्रासीत् । असौ । हयग्रीवो हयास्यः । भवन्सन् । हयवद्-दश्वेन सदृशीम् । हेषामश्वजातीयशब्दम् । चकार ॥४३॥ त्राकृतिरिति । असौ श्रीहरिः । त्राकृतिःसन् । यस्मिन् । युगे कृतादौ । यावद्यत्परिमाणम् । आयुरायुर्मर्यादा । तावत्तत्परिमाणम् । वपुः शरीरम् । तत्र युगे । दधद्धारयन्सन् । धरातले । नृवन्मनुष्य इव । अवर्त्तत ॥ ४४ ॥ युग इति । सः । ईश्वरः । कृते । त्रेतायाम् । द्वापरे । युगे चापि । युगानुरूपम् । बलं शरीरसामर्थ्यमपि । स्वस्य । देहे । अदर्शयत् ॥ ४५ ॥ कलाविति । सोऽक्षरधामाधिपतिः । स्वयं श्रीहरिः । साम्प्रतम् । कलौ कलियुगे । अत्रत्यमर्त्त्यवत् । दैहिकीः स्वदेहसम्बन्धिनीः । गर्भजन्मकुमारत्वाद्यवस्थाः । दधत्सन् । वर्त्तते । अत्र स्वयं वर्त्तते इत्यस्यायं भावः । योऽयं भगवान्साम्प्रतं वर्त्तते नासावन्यावतारसदृशः किन्तु योऽक्षरधामाधि पतिः स एव श्रीहरिः स्वविरहाक्षमस्वैकान्तिकभक्तभक्तिधर्मादिसुखप्रदानाद्यर्थमाविर्भूतोऽस्तीति

वराहः सन्नवाघ्रासीद् घ्राणेन क्ष्मां वराहवत् । हेषां चकार हयवद्धयग्रीवो भवन्नसौ ॥ ४३ ॥ त्राकृतिः सन्नृवच्चासाववर्त्तत धरातले । यस्मिन् युगे यावदायुस्तावत्तत्र वपुर्दधत् ॥ ४४ ॥ युगे कृते च त्रेतायां द्वापरेऽपि स ईश्वरः । युगानुरूपं च बलं स्वस्य देहेऽप्यदर्शयत् ॥ ४५ ॥ कलौ स्वयं साम्प्रतं स वर्त्ततेऽत्रत्यमर्त्त्यवत् । गर्भजन्मकुमारत्वाद्यवस्था दैहिकीर्दधत् ॥ ४६ ॥ कामक्रोधमदस्वादक्षुत्तृड्भीमोहमत्सरान् । स्नेहव्याधिविरागादीन् स्वस्मिन् दर्शयते नृवत् ॥ ४७ ॥ एवं हि भगवद्रूपे वेदितव्ये उभे मते । धाम्न्यक्षरे दिव्यमाद्यं द्वितीयं त्राकृति क्षितौ ॥ ४८ ॥ उभे येन सुविज्ञाते सत्सच्छास्त्रानुशीलनात् । न तस्य संशयः क्वापि त्राकृतौ भवति प्रभौ ॥ ४९ ॥ यथा रूपान्तरधरे नटे तज्जातिरूपवित् । नाप्नोति संशयं तद्वन्मर्त्त्यचेष्टे हरौ सुधीः ॥ ५० ॥

॥ ४६ ॥ कामेति । कामक्रोधमदस्वादक्षुत्तृड्भीमोहमत्सरान् । स्नेहव्याधिविरागादीन् भावान् । नृवत् । स्वस्मिन् । दर्शयते ॥ ४७ ॥ एवमिति । एवममुना प्रकारेण । अक्षरेऽक्षरब्रह्माख्ये । धाम्नि । स्थितम् । दिव्यम् । आद्यं प्रथमम् । क्षितौ पृथिव्याम् । स्थितम् । त्राकृति नराकारम् । द्वितीयम् । उभे एवंविधे द्वे । भगवद्रूपे । वेदितव्ये । मते ॥ ४८ ॥ उभे इति । येन सत्सङ्गिना भक्तेन । उभे भगवद्रूपे । सत्सच्छास्त्रानुशीलनात् भगवदेकान्तिकसाधूनां यथार्हं परिचरणात् श्रीभागवतादिसच्छास्त्राणां पठनपाठनविचारणतः परिचरणाच्चेत्यर्थः । सुविज्ञाते अभेदेनावबुद्धे । भवतः । तस्य सत्सङ्गिभक्तस्य त्राकृतौ मनुष्यसमानाकारे । प्रभौ श्रीहरौ । संशयः । न भवति ॥ ४९ ॥ एतदेव दृष्टान्तेन द्रढयति । यथेति । यथा । रूपान्तरधरे ब्राह्मणादिस्वविजातीयवेषधारिणि । नटे शैलूषे । तज्जातिरूपवित् तदीयजातिवर्णयोर्वेत्ता पुमान् । संशयम् । नाप्नोति । तद्वत्तथा । सुधीर्भगवत उभयविधस्वरूपैक्यज्ञाननिपुणमतिर्भक्तः । मर्त्यचेष्टे मनुष्यचेष्टामनुकुर्वति । हरौ । संशयं नाप्नोति ॥ ५० ॥

नन्ु भवत्वेवं नटदृष्टान्तेन तदुभयरूपैक्यविदो हरौ संशयाभावः किन्तु मनुष्यसमानानामल्पैश्वर्यत्वावगमकानां विरागदयादिगुणानां कामक्रोधादिदोषाणां च तत्र प्रचुरावलोकने कथं भगवत्त्वभाव इति चेदुभयस्वरूपैक्यविदस्तदीयगुणदोषेष्वलौकिकता विशेषबोधेन संशयाभावं सदृष्टान्तमाह पञ्चभिः । गुणा इति । यद्यपि । नराकृतौ । ईशे परमेश्वरे श्रीहरौ । गुणाः । दोषाश्च । दृश्यन्ते । तथापि । दिव्यभावज्ञो भगवतो दिव्यभावविद्भक्तः । तद्विशेषमितरजनेभ्यस्तद्विलक्षणतारूपां विशेषताम् । बुद्ध्यते जानाति । हि ॥ ५१ ॥ एतदेव स्पष्टमाह विरागेति । सुधीर्भक्तः । विरागादीन् । गुणान् । कामादीन् । दोषान् । ईश्वरे । साक्षाद्भगवति । अनन्यसदृशान्मनुष्येभ्योऽतिविलक्षणान् । पश्यन्सन् । असौ श्रीहरिः । ईशः परमेश्वरः । इतीत्थम् । निश्चिनोति ॥ ५२ ॥ एतदेव दृष्टान्तेन द्रढयति त्रिभिः । पूर्वमिति । पूर्वं पुरा । शङ्कराचार्यः । आदिमं प्रथमम् । रसं शृगारम् । जिज्ञासुर्ज्ञातुमिच्छुः सन् । मृतराजवपुः परासुनृपतिकुणपम् । विष्ट्वा प्रविष्य । तद्भार्यया । सह । मिथो रहसि । 'मिथोऽन्योन्ये रहोऽर्थे चे'ति मेदिनी । रेमे ॥ ५३ ॥ तदेति । तदा तस्मिन्समये । बुद्धिमत्या प्रशस्तबुद्धियुक्तया । राज्ञ्या नृपभार्यया । तत्स्वामिदेहस्तत्पति-

गुणा दोषाश्च दृश्यन्ते यद्यपीशे नराकृतौ । तथापि दिव्यभावज्ञस्तद्विशेषं हि बुद्ध्यते ॥ ५१ ॥
विरागादीन् गुणान् दोषान्कामादीनीश्वरे सुधीः । पश्यन्ननन्यसदृशान्निश्चिनोतीश इत्यसौ ॥ ५२ ॥
पूर्वं हि शङ्कराचार्यो जिज्ञासू रसमादिमम् । मृतराजवपुर्विष्ट्वा रेमे तद्भार्यया मिथः ॥ ५३ ॥
तदा राज्ञ्या तत्स्वामिदेहगोऽपि सः । न मत्पतिरसौ किन्त्वाविष्टः कोऽपीति निश्चितम् ॥ ५४ ॥
एवं सूक्ष्मदृशा सुज्ञैस्तदसाधारणैर्गुणैः । निश्चीयते हरिरसाविति जानीहि बुद्धिमन् ! ॥ ५५ ॥
अल्पैश्वर्येक्षणान्नृणां यदेत्थं निश्चयो भवेत् । तर्ह्यैश्वर्यं हरिर्भूरि किं न दर्शयतीति चेत् ॥ ५६ ॥

कुणपकृतावेशोऽपि । स शङ्कराचार्यः । असौ । मत्पतिः । न । किन्तु । कोऽपि योगी । आविष्टः किञ्चित्कार्यसिध्यर्थं मत्पतिदेहकृतावेशोऽस्ति । इतीत्थम् । निश्चितम् । सविस्तरोऽयमर्थ आनन्दगिरिकृतान्माधवीयाच्च शङ्करदिग्विजयाद्बोध्यः ॥ ५४ ॥ एवमिति । हे बुद्धिमन्मुने ! । एवममुना प्रकारेण । साक्षाद्भगवति गुणदोषविद्यमानत्वे सत्यपीत्यर्थः । सुज्ञैर्भगवद्दिव्यमानुषभावैक्यविद्भिः सुमतिभिः । सूक्ष्मदृशा । तदसाधारणैर्भगवदेकनिष्ठैः । गुणैः स्वदिव्यभावद्योतकैरनवधिकातिशयवात्सल्यौदार्यसाधन यथा तथाविधजनसद्यः समाधिविधापनादिभिरल्पैरपि धर्मैः । असौ । हरिरक्षरधामाधिपतिः स्वयं पुरुषोत्तमः । निश्चियते । इतीत्थम् । जानीहि ॥ ५५ ॥ ननु गुणदोषरूपप्रचुरमानुषभावद्योतके हरावल्पैश्वर्येक्षणादेवं निश्चयो जायते तर्ह्यधिके ह्यधिको गुण इति न्यायात्तस्य बहुतया प्रदर्शनं युक्तमित्थंभूतायाः केषांचिदाशङ्काया निवृत्तये स्वयमेव शङ्कामुद्भाव्य तां निवर्त्तयति । अल्पेति । यदा । अल्पैश्वर्येक्षणात् । नृणां भक्तजनानाम् । इत्थम् । निश्चयः । भवेत् । तर्हि । हरिः । भूरि प्रचुरम् । ऐश्वर्यम् । किं न दर्शयति कस्मान्न प्रदर्शयति । इत्याशङ्कां केचित्कुर्युश्चेत् । अत्रेत्युत्तरेण सम्बन्धः ॥ ५६ ॥

अत्रेति । अत्रास्मामाशङ्कायाम् । हे मुने ! । उत्तरम् । सदृष्टान्तं यथा तथा । वच्मि । निशामय त्वं श्रुणु । यथा । नृणां भक्तानाम् । हितम् । भवेत् । हरिः । तथैव । कुरुते ॥ ५७ ॥ तेज इति । नारायणोऽयं साक्षान्नारायणो भवतीति । श्रुतोऽसावादित्यो ब्रह्मेति श्रुत्योक्तः । तेजोनिधिः । असौ प्रत्यक्षः । सूर्यः । सर्वैः । मनुजैः । प्रतिवासरम् । प्रत्यक्षं यथा तथा । ईक्ष्यते ॥ ५८ ॥ तथेति । तथापि । एतद्दर्शनतोऽस्य सूर्यस्य दर्शनात् । अस्माकम् । निःश्रेयसम् । अभूत् । इत्येवंविधः । भुवि । केषांचिदपि । निश्चयः नैव दृश्यते ॥ ५९ ॥ नाकृतेरिति । इह लोके । नाकृतेः । रामकृष्णादिसंज्ञस्य । हरेः । तद्भक्तस्य । शुकादेश्च । आदिशब्दान्नारद हनुमदादिग्रहणम् । दर्शनात्तु । स निःश्रेयसनिश्चयः । जायते ॥ ६० ॥ तयोरिति । तयोर्नराकृति हरितद्भक्तयोः । दीपादिवीक्ष्यदेहत्वाद्दीपादिप्रभावीक्षणीयाङ्गत्वात् । अल्पोऽपि । अङ्गप्रकाशस्तु । केनापि । नेक्ष्यते । तथापि । एवं पूर्वोक्तप्रकारेण । निश्चयस्तद्दर्शनात्स्वकल्याण

अत्रोत्तरं मुने ! वच्मि सदृष्टान्तं निशामय । हितं यथा भवेन्नृणां तथैव कुरुते हरिः ॥ ५७ ॥ तेजोनिधिरसौ सूर्यो नारायण इति श्रुतः । प्रत्यक्षमीक्ष्यते सर्वैर्मनुजैः प्रतिवासरम् ॥ ५८ ॥ तथापि निश्चयो नैव केषांचिद् दृश्यते भुवि एतद्दर्शनतोऽस्माकं निःश्रेयसमभूदिति ॥ ५९ ॥ नाकृते रामकृष्णादिसंज्ञस्य तु हरेरिह । तद्भक्तस्य शुकादेश्च दर्शनात्तु स जायते ॥ ६० ॥ तयोरङ्गप्रकाशस्तु केनाप्यल्पोऽपि नेक्ष्यते । दीपादिवीक्ष्यदेहत्वात्तथाऽप्येवं हि निश्चयः ॥ ६१ ॥ अथाग्निरपि वेदादौ नारायण इतीर्यते । अहं वैश्वानरो भूत्वेत्याद्याह च हरिः स्वयम् ॥ ६२ ॥ तं सेवमानोऽनुदिनमपि कोऽपि न चेतसि । निश्चिनोति मम श्रेयोऽनेन जातमिति क्वचित् ॥ ६३ ॥ सर्वेषां भगवन्मूर्त्तेस्तदीयानां च सन्नृणाम् दर्शनाद्यैस्तु हृदये श्रेयोबुद्धिः प्रजायते ॥ ६४ ॥ तत्रोपास्योपासकयोर्वैजात्यं हेतुरीयते । सजातीयप्रसङ्गो हि सौमनस्याय देहिनाम् ॥ ६५ ॥

निश्चयः । जायते । हि ॥ ६१ ॥ अथेति । अथ च । अग्निरपि । वेदादौ । नारायणः । इति । ईर्यते । तथा च श्रुतिः । अग्निरग्रे प्रथमो देवतानां सञ्जातानामुत्तमो विष्णुरासी'दिति । अहं वैश्वानरो भूत्वा । इत्यादिवचनम् । स्वयम् । हरिः श्रीकृष्णः । आह भगवद्गीतायामर्जुनं प्रति जगाद ॥ ६२ ॥ तमिति । तमग्निम् । अनुदिनं प्रतिदिनम् । सेवमानोऽपि । कोऽपि । जनः । अनेनाग्निसेवनेन । मम । श्रेयः कल्याणम् । जातम् । इतीत्थम् । क्वचित्कदाचिदपि । चेतसि । न निश्चिनोति ॥ ६३ ॥ सर्वेषामिति । भगवन्मूर्त्तेर्नराकृतेः साक्षाच्छ्रीहरेः । तदीयानां तदाश्रितानाम् । सन्नृणां साधुपुरुषाणां च । दर्शनाद्यैस्तु । सर्वेषां तद्भक्तजनानाम् । हृदये । श्रेयोबुद्धिर्मत्कल्याणं जातमिति निश्चयः प्रजायते ॥ ६४ ॥ तत्रेति । तत्र तेजस्विसूर्याग्निदर्शनादिना श्रेयोबुद्ध्यभावे । उपास्योपासकयोः स्वामिसेवकयोः । वैजात्यं भिन्नजातित्वम् । हेतुः कारणम् । ईयते बुद्ध्यते । हि यतः । सजातीयप्रसङ्गः स्वसमानजातीयसम्बन्धः । देहिनाम् । सौमनस्याय । भवति ॥ ६५ ॥

एतदेव स्पष्टमाह । सूर्यस्येति । सूर्यस्य । तेजसाऽऽतपात्मकेन । वह्नेरग्नेः । स्पर्शात् । नृणाम् । दाहः । भवेत् । अतो हेतोः । तयोर्वह्निसूर्ययोर्विषये । तेषां तद्भक्तानाम् । भक्तिः । श्रेयोऽर्थं स्वकल्याणार्थम् । न जायते ॥ ६६ ॥ दुर्वास इति । किञ्च । कुन्त्या पृथया । दुर्वासोदत्तमन्त्रेण । आहुतः । अर्कः । सूर्यः । नररूपधरः । आगतः सन् । तया कुन्त्या सह । रेमे । तेन हेतुना । सा कुन्ती । सुखमङ्गसङ्गानन्दम् । आप ॥ ६७ ॥ तेज इति । यदि । भास्करः । तेजोमयेन । रूपेण । आगमिष्यत् । तर्हि । मानवी मनुष्यजातीया । सा कुन्ती । सुखम् । नाप्स्यत् । तापं च । आप्स्यत् । हि ॥ ६८ ॥ सङ्कोचितेति । अतो हेतोः । सः । सङ्कोचितः प्रकाशो यस्मिंस्तेन । रूपेण । आगतः । विकाशितप्रकाशेन । रूपेण । गगने । अचरत् ॥ ६९ ॥ एवमिति । एवममुना प्रकारेण । असौ साक्षाच्छ्रीहरिः । नृणां स्वभक्तानाम् । हिताय । निजां स्वकीयाम् । कोटिकोटिरविप्रभामपरिमितभास्करप्रकाशम् । सङ्कोचयित्वैव । अत्र मनुष्यलोके । नृरूपेण । वर्त्तते ॥ ७० ॥

सूर्यस्य तेजसा वह्नेः स्पर्शाद्दाहो नृणां भवेत् । अतस्तेषां तयोर्भक्तिः श्रेयोऽर्थं च न जायते ॥ ६६ ॥ दुर्वासोदत्तमन्त्रेण कुन्त्याऽऽहूतोऽर्क आगतः । नररूपधरो रेमे तया तेनाप सा सुखम् ॥६७॥ तेजोमयेन रूपेणागमिष्यद्यदि भास्करः । तर्हि नाप्स्यत्सुखं सा तु तापं चाप्स्यद्धि मानवी ॥ ६८ ॥ सङ्कोचितप्रकाशेन नृरूपेणात आगतः । विकाशितप्रकाशेन रूपेण गगनेऽचरत् ॥ ६९ ॥ एवं नृणां हितायासौ कोटिकोटिरविप्रभाम् । निजां सङ्कोचयित्वैव नृरूपेणात्र वर्त्तते ॥ ७० ॥ धाम्न्यक्षरेऽपि स स्वेन रूपेणातिप्रभावता । विराजते समर्थस्य दुष्करं नास्ति किञ्चन ॥ ७१ ॥ यदि तेनैव रूपेणागमिष्यद्भगवानिह । तर्हि शङ्काऽभविष्यद्धै भूतादेस्तत्र निश्चितम् ॥ ७२ ॥ दिव्यभावे भगवति नातिप्रीतिर्भवेन्नृणाम् । न हि प्रीतिर्विजातीये प्रायशो भुवि दृश्यते ॥७३॥ नृणां नृषु भवेत्प्रीतिः पशूनां पशुषु ध्रुवम् । पक्षिणां पक्षिषु मुनेऽन्येषामपि सजातिषु ॥ ७४ ॥ पार्थाय दर्शितं विश्वरूपं प्राग्धरिणाऽऽत्मनः । सुखं तेन स न प्राप किन्तु विक्लवतां भृशम् ॥ ७५ ॥

धाम्नीति । स श्रीहरिः । अक्षरेऽक्षरब्रह्माख्ये । धाम्नि स्वपदेऽपि । अतिप्रभावता । स्वेन स्वकीयेन । रूपेण दिव्यस्वरूपेणापि । विराजते । नन्वेकस्य कथमुभयत्रावस्थितिरितिचेत्तत्राह । समर्थस्य निरवधिकातिशयैश्वर्यवतः श्रीहरेः । किञ्चन किमपि । दुष्करमसाध्यम् । नास्ति ॥ ७१ ॥ यदीति । यदि । भगवान् श्रीहरिः । इह मनुष्यलोके । तेन दिव्येन । रूपेण स्वरूपेण । आगमिष्यत् । तर्हि । तत्र भगवति । भूतादेः । शङ्का । अभविष्यत् । निश्चितम् ॥ ७२ ॥ दिव्येति । दिव्यभावे दिव्यभावयुक्ते । भगवति श्रीहरौ । नृणां भक्तानाम् । अतिप्रीतिः । न भवेत् । हि यतः । भुवि । विजातीये । प्रीतिः । प्रायशः । न दृश्यते ॥ ७३ ॥ एतदेव स्पष्टमाह । नृणामिति । हे मुने ! । नृणां मनुष्याणाम् । नृषु । प्रीतिः । भवेत् । पशूनाम् । पशुषु । प्रीतिः । भवेत् । पक्षिणाम् । पक्षिषु । प्रीतिः । भवेत् । अन्येषां मीनादिदेहिनामपि । सजातिषु स्वस्वसमानजातीयेषु । प्रीतिः । भवेत् । ध्रुवम् ॥ ७४ ॥ एतदेव प्राक्तनदृष्टान्तेन द्रढयति द्वाभ्याम् । पार्थायेति । हरिणा श्रीकृष्णेन ।

प्राक् प्रथमम् । आत्मनः स्वस्य । विश्वरूपम् । पार्थायार्जुनाय । दर्शितम् । स पार्थः । तेन विश्वरूपदर्शनेन । सुखम् । न प्राप । किन्तु । भृशमतिशयिताम् । विक्लवतां व्याकुलताम् । प्राप ॥ ७५ ॥ यदेति । यदा भगवता श्रीकृष्णेन । पुनः । नृरूपम् । दर्शितम् । तदा । स पार्थः । निर्वृतः सुखितः सन् । दृष्ट्वेदं मानुषं रूपम् । इत्यादिवचनम् । आह ॥ ७६ ॥ अत इति । यदा । हरिः । सङ्कोचितैश्वर्यः सन् । नाकृतिः । वर्त्तते । तदा । तद्दर्शनस्पर्शौ । स्तः । नवविधा श्रवणादिनवप्रकारा । भक्तिस्तत्सेवा च । अस्ति जायते ॥ ७७ ॥ नृनाट्य इति । नृनाट्यगोपितं स्वीयमनुष्यभावप्रदर्शनेन निगूहितमपि । हरेः । महैश्वर्यम् । कचित्कदाचित् । कार्यवैयग्र्ये किञ्चित्कार्यनिमित्तायां व्याकुलतायामित्यर्थः । सञ्जाते सति । प्रादुर्भूतम् । विलोक्यते ॥ ७८ ॥ एतदेव श्रीकृष्णदृष्टान्तेन । यथेति । यथा । भीष्मवधे शान्तनववधनिमित्तम् । शैघ्र्ये शीघ्रत्वे जाते सति । मनुष्यत्वास्मृतेः स्वमनुष्यभावविस्मरणाद्धेतोः । विश्वाधारस्य । विभोः श्रीकृष्णस्य । भारम् । धरणी पृथ्वी । वोढुं वहनं कर्तुम् । न चक्षमे । असमर्था सती चचालेत्यर्थः । तथाचोक्तं श्रीभागवते । 'धृतरथचरणोऽभ्ययाच्चलद्गु इति ॥ ८० ॥ स्वयमिति ।

यदा पुनर्भगवता नृरूपं दर्शितं तदा । दृष्ट्वेदं मानुषं रूपमित्याद्याह स निर्वृतः ॥ ७६ ॥ अतः सङ्कोचितैश्वर्यो नाकृतिर्वर्त्तते हरिः । तदा तद्दर्शनस्पर्शौ भक्तिर्नवविधाऽस्ति च ॥ ७७ ॥ नृनाट्यगोपितमपि महैश्वर्यं हरेः क्वचित् । सञ्जाते कार्यवैयग्र्ये प्रादुर्भूतं विलोक्यते ॥७८॥ यथा भीष्मवधे शैघ्र्ये मनुष्यत्वास्मृतेर्विभोः । विश्वधारस्य धरणी भारं वोढुं न चक्षमे ॥ ७९ ॥ स्वयमेव हरिः क्वापि कस्मैचित्स निजेच्छया । प्रदर्शयति तद्यद्व्रजलेऽक्रूराय यामुने ॥ ८० ॥ अतो नराकृतिर्विष्णुर्नृवत्कुर्वन् क्रिया अपि । सकलैश्वर्यसम्पन्नो भवतीत्यवगम्यताम् ॥ ८१ ॥ एवं भगवतो रूपे न ज्ञाते यैस्तु तत्त्वतः । उदेति संशयस्तेषां नृलीलां कुर्वति प्रभौ ॥ ८२ ॥ सम्यग्ज्ञानविहीनो यो निश्चयोऽपक्व एव सः । उत्पाद्य संशयं चित्ते विनश्यत्यचिरेण वै ॥ ८३ ॥

क्वापि कदाचित् । स नाकृतिः । हरिः । निजेच्छया । कस्मैचित् । तत्स्वैश्वर्यम् । यामुने यमुनासम्बन्धिनि जले । अक्रूराय । यद्वद्यथा । तथा । स्वयमेव । प्रदर्शयति ॥ ८० ॥ अत इति । अतो हेतोः । नराकृतिः । विष्णुः श्रीहरिः । नृवन्मनुष्यतुल्यतया । क्रिया अशनपानादिकाः । कुर्वन्सन्नपि । सकलैश्वर्यसम्पन्नः । भवति । इतीत्थम् । अवगम्यताम् । नृनाट्यानुकारित्वेऽपि स्वेन श्रीहरिणा यदमानुषसकलैश्वर्यं प्रदर्शितं तस्य स्वमुखेन वक्तुमयुक्तत्वान्नोक्तं कार्ष्णीयं च तदुक्तमथापि श्रीहरेर्दिव्यमलौकिकं यदैश्वर्यं तत्सत्सङ्गिजीवने मकरालयपुरादावुक्तं सम्यग्वेद्यम् ॥८१॥ एवमिति । एवममुना प्रकारेण । यैर्भक्तैः । भगवतः श्रीहरेः । रूपे दिव्यमानुष्ये । तत्त्वतः । न ज्ञाते भवतः । तेषां भक्तानाम् । नृलीलाम् । कुर्वति । प्रभौ श्रीहरौ । संशयः । उदेत्युत्पद्यते ॥८२॥ सम्यगिति । सम्यग्ज्ञानविहिनो भगवद्दिव्यमानुष्यभावैक्यज्ञानवर्जितः । यः निश्चयोऽस्ति । अपक्वः । स निश्चयः । चित्ते भक्तमानसे । संशयं स्वेष्टभगवत्स्वरूपे सन्देहम् । उत्पाद्य । अचिरेणाबहुकालेन । विनश्यत्येव । वै ॥८३॥

बाल्य इति । अर्भकैः कुमारैः । बाल्ये । अभ्यस्तम् । किञ्चित् । गद्यम् । अथवा । पद्यम् । तत्कालमभ्याससमकालम् । कण्ठगतं स्मृतिपथगतं सदपि । अचिरेण । तत् । अपयाति विस्मरति ॥ ८४ ॥ तदिति । तद्गद्यं पद्यं चैव । दृढं यथा तथा । अभ्यस्तं सत् । सदा । स्मृतिपथम् । याति । यावद्वपुःक्षयं देहपातपर्यन्तमपि । निद्रायामपि । न विस्मर्यते ॥ ८५ ॥ एवमिति । एवममुना प्रकारेण । सत्प्राप्तया श्रीहरेरेकान्तिसाधोर्लब्धया । बुद्ध्या श्रीहरेर्दिव्यमानुषभावैकत्वज्ञानेन । दृढाभ्यस्तः । निश्चयः श्रीहरिस्वरूपनिर्णयस्तु । देशकालादिवैषम्ये सत्यपि । कर्हिंचित् । नापयाति ॥ ८६ ॥ इतीति । इत्येवंविधम् । हरेः । वागमृतम् । श्रुतिकंसेन श्रवणपात्रेण । निपीय । मुनिर्मुनिसंज्ञः । असौ । सन्साधुः । परमाम् । मुदम् । आप । अपरे तदन्ये । तच्छ्रिताः श्रीहरेर्भक्ताः । साधुजनाः । गृहिभक्ताश्च । परमां मुदमापुः ॥ ८७ ॥ उक्त्वैक्यं स्वस्वरूपस्य दिव्यस्य मानवस्य च । स्वज्ञानदार्ढ्यं यः प्राह तद्वत्तां श्रीहरिः स मे ॥ १ ॥ इति श्रीमदेकान्तिक-

बाल्ये हि किञ्चिदभ्यस्तं गद्यं वा पद्यमर्भकैः । तत्कालं कण्ठगतमप्यपयात्यचिरेण तत् ॥ ८४ ॥ तदेव
दृढमभ्यस्तं यान्ति स्मृतिपथं सदा । विस्मर्यते न निद्रायामपि यावद्वपुःक्षयम् ॥ ८५ ॥ एवं
सत्प्राप्तया बुद्ध्या दृढाभ्यस्तस्तु निश्चयः । देशकालादिवैषम्येऽप्यपयाति कर्हिचित् ॥८६॥ इति वाग्मृतं
हरेरसौ श्रुतिकंसेन निपीय सन्मुनिः । परमां मुदमाप चापरे सकलाः साधुजनाश्च तच्छ्रिताः ॥ ८७ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते शताधिकत्रिंशतितमस्तरङ्गः ॥ १३० ॥ ४ ॥

शकाब्दे विक्रमार्कस्य नगाश्ववसुभूमिते । कृष्णाष्टम्यां तपस्यस्य वचोऽमृतमिदं हरेः ॥ १ ॥
तत्र पञ्चालखेटेऽसौ हेमन्तनृपवेश्मनः । बहिर्वेद्यां महापीठे न्यषीदत्स्वाश्रितैर्वृतः ॥ २ ॥
शोणोष्मकरनीशारः सितधोत्र शिरःपटः । सितप्रावारवसनः प्रसन्नमुखपङ्कजः ॥ ३ ॥

धर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्स्नुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां शताधिकत्रिंशत्तमस्तरङ्गः ॥ १३० ॥ ४ ॥

येषां तु पुरतो मानो रक्ष्यो हेयः स यत्पुरः । उभयेषां व्यक्तिरुक्ता तेषां पञ्चमके स्फुटम् ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८७७) तपस्यस्य फाल्गुनमासस्य । कृष्णाष्टम्यां कृष्णपक्षीयाष्टमीतिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । पञ्चालखेटे । हेमन्तनृपवेश्मनो दुर्गान्तर्वर्त्तिहेमन्तभूपभवनस्य । बहिर्वेद्याम् । महापीठे स्वास्तृतपर्यङ्कासने । स्वाश्रितैर्नानादेशागतैस्त्यागिगृहिस्वभक्तैः । वृतः सभायां परिवेष्टितः । असौ श्रीहरिः । न्यषीदत् ॥ २ ॥ तं विशिनष्टि । शोणेति । शोणोष्मकरनिशारो रक्तवर्णघर्मकरहिमानीलनिवारणो नीशारः । सितौ श्वेतवर्णौ धोत्रशिरःपटौ परिधानीयशिरोवेष्टनीयवसने यस्य सः । सितं प्रावारवसनमुत्तरीयपटो यस्य सः । प्रसन्नमुखपङ्कजः ॥ ३ ॥

स्वयमिति । सत्तमः साधुश्रेष्ठः । स्वयम्प्रकाशानन्दो मुनिः । तं श्रीहरिम् । नत्वा । पप्रच्छ । हे प्रभो ! । मानः । सर्वत्र सर्वेषां पुरः । हातव्यस्त्याज्यः । अथवा । स मानः । क्वापि केषांचनपुरः । रक्ष्यः भवति । अत्र काकु त्वं वोध्यम् ॥४॥ 'स्वयम्प्रकाशानन्देन सम्पृष्टो मुनिनेति सः । नन्दयन् हरिकृष्णस्तं जगादेत्थं परांस्तथा । साक्षादिति । हे मुने ! । भुवि । ये मानवाः । साक्षात्कृष्णाय प्रत्यक्षाय श्रीहरये । द्रुह्युः अथवा । सद्भ्यस्तदीयसाधुभ्यः । द्रुह्युः । तेषां मानवानाम् । पुरतस्तु । मानः । रक्ष्यः । इत्येवम् । उचितं योग्यम् । खलु । 'यस्मिन्यथा वर्त्तते यो मनुष्यस्तस्मिंस्तथा वर्त्तितव्यं स धर्मः । मायाचारो मायया वर्त्तितव्यः साध्वाचारः साधुना प्रत्युपेय'इति विदुरोक्तेः । यद्यप्यत्र कृष्णतत्सद्द्रोहिणां पुरुतो मानरक्षणमुक्तमथापि स तदग्रे देशकालाद्यनुसृत्य रक्ष्योऽन्यथा प्रपन्नामृतप्रसिद्धकुरेशदाशरथ्योरिव विक्षेपाय स्यादिति ज्ञेयम् ॥ ५ ॥ साक्षादिति । साक्षाद्धरेः । पुरतः । तद्भक्तानां च । पुरतस्तु । मानः । सर्वथा । सदा । हेयस्त्याज्यएव । दासवच्च । वर्त्तितव्यम् । भक्तैरिति शेषः । 'अहं हरे तव पादैकमूलदासानुदासो भवितास्मि भूय'इति श्रीभागवतोक्तेः ॥ ६ ॥ इतीति । इत्येवंविधम् । प्रभोः । तस्य श्रीहरेः ।

स्वयम्प्रकाशानन्दस्तं नत्वा पप्रच्छ सत्तमः । मानः सर्वत्र हातव्यो रक्ष्यो वा क्वापि स प्रभो ! ॥ ४ ॥ श्रीहरिरुवाच—साक्षात्कृष्णाय सद्भ्यो वा दुह्युर्ये भुवि मानवाः । तेषां तु पुरतो रक्ष्यो मान इत्युचितं खलु ॥ ५ ॥
साक्षाद्धरेस्तु पुरतस्तद्भक्तानां च सर्वथा । हेय एव सदा मानो वर्तितव्यं च दासवत् ॥ ६ ॥ इति प्रभोस्तस्य वचो निशम्य सुधासमानं स मुनिस्तुतोष । सदोनिषण्णाः सकलाश्च तस्य समाश्रिताः साधुजना गृहस्थाः ॥ ७ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते शताधिकैकत्रिंशतितमस्तरङ्गः ॥ १३१ ॥ ५ ॥

शकाब्दे विक्रमार्कस्य नगाश्ववसुभूमिते । नवम्यां फाल्गुनस्यान्ते वचोऽमृतमिदं हरेः ॥ १ ॥
पञ्चालखेटके तत्र दुर्गे हेमन्तभूभृतः । वेद्यां न्यषीदत्स शुभे मञ्चके स्वास्तृते प्रभुः ॥ २ ॥

सुधासमानम् । वचः । निशम्य । मुनिः । स स्वयम्प्रकाशानन्दः साधुः । तुतोष । सदोनिषण्णाः । तस्य श्रीहरेः । समाश्रिताः । सकलाः । साधुजनाः । गृहस्थाश्च । तुतुषुः ॥ ७ ॥ मानं स्वस्य स्वभक्तानां पुरो रक्ष्यं न तद्द्रुहाम् । पुरो रक्ष्यं च यः प्राह स हरिर्मां ततोऽवताम् ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्स्नुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां शताधिकैकत्रिंशस्तरङ्गः ॥ १३१ ॥ ५ ॥

आविर्भावात्स्वरूपाणामैश्वर्याणां च सर्वशः । हरिरेव स्वयं कृष्णः षष्ठे तूक्तः सहेतुकम् ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८७७) फाल्गुनस्यमासस्य । अन्ते कृष्णपक्षे । नवम्यां तिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ पञ्चालेति । तत्र तिथौ । पञ्चालखेटके । हेमन्तभूभृतः । दुर्गे । वेद्यां तद्भवनस्य बाह्यवेदिकायाम् । स्वास्तृते । शुभे शोभमाने । मञ्चके पर्यङ्कासने । प्रभुः । स श्रीहरिः । न्यषीदत् ॥ २ ॥

सितेति । सितधोत्रः परिहितश्वेताधोंशुकः । सितोष्णीषः शिरोनिबद्धश्वेतसूक्ष्मघनमृदुवसनः । सितप्रावरणांशुकः प्रावृतश्वेताङ्गवस्त्रः । उष्मकारुणनीशार- मुष्मगुणकररक्तवर्णहिमानिलनिवारणं नीशारम् । दधत् । भक्तगणैर्नानादेशागतैस्त्यागिगृहिस्वभक्तवृन्दैः । वृतः सभायां परिवेष्टितः ॥ ३ ॥ स्वयमिति । प्रसन्नास्यः । सर्ववित् । स श्रीहरिः । स्वयमेव । साधून् । अब्रवीत् । इति । सार्द्धश्लोकस्यैकसम्बन्धः । हे साधवः ! । मया । बहुधा । विचार्य । सकल- वेदेतिहासपुराणागमसिद्धान्तज्ञानाय तेषु मतिप्रसारपूर्वं विचारं कृत्वेत्यर्थः । यत् । निश्चितम् । तत् । वदामि ॥ ४ ॥ अवतारा इति । भगवतः श्रीहरेः । अवतारा अवतरणमवतारः सोऽस्त्यस्येत्यवतार इतिव्युत्पत्त्या स्वयंतयाऽवतीर्यते गुणैश्वर्यादिना भगवता स्वैकान्तिकमुक्तेष्वितिव्युत्पत्त्या स्वकीयमुक्तभक्तद्वारा चेत्येवं द्विविधा अपि प्रादुर्भावाः । सहस्रशोऽपरिमिता एव । भवन्ति । तत्र तेष्ववतारेषु मध्ये । कृष्णसमो वसुदेवसूनुना श्रीकृष्णेन तुल्यः । सर्वशक्तिधृत्सकलैश्वर्यधरः । अन्यः । अव- तारः । नास्ति । किन्त्वेतादृशोऽयमेवास्तीत्यर्थः ॥ ५ ॥ अत्र हेतुमाह । अन्येषामिति । अन्येषाम् । स्वस्वरूपाणां लक्ष्मीनारायणादीनाम् । ये । भावा ऐश्वर्याणि सन्ति ।

सितधोत्रः सितोष्णीषः सितप्रावरणांशुकः । उष्मकारुणनीशारं दधद्भक्तगणैर्वृतः ॥ ३ ॥
स्वयमेवाब्रवीत्साधून्प्रसन्नास्यः स सर्ववित् । मया विचार्य बहुधा निश्चितं यद्वदामि तत् ॥ ४ ॥
अवतारा भगवतो भवन्त्येव सहस्रशः । तत्र कृष्णसमो नान्योऽवतारः सर्वशक्तिधृत् ॥ ५ ॥
अन्येषां स्वस्वरूपाणां भावा ये तेऽखिला अपि । अत्र सन्दर्शितास्तेन कृष्णः स्वयमितीर्यते ॥ ६ ॥
स्वजन्मकाले मथुरापुर्यां लक्ष्मीशताऽऽत्मनः । चतुर्भुजेन रूपेण पितृभ्यां तेन दर्शिता ॥ ७ ॥
गोकुले च यशोदायै विश्वरूपत्वमात्मनः । प्रदर्शितं चार्जुनाय वैराजत्वं महामृधे ॥ ८ ॥
अर्जुनायैव दत्तं च भूमरूपस्य दर्शनम् । पुरुषोत्तमता चोक्ता स्वमुखेनैव तं प्रति ॥ ९ ॥

अखिला अपि । ते भावाः । अत्र कृष्णावतारे । सन्दर्शिताः स्वेन प्रकाशिताः । तेन हेतुना । कृष्णः । स्वयं स्वयमेव । इतीत्थम् । ईर्यते कृष्णस्तु भगवान्स्वय- मित्यादि श्रीभागवतवचनेन कथ्यते ॥ ६ ॥ श्रीकृष्णेन स्वस्मिन्प्रदर्शितान् भावानाह षड्भिः । स्वेति । मथुरापुर्याम् । स्वजन्मकाले । आत्मनः स्वस्य । लक्ष्मीशता वैकुण्ठलोकवर्त्तिश्रीलक्ष्मीनारायणस्वरूपभावः । तेन श्रीकृष्णेन । चतुर्भुजेन । रूपेण । पितृभ्यां देवकीवसुदेवाभ्याम् । दर्शिता ॥ ७ ॥ गोकुल इति । गोकुले व्रजे । आत्मनः स्वस्य । विश्वरूपत्वम् । यशोदायै स्वमात्रे । प्रदर्शितम् । स्वाल्पास्ये इति शेषः । महामृधे भारते युद्धे । आत्मनः । वैराजत्वं विश्वरूपत्वं च । अर्जुनाय । प्रदर्शितम् । तत्रैकत्र स्थितिकालीनमन्यत्र प्रलयकालीनं तदिति भेदो बोध्यः ॥ ८ ॥ अर्जुनायेति । किञ्च । भूमरूपस्याव्याकृतधामवर्त्तिस्वकीयभूमपुरुषस्वरूपस्य । दर्शनम् । अर्जुनाय द्विजपुत्रानयने पुनरपि पार्थायैव । दत्तम् । किञ्च । तमर्जुनं प्रति । स्वमुखेनैव । पुरुषोत्तमता स्वीयपुरुषोत्तमत्वं च । उक्ता ॥ ९ ॥

अर्जुनाय श्रीकृष्णोक्तस्वपुरुषोत्तमतामाह । यस्मादिति । यस्माद्धेतोः । अहम् । क्षरम् । अतीतः । अक्षरादपि । उत्तमश्चास्मि । अतो हेतोः । लोके । वेदे च । पुरुषोत्तमः । प्रथितः । अस्मि ॥१०॥ राधेति । तथा । राधादिसहितत्वेन राधिका गोप गोप्यादिसहिततया आत्मनः स्वस्य । गोलोकेश्वरता । दर्शिता । रासोत्सवाचरणेनेतिशेषः । यमुनां प्रति । गोप्युक्त्या श्रीकृष्णः सदा ब्रह्मचारी चेन्नो मार्गं देहीति गोपीजनवचनेन । आत्मनः । आद्यर्पिता नरनारायणत्वम् । दर्शिता । तथा च कृष्णतापनीश्रुतिः । 'कथं यास्यामोऽतीर्त्वा जलं यमुनाया यतः श्रेयो भवति कृष्णोऽतिब्रह्मचारीत्युक्त्वा मार्गं वो दास्यती'ति ॥११ ॥ अक्रूरायेति । कालिन्द्यां यमुनाजले । अक्रूराय गान्दिनेयाय । शेषशायिता स्वीयशेषशायिस्वरूपत्वम् । दर्शिता । तथा । नैकाण्डदर्शनेनैव स्वसुहृद्वत्सप्रत्येकैकब्रह्माण्डप्रदर्शनेन । ब्रह्मणे विधये । अक्षरता स्वस्याक्षरब्रह्मरूपत्वमेव । दर्शिता । तथाचोक्तं श्रीभागवते । तावन्त्येव जगन्त्यभू'रिति । 'क्वाहं तमो मह दह'मित्यादिना च ॥ १२ ॥ एवमिति । एवममुना प्रकारेण । भिन्नभिन्नस्थानगतान्यपि । स्वस्य । स्वरूपाणि । तदैश्वर्याणि । शक्तयो लक्ष्मीराधिकाद्याश्च । स्वस्मिन् । प्रदर्शिताः ॥ १३ ॥ अत इति । अतो हेतोः । सर्वावतारेभ्यः । कृष्ण एव । महानतिश्रेष्ठः । अस्ति । इतीत्थम् । दृढं यथा तथा । निश्चित्य । सर्वैः । मदाश्रितैः । तद्भक्तिः । कार्या । अस्यायं भावः । स्वमुखेन स्वमहिम्न आत्मश्लाघासम्भावनेन वक्तुमशक्यत्वात्स्वस्य परोक्षप्रियत्वाच्च स्वावतारं श्रीकृष्णमेव लक्ष्मीनारायणादिसकलस्वरूपैश्वर्यप्रदर्शनहेतुतया सर्वपरत्वेन ब्रुवन्स्वयं श्रीहरिकृष्णो भगवान्मकरालयपत्तनादिपु स्वस्मिन् गोलोकाक्षरधामस्थराधालक्ष्म्याद्युपेतश्रीकृष्णादिस्वस्वरूप तत्सकलैश्वर्यप्रदर्शनं श्रीकृष्णाद्यवतारस्वरूपप्रदर्शनं च यत्स्वभक्तेभ्यः कारितं तदेव साम्प्रतं साधुप्रमुखस्वभक्तान्स्मारयन्नुक्तविधोऽक्षरधामाधिपतिः सकलैश्वर्यादिनिधिः श्रीकृष्णशब्दोक्तः पुरुषोत्तमोऽहमस्मीति तान्बोधयन्स्वस्यैव भक्तिमुपादिदेशेति ॥ १४ ॥ एवमिति । एवममुना प्रकारेण । कृष्णे श्रीहरौ । माहात्म्यविज्ञानपूर्विका । अचला मतिः । यस्य भक्तस्य । दृढं यथा तथा । अव्यभिचारिणीत्यर्थः । भवेत् । स भक्त एव । अकुतोभयः कालमायायमादिभयवर्जितः । उक्तः ॥१५॥ तादृशस्येति । तादृशस्य तथाविधभक्तस्य । क्वचिद्देशकालादिविषमत्वे सतीत्यर्थः । स्वीयनियमच्युतावहिंसादिनियमभङ्गे जाते सत्यपीत्यर्थः । सर्वथा । कृष्णरक्ष्यत्वाच्छ्रीहरिकृततद्रक्षणसत्त्वाद्धेतोः । उत्तमा श्रेष्ठैव गतिः । भवेत् । अन्ते भगवद्धामप्राप्तिरेव स्यादित्यर्थः ॥ १६ ॥

यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः । अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥ १० ॥ राधादिसहितत्वेन गोलोकेश्वरता तथा । यमुनां प्रति गोप्युक्त्वा दर्शिताऽऽद्यर्षितात्मनः ॥ ११ ॥ अक्रूराय च कालिन्द्यां दर्शिता शेषशायिता । नैकाण्डदर्शनेनैव ब्रह्मणोऽक्षरता तथा ॥१२॥ एवं स्वस्य स्वरूपाणि भिन्नस्थानगतान्यपि । तदैश्वर्याणि च स्वस्मिन् शक्तयश्च प्रदर्शिताः ॥१३॥ अतः सर्वावतारेभ्यः कृष्ण एव महानिति । दृढं निश्चित्य तद्भक्तिः कार्या सर्वैर्मदाश्रितैः ॥१४॥ एवं माहात्म्यविज्ञानपूर्विका ह्यचला मतिः । कृष्णे दृढं भवेद्यस्य स एवोक्तोऽकुतोभयः ॥ १५ ॥ तादृशस्य क्वचित्स्वीयनियमस्य च्युतावपि । सर्वथा कृष्णरक्ष्यत्वादुत्तमैव गतिर्भवेत् ॥ १६ ॥

एवमिति । एवममुना प्रकारेण । श्रीहरिणा । आत्मनि सर्वकारणे स्वस्मिन् । प्रकटिताः उक्तप्रकारेण प्रदर्शिताः । लक्ष्मीधवाद्याकृतीर्लक्ष्मीनारायणादिस्वरूपाणि । तत्स्थितानि । ऐश्वर्याणि च । हृदये स्वस्वमानसे । संस्मृत्य । चित्रमाश्चर्यम् । गताः प्राप्ताः । तद्वाक्यामृतपानहृष्टमनसः श्रीहरेस्तथाविधवचनामृतपीतातिमुदितमानसाः । सर्वशः । ते साधवः । अन्ये । गृहस्थाश्चापि । तं श्रीहरिम् । अखिलकारणमक्षरधामाधिपतिं श्रीपुरुषोत्तमम् । ज्ञात्वा विशेषतो बुध्वा । अभजन्नैकान्तिकभावेन भेजिरे ॥ १७ ॥ परोक्षप्रियतारूपं स्वस्वभावं प्रदर्शयन् । स्वभक्तान्स्वस्वरूपाणामैश्वर्याणां च सर्वशः ॥ १ ॥ स्वस्यैव यः कारणत्वं पारोक्ष्येणाह तत्त्वतः । श्रीहरिः स प्रियो मेऽस्तु भक्तिधर्मसुतः प्रभुः ॥२॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्सूनुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां शताधिकद्वात्रिंशस्तरङ्गः ॥ १३२ ॥ ६ ॥

दिव्याकारस्य सत्त्वाच निषेधान्मायिकाकृतेः । नटदृष्टान्ततो निष्ठा हरावुक्ता तु सप्तमे ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८७७) तपस्यान्ते

एवं श्रीहरिणाऽऽत्मनि प्रकटिता लक्ष्मीधवाद्याकृतीरैश्वर्याणि च तत्स्थितानि हृदये संस्मृत्य चित्रं गताः ।
ज्ञात्वा चाखिलकारणं तमभजंस्ते साधवः सर्वशस्तद्वाक्यामृतपानहृष्टमनसश्चान्ये गृहस्था अपि ॥ १७ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते शताधिकद्वात्रिंशस्तरङ्गः ॥ १३२ ॥ ६ ॥

शकाब्दे विक्रमार्कस्य नगाश्ववसुभूमिते । एकादश्यां तपस्यान्ते वचोऽमृतमिदं हरेः ॥ १ ॥
पञ्चालखेटके तत्र दुर्गे हेमन्तभूभृतः । स न्यषीदन्महावेद्यां मञ्चवर्ये सिताम्बरः ॥ २ ॥
स्वभक्तैस्त्यागिगृहिभिः प्राज्यैः स परितो वृतः । उवाच नित्यानन्दादीन् स्वाग्रस्थान्विदुषः स्वयम् ॥ ३ ॥
पुराणं श्रीभागवतं व्यासेन रचितं तु यत् । कृष्णस्वरूपे भक्तानां निष्ठादार्ढ्याय तद्ध्रुवम् ॥ ४ ॥

फाल्गुनमासस्य कृष्णपक्षे एकादश्यां तिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ पञ्चालेति । तत्र तिथौ । पञ्चालखेटके । हेमन्तभूभृतः । दुर्गे । महावेद्यां तद्भवनस्य बाह्यायां महत्यां वेदिकायाम् । मञ्चवर्ये न्यास्तृते श्रेष्ठे पर्यङ्कासने । सिताम्बरः परिधृतसकलश्वेतवसनः । यद्यप्यत्र सकलसिताम्बरधरत्वमुक्तमथाप्येतावानत्र विशेष उष्मकशोणनीशारधर इति । स श्रीहरिः । न्यषीदत्सङ्गवारम्भे उपविवेश ॥ २ ॥ स्वेति । प्राज्यैर्नानादेशेभ्यः समायातत्वाद्बहुभिः । त्यागिगृहिभिः । स्वभक्तैः । परितः समंततः । वृतः सभायां वेष्टितः । स श्रीहरिः । स्वाग्रस्थान्स्वपुरःप्रदेशावस्थितान् । विदुषः पण्डितान् । नित्यानन्दादिसाधून् । स्वयमेव । उवाच ॥ ३ ॥ पुराणमिति । हे साधवः ! । यत् । व्यासेन कृष्णद्वैपायनेन । रचितम् । श्रीभागवतम् । पुराणम् । अस्ति । तत्तु । भक्तानाम् । कृष्णस्वरूपे । निष्ठादार्ढ्याय ज्ञानस्थितिदृढत्वार्थं । ध्रुवम् । भवति ॥ ४ ॥

तस्येति । तस्य श्रीभागवतपुराणस्य । ग्रन्थवीजे । प्रथमश्लोके जन्माद्यस्येति पद्ये । रमापतेः प्रत्यक्षश्रीकृष्णस्य । रूपं स्वरूपम् ।अमायिकं मायिकभाववर्जितम् । उक्तम् । भक्तैस्तदुपासकैः । तद्भगवत्स्वरूपम् । तथैवामायिकमेव । बोध्यम् ॥ ५ ॥ तदेवाह । यत्रेति । यत्र श्रीकृष्णस्वरूपे । त्रिसर्गो गुणत्रयसर्गः । मृषाऽस्ति । स नास्त्येवेत्यर्थः । यत्कृष्णस्वरूपम् । स्वेनात्मीयेन धाम्ना तेजसैव । सदा । निरस्तकुहकं मायात्मककपटवर्जितम् । चास्ति । इत्येवंविधम् । भगवद्रूपं श्रीकृष्णस्वरूपम् । उच्यते व्यासेन कथितमस्ति ॥ ६ ॥ यत्र त्रिसर्गो मृषेति यदुक्तं तदेव स्फुटमाह द्वाभ्याम् । मायिकानामिति । मायिकानां प्रकृतिजातानाम् । त्रयाणाम् । गुणानां सत्त्वादीनाम् । भूतानि पृथिव्यादीनि चेन्द्रियाणि चक्षुरादीनि च अन्तःकरणानि मनआदीनि च देवताः सूर्यादयश्च ता लक्षणं स्वरूपं यस्य सः । यः । सर्गः । उद्गत उत्पन्नः । स गुणसर्गस्तु ॥ ७ ॥ नेति । सच्चिदानन्दलक्षणे । दिव्ये । अनन्ते महिमान्तवर्जिते । शर्करारसमूर्त्तिवत् । एकरसे आनन्दमात्रकरपादमुखोदरादित्वात्केवलरसमये । भगवत्स्वरूपे । नास्त्येव । इति द्वयोरेकान्वयः ॥ ८ ॥ भगवानिति । भगवान्निखिलैश्वर्ययुक्तः । सः । कृष्ण एव

तस्य हि प्रथमश्लोके ग्रन्थवीजे रमापतेः । अमायिकं रूपमुक्तं बोध्यं भक्तैस्तथैव तत् ॥ ५ ॥ यत्र त्रिसर्गो-
ऽस्ति मृषा धाम्ना स्वेनैव यत्सदा । निरस्तकुहकं चेति भगवद्रूपमुच्यते ॥ ६ ॥ मायिकानां त्रयाणां यो
गुणानां सर्ग उद्गतः । भूतेन्द्रियान्तःकरणदेवतालक्षणः स तु ॥ ७ ॥ नास्त्येव भगवद्रूपे सच्चिदानन्दलक्षणे ।
दिव्येऽनन्ते चैकरसे शर्करारसमूर्तिवत् ॥ ८ ॥ भगवान्स परंब्रह्म कृष्ण एव न चेतरत् । यतो भागवते प्रोक्तो
मुहुर्ब्रह्म स एव हि ॥ ९ ॥ अतो यथाऽक्षरे धाम्नि श्रीकृष्णो दिव्यविग्रहः । अनन्तैश्वर्यसम्पन्नो वर्तते सर्वदा-
ऽच्युतः ॥ १० ॥ तथैव नराकृतिरपि दिव्यमूर्त्तिः स्वयं प्रभुः । अस्तीति तत्त्वतो ज्ञेयः प्रत्यक्षः पुरुषोत्तमः
॥ ११ ॥ जन्माद्यवस्थावत्त्वेन यद्भानं तस्य देहिनाम् । योगमायैव सा तस्य विज्ञेया जनमोहनी ॥ १२ ॥

। परंब्रह्म । अस्ति । इतरत् । नास्ति । यतो हेतोः । भागवते पुराणे । स कृष्ण एव । ब्रह्म परंब्रह्म । मुहुः । प्रोक्तः । हि । तथा चोक्तं श्रीभागवते । रूपं यत्तत्प्राहुरव्यक्तमाद्यं ब्रह्मे'त्यादिना ॥ ९ ॥ अत इति । अतो हेतोः । यथा । अक्षरे धाम्नि । श्रीकृष्णः । दिव्यविग्रहः । अनन्तैश्वर्यसम्पन्नः । अच्युतोऽपच्युतैश्वर्यः । सर्वदा । वर्त्तते ॥ १० ॥ तथेति । तथैव । नराकृतिः सन्नपि । प्रभुः स्वयं श्रीकृष्णः । दिव्यमूर्त्तिः अनन्तैश्वर्यसम्पन्नोऽच्युतश्च । अस्ति । इतीत्थम् । प्रत्यक्षः सर्वेषां युष्माकं नयनविषयः । पुरुषोत्तमः । तत्त्वतो यथार्थतः । ज्ञेयः । इति द्वयोरेकसम्बन्धः ॥ ११ ॥ जन्मेति । तस्य नराकृतेः श्रीहरेः । जन्माद्यवस्थावत्त्वेन । देहिनाम् । यत् । भानं ज्ञानं जायते । सा तस्य श्रीहरेः । जनमोहनी । योगमाया योगैश्वर्यमेव । विज्ञेया । तथा चोक्तं भगवद्गीतायाम् । 'नाहं प्रकाशः सर्वस्य योगमायासमावृतः । मूढोऽयं नाभिजानाति लोको मामजमव्यय'मिति ॥ १२ ॥

यदेति । यदा । सत्सु साक्षाद्भगवदाश्रितसाधुषु । विश्वस्य विश्वासं प्राप्य । तद्वचांसि । हृदि स्वहृदये । दृढं यथातथा । धृत्वा । यः । मुमुक्षुर्भक्त एव । प्रभुम् । तं श्रीहरिम् । अत्रिसर्गतनुं मायोत्पन्नगुणत्रयसर्गवर्जितमूर्त्तिम् । स्वप्रकाशेन स्वधाम्ना । सर्वदा । निरस्तमायाकुहकम् । विद्यात् । इति द्वयोरेकसम्बन्धः ॥ १४ ॥ एवमिति । एवममुना प्रकारेण । कृष्णपदवी साक्षाच्छ्रीकृष्णस्वरूपवेदनरूपोमार्गः । दुर्ज्ञेयापि । मुमुक्षुणा । निश्छद्मभक्तेन । बोध्या ज्ञेया जायते । इतीत्थम् । सूत उग्रश्रवाः । सत्रिणो ब्रह्मनिष्ठान् । शौनकादिमुनीन् । आह ॥ १५ ॥ स इति । यो भक्तः । अमायया निष्कपटया । सन्ततयाऽविच्छिन्नया । अनुवृत्त्या छन्दानुसरणेन । तत्पादसरोजगन्धम् । भजेत । भ्रमरो यथा पद्मसङ्कोचादाववरोधादिदुःखमगणयित्वाऽपि तद्गन्धं जिघ्रति तथैवानेकान्तरायानगणयन् पद्मसमानौ भगवत्पादावुक्तरीत्या सेवेतेत्यर्थः । स भक्तः । धातुः सर्वाधारस्य । दुरन्तवीर्यस्यापरिमितैश्वर्यशक्तेः । रथाङ्गपाणेः । परस्य परमात्मनः श्रीहरेः । पदवीं मार्गम् वेद जानाति ॥ १६ ॥ य इति । ये जनास्तु । अनेवंविदो भगवदीयसाधुजनसमागमेनोक्तरीत्या साक्षाद्भगवत्स्वरूपानभिज्ञाः । सन्ति । मूढा मूर्खा निर्भाग्या वा । ते जनास्तु । दिव्यतनावपि ।

यदा तु सत्सु विश्वस्य तद्वचांसि दृढं हृदि । धृत्वा निश्छद्म सेवेत मुमुक्षुः कृष्णमत्र यः ॥ १३ ॥ तदा स एव तं विद्यादत्रिसर्गतनुं प्रभुम् । निरस्तमायाकुहकं स्वप्रकाशेन सर्वदा ॥ १४ ॥ एवं हि कृष्णपदवी दुर्ज्ञेयापि मुमुक्षुणा बोध्या निश्छद्मभक्तेन सूत इत्याह सत्रिणः ॥ १५ ॥ स वेद धातुः पदवीं परस्य दुरन्तवीर्यस्य रथाङ्गपाणेः । योऽमायया सन्ततयाऽनुवृत्त्या भजेत तत्पादसरोजगन्धम् ॥ १६ ॥ ये त्वनेवंविदो मूढास्ते तु दिव्यतनावपि । दृष्टान्तेनात्मनः कृष्णे विदुर्मायिकदेहताम् ॥१७॥ तमयं मन्यते लोको ह्यसङ्गमपि सङ्गिनम् । आत्मौपम्येन मनुजमिति सूतोऽवदन्मुनीन् ॥ १८ ॥ अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम् । परं भावमजानन्त इति कृष्णोऽवदन्नरम् ॥१९॥ अमायिकगुणात्वाद्धि निराकारश्च निर्गुणः । कल्याणयुक्तत्वात्साकारः सगुणो हरिः ॥ २० ॥

कृष्णे । आत्मनः । दृष्टान्तेन मायिकदेहताम् । विदुः ॥ १७ ॥ तमिति । अयम् । लोकोऽज्ञजनः । तं भगवन्तम् । असङ्गं सन्तमपि । सङ्गिनम् । आत्मौपम्येन स्वदृष्टान्तेन । मनुजं मनुष्यम् । मन्यते । इतीत्थम् । सूतः । मुनिन् शौनकादीन् । अवदत् ॥ १८ ॥ अवजानन्तीति । मम । परं भावं परमेश्वरत्वम् । अजानन्तः । मूढा जनाः । मानुषीम् । तनुम् । आश्रितम् । माम् । अवजानन्ति अवमन्यन्ते । इतीत्थम् । कृष्णः । नरं नरावतारमर्जुनम् । अवदत् ॥ १९ ॥ अमायिकेति । किञ्च । हरिः । अमायिकगुणत्वात् । निराकारः । निर्गुणश्च । अस्ति । स दिव्याकृतिर्दिव्यगुणश्च सन्नपि मायिकसत्त्वादिगुणकार्याकारगुणैर्वर्जितत्वाद्वेदादौ निराकारो निर्गुणश्चोक्तो भवतीत्यर्थः । कल्याणयुक्तत्वात् । साकारः । सगुणश्च । अस्ति । दिव्यत्वेन कल्याणरूपाणां साम्यासङ्गादिगुणानामाकारपर्यायमूर्त्तिनिष्ठत्वेनोभयसत्त्वतस्तैः स साकारः सगुणश्चोक्तो भवतीत्यर्थः ॥ २० ॥

इतीति । इतीत्थंभूतमेव । वेदादेर्वेदेतिहासपुराणागमादेः । हार्द्दं रहस्यम् । तत्त्वदर्शिनस्तत्त्वशब्दवाच्यभगवदाकृतेर्दिव्यत्वेन द्रष्टारः । ये भक्तपुरुषाः । विदुर्जानन्ति । तेषां भक्तानाम् । कृष्णे साक्षाच्छ्रीहरौ । मोह आत्मदृष्टान्तेन मायिकाकारज्ञानरूपं विपरितज्ञानम् । न जायते । अन्येषामनेवंविदां तु । मोहः । जायते ॥२१॥ निराकृतीत्वमिति । किञ्च । पण्डितंमन्य उक्तविधवेदादिहार्द्दमविदन्मूढः । कृष्णस्य । निराकृतित्वम् । साकृतित्वं च । तत्त्वत उक्तरीत्या परमार्थतः । न वेत्ति । तत्तदीय निराकृतित्व साकृतित्वम् । वेत्ति चेत् । सदूषणम् । वेत्ति ॥ २२ ॥ दूषणमाह । साकारमिति । स पण्डितंमन्यः । तं भगवन्तम् । साकारं वेत्ति चेत् । मायिकैः । तत्त्वैः । वेत्ति । भगवदाकारं मायिकतत्त्वोत्पन्नं जानातीत्यर्थः । तम् । निराकारं । वेत्ति चेत् । अरूपिणममूर्त्तम् । वेत्ति । अत्रैवंविधे तदीयोभयथा वेदने । दोषं दूषणं तु । स ऐक्षत श्रुतिः स ऐक्षतेतिच्छान्दोग्योपनिषद्वाक्यम् । जगौ स्फुटमेवोवाच ॥ २३ ॥ उक्तरीत्या तदीयोभयथा वेदने श्रुतिदर्शितं दूषणं स्फुटतयाऽऽह त्रिभिः । मायात इति । हे साधवः ! । तत्त्वानां महदादीनाम् । मायातो मायायाः सकाशात् । जननादुत्पत्तेः । पूर्वं प्रथममेव । हरेः । ईक्षणं मायां प्रत्यवलोकनम् । अत्र

इत्येव हार्द्दं वेदादेर्ये विदुस्तत्त्वदर्शिनः । तेषां न जायते मोहः कृष्णेऽन्येषां तु जायते ॥ २१ ॥
निराकृतित्वं कृष्णस्य साकृतित्वं च तत्त्वतः । न वेत्ति पण्डितंमन्यो वेत्ति चेत्तत्सदूषणम् ॥ २२ ॥
साकारं मायिकैस्तत्त्वैर्निराकारं त्वरूपिणम् । स तं वेत्त्यत्र दोषं तु स ऐक्षत श्रुतिर्जगौ ॥ २३ ॥
मायातो जननात्पूर्वं तत्त्वानामीक्षणं हरेः । अत्रोक्तं तदृते तेभ्यस्तस्य विग्रह ईरितः ॥ २४ ॥
देहं विना न नेत्रं स्यात्तद्विनाऽपीक्षणं न च । अतो मायिकतत्त्वेभ्यः प्राक् कृष्णो दिव्यविग्रहः ॥ २५ ॥
अरूपिणस्त्वीक्षणं च वक्तुं शक्यं न सर्वथा । दोषोऽत उभयत्रापि दृश्यते श्रुतिशासनात् ॥ २६ ॥

स ऐक्षतेति श्रुतौ । उक्तम् । तत्तस्माद्धेतोः । तेभ्यो मायिकतत्त्वेभ्यः । ऋते विनापि । तस्य श्रीहरेः । विग्रहो नेत्राद्यवयववान् । दिव्याकारः । ईरितः श्रुत्या कथितः । अनेन श्रुतिवचनेनैव तद्विदितं मायिकतत्त्वजन्यसाकारत्वं खण्डितं दिव्यामायिकाकारेण साकारत्वं च समर्थितमिति बोध्यम् ॥ २४ ॥ एतदेव स्फुटमाह । देहमिति । देहं विना मूर्त्तिमन्तरा । नेत्रमीक्षणहेतुश्चक्षुरिन्द्रियम् । न स्यात् । तद्विना नेत्रमृते । ईक्षणं पुरोवर्त्तिपदार्थसमीक्षणं चापि । न स्यात् । अतो हेतोः । मायिकतत्त्वेभ्यः प्राक् भगवदीक्षितमायातस्तत्त्वोत्पत्तेः पूर्वम् । कृष्णः । दिव्यविग्रहः । अस्ति । न तु मायिकतत्त्वमयशरीरत्वेन विग्रहवानित्यर्थः ॥ २५ ॥ तद्विदितमरूपित्वेन भगवतो निराकारत्वं खण्डयत्यर्द्धेन । अरूपिण इति । अरूपिणो निराकारस्य भगवतस्तु । ईक्षणं मायां प्रति समीक्षणम् । वक्तुम् । सर्वथा न शक्यम् । अतो हेतोः । उभयत्र पण्डितंमन्याभिमतसाकारनिराकारपक्षयोरपि । दोषः । श्रुतिशासनादुक्तश्रुतिवाक्यात् । दृश्यते ॥ २६ ॥

अत इति । अतो हेतोः । सुज्ञात्सच्छास्त्राभिज्ञात् । भक्ताद्धरेरेकान्तिकोपासकात् । सतः साधोः सकाशात् । मुमुक्षुणा भक्तेन । हरेः । दिव्यसाकारता सदा दिव्याकारत्वम् । ज्ञेया । अमायिकाङ्गत्वं मायिकमूर्त्तिरहितत्वं च । निश्चेतव्यम् ॥ २७ ॥ एवं सर्वकारणस्य सकलैश्वर्यसम्पन्नस्य पुरुषोत्तमस्य श्रीहरेः पुरुषादिषु स्वान्तर्यामिशक्त्या सामान्यतः प्रवेशे विद्यमानेऽपि कदाचित्किञ्चिद्विशेषकार्यं चिकीर्षुः स भवति तदा विशेषत्वतः पुरुषादिष्वाविशति तदा तेऽपि पुरुषोत्तमाभेदेन व्यवहार्या भवन्तीत्याह सप्तभिः । स इति । स उक्तविधः । भगवान् श्रीहरिः । कार्यवशात् । यर्हि । स्वयमेव । निजेच्छया । पुरुषे महापुरुषप्रधानपुरुषयोरित्यर्थः । प्रविशति । तदा । पुरुषः । न । भाति ॥ २८ ॥ तिर इति । पौरुषोत्तमे पुरुषोत्तमसम्बन्धिनि । प्रकाशे । पुंतेजः पुरुषप्रकाशः । तिरोभवति । ततस्तदा । तप्तायोगोलके । अग्निवद्वह्निर्यथा । कृष्ण । एव । भाति कृष्णरूपेण भासते इत्यर्थः ॥ २९ ॥ एवमिति । एवममुना प्रकारेणैव । मायायां द्विविधप्रकृतौ । महदादिषु । तत्त्वेषु । वैराजे सहस्रशीर्षपुरुषे । विरिञ्चादौ ब्रह्मविष्णुशिवेषु । देवर्षिसनकादिषु नारदचतुःसनकमुन्यादिषु च ॥ ३० ॥ तदिति ।

अतः सुज्ञात्सतो भक्ताद्दिव्यसाकारता हरेः । ज्ञेया चामायिकाङ्गत्वं निश्चेतव्यं मुमुक्षुणा ॥ २७ ॥ स हि कार्यवशाद्यर्हि भगवान् पुरुषे स्वयम् । निजेच्छया प्रविशति भाति पुरुषस्तदा ॥ २८ ॥ तिरोभवति पुंतेजः प्रकाशे पौरुषोत्तमे । कृष्ण एव ततो भाति तप्तायोगोलकेऽग्निवत् ॥ २९॥ एवमेव हि मायायां तत्त्वेषु महदादिषु । वैराजे च विरिञ्चादौ देवर्षिसनकादिषु ॥ ३० ॥ तत्तत्कार्याशुनिष्पत्त्यै कृष्णोऽखिलहितावहः । प्रविश्यैव तत्तदात्मा स्वयमेव विराजते ॥ ३१ ॥ यत्र यत्र प्रविशति प्रभुस्तत्तन्महोऽखिलम् । तिरोधत्ते हरिद्योते सूर्यद्योतेऽन्यभा इव ॥ ३२ ॥ तत्तत्कार्यं विधायासौ तं तं हित्वा प्रभुस्ततः । पृथगास्ते स्वधाम्न्येव स्वप्रकाशो निजेच्छया ॥ ३३ ॥ स्वस्वस्वरूपेण तदा पुरुषादिश्च वर्त्तते । तत्रैश्वर्यं भागवतं दृश्यमानं वियाति हि ॥ ३४ ॥

अखिलहितावहः सकलस्वाश्रितहितकरः । कृष्णः । तत्तत्कार्याशुनिष्पत्त्यै तत्तत्कालप्राप्तानां तेषां कार्याणां शीघ्रसिद्ध्यर्थम् । प्रविश्य मायादिषु प्रवेशं कृत्वैव । तत्तदात्मा मायाद्यात्मकः सन् । स्वयमेव । विराजते । इति द्वयोरेकान्वयः ॥ ३१ ॥ यत्रेति । प्रभुः श्रीहरिः । यत्र यत्र मायादिषु । प्रविशति । अखिलं समग्रम् । तत्तन्महस्तेषां मायादीनां तेजः । अन्यभाश्चन्द्रतारादिकान्तयः । सूर्यद्योते सूर्यप्रकाशे इव । हरिद्योते श्रीहरेः प्रकाशे । तिरोधत्ते ॥ ३२ ॥ तदिति । स्वप्रकाशः । प्रभुः । असौ श्रीहरिः । तत्तत्कार्यम् । विधाय । तं तं पुरुषादिम् । हित्वा । ततः पुरुषादिभ्यः । पृथक् स्वविशेषसत्तां तत आकर्षणेन पृथक्कृत्वेत्यर्थः । निजेच्छयैव । स्वधाम्नि । अस्ति ॥ ३३ ॥ स्वेति । तदा भगवतः पृथग्भावकाले । पुरुषादिः । स्वस्वस्वरूपेण । वर्त्तते । तत्र पुरुषादिषु । दृश्यमानं भगवतः पृथग्भावात्प्राग्वीक्ष्यमाणम् । भागवतं भगवतः सम्बन्धि । ऐश्वर्यम् । वियाति अपयाति । हि ॥ ३४ ॥

एवमिति । एवंप्रताप इत्थंभूतानुभावः । आनन्दविग्रहो निरवधिकातिशयानन्दाधारैकमूर्त्तिः । नराकृतिः । साक्षात् प्रत्यक्षः । भगवान् । स्वेच्छया । ऐश्वर्यम् । ऐक्षयन्स्वभक्तान्समंततः प्रदर्शयन्सन् । आस्ते विराजते ॥ ३५ ॥ चिदिति । चिदानन्दे चिदानन्दघनमूर्त्तौ । भगवति श्रीहरौ । त्याज्यभागः शर्करारसप्रतिमायामिव त्यजनीयांशः । न विद्यते नास्त्येव । अतो हेतोः । स प्रत्यक्षः श्रीहरिः । यथादृष्टो यथास्वेक्षितः । सेव्य उपास्यः । हि यतः । तत्परस्तद्भिन्नः । अन्यो द्वितीयः । ईश्वरः परमेश्वरः । नास्त्येव ॥ ३६ ॥ देहेति । निर्गुणे उक्तरीत्या मायिकगुणवर्जिते । तत्र श्रीहरौ । यत् । देहावस्थादिकं अन्यमनुष्यवद्देहे बाल्यावस्थादिकम् । दृश्यते । तत्तु । नटमायेव । अज्ञानिजनमोहनम् । ज्ञेयम् ॥ ३७ ॥ नटदृष्टान्तं प्रदर्शयन्नटमायायां यथा नटा न मुह्यन्त्यन्ये मुह्यन्ति तथा भगवतो बाल्यादिलीलायां तत्स्वरूपविदो भक्ता न मुह्यन्त्यन्ये तत्स्वरूपाज्ञजना मुह्यन्तीत्याह पञ्चभिः । कश्चिदिति । यथा । ऐन्द्रजालविद्यावेत्ता । कश्चित् । नटः । स्वां स्वकीयाम् । पत्नीम् । राज्ञे आत्मखेलकारकनृपाय । अर्पयित्वा रक्षार्थं निवेद्य । स्वर्गम् । याति गच्छति । असुरैः देवैर्युध्यमानैर्दैत्यैः सह । युद्ध्यते देवसहायार्थं युद्धं करोति ॥ ३८ ॥ विच्छि-

एवं प्रतापो भगवानानन्दघनविग्रहः । आस्ते नराकृतिः साक्षात्स्वेच्छयैश्वर्यमेक्षयन् ॥ ३५ ॥ चिदानन्दे भगवति त्याज्यभागो न विद्यते । यथादृष्टः स सेव्योऽतस्तत्परोऽन्यो न हीश्वरः ॥ ३६ ॥ देहावस्थादिकं यत्तु दृश्यते तत्र निर्गुणे । नटमायेव तज्ज्ञेयमज्ञानिजनमोहनम् ॥ ३७ ॥ कश्चिद्याति यथा स्वर्गमैन्द्रजालिकवित्नटः । पत्नीं राज्ञेऽर्पयित्वा स्वां युद्ध्यते तत्र चासुरैः ॥ ३८ ॥ विच्छिन्नसर्वावयवः पुनः पतति स क्षितौ । ततस्तत्स्त्री रुदन्त्यग्नौ तदङ्गैः सह दह्यते ॥ ३९ ॥ पूर्ववद्बद्धशस्त्रोऽथ नट एत्य निजां स्त्रियम् । नृपं याचति साक्रोशं जनयन् विस्मयत् ॥ ४० ॥ नटविद्यामजान्तस्त्वत्र तेन प्रदर्शिते । स्वर्गमागमने तस्य मुह्यन्ति ऋतदर्शिनः ॥ ४१ ॥ न मुह्यन्ति नटोपास्त्या तद्विदस्त्विह पूरुषाः । तथैव कृष्णाचरितेऽप्यज्ञास्तज्ज्ञाश्च देहिनः ॥ ४२ ॥

न्नेति । स नटः । विच्छिन्नसर्वावयवः सन् । पुनः । क्षितौ । पतति । ततस्तदनन्तरम् । तत्स्त्री । रुदन्ती सती । तदङ्गैः पतितैः स्वपतिप्रतीकैः सह । अग्नौ तत्र विहितचित्यग्नौ । दह्यते स्वदेहं प्रज्वालयतीत्यर्थः ॥ ३९ ॥ पूर्वेति । अथानन्तरम् । पूर्ववत् । बद्धशस्त्रः । नटः । एत्यागत्य । जनविस्मयम् । जनयन्सन् । साक्रोशं साक्षेपंयथातथा । नृपम् । निजाम् । स्त्रियम् । याचति ॥ ४० ॥ नटेति । नटविद्याम् । अजानन्तः । अत एव । तेन नटेन । प्रदर्शिते । स्वर्गमागमने स्वर्गे गमनं ततः पुनरागमनं चेति । द्वे । ऋतदर्शिनः । सत्यतया समीक्षकाः इत्यर्थः । जनाः । अस्य नटस्य । अत्रास्यां विद्यायाम् । मुह्यन्ति ॥ ४१ ॥ नेति । नटोपास्त्या परिचारकादिभावकृतनटोपासनया । तद्विदो नटविद्याविदः । पूरुषा नटादयस्तु । इह नटविद्यायाम् । न मुह्यन्ति । तथैव । अज्ञा भगवत्स्वरूपानभिज्ञाः । देहिनः । कृष्णाचरिते मनुष्यभावप्रदर्शनरूपश्रीकृष्णचरित्रे । मुह्यन्ति । तज्ज्ञा भगवत्स्वरूपयथार्थज्ञानवन्तः । देहिनः । कृष्णाचरिते । न मुह्यन्ति ॥ ४२ ॥

एवमिति । एवममुना प्रकारेण । सुधीः । यः । पुरुषो भक्तः । सत्सङ्गं भगवदेकान्तिकसाधुसमागमम् । विधाय कृत्वा । वेत्ति साक्षाद्भगवत्स्वरूपं जानाति । तस्य भक्तस्य । अचिन्त्यविभवेऽपारमहिमनि हरौ । क्वापि कदाचिदपि । मोहः । न स्यात् ॥ ४३ ॥ भक्तैरिति । अक्षरेऽक्षरधाम्नि । कृष्णः । सदा । साकारो दिव्याकृतिः । अस्ति । इतीत्थम् । आप्तनिश्चयैः । एकान्तिकैः । भक्तैरेव । एषा मदुक्ता । वार्त्ताऽपि । अवगम्यते । नान्यैरित्यर्थः ॥ ४४ ॥ सकलेति । सत्पतेः श्रीहरेः । सकलैश्वर्यजुष्टत्वात् । स्वतन्त्रत्वाच्च । अरूपानन्तरूपत्वे । उक्तरीत्याऽभिहिते हरेररूपत्वेऽनन्तरूपत्वे चेत्यर्थः । पण्डिता भगवत्येकान्तिकमतयो विद्वांसः । नैव मुह्यन्ति ॥ ४५ ॥ स इति । सोऽक्षरधामाधिपतिर्दिव्याकारः । प्रभुः श्रीहरिः । इह लोके । सर्वदेहिनाम् । श्रेयसे । कृपया निष्कारणापारकरुणया । स्वशक्तिपार्षदैश्वर्यैः सह । नृषु । आविर्भवति प्रादुर्भूतोऽस्ति ॥ ४६ ॥ अत इति । अतो हेतोः । यत् । साक्षात्प्रत्यक्षतयाऽवस्थितम् । हरेः । रूपम् । यच्च । अक्षरस्थितमक्षरधामावस्थितम् ।

एवं यो वेत्ति सत्सङ्गं विधाय पुरुषः सुधीः । न तस्य क्वापि मोहः स्यादचिन्त्यविभवे हरौ ॥ ४३ ॥
भक्तैरेकान्तिकैरेव वार्त्तैषाऽप्यवगम्यते । साकारोऽस्ति सदा कृष्णोऽक्षर इत्याप्तनिश्चयैः ॥ ४४ ॥ सकलैश्वर्यजुष्टत्वात्स्वतन्त्रत्वाच्च सत्पतेः । अरूपानन्तरूपत्वे नैव मुह्यन्ति पण्डिताः ॥४५॥ स प्रभुः कृपया सर्वदेहिनां श्रेयसे नृषु । स्वशक्तिपार्षदैश्वर्यैः सहाविर्भवतीह वै ॥ ४६ ॥ अतः साक्षाद्धरेरूपं रूपं यच्चाक्षरस्थितम् । तयोर्ये न विदुर्भेदं ज्ञानिभक्तास्त उत्तमाः ॥ ४७ ॥ देशकालादिवैषम्यात्क्वचिदुत्पथवर्त्तने । जातेऽप्येषां न पातः स्याच्छ्रेय एव भवेत्परम् ॥ ४८ ॥ यस्त्वत्र किञ्चित्सन्दिग्धो भवेत्तस्य तु सर्वथा । नैष्ठिकस्यापि भक्तस्य श्रेयो नात्यन्तिकं भवेत् ॥ ४९ ॥ साक्षात्कृष्णं विदुर्येऽत्र सर्वकारणकारणम् । नराकृति परंब्रह्म ते ज्ञेया ब्रह्मवित्तमाः ॥ ५० ॥
एवं भगवता तेन भक्तान् शिक्षयता निजान् । विधातव्यां स्थितिं स्वस्मिन् कृता वार्त्ता स्वसंसदि ॥ ५१ ॥

हरेः । रूपम् । तयोर्द्वयो रूपयोर्विषये । ये भक्ताः । भेदं पृथक्त्वम् । न विदुः । ते भक्ताः । उत्तमाः । ज्ञानिभक्ताः । ज्ञेयाः ॥ ४७ ॥ देशेति । एषामुत्तमभक्तानाम् । क्वचित्कदाचित् । देशकालादिवैषम्याद्धेतोः । उत्पथवर्त्तने स्वकीयाहिंसादिनियमभङ्गरूपकुमार्गप्रवर्त्तने । जाते सत्यपि । परमात्यन्तिकम् । श्रेयः कल्याणमेव । भवेत् । पातः कल्याणतश्च्युतिस्तु । न स्यात् ॥ ४८ ॥ य इति । यो भक्तस्तु । अत्रोक्तरीत्या भगवत्स्वरूपज्ञाने । किञ्चिदल्पमात्रमपि । सन्दिग्धः सन्देहवान् । भवेत् । नैष्ठिकस्य नैष्ठिकब्रह्मचर्यवतोऽपि । तस्य भक्तस्य तु । सर्वथा । आत्यन्तिकम् । श्रेयः । न भवेत् ॥ ४९ ॥ साक्षादिति । अत्र सत्सङ्गे । ये भक्ताः । साक्षात्कृष्णं स्वनयनविषयावस्थितं श्रीहरिम् । सर्वकारणकारणम् । नराकृति नराकारं सदपि । परंब्रह्म । विदुर्जानन्ति । ते भक्ताः । ब्रह्मवित्तमा यथार्थपरब्रह्मस्वरूपाभिज्ञाः । ज्ञेयाः ॥ ५० ॥ एवमिति । एवममुना प्रकारेण । स्वस्मिन्स्वस्वरूपे । विधातव्याम् । स्थितिमुक्तरीत्या ज्ञाननिष्ठाम् । निजान् । भक्तान् । शिक्षयता । भगवता

पुरुषोत्तमेन । तेन श्रीहरिणा । स्वसंसदि स्वकीयभक्तसभायाम् । वार्त्ता । कृता ॥ ५१ ॥ श्रुत्वेति । तां श्रीहरिकृतां वार्त्ताम् । श्रुत्वा । ते समीपस्थिताः । अखिलाः । भक्ताः । त्यागिनो नित्यानन्दादयो मुनयः । गृहिणश्चापि । तस्मिन् श्रीहरावेव । दृढतराम् । निष्ठां ज्ञानस्थितिम् । आदरात् । विदधुः ॥ ५२ ॥ परम-मिति । इत्येवंविधम् । अस्य । हरेः । परमम् । वचनामृतम् । इह सत्सङ्गे । यो भक्तः । कर्णपुटेन । पिबेत् । स भक्तः । नरमूर्तिधरे । आत्मपतौ स्वस्वा-

श्रुत्वा तां तेऽखिला भक्तास्त्यागिनो गृहिणोऽपि च । तस्मिन्नेव दृढतरां निष्ठां विदधुरादरात् ॥ ५२ ॥ परमं वचना-मृतमस्य हरेरिति कर्णपुटेन पिबेदिह यः । स दृढां हि लभेत हरौ परमां नरमूर्तिधरे स्थितिमात्मपतौ ॥ ५३ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते शताधिकत्रयस्त्रिंशस्तरङ्गः ॥ १३३ ॥ ७ ॥

मिनि हरौ । परमाम् । दृढाम् । स्थितिम् । लभते । हि ॥ ५३ ॥ पारोक्ष्येण स्वस्वरूपज्ञानं यस्तत्त्वतो हरिः । स्वभक्तानाह तज्ज्ञानदार्ढ्यं मयि करोतु सः ॥१॥ श्रीहरिर्निगमगीतसद्यशा अक्षराच्च परतः परः प्रभुः । सर्वजीवसुखकारकः पिता भक्तिधर्मतनयोऽस्तु मद्धृदि ॥ २ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासक-श्रीहरिकृष्णभगवत्पद्मनुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां शताधिकत्रयस्त्रिंशस्तरङ्गः ॥ १३३ ॥ ७ ॥

## पञ्चाला प्रकरणं सम्पूर्णम्

॥ श्री स्वामिनारायणो विजयतेतराम् ॥

संवत् २०४८

तारीख : ७–५–१९९२









श्री शतानन्द मुनि विरचित –

# श्री हरिवाक्यसुधासिन्धुपूर्वार्धे समाप्तः

वैशाख सुद ५

गुरुवार

: मुद्रक :

श्री नरनारायणदेव प्रिन्टींग प्रेस

श्री स्वामिनारायण मंदिर, स्वामिनारायण रोड, भुज–कच्छ ३७०००१

॥ श्री स्वामिनारायणो विजयतेतराम् ॥

संवत् २०५१ तारीख १५–२–१९९४









श्री शतानन्द मुनि विरचितः

# श्रीहरिवाक्यसुधासिन्धुः उत्तरार्द्धः प्रारम्भः

: प्रकाशक :

श्री महंत पुराणी स्वामी हरिस्वरूपदासजी

श्री स्वामिनारायण मंदिर, स्वामिनारायण रोड, भुज–कच्छ.

महा सुद ५ मंगळवार

अ. नि. स. गु. स्वामी हरिकृष्णदासजीना स्मरणार्थे गाम माधापुरना मावजी शीवजी भुडीया तथा तेमना सर्वे कुटुम्बीजनोए आ ग्रन्थ छपाववामां संपूर्णपणे मदद करेल छे. तो श्रीजी महाराज तेओने उत्तरोत्तर चडती राखी धर्मपरायणमां कायम वृत्ति राखे. अ. नि. भुडीया करसनभाई कल्याणनी शुभ प्रेरणाथी.

# ॥ श्री हरिवाक्यसुधासिन्धौ दुर्गपुर–मध्य प्रकरणम् ॥

श्रीसहजानन्दस्वामिने नमो नमः । वन्देऽक्षरे स्वे परमे पदे परे मायान्धकारात्सुखचित्स्वरूपके । सदा स्थितं मुक्तजनैकनायकं कृपानिधानं पितरं हरिं मुदा ॥ १ ॥ पुनर्दुर्गपुरीया ये सप्तषष्टिस्तरङ्गकाः । हरिवाक्यसुधासिन्धोः कुर्वे तद्विवृत्तिं शुभाम् ॥ २ ॥ तत्र तु प्रथमे मोहस्वरूपं तन्निवर्त्तने । साधनं चापि सम्प्रोक्तं याथातथ्येन विस्फुटम् ॥ ३ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८७७) ज्येष्ठशुक्ले जेष्ठमासस्य शुक्लपक्षे । पौर्णमास्यां तिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमस्योत्तमाख्यस्य । भूपतेर्नृपस्य । दुर्गे । प्रत्यगास्यः पश्चिमाभिमुखो योऽपवरको गर्भागारं तस्य वेद्यां बाह्यवेदिकायाम् । पीठे स्वास्तृते मश्चासने । स श्रीहरिः । उपाविशत् ॥ २ ॥ सितेति । सिताम्बरः परिधृतसकलश्वेतवसनः । कण्ठे । श्वेतपुष्पस्रजं सान्द्रकुन्दकुसुममालाम् । दधत् । स्वाननेक्षकैः । निजैः । त्यागिगृहस्थौघैर्नानादेशोपागतत्यागिगृहिजनवृन्दैः । परितः समंततः । वृतः सभायां वेष्टितः ॥ ३ ॥ गायनमिति । स श्रीहरिः । सवाद्यं वादित्रवादनसहितम् । गायनं भगवद्गुणपद्यगानम् । कुर्वतः । साधून् । करसंज्ञया तूष्णींकरकरमुद्रया । निवार्य तद्गायनसंस्तम्भनं विधाप्येत्यर्थः । हे साधव ! । यूयम् । प्रश्नोत्तरम् । कुरुत । इतीत्थम् । तान्साधून् । प्रैरयत् । इति द्वयोरेकान्वयः ॥ ४ ॥ मुक्तानन्द इति । अथ श्रीहरिकृतप्रश्नोत्तरार्थप्रेरणानन्तरम् । मुक्तानन्दो मुनिः । प्राञ्जलिः सन् । तं श्रीहरिम् । नत्वा । पप्रच्छ । हे प्रभो ! । मोहस्य । रूपं स्वरूपं लक्षणमिति यावत् । कीदृक् कीदृशम् । भवेत् । तन्निवृत्तिर्वा मोहनिवर्त्तनं च । केन साधनेन । भवेत् । तद्वदेति शेषः ॥ ५ ॥ क्षणमिति । अथैवंविधमुक्तानन्दमुनिप्रश्नश्रवणानन्तरम् । हरिः । क्षणं क्षणकालपर्यन्तम् । विचार्य । तं मुक्तानन्दमुनिम् । उवाच । हे मुने ! । नृणाम् । हृदि । यत् । वैचित्र्यं विपरीतज्ञानतापादकचित्तविभ्रान्तत्वम् । जायते । तत् । बुद्धैः । मोह इति । उच्यते ॥ ६ ॥

शकाब्दे विक्रमार्कस्य नगाश्ववसुभूमिते । पौर्णमास्यां ज्येष्ठशुक्ले वचोऽमृतमिदं हरेः ॥ १ ॥ तत्र दुर्गपुरे दुर्ग उत्तमस्य भूपतेः । प्रत्यगास्यापवरकवेद्यां पीठ उपाविशत् ॥ २ ॥ सिताम्बरः श्वेतपुष्पस्रजं कण्ठे दधन्निजैः । वृतस्त्यागिगृहस्थौघैः परितः स्वाननेक्षकैः ॥ ३ ॥ गायनं कुर्वतः साधून्सवाद्यं करसंज्ञया । निवार्य प्रैरयत्प्रश्नोत्तरं कुरुतेति तान् ॥ ४ ॥ मुक्तानन्दोऽथ तं नत्वा पप्रच्छ प्राञ्जलिः प्रभो ! । मोहस्य रूपं कीदृक्तन्निवृत्तिः केन वा भवेत् ॥ ५ ॥ क्षणं विचार्याथ हरिस्तमुवाच नृणां हृदि । वैचित्र्यं जायते यत्तन्मोह इत्युच्यते बुधैः ॥ ६ ॥

एवं सामान्यतो मोहलक्षणमुक्त्वा विशेषत आह । येति । ग्राम्यविषयासक्त्या मायिकशब्दादिविषयभोगानुरागेण । अन्तरे जनान्तःकरणे । या । विश्रान्तिर्विपरीतज्ञानता-पादकश्चित्तविभ्रमः । जायते । सा विश्रान्तिरेव । मोहः । ज्ञेयः । येन मोहेन युक्त इति शेषः । पुमान् । अन्धेनाचक्षुषा सहैव । उपमीयते । अन्धसमानः कथ्यते इत्यर्थः । कर्तव्यज्ञानाभावान्मोहवानन्धसमान इति भावः ॥ ७ ॥ मयेति । मया । अस्य । मोहस्य । रूपम् । अद्यास्मिन्दिने एव । हृदि । विचारितम् । अस्ति । पश्चात् । स्वकीयानुभवस्य । प्रामाण्येनैव । निश्चितम् । चाप्यस्ति ॥ ८ ॥ आसीदिति । अद्यास्मिन्दिवसे । अपररात्रे पश्चिमरात्रौ । रमापतिं श्रीकृष्णम् । ध्यायत-श्चिन्तयतः । मे मम । समाधिः । आसीत् । तत्र समाधौ । आदौ प्रथमतः । नाक्षत्रं नक्षत्राधारम् । चक्रं शिशुमारम् । व्यलोकयम् ॥ ९ ॥ याम्येति । ततस्तद-नन्तरम् । याम्योत्तरौ दक्षिणोत्तरदिगवस्थितौ । अचलस्थानकौ । ध्रुवौ । दृष्टौ । याम्योत्तरौ । द्वौ । तच्चक्राक्षौ । तदाश्रितौ । भवतः । तत्र दक्षिणाक्षो दक्षिणध्रुवा-श्रित उत्तराक्ष उत्तरध्रुवाश्रितो दृष्ट इत्यर्थः ॥ १० ॥ मध्येति । घटीयन्त्रनिभस्य । अस्य । चक्रस्य । मध्यभागे । सर्वतः परितोऽपि । तदाश्रिता चक्रमाश्रित्यावस्थिता

या ग्राम्यविषयासक्त्या विश्रान्तिर्जायतेऽन्तरे । सैव मोहो येन पुमानन्धेनैवोपमीयते ॥ ७ ॥ मयाऽस्याद्यैव मोहस्य रूपं हृदि विचारितम् । स्वकीयानुभवस्यैव प्रामाण्येन च निश्चितम् ॥ ८ ॥ आसीदपररात्रे मे ध्याय-तोऽद्य रमापतिम् । समाधिस्तत्र नाक्षत्रं चक्रमादौ व्यलोकयम् ॥ ९ ॥ याम्योत्तरौ ततो दृष्टावचलस्थानकौ ध्रुवौ । याम्योत्तरौ तच्चक्राक्षो भवतो द्वौ तदाश्रितौ ॥ १० ॥ मध्यभागेऽस्य चक्रस्य घटीयन्त्रनिभस्य च । नक्षत्रमालिका दृष्टा सर्वतोऽपि तदाश्रिता ॥ ११ ॥ तिर्यगूर्ध्वमधस्तस्याः सकलास्तारकागणाः । दृष्टास्तच्चक्र-भूषार्था यथा सद्रुक्मपुष्पिकाः ॥१२॥ उदयास्तमयस्थानमथैकं सूर्यचन्द्रयोः । ब्रह्माण्डस्थमिदं सर्वं स्वदेहेऽपीक्षितं ततः ॥ १३ ॥ क्षेत्रज्ञ आत्मा च ततस्तत्स्थोऽपि पुरुषोत्तमः । दृष्टः सर्वा वृत्तयो मे तस्मिन्नेवालगंस्तदा ॥१४॥

। नक्षत्रमालिकाऽश्विन्यादिभगणस्रक् । दृष्टा ॥ ११ ॥ तिर्यगिति । तस्या नक्षत्रमा-लायाः । तिर्यगुभयतः । ऊर्ध्वम् । अधः । तच्चक्रभूषार्थास्तस्य चक्रस्यालङ्करणप्रयो-जनाः । सद्रुक्मपुष्पिकाः शुद्धकलधौतसुवर्णपुष्पिकाः । भाषायां फुदडियो इति प्रसिद्धाः । यथा । तथा । सकलाः । तारकागणास्तारासमूहाः । दृष्टाः ॥ १२ ॥ उदयेति । अथानन्तरम् । सूर्यचन्द्रयोः । एकं प्रधानं मुख्यमित्यर्थः । उदयास्तमयस्थानम् । ईक्षितम् । चक्रगौ सूर्यचन्द्रौ यत्रोदयास्तमयौगच्छतस्तत्स्थानं चापि दृष्ट-मित्यर्थः । इदमन्येषां बृहस्पत्यादिग्रहणामुपलक्षणम् । ततस्तदनन्तरम् । ब्रह्माण्डस्थम् । इदं पूर्वोक्तम् । सर्वम् । स्वदेहेऽपि । ईक्षितम् ॥ १३ ॥ क्षेत्रज्ञ इति । ततस्तद-नन्तरम् । क्षेत्रज्ञः । आत्मा स्वहृदयावस्थितो जीवः । दृष्टः । तत्स्थः स्वजीवात्मन्यवस्थितः । पुरुषोत्तमः श्रीकृष्णोऽपि । दृष्टः । तदा । मे मम । सर्वाः । वृत्तयश्च-क्षुरादिसकलेन्द्रियवृत्तयः । तस्मिन्पुरुषोत्तमे एव । अलगन् लग्ना बभूवुः ॥ १४ ॥

अतीति । यर्हि । अतीवात्यन्तम् । सक्ताः । ता वृत्तयः । कथञ्चन केनापिप्रकारेण । वहिः । नेयुर्नैवागच्छन् । तदा । कश्चिद्भक्तः । अतिभावतः । माम् । भृशमत्यन्तम् । अस्तौषीद् बहिरागमनाय स्तुतिपूर्वं प्रार्थयामास ॥ १५ ॥ तत इति । ततस्तदनन्तरम् । ता मदिन्द्रियवृत्तयः । तस्मिन् भक्ते । कृपया । परावृत्तिमनुलोमभावम् । आययुः । ततः । व्युत्थितः समाधेर्बहिरायातः । अहम् । तदा तस्मिन्काले एव । चित्ते । इत्थं वक्ष्यमाणप्रकारेण । व्यचारयं विचार-मकरवम् ॥ १६ ॥ समाधीति । मम वृत्तयस्तु । समाधिप्राप्तभगवत्सुखात् । भक्तेषु । कृपयैव । परावृत्ताः । ता वृत्तयः । स्वतस्तु स्वत एव । कृपामन्तरान्यसुखाभि-लाषेणेत्यर्थः । न परावृत्ताः ॥ १७ ॥ समाधीति । अन्यस्य । समाधिनिष्ठस्य । वृत्तयः । भागवतम् । सुखम् । हित्वा । समाधौ सम्प्राप्तं भगवद्दर्शनसुखं परित्य-ज्येत्यर्थः । पुनः । बहिः । आयान्ति । तत्र । किम् । कारणम् । अस्ति ॥ १८ ॥ विचारेणेति । तत एवंविधविचारकरणानन्तरम् । मया विचारेण पुनर्विहितविचारेण । तच्च तद्वृत्तिबहिरागमनकारणमपि । स्वहृदि । निश्चितम् । अत्र तद्वृत्तिबहिरागमने । विषयासक्तिरेव । हेतुः कारणम् । अस्ति । इतरो विषयासक्तिवर्जितो हेतुः । नहि

अतीव सक्तास्ता यर्हि बहिर्नेयुः कथञ्चन । कश्चिद्भक्तस्तदाऽस्तौषीद् भृशं मामतिभावतः ॥१५॥ ततस्तु कृपया तस्मिंस्ताः परावृत्तिमाययुः । व्युत्थितोऽहं ततश्चित्ते तदैवेत्थं व्यचारयम् ॥ १६ ॥ समाधिप्राप्तभगवत्सुखान्मम तु वृत्तयः । कृपयैव परावृत्ता भक्तेषु न तु ताः स्वतः ॥१७॥ समाधिनिष्ठस्यान्यस्य हित्वा भागवतं सुखम् । वृत्तयः पुनरायान्ति बहिः किं तत्र कारणम् ॥ १८ ॥ विचारेण ततस्तच्च मया स्वहृदि निश्चितम् । विषयासक्तिरेवात्र हेतुरस्ति न हीतरः ॥ १९ ॥ रम्याश्च मध्यमा हीना इति त्रेधा प्रकीर्त्तिताः । पञ्चापि विषयास्तत्र स्यादाद्येषु रुचिर्भृशम् ॥ २० ॥ प्राप्तौ तु जायमानायां श्रेष्ठार्थानां यदि क्वचित् । कश्चित्कुर्यादन्तरायं तदा तस्मिन्भवेद्धि रुट् ॥२१॥ ततो मोहो भवेत् पुंसश्चित्तविभ्रान्तिलक्षणः । न हीनमध्यमार्थानां विघ्ने त्वेवं भवेद् भ्रमः ॥२२॥

नास्त्येवेति निश्चितमिति सम्बन्धः । यद्यपि स्वयं श्रीहरिस्तु साक्षात्पुरुषोत्तमः श्रीकृष्ण एवास्ति तथापि स्वभक्तशिक्षार्थं स्वस्मिन्नैकान्तिकभगवद्भक्तभावमङ्गीकृत्य यमिममर्थमवदत्तस्यायं भावः । ये भगवदेकान्तिकभक्ताः सन्ति ते तु भगवद्भक्तहितार्थं कृपयैव समाधेर्बहिर्यान्ति ये त्वतथाविधास्ते तु केवलं विषयासक्त्यैव ततो बहिर्या-न्तीति ॥ १९ ॥ साम्प्रतं विषयाणामुत्तममध्यमाधमभेदेन त्रैविध्येऽप्युत्तमविषया एवासक्तिद्वारा मोहहेतवो नान्ये इत्याह सार्द्धैरष्टभिः । रम्या इति । हे मुने ! । रम्या रमणीया उत्तमा इत्यर्थः । मध्यमाः । हीना अधमाः । इतीत्थम् । पञ्चापि । विषयाः । त्रेधा त्रिविधाः । प्रकीर्त्तिताः । तत्र तेषु त्रिविधविषयेषु मध्ये । आद्येषू-त्तमपर्यायेषु रम्येषु विषयेषु । भृशमत्यन्ता । रुचिः प्रीतिः । स्याज्जायते ॥ २० ॥ प्राप्ताविति । श्रेष्ठार्थानां रम्यविषयाणाम् । प्राप्तौ । जायमानायां सत्याम् । यदि । कश्चित्पुरुषः । क्वचित्कदाचित् । अन्तरायं तत्र विघ्नम् । कुर्यात् । तदा । तस्मिन्पुरुषे । रुट् क्रोधः । भवेत् । हि ॥ २१ ॥ तत इति । ततो रुषः सकाशात् ।

पुंसो विषयरुचेर्नरस्य । चित्तविभ्रान्तिलक्षणः । मोहः । भवेत् । हीनमध्यमार्थानामधममध्यमानां विषयाणाम् । विघ्ने तु । अधमाद्यर्थप्राप्तौ केनचिद्विघ्ने कृते सति त्वित्यर्थः । एवमुक्तप्रकारेण । भ्रमः । न भवेत् । तद्विघ्नकर्त्तरि क्रोधद्वारा भ्रमलक्षणो मोहो न जायेतेत्यर्थः ॥ २२ ॥ ननूत्तमविषयप्राप्तभङ्गकर्त्तरि क्रोधद्वारा मोहो यथा भवेत्तथैव हीनादीनामर्थानामपि देहधारणहेतुत्वात्तद्भङ्गेऽपि तत्त्वं युक्तमेवेति चेत्सामान्यत इन्द्रियाणां स्वस्वार्थसम्बन्धो न विभ्रमहेतुः किन्तु गुणबुद्धिजिघृक्षिताथासक्तिरेव भ्रमलक्षणमोहफलेत्याह द्वाभ्याम् । सामान्यत इति । सर्वेषाम् । इन्द्रियाणाम् । स्वस्वार्थैः स्वकीयस्वकीयविषयैः सह । सामान्यतः । सम्बन्धस्तु । वर्त्तते । हि तावता सामान्यसम्बन्धेन । विभ्रमो मोहः । न तु नैव भवेत् ॥ २३ ॥ गुणेति । यदा गुणबुध्या । विशेषेण । तज्जिघृक्षोत्तमविषयग्रहणेच्छा । भवेत् । तदा तेषूत्तमविषयेषु । नृणाम् । आसक्तिः । स्यात् । सा आसक्तिरेव । मोहफला मोहहेतुः । स्यात् ॥२४॥ एवं सामान्यविशेषतया च स्वस्वार्थासक्तेन्द्रियवृत्तीनाममोहमोहौ फले अभिधाय साम्प्रत सामान्यविषयगेन्द्रियवृत्तयस्ततः प्रत्याहृत्य हरौ योजयितुं यथा शक्या नतथा विशेषविषयासक्तास्ताः साधनसम्पदमन्तरा तत आहृत्य हरौ योजयितुं

सामान्यतस्तु सम्बन्धः स्वस्वार्थैः सह वर्त्तते । सर्वेषामिन्द्रियाणां हि तावता तु न विभ्रमः ॥ २३ ॥
गुणबुद्ध्या विशेषेण तज्जिघृक्षा यदा भवेत् । तेष्वासक्तिस्तदा तु स्यात्सैव मोहफला नृणाम् ॥ २४ ॥
सामान्यतो विषयगा इन्द्रियाणां तु वृत्तयः । तत आकृष्य शक्यन्ते सुज्ञैर्योजयितुं हरौ ॥ २५ ॥
विशेषेण तु याः सक्ता रम्यभोगधियाऽत्र ताः । प्रत्याक्रष्टुं न शक्यन्ते विना साधनसम्पदम् ॥ २६ ॥
सद्गुरुर्भगवान्वाऽपि तदासक्तिं यदा क्वचित् । पुंसो निषेधेत्तर्ह्येष तस्मै तस्मै च कुप्यति ॥ २७ ॥
ततोऽसौ मोहमासाद्य भ्रष्टो भवति सत्पथात् । अमुमेव हि सिद्धान्तं कृष्णः प्राहार्जुनं प्रति ॥ २८ ॥

शक्या इत्याह द्वाभ्याम् । सामान्यत इति । सामान्यतः सामानतया । विषयगाः । सामान्यतः सामान्यविषयान्प्राप्ता इत्यर्थः । इन्द्रियाणाम् । वृत्तयस्तु । सुज्ञैः सुबुद्धिभिर्भक्तैः । ततः सामान्यविषयेभ्यः । आकृष्याहृत्य । हरौ श्रीहरिमूर्त्तौ । योजयितुम् । शक्यन्ते ॥ २५ ॥ विशेषेणेति । या इन्द्रियवृत्तयः । अत्रैषु विषयेषु । रम्यभोगधिया रमणीयसुखबुध्या । विशेषेणासक्ताः । स्युः । ता इन्द्रियवृतयस्तु साधनसम्पदं वक्ष्यमाणसाधनत्रयसम्पत्तिम् । विना । प्रत्याक्रष्टुं रमणीयविषयेभ्यः प्रत्याहृत्य श्रीहरिमूर्त्तौ योजयितुमित्यर्थः । न शक्यन्ते ॥ २६ ॥ एवं प्रसङ्गप्राप्तार्थं चतुर्भिरुक्त्वा पुनः प्रकृतार्थमाह सार्द्धेन । सद्गुरुरिति । सद्गुरुरेकान्तिकभावभगवद्भजनसम्प्राप्तकृपालुत्वादि भगवद्गुणहितोपदेशकतासञ्जातसद्गुरुतावाच्यो भवदादिः साधुः । अथवा । भगवान्साक्षाच्छ्रीहरिरपि । क्वचित्कदाचित् । यदा यर्हि । पुंसो भक्तस्य । तदासक्तिं रमणीयविषयासक्तिम् । निषेधेत् । तर्हि । एष भक्तः । तस्मै सद्गुरवे । तस्मै भगवते च । कुप्यति । तयोरुपरि क्रोधं करोतीत्यर्थः ॥ २७ ॥ तत इति । ततस्तदनन्तरम् । असौ भक्तः । मोहम् । आसाद्य प्राप्य । सत्पथात्सत्सङ्ज्ञाख्यसन्मार्गात् । भ्रष्टश्च्युतः । भवति । अमुं मदुक्तमेव । सिद्धान्तं निर्णीतार्थम् । कृष्णः । अर्जुनं प्रति । प्राह ॥ २८ ॥

ध्यायत इति । विषयान् दृष्टान् श्रुतान्वा रमणीयेन्द्रियार्थान् । ध्यायतो गुणबुध्या चिन्तयतः । पुंसः । तेषु गुणबुध्या चिन्तितेषु । विषयेषु । सङ्ग आसक्तिः । उपजायते । सङ्गात् । कामः सङ्गस्य विपाकदशारूपः । पुरुषो या दशामापन्नो विषयानभुक्त्वा स्थातुं न शक्नोति सा दशा काम इत्यर्थः । सञ्जायते । कामात् । क्रोधः । अभिजायते । कामविघातके क्रोधोदयस्य साक्षाद्दृश्यत्वादिति भावः ॥ २९ ॥ क्रोधादिति । क्रोधात् । सम्मोहः कृत्याकृत्यविवेकशून्यत्वम् । भवति । सम्मोहात् । स्मृतिविभ्रमः शास्त्राचार्योपदिष्टार्थानुसन्धानविभ्रंशः । भवति । स्मृतिभ्रंशात् । बुद्धिनाशः स्वनिःश्रेयसार्थव्यवसायनिवृत्तिः । भवति । बुद्धिनाशात् । प्रणश्यति । सत्सङ्गतो विमुखी भवन्पुनः पुनः संसरतीत्यर्थः ॥ ३० ॥ अत इति । हे मुने ! । अतो हेतोः । यः । पुमान् भक्तः । मोहम् । जिहासुर्हातुमिच्छुः । स्यात् । तेन भक्तेन । तद्धेतुं मोहकारणभूताम् । विषयासक्तिं रमणीयशब्दादिविषयेषु श्रोत्रादीन्द्रियासक्तिम् । सर्वथा । हातुम् । उद्यमः साधनोद्योगः । कर्त्तव्यः ॥ ३१ ॥ एवं सफलं मोहरूपं तद्धेतुप्रहाणोद्यमकारणं चोक्त्वा साम्प्रतं तन्निवृत्तिसाधनान्याहाष्टभिः । कृष्णेति । हे मुने ! । सद्गुरोः । मुखात् । कृष्णस्वरूपमाहात्म्यवेदनम् । जगतां ब्रह्माण्डानाम् ।

ध्यायतो विषयान् पुंसः सङ्गस्तेषूपजायते । सङ्गात्सञ्जायते कामः कामात्क्रोधोऽभि जायते ॥ २९ ॥ क्रोधाद्भवति सम्मोहः सम्मोहात्स्मृतिविभ्रमः । स्मृतिभ्रंशाद्बुद्धिनाशो बुद्धिनाशात्प्रणश्यति ॥ ३० ॥ अतो मोहं जिहासुर्यः पुमान्स्यात्तेन सर्वथा । तद्धेतुं विषयासक्तिं हातुं कर्त्तव्य उद्यमः ॥ ३१ ॥ कृष्णस्वरूपमाहात्म्यवेदनं सद्गुरोर्मुखात् । जगतामुदयस्थानप्रलयानां तु वेदनम् ॥ ३२ ॥ दार्ढ्यं तथाऽऽत्मनिष्ठाया इत्येतत्साधनत्रयम् । उद्युक्तेनेह संसाध्यं विषयासक्तिहानिकृत् ॥ ३३ ॥ माहात्म्यवेदनाद्यस्य प्रीतिः स्यात्परमेश्वरे । किं तस्य प्राकृतैस्तुच्छैर्नश्वरैश्च सुखैर्भवेत् ॥ ३४ ॥ पारमेष्ठ्यादिसौख्यानि कृष्णसौख्यकलामपि । नार्हन्तीत्यत्र यो विद्यात्सज्जेत्तुच्छेष्वसौ कथम् ॥ ३५ ॥ लौकिकेषु पदार्थेषु रमणीयतरेष्वपि । एकैकमेवास्ति सुखं शब्दस्पर्शादि केवलम् ॥ ३६ ॥

उदयस्थानप्रलयानामुत्पत्तिस्थितिविनाशानाम् । सुवेदनं सम्यक् ज्ञानम् । अनेन वैराग्यमभिहितम् ॥ ३२ ॥ दार्ढ्यमिति । तथा । आत्मनिष्ठायाः । दार्ढ्यमविदृढता । इत्येवंविधम् विषयासक्तिहानिकृत् । तत् । साधनत्रयम् । इह सत्सङ्गे । उद्युक्तेन विषयासक्तिनिवर्त्तनोद्यमवता भक्तेन । संसाध्यम् ॥ ३३ ॥ साधनत्रयेऽपि कृष्णमाहात्म्यवेदनस्याधिक्यमाह पञ्चभिः । माहात्म्येति । यस्य वैराग्यात्मनिष्ठावतो भक्तस्य माहात्म्यवेदनात् श्रीहरिस्वरूपमहिमावबोधनात् । परमेश्वरे श्रीहरौ । प्रीतिः । स्यात् । तस्य भक्तस्य । तुच्छैरतिहीनैः । नश्वरैः कालविनाश्यैः । प्राकृतैर्मायिकैः सुखैरुत्तमविषयभोगसौख्यैः । किम् । भवेत् । न किञ्चिदित्यर्थः ॥ ३४ ॥ पारमेष्ठ्येति । पारमेष्ठ्यादिसौख्यानि विधिपदादिलोकसुखानि । कृष्णसौख्यकलां श्रीहरिस्वरूपसुखात्यल्पांशमात्रमपि । नार्हन्ति । इतीत्थम् । अत्र सत्सङ्गे । यो भक्तः । विद्यात् । असौ भक्तः । तुच्छेष्वतिहीनेषु मायिकसुखेषु । कथम् । सज्जेत् । न सज्जेदेवेत्यर्थः ॥ ३५ ॥ लौकिकेष्विति । रमणीयतरेष्वतिरमणीयेष्वपि । लौकिकेषु

मायिकेषु । पदार्थेषु शब्दस्पर्शादि शब्दस्पर्शरूपादिप्रभृतिकम् । एकैकमेव । सुखम् । केवलमस्ति निर्णीतं भवतीत्यर्थः । 'निर्णीतंकेवलं चोक्त'मिति विश्वः ॥ ३६ ॥ नेति कुत्रचित्कस्मिंश्चिदपि । एकत्रैकस्मिन्मायिकपदार्थे । अखिलं पञ्चानां विषयाणामपीत्यर्थः । सुखम् । न तु नैव दृश्यते । कृष्णे तु । सकलमखिलम् । सम्पूर्णम् । अक्षयम-विनाशी । सौख्यम् । विद्यते । मायिकशब्दादिविषयेषु तु शब्दसुखे स्पर्शादिसुखं नास्ति स्पर्शसुखे रूपशब्दादिसुखं नास्ति किंत्वेकैकस्मिन्विषये त्वेकैकविषयसुखानुभव एव श्रीहरिसम्बन्धिष्वमायिकशब्दादिविषयेषु त्वेकैकस्मिन्पञ्च पञ्चविषयसुखानुभवः स चाखिलः सम्पूर्णोऽक्षयश्चेतीतरसुखेभ्योऽस्य महान्विशेष इति भावः ॥ ३७ ॥ इतीति । इतीत्थम् । ज्ञात्वा । यो भक्तः । कार्ष्णे श्रीहरिसम्बन्धिनि । दर्शनादिसुखे एव । रत आसक्तः । भवेत् । तस्य भक्तस्य । इह लोके । सर्वे रमणीया अरमणीयाश्च । अर्था विषयाः । तुच्छत्वेऽतिनिकृष्टभावे । समास्तुल्याः । स्युः ॥ ३८ ॥ एतदेव स्पष्टमाह । रमणीयेष्विति । अस्यैवंविधभक्तस्य । रमणीयेषु । अरम्येषु विषयाधार-वस्तुषु । कश्चन । विशेषो न्यूनाधिकतारूपो भेदः । नास्ति । यतः । सुरूपस्त्री । कुरूपस्त्री । रुक्मलोष्ठादयः स्वर्णमृत्पिण्डप्रभृतयः । पदार्थाः । समाः । वर्त्तन्ते ॥३९॥

न त्वेकत्राखिलमपि दृश्यते कुत्रचित्सुखम् । कृष्णे तु सकलं सौख्यं सम्पूर्णं विद्यतेऽक्षयम् ॥ ३७ ॥ इति ज्ञात्वा कार्ष्णे एव दर्शनादिसुखे रतः । यो भवेत्तस्य तुच्छत्वे सर्वेऽर्थाः स्युः समा इह ॥ ३८ ॥ रमणीयेष्वरम्येषु न विशेषोऽस्य कश्चन । सुरूपस्त्री कुरूपस्त्री रुक्मलोष्ठादयः समाः ॥३९॥ एवंविधो भवेद्यस्तु मोहस्तस्यैव देहिनः । विनष्ट इति विज्ञेयं सोऽनन्यो भक्त ईरितः ॥ ४० ॥ आत्मवद्भगवत्प्रेष्ठो ज्ञानी चोक्तः स एव हि । पतिव्रतासमा भक्तिरनेनैव च लभ्यते ॥ ४१ ॥ न हीदृशी स्थितिः प्राप्या त्वरमाणेन सत्वरम् । अनाकुलेन धीरेण प्राप्यते सा शनैः शनैः ॥४२॥ तावत्तु साधनदशा यावदेषा दृढान्तरे । न स्यादथैतद्दार्ढ्ये तु ज्ञेया सिद्धदशाऽस्य नुः ॥ ४३ ॥

एवमिति । यो भक्तः । एवंविधः । उक्तसाधनत्रयसम्पन्नतया सकलविषयसाम्यवानित्यर्थः । भवेत् । तस्य । देहिनो भक्तस्यैव । मोहः । विनष्टः । इतीत्थम् । विज्ञेयम् । स एवंविधः । भक्तः । अनन्य एकान्तिकः । ईरितः ॥४०॥ आत्मेति । किञ्च । स भक्त एव । आत्मवत्स्वात्मतुल्यतया । भगवत्प्रेष्ठः । ज्ञानी एतत्संज्ञः । उक्तः । 'ज्ञानी त्वात्मैव मे मत'मिति भगवद्गीतोक्तेः । अनेन भक्तेनैव । पतिव्रतासमा । भक्तिः । लभ्यते । पतिव्रता यथाऽन्यद्विहाय केवलं स्वपतिसेवायामेव तिष्ठति तथाऽयमपि श्रीहरिसेवायामेव नैकटिकपार्षदः संस्तिष्ठतीति भावः ॥ ४१ ॥ नेति । ईदृश्येवंविधा । स्थितिर्निष्ठा । त्वरमाणेन त्वरावता भक्तेन । सत्वरं शीघ्रम् । न प्राप्या । सा स्थितिः । अनाकुलेनाव्यग्रेण । धीरेण धैर्यवता भक्तेन । शनैः शनैः । प्राप्यते । हि ॥ ४२ ॥ तावदिति । यावद्यावत्कालपर्यन्तम् । एषा स्थितिः । अस्य । नुर्भक्तस्य । अन्तरेऽन्तःकरणे । दृढा सुस्थिरा । न स्यात् । तावत्तु । साधनदशा । ज्ञेया । अथ च । एतद्दार्ढ्ये अस्याः स्थितेः सुस्थिरत्वे सति तु । सिद्धदशा । ज्ञेया ॥ ४३ ॥

एषेति । अतो हेतोः । एषा स्थितिरेव । साधनीयाऽवश्यं सम्पाद्या । इतीत्थम् । सच्छास्त्रनिश्चयः । ज्ञेयः । एषा । वार्त्ता । सर्वैः । मदाश्रितैर्भवद्भिः । हृदये स्वस्वमानसे । दृढं यथातथा । धार्या ॥ ४४ ॥ सुधेति । इत्येवंविधम् । सुधोपमममृततुल्यम् । ईश्वरस्य श्रीहरेः । वाक्यम् । निशम्य । स साधुर्मुक्तानन्दमुनिः । तथा । तत्सदःस्थास्तस्यां सभायामवस्थिताः । अपरेऽपि । सन्तः साधवः । गृहस्था अपि । मोदमानन्दम् । सम्प्राप्य । तच्छ्रीहरिवचनामृतम् । हृदये । दधुः ॥ ४५ ॥ मोहस्वरूपमुक्त्वा यस्तन्निवृत्तेः सुसाधनम् । स्वभक्तानाह स हरिर्निर्मोहं मां करोत्वरम् ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्सनुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां शताधिकश्चतुस्त्रिंशस्तरङ्गः ॥ १३४ ॥ १ ॥

प्राप्तिरात्यन्तिकस्यैव श्रेयसो येन जायते । मुमुक्षूणां द्वितीये तु तत्साधनमुदीरितम् ॥१॥ शकेति । विक्रमार्कस्य विक्रमादित्यभूपतेः । गजाश्ववसुभूमितेऽष्ट सप्ताष्टैकसंमिते । शकाब्दे शकवर्षे । संवदष्टादशशताधिकाष्टसप्ततितमे वर्षे इत्यर्थः । (१८७८) नभःशुक्लतृतीयायां श्रावणमासस्य शुक्लपक्षीयतृतीयातिथौ । इदम् । हरेः । वचोऽ-

एषैव साधनीयाऽत इति सच्छास्त्रनिश्चयः । वार्तैषा हृदये धार्या दृढं सर्वैर्मदाश्रितैः ॥ ४४ ॥ सुधोपमं वाक्यमितीश्वरस्य निशम्य साधुः स तथाऽपरेऽपि । सन्तो गृहस्था अपि तत्सदःस्थाः सम्प्राप्य मोदं हृदये दधुस्तत् ॥ ४५ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते शताधिकचतुस्त्रिंशतितमस्तरङ्गः ॥ १३४ ॥ १ ॥

शकाब्दे विक्रमार्कस्य गजाश्ववसुभूमिते । नभःशुक्लतृतीयायां वचोऽमृतमिदं हरेः ॥ १ ॥ तत्र दुर्गपुरे दुर्ग उत्तमस्य स भूभुजः । वासुदेवालयस्याग्रे न्यषीदच्चक्रकोत्तमे ॥ २ ॥ सद्भिर्गृहस्थैः परितो वृतश्च धवलांशुकः । सतो विलोकयन्स्वाग्रे निषण्णान्स्वयमाह सः ॥ ३ ॥ य आत्यन्तिककल्याणं प्राप्तुमिच्छेत् पुमानिह । नारदादिसमत्वं च जयेत्सर्वेन्द्रियाणि सः ॥४॥ देहे जीवं वल्गितानि बाह्यान्तःकरणान्यथ । बहिःस्थपञ्चविषयान् वल्गितानि च तानि वै ॥ ५ ॥

मृतम् । अभूत् ॥१॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमस्य । भूभुजो नृपस्य । दुर्गे । वासुदेवालयस्य । अग्रे । चक्रकोत्तमे उत्तमे कौशेयचक्रकासने । स श्रीहरिः । न्यषीदत् ॥ २ ॥ सद्भिरिति । सद्भिः साधुभिः । गृहस्थैर्गृहिजनैश्च । नानादेशायातैरिति शेषः । परितः । वृतः सभायां वेष्टितः । धवलांशुकः परिधृतसकलश्वेतवसनः । स श्रीहरिः । स्वाग्रे स्वपुरःप्रदेशे । निषण्णान् । सतः साधून् । विलोकयन्सन् । स्वयमेव । आह ॥३॥ य इति । हे साधव ! । इह सत्सङ्गे । यः । पुमान् भक्तः । आत्यन्तिककल्याणम् । नारदादिसमत्वं नारदाद्येकान्तिकभक्तसमानत्वं च । प्राप्तुम् । इच्छेत् । स भक्तः । सर्वेन्द्रियाणि । जयेत् ॥४॥ सर्वेन्द्रियाणामेव जीवसंसृतिहेतुत्वात्तेषां जीवसंसृतिहेतुत्व प्रकारं ब्रुवंस्तान्यवश्यं जेयानीत्याह सार्द्धैः षड्भिः । देह इति । हे साधव ! । बाह्यान्तःकरणानि । देहे । जीवम् । स्थितमिति शेषः । वल्गितानि । अथ च । तानि बाह्यान्तःकरणानि । बहिःस्थपञ्चविषयान् । वल्गितानि । सन्ति ॥ ५ ॥

तानीति । जीवः । अज्ञानेन तानि बाह्यान्तःकरणान्येव । निजं स्वकीयम् । रूपम् । मन्यते । परन्तु । स जीवः । वस्तुतः । तद्रूपो बाह्यान्तःकरणरूपः । नास्ति । यद्यतो हेतोः । स जीवः । तत्प्रकाशको बाह्यान्तरिन्द्रियचेतयिता । अस्ति । प्रकाश्येभ्यः प्रकाशकोऽर्थान्तरभूत एव भवेदिति भावः ॥६॥ स्फुरन्तीति । विषयाः । अन्तःकरणेषु । स्फुरन्ति । विषयाः स्मर्यमाणाः सन्तोऽन्तःकरणेष्वाविशन्ते इत्यर्थः । तान्यन्तःकरणान्यपि । एषु विषयेष्वपि । स्फुरन्ति । अन्तःकरणान्यपि विषयेषु भोग्यत्वबुध्याऽऽविष्टानि भवन्तीत्यर्थः । एवम् । अन्योऽन्याध्यासतो हेतोः । देहे निमित्ते सति । स्फुरन्ति परस्परावेशवन्ति । ईक्ष्यन्ते दृश्यन्ते ॥ ७ ॥ साम्प्रतं विषयाणामन्तःकरणे प्रवेशप्रकारमाह द्वाभ्याम् । विषयेष्विति । पुरा प्रथमतः । इन्द्रियाणि । द्रुतं विषयदर्शनसमकालमेव । विषयेषु । प्रवर्त्तन्ते । ततस्तदनन्तरम् । आन्तराणि । करणानि । तानीन्द्रियाणि । अनुगच्छन्ति ॥ ८ ॥ तानीति । जीवः । तान्यतःकरणानि । अनुयाति । एवमित्थंभूता । प्रवृत्तिः । स्फुटं यथातथा । वर्त्तते । इन्द्रियैः । गृहीताः । अर्था विषयाः । मनआदिषु मनःप्रभृतिष्वन्तःकरणेषु । विशन्ति ॥ ९ ॥ तत इति । ततस्तदनन्तरम् । ते विषयाः । जीवे । विशन्ति । तद्योगा-

तान्येव हि निजं रूपं जीवोऽज्ञानेन मन्यते । वस्तुतस्तद्रूपो नास्ति सोऽस्ति यत्तत्प्रकाशकः ॥६॥ स्फुरन्ति विषया अन्तःकरणेषु च तान्यपि । अन्योऽन्याध्यासतो देहे स्फुरन्तीक्ष्यन्त एष्वपि ॥ ७ ॥ विषयेषु प्रवर्त्तन्त इन्द्रियाणि पुरा द्रुतम् । ततस्तान्यनुगच्छन्ति करणान्यान्तराणि तु ॥ ८ ॥ तानि जीवोऽनुयात्येवं प्रवृत्तिर्वर्त्तते स्फुटम् । गृहीता इन्द्रियैरर्था विशन्ति मनआदिषु ॥ ९ ॥ ततो विशन्ति जीवे ते तद्योगात्संसरत्यसौ । इन्द्रियाण्येव हि ततो जीवसंसृति हेतवः ॥ १० ॥ अतस्तानि प्रयत्नेन जेतव्यानि मुमुक्षुणा । तज्जयस्तु स्वतो न स्यात्स्यादुद्युक्तस्य साधनैः ॥ ११ ॥ विनौषधं यथा रोगो गुल्मस्फोटादिरुद्गतः । न शाम्येदिन्द्रियगणस्तथा साधनमन्तरा ॥ १२ ॥ तत्रापि बाह्यरोगस्य स्फोटादेस्तु निवर्त्तनम् । बाह्येनैवोपचारेण लेपकल्कादिना भवेत् ॥ १३ ॥

द्विषयसम्बन्धात् । असौ जीवः । संसरति । जीवस्योक्तरीत्या विषयसम्बन्धस्यावर्जनीयत्वात्तान्विना तेनावस्थातुमशक्यत्वात्तद्योगार्थं शुभाशुभानि कर्माणि कृत्वा तैर्हेतुभिः स संसरतीत्यर्थः । ततो हेतोः । इन्द्रियाण्येव । जीवसंसृतिहेतवः । भवन्ति ॥१०॥ अत इति । अतोऽस्माद्धेतोः । मुमुक्षुणा भक्तेन । तानीन्द्रियाणि । प्रयत्नेन । जेतव्यानि । तज्जय इन्द्रियजयस्तु । स्वतः साधनं विना । न स्यात् उद्युक्तस्येन्द्रियजयोद्योगवतो मुमुक्षोः । साधनैर्वक्ष्यमाणैस्तज्जयोपायैः । स्यात् ॥ ११ ॥ अमुमेवार्थं दृष्टान्तेन स्पष्टमाह । विनेति । यथा । उद्गतः स्वदेहे उत्पन्नः । गुल्म स्फोटादिः । रोगः । औषधं विना । न शाम्येत् । तथा । इन्द्रियगणः । साधनमन्तरा तज्जयोपायं विना । न शाम्येत् । तत्र गुल्म औदरिकः प्लीहादिः स्फोटो बाह्यो गड्वादिः ॥ १२ ॥ दृष्टान्तमेव विविवृण्वंस्तमेवार्थं द्रढयति चतुर्भिः । तत्रेति । तत्र तयोर्गुल्मस्फोटादिरोगयोर्मध्येऽपि । स्फोटादेः । बाह्यरोगस्य । निवर्त्तनं तु । लेपकल्कादिना । बाह्येन । उपचारेणौषधेनैव । भवेत् ॥ १३ ॥

आन्तरस्येति । गुल्मादेः । आन्तरस्यौदरिकस्य रोगस्य । निवर्त्तनं तु । औषधिरसप्राशनेन कुमारिकादिद्रवभक्षणेन । आन्तरेणोपचारेणैव । स्यात् । अन्यथा बाह्योपचारेण । न स्यात् ॥ १४ ॥ एवमिति । एवममुना प्रकारेण । नृणाम् । इन्द्रियद्वारा । अन्तःकरणे । यः । विषयाणाम् । प्रवेशः । स्यात् । स प्रवेशः । इन्द्रियौषधाद्विषयेभ्यः प्रत्याहरणलक्षणवक्ष्यमाणेन्द्रियभैषज्यात् । निवर्त्तेत ॥ १५ ॥ यदिति । अन्तःकरणे । अर्थानां विषयाणाम् । यत् । दृढम् । स्फुरणम् । स्यात् । तत्तु । आन्तरौषधात्साङ्ख्येनात्मविवेकसम्प्राप्तब्रह्मरूपस्वात्मनि भगवन्मूर्त्तिधारणरूपाद्वक्ष्यमाणान्तरभेषजादेव । निवृत्तिम् । याति । अन्यथेन्द्रियौषधेन न याति ॥ १६ ॥ नन्वस्तु विषयसम्बन्धवतां बाह्यान्तःकरणानां बाह्यान्तरौषधेन तेभ्यो निवृत्तिः परन्तु सर्वथा सन्त्यक्तेन्द्रियविषयाणां त्यागिनां विषयस्फूर्त्तिः कथं दृश्यते इति स्वयमेवान्यकर्त्तव्याशङ्कां कृत्वा तदन्तःकरणेऽपि त्यागात्पूर्वमेवेन्द्रियद्वाराप्रविष्टास्ते स्फुरन्तीति परिहरति । त्यागिनामिति । त्यागिनां सन्त्यक्तेन्द्रियविषयाणामपि । पुंसां भक्तानाम् । तदन्तःकरणे विषयस्फुरणम् । कथं केन हेतुना । अस्ति । इति चेत् । ब्रुवे । पूर्वं त्यागात्प्राक् । ते विषयाः ।

आन्तरस्य तु गुल्मादे रोगस्य स्यान्निवर्तनम् । आन्तरेणौषधिरसप्राशनेनैव नान्यथा ॥ १४ ॥ एवं य इन्द्रिय-
द्वारा स्यादन्तःकरणे नृणाम् । विषयाणां प्रवेशः स निवर्त्तेतेन्द्रियौषधात् ॥ १५ ॥ यदन्तःकरणे तु स्यादर्थानां
स्फुरणं दृढम् । तदान्तरौषधादेव निवृत्तिं याति नान्यथा ॥ १६ ॥ त्यागिनामपि पुंसां तत्कथमस्तीतिचेद्ब्रुवे ।
पूर्वं त इन्द्रियद्वारा प्रविष्टाः सन्त्यतोऽस्ति तत् ॥ १७ ॥ अदृष्टाश्चाश्रुता भावाः स्फुरेयुः स्वान्तरे यदि तर्हि
तेऽपीन्द्रियैर्ज्ञेयाः प्राग्भवेऽन्तःप्रवेशिताः ॥ १८ ॥ अत आदाविन्द्रियाणामेव कर्त्तव्यमौषधम् । प्रवेशद्वारभूतानां
विषयाणां प्रयत्नतः ॥ १९ ॥ ग्राम्येभ्यो विषयेभ्यो यत्प्रत्याहरणमञ्जसा । ज्ञेयमौषधमेतेषां श्रेयःसुखमभीप्सुभिः
॥ २० ॥ चक्षुषाऽनीक्षणं बुद्ध्या स्त्र्यादेश्चास्पर्शनं त्वचा । श्रोत्रेन्द्रियेणाश्रवणं तद्वार्त्तानां च सर्वथा ॥ २१ ॥

इन्द्रियद्वारा । प्रविष्टा अन्तःकरणेष्वाविष्टाः । सन्ति । अतो हेतोः । तदन्तःकरणे विषयस्फुरणम् । अस्ति ॥ १७ ॥ नन्वस्तु त्यागिनामप्येवं विषयस्फुरणं परन्तु सर्वे-पामप्यदृष्टाऽश्रुतास्तेऽन्तरे केषाञ्चित्स्फूर्त्तिः कथमायान्तीत्यन्यविधेयाशङ्कां कृत्वा तेऽपि प्राग्भवान्तःप्रविष्टाः स्फुरन्तीति परिहरति । अदृष्टाः । अश्रुताः । भावा विषयाः । स्वान्तरे । स्फुरेयुः । तर्हि । ते भावा अपि । प्राग्भवे पूर्वजन्मनि । इन्द्रियैः । अन्तः । प्रवेशिताः । ज्ञेयाः । 'अदृष्टादश्रुताद्भावान्न भाव उपजायते'इति श्रीभागव-तोक्तेः ॥ १८ ॥ अत इति । अतो हेतोः । आदौ प्रथमतः । विषयाणाम् । प्रवेशद्वारभूताम् । इन्द्रियाणाम् । औषधमेव । प्रयत्नतः । कर्त्तव्यम् ॥ १९ ॥ इन्द्रियौषधमाह । ग्राम्येभ्य इति । श्रेयःसुखमात्यन्तिककल्याणसुखम् । अभीप्सुभिरभ्याप्तुमिच्छुभिर्भक्तैः । ग्राम्येभ्यो भगवत्सम्बन्धव्यतिरिक्तत्वात्मायिकेभ्यः । विषयेभ्यः । प्रत्याहरणमिन्द्रियाणामाकर्षणम् । औषधम् । अञ्जसा तत्त्वतः । ज्ञेयम् ॥ २० ॥ तत्प्रत्याहरणप्रकारमाह त्रिभिः । चक्षुषेति । चक्षुषा नेत्रेन्द्रियेण । स्त्र्यादे रूपाद्या-

धारनार्यादिग्राम्यपदार्थस्य । बुद्ध्या बुद्धिपूर्वम् । अनीक्षणमदर्शनम् । त्वचा त्वगिन्द्रियेण । अस्पर्शनं बुद्धिपूर्वं तत्स्पर्शवर्जनम् । श्रोत्रेन्द्रियेण । तद्वार्त्तानाम् । सर्वथा । अश्रवणं बुद्धिपूर्वमनाकर्णनं च ॥ २१ ॥ तदीयेति । अथ च । घ्राणेन नासिकेन्द्रियेण । कदाचनापि । तदीयगन्धाग्रहणम् । जिह्वया रसनेन्द्रियेण । कृष्णानिवेदितान्नस्य । पलादेर्मांस मदिरा पलाण्डु लशुन गञ्ज भङ्गा महाजिह्वाहिफेनादेश्च । अग्रहोऽनास्वादनम् ॥ २२ ॥ ज्ञानेति । इत्यमुना प्रकारेण । मुनिसम्मतं सनकादिनारदादिमुनिप्रमाणितम् । ज्ञानेन्द्रियाणाम् । औषधम् । उक्तम् । आकृतीनां कर्मेन्द्रियाणाम् तदौषधं तु । शास्त्रनिषिद्धकृतिवर्जनं सच्छास्त्रनिषिद्धक्रियापरिवर्जनलक्षणम् । अस्ति ॥ २३ ॥ एवमिति । एवममुना प्रकारेण । कृते स्वस्वग्राम्यविषयेभ्यः प्रत्याहरणलक्षणबाह्येन्द्रियरुगौषधे सुविहिते सति । इन्द्रियाणां चक्षुरादिबाह्यकरणानाम् । विषयासक्तिरुक् । द्रुतं तूर्णमेव । शाम्यति । अथानन्तरम् । अन्तःकरणरुक्शान्तेरन्तःकरणे विषयस्फूर्तिरूप तद्रोगोपशमस्य । औषधम् । ब्रुवे युष्मभ्यं कथयामि ॥ २४ ॥ देह इति । देहः । जडोऽचेतनः । विकारी सततपरिणामी । कर्मतन्त्रः प्राक्कृतकर्माधीनः । नश्वरः क्षणभङ्गुरश्चास्ति । आत्मा जीवस्तु । चिद्रूपश्चेतनस्वभावः । निर्विं-

तदीयगन्धाग्रहणं घ्राणेनाथ कदाचन । कृष्णानिवेदितान्नस्य पलादेर्जिह्वयाऽग्रहः ॥ २२ ॥ ज्ञानेन्द्रियाणामित्युक्तमौषधं मुनिसम्मतम् । आकृतीनां तु तच्छास्त्रनिषिद्धकृतिवर्जनम् ॥ २३ ॥ एवं कृते त्विन्द्रियाणां विषयासक्तिरुग्द्रुतम् । शाम्यत्यथान्तःकरणरुक्शातेरौषधं ब्रुवे ॥ २४ ॥ देहो जडो विकारी च कर्मतन्त्रश्च नश्वरः । आत्मा तु नित्यश्चिद्रूपो निर्विकारः प्रकाशकः ॥२५॥ वैलक्षण्यमतीवेत्थं निश्चित्य वपुरात्मनोः । न वै देहोऽहमात्माऽस्मि भिन्न एव ततः खलु ॥ २६ ॥ न मेऽन्तःकरणेनास्ति सम्बन्धो नेन्द्रियैरपि । सच्चिद्रूपोऽस्मि भिन्नः स्वसुखेन सुखी सदा ॥२७॥ विदित्वैवं स्वमात्मानं चिद्रूपे तत्र धारणम् । साक्षात्कृष्णस्य मूर्तेर्यत्तद्ध्यन्तःकरणौपधम् ॥ २८ ॥ करणद्वयतो रोगे विषयासक्तिलक्षणे । निवृत्ते तु विशुद्धं तत् कृष्ण एव रतं भवेत् ॥ २९ ॥

कारः परिणामवर्जितः । प्रकाशकः कर्मपरतन्त्रदेहप्रकाशकत्व सम्यग्विचारप्राप्तौ कर्मपरतन्त्रता वर्जितः । नित्योऽनश्वरश्चास्ति ॥ २५ ॥ वैलक्ष्यमिति । इत्थममुना प्रकारेण । वपुरात्मनोः । अतीवात्यन्तम् । वैलक्षण्यं भिन्नत्वम् । निश्चित्य । अहम् । देहः । नास्मि । वै । अहं तु । ततो देहात् । भिन्नः । आत्मैव । अस्मि । खलु । इतिद्वयोरेकसम्बन्धः ॥ २६ ॥ नेति । मे मम । अन्तःकरणेन सह । सम्बन्धः । नास्ति । इन्द्रियैः । सहापि । सम्बन्धः । नास्ति । अहम् । तद्भिनोऽन्तर्बाह्यकरणविलक्षणः । सच्चिद्रूपः । सदा । स्वसुखेन । सुखी च । अस्मि ॥२७॥ विदित्वेति । एवममुना प्रकारेण । स्वम् । आत्मानम् । विदित्वा । चिद्रूपे । तत्रात्मनि । साक्षात्कृष्णस्य प्रत्यक्षस्य श्रीहरेः । मूर्त्तेः । यत् । धारणम् । तदन्तःकरणौपधम् । ज्ञेयम् । हि । इतिद्वयोरेकसम्बन्धः ॥ २८ ॥ करणेति । विषयासक्तिलक्षणे । रोगे । करणद्वयतो बाह्यान्तःकरणेभ्य इत्यर्थः । निवृत्ते उक्तद्विविधौपधेन विनष्टे सति तु । विशुद्धं निर्मलम् । तत्करणद्वयम् । कृष्णे साक्षाच्छ्रीहरावेव । रतमासक्तम् । भवेत् ॥ २९ ॥

तत इति । ततस्तदनन्तरम् । अल्पेन । कालेनैव । मुमुक्षोर्भक्तस्य । अभिवाञ्छितम् । आत्यन्तिकम् । श्रेयः । सिद्धयति । स भक्तः । नारदादिवच्च । स्यात् । नारदाद्येकान्तिकभक्ततुल्यो भवेदित्यर्थः ॥ ३० ॥ इत्थमिति । इत्थमेवंविधाम् । हरेः । वचःसुधाम् । आस्वाद्य । सदःस्थाः । ते । सर्वे । मुनयः । गृहिणश्च । अन्तरे स्वस्वान्तःकरणे । भृशमत्यन्तम् । हर्षम् । आपुः । ततस्तदनन्तरम् । हितोद्यतं स्वभक्तजनहितोद्युक्तम् । तं श्रीहरिम् । अत्यादरतः । प्रणेमुः ॥ ३१ ॥ स्वभक्तानां श्रेयसस्तु प्राप्तेरात्यन्तिकस्य यः । साधनं प्राह स हरिः साधनं तद्ददातु मे ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्स्वनु-रघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां शताधिकपञ्चत्रिंशस्तरङ्गः ॥ १३५ ॥ २ ॥

याभ्यां द्वाभ्यां तु मार्गाभ्यां व्रजतां संसृतिर्नृणाम् । मोक्षश्च सम्भवेत् प्रोक्ता तद्रीतिस्तु तृतीयके ॥ १ ॥ शकेति । शकेति पूर्वार्द्धे व्याख्यातम् । (१८७८)

ततोऽल्पेनैव कालेन मुमुक्षोरभिवाञ्छितम् । सिद्धयत्यात्यन्तिकं श्रेयः स च स्यान्नारदादिवत् ॥ ३० ॥ इत्थं हरेस्ते
मुनयो वचः सुधामास्वाद्य हर्षं भृशमापुरन्तरे । सर्वे सदःस्था गृहिणश्च तं ततः प्रणेमुरत्यादरतो हितोद्यतम् ॥ ३१ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते शताधिकपञ्चत्रिंशतितमस्तरङ्गः ॥ १३५ ॥ २ ॥

शकाब्दे विक्रमार्कस्य गजाश्ववसुभूमिते । चतुर्थ्यां नभसः शुक्ले वचोऽमृतमिदं हरेः ॥ १ ॥
तत्र दुर्गपुरे दुर्गे उत्तमस्य महीक्षितः । वासुदेवालयस्याग्रे चक्रके स उपाविशत् ॥ २ ॥
साधुभिर्गृहिभिश्चापि निजभक्तैः परिश्रितः । सिताम्बरधरः साधून् पुरःस्थान् वदति स्म सः ॥ ३ ॥
भजतां राधिकाकान्तं पुंसां द्वे वर्त्मनी इह । विद्येते ये व्रजेयुस्ते ताभ्यां सत्पदवीमियुः ॥ ४ ॥
ताभ्यामेव व्रजन्तोऽत्र बुद्धिमन्तोऽपि केचन । दृश्यन्ते संसृतिं यान्तः कुर्वन्तो गुरुतामपि ॥ ५ ॥

नभसः श्रावणमासस्य । शुक्ले धवलपक्षे । चतुर्थ्यां तिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमस्य । महीक्षितो नृपस्य । दुर्गे । वासुदेवालयस्य । अग्रे । चक्रके कौशेये चक्रकासने श्रीहरिः । उपाविशत् ॥ २ ॥ साधुभिरिति । निजभक्तैर्नानादेशेभ्यउपागतैः । साधुभिः । गृहिभिश्चापि । परिश्रितः सभायां परिवेष्टितः । सिताम्बरधरः परिधृतसकलश्वेतवसनः । स श्रीहरिः । पुरःस्थान्स्वाग्रप्रदेशनिविष्टान् । साधून् । वदति स्म । सवाद्यं भगवद्यशोङ्कित पद्यानि गायतस्तान्नेत्रसंज्ञया ततो विरमय्य स्वयमवददित्यर्थः ॥ ३ ॥ भजतामिति । हे साधवः ! । इह लोके । राधिकाकान्तं श्रीकृष्णम् । भजताम् । पुंसाम् । द्वे । वर्त्मनी मार्गौ । विद्येते । ये भक्ताः । ताभ्यां वर्त्मभ्याम् । व्रजेयुर्गच्छेयुः । ते भक्ताः । सत्पदवीं भगवदेकान्तिकसाधुमार्गम् । इयुः । प्राप्नुयुः ॥ ४ ॥ ताभ्यामिति । अत्र लोके । बुद्धिमन्तोऽपि । गुरुतां सर्वजनानां गुरुभावम् । कुर्वन्तोऽपि । केचन । भक्ताः । ताभ्यां वर्त्मभ्यामेव । व्रजन्तः सन्तः ।

संसृतिं संसारम् । यान्तः प्राप्नुवन्तः । दृश्यन्ते ॥ ५ ॥ ते वर्त्मनी आह । शृङ्गारेति । शृङ्गाररसयुक् द्विविधशृङ्गाररसेन युक्ता । भक्तिर्भगवति गाढानुरागेण सेवा । आत्मज्ञानं च । उभे । ते । वर्त्मनी । स्तो भवतः । ताभ्यामुभाभ्यां वर्त्मभ्याम् । व्रजतामितिशेषः । यथा । संसृतिः । स्यात् । तथा ब्रुवे ॥ ६ ॥ यदेति । यदा पुमान्भक्तः । रसयुजा शृङ्गाररसयुक्तया । भक्त्या । कृष्णम् । भजेत् । तदा । राधालक्ष्मीतत्सखीभिः । जुष्टः सेवितः । प्रभुः श्रीकृष्णः । ध्येयस्तेन चिन्त्यः । भवेत् ॥ ७ ॥ संयोग इति । तदा शृङ्गाररसयुग्भक्त्याचरणकाले । संयोगः प्रेमादिसप्तविधः । विप्रलम्भो दृग्मनःसङ्गादि दशविधश्च । इत्येवंद्विविधः । शुचिः शृङ्गार-रसः । वर्ण्यो वर्णनीयः । भवेत् । विभावा आलम्बनोद्दीपनभेदेन द्विविधानि रसोदयकरणानि । अनुभावा नयनवदनप्रसाद स्मितमधुरवचनभाषणादीनि कार्याणि तथा । सञ्चारिणो निर्वेदादित्रयस्त्रिंशत्सङ्ख्याकेषु यथोपयोगिनः सहकारिणो भावाः । चकारात्स्तम्भ स्वेदादयः सात्त्विकभावाः । वर्ण्याः । स्युः ॥ ८ ॥ श्रीराधेति । श्रीराधातत्सखीनाम् । रूपाणि शरीरसौन्दर्याण्यपि । तत्र तस्यां तथाविधभक्तौ । पृथक् । पृथक् । अवश्यम् । वर्ण्यानि । स्युः । तदङ्गानि श्रीराधातत्सखीनां वदन

शृङ्गाररसयुग्भक्तिरात्मज्ञानं च ते उभे । वर्त्मनी स्तो यथा ताभ्यां संसृतिः स्यात्तथा ब्रुवे ॥ ६ ॥ यदा रसयुजा भक्त्या भजेत्कृष्णं पुमांस्तदा । राधालक्ष्मीतत्सखीभिर्जुष्टो ध्येयः प्रभुर्भवेत् ॥ ७ ॥ संयोगो विप्रलम्भश्चेत्येवं वर्ण्यः शुचिस्तदा । स्युर्विभावाश्चानुभावा वर्ण्याः सञ्चारिणस्तथा ॥ ८ ॥ श्रीराधातत्सखीनां च रूपाण्यपि पृथक् पृथक् । अवश्यं तत्र वर्ण्यानि तदङ्गानि पृथक् पृथक् ॥९॥ पृथक् पृथग्यदाऽङ्गानि योषितां वर्णयेत्पुमान् । ध्यायेद्वा तर्हि स कथं निर्विकारमना भवेत् ॥ १० ॥ एष एवेन्द्रियाणां तु स्वभावः खल्वकृत्रिमः । अर्थेषु रमणीयेषु यदतिस्निग्धता द्रुतम् ॥ ११ ॥ राधादीनां तु देवीनां वाङ्माधुर्यं सुगन्धिता । यादृशं चास्ति सौन्दर्यं तादृग्नास्त्येव कुत्रचित् ॥ १२ ॥ श्रवणघ्राणचक्षुर्भिरनुभूयैतदञ्जसा । वर्णयित्वाऽथवा वाचा को नामाविक्रियो भवेत् ॥ १३ ॥

स्तन नाभ्यादयोऽवयवाश्च । पृथक् । पृथक् । अवश्यं वर्ण्यानि स्युः ॥९॥ पृथगिति । पुमान् । यदा । योषितां स्त्रीणाम् । अङ्गानि । पृथक् । पृथक् । वर्णयेत् । अथवा ध्यायेत् । तर्हि । स वर्णयिता ध्याता च पुमान् । निर्विकारमनाः । कथम् । भवेत् । न भवेदेवेत्यर्थः ॥१०॥ एष इति । रमणीयेषु । अर्थेषु विषयेषु । द्रुतं शीघ्रम् । अतिस्निग्धता गाढानुरागित्वम् । यत् । एषः । इन्द्रियाणाम् । अकृत्रिमः साहजिक एव । स्वभावः । अस्मि । खलु ॥११॥ राधेति । राधादीनाम् । देवीनां दिव्यरूपाणां शक्तीनाम् । यादृशम् । वाङ्माधुर्यम् । सुगन्धिता । सौन्दर्यं च । अस्ति । तादृक् तादृशं वाङ्माधुर्यादिकम् । कुत्रचित्कासुचिदपि नारीषु । नास्त्येव ॥१२॥ श्रवणेति । एतद्राधादिवाङ्माधुर्यादिकम् । श्रवणघ्राणचक्षुर्भिः । अञ्जसा तत्त्वतः । अनुभूय । अथवा । वाचा । वर्णयित्वा । अविक्रियो विकारवर्जितः । कोनाम कोनु । भवेत् । कश्चिदपि । न भवेदेवेत्यर्थः ॥ १३ ॥

एतास्विति । यस्य पुरुषस्य । अस्थिरं स्वभावतश्चञ्चलम् । मनः । चेद्यदि । एतासु राधादिषु । किञ्चिदीषन्मात्रमपि । विक्रियेत कामभावेन विकारयुक्तं भवेत् । तदा । सः । पुमान् । निःश्रेयसाध्वनः । भ्रष्टश्च्युतः स्यादेव ॥ १४ ॥ एवमिति । एवममुना प्रकारेण । रसिकभावेन । राधिकेश्वरं श्रीकृष्णम् । भजतां पुरुषाणाम् । महत् । विघ्नम् । प्रोक्तम् । अथो अनन्तरम् । आत्मज्ञानेन । भजताम् । तद्विघ्नम् । ब्रुवे ॥ १५ ॥ आत्मेति । अत्र लोके । आत्मज्ञानवताम् । नृणां पुंसां तु । अहम् । कृष्णः । अस्मि । इतीत्थम् । बुद्धेः । विपर्ययाद्विपरीतभावात् । यथेष्टाचरणे । प्रवृत्तिः । जायते ॥ १६ ॥ एवमिति । अज्ञा भगवत्स्वरूपज्ञानविमूढाः । ते आत्मज्ञानिनो भक्ताः । एवं वक्ष्यमाणप्रकारेण । विदन्ति । आत्मा परमात्मा श्रीकृष्णः । ब्रह्म ब्रह्मशब्दवाच्यः । अस्ति । तद्ब्रह्म । आदितः प्रथमतः । सर्गारम्भे । मायापुरुषरूपेण । प्रजायते ॥ १७ ॥ तत इति । ततस्तदनन्तरम् । तद्ब्रह्मैव । स्वयम् । तत्कार्यनिखिलाकृतिरूपेण माया-पुरुषकार्यभूतस्थावरजङ्गमाकाररूपेण । जायते । तत्तद्देहस्थजीवरूपेण स्थावरजङ्गमात्मकदेहावस्थितजीवरूपेण च । जायते ॥ १८ ॥ एवमिति । एवममुना प्रकारेण ।

एतासु यस्य किञ्चिच्चेद्विक्रियेत मनोऽस्थिरम् । तदा भ्रष्टः स्यादेव पुमान्निःश्रेयसाध्वनः ॥ १४ ॥ एवं रसिक-
भावेन भजतां राधिकेश्वरम् । प्रोक्तं महद्विघ्नमथो आत्मज्ञानेन तद्ब्रुवे ॥१५॥ आत्मज्ञानवतां त्वत्र कृष्णोऽस्तीति
विपर्ययात् । बुद्धेर्यथेष्टाचरणे प्रवृत्तिर्जायते नृणाम् ॥ १६ ॥ एवं हि ते विदन्त्यज्ञा आत्मा ब्रह्म तदादितः ।
मायापुरुषरूपेण सर्गारम्भे प्रजायते ॥ १७ ॥ ततस्तत्कार्यनिखिलाकृतिरूपेण जायते । तदेव तत्तद्देहस्थजीव-
रूपेण च स्वयम् ॥ १९ ॥ एवं हि जानतां तेषां स्वोपास्यस्याखिलात्मनः । परस्य ब्रह्मणः साक्षात्कृष्णस्यानव-
बोधतः ॥ १९ ॥ उपासनाखण्डनं स्यादिति विघ्नं महन्मतम् । एवमात्मविदः सन्ति भ्रष्टा निःश्रेयसाध्वनः
॥ २० ॥ सदध्वभ्रष्टा उभयेऽप्येते यान्ति हि संसृतिम् । यथा न यायुस्तामेते तथा वच्म्यधुना तु वः ॥ २१ ॥

जानताम् । तेषामात्मज्ञानिनाम् । स्वोपास्यस्य । अखिलात्मनः सर्वान्तर्यामिणः । परस्य । ब्रह्मणः । साक्षात्कृष्णस्य । अनवबोधतः मायापुरुषादि जीवान्तस्य कृष्ण-रूपेण बोधाभावतः पृथग्भूतश्रीकृष्णस्वरूपाज्ञानेनेत्यर्थः ॥ १९ ॥ उपासनेति । उपासनाखण्डनम् । स्यात् । इत्येवंभूतम् । महत् । विघ्नम् । मतम् । अत्रोपासना-खण्डनं नाम स्वजीवमेव वस्तुतस्तत्सेवकं सन्तमपि सोऽहमस्मीति स्वामिनमेव मत्वोपासनात्यागपूर्वं स्वयमेवोपास्यो भूत्वा यथेष्टाचरणं कुर्वन्वर्त्तते यत्तदिति । एवममुना प्रकारेण । आत्मविदो नराः । निःश्रेयसाध्वनः । भ्रष्टाश्च्युताः । सन्ति जायन्ते । इति द्वयोरेकसम्बन्धः ॥ २० ॥ सदिति । उभयेऽपि । एते रसिकभक्ता आत्म-विदो भक्ताश्च । सदध्वभ्रष्टा भगवदेकान्तिकसाधुमार्गच्युताः सन्तः । संसृतिम् । यान्ति । हि । एते उभयविधभक्ताः । यथा येन प्रकारेण । तं संसृतिम् । न यायुः । तथा । अधुना । वो युष्मभ्यम् । वच्मि ॥ २१ ॥

तत्रादौ रसिकभक्तानां श्रेयोवर्त्मस्थितिप्रकारमाह चतुर्भिः । विलोक्येति । सुरूपामपि । स्वस्य । मातरं जननीम् । अथवा । स्वसारं भगिनीम् । अथवा । कन्यकां सुताम् । विलोक्यापि । मनसि । क्वचित्कदाचिदपि । विक्रिया विकारः । नोदेति ॥२२॥ इयमिति । इयम् । माता मम जननी । भवति । इत्यादिबुद्धेः । दाढर्यात् सुदृढत्वाद्धेतोः । कामुकस्यापि । पुंसः । तत्र मात्रादिषु । अन्यथामतिर्भोग्यमतिः । कर्हिचित्कदाचिदपि । यथा । न जायते । तथेत्युत्तरेणसम्बन्धः ॥२३॥ तथेति । तथैव । भगवद्भक्तसुन्दरीषु राधालक्ष्म्यादिषु भगवद्भक्तनारीष्वपि । सर्वदा । जगन्मात्रादिबुद्ध्या । क्वचित्कदाचिदपि । विक्रिया विकारः । नैवोदियात् ॥ २४ ॥ एवमिति । एवमनुना प्रकारेण । सर्वदा । निर्दोषधीदाढर्यवताम् । पुंसां तु । शृङ्गाररसयुग्भक्त्या । परम् । निःश्रेयसम् । भवेत् ॥ २५ ॥ तदन्येषां दोषमाह । अन्येषामिति । हे साधवः ! अन्येषां भगवद्भक्तस्त्रीषु विकारयुक्तमतीनां तु । तया शृङ्गाररसयुग्भक्त्या महान् । दोषः । निश्चितमेव । भवति । तस्य दोषस्य । निवृत्तिः । प्रायश्चित्तशतैरपि । नास्त्येव ॥ २६ ॥ इममेवार्थं प्रकारान्तरेणाह त्रिभिः । अन्येति । अन्यस्त्रीवीक्षणादिभ्यो भगवद्भक्ताभिन्ननारीणां कामभावेन दर्शनादिभ्यः । जातः । दोषः ।

विलोक्यमातरं स्वस्य स्वसारं वापि कन्यकाम् । सुरूपामपि नोदेति विक्रिया मनसि क्वचित् ॥ २२ ॥ इयं मातेत्यदिबुद्धेर्दाढर्यात्तत्रान्यथामतिः । यथा न जायते पुंसः कामुकस्यापि कर्हिचित् ॥ २३ ॥ तथैव भगवद्भक्तसन्दरीष्वपि सर्वदा । जगन्मात्रादिबुद्ध्यैव नोदियाद्विक्रिया क्वचित् ॥ २४ ॥ एवं निर्दोषधीदाढर्यवतां पुंसां सर्वदा । शृङ्गाररसयुग्भक्त्या भवेन्निःश्रेयसं परम् ॥ २५ ॥ अन्येषां तु महान् दोषस्तया भवति निश्चितम् । निवृत्तिस्तस्य नास्त्येव प्रायश्चित्तशतैरपि ॥ २६ ॥ अन्यस्त्रीवीक्षणादिभ्यो जातो दोषः प्रशाम्यति । अनन्यभगवद्भक्तस्त्रीणां सन्दर्शनादिभिः ॥ २७ ॥ तद्वीक्षादिजदोषस्तु वज्रलेपायते ध्रुवम् । वदत्यर्थं यतः स्कान्दस्मृतिरप्यमुमेव हि ॥२८॥ अन्यक्षेत्रे कृतं पापं तीर्थक्षेत्रे विनश्यति । तीर्थक्षेत्रे कृतं पापं वज्रलेपो भवत्यलम् ॥२९॥ अथात्मज्ञानिनां श्रेयोवर्त्मस्थितिरुदीर्यते । ययैते पदवीं यायुर्निर्विघ्नं महतां सताम् ॥३०॥

अनन्यभगवद्भक्तस्त्रीणां भगवदेकान्तिकभक्तिमतीनां नारीणाम् । सन्दर्शनादिभिः तन्माहात्म्यसंवेदनपूर्वं तदीयात्मीयधर्मरक्षणं यथा भवेत्तथा दूरतस्तद्दर्शनविधानादिभिः । प्रशाम्यति ॥ २७ ॥ तदिति । तद्वीक्षादिजदोषो भगवदेकान्तिकभक्तनारीणां कामभावेन समीक्षणादिजातं पापं तु । ध्रुवमेव । वज्रलेपायते । वज्रं यथाऽनेकविधशास्त्रास्त्रैर्दुर्भेद्यं तथाऽस्य जीवे जातः पापलेपोऽनेकप्रायश्चित्तदुर्वार्यो जायते इत्यर्थः । यतो हेतोः । स्कान्दस्मृतिरपि अनन्तरवक्ष्यमाणस्कन्दपुराणवचनमपि । अमुमेव । अर्थम् । वदति । हि ॥ २८ ॥ अन्येति । अन्यक्षेत्रे तीर्थेतरस्थाने । कृतम् । पापम् । अलमत्यर्थम् । वज्रलेपो वज्रलेपतुल्यम् । भवति ॥ २९ ॥ अथेति । अथानन्तरम् । आत्मज्ञानिनाम् । श्रेयो वर्त्मस्थितिः । उदीर्यते मया कथ्यते । यया श्रेयोवर्त्मस्थित्या । एते आत्मज्ञानिनः । महताम् । सतां भगवदेकान्तिकसाधूनाम् । पदवीं भगवद्धामप्राप्तिरूपं मार्गम् । निर्विघ्नं यथातथा । यायुः ॥ ३० ॥

अत्रैवंभूतोपनिषत्सिद्धान्तशैल्यस्ति । पुरुषोत्तमः श्रीहरिः । स्वोपासनासम्प्राप्तस्वान्तर्यामित्वेनाक्षरब्रह्माख्येन महापुरुषेण महामायां प्रबोध्य तद्द्वारानेकाण्डसर्गादिव्यधादित्येवं सत्यप्यतिमूढा आत्मज्ञानिन आत्मशब्दवाच्यपुरुषोत्तमस्य श्रीहरेरज्ञानात्तमेवाक्षरब्रह्माख्यपुरुषं बुद्ध्वा तं च सर्वरूपं बुद्ध्वा संसरन्त्यतो यथार्थात्मज्ञानिभिर्भक्तैः स्वमोक्षाय निजात्मानमक्षरब्रह्मरूपं विभाव्य पुरुषोत्तमस्य श्रीहरेर्भक्तिः कार्येत्याह षड्भिः । निर्विकारमिति । ब्रह्माक्षरब्रह्माख्यपुरुषरूपम् । निर्विकारम् । निरंशं चेति । श्रुतिवर्णितम् । अस्ति । तथा च श्रुतिः । 'निर्विकारं निष्कलं निष्क्रियं शान्त'मित्यादिः । तत्र निर्गतो विकारः स्वरूपपरिणामादिर्यस्य तत् । निर्गतो निवृत्तः अंशः कलाशब्दाभिहितो विभागो यस्य तदिति निर्विकारनिरंशशब्दार्थौ । तदेवंविधं ब्रह्म । सविकारपदार्थवन्मृदादिविकारवत्पदार्थ इव । सर्वरूपम् । कथम् । स्यात् । न भवेदेवेत्यर्थः ॥ ३१ ॥ यदिति । अस्य ब्रह्मणः । यत् । सर्वरूपत्वम् । निगमे सर्वं खल्विदं ब्रह्मेत्यादिवेदवचने । कथितम् । तत्तु । विकारितया । न कथितम् । यथा मृद् घटशरावादिरूपेण परिणाम्यानेकरूपेण जायते न तथेदं जीवाद्यनेकरूपेण जातं सत्तथोक्तं भवतीत्यर्थः । किन्तु । कार्यात्मकत्वतः । हेतोः । कथितम् । कार्यात्म-

निर्विकारं निरंशं च ब्रह्मास्ति श्रुतिवर्णितम् । कथं तत्सर्वरूपं स्यात्सविकारपदार्थवत् ॥ ३१ ॥
यत्त्वस्य सर्वरूपत्वं कथितं निगमेऽस्ती तत् । न विकारितया किन्तु हेतोः कार्यात्मकत्वतः ॥ ३२ ॥
सर्वकारणता सर्वाधारता ब्रह्मणोऽस्ति हि । पृथङ्नाधेयमाधारात्तिष्ठेत्कार्यं च कारणात् ॥ ३३ ॥
एवं हि सर्वरूपत्वं तस्य निश्चित्य शास्त्रतः । सेव्यः कृष्णः परस्तस्मात्तदैक्यप्रापितात्मना ॥ ३४ ॥
अक्षरस्यापि कृष्णस्तु कारणं चाश्रयो मतः । प्रेरकश्चात एवासौ सर्वसेव्य उदीरितः ॥ ३५ ॥
एवं ज्ञात्वा तु ये कृष्णं ब्रह्मीभूतात्मना सदा । प्रीत्या भजन्ति ते तूक्ता प्राप्ता एव महद्गतिम् ॥ ३६ ॥

तया कार्यप्रकारं ब्रह्मैवाभिधीयते इत्यर्थः ॥ ३२ ॥ एतदेव स्पष्टमाह । सर्वेति । ब्रह्मणः । सर्वकारणता सर्वान्तर्यामित्वेन सर्वहेतुत्वम् । सर्वाधारता सर्वाधिकरणत्वं च अस्ति । आधेयम् । आधारात् । पृथक् । न तिष्ठेत् । कार्यम् । कारणाच्च । पृथक । न तिष्ठेत् । कार्यस्य कारणसत्तया सद्रूपत्वादाधेयस्य कार्यास्याधारेण कारणेनावस्थानार्हत्वाच्च कार्यमेव कारणाख्यया श्रुत्याभिधीयते इत्यर्थः ॥ ३३ ॥ एवमिति । एवममुना प्रकारेण । तस्य ब्रह्मणः । सर्वरूपत्वम् । शास्त्रतः । निश्चित्य । तस्माद्ब्रह्मणः । परः स्वरूपस्वभावादिभिरित्युत्कृष्टः । कृष्णः साक्षाच्छ्रीहरिः । तदैक्यप्रापितात्मनाऽक्षरब्रह्मणासहैक्यं नीतेन स्वात्मना । सेव्य एकान्तिकभावेनोपासनीयः ॥ ३४ ॥ अक्षरस्येति । कृष्णः स्वयं श्रीहरिस्तु । अक्षरस्यापि । कारणमुक्तरीत्या हेतुः । आश्रय आधारः । प्रेरको जगत्सर्गादिकार्ये नियोजकश्च । मतः । अतो हेतोरेव । असौ कृष्णः । सर्वसेव्यः । उदीरितः ॥ ३५ ॥ एवमिति । एवममुना प्रकारेण । ये आत्मज्ञानिनः । कृष्णम् । ज्ञात्वा । ब्रह्मीभूतात्मना ब्रह्मभावापन्नेन स्वात्मना । सदा । प्रीत्या । भजन्ति । ते तु । महद्गतिं भगवदेकान्तिकप्राप्यामक्षरधाम्नि श्रीहरिपार्षदतारूपामुत्तमगतिम् । प्राप्ता एव । उक्ताः ॥ ३६ ॥

निर्विघ्नमिति । एते एवंभूताभक्ता एव । रमापतेः श्रीहरेः । मुख्यं गोलोकवैकुण्ठादिष्वग्र्यम् । धामाक्षरब्रह्मपदम् । निर्विघ्नं यथातथा । यान्ति । इत्थममुना प्रकारेण । वर्त्मद्वयस्य रसिकभक्त्यात्मज्ञानलक्षणद्विविधपथस्य गतिभेदः । मुमुक्षुभिर्भवद्भिः । ज्ञेयः ॥ ३७ ॥ पीयूषेति । इत्येवंविधम् । पीयूषवत् । स्वादुत्तरम् । धर्मात्मजस्य श्रीहरेः । वचः । निपीय । सदोनिषण्णाः सभोपविष्टाः । भक्ताः । ते । सर्वे । सन्तः । अथो अथ च । गृहिणश्च । हृदि स्वस्वमानसे । अतितोषम् । लेभिरे प्रापुः ॥ ३८ ॥ याभ्यां द्वाभ्यां तु मार्गाभ्यां स्वीयानां व्रजतामपि । भवेच्च संसृतिर्मोक्षस्तद्रीतिं तत्त्वतो निजान् ॥ ३९ ॥ जगाद श्रीहरिर्योऽत्र कृपया परयैव सः । मोक्षहेतौ पथि दृढां स्थितिं मह्यं ददातु वै ॥ २ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्सूनुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां शताधिकषट्त्रिंशस्तरङ्गः ॥ १३६ ॥ ३ ॥

आपत्तौ धर्मरक्षायां भक्तिर्गच्छेत्तथा वृषः । भक्तेश्च रक्षणे गच्छेत्तदा रक्षास्तु कस्तयोः ॥ १ ॥ अधमोद्धारणत्वादिमाहात्म्यं वेत्ति यो हरेः । तस्य केन विचारेण

निर्विघ्नमेते यान्त्येव धाम मुख्यं रमापतेः । ज्ञेयो वर्त्मद्वयस्येत्थं गतिभेदो मुमुक्षुभिः ॥ ३७ ॥ पीयूषवत्स्वादुत्तरं
वचस्ते धर्मात्मजस्येति निपीय सर्वे । सन्तोऽतितोषं हृदि लेभिरेऽथो सदो निषण्णा गृहिणश्च भक्ताः ॥ ३८ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते शताधिकषट्त्रिंशतितमस्तरङ्गः ॥ १३६ ॥ ३ ॥

शकाब्दे विक्रमार्कस्य गजाश्ववसुभूमिते । नभसः शुक्लपञ्चम्यां वचोऽमृतमिदं हरेः ॥ १ ॥
तत्र दुर्गपुरे दुर्गं उत्तमस्यास्य वेश्मनः । वितर्दौ प्रत्यगास्यस्य न्यषीदत्स्वासने स तु ॥ २ ॥
सिताम्बरः परिवृतो नानादेशागतैर्निजैः । त्यागिभिर्गृहिभिर्भक्तैः स्वाननार्पितदृष्टिभिः ॥ ३ ॥
मल्हाररागेण यशो गीयमानं स साधुभिः । श्रुत्वा कृष्णस्य संहृष्टः सतोऽपृच्छत्पुरःस्थितान् ॥ ४ ॥

स्वधर्मे स्याद्दृढा स्थितिः ॥ २ ॥ अखण्डं चिन्तनं केन साधनेन हरेर्भवेत् । एतेषामुत्तराण्याह चतुर्थे श्रीहरिः स्वयम् ॥ ३ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८६८) नभसः श्रावणमासस्य । शुक्लपञ्चम्यां शुक्लपक्षीयपञ्चमीतिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमस्य नृपतेः । दुर्गे । अस्योत्तमनृपतेरेव । प्रत्यगास्यस्य पश्चिमद्वारस्य । वेश्मनो गृहस्य । वितर्दौ बाह्यवेदिकायाम् । स्वासने शोभने मञ्चासने । स श्रीहरिः । न्यषीदत्स्वावासादागत्योपविवेश ॥ २ ॥ तं विशिनष्टि । सितेति । सिताम्बरः परिहितसकलश्वेतवसनः । नानादेशागतैः । निजैः । भक्तैः । स्वाननार्पितदृष्टिभिः । त्यागिभिश्च परिवृतः सभायां परिवेष्टितः ॥ ३ ॥ मह्लारेति । साधुभिर्ब्रह्मानन्दप्रेमानन्दादिभिः । मह्लाररागेण । गीयमानम् । वाद्यवादनसहितमितिशेषः । कृष्णस्य । यशो यशोङ्कितपद्यानि । श्रुत्वा । संहृष्टः । स श्रीहरिः । पुरःस्थितान् । सतो ब्रह्मानन्दादीन्साधून् । अपृच्छत् करचेष्टया गानाद्विरमय्य पृष्टवान् ॥ ४ ॥

धर्मेति । हे मुनयः ! । धर्मनिष्ठस्य । भक्तस्यापि । क्वच कदाचित् । आपत्कालः । आपतेत् । यत्रापत्काले । धर्मे । रक्ष्यमाणे सति । रमापतेः श्रीकृष्णस्य । भक्तिः । गच्छेत् ॥५॥ भक्ताविति । अथवा । भक्तौ । रक्ष्यमाणायां सत्याम् । धर्मः । सुरक्षितः सन्नपि । गच्छेत् । तदा । हे साधवः ! । कस्य । रक्षा कार्या । कस्य वा । त्यागः । कार्यः । धर्मज्ञानविरक्तिभक्तिमिर्भगवदेकान्तिकता भवति तत्र ज्ञानविरक्त्योरन्तःसाधनापेक्षत्वेन विषमदेशकालादिनापि निवृत्तिभयं नास्ति । भक्तिधर्मयोस्तु बाह्यसाधना-पेक्षत्वेन देशकालादिविषमीभावे सति धर्मस्त्याज्यो भक्तिर्वा रक्ष्या भक्तिस्त्याज्या धर्मो वा रक्ष्यः किमत्र युक्तं तद्वदतेत्यर्थः ॥ ६ ॥ इतीति । इत्यमुना प्रकारेण । भवता श्रीहरिणा पृष्टे सति । ब्रह्मानन्दो मुनिः । तं श्रीहरिम् । अब्रवीत् । हे हरे ! । भवान् । येन । प्रसन्नः । स्यात् । मुमुक्षुणा भक्तेन । तत् । कार्यम् । हि ॥७॥ एतदेव सुस्पष्टमाह । भवेदिति । यदि । भवान् । धर्मस्य । रक्षया । प्रसन्नः । भवेत् । तदा । धर्म एव । रक्ष्यः । अर्थाद्भक्तिस्त्याज्येत्यर्थः । यदि । भक्त्या । भक्तिरक्षया । प्रसन्नः । भवेत् । तदा तु । सा भक्तिः । रक्ष्या । हि । अर्थाद्धर्मस्त्याज्य एवेत्यर्थः ॥ ८ ॥ तमिति । तमेवं वदन्तं ब्रह्मानन्दमुनिम् । हरिः । उवाच । हे मुने ! ।

धर्मनिष्ठस्य भक्तस्याप्यापत्कालः क्व चापतेत् । यत्र धर्मे रक्ष्यमाणो भक्तिर्गच्छेद्रमापतेः ॥ ५ ॥ भक्तौ वा रक्ष्यमा-णायां गच्छेद्धर्मः सुरक्षितः । तदा रक्षा कस्य कार्या त्यागो वा कस्य साधवः ॥ ६ ॥ इति पृष्टे भगवता ब्रह्मानन्द-स्तमब्रवीत् । भवान्येन प्रसन्नः स्यात्तद्धि कार्यं मुमुक्षुणा ॥ ७ ॥ भवेत्प्रसन्नो हि भवान् यदि धर्मस्य रक्षया । धर्म एव तदा रक्ष्यो यदि भक्त्या तदा तु सा ॥ ८ ॥ तमुवाच हरिर्यर्हि प्रत्यक्षो भगवान्भवेत् । तदा तु सम्भवेदेवं किं कार्यमतथा यदि ॥ ९ ॥ एतत्प्रश्नोत्तरं वक्तुं नाशक्नोत्स यदा तदा । हरिराह तदा कार्यमेकं कृष्णस्य चिन्तनम् ॥ १० ॥ सर्वथा येन तु कृतमखण्डं कृष्णचिन्तनम् । धर्मः सुरक्षितस्तेन भक्तिश्चात्र न संशयः ॥ ११ ॥ इत्युक्त्वा पुनरप्राक्षीन्माहात्म्यातिशयं हरेः । जानीयादस्तु पतितपावनत्वादिलक्षणम् ॥ १२ ॥

यर्हि । भगवान् । प्रत्यक्षः । भवेत् । तदा तु । एवं भवदुक्तप्रकारेण । सम्भवेत् । किन्तु । यदि । अतथा भगवान् परोक्षः स्यात् । तदा । किं कार्यम् । द्वयोर्मध्ये किं त्याज्यं किञ्च रक्ष्यमित्यर्थः ॥ ९ ॥ एतदिति । एतत्प्रश्नोत्तरं श्रीहरेरेतस्य प्रश्नस्य प्रतिवचनम् । वक्तुम् । स ब्रह्मानन्दमुनिः । यदा । नाशक्नोत्समर्थो नाभूत् । तदा । हरिः । आह । हे मुने ! । तदा तथाविधापत्काले तु । एकं केवलम् । कृष्णस्य श्रीहरेः । चिन्तनं स्मरणम् । कार्यम् । भक्तिधर्मयोः साहचर्यात् द्वयोरेक-तरलोपेऽप्युभयलोपसम्भवाद् बाह्यत उभयप्रहाणपूर्वमान्तरं तदुभयं श्रीहरिचिन्तनद्वारा रक्ष्यमिति भावः ॥ १० ॥ कृष्णचिन्तनमाहात्म्यमाह । सर्वथेति । येन सम्प्राप्ता-पत्कालेन भक्तेन । सर्वथा । अखण्डमविच्छिन्नम् । कृष्णचिन्तनम् । कृतम् । तेन तथाविधेन भक्तेन । धर्मः । सुरक्षितः । भक्तिश्च । सुरक्षिता । अत्रास्मिन्नर्थे । न संशयः सन्देहो नास्ति । श्रीहरिमूर्तेर्धर्मभक्त्याधारत्वात्तच्चिन्तनेनैकाग्रतया विहितेनोभयरक्षणसम्भवादिति भावः ॥ ११ ॥ इतीति । इत्यमुना प्रकारेण । उक्त्वा स्वप्रश्नोत्तरं

स्वयं कृत्वा । पुनरपि । अप्राक्षीत् श्रीहरिः स्वयमेव तान् पप्रच्छ । हे साधवः ! । यो भक्तः । पतितपावनत्वादिलक्षणम् । हरेः । माहात्म्यातिशयम् । जानीयात् ॥ १२ ॥ एतदेव स्पष्टमाह । सकृदिति । सकृदेकवारम् । उच्चारितेन । मापतेः श्रीहरेः । एकेनापि । नाम्नैव । महान्त्यपि । पातकानि । सद्य एव । विनश्यति ॥ १३ ॥ एवमिति । एवंविद इत्थं श्रीहरिमाहात्म्यविदः । तस्य । पुंसो भक्तस्य । धर्मे । दृढस्थितिः । कथम् । स्यात् । केन विचारेण । भवेदित्यर्थः । तत् । ब्रूत । 'नाम्नोऽस्ति यावती शक्ति'रित्यादि भगवन्नामोच्चारणभक्त्यातिशयितमाहात्म्यविदः 'कोवार्थ आप्तोऽभजतां स्वधर्मत'इत्यादिना धर्मापकर्षवेदनेनाधर्मे प्रवृत्तौ केन विचारेण भगवत्प्रिये धर्मे दृढस्थितिः स्यात्तत्कथयतेति भावः । इत्यमुना प्रकारेण । पृष्टाः श्रीहरिणानुयुक्ताः । ते साधवः । यदा । तदुत्तरं श्रीहरिकृतप्रश्नोत्तरम् । सम्यक् । नोचुः । तदेत्युत्तरेण सम्बन्धः ॥ १४ ॥ तदेति । तदा । तत्स्वकृतप्रश्नोत्तरम् । विभुः । स श्रीहरिः । आह । हे साधवः ! । कृष्णमाहात्म्यवेदिना । तेन भक्तेन । स्वहृदये । इत्थं वक्ष्यमाणप्रकारेण । दृढः । विचारः । कर्त्तव्यः ॥ १५ ॥ विचारमाह पञ्चभिः । मयेति । मया तु । हरेः । एकान्तिकेनैकान्तिकभक्तेनैव । भाव्यम् ।

सकृदुच्चारितेनापि नाम्नैकेनैव मापतेः । सद्य एव विनश्यन्ति पातकानि महान्त्यपि ॥ १३ ॥ एवं विदस्तस्य पुंसः कथं धर्मे दृढस्थितिः । स्यात्तद् ब्रूतेति ते पृष्टाः सम्यङ्नोचुस्तदुत्तरम् ॥ १४ ॥ यदा तदाह स विभुः कृष्णमाहात्म्यवेदिना । विचार इत्थं कर्त्तव्यस्तेन स्वहृदये दृढः ॥ १५ ॥ मया त्वेकान्तिकेनैव भाव्यमस्ति हरे-रतः । अखण्डं चिन्तनं तस्य कर्त्तव्यं तस्य साधनम् ॥१६॥ धर्म एव च कृष्णस्य सर्वदाऽस्त्यतिवल्लभः । यतस्त-दर्थमेवासौ जायतेऽत्र युगे युगे ॥१७॥ तद्द्रुहश्च निहन्त्येव स ह्यधर्मरिपुः प्रभुः । अतो धर्मे मया स्थेयं भेतव्यं चाघकर्मणः ॥ १८ ॥ कामक्रोधादिषु च मे यदि वृत्तिर्गमिष्यति । विक्षेपो भविता तर्हि तावान्वै कृष्णचिन्तने ॥ १९ ॥ अतः कृष्णं विनाऽन्यत्र यथा वृत्तिः क्वचिन्मम । नैव यायात्तथा नित्यं मया वृत्यं तदात्मना ॥ २० ॥

अस्ति । अतो हेतोः । तस्यैकान्तिकत्वस्य । साधनम् । तस्य श्रीहरेः । अखण्डम् चिन्तनम् । कर्त्तव्यम् । अस्ति ॥ १६ ॥ धर्म इति । किञ्च । धर्म एव । कृष्णस्य श्रीहरेः । सर्वदा । अतिवल्लभः । अस्ति । एकान्तिकताहेतौ धर्मादिचतुष्के तस्य मुख्यत्वमतोऽस्तीति भावः । यतो हेतोः । असौ कृष्णः । तदर्थं धर्मपरित्राणार्थमेव । अत्र लोकेषु । युगे युगे प्रतियुगम् । जायते प्रादुर्भवति ॥ १७॥ तदिति । अधर्मरिपुः । प्रभुः । स कृष्णः । तद् द्रुहो धर्मद्रोहिणः । निहन्त्येव । अत एव भगवतो धर्मप्रियत्वाद्धेतोः । मया । धर्मे । स्थेयम् । अघकर्मणोऽधर्महेतोः पापकर्मसकाशाच्च । भेतव्यम् ॥ १८॥ कामेति । किञ्च । यदि । मे मम । वृत्तिश्चित्तवृत्तिः । कामक्रोधादिषु । गमिष्यति । तर्हि । कृष्णचिन्तने । तावांस्तत्परिमाणः । विक्षेपः । भविता ॥१९॥ अत इति अतो हेतोः । मम । वृत्तिः । कृष्णं विना । अन्यत्र । क्वचित्क-स्मिंश्चिदपि मायिकपदार्थे । यथा । नैव यायात् । तथा । मया । नित्यं प्रतिदिनम् । तदात्मना श्रीहरिस्वरूपैकाग्रमानसेन । वृत्यं भवितव्यम् ॥ २० ॥

एवमिति । एवममुना प्रकारेण । विचार्य विचारं कृत्वा । यो भक्तः । अन्यमानसः । श्रीहरिरूपैकाग्रमनाः सन् । कृष्णं साक्षाच्छ्रीहरिम् । भजेतैकान्तिकभावेन सेवेत । स भक्तस्तु । धर्मात् । नैव । पतेत् । उत्तमाम् । गतिं च । प्राप्नुयात् । देहान्ते भगवतोऽक्षरधाम प्राप्य । तत्सेवायां तिष्ठतीत्यर्थः ॥२१॥ ब्रह्मानन्द इति । अथानन्तरम् । ब्रह्मानन्दः । साधुः । तं श्रीहरिम् । नत्वा । पप्रच्छ । हे सत्पते ! । वयम् । त्वत्प्रसादात् । हृदि । इत्थं त्वदुक्तप्रकारेण । विचारम् । कुर्मः । हि ॥ २२ ॥ तथेति । तथापि । हे कृष्ण ! । ते तव । अखण्डम् । चिन्तनम् । नैव जायते । तत्र । किम् । कारणम् । अस्ति । तत्कारणम् । सर्वज्ञस्त्वम् । मे मह्यम् । वक्तुम् । अर्हसि ॥ २३ ॥ 'इत्थं स ब्रह्मानन्देन सम्पृष्टः पुरुषोत्तमः । हर्षयंस्तं जगादेति सर्वांश्च स्वाश्रितान्परान्' । तदिति । हे मुने ! । अत्र श्रीहरेरखण्डचिन्तनाभावे । तच्छ्रद्धान्यूनताऽखण्डकृष्णचिन्तनादरमन्दतैव । हेतुः कारणम् । अस्ति । इतीत्थम् । अवगम्यताम् । श्रद्धाल्पये श्रद्धामान्द्ये । कृष्णमाहात्म्यवेदनाल्प्यमपि । ईयतां बुद्ध्यताम् ॥ २४ ॥ सतीति । तस्मिन्कृष्णमाहात्म्यवेदनाल्प्ये । सति । भगवन्निश्चयाल्प्यमपि । ईयताम् । अतो हेतोः । मुमुक्षुभिः श्रीहरिस्वरूपाखण्डसंचिन्तनेच्छुभक्तैः ।

एवं विचार्य यः कृष्णं भजेतानन्य मानसः । स तु धर्मात् पतेन्नैव प्राप्नुयाच्चोत्तमां गतिम् ॥ २१ ॥ ब्रह्मानन्दोऽथ तं नत्वा साधुः पप्रच्छ सत्पते ! । कुर्म इत्थं विचारं हि त्वत्प्रसादाद्वयं हृदि ॥ २२ ॥ तथाप्यखण्डं ते कृष्ण जायते नैव चिन्तनम् । तत्र किं कारणं तन्मे सर्वज्ञो वक्तुमर्हसि ॥ २३ ॥ श्रीहरिरुवाच—तच्छ्रद्धान्यूनतैवात्र हेतुरित्यवगम्यताम् । श्रद्धाल्पये कृष्णमाहात्म्यवेदनाल्प्यमपीयताम् ॥ २४ ॥ सति तस्मिंश्च भगवन्निश्चयाल्प्यमपीयताम् । अतः कृष्णस्य माहात्म्यं वेद्यमादौ मुमुक्षुभिः ॥२५॥ तत्त्वित्थमवगन्तव्यं भगवान्पुरुषोत्तमः । सर्वदैवातिशुद्धोऽस्ति स्वतन्त्रोऽविक्रियस्तथा ॥ २६ ॥ मायापुरुषतत्कार्यसम्बन्धात्प्राग्यथा शुचिः । तथैव सोऽस्ति तत्स्थोऽपि निर्लेपो गगनं यथा ॥२७॥ ताम्रादयो भूनिहिता धातवो यान्ति विक्रियाम् । यथा तथा न हि स्वर्णं शुद्धत्वाद्याति विक्रियाम् ॥२८॥

आदौ । कृष्णस्य । माहात्म्यम् । वेद्यम् ॥ २५ ॥ तदिति । तच्छ्रीहरिमाहात्म्यं तु । इत्थं वक्ष्यमाणप्रकारेण । अवगन्तव्यम् । भगवान्सकलैश्वर्यसम्पन्नः । पुरुषोत्तमः साक्षाच्छ्रीहरिः । सर्वदैव । अतिशुद्धोऽस्पष्टदोषगन्धः । स्वतन्त्रः । तथा । अविक्रियोऽपरिणामिस्वरूपः । अस्ति ॥ २६ ॥ मायेति । स श्रीहरिः । मायापुरुषतत्कार्यसम्बन्धात् । प्राक् । महामायादिष्वन्वयात्पूर्वमित्यर्थः । यथा । शुचिः शुद्धः । अस्ति । तथैव । तत्स्थो मायादिष्वन्तर्यामितयावस्थितः । सन्नपि । गगनं यथाऽऽकाशमिव । निर्लेपो मायादिविकारलेपवर्जितः । अस्ति । गगनं यथा वाय्वादिभूतचतुष्टयप्रवेशात्प्राक् शुद्धं सत्तत्प्रवेशसत्त्वेऽपि शुद्धमेवास्ति तथा श्रीहरिरपीत्यर्थः । तथा चोक्तं स्कान्दे । 'सर्गात्प्राक् सच्चिदानन्दः शुद्ध एकश्च निर्गुणः । यथाऽऽसीत्तादृगेवासावन्वितोऽप्यस्ति निर्मल'इत्यादिना ॥ २७ ॥ पुनरपि दृष्टान्तेन तस्य शुद्धत्वं साधयति द्वाभ्याम् । ताम्रेति । ताम्रादयः । धातवः । भूनिहिताः सन्तः । यथा । विक्रियाम् । यान्ति । तथा । स्वर्णं शुद्धं सुवर्णम् । भूनिहितं सत् । शुद्धत्वात्स्व-

स्मिन्नन्यविकाराभावात् । विक्रियाम् । न याति । हि ॥ २८ ॥ एवमिति । एवममुना प्रकारेण । जीवेशाः जीवा देवमनुष्यादयश्च ईशा ब्रह्मादयश्च ते मायिकसम्बन्धान्मायिकविषयसंयोगात् । यथा । विक्रियाम् । यान्ति । तथा । नराकृतिः सन्नपि । अतिशुद्धः । भगवान्साक्षाच्छ्रीहरिः । मायिकसम्बन्धात् । विक्रियाम् । न याति ॥ २९ ॥ एवमिति । एवममुना प्रकारेण । योः भक्तः । कृष्णस्य । अलौकिकम् । माहात्म्यम् । विद्याज्जानीयात् । तस्य भक्तस्य । लौकिका नृलोकभवाः । सर्वशः । विषयाः रमणीयाः शब्दादयो मायिकार्थाः । तुच्छताम् । यान्ति ॥ ३० ॥ रम्या इति । किञ्च । तस्य श्रीहरिमाहात्म्यवेदिनो भक्तस्य । रम्याः । स्वर्ग्याः स्वर्गलोकभवा अपि । ते मायिकविषयाः । मलोपमाः । स्युः । हि । नारकविषयवदतितुच्छा भवेयुरेवेत्यर्थः । अत्र स्वर्ग्या इत्युपलक्षणं सकलब्रह्माण्डान्तर्गतविषयाणाम् । ततः कृष्णमाहात्म्यवेदनेन सकलमायिकविषयाणां तुच्छता ज्ञानानन्तरम् । तस्य भक्तस्य । कृष्णस्य । अखण्डं सर्वकालम् । चिन्तनम् । निश्चितमेव । स्यात् ॥ ३१ ॥ अत्रार्थे सदाचारं प्रमाणयति । माहात्म्येति । माहात्म्यवेदिनाम् । श्रीकृष्णानन्यचेतसां श्रीहरिस्वरूपैकाग्रमनसाम् । उद्धवादीनाम् । भक्ताना-

एवं मायिकसम्बन्धाज्जीवेशा यान्ति विक्रियाम् । यथा तथा न भगवानतिशुद्धो नराकृतिः ॥ २९ ॥ एवं कृष्णस्य माहात्म्यं यस्तु विद्यादलौकिकम् । लौकिका विषयास्तस्य तुच्छतां यान्ति सर्वशः ॥ ३० ॥ रम्याः स्वर्ग्या अपि च ते तस्य स्युर्हि मलोपमाः । कृष्णस्य स्यात्ततोऽखण्डं चिन्तनं तस्य निश्चितम् ॥३१॥ माहात्मवेदिनामेव कीर्त्तिर्भुव्यस्ति भूयसी । भक्तानामुद्धवादीनां श्रीकृष्णानन्यचेतसाम् ॥ ३२ ॥ माहात्म्यज्ञानहीनस्तु पदार्थेऽल्पेऽपि मुह्यति । अतस्तत्सर्वथा ज्ञेयं भवबन्धमुमुक्षुभिः ॥ ३३ ॥ माहात्म्यबोद्धैव हरेरखण्डं शक्तो विधातुं हृदि चिन्तनं स्यात् । इति प्रभोस्तस्य सुधाभवाचं निपीय मोऽन्ये जहृषुश्च सन्तः ॥ ३४ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते शताधिकसप्तत्रिंशतितमस्तरङ्गः ॥ १३७ ॥ ४ ॥

मेव । भुवि । भूयसी महती । कीर्त्तिः । अस्ति । 'त्वं तु भागवतेष्वहम्' नोद्धवोऽण्वपि मन्न्यून' इत्यादिना भगवतैवोद्धवस्य प्रशंसितत्वादितिभावः ॥ ३२ ॥ विपक्षे दोषमाहार्द्धेन माहात्म्येति । माहात्म्यज्ञानहीनो भगवतोमाहात्म्यवेदनवर्जितो भक्तस्तु । अल्पे तुच्छेऽपि । पदार्थे मायिकवस्तुनि । मुह्यति मोहं प्राप्नोति । अतो हेतोः । भवबन्धमुमुक्षुभिर्भक्तैः । तच्छ्रीहरिमाहात्म्य । सर्वथा । ज्ञेयम् ॥ ३३ ॥ प्रकरणार्थं निगमयत्यर्द्धेन । माहात्म्येति । हे मुने ! । हरेः । माहात्म्यबोद्धा भक्त एव । हृदि । अखण्डम् । चिन्तनम् । विधातुम् । शक्तः समर्थः । स्यात् । इत्येवंविधाम् । प्रभोः । तस्य श्रीहरेः । सुधाभवाचममृततुल्यां वाणीम् । निपीय सादरं श्रवणैराश्रुत्येत्यर्थः । स ब्रह्मानन्दमुनिः । अन्ये तदितरे । सन्तः साधवः । गृहिणश्च । जहृषुर्मुदं प्रापुः ॥ ३४ ॥ प्रश्नोत्तरामृतरसपायनेन निजान् प्रभुः । सुखितान् यश्चकारासौ हरिमीं सुखिनं क्रियात् ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्स्नुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां शताधिकसप्तत्रिंशस्तरङ्गः ॥ १३७ ॥ ४ ॥

भक्तैः पतिव्रताधर्मः शौरवीर्यं तथा यथा । रक्ष्यं तु पञ्चमे प्रोक्ता तद्रीतिस्तत्त्वतः स्फुटम् ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८७८) नभसः श्रावणमासस्य । शुक्लपक्षागतसप्तमीतिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमक्षितिपस्य । दुर्गे । वासुदेवाङ्गणे श्रीवासुदेवमन्दिराजिरमध्यावस्थिततरुराजपिचुमन्दाधस्तनप्रदेशे इत्यर्थः । वेद्याम् । चक्रके कौशेयचक्रकासने । स श्रीहरिः । समुपाविशत् ॥ २ ॥ सितेति । सितवासाः परिधृतसकलश्वेतवसनः । भक्तैर्नानादेशागतैः स्वकीयभक्तजनैः । त्यागिभिः । गृहिभिश्च । वृतः सभायां परिवेष्टितः । स श्रीहरिः । हरिपद्यानि श्रीहरियशोऽङ्कित-भाषाबद्धकीर्त्तनानि । गायतो झर्झरमृदङ्गोपेतं कीर्त्तयतः । सतः साधून् । विरमय्य नेत्रसंज्ञया कीर्त्तनस्तम्भनं विधाप्येत्यर्थः । अब्रवीत् ॥३॥ य इति । हे साधवः ! । अत्र सत्सङ्गे । यः । भगवद्भक्तः । स्यात् । तेन तु । एकः । पतिव्रताधर्मः । तथा । इतरद्द्वितीयम् । शौरवीर्यम् । इति । द्वयम् । सम्पाद्यम् ॥ ४ ॥ एतदेव लक्षणकथनेन स्पष्टमाह पञ्चभिः । यथेति । यथा । पतिव्रता स्त्री । अन्धमाजन्मतो नेत्रवर्जितम् । अथवा । रोगिणम् । अथवा । वृद्धम् । अथवा । कुरूपम् । अथवा ।

शकाब्दे विक्रमार्कस्य गजाश्ववसुभूमिते । नभसः शुक्लसप्तम्यां वचोऽमृतमिदं हरेः ॥ १ ॥ तत्र दुर्गपुरे दुर्ग उत्तमक्षिति-पस्य सः । वासुदेवाङ्गणे वेद्यां चक्रके समुपाविशत् ॥२॥ सितवासा वृतो भक्तैस्त्यागिभिर्गृहिभिश्च सः । गायतो हरिपद्यानि विरमय्याब्रवीत्सतः ॥ ३ ॥ योऽत्र स्याद्भगवद्भक्तः सम्पाद्यं तेन तु द्वयम् । एकः पतिव्रताधर्मः शौरवीर्यं तथेतरत् ॥ ४ ॥ यथा पतिव्रता प्रीत्या भर्त्तारं सेवते सदा । अन्धं वा रोगिणं वृद्धं कुरूपं वापि निर्धनम् ॥ ५ ॥ सा तं विनाऽन्यं पुरुषं सुरूपं तरुणं च वा । हृदाऽपि नेच्छति क्वापि गुणिनं वाऽपि कामुकम् ॥ ६ ॥ दरिद्राऽपि न राजानं स्पृहयन्तमपीक्षते । तथा कृष्णेतरद्वस्तु भक्तो न मनसेच्छति ॥ ७ ॥ पतिव्रताधर्म एवं भक्तस्येत्यवधार्यताम् । पालयन्नमुमेवेह भक्त एकान्तिको भवेत् ॥ ८ ॥ तथैव शूरवीरत्वं कृष्णनिन्दासहिष्णुता । न हि शूरो राजनिन्दां सहेत क्वापि तच्छ्रितः ॥ ९ ॥

निर्धनमपि । भर्त्तारं स्वपतिम् । प्रीत्या । सदा । सेवते ॥ ५ ॥ सेति । सा पतिव्रता । तं तथाविधमपि पतिम् । विना । सुरूपम् । अथवा । तरुणम् । अथवा । गुणिनं विद्यादिगुणवन्तम् । अथवा । कामुकं कामिनं चापि । अन्यं स्वपतिभिन्नम् । पुरुषं तु । क्वापि कदाचिदपि । हृदा स्वमनसापि । नेच्छति ॥ ६ ॥ दरिद्रेति । दरिद्रा दारिद्र्ययुतापि पतिव्रता स्त्री । स्पृहयन्तमुपभोगार्थं स्वामिच्छन्तम् । राजानमपि । नेक्षते तत्सन्मुखं स्वदृक्प्रसारमपि । न करोतीत्यर्थः । तथा तेन प्रकारेण । भक्तः । कृष्णेतरत् । वस्तु मायिकपदार्थमात्रम् । मनसाऽपि । नेच्छति ॥ ७ ॥ पतिव्रतेति । एवममुना प्रकारेण । भक्तस्य । पतिव्रताधर्मः । अस्ति । इतीत्थम् । अव-धार्यताम् । इह सत्सङ्गे । अमुमुक्तविधं पतिव्रताधर्मम् । पालयन् सन्नेव । एकान्तिकः । भक्तः । भवेत् ॥ ८ ॥ तथेति । तथा तेन प्रकारेणैव । कृष्णनिन्दासहिष्णुताऽसुरां-शदुर्जनकृतस्वेष्टदेवश्रीहरिगर्हणाऽक्षमित्वम् । शूरवीरत्वम् । ज्ञेयम् । तच्छ्रितो जीविकार्थं राजानमाश्रितः । शूरः । क्वापि कदाचिदपि । राजनिन्दां स्वपतिनृपतिकुत्साम् ।

न सहेत । हि । केवलं वृत्तिमात्रार्थं नृपाश्रितः शुरो यदा स्वस्वामिनृपनिन्दां न क्षमते तदाऽनन्तसुखप्रदस्वप्राणवल्लभश्रीहरिनिन्दां शुरवीरास्तदेकान्तिकभक्ताः कथं सहेयुरितिभावः ॥ ९ ॥ नन्वेवंसति भगवद्भक्तानामात्मीयपक्षपातोऽन्येषां चाशुभचिन्तनं जातं तेन समशब्दवाच्यसमदृष्टित्वामानितमित्रत्वकारुणिकत्वाख्ये तद्धर्मे क्षतिरागतेतिचेत्तथासदाचारत्वात्क्षतिरित्याह द्वाभ्याम् । साधूनामिति । सर्वत्राचित्परिणामरूपेषु देवमनुष्यादिशरीरेषु । आत्मेश्वरेक्षया आत्मनां जीवानां तेषामीश्वरस्य चेक्षा दर्शनं तया । ज्ञानैकाकारतया जीवानामीक्षयान्तर्यामितया तदन्तःप्रविश्य नियन्तृतया परमेश्वरेक्षया चेत्यर्थः । साधूनां भगवद्भक्तानाम् । समदृक्त्वादि । समदृष्टित्वादिगुणवत्तया केषांचिदपि द्रोहस्थानाचरणत्वमित्यर्थः । ज्ञेयम् । पक्षपातः स्नेहस्तु । भक्तेषु एव । भगवति तदीयेषु चैवेत्यर्थः । कार्यः । पापिषु भगवत्तदीयनिन्दकेष्वित्यर्थः । पक्षपातः । न कार्यः ॥ १० ॥ ध्रुवेति । ध्रुवप्रह्लादसनकनारदाद्या भक्ता अपि हरौ । तदीयेषु च । पक्षपातम् । चक्रुः । अघिषु भगवत्तदीयनिन्दकेषु पापिषु । न चक्रुः । ध्रुवं निश्चितमेव ॥ ११ ॥ विपक्षे दोषमाह । पक्षपातादिति । भगवद्विमुखेषु । पक्षपातात्तु । इहास्मिन् । जनुषि जन्मनि । अथवा ।

साधूनां समदृक्त्वादि सर्वत्रात्मेश्वरेक्षया । पक्षपातस्तु भक्तेषु कार्य एव न पापिषु ॥ १० ॥ ध्रुवप्रह्लादसनकनारदाद्या अपि ध्रुवम् । पक्षपातं हरौ चक्रुस्तदीयेषु नाघिषु ॥ ११ ॥ पक्षपातात्तु भगवद्विमुखेषु भवेद्ध्रुवम् । इह वाऽन्यत्र जनुषि तत्साम्यं नात्र संशयः ॥१२॥ एषा वार्त्ता सादरं धारणीया सर्वैर्भक्तैर्मच्छ्रितैर्मन्निदेशात् । इत्थं वाचं तस्य ते संनिशम्य प्रापुस्तोषं साधवश्चामृताभाम् ॥१३॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते शताधिकाष्टत्रिंशतितमस्तरङ्गः ॥ १३८ ॥ ५ ॥

शकाब्दे विक्रमार्कस्य गजाश्ववसुभूमिते । शुक्लाष्टम्यां नभोमासे वचोऽमृतमिदं हरेः ॥ १ ॥
तत्र दुर्गपुरे दुर्गे उत्तमक्षितिपस्य सः । वासुदेवाङ्गणे वेद्यां न्यषीदत्स्वासने प्रभुः ॥ २ ॥

अन्यत्रान्यजन्मनि । तत्साम्यं भगवद्विमुखजनसमानत्वम् । ध्रुवं निश्चितमेव । भवेत् । अत्रास्मिन्नर्थे । संशयः । नास्ति ॥ १२ ॥ एषेति । मच्छ्रितैः । सर्वैः । भक्तैर्भवद्भिस्त्यागिगृहिजनैः । एषा । वार्त्ता । मन्निदेशात् । सादरं यथातथा । धारणीया । इत्थमेवंविधाम् । अमृताभाममृतसमानाम् । तस्य श्रीहरेः । वाचम् । संनिशम्य । ते । साधवः । गृहिजनाश्च । तोषं हर्षम् । प्रापुः ॥ १३ ॥ पातिव्रत्यं शौरवीर्यं स्वभक्तानां य आत्मनि । श्रीहरिः प्राह ते मह्यं स्वस्मिन् दत्तात्स धर्मजः ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्स्वगुरुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां शताधिकाष्टत्रिंशस्तरङ्गः ॥ १३८ ॥ ५ ॥

निन्दापूर्वं नास्तिकानां शास्त्रे ह्यास्तिकता दृढा । द्रष्टात्मनो विचारश्च प्रोक्तः षष्ठे यथार्थतः ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८७८) नभोमासे । शुक्लाष्टम्यां शुक्लपक्षस्याष्टमीतिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमक्षितिपस्य । दुर्गे । वासुदेवाङ्गणे श्रीवासुदेवमन्दिरीयाङ्गणाश्रयायामित्यर्थः । वेद्याम् । स्वासने शोभने चक्रकासने । प्रभुः । स श्रीहरिः । न्यषीदत् ॥ २ ॥

सितेति । सिताम्बरधरः स्वाङ्गपरिधृतवलक्षवसनः । अनेकैः । भक्तैर्नानादेशागतत्यागिगृहिस्वभक्तजनैः । परितः । वृतः सभायां वेष्टितः । स श्रीहरिः । सद्गीतकृष्णपद्यानि । श्रुत्वा हृष्टः परितुष्टः सन् । सतः साधून् । अब्रवीत् । करचेष्टया तान्प्रथमं ततो विरमय्येति शेषः ॥ ३ ॥ अत्रेति । हे साधवः ! । अत्र लोके । यवनैः । तुल्याः । एके केचन । पूरुषा वेदादिसच्छास्त्रविरुद्धाचारा नास्तिकजनाः । एवं वक्ष्यमाणप्रकारेण । वदन्ति । यद्वदन्ति तदाह सार्द्धैश्चतुर्भिः । गङ्गोदकम् । अन्यजलं च । तुल्यमेव । दृश्यते । हि ॥ ४ ॥ शालेति । शालग्रामशिला । अन्यशिला । उभे चापि । तुल्ये समाने । दृश्यन्ते । तुलसी वृन्दावृक्षः । अन्यवृक्षाश्च । सन्निभास्तुल्याः । विप्रा ब्राह्मणाः । शूद्राश्च । सन्निभाः । दृश्यन्ते ॥ ५ ॥ अन्नमिति । कृष्णप्रसादि । अन्नम् । अन्यदप्रासादिकम् । अन्नं चापि । समं तुल्यम् । ईक्ष्यते । तथा । एकादश्याम् । उपवासः । अन्यदिने । उपवासश्चापि । समः । ईक्ष्यते ॥ ६ ॥ स्वकीयेति । इह लोके । स्वकीया स्वपरिणीता । स्त्री । परकीया परपरिणीता । स्त्री च । समा तुल्यैव । दृश्यते । रामकृष्णादयो भगवदवताराः । अन्ये । नराः कर्माधीना लोकाश्च । समाः । दृश्यन्ते ।

सिताम्बरधरो भक्तैः सोऽनेकैः परितो वृतः । सद्गीतकृष्णपद्यानि श्रुत्वा हृष्टोऽब्रवीत्सतः ॥ ३ ॥ अत्रैके यवनैस्तुल्या वदन्त्येवं हि पूरुषाः । गङ्गोदकं चान्यजलं दृश्यते तुल्यमेव हि ॥४॥ शालग्रामशिला चान्यशीलातुल्ये उभे अपि । तुलसी चान्यवृक्षाश्च विप्राः शूद्राश्च सन्निभाः ॥ ५ ॥ अन्नं कृष्णप्रसाद्यन्यदन्नं चापीक्ष्यते समम् । एकादश्यां चान्यदिनेऽप्युपवासः समस्तथा ॥ ६ ॥ स्वकीया परकीया च स्त्री समैवेह दृश्यते । रामकृष्णादयश्चान्ये दृश्यन्ते हि नराः समाः ॥ ७ ॥ एवं सत्यपि तद्भेदो यो लोके दृश्यते स तु । अदीर्घदृष्टिभिः पुंभिर्मृषा क्लृप्तोऽस्ति वा इति ॥ ८ ॥ अतो यवीयसः साधूनिह पृच्छामि सर्वशः । एतौ विधिनिषेधौ किं कल्पितौ वा ऋतौ मतौ ॥ ९ ॥ कनीयांसोऽथ सन्तस्तु तमूचुस्तौ ऋतौ प्रभो ! । अन्यथा स्वर्गनरकौ भवेतां हि निराश्रयौ ॥१०॥ इत्याकर्ण्य स तद्वाक्यं कनीयांसोऽपि साधवः । यूयं सुष्टु विजानीथेत्युक्त्वोवाच तदुत्तरम् ॥११॥

हि ॥ ७ ॥ एवमिति । एवं सत्यपि एवंविधे सर्वसमत्वे साक्षाद्विद्यमाने सत्यपि । लोके । यः । तद्भेद उक्तविधा तेषां भिन्नता । दृश्यते । स तद्भेदस्तु । अदीर्घदृष्टिभिः । पुंभिः शास्त्रवक्तृपुरुषैः । मृषा क्लृप्तः । अस्ति । वै । इत्येवं ते वदन्तीति सम्बन्धः ॥ ८ ॥ अत इति । अतो नास्तिका एवं वदन्त्यतो हेतोः । इहेषु सर्वेषु साधुषु मध्ये । सर्वशः सर्वान् । यवीयसो वयसा कनिष्ठान् । साधून् । पृच्छामि । एतौ पूर्वोक्तौ । विधिनिषेधौ । कल्पितौ । स्तः किम् । अथवा । ऋतौ सत्यौ । मतौ । भवतः ॥ ९ ॥ कनीयांस इति । अथैवंविधश्रीहरिप्रश्नश्रवणानन्तरम् । कनीयांसः । सन्त आत्मानन्दादयः साधवः । तं श्रीहरिम् । ऊचुः । हे प्रभो ! । तौ विधिनिषेधौ तु ऋतौ सत्यौ । मतौ । स्तः । न कल्पितौ भवत इत्यर्थः । अन्यथा तयोः कल्पितत्वोक्तौ सत्यां तु । स्वर्गनरकौ विधिनिषेधाचरणफलरूपौ । निराश्रयौ निराधारौ । भवेताम् । हि ॥१०॥ इतीति । इत्येवंविधम् । तद्वाक्यं कनिष्ठसाधुवचनम् । आकर्ण्य । स श्रीहरिः । हे साधवः ! । कनीयांसोऽपि । यूयम् ।

सुष्ठु सम्यक् । विजानीथ । इतीत्थम् उक्त्वा । तदुत्तरं सूत्रवत्तत्साधुकृतं स्वप्रश्नोत्तरम् । उवाच सविस्तरत्वात्तद्भाष्यवज्जगादेत्यर्थः ॥११॥ महर्षिभिरिति । हे साधवः !। महर्षिभिर्व्यासादिमुनिभिः । शास्त्रेषु स्मृतिपुराणादिषु सद्ग्रन्थेषु । यत् विधिनिषेधात्मकं वचनम् । प्रोक्तम् । तत् । ऋतं सत्यमेव । अस्ति । हि । तत्फले विधिनिषेधाचरणफलभूते स्वर्गनरकाख्ये । सद्यस्तत्क्षणम् । अदृष्टे दृग्विषयेऽसत्यपि । अन्ते देहावसाने । तत्फलं तु । दृश्यते । खलु ॥ १२ ॥ एतदेव । दृष्टान्तेन द्रढयति पञ्चभिः । यथेति । यथा । अतिमहता लोकेष्वतिश्रेष्ठेन । आढ्येन धनिना । वणिजा श्रेष्ठेन । हुण्डिका । मुद्रिता स्वाक्षरैः कृतमुद्रा सती । क्वचिद्देशान्तरे । आढ्योपरीतरेभ्यस्योपरिष्टात् । लिखित्वा । आत्मने । दत्ता । भवेत् ॥ १३ ॥ साक्षादिति । हस्तस्थितायां स्वहस्तगतायाम् । तस्यां हुण्डिकायाम् । साक्षात्प्रत्यक्षतया तु । एकापि । मुद्रिका । न दृश्यते । तथापि । अस्यां हुण्डिकायाम् । बहुमुद्रिका बह्व्यो रूप्यमुद्राः । सन्त्येव ॥ १४ ॥ यत इति । यतो हेतोः । देशान्तरेऽपि । आढ्यो वणिक् । तां हुण्डिकाम् । दृष्ट्वा । ता हुण्डिकालिखिता मुद्रिकाः । ददाति । हि । ततो हेतोः । अस्यां हुण्डिकायाम् । आत्मना बुद्ध्या । विश्वासः ।

महर्षिभिर्यच्छास्त्रेषु प्रोक्तमस्ति ऋतं हि तत् । सद्योऽदृष्टे तत्फलेऽपि दृश्यन्तेऽन्ते तु तत्खलु ॥ १२ ॥ यथाऽतिमहताढ्येन वणिजा हुण्डिकाऽऽत्मने । दत्ता लिखित्वा च भवेन्मुद्रिताढ्योपरि क्वचित् ॥१३॥ साक्षाद्धस्तस्थितायां तु तस्यामेकापि मुद्रिका । न दृश्यते तथाप्यस्यां सन्त्येव बहुमुद्रिकाः ॥ १४ ॥ यतो देशान्तरेऽप्येतां दृष्ट्वाऽऽढ्यस्ता ददाति हि । कर्त्तव्य एव विश्वासस्ततोऽस्यां सर्वथात्मना ॥१५॥ महर्षिभिस्तथैवात्र स्मृतिरूपा हि हुण्डिका । लिखिताऽस्तीति तत्प्रोक्तं फलं विधिनिषेधयोः ॥ १६ ॥ सकलं सत्यमेवास्ति संशयो नात्र विद्यते । एवं विश्वसितव्यं हि नृभिरास्तिकबुद्धिभिः ॥ १७ ॥ नास्तिकास्तु नरा यान्ति यथेष्टाचरणे रताः । महतो नरकानेव सत्यमेतद्वचो मम ॥ १८ ॥ पप्रच्छाथ कनीयांस्तमात्मानन्दो महाप्रभो !। अनीप्सिता अपि कुतो विशन्त्यर्थास्तु चेतसि ॥ १९ ॥

सर्वथैव । कर्त्तव्यः ॥ १५ ॥ महर्षिभिरिति । तथैव । अत्र लोके । महर्षिभिः । स्मृतिरूपा स्मृतिग्रन्थस्वरूपा । हुण्डिका । लिखिताऽस्ति । इति हेतोः । तत्प्रोक्तं स्मृतिग्रन्थोक्तम् । विधिनिषेधयोः । फलम् ॥ १६ ॥ सकलमिति । सकलमपि । सत्यमेव । अस्ति । अत्रास्मिन्नर्थे । संशयः । न विद्यते । एवममुना प्रकारेण । आस्तिकबुद्धिभिः । नृभिः । विश्वसितव्यम् । इति द्वयोरेकसम्बन्धः ॥ १७ ॥ नास्तिका इति । नास्तिकाः । नराः विधिनिषेधयोः कल्पितत्वकथका नास्तिकजनास्तु । यथेष्टाचरणे । रताः सन्तः । महतः । नरकान्कुम्भीपाकादीनेव । यान्ति । एतत् मम । वचः । सत्यम् । अस्ति अत एवंविधानां सङ्गः सर्वथा वर्ज्य इति भावः ॥ १८ ॥ प्रच्छेति । अथैवंविधश्रीहरिवाक्यश्रवणानन्तरम् । कनीयान्वयसाकनिष्ठः । आत्मानन्दः साधुः । तं श्रीहरिम् । पप्रच्छ । हे महाप्रभो !। अनीप्सिताः स्वेन प्राप्तुमनभिवाञ्छिता अपि । अर्था अनेकविधपदार्थाः । चेतसि चित्ते । कुतः कस्माद्धेतोः । विशन्ति ॥ १९ ॥

श्रीहरिरिति । श्रीहरिरात्मानन्दमुनिनैवं पृष्टः श्रीहरि-कृष्णो भगवान् । प्राह । हे मुने ! । चित्तं तु । मधुवत्क्षौद्रमिव । अतिस्निग्धमतिचिक्कण-स्वभावम् । वर्त्तते । अतो हेतोः । तत्र चित्ते । सर्वं दृष्टश्रुतपदार्थजातमेव । सज्जति लग्नं भवति ॥ २० ॥ एतदेव स्पष्टमाह । दृष्टा इति । दृष्टाः । अथवा । श्रुताः । प्रियाः । अथवा । अप्रिया अपि । ये । अर्थाः । सन्ति । सर्वेऽपि । तेऽर्थाः । अत्र चित्ते । सज्जन्ति । हि । यतः अस्य चित्तस्य । ईदृश एवंविधः । स्वभावः । अस्ति ॥ २१ ॥ अत इति । अतो हेतोः । भगवद्भक्ताः । दृश्यादात्मना वीक्षणीयात् । तस्माच्चित्तात् । पृथक् । स्थिते । तद्द्रष्टरि चित्तस्य साक्षाद्वीक्षके । निर्विकारिणि । आत्मनि जीवे । स्वत्वमात्मत्वम् । मन्यते ॥ २२ ॥ तस्मादिति । तस्माद्धेतोः । मुमुक्षुणा । पुंसा भक्तेन । स्वचेतसः । दोषान् स्फुरितप्रिया-प्रियपदार्थरूपान् । दृष्ट्वा । अतिखेदः । न विधातव्यः । ततश्चित्तात् । आत्मा स्वजीवः । पृथक् । ज्ञेयः ॥ २३ ॥ आत्मेति । भगवद्भक्तिः । आत्मरूपेण । निरन्तरम् । कार्या निजात्मानं ब्रह्मरूपं विभाव्य विधेयेत्यर्थः । तया तथाविधभगवद्भक्त्यैव । सर्वदोषाणाम् । क्षयः । मुक्तिर्ब्रह्मात्मना कृष्णसेवाप्तिरूपा मोक्षश्च । सिद्धयति

श्रीहरिः प्राह चित्तं तु वर्त्ततेमधुवन्मुने ! । अतिस्निग्धमतस्तत्र सर्वमेव हि सज्जति ॥ २० ॥ दृष्टाः श्रुता वा ये त्वर्था अप्रिया वा प्रिया अपि । सर्वेऽपि तेऽत्र सज्जन्ति स्वभावोऽस्तीदृशोऽस्य हि ॥ २१ ॥ अतो हि भगवद्भक्ता दृश्यात्तस्मात्पृथक् स्थिते । तद्द्रष्टर्यात्मनि स्वत्वं मन्यते निर्विकारिणि ॥ २२ ॥ तस्मान्मुमुक्षुणा पुंसा दोषान् दृष्ट्वा स्वचेतसः । नातिखेदो विधातव्य आत्मा ज्ञेयस्ततः पृथक् ॥ २३ ॥ आत्मरूपेण भगवद्भक्तिः कार्या निरन्तरम् । तयैव सर्वदोषाणां क्षयो मुक्तिश्च सिद्धयति ॥ २४ ॥ इति हरेर्वचः सोऽमृतं मुनिः सकलसाधवोऽन्ये निपीय च । हृदि दधुर्मुदाऽन्येऽपि तच्छ्रिता निजहितोद्यतं तं ववन्दिरे ॥ २५ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते शताधिकैकोनत्रिंशस्तरङ्गः ॥ १३९ ॥ ६ ॥

शकाब्दे विक्रमार्कस्य गजाश्ववसुभूमिते । एकादश्यां नभःशुक्ले वचोऽमृतमिदं हरेः ॥ १ ॥

॥ २४ ॥ इतीति । इत्येवंविधम् । अमृतं पीयूषसमानम् । हरेः । वचः । निपीय । सः । मुनिरात्मानन्दसाधुः । तच्छ्रिताः श्रीहरेर्भक्ताः । अन्ये तदितरे सकलसाधवः । अन्ये गृहिजनाश्चापि । मुदा । हृदि । दधुर्धारयामासुः । निजहितोद्यतम् । तं श्रीहरिम् । ववन्दिरे नमश्चक्रुः ॥ २५ ॥ यो निन्दां नास्तिकानां च शास्त्रेष्वास्ति-कतां दृढाम् । प्राहात्मनो विचारं स्वान् प्रीतः स्तात्स हरिर्मयि ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्सम्प्रदुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां शताधिकैकोनचत्वारिंशस्तरङ्गः ॥ १३९ ॥ ६ ॥

कृष्णांशता तद्भक्तानां यथा तल्लक्षणं तथा । एतत्सर्वं सप्तमे तु व्रतावश्यकता चैकादश्यास्तस्य च लक्षणम् । कार्यता ज्ञानयज्ञस्य लक्षणं तस्य यत्तथा ॥ १ ॥ यथावत्परिकीर्त्तितम् ॥ २ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८७८) नमःशुक्ले श्रावणमासस्य शुक्लपक्षे । एकादश्यां तिथौ । इदम् । हरेः । वचोऽमृतम् ।

अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमक्षितिपस्य । दुर्गे वासुदेवालयस्य । अग्रेऽग्रप्रदेशे । चक्रकोत्तमे महाकौशेयवसनकृतत्वाच्छ्रेष्ठे चक्रकासने । स श्रीहरिः । न्यषीदत् ॥ २ ॥ त्यागिभिरिति । त्यागिभिः । गृहिभिः । भक्तैर्नानादेशागतैर्भक्तजनैः । परीतो महासभायां परिवेष्टितः । सितांशुकः परिधृतसकलश्वेतवसनः । स श्रीहरिः । पुरःस्थान्स्वाग्रप्रदेशावस्थितान् । साधून् । अन्यान् । भक्तांश्च । स्वयमेव । अब्रवीत् ॥ ३ ॥ अद्येति । हे सन्तः ! । अद्यास्मिन्दिने । एकादशी । अस्ति । तस्या एकादश्याः । व्रतम् । सर्वेषाम् । औद्धवीयानामुद्धवसम्प्रदायिभक्तानाम् । यथा येन प्रकारेण । कार्यम् । तथैव । अहम् । वो युष्मभ्यम् । वदामि ॥ ४ ॥ अशेतेति । पूर्वम् । भगवान् श्रीवासुदेवः । इन्द्रियाणि चक्षुरादीनि दश स्वाक्षाणि । तथा । मनः । अन्तर्मुखानि प्रतिलोमानि । कृत्वा । योगनिद्रासुखप्रदो योगनिद्रायै स्वसेवावसरं प्रददानः सन्नेव । अशेत ॥ ५ ॥ नाडीति । तर्हि तदा नाडीजङ्घात्मनो नाडीजङ्घनाम्नोऽसुरस्य तनयः । मुरनामकः । दानवोऽसुरः । युद्धार्थं वासुदेवेन सह युद्धं कर्त्तुम् । तं वासुदेवम् । आजुहाव । तदा । प्रभुरतिसमर्थः । स श्रीवासुदेवः । बुबुधे जजागार ॥ ६ ॥ एकादशेति । अथानन्तरम् । तस्य श्रीवासुदेवस्य । एकादशेन्द्रियेभ्यः । महदतिशयितम् । तेजः । अभवत्प्रादुर्बभूव । तदा । एकीभूतम् । तत्तेजः । दिव्यकन्यारूपम् । अभूत् ॥ ७ ॥ दृष्ट्वेति । असुरो मुरः । तद्रूपं तस्याः कन्यायाः स्वरूपम् । दृष्ट्वा । मुह्यन् मोहं गच्छन्सन् । तां कन्याम् । अवदत् । हे शुभे ! । त्वम् । माम् । वरय । ते तव । भद्रं शुभम् । भविष्यति । न संशयोऽत्र संशयो नैव कर्त्तव्यः ॥ ८ ॥ कन्येति । कन्या मुरदानवेनैवमभिहिता सा कन्यका । उवाच । हे दानवोत्तमासुरश्रेष्ठ ! । मम तु । प्रतिज्ञा । अस्ति । यः । वीरः । युधि संग्रामे । माम् । जयेत् । तं वीरमेव । अहम् । वरये ॥ ९ ॥ तत इति । ततस्तदनन्तरम् । तयोः कन्याऽसुरयोः । तुमुलं संकुलम् । युद्धम् । अभूत् । तत्र युद्धे । सा कन्या । मुरमसुरम् । अहनत् । तेन मुरासुरहननेन । तस्यै कन्यायै । तुष्टः प्रसन्नः । भगवान् । वचः । अब्रवीत् ॥ १० ॥

तत्र दुर्गपुरे दुर्गे उत्तमक्षितिपस्य सः । वासुदेवालयस्याग्रे न्यषीदच्चक्रकोत्तमे ॥२॥ त्यागिभिर्गृहिभिर्भक्तैः परीतश्च सितांशुकः । पुरःस्थानब्रवीत्साधून् भक्तानन्यांश्च स स्वयम् ॥ ३ ॥ अद्यास्त्येकादशी सन्तस्तस्याः कार्यं व्रतं यथा । सर्वेषामौद्धवीयानां तथैवाहं वदामि वः ॥४॥ अशेत् भगवान् पूर्वमिन्द्रियाणि मनस्तथा । अन्तर्मुखानि कृत्वैव योगनिद्रासुखप्रदः ॥५॥ नाडीजङ्घात्मजस्तर्हि दानवो मुरनामकः । तमाजुहाव युद्धार्थं बुबुधे स तदा प्रभुः ॥६॥ एकादशेन्द्रियेभ्योऽथ तस्य तेजोऽभवन्महत् । एकीभूतं च तद्दिव्यकन्यारूपमभूत्तदा ॥७॥ दृष्ट्वा तद्रूपमसुरो मुह्यंस्तामवदच्छुभे ! । त्वं मां वरय भद्रं ते भविष्यति न संशयः ॥ ८ ॥ कन्योवाच मम त्वस्ति प्रतिज्ञा दानवोत्तम ! । युधि मां योजयेद्वीरो वरयेऽहं तमेव हि ॥ ९ ॥ ततस्तयोरभूद्युद्धं तुमूलं तत्र सा मुरम् । अहनत्तेन भगवांस्तस्यै तुष्टोऽब्रवीद्वचः ॥ १० ॥

वरमिति । हे कल्याणि । त्वया । मम । महदतिशयितम् । कार्यम् । कृतम् । ततो हेतोः । अहम् । तुभ्यम् । प्रसन्नः । अस्मि । अतः । वरम् । वरय । इत्यमुना प्रकारेण । उक्ता भगवताऽभिहिता । सा कन्या । प्रभुं श्रीवासुदेवम् । अब्रवीत् ॥ ११ ॥ एकादशेति । हे प्रभो ! । अहम् । निरन्नेभ्यः । तव । एकादशेन्द्रियेभ्य एकादशेन्द्रियेभ्योद्भूततेजोभ्यः । जातोत्पन्नाऽसि । इति हेतोः । नाम्ना संज्ञया । एकादशी । तपस्विनी च । विश्रुता जगद्विख्याता । स्यातां भवेयम् ॥१२॥ एकादशीतिथौ । मम । व्रतम् । सर्वे जनाः । सदा । कुर्युः । तदेकादशीव्रतदिने । अखिलैः सर्वैर्जनैः । इन्द्रियेभ्यः । ग्राम्याहारो मायिकस्तत्तद्विषयाहारः । न दातव्यः ॥१३॥ निराहारेति । निराहारव्रतवतां ग्राम्याहारवर्जनपूर्वं मद्व्रतं कृतवतां जनानाम् । पुरुषार्थचतुष्टयं धर्मार्थादयश्चत्वारोऽपि पुरुषार्थाः । सिद्ध्येत् । हे प्रभो ! । इतीत्थंभूतम् । वरम् । यदि । त्वम् । प्रसन्नोऽसि । तर्हि । मे मह्यम् । देहि ॥ १४ ॥ तथेति । तदा तस्मिन्समये । विष्णुना । तस्यै एकादश्यै । तथास्तु ।

वरं वरय कल्याणि ! मम कार्यं महत्कृतम् । त्वया ततः प्रसन्नोऽस्मीत्युक्ता सा चाब्रवीत्प्रभुम् ॥ ११ ॥ एकादशेन्द्रियेभ्योऽहं निरन्नेभ्यस्तव प्रभो ! । जातेत्येकादशी नाम्ना विश्रुता स्यां तपस्विनी ॥१२॥ एकादशीतिथौ सर्वे कुर्युर्मम व्रतं सदा । ग्राम्याहारो न दातव्य इन्द्रियेभ्यस्तदाखिलैः ॥१३॥ निराहारव्रतां पुरुषार्थचतुष्टयम् । सिद्ध्येदिति वरं देहि प्रसन्नो यदि मे प्रभो ! ॥ १४ ॥ तथास्त्विति वरो दत्तस्तदा तस्यै तु विष्णुना । अत एव व्रतं ह्येतत्सर्वैः कार्यं प्रयत्नतः ॥ १५ ॥ एषा कथा पुराणोक्ता संक्षेपात्कथिता मया । धर्मशास्त्रोदिताः पाल्या एकादश्यां यमा अपि ॥ १६ ॥ लोभकामक्रुधां कार्यः सङ्कल्पोऽपि न वै हृदि । अहोरात्रं विष्णुभक्तिः कर्तव्या श्रवणादिका ॥ १७ ॥ इन्द्रियैर्ग्राम्यविषयग्रहणे तु कृते व्रतम् । भग्नमेवोपवासस्तु ज्ञातव्यः पशुलङ्घनम् ॥ १८ ॥ इन्द्रियैर्ग्राम्यविषयान् गृह्णन् यः कुरुते व्रतम् । तस्योपरि हरिर्नैव प्रसादं कुरुते क्वचित् ॥ १९ ॥ इन्द्रियाहाररहितः श्वेतद्वीपस्थमुक्तवत् । यस्तस्मै भगवान् शीघ्रं प्रसीदति न संशयः ॥ २० ॥

इतीत्थम् । वरः । दत्तः । अतो हेतोरेव । एतत् । व्रतम् । सर्वैः । प्रयत्नतः । कार्यम् ॥१५॥ एषेति । एषा । पुराणोक्ता । कथा । मया । संक्षेपात् । कथिता । एकादश्याम् । धर्मशास्त्रोदिताः । यमाः अहिंसादयोऽपि । पाल्याः ॥ १६ ॥ लोभेति । हृदि मनसि । लोभकामक्रुधाम् । सङ्कल्पोऽपि । न कार्यः । वै । श्रवणादिका । विष्णुभक्तिः । अहोरात्रम् । कर्तव्या ॥ १७ ॥ इन्द्रियैरिति । इन्द्रियैः । ग्राम्यविषयग्रहणे । कृते सति तु । व्रतमेकादशीव्रतम् । भग्नमेव । ज्ञातव्यम् । उपवासस्तु । पशुलङ्घनं पशुकृतलङ्घनसमानः । ज्ञातव्यः ॥ १८ ॥ इन्द्रियैरिति । यो भक्तः । इन्द्रियैः । ग्राम्यविषयान् । गृह्णन्सन् । व्रतम् । कुरुते । तस्य भक्तस्य । उपरि । हरिः । क्वचित्कदाचिदपि । प्रसादमनुग्रहम् । नैव कुरुते ॥ १९ ॥ इन्द्रियेति । यो भक्तः । श्वेतद्वीपस्थमुक्तवत् । इन्द्रियाहाररहितो भगवद्भक्तीतरग्राम्यविषयरूपेन्द्रियाहारवर्जितः सन् । व्रतम् । कुरुते । तस्मै भक्ताय । भगवान् । शीघ्रम् । प्रसीदति । न संशयः ॥ २० ॥

एकादशीदिने विष्णुभक्तिः कर्त्तव्यत्वेनाभिहिता तामाह द्वाभ्याम् । कृष्णस्येति । कृष्णस्य । दर्शनम् । कीर्त्तिश्रवणम् । गुणकीर्त्तनम् । पूजा । स्तुतिः । नतिर्नमस्कारः । प्रदक्षिणा च । स्वशक्त्या । कार्या ॥२१॥ कृष्णेति । कृष्णप्रसादमाहात्म्यात् । अन्नं तु । अनापदि रोगाद्यापदमन्तरा । न भक्ष्यम् । तत्रैकादशीव्रतदिने । कार्ष्णीं कृष्णसम्बन्धिनिम् । क्रियाम् । विना । अन्या । क्रिया । न कार्या ॥ २२ ॥ श्वेतेति । श्वेतद्वीपस्थिताः । मुक्ताः । एतत् । व्रतम् । सदा । कुर्वते । अस्माभिस्तु । पक्षमध्ये । सकृदेकवारम् । इदम् । व्रतम् । कार्यम् ॥ २३ ॥ श्वेतेति । श्वेतमुक्तसमत्वाप्त्यै । हृदि । इच्छा तु । सदा । कार्या । पूजनान्ते स्वार्च्यभगवदर्चार्चनान्ते । कृष्णादपि । तदेव श्वेतमुक्तसमत्वमेव । अर्थ्यं प्रार्थनीयम् । इतरत्तस्मादन्यत् । न च नैव प्रार्थनीयम् ॥ २४ ॥ इतीति । इत्यमुना प्रकारेण । एकादशिकावार्त्ताम् । विधाय कृत्वा । स श्रीहरिः । पुनः । सतः साधून् । प्रोवाच । हे साधवः ! । मदाश्रितैः । ज्ञानयज्ञो वक्ष्यमाणलक्षणं ज्ञानसत्रम् । नित्यम् । कार्यः ॥ २५ ॥ इममेवार्थं

कृष्णस्य दर्शनं कीर्त्तिश्रवणं गुणकीर्त्तनम् । पूजास्तुतिर्नतिः कार्या स्वशक्त्या च प्रदक्षिणा ॥ २१ ॥ कृष्णप्रसादमाहात्म्याद्भक्ष्यं नान्नं त्वनापदि । विना कार्ष्णीं क्रियामन्या क्रिया कार्या न तत्र च ॥२२॥ श्वेतद्वीपस्थिता मुक्ताः सदैतत्कुर्वते व्रतम् । अस्माभिस्तु सकृत्कार्यं पक्षमध्य इदं व्रतम् ॥२३॥ श्वेतमुक्तसमत्वाप्त्यै कार्येच्छा तु सदा हृदि । कृष्णादपि तदेवार्थ्यं पूजनान्ते न चेतरत् ॥२४॥ इत्येकादशिकावार्त्तां विधाय स पुन सतः । प्रोवाच ज्ञानयज्ञस्तु कार्यो नित्यं मदाश्रितैः ॥२५॥ जगत्सृष्ट्वा पुरा ब्रह्मा प्रोवाच सकलाः प्रजाः । युष्माभिः सर्वदा यज्ञो विधातव्यो यथोचितम् ॥ २६ ॥ तेनैव हि परं श्रेयः सर्वासां वो भविष्यति । एवं विश्वसृजा पूर्वं कृताऽस्त्याज्ञा हि सर्वतः ॥२७॥ ततः प्रवृत्तिनिष्ठा ये राजसास्तामसा जनाः । राजसांस्तामसानेव द्रव्ययज्ञांस्तु ते व्यधुः ॥२८॥ निवृत्तिमार्गनिरताः सात्त्विकाः सात्त्विकान्मखान् । चक्रुर्ज्ञानमयानेव हिंसाविरहितान्नराः ॥ २९ ॥ निवृत्तिमार्गे सन्त्यन्ये योगयज्ञादयो मखाः । तत्रापि ज्ञानयज्ञस्तु मया श्रेष्ठतया मतः ॥ ३० ॥

भगवत्प्रेरितब्रह्मादिसदाचारेण द्रढयति द्वाभ्याम् । जगदिति । पुरा । ब्रह्मा । जगत् । सृष्ट्वा । सकलाः । प्रजाः । प्रोवाच । हे प्रजाः ! । युष्माभिः । यज्ञः । यथोचितम् । सर्वदा । विधातव्यः ॥२६॥ तेनेति । तेन यज्ञविधानेनैव । सर्वासाम् । वो युष्माकम् । परम् । श्रेयः । भविष्यति । एवममुना प्रकारेण । विश्वसृजा ब्रह्मणा । पूर्वम् । सर्वतः सर्वेभ्यो जनेभ्यः । आज्ञा । कृता दत्तास्ति । तथा हि । चोक्तं भगवद्गीतायाम् । 'सह यज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः । अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधु'गित्यादिना ॥ २७ ॥ तत इति । ततस्तदनन्तरम् । प्रवृत्तिनिष्ठाः प्रवृत्तधर्मावस्थिताः । ये । राजसाः । तामसाः । जनाः । ते तु । राजसान् । तामसान् । द्रव्ययज्ञानेव । व्यधुश्चक्रुः ॥ २८ ॥ निवृत्तीति । निवृत्तिमार्गनिरता निवृत्तधर्मावस्थिताः । सात्त्विकान् । हिंसाविरहितान् । ज्ञानमयान् । मखान् यज्ञानेव । चक्रुः ॥२९॥ निवृत्तीति । निवृत्तिमार्गे । अन्ये । योगयज्ञादयः । मखाः । सन्ति । तत्र तेषु यज्ञेषु मध्येपि । ज्ञानयज्ञस्तु । मया । श्रेष्ठतया । मतः । अस्ति ॥ ३० ॥

ज्ञानयज्ञलक्षणमाह । अन्तरिति । कमलापतेः श्रीकृष्णस्य । भक्तस्य । अन्तर्दृष्ट्या । वर्त्तनम् । यत् । सः । सर्वयज्ञोत्तमः । ज्ञानयज्ञः । कथितः ॥३१॥ अन्तर्दृष्टि-लक्षणमाह । स्वेति । स्वान्तरे स्वाऽन्तःकरणे । अथवा । बहिः । कृष्णमूर्त्तेरेव । समीक्षणम् । यत् । सा । अन्तर्दृष्टिः । उदिता । इतरैतदन्या । बहिर्दृष्टिः । मताः ॥३२॥ स्फुटबोधाय पुनर्विशेषतयान्तर्दृष्टिलक्षणमाह द्वाभ्याम् । श्रवणमिति । विष्णोः श्रीहरेः । श्रवणं स्वरूपगुणचरित्रप्रबन्धाकर्णनम् । कीर्त्तनं तद्गुणचरित्रादिवर्णनम् । अर्चनादि तन्मूर्त्तिपूजनप्रभृति च । यत् । बहिः । क्रियते । एतत् । सर्वमपि । अन्तर्दृष्टितया मतम् ॥ ३३ ॥ हृदीति । हृदि स्वमानसे स्वहृदयावस्थिते जीवे वा । साक्षाद्धरिम् । ध्यात्वा । तस्य हरेः । यत् । अर्चनादिकम् । क्रियेत । सा । भक्तस्य । अन्तर्दृशिः । ज्ञातव्या । खलु ॥ ३४ ॥ एवं ज्ञानयज्ञमन्तर्दृष्टिरूपेण कथयित्वान्तर्दृष्टेरपि द्वैविधामभिधाय प्रसङ्गाच्छास्त्रेऽयं भगवतोंऽश इति यदुच्यते तदर्थमपि स्वान्बोधयितुं कार्ष्णधर्माणां कृष्णांशत्वात्तद्वत्तया ये ज्ञानयज्ञनिष्ठास्त एव कृष्णांशा इति ब्रुवन् युष्माभिरपि कृष्णांशैर्भवितव्यमित्याहाष्टभिः । कृष्णस्येति । कृष्णस्य । अंशा वक्ष्यमाणांशशब्दवाच्यकार्ष्णधर्मवत्त्वेनांशशब्दवाच्यतां प्राप्ताः । ये । जीवा भक्तजनाः ।

अन्तर्दृष्ट्या वर्त्तनं यद्भक्तस्य कमलापतेः । ज्ञानयज्ञः स कथितः सर्वयज्ञोत्तमोत्तमः ॥ ३१ ॥ स्वान्तरे वा बहिः
कृष्णमूर्त्तेरेव समीक्षणम् । यत्साऽन्तर्दृष्टिरुदिता बहिर्दृष्टिर्मतेतरा ॥ ३२ ॥ श्रवणं कीर्त्तनं विष्णोरर्चनादि च
यद्बहिः । क्रियते सर्वमप्येतदन्तर्दृष्टितया मतम् ॥ ३३ ॥ हृदि ध्यात्वा हरिं साक्षात्तस्य यच्चार्चनादिकम् ।
क्रियेत सा च भक्तस्य ज्ञातव्याऽन्तर्दृशिः खलु ॥३४॥ कृष्णस्यांशास्तु ये जीवा ज्ञानयज्ञं त एव हि । इमं कर्त्तुं
शक्नुवन्ति नेतरे तु कदाचन ॥३५॥ मनःषष्ठानीन्द्रियाणि पञ्च योजयितुं हरौ । अशक्ता इतरे त्वेषां वर्त्तन्ते
वश एव हि ॥३६॥ ममैवांश इति श्लोके गीतायामर्ज्जुनं प्रति । अयमेवार्थ उदितः श्रीकृष्णेनेति दृश्यताम्
॥ ३७ ॥ कृष्णनिष्ठास्तु ये धर्मास्तेंऽशाः प्रोक्ता महर्षिभिः । आगच्छन्ति हरेस्ते हि प्रपन्नेषु दयानिधेः ॥३८॥

सन्ति । त एव । इमं पूर्वोक्तप्रकारम् । ज्ञानयज्ञम् । कर्त्तुम् । शक्नुवन्ति । इतरे तदन्ये जीवास्तु । कदाचन । न शक्नुवन्ति ॥ ३५ ॥ मन इति । मनःषष्ठानि । पञ्च । इन्द्रियाणि चक्षुरादीनि । हरौ । योजयितुम् । अशक्ताः । इतरे कृष्णांशान्ये जीवास्तु । एषामिन्द्रियाणाम् । वशे एव वर्त्तन्ते । हि । ज्ञानयज्ञवन्तः कृष्णांशा जीवास्तु तद्वशे न वर्त्तन्ते प्रत्युत प्रकृत्या विषयप्रवणानि तानि तेभ्यः परावृत्त्य श्रीहरिमूर्त्तावेव योजयन्तीतिभावः ॥ ३६ ॥ ममेति । गीतायाम् । ममैवांश इति श्लोके 'ममैवांशो जीवलोके जीवभूतः सनातनः । मनःषष्ठानिन्द्रियाणि प्रकृतिस्थानि कर्षतीति पद्ये । अर्जुनं प्रति । श्रीकृष्णेन । अयमेव । अर्थः । उदितः । इतीत्थम् । दृश्यताम् ॥ ३७ ॥ श्रीकृष्णेति । कृष्णनिष्ठा असाधारणतया नित्यं श्रीहरिस्वरूपैकनिष्ठाः । ये । धर्माः सत्यशौचादयो गुणाः । ते । महर्षिभिः । अंशाः । प्रोक्ताः । दयानिधेः करुणाम्बुधेः । हरेः सम्बन्धिनः । तेंऽशशब्दवाच्या धर्माः । प्रपन्नेष्वनन्यत्वेन स्वशरणं प्राप्तेषु भक्तेषु । आगच्छन्ति ॥ ३८ ॥

एतदेव दृष्टान्तेन द्रढयति । कृष्णेति । विद्यागुरोः । साधर्म्यं विद्यादिगुणसमत्वम् । आपन्नाः । शिष्या इव । कृष्णसाधर्म्यं सत्य शीलादिगुणैः [illegible] । आपन्नाः । ये जीवा एकान्तिकभक्तजनाः । ते तु । हरेः । अंशाः । इतीत्थम् । अवगम्यताम् ॥३९॥ इन्द्रियेति । इन्द्रियादेः । जये [illegible] प्रत्याकर्षणे । तस्यैन्द्रियादेः । कृष्णे । योजने च । शक्तिः सामर्थ्यम् । तेषां हर्यंशैकान्तिकभक्तानामेव । वर्त्तते । अन्यस्य तद्भिन्नस्य तु । कस्यचिदिति । न तु नैव वर्त्तते ॥ ४० ॥ साम्प्रतमिन्द्रियवशावशत्वतः कृष्णांशानंशत्ववतो निजजनान्वीक्ष्य ये कृष्णांशत्ववतस्तांस्तथाभूतानतथाभूतंस्तथाभवितव्यमिति चाह [illegible] । [illegible] । तद्वशस्थैरिन्द्रियवशवर्त्तिभिः । मदाश्रितैर्भवद्भिः । ज्ञानयज्ञोद्यतैरेव । भाव्यं भवितव्यम् । हि यतः । इदमेव । सर्वेषाम् । सच्छास्त्राणाम् । रहो रहस्यम् । मतम्

सत्सङ्गिनः । यूयम् । इन्द्रियाणाम् । वशेऽधीनत्वे । न स्थ नैव भवथ । अतो हेतोः । कृष्णांशा एव । स्थ । इतीत्थम् । निश्चितमेव । जानीत ॥ ४१ ॥ ज्ञानेति ।

कृष्णसाधर्म्यमापन्नाः शिष्या विद्यागुरोरिव । ये ते त्वंशा हरेः प्रोक्ता जीवा इत्यवगम्यताम् ॥ ३९ ॥
इन्द्रियादेर्जये शक्तिस्तेषामेव हि वर्त्तते । कृष्णे च योजने तस्य न त्वन्यस्य तु कस्यचित् ॥ ४० ॥
सत्सङ्गिनो न स्थ यूयमिन्द्रियाणां वशे यतः । कृष्णांशा अत एव स्थ त्विति जानीत निश्चितम् ॥ ४१ ॥
ज्ञानयज्ञोद्यतैर्भाव्यं तद्वशस्थैर्मदाश्रितैः । इदमेव हि सर्वेषां सच्छास्त्रणां रहो मतम् ॥ ४२ ॥ अहं च
स्वाश्रितान् सर्वानेतदाज्ञापयामि वः । सर्वदा ज्ञानयज्ञस्याभ्यासः कार्य इति ध्रुवम् ॥ ४३ ॥ तेनैव श्वेत
मुक्तानां पदवीमपि यास्यथ । तादृशीच्छैव हृदये कार्या सर्वैर्मदाश्रितैः ॥ ४४ ॥ न ज्ञानयज्ञेऽलसता विधेया
सत्सङ्ग एषोऽस्ति सुदुर्लभो यत् । इति प्रभोर्वागमृतं निपीय सन्तो गृहस्थाश्च मुदं ययुस्ते ॥ ४५ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते शताधिकचत्त्वारिंशतितमस्तरङ्गः ॥ १४० ॥ ७ ॥

॥ ४२ ॥ आवश्यकत्वार्थमेव पुनर्वदति । अहमिति । अहम् । सर्वदा । ज्ञानयज्ञस्य । अभ्यासः । कार्यः । इत्येतत् । स्वाश्रितान्मदाश्रितान् । सर्वान् । वो युष्मान् । आज्ञापयामि । ध्रुवं निश्चितमेव ॥ ४३ ॥ तेनेति । तेन ज्ञानयज्ञाभ्यासेनैव । यूयम् । श्वेतमुक्तानाम् । पदवीं मार्गमपि । यास्यथ । मदाश्रितैः । सर्वैः । तादृशी श्वेत-मुक्तसमानभवनात्मका । इच्छा । हृदये । कार्यैव ॥ ४४ ॥ नेति । ज्ञानयज्ञे । अलसताऽऽलस्यम् । न विधेया । यद्यतो हेतोः । एष ज्ञानयज्ञाभ्यासरूपः । सत्सङ्गः । सुदुर्लभः । अस्ति । इत्येवंविधम् । प्रभोः श्रीहरेः । वागमृतम् । निपीय । ते सभोपविष्टाः । सन्तः । गृहस्थाश्च । मुदम् । ययुः ॥ ४५ ॥ एकादश्या व्रतस्योक्तं ज्ञानयज्ञस्य येन च । कार्यत्वं स्त्रीयभक्तेभ्यः स हरिस्तद्ददातु मे ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्सुनुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां शताधिकचत्वारिंशस्तरङ्गः ॥ १४० ॥ ७ ॥

त्यागेच्छा दुःस्वभावानां स्यात्तथापि न तत्त्यजिः । कारणं तत्र तन्नाशे चोपायोऽष्टम ईरितः ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८७८) नभसः श्रावणमासस्य । शुक्ले शुक्लपक्षे । द्वादश्यां तिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमक्षितिपस्य । दुर्गे । वासुदेवालयस्य । अग्रेऽग्रप्रदेशे । प्रवरासनेऽतिश्रेष्ठे चक्रकासने स श्रीहरिः । न्यषीदद्भगवतःसान्ध्यनीराजनोत्तरमुपविवेश ॥ २ ॥ सितेति । सिताम्बरधरं परिधृतसकलश्वेतवसनम् । सहस्रशो नानादेशागतत्वादनेकैः । भक्तैस्त्यागिगृहिस्वाश्रितजनैः । वृतं महासभायां परिवेष्टितम् । श्रीहरिम् । मुक्तानन्दः । सन् साधुः । प्राञ्जलिः । विनयानतः सन् । पप्रच्छ ॥ ३ ॥ कश्चिदिति । हे हरे ! । कश्चित् । भवतः । भक्तः प्रत्यक्षपुरुषोत्तमस्य तव सत्सङ्गी । स्यात् । तस्य सत्सङ्गिनः । चेतसि । भक्तौ त्वदुपासनायाम् । विघ्नकारिणाम् । दुःस्वभावानां लोभमानकामक्रोधादीनाम् । सर्वथा । जिहासा हातुमिच्छा । स्यात् ॥ ४ ॥ तथेति । तथापि दुःस्वभावजिहासायां सत्यामपि । तेन भक्तेन । तेषां दुःस्वभावानाम् । त्यागानाम् । कर्तुं तु । न शक्येत । अत्रार्थे । किम् । कारणम् । वर्त्तते । हे स्वामिन् ! । कृपया । वद

शकाब्दे विक्रमार्कस्य गजाश्ववसुभूमिते । द्वादश्यां नभसः शुक्ले वचोऽमृतमिदं हरेः ॥१॥ तत्र दुर्गपुरे दुर्गं उत्तमक्षितिपस्य सः । वासुदेवालयस्याग्रे न्यषीदत्प्रवरासने ॥ २ ॥ सिताम्बरधरं भक्तैर्वृतं तं च सहस्रशः । पप्रच्छ मुक्तानन्दः सन् प्राञ्जलिर्विनयानतः ॥ ३ ॥ कश्चित्स्याद्भवतो भक्तस्तस्य चेतसि सर्वथा । जिहासा दुःस्वभावानां स्याद्भक्तौ विघ्नकारिणाम् ॥ ४ ॥ तथापि तेषां न त्यागं कर्त्तुं शक्येत तेन तु । अत्र किं कारणं स्वामिन्वर्त्तते कृपया वद ॥५॥ श्रीहरिरुवाच—यस्य वैराग्यदौर्बल्यं वर्त्तेत स पुमान्मुने ! । स्वस्य हातुं न शक्नोति दुःस्वभावान् समुद्यतः ॥६॥ यथा दरिद्रः पुरुषं सद्वासोऽन्नगृहादिकम् । वाञ्छन्नपीह नाप्नोति तथाऽसौ स्वमनोरथम् ॥ ७ ॥ पुनः पप्रच्छ तं मुक्तानन्दस्ते तस्य सत्पते ! । केनोपायेन नश्येयुरिति पृष्टोऽब्रवीद्धरिः ॥ ८ ॥ स तु सेवां सदा कुर्यात्तीव्रवैराग्यशालिनाम् । सावधानश्च वर्त्तेत कृष्णाज्ञायां निरन्तरम् ॥ ९ ॥

॥ ५ ॥ 'पृष्टः स इत्थं मुनिना मुक्तानन्देन तूक्तवान् । सुखयंस्तं तथाऽन्यान्स्वानिति नारायणो मुनिः ।' यस्येति । हे मुने ! । यस्य भक्तस्य । वैराग्यदौर्बल्यम् । वर्त्तेत । सः । पुमान् । भक्तः । समुद्यत उद्युक्तः सन्नपि । स्वस्य । दुःस्वभावान् । हातुम् । न शक्नोति ॥ ६ ॥ एतदेव दृष्टान्तेन द्रढयति । यथेति । इह लोके । तथा । दरिद्रः । पुरुषः । सद्वासोऽन्नगृहादिकं शोभनानि वासांस्यन्नानि गृहाणि च तत्प्रभृतिकम् । वाञ्छन्निच्छन्सन्नपि । नाप्नोति । तथा । असौ वैराग्यदौर्बल्यवान् भक्तः । स्वमनोरथं दुःस्वभावत्यागरूपां स्वेच्छाम् । नाप्नोति ॥ ७ ॥ पुनरिति । तमेवं वदन्तं श्रीहरिम् । मुक्तानन्दो मुनिः । पुनः । पप्रच्छ । हे सत्पते ? । तस्य तथाविधभक्तस्य । ते दुःस्वभावाः । केन । उपायेन साधनेन । नश्येयुः । इत्यमुना प्रकारेण । पृष्टो मुक्तानन्दमुनिनानुयुक्तः । हरिः । अब्रवीत् ॥ ८ ॥ स इति । हे मुने ! । स भक्तस्तु । तीव्रवैराग्यशालिनां वैराग्यातिशयवतां भगवद्भक्तसाधूनाम् । सेवां तदनुवृत्तिपूर्वां परिचर्याम् । सदा । कुर्यात् । कृष्णाज्ञायां स्वधर्मादिपालनरूपे-

हरिनिदेशे । सावधानोऽप्रमत्तः सन् । निरन्तरम् । वर्त्तेत ॥ ९ ॥ तत इति । ततस्तदनन्तरम् । अस्मिन्नेवंविधया वर्त्तनवति भक्ते । अतिमहत्यतिशयिता । कृष्णकृपा जायते । तया तथाविधया कृष्णकृपया । अस्य भक्तस्य । सर्वेऽपि । दुःस्वभावाः । विनाश्यन्ते विनाशं नीयन्ते । न संशयः ॥ १० ॥ शास्त्रेति । अन्यान्यपि । शास्त्रोक्तानि । साधनानि दुःस्वभावविनाशनोपायरूपाणि ज्ञानवैराग्यादीनि । सन्ति । तैः साधनैस्तु । स भक्तः । यदि । प्रयतो नियमतत्परः । स्यात् । तर्हि । वहुना कालेन । तत्सिद्धिं दुःस्वभावविनाशरूपां सिद्धिम् । आप्नोति । भगवत्कृपया तु सद्य एव दुःस्वभावविनाशरूपासिद्धिः स्यादितिभावः ॥ ११ ॥ इतीति । इत्येवं-विधाम् । हरेः । वाक्यसुधाम् । पीत्वा । मुनिवर्यः । स मुक्तानन्दमुनिः । पराम् । मुदम् । अवापत् । सदःस्थिताः । तदीयभक्तिभाजः । इतरे । सन्तोऽपि । गृहि-णश्चापि । परां मुदमवापुः ॥ १२ ॥ स्वभक्तानां दुःस्वभावात्यागे कारणमाह यः । तन्नाशोपायमपि च स हरिर्मां तनोऽवतु ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तक-श्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्सूनुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां शताधिकैकचत्वारिंशस्तरङ्गः ॥ १४१ ॥ ८ ॥

ततोऽस्मिन् जायते कृष्णकृपातिमहती तया । दुःस्वभावा विनाश्यन्ते सर्वेऽप्यस्य न संशयः ॥ १० ॥ शास्त्रोक्तानि साधनानि सन्त्यन्यान्यपि तैस्तु सः । कालेन वहुनाप्नोति तत्सिद्धिं प्रयतो यदि ॥ ११ ॥ इति वाक्यसुधां हरेः स पीत्वा मुनिवर्यस्तु मुदं परामवापत् । इतरेऽपि सदःस्थिताश्च सन्तो गृहिणश्चापि तदियभक्तिभाजः ॥ १२ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते शताधिकैकचत्वारिंशस्तरङ्गः ॥ १४१ ॥ ८ ॥

शकाब्दे विक्रमार्कस्य गजाश्ववसुभूमिते । पौर्णमास्यां नभःशुक्ले वचोऽमृतमिदं हरेः ॥ १ ॥ तत्र दुर्गपुरे दुर्ग उत्तमस्य महीभृतः । वासुदेवालयस्याग्रे स न्यषीदत्सुचक्रके ॥ २ ॥ त्यागिभिर्गृहिभिर्भक्तैर्वहुभिः परिवेष्टितः । आनन्दानन्दमुनिना भक्त्या सम्यक् प्रपुजितः ॥ ३ ॥ सस्वर्णबुट्टामरुणां कच्छनीं च तथाविधम् । सन्नीशारं परिदधद्धैमसूत्रकटीपटः ॥ ४ ॥

सदा साकृतितायास्तु वलं रक्ष्यं हरेर्द्दम् । भक्तैरेतद्विस्तरेण प्रोक्तं तु नवमे ततः ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८७८) नभःशुक्ले श्रावण-मासस्य शुक्लपक्षे । पौर्णमास्यां तिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥१॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमस्य । महीभृतः । दुर्गे । वासुदेवालयस्य । अग्रे । सुचक्रके शोभने कौशेयचक्रकासने । स श्रीहरिः । न्यषीदत् ॥ २ ॥ तं विशिनष्टि त्रिभिः । त्यागिभिरिति । वहुभिर्नानादेशागतत्वादनेकैः । त्यागिभिः । गृहिभिः । भक्तैः । परिवेष्टितः सभायां परितो वृतः । आनन्दानन्दमुनिना । भक्त्या गाढानुरागेण । सम्यग्यथाविधि । प्रपूजितश्चन्दनपुष्पस्रगादिभिः समर्चितः ॥ ३ ॥ सस्वर्णेति । सस्वर्णबुट्टां सुवर्णतन्तुरचितस्वर्णमुद्रासमानवर्त्तुलवुट्टैः सहिताम् । अरुणां रक्तवर्णाम् । कच्छनीं सुरवारम् । परिदधत् । तथाविधं सस्वर्णबुट्टम् । सन्नीशारं च । परिदधत् । हैमसूत्रकटीपटः सुवर्णसूत्रमयप्रान्तपल्लववत्कौसुम्भवासःश्रेष्ठसन्निवद्धकटिप्रदेशः ॥ ४ ॥

सस्वर्णेति । सस्वर्णसूत्रप्रान्ताग्रं सुवर्णसूत्रमयप्रान्ताग्रभागम् । शीर्षपटोत्तमं बहुमूल्यं कौशुम्भं शिरोनिबन्धनीयवसनम् । दधत् । अभ्रामं नभोनीलम् । स्कन्धपटं सुवर्णसूत्रप्रान्ताग्रमुत्तरीयवस्त्रं च । दधत् । दक्षदोष्णि दक्षिणे बाहौ । रक्षिका नीलपीतरक्तवर्णकौशगुतसान्तःस्थूलमुक्तावती रक्षाश्च । दधत् ॥ ५ ॥ साधूनिति । स एवंविधशोभाविशेषणविशिष्टः श्रीहरिः । पुरःस्थान् । साधून् । प्रोचे अवदत् । हे साधवः ! । ज्ञानशास्त्रं भगवत्स्वरूपस्वभावगुणविभूत्यैश्वर्यादि निरूपणकृद्वेदपुराणागमादिकं सच्छास्त्रम् । नृणाम् । हितं भगवत्स्वरूपादि तत्प्राप्त्युपायबोधनेन हितकारकम् । अस्ति । तज्ज्ञानशास्त्रम् । शृण्वन्तः सन्तोऽपि । केचित्पुरुषास्तु । अन्यथामतिं वक्ष्यमाणां विपरीतबुद्धिम् । प्राप्नुवन्ति ॥ ६ ॥ साकारमिति । हे साधवः ! । तेऽन्यथामतयः पुरुषाः । साकारं सदादिव्यकरपादमुखोदराद्यवयववन्मनोहरमूर्त्तिमत्वात्साकृतिम् । भगवन्तम् । निराकृतिम् । जानन्ति । सत्यौ । विधिनिषेधौ । कल्पितौ । स्तः । इत्येवं च । जानन्ति ॥ ७ ॥ अत इति । अतो हेतोः । मुमुक्षुभिः । पुंभिर्भक्तिजनैः । तस्मिन् ज्ञानशास्त्रे । कृष्णः । साकृतिः । वर्णितः । अस्ति । इतीत्थम् । बोद्धव्यम् । अन्यथोक्तविपरीततया तु ।

सस्वर्णसूत्रप्रान्ताग्रं दधच्छीर्षपटोत्तमम् । अभ्रामं च स्कन्धपटं दक्षदोष्णि च रक्षिकाः ॥५॥ साधून् पुरःस्थान्स प्रोचे ज्ञानशास्त्रं नृणां हितम् । तच्छृण्वन्तोऽपि केचित्तु प्राप्नुवन्त्यन्यथामतिम् ॥ ६ ॥ साकारं भगवन्तं तु ते जानन्ति निराकृतिम् । सत्यौ विधिनिषेधौ च कल्पिताविति साधवः ! ॥ ७ ॥ अतो मुमुक्षुभिः पुंभिस्तस्मिन् कृष्णस्तु साकृतिः । वर्णितोऽस्तीति बोद्धव्यं नान्यथा तु कदाचन ॥ ८ ॥ वचसोऽतिक्रमः क्वापि स्याच्चेत्कृष्णस्य सोऽस्त्वपि । तदरूपत्व बोधस्तु सर्वथा मास्तु कस्यचित् ॥ ९ ॥ वाक्यातिक्रमदोषस्तु नश्येत्प्रार्थनया हरेः । न तन्मूर्तिद्रोहदोषः प्रायश्चितशतैरपि ॥ १० ॥ यथाशक्ति हरेर्वाक्यं पाल्यमेव मुमुक्षुणा । तन्मूर्त्तिनिश्चयबलं त्वतिरक्ष्यमसंशयम् ॥ ११ ॥ सदा साकृतिरेवास्ति कृष्ण एष नराकृतिः । सच्चिद्रूपोऽमायिकाङ्गः स्वतन्त्रो दिव्यविग्रहः ॥ १२ ॥

कदाचन । न बोद्धव्यम् ॥ ८ ॥ वचनइति । क्वापि । कदाचित् । कृष्णस्य । साक्षाद्धरेः । वचसः । अतिक्रम उल्लङ्घनम् । स्याच्चेत् । तर्हि । सोऽपि । अस्तु भवतु नाम । किन्तु । तदरूपत्वबोधः कृष्णनिराकारोऽस्तीतिज्ञानं तु । कस्यचित्कस्यापि भक्तस्य । सर्वथा सर्वप्रकारेण । मास्तु ॥ ९ ॥ वाक्येति । हरेः । वाक्यातिक्रमदोषो वचनोल्लङ्घनरूपं दूषणं तु । हरेः । प्रार्थनया तत्प्रायश्चित्ताचरणपूर्वकेणाभ्यर्थनेन । नश्येत् । तन्मूर्त्तिद्रोहदोषो भगवत आकारखण्डनरूपद्रोहदूषणम् । प्रायश्चित्तशतैरपि । अपिशब्दात्तत्प्रार्थनया च । न नश्येत् ॥ १० ॥ यथेति । मुमुक्षुणा भक्तेन । हरेः । वाक्यम् । यथाशक्ति । पाल्यमेव । तन्मूर्त्तिनिश्चयबलं भगवतः सदामूर्त्तत्वनिश्चयबलं तु । असंशयं यथा तथा । अतिरक्ष्यमतिशयेनैव रक्षणीयम् ॥ ११ ॥ भगवन्मूर्त्तिनिश्चयविधानप्रकारमाह त्रिभिः । सदेति । नराकृतिः । एष मयेष्टदेवत्वेन स्वीकृतः साक्षादयम् । कृष्णः श्रीहरिः । सदा । साकृतिरेव । अस्ति । सच्चिद्रूपः सच्चिदानन्दधर्माधारमनोहरतनुः । अमायिकाङ्गो मायाकार्यतत्त्वजन्यकरपादा-

घवयववर्जितदिव्यावयवः । स्वतन्त्रः स्वतन्त्रैश्वर्यादिः । दिव्यविग्रहोऽतिरमणीयश्चास्ति ॥१२॥ सर्वेति । स श्रीहरिः । सर्वाकृतीनां सर्वेषां विचित्राकाराणाम् । मूलत्वात् । साकृतिः । भगवता सदा साकारेण मूलपुरुषद्वारा कृतमहामायेक्षणेन विचित्राकारोत्पत्तेः स कथं निराकारः स्यादितिभावः । अक्षरात्सर्वपराद्क्षरब्रह्मणोऽपि । परः स्वरूपस्वभावादिभिरत्युत्कृष्टः । कालादियन्ता कालमायादिनियन्ता च । अस्ति । ततः । सर्वोपर्य्येव । अस्ति । इतीत्थम् । बुध्यतामवगम्यताम् ॥ १३ ॥ हेतुरिति । किञ्च । स एवंभूतः । हरिः । सर्वावताराणां रामकृष्णादिसकलाविर्भावानाम् । हेतुः कारणम् । अवतारी । एव । वर्त्तते । इतीत्थम् । ज्ञेयः । अन्यैः । अवतारैः । समस्तुल्यः । नैव । ज्ञेयः ॥ १४ ॥ तस्मिन्निति । तत एवं श्रीहरिस्वरूपज्ञानानन्तरम् । तस्मिन् श्रीहरावेव । सुदृढा । प्रीतिः । सदा कर्त्तव्या । तयैवं श्रीहरौ कृतया प्रीत्यैव । सर्वेषां जनानाम् । संसृतेः । मोक्षः । अस्ति । अन्यथा । न भवेत् ॥ १५ ॥ तस्यामिति । तस्यां तथाविधतया तत्र प्रीतौ । सत्यामपि । कश्चिद्भक्तः । कचित्कदाचित् । यदि । सन्मण्डलात्सत्सङ्गिसमूहात् । च्युतो भ्रष्टः । स्यात् । तदपि तर्ह्यपि । स भक्तः । प्रान्ते स्वदेहान्ते । हरेः । पदमक्षरं धाम ।

सर्वाकृतीनां मूलत्वात्साकृतिश्चाक्षरात्परः । कालादियन्ता सोऽस्तीति सर्वोपर्येव बुध्यताम् ॥ १३ ॥
हेतुः सर्वावताराणां सोऽवतार्य्येव वर्त्तते । इति ज्ञेयो न चैवान्यैरवतारैः समो हरिः ॥ १४ ॥
तस्मिन्नेव ततः प्रीतिः कर्त्तव्या सुदृढा सदा । तयैव संसृतेर्मोक्षः सर्वेषामस्ति नान्यथा ॥ १५ ॥
तस्यां सत्यामपि यदि कचित्सन्मण्डलाच्च्युतः । स्यात्कश्चित्तदपि प्रान्ते प्राप्नुयात्स पदं हरेः ॥ १६ ॥
सन्मण्डलस्थोऽपि पुमांस्तद्धीनस्तु विराग्यपि । देहान्ते नाक्षरं याति किन्तु लोकान्स दैवतान्
॥ १७ ॥ अतः कृष्णस्वरूपस्य रक्ष्यं सर्वाधिकं बलम् । तेन सर्वार्थसिद्धिः स्यात्तद्द्रोहः स्यात्किलान्यथा
॥ १८ ॥ दृष्टान्तमत्र कथये ज्येष्ठमध्यमपार्थयोः । धर्मशास्त्रबली पूर्वः कृष्णमूर्त्तिबलोऽपरः ॥ १९ ॥

प्राप्नुयात् ॥ १६ ॥ सदिति । तद्धीनस्तथाविधया हरौ प्रीत्या रहितः । पुमान् भक्तस्तु । सन्मण्डलस्थः सत्सङ्गिमण्डलावस्थितः सन्नपि । विरागी वैराग्यवान्सन्नपि । देहान्ते । अक्षरमक्षरसंज्ञं हरेः पदम् । न याति । किन्तु । स भक्तः । देवतान्ब्रह्मादिदेवतासम्बन्धिनः । लोकान् । याति ॥ १७ ॥ अत इति । अतो हेतोः । कृष्णस्वरूपस्य सदा साकृतिरेवास्तीत्यादिश्लोकचतुष्टयोक्तविधया श्रीहरिस्वरूपे सप्रेम्णो ज्ञानस्य । सर्वाधिकम् । बलम् । रक्ष्यम् । तेन तद्बलरक्षणेन । सर्वार्थसिद्धिः । स्यात् । अन्यथा तद्बलरक्षणाभावे । तद्द्रोहः । स्यात् । किल निश्चितम् । अस्यायं भावः । श्रीहरेः सर्वथा दिव्याकृतिसत्त्वादवतारिणस्तस्यान्यावतारेभ्यः । सर्वथा विलक्षणत्वात्तस्य निराकृतित्वान्यावतारसमत्वेन वेदनमेव तद्द्रोहः स च प्रायश्चित्तशतैरप्यनिवार्य्य एवेति ॥ १८ ॥ दृष्टान्तमिति । अत्रास्मिन्नर्थे । ज्येष्ठमध्यमपार्थयोर्युधिष्ठिरार्जुनयोः । दृष्टान्तम् । कथये । पूर्वो युधिष्ठिरः । धर्मशास्त्रबली धर्मप्रधानः । अपरोऽर्जुनः । कृष्णमूर्त्तिबलः श्रीकृष्णस्वरूपनिष्ठाबलवान् । बभूव ॥ १९ ॥

इममर्थमेव सविस्तरमाह सप्तभिः । प्रागिति । अर्जुनः । प्राक् प्रथमस्तु । धर्मशास्त्रम् । आश्रितः सन् । युद्धम् । नैव । ऐच्छत् । ततस्तदनन्तरम् । कृष्णेन । स्वबलेन स्वस्वरूपज्ञानबलप्रदानेनैव । युद्धाय युद्धं कर्त्तुम् । योजितः ॥२०॥ सर्वेति । हे अर्जुन ! । सर्वधर्मान् । परित्यज्य । एकम् । मामेव । शरणम् । व्रज । अहम् । त्वाम् । सर्वपापेभ्यः । मोक्षयिष्यामि । त्वम् । मा शुचः शोकं मा कुरु । अस्यार्थः सविस्तरं श्रीरामानुजाचार्यकृतभाष्यादवगन्तव्यः ॥ २१ ॥ इतीति । इत्यमुना प्रकारेण । उक्तः श्रीकृष्णेन कथितः । सोऽर्जुनः । निशंकः सन् । स्वकैः स्वसम्बन्धिभिः । साकम् । रणे । युयुधे । लक्षशः । जीवहिंसायां लक्षावधिप्राणिहनने कृते सत्यपीत्यर्थः । हृदि स्वमानसे । किञ्चन किमपि । नाखिदत् । खेदं न प्राप ॥ २२ ॥ ब्रह्मेति । कृष्णाश्रयस्यैव । बलम् । सर्वथा । दधतम् । तमर्जुनम् । ब्रह्महत्यादिपापानि । तदा । स्प्रष्टुम् । न शेकुः । वै ॥ २३ ॥ क्षत्रिय इति । युधिष्ठिरः । क्षत्रियो युद्धे शत्रवोऽवश्यं क्षत्रियैर्हन्तव्या इत्थंभूतशास्त्रोक्तक्षत्रियधर्मनिष्ठोऽपि । रणे

प्रागश्रितो धर्मशास्त्रं युद्धं नैवैच्छदर्जुनः ततः । कृष्णेन युद्धाय स्वबलेनैव योजितः ॥ २० ॥ सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज । अहं त्वां सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ॥ २१ ॥ इत्युक्तः स स्वकैः साकं निःशंको युयुधे रणे । लक्षशो जीवहिंसायां नाखिदद्धृदि किञ्चन ॥ २२ ॥ ब्रह्महत्यादिपापानि शेकुः स्प्रष्टुं च तं न वै । कृष्णाश्रयस्यैव बलं सर्वथा दधतं तदा ॥ २३ ॥ क्षत्रियोऽपि रणे हिंसामल्पामपि विधाय च । युधिष्ठिरो भृशं खेदं प्राप्तवानात्ममोहनम् ॥ २४ ॥ ऋषिभिः सह कृष्णेन बोधितोऽपि न तं जहौ । धर्मशास्त्रविदाऽथासौ भीष्मेणातीव बोधितः ॥ २५ ॥ ततः कथंचित्स जहौ शोकं हृदयशोषकम् । न त्वर्जुन इवोत्साहं प्राप्तवानिति दृश्यताम् ॥ २६ ॥ अतः कृष्णस्वरूपस्य बलं रक्ष्यं दृढं बुधैः । तेनैकान्तिकभक्तत्वं तेषां सिद्ध्यति नान्यथा ॥ २७ ॥ श्रीमद्भागवतस्यापि वर्त्तते ह्ययमाशयः । भक्ता एव च तं सम्यग्विदुर्नत्वपरे नराः ॥ २८ ॥

सङ्ग्रामे । अल्पामपि । हिंसाम् । विधाय कृत्वा । आत्ममोहनं स्वजीवमोहकम् । भृशम् । खेदम् । प्राप्तवान् ॥ २४ ॥ ऋषिभिरिति । असौ युधिष्ठिरः । ऋषिभिर्व्यासादिमुनिभिः । सह । कृष्णेन । बोधितः सन्नपि । तं खेदम् । न जहौ । तथाचोक्तं श्रीभागवते 'व्यासाद्यैरीश्वरेहाज्ञैः कृष्णेनाद्भुतकर्मणे'त्यादिना । अथानन्तरम् । धर्मशास्त्रविदा । भीष्मेण । अतीवात्यन्तम् । बोधितः ॥ २५ ॥ तत इति । ततस्तदनन्तरम् । स युधिष्ठिरः । हृदयशोषकम् । शोकम् । कथंचिन्महता कष्टेन । जहौ । अर्जुन इव । उत्साहम् । न तु नैव प्राप्तवान् । इतीत्थम् । दृश्यताम् ॥ २६ ॥ अत इति । अतो हेतोः । बुधैर्विवेकिभिर्हरिभक्तैः । कृष्णस्वरूपस्य । बलम् । दृढं यथातथा । रक्ष्यम् । तेन कृष्णस्वरूपदृढबलेन । तेषां हरिभक्तानाम् । एकान्तिकभक्तत्वम् । सिद्ध्यति । अन्यथा । न सिद्ध्यति ॥ २७ ॥ श्रीमदिति । श्रीमद्भागवतस्य पुराणस्यापि । अयमुक्तप्रकारः । आशयोऽभिप्रायः । वर्त्तते । तं तदाशयम् । भक्ताः साक्षाच्छ्रीकृष्णैकान्तिकोपासका एव । सम्यक् । विदुर्जानन्ति । अपरे । नराः ।

न तु नैव । विदुः ॥२८॥ नेति । एतावताऽनेन कृष्णस्वरूपवलप्रदर्शनेन । धर्मस्य । खण्डनं तु । नहि नैव शङ्कितव्यम् । यतोहेतोः । ज्ञानभक्त्योः । सिद्धिः । धर्मिष्ठस्य स्वधर्मस्थितिमत एव जायते ॥ २९ ॥ देशेति । देशकालादिवैषम्याद्धेतोः । क्वचित्कदाचित् । धर्मच्युतौ जातायां सत्यामपि । कृष्णमूर्त्तिवलात् । मोक्षवर्त्मनो मोक्षमार्गात् । पातः । नैव स्यात् । इतीत्युत्तरेणसम्बन्धः ॥ ३० ॥ इतीति । इत्येवंभूतेन । आशयेनाभिप्रायेण । कृष्णमूर्त्त्यनुरागतः श्रीहरिमूर्त्तौ गाढानुरागमालम्ब्य । धर्मस्य । न्यूनता । कृष्णभक्तप्रोत्साहनाय । प्रोच्यते । वै ॥ ३१ ॥ धर्मेति । अन्यथैवं नोच्यते चेत्तर्हि तु । धर्मच्युतौ सत्याम् । उत्साहवर्जितः । भक्तः । अहम् । अधोगतिं नरकमेव । यास्यामि । इतीत्थं जानन्सन् । भक्तौ । शिथिल्यम् । आप्नुयात् ॥३२॥ सर्वथेति । अतो हेतोः । मुमुक्षुणा भक्तेन । भगवति । प्रीतिरेव । सर्वथा । साध्या । तया प्रीत्या । च्युतस्य देशकालादिवैषम्यादकृतस्यापि । अस्य धर्मस्य । पूर्णम् । फलम् । भवेत् ॥ ३३ ॥ यस्येति । यस्य सत्सङ्गिनः । कृष्णस्य । स्वरूप-

नैतावता तु धर्मस्य शङ्कितव्यं हि खण्डनम् । ज्ञानभक्त्योर्यतः सिधिर्धर्मिष्ठस्यैव जायते ॥ २९ ॥ देशकाला-
दिवैषम्यात्कचिद्धर्मच्युतावपि । कृष्णमूर्त्तिबलान्नैव पातः स्यान्मोक्षवर्त्मनः ॥ ३० ॥ इत्याशयेन धर्मस्य
कृष्णमूर्त्यनुरागतः । न्यूनता प्रोच्यते कृष्णभक्तप्रोत्साहनाय वै ॥ ३१ ॥ धर्मच्युतावन्यथा तु भक्त उत्साहव-
र्जितः । यास्याम्यधो गतिमिति भक्तौ शैथिल्यमाप्नुयात् ॥ ३२ ॥ सर्वथाऽतो भगवति प्रीतिरेव मुमुक्षुणा ।
साध्या तया च्युतस्यापि पूर्णमस्य फलं भवेत् ॥ ३२ ॥ यस्य स्वरूपनिष्ठाया वलं कृष्णस्य वर्त्तते । स एव पक्वः
सत्सङ्गी गुणबुद्धिर्मतोऽपरः ॥३४॥ अस्मिन्कलियुगे घोरे स्थितिरेषाऽतिदुर्लभा । -तथापि सुलभैवास्ति ह्युद्धवाध्व-
जुषां नृणाम् ॥ ३५ ॥ सभास्वस्माकमीदृश्यो जायन्तेऽनुदिनं तु याः । वार्त्तास्तास्तु सुराणां च मुनीनामपि
दुर्लभाः ॥३६॥ अतिसूक्ष्मा अपि च ताः स्थूलबुद्धिजना अपि । सुखेनैवावगच्छन्ति कृष्णस्यैव प्रसादतः ॥३७॥

निष्ठायाः । वलम् । वर्त्तते । स सत्सङ्ग्येव । पक्वः पूर्णः । मतः । अपरः । गुणबुद्धिः । मतः । ॥ ३४ ॥ अस्मिन्निति । घोरेऽत्युग्रे । अस्मिन् । कलियुगे । एषा । स्थितिः साक्षाद्भगवत्स्वरूपस्य यथार्थाववोधपूर्वं तत्र सप्रीतिरचलानिष्ठेत्यर्थः । अतिदुर्लभा । तथापि । उद्धवाध्वजुषाम् । नृणां सत्सङ्गिजनानाम् । सुलभैव । अस्ति ॥३५॥ सभास्विति । अस्माकम् । सभासु । अनुदिनम् । ईदृश्य उक्तप्रकाराः । याः । वार्त्ताः । जायन्ते । तास्तु । सुराणां ब्रह्मेन्द्रादीनाम् । मुनीनां नारदसनकादीनां चापि । दुर्लभाः । सन्ति ॥३६॥ अतीति । अतिसूक्ष्मा अपि । ता वार्त्ताः । स्थूलबुद्धिजनाः स्थूलमतियुक्ताः सत्सङ्गिजना अपि । कृष्णस्य साक्षात्तया स्वनयनेक्षितस्य स्वेष्टदेवस्य श्रीहरेः । प्रसादतोऽनुग्रहादेव । सुखेन बुद्ध्यक्लेशेनैव । अवगच्छन्ति जानन्ति ॥ ३७ ॥

अत इति । अनो हेतोः । भवद्भिस्तु । आत्मनाम् । कृतार्थता कृतकृत्यता । महत् । पुण्यम् । महत् । भाग्यं च । बुध्यतामेव । इत्येवंविधम् । सुधया । सममृत-सन्निभम् । प्रभोः श्रीहरेः । वचः । निशम्य । ते । सन्तः । गृहिणश्च । मुदमत्यानन्दम् । प्रपेदिरे ॥ ३८ ॥ स्वेषां स्वस्य स्वरूपाववोधनिष्ठा दृढोदिता । येन श्रीहरिणा दयात्तां स मे भक्तिधर्मजः ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्सद्गुरुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरि-वाक्यसुधासिन्धुटीकायां शताधिकद्विचत्वारिंशस्तरङ्गः ॥ १४२ ॥ ९ ॥

सदैव दिव्याकारो हि श्रीहरिः सर्वकारणम् । ज्ञानवैराग्यभक्तीनां स्वरूपं स्पष्टतस्तथा ॥ १ ॥ भक्तेरधिकता तेषु त्रिषु दुर्लभता तथा एतत्सर्वं तु दशमे सम्प्रोक्तं विस्तरेण हि ॥ २ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८७८) नभःकृष्णतृतीयायां श्रावणमाससम्बन्धिनः कृष्णपक्षस्य तृतीयातिथौ । इदम् । हरेः । वचो-ऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरात् दुर्गपुरान्तर्वर्त्तुतमनृपदुर्गान्तःस्थस्वावासात्सकाशादित्यर्थः । लक्ष्मीवाटिकाम् । समुपेत्य । माणिक्या-

अतो भवद्भिस्तु कृतार्थताऽऽत्मनां पुण्यं च भाग्यं महदेव बुद्ध्यताम् । इति प्रभोस्ते सुधया समं वचो निशम्य सन्तश्च मुदं प्रपेदिरे ॥३८॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते शताधिकद्विचत्वारिंशस्तरङ्गः ॥ १४२ ॥ ९ ॥

शकाब्दे विक्रमार्कस्य गजाश्ववसुभूमिते । नभःकृष्णतृतीयायां वचोऽमृतमिदं हरेः ॥ १ ॥ तत्र दुर्गपुराल्लक्ष्मीवाटिकां समुपेत्य सः । आम्राधस्ताद्वेदिकायां न्यषीदद्वास्त्र आसने ॥२॥ सितवासा वृतो भक्तैस्त्यागिभिर्गृहिभिश्च सः । स्वाग्रो-पविष्टान् प्रोवाच सतो भक्तिं प्रपोषयन् ॥ ३ ॥ श्रीमद्भागवतं भूमौ सर्वोपर्यद्य वर्त्तते । साकारमेव यत्तत्र ब्रह्म व्यासेन वर्णितम् ॥ ४ ॥ तथाऽप्यभक्तो वक्ता तु तस्मादपि निराकृति । ब्रह्मास्तीत्येव जानाति नतु भक्तः कथञ्चन ॥ ५ ॥

श्रामधिरुह्यतिशेषः । आम्राधस्तात्रसालतरोरधोवर्त्तिन्याम् । वेदिकायाम् । वास्त्रे । आसने सद्भिस्तूर्णमेव चातुर्यतो वस्त्रैर्निर्मितेऽतिशोभनासने इत्यर्थः । स श्रीहरिः । न्यषीददुदगास्यः सन्नुपविवेश ॥ २ ॥ सितेति । सितवासाः परिहितसकलश्वेतवसनः । त्यागिभिः । गृहिभिश्च । भक्तैर्नानादेशागतैः स्वाश्रितजनैः । वृतः सभायां परिवेष्टितः । स श्रीहरिः । भक्तिम् । प्रपोषयन्सन् । स्वाग्रोपविष्टान् । सतः साधून् । प्रोवाच ॥ ३ ॥ श्रीमदिति । भूमावस्मिन् भारतभूभागे । अद्यास्मिन्काले । श्रीम-द्भागवतं पुराणम् । सर्वोपरि । वर्त्तते । तत्र श्रीमद्भागवतपुराणे । यत् । ब्रह्म श्रीकृष्णाख्यं परंब्रह्म । तत् । व्यासेन । साकारं मूर्त्तमेव । वर्णितम् । अस्ति ॥४॥ तथेति । तथापि । अभक्तः प्रछन्नबौद्धाद्यासुरसिद्धान्तनिष्ठत्वेन भगवदाकारनिषेधको भक्तभिन्नः । वक्ता तु । तस्माद्भगवतो नित्यसिद्धदिव्याकारप्रतिपादकाच्छ्रीमद्भा-गवतादपि । ब्रह्म श्रीकृष्णाख्यं परंब्रह्म । निराकृति अमूर्त्तम् । अस्ति । इतीत्थमेव । जानाति । भक्तः परमैकान्तिकभागवतलक्ष्मणाचार्यादिदैवसिद्धान्तनिष्ठत्वेन सदा-ऽमायिकनित्यसिद्धदिव्यकारप्रतिपादको भगवद्भक्तो वक्ता तु । कथंचन केनापि प्रकारेण । न जानाति । ब्रह्मनिराकृत्यस्तीत्येवं नैव वेत्तीत्यर्थः ॥ ५ ॥

भगवतः साकारत्वं पुनरप्यर्थापत्त्या प्रमाणयति । निराकारादिति । यथा । साकृतीनां कम्बुग्रीवाद्याकृतिमताम् । घटादीनां पदार्थानाम् । आकाशात् । सम्भव उत्पत्तिः । न भवेत् । तथा । निराकारात्परब्रह्मणः श्रीकृष्णात् । साकारब्रह्मादेर्विंध्यादिसाकारसृष्टेः । उद्भव उत्पत्तिः । न भवेत् ॥ ६ ॥ ईदृश इति । ईदृश एवं प्रमाणसिद्धः सदा दिव्याकृतिः । अध्यात्मादित्रयाधारः । भगवान् श्रीकृष्णः । तत्र श्रीभागवते । पुराणे । मुहुः । कीर्त्यते । यथा सोऽध्यात्मादित्रयधारोऽस्ति तथा तं श्रीकृष्णम् । अहम् । स्फुटं यथातथा । वर्णये ॥ ७ ॥ अध्यात्मानीति । विराट्पुंसो वैराजपुरुषस्य । इन्द्रियाणि अध्यात्मान्यध्यात्मसंज्ञानि । उदितानि । तदर्था वैराजपुरुषेन्द्रियविषयाः । अधिभूतान्यधिभूतसंज्ञाः । उदिताः । तत्सुरा वैराजपुरुषेन्द्रियदेवाः । अधिदैवान्यधिदैवसंज्ञाः । उदिताः ॥ ८ ॥ विराडिति । एतेष्वध्यात्मादिषु । त्रिषु । विराट्देहम् । प्रविष्टेषु सत्स्वपि । यर्हि । स वैराजपुरुषः । नोदतिष्ठत् । तदा । कृष्णः । पुरुषात्मना स्वसम्प्राप्तान्तर्यामिशक्तिमहापुरुषद्वारेण । प्राविशद्वैराजपुरुषे प्रविष्टवान् ॥ ९ ॥ उदतिष्ठदिति । तर्हि यदा श्रीकृष्णः पुरुषात्मना प्राविशत्तदैव । स वैराजपुरुषः । उदतिष्ठत् । स्वप्रवृत्तिक्षमोऽभूदित्यर्थः । तथाचोक्तं श्रीभागवते ।

निराकारान्न साकारब्रह्मादेरुद्भवो भवेत् । यथाऽऽकाशात्साकृतीनां घटादीनां न सम्भवः ॥ ६ ॥ ईदृशो भगवांस्तत्र पुराणे कीर्त्यते मुहुः । अध्यात्मादित्रयाधारस्तमहं वर्णये स्फुटम् ॥ ७ ॥ अध्यात्मानि विराट्पुंस इन्द्रियाण्युदितानि हि । तदर्था अधिभूतानि ह्यधिदैवानि तत्सुराः ॥ ८ ॥ विराट्देहं प्रविष्टेषु त्रिष्वेतेष्वपि यर्हि । सः नोदतिष्ठत्तदा कृष्णः प्राविशत्पुरुषात्मना ॥ ९ ॥ उदतिष्ठत्स तर्ह्येव सोऽन्तर्यामी तु पूरुषः । अध्यात्मादित्रयेऽप्यासीत्तदात्मकतया स्थितः ॥ १० ॥ एवं स्थितोऽपि भगवान् विश्वाधारतया ततः । स्वयं तु पृथगेवास्ति स्वस्वरूपेण सर्वदा ॥ ११ ॥ अग्निर्ज्वालास्वरूपेण यथा व्याप्यापि सर्वतः.। स्वयं तु मूर्त्तिमान् भिन्नस्तत आस्ते तथैव सः ॥ १२ ॥

'चित्तेन हृदयं चैत्त्यः क्षेत्रज्ञः प्राविशद्यदा । विराट् तदैव पुरुषः सलिलादुदतिष्ठते'ति । पुरुषो महापुरुषात्मकः । अन्तर्यामी । स श्रीकृष्णः । अध्यात्मादित्रये वैराजपुरुषस्याध्यात्मादित्रिकेऽपि । तदात्मकतया तेषामन्तर्यामितया । स्थितः । आसीत् । स्वयं वैराजपुरुषस्तदध्यात्मादित्रयं चान्तर्यामिश्रीकृष्णप्रेरितशक्त्यैव प्रवृत्तिक्षममभवदित्यर्थः ॥१०॥ एवमिति । एवममुना प्रकारेण । विश्वाधारतया विश्वविग्रहस्य वैराजपुंसोऽन्तर्यामितयाश्रयत्वेन स्थितः सन्नपि । भगवान् श्रीकृष्णः । स्वयं तु । स्वस्वरूपेणाक्षरधामावस्थितमनोहरस्वदिव्यमूर्त्या । सर्वदा ततो वैराजपुरपादेः । पृथक् । व्यतिरेकतयैव । अस्ति वर्त्तते । अत्रैकवैराजोक्तिरनन्तानां तेषामुपलक्षणभूता बोध्या ॥ ११ ॥ एवं भगवतो वैराजादिष्वन्तर्यामितयोक्तमन्वयत्वं मूर्त्तिमत्तया स्वधाम्न्यवस्थितत्वेन व्यतिरेकत्वं च श्रुत्युक्ताग्निदृष्टान्तेन साधयति । अग्निरिति । यथा । अग्निः । ज्वालास्वरूपेण ज्वालाधारतेजोरूपस्वशक्त्या । सर्वतः सर्वेष्वपि तदाधारकाष्ठेषु । व्याप्यापि व्याप्यावस्थितः सन्नपि । मूर्त्तिमान् । स्वयं तु । ततः सर्वशब्दोपात्तकाष्ठेभ्यः । भिन्नः स्वलोके व्यतिरेकभावेन पृथग्भूतः । आस्ते सर्वदा तिष्ठति । तथा तथैव । स श्रीकृष्णो भगवान् । आस्ते । तथा च श्रुतिः । 'अग्निर्यथैको भुवनं प्रविष्ट'इत्यादिः ॥१२॥

एवमिति । एवममुना प्रकारेण । सदा । दिव्यतनुम् । हरिम् । ज्ञात्वा । मुमुक्षुभिर्भक्तैः । तस्य हरेः । दृढतरः । आश्रयः । श्रेयसे स्वात्यन्तिककल्याणाय । ध्रुवं निश्चितमेव । कर्त्तव्यः ॥ १३ ॥ स्वयमिति । एवमुक्तप्रकारेण । स्वयं भगवद्वार्त्ताकारको भक्तः । विदधत्कृष्णाश्रयं कुर्वन्सन् । अन्यमनेवंविदं स्ववार्त्ताश्रावकं स्वेतरम् । कृष्णाश्रितम् । नरं भक्तम् । एवमेव । परमप्रीत्या । सादरम् । बोधयेत् ॥ १४ ॥ इतीति । इत्येवंविधाम् । वार्त्ताम् । विधाय । हरिः । पुनर्भूयः । अतो लक्ष्मीवाटयाः सकाशात् । पुरं दुर्गनगरम् । विष्टा प्रविष्य । उत्तमस्य । दुर्गे । गृहवेद्यां प्राग्द्वारभवनबाह्यवेदिकायाम् । उपाविशन्मश्चकोत्तमासने न्यषीदत् ॥ १५ ॥ सुखेति । अथानन्तरम् । मञ्चके पर्यङ्कासने । सुखासीनम् । सहस्रशः । भक्तैः । वृतं सभायां परिवेष्टितम् । तं श्रीहरिम् । अचिन्त्यानन्दसाधुः । विनयानतः सन् । पप्रच्छ । दिव्यतनुं हरिं ज्ञात्वा तदाश्रयो मुमुक्षुभिः स्वकल्याणाय कर्त्तव्य इति यत्पूर्वमुक्तं तत्र ज्ञात्वेत्यनेन ज्ञानं मुमुक्षुपदेन वैराग्यमाश्रयपदेन भक्तिश्चेति त्रयं भगवति प्रीतिहेतुत्वेनोक्तं तत्र भगवत्प्रीतिहेतुं मुख्यसाधनं बोद्धुमपृच्छदित्यर्थः ॥ १६ ॥ ज्ञानेति । हे प्रभो ! । ज्ञानवैराग्यभक्तीनां

एवं सदा दिव्यतनुं हरिं ज्ञात्वा मुमुक्षुभिः । तस्याश्रयो दृढतरः कर्त्तव्यः श्रेयसे ध्रुवम् ॥ १३ ॥ स्वयमेवं तु विदधदन्यं कृष्णाश्रितं नरम् । बोधयेत्परम प्रीत्या ह्येवमेव सादरम् ॥ १४ ॥ इति वार्त्तां विधायतो हरिर्विष्टा पुनः पुरम् । दुर्गे भूपस्योत्तमस्य गृहवेद्यामुपाविशत् ॥ १५ ॥ सुखासीनं मञ्चकेऽथ वृतं भक्तैः सहस्रशः । अचिन्त्यानन्दसाधुस्तं पप्रच्छ विनयानतः ॥ १६ ॥ ज्ञानवैराग्यभक्तीनां मध्ये किं साधनं परम् । कृष्णे त्वयि प्रीतिविधौ मतं तन्म वद प्रभो! ॥ १७ ॥ श्रीहरिरुवाच—ज्ञानादीनां त्रयाणां ते स्वरूपं स्पष्टमादितः । कथयामि यथाशास्त्रं साधनानां हरौ रतेः ॥ १८ ॥ ज्ञानं तु सांख्ययोगाभ्यां शास्त्राभ्यां स्याद्रमापतेः । तत्रादौ सांख्यजं ज्ञानं कथयामि समासतः ॥ १९ ॥ सर्वत्र व्यापकोऽपीशः खमिवास्त्यतिनिर्मलः । तत्तद्विकारास्पृष्टाङ्गः सर्वाधारश्च वर्त्तते ॥ २० ॥

मध्ये । कृष्णे । त्वयि । प्रीतिविधौ । साक्षाच्छ्रीकृष्णे त्वयि सर्वोत्तमस्नेहाचरणविषये इत्यर्थः । किं साधनम् । परमुत्कृष्टम् । मतम् । तत् । मे मह्यम् । वद ॥ १७ ॥ 'अचिन्त्यानन्दमुनिना श्रीकृष्णः पृष्ट इत्यसौ । जगादानन्दयंस्तं च स्वानन्यानिति धर्मजः' । ज्ञानेति । हे मुने ! । हरौ साक्षाच्छ्रीकृष्णे । रतेरतिशयितायाः प्रीतेः । साधनानाम् । ज्ञानादीनाम् । त्रयाणाम् । स्वरूपं लक्षणम् । यथाशास्त्रम् । स्पष्टं स्फुटं यथातथा । आदितः प्रथमतः । ते तुभ्यम् । कथयामि ॥ १८ ॥ ज्ञानमिति । रमापतेः श्रीहरेः । ज्ञानं तु । साङ्ख्ययोगाभ्याम् । शास्त्राभ्याम् । स्यादुत्पद्येत तत्र शास्त्रद्वयजज्ञानमध्ये । साङ्ख्यशास्त्रजातम् । ज्ञानम् । आदौ । समासतः संक्षेपात् । कथयामि ॥ १९ ॥ सर्वत्रेति । ईशः सर्वान्तर्यामी परमेश्वरः श्रीहरिः । सर्वत्र सर्वेषु चिदचिद्वस्तुषु । व्यापकोऽन्तर्यामिशक्त्याऽन्वितः सन्नपि । खं भूतचतुष्टये व्यापकतयाऽस्पृष्टतद्भावस्वरूपतयाऽऽधारतया चावस्थितमाकाशमिव । अतिनिर्मलोऽतीव निर्लेपः । अस्ति । तत्तद्विकारास्पृष्टाङ्गश्चिदचिद्भावासंस्पृष्टस्वरूपः । सर्वाधारश्च । वर्त्तते ॥ २० ॥

तथेति । तथा हि । कृष्णतापन्यां गोपालतापन्याम् । उपनिषदि । कथा । श्रुतास्ति । तामेवाह सार्द्धैः सप्तभिः । प्राक् । कृष्णः । व्रजौकसः । सुखयन्सन् । वृन्दावने । अवसत् ॥ २१ ॥ तदेति । तदा तस्मिन्काले । तत्र वृन्दावने । दुर्वासामुनिः । आयात् । श्रीकृष्णेन । अतिमानितोऽत्यन्तं सत्कृतः । स दुर्वासामुनिः । हे कृष्ण ! । त्वम् । भिक्षाम् । प्रेषयेः । इतीत्थम् । उक्त्वा । ततो वृन्दावनसकाशात् । गत आह्निकं कर्त्तुं यमुनापरतीरं यातः ॥ २२ ॥ यमुना इति । स दुर्वासाः । मुनिः । आह्निकम् । कृत्वा । नानाद्रुमसमाकुले । यमुनायाः । परतटे । भिक्षां श्रीकृष्णप्रेषितभिक्षान्नम् । प्रतीक्ष्य । न्यवसत् ॥ २३ ॥ कृष्ण इति । ततस्तदनन्तरम् । कृष्णः । गोपीः । प्राह । हे गोप्यः ! । मुनिर्दुर्वासाऋषिः । क्षुधाकुलः । अस्ति । अतो हेतोः । अन्नपात्राणि चतुर्विधान्नभृतभाजनानि । गृहीत्वा । सत्वरं शीघ्रम् । तं दुर्वाससं मुनिम् प्रापयत ॥ २४ ॥ गोप्य इति । हे कृष्ण ! । अन्तरे यत्र दुर्वासामुनिरवस्थितस्तन्मार्गमध्ये । दुस्तरा नावमृते तरीतुमशक्या । यमुना । सरित् । अस्ति । अतः । तत्र दुर्वाससः समीपे । कथम् । गच्छेम । इत्येवम् । गोप्यः । ऊचुः श्रीकृष्णं प्रति कथयामासुः । तदा । कृष्णः । ता गोपीः । प्रोवाच ॥ २५ ॥

तथाहि कृष्णतापन्यां कथोपनिषदि श्रुता । व्रजौकसः प्राक् सुखयन् कृष्णो वृन्दावनेऽवसत् ॥ २१ ॥ तदाऽऽयात्तत्र दुर्वासाः श्रीकृष्णेनातिमानितः । प्रेषयेः कृष्ण ! भिक्षां त्वमित्युक्त्वा स ततो गतः ॥ २२ ॥ यमुनायाः परतटे नानाद्रुमसमाकुले । भिक्षां प्रतीक्ष्य न्यवसत्स च कृत्वाऽऽह्निकं मुनिः ॥ २३ ॥ कृष्णः प्राह ततो गोपीर्मुनिरस्ति क्षुधाकुलः । गृहीत्वाऽतोऽन्नपात्राणि तं प्रापयत सत्वरम् ॥२४॥ गोप्य ऊचुः कथं तत्र गच्छेम सरिदन्तरे । यमुना दुस्तराऽस्तीति कृष्णः प्रोवाच तास्तदा ॥ २५ ॥ कृष्णः सदा ब्रह्मचारी भवेच्चेद्देहि वर्त्मनः । इति तां सरितं ब्रूत ततो दास्यति वर्त्म मा ॥२६॥ इत्युक्ताः प्रहसन्त्यस्ताः पात्राण्यन्नभृतानि तु । गृहीत्वा प्राप्य यमुनां तथोचुर्वर्त्म सा ददौ ॥२७॥ तदा ता विस्मयं प्रापुः परमं स्वस्वमानसे । उपेत्याथ मुनिं तेन तस्यातिथ्यमकुर्वत ॥२८॥ तस्मात्कृष्णो मायिकेषु पदार्थेष्वखिलेष्वपि । स्वौपम्येनासक्त इव दृश्यमानोऽपि नो तथा ॥ २९ ॥

कृष्ण इति । हे गोप्यः ! । चेद्यदि । कृष्णः । सदा । ब्रह्मचारी । भवेत् । तर्हि । नोऽस्मभ्यम् । वर्त्म मार्गम् । देहि । इतीत्थम् । तां यमुनाख्याम् । सरितं नदीम् । ब्रूत । ततस्तदनन्तरम् । सा यमुना सरित् । वर्त्म । दास्यति ॥ २६ ॥ इतीति । इत्यमुना प्रकारेण । उक्ताः श्रीकृष्णेन कथिताः । ता गोप्यः । प्रहसन्त्यः सन्त्यः । अन्नभृतानि । पात्राणि । गृहीत्वा । यमुनाम् । प्राप्य । तथा श्रीकृष्णोक्तप्रकारेण । ऊचुः । सा यमुना । वर्त्म । ददौ ॥ २७ ॥ तदेति । तदा तस्मिन्काले । ता गोप्यः । स्वस्वमानसे । परमम् । विस्मयमाश्चर्यम् । प्रापुः । अथानन्तरम् । तेन वर्त्मना । मुनिं दुर्वाससम् । उपेत्य प्राप्य । तस्य मुनेः । आतिथ्यमन्नादिप्रदानरूपमतिथिसत्कारम् । अकुर्वत । तथा च गोपलतापन्याम् । 'एकदा हि व्रजस्त्रियः सकामा'इत्यादिनोक्ताख्यायिका ॥ २८ ॥ तस्मादिति । तस्माद्धेतोः । कृष्णः । मायिकेषु । अखिलेषु । पदार्थेष्वपि । स्वौपम्येनात्मौपम्येन । आसक्त इव । दृश्यमानः सन्नपि । तथा आसक्तः । नो नैवास्ति ॥ २९ ॥

गोपीमिरिति । यद्यतः । से श्रीकृष्णः । शारदरात्रिषु । गोपीभिः सह । रममाणः सन्नपि । ब्रह्मचार्येव । निर्णीतः कृष्णोऽतिब्रह्मचारीत्युक्ता मार्गं सा वो दास्यतीति श्रुत्या निश्चितः । ततो हेतोः । सदा सर्वकालम् । असङ्गी सर्वसङ्गवर्जितः । अत एव । शुचिः शुद्धः । अस्ति ॥३०॥ कुर्वन्निति । प्रभुः स श्रीकृष्णः । सर्वाः । क्रियाः । कुर्वन्नपि । अकर्तैव । अस्ति । तथा चोक्तं श्रीभागवते । 'अजस्य जन्मोत्पथनाशनाय कर्माण्यकर्तुर्ग्रहणाय पुंसा'मित्यादिना । इत्यमुना प्रकारेण । साङ्ख्यमतेन । भगवतः । ज्ञानम् । मया । उक्तम् ॥ ३१ ॥ योगेनेति । योगेन योगशास्त्रेण । अतिशुद्धनराकृतेः । साक्षात्कृष्णस्य । प्रत्यङ्गमेकैकाङ्गस्येत्यर्थः चिन्तनात् ध्यानात् । आकारवेदनं साक्षात्त्वयैकैकावयवबोधपूर्वा सकलमूर्त्तिस्फूर्त्तिः । सम्यग्यथार्थतया । ज्ञेयम् ॥ ३२ ॥ तत्रेति । तत्र योगशास्त्रे । हरेः । ध्यानदार्ढ्याय । ईदृक् दृक्स्थैर्यरूपम् । साधनम् । उक्तमस्ति । हि । अतः । कृष्णध्यानेच्छुना भक्तेन । आदितः । दृक्स्थैर्यम् । सम्यक् । साध्यम् ॥ ३३ ॥ प्रतिमायामिति । प्रतिमायां साक्षाच्छ्रीहरेरर्चास्वरूपे । अथवा । शुभवस्तुनि भगवत्सम्बन्धिनि कस्मिंश्चिद्वस्त्रपात्रमालिकादि पदार्थे । दृष्टिः । स्थिरा । कार्या । बहुकालं बहुकालपर्यन्तम् । निर्निमेषवीक्षणा-

गोपीभीररममाणोऽपि यस्स शारदरात्रिषु । ब्रह्मचार्येव निर्णीतस्ततोऽसङ्गी शुचीः सदा ॥३०॥ कुर्वन्नपि क्रियाः सर्वा अकर्तैवास्ति स प्रभुः । इति सांख्यमतेनोक्तं ज्ञानं भगवतो मया ॥३१॥ योगेन साक्षात्कृष्णस्य सम्यगाकारवेदनम् । प्रत्यङ्गं चिन्तनाज्ज्ञेयमतिशुद्धनराकृतेः ॥ ३२ ॥ तत्र हीदृग्घरेर्ध्यानदार्ढ्यायोक्तं तु साधनम् । कृष्णध्यानेच्छुना सम्यग्दृक्स्थैर्यं साध्यमादितः ॥ ३३ ॥ प्रतिमायां स्थिरा कार्या दृष्टिर्वा शुभवस्तुनि । बहुकालं निर्निमेषवीक्षणाद् दृक् स्थिरा भवेत् ॥३४॥ दृक्स्थैर्ये तु भवेदन्तःकरणस्थिरता ध्रुवम् । तदा तु भगवद्ध्यानमनायासेन सिद्ध्यति ॥ ३५ ॥ अन्यथा तु भवेद्ध्यातुर्नानासङ्कल्पसम्भवः । ततो न सिद्ध्यति ध्यानमत एष क्रमो मतः ॥ ३६ ॥ एतज्ज्ञानं योगशास्त्रात्प्राप्यते हि मुमुक्षुणा । इति ज्ञानं मया प्रोक्तं वैराग्यं कथयाम्यथ ॥ ३७ ॥ स्वभाव एष जीवानां यत्प्रीती रम्यवस्तुनि । रमणीयार्थलाभे स्यादरम्ये सहजारुचिः ॥ ३८ ॥

त्प्रतिमादर्शनान्मेषवर्जिततया दर्शनात् । दृक् दृष्टिः । स्थिरा । भवेत् ॥ ३४ ॥ दृगिति । दृक्स्थैर्ये उक्तरीत्या दृष्टिस्थैर्ये कृते सति तु । अन्तःकरणस्थिरता । ध्रुवं निश्चितमेव । भवेत् । तदाऽन्तःकरणस्थैर्ये जाते सति तु । भगवद्ध्यानम् । अनायासेनाश्रमेण सिध्यति ॥ ३५ ॥ अन्यथेति । अन्यथाऽन्तःकरणस्थिरत्वाभावे तु । ध्यातुर्भगवद्ध्यानकर्तुर्भक्तस्य । नानासङ्कल्पसम्भवः । भवेत् । ततो हेतोः । ध्यानम् । न सिध्यति । अतो हेतोः । एष उक्तविधः । क्रमोऽनुक्रमः । मतः ॥ ३६ ॥ एतदिति । एतज्ज्ञानमुक्तविधभगवत्स्वरूपध्यानज्ञानम् । योगशास्त्रात् । मुमुक्षुणा । भक्तेन । प्राप्यते । हि । इत्यमुना प्रकारेण । ज्ञानं साङ्ख्ययोगशास्त्राभ्यां भगवत्स्वरूपवेदनम् । मया प्रोक्तम् । अथानन्तरम् । वैराग्यं वैराग्यलक्षणम् । कथयामि ॥३७॥ स्वभाव इति । रम्यवस्तुनि । सहजा स्वाभाविकी । प्रीतिः । स्यात् । रमणीयार्थलाभे रम्यपदार्थप्राप्तौ । अरम्ये अरमणीयवस्तुनि । सहजा । अरुचिरप्रीतिः । स्यात् । यतः यत । एषः । जीवानाम् । स्वभावः साहजिकी प्रकृतिः । अस्ति ॥३८॥

मायेति । ब्रह्माण्डे । मायामयपदार्थोत्थम् । यत् । सुखम् । वर्त्तते । तत्सुखम् । दुःखमिश्रं दुरन्तदुःखयुक्तम् । अस्ति । तदपि दुष्प्रापमत्यायासप्राप्यम् । तदपि । अल्पकं तुच्छम् । तदपि । चलमस्थिरं चास्ति ॥ ३९ ॥ अमायिकमिति । भागवतं भगवन्मूर्त्तिसम्बन्धि । सुखम् । अमायिकमुक्तविधमायिकसुखभाववर्जितम् । महन्निरवधिकातिशयम् । अनश्वरं कालाविनाशि । अस्ति । तत्सुखं तु । पुनः पुनः । भगवद्वार्त्ताश्रवणादेः सकाशात् । स्याज्जायेत ॥ ४० ॥ प्राप्तस्येति । तद्रसास्वादं भागवतसुखरसास्वादम् । प्राप्तस्य । पुंसो भक्तस्य । अन्यत्र तदितरस्मिन् मायिकसुखे । अरुचिः । भवेत् । अत्र दृष्टान्तमाह । यथा । रौप्यमुद्राम् । प्राप्तस्य जनस्य । ताम्रमुद्रारुचिस्ताम्रढब्बुकेऽप्रीतिः । स्यात् । तथाऽरुचिर्भवेदिति सम्बन्धः ॥ ४१ ॥ एवमिति । एवममुना प्रकारेण । कृष्णसुखासक्त्या । या । ग्राम्यविषयारुचिर्मायिकविषयभोगेष्वप्रीतिः । सैव । जीवानां भक्तजनानाम् । मोक्षसाधनं भगवति प्रीतिद्वाराऽऽत्यन्तिककल्याणोपायरूपम् । वैराग्यम् । इतीत्थम् । उक्तम् ॥ ४२ ॥ भक्तिरिति । भक्तिस्तु । कृष्णस्य । सम्यक् । माहात्म्यम् । बुध्वा । तस्य कृष्णस्य । या । प्रीत्या । सेवा नवधा सेवनम् । सैव । मता । सा भक्तिः । सर्वेषामपि

मायामयपदार्थोत्थं ब्रह्माण्डे वर्त्तते सुखम् । दुःखमिश्रं तदप्यस्ति दुष्प्रापं चाल्पकं चलम् ॥ ३९ ॥ अमायिकं भागवतं सुखं महदनश्वरम् । तत्तु स्याद्भगवद्वार्त्ताश्रवणादेः पुनः पुनः ॥ ४० ॥ प्राप्तस्य तद्रसास्वादं पुंसोऽन्यत्रारुचिर्भवेत् । प्राप्तस्य रौप्यमुद्रां स्यात्ताम्रमुद्रारुचिर्यथा ॥ ४१ ॥ एवं कृष्णसुखासक्त्या या ग्राम्यविषयारुचिः । सैव वैराग्यमित्युक्तं जीवानां मोक्षसाधनम् ॥ ४२ ॥ भक्तिस्तु सम्यग्माहात्म्यं बुद्ध्वा कृष्णस्य तस्य या । प्रीत्या सेवा सैव मता सर्वेषां सुलभा न सा ॥४३॥ पुराऽब्धेर्मन्थने लक्ष्मीरुत्पन्ना तत ईश्वरी देवदैत्यनरान्सर्वान्सदोषानेव सैक्षत ॥ ४४ ॥ निर्दोषं सद्गुणगणं हरिमेकमवेत्य सा । वृत्वा प्रीत्या तमेवेशमभजत् सुस्थिरान्तरा ॥ ४५ ॥ एवमत्रापि बुद्ध्वाऽऽदौ हरेर्माहात्म्यमञ्जसा । तत्सेवा क्रियते प्रीत्या या सा भक्तिर्मता मया ॥ ४६ ॥

भक्तानाम् । सुलभा सुगमा । नास्ति ॥ ४३ ॥ एवंविधभक्तिस्वरूपं दृष्टान्तेन विशदयति त्रिभिः । पुरेति । पुरा पूर्वम् । अब्धेः क्षीरवारिधेः । मन्थने देवासुरकृते विलोडने । लक्ष्मीर्महापुरुषलक्षणा रमा । उत्पन्ना । अभूत् । ततस्तदनन्तरम् । ईश्वरी समर्था । सा लक्ष्मीः । सर्वान् । देवदैत्यनरान् । सदापानेकैकगुणयुक्तत्वेप्येकैकदोपसहितानेव । ऐक्षत ॥ ४४ ॥ निर्दोषमिति । सा लक्ष्मीः । एकम् । हरिमेव । निर्दोषं दोषगन्धवर्जितम् । सद्गुणमव्यभिचारिकारुण्य सौशील्यादिसद्गुणगणयुतम् । अवेत्य ज्ञात्वा । वृत्वा परिणीय । सुस्थिरान्तरा सती । ईशं परमेश्वरम् । तं श्रीहरिमेव । प्रीत्या । अभजत् । तथाचोक्तं श्रीभागवते । 'विलोकयन्ती निरवद्यमात्मनः पदं ध्रुवं चाव्यभिचारिसद्गुण'मित्यादिश्लोकपञ्चकेन ॥४५॥ एवमिति । एवममुना प्रकारेण । अत्र सत्सङ्गेऽपि । आदौ । हरेः । माहात्म्यम् । अञ्जसा तत्त्वतः । बुध्वा । या । तत्सेवा श्रीहरेर्नवधा सेवनम् । प्रीत्या । क्रियते । सा । मया । भक्तिः । मता ॥ ४६ ॥

एतानीति । हे मुने ! । एतानि ज्ञानादीनि । त्रीण्यपि । भगवत्प्रीतिसिद्धये । साधनानि । भवन्ति । तत्र तेषु ज्ञानादिषु त्रिष्वपि साधनेषु मध्ये । भक्तिः । अधिका साधनोत्तमैव । मता ॥ ४७ ॥ सेति । अत्र सत्सङ्गे । यस्य पुंसः । सा भक्तिः । भवेत् । स पुमान् । भक्त इति । कीर्त्यते । स भक्तः । दुर्लभः । अस्ति । अतः । विशेषं विशेषतायुक्तम् । तल्लक्ष्म तथाविधभक्तलक्षणमपि । ते तुभ्यम् । ब्रुवे कथयामि ॥ ४८ ॥ स्वेति । भूमौ । स्वेच्छया । चरतो विचरतः । त्राकृतेः । राधिकापतेः श्रीकृष्णस्य । लौकिकानि । दिव्यानि दिव्यभावयुक्तानि च । चरित्राणि । भवन्ति । हि ॥ ४९ ॥ तत्र दिव्यानि चरित्राण्याह मार्द्धन । चतुरिति । स्वेच्छयैव । चतुर्भुजादिरूपाणाम् । आदिशब्दादष्टभुजसहस्रभुजग्रहणम् । प्रदर्शनम् । वसुदेवादिभ्य इतिशेषः । गोवर्द्धनस्य गिरेः । उद्धरणं गोपगोप्यादिपरित्राणार्थमुन्नीयैकपाणीना धृतिः । कालियस्य नागस्य प्रमर्द्दनं पादप्रहारेणतच्छिरःकुट्टनपूर्वकं यमुनाह्रदान्निर्यापणम् ॥ ५० ॥ अनेकेति । अनेकरूपाविष्कारो ब्रह्माक्रूरयोर्मोहापगमाय व्रजकलिन्दजातीये नानास्वस्वरूपाविष्करणम् । प्रवलासुरमारणं तृणावर्त्तासुरवत्सासुराघासुरादिप्रवलदितिजत्यापादनम् । इत्यादी-

एतानि त्रीण्यपि मुने ! भगवत्प्रीतिसिद्धये । साधनानि भवन्त्येव भक्तिस्तत्राधिका मता ॥ ४७ ॥ सा यस्यात्र भवेत्पुंसः स भक्त इति कीर्त्यते । दुर्लभः सोऽस्ति तल्लक्ष्म विशेषमपि ते ब्रुवे ॥४८॥ स्वेच्छया त्राकृतेर्भूमौ चरतो राधिकापतेः । लौकिकानि च दिव्यानि चरित्राणि भवन्ति हि ॥ ४९ ॥ चतुर्भुजादिरूपाणां स्वेच्छयैव प्रदर्शनम् । गोवर्द्धनस्योद्धरणं कालियस्य प्रमर्द्दनम् ॥५०॥ अनेकरूपाविष्कारः प्रवलासुरमारणम् । इत्यादीनि चरित्राणि दिव्यान्युक्तानि तस्य तु ॥ ५१ ॥ वालवत्क्रीडनं भीत्या यवनादेः पलायनम् । त्यागः स्वराजधान्याश्च द्वीपवासादि लौकिकम् ॥५२॥ दिव्येषु तत्राभक्तानामप्याश्चर्यं भवेन्नृणाम् । लौकिकेषु च मानुष्यनिश्चयो मूढचेतसाम् ॥ ५३ ॥ भक्तस्य तु चरित्रेषु लौकिकेष्वपि सर्वदा । दिव्येष्विव भवेच्चित्रं न तु मानुष्यधीः क्वचित् ॥ ५४ ॥ जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः । त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुन ! ॥ ५५ ॥

न्येवमादीनि । तस्य श्रीकृष्णस्य । चरित्राणि । दिव्यानि । उक्तानि ॥ ५१ ॥ वालेति । वालवत् । क्रीडनं नीलायन सेतुवन्धन मर्कटोत्प्लवनादिभिःखेलनम् । यवनादेः । भीत्या । पलायनम् । स्वराजधान्या मथुरायाः । त्यागो द्वारिकानिवसनपूर्वं त्यजनम् । द्वीपवासादि अन्तरीपस्थद्वारिकानियतनिवासादि चरित्रम् । लौकिकम् । उक्तम् । दिव्येष्विति । तत्र तेषु तस्य दिव्यलौकिकचरित्रेषु मध्ये । दिव्येषु चरित्रेषु । अभक्तानाम् । नृणामपि । आश्चर्यं विस्मयः । भवेत् । लौकिकेषु चरित्रेषु । उक्तम् । मूढचेतसामभक्तानां नृणाम् । मानुष्यनिश्चयो मनुजभावेन निर्णयः । भवेत् ॥ ५३ ॥ भक्तस्येति । भक्तस्य तु । दिव्येषु चरित्रेष्विव । लौकिकेष्वपि चरित्रेषु । सर्वदा । चित्रमाश्चर्यम् । भवेत् । क्वचित्कदाचिदपि । मानुष्यधीर्मनुष्यत्वबुद्धिः । न तु नैव भवेत् ॥ ५४ ॥ जन्मेति । हे अर्जुन ! । यो भक्तः । मे मम । जन्म । कर्म सकलमपि चरित्रम् । तत्त्वतो याथार्थ्यत एव । एवं पूर्वोक्तप्रकारेण । दिव्यम् । वेत्ति । स भक्तः । देहम् । त्यक्त्वा । पुनः । जन्म । नैति न प्राप्नोति । किन्तु ।

मामेव । एति ॥ ५५ ॥ अस्येति । अस्य । श्रीभगवद्गीताश्लोकस्यापि । अयं मदुक्त एव । आशयोऽभिप्रायः । अस्ति । एतदुक्तं स्वप्राप्तितयाऽत्र श्लोके कथितम् । फलमपि । ईदृशभक्तिभाक् उक्तविधभगवद्भक्तियुक्तो भक्तः प्राप्नोति ॥ ५६ ॥ शुभैरिति । अनेकजन्मोत्थैरनन्तजन्मोपार्जितैः । शुभैः । संस्कारैः । नृणां भक्तानाम् । गोपीनामिव । कृष्णे । ईदृशी । निर्दोषा । भक्तिः । भवेत् । खलु । एतदभिप्रायेणोक्तं श्रीभागवते । 'दानव्रततपोहोमजपस्वाध्यायसंयमैः । श्रेयोभिर्विविधैश्चान्यैः कृष्णे भक्तिर्हि साध्यते'इति ॥ ५७ ॥ यस्येति । हे मुने ! । इह सत्सङ्गे । यस्य । पुंसो भक्तस्य । ईदृशी । भक्तिः । अस्ति । स भक्तः । पूर्णकामः सम्पूर्णमनोरथः । कृतकृत्यः कृतार्थः । उक्तः । इत्येवंविधाम् । सुधोपमेयाममृतसमानाम् । हरेः । वाचम् । श्रुत्वा । सः । मुनिरचिन्त्यानन्दसाधुः । मुदम् । आप । तथा । अन्ये तदितरे साधवः । गृहस्थाश्च । मुदमापुः ॥ ५८ ॥ दिव्याकारे सदा स्वस्मिन साधनानि सदा रतेः । ज्ञानवैराग्यभक्तीनां प्रोवाच लक्ष्मतः स्फुटम् ॥ १ ॥ भक्तेरधिकतां तेषु यश्च स श्रीहरिः प्रभुः । मह्यं स्वस्मिन्नतिं दद्यादययैव ससाधनाम् ॥ २ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्री-

अस्य श्रीभगवद्गीताश्लोकस्याप्ययमाशयः । एतदुक्तं फलमपि प्राप्नोतीदृशभक्तिभाक् ॥ ५६ ॥ शुभैरनेकजन्मोत्थैः संस्कारैरीदृशी नृणाम् । गोपीनामिव निर्दोषा भक्तिः कृष्णे भवेत् खलु ॥ ५७ ॥ यस्येदृशी भक्तिरिहास्ति पुंसः स पूर्णकामः कृतकृत्य उक्तः । श्रुत्वेति वाचं स सुधोपमेयां हरेर्मुनिश्चाप मुदं तथाऽन्ये ॥ ५८ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते शताधिकत्रिचत्वारिंशस्तरङ्गः ॥ १४३ ॥ १० ॥

शकाब्दे विक्रमार्कस्य गजाश्ववसुभूमिते । नभसः कृष्णपञ्चम्यां वचोऽमृतमिदं हरेः ॥ १ ॥ तत्र दुर्गपुरे दुर्गे उत्तमक्षितिपस्य सः । वेद्यां निम्बतरोर्मूले न्यषीदन्मञ्चकोत्तमे ॥ २ ॥ त्यागिभिर्गृहिभिर्भक्तैरनेकैः परितो वृतः । सिताम्बरधरः साधूनुवाच स्वयमेव सः ॥ ३ ॥ सेतिहासपुराणानि धर्मशास्त्राणि सर्वशः । इह शृण्वन्ति बहवः पुरुषा हि मनीषिणः ॥ ४ ॥

हरिकृष्णभगवत्पदनुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां शताधिकत्रिचत्वारिंशस्तरङ्गः ॥ १४३ ॥ १० ॥

समानास्वपि भक्तानामभक्तानां क्रियासु च । एकादशे महान् भेदः प्रोक्तो दृष्टान्तदर्शनात् ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८७८) नभसः श्रावणमासस्य । कृष्णपञ्चम्यां कृष्णपक्षस्य पञ्चमीतिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥१॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमक्षितिपस्य । दुर्गे । निम्बतरोः । मूले मूलप्रदेशवर्त्तिन्याम् । वेद्याम् । मञ्चकोत्तमे उत्तमे मञ्चासने । स श्रीहरिः । न्यषीदत् ॥ २ ॥ त्यागिभिरिति । अनेकैर्नानादेशागतत्वाद्बहुभिः । त्यागिभिः । गृहिभिः । भक्तैः । परितः समंततः । वृतः सभायां वेष्टितः । सिताम्बरधरः परिधृतसकलश्वेतवसनः । स श्रीहरिः । स्वयमेव । साधून् । उवाच ॥ ३ ॥ सेतिहासेति । इह लोके । मनीषिणो बुद्धिमन्तः । बहवः । पुरुषाः । सेतिहासपुराणानि इतिहासशब्दवाच्यमहाभारतेन ब्राह्मादिपुराणैश्च सहितानि । सर्वशः सर्वाणि । धर्मशास्त्राणि याज्ञवल्क्यादिमुनिप्रणीता धर्मसंहिताः । शृण्वन्ति । धातुमात्रस्यान्तर्भावितण्यर्थत्वाच्छ्रावयन्तीत्यपि ॥ ४ ॥

श्रुत्वेति । ते पुरुषाः । श्रुत्वेतिहासादीन्याकर्ण्य । तेषामितिहासादिनाम् । विषयम् । त्रिवर्गम् । अवयन्ति । भारतादीनि धर्मार्थकामान्प्रतिपादयन्तीति जानन्तीत्यर्थः । ततस्तदनन्तरम् । तदर्थं धर्मादित्रिवर्गसम्पादनार्थमित्यर्थः । व्रतयज्ञादिकाः । क्रियाश्च । कुर्वन्ति ॥ ५ ॥ गुणेति । गुणात्मिकाभिः सत्त्वादिगुणप्रधानाभिः । ताभिर्व्रतयज्ञादिक्रियाभिः । जातानीतिशेषः । तत्फलानि धर्मार्थकामरूपाणि स्वर्गादिसुखानि चापि । त्रिलोक्यां भूरादि स्वर्गान्ते लोकत्रये । अथवा । ब्रह्मलोके । राजा गच्छन्तीतिवदयं महरादीनामुपलक्षकः । स्वस्वकर्मानुसारतः । भुञ्जते । तथाचोक्तं श्रीभागवते । 'त्रिलोक्यां गतयः सर्वाः कर्मणां त्रिगुणात्मनाम् । योगस्य तपसश्चैव न्यासस्य गतयोऽमलाः । महर्जनतपःसत्यं भक्तियोगस्य मद्गति'रिति ॥ ६ ॥ तदिति । तदन्ते क्रियाफलभोगावसाने । संसृतिम् । यान्ति । क्वचित्कदाचिदपि । निर्भयताम् । न तु नैव यान्ति । कृष्णाश्रयं साक्षाच्छ्रीहरिशरणम् । विनाऽन्तरा । कुत्रचिद् ब्रह्माण्डान्तर्वर्तिषु केषुचिदपि लोकेषु । कस्यापि जनस्य । मुक्तिरात्यन्तिककल्याणम् । नास्ति । तथाचोक्तं भगवद्गीतायाम् । 'आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन ! । मामुपेत्य तु कौन्तेय !

श्रुत्वा तेषां च विषयं त्रिवर्गमवयन्ति ते । ततस्तदर्थं कुर्वन्ति व्रतयज्ञादिकाः क्रियाः ॥ ५ ॥<br>
गुणात्मिकाभिस्ताभिश्च तत्फलान्यपि भुञ्जते । त्रिलोक्यां ब्रह्मलोके वा स्वस्वकर्मानुसारतः ॥ ६ ॥<br>
तदन्ते संसृतिं यान्ति न तु निर्भयतां क्वचित् । विना कृष्णाश्रयं नास्ति मुक्तिः कस्यापि कुत्रचित्<br>
॥ ७ ॥ मुक्ताः संसृतिबन्धाद्ये पूर्वं तेऽप्याश्रयाद्धरेः । अत एव सुरैरुक्तं मुचुकुन्दं नृपं प्रति ॥ ८ ॥<br>
वरं वृणीष्व भद्रं ते ऋते कैवल्यमद्य नः । एक एवेश्वरस्तस्य भगवान्विष्णुरव्ययः ॥ ९ ॥ एता<br>
एव क्रिया यर्हि शुभाः सर्वा गुणात्मिकाः । क्रियेरन्भगवत्प्रीत्यै ता एव स्युस्तदाऽगुणाः ॥ १० ॥<br>
भक्तिरूपा हि ता भूत्वा मोक्षमेव फलन्ति च । एतदुक्तं भागवते सदृष्टान्तं सुरर्षिणा ॥ ११ ॥

पुनर्जन्म न विद्यत इति ॥ ७ ॥ मुक्ता इति । पूर्वम् । ये जनाः । संसृतिबन्धात् । मुक्ताः । ते जना अपि । हरेः । आश्रयात् । मुक्ताः । अतो हेतोरेव । सुरैर्देवैः । मुचुकुन्दम् । नृपं प्रति । उक्तम् ॥ ८ ॥ श्रीभागवते मुचुकुन्दं प्रति देवोक्तं श्लोकं स्वयमेवाह । वरमिति । हे राजन् ! । कैवल्यं मोक्षम् । ऋते विना । नोऽस्मभ्यम् । अद्य साम्प्रतम् । वरम् । वृणीष्व । ते तव । भद्रं शुभम् । अस्तु । तस्य कैवल्यस्य । ईश्वरः स्वैश्वर्येण प्रदाता । भगवानन्तैश्वर्यः । अव्ययो भक्तेभ्य ऐश्वर्यं ददद‍पि तदपक्षयवर्जितः । विष्णुः सर्वान्तर्यामी श्रीहरिः । एक एवास्ति ॥ ९ ॥ एता इति । हे साधव ! । यर्हि । शुभाः । गुणात्मिकाः । एता व्रतयज्ञादिरूपा एव । सर्वा । क्रियाः । भगवत्प्रीत्यै साक्षात्स्वेष्टदेवश्रीहरिप्रसन्नतार्थम् । क्रियेरन् । तदा । ताः क्रिया एव । अगुणा निर्गुणाः । स्युः ॥ १० ॥ भक्तीति । ता निर्गुणतां प्राप्ताः क्रियाः । भक्तिरूपाः । भूत्वा । मोक्षमेव । फलन्ति । आत्यन्तिकमोक्षाय भवन्तीत्यर्थः । एतत् । भागवते । सुरर्षिणा नारदेन । सदृष्टान्तम् । उक्तं

व्यासं प्रति कथितम् ॥ ११ ॥ आमय इति । हे सुव्रत ! । यश्च । येनातिशयितघृतादिवस्तुना । भूतानां जनानाम् । यः । आमयो विषूच्यादिर्गदः । जायते । तदेव । द्रव्यं घृतादि । तमामयं विषूच्यादिरोगम् । न पुनाति । येन रोगो जातस्तदेव रोगनिवृत्त्यै आशितं सत् रोगं वर्द्धयतीत्यर्थः । चिकित्सितं ताम्रभस्माद्यौषध-सहितं तदेव घृतादिद्रव्यम् । तमामयम् । पुनाति । निशेषतो निवर्त्तयतीत्यर्थः ॥१२॥ एवमिति । एवं तथा । नृणां जनानाम् । सर्वे । क्रियायोगाः । परे परमेश्वरे । कल्पिता भक्त्यात्मकतया निष्पादिताः सन्तः । आत्मविनाशाय । आत्मनोऽनाद्यज्ञाननिवृत्तिपूर्वं ब्रह्मात्मना भगवत्परिचर्यादिरूपमोक्षनिष्पत्तये इत्यर्थः । कल्पन्ते योग्या भवन्ति ॥ १३ ॥ एतदिति । ततोहेतोः । विदुषः शास्त्राभिज्ञान् । सतः साक्षाद्भगवदेकान्तिकसाधून् । सेवित्वा । एतदेव । बोध्यम् । येनैवं बोधनेन । अति-दुर्लभतरनृत्वाप्तिः । सार्थका सफला । भवेत् । अस्यायं भावः । त्रिवर्गस्य पुरुषार्थत्वं चतुर्थपुरुषार्थसम्बन्धेनैवास्तीतिसच्छास्त्राभिश्रित्य त्रिवर्गबोधिका व्रतयज्ञादिकास्ताः क्रिया यथा भगवत्पराः स्युस्तमुपायं साधुभ्यो बुध्वा तथा तासामाचरणेनान्ते मोक्षसत्त्वान्मानुष्यं फलवद्भवेदिति ॥ १४ ॥ नन्वस्तु साधृक्तरीत्या क्रियाचरणेन भग-

आमयो येन भूतानां जायते यश्च सुव्रत ! । तदेव ह्यामयं द्रव्यं न पुनाति चिकित्सितम् ॥ १२ ॥
एवं नृणां क्रियायोगाः सर्वे संसृतिहेतवः । त एवात्मविनाशाय कल्पन्ते कल्पिताः परे ॥ १३ ॥
एतदेव ततो बोध्यं सेवित्वा विदुषः सतः । ये नातिदुर्लभतरनृत्वाप्तिः सार्थका भवेत् ॥ १४ ॥
भक्तानां चाप्यभक्तानां लौकिक्यः सकलाः क्रियाः । समाना इव दृश्यन्तेऽथापि भेदः फले महान् ॥ १५ ॥
अभक्तानां क्रियाः सर्वाः सन्ति स्वेन्द्रियतुष्टये । कृष्णार्थमेव भक्तानामिति भेदः फले मतः ॥ १६ ॥
अतो नैष्कर्म्यरूपासु हरिसेविनाम् । न लौकिकक्रियाबुद्धिः कर्तव्याऽत्र मनीषिभिः ॥ १७ ॥

द्भक्तानां मोक्षाप्त्या जन्मसाफल्यं किन्तु भक्ताभक्तयोस्तदाचरणे साम्यात्कथं तासां मोक्षामोक्षहेतुत्वावबोध इतिचेत्फलभेदेन स स्यादित्याह द्वाभ्याम् । भक्तानामिति । भक्तानाम् । अभक्तानां चापि । लौकिक्यो लोकव्यवहारहेतुकाः । सकलाः । क्रियाः । समानास्तुल्या इव । दृश्यन्ते । अथापि । फले । महान् । भेदः । अस्ति ॥१५॥ भेदमाह । अभक्तानामिति । अभक्तानाम् । सर्वाः । क्रियाः । स्वेन्द्रियतुष्टये स्वकीयेन्द्रियप्रीणनाय । सन्ति । भक्तानाम् । सर्वाः । क्रियाः । कृष्णार्थं स्वेष्टदेव-श्रीहरिप्रीणनार्थमेव । सन्ति । इतीत्थम् । फले । भेदः । मतः ॥ १६ ॥ अत इति । अतो हेतोः । अत्र सत्सङ्गे । नैष्कर्म्यरूपासु निर्गतं कर्मत्वं बन्धहेतुत्वं येभ्य-स्तानि निष्कर्माणि तेषां भावो नैष्कर्म्यं कर्मभिरेव कर्ममोचकत्वमित्यर्थः । तद्रूपं स्वरूपं यासां तासु । हरिसेविनां साक्षाद्भगवदुपासकानाम् । क्रियासु । लौकिक-क्रियाबुद्धिः । मनीषिभिर्मतिमद्भिर्भगवद्भक्तैः । न कर्त्तव्या । यथा ज्ञानं कर्मबन्धनिवृत्तिं कुरुते तथा भक्तियोगानुरूपाणि कर्माण्यपि भगवद्भक्तानां कर्मबन्धनिवर्त्तकानि भवन्त्यतो भगवद्भक्तक्रिया न लौकिकक्रिया तुल्या इत्यर्थः ॥ १७ ॥

अत्रार्थे भगवद्वचनं प्रमाणयति । कर्मणीति । हे अर्जुन ! । यो भक्तः । कर्मणि भगवद्भक्तानां भगवद्भक्त्यनुरोधिनीषु क्रियास्वित्यर्थः । अकर्म बन्धननिवर्त्तकत्वम् । पश्येत् । यश्च भक्तः । अकर्मणि संन्याशवतो मम किं कर्मभिरित्येवं मूढतयाऽवगत्य श्रीभागवतादिसच्छास्त्रेण स्वस्मै कर्त्तव्यतयाऽभिहितानामपि भगवद्भक्तिलक्षणानां कर्मणां परित्यागरूपासु तत्क्रियास्वित्यर्थः । कर्म । पश्येत् । अभक्तोऽयं स्वोचितमपि भक्तिलक्षणं कर्म नाचरत्यतो नरके पतितेत्यनेन भक्तियोगाख्यं कर्म कार्यमिति कर्म-पश्येदित्यर्थः । स भक्तः । मनुष्येषु । बुद्धिमान् । स भक्तः । युक्तो मोक्षार्हः । कृत्स्नकर्मद्भगवद्भक्तिरूपशास्त्रीयसकलकर्म कर्त्ता । भवति ॥ १९ ॥ अस्येति । अस्य । श्रीभगवद्गीताश्लोकस्यापि । अयं मदुक्त एव । आशयोऽभिप्रायोऽस्ति । अन्येऽस्यार्थं यथारुचि कुर्वन्ति ते तं तथाकुर्वन्तु मन्मतस्त्वस्यायमेवार्थो भवतीत्यर्थः । अतोहेतोः । हरेः । भक्ताः । ग्राम्यलोकविलक्षणा अभक्तेभ्योऽत्यन्तं भिन्नाः । ज्ञेयाः ॥ १९ ॥ कृष्णेति । कृष्णाज्ञयैव । लौकिकम् । व्यवहारम् । कुर्वन्तः । भक्ताः स्वधर्मसहितां भगवतो नवधा भक्तिं कुर्वन्तः । गृहिणोऽपि । नराः । कल्याणकारिणः । ज्ञेयाः ॥ २० ॥ एवमिति । एवं सत्यपि । अभक्ताः ।

कर्मण्यकर्म यः पश्येदकर्मणि च कर्म यः । स बुद्धिमान्मनुष्येषु स युक्तः कृत्स्नकर्मकृत् ॥ १८ ॥ अस्य
श्रीभगवद्गीताश्लोकस्याप्ययमाशयः । अतो ज्ञेया हरेर्भक्ता ग्राम्यलोकविलक्षणाः ॥ १९ ॥ कृष्णाज्ञयैव कुर्वन्तो
व्यवहारं तु लौकिकम् । गृहिणोऽपि नरा भक्ता ज्ञेयाः कल्याणकारिणः ॥ २० ॥ एवं सत्यपि ये तेषु
स्वदृष्टान्तेन कुर्वते । दोषबुद्धिमभक्तास्ते ज्ञातव्या निरयंगमाः ॥ २१ ॥ अधर्मः सान्वयस्तेषु निःशङ्को
वसति ध्रुवम् । अतो वन्द्याः कृष्णभक्ता यादृशास्तादृशा अपि ॥ २२ ॥ पीत्वेति तद्वाक्यसुधां सदःस्थाः
संतोषमापुः सकला हि सन्तः । अन्ये गृहस्थाश्च तदाश्रिता ये सर्वे व्रजन्तं प्रणमन्ति तं स्म ॥ २३ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते शताधिकचतुश्चत्वारिंशतस्तरङ्गः ॥ १४४ ॥ ११ ॥

ये नराः । स्वदृष्टान्तेन । तेषु भगवद्भक्तेषु । दोषबुद्धिम् । कुर्वते । ते । अभक्ताः । निरयंगमा नरकं यातारः । ज्ञातव्याः ॥ २१ ॥ अधर्म इति । तेषु भगवद्भक्तेषु दोषबुद्धिं कुर्वत्स्वभक्तजनेषु । सान्वयः स्वपरिवारसहितः । अधर्मः । निःशङ्कः सन् । ध्रुवं निश्चितमेव । वसति । अतो हेतोः । कृष्णभक्ताः । यादृशा-स्तादृशाः जात्यादिना यथा तथाविधा अपि । वन्द्याः सर्वथा नमस्कार्या भवन्ति ॥२२॥ पीत्वेति । इत्येवंविधाम् । तद्वाक्यसुधां सुधासमानं श्रीहरिवचनमित्यर्थः । पीत्वा । सदःस्थाः । तदाश्रिताः । सकलाः । सन्तः । ये । अन्ये । गृहस्थास्ते चापि । सन्तोषम् । आपुः । सर्वे साधवो गृहिणश्च । व्रजन्तं स्वावासं गच्छन्तम् । तं श्रीहरिम् । प्रणमन्तिस्म ॥ २३ ॥ क्रियासु स्वस्य भक्तानामभक्तानां समास्वपि । प्रोक्तो येन महान् भेदो हरौ तस्मिन्मनोऽस्तु मे ॥ १ ॥ इति श्रीमदेकान्तिकधर्म-प्रवर्त्तकश्रीहर्यकान्तिकोपासकश्रीहरिकृष्णभगवत्स्नुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां शताधिकचतुश्चत्वारिंशस्तरङ्गः ॥ १४४ ॥ ११ ॥

अजानतो नीतिशास्त्रं जानतस्तन्नृपस्य च । मूर्खस्य विदुषः सम्यग्दृष्टान्तस्य प्रदर्शनात् ॥ १ ॥ भेदप्रदर्शनेनैव जीवस्याज्ञस्य वै विदः । ज्ञानमुक्तं नीतिशास्त्रलक्षणं द्वादशे तथा ॥ २ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८७८) नभोमासे श्रावणमासे । कृष्णषष्ठ्यां कृष्णपक्षस्य षष्ठीतिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमस्य । महीभृतो नृपस्य । दुर्गे । वासुदेवालयस्य । अग्रे । श्रीवासुदेवमन्दिरान्तिकवर्त्तिप्रत्यङ्मुखोत्तमनृपभवनस्य बाह्यायां वेदिकायामित्यर्थः । चक्रके कौशेयचक्रकासने । स श्रीहरिः । उपाविशत् ॥ २ ॥ भक्तैरिति । सद्भिः । गृहस्थैश्च । भक्तैर्नानादेशागतैः स्वभक्तजनैः । परीतः सभायां परिवेष्टितः । धवलांशुकः परिधृतसकलश्वेतवसनः । स्वयं श्रीहरिः । साधुमुख्यान् । सकलान् प्रति । उवाच ॥ ३ ॥ शृण्वन्त्विति । हे भक्ताः ! । सर्वे भवन्तः सकला अपि । शृण्वन्तु । किं तदित्यत्राह । मया । एका । वार्त्ता । क्रियते । यस्यां वार्त्तायाम् । नृणां भक्तानाम् । श्रेयसः । एकम् । प्रबलम् ।

शकाब्दे विक्रमार्कस्य गजाश्ववसुभूमिते । कृष्णषष्ठ्यां नभोमासे वचोऽमृतमिदं हरेः ॥ १ ॥
तत्र दुर्गपुरे दुर्गे उत्तमस्य महीभृतः । वासुदेवालयस्याग्रे चक्रके स उपाविशत् ॥ २ ॥
भक्तैः सद्भिर्गृहस्थैश्च परीतो धवलांशुकः । उवाच सकलान्भक्तान्साधुमुख्यान् प्रति स्वयम् ॥ ३ ॥
शृण्वन्तु भक्ताः सर्वेऽपि वार्त्तैका क्रियते मया । अस्त्येकं साधनं यस्यां प्रबलं श्रेयसो नृणाम् ॥ ४ ॥
देहे जीवः प्रकृतयो लोभक्रोधादिका अपि । भिन्ना मय्येव जटिता इति जानाति सर्वथा ॥ ५ ॥
तद्योगान्मन्यते स्वं च लुब्धं क्रुधं च कामिनम् । ततस्तत्परतन्त्रः सन्नतिदैन्येन वर्त्तते ॥ ६ ॥
वस्तुतो न हि जीवस्य सन्ति प्रकृतयो हि ताः । चिद्रूप एव जीवोऽस्ति मृषैवमभिमन्यते ॥ ७ ॥
अतो मुमुक्षुणां पुंसा त्ववलम्ब्यं हि पौरुषम् । यथेन्द्रियाणि प्राणाश्च सन्त्यन्तःकरणानि च ॥ ८ ॥

साधनम् । अस्ति ॥ ४ ॥ देह इति । देहे स्वशरीरे वर्त्तमानः । जीवः । भिन्ना वस्तुतः स्वतः पृथग्भूताः । अपि । लोभक्रोधादिकाः । प्रकृतयः स्वभावाः । मयि जटिताऽऽत्मस्वरूपे निचिता एव । सन्ति । इतीत्थम् । सर्वथा । जानाति ॥ ५ ॥ तदिति । तद्योगादात्मगतत्वेन स्वविदितप्रकृतिसम्बन्धात् । स्वम् । लुब्धम् । क्रुद्धम् । कामिनं च । मन्यते । ततस्तदनन्तरम् । तत्परतन्त्रो लोभादिप्रकृत्यधीनः सन् । अतिदैन्येन । वर्त्तते ॥ ६ ॥ वस्तुत इति । ताः । प्रकृतयो लोभादयः । वस्तुतः परमार्थतः । जीवस्य जीवसम्बन्धिन्यः । न सन्ति । हि । हि यतः । जीवस्तु चिद्रूपो ज्ञातृस्वरूप एव । अस्ति । एवम् । अभिमन्यते स्वं लोभादिप्रकृतिकं मनुते-इत्यर्थः । यत्तत् । मृषैवाभिमन्यते ॥ ७ ॥ अत इति । अतोहेतोः । मुमुक्षुणा । पुंसा भक्तेन तु । पौरुषं पुरुषकारः । अवलम्ब्यमाश्रयणीयम् । पौरुषावलम्बनप्रकार-माह । यदा । देहे । इन्द्रियाणि । प्राणाः । अन्तःकरणानि च । सन्ति ॥ ८ ॥

देह इति । तथैव । देहे । अहं जीवात्मा । अस्मि । किन्तु एभ्य इन्द्रियादिभ्यस्तु । अधिकोऽधिकबलवान् । अस्मि । यद्यतोहेतोः । अहम् । एषामिन्द्रियादीनाम् । प्रकाशकश्चेतयिता । नियन्ता नियामकश्च । ध्रुवं निश्चितमेव । भवामि । इतिसार्द्धश्लोकस्यैकसम्बन्धः । यद्यप्यत्रोपक्रमे लोभादिप्रकृत्युपादानं कृतमत्र त्विन्द्रियादिभ्यः स्वस्य पृथक्त्वोक्ता तथापि लोभादिप्रकृतीनामिन्द्रियाद्याधारत्वेनेन्द्रियादिग्रहणेन पूर्वोक्तास्ताः प्रकृतयोऽपि ग्राह्याः ॥ ९ ॥ एवमिति । एवममुना प्रकारेणैव । अभिमन्तव्यम् । स्वहीनताऽहमिन्द्रियाद्यग्रे न किञ्चिदस्मीति स्वन्यूनता । न तु नैव । ज्ञेया । किञ्च । सा स्वहीनता । एषामिन्द्रियादीनां प्रबलत्वं च । यत् । तदेतद्द्वयं तु । स्वाज्ञानतः स्वस्वरूपानवबोधतः । अस्ति । अस्यायं भावः । जीवस्येन्द्रियादिचेतयितृत्वादिस्वस्वरूपाज्ञानेनोक्तरीत्या हीनताऽस्ति स्वस्वरूपज्ञाने सति तु स्वयमेवेन्द्रियादिवशीकृत्यातिबलवन्तं स्वात्मानं जानातीति ॥ १० ॥ एनमर्थं ज्ञाननृपदृष्टान्तेनाह षोडशभिः । यथेति । यथा । कस्मिंश्चित् । नगरे । कश्चित् । मूढोऽज्ञः । नृपः । भवेत् । तद्गृहनरास्तद्भवनवासिनः सम्बन्ध्यसम्बन्ध्यादिका अन्तःप्रकृतयःपुरुषा अपि । तद्वाक्यं प्रभुतयोक्तं तथाविधनृपतिवचनम् । नैव मन्वते । हि ॥ ११ ॥ एतदिति ।

देहे तथैवाहमस्मि किन्त्वेभ्यस्त्वधिकोऽस्मि यत् । प्रकाशको नियन्ता च भवाम्येषामहं ध्रुवम् ॥ ९ ॥ एवमेवाभिमन्तव्यं न तु ज्ञेया स्वहीनता । स चैषां प्रबलत्वं यत्तत्तु स्वाज्ञानतोऽस्ति हि ॥ १० ॥ यथा मूढो नृपः कश्चित्कस्मिंश्चिन्नगरे भवेत् । तद्वाक्यं तद्गृहनरा अपि नैव हि मन्वते ॥ ११ ॥ एतज्ज्ञात्वा तदाज्ञां च तत्पौरा नैव मन्वते । ततश्च तद्देशनरा अपि तां नैव मन्वते ॥ १२ ॥ ततश्चानियतस्थाना अतिधूर्त्तजना अपि । तत्पुरेऽराजके स्थित्वा स्वाज्ञायां वर्त्तयन्ति नॄन् ॥ १३ ॥ तथैव देहनगरे मूर्खो नृपोऽस्त्यतः । न मन्यन्ते तदाज्ञां तद्गृह्यास्तु मनआदयः ॥ १४ ॥ पौरा देश्याश्चेन्द्रियाणि तत्स्वाश्चापि न मन्वते । यदा तदाज्ञां तर्ह्येष भूरिदैन्यभाक् ॥ १५ ॥

एतदित्थंभूतं तद्वृत्तान्तम् । ज्ञात्वा । तत्पौरास्तस्य पुरवासिनो जनाः । तदाज्ञां प्रभुत्वेनोक्तं तन्निदेशम् । नैव मन्वते । तत एवंविधतद्वृत्तान्तज्ञानानन्तरम् । तद्देशनरास्तदीयजनपदवासिलोका अपि । तां तदाज्ञाम् । नैव मन्वते । तदा । एषोऽज्ञनृपः । अतिदैन्यभाक् । जायते । इति वक्ष्यमाणसिद्धान्तानुसारात् ज्ञेयम् ॥ १२ ॥ तत इति । ततस्तदनन्तरम् । अनियतस्थाना नियततत्तैकदेशपुरग्रामभवनस्थितिवर्जिताः । अतिधूर्त्तजना आयुक्तकादयो लोका अपि । अराजकेऽराजकसदृशे । तत्पुरे उक्तविधनृपनगरे । स्थित्वा । नॄंस्तत्पुरवासिनो लोकान् । इदं तस्य तद्गृहवासिजनानामुपलक्षणम् । स्वाज्ञायाम् । वर्त्तयन्ति ॥ १३ ॥ तथेति । तथैव । देहनगरे । जीवो जीवाख्यः । मूर्खः । नृपः । अस्ति । अतोहेतोः । तद्गृह्या जीवनृपतिगृहनिवासिनः । मनआदयो मनःप्रभृतीनि चत्वार्यन्तःकरणानि । तदाज्ञां जीवनृपनिदेशम् । न मन्यन्ते ॥ १४ ॥ पौरा इति । पौरा जीवनृपस्य देहाख्यपुरनिवासिनो जनाः । इन्द्रियाणि । देश्या जीवनृपतेर्देशवासिलोकस्थानीयाः । तत्स्वास्तस्य सम्बन्धिनः कलत्रसुतदुहितृादयो जनाश्चापि । यदा । तदाज्ञां जीवनृपनिदेशम् । न मन्वते । तर्हि । एष जीवनृपतिः । भूरिदैन्यभाक् । जायते ॥ १५ ॥

कामेति । तर्हि । जनवञ्चनकोविदाः । भक्तैः श्रीहरेकान्तिकभक्तिमद्भिः । सद्भिः साधुभिः । निष्कासिताः स्वस्वसङ्गिनामन्तःकरणेन्द्रियादिभ्यो विवासिताः । सर्वदिक्षु । भ्रमन्तोऽनियतनिकेतत्वादितस्ततःसञ्चलन्तः । कामक्रोधादयः ॥१६॥ ब्रह्माण्ड इति । ब्रह्माण्डे । तदसङ्गिषु हर्येकान्तिकसाधुसङ्गरहितेषु जनेषु । तद्भयात्स्वकपटाभिज्ञसाधुतत्सङ्गि-भीतित एव । वसन्तो निवासं कुर्वन्तः । तत्तुल्यानज्ञनृपतिसदृशजीवान् । गवेषमाणा वञ्चनार्थमन्वेषयन्तः सन्तः । तत्पुरेऽज्ञनृपतिसमानजीवदेहनगरे । निवसन्ति । हि इति द्वयोरेकसम्बन्धः ॥ १७ ॥ स्वेति । ततस्तदनन्तरम् । ते कामादयः । भूपमज्ञनृपसदृशं जीवनृपम् । अखिलान् । तदीयांस्तद्गृह्यपौरदेशीयस्थानीयान्तःकरणेन्द्रिय दैहिकजनांश्चापि । यावद्यावत्कालपर्यन्तम् । भूपस्याज्ञभूपस्थानीयाज्ञजीवस्य । मूढताऽज्ञत्वम् । भवेत् । तावत् । अतिहर्षेण । स्वाज्ञायाम् । वर्त्तयन्ति ॥ १८ ॥ असाविति । असौ । राजादृष्टान्तत्वेन पूर्वोक्तो मूढो नृपतिः । यदा । स्वहितकृद्गुरोःसकाशात् । नीतिशास्त्रम् । अधिगच्छति बुद्ध्यते । तर्ह्येव । तत्त्वतो यथार्थतः । सर्वम् । जानाति ॥ १९ ॥ यज्जानाति । तदाह । नियन्त्रिति । स्वस्य । नियन्तृधर्मतां नियामकधर्मभावम् । परेषां स्वगृहादिजनानाम् । नियम्यतां च । सम्यक् । विदित्वा

कामक्रोधादयस्तर्हि जनवञ्चनकोविदाः । सद्भिर्निष्कासिता भक्तैर्भ्रमन्तः सर्वदिक्षु च ॥१६॥ ब्रह्माण्डे तद्भयादेव वसन्तस्तदसङ्गिषु । गवेषमाणास्तत्तुल्यांस्तत्पुरे निवसन्ति हि ॥ १७ ॥ स्वाज्ञायां ते ततो भूपं तदीयांश्चाखिलानपि । वर्त्तयन्त्यतिहर्षेण यावद्भूपस्य मूढता ॥ १८ ॥ असौ राजा यदा नीतिशास्त्रं स्वहितकृद्गुरोः । अधिगच्छति तर्ह्येव सर्वं जानाति तत्त्वतः ॥ १९ ॥ नियन्तृ-धर्मतां स्वस्य परेषां च नियम्यताम् । सम्यग्विदित्वा स्वाज्ञायां सर्वान्वर्त्तयति स्वयम् ॥ २० ॥ तदा धूर्त्ताः पलायन्ते प्रजाः सर्वाश्च तद्भयात् । तदाज्ञायामप्रमत्ता वर्त्तन्ते सर्वथा सदा ॥ २१ ॥ तदा स्वतन्त्रो भूपश्च प्राप्नोति सुखमीप्सितम् । कीर्त्तिं च महतीं लोके देहान्ते चोत्तमां गतिम् ॥ २२ ॥ एवं कायपुरे जीवोऽप्यधिगच्छति सद्गुरोः । नीतिशास्त्रं यदा तर्हि वेत्ति सर्वं यथातथम् ॥ २३ ॥ स्वाज्ञायां मनआदींश्च तदा वर्त्तयति स्वयम् । स्वतन्त्रश्च सुखी नित्यं जायते भुवि सद्यशाः ॥ २४ ॥

। स्वयं नृपः । स्वाज्ञायाम् । सर्वान् । वर्त्तयति ॥ २० ॥ तदेति । तदोक्तरीत्या राजनीतिज्ञत्वे सति । धूर्त्ताः स्वपुरवासिन आयुक्तजनाः । पलायन्ते । सर्वाः । प्रजाश्च । अप्रमत्ताः सत्यः । तद्भयान्नयविदो नृपतिभीतेः । तदाज्ञायां तथाविधनृपतिनिदेशे । सर्वथा । सदा सर्वकालम् । वर्त्तन्ते ॥ २१ ॥ तदेति । तदा । स्वतन्त्रो-ऽपावृतः । भूपः । ईप्सितं स्वेन प्राप्तुं वाञ्छितम् । सुखम् । प्राप्नोति । लोके महतीम् । कीर्त्तिं च । प्राप्नोति । देहान्ते । उत्तमाम् । गतिं स्वधर्मपालनफलमुत्त-मलोकं च । प्राप्नोति ॥ २२ ॥ एवमिति । एवममुना प्रकारेण । कायपुरे देहनगरे । स्थितः । जीवोऽपि । यदा । सद्गुरोः स्वहितकारकस्य भगवतस्तदीयै-कान्तिकसाधोर्वा । नीतिशास्त्रम् । अधिगच्छति । तर्हि । सर्वम् । यथार्थतः । वेत्ति ॥ २३ ॥ स्वेति । तदा । स्वयं जीवः । स्वाज्ञायाम् । मनआदीन् । वर्त्तयति । स्वतन्त्रः । नित्यं सर्वकालम् । सुखी । भुवि । सद्यशाः सत्कीर्त्तिश्च । जायते ॥ २४ ॥

जात इति । तस्मिन् । जीवे । प्रबुद्धे नीतिशास्त्रज्ञानवति । जाते सति । कामक्रोधाद्यात्मिकाः । दुष्टाः । अखिलाः । प्रकृतयः । मूलत आमूलादेव । तु निर्गच्छन्ति पलायन्ते ॥ २५ ॥ अत इति । अतो हेतोः । भगवद्भक्तेन । पौरुषम् । आलम्ब्य । नीतिशास्त्रानुसारतः । स्वयम् । वृत्यम् । मनआद्याः । सत्पथे एकान्तिकधर्मरूपे सन्मार्गे । वर्त्तनीयाश्च ॥ २६ ॥ मुक्तानन्द इति । तदैवंविधश्रीहरिवाक्यश्रवणावसरे । मुक्तानन्दो मुनिः । अपृच्छत् श्रीहरिं वक्ष्यमाणप्रश्नमप्राक्षीत् । हे हरे ! । जीवेन त्वद्भक्तजनेन । अधिगम्यं बोध्यम् । यत् । नीतिशास्त्रम् । त्वया । उच्यते । तन्नीतिशास्त्रम् । त्वम् । मे मह्यम् । वक्तुम् । अर्हसि ॥ २७ ॥ 'पृष्टः स मुक्तानन्देन मुनिनेत्थं महाप्रभुः । अब्रवीन्नन्दयंस्तं च तदन्यान्स्वाश्रिता'निति । यथेति । हे मुने ! । यथादेशं देसानुसारेणेत्यर्थः । यथाकालं कालानुसारेणेत्यर्थः । यथावस्थं कैशोरादिस्वावस्थानुसारेणेत्यर्थः । यथाबलं स्वशारीरसामर्थ्यानुसारेणेत्यर्थः । स्वीयधर्मस्य स्वाश्रमोचिताचारस्य । आचरणं पालनम् । परधर्मात् । निवर्त्तनं च ॥ २८ ॥ समनस्कानीति । समनस्कानि मनसा सहितानि । इन्द्रियाणि । ग्राम्यार्थेभ्यो मायिकविषयेभ्यः । सर्वथा । आकृष्य तेषु दोषदृष्टिविधान-

जाते तस्मिन्प्रबुद्धे तु दुष्टाः प्रकृतयोऽखिलाः कामक्रोधाद्यात्मिकाश्च निर्गच्छन्त्येव मूलतः ॥ २५ ॥ अतः पौरुषमालम्ब्य नीतिशास्त्रानुसारतः । स्वयं वृत्यं वर्त्तनीया मनआद्याश्च सत्पथे ॥ २६ ॥ मुक्तानन्दस्तदाऽपृच्छन्नीतिशास्त्रं यदुच्यते त्वया जीवेनाधिगम्यं तन्मे वक्तुं त्वमर्हसि ॥२७॥ श्रीहरिरुवाच–यथादेशं यथाकालं यथावस्थं यथाबलम् । स्वीयधर्मस्याचरणं परधर्मान्निवर्त्तनम् ॥ २८ ॥ समनस्कानीन्द्रियाणि ग्राम्यार्थेभ्यस्तु सर्वथा । आकृष्यार्थेषु कार्ष्णेषु तेषां योजनमञ्जसा ॥ २९ ॥ स्वश्च देहत्रयाद्भिन्नस्तन्नियन्ता प्रकाशकः । आत्माऽस्तीत्येव निश्चित्य तेन कृष्णस्य सेवनम् ॥ ३० ॥ सद्गुरोरिति सम्प्राप्य नीतिशास्त्रं । सुखात्मकं तथैव सर्वदा वृत्यं तेनाभीष्टं हि सिद्ध्यति ॥ ३१ ॥ अन्यथा त्विन्द्रियैरेव स्वनियम्यैरपि स्वयम् । आक्रान्तो दैन्यमापद्य स्यादतिक्लेशभाङ्नरः ॥ ३२ ॥

पूर्वं ततः प्रत्याहृत्येत्यर्थः । कार्ष्णेषु श्रीहरिसम्बन्धिषु । अर्थेषु विषयेषु तेषां स्वसमनस्केन्द्रियाणाम् । अञ्जसा कृष्णमाहात्म्यज्ञानपूर्वकतद्गुणबुद्धियुक्तत्वेन तत्त्वत इत्यर्थः । योजनं प्रेरणम् ॥ २९ ॥ स्व इति । स्वः स्वकीयः । आत्मा जीवः । देहत्रयात् स्थूलादिदेहत्रितयात् । भिन्नः । स्वरूपतः पृथग्भूतः । तन्नियन्ता देहत्रयनियामकः । प्रकाशकस्तच्चेतयिता च । अस्ति । इतीत्थमेव । निश्चित्य । तेन तथाभूतेन स्वात्मना । कृष्णस्य श्रीहरेः । सेवनं नवधा भजनम् कार्यम् ॥३०॥ सद्गुरोरिति । इति यथेत्यादिश्लोकत्रयोक्तविधम् । सुखात्मकं सुखस्वरूपम् । नीतिशास्त्रम् । सद्गुरोः । सम्प्राप्य । सर्वदा । तथैव तदुक्तप्रकारेणैव । वृत्यम् । तेन तथावर्त्तनेन । अभीष्टं स्ववाञ्छितैकान्तिकत्वम् । सिद्ध्यति । हि ॥ ३१ ॥ अन्यथेति । अन्यथोक्तरीत्या संवर्त्तनाभावे तु । स्वनियम्यैरपि । इन्द्रियैरेव । आक्रान्तः पराभूतः । स्वयम् । नरो भक्तः । दैन्यं रङ्कत्वम् । आपद्य सम्प्राप्य । अतिक्लेशभाक् । स्याज्जायेत ॥ ३२ ॥

तस्मादिति । तस्माद्धेतोः । दुस्तरक्लेशसागरम् । तरितुं । तरिरूपं नौ तुल्यम् । एकम् । पौरुषमेव । भवति । अन्यत्पौरुषातिरिक्तम् । किञ्चन किमपि साधनम् । नास्ति । इति निश्चित्येत्युत्तरेणसम्बन्धः ॥ ३३ ॥ इतीति । इतीत्थम् । निश्चित्य । उत्तमां श्रेष्ठाम् । पदवीं भगवदेकान्तिकतापथम् । इच्छता भक्तेन । कार्ष्णान् श्रीहर्येकान्तिकभक्तान् । सन्नरान्साधुपुरुषान् । आश्रित्य । तदुक्तवर्त्मना तथाविधमाधुसम्प्रोक्तमार्गेण । धैर्येण धीरतायुक्तेन सता । वृत्यम् ॥ ३४ ॥ श्रुत्वेति । इत्येवंविधाम् । जगद्गुरोः । तस्य श्रीहरेः । अमृतवाचं पीयूषसमानवचनम् । श्रुत्वा । स मुक्तानन्दमुनिः । तस्याम् । महासंसदि । निषण्णाः । अपरे । सन्तश्चापि । ये । सर्वे । गृहिणः । ते चापि । महान्तम् । तोषम् । आपुः ॥ ३५ ॥ प्रबलं पौरुषं त्वेकं स्वीयानां साधनं परम् । निःश्रेयसार्थं येनोक्तं स हरिस्तद्ददातु मे ॥ १ ॥ इति श्रीमदेकान्तिकोपासकश्रीहरिकृष्णभगवत्स्नुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां शताधिकपञ्चचत्वारिंशस्तरङ्गः ॥१४५॥१२॥

हरेः सदा दिव्यमूर्त्तेर्धाम्नि तेजोमयेऽक्षरे । स माहात्म्यं ज्ञानमुक्तं सर्वोत्कृष्टं त्रयोदशे ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८७८) नभोमासान्ति-

तस्मात्पौरुषमेवैकं दुस्तरक्लेशसागरम् । तरीतुं तु तरीरूपं भवत्यन्यन्न किञ्चन ॥ ३३ ॥ इति निश्चित्य धैर्येण कार्ष्णानाश्रित्य सन्नरान् । तदुक्तवर्त्मना वृत्यं पदवीमिच्छतोत्तमाम् ॥ ३४ ॥ श्रुत्वेति तस्यामृतवाचमापुर्जगद्गुरोः सोऽप्यपरे च सन्तः । तोषं महान्तं गृहिणश्च सर्वे तस्यां महासंसदि ये निषण्णाः ॥ ३५ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते शताधिकपञ्चचत्वारिंशतस्तरङ्गः ॥ १४५ ॥ १२ ॥

शकाब्दे विक्रमार्कस्य गजाश्ववसुभूमिते । नभोमासान्तिमदिने वचोऽमृतमिदं हरेः ॥ १ ॥ तत्र दुर्गपुरे दुर्ग उत्तमस्यावनीपतेः । कृष्णधाम्नो वहिर्वेद्यां न्यषीदच्चक्रके प्रभुः ॥ २ ॥ भक्तमण्डलमध्यस्थः सितसूक्ष्माखिलांशुकः । उवाचानन्दयन्स्वीयान् गुरुत्वात्स्वयमेव सः ॥३॥ हे सन्तो ! येऽत्र युस्मासु सूक्ष्मवार्त्तावबोधने । दक्षाः स्युरत्र ते सर्वे निषीदन्त्वेत्य मेऽन्तिके ॥ ४ ॥

मदिने श्रावणमासस्यामावास्यातिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमस्य । अवनीपतेर्नृपस्य । दुर्गे । कृष्णधाम्नः श्रीवासुदेवमन्दिरस्य । वहिर्वेद्याम् । चक्रके कौशेयचक्रकासने । प्रभुः श्रीहरिः । न्यषीदत् ॥ २ ॥ भक्तेति । भक्तमण्डलमध्यस्थो नानादेशागतत्यागिगृहिनिजाश्रितैः सभामध्ये परिवेष्टितः । सितानि धवलानि सूक्ष्माण्यणुतन्तुकृतान्यखिलान्यंशुकानि वस्त्राणि यस्य सः । परिहितसकलश्वेतसूक्ष्मवसन इत्यर्थः । स श्रीहरिः । स्वीयान् स्वाश्रितसकलजनान् । आनन्दयन्सन् । गुरुत्वाद्धेतोः । स्वयमेव । उवाच । सान्ध्यभगवन्नीराजनान्ते भगवतः स्तुतिं कृत्वा वर्त्तमानान्सदादीन्स्वभुजद्वयोन्नमनमुद्रयाऽन्यक्रियाप्रवृत्तितो निषेधनपूर्वं जोपयित्वा जगादेत्यर्थः ॥ ३ ॥ हे सन्तः इति । हे सन्तः साधवः ! । अत्रास्यां सभायाम् । युष्मासु मध्ये । ये । सूक्ष्मवार्त्तावबोधने । दक्षाः प्रवीणाः । स्युः । ते । सर्वे । मे मम । अत्रास्मिन् । अन्तिके समीपप्रदेशे । एत्यागत्य । निषीदन्तुः ॥ ४ ॥

इत्थमिति । इत्थममुना प्रकारेण । भगवता श्रीहरिणा । प्रोक्ताः । करसंज्ञया । आहूताश्च । बुद्धिमन्तः । साधवो मुक्तानन्दादयो मुनयः । तत्पार्श्वे श्रीहरिसमीपप्रदेशे । एत्य । द्रुतं शीघ्रमेव । आसतोपविविशुः ॥५॥ तानिति । ततस्तेषामुपवेशनानन्तरम् । प्रीतः प्रसन्नमनाः । हरिः । तान्सतः । उवाच । हे साधवः ! । सर्वे भवन्तः । मनो दत्त्वा एकाग्रं मनो विधायैव । सर्वहितं सर्वेषां भवतां हितकारकम् । वचो मद्वाक्यम् । सादरं श्रद्धायुक्तं यथातथा । शृण्वन्तु ॥ ६ ॥ मयेति । हे सन्तः । अद्यास्मि-न्दिने । मया । यद्वचः । प्रोच्यते । तत् । स्वमाहात्म्यवृद्धये । न प्रोच्यते । दम्भेन । न प्रोच्यते । किन्तु । युष्मद्धिताय सर्वेषां युष्माकं हितविधानाय । प्रोच्यते । हि ॥ ८ ॥ अनुभूतमिति । एतद्वक्ष्यमाणम् । मया । अनुभूतम् । अस्ति । सर्वशास्त्रानुगामि सर्वशास्त्राणि यत्प्रमाणयति तथाभूतं च । अस्ति । रहस्यं सुगोप्यमपि । अतिप्रीत्या भवत्सु स्नेहेन हेतुना । इहास्याम् । संसदि सभायाम् । प्रकाश्यते विवियते ॥ ८ ॥ 'सदाऽक्षरपदावासः श्रीहरिः पुरुषोत्तमः । पारोक्ष्येण स्वमाहात्म्यं स्वीयेभ्यो वदति प्रभुः । भक्तानां शिक्षणार्थाय स्वपरोक्षप्रियत्वतः । मानुष्यनाट्यशोभार्थं चरित्रं श्रीहरेरिदम्' । अत्रेति । अत्र लोके । यः । मधुरो मनोज्ञः ।

इत्थं भगवता प्रोक्ताश्चाहूताः । करसंज्ञयाः साधवो बुद्धिमन्तस्तत्पार्श्वं एत्यासत द्रुतम् ॥ ५ ॥ तानुवाच ततः प्रीतो हरिः सर्वहितं वचः । शृण्वन्तु सादरं सर्वे मनो दत्त्वैव साधवः ॥ ६ ॥ मयाऽद्य प्रोच्यते यत्तन्न स्वमाहात्म्यवृद्धये । न दम्भेन न मानेन किन्तु युष्मद्धिताय हि ॥७॥ अनुभूतं मयैतद्धि सर्वशास्त्रानुगामि च । रहस्यमप्यतिप्रीत्या संसदीह प्रकाश्यते ॥ ८ ॥ अत्र यो मधुरः शब्दः सुस्पर्शः सुरसश्च यः । सुरूपं च सुगन्धश्च भवत्यतिमनोहरः ॥ ९ ॥ पञ्चस्वेतेषु मच्चित्तं क्वापि नाण्वपि बध्यते । आस्ते तत उदासीनं शोभना-शोभने समम् ॥ १० ॥ राजा रङ्कश्च मे तुल्यौ राज्यभिक्षाटने तथा । मानापमानौ च समे वर्तेते लोष्ट-काञ्चने ॥ ११ ॥ हस्त्यारोहणपद्गत्वे वर्त्तेते च समे मम । स्रक्चन्दनांशुकाकल्पैः पूजकश्च रजःक्षिपः ॥ १२ ॥

शब्दः । यः । सुस्पर्शः शोभनः स्पर्शः । यः । सुरसोऽतिस्वादुरसः । यत् । सुरूपं शोभनं सौन्दर्यम् । यः । अतिमनोहरः । सुगन्धश्च भवति ॥ ९ ॥ पञ्च-स्विति । एतेषु शब्दादिषु । पञ्चसु मायिकेषु । मच्चित्तम् । क्वापि कदाचिदपि । अण्वल्पमात्रमपि । न बध्यते । ततस्तेभ्यो विषयेभ्यः । उदासीनम् । आस्ते सर्वदा तिष्ठति । शोभनाशोभने रमणीयारमणीये मायिकपदार्थे । सममेकरूपम् । आस्ते ॥ १० ॥ राजेति । राजा चक्रवर्त्तिनृपतिः । रङ्कोऽतिवराकश्च । मे मम । तुल्यौ समानौ । तथा । राज्यभिक्षाटने चक्रवर्त्तिपदे स्थित्वा सर्वप्रशास्तृत्वं करधृतकपालतया भिक्षाचरणं चेत्युभे । समे । मानापमानौ सत्कारप्रतीकारौ च । तुल्यौ । लोष्टकाञ्चने सुवर्णमृत्पिण्डौ च । समे । वर्त्तेते ॥ ११ ॥ हस्तीति । हस्त्यारोहणपद्गत्वे हस्त्यम्बालिकायामुपविश्य यानं पद्भ्यां यानं चेत्युभे । मम । समे । वर्त्तेते । स्रजः सत्पुष्पहाराश्च चन्दनान्यगुर्वादिगन्धाश्च अंशुकानि महार्हाणि महावसनादीनि वासांसिच आकल्पा रत्नानिचिताः कटककटिसूत्रकेयूरादयः सौवर्णा अलङ्काराश्च तेः ।

पूजको ममार्चनकर्त्ता जनः । रजःक्षिपो धूलिप्रक्षेपकश्च जनः । तौ । समौ । वर्त्तते ॥ १२ ॥ भक्तेष्विति । सर्वेष्वपि । भक्तेषु । महदल्पत्वम् । मे मम । नास्ति । सर्वत्र सर्वेष्वपि भक्तेषु । स्वभावादेव सहजतयैव । समदृष्टिर्मम समता मतिः । वर्त्तते । अस्यायं भावः । या इयं भक्तेषु महदल्पत्वनिषेधपूर्वं समतोक्तिः सा च स्वमाहात्म्यविचारे युक्तैव यथा चक्रवालगिरिमहत्त्वविचारे सदपि मेर्वादिगिरिमहदल्पत्वं तुल्यमेवास्ति न तेनाविवेकित्वं भगवतः स्वस्य महिम्नो निरवधिकातिशयत्वादिति ॥ १३ ॥ वैराग्यमिति । मम । अन्तरेऽन्तःकरणे । अतितीव्रम् । वैराग्यम् । अस्ति । सद्धर्मो यथार्थः स्वधर्मश्च । अस्ति । अहम् । ब्रह्मैव । अस्मि । इतीत्थम् । ज्ञानं च । अस्ति । तथापि । तन्महत्ता । मे मम । नास्ति । वैराग्यादिगुणानसाधारणतया मन्निष्ठान्विदित्वाऽपि भगवदग्रे तेषां महत्त्वाभावात्तन्महत्तया नोत्सेकं व्रजामीत्यर्थः ॥ १४ ॥ यदिति । अहम् । कस्यचित् । स्तुतिम् । कुर्वे । कस्यचित् । निन्दां च । कुर्वे । इति यत् । तत्तु । ज्ञात्वा । उपरितो बाह्यतः । कुर्वे । मनो दत्त्वा तु । क्वचित्कदाचिदपि । न कुर्वे । मन्मानसे तन्नभवतीत्यर्थः ॥ १५ ॥ तत्रेति । अहम् । तत्र । तत्र । पदार्थे । स्वेन्द्रियस्य । वृत्तिम् । बलात् । नियोजये

भक्तेष्वपि न सर्वेषु महदल्पत्वमस्ति मे । सर्वत्र समदृष्टिर्हि स्वभावादेव वर्त्तते ॥ १३ ॥
वैराग्यमतितीव्रं च सद्धर्मोऽस्ति ममान्तरे । ब्रह्मैवास्मीति च ज्ञानं तन्महत्तापि नास्ति मे ॥ १४ ॥
यत्त्वहं कस्यचित्कुर्वे स्तुतिं निन्दां च कस्यचित् । तज्ज्ञात्वोपरितः कुर्वे मनो दत्त्वा तु न क्वचित् ॥ १५ ॥
तत्र तत्र पदार्थेऽहं स्वेन्द्रियस्य नियोजये । बलाद्वृत्तिं क्षणं तत्र धारयामि च यत्नतः ॥ १६ ॥
यदा तु यत्नशैथिल्यं तदाऽन्तर्याति सा द्रुतम् । ख उत्क्षिप्तो यथाऽस्मादिर्वेगापाये पुनः क्षितिम् ॥ १७ ॥
पङ्गुः पशुर्यथा वाऽन्यैर्बलिष्ठैरुद्धृतो बलात् । यावत्स्थितो भवेत्तावन्मुक्तः सद्यः पतेत्क्षितौ ॥ १८ ॥
स्वकीयविषयास्वादे सा न शक्ता बलेरिता । जम्बीराम्ला यथा तीक्ष्णा दन्ताश्चणकचर्वणे ॥ १९ ॥

। तत्र पदार्थे । यत्नतो महायासतः । क्षणं क्षणकालपर्यन्तम् । धारयामि ॥ १६ ॥ यदेति । यदा । यत्नशैथिल्यम् । स्यात् । तदा । सा मदिन्द्रियवृत्तिः । द्रुतं शीघ्रमेव । अन्तरन्तःकरणे । याति । प्रतिलोमतया वर्त्तते इत्यर्थः । इममर्थं दृष्टान्तद्वयेन साधयति सार्द्धेन । यथा । खे आकाशे । उत्क्षिप्तः प्रेरितः । अश्मादिर्दृपत्खण्डादिः पदार्थः । वेगापाये स्वनिष्ठक्षेपकबलापगमे । पुनः । क्षितिं भूमितलम् । याति ॥ १७ ॥ पङ्गुरिति । यथा वा । पङ्गुर्जङ्घाविकलः । पशुर्बलीवर्दादिः । बलिष्ठैर्बलवद्भिः । अन्यैः पुरुषैः । बलात् । यावत् । उद्धृत उर्ध्वं धृतो भवेत् । तावत् । स्थित उर्ध्वमवस्थितः । भवेत् । मुक्तस्त्यक्तबलिष्ठोद्धृतिः । सन् । सद्यः । क्षितौ । पतेत् ॥ १८ ॥ स्वकीयेति । बलेरिताऽतिबलात्प्रेरिता । सा मदिन्द्रियवृत्तिः । तीक्ष्णा अखण्डपूगीफलादिपेषणशक्ताः । दन्ताः । जम्बीराम्ला जम्बीरचूषणाम्लिताः सन्तः । चणकचर्वणे भ्रष्टहरिमन्थचर्वणे । यथा । शक्ताः समर्थाः । न भवन्ति । तथा । स्वकीयविषयास्वादे स्वविषयग्रहणे । शक्ता न जायते ॥ १९ ॥

साम्प्रतं स्वस्येत्थंभावे हेतुमाह । सकलेति । हृदि मद्धृदयावस्थिते । आकाशे । अवस्थिते इतिशेषः । अतितेजसि अक्षरब्रह्मात्यन्तप्रकाशे । स्फुरद्दिव्यतनौ विलसद्रमणीयमूर्त्तौ । कृष्णे । सकलेन्द्रियवृत्तीनाम् । प्रावण्यं प्रवणता । आसक्ततया प्रतिलोमवर्त्तनमित्यर्थः । तत्र पूर्वोक्ते मदीयेत्थंभावे । कारणं हेतुः । भवति ॥ २० ॥ स इति । प्रभुः । स श्रीकृष्णः । घनश्यामः सजलनवीननीरदनीलःसन्नपि । अतितेजसा स्वमूर्त्तिनिष्ठातिशयितमहसा । अवदातो गौरवर्णः । आजानुबाहुयुगलो जानुपर्यन्तायतभुजद्वयः । मनोहरपदद्वयोऽतिरमणीयपादपद्मद्वयः । अस्ति ॥ २१ ॥ अतीति । स श्रीकृष्णः । अतिसौम्यो दर्शनमात्रत एवेक्षकजनानां शान्त्युत्पादकः । नराकारो मनुष्यसमानाकृतिः । किशोरः षोडशाब्दवयोऽवस्थितः । करुणानिधिः । अत्र करुणाऽपारसौशील्यवात्सल्यौदार्यादिगुणानामुपलक्षणम् । अस्ति । सः । क्वापि कदाचित् । उपविष्टो निषण्णः । दृश्यते । क्वापि । स्थित उर्ध्वावस्थितः । दृश्यते । क्वापि । चलन्व्रजन् । दृश्यते ॥ २२ ॥ तदिति । परितस्तस्य श्रीकृष्णस्य समंततः । कोटिशोऽपरिमिताः । मुक्ता अक्षरभावं प्राप्ता मुक्तजनाः । तन्मुखैकदृशश्चन्द्रचकोरन्यायेन श्रीकृष्णास्याब्जैकाग्रचक्षुर्वृत्तयः । सन्ति । अहम् । पुरुषोत्तमम् ।

सकलेन्द्रियवृत्तीनां हृद्याकाशेऽतितेजसि । स्फुरद्दिव्यतनौ कृष्णे प्रावण्यं तत्र कारणम् ॥ २० ॥ स तु प्रभुर्घनश्यामोऽप्यवदातोऽतितेजसा । आजानुबाहुयुगलो मनोहरपदद्वयः ॥ २१ ॥ अतिसौम्यो नराकारः किशोरः करुणानिधिः । उपविष्टः स्थितः क्वापि चलन् क्वापि स दृश्यते ॥ २२ ॥ तत्मुखैकदृशो मुक्ताः परितः सन्ति कोटिशः । पश्यामि तमहं नित्यं प्रत्यक्षं पुरुषोत्तमम् ॥ २३ ॥ एतद्देशागमात्पूर्वमप्यपश्यममुं सदा । मातुर्गर्भगतोऽप्येवं ततः प्रागपि चेश्वरम् ॥ २४ ॥ तत्तेजःपुञ्जमध्यस्थ एवाद्याहं वदामि । युष्मानपि च पश्यामि निषण्णांस्तत्र सर्वशः ॥ २५ ॥ एतद्दुर्गपुराद्यं तु मया किञ्चिन्न दृश्यते । एतादृशी स्थितिर्मेऽस्तीत्येवं जानीत सत्तमाः ! ॥ २६ ॥ येन येनावबुध्येत रूपमेतत्परात्मनः । पुमान्स सोऽपि मद्वत्स्यान्नासक्तः क्वापि वस्तुनि ॥ २७ ॥

तं श्रीकृष्णम् । प्रत्यक्षं यथातथा । नित्यम् । पश्यामि ॥ २३ ॥ एतदिति । एतद्देशागमादस्मिन्देशे कृतागमनात् । पूर्वमपि । ईश्वरं परमेश्वरम् । अमुं कृष्णम् । सदा । अपश्यम् । मातुर्मज्जनन्या भक्तिदेव्याः । गर्भगतो भ्रूणताभावे कुक्ष्यवस्थितः सन्नपि । एवमुक्तप्रकारेणैव । अपश्यम् । ततो गर्भभावात् । प्राक् पूर्वं चापि । अपश्यम् ॥ २४ ॥ तदिति । अहम् । अद्यास्मिदिने । तत्तेजःपुञ्जमध्यस्थ उक्तविधाक्षरब्रह्ममहश्चयमध्यावस्थित एव । वदामि युष्मभ्यं कथयामि । सर्वशः सर्वान् । युष्मानपि । तत्राक्षरब्रह्मतेजसि । निषण्णानुपविष्टान् । पश्यामि ॥ २५ ॥ एतदिति । मया । एतत् । दुर्गपुराद्यं दुर्गपुरोत्तमनृपदुर्गभवनबहिर्वेद्यादिकम् । किञ्चिदपि ! न दृश्यते । हे सत्तमाः ! । मे मम । एतादृश्येवंविधा । स्थितिर्निष्ठा । अस्ति । इत्येवम् । जानीत यूयं सत्यमेव वित्त ॥ २६ ॥ येनेति । येन । येन मद्भक्तेन । परात्मनः । श्रीकृष्णस्य । एतत् । रूपम् । अवबुध्येत । पुमान्भक्तोऽपि । मद्वदहमिव । क्वापि कस्मिंश्चित् । वस्तुनि मायिकपदार्थमात्रे । आसक्तः न स्यात् ॥ २७ ॥

तदिति । यूयं भवन्तोऽपि । अत्रास्यामेव । संसदि सभायाम् । तदक्षरधामावस्थितमेव । रूपं श्रीकृष्णस्वरूपम् । पश्यथ । अथापि । तज्ज्ञानं युष्मन्नयनगोचरावस्थितसाक्षाच्छ्रीकृष्णस्वरूपावबोधः । सम्यग्माहात्म्यसहिततया । नास्ति । इति हेतोः । अन्यत्तत्स्वरूपेतरन्मायिकवस्त्वपि । ईक्ष्यते आसक्तिपूर्वं विलोक्यते ॥२८॥ यदेति । यदा । यथावस्थितं यथाविधं वर्त्तते तथाविधम् । तद्रूपं युष्मदिष्टदेवश्रीकृष्णस्वरूपम् । अञ्जसा माहात्म्यसहितं यथातथा तत्त्वतः । ज्ञास्यथ । तदा । विषया मायिकाः शब्दादयोऽर्थाः । कामाद्याः । अन्तरारयोऽन्तःशत्रवश्च । सुजेयाः सम्यक्त्हेयाः । भविष्यन्तीति शेषः ॥२९॥ एवमुक्तिविचित्रतयाऽक्षरधामस्थं श्रीकृष्णं स्वमेवाभिधाय माहात्म्यबोधे सत्येव तथा तद्बोधं चोक्त्वा तावतापि स्वीयैर्यथार्थतया स्वमविदितं बुध्वोक्तानुवादपूर्वं भङ्ग्यन्तरेण स्वस्वरूपं वदति । यस्मिन्निति । हे साधवः ! । एकरसे सन्मात्रे । स्वस्वरूपस्यैकरूपत्वात्तदितरस्वगतभाववर्जिते इत्यर्थः । सितेऽत्युज्ज्वले । यस्मिन् । तेजसि । तद्रूपं श्रीकृष्णस्वरूपम् । भवति वर्त्तते । तत्तेजः । अक्षरं च आत्मा च ब्रह्म च तान्यादयो येषां ब्रह्मपुरपरंपदादीनां तानि च तानि नामानि च तैः । सम्प्रकीर्त्यते ॥ ३० ॥ य इति । तत्राक्षरादिनामके तेजसि । यः ।

तदेवरूपं यूयं च पश्यथात्रैव संसदि । अपि सम्यङ् न तज्ज्ञानमस्तीत्यन्यदपीक्ष्यते ॥ २८ ॥ यदा ज्ञास्यथ तद्रूपं यथावस्थितमञ्जसा । तदा सुजेया विषयाः कामाद्याश्चान्तरारयः ॥ २९ ॥ यस्मिंस्तेजसि तद्रूपं भवत्येकरसे सिते । तदक्षरात्मब्रह्मादिनामभिः सम्प्रकीर्त्यते ॥ ३० ॥ यस्तत्र भगवान् साक्षात्स परब्रह्मसंज्ञकः । आत्मतत्त्वाभिधश्चासौ पुरुषोत्तम उच्यते ॥ ३१ ॥ स एव जायते धर्मस्थापनार्थं युगे युगे । रामकृष्णादिसंज्ञोऽत्र त्राकृतिः श्रेयसे नृणाम् ॥ ३२ ॥ स्वयंतया तेषु केचिद्गुणैश्वर्यादिनाऽस्य च । केचित्ते सन्त्यतः सर्वे ततो न पृथगीश्वरात् ॥ ३३ ॥ स्वभावमजहत्स्वीयं प्रादुर्भवति स प्रभुः । अतो त्राकृतिचेष्टोऽपि ज्ञेयोऽसौ परमेश्वर ॥ ३४ ॥ मनुष्यसदृशो ह्येष न मर्त्यः पुरुषोत्तमः । अत आहाक्षरं धाम पार्थसारथिरात्मनः ॥ ३५ ॥

साक्षात् । भगवान् । अस्ति । सः । परब्रह्मसंज्ञकः । उच्यते । आत्मतत्त्वाभिधः । उच्यते । असौ । पुरुषोत्तम एतन्नामा च । उच्यते ॥ ३१ ॥ स इति । स परब्रह्मादिनामको भगवानेव । अत्र लोके । धर्मस्थापनार्थम् । नृणां स्वाश्रयकर्त्तृजनानाम् । श्रेयसे कल्याणार्थं च । युगे युगे । रामकृष्णादिसंज्ञः । त्राकृतिः । जायते अनेकानवतारान् दधातीत्यर्थः ॥ ३२ ॥ स्वयमिति । तेषु रामकृष्णादिषु स्वावतारेषु मध्ये । केचिदवताराः । स्वयं तया । सन्ति । केचित् । अस्य परब्रह्मादिनामकस्य भगवतः । गुणैश्वर्यादिना स्वैकान्तिकमुक्तेषु स्वगुणैश्वर्याद्यावेशेन च । सन्ति । अतो हेतोः । सर्वे । तेऽवताराः । ईश्वरात्परमेश्वरात् । ततो भगवतः सकाशात् । पृथक् भिन्नतया । न सन्ति ॥३३॥ स्वभावमिति । प्रभुः । स भगवान् । स्वीयम् । स्वभावम् । अजहदत्यजन्सन्नेव । प्रादुर्भवति । अतो हेतोः । त्राकृतिचेष्टो मनुष्यसमानचेष्टावान्सन्नपि । असौ । परमेश्वरः । ज्ञेयः ॥३४॥ मनुष्येति । हि यतः । मनुष्यसदृशो मनुष्यतुल्यतया प्रतीयमानोऽपि । एषः । पुरुषोत्तमः । मर्त्यः केवलं मनुष्य एव । न भवति । अतो हेतोः । पार्थसारथिरर्जुनस्य सारथितया वर्त्तमानः श्रीकृष्णः । आत्मनः स्वस्य । अक्षरम् । धाम । आह गीतायामर्जुनं प्रति उक्तवान् ॥ ३५ ॥

तदेवाह । नेति । यद्धाम । गत्वा मदेकान्तिकोपासनया सम्प्राप्य । न निवर्त्तन्ते पुनरावृत्तिं न यान्ति । ते पुनरत्र जन्ममरणप्रवाहं नानुभवन्तीत्यर्थः । तद्धाम । सूर्यः । न भासयते न प्रकाशयति । शशाङ्कश्चन्द्रः । न भासयते । पावकोऽग्निः । न भासयते । तत् । मम । परमम् । धाम । अस्ति । तथा च श्रुतिः । न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निस्तमेव भान्तमनुभाति सर्वं । तस्य भासा सर्वमिदं विभाती'ति ॥ ३६ ॥ ध्यायन्तीति । अत्र लोके । मुमुक्षवः । ये भक्ताः । त्वाकृतिम् । भगवन्तम् । ध्यायन्ति । तेषां ध्यातॄणां भक्तानाम् । एष त्वाकृतिरेव भगवान् । अक्षरधामगः । तेजस्वी सन् । भासते ॥ ३७ ॥ तीर्त्वेति । ते तद्ध्यातारो भक्ताः । मायार्णवमर्णववद्दुस्तरां मायाम् । तीर्त्वाऽतिक्रम्य । तत् । परमम् । पदमक्षरधाम । यान्ति । तेषां तथाविधभक्तानाम् । कालकृतान्तादिभयं कालाद्यमादेश्च भीतिः । सर्वथा । नास्त्येव ॥ ३८ ॥ स इति । स नराकृतिर्भगवान् । यत्र स्थाने । वसेत् । तत्स्थानम् । तदीयाः । परिचारकाः । तद्वस्त्रभूषायानादि तदीयवस्त्रालङ्कारवाहनादिकम् । सर्वम् । निर्गुणम् । भवति ॥ ३९ ॥ यदिति । यद्वस्तु । निर्गुणस्व-

न तद्भासयते सूर्यो न शशाङ्को न पावकः । यद्गत्वा न निवर्त्तन्ते तद्धाम परमं मम ॥ ३६ ॥ ध्यायन्ति त्वाकृतिं येऽत्र भगवन्तं मुमुक्षवः । तेषामेवैष तेजस्वी भासतेऽक्षरधामगः ॥ ३७ ॥ तीर्त्वा मायार्णवं ते च यान्ति तत्पर मं पदम् । तेषां कालकृतादिभयं नास्त्येव सर्वथा ॥ ३८ ॥ स वसेद्यत्र तत्स्थानं तदीयाः परिचारिकाः । तद्वस्त्र-भूषायानादि सर्वं भवति निर्गुणम् ॥ ३९ ॥ यन्निर्गुणस्वरूपस्य तस्य सम्बन्धमाप्नुयात् । तद्वस्तु निर्गुणं सद्यो भवतीत्यवधार्यताम् ॥ ४० ॥ असावेवाक्षरातीतो दयादिगुणसागरः । धत्तेऽवतारान्बहुशो यथाकार्यं धरातले ॥ ४१ ॥ प्रादुर्भावतिरोभावावतर्क्यौ तस्य देहिभिः । स्वेच्छया दधतो मूर्त्तीः स्वतन्त्रस्याखिलेशितुः ॥ ४२ ॥ क्वचित्स्त्रीपुंसतः पुंसः स क्वचिज्जायतेऽन्यतः । अनन्यतः स्वयं क्वापि स्वेच्छयाऽऽविर्भवत्यसौ ॥ ४३ ॥

रूपस्य गुणातीतमूर्त्तेः । तस्य भगवतः । सम्बन्धम् । आप्नुयात् । तत् । वस्तु । सद्यः । निर्गुणम् । भवति । इतीत्थम् । अवधार्यताम् ॥ ४० ॥ एवं त्वाकृतेः स्वस्य सम्बन्धेन मायिकत्वेन सगुणस्यापि स्थानादेर्निर्गुणत्वादिकमभिधाय साम्प्रतं स्वावताराणामाविर्भावतिरोभावयोरतर्क्यतां वक्तुमुक्तार्थमनुवदति षड्भिः । असाविति । हे सन्तः ! । अक्षरातीतोऽक्षरपरः । दयादिगुणसागरः । असौ भगवानेव । धरातले । यथाकार्यं यथाप्रयोजनम् । बहुशो बहून् । अवतारान् । धत्ते उक्तरीत्या दधाति ॥ ४१ ॥ प्रादुरिति । स्वेच्छया मूर्त्तीरवतारान् । दधतः । स्वतन्त्रस्य । अखिलेशितुः सर्वनियामकस्य । तस्य भगवतः । प्रादुर्भावतिरोभावौ । देहिभिर्मनुष्यैः । अतर्क्यौ मनस्तर्कानर्हौ । भवतः ॥ ४२ ॥ अतर्क्यतामाह चतुर्भिः । क्वचिदिति । स भगवान् । क्वचित्कदाचित् । स्त्रीपुंसतो मातृतातयोगतः सकाशात् । जायते । एतद्राम वामनकपिलकृष्णादिषु प्रसिद्धम् । क्वचित् । पुंसः केवलात्पितृत एव । जायते । एतत्तु वैन्यवाराहादिषु प्रसिद्धम् । क्वचित् । अन्यतः स्त्रीपुंसभिन्नाज्जलस्त-

म्भादेः । तत्र जलोद्भवनं मत्स्यकूर्मादिषु स्तम्भोद्भवनं नृसिंहे च प्रसिद्धम् । क्वापि । असौ भगवान् । अनन्यतो जलस्तम्भादिनिमित्तं विनाऽपीत्यर्थः । स्वेच्छया । स्वयम् । अकाण्डमेवेति शेषः । आविर्भवति । एतच्च ध्रुववरदगोष्पदनिमज्जद्वालखिल्योद्धारकादिषु प्रसिद्धम् ॥ ४३ ॥ मर्त्त्येति । स भगवान् । क्वचित् । मर्त्त्यवत् । भुवि । स्वाम् । तनुम् । हित्वा । स्वधाम । याति । क्वचित् । तां मनुष्यसमानतया प्रतीयमानाम् । तनुमेव । दिव्यां दिव्यभावयुक्ताम् । विधाय । नामत्यक्त्वेत्यर्थः । स्वधाम । याति ॥ ४४ ॥ एतदेव । सप्रमाणं दर्शयति द्वाभ्याम् । श्रूयत इति । फाल्गुनोऽर्जुनः । प्रभासे । कृष्णतनुं श्रीकृष्णोत्सृष्टशरीरम् । अन्विष्य गवेषयित्वा । संस्कारं दाहाद्यौर्ध्वदैहिककर्म । लम्भयामास प्रापयामास । इतीत्थम् । भारते कृष्णद्वैपायनीयमहाभारते । मौसले मुसलपर्वणि । श्रूयते । तद्यथा । 'ततः शरीरं रामस्य वासुदेवस्य चोभयोः । अन्विष्य दाहयामास पुरुषैराप्तकारिभि'रिति । विष्णुपुराणे प्रकारान्तरेणापि श्रूयते । 'अष्टौ महिष्यः कथिता रुक्मिणीप्रमुखास्तु याः । उपगृह्य हरेर्देहं विविशुस्ता हुताशन'मिति ॥ ४५ ॥ राम इति । दाशरथिर्दशरथपुत्रः । रामः । दिव्यदेहः । भूत्वा । पदं स्वकीयं धाम । ययौ । इतीत्थम् ।

मर्त्यवद् भुवि हित्वा स्वां तनुं याति स्वधाम च । कचित्कचिच्च तामेव तनुं दिव्यां विधाय सः ॥ ४४ ॥
श्रूयते मौसले कृष्णतनुमन्विष्य फाल्गुनः । संस्कारं लम्भयामास प्रभास इति भारते ॥ ४५ ॥
रामो दाशरथिर्दिव्यदेहो भूत्वा पदं ययौ । इति रामायणेऽस्तीति दुर्ज्ञेयौ तौ बुधैरपि ॥ ४६ ॥
अचिन्त्यचरितस्यास्य ज्ञानं यस्य दृढं भवेत् । निःश्रेयसाध्वा तस्यैव निर्विघ्नोऽस्तीति गम्यताम् ॥ ४७ ॥
एतज्ज्ञानं विना त्वन्यैस्तपस्त्यागादिसाधनैः । श्रेय आत्यन्तिकं नास्ति श्रेयो मूर्त्तिः स एव यत् ॥ ४८ ॥
ईदृग्निश्चय एवास्ति ह्यस्माकं त्र्याकृतौ हरौ । तथापि तस्मिन्न कथं निरोधो जायते धियाम् ॥ ४९ ॥

रामायणे । अस्ति सम्यगुक्तं भवति । तथा चोक्तं वाल्मीकीये रामायणे उत्तरकाण्डे । 'पितामहवचः श्रुत्वा विनीश्चित्य महामतिः । विवेश वैष्णवं तेजः सशरीरः सहानुज इति । इत्यतो हेतोः । तौ भगवत आविर्भावतिरोभावौ । बुधैर्मनीषिभिरपि । दुर्ज्ञेयौ दुराकलनीयौ । भवतः ॥४६॥ अचिन्त्येति । अचिन्त्यचरितस्यातर्क्यचरित्रस्य । अस्य भगवतः । ज्ञानं यथार्थतया स्वरूपावबोधः । यस्य भक्तस्य । दृढमतिसुस्थिरम् भवेत् । तस्य भक्तस्यैव । निःश्रेयसाध्वाऽऽत्यन्तिककल्याणमार्गः । निर्विघ्नोऽन्तरायवर्जितः । अस्ति विद्यते । इतीत्थम् । गम्यताम् ॥४७॥ एतदिति । एतज्ज्ञानं विनेत्थंभूतभगवत्स्वरूपज्ञानमृते । अन्यैः । तपस्त्यागादिसाधनैः । आत्यन्तिकम् । श्रेयः । नास्ति । यद्यतोहेतोः । श्रेयोमूर्त्तिः । स प्रत्यक्षो भगवानेव । अस्ति ॥४८॥ ईदृगिति । अस्माकम् । त्र्याकृतौ । हरौ सर्वावतारधारिणि मत्परात्परधामाधिपे श्रीहरिकृष्णभगवति । ईदृगेवंविध एव । निश्चयः । अस्ति । त्वदुक्तरीत्यैव साक्षाद्भगवत्स्वरूपज्ञानं वर्त्तते इत्यर्थः । तथापि । तस्मिन् हरौ । धियाम् । अत्र बहुवचनेन मनःप्राणेन्द्रियाणां ग्रहणम् । निरोधः समाधिनैकाग्रता । कथम् । न जायते । इति चेदित्युत्तरेण सम्बन्धः ॥ ४९ ॥

इतीति । इतीत्थम् । चेद्ब्रूयात यदि । तर्हि । हे सन्तः ! । श्रूयताम् । अत्र हरौ बुध्यादिनिरोधाभावे । ईश्वरेच्छा भवदिष्टदेवस्य श्रीहरेः । सङ्कल्प एव । कारणं । हेतुरस्ति । इतीत्थम् । जानीत । किन्तु । एवं ज्ञानवतां युष्माकम् । कार्यशेषः कर्त्तव्यावशिष्टत्वम् । निश्चितमेव । नास्ति ॥ ५० ॥ ईदृग्ज्ञानवतां कर्त्तव्यशेषो नास्तीति किं वाच्यं यतोऽस्य ज्ञानस्य महिम्ना तु नियमापक्वतापि तस्य नान्तरायकर्त्री स्यादित्याह । ईदृगिति । ईदृग्ज्ञानवताम् । स्वीयनियमेषु लोभादिदोषजयोपायतयोक्तेषु स्वकीयनियमेषु मध्ये । क्वचित्कस्मिंश्चिन्नियमे । यदि । अपक्वता । भवेत् । तर्हि । साऽपक्वतापि । कर्हिचित्कदाचिदपि । विघ्नायान्तरायोत्पादनाय । नास्ति समर्था नैव जायते ॥ ५१ ॥ एतदिति । अतो हेतोरेव । मुमुक्षुभिः । नृभिर्भक्तैः । एतद्भगवत्स्वरूपज्ञानम् । विज्ञातुं विशेषेण बोद्धुम् । सदुपासनयैतज्ज्ञानसुदृढतावत्साधुसंसेवनेन सर्वात्मना सर्वप्रकारेण । यत्नः । कार्यः ॥ ५२ ॥ एतदिति । एतज्ज्ञानवतः । अन्तेऽन्तकाले । प्रारब्धवशतः । अन्यथा भगवदितरया । वासनया मायिकविषयभोगभावनया । देहान्तरमन्यदेहप्राप्तिः । स्याच्चेद्भवेद्यदि । तत्र तस्मिन्देहेऽपि । विस्मृतिरेतज्ज्ञानविस्मरणम् । न स्यात् । किन्तु सदा तत्स्मृतिः स्यादेवेत्यर्थः ॥ ५३ ॥ एतदेव

इति चेच्छ्रूयतां सन्त ईश्वरेच्छाऽत्र कारणम् । इति जानीत ननु वः कार्यशेषोऽस्ति निश्चितम् ॥ ५० ॥ ईदृग्ज्ञानवतां स्वीयनियमेषु यदि क्वचित् । अपक्वता भवेत्सापि न विघ्नायास्ति कर्हिचित् ॥५१॥ एतदेव हि विज्ञातुमत एव मुमुक्षुभिः । यत्नः सर्वात्मना कार्यः सदुपासनया नृभिः ॥५२॥ एतज्ज्ञानवतोऽन्ते चेत्प्रारब्धवशतोऽन्यथा । देहान्तरं वासनया स्यात्तत्रापि न विस्मृतिः ॥५३॥ यथा वृत्रासुरस्यासीद्भरतस्यार्षभस्य च । देहान्तरेऽपि प्राग्ज्ञानं तथाऽस्यापि भवेद्धि तत् ॥५४॥ एवमेतस्य माहात्म्यमस्ति शास्त्रेषु वर्णितम् । वार्त्तैषा शिवब्रह्मादिसभास्वप्येव जायते ॥ ५५ ॥ सच्छास्त्रेष्वपि सर्वत्र वार्त्ता भागवती ह्यसौ । वर्णिताऽस्त्यपि सा सम्यङ् न स्वबुद्ध्यावगम्यते ॥५६॥ प्रादुर्भावो भगवतो यदा भुवि भवेत्तदा । तन्मुखाद् बुध्यते सा वा तद्भक्तेभ्यो यथातथम् ॥५७॥ ज्ञानं त्रैकालिकं चेत्स्यादेतज्ज्ञानवतो भुवि । तथा न भवेत्तस्य तद्गर्वश्च मदादयः ॥५८॥

प्राचीनसदाचारेण द्रढयति । यथेति । यथा । वृत्रासुरस्य । आर्षभस्य ऋषभदेवपुत्रस्य । भरतस्य च । देहान्तरेऽपि । प्राग्ज्ञानं पूर्वजन्मोपार्जितभगवत्स्वरूपज्ञानम् । आसीत् तथा । अस्यैवंविधज्ञानवतोऽपि । देहान्तरे । तज्ज्ञानम् । भवेत् । हि ॥ ५४ ॥ एवमिति । एवममुना प्रकारेण । एतस्य ज्ञानस्य । माहात्म्यम् । शास्त्रेषु । वर्णितम् । अस्ति । एषा या मया कृता सैव । वार्त्ता । शिवब्रह्मादिसभास्वपि । जायते ॥ ५५ ॥ सदिति । सर्वत्र सर्वेषु । सच्छास्त्रेस्वपि । भागवती साक्षाद्भगवज्ज्ञानसम्बन्धिनी । असौ । वार्त्ता । वर्णिता । अस्ति । अथापि । सा वार्त्ता । स्वबुध्या केवलसच्छास्त्राध्ययनजन्यया स्वमत्या । सम्यग्यथार्थतया । नावगम्यते ॥ ५६ ॥ प्रादुर्भाव इति । भुवि । यदा । भगवतः । प्रादुर्भावोऽवतारः । भवेत् । तदा । तन्मुखात्प्रादुर्भूतभगवन्मुखकमलात् । अथवा । तद्भक्तेभ्यः प्रादुर्भूतभगवदाश्रितजनेभ्यः । सा वार्त्ता । यथातथा यथार्थतया । बुध्यते ॥ ५७ ॥ ज्ञानमिति । भुवि । पृथिव्याम् । वर्त्तमानस्येति शेषः । एतज्ज्ञानवतो भक्तस्य । चेद्यदि । त्रैकालिकं भूत-

भविष्यद्वर्त्तमानकालभवम् । ज्ञानम् । स्यात् । तथापि । तस्य । भक्तस्य । तद्वर्वत्त्रैकालिकज्ञानभवतोऽभिमानः । न भवेत् । मदादयोऽनम्रत्वादयो दोपाश्च । न भवेयुः ॥ ५८ ॥ शापमिति । महामतिः । स तथाविधो भक्तः । दुराग्रहविवर्जितः सन् । कस्मैचित् । शापम् । अथवा । वरम् । न दद्यात् । क्वापि । कस्मैचित् । दद्याच्छापं वरं वा प्रतिपादयेत् ॥ ५९ ॥ वर्त्तेतेति । असौ तथाविधो भक्तः । हर्षशोकविहीनः । सन् । क्वापि । निर्भयः । वर्त्तते । क्वचित् । सभयो वाऽपि । भवेत् अघं किञ्चिदपि पापं तु । बुद्ध्या बुद्धिपूर्वम् । नाचरेत् ॥ ६० ॥ प्रकरणार्थं निगमयति त्रिभिः । एपेति । हे सन्तः ! । एपा । वार्त्ता । सर्वैर्भवद्भिः । हृदि स्वस्वमनसि । दृढं यथातथा । सदैव । धारणीया । एतां वार्त्ताम् । सम्यक् । बोधयितुं युष्मान्सर्वान् ज्ञापयितुमेव । नृषु । इदम् । मम । जनुर्जन्मास्ति ॥ ६१ ॥ भूरीति । भूरितेजसि अत्र पूर्वमभिहितेऽक्षरब्रह्मरूपप्राज्यसि । दिव्यविग्रहः । यः । भगवान् । प्रोक्तः । स भगवान् । अत्र लोके । स्थितः । दिव्यनराकृतिः । अहमेव । भवामि ॥ ६२ ॥ रामेति । अतो हेतोः । रामकृष्णादयः । सर्वे । अवताराः । पुरुषोत्तमस्य । मे मम । सन्ति । हि । इतीत्थम् । वित्त यूयं जानित । अहम् । वो

शापं वरं कस्मैचित्स न दद्यान्महामतिः । कस्मैचित्क्वापि दद्याद्वा दुराग्रहविवर्जितः ॥ ५९ ॥ वर्त्तेत निर्भयः क्वापि सभयो वा क्वचिद्भवेत् । हर्षशोकविहीनोऽसौ न बुद्ध्या त्वाचरेदघम् ॥ ६० ॥ एषा वार्त्ता दृढं सर्वैर्धारणीया सदा हृदि । एतां वोधयितुं सम्यङ्ममैवेदं जनुर्नृषु ॥६१॥ भूरितेजसि यः प्रोक्तो भगवान् दिव्यविग्रहः । सोऽहमेव भवाम्यत्र स्थितो दिव्यनराकृतिः ॥ ६२ ॥ रामकृष्णादयः सर्वेऽवताराः सन्त्यतो हि मे । पुरुषोत्तमस्य वित्तेत्येतत् सत्यं ब्रवीमि वः ॥ ६३ ॥ ज्ञातुमित्थं न शक्येत यदि कैश्चन तर्हि तैः । ज्ञेयस्तदेकद्रष्टाऽहं तेनापि स्याद्रतिर्मयि ॥ ६४ ॥ एषा रहस्यवार्त्तेति युष्माभिर्मदुपाश्रितैः दिने दिने नूतनेव विचिन्त्या जीवितावधि ॥ ६५ ॥ यत्र यत्र हरेर्वार्त्ता क्रियेतात्र नरान्प्रति । भवद्भिस्तत्र तत्रैषा योज्या वीजतयाऽनघाः ! ॥ ६६ ॥ सर्वसच्छास्त्रसिद्धान्तो वार्त्तैषाऽस्ति मया । कृता साक्षात्स्वेनानुभूतैव ततो नास्त्यत्र संशयः ॥ ६७ ॥

युष्मभ्यम् । एतत् । सत्यं यथार्थमेव । ब्रवीमि ॥६३॥ ज्ञातुमिति । इत्थममुना प्रकारेण । यदि । कैश्चनैतत्सभानिपणैर्यथार्थतया मत्स्वरूपानभिज्ञैः कैश्चिज्जनैः ज्ञातुम् । न शक्येत । तर्हि । तैर्जनैः । अहम् । तदेकद्रष्टा तस्य भगवतः स्वरूपस्य यथार्थतयाऽनन्यसमीक्षकः । ज्ञेयः । तेन तथाविधेन मत्स्वरूपज्ञानेनापि । मयि । रतिः प्रीतिः । स्यात् ॥६४॥ एषेति । एषा मत्स्वरूपयथार्थज्ञानसम्बन्धिनी । रहस्यवार्त्ता मदेकान्तिकजनमात्रवेद्या गोष्ठी । अस्ति । इति हेतोः । मदुपाश्रितैः कृतमदेकाश्रयैः । युष्माभिः । जीवितावधि यावज्जीवम् । दिने । दिने । नूतना नवीनेव । विचिन्त्या ॥ ६५ ॥ यत्रेति । हे अनघाः ! । अत्र सत्सङ्गे । भवद्भिः । यत्र यत्र स्थाने । नरान्सत्सङ्गिजनान्प्रति । हरे र्मम । वार्त्ता । क्रियेत । तत्र तत्र स्थाने । एषा वार्त्ता । वीजतया सर्वकारणतया । योज्या तान्प्रतियोजनीया ॥६६॥ सर्वेति । मया । कृता । एषा । वार्त्ता । सर्वसच्छास्त्रसिद्धान्तः । अस्ति । स्वेन मया । साक्षात्प्रत्यक्षतया । अनुभूतैव । अस्ति । ततो हेतोः । अत्रास्यां वार्त्तायाम् । संशयः । नास्ति ॥६७॥

इतीति । इत्येवंविधम् । विभोः सर्वान्तर्यामिणः । तस्य श्रीहरेः । वचोऽमृतम् । निपीय । सदःस्थिताः । सकलाः । ते साधुप्रमुखाः । भक्तजनाः । हृदि स्वस्वमानसे । मुदिताः हृष्टाः सन्तः । तदुपासनसक्तचेतसः पुरुषोत्तमस्य साक्षाच्छ्रीहरेरेकान्तिकतयाऽऽराधने प्रसक्तमानसाः । अभवन् ॥ ६८ ॥ सदा दिव्यकृतेः स्वस्य धाम्नि तेजोमयेऽक्षरे । नित्यावासस्य पुरुषोत्तमाख्यस्य दयानिधेः ॥१॥ सर्वोत्कृष्टं ज्ञानमुक्तं स माहात्म्यं निजाग्रतः । येन श्रीहरिणा तन्मे ज्ञानं स्वस्य ददातु सः ॥२॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्पदानुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां शताधिकषट्चत्वारिंशस्तरङ्गः ॥१४६॥१३॥

त्रयोदशोक्तं यज्ज्ञानं श्रीहरेस्तस्य सर्वथा । चतुर्दशे महत्तोक्ता ज्ञेया भक्तजनैस्तु या ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८७८) भाद्रशुक्लप्रतिपदि भाद्रपदमासीयशुक्लपक्षस्याद्यतिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमस्य । महीक्षितो नृपस्य । दुर्गे । वासुदेवालयस्य । अग्रे । वासुदेवभगवन्मन्दिरान्तिकस्थोदगास्योत्तमनृपभवनस्याग्रवर्त्तिन्यां वेदिकायामित्यर्थः । चक्रके कौशेयचक्रकासने । स श्रीहरिः । उपाविशत् ॥ १ ॥

इति तस्य विभोर्वचोऽमृतं सकला भक्तजना निपीय ते । तदुपासनसक्तचेतसो मुदिता हृद्यभवन्सदःस्थिताः ॥ ६८ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते शताधिकपट्चत्वारिंशतस्तरङ्गः ॥ १४५ ॥ १२ ॥

शकाब्दे विक्रमार्कस्य गजाश्ववसुभूमिते । भाद्रशुक्लप्रतिपदि वचोऽमृतमिदं हरेः ॥ १ ॥ तत्र दुर्गपुरे दुर्गे उत्तमस्य महीक्षितः । वासुदेवालयस्याग्रे चक्रके स उपाविशत् ॥ २ ॥ सिताम्बरधरो भाले दधत्कुङ्कुमचन्द्रकम् । उष्णीषे कारवीरं च दधच्छोभनशेखरम् ॥ ३ ॥ वृतं सद्भिर्गृहस्थैश्च निजभक्तैः सहस्रशः । मुक्तानन्दस्तमप्राक्षीत्साधुर्नत्वा कृताञ्जलिः ॥ ४ ॥ भक्तस्य ते भवद्रूपे तादात्म्यं यत्तु जायते । तत्किं समाधिना वाऽन्योपायेन तद्भवेत्प्रभो ! ॥ ५ ॥

श्रीहरिरुवाच–यादृशं भगवद्रूपं मया ह्यः प्रतिपादितम् । तस्य तादृक्तया सम्यग्बोधो निःसंशयस्तु यः ॥ ६ ॥

तमेव विशिनष्टि । सितेति । सिताम्बरधरः परिहितसकलश्वेतवसनः । भालेऽलिके । कुङ्कुमचन्द्रकं कैसरचन्दनीयदण्डाकृतितिलकान्तरवर्त्त्यतिरक्तपिशुनचन्द्रकम् । दधत् । उष्णीषे शिरोनिबद्धार्जुनवसने । कारवीरं करवीरकुसुमसम्बन्धिनम् । शोभनशेखरमतिरमणीयावतंसकं च । दधत् ॥ ३ ॥ वृतमिति । सद्भिः । गृहस्थैश्च । सहस्रशो नानादेशागतत्वादनेकैः । निजभक्तैः । वृतं सभायां परिवेष्टितम् । तं श्रीहरिम् । मुक्तानन्दः । साधुः । कृताञ्जलिः सन् । नत्वा । अप्राक्षीत् ॥ ४ ॥ भक्तस्येति । हे प्रभो ! । ते तव । भक्तस्य । भवद्रूपे साक्षात्परमेश्वरस्य तव स्वरूपे । यत् । तादात्म्यं तदेकवृत्तित्वम् । जायते । तत्तादात्म्यम् । किं किंस्वरूपम् । तादात्म्यस्य स्वरूपं किमित्यर्थः । तत् । समाधिना अष्टाङ्गयोगसाध्यसम्प्रज्ञातसमाधिना । भवेत् । अथवा । अन्योपायेनान्यसाधनेन । भवेत् । तादात्म्यसिध्युपायः । समाधिरस्त्यथवाऽस्त्यन्योपाय इत्यर्थः ॥ ५ ॥ 'सता स इत्थं सम्पृष्टो मुक्तानन्देन सत्पतिः । हर्षयंस्तं जगादेति स्वाश्रितानितरांस्तथा' । यादृशमिति । हे मुने ! । मया । ह्यो

गतदिने । यादृशं यथाविधम् । भगवद्रूपं भगवत्स्वरूपज्ञानम् । प्रतिपादितम् । तस्य भगवत्स्वरूपस्य । तादृक् तया तथाविधत्वेन । निःसंशयः । यः । सम्यक् । बोधो यथार्थज्ञानम् ॥६॥ विद्वद्भिरिति । विद्वद्भिर्मायावादिमतस्थैः प्रछन्नबौद्धापरसंज्ञैः शुद्धाद्वैतवादिपण्डितैः । अथवा अन्यशास्त्रैर्वेदवाह्यैर्नास्तिकादिग्रन्थैरपि । अचाल्योऽनिवार्यः । अत एव । पर्वतोपमोऽचलवत्सुस्थिरः । एषः । निश्चियः । एव । श्रीहरौ । तादात्म्यम् । उक्तम् ॥ ७ ॥ एकेति । हे मुने ! । तत्तदात्म्यम् । हरेः । एकान्तिकानाम् । भक्तानाम् । प्रसङ्गतः । स्यात् । एनं तदेकान्तिकभक्तप्रसङ्गम् । विहाय । तत्तादात्म्यं । समाधिनाऽपि । क्वचित्कदाचिदपि । न स्यात् । तत्सिध्युपाय एकान्तिकप्रसङ्ग एवास्ति न समाधिरित्यर्थः ॥ ८ ॥ ननु निर्विकल्पसमाधिरेव तादात्म्यशब्दार्थः प्रसिद्धः कुत एवंविधनिश्चयस्तादात्म्यशब्दार्थ उच्यते इति चेन्निर्विकल्पसमाधिरपि एष एवेत्याह । निर्विकल्प इति । निर्विकल्पसमाधिरपि । एष निश्चय एव । प्रकीर्त्तितः । स निश्चयः । यस्य । पुंसो भक्तस्य । स्यात् । तस्य भक्तस्य । स्वरूपम् । निर्गुणं मायिकसत्त्वादिगुणवर्जितम् । ब्रह्म । एवंविधनिश्चयवान् भक्तो निर्गुणब्रह्मस्वरूपो बोध्य इत्यर्थः ॥९॥ प्रवृत्त इति । अत्र सत्सङ्गे । स एवंविधो भक्तः ।

विद्वद्भिर्वाऽन्यशास्त्रैर्वाऽप्यचाल्यः पर्वतोपमः । एष निश्चय एवोक्तं तादात्म्यं श्रीहरौ खलु ॥ ७ ॥ एकान्तिकानां भक्तानां हरेस्तत्स्यात्प्रसङ्गतः । समाधिनाऽपि तन्न स्याद्विहायैनं क्वचिन्मुने ! ॥ ८ ॥ निर्विकल्पः समाधिश्चाप्येष एव प्रकीर्त्तितः । स यस्य स्यात्तस्य पुंसः स्वरूपं ब्रह्म निर्गुणम् ॥९॥ प्रवृत्ते वा निवृत्ते वा वर्त्ततां सोऽत्र वर्त्मनि । तथापि ब्रह्मरूपोऽसौ ज्ञेय ईदृक्समाधिमान् ॥१०॥ नारदः सनकाद्याश्च निवृत्ते वर्त्मनि स्थिताः । सप्तर्षिजनकाद्याश्च प्रवृत्ते वर्त्मनि स्थिताः ॥११॥ एतेषामुभयेषां तु भगवद्रूपनिश्चियः । अस्त्येकविध एवेति निर्गुण उभयं मताः ॥ १२ ॥ सम्यक् कृष्णस्वरूपस्य निश्चयं तु विनाऽत्र ये । निवृत्तधर्मे निरतास्त्यागिनश्च जितेन्द्रियाः ॥ १३ ॥ जितकामा जितरसाः प्रशान्ता अपरिग्रहाः । अप्येते सगुणा ज्ञेयाः पतितारश्च सत्पथात् ॥ १४ ॥

प्रवृत्ते प्रवृत्तधर्मरूपे । वर्त्मनि मार्गे । अथवा । निवृत्ते निवृत्तधर्मरूपे । वर्त्मनि । वर्त्तताम् । तथापि । ईदृक्समाधिमान् निश्चयरूपनिर्विकल्पसमाधिनिष्ठः । असौ भक्तः । ब्रह्मरूपः । ज्ञेयः ॥ १० ॥ एतदेव प्राचीनभक्तदृष्टान्तेन द्रढयति द्वाभ्याम् । नारद इति । नारदः । सनकाद्याश्च । निवृत्ते । वर्त्मनि । स्थिताः । सप्तर्षिजनकाद्याः । प्रवृत्ते । वर्त्मनि । स्थिताः । सन्ति ॥ ११ ॥ एतेषामिति । एतेषाम् । उभयेषाम् । भगवत्स्वरूपनिश्चयस्तु । एकविध एकप्रकार एव । अस्ति । इति हेतोः । उभयेऽपि । निर्गुणाः । मताः ॥ १२ ॥ विपक्षे दोषमाह त्रिभिः । सम्यगिति । अत्र लोके । कृष्णस्वरूपस्य साक्षाच्छ्रीहरिस्वरूपस्य । सम्यक् । निश्चयम् । विना तु । ये पुरुषाः । निवृत्तधर्मे । निरताः सन्तः । त्यागिनो वैराग्येण कृतसर्वविषयत्यागाः । जितेन्द्रियाश्च । स्युः ॥ १३ ॥ जितेति । जितकामा जितमनोभववेगाः । जितरसा जितरसास्वादाः । प्रशान्ताः क्रोधाहङ्कारवर्जिताः । अपरिग्रहा उचिताधिकपरिग्रहवर्जिताः सन्तोऽपि । एते निवृत्तधर्मनिरताः पुरुषाः । सगुणा मायिकसत्त्वादिगुणसम्बन्धयुक्ताः । ज्ञेयाः । सत्पथान्निवृत्तधर्मरूपाच्छोभनमार्गात् । पतितारश्च । ज्ञेयाः । ते वक्ष्यमाणप्रकारेण सदध्वनः पतिष्यन्त्येवेत्यर्थः ॥ १४ ॥

निवृत्तेति । प्राज्ञैर्बुद्धिमद्भिरपि तैः । भगवन्निश्चयं विना । निवृत्ते धर्मे विषयपरित्यागरूपे । संस्थातुं सम्यगवस्थातुम् । अन्तर्वैरिणः कामाद्यन्तःशत्रून् । जेतुं च । नैव । शक्यम् । अतस्ते ततः पतिताः सन्तो निरयगामिनो भवेयुरिति भावः ॥१५॥ कृष्णेति । कृष्णनिश्चयवन्तो ये साक्षाच्छ्रीहरिस्वरूपनिश्चयिनः स्युस्ते तु । व्यवहाराल्पबुद्धयो व्यवहारमार्गेऽल्पमतयः सन्तोऽपि । अविद्वांसोऽपठितशास्त्राः सन्तोऽपि । अञ्जसा तत्त्वतः । महान्तः । ज्ञानिन एकान्तिकभक्ताः । ज्ञेयाः ॥१६॥ कामेति । ते तथाविधा भक्तास्तु । सत्पतेः स्वेष्टदेवस्य साक्षाच्छ्रीहरेः । प्रतापात्प्रभावतः । कामादीन् । अन्तररिपून् । अनायासेन । सहसा तूर्णमेव जयन्ति । इति । दृश्यतां ज्ञायताम् ॥ १७ ॥ अमृतमिति । इत्येवंविधम् । हरिणा । भणितं कथितम् । अमृतं सुधातुल्यम् । वचो वचनम् । निशम्य । सः । मुनिर्मुक्तानन्दः साधुः । पराम् । मुदम् । आप । सदःस्थितयः सभायां निषण्णाः । तदाश्रयिणः । अपरे । मुनयः । गृहिणश्च । तुतुषुः ॥ १८ ॥ स्वकीयज्ञानमाहात्म्यं येन श्रीहरिणोदितम् । तस्मिन् दृढो-

निवृत्तधर्मे संस्थातुं भगवन्निश्चयं विना । नैव शक्यमपि प्राज्ञैर्जेतुं चान्तरवैरिणः ॥ १५ ॥ कृष्णनिश्चय-
वन्तस्तु व्यवहाराल्पबुद्धयः । अविद्वांसोऽपि विज्ञेया महन्तो ज्ञानिनोऽञ्जसा ॥१६॥ कामादींश्चान्तररिपून्
प्रतापात्ते तु सत्पतेः । अनायासेन सहसा जयन्त्येवेति दृश्यताम् ॥ १७ ॥ अमृतं हरिणेति वचो
भणितं स निशम्य मुनिर्मुदमाप पराम् । अपरे च सदःस्थितयो मुनयो गृहिणस्तुतुषुश्च तदाश्रयिणः ॥१८॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते शताधिकसप्तचत्वारिंशस्तरङ्गः ॥ १४७ ॥ १४ ॥

शकाब्दे विक्रमार्कस्य गजाश्ववसुभूमिते । भाद्रशुक्लद्वितीयायां वचोऽमृतमिदं हरेः ॥ १ ॥
तत्र दुर्गपुरे दुर्ग उत्तमस्य महीभुजः । वासुदेवालयस्याग्रे स चक्रक उपाविशत् ॥ २ ॥
सिताम्बरो वृतो भक्तैरनेकैः स्वाग्रतः स्थितान् । सतः पप्रच्छ सर्वेषां हृद्दोषान् दूरयन् स च ॥ ३ ॥

पासनाऽस्तु भक्तिधर्मसुते मम ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्स्वनुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधा-सिन्धुटीकायां शताधिकसप्तचत्वारिंशस्तरङ्गः ॥ १४७ ॥ १४ ॥

येन केन विचारेण भक्तेः कामादयोऽखिलाः । दुःस्वभावा विनाश्यन्ते सर्वाधिकतमः स तु ॥ १ ॥ धर्मज्ञानविरागेभ्यो भक्तेश्चैश्वर्येन्न यः पुमान् । तल्लक्षणं यत्तचोक्तं ततः पञ्चदशे स्फुटम् ॥२॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८७८) भाद्रशुक्लद्वितीयायां भाद्रपदमासस्य शुक्लपक्षागतद्वितीयातिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमस्य । महीभुजः । दुर्गे । वासुदेवालयस्य । अग्रे । श्रीवासुदेवभगवन्मन्दिरस्य बाह्यवेदिकायामित्यर्थः । चक्रके कौशेयचक्रकासने । स श्रीहरिः । उपाविशत् ॥ २ ॥ सितेति । सिताम्बरः परिहितसकलश्वेतवसनः । अनेकैर्नानादेशागतलाद्बहुभिः । भक्तैस्त्यागिगृहिस्वाश्रितजनैः । वृतः

सभायां परिवेष्टितः । स श्रीहरिः । सर्वेषां सकलानां स्वभक्तजनानाम् । हृद्दोषान्कामादीन्हृदयावस्थितदोषान् । दूरयंस्ततो दूरीकर्त्तुम् । स्वाग्रतः स्वस्य पुरोभागे । स्थितान् । सतः साधून् । पप्रच्छ ॥३॥ दुष्ट इति । हे मुनयः ! । मुमुक्षुणा भक्तेन । दुष्टः कुत्सितः । अतिकठिनोऽतिकठिनत्वात्त्यक्तुमशक्य इत्यर्थः । भूरिदुःखदो बहुदुःखप्रदः । स्वस्य । स्वभावः कामादिदोषाकुलत्वरूपा प्रकृतिः । एकेन । केन । विचारेण । आशु शीघ्रमेव । नाश्येत नाशं नीयेत ॥ ४ ॥ यमिति । हे साधवः ! । यमेकं विचारं विना । अन्यैः । सहस्रैः । विचारैरपि । स तादृशः स्वस्वभावः । नैव । नाश्येत । तं तथा विचारम् । मे मह्यम् । वक्तुम् । अर्हथ ॥ ५ ॥ इतीति । इत्येवंविधम् । तद्वाक्यं श्रीहरिवचनम् । श्रुत्वापि । ते सन्तः । यदा । प्रश्नस्य श्रीहरिकृतानुयोगस्य । उत्तरम् । अञ्जसा तत्त्वतः । न चक्रुः । तर्हि । स श्रीहरिः । स्वयमेव । तान्साधून् । तत्स्वकृतप्रश्नोत्तरम् । आह ॥ ६ ॥ स्वस्येति । हे साधवः ! । अतिदुःखदत्वेन । अयं कामादिदुःस्वभाव एव । मे मम शत्रुः । अस्ति अतो हेतोः । सर्वोपायैः । नाश्यो मया नाशं नेयः । इत्येवंभूतः । स्वस्य स तथाभूतः । विचारः । ईरितः ॥ ७ ॥ इममर्थमेवारिदृष्टान्तेन दृढयति पञ्चभिः ।

दुष्टोऽतिकठिनः स्वस्य स्वभावो भूरिदुःखदः । केनैकेन विचारेण नाश्येताशु मुमुक्षुणा ॥ ४ ॥ यं विनाऽन्यैः सहस्रैश्च विचारैरपि नैव सः । नाश्येत तं विचारं मे वक्तुमर्हथ साधवः ॥५॥ इति श्रुत्वाऽपि तद्वाक्यं यदा प्रश्नस्य तेऽञ्जसा न चक्रुरुत्तरं तर्हि स्वयमेवाह तान् स तत् ॥ ६ ॥ स्वस्यातिदुःखदत्वेन शत्रुरेवायमस्ति मे । सर्वोपायैरतो नाश्यः स विचार इतीरितः ॥ ७ ॥ यथा स्वशत्रुः कश्चित्स्यात्स्वस्य नानार्थनाशकः । स्व स्वसृमात्राद्यपकृद्गालिदो मर्मभिद्वचाः ॥८॥ ईदृशस्यास्य तु द्रोह एव स्वस्य मतिर्भवेत् । तथाविधा उपायाश्च क्रियेरन् बहुशः स्वयम् ॥ ९ ॥ अन्यैः कृते च तद्द्रोहे स्वहृदि स्यात्प्रसन्नता । तथैव स्वभावेऽपि कर्त्तव्या शत्रुधीर्दृढम् ॥१०॥ तन्नाशे च सदा यत्नः सावधानतयाऽऽदरात् । सद्भिश्च तस्योत्खनने क्रियमाणे सदुक्तिभिः ॥ ११ ॥

यथेति । यथा । स्वस्य । नानार्थनाशकोऽनेकविधकार्यविध्वंसकः । स्वस्यात्मनः स्वसा भगिनी च माता जननी च ते आदी यासां पुत्र्यादीनां तासामपकृतो दोषोत्पादिका गालयो ग्राम्यभाषणानि ता ददातीतितथाभूतः । मर्मभिन्दि अरुन्तुदानि वचांसि यस्य सः । स्वस्य । कश्चित् । शत्रुः । स्यात् ॥ ८ ॥ ईदृशस्येति । ईदृशस्यैवंविधस्य । अस्य शत्रोः । द्रोहे द्रोहाचरणे एव । स्वस्य । मतिः । भवेत् । स्वयं स्वेन । तथाविधास्तद्द्रोहाचरणहेतवः । बहुशोऽनेके । उपायाश्च । क्रियेरन् ॥ ९ ॥ अन्यैरिति । अन्यैः स्वापेक्षयेतरैराप्तजनैः । तद्द्रोहे स्वशत्रोर्द्रोहाचरणे । कृते सति । स्वहृदि स्वमनसि । प्रसन्नता । स्यात् । तथा तेन प्रकारेणैव । दुःस्वभावेऽपि । दृढं यथातथा । शत्रुधीः । कर्त्तव्या ॥ १० ॥ तदिति । किञ्च । सावधानतया । आदरात् । तन्नाशे दुःस्वभावारिविनाशने । यत्नः । सदा । कर्त्तव्यः । सद्भिः कर्त्तृभिः । सदुक्तिभिः करणैः । तस्य दुःस्वभावशत्रोः । उत्खनने । क्रियमाणे सति ॥ ११ ॥

हर्षितव्यमिति । स्वहृदये । हर्षितव्यं प्रसन्नेन भवितव्यम् । ते तथाविधाः सन्तः । दृढं यथातथा । आप्ताः स्वहितकारिणश्च । ज्ञेयाः । एवममुना प्रकारेण । वर्त्तमानस्याचरतो भक्तस्य । दुःखभावः । विनश्यति । इति द्वयोरेकसम्बन्धः ॥ १२ ॥ वर्त्तनमिति । आत्मनः स्वस्य । दुःखभावे । शत्रुभावेन । वर्त्तनम् । यत् । तत् । विना । तदुत्खने दुःखभावोत्खने । अन्यः । उपायः । नास्त्येव ॥ १३ ॥ इतीति । इत्यमुना प्रकारेण । प्रश्नोत्तरं स्वकृतप्रश्नप्रतिवचनम् । कृत्वा । पुनः । हरिः । तान्साधून् । पप्रच्छ । हे साधवः ! । यः । पुरुषो भक्तः । धर्मज्ञानविरागेभ्यः । भक्तेश्चापि । यथा येन प्रकारेण । क्वचित्कदाचिदपि । १४ ॥ नेति । न भ्रश्येन्न पतेद् । तस्य भक्तस्य । लक्षणम् । मे मह्यम् । ब्रूत । इत्यमुना प्रकारेण । तेन श्रीहरिणा । पृष्टाः । ते समीपविष्टाः । सन्तः । उत्तराय तदुत्तरं कर्त्तुम् । नैव । शेकुः । इति द्वयोरेकान्वयः ॥ १५ ॥ तानिति । तान्स्वप्रश्नं श्रुत्वाऽप्युत्तरकरणाशक्ततया मौनमास्थितान्साधून् । हरिः । उवाच । हे सन्तः ! । यस्मिन् । पुरुषे भक्ते । तेजोऽप्रधृष्यता हेतुः प्रभावः । भवेत् । सोत्साहा स्वधर्माद्याचरणे उत्साहयुक्ता गम्भीरागाधा मतिर्यस्य तथाभूतश्च । यो भवेत् । स भक्तः ।

हर्षितव्यं स्वहृदये ज्ञेया आप्ताश्च ते दृढम् । एवं हि वर्त्तमानस्य दुःखभावो विनश्यति ॥ १२ ॥ वर्त्तनं शत्रुभावेन दुःखभावे यदात्मनः । तद्विनाऽन्य उपायस्तु नास्त्येव हि तदुत्खने ॥ १३ ॥ इति प्रश्नोत्तरं कृत्वा पुनः पप्रच्छ तान् हरिः । धर्मज्ञानविरागेभ्यो भक्तेश्चापि यथा क्वचित् ॥१४॥ न भ्रश्येत् पुरुषो यस्तु तस्य मे ब्रूत लक्षणम् । तेनेति पृष्टाः सन्तस्ते शेकुर्नैवोत्तराय तु ॥१५॥ तानुवाच हरिर्यस्मिंस्तेजस्तु पुरुषे भवेत् । सोत्साहगम्भीरमतिः स तेभ्यो न पतेत् क्वचित् ॥ १६ ॥ अनाधृष्यो भवेत्कैश्चिदपि बाल्यात्तु योऽग्निवत् । यत्स्थितौ चोपहासादिकर्त्तुं बिभ्युर्नराः स्त्रियः ॥ १७ ॥ लघुवाक्यं च यं वक्तुं शक्नुयान्नैव कश्चन । स तेजस्वीति विज्ञेयो धर्मादिभ्यः पतेन्न सः ॥ १८ ॥ यदि मानो भवेत्तस्मिंस्तर्हि सोऽपि न दूषणम् । मुमुक्षाया बलिष्ठत्वात्तस्य नापकरोति सः ॥ १९ ॥

तेभ्यो धर्मादिचतुर्भ्यः । क्वचित्कदाचिदपि । न पतेत् ॥ १६ ॥ एवं सामान्यतस्तदुत्तरं कृत्वा पुनर्विशेषतस्तदुत्तरं तेजस्वि शब्दार्थोक्तिद्वाराऽऽह द्वाभ्याम् । अनाधृष्य इति । यः । बाल्याद्बालभावादारभ्यापि । कैश्चिदपि जनैः । अग्निवत् । अनाधृष्य ईषदपि धर्षयितुमशक्यः । भवेत् । यत्स्थितौ यस्यावस्थाने सति । नराः । स्त्रियश्च । उपहासादि उपहासोच्चैर्भाषणादिकम् । कर्त्तुम् । बिभ्युर्भयं यायुः ॥१७॥ लघ्विति । कश्चनापि जनः । यं प्रति । लघु तुच्छम् । वाक्यम् । वक्तुम् । नैव । शक्नुयात् । सः । तेजस्वी । इतीत्थम् । विज्ञेयः । स तेजस्वी भक्तः । धर्मादिभ्यः । न पतेत् ॥ १८ ॥ यदीति । तस्मिंस्तथाविधे भक्ते । यदि । मानः । भवेत् । तर्ह्यपि । स मानः । दूषणम् । नास्ति । एवंविधस्य तस्य दूषणरूपो न जायते इत्यर्थः । ननु सोऽस्य लोकदृष्ट्या दूषणरूपो मास्तु । परन्तु मद्यबिन्दुर्भूमिमिव दोषः स तन्निष्ठः संस्तं नापकुर्यात्किमित्यत्राह । तस्य तथाविधभक्तस्य । मुमुक्षायाः । बलिष्ठत्वादतिबलवत्तरत्वात् । स मानः । नापकरोति तमपकर्त्तुं न शक्नोति

भक्तस्य मानापोहनेऽतिसमर्थत्वादिति भावः ॥ १९ ॥ श्रुत्वेति । इत्येवंविधाम् । तस्य श्रीहरेः । अमृततुल्यवाचम् । श्रुत्वा । सभोपविष्टाः । भक्ताः । ते । साधवः । अपरे । गृहस्थाश्च । अतीवात्यन्तम् । तोषम् । प्रापुः । सर्वे उभयेऽपि । विनयेन । ईशं परमेश्वरम् । तं श्रीहरिम् । नेमुर्नमश्चक्रुः ॥ २० ॥ स्वभक्तानां दुःस्वभावो येनैकेन विचारतः । नष्टः स्यात्तं य ऊचे स श्रीहरिस्तं ददातु मे ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्सूनुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां शताधिकाष्टचत्वारिंशस्तरङ्गः ॥ १४८ ॥ १५ ॥

कृष्णस्वरूपनिष्ठा च धर्मनिष्ठा च या तयोः । आद्यायाः श्रेष्ठताऽर्थानां सम्यग्यज्जयसाधनम् ॥ १ ॥ तीव्रश्रद्धस्य पुंसो यल्लक्षणं नाशसाधनम् । इन्द्रियाणां तीव्रतायाः श्रद्धावृद्धेश्च कारणम् ॥ २ ॥ एतत्सर्वं षोडशे तु प्रोक्तं श्रीहरिणा ततः । प्रश्नोत्तरमुखेनैव स्वाश्रितानां सतां स्फुटम् ॥ ३ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८७८) प्रौष्ठपच्छुक्ले भाद्रपदमासस्य शुक्लपक्षे । दशम्यां तिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमस्य ।

श्रुत्वेति तस्यामृततुल्यवाचं ते साधवः प्रापुरतीवतोषम् । सभोपविष्टा अपरे च भक्ताः सर्वे तमीशं विनयेन नेमुः ॥ २० ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते शताधिकाष्टचत्वारिंशस्तरङ्गः ॥ १४८ ॥ ५ ॥

शकाब्दे विक्रमार्कस्य गजाश्ववसुभूमिते । दशम्यां प्रौष्ठपच्छुक्ले वचोऽमृतमिदं हरेः ॥ १ ॥
तत्र दुर्गपुरे दुर्ग उत्तमस्य महीभुजः । उपाविशच्चक्रकेऽसौ वासुदेवालयान्तिके ॥ २ ॥
भूरिभक्तसदोन्तःस्थं सिताम्बरधरं च तम् । बद्धाञ्जलिपुटो मुक्तानन्दोऽप्राक्षीत्तदीरितः ॥ ३ ॥
मया निष्ठाद्वयं पूर्वं त्वत्त एव श्रुतं प्रभो ! । भवत्स्वरूपनिष्ठैका धर्मनिष्ठा तथाऽपरा ॥ ४ ॥
तत्राद्याऽर्जुनतुल्येषु स्यात्तव प्रभोः । युधिष्ठिरसमेष्वेव द्वितीया च भवेन्नृषु ॥ ५ ॥

महीभुजः । दुर्गे । वासुदेवालयान्तिके श्रीवासुदेवभगवन्मन्दिरान्तिकवर्त्युत्तमनृपोदगास्यभवनबाह्यवेदिकायामित्यर्थः । चक्रके उच्चपट्टकान्तर्निहितकौशेयचक्रकासने । असौ श्रीहरिः । उपाविशत् ॥ २ ॥ भूरीति । भूरिभक्तसदोन्तःस्थं नानादेशागतानेकस्वभक्तत्यागिगृहिजनसङ्कुलसभामध्यावस्थितम् । सिताम्बरधरं स्वाङ्गपरिधृतसकलश्वेतवसनम् । तं श्रीहरिम् । तदीरितस्तेन श्रीहरिणा ईरितस्त्वं किञ्चित्प्रश्नं कुर्विति प्रेरितः । मुक्तानन्दो मुनिः । बद्धाञ्जलिपुटः सन् । अप्राक्षीत् ॥३॥ मयेति । हे प्रभो ! । मया पूर्वं शताधिकद्विचत्वारिंशके तरङ्गे इत्यर्थः । निष्ठाद्वयम् । त्वत्त एव । श्रुतम् । किं तन्निष्ठाद्वयमित्यत्राह । एका प्रथमा । भवत्स्वरूपनिष्ठा । तथा । अपरा द्वितीया । धर्मनिष्ठा ॥ ४ ॥ तत्रेति । तत्र तयोर्द्वयोर्निष्ठयोर्मध्ये । आद्या प्रथमा निष्ठा । अर्जुनतुल्येषु । प्रभोः श्रीकृष्णस्य । तव । भक्तेषु । स्यात् । द्वितीया निष्ठा । युधिष्ठिरसमेषु । नृषु कृष्णस्य तव भक्तेष्वेव । भवेत् ॥ ५ ॥

एकस्मिन्निति । हे प्रभो !। द्विनिष्ठे अपि । एकस्मिन् । पुरुषे भक्ते । यथा येन प्रकारेण । वर्त्तेयाताम् । तथा । कृपया । अनुशाधि शिक्षय । त्वम् । देहिनां स्वभक्तानाम् । हितकर्त्ता । अस्ति ॥६॥ नन्वर्जुनवत्स्वरूपनिष्ठाया एवैकस्या बलवत्तरत्वादेका सैव युक्ताऽस्ति किमपरस्याः प्रयोजनमिति चेत्त्वदभिहितेषु पूर्वतरङ्गेषु प्रायशो धर्मनिष्ठासहितायास्तस्याः प्राशस्त्योक्तेर्द्वे अप्यपेक्षेते तत्रैकस्या दार्ढ्येऽपरस्याः शैथिल्यं जायतेऽतो द्वे अपि निष्ठे यथा सुदृढे स्यातां तथा ब्रूहीत्याह । दृढीकार इति । हे हरे !। एकस्या द्वयोर्मध्येऽन्यतरस्याः । चित्ते । दृढीकारे । कृते सति । अपरा पुनर्द्वितीया तु । शिथिला जायते । कृष्णस्वरूपनिष्ठादृढीकारे धर्मनिष्ठा शिथिला जायते धर्मनिष्ठादृढीकारे कृष्णस्वरूपनिष्ठा शिथिला । जायते । इत्यर्थः । तस्माद्धेतोः । द्विदार्ढ्योपायो द्वयोर्निष्ठयोर्दृढतायाः साधनम् । उच्यताम् ॥७॥ 'इत्थं स मुक्तानन्देन मुनिना पुरुषोत्तमः । पृष्ट आनन्दयंस्तं च जगादेत्यपरान्निजान्' । कृष्णेति । हे मुने !। कृष्णस्वरूपनिष्ठायाः । हृदि । दृढीकारः । विधीयतां भवद्भिः सम्पाद्यताम् । तेन कृष्णस्वरूपनिष्ठादृढीकारसंविधानेन । धर्मनिष्ठाऽपि । हृदि । दृढा । भविष्यति ॥ ८ ॥ इममर्थमेव हेतूक्तिपूर्वं द्रढयति त्रिभिः । पृथिवीति । हे मुने ! । श्रीमद्भागवते ।

एकस्मिन् पुरुषे द्वे वर्त्तेयातां यथा प्रभो !। तथाऽनुशाधि कृपया हितकर्त्ताऽसि देहिनाम् ॥ ६ ॥ दृढीकारे कृते चित्त एकस्या अपरा पुनः । शिथिला जायते तस्माद्द्विदार्ढ्योपाय उच्यताम् ॥ ७ ॥ श्रीहरिरुवाच– कृष्णस्वरूपनिष्ठाया दृढीकारो विधीयताम् । तेनैव धर्मनिष्ठाऽपि भविष्यति दृढा हृदि ॥ ८ ॥ पृथिवीधर्मसंवादे श्रीमद्भागवते हरेः । सत्य शौचादयो नित्या बहवः कथिता गुणाः ॥ ९ ॥ कृष्णमेव समाश्रित्य साक्षाद्धर्मस्तु वर्त्तते । तद्वंश्याश्च गुणाः सर्वे ततोऽसौ धर्मधारकः ॥ १० ॥ प्रोच्यते धर्मवर्माऽसौ कृष्णो धर्मधुरंधरः । अतः स्वरूपनिष्ठायामन्या साहजिकी भवेत् ॥११॥ केवलं धर्मनिष्ठाया दृढीकारे तु चेतसि । कृष्णस्वरूपनिष्ठा स्याच्छिथिला नात्र संशयः ॥ १२ ॥

पृथिवी धर्मसंवादे । हरेः । सत्यशौचादयः । नित्याः । बहवः । गुणाः । कथिताः । सन्ति ॥ ९ ॥ कृष्णमिति । साक्षाद्धर्मः । कृष्णम् । समाश्रित्यैव । वर्त्तते । तद्वंश्या धर्मवंशोद्भवाः । सर्वे । गुणाः । शुभसुखप्रसादादयः । कृष्णम् । समाश्रित्यैव वर्त्तते । ततो हेतोः । असौ श्रीकृष्णः । धर्मधारकः । प्रोक्तः ॥ १० ॥ प्रोच्यत इति । असौ । कृष्णः । धर्मवर्मा वर्म यथा शरीरं रक्षति तथा धर्मरक्षक इत्यर्थः । धर्मधुरंधरः । प्रभुत्वेन धर्मभारवाहकः । स्वयमाचरन्स्वीयानाचारयंश्च सर्वथा धर्मरक्षकः । प्रोच्यते । 'ब्रह्मण्ये धर्मवर्मणी'ति श्रीभागवतोक्तेः । धर्मस्य प्रभुरच्युत'इति स्मृतेश्च । अतो हेतोः । स्वरूपनिष्ठायां केवलश्रीकृष्णस्वरूपनिष्ठायां सत्याम् । अन्या धर्मनिष्ठा । साहजिकी स्वाभाविकी । भवेत् । कृष्णस्वरूपनिष्ठाया धर्मधारकश्रीकृष्णस्वरूपे हृदि निश्चले जाते धर्मनिष्ठा सूच्यनुसूत्रवदायायादेवेति भावः ॥ ११ ॥ केवलमिति । केवलमेकस्याः । धर्मनिष्ठायाः । चेतसि । दृढीकारे सति तु । कृष्णस्वरूपनिष्ठा । शिथिला । स्यात् । अत्रार्थे । संशयः । नास्ति । श्रीभागवदादौ सच्छास्त्रे धर्मनिष्ठया स्वर्महरादिलोकप्राप्तिफलत्वोक्तेर्भगवत्स्वरूपनिष्ठाया मोक्षफलत्वोक्तेः केवलधर्मनिष्ठायाः स्वहृदि गौरवागमे सति तत्रैव कल्याणमतिः स्यान्न

भगवन्निष्ठायामित्ययं बाध आयायादिति भावः ॥ १२ ॥ इतीति । इत्यमुना प्रकारेण । प्रश्नोत्तरम् । दत्त्वा । स श्रीहरिः । तम् । मुनिं मुक्तानन्दसाधुम् । पुनः । आह । हे मुने ! । अन्यत् । हृद्गतं मनोगतम् । किञ्चित् । प्रष्टव्यम् । अस्ति चेत् । तर्हि । पृच्छयताम् ॥ १३ ॥ पप्रच्छेति । अथैवंविधश्रीहरिवाक्यश्रवणानन्तरम् । मुक्तानन्दो मुनिः । तं श्रीहरिम् । पप्रच्छ । हे प्रभो ! । पञ्च । विषया मायिकाः शब्दादयोऽर्थाः । वैराग्येणैव । जीयन्ते । अथवा । केनचित् । अन्योपायेन । जीयन्ते ॥ १४ ॥ तमिति । तमेवं पृच्छन्तं मुक्तानन्दमुनिम् । हरिः । उवाच । हे साधो ! । वैराग्यं तु । अस्तु । अथवा । मास्तु । विषयजये वैराग्यप्रयोजनं नास्तीति भावः । किन्तु । कृष्णोक्तेन्द्रियरोधाख्यनियमैः स्वयं श्रीकृष्णोदिताक्षविषयप्रसारप्रतिरोधाख्यैर्नियमैरित्यर्थः । तज्जयो विषयजयः । स्यात् । हि । वक्ष्यमाणप्रकारेन्द्रियनियमनेनैव विषयजयो भवेदित्यर्थः ॥ १५ ॥ एतदेव स्फुटमाह चतुर्भिः । वैराग्येणेति । श्रोत्रवृत्तिः । अन्तेऽन्तःकरणे । क्रष्टुं ग्राम्यगीतादिशब्दादाकर्षणं कर्तुम् । वैराग्येण । दुःशका दुःसाध्या । अस्ति । केवलवैराग्येण श्रोत्रेन्द्रियवृत्तेः स्वविषयादाकृष्य स्वान्तःस्थापनं दुःसाध्यमस्तीत्यर्थः । तथापि ।

इति प्रश्नोत्तरं दत्त्वा पुनराह स तं मुनिम् । प्रष्टव्यमन्यत्किञ्चिच्चेत्प्रच्छयतां तर्हि हृद्गतम् ॥१३॥ पप्रच्छ मुक्तानन्दोऽथ तं पञ्चविषयाः प्रभो ! । वैराग्येणैव जीयन्ते वाऽन्योपायेन केनचित् ॥ १४ ॥ तमुवाच हरिः साधो ! वैराग्यं त्वस्तु मास्तु वा । कृष्णोक्तेन्द्रियरोधाख्यनियमैः स्याद्धि तज्जयः ॥ १५ ॥ वैराग्येण श्रोत्रवृत्तिर्दुःशका क्रष्टुमन्तरे अङ्गुल्याद्यैः कर्णरन्ध्ररोधे शब्दजयोऽञ्जसा ॥ १६ ॥ अस्पृश्यास्पर्शनेनैव त्वचा स्पर्शजयोऽञ्जसा । स्याद् दृशाऽनर्हवस्त्वीक्षात्यागाद्रूपजयस्तथा ॥ १७ ॥ कृष्णप्रसाद्यम्बुमिश्रान्नयुक्ताहारतः सकृत् । दुर्जयोऽपि रसः साधो ! साधुना जीयते द्रुतम् ॥ १८ ॥ अयोग्यगन्धानाघ्राणात्तथा गन्धोऽपि जीयते । एवं पञ्चापि विषया जीयन्ते नियमैर्दृढैः ॥ १९ ॥ वैराग्यवानपि पुमान् कृष्णनिश्चयवानपि । कृष्णोक्तनियमैर्हीनो विषयैरभिभूयते ॥ २० ॥

अङ्गुल्याद्यैः । कर्णरन्ध्ररोधे सति । शब्दजयः । अञ्जसाऽनायासेन । स्यात् ॥१६॥ अस्पृश्येति । त्वचा त्वगिन्द्रियेण । अस्पृश्यास्पर्शनेन कृष्णनिषिद्धस्पर्शस्त्रीधनाद्यस्पृश्यपदार्थानामस्पर्शनेनैव । स्पर्शजयः । अञ्जसा । स्यात् । दृशा चक्षुरिन्द्रियेण अनर्हं द्रष्टुमयोग्यं वस्तु स्त्र्यादिपदार्थस्तस्येक्षा संदर्शनं तस्यास्त्यागो विधानं तस्मात् । रूपजयः । तथाऽञ्जसा । स्यात् ॥१७॥ कृष्णेति । हे साधो ! । सकृदेकवारम् । कृष्णप्रसादि श्रीकृष्णनिवेदितमम्बुमिश्रं तत्पादोदकमिश्रितं च यदन्नं तस्य युक्ताहारो मिताशनं तस्मादितिततः । दुर्जयोऽपि । रसः । साधुना । द्रुतं शीघ्रमेव । जीयते ॥१८॥ अयोग्येति । अयोग्यगन्धानाघ्राणात् स्वेनाघ्रातुमयोग्यस्य भगवद्प्रसादिकस्रक्चन्दनादेर्गन्धस्याघ्राणस्यानाचरणादित्यर्थः । गन्धोऽपि । तथाऽञ्जसा । जीयते । एवममुना प्रकारेण । पञ्चापि । विषयाः । दृढैः सुस्थिरैः । नियमैः । जीयन्ते ॥१९॥ विपक्षेदोषमाह । वैराग्येति । पुमान् भक्तः । वैराग्यवान्सन्नपि । कृष्णनिश्चयवान्सन्नपि । कृष्णोक्तनियमैः । हीनश्चेत् । तर्हि । विषयैः । अभिभूयते पराभूतो भवति ॥ २० ॥

अत इति । अतो हेतोः । वैराग्यादिगुणोपेतैरपि । भक्तैः । विषयान् । विजिगीषुभिर्विजेतुमिच्छद्भिः । सद्भिः । नियमाः । अञ्जसा तत्त्वतः । सदा । पाल्याः । हि ॥ २१ ॥ एवंभूतान्विशेषतः सद्भिः पाल्यान्नियमानभिधाय साम्प्रतं मया हरिगीतादिषु ये नियमाः सर्वेषां पाल्यतयोक्तास्ते यथार्हं मच्छ्रितैः सकलैरवश्यं पाल्या इत्याह । यावदिति । मच्छ्रितैः । सकलैर्मुक्तैर्मुमुक्षुभिर्गृहिभिस्त्यागिभिश्चापि । यावत् । देहस्मृतिः । स्यात् । तावत् । यथार्हं स्वस्वयोग्य-तानुसारेणेत्यर्थः । नियमाः । पाल्याः । इतीत्थंभूता । मम । आज्ञा । वर्त्तते ॥ २२ ॥ एवं स्वाश्रितानां सर्वथा नियमपालनाज्ञां विधायेदानीं नियमादिपालनहेतुः श्रद्धा तद्धेतुरुत्साहस्तदनुरूपं तत्फलं चेति ब्रुवन् श्रद्धादेरुत्तममध्यमाधमभेदेन तत्फलस्यापि तथात्वमाह त्रिभिः नियमेति । हे मुने ! । यस्य भक्तस्य । नियमादेः । स्वधर्मज्ञानवैराग्यसप्रेमनवधाभक्तेरादिशब्देन ग्रहणम् । पालने । श्रद्धाया विश्वासपूर्विकायास्त्वरायाः । तीव्रतोत्तमता । स्यात् । तस्य भक्तस्य । उत्साहोऽपि । तीव्र उत्तमः । स्यात् । तत्फलं विषयजयादिकं नियमादिफलम् । तथाविधमुत्साहानुसार्य्येव । स्यात् ॥२३॥ श्रद्धेति । यस्य । मुमुक्षोः । पुरुषस्य भक्तस्य । श्रद्धा । मध्यमा ।

अतो हि नियमाः पाल्या विषयान् विजीगीषुभिः । वैराग्यादिगुणोपेतैरपि भक्तैः सदाञ्जसा ॥ २१ ॥ यावद्देह स्मृतिस्तावन्मच्छ्रितैः सकलैरपि । यथार्हं नियमाः पाल्या इत्याज्ञा मम वर्त्तते ॥ २२ ॥ नियमादेः पालने स्याच्छ्रद्धाया यस्य तीव्रता । तस्योत्साहोऽपि तीव्रः स्यात्तत्फलं च तथाविधम् ॥ २३ ॥ श्रद्धा च मध्यमा यस्य तस्योत्साहोऽपि मध्यमः । मध्यमं तत्फलं च स्यान्मुमुक्षोः पुरुषस्य हि ॥ २४ ॥ मन्द श्रद्धा च यस्य स्यात्तस्योत्साहस्तथाविधः । फलं तदनुरूपं च भवत्यत्राद्य उत्तमः ॥ २५ ॥ अखण्डानन्दसाधुस्तं तदाऽपृच्छत्सतांपते ! । तीव्रश्रद्धः पुमान्केन लक्षणेनावगम्यते ॥ २६ ॥ श्रीहरिरुवाच—कृष्णस्य दर्शने साधो ! जायमानेऽन्यकर्मसु । क्रियमाणेषु तस्य स्याद्व्यग्रता च त्वरा भृशम् ॥ २७ ॥ वार्त्तायां जायमानायां कथायां वा रमापतेः । स्यात्तथैव त्वरा तस्य क्रियमाणान्यकर्मसु ॥ २८ ॥

स्यात् । तस्य भक्तस्य । उत्साहोऽपि । मध्यमः । स्यात् । तत्फलं च । मध्यमम् । स्यात् । हि ॥ २४ ॥ मन्देति । यस्य भक्तस्य । श्रद्धा । मन्दा । स्यात् । तस्य भक्तस्य । उत्साहः । तथाविधो मन्दः । स्यात् । फलं च । तदनुरूपं उत्साहानुरूपम् । स्यात् । अत्रैषु त्रिविधभक्तेषु मध्ये । आद्यस्तीव्रश्रद्धः । उत्तमः । भवति ॥ २५ ॥ अखण्डानन्देति । तदैवंविधश्रीहरिवाक्यश्रवणसमये । अखण्डानन्दसाधुः । तं श्रीहरिम् । अपृच्छत् । हे सतांपते ! । तीव्रश्रद्धः । पुमान् भक्तः । केन । लक्षणेन । अवगम्यते ॥ २६ ॥ 'पृष्टो नारायणोऽखण्डानन्देनेत्थं स साधुना । हर्षयन्नब्रवीत्तं च स्वाश्रितानपरा'निति । कृष्णस्येति । हे साधो ! । कृष्णस्य श्रीहरेः । दर्शने । जायमाने सति । तस्य तीव्रश्रद्धस्य भक्तस्य । क्रियमाणेषु । अन्यकर्मसु स्नानादिस्वदैहिकक्रियासु । व्यग्रता आकुलता । भृशमत्यन्तम् । त्वरा शीघ्रता च । स्यात् ॥ २७ ॥ वार्त्तायामिति । रमापतेः । साक्षाद्भगवतः । अथवा । कथायाम् । जायमानायां सत्याम् । तस्य तीव्रश्रद्धस्य भक्तस्य । क्रियमाणान्यकर्मसु ।

तथोक्तप्रकारेणैव । त्वरा । स्यात् । स्वदैहिकक्रियाः स्वधर्माविरोधेन यथा तथा शीघ्रमाचरन् भगवद्दर्शन वार्त्ता कथाश्रवणादौ यः प्रसज्जते स तीव्रश्रद्धो भक्तो बोध्य इत्यर्थः ॥ २८ ॥ भूरीति । तस्य भक्तस्य । कृष्णकर्मसु साक्षाद्भगवतो ध्यानार्चनादिक्रियासु । भूरिकाले बहुकालापगमेऽपि । क्षणवत् । स्यात् । तस्य । हृदये । कृष्णाज्ञापालने । प्रीतिश्चापि । अधिका । भवेत् ॥ २९ ॥ लोक इति । लोके । प्रतिष्ठितस्यापि । स्वस्य । कृष्णतत्सतां श्रीहरेस्तत्साधूनां चेत्यर्थः । निर्मानं यथातथा । साष्टाङ्गनमनादौ । अधिकः । आदरः । स्यात् ॥ ३० ॥ एवमिति । एवंविधैः । लक्षणैः । तीव्रश्रद्धः । पुमान् भक्तः । मतः । तन्मध्यमत्वमान्द्याभ्यां श्रद्धाया-मध्यमत्वेन मन्दत्वेन चेत्यर्थः । इतरौ मध्यमश्रद्धमन्दश्रद्धौ । पूरुषौ चापि । मतौ ॥ ३१ ॥ प्रकारान्तरेणापि तान् लक्षयति त्रिभिः । तीव्रेति । तीव्रश्रद्धस्य । पुंसो भक्तस्य । इन्द्रियाणि । द्रुतं शीघ्रमेव । वशे स्वायत्ततायाम् । स्युः । तथा ग्राम्यार्थग्रहणे मायिकविषयोपादाने । मन्दानि मन्दवेगानि । कुण्ठिताग्राणि कुण्ठितवृत्तीनि । स्युः ॥ ३२ ॥ मध्यमेति । मध्यमश्रद्धपुंसस्तु । तानीन्द्रियाणि । कर्हिचित् । विषयग्रहे ग्राम्यविषयोपादाने । कुण्ठिताग्राणि । स्युः । कुत्रचित्कर्हिचित् । तीक्ष्णा-

भूरिकालोऽपि तस्य स्यात्क्षणवत्कृष्णकर्मसु । कृष्णाज्ञापालने प्रीतिर्भवेच्च हृदयेऽधिकः ॥ २९ ॥ लोके प्रतिष्ठितस्यापि स्वस्य स्यादा-दरोऽधिकः । साष्टाङ्गनमनादौ तु निर्मानं कृष्णतत्सताम् ॥ ३० ॥ एवं विधैर्लक्षणैस्तु तीव्रश्रद्धः पुमान्मतः । तन्मध्यम-त्वमान्द्याभ्यामितरौ चापि पूरुषौ ॥ ३१ ॥ तीव्रश्रद्धस्य पुंसः स्युरिन्द्रियाणि वशे द्रुतम् । मन्दानि कुण्ठिताग्राणि ग्राम्यार्थग्रहणे तथा ॥ ३२ ॥ मध्यमश्रद्धपुंसस्तु तानि स्युर्विषयग्रहे । कर्हिचित्कुण्ठिताग्राणि तीक्ष्णाग्राण्यपि कुत्रचित् ॥३३॥ मन्दश्रद्धस्य तानि स्युस्तीक्ष्णाग्राण्यर्थसंग्रहे । गोप्तुं शक्यो न तद्वेगस्तेन तद्वशगत्वतः ॥ ३४ ॥ मुक्तानन्दस्तदाऽपृच्छदिन्द्रियाणां तु तीक्ष्णता । अप-नोद्या कथं स्वामिन् प्रबलानां मुमुक्षुणा ॥ ३५ ॥ तमुवाच हरिः साधो ! त्यागिनां गृहिणां तथा । मर्यादा या निबद्धाऽस्ति हरिणा धर्मवर्मणा ॥ ३६ ॥ तस्यामेव स्वेन्द्रियाणि वर्त्तनीयानि सर्वथा । इतस्ततः समाकृष्य भ्रमन्त्यशुचिवर्त्मसु ॥ ३७ ॥

ग्राण्यपि । स्युः ॥ ३३ ॥ मन्देति । मन्दश्रद्धस्य भक्तस्य । तानीन्द्रियाणि । अर्थसङ्ग्रहे स्वस्वग्राम्यविषयोपादाने । तीक्ष्णाग्राणि । स्युः । तद्वशगत्वतः स्वस्वविषयग्रह-तीक्ष्णाग्रेन्द्रियवशवर्त्तित्वाद्धेतोः । तेन मन्दश्रद्धेन पुंसा । तद्वेग इन्द्रियवेगः । गोप्तुमावरितुम् । न शक्यः ॥ ३४ ॥ मुक्तानन्द इति । तदा श्रीहरेरेवंविधवाक्यश्रवणा-वसरे । मुक्तानन्दो मुनिः । अपृच्छत् । हे स्वामिन् ! । मुमुक्षुणा भक्तेन । प्रबलानाम् । इन्द्रियाणाम् । तीक्ष्णता तीव्रवृत्तित्वम् । कथं केनोपायेन । अपनोद्या निवर्त्तनीया ॥ ३५ ॥ तमिति । तमेवं पृच्छन्तं मुक्तानन्दमुनिम् । हरिः । उवाच । हे साधो ! । धर्मवर्मणा । हरिणा । त्यागिनाम् । तथा । गृहिणाम् । या । मर्यादा स्वस्वधर्मस्थितिः । निबद्धाऽस्ति ॥ ३६ ॥ तस्यामिति । अशुचिवर्त्मसु ग्राम्यविषयभोगमार्गेषु । इतस्ततः । भ्रमन्ति । स्वेन्द्रियाणि । समाकृष्य ततः प्रत्याहृत्य । तस्यां हरिनिबद्धमर्यादायामेव । सर्वथा । वर्त्तनीयानि । इति द्वयोरेकसम्बन्धः ॥ ३७ ॥

ऐश्वर इति । शुचौ सर्वदा शुद्धे । ऐश्वरे परमेश्वरनिबद्धे । वर्त्मनि धर्ममर्यादारूपे मार्गे । साधुशिक्षया भगवदेकान्तिकसत्कृतोपदेशेन । चरताम् । मुमुक्षो भक्तस्य । इन्द्रियाणाम् । तीक्ष्णता । द्रुतं शीघ्रमेव । नश्यति ॥ ३८ ॥ अशुचीति । हे सन्मते ! । इन्द्रियाणाम् । अशुच्याहारविगमे ग्राम्यविषयभोगनिवर्त्तने सति । अस्य भक्तस्य । अन्तःकरणमपि । अनायासेन । शुध्यति ॥ ३९ ॥ विरक्त इति । अतो हेतोरेव । विरक्तो वैराग्यवान् । अथवा । अविरक्तो भक्तः । स्वेन्द्रियाणि । ऐश्वरे । वर्त्मनि । रक्षन्वर्त्तयन्सन् । तानीन्द्रियाणि । अरं शीघ्रमेव । जयति ॥ ४० ॥ अखण्डानन्देति । तमेवं मुक्तानन्दमुनिं प्रति वदन्तम् । हरिम् । अखण्डानन्दसाधुः । पप्रच्छ ! हे प्रभो ! । मन्दश्रद्धस्य । भक्तस्य । श्रद्धा वृद्धिः । कथं केन साधनेन । भवेत् । अत्र मन्दश्रद्धावद्भक्तप्रसङ्गाभावेऽप्यकाण्डमखण्डानन्दमुनिप्रश्नोपन्यास-स्यायं भावः । अत्रादौ श्रीहरिप्रेरणया मुक्तानन्दमुनिप्रश्नः श्रीहरिकृतं तदुत्तरं च ततः पुनर्हरिप्रेरणया तत्प्रश्नस्तदुत्तरं चास्ति तत्रागतश्रद्धात्रैविध्यं श्रुत्वाऽखण्डानन्दमुनेः प्रश्नो हरिकृतं तदुत्तरं च तत्रागतेन्द्रियतीक्ष्णता प्रसङ्गेन पुनर्मुक्तानन्दमुनिप्रश्नस्तदुत्तरं च हरिणा कृतं ततः प्रागखण्डानन्दमुनेः प्रश्नोदये जाते सत्यप्यन्तरा कृतप्रश्नस्य मुक्तानन्दमुने-

ऐश्वरे वर्त्मनि शुचौ चरतां साधुशिक्षया । मुमुक्षोरिन्द्रियाणां तु तीक्ष्णता नश्यति द्रुतम् ॥ ३८ ॥
अशुच्याहारविगम इन्द्रियाणां तु सन्मते ! । अन्तःकरणमप्यस्य ह्यनायासेन शुद्ध्यति ॥ ३९ ॥
विरक्तो वाऽविरक्तो वा स्वेन्द्रियाण्यत एव हि । ऐश्वरे वर्त्मनि दृढं रक्षं स्तानि जयत्यरम् ॥ ४० ॥
अखण्डानन्दसाधुस्तं पप्रच्छाथ हरिं प्रभो ! । मन्दश्रद्धस्य पुंसस्तु श्रद्धा वृद्धिः कथं भवेत् ॥ ४१ ॥
श्रीहरिरुवाच– कृष्णतद्भक्तद्भक्तिमाहात्म्यं साधु सन्मुखात् । तेनादावधिगन्तव्यं सेवित्वा प्रत्यहं सतः
॥ ४२ ॥ सति माहात्म्यबोधे तु श्रद्धा भगवती ध्रुवम् । विवर्द्धते ततस्तेन तदेव ज्ञेयमञ्जसा ॥ ४३ ॥

र्गौरवेण स्वयं प्रश्नमनाचरंस्तत्प्रश्नोत्तरसमाप्तौ पुनः स्वप्रश्नोत्तरे सम्प्राप्तमन्दश्रद्धस्य श्रद्धावृध्युपायं पप्रच्छेति ॥४१॥ 'श्रीकृष्ण इति पृष्टः सोऽखण्डानन्दसता पुनः । इत्थ-मानन्दयंस्तं च निजानन्यान्समब्रवीत्' । कृष्णेति । हे मुने ! । तेन मन्दश्रद्धेन भक्तेन । आदौ । प्रत्यहं प्रतिदिनम् । सतः श्रीहरिरेकान्तिकसाधून् । सेवित्वाऽनुवृत्तिपूर्वं सम्परिचर्य । सन्मुखात्स्वपरिचरितसाध्वास्यपद्मात् । कृष्णः स्वयं श्रीहरिश्च तद्भक्तास्तदेकान्तिकसाधवश्च तद्भक्तिः श्रीहरेरकान्तिकोपासना च तासां माहात्म्यम् साधु । सम्यक् यथातथा । अधिगन्तव्यं ज्ञेयम् ॥ ४२ ॥ सतीति । माहात्म्यबोधे कृष्णादिमहिम्नः सम्यगवगमे । सति तु । भागवती भगवतः कृष्णस्य तत्सतां तद्भक्तेश्च सम्बन्धिनी । श्रद्धा । ध्रुवम् । निश्चितमेव । विवर्द्धते । ततो हेतोः । तेन मन्दश्रद्धभक्तेन । तत्कृष्णादिमाहात्म्यमेव । अञ्जसा तत्त्वतः । ज्ञेयम् । कृष्णादिमाहा-त्म्यज्ञानमेव मन्दश्रद्धस्य श्रद्धावृद्धिसाधनमस्तीत्यर्थः ॥ ४३ ॥

भगवते इति । इत्येवंविधम् । भगवता श्रीहरिणा । उदितम् । सुधोपमम् । वचनम् । निशम्य । सः । मुनिरखण्डानन्दसाधुः । अतिमुदम् । आप्तवान् । सदःस्थिताः समेपविष्टाः । तदाश्रिताः । सकलाः । मुनिजनाः । गृहिणश्च । अतिमुदम् । आप्तवन्तः ॥ ४४ ॥ प्रश्नोत्तरात्मकैः स्वस्य श्रीहरियो वचोऽमृतैः । निजानानन्दयामास मह्यमानन्ददोऽस्तु सः ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्स्नुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां शताधिकैकोनपञ्चाशत्तमस्तरङ्गः ॥ १४९ ॥ १६ ॥

सहितो मायिकैस्तत्त्वै रहितो वाऽपि तैर्हरिः । इति प्रश्नोस्योत्तरं यद् ध्यात्रा भक्तेन वै यथा ॥ १ ॥ युक्तं महिम्ना निर्दोषं वेद्यं रूपं प्रभोर्हरेः । एतत्सप्तदशे प्रोक्तं प्रश्नोत्तरमुखेन वै ॥ २ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८७८) इषस्याश्विनमासस्य । कृष्णैकादश्यां कृष्णपक्षस्यैकादशीतिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमस्य । महीभृतः । दुर्गे । वासुदेवालयाभ्याशगृहवेद्यां श्रीवासुदेवभगवन्मन्दिरसमीपवर्त्युत्तमनृपतेरुदगास्य-

भगवतेत्युदितं वचनं मुनिः स तु निशम्य सुधोपममाप्तवान् । अतिमुदं सकलाश्च तदाश्रिता मुनिजना गृहिणश्च सदःस्थिताः ॥४४॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते शताधिकैकोनपञ्चाशतमस्तरङ्गः ॥ १४९ ॥ १६ ॥

शकाब्दे विक्रमार्कस्य गजाश्ववसुभूमिते । इषस्य कृष्णैकादश्यां वचोऽमृतमिदं हरेः ॥ १ ॥
तत्र दुर्गपुरे दुर्ग उत्तमस्य महीभृतः । वासुदेवालयाभ्याशगृहवेद्यां महासने ॥ २ ॥
उपाविशत्स तु निशि दीपिकाद्वयशोभितः । सिताम्बरधरो भक्तैर्वृतः स्वीयैः सहस्रशः ॥ ३ ॥
श्रुत्वा सद्भिर्गीयमानं सवाद्यं भगवद्यशः । प्रसन्नः स तदन्ते तान्स्वयमेवाब्रवीद्वचः ॥ ४ ॥
वपुः कृष्णस्य मायोत्थचतुर्विंशतितत्वयुक् । विदन्ति केचन बुधाः केचित्तद्रहितं तथा ॥ ५ ॥

भवनबाह्यवेदिकायाम् । महासने उत्तमनृपामात्यहरजिद्भक्तसमर्पितमहापट्टकासने ॥ २ ॥ उपाविशदिति । निशि रात्रौ भगवतः शायनीकनीराजानन्तरमित्यर्थः । दीपिकाद्वयशोभितः स्वभक्तकृष्णदासविठ्ठलदासदिवाकीर्त्तिधृतदीपिकाद्वयप्रभासंशोभितः । सिताम्बरधरः परिहितसकलश्वेतवसनः । सहस्रशो नानादेशागतत्वादनेकैः । स्वीयैः । भक्तैस्त्यागिगृहिस्वभक्तजनैः । वृतः सभायां परिवेष्टितः । स श्रीहरिः । उपाविशत् । इति द्वयोरेकसम्बन्धः ॥ ३ ॥ श्रुत्वेति । सद्भिर्मुक्तानन्दादिसाधुभिः । सवाद्यं वाद्यवादनसहितं यथातथा । गीयमानम् । भगवद्यशो भगवतः स्वस्य स्वरूप गुण चरित्र यशोङ्कितपद्यानीत्यर्थः । श्रुत्वा । प्रसन्नः । स श्रीहरिः । तदन्ते पद्यगायनसमाप्तौ । स्वयमेव । तान्साधून् । वचः । अब्रवीत् ॥४॥ वपुरिति । हे मुनयः ! । केचन । बुधा विद्वांसो भक्ताः । कृष्णस्य । वपुर्मूर्त्तिः । मायोत्थचतुर्विंशतितत्त्वयुक् प्रधानप्रकृत्युत्पन्नचतुर्विंशतितत्त्वयुक्तम् । विदन्ति जानन्ति । तथा । केचित् । बुधाः । तद्रहितं मायोत्पन्नचतुर्विंशतितत्त्ववर्जितम् । विदन्ति ॥ ५ ॥

केषामिति । हे साधवः ! । तत्र तेषूभयविधेषु मध्ये । केषाम् । ज्ञानम् । युक्तं योग्यम् । भवति । इत्येतत् । माम् । ब्रूत । इत्यमुना प्रकारेण । पृष्टे श्रीहरिणा प्रश्ने कृते सति । मुक्तानन्दः । मुनिः । प्रभुम् । तं श्रीहरिम् । प्रोवाच ॥६॥ तत्त्वैरिति । हे हरे ! । ये बुधाः । मायामयैर्मायोत्पन्नैः । तत्त्वैः । युक्तम् । त्वाम् । जानन्ति । तेषाम् । वेदनं ज्ञानम् । युक्तम् । नास्ति । यतो हेतोः । त्वम् । मायातः । परः सर्वदा व्यतिरिक्त एव । अस्ति ॥७॥ विदुरिति । ये । बुधास्तु । तद्रहितं मायातत्कार्यवर्जितम् । चिद्रूपं चैतन्यमयमूर्त्तिम् । त्वां श्रीहरिम् । विदुर्जानन्ति । ते बुधाः । सम्यग्यथार्थतः । जानन्ति । इत्येवंविधम् । तस्य मुक्तानन्दमुनेः । वचः । श्रुत्वा । हरिः । अब्रवीत् ॥ ८ ॥ चतुरिति । हे मुने ! । साङ्ख्यशास्त्रे । सजीवानि जीवसहितानि । चतुर्विंशतितत्त्वानि । कथितानि । भवन्ति । परः स्वरूपस्वभावादिभिस्तद्विलक्षणः । पुमान् पुरुषाकृतिः परमेश्वरः । तदाधारः स्वैश्वर्येण तद्धारकः । कथितः । अस्ति ॥ ९ ॥ आधारेति । आधाराधेययोस्तु साहचर्यम् । अस्ति । भिन्नता पृथग्भावः । नास्ति । एतदेव पुनः स्पष्टमाह । आधारमधिकरणम् । अन्तरा विना । आधेयम् । नोच्यते पृथग्भूतं न कथ्यते । तदाधेयम् । विना । स आधारश्च । नोच्यते

केषां ज्ञानं तत्र युक्तमिति मां ब्रूत साधवः । इति पृष्टे मुनिर्मुक्तानन्दः प्रोवाच तं प्रभुम् ॥ ६ ॥ तत्त्वैर्मायामयैर्युक्तं ये त्वां जानन्ति हे हरे ! । न तेषां वेदनं युक्तं मायातस्त्वं परो यतः ॥ ७ ॥ विदुस्तद्रहितं ये तु चिद्रूपं त्वां बुधा हि ते । सम्यग्जानन्तीति तस्य वचः श्रुत्वाऽब्रवीद्धरिः ॥ ८ ॥ चतुर्विंशतितत्त्वानि कथितानि भवन्ति वै । सांख्यशास्त्रे सजीवानि तदाधारः परः पुमान् ॥ ९ ॥ आधाराधेययोस्त्वस्ति साहचर्यं न भिन्नता । नाधारमन्तराऽऽधेयं तद्विना च स नोच्यते ॥ १० ॥ सापेक्षत्वं च शास्त्रेषु तयोः सर्वत्र दृश्यते । अतो हरिं विना नास्ति तत्त्वानां तु स्थितिः पृथक् ॥ ११ ॥ यथा पृथ्व्यादिभूतानामाधारोऽस्ति वियत्तथा । तत्त्वानां कृष्ण आधारस्तस्मात्तानि कथं पृथक् ॥ १२ ॥ पृथ्व्यादिदोषासंस्पृष्टमाधारोऽपि वियत् । तत्त्वदोषैस्तथाऽस्पृष्टस्तदाधारः स वर्त्तते ॥१३॥ एवं हि भगवद्रूपे तत्त्वयुक्ते प्रकीर्त्तिते । को बाधोऽस्त्यथ तद्धीने कीर्त्तिते च गुणोऽस्ति कः ॥१४॥

॥ १० ॥ साक्षेपत्वमिति । सर्वत्र सर्वेषु । शास्त्रेषु । तयोराधाराधेययोः । सापेक्षत्वं परस्पराकाङ्क्षायुक्तत्वम् । दृश्यते । अतो हेतोः । हरिं विना । तत्त्वानाम् । पृथक् । स्थितिस्तु । नास्ति ॥ ११ ॥ एतदेव स्पष्टयितुमाकाशदृष्टान्तेनाधाराधेययोरपृथक्तयाऽवस्थानत्वमाधारस्याधेयदोषास्पर्शित्वं चाह द्वाभ्याम् । यथेति । यथा । पृथ्व्यादिभूतानाम् । आधारः । वियदाकाशम् । अस्ति । तच्च तेभ्यः पृथक् नास्ति । तथा । तत्त्वानाम् । आधारः । कृष्णः । अस्ति । तस्मात्तत्त्वाधारकृष्णात् । तानि तत्त्वानि । पृथक् पृथग्भूतानि । कथम् । स्युर्न स्युरेवेत्यर्थः ॥१२॥ पृथ्वीति । यथा । वियदाकाशम् । आधारः पृथ्व्यादिभूतचतुष्टयाधिकरणं सदपि । पृथ्व्यादिदोषासंस्पृष्टम् । वर्त्तते । तथा । स कृष्णः । तदाधारः सजीवतत्त्वाधारः सन्नपि । तत्त्वदोषैः । अस्पृष्टः । वर्त्तते ॥ १३ ॥ एवमिति । एवममुना प्रकारेण । भगवद्रूपे तत्त्वयुक्ते । प्रकीर्त्तिते सति । कः । बाधः । अस्ति । अथ च । तद्धीने तत्त्वरहिते । कीर्त्तिते सति । कः । गुणः । अस्ति ॥ १४ ॥

इतीति । इत्यमुना प्रकारेण । उक्तः श्रीहरिणा कथितः । सः । साधुर्मुक्तानन्दमुनिः । हृष्टः सन् । यदा । किञ्चन किमपि । नोवाच । तदा । दीनानाथाभिधः । विप्रः । नमन्नमस्कुर्वन्सन् । तं श्रीहरिम् । प्रोवाच ॥ १५ ॥ ध्यायेदिति । हे प्रभो ! । अत्र सत्सङ्गे । यः । पुमान् भक्तः । अन्वहं प्रतिदिनम् । स्वहृदये । भवद्रूपं स्वेष्टदेवस्य श्रीहरेस्तव स्वरूपम् । ध्यायेत् । स भक्तः । तद्भवद्रूपम् । तत्त्वयुक्तम् । विद्यात् । अथवा । तत्त्वहीनम् । विद्यात् ॥ १६ ॥ 'इत्थं विप्रेण सम्पृष्टो दीनानाथेन सोऽच्युतः । अब्रवीन्नन्दयंस्तं च स्वाश्रितानपरा'निति । यथेति । हे विप्र ! । ध्यात्रा भगवत्स्वरूपध्यानकर्त्रा भक्तेन तु । यथा दृष्टम् । कृष्णरूपम् । अन्तरे स्वान्तःकरणे । ध्येयम् । ध्यानबाधकः । अयम् । तर्कों भगवत्स्वरूपमिदं तत्त्वसहितं तत्त्वरहितं वा स्यादित्थंभूतः सङ्कल्पः । तत्र भगवत्स्वरूपे नैव कर्त्तव्यः ॥ १७ ॥ अनन्तेति । कृष्णो मदिष्टदेवोऽयं श्रीहरिः । अनन्तकोटिब्रह्माण्डाधारः । आत्मनामपरिमितजीवेश्वराणाम् । 'आत्मात्मा चाक्षरात्मा'चेति स्कान्दोक्तेः । आत्माऽन्तर्यामी । प्रभुः सकलैश्वर्यसम्पन्नः । अक्षरादीनामक्षरकालमायापुरुषादीनाम् । नियन्ता तत्तत्स्थितिनियामकः । अस्ति । इतीत्थमेव

इत्युक्तः स यदा साधुर्हृष्टो नोवाच किञ्चन । दीनानाथाभिधो विप्रस्तदा प्रोवाच तं नमन् ॥ १५ ॥
ध्यायेद्योऽत्र भवद्रूपं पुमान्स्वहृदयेऽन्वहम् । तत्त्वयुक्तं स तद्विद्यात्तत्त्वहीनं च वा प्रभो ! ॥ १६ ॥
श्रीहरिरुवाच–यथादृष्टं कृष्णरूपं ध्यात्रा तु ध्येयमन्तरे । नैव तत्र तु कर्त्तव्यस्तर्कोऽयं ध्यानबाधकः ॥ १७ ॥
अनन्तकोटिब्रह्माण्डाधार आत्माऽऽत्मानां प्रभुः । नियन्ता चाक्षरादीनां कृष्णोऽस्तीत्येव दृश्यताम् ॥ १८ ॥
न कोऽपि यस्य तर्कः स्याद्रूपे भगवतो द्विज । निर्विकल्पस्थितिं प्राप्तः स्थितप्रज्ञो मतश्च सः ॥ १९ ॥
लोकेऽपि यस्मात्स्वार्थस्य सिद्धिर्भाव्येति बुद्ध्यते । न तस्मिन् गृह्यते दोषः कोऽपि केनापि कुत्रचित् ॥ २० ॥
तुच्छस्वार्थस्य सिद्ध्यर्थं स दोषादपि पूरुषात् । पुंसा तु लौकिकेनापि यदि दोषो न गृह्यते ॥ २१ ॥

दृश्यतां ज्ञायताम् ॥ १८ ॥ नेति । हे द्विज ! । यस्य भक्तस्य । भगवतः श्रीहरेः । रूपे । कोऽपि कश्चनापि । तर्कः पूर्वोक्तविध ऊहः । न स्यात् । स भक्तः । निर्विकल्पस्थितिम् । प्राप्तः । अत एव । स्थितप्रज्ञो भगवत्स्वरूपस्थिरमतिः । मतः ॥ १९ ॥ विशेषज्ञानाभावेऽपि स्वार्थनिष्ठलोकदृष्टान्तेनापि भगवत्स्वरूपे दोषविचारो न कार्य इत्याह त्रिभिः । लोक इति । हे द्विज ! । लोके लोकव्यहारेऽपि । यस्माज्जनात् । सार्थस्य स्वकीयप्रयोजनस्य । सिद्धिः । भाव्या भवित्री । इत्येवम् । बुध्यते । तस्मिन् जने । केनापि । कुत्रचित्कस्मिंश्चित्स्थलेऽपि । कोऽपि कश्चनापि । दोषः । न गृह्यते ॥ २० ॥ तुच्छेति । तुच्छस्वार्थस्य मायिकत्वेन परिणामिनो विनाशिनश्चाल्पस्य लौकिकप्रयोजनस्य सिध्यर्थम् । सदोषात् लोभकामाद्यनन्तदोषयुक्तात् । पुरुषादपि । लौकिकेन प्राकृतेन । पुंसाऽपि । दोषः । यदि । न गृह्यते । तर्हीत्युत्तरेण सम्बन्धः ॥ २१ ॥

तर्हीति । तर्हि । भूरिस्वार्थसिद्धिहेतौ संसृतिमोक्षादिप्रचुरस्वप्रयोजननिष्पत्तिनिमित्तभूते । निर्दोषविग्रहेऽमायिकत्वात्सर्वथा दोषवर्जितशरीरे । भगवति श्रीहरौ । भक्तेन । क्वचित्कदाचिदपि । दोषः । कथम् । गृह्येत । नैव गृह्यतेत्यर्थः ॥ २२ ॥ भगवतो भूरिस्वार्थसिद्धिहेतुत्वमाह । स्वेति । भक्तस्य । कृष्णात् श्रीहरेः सकाशात् । वाञ्छिता स्वमनोऽभिलपिता । महती । स्वार्थसिद्धिः । अस्ति । तामाह । अज्ञानपापमुक्तिरनाद्यज्ञानादनन्तेभ्यः पापेभ्यश्च विमोक्षणम् । अकुतोभयतादिका कालमायादिभयराहित्यामायिकलोककामचाराक्षरधामनिवासप्रभृतिकापि । स्वार्थसिद्धिरस्तीति सम्बन्धः ॥ २३ ॥ चरित्रेष्विति । किञ्च । भक्तेन । कृष्णस्य । लौकिकेषु नृनाट्यानुकारकृतेष्विति । चरित्रेषु । दोषधीः । न विधातव्या । किन्तु । तानि लौकिकान्यपि चरित्राणि । प्रीत्या । गेयानि दिव्यचरित्रवद्वादराद्गातव्यानि ॥ २४ ॥ एतदेव शुकादिसदाचारेण द्रढयति द्वाभ्याम् । बालेति । यथा शुकः । मुनिर्मुनिधर्मनिष्ठो वैयासकिः । विरक्तो महाविरक्तिनिष्ठः । ब्रह्मनिष्ठ आत्मारामः सन्नपि । तस्य कृष्णस्य । बाललीलां वत्सान् मुञ्चन्क्वचिदसमये क्रोशसञ्जातहास इत्यादिनोक्तां बालभावक्रीडाम् । रासलीलामपि गोपिभिः सह कृतां

तर्हि भूरिस्वार्थसिद्धिहेतौ निर्दोषविग्रहे । कथं गृह्येत भक्तेन दोषो भगवति क्वचित् ॥ २२ ॥ स्वार्थसिद्धिर्महत्यस्ति कृष्णाद्भक्तस्य वाञ्छिता । अज्ञानपापमुक्तिश्चाप्यकुतोभयतादिका ॥ २३ ॥ चरित्रेषु च कृष्णस्य लौकिकेष्वपि दोषधीः । भक्तेन न विधातव्या प्रीत्या गेयानि तान्यपि ॥ २४ ॥ बाललीलां रासलीलामपि तस्य यथा शुकः । विरक्तो ब्रह्मनिष्ठोऽपि जगौ निःसंशयं मुनिः ॥ २५ ॥ तथा मुमुक्षुणाऽप्यत्र भक्तेनाप्यनुरागतः । तस्य सर्वचरित्राणि सदा गेयान्यसंशयम् ॥ २६ ॥ तथैव कृष्णभक्तानामपि माहात्म्यमञ्जसा । ज्ञात्वा तेष्वपि न क्वापि कर्त्तव्या दोषधीरपि ॥ २७ ॥ यथोद्धवो महाबुद्धिर्माहात्म्यं कृष्णचेतसाम् । भक्तानां बहुलं जानन्प्रशशंस व्रजाङ्गनाः ॥ २८ ॥ तथैव बहुधा मान्या यादृशास्तादृशा अपि । कृष्णभक्तास्तु भक्तेन भक्तिमाहात्म्यवेदिना ॥ २९ ॥

रासक्रीडां च । निःसंशयं यथातथा । जगौ ॥२५॥ तथेति । तथा । अत्र सत्सङ्गे । मुमुक्षुणा । भक्तेनापि । तस्य भगवतः । सर्वचरित्राणि लौकिकानि सकलचरितान्यपि । अनुरागतः स्नेहेन । असंशयं यथातथा । सदा । गेयानि ॥ २६ ॥ तथेति । तथा तेन प्रकारेणैव । कृष्णभक्तानामपि । माहात्म्यम् । अञ्जसा तत्त्वतः । ज्ञात्वा । तेषु कृष्णभक्तेष्वपि । दोषधीरपि दोषमतिश्च । क्वापि कदाचिदपि । न कर्त्तव्या ॥ २७ ॥ एतदप्युद्धवादिसदाचारेण द्रढयति द्वाभ्याम् । यथेति । यथा । महाबुद्धिर्महामतिः । उद्धवः । कृष्णचेतसां सदा श्रीकृष्णस्वरूपासक्तमनसाम् । भक्तानां व्रजवासिजनानाम् । माहात्म्यम् । बहुलमतिशयितं यथा स्यात्तथा । जानन्सन् । व्रजाङ्गना गोपीः । प्रशशंस 'आसामहो चरणरेणुजुषामहं स्यां वृन्दावने किमपि गुल्मलतौषधीनाम्' । 'वन्दे नन्दव्रजस्त्रीणां पादरेणुमभीक्ष्णश'इत्यादिश्लोकैर्नुनाव ॥ २८ ॥ तथेति । तथा तेन प्रकारेणैव । भक्तिमाहात्म्यवेदिनाऽधुनातनभगवद्भक्तकृतसाक्षात्कृष्णसप्रेमनवधाभक्तिमहिमातिशयाभिज्ञेन । भक्तेन । कृष्णभक्ताः साक्षात्कृष्णोपासकाः

यादृशास्तादृशा जात्यादिना यथा तथा विधा अपि । बहुधाऽतिशयेन । मान्याः ॥ २९ ॥ एवं भगवत्स्वरूपमतत्त्वं सतत्त्वं वा ध्येयमिति दीनानाथविप्रप्रश्नस्योत्तरं कुर्वन् श्रीहरिर्ध्येये स्वेष्टदेवभगवत्स्वरूपे त्वदुक्तविधस्तर्को न युक्त इत्युक्त्वा तन्महिमोक्तिपूर्वं तदसङ्गित्वं तत्र तर्करहितस्य स्थितप्रज्ञतां चोक्त्वा भगवत्तच्चरित्रतद्भक्तदोषग्रहाभवं च सदाचारेण द्रढयित्वा पुनरप्यन्तेऽस्य भगवतोऽसङ्गित्वं तत्र निस्तर्कस्य ध्यानसिद्धिं सतर्कस्य तदभावं च ब्रुवन्निगमयति द्वाभ्याम् । स्वेति । हे द्विज ! । सर्वतोऽक्षरब्रह्म सकार्यमहापुरुषमहामायादौ । व्यापकस्य तत्तत्स्थितिप्रवृत्त्यादिनियमनार्थं तेषु तेष्वन्तर्यामिशक्त्याऽवस्थितस्यापि । स्वेष्टदेवस्य । कृष्णस्य श्रीहरेः । असङ्गित्वं निर्लेपत्वम् । मुमुक्षुणा । भक्तेन । सदा तु सर्वदैव । ज्ञेयम् ॥ ३० ॥ एवमिति । एवममुना प्रकारेण । नित्यं प्रतिदिनम् । भावयतो विचारयतो भक्तस्य । कृष्णस्य । ध्यानम् । सिद्ध्यति । रहःस्थले विजनप्रदेशे । ध्यायतः श्रीहरिं चिन्तयानस्यापि । तर्कमतेर्भगवतत्स्वरूपनिष्ठ सतत्त्वातत्त्वोहवद्बुद्धेर्भक्तस्य तु । क्वापि कदाचिदपि । कृष्णस्य ध्यानं न सिद्ध्यति ॥ ३१ ॥ श्रुत्वेति । इत्येवंविधाम् । सुधोपमेयाम् । हरेः । वाचम् । श्रुत्वा । स दीनानाथो विप्रः । तुतोष । अथ च ।

स्वेष्टदेवस्य कृष्णस्य व्यापकस्यापि सर्वतः । असङ्गित्वं सदा ज्ञेयं भक्तेन तु मुमुक्षुणा ॥ ३० ॥ एवं भावयतो
नित्यं ध्यानं कृष्णस्य सिद्ध्यति । न तु तर्कमतेः क्वापि ध्यायतोऽपि रहःस्थले ॥ ३१ ॥ श्रुत्वेति वाचं स
सुधोपमेयां हरेस्तुतोषाथ सदोनिषणाः । सर्वेऽपि भक्ता गृहिणश्च सन्तो यान्तं प्रणेमुः स्वहितोद्यतं तम् ॥ ३२ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते शताधिकपञ्चाशतमस्तरङ्गः ॥ १५० ॥ १७ ॥

शकाब्दे विक्रमार्कस्य गजाश्ववसुभूमिते । कृष्णषष्ठ्यां सहोमासे वचोऽमृतमिदं हरेः ॥ १ ॥
तत्र दुर्गपुरे दुर्ग आभयेर्निजमन्दिरे । न्यषीदत्तूलपट्यां स सितवासा वृतो निजैः ॥ २ ॥

सदोनिषण्णाः । भक्ताः । सर्वे । सन्तः साधवः । गृहिणश्चापि । तुतुषुः । सर्वेऽपि । यान्तं स्वावासं व्रजन्तम् । स्वहितोद्यतं स्वकीयभक्तहितविधानोद्युक्तम् । तं श्रीहरिम् । प्रणेमुर्नमश्चक्रुः ॥ ३२ ॥ सर्वाधारं च निर्दोषमक्षरादेर्नियामकम् । स्वरूपं प्राह यः स्वेभ्यो हरिर्मद्धृदि सोऽस्तु वै ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्स्नुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां शताधिकपञ्चाशत्तमस्तरङ्गः ॥ १५० ॥ १७ ॥

नास्तिकानां तथा शुष्कज्ञानिनां सङ्गमोऽशुभः । अष्टादशे वर्ज्यतया सर्वथोक्तः सहेतुकः ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यानम् । (१८७८) सहोमासे मार्गशीर्षमासे । कृष्णषष्ठ्यां कृष्णपक्षस्य षष्ठीतिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । आभयेरभयनृपतिसूनोरुत्तमनृपस्य । दुर्गे । निजमन्दिरे स्वावासभवनस्य बाह्यवेदिकायामित्यर्थः । तूलपट्यां पुष्कलतूलभृतिस्थूलसोत्तरच्छदतूलिकासने । सितवासाः परिहितसकलश्वेतवसनः । निजैर्नानादेशागतत्यागिगृहिस्वभक्तजनैः । वृतः सभायां परिवेष्टितः । स श्रीहरिः । न्यषीदत् ॥ २ ॥

सूक्ष्मामिति । सूक्ष्मामप्रचुरपिचुभृताणुसूत्रपटनिर्मिताम् । शुभ्रां श्वेतवर्णाम् । यद्यप्यत्र शुभ्रामित्युक्तमथापि कृष्णबिन्दुयुक्तामिति ज्ञेयं तत्कालीनहरिमूर्त्तिसम्यक्स्फुर्त्तिमच्छुकानन्दादिमुनिभिस्तथाभिहितत्वात् । तूलपटीं गुप्तदोरक्तिकाम् । वसानोऽन्तःप्रच्छदपटीयुतां तां प्रावृण्वानः । प्रयागजिद्वक्त्रात्प्रयागजिन्नाम्नःस्वपौराणिकस्यास्यात् । भारतीं महाभारतसम्बन्धिनीम् । कथाम् । शृण्वन् । असौ श्रीहरिः । तदन्ते कथासमाप्तौ । सतः स्वपुरोनिषण्णान्साधून् । अब्रवीत् ॥ ३ ॥ कुत्सिता इति । हे सन्त ! । अत्र । भुवि अस्यां पृथिव्यामित्यर्थः । कुत्सिताः दुष्टाः । पुरुषाः बहवः । श्रूयन्ते । तत्र तेषु बहुषु कुत्सितपुरुषेषु मध्येऽपि । द्विविधा द्विप्रकाराः । पूरुषाः कुत्सितजनाः । अतिदुष्टा अतिकुत्सिताः । ज्ञेयाः । हि ॥ ४ ॥ तान्द्विविधानाह । नास्तिका इति । ये । नास्तिकाः । पुरुषाः । ये च । शुष्कवेदान्तिनः । पुरुषाः । ते द्विविधाः । अतिदुष्टा ज्ञेया इति पूर्वेण सम्बन्धः । द्वयानां द्विविधानाम् । एषां नास्तिकानां शुष्कवेदान्तिनां च पुरुषाणाम् । सङ्गस्तु । महापापाधिको ब्रह्महत्यादिमहापापेभ्योऽप्यतिशयितः । मतः ॥ ५ ॥ उभयेषां तेषामतिदुष्टत्वं कथयन्प्रथमं नास्तिकानां दुष्टत्वं तत्सङ्गवर्जनत्वं चाह सप्तभिः । नास्तिका इति ।

सूक्ष्मां तूलपटीं शुभ्रां वसानो भारतीं कथाम् । शृण्वन्प्रयागजिद्वक्त्रात्तदन्तेऽसौ सतोऽब्रवीत् ॥ ३ ॥
कुत्सिता अत्र पुरुषाः श्रूयन्ते बहवो भुवि । तत्रापि द्विविधा ज्ञेया अतिदुष्टा हि पूरुषाः ॥ ४ ॥
नास्तिकाः पुरुषा ये यें शुष्कवेदान्तिनश्च ते । एषां द्वयानां सङ्गस्तु महापापाधिको मतः ॥ ५ ॥
नास्तिका रामकृष्णादीनपि प्रभोः । राजतुल्यान् विदुस्तांश्च कर्माधीनान् ब्रुवन्ति च ॥ ६ ॥
असुराणां हत्यया च सङ्गेन परयोषिताम् । निरये पातमाहुश्च तेषामप्यधमा अहो ॥ ७ ॥
कर्मपाशाद्विमुच्यन्ते यन्नाम्नः कीर्त्तनादपि । महापापकीनोऽप्यन्ते नरा नार्यः सहस्रशः ॥ ८ ॥
तत्कर्मबन्धवक्तारो नास्तिका अतिपापिनः । अतस्तेषां क्वचिदपि सङ्गः कार्यो न सर्वथा ॥ ९ ॥

नास्तिकाः । प्रभोः श्रीहरेः । रामकृष्णादीन् । अवतारानपि । राजतुल्यानन्यनृपतिसमानान् । विदुः । अतः । तानवतारान् । कर्माधीनन्यजनवत्कर्मपरतन्त्रांश्च । ब्रुवन्ति ॥ ६ ॥ असुराणामिति । किञ्च । अहो आश्चर्यमपरमिदम् । अधमा अतिपापिनस्ते नास्तिकाः । असुराणां ताडकासुबाह्वादीनां पूतनातृणावर्त्तादीनां च । हत्यया हननेन । परयोषितां गोपाङ्गनानाम् । सङ्गेन च । तेषामवताराणाम् । निरये नरके । पातं पतनमपि । आहुः ॥ ७ ॥ कर्मेति । किञ्च । महापातकिनोऽपि । सहस्रशोऽगणिताः । नराः । नार्यः । अन्ते देहावसानसमये । यन्नाम्नो रामकृष्णादिनाम्नः । कीर्त्तनाद्विवशतयोच्चारणादपि । कर्मपाशान्नानाविधकर्मबन्धात् । विमुच्यन्ते ॥ ८ ॥ तदिति । तत्कर्मबन्धवक्तारस्तेषामवताराणामपि कर्मबन्धनानि ब्रुवाणाः । नास्तिकाः । अतिपापिनः । ज्ञेयाः । अतो हेतोः । तेषां नास्तिकानाम् । सङ्गः । क्वचित्कदाचिदपि । सर्वथापि । न कार्यः । इति द्वयोरेकसम्बन्धः ॥ ९ ॥

नन्वस्माकं सिद्धान्ते त्वीश्वर एक एवास्ति स चावतारान् धृत्वा तद्द्वारा जनान्स्वाश्रितान्विधाय तान्संसृतेर्मोचयति तांस्त्ववाच्यवचनैर्ब्रुवाणानां नास्तिकानां कः सिद्धान्तोऽस्तीत्याशङ्कायां तमाह द्वाभ्याम् । कुर्वन्त इति । जीवाः । कर्माणि तपोदयादीनि सुकृतानि । कुर्वन्तः सन्त एव । भूयसाऽतिबहुना । कालेन । कचित्कदाचित् । केवलज्ञानम् । सम्प्राप्य ईश्वरताम् । यान्ति प्राप्नुवन्त्येव । एवमित्युत्तरेण सम्बन्धः ॥ १० ॥ एवमिति । एवममुना प्रकारेण । वदतां ब्रुवाणानाम् । तेषां नास्तिकानाम् । मते सिद्धान्ते । जगत्प्रभुः । श्रितजीवभवापहृत्स्वाश्रितजनभवभयविनाशकः । एकः । अनादिः । ईश्वरः । नास्ति ॥ ११ ॥ एवं तेषां सिद्धान्तमुक्त्वा पुनरप्यवश्य तत्सङ्गहेयत्वोक्त्यै उक्तार्थमाह । तेषामिति । हे सन्तः ! । तेषामित्थंभूतातथ्यसिद्धान्तवतां नास्तिकानाम् । सङ्गात् । नृणाम् । बुद्धिभ्रंशः अस्तिकमतिविनाशः । कथम् । न स्यात् । अपि तु स्यादेवेत्यर्थः । अतो हेतोः । स नास्तिकसङ्गः । सर्वथा । न कर्त्तव्यः । इतीत्थंभूता । निजान्मदाश्रितान्सर्वान् भवतः प्रति । मे मम । आज्ञा निदेशः । अस्ति ॥ १२ ॥ एवं नास्तिकानामतिदुष्टत्वं सहेतुकं तत्सङ्गवर्जनं चोक्त्वा शुष्कवेदान्तिनां तद्द्वयमाह चतुर्दशभिः । वेदान्तिन इति ।

कुर्वन्त एव कर्माणि जीवाः कालेन भूयसा । सम्प्राप्य केवलज्ञानं यान्त्येवेश्वरतां कचित् ॥ १० ॥
एवं हि वदतां तेषां मत एको जगत्प्रभुः । अनादिरीश्वरो नास्ति श्रितजीवभवापहृन् ॥ ११ ॥
तेषां सङ्गात्कथं न स्याद् बुद्धिभ्रंशो नृणां मतः । सर्वथा स न कर्त्तव्य इत्याज्ञा मे निजान्प्रति ॥ १२ ॥
वेदान्तिनस्तु ये सन्ति शुष्कज्ञानाभिमानिनः । ब्रह्मैव जीवरूपेण जातमित्येव मन्वते ॥ १३ ॥
ब्रह्मरूपा वयं पूर्णाः किं कार्यं साधनैस्तु नः । ब्रह्मज्ञानं न येषां ते कुर्वन्तु साधनश्रमम् ॥ १४ ॥
एवं वदन्तः कुर्वन्ति यथेष्टाचरणं हि ते । महापापेऽपि नास्त्येव शङ्का तद्धृदये क्वचित् ॥ १५ ॥

शुष्कज्ञानाभिमानिनः शुष्कज्ञानं भगवदुपासनारहितकेवलात्मज्ञानत्वाद्दूकत्वं तन्मात्राभिमानशालिनः । ये । वेदान्तिनो नाममात्रेण वेदान्तशास्त्रज्ञाः । वस्तुतस्तु विदन्त्यनेन मूर्त्तं भगवत्स्वरूपमिति वेदो भगवतः साकारता प्रतिपादकः श्रुतिशिरोभागस्तमन्तयन्ति भगवन्निराकारत्वोक्त्या खण्डयन्तीति वेदान्ताः शङ्कराचार्यादिकृतग्रन्थास्ते विद्यन्तेऽध्ययनत्वेन बोध्यत्वेन विचार्यत्वेन मान्यत्वेन येषामिति तथाभूताः शुद्धाद्वैतवादिनः । सन्ति । ते तु । जीवरूपेण । ब्रह्मैव । जातमस्ति । इतीत्थमेव । मन्वते बुध्यन्ते ॥ १३ ॥ उक्तरीत्या मत्वा ते यथा वदन्ति तदाह द्वाभ्याम् । ब्रह्मेति । वयम् । ब्रह्मरूपाः । पूर्णाः कृतकृत्याः । स्मः । अतः । नोऽस्माकम् । साधनैः स्वधर्माचरणादिभिः । किम् । कार्यं किन्तु प्रयोजनमस्ति । येषां पुरुषाणाम् । ब्रह्मज्ञानं वयं ब्रह्मरूपा इति वेदनम् । नास्ति । ते पुरुषाः । साधनश्रमं स्वस्वधर्मादिपालनप्रयासम् । कुर्वन्तु । एवमित्युत्तरेण सम्बन्धः ॥ १४ ॥ एवमिति । एवममुना प्रकारेण । वदन्तः । ते शुष्कवेदान्तिनः । यथेष्टाचरणं सच्छास्त्रोक्तविधिनिषेधोल्लङ्घनपूर्वकं शिश्नोदरतर्पणादिप्रसक्तिरूपस्वेच्छाचारम् । कुर्वन्ति । तद्धृदये तेषां मानसे । महापापे ब्रह्महत्यादिमहापापाचरणेऽपि । शङ्का । कचित्कदाचिदपि । नास्त्येव ॥ १५ ॥

सुरेति । सुरापरस्त्रीलुब्धानामेकादशविधमद्यसहितत्रिविधसुरापानपराङ्गनाङ्गसङ्गगृध्रूनाम् । निःशङ्कं यथातथा । अघं पञ्चविधं पापमेव । कुर्वताम् । एतेषां शुष्कवेदान्तिनाम् । सङ्गः । क्वचित्कदाचिदपि । सर्वथापि । न कार्यः ॥ १६ ॥ ब्रह्मेति । ब्रह्मरूपेण । स्वस्य । मुक्तत्वम् । वदन्तः । अबुधा अज्ञाः । ते शुष्कज्ञानिनः । जातं स्वोक्त्या सम्प्राप्तम् । ब्रह्मणः । बद्धत्वम् । नानुसन्दधते । ध्रुवम् । अस्यायं भावः । आदौ निर्बन्धं ब्रह्म जीवत्वापत्तौ बद्धं तच्च पुनर्ब्रह्मतापत्त्या निर्बन्धमेवं सति तस्यैव बद्धमुक्तभावानिवृत्त्या मोक्षाप्रसङ्गः प्राप्त इति दोषानुसन्धानं ते न कुर्वन्तीति ॥ १७ ॥ ब्रह्मेति । किञ्च । यदा जीवरूपेण । ब्रह्मैव । जातम् । अस्ति । तदा । अखिलम् । संसृतिभ्रमणम् । तस्य ब्रह्मण एव । प्राप्तम् । इतीत्थम् । ते शुष्कज्ञानिनः । न विदुर्न जानन्ति ॥ १८ ॥ एवमिति । एवममुना प्रकारेण । स्वमते । तेषाम् । महदेव । दूषणम् । अस्ति । तद्दूषणम् । अज्ञात्वैव । वयम् । मुक्ता जीवभावं त्यक्त्वा पुनर्ब्रह्मभावं प्राप्ताः स्मः । इत्येवम् । यत् । मन्यते । तत् । भ्रमात्केवलं भ्रमं प्राप्यैव । मन्यते ॥१९॥ वृथेति । ते शुष्कज्ञानिनः । वृथा मुक्तत्वाभिमतेर्मिथ्याभूतात्स्वब्रह्मत्वाभिमननाद्धेतोः । स्वधर्मम् । नैव कुर्वते । ततो मुक्तत्वाभिमते-

सुरापरस्त्रीलुब्धानां निःशङ्कं कुर्वतामघम् । एतेषामपि सङ्गस्तु न कार्यः सर्वथा क्वचित् ॥ १६ ॥ ब्रह्मरूपेण मुक्तत्वं वदन्तः स्वस्य तेऽबुधाः । बद्धत्वं ब्रह्मणो जातं नानुसंदधते ध्रुवम् ॥१७॥ ब्रह्मैव जीवरूपेण जातमस्ति यदाऽखिलम् । संसृतिभ्रमणं तस्य प्राप्तं नेति विदुश्च ते ॥ १८ ॥ एवं हि स्वमते तेषां महदस्त्येव दूषणम् । तदज्ञात्वैव मन्यन्ते वयं मुक्ता इति भ्रमात् ॥ १९ ॥ वृथा मुक्तत्वाभिमतेः स्वधर्मं नैव कुर्वते । कृष्णं ज्ञात्वा स्वसदृशं तद्भक्तिं च ततो न ते ॥२०॥ सत्यास्तु ज्ञानिनो ये वै वेदवेदान्तपारगाः । ते तु नित्यं विदधते भक्तिं नवविधां हरेः ॥ २१ ॥ श्वेतद्वीपे निरन्ना ये मुक्तास्ते ब्रह्मरूपिणः । कालकाला अपि हरिं ध्यायन्त्यर्चन्त्युपासते ॥ २२ ॥ बदर्यां तनुमुख्याश्च ऋषयोऽपि सहस्रशः । तपस्यन्तो ब्रह्मरूपा नारायणमुपासते ॥ २३ ॥

र्हेतोः । कृष्णम् । स्वसदृशम् । ज्ञात्वा । तद्भक्तिम् । नैव कुर्वते ॥ २० ॥ एवं शुष्कज्ञानिज्ञानस्य तन्मानितमुक्तत्वाभिमानस्य च मिथ्यात्वमुक्त्वा सत्यज्ञानिसदाचारोक्त्यापि तेषां शुष्कवेदान्तिनां पापित्वं निरयं गमत्वं चाह पञ्चभिः । सत्या इति । हे सन्तः ! । वेदवेदान्तपारगाः । ये । सत्याः । ज्ञानिनो नारदशुक सनकादयः । सन्ति । ते तु । नित्यं निरन्तरम् । नवविधां श्रवणादिनवप्रकाराम् । हरेः । भक्तिम् । विदधते कुर्वन्ति । वै ॥२१॥ श्वेतद्वीप इति । श्वेतद्वीपे । ये । निरन्नाः । मुक्ताः । सन्ति । ब्रह्मरूपिणः सम्प्राप्ताक्षरब्रह्मैकात्मभावाः । कालकालाः कालविनाशिनोऽपि । ते निरन्नमुक्ताः । हरिम् । ध्यायन्ति । अर्चन्ति यथाप्राप्तनानाविधोपचारैः पूजयन्ति । उपासते छन्दानुवृत्तिपूर्वं सेवन्ते ॥ २२ ॥ बदर्यामिति । बदर्यां बदरिकाश्रमे । ब्रह्मरूपाः । तनुमुख्याः । सहस्रशः । ऋषयोऽपि । तपस्यन्तः सन्तः । नारायणं विशालाधिवासं श्रीनरनारायणरूपं श्रीहरिम् । उपासते ॥ २३ ॥

तेषामिति । तेषां नारदादितन्वन्तसत्यज्ञानिनाम् । कोटचंशतः कोटिमभागमात्रमपि । एषां शुष्कज्ञानिनाम् । ज्ञानम् । नास्ति । बलमैश्वर्यं चापि । नास्ति । तथापि । ते । ईशं परमेश्वरम् । न मन्यन्ते । यथारुचि स्वेच्छानुसारेण च । वर्त्तन्ते ॥ २४ ॥ मुक्तेति । तस्माद्धेतोः । मुक्ताभिमानिनः । एते शुष्कज्ञानिनः । पापिनः । ज्ञेयाः । हि । घोरानतिदारुणान् । नरकान्नन्धतामिस्रादिनिरयान् । यास्यन्ति देहान्ते प्राप्स्यन्ति । अत्रार्थे । संशयः । नैवास्ति ॥ २५ ॥ सङ्गेनेति । यथा । कृष्णभक्तानां श्रीकृष्णैकान्तिकोपासकानाम् । सतां साधूनाम् । नृणां जनानाम् । सङ्गेन । अघक्षयः सकलकल्मषनाशः । अस्ति । तथा । एतेषां शुष्कज्ञानवताम् । सङ्गेन । अघोच्चयः पापराशिः । अस्ति तत्क्षणं जायते ॥ २६ ॥ नास्तिकानामिति । अतो हेतोः । नास्तिकानाम् । तथा । शुष्कज्ञानवताम् । नृणां जनानाम् । सङ्गः । क्वापि कदाचिदपि । न कर्त्तव्यः । इत्येवंभूता । मम । आज्ञा । पाल्यतां स्वीक्रियताम् । यूयं मदाज्ञानुसारेण वर्त्तध्वमित्यर्थः ॥ २७ ॥ इतीति । इत्येवंविधम् । परमहितेन स्वाश्रितानां परमहितकारकेण । यद्वा । पूज्येष्वप्यतिपूज्येन । तेन श्रीहरिणा गीतं कथितम् । एकं मुहुराज्ञारूपत्वात्प्रधान-

तेषां कोटचंशतोऽप्येषां नास्ति ज्ञानं न वै बलम् । तथापीशं न मन्यन्ते वर्त्तन्ते च यथारुचिः ॥ २४ ॥
मुक्ताभिमानिनस्तस्मादेते ज्ञेया हि पापिनः । यास्यन्ति घोरान्नरकानत्र नैवास्ति संशयः ॥ २५ ॥ सङ्गेन
कृष्णभक्तानां सतामस्ति यथा नृणाम् । अघक्षयस्तथैतेषां सङ्गेनैवास्त्यघोच्चयः ॥ २६ ॥ नास्तिकानामतो
नृणां शुष्कज्ञानवतां तथा । सङ्गः क्वापि न कर्त्तव्य ईत्याज्ञा पाल्यतां मम ॥ २७ ॥ इत्येकं परमहितेन तेन
गीतं पीयूषं वचनमथो निपीय सर्वे । सन्तोषं परममवाप्य तस्य भक्ता ओमूचुः प्रणति परास्तमादरात्ते ॥ २८ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते शताधिकैकपञ्चाशतमस्तरङ्गः ॥ १५१ ॥ १८ ॥

शकाब्दे विक्रमार्कस्य गजाश्ववसुभूमिते । सहःकृष्णचतुर्दश्यां वचोऽमृतमिदं हरेः ॥ १ ॥

भूतम् । पीयूषममृततुल्यम् । वचनम् । अथो साकल्येन । निपीय । तस्य श्रीहरेः भक्ताः । सर्वे सभानिषण्णाः साधवो गृहिणश्च । परमम् । सन्तोषम् । अवाप्य । ते सर्वे भक्ताः । प्रणतिपराः सन्तः । तं श्रीहरिम् । आदरात् । ओं यथा त्वं वदसि तथा वयं करिष्याम इति । उचुः ॥ २८ ॥ नास्तिकानां नृणां सङ्गं शुष्कज्ञानवतां च यः । हरिः स्वैर्वर्ज्यमेवाह सोऽव्यात्तत्सङ्गतो हि माम् ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्स्नुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां शताधिकैकपञ्चाशत्तमस्तरङ्गः ॥ १५१ ॥ १८ ॥

शुष्कज्ञानवतां नृणां दुष्टानां पापचेतसाम् सङ्गं स्वांस्त्याजयित्वैव सर्वथा तद्धिताय च ॥१॥ साध्वीवद्भक्तिसिद्ध्यर्थं धर्मसिद्ध्यर्थमेव च । स्वाश्रितान् श्रीहरिः पत्रीमेकोनत्रिंश-केऽलिखत् ॥२॥ शकेति । शकेति पूर्वार्द्धे व्याख्यातम् । (१८७८) सहःकृष्णचतुर्दश्यां मार्गशीर्षमासीयकृष्णपक्षस्य चतुर्दशीतिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥१॥

नत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमस्य नृपस्य । दुर्गे । सन्मठे साध्वावासशालायाम् । पार्श्विकयुक् तूलपट्यां भगवतो जिगमिषां ज्ञात्वाऽग्रतो गत्वा रत्नजिदादिपार्षदैः कृते सपार्श्विके सश्वेतोत्तरच्छदे स्थूलतूलिकासने सिताम्बरः परिहितसकलश्वेतवसनः । स श्रीहरिः । उपाविशत् । प्रातःकृत्यं समाप्यागत्य निषसाद ॥ २ ॥ वृत इति । सद्भिः स्वाज्ञया सदा स्वान्तिकवासिभिः समण्डलत्वाद्बहुभिर्मुक्तानन्द गोपालानन्द शुकानन्दादिसाधुभिः । इदं मुकुन्दानन्दादिस्वान्तिकवासिवर्णिनां रत्नजिदादिपार्षदानामुपलक्षणम् । वृतः सभायां परिवेष्टितः । स श्रीहरिः । उदासीनः । भूरि शोकाकुलो यथा । घटीमेकघटिकापर्यन्तम् । तूष्णीम् । आस्ते स्म । अथानन्तरम् । अग्रतः । सतः स्वपुरोऽवस्थितान्मुक्तानन्दादीन्साधून् । प्रोवाच ॥ ३ ॥ शुष्केति । हे सन्तः । पुरा पूर्वम् । मया । शुष्कज्ञानिमतं ब्रह्मस्वरूपनिरूपकशुद्धाद्वैतवादिसिद्धान्तम् । बोद्धुम् । तच्छास्त्रं तत्कृतभाष्यादिग्रन्थमित्यर्थः । संश्रुतम् । तत्तन्मतम् । अधुना । स्मृतं मत्स्मृतिपथं प्राप्तम् । तेन हेतुना । मे मम । महान् । शोकः । अस्ति । मन्मानसे महान् शोको जात इत्यर्थः ॥ ४ ॥ श्रवणादिति । तस्य शुष्कज्ञानिमतग्रन्थस्य । श्रवणादबुद्धिपूर्वका-

तत्र दुर्गपुरे दुर्गे उत्तमस्य स सन्मठे । सिताम्बरः पार्श्विकयुक् तूलपट्यामुपाविशत् ॥ २ ॥ वृतः सद्भिरुदासीनो भूरि शोकाकुलो यथा । तूष्णीं घटीं स आस्ते स्म प्रोवाचाथ सतोऽग्रतः ॥ ३ ॥ शुष्कज्ञानिमतं बोद्धुं तच्छास्त्रं संश्रुतं मया । पुरा स्मृतं तदधुना तेन शोकोऽस्ति मे महान् ॥ ४ ॥ श्रवणादपि तस्य स्यात्कृष्णोपासनखण्डनम् । न श्रव्याणि ततः सुज्ञैः शुष्कज्ञानिवचांसि तु ॥ ५ ॥ किञ्चित्प्रयोजनवशान्मया तु श्रुतमास तत् । तथाप्यक्षोभयच्चित्तं ममापि जनयच्छुचम् ॥ ६ ॥ इत्युक्त्वाऽसौ पुनरपि भूत्वा शोकाकुलः क्षणम् । प्रोवाच साधून् द्रढयन् श्रोतव्यं ग्रन्थमादरात् ॥ ७ ॥ रामानुजाचार्यकृतगीताभाष्यकथां निशि । श्रुत्वा कदाचित्सुप्तोऽहमगमं स्वप्नमद्भुतम् ॥८॥ गतोऽहं दिव्यगोलोकं तत्र कृष्णस्य पार्षदाः । सहस्रशो लक्षशश्च दृष्टास्तत्सेवने रताः ॥ ९ ॥

कर्णनादपि । कृष्णोपासनखण्डनम् । स्यात् । ततो हेतोः । सुज्ञैर्मुमुक्षुभिर्मदाश्रितजनैः । शुष्कज्ञानिवचांसि शुद्धाद्वैतवादिग्रन्थाः । न श्रव्याणि ॥ ५ ॥ किञ्चिदिति । मया तु । किञ्चित्प्रयोजनवशात् । तत्सिद्धान्तज्ञानमन्तरा तत्खण्डनं न स्यादतः केवलं तत्खण्डनप्रयोजनमभिसन्धायेत्यर्थः । तच्छास्त्रम् । श्रुतम् । आस बभूव । तथापि । शुचं शोकम् । जनयत्सत् । ममापि । चित्तम् । अक्षोभयत् ॥ ६ ॥ इतीति । इतीत्थम् । उक्त्वा । असौ हरिः । पुनरपि । क्षणं क्षणकालपर्यन्तम् । शोकाकुलः । भूत्वा । आदरात् । श्रोतव्यम् । ग्रन्थम् । द्रढयन्सन् । साधून् । प्रोवाच ॥ ७ ॥ मनुष्याणां भक्तानां स्वसजातीयनृभावकृतभगवच्चरित्रस्य मुहुः स्मृतिहेतुत्वान्नृनाट्यानुसारेण स्वप्नवृत्तमभिसन्धाय स्वीयानां शिक्षणीयार्थमाह सार्द्धसप्तभिः । रामेति । हे सन्तः ! । कदाचित् । अहम् । निशि । रामानुजाचार्यकृतगीताभाष्यकथाम् । श्रुत्वा । सुप्तः सन् । अद्भुतमाश्चर्यकारकम् । स्वप्नं समाधिम् । अगमं सम्प्राप्तवान् ॥ ८ ॥ गत इति । अहम् । दिव्यगोलोकम् । गतः सम्प्राप्तो-

ऽभवम् । तत्र दिव्यगोलोके । सहस्रशः सहस्रपरिमिताः । लक्षशो लक्षपरिमिताश्च । कृष्णस्य । पार्षदाः । तत्सेवने श्रीकृष्णपरिचर्यायाम् । रतास्तत्पराः । दृष्टाः । स्थिरतयावस्थिता एव मया वीक्षिताः ॥ ९ ॥ केचिदिति । केचिन्सहस्रशो लक्षशश्च केचनापि पार्षदाः । मुक्तादिग्रथितानि मुक्तानन्दमुनि ब्रह्मानन्दमुनि प्रेमानन्दादिमुनि-सन्दब्धानि । कृष्णपद्यानि । सवाद्यम् । सुस्वरं यथातथा । मुदा । गायन्तः सन्तः । मया । दृष्टाः । वै ॥ १० ॥ सानन्दमिति । सानन्दं यथातथा । गायताम् । मत्तवद्बहुघूर्णतां मदिरामत्तजनवदतिदोलायमानशरीराणाम् । तेषां पार्षदानाम् । प्रायो बहुधा । देहस्मृतिरपि । नासीत् । इतीत्थम् । मया । ईक्षितम् ॥ ११ ॥ तत्रेति । तत्र गोलोके । अहमपि । तैः पार्षदैः साकम् । आदरात् । भृशम् । अगायम् । बहुवेलं बहुकालपर्यन्तम् । गायतः । मे मम । हृदये । विचारः । अभवत् ॥१२॥ तमाह द्वाभ्याम् । हित्वेति । ईदृशीं भगवदेकान्तिकतासम्प्राप्तब्रह्मभावैः पार्षदैरपि या सर्वकालं विधीयते तथाविधाम् । कृष्णभक्तिम् । हित्वा । ये शुष्कज्ञानमानिनः । यथेष्टचारिणः स्वधर्मकृष्णभक्तिभञ्जकत्वाद्वाङ्मात्रब्रह्मब्रुवत्वाचापि स्वेच्छाचाराः । जायन्ते । ते तु । महादुष्टाः । सन्ति । न संशयः ॥ १३ ॥ मदाश्रित इति ।

केचित्तु कृष्णपद्यानि सवाद्यं सुस्वरं मुदा । दृष्टा मया तु गायन्तो मुक्तादिग्रथितानि वै ॥ १० ॥
सानन्दं गायतां तेषां मत्तवद्बहुघूर्णिताम् । देहस्मृतिरपि प्रायो नासीदिति मयेक्षितम् ॥ ११ ॥
तत्राहमपि तैः साकमगायं भृशमादरात् । बहुवेलं गायतो मे विचारो हृदयेऽभवत् ॥ १२ ॥
हित्वेदृशीं कृष्णभक्तिं ये शुष्कज्ञानमानिनः । यथेष्टचारिणस्ते तु महादुष्टा न संशयः ॥ १३ ॥
मदाश्रितः कोऽपि पुमान्न तन्मार्गमुपाश्रयेत् । भक्तिं धर्मं च हित्वेति तेषां कार्यं हितं मया ॥ १४ ॥
एवं विचारयन्नेव प्रतिबुद्धोऽभवं ततः । अत एतन्निषेधार्थं मयोपायो विधीयते ॥ १५ ॥
इत्युक्त्वा सकलान्साधून् शुकानन्दं जगाद सः । मन्नामपत्रिकामद्य तूर्णं शुकमुने ! लिख ॥ १६ ॥

मदाश्रितः । कोऽपि । पुमान् । भक्तिम् । धर्मं च । हित्वा । तन्मार्गं शुष्कज्ञानिपथम् । नोपाश्रयेत् । इत्येवंविधम् । तेषां मदाश्रितानाम् । हितम् । मया । कार्यम् ॥ १४ ॥ एवमिति । एवममुना प्रकारेण । अहम् । विचार यन्सन्नेव । स्वप्नात् । प्रतिबुद्धो जागरितः । अभवम् । समाश्रितो विरम्य सम्प्राप्तदेहस्मृतिराम-मित्यर्थः । अतो हेतोः । अपररात्रान्ते प्राग्जातस्वप्नस्मृत्या प्राक् श्रुतशुष्कवेदान्तग्रन्थसिद्धान्तसरणेन च संस्फुरितद्वयीतां पर्यालोच्य तदुपाश्रयणं मदीयानां स्याच्चेत्तर्हि तेषां महाननर्थः स्यादिति विचारेणातिशोकानिष्टमानसत्वाद्धेतोरित्यर्थः । एतन्निषेधार्थं मदीयानां सर्वथा शुष्कवेदान्तिसम्बन्धनिराकरणार्थम् । मया । उपायः । विधीयते ॥ १५ ॥ इतीति । इतीत्थम् । सकलान् । साधून् । उक्त्वा । स श्रीहरिः । शुकानन्दं मुनिम् । जगाद । हे शुकमुने ! शुकानन्दसाधो ! । अद्य । मन्नामपत्रिकां स्वाश्रितान्प्रति मया यथा लिखिता भवेत्तथाभूतां पत्रिम् । तूर्णं झटित्येव । लिख ॥ १६ ॥

इतीति । इतीत्थम् । उक्त्वा स्वसमीपवर्त्तिनं शुकानन्दमुनिं कथयित्वा । हितकृत्स्वाश्रितातिहितकारकः । हरिकृष्णः स्वाश्रितसंसृतिभयहरणपूर्वकं तन्मनसां स्वस्वरूपाकर्षक इत्यर्थः । असौ श्रीहरिः । तेन । साधुना शुकानन्दमुनिना । सकलान् । स्वाश्रितान् । प्रति । पत्रिकाम् । लेखयामास ॥ १७ ॥ अथ पत्रिकामाह । त्रयोदशभिः । लिखामीति । सहजानन्दो युष्माकं गुरुरिष्टदेवश्च सहजानन्दस्वामिनामाहम् । स्वाश्रितान्मदाश्रितान् भवतः प्रति । पत्रिकाम् । लिखामि । अखिलैः । पुंभिः पुरुषैः । स्त्रीभिरखिलाभिर्नारीभिश्च । मे मम । नारायणस्मृतिः । वाच्या । स्वधर्मरक्षिकाणां सदाशिषां नारायणस्मृतिहेतुकत्वात्स्वधर्मरक्षिकामेतैः सर्वैर्वाच्याः सदाशिष इत्यर्थो बोध्यः ॥ १८ ॥ अवतारा इति । भुवि पृथिव्याम् । भगवतः सकलैश्वर्यसम्पन्नस्य । नरोत्तमस्य पुरुषोत्तमस्य । कृष्णस्य । अक्षरमक्षरब्रह्माख्यं धाम निवासस्थानं यस्य तस्य । जगत्पतेः सकलब्रह्माण्डाधिपैकनाथस्येत्यर्थः । हरेः । ये । अवताराः । जायन्ते ॥ १९ ॥ धर्मेति । तेऽवताराः । धर्मसंस्थापनार्थाः । तथा । अधर्मोच्छिदः । सन्ति । स्वधर्मश्च ज्ञानं च वैराग्यं च भक्तिश्च ता विद्यन्ते येषां साधूनां तेषां रक्षणं सर्वापद्भ्यः परित्राणं स्वदर्शनादिं विना यियासतां तदसूनां तद्दानेन

इत्युक्त्वा लेखयामास पत्रिकां तेन साधुना । हितकृद्धरिकृष्णोऽसौ स्वाश्रितान्सकलान्प्रति ॥ १७ ॥ लिखामि सहजानन्दः पत्रिकां स्वाश्रितान् प्रति । नारायणस्मृतिर्वाच्या पुंभिः स्त्रीभिश्च मेऽखिलैः ॥१८॥ अवतारा भगवतो जायन्ते भुवि ये हरेः । नरोत्तमस्य कृष्णस्याक्षरधाम्नो जगत्पतेः ॥ १९ ॥ धर्मसंस्थापनार्थास्ते सन्त्यधर्मोच्छिदस्तथा । स्वधर्मज्ञानवैराग्यभक्तितद्रक्षणाय च ॥ २० ॥ यथा सीता रघुपतौ साध्वी निष्ठां दृढां व्यधात् । तथैव तेषु सा कार्या वर्त्तमाने विशेषतः ॥ २१ ॥ मानसं पूजनं तस्य प्रीत्या कार्यं सदा हृदि । भक्तिर्नवधा चास्य कर्त्तव्या परमादरात् ॥ २२ ॥ प्रत्यक्षो भगवान् यर्हि न भवेद्भुवि तर्हि तु । प्रतिमा तस्य सम्पूज्या यथालब्धोपचारकैः ॥ २३ ॥

पालनं च तस्मै च । सन्ति ॥ २० ॥ यथेति । यथा । साध्वी पतिव्रता । जनकात्मजा । रघुपतौ श्रीरामचन्द्रे । दृढां सुस्थिराम् । निष्ठामयमेक एव मत्पतिर्नान्ये इति स्थितिम् । व्यधात् । तथैव । तेषु श्रीहरे रामकृष्णादिष्ववतारेषु । सा निष्ठा । कार्या । तत्रापि । वर्त्तमाने साम्प्रतं सर्वेषां युष्माकं हिताय प्रादुर्भूते हरौ तु । विशेषतः । कार्या । अस्यायं भावः । आत्यन्तिककल्याणनिष्पत्त्यै भागवतैर्भगवदवतारेषु त्ववश्यं निष्ठा कार्या तत्रापि यस्य यस्य यो योऽवतारो यदा यदा मिलितस्तेन तेन तस्मिंस्तस्मिन्सा कार्येति तु वो घण्टापथोऽभिहितः । साम्प्रतं भवदिष्टदेवोऽवतारित्वात्सर्वावतारधर्त्ता योऽहमस्मि स तु निष्कारणापारकरुणया नैकजन्मसुकृतवतां वो नयनविषयतां प्राप्तोऽस्म्यन्येऽवताराश्च मदीयाः सन्त्यतस्तेऽपि मान्या अवतारिणि मयि तु जानकीवन्निष्ठा विधेयेति ॥ २१ ॥ मानसमिति । तस्य श्रीहरेः । हृदि । मानसम् । पूजनम् । प्रीत्या । सदा । कार्यम् । अस्य श्रीहरेः । नवविधा । भक्तिश्च । परमादरात् । कर्त्तव्या ॥ २२ ॥ प्रत्यक्ष इति । यर्हि । भगवान् श्रीहरिः । भुवि । प्रत्यक्षः । न भवेत् । तर्हि तु । तस्य भगवतः । प्रतिमा । यथालब्धोपचारकैः । सम्पूज्या ॥ २३ ॥

कृष्णस्येति । इह सत्सङ्गे । मुमुक्षुणा भक्तेन । कृष्णस्य स्वेष्टदेवस्य श्रीहरेरेव । भक्तिः । सदा । कर्त्तव्या । अन्यदेवतायास्तदितरविध्यादिदेवस्य । भक्तिः । न हि नैव कर्त्तव्या । यतोऽन्यदेवतभक्तिकरणात् । साध्वीधर्मच्युतिः पतिव्रताधर्मभ्रंशः । स्यात् ॥ २४ ॥ कृष्णस्येति । कृष्णस्य । साक्षाद्धरेः । अथवा । तदर्चायास्तत्प्रतिमायाः । ध्यानम् । चेतसि । कार्यम् । अन्यदेवतायाः । अथवा । सिद्धमुक्तस्य समाधिसिध्या मुक्तभावं प्राप्तस्य कस्यचित् साधोः । ध्यानम् । कर्हिचित्कदाचिदपि । न तु नैव कार्यम् ॥ २५ ॥ कृष्णेति । कृष्णश्च तद्भक्ताश्च तद्धर्मो भागवतधर्मश्च तेषां मूलोत्पाटनं मूलतो निखननं तस्य कारणं हेतुः । शुष्कवेदान्तितद्ग्रन्थसङ्गः । शुद्धाद्वैतवादिजनानां तद्ग्रन्थानां च प्रसङ्ग इत्यर्थः । सर्वथा । न कार्यः ॥ २६ ॥ धर्मेति । स्वस्ववर्णाश्रमोचितः । धर्मशास्त्रोदितः । धर्मः । मदाश्रितैः । पालनीयः । इत्येवंविधा । मम । आज्ञा । वर्त्ततेऽस्ति ॥ २७ ॥ एतामिति । एताम् । मदीयाम् । आज्ञाम् । ये । पूरुषाः ।

कृष्णस्यैवेह कर्त्तव्या सदा भक्तिर्मुमुक्षुणा । न ह्यन्यदेवतायास्तु साध्वीधर्मच्युतिर्यतः ॥ २४ ॥ कृष्णस्य वा तदर्चाया ध्यानं कार्यं च चेतसि । न त्वन्यदेवताया वा सिद्धमुक्तस्य कर्हिचित् ॥ २५ ॥ कृष्णतद्भक्ततद्धर्ममूलोत्पाटनकारणम् । शुष्कवेदान्तितद्ग्रन्थसङ्गः कार्यो न सर्वथा ॥२६॥ धर्मशास्त्रोदितो धर्मः स्वस्ववर्णाश्रमोचितः । मदाश्रितैः पालनीय इत्याज्ञा मम वर्त्तते ॥२७॥ एतामाज्ञां मदीयां ये पालयिष्यन्ति पुरुषाः । नारदादेरिव हरौ तेषां भक्तिर्भविष्यति ॥२८॥ आज्ञामेतां च या योषाः पालयिष्यन्ति मे भुवि । राधादेरिव तासां च भक्तिः कृष्णे भविष्यति ॥२९॥ आज्ञामेतां ममोल्लंघ्य वर्त्तिष्यन्ते निजेच्छया । ये नरा याश्च नार्यस्ते भ्रष्टा यास्यन्त्यसद्गतिम् ॥ ३० ॥ एवं पत्रीं लेखयित्वोपादाय स्वकरे च ताम् । वाचयन्प्रशशंसासौ सुप्रसन्नमना अभूत् ॥३१॥ विधाप्य तत्प्रतिकृतीः सोऽष्ट ता दिक्षु सर्वतः । प्रेषयित्वा प्रसन्नः स्वं प्रत्यगादाश्रमं प्रभुः ॥३२॥

पालयिष्यन्ति । तेषां पुरुषाणाम् । हरौ । भक्तिः । नारदादेरिव । भविष्यति ॥ २८ ॥ आज्ञामिति । भुवि । याः । योषाः । एताम् । मे मम । आज्ञाम् । पालयिष्यन्ति । तासां योषाणाम् । कृष्णे । भक्तिः । राधादेः । राधिकारमादेरिव । भविष्यति ॥२९॥ आज्ञामिति । ये । नराः । याः । नार्यश्च । मम । एताम् । आज्ञाम् । उल्लङ्घ्य । निजेच्छया । वर्त्तिष्यन्ते । ते नरास्ता नार्यश्च । भ्रष्टाः स्वमोक्षमार्गाच्च्युताः सन्तः । असद्गतिम् । यास्यन्ति ॥ ३० ॥ एवमिति । एवमनुना प्रकारेण । असौ श्रीहरिः । पत्रीम् । लेखयित्वा । तां पत्रीम् । स्वकरे स्वपाणिपद्मे । उपादाय गृहीत्वा । वाचयन्सन् । प्रशशंस । सुप्रसन्नमनाः । अभूत् ॥ ३१ ॥ विधाप्येति । प्रभुः । स श्रीहरिः । अष्ट । तत्प्रतिकृतीः पत्रीप्रतिमाः । विधाप्य शुकानन्दमुनिनैव कारयित्वा । ता अष्टपत्रीः । सर्वतोऽष्टस्वपि । दिक्षु । प्रेसयित्वा । प्रसन्नः सन् । स्वं स्वकीयम् । आश्रममावासं प्रति । अगाज्जगाम ॥ ३२ ॥

सन्त इति । इत्येवंविधम् । तस्य श्रीहरेः । वचनामृतम् । निपीय । ते । सर्वे । सन्तः । अपिशब्दाद्वर्णिपदातयश्च । प्रमोदम् । अगमन्। तदीयपादपद्मे श्रीहर्यङ्घ्रिपद्मे । दृढां सुस्थिरामेव । भक्तिम् । विशेषेण । तन्वते स्म यथोत्तरवृद्धयकुर्वन्नित्यर्थः ॥ ३३ ॥ शुष्कज्ञानवतां सङ्गं सन्त्याजयितुमात्मदः । भक्तांस्तेषां च धर्मस्य स्वभक्तेः सिद्धये तथा ॥ १ ॥ पत्रीमलेखयत्स्वामी यो हरिस्तान्प्रति स्वयम् । स्वभक्तिं धर्मसहितां दद्यान्मे स दयानिधिः ॥ २ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्पदानुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां शताधिकद्विपञ्चाशत्तमस्तरङ्गः ॥ १५२ ॥ १९ ॥

ज्ञानं समाधिनिष्ठस्य वर्द्धतैन्द्रियकं बलम् । यत्तु तपआद्यैश्चेत्युक्तं विशे तु तत्त्वतः ॥ १ ॥ शकेति । शकेति । पूर्वार्द्धं व्याख्यातम् । (१८७८) पौषकृष्णचतुर्दश्यां पौषमासीयकृष्णपक्षस्य चतुर्दशीतिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमक्षितिपस्य । दुर्गे । वासुदेवालयस्य । अग्रे बहिर्वेदिकाप्रान्तप्रदेशे । चक्रके कौशेयचक्रकासने । स श्रीहरिः । समुपाविशत् ॥ २ ॥ सितेति । सितधौत्रः परिहितश्वेताधोवसनः । सूक्ष्मामणुसूत्र-

सन्तोऽपि सर्वे वचनामृतं ते निपीय तस्येत्यगमन् प्रमोदम् । भक्तिं दृढामेव तदीयपादपद्मे विशेषेण च तन्वते स्म ॥ ३३ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते शताधिकद्विपञ्चाशतमस्तरङ्गः ॥ १५२ ॥ १९ ॥

शकाब्दे विक्रमार्कस्य गजाश्ववसुभूमिते । पौषकृष्णचतुर्दश्यां वचोऽमृतमिदं हरेः ॥ १ ॥ तत्र दुर्गपुरे दुर्गे उत्तमक्षितिपस्य सः । वासुदेवालयस्याग्रे चक्रके समुपाविशत् ॥२॥ सितधौत्रो वसानश्च सूक्ष्मां तूलपटीं नवाम् । चित्रां सितचतुष्फालोपेतां शुक्लशिरःपटः ॥३॥ स्वदर्शनोत्कभक्तौघपरीतो हरिकीर्त्तनम् । गीतं सद्भिर्निशम्यासौ प्रसन्नस्तान् समब्रवीत् ॥४॥ मयाऽद्य प्रश्नः पृष्टोऽस्ति स्वावासे नित्यसेविनः । सोमादीन्प्रति तस्यैव कुरुतोत्तरमञ्जसा ॥५॥ इत्युक्त्वाऽश्रावयत्प्रश्नं शुश्रूषूंस्तान्प्रभुर्हरिः । पुंसां समाधिनिष्ठानां मायातोऽस्ति परा स्थितिः ॥६॥

मयत्वात्पिञ्जितात्पपिचुनिभृतत्वाचागुर्वीम् । नवां नवीनाम् । चित्रां विचित्रवर्णाम् । सितचतुष्फालोपेतामन्तःश्वेतचतुष्फालयुक्ताम् । तूलपटीं गुप्तदोरकिकाम् । वसानः शीतनिवृत्त्यै प्रावृण्वानः । शुक्लशिरःपटः स्वशिरःसंवेष्टितश्वेतसान्द्रसूक्ष्मपटकः ॥ ३ ॥ स्वेति । स्वदर्शनोत्कभक्तौघपरीतः स्वदर्शनार्थनानाजनपदागतात्युत्सुकत्यागिगृहिस्वाश्रितजनव्रजसंसत्संवेष्टितः सद्भिर्मुक्तानन्दादिसाधुभिः । गीतं मृदङ्ग झर्झरोपेततया सङ्गीतम् । हरिकीर्त्तनम् । निशम्य । प्रसन्नः । असौ श्रीहरिः । तान्साधून् । समब्रवीत् । इति द्वयोरेकसम्बन्धः ॥ ४ ॥ मयेति । हे साधवः ! । अद्यास्मिन्नहनि । मया । स्वावासे । नित्यसेविनः सर्वकालं मदन्तिकावासपूर्वं छन्दानुवृत्तितया मत्सेवानिरतान् । सोमादीन्सोमवर्मरत्नजिन्नाज्ञादीन् पार्षदान् प्रति । प्रश्नः । पृष्टः । अस्ति । तस्य प्रश्नस्य । उत्तरम् । अञ्जसा तत्त्वत एव । कुरुत ॥ ५ ॥ इतीति । इतीत्थम् । उक्त्वा । प्रभुः । हरिः । शुश्रूषून् प्रश्नं श्रोतुमिच्छून् । तान्साधून् । प्रश्नम् । अश्रावयत् । हे साधवः ! । समाधिनिष्ठानां साक्षाद्भगवत्कृपया सम्प्राप्त-

समाधिस्थितीनाम् । पुंसां भक्तानाम् । मायातो देहावस्थात्रिकरूपमायायाः सकाशात् । परा विप्रकृष्टा । स्थितिर्ब्रह्मात्मनावस्थानम् । अस्ति ॥ ६ ॥ कृष्णेति । तथा । तेषां समाधिनिष्ठानाम् । कृष्णस्वरूपसम्बन्धः । दृढः । अस्ति । अतो हेतोः । तेषां समाधिनिष्ठानाम् । ज्ञानेन्द्रियबलाधिक्यं ज्ञानसेन्द्रियबलस्य चाधिकता । ध्रुवमेव । भाव्यम् । अवश्यं भवितुं योग्यमस्तीत्यर्थः ॥ ७ ॥ इममर्थमेव सुस्पष्टबोधाय पुनराह चतुर्भिः । चतुरिति । मायाजातानि मायोत्पन्नत्वान्मायामयानि । चतुर्विंशतितत्त्वानि भूतार्थेन्द्रियान्तःकरणरूपाणि । जडचैतन्यरूपाणि कारणात्मकमूर्त्तदेवभावेन कार्यात्मकामूर्त्तसततपरिणामिप्रपञ्चावयवभावेन च चिज्जडस्वरूपाणि । भिन्नभिन्नक्रियाणि दर्शनश्रवणावघ्राणास्वादनादिपृथक्पृथक्कर्मयुक्तानि च । सन्ति । हि प्रसिद्धम् ॥ ८ ॥ तत्रेति । तत्र तेषु तत्त्वेषु मध्येऽपि । इन्द्रियेभ्यः श्रोत्रादिदशबाह्यकरणेभ्योऽपि । मनआदिचतुष्कस्यान्तःकरणस्य । ज्ञानशक्तिः । अधिका । अस्ति । ततोऽन्तःकरणात् । उभयद्रष्टुर्बाह्यान्तःकरणसमीक्षकस्य जीवस्य तु । ज्ञानशक्तिः । अधिका । अस्ति । किल ॥ ९ ॥ सर्वेति । सर्वेभ्य इन्द्रियान्तःकरणेभ्योऽतिशयताज्ञानशक्तिर्यस्य सः । सः । जीवः । चिन्मयो ज्ञातृरूपः । अस्ति । स जीवः ।

कृष्णस्वरूपसम्बन्धस्तेषामस्ति तथा दृढः । ज्ञानेन्द्रियबलाधिक्यं तेषां भाव्यमतो ध्रुवम् ॥ ७ ॥
चतुर्विंशतितत्त्वानि मायाजातानि सन्ति हि । जडचैतन्यरूपाणि भिन्नभिन्नक्रियाणि च ॥ ८ ॥
तत्राप्यस्तीन्द्रियेभ्योऽपि ज्ञानशक्तिः किलाधिका । मनआदिचतुष्कस्योभयद्रष्टुस्ततोऽधिका ॥ ९ ॥
सर्वाधिकज्ञानशक्तिः स तु जीवोऽस्ति चिन्मयः । समाधिं प्राप्नुयाद्यर्हि स साक्षाद्राधिकापतौ ॥ १० ॥
तदेन्द्रियादिद्रष्टृत्वं हित्वा ब्रह्मरूपताम् । प्राप्नोत्यतोऽस्ति सम्बन्धः कृष्णेनास्य दृढः खलु ॥ ११ ॥
एवं समाधिनिष्ठं तु केचिदाहुरयं पुमान् । अल्पं वेत्त्यधुना पूर्वापेक्षयेति बुधा अपि ॥ १२ ॥
तस्मात्समाधिनिष्ठस्य ज्ञानं बलमैन्द्रियम् । अस्ति पूर्वाधिकं किं वा न्यूनं ब्रूतास्य तूत्तरम् ॥ १३ ॥

यर्हि । साक्षाद्राधिकापतौ प्रत्यक्षे श्रीहरौ । समाधिम् । प्राप्नुयात् । तदोत्तरेण सम्बन्धः ॥ १० ॥ तदेति । तदा । स जीवः । इन्द्रियादिद्रष्टृत्वम् । हित्वा । तदभिमुखतां परित्यजेत्यर्थः । ब्रह्मरूपतां मायापराक्षरब्रह्मभावम् । प्राप्नोति । अतो हेतोः । अस्य समाधिनिष्ठस्य । कृष्णेन । सह । सम्बन्धः । दृढः । अस्ति । अस्येन्द्रियादिद्रष्टृत्वनिवृत्तिपूर्वं ब्रह्मभावप्राप्त्या सर्वाधिकाधिकज्ञानवत्कृष्णसुस्थिरसम्बन्धाज्ज्ञानाधिकतावताऽनेनावश्यभाव्यमिति भावः ॥ ११ ॥ एवमिति । एवं समाधिनिष्ठमेवंविधसमाधिमन्तं भक्तजनम् । बुधाः पण्डिता अपि । केचिद्भक्ताः । अयं समाधिनिष्ठः । पुमान् भक्तः । पूर्वापेक्षया समाधिप्राप्तिपूर्वावस्थापेक्षया । अधुना समाध्युद्भवावस्थायाम् । अल्पं किञ्चिन्मात्रम् । वेत्ति । इत्यमुना प्रकारेण । आहुर्वदन्ति ॥ १२ ॥ तस्मादिति । तस्माद्धेतोः । समाधिनिष्ठस्य ज्ञानम् । ऐन्द्रियमिन्द्रियसम्बन्धि । बलं च । पूर्वाधिकं समाधिसिद्धेः पूर्वकालादधिकम् । अस्ति । अथवा । न्यूनं समाधिप्राप्तेः पूर्वकालादप्यल्पमस्ति । किम् । अस्य प्रश्नस्य । उत्तरम् । ब्रूत यूयं कथयत ॥ १३ ॥

एतदिति । एतत्प्रश्नोत्तरम् । वक्तुम् । ते साधवः । यर्हि । नाशकन् । तदा । स्वामी श्रीहरिः । स्वयमेव । तदुत्तरं स्वकृतप्रश्नोत्तरम् । तान्साधून् । यथावत् । अब्रवीत् ॥ १४ ॥ मायेति । हे साधवः ! । मायामयं मायाकार्यतत्त्वसृष्टम् । सजीवं कर्मपरतन्त्रसकलजीवसहितम् । जडं स्थितिप्रवृत्तिहेत्व-न्तर्यामिप्रवेशमन्तराऽकिञ्चित्करत्वाज्जडप्रायम् । सकलम् । इदम् । विश्वं ब्रह्माण्डम् । ब्रह्म स्वपरब्रह्मोपासनासम्प्राप्तैश्वर्योऽक्षरात्मकः पुरुषः । साक्षितयाऽन्तर्यामितया । आविश्यैव । चेतनम् । करोति । तत्कर्मफलभोगप्रदानाय तत्सकलक्रियानिष्पत्तये च तदन्तःप्रविश्य कर्मफलभोगक्रियानिष्पत्त्योस्तत्क्षमत्वरूपचेतनताविशिष्टं सम्पाद-यतीत्यर्थः ॥ १५ ॥ स्वभाव इति । जडम् । चेतनम् । कुर्यात् । एषः ब्रह्मणोऽन्तर्यामिणोऽक्षरपुरुषस्य । स्वभावः । अस्ति । तत्साम्यं तथाविधब्रह्मणा समभावम् । भक्तः । समाधौ । याति प्राप्नोति । इति हेतोः । ज्ञानम् । एधते वृद्धिं याति । अतिशयितज्ञानवद्ब्रह्मसम्बन्धेनास्य ज्ञानं सम्यग्विवर्द्धते इत्यर्थः ॥ १६ ॥ शक्तीति । इन्द्रियाणाम् । शक्त्याधिक्यमनेन देहेनान्यलोकगमन दूरश्रवण दर्शनादियोग्यतारूपा बलाधिकता । समाधेः । फलम् । न मतम् । तदिन्द्रियबलाधिकं तु । तपश्च

एतत्प्रश्नोत्तरं वक्तुं यर्हि तेनाशकंस्तदा । स्वयमेवाब्रवीत्स्वामी तान् यथावत्तदुत्तरम् ॥ १४ ॥ मायामयमिदं विश्वं जीवं सकलं जडम् । ब्रह्म साक्षितयाऽऽविश्य करोत्येव हि चेतनम् ॥ १५ ॥ स्वभावो ब्रह्मणो ह्येष जडं कुर्याच्च चेतनम् । भक्तः समाधौ तत्साम्यं यातीति ज्ञानमेधते ॥१६॥ शक्त्याधिक्यं त्विन्द्रियाणां न समाधेः फलं मतम् । तपोवैराग्यनिष्कामधर्मयोगैस्तु तद्भवेत् ॥ १७ ॥ शुकादिवत्सिद्धदशा तपआद्यैः समेधितैः । प्राप्नुयुः पुरुषा नूनं न केवलसमाधिना ॥ १८ ॥ आल्प्येऽपि तपआदीनां न हि सिद्धदशा भवेत् । ज्ञानं तु प्राप्नुयाद् वृद्धिं सर्वेषां हि समाधिना ॥ १९ ॥ तपआदिवृद्ध्यभावाज्जनकस्यापि भूपतेः । नासीत्सिद्धदशा किन्तु ज्ञानवृद्धिः समाधिना ॥ २० ॥ सिद्धास्तु नारदशुकसनकादिसमा भुवि । पाताले दिवि वा यान्ति स्वेच्छया धाम्नि चैश्वरे ॥ २१ ॥

वैराग्यं च निष्कामधर्मो निवृत्तधर्मश्च योगोऽष्टाङ्गयोगश्च तैः । भवेत् । तपआदियुक्तादष्टाङ्गयोगाज्जायते इत्यर्थः ॥ १७ ॥ शुकेति । पुरुषा भगवद्भक्ताः । समेधितैः सम्यग्वर्धितैः । तपआद्यैस्तपःप्रभृतिभिः । शुकादिवत् । सिद्धदशामिन्द्रियबलाधिकतालक्षणां सिद्धजनावस्थाम् । प्राप्नुयुः नूनम् । केवलसमाधिना तपआदिवर्जितसमाधि-मात्रेण । सिद्धदशाम् । न प्राप्नुयुः ॥१८॥ आल्प्य इति । तप आदिनाम् । आल्प्येऽल्पत्वे सत्यपि । सिद्धदशा । न भवेत् । हि । सर्वेषां प्रवृत्तधर्मवतां निवृत्तधर्मवतां च भक्तानाम् । समाधिना । ज्ञानं तु । वृद्धिम् । प्राप्नुयात् ॥ १९ ॥ तप इति । भूपतेर्नृपत्वेन प्रवृत्तधर्मनिष्ठस्य । जनकस्यापि । तपआदिवृद्ध्यभावाद्धेतोः । सिद्धदशा । नासीत् । किन्तु । समाधिना । ज्ञानवृद्धिः आसीत् ॥ २० ॥ सिद्धा इति । नारदशुकसनकादिसमाः । सिद्धाः सिद्धदशां प्राप्ता भक्तास्तु । स्वेच्छया । भुवि सप्त-द्वीपादियुक्तायां पञ्चाशत्कोटिपरिमितायां पृथिव्याम् । अथवा । पाताले पातालान्तेषु सप्तस्वपि भूविवरेषु । अथवा । दिवि स्वर्गादिसत्यान्तलोकेषु । ऐश्वरे परमेश्वरसम्ब-

न्धिनि । धाम्नि श्वेतद्वीपाव्याकृतवैकुण्ठगोलोकादिधामसु च । यान्ति ॥ २१ ॥ सिद्धिमिति । येषां योगिभक्तानाम् । इन्द्रियाणि । तपआदिभिः । सिद्धिं सिद्धदशाम् । प्राप्तानि । स्युः । तेषां योगिभक्तानाम् । गतिः । सर्वत्र अलोकाष्टावरणतद्बाह्यलोकेष्वपीत्यर्थः । अप्रतिहताऽवरोधवर्जिता । भवति जायते । वै ॥ २२ ॥ ननु सिद्धदशावतां पुरः समाधिमन्तस्त्वसमर्था इव भान्ति तद्बलादर्शनादिति चेन्न तेऽपि तेभ्योऽसमर्थास्तद्वर्त्तनस्यापि सर्वलोकविलक्षणत्वादित्याह त्रिभिः । समाधिमिति । ये भक्ताः । केवलम् । समाधिम् । प्राप्ताः । स्युः । तेषाम् । ऐन्द्रियम् । बलं तु । न्यूनमल्पम् । भवेत् । ज्ञानं तु । न्यूनम् । न भवेत् । तज्ज्ञानं तु । सम्यक् । विवर्द्धते ॥ २३ ॥ तेषामिति । तेषां तथाविधानां समाधिमताम् । वर्त्तनं तु । सर्वलोकेभ्यः सकलजनेभ्यः । विलक्षणम् । अस्ति । अत एव । तथाविधं सर्वलोकविलक्षणम् । तद्वर्त्तनम् । कृष्णः । अर्जुनम् । प्राह ॥ २४ ॥ येति । बुद्धिर्हि द्विविधा आत्मप्रवणा विषयप्रवणा च । तत्र । या आत्मप्रवणा बुद्धिः । सा । सर्वभूतानाम् अज्ञजनानाम् । निशा । यथा निशायां स्वपन्तो जनास्तस्यां किं किं जायते इति न जानन्ति तथैवात्मप्रवणबुद्धौ प्राप्यमाणं ज्ञानानन्दं सर्वभूतानि न जानन्ती-

सिद्धिं येषामिन्द्रियाणि प्राप्तानि तपआदिभिः । सर्वत्राप्यप्रतिहता तेषां भवति वै गतिः ॥ २२ ॥
समाधिं केवलं प्राप्ता ये तेषां त्वैन्द्रियं बलम् । न्यूनं भवेन्न तु ज्ञानं तत्तु सम्यग्विवर्द्धते ॥ २३ ॥
तेषां तु वर्त्तनं सर्वलोकेभ्योऽस्ति विलक्षणम् । अत एवार्जुनं प्राह कृष्णस्तत्तु तथाविधम् ॥ २४ ॥
या निशा सर्वभूतानां तस्यां जागर्ति संयमी । यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः ॥ २५ ॥
अन्तरात्मोन्मुखा यस्य दृष्टिर्वर्त्तेत योगिनः । तस्येन्द्रियादिचेष्टासु शून्यभावो भवेद् ध्रुवम् ॥ २६ ॥
अतो गुणात्मकधियो यं समाधिमतां नृणाम् । नैर्गुण्यशालिनां प्राहुर्ज्ञानाल्प्यं ते न तान्विदुः ॥ २७ ॥

त्यर्थः । तस्यामात्मप्रवण्यां बुद्धौ । संयमी समाधिनिष्ठो भक्तः । जागर्त्ति न तु स्वपिति । आत्मप्रवणबुद्धिनिष्ठं ज्ञानानन्दं साक्षादनुभवतीत्यर्थः । यस्यां विषयप्रवणायां बुद्धौ । भूतानि जाग्रति । तन्निष्ठं प्रचुरदुःखमिश्रं विषयसुखं शोकमोहादिकं च साक्षादनुभवन्ति न तु तत्र स्वपन्तीत्यर्थः । सा विषयप्रवणाबुद्धिः । पश्यतः सांसारिकानां सुखदुःखप्रदान्विषयांस्तत्रौदासीन्येनावलोकयतः स्वभोग्यान्विषयानपि यथोचितं निर्लेपं यथातथाग्राह्यत्वेन च निरीक्षमाणस्य । मुनेः समाधिनिष्ठस्य भक्तस्य । निशा स तन्निष्ठं किमपि नानुभवतीत्यर्थः ॥ २५ ॥ अन्तरिति । योगिनः समाधिनिष्ठस्य । यस्य भक्तस्य । दृष्टिर्बुद्धिः । अन्तरात्मोन्मुखा स्वत्रह्मात्मभावनपूर्वं परमात्मश्रीहरिस्वरूपैकध्यानप्रवणा । वर्त्तेत । तस्य भक्तस्य । इन्द्रियादिचेष्टासु । शुन्यभाव उपशमतुल्यः स्थिरभावः । ध्रुवं निश्चितमेव । भवेत् ॥ २६ ॥ अत इति । अतो हेतोः । गुणात्मकधियः सत्त्वादिगुणप्रधानमतयः । ये पुरुषाः । ते । नैर्गुण्यशालिनां गुणातीतात्मपरमात्मज्ञानसुखानुभवप्रवणानाम् । समाधिमताम् । नृणां भक्तानाम् । ज्ञानाल्पम् । प्राहुः । अतः । ते । तान्समाधिमतः । न विदुः । समाधिमन्महिमानं न जानन्तीत्यर्थः ॥ २७ ॥

ननु समाधिमतां देहादिभावविस्मरणपूर्वमात्मभावावस्थाने तु ज्ञानवृद्धिः स्यादेव पुनर्देहादिस्मृतिकाले तु तदल्पता स्यादिति प्रतिभातीति चेत्तत्राह द्वाभ्याम् । यदेति । ते समाधिमन्तः । यदा । देहेन्द्रियादिभ्यः । पृथक्तया प्रतिलोमतया । वर्त्तन्ते । तदानीम् । तेषाम् । ज्ञानम् । यादृशम् । विवृद्धम् । ह स्फुटम् । अस्ति ॥२८॥ तथेति । आगत्य समाधेर्बहिरेत्य । वपुरादिषु देहेन्द्रियादिषु । वर्त्तमानानाम् । तेषां समाधिमताम् । ज्ञानम् । तथैव विवृद्धमेव । अस्ति । ह्रासमाल्प्यम् । न प्राप्नोति । वै । इतीत्थम् । अवधार्यतां निश्चीयताम् । इतिद्वयोरेक सम्बन्धः ॥ २९ ॥ प्रवृत्तेति । एते समाधिमन्तः । यदा । प्रवृत्तमार्गं प्रवृत्तधर्मपथम् । हित्वा । तपआदिषु । वर्त्तेरन् । तर्हि । सनकादिवत् । संसिद्धिं देहेन्द्रियादिशक्तिवृद्धिरूपां सिद्धदशाम् । यायुः । वै ॥ ३० ॥ श्रुत्वेति । इत्येवंविधाम् । सुधोपमेयाम् । वृषनन्दनस्य धर्मसुनोः श्रीहरेः । वाचम् । साधु सम्यक् । श्रुत्वा । सदोनिषण्णाः । ते । साधवो मुक्तानन्दादयो मुनयः । सर्वे । गृहिणश्च । भूरितरमतिमहान्तम् । प्रतोषम् । प्रपेदिरे ॥ ३१ ॥ समाधिमत आत्मीयभक्तस्य ज्ञानमञ्जसा । वर्द्धते न बलं वृद्धिं प्राप्नोत्यैन्द्रियकं यथा ॥ १ ॥ तथा प्रश्नोत्तरमुखेनाह यः श्रीहरिर्निजान् । स मे दद्यात्स्व-

यथा देहेन्द्रियादिभ्यो वर्त्तन्ते पृथक्तया । तदानीं यादृशं तेषां विवृद्धं ज्ञानमस्ति ह ॥ २८ ॥<br>
तथैव वर्त्तमानामागत्य वपुरादिषु । तेषां ज्ञानं न वै ह्रासं प्राप्नोत्यवधार्यताम् ॥ २९ ॥ प्रवृत्तमार्गं<br>
हित्वैते यदा तु तपआदिषु । वर्त्तेरंस्तर्हि यायुर्वै संसिद्धिं सनकादिवत् ॥ ३० ॥ श्रुत्वेति वाचं वृष-<br>
नन्दनस्य ते साधवः साधु सुधोपमेयाम् । प्रपेदिरे भूरितरं प्रतोषं सदोनिषणा गृहिणश्च सर्वे ॥ ३१ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते शताधिकत्रिपञ्चाशतमस्तरङ्गः ॥ १५३ ॥ २० ॥

शकाब्दे विक्रमार्कस्य गजाश्ववसुभूमिते । पौर्णमास्यां तपस्यस्य वचोऽमृतमिदं हरेः ॥ १ ॥<br>
तत्र दुर्गपुरे दुर्गे उत्तमस्थ स भूपतेः । वासुदेवालयस्याग्रे न्यषीदत्पीठ उत्तमे ॥ २ ॥

पादाब्जसेवामेकान्तिकक्रियाम् ॥ २ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्स्वनुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्य-सुधासिन्धुटीकायां शताधिकत्रिपञ्चाशत्तमस्तरङ्गः ॥ १५३ ॥ २० ॥

साक्षाच्छ्रीहरितत्साधुमाहात्म्यवेदनं तु यत् । परोक्षवत्तत्परमनिःश्रेयसकरं महत् ॥ १ ॥ जीवेशानां स्वाम्यसृष्टिं तद्भोगान्कुरुते हरिः । प्राधान्यं सर्वतस्तस्यैतदुक्तं त्वेकविंशके ॥ २ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८७८) तपस्यस्य फाल्गुनमासस्य । पौर्णमास्यां तिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥१॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमस्थ । भूपतेः । दुर्गे । वासुदेवालयस्य । अग्रे बहिर्वेदिकाप्रान्तप्रदेशे । उत्तमे श्रेष्ठकौशेयवसननिर्मितत्वाद्वरे । पीठे चक्रकासने । स श्रीहरिः । न्यषीदत् ॥ २ ॥

सितेति । सिताम्बरधरः परिहितसकलश्वेतवसनः । अनेकैर्नानादेशागतत्वाद्बहुभिः । भक्तैस्त्यागिभिर्गृहिभिश्च स्वभक्तजनैः । परितः सर्वतः । वृतः सभायां वेष्टितः । स श्रीहरिः । गीतं प्रेमानन्दादिसद्भिरुपवीणितम् । हरियशः पद्यबद्धं श्रीहरिचरित्रम् । श्रुत्वा । सन्तुष्टः प्रसन्नः सन् । सतः स्वपुरो निषण्णान्साधून् । अब्रवीत् ॥ ३ ॥ शृण्वन्त्विति । हे साधवः ! । वो युष्माकं । हिताय हितं कर्त्तुम् । वार्त्ताम् । कुर्वे । सर्वे भवन्तोऽखिला अपि । सादरं यथातथा । शृण्वन्तु । मया । व्यासकृताः । सर्वे ग्रन्थाः । इह दुर्गपुरे । सम्यक् । श्रुताः ॥ ४ ॥ तत इति । ततस्तच्छ्रवणानन्तरम् । सर्वदेहिनां भक्तानाम् । श्रेयस्कृत् । यः । तदीयसिद्धान्तो व्यासकृतग्रन्थमात्रनिर्गलितार्थः । धिया निश्चितो मया स्वमत्या निर्णीतः । तं सिद्धान्तम् । वो युष्मभ्यम् । समासतः सङ्क्षेपतः । कथयामि ॥ ५ ॥ सर्वेति । एकः । पुरुषोत्तमः श्रीकृष्णः । सर्वकर्त्ता प्रकृतिपुरुषद्वारासकलविश्वसंस्रष्टा । सर्वहर्त्ता कालादिद्वारासकलविश्वसंहारकोऽपि । अस्ति । तस्य पुरुषोत्तमस्यैव चरित्राणि । सर्वशः सर्वेषाम् । तद्भक्तानां तस्य साक्षादुपासकानाम् । चरित्राणि च ॥ ६ ॥ ग्रन्थेष्विति । व्यासेन । तेषु स्वकृतेषु ग्रन्थेषु । वर्णितानि । भवन्ति ।

सिताम्बरधरो भक्तैरनेकैः परितो वृतः । गीतं श्रुत्वा हरियशः सन्तुष्टः सोऽब्रवीत्सतः ॥ ३ ॥ शृण्वन्तु सादरं सर्वे कुर्वे वार्त्तां हिताय वः । मया व्यासकृता ग्रन्थाः सर्वे सम्यक् श्रुता इह ॥ ४ ॥ ततस्तदीयसिद्धान्तः श्रेयस्कृत्सर्वदेहिनाम् । यो धिया निश्चितस्तं वः कथयामि समासतः ॥५॥ सर्वकर्त्ता सर्वहर्त्ताऽप्येकोऽस्ति पुरुषोत्तमः । तस्यैव हि चरित्राणि तद्भक्तानां च सर्वशः ॥ ६ ॥ ग्रन्थेषु तेषु व्यासेन वर्णितानि भवन्ति हि । तथा वर्णाश्रमाणां च धर्माः सर्वेऽपि वर्णिताः ॥ ७ ॥ तत्र धर्मैः केवलैस्तु नृभिः सम्यगनुष्ठितैः । त्रिवर्गसिद्धिः कीर्त्तिश्च दैहिकं च सुखं भवेत् ॥८॥ तुरीयपुरुषार्थस्य सिद्धिस्तु हरिणा भवेत् । तदेकान्तिकभक्तैश्च सेवितैर्नान्यथा क्वचित् ॥९॥ परोक्षकृष्णतद्भक्तमाहात्म्यं बुध्यते यथा । तथा प्रत्यक्षभगवत्तत्सन्माहात्म्यवेदनम् ॥ १० ॥ यत्तदेवात्र कथितं निःश्रेयसकरं परम् । एष हि व्याससिद्धान्तः सर्वैर्ज्ञेयः स सर्वथा ॥ ११ ॥

तथा । वर्णाश्रमाणाम् । सर्वे । धर्मा अपि । वर्णिताः । भवन्ति । इति द्वयोरेकान्वयः ॥ ७ ॥ तत्रेति । तत्र तयोः पुरुषोत्तमधर्मयोर्मध्ये । नृभिर्वर्णाश्रमिजनैः । सम्यक् । अनुष्ठितैराचरितैः । केवलैर्भगवद्भक्तिरहितैः । धर्मैस्तु । त्रिवर्गसिद्धिर्धर्मार्थकामप्राप्तिः । कीर्त्तिर्लोके यशः । दैहिकं देहसम्बन्धि । सुखं च । भवेत् ॥ ८ ॥ तुरीयेति । तुरीयपुरुषार्थस्य मोक्षस्य । सिद्धिस्तु । सेवितेन । हरिणा । सेवितैः । तदेकान्तिकभक्तैश्च । भवेत् । अन्यथोक्तोपायद्वयं विना तु । क्वचित्कदाचिदपि । न स्यात् ॥ ९ ॥ परोक्ष इति । परोक्षकृष्णतद्भक्तमाहात्म्यम् । यथा । बुद्ध्यते । तथा । यत् । प्रत्यक्षभगवत्तत्सन्माहात्म्यवेदनम् । अस्ति ॥ १० ॥ यदिति । तदेव । अत्र लोके । परं केवलम् । निःश्रेयसकरम् । कथितम् । एष हि एष एव । व्याससिद्धान्तः । अस्ति । सर्वैर्भवद्भिः । स व्याससिद्धान्तः । सर्वथा । ज्ञेयः । इतिद्वयोरेकान्वयः ॥ ११ ॥

मानुष्येति । भ्रमदात्मनां संसृतिचक्रे बम्भ्रम्यमाणजीवानाम् । मानुष्यलब्धिर्मनुष्यदेहप्राप्तिः । येन व्याससिद्धान्तवेदनेन । सफला । स्यात् । इह सत्सङ्गे । मुमुक्षुः । पुमान् भक्तः । तम् । अमुं सिद्धान्तम् । यत्नतः । विद्यात् ॥ १२ ॥ अद्येति । पुमान् । अद्य । अथवा । लक्षवर्षान्ते । यदा । अमुम् । सिद्धान्तम् । वेत्स्यति ज्ञास्यति । तदैव । संसृतेः संसारात् । मोक्षः । भविष्यति । अन्यथैतत्सिद्धान्तवेदनं विना । न च संसृतेर्मोक्षो न भविष्यत्येव ॥१३॥ महतामिति । महतां महानुभावानाम् । नारदादीनां साक्षाद्भगवदेकान्तिकभक्तानाम् । समागमं प्रसङ्गम् । विधायापि । अयं सिद्धान्त एव । वेद्यः । यस्माद्धेतोः । ते नारदादयोऽपि । अमुं सिद्धान्तमेव । वेद्यं सर्वथा ज्ञेयम् । ब्रुवन्ति अनेकयुक्तिभिः स्वाश्रितेभ्यः कथयन्ति ॥ १४ ॥ प्रत्यक्षेति । यत् । प्रत्यक्षकृष्णः साक्षात्परमेश्वरश्च तद्भक्ताः प्रत्यक्षकृष्णैकान्तिकजनाश्च तेषां माहात्म्यज्ञानं परोक्षवन्महिमवेदनम् । तत् । यस्य भक्तस्य । सुदृढम् । अस्ति । तस्य भक्तस्य । क्वापि कदाचिदपि । देशकालादिवैषम्ये सत्यपीत्यर्थः । पातभयं मोक्षमार्गात्पतनभयम् । नहि नास्त्येव । यथा केषांचिदास्तिकजनानां स्वपरोक्षभूतरामकृष्णादिभगवदवताराणां समहिमचरित्रश्रवणेन

मानुष्यलब्धिः सफला येन स्याद् भ्रमदात्मनाम् । तममुं यत्नतो विद्यान्मुमुक्षुस्तु पुमानिह ॥१२॥ अद्य वा लक्षवर्षान्ते पुमान्वेत्स्यत्यमुं यदा । तदैव संसृतेर्मोक्षो भविष्यति न चान्यथा ॥ १३ ॥ महतां नारदादीनां विधायापि समागमम् । अयमेवास्ति वेद्यो वेद्यं यत्ते ब्रुवन्त्यमुम् ॥ १४ ॥ प्रत्यक्षकृष्णतद्भक्तमाहात्म्यज्ञानमस्ति यत् । यस्य तत् सुदृढं तस्य क्वापि पातभयं न हि ॥ १५ ॥ एतावतीं विधायासौ वार्त्तां भक्तहितावहाम् । श्रीवाटिकामुपागच्छत्सह भक्तजनैस्ततः ॥ १६ ॥ तत्राप्याम्रतले वेद्यां न्यषीदन्मञ्चकोत्तमे । भक्ता निषेदुः पुरतस्तस्य सर्वेऽपि तद्दृशः ॥ १७ ॥ पीतपुष्पधृतापीडो मल्लिकाकर्णभूषणः । मल्लिकापुष्पहारश्च स प्रोवाच पुनः सतः ॥ १८ ॥

तद्भक्तानां हनुमदुद्धवादीनां समहिमचरित्रश्रवणेन चात्युत्साहयुक्तत्वं महाश्चर्ययुक्तत्वं च जायते तथैव प्रत्यक्षभगवतस्तद्भक्तानां च प्राप्तौ सत्यां तेषां समाहात्म्यचरित्रश्रवणेन यदा तथात्वं स्यात्तदैवात्यन्तिकमोक्षप्राप्तिः संसृतिकालभयनिवृत्तिश्च स्यादित्येतावत्सन्दर्भार्थः ॥ १५ ॥ एतावतीमिति । असौ श्रीहरिः । भक्तहितावहां स्वभक्तहितकारिणीम् । एतावतीम् । वार्त्ताम् । विधाय । भक्तजनैः स्वाश्रितत्यागिगृहिजनैः । सह । तत उत्तमनृपतिदुर्गान्तःस्थवासुदेवालयसकाशात् । श्रीवाटिकां लक्ष्म्यारामम् । उपागच्छन्माणिक्याश्वामधिरुह्य पट्घटिकावशेषदिनात्मककाले जगाम ॥ १६ ॥ तत्रेति । तत्र श्रीवाटिकायाम् । आम्रतले रसालतर्वधःप्रदेशे । वेद्याम् । मञ्चकोत्तमे स्वास्तृतश्रेष्ठपर्यङ्कासने । न्यषीदच्छ्रीहरिरुदगास्य उपविवेश । सर्वेऽपि पूर्वोक्ताः सकला अपि । भक्ताः । तद्दृशश्चन्द्रचकोरन्यायेन श्रीहर्याननपद्मैकचक्षुषः सन्तः । तस्य श्रीहरेः । पुरतः । निषेदुः ॥ १७ ॥ पीतेति । पीतपुष्पधृतापीडः शिरोवेष्टनान्तःस्वभक्तधारितपीतसहस्रदलकुसुमशेखरः । मल्लिकाकर्णभूषणः कर्णद्वयोर्ध्वधारितकुन्दकुसुमकर्णावतंसः । मल्लिकापुष्पहारः कण्ठधृतमाध्यसुमनोमालः । स श्रीहरिः । पुनः पूर्वकृतवार्त्तापेक्षया भूयः । सतः सभावस्थितमुक्तानन्दादिसाधून्प्रति । प्रोवाच ॥ १८ ॥

सितेति । सिताम्बरधरः परिहितसकलश्वेतवसनः । अनेकैर्नानादेशागतत्वाद्बहुभिः । भक्तैस्त्यागिभिर्गृहिभिश्च स्वभक्तजनैः । परितः सर्वतः । वृतः सभायां वेष्टितः । स श्रीहरिः । गीतं प्रेमानन्दादिसद्भिरुपवीणितम् । हरियशः पद्यबद्धं श्रीहरिचरित्रम् । श्रुत्वा । सन्तुष्टः प्रसन्नः सन् । सतः स्वपुरो निषण्णान्साधून् । अब्रवीत् ॥ ३ ॥ शृण्वन्त्विति : हे साधवः ! । वो युष्माकं । हिताय हितं कर्त्तुम् । वार्त्ताम् । कुर्वे । सर्वे भवन्तोऽखिला अपि । सादरं यथातथा शृण्वन्तु । मया । व्यासकृताः । सर्वे ग्रन्थाः । इह दुर्गपुरे । सम्यक् । श्रुताः ॥ ४ ॥ तत इति । ततस्तच्छ्रवणानन्तरम् । सर्वदेहिनां भक्तानाम् । श्रेयस्कृत् । यः । तदीयसिद्धान्तो व्यासकृतग्रन्थमात्रनिर्गलितार्थः । धिया निश्चितो मया स्वमत्या निर्णीतः । तं सिद्धान्तम् । वो युष्मभ्यम् । समासतः सङ्क्षेपतः । कथयामि ॥ ५ ॥ सर्वेति । एकः । पुरुषोत्तमः श्रीकृष्णः । सर्वकर्त्ता प्रकृतिपुरुषद्वारासकलविश्वसंस्रष्टा । सर्वहर्त्ता कालादिद्वारासकलविश्वसंहारकोऽपि । अस्ति । तस्य पुरुषोत्तमस्यैव चरित्राणि । सर्वशः सर्वेषाम् । तद्भक्तानां तस्य साक्षादुपासकानाम् । चरित्राणि च ॥ ६ ॥ ग्रन्थेष्विति । व्यासेन । तेषु स्वकृतेषु ग्रन्थेषु । वर्णितानि । भवन्ति ।

सिताम्बरधरो भक्तैरनेकैः परितो वृतः । गीतं श्रुत्वा हरियशः सन्तुष्टः सोऽब्रवीत्सतः ॥ ३ ॥ शृण्वन्तु सादरं सर्वे कुर्वे वार्त्तां हिताय वः । मया व्यासकृता ग्रन्थाः सर्वे सम्यक् श्रुता इह ॥ ४ ॥ ततस्तदीयसिद्धान्तः श्रेयस्कृत्सर्वदेहिनाम् । यो धिया निश्चितस्तं वः कथयामि समासतः ॥५॥ सर्वकर्त्ता सर्वहर्त्ताऽप्येकोऽस्ति पुरुषोत्तमः । तस्यैव हि चरित्राणि तद्भक्तानां च सर्वशः ॥ ६ ॥ ग्रन्थेषु तेषु व्यासेन वर्णितानि भवन्ति हि । तथा वर्णाश्रमाणां च धर्माः सर्वेऽपि वर्णिताः ॥ ७ ॥ तत्र धर्मैः केवलैस्तु नृभिः सम्यगनुष्ठितैः । त्रिवर्गसिद्धिः कीर्त्तिश्च दैहिकं च सुखं भवेत् ॥८॥ तुरीयपुरुषार्थस्य सिद्धिस्तु हरिणा भवेत् । तदेकान्तिकभक्तैश्च सेवितैर्नान्यथा क्वचित् ॥९॥ परोक्षकृष्णतद्भक्तमाहात्म्यं बुध्यते यथा । तथा प्रत्यक्षभगवत्तत्सन्माहात्म्यवेदनम् ॥ १० ॥ यत्तदेवात्र कथितं निःश्रेयसकरं परम् । एष हि व्याससिद्धान्तः सर्वैर्ज्ञेयः स सर्वथा ॥ ११ ॥

तथा । वर्णाश्रमाणाम् । सर्वे । धर्मा अपि । वर्णिताः । भवन्ति । इति द्वयोरेकान्वयः ॥ ७ ॥ तत्रेति । तत्र तयोः पुरुषोत्तमधर्मयोर्मध्ये । नृभिर्वर्णाश्रमिजनैः । सम्यक् । अनुष्ठितैराचरितैः । केवलैर्भगवद्भक्तिरहितैः । धर्मैस्तु । त्रिवर्गसिद्धिर्धर्मार्थकामप्राप्तिः । कीर्त्तिर्लोके यशः । दैहिकं देहसम्बन्धि । सुखं च । भवेत् । ८ ॥ तुरीयेति । तुरीयपुरुषार्थस्य मोक्षस्य । सिद्धिस्तु । सेवितेन । हरिणा । सेवितैः । तदेकान्तिकभक्तैश्च । भवेत् । अन्यथोक्तोपायद्वयं विना तु । क्वचित्कदाचिदपि । न स्यात् ॥ ९ ॥ परोक्ष इति । परोक्षकृष्णतद्भक्तमाहात्म्यम् । यथा । बुद्ध्यते । तथा । यत् । प्रत्यक्षभगवत्तत्सन्माहात्म्यवेदनम् । अस्ति ॥ १० ॥ यदिति । तदेव । अत्र लोके । परं केवलम् । निःश्रेयसकरम् । कथितम् । एष हि एष एव । व्याससिद्धान्तः । अस्ति । सर्वैर्भवद्भिः । स व्याससिद्धान्तः । सर्वथा । ज्ञेयः । इतिद्वयोरेकान्वयः ॥ ११ ॥

मानुष्येति । भ्रमदात्मनां संसृतिचक्रे बम्भ्रम्यमाणजीवानाम् । मानुष्यलब्धिर्मनुष्यदेहप्राप्तिः । येन व्याससिद्धान्तवेदनेन । सफला । स्यात् । इह सत्सङ्गे । मुमुक्षुः । पुमान् भक्तः । तम् । अमुं सिद्धान्तम् । यत्नतः । विद्यात् ॥ १२ ॥ अद्येति । पुमान् । अद्य । अथवा । लक्षवर्षान्ते । यदा । अमुम् । सिद्धान्तम् । वेत्स्यति ज्ञास्यति । तदैव । संसृतेः संसारात् । मोक्षः । भविष्यति । अन्यथैतत्सिद्धान्तवेदनं विना । न च संसृतेर्मोक्षो न भविष्यत्येव ॥१३॥ महतामिति । महतां महानुभावानाम् । नारदादीनां साक्षाद्भगवदेकान्तिकभक्तानाम् । समागमं प्रसङ्गम् । विधायापि । अयं सिद्धान्त एव । वेद्यः । यस्माद्धेतोः । ते नारदादयोऽपि । अमुं सिद्धान्तमेव । वेद्यं सर्वथा ज्ञेयम् । ब्रुवन्ति अनेकयुक्तिभिः स्वाश्रितेभ्यः कथयन्ति ॥ १४ ॥ प्रत्यक्षेति । यत् । प्रत्यक्षकृष्णः साक्षात्परमेश्वरश्च तद्भक्ताः प्रत्यक्षकृष्णैकान्तिकजनाश्च तेषां माहात्म्यज्ञानं परोक्षवन्महिमवेदनम् । तत् । यस्य भक्तस्य । सुदृढम् । अस्ति । तस्य भक्तस्य । क्वापि कदाचिदपि । देशकालादिवैषम्ये सत्यपीत्यर्थः । पातभयं मोक्षमार्गात्पत्तनभयम् । नहि नास्त्येव । यथा केषांचिदास्तिकजनानां स्वपरोक्षभूतरामकृष्णादिभगवदवताराणां समहिमचरित्रश्रवणेन

मानुष्यलब्धिः सफला येन स्याद् भ्रमदात्मनाम् । तममुं यत्नतो विद्यान्मुमुक्षुस्तु पुमानिह ॥१२॥ अद्य वा लक्ष-
वर्षान्ते पुमान्वेत्स्यत्यमुं यदा । तदैव संसृतेर्मोक्षो भविष्यति न चान्यथा ॥ १३ ॥ महतां नारदादीनां विधायापि
समागमम् । अयमेवास्ति वेद्यो वेद्यं यत्ते ब्रुवन्त्यमुम् ॥ १४ ॥ प्रत्यक्षकृष्णतद्भक्तमाहात्म्यज्ञानमस्ति यत् । यस्य
तत् सुदृढं तस्य क्वापि पातभयं न हि ॥ १५ ॥ एतावतीं विधायासौ वार्त्तां भक्तहितावहाम् । श्रीवाटिकामुपा-
गच्छत्सह भक्तजनैस्ततः ॥ १६ ॥ तत्राप्याम्रतले वेद्यां न्यषीदन्मञ्चकोत्तमे । भक्ता निषेदुः पुरतस्तस्य सर्वेऽपि
तद्दृशः ॥ १७ ॥ पीतपुष्पधृतापीडो मल्लिकाकर्णभूषणः । मल्लिकापुष्पहारश्च स प्रोवाच पुनः सतः ॥ १८ ॥

तद्भक्तानां हनुमदुद्धवादीनां समहिमचरित्रश्रवणेन चात्युत्साहयुक्तत्वं महाश्चर्ययुक्तत्वं च जायते तथैव प्रत्यक्षभगवतस्तद्भक्तानां च प्राप्तौ सत्यां तेषां समाहात्म्यचरित्रश्रवणेन यदा तथात्वं स्यात्तदैवात्यन्तिकमोक्षप्राप्तिः संसृतिकालभयनिवृत्तिश्च स्यादित्येतावत्सन्दर्भार्थः ॥ १५ ॥ एतावतीमिति । असौ श्रीहरिः । भक्तहितावहां स्वभक्तहितकारिणीम् । एतावतीम् । वार्त्ताम् । विधाय । भक्तजनैः स्वाश्रितत्यागिगृहिजनैः । सह । तत उत्तमनृपतिदुर्गान्तःस्थवासुदेवालयसकाशात् । श्रीवाटिकां लक्ष्म्यारामम् । उपागच्छन्माणिक्याश्वामधिरुह्य पट्टघटिकावशेषदिनात्मककाले जगाम ॥ १६ ॥ तत्रेति । तत्र श्रीवाटिकायाम् । आम्रतले रसालतरुवधःप्रदेशे । वेद्याम् । मञ्चकोत्तमे स्वास्तृतश्रेष्ठपर्यङ्कासने । न्यषीदच्छ्रीहरिरुद्गास्य उपविवेश । सर्वेऽपि पूर्वोक्ताः सकला अपि । भक्ताः । तद्दृशश्चन्द्रचकोरन्यायेन श्रीहर्याननपद्मैकचक्षुषः सन्तः । तस्य श्रीहरेः । पुरतः । निषेदुः ॥ १७ ॥ पीतेति । पीतपुष्पधृतापीडः शिरोवेष्टनान्तःस्वभक्तधारितपीतसहस्रदलकुसुमशेखरः । मल्लिकाकर्णभूषणः कर्णद्वयोर्ध्वधारितकुन्दकुसुमकर्णावतंसः । मल्लिकापुष्पहारः कण्ठधृतमाध्यसुमनोमालः । स श्रीहरिः । पुनः पूर्वकृतवार्त्तापेक्षया भूयः । सतः सभावस्थितमुक्तानन्दादिसाधून्प्रति । प्रोवाच ॥ १८ ॥

जीवानामिति । हे साधवः ! । जीवानाम् । ईश्वराणां ब्रह्मादीनां च । स्वप्नावस्था । अस्ति । तत्र स्वप्नावस्थायाम् । सृष्टिर्देवमनुष्यादिसर्गः । ईदृशी जाग्रदवस्थासदृशी दृश्यते । सर्वशः सर्वेऽपि । भोगाश्च । ईदृशाः । दृश्यन्ते ॥ १९ ॥ तदिति । जीवेशा एव । तत्सृष्टिभोगरूपत्वं स्वात्मसर्गभोगात्मभावम् । यान्ति । किम् । अथवा । सृष्टिः । भोगाश्च । तेषां जीवेशानाम् । सङ्कल्पैरेव । उद्भवन्ति ॥ २० ॥ जीवेति । अथवा । जीवेशेभ्यः । परः स्वरूपस्वभावादिभिर्विलक्षणः । भगवानन्तर्यामी श्रीहरिरेव । तादृशीं स्वामीम् । सृष्टिम् । तादृशान् । भोगांश्च । निर्माय सृष्ट्वा । दत्ते जाग्रद्वद्यथाकर्म प्रददाति किम् । अस्य मत्प्रश्नस्य । उत्तरम् । ब्रूत यूयं कथयत ॥ २१ ॥ इतीति । इत्यमुना प्रकारेण । पृष्टाः श्रीहरिणानुयुक्ताः । ते सभोपविष्टाः । सन्तो मुक्तानन्दादयो मुनयः । यदा । तदुत्तरं स्वकृतप्रश्नोत्तरम् । सम्यग्यथार्थतया । न विदुः । तर्हि । अखिलार्थवित्सकलशास्त्रार्थानुभवसिद्धान्ताभिज्ञः । असौ श्रीहरिरेव । तत्स्वकृतप्रश्नोत्तरम् । उवाच ॥ २२ ॥ नेति । हे साधवः ! । तदा स्वप्नावस्थायाम् । जीवेश्वराः । सृष्टिभोगरूपाः । न जायन्ते । किञ्च । ते जीवेश्वराः । तत्र स्वप्नावस्थायाम् । सङ्कल्पैः स्वमानसकर्मभिः । सृष्टिम् । भोगांश्च । न

जीवानामीश्वराणां च स्वप्नावस्थाऽस्ति साधवः? । ईदृशी दृश्यते तत्र सृष्टिर्भोगाश्च सर्वशः ॥ १९ ॥
तत्सृष्टिभोगरूपत्वं जीवेशा एव यान्ति किम् । सृष्टिर्भोगाश्च सङ्कल्पैस्तेषामेवोद्भवन्ति वा ॥ २० ॥
जीवेशेभ्यः परः किं वा भगवानेव तादृशीम् । सृष्टिं भोगांश्च निर्माय दत्ते ब्रूतास्य तूत्तरम् ॥ २१ ॥
इति पृष्टास्तु ते सन्तो यदा सम्यक् तदुत्तरम् । न विदुस्तर्ह्यसावेव तदुवाचाखिलार्थवित् ॥ २२ ॥
न जायन्ते सृष्टिभोगरूपा जीवेश्वरास्तदा । न कुर्वते च सङ्कल्पैः सृष्टिं भोगांश्च तत्र ते ॥ २३ ॥
किन्तु तेभ्यः परस्त्वीशस्तेषां कर्मफलप्रदः । भगवानेव तत्कर्मानुसारेण तदाऽखिलाम् ॥ २४ ॥
सृष्टिं भोगांश्च कुरुते तद्भोगायैव मायया । जाग्रतीव तदाऽप्येते तत्रासक्ता भवन्ति हि ॥ २५ ॥

कुर्वते ॥ २३ ॥ किन्त्विति । किन्तु । तेभ्यो जीवेश्वरेभ्यः । परः । तेषां जीवेश्वराणाम् । कर्मफलप्रदः । भगवान्सकलैश्वर्यसम्पन्नः । ईशः परमेश्वर एव । तदा स्वप्नावस्थायाम् । तत्कर्मानुसारेण ॥ २४ ॥ सृष्टिमिति । तद्भोगाय जीवेश्वरभोगसुखार्थमेव । मायया यस्य स्वप्नप्राप्तिस्तन्मात्रदृश्यत्वादाश्चर्यरूपेण स्वसङ्कल्पेन । अखिलाम् । सृष्टिम् । भोगांश्च । कुरुते सृष्ट्वा वितरति । एते जीवेश्वराः । तदा स्वप्नावस्थायामपि । जाग्रतीव जाग्रदवस्थायां यथा । तत्र परमेश्वरनिष्पादितसृष्टिभोगेषु । आसक्ताः । भवन्ति । हि । इति द्वयोरेकान्वयः । तथा च सूत्रम् । 'मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वा'दिति । श्रुतिश्च । 'न तत्र रथा न रथयोगा न पन्थानो भवन्त्यथ रथान् रथयोगान् पथः सृजते'इत्यादिः । एतयोरर्थः श्रीभगवद्रामानुजाचार्यकृतश्रीभाष्यान्मुक्तानन्दमुनिकृतभाष्यरत्नाद्गोपालानन्दमुनिकृतसूत्रार्थदीपाच्चावगन्तव्यः ॥ २५ ॥

तदिति । तत्र स्वप्नावस्थायाम् । यत् । तदस्थिरत्वं सृष्टिभोगानामचिरस्थायित्वम् । भ्रान्तत्वं विभ्रान्तवत्त्वं च । वर्त्तते । तत्तु । स्वप्नस्थानकण्ठयोगेनैव । प्रतीयते ॥ २६ ॥ ईदृगिति । तत्स्थानं कण्ठस्थानम् । ईश्वरेण श्रीहरिणा । ईदृगेवंविधमेव । विनिर्मितम् । अस्ति । तदेवंविधार्थे एवंविधस्थानप्राधान्यम् । ज्ञानिन एकान्तिकाः । ये । कृष्णभक्ताः । ते । जानन्ति । इतरे तदन्यजनाः । न जानन्ति ॥ २७ ॥ एवं स्थानशब्दवाच्यदेशप्राधान्योक्तिप्रसङ्गेनान्येषामपि तथा तथाविधक्रियायां तत्तदनुगुणप्राधान्यं तु ज्ञानिन एव जानन्तीत्याह द्वाभ्याम् । प्राधान्यमिति । क्वचित् । देशस्य । प्राधान्यम् । अस्ति । क्वचिच्च । कालस्य । प्राधान्यमस्ति । क्वचिच्च । कर्मणोऽपि । प्राधान्यमस्ति । तथा च । क्वचित् । मायायाः । प्राधान्यमस्ति ॥२८॥ क्वचिदिति । क्वचित् । साक्षात्प्रत्यक्षस्य । हरेः । प्राधान्यम् । अस्ति । इतीत्थंभूतं प्राधान्यम् । योगिनो ध्यानयोगनिष्ठाः । ज्ञानिनः । तद्भक्ताः श्रीहर्युपासकाः । तत्र तत्र । यथोचितम् । विद्युर्जानीयुः

तदस्थिरत्वं भ्रान्तत्वं यत्तु तत्र च वर्त्तते । तत्तु स्वप्नस्थानकण्ठयोगेनैव प्रतीयते ॥ २६ ॥ ईदृगेवास्ति तत्स्थानमीश्वरेण विनिर्मितम् । ज्ञानिनः कृष्णभक्ता ये ते तज्जानन्ति नेतरे ॥ २७ ॥ प्राधान्यमस्ति देशस्य क्वचित्कालस्य च क्वचित् । क्वचिच्च कर्मणोऽप्यस्ति मायायाश्च क्वचित् तथा ॥२८॥ क्वचिदस्ति हरेः साक्षात्प्राधान्यमिति योगिनः । तद्भक्ता ज्ञानिनो विद्युस्तत्र तत्र यथोचितम् ॥ २९ ॥ अज्ञास्त्वेतेष्वेकतमं स्वेन ज्ञातं तु यद्भवेत् । विद्युः सर्वत्र तस्यैव प्राधान्यं न तु पूर्ववत् ॥ ३० ॥ एते देशादयः सन्ति शक्तयः परमात्मनः । तत्प्रेरिताः प्रवर्त्तन्ते तत्तत्कार्ये तदिच्छया ॥ ३१ ॥ मन्त्र्यमात्यादयः सर्वे नृपाधीना यथा तथा । तदधीना भवन्त्येते स कृष्णस्तु स्वराट् प्रभुः ॥ ३२ ॥ वार्त्तां विधायेति हरिः पुनः स्वं स्थानं ततो दुर्गं इयाय राज्ञः । सन्तोऽपि तं त स्य वचोऽमृतं तत्पीत्वा मुदं भूरितरामवापुः ॥ ३३ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते शताधिकचतुःपञ्चाशतमस्तरङ्गः ॥ १५४ ॥ २१ ॥

॥ २९ ॥ अज्ञा इति । अज्ञा अज्ञानिजनास्तु । एतेषु देशादिषु मध्ये । यत् । एकतममेकम् । ज्ञातम् । भवेत् । तस्यैकस्यैव । प्राधान्यम् । सर्वत्र सर्वक्रियासु । विद्युः । पूर्ववत् । न तु ज्ञानिनो यथा तत्र तत्र यथोचितं तत्तत्प्राधान्यं जानन्ति तथैते नैव विद्युरित्यर्थः ॥ ३० ॥ एत इति । एते । देशादयः । परमात्मनः श्रीहरेः । शक्तयो नृपस्यामात्यादय इव । सन्ति । तत्प्रेरिताः परमात्मनानुयोजिताः । ते । तदिच्छया श्रीहरिसङ्कल्पेन । तत्तत्कार्ये स्वस्वोचितकर्मणि । प्रवर्त्तन्ते ॥३१॥ एतदेव दृष्टान्तेन विशदयति । मन्त्रीति । यथा । सर्वे । मन्त्र्यमात्यादयः । नृपाधीनाः । भवन्ति । तथा । एते देशादयः । तदधीनाः श्रीहरेरेवाधीना । भवन्ति । प्रभुः । कृष्णः कृष्णापरसंज्ञः । स श्रीहरिस्तु । स्वराट् चक्रवर्त्तिनृपवत्स्वतन्त्रः । अस्ति ॥ ३२ ॥ वार्त्तामिति । इत्येवंविधाम् । वार्त्ताम् । विधाय । हरिः । ततो लक्ष्मीवाटिकायाः सकाशात् । पुनः । राज्ञ उत्तमनृपस्य । दुर्गं । स्वं स्वकीयम् । स्थानमावासस्थलम् । इयाय । ते सभोपविष्टाः । सन्तो मुक्तानन्दादयः साधवः ।

अपिशब्दात्तथाविधा गृहस्थाश्च । तस्य श्रीहरेः । तद्विविधवार्त्तारूपम् । वचोऽमृतम् । पीत्वा भूरितरामतितराम् । मुदम् । अवापुः ॥ ३३ ॥ साक्षात्स्वस्य स्वकीयानां सतां माहात्म्यवेदनम् । परोक्षवत्कारणं यच्छ्रेयसः परमस्य हि ॥ १ ॥ स्वाप्नसृष्ट्यादिहेतुत्वं जीवेशानां यदात्मनः । देशादीनां च मुख्यत्वं स्वस्य यत्सर्वतोऽधिकम् ॥ २ ॥ याथार्थ्यतस्तु तत्सर्वं श्रीहरिः प्राह यो निजान् । माहात्म्यज्ञानसहितां स्वभक्तिं मे ददातु सः ॥ ३ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्ण-भगवत्पदानुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां शताधिकचतुःपञ्चाशत्तमस्तरङ्गः ॥ १५४ ॥ २१ ॥

भक्तान् शूरांश्च शिथिलानुक्त्वा तल्लक्षणान्यपि । द्वाविंशे हरिणोक्तानि स्ववृत्तान्तनिदर्शनात् ॥१॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८७८) फाल्गुनस्य मासस्य । अन्ते कृष्णपक्षे । दशम्यां तिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमस्य । नरेशितुर्नृपस्य । दुर्गे । वासुदेवालयाभ्याशे श्रीवासुदेवभगवन्मन्दिरबाह्यवेदिकाप्रान्तप्रदेशे । वर्त्तमाने इति शेषः । मञ्चके मञ्चासने । स श्रीहरिः । उपाविशन्निशीथकाले योगनिद्राकृतपरिचर्यामपहाय स्वतल्पादुत्थाय परिमेयपद्भ्यां दीपिकाद्वयप्रभाद्योतमानस्तत्र स्वावासादागत्य दक्षिणास्य उपविवेशेत्यर्थः ॥ २ ॥ त्यागिभिरिति । त्यागिभिः । गृहिभिः ।

शकाब्दे विक्रमार्कस्य गजाश्ववसुभूमिते । दशम्यां फाल्गुनस्यान्ते वचोऽमृतमिदं हरेः ॥ १ ॥ तत्र दुर्गपुरे दुर्गे
उत्तमस्य नरेशितुः । वासुदेवालयाभ्याशे मञ्चके स उपाविशत् ॥२॥ त्यागिभिर्गृहिभिर्भक्तैर्वृतः स धवलांशुकः ।
स्वाग्रोपविष्टानवदत्त्यागिनः करुणानिधिः ॥३॥ भगवन्तं भजन्तोऽत्र वर्त्तन्ते बहवो नराः । तत्र केचिच्छूरसमाः
सन्त्यन्ये शिथिला अपि ॥ ४ ॥ तत्राद्यानामेकमेव लक्ष्यं भवति सर्वदा । सर्वथा भगवद्धाम गम्यमेवेति नेतरत्
॥ ५ ॥ प्रवेशयन्ति नैवैते विना कार्ष्णं निजान्तरे । सङ्कल्पं कञ्चन क्वापि न विघ्नान् गणयन्ति च ॥ ६ ॥

भक्तैस्तत्तदावासात्स्वकीयपद्भ्द्वाराहूतैः स्वाश्रितजनैः । वृतः सभायां परिवेष्टितः । धवलांशुकः परिधृतसकलश्वेतवसनः । करुणानिधिः । स श्रीहरिः । स्वाग्रोपविष्टान्स्वपुरःप्रदेशावस्थितान् । त्यागिनो मुक्तानन्दादिसाधून् । अवदत् ॥ ३ ॥ भगवन्तमिति । हे साधवः ! । अत्र सत्सङ्गे । भगवन्तं प्रत्यक्षं श्रीहरिम् । भजन्तः । बहवः । नराः । वर्त्तन्ते । तत्र तेषु भक्तेषु मध्ये । केचिद्भक्ताः । शूरसमाः शूरवीरजनतुल्याः सुदृढा एकान्तिका इत्यर्थः । सन्ति । अन्ये केचिद्भक्ताः । शिथिलाः शूरसमभिन्ना अपि देहाभिमानिनः सकामा अपीत्यर्थः । सन्ति ॥ ४ ॥ तत्रेति । तत्र तेषु द्विविधभक्तेषु मध्ये । आद्यानां शूरसमानानाम् । सर्वथा सर्वोपायैः । भगवद्धामैव । गम्यं भगवद्धाम्नि गत्वा तत्र श्रीहरिनिकटसेवोपलम्भनम् । इत्येतत् । एकमनन्यदेव । लक्ष्यम् । सर्वदा । भवति । इतरत्तद्भिन्नं लक्ष्यम् । न भवति ॥ ५ ॥ प्रवेशयन्तीति । एते शूरसमभक्ताः । कार्ष्णं श्रीकृष्णसम्बन्धिनम् । सङ्कल्पम् । विना । कञ्चन कमपि भगवदितरसङ्कल्पम् । निजान्तरे स्वकीयान्तःकरणे । नैव प्रवेशयन्ति नैव कुर्वन्तीत्यर्थः । क्वापि कदाचिदपि देशकालादिवैषम्ये सत्यपीत्यर्थः विघ्नान्भगवदेकान्तिकभक्तावन्तरायांश्च । न गणयन्ति ॥ ६ ॥

प्रारब्धेति । ते भक्ताः । प्रारब्धाप्ते स्वप्रारब्धकर्माधिगते । दैहिके देहसम्बन्धिनि । सुखे । दुःखे च । तुल्यदर्शनाः समबुद्धयः । माने । अपमाने च । समाः समबुद्धयः । तथा । मृत्युजीवितयोः । समाः । भवन्ति ॥७॥ भजन्त इति । इतरे शिथिला भक्ताः । कृष्णम् । भजन्तः सन्तोऽपि । सहस्रशः । तर्कान् सङ्कल्पान् । कुर्युः । दैहिक-सुखदुःखप्राप्तिनिवृत्तिहेतूनूहान्विदध्युरित्यर्थः । दैह्ये स्वदेहसम्बन्धिनि । सुखे सति । सहर्षाः । तथा । दैह्ये । दुःखे सति । शोकाकुलाः । स्युः ॥ ८ ॥ यथेति । यथादेहसुखं देहसुखमनतिक्रम्य । कृष्णम् । शनैः । शनैः । भजिष्यामः । अतिकष्टेनातिशयितेन स्वदेहदमनेन । किन्तु । स्यात् । इत्येवम् । ते शिथिला भक्ताः । हृदि स्वमनसि । विदुः ॥ ९ ॥ पराभूयन्त इति । एते शिथिला भक्तास्तु । नानाविधैः । विघ्नैर्विषमदेशकालादिप्रत्यूहैरपि । पराभूयन्ते पराभूता भवन्ति । अतो हेतोः । अतः । मदाश्रितैर्जनैः । शैथिल्यं शिथिलभक्तत्वम् । त्यक्त्वा । शूरैः शूरसमभक्तैः । भाव्यमवश्यं भवितव्यम् ॥ १० ॥ कृष्णेति । यथा येन प्रकारेण ।

प्रारब्धाप्ते सुखे दुःखे दैहिके तुल्यदर्शनाः । समा माने चापमाने मृत्युजीवितयोस्तथा ॥ ७ ॥ भजन्तोऽपीतरे कृष्णं तर्कान् कुर्युः सहस्रशः । सुखे दैह्ये सहर्षाश्च दुःखे शोकाकुलास्तथा ॥८॥ यथादेहसुखं कृष्णं भजिष्यामः शनैः शनैः । अतिकष्टेन किन्तु स्यादित्येवं ते विदुर्हृदि ॥ ९ ॥ पराभूयन्त एते तु विघ्नैर्नानाविधैरपि । अतस्त्यक्त्वैव शैथिल्यं शूरैर्भाव्यं मदाश्रितैः ॥१०॥ कृष्णसम्बन्धरहिताः सङ्कल्पा हृदये यथा । न भवेयुस्तथा यत्नः कर्तव्यश्चाप्रमादिभिः ॥ ११ ॥ इत्युक्त्वा स्ववृत्तान्तं दृष्टान्तार्थं तु स प्रभुः । अहं पुरा श्रीनगरमगमं दुर्गपत्तनात् ॥ १२ ॥ तत्राकार्षं प्रतिष्ठां च नरनारायणप्रभोः । जनास्तु लक्षशस्तत्र समेताः सस्त्रियोऽभवन् ॥ १३ ॥ देवप्रतिष्ठां कृत्वाऽहं भोजयित्वाऽखिलान् द्विजान् जयतल्पपुरं प्राप्तो हृदि तत्र व्यचारयम् ॥ १४ ॥ यावन्तस्तु जना दृष्टाः प्रवृत्तिर्यावतीक्षिता । तद्वासना हृदः सर्वा निष्कास्येति विचारितम् ॥ १५ ॥

हृदये । कृष्णसम्बन्धरहिताः । सङ्कल्पाः । न भवेयुः । तथा । अप्रमादिभिः सावधानैर्मदाश्रितजनैः । यत्नः । कर्तव्यः ॥ ११ ॥ इतीति । इत्यमुना प्रकारेण । उक्त्वा । प्रभुः । स श्रीहरिः । दृष्टान्तार्थमुक्तार्थोदाहरणाय । स्ववृत्तान्तम् । आह । हे साधवः ! । पुरा । अहम् । दुर्गपत्तनादस्माद् दुर्गपुरात् । श्रीनगरम् । अगमम् ॥ १२ ॥ तत्रेति । तत्र श्रीनगरे । नरनारायणप्रभोः । प्रतिष्ठाम् । अकार्षम् । तत्र तत्प्रतिष्ठावसरे । सस्त्रियः सयोषाः । लक्षशः । जनाः । समेताः । अभवन् ॥ १३ ॥ देवेति । अहम् । देवप्रतिष्ठां श्रीनरनारायणदेवार्चास्थापनम् । कृत्वा । अखिलान् । द्विजान् । भोजयित्वा । चतुरशीतिज्ञातीयब्राह्मणानाशयित्वेत्यर्थः । जयतल्पपुरम् । प्राप्तः । तत्र जयतल्पपुरे स्थितः सन् । हृदि । व्यचारयं विचारमकरवम् ॥ १४ ॥ यो विचारः कृतस्तमाह । यावन्त इति । यावन्तः । जना लोकाः । दृष्टाः श्रीनगरे वीक्षिताः । यावती । प्रवृत्तिः । ईक्षिता । सर्वा । तद्वासना दृष्टजनप्रवृत्तीनां भावना । हृदो मनसः सकाशात् । निष्कास्या उन्मूल्या । इतीत्थम् । विचारितम् ॥ १५ ॥

स्थिरीकृतेति । ततो विचारकरणानन्तरम् । सावधानतया । अन्तरेऽन्तःकरणे । दृष्टिरात्मावलोकयमिति । स्थिरीकृता । ततस्तत्र दृक्स्थिरीभावानन्तरम् । जायमानम् । तत्सङ्कल्पं दृष्टजनप्रवृत्तिभावनासङ्कल्पम् । मूलत आमूलात् । अच्छिदम् ॥ १६ ॥ देहेति । देहसौख्यानादरणात् । एतद्यत्नपरिश्रमात्तत्रेक्षितजनप्रवृत्तिभावना त्यजनप्रयत्नजातप्रचुरश्रमात् । खानपानादिविस्मृतेर्हेतोश्च । मम । देहेऽपि । रोगो ज्वरादिरामयः । अभूत् ॥ १७ ॥ विचारेति । हे सन्तः ! । विचारपर आत्मविचारप्रसक्त एव । अहम् । मत्तवत् । कथंचित् । इह दुर्गपत्तने । आगत्य । सदा । अन्तःस्थिरवीक्षणः प्रतिलोमवृत्तिःसन् । न्यवसम् ॥ १८ ॥ तत इति । ततस्तदनन्तरम् । अहम् । लक्ष्मीपुरगमात् श्रीनगरे गमनात् । प्राक्पूर्वम् । इह दुर्गपतने । यथा अभवम् । तथैव । अनुदिततत्सङ्कल्पोऽनुत्पन्नश्रीनगरदृष्टजनप्रवृत्तिभावनासङ्कल्पः । अत एव । अमलान्तरो निर्मलान्तःकरणः । जातोऽस्मि ॥ १९ ॥ यदेति । यदा । आगन्तुकसङ्कल्पा बाह्यतः समायातोक्तलौकिकसङ्कल्पाः । मम हृदयात् । निवृत्ताः । तदा । मया । अन्तर्दृष्ट्या प्रतिलोमवृत्त्या । अलौकिकम् । आश्चर्यम् । दृष्टम् ॥ २० ॥ तदाह । देवा इति । देवा ब्रह्मेन्द्रादयो देवाः ।

स्थिरीकृता ततो दृष्टिः सावधानतयाऽन्तरे । तत्सङ्कल्पं जायमानं मूलश्चाछिदं ततः ॥१६॥ देहसौख्यानादरणादेतद्यत्नपरिश्रमात् । मम देहेऽप्यभूद्रोगः खानपानादिविस्मृतेः ॥१७॥ विचारपर एवाहं कथंचिदिह मत्तवत् । आगत्य न्यवसं सन्तः सदाऽन्तःस्थिरवीक्षणः ॥१८॥ ततो लक्ष्मीपुरगमात्प्राग्यथाऽहमिहाभवम् । तथैव जातोऽनुदिततत्सङ्कल्पोऽमलान्तरः ॥१९॥ यदाऽऽगन्तुकसङ्कल्पा निवृत्ता हृदयान्मम । तदाऽलौकिकमाश्चर्यं दृष्टमन्तर्दृशा मया ॥२०॥ देवा देवाङ्गनास्तेषां भोगा नानाविधास्तथा । रमणिया दृश्यमाना आसन्नद्भुतदर्शनाः ॥२१॥ दृष्ट्वाऽपि तान्विकारो मे कृष्णमूर्त्यैकचेतसः । यदा नाभूदणुरपि तदाऽऽपुर्विस्मयं सुराः ॥२२॥ आहुश्च ते मां धन्योऽसि कृष्णैकान्तिकभक्तराट् । यतो मनस्ते कुत्रापि विना कृष्णं न सज्जति ॥२३॥ श्रुत्वा तेषां वचस्तच्च मम धैर्यमभूद् दृढम् । ततो मनः प्रति मया निर्भयेनोदितं वचः ॥२४॥ जानामि त्वामहं धूर्त्त न हि त्वां गणयाम्यहम् । त्वद्बिभेमि न वै किञ्चिन्नियन्ताऽस्मि तव ध्रुवम् ॥२५॥

देवाङ्गनास्तत्स्त्रियः । तथा । नानाविधाः । रमणीयाः । अद्भुतदर्शनाः । तेषां देवानाम् । भोगा विमानवासोऽलङ्काराप्सरःप्रभृतयः । दृश्यमानाः । आसन्मया समीक्षिता अभूवन् ॥ २१ ॥ दृष्ट्वेति । तान्देवभोगान् । दृष्ट्वाऽपि । कृष्णमूर्त्त्यैकचेतसः । मे मम । अणुरपि विकारः । यदा । नाभूत् । तदा । सुराः । विस्मयमाश्चर्यम् । आपुः ॥ २२ ॥ आहुरिति । ते सुराः । माम् । आहुः । कृष्णैकान्तिकभक्तराट् । त्वम् । धन्यः कृतार्थः । असि । यतो हेतोः । ते तव । मनः । कृष्णम् । विना । कुत्रापि कस्मिंश्चिदपि रमणीये मायिकवस्तुनि । न सज्जति ॥२३॥ श्रुत्वेति । तत्तथाविधम् । तेषां सुराणाम् । वचः । श्रुत्वा । मम । दृढम् । धैर्यम् अभूत् । ततस्तदनन्तरम् । निर्भयेन । मया । मनःप्रति । वचः । उदितम् ॥२४॥ तदाह द्वाभ्याम् । जानामिति । हे मनः ! । अहम् । त्वाम् । धूर्त्त वञ्चकम् । जानामि । अहम् । त्वाम् । न गणयामि । त्वद्भवतः सकाशात् । किञ्चिदल्पमात्रमपि । न बिभेमि । तव । नियन्ता नियामकः । ध्रुवमेव । असि ॥ २५ ॥

यदीति । त्वम् । यदि । कार्ष्णं कृष्णसम्बन्धिनम् । सङ्कल्पम् । विना । अणुमात्रकमपि । अन्यं तदितरं सङ्कल्पम् । कर्त्ता करिष्यसि । तर्हि तु । त्वाम् । तत्क्षणं सङ्कल्पाचरणक्षण एव । चूर्णयिष्यामि ॥ २६ ॥ एवमिति । हे साधवः ! । एवमुक्तप्रकारेणैव । मया । बुद्धिम् । चित्तम् । अहङ्कृतिमहङ्कारं च प्रति । निर्भयम् । वाक्यम् । उदितम् । ते मनःप्रभृतयो धूर्त्ताः । स्ववशे स्वाधीनत्वे । वर्त्तिताः ॥ २७ ॥ तेषां स्ववश्यत्वप्रकारमाह द्वाभ्याम् । कृष्णस्येति । मया । मनसा । कृष्णस्यैव । सङ्कल्पाः । कारिताः । इतरो नहि नैव कारिताः । बुद्धया । तस्य कृष्णस्यैव । निश्चयः । कारितः । इतरः । नहि कारितः ॥ २८ ॥ तस्येति । तथा । चेतसा । नित्यम् । तस्य श्रीकृष्णैव । चिन्तनम् । कारितम् । न चान्यत् । अहङ्कारेण चापि । तद्दासत्वाभिमानः । कारितः । न चान्यः ॥ २९ ॥ तत इति । ततस्तदनन्तरम् । मार्त्त्या मनुष्यसम्बन्धिनः । दैवा देवसम्बन्धिनश्च । सकलाः । अपि । सङ्कल्पाः । निवृत्ताः । अथातोहेतोः । दृष्टार्था दृष्टपदार्था मनःसङ्कल्पनीया इहामुत्रार्थसमूहा इत्यर्थः । परमामतिशयिताम् । विस्मृतिम् । गताः ॥ ३० ॥ आरोग्यमिति । हे साधवः ! । ततस्तदनन्तरम् । मम । देहे । आरोग्यं ज्वरादि-

यदि कार्ष्णं विनाऽन्यं त्वं सङ्कल्पमणुमात्रकम् । अपि कर्त्ता तर्हि तु त्वां चूर्णयिष्यामि तत्क्षणम् ॥२६॥ एवमेव मया बुद्धिं चित्तं चाहंकृतिं प्रति । निर्भयं वाक्यमुदितं वर्त्तिताः स्ववशे च ते ॥ २७ ॥ कृष्णस्यैव हि सङ्कल्पा मनसा कारिता मया । तस्यैव निश्चयो बुद्धया कारितश्च न हीतरः ॥२८॥ तस्यैव चिन्तनं नित्यं चेतसा कारितं तथा । तद्दासत्वाभिमानश्चाहङ्कारेणापि कारितः ॥२९॥ ततो मार्त्याश्च दैवाश्च सङ्कल्पाः सकला अपि । निवृत्ता अथ दृष्टार्थाः परमां विस्मृतिं गताः ॥ ३० ॥ आरोग्यं च ततो देहे ममाभूत् खलु साधवः । इति वार्त्ता कृता तेन शिक्षणायैव तत्सताम् ॥३१॥ स्वयं तु भगवानस्ति पूर्णकामोऽखिलार्थदः । ब्रह्मधामाधिपः सर्वेश्वरेशः पुरुषोत्तमः ॥३२॥ सर्वावतारधर्त्ता च सर्वोपरिस्थितः सदा । पुनः सतोऽब्रवीदर्थं तमेव दृढयन् स च ॥३३॥ श्रीवासुदेवमाहात्म्ये धर्माः सन्ति प्रकीर्त्तिताः । एकान्तिकानां भगवद्भक्तानां सर्व एव हि ॥ ३४ ॥

रोगनिवृत्तिः । अभूत् । खलु निश्चितम् । इत्येवंविधा । वार्त्ता । तेन श्रीहरिणा । तत्सतां सभोपविष्टानां मुक्तानन्दादीनां तेषां स्वसाधूनाम् । शिक्षणाय मदेकान्तिकभक्तैरित्थं भाव्यमिति शिक्षार्थमेव । कृता ॥ ३१ ॥ स्वयमिति । स्वयं श्रीहरिस्तु । पूर्णकामः । अखिलार्थदः स्वाश्रितेभ्यस्तद्वाञ्छितसकलपुरुषार्थः । भगवान्सकलैश्वर्यसम्पन्नः श्रीकृष्णः । ब्रह्मधामाधिपो यत्परमुत्तमोत्तमं धाम नास्ति तथाविधस्याक्षरधाम्नोऽधिपतिः । सर्वेश्वरेशोऽक्षरादिसकलेश्वरेश्वरः । पुरुषोत्तमः ॥ ३२ ॥ सर्वेति । सर्वावतारधर्त्ता रामकृष्णादिसर्वावताराणां प्रादुर्भावहेतुः । सदा । सर्वोपरि । स्थितः । यदुपरि कोऽपि नास्ति तथाविधश्चेत्यर्थः । अस्ति । इति सार्द्धश्लोकस्यैकान्वयः । स उक्तरीत्या स्वाश्रितशिक्षकः पुरुषोत्तमः श्रीहरिः । पुनर्भूयोऽपि । तं पूर्वोक्तमेव । अर्थं स्वाश्रितानां शूरसमैकान्तिकभक्तत्व विधापनरूपम् । दृढयन्सन् । सतः सभोपविष्टमुक्तानन्दादिसाधून् । अब्रवीत् ॥ ३३ ॥ श्रीवासुदेवेति । हे साधवः ! । एकान्तिकानाम् । भगवद्भक्तानाम् । सर्वे एव । धर्माः । श्रीवासुदेवमाहात्म्ये ।

प्रकीर्तिताः । सन्ति ॥ ३४ ॥ तदुक्तांस्तान्स्त्रयमेव समासत आह । द्वाभ्याम् । चिद्रूपेणेति । धर्मज्ञानविरागयुक् । भगवतः श्रीहरेः । भक्ति । अनन्येन । भावतो भावेनैव । चिद्रूपेण । आत्मना ब्रह्मात्मैकभावभावितस्वक्षेत्रज्ञेन । नित्यम् । कार्या ॥ ३५ ॥ कृष्णेति । कृष्णेतरः । वासनायाः । लेशोऽल्पभागोऽपि । यत्नेन । हृदयात् । द्रुतं शीघ्रमेव । निष्कासनीयः । मानसे स्वमनसि । न च नैव । विश्वस्यं स्वमनो विश्वासो नैव कार्यं इत्यर्थः ॥ ३६ ॥ एवमिति । ये । साधवः । एवंविधा एकान्तिकधर्मवन्तः । भवन्ति । ते साधवः । सर्वाधिकाः सकलसाधुनिष्ठाः । मताः सच्छास्त्रदृष्ट्या मया सम्मताः । भगवतः श्रीहरेरपि । तेभ्यस्तथाविधसाधुभ्यः । परमधिकम् । किञ्चिदपि । न विद्यते ॥ ३७ ॥ अत इति । अतोहेतोरेव । प्रसन्नस्तेभ्यः सुप्रीतः । हरिः । तानेवंविधसाधून् । स्वान्तिके स्वसमीपे एव । रक्षति । हि । इदं समीपरक्षणमपि पार्षदत्वेन न तु सामीप्यत्वेन पार्षदत्वस्य ततोऽत्युत्तमत्वादितिभावः । मुक्त्यधिकां चतुर्विधमुक्तिभ्योऽप्यत्युत्तमाम् । स्वस्य । सेवां च । तेभ्यस्तथाविधसाधुभ्यः । ददाति ॥ ३८ ॥ ऐश्वर्याणीति । ब्रह्मधाम्न्यक्षरपदे । यानि । अखिलान्यपि । ऐश्वर्याणि । सन्ति । तान्यैश्वर्याणि । एतदर्थकानि सर्व-

चिद्रूपेणात्मना कार्या धर्मज्ञानविरागयुक् । भक्तिर्भगवतो नित्यमनन्येनैव भावतः ॥ ३५ ॥ कृष्णेतरो वासनाया लेशोऽपि हृदयाद्द्रुतम् । निष्कासनीया यत्नेन विश्वस्यं च न मानसे ॥ ३६ ॥ एवं विधाः साधवो ये ते हि सर्वाधिका मताः । तेभ्यः परं भगवतो न किञ्चिदपि विद्यते ॥ ३७ ॥ अत एव प्रसन्नस्तान् स्वान्तिके ह्येव रक्षति । सेवां मुक्त्यधिकां स्वस्य हरिस्तेभ्यो ददाति च ॥३८॥ ऐश्वर्याणि ब्रह्मधाम्नि यानि सन्त्यखिलान्यपि । तान्येतदर्थकान्येव भवन्तीत्यवगम्यताम् ॥ ३९ ॥ यथैश्वर्यं पितुर्यत्तत्पुत्राणामेव निश्चितम् । तथैतदपि विज्ञेयं यदि प्रीतिः परस्परम् ॥ ४० ॥ यादृक् प्रतापः कृष्णस्य भक्तानां च तादृशः । प्रतापो जायते नूनमाज्ञाऽप्रतिहता तथा ॥४१॥ ब्रह्माण्डानामीश्वरा ये ब्रह्मरुद्रादयश्च ते । श्रीकृष्णाय यथा तद्वद्बलींस्तेभ्योऽर्पयन्ति हि ॥ ४२ ॥

थैवंविधसाध्वर्थान्येव । भवन्ति । इतीत्थम् । अवगम्यताम् ॥ ३९ ॥ एतदेवदृष्टान्तेन द्रढयति । यथेति । यथेति । यदि । परस्परमन्योऽन्यम् । प्रीतिः पितृपुत्रयोः स्नेहो भवेत् । तर्हि । यथा । पितुः । यत् । ऐश्वर्यं प्रभुत्वम् । कोशदण्डजतेजोयुक्तत्वमित्यर्थः । तत् । पुत्राणामेव । निश्चितमेव । आस्ते । तथा । एतद्भगवदीयाक्षरैश्वर्यमपि । विज्ञेयमुक्तविधसाधूनामेव बोध्यम् ॥ ४० ॥ यादृगिति । कृष्णस्य । यादृक् । प्रतापः । अस्ति । तद्भक्तानामुक्तविधानां कृष्णभक्तानां साधूनाम् । तादृशः । प्रतापः । जायते । तथा । आज्ञा । अप्रतिहताऽनिवार्या । जायते । यथा कृष्णस्याज्ञाऽप्रतिहताऽस्ति तथैवंविधतद्भक्तानामपि जायते इत्यर्थः ॥ ४१ ॥ ब्रह्माण्डानामिति । किञ्च । ब्रह्माण्डानामगणिताण्डानाम् । ईश्वरा अधिपतयः । ये । ब्रह्मरुद्रादयः । ते । यथा । श्रीकृष्णाय । बलीन्नानाविधोपहारान् । अर्पयन्ति । तद्वत्तथा । तेभ्यः साधुभ्योऽपि । अर्पयन्ति ॥ ४२ ॥

एवमिति । एवममुना प्रकारेण । विचार्य । तैः साधुभिः । अखिलान् । तुच्छार्थसङ्कल्पान्मायिकपदार्थभोगसङ्कल्पान् । हृदः स्वमनसः । निष्कास्य । कृष्णे साच्छ्री-हरावेव । एकाऽनन्या । निष्ठैकान्तिकभावेन स्थितिः । दृढं यथातथा । सदा सर्वकालम् । कार्या ॥४३॥ कृष्णमिति । इह सत्सङ्गे । ये । नराः । भक्ताः । चिन्तामणिमिव चिन्तामणितुल्यम् । कृष्णं प्रत्यक्षपुरुषोत्तमं श्रीहरिम् । प्राप्ताः । तेषाम् । क्वापि कुत्रापि । कर्हिचित्कदाचिदपि । किञ्चित्किमपि । दुर्लभम् । न विद्यते ॥४४॥ इतीति । इत्येवंविधम् । तस्य श्रीहरेः । वचोऽमृतम् । मुदा हर्षेण । निपीय । सदोगताः सभोपविष्टाः । तदाश्रिताः । सकलाः । ते मुक्तानन्दादयः । साधुजनाः । अखिलाः । गृहिणश्चापि । हृदये । तुतुषुः ॥ ४५ ॥ शूरांश्च शिथिलान्स्वस्य भक्तान् लक्षणतस्तु यः । स्ववृत्तान्तोक्तितः प्राह कुर्याच्छूरं हरिः स माम् ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्सूनुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां शताधिकपञ्चपञ्चाशत्तमस्तरङ्गः ॥ १५५ ॥ २२ ॥

एवं विचार्य तुच्छार्थसङ्कल्पांस्तैर्हृदोऽखिलान् । निष्कास्य कृष्ण एवैका निष्ठा कार्या दृढं सदा ॥ ४३ ॥ कृष्णं चिन्तामणिमिव ये तु प्राप्ता नरा इह । न तेषां दुर्लभं किञ्चिद्विद्यते क्वापि कर्हिचित् ॥ ४४ ॥ इति तस्य वचोऽमृतं मुदा सकलाः साधुजना निपीयते । तुतुषुर्हृदये सदोगता गृहिणश्चाप्यखिलास्तदा ॥ ४५ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते शताधिकपञ्चपञ्चाशतमस्तरङ्गः ॥ १५५ ॥ २२ ॥

शकाब्दे विक्रमार्कस्य गजाश्ववसुभूमिते । एकादश्यां ज्येष्ठशुक्ले वचोऽमृतमिदं हरेः ॥ १ ॥ तत्र दुर्गपुरे दुर्ग उत्तमस्य महीभुजः । वासुदेवालयस्याग्रे स न्यषीदत्सदासने ॥२॥ शुक्लाम्बरधरो भक्तैस्त्यागिभिर्गृहिभिश्च सः । परीतः पुरतः साधून्निषणानब्रवीत्स्वयम् ॥३॥ विचारितं मया त्वद्य मनोरूपं हि साधवः । जीवात्पृथक्तया तत्तु सम्यङ्नैव हि दृश्यते ॥ ४ ॥ जीवस्यैतत्करः कश्चिदिति निश्चियते ततः । प्रवृत्तिस्तस्य तु द्वेधा सर्वदेहेषु वर्त्तते ॥ ५ ॥

हिमोष्णबालदृष्टान्तैः सुखि दुःखि न मायिकैः । अर्थैर्यन्मन उक्तास्ते त्रयोविंशे सदुत्तमाः ॥ १ ॥ शकेति । शकेति पूर्वार्द्धव्याख्यातम् । (१८७८) ज्येष्ठशुक्ले ज्येष्ठमासस्य शुक्लपक्षे । एकादश्यां तिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमस्य । महीभुजः । दुर्गे । वासुदेवालयस्य । अग्रे बाह्यवेदिकाप्रान्तप्रदेशे । सदासने कौशेयोत्तमचक्रकासने । स श्रीहरिः । न्यषीदत् ॥ २ ॥ शुक्लेति । शुक्लाम्बरधरः परिहितसकलश्वेतवसनः । त्यागिभिः । गृहिभिश्च । भक्तैर्नानादेशागतस्वाश्रितजनैः । परीतः सभायां संवेष्टितः । स श्रीहरिः । पुरतः स्वाग्रप्रदेशे । निषण्णान् । साधून्मुक्तानन्दादिमुनीन् । स्वयमेव । अब्रवीत् ॥ ३ ॥ विचारतमिति । हे साधवः ! । अद्यास्मिन्नहनि । मया । मनोरूपम् । सम्यक् । विचारितम् । तन्मनस्तु । जीवात्सकाशात् । पृक्तया । नैव । दृश्यते । हि ॥ ४ ॥ जीवस्येति । ततोहेतोः । एतन्मनः । जीवस्य । कश्चित् । करः करणः ज्ञानगुणस्य ज्ञातुर्जीवस्य ज्ञातृताविशिष्टस्तस्य कश्चिद्वृत्तिविशेष

इत्यर्थः । अस्यायंभावः । अनाद्यज्ञानविशिष्टत्वात्तदपृथग्भूतस्य जीवस्य ज्ञातृताविशिष्टो ज्ञानसम्बन्धिभोगानुभवसाधनलक्षणो मनोरूपस्तस्य कश्चिद्वृत्तिविशेष इति । इतीत्थम् । निश्चीयते । तस्य मनसः । प्रवृत्तिस्तु । सर्वदेहेषु जनमात्रशरीरेषु । द्वेधा । वर्त्तते ॥ ५ ॥ मनसो द्वेधा वर्त्तनप्रकारं दृष्टान्तेनाह त्रिभिः । उष्णेति । यथा । उष्णकाले ग्रीष्मसमये । सविषं विषसहितम् । भाषायां लुकसहितम् । उष्णं सूर्यातपः । लोकमारकम् । यथा वा । हिमकाले शिशिरसमये । हिमं हिमानलः । लोकमारकम् । अस्ति । तथा । तन्मनः । द्विधा । अस्ति ॥६॥ एतदेव पुनः स्पष्टमाह द्वाभ्याम । मन इति । तत् । मनः । इन्द्रियद्वारा विषयान् । अभिधावति । ते विषयाः । यदि । दुःखदाः । स्युः । तर्हि । तपत्स्वयं तापयुक्तं सत् । उष्णोपमं सविषग्रीष्मातपतुल्यम् । भवति जायते ॥ ७ ॥ सुखदा इति । ते विषयाः । यदि । सुखदाः । स्युः । तर्हि । तन्मनः । हिमोपमं हिमानलसदृशम् । जायते । उभयथा प्रकारद्वयेनापि । एतन्मनः । श्रेयोमार्गात् कल्याणपथात् । सत्सङ्गादित्यर्थः । ध्रुवं निश्चितमेव । पातयति सत्सङ्गिनं भ्रंशयति ॥ ८ ॥ एवं मनस उभयथापि श्रेयोऽध्वपातनहेतुत्वमुक्त्वा साम्प्रतं ये मनोविश्वासयुक्ताः स्युस्तानेतत्स्ववशान्कृत्वा भ्रंशयति

उष्णकाले यथैवोष्णं सविषं लोकमारकम् । हिमं च हिमकाले वा तत्तथैवास्ति हि द्विधा ॥ ६ ॥ मनस्तन्द्रियद्वारा विषयानभिधावति । दुःखदा यदि ते तर्हि भवत्युष्णोपमं तपत् ॥ ७ ॥ सुखदा यदि ते तर्हि जायते तद्धिमोपमम् । श्रेयोमार्गादुभयथाऽप्येतत्पातयति ध्रुवम् ॥८॥ एकत्र सुखिनं कृत्वा जीवमन्यत्र दुःखिनम् । हिमोष्णवन्मनो ह्येतज्जीवं भ्रंशयदीक्ष्यते ॥ ९ ॥ तद्येषां विषयान्प्राप्य दुःखदान्नोत्तपेत् क्वचित् । सुखदान्प्राप्य शीतं च न स्यात्सन्तस्त उत्तमाः ॥ १० ॥ बालस्वभावं च मनो ज्ञेयमेतन्मनीषिभिः । वारितोऽपि यथा बालः शस्त्राग्न्यादि जिघृक्षति ॥ ११ ॥ यदि तद्ग्राह्यते तेन तदा दुःखी भवेत्स तु । न ग्राह्यते तदाऽप्येष रुदन् दुःखायते भृशम् ॥ १२ ॥

येऽकृततद्विश्वासाः पराभूततद्वृत्तिवेगाश्च स्युस्तांस्तु तदेवानुकुलं सन्न पातयतीति आलिंग्य मायारचितान्तरात्मा स्वदेहिनमिति वृत्तीर्मनःश्रयतेऽन्यत्र तत्त्वमिति चाभिसंधायाह द्वाभ्याम् । एकत्रेति । हिमोष्णवत् । एतत् । मनः । एकत्रैकस्मिन्पक्षे । सुखिनम् । कृत्वा । अन्यत्रान्यस्मिन्पक्षे । जीवम् । दुःखिनम् । कृत्वा । भ्रंशयच्छ्रेयोमार्गाच्च्यावयत् । ईक्ष्यते ॥९॥ तदिति । येषां सताम् । तन्मनः । दुःखदान् । विषयान् । प्राप्य । क्वचित्कदाचिदपि । नोत्तपेत् । सुखदान् । विषयान् । प्राप्य । शीतं हिमं च । न स्यात् । प्रत्युत भगवद्भक्तावनुकूलं स्यादित्यर्थः । ते तथाविधाः । सन्तः । उत्तमाः श्रेष्ठाः ॥ १० ॥ दुःखदविषयप्राप्त्या सुखदविषयप्राप्त्या चापि दुःखाक्रान्तमनःसम्बन्धेन जीवस्य दुःखित्वमुभयविधविषयासक्तिवर्जितत्वाद्भगवत्सुखयुक्तमनःसम्बन्धेन जीवस्य सुखित्वं च बालदृष्टान्तोक्तिपूर्वमाह चतुर्भिः । बालेति । मनीषिभिर्ज्ञानिभिः । एतत् । मनः । बालस्वभावम् । ज्ञेयम् । यथा । बालः । वारितो मात्रादिभिर्निषिद्धःसन्नपि । शस्त्राग्न्यादिवस्तु । जिघृक्षति ग्रहीतुमिच्छति ॥ ११ ॥ यदीति । यदि । तेन बालेन । तच्छस्त्राग्न्यादि । ग्राह्यते मात्रादिभिरुपादाप्यते । तदा । स बालः । दुःखी । भवेत् । यदि । न ग्राह्यते । तदापि । एष बालः । रुदन्सन् । भृशमन्यन्तम् । दुःखायते ॥ १२ ॥

तथेति । तथा तद्वत् । एतन्मनोऽपि । विपयान् । ग्राहितं सत् । विमुखं । भूत्वा श्रेयोमार्गाद् भ्रष्टं जातं सत् । भृशम् । दुःखि । स्यात् । विषयान् । अग्राहितं सदपि । विमुखं भूत्वा । भृशम् । दुःखायते ॥ १३ ॥ अत इति । अतोहेतोः । येषां साधूनाम् । तन्मनः । विपयैः । सुखि । दुःखि च । न भवेत् । कृष्णे प्रत्यक्षे भगवत्येव । रतमासक्तं च । स्यात् । ते साधवः । मया । मता उत्तमाः सम्मताः ॥ १४ ॥ सुधेति । इत्थमेवंविधाम् । सुधोपमेयाम् । हरिवाचम् । निशम्य । सदा निषण्णाः । भक्ताः प्रत्यक्षभगवदुपासकाः । सर्वेऽपि । ते मुक्तानन्दादयः । साधवो मुनयः । तथा । अन्ये । गृहिणो गृहिजनाश्चापि । भूरितरम् । प्रतोषम् । प्रापुः ॥१५॥ दुःखदान्सुखदानर्थान्न मायिकान्प्राप्य मानसम् । न स्याद्येषां दुःखि सुखि सदा स्वस्मिन्रतं भवेत् ॥१॥ एतदेव स्वकीयानां साधुनां येन लक्षणम् । प्रोक्तं श्रीहरिणा मह्यं तत्सल्लक्ष्म ददातु सः ॥ २ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्सूनुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां शताधिकषट्पञ्चाशत्तमस्तरङ्गः ॥ १५६ ॥ २३ ॥

भक्तानां स्यान्न विक्षेपो भक्तौ साङ्ख्यविदां हरेः । सम्यग्ज्ञानबलाधिक्यात्तदन्यत्र विरागतः ॥ १ ॥ तेषां ज्ञानबलाल्पत्वाद्विक्षेपो योगवेदिनाम् । भवेद्देशादि-

तथैतदपि दुःखि स्याद्विषयान् ग्राहितं भृशम् । अग्राहितं च विमुखं भूत्वा दुःखायते भृशम् ॥ १३ ॥ अतो येषां न विषयैः सुखि दुःखि च तद्भवेत् । कृष्ण एव रतं च स्यात्साधवस्ते मया मताः ॥१४॥ सुधोपमेयां हरिवाचमित्थं निशम्य सर्वेऽपि सदोनिषण्णाः । ते साधवो भूरितरं प्रतोषं प्रापुस्तथाऽन्ये गृहिणोऽपि भक्ताः ॥ १५ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते शताधिकषट्पञ्चाशतमस्तरङ्गः ॥ १५६ ॥ २३ ॥

शकाब्दे विक्रमार्कस्य नन्दाश्ववसुभूमिते । अष्टम्यां नभसः शुक्ले वचोऽमृतमिदं हरेः ॥ १ ॥ तत्र दुर्गपुरात्स्वामी लक्ष्मीवाटीमुपेत्य सः । आम्राधस्ताद्वेदिकायां न्यषीदद्धवलांशुकः ॥ २ ॥ सन्मल्लिकास्रगापीडं वृतं भक्तैः सहस्रशः । मुक्तानन्दो मुनिर्नत्वा तं पप्रच्छ कृताञ्जलिः ॥ ३ ॥ येषां स्यादचला निष्ठाऽक्षरधामाधिपे त्वयि । तेषां कश्चन विक्षेपस्त्वन्तरायो भवेन्न वा ॥ ४ ॥

वैषम्ये चतुर्विंश इतीरितम् ॥ २ ॥ शकेति । विक्रमार्कस्य विक्रमादित्यनृपतेः । नन्दाश्ववसुभूमिते नवसप्ताष्टैक संमिते । शकाब्दे शकवर्षे । संवदष्टादशशताधिकैकोनाशीतितमेवर्षे इत्यर्थः । (१८७९) नभसः श्रावणमासस्य । शुक्ले शुक्लपक्षे । अष्टम्यां तिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुराद्दुर्गपुरान्तर्वर्त्त्युत्तमनृपतिदुर्गान्तःस्थस्वावासादित्यर्थः । लक्ष्मीवाटीम् । उपेत्य तज्जिनाश्वामधिरूढःसन्सम्प्राप्येत्यर्थः । आम्राधताद्रसालतरोरधःप्रदेशे । वेदिकायाम् । धवलांशुकः परिधृतसकलश्वेतवसनः । स्वामी । स श्रीहरिः । न्यषीददुदङ्मुख उपविवेश ॥ २ ॥ सदिति । सन्मल्लिकास्रगापीडं कण्ठे कुन्दकुसुममालाः शिरोवेष्टने तच्छेखरांश्च दधानमित्यर्थः । सहस्रशो नानादेशागतत्वाद्बहुभिः । भक्तैः स्वाश्रितैस्त्यागिगृहिजनैः । वृतं सभायां परिवेष्टितम् । तं श्रीहरिम् । मुक्तानन्दोमुनिः । कृताञ्जलिः सन् । नत्वा । पप्रच्छ ॥ ३ ॥ येषामिति । हे हरे ! । येषां भक्तानाम् । अक्षरधामाधिपे । त्वयि । अचलाऽतिस्थिरा । निष्ठाऽयमेव साक्षादक्षरधामा-

धिपतिः पुरुषोत्तमोऽस्तीतिमतिस्थितिः । स्यात् । तेषां भक्तानाम् । कश्चन यः कोऽपि । विक्षेपो देशकालादिविषमतारूपः । अन्तरायो भक्तौ विघ्नरूपः । भवेत् । अथवा । न भवेत् । तथाविधभक्तानां भगवद्भक्तौ देशकालादिविषमत्वमन्तरायरूपं भवेन्न भवेद्वेत्यर्थः ॥ ४ ॥ 'सम्पृष्ट इत्थं मुनिना मुक्तानन्देन सोऽब्रवीत् । हर्षयन्नहरिकृष्णस्तं स्वभक्तांश्च परा'निति । निष्ठावन्त इति । हे मुने ! । निष्ठावन्तः । पुरुषाः भक्तास्तु । द्विविधाः । भवन्ति । तत्र तेषु द्विविधेषु निष्ठावत्सु भक्तेषु मध्ये । एके केचन । साङ्ख्यविदः । तथा । इतरे । योगज्ञा योगविदः । भवन्ति ॥ ५ ॥ तत्रेति । तत्र तेषु द्विविधभक्तेषु मध्ये । साङ्ख्यविदः । ते तु । सर्वम् । इयत्तयैतावत्तया परिमाणयुक्ततयेत्यर्थः । विदुः । एतदेव स्पष्टमाह । नराणां नृपादिमनुजानाम् । सुखम् । एतावत् । दिवौकसामिन्द्रादिदेवानाम् । सुखं च । एतावत् । अस्ति ॥ ६ ॥ ब्रह्मेति । तथा । ब्रह्मादीनाम् । सुखम् । एतावत् । भूबिलौकसामतलादिपातालान्तभूमिविवरनिवासिनाम् । सुखम् । एतावत् । ब्रह्माण्डात् । बहिरावरणान्यारभ्य प्रकृतिपुरुषलोकपर्यन्तम् । सुखम् । एतावत् । अस्ति । इतीत्थम् । ते साङ्ख्यविदो भक्ताः । अञ्जसा तत्त्वतः ॥ ७ ॥ सप्रमाण-

श्रीहरिरुवाच–निष्ठावन्तस्तु पुरुषा भवन्ति द्विविधा मुने । एके सांख्यविदस्तत्र योगज्ञा इतरे तथा ॥ ५ ॥ तत्र सांख्यविदो ये ते विदुः सर्वमियत्तया । नराणां सुखमेतावदेतावच्च दिवौकसाम् ॥ ६ ॥ ब्रह्मादीनां तथैतावदेतावद्भूबिलौकसाम् । ब्रह्माण्डाद्बहिरेतावन्सुखमस्तीति तेऽञ्जसा ॥ ७ ॥
सप्रमाणं विनिश्चित्य कालग्रासेषु तेषु च । वैराग्यं भृशमापद्य कृष्ण एव रता दृढम् ॥ ८ ॥
प्रीतिभाजां भगवति कालकाले महासुखे । तेषां ज्ञानबलाधिक्यं भक्तानां वर्त्तते दृढम् ॥ ९ ॥
अतो न कोऽपि विक्षेपस्तेषामस्त्यन्तरायकृत् । सर्वं ज्ञानप्लवेनैव वृजिनं सन्तरन्ति ते ॥ १० ॥
ये तु योगविदस्तेऽत्र वृत्तिस्थैर्यविचक्षणाः । कृष्ण एवाखण्डवृत्तिं रक्षयन्त्यचलनिश्चयाः ॥ ११ ॥

मिति । सप्रमाणं शास्त्रप्रमाणसहितं यथातथा । विनिश्चित्य । कालग्रासेसु चतुर्विधप्रलयहेतुकालकवलभूतेषु । तेषु सर्वेषु दुःखयुक्तेषु सुखेषु । भृशमत्यन्तम् । वैराग्यम् । आपद्य प्राप्य । कृष्णे साक्षाद्भगवत्येव । दृढं यथातथा । रता आसक्ताः । भवन्ति । इति द्वयोरेकसम्बन्धः ॥ ८ ॥ प्रीतीति । कालकाले सर्वभक्षकस्य कालस्यापि नियामके । महासुखे निरवधिकातिशयानन्दासाधारणाधारे । भगवति श्रीहरौ । प्रीतिभाजाम् । तेषां साङ्ख्यविदाम् । भक्तानाम् । ज्ञानबलाधिक्यम् । दृढम् । वर्त्तते ॥ ९ ॥ अत इति । अतो हेतोः । तेषां तथाविधानां साङ्ख्यविदां भक्तानाम् । अन्तरायकृत् । कोऽपि । विक्षेपः । नास्ति । ते साङ्ख्यविदो भक्ताः । सर्वम् । वृजिनं विक्षेपरूपं दुःखम् । ज्ञानप्लवेनोक्तविधज्ञानोडुपेनैव । सन्तरन्ति ॥ १० ॥ य इति । अत्र सत्सङ्गे । ये । योगविदः । भक्ताः । ते तु । वृत्तिस्थैर्यविचक्षणाः भगवत्स्वरूपे स्वमनोवृत्तिस्थिरीकरणकुशलाः । अचलनिश्चयाः । वृत्तिस्थिरीकरणस्थिरनिश्चयाः सन्तः । कृष्णे स्वेष्टदेवश्रीहरिस्वरूपे एव । अखण्डवृत्तिम् । रक्षन्ति स्थिरीकुर्वन्ति ॥ ११ ॥

देशेति । तेषां योगविदां भक्तानाम् । ज्ञानबलस्य आल्प्यादल्पत्वाद्धेतोः । क्वचित् । देशकालादिवैषम्ये सति तु । कृष्णतः । अन्यत्रेतरवस्तुन्यपि । वृत्तिस्तन्मनोवृत्तिः । व्रजेत् ॥१२॥ येषामिति । येषां भक्तानाम् । उभयज्ञानमुभयेषां साङ्ख्ययोगविदां ज्ञानम् । अस्ति । ते भक्तास्तु । भक्तोत्तमोत्तमा उत्तमभक्तेष्वप्युत्तमाः । सन्ति । तेषामुभयज्ञानवतामुत्तमोत्तमभक्तानाम् । क्वापि कदाचिदपि । केनापि । विघ्नेन । पराभवः । नास्ति ॥१३॥ ब्रह्मेति । तेषां तथाविधभक्तानाम् । वृत्तिः । ब्रह्मधामस्थभगवन्मूर्त्तेः सकाशात् । अन्यत्र वस्तुनि । कर्हिंचिदपि । निमेषार्द्धमपि । ध्रुवं निश्चितमेव । न गच्छति । किन्तु तस्यामेवाखण्डं तिष्ठति ॥ १४ ॥ हरिकृष्णेति । इत्येवंविधम् । सुधया । तुल्यम् । हरिकृष्णमुखोद्गतम् । वचः । निशम्य । सदग्रणीः साधुश्रेष्ठः । स मुक्तानन्दमुनिः । भृशमतिशयितम् । मुदम् । आप । तच्छ्रिताः श्रीहर्याश्रिताः । इतरे । साधुजनाः । गृहिणश्चापि । भृशम् । मुदम् । आपुः ॥ १५ ॥ येषां स्वभक्तौ विक्षेपः स्वभक्तानां तु विघ्नकृत् । न भवेत्स च

देशकालादिवैशम्ये क्वचित्तेषां तु कृष्णतः । अन्यत्रापि व्रजेद्वृत्तिराल्प्याज्ज्ञानबलस्य हि ॥ १२ ॥ येषां
त्वस्त्युभयज्ञानं ते तु भक्तोत्तमोत्तमाः । क्वापि केनापि विघ्नेन नास्ति तेषां पराभवः ॥ १३ ॥ ब्रह्मधाम-
स्थभगवन्मूर्तेरन्यत्र कर्हिचित् । वृत्तिर्निमेषार्द्धमपि न तेषां गच्छति ध्रुवम् ॥ १४ ॥ हरिकृष्णमुखोद्गतं
वचस्त्विति तुल्यं सुधया निशम्य स । भृशमाप मुदं सदग्रणीरितरे साधुजनाश्च तच्छ्रिताः ॥ १५ ॥

इति हरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते शताधिससप्तपञ्चाशतमस्तरङ्गः ॥ १५७ ॥ २४ ॥

शकाब्दे विक्रमार्कस्य नन्दाश्ववसुभूमिते । कृष्णषष्ट्यां नभोमासे वचोऽमृतमिदं हरेः ॥ १ ॥
तत्र दुर्गपुरे दुर्ग उत्तमस्य स वेश्मनः । वितर्द्दौ दक्षिणास्यस्य न्यषीन्मञ्चकोत्तमे ॥ २ ॥
सितसर्वाम्बरो भक्तैरनेकैः परितो वृतः । स्वाग्रोपविष्टान् पप्रच्छ साधून् स स्वयमेव हि ॥ ३ ॥

येषां स्याद्देशादेर्विषमत्वतः ॥ १ ॥ उभयेषां लक्षणानि तेषामुक्तानि येन तु । हरिणा स्वस्य भक्तिं मे निर्विघ्नां प्रददातु सः ॥ २ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्स्वनुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां शताधिकसप्तपञ्चाशत्तमस्तरङ्गः ॥ १५७ ॥ २४ ॥

सवासनान्तरस्त्यागी गृही निर्वासनान्तरः । यस्तयोर्भक्तयोर्भिन्ना गतिर्भवति यादृशी ॥ १ ॥ वासनानां परित्यागे साधनं यत्तथा हरिः । अतिप्रीतो भवेद्येनैतदुक्तं पञ्चविंशके ॥ २ ॥ शकेति । शकेति पूर्वार्द्धे व्याख्यातम् । (१८७९) नभोमासे श्रावणमासे । कृष्णषष्ठ्यां कृष्णपक्षस्यां षष्ठीतिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमस्य राज्ञः । दुर्गे । दक्षिणास्यस्य । वेश्मन उत्तमनृपतेर्भवनस्य । वितर्द्दौ बाह्यवेदिकायाम् । मञ्चकोत्तमे स्वास्तृते पर्यङ्कासने । स श्रीहरिः । न्यषीदत् ॥२॥ सितेति । सितसर्वाम्बरः परिधृतसकलश्वेतवसनः । अनेकैर्नानादेशागतत्वाद्बहुभिः । भक्तैस्त्यागिभिर्गृहिभिश्च स्वाश्रितजनैः ।

परितः सर्वतः । वृतः सभायां वेष्टितः । स श्रीहरिः । स्वाग्रोपविष्टान्स्वपुरःप्रदेशावस्थितान् । साधून्मुक्तानन्द गोपालानन्द स्वयम्प्रकाशानन्दादीन् सतः । स्वयमेव । पप्रच्छ । हि ॥ ३ ॥ एक इति । देहेन । अखिलान् । वृषानुद्धवाध्वप्रसिद्धांस्त्यागिपाल्यान्निर्लोभादिधर्मान् । रक्षन् पालयन् । निजान्तरे स्वकीयान्तःकरणे । विषयभोगेच्छावान् । एकः । त्यागिवेषः । भगवद्भक्तः । अस्ति ॥ ४ ॥ अन्य इति । स्त्रीधनादिप्रसङ्गवान् । निर्वासनान्तःकरणो निर्गतविषयवासनान्तरः । सतां साधूनाम् । परिचर्यारतः । अन्यः । गृही । भक्तः । अस्ति ॥ ५ ॥ देहेति । हे सन्तः ! । एतयोरेवंविधयोस्त्यागिगृहिभक्तयोः । देहान्ते । कीदृशी । गतिः । भविता । कीदृशीत्येतद्विवेचयति । सदृशी द्वयोः समाना । अथवा । अधिका परस्परापेक्षयैकस्याधिका । अथवा न्यूना परस्परापेक्षयैकस्य न्यूना । तदेतन्मत्प्रश्नोत्तरम् । विचार्य । मे मह्यम् । ब्रूत यूयं कथयत ॥ ६ ॥ गोपालानन्देति । तदा तस्मिन्काले । सदग्रणीः साधुश्रेष्ठः । गोपालानन्दसाधुः । तं श्रीहरिम् । उवाच । हे

एकोऽस्ति भगवद्भक्तस्त्यागिवेषोऽखिलान् वृषान् । देहेन रक्षन्विषयभोगेच्छावान्निजान्तरे ॥ ४ ॥ अन्यस्त्वस्ति गृहीभक्तः स्त्रीधनादिप्रसङ्गवान् । निर्वासनान्तःकरणः परिचर्यारतः सताम् ॥ ५ ॥ देहान्त एतयोः सन्तः कीदृशी भविता गतिः । शदृशी वाऽधिका न्यूना विचार्य ब्रूत तत्तु मे ॥ ६ ॥ गोपालानन्दसाधुस्तं तदोवाच सदग्रणीः । गतिर्भविष्यति स्वामिन् पृथगेवोभयोरपि ॥ ७ ॥ त्यागी देहं विहायात्र देवलोकं स यास्यति । विषयासक्तचित्तत्वान्न तु ब्रह्मगतिं प्रभो ! ॥ ८ ॥ भक्तत्वाद्भगवांस्तस्मै विषयांस्तदभीप्सितान् । दास्यत्यथ स तान् भुक्त्वा कालेन भविता नरः ॥ ९ ॥ ततो विधाय सत्सङ्गं भूत्वा निर्वासनान्तरः । दृढभक्त्या भजन् कृष्णं प्राप्स्यति ब्रह्मधाम सः ॥ १० ॥ गृहस्थो हरिभक्तस्तु देहान्ते ब्रह्मधाम सः । निर्वासनान्तरत्वात्तु सद्यः प्राप्स्यति निश्चितम् ॥ ११ ॥ इति प्रश्नोत्तरं श्रुत्वा हरिस्तं साधुमूचिवान् । युक्तमेव त्वया साधो कृतं प्रश्नोत्तरं त्विदम् ॥ १२ ॥

स्वामिन् ! । उभयोरेतयोर्द्वयोर्भक्तयोरपि । गतिः । पृथगेव भिन्ना भिन्नैव । भविष्यति ॥ ७ ॥ पृथग्गतिं विविनक्ति चतुर्भिः । त्यागीति । हे प्रभो ! । त्यागी । सः । भक्तः । अत्र लोके । देहम् । विहाय । विषयासक्तचित्तत्वाद्धेतोः । देवलोकम् । यास्यति । ब्रह्मगतिं ब्रह्मधाम तु । न यास्यति ॥ ८ ॥ भक्तत्वादिति । भगवान् श्रीहरिः । तस्मै त्यागिने । तदभीप्सितान् । विषयान् । भक्तत्वात्तस्य स्वभक्तभावाद्धेतोः । दास्यति । अथानन्तरम् । स त्यागी । तान् देवलोकस्थान्विषयान् । भुक्त्वा । कालेन । नरो मनुष्यः । भविता ॥ ९ ॥ तत इति । ततस्तदनन्तरम् । स भक्तः । सत्सङ्गम् । विधाय । निर्वासनान्तरः । भूत्वा । दृढभक्त्यैकान्तिकभक्त्या । कृष्णम् । भजन्सन् । ब्रह्मधाम । प्राप्स्यति ॥ १० ॥ इतीति । इत्येवंविधम् । प्रश्नोत्तरम् । श्रुत्वा । हरिः । तम् । साधुं गोपालानन्दमुनिम् । उचिवान् । हे साधो ! । त्वया तु । इदम् । प्रश्नोत्तरम् । युक्तं यथार्थमेव । कृतम् ॥ १२ ॥

मुक्तानन्द इति । अथानन्तरम् । मुक्तानन्दः । साधुः । तं श्रीहरिम् । नत्वा । पप्रच्छ । हे सत्पते ! । अन्तःस्थवासनाः स्वान्तःकरणावस्थिता मायिक-विषयभोगवासनाः । हातुं त्यक्तुम् । इच्छन् । नरस्त्वद्भक्तः । किमु किं वा साधनम् । कुर्यात् ॥१३॥ 'अनुयुक्तः स इत्थं तु मुक्तानन्देन साधुना । नारायणोऽब्रवीत्तं च हर्षयन्नपरा'निति । साधूनामिति । हे मुने ! । यस्य भक्तस्य । साधूनां भवादृशामेकान्तिकसताम् । परिचर्याम् । सर्वदा । सुदृढम् । व्यसनम् । जायेत । सर्वदा सत्परिचर्यां विना क्षणमपि स्थातुं यथा न शक्नुयात्तथाविधसुस्थिरव्यसनवान्स्यादित्यर्थः । तस्य भक्तस्य । वासनानाम् । क्षयः । भवेत् । सतामनुवृत्तिपूर्वकं परिचर्या-या व्यसनमेव वासनात्यागसाधनमित्युत्तराशयः ॥ १४ ॥ स्वयम्प्रकाशानन्द इति । अथानन्तरम् । स्वयम्प्रकाशानन्दः साधुः । तं श्रीहरिम् । पप्रच्छ । हे हरे ! । कृष्णोऽक्षरधामाधिपतिरनादिकृष्णनामा । भवान् । येन । उपायेन । अतिप्रीतः । भवेत् । तमुपायम् । वद ॥१५॥ 'स्वयम्प्रकाशानन्देन पृष्ट इत्थं स साधुना । जगाद हरि-कृष्णस्तं नन्दयन्निति चापरान्' । यथेति । हे साधो ! । यथा । दरिद्रावस्थायाम् । सत्सु भगवदेकान्तिकसाधुषु । प्रीतिः । दीनता च । स्यात् । तथैव । धन्यवस्थायां

मुक्तानन्दोऽथ तं नत्वा साधुः पप्रच्छ सत्पते । अन्तःस्थवासना हातुमिच्छन् कुर्यान्नरः किमु ॥ १३ ॥ श्रीहरिरुवाच–
साधूनां परिचर्याया व्यसनं यस्य सर्वदा । जायते सुदृढं तस्य वासनानां क्षयो भवेत् ॥ १४ ॥ स्वयम्प्रकाशानन्दोऽथ तं
पप्रच्छ हरे भवान् । अतिप्रीतो भवेत् कृष्णो येनोपायेन तं वद ॥१५॥ श्रीहरि-रुवाच–यथा दरिद्रावस्थायां सत्सु प्रीतिश्च
दीनता । तथैव धन्यवस्थायां सा चेत्तुष्येद्धरिर्भृशम् ॥ १६ ॥ ग्रामस्यैकस्याधिपत्ये पञ्चानां वा स्वकर्मणा । दशानां क्वचि-
ज्जाते राज्ये पञ्चाशतोऽपि वा ॥ १७॥ शतस्य वाऽपि ग्रामाणां राज्ये वाऽखिलक्षितेः । जातेऽपि हरिभक्तेषु सत्सु प्रीतिर्भवेद्
भृशम् ॥ १८ ॥ दारिद्र्य इव दैन्यं च तेषु स्याद्यस्य धीमतः । पुंसस्तस्मिन् भगवतः प्रीतिः स्यादधिका ननु ॥ १९ ॥

पुष्कलधनवत्त्वावसरे । सा सत्सु प्रीतिर्दीनता च । चेद्यदि । स्यात् । तर्हि हरिः । भृशम् । तुष्येत् । एवंभूतभक्तोपरि भगवान्प्रसन्नः स्यादित्यर्थः । अस्यायं भावः । दरिद्रित्वेभ्यत्वयोरेकविधतया भवद्विधसाधुषु ये प्रीतिदिनते ते एव भगवत्प्रसन्नोपायभूते इति ॥ १६ ॥ एतदेव विशेषतः सुस्पष्टमाह त्रिभिः । ग्रामस्येति । स्वकर्मणा स्वकीयप्रारब्धेन । एकस्य । ग्रामस्य । आधिपत्ये । क्वचित्कदाचित् । जाते सति । इभ्यत्वात्स्वस्यैकग्रामप्राप्तौ सत्यामित्यर्थः । अथवा । पञ्चानां ग्रामाणाम् । अथवा । दशानां ग्रामाणाम् । अथवा । पञ्चाशतो ग्रामाणामपि । क्वचित् । राज्ये आधिपत्ये । जाते सति ॥ १७ ॥ शतस्येति । अथवा । ग्रामाणाम् । शतस्यापि । शत-परिमितानां ग्रामाणामपीत्यर्थः । राज्ये । अथवा । अखिलक्षितेः समग्रायाः भुवोऽपि । राज्ये । जाते सत्यपि । दारिद्र्ये स्वस्य दरिद्रावस्थायामिव । धीमतः । तस्य । पुंसो भक्तस्य । हरिभक्तेषु सत्सु । भृशम् । प्रीतिः । भवेत् ॥ १८ ॥ दारिद्र्य इति । तेषु हरिभक्तसाधुषु । भृशम् । दैन्यं च । स्यात् । तस्मिंस्तथाविधे भक्ते । भगवतः श्रीहरेः । अधिका । प्रीतिः । स्यात् । ननु । इति त्रयाणामेकान्वयः ॥ १९ ॥

एवं गृहिभक्तानां भगवत्प्रसन्नतोपायमुक्त्वा सम्प्रति त्यागिभक्तानां तमाह त्रिभिः । अथेति । अथेतिभिन्नोपक्रमे । यः । त्यागीभक्तः । नित्यम् । सताम् । सेवापरायणः । तेषु सत्सु । दैन्यभाक् । मानस्तम्भविवर्जितश्च । भवेत् ॥ २० ॥ भगवदिति । तथाविधस्य त्यागिनः । भगवत्कृपया । ऐश्वर्यलम्भनेऽणिमाद्यष्टादशविध-सिद्धिप्राप्तौ । जाते सत्यपि । यदि । सत्सु । प्रीतिः सदा प्रीतिपूर्वकं सेवापरायणत्वम् । दैन्यं च । चकारान्मानस्तम्भविवर्जितत्वम् । यथापूर्वमैश्वर्यप्राप्तेः पूर्ववदेव । भवेत् । तर्हीत्युतरेणसम्बन्धः ॥ २१ ॥ तर्हीति । हे मुने ! । तर्हि । तस्मिंस्तथाविधे त्यागिभक्तेऽपि । हरेः । अतिप्रीतिः । भवेत् । अतोहेतोः । तदिच्छुना श्रीहरेः स्वस्मिन्प्रीतिं वाञ्छता गृहिभक्तेन त्यागिभक्तेन च । सन्तः । अतिभावेन । सेवनीयाः ॥२२॥ सुधेति । इत्येवंविधम् । सुधासमम् । ईश्वरस्य श्रीहरेः । वाक्यम् । निशम्य । सः । साधुः स्वयम्प्रकाशानन्दो मुनिः । सदोनिषण्णाः । अन्ये । सन्तश्चापि । इतरे । भक्ताः । गृहिजनाश्चापि । ते सर्वे । अन्तरे स्वस्वमानसे । भृशम् । सन्तो-

अथ यस्तु भवेत्त्यागी सतां सेवापरायणः । दैन्यभाक् तेषु नित्यं च मानस्तम्भविवर्जितः ॥ २० ॥ भगवत्कृपया
तस्य जातेऽप्यैश्वर्यलम्भने । सत्सु प्रीतिश्च दैन्यं च यथापूर्वं भवेद्यदि ॥ २१ ॥ तर्हि तस्मिन्नपि हरेरति
प्रीतिर्भवेन्मुने ! । अतः सन्तोऽतिभावेन सेवनीयास्तदिच्छुना ॥ २२ ॥ सुधासमं वाक्यमितीश्वरस्य
साधुः स चान्येऽपि निशम्य सन्तः । सन्तोषमापुर्भृशमन्तरं ते सदोनिषण्णा इतरे च भक्ताः ॥ २३ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते शताधिकाष्टपञ्चाशतमस्तरङ्गः ॥ १५८ ॥ २५ ॥

शकाब्दे विक्रमार्कस्य नन्दाश्ववसुभूमिते । एकादश्यां भाद्रशुक्ले वचोऽमृतमिदं हरेः ॥ १ ॥
तत्र दुर्गपुरे दुर्गे उत्तमस्य स भूभुजः । वासुदेवालयस्याग्रे न्यषीदत्पीठ उत्तमे ॥ २ ॥

षम् । आपुः ॥ २३ ॥ सवासनावासनयोर्गतिरुक्ता स्वभक्तयोः । द्विविधा येन सम्प्रोक्तं वासनात्यागसाधनम् ॥ १ ॥ स्वस्य चातिप्रसन्नत्वोपायो येनोदितस्तथा । स ददातु हरिर्मह्यं सेवां स्वैकान्तिनां सताम् ॥ २ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्स्नुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरि-वाक्यसुधासिन्धुटीकायां शताधिकाष्टपञ्चाशत्तमस्तरङ्गः ॥ १५८ ॥ २५ ॥

भक्तेन हरितद्भक्तजनानां तु प्रियं सदा । कार्यं नाप्रियमित्यादिशिक्षावृन्दवचांसि हि ॥ १ ॥ सर्वेषां हितकर्तॄणि कारुण्याद्धरिणा स्वयम् । प्रोक्तानि हृदि धार्याणि षड्विंशे तु ततः परम् ॥ २ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८७९) भाद्रशुक्ले भाद्रपदमासस्य शुक्लपक्षे । एकादश्यां तिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमस्य । भूभुजः । दुर्गे । वासुदेवालयस्य । अग्रे । उत्तमे । पीठे कौशेये श्रेष्ठचक्रकासने । न्यषीद-द्भगवतः सायन्तननीराजनान्ते उपविवेश ॥ २ ॥

सितेति । सितवासाः परिधृतसकलश्वेतवसनः । त्यागिभिः । गृहिभिश्च । भक्तैर्नानादेशागतैः स्वसेवकजनैः । वृतः सभायां परिवेष्टितः । स श्रीहरिः । सर्वान् । निजान्स्वभक्तजनान् । आनन्दयन्सन् । स्वयं हि स्वयमेव । तान्स्वभक्तजनान् । समुवाच ॥३॥ य इति । हे भक्ताः ! । यः भगवद्भक्तः । स्यात् । तेन तु । कृष्णस्य स्वेष्टदेवस्य श्रीहरेः । तदीयानां तदेकान्तिकभक्तानां च । प्रियम् । सदा । कार्यम् । अप्रियं तु । कदाचन कर्हिचिदपि । न कार्यम् ॥४॥ भक्तीति । चेद्यदि । स्वसम्बन्धिजनोऽपि । भक्त्यन्तरायकर्त्ता भगवद्भक्तौ विघ्नकारकः । भवेत् । तर्हि । स स्वसम्बन्धिजनः । यत्नेन । ताज्यः । स्वस्वभावश्च । तादृशो भक्त्यन्तरायकर्त्ता । भवेच्चेत्तर्हि सोऽपि यत्नेन त्याज्यः ॥५॥ भगवदिति । यथा । भरतेन श्रीरामभ्रात्रा । मातुर्भगवद्विमुखायाः स्वजनन्याः । कैकेय्याः । पक्षपातः । नहि नैव । कृतः । तथा भगवद्विमुखानां स्वसम्बन्धिजनानाम् । पक्षः पक्षपातः । कर्हिचित् । न कार्यः ॥ ६ ॥ आत्मेति । यत् । आत्मज्ञानम् । यच्च । वैराग्यम् । आत्मनः स्वस्य । य । दृढः । धर्मश्च । स्यात् । दृढ इति दृढं लिङ्गव्यत्ययेनात्मज्ञानवैराग्ययोर्योज्यम् । तेषामात्मज्ञानादित्रयाणाम् । गुणता भक्तेरङ्गता । कार्या । भक्तेस्तु । मुख्यता । कार्या ।

सितवासा वृतो भक्तैस्त्यागिभिर्गृहिभिश्च सः । आनन्दयन्निजान्सर्वान्समुवाच स्वयं हि तान् ॥ ३ ॥ यस्तु स्याद्भगवद्भक्तस्तेन कार्यं प्रियं सदा । कृष्णस्य च तदीयानां नाप्रियं तु कदाचन ॥४॥ भक्त्यन्तरायकर्त्ता तु स्वसम्बन्धिजनोऽपि चेत् । तर्हि त्याज्यः स यत्नेन स्वस्वभावश्च तादृशः ॥ ५ ॥ भगवद्विमुखानां च पक्षः कार्यो न कर्हिचित् । भरते न यथा मातुः पक्षपातः कृतो न हि ॥६॥ आत्मज्ञानं च वैराग्यं यद्धर्मो वा य आत्मनः । दृढः स्याद् गुणता तेषां कार्या भक्तेस्तु मुख्यता ॥ ७ ॥ एषामन्यतमो यस्तु भक्तौ स्यादन्तरायकृत् । गुणोऽपि स तु विज्ञेयो नूनं दोष इवाहितः ॥८॥ एवं यो यो भवेद्दोषः स स शोध्यः प्रयत्नतः । न तु दोषोऽपि गुणवन्मान्यो मानिजनैरिव ॥९॥ भजतां राधिकाकान्तं पुंसामेवागुणः क्वचित् । न ग्राह्योऽथ ग्रहीतव्यो गुण एव हि तद्गतः ॥१०॥

धर्मज्ञानवैराग्याणां भक्तेः शीर्षहृत्पादरूपाङ्गत्रयत्वात्तदुपेता सैव मुख्या विधेया न तु भक्तिं गौणां विधाय ते मुख्याः कार्यास्ते तु तस्याः सहायाः सन्तीति मत्वा रक्षणीयास्तानृते तस्यां विघ्नसम्भवादितिभावः ॥ ७ ॥ एषामिति । एषामात्मज्ञानादित्रयाणां मध्ये । अन्यतम एकोऽपि । यः । भक्तौ । अन्तरायकृत् । स्यात् । सः । गुणोऽपि । यद्यपि स गुणरूपो भवति तथापीत्यर्थः । दोष इव । अहितः शत्रुरूपः । विज्ञेयः । नूनम् ॥ ८ ॥ एवमिति । एवममुना प्रकारेणैव । यः । यः । दोषो लोभादिः । भवेत्स्वस्मिन्स्यात् । सः । स दोषः । प्रयत्नतः । शोधयो दुष्टोऽङ्गुष्ठइवाहिनेति न्यायात्सद्यस्त्याज्य एवेत्यर्थः । मानिजनैरिव मानवल्लोकैरिवेत्यर्थः । दोषोऽपि । गुणवत् । न तु नैव । मान्यः । दक्षदुर्वासोभ्यां मानक्रोधाविव दोषानपि गुणान्मत्वा ते न रक्षणीया इतिभावः ॥ ९ ॥ भजतामिति । राधिकाकान्तं श्रीहरिम् । भजताम् । पुंसां जनानाम् । अगुणो वाचालत्वादिरल्पो दोषः । क्वचित्कदाचिदपि । नैव ग्राह्यः । अथ च । तद्गतो भगवद्भक्तनिष्ठः । गुण

एव । ग्रहीतव्यः । हि । वाचालत्वादितद्दोषाल्पतासम्भावनपूर्वं भक्तिनिष्ठादयस्तद्गुणा एव महान्तो गण्याः इत्यर्थः ॥ १० ॥ य इति । यः । पुमान् जनः । सत्सङ्गी गृहीतोद्धवसम्प्रदायदीक्षः । अत एव । हरिभक्तः । सन्नपि । अन्येषु हरिभक्तेषु । दोषदर्शी । स्यात् । विद्यमानानां गुणानामदर्शनपूर्वमसतोऽपि दोषांस्तेषु कल्पयेदित्यर्थः । स्वस्मिंस्तु । गुणदृक् । स्वनिष्ठमहादोषानवेक्षणपूर्वमल्पमपि स्वगुणं बहुमन्येतेत्यर्थः । स हरिभक्तस्तु । अर्द्धविमुखोऽर्द्धं कुसङ्गी । मतः ॥ ११ ॥ कृष्णेति । यस्य भक्तस्य । कृष्णतद्भक्तदोषेक्षा । स्वगुणेक्षा च । स्यात् । स भक्तः । उच्चामतिमहतीम् । पदवीम् । प्राप्तः सन्नपि । अचिरेणाल्पकालेन । तत उच्चपदवीतः । पतेत् ॥ १२ ॥ इतीति । इत्थम् । उक्त्वा स श्रीहरिः । तदर्थकामेतत्पूर्वश्लोकोक्तार्थकाम् । ब्रह्मवैवर्त्तपुराणोक्ताम् । राधाश्रीदामपतनकथाम् । अकथयत् ॥ १३ ॥ तत इति । ततस्तदनन्तरम् । स श्रीहरिः । प्राह पुनरपि स्वभक्तानुक्तवान् । हे भक्ताः ! । यः । भक्तः स्वस्यैव । अगुणदृक् दोषदर्शी । भवेत् । तथा । अन्येषां हरिभक्तानाम् । गुणग्राही । भवेत् । तस्य भक्तस्य । भक्तिः । विवर्द्धते प्रतिदिनं विशेषतो वृद्धिं गच्छति ॥ १४ ॥ विपरीत

योऽन्येषु दोषदर्शी स्यात्स्वस्मिंस्तु गुणदृक् पुमान् । सत्सङ्गी हरिभक्तोऽपि स त्वर्द्धविमुखो मतः ॥ ११ ॥ कृष्णतद्भक्तदोषेक्षा स्वगुणेक्षा च यस्य सः । प्राप्तोऽपि पदवीमुच्चामचिरेण ततः पतेत् ॥ १२ ॥ इत्युक्त्वा ब्रह्मवैवर्त्तपुराणोक्तां तदर्थकाम् । राधाश्रीदामपतनकथामकथयत्स च ॥ १३ ॥ ततः स प्राह यो भक्तः स्वस्यैवागुणदृग्भवेत् । गुणग्राही तथाऽन्येषां तस्य भक्तिर्विवर्द्धते ॥ १४ ॥ विपरीतस्तु पुरुषो व्यवहारेऽतिबुद्धिमान् । भजन्नपि हरिं सोऽन्ते भविष्यति पराङ्मुखः ॥ १५ ॥ यो गुरुः स निजं शिष्यं साधुवर्त्म सुशिक्षयेत् । यद्यादरेण शिष्यस्तु गृह्णीयाद्धितमित्यदः ॥ १६ ॥ तर्हि तस्मिन्नतिप्रीतिर्गुरोर्भवति सर्वथा । तया च सोऽचिरेणैव सिद्धिमाप्नोति वाञ्छिताम् ॥ १७ ॥ एवं ममापि वचनं विदित्वा हितमात्मनः । यो ग्रहीष्यत्यादरेण साधुर्वाऽपि गृही पुमान् ॥ १८ ॥

इति व्यवहारे । व्यावहारिककार्ये । अतिबुद्धिमान् । हरिम् । भजन्नपि । यः । पुरुषः । विपरीतः स्वस्य गुणग्राही अन्यभक्तानामगुणदृक् । भवेत् । स भक्तः । अन्ते पर्यवसानकाले । पराङ्मुखो हरेर्विमुखः । भविष्यति ॥ १५ ॥ य इति । यः । गुरुः । सः । निजम् । शिष्यम् । साधुवर्त्मैकान्तिकसन्मार्गम् । सुशिक्षयेत् । शिष्यः । यदि । अदः साधुवर्त्मशिक्षणम् । हितं मम हितकारकमेव । इतीत्थम् । आदरेण । गृह्णीयात् । तर्हीत्युत्तरेण सम्बन्धः ॥ १६ ॥ तर्हीति । तर्हि । तस्मिंस्तथाविधे शिष्ये । गुरोः । सर्वथा । अतिप्रीतिः । भवति । तया गुर्वतिप्रीत्या । स शिष्यः । अचिरेणाल्पकालेनैव । वाञ्छिताम् । सिद्धिमेकान्तिकधर्मप्रसन्नतारूपाम् । आप्नोति ॥ १७ ॥ एवमिति । एवममुना प्रकारेण । मम सर्वेषां भवतां गुरुत्वादिष्टदेवत्वाच्च हितकर्त्तुर्ममेत्यर्थः । वचनमेतत्सन्दर्भोक्तं वाक्यमपि । आत्मनः स्वस्य । हितं हितकारकम् । विदित्वा । यः । साधुः । अथवा । यः । गृही गृहस्थोऽपि । पुमान्मद्भक्तजनः । आदरेण । ग्रहीष्यति ॥ १८ ॥

तस्मिन्निति । तस्मिंस्तथाविधे साधुभक्ते गृहिभक्ते च । ममापि । अतिशयेन । प्रीतिरचिरेण वाञ्छितार्थप्रापिका प्रसन्नता । भविष्यति । तथा । अन्यस्मिन्नुक्तविध-विपरीते भक्ते । औदासीन्यं ममोदासीनत्वम् । भविष्यति । हे सत्तमा ! भक्ताः । इतीत्थम् । जानीत । हि निश्चितमेव ॥ १९ ॥ इतीति । इत्येवंविधम् । प्रभोः । तस्य श्रीहरेः । वचोऽमृतम् । निपीय । सदोनिषण्णाः । ते । सर्वेऽपि । सन्तः । गृहस्थाश्च । मुदम् । प्रपद्य । तच्छ्रीहरिवचोऽमृतम् । महादरेण । धारयन्ति स्म स्वस्वहृदये निदधुः ॥ २० ॥ शिक्षावाक्यामृतैः स्वीयैर्नन्दयामास यो निजान् । ममानन्दः प्रदः सोऽस्तु श्रीहरिर्भक्तिधर्मजः ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपा-सकश्रीहरिकृष्णभगवत्सद्गुरुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां शताधिकैकोनषष्टितमस्तरङ्गः ॥ १५९ ॥ २६ ॥

प्रश्नोत्तरमुखेनैव मुक्तानन्दमुनेर्हरिः । सद्वृत्तिं कथयित्वा तु स्वभक्तशिक्षणार्थकम् ॥ १ ॥ अब्रवीत्स्वममभिप्रायं क्रोधत्यागादिकं स्वयम् । करुणावारिधिः स्वामी

तस्मिन्भविष्यति प्रीतिर्ममाप्यतिशयेन हि । औदासीन्यं तथाऽन्यस्मिन्निति जानीत सत्तमाः ! ॥१९॥ इति प्रभोस्तस्य
वचोऽमृतं ते निपीय सर्वेऽपि सदोनिषण्णाः । सन्तो गृहस्थाश्च मुदं प्रपद्य तद्धारयन्ति स्म महादरेण ॥ २० ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते शताधिकैकोनषष्टितमस्तरङ्गः ॥ १५९ ॥ २६ ॥

शकाब्दे विक्रमार्कस्य नन्दाश्ववसुभूमिते । एकादश्यामूर्जशुक्ले वचोऽमृतमिदं हरेः ॥ १ ॥
तत्र दुर्गपुरे दुर्ग उत्तमस्य स वेश्मनः । वितर्द्दौ दक्षिणास्यस्य न्यषीदन्मञ्चकोत्तमे ॥ २ ॥
सितसर्वाम्बरधरो नानाभक्तगणैर्वृतः । मन्दारपीतधवलपुष्पस्रक्शेखरार्चितः ॥ ३ ॥ पप्रच्छ
मुक्तानन्दं स साधुवर्यं पुरःस्थितम् । क्रोधोदये तु भवतो निमित्तं किन्नु वर्त्तते ॥ ४ ॥

सस्रर्विशे ततः स्फुटम् ॥ २ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८७७) ऊर्जशुक्ले कार्त्तिकमासस्य शुक्लपक्षे । एकादश्यां तिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमस्य । राज्ञः । दुर्गे । दक्षिणास्यस्य । वेश्मनस्तस्यैव भवनस्य । वितर्द्दौ बाह्यवेदिकायाम् । मञ्चकोत्तमे स्वास्तृतोत्तमपर्यङ्कासने । स श्रीहरिः । न्यषीदत् ॥ २ ॥ तं विशिनष्टि । सितेति । सितसर्वाम्बरधरः स्वाङ्गपरिहितसकलश्वेतवसनः । नानाभक्तगणैर्नानादेशागतत्यागिगृहि-स्वभक्तसमूहैः । वृतः सभायां परिवेष्टितः । मन्दाराणि भाषायां गुलदावदी इति प्रसिद्धतरुसम्बन्धीनि यानि पीतानि धवलानि च पुष्पाणि तेषां स्रजो मालाः शेखरा आपीडाश्च तैरर्चितः स्वभक्तवृन्दैः पूजितः ॥ ३ ॥ पप्रच्छेति । स श्रीहरिः । पुरःस्थितं स्वाग्रप्रदेशात्रस्थितम् । साधुवर्यं सकलसाधुश्रेष्ठम् । मुक्तानन्दमुनिम् । पप्रच्छ । हे मुने ! । भवतः । क्रोधोदये । किन्नु किं वा । निमित्तं हेतुः । वर्त्तते । यदा कदाचित्क्रोध उत्पद्येत तदा भवति स केन निमित्तेन उदेतीत्यर्थः ॥ ४ ॥

एवं मुक्तानन्दमुनिं क्रोधादयनिमित्तं पृष्ट्वा तं तदुत्तरविधाने जुगुप्समानमिवालक्ष्यादावात्मनि क्रोधोदयस्यानिमित्तं निमित्तं तत्स्थितिकालं चाह सार्द्धद्वाभ्याम् । ममेति । हे मुने ! । मम तु । स्वार्थस्य । सिद्धये । क्रोधः । नैवोत्पद्यते । भूरिद्रव्यविनाशस्य । कर्त्तरि पुरुषेऽपि । मे मम । रुट् क्रोधः । नास्ति नैवोपद्यते ॥ ५ ॥ यदीति । यदि । कश्चिज्जनः । धर्मलोपम् । कुर्यात् । अथवा । रङ्कपीडनम् । कुर्यात् । अथवा । अन्यायपक्षम् । गृह्णीयात् । तदा । तस्मिन् । जने तु । रुट् । उत्पद्यते । हि ॥ ६ ॥ सेति । सा निमित्तत्रयेऽद्भवापि रुट् । अल्पिकाऽल्पप्रमाणा । अल्पवृत्तिरल्पकालवर्त्तिनि च । जायते । असौ रुट् । ग्रन्थिम् । न जनयति तद्ग्रन्थिबन्धनं न करोतीत्यर्थः । एवं स्वक्रोधोदयस्यानिमित्तं निमित्तं तत्स्थितिकालं चोक्त्वा साम्प्रतं द्वितीयं प्रश्नं करोति । हे मुने ! ते तव । क्रोधः । कियत्कालम् । तिष्ठति । तदेतन्मत्प्रश्नद्वयोत्तरम् । वद । स इत्थं हरिणा पृष्टो मुक्तानन्दमुनिः । अब्रवीत् ॥ ७ ॥ यदेति । हे हरे ! । यदा । अहम् । कस्यचिद्भक्तजनस्य । वैपरीत्येन विपरीततया । वर्त्तनमधर्माचरणमित्यर्थः । वीक्षे । साधूनां भवदाश्रितानां साधुजनानाम् । प्रतिपक्षं द्रोहकर्त्तारं रिपुं च वीक्षे । तदा । तस्मै उभयविधजनाय । अहम् । क्रुध्यामि ॥ ८ ॥ किंत्विति । किन्तु । क्रोधः स मदमर्षः । सद्य एव । शान्तिं निवृत्तिम् । एति । न तिष्ठति चिरस्थायी न भवतीत्यर्थः । एवं स्वक्रोधोदये निमित्तद्वयं तस्याचिरस्थायित्वमिति प्रश्नद्वयोत्तरं कृतं बोध्यम् । तमेवं वदन्तं मुक्तानन्दमुनिम् । हरिः । उवाच । हे मुने ! । त्वया । कीदृक् । विचारः । कृतः । अस्ति । एवं ते सद्यः क्रोधनिवृत्तिर्या जायते सा केन विचारेण तं विचारं ब्रूहीत्यर्थः ॥ ९ ॥ स इति । स एवं श्रीहरिणा पृष्टो मुक्तानन्दमुनिः । उवाच । हे हरे ! । अहम् । हृदि । मानसे । हरेः क्षराक्षरपरस्य पुरुषोत्तमस्य । ते तव । माहात्म्यं निरवधिकातिशयमहिमानम् । सम्यक् यथार्थतः । वेद्मि त्वदेकान्तिकसाधुप्रसङ्गाज्जानामि । अतो हेतोः । यथा । त्वमपारमहिमः पुरुषोत्तमोऽक्षरधामाधिपः । श्रीहरिः । प्रसन्नः । स्याः । तथा । मे मम । कार्यं कर्त्तव्यम् । अस्ति ॥ १० ॥ क्रोध इति । यतः । क्रोधः सर्वेषामन्तः शत्रुः कोपः । तव निष्कारणापारकरुणस्य भवतः । अनभीष्टोऽप्रियः । अस्ति । ततो हेतोः । तं क्रोधम् । हृदि । अहम् । न दधे न चिरं रक्षामि । तथा तेन प्रकारेणैव । तव । अप्रियम् । अन्यम् । दुःस्वभावं दोषरूपं लोभमानादिप्रकृतिमित्यर्थः । न रक्षामि ॥ ११ ॥

मम तूत्पद्यते नैव क्रोधः स्वार्थस्य सिद्धये । भूरिद्रव्यविनाशस्य कर्त्तर्यपि न मेऽस्ति रुट् ॥ ५ ॥ यदि कश्चिद्धर्मलोपं कुर्याद्वा रङ्कपीडनम् । गृह्णीयाद्वाऽन्यायपक्षं तस्मिंस्तूत्पद्यते हि रुट् ॥ ६ ॥ साऽप्यल्पिकाऽल्पवृत्तिश्च न ग्रन्थिं जनयत्यसौ । कियत्कालं तिष्ठति ते क्रोधस्तद्वद सोऽब्रवीत् ॥ ७ ॥ यदाऽहं कस्यचिद्वीक्षे वैपरीत्येन वर्त्तनम् । प्रतिपक्षं च साधुनां तस्मै क्रुध्याम्यहं तदा ॥८॥ किन्तु क्रोधः सद्यः एव शान्तिमेति न तिष्ठति । तमुवाच हरिः कीदृक् विचारोऽस्ति त्वया कृतः ॥ ९ ॥ स ऊचे ते हरेः सम्यग्माहात्म्यं वेद्म्यहं हृदि । अतो यथा प्रसन्नः स्यास्त्वं तथा कार्यमस्ति मे ॥ १० ॥ क्रोधस्तवानभीष्टोऽस्ति ततस्तं न दधे हृदि । दुःस्वभावं तथा वाऽन्यं न रक्षामि तवाप्रियम् ॥ ११ ॥

शुकेति । किञ्च । शुकादीनां शुकनारदार्षभजडभरतादीनाम् । महतां महागुणगरिष्ठानाम् । सतां त्वत्प्रियसाधूनाम् । सदाचारं क्रोधत्यागादिं सद्धर्मम् । दृष्ट्वा । तद्विरुद्धाः शुकादिसाध्वाचारप्रतिकूलाः । क्रोधादयः । दोषाः । हृदि । नैव । रक्ष्या मया न रक्षणीयाः ॥ १२ ॥ एवमिति । हे भगवन् ! सकलैश्वर्यैकपारावार । एवमुक्तप्रकारेण । विचार्य हृदि विचारात्मकं पौरुषालम्बनं कृत्वा । मया । क्रोधः । न क्रियते । अत्र क्रोधस्य चिररक्षणमकरणमित्यर्थः । तमेवं वदन्तं मुक्तानन्दमुनिम् । हरिः । उवाच । हे साधो ! । ते तव । अयम् । विचारः पौरुषरूपः । महानतिश्रेष्ठः । अस्ति । वै ॥ १३ ॥ गुणेति । गुणातीतः सत्त्वादिमायिकगुणानतिक्रान्तः । क्रोधादीनां दोषाणाम् । निवर्त्तक उदयसमकालं निवृत्तिकरः । अयम् । विचारः । तव । प्राक्संस्कारवशात् प्राचीनबहुजन्मार्जितभगवत्प्रसन्नताहेतुकशुभसंस्कारवशतः । बलवान्सन् । हृदि त्वन्मानसे । जातः । अस्ति । अस्यायं भावः । भगवत्प्रसन्नतामुद्दिश्यायं तव विचारात्मकः पुरुषप्रयत्नः प्राक्संस्कारवशतोऽतिबलिष्ठतां प्रापितः सन् शीघ्रसिद्धतां प्राप्तोऽस्तीति ॥ १४ ॥ एतदेव स्पष्टमाह । प्रागिति । प्राक्संस्कारवताम् । पुंसां भक्तानाम् । पौरुषं विचाररूपः पुरुषप्रयत्नः । द्रुतं शीघ्रमेव । सिद्ध्यति ।

शुकादीनां सदाचारं दृष्ट्वा च महतां सताम् । तद्विरुद्धा नैव रक्ष्या दोषाः क्रोधादयो हृदि ॥ १२ ॥ एवं विचार्य भगवन्न क्रोधः क्रियते मया । तमुवाच हरिः साधो ! विचारस्तेऽस्ति वै महान् ॥१३॥ गुणातीतो विचारोऽयं प्राक्संस्कारवशात्तव । हृदि जातोऽस्ति बलवान् क्रोधादीनां निवर्त्तकः ॥ १४ ॥ प्राक्संस्कारवतां पुंसां पौरुषं सिद्ध्यति द्रुतम् । अन्येषां तु विलम्बेन देशकालानुसारतः ॥१५॥ साहाय्यं विदधात्येव संस्कारः पौरुषस्य तु । न तु केवलसंस्कारः साधयेत्कार्यमीप्सितम् ॥१६॥ संस्कारस्यैव हेतुत्वे श्रुतिस्मृतिषु वर्णिताः । विधयश्च निषेधाश्च भवेयुर्वै निराश्रयाः ॥ १७ ॥ अतस्त्वद्वन्मुमुक्षुस्तु पौरुषेणैव सर्वथा भगवत्प्रीतये जह्याद्दन्तर्दोषान् प्रयत्नतः ॥ १८ ॥ क्रोधोऽल्पोऽपि क्वचिद्यस्य दुर्बलेऽप्युद्भवेन्नरे । तस्य कालेन स भवेत्सत्सु च स्वेष्टदैवते ॥ १९ ॥

भगवत्प्रसन्नतारूपं फलं जनयतीत्यर्थः । अन्येषां प्राक्संस्काररहितभक्तानां तु । देशकालानुसारतः विलम्बेन । सिद्ध्यति ॥ १५ ॥ साहाय्यमिति । संस्कारः । पौरुषस्य । साहाय्यं सहायकमेव । विदधाति । केवलसंस्कारः पुरुषप्रयत्नवर्जितः संस्कारः । ईप्सितं स्वेनप्राप्तुं वाञ्छितम् । कार्यं भगवत्प्रसन्नतासम्पादनतारूपं प्रयोजनम् । न तु नैव । साधयेत् ॥ १६ ॥ विपक्षेदोषमाह । संस्कारस्येति । संस्कारस्यैव । हेतुत्वे भगवत्प्रसन्नतासम्पादनरूपकार्यकारणत्वे सति । श्रुतिस्मृतिषु । वर्णिताः । विधय- 'स्तस्मादेतत्त्रयं त्यजे'दित्येवमादीनि भगवत्प्रसन्नताहेतुकानि विधिवाक्यानि । निषेधा 'न कुर्यात्कर्हिचित्सख्यं मनसि ह्यनवस्थिते'इत्येवमादीनि निषेधवाक्यानि च । निराश्रया निराधाराः । भवेयुः । वै ॥ १७ ॥ अत इति । अतो हेतोः । त्वद्वद्भवद्विधः । मुमुक्षुर्भक्तः । भगवत्प्रीतये । पौरुषेण विचारबलेनैव । अन्तर्दोषान् क्रोधादीन् । प्रयत्नतः । सर्वथा सर्वप्रकारेण । जह्यात् ॥ १८ ॥ क्रोध इति । यस्य भक्तस्य । दुर्बलेऽपि । नरे जने । क्वचित्कदाचित् । अल्पोऽपि । क्रोधः उद्भवेत् । तस्य भक्तस्य । स क्रोधोद्भवः । कालेन । सत्सु भगवदेकान्तिकसाधुष्वपि । स्वेष्टदैवते स्वकीयेष्टदेवे भगवति चापि । भवेत् ॥ १९ ॥

कस्मिन्निति । अतो हेतोः । मुमुक्षुणा भक्तेन । कस्मिंश्चिज्जनेऽपि । मलिनः क्रोधादिमलयुक्तः । सङ्कल्पः । कचित्कदाचिदपि । नैव विधातव्यः । यद्यतो हेतोः । स मलिनसङ्कल्पः । सत्पथात्सत्सङ्गात् । भ्रंशकश्च्युतिकारकः । अस्ति ॥ २० ॥ एतदेव स्वभक्तशिक्षार्थं स्वस्वभावोक्त्या द्रढयति पञ्चभिः । अपीति । अहं तु । कश्चित् यं कमपि । रङ्कमपि । नरम् । क्रुधा । अवमन्तुं भर्त्सयितुम् । नोत्सहे न शक्तो भवामीत्यर्थः । यद्यतो हेतोः । सर्वत्र सर्वेष्वपि जनेषु । अन्तर्यामितया । हरिम् । वेद्मि ॥ २१ ॥ अवमान इति । क्वचित्कदाचित् । प्रयोजनवशात् । यस्य जनस्य । अवमानः । भवेत् । अहम् । तम् । अवमानम् । तदन्तर्यामिकृष्णस्य । वेद्मि ॥ २२ ॥ तत इति । ततो हेतोः । तदपराधस्य मत्कृतजनावमानरूपापराधस्य । क्षमापनम् । पूजया सत्कारपूर्वकया तदर्चया । प्रणामेन जनसमक्षं तन्नमस्करणेन । तदभीष्टार्पणेन तद्वाञ्छितार्थप्रदानेन च । कारयामि ॥ २३ ॥ स इति । यर्हि । स मदवमानितो जनः । प्रसन्नः । भवेत् । तर्हि । मम । स्वास्थ्यं सौमनस्यम् । भवेत् । अन्यथा तत्प्रसन्नताया अभावे तु । स्वचेतसि मन्मानसे । भूरिः । अनुतापः । भवेत् ॥ २४ ॥ अत इति । अतो हेतोः । सर्वेषु । भूतेषु जनेषु । दयैव । मम । प्रिया । अस्ति

कस्मिंश्चिदप्यतो नैव सङ्कल्पो मलिनः क्वचित् । मुमुक्षुणा विधातव्यो भ्रंशकः सत्पथात्स यत् ॥ २० ॥ अपि रङ्कं नरं कश्चिदवमन्तुं क्रुधा त्वहम् । नोत्सहेऽन्तर्यामितया हरिं सर्वत्र वेद्मि यत् ॥ २१ ॥ अवमानः क्वचिद्यस्य प्रयोजनवशाद्भवेत् । तदन्तर्यामिकृष्णस्यावमानं तं च वेद्म्यहम् ॥ २२ ॥ ततस्तदपराधस्य कारयामि क्षमापनम् । पूजया च प्रणामेन तदभीष्टार्पणेन च ॥ २३ ॥ स प्रसन्नो भवेद्यर्हि तदा स्वास्थ्यं भवेन्मम । अन्यथा तु भवेद्भूरिरनुतापः स्वचेतसि ॥ २४॥ अतः सर्वेषु भूतेषु दयैवास्ति मम प्रिया । अहिंसधर्मसिद्धिः स्यात्तयैव खलु नान्यथा ॥ २६ ॥ अतित्यागोऽथातिदया त्वस्ति भक्त्यन्तरायकृत् । अतो भक्त्यनुकुलैव दया त्यागश्च रक्ष्यताम् ॥ २६ ॥ अतोऽस्मत्सम्प्रदायेऽत्र मया त्यागः प्रवर्त्तितः । कृष्णालयविधानादिभक्तिसिद्ध्यनुकुलकः ॥ २७ ॥ अल्पेऽपि सति हि त्यागे पृथिव्यां हर्युपासना । यदि स्थास्यति तन्नृणां श्रेयो भावि सहस्रशः ॥ २८ ॥

। तया दययैव । अहिंसधर्मसिद्धिः । स्यात् । अन्यथा दयाया अभावे । अहिंसधर्मसिद्धिः । न स्यात् । खलु ॥ २५ ॥ एवं दयोत्कर्षमभिधाय साऽप्यशयिता चेत्तर्हिभक्त्यन्तरायकारिणीतिब्रुवंस्त्यागस्यापि तथात्वे तथात्वमाह । अतीति । हे मुने ! । अतिदया । अथ च । अतित्यागो वैराग्यम् । भक्त्यन्तरायकृत् साक्षाद्भगवद्भक्तौ विघ्नरूपौ भवतः । अतो हेतोः । दया । भुक्त्यनुकूलैव । त्यागो वैराग्यं भक्त्यनुकूलएव । रक्ष्यताम् ॥ १६ ॥ अत इति । अतस्त्यागदययोर्भक्त्यनुकूलयोरेव युक्तत्वाद्धेतोः । मया । अत्रास्मिन् । अस्मत्सम्प्रदाये । त्यागः । कृष्णालयविधानं श्रीकृष्णमन्दिरविरचनमादिर्यस्या आरामनिर्माणादेः सा चासौ भक्तिस्तस्या अनुकुलकोऽनुरोधी । प्रवर्त्तितः ॥ २७ ॥ त्यागं गौणी कृत्य भक्तिमुख्यता विधाने हेतुमाह । अल्प इति । हि यतः । त्यागे । अल्पेऽल्पमात्रे । सत्यपि । यदि । पृथिव्याम् । हर्युपासना स्थास्यति । तत्तदा । सहस्रशः । नृणाम् । श्रेयः । भावि भविष्यति ॥ २८ ॥

नन्नु हर्युपासनास्थितिसिद्ध्यै त्यागगौणता त्वस्तु भक्त्युपयोगिपत्रपुष्पशाकाद्यर्जनं दयात्यजनमन्तरा न सिद्ध्येत्तथासत्यहिंसधर्मक्षतिश्च स्यादतोऽतिशयिता दया युक्तेतिचेदेवंविधात्रबोधस्य तु बौद्धसिद्धान्तत्वान्नायं पक्षो युक्त इत्याह द्वाभ्याम् । तुलसीति । तुलसीपत्रपुष्पाणाम् । शाकादिनां च । चिन्वनं छेदनम् । विना । कृष्णस्य । भक्तिस्तु । न सिद्ध्येत् । अतः । तत्तुलसीपत्रादिचिन्वनम् । कार्यमेव । अतिदयया त्वेतन्न स्यादेतदृते भक्तिसिद्धिर्न स्यादतोऽतिशयिता दया न कार्या । देवार्थे तुलसीछेदो होमार्थं समिधां तथेत्यादिशास्त्रेण तस्यानुज्ञातत्वादितिभावः ॥ २९ ॥ ढुंढकानामिति । ततो हेतोः । ढुंढुकानां बौद्धानामिव । दयाऽतिदया । अस्मन्मते । न मता । सा दया । कृष्णभक्त्यनुकुलैव । कार्या । इतीत्थमेव । निश्चयो मम सर्ववैष्णवानां च सिद्धान्तोऽस्ति ॥ ३० ॥ एवमतित्यागदययोर्भक्त्यसिद्धिहेतुतामुक्त्वा भक्तिस्थितिरपि मन्दिरविधापनेनैव स्यादितिवदन् भक्तिरूपोपासनाऽपि स्वस्वधर्मावस्थानपूर्वं कार्येत्याह द्वाभ्याम् । स्थैर्यायेति । मे मुने ! । मया । क्षितौ । कृष्णोपास्तेः । स्थैर्याय स्थिरत्वार्थम् । मन्दिराणि श्रीकृष्णप्रासादाः । कार्यन्ते । येन कृष्णोपास्तिस्थैर्येण । नृणाम् । श्रेयः । भवेत् । इतीत्थम् । जानीत ॥ ३१ ॥

तुलसीपत्रपुष्पाणां शाकादीनां च चिन्वनम् । विना कृष्णस्य भक्तिस्तु न सिद्ध्येत्कार्यमेव तम् ॥ २९ ॥
ढुंढकानामिव ततो दया नास्मन्मते मता । कृष्णभक्त्यनुकूलैव सा कार्येत्येव निश्चयः ॥ ३० ॥ स्थैर्याय
कृष्णोपास्तेर्हि मन्दिराणि मया क्षितौ । कार्यन्त इति जानीत येन श्रेयो भवेन्नृणाम् ॥३१॥ यथाशास्त्रं
स्वस्वधर्मं पालयन्तो जनास्तु ये । उपासनां करिष्यन्ति हरेर्यास्यन्ति तेऽमृतम् ॥ ३२ ॥ श्रुत्वेति वाचं स
मुनिस्तथाऽन्ये नारायणस्यागदराजतुल्याम् । हृदि प्रतोषं प्रतिपेदिरे ते सदोनिषणा गृहिणश्च सर्वे ॥ ३३ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते शताधिकषष्टितमस्तरङ्गः ॥ १६० ॥ २७ ॥

शकाब्दे विक्रमार्कस्य नन्दाश्ववसुभूमिते । तपस्याद्यद्वितीयायां वचोऽमृतमिदं हरेः ॥ १ ॥

यथेति । ये जनाः । यथाशास्त्रम् । स्वस्वधर्मम् । पालयन्तः । सन्तः । हरेः । उपासनाम् । करिष्यन्ति । ते जनाः । अमृतं मोक्षम् । यास्यन्ति ॥३२॥ श्रुत्वेति । इत्येवंविधाम् । अगदराजतुल्याममृतसमानाम् । नारायणस्य श्रीहरेः । वाचम् । श्रुत्वा । स मुनिः मुक्तानन्दसाधुः । तथा । सदोनिषण्णाः । अन्ये तदितरे साधवः । गृहिणश्च । ते सर्वे । हृदि स्वस्वमानसे । प्रतोषम् । प्रतिपेदिरे ॥ ३३ ॥ मुक्तानन्दमुनेरुक्त्वा सद्वृत्तिं यः समब्रवीत् । क्रोधत्यागादिकं स्वीयमभिप्रायमलौकिकम् ॥ १ ॥ स्वभक्तेर्धर्मयुक्तायाः स्वभक्तेषु प्रवृत्तये । स मह्यं श्रीहरिर्दद्याद्भक्तिमेकान्तिकीं स्वकाम् ॥ २ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्स्वनुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां शताधिकषष्टितमस्तरङ्गः ॥ १६० ॥ २७ ॥

अलौकिकः स्वस्वभावः स्वीयानां शिक्षणाय वै । स्वयं श्रीहरिणा प्रोक्तस्तेभ्योऽष्टाविंशके ततः ॥ १ ॥ शकेति । शकेति पूर्वार्द्धे व्याख्यातम् । (१८७९)

तपसाद्यद्वितीयायां फाल्गुनमासस्य शुक्लपक्षस्य द्वितीयातिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमस्य राज्ञः । दुर्गे । निजाश्रमे प्रत्यङ्मुखस्वावासबहिर्वेदिकायाम् । पीठवरे स्वास्तृते सोत्तरछदे सपार्श्विके स्थूलतूलिकासने । सितवासाः परिहितसकलश्वेतवसनः । निजैर्नानादेशागतत्यागिगृहिस्वाश्रितजनैः । वृतः सभायां परिवेष्टितः । स श्रीहरिः । न्यषीदत्प्रत्यगास्य उपविवेश ॥ २ ॥ पौराणिक इति । प्रयागजिदेतन्नामा । पौराणिकः स्वस्याग्रेपुराणवक्ता विप्रः । कथां कृत्वा श्रीमहाभारतीयशान्तिपर्वीयकथां विधाय । तं श्रीहरिम् । उवाच । हे हरे ! । अत्र लोके । श्रीमद्भागवतस्य पुराणस्य । समस्तुल्यः । ग्रन्थोऽन्यप्रबन्धः । न विद्यते ॥ ३ ॥ तमिति । तमेवं वदन्तं प्रयागजित्पौराणिकम् । हरिः । उवाच । हे ब्रह्मन् ! । तच्छ्रीमद्भागवतपुराणं तु उत्तममेव । अस्ति । हि । परन्तु । श्रीवासुदेवमाहात्म्यतुल्यः । ग्रन्थोऽन्यः प्रबन्धस्तु । नैवास्ति । हि ॥ ४ ॥ धर्म इति । अत्र श्रीवासुदेवमाहात्म्ये । धर्मः । ज्ञानम् । वैराग्यम् । भक्तिश्च । अहिंसयज्ञाश्च । एते । नृणाम् । श्रेयस्कराः । तत्त्वतः । प्रोक्ताः । भवन्ति ॥ ५ ॥ तत इति । तत एवं कथनान-

तत्र दुर्गपुरे दुर्गं उत्तमस्य निजाश्रमे । स न्यषीदत्पीठवरे सितवासा वृतो निजैः ॥ २ ॥ पौराणिकः कथां कृत्वा तमुवाच प्रयागजित् । श्रीमद्भागवतस्यात्र समो ग्रन्थो न विद्यते ॥ ३ ॥ तमुवाच हरिर्ब्रह्मंस्तदस्त्युत्तममेव हि । श्रीवासुदेवमाहात्म्यतुल्यो ग्रन्थस्तु नैव हि ॥४॥ धर्मो ज्ञानं च वैराग्यं भक्तिश्चात्र हि तत्त्वतः । भवन्त्यहिंसयज्ञाश्च प्रोक्ताः श्रेयस्करा नृणाम् ॥ ५ ॥ ततो रामायणकथाप्रसङ्गाज्जानकीपतेः । स गुणान्कथयामास महतो राजदुर्लभान् ॥ ६ ॥ ततश्चोचे रघुपतिः शरणागतवत्सलः । अस्ति किन्तु सदोषं शरणागतमुज्झति ॥ ७ ॥ मिथ्याऽपि लौकिकं दोषं सीतायां तु निशम्य सः । पतिव्रतामपि जहौ सद्य एवाविचारयन् ॥ ८ ॥ मुक्तानन्दस्तदोवाच प्रकृतिस्त्वीदृशी प्रभो ! । रामानन्दस्वामिनोऽपि गुरोरस्माकमास वै ॥ ९ ॥

न्तरम् । स श्रीहरिः । रामायणकथाप्रसङ्गात्केनचित्तन्निष्कासितपर्यन्तरामायणकथाप्रकरणतः । राजदुर्लभानन्यनृपतिदुष्प्रापान् । जानकीपतेः श्रीरामचन्द्रस्य । महतोऽतिश्रेष्ठान् । गुणान् । कथयामास ॥ ६ ॥ तत इति । ततस्तदनन्तरम् । श्रीहरिः । ऊचे । रघुपतिः श्रीरामः । शरणागतवत्सलः । अस्ति । किन्तु । सदोषं येन केनचिद्योग्यदोषेण युक्तम् । शरणागतं जनं तु । उज्झति सद्यस्त्यजति । अत्र स्वावतारस्य रघुपतेर्बुद्धिसन्निहितत्त्वाद्वर्त्तमानप्रयोगः ॥ ७ ॥ एतदेव तन्नामोक्तिपूर्वमाह । मिथ्येति । स श्रीरामः । मिथ्या मिथ्याभूतमपि । लौकिकं प्राकृतलोकोक्तम् । सीतायां स्वपत्न्यां जानक्याम् । दोषम् । निशम्य श्रुत्वा । अविचारयन्सत्यासत्यविचारमकुर्वन्सन् । पतिव्रतां पतिव्रतात्वान्निर्दोषामपि सिताम् । सद्यो लोकोक्तदोषश्रवणसमकालमेव । जहौ तत्याज ॥८॥ मुक्तानन्द इति । तदेवंविधश्रीहरिवचनश्रवणक्षणे । मुक्तानन्दो मुनिः । उवाच श्रीहरिं प्रति कथयामास । हे प्रभो ! । ईदृश्येवंविधा । प्रकृतिः स्वभावस्तु । अस्माकम् । गुरोः । रामानन्दस्वामिनोऽपि । आस बभूव । वै ॥ ९ ॥

उवाचेति । अथैवंविधमुक्तानन्दमुनिवचनश्रवणानन्तरम् । हरिः । उवाच मुक्तानन्दमुनिं प्रत्यूचे । हे साधो ! । मम । प्रकृतिः । ईदृशी एवंविधा । नास्ति । किन्तु । मम । शरणागते । पुरुषे । नित्यम् । अतीवात्यन्ता । दया । अस्ति ॥ १० ॥ दयालोरिति । दयालोरपि । मे मम । भक्तद्रोहिणि । त्यागिन्यपि । पुरुषे । गृहिणि । पुरुषे चापि । प्रीतिः । क्वचिदपि । न जायते ॥११॥ कृष्णेति । यो भक्तः । कृष्णभक्तस्य । दोषम् । ब्रूयात् । तं दोषम् । यदि । शृणुयाम् । तर्हि । तस्मिंस्तद्दोषब्रूवे भक्ते । सद्यः । मम । अरुचिः । निश्चितम् ॥ १२ ॥ तेनेति । तेन भक्तदोषब्रूवेण भक्तेन सह । अहम् । भाषितुकामः सन्नपि । भाषणे । नैव । शक्नुयात् । ईदृश्येवंविधैव । तस्मिन्भक्तदोषब्रुवे । मे मम । स्वभावतः सहजतयैव । अरुचिः । जायते ॥१३॥ य इति । यो भक्तः । सर्वदा । भक्तपरिचर्यायां छन्दानुवृत्तिपूर्विकायां मद्भक्तसेवायाम् । निरतस्तत्परः । भवेत् । तस्मिन् भक्ते तु । मम । अतितरामतिशयिता । साहजिकी । प्रीतिः । भवेत् ॥ १४ ॥ कस्मिंश्चि-

उवाचाथ हरिः साधो ! प्रकृतिर्नेदृशी मम । अतीवास्ति दया नित्यं पुरुषे शरणागते ॥ १० ॥ दयालोरपि प्रीतिर्भक्तद्रोहिणि तु क्वचित् । न जायते हि पुरुषे त्यागिन्यपि गृहिण्यपि ॥ ११ ॥ कृष्णभक्तस्य यो दोषं ब्रूयात्तं शृणुयां यदि । तर्हि सद्योऽरुचिस्तस्मिन् जायते मम निश्चितम् ॥ १२ ॥ तेन भाषितुकामोऽपि शक्नुयां नैव भाषणे । ईदृश्येवारुचिस्तस्मिन् जायते मे स्वभावतः ॥ १३ ॥ यो भक्तपरिचर्यायां निरतः सर्वदा भवेत् । तस्मिंस्त्वतितरां प्रीतिर्मम साहजिकी भवेत् ॥ १४ ॥ कस्मिंश्चिदल्पकं दोषं दृष्ट्वा सद्योऽरुचिर्न मे । तस्मिन् स्याच्चाल्पकं दृष्ट्वा गुणं नैव प्रसन्नता ॥१५॥ बहुकालं परीक्ष्यैव गुणो यस्य तु निश्चितः । भवेत्स्वेनैव तस्मिंस्तु प्रीतिः स्यान्निश्चला मम ॥१६॥ एवं दोषस्तु यस्मिन्स्यात्सोऽपि कालेन भूयसा । स्वेनैव निश्चितः स्याच्चेत्तस्मिन्स्यादरुचिस्तदा ॥१७॥ न तु सद्यो गुणे दोषे दृष्टे वाऽपि श्रुतेऽन्यतः । कस्मिंश्चिन्मे भवेत्प्रीतिरप्रीतिर्वाऽपि पूरुषे ॥ १८ ॥

दिति । कस्मिंश्चिद्भक्ते । अल्पकमल्पमात्रम् । दोषं दृष्ट्वा । तस्मिन् । मे मम । सद्यः । अरुचिः । नैव स्यात् । कस्मिंश्चित् । अल्पकम् । गुणम् । दृष्ट्वा । तस्मिन् । सद्यः । मम । प्रसन्नता । नैव स्यात् ॥ १५ ॥ बह्विति । बहुकालं बहुकालपर्यन्त । परीक्ष्य तत्परीक्षां कृत्वैव । यस्य भक्तस्य । गुणः । स्वेनात्मनैव । निश्चितः । भवेत् । तस्मिन् । भक्ते तु । मम । निश्चिला दृढा । प्रीतिः । स्यात् ॥ १६ ॥ एवमिति । एवममुना प्रकारेण । यस्मिन्भक्ते । दोषः स्यात् । स दोषोऽपि । भूयसाऽपि बहुना । कालेन । स्वेनैव । निश्चितः । स्याच्चेत् । तदा । तस्मिन् भक्ते । अरुचिर्ममाप्रीतिः । स्यात् ॥ १७ ॥ नेति । गुणे । दोषे । कस्यापि भक्तस्येति शेषः । दृष्टे साक्षाद्वीक्षिते सति । अथवा । अन्यतोऽन्यस्माज्जनात् । श्रुते सत्यपि । कस्मिंश्चित् । पूरुषे भक्ते । मे मम । सद्यः । प्रीतिः । अथवा ; अप्रीतिश्चापि । न भवेत् ॥ १८ ॥

यस्मिन्निति । यस्मिन् भक्ते । यावान् यत्परिमितः । गुणः । स्वेन निश्चितः । स्यात् । स गुणस्तु । केषांचित् । वाक्यैरपि । क्वचित्कदाचिदपि । हृदयान्मम मानसात् । नापगच्छति ॥ १९ ॥ गुणीति । यः । भगवद्भक्तः । गुणी स्वधर्मज्ञानवैराग्यभक्त्यादिगुणवान् । भवेत् । तस्य तथाविधभक्तस्य तु । अहम् । भक्तः । अस्मि । भक्तसेवाया मद्भक्तपरिचर्यायाः सकाशात् । अन्यत् । मे मम । प्ररोचनं रुचिकरम् । नास्ति । हि । किन्तु केवला भक्तसेवैव । रुचिकरास्तीत्यर्थः ॥ २० ॥ यस्येति । यस्य । यस्य भक्तस्य । भक्ते । अरुचिः । अभवत् । सः सः । पूरुषो भक्तस्तु । महतीम् । गतिम् । प्राप्यापि । अधोगतिम् । उपागमत् ॥ २२ ॥ अचलमिति । ये भक्ताः । महतीम् । अचलाम् । पदवीम् । प्राप्ताः सन्तः । वर्त्तन्ते । ते भक्ता अपि । साक्षात्कृष्णभक्तप्रसादात् प्राप्ताः सन्तो वर्त्तन्ते । इतीत्थम् । गम्यताम् ॥ २१ ॥ भक्तानाम् । प्रीणनात् सेवया प्रीतिविधानादेव । हरिः । प्रीतः । भवति । तेषां भक्तानाम् । द्रोहात्तु ।

यस्मिन् यावान् गुणः स्वेन निश्चितः स्यात्स तु क्वचित् । केषांचिदपि वाक्यैस्तु हृदयान्नापगच्छति ॥१९॥ गुणी यो भगवद्भक्तस्तस्य भक्तोऽस्म्यहं तु वै । न हि मे भक्तसेवाया अन्यदस्ति प्ररोचनम् ॥२०॥ यस्य यस्याभवद्भक्ते त्वरुचिः स पूरुषः । गतिं प्राप्यापि महतीमधोगतिमुपागमत् ॥२१॥ अचलां पदवीं प्राप्ता वर्त्तन्ते महतीं तु ये । तेऽपि साक्षात्कृष्णभक्तप्रसादादिति गम्यताम् ॥२२॥ भक्तानां प्रीणनादेव प्रीतो भवति वै हरिः । द्रोहात्तेषां तु तत्कालमप्रीतः स भवत्यलम् ॥ २३ ॥ भगवत्प्रीतिकामेन ततः पुंसा प्रयत्नतः । प्रीणनीयाः सन्त एव तद्भक्ताः परिचर्यया ॥२४॥ न प्रीणयति यो भक्तान्स तु भागवताध्वनः । पतिष्यतीति विज्ञाय प्रीत्या सेव्यास्त एव हि ॥२५॥ यस्मिन् कृष्णश्च तद्भक्ताः प्रीताः सन्ति स पूरुषः । भूतलस्थोऽपि विज्ञेयो ब्रह्मधाम्न्येव हि स्थितः ॥२६॥ यस्मात्प्रीणाति न हरिः साधुसम्प्रीणनं विना । अतो मुक्ता अपि नराः सेवन्ते सत एव हि ॥२७॥ ममापि कृष्णसम्प्रीत्यै साधवः प्रतिजन्म हि । प्रीणनीया भवन्तीति निश्चयोऽस्ति कृतो हृदि ॥ २८ ॥

तत्कालं तत्क्षणमेव । स हरिः । अलमत्यन्तम् । अप्रीतः । भवति । वै ॥ २३ ॥ भगवदिति । ततो हेतोः । भगवत्प्रीतिकामेन । पुंसा भक्तेन । तद्भक्ताः । सन्त एव । परिचर्यया । प्रयत्नतः । प्रीणनीयाः ॥ २४ ॥ नेति । यो भक्तः । भक्तान् । न प्रीणयति । स भक्तस्तु । भागवताध्वनो भगवदेकान्तिकभक्तपथात् । पतिष्यति । इतीत्थम् । विज्ञाय । ते भक्ता एव । प्रीत्या । सेव्याः । हि ॥ २५ ॥ यस्मिन्निति । यस्मिन्भक्ते । कृष्णः । तद्भक्ताश्च । प्रीताः । सन्ति । सः । पूरुषो भक्तः । भूतलस्थः । सन्नपि । ब्रह्मधाम्नि ब्रह्मपुरे स्थित एव । विज्ञेयः । हि । ॥ २६ ॥ यस्मादिति । यस्माद्धेतोः । साधुसम्प्रीणनं विना । हरिः । न प्रीणाति । अतो हेतोः । मुक्ता मुक्तभावं प्राप्ता अपि । नरा भक्ताः । सतः साधूनेव । सेवन्ते । हि ॥ २७ ॥ ममेति । प्रतिजन्म जन्मनि । कृष्णसम्प्रीत्यै । साधवः । ममापि । प्रीणनीयाः । भवन्ति । इतीत्थम् । निश्चयः । हृदिः । कृतः । अस्ति । हि ॥ २८ ॥

एवमिति । एवं मद्वदेव । मदाश्रितैः । सर्वैः । युष्माभिरपि । साधु सम्प्रीणनस्यैव । दृढनिश्चयः । कर्त्तव्यः ॥ २९ ॥ शब्देति । हे साधवः ! । एषा वार्त्ता तु । सर्वस्य । शब्दब्रह्मणो वेदादिसच्छास्त्रस्य । साररूपा । अस्ति । इतीथत्म् । मया । निश्चित्य । कीर्त्तिताऽस्ति । इति । जानीत ॥ ३० ॥ वेदेति । वेदादीनां जनकल्याणार्थकवेदपुराणेतिहासादीनाम् । रहस्यरूपा । एषा वार्त्ता । मोक्षवर्त्मनि आत्यन्तिककल्याणहेतावेकान्तिकधर्मपथे । चरतां वर्त्तमानानाम् । पुंसां भक्तानाम् । जीवनरूपा । अस्ति । अत्रास्मिन्नर्थे । संशयः । नास्ति ॥ ३१ ॥ मुक्तानन्देति । इत्यमुना प्रकारेण । तेन श्रीहरिणा । उक्ताः । मुक्तानन्दादयः । भक्ताः । तत्क्षणं सद्य एव । हे हरे ! । वयम् । एवं त्वदुक्तप्रकारेणैव । आचरिष्यामः । इतीत्थम् । उक्त्वा । तं । श्रीहरिम् । ववन्दिरे ॥ ३२ ॥ सुधेति । इत्येवंविधेन । हरीरितेन श्रीहरिणा सम्प्रोक्तेन । सुधासमेनामृततुल्येन । श्रुतेन । वाक्येन । सदोनिषण्णाः । तद्भक्तिभाजः । सकलाः । ते मुक्तानन्दादयः । सन्तः ।

एवमेव च युष्माभिरपि सर्वैर्मदाश्रितैः । साधुसम्प्रीणनस्यैव कर्त्तव्यो दृढनिश्चयः ॥ २९ ॥ शब्दब्रह्मण एषा तु वार्त्ता सर्वस्य साधवः । साररूपेति जानीत मया निश्चित्य कीर्त्तिता ॥३०॥ वेदादीनां रहस्यं च वार्त्तैषा मोक्षवर्त्मनि । पुंसां जीवनरूपाऽस्ति चरतां नात्र संशयः ॥ ३१॥ मुक्तानन्दादयो भक्ता इत्युक्तास्तेन तत्क्षणम् । एवमेवाचरिष्याम इत्युक्त्वा तं ववन्दिरे ॥ ३२ ॥ सुधासमेनेति हरीरितेन श्रुतेन वाक्येन परां मुदं ते । सन्तो गृहस्थाश्च सदोनिषण्णास्तद्भक्तिभाजः सकलाः समीयुः ॥ ३३ ॥

इति हरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते शताधिकैकषष्टितमस्तरङ्गः ॥ १६१ ॥ २८ ॥

शकाब्दे विक्रमार्कस्य नन्दाश्ववसुभूमिते । शुक्लाष्टम्यां तपस्यस्य वचोऽमृतमिदं हरेः ॥ १ ॥
तत्र दुर्गपुरे दुर्ग उत्तमस्य स वेश्मनः । वितर्द्यावुदगास्य न्यषीदन्मञ्चकोत्तमे ॥ २ ॥
वृतः स्वभक्तैर्बहुभिस्त्यागिभिर्गृहिभिश्च सः । सितसर्वाम्बरधरः पुरःस्थानब्रवीत्सतः ॥ ३ ॥

गृहस्थाश्च । पराम् । मुदम् । समीयुः प्रापुः ॥ ३३ ॥ येन स्वभक्तशिक्षार्थं स्वस्वभावो ह्यलौकिकः । प्रोक्तः श्रीहरिणा दद्यात्स मे तदनुवर्त्तनम् ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्यैकान्तिकोपासकश्रीहरिकृष्णभगवत्सुतरघुवीराचार्यविरचितायांश्रीहरिवाक्यसुधासिन्धुटीकायां शताधिकैकषष्टितमस्तरङ्गः ॥ १६१ ॥ २८ ॥

भृशासक्तं मनो यस्य हरौ तस्य तु लक्षणम् । तत्साधनं तथैकोनत्रिंशे सम्यगुदीरितम् ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८७९) तपस्यस्य फाल्गुनमासस्य । शुक्लाष्टम्यां शुक्लपक्षस्याष्टमीतिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमस्य राज्ञः । दुर्गे । उदगास्यस्य । वेश्मतस्तद्भवनस्य । वितर्द्यां बाह्यवेदिकायाम् । मञ्चकोत्तमे स्वास्तृते श्रेष्ठे पर्यङ्कासने । स श्रीहरिः । न्यषीदत् ॥ २ ॥ वृत इति । बहुभिर्नानादेशेभ्यः समागतत्वादनेकैः । त्यागिभिः । गृहिभिश्च । स्वभक्तैः । वृतः सभायां परिवेष्टितः । सितसर्वाम्बरधरः । स श्रीहरिः । पुरःस्थान्स्वपुरःप्रदेशावस्थितान् । सतो मुक्तानन्दा-

दिसाधून् । अब्रवीत्स्वत एवोवाच ॥३॥ साक्षादिति । हे सन्तः । यस्य भक्तस्य । मनः । भगवति साक्षात्कृष्णे । भृशमत्यन्तम् । आसक्तं तन्माहात्म्यज्ञानेऽनुरागयुक्तम् । भवेत् । तस्य भक्तस्य । लक्ष्म लक्षणम् । स्फुटं यथातथैव । वो युष्मभ्यम् । वदामि ॥४॥ अतीति । अत्यध्वचलनश्रान्तः । अत एव । सुप्तः सन् । शवसन्निभः । स्यात् । ततो हेतोः । उत्थातुं जाग्रद्भावं प्राप्तुम् । अथवा । स्नातुम् । भोक्तुं च । नैव शक्नुयात् ॥ ५ ॥ तथेति । तथाविधोऽपि । यो भक्तः । जायमानान् । हरेः । कथाम् । अथवा वार्त्ताम् । श्रुत्वा । सहसा तत्क्षणमेव । उत्थाय । अश्रमो यथा श्रमरहित इव । शृणुयात् ॥ ६ ॥ यद्वेति । यद्वा । यः । क्वचित्कदाचित् । रोगादिना । आर्त्तः पीडितः । स्यात् । अथवा । अपमानेन वैरिनृपादिकृततिरस्कारेण । अर्दितः पीडितः । भवेत् । अथैवंविधः सन्नपि । जायमानाम् । हरेः । कथाम् । अथवा वार्त्ताम् । श्रुत्वा ॥७॥ वार्त्तामिति । सद्यः । उत्थाय । नीरोगादिरिव रोगवर्जितवदनपमानितवच्चेत्यर्थः । आदरात् । तां कथां वार्त्तां च । शृणुयात् । स भक्तः । हरौ । भृशासक्तमनाः । विज्ञेयः । इतिद्वयोरेकान्वयः ॥ ८ ॥ प्राप्येति । अथवा । यः । राज्यम् । महर्द्धिम् । प्राप्य । नानाकार्याकुलः सन्नपि । प्रभोः श्रीहरेः ।

साक्षात्कृष्णे भगवति यस्यासक्तं भृशं मनः । भवेत्तस्य तु लक्ष्माहं स्फुटमेव वदामि वः ॥४॥ अत्यध्वचलनश्रान्तः सुप्तः स्याच्छवसन्निभः । उत्थाय शक्नुयान्नैव स्नातुं भोक्तुं च वा ततः ॥ ५ ॥ तथाविधोऽपि यः श्रुत्वा जायमानां हरेः कथाम् । वार्त्तां वा सहसोत्थाय शृणुयादश्रमो यथा ॥६॥ यद्वा रोगादिनाऽऽर्त्तः स्यादपमानेन वाऽर्दितः । भवेदथ हरेः श्रुत्वा जायमानां कथां क्वचित् ॥ ७ ॥ वार्त्तां वा सद्य उत्थाय नीरोगादिरिवादरात् । शृणुयात्तां स विज्ञेयो भृशासक्तमना हरौ ॥ ८ ॥ प्राप्य राज्यं महर्द्धिं वा नानाकार्याकुलोऽपि सन् । श्रुत्वा वार्त्तां प्रभोः सद्यः स्यान्निःसङ्ग इवोत्सुकः ॥ ९ ॥ अत्यासक्तमना ज्ञेयः स च साक्षाद्रमापतौ । त्यागी सोऽस्तु गृही वाऽपि मुक्त एव न संशयः ॥ १० ॥ मुक्तानन्दोऽथ तं नत्वा पप्रच्छासक्तिरीदृशी । कृष्णेऽति स्यात्त्वयि कथमिति पृष्टोऽब्रवीद्धरिः ॥११॥ प्राक्संस्कारो भवेद्यस्य बलिष्ठस्तस्य सा भवेत् । सेवया प्रीणनेनाथ सा स्यात्तद्भक्तसतामपि ॥१२॥

वार्त्ताम् । इयं कथाया उपलक्षणम् । श्रुत्वा । सद्यः । निःसङ्गो राज्याद्यनासक्त इव । उत्सुकस्तच्छ्रवणे उत्साहयुक्तः । स्यात् ॥ ९ ॥ अतीति । स तथाविधोऽपि भक्तः । साक्षाद्रमापतौ प्रत्यक्षे श्रीहरौ । अत्यासक्तमनाः । ज्ञेयः । स एवंविधो भक्तः । त्यागी । अस्तु । अथवा । गृही गृहस्थोऽपि । अस्तु । सः । मुक्त एव । ज्ञेयः । न संशयः ॥ १० ॥ मुक्तानन्द इति । अथैवंविधश्रीहरिवाक्यश्रवणानन्तरम् । मुक्तानन्दोमुनिः । तं श्रीहरिम् । नत्वा । पप्रच्छ । हे हरे ! । कृष्णेऽनादिसिद्धकृष्णनाम्नि । त्वयि प्रत्यक्षपुरुषोत्तमे भवति । ईदृशी । अत्यत्यन्तम् । आसक्तिः । कथं केनोपायेन । स्यात् । इतीत्थम् । पृष्टो मुक्तानन्दमुनिनानुयुक्तः । हरिः । अब्रवीत् ॥ ११ ॥ प्रागिति । हे मुने ! । यस्य भक्तस्य । बलिष्ठोऽतिबलवान् । प्राक्संस्कार इत्थंभूता पूर्वजन्मभावना । भवेत् । तस्य भक्तस्य । सा हरावत्यन्तासक्तिः । भवेत् । अथ च । तद्भक्तसतां कृष्णेऽत्यासक्तियुक्तैकान्तिकसाधूनाम् । सेवया छन्दानुवृत्तिपूर्विकया परिचर्यया । प्रीणनेनापि । सा तस्मिंस्तथाविधासक्तिः । स्यात् ॥ १२ ॥

सुधामिति । इत्थमेवंविधाम् । सुधामिवामृततुल्याम् । जगद्गुरोः । तस्य श्रीहरेः । वाचम् । आपीय श्रुत्वा । सः । मुनिर्मुक्तानन्दसाधुः । तथा । सदःस्थाः । निखिलाः । अन्ये । सन्तः । गृहस्थाश्च । भूरितरम् । तोषम् । प्रपेदिरे ॥ १३ ॥ भृशासक्तात्मनः स्वस्मिन् लक्ष्म स्वीयस्य यो हरिः । प्रोचे स साधनं तस्मिन्नत्यासक्तं मनोऽस्तु मे ॥ १ ॥ इति श्रीमदेकान्तिकोधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्सूनुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां शताधिकद्विषष्टितमस्तरङ्गः ॥ १६२ ॥ २९ ॥

यत्सच्छास्त्रोक्तिसत्यत्वपूर्वकं साधनं महत् । मुक्तेः स्त्रीस्वर्णबन्धात्तत्त्रिशे संकथितं ततः ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८७९) श्रीरामजन्मदिवसे द्वितीय चैत्रशुक्लनवमीतिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥१॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमक्षितिपस्य । दुर्गे । वासुदेवालयस्य । अग्रे बाह्यवेदिकायाम् । स्वासने पार्श्विकगेन्दुकश्वेतोत्तरच्छदादिसहितस्थूलतूलिकासने । प्रभुः । स श्रीहरिः । न्यषीदत् ॥ २ ॥ तं विशिनष्टि । सितेति । सिताम्बरधरः परि-

सुधामिवापीय स वाचमित्थं जगद्गुरोस्तस्य मुनिस्तथाऽन्ये । सन्तो गृहस्था निखिलाश्च तोषं प्रपेदिरे भूरितरं सदःस्थाः ॥ १३ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते शताधिद्विषष्टितमस्तरङ्गः ॥ १६२ ॥ २९ ॥

शकाब्दे विक्रमार्कस्य नन्दाश्ववसुभूमिते । श्रीरामजन्मदिवसे वचोऽमृतमिदं हरेः ॥ १ ॥ तत्र दुर्गपुरे उत्तमक्षितिपस्य सः । वासुदेवालयस्याग्रे न्यषीदत्स्वासने प्रभुः ॥ २ ॥ सिताम्बरधरः श्वेतपुष्पहारावतंसकः । वृतो भक्तैरसंख्यातैस्त्यागिभिर्गृहिभिस्तथा ॥ ३ ॥ स्वाग्रोपविष्टान् सदसि त्यागिनः सोऽब्रवीत्प्रभुः । श्रीमद्भागवतादीनि सच्छास्त्राणि भवन्ति हि ॥ ४ ॥ वदन्ति तानि यद्यच्च तत्तत्सत्यं न संशयः । कलेः स्थानं सुवर्णं च स्त्रियस्तत्र प्रकीर्त्तिताः ॥ ५ ॥ तस्मिंस्तासु कलिर्नूनं दृश्यते व्याप्त इत्यपि । बहवस्त्यागिनो लोके तदर्थं भ्रष्टतां गताः ॥ ६ ॥

हितसकलश्वेतवसनः । तत्रायंविवेकः । परिधानियप्रावरणीये तु समंततः श्वेते एव शिरोवेष्टनीयं तु वनस्थलीपुरनिवासिभगवद्भक्तवैश्यजातीयश्रेष्ठपुरुषोत्तमदाससमर्पितकृष्णवर्णप्रान्तपल्लववसनकृतमिति । श्वेतपुष्पाणां कुन्दकुसुमानां हारावतंसकौ स्रगापीडौ यस्य सः । असङ्ख्यातैर्नानादेशागतत्वाद्बहुभिः । त्यागिभिः । तथा । गृहिभिः । भक्तैः । वृतः सभायां परिवेष्टितः ॥ ३ ॥ स्वेति । प्रभुः । स श्रीहरिः । सदसि स्वाग्रोपविष्टान् । त्यागिनो मुक्तानन्दादिसाधून् । अब्रवीत्स्वयमेवोचे । हे सन्तः ! । श्रीमद्भागवतादीनि । सच्छास्त्राणि । भवन्ति । हि ॥ ४ ॥ वदन्तीति । तानि सच्छास्त्राणि । यत् । यत् । वदन्ति । तत् । तत् । सत्यमेवास्ति । न संशयः । तत्र श्रीमद्भागवते । सुवर्णम् । कलेः । स्थानम् । प्रकीर्त्तितम् । स्त्रियश्च । कलेःस्थानरूपाः । प्रकीर्तिताः । तथाचोक्तं श्रीभागवते । 'अभ्यर्थितस्तदा तस्मै स्थानानि कलये ददौ । द्युतं पानं स्त्रियः सूना यत्राधर्मश्चतुर्विधः । पुनश्च याचमानाय जातरूपमदात्प्रभु'रित्यादिना ॥ ५ ॥ तस्मिन्निति । तस्मिन्सुवर्णे । तासु स्त्रीषु ।

कलिः । व्याप्तः । इतीत्थमपि । नूनमेव । दृश्यते । यतः । लोके । बहवः । त्यागिनस्त्यागिवेषाः सन्यासिवीतरागिप्रभृतयः । तदर्थं स्त्रीस्वर्णार्थम् । भ्रष्टतां स्वधर्मविच्युतत्वम् । गताः प्राप्ताः । सन्ति ॥ ६ ॥ अपीति । लोके । धीरा धैर्यवन्तोऽपि नराः । कान्ताकनकदर्शने । प्रायो बहुधा । विह्वलाः । जायन्ते । तत्र कान्ताकनकयोः । आत्मना मनसा । सज्जन्ते आसक्ताश्च भवन्ति ॥ ७ ॥ पदार्थेति । एतत् । पदार्थद्वयम् । सर्वेषां जनानाम् । बन्धनम् । अस्ति । हि । कश्चिद्विरलः कश्चिदेव साक्षाद्भगवद्भक्तः । कार्ष्णं कृष्णसम्बन्धि । बलं सामर्थ्यम् । वक्ष्यमाणं कृष्णोपासनासामर्थ्यमित्यर्थः । प्राप्य । तस्मात्तद्बन्धनात् । विमुच्यते ॥८॥ प्रकृतेरिति । यः । पुमान् भक्तः । प्रकृतेर्मूलमायायाः । पुरुषात्तदधिष्ठातुर्महापुरुषाच्चापि । परम् । यत् । निर्गुणम् । ब्रह्माक्षरम् । अस्ति । तदक्षरं ब्रह्मैव । एकं केवलम् । सदर्वाचीनप्रकृतिपुरुषापेक्षया सत्यरूपम् । विदित्वा । स्वं स्वकीयमात्मानम् । तद्रूपमक्षरब्रह्मणा सम्प्राप्तैकीभावम् । विभावयन्मानयन् सन् ॥९॥ उपासीतेति । परमक्षरब्रह्मणोऽपि स्वरूपस्वभावादिभिरतिश्रेष्ठम् । ब्रह्म परब्रह्मसंज्ञम् । कृष्णं प्रत्यक्षं श्रीहरिम् । अनन्यभावत एकान्तिकभावेन । उपासीत सेवेत । ब्रह्मणोऽक्षरब्रह्मणः । अवरमर्वाचीनम् । यत् प्रकृति-

अपि धीरा नरा लोके कान्ताकनकदर्शने । जायन्ते विह्वलाः प्रायः सज्जन्ते तत्र चात्मना ॥ ७ ॥ पदार्थद्वयमेतद्धि सर्वेषामस्ति बन्धनम् । कश्चिदेव बलं प्राप्य कार्ष्णं तस्माद्विमुच्यते ॥८॥ प्रकृतेः पुरुषाच्चापि परं यद्ब्रह्म निर्गुणम् । तदेवैकं विदित्वा सत्तद्रूपं स्वं विभावयन् ॥ ९ ॥ उपासीत परंब्रह्म कृष्णं चानन्यभावतः । अवरं ब्रह्मणो यत्तत्सर्वं विद्याच्च नश्वरम् ॥ १० ॥ तुच्छं च मत्वा तत्राप्तस्तीव्रं वैराग्यमेव यः । पुमान् स एव मुच्येत स्वर्णस्त्रीबन्धनात् खलु ॥ ११ ॥ इतरे तु पुमांसोऽत्र मूर्खा वा पण्डिता अपि । त्यागिनो गृहिणो वापि बध्यन्ते नात्र संशयः ॥ १२ ॥ ते साधवः सत्यमितीश्वरस्य निपीय वाक्यामृतमस्य सर्वे । सन्तोषमापुः परमं सदःस्थास्तदाश्रिता ये गृहिणश्च तेऽपि ॥ १३ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते शताधिकत्रिषष्टितमस्तरङ्गः ॥ १६३ ॥ ३० ॥

पुरुषादिकम् । तत्सर्वम् । नश्वरम् । विद्यात् ॥१०॥ तुच्छमिति । तुच्छं तत्प्रकृतिपुरुषादिकं सर्वमत्यल्पं च । मत्वा । तत्र प्रकृतिपुरुषादौ । तीव्रम् । वैराग्यमेव । आप्तः । स्यात् । स एवंविधो भक्त एव । स्वर्णस्त्रीबन्धनात् । मुच्येत । खलु । इति । त्रयाणामेकान्वयः ॥११॥ इतर इति । अत्र लोके । इतरे उक्तविधभक्तादन्ये । पुमांसस्तु । मूर्खाः । अथवा । पण्डिता अपि । त्यागिनः । अथवा । गृहिणोऽपि । बध्यन्ते स्त्रीस्वर्णाभ्यां बन्धनं यान्ति । अत्रार्थे । संशयः । नास्ति ॥१२॥ त इति । इत्येवंविधम् । ईश्वरस्य प्रत्यक्षपरमेश्वरस्य । अस्य श्रीहरेः । सत्यं यथार्थम् । वाक्यामृतम् । निपीय । सदःस्थाः । तदाश्रिताः । सर्वे । ते मुक्तानन्दादयः । साधवः । ये । गृहिणः । ते चापि । परमम् । सन्तोषम् । आपुः ॥१३॥ स्वभक्तानां साधनं तु मुक्तेः स्त्रीस्वर्णबन्धनात् । उक्तं येन हरिः सोऽस्तु मम तद्बन्धमोक्षदः ॥१॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्स्नुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां शताधिकत्रिषष्टितमस्तरङ्गः ॥ १६३ ॥ ३० ॥

ब्रह्माण्डसृष्टिकथनाद्भेदोऽनादिश्च वास्तवः । जीववैराजपुरुषश्रीहरिणां परस्परम् ॥ १ ॥ दृष्टान्त दार्ष्टान्तिकतोऽनेकसद्युक्तितस्तथा । विज्ञेयो हरिभक्तानामेकत्रिंशे प्रदर्शितः ॥ २ ॥ शकेति । विक्रमार्कस्य विक्रमादित्यनृपतेः खनागवसुभूमिते शून्याष्टाष्टकसंमिते । शकाब्दे शकवर्षे । संवदष्टादशशताधिकाशीतितमे वर्षे इत्यर्थः । (१८८०) नभसः श्रावणमासस्य । शुक्ले वलक्षपक्षे । चतुर्थ्यां तिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमस्य । महीभुजः । दुर्गे । स्वावासवेदिकायां स्वावासस्यप्रत्यग्वाह्यवितर्द्दौ । निजासने सपार्श्विकश्वेतोत्तरछदे स्थूलतूलिकास्तृते स्वीयविष्टरे । स श्रीहरिः । निषण्णः । अभूत् ॥ २ ॥ तं विशिनष्टि । सितेति । सिताम्बरधरः परिहितसकश्वेतवसनः । पुरःस्थैः सभायां स्वाग्रप्रदेशावस्थितैः । त्यागिभिः । तथा । गृहिभिः । भक्तैर्नानादेशागतैः स्वाश्रितजनैः । वीक्ष्यमाणः । पुराणश्रवणादृतः । नित्यनियमप्राप्तोपनिषत्कथासद्भावान्तर्गतचातुर्मासीयविशेषनियमार्थकश्रीभागवतकथामादरेण शृण्वान्नित्यर्थः ॥ ३ ॥ श्रुत्वेति । स्वपौराणिकवक्त्रतः प्रयागजिदाख्यस्वीयपौराणिकास्यात् । कपिलगीतां श्रीमद्भागवततृतीयस्कन्धान्तर्गताम् । श्रुत्वा । प्रसन्नः । सुखासीनः । स श्रीहरिः । स्वयमेव ।

शकाब्दे विक्रमार्कस्य खनागवसुभूमिते । चतुर्थ्यां नभसः शुक्ले वचोऽमृतमिदं हरेः ॥ १ ॥ तत्र दुर्गपुरे दुर्गे उत्तमस्य महीभुजः स्वावासवेदिकायां स निषण्णोऽभून्निजासने ॥२॥ सिताम्बरधरो भक्तैस्त्यागिभिर्गृहिभिस्तथा । पुरःस्थैर्वीक्ष्यमाणश्च पुराणश्रवणादृतः ॥३॥ श्रुत्वा कपिलगीतां स स्वपौराणिकवक्त्रतः । प्रसन्नश्च सुखासीनः स्वयमेवाब्रवीत्सतः ॥ ४ ॥ यो वासुदेवो भगवानक्षरात्पर उच्यते । स श्रीकृष्णः परंब्रह्म सर्वकारणकारणम् ॥५॥ मायायां वीर्यमाधत्त स एव पुरुषात्मना । अक्षरात्मा स पुरुषो मुक्तो ब्रह्मेति चोच्यते ॥ ६ ॥ तज्जप्रधानपुरुषद्वारा वैराज पूरुषः । ब्रह्माण्डविग्रहः सद्यः प्रादुर्भवति वीर्यवान् ॥ ७ ॥ यथा स्त्रीपुरुषद्वारा लोक उत्पद्यते सुतः । तथा मायाधिपस्यासौ पुरुषस्योच्यते सुतः ॥ ८ ॥ यथाऽत्र लौकिकस्य स्तः पुरुषस्याकृतिक्रिये । तथैव तस्य ते ज्ञेये द्विपरार्द्धायुषः खलु ॥ ९ ॥

सतः स्वपुरोऽवस्थितान्मुक्तानन्दादिसाधून् । अब्रवीत् ॥ ४ ॥ य इति । हे साधवः ! । अक्षरादक्षरब्रह्मणः । परः । यः । वासुदेवः । भगवान् । उच्यते वेदादिभिः कथ्यते । सर्वकारणकारणम् । परंब्रह्म । स वासुदेवः । श्रीकृष्णः । अस्ति ॥ ५ ॥ मायायामिति । स श्रीकृष्ण एव । पुरुषात्मना महापुरुषरूपेण । मायायां मूलप्रकृतौ । वीर्यम् । आधत्त । सः । पुरुषो महापुरुषः । अक्षरात्माऽक्षररूपः । मुक्तः । ब्रह्म च । इत्येवम् । उच्यते ॥ ६ ॥ तज्जेति । तज्जप्रधानपुरुषद्वारा महापुरुषद्वारा मूलप्रकृत्युत्पन्नानेकप्रधानपुरुषान्यतमपुरुषद्वारेणेत्यर्थः । ब्रह्माण्डविग्रहः । वीर्यवान्प्रतापातिशययुक्तः । वैराजपुरुषः । सद्यो महापुरुषदिनपरिमाणापेक्षया तत्क्षणमेवेत्यर्थः । प्रादुर्भवति । तत्त्वद्वारेतिशेषः ॥ ७ ॥ यथेति । यथा । लोके । स्त्रीपुरुषद्वारा । सुतः । उत्पद्यते । तथा । असौ वैराजपुरुषद्वारा । सुतः । उत्पद्यते । तथा । असौ । वैराजपुरुषः । मायाधिपस्य प्रधानप्रकृत्यधिपस्य । पुरुषस्य । सुतः । उच्यते ॥ ८ ॥ यथेति । यथा । अत्र लोके । लौकिकस्य । पुरुषस्य ।

आकृतिक्रिये आकारकर्मणी । स्तो भवतः । तथैव । द्विपरार्द्धायुषः । तस्य वैराजपुरुषस्य । ते आकृतिक्रिये । ज्ञेये । खलु ॥ ९ ॥ यथेति । यथा । जीवात्मनः । जाग्रत्स्वप्नसुषुप्तयः । अवस्थाः । सन्ति । तथा । तस्य वैराजपुरुषस्य । स्थित्युत्पत्तिलयाः । अवस्थाः । अपि । ईरिताः ॥ १० ॥ स्थूलमिति । जीवस्य स्थूलम् । सूक्ष्मम् । कारणं च । इत्येवंविधम् । वपुस्त्रयम् । अस्ति । वैराजस्य । विराट्सूत्राव्याकृताख्यम् । वपुस्त्रयम् । अस्ति ॥ ११ ॥ वैराजस्येति । वैराजस्यापि । देहो विराट्शरीरं तु । ईश्वरनोदितैः परमेश्वरेणान्तर्यामिशक्त्या प्रेरितैः । महदादिभिः । तत्त्वैः । स्वस्वांशैरेव । रचितः । भवति ॥ १२ ॥ सजीव इति । सजीवे स्वकीयक्षेत्रज्ञसहितेऽपि । अस्य वैराजपुरुषस्य । देहे विराट्शरीरे । करणैरिन्द्रियैः सह । देवताः । सर्वान् । गोलकान् । प्रविष्टाः । तदापि । स वैराजः पुरुषः । नोदतिष्ठन्नोत्तस्थौ ॥ १३ ॥ भगवानिति । यदा । भगवान्वासुदेवः । पुरुषात्मना महापुरुषरूपेण । अस्मिन्वैराजपुरुषे प्राविशत् । तर्हि । असौ वैराजपुरुषः । महाम्भसि । सद्यः । उदतिष्ठत्

यथा जीवात्मनोऽवस्था जाग्रत्स्वप्नसुषुप्तयः । तथा स्थित्युत्पत्तिलयास्तस्यावस्था अपीरिताः ॥ १० ॥ स्थूलं सूक्ष्मं कारणं च जीवस्येति वपुस्त्रयम् । विराट्सूत्राव्याकृताख्यं वैराजस्य वपुस्त्रयम् ॥ ११ ॥ वैराजस्यापि देहस्तु तत्त्वैर्हि महदादिभिः । स्वस्वांशैरेव रचितो भवतीश्वरनोदितैः ॥ १२ ॥ सजीवेऽप्यस्य देहे च करणैः सह देवताः । प्रविष्टा गोलकान्सर्वान्नोदतिष्ठत्तदाऽपि सः ॥१३॥ भगवान्वासुदेवस्तु यदाऽस्मिन् पुरुषात्मना । प्राविशत्तर्ह्यसौ सद्य उदतिष्ठन्महाम्भसि ॥ १४ ॥ वैराजोऽपि तदा सर्वाः क्रियाः कर्त्तुं शशाक सः । स एव सर्वजीवेषु हरिः साक्षितया स्थितः ॥ १५ ॥ सुषुप्तिरूपमायायाः परतोऽस्ति स च प्रभुः । तथापि तं न जानाति जीवो देहादिसङ्गतः ॥१६॥ तद्दोषेण च तादात्म्यं सम्प्राप्यैव च वर्त्तते । क्रिया देहाभिमानेन कुर्वन् दुःखायते भृशम् ॥ १७ ॥ यदा सद्गुरुवाक्येन स्वस्वरूपं ततः पृथक् । ब्रह्मैवेति विनिश्चित्य मननं कुरुते भृशम् ॥ १८ ॥ तदा तस्मिन् ब्रह्मधर्मा मननस्यानुसारतः । कृष्णध्यानप्रतापेन शनैराविर्भवन्ति हि ॥ १९ ॥

॥ १४ ॥ वैराज इति । तदा श्रीवासुदेवस्य प्रवेशकाले । सः । वैराजोऽपि । सर्वाः । क्रियाः । कर्त्तुम् । शशाक । हरिः । स श्रीवासुदेव एव । सर्वजीवेषु । साक्षितयाऽन्तर्यामितया । स्थितः । अस्ति ॥ १५ ॥ सुषुप्तीति । प्रभुः । स श्रीवासुदेवः । सुषुप्तिरूपमायायाः । परतः परएव । अस्ति । तथापि । जीवः । देहादिसङ्गतो देहेन्द्रियविषयसम्बन्धाद्धेतोः । तं स्वान्तर्यामिणं श्रीवासुदेवम् । न जानाति ॥ १६ ॥ तदिति । स जीवश्च । तद्दोषेण देहादिसङ्गदोषेण । तादात्म्यं देहादिनैकरूपताम् । सम्प्राप्यैव । वर्त्तते । देहाभिमानेन । क्रियाः । कुर्वन्सन् । भृशमतिशयेन । दुःखायते दुःखी भवति ॥ १७ ॥ यदेति । यदा । जीवः । सद्गुरुवाक्येन साक्षाद्भगवदुपासकैकान्तिकसाधूपदेशवचनेन । स्वस्वरूपम् । ततो देहादितः । पृथक् । ब्रह्म ब्रह्मरूपमेव । इतीत्थम् । विनिश्चित्य । भृशमत्यन्तम् । मननम् । कुरुते ॥ १८ ॥ तदेति । तदा । मननस्य । अनुसारतः । कृष्णध्यानप्रतापेन । तस्मिन् जीवे । ब्रह्मधर्माः । शनैः । आविर्भवन्ति । हि ॥ १९ ॥

ब्रह्मेति । यर्हि । अस्य जीवस्य । अहम् । ब्रह्म । कृष्णदासो ब्रह्मणः परस्य श्रीहरेरेकान्तिकसेवकः । अस्मि । इत्येवमेवंविधः । निश्चयः । सुदृढः । जायते । तर्हि । स मुक्तसंज्ञाम् । उपैति । हि ॥२०॥ कृष्णमिति । एष जीवः । यदा । कृष्णं प्रत्यक्षं श्रीहरिम् । विना । देवतान्तरं तदितरं ब्रह्मादिदेवम् । उपासते । तदा । देवलोकान् ये देवा उपासिताः स्युस्तल्लोकान् । याति । मुक्तिं ब्रह्मभावेन भगवत्सेवाप्तिलक्षणं मोक्षं तु । हरिसंश्रयात्प्रत्यक्षस्य श्रीहरेरेकान्तिकोपासनात् । याति ॥ २१ ॥ वैराज इति । एवमुक्तविधजीववदेव । वैराजोऽपि । द्विपरार्द्धावधि द्विपरार्द्धकालपर्यन्तम् । स्वके । देहे विराट्संज्ञे । बद्धः । अस्ति । वासुदेवध्यानात् । मुक्तिं च । उपैति ॥२२॥ सङ्कर्षणमिति । असौ वैराजः । प्रलये प्रलयावस्थायाम् । सङ्कर्षणम् । उपास्ते । अथ च । स्थितौ स्थित्यवस्थायामपि । प्रद्युम्नम् । उपास्ते । तदा । उत्पत्तावुत्पत्त्यवस्थायाम् । अनिरुद्धाख्यम् । ईश्वरम् । उपास्ते ॥ २३ ॥ सङ्कर्षणेति । वासुदेवस्य । सङ्कर्षणादयः । तिस्रः । मूर्त्तयः । गुणात्मिकास्तमआदिगुणत्रयात्मिकाः । त्रिवर्ग-

ब्रह्माहं कृष्णदासोऽस्मीत्येवं यर्ह्यस्य निश्चयः । सुदृढो जायते तर्हि मुक्तसंज्ञामुपैति हि ॥ २० ॥ कृष्णं विना यदा त्वेष उपास्ते देवतान्तरम् । देवलोकांस्तदा याति मुक्तिं तु हरिसंश्रयात् ॥ २१ ॥ वैराजोऽप्येवमेवास्ति द्विपरार्द्धावधि स्वके । देहे बद्धो वासुदेवध्यानान्मुक्तिमुपैति च ॥ २२ ॥ सङ्कर्षणमुपास्तेऽसौ प्रलयेऽथ स्थितावपि । प्रद्युम्नं च तथोत्पत्तावनिरुद्धाख्यमीश्वरम् ॥ २३ ॥ सङ्कर्षणादयस्तिस्रो वासुदेवस्य मूर्त्तयः । गुणात्मिका भवन्त्येव त्रिवर्गफलसिद्धिदाः ॥ २४ ॥ उत्पत्त्यादिकार्यसिद्धिस्तदुपासनयाऽस्य तु । भवन्त्यथो मोक्षसिद्धिर्वासुदेवैकचिन्तनात् ॥ २५ ॥ वासुदेवोपासनं च वैराजस्य न दुष्करम् । शुद्धान्तःकरणत्वेन तत्सान्निध्यस्य सम्भवात् ॥ २६ ॥ असावपि न कुर्वीत वासुदेवस्य सर्वथा । उपासनां दृढां यावत्तावन्नैव विमुच्यते ॥ २७ ॥ एवं हि साम्यमुदितमस्ति वैराजजीवयोः । तद्विदित्वा कृष्ण एव सेव्यो निःश्रेयसाय तु ॥ २८ ॥ सर्वावतारहेतुत्वं वैराजस्यैव कीर्त्तितम् । यच्छ्रीभागवते तत्तु तदन्तर्यामिणो हरेः ॥ २९ ॥

फलसिद्धिदा धर्मादित्रिवर्गव्युष्टिनिष्पत्तिप्रदा एव । भवन्ति ॥ २४ ॥ उत्पत्तीति । अस्य वैराजस्य । उत्पत्त्यादिकार्यसिद्धिस्तु । तदुपासनया सङ्कर्षणाद्युपासनेन । भवति । अथो अथ च । मोक्षसिद्धिस्तु । वासुदेवैकचिन्तनात् । भवति ॥ २५ ॥ वासुदेवेति । किञ्च । वैराजस्य । शुद्धान्तःकरणत्वेन हेतुना । तत्सान्निध्यस्य वासुदेवसमीपत्वस्य । सम्भवाद्विद्यमानत्वात् । वासुदेवोपासनाम् । दुष्करं दुःसाध्यम् । नास्ति ॥ २६ ॥ असाविति । तथापि । असौ वैराजः । यावत् । वासुदेवस्य । उपासनाम् । सर्वथा । दृढामेकान्तिकीम् । न कुर्वीत । तावत् । नैव । विमुच्यते ॥२७॥ एवमिति । एवममुना प्रकारेण । वैराजजीवयोः । साम्यं समानत्वम् । उदितम् । अस्ति । तत्तयोः साम्यम् । विदित्वा । निःश्रेयसाय स्वात्यन्तिककल्याणाय तु । कृष्ण एव । सेव्यः ॥ २८ ॥ सर्वेति । श्रीभागवते । यत् । वैराजपुरुषस्यैव । सर्वावतारहेतुत्वम् । कीर्त्तितम् । तत्तु । तदन्तर्यामिणो वैराजपुरुषस्यान्तरात्मनः । हरेः । कीर्त्तितम् ॥ २९ ॥

एतदेव स्पष्टमाह । कृष्णः । पुरुषरूपेण महापुरुषात्मना । तदन्तरे वैराजपुरुषान्तःकरणे । प्रविश्य । आस्ते । तदभेदेन महापुरुषरूपश्रीकृष्णाभेदतः । तस्माद्वैराजपुरुषरूपादेव । अवताराः । प्रकीर्त्तिताः । तथाचोक्तं श्रीभागवते । 'एतन्नानावताराणां निधानं बीजमव्ययम् । आदौ गृहीतमवतारशतैकबीजं यन्नाभिपद्मभवनादहमाविरास'मिति ॥ ३० ॥ नेति । सा श्रीभागवतोक्ता । अवतारकथा । केवलवैराजात् । नहि नैवोक्तास्ति । यद्यतो हेतोः । हर्यावेशं विना । असौ वैराजः । उत्थातुमपि । नाशकत् ॥ ३१ ॥ वैराजस्थः । पुरुषः श्रीकृष्णाविष्टोमहापुरुषः । श्रीकृष्णो यदात्मकतया वैराजपुरुषं प्रविष्टइत्यर्थः । स महापुरुषः । निरन्नोऽक्षरब्रह्मात्मकः । मुक्तो नित्यमुक्त एव । अस्ति । मायां मूलप्रकृतिम् । नियम्य । सर्वदा । तत्कार्यालिप्तो महाप्रकृतिकार्याबद्ध एव । अस्ति ॥ ३२ ॥ वैराज इति । वैराजः । पुमान् पुरुषः । मायाधीशसुतत्वतः प्रधानप्रकृत्यधिपतिपुरुषपुत्रत्वाद्धेतोः । ईशो ब्रह्मादिनियमनसमर्थः । अस्ति । मायायाः । भोगान् । भुक्त्वाऽपि प्रलये प्राकृतप्रलये । पूरुषं प्रधानप्रकृतिपतिं स्वजनकम् । याति ॥ ३३ ॥ वैराजेति । यद्यतोहेतोः । अस्य वैराजपुरुषस्य । मायया सह । सम्बन्धः । अस्ति । अतोहेतोः । असौ

कृष्णः पुरुषरूपेण प्रविश्यास्ते तदन्तरे । तदभेदेनावतारास्तस्मादेव प्रकीर्त्तिताः ॥३०॥ न हि केवलवैराजादवतारकथाऽस्ति सा । हर्यावेशं विनाऽसौ यदुत्थातुमपि नाशकत् ॥ ३१ ॥ वैराजस्थस्तु पुरुषो निरन्नो मुक्त एव सः । मायां निशम्य तत्कार्यालिप्त एवास्ति सर्वदा ॥ ३२ ॥ वैराजोऽस्ति पुमानीशो मायाधीशसुतत्वतः । भोगान्भुक्त्वाऽपि मायाया प्रलये याति पूरुषम् ॥ ३३ ॥ वैराजपुरुस्यास्य यत्सम्बन्धोऽस्ति मायया । आविर्भवत्यतः सर्गकालेऽसौ पुरुषेक्षणात् ॥ ३४ ॥ अन्यो जीवस्तु मायाया वश एव हि वर्त्तते । तद्भोगभुक्त्या दुःखी च प्रलयेऽस्यां च लीयते ॥ ३५ ॥ असंख्याता यथा सन्ति जीवात्मनस्तथैव हि वैराजा अप्यसंख्याता भवन्तीत्यवगम्यताम् ॥ ३६ ॥ ब्रह्माण्डानि हि तद्देहास्तेषां संख्या न विद्यते । ततस्तज्जीववैराजपुंसामपि न सा मता ॥ ३७ ॥ अन्तर्यामी तु सर्वेषां कृष्णात्मा पुरुषोऽस्ति यः । सत्वेक एव भगवान् वेदे ब्रह्मेति कीर्त्तितः ॥ ६८ ॥

वैराजपुरुषः । पुरुषेक्षणात् प्रधानपुरुषस्य प्रधानमायायां समीक्षणात् । सर्गकाले । आविर्भवति ॥ ३४ ॥ अन्य इति । अन्यो वैराजादितरः । जीवस्तु । मायायाः । वशेऽधीनत्वे एव । वर्त्तते । तद्भोगभुक्त्या मायाभोगोपभोगेन । दुःखी सन् । प्रलये । अस्यां मायायाम् । लीयते । हि ॥ ३५ ॥ असङ्ख्याता इति । यथा । जीवात्मानः । असङ्ख्याताः । सन्ति । तथैव । वैराजा अपि । असङ्ख्याता । भवन्ति । इतीत्थम् । अवगम्यताम् ॥ ३६ ॥ ब्रह्माण्डानीति । तद्देहा वैराजानां शरीराणि । ब्रह्माण्डानि । भवन्ति । तेषां ब्रह्माण्डानाम् । सङ्ख्या । न विद्यते । ततोहेतोः । तज्जीववैराजपुंसां ब्रह्माण्डशरीरक्षेत्रज्ञभूतवैराजपुरुषाणामपि । सा सङ्ख्या । न मता ॥ ३७ ॥ अन्तरिति । यः सर्वेषामपरिमितानां जीवानां वैराजानां च । अन्तर्यामी । कृष्णात्मा श्रीकृष्णान्तरात्मकः । पुरुषो महापुरुषः । अस्ति । एकः । स महापुरुष एव । वेदे । भगवान् । ब्रह्म । इतीत्थम् । कीर्त्तितः ॥ ३८ ॥

उत्पत्तिति । स कृष्णान्तरात्मको महापुरुषः । जगतामनेकब्रह्माण्डानाम् । उत्पत्तिस्थितिसंहारकारणं च । कीर्त्तितः । इत्थमुना प्रकारेण । उक्तवन्तम् । त श्रीहरिम् । शुकानन्दमुनिः । पप्रच्छ ॥ ३९ ॥ भगवानिति । हे हरे ! । भगवानपरिमितैश्वर्ययुक्तः । वासुदेवो महापुरुषादिसर्वान्तर्यामी । स्वतन्त्रः । परमेश्वर ईश्वरेश्वरः । त्वम् । पुरुषात्मना महापुरुषरूपेण ब्रह्माण्डजननादीनि नैकब्रह्माण्डोत्पत्त्यादीनि । करोषि ॥ ४० ॥ तत इति । ततोहेतोः । वेदे । पुरुषोत्तमः । त्वमेव । पुरुषो महापुरुषरूपः । उक्तः । अतस्तव तस्य चोत्पत्त्यादिसमानधर्मत्वाद्धेतोः । केन । विशेषेणाधिक्येन । भवतोः । द्वयोः । भिद्भिदा । बोध्या ॥ ४१ ॥ 'शुकानन्दसता पृष्टः स इत्थं पुरुषोत्तमः । सुखयंस्तं जगादेति भक्तान्स्वानपरांस्तथा' ॥ १ ॥ तयोरिति । हे मुने ! । जीववैराजयोरिव । तयोर्महापुरुषपुरुषोत्तमयोः । महानतिशयितः । भेदः । अस्ति । पुरुषो महापुरुषः । उपासकः पुरुषोत्तमस्यैकान्तिकसेवकः । अस्ति । भगवान् । हरिः पुरुषोत्तमः । उपास्यस्तदाराध्यः । अस्ति ॥ ४२ ॥ भेद इति । यथा वा वैराजतत्स्थपुरुषयोर्वैराजपुरुषस्य तदन्तर्यामिणो महापुरुषस्य चापीत्यर्थः । महान् । भेदः । भवति । एवं तयोर्महापुरुषपुरुषोत्तमयोः । महानेव

उत्पत्तिस्थितिसंहारकारणं जगतां च सः । इत्युक्तवन्तं पप्रच्छ शुकानन्दमुनिस्तु तम् ॥३९॥ भगवान्वासुदेवस्त्वं करोषि पुरुषात्मना । ब्रह्माण्डजननादीनि स्वतन्त्रः परमेश्वरः ॥ ४० ॥ ततो वेदे त्वमेवोक्तः पुरुषः पुरुषोत्तमः । अतः केन विषेशेण बोध्या भिद्भवतोर्द्वयोः ॥ ४१ ॥ श्रीहरिरुवाच – तयोरस्ति महान् भेदो जीववैराजयोरिव । उपासकोऽस्ति पुरुष उपास्यो भगवान् हरिः ॥ ४२ ॥ भेदो यथा वा वैराजतत्स्थपुरुषयोरपि । भवत्येवं तयोर्भेदो महानेवेति गम्यताम् ॥ ४३ ॥ बहवः सन्ति पुरुषा ब्रह्मरूपाश्च निर्गुणाः । पुरुषोत्तममेकं ते सेवन्ते स्वामिनं तु तम् ॥ ४४ ॥ जीवमायेशपुरुषकृष्णा इति च पञ्चकम् । अन्योन्यभिन्नं चानादि वर्त्तते मत औद्धवे ॥४५॥ वार्त्तेदृशी तु बहुशः कृताऽस्ति पुरतो हि वः । तथापि मननाभावात्सम्यक्तस्या न साऽस्फुरत् ॥ ४६ ॥ ततोऽस्या मननं कार्यं सर्वैः सम्यग्यतस्त्वसौ । शास्त्रशब्दान्तरश्रुत्या नापगच्छेत्कदाचन ॥ ४७ ॥

। भेदः । भवति । इतीत्थम् । गम्यताम् ॥ ४३ ॥ बहव इति । ब्रह्मरूपा अक्षरब्रह्मात्मकाः । निर्गुणाः । पुरुषा महापुरुषाः । बहवः । सन्ति । ते महापुरुषाः । एकम् । पुरुषोत्तमम् । स्वामिनम् । तं श्रीहरिम् । सेवन्ते ॥ ४४ ॥ जीवेति । जीवा अनादिबद्धक्षेत्रज्ञाश्च माया द्विविधाप्रकृतिश्चेशा ब्रह्माण्डविग्रहा ईश्वराश्च पुरुषा अक्षरब्रह्मरूपा महापुरुषाश्च कृष्णः श्रीहरिश्च ते । इत्येतत् । पञ्चकम् । औद्धवे । मते सिद्धान्ते । अन्योऽन्यभिन्नं परस्परभेदयुक्तम् । अनादि च । वर्त्तते ॥ ४५ ॥ वार्त्तेति । हे मुने ! । ईदृश्येवंविधा । वार्त्ता तु । वो युष्माकम् । पुरतोऽग्रे । बहुवारान् । कृता मया विहिता । अस्ति । तथापि । तस्या वार्त्तायाः । सम्यग्मननाभावात् । सा वार्त्ता । नास्फुरत् स्मृतिपथं नायाति स्म ॥ ४६ ॥ तत इति । ततोहेतोः । सर्वैर्युष्माभिः । अस्या वार्त्तायाः । मननम् । सम्यक् । कार्यम् । यतो मननात् । असौ वार्त्ता । शास्त्रशब्दान्तरश्रुत्या भेदे सत्यप्यभेदभ्रमजनकशास्त्रीयानेकशब्दश्रवणेन कदाचन । नापगच्छेत्स्वहृदयान्नापसरेत् ॥ ४७ ॥

श्रुत्वेति । इत्येवंविधाम् । सुधासमाम् । हरिणा । उदितामुक्ताम् । वाचम् । श्रुत्वा । भक्ताः । शुकाद्याः शुकानन्दप्रभृतयः । सर्वे । साधुजनाः । सर्वे । गृहस्थाश्च । तुतुषुः । ततः । ते शुकानन्दादयः साधवः । तां श्रीहरिणोदितां वार्त्ताम् । हर्षात् । लिखन्ति स्म ॥ ४८ ॥ भेदोऽनादिश्च जीवानां वैराजानां च वास्तवः । पुरुषाणां स्वस्य सर्वकारणस्य परस्परम् ॥ १ ॥ येन श्रीहरिणा प्रोक्तोऽनेकसद्युक्तितः स्फुटम् । तस्मिन्नेकान्तिकीभक्तिः सर्वदा मेऽस्तु सर्वथा ॥ २ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तक-श्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्सुतरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां शताधिकचतुःषष्टितमस्तरङ्गः ॥ १६४ ॥ ३१ ॥

या सुदुस्त्यजता स्वस्य सम्बन्धस्य कुटुम्बिनाम् । तन्मूलखननोपायो यश्चात्मनिष्ठतादिकः ॥ १ ॥ स्वधर्माद्यङ्गयुक्ताया भक्तेर्दार्ढ्यं सहेतु यत् । एतत्सर्वं समाख्यातं द्वात्रिंशे तु ततः स्फुटम् ॥ २ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । नभसः श्रावणमासस्य । शुक्ले शुक्लपक्षे । पञ्चम्यां तिथौ । इदम् । हरेः । वचो-

श्रुत्वेति वाचं हरिणोदितां ते सुधासमां साधुजनाः शुकाद्याः । भक्ता गृहस्थास्तुतुषुश्च सर्वे वार्त्तां च तां ते स्म लिखन्ति हर्षात् ॥४८॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते शताधिकचतुःषष्टितमस्तरङ्गः ॥ १६४ ॥ ३१ ॥

शकाब्दे विक्रमार्कस्य खनागवसुभूमिते । पञ्चम्यां नभसः शुक्ले वचोऽमृतमिदं हरेः ॥ १ ॥
तत्र दुर्गपुरे दुर्गे उत्तमस्य निजाश्रमे । उपाविशत्स्वासनेऽसौ वृतो भक्तैः सहस्रशः ॥ २ ॥
सिताम्बरधरः श्वेतपुष्पहारालिराजितः । श्वेतपुष्पमयापीडकर्णभूषणशोभनः ॥ ३ ॥ स उवाच
निजान्भक्ताः ! सम्बन्धः स्वकुटुम्बिनाम् । सुदुस्त्यज इतीवान्तर्भाति मेऽति विचारतः ॥४॥ स्नेहा-
नुबन्धो बन्धूनां मुनेरपि सुदुस्त्यजः । इत्यपि श्रूयते वाक्यं भक्तौ त्वेषोऽतिविघ्नकृत् ॥ ५ ॥

ऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमस्य नृपस्य । दुर्गे । निजाश्रमे प्रत्यगास्यस्वावासभवने । स्वासने वलक्षोत्तरच्छदपार्श्विकसहिते स्थूलतूलिकासने । सहस्रशः । भक्तैर्नानादेशागतैर्बहुभिस्त्यागिगृहिस्वाश्रितजनैः । वृतः सभायां परिवेष्टितः । असौ श्रीहरिः । उपाविशत् ॥ २ ॥ तं विशिनष्टि । सितेति । सिताम्बरधरः परिधृतसकलश्वेतवसनः । श्वेतपुष्पमये ये आपीडकर्णभूषणे शेखरावतंसकौ ताभ्यां शोभनो मनोहरः ॥ ३ ॥ स इति । स श्रीहरिः । निजान् । स्वकीयांस्त्यागिगृहिजनान् । उवाच । हे भक्ताः ! । स्वकुटुम्बिनाम् । सम्बन्धः स्नेहानुबन्धः । सुदुस्त्यजोऽतिदुःखेनापि त्यक्तुमशक्यः । अस्ति । एव । इतीत्थम् । अतिविचारतः । मे मम । अन्तरन्तःकरणे । भाति । अत्रेवशब्दो धीरविरक्तैकान्तिकबहुभक्तजनकृततत्त्यागमपि बोधयतीति ज्ञेयम् ॥ ४ ॥ स्नेहेति । बन्धूनां कुटुम्बिनाम् स्नेहानुबन्धः । मुनेस्त्यक्तसंसारस्य त्यागिजनस्यापि । दुस्त्यजः । अस्ति । इत्यपि एवंविधमपि । वाक्यं गोपीजनवचनम् । श्रूयते श्रीभागवते आकर्ण्यते । एष बन्धस्नेहानुबन्धस्तु । भक्तौ श्रीहरेरेकान्तिकभावेन भजने । अतिविघ्नकृदत्यन्तं विघ्नकारकः । अस्ति । अतः स सर्वथा त्याज्य इतिभावः ॥ ५ ॥

वन्धिवति । बन्धुस्नेहमयः स्वकुटुम्बिषु स्नेहरूपः । वृक्षः । जटी पर्कटीतरुरिव । सछिन्नः सन्नपि । पुनः पुनः प्ररोहति । जटीग्रहणं स्नुहिन्यग्रोधादेरुपलक्षणम् । अतोहेतोः । अस्य बन्धुस्नेहमयवृक्षस्य । मूलोत्खात आमूलादुत्खननम् । युज्यते युक्तो भवति ॥ ६ ॥ त्यक्तेति । त्यक्ता परिहृता त्रिदेहाभिमतिः स्थूलादिदेहत्रयाहन्ता येन तस्य । ब्रह्मात्मैक्यस्याक्षरब्रह्मणा सह स्वात्मन एकीभावस्य दृढीकृतिर्दृढीकारो यस्य तस्य । कृष्णभक्तेः साक्षाच्छ्रीहरेः सप्रेमश्रवणादिनवविधभजनस्य । दार्ढ्येन स्वधर्मवैराग्याभ्यां सुदृढत्वेन । युक्तस्य च भक्तस्य । स बन्धुस्नेहमूलोत्खातः । स्यात् । अन्यथोक्तविपरीतस्य भक्तस्य । न स्यात् ॥ ७ ॥ वन्धिवति । ये जनाः । बन्धुस्नेहविहीनाः सन्तः । नराकृतेः । हरेः । साङ्गां स्वधर्माद्यङ्गत्रयसहिताम् । भक्तिम् । कुर्युः । ते जनास्तु । एकान्तिकाः । भक्ताः । मताः ॥८॥ स्वधर्म इति । स्वधर्मः । आत्मनिष्ठा । मायिकार्थतो मायिकविषयेभ्यः । वैराग्यं च । एतानि स्वधर्मादीनि त्रीणि । भक्तेः । अङ्गानि । तत्पुष्टिहेतवो भक्तिवृद्धिकारणानि । सन्ति ॥९॥ एकाकिनीति । भक्तिस्तु । एकाकिनी केवला सत्येव । जीवं भक्तजनम् । तारयितुं भवाम्बुधेरुद्धारयितुम् । क्षमा । समर्था । भवति । धर्मादयः स्वधर्मप्रमुखानि त्रीणि तदङ्गानि ।

बन्धुस्नेहमयो वृक्षः संछिन्नोऽपि पुनः पुनः । प्ररोहति जटीवातो मूलोत्खातोऽस्य युज्यते ॥ ६ ॥ त्यक्तत्रिदेहाभिमतेर्ब्रह्मात्मैक्यदृढीकृतेः । दार्ढ्येन कृष्णभक्तेश्च युक्तस्य स्यात्स नान्यथा ॥ ७ ॥ बन्धुस्नेहविहीना ये साङ्गां भक्तिं नराकृतेः । हरेः कुर्युर्जनास्ते तु भक्ता एकान्तिका मताः ॥ ८ ॥ स्वधर्म आत्मनिष्ठा च वैराग्यं मायिकार्थतः । अङ्गान्येतानि भक्तेर्वै सन्ति तत्पुष्टिहेतवः ॥९॥ एकाकिन्येव भक्तिस्तु जीवं तारयितुं क्षमा । देशकालादिवैषम्ये पान्ति धर्मादयश्च ताम् ॥१०॥ भक्त्या केवलयैवासन्मुक्ता वै बहवो नराः । धर्मादीनां तु साहाय्ये निर्विघ्ना सा भवेद् ध्रुवम् ॥११॥ धर्माद्यैः केवलैर्मुक्तिर्न स्याद्भक्त्या तु सा भवेत् । एतावान् हि विशेषोऽत्र विज्ञातव्यो मुमुक्षुणा ॥ १२॥ श्रेयांसि बहुविघ्नानि भवन्तीतिस्मृतेर्बुधाः । धर्माद्यैः सहितामेव कृष्णे विदधते हि ताम् ॥१३॥ कुर्वद्भिर्भगवद्भक्तिं देशकालादयः शुभाः । सेवनीयाः प्रयत्नेन नाशुभास्तु कदाचन ॥१४॥

भक्त्येति । केवलयैव । भक्त्या । बहवः । नराः । मुक्ता । आसन् । वै । धर्मादीनामङ्गानाम् । साहाय्ये सहायत्वे सति तु । सा भक्तिः । ध्रुवं निश्चितमेव । निर्विघ्ना । भवेत् ॥११॥ धर्मेति । केवलैर्भक्तिवर्जितैः । धर्माद्यैः त्रिभिः । मुक्तिर्मोक्षः । न स्यात् । भक्त्या केवलया श्रीहरिभक्त्या तु । सा मुक्तिः । भवेत् । अत्र केवलेषु धर्मादिषु केवलायां भक्तौ च विषये । एतावान् । विशेषः । मुमुक्षुणा भक्तेन । विज्ञातव्यः ॥ १२ ॥ श्रेयासि श्रेयःकार्याणि । बहुविघ्नानि । भवन्ति । इत्येवंविधायाः । स्मृतेः स्मृतिवाक्याद्धेतोः । बुधा विवेकिनो भक्ताः । कृष्णे प्रत्यक्षे श्रीहरौ विषये । तां भक्तिम् । धर्माद्यैः । सहितामेव । विदधते कुर्वते । हि ॥ १३ ॥ कुर्वद्भिरिति । भगवद्भक्तिं धर्माद्यङ्गत्रयेण सह साक्षाच्छ्रीहरेर्भक्तिम् । कुर्वद्भिः । भक्तैः । शुभाः । देशकालादयः । प्रयत्नेन । सेवनीयाः । अशुभा देशकालादयस्तु । कदाचन कर्हिंचिदपि न सेवनीयाः ॥ १४ ॥

देशकालादिवैषम्ये देशादिविषमयीभावेन तत्र विघ्ने सञ्जाते सति । तां भक्तिम् । पान्ति रक्षन्ति ॥ १० ॥

श्रुत्वेति । इत्येवंविधाम् । तस्य श्रीहरेः । अमृततुल्यवाचम् । श्रुत्वा । सभोपविष्टाः । तदनुव्रताः । ये साधुगृहस्थभक्ताः । ते सर्वेऽपि । भूरितरम् । प्रहर्षम् । प्रपेदिरे ॥ १५ ॥ बन्धुस्नेहत्यागपूर्वं स्वस्मिन्नैकान्तिकीं हरिः । कार्यां भक्तिं य ऊचे स्वैः स तामेव ददातु मे ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहरिकृष्णोपासक-श्रीहरिकृष्णभगवत्स्नुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां शताधिकपञ्चषष्टितमस्तरङ्गः ॥ १६५ ॥ ३२ ॥

श्रीहरिर्भक्तशिक्षार्थमुक्त्वा भावं स्वकं ततः । ब्रह्मचर्यव्रतस्यैव श्रैष्ठ्यं स्वप्रियता च या ॥ १ ॥ व्रतस्यास्य दृढीकारे साधनानां त्रयं च यत् । एतत्सर्वं त्रय-स्त्रिंशे सुस्पष्टं निजगाद सः ॥ २ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८८०) नभःकृष्णत्रयोदश्यां श्रावणमासीयकृष्णपक्षत्रयोदशीतिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमस्य राज्ञः । दुर्गे । निजाश्रमे स्वाश्रमे । स्वासने स्वकीयोत्तममश्चासते । सितसर्वाम्बरधरः । स श्रीहरिः । उपाविशत् ॥ २ ॥ त्यागिभिरिति । पुरःस्थैः सभायां स्वाग्रे निषण्णैः । त्यागिभिः । गृहिभिः । भक्तैर्नानादेशागतैः स्वभक्तजनैः । वीक्षितानननश्चन्द्रचकोरन्यायेन सन्दृष्ट-

श्रुत्वेति तस्यामृततुल्यवाचं सभोपविष्टास्तदनुव्रता ये । सर्वेऽपि ते साधुगृहस्थभक्ताः प्रपेदिरे भूरितरं प्रहर्षम् ॥ १५ ॥

इति हरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते शताधिकपञ्चषष्टितमस्तरङ्गः ॥ १६५ ॥ ३२ ॥

शकाब्दे विक्रमार्कस्य खनागवसुभूमिते । नभःकृष्णत्रयोदश्यां वचोऽमृतमिदं हरेः ॥ १ ॥ तत्र दुर्गपुरे दुर्गं उत्त-मस्य निजाश्रमे । सितसर्वाम्बरधरः स्वासने स उपाविशत् ॥ २ ॥ त्यागिभिर्गृहिभिर्भक्तैः पुरःस्थैर्वीक्षिताननः । स्वयमेवाब्रवीत्प्रीतः स तानानन्दयन् गिरा ॥ ३ ॥ कृष्णं भजामः सर्वेऽपि वयं तत्र पृथक् पृथक् । स्वं स्वं भावं कथ-यत येन भक्तिः प्रतन्यते ॥४॥ भावं मदीयं तत्रादौ यूयं शृणुत वच्म्यहम् । कृष्णेतरपदार्थे मे प्रीतिर्नास्त्येव कुत्रचित् ॥ ५ ॥ तत्र प्रीतिं यदा विद्यां तं जह्यां तर्हि तत्क्षणम् । अन्यथा मे सुखं न स्यात्स्मरेयं च न तं पुनः ॥ ६ ॥

मुखपङ्कजः । स श्रीहरिः । प्रीतोऽन्तर्यामितया साक्षाच्च स्ववचनपालनसुस्थिरतां वीक्ष्यातिप्रसन्नः सन् । तान्स्वभक्तान् । गिरा स्ववाक्सुधया । आनन्दयन्सन् । स्वयमेव । अब्रवीत् ॥ ३ ॥ कृष्णमिति । हे भक्ताः ! । वयम् । सर्वेऽपि । कृष्णम् । भजामः । तत्र कृष्णभजने । पृथक् । पृथक् । स्वं स्वं स्वकीयम् स्वकी-यम् । भावमभिप्रायम् । कथयत । येन भावेन । भक्तिः । प्रतन्यते वृद्धिं नीयते । तमिति सम्बन्धः ॥ ४ ॥ भावमिति । तत्र तेष्वस्मासु मध्ये । अहम् । आदौ प्रथमतः । मदीयम् । भावम् । वच्मि । यूयम् । शृणुत । हे भक्ताः ! । मे मम । कुत्रचित्कस्मिंश्चिदपि । कृष्णेतरपदार्थे । प्रीतिः । नास्त्येव ॥ ५ ॥ तत्रेति । यदा यर्हि । तत्र कृष्णेतरपदार्थे । प्रीतिमल्पमप्यनुरागम् । विद्याम् । तर्हि तं पदार्थम् । तत्क्षणमेव । जह्याम् । अन्यथा तत्त्यागं विना । मे मम । सुखम् । न स्यात् । तं त्यक्तं पदार्थम् । पुनः । न स्मरेयम् ॥ ६ ॥

यादृश इति । ये जनः । यादृशः । तादृशः । जात्यादिना यथा तथाविधोऽपीत्यर्थः । कृष्णभक्तः साक्षाद्भगवद्भक्तः । भवेत् । तद्भक्तिवीक्षणात्तदीयां साक्षाद्भगवद्दृढ-भक्तिनिष्ठां वीक्ष्येत्यर्थः । तस्मिन्भक्ते । मम । अरुचिः । न भवेत् ॥७॥ नेति । मे मम । हृदि । पञ्चानाम् । विषयाणां मायिकार्थानाम् । एषणा प्राप्तीच्छा । क्वचित्कदा-चिदपि । नास्ति । अनिच्छया यदृच्छातः । बलात् । प्राप्तान् । तान्विषयान् । अहम् । नैव गणयामि तदुपादानादरं न करोमि तांस्तुच्छानेव वेद्मीति यावत् ॥८॥ जन्मत इति । जन्मतो मत्प्रादुर्भावदिनमारभ्य । यावत् । अद्य दिनम् । एतद्दिनपर्यन्तमित्यर्थः । मम । स्वप्ने । अपि शब्दाज्जाग्रति च । कर्हिचित्कदाचिदपि । स्त्रीद्रव्यसम्बन्धि-भोगसङ्कल्पसम्भवः । नहि नास्त्येव ॥९॥ अखण्डमिति । मे मम । मनः । भगवत्स्वरूपे । अखण्डं निरन्तरम् । सदा सर्वकालम् । वर्त्तते । नृणां मदाश्रितानां सर्वेषां युष्माकम् । हिताय मय्यनुरागवृध्या हितं कर्त्तुमेव । बाह्यत उपरिष्टात्तु । तत्स्नेहं तेषु भवत्सु प्रीतिम् । ईक्षये दर्शयामि ॥१०॥ एवमिति। एवममुना प्रकारेण । भगवत्प्रीत्यै । विहितो मया कृतः । यः । दृढः । मे मम । भावः । अस्ति । स मद्भावः । वो युष्मभ्यम् । यथावद्यथार्थतया । कथितः । अथानन्तरम् । यूयम् । आत्मनः

यादृशस्तादृशो वाऽपि कृष्णभक्तो भवेत्तु यः । अरुचिर्न भवेत्तस्मिन्मम तद्भक्तिवीक्षणात् ॥ ७ ॥ नास्त्येषणा मे पञ्चानां विषयाणां हृदि क्वचित् । अनिच्छया बलात्प्राप्तांस्तान्नैव गणयाम्यहम् ॥ ८ ॥ जन्मतोऽद्यदिनं यावत्स्वप्नेऽपि मम कर्हिचित् । न हि स्त्रीद्रव्यसम्बन्धिभोगसङ्कल्पसम्भवः ॥ ९ ॥ अखण्डं भगवद्रूपे मनो मे वर्त्तते सदा । बाह्य-तस्तु हितायैव नृणां तत्स्नेहमीक्षये ॥ १० ॥ एवं हि भगवत्प्रीत्यै भावो मे विहितो दृढः । कथितः स यथावद्वो यूयं ब्रूतात्मनोऽथ तम् ॥ ११ ॥ ततो यथायथं सर्वे स्वं स्वं भावं तमब्रुवन् । धर्मे ज्ञाने विरागादौ वृत्तिं भक्तौ पृथक् पृथक् ॥ १२ ॥ भावं श्रुत्वा स भक्तानां तानुवाच पुनः प्रभुः । धर्माः सर्वेऽपि राजन्ते ब्रह्मचर्यव्रतेन वै ॥ १३ ॥ यत्नेनापि कृता धर्मास्तद्विना न फलप्रदा । देहे जीव इवैतद्धि धर्मेषु निखिलेष्वपि ॥ १४ ॥

स्वस्य स्वस्य । तं भावम् । ब्रूत कथयत ॥ ११ ॥ तत इति । ततस्तदनन्तरम् । सर्वे ते भक्तजनाः । स्वं स्वं स्वकीयं स्वकीयम् । भावमभिप्रायम् । यथायथं यथार्थ-तया । पृथक् । पृथक् । तं श्रीहरिम् । अब्रुवन् । तं भावमाह । धर्मे । ज्ञाने । विरागादौ । आदिशब्देन शम दमादेर्ग्रहणम् । भक्तौ भगवति शुस्नेहरूपायां श्रवणादि-नवविधायां चेत्यर्थः । वृत्तिं वर्त्तनरूपम् । भावमब्रुवन्निति सम्बन्धः ॥ १२ ॥ भावमिति । प्रभुः । स श्रीहरिः । भक्तानां सर्वेषां तेषां स्वाश्रितजनानाम् । भावम् । श्रुत्वा । तान् भक्तान् । पुनः । उवाच । हे भक्ताः ! । सर्वेऽपि । धर्मा भवदुक्ता धर्मज्ञानादयो भगवद्भक्तगुणाः । ब्रह्मचर्यव्रतेन निष्कामनालक्षणेन ब्रह्मचर्याख्यव्रतेन । राजन्ते संशोभन्ते ॥ १३ ॥ यत्नेति । यत्नेन महाप्रयासेन । कृता अनुष्ठिता अपि । धर्माः । तद्विना ब्रह्मचर्यव्रतमृते । फलप्रदाः । न स्युः । देहे । जीव इव । निखि-लेष्वपि । धर्मेषु । एतद्ब्रह्मचर्यम् । अस्ति । हि । जीवं विना देहो यथा न तिष्ठेत्तथाब्रह्मचर्यं विना ते धर्मा अपि न तिष्ठेयुरितिभावः ॥ १४ ॥

ब्रह्मचर्येति । ब्रह्मचर्यवतां निष्कामव्रतिनां भक्तानामेव । अत्र लोके । परत्र परस्मिन् लोके चापि । भगवान् श्रीहरिः । दूरे विप्रकृष्टः । नास्ति । किन्तु समीप एव तिष्ठतीत्यर्थः । तस्माद्धेतोः । तद्ब्रह्मचर्यव्रतम् । सर्वाधिकं सर्वधर्मेभ्योऽतिश्रेष्ठम् । अस्ति । हि । तथाचोक्तं छान्दोग्ये । 'तद्य एवैतं ब्रह्मलोकं ब्रह्मचर्येणानुविन्दती'त्यादिना मोक्षधर्मे च । 'यदिदं ब्रह्मणो रूपं ब्रह्मचर्य'मितिस्मृतम् । 'परं तत्सर्वधर्मेभ्यस्तेन याति परां गति'मिति ॥ १५ ॥ अष्टेति । अहम् । यत्र यस्मिन् । नरे भक्ते । अष्टाङ्गम् । ब्रह्मचर्यम् । पश्यामि । तस्मिन् भक्ते । मम । स्वाभाविकी सहजा । अचला स्थिरा । प्रीतिः । वर्तते ॥ १६ ॥ प्रायश इति । अत्रत्यभक्तेषु दुर्गपुरीयोत्तमनृपदुर्गावासेषु रमाजयाललितादिभक्तजनेषु । प्रायशः । ब्रह्मचर्यस्य । दर्शनात् । ममातिनिःस्पृहस्य मेऽपि । अत्रास्मिन् । पुरे दुर्गनगरे । वासो निवासः । भवति । इत्यवगम्यताम् ॥ १७ ॥ ब्रह्मचर्यमिति । यस्य भक्तस्य । ब्रह्मचर्यम् । दृढम् । अस्ति । स भक्तः । दूरस्थःसन्नपि । मे मम । अन्तिके समीपे एव । वर्तते । अथ च । तद्धीनो ब्रह्मचर्यरहितो भक्तस्तु । अन्तिकस्थो मत्समीपावस्थितः सन्नपि । अतिदूरगो मत्तोऽतिदूरप्रदेशावस्थितः । वर्त्तते ॥ १८ ॥ ब्रह्मचर्येति । ब्रह्मचर्यव्रतवतो भक्तस्य ।

ब्रह्मचर्यवतामेव लोकेऽत्रापि परत्र च । न दूरे भगवानस्ति तस्मात्सर्वाधिकं हि तत् ॥ १५ ॥ अष्टाङ्गं यत्र पश्यामि ब्रह्मचर्यमहं नरे । तस्मिन् स्वाभाविकी प्रीतिरचला मम वर्त्तते ॥ १६ ॥ प्रायशोऽत्रत्यभक्तेषु ब्रह्मचर्यस्य दर्शनात् । ममाप्यत्र पुरे वासो भवतीत्यवगम्यताम् ॥ १७ ॥ ब्रह्मचर्यं दृढं यस्य स दूरस्थोऽपि मेऽन्तिके । वर्त्ततेऽथान्तिकस्थोऽपि तद्धीनस्त्वतिदूरगः ॥ १८ ॥ ब्रह्मचर्यव्रतवतः सेवा मे रोचते भृशम् । अतो मुकुन्दवर्णीन्द्रसेवा मे सर्वदा प्रिया ॥१९॥ एतावत्कालपर्यन्तं मयाऽप्येतद्व्रतं दृढम् । क्रियते कार्यते चान्यैस्तद्वार्त्ता क्रियते भृशम् ॥ २० ॥ ब्रह्मचर्यच्युतिं यस्य वीक्षे तस्मिन्ममारुचिः । भृशं सद्यो भवति वै चित्ते खेदोऽपि तेन च ॥ २१ ॥ वन्ध्यस्य पुंसः पुत्रः स्याद्वार्द्धके तन्मृतावथ । तस्य यादृग्भवेच्छोकस्तस्य मेऽपि तथा भवेत् ॥ २२ ॥

सेवा तेन कृता परिचर्येत्यर्थः । मे मह्यम् । भृशमतिशयेन । रोचते । अतोहेतोः । मुकुन्दवर्णीन्द्रसेवा मुकुन्दानन्दाख्यवर्णिवरकृता परिचर्या । मे मम । सर्वदा सर्वकालम् । प्रिया प्रीतिजनिकाऽस्ति ॥ १९ ॥ एतावदिति । मया । एतावत्कालपर्यन्तं यस्मिन्दिनेऽहं प्रादुर्भूतस्तद्दिनमारभ्यैतद्दिनावध्यपि । एतद्ब्रह्मचर्याख्यम् । व्रतम् । दृढम् । क्रियते । अन्यैः । कार्यते । तद्वार्त्ता दृढब्रह्मचर्यव्रतरक्षणगोष्ठी । भृशमतिशयेन । क्रियते ॥ २० ॥ ब्रह्मचर्येति । यस्य भक्तस्य । ब्रह्मचर्यच्युतिं ब्रह्मचर्यव्रतभङ्गम् । वीक्षे पश्यामि । तस्मिन् । भक्ते । मम । सद्यः । भृशम् । अरुचिः । भवति जायते । तेन महाफलं संसाधकस्य तदीयब्रह्मचर्यव्रतस्य भङ्गदर्शनेन । चित्ते मम मानसे । खेदश्चापि । भवति ॥ २१ ॥ वन्ध्यस्येति । वन्ध्यस्याप्रजस्य । पुंस इभ्यनरस्य । वार्द्धके वृद्धावस्थायाम् । पुत्रः । स्याज्जायेत । अथानन्तरम् । तन्मृतौ सत्यां तस्य पुत्रस्य मरणे सति । तस्य वन्ध्यपुरुषस्य । यादृग्यथाविधः । शोकः । भवेत् । मे ममापि । तस्य ब्रह्मचर्यच्युतस्य भक्तस्य । तथाविधः शोकः । भवेत् ॥ २२ ॥

अत इति । अतोहेतोरेव । कस्यचिद्भक्तस्य । ब्रह्मचर्यच्युतेर्ब्रह्मचर्यव्रतभङ्गसम्बन्धिनी । वार्ताऽपि । मे मम । अग्रतः । न कार्या । इतीत्थम् । मया । यूयम् । पुरा प्रथमत एव । प्रोक्ता ॥ २३ ॥ अथेति । अथैवंविधश्रीहरिवार्ताश्रवणानन्तरम् । हरजिदुत्तमनृपामात्य एतन्नामा भक्तः । विनयानतो विनयेनकृतप्रणामः सन् । तं श्रीहरिम् । पप्रच्छ । हे स्वामिन् ! । ब्रह्मचर्यं । केन । उपायेन । दृढं सत् । सिध्यति ॥ २४ ॥ तमिति । तमेवं पृच्छन्तं हरजिद्भक्तम् । हरिः । उवाच । हे भक्त ! । तत्र ब्रह्मचर्यव्रतदृढीकरणे तु । भूरिशो बहवः । उपायाः । सन्ति । तत्र तेषु भूर्युपायेषु मध्येऽपि । मुख्यम् । साधनत्रयम् । ते तुभ्यम् । कथये । त्वम् । शृणु ॥ २५ ॥ आद्यमिति । तत्र त्रिषु साधनेषु मध्ये आद्यं प्रथमं साधनम् । मनोजयोऽस्ति । स मनोजयस्तु । आत्मनिष्ठया देहत्रयविलक्षणस्य स्वात्मनो मननस्य वैराग्यपूर्वमभ्यासबलेन तत्र स्थित्या । स्यात् । अथवा । कृष्णस्य । नवधाभक्तौ । मनसः । योजनेन । मनोजयः । स्यात् ॥ २६ ॥ भक्तौ मनोयोजनं भूतदृष्टान्तेनाह चतुर्भिः । यथेति । यथा । कस्यचित् । पुंसः । कश्चित् । भूतः । वशे । भवेत् । चेद्यदि । तं भूतम् । क्षणं क्षणमात्रकालमपि । स्वतन्त्रम् । कुर्यात् ।

अत एव ब्रह्मचर्यच्युतेर्वार्ताऽपि कस्यचित् । न कार्या मेऽग्रत इति यूयं प्रोक्ता मया पुरा ॥ २३ ॥ अथ तं हरजिद्भक्तः पप्रच्छ विनयानतः । ब्रह्मचर्यं दृढं स्वामिन् ! केनोपायेन सिद्ध्यति ॥ २४ ॥ तमुवाच हरिस्तत्र सन्त्युपायास्तु भूरिशः । तत्रापि मुख्यं कथये शृणु ते साधनत्रयम् ॥ २५ ॥ आद्यं मनोजयस्तत्र स तु स्यादात्मनिष्ठया । कृष्णस्य नवधाभक्तौ मनसो योजनेन वा ॥ २६ ॥ यथैव कस्यचित् पुंसो भूतः कश्चिद्वशे भवेत् । तं स्वतन्त्रं क्षणमपि कुर्याच्चेद्भक्षयेत्स तम् ॥ २७ ॥ तथा मनः स्वतन्त्रं चेत्कुर्यात्क्षणमपीह यः । रहितं कृष्णभक्त्या तत् तमेव भृशमर्दयेत् ॥ २८ ॥ अतो यथा भूतपतिर्भूतं कर्मसु सर्वदा । नियोजयेन्मनस्तद्वद्योज्यं कार्ष्णे तु कर्मणि ॥ २९ ॥ श्रवणे कीर्त्तने वापि स्मरणे वाऽर्चनादिषु । कृष्णस्यैव मनो योज्यं न स्वातन्त्र्ये तु तत्क्वचित् ॥३०॥ एवं मनो जयेन स्याद् ब्रह्मचर्यं तु दृढम् । अष्टाङ्गयोगाभ्यासेन भवेत् तच्च दृढं तथा ॥३१ ॥

तर्हि । स भूतः । तं पुमांसम् । भक्षयेत् ॥ २७ ॥ तथेति । तथा । इह सत्सङ्गे । यो भक्तः । चेद्यदि । मनः । क्षणमपि । कृष्णभक्त्या । रहितं सत् । स्वतन्त्रम् । कुर्यात् । तर्हि । तत्तथाविधं मनः । तं भक्तम् । भृशमतिशयेनैव । अर्दयेत्कामादिसङ्कल्पेन पीडयेत् ॥ २८ ॥ अत इति । अतो हेतोः । यथा । भूतपतिर्यस्य भूतो वशे भवेत्स पुमान् । भूतम् । सर्वदा । कर्मसु येषु केषुचित्कृत्येषु । नियोजयेत् । तद्वत्तथा । मनः कार्ष्णे कृष्णसम्बन्धिनि कर्मणि । सर्वदा । योज्यं भक्तेन योजनीयम् ॥ २९ ॥ एतदेव स्पष्टमाह । श्रवण इति । कृष्णस्य भगवतः । श्रवणे कथावार्तादिश्रुतौ । अथवा । कीर्त्तने गुणचरित्रगायने । स्मरणे तन्मूर्त्तेः सर्वाङ्गतयैकैकाङ्गतया च चिन्तने । अथवा । अर्चनादिषु भक्त्यङ्गेषु । मनः । योज्यमेव । तन्मनः । स्वातन्त्र्ये श्रवणादिभक्तिं विना स्वतन्त्रभावे तु । क्वचित्कदाचिदपि । नैव योज्यम् ॥ ३० ॥ एवमिति । एवमुक्तप्रकारद्वयेन । मनोजयेन । तत् । ब्रह्मचर्यम् । दृढम् । स्यात् । अथ ब्रह्मचर्यदृढीकारे द्वितीयं साधनमाह सार्द्धेन । तथा तेन प्रका-

रेणैव । अष्टाङ्गयोगाभ्यासेन । तद्ब्रह्मचर्यम् । दृढम् । भवेत् ॥ ३१ ॥ आहारेति । तत्राष्टाङ्गयोगाभ्यासबोधके । योगशास्त्रे । आहारनियमः । प्रकीर्त्तितः । तेनाहारनियमेन । प्राणायामः । सिध्येत् । ततः प्राणायामसिध्या । तद्दार्ढ्यं ब्रह्मचर्यव्रतदृढता । भवेत् ॥३२॥ तृतीयमिति । स्वधर्मेषु निष्कामशुध्याद्युदितेषु । नियमेषु दृढम् । स्थितिः । तृतीयम् । साधनम् । अस्ति । तैः स्वधर्मैः । देहस्य नियमान्नियमनात् । तद्दार्ढ्यम् । ध्रुवं निश्चितमेव । भवति ॥ ३३ ॥ एवमिति । एवममुना प्रकारेण । त्रिभिः । साधनैः । मनःप्राणशरीराणाम् । नियमने । जाते सति तु । ब्रह्मचर्यम् । दृढम् । भवेत् ॥ ३४ ॥ नेति । हे भक्त ! । नित्यम् । अभ्यासशीलिनामभ्यासमाचरताम् । पुंसां भक्तानाम् । एतत्साधनत्रयम् । दुष्करं दुःसाध्यम् । नहि नास्त्येव । तदुद्योगैकचेतसां ब्रह्मचर्यव्रतदृढीकारोद्युक्तमनसाम् । साधूनां त्यागिभक्तानां तु । विशेषेण । एतत् । दुष्करम् । नास्त्येव ॥ ३५ ॥ अनेनेति । यदि । अभ्यासः । क्रियते । तदा । सोत्साहमनसामुत्साहयुक्तमानसानाम् । पुंसां भक्तानाम् । अनेन । नरदेहेन । किञ्चन किमपि । दुष्करम् । नास्ति ॥ ३६ ॥ एतदेव दृष्टान्तेन द्रढयति द्वाभ्याम् । शब्देति । अत्र लोके । यद्वद्यथा । शब्दार्थकठिनमपि दुर्बोधानां

आहारनियमस्तत्र योगशास्त्रे प्रकीर्त्तितः । प्राणायामस्तेन सिद्ध्येत्तद्दार्ढ्यं च भवेत्ततः ॥३२॥ तृतीयं साधनं त्वस्ति स्वधर्मेषु स्थितिर्दृढम् । तैश्च देहस्य नियमात्तद्दार्ढ्यं भवति ध्रुवम् ॥३३॥ एवं त्रिभिः साधनैस्तु जाते नियमने सति । मनःप्राणशरीराणां ब्रह्मचर्यं दृढं भवेत् ॥३४॥ न ह्येतद् दुष्करं पुंसां नित्यमभ्यासशीलिनाम् । साधूनां तु विशेषेण तदुद्योगैकचेतसाम् ॥३५॥ अनेन नरदेहेन नास्ति किञ्चन दुष्करम् । सोत्साहमनसां पुंसामभ्यासः क्रियते यदि ॥ ३६ ॥ शब्दार्थकठिनं काव्यमप्यत्राभ्यासदार्ढ्यतः । सुसाध्यं जायते यद्वत्पठनादृतचेतसाम् ॥३७॥ मुमुक्षूणामपि तथा मनःस्थैर्यादिवाञ्छितम् । अभ्यासदार्ढ्येन नृणां सिद्ध्यत्येव न संशयः ॥३८॥ सुधासमानामिति तस्य वाचं निशम्य भक्तः स तु हर्षमापत् । अन्येऽपि सर्वे मुनयः सदःस्थाः प्रापुश्च तोषं गृहिणोऽपि भक्ताः ॥ ३९ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते शताधिकषट्षष्टितमस्तरङ्गः ॥ १६६ ॥ ३३ ॥

शब्दानामर्थानां च संनिवेशेन कठिनतामापादितमपि । काव्यं केनचिन्महाकविना विहितः सन्दर्भविशेषः । पठनादृतचेतसामध्ययनादरवन्मनसां छात्रजनानाम् । अभ्यासदार्ढ्यतः । सुसाध्यम् । जायते ॥ ३७ ॥ मुमुक्षूणामिति । तथा । मुमुक्षूणाम् । नृणां भक्तानामपि । अभ्यासदार्ढ्येन । वाञ्छितम् । मनःस्थैर्यादि मनोजयप्रभृतिकं साधनत्रयम् । सिध्यत्येव । न संशयः ॥ ३८ ॥ सुधेति । इत्येवंविधाम् । सुधासमानाम् । तस्य श्रीहरेः । वाचम् । निशम्यः । सः । भक्तो हरजिदाख्यः । हर्षम् । आपत् । सदःस्थाः । भक्ताः । अन्ये । सर्वेऽपि । मुनयः । गृहिणश्चापि । तोषम् । प्रापुः ॥ ३९ ॥ उक्त्वा स्वभक्तशिक्षार्थं स्वाभिप्रायं व्रतस्य तु । ब्रह्मचर्यस्य मुख्यत्वं तस्य स्वप्रियतां तथा ॥ १ ॥ दृढीकारे साधनानि तस्य स्वेषां च यो हरिः । स्वेभ्यः प्रोवाच तद्दार्ढ्यं सर्वथा मे ददातु सः ॥ २ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्स्वतुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां शताधिकषटषष्टितमस्तरङ्गः ॥ १६६ ॥ ३३ ॥

कार्यकारणभेदेन तत्त्वान्युक्तानि वै द्विधा । जडानि चिद्रूपाणीति चतुस्त्रिंशे ततः स्फुटम् ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८८०) भाद्रशुक्लप्रतिपदि भाद्रपदमासीयधवलपक्षस्याद्यतिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमस्य । महीभुजः । दुर्गे । पूर्वास्यवेश्मनः पूर्वद्वारीयतद्गृहस्य । वेद्यां वाह्यवेदिकायाम् । शुभासने पार्श्विकश्वेतोत्तरच्छदसहितपर्यङ्कासने श्रीहरिः । न्यषीदत् ॥ २ ॥ भक्तेति । भक्तमण्डलमध्यस्थो नानादेशागतत्यागिगृहिस्वाश्रितसमूहसभामध्यप्रदेशावस्थितः । सिताम्बरधरः परिहितसकलश्वेतवसनः । स श्रीहरिः । सद्गीतकृष्णपद्यानि मुक्तानन्दादिमुनिसवाद्यसंगीतसाक्षाद्भगवद्गुणयशोऽङ्कितभाषावद्धप्रवन्धान् । श्रुत्वा । हृष्टोऽतिमुदितः सन् । सतो मुक्तानन्दादिमुनीम् । अव्रवीत् ॥ ३ ॥ तत्त्वैरिति । हे साधवः ! । जीवस्य । प्रतिवर्ष्म प्रतिशरीरम् । तत्त्वैः पृथिव्यादिभिः सह । सम्बन्धः । अस्ति । तानि तत्त्वानि । जडानि । सन्ति । अथवा । चेतनानि । सन्ति । इत्येतत् । कथ्यताम्

शकाब्दे विक्रमार्कस्य खनागवसुभूमिते । भाद्रशुक्लप्रतिपदि वचोऽमृतमिदं हरेः ॥ १ ॥ तत्र दुर्गपुरे दुर्गे
उत्तमस्य महीभुजः । पूर्वास्यवेश्मनो वेद्यां न्यषीदत्स शुभासने ॥२॥ भक्तमण्डलमध्यस्थः सिताम्वरधरः स च ।
सद्गीतकृष्णपद्यानि श्रुत्वा हृष्टोऽब्रवीत्सतः ॥ ३ ॥ तत्त्वैः सहास्ति सम्बन्धो जीवस्य प्रतिवर्ष्म हि । जडानि
तानि वा सन्ति चेतनानीति कथ्यताम् ॥ ४ ॥ अथोचुः साधवस्तानि चिद्रूपाणीति भाति नः । अन्यथा
यज्ञभागोऽपि पृथ्व्यादीनां न सम्भवेत् ॥ ५ ॥ तानुवाचाथ भगवांस्तत्त्वानि यदि साधवः ! । चिद्रूपाणि तदा
देहे भवेयुस्तानि जीववत् ॥ ६ ॥ पञ्चविंशतिसंख्याः स्युर्जीवास्तर्ह्येकवर्ष्मणि । भोक्तृत्वं सुखदुःखानां सर्वेषां च
भवेत्समम् ॥ ७ ॥ सम्बन्धः कर्मणां चापि तथैकस्य न सम्भवेत् । श्रेयोऽपि भागशो भाव्यं सर्वेषामेकसाधितम्
॥ ८ ॥ एवं तु दृश्यते नैव श्रूयते च न हि क्वचित् । एकाकिनां तु मुक्तत्वं श्रूयते प्राक्सतामपि ॥ ९ ॥

॥ ४ ॥ अथेति । अथैवंविधश्रीहरिवाक्यश्रवणानन्तरम् । साधवः । ऊचुः । हे हरे ! । तानि तत्त्वानि । चिद्रूपाणि । सन्ति । इतीत्थम् । नोऽस्माकम् । भाति । अन्यथा तेषां चिद्रूपत्वाभावे । पृथ्व्यादीनां तत्त्वानाम् । यज्ञभागो यज्ञे प्रदेयो हविर्भागोऽपि । न सम्भवेत् ॥ ५ ॥ तानिति । अथानन्तरम् । तानेवंवदतः साधून् । भगवान् स्वयं श्रीहरिः । उवाच । हे साधवः ! । यदि । तत्त्वानि । चिद्रूपाणि चेतनानि । भवेयुः । तदा । देहे । तानि तत्त्वान्यपि । जीववत् । भवेयुः ॥ ६ ॥ पञ्चेति । तर्हि तत्त्वानां जीववद्भावे सति । एकवर्ष्मण्येकस्मिन्देहे । पञ्चविंशतिसङ्ख्याः । जीवाः । स्युः । सुखदुःखानाम् । भोक्तृत्वं च । सर्वेषां पञ्चविंशतिजीवानामपि । समं तुल्यमेव । भवेत् ॥ ७ ॥ सम्बन्ध इति । तथा । कर्मणाम् । सम्बन्धश्चापि । एकस्य जीवस्य न सम्भवेत् । एकसाधितं सर्वेषां मध्ये मुख्येन एकेन जीवेन सम्पादितम् । श्रेयोऽपि । सर्वेषाम् । भागशो विभागेन । भाव्यं भवितुं योग्यं स्यात् ॥ ८ ॥ एवमिति । एवमुक्तप्रकारेण तु । क्वचित्कस्मि-

श्चिच्छास्त्रेऽपि । नैव दृश्यते । नैव । श्रूयते । प्राक्सतां प्राचीनानां शुकनारदादिसाधूनामपि । एकाकिनां चतुर्विंशतीस्वदेहीयतत्त्ववर्जितानां केवलानाम् । मुक्तत्वम् । श्रूयते । हि ॥ ९ ॥ इतीति । इत्यमुना प्रकारेण । तेन श्रीहरिणा । उक्ते सति । ते हरिं प्रत्युत्तरं दातुमसमर्थाः । सन्तः साधवः । हे हरे ! । अस्य प्रश्नस्य । उत्तरं तु । त्वं प्रत्यक्षपुरुषोत्तमो भवानेव । कुरु यतः । त्वम् । सर्वज्ञस्तत्त्वस्वरूपाद्यखिलसाक्षाद्द्रष्टा । असि । इतीत्थम् । ऊचुः श्रीहरिमब्रुवन् । अथो अनन्तरम् । स साधुभिरेवमुक्तः । हरिकृष्णो भगवान् । तान्साधून् । अब्रवीत् ॥ १० ॥ तत्त्वानीति । हे साधवः ! । महदादीनि । तत्त्वानि । सर्गारम्भे । कृष्णेच्छयैव । पुरुषेक्षया महापुरुषेक्षितप्रधानपुरुषेक्षणेन । मायातः प्रधानप्रकृतितः सकाशात् । जातानि । सन्ति । हि ॥ ११ ॥ कार्येति । सर्वाण्यपि । तानि । तत्त्वानि । ईश्वरेच्छया श्रीकृष्णसङ्कल्पेन । सर्गोपबृंहणाय सृष्टिवृद्धये । कार्यकारणभेदेन । द्विधा पृथक्पृथगेकैकशः । आसन् ॥ १२ ॥ तत्रेति । तत्र तेषु द्विविधतत्त्वेषु मध्ये । तत्त्वाभिमानिनः । देवाः । कारणरूपाणि । तत्त्वानि । अभवन् । तथा । स्थूलसूक्ष्मशरीराणि जीवानां स्थूलसूक्ष्मशरीरात्मकानि । तत्त्वानि । तत्कार्याणि तत्त्वाभि-

इत्युक्ते तेन ते सन्तस्त्वमेवास्योत्तरं कुरु । सर्वज्ञोऽसीत्यूचुरथो हरिकृष्णोऽब्रवीत्स तान् ॥ १० ॥ तत्त्वानि महदादीनि मायातः पुरुषेक्षया । सन्ति जातानि सर्गस्यारम्भे कृष्णेच्छयैव हि ॥११॥ कार्यकारणभेदेन द्विधा तानीश्वरेच्छया । सर्गोपबृंहणायासन्सर्वाण्यपि पृथक् पृथक् ॥ १२ ॥ तत्र कारणरूपाणि देवास्तत्त्वाभिमानिनः । स्थूलसूक्ष्मशरीराणि तत्कार्याण्यभवंस्तथा ॥ १३ ॥ आद्यानि तत्र चिद्रूपाणीतराणि जडानि च । इति व्यवस्था तत्त्वेषु भवतीत्यवगम्यताम् ॥ १४ ॥ देहेन्द्रियान्तःकरणैः चिद्रूपत्वं यदीक्ष्यते । तत्तु चिद्रूपजीवस्य तदात्मकतया स्थितेः ॥ १५ ॥ विशेषसत्तया जीवो हृत्पद्मे ह्येव वर्त्तते । सामान्यसत्तया त्वेष देहादौ च तदात्मकः ॥ १६ ॥ तस्माद्देहादिरूपाणि तत्त्वानि निखिलान्यपि । जडान्येव भवन्तीति प्रश्नोत्तरमुदीरितम् ॥ १७ ॥

मानिदेवकार्यरूपाणि । अभवन् ॥ १३ ॥ आद्यानीती । तत्र कारणकार्यात्मकतत्त्वेषु मध्ये । आद्यानि कारणात्मकानि तत्त्वानि । चिद्रूपाणि । इतराणि कार्यात्मकानि द्वितीयानि तत्त्वानि च । जडानि । भवन्ति । इत्येवंविधा । तत्त्वेषु । व्यवस्था विवेचना । भवति । इतीत्थम् । अवगम्यताम् । एतेन पूर्वोक्तो यज्ञभागोऽपि कारणात्मकतत्त्वानामेव । न तु कार्यात्मकतत्त्वानामिति ज्ञेयम् ॥ १४ ॥ देहेति । देहेन्द्रियान्तःकरणे । यत् । चिद्रूपत्वं चैतन्यमयत्वम् । ईक्ष्यते । तत्तु । तदात्मकतया देहादिप्रकाशकतया । चिद्रूपजीवस्य । स्थितेरवस्थानाद्धेतोः । ईक्ष्यते ॥ १५ ॥ चिद्रूपजीवसम्बन्धात्सर्वशरीरस्य समानचिद्रूपता दर्शनेऽपि तस्मिंस्तदवस्थानं सामान्यविशेष-भावेनाह । विशेषेति । जीवः विशेषसत्तया । हृत्पद्मे हृदयकमले एव । वर्त्तते । एष जीवः । सामान्यसत्तया तु । देहादौ । तदात्मकस्तच्चेतनतापादकः । वर्त्तते । हि ॥ १६ ॥ तस्मादिति । तस्माद्धेतोः । देहादिरूपाणि । निखिलान्यपि । तत्त्वानि । जडान्येव । भवन्ति । इतीत्थम् । प्रश्नोत्तरम् । उदीरितं भवद्भ्यो मया कथितम् ॥ १७ ॥

धर्मेति । इत्येवंविधम् । पीयूषसहोदरममृततुल्यम् । धर्माङ्गजस्य धर्मपुत्रस्य श्रीहरेः । वचः । निशम्य । सदःस्थाः । भक्ताः । ते । सर्वे । सन्तः । गृहिणश्चापि । अपारमन्तवर्जितमेव । तोषम् । प्रपेदिरे ॥ १८ ॥ महापुरुषरूपेण प्रधानपुरुषात्मना । तत्त्वद्वारा च नैकाण्डसर्गस्थित्यादिकारणम् ॥ १ ॥ कार्यकारण भावेन द्विधा तत्त्वानि यो हरिः । जडचिद्रूपतः प्राह स्वेभ्यः सोऽस्त्वेव मद्धृदि ॥ २ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्सूनु-रघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां शताधिकसप्तषष्टितमस्तरङ्गः ॥ १३७ ॥ ३४ ॥

उक्त्वाऽऽत्मनिष्ठां दुःसाध्यां भक्त्या धर्मयुजा हरेः । सम्प्रोक्ता सुकरा मुक्तिः पञ्चत्रिंशे सुनिश्चितम् ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८८०) नभस्यशुक्लैकादश्यां भाद्रपदमासगशुक्लपक्षस्यैकादशिकातिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमस्य । महीक्षितो नृपस्य । दुर्गे । निम्बतरोः । अन्तिके निम्बतरुर्वीयप्रत्यगन्तिकप्रदेशे । अङ्गणे नृपतेः पूर्वास्यभवनस्यैव चत्वरे । पीठे युगंधरखन्युपर्यास्थापितश्वेताचरछदपार्श्विकयुततूलिकाव-

धर्माङ्गजस्येति वचः सदःस्था निशम्य पीयूषसहोदरं ते । सर्वेऽपि सन्तो गृहिणश्च भक्ताः प्रपेदिरे तोषमपारमेव ॥ १८ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते शताधिकसप्तषष्टितमस्तरङ्गः ॥ १६७ ॥ ३४ ॥

शकाब्दे विक्रमार्कस्य खनागवसुभूमिते । नभस्यशुक्लैकादश्यां वचोऽमृतमिदं हरेः ॥ १ ॥ तत्र दुर्गपुरे दुर्गे उत्तमस्य महीक्षितः । पीठेऽङ्गणे निम्बतरोरन्तिके स उपाविशत् ॥ २ ॥ सिताम्बरधरो भक्तैर्बहुभिः परितो वृतः । सोऽन्तर्दृष्टिः क्षणं भूत्वा पुरःस्थानब्रवीत्सतः ॥३॥ मया सम्यग्विचार्यैव हृदये यत्सुनिश्चितम् । साधवस्तद्धि युष्मभ्यं कथयामि निशम्यताम् ॥ ४ ॥ नृणां श्रेयो द्विधा प्रोक्तमृषिभिस्तत्त्वदर्शिभिः । आत्मज्ञानेन भक्त्या च तत्राद्यं त्वतिदुष्करम् ॥ ५ ॥ रामानन्दस्वामिपार्श्वागमनात्पूर्वमप्यहम् । साक्षादपश्यं स्वोत्मानं पश्याम्यद्य च सूर्यवत् ॥ ६ ॥

त्पर्यङ्कासने । स श्रीहरिः । उपाविशत् पट्घटिकावशिष्टापररात्रे आगत्य निषसाद ॥ २ ॥ सितेति । सिताम्बरधरः परिहितसकलश्वेतवसनः । बहुभिर्नानादेशागतत्वा-दनेकैः । भक्तैः स्वपार्षदमयजिदाकारितत्यागिगृहिस्वभक्तसमूहैः । परितः सर्वतः । वृतः सभायां वेष्टितः । स श्रीहरिः । क्षणं मुहूर्त्तम् । अन्तर्दृष्टिः प्रतिलोमवृत्तिः । भूत्वा । अनुलोमवृत्त्या सम्प्राप्तदेहस्मृतिः सन्निति शेषः । पुरःस्थान्स्वाग्रप्रदेशावस्थितान् सतः साधून् । अब्रवीत् ॥ ३ ॥ मयेति । हे साधवः ! । मया । हृदये । सम्यगेव । विचार्य । यत् । सुनिश्चितम् । भवति । तत् । युष्मभ्यम् । कथयामि । निशम्यतां तद्भवद्भिः श्रूयताम् ॥ ४ ॥ नृणामिति । तत्त्वदर्शिभिः । ऋषिभिः । नृणां जनानाम् । श्रेयः कल्याणम् । आत्मज्ञानेनात्मदर्शनेन । भक्त्या च । इति । द्विधा । प्रोक्तम् । अस्ति । तत्र द्विविधश्रेयोमध्ये । आद्यमात्मज्ञानजं श्रेयस्तु । अति-दुष्करम् । भवति ॥ ५ ॥ आद्यश्रेयसोऽतिदुष्करत्वमेव स्वभक्तशिक्षार्थं स्वोदाहरणकथनपूर्वं द्रढयति षड्भिः । रामानन्देति । अहम् । रामानन्दस्वामिपार्श्वागमनात् ।

पूर्वमपि । स्वात्मानम् । सूर्यवदर्कमिव प्रकाशमयम् । साक्षात् । अपश्यम् । अद्येदानींतनकालेऽपि । साक्षात्पश्यामि ॥ ६ ॥ इन्द्रियाणामिति । किञ्च । अहम् । इन्द्रियाणाम् । सर्वासु दर्शनश्रवणादिकासु । क्रियास्वपि । तं स्वात्मानमेव । पश्यामि । क्षणमणुमात्रकालमपि । तद्विस्मृतिः स्वात्मस्वरूपविस्मरणम् । क्वचित्कदाचिदपि । नास्ति ॥ ७ ॥ सुदुष्करमिति । अहम् । इदमात्मदर्शनम् । सर्वेषाम् । नृणां तु । सुदुष्करमतिदुःसाध्यम् । मन्ये । तदात्मदर्शनम् । प्राग्जन्मबहुसंस्कारैः पूर्वबहुजन्मार्जितात्मज्ञानाभ्यासजन्यबहुभावनाभिः । केनचित्पुंसा । अवाप्यते ॥ ८ ॥ साक्षादिति । भक्तेन साक्षाद्भगवतएकान्तिकोपासकेन । साक्षात्प्रत्यक्षस्य । हरेः । ध्यानेनैव । तदात्मदर्शनं तु । अवाप्यते । यत्नवता बहुप्रयासयुक्तेनापि पुरुषेण । अन्यसाधनैः साक्षाद्भगवत्स्वरूपध्यानेतरोपायैः । क्वापि कदाचिदपि । न प्राप्यम् । आत्मदर्शनस्य पूर्वश्लोके बहुजन्मसंस्कारैः प्राप्यता उक्ताऽत्र च भक्तीतरसाधनाप्राप्यत्वमुक्तं तस्यायंभावः । तदन्तर्यामी भगवांस्तदनेकजन्मकृतप्रयासं दृष्ट्वा कृपया स्वभक्तिमन्तराऽपि बहुकालेन तद्ददाति भक्तस्य तु स्वमूर्त्तिध्यानमात्रेणेति तत्प्राप्तौ तस्य मुख्यसाधनता दर्शिता तदितरसाधनैस्त्वेकेन जन्मना तन्न प्राप्यत इति ॥ ९ ॥

इन्द्रियाणां च सर्वासु क्रियास्वपि तमेव हि । पश्याम्यहं क्षणमपि नास्ति तद्विस्मृतिः क्वचित् ॥ ७ ॥ सुदुष्करमहं मन्ये सर्वेषां तु नृणामिदम् । प्राग्जन्मबहुसंस्कारैः केनचित्तदवाप्यते ॥ ८ ॥ साक्षाद्धरेस्तु ध्यानेन भक्तेनैवाप्यते हि तत् । न त्वन्यसाधनैः क्वापि प्राप्यं यत्नवताऽपि वै ॥ ९ ॥ स्वरूपसाक्षात्कारेण प्रोक्तेनानेन सर्वदा । अभ्यस्तेन भवेन्मुक्तिरपुनर्भवलक्षणा ॥ १० ॥ मुक्तिरेषा तु विज्ञेया कष्टसाध्या ससंशया । कष्ट्यां तुम्बोपबन्धेन समुद्रतरणोपमा ॥ ११ ॥ साक्षात्कृष्णस्य नवधा भक्त्या धर्मयुजाऽथ या । मुक्तिः सा त्वस्ति सुकरा नावाऽब्धितरणोपमा ॥ १२ ॥ भक्त्यैव मुक्तिः साध्येति पक्षो घण्टापथस्ततः । अयमेव हि सर्वेषां श्रयणीय इतीयताम् ॥ १३ ॥

स्वरूपेति । सर्वदा । अभ्यस्तेन । प्रोक्तेन प्राग्जन्मबहुसंस्कारैरितिश्लोकाभिहितेन । अनेन । स्वरूपसाक्षात्कारेण । अपुनर्भवलक्षणा मुक्तिः । भवेत् । न तु भक्तिप्राप्यभगवत्सेवोपलब्धिरूपा मुक्तिरितिभावः ॥ १० ॥ मुक्तिरिति । एषाऽऽत्मस्वरूपसाक्षात्कारेण प्राप्या । मुक्तिस्तु । कष्टसाध्या । ससंशया भाव्यत्वे संशययुक्ता । कष्ट्याम् । तुम्बोपबन्धेन तुम्बिकासमूहबन्धनेन । समुद्रतरणोपमा । ज्ञेया । यथा तुम्बसमूहं बध्वापि समुद्रान्तं तीर्त्वा न याति तथेमामपीत्यर्थः । 'क्लेशोऽधिकतरस्तेषामव्यक्तचेतसा'मित्यादि भगवद्गीतोक्तेः ॥ ११ ॥ साक्षादिति । अथ च । धर्मयुजा स्वस्वधर्मयुक्तया । साक्षात्कृष्णस्य । नवधा । भक्त्या । या मुक्तिः । सा तु । नावा नौकया । अब्धितरणोपमा । अतएव । सुकरा । अस्ति । यथा नावाऽब्धितरणे किञ्चिन्मात्रमपि कष्टं संशयश्च नास्ति तथा भक्त्या मुक्तावपीतिभावः ॥ १२ ॥ भक्तेति । भक्त्या स्वधर्मसहितेन साक्षाद्भगवतो नवविधभजनेनैव । मुक्तिः । साध्या । इत्येवंविधः । पक्षः । घण्टापथो राजमार्गतुल्यः । अस्ति । ततोहेतोः । सर्वेषां भवताम् । अयं पक्ष एव । श्रयणीयः । इतीत्थम् । ईयताम् ॥ १३ ॥

आत्मेति । भक्तैर्युष्माभिः सर्वैर्मदाश्रितजनैः । आत्मनिष्ठा दृढं यथातथा । कार्या । इतीत्थंभूता । या । वार्त्ता । मया । मुहुः । क्रियते । तस्या वार्त्तायाः । अभिप्रायम् । वो युष्मभ्यम् । वदामि ॥१४॥ आत्मेति । हे भक्ताः ! । आत्मनिष्ठावतः । पुंसो भक्तस्य देहदैहिकवस्तुषु । प्रीतिः । नश्येत् । ततोहेतोः । कृष्णे । प्रीतिदार्ढ्यम् । भवेत । इत्येषः । तद्वार्त्ताऽभिप्रायो बोध्य इति ज्ञेयम् ॥१५॥ भक्त्या धर्मयुजेतियत्प्रागभिहितं तस्य धर्मस्य रक्षणोपायमसन्मतखण्डनपूर्वकमाह पञ्चभिः । यदिति । हे भक्ताः ! । इह लोके । केचित्पूरुषाः । यदि । निजम् । मनः । शुद्धं भवेत् । तर्हि । अस्य जनस्य । शिशोर्बालस्येव । यथेष्टाचरणे । दोषः । नास्ति । इति यद्वाक्यम् । वदन्ति । एतदित्युत्तरेणसम्बन्धः ॥१६॥ एतदिति । एतत् । वाक्यम् । भूरिबाधप्रसङ्गतोहेतोः । मुक्ता अपि । यथेष्टाचरणेन । अधोगतिं नरकान् । आपुः ॥ १७ ॥ समाधीति । पुरुषो भक्तः । समाधिनिष्ठः । विवेकी बुद्धिमान्सन्नपि । चेद्यदि । स्त्रीणाम् । प्रसङ्गम् । कुर्यात् । तर्हि । धर्मभ्रष्टः । भवेत् । खलु

आत्मनिष्ठा दृढं कार्या भक्तैरिति मुहुर्मया । या वार्त्ता क्रियते तस्या अभिप्रायं वदामि वः ॥ १४ ॥ आत्मनिष्ठावतः पुंसो देहदैहिकवस्तुषु । प्रीतिर्नश्येत्ततः कृष्णे प्रीतिदार्ढ्यं भवेदिति ॥ १५ ॥ यत्तु केचिद्वदन्तीह यदि शुद्धं मनो निजम् । यथेष्टाचरणे तर्हि नास्य दोषः शिशोरिव ॥ १६ ॥ एतद्वाक्यं न मन्तव्यं भूरिबाधप्रसङ्गतः । यथेष्टाचरणेनापुर्यन्मुक्ता अप्यधोगतिम् ॥ १७ ॥ समाधिनिष्ठः पुरुषो विवेकी बुद्धिमानपि । कुर्यात्स्त्रीणां प्रसङ्गं चेद्धर्मभ्रष्टो भवेत्खलु ॥ १८ ॥ एवं योषाऽपि धर्मिष्ठा भक्तिमत्यपि केशवे । यथेष्टं पुंप्रसङ्गेन सद्यो धर्मच्युता भवेत् ॥ १९ ॥ ईदृश्येवास्ति वार्त्तेयमत्र नास्त्येव संशयः । विना शास्त्रोक्तनियमान् धर्मरक्षा न जायते ॥२०॥ अतः श्रेयोऽर्थिभिः पुंभिः स्त्रीभिश्च त्यागिभिस्तथा । स्वस्वधर्मः पालनीयो मत्प्रोक्तैर्नियमैर्दृढैः ॥ २१ ॥ भक्तिः कृष्णस्य नवधा कर्त्तव्या च यथोचितम् । ताभ्यामेव हि संसिद्धिं यूयं प्राप्स्यथ निश्चितम् ॥२२॥ साम्प्रतं त्विह सर्वेषां भवतां सुदृढा मतिः । मय्येव कृष्णोऽयमिति सा सत्येवास्ति सर्वथा ॥२३॥

॥ १८ ॥ एवमिति । एवममुना प्रकारेण । योषा भगवद्भक्ता नार्यपि । धर्मिष्ठा । केशवे साक्षाद्भगवति । भक्तिमती च । सत्यपि । यथेष्टं स्वेच्छानुरूपम् । पुंप्रसङ्गेन । सद्यस्तत्क्षणमेव । धर्मच्युता । भवेत् ॥ १९ ॥ ईदृशीति । इयं पूर्वपूर्वतरश्लोकोक्ता । वार्त्ता । ईदृश्येवंविधैव । अस्ति । अत्रास्मिन्नर्थे । संशयः । नास्त्येव । किञ्च । शास्त्रोक्तनियमान्विना । धर्मरक्षा । न जायते ॥ २० ॥ अत इति । अतोहेतोः । श्रेयोऽर्थिभिः स्वमोक्षकांक्षिभिर्युष्माभिर्मदाश्रितैः । पुंभिर्गृहिजनैः । त्यागिभिः । साध्वादिभिश्च । तथा । स्त्रीभि रुभयविधनारीभिः । मत्प्रोक्तैः । दृढैः सुस्थिरैः । नियमैः । स्वस्वधर्मः । पालनीयः ॥ २१ ॥ भक्तिरिति । कृष्णस्य । नवधा । भक्तिश्च । यथोचितं यथायोग्यम् । कर्त्तव्या । ताभ्यां स्वधर्मभक्तिभ्यामेव । यूयम् । संसिद्धिं मोक्षम् । निश्चितं हि निश्चयेनैव । प्राप्स्यथ ॥ २२ ॥ अत्र कुत्रचित्परोक्षतया क्वच प्रत्यक्षतया स्वं ब्रुवन् यः परोक्षः कृष्णः स प्रत्यक्षोऽहमेवास्मीति स्वभक्तोत्साहवर्द्धनायाक्षरधामाधिपतेरक्षरब्रह्मात्मकमुक्तकोटिसंसेविताङ्घ्रिकमलस्य

सकलैश्वर्यैकसंश्रयस्य पुरुषोत्तमस्य स्वस्यैव भक्तिं श्रीहरिः स्वीयेभ्य उपदिशति नवभिः । साम्प्रतमिति । हे साधवः ! । इह सत्सङ्गे । साम्प्रतम् । सर्वेषाम् । भवताम् । मय्येव सुदृढा । मतिः । अस्ति । सैवंविधा भवन्मतिः । सर्वथा । सत्येव । अस्ति ॥ २३ ॥ एतदेव स्पष्टमाह द्वाभ्याम् । अहमिति । अहम् । अक्षरधामेशः सर्वपरात्युत्कृष्टाक्षरधामाधिपतिः । ईशेशो महापुरुषादीश्वरेश्वरः । पुरुषोत्तमः । सर्वावतारहेतुः रामकृष्णादिकसकलावतारणां कारणम् । सदा सर्वकालम् । सर्वोपरि स्थितश्च । मत्तः परतरः कोऽप्यधिको नास्तीत्यर्थः ॥ २४ ॥ महेति । महापुरुषमायादेर्महापुरुषमहामायाकालादीनामित्यर्थः । नियन्ता नियामकः । दिव्यविग्रहः सदैवातिरमणीयमूर्त्तिः । कृपया स्वाभाविकनिष्कारणापारकरुणया । आविर्भूतः युष्मन्नयनगोचरतां प्राप्तः । अस्मि । तत्ततोहेतोः । मदुपासना धर्मसहिता मद्भक्तिः । कार्या । इति द्वयोरेकान्वयः ॥ २५ ॥ स्वभक्तिविधानप्रकारमाह द्वाभ्याम् । मदिति । मच्चरित्राणि दृष्टश्रुता मल्लीलाः । सादरम् । गेयानि कीर्त्तनीयानि । भवद्भिरिति-। भवद्भिरितिशेषः । सादरम् । श्रोतव्यानि च । मम । ध्यानं समग्रतयैकैकावयवतया च मन्मूर्त्तिचिन्तनम् । सादरम् । विधातव्यम् । मत्कृतोत्सवाः मया तत्र तत्र

अहमक्षरधामेश ईशेशः पुरुषोत्तमः । सर्वावतारहेतुश्च सदा सर्वोपरिस्थितः ॥ २४ ॥
महापुरुषमायादेर्नियन्ता दिव्यविग्रहः । आविर्भूतोऽस्मि कृपया तत्कार्या मदुपासना ॥ २५ ॥
मच्चरित्राणि गेयानि श्रोतव्यानि च सादरम् । मम ध्यानं विधातव्यं स्मर्त्तव्या मत्कृतोत्सवाः ॥ २६ ॥
महासभासु मद्वार्त्ता कृतं भक्तैर्मदर्चनम् । साधुसंतर्पणं चापि स्मर्त्तव्यं मत्कृतं मुहुः ॥ २७ ॥
एवं विदधतो यूयं मद्भक्तेस्तु प्रतापतः । देहान्ते परमं धाम मदीयं प्राप्स्यथ ध्रुवम् ॥ २८ ॥
स्वरूपानन्दनामाऽऽसीत् पुरा साधुर्मदाश्रितः । आत्मदर्शी स देहान्ते प्रारब्धादतिदुःख्यभूत् ॥ २९ ॥

पुरग्रामादिषु कृता जन्माष्टम्यन्नकूटपुष्पदोलादयो महाः । सादरम् । स्मर्त्तव्याश्चिन्तनीयाः ॥ २६ ॥ महेति । महासभासु । मद्वार्त्ताः । भवद्भितार्थं भवतां पुरो मया कृता धर्मादियुता अनेकविधा गोष्ठ्य इत्यर्थः । मुहुर्भूयोभूयः । स्मर्त्तव्याः । भक्तैरुत्सवेषु नानादेशागतैस्त्यागिभिर्गृहिभिश्च मदाश्रितजनैः । कृतं यथाप्राप्तचन्दन-पुष्पादिनानोपहारविहितम् । मदर्चनम् । मुहुः । स्मर्त्तव्यम् । मत्कृतं मयाऽतिस्नेहेन विहितम् । साधुसन्तर्पणं नानायुक्तिकृतबहुविधभक्ष्यभोज्यलेह्यचोष्यपेयान्नाद्यैः साधुसौहित्यं चापि । मुहुः स्मर्त्तव्यम् ॥ २७ ॥ एवमिति । एवममुना प्रकारेण । विदधतो मच्चरित्रगानादिकुर्वाणाः । यूयम् । मद्भक्तेः । प्रतापतः । देहान्ते मदी-यम् । परमं सर्वोत्कृष्टम् । धाम गोलोकमध्यावस्थिताक्षरपदम् । ध्रुवमेव । प्राप्स्यथ ॥ २८ ॥ अत्रार्थे साक्षाद्भगवदेकान्तिकसदाचारं स्वयमेव प्रमाणयति त्रिभिः । स्व-रूपानन्देति । पुरा । मदाश्रितः । आत्मदर्शी । स्वरूपानन्दनामा । साधुः । आसीत् । स साधुः । देहान्ते स्वदेहावसानसमये । प्रारब्धात्स्वकीयप्रारब्धकर्मवशतः । अतिदुःखी । अभूत् ॥ २९ ॥

तत इति । ततस्तदनन्तरम् । मया । तदग्रे तस्य पुरःप्रदेशे । स्थित्वा । इयं मच्चरित्रगानादिरूपा । वार्त्ता । स्वयं स्वमुखेनैव । कृता । तदा तर्हि । स साधुः । आत्मध्यानम् । हित्वा । मम । ध्यानरतो मन्मूर्त्तिगुणचरित्रादिचिन्तनतत्परः । अभवत् ॥ ३० ॥ सद्य इति । ततस्तदनन्तरम् । स साधुः । सद्यो मन्मूर्त्यादिचिन्तनसमकालमेव । शान्तिं स्वदेहदुःखोपशमपूर्वकमत्यधिकानन्दम् । प्राप्य । भौतिकं पृथिव्यादिपञ्चभूतमयम् । देहं स्वशरीरम् । हित्वा । परमम् । मद्धाम । प्राप । ततोहेतोः । यूयम् । माम् । भजत स्वधर्मयुजा मद्भक्त्या मामुपाध्वमित्यर्थः ॥ ३१ ॥ स धर्मेति । किञ्च । सधर्मभक्तेः । दाढर्याय । श्रीमद्भागवतादयः । अष्टौ । सद्ग्रन्थाः । मया । स्वमते स्वकीयोद्धवसम्प्रदाये । अतिप्रतिपादिता मान्यतयाऽतिशयेन स्वीकृताः सन्ति ॥ ३२ ॥ श्रोतव्या इति । तेऽष्टौ सद्ग्रन्थाः । श्रोतव्याः । पठितव्या अध्येतव्याः । वाचनीयाश्च । एतेषां कथा कर्त्तव्या पारायणं वा कर्त्तव्यमित्यर्थः । एतत्सद्ग्रन्थश्रवणादितः । कृष्ण-

ततस्तदग्रे वार्त्तेयं मया स्थित्वा स्वयं कृता । तदा स हित्वाऽऽत्मध्यानं मम ध्यानरतोऽभवत् ॥ ३० ॥ सद्यः शान्तं ततः प्राप्य देहं हित्वा स भौतिकम् । मद्धाम प्राप परमं यूयं भजत मां ततः ॥ ३१ ॥ सधर्मभक्तेर्दाढर्याय श्रीमद्भागवतादयः । सद्ग्रन्थाः स्वमते चाष्टौ मयाऽतिप्रतिपादिताः ॥ ३२ ॥ श्रोतव्याः पठितव्याश्च वाचनीयाश्च ते ततः । कृष्णमाहात्म्यबोधः स्यात् पुष्टता भक्तिधर्मयोः ॥ ३३ ॥ भक्तिहीनेन धर्मेण भक्त्या धर्मविहीनया । नेप्सिता बन्धमुक्तिः स्यादुभे सेव्ये ततो बुधैः ॥ ३४ ॥ यत्र भक्तेश्च धर्मस्य न सम्यक् प्रतिपादनम् । ते ग्रन्था नैव वाच्याश्च श्रोतव्या नैव कर्हिचित् ॥ ३५ ॥ उभयोरेतयोर्यत्र सम्यक् स्यात्प्रतिपादनम् । ते तु ग्रन्थाः प्रयत्नेन वाच्याः श्रव्याश्च सादरम् ॥ ३६ ॥ इति वाक्यसुधां निपीय ते स्वगुरोः साधुजनाः परां मुदम् । गृहिणश्च नराः प्रपेदिरे दधुराज्ञां शिरसा तथैव ते ॥ ३७ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते शताधिकअष्टषष्टितमस्तरङ्गः ॥ १६८ ॥ ३५ ॥

माहात्म्यबोधः । भक्तिधर्मयोः । पुष्टता च । स्यात् ॥ ३३ ॥ भक्तीति । भक्तिहीनेन भक्तिवर्जितेन धर्मेण । धर्मविहीनया । भक्त्या । ईप्सिता स्वेनप्राप्तुंवाञ्छिता बन्धमुक्तिर्भवबन्धनिवृत्तिः । न स्यात् । ततोहेतोः । बुधैर्विवेकिभिर्भक्तैः । उभे धर्मभक्ती । सेव्ये । अवश्यं संसाध्ये ॥ ३४ ॥ यत्रेति । यत्र येषु ग्रन्थेषु । भक्तेः । धर्मस्य च । सम्यक् प्रतिपादनम् । न स्यात् । ते ग्रन्थाः । कर्हिचित् । नैव वाच्याः । नैव श्रोतव्याश्च ॥ ३५ ॥ उभयोरिति । यत्र ग्रन्थेषु । एतयोः । उभयोर्भक्ति-धर्मयोः । सम्यक् प्रतिपादनम् । स्यात् । ते ग्रन्थास्तु । प्रयत्नेन । सादरं यथातथा । वाच्याः । श्रव्याश्च ॥ ३६ ॥ इतीति । इत्येवंविधाम् । स्वगुरोः स्वहितकारकस्य स्वकीयेष्टदेवस्य श्रीहरेः । वाक्यसुधाम् । निपीय । ते सभोपविष्टाः । साधुजनाः । गृहिणः । नराश्च । पराम् । मुदम् । प्रपेदिरे । ते सर्वे । तथैव श्रीहयुक्तरीत्यैव । आज्ञां श्रीहरेर्निदेशम् । शिरसा स्वस्वमूर्ध्ना । दधुर्धारयामासुः ॥ ३६ ॥ स्वस्यधर्मयुजं भक्तिं स्वैः कार्यां सर्वथा हरिः । यः प्राह मोक्षदां मह्यं तां दद्यात्सर्वदैव सः

॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्स्नुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां शताधिकाष्टषष्टितमस्तरङ्गः ॥ १६८ ॥ ३५ ॥

कृष्णेऽखण्डं मनोवृत्तेः स्थिरायाः साधनानि तु । संकीर्त्तितानि चत्वारि ततः षड्त्रिशके स्फुटम् ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८८०) नभस्यस्य भाद्रपदमासस्य । पूर्णिमास्यां तिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमस्य राज्ञः । दुर्गे । प्रत्यागास्यस्य । वेश्मनस्तस्यैव भवनस्य । वितर्दौ बाह्यवेदिकायाम् । चारुमञ्चके शोभने पर्यङ्कासने । स श्रीहरिः । न्यषीदत् ॥ २ ॥ सितेति । सिताम्बरधरं परिहितसकलश्वेतवसनम् । अनेकैर्नानादेशागतत्वाद्बहुभिः । भक्तैस्त्यागिगृहिस्वाश्रितजनैः । वृतं सभायां परिवेष्टितम् । सद्भिः । प्रश्नोत्तराणि । कारयन्तम् । तं श्रीहरिम् । मुक्तानन्दोमुनिः । समपृच्छत् ॥ ३ ॥ मन इति । हे हरे ! । कृष्णे । त्वयि । मनोवृत्तिः । अखण्डमविच्छिन्नतया । स्थिरा निश्चला । कथं केनो-

शकाब्दे विक्रमार्कस्य खनागवसुभूमिते । पूर्णमास्यां नभस्यस्य वचोऽमृतमिदं हरेः ॥ १ ॥ तत्र दुर्गपुरे दुर्गे उत्तमस्य म वेश्मनः । वितर्दौ प्रत्यगास्यस्य न्यषीदच्चारुमञ्चके ॥ २ ॥ सिताम्बरं वृतं भक्तैरनेकैः समपृच्छत् । मुक्तानन्दः कारयन्तं सद्भिः प्रश्नोत्तराणि तम् ॥३॥ मनोवृत्तिरखण्डं स्यात्स्थिरा कृष्णे कथं त्वयि । तमुवाच हरिस्तत्र त्वस्त्युपायचतुष्टयम् ॥ ४ ॥ चित्तस्य स्निग्धता शौर्यं भयं वैराग्यमीत्यमी । उपाया भगवन्मूर्तौ मनःस्थैर्यं उदीरिताः ॥५॥ स्निग्धस्वभावं चित्तं स्याद्यस्य तु तद्धरौ । अपि स्निग्धं भवेदेव स्त्रीधनोदाविव द्रुतम् ॥ ६ ॥ शौर्यं च यस्य पुंसः स्यात्स तीक्ष्णप्रकृतिर्भवेत् । कार्ष्णेतरं स सङ्कल्पं सद्य एव विनाशयेत् ॥ ७ ॥ तस्यात्मवृत्तिः श्रीकृष्णे स्थिरा स्यादत एव हि । नाश्यन्ते तेन सङ्कल्पास्तत्र विघ्नकरा द्रुतम् ॥ ८ ॥

पायेन । स्यात् । तमेवं पृच्छन्तं मुक्तानन्दमुनिम् । हरिः । उवाच । हे मुने ! । तत्र कृष्णेऽखण्डं मनोवृत्तिस्थिरताविधाने तु । उपायचतुष्टयम् । अस्ति ॥ ४ ॥ तान्नाम्ना निर्दिशति । चित्तस्येति । हे मुने ! । चित्तस्य । स्निग्धता यत्र कुत्रापि स्नेहेन वल्गनप्रकृतित्वम् । शौर्यम् । भयम् । वैराग्यं च । इत्येवंविधाः । अमी चत्वारः । उपायाः । भगवन्मूर्त्तौ । मनःस्थैर्ये । उदीरताः ॥ ५ ॥ चित्तस्निग्धतादिचतुरुपाययुक्तपुरुषोक्त्या तल्लक्षणान्याह सप्तभिः । स्निग्धेति । हे मुने ! । यस्य भक्तस्य । चित्तम् । स्निग्धम् । भवेत् ॥ ६ ॥ शौर्यमिति । यस्य पुंसो भक्तस्य । शौर्यं शूरता । स्यात् । स भक्तः । तीक्ष्णप्रकृतिस्तीव्रस्वभावः । भवेत् । स एवंविधः । भक्तः । कार्ष्णेतरं श्रीकृष्णस्य नवधा भक्तिभिन्नम् । सङ्कल्पम् । सद्य एव । विनाशयेत् ॥ ७ ॥ तस्येति । अतोहेतोरेव । तस्य शौर्यप्रकृतेर्भक्तस्य । आत्मवृत्तिर्मनोवृत्तिः । श्रीकृष्णे । स्थिरा स्यात् । तत्र स्थिरत्वे । विघ्नकराः । सङ्कल्पाः । तेन भक्तेन । द्रुतमेव । नाश्यन्ते । शूरा हि स्वरिपूननाशयित्वा निवृत्ता न भवन्ति तथा शौर्यप्रकृतिर्भक्तोऽपि भगवद्भक्त्यन्तरायान्सङ्कल्पारीन्सद्य एव विनाशयतीतिभावः ॥ ८ ॥

यस्येति । तत इति । यस्य भक्तस्य । चित्ते । सच्छास्त्रश्रवणादिजा । यदि । हरिम् । न भजिष्यते । तदा । निरयान् । यास्यामि । ततो निरयभोगानन्तरम् । घोरामतिदुःखप्रदत्वेन प्रभूतभयङ्कराम् । संसृतिम् । गमिष्यामि । इतिलक्षणैवंविधस्वरूपा । भीतिर्भयम् । भवेत् । तस्य भक्तस्यापि । मनोवृत्तिः । कृष्णे । सुस्थिरा । भवेत् । किल । इतिद्वयोरेकान्वयः ॥ ९ ॥ १० ॥ कृष्णेति । कृष्णेतरपदार्थेषु । तुच्छत्वमतिरल्पताबुद्धिर्लक्षणं लक्ष्म यस्य तत् वैराग्यम् । यस्य भक्तस्य । भवेत् । तन्मनस्तस्य भक्तस्य मानसम् । कृष्णे । स्थिरम् । स्यात् ॥ ११ ॥ तत्प्रकारमाह । स इति । स वैराग्यवान् भक्तः । साङ्ख्यविचारेणात्मानात्मविवेकेन । देहभिन्नात्मनि देहात्पृथग्भूते स्वात्मनि । प्रभुं श्रीहरिम् । धारयित्वा । तस्मिन्प्रभौ । मनः । दृढं यथातथा । नियोक्तुम् । क्षमते समर्थो भवति ॥ ११ ॥ इतीति । इत्यमुना प्रकारेण । मया । चत्वारः । उपायाः । प्रोक्ताः । यैरुपायैः । भजतां साक्षाद्भगवन्तं भजमानानाम् । नृणां भक्तानाम् । मनोवृत्तिः । रमापतौ साक्षाद्भगवति । अखण्डं यथातथा । वर्त्तते ॥१३॥ आकस्मिकीति । किञ्च । यस्मिन् । पुरुषे भक्ते । आकस्मिकी अकस्मादेवजाता । हरिकृपा

यस्य भीतिर्भवेच्चित्ते सच्छास्त्रश्रवणादिजा । न भजिष्ये यदि हरिं यास्यामि निरयांस्तदा ॥ ९ ॥ ततश्च संसृतिं घोरां गमिष्यामीति लक्षणा । तस्यापि सुस्थिरा कृष्णे मनोवृत्तिर्भवेत्किल ॥१०॥ कृष्णेतरपदार्थेषु तुच्छत्वमतिलक्षणम् । वैराग्यं च भवेद्यस्य कृष्णे स्यात्तन्मनः स्थिरम् ॥११॥ स हि सांख्यविचारेण देहभिन्नात्मनि प्रभुम् । धारयित्वा मनस्तस्मिन्नियोक्तुं क्षमते दृढम् ॥ १२ ॥ इत्युपाया मया प्रोक्ताश्चत्वारो ये रमापतौ । अखण्डमात्मनो वृत्तिर्वर्तेत भजतां नृणाम् ॥ १३ ॥ आकस्मिकी हरिकृपा भवेद्यस्मिंश्च पूरुषे । तस्य तु स्यात्स्थिरा वृत्तिः कृष्णे साधनमन्तरा ॥१४॥ वृत्तिस्थैर्यं तु कृष्णे यत्तन्नाल्पतपसः फलम् । बहुजन्मोत्थसुकृतोदये स्यात्तद्धि कस्यचित् ॥ १५ ॥ कृष्णं विनाऽन्यत्र मनःस्थैर्यं प्रीतिश्च या भवेत् । सैव मायेत्यपि ज्ञेयं हरेः संसृतिकारणम् ॥ १६ ॥ विषयेभ्योऽपि पञ्चभ्यो देहस्त्रीतनयादिषु । अधिका दृश्यते प्रीतिः स्वपोषकनरेऽपि च ॥ १७ ॥

। भवेत् । तस्य भक्तस्य । वृत्तिर्मनोवृत्तिस्तु । साधनं पूर्वोक्तसाधनचतुष्टयान्यतमम् अन्तरा विनापि । कृष्णे । स्थिरा । स्यात् ॥ १४ ॥ अस्या भवने अनेकजन्मार्जितसुकृततां हेतुमाह । वृत्तीति । यत् । कृष्णे । वृत्तिस्थैर्यम् । तत् । अल्पतपसः । फलम् । न भवति । किन्तु । तद्वृत्तिस्थैर्यम् । बहुजन्मोत्थसुकृतोदये प्राचीनानेकजन्मार्जितसुकृतफलभोगकाले सम्प्राप्ते सतीत्यर्थः । कस्यचिद्भक्तस्य । स्यात् । हि ॥१५॥ कृष्णमिति । कृष्णम् । विना साक्षाद्भगवन्तमन्तरा । अन्यत्रान्यस्मिन्देहादौ । यत् । मनःस्थैर्यम् । या । प्रीतिश्च । भवेत् । सैव । संसृतिकारणम् हरेः । माया । इत्यपि । ज्ञेयम् ॥ १६ ॥ मायारूपानुवादेनान्यत्रपदं विवृण्वन्कृष्णमाहात्म्यबोधेन तन्निवृत्तिमाह द्वाभ्याम् । विषयेभ्य इति । पञ्चभ्यः । विषयेभ्यः सहजतया जीवानां प्रीत्यास्पदमायिकशब्दार्थेभ्योऽपि । देहस्त्रीतनयादिषु । स्वपोषकनरे चापि । अधिका । प्रीतिः । दृश्यते । देहादीनां विषयोपभोगहेतुत्वादितिभावः ॥ १७ ॥

कृष्णेति । यदा । कृष्णमाहात्म्यबोधेन । एषा । माया । निवर्त्तते । तदैव । कृष्णे । प्रीतिः । आत्मनो मनसः स्थिरता तत्र स्थैर्यं च । स्यात् ॥१८॥ वृत्तीति । अत्र सत्सङ्गे । यस्य । पुरुषस्य भक्तस्य । कृष्णे । वृत्तिस्थिरत्वं प्रीतिपूर्वं मनोवृत्तिस्थैर्यम् । भवेत् । स भक्तः । कृतार्थः कृतकृत्यः । उक्तः । इत्येवंविधम् । प्रभोः । तस्य श्रीहरेः । सुधामिवामृतसमानम् । वचः । आपीय । सः । साधुर्मुक्तानन्दमुनिः । जहर्ष । अन्ये तदितरे साधवो गृहिजनाश्च । जहृषुः ॥ १९ ॥ स्वभक्तानां मनोवृत्तेः स्वस्मिन्स्थैर्याय यो हरिः । उपायांश्चतुरः प्राह तान्दध्यान्मे स तत्कृते ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्यकान्तिकोपासकश्रीहरिकृष्णभगवत्स्थ लुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां शताधिकैकोनसप्ततितमस्तरङ्गः ॥ १६९ ॥ ३६ ॥

स्वाभाविक्याः साधनानि प्रकृतेः संनिवर्त्तने । भवन्ति यानि तान्येव सप्तत्रिंशे स्मृतानि तु ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८८०) भाद्रकृष्णप्रतिपदि भाद्रपदमासीयकृष्णपक्षस्य पक्षतितिथौ । 'प्रतिपत्पक्षती स्त्रिया'मितिहैम । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे ।

कृष्णमाहात्म्यबोधेन मायैषा तु निवर्त्तते । यदा तदैव कृष्णे स्यात्प्रीतिश्च स्थिरतात्मनः ॥ १८ ॥ वृत्तिस्थिरत्वं पुरुषस्य यस्य कृष्णे भवेत्सोऽत्र कृतार्थ उक्तः । इति प्रभोस्तस्य वचः स साधुः सुधामिवापीय जहर्ष चान्ये ॥ १९ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते शताधिकैकोनसप्ततितमस्तरङ्गः ॥ १६९ ॥ ३६ ॥

शकाब्दे विक्रमार्कस्य खनागवसुभूमिते । भाद्रकृष्णप्रतिपदि वचोऽमृतमिदं हरेः ॥ १ ॥
तत्र दुर्गपुरे दुर्गं उत्तमस्य स वेश्मनः । वितर्दौ प्रत्यगास्यस्य न्यषीदत् पीठ उत्तमे ॥ २ ॥
सिताम्बरो वृत्तो भक्तैः पप्रच्छ स सतोऽग्रगान् । गीतासूक्तमपि ज्ञानी यथाप्रकृति चेष्टते ॥ ३ ॥
शास्त्रोक्तनिग्रहबलप्रचारोऽस्मिन्न जायते । ईदृशी प्रकृतिः पुंसः केनोपायेन नश्यति ॥ ४ ॥

उत्तमस्य राज्ञः । दुर्गे । प्रत्यगास्यस्य । वेश्मनस्तस्यैव भवनस्य । वितर्दौ बाह्यवेदिकायाम् । उत्तमे स्वास्तृतत्वाच्छ्रेष्ठे । पीठे पर्यङ्कासने । स श्रीहरिः । न्यषीदत् ॥ २ ॥ सितेति । सिताम्बरधरः परिधृतसकलश्वेतवसनः । भक्तैर्नानादेशागतैस्त्यागिभिर्गृहिभिश्च स्वभक्तजनैः । वृतः सभायां परिवेष्टितः । स श्रीहरिः । अग्रगान्स्वपुरःप्रदेशावस्थितान् । सतो मुक्तानन्दादिसाधून् । पप्रच्छ । हे सन्तः ! । ज्ञानी केवलं शास्त्रत आत्मपरमात्मज्ञानवानपि । यथाप्रकृति लोभादिस्वस्वभावानुसारेण । चेष्टते । इति । गीतासु । उक्तम् ॥ ३ ॥ शास्त्रेति । अस्मिन् यथाप्रकृतिचेष्टमाने भक्तजने । शास्त्रोक्तनिग्रहबलप्रचारः । न जायते न प्रवर्त्तते । प्रकृतिपरतन्त्रो जनः शास्त्रीयनिषेधान्न गणयन्वर्त्ततेऽतस्तत्र शास्त्रेण मुहुः कृतापि निषेधशिक्षाऽसमर्था जायते इत्यर्थः । गीतावाक्यं यथा । 'सदृशं चेष्टते स्वस्याः प्रकृतेर्ज्ञानवानपि । प्रकृतिं यान्ति भूतानि निग्रहः किं करिष्यती'ति । पुंसो भक्तस्य । ईदृशी स्वाभावीकी । प्रकृतिः । केन । उपायेन । नश्यति ॥ ४ ॥

इतीति । इत्यमुना प्रकारेण । तेन श्रीहरिणा । पृष्टाः । ते । साधवः । यदा । तस्य प्रश्नस्य । उत्तरम् । कर्त्तुम् । न शेकुः । तर्हि । एष श्रीहरिः । स्वयमेव । तत्स्वप्रश्नोत्तरम् । प्रोवाच ॥ ५ ॥ प्रकृतिरिति । हे साधवः ! । यस्य भक्तस्य । प्रकृतिस्तादृशः स्वस्वभावः । नाश्या विनाशनीया । स्यात् । तस्य भक्तस्य । तन्नाशके शास्त्रानुभवानुगोपदेशयुक्तिभिस्तत्तथाविधप्रकृतिनिवर्त्तके इत्यर्थः । गुरौ हरेरेकान्तिकभक्तदेशिके । गाढो दृढः । विश्वासः । अपेक्षितः । तथा । सर्वाधिका । प्रीतिस्तस्मिन्स्नेहः । अपेक्षिता । अस्ति ॥ ६ ॥ हितानीति । यो भक्तः । अप्रियाणि । प्रियाणि । गुणवन्ति । अगुणानि सर्वाणि । तद्वाक्यानि । तथाविध गुरुवचनानि । सर्वथा । हितानि हितकराण्येव । मन्येत । तत्र प्रियाण्यव्याकुलतया शनैरुक्तानि । अप्रियाणि व्याकुलतया संक्षीजनपूर्वकं त्वरयोक्तानि । गुणवन्ति सन्मानपूर्वं रहस्युदितानि । अगुणवन्त्यपमानपूर्वं सदस्युदितानि चेति विवेकः ॥ ७ ॥ तस्येति । तस्य तथाविधस्य । पुंसो भक्तस्यैव । सा प्रकृतिः । तद्वाक्यैस्तथाविधगुरुवचनैः । नाश्यते । न संशयः । अन्यथोक्तवैपरीत्ये सति तु । केनापि भक्तेन । सा प्रकृतिः । साधनैरितरोपायैः । क्वापि

इति ते साधवः पृष्टास्तेन तस्योत्तरं यदा । कर्तुं न शेकुस्तर्ह्येष प्रोवाच स्वयमेव तत् ॥ ५ ॥
प्रकृतिर्यस्य नाश्या स्यात्तस्य तन्नाशके गुरौ । विश्वासोऽपेक्षितो गाढः प्रीति सर्वाधिका तथा ॥ ६ ॥
हितान्येव हि मन्येत यस्तद्वाक्यानि सर्वथा । प्रियाप्रियाणि सर्वाणि गुणवन्त्यगुणानि वा ॥ ७ ॥ तस्यैव
पुंसस्तद्वाक्यैर्नाश्यते सा न संशयः । अन्यथा तु न नाश्या सा क्वापि केनापि साधनैः ॥ ८ ॥ अतस्त-
त्कामुकेनात्र सतां वाक्यानि सर्वथा । प्रियाप्रियाणि मान्यानि हितानीत्यवगत्य वै ॥ ९ ॥ उपदेष्टृगुणग्रहा-
न्नृणां प्रकृतिर्यात्यपि दुस्त्यजा क्षयम् । इति तस्य वचः सुधोपमं जहृषुस्ते च निशम्य साधवः ॥ १० ॥

इति श्रीहरिवाक्यसुधासिंधौ शतानन्दमुनिविरचिते शताधिकसप्ततितमस्तरङ्गः ॥ १७० ॥ ३७ ॥

कदापि । न नाश्या । विनाशयितुमशक्या स्यादित्यर्थः ॥ ८ ॥ अत इति । अतो हेतोः । अत्र सत्सङ्गे । तत्कामुकेन तथाविधप्रकृतिनिवृत्तिकामेन भक्तेन । सतां प्रकृतिनिवृत्त्युपायोपदेशकसाधूनाम् । प्रियाणि । अप्रियाणि । वाक्यानि । सर्वथा । हितानि । भवन्ति । इतीत्थम् । अवगत्य ज्ञात्वा । मान्यानि ॥ ९ ॥ उपदेष्ट्रिति । नृणां भक्तानाम् । दुस्त्यजापि । प्रकृतिः । उपदेष्टृगुणग्रहात् । स्वहिताय परुषवचनैरपि यथायथा सन्त उपदिशन्ति तथा तथा मद्धितार्थं सम्यग्वदन्तीति तेषां गुणस्यैव स्वीकारादित्यर्थः । क्षयं विनाशम् । याति प्राप्नोति । इत्येवंविधम् । तस्य श्रीहरेः । सुधोपमम् । वचः । निशम्य । ते । साधवः । गृहिणश्च । जहृषुः ॥ १० ॥ स्वाभाविक्याः स्वभक्तानां प्रकृतेः संनिवर्त्तने । येनोक्तो हरिणोपायस्तं मे दद्यात्स सर्वथा ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्री-हरिकृष्णभगवत्पदानुरघुवीराचार्यवीरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां शताधिकसप्ततितमस्तरङ्गः ॥ १७० ॥ ३७ ॥

कुर्वन्ति पुंसि विश्वासं मन्त्रादिज्ञे धनादिदे । अभक्ता अथ भक्तास्तु तस्मिन्नाणुमपीह तम् ॥ १ ॥ खट्वाङ्गोपमयैकान्तभक्तानां लक्षणं च यत् । हरौ प्रवेश-लक्ष्माष्टत्रिंशे त्वेतदुदीरितम् ॥१॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८८०) नभस्यस्य भाद्रपदमासस्य । कृष्णषष्ठ्यां कृष्णपक्षस्य षष्ठीकर्मवाट्याम् । 'कर्मवाटी तिथि'रिति हैमः । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमस्य राज्ञः । दुर्गे । प्राचीनवक्त्रस्य प्राग्द्वारस्य । वेश्मनस्त-स्यैवभवनस्य । वेद्यां बाह्यवेदिकायाम् । मञ्चकोत्तमे स्वास्तृतश्रेष्ठपर्यङ्कासने । स श्रीहरिः । न्यषीदत् ॥ २ ॥ त्यागिभिरिति । बहुभिर्नानादेशागतत्वादनेकैः । त्यागिभिः । गृहिभिः । स्वीयैः । भक्तैः । आवृतः सभायां परिवृतः । श्वेतवस्त्राणि । वसानः । स श्रीहरिः । पुरःस्थान्स्वाग्रप्रदेशोपविष्टान् । सतः साधून् । अब्रवीत् ॥ ३ ॥ इहेति । हे सन्तः ! । इह लोके तु । द्विविधाः । मानवाः । वर्त्तते । खलु । तत्र तेषु द्विविधमानवेषु मध्ये । केचिन्मानवाः । हरेः । भक्ताः । सन्ति । केचन मानवाः । अभक्तास्तद्भक्तिवर्जिताः । सन्ति ॥ ४ ॥ अभक्ता इति । तत्र तेषु भक्ताभक्तेषु मध्ये । अभक्ताः । धनपुत्रादिदातरि । मन्त्रतन्त्रज्ञे भैरवादिक्षुद्र-

शकाब्दे विक्रमार्कस्य खनागवसुभूमिते । कृष्णषष्ठ्यां नभस्यस्य वचोऽमृतमिदं हरेः ॥ १ ॥ तत्र दुर्गपुरे दुर्गे
उत्तममस्य स वेश्मनः । वेद्यां प्राचीनवक्त्रस्य न्यषीन्मञ्चकोत्तमे ॥ २ ॥ त्यागिभिर्गृहिभिः स्वीयैर्भक्तैर्बहुभिरा-
वृतः । वसानः श्वेतवस्त्राणि पुरःस्थान् सोऽब्रवीत्सतः ॥ ३ ॥ इह लोके तु वर्त्तते द्विविधा मानवाः खलु ।
केचित्तत्र हरेर्भक्ताः सन्त्यभक्ताश्च केचन ॥ ४ ॥ अभक्तास्तत्र मुह्यन्ति धनपुत्रादिदातरि । पुरुषे मन्त्रयन्त्रज्ञे
विश्वासं कुर्वते दृढम् ॥ ५ ॥ सत्सङ्गिनस्तु भक्ता ये ते तु तस्मिन्न कुर्वते । धूर्त्तेऽणुमपि विश्वासं हर्येकदृढ
संश्रयाः ॥ ६ ॥ भक्ता अपि च विश्वासं तस्मिन् कुर्वन्ति ये क्वचित् । तेऽप्यभक्तैः समा ज्ञेयाः शिथिलाः
कृष्णसंश्रये ॥७॥ आसीत्कार्यायनग्रामे खट्वाङ्गः क्षत्रियर्षभः । भीष्मोपमो ब्रह्मचर्ये सत्यवादी जितेन्द्रियः ॥८॥

देवतामन्त्रयन्त्राभिज्ञे । पुरुषे । मुह्यन्त्ययमपि कश्चिन्महानस्तीति मोहं प्राप्नुवन्ति । दृढम् । विश्वासम् । कुर्वते ॥ ५ ॥ सत्सङ्गिन इति । ये तु । सत्सङ्गिनः । भक्ताः सन्ति । हर्येकदृढसंश्रया दृढतया केवलस्य श्रीहरेरेवाश्रयिणः । ते सत्सङ्गिनस्तु । धूर्त्ते जनप्रतारके । तस्मिंस्तथाविधपुरुषे । अणुमल्पमात्रमपि । विश्वासम् । न कुर्वते न च मुह्यन्ति ॥ ६ ॥ भक्ता इति । ये जनाः । भक्ताः सन्तोऽपि । क्वचित् । यर्हि । तस्मिन्धूर्त्तपुरुषे । विश्वासम् । कुर्वन्ति । तर्हि । ते भक्ता अपि । कृष्णसंश्रये प्रत्यक्षभगवदाश्रये । शिथिलाः । अत एव । अभक्तैः । समास्तुल्याः । ज्ञेयाः । एवं धूर्त्तविश्वासिनामभक्ततामभिधाय साम्प्रतं भगवदेकान्तिकतामिच्छन्भगवद्भक्तो मायिकवस्तुन्यासक्तिं न कुर्यादिति वक्तुं तथाविधत्वे भगवदेकान्तिकभक्तं खट्वाङ्गनृपं तद्वर्त्तनोक्तिपूर्वं दृष्टान्तयति चतुर्भिः । आसीदिति । हे सन्तः ! । कार्यायन-ग्रामे । क्षत्रियर्षभः । ब्रह्मचर्ये यावज्जीवं ब्रह्मचर्यव्रतपालने । भीष्मोपमो गाङ्गेयतुल्यः । सत्यवादी । जितेन्द्रियः । खट्वाङ्गो नृपतिः । आसीत् ॥ ८ ॥

तदिति । तद्गृहे खट्वाङ्गभवने । मान्त्रिको मन्त्रजपवशीकृतदेवः । कश्चित् । स्वर्णकारस्ताम्रादेः सुवर्णनिष्पादकः खंखो वीतरागी । उपागमत् । स स्वर्णकारः । ताम्रस्य । स्वर्णम् । विधाय । साक्षात्प्रत्यक्षमेव । तं खट्वाङ्गम् । अदर्शयत् ॥९॥ प्राहेति । स च । प्राह खट्वाङ्गमुवाच । त्वम् । सदा दान्यन्नसत्रवान् । असि । इति हेतोः । ते तुभ्यम् । मदीयाम् । विद्याम् । उपदिशामि । इतीत्थम् । उक्तः स्वर्णकारेणाभिहितः । खट्वाङ्गः । तं स्वर्णकारम् । ग्रामात् कार्यायनाख्यस्वसंवसथात् । निरयापयदपसारयामास ॥ १० ॥ सिद्धेति । एवममुना प्रकारेण सिद्धविद्येऽपि स्वर्णकारे । कृष्णान्यवस्त्वनिच्छोः । मायिकतुच्छतां वोद्धुर्ज्ञातुः । तस्यैकान्तिकभक्तस्य खट्वाङ्गस्य । हृदि । प्रतीतिर्विश्वासः । नाभवत् । वै ॥ ११ ॥ एवमिति । एवममुना प्रकारेण । हरेः । एकान्तिकः । भवन् भवितुम् । भगवद्भक्तः । तुच्छे । मायिकवस्तुनि । आसक्तिम् । नैव । करोति ॥ १२ ॥ स्वेति । यो भक्तः । स्वधर्म ज्ञान वैराग्यैः । युक्ताम् । हरेः । अनन्याम् । भक्तिम् । विदधीत । असौ । एकान्तिकः । भक्तः । मतः ॥ १३ ॥ देहेति । असावेकान्तिकभक्तः । देहान्ते । साक्षात्प्रत्यक्षे । वासुदेवेऽक्षरधामस्थे श्रीहरौ । निश्चितमेव । विशति । अन्ये एकान्तिकभिन्नाः सकामभक्तास्तु । यथाधिकारम् । देवतान्तरम् । विशन्ति ॥ १४ ॥ एतदेव स्पष्टमाह । ब्रह्मेति । एके केचन सकामभक्ताः । ब्रह्मादौ विरञ्चि विष्णु शिवादौ । प्रविशन्ति । केचित्सकामभक्ताः । सङ्कर्षणादिषु । आदिशब्देनानिरुद्ध प्रद्युम्नादीनां ग्रहणम् । प्रविशन्ति । एकान्तिकभक्तं विना । इतरे । सकामभक्तास्तु । वासुदेवे तु । नैव । प्रविशन्ति ॥ १५ ॥ तादात्म्येनेति । पुरुषस्य । यत् । नित्यम् । तादात्म्येनातिस्नेहजन्यतदेकलग्नत्वनैव । वर्त्तनम् । सः । प्रवेशः । इतीत्थम् । विज्ञेयः । अम्बुधौ समुद्रे । अम्बुना जलस्येव । न तु प्रवेशो नैव विज्ञेयः ॥ १६ ॥ दृष्टान्तोक्तिपूर्वमेकान्तिकस्य भगवति प्रवेशमाह द्वाभ्याम् । यथेति । यथा । अतिकामिनः पुरुषस्य । नार्यां स्वाभीष्टसुरूपयोषिति । प्रवेशः । यथा वा । लुब्धस्यातिलोभिनः । धने । प्रवेशः । यथा वा । वार्द्धकासैकपुत्रस्येभ्यस्य वन्धस्य वृद्धत्वे जातैकसुतस्य पुरुषस्य । तत्र वृद्धभावोत्पन्ने । पुत्रके । प्रवेशः । तथेत्युत्तरेण सम्बन्धः ॥ १७ ॥

तद्गृहे मान्त्रिकः कश्चित्स्वर्णकार उपागमत् । स्वर्णं विधाय ताम्रस्य स साक्षात्तमदर्शयत् ॥ ९ ॥ प्राह च त्वं सदा दानी ह्यसीत्युपदीशामि ते । विद्यां मदीयामित्युक्तो ग्रामात्तं निरयापयत् ॥१०॥ सिद्धविद्येऽपि तस्यैवं प्रतीतिर्नाभवद्धृदि । कृष्णान्यवस्त्वनिच्छोर्वै वोद्धुर्मायिकतुच्छताम् ॥ ११ ॥ एवं हि भगवद्भक्तस्तुच्छे मायिकवस्तुनि । आसक्तिं न करोत्येव भवन्नेकान्तिको हरेः ॥ १२ ॥ स्वधर्मज्ञानवैराग्यैर्युक्तां भक्तिं हरेस्तु यः । अनन्यां विदधीतासौ भक्त एकान्तिको मतः ॥ १३ ॥ देहान्तेऽसौ वासुदेवे साक्षाद्विशति निश्चितम् । यथाधिकारमन्ये तु विशन्ति देवतान्तरम् ॥ १४ ॥ ब्रह्मादौ प्रविशन्त्येके केचित्सङ्कर्षणादिषु । विनैकान्तिकभक्तं तु वासुदेवे तु नेतरे ॥ १५ ॥ तादात्म्येनैव यन्नित्यं वर्त्तनं पुरुषस्य सः । प्रवेश इति विज्ञेयो न त्वम्बुन इवाम्बुधौ ॥ १६ ॥ यथाऽतिकामिनो नार्यामतिलुब्धस्य वा धने । वार्द्धकासैकपुत्रस्य यथा वा तत्र पुत्रके ॥ १७ ॥

तथेति । तथा । भक्तस्यैकान्तिकस्य । वासुदेवे । प्रवेशः । तादात्म्येनेतिशेषः । अवगम्यताम् । यत्र यस्मिन् । अतिस्नेहः । भवेत् । तेन सह । तादात्म्यं तदेकलग्नत्वम् । मतम् । वै ॥ १८ ॥ प्रीतिमिति । अतोहेतोः । भक्तेन । अखिलेष्वपि । पदार्थेषु मायिकवस्तुषु । प्रीतिं स्नेहम् । विश्वासं च । हित्वा । तौ प्रीतिविश्वासौ । हरावेव । सर्वथा । सदा । कार्यौ ॥१९॥ श्रुत्वेति । इत्येवंविधाम् । हरिणा । उदिताम् । सुधोपमाम् । वाचम् । श्रुत्वा । सदोगताः सभोपविष्टाः । भक्ताः । ते । सर्वे । साधवः । गृहस्थाश्च । आप्तहर्षाः सन्तः । यान्तं स्वावासं व्रजन्तम् । तं श्रीहरिम् । विनयेन । प्रणेमुः ॥२०॥ स्वस्यैकान्तिकभक्तानां लक्षणं यत्प्रवेशनम् । तेषामेव भवेत्स्वस्मिन् लक्षणं तस्य च स्फुटम् ॥१॥ यः श्रीहरिः स्वभक्तेभ्यः प्रोवाच करुणानिधिः । कृत्वा ह्येकान्तिकं स्वस्मिन्प्रवेशं तं ददातु सः ॥२॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्स्नुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां शताधिकैकसप्ततितमस्तरङ्गः ॥ १७१ ॥ ३८ ॥

अपि देशादिवैषम्याद्ये न प्रतिहताः क्वचित् । महतस्तादृशान्स्वीयान् गुणांस्तु चतुरः स्वयम् ॥ १ ॥ उक्त्वा सभक्तशिक्षार्थं श्रीहरिः स्कन्धयोर्द्वयोः । स्वस्याभिम-

तथा प्रवेशो भक्तस्य वासुदेवेऽवगम्यताम् । अतिस्नेहो भवेद्यत्र तादात्म्यं तेन वै मतम् ॥ १८ ॥ प्रीतिं
हित्वा च विश्वासं भक्तेनातोऽखिलेष्वपि । पदार्थेषु हरावेव तौ कार्यौ सर्वथा सदा ॥ १९ ॥ श्रुत्वेति वाचं
हरिणोदितां ते सुधोपमां साधव आप्तहर्षाः । सर्वे गृहस्थाश्च सदोगतास्तं यान्तं प्रणेमुर्विनयेन भक्ताः ॥ २० ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते शताधिकैकसप्ततितमस्तरङ्गः ॥ १७१ ॥ ३८ ॥

शकाब्दे विक्रमार्कस्य खनागवसुभूमिते । भाद्रकृष्णे दशम्यां तु वचोऽमृतमिदं हरेः ॥ १ ॥
तत्र दुर्गपुरात्स्वामी लक्ष्मीवाटीकामुपेत्य सः । सितवासा वेदिकायां तत्र पीठ उपाविशत् ॥ २ ॥
निषेदुः पुरतस्तस्य त्यागिनो गृहिणस्तथा । तानुवाच तदन्तःस्थगुणदार्ढ्यबुभुत्सया ॥ ३ ॥

तयोर्ज्ञेयमभिप्रायं यथार्थतः ॥ २ ॥ सदा साकृतितां स्वस्य भक्तैर्ज्ञेयां तथोक्तवान् । एकोनचत्वारिंशे तु सर्वमेतत्स्मृतं स्फुटम् ॥ ३ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८८०) भाद्रकृष्णे भाद्रपदमासस्य कृष्णपक्षे । दशम्यां तिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । सितवासाः परिधृतसकलश्वेतवसनः । स्वामी । स श्रीहरिः । दुर्गपुराद्दुर्गपुरान्तःस्थोत्तमनृपदुर्गान्तर्गतस्वावासात्सकाशादित्यर्थः। लक्ष्मीवाटीम् । उपेत्य माणिक्याश्वारोहणेन गत्वा । तत्र लक्ष्मीवाट्याम् । वेदिकायाम् । पीठे वेदिकोपरिशुभ्रास्तरणास्तृतपर्यङ्कासने इत्यर्थः । उपाविशत् ॥ २ ॥ निषेदुरिति । त्यागिनः साधवः । तथा । गृहिणो गृहस्था भक्ताः । नानादेशेभ्य आगता इतिशेषः । तस्य श्रीहरेः । पुरतः । निषेदुः । तदन्तःस्थगुणदार्ढ्यबुभुत्सया स्वभक्तानां तेषां स्वान्तःस्थधर्मादिगुणानां देशादिवैषम्येऽपि निश्चलत्वावगच्छया । तान्साध्वादिस्वभक्तान् । उवाच ॥ ३ ॥

यस्मिन्निति । हे साधवः ! । यस्मिन् भक्ते । महानतिश्रेष्ठः । यः । यः । गुणः स्वधर्मादिः । स्यात् । सो महान् गुणः । देशकालादिभिर्विषमदेशकालादिप्राप्तिभिः । क्वचित्कदाचिदपि । प्रतिहतः । न स्यात् । स स तथाविधोगुणः । कथ्यताम् ॥४॥ मौनानिति । स श्रीहरिः । मौनान्स्वेन पृष्टेऽपि तूष्णीमासीनान् । तान्स्वभक्तान्सतः । आह । हे साधवः ! । आदौ । मम । तादृशम् । गुणम् । वच्मि । रम्येषु रमणीयेषु । विषयेषु मायिकार्थेषु । मे मम । सर्वदैव । अरुचिः । अस्ति ॥ ५ ॥ तदिति । बहिः । तद्योगे रम्यविषयसम्बन्धे । जाते सत्यपि । मानसे । तत्सङ्कल्पस्तदुपभोगेच्छा । नास्ति । स्वप्ने स्वप्नावस्थायामपि । तत्स्मृतिः । नास्ति । तदीक्षणम् । यथार्थतयापि तत्र तदीक्षणम् । नास्ति ॥ ६ ॥ इतीति । इत्येवंविधः । मे मम । तादृश उक्तविधः । एकः प्रथमः । गुणः । अस्ति । अथानन्तरम् । अन्यं तादृशं द्वितीयं मम गुणम् । वो युष्मभ्यम् । वदामि । सर्वक्रियास्वपि । सदा । मम । आत्मदर्शनम् । अस्त्येव ॥ ७ ॥ बहिरिति । बहिः । भूयस्यां प्रचुरायाम् । प्रवृत्तौ । सत्यामपि । यदा । अन्तरे । निजम् । आत्मानम् । पश्यामि । तदा । कश्चन । विघ्नो . बाह्यप्रवृत्त्यन्तःप्रवेशरूपोऽन्तरायः । नास्ति

यस्मिन् यस्मिन् गुणो यो यो महान् स्यात्स स कथ्यताम् । देशकालादिभिर्यस्तु न स्यात्प्रतिहतः क्वचित् ॥ ४ ॥ मौनांस्ता-नाह स गुणं ममादौ वच्मि तादृशम् । अरुचिः सर्वदैवास्ति रम्येषु विषयेषु मे ॥ ५ ॥ तद्योगेऽपि बहिर्जाते तत्सङ्कल्पो न मानसे । न तत्स्मृतिर्न च स्वप्ने क्वचिदस्ति तदीक्षणम् ॥ ६ ॥ इत्येकस्तादृशो मेऽस्ति गुणोऽथान्यं वदामि वः । सर्वक्रिया-स्वपि सदा ममास्त्येवात्मदर्शनम् ॥ ७ ॥ बहिः प्रवृत्तौ भूयस्यां सत्यामपि यदान्तरे । पश्यामि निजात्मानं तदा विघ्नो न कश्चन ॥ ८ ॥ आत्मोन्मुखा एव तदा भवन्त्यखिलवृत्तयः । अखण्डं सुखमेवास्ति दुःखलेशो न तत्र मे ॥ ९ ॥ गुणं तृतीयकमथो तादृशं कथयामि मे । अतितेजोमये धाम्नि ब्रह्माख्ये निर्गुणे परे ॥ १० ॥ वर्त्तते भगवान् कृष्णः सर्वदा दिव्यविग्रहः । स एव सर्वकर्त्तास्तीत्येवं मे दृढनिश्चयः ॥११॥ श्रुता मया च वेदान्तग्रन्थास्तु शतशः पुरा । तथापि स यथापूर्वं वर्त्तते तैरविक्षतः ॥१२॥

॥ ८ ॥ आत्मेति । तदा यदाऽन्तर्वृत्त्यात्मानं पश्यामि तस्मिन्काले । अखिलवृत्तयश्चक्षुरादिसकलेन्द्रियव्यापाराः । आत्मोन्मुखा एव । भवन्ति । तत्रात्मस्वरूपे । मम । अखण्डमेव । सुखम् । अस्ति । दुःखलेशस्तु । नास्त्येव ॥ ९ ॥ गुणमिति । अथो अथानन्तरम् । मे मम । तादृशम् । तृतीयकम् । गुणम् । कथयामि । अति-तेजोमये । निर्गुणे मायागुणातीते । परे सर्वोत्कृष्टे । ब्रह्माख्ये । धाम्नि ॥ १० ॥ वर्त्तत इति । सर्वदा । दिव्यविग्रहः । भगवान् । कृष्णः । वर्त्तते । स कृष्ण एव । सर्वकर्त्ता महापुरुषात्मना महामायाद्वारेणानन्ताण्डोत्पत्त्यादिकारकः । अस्ति । इत्येवमेवंविधः । मे मम । दृढनिश्चयः । अस्ति । इतिद्वयोरेकसम्बन्धः ॥ ११ ॥ श्रुता इति । मया । पुरा । शतशः । वेदान्तग्रन्था भगवन्निराकारप्रतिपादकशुद्धाद्वैतवादिमतसन्दर्भाः । श्रुतास्तत्सिद्धान्तावगमपूर्वं खण्डनं विधातुमाकर्णिताः । तथापि । स भगवद्दिव्याकृतिस्वदृढनिश्चयः । तैर्वेदान्तग्रन्थैः । अविक्षतोऽनष्टःसन् । यथापूर्वम् । वर्त्तते ॥ १२ ॥

चतुर्थमिति । हे साधवः ! । मम । तादृशम् । चतुर्थम् । गुणं च । वच्मि । दम्भभक्ते दम्भयुक्ते भगवद्भक्ते । मम । रुचिः । न स्यात् । सत्यभक्ते कायवाङ्मनोभिः परमार्थतया भगवद्भक्तिकर्तृभक्ते तु । सा मद्रुचिः । भवेत् ॥ १३ ॥ सौमनस्यमिति । आद्येन दम्भभक्तेन । मे मम । सौमनस्यम् । न स्यात् । परेण सत्यभक्तेन । सहैव । मे सौमनस्यम् । स्यात् । हे सन्तः ! । इत्यमुना प्रकारेण । मे मम । गुणाः । उक्ताः । यूयम् । निजान् । गुणान् । ब्रूत ॥ १४ ॥ इतीति । इत्यमुना प्रकारेण । उक्ताः श्रीहरिणा कथिताः । ते । सर्वेऽपि । साधवः । भक्ताश्च । स्वगुणान् । पृथक् पृथक् । ब्रुवन्तिस्म । तत्तत्तद्गुणाकथनम् । श्रुत्वा । हरिः । तान्साधुभक्तान् । उवाच ॥ १५ ॥ युष्मास्विति । हे साधवः ! । युष्मासु । सर्वेऽपि । गुणाः । शोभनाः । सन्ति । तेषां गुणानाम् । जीवनं तु । परं केवलम् । ब्रह्मचर्यव्रतम् । ज्ञेयम् ॥ १६ ॥ महान्त इति । ये । महान्तो गुणगरिष्ठाः । साधवः । स्युः । तैस्तु एतद्ब्रह्मचर्यव्रतम् । विशेषतः । पालनीयम् । तेन ब्रह्मचर्यव्रतपालनेन । अखिला अपि । अन्ये । धर्मा गुणाः । शोभन्ते ॥ १७ ॥ वार्त्तामिति । तत्र लक्ष्मीवाटिकायाम् । एता-

चतुर्थं च गुणं वच्मि तादृशं मम साधवः । दम्भभक्ते रुचिर्न स्यात्सत्यभक्ते तु सा भवेत् ॥ १३ ॥ सौमनस्यं च नाद्येन स्यात्परेण सहैव मे । इत्युक्ता मे गुणाः सन्तो ब्रूतं यूयं गुणान्निजान् ॥१४॥ इत्युक्ताः साधवो भक्तास्तेऽपि सर्वे स्वकान् गुणान् । पृथक् पृथग्ब्रुवन्ति स्म तच्छ्रुत्वोवाच तान् हरिः ॥१५॥ युष्मासु शोभनाः सन्ति गुणाः सर्वेऽपि साधवः ! । तेषां तु जीवनं ज्ञेयं ब्रह्मचर्यव्रतं परम् ॥१६॥ महान्तः साधवो ये स्युस्तैस्त्वेतद्धि विशेषतः । पालनीयं तेन धर्माः शोभन्तेऽन्येऽखिला अपि ॥१७॥ वार्त्तामेतावतीं कृत्वा तत्र भक्तव्रजैः सह । पुनः पुरमुपेत्यासौ स्वाश्रमे समुपाविशत् ॥ १८ ॥ उपाविशंस्तदग्रे च सर्वे भक्तजना अपि । ततः साधूनुवाचासावुपविष्टान्निजाग्रतः ॥१९॥ श्रीमद्भागवतस्य द्वौ स्कन्धौ दशमपञ्चमौ । मया मुख्यतया सम्यक् साधवः ! प्रतिपादितौ ॥ २० ॥ अभिप्रायं तयोः सम्यग्बोध्यं वः कथयाम्यहम् । स्कन्धे तु दशमे कृष्णस्वरूपस्यास्ति निश्चयः ॥ २१ ॥

वतीम् । वार्त्ताम् । कृत्वा । असौ श्रीहरिः । भक्तव्रजैः स्वभक्तत्यागिगृह्यादिसमूहैः सह । पुनः । पुरम् । उपेत्य । स्वाश्रमे उत्तमनृपदुर्गान्तःस्थस्वावासभवने । समुपाविशत्स्वकीये स्वास्तृतेपर्यङ्कासने न्यषीदत् ॥ १८ ॥ उपाविशन्निति । सर्वे । भक्तजनाः साधवो गृहिणश्च स्वाश्रितजनाः । अपि शब्दाद्व्रह्मपर्षदादयः । तदग्रे हरेः पुरः । उपाविशन् सायन्तनभगवन्नीराजनकालीनं कर्म समाप्य निषेदुः । ततस्तदुपवेशनानन्तरम् । असौ श्रीहरिः । निजाग्रतः स्वीयपुरःप्रदेशे । उपविष्टान् । साधून् । उवाच ॥ १९ ॥ श्रीमदिति । हे साधवः ! । श्रीमद्भागवतस्य पुराणस्य । दशमपञ्चमौ । द्वौ । स्कन्धौ । मया । मुख्यतया । सम्यक् । प्रतिपादितौ । स्तः ॥ २० ॥ अभिप्रायमिति । अहम् । सम्यक् । बोध्यम् । तयोः स्कन्धयोः । अभिप्रायम् । वः युष्मभ्यम् । कथयामि । दशमे स्कन्धे तु । कृष्णस्वरूपस्य । निश्चयः । अस्ति ॥ २१ ॥

तन्निश्चयस्वरूपं स्पष्टतयाऽऽह चतुर्भिः । वेदेति । वेदशास्त्रपुराणेषु । एकम् । ब्रह्म श्रीकृष्णाख्यं परंब्रह्म । बहुधा बहुभिः प्रकारैः । उदितम् । तद्यथा । ज्ञानम् । आनन्दरूपम् । सूक्ष्मम् । तत्त्वम् । निरञ्जनं च ॥ २२ ॥ वासुदेव इति । वासुदेवः । परंब्रह्म । क्षेत्रज्ञः । पुरुषोत्तमः । परमात्मा । निर्गुणः । विष्णुः । नारायणः । शिवश्च । अत्रार्थे श्रुतिस्मृतयः । 'सत्यं ज्ञानमनन्तं ब्रह्मे'ति । 'आनन्दो ब्रह्मे'ति । 'सूक्ष्माच्च तत्सूक्ष्मतरमि'ति । 'तत्त्वं नारायणः पर'इति । 'निर्विकल्पो निरञ्जन'इति । 'तदस्म्यहं वासुदेव'इति । 'एकमेव परंब्रह्म विभाती'ति । 'क्षेत्रज्ञ आत्मा पुरुषः पुराण'इति । 'प्रथितः पुरुषोत्तम'इति । 'परमात्मा परंब्रह्मेति । 'साक्षी चेता केवलो निर्गुणश्चेति । तद्विष्णोः परमं पदमि'ति । 'नारायणः परंब्रह्मे'ति । 'अथ पुरुषो ह वै नारायणोऽकामयते'ति । 'शिवमद्वैतं चतुर्थं मन्यते' ॥ २३ ॥ नामेति । एवममुना प्रकारेण । नामरूपविभेदेन । यत् । ब्रह्म । बहुधा । ईरितम् । स तद्ब्रह्मेत्यर्थः । विधेयप्राधान्यात्पुंस्त्वम् । कृष्ण एव । इतीत्थम् । अत्र दशमस्कन्धे । स्पष्टम् । निरूपितम् । इति त्रयाणामेकसम्बन्धः ॥ २४ ॥ स्तुतीति । सर्वत्र । स्तुतिभागेषु दशमस्कन्धीयसकलस्तुतिभागेष्वित्यर्थः ।

वेदशास्त्रपुराणेषु ब्रह्मैकं बहुधोदितम् । ज्ञानमानन्दरूपं च सूक्ष्मं तत्वं निरञ्जनम् ॥ २२ ॥ वासुदेवः परंब्रह्म क्षेत्रज्ञः पुरुषोत्तमः । परमात्मा निर्गुणश्च विष्णुर्नारायणः शिवः ॥२३॥ नामरूपविभेदेन बहुधैवं यदिरितम् । ब्रह्म कृष्ण एवेति स्पष्टमत्र निरूपितम् ॥ २४ ॥ स्तुतिभागेषु सर्वत्र परोक्षब्रह्मवर्णनम् । कृत्वा तत् कृष्ण एवेति प्रत्यक्ष उपसंहृतम् ॥ २५ ॥ भक्त्याश्रयस्ततः कृष्ण इति तत्र हि निश्चयः । सर्वाण्यपि चरित्राणि मङ्गलान्येव तस्य हि ॥ २६ ॥ श्रोतव्यानि च गेयानि तानि श्रेयस्कराण्यतः । दिव्यानि तानि सर्वाणि ज्ञेयानीति च तद्रहः ॥२७॥ अथ स्कन्धे पञ्चमे तु महात्म्यं सर्वतोऽधिकम् । अस्ति कृष्णस्य यज्ज्ञानात्तद्भक्तिर्वर्द्धतेतराम् ॥ २८ ॥ तत्तद्भक्तसुखावाप्त्यै जगतः स्थितये तथा कृष्णस्यानेकरूपेण प्रोक्ताऽत्रोपासनाऽस्ति च ॥२९॥ कृष्णोपबद्धां मर्यादां पालयन्तीह ये नराः । तेषामूर्ध्वगतिः प्रोक्ता तदन्येषां त्वधोगतिः ॥३०॥

परोक्षब्रह्मवर्णनम् । कृत्वा । तद्ब्रह्म । कृष्ण एव । इतीत्थम् । प्रत्यक्षे श्रीकृष्णे । उपसंहृतम् ॥ २५ ॥ भक्तीति । ततोहेतोः । भक्त्याश्रयः सप्रेम नवधा भक्त्याधारः । कृष्ण एवास्ति । इतीत्थम् । तत्र दशमस्कन्धे । निश्चयोऽस्ति । हि । तस्य श्रीकृष्णस्य । सर्वाण्यपि । चरित्राणि । मङ्गलानि श्रोतृवक्तृमङ्गलावहान्येव । सन्ति । हि ॥ २६ ॥ श्रोतव्यानीति । अतो हेतोः । श्रेयस्कराणि । तानि कृष्णचरित्राणि । श्रोतव्यानि । गेयानि कीर्त्तनीयानि च । तानि सर्वाणि । दिव्यान्यमायिकानि च । ज्ञेयानि । इतीत्थम् । तद्रहस्तस्य दशमस्कन्धस्य रहोऽभिप्रायपर्यायः सिद्धान्तोऽस्ति ॥ २७ ॥ अथेति । अथ च । पञ्चमे । स्कन्धे तु । कृष्णस्य । माहात्म्यम् । सर्वतः । अधिकम् । अस्ति । यज्ज्ञानाद्यस्य सर्वाधिकश्रीकृष्णमाहात्म्यस्यावगमात् । तद्भक्तिः श्रीकृष्णभक्तिः । वर्द्धतेतराम् ॥ २८ ॥ तत्तद्भक्तसुखावाप्त्यै । तथा । जगतः । स्थितये । अनेकरूपेण । कृष्णस्य । उपासना च । अत्र पञ्चमस्कन्धे । प्रोक्ता । अस्ति ॥ २९ ॥ कृष्णेति । किञ्च । इह लोके । ये नराः । कृष्णोपबद्धाम् । मर्यादाम् । पालयन्ति । तेषां नराणाम् । ऊर्ध्वगतिः स्वर्गादिलोकप्राप्तिः । प्रोक्ता । तदन्येषां कृष्णोपबद्धमर्यादामपालयतां नराणां तु । अधोगतिर्निरयप्राप्तिः

प्रोक्ताऽस्ति ॥ ३० ॥ योगेति । योगसिद्धा भक्तियोगादिना सिद्धगतिं प्राप्ताः । महान्तो महानुभावपुरुषा अपि । यदि । तां कृष्णोपबद्धाम् । मर्यादाम् । कचित्कदाचित् । उल्लङ्घयेयुः । तर्हि । स्वस्थितेः स्वकीयसिद्धगतेः । आशु । ध्रुवमेव । पतेयुः ॥ ३१ ॥ कृष्णेति । दययाऽपि । कृष्णेतरपदार्थेषु । प्रीतिः । कदाचन । सर्वप्रकारेण । न कार्या । इतीत्थं श्लोकत्रयेणोक्तम् । एतच्च । अत्र पञ्चमस्कन्धे । । निश्चितमेव । अस्ति निरूपितं वर्त्तते ॥ ३२ ॥ स्कन्धाविति । ततोहेतोः । एतौ दशमपञ्चमौ । स्कन्धौ । भक्तेन । सर्वथा । नित्यम् । सेव्यौ । येन नित्यैतत्सेवनेन । मुक्तेरपि । गरीयस्यतिश्रेष्ठा । तद्भक्तिः श्रीकृष्णभक्तिः । पुष्णाति समेधते ॥ ३३ ॥ परीति । हे राजर्षे ! । नैर्गुण्ये गुणातीते स्वात्मरूपे । परिनिष्ठितः सन्नपि । अहम् । उत्तमश्लोकलीलया । गृहीतचेता आकृष्टचित्तः सन् । यच्छ्रीमद्भागवतलक्षणम् । आख्यानम् । अधीतवान् ॥ ३४ ॥ इत्थमिति । इत्थममुना प्रकारेण । शुकोक्तेर्बादरायणिवचनाद्धेतोः । कृष्णस्य । सर्वाण्यपि चरितानि । आदरेणैव । । गेयानि । कृष्णश्च श्रीकृष्णपरमात्माऽपि । साकृतिः सदा दिव्यमनोहरमूर्त्तिः । ज्ञेयः ॥ ३५ ॥ य इति । यः पुरुषः । कृष्णम् । साकृतिम् । न जानीत । तस्य पुरु-

योगसिद्धा महान्तोऽपि मर्यादां यदि कचित् । उलङ्घयेयुस्तर्ह्याशु पतेयुः स्वस्थितेर्ध्रुवम् ॥ ३१ ॥ कृष्णेतरपदार्थेषु दययाऽपि कदाचन । प्रीतिर्न सर्वथा कार्येत्येतच्चात्रास्ति निश्चितम् ॥३२॥ स्कन्धावेतौ ततो नित्यं सेव्यौ भक्तेन सर्वथा । येन पुष्णाति तद्भक्तिर्मुक्तेरपि गरीयसी ॥ ३३ ॥ परिनिष्ठितोऽपि नैर्गुण्ये उत्तमश्लोकलीलया । गृहीतचेता राजर्षे आख्यानं यदधीतवान् ॥ ३४ ॥ इत्थं शुकोक्तेर्गेयानि कृष्णस्य चरितानि तु । सर्वाण्यप्यादरेणैव ज्ञेयः कृष्णश्च साकृतिः ॥ ३५ ॥ यः साकृतिं न जानाति कृष्णं तस्य तु यो भवेत् । दोषः स त्वनिवार्योऽस्ति प्रायश्चित्तशतैरपि ॥ ३६ ॥ नित्यं साकारमेव श्रीकृष्णं जानाति यः पुमान् । सर्वं तेन तु विज्ञातं सर्वं तेन कृतं तथा ॥३७॥ एषा तु वार्त्ता दृढमेव चित्ते सर्वैर्विधेयेति ममोपदेशः । पीत्वेति वाक्यामृतमीयुरस्य सन्तो गृहस्थाश्च मुदं परां ते ॥३८॥

इति श्रीहरिवाक्यसुधासिंधौ शतानन्दमुनिविरचिते शताधिकद्विसप्ततितमस्तरङ्गः ॥ १७२ ॥ ३९ ॥

षस्य तु । यः । दोषः । भवेत् । स दोषस्तु । प्रायश्चित्तशतैरपि । अनिवार्योऽनिवर्त्यः । अस्ति ॥ ३६ ॥ नित्यमिति । यः । पुमान् भक्तः । श्रीकृष्णम् । नित्यम् । साकारमेव । जानाति । तेन भक्तेन तु । सर्वम् । विज्ञातम् । तथा । तेन । सर्वं सुकृतम् । कृतमाचरितम् ॥ ३७ ॥ एषेति । एषोक्तलक्षणा । वार्त्ता । सर्वैर्भवद्भिः । चित्ते स्वस्वमानसे । दृढं यथातथा । विधेया धार्यैव । इतीत्थम् । मम । उपदेशः । शिक्षा । अस्ति । इत्येवंविधम् । अस्य श्रीहरेः । वाक्यामृतम् । पीत्वा । ते सभोपविष्टाः सन्तः । गृहस्थाश्च । पराम् । मुदम् । ईयुः प्रापुः ॥३८॥ स्वभक्तानां तु शिक्षार्थमुक्त्वा स्वांश्चतुरो गुणान् । अभिप्रायं च दशमस्कन्धयोः स्फुटम् ॥ १ ॥ श्रीहरिः प्राह यः स्वस्य सदा साकृतितां तथा । भक्तिधर्मात्मजो मह्यं स दद्यात्स्वप्रियान् गुणान् ॥ २ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्सूनुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां शताधिकद्विसप्ततितमस्तरङ्गः ॥ १७२ ॥ ३९ ॥

ज्ञात्वाऽज्ञात्वापि वपुषा मनसा वचसापि वा । योऽवमानः सतां जातस्तस्य सम्यग्निवृत्तये ॥ १ ॥ प्रणामो हरये नित्यमेकः कार्यो ति दण्डवत् । चत्वारिंशे तु सम्प्रोक्तमेतत्सर्वं सहेतुकम् ॥ २ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८८०) इषासिततृतीयायामश्विनमासस्य कृष्णपक्षागततृतीयातिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमस्य । राज्ञः । दुर्गे । निजाश्रमे स्वावासभवने । स्नात्वा प्रातःस्नानं विधाय । सिते उज्ज्वले । वस्त्रे परिधानीय प्रावरणीयवसने । वसित्वा । स श्रीहरिः । पीठे रल्लकासने । उपाविशत् ॥ २ ॥ मुक्तानन्देति । तदा । मुक्तानन्दादयः । सन्तः । मयराममुखाः । गृहस्थाश्च । आगत्य । दर्शनार्थं श्रीहरेर्दर्शनं कर्त्तुम् । तदन्तिके श्रीहरिसमीपप्रदेशे । तस्थुः ॥ ३ ॥ सन्ध्येति । स श्रीहरिः । सन्ध्यादि प्रातःसन्ध्यादिनित्यकृत्यम् । कृत्वा । श्रीकृष्णं स्वभक्तशिक्षार्थं स्वेष्टदेवत्वेनाभिमतश्रीकृष्णार्चाम् । यथाविधि । सम्पूज्य । प्रणयेन । साष्टाङ्गनमस्कारांश्च । चकार ॥ ४ ॥ तद्दिति । स श्रीहरिः । तद्दिने तस्मिन्दिवसे । नित्यापेक्षया । अधिकम् । एकम् । तं साष्टाङ्गनमस्कारम् । अकरोत् । तदा । शुकमुनिर्नित्यं तन्निकटावासः शुकानन्दमुनिः । तस्याधिकैकनम-

शकाब्दे विक्रमार्कस्य खनागवसुभूमिते । इषासिततृतीयायां वचोऽमृतमिदं हरेः ॥ १ ॥ तत्र दुर्गपुरे दुर्गे उत्तमस्य निजाश्रमे । स्नात्वा वसित्वा स सिते वस्त्रे पीठ उपाविशत् ॥ २ ॥ मुक्तानन्दादयः सन्तो मयराममुखास्तदा । गृहस्थास्तस्थुरागत्य दर्शनार्थं तदन्तिके ॥ ३ ॥ सन्ध्यादि कृत्वा श्रीकृष्णं सम्पूज्य च यथाविधि । स साष्टाङ्गनमस्कारान्प्रणयेन चकार च ॥ ४ ॥ तद्दिने सोऽधिकं चैकं तं नित्यापेक्षयाऽकरोत् । पप्रच्छ तं शुकमुनिस्तदा तस्य तु कारणम् ॥ ५ ॥ तमुवाच हरिः साधो ! क्रियन्ते प्रत्यहं मया । प्रणामाः कारणं तेषामादौ तु कथयामि ते ॥ ६ ॥ देहेऽहन्ता दैहिकेषु ममता च कदाचन । मम मास्त्विति सम्प्रार्थ्य क्रियन्ते नतयोऽन्वहम् ॥ ७ ॥ अद्य त्वासीद्विचारो मे हृदि कश्चन तेन तु । कृतोऽधिकः प्रणामो वै तं च वच्मि हितावहम् ॥ ८ ॥ कथा विष्णुपुराणस्य श्रुता निशि मया मुने ! । दुर्वाससोऽवमानेन प्रापेन्द्रो दुर्दशां भृशम् ॥ ९ ॥

स्कारस्य । कारणं हेतुम् । तं श्रीहरिम् । पप्रच्छ । हरे कथमद्य त्वयाऽधिक एकः प्रणामः कृत इत्यप्राक्षीदित्यर्थः ॥ ५ ॥ तमिति । तमेवं पृच्छन्तं शुकानन्दमुनिम् । हरिः । उवाच । हे साधो ! । मया । प्रत्यहम् । प्रणामाः । क्रियन्ते । तेषां प्रणामानाम् । कारणम् । आदौ । ते तुभ्यम् । कथयामि ॥ ६ ॥ देह इति । देहे । अहन्ता । दैहिकेषु । ममता च । मम । कदाचन । मास्तु । इतीत्थम् । सम्प्रार्थ्य श्रीकृष्णप्रार्थनां कृत्वा । अन्वहं प्रतिदिनम् । नतयो नमस्काराः । मया । क्रियन्ते ॥ ७ ॥ अद्येति । हे मुने ! । अद्यास्मिन्दिवसे तु । मे मम । हृदि । कश्चन । विचारः । आसीत् । तेन विचारेण । अधिकः । प्रणामः । कृतः । हितावहं युष्माकं सर्वेषां मदाश्रितानां हितंकरम् । तं विचारम् । वच्मि ॥ ८ ॥ कथेति । हे मुने ! । मया । निशि गतरात्रौ । विष्णुपुराणस्य । कथा । श्रुता । तामाह । इन्द्रः । दुर्वाससो मुनेः । अवमानेन । भृशमतिशयिताम् । दुर्दशाम् । प्राप ॥ ९ ॥

प्रोक्ताऽस्ति ॥ ३० ॥ योगेति । योगसिद्धा भक्तियोगादिना सिद्धगतिं प्राप्ताः । महान्तो महानुभावपुरुषा अपि । यदि । तां कृष्णोपवद्धाम् । मर्यादाम् । कचित्कदाचित् । उल्लङ्घयेयुः । तर्हि । स्वस्थितेः स्वकीयसिद्धगतेः । आशु । ध्रुवमेव । पतेयुः ॥ ३१ ॥ कृष्णेति । दययाऽपि । कृष्णेतरपदार्थेषु । प्रीतिः । कदाचन । सर्वप्रकारेण । न कार्या । इतीत्थं श्लोकत्रयेोक्तम् । एतच्च । अत्र पञ्चमस्कन्धे । । निश्चितमेव । अस्ति निरूपितं वर्त्तते ॥ ३२ ॥ स्कन्धाविति । ततोहेतोः । एतौ दशमपञ्चमौ । स्कन्धौ । भक्तेन । सर्वथा । नित्यम् । सेव्यौ । येन नित्यैतत्सेवनेन । मुक्तेरपि । गरीयस्यतिश्रेष्ठा । तद्भक्तिः श्रीकृष्णभक्तिः । पुष्णाति समेधते ॥ ३३ ॥ परीति । हे राजर्षे ! । नैर्गुण्ये गुणातीते स्वात्मरूपे । परिनिष्ठितः सन्नपि । अहम् । उत्तमश्लोकलीलया । गृहीतचेता आकृष्टचित्तः सन् । यच्छ्रीमद्भागवतलक्षणम् । आख्यानम् । अधीतवान् ॥ ३४ ॥ इत्थमिति । इत्थममुना प्रकारेण । शुकोक्तिर्बादरायणिवचनाद्धेतोः । कृष्णस्य । सर्वाण्यपि चरितानि । आदरेणैव । गेयानि । कृष्णश्च श्रीकृष्णपरमात्माऽपि । साकृतिः सदा दिव्यमनोहरमूर्त्तिः । ज्ञेयः ॥ ३५ ॥ य इति । यः पुरुषः । कृष्णम् । साकृतिम् । न जानीत । तस्य पुरुषस्य तु । यः । दोषः । भवेत् । स दोषस्तु । प्रायश्चित्तशतैरपि । अनिवार्योऽनिवर्त्त्यः । अस्ति ॥ ३६ ॥ नित्यमिति । यः । पुमान् भक्तः । श्रीकृष्णम् । नित्यम् । साकारमेव । जानाति । तेन भक्तेन तु । सर्वम् । विज्ञातम् । तथा । तेन । सर्वं सुकृतम् । कृतमाचरितम् ॥ ३७ ॥ एषेति । एषोक्तलक्षणा । वार्त्ता । सर्वैर्भवद्भिः । चित्ते स्वस्वमानसे । दृढं यथातथा । विधेया धार्यैव । इतीत्थम् । मम । उपदेशः । शिक्षा । अस्ति । इत्येवंविधम् । अस्य श्रीहरेः । वाक्यामृतम् । पीत्वा । ते समीपविष्टाः सन्तः । गृहस्थाश्च । पराम् । मुदम् । ईयुः प्रापुः ॥३८॥ स्वभक्तानां तु शिक्षार्थमृत्त्वा स्वांश्चतुरो गुणान् । अभिप्रायं च दशमस्कन्धयोः स्फुटम् ॥ १ ॥ श्रीहरिः प्राह यः स्वस्य सदा साकृतितां तथा । भक्तिधर्मात्मजो मह्यं स दद्यात्स्वप्रियान् गुणान् ॥ २ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्स्नुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां शताधिकद्विसप्ततितमस्तरङ्गः ॥ १७२ ॥ ३९ ॥

योगसिद्धा महान्तोऽपि मर्यादां यदि कचित् । उलङ्घयेयुस्तर्ह्याशु पतेयुः स्वस्थितेर्ध्रुवम् ॥ ३१ ॥ कृष्णेतरपदार्थेषु दययाऽपि कदाचन । प्रीतिर्न सर्वथा कार्येत्येतच्चात्रास्ति निश्चितम् ॥३२॥ स्कन्धावेतौ ततो नित्यं सेव्यौ भक्तेन सर्वथा । येन पुष्णाति तद्भक्तिर्मुक्तेरपि गरीयसी ॥ ३३ ॥ परिनिष्ठितोऽपि नैर्गुण्ये उत्तमश्लोकलीलया । गृहीतचेता राजर्षे आख्यानं यदधीतवान् ॥ ३४ ॥ इत्थं शुकोक्तेर्गेयानि कृष्णस्य चरितानि तु । सर्वाण्यप्यादरेणैव ज्ञेयः कृष्णश्च साकृतिः ॥ ३५ ॥ यः साकृतिं न जानाति कृष्णं तस्य तु यो भवेत् । दोषः स त्वनिवार्योऽस्ति प्रायश्चित्तशतैरपि ॥ ३६ ॥ नित्यं साकारमेव श्रीकृष्णं जानाति यः पुमान् । सर्वं तेन तु विज्ञातं सर्वं तेन कृतं तथा ॥३७॥ एषा तु वार्त्ता दृढमेव चित्ते सर्वैर्विधेयेति ममोपदेशः । पीत्वेति वाक्यामृतमीयुरस्य सन्तो गृहस्थाश्च मुदं परां ते ॥३८॥

इति श्रीहरिवाक्यसुधासिंधौ शतानन्दमुनिविरचिते शताधिकद्विसप्ततितमस्तरङ्गः ॥ १७२ ॥ ३९ ॥

ज्ञात्वाऽज्ञात्वापि वपुषा मनसा वचसापि वा । योऽवमानः सतां जातस्तस्य सम्यग्निवृत्तये ॥ १ ॥ प्रणामो हरये नित्यमेकः कार्यो ति दण्डवत् । चत्वारिंशे तु सम्प्रोक्तमेतत्सर्वं सहेतुकम् ॥ २ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८८०) इषासिततृतीयायामश्विनमासस्य कृष्णपक्षागततृतीयातिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमस्य । राज्ञः । दुर्गे । निजाश्रमे स्वावासभवने । स्नात्वा प्रातःस्नानं विधाय । सिते उज्ज्वले । वस्त्रे परिधानीय प्रावरणीयवसने । वसित्वा । स श्रीहरिः । पीठे रत्नकासने । उपाविशत् ॥ २ ॥ मुक्तानन्देति । तदा । मुक्तानन्दादयः । सन्तः । मयराममुखाः । गृहस्थाश्च । आगत्य । दर्शनार्थं श्रीहरेर्दर्शनं कर्त्तुम् । तदन्तिके श्रीहरिसमीपप्रदेशे । तस्थुः ॥ ३ ॥ सन्ध्येति । स श्रीहरिः । सन्ध्यादि प्रातःसन्ध्यादिनित्यकृत्यम् । कृत्वा । श्रीकृष्णं स्वभक्तशिक्षार्थं स्वेष्टदेवत्वेनाभिमतश्रीकृष्णार्चाम् । यथाविधि । सम्पूज्य । प्रणयेन । साष्टाङ्गनमस्कारांश्च । चकार ॥ ४ ॥ तद्दिति । स श्रीहरिः । तद्दिने तस्मिन्दिवसे । नित्यापेक्षया । अधिकम् । एकम् । तं साष्टाङ्गनमस्कारम् । अकरोत् । तदा । शुकमुनिर्नित्यं तन्निकटावासः शुकानन्दमुनिः । तस्याधिकैकनम-

शकाब्दे विक्रमार्कस्य खनागवसुभूमिते । इषासिततृतीयायां वचोऽमृतमिदं हरेः ॥ १ ॥ तत्र दुर्गपुरे दुर्गे उत्तमस्य निजाश्रमे । स्नात्वा वसित्वा स सिते वस्त्रे पीठ उपाविशत् ॥ २ ॥ मुक्तानन्दादयः सन्तो मयराममुखास्तदा । गृहस्थास्तस्थुरागत्य दर्शनार्थं तदन्तिके ॥ ३ ॥ सन्ध्यादि कृत्वा श्रीकृष्णं सम्पूज्य च यथाविधि । स साष्टाङ्गनमस्कारान्प्रणयेन चकार च ॥ ४ ॥ तद्दिने सोऽधिकं चैकं तं नित्यापेक्षयाऽकरोत् । पप्रच्छ तं शुकमुनिस्तदा तस्य तु कारणम् ॥ ५ ॥ तमुवाच हरिः साधो ! क्रियन्ते प्रत्यहं मया । प्रणामाः कारणं तेषामादौ तु कथयामि ते ॥ ६ ॥ देहेऽहन्ता दैहिकेषु ममता च कदाचन । मम मास्त्विति सम्प्रार्थ्य क्रियन्ते नतयोऽन्वहम् ॥ ७ ॥ अद्य त्वासीद्विचारो मे हृदि कश्चन तेन तु । कृतोऽधिकः प्रणामो वै तं च वच्मि हितावहम् ॥ ८ ॥ कथा विष्णुपुराणस्य श्रुता निशि मया मुने ! । दुर्वाससोऽवमानेन प्रापेन्द्रो दुर्दशां भृशम् ॥ ९ ॥

स्कारस्य । कारणं हेतुम् । तं श्रीहरिम् । पप्रच्छ । हरे कथमद्य त्वयाऽधिक एकः प्रणामः कृत इत्यप्राक्षीदित्यर्थः ॥ ५ ॥ तमिति । तमेवं पृच्छन्तं शुकानन्दमुनिम् । हरिः । उवाच । हे साधो ! । मया । प्रत्यहम् । प्रणामाः । क्रियन्ते । तेषां प्रणामानाम् । कारणम् । आदौ । ते तुभ्यम् । कथयामि ॥ ६ ॥ देह इति । देहे । अहन्ता । दैहिकेषु । ममता च । मम । कदाचन । मास्तु । इतीत्थम् । सम्प्रार्थ्य श्रीकृष्णप्रार्थनां कृत्वा । अन्वहं प्रतिदिनम् । नतयो नमस्काराः । मया । क्रियन्ते ॥ ७ ॥ अद्येति । हे मुने ! । अद्यास्मिन्दिवसे तु । मे मम । हृदि । कश्चन । विचारः । आसीत् । तेन विचारेण । अधिकः । प्रणामः । कृतः । हितावहं युष्माकं सर्वेषां मदाश्रितानां हितंकरम् । तं विचारम् । वच्मि ॥ ८ ॥ कथेति । हे मुने ! । मया । निशि गतरात्रौ । विष्णुपुराणस्य । कथा । श्रुता । तामाह । इन्द्रः । दुर्वाससो मुनेः । अवमानेन । भृशमतिशयिताम् । दुर्दशाम् । प्राप ॥ ९ ॥

तदिति । तत्सम्बन्धेनेन्द्रसम्बन्धेन । त्रैलोक्यवासिनः । सर्वे जनाः । कष्टामतिकष्टरूपाम् । महतीम् । दुर्दशाम् । सहस्रशः । वर्षाणि । प्रापुः ॥१०॥ इतीति । इत्येवंविधां कथाम् । श्रुतवतः । मम । चित्ते । महान् । विचारः । अभूत् । तमाह सार्द्धद्वाभ्याम् । अहो आश्चर्यम् । सदवमानस्य । विपाकः फलम् । अतीवात्यन्तम् । दुःसहः सोढुमशक्यः । अस्ति ॥ ११ ॥ अत इति । अतो हेतोः । अद्यप्रभृति । कायेन । वचसा । मनसा च । तं सदवमानम् । कदाचन । सर्वथा । न करिष्यामि ॥ १२ ॥ मयेति । जन्मतो मत्प्रादुर्भावदिनमारभ्य । अद्यदिनावधि । मया । बुध्या बुद्धिपूर्वकम् । स सदवमानः । न कृतः । क्वचित् । अज्ञानजमबुद्धिपूर्वं जातम् । तं सदवमानम् । हरिं श्रीकृष्णम् । क्षमापयिष्यामि ॥ १३ ॥ एवमिति । एवममुना प्रकारेण । मे मम । विचारः । आसीत् । ततो हेतोः । अद्यास्मिन्दिवसे । हरिपूजनम् । कृत्वा । अञ्जलीपुटं बध्वा । प्रभुः श्रीहरिः । इत्थं वक्ष्यमाणप्रकारेण । सम्प्रार्थितः ॥ १४ ॥ प्रार्थनामाह । ज्ञात्वेति । हे

तत्सम्बधेन च प्रापुः सर्वे त्रैलोक्यवासिनः । महतीं दुर्दशां कष्टां वर्षाणि च सहस्रशः ॥ १० ॥ इति श्रुतवतश्चित्ते विचारोऽभून्महान्मम । अहो सदवमानस्य विपाकोऽतीव दुःसहः ॥ ११ ॥ अतः कायेन वचसा मनसा च कदाचन । अद्यप्रभृति तं नूनं न करिष्यामि सर्वथा ॥ १२ ॥ मया बुद्धया स न कृतो जन्मतोऽद्यदिनावधि । क्षमापयिष्यामि हरिं क्वचिदज्ञानजं तु तम् ॥ १३ ॥ एवं विचार आसीन्मे ततो हरिपूजनम् । कृत्वा बद्ध्वाञ्जलिपुटमित्थं सम्प्रार्थितः प्रभुः ॥ १४ ॥ ज्ञात्वाऽज्ञात्वाऽपि वा वाचा मनसा वपुषा च वा । जातः सदपराधो मे श्रीहरे ! क्षम्यतां त्वया ॥ १५ ॥ इत्युच्चार्य प्रणामोऽद्य कृत एकोऽधिको मुने ! । येनापराधं तं श्रीकृष्णः सहेत करुणानिधिः ॥ १६ ॥ भक्तापराधसदृशं पापमन्यन्न विद्यते । भक्तसम्प्रीणनसमं पुण्यमन्यच्च नाधिकम् ॥ १७ ॥ लोभेर्ष्याक्रोधमानैर्हि जायते सद्भिगर्हणा । सत्सन्मानश्च लोभादिहीनैरेव हि जायते ॥१८॥ सति देहेऽथ देहान्ते येषां स्यात्तु सुखैषणा । तैः कायवाङ्मनोभिर्वै सेव्याः सन्तः सदादरात् ॥ १९ ॥

श्रीहरे ! । ज्ञात्वा । अथवा । अज्ञात्वाऽपि । वाचा । अथवा । मनसा । अथवा । वपुषा । जातः । मे मम । सदपराधः । त्वया । क्षम्यताम् । इतीत्युत्तरेण सम्बन्धः ॥ १५ ॥ इतीति । हे मुने ! । इत्यमुना प्रकारेण । उच्चार्य । अद्य । एकः । प्रणामः । अधिकः । कृतः । येनेत्थंकृतेनाधिकप्रणामेन । करुणानिधिः । कृष्णः । तम् । अपराधम् । सहेत ॥ १६ ॥ भक्तेति । भक्तापराधसदृशं भगवद्भक्तसाधुजनापराधाचरणसमानम् । अन्यत् । पापम् । न विद्यते । भक्तसम्प्रीणनसमम् अन्यत् । अधिकम् । पुण्यं च न विद्यते ॥ १७ ॥ लोभेति । लोभेर्ष्याक्रोधमानैः । सद्भिगर्हणा सतामपराधः । जायते । हि । लोभादिहीनैर्भक्तैरेव । सत्सन्मानः । जायते । हि ॥ १८ ॥ सतीति । येषां भक्तानाम् । देहे सति । अथ च । देहान्ते देहत्यागानन्तरम् । सुखैषणा सुखप्राप्तीच्छा । स्यात् । तैर्भक्तैस्तु कायवाङ्मनोभिः । आदरात् । सदा । सन्तः । सेव्याः । वै ॥ १९ ॥

बुद्धीति । केनचिद्भक्तेनापि । बुद्धिपूर्वं तु । सद्द्रोहः । नैव । कर्त्तव्यः । यतोहेतोः । तत्पापं सद्द्रोहजमघम् । प्रायश्चित्तैरपि । न नश्येत् ॥ २० ॥ अज्ञानादिति । कचित् । अज्ञानादबुद्धिपूर्वम् । सतः साधोः । द्रोहे । जाते सति तु । तत्क्षणम् । स साधुः । वपुषा देहेन । दण्डवत् । नम्यो नमस्कार्यः । वचनेन च । प्रार्थ्यस्त्वया मदपराधः क्षम्यतामिति सम्प्रार्थनीयः ॥ २१ ॥ अद्येति । तथा । अद्यप्रभृति । अहम् । सताम् । अघमपराधम् । नैव करिष्यामि । इतीत्थम् । मनसा । सुदृढ एव । सङ्कल्पः । कार्यः ॥ २२ ॥ एतदिति । एतत्स्मृतिरेतस्य मदुक्तवचनस्य स्मरणम् । नित्यम् । भवेत् । अतोहेतोरेव । मदाश्रितैः । कृष्णम् । सम्पूज्य । पुरा । प्रथमम् । नैत्यकान्नित्यनियमप्राप्तान् । प्रणामान् । कृत्वा ॥ २३ ॥ एक इति । ज्ञाताज्ञाताभ्यां बुद्धिपूर्वाबुद्धिपूर्वत्वाभ्यां वपुर्वाग्घृज्जातः कायवाङ्मनोभिरुत्पन्नो यः सद्द्रोहः साधुजनापराधस्तस्य शान्तिर्निवृत्तिस्तस्यै । एकः । अधिकः । दण्डवत् । नमस्कारः । विधातव्यः । इति द्वयोरेकान्वयः ॥ २४ ॥ एषेति । हे मुने ! । एषा

बुद्धिपूर्वं तु सद्द्रोहः कर्त्तव्यो नैव केनचित् । न तत्पापं यतो नश्येत्प्रायश्चित्तशतैरपि ॥ २० ॥ अज्ञानात्तु कचिज्जाते सतो द्रोहे तु तत्क्षणम् । वपुषा दण्डवन्नम्यः स प्रार्थ्यो वचनेन च ॥ २१ ॥ अद्यप्रभृति नैवाहं करिष्यामि सताम-घम् । इत्येव मनसा कार्यः सङ्कल्पः सुदृढस्तथा ॥ २२ ॥ एतत्स्मृतिर्भवेन्नित्यमत एव मदाश्रितैः । कृष्णं सम्पूज्य कृत्वा च प्रणामान्नैत्यकान् पुरा ॥२३॥ एकोऽधिको विधातव्यो नमस्कारश्च दण्डवत् । ज्ञाताज्ञातवपुर्वाग्घृज्जातसद्द्रोह-शान्तये ॥२४॥ एषा ममाज्ञा सकलैस्त्यागिभिर्गृहिभिस्तथा । मदीयैः पालनीयैव सदा स्वहितकारभिः ॥२५॥ श्रुत्वेति तस्यामृततुल्यवाचं सोऽन्ये च सर्वे मुनयः प्रहृष्टाः । दधुस्तदाज्ञां शिरसा तथैव सर्वे गृहस्थाश्च तदीयभक्ताः ॥ २६ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते शताधिकत्रिसप्ततितमस्तरङ्गः ॥ १७३ ॥ ४० ॥

शकाब्दे विक्रमार्कस्य खनागवसुभूमिते । एकादश्यामूर्जकृष्णे वचोऽमृतमिदं हरेः ॥ १ ॥

। मम । आज्ञा । स्वहितकारिभिः । मदीयैः । सकलैः । त्यागिभिः । तथा । गृहिभिः । सदैव । पालनीया ॥ २५ ॥ श्रुत्वेति । इत्येवंविधाम् । तस्य श्रीहरेः । अमृततुल्यवाचम् । श्रुत्वा । स शुकानन्दमुनिः । तदीयभक्ताः । अन्ये । सर्वे । मुनयः । सर्वे । गृहस्थाश्च । प्रहृष्टाः । सन्तः । तदाज्ञाम् । तथैव श्रीहरिणा यथोक्ता तद्वदेव । शिरसा । दधुः ॥ २६ ॥ स्वाचारेण स्वभक्तानामपराधनिवृत्तये । नित्यमेकोऽधिकः कार्यः प्रणामो दण्डवत्त्विति ॥ १ ॥ अशिक्षयत्स्वभक्तान् यः श्रीहरिः करुणार्णवः । स मामवतु सततं स्वभक्तस्यापराधतः ॥ २ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्स्व. नुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां शताधिकत्रिसप्ततितमस्तरङ्गः ॥ १७३ ॥ ४० ॥

सेवा हरेस्तत्सतां च कार्या तत्प्रीतये मुदा । स्वकीर्त्यै न च मानेन नारुच्याऽपि हरिश्रितैः ॥ १ ॥ मानस्य दुष्टताऽत्यन्तं तद्धीनानां दुरापता । एतत्सर्वं

चैकचत्वारिंशे तु परिकीर्त्तितम् ॥ २ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८८०) ऊर्जशुक्ले कार्त्तिकमासस्य शुक्लपक्षे । एकादश्यां तिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमस्य राज्ञः । दुर्गे । प्रत्यगास्यस्य । वेश्मनस्तत्स्यैवभवनस्य । वितर्दौ बाह्यवेदिकायाम् । मञ्चको-त्तमे स्वास्तृते श्रेष्ठे मञ्चासने । स श्रीहरिः । न्यषीदत् ॥ २ ॥ सितेति । सिताम्बरः परिहितसकलश्वेतवसनः । पीतपुष्पहारापीडविराजितः । स्वभक्तत्यागिगृहिभिः । नानादेशागतैरितिशेषः । वृतो महासभायां परिवेष्टितः । स श्रीहरिः । सतः स्वपुरोनिषण्णान्मुक्तानन्दादिसाधून् । उवाच ॥ ३ ॥ इहेति । हे साधवः ! । इह सत्सङ्गे । ये । भगवद्भक्ताः । स्युः । तैस्तु । कृष्णस्य । अथवा । सतां तद्भक्तानां साधूनाम् । परिचर्या सेवा । यर्हि । मिलेत् । तदा । महत् । भाग्यम् । मान्यम् ॥ ४ ॥ तत इति । ततस्तदनन्तरम् । सा कृष्णतत्सत्सेवा । भगवत्प्रीत्यै । अति प्रहर्षतः । कर्त्तव्या । लोके । स्वयशसे स्वकीर्त्तिप्रवृत्त्यर्थम् । न कर्त्तव्या । अरुच्या-ऽप्रीत्या च । न कर्त्तव्या । मानतो मानप्राप्त्यर्थं च । न कर्त्तव्या ॥ ५ ॥ जीवस्येति । जीवस्य तु । स्वभावः प्रकृतिः । अस्ति । यत्र कर्मणि । स्वस्य ।

तत्र दुर्गपुरे दुर्गं उत्तमस्य स वेश्मनः । वितर्दौ प्रत्यगास्यस्य न्यषीदन्मञ्चकोत्तमे ॥ २ ॥ सिताम्बरः पीतपुष्प-हारापीडविराजितः । स्वभक्तत्यागिगृहिभिर्वृतः सत उवाच सः ॥ ३ ॥ इह ये भगवद्भक्तास्तैस्तु कृष्णस्य वा सताम् । परिचर्या मिलेद्यर्हि मान्यं भाग्यं तदा महत् ॥४॥ ततः सा भगवत्प्रीत्यै कर्त्तव्याऽतिप्रहर्षतः । न तु लोके स्वयशसे न चारुच्या न मानतः ॥ ५ ॥ जीवस्य तु स्वभावोऽस्ति यत्र मानोपलम्भनम् । भवेत्स्वस्येति तत्कर्म कुर्यात्प्रीत्या न चेतरत् ॥ ६ ॥ मानहीना भक्तिरपि केभ्यश्चिन्नैव रोचते । मानस्य दोषरूपत्वात्ते तु मूर्खा मता बुधैः ॥ ७ ॥ भक्तास्तु विरलाः सन्ति मानस्वादविवर्जिताः । रत्नजिन्मयजित्तुल्याः कृष्णप्रीत्येकहेतवः ॥ ८ ॥ जीवस्य यादृशः स्वादो मानादुत्पद्यते तथा । नान्येभ्यो हि पदार्थेभ्यः स तु हेयः प्रयत्नतः ॥ ९ ॥

मानोपलम्भनम् । भवेत् । तत्कर्म । प्रीत्या । कुर्यात् । इतरन्मानप्राप्तिवर्जितं कर्म । प्रीत्या । न कुर्यात् । इति स्वभावोऽस्तीतिसम्बन्धः ॥ ६ ॥ मानेति । केभ्य-श्चिद्भक्तेभ्यः । मानहीना मानप्राप्तिवर्जिता । भक्तिरपि । नैव रोचते । मानस्य । दोषरूपत्वाद्धेतोः । ते मानार्थभक्तिकरा भक्तास्तु । बुधैर्भगवदेकान्तिकभक्तैः । मूर्खाः । मताः ॥ ७ ॥ भक्ता इति । मानस्वादविवर्जिताः । कृष्णप्रीत्येकहेतवः । रत्नजिन्मयजित्तुल्याः । मानस्वादविवर्जिताभ्यां कृष्णप्रीत्येकहेतुभक्तिभ्यां रत्नजिन्मयजिद्भ-क्ताभ्यां समाना इत्यर्थः । भक्तास्तु । विरला अबहवः । सन्ति ॥ ८ ॥ जीवस्येति । जीवस्य । यादृशः । स्वादो रसः । मानात् । उत्पद्यते । तथा तादृशः स्वादः । अन्येभ्यः । पदार्थेभ्यः । नोत्पद्यते । स तथाविधो मानस्तु प्रयत्नतः । हेयो भगवद्भक्तैः सर्वथा त्याज्यः ॥ ९ ॥

सुधेति । इत्येवंविधाम् । धर्मसुनोः श्रीहरेः । सुधोपमेयामृततुल्याम् । वाचम् । निशम्य तदङ्घ्रिभक्ताः श्रीहरेश्चरणाब्जसेवकाः । समस्ताः । ते । मुनयः । अन्ये । गृहस्थाश्च । भूरितरम् । प्रहर्षम् । प्रपेदिरे ॥१०॥ स्वस्य च स्वसतां सेवारीतिर्येन प्रदर्शिता । स्वीयेभ्यः स हरिर्दद्यात्तत्सेवां मे तथाविधाम् ॥१॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहयेकान्तिकोपासकश्रीहरिकृष्णभगवत्स्व नुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां शताधिकचतुःसप्ततितमस्तरङ्गः ॥ १७४ ॥ ४१ ॥

ब्रह्माण्डकोटयः सन्ति हरेरेकैकरोमणि । यथा तस्य रूपाणि द्विचत्वारिंशके तथा ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं । व्याख्यातम् । (१८८०) सहसो मार्गशीर्षमासस्य । कृष्णे कृष्णपक्षे । द्वादश्यां तिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमस्य राज्ञः । दुर्गे । प्राङ्मुखस्य । वेश्मनस्तद्भवनस्य । वेदिकायां वाह्यवितर्द्यां । उत्तमे स्वास्तृतत्वादतिश्रेष्ठे । पीठे पल्यङ्कासने । स श्रीहरिः । न्यषीदत् ॥ २ ॥ सितेति । सिताम्बरं परिधृतसकलश्वेतवसनम् । भक्तैः । त्यागिभिः । गृहिभिश्च । नानादेशागतैरितिशेषः । वृतं सभायां परिवेष्टितम् । तं श्रीहरिम् । भगवदानन्दः साधुः । विनयानतः सन् । पप्रच्छ ॥ ३ ॥ एकेति । हे विभो ! । क्षराक्षरादिप्रशासनसमर्थ । कृष्णस्योपनिषद्गीताऽनादिकृष्णनाम्नः । तव हरेः । एकैकरोम्णि । सकलाः । अपि । ब्रह्माण्डकोटयः । केन प्रकारेण । वर्त्तन्ते ॥ ४ ॥ तत्रेति । तत्र तासु ब्रह्माण्डकोटिषु विषये । स्वयम् कृष्णः । त्वम् । नैकरूपैरनेकैः स्वरूपैः । कथं केन प्रकारेण । स्थितोऽसि । तदेतत् । मे मह्यम् । ब्रूहि । इत्यमुना प्रकारेण । तेन भगवदानन्दसाधुना । सम्पृष्टः । सतांपतिः श्रीहरिः । उवाच ॥ ५ ॥ कृष्ण इति । हे साधो ! । अक्षरब्रह्मरूपेऽक्षरब्रह्मशरीरिणि । 'यस्याक्षरं शरीरमि'तिश्रुतेः । कृष्णे । ताः ब्रह्माण्डकोटयः । सावकाशम् । भवन्ति । स्थिता वर्त्तन्ते । एवं सामान्येनोक्त्वा विशेषत आह । तत्कृष्णशरीरभूतमक्षरंब्रह्म । सूक्ष्मादपि । अतिसूक्ष्मम् । अस्ति । महतोऽपि । महत्तममतिमहच्च । अस्ति । एवमक्षरब्रह्मणो द्वे रूपे भवत इत्यर्थः ॥ ६ ॥

सुधोपमेयामिति धर्मसुनोर्निशम्य वाचं मुनयः समस्ताः । तेऽन्ये गृहस्थाश्च तदङ्घ्रिभक्ताः प्रपेदिरे भूरितरं प्रहर्षम् ॥ १० ॥

इति श्रीहरिवाक्यसुधासिंधौ शतानन्दमुनिविरचिते शताधिकचतुःसप्ततितमस्तरङ्गः ॥ १७४ ॥ ४१ ॥

शकाब्दे विक्रमार्कस्य खनागवसुभूमिते । द्वादश्यां सहसः कृष्णे वचोऽमृतमिदं हरेः ॥ १ ॥
तत्र दुर्गपुरे दुर्गे उत्तमस्य स वेश्मनः । वेदिकायां प्राङ्मुखस्य न्यषीदत्पीठ उत्तमे ॥ २ ॥
सिताम्बरं वृतं भक्तैस्त्यागिभिर्गृहिभिश्च तम् । साधुर्भगवदानन्दः पप्रच्छ विनयानतः ॥ ३ ॥
एकैकरोम्णि कृष्णस्य तव ब्रह्माण्डकोटयः । केन प्रकारेण विभो वर्त्तन्ते सकला अपि ॥ ४ ॥
तत्र कृष्णः स्वयं त्वं च नैकरूपैः कथं स्थितः । तन्मे ब्रूहीति सम्पृष्टस्तेनोवाच सतांपतिः ॥ ५ ॥
कृष्णेऽक्षरब्रह्मरूपे सावकाशं भवन्ति ताः । सूक्ष्मादप्यतिसूक्ष्मं तन्महतोऽपि महत्तमम् ॥ ६ ॥

आद्यमिति । तत्राक्षरस्य द्वयो रूपयोर्मध्ये । आद्यं सूक्ष्मरूपं तु । अमूर्त्तं धामत्वान्निरवयवम् । धामानन्तकोटिब्रह्मात्मकमुक्ताधारत्वाद्धामरूपम् । तथा । तेजोमयं 'तस्य भासा सर्वमिदं विभाती'तिश्रुतेः सर्वेषां तेजस्विनां प्रकाशकत्वात्तेजःप्रचुरम् । अस्ति । द्वितीयं महत्तमरूपं तु । पुरुषरूपं पुरुषाकारम् । अत एव । मूर्त्तं सावयवम् । सर्वाधारमेकैकरोम्ण्यनेकब्रह्माण्डावस्थानादगणितब्रह्माण्डानामेकाश्रयभूतं च । अस्ति ॥ ७ ॥ आद्यमिति । किञ्च । आद्यमक्षरस्य सूक्ष्मरूपम् । निर्गुणं स्वस्य मायिकगुणातीतत्वात्तथाविधमुक्ताधारत्वाच्च निर्गुणम् । इतीत्थम् । उक्तम् । तथा । इतरदक्षरस्य महत्तमरूपम् । सगुणं स्वस्य गुणातीतत्वेऽपि गुणमयानन्तकोटिब्रह्माण्डाधारत्वात्सगुणम् इत्युक्तम् । इत्यमुना प्रकारेण । अनिर्देश्यं निरूपमम् । तदक्षरं ब्रह्म । द्वेधाशक्तियुतं शक्तिद्वययुक्तम् । प्रोक्तम् ॥८॥ एकेति । हे मुने ! । तस्याक्षरब्रह्मणो महत्तमरूपस्य । एकैकरोम्णि । अण्डान्यगणितब्रह्माण्डानि । अणुवद्गवाक्षगतसूर्यमयूखपतद्दृश्याणुसमानानि । सन्ति वर्त्तन्ते । एतावता तत्राणुवत्प्रतीयमानत्वेन । ब्रह्माण्डगोलस्य सूक्ष्मत्वसम्भवोऽणुतापत्तिः । नैवास्ति ॥ ९ ॥ यावदिति । किन्तु । ब्रह्माण्डगोलकः । शास्त्रे श्रीमद्भागवतादिसच्छास्त्रे । यावत्प्रमाणो दशोत्तराधिकाष्टावरणसंमितः

आद्यं तत्रास्त्यमूर्त्तं तु धाम तेजोमयं तथा । मूर्त्तं पुरुषरूपं च सर्वाधारं द्वितियकम् ॥ ७ ॥
आद्यं निर्गुणमित्युक्तं सगुणं च तथेतरत् । अनिर्देश्यमिति प्रोक्तं द्वेधाशक्तियुतं तु तत् ॥ ८ ॥
एकैकरोम्णि तस्यैव सन्त्यण्डान्यणुवन्मुने ! । नैतावता तु ब्रह्माण्डगोलसूक्ष्मत्वसम्भवः ॥ ९ ॥
यावत्प्रमाण उदितः शास्त्रे ब्रह्माण्डगोलकः । स तावानेव भवति तद्विधा अपरेऽपि च ॥ १० ॥
ब्रह्मणोऽति महत्त्वेन तदणूपमतोच्यते । रैवताद्रेर्यथा मेरोः पुरतस्त्वस्ति सूक्ष्मता ॥ ११ ॥
लोकालोकाचलस्याग्रे यथा वा मेरुपर्वतः । असूक्ष्मोऽपीक्ष्यते सूक्ष्मो लोकालोकमहत्तया ॥ १२ ॥
अक्षरातिमहत्त्वेन तथा ब्रह्माण्डसूक्ष्मता । उच्यते वस्तुतः सन्ति सर्वेऽपि हि यथा तथा ॥ १३ ॥

। उदितः । स ब्रह्माण्डगोलकः । तावांस्तत्परिमाण एव । भवति । अपरे तदन्येऽगणिताण्डगोलकाश्चापि । तद्विधा अष्टावरणसहिता एव । भवन्ति ॥ १० ॥ ब्रह्मण इति । ब्रह्मणः सर्वाधारपुरुषाकृतिरूपाक्षरब्रह्मणः । अतिमहत्त्वेन । तदणूपमता ब्रह्माण्डानामणुसादृश्यम् । उच्यते । एतदेव दृष्टान्तप्रदर्शनेन द्रढयति सार्द्धद्वाभ्याम् । यथा । मेरोः । पुरतः । रैवताद्रेरसूक्ष्मस्यापि रैवताचलस्य । सूक्ष्मता मेरुमहत्त्वापेक्षया सूक्ष्मत्वम् । अस्ति ॥ ११ ॥ लोकेति । यथा वा । असूक्ष्मोऽपि । मेरुपर्वतः । लोकालोकाचलस्य । अग्रे पुरतः । लोकालोकमहत्तया । सूक्ष्मः । ईक्ष्यते ॥ १२ ॥ अक्षरेति । तथा । अक्षरातिमहत्त्वेन । ब्रह्माण्डसूक्ष्मता ब्रह्माण्डानामणुता । उच्यते । वस्तुतस्तु । सर्वे ब्रह्माण्डगोलका अपि । यथातथा यावत्प्रमाणाः सन्ति तावत्प्रमाणाः । सन्ति विद्यन्ते । ब्रह्माण्डानां पुरुषाकृत्यक्षरब्रह्मरोमविवराधारत्वात्तस्य अक्षरब्रह्मणः कृष्णशरीरत्वाच्छरीरशरीरिणोरभेदोपचाराच्च कृष्णे तान्युपचर्यंत इति प्रथमप्रश्नोत्तराशयः ॥ १३ ॥

अथ द्वितीयप्रश्नोत्तरमाह चतुर्भिः । अतीति । अतितेजोमये । स्वीये । ब्रह्मण्यक्षरब्रह्माख्ये । धाम्नि । कृष्णः । अक्षरात्मभिरक्षरभावापन्नैः । मुक्तैः । सेवितपत्कजो नानोपचारैः परिचरितपादपङ्कजः सन् । सर्वदा । आस्ते । १४ ॥ तत्रस्थ इति । कृष्णः । तत्रस्थः स्वकीयाक्षरब्रह्मधाम्नि सदाऽवस्थितः सन्नेव । आत्मनः स्वस्य । योगैश्वर्येण । कार्यस्य स्वकीयानेकभक्तेप्सितप्रदानादिप्रयोजनस्य । सिद्धये सम्पादनाय । स्वैः स्वकीयैः । रूपैः श्वेतद्वीपाद्यवस्थितवासुदेवादिस्वरूपैः । प्रतिब्रह्माण्डम् । आस्ते ॥ १५ ॥ एतदेव दृष्टान्तेन द्रढयति द्वाभ्याम् । यथेति । यथा । रासलीलायां गोपीभिः सह रासक्रीडायाम् । कृष्णः । एकः सन्नपि । निजेच्छया स्वयोगैश्वर्यरूपयेच्छाशक्त्यैव । प्रतिगोपि एकैकां गोपीं प्रति । भिन्नभिन्नस्वरूपेण । बभूव सकलगोपीजनसुखार्थमास । ह प्रसिद्धमेतच्छ्रीभागवते ॥ १६ ॥ यथेति । तथैव । अखिलेश्वरोऽक्षरादिनियन्ता । स पुरुषोत्तमः श्रीकृष्णः । स्वभक्तसुखदानार्थम् । अनेकधाऽनेकप्रकारैः । रूपैः । अत्र ब्रह्माण्डेऽपि । यथोपयोगं यथाप्रयोजनम् । आस्ते । स स्वकीययोगैश्वर्येण प्रत्यण्डमनेकैः स्वरूपैस्तिष्ठतीति द्वितीयप्रश्नोत्तराशयः ॥ १७ ॥ पीत्वेति । इत्येवं-

अतितेजोमये स्वीये धाम्नि ब्रह्मणि सर्वदा । कृष्णोऽक्षरात्मभिर्मुक्तैरास्ते सेवितपत्कजः ॥ १४ ॥ तत्रस्थ एव कृष्णस्तु प्रतिब्रह्माण्डमात्मनः । योगैश्वर्येण रूपैः स्वैरास्ते कार्यस्य सिद्धये ॥ १५ ॥ यथैव रासलीलायामेकोऽपि स निजेच्छया । भिन्नभिन्नरूपेण प्रतिगोपि बभूव ह ॥ १६ ॥ यथोपयोगमत्रापि स तथैवाखिलेश्वरः । स्वभक्तसुखदानार्थमास्ते रूपैरनेकधा ॥ १७ ॥ पीत्वेति वाक्यामृतमस्य साधुः स चापरेऽप्यस्य पदाब्जभक्ताः । सन्तो गृहस्थाश्च मुदं प्रपद्य तमानमन्ति स्म सदोनिषण्णाः ॥ १८ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते शताधिकपञ्चसप्ततितमस्तरङ्गः ॥ १७५ ॥ ४२ ॥

शकाब्दे विक्रमार्कस्य खनागवसुभूमिते । पौषशुक्लचतुर्थ्यां तु वचोऽमृतमिदं हरेः ॥ १ ॥
तत्र दुर्गपुरे दुर्गे उत्तमस्य महीभुजः । स न्यषीदत्स्वाग्रजस्य मन्दिरे पीठ उत्तमे ॥ २ ॥

विधम् । अस्य श्रीहरेः । वाक्यामृतम् । पीत्वा । सः । साधुर्भगवदानन्दमुनिः । सदोनिषण्णाः । अस्य श्रीहरेः । पदाब्जभक्ताः । अपरे । सन्तो मुक्तानन्दादयश्चापि । गृहस्थाश्च मुदम् । प्रपद्य । तं स्वावासं गच्छन्तं श्रीहरिम् । आनमन्ति स्म ॥ १८ ॥ यथा स्वस्यैकैकरोम्णि सन्ति नैकाण्डकोटयः । यथा तत्र स्वयं नैकैः स्वरूपैरस्त्यवस्थितः ॥ १ ॥ तथैव श्रीहरिः स्वेभ्यो भक्तेभ्यो योऽब्रवीत्प्रभुः । ममेप्सितं स्वभक्तस्य सम्पूर्णं विदधातु सः ॥ २ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्तकश्रीहर्यैकान्तिकोपासकश्रीहरिकृष्णभगवत्पदानुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्री हरिवाक्यसुधासिन्धुटीकायां शताधिकपञ्चसप्ततितमस्तरङ्गः ॥ १७५ ॥ ७२ ॥

गुणातीतस्य भक्तस्य ब्रह्मरूपात्मनो हरौ । प्रीतिर्या ब्रह्मरूपा सा त्रिचत्वारिंशके त्विति ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८८०) पौषशुक्लचतुर्थ्यां पौषमासस्य शुक्लपक्षागतचतुर्थीतिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमस्य । महीभुजः । दुर्गे । स्वाग्र-

जस्य स्वज्येष्ठभ्रातू रामप्रतापस्य । मन्दिरे । उत्तमे स्वास्तृतत्वादतिश्रेष्ठे । पीठे सश्वेतोत्तरच्छदपार्श्विकेस्थूलतूलिकासने । स श्रीहरिः । न्यषीदत् ॥ २ ॥ सितेति । सित-वासाः परिहितसकलश्वेतवसनः । त्यागिभिः । गृहिभिश्च । भक्तैर्नानादेशागतस्वाश्रितजनैः । वृतः सभायां परिवेष्टितः । स श्रीहरिः । संसदि प्रेमानन्दादिमुन्युपवर्णित-हरिचरित्रायां सभायाम् । स्वपुरतः स्वाग्रप्रदेशे । उपविष्टान् । साधून्मुक्तानन्दादिमुनीन् । पप्रच्छ ॥ ३ ॥ भक्त इति । हे मुनयः ! । राधिकारमणस्य कृष्णस्य । यः । एकान्तिकः । भक्तः । स्यात् । सः । गुणातीतः । सद्रूपः केवलात्मस्वरूपतया वर्त्तमानः । अत एव । सदा । उपशमस्थितिः प्रतिलोमेन्द्रियवृत्तित्वाच्छन्यत्र-त्वप्रतीयमानः । स्यात् ॥ ४ ॥ तस्य गुणातीतत्वमाह । वैराग्येति । वैराग्यरूपं विषयेष्वतिशयितदोषदृष्ट्या तत्र वैतृष्ण्यलक्षणम् । सत्त्वं सत्त्वगुणः । तथा । रागा-त्मकं विषयप्रीतिरूपम् । रजोगुणः । मौढ्यं ज्ञानानुदयहेतुभूता विपरीतज्ञानोदयरूपा वा मूढता । तमस्तमोगुणः । इत्येवंविधाः । गुणधर्मा वैराग्यरागमौढ्याख्याः । तस्मिंस्तथाविधे भक्ते । न सन्ति । हि ॥ ५ ॥ ईदृगिति । ईदृग्निर्गुणभक्तस्य । कृष्णे । प्रीतिः । भवेत् । अथवा । न भवेत् । रागपर्यायप्रीते रजोगुणकार्यत्वाद्-

सितवासा वृतो भक्तैस्त्यागिभिर्गृहिभिश्च सः । उपविष्टान्स्वपुरतः साधून् पप्रच्छ संसदि ॥ ३ ॥
भक्त एकान्तिको यः स्याद्राधिकारमणस्य सः । गुणातीतश्च सद्रूपः स्यात्सदोपशमस्थितिः ॥ ४ ॥
वैराग्यरूपं सत्त्वं च रजो रागात्मकं तथा । मौढ्यं तमश्चेति तस्मिन् गुणधर्मा न सन्ति हि ॥ ५ ॥
ईदृग्निर्गुणभक्तस्य कृष्णे प्रीतिर्भवेन्न वा । मुक्तानन्दस्तदोवाच तस्य प्रीतिर्भवेद्धरौ ॥ ६ ॥
तमुवाच हरिस्तस्य प्रीतिर्भवति या हरौ । साऽऽत्मनः किं सजातीया विजातीयाऽथवा मुने ! ॥ ७ ॥
मुक्तानन्दस्तमाहाथ सजातीयेति भाति मे । सोऽथाह वैष्णवाचार्यसिद्धान्तोऽप्येवमस्ति हि ॥ ८ ॥

गुणातीते तस्मिंस्तदसम्भवादयं संशय इतिभावः । तदा तस्मिन्समये । मुक्तानन्दोमुनिः । उवाच । हे हरे ! । तस्य तथाविधभक्तस्य । हरौ । प्रीतिः । भवेत् । अस्य भक्तस्य प्रीतेर्भगवतो निरवधिकादिशयमाहात्म्यज्ञानमूलत्वेन निर्गुणत्वादितिभावः ॥ ६ ॥ तमिति । तमेवं स्वप्रश्नोत्तरं कुर्वन्तं मुक्तानन्दमुनिम् । हरिः । उवाच प्रथमप्रश्नोत्तरमङ्गीकृत्य द्वितीयं प्रश्नमप्राक्षीदित्यर्थः । हे मुने ! । तस्य पूर्वोक्तभक्तस्य । हरौ । या । प्रीतिः । भवति । सा प्रीतिः । आत्मनो ब्रह्मभावापन्नतत्क्षेत्रज्ञस्य । सजातीया । भवति । अथवा । विजातीया । भवति । किम् । अस्य । भगवदतिशयितमाहात्म्यज्ञानमूला सा तदात्मनः पृथग्भूताऽस्ति वा तदात्मनैकीभूताऽस्ति किमित्यर्थः । अत्र सजातीयविजातीयशब्दयोरपृथगवस्थानपृथगवस्थानरूपावर्थौ बोध्यौ ॥ ७ ॥ मुक्तानन्द इति । अथैवंविधश्रीहरिकृतप्रश्नश्रवणानन्तरम् । मुक्तानन्दो मुनिः । तं श्रीहरिम् । आह । हे हरे ! । सजातीया तत्प्रीतिस्तदात्मनकीभूतास्तीत्यर्थः । तत्प्रीतेर्भगवन्महिममूलत्वान्महीम्नश्च तदात्माधारत्वात्सा तथाभूतेतिभावः । इतीत्थम् । मे मम । भाति । अथैवंविधमुक्तानन्दमुनिवचनश्रवणानन्तरम् । स श्रीहरिः । आह । हे मुने ! । वैष्णवाचार्यसिद्धान्तोऽपि । एवं भवदुक्तप्रकार एव । अस्ति । हि ॥ ८ ॥

वैष्णवाचार्यनामोक्तिपूर्वमेतदेव द्रढयति । रामानुजेति । रामानुजार्यमध्वार्यौ निम्बार्कौ निम्बाकार्यः । वल्लभो वल्लभार्यश्च । एते । या । आत्मरूपेण ब्रह्मभावापन्नस्वक्षेत्रज्ञरूपेण । कृष्णे । कार्या महिमातिशयवेदनपूर्वं विधेया । प्रीतिः । सा । बृहद्ब्रह्मरूपतदात्मनोऽपृथक्स्थितत्वाद्ब्रह्मस्वरूपा । अस्ति । हि । इतीत्थम् । प्राहुः ॥९॥ श्रुत्वेति । इत्येवंविधाम् । तस्य श्रीहरेः । अमृततुल्यवाचम् । श्रुत्वा । सः । मुनिर्मुक्तानन्दसाधुः । सदोनिषण्णाः । तदीयभक्ताः । अन्ये । सन्त श्चापि । गृहस्थाश्च । उदारमतिमहान्तमेव । तोषम् । प्रपेदिरे ॥ १० ॥ स्वभक्तस्य गुणातीतस्थितेः स्वस्मिन् यथाविधा । प्रीतिः स्यात्तां य ऊचेऽसौ श्रीहरिस्तां ददातु मे ॥१॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्स्वनुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां शताधिकषट्सप्ततितमस्तरङ्गः ॥ १७६ ॥ ४३ ॥

हरेः सतां च भक्तानां गुणांस्त्यक्त्वा कुबुद्धयः । गृह्णन्ति ये नरा दोषांस्तेषामासुरधीमताम् ॥ १ ॥ वर्ज्योऽघकृत्सदा सङ्गः सर्वपुण्यापहारकः । हरिभक्ते-

रामानुजार्यमध्वार्यौ निम्बार्को वल्लभस्त्विति । प्राहुः कार्याऽऽत्मरूपेण प्रीतिः कृष्णे बृहद्धि सा ॥ ९ ॥ श्रुत्वेति तस्यामृततुल्यवाचं मुनिः स चान्येऽपि तदीयभक्ताः । सन्तो गृहस्थाश्च सदोनिषण्णाः प्रपेदिरे तोषमुदारमेव ॥ १० ॥

इति श्रीहरिवाक्यसुधासिंधौ शतानन्दमुनिविरचिते शताधिकषट्सप्ततितमस्तरङ्गः ॥ १७६ ॥ ४३ ॥

शकाब्दे विक्रमार्कस्य खनागवसुभूमिते । शुक्लाष्टम्यां सहस्यस्य वचोऽमृतमिदं हरेः ॥ १ ॥ तत्र दुर्गपुरे दुर्गे उत्तमस्य स वेश्मनः । वेदिकायां प्राङ्मुखस्य न्यषीदन्मञ्चकासने ॥२॥ त्यागिभिर्गृहिभिर्भक्तैरनेकैः परितो वृतः । सितसर्वाम्बरधरः पुरःस्थान् सोऽब्रवीत्सतः ॥ ३ ॥ गृहिणोऽप्यत्र बहवः कृत्वा सत्सङ्गमात्मनः । भजन्ति श्रेयसे साक्षात्कृष्णमेव नराकृतिम् ॥ ४ ॥ गुणादोषाश्च तेषु स्युः प्रवृत्तस्थतया नृणाम् । सुधियस्तु गुणानेव तेषां गृह्णन्ति नेतरान् ॥ ५ ॥

रिति चतुश्चत्वारिंशे समीरितम् ॥ २ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८८०) सहस्यस्य पौषमासस्य । शुक्लाष्टम्यां शुक्लपक्षस्याष्टमीतिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमस्य । राज्ञः । दुर्गे । प्राङ्मुखस्य । वेश्मनस्तस्यैवभवनस्य । वेदिकायां बाह्यवितर्दौ । मञ्चकासने स्वास्तृतपर्यङ्कविष्टरे । स श्रीहरिः । न्यषीदत् ॥ २ ॥ त्यागिभिरिति । अनेकैर्नानादेशागतत्वाद्बहुभिः । त्यागिभिः । गृहिभिः । भक्तैः । परितो वृतः सभायां परिवेष्टितः । सितसर्वाम्बरधरः । स श्रीहरिः । पुरःस्थान्स्वाग्रप्रदेशावस्थितान् । सतो मुक्तानन्दादिसाधून् । अब्रवीत् ॥ ३ ॥ गृहिण इति । हे साधवः ! । अत्र सत्सङ्गे । गृहिणो गृहस्था अपि । बहवः भक्ताः । सत्सङ्गं कृत्वा । आत्मनः । श्रेयसे । नराकृतिम् । साक्षात्कृष्णमेव । भजन्ति ॥ ४ ॥ गुणा इति । नृणां तेषां गृहिभक्तानाम् । प्रवृत्तस्थतया प्रवृत्तधर्मावस्थिततत्वेन । तेषु गृहिभक्तेषु । गुणाः । दोषाश्च । स्युः । सुधियः सुमतयो भगवद्भक्तजनास्तु । तेषां गृहिभक्ता-

नाम् । गुणानेव । गृह्णन्ति । इतरान्दोषांस्तु । नैव गृह्णन्ति ॥ ५ ॥ सजातीयेति । गुणदर्शिनो गुणग्राहकाः । ते सुमतयो भक्ताः । सजातीयविजातीयभेददृष्टिम् । विहाय । परस्परम् । स्वजनवत्स्वसहोदरादिवत् । वर्त्तन्ते ॥ ६ ॥ तत्रेति । तत्र तेषु गृहस्थभक्तेषु मध्येऽपि । कश्चिद्भक्तः । पापिनामधर्मिजनानाम् । सङ्गेन । भ्रष्टः स्वधर्मच्युतः । जायेत । सुरैकादशविधमद्यसहिता त्रिविधासुरा च परस्त्री पराङ्गना च ते आदीयेषां परधनादीनां तेषु रतिरासक्तिर्यस्य स तथाभूतः सन्नपि । तथा पूर्ववदेव भक्तं मन्यः स्वात्मानं भक्तं मन्यमानः । भवेत् ॥ ७ ॥ गुणानिति । विपरीतधीः । स भक्ताभासः । पुरुषः । आत्मनः । गुणानेव । पश्येत् । कश्चन । दोषं तु । नैव । पश्येत् । परेषां स्वेतरेषां गृहस्थभक्तानां तु । दोषानेव । पश्येत् । इतरान् गुणांस्तु । नैव । पश्येत् ॥ ८ ॥ स इति । स विपरीतमतिर्गृहिजनः । भक्तानां स्वधर्मस्थतया भगवन्तं भजतामपि : तेषां गृहस्थजनानाम् । सदा । दोषदर्शी । भवेत् । यदि । कश्चित्सत्यो गृहस्थभक्तः । स्वम् । बोधयेत् । तर्हि । अस्य सत्यगृहस्थभक्तस्य तु । विशेषतः । दोषदर्शी । भवेत् ॥ ९ ॥ दोषा इति । स विपरीतमतिर्गृहस्थो भक्तः । तेषु सत्येषु गृहस्थभक्तेषु । यावन्तो यावत्प्रमाणाः । दोषाः

सजातीयविजातीयभेददृष्टिं विहाय ते । परस्परं स्वजनवद्वर्त्तन्ते गुणदर्शिनः ॥ ६ ॥ तत्रापि कश्चित्सङ्गेन भ्रष्टो जायेत पापिनाम् । सुरापरस्त्र्यादिरतिर्भक्तंमन्यस्तथा भवेत् ॥ ७ ॥ गुणानेवात्मनः पश्येत्स तु दोषं न कश्चन । दोषानेव परेषां तु नेतरान्विपरीतधीः ॥ ८ ॥ स तेषामपि भक्तानां दोषदर्शी भवेत्सदा । यदि स्वं बोधयेत्कश्चित्तर्ह्यस्य तु विशेषतः ॥ ९ ॥ दोषा भवेयुर्यावन्तस्तेषु तावत एव सः । पश्येदिति न किन्त्वन्यान् बहून् दोषान् स्वकल्पितान् ॥ १० ॥ ये गुणाः स्वेन तेषु प्राग्दृष्टास्तानपि सर्वशः । दोषानेव स वीक्षेत कुसङ्गहतसन्मतिः ॥ ११ ॥ ईदृशः पुरुषो यः स्यात्तस्य सङ्गो न कर्हिचित् । कार्यः केनाप्यघकरः सर्वपुण्यापहृत्तथा ॥ १२ ॥ विषयासक्तमनसोऽप्यत्र केचित्तु पूरुषाः । साधुलक्षणसम्पन्नानाश्रयन्ते सतः पुरा ॥ १३ ॥

स्वेन प्राग्दृष्टा वाचालत्वादयोऽगुणाः । भवेयुः । तावतस्तावत्प्रमाणानेव दोषान् । पश्येत् । इति तु न । किन्तु । स्वकल्पितान् । अन्यान् । बहून् । दोषान् । पश्येत् ॥ १० ॥ ये इति । तेषु गृहस्थभक्तेषु । स्वेन । प्राक् । ये । गुणाः । दृष्टाः । स्युः । सर्वशः । तांस्तद्गुणानपि । कुसङ्गहतसन्मतिः । स विपरीतमतिर्गृहिजनः । दोषान् दोषरूपानेव । वीक्षेत ॥ ११ ॥ ईदृश इति । ईदृश एवं विपरीतमतिः । यः । पुरुषः । स्यात् । अघकरः पापोत्पादकः । तथा । सर्वपुण्यापहृत्सकलसुकृतविनाशकः । तस्य विपरीतमतेः पुरुषस्य । सङ्गः । केनापि । भक्तेन । कर्हिचित् । न कार्यः ॥ १२ ॥ एवं प्राक्सत्सङ्गिनः पश्चात्कुसङ्गविपरीतमतिः स्याच्चेत्तत्प्रसङ्गं निषेधति दशभिः । विषयेति । अत्र सत्सङ्गे । केचित् । पुरुषास्तु । विषयासक्तमनसः सन्तोऽपि । साधुलक्षणसम्पन्नान् । सतः साक्षाद्भगवदाश्रितसाधून् । पुरा प्रथमम् । आश्रयन्ते ॥ १३ ॥

साक्षादिति । तद्वाक्यात्तथाविधसाधूक्तसत्यवचनात् । साक्षाद्धरिं प्रत्यक्षपरमेश्वरम् । भजन्ति । अदृढनिश्चयाः विषयासक्तमनस्त्वादसुपक्वभगवत्स्वरूपज्ञाननिर्णयाः । ते पुरुषाः । स्वमहत्त्वख्यापनाय वयमपि महान्तः साधवो भविष्याम इति कीर्त्तिप्रसिद्ध्यै । अरं शीघ्रमेव । त्यागिनश्च साधवोऽपि । भवन्ति ॥१४॥ नियमानामिति । नियमानां निर्लोभादित्यागिधर्माणाम् । पालने । अन्यसङ्गयः । आत्मनः । आधिक्यम् । वदन्तः सन्तोऽपि । ग्राम्यसुखैषिणोऽन्तरे मायिकविषयभोगेच्छावन्तः । भवन्ति । अतः तन्नियमपालनाधिक्यम् । कर्त्तुम् । शक्ताः समर्थाः । न भवन्ति ॥ १५ ॥ देहेति । तान् ग्राम्यसुखैषिणस्त्यागिनः । देहाभिमानिनः । विदन्तः । अतिदयालवः । सन्तः सत्याः साधवः । एकान्तिकीम् । भक्तिम् । शनैः । शनैः । बोधयन्ति ॥१६॥ यदेति । ते सत्याः साधवः । यदा । विषयवासनाः । हर्त्तुम् । अमून् ग्राम्यसुखैषिणः प्राधून्प्रति । वैराग्यवार्त्ताम् । कुर्वन्ति । तदा ते ग्राम्यसुखैषिणोऽसत्याः साधवः । तां सत्यसाधुकृतां वैराग्यवार्त्ताम् । न शृण्वन्ति ॥ १७ ॥ दुरिति । दुःस्वभाववशाद्धेतोः । ते असत्याः साधवः । स्वाप्रियभाषिणः स्वप्रियविषयाणां खण्डनं ब्रुवाणान् । तान् । सत्यान्साधून् । त्यक्त्वा । पशुबुद्धीनां देहदैहिकाहंममत्वमतीनाम् ।

साक्षाद्धरिं च तद्वाक्याद्भजन्त्यदृढनिश्चयाः । स्वमहत्त्वख्यापनाय त्यागिनश्च भवन्त्यरम् ॥ १४ ॥ नियमानां पालनेऽन्यसङ्गयोऽप्याधिक्यमात्मनः । वदन्तोऽपि न तत्कर्त्तुं शक्ता ग्राम्यसुखैषिणः ॥ १५ ॥ देहाभिमानिनस्तांस्तु विदन्तोऽति दयालवः । भक्तिमेकान्तिकीं सन्तो बोधयन्ति शनैः शनैः ॥१६॥ यदा तु साधवस्तेऽमून् हर्त्तुं विषयवासनाः । वैराग्यवार्त्तां कुर्वन्ति तां न शृण्वन्ति ते तदा ॥१७॥ दुःस्वभाववशात्ते तांस्त्यक्त्वा स्वाप्रियभाषिणः । कुर्वते पशुबुद्धीनां भक्ताख्यानां तु सङ्गमम् ॥ १८ ॥ तद्बोधात्ते वैषयिकसुखेष्वेवानुरागिणः । दोषान्महत्सु गृह्णन्ति सत्सु वानरवृत्तयः ॥ १९ ॥ दुःसङ्गदुःस्वभावाभ्यां विपर्यस्तधियोऽथ ते । गुणानपि सतां सर्वान् दोषानेव विचक्षते ॥ २० ॥ ततः सद्द्रोहमपि ते कर्त्तुं नैव हि बिभ्यति । नृनाटनेऽपि कृष्णस्य दोषान् गृह्णन्ति भूरिशः ॥२१॥ ईदृशा ये तु जीवास्ते ह्यसुरा इति बुद्ध्यताम् । न तेषां सङ्गमः सन्तः कर्त्तव्यः क्वापि केनचित् ॥२२॥

भक्ताख्यानां प्रागौद्धवीयाः साधवः सन्तोऽपि ये औद्धवाध्वनश्च्युता जगति भक्तसंज्ञया विख्यातास्तेषाम् । सङ्गमं प्रसङ्गम् । कुर्वते ॥ १८ ॥ तदिति । तद्बोधादुक्तविधपशुबुद्धिजनकृतबोधनात् । वैषयिकसुखेष्वेव । अनुरागिणो विशेषतः प्रीतिमन्तः । ते असत्याः साधवः । वानरवृत्तयः सन्तः । महत्सु । सत्सु साधुषु । दोषान् । गृह्णन्ति ॥ १९ ॥ दुःसङ्गेति । अथानन्तरम् । दुःसङ्गदुःस्वभावाभ्याम् । विपर्यस्तधियोऽतिविपरीतमतयः । ते असत्याः साधवः । सद्द्रोहं सत्यसाध्वपमानपीडनादिरूपम् । कर्त्तुमपि । नैव बिभ्यति । कृष्णस्य साक्षाद्भगवतः । नृनाटने नरानुकरणेऽपि । भूरिशो बहुन् । दोषान् । गृह्णन्ति ॥ २१ ॥ ईदृशा इति । ईदृशा एवंविधा असत्यसाधुसमाना इत्यर्थः । ये जीवाः । ते तु असुरा आसुरस्वभावाः । इति । बुध्यताम् । हे सन्तः ! । तेषामासुरजीवानाम् । सङ्गमः । केनचित्केनापि भगवद्भक्तेन । क्वापि कदाचिदपि । न कर्त्तव्यः ॥ २२ ॥

एतेभ्य इति । एतेभ्य ईदृशासुरजीवेभ्यः । ये विपरीताः । ते तु । हरेः । प्रियाः । देवा जीवाः । ज्ञेयाः । तेषां देवानां जीवानाम् । कृष्णलीलायां साक्षाच्छ्रीकृष्णचरित्रे । संशयः । क्वापि कदाचिदपि । न जायते ॥ २३ ॥ सतामति । किञ्च । अन्तरे देवानां जीवानां मनसि । सतां भगवद्भक्तानां सत्यानां साधूनामपि । कोऽपि । अगुणो दोषः । क्वचित्कदापि । न विशति । तेषां देवानां भगवद्भक्तजीवानाम् । सङ्ग एव । स्वहितेच्छुभिर्भक्तैः । सदा । कर्त्तव्यः ॥ २४ ॥ सुधेति । इत्थमेवंविधाम् । धर्मसुतस्य श्रीहरेः । सुधोपमाम् । वाचम् । निशम्य । आप्तमुदः । सभोपविष्टाः । समस्ताः । ते । साधुभक्ताः । गृहस्थभक्ताश्च । तं स्वावासं व्रजन्तं श्रीहरिम् । प्रणमन्ति स्म ॥ २५ ॥ वर्ज्यसङ्गान्कार्यसङ्गान् लक्षणैराह यो हरिः । आद्यसङ्गं न मे दद्यादन्यसङ्गं ददातु सः ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्स्नुरघुवीराचार्यविरचितायां सेतुमालाख्यां श्रीहरिवाक्यसुधासिन्धुटीकायां शताधिकसप्तसप्ततितमस्तरङ्गः ॥ १७७ ॥ ४४ ॥

एतेभ्यो विपरीता ये ते तु देवा हरेः प्रियाः । न तेषां कृष्णलीलायां संशयः क्वापि जायते ॥ २३ ॥ सतां चाप्यगुणः कोऽपि न विशन्त्यन्तरे क्वचित् । तेषामेव सदा सङ्गः कर्त्तव्यः स्वहितेच्छुभिः ॥ २४ ॥ सुधोपमां धर्मसुतस्य वाच मित्थं निशम्याप्तमुदः समस्ताः । ते साधुभक्ताश्च गृहस्थभक्ताः सभोपविष्टाः प्रणमन्ति तं स्म ॥ २५ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते शताधिकसप्तसप्ततितमस्तरङ्गः ॥ १७७ ॥ ४४ ॥

शकाब्दे विक्रमार्कस्य खनागवसुभूमिते । पौषकृष्णप्रतिपदि वचोऽमृतमिदं हरेः ॥ १ ॥
तत्र दुर्गपुरे दुर्ग उत्तमस्य स वेश्मनः । वेद्यां प्राचीनवक्त्रस्य स्वासने समुपाविशत् ॥ २ ॥
भक्तैर्वृतस्त्यागिभिश्च गृहिभिः स महस्रशः । सितसर्वाम्बरः साधूनुवाच स्वाग्रतः स्थितान् ॥ ३ ॥

निर्दोषत्वादिशिक्षानां वाक्यान्युक्तानि यानि तु । गुरुणा हरिणा स्वीयान्साध्वादीन्प्रत्यवश्यतः ॥ १ ॥ कर्म यत्नेन कर्त्तव्यं हरितज्जनरोचकम् । सुबुद्धिनात्र भक्तेन न कचिच्चदरोचकम् ॥ २ ॥ फलेन समितं चैतद्द्विविधं कर्म यद्भवेत् । एतत्सर्वं पञ्चचत्वारिंशे स्पष्टतयेरितम् ॥ ३ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यानम् । (१८८०) पौषकृष्णपक्षीयप्रतिपत्तिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥१॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमस्य राज्ञः । दुर्गे । प्राचीनवक्त्रस्य प्राग्द्वारस्य । वेश्मनस्तस्यैवभवनस्य । वेद्यां वाह्यवितर्द्दौं । स्वासने स्वास्तृते पर्यङ्कासने । स श्रीहरिः । समुपाविशत्स्वावासादागत्य न्यषीदत् ॥ २ ॥ भक्तैरिति । सहस्रशो नानादेशागनत्वाद्बहुभिः । त्यागिभिः । गृहिभिश्च । भक्तैः । वृत्तः सभायां परिवेष्टितः । सितसर्वाम्बरः परिधृतसकलश्वेतवसनः । स श्रीहरिः । स्वाग्रतः स्वपुरःप्रदेशे । स्थितान्समर्यादं सावकाशमवस्थितात् । साधून् । उवाच ॥ ३ ॥

यूयमिति । हे सन्तः ! । साधवो मुक्तानन्दगोपालानन्दादयः सन्तः । अथ च । धर्मवंशभवा रामप्रतापेच्छारामायोध्याप्रसादरघुवीरादयः । वर्णिनो मुकुन्दानन्द जयानन्दादयः । भक्ता भक्तसंज्ञाः । पद्मा रत्नजिन्मयजिदादयः पदातयः । गृहिणो मयराममद्विज हेमन्तसिंहनृपादयो गृहस्थजनाश्च । यूयम् । सर्वे । मदीया मद्भक्ताः । इतीत्थम् । विश्रुता विख्याताः । स्थ ॥ ४ ॥ यूयमिति । यूयं सर्वे । शिष्याः । स्थ । अहम् । गुरुर्भवद्धितोपदेष्टा । अस्मि । गुरोः । क्रिया । शिष्यशिक्षाः । शिष्यैः । गुरोः । आज्ञा । पाल्या । एवमित्थंभूतः । धर्मो गुरोः शिष्याणां च सदाचारः । व्यवस्थितः शास्त्रेण कृतव्यवस्थोऽस्ति ॥ ५ ॥ सावधानतयेति । अतो हेतोः । मया । सावधानतयाऽप्रमत्ततयैव । निःशेषदोषनाशाय भवदन्तःस्थसकलदोषनिवृत्तये । शिक्षावार्त्ता । अनुवासरं प्रतिदिनम् । मुहुः । क्रियते । हि ॥ ६ ॥ भवतीति । मम तु । इत्थं वक्ष्यमाणप्रकारेण । इच्छा । भवति । स्वाश्रितेषु मदाश्रितेषु भवत्सु । अणुमात्रकोऽल्पमात्रोऽपि । दोषो लोभादिकः । स्थातुम् । नैव देयः । ते मदाश्रिता भवन्तः । एकान्तिनो ममैकान्तिकभक्ताः । कार्याः ॥ ७ ॥ प्रीतिरिति । कृष्णेतरार्थेषु साक्षाच्छ्रीकृष्णस्वरूपभिन्नमायिकविषयेषु । प्रीतिः । स्वा-

यूयं सर्वे साधवोऽथ धर्मवंश्याश्च वर्णिनः । भक्ताः पद्माश्च गृहिणो मदीया इति विश्रुताः ॥ ४ ॥ यूयं शिष्या गुरुरहं शिष्य-शिक्षा गुरोः क्रिया । शिष्यैश्चाज्ञा गुरोः पाल्या धर्म एवं व्यवस्थितः ॥ ५ ॥ सावधानतयैवातो शिक्षावार्त्ताऽनुवासरम् । निःशेष-दोषनाशाय क्रियते हि मया मुहुः ॥ ६ ॥ भवतीच्छा मम त्वित्थं स्वाश्रितेष्वणुमात्रकः । दोषः स्थातुं नैव देयः कार्या एकान्तिनश्च ते ॥ ७ ॥ प्रीतिः कृष्णेतरार्थेषु दुःस्वभावश्च कश्चन । स्वाश्रितानां हृदि स्थातुं नैव देयोऽस्ति कर्हिचित् ॥ ८ ॥ बाह्यान्तःकरण-प्राणगुणभूतार्थदेवताः । एतेष्वन्यतमस्यापि सङ्गो देयो न रक्षितुम् ॥ ९ ॥ मायिकोपाधिरहितसन्मात्रेणात्मना हरेः । साक्षादुपासनो सर्वैः कारणीयाऽस्ति सर्वथा ॥ १० ॥ कृष्णभिन्नस्य कस्यापि पदार्थस्य तु वासना । हृदि स्थातुं न देयाऽस्ति सा तु खन्याऽस्ति मूलतः ॥ ११ ॥ कस्यचिद्वासनाशेषो जन्मन्यत्र भविष्यति । यदि तर्हि बदर्यां वा श्वेतद्वीपेऽतिभासुरे ॥ १२ ॥

श्रितानाम् । हृदि । स्थातुम् । कर्हिचित् । नैव देयाऽस्ति । कश्चन । दुःस्वभावः सत्सङ्गविरुद्धा प्रकृतिश्चापि । स्थातुं नैव देयोऽस्ति ॥ ८ ॥ बाह्येति । बाह्यान्तः-करणानि श्रोत्रादीनि मनआदीनि च प्राणाश्च गुणाः सत्त्वादयश्च भूतानि पृथिव्यादीनि च अर्थाः शब्दादयो विषयाश्च देवता दिगादय इन्द्रियदेवाश्च ताः । एतेषु बाह्यान्तः-करणादिषु मायाकार्येषु मध्ये । अन्यतमस्यैकस्यापि । सङ्गः । रक्षितुम् । न देयः ॥ ९ ॥ मायिकेति । मायिकोपाधिरहितोऽत एव सन्मात्रः सत्तामात्रस्तेन । आत्मना ब्रह्मभावापन्नक्षेत्रज्ञेन । साक्षात्प्रत्यक्षस्य । हरेः । उपासना । सर्वैर्मदाश्रितैर्भवद्भिः । सर्वथा । कारणीया मयाऽवश्यं विधापनीया । अस्ति ॥ १० ॥ कृष्णेति । कृष्णभिन्नस्य । कस्यापि । पदार्थस्य । वासना तु । मूलतः । खन्या खननीयोन्मूल्येत्यर्थः । अस्ति ॥ ११ ॥ कस्यचिदिति । यदि । कस्यचिन्मदाश्रितजनस्य । अत्रास्मिन् । जन्मनि । वासनाशेषः । भविष्यति । तर्हि । बदर्यां बदरिकाश्रमे । अथवा । अतिभासुरे बहुप्रकाशमये । श्वेतद्वीपे । तपसेत्युत्तरेण सम्बन्धः ॥ १२ ॥

तपसेति । तपसा तपश्चरेण । तं वासनाशेषम । नाशयित्वा । भक्तं वासनाशेषवन्तं भक्तजनम् । निर्गुणं गुणातीतब्रह्मभाववन्तम् । कृत्वा । असौ भक्तः । ब्रह्मधाम मदीयमक्षरब्रह्माख्यं पदमेव । नेयः प्रापणीयः । अस्ति । क्वचित्कदाचिदपि । गत्यन्तरमन्यगतिम् । न तु नैव नेयः ॥ १३ ॥ अत्रेति । सर्वे मदाश्रिता भवन्तः । अत्रास्मिन् जन्मन्येव । प्रायशो बहुधा तु । निर्गुणाः । कर्त्तव्याः । सन्ति । इतीत्थंभूता । मम । इच्छा । वर्त्तते । तस्माद्धेतोः । अखिलैर्भवद्भिः । मम । आज्ञा शिक्षारूपा । पाल्या । मदाज्ञानुसारेण वृत्यमित्यर्थः ॥ १४ ॥ सोत्साहैरिति । मदाश्रितैः । युष्माभिः । मदाज्ञाचरणे । सदा । सोत्साहैरुत्साहसहितैः । भवितव्यम् । भवतां सोत्साहानां युष्माकम् । त्राता रक्षकः । अहम् । अस्मि ॥ १५ ॥ इतीति । इत्यमुना प्रकारेण । उक्ताः श्रीहरिणा कथिताः । साधुमुख्याः साधुप्रभृतयः । ते । सर्वे । भक्तजनाः । हे हरे ! । वयम् । तथा भवदाज्ञाचरणतत्पराः । भविष्यामः । इतीत्थम् । उक्त्वा । प्रभुम् । तं श्रीहरिम् । ववन्दिरे । स्वात्रामं व्रजन्तं नमश्चक्रुरित्यर्थः ॥ १६ ॥ एतावतीति । तत्र तस्याम् । पर्षदि सभायाम् । सङ्घे सङ्घकाले । एतावती । वार्त्ता । अभवत् । पुनर्भूयोऽपि । निशि सान्ध्य-

तपसा नाशयित्वा तं भक्तं कृत्वा च निर्गुणम् । ब्रह्मधामैव नेयोऽसौ न तु गत्यन्तरं क्वचित् ॥ १३ ॥ अत्रैव प्रायशः सर्वे कर्त्तव्या निर्गुणा इति । ममेच्छा वर्त्तते तस्मादाज्ञा पाल्या ममाखिलैः ॥ १४ ॥ सोत्साहैर्भवितव्यं हि मदाज्ञाचरणे सदा । मदाश्रितैस्तु युस्माभिस्त्राताऽस्मि भवतामहम् ॥ १५ ॥ इत्युक्ताः साधुमुख्यास्ते सर्वे भक्तजनाः प्रभुम् । तथा भविष्याम इति तमुक्त्वा च ववन्दिरे ॥१६॥ एतावत्यभवद्वार्त्ता सङ्घे तत्र पर्षदि । पुनर्निशि तथैवाभूत्सभा तत्रैव हि स्थले ॥ १७ ॥ भक्तमण्डलमध्यस्थो हरिः प्रोवाच तान्सतः । गुणात्मका जनाः सन्ति तेषां कर्मगुणात्मकम् ॥१८॥ तत्र स्यादेवलोकाप्तिः सात्विकेन तु कर्मणा । कर्मणा राजसेनैव मध्यलोकोपलम्भनम् ॥१९॥ अधोलोकोपलब्धिः स्यात्तामसेन तु कर्मणा । तत्र शङ्का यदि भवेदैकविध्याचु कर्मणः ॥ २० ॥ रजःकर्मवतां नृणां सर्वेषां सुखदुःखयोः । तुल्यताऽपेक्षिता सा तु कथं नास्ति तदोच्यते ॥ २१ ॥

भगवच्छीराजनान्ते इत्यर्थः । तत्र पूर्वोक्ति स्थले स्थाने एव । तथैव सङ्घकाले इव । सभा । अभूत् ॥ १७ ॥ भक्तेति । भक्तमण्डलमध्यस्थस्त्यागिगृहिमहासभामध्यावस्थितः । हरिः । तान्स्वपुरोऽवस्थितान् । सतः साधून् । प्रोवाच । हे सन्तः ! । जना अत्र भुवनेऽवस्थिता लोकाः । गुणात्मकाः सत्त्वादिमायिकगुणप्रधानाः । सन्ति । तेषां तथाविधजनानाम् । कर्म । गुणात्मकम् । भवति ॥ १८ ॥ तत्रेति । तत्र तेषु तद्गुणात्मककर्मसु मध्ये । सात्त्विकेन । कर्मणा तु । देवलोकाप्तिः । स्यात् । राजसेन । कर्मणा । मध्यलोकोपलम्भनं मर्त्यलोकप्राप्तिरेव । स्यात् ॥१९॥ अध इति । तामसेन । कर्मणा तु । अधोलोकोपलब्धिः । स्यात् । तत्र तस्मिन्नर्थे । यदि । शङ्का । भवेत् । कर्मणो जनानां राजसकर्मणः । ऐकविध्यादेकविधत्वाद्धेतोः ॥२०॥ रज इति । रजःकर्मवतां रजोगुणात्मककर्मयुक्तानाम् । सर्वेषाम् । नृणां जनानाम् । सुखदुःखयोर्विषये तुल्यता साम्यता । अपेक्षिता । सा सुखदुःखतुल्यता । कथम् । नास्ति । तदा । उच्यते इति सार्द्धश्लोकैकान्वयः ॥ २१ ॥

कर्मण इति । हे साधवः ! । राजसस्यापि । कर्मणः । देशकालादियोगतः । अनन्ताः । भेदाः । भवन्ति । अतो हेतोः । फले सुखदुःखप्राप्तिलक्षणायां व्युष्टौ । भेदस्तारतम्यम् भवति ॥२२॥ देहेनेति । अनेन । देहेन वर्त्तमानशरीरेण । भोग्यम् । यत् । कर्म । तत् । प्रारब्धम् । कीर्त्यते । यत् । कर्म । जन्मान्तरेणागामिनान्यजन्मना । भोग्यम् । तत् । क्रियमाणम् । कीर्त्यते ॥२३॥ तत्रेति । हे साधवः ! । तत्र क्रियमाणे कर्मण्यपि । विशेषो भेदः । अस्ति । तं विशेषम् । वो युष्मभ्यम् । कथयामि । हरेः । हरिजनानां च । अरोचकमप्रीतिकरम् । यत् । कर्म । स्यात् ॥ २४ ॥ इहेति । तस्य तथाविधस्य कर्मणः । फलम् । याम्ययातनया तुल्यम् । महत् । दुःखम् । नरः । इहास्मिन्नेव । जन्मनि । भुङ्क्ते । अन्यजन्मनि न तु नैव भुङ्क्ते ॥ २५ ॥ क्रियतेति । पुंसा जनेन । हरितद्भक्तरोचकम् । यत् । कर्म । क्रियेत । स पुमान् । ब्रह्मधामवदक्षरधाम्नीव । सुखम् । तत्फलं हरितद्भक्तरोचककर्मफलम् । इहास्मिन् जन्मन्येव । भुङ्क्ते ॥ २६ ॥ कृतमिति । इह जन्मनि । यत्नेन । स्वर्ग-

कर्मणो राजसस्यापि देशकालादियोगतः । भेदा भवन्त्यनन्ता हि फले भेदो भवत्यतः ॥ २२ ॥ देहेनानेन भोग्यं तु प्रारब्धं कर्म कीर्त्यते । जन्मान्तरेण भोग्यं हि क्रियमाणं तु कर्म यत् ॥ २३ ॥ तत्राप्यस्ति विशेषस्तं साधवः ! कथयामि वः । हरेर्हरिजनानां च कर्म यत्स्यादरोचकम् ॥ २४ ॥ इहैव जन्मनि फलं तस्य दुःखं महन्नरः । याम्ययातनया तुल्यं भुङ्क्ते न त्वन्यजन्मनि ॥ २५ ॥ क्रियेत कर्म यत् पुंसा हरितद्भक्तरोचकम् । इहैव तत्फलं भुङ्क्ते स सुखं ब्रह्मधामवत् ॥ २६ ॥ कृतं स्यादिह यत्नेन कर्म यत्स्वर्गसौख्यदम् । हरितत्सद्द्रोहतस्तत्सर्वमेव विनश्यति ॥ २७ ॥ नरकप्रापकं कर्म कृतं स्यादिह यन्महत् । कृष्णतत्सत्प्रीणनात्तु तच्च सर्वं विनश्यति ॥ २८ ॥ अतो बुद्धिमता त्वत्र हरितज्जनरोचकम् । कर्म यत्नेन कर्त्तव्यं न क्वचित्तदरोचकम् ॥ २९ ॥ बोधनीया एवमेव मुख्येन गृहिणाऽखिलाः । स्वजना अपि यत्कुर्युः कर्म कृष्णसतां प्रियम् ॥ ३० ॥ कृष्णतत्सत्प्रीतिकरं कर्म कृत्वा दिवौकसः । सूर्यचन्द्रानलमुखाः प्रापुस्तेजस्वितां भृशम् ॥ ३१ ॥

सौख्यदम् । यत् । कर्म । कृतम् । स्यात् । सर्वमेव । तत्कर्म । हरितत्सद्द्रोहतः । विनश्यति ॥ २७ ॥ नरकेति । इह जन्मनि । नरक प्रापकम् । यत् । महत् । कर्म । कृतम् स्यात् । सर्वम् । तत्कर्म । कृष्णतत्सत्प्रीणनात्तु । विनश्यति ॥ २८ ॥ अत इति । अतो हेतोः । अत्र सत्सङ्गे । बुद्धिमता भक्तेन । हरितज्जनरोचकम् । कर्म । यत्नेन । कर्त्तव्यम् । क्वचिदपि । तदरोचकं हरितज्जनारुचिकरं कर्म । न कर्त्तव्यम् ॥ २९ ॥ बोधनीया इति । मुख्येन स्वगृहजातिग्रामादौ प्रधानेन । गृहिणा गृहस्थभक्तेन । स्वजना अपि । एवं मदुक्तप्रकारेणैव । बोधनीयाः । यद्येन बोधनेन । कृष्णसतां कृष्णस्य तत्साधूनां च । प्रियम् । कर्म । कुर्युस्ते विदध्युः ॥ ३० ॥ कृष्णेति । सूर्यश्च चन्द्रश्चानलोऽग्निश्च ते मुखानि मुख्या येषां ग्रहनक्षत्रादीनां ते । दिवौकसो देवाः । कृष्णतत्सत्प्रीतिकरम् । कर्म । कृत्वा । भृशमतिशयिताम् । तेजस्वितां प्रकाशयुक्तत्वम् । प्रापुः ॥ ३१ ॥

ब्रह्माण्ड इति । ब्रह्माण्डे । ये । ये । चराचराः । लोका जीवाः । सुखिनः । सन्ति । ते । सर्वे । कृष्णतद्भक्तप्रीणनात् । सुखिनः । सन्ति । इतीत्थम् । गम्यताम् ॥ ३२ ॥ उक्तार्थं निगमयत्यर्द्धेन । एवमिति । हे साधवः ! । एवममुना प्रकारेण । ज्ञात्वा । अग्र्यं श्रेष्ठम् । सौख्यम् । इच्छद्भिः । पुंभिर्भक्तैः । कृष्णः । तज्जनाश्च । प्रीणनीयाः । इत्थमेवंविधाम् । तस्य श्रीहरेः । पीयूषतुल्याम् । वाचम् । श्रुत्वा । सन्तः सभोपविष्टाः सर्वे साधवः । तथा । अन्ये गृहस्थाः । तोषम् । आपुः ॥ ३३ ॥ साध्वादिस्वाश्रितजनशिक्षावाक्यानि येन तु । हरिणोक्तानि च स्वस्य स्वसतां कर्म रोचकम् ॥ १ ॥ अरोचकं च यत्कर्म फलमुक्तं तयोर्द्विधा । स्वशिक्षापालकं कुर्यात्सर्वथैव सदा स माम् ॥ २ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवन्मूर्त्ति गुरुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां शताधिकाष्टसप्ततितमस्तरङ्गः ॥ १७८ ॥ ४५ ॥

ब्रह्माण्डे सुखिनो ये ये सन्ति लोकाश्चराचराः । ते सर्वे कृष्णतद्भक्तप्रीणनादिति गम्यताम् ॥ ३२ ॥ एवं ज्ञात्वा सौख्यमिच्छद्भिरग्र्यं पुंभिः कृष्णतज्जनाः प्रीणनीयाः । इत्थं वाचं तस्य पीयूषतुल्यां श्रुत्वा सन्तस्तोषमापुस्तथाऽन्ये ॥ ३३ ॥

इति श्रीहरिवाक्यसुधासिंधौ शतानन्दमुनिविरचिते शताधिकअष्टसप्ततितमस्तरङ्गः ॥ १७८ ॥ ४५ ॥

शकाब्दे विक्रमार्कस्य खनागवसुभूमिते । एकादश्यां पौषकृष्णे वचोऽमृतमिदं हरेः ॥ १ ॥
तत्र दुर्गपुरे दुर्गे उत्तमस्य वेश्मनः । वितर्दौ प्रत्यगास्यस्य न्यषीदत्पीठ उत्तमे ॥ २ ॥
सितसर्वाम्बरो भक्तैस्त्यागिभिर्गृहिभिर्वृतः । सूक्ष्मतूलपटीं पीतां वसानश्चित्रितां तथा ॥ ३ ॥
उवाच स सतो येऽत्र सन्ति भागवतोत्तमाः । ते स्वमेकान्तिकं धर्ममेव रक्षन्ति यत्नतः ॥ ४ ॥

एकान्तिकधर्मस्य श्रेष्टताऽवश्यपाल्यता । यो भक्तो हरितद्भक्तदोषधीर्भवति क्वचित् ॥ १ ॥ स स्यादेकान्तिकाद्धर्मात् पतित्वा दुर्गतिं व्रजेत् । एतत्सर्वं तु षट्चत्वारिंशे प्रोक्तं समासतः ॥२॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८८०) पौषकृष्णे पौषमासस्य कृष्णपक्षे । एकादश्यां तिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमस्य राज्ञः । दुर्गे । प्रत्यगास्यस्य पश्चिमद्वारस्य । वेश्मनस्तद्भवनस्य । वितर्दौ बाह्यवेदिकायाम् । उत्तमे स्वास्तरणास्तुतत्वाच्छ्रेष्ठे पीठे पर्यङ्कासने । स श्रीहरिः । न्यषीदत् ॥ २ ॥ तं विशिनष्टि । सितसर्वाम्बरः परिधृतसकलश्वेतवसनः । त्यागिभिः । गृहिभिश्च । भक्तैर्नानादेशागतैः स्वाश्रितजनैः । वृतः सभायां परिवेष्टितः । तथा । पीतां पीतवर्णाम् । चित्रितामन्तःकृष्णवर्णाल्पयुक्तचित्रयुक्ताम् । सूक्ष्मतूलपटीम् । वसानः ॥ ३ ॥ उवाचेति । स श्रीहरिः । सतो झर्झरमृदङ्गध्वन्युपेतपद्यगायनोपरतसाधून् । उवाच । हे साधवः ! । अत्र सत्सङ्गे । ये । भागवतोत्तमा भगवदेकान्तिकभक्ताः । सन्ति । ते भागवतोत्तमाः । स्वं स्वकीयम् । एकान्तिकम् । धर्ममेव । यत्नतः । रक्षन्ति ॥ ४ ॥

नेति । ते भक्ताः । देहस्य । मरणम् । मरणम् । न मन्यन्ते । हि । ते भक्तास्तु स्वधर्मच्यवनं स्वैकान्तिकधर्माद्भ्रष्टत्वम् । मरणम् । जानन्ति । खलु ॥ ५ ॥ इतरस्येति । इतरस्य स्वतोऽन्यस्य । भक्तस्यैकान्तिकजनस्यापि । चेद्यदि । स्वधर्मच्युतिः । स्यात् । तदा । तां स्वधर्मच्युतिम् । दृष्ट्वा । ते एकान्तिकभक्ताः । तदधोगतिचिन्तया धर्मच्युतैकान्तिकजनाधोगमनं संचिन्तनेन । अत्यत्यन्तम् । खिद्यन्ते खेदयुक्ता भवन्ति ॥ ६ ॥ स्त्रीति । किञ्च । ते एकान्तिकभक्ताः । देहिनां भक्तानाम् । स्त्रीपुत्रधननाशादिदुःखम् । दृष्ट्वा । मायिकक्षयनिश्चयान्मायिकपदार्थानामवश्यविनाशित्वनिर्णयाद्धेतोः । खिन्नाः खेदयुक्ताः । न जायन्ते ॥ ७ ॥ धर्मस्येति । तेषामेकान्तिकभक्तानाम् । धर्मस्यैकान्तिकधर्मस्य । आचरणे । श्रवणे । बोधने उपदेशने प्रवर्त्तने सर्वत्र प्रचारणे चापि । यत्न उद्योगः । अस्ति । यतस्तदाचरणादेर्हेतोः । कृष्णः । प्रसीदति तेषु प्रसन्नो भवति ॥ ८ ॥ एकेति । हरेः । एकान्तिकः । धर्म एव । अतिवल्लभः । अस्ति । यतः । स हरिः । यत्स्थापनाय यस्यैकान्तिकधर्मस्य सम्यक् स्थापनं कर्त्तुम् । अनुयुगं युगे युगे । अवतारान् । दधाति ॥ ९ ॥ वर्णेति । वर्णाश्रमस्य । धर्मम् । स्थापयितुं तु । सप्तर्षिप्रमुखा अपि । शक्ताः

न हि देहस्य मरणं मन्यन्ते मरणं हि ते । स्वधर्मच्यवनं ते तु जानन्ति मरणं खलु ॥५॥ इतरस्यापि भक्तस्य चेत्स्वधर्मच्युतिस्तदा । तां दृष्ट्वा तेऽतिखिद्यन्ते तदधोगतिचिन्तया ॥ ६ ॥ स्त्रीपुत्रधननाशादिदुखं दृष्ट्वा तु देहिनाम् । न जायन्ते खिन्ना मायिकक्षयनिश्चयात् ॥ ७ ॥ धर्मस्याचरणे तेषां श्रवणे बोधनेऽपि च । प्रवर्त्तने च यत्नोऽस्ति यतः कृष्णः प्रसीदति ॥ ८ ॥ एकान्तिको धर्म एव हरेरस्त्यतिवल्लभः । यत्स्थापनायानुयुगमवतारान्दधाति सः ॥ ९ ॥ वर्णाश्रमस्य धर्मं तु सप्तर्षिप्रमुखा अपि । सन्ति स्थापयितुं शक्ता न त्वमुं तु हरीतरः ॥१०॥ ईदृशं धर्ममेकान्तमिह पालयतां नृणाम् । क्वचित्स्यात्कस्यचिच्चित्ते कृष्णतद्भक्तदोषधीः ॥११॥ यदि तदा तर्हि तु धर्मात्स्वात्स पतेन्नात्र संशयः । तस्यां हेतुर्यदि क्रोधस्तदा सर्पो भवेत्स तु ॥१२॥ कामो हेतुर्यदि यक्षो वा राक्षसो भवेत् । मृत्वा ततः स्वधर्मस्य फलं भुङ्क्तेऽमरालये ॥१३॥ न त्वसौ कृष्णतद्भक्तदोषग्राह्यक्षरं व्रजेत् । अतो न सर्वथा कार्या कृष्णतद्भक्तदोषधीः ॥१४॥

समर्थाः । सन्ति । अमुमेकान्तिकधर्मम् । स्थापयितुं तु । हरीतरः । शक्तः । नास्ति । किन्तु तत्रैको हरिरेव समर्थोऽस्ति ॥ १० ॥ ईदृशमिति । इह सत्सङ्गे । ईदृशमेवंविधम् । एकान्तम् । धर्मम् । पालयताम् । नृणां भक्तानां मध्ये । कस्यचिद्भक्तस्य । चित्ते । क्वचिदसद्देशकालादियोगे सति । कृष्णतद्भक्तदोषधीः । स्याद्यदि । यदीत्युत्तरादाकृष्टम् ॥ ११ ॥ यदीति । तर्हि तु । स भक्तः । स्वात्स्वकीयात् । धर्मादेकान्तिकधर्मात् । पतेत् । अत्रार्थे । संशयः । नास्ति । तस्यां कृष्णतद्भक्तदोषबुद्धौ । हेतुः । यदि । क्रोधः । भवेत् । तदा । स कृष्णतद्भक्तदोषबुद्धिर्भक्तस्तु । सर्पः भवेत् । मृत्वेति शेषः ॥१२॥ काम इति । यदि । कामः । हेतुः । स्यात् । तदा । मृत्वा । यक्षः । अथवा । राक्षसः । भवेत् । ततः सर्पादिदेहप्राप्त्यनन्तरम् । स्वधर्मस्य सर्पादियोनिप्राप्तेः पूर्वजन्मानुष्ठितस्यैकान्तिकधर्मस्य । फलम् । अमरालये देवलोके । भुङ्क्ते ॥ १३ ॥ नेति । कृष्णतद्भक्तदोषग्राही । असौ भक्तः । अक्षरब्रह्माख्यं धाम तु । नैव व्रजेत् । अतो हेतोः । कृष्णतद्भक्तदोषधीः । सर्वथा । न कार्या ॥ १४ ॥

महेति । महापापवतो ब्रह्महत्यादिमहापापयुक्तस्य जनस्य । क्वापि कदाचित् । प्रायश्चित्तैस्तत्प्रायश्चित्ताचरणैः । विशुद्धितो हेतोः । सत्सङ्गेन भगवत्तज्जनेषु गुणमतियुक्तेन तेषां सङ्गेन । तदाप्तिरक्षरधामप्राप्तिः । स्यात् । तद्वतः कृष्णतद्भक्तदोषधीयुक्तस्य । पुंसो भक्तस्य तु । न तु अक्षरधामप्राप्तिर्नैव स्यात् ॥ १५ ॥ वच इति । इत्येवंविधाम् । स्वीयगुरोः श्रीहरेः । इष्टां प्रियाम् । वचःसुधाम् । कर्णपुटैः । निपीय । भक्तिमन्तः श्रीहरेरेकान्तिकभक्तियुक्ताः । ते । साधवः । तथा गृहस्था अपि । हृदये स्वस्वमानसे । महान्तम् । सन्तोषम् । आपुः ॥ १६ ॥ स्वस्यैकान्तिकभक्तानां लक्षणं श्रेष्ठता तथा स्वस्यैकान्तिकधर्मस्य प्रियताऽतिशयेन च ॥ १ ॥ ततः पतनहेतुश्च तत्फलं चातिदुःखदम् । उक्ते श्रीहरिणा येन स तं धर्मं ममावतु ॥ २ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्यैकान्तिकोपासकश्रीहरिकृष्णभगवत्सद्गुरुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां शताधिकैकोनाशीतितमस्तरङ्गः ॥ १७९ ॥ ४६ ॥

भक्तैस्तु सर्वथा त्याज्याः सङ्गेन महतां सताम् । विषयाणां मायिकानां वासनाः स्वस्य दुःखदाः ॥ १ ॥ तत्त्याजनार्थं महतां वाक्यानि त्वप्रियाण्यपि ।

महापापवतः क्वापि प्रायश्चित्तैर्विशुद्धितः । सत्सङ्गेन तदाप्तिः स्यान्न तु पुंसस्तु तद्वतः ॥ १५ ॥ वचः सुधां कर्णपुटैर्निपीय ते साधवः । स्वीयगुरोरितीष्टाम् । सन्तोषमापुर्हृदये महान्तं यथा गृहस्था अपि भक्तिमन्तः ॥ १६ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते शताधिकैकोनशीतितमस्तरङ्गः ॥ १७९ ॥ ४६ ॥

शकाब्दे विक्रमार्कस्य खनागवसुभूमिते । दशम्यां तपसः कृष्णे वचोऽमृतमिदं हरेः ॥ १ ॥ तत्र दुर्गपुरे दुर्गं उत्तमस्य महीक्षितः प्रागास्यवेश्मवेद्यां स न्यषीदन्मञ्चकासने ॥२॥ सितवासास्तूलपटीं वसानः स्वीयसंवृतः सतो । विलोकयन्सर्वान्स तद्धितत्कृदूचिवान् ॥३॥ पञ्चपञ्चसतां सन्ति मण्डलानि हि वोऽनघाः ! । एकैकस्तेषु मुख्योऽन्ये तदाज्ञानुगुणक्रियाः ॥ ४ ॥

प्रियाणि मत्वैतत्सप्तचत्वारिंशे प्रकीर्त्तितम् ॥ २ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्या- तम् । (१८८०) तपसो माघमासस्य । कृष्णे कृष्णपक्षे । दशम्यां तिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमस्य । महीक्षितः । दुर्गे । प्रागास्यवेश्मवेद्यां तदीयप्राग्द्वारभवनबाह्यवेदिकायाम् । मञ्चकासने स्वास्तृतपर्यङ्कविष्टरे । स श्रीहरिः । न्यषीदत् ॥ २ ॥ सितेति । सितवासाः परिहितसकलश्वेतवसनः । तूलपटीं पीतवर्णकृष्णवर्णाल्पबुद्बुदचित्रितसूक्ष्मतूलपटिकाम् । वसानः । स्वीयसंवृतो नानादेशागतानेकत्यागिगृहिस्वाश्रितैर्महासभायां परिवृतः । स श्रीहरिः । सर्वान् । सतः साधून् । विलोकयन् । तद्धितकृत्तेषां हितकारकः सन् । ऊचिवान् ॥ ३ ॥ पञ्चेति । हे अनघा ! । वो युष्माकम् । मण्डलानि । पञ्चपञ्चसताम् । सन्ति । तेषु पञ्चपञ्चसतां मण्डलेषु । एकैकः साधुः । मुख्यः । अस्ति । अन्ये चत्वारः साधवः । तदाज्ञानुगुणा मुख्यसाध्वाज्ञानुसारिणक्रिया धर्मादिपालनकृत्यं येषां तथाभूताः । सन्ति अत्र पञ्चेति षट् सप्ताष्टादीनामुपलक्षणम् । तेन षण्णां सतां मण्डलं सप्तानामष्टानां चेति ज्ञेयम् ॥ ४ ॥

तत्रेति । तत्र पञ्चसन्मण्डले । मुख्यः साधुः यदि बुद्धिमान् । भवेत् । तर्हि । स मुख्यः साधुः । अपरान् । चतुरः । सतः साधून् । रञ्जयन्प्रीणयन्सन् । पार्श्वे स्वसमीपे । रक्षितुम् । शक्नुयात् ॥ ५ ॥ अनीदृशस्येति । अनीदृशस्य बुद्धिरहितमुख्यसाधोः । अन्तिके समीपे तु । ते चत्वारः । साधवः । न तिष्ठन्ति । हि यतः । स बुद्धिरहितमुख्यसाधुः । तेषां स्वमण्डलस्थचतुःसाधुनाम् । मनोऽभीष्टम् । विधातुम् । नैव । बुध्यते ॥ ६ ॥ करोतीति । नाडीवैद्यः सम्यग्नाडीक्षणेन तदन्तर्गतरोगाभिज्ञो भिषक् । रोगं रोग्यामयम् । सम्यक् । परीक्ष्यैव । यथा । अगदमौषधम् । करोति । तथा । धीमान्मुख्यः साधुस्तु । श्रोत्रधिकारितां स्वमण्डलीयवचनश्रावकसाध्वधिकारित्वम् । सम्यक् । ज्ञात्वा । वार्त्ताम् । करोति ॥ ७ ॥ स्वेति । स्वबुद्धिमान्मण्डलमुख्यः साधुः । स्वधर्मज्ञानवैराग्यभक्तीनां मध्ये । यस्य कस्यचित् । अल्पताम् । मुमुक्षौ । सति स्वमण्डलस्थसाधौ । पश्येत् । तद्धितां मुमुक्षुस्वमण्डलीयसाधुहितकारिणीम् । तद्वार्त्तां तन्निष्ठाल्पस्वधर्मादिपुष्टिकारिकां गोष्ठीम् । कुर्यात् । हि ॥ ८ ॥ मुमुक्षोरिति । मुख्यः साधुः । यदा । मुमुक्षोः । साधोः । पुरतः । विषयखण्डनम् । तं मुमुक्षुसाधुम् । दुःखयित्वाऽपि ।

तत्र मुख्यो यदि भवेद्बुद्धीमांस्तर्हि सोऽपरान् । चतुरो रक्षितुं पार्श्वे शक्नुयाद्रञ्जयन्सतः ॥ ५ ॥ अनीदृशस्यान्तिके तु न ते तिष्ठन्ति साधवः । स हि तेषां मनोभिष्टं विधातुं नैव बुध्यते ॥६॥ करोति वार्त्तां धीमांस्तु ज्ञात्वा श्रोत्रधिकारिताम् । सम्यग्रोगं परीक्ष्यैव नाडीवैद्योऽगदं यथा ॥ ७ ॥ स्वधर्मज्ञानवैराग्यभक्तीनां यस्य सोऽल्पताम् । मुमुक्षौ सति पश्येत्तद्वार्त्तां कुर्याद्धि तद्धिताम् ॥ ८ ॥ मुमुक्षोः पुरतः साधोः सम्यग्विषयखण्डनम् । दुःखयित्वाऽपि तं कुर्यात्सोऽतिहृष्टस्तदा भवेत् ॥ ९ ॥ स्वदोषापगमायाथ सद्गुणागमनाय च । सतां सङ्गं विदधते महतां हि हरिश्रिताः ॥ १० ॥ रोगराजोपमः साधुर्महानिति जगुर्बुधाः । यद्गाढसङ्गात्सहसा विषयेहा निवर्त्तते ॥ ११ ॥ सद्भोज्यवस्त्रसम्प्राप्त्यै साधुवेषधरस्तु यः । महासन्मण्डले तिष्ठेत्स तु ज्ञेयो नराधमः ॥ १२ ॥ स भ्रष्टो भविता नूनं कालेनाल्पेन सत्पथात् । लप्स्यते च शुनः साम्यमिति जानीत निश्चितम् ॥ १३ ॥

सम्यक् । कुर्यात् । तदा । स मुमुक्षुः साधुः । अतिहृष्टः । भवेत् ॥ ९ ॥ स्वेति । हि यतः । हरिश्रिताः कृतैकसाक्षाद्धर्याश्रया मुमुक्षवः साधवः । स्वदोषापगमाय स्वनिष्ठविषयासक्तिलक्षणदोषनिवृत्त्यै । अथ च । सद्गुणागमनाय स्वधर्मवैराग्यादिशुभगुणानामात्मन्यानयनाय । महताम् । सताम् । सङ्गम् । विदधते ॥ १० ॥ रोगेति । महान् । साधुः । रोगराजोपमः क्षयरोगतुल्य । अस्ति । इतीत्थम् । बुधा विवेकिनो भगवदेकान्तिकसाधवः । जगुर्बभणुः । यतः । यद्गाढसङ्गाद्यस्य महासाधोः सुदृढप्रसङ्गात् । विषयेहा रसास्वादादिविषयभोगेच्छा । सहसा । निवर्त्तते । रोगराजागमे यथा नानारसास्वादादिविषयभोगेच्छा निवर्त्तते तथा महासाधुसुदृढप्रसङ्गेनापीत्यर्थः ॥ ११ ॥ सदिति । साधुवेषधरः । यो भक्तः । सद्भोज्यवस्त्रसम्प्राप्त्यै । महासन्मण्डले । तिष्ठेत् । स साधुभक्तस्तु । नराधमः । ज्ञेयः ॥ १२ ॥ स इति । स नराधमः साधुः । अल्पेन । कालेन । सत्पथात्साधुमार्गात् । भ्रष्टः । भविता भविष्यति । शुनो भषकस्य । साम्यं च । लप्स्यते प्राप्स्यति । नूनम् ।

इतीत्थम् । निश्चितमेव । जानीत ॥ १३ ॥ अत इति । अतो हेतोः । दुराशां सङ्गोज्यादिग्राम्यविषयप्राप्तीच्छाम् । हित्वैव । केवलम् । स्वस्य । श्रेयसे एकान्तिकप्राप्यात्यन्तिककल्याणप्राप्त्यर्थम् । महत्सङ्गो महासाधुप्रसङ्गः । विधातव्यः । मानः । मत्सरश्च । त्याज्यः ॥ १४ ॥ श्वेतद्वीप इति । श्वेतद्वीपे । अथवा । बदर्यां बदरिकाश्रमे । यादृशी । सभा । भवेत् । महताम् । साधूनाम् । इयं मत्पुरोवर्त्तिनी । सभा । तादृशी तथाविधा । भवति । हि ॥ १५ ॥ अत्रेति । अत्रास्यां सभायाम् । स्थित्वा तु । सर्वाः । मलिनवासना मायिकविषयभोगभावनाः । अवश्यमेव । हातव्याः । मुमुक्षतां साधूनाम् । तत्त्यागस्थानं मलिनवासनानिवृत्तिस्थलम् । भुवि । पृथिव्याम् । अन्यदस्मात्सभारूपस्थानादितरत् । नास्ति । खलु ॥ १६ ॥ भुक्ता इति । किञ्च । नानायोनिषु देवमनुष्यादिप्राक्तनजन्मसु । भूरिशः । विषयाः । भुक्ता एव । सन्ति । तथापि । कस्यचिदपि जनस्य । तेषां विषयाणाम् । भोगेच्छा । अद्यैतत्कालपर्यन्तमपि । न तु नैव । शाम्यति ॥ १७ ॥ अत इति । अतो हेतोः । सर्पिषा घृतसेकेन । वह्निज्वालेव । सा विषयभोगेच्छा । भोगैस्तद्भोगाचरणैः । न शाम्येत् । किन्तु । महासाधुषु । सा विषयभोगेच्छा । त्यागेन

**अतो दुराशां हित्वैव श्रेयसे स्वस्य केवलम् । महत्सङ्गो विधातव्यस्त्याज्यो मानश्च मत्सरः ॥ १४ ॥ श्वेतद्वीपे बदर्यां वा यादृशी सत्सभा भवेत् । तादृशीयं हि महतां साधूनां वर्त्तते सभा ॥ १५ ॥ अत्र त्ववश्यं हातव्याः सर्वा मलिनवासनाः । नास्त्यन्यत्खलु तत्त्यागस्थानं भुवि मुमुक्षताम् ॥ १६ ॥ भुक्ताः सन्त्येव विषया नानायोनिषु भूरिशः । अद्यापि न तु भोगेच्छा तेषां शाम्यति कस्यचित् ॥ १७ ॥ अतो भोगैर्न शाम्येत्सा वह्नीज्वालेव सर्पिषा । त्यागेनैव तु सा शान्ता महासाधुषु दृश्यते ॥ १८ ॥ अतः सा सर्वथा त्याज्या बहुजन्मातिदुःखदा । उपायेनैव भगवन्माहात्म्यश्रवणादिना ॥ १९ ॥ तत्त्याजनार्थं गुणिनो महान्तो यदि साधवः । अप्रियाण्यपि वाक्यानि वदेयुर्हितकारिणः ॥ २० ॥ तर्हि तान्यप्यतिप्रीत्या ग्राह्याणि सुखलब्धये । सदौषधं रोगिणेव भवपाशमुमुक्षुणा ॥ २१ ॥ नन्वीदृशस्त्ववसरो वासनाक्षयकारणम् । दुर्लभोऽस्तीति मत्वैव कर्त्तव्योऽद्य तदुद्यमः ॥ २२ ॥**

सर्वथा विषयभोगपरिवर्जनेनैव । शान्ता निवृत्ता । दृश्यते ॥ १८ ॥ अत इति । अतो हेतोः । बहुजन्मातिदुःखदा धृतेषु बहुषु जन्मस्वप्यतिदुःखदायिनी । सा विषयभोगेच्छा । भगवन्माहात्म्यश्रवणादिना । उपायेनैव । सर्वथैव । त्याज्या ॥ १९ ॥ तदिति । गुणिनः स्वधर्मज्ञानवैराग्यभक्त्यादिसद्गुणयुक्ताः । हितकारिणः । महान्तः । साधवः । यदि । तत्त्याजनार्थं तद्वासनास्त्याजयितुम् अप्रियाण्यपि वाक्यानि । वदेयुः । तर्हीत्युत्तरेण सम्बन्धः ॥ २० ॥ तर्हीति । तर्हि रोगिणा । सुखलब्धये आरोग्यसुखप्राप्त्यै । सदौषधं सद्यो रोगनिवृत्तिहेत्वमृतरसाद्यगद इव । भवपाशमुमुक्षुणा भक्तेन । सुखलब्धये आत्यन्तिकनिःश्रेयससुखलाभार्थम् । तान्यप्रियाण्यपि तद्वाक्यानि । अतिप्रीत्या । ग्राह्याणि ॥ २१ ॥ नन्विति । वासनाक्षयकारणं वासनाविनाशहेतुभूतः । ईदृशः साम्प्रतमेतादृशप्रचुरसाधुसत्त्वादनुपमत्वादेवंविधः । अवसरः समयः । दुर्लभः । अस्ति । ननु । इतीत्थमेव । मत्वा । अद्य साम्प्रतमेव । तदुद्यमो वासनाक्षयोद्योगः । कर्त्तव्यः ॥ २२ ॥

इहेति । कृष्णभक्तिप्रतापेन प्रत्यक्षभगवद्भक्तिप्रभावेन । इहास्मिन्नेव । जन्मनि । अखिला अपि वासनाः । त्यक्त्वा । देहः । त्याज्यः । अस्ति । अन्यथा वासना अत्यक्त्वा । देहो न त्याज्योऽस्ति ॥२३॥ त्यक्त्वेति । देहम् । त्यक्त्वाऽपि । ब्रह्मरूपेण । आत्मनैव । शुकादिवत् । मम । अन्वहम् । कृष्णस्य । भक्तिः । एव । कर्त्तव्या । अस्ति । हि ॥२४॥ इतिपूर्वपूर्वोत्तरश्लोकोक्तप्रकारेणैव । मुमुक्षुणा । भक्तेन । सोत्साहम् । निश्चयः । कार्यः । ततस्तदनन्तरम् । साधूक्तरीत्या भगवदेकान्तिकसाधुप्रदर्शित-वासनाक्षययुक्तिप्रकारेणैव । निश्छद्म निष्कपटंयथातथा । सर्वदा । वृत्त्यम् । हि ॥ २५ ॥ एवमिति । एवममुना प्रकारेण । वर्त्तमानस्य भक्तस्य । साहाय्यम् । हरिः । कुरुते । ततोहेतोः । असौ भक्तः । देहम् । उत्सृज्य त्यक्त्वा । ब्रह्मधाम ममाक्षरपदमेव । याति । हि ॥ २६ ॥ दिव्यमिति । स भक्तः । दिव्यम् । विमानम् । आरुह्य । हरेः । धाम । व्रजन्सन् । इन्द्रब्रह्मादिलोकांस्तु । निरयानिव पश्यति ॥ २७ ॥ कृष्णेति । हे भक्ताः ! । कृष्णधामोत्कृष्टसौख्यलाभायैव । मया ।

इहैव जन्मनि त्यक्त्वा वासना ह्यखिला अपि । कृष्णभक्तिप्रतापेन देहस्त्याज्योऽस्ति नान्यथा ॥ २३ ॥ त्यक्त्वाऽपि देहं कृष्णस्य भक्तिरेव ममान्वहम् । ब्रह्मरूपेणात्मनैव कर्त्तव्याऽस्ति शुकादिवत् ॥ २४ ॥ इत्येव निश्चयः कार्यः सोत्साहं हि मुमुक्षुणा । ततः साधूक्तरीत्यैव वृत्यं निश्छद्म सर्वदा ॥ २५ ॥ एवं हि वर्त्तमानस्य साहाय्यं कुरुते हरिः । ततोऽसौ देहमुत्सृज्य ब्रह्मधामैव याति हि ॥ २६ ॥ दिव्यं विमानमारुह्य व्रजन् धाम हरेः स तु । इन्द्रब्रह्मादिलोकांस्तु निरयानिव पश्यति ॥ २७ ॥ कृष्ण धामोत्कृष्टसौख्यलाभायैव हि मायिकम् । तुच्छं ग्राम्यसुखं भक्ताः ! हाप्यतं दुखयुग्मया ॥ २८ ॥ अतो मद्वचसि स्थित्वा सर्वे मां कृष्णमादरात् । भजन्त्वेकान्तभक्त्यैव कुर्वन्तः सत्समागमम् ॥ २९ ॥ ईदृग्भक्तेरपक्वत्वं यस्य स्यात्सोऽपि पूरुषः । निश्चयं हृदये स्वस्य विदध्यादीदृशं दृढम् ॥ ३० ॥ दुर्गतिर्न भवित्र्येव कृष्णभक्तस्य मे खलु । न कल्याणकृतः सा स्यादिति गीतासु हीक्ष्यते ॥ ३१ ॥ अपक्वतावशाद्भक्तेर्वासनाशेषतस्तथा । प्राप्याप्यहं देवलोकान् देहान्ते पुण्यकर्मणाम् ॥ ३२ ॥

दुःखयुगतिशयितदुःखमिश्रम् । मायिकम् । तुच्छम् । ग्राम्यसुखम् । हाप्यते त्याज्यते ॥ २८ ॥ अत इति । अतो हेतोः । सर्वे भवन्तः । मद्वचसि । स्थित्वा । सत्समागमं मदेकान्तिकसाधुप्रसङ्गम् । कुर्वतः । सन्तः । एकान्तिभक्त्यैव । आदरात् । कृष्णम् । माम् । भजन्तु ॥ २९ ॥ ईदृशिति । यस्य भक्तस्य । ईदृग्भक्तेरेवं-विधाया मदुपासनायाः । अपक्वत्वम् । स्यात् । सः । पूरुषो भक्तोऽपि । स्वस्य । हृदये । ईदृशं वक्ष्यमाणप्रकारम् । दृढम् । निश्चयम् । विदध्यात् ॥ ३० ॥ निश्चय-माह द्व्यक्षरन्यूनैः सार्द्धैस्त्रिभिः । दुरिति । कृष्णभक्तस्य प्रत्यक्षस्य श्रीहरेरुपासकस्य । मे मम । दुर्गतिरसद्गतिः । नैव भवित्री न भविष्यत्येव । खलु । हि यतः । कल्याणकृतः कल्याणप्रापकश्रीहर्युपासनकारिणो भक्तस्य । सा दुर्गतिः । न स्यात् । इतीत्थम् । गीतासु भगवद्गीतायाम् । ईक्ष्यते । तद्यथा । 'न हि कल्याणकृत्कश्चिद्दुर्गतिं तात ? गच्छती'ति ॥ ३१ ॥ अपक्वेति । भक्तेः श्रीहरेरेकान्तिकोपासनायाः । अपक्वतावशात् । तथा । वासनाशेषतोहेतोः । अहम् । देहान्ते ।

पुण्यकर्मणां पुण्यकर्मकारिजनैः प्राप्यानित्यर्थः । देवलोकान् । प्राप्यापि ॥ ३२ ॥ निरयेष्विति । हृदि मम मानसे । भक्तिवासनया साक्षाद्भगवदेकान्तिकोपासनाभाव-नया । निरयेषु मदिष्टदेवभगवदक्षरधाम्नोऽग्रे नरकतुल्येषु । तत्र तेषु देवलोकेष्वपि । क्वापि कुत्रापि । भृशम् । अनासक्तः सन्नेव । अक्षरम् । पदं धामैव । प्राप्स्यामि । इति द्वयोरेकान्वयः ॥ ३३ ॥ नेति । भोगलोभवशात् । मे मम । अन्तरा मध्ये । न तु नैव स्थेयम् । अस्ति । इत्येवंविधम् । दृढम् । निश्चयम् । त्यागी भक्तः । अथवा । गृही गृहस्थभक्तोऽपि । हृदये । कुर्यात् ॥ ३४ ॥ गृहिभिरिति । किञ्च । हे भक्ताः ! । गृहिभिः । त्यागिभिः । भक्तैः । परस्परम् । यथार्हं यथायोग्यम् । सम्भावना । कर्त्तव्या । तया तथाविधसम्भावनया । कृष्णः । प्रसीदति । वै ॥ ३५ ॥ यथार्हसम्भावनाप्रकारमाह । यथेति । गृहिभिः । नरैर्भक्तैस्तु । अन्न-वस्त्राद्यैः । सन्तो भगवद्भक्ताः साधवः । यथाशक्ति । सम्भावनीयाः । सद्भिः साधुभिस्तु । कृष्णवार्त्तादिभिः । ते गृहिभक्ताः । यथाशक्ति । सम्भावनीयाः ॥ ३६ ॥ तस्येति । ईत्येवंविधम् । तस्य श्रीहरेः । सुधासमानम् । वाक्यम् । निशम्य । सदःस्थाः । भक्ताः । सर्वेऽपि । मुनयः । अन्ये । गृहिणश्चापि । हृदि स्वमानसे ।

निरयेष्वेव तत्रापि भक्तिवासनया हृदि । अनासक्तो भृशं क्वापि प्राप्स्याम्येवाक्षरं पदम् ॥३३॥ न त्वन्तराऽस्ति मे स्थेयं भोगलोभ-वशादिति । त्यागी वापि गृही कुर्यान्निश्चयं हृदये दृढम् ॥३४॥ गृहिभिस्त्यागिभिर्भक्तैः कर्त्तव्या च परस्परम् । सम्भावना यथार्हं वै तया कृष्णः प्रसीदति ॥ ३५ ॥ यथा शक्त्यन्नवस्त्राद्यैः सन्तस्तु गृहिभिर्नरैः । सम्भावनीयाः सद्भिस्तु कृष्णवार्त्ताभिश्च ते ॥३६॥ तस्येतिवाक्यं मुनयः सदःस्था निशम्य सर्वेऽपि सुधासमानम् । अन्ये च भक्ता गृहिणोऽपि हर्षं महान्तमापुर्हृदि तं च नेमुः ॥३७॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते शताधिकाशीतितमस्तरङ्गः ॥ १८० ॥ ४७ ॥

शकाब्दे विक्रमार्कस्य खनागवसुभूमिते । माघकृष्णचतुर्दश्यां वचोऽमृतमिदं हरेः ॥ १ ॥
तत्र दुर्गपुरे दुर्गे उत्तमस्य स वेश्मनः । वितर्द्यौ पूर्ववक्त्रस्य निषसादनिजासने ॥ २ ॥

महान्तम् । हर्षम् । आपुः । तं स्वावासं व्रजन्तं श्रीहरिम् । नेमुर्नमश्चक्रुश्च ॥ ३७ ॥ स्वसाधूनां मायिकार्थवासनात्यागशिक्षणम् । सहेतुकं च सोपायं येन श्रीहरिणा कृतम् ॥ १ ॥ स्वभक्तानां स परमहितकारी दयार्णवः । हरतान्मम हृत्स्थास्ताः सर्वथैवाशु वासनाः ॥ २ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्यकान्तिकोपासकश्रीहरिकृष्णभग-वत्पदानुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां शताधिकाशीतितमस्तरङ्गः ॥ १८० ॥ ४७ ॥

माहात्म्यं हरिभक्तानां सदा चिन्तयतां हरिम् । सर्वाधिकतया त्वष्टचत्वारिंशे समीरितम् ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८८०) माघ-कृष्णचतुर्दश्यां माघमासस्य कृष्णपक्षागतचतुर्दशीतिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमस्य राज्ञः । दुर्गे । पूर्व-वक्त्रस्य प्राग्द्वारस्य । वेश्मनस्तस्यैवभवनस्य । वितर्द्यौ वाह्यवेदिकायाम् । निजासने नित्योपवेश्यस्वकीयश्रेष्ठपर्यङ्कासने । स श्रीहरिः । निषसाद ॥ २ ॥

सितेति । सिताम्वरधरः परिधृतसकलश्वेतवसनः । वहुभिर्नानादेशागतत्वादनेकैः । भक्तैस्त्यागिभिर्गृहिभिश्च स्वभक्तजनैः । परितः । वृतो महासभायां संवेष्टितः । नूत्ना नवीनाः । तुलसीकाष्ठमालिकाः श्वेतद्वीपानन्दमुन्यर्पिताः सूक्ष्ममणिमया वृन्दाकाष्ठीयाः पञ्चपाः स्रजः । कण्ठे । दधानः ॥३॥ पीतेति । पीतपुष्पस्रगापीडः सहस्रदलपीतपुष्पमयहारशेखरधरः । स श्रीहरिः । प्रेमानन्देन । साधुना । सवाद्यं करतालिकाध्वन्युपेतं यथातथा । गीयमानानि । ध्यानपद्यानि स्वमूर्त्तिगतोर्ध्वरेखादिचिह्नवर्णनोपेतानि भाषामयानि स्वमूर्त्तिध्यानकीर्त्तनानि । अशृणोत् । इति द्वयोरेकसम्बन्धः ॥ ४ ॥ तत इति । ततस्तत्पद्यश्रवणानन्तरम् । स श्रीहरिः । कृष्णचिन्तनशोभिनां स्ववर्ण्यसाक्षाद्भगवल्लक्ष्मश्रवणेन सत्सङ्गिनामन्तस्तत्स्फुरणगुणेनातिशोभमानानाम् । मनःश्रोत्रानन्दकृतां श्रवणमात्रेण सत्सङ्गिमनःश्रवणयोरतिशयितानन्दकारकाणाम् । तेषाम् । पद्यानाम् । स्तुतिं प्रशंसाम् । कुर्वन्सन् । सतो मुक्तानन्दादिसाधून् । अब्रवीत् ॥ ५ ॥ अतीति । हे साधवः ! । एतेन । साधुना प्रेमानन्दमुनिना । अतिशोभनपद्यानि । गीतानि । एतानि । पद्यानि । श्रुत्वा । मम । हृदये । अयं वक्ष्यमाणः । महान् । विचारः । अभूत् ॥ ६ ॥ अहो इति । अहो अत्याश्चर्यम् । अयं

सिताम्वरधरो भक्तैर्वहुभिः परितो वृतः । नूत्ना दधानः कण्ठे च तुलसीकाष्ठमालिकाः ॥३॥ पीतपुष्पस्रगापीडो ध्यानपद्यानि । सोऽशृणोत् सवाद्यं गीयमानानि प्रेमानन्देन साधुना ॥ ४ ॥ ततस्तेषां स पद्यानां कृष्णचिन्तनशोभिनाम् । मनःश्रोत्रानन्दकृतां स्तुतिं कुर्वन्सतोऽब्रवीत् ॥ ५ ॥ अतिशोभनपद्यानि गीतान्येतेन साधुना । श्रुत्वैतानि विचारोऽभून्ममायं हृदये महान् ॥ ६ ॥ अहो अयं महान्साधुर्य इत्थं कृष्णचिन्तनम् । करोत्यतो ममाप्येष वन्दनीयो भवत्यलम् ॥ ७ ॥ एवं यश्चिन्तयन् कृष्णं त्यजेद्देहं स पूरुषः । गर्भवासं पुनर्नेयाद्धन्यो जीवन्नपि ध्रुवम् ॥८॥ अखण्डं भगवन्मूर्त्तौ यस्य चेतो रमेत सः । कृतार्थ एव सञ्जातः श्वेतमुक्तेन संमितः ॥ ९ ॥ अस्मिन्काले धन्यतमो य एवं कृष्णचिन्तकः । तस्मात्सर्वैर्यथाशक्ति मनो रक्ष्यं हरौ सदा ॥१०॥ तत्राप्यशक्तः पुरुष ईदृशानां सतां व्रजे । वर्त्तेत सर्वदा तेन यास्यत्येव हि तद्गतिम् ॥११॥

प्रेमानन्दः । महान् । साधुः । अस्ति । यः । इत्थमेतद्गीतपद्योक्तप्रकारेण । कृष्णचिन्तनम् । करोति । अतोहेतोः । एषः । ममापि । अलमतिशयेन । वन्दनीयो नमस्कार्यः । भवति । एतत्स्वभक्तशिक्षार्थमुक्तं ज्ञेयम् ॥ ७ ॥ एवमिति । यः । पूरुषो भक्तः । एवम् । कृष्णं प्रत्यक्षभगवन्तम् । चिन्तयन्सन् । देहम् । त्यजेत् । स भक्तः । पुनः गर्भवासम् । नेयात् । किन्तु भगवद्धामैव यायादित्यर्थः । जीवन्नयं जीवन्सन्नपि । ध्रुवं निश्चितमेव । धन्यः कृतार्थः । अस्ति ॥ ८ ॥ अखण्डमिति । यस्य भक्तस्य । चेतः । भगवन्मूर्त्तौ । अखण्डं निरन्तरम् । रमेत । स भक्तः । श्वेतमुक्तेन श्वेतद्वीपस्थनिरन्नमुक्तेन । संमितस्तुल्यः सन् । कृतार्थः कृतकृत्य एव । सञ्जातः । अस्ति ॥ ९ ॥ अस्मिन्निति । यतः । अस्मिन् । काले । यो भक्तः । एवम् । कृष्णचिन्तकः । अस्ति । सः । धन्यतमोऽस्ति । श्वेतमुक्तवत्कृतार्थो वर्त्तते । तस्माद्धेतोः । सर्वैर्भवद्भिः । मनः । हरौ । यथाशक्ति । सदा । रक्ष्यम् ॥ १० ॥ तत्रेति । तत्रैवं हरौ स्वमनो रक्षणे । अशक्तोऽपि । पुरुषो भक्तः । ईदृशानां

भवत्सदृशानाम् । सतामेकान्तिकसाधूनाम् । व्रजे मण्डले । सर्वदा । वर्त्तेत तिष्ठेत् । तेन भवादृशसाधुमण्डलावस्थानेन । तद्गतिं भवादृशैकान्तिकसाधुप्राप्यमक्षरस्थानमेव । यास्यति ॥ ११ ॥ ममेति । हे साधवः ! । मम । हृदि हृदयेऽपि । एवमेव । सङ्कल्पः । अस्ति । यदि । पुनः । जन्म । स्यात् । तर्हि । तत्तस्मिन् जन्मन्यपि । सन्मण्डले भवादृशप्रत्यक्षभगवदुपासकैकान्तिकसाधुमण्डले । वासो मन्निवासः । अस्तु । इति सङ्कल्पोऽस्तीति सम्बन्धः । एतदपि स्वभक्तशिक्षार्थमुक्तं ज्ञेयम् ॥ १२ ॥ कृष्णमिति । यः । पुरुषो भक्तः । अनन्यभावत एकान्तिकभावेन । सदा । कृष्णम् । चिन्तयेत् । स भक्तः । कालकर्ममायाभ्यः । मुक्त एवास्ति । इतीत्थम् । गम्यताम् ॥ १३ ॥ धन्यमिति । कृष्णचिन्तकपूरुषः । यत्र कुले । जातः । तत् । कुलम् । धन्यमेवास्ति । अथ च । तस्य तथाविधभक्तस्य । पितरौ मातरपितरौ । सर्वथा । कृतार्थौ । स्तः ॥ १४ ॥ कृष्णमिति । ये जनाः । कृष्णम् । विहाय । अन्यान् । मायिकान् । पदार्थान् । हृदि । चिन्त-

ममापि हृदि सङ्कल्प एवमेवास्ति साधवः । पुनर्जन्म यदि स्यात्तद्वासः सन्मण्डलेऽस्त्विति ॥१२॥ कृष्णं सदा चिन्तयेद्यः पुरुषोऽन्यभावतः । स कालकर्ममायाभ्यो मुक्त एवेति गम्यताम् ॥ १३ ॥ धन्यमेव कुलं तच्च कृष्णचिन्तकपूरुषः । यत्र जातोऽथ पितरौ कृतार्थौ तस्य सर्वथा ॥ १४ ॥ कृष्णं विहाय ये त्वन्यान् पदार्थान् मायिकान् हृदि । चिन्तयेयुः क्वचित्तेषां दुःखान्तो नास्ति निश्चितम् ॥१५॥ प्राप्तानां मानुषं देहं कृष्णचिन्तनतः परः । नास्त्यन्यो हि महाँल्लाभस्तस्मात्तत्कार्यमञ्जसा ॥१६॥ इति प्रभोर्वाक्यसुधां निपीय सर्वेऽपि ते साधुजनाः प्रमोदम् । प्रापुर्गृहस्थाश्च तदीयभक्ताः सभोपविष्टाः प्रणमन्ति तं स्म ॥१७॥

इति श्रीहरिवाक्यसुधासिंधौ शतानन्दमुनिविरचिते शताधिकैकाशीतितमस्तरङ्गः ॥ १८१ ॥ ४८ ॥

येयुः । तेषां जनानाम् । निश्चितमेव । दुःखान्तः । नास्ति ॥१५॥ प्राप्तानामिति । मानुषम् । देहम् । प्राप्तानां जनानाम् । कृष्णचिन्तनतः । अन्यः । परः श्रेष्ठः । महानतिशयितः । लाभः । नास्ति । किन्तु साक्षात्कृष्णचिन्तनमेव परो महान् लाभोऽस्तीत्यर्थः । तस्माद्धेतोः । तत्कृष्णचिन्तनमेव । अञ्जसा तत्त्वतः । कार्यम् । अस्यायंभावः । एवंविधस्य भगवद्भक्तस्य मुख्यत्वात्तदीयाः पञ्चापि विषयाः कृष्णसम्बन्धिन एव यथा स्युस्तथाऽनेन भाव्यमिति ॥ १६ ॥ इतीति । इत्येवंविधाम् । प्रभोः श्रीहरेः । वाक्यसुधाम् । निपीय । तदीयभक्ताः । सभोपविष्टाः । सर्वेऽपि । ते । साधुजनाः । गृहस्थाश्चापि । प्रमोदम् । प्रापुः । तं स्वावासं व्रजन्तं श्रीहरिम् । प्रणमन्ति स्म ॥ १७ ॥ स्मरतामनिशं स्वेषां स्वमूर्त्ति महिमाधिकः । दर्शितो येन हरिणा स स्तान्मद्धृदि सर्वदा ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्यकान्तिकोपासकश्रीहरिकृष्णभगवत्स्नुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां शताधिकैकाशीतितमस्तरङ्गः ॥ १८१ ॥ ४८ ॥

हरेश्चामायिकाकारं स्मरतां मायिकाकृतीः । फले तद्भेद एकोनपञ्चाशत्तम ईरितः ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८८०) तपस्याद्यद्वितीयायां फाल्गुनमासीयशुक्लपक्षस्य द्वितीयातिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमस्य । महीपतेः । दुर्गे । वासुदेवालयस्य । अग्रे प्रत्यग्द्वारोत्तमनृपभवनवाह्यवेदिकायामित्यर्थः । निजासने स्वकीयोत्तमपर्यङ्कासने । स श्रीहरिः । न्यपीदत् ॥ २ ॥ सितेति । सितवासाः । परिहितसकलश्वेतवसनः । श्वेतपुष्पापीडेन श्वेतकुसुमशेखरेण शोभी शोभमानः शिरःपट उष्णीषं यस्य सः । सद्भिस्त्यागिभिः । गृहस्थैश्च । भक्तैर्नानादेशागतस्वभक्तजनैः । परीतः सभायां परिवेष्टितः । स श्रीहरिः । सतः स्वपुरोनिषण्णान्मुक्तानन्दादिसाधून् । अब्रवीत् ॥ ३ ॥ प्रत्यक्षेति । हे साधवः ! । अज्ञा भगवत्स्वरूपयाथार्थ्यानभिज्ञजनाः । प्रत्यक्षभगवन्मूर्त्तिम् । मायिकाः । अखिलाकृतीश्च । समतया ईक्षन्ते । तत्त्वविदो भगवतः साक्षात्स्वरूपस्य याथार्थ्याभिज्ञाः । जना भक्तास्तु ।

शकाब्दे विक्रमार्कस्य खनागवसुभूमिते । तपस्याद्यद्वितीयायां वचोऽमृतमिदं हरेः ॥ १ ॥ तत्र दुर्गपुरे दुर्गं उत्तमस्य महीपतेः । वासुदेवालयस्याग्रे न्यषीदत्स निजासने ॥ २ ॥ सितवासाः श्वेतपुष्पापीडशोभिशिरःपटः । भक्तैः सद्भिर्गृहस्थैश्च परीतः सोऽब्रवीत्सतः ॥ ३ ॥ प्रत्यक्षभगवन्मूर्तिं मायिकाश्चाखिलाकृतीः । अज्ञाः समतयेक्षन्ते न तु तत्त्वविदो जनाः ॥ ४ ॥ पश्यन्ति मायिकाकारांश्चिन्तयन्ति च ये नराः । निरयान् यान्ति ते त्वन्ते संसृतिं च पुनः पुनः ॥ ५ ॥ प्रत्यक्षभगवन्मूर्त्तिं ये तु पश्यन्ति मानवाः । चिन्तयन्ति च ते यान्ति भवमुक्ताः परं पदम् ॥६॥ एवं तस्याश्च तासां च भेदे महति सत्यपि । मूर्खा विषयिणो जीवा न तं जानन्ति मोहिताः ॥ ७ ॥ दर्शनस्पर्शपूजाद्यैः कृष्णमूर्त्तेश्च मानवाः । कालमायाकर्मबन्धान्मुक्ताः सन्ति महासुखाः ॥ ८ ॥ अतो मम तु कृष्णस्य नवधा भक्तिरेव हि । कर्त्तव्याऽस्त्यथ युष्माभिरपि सैव विधीयताम् ॥ ९ ॥

समतया नैवेक्षन्ते ॥ ४ ॥ पश्यन्तीति । ये । नराः । मायिकाकारान् । पश्यन्ति । चिन्तयन्ति च । ते नरास्तु । अन्ते स्वदेहावसाने । निरयान् । यान्ति । पुनः पुनः । संसृतिं च । यान्ति ॥५॥ प्रत्यक्षेति । ये मानवा भक्ताः । प्रत्यक्षभगवन्मूर्त्तिम् । पश्यन्ति । चिन्तयन्ति च । ते मानवास्तु । भवमुक्ताः संसारबन्धनाद्विमुक्ताः सन्तः । परंपदं भगवदक्षरधाम । यान्ति ॥६॥ एवमिति । एवममुना प्रकारेण । तस्याः प्रत्यक्षभगवन्मूर्त्तेः । तासामखिलमायिकाकृतीनां च । महति । भेदे । सत्यपि । विषयिणो मायिकविषयासक्ताः । अत एव । मोहिता विमूढाः । मूर्खा अज्ञाः । जीवाः । तं भेदम् । न जानन्ति ॥ ७ ॥ दर्शनेति । किञ्च । मानवा भक्ताः । कृष्णमूर्त्तेः । दर्शनस्पर्शपूजाद्यैः । कालमायाकर्मबन्धात् । मुक्ताः सन्तः । महासुखाः सम्प्राप्तभगवत्सेवामहासौख्याः । सन्ति जायन्ते ॥ ८ ॥ अत इति । अतो हेतोः । मम तु । कृष्णस्य । नवधा कथाश्रवणादिनवप्रकारा । भक्तिरेव । कर्त्तव्या । अस्ति । हि । अथ च । युष्माभिरपि । सा श्रीकृष्णस्य नवधा भक्तिरेव । विधी-

यताम् ॥ ९ ॥ इतीति । इत्येवंविधम् । प्रभोः । तस्य श्रीहरेः । वचोऽमृतम् । निपीय । सदःस्थाः । तदीयभक्ताः । ते सर्वे । मुनयश्च । तथैव । गृहिणः । जनाः । परमम् । प्रहर्षम् । आपुः ॥१०॥ अमायिकां स्वमूर्त्तिं च स्मरतां मायिकाकृतीः । येनोक्तः फलभेदः श्रीहरिः सोऽस्तु मदन्तरे ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्स्नुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां शताधिकद्व्यशीतितमस्तरङ्गः ॥ १८२ ॥ ४९ ॥

स्वभक्तानां सुशिक्षार्थं रहस्यं स्वस्य यत्तु तत् । उक्तवान् श्रीहरिः पञ्चाशत्तमे हितकारकः ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८८०) चैत्रकृष्णद्वितीयायां चैत्रमासीयकृष्णपक्षागतद्वितीयातिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमस्य । भूभुजः । दुर्गे । वासुदेवालयस्य । अग्रे । वेद्याम् । प्रत्यग्द्वारोत्तमनृपभवनस्य बाह्यवेदिकायामित्यर्थः । पीठे स्वकीयोत्तममश्वासने । स श्रीहरिः । उपाविशत्सायन्तनभगवन्नीराजनानन्त्यपीदत् ॥ २ ॥ सितेति । सितवासाः परिहितसकलश्वेतवसनः । त्यागिभिः । गृहिभिश्च । भक्तैर्नानादेशागतैः स्वाश्रितजनैः । वृतः सभायां परिवेष्टितः । स

इति प्रभोस्तस्य वचोऽमृतं ते निपीय सर्वे मुनयस्तथैव । तदीयभक्ता गृहिणो जनाश्च प्रहर्षमापुः परमं सदःस्थाः ॥ १० ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते शताधिकद्व्यशीतितमस्तरङ्गः ॥ १८२ ॥ ४९ ॥

शकाब्दे विक्रमार्कस्य खनागवसुभूमिते । चैत्रकृष्णद्वितीयायां वचोऽमृतमिदं हरेः ॥ १ ॥ तत्र दुर्गपुरे दुर्गे उत्तमस्य स भूभुजः । वासुदेवालस्याग्रे वेद्यां पीठ उपाविशत् ॥ २ ॥ सितवासा वृतो भक्तैस्त्योगिभिर्गृहिभिश्च सः । स तत ऊचेऽद्य तु मम रहस्यमपि वो ब्रुवे ॥ ३ ॥ अब्धौ नद्येव दहने सत्येव शलभेन च । शूरेणेव रणे स्वात्मा ब्रह्मण्यस्ति मया हुतः ॥ ४ ॥ तादात्म्यं तेन सम्प्राप्य निषेवे कृष्णमेव हि । तेजोमयेऽक्षरे तस्मिन् धाम्नि दिव्यतनुं प्रभुम् ॥ ५ ॥ तस्मिन्नेव दृढं प्रीतिरस्ति मेऽन्यत्र न क्वचित् । विषयेषु त्वणुरपि रुचिर्नास्त्येव पञ्चसु ॥ ६ ॥

श्रीहरिः । ततः स्वपुरोनिषण्णान्मुक्तानन्दादिसाधून् । ऊचे । हे साधवः ! । अद्यास्मिन्नहनि तु । मम । रहस्यमपि । वो युष्मभ्यम् । ब्रुवे ॥ ३ ॥ अब्धाविति । अब्धौ समुद्रे । नद्येव । दहनेऽग्नौ । सत्या पतिव्रतयेव । शलभेनेव च । रणे संग्रामे । शूरेण शौर्यवता जनेनेव । मया । स्वात्मा । ब्रह्मण्यक्षरब्रह्मणि । हुतो लीनतां गमितस्तदात्मतां प्रापित इत्यर्थः । अस्ति ॥ ४ ॥ तादात्ममिति । अहम् । तेनाक्षरब्रह्मणा । तादात्म्यं तदेकभावम् । सम्प्राप्य । तेजोमयेऽनवधिकातिशयप्रचुरतेजसि । तस्मिन् । अक्षरे । धाम्नि । दिव्यतनुं रमणीयरूपानुरूपसनातनमूर्त्तिम् । प्रभुमक्षरादिसकलनियमनसमर्थम् । कृष्णमेव । निषेवे । हि ॥ ५ ॥ तस्मिन्निति । मे मम । तस्मिंस्तथाविधे श्रीकृष्णे एव । दृढं यथातथा । प्रीतिः । अस्ति । अन्यत्र तदितरत्र । क्वचित्कदाचिदपि । प्रीतिः । नास्ति । पञ्चसु । विषयेषु मायिकार्थेषु तु । अणुरल्पमात्रापि । रुचिः । नास्त्येव ॥ ६ ॥

तीव्रमिति । मे मम । तीव्रमतितीक्ष्णम् । वैराग्यवेगं तु । बाह्यतः । न दर्शयामि स वैराग्यवेगः । अन्तरे ममान्तःकरणे तु । महानतिशयितः । अनौपमो मादृशापरवैराग्यवदभावादतुल एव । वर्त्तते ॥७॥ यदेति । यदा । महतां भवादृशानाम् । सतां साधूनाम् । तं वैराग्यवेगम् । पश्यामि । तथा । ममापि । तम् । पश्यामि । तदा । उभयोर्भवतां मम च वैराग्यवेगयोरपि । महान्तमेव । विशेषम् । पश्यामि । खद्योतार्चिरिवाहनीतिन्यायो मद्वैराग्याग्रे भवद्वैराग्यस्य जायते इतिभावः ॥ ८ ॥ प्रापश्चिकेति । तेषां महतां सताम् । प्रापश्चिकपदार्थस्य जगत्सम्बन्धिवस्त्रपात्रादिवस्तुनः । किश्चनाल्पमात्रापि । वासना । वर्त्तते । मम तु । क्वापि कदाचिदपि । स्वप्नेऽपि । सा प्रापश्चिकपदार्थवासना ध्रुवमेव । नास्ति ॥ ९ ॥ भक्ताविति । राधिकारमणस्य कृष्णस्य । क्रियमाणायां मया विधीयमानायाम् । भक्तौ । मे मम । अन्तरायं विघ्नम् । विधातुम् । कश्चन कोऽपि । समर्थः । नास्ति ॥ १० ॥ कृष्णेति । कृष्णाप्तेः कृष्णप्राप्तेः । साक्षाच्छ्रीकृष्णोपलब्धेरित्यर्थः । पूर्वमपि । इमम् ।

तीव्रं वैराग्यवेगं मे दर्शयामि न बाह्यतः । अन्तरे तु महानेव वर्त्तते स त्वनौपमः ॥ ७ ॥ यदा पश्यामि महतां सतां तं च तथा मम । तदा विशेषं पश्यामि महान्तमुभयोरपि ॥ ८ ॥ प्रापञ्चिकपदार्थस्य तेषां किञ्चन वासना । वर्त्तते मम तु क्वापि नास्ति स्वप्नेऽपि ध्रुवम् ॥ ९ ॥ भक्तौ च क्रियमाणायां राधिकारमणस्य मे । अन्तरायं विधातुं तु समर्थो नास्ति कश्चन ॥१०॥ कृष्णाप्तेः पूर्वमात्मानमपि नाशयितुं त्विमम् । कालः कर्म च माया वा नाक्षमन्त कदाचन ॥ ११ ॥ साम्प्रतं तु हरिः साक्षान्मिलितोऽस्ति जगत्प्रभुः । कालादिभ्यस्ततो भीतिर्नैवास्ति खलु सर्वथा ॥१२॥ इति निश्चित्य मनसो कृष्णे च कृष्णसेविषु । क्रियते सुदृढा प्रीतिः कार्यते च निजाश्रितान् ॥१३॥ प्रीतिर्यस्य भवेत् पुंसः क्वापि मायिकवस्तुषु । न हि तस्मिन्मम रुचिः पार्श्ववर्त्तिन्यपि ध्रुवम् ॥१४॥ निर्वासनास्तु ये भक्ताः प्रीतिमन्तो रमापतौ । भवत्यतिरुचिस्तेषु मम नित्यं हि साधवः ! ॥१५॥

आत्मानम् । नाशयितुम् । कालः । कर्म च । अथवा । माया । एते । कदाचन । नाक्षमन्त समर्था नाभूवन् ॥ ११ ॥ साम्प्रतमिति । साम्प्रतं तु । जगत्प्रभुर्जगदेकनाथः । साक्षात् । हरिः । मिलितः । अस्ति । ततो हेतोः । कालादिभ्यः । भीतिः । सर्वथा । नैवास्ति । खलु ॥ १२ ॥ इतीति । इतीत्थम् । मनसा । निश्चित्य । कृष्णसेविषु श्रीकृष्णैकान्तिकभक्तजनेषु च । सुदृढा । प्रीतिः । क्रियते । निजाश्रितान् । कार्यते च ॥ १३ ॥ प्रीतिरिति । यस्य । पुंसो भक्तस्य । मायिकवस्तुषु मध्ये क्वापि कस्मिंश्चिदपि मायिकवस्तुनि । प्रीतिः । भवेत् । पार्श्ववर्त्तिनि सदा मन्निकटस्थेऽपि । तस्मिन् भक्ते । मम । रुचिः । नास्ति । हि ॥ १४ ॥ निर्वासना इति । हे साधवः ! । ये भक्ताः । निर्वासना मायिकविषयभोगभावनारहिताः सन्तः । रमापतौ श्रीकृष्णे । प्रीतिमन्तः । स्युः । तेषु भक्तेषु । मम । नित्यम् । अतिरुचिः । भवति । हि ॥ १५ ॥

वाक्यमिति । इत्येवविधम् । ईश्वरस्याक्षरादेर्नियन्तुः प्रत्यक्षपरमेश्वरस्य श्रीहरेः । सुधातुल्यम् । वाक्यम् । निशम्य । तदेतच्छ्रीहरिवाक्यम् । आत्मशिक्षार्थकं स्वशिक्षाप्रयोजनमस्ति । इतीत्थम् । अवेत्य ज्ञात्वा । तदाश्रिताः । सर्वेऽपि । भक्ताः साक्षाद्भगवदुपासकाः । ते साधवः । गृहिणश्च । प्रहर्षम् । प्रापुः ॥ १६ ॥ शिक्षणार्थं स्वभक्तानां स्वरहस्यं य ऊचिवान् । श्रीहरिर्मे स दद्यात्तदनुवर्त्तनमन्वहम् ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्स्नुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां शताधिकत्र्यशीतितमस्तरङ्गः ॥ १८३ ॥ ५० ॥

गुणसम्बन्धतोऽसौख्यं यत्सद्रूपतया सुखम् । सद्रूपवर्त्तनस्यस्य दुष्करत्वं च यत्तथा ॥ १ ॥ वर्त्तनं हरिवद्धायां मर्यादायां च सर्वथा । सुखहेतुरेकपश्चाशत्तमे त्वेतदीरितम् ॥ २ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८८०) चैत्रकृष्णनवम्यां चैत्रमासस्य कृष्णपक्षागतनवमीतिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमस्य राज्ञः । दुर्गे । दक्षिणास्यस्य । वेश्मनस्तस्यैवभवनस्य । वितर्द्दौ बाह्यवेदिकायाम् । मञ्चकोत्तमे श्रेष्ठे पर्यङ्कासने । स

वाक्यं सुधातुल्यमितीश्वरस्य निशम्य सर्वेऽपि तदाश्रितास्ते । तदात्मशिक्षार्थकमित्यवेत्य प्रापुः प्रहर्षं गृहिणश्च भक्ताः ॥ १६ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते शताधिकत्र्यशीतितमस्तरङ्गः ॥ १८३ ॥ ५० ॥

शकाब्दे विक्रमार्कस्य खनागवसुभूमिते । चैत्रकृष्णनवम्यां तु वचोऽमृतमिदं हरेः ॥ १ ॥ तत्र दुर्गपुरे दुर्गं उत्तमस्य स वेश्मनः । वितर्द्दौ दक्षिणास्यस्य न्यषीदन्मञ्चकोत्तमे ॥ २ ॥ भक्तैः परिवृतः स्वीयैस्त्यागिभिर्गृहिभिश्च सः । सिताम्वरधरः प्रीत्या पुरःस्थानब्रवीत्सतः ॥ ३ ॥ जायतेऽतिसुखी जीवः सुषुप्तिं प्राप्य कर्हिचित् । क्वचित्प्राप्यापि तामस्ति खिन्नः किं तत्र कारणम् ॥ ४ ॥ इति पृष्टास्तु ते सन्तो यदा सम्यक्तदुत्तरम् । न विदुस्तर्हि तत्स्वामी स्वयमेव जगाद तान् ॥ ५ ॥ तमः प्रधानसुप्तौ तु प्रायशो वर्त्तते सुखम् । विक्षेपाभावतो जाड्यं प्राधान्येन च दृश्यते ॥ ६ ॥

श्रीहरिः । न्यषीदत् ॥ २ ॥ भक्तैरिति । त्यागिभिः । गृहिभिश्च । स्वीयैः । भक्तैर्नानादेशागतैरात्मीयैर्भक्तजनैः । परिवृतः सभायां संवेष्टितः । सिताम्वरधरः परिहितसकलश्वेतवसनः । स श्रीहरिः । जीवः । सुषुप्तिम् । प्राप्य । कर्हिचित् । अतिसुखी । जायते । क्वचित्कदाचित्तु । तां सुषुप्तिम् । प्राप्यापि । खिन्नः खेदयुक्तः । अस्ति वर्त्तते । तत्र तामससुखहेतुभूतायामपि । सुषुप्त्यां खेदयुक्तत्वे । कारणं हेतुः । किं कोऽस्ति ॥ ४ ॥ इतीति । इत्यमुना प्रकारेण । पृष्टाः श्रीहरिणानुयुक्ताः । ते । सन्तो मुक्तानन्दादयः साधवस्तु । यदा । तदुत्तरम् । सम्यग्यथार्थतया । न विदुः । तर्हि । स्वामी श्रीहरिः । स्वयमेव । तत्स्वप्रश्नोत्तरम् । तान्साधून् । जगाद ॥ ५ ॥ तम इति । हे सन्तः ! । तमःप्रधानसुप्तौ । प्रायशो बहुधा तु । सुखम् । वर्त्तते । तत्र । विक्षेपाभावतो विक्षेपस्याविद्यमानत्वाद्धेतोः । प्राधान्येन मुख्यतया । जाड्यं च । दृश्यते ॥ ६ ॥

परस्परमिति । गुणानां सत्त्वादीनाम् । परस्परम् । मिश्रत्वाद्धेतोः । यर्हि । रजोगुणः । तत्र सुषुप्तौ । विक्षेपं करोति । तदा । दुःखम् । प्रवर्त्तते । तत्र रजोगुणोद्भूतविक्षेपबलेन दुःखपर्याय खिन्नतोत्पद्यते इतिभावः ॥७॥ गुणेति । जीवस्य । यावत् । गुणत्रयस्य । सम्बन्धः । वर्त्तते । तावत् । सुषुप्तौ । अथवा । जाग्रति । अपिशब्दात्स्वप्नेऽपि । क्वापि कदाचिदपि । सुखम् । नास्ति ॥८॥ यदेति । असौ जीवः । यदा । विचारतः सत्सङ्गजातज्ञानबलेन । गुणसङ्गं मायिकसत्त्वादिगुणसम्बन्धम् । विमुच्य । सद्रूपेण स्वात्मनो ब्रह्मणैकभावेनैव । अवतिष्ठेत । तर्ह्येव । सुखी । जायते ॥९॥ मुक्तानन्द इति । तदा श्रीहरेरेवंविधवाक्यश्रवणानन्तरीयावसरे । मुक्तानन्दोमुनिः । अपृच्छत् । हे हरे ! । यः । पुरुषो भक्तः । सद्रूपेण । आत्मना । वर्त्तेत । तस्य भक्तस्य । लक्षणम् । बोद्धुम् । इच्छामि ॥ १० ॥ 'इत्थं स मुक्तानन्देन सता पृष्टः स ईश्वरः । हर्षयंस्तं जगादेति स्वाश्रितानपरांस्तथा' । अतीति । हे साधो ! । शरीरम् । सर्वतः । व्याप्य । स्थितस्य । अत एव । शारीरिणः शरीराभिमानवतः

परस्परं गुणानां च मिश्रत्वात्तत्र यर्हि तु । रजः करोति विक्षेपं तदा दुःखं प्रवर्त्तते ॥७॥ गुणत्रयस्य सम्बन्धो यावज्जीवस्य वर्त्तते । तावत् क्वापि सुखं नास्ति सुषुप्तौ वापि जाग्रति ॥८॥ यदा त्वसौ विमुच्यैव गुणसङ्गं विचारतः । सद्रूपेणावतिष्ठेत सुखी तर्ह्येव जायते ॥९॥ मुक्तानन्दस्तदाऽपृच्छत्सद्रूपेणात्मना तु यः । वर्त्तेत पुरुषस्तस्य बोद्धुमिच्छामि लक्षणम् ॥ १० ॥ श्रीहरिरुवाच–अतिदुष्करमेवास्ति सद्रूपेण तु वर्त्तनम् । शरीरं सर्वतो व्याप्य स्थितस्यास्य शरीरिणः ॥ ११ ॥ आत्मनिष्ठां परां प्राप्ताः सन्ति ब्रह्मशिवादयः । शिष्यतां भेजिरे येषां नारदः सनकादयः ॥१२॥ देशकालादिवैषम्ये तेऽपि यान्ति क्वचित् क्वचित् । विक्षेपमन्तरे दुःखमितरेषां तु का कथा ॥१३॥ सद्रूपेण स्थितमपि देशकालादयोऽशुभाः । दुःखयन्ति शुभास्ते तु सुखयन्ति च पुरुषम् ॥ १४ ॥ अतः कृष्णनिबद्धायां मर्यादायां हि सर्वथा । पुंभिः सर्वैर्वर्त्तितव्यं भुवि कृष्णाश्रितैः सदा ॥ १५ ॥ देशकालानुसारेण येषां येषां यथा यथा । धर्माः प्रकीर्तिताः सन्ति तैस्तैर्वृत्यं तथा तथा ॥ १६ ॥

। अस्य भक्तस्य । सद्रूपेण । वर्त्तनं तु । अतिदुष्करमेव । अस्ति ॥ ११ ॥ आत्मेति । ब्रह्मशिवादयः । पराम् । आत्मनिष्ठाम् । प्राप्ताः । सन्ति । नारदः । सनकादयः । येषां ब्रह्मशिवादीनाम् । शिष्यताम् । भेजिरे ॥ १२ ॥ देशेति । ते तथाविधा ब्रह्माद्योऽपि । देशकालादिवैषम्ये सति । क्वचित्क्वचित्कदाचित् । अन्तरे स्वस्वान्तःकरणे । विक्षेपमस्वस्थचित्तत्वम् । दुःखं तत्सम्बन्धिनीं पीडां च । यान्ति । तर्हि । इतरेषां जनानां तु । का कथा । तद्वार्त्ता तु दूरेऽपास्तेत्यर्थः ॥ १३ ॥ सद्रूपेणेति । अशुभाः । देशकालादयः । सद्रूपेण । स्थितं वर्त्तमानम् । पूरुषं भक्तमपि । दुःखयन्ति व्यथयन्ति । शुभाः । ते देशकालादयस्तु । सुखयन्ति च ॥१४॥ अत इति । अतोहेतोः । भुवि । कृष्णाश्रितैः । सर्वैः । पुंभिर्भक्तैः । कृष्णनिबद्धायाम् । मर्यादायां स्वस्वधर्मपालनरूपे सेतौ । सर्वथा । सदा । वर्त्तितव्यम् ॥ १५ ॥ एतमेव वर्त्तनप्रकारं स्पष्टमाह त्रिभिः । देशेति । येषां येषां वर्णाश्रमिजनानाम् । धर्माः । देशकालानुसारेण । यथा यथा । प्रकीर्त्तिता वासुदेवमाहात्म्यादिषु कथिताः

सन्ति । तैस्तैर्जनैः । तथा तथा । वृत्त्यम् ॥१६॥ तत इति । वृषाः स्वस्वधर्माः । ततो यथाकथितात् । अधिकाः । न पाल्याः । अथवा । ततः । न्यूनाश्चापि । न पाल्याः । किन्तु । यावन्तः । उक्ताः । तावन्तः । प्रयत्नतः । पालनीयाः ॥१७॥ अधिकारमिति । सर्वज्ञः । ईश्वरः परमेश्वरः । स श्रीहरिः । सर्वेषां जनानाम् । अधिकारं योग्यताम् । ज्ञात्वा । याम् । मर्यादाम् । बबन्ध । सा मर्यादैव । सुखाप्तये । पाल्या ॥ १८ ॥ सेति । सा मर्यादावस्थित्तिरेव । सन्तः शुभाः । देशाद्याः । ज्ञेयाः । तस्या मर्यादावस्थितेः । उल्लङ्घनं यत् । तत् । असन्तोऽशुभाः । देशाद्याः । ज्ञेयाः । एवममुना प्रकारेण । शुभाशुभाः देशादयः । ज्ञेयाः ॥ १९ ॥ मर्यादायामिति । हे मुने ! । अस्याम् । मर्यादायाम् । या । स्थितिरवस्थानम् । सा स्थितिरेव । त्वया । स्वस्य । सद्रूपेण । स्थितिः । ज्ञेया । ययेत्थंभूतसद्रूपस्थित्या । महत् । सौख्यम् । भवेत् । श्रीहरिरुवाचेत्यारभ्यैतत् श्लोकावधिकसन्दर्भस्यायं भावः । भगवन्निबद्धधर्ममर्यादावस्थानमेव सद्रूपेणात्मना वर्त्तमानस्य भक्तस्य लक्षणमन्यः सर्वस्त-

ततोऽधिका न पाल्याश्च ततो न्यूनाश्च वा वृषाः । यावन्त उक्तास्तावन्तः पालनीयाः प्रयत्नतः ॥ १७ ॥
अधिकारं हि सर्वेषां ज्ञात्वा सर्वज्ञ ईश्वरः । यां बबन्ध स मर्यादां सैव पाल्या सुखाप्तये ॥ १८ ॥ सैव सन्तो
हि देशाद्यास्तस्या उल्लङ्घनं तु यत् । तदसन्तो हि देशाद्या ज्ञेया एवं शुभाशुभाः ॥ १९ ॥ मर्यादायां स्थिति-
र्याऽस्यां सैव ज्ञेया त्वया मुने ! । सद्रूपेण स्थितिः स्वस्य यया सौख्यं भवेन्महत् ॥ २० ॥ तस्येति वाचं स
सुधोपमेयां निपीय हर्षं मुनिरन्तरेऽगात् । तथैव चान्ये मुनयस्तदीया भक्ता गृहस्थाश्च सदोनिषण्णाः ॥ २१ ॥

इति श्रीहरिवाक्यसुधासिंधौ शतानन्दमुनिविरचिते शताधिकैकचतुरशीतितमस्तरङ्गः ॥ १८४ ॥ ५१ ॥

शकाब्दे विक्रमार्कस्य खनागवसुभूमिते । एकादश्यां चैत्रकृष्णे वचोऽमृतमिदं हरेः ॥ १ ॥

दौर्लभ्योक्तिपूर्वकस्तदर्थपोषकः प्रपञ्च इति ॥ २० ॥ तस्येति । इत्येवंविधाम् । तस्य श्रीहरेः । सुधोपमेयाम् । वाचम् । निपीय । स मुनिर्मुक्तानन्दसाधुः । अन्तरेऽन्तःकरणे । हर्षम् । अगात्प्राप । तथा तेन प्रकारेणैव । सदोनिषण्णाः । तदीयाः । भक्ताः । अन्ये । मुनयः । गृहस्थाश्च । अन्तरेहर्षमगुः ॥ २१ ॥ सद्रूपेण स्थितेर्लक्ष्म स्वधर्मस्थितिमाह यः । स्वीयानां स हरिर्मह्यं तां ददातु स्थितिं दृढाम् ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्सूनुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां शताधिकचतुरशीतितमस्तरङ्गः ॥ १८४ ॥ ५१ ॥

त्यागिनां गृहिणां धर्मा ये तु सन्ति पृथक् पृथक् । परस्परविरुद्धत्वं तेषां यत्सर्वथा यथा ॥१॥ श्रीहरेः प्रीततायां तु श्रद्धाया हेतुता च या । एतत्सर्वं द्विपञ्चाशत्तमे सम्यक् प्रकीर्त्तितम् ॥२॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८८०) चैत्रमासस्य कृष्णपक्षे । एकादश्यां तिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥१॥

तत्रेति । तत्र तिथौ । दुर्गपुराद् दुर्गपुरान्तर्गतोत्तमनृपदुर्गाभ्यन्तरवर्त्यात्मावासस्थानात् । लक्ष्मीवाटिकाम् । समुपेत्य तज्जिनाश्वाधिरूढः सन्सम्प्राप्य । स्वास्तृतायाम् । वेदिकायाम् । धवलांशुकः परिधृतसकलश्वेतवसनः । स श्रीहरिः । न्यषीदत् ॥ २ ॥ सितेति । सितपुष्पस्रगापीडः स्वकण्ठोष्णीषसन्धृतवलक्षसुमनःकृतहारशेखरः । सहस्रशो नानादेशागतत्वादनेकैः । भक्तैस्त्यागिभिर्गृहिभिश्च स्वाश्रितजनैः । वृतः सभायां संवेष्टितः । स श्रीहरिः । सद्भिः प्रेमानन्दादिमुनिभिः । गीयमानानि झर्झरमृदङ्गध्वन्युपेतंगीतानि । कृष्णस्य । पद्यानि भाषासंबद्धकीर्त्तनानि । अशृणोत् ॥ ३ ॥ तदिति । स श्रीहरिः । तदन्ते पद्यगानसमाप्तौ । साधून्स्वपुरोवस्थितान्मुक्तानन्दादिमुनीन् । अब्रवीत् । हे साधवः ! । इह सत्सङ्गे । त्यागिनः । गृहिणश्च । इतीत्थम् । द्विविधाः । दृढनिश्चयाः सुस्थिरसाक्षाद्भगवत्स्वरूपज्ञानाः । हरेः । भक्ताः । सन्ति ॥ ४ ॥ तेषामिति । उभयेषां द्विविधानाम् । तेषां भक्तानाम् । धर्मा गुणास्तु । पृथक् पृथगेव । भवन्ति । परस्परविरुद्धाश्च । सन्ति । कतिचित् । तान् परस्परविरुद्धधर्मान् । ब्रुवे ॥ ५ ॥ धनेति । धनं चैश्वर्यं राज्यं चाश्वास्तुरङ्गमाश्च मातङ्गा गजाश्च महीष्यः सैरिभ्यश्च गावो धेनवश्च महागृहाः सप्तभौ-

तत्र दुर्गपुराल्लक्ष्मीवाटिकां समुपेत्य सः । स्वास्तृतायां वेदिकायां न्यषीदद्धवलांशुकः ॥ २ ॥ सितपुष्पस्रगापीडो वृतो भक्तैः सहस्रशः । गीयमानानि पद्यानि सद्भिः । कृष्णस्य सोऽशृणोत् ॥ ३ ॥ तदन्ते सोऽब्रवीत्साधून्भक्ताः सन्ति हरेरिह । त्यागिनो गृहिणश्चेति द्विविधा दृढनिश्चयाः ॥ ४ ॥ तेषां धर्मास्तूभयेषां भवन्त्येव पृथक् पृथक् । परस्परविरुद्धाश्च तान्कतिचिद्ब्रुवे ॥ ५ ॥ धनैश्वर्याश्वमातङ्गमहिषीगोमहागृहाः । स्त्रीपुत्रानर्घ्यवसनहेमरत्नादिभूषणम् ॥ ६ ॥ एवमादिपदार्थानां सम्पादनपरिग्रहौ । गृहिणामेव शोभेते त्यागिनां तु न वै क्वचित् ॥ ७ ॥ कौपीनकन्थादिधृतिर्वनवासो बृहद्व्रतम् । काषायवस्त्रस्य धृतिः श्मश्रूणां मुण्डनं तथा ॥ ८ ॥ परापकारसहनमित्यादित्यागिनां महत् । भूषणं गृहिणां तत्तु दूषणं नैव शोभते ॥ ९ ॥ एवमाचरणे ज्ञेया परस्परविरुद्धता । गृहिधर्मांस्त्यजेत्त्यागी तद्धर्मांश्च गृही ततः ॥ १० ॥

मानि सौधानि च ते । स्त्रियश्च पुत्राश्च अनर्घ्याणि महार्हाणि वसनानि च हेमरत्नादिभूषणानि च तानि चैतेषां समाहारस्तम् । एवमित्युत्तरेणसम्बन्धः ॥ ६ ॥ एवमिति । एवमादिपदार्थानाम् । सम्पादनपरिग्रहावुत्पादनसङ्ग्रहौ । गृहिणां गृहस्थधर्मावस्थितनामेव । शोभेते । त्यागिनां साधूनां तु । क्वचित्कदाचिदपि । न शोभेते । वै ॥ ७ ॥ कौपीनेति । कौपीनं गुह्यपटश्च कन्था च ते आदीयेषां तुम्बीकाष्टपात्रादीनां तेषां धृतिर्धारणम् । वनवासः । बृहद्व्रतमष्टधास्त्रीत्यागलक्षणं ब्रह्मचर्यव्रतम् । काषायवस्त्रस्य रक्तमृत्स्नारञ्जितवस्त्राणामित्यर्थः । धृतिः । तथा । श्मश्रूणाम् । मुण्डनम् ॥८॥ परेति । परापकारसहनम् । इत्याद्येतत्प्रभृतिकम् । त्यागिनाम् । भूषणम् । अस्ति । अतः । शोभते । तत्तु । गृहिणाम् । दूषणं दूषणरूपम् । अतः । नैव शोभते । इति द्वयोरेकसम्बन्धः ॥९॥ एवमिति । एवममुना प्रकारेण । आचरणे त्यागिनां गृहिधर्माचरणे गृहिणां त्यागिधर्माचरणे चेत्यर्थः । परस्परविरुद्धता । ज्ञेया । ततोहेतोः । त्यागी । गृहिधर्मान् । त्यजेत् । गृही । तद्धर्मांस्त्यागीधर्मांश्च । त्यजेत् ॥ १० ॥

गृहेति । अत्र सत्सङ्गे । गृहाश्रमम् । विहाय त्यक्त्वा । ये । नरा भक्ताः । त्यागिनः साधवः । जाताः । तैः साधुभिः । विचार्य स्वमनसि विचारः कार्यः । विचारमाह । वयम् । गृहिणः । नैव भवामः । वयं तु । त्यागिनः । भवामः ॥ ११ ॥ अत इति । अतो हेतोः । गृहिजनार्हस्य गृहस्थाश्रमस्थजनयोग्यस्य । पदार्थस्य धनादिवस्तुनः । एषणा सम्प्राप्तीच्छा । क्वचित्कदाचनापि । नैव । अर्हा योग्या नैवास्तीत्यर्थः । इतिहेतोः । व्रतस्य त्यागयुचितनियमस्य क्षतिर्विनाशो यया तां साधुत्वव्रतभङ्गहेतुभूतामित्यर्थः । तां तदेषणाम् । क्वापि कदाचिदपि । न करिष्यामः ॥ १२ ॥ एवमिति । एवममुना प्रकारेण । विचार्य । ये साधवः । स्वे स्वकीये । धर्मे । वर्त्तन्ते । तेषु साधुष्वेव । मम । प्रीतिः प्रसन्नता । अस्ति । अन्यत्रैवंविधसाध्वितरसाधौ । मम प्रीतिर्नास्ति । इतीत्थम् । अवधार्यताम् ॥ १३ ॥ मुकुन्देति । अत्र सत्सङ्गे । मदन्तिके मत्समीपे स्थिताः । ये । मुकुन्दो मुकुन्दानन्दनामा वर्णी । आद्यो मुख्यो येषां मुक्तानन्दादीनां ते । तथैव स्वस्वधर्मानुसारेणैव वर्त्तन्ते । अत एव । तेषु मुकुन्दानन्दादिषु । मम । प्रीति । निरन्तरम् । अस्ति ॥ १४ ॥ किं बहुना स्वधर्म-

गृहाश्रमं विहायात्र जाता ये त्यागिनो नराः । तैर्विचार्यं वयं नैव गृहिणस्त्यागिनो वयम् ॥ ११ ॥
अतो गृहिजनार्हस्य पदार्थस्यैषणा क्वचित् । नैवार्हेति न तां क्वापि करिष्यामो व्रतक्षतिम् ॥ १२ ॥
एवं विचार्य धर्मे स्वे वर्त्तन्ते यं तु साधवः । प्रीतिर्ममास्ति तेष्वेव नान्यत्रेत्यवधार्यताम् ॥ १३ ॥
मुकुन्दाद्यास्तथैवात्र वर्त्तन्ते ये मदन्तिके । अतएव हि तेष्वस्ति मम प्रीतिर्निरन्तरम् ॥ १४ ॥
श्रद्धालुत्वात्तथैतेषां सेवां गृह्णामि चादरात् । श्रद्धाहीनैः कृतां तां तु प्रीत्या गृह्णामि न क्वचित् ॥ १५ ॥
पत्रं पुष्पं फलं तोयं श्रद्धादत्तमुपाददे । श्रद्धाहीनेन दत्तं तु नेक्षे किञ्चिदपि ध्रुवम् ॥ १६ ॥
पूजां यः श्रद्धया कुर्यान्मदीयामपि कश्चन । मद्गृहीतां च तां दृष्ट्वा तस्मा ईर्ष्येत्स मूढधीः ॥ १७ ॥

दृढस्थितिमतां श्रद्धातिशयवतामेव सेवामादरतो गृह्णामि नान्येषामित्याह । श्रद्धेति । तथा च । तेषामेवंविधमुकुन्दानन्दादीनाम् । श्रद्धालुत्वाच्छ्रद्धातिशययुक्तत्वात् । सेवां तत्कृतां परिचर्याम् । आदरात् । गृह्णामि । श्रद्धाहीनैः स्वधर्मनिष्ठैरपि श्रद्धावर्जितैर्भक्तैः । कृताम् । तां परिचर्यां तु । क्वचित्कदाचिदपि । प्रीत्या । न गृह्णामि ॥ १५ ॥ पत्रमिति । श्रद्धादत्तं श्रद्धया मह्यं समर्पितम् । पत्रं जीवन्ती तुलस्यादिदलम् । पुष्पं वर्षाजीवन्तीकुन्दकुसुमादिसुमनः । फलं कर्कटिकादि । तोयं गालितशीतमिष्टपूताच्छोदकम् । उपाददे प्रीत्या गृह्णामि । श्रद्धाहीनेन भक्तेन । दत्तं तु । किञ्चित् किमपि । नेक्षे न पश्यामि । ध्रुवं निश्चितमेव ॥ १६ ॥ पूजामिति । कश्चन स्वधर्मनिष्ठो यः कोऽपि भक्तः । श्रद्धया । मदीयाम् । पूजा सेवाम् । कुर्यात् । मद्गृहीतां मयाऽऽदरादुपादत्ताम् । तां पूजां चापि । दृष्ट्वा । यो भक्तः । तस्मै मत्पूजाकर्त्रे भक्ताय । ईर्ष्येत् । स भक्तः । मूढधीर्मन्दमतिः । ज्ञेयः ॥ १७ ॥

रुचिरिति । तस्मिन्नेवमीर्ष्याकर्त्तरि भक्ते । मम । रुचिः । न जायते । वै । इत्येवंविधाम् । तस्य श्रीहरेः । अमृततुल्यवाचम् । श्रुत्वा । तदीयभक्ताः । सन्तः साधवः । गृहस्थाश्च । भूरितरम् । प्रतोषम् । प्रपेदिरे ॥ १८ ॥ स्वभक्तत्यागिगृहिणां परस्परविरुद्धता । धर्माणां स्वप्रसन्नत्वं स्वधर्मैः श्रद्धया तथा ॥ १ ॥ अनीर्ष्यया च तत्प्रोक्तं येन श्रीहरिणा स मे । स्वधर्मदृढतां श्रद्धामनीर्ष्यां प्रददातु च ॥ २ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्पदनुरघुवीराचार्य-विरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां शताधिकपञ्चाशीतितमस्तरङ्गः ॥ १८५ ॥ ५२ ॥

मोहस्य लक्षणं तस्य निवृत्तेः साधनं च यत् । त्रिपञ्चाशत्तमे तत्तु कथितं सम्यगेव हि ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८८०) वैशाखशुक्ल-पञ्चम्यां वैशाखमासस्य शुक्लपक्षागतपञ्चमीतिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमस्य राज्ञः । दुर्गे । निजाश्रमे स्वावासे । स्वासने स्वोपवेशार्होत्तमनिजविष्टरे । सितवासाः परिधृतसकलश्वेतवसनः । निजैर्नानादेशागतत्यागिगृहिस्वकीयभक्तजनैः । वृतः सभायां परिवेष्टितः ।

रुचिर्न तस्मिन्मम जायते वै श्रुत्वेति तस्यामृततुल्यवाचम् । सन्तो गृहस्थाश्च तदीयभक्ताः प्रपेदिरे भूरितरं प्रतोषम् ॥ १८ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते शताधिकपञ्चाशीतितमस्तरङ्गः ॥ १८५ ॥ ५२ ॥

शकाब्दे विक्रमार्कस्य खनागवसुभूमिते । वैशाखशुक्लपञ्चम्यां वचोऽमृतमिदं हरेः ॥१॥ तत्र दुर्गपुरे दुर्ग उत्तमस्य निजाश्रमे । व्यराजत्स्वासने स्वामी सितवासा वृतो निजैः ॥ २ ॥ स्वाग्रोपविष्टानूचेऽथ स साधून्स्वाननेक्षणान् । यो मोहः कथितः शास्त्रे तद्रूपं श्रृणुत ब्रुवे ॥ ३ ॥ स्वदोषाननुसन्धानं रूपं मोहस्य कीर्त्यते । पण्डितमन्यपुरुषास्तद्वन्तः सन्ति भूरिशः ॥ ४ ॥ शरीरस्थं तु जीवं स्वं यथावन्न विदुर्हि ते । कृष्णो गौरोऽथवा ह्रस्वो दीर्घोऽणुर्वा महानिति ॥ ५ ॥ एवमज्ञानिनोऽप्येते महत्सु हरिसेविषु । साक्षात्कृष्णेऽपि दोषं च त्वाकृतौ कल्पयन्ति वै ॥ ६ ॥

स्वामी श्रीहरिः । व्यराजदुपवेशनचातुर्येण शुशुभे ॥ २ ॥ स्वेति । अथानन्तरम् । स श्रीहरिः । स्वाननेक्षणान्स्वमुखपङ्कजावलोकिनः । स्वाग्रोपविष्टान्स्वपुरःप्रदेशावस्थितान् । साधून्मुक्तानन्दादिमुनीन् । ऊचे । हे साधवः ! । शास्त्रे । यः । मोहः । कथितः । तद्रूपं तस्य मोहस्य लक्षणम् । ब्रुवे युष्मभ्यं कथयामि । श्रृणुत ॥ ३ ॥ स्वेति । स्वदोषाननुसन्धानं स्वस्थानेकदोषाविचारपूर्वकं परदोषसमीक्षणमित्यर्थः । मोहस्य । रूपम् । कीर्त्यते । तद्वन्तो मोहयुक्ताः । पण्डितंमन्यपुरुषा मूर्खजनाः । भूरिशो बहवः । सन्ति ॥ ४ ॥ शरीरस्थमिति । ते मूर्खपुरुषाः । शरीरावस्थितम् । स्वं स्वकीयम् । जीवम् । यथावद्यथार्थतया । न हि विदुर्नैव जानन्ति । जीवः । कृष्णः कृष्णवर्णः । अथवा । गौरः श्वेतवर्णः । ह्रस्वो लघुः । अथवा । दीर्घो गुरुः । अणुरणुवत्सूक्ष्मः । अथवा । महान्स्थूलः । अस्ति । इतीत्थम् । तं न विदुरितिसम्बन्धः ॥ ५ ॥ एवमिति । एवममुना प्रकारेण । अज्ञानीनः स्वजीवस्वरूपानभिज्ञा अपि । एते मूर्खपुरुषाः । हरिसेविषु साक्षाद्भगवत-

एकान्तिकोपासकेषु । महत्सु महासाधुषु । त्राकृतौ । साक्षात्कृष्णे चापि । दोषम् । कल्पयन्ति । वै ॥ ६ ॥ तेषु तत्कृतदोषकल्पनप्रकारमाह । एत इति । एते । महान्तो महासाधवः । कृष्णो वा स्वयं श्रीहरिरपि । एतावदेतत्परिमितम् । कर्म क्रियां तु । उचितं योग्यम् । न कुर्वन्ति । इतीत्थम् । निर्दोषे दोषरहितेषु साधुषु तथाविधे भगवति चेत्यर्थः । दोषदर्शनाः । मूढा उक्तविधा मूर्खपुरुषाः । विदुः ॥ ७ ॥ कृष्ण इति । साक्षात्प्रत्यक्षः । कृष्णः स्वयं श्रीहरिस्तु । भगवान्करामलकवदनन्ताण्डस्थजीवेश्वरक्रियाऽखण्डदर्शनादिभगशब्दवाच्यज्ञानैश्वर्याद्युपेतः । राधालक्ष्मीपतिः । प्रभुरक्षरादिनियमनसमर्थः । अनन्तकोटिब्रह्माण्डानां स्थित्युत्पत्त्यादेः कारणं महापुरुषादिद्वारा हेतुः । अस्ति ॥ ८ ॥ शारदेति । शारदाब्रह्मशेषाद्याः । यस्य साक्षात्कृष्णस्य । पारं गुणैश्वर्यविभूत्याद्यन्तम् । न यान्ति । वेदाश्चत्वारोऽपि निगमाः । यस्य साक्षात्कृष्णस्य । गुणानपारकारुण्यवात्सल्यौदार्यादीन् । गायन्तः सन्तोऽपि । अन्तं पारम् । न यान्ति ॥ ९ ॥ तस्येति । तस्य तथाविधस्य साक्षात्कृष्णस्यापि । लीलासु चरित्रेषु । इह लोके । ये । पुमांसः । दोषकल्पकाः । सन्ति । ते पुमांस एव । अधार्मिकाः । मूर्खाः । हरेः । विमुखाश्च । ज्ञेयाः

एते महान्तः कृष्णो वा कर्मैतावत्तु नोचितम् । कुर्वन्तीति विदुर्मूढा निर्दोषे दोषदर्शनाः ॥७॥ कृष्णस्तु साक्षाद्भगवान् राधालक्ष्मीपतिः प्रभुः । अनन्तकोटिब्रह्माण्डस्थित्युत्पत्त्यादिकारणम् ॥८॥ शारदाब्रह्मशेषाद्या न पारं यान्ति यस्य च । वेदा अपि गुणान् यस्य गायन्तोऽन्तं न यान्ति च ॥९॥ तस्यापि लीलास्विह ये पुमांसो दोषकल्पकाः । त एवाधार्मिका ज्ञेया मूर्खाश्च विमुखा हरेः ॥१०॥ कृष्णे च कृष्णभक्तेषु ये नरा दोषदर्शिनः । न तेषां जायते श्रेयः कदाचिदपि पापिनाम् ॥ ११ ॥ एवं हि मोहो विज्ञेयो निर्दोषे दोषदर्शनम् । आत्मदोषस्य चाज्ञानमिति प्रोक्तो विवेकिभिः ॥१२॥ माहात्म्यं ये तु कृष्णस्य सत्सच्छास्त्रनिषेवया । ज्ञात्वा भजन्ति तं तेभ्यः स सम्यगपसर्पति ॥ १३ ॥ इति प्रभोस्तस्य वचोऽमृतं ते निपीय सन्तः सकलास्तदीयाः । तोषं महान्तं हृदि लेभिरेऽथो सदोनिषण्णा गृहिणश्च भक्ताः ॥ १४ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते शताधिकषडशीतितमस्तरङ्गः ॥ १८६ ॥ ५३ ॥

॥ १० ॥ कृष्ण इति । ये । नराः । कृष्णे साक्षाद्धरौ । कृष्णभक्तेषु च । दोषदर्शिनः । सन्ति । पापिनाम् । तेषां नराणाम् । कदाचिदपि । श्रेयः । न जायते ॥ ११ ॥ एवमिति । एवममुना प्रकारेण । निर्दोषे । दोषदर्शनम् । आत्मदोषस्य । अज्ञानं च । इत्येवम् । विवेकिभिः । प्रोक्तः । मोहः । विज्ञेयः ॥ १२ ॥ माहात्म्यमिति । ये भक्ताः । सतां भगवदेकान्तिकसाधूनां सच्छास्त्राणां श्रीमद्भागवतादिसद्ग्रन्थानां च निषेवया यथोचितपरिशीलनं तया । कृष्णस्य प्रत्यक्षस्य श्रीहरेः । माहात्म्यम् । ज्ञात्वा । तं कृष्णम् । भजन्ति । तेभ्यो भक्तेभ्यः सकाशात् । स मोहः । सम्यग्यथार्थतया । अपसर्पति निवृत्तो भवतीत्यर्थः ॥ १३ ॥ इतीति । इत्येवंविधम् । प्रभोः । तस्य कृष्णशब्दाभिहितस्य श्रीहरेः । वचोऽमृतम् । निपीय । तदीयाः । सदोनिषण्णाः । सकलाः । ते । सन्तः । अथो अथ च । भक्ताः । गृहिणः । हृदि स्वस्वमानसे । महान्तम् । तोषम् । लेभिरे ॥१४॥ यो लक्ष्मोक्त्वा तु मोहस्य साधनं तन्निवर्त्तने । हरिः प्राह स्वमाहात्म्यबोधं तं स ददातु मे ॥१॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्स्नुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां शताधिकषडशीतितमस्तरङ्गः ॥१८६॥५३॥

यस्य भक्तस्य सत्सङ्गोऽधिकः स्यात्सर्वतोऽपि हि । चतुःपञ्चाशत्तमे तु तस्य लक्षणमीरितम् ॥१॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८८०) ज्येष्ठस्य मासस्य । शुक्लसप्तम्यां शुक्लपक्षस्य सप्तमीतिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुराद्दुर्गपुरान्तर्गतोत्तमनृपतिदुर्गाभ्यन्तरवर्त्यात्मनिवासस्थानादित्यर्थः । लक्ष्मीवाटिकाम् । समुपेत्य माणिक्याश्वाधिरूढः । सन् सम्प्राप्य । सिताम्बरः परिहितसकलश्वेतवसनः । स श्रीहरिः । आम्राधस्तादम्रसालतरोरधःप्रदेशे । वेदिकायां श्वेतोत्तरछदपार्श्विकयुतस्थूलतूलिकासनवत्यां वेद्याम् । निषसादापराह्णे रेचिताद्यश्वागतिविशेषांस्तया विधाप्योपविवेश ॥ २ ॥ मल्लिकेति । मल्लिकापुष्पहारः स्थूलमुक्तासमानकुन्दकलिकामालाधरः । मल्लिकापुष्पशेखरः । स्वैरात्मीयैः । भक्तैर्नानादेशागतत्यागिगृहिनैकाश्रितजनैः । परितः समंततः । वृतः सभायां वेष्टितः । स श्रीहरिः । अग्रतः स्वाग्रप्रदेशावस्थितान् । सतो मुक्तानन्दादिसाधून् । पप्रच्छ ॥ ३ ॥ प्रोक्त इति । हे सन्तः ! । भागवते श्रीमद्भागवतपुराणैकादशस्कन्धे । स्वयम् । हरिणा श्रीकृष्णेन । सत्सङ्गः । साङ्ख्ययोगतपस्त्यागतीर्थदानव्रतादितः साङ्ख्यादिसर्वसाधनेभ्यः । अधिकः । प्रोक्त उद्धवं प्रति कथितः

शकाब्दे विक्रमार्कस्य खनागवसुभूमिते । ज्येष्ठस्य शुक्लसप्तम्यां वचोऽमृतमिदं हरेः ॥ १ ॥
तत्र दुर्गपुराल्लक्ष्मीवाटिकां समुपेत्य सः । आम्राधस्ताद्वेदिकायां निषसाद सिताम्बरः ॥ २ ॥
मल्लिकापुष्पहाराश्च मल्लिकापुष्पशेखरः । परितः स्वैर्वृतो भक्तैः सतः पप्रच्छ सोऽग्रतः ॥ ३ ॥
प्रोक्तोऽधिको भागवते सत्सङ्गो हरिणा स्वयम् । सांख्ययोगतपस्त्यागतीर्थदानव्रतादितः ॥ ४ ॥
सोऽधिकः स्यान्मतो यस्य तस्य मे ब्रूत लक्षणम् । इति पृष्टोत्तरमपि तस्य प्रोवाच तान्स्वयम् ॥ ५ ॥
सत्सु यस्यात्मबुद्धिः स्यात्तेन ज्ञातोऽस्ति सोऽधिकः । दृष्टान्तेन सह स्पष्टं कथयामि च तामहम् ॥ ६ ॥
यथाऽत्र कस्यचिद्राज्ञो वन्ध्यस्य वार्द्धके भवेत् । पुत्र एकोऽथ तस्मिन्स्यात्तस्य स्नेहोऽधिकः ॥ ७ ॥

। तद्यथा । 'न रोधयति मां योगो न साङ्ख्यं धर्म एव च । न स्वाध्यायस्तपस्त्यागो नेष्टा पूर्त्तं न दक्षिणा । व्रतानि यज्ञछन्दांसि तीर्थानि नियमा यमाः । यथाऽवरुन्धे सत्सङ्गः सर्वसङ्गापहो हि मामि'ति ॥ ४ ॥ स इति । स सत्सङ्गः । यस्य भक्तस्य । अधिकः साङ्ख्यादिसर्वसाधनेभ्यो विशिष्टः । मतः । स्यात् । तस्य भक्तस्य । लक्षणम् । मे मह्यम् । ब्रूत । इत्यमुना प्रकारेण । पृष्ट्वा । तान् प्रश्नोत्तरानभिज्ञतया परस्परानन्नविलोकिनः साधून् । तस्य स्वकृतप्रश्नस्य । उत्तरमपि । स्वयं श्रीहरिरेव । प्रोवाच ॥५॥ सत्स्विति । हे सन्तः ! । यस्य भक्तस्य । सत्सु साक्षाद्भगवदेकान्तिकसाधुषु । आत्मबुद्धिः । स्यात् । तेन भक्तेन । सत्सङ्गः । अधिकः । ज्ञातः । अस्ति । अहम् । तां सत्स्वात्मबुद्धिम् । दृष्टान्तेन । सह । स्पष्टं यथातथा । कथयामि ॥६॥ यथेति । अत्र लोके । यथा । वन्ध्यस्य । कस्यचित् । राज्ञः । वार्द्धके वृद्धत्वे । एकः । पुत्रः । भवेत् । अथानन्तरम् । तस्य राज्ञः । तस्मिन् । पुत्रे । अखिलाधिकः सर्वपदार्थाधिकः । स्नेहः । स्यात् ॥ ७ ॥

अधिक्षिपेदिति । स पुत्रः । स्वयम् । अधिक्षिपेत्तिरस्कुर्यात् । अथवा । पुनर्भूयो भूयः । श्मश्रूणि । आकर्षयेद् बलादाकृष्यात् । अथवा । कदाचन । ग्रामस्थलोकशिशूकान्स्वनगरस्थजनपृथुकान् । ताडयेत्पशुमारं मारयेत् ॥ ८ ॥ कुर्यादीति । अथवा । अनीतिमन्यायमपि । कुर्यात् । तथापि । भूपतेरेवंविधपुत्रजनकनृपतेः । तस्मिन्पुत्रे । कदापि । अभावः । न हि नैव । स्यात् । प्रत्युत । प्रेम । वर्द्धते तत्र वृद्धिं गच्छति ॥ ९ ॥ तथेति । तथा तेन प्रकारेणैव । यस्य भक्तस्य । सत्सु । सुनिश्चला । स्नेहबुद्धिः । स्यात् । सा स्नेहबुद्धिरेव । आत्मबुद्धिः । मता । याऽऽत्मबुद्धिः । क्वचित्कदाचिदपि । प्रतिहता निवृत्ता । न स्यात् । इति त्रयाणामेकसम्बन्धः ॥ १० ॥ इयमिति । इयमात्मबुद्धिः । यस्य भक्तस्य । सत्सु भवेत् । तेन भक्तेन । सत्सङ्गः । सर्वतः सर्वसाधनेभ्यः । अधिकः । ज्ञातः । अस्ति । हि । इत्येवम् । यूयम् । निश्चितमेव । जानीत ॥ ११ ॥ आत्मेति । यस्य भक्तस्य । सत्सु । आत्मबुद्धिः । भवेत् । तस्य भक्तस्यैव । तेषु सत्सु । सर्वथा । स्वधीरात्मीयत्वमतिः । पूज्यधीः पूजनीयतामतिः । तीर्थमतिस्तीर्थधर्मभूतपुनानतामतिश्च । ध्रुवमेव । स्यात् ॥ १२ ॥ एता इति । यस्य । नृदेहिनो मनुष्यजन्मवतो

अधिक्षिपेत्स चेत्स्वं वा श्मश्रूण्याकर्षयेत्पुनः । ग्रामस्थलोकशिशुकांस्ताडयेद्वा कदाचन ॥ ८ ॥ कुर्यादनीतिमपि वा तथापि न हि भूपतेः । तस्मिन्कदाप्यभावः स्यात्प्रत्युत प्रेमवर्द्धते ॥९॥ तथैव यस्य सत्सु स्यात्स्नेहबुद्धिः सुनिश्चला । आत्मबुद्धिर्मता सैव या न प्रतिहता क्वचित् ॥ १० ॥ इयं यस्य भवेत्सत्सु तेन ज्ञातो हि सर्वतः । सत्सङ्गोऽधिक इत्येवं यूयं जानीत निश्चितम् ॥ ११ ॥ आत्मबुद्धिर्भवेद्यस्य सत्सु तस्यैव सर्वथा । स्वधीश्च पूज्यधीस्तेषु स्याच्च तीर्थमतिर्ध्रुवम् ॥१२॥ एता न मतयो यस्य सत्सु जाता नृदेहिनः । अन्यत्र च भवेयुस्ताः स तु प्रोक्तः पशुर्बुधैः ॥ १३ ॥ यस्यात्मबुद्धिः कुणपे त्रिधातुके स्वधीः कलत्रादिषु भौम इज्यधीः । यत्तीर्थबुद्धिः सलीले न कर्हिचिज्जिनेष्वभिज्ञेषु स एव गोखरः ॥१४॥ इति भागवतश्लोकेऽप्ययमेवार्थ ईरितः । सत्स्वेव सर्वथा कार्यस्ततः स्नेहो मनीषिभिः ॥ १५ ॥

जनस्य । सत्सु । एता आत्मबुध्यादयः । मतयः । न जाताः । ता मतयः । अन्यत्र देहादिषु । भवेयुः । स जनस्तु । बुधैर्व्यासादिभिः । पशुतुल्यः । प्रोक्तः ॥१३॥ यस्येति । यस्य जनस्य । त्रिधातुके वातपित्तश्लेष्माख्यधातुत्रयप्रकृतिके । कुणपे शरीरे । आत्मबुद्धिरहंमत्या स्नेहबुद्धिः । अस्ति । कलत्रादिषु स्त्रीपुत्रादिषु । स्वधीरात्मीयतामतिः । अस्ति । भौमे भूमिविकारेऽर्चादौ । इज्यधीः पूजनीयदेवतात्वमतिः । अस्ति । यद्यस्य जनस्य । सलिले यत्र कुत्रापि दूरवर्त्तिनि तोये । तीर्थबुद्धिः । अस्ति । कर्हिचित्कदाचिदपि । अभिज्ञेषु यथार्थतया साक्षाद्भगवत्स्वरूपवित्स्वेकान्तिकभक्तजनेषु । न सन्ति यस्यात्मबुद्ध्यादयो न विद्यन्ते इत्यर्थः । स जन गोषु पशुष्वपि खरो गर्दभ एव । ज्ञेयः ॥ १४ ॥ इतीति । इत्येवंविधे । भागवतश्लोकेऽपि । अयमेव । अर्थः । ईरितः । ततोहेतोः । मनीषिभिर्विवेकिभिर्भक्तैः । सत्स्वेव । सर्वथा । स्नेहः । कार्यः ॥ १५ ॥

इतीति । इत्येवंविधाम् । प्रभोः । प्रत्यक्षपरमेश्वरस्य । तस्य श्रीहरेः । सुधोपमाम् । वाचम् । निशम्य । सदोनिषण्णाः । भक्ताः । सर्वे । साधुजनाः । अथो । गृहस्थाश्चापि । स्वस्वहृदये । महान्तमतिशयितम् । हर्षम् । लेभिरे ॥ १६ ॥ यस्य स्वकीयभक्तस्य सत्सङ्गः सर्वतोऽधिकः । स्यात्तस्य येन लक्ष्मोक्तं स हरिर्मे ददातु तम् ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्तनुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां शताधिकसप्ताशीतितमस्तरङ्गः ॥ १८७ ॥ ५४ ॥

स्वभक्तशिक्षणायैव हरिणा स्वमलौकिकम् । अङ्गं तु बहुदृष्टान्तैः पञ्चपञ्चाश ईरितम् ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८८०) ज्येष्ठशुक्ले ज्येष्ठमासस्य शुक्लपक्षे । एकादश्यां तिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमस्य राज्ञः । दुर्गे । प्राचीनवक्त्रस्य प्राग्द्वारस्य वेश्मनस्तस्यैवभवनस्य । वेद्यां बाह्यवितर्दौ । चारुमञ्चकेऽनर्घ्यास्तरणास्तृतशोभनपर्यङ्कासने । स श्रीहरिः । न्यषीदत् ॥ २ ॥ तं विशिनष्टि द्वाभ्याम्

इति प्रभोस्तस्य निशम्य वाचं सुधोपमां साधुजनास्तु सर्वे । हर्षं महान्तं हृदि लेभिरेऽथो भक्ता गृहस्थाश्च सदो निषणाः ॥१६॥

इति श्रीहरिवाक्यसुधासिंधौ शतानन्दमुनिविरचिते शताधिकसप्ताशीतितमस्तरङ्गः ॥ १८७ ॥ ५४ ॥

शकाब्दे विक्रमार्कस्य खनागवसुभूमिते । एकादश्यां ज्येष्ठशुक्ले वचोऽमृतमिदं हरेः ॥ १ ॥ तत्र दुर्गपुरे दुर्ग उत्तमस्य स वेश्मनः । वेद्यां प्राचीनवक्त्रस्य न्यषीदच्चारुमञ्चके ॥ २ ॥ स्वकीयवक्त्रकमलस्थिरलोचनवृत्तिभिः । त्यागिभिर्गृहिभिर्भक्तैर्वृतश्च परितो निजैः ॥३॥ स्वर्णसूत्रोल्लसत्प्रान्तं शीर्षिण श्वेतपटं दधत् । सितं परिदधद्धोत्रं वसानश्च सितां पटीम् ॥४॥ विधाय गायनं सत्सु सवाद्यं विरतेषु सः । तानाभाष्य जगादेदं सर्वे शृण्वन्तु साधवः ! ॥ ५ ॥ यस्य यादृग्भवेदङ्गं सत्सङ्गात्प्राक् च सोम्प्रतम् । स तद्वदतु मे सम्यक् पृथगेकैक आत्मनः ॥ ६ ॥

। स्वकीयेति । स्वकीयवक्त्रकमलस्थिरलोचनवृत्तिभिः । त्यागिभिः । गृहिभिश्च । निजैरात्मीयैः । भक्तैः । नानादेशागतैरितिशेषः । परितः । वृत्तः सभायां संवेष्टितः ॥ ३ ॥ स्वर्णेति । स्वर्णसूत्रैः पुरटतन्तुग्रथनरचनाभिरुल्लसच्छोभमानः प्रान्तः प्रान्तभागो यस्य तम् । श्वेतपटं श्वेतवर्णशिरोवेष्टनपटकम् । शीर्षिण मस्तके । दधत् । सितं धोत्रमधोंशुकम् । परिदधत् । सितां धवलाम् । पटीं प्रच्छदपटिकाम् । वसानश्च ॥ ४ ॥ विधायेति । सत्सु मुक्तानन्दादिषु साधुषु । सवाद्यं झर्झरमृदङ्गादिवादित्रवादनसहितम् । गायनं साक्षाद्भगवद्गुणकीर्त्तनगानम् । विधाय । विरतेषु सत्सु । स श्रीहरिः । तान्मुक्तानन्दादिगायकसाधून् । आभाष्य सम्बुध्याभिमुखीकृत्य । इदं वक्ष्यमाणवचनम् । जगाद । हे साधवः । सर्वे । शृण्वन्तु ॥ ५ ॥ यस्येति । हे सन्तः ! । यस्य साधोः । सत्सङ्गात् । प्राक् । साम्प्रतमिदानीं च । यादृग्यथाविधम् । अङ्गं स्वाभाविकीस्थितिः । भवेत् । स साधुः । एकैकः सन् । आत्मनः स्वस्य । तदङ्गम् । मे मह्यम् । पृथक्पृथक् । सम्यक् । वदतु ॥ ६ ॥

स्वस्वाङ्गोक्तौ विलम्बं कुर्वतस्तानालक्ष्य तेषां शिक्षामिषादादौ स्वयमेव स्वकीयं तद्वक्ति । अहमिति । हे साधवः ! । आदितः । अहमेव । स्वकम् । अङ्गम् । अशेषतः सर्वप्रकारेण । वच्मि । मे मम । बाल्येऽपि । प्रातःस्नाने । सुरेक्षणे रामकृष्णादिदेवदर्शने । रुचिः । अभूत् ॥ ७ ॥ कथेति । विष्णोः श्रीकृष्णस्य । कथावार्त्ताश्रुतौ । साधूनाम् । समागमे । तीर्थयात्रायां च । मम । सर्वदा । प्रीतिः । अवर्त्तत ॥ ८ ॥ गृहमिति । अहम् । यदा । गृहम् । हित्वा । वनम् । 'अभ्यागतः प्राप्तः अभूवम् । तदा । वस्त्रैकखण्डस्यैकस्यापि वस्त्रशकलस्य । उपादाने ग्रहणेऽपि । मम । रुचिः । नासीत् ॥ ९ ॥ सर्पेति । गहने दुःखरूपे । 'गहनं वनदुःखयो'रिति-हैमः । वने काननेऽपि । सर्पा अजगरादयो भुजङ्गाश्च शार्दूला व्याघ्राश्च भूताश्च ते आदयो येषां मृत्युहेतुवनमहिषक्रोडकर्यादीनां तेभ्यो भयं भीतिस्तु । मे मम । हृदि । नासीत् । अहम् । दिवाशिम् । स्वस्थः स्थिरचित्तः सन् । न्यवसं तत्र निवासमकरवम् । हि ॥ १० ॥ तीर्थानीति । भूमौ । तीर्थानि । विचरन् । अहम् । श्री-

अहमेवादितो वच्मि स्वकमङ्गमशेषतः । बाल्येऽपि मे रुचिरभूत्प्रातःस्नाने सुरेक्षणे ॥ ७ ॥ कथावार्त्ताश्रुतौ विष्णोः साधूनां च समागमे । प्रीतिश्च तीर्थयात्रायां ममावर्त्तत सर्वदा ॥ ८ ॥ गृहं हित्वा यदा चाहं वनमभ्यागतस्तदा । नासीद्वस्त्रैकखण्डस्याप्युपादाने रुचिर्मम ॥९॥ सर्पशार्दूलभूतादिभयं त्वासीन्न मे हृदि । गहनेऽपि वने स्वस्थो न्यवसं हि दिवानिशम् ॥ १० ॥ तीर्थानि विचरन्भूमौ श्रीरामानन्दसद्गुरोः । समीपमेत्य न्यवसं तच्छुश्रूषानुरागवान् ॥ ११ ॥ मयि धर्मधुरां न्यस्य तस्मिन्नन्तर्हिते भुवः । सत्सङ्गिनो जनान्धर्मे वर्त्तयामि यथोचितम् ॥१२॥ सम्प्राप्तो महदैश्वर्यं सेव्यमानोऽपि लक्षशः । शिष्यै राजोचितद्रव्यैर्न लभे क्वापि विक्रियाम् ॥१३॥ सम्पादितेष्वादरेण प्रियेषु निखिलेष्वपि । औदासीन्यं पदार्थेषु म्रियमाणस्य नुर्यथा ॥१४॥ तस्मिन् यथा वा पुरुषे तदीयसुहृदामपि । स्वार्थसम्पादनस्येच्छा सम्यगेव वर्त्तते ॥ १५ ॥

रामानन्दसद्गुरोः । समीपम् । एत्य प्राप्य । तच्छुश्रूषानुरागवन् । सन् । न्यवसम् ॥ ११ ॥ मयीति । तस्मिन् श्रीरामानन्दसद्गुरौ । मयि विषये । धर्मधुराम् । न्यस्यारोप्य । भुवः पृथिव्याः सकाशात् । अन्तर्हिते सति । सत्सङ्गिन । जनान् । यथोचितम् । धर्मे । वर्त्तयामि ॥ १२ ॥ सम्प्राप्त इति । अहम् । महत् । ऐश्वर्यं सकलनृपादिमाननीयतापूर्वकसर्वप्रशास्तृतारूपमीश्वरभावम् । सम्प्राप्तः । लक्षशो नियुतादिसंख्यैः । शिष्यैः । राजोचितद्रव्यैः । सेव्यमानः । सन्नपि । क्वापि कस्मि-श्चिदपि पदार्थे । विक्रियां तदासक्तिरूपं विकारम् । न लभे ॥ १३ ॥ सम्पादितेष्विति । यथा । म्रियमाणस्य मरणकाले आस्तरणसंशायितस्य । नुर्जनस्य । आदरेण । सम्पादितेषु । प्रियेषु । निखिलेष्वपि । पदार्थेषु । औदासीन्यम् । जायते ॥ १४ ॥ तस्मिन्निति । यथा वा । तदीयसुहृदामपि । तस्मिन्म्रियमाणे । पुरुषे जनेऽपि । स्वार्थसम्पादनस्य । इच्छा । सम्यगेव । निवर्त्तते ॥ १५ ॥

तथेति । तथा तेन प्रकारेणैव । मम । सर्वपदार्थानाम् । सम्बन्धे सत्यपि । हृदये । औदासीन्यमनासक्तिः । अनिच्छा तदुपादानेच्छाऽभावश्च । वर्त्तते । ननु । इति त्रयाणामेकसम्बन्धः ॥१६॥ यथेति । यथा वा । सम्राजश्चक्रवर्त्तिनो राज्ञः । एकः । सुतः । स्यात् । अस्य सम्राजः । वार्द्धके वृद्धत्वे । स एक एव सुतः । चेद्यदि म्रियेत । तदा । अस्य सम्राजः । सर्वतः सर्वेष्वपि पदार्थेषु । औदासीन्यं पुत्रशोकाकाक्रुष्टचित्तत्वेनानासक्तत्वम् । स्यात् । हि ॥ १७ ॥ तथेति । तथा तेन प्रकारेणैव । मे मम । कृष्णाकृष्टान्तरत्वतः श्रीकृष्णस्वरूपसदेक्षणाकृष्टमानसभावाद्धेतोः । खानं नानाविधान्नाशनं च पानं जलादिपीतिश्च अश्वारोहणमनर्घ्यवाहाधिरोहश्च तान्यादयो यासु ताश्च क्रियास्तास्वपि । सदा । औदासीन्यमेव । अस्ति । इति द्वयोरेकसम्बन्धः ॥१८॥ मायिका इति । मायिकाः । पदार्थास्तु । मे मम । सर्वदा । नश्वराः । भान्ति । तत्र मायिकपदार्थेषु । मध्ये । अयं पदार्थः । शुभ उत्तमत्वाद्रमणीयः । अयम् । अशुभः कुत्सितत्वादरमणीयश्च । इतीत्थम् । पृथक् । व्यक्तिर्विवेकः । नास्ति ॥ १९ ॥ तत्र पृथग्व्यक्त्यभावं दृष्टान्तेन स्पष्टयति । इदमिति । यथा । कक्षजरोमसु बाहुमूलोद्भूतलोमसु । इदं रोम । शुभम् । इदं रोम शुभं । नास्ति ।

तथा सर्वपदार्थानां सम्बन्धेऽपि सदा मम । औदासीन्यमनिच्छा च वर्त्तते हृदये ननु ॥ १६ ॥ यथा वा सुत एकः स्यात्सम्राजः सोऽस्य वार्द्धके । म्रियेत चेत्तदाऽस्य स्यादौदासीन्यं हि सर्वतः ॥१७॥ तथा मे खानपाना-श्वारोहणादिक्रियास्वपि । औदासीन्यं सदाऽस्त्येव कृष्णाकृष्टान्तरत्वतः ॥ १८ ॥ मायिकास्तु पदार्था मे नश्वरा भान्ति सर्वदा । शुभोऽयमशुभश्चेति पृथग्व्यक्तिर्न तत्र च ॥१९॥ इदं शुभमिदं नेति यथा कक्षजरोमसु । भेदो नास्ति समानत्वात्सर्वेषां हि तथाऽत्र च ॥२०॥ यदित्यहं क्वचिद्वच्मि भोज्यमेतत्सुशोभनम् । वस्त्रं च भूषणं वेश्म-वाहयानासनादिकम् ॥२१॥ तत्तु तत्तद्भक्ततुष्ट्यै बाह्यतो वच्मि नान्यथा । भक्तार्थाऽस्ति क्रिया सर्वा मम स्वार्था तु क्वापि न ॥२२॥ एकान्तिकस्य भक्तस्य लक्ष्मेत्थं शास्त्रसम्मतम् । तदन्तःकरणं नित्यं चिन्तनादौ हरेर्भवेत् ॥२३॥

इत्येवम् । भेदः । सर्वेषां कक्षस्थरोम्णाम् । समानत्वाद्रोमत्वेन तुल्यत्वात् । नास्ति । तथा । अत्र चैषु मायिकपदार्थेष्वपि । नश्वरत्वेन सर्वेषां समानत्वाच्छुभाशुभभेदो नास्ति ॥ २० ॥ ननु यदि ते सर्वसमानत्वं कथं तर्हि स्वभक्तार्पितांस्तान्प्रशंससीतिचेत्तत्राह द्वाभ्याम् । यदिति । एतत् । भोज्यं भोजनार्हमन्नादिकम् । वस्त्रम् । भूषणम् । वेश्म गृहं च । वाहोऽश्वश्च यानं रथादिवाहनं च आसनं पर्यङ्कादिविष्टरश्च तान्यादयो यस्य तत् । सुशोभनम् । अस्ति । इतीत्थम् । अहम् । क्वचित्कदाचित् । यत् । वच्मि । तत्त्वित्युत्तरेण सम्बन्धः ॥ २१ ॥ तदिति । तत्तु । तत्तद्भक्ततुष्ट्यै तेषां तेषां भोज्याद्यर्पकभक्तानां प्रीणनार्थम् । बाह्यत उपरिष्टात् । वच्मि । अन्यथा । न । ममान्तरे सुशोभनं ज्ञात्वा न वच्मीत्यर्थः । मम । सर्वा । क्रिया । भक्तार्था स्वभक्तप्रीणनप्रयोजना । अस्ति । स्वार्था तु । क्वापि क्रिया । नास्ति ॥ २२ ॥ एकान्तिकस्येति । किञ्च । एकान्तिकस्य । भक्तस्य । शास्त्रसम्मतम् । लक्ष्म लक्षणम् । इत्थं वक्ष्यमाणप्रकारम् । भवेत् । तदन्तःकरणमेकान्तिकभक्तस्य

चित्तादि । हरेः । नित्यम् । चिन्तनादौ । भवेत् ॥ २३ ॥ तदिति । तद्वाणी । कृष्णगुणकीर्त्तने एव । भवेत् । तत्करौ । कृष्णतद्भक्तसेवायामेव । तत्परावासक्तौ । भवेताम् ॥ २४ ॥ तदिति । तत्कर्णौ । कृष्णयशसः । श्रवणतत्परौ । स्याताम् । एवममुना प्रकारेण । तस्यैकान्तिकभक्तस्य । सर्वा । क्रिया । सदा । कृष्णार्थैव । भवेत् ॥ २५ ॥ इतीति । इत्येवंविधम् । तल्लक्षणमेकान्तिकभक्तलक्ष्म । सदा सर्वकालम् । उद्यतोऽप्रमत्तः । अहम् । स्वस्मिन् । वर्त्तयामि । किञ्च । देहात् । परः आत्मा । ब्रह्मरूपो ब्रह्मभावापन्नः । अस्ति । इतीत्थम् । अनुभवामि ॥ २६ ॥ रज इति । मायिकस्य । रजआदेः । गुणस्य स्पर्शो मदात्मनः संस्पर्शनम् । न स्यात् । ततोहेतोः । मुहुर्मुहुः । स्वस्य ब्रह्मरूपस्य मदात्मनः । शुद्धतैव । विभाव्यते चिन्त्यते । ये तु स्वात्मशुद्धतां मुहुर्न विचारयन्ति तानतिवञ्चका मायिका रजआदयो गुणा आप्ता भूत्वा तान्वशीकृत्य संसारयन्त्यतो मुहुस्तच्छुद्धता विभावनमितिभावः ॥ २७ ॥ विपक्षे दोषं दर्शयन् दृष्टान्तेनोक्तार्थं विशदयति पञ्चाक्षरन्यूना-ष्टभिः । स्वर्णकार इति । यथा । स्वर्णकारः पश्यतोहरः । द्रष्टुरलङ्कारविधापकस्यानिमिषेक्षजनस्य । दृशो दृष्टेः । च्युतौ ततोऽन्यत्रेक्षणेन भ्रंशत्वे सतीत्यर्थः ।

तद्वाणी च भवेत्कृष्णगुणकीर्त्तन एव हि । तत्करौ कृष्णतद्भक्तसेवायामेव तत्परौ ॥ २४ ॥ तत्कर्णौ कृष्णयशसः स्यातां श्रवणतत्परौ । एवं सर्वा क्रिया तस्य कृष्णार्थैव भवेत्सदा ॥२५॥ इति तल्लक्षणं स्वस्मिन्वर्त्तयामि सदो-द्यतः । देहात्परो ब्रह्मरूप आत्मेत्यनुभवामि च ॥ २६ ॥ रजआदेर्मायिकस्य स्पर्शो न स्याद् गुणस्य तु । अतो मुहुर्मुहुः स्वस्य शुद्धतैव विभाव्यते ॥ २७॥ स्वर्णकारो गृहानीताद् भूषायै शुद्धकाञ्चनात् । किञ्चिद्धृत्वा क्षिपद्रूप्यं यथा दृष्टुर्दृशश्च्युतौ ॥ २८ ॥ एवमत्रापि विज्ञेयं स्वर्णकारगृहं तु हृत । स्वर्णकारस्तु मायाख्य आत्मज्ञानं तु काञ्चनम् ॥ २९ ॥ रजआदिगुणांशाश्च रूप्यमित्यवगम्यताम् । प्रमादवानात्मनिष्ठस्तद्द्रष्टा पुरुषो मतः ॥ ३० ॥ सूचितं स्वर्णकारेण कयाचित्संज्ञया यथा । हरन्ति तत्सुताः स्वर्णं वञ्चयित्वेक्षितुर्दृशम् ॥ ३१ ॥

भूषायै कटकपदकादिभूषणघटनार्थम् । गृहानीतादलङ्कारविधापकजनेन स्वर्णकारगृहं प्रापितात् । शुद्धकाञ्चनात् । किञ्चित् । हृत्वा मुषित्वा । रूप्यं हृतस्वर्णमानं रजत-शकलम् । क्षिपेच्छुद्धकाञ्चने रसविधानकाले न्यसेत् ॥ २८ ॥ एवमिति । एवं तथैव । अत्र सिद्धान्तेऽपि । हृत् हृदयम् । स्वर्णकारगृहम् । विज्ञेयम् ! आत्मज्ञानं भग-वदेकान्तिकोपासनासम्प्राप्ताक्षरब्रह्मैक्यभावनात्मकं स्वस्वरूपज्ञानं तु । काञ्चनं शुद्धसुवर्णम् । विज्ञेयम् ॥ २९ ॥ रज इति । रजआदिगुणांशा कामक्रोधादयो रजस्तमो-गुणभागाः । रूप्यम् । इतीत्थम् । अवगम्यताम् । प्रमादवानसावधानः । आत्मनिष्ठो भक्तः । तद्द्रष्टाऽग्निनिहितस्वर्णात्स्वदृष्टिं चयावयित्वेतस्ततो वीक्षकोऽलङ्कार-विधापकस्तत्प्रेक्षकः । पुरुषः । मतः ॥ ३० ॥ सूचितमिति । यथा । तत्सुताः स्वर्णकारपुत्राः । कयाचित् । संज्ञया स्वर्णकारकृतया हस्तादिसूचनया । ईक्षितुः । दृशम् । वञ्चयित्वा । स्वर्णकारेण । सूचितम् । स्वर्णम् । हरन्ति । धमनीफुत्कारयावद्धृतसुवर्णप्रमाणं रूप्यमपि क्षिपन्तीति वोध्यम् ॥ ३१ ॥

मायेति । तथा । मायासुताः । अक्षाणीन्द्रियाणि । स्वर्णतुल्यान् । सद्गुणान् ज्ञानवैराग्यादीन् । हृत्वा । प्रमत्ते प्रमादवत्यात्मनिष्ठे । कामादिदोषरूप्यम् । क्षिपन्ति ॥३२॥ रूप्येति । अथानन्तरम् । रूप्यक्षेपे । विज्ञाते सति । भूषार्थी अलङ्कारविधापनप्रयोजनः पुरुषः । यदा । कनकं क्षिप्तरूप्यं सुवर्णम् । पुनः । वह्नौ । विशोधये-च्छुद्धसुवर्णविधानायान्येन शोधनं कारयेत् । तदा । पूर्वरूपं शुद्धस्वरूपम् । भजेत्प्राप्नुयात् ॥३३॥ तथेति । तथा तद्वदेव । ब्रह्मवेत्ता ब्रह्मनिष्ठः । पुमान् भक्तः । आत्मगं प्रमादेनात्मनि समायातम् । मायिकम् । गुणं रजआदिगुणवृत्तिभूतकामादिदोषम् । विचारदार्ढ्येन सुदृढेन विचारेण । यदा । दहेद्विनाशयेत् । तदा तु । यथापुरा पूर्ववच्छुद्धः । स्यात् ॥ ३४ ॥ एतदिति । हे साधवः ! । अहम् । एतद्विघ्नभयादुक्तविधविघ्नभीतेर्हेतोः । सावधानः सन्नेव । सर्वदा । ब्रह्मात्मानं ब्रह्मभावापन्नं स्वात्मानम् । प्रपश्यामि । इत्युक्तविधम् । मे मम । अङ्गम् । अस्ति वर्त्तते ॥ ३५ ॥ मुक्तानन्देति । अथैवंविधश्रीहरिवाक्यश्रवणानन्तरम् । मुक्तानन्दादयः । सन्तः । तं श्रीहरिम् । ऊचुः । हे प्रभो ! । त्वय्यक्षरब्रह्मादीनां शास्तरि परमात्मनि भवति । मायागुणस्पर्शः । नास्ति कदापि न जायते । यद्यतोहेतोः । त्वम् । स्वयम् ।

मायासुतास्तथाऽक्षाणि स्वर्णतुल्यांस्तु सद्गुणान् । हृत्वा प्रमत्ते कामादिदोषरूप्यं क्षिपन्ति च ॥३२॥ रूप्यक्षेपेऽथ विज्ञाते भूषार्थी कनकं पुनः । यदा विशोधयेद्वह्नौ पूर्वरूपं भजेत्तदा ॥ ३३ ॥ तथा पुमान् ब्रह्मवेत्ता मायिकं गुणमात्मगम् । विचारदार्ढ्येन दहेत्तदा तु स्याद्यथा पुरा ॥ ३४ ॥ एतद्विघ्नभयादेव सावधानोऽहमञ्जसा । ब्रह्मात्मानं प्रपश्यामि सर्वदे-त्यङ्गमस्ति मे ॥ ३५ ॥ मुक्तानन्दादयः सन्तस्तमथोचुः प्रभो ! त्वयि । नास्ति मायागुणस्पर्शः परंब्रह्मासि यत्स्वयम् ॥ ३६ ॥ वार्त्तेयं त्वस्मदर्थं हि त्वया करुणया कृता । अवधारणमस्यास्तु करिष्यामो वयं हृदि ॥३७॥ नारायणेनेति वचः सुधाभं समीरितं ते मुनयो निशम्य । अन्ये च भक्ता अतिमोदयुक्ताः प्रभुं प्रणेमुस्तममुं व्रजन्तम् ॥ ३८ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते शताधिकाष्टशीतितमस्तरङ्गः ॥ १८८ ॥ ५५ ॥

परंब्रह्माक्षरधामाधिपतिरपारदिव्यगुणगणसागरोऽक्षरब्रह्मभावापन्नमुक्तकोटिनिषेवितपादपद्मः करुणार्णवोऽनन्तैश्वर्यशक्तिपतिरीश्वरः पुरुषोत्तमः । असि भवसि ॥ ३६ ॥ वर्त्तेति । हे हरे ! । त्वया । इयं पूर्वोक्ता । वार्त्ता तु । अस्मदर्थमस्मच्छिक्षार्थम् । करुणया । कृताऽस्ति । हि । अस्याः स्वस्यैकान्तिकभक्तभावमाश्रित्य भवताऽभिहिताया वार्त्तायाः । हृदि । अवधारणम् । वयं भवदेकाश्रयाः सर्वे साधवः । करिष्यामः ॥ ३७ ॥ नारायणेनेति । इत्येवंविधम् । नारायणेन श्रीहरिणा । समीरितम् । सुधाभममृततुल्यम् । वचः । निशम्य । भक्ताः । ते मुनयो मुकुनन्दादयः साधवः । अन्ये तदितरे गृहस्थाश्च । अतिमोदयुक्ताः सन्तः । व्रजन्तं जयसच्चिदानन्देत्युक्त्वा स्वावासं गच्छन्तम् । प्रत्यक्षपरमेश्वरम् । तमुक्तरीत्या वार्त्ताचरणादिना स्वभक्तहितोद्यतम् । अमुं श्रीहरिम् । प्रणेमुर्द्रवमानान्तःकरणाः सन्तो नमश्चक्रुः ॥ ३८ ॥ स्वभक्तशिक्षणार्थं यो दृष्टान्तैः स्वमलौकिकम् । अङ्गमूचे स मे दद्याद्धरिस्तदनुवर्त्तनम् ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्स्नु नुरघु-

वीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां शताधिकाष्टाशीतितमस्तरङ्गः ॥ १८८ ॥ ५५ ॥

कृष्णे स्वभक्तैः कर्त्तव्या प्रीतिः स्वोद्देशतस्ततः । पट्पञ्चाशत्तमे प्रोक्ता हरिणा करुणाब्धिना ॥ १ ॥ शकेति । विक्रमार्कस्य विक्रमादित्यभूपतेः । चन्द्राष्टवसुभूमिते एकाष्टाष्टैकसंमिते । शकाब्दे शकवर्षे । संवदष्टादशशताधिकैकाशीतितमे वर्षे । इत्यर्थः । (१८८१) आषाढशुक्लपञ्चम्यामाषाढमासस्य शुक्लपक्षागतपञ्चमीतिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमस्य राज्ञः । दुर्गे । पूर्ववक्त्रस्य प्राग्द्वारस्य । वेश्मनस्तस्यैवभवनस्य । वितर्द्दौ वाह्यवेदिकायाम् । मञ्चकोत्तमे स्वास्तरणश्रेष्ठे पर्यङ्कासने । स श्रीहरिः । न्यषीदत् ॥ २ ॥ सितेति । सिताम्बरः परिधृतसकलश्वेतवसनः । त्यागिभिः । गृहिभिश्च । भक्तैर्नानादेशायातस्वाश्रितजनैः । वृतः सभायां परिवेष्टितः । स श्रीहरिः । सद्भिर्मुक्तानन्दादिमुनिभिः । सवाद्यं विपञ्चीमर्दलादिवाद्यवादनसहितं यथातथा । गीयमानम् । कीर्त्तनम् । मुदाऽत्यानन्देन । अशृणोत् ॥ ३ ॥ तदिति । तदन्ते कीर्त्तनगानसमाप्तौ । असौ श्रीहरिः । सतः स्वपुरोनिषण्णान्मुक्तानन्दादिसाधून् । ऊचे । हे साधवः ! । हरि-

शकाब्दे विक्रमार्कस्य चन्द्राष्टवसुभूमिते । आषाढशुक्लपञ्चम्यां वचोऽमृतमिदं हरेः ॥ १ ॥ तत्र दुर्गपुरे दुर्ग उत्तमस्य स वेश्मनः । वितर्द्दौ पूर्ववक्त्रस्य न्यषीदन्मञ्चकोत्तमे ॥ २ ॥ सिताम्बरो वृतो भक्तैस्त्यागिभिर्गृहिभिश्च सः । सवाद्यं कीर्त्तनं सद्भिर्गीयमानं मुदाऽशृणोत् ॥ ३ ॥ तदन्ते सत ऊचेऽसौ शृण्वतो हरिकीर्त्तनम् । अन्तर्दृष्टिर्मम त्वासीत्तद् दृष्टमपि वो ब्रुवे ॥ ४ ॥ कृष्णेऽस्ति यादृशी प्रीतिर्मम सा तु तथैव हि । अनुभूता स्वहृदये जातस्तन्निश्चयस्ततः ॥ ५ ॥ ततश्च मेऽतिमहतां कृष्णे प्रीतिमतां सतां । स्मरणं ह्यभूत्तेऽथ दृष्टास्तत्राखिलाऽपि ॥६॥ ततस्तेषां पृथग्जीवास्तदन्तःकरणानि च । कृष्णे च यादृशी प्रीतिस्तेषां सा तादृशीक्षिता ॥ ७ ॥ तदा तु यादृशी प्रीतिर्मम कृष्णेऽस्ति तादृशी । तेषां प्रीतिर्न वै दृष्टा किन्तु न्यूना चलेक्षिता ॥ ८ ॥

कीर्त्तनम् । शृण्वतः । मम तु । अन्तर्दृष्टिः । आसीत् । तद्दृष्टमन्तर्दृष्टीक्षितमपि । वो युष्मभ्यम् । ब्रुवे । अन्तर्दृष्टीक्षितस्य सुगोप्यत्वेन वक्तव्यानर्हत्वेऽपि युष्मासु वत्सलत्वाद्धः कथयामीत्यर्थः ॥ ४ ॥ कृष्ण इति । हे सन्तः ! । मम । कृष्णे । यादृशी । प्रीति । अस्ति । सा प्रीतिः । तथैव यथाविधास्ति तेन प्रकारेणैव । अनुभूता । ततस्तदनुभवानन्तरम् । स्वहृदये । तन्निश्चयो यथार्था मत्प्रीतिरस्तीति निर्णयः । जातः ॥ ५ ॥ तत इति । ततस्तदनन्तरम् । कृष्णे । प्रीतिमताम् । अतिमहताम् । सतां गोपालानन्दादिमुनीनाम् । मे मम । हृदि । स्मरणम् । अभूत् । अथ स्मरणानन्तरम् । अपि । तेऽनिमहान्तः । तत्रान्तर्हृदये । दृष्टाः ॥६॥ तत इति । ततस्तदनन्तरम् । तेषां सताम् । जीवाः । पृथक् भिन्नभिन्नाः । दृष्टाः । तदन्तः करणानि च । पृथक् । दृष्टानि । तेषां सताम् । कृष्णे । यादृशी । प्रीतिः । अस्ति सा प्रीतिः । ईक्षिता दृष्टा ॥ ७ ॥ तदेति । तदा तस्मिन्काले । मम । कृष्णे । यादृशी । प्रीति अस्ति । तादृशी । प्रीतिः । तेषां सताम् । न दृष्टा । वै । किन्तु । न्यूना मत्प्रीतेरत्यूना । चलाऽस्थिरा । ईक्षिता ॥ ८ ॥

असत इति । असतोऽशुभस्य । देशकालादेः । योगे । कर्हिचित्कदाचित् । जाते सति । महतामपि । एतेषाम् । सताम् । धीविपर्ययः प्रीत्याधारमतिव्यत्यासः । जायते ॥९॥ यदेति । यदा । देशकालाद्यशुभता । अतितरामतिशयेन । भवेत् । तदा तु । एषां सताम् । मतेः । स्थिरत्वम् । कथञ्चन केन प्रकारेणापि । नैव स्यात् ॥१०॥ अत इति । अतोहेतोः । महद्भ्यः । एतेभ्यः । सद्भ्योऽपि । मम । धीः । मया । समीचीनैव । विज्ञाता । या मम धीः । सर्वदा । एकरूपा निश्चला । अस्ति ॥ ११ ॥ एतदेव स्पष्टमाह । देशेति । कदाचन । महति । देशकालादिवैषम्ये सत्यपि । मन्मतिः । विपर्ययम् । नैव यायात् । इत्येवम् । निश्चयः । अभवत् ॥ १२ ॥ कृष्ण इति । या । प्रीतिः । कृष्णे एव । भवेत् । अन्यत्र तदितरपदार्थे । कदाचन । न तु नैव भवेत् । सा । प्रीतिरेव । सत्या मता । अन्या प्रीतिः । व्यभिचारिणी यत्र तत्र वल्गन स्वभावत्वाद्व्यभिचारधर्मिणी । न तु सत्या नैव मता ॥ १३ ॥ सद्ग्रन्थानामिति । सर्वेषाम् । सद्ग्रन्थानां वेदादीनाम् । इद-

असतो देशकालादेर्जाते योगे तु कर्हिचित् । महतामपि चैतेषां जायते धीविपर्ययः ॥ ९ ॥ यदा त्वतितरं देशकालाद्यशुभता भवेत् । तदा त्वेषां मतेर्नैव स्थिरत्वं स्यात्कथंचन ॥१०॥ अतो महद्भ्य एतेभ्यः सद्भ्योऽपि मम धीर्मया । समीचीनैव विज्ञाता यैकरूपाऽस्ति सर्वदा ॥११॥ देशकालादिवैषम्ये महत्यपि कदाचन । विपर्ययं नैव यायादित्येवं निश्चयोऽभवत् ॥ १२ ॥ कृष्ण एव भवेत्प्रीतिर्नत्वन्यत्र कदाचन । सैव प्रीतिर्मता सत्या न त्वन्या व्यभिचारिणी ॥ १३ ॥ सद्ग्रन्थानां च सर्वेषामिदमेवास्ति वै रहः । प्रीतिः सर्वाधिका कार्या कृष्ण एवेति सर्वथा ॥ १४ ॥ परमानन्दमूर्त्तिश्च सारश्च परमो हरिः । अत्यसारो हि सकलं तदन्यत्तुच्छमस्ति च ॥ १५ ॥ कृष्णेतरपदार्थे स्यात्प्रीतिः सत्सङ्गिनोऽपि चेत् । अपक्वमूलः सत्सङ्गो नंक्ष्यत्येवाल्पकालतः ॥ १६ ॥ अतोऽत्र कृष्णभक्तेन पुंसा सत्सङ्गिना सदा । इन्द्रियार्थेषु न प्रीतिः कार्या पञ्चस्वपि क्वचित् ॥ १७ ॥

मेव । रहो रहस्यार्थः । अस्ति । कृष्णे एव । सर्वाधिका । प्रीतिः । सर्वथा । कार्या । इत्येतद्रहोऽस्तीतिसम्बन्धः । तथाचोक्तं श्रीभागवते । 'भगवान्ब्रह्मकार्त्स्न्येन त्रिरन्वीक्ष्य मनीषया । तदध्यवस्यत्कूटस्थो रतिरात्मन्यतो भवेदि'ति ॥१४॥ श्रीकृष्णे प्रीतिविधाने तदन्यत्र तदविधाने हेतुमाह । परमेति । हरिः । परमानन्दमूर्त्तिर्निरवधिकातिशयसर्वोत्तमानन्दघनतनुः । परमः । सारश्च । अस्ति । तदन्यद्धरीतरत् । सकलं मायिकवस्तु । अत्यसारः । तुच्छं च । अस्ति । हि ॥ १५ ॥ कृष्णेति । चेद्यदि । सत्सङ्गिनो भक्तस्यापि । कृष्णेतरपदार्थे । प्रीतिः । स्यात् । तर्हि । तस्य । अपक्वमूलोऽबद्धमूलः । सत्सङ्गः । अल्पकालत एव । नंक्ष्यति नाशं प्राप्स्यति ॥ १६ ॥ अत इति । अतो हेतोः । अत्र सत्सङ्गे । कृष्णभक्तेन । सत्सङ्गिना । पुंसा जनेन । पञ्चस्वपि । इन्द्रियार्थेषु मायिकेषु शब्दादिषु विषयेषु । प्रीतिः । क्वचित्कदाचिदपि । सदा सर्वेष्वपि कालेषु । न कार्या किन्तु सा कृष्ण एव कार्या ॥ १७ ॥

वर्ज्यमिति । हे सन्तः ! । यतो येन मायिकवस्तुना । कृष्णप्रीतौ । अन्तरायः । स्यात् । तद्वस्तु । कृष्णभक्तेन । वर्ज्यं सर्वथा त्याज्यम् । नूनम् । इत्येवंविधाम् । तस्य श्रीहरेः । सुधाभाममृततुल्याम् । वाचम् । श्रुत्वा । भक्ताः । सन्तः । अन्ये । गृहस्थाश्च । हर्षम् । प्रापुरेव ॥ १८ ॥ स्वस्मिन्स्वभक्तैर्यः कार्यां प्रीतिं स्वोद्देशतो हरिः । प्राह स्वस्मिन्स मे दद्यात्प्रीतिं प्रीतोऽचलां सदा ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्सनु-रघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां शताधिकैकोननवतितमस्तरङ्गः ॥ १८९ ॥ ५६ ॥

सद्रूपेणात्मना प्रीति हरौ कार्या यथातथा । प्रोक्ता तु सप्तपञ्चाशे तदन्यस्य निरासतः ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८८१) आषाढशुक्ल-षठ्यामाषाढमासस्य शुक्लपक्षागतषष्ठीतिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमस्य राज्ञः । दुर्गे । पूर्ववक्त्रस्य

वर्ज्यं तद्वै कृष्णभक्तेन नूनं कृष्णप्रीतावन्तरायो यतः स्यात् । वाचं तस्येत्येव सन्तः सुधाभां श्रुत्वा हर्षं प्रापुरन्ये च भक्ताः ॥ १८ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते शताधिकैकोननवतितमस्तरङ्गः ॥ १८९ ॥ ५६ ॥

शकाब्दे विक्रमार्कस्य चन्द्राष्टवसुभूमिते । आषाढशुक्लषष्ठ्यां तु वचोऽमृतमिदं हरेः ॥ १ ॥
तत्र दुर्गपुरे दुर्गे उत्तमस्यैव वेश्मनः । वितर्द्दौ पूर्ववक्त्रस्य मञ्चके स उपाविशत् ॥ २ ॥
श्वेताम्बरो दधत्पुष्पशेखरं च शिरःपटे । भक्तैः सद्भिर्गृहस्थैश्च स्वकीयैः परितो वृतः ॥ ३ ॥
सवाद्यं गीयमानं स साधुभिः कृष्णकीर्त्तनम् । शृण्वन् व्यचारयत्किञ्चिद्धितायैव स्वसेविनाम् ॥ ४ ॥
उवाच कीर्त्तनान्तेऽथ पुरःस्थान्स सतः प्रति । मया विचारितं किञ्चिद्युष्माकं गायनावधि ॥ ५ ॥

पूर्वास्यस्य । वेश्मनस्तस्यैवभवनस्य । वितर्द्दौ बाह्यवेदिकायाम् । मञ्चके स्वास्तृते पर्यङ्कासने । स श्रीहरिः । उपाविशत्सायन्तनीयभगवन्नीराजनान्ते दीपिकाप्रभाच-ञ्चत्तनुर्न्यषीदत् ॥ २ ॥ श्वेतेति । श्वेताम्बरः परिधृतसकलश्वेतवसनः । शिरःपटे उष्णीषे । पुष्पशेखरं कुसुमापीडम् । दधत् । सद्भिः । गृहस्थैश्च । स्वकीयैः । भक्तैः । नानादेशागतैरितिशेषः । परितो वृतः सभायां संवेष्टितः ॥ ३ ॥ सवाद्यमिति । स श्रीहरिः । साधुभिः । सवाद्यं विपञ्ची मृदङ्गादिवाद्यनादनसहितं यथा-तथा । गीयमानम् । कृष्णकीर्त्तनम् । शृण्वन्सन् । स्वसेविनां स्वभक्तजनानाम् । हितायैव । किञ्चित् । व्यचारयत् । इति द्वयोरेकसम्बन्धः ॥ ४ ॥ उवाचेति । अथ विचाराचरणानन्तरम् । कीर्त्तनान्ते सद्गीतकीर्त्तनसमाप्तौ । स श्रीहरिः । पुरःस्थान्स्वाग्रप्रदेशावस्थितान् । सतः साधून् प्रति । उवाच । हे साधवः । युष्माकम् । गायनावधि । यावद्भवद्भिः कीर्त्तनगानं कृतं तावत्कालपर्यन्तमित्यर्थः । मया । किञ्चित् । विचारितम् । यत् । अस्ति । तदित्युत्तरेण सम्बन्धः ॥ ५ ॥

तदिति । तन्मद्विचारितम् । वो युष्मभ्यम् । वदामि । शृणुत । हे सन्तः ! । हरौ । या । दृढम् । प्रीतिः । कार्या । सा प्रीतिस्तु । केवलसद्रूपात्मना ब्रह्मभाव-भावितेन केवलेन स्वात्मना । कार्या । अन्यथा देहाभिमानयुक्ततया । न कार्या ॥६॥ नेति । सद्रूपे साक्षाद्भगवदुपासनासम्प्राप्तसद्भावे । शुद्धे देहत्रयभाववर्जिते । आत्मनि स्वजीवे । मायाऽनादिबन्धरूपाऽविद्यात्मिका प्रकृतिः । मायायाः । कार्यं गुणदेहेन्द्रियादिकं च । आवरणमावृत्तिहेतुरेतद्द्वयम् । किञ्चिदपि । न नास्त्येव ॥ ७ ॥ ननु कथमावरणं नास्तीत्युच्यते सर्वजनेषु तथात्व दर्शनादितिचेत्तत्राह । अनादीति । अज्ञानां स्वात्मपरमात्मस्वरूपानभिज्ञानां जनानाम् । अनाद्यविद्यायुक्तत्वाद्धेतोः । तद्द्वयावृत्तिर्मायां तत्कार्यावरणम् । सत्या यथार्थैव । अस्ति । ज्ञानिनामात्मपरमात्मस्वरूपाभिज्ञानाम् । हरेः । भक्तानां तु । कचित्कदाचिदपि । नास्ति तद्द्वयावृत्तिर्न-भवत्येवेत्यर्थः ॥ ८ ॥ ज्ञानिभक्तानामावृतिर्नास्तीति यदुक्तं तदेव स्पष्टमाह । भक्त्येति । हरेः । भक्त्या । सवैराग्येण । ज्ञानेनात्मपरमात्मस्वरूपस्य यथार्थवेदनेन । ब्रह्मा-त्मना । कृष्णसेविनाम् । धर्मवर्त्तिनां सदा स्वधर्मदृढस्थितिमताम् । तेषां भक्तानाम् । सा तद्द्वयावृत्तिः । नष्टा मूलतो विनाशं प्राप्ता । अस्ति ॥९॥ एवमिति । एवममुना

तद्वो वदामि शृणुत प्रीतिः कार्या हरौ दृढम् । सा तु केवलसद्रूपात्मना कार्या न चान्यथा ॥ ६ ॥ नास्त्येवावरणं किञ्चित्सद्रूपे शुद्ध आत्मनि । माया च कार्यं मायाया गुणदेहेन्द्रियादिकम् ॥ ७ ॥ अनाद्यविद्यायुक्तत्वादज्ञानां तद्द्वया-वृतिः । सत्यैवास्ति न भक्तानां ज्ञानिनां तु हरेः क्वचित् ॥ ८॥ भक्त्या ज्ञानेन नष्टाऽस्ति सवैराग्येण सा हरेः । तेषां ब्रह्मात्मना कृष्णसेविनां धर्मवर्तिनाम् ॥ ९ ॥ एवं सदाऽऽत्मरूपेण वर्त्तनं यदुदीरितम् । ब्रह्मीभूय न तत्स्वस्य मत्तत्वफललब्धये ॥ १० ॥ किन्तु प्रकृत्यावरणं स्वस्मिन्नास्ति तदा हरौ । परेऽक्षरात्कुतस्तत्स्यादित्येव दृढबुद्धये ॥ ११ ॥ स्फुरत्यात्मप्रकाशे हि यो विचारस्तु वर्त्तते । सद्रूपे प्रविशत्सोऽन्यत्तस्मिन् ग्रसति मायिकम् ॥ १२ ॥

प्रकारेण । यत् । सदा । आत्मरूपेण । वर्त्तनम् । उदीरितम् । तत् । ब्रह्मीभूय ब्रह्मभावं प्राप्य । स्वस्य । मत्तत्वफललब्धये मदिरापानजातमत्तता तुल्यमत्ततासिफलाये-त्यर्थः । नास्ति । किन्त्वित्युत्तरेण सम्बन्धः ॥१०॥ किन्त्विति । किन्तु । यदा । स्वस्मिन् साक्षाद्भगवदेकान्तिकोपासनया ब्रह्मभावापन्ने मदात्मनि । प्रकृत्यावरणम् । नास्त्यनादिसदपि निवृत्तिं प्राप्तमित्यर्थः । तदा । अक्षरात्सर्वाधारादक्षरब्रह्मणोऽपि । परे स्वरूपस्वभावादिभिर्विलक्षणे । हरौ प्रत्यक्षपरमेश्वरे मदिष्टदेवे श्रीहरिकृष्णभगवति । तत्प्रकृत्यावरणम् । कुतः स्यात् । न स्यादेवेत्यर्थः । इतीत्थम् । दृढबुद्धये एव । अस्ति । साक्षाद्भगवत्स्वरूपस्य सर्वथा सर्वदा मायिकदोषरहितत्वज्ञानस्थैर्यार्थमेवास्ती-त्यर्थः ॥ ११ ॥ नन्वात्मसाक्षात्कारं प्राप्तानामपि भक्तानां विक्षेपहेतोर्देहेन्द्रियान्तःकरणादेः सत्त्वात्तन्निवृत्तिः कथं कार्येत्याशङ्कायां विक्षेपनिवृत्तिहेतुं विचारं सदृष्टान्त-माह द्वाभ्याम् । स्फुरतीति । हे सन्तः ! । आत्मप्रकाशे स्वस्वरूपयथार्थज्ञाने । स्फुरति सम्यग्विद्यमाने सति । यः । विचारः सद्गुरुसच्छास्त्रसम्प्राप्तदेहात्मविवेक-लक्षणः । वर्त्तते । स विचारः । सद्रूपे । तस्मिन्स्वात्मनि । प्रविशत् । अन्यदात्मस्वरूपेतरत् । मायिकं देहेन्द्रियविषयादिकं मायिकभावम् । ग्रसति निवर्त्तयति ॥१२॥

यथेति । यथा । दीपप्रकाशस्था । गोधा गृहगोधिका । सर्वशः सर्वान् । सूक्ष्मजन्तून् । ग्रसति । तथा तद्वदेव । असावात्मनिग्रहकविचारः । सर्वं मायिकवार्तं ग्रसति । इतीत्थम् । निश्चितमेव । जानीत ॥१३॥ अतीति । एवममुना प्रकारेण । अतिशुद्धेन । आत्मना करणेन । भक्तेन कर्त्रा । भवपाशविमोचनी । परमपुरुषे प्रत्यक्षे श्रीहरौ । प्रीतिः । सर्वदा । कार्या ॥ १४ ॥ शुभेति । शुभे रमणीये । अथवा । अशुभेऽरमणीये । महति महामूल्ये । अथवा । अल्पेऽल्पमूल्ये । अखिलेऽपि । पदार्थे मायिकवस्तुनि । हित्वा प्रीतिं त्यक्त्वा । साक्षाद्भगवति प्रत्यक्षपरमेश्वरश्रीहरौ । अतिनिश्चला । प्रीतिः । कार्या ॥ १५ ॥ तां विनेति । तां स्वाभिमतां । प्रीतिम् । विना तु । बाह्यतः । कृतः । यः । गृहादेः । त्यागः । स त्यागः । मोक्षफलाय संसृत्यादिनिवृत्तिपूर्वं ब्रह्मात्मना श्रीहरिसेवाप्राप्तये । न स्यात् । अतोऽतः । स त्यागः । तया प्रीत्या सह । कर्त्तव्यः । गृहादिं त्यक्त्वा केवलं भगवत्येव यथोत्तरवृद्धिमती प्रीतिः कर्त्तव्येत्यर्थः ॥ १६ ॥ हरेरिति । हरेः । सम्बन्धरहिताः ।

यथा दीपप्रकाशस्था गोधा ग्रसति सर्वशः । सूक्ष्मजन्तूंस्तथैवासाविति जानीत निश्चितम् ॥ १३ ॥ अतिशुद्धेनात्मनैवं प्रीतिः परमपूरुषे । भक्तेन सर्वदा कार्या भवपाशविमोचनी ॥ १४ ॥ शुभेऽशुभे वा महति पदार्थेऽल्पेऽपि वाऽखिले । हित्वा साक्षाद्भगवति प्रीतिः कार्याऽतिनिश्चला ॥ १५ ॥ तां विना तु कृतस्त्यागो गृहादेर्बाह्यतस्तु यः । न स मोक्षफलायातः स कर्त्तव्यस्तया सह ॥ १६ ॥ हरेः सम्बन्धरहिताः पदार्था अखिला अपि । रमणीया अरम्या वा भक्तौ विघ्नतया मताः ॥ १७ ॥ न मायिको रम्य एव पदार्थो भक्तिविघ्नकृत् । तुच्छोऽरम्यः पदार्थोऽपि तथाभूतो यदीक्ष्यते ॥ १८ ॥ पूर्वकर्मवशाज्जीवा दृश्यन्ते बहवोऽपि हि । साक्षाद्धरिं विहायैव सज्जन्तस्तुच्छ-वस्तुषु ॥ १९ ॥ तत्र हेतुस्तु भगवन्माहात्म्यानवबोधनम् । माहात्म्यज्ञास्तु नान्यत्र हरेः सज्जन्ति कुत्रचित् ॥ २० ॥ मायिकार्थपरित्यागः कृष्णमाहात्म्यवेदिनाम् । न दुष्करोऽस्ति प्रीतिश्च हरौ तेषां न दुष्करा ॥ २१ ॥

रमणीयाः । अथवा । अरमणीयाः । अखिला अपि । पदार्थाः । भक्तौ भगवति प्रीतिलक्षणायाम् । विघ्नतया । मताः ॥ १७ ॥ नेति । मायिकः । रम्यः । पदार्थ एव । विघ्नकृद्भक्तौ विघ्नकर्त्ता । नास्ति । यद्यतः । तुच्छः । अरम्यः । मायिकः । पदार्थोऽपि । तथाभूतो भक्तिविघ्नकृत् । ईक्ष्यते ॥ १८ ॥ एतदेव स्पष्ट-माह । पूर्वेति । बहवः । जीवाः । साक्षाद्धरिम् । विहाय । पूर्वकर्मवशात् । तुच्छवस्तुष्वपि । सज्जन्तः स्वभावादेवाशक्तिं प्राप्नुवन्तः । दृश्यन्ते । हि ॥ १९ ॥ तत्रेति । तत्र मायिकरमणीयवस्त्वासक्तौ । हेतुस्तु । भगवन्माहात्म्यानवबोधनम् । अस्ति । हरेः । माहात्म्यज्ञास्तु । अन्यत्र हरेरितरस्मिन् । कुत्रचित्कस्मिंश्चिदपि वस्तुनि । न सज्जन्ति ॥ २० ॥ मायिकेति । कृष्णमाहात्म्यवेदिनां भक्तानाम् । मायिकार्थपरित्यागः । दुष्करो दुःसाध्यः । नास्ति । तेषां कृष्णमाहात्म्यवेदिनां भक्तानाम् । हरौ । प्रीतिश्च । दुष्करा दुःसाध्या । नास्ति ॥ २१ ॥

कृष्णेति । यस्मिन् । कृष्णेतरार्थे । प्रीतिः । स्यात् । तं पदार्थम् । यो भक्तः । सद्य एव जह्यात् । तस्य भक्तस्यैव । कमलाधवे रमापतौ श्रीकृष्णे । दृढा । प्रीतिः । भवेत् ॥२२॥ यस्येति । पुरा पूर्वमपि । भुवि । यस्य । यस्य भक्तस्य । हरौ । दृढा । प्रीतिः । आसीत् । स स भक्तः । तत्र प्रीतौ । विघ्नकारिणम् । पदार्थम् । सद्य एव । जहौ ॥ २३ ॥ एतदेव सदाचारेण द्रढयति द्वाभ्याम् । चित्रकेतुरिति । चित्रकेतुः । नृपः । भगवति । भक्तिम् । कुर्वन् सन् । तत्र भक्तौ । प्रत्युहकारिणी-र्विघ्नकर्त्रीः । सराज्या सार्वभौमराज्यसहिताः । लक्षशः कोटिपरिमिता इत्यर्थः । योषाः । जहौ ॥ २४ ॥ स्त्रीति । स्त्रीसुखम् । राज्यसौख्यम् । इन्द्रपदादिजम् । सुखं च । कृष्णसौख्याग्रतः । अत्यन्तम् । तुच्छम् । अस्ति । इतीत्थम् । स चित्रकेतुर्नृपः । अवैत् ज्ञातवान् । हि ॥ २५ ॥ एवमिति । एवममुना प्रकारेण । सौख्यनिधिम् । कृष्णम् । हित्वा । अन्यत्र तदितरतुच्छपदार्थे । यो भक्तः । प्रीतिम् करोति । तथाविधे साक्षात्कृष्णे तु न करोति । स भक्तः । उपांशु रहसि । अस्थि-दंशकः स्वमुखास्रगास्वादसुखेन शुष्कास्थ्नो दन्तैर्दशकः । श्वा श्वान इव । तुच्छधीः । ज्ञेयः ॥ २६ ॥ भक्तेति । भक्ताख्यस्य भक्तनाम्नोऽपि । यस्य जनस्य । कृष्णकार्ष्णा-

कृष्णेतरार्थे यस्मिन् स्यात्प्रीतिस्तं सद्य एव यः । जह्याद्दृढा भवेत्प्रीतिस्तस्यैव कमलाधवे ॥ २२ ॥ यस्य यस्य हरौ प्रीतिः पुरा-ऽप्यासीद्दृढा भुवि । स स सद्यो जहौ तत्र पदार्थं विघ्नकारिणम् ॥ २३ ॥ चित्रकेतुर्नृपो योषाः सराज्या लक्षशो जहौ । भक्तिं कुर्वन्भगवति तत्र प्रत्यूहकारिणीः ॥ २४ ॥ स्त्रीसुखं राज्यसौख्यं च सुखमिन्द्रपदादिजम् । कृष्णसौख्याग्रतोऽत्यन्तं तुच्छमस्तीति स ह्यवैत् ॥ २५ ॥ एवं सौख्यनिधिं कृष्णं हित्वाऽन्यत्र करोति यः । प्रीतिं स तुच्छधीर्ज्ञेयः श्वेवोपांश्वस्थिदंशकः ॥ २६ ॥ भक्ताख्य-स्यापि यस्य स्यात् कृष्णकार्ष्णान्यवस्तुनि । प्रीतिः स तु बुधैरुक्तो बकमार्जारसन्निभः ॥२७॥ दृढभक्तस्तु न क्वापि प्रीयतेऽन्यत्र वै हरेः । स्वसङ्गिनोऽपि कुरुते स्वोपमान् कृष्णवार्त्तया ॥२८॥ वार्त्तां साक्षाद्धरेः कुर्वन् दुष्टेभ्यो न बिभेति सः । रणरङ्गे शूर इव प्रतिपक्षाततायिनः ॥२९॥ कृष्णस्याहं न कुर्यां चेत्सम्यग्वार्त्तां तदा मम । तज्ज्ञानं निष्फलं स्याद्वै ज्ञात्वेति स करोति ताम् ॥३०॥

न्यवस्तुनि । प्रीतिः । स्यात् । स भक्तजनस्तु । बुधैर्भगवदेकान्तिकसाधुभिः । बकमार्जारसन्निभः । उक्तः ॥ २७ ॥ दृढेति । हरेः । दृढभक्त एकान्तिकभक्तस्तु । अन्यत्र हरीतरस्मिन् । क्वापि कस्मिंश्चिदपि पदार्थे । न प्रीयते प्रीतियुक्तो न जायते । स्वसङ्गिनः स्वप्रसङ्गं कुर्वतोऽन्यभक्तानपि । कृष्णवार्त्तया भगवन्माहात्म्ययुक्तैका-न्तिकधर्मवार्त्तया । स्वोपमान्स्वसमानान् । कुरुते । वै ॥ २८ ॥ वार्त्तामिति । स एकान्तिकभक्तः । साक्षात् । हरेः । वार्त्ताम् । कुर्वन्सन् । शूरः । रणरङ्गे रणभूमौ । प्रतिपक्षाततायिनः स्वहननोद्यतवैरिभ्यः सकाशादिव । दुष्टेभ्यो भगवद्विमुखदुर्जनेभ्यः । न बिभेति ॥ २९ ॥ कृष्णस्येति । चेद्यदि । अहम् । कृष्णस्य । वार्त्ताम् । सम्यक् । न कुर्याम् । तदा । मम । तज्ज्ञानं भगवदेकान्तिकधर्मज्ञानम् । निष्फलम् । स्यात् । वै । रणरङ्गानुपयोगिशूरस्य शौर्यमिव पात्राप्रतिपादितं धनिनो धनमिव मम तद्व्यर्थमेव भवेदित्यर्थः । इतीत्थम् । ज्ञात्वा । स एकान्तिकभक्तः । तां कृष्णवार्त्ताम् । करोति ॥ ३० ॥

स इति । इत्यमुना प्रकारेण । उक्त्वा । स श्रीहरिः । एतदर्थानि स्वोक्तार्थप्रतिपादकानि । तुलसीदासभक्तस्य । त्रीणि । पद्यानि । संसदि स्वभक्तसभायाम् । साधुभिः । गापयामास ॥३१॥ तत इति । ततः सद्गीततत्पद्यश्रवणानन्तरम् । श्रीहरिः । आह । हे साधवः ! । अत्र सत्सङ्गे । मदाश्रितैः । सर्वैर्भवद्भिः । एवमेतत्पद्योक्तप्रकारेणैव । वर्त्तितव्यम् । कृष्णसम्बन्धहीने । कुत्रचित् कस्मिंश्चिदपि । अर्थे पदार्थे । प्रीतिः । न कार्या ॥३२॥ अपक्वस्येति । हरौ । प्रीतिम् । विदधतः । अपक्वस्यादृढसञ्जातप्रीतेरपि । भक्तस्य । तस्य हरेः । प्रतापादेव । दुर्गतिर्देहपतनानन्तरभाव्या नरकादिप्राप्तिरूपा कुगतिः । सर्वथा । नास्ति । वै ॥३३॥ देवत्वमिति । सोऽपक्वभक्तः । देवत्वम् । अथवा । नृपत्वम् । अथवा । नृषु । धनित्वम् । आप्य । साक्षाद्धरिं प्रत्यक्षपरमेश्वरम् । उपास्यैकान्तिकभक्त्या संसेव्य । असौ भक्तः । ध्रुवं निश्चितमेव । तत्पदं श्रीहरेरक्षरधाम । यास्यति ॥ ३४ ॥ निशम्येति । इत्येवंविधम् । तस्य श्रीहरेः । सुधोपमानम् । वचनम् । निशम्य । सदोनिषण्णाः । तदीयाः । सर्वेऽपि

स इत्युक्त्वैतदर्थानि त्रीणि पद्यानि साधुभिः । तुलसीदासभक्तस्य गापयामास संसदि ॥ ३१ ॥ ततश्चाहैवमेवात्र वर्त्तितव्यं मदाश्रितैः । कृष्णसम्बन्धहीनेऽर्थे प्रीतिः कार्या न कुत्रचित् ॥ ३२ ॥ अपक्वस्यापि भक्तस्य प्रीतिं विदधतो हरौ । सर्वथा दुर्गतिर्नास्ति प्रतापादेव तस्य वै ॥ ३३ ॥ देवत्वं वा नृपत्वं वा धनित्वं नृषु वाऽऽप्य सः । साक्षाद्धरिमुपास्यासौ तत्पदं यास्यति ध्रुवम् ॥ ३४ ॥ निशम्य तस्येति सदो निषण्णाः सुधोपमानं वचनं तदीयाः । सर्वेऽपि ते साधुजनास्तथाऽन्ये भक्ता गृहस्था अपि तोषमीयुः ॥ ३५ ॥

इति श्रीहरिवाक्यसुधासिंधौ शतानन्दमुनिविरचिते शताधिकनवतितमस्तरङ्गः ॥ १९० ॥ ५७ ॥

शकाब्दे विक्रमार्कस्य चन्द्राष्टवसुभूमिते । चतुर्थ्यां नभसः शुक्ले वचोऽमृतमिदं हरेः ॥ १ ॥
तत्र दुर्गपुरे दुर्ग उत्तमस्य स वेश्मनः । वेद्यां प्राचीनवक्त्रस्य महासन उपाविशत् ॥ २ ॥

। ते साधुजनाः । तथा । अन्ये । गृहस्थाः । भक्ताश्चापि । तोषम् । ईयुः ॥३५॥ ब्रह्मात्मना स्वभक्तानां स्वस्मिन् प्रीतेर्विधानकम् । दर्शितं येन स श्रीहरिः स्वस्मिन्मह्यं ददातु ताम् ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्सुनुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां शताधिकनवतितमस्तरङ्गः ॥ १९० ॥ ५७ ॥

स्वसम्प्रदायसम्पृष्टैः सम्प्रोक्तं साधनद्वयम् । अष्टपञ्चाशत्तमे तु हरिणा स्वसतः प्रति ॥१॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८८१) नभसः श्रावणमासस्य । शुक्ले शुक्लपक्षे । चतुर्थ्यां तिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमस्य राज्ञः । दुर्गे । प्राचीनवक्त्रस्य पूर्वमुखस्य । वेश्मनस्तस्यैवभवनस्य । वेद्यां बाह्यवितर्द्यौ । महासने श्वेतोत्तरछदपार्श्विकयुतपर्यङ्कासने । स श्रीहरिः । उपाविशत् ॥ २ ॥

मुनिभिरिति । मुनिभिस्त्यागिभिः । गृहस्थैश्च । स्वभक्तैर्नानादेशागतस्वाश्रितजनैः । परितः । वृतः सभायां संवेष्टितः । सितवासाः परिहितसकलश्वेतवसनः । स श्रीहरिः । स्वपुरतः स्वाग्रप्रदेशे । निषण्णान् । सतो मुक्तानन्दादिसाधून् । अब्रवीत् ॥३॥ आचार्य इति । हे साधवः ! । प्राक् पूर्वम् । सम्प्रदायप्रवर्त्तकः । यः । यः । आचार्यः । आसीत् । तस्य । तस्याचार्यस्य । सम्प्रदायस्य । पोषणं बहुकालप्रवृत्तिबहुजनाश्रयणलक्षणा पुष्टिः । केनोपायेन । अभवत् । तद्वदतेति शेषः ॥४॥ यथेति । अथैवं विधश्रीहरिप्रश्नश्रवणानन्तरम् । सदुत्तमाः साधुश्रेष्ठाः । ते मुक्तानन्दादयः सन्तः । यथामति । तस्मै श्रीहरये । उत्तरम् । ददुः । अथापि । तदुत्तरम् । सम्यक् । जातम् । इतीत्थम् । स श्रीहरिः । आत्मनि । नामन्यत ॥५॥ तत इति । ततोहेतोः । धार्मिर्धर्मपुत्रः । स्वयं श्रीहरिरेव । सम्यक् तदुत्तरं स्वकृतप्रश्नोत्तरम् । तान्साधून् । आह । हे साधवः ! । सम्प्रदायस्य । पुष्टेः । साधनम् । वो युष्मभ्यम् । तत्त्वतो यथार्थतः । ब्रुवे ॥ ६ ॥ सम्प्रदाय इति । यत्र यस्मिन् । सम्प्रदाये । यः । स्वेष्टदेवः । मतः । भवेत् । तत्सम्बन्धीष्टदेवगुणचरित्रवर्णनप्रधानतावान् । यः । ग्रन्थः । भवेत् । स ग्रन्थः । तं सम्प्रदायम् । ध्रुवं निश्चितमेव । पोषयेत् ।

मुनिभिश्च गृहस्थैः स स्वभक्तैः परितो वृतः । सितवासाः स्वपुरतो निषण्णानब्रवीत्सतः ॥ ३ ॥ आचार्यो यो य आसीत्प्राक् सम्प्रदायप्रवर्त्तकः । तस्य तस्याभवत् केन सम्प्रदायस्य पोषणम् ॥ ४ ॥ यथामत्युत्तरं तेऽथ ददुस्तस्मै सदुत्तमाः । सोऽथापि सम्यग्जातं तदिति नामन्यतात्मनि ॥ ५ ॥ ततस्तान्स्वयमेवाह धार्मिः सम्यक्तदुत्तरम् । सम्प्रदायस्य पुष्टेर्वः साधनं तत्त्वतो ब्रुवे ॥६॥ सम्प्रदाये यत्र यस्तु स्वेष्टदेवो मतो भवेत् । तत्सम्बन्धी भवेद्ग्रन्थो यः । स तं पोषयेद् ध्रुवम् ॥ ७ ॥ तत्र हि स्याज्जन्महेतुस्तस्य तच्चरितानि च । आविर्भावात्तिरोभावावधि सर्वाण्यनुक्रमात् ॥ ८ ॥ धर्मस्तु सहजस्तिष्ठेत्तदीयचरितेषु च । धर्मस्यैव प्रवृत्त्यर्थं तस्य जन्मास्ति यद्भुवि ॥ ९ ॥ आसन् पुरा य आचार्याः सम्प्रदायप्रवर्त्तकाः । तत्सम्प्रदायपुष्टिश्च तद्ग्रन्थैरेव वर्त्तते ॥ १० ॥ सम्प्रदायं यथा स्वेष्टदेवग्रन्थः प्रपोषयेत् । अन्यग्रन्थस्तथा नैव वेदादिरपि निश्चितम् ॥ ११ ॥

श्रीवैष्णवानां प्रपन्नामृतं वल्लभीयादीनां वल्लभविजयादिग्रन्थ इवेति भावः ॥ ७ ॥ एतदेव विस्तरेण स्पष्टमाह चतुर्भिः । तत्रेति । तत्र स्वेष्टदेवग्रन्थे । तस्य स्वेष्टदेवस्य । जन्महेतुः प्रादुर्भावकारणम् । स्यात् । आविर्भावात्तत्प्रादुर्भावमारभ्य तिरोभावावधि तदन्तर्धानपर्यन्तम् । अनुक्रमात् । सर्वाणि । तच्चरितानि च । स्युः ॥ ८ ॥ धर्म इति । तदीयचरितेषु । धर्मस्तु । सहजः स्वाभाविक एव । तिष्ठेत् । यद्यतो हेतोः । भुवि । धर्मस्य । प्रवृत्त्यर्थमेव । तस्य स्वेष्टदेवस्य । जन्म अस्ति ॥ ९ ॥ आसन्निति । पुरा । सम्प्रदायप्रवर्त्तकाः । ये । आचार्याः । आसन् । तत्सम्प्रदायपुष्टिः । तद्ग्रन्थैरेव । वर्त्तते ॥ १० ॥ सम्प्रदायमिति । यथा । स्वेष्टदेवग्रन्थः । सम्प्रदायम् । प्रपोषयेत् । तथा । वेदादिरपि । अन्यग्रन्थः । नैव प्रपोषयेत् । इति । निश्चितमेवास्ति । अस्योक्तार्थस्यायं गूढोऽभिप्रायः । येऽस्मत्सम्प्रदाये श्रीकृष्ण इष्टदेवत्वेन मतः स श्रीकृष्णोऽहमेवासीत्यतो भवतां मय्येव परमार्थदृष्टीसत्त्वान्मदाश्रितानां भवतां मत्स्वरूपगुणचरित्रवर्णनप्रधानग्रन्थ एव परिशीलनार्होऽस्तीति ॥ ११ ॥

इतीति । इत्यमुना प्रकारेण । एकम् । साधनम् । प्रोक्तम् । अन्यद्द्वितीयमपि । तत्साधनम् । अस्ति । ब्रुवे तत्कथयामि । हे सन्तः ! । तत्स्थानां सम्प्रदायाश्रयिणां त्यागिगृहिजनानाम् । अञ्जसा तत्त्वतः । धर्मसहितभक्त्याचरणम् । यथार्थतया स्वधर्मे स्थित्वा भगवतो नवधा भक्तिविधानमित्यर्थः । द्वितीयं साधनं ज्ञेयम् । अस्यायं भावः । ये ये सम्प्रदाये प्रवृत्तिकाले धर्मयुग्भक्तिमन्त आचार्यतच्छिष्या अभूवंस्तान् दृष्ट्वाऽन्येऽप्याश्रयिणस्तथाऽभवन्नतोऽग्रे तथाविधत्वप्रवर्त्तमानकालीनैस्तैरवश्यं सधर्मभक्त्याचरणं कार्यं तत्फलमग्रे तथात्वसिद्धिर्भगवत्प्रसन्नता चेति ॥ १२ ॥ इतीति । इत्येवंविधाभ्याम् । एताभ्यां द्वाभ्याम् । साधनाभ्याम् । सम्प्रदायस्य पोषणम् । भवति जायते । अन्यथैतद्द्वयाभावे तु । अत्र लोके । कस्यचिदपि सम्प्रदायस्य पोषणं न भवति । इतीत्थम् । अवगम्यताम् ॥ १३ ॥ अत इति । अतोहेतोः । अत्र लोके । अस्मत्सम्प्रदायेऽपि । ये । यूयम् । महान्तः । साधवः । स्थ भवथ । तैरपि । प्रीत्या । एतत् । द्वयम् । प्रवर्त्त्यताम् ॥ १४ ॥ तेनेति । तेनैतद्द्वयप्रवर्त्तनेन । सम्प्रदायस्य । सम्यक् । पुष्टिः । भविष्यति । इत्येवंविधा । मे मम । आज्ञा । भवद्भिः । सद्भिः । आदरात् । पालनीया ॥१५॥ इतीति । इत्येवंविधम् ।

इत्येकं साधनं प्रोक्तमन्यदप्यस्ति तद्ब्रुवे । तत्स्थानां धर्मसहितभक्त्याचरणमञ्जसा ॥१२॥ इत्येताभ्यां साधनाभ्यां सम्प्रदायस्य पोषणम् । भवतीत्यवगन्तव्यं नान्यथा त्वत्र कस्यचित् ॥ १३ ॥ अतोऽस्मत्सम्प्रदायेऽपि ये महान्तोऽत्र साधवः । यूयं स्थ तैरपि प्रीत्या द्वयमेतत्प्रवर्त्यताम् ॥ १४ ॥ तेनैव सम्प्रदायस्य सम्यक् पुष्टिर्भविष्यति । इत्याज्ञा पालनीया मे भवद्भिः सद्भिरादरात् ॥१५॥ इत्याज्ञा वचनं तस्य सन्तः शास्त्रार्थपारगाः । मुक्तानन्दादयः श्रुत्वा ते तच्च शिरसा दधुः ॥ १६ ॥ कृष्णस्य तस्येत्यमृतायमानं वचो निशम्याखिलसाधुसङ्घाः । सभोपविष्टा इतरे च भक्तास्तस्य प्रतोषं हृदयेऽलम्भन्त ॥ १७ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते शताधिकैकनवतितमस्तरङ्गः ॥ १९१ ॥ ५८ ॥

शकाब्दे विक्रमार्कस्य चन्द्राष्टवसुभूमिते । द्वादश्यां नभसः शुक्ले वचोऽमृतमिदं हरेः ॥ १ ॥

तस्य श्रीहरेः । आज्ञावचनम् । शास्त्रार्थपारगाः । मुक्तानन्दादयः । ते । सन्तः । श्रुत्वा । तच्छ्रीहरेराज्ञावचनम् । शिरसा । दधुः ॥१६॥ कृष्णस्येति । इत्येवंविधम् । कृष्णस्य । तस्य श्रीहरेः । अमृतायमानममृतसदृशम् । वचः । निशम्य । सभोपविष्टाः । तस्य श्रीहरेः । भक्ताः । अखिलसाधुसङ्घाः । इतरे तदन्ये गृहस्थाश्च । हृदये स्वस्वमानसे । प्रतोषम् । अलभन्त ॥ १७ ॥ पुष्टः स्वसम्प्रदायस्य येनोक्तं साधनद्वयम् । स श्रीहरिस्तद्द्वयं मे तस्य पुष्ट्यै ददातु वै ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्स्नुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां शताधिकैकनवतितमस्तरङ्गः ॥ १९१ ॥ ५८ ॥

कृष्णतद्भक्तमाहात्म्यं कार्या प्रीतिश्च तेषु या । सहेतुकैकोनषष्टितमे सङ्कीर्त्तिता ततः ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८८१) नभसः श्रावणमासस्य । शुक्ले शुक्लपक्षे । द्वादश्यां तिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥

तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमस्य । भूपतेः । दुर्गे । श्रीवासुदेवालयस्य । वितर्दौ वाह्यवेदिकायाम् । मञ्चके स्वास्तृतपर्यङ्कासने । स श्रीहरिः । आस्ते स्मोपाविशत् ॥ २ ॥ वृत इति । बहुभिर्नानादेशागतत्वादनेकैः । स्वभक्तैस्त्यागिभिर्गृहिभिश्च स्वाश्रितजनैः । वृतः सभायां परिवेष्टितः । प्रागास्यः पूर्वदिगभिमुखमुखपद्मः । सितांशुकः परिहितसकलश्वेतवसनः । सतांपतिः । स श्रीहरिः । पुरःस्थान् । साधून् । स्वयमेव । अब्रवीत् ॥ ३ ॥ वेदेष्विति । हे सन्तः ! । वेदेषु । सर्वेऽपि । पुराणेषु । भारते च । नृणाम् । श्रेयस्कराः । कृष्णः प्रत्यक्षपरमेश्वरः श्रीहरिः । तच्छ्रिताः कृष्णैकाश्रयाः । सन्तश्च । प्रोक्ताः ॥ ४ ॥ ते कृष्णतच्छ्रितसाधव एव । ब्रह्मरुद्रादिदेवेभ्योऽपि । अधिकाः । मताः । अतोहेतोः । तत्प्राप्तिः कृष्णतदाश्रितसाधूपलब्धिरेव । बुद्धैर्विवेकिभिर्व्यासादिमुनिभिः । परं केवला । श्रेयस्करी । उक्ता ॥ ५ ॥ बह्विति । तत्सेवाप्तिः पूर्वोक्ता तत्सेवोपलब्धिः । बहुपुण्यवतामनेकजन्मोपार्जितसुकृतवतां जनानामेव । जायते ।

तत्र दुर्गपुरे दुर्गे उत्तमस्य स भूपतेः । वितर्द्दौ श्रीवासुदेवालयस्यास्ते स्म मञ्चके ॥ २ ॥ वृतः स्वभक्तैर्बहुभिः प्रागास्यश्च सितांशुकः । स्वयमेवाब्रवीत्साधून्पुरःस्थान्स सतां पतिः ॥ ३ ॥ वेदेषु च पुराणेषु सर्वेष्वपि च भारते । नृणां श्रेयस्कराः प्रोक्ताः कृष्णः सन्तश्च तच्छ्रिताः ॥ ४ ॥ त एव ब्रह्मरुद्रादिदेवेभ्योऽप्यधिका मताः । अतस्तत्प्राप्तिरेवोक्ता परं श्रेयस्करी बुधैः ॥ ५ ॥ बहुपुण्यवतामेव तत्सेवाप्तिश्च जायते । अतः सर्वाधिका प्रीतिस्तेषु कार्या मुमुक्षुभिः ॥ ६ ॥ यथा स्त्रीपुत्रवित्तादौ स्नेहः स्याद्गृहिणां नृणाम् । तथैव तेषु कर्त्तव्यस्तेषां ग्राह्यो न चागुणः ॥ ७ ॥ सदोषेष्वपि गृह्णन्ति गुणानेव सुतादिषु । यथा ते तेष्वपि तथा ग्रहीतव्या गुणाः सदा ॥ ८ ॥ सच्चिदानन्दरूपो हि कृष्णो नृषु निजेच्छया । नृनाट्यं कुरुते तस्मिन्न तु दोषोऽस्ति कश्चन ॥ ९ ॥ सन्तो गुणाकरा एव यतस्ते सद्गुणाम्बुधिम् । श्रीकृष्णं सर्वथैवैकं संश्रिताः सन्ति वै दृढम् ॥ १० ॥

अतोहेतोः । मुमुक्षुभिर्भक्तैः । तेषु कृष्णतच्छ्रितसाधुषु । सर्वाधिका । प्रीतिः । कार्या ॥ ६ ॥ यथेति । यथा । गृहिणां गृहस्थाश्रमिणाम् । नृणां जनानाम् । स्त्रीपुत्रवित्तादौ । स्नेहः । स्यात् । तथैव । तेषु कृष्णतच्छ्रितसाधुषु । स्नेहः । कर्त्तव्यः । तेषाम् । अगुणो दोषः । न च नैव ग्राह्यः ॥ ७ ॥ सदोषेष्विति । तथा । ते गृहिजनाः । सदोषेष्वपि । सुतादिषु स्वसम्बन्धिषु । गुणानेव । गृह्णन्ति । न तु दोषान् । तथा । तेषु कृष्णे तत्सत्सु चापि । सदा । गुणा एव । ग्रहीतव्याः । न दोषाः ॥ ८ ॥ एषु गुणग्रहणे दोषानुपादाने च हेतुत्वेनोक्त्यै तेषां सदा गुणवत्तामाह द्वाभ्याम् । सदिति । सच्चिदानन्दरूपो मिथ्याजडदुःखात्मकमायागुणवर्जितसनातनदिव्यमूर्त्तिः । कृष्णः श्रीहरिः । निजेच्छया स्वभक्तसुखप्रदानादिस्वसङ्कल्पेन । नृषु वर्त्तमानः सन् । नृनाट्यं नरानुकरणम् । कुरुते । तस्मिंस्तथाविधे कृष्णे । कश्चन कोऽपि । दोषः । न तु नैवास्ति । अयमेव तद्गुणग्रहणदोषाग्रहणहेतुरित्यर्थः ॥९॥ सन्त इति । सन्तः साक्षात्कृष्णाश्रिताः साधवः । गुणाकरा एव । सन्ति । यतो-

हेतोः । ते सन्तः । सद्गुणाम्बुद्धिं सत्यशौचाद्यनपायिशुभगुणजलधिम् । एकम् । श्रीकृष्णमेव । सर्वथा कायवाङ्मनोभिः । दृढं यथातथा । संश्रिताः । सन्ति । वै । अयमेव तेषां गुणग्रहणदोषानुपादानहेतुरित्यर्थः ॥ १० ॥ अत इति । अत एतेषां सर्वदा निर्दोषत्वाद्धेतोः । तैः कृष्णेन तत्साधुभिश्च । स्वहिताय । क्वचित् । उदितम् । अप्रियम् । वाक्यम् । श्रुत्वा । यो भक्तः । तेषु । अमर्षी क्रोधावेशाभेद्यग्रन्थिमान् । स्यात् । स भक्तः । श्रेयः । पथात्स्वकल्याणमार्गात् । च्युतो भ्रष्टः । ज्ञेयः । हि ॥ ११ ॥ एवमिति । किञ्च । कृष्णस्य । सतां तत्साधूनां च । प्राप्तौ । स्वस्य । अप्रयासतः । जातायां सत्यामपि । यो भक्तः । श्रेयसि स्वकल्याणे । संदिग्धिः सन्देहयुक्तः । स्यात् । मूढधीरविवेकमतिः । स भक्तोऽपि । एवं कल्याणमार्गाच्च्युततुल्यो ज्ञेयः ॥ १२ ॥ सन्देह इति । संसारासक्तचेतसः । अस्य मूढधियो भक्तस्य । सन्देहकारणं स्वनिःश्रेयससंशयहेतुस्तु । अस्य । अस्मिन्वर्तमाने । जनुषि जन्मन्येव । सा कृष्णतत्सत्प्राप्तिस्तत्सेवा च । जाताऽस्ति । तयोः कृष्णतत्सत्प्राप्तिसेवयोः । अभ्यसनं पूर्वजन्मकृताभ्यासः । नास्ति । इत्येतदेव । ज्ञेयम् । तेष्वमर्षाभेद्यग्रन्थिमतोऽप्येवमेव बोध्यम् ॥ १३ ॥ येषामिति । येषां

अतस्तैरुदितं वाक्यं स्वहितायाप्रियं क्वचित् । यः श्रुत्वा तेष्वमर्षी स्याच्च्युतः श्रेयः पथाद्धि सः ॥ ११ ॥
एवं कृष्णस्य च सतां प्राप्तौ स्वस्याप्रयासतः । जातायामपि सन्दिग्धः श्रेयसि स्यात्स मूढधीः ॥ १२ ॥
सन्देहकारणं त्वस्य संसारासक्तचेतसः । जाताऽस्मिन्नेव जनुषि सा नेत्यभ्यसनं तयोः ॥ १३ ॥
येषां प्राग्जन्मनि हरितत्साधुप्राप्तिसेवने । जाते स्यातां ते तु तेषु स्युर्वै गाढानुरागिणः ॥ १४ ॥
विक्षेपहेतवो न स्युः सङ्कल्पा मानसा अपि । तेषां कृष्णैकचित्तानां गोपीनामिव कर्हिचित् ॥ १५ ॥
साम्प्रतं तादृशा भक्ता भवन्त्यत्रापि केचन । भालचन्द्रः काशिदासो नाथो वेणीभयादयः ॥ १६ ॥

भक्तानाम् । प्राग्जन्मनि । हरितत्साधुप्राप्तिसेवने । जाते । स्याताम् । ते भक्तास्तु । तेषु हरितत्साधुषु । गाढानुरागिणः । स्युः । वै ॥ १४ ॥ विक्षेपेति । गोपीनां व्रजाङ्गनानामिव । कृष्णैकचेतसाम् । तेषां भक्तानाम् । विक्षेपहेतवः स्वकृतहरितच्छ्रितगाढानुरागादिविघ्नकारणानि । मानसाः । सङ्कल्पा अपि । न स्युः ॥ १५ ॥ साम्प्रतमिति । अत्र सत्सङ्गे । साम्प्रतमपि । केचन । तादृशा उक्तविधाः । भक्ताः । भवन्ति । तान्नाम्ना निर्दिशति । भालचन्द्रः सूर्यपुरवासी वणिग्ज्ञातीयो भक्तः । काशिदासश्चरोत्तरदेशीयव्युचासनग्रामवासी वैश्यजातीयो भक्तः । नाथः कणभयग्रामवासी नाथजित्संज्ञो वैश्यज्ञातीय भक्तः । वेणीभयोऽश्लील-ग्रामवासी वैश्यभक्त आदिर्येषां विष्णुदास हिमराज दामोदरादीनां ते । तत्र विष्णुदासो दर्भावतीपुरीयो वैश्यभक्तः । हिमराजः सुन्दरायनग्रामीणो वणिग्भक्तः । दामोदरः श्रीनगरवासी वैश्यजातीय भक्तः ॥ १६ ॥

प्रकरणार्थं निगमयत्यर्द्धेन । य इति । ये भक्ताः । कृष्ण तत्साधुदृढानुरागाः । स्युः । ते भक्ता एव । प्राग्जन्मसंस्कारिणः पूर्वजन्मनि कृष्णतत्सत्प्राप्तिसेवनलक्षणसंस्कारवन्तः । ज्ञेयाः । हि । यद्यपि ये भक्ता अस्मिन्नेव जन्मनि कृष्णतत्साधुसङ्गिन सन्तः पूर्वसंस्कारवद्भक्तलक्षणयुक्ता न भवन्ति तेऽपि पूर्वसंस्कारवतां भक्तानां प्रसङ्गेन तथाविधा भविष्यन्त्येवेति च वोध्यम् । इत्येवंविधम् । प्रभोः । तस्य श्रीहरेः । वचोऽमृतम् । निपीय । समस्ताः । ते त्यागिनो गृहिणश्च । भक्ताः । तुतुषुः ॥ १७ ॥ माहात्म्यसहितं स्वस्मिन् स्वभक्तेषु च साधुषु । स्वैः कार्यां प्राह यः प्रीतिं स हरिस्तां ददातु मे ॥१॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्यैकान्तिकोपासकश्रीहरिकृष्णभगवत्स्वनुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां शताधिकद्विनवतितमस्तरङ्गः ॥ १९२ ॥ ५९ ॥

विक्षेपानां हरेर्भक्तौ बाधो येन विचारतः । न भवेद्धरिभक्तानां माहात्म्यं चास्ति यन्महत् ॥ १ ॥ वर्त्तितव्यं यथा तेषु हरिभक्तैस्तु सर्वथा । एतत्सर्वं षष्टितमे सम्प्रोक्तं तत्त्वतस्ततः ॥ २ ॥ शकेति । शकेति पूर्वार्द्धे व्याख्यातम् । (१८८१) नभसः श्रावणमासस्य । कृष्णपक्षे । चतुर्थ्यां तिथौ । इदम् । हरेः । वचोऽमृतम् ।

ये कृष्णतत्साधुदृढोनुरागाः प्राग्जन्मसंस्कारिण एव ते हि । इति प्रभोस्तस्य वचोऽमृतं ते निपीय भक्तास्तुतुषु समस्ताः ॥ १७ ॥

इति श्रीहरिवाक्यसुधासिंधौ शतानन्दमुनिविरचिते शताधिकद्विनवतितमस्तरङ्गः ॥ १९२ ॥ ५९ ॥

शकाब्दे विक्रमार्कस्य चन्द्राष्टवसुभूमिते । चतुर्थ्यां नभस कृष्णे वचोऽमृतमिदं हरेः ॥ १ ॥
तत्र दुर्गपुरे दुर्ग उत्तमस्य स वेश्मनः । वितर्द्दौ प्रत्यगास्य सुमञ्चक उपाविशत् ॥ २ ॥
सितवासा वृतो भक्तैस्त्यागिभिर्गृहिभिश्च स । स्वाग्रोपविष्टान्सदसि प्रश्नाय प्रैरयत्सतः ॥ ३ ॥
पप्रच्छ मुक्तानन्दस्तं प्रणम्य भगवन्निह । यथाशक्ति भजन्ति त्वां भक्ताः कृष्णमतन्द्रिताः ॥ ४ ॥
तेषां क्वचन विक्षेपः कालगत्याऽऽपतेद्यदि । तदा किदृग्विचारेण तद्बाधो न भवेद्धृदि ॥ ५ ॥

अभूत ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमस्य राज्ञः । दुर्गे । प्रत्यगास्यस्य पश्चिमद्वारस्य । वेश्मनस्तस्यैव गृहस्य । वितर्द्दौ पूर्वास्यवेदिकायाम् । सुमञ्चके स्वास्तृते पर्यङ्कासने । स श्रीहरिः । उपाविशत् ॥ २ ॥ सितेति । सितवासाः परिधृतसकलश्वेतवसनः । त्यागिभिः । गृहिभिश्च । भक्तैर्नानादेशागतैः स्वाश्रितजनैः । वृतः सभायां परिवेष्टितः । स श्रीहरिः । सदसि । स्वाग्रोपविष्टान् । सतो मुक्तानन्दादिसाधून् । प्रश्नाय प्रश्नं कर्त्तुम् । प्रैरयत् ॥ ३ ॥ पप्रच्छेति । तं प्रश्नाय प्रेरयन्तं श्रीहरिम् । प्रणम्य । मुक्तानन्दोमुनिः । पप्रच्छ । हे भगवन् ! । इह सत्सङ्गे । भक्ता त्वदेकाश्रया भक्तजनाः । अतन्द्रिताः । कृष्णमक्षरधामाधिपतिं पुरुषोत्तमम् । त्वाम् । यथाशक्ति भजन्ति ॥ ४ ॥ तेषामिति । तेषां भक्तानाम् । यदि । क्वचन कदाचित् । कालगत्या । विक्षेपो भगवत्तस्तव भक्त्यन्तरायकृदाध्यात्मादित्रिविधोपद्रवः । आपतेत् । तदा । कीदृग्विचारेण । हृदि मानसे । तद्बाधो विक्षेपपीडा । न भवेत् ॥ ५ ॥

'इत्थं स मुक्तानन्देन पृष्टः कृष्णोऽब्रवीदिति । आनन्दयन्मुनिं तं च स्वभक्तानपरानपि' । देहेति । देहभिन्नात्मरूपस्य स्वदेहत्रयतः पृथग्भूततज्ज्ञात्मस्वरूपस्य । सर्वदा । अनुसन्धानेन सर्वकालंविचाराचरणेनेत्यर्थः । मायिकानाम् । पदार्थानाम् । क्षयित्वावगमेन नश्वरत्वाववोधेन च ॥ ६ ॥ कालेति । कालकर्मेशितुः कालकर्मणोर्नियन्तुः । विष्णोः श्रीहरेः । महत्तावेदनेन माहात्म्यज्ञानेन च । व्यवहारिकविक्षेपाः । मानसं भक्तजनहृदयम् । नैव बाधन्ते । इतिद्वयोरेकसम्बन्धः ॥ ७ ॥ अनेकेति । अनेककोटिब्रह्माण्डाधीश्वरस्य । रमापतेः श्रीकृष्णस्य । दासमेकान्तिकसेवकम् । माम् । तस्य श्रीहरेः । आज्ञाम् । विना । बाधितुं पीडयितुम् । लोके । कः । क्षमः समर्थः । अस्ति । न कोऽपीत्यर्थः । इतीत्युत्तरेणसम्बन्धः ॥ ८ ॥ इतीति । इतीत्थम् । ज्ञात्वा । इह लोके । यत् । सुखम् । दुःखम् । प्राप्येत । तत्तु । कृष्णेच्छोपनतं श्रीहरीच्छासम्प्राप्तम् । भवति । इति । ज्ञात्वा । चिन्ता । सर्वथा । न कार्या ॥ ९ ॥ एतदेव स्वभक्तशिक्षार्थं स्वोद्देशेन स विशेषमाह पञ्चभिः । मयेति । मयाऽपि । एवमुक्तप्रकारेण । हृदि स्वमानसे । सुदृढः । निश्चयः । कृतः । अस्त्येव । अतोहेतोः । अत्र लोके ।

**श्रीहरिरुवाच–देहभिन्नात्मरूपस्यानुसन्धानेन सर्वदा । मायिकानां पदार्थानां क्षयित्वावगमेन च ॥ ६ ॥ कालकर्मेशितुर्विष्णोर्महत्तावेदनेन च । व्यवहारिकविक्षेपा बाधन्ते नैव मानसम् ॥ ७ ॥ अनेककोटिब्रह्माडाधीश्वरस्य रमापतेः । दासं मां बाधितुं लोके विनाऽऽज्ञां तस्य कः क्षमः ॥ ८ ॥ इति ज्ञात्वा सुखदुःखमिह प्राप्येत यत्तु तत् । कृष्णेच्छोपनतं ज्ञात्वा चिन्ता कार्या न सर्वथा ॥ ९ ॥ मयाऽप्येवं कृतोऽस्त्येव निश्चयः सुदृढो हृदि । अतो न क्वापि विक्षेपो बाधते कश्चनात्र माम् ॥ १० ॥ आयान्तमेव विक्षेपं स्वरूपस्य विचारतः । महत्तायाश्च कृष्णस्य प्रवेष्टुं न ददामि हृत् ॥११॥ अन्यस्य कृष्णभक्तस्य दुःखं दृष्ट्वा तु मेऽन्तरम् । दुःखायते भृशं तत्र दयैवैकास्ति कारणम् ॥ १२ ॥ कृष्णभक्तद्रोग्धरि तु दया मे नास्ति सर्वथा । भक्तानां पक्षपातो हि व्रतमस्ति परं मम ॥ १३ ॥ अन्यथा त्वार्द्रपत्रादि द्रुमस्याहं कदाचन । तज्जीवदुःखभीत्योऽद्यदिनावधि हि नाच्छिदम् ॥ १४ ॥**

कश्चनापि । विक्षेपः । क्वापि कदाचिदपि । माम् । न बाधते ॥ १० ॥ आयान्तमिति । आयान्तमागच्छन्तमेव । विक्षेपम् । ज्ञात्वेतिशेषः । स्वरूपस्यात्मस्वरूपस्य । कृष्णस्य । महत्ताया माहात्म्यस्य । विचारतः । हृन्मम मानसम् । प्रवेष्टुम् । न ददामि मन्मानसे विक्षेपप्रवेशावकाशं न ददे इत्यर्थः ॥ ११ ॥ अन्यस्येति । अन्यस्य । कृष्णभक्तस्य । दुःखम् । दृष्ट्वा तु । मे मम । अन्तरमन्तःकरणम् । भृशमतिशयेन । दुःखायतेऽत्यन्तं दुःखी भवति । तत्र कारणं हेतुस्तु । एका केवला दयैव । अस्ति ॥ १२ ॥ कृष्णेति । कृष्णभक्तद्रोग्धरि जने तु । मे मम । दया । सर्वथैव । नास्ति । भक्तानाम् । पक्षपातः सहायाचरणम् । मम । परम् । व्रतं नियमः प्रतिज्ञेति यावत् । अस्ति । हि ॥ १३ ॥ अन्यथेति । अन्यथा तु । अहम् । द्रुमस्य । आर्द्रपत्रादि अभिनवदलादिकम् । तज्जीवदुःखभीत्या छेदनजातद्रुमजीवदुःखभयेन । अद्यदिनावधि एतद्दिनपर्यन्तम् । कदाचन । नाच्छिदम् । हि । दयया । स्वार्थं न चिच्छेदैवेत्यर्थः ॥ १४ ॥

भक्तमिति । पीड्यमानं केनापि वाग्दण्डपारुष्यादिना पीडितुमारब्धम् । भक्तम् । दृष्ट्वा । यस्य भक्तस्य । चेतसि । दया । नोदियात् । सः । मानवो भक्तस्तु । चण्डालः श्वपचतुल्यः । विमुखो भगवत्प्रतिकूलः । पशुर्गर्दभतुल्यः । अस्ति ॥ १५ ॥ भक्तेष्विति । यः । पुमान् । भक्तेषु । अभक्तेषु च । समदृष्टिः समानमतिः । भवेत् । स पुमान् । सत्सङ्गी । भक्तः सन्नपि । हरेः । विमुखः । ज्ञातव्यः ॥ १६ ॥ भक्तमिति । महापापी ब्रह्महत्यादिमहापापयुक्तोऽपि । कश्चन पुमान् । यदि । केनचित् । हन्यमानम् । भक्तम् । रक्षेत् । तर्हि । तत्क्षणम् । स्वात्स्वकीयात् । अघाद्ब्रह्महत्यादिपापात् । मुच्येत ॥१७॥ बुद्धीति । इह लोके । यः । पुमान् । बुद्धीपूर्वम् । भक्तद्रोहम् । कुर्यात् । तस्य पुंसः । सर्वाण्यपि । पुण्यानि । नश्यन्ति । न संशयोऽत्र संशयो नास्ति ॥१८॥ कर्त्तव्य इति । अतो हेतोः । भक्तानाम् । पक्षपात एव । सर्वथा । कर्त्तव्यः । तद्द्रोग्धा भक्तद्रोहकर्त्ता तु । स्वजनोऽपि । अन्त्यजो यथा । प्रहातव्यः । भगवद्भक्तद्रोहकरं स्वजनमपि चण्डालमिव त्यजेदित्यर्थः ॥ १९ ॥ क्वचि-

भक्तं दृष्ट्वा पीड्यमानं नोदियाद्यस्य चेतसि । दया स त्वस्ति चण्डालो विमुखो मानवः पशुः ॥ १५ ॥ भक्तेष्वभक्तेषु च यः समदृष्टिः पुमान्भवेत् । स भक्तोऽपि च सत्सङ्गी ज्ञातव्यो विमुखो हरेः ॥१६॥ भक्तं रक्षेद्धन्यमानं केनचिद्यदि कश्चन । महापाप्यपि तर्हि स्वादघान्मुच्येत तत्क्षणम् ॥१७॥ बुद्धिपूर्वं च यः कुर्याद्भक्तद्रोहं पुमानिह । तस्य पुण्यानि नश्यन्ति सर्वाण्यपि न संशयः ॥१८॥ कर्त्तव्योऽतः पक्षपातो भक्तानामेव सर्वथा । तद्द्रोग्धा तु प्रहातव्यः स्वजनोऽप्यन्त्यजो यथा ॥१९॥ क्वचिन्निमित्तवशतः कृष्णभक्तैः सहात्मनः । जातोऽपि कलहे तेषु क्रोधो रक्ष्यो न सर्वथा ॥२०॥ नैमित्तिकः सतां चित्ते ह्यमर्षस्तु कथंचन । जातोऽपि लीयते सद्यो रेखेव सलिले कृता ॥२१॥ अमर्षो हृदये यस्य चिरं तिष्ठदभक्तवत् । भक्तेऽपि तस्मिन्नैव स्याद्धरेः प्रीतिरितीयताम् ॥२२॥ इतीशितुस्तस्य वचो निशम्य मुनिः स पीयूषसमं तथाऽन्ये । सन्तश्च गेहाश्रमिणोऽपि भक्तास्तस्य प्रतोषं हृदयेऽलभन्त ॥२३॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते शताधिकत्रिनवतितमस्तरङ्गः ॥ १९३ ॥ ६० ॥

दिति । क्वचित्कदाचित् । निमित्तवशत आदानप्रतिदानादिव्यावहारिककिञ्चित्कारणवशतया । कृष्णभक्तैः सह । आत्मनः स्वस्य । कलहे । जाते सत्यपि । तेषु कृष्णभक्तेषु । क्रोधोऽमर्षः । सर्वथा । न रक्ष्यः ॥ २० ॥ नैमित्तिक इति । सतां भक्तानाम् । चित्ते । नैमित्तिकः । अमर्षः । कथंचन केनापि प्रकारेण । जातः सन्नपि । सलिले जले । कृताऽङ्गुल्यादिना विहिता । रेखा इव सद्यस्तत्क्षणमेव । लीयते नश्यति ॥ २१ ॥ अमर्ष इति । यस्य भक्तस्य । हृदये । अभक्तवदभक्ते इव । भक्तेऽपि । अमर्षः क्रोधः । चिरं बहुकालपर्यन्तम् । तिष्ठेत् । तस्मिन्भक्ते । हरेः । प्रीतिः प्रसन्नता । नैव स्यात् । भगवत्प्रसन्नताऽभावात्तदीयं सर्वं व्यर्थमेवेति भावः । इतीत्थम् । इयताम् ॥२२॥ इतीति । इत्येवंविधम् । ईशितुरक्षरादिसकलनियन्तुः । तस्य श्रीहरेः । पीयूषसमम् । वचः । निशम्य । सः । मुनिर्मुक्तानन्दमुनिः । तथा । तस्य श्रीहरेः । भक्ताः । अन्ये । सन्तः । गेहाश्रमिणो गृहस्थजनाश्चापि । हृदये स्वस्वमानसे । प्रतोषम् । अलभन्त ॥२३॥ विक्षेपबाधसंद्धेतुं स्वभक्तौ यो

विचारकम् । स्वभक्तानां च माहात्म्यं तेषु वर्त्तनरीतिकाम् ॥१॥ स्वभक्तान् श्रीहरिः प्राह दयादिगुणसागरः । विचारादित्रयं दद्यादेतन्मह्यं सदैव सः ॥ २ ॥ इति श्रीमदे-
कान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्स्नुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां शताधिकत्रिनवतितमस्तरङ्गः ॥१९३॥६०॥

सुदुर्लभं तु भक्तानां गुणत्रितयमस्ति यत् । गृहिषु त्यागिषु तथा श्रेष्ठयोर्लक्षणं च यत् ॥ १ ॥ प्रतिष्ठितजनस्यात्र मान्यत्वं सर्वथा च यत् । एतत्सर्वं त्वेकषष्टितमे सम्यक् प्रकीर्त्तितम् ॥ २ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८८१) नभसः श्रावणमासस्य । कृष्णे कृष्णपक्षे । सप्तम्यां तिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमस्य राज्ञः । दुर्गे प्रत्यगास्यस्य पश्चिमदिगभिमुखद्वारस्य । वेश्मनस्तस्यैवगृहस्य । वितर्द्दौ । प्राङ्मुख-वेदिकायाम् । मञ्चोत्तमे स्वास्तृतपर्यङ्कासने । स श्रीहरिः । उपाविशत् ॥ २ ॥ तं विशिनष्टि । सितेति । सितसर्वाम्बरः परिधृतसकलश्वेतवसनः । श्वेतपुष्पहारैः । अलङ्कृतः शोभमानः । अनेकैर्नानादेशागतत्वाद्वहुभिः । त्यागिभिः । गृहिभिश्च । स्वैः स्वकीयैर्भक्तैः । परितः सर्वतः । वृतः सभायां परिवेष्टितः ॥ ३ ॥ पुर इति ।

शकाब्दे विक्रमार्कस्य चन्द्राष्टवसुभूमिते । सप्तम्यां नभसः कृष्णे वचोऽमृतमिदं हरेः ॥ १ ॥
तत्र दुर्गपुरे दुर्गे उत्तमस्य स वेश्मनः । वितर्द्दौ प्रत्यगास्यस्य मञ्चोत्तम उपाविशत् ॥ २ ॥
सितसर्वाम्बरः श्वेतपुष्पहारैरलंकृतः । त्यागिभिर्गृहिभिश्च स्वैरनेकैः परितो वृतः ॥ ३ ॥
पुरःस्थानब्रवीत्सोऽथ भक्तान् सर्वहितावहः । यूयं शृणुत भो भक्ताः ! सादरं वचनं मम ॥ ४ ॥
संस्थितिः कृष्णधर्मेषु कृष्णैकदृढनिश्चयः । कार्ष्णानां पक्षपातश्च त्रयमेतत्सुदुर्लभम् ॥ ५ ॥
यथार्हं तत्र कृष्णोक्तधर्माज्ञावचसः सदा । सर्वथा पालनं यत्सा कृष्णधर्मेषु संस्थितिः ॥ ६ ॥
देहदुःखस्त्र्यादिनाशशुष्कविन्नास्तिकोक्तिभिः । क्वापि यो न विहन्येत स कृष्णदृढनिश्चयः ॥ ७ ॥

अथोपवेशनानन्तरम् । सर्वहितावहः सकलस्वाश्रितहितकरः । स श्रीहरिः । पुरःस्थान् । भक्तान् । अब्रवीत् । भो भक्ताः ! । यूयं सर्वे । मम । वचनम् । सादरं यथातथा । शृणुत ॥ ४ ॥ संस्थितिरिति । हे भक्ताः ! । कृष्ण धर्मेषु साक्षाद्धर्युदितस्वधर्मनियमेषु । संस्थितिः सम्यग्वर्त्तनम् । कृष्णैकदृढनिश्चयः । कार्ष्णानां कृष्णभक्तानाम् । पक्षपातः । एतत् । त्रयम् । सुदुर्लभम् । अस्ति ॥ ५ ॥ एतेषां त्रयाणां विशेषतो लक्षणान्याह त्रिभिः । यथार्हमिति । तत्र तेषु त्रिषु मध्ये । यत् । कृष्णोक्तधर्माज्ञावचसः साक्षाच्छ्रीहर्युदितस्वधर्मपालनादिनिदेशवचनस्य । यथायोग्यम् । सर्वथा । सदा । पालनम् । सा । कृष्णधर्मेषु । संस्थितिः । कीर्त्तिता ॥ ६ ॥ देहेति । देहदुःखान्यतिसारविषूच्यादिदैहिकपीडाश्च स्त्र्यादिनाशः स्त्रीपुत्रधनादिविनाशश्च शुष्कविन्नास्तिकोक्तयः शुद्धाद्वैतवादीनां बौद्धादीनां च वाक्यानि च ताभिः । क्वापि कदाचिदपि । यः । न विहन्येत स्वकृतभगवन्निश्चयः संशययुतो न स्यादित्यर्थः । सः । कृष्णदृढनिश्चयः । कीर्त्तितः ॥ ७ ॥

स्वेति । स्वप्रेष्ठस्त्रीसुतादीनामिव । कृष्णात्मनां कृष्णैकमनसाम् । नृणां भक्तानाम् । यः । नित्यम् । ममत्वेन । आदरः । सः । पक्षपातः । कीर्त्तितः ॥ ८ ॥ एतदिति । एतत्त्रयम् । यस्मिन् भक्ते । भवेत् । सः । हरेः । पक्वभक्तः । कीर्त्तितः । असौ भक्तः । त्यागी । अस्तु । अथवा । गृहस्थोऽस्तु । अथापि । देहिनां जनानाम् । माननीयः । अस्ति ॥९॥ अथेदृग्विधगृहस्थभक्तेषु मध्ये श्रेष्ठगृहस्थहरिभक्तलक्षणमाह त्रिभिः । य इति । यो भक्तस्तु । गेहाश्रमस्थः सन्नपि । देहगेहधनादिकान् । सकलान् । पदार्थान् । सर्वथा । कृष्णार्थानेव । कुर्यात् ॥ १० ॥ नेति । यस्य गृहस्थभक्तस्य । हृदि । किञ्चिदपि । वस्तु । कृष्णात् । अधिकम् । न स्यात् । कृष्णे तद्भक्तेषु च । अतिप्रीतिः । स्यात् । अन्यतः कृष्णतद्भक्तेतरपदार्थे । अतिप्रीतिः । न स्यात् ॥ ११ ॥ गृहेति । यः । गृहोचिताः । क्रिया आदानप्रतिदानादिकर्माणि । कुर्वन्सन्नपि । अन्तरे स्वान्तःकरणे । त्यागेच्छुर्गृहाश्रमत्यागेच्छावान् । स्यात् । ईदृश एवंविधः । पुरुषो गृहस्थभक्तः । गृहिभक्तेषु । श्रेष्ठः । कीर्त्तितः ॥ १२ ॥ अथ

स्वप्रेष्ठस्त्रीसुतादीनामिव कृष्णात्मानां नृणाम् । ममत्वेनादरो नित्यं पक्षपातः स कीर्त्तितः ॥ ८ ॥ एतत्त्रयं भवेद्यस्मिन् पक्वभक्तो हरेः स हि । त्यागी वापि गृहस्थोऽसौ माननीयोऽस्ति देहिनाम् ॥ ९ ॥ यस्तु गेहाश्रमस्थोऽपि देहगेहधनादिकान् । पदार्थान्सकलान् कुर्यात्कृष्णार्थानेव सर्वथा ॥ १० ॥ न किञ्चिदपि यस्य स्यात्कृष्णाद्वस्त्वधिकं हृदि । अतिप्रीतिश्च कृष्णे स्यात्तद्भक्तेषु च नान्यथा ॥ ११ ॥ गृहोचिताः क्रियाः कुर्वन्नपि त्यागेच्छुरन्तरे । ईदृशः पुरुषः श्रेष्ठो गृहिभक्तेषु कीर्त्तितः ॥ १२ ॥ यस्तु त्यागी साधुशीलो धर्म एकान्तिके स्थिरः । सहस्रशो जनैर्मान्यः स्वाज्ञावर्तिभिरादरात् ॥ १३ ॥ एवं भूरिप्रतिष्ठोऽपि नारीधनरसादिषु । नासक्तः सन् स्वधर्मेषु शैथिल्यं नाप्नुयात्क्वचित् ॥ १४ ॥ स हि त्यागिषु सर्वेषु श्रेष्ठ इत्यवगम्यताम् । सेवनीयो विशेषेण स च श्रेयोऽर्थिभिर्जनैः ॥ १५ ॥ लोके प्रतिष्ठितो यश्च पुमान् स्यात्सोऽपि सर्वथा । मदाश्रितैर्माननीयः सर्वैरपि यथोचितम् ॥ १६ ॥ न मानयन्ति तं ये तु त्यागिनो गृहिणोऽपि वा । तेऽनर्थं प्राप्नुवन्त्येव महान्तमिति दृश्यते ॥ १७ ॥

पूर्वोक्तलक्षणत्यागिभक्तेषु मध्ये श्रेष्ठत्यागिभक्तलक्षणमाह त्रिभिः । य इति । यः । त्यागी भक्तस्तु । साधुशीलः साधुस्वभावः । एकान्तिके । धर्मे । स्थिरो निश्चलः । स्वाज्ञावर्त्तिभिः । सहस्रशः । जनैः । आदरात् । मान्यः ॥१३॥ एवमिति । एवममुना प्रकारेण । भूरिप्रतिष्ठायुक्तः सन्नपि । नारीधनरसादिषु । नासक्तः किञ्चिदप्यासक्तिरहितः सन् । क्वचित्कदाचिदपि । स्वधर्मेषु । शैथिल्यम् । नाप्नुयात् ॥१४॥ स इति । स एतादृशस्त्यागिभक्तः । सर्वेषु । त्यागिषु मध्ये । श्रेष्ठः । अस्ति । हि । इतीत्थम् । अवगम्यताम् । स एवंभूतस्त्यागी । श्रेयोऽर्थिभिः । जनैः । विशेषेण । सेवनीयः ॥१५॥ लोक इति । किञ्च । लोके । यः । पुमान् प्रतिष्ठितः । स्यात् । स प्रतिष्ठितः पुमानपि । सर्वैरपि । मदाश्रितैस्त्यागिभिर्गृहिभिश्च मामुपाश्रितैः सकलजनैरपीत्यर्थः । यथोचितं यथायोग्यम् । सर्वथा । माननीयः ॥१६॥ विपक्षेदोषमाह । नेति । ये त्यागिनः । अथवा । गृहिणोऽपि मदाश्रिताः । तं प्रतिष्ठितपुरुषम् । न मानयन्ति । ते तु । महान्तम् । अनर्थमेव । प्राप्नुवन्ति । इतीत्थम् । दृश्यते ॥ १७ ॥

एतदेव प्राचीनाचारोक्त्या द्रढयति । दक्षेति । पुरा पूर्वम् । सदसि । दक्षावमत्या श्वशुरत्वाद्गुरुं सर्वप्रजापत्यधिकत्वात्प्रतिष्ठितं दक्षं प्रति जामातृतया शिवस्य शिष्यत्वेनाभ्युत्थानार्हे तस्मिंस्तदनाचरणरूपतदवमानेनेत्यर्थः । ईशितुरीश्वरस्यापि । शम्भोः शिवस्य । यज्ञे । स्वभागानाप्तिः । भार्यानाशश्च । बभूव । ह प्रसिद्धमिदं श्रीभागवते । इदं च शिवावमन्तुर्दक्षस्य शमीकमुनेरवमन्तुः परीक्षिन्नृपस्यागस्त्यमुनेरवमन्तु रिन्द्रद्युम्ननृपस्याप्युपलक्षणम् ॥ १८ ॥ अत इति । अतो हेतोः । अत्र लोके । जनेषु । ये । गुणिनो धनकुलविद्याधिकारित्वादिगुणयुक्ताः । प्रतिष्ठिताः । पुरुषाः । स्युः । ते । मान्या मदाश्रितैर्माननीयाः । हि । इत्येवंविधाम् । प्रभोः श्रीहरेः । वाक्यसुधाम् । निपीय । ते सदःस्थाः । सन्तः साधवः । गृहिणो गृहस्थाश्च । मुदम् । प्रापुः ॥ १९ ॥ गुणास्त्रयः स्वभक्तानां दुर्लभाः श्रेष्ठयोः स्वयोः । भक्तयोर्गृहिसाध्वोश्च लक्षणं माननीयता ॥ १ ॥ प्रतिष्ठितजनस्यात्र प्रोक्तान्येतानि येन तु । हरिणा स यथायोग्यं ददात्वेतानि मे प्रभुः ॥ २ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्पद्मतुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां शताधिकचतुर्नवतितमस्तरङ्गः ॥ १९४ ॥ ६१ ॥

दक्षावमत्या सदसि पुरा शम्भोरपीशितुः । यज्ञे स्वभागानाप्तिश्च भार्यानाशो बभूव ह ॥ १८ ॥ अतोऽत्र मान्या गुणिनो जनेषु प्रतिष्ठिता ये पुरुषाश्च ते हि। इति प्रभोर्वाक्यसुधां निपीय प्रापुर्मुदं ते गृहिणश्च सन्तः ॥ १९ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते शताधिकचतुर्नवतितमस्तरङ्गः ॥ १९४ ॥ ६१ ॥

शकाब्दे विक्रमार्कस्य चन्द्राष्टवसुभूमिते मार्गशुक्लद्वितीयायां वचोऽमृतमिदं हरेः ॥ १ ॥ तत्र दुर्गपुरे दुर्गं उत्तमस्य वेश्मनः । वितर्द्यावुदगास्यस्य मञ्चके समुपाविशत् ॥ २ ॥ नानादेशागतैर्भक्तैः साधुभिर्गृहिभिश्चः । वृतः सिताम्बरधरः पर्यैक्षत निजाश्रितान् ॥३॥ तत्रायोध्याप्रसादाख्यं रघुवीराभिधं च सः। भ्रातृजं प्रैरयत्प्रष्टुं प्रश्नमाभाष्य संसदि ॥ ४ ॥

कलाऽयोध्याप्रसादस्य रघुवीरस्य पृच्छयोः । उत्तरे लक्षणं त्वात्मनिष्ठाद्यङ्गत्रयस्य यत् ॥ १ ॥ अङ्गेषु तेषु चैकस्य भक्तानां दृढता तु या । कार्यैतत्कथितं सर्वं द्विषष्टितमके स्फुटम् ॥ २ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८८१) मार्गशुक्लद्वितीयायां मार्गशीर्षमासस्य शुक्लपक्षागतद्वितीयातिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमस्य राज्ञः । दुर्गे । उदगास्यस्य । वेश्मनस्तस्यैवभवनस्य । वितर्दौ बाह्यवेदिकायाम् । मञ्चके स्वास्तृते पर्यङ्कासने । स श्रीहरिः । समुपाविशत् ॥ २ ॥ नानेति । नानादेशागतैः । साधुभिः । गृहिभिश्च । भक्तैः । वृतः सभायां परिवेष्टितः । सिताम्बरधरः परिधृतसकलश्वेतवासाः । स श्रीहरिः । निजाश्रितान् समीपविष्टस्वाश्रितजनान् । पर्यैक्षत सर्वतो निभालयामास ॥ ३ ॥ तत्रेति । तत्र स्वनिरीक्षितायाम् । संसदि सभायाम् । स्थितम् । अयोध्याप्रसादाख्यम् । भ्रातृजं स्वज्येष्ठभ्रातृसुतम् । रघुवीराभिधम् । भातृजं स्वकनिष्ठभ्रातृसुतम् । आभाष्य हे अयोध्याप्रसाद ! हे रघुवीरेति संबुध्याभिमुखीकृत्य । स श्रीहरिः । प्रश्नम् । प्रष्टुम् । प्रैरयत् ॥ ४ ॥

तत इति । तत एवं श्रीहरिकृतप्रेरणानन्तरम् । अयोध्याप्रसादः । तं श्रीहरिम् । आदरात् । प्रणम्य । अपृच्छत् । हे स्वामिन् ! । इह सत्सङ्गे । अनेके बहवः । जनास्त्वदाश्रिता गृहस्थभक्ताः । नानाक्रियाकुला नानाविधव्यावहारिकानेककर्मव्यग्राः । सन्ति ॥५॥ कार्य इति । तेषां भक्तानाम् । प्रापञ्चिके व्यावहारिके । कार्ये कृत्ये निमित्ते । अहो दिनम् । रात्रिश्चापि । याति तच्चिन्तनपूर्वकं गच्छति । तत्र प्रापञ्चिके कार्ये । योग्यायोग्यानि उचितानुचितानि न्यायान्याययुक्तानि वा । भूरिशः । कर्माणि । जायन्ते ॥६॥ कृष्णस्येति । हे प्रभो ! । कृष्णस्य । ते तव । भजनं स्मरणं तु । मुहूर्त्तं द्विघटिकापर्यन्तम् । अथवा । घटीमेकघटिकापर्यन्तम् । स्यात् । तावता तत्परिमाणभजनेन । तानि योग्यायोग्यानि । कर्माणि । दग्धानि तत्सङ्कल्पनिवृत्तितया विनष्टानि । स्युः । न स्युर्वा । गृहिसत्सङ्गिजनानां स्त्रीपुत्रादिपोषणनिमित्तकस्ववर्णाद्युचितानुचितक्रियाभिर्धनाद्युपार्जनादिकर्मस्वहोरात्रव्यतिक्रमोद्भूतसङ्कल्पजालवत्तया मुहूर्त्तघटिकाजातभवत्स्मरणेन तत्सङ्कल्पविनाशपूर्वं निस्तर्कत्वध्यानरूपं सुखं भवेन्न भवेद्वेति प्रश्नाशयः ॥७॥ इतीति । इत्यमुना प्रकारेण । भ्रातृजेनायोध्याप्रसादेन । पृष्टः । सत्पतिः । स श्रीहरिः । तमयोध्याप्रसादम् । उवाच । हे अयोध्याप्रसाद ! । ते तुभ्यम् । यथा-

ततोऽयोध्याप्रसादस्तं प्रणम्यापृच्छदादरात् । नानाक्रियाकुलाः स्वामिन्सन्त्यनेके जना इह ॥ ५ ॥ कार्ये प्रापञ्चिके तेषामहो रात्रिश्च यात्यपि । योग्यायोग्यानि कर्माणि जायन्ते तत्र भूरिशः ॥ ६ ॥ कृष्णस्य भजनं ते स्यान्मुहूर्त्तं वा घटीमपि । तावता तानि कर्माणि दग्धानि स्युर्न वा प्रभो ! ॥७॥ इति पृष्टो भ्रातृजेन तमुवाच स सत्पतिः । शृण्वयोध्याप्रसाद ! त्वं यथावत्कथयामि ते ॥ ८ ॥ यद्यक्षमनसां कृष्णभजनावसरे भवेत् । एकाग्रता प्रसादत्वं पुंसो भजनकारिणः ॥ ९ ॥ तदा तु कर्मणां दाहो घट्यर्द्धेनापि जायते । अन्यथा तु भवेन्नैवेत्युत्तरं विद्धि निश्चितम् ॥ १० ॥ बहुकालेन भजनाभ्यासात्सर्वाणि तान्यपि । नश्यन्ति शिथिलानां तु भक्तानां न क्षणेन तु ॥ ११ ॥ रघुवीरोऽथ पप्रच्छ तं प्रणम्य जगद्गुरुम् । केनोपायेन गृहिणां श्रेयः स्यात्त्यागिनामिव ॥ १२ ॥

वत् । कथयामि । त्वम् । शृणु ॥ ८ ॥ यदीति । भजनकारिणः श्रीहरिस्वरूपचिन्तनकर्त्तुः । पुंसो भक्तस्य । यदि । कृष्णभजनावसरे । अक्षमनसां चक्षुरादिज्ञानेन्द्रिय मनआद्यन्तःकरणानाम् । एकाग्रता प्रसादत्वं श्रीहरिस्वरूपमाहात्म्यातिशयावबोधजातं तन्मूर्त्तिस्थिरतारूपनिर्मलत्वम् । भवेत् । तदेत्युत्तरेण सम्बन्धः ॥ ९ ॥ तदेति । तदा तु । घट्यर्द्धेनापि । कर्मणां योग्यायोग्यव्यावहारिकक्रियासङ्कल्पानाम् । दाहो नाशः । जायते । अन्यथैवंविधभजनाभावे तु । नैव । भवेत् सङ्कल्पविनाशो न जायेतैवेत्यर्थः । इतीत्थम् । निश्चितमेव । उत्तरम् । विद्धि ॥ १० ॥ अन्यथा पदोक्तमर्थं स्पष्टमाह बह्विति । शिथिलानामुक्तरीत्या भजनाचरणेऽशक्तानाम् भक्तानां तु । बहुकालेन । भजनाभ्यासात् । सर्वाण्यपि । तानि कर्माणि । कर्मसङ्कल्पा इत्यर्थः । नश्यन्ति । क्षणेन व्यग्रचित्ततया द्विघटिकापर्यन्तं कृतेन भजनाभ्यासेन । न तु सङ्कल्पा नैव नश्यन्ति ॥ ११ ॥ रघुवीर इति । अथानन्तरम् । रघुवीराख्यो भ्रातृजः । जगद्गुरुम् । तं श्रीहरिम् । प्रणम्य । पप्रच्छ । हे हरे ! ।

गृहिणां गृहस्थानां त्वद्भक्तानाम् । श्रेयः कल्याणम् । त्यागिनां त्वदेकान्तिकसाधूनामिव । केन । उपायेन । स्यात् ॥ १२ ॥ तमिति । तमेवं पृच्छतं रघुवीरम् । स्वामी श्रीहरिः । उवाच । हे रघुवीर ! । तैस्त्यागिसमानस्वश्रेयोवाञ्छद्भिर्गृहस्थभक्तैः । स्वकं स्वकीयम् । देहगेहधनक्षेत्रपुत्रदारादि । नित्यदा सर्वकालम् । कृष्णस्य । सेवायाम् । योज्यम् ॥ १३ ॥ नेति । यः । पदार्थः । कृष्णसेवने । उपयुक्त उपयोगार्हः । न भवेत् । तस्य पदार्थस्य तु । आशु शीघ्रमेव । त्यागः । कर्त्तव्यः । अन्यः कृष्णसेवनोपयुक्तः पदार्थस्तु । प्रयत्नतः । रक्ष्यः ॥ १४ ॥ कृष्णेति । सकलः । उद्योगो धनाद्यर्जनोपायः । कृष्णार्थः कृष्णसेवनोपयुक्त एव । स्वयं स्वेन । कर्त्तव्यः । एवममुना प्रकारेण । मुमुक्षुभिस्त्यागिसमानकल्याणेच्छुगृहिभक्तजनैः । प्रीत्यानुरागेण । कृष्णपरायणैः कृष्णायत्तसर्वक्रियैः । भाव्यम् ॥ १५ ॥ एवमिति । ये । गृहिणः । जना भक्ताः । एवंविधा ईदृशाः । आत्मनिवेदिनः । स्युः । ते गृहस्थभक्ता अपि । त्यागिवत् । ब्रह्मगतिमेकान्तिकसाधुसम्प्राप्याक्षरधामनि भगवत्पार्षदतामित्यर्थः । यायुः । अत्रार्थे । संशयः । नास्ति ॥ १६ ॥ तुल्या इति । ते तथाविधभक्ताः । अक्षरमुक्तैरक्षरधामावस्थितैरक्षरस्वरूपैर्मुक्तैः । तुल्याः । स्युः ।

तं स्वाम्युवाच सेवायां योज्यं कृष्णस्य तैः स्वकम् । देहगेहधनक्षेत्रपुत्रदारादि नित्यदा ॥ १३ ॥ नोपयुक्तो भवेद्यस्तु पदार्थः कृष्णसेवने । त्यागस्तस्याशु कर्त्तव्यो रक्ष्योऽन्यस्तु प्रयत्नतः ॥ १४ ॥ कृष्णार्थ एव कर्त्तव्य उद्योगः सकलः स्वयम् । एवं मुमुक्षुभिः प्रीत्या भाव्यं कृष्णपरायणैः ॥ १५ ॥ एवंविधा ये गृहिणो जना आत्मनिवेदिनः । तेऽपि यायुर्ब्रह्मगतिं त्यागिवन्नात्र संशयः ॥१६॥ तुल्यास्तेऽक्षरमुक्तैः स्युरिति प्रश्नोत्तरं तव । इत्युक्त्वा तं सदःसंस्थान्सतः सर्वानुवाच सः ॥ १७ ॥ मया विचार्य वहुधा श्रेयसोऽङ्गानि देहिनाम् । त्रीण्येव निश्चितान्यत्र भवन्ति सुखदानि तु ॥ १८ ॥ तत्राद्यमात्मनिष्ठाख्यं पातिव्रत्यं द्वितीयकम् । दास्यमुक्तं तृतीयं च त्रयमित्यतिदुर्लभम् ॥ १९ ॥ आद्यं शुकादिवद्ब्रह्मीभूतस्योपासनं हरेः । द्वितीयं पतिभावेन गोपीवत्तदुपासनम् ॥ २० ॥

इत्येवंविधम् । तव । प्रश्नोत्तरम् । अस्ति । इत्यमुना प्रकारेण । तं रघुवीरं भ्रातृजम् । उक्त्वा । स श्रीहरिः । सदःसंस्थान्सभोपविष्टान् । सर्वान् । सतो मुक्तानन्दादिसाधून् । उवाच ॥१७॥ मयेति । हे साधवः ! । मया । बहुधा । विचार्य । अत्र सत्सङ्गे । देहिनां भक्तानाम् । श्रेयसः आत्यन्तिककल्याणस्य । त्रीण्येव । अङ्गानि । सुखदानि । निश्चितानि । भवन्ति ॥ १८ ॥ तत्रेति । तत्र तेषु त्रिष्वङ्गेषु मध्ये । आद्यं प्रथमम् । आत्मनिष्ठाख्यमङ्गम् । द्वितीयकम् । पातिव्रत्यमङ्गम् । तृतीयं च । दास्यमङ्गम् । उक्तम् । इत्येतत् । त्रयमङ्गत्रिकम् । अतिदुर्लभम् । उक्तमस्ति ॥१९॥ अङ्गत्रयलक्षणमाह सपादश्लोकेन । आद्यमिति । शुकादिवच्छुकादितुल्यतया । ब्रह्मीभूतस्य ब्रह्मभावं प्राप्तस्य भक्तस्य । हरेः । उपासनम् । आद्यमात्मनिष्ठाख्यं प्रथममङ्गं बोध्यम् । गोपीवद्राधिकादिगोपाङ्गनातुल्यतया । पतिभावेन । तदुपासनं श्रीहरेरुपासनाचरणम् । द्वितीयं पातिव्रताख्यं द्वितीयमङ्गं ज्ञेयम् ॥ २० ॥

हनूमदिति । हनूमदादिवन्मारुत्यादितुल्यतया । दासभावेन । श्रीहर्य्युपासनम् । अन्त्यं तृतीयं दासाख्यमङ्गं ज्ञेयम् । यस्य भक्तस्य । त्रिष्वङ्गेषु मध्ये । एकमङ्गमपि । दृढम् । भवेच्चेत् । तर्हि । स भक्तोऽपि । मुक्तः । भवेत् । सुदृढैः । त्रिभिरङ्गैः । मुक्तः । भवेत् । पुनः । किम् । अत्र पुनः । किं वाच्यमित्यर्थः ॥२१॥ एष्विति । एषु त्रिष्वङ्गेषु मध्ये । एकतममेकमपि । अङ्गम् । इह सत्सङ्गे । येन भक्तेन । सम्यग्यथार्थतः । न साधितम् । तस्य । मनुष्यस्य भक्तस्य । निःश्रेयसमात्यन्तिक-कल्याणम् । कुतः । भवेत् । नैव भवेदित्यर्थः ॥ २२ ॥ वदामिति । अथातोहेतोः । त्रयाणाम् । एषामङ्गानाम् । स्थितिम् । येन विचारेण तत्तदङ्गसुदृढस्थिति-र्जायेत तत्तत्प्रकारोक्तिपूर्वं तत्तदङ्गवद्भक्तनिष्ठामित्यर्थः । वो युष्मभ्यम् । पृथक्पृथक् । वदामि । तत्र तेषु त्रिष्वङ्गेषु मध्ये । आदौ । आत्मनिष्ठावतः । पुंसो भक्तस्य । स्थितिम् । शृणुत ॥ २३ ॥ भवतीति । हे साधवः ! । एकत एकत्र कोटौ । आत्मा स्वक्षेत्रज्ञः । भवति । एकतोऽन्यत्र कोटौ । देहः स्थूलशरीरं च इन्द्रियाणि चक्षुरादीन्यक्षाणि चान्तःकरणानि मनआदीनि च गुणाः सत्त्वादयश्चासवः प्राणश्च विषयाः शब्दादयोऽर्थाश्च ते आदयो यस्मिंस्तत् । मायिकं मायाकार्यम् । यूथं च ।

हनूमदादिवच्चान्त्यं त्रिष्वेकमपि चेद्दृढम् । यस्य सोऽपि भवेन्मुक्तः किं पुनः सुदृढैस्त्रिभिः ॥ २१ ॥ एष्वेकतम-मप्यङ्गं येन सम्यङ्न साधितम् । निःश्रेयसं कुतस्तस्य मनुष्यस्य भवेदिह ॥ २२ ॥ वदाम्यथ त्रयाणां वः स्थितिमेषां पृथक् पृथक् । आत्मनिष्ठावतः पुंसस्तत्रादौ शृणुत स्थितिम् ॥ २३ ॥ भवत्येकत आत्मा च मायिकं यूथमेकतः । देहेन्द्रियान्तःकरणगुणासुविषयादिकम् ॥ २४ ॥ मध्येऽनयोर्विचारोऽस्ति निवाते दीपवत्स्थिरः । ज्ञानाकारश्च येनैव तयोरैक्यं न जायते ॥ २५ ॥ स चात्मनैक्यं नाप्नोति नेतरेण च कर्हिचित् । तस्य प्राप्तिस्तु जायेत प्रसादादेव सद्गुरोः ॥ २६ ॥ तदेन्द्रियान्तःकरणमिलिता जीववृत्तयः । क्रमेण यान्ति सङ्कोचं प्रातिलोम्येन सर्वशः ॥ २७ ॥ हृदि तस्मिन् जायमाने क्रोशसाहस्रमायताः । संकुच्य ताः शतक्रोश्यां वर्त्तन्ते समुपागताः ॥ २८ ॥

भवति ॥ २४ ॥ मध्य इति । अनयोरात्ममायिकयूथयोः । मध्ये । निवाते वायुवर्जितप्रदेशे । दीपवद्दीपशिखेव । निश्चलः । ज्ञानाकारो ज्ञानस्वरूपः । विचारः अस्ति तिष्ठति । येन विचारेणैव । तयोरात्ममायिकयूथयोः । ऐक्यमेकत्वम् । न जायते । युध्यमानयोः करिणोरन्तरावर्त्तमाना वेदिर्यथा तौ पृथग्रक्षति तथानयोः पृथग्रक्षण-मन्तर्गतो विचारः करोतीत्यर्थः ॥ २५ ॥ स इति । स विचारः । आत्मना सह । ऐक्यम् । कर्हिचित् । नाप्नोति । इतरेण मायिकयूथेन सह । ऐक्यं च । कर्हिचित् । नाप्नोति तस्य विचारस्य । प्राप्तिस्तु । सद्गुरोर्हरेस्तदेकान्तिकसाधोश्च । प्रसादात्सच्छास्त्रानुरोधकृतज्ञातृत्वादिलक्षणात्मस्वरूपोपदेशरूपानुग्रहादेव । जायेत ॥ २६ ॥ तदेति । तदा विचारप्राप्तौ सत्याम् । इन्द्रियान्तःकरणमिलिता अहंभावेनेन्द्रियान्तःकरणैः सह सङ्गताः । सर्वशः सकलाः । जीववृत्तयः । क्रमेणानुक्रमतो जातेन प्राति-लोम्येन । सङ्कोचम् । यान्ति ॥ २७ ॥ सङ्कोचप्रकारमाह चतुर्भिः । हृदीति । तस्मिन्विचारे । हृदि विचारकर्त्तृभक्तान्तःकरणे । जायमाने सति । क्रोशसाहस्रं सह-

स्वक्रोशपर्यन्तम् । आयताः प्रसारदीर्घाः । ता जीववृत्तयः । सङ्कुच्य । शतक्रोश्यां शतक्रोशान्तरे इत्यर्थः । समुपागताः । वर्त्तन्ते ॥ २८ ॥ तस्मिन्निति । अथानन्तरम् । तस्मिन्विचारे । दृढे । सञ्जाते सति । तेन दृढविचारेण । स्वरंहसा स्ववेगेन । आकृष्टाः । ताः । द्रुतं शीघ्रमेव । सङ्कोचम् । एत्य । स्वस्थानावधि यत्र ग्रामे विचारकर्त्ता स्वयं तिष्ठति तद्ग्रामावधि । वर्त्तन्ते ॥ २९ ॥ तस्मिन्निति । अथानन्तरम् । तस्मिन्विचारे । दृढतरेऽतिशयेन दृढे सञ्जाते सति । एता जीववृत्तयः । देहमात्रायताः स्वदेहपर्यन्तं दीर्घाः । स्युः । ततः स्वदेहपर्यन्तदैर्घ्यतोऽपि । अक्षगोलकायताश्चक्षुरादीन्द्रियगोलकमात्रादीर्घाश्च । स्युः ॥ ३० ॥ भूत्वेति । ततोऽक्षगोलकेभ्योऽपि । सङ्कुच्येतिशेषः । संहता एकीभूताः ता । जीववृत्तयः । अन्तःकरणसन्मुखाः । भूत्वा । आत्मनि जीवस्वरूपे एव । विलीयन्ते आत्माकारा भवन्तीत्यर्थः । स जीववृत्तीनामात्मनि लय एव । लिङ्गनाशः शरीरत्रयभावविनाशः । उच्यते ॥ ३१ ॥ तत इति । ततस्तदनन्तरम् । सः । विचारश्चापि । आत्मना सह । एकत्वम् । प्राप्नोति । तदा तस्मिन्समये । तस्मिन्नात्मनि । महान् । प्रकाशः । प्रादुर्भवति । वै ॥ ३२ ॥ ब्रह्मीभूत इति । ब्रह्मीभूतो ब्रह्मभावंप्राप्तः । स आत्म-

तस्मिन् दृढेऽथ सञ्जाते स्वस्थानावधि ता द्रुतम् । सङ्कोचमेत्य वर्त्तन्ते तेनाकृष्टाः स्वरंहसा ॥ २९ ॥ तस्मिन् दृढतरेऽथैताः संकुचन्ति ततोऽपि ताः । देहमात्रायताः स्युश्च ततोऽक्षगोलकायताः ॥ ३० ॥ भूत्वा ततोऽन्तःकरणसन्मुखाः संहताश्च ताः । आत्मन्येव विलीयन्ते लिङ्गनाशः स उच्यते ॥ ३१ ॥ ततः स च विचारोऽपि प्राप्नोत्येकत्वमात्मना । तस्मिन्प्रकाशश्च महान्प्रादुर्भवति वै तदा ॥ ३२ ॥ ब्रह्मीभूतः स च स्वस्मिन्नारायणमवेक्षते । ब्रह्माहमस्मीति ततोऽनुभवन्स्वं भजेद्धरिम् ॥ ३३ ॥ आत्मनिष्ठावतो नित्यमित्थं ब्रह्मात्मना स्थितिः । ज्ञानिभक्तस्य कथिता शास्त्रानुभवसम्मता ॥३४॥ पातिव्रत्यं भवेद्यस्य दृढं स तु पुमान् भवेत् । श्रीकृष्णभक्तगोपीवत्कृष्णैकपतिभाववान् ॥३५॥ गोप्यो हि यद्दिने प्रापुः कृष्णसंदर्शनं व्रजे । तत आरभ्य कृष्णेऽभूत्तासां स्नेहोऽधिकोऽचलः ॥ ३६ ॥ पतिभावं च सम्प्रापुस्तस्मिन्नेव हि केवले । बुद्ध्या संवीक्षितुमपि न शेकुः पुरुषान्तरम् ॥ ३७ ॥

निष्ठभक्तः । स्वस्मिन्नात्मस्वरूपे । नारायणं प्रत्यक्षं श्रीहरिम् । अवेक्षते पश्यति । ततस्तदनन्तरम् । अहम् । ब्रह्माक्षरब्रह्मभावं प्राप्तः । अस्मि । इतीत्थम् । स्वमात्मानम् । अनुभवन्मन्यमानः सन् । हरिम् । भजेन्निरन्तरं नवधा सेवेत ॥ ३३ ॥ आत्मेति । इत्थममुना प्रकारेण । आत्मनिष्ठावतः । ज्ञानिभक्तस्य । शास्त्रानुभवसंमता । नित्यम् । ब्रह्मात्मना । स्थितिः । कथिता ॥ ३४ ॥ पातिव्रत्यमिति । यस्य भक्तस्य । दृढम् । पातिव्रत्यमङ्गम् । भवेत् । सः । पुमान्भक्तस्तु । श्रीकृष्णभक्तगोपीवत् । कृष्णैकपतिभाववान् । भवेत् ॥ ३५ ॥ गोप्यः । व्रजे । यद्दिने । कृष्णसंदर्शनम् । प्रापुः । ततस्तस्माद्दिनात् । आरभ्य । तासां गोपीनाम् । कृष्णे । अधिकः सर्वातिशयितः । अचलो निश्चलः । स्नेहः । अभूत् ॥ ३६ ॥ पतीति । केवले एकस्मिन् । तस्मिन् श्रीकृष्णे एव । पतिभावम् । सम्प्रापुः । पुरुषान्तरं श्रीकृष्णेतरपुरुषम् । बुद्ध्या बुद्धिपूर्वम् । संवीक्षितुमपि । न शेकुः ॥ ३७ ॥

अपीति । कश्चित्पुरुषः । देवोपमो देवसमानरूपवानपि । भवेत् । अथवा । राजा नृपतितुल्यरूपवानपि । भवेत् । अथवा । अतिरूपवान् यः कश्चन बहुरूपयुक्तोऽपि । भवेत् । तं तथाविधं नरमपि । ता गोप्यः । आत्मनि स्वमनसि । विष्ठाक्रमिणा । समं तुल्यम् । विदुः ॥३८॥ ग्राम्या इति । तासां गोपीनाम् । ग्राम्या मायिकाः । पश्चापि । विषयाः । विषोपमा गरलतुल्याः । आसन् । कृष्णभक्तिं विना । एकोऽपि । क्षणः । युगोपमः । आसीत् ॥ ३९ ॥ एवमिति । एवममुना प्रकारेण । गोपीनामिवेत्यर्थः । यस्य भक्तस्य । नराकृतौ । कृष्णे श्रीहरौ । पतिभावः । भवेत् । तदन्यत्र कृष्णेतरस्मिन्सर्वपदार्थे । अरुचिरप्रीतिश्च । भवेत् । तत् । पातिव्रत्यमङ्गम् । इयताम् ॥ ४० ॥ राजेति । यः पुरुषः । रूपगुणादिभिः । राजदेवसुरेन्द्राद्यैः । समः । स्यात् । तस्मिंस्तथाविधे । नरेऽपि । अस्य पातिव्रत्याङ्गवतो भक्तस्य । प्रीतिः । क्वचित्कदाचिदपि । न भवेत् ॥ ४१ ॥ यथेति । तथा । पुरीषादि गूथप्रभृतिवीभत्सं वस्तु । दृष्ट्वा । ततः सकाशात् । दृष्टिः । निवर्त्तते । तथैव । कृष्णानर्हाच्छ्रीकृष्णसेवायामनुपयुक्तत्वेन सर्वथाऽयोग्यात् । अर्थात्पदार्थात्सकाशात् । अस्य पातिवत्याङ्गवतो भक्तस्य । दृष्टिः । निवर्त्तते ॥ ४२ ॥ पतीति

अपि देवोपमः कश्चिद्राजा वोऽप्यतिरूपवान् । विदुस्तमपि ता विष्ठाक्रमिणा सममात्मनि ॥ ३८ ॥ ग्राम्याः पश्चापि विषयास्तासामासन्विषोपमाः । कृष्णभक्तिं विनैकोऽपि क्षणश्चासीद्युगोपमः ॥ ३९ ॥ एवं यस्य भवेत् कृष्णे पतिभावो नराकृतौ । अरुचिश्च तदन्यत्र पातिव्रत्यं तदीयताम् ॥ ४० ॥ राजदेवसुरेन्द्राद्यैः समो रूपगुणादिभिः । यः स्यात्तस्मिन्नपि नरे नास्य प्रीतिर्भवेत् क्वचित् ॥ ४१ ॥ यथा दृष्ट्वा पुरीषादि ततो दृष्टिर्निवर्त्तते । कृष्णानर्हात्तथैवार्थाद् दृष्टिरस्य निवर्त्तते ॥ ४२ ॥ पतिभावो हरावेव स्यान्न त्वन्यत्र कुत्रचित् । स्यादस्यान्येषु देवेषु तत्सेवकमतिस्तथा ॥ ४३ ॥ अनन्यभक्त इत्थं यः स पातिव्रत्यवान्मतः । दासत्वेनाथ भजतः स्थितिं पुंसो वदाम्यहम् ॥ ४४ ॥ दास्यभक्तावपि भवेत्पातिव्रत्य इव प्रभौ । प्रेमाधिक्यं च तत्सेवारुचिर्वह्नी सदा हृदि ॥ ४५ ॥ येन येन भवेत्प्रीतिः स्वपतेस्तत्तदादरात् । दास्यभाक् कर्म कुर्वीत नेतरत्तु कदाचन ॥ ४६ ॥

। अस्य भक्तस्य । हरावेव । पतिभावः । स्यात् । अन्यत्रान्यस्मिन् । कुत्रचित्कस्मिंश्चिदपि पुरुषे । नतु पतिभावो न स्यादेव । तथा । अन्येषु श्रीहरीतरेषु । देवेषु । तत्सेवकमतिः । स्यात् । इदं भगवदेकान्तिकभक्तानामप्युपलक्षणम् ॥ ४३ ॥ अनन्येति । इत्थममुना प्रकारेण । यः । अनन्यभक्त एकान्तिकभक्तः । सः । पातिव्रत्यवान्पातिव्रत्याङ्गयुक्तः । मतः । अथानन्तरम् । दासत्वेन । भजतः श्रीहरिं सेवमानस्य । पुंसो भक्तस्य । स्थितिम् । अहम् । वदामि ॥ ४४ ॥ दास्येति । हे सन्तः ! । पातिव्रत्येऽङ्गे इव । दास्यभक्तावपि । प्रभौ श्रीहरौ । प्रेमाधिक्यम् । भवेत् । हृदि दास्यभक्तिमद्भक्तहृदयेऽपि । सदा निरन्तरम् । तत्सेवारुचिः श्रीहरिसेवनरुचिः वह्नी अतिशयिता च । भवेत् ॥४५॥ येनेति । दास्यभाक् दास्येन भगवन्तं भजमानो भक्तः । येन । येन । कर्मणा । स्वपतेः स्वस्वामिनः श्रीहरेः । प्रीतिः । भवेत् । तत्तत् । कर्म क्रियाम् । आदरात् । कुर्वीत । इतरत्तद्भिन्नम् । कर्म तु । कदाचन । न कुर्वीत ॥ ४६ ॥

तदिति । तस्य दास्यभक्तिमतो भक्तस्य । तदन्तिकस्थितौ श्रीहरिनिकटावासे एव । रुचिः । स्यात् । तस्य श्रीहरेः । समीक्षणे दर्शनकरणे एव । रुचिः । स्यात् । तद्वार्त्ताश्रवणादावेव । रुचिः । स्यात् । अन्यतो हरिनिकटावासादिकर्मेतरक्रियायाम् । रुचिः । न स्यात् ॥ ४७ ॥ तदिति । तद्गुणान् श्रीहरेर्दयाक्षमावात्सल्यादिसद्गुणान् । तत्स्वभावं स्वभक्तरञ्जनादिकां श्रीहरिप्रकृतिं च । सादरं यथा । बहुतिशयितं यथातथा । मन्येत सत्कुर्यात् । सदा । तदधीनः श्रीहर्याधीनसर्वक्रियः । तिष्ठेद्वर्त्तेत । क्वचित्कदाचिदपि । स्वेच्छाचारी स्वतन्त्रस्तु । न तिष्ठेत् ॥ ४८ ॥ तदिति । स भक्तः । तदाज्ञापालनोत्कण्ठः श्रीहरिनिदेशाचरणोत्सुकः सन् । तदग्रे । प्राञ्जलिः । तिष्ठेत् । तदाज्ञप्तं श्रीहर्यादिष्टं कर्म । अत्यादरेणैव । समाचरेत् ॥ ४९ ॥ आज्ञयेति । तस्य श्रीहरेः । आज्ञया । कार्यार्थं किञ्चित्कार्यं कर्त्तुम् । दूरगो दूरदेशावस्थितः सन्नपि । न खिद्येत् । तद्धर्याज्ञप्तम् । कार्यम् । अतिहर्षेण । कुर्वन्सन् । सर्वदा । आसीत तिष्ठेत् ॥ ५० ॥ तदिति । गृहस्थो गृहाश्रमावस्थितोऽपि दासभक्तः । तदाज्ञया । गृहाश्रमम् । सद्यस्तत्क्षणेणैव । जह्यात् । त्यागी साधुधर्मावस्थितो दासभक्तः । तदाज्ञया । प्रवृत्तं

तदन्तिकस्थितावेव तस्यैव च समीक्षणे । तद्वार्त्ताश्रवणादौ च स्याद्रुचिस्तस्य नान्यतः ॥ ४७ ॥ तद्गुणांस्तत्स्वभावं च बहुमन्येत सादरम् । तदधीनः सदा तिष्ठेत्स्वेच्छाचारी तु न क्वचित् ॥ ४८॥ तदाज्ञापालनोत्कण्ठस्तदग्रे प्राञ्जलिः स च । तिष्ठेदत्यादरेणैव तदाज्ञप्तं समाचरेत् ॥ ४९ ॥ आज्ञया तस्य कार्यार्थं न खिद्येद् दूरगोऽपि सन् । अतिहर्षेण तत्कार्यं कुर्वन्नासीत सर्वदा ॥ ५० ॥ तदाज्ञया गृहस्थोऽपि सद्यो जह्याद् गृहाश्रमम् । कुर्यात् कर्म प्रवृत्तं च त्यागी स्वं धर्ममत्यजन् ॥ ५१ ॥ एवं दास्येन भजतः स्थितिः पुंसोऽवगम्यताम् । तथाविधोऽत्र गोपालानन्दः साधुर्हि वर्त्तते ॥ ५२ ॥ तथैव मुक्तानन्दश्च साधुरस्ति महामतिः । अन्येषु साधुष्वपि सा तारतम्येन वर्त्तते ॥ ५३ ॥ श्रेष्ठमध्यकनिष्ठत्वमेतत्त्र्यङ्गवतामपि । तीव्रमध्यावरैर्भावैर्भक्तानां बोध्यमञ्जसा ॥ ५४ ॥ यस्य नैतेष्वेकतममप्यङ्गं स तु पामरः । तस्मान्मदाश्रितैरेकमपि संसाध्यमादरात् ॥ ५५ ॥

भगवन्मन्दिरादिसम्बन्धं प्राप्तं व्यावहारिकम् । कर्म । स्वं स्वकीयम् । धर्ममष्टविधब्रह्मचर्यादिम् । अत्यजन्सन् । कुर्यात् ॥५१॥ एवमिति । एवममुना प्रकारेण । दास्येनाङ्गेन । भजतो हरिं सेवमानस्य । पुंसो भक्तस्य । स्थितिः । अवगम्यताम् । अत्र सत्सङ्गे । तथाविधो दास्याङ्गेन भगवन्तं भजमानः । गोपालानन्दः । साधुः । वर्त्तते । हि प्रसिद्धौ ॥ ५२ ॥ तथेति । तथैव तद्वदेव । महामतिः । मुक्तानन्दः । साधुश्च । अस्ति । अन्येषु ताभ्यामितरेषु । साधुषु नित्यानन्दशुकानन्दगुणातीतानन्दब्रह्मानन्दानन्दानन्दमहानुभावानन्दादिमुनिष्वपि । सा दासभावेन स्थितिः । तारतम्येन न्यूनाधिकभावेन । वर्त्तते ॥ ५३ ॥ श्रेष्ठेति । एतत्त्र्यङ्गवतामात्मनिष्ठादिभिस्त्रिभिरेतैरङ्गरुपेतानाम् । भक्तानामपि । तीव्रमध्यावरैः । भावैः । श्रेष्ठमध्यकनिष्ठत्वम् । अञ्जसा । बोध्यम् ॥५४॥ यस्येति । यस्य भक्तस्य । एतेषु त्रिष्वङ्गेषु मध्ये । एकतममपि । अङ्गम् । न स्यात् । स भक्तस्तु । पामरः प्राकृतसदृशः । अस्ति । तस्माद्धेतोः । मदाश्रितैर्भक्तैः । एकमप्यङ्गम् । आदरात् । संसाध्यं दृढं कार्यम् ॥ ५५ ॥

एकस्मिन्निति । एकस्मिन्नपि । अङ्गे । अपूर्णे सति । देहत्यागः । शुभः समीचीनः । नहि नास्त्येव । पूर्णे एकस्मिन्नङ्गे सम्पूर्णे जाते सत्येव । स देहत्यागः । श्रेयानतिश्रेष्ठोऽस्ति । हि । अतोहेतोः । तदुद्यम एकाङ्गसंसाधनोद्योगः । कार्यः ॥ ५६ ॥ गृहस्थितानां केषांचिद्भक्तानां त्यागिभवनेच्छा जायते ते च त्यागिनो भूत्वा पुनर्गृह्यार्थान्स्मरन्ति तेषां तथाभाव उभयभ्रष्टताया हेतुरस्तीति बुध्वा तं त्यक्त्वा च यथाधिकारमेकत्र स्थित्वा श्रीकृष्णेतरार्थारुचिपूर्वमङ्गत्रयान्यत-माङ्गसम्पादनं कार्यमित्याह त्रिभिः । सांसारिकस्येति । हे सन्तः ! । सांसारिकस्य जगद्व्यवहारे वर्त्तमानस्य । जीवस्य भगवद्भक्तस्य । एकान्तिक्येकरूपा । स्थितिर्निष्ठा । नास्ति । खलु । केचित् । मानवा भक्ताः । गृहे गृहस्थाश्रमे । वसन्तः सन्तः । त्यागेच्छाम् । कुर्वन्ति ॥ ५७ ॥ त्यागमिति । अथानन्तरम् । ते त्यागेच्छावन्तो भक्ताः । त्यागम् । कृत्वा । भूयः पुनरपि । त्यक्तानपि । अर्थान्पदार्थान् । स्वयम् । मनसा स्मरन्ति । तेन हेतुना । उभयभ्रष्टाः । भवन्ति । हि ॥ ५८ ॥ तस्मा-दिति । तस्माद्धेतोः । नित्यमेव । सत्सङ्गं भगवदेकान्तिकसाधुसमागमम् । कृत्वैव । मुमुक्षुणा गृहिणा त्यागिना च भक्तेन । कृष्णेतरपदार्थेषु । अल्पापि । हृद्रुचिर्मनसः

एकस्मिन्नप्यपूर्णेऽङ्गे देहत्यागः शुभो न हि । पूर्ण एव हि स श्रेयानतः कार्यस्तदुद्यमः ॥ ५६ ॥ सांसारिकस्य जीवस्य स्थितिर्नैकान्तिकी खलु । गृहे वसन्तस्त्यागेच्छां केचित्कुर्वन्ति मानवाः ॥ ५७ ॥ त्यागं कृत्वाऽथ ते भूयस्त्यक्तानर्थानपि स्वयम् । स्मरन्ति मनसा तेनोभयभ्रष्टा भवन्ति हि ॥ ५८ ॥ तस्मात् कृत्वैव सत्सङ्गं नित्यमेव मुमुक्षुणा । कृष्णेतरपदार्थेषु सन्त्याज्याऽल्पाऽपि हृद्रुचिः ॥ ५९ ॥ अङ्गं न यस्यैकमपि दृढं स्यात्तेन यत्नतः । यथायथं दृढपाल्याः सदुक्ता नियमाः सदा ॥ ६० ॥ अपक्वः सोऽन्यथा भ्रष्टः सत्सङ्गादपि जायते । ततः संसृति-माप्नोति त्याज्याऽतोऽनवधानता ॥६१॥ आपतेद्यत्क्वचिद् दुःखं भक्तस्य तदपि प्रभोः । इच्छयैवेति विज्ञेयं परीक्षां तस्य कुर्वतः ॥६२॥ न कालकर्ममायायां कर्तृता त्वत्र विद्यते । भगवद्विमुखेष्वेव नृषु सा त्ववगम्यताम् ॥ ६३ ॥

श्रीनिः । सन्त्याज्या । कृष्णेतरपदार्थरुचित्यागपूर्वमङ्गत्रयान्यतमाङ्गं सम्पाद्यमितिभावः ॥ ५९ ॥ प्रासङ्गिकमुक्त्वा पुनः प्रकृतमाह । अङ्गमिति । यस्य त्यागिनो गृहिणश्च भक्तस्य । एकमपि । अङ्गम् । दृढम् । न स्यात् । तेन भक्तेन । सदुक्ता भगवदेकान्तिकसाध्वभिहिताः । नियमाः स्वस्वधर्माः । यथायथं यथायोग्यम् । यत्नतः । सदा । दृढम् । पाल्याः ॥ ६० ॥ अपक्व इति । अन्यथा स्वस्वनियमपालनाभावे । अपक्वः । स भक्तः । सत्सङ्गादपि । भ्रष्टः । जायते । ततस्तदनन्तरम् । संसृतिम् । आप्नोति । अतोहेतोः । अनवधानता नियमपालने प्रमादः । त्याज्या ॥ ६१ ॥ आपतेदिति । भक्तस्य त्रिविधाङ्गान्यतमाङ्गवतो भगवद्भक्तस्य । क्वचित् । यत् । दुःखम् । आपतेत् । तद्दुःखमपि । तस्य भक्तस्य । परीक्षाम् । कुर्वतः । प्रभोः श्रीहरेः । इच्छयैव । आपतेत् । इतीत्थम् । विज्ञेयम् ॥ ६२ ॥ नेति । अत्र भक्तस्य दुःखप्राप्तौ । कालकर्ममायानाम् । कर्तृता । न विद्यते । सा कालादिकृतदुःखकर्तृता तु । भगवद्विमुखेषु । नृषु जनेष्वेव । अस्ति । इति । अवगम्यताम् ॥ ६३ ॥

कृष्ण इति । जवनिकाछन्नस्तिरस्कारिणीं प्रसार्य प्रछन्नमवस्थितः । पुमान्कश्चिज्जन इव । अखिलेश्वरः । दुःखप्रेरकः । स कृष्णः । तदान्तरः स्वभक्तहृदये वर्त्तमानः सन् । धैर्यं स्वभक्तधीरतागुणम् । समीक्षते ॥६४॥ काल इति । काल । मायाः । यमादिश्च । एते । पुरुषोत्तमं श्रीहरिम् । भजतोऽङ्गत्रयान्यतमेन सेवमानस्य भक्तस्य ईक्षणेऽभिमुखदर्शनेऽपि । न शक्ताः । वै । तर्हि । तदर्द्दने तस्य भक्तस्य पीडने । कुतः शक्ताः स्युः । अपि तु नैव शक्ताः । स्युरित्यर्थः ॥ ६५ ॥ मुक्तानन्द इति । अथैवंविधश्रीहरिवाक्यश्रवणानन्तरम् । सदःस्थितः । मुक्तानन्दोमुनिः । तं श्रीहरिम् । प्रणम्य । पप्रच्छ । हे हरे ! । इयं त्वदुक्ता । अङ्गत्रयदृढीकारवार्त्ता । सूक्ष्मा । अस्ति । हि ॥ ६६ ॥ सूक्ष्मेति । सा वार्त्ता तु । सूक्ष्मबुद्धिमताम् । सतां भगवदेकान्तिकसाधुनामेव । सुज्ञेया । सुसाध्या च । अस्ति । वै । सर्वैः । नृभिस्त्वद्भक्तैस्तु । ज्ञातुम् । न शक्या । दुष्करा दुःसाध्या च । अस्ति ॥ ६७ ॥ सदिति । भुवि पृथिव्याम् । सत्सङ्गिनो । मनुष्यास्त्वद्भक्तास्तु । लक्षशः । वर्त्तन्ते । सर्वेषाम् । तेषां त्वद्भक्तानाम् । सुकरं सुसाध्यम् । साधनम् । वक्तुम् । अर्हसि ॥ ६८ ॥ तत इति । तत एवंविधमुक्तानन्दमुनिप्रश्नश्रवणानन्तरम् । दयानिधिः ।

कृष्णो जवनिकाछन्नः पुमानिव तदान्तरः । धैर्यं समीक्षते दुःखप्रेरकः सोऽखिलेश्वरः ॥ ६४ ॥ कालो माया यमादिश्च भजतः पुरुषोत्तमम् । ईक्षणेऽपि न वै शक्ताः कुतस्तर्हि तदर्द्दने ॥ ६५ ॥ मुक्तानन्दोऽथ पप्रच्छ तं प्रणम्य सदःस्थितः । अङ्गत्रयदृढीकारवार्त्ता सूक्ष्मेयमस्ति हि ॥ ६६ ॥ सूक्ष्मबुद्धिमतामेव सुज्ञेया सा तु वै सताम् । ज्ञातुं शक्या न तु नृभिः सर्वैरस्ति च दुष्करा ॥ ६७ ॥ सत्सङ्गिनो मनुष्यास्तु वर्त्तन्ते भुवि लक्षशः । सर्वेषां सुकरं तेषां साधनं वक्तुमर्हसि ॥ ६८ ॥ ततो नारायणमुनिस्तमुवाच दयानिधिः । एतदङ्गत्रिकोपेताः सेव्याः सन्तोऽखिलैरपि ॥ ६९ ॥ वर्त्तेरन् ये तदाज्ञायां सदोद्युक्ताश्च सादरम् । अल्पज्ञा अपि ते नूनं पार्षदाः स्युर्जगत्प्रभोः ॥ ७० ॥ कृतार्थाश्च भवेयुस्ते तावतैव न संशयः । माहात्म्यमेवं हि सतां महदस्ति महात्मनाम् ॥ ७१ ॥ पामरोऽपि पुमानत्र यः कश्चित्साधुसेवनम् । कुर्यान्निष्कपटः प्रीत्या मुक्ततुल्योऽस्ति स ध्रुवम् ॥ ७२ ॥

नारायणमुनिः श्रीहरिः । तं मुक्तानन्दमुनिम् । उवाच । हे मुने ! । अखिलैः सकलैरपि । सत्सङ्गिभक्तैस्तु । एतदङ्गत्रिकोपेता एतेषां त्रयाणामङ्गानां मध्ये येन केनाप्येकाङ्गेनाप्युपेताः । सन्तः साधवः । सेव्या अनुवृत्तिपूर्वं परिचरणीयाः ॥ ६९ ॥ वर्त्तेरन्निति । ये भक्ताः । सदा सर्वकालम् । उद्युक्तास्तत्पराः सन्तः । तदाज्ञायां तथाविधसाधुनिदेशे । सादरं यथा । वर्त्तेरन् । अल्पज्ञा अपि । ते भक्ताः । जगत्प्रभोः श्रीहरेः । पार्षदाः । स्युः । नूनम् ॥ ७० ॥ कृतार्था इति । ते भक्ताः । तावता तत्सेवनेनैव । कृतार्थाः । भवेयुः । एवमित्थंविधम् । महात्मनां महानुभावानाम् । सतां तथाविधसाधूनाम् । महदतिशयितम् । माहात्म्यम् । अस्ति । न संशयः । अत्र संशयो नास्तीत्यर्थः ॥ ७१ ॥ पामर इति । अत्र सत्सङ्गे । पामरः प्राकृतोऽपि । यः । कश्चित् । पुमान् । भक्तः । निष्कपटः सन् । प्रीत्या । साधुसेवनम् । कुर्यात् । स भक्तः । मुक्ततुल्यः । ध्रुवमेव । अस्ति जायते ॥ ७२ ॥

दुःखानीति । हरिम् । तन्नृंस्तदेकान्तिकभक्तांश्च । सेवमानस्य भक्तस्य । अशेषाण्यपि । दुःखानि । नाशम् । यान्ति । तेषां हरितद्भक्तानाम् । स्वभावसिद्धः साहजिकः । निगमादिगीतो वेदादिसच्छास्त्रकीर्त्तितः । एवंविध एव । प्रतापः । अस्ति ॥ ७३ ॥ इतीति । इत्येवंविधाम् । आप्तां परमहितकारिणीम् । हरेः । वचनसुधाम् । पीत्वा । सः । साधुर्मुक्तानन्दमुनिः तथा । अन्ये । अगृहिगृहिणस्त्यागिनो गृहस्थाश्च । भक्ताः । परममुदम् । आपुः । ततस्तदनन्तरम् । सर्वेऽपि भक्ताः । स्वस्वाङ्गं स्वकीयं स्वकीयमात्मनिष्ठाद्यङ्गम् । द्रढयितुम् । उद्यतास्तत्पराः । अभूवन् ॥ ७४ ॥ अङ्गत्रयं स्वभक्तैस्तु साध्यं लक्षणतोऽब्रवीत् । यो हरिः स ददात्वेतत्रयं मह्यं दयानिधिः ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्पदनुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां शताधिकपञ्चनवतितमस्तरङ्गः ॥ १९५ ॥ ६२ ॥

जीवेन्द्रियान्तःकरणवेदनानां पृथक् पृथक् । लक्षणं यज्ज्ञानबलसम्पादनसुसाधनम् ॥ १ ॥ साधुसेवाफलं यच्च यच्चद्द्रोहफलं तथा । त्रिषष्टितमके त्वेतत्सर्वं

दुःखान्यशेषाण्यपि यान्ति नाशं संसेवमानस्य हरिं च तन्नॄन् । प्रताप एवंविध एव तेषां स्वभावसिद्धो निगमादिगीतः ॥७३॥ इत्याप्तां वचनसुधां हरेः स साधुर्भक्ताश्चागृहिगृहिणोऽखिलास्तथाऽन्ये । पीत्वाऽऽपुः परममुदं ततश्च सर्वे स्वस्वाङ्गं दृढयितुमुद्यता अभूवन् ॥७४॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते शताधिकपञ्चनवतितमस्तरङ्गः ॥ १९५ ॥ ६२ ॥

शकाब्दे विक्रमार्कस्य चन्द्राष्टवसुभूमिते । मार्गकृष्णद्वितीयायां वचोऽमृतमिदं हरेः ॥ १ ॥ तत्र दुर्गपुरे दुर्गे उत्तमस्य महीभुजः । निजाश्रमे पीठवरे स व्यराजत् सितांशुकः ॥ २ ॥ नानादेशागतैर्भक्तैस्त्यागिभिर्गृहिभिस्तथा । वृतः स्वकीयैः परितः प्रसन्नमुखपङ्कजः ॥ ३ ॥ कथां भागवतीयां च भजनानन्दवक्त्रतः । श्रुत्वाऽऽसीनं तमप्राक्षीन्मुक्तानन्दः सदग्रणीः ॥ ४ ॥ विचारस्तव भक्तानां योऽन्तरे द्रष्टृदृश्ययोः । वर्त्तते स पृथग्भावं तयो रक्षति मध्यगः ॥ ५ ॥

संकथितं स्फुटम् ॥ २ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यतम् । ( १८८१ ) मार्गकृष्णद्वितीयायां मार्गशीर्षमासस्य कृष्णपक्षागतद्वितीयातिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमस्य । महीभुजो नृपस्य । दुर्गे । निजाश्रमे स्वकीयावासभवने । पीठवरे स्वास्तृतस्वपर्यङ्कासने । सीतांशुकः परिधृतसकलश्वेतवसनः । स श्रीहरिः । व्यराजदुपवेशनचातुर्येण स्वानां मनांस्याकर्षन् शुशुभे ॥ २ ॥ तं विशिनष्टि । नानेति । नानादेशागतैः । त्यागिभिः । तथा । गृहिभिः । स्वकीयैः । भक्तैः । परितः । वृतः सभायां संवेष्टितः । प्रसन्नमुखपङ्कजः ॥ ३ ॥ कथामिति । भजनानन्दवक्त्रतो भजनानन्दमुनेराख्यात् । भागवतीयां श्रीमद्भागवतपञ्चमस्कन्धसम्बन्धिनीम् । कथाम् । श्रुत्वा । आसीनं स्वस्थमनस्तयोपविष्टम् । तं श्रीहरिम् । सदग्रणीः । मुक्तानन्दो मुनिः । अप्राक्षीत् ॥ ४ ॥ विचार इति । हे हरे ! । तव । भक्तानां साक्षात् श्रीकृष्णस्य तवात्मनिष्ठानामाश्रितजनानाम् । द्रष्टृदृश्ययोरात्मानात्मनोः । अन्तरे मध्ये । यः । विचारः । वर्त्तते ।

मध्यगो द्रष्टृदृश्ययोर्मध्येऽवस्थितः । स विचारः । तयोर्द्रष्टृदृश्ययोः । पृथग्भावं भिन्नभिन्नत्वम् । रक्षति ॥ ५ ॥ द्रष्टेति । द्रष्टा जीवः । प्रोक्तः । अन्तःकरणम् । सर्वशः । इन्द्रियाणि च । दृश्यानि । प्रोक्तानि । एतानि देहस्याप्युपलक्षणम् । आन्तरो द्रष्टृदृश्यमध्यावस्थितः । विचारः । ज्ञानरूपश्च । प्रोक्तः ॥ ६ ॥ जीव इति । तत्र जीवादिषु त्रिषु मध्ये । जीवे । वेदनम् । कियत्किंप्रमाणम् । अस्ति । अथ च । इन्द्रियेषु । वेदनम् । कियत् । अस्ति । अन्तःकरणे च । वेदनम् । कियत् । अस्ति । इत्येतत् । मे मह्यम् । वद । अत्रायं प्रश्नाशयः । वेदनं रूपो धर्मस्तु मुख्यतयात्मन एवास्ति । इन्द्रियान्तःकरणादिषु तु तद्वृत्त्यावेशेन तदस्ति अतो जीवे इन्द्रियेष्वन्तःकरणेषु च कियत्कियद्वेदनमस्त्येतद्ब्रूहीति ॥ ७ ॥ 'मुक्तानन्देन मुनिना पृष्ट इत्थं स धर्मजः । जगादानन्दयंस्तं च स्वानपरान्सकलानि'ति । शब्दादीनामिति । इहास्मिन्देहे । शब्दादीनाम् । अर्थानां विषयाणाम् । इन्द्रियैः । पृथक् पृथक् । प्रत्यक्षम् । यत् । वेदनम् । स्यात् । तत् । सामान्यतः । अस्ति । इति । ईयतां बुध्यताम् । इन्द्रियजनस्य व्यक्तिवर्जितस्य शब्दार्थज्ञानस्य सामान्यत्वादयथार्थत्वाच्च तेषु तत्तावन्मात्रमस्तीतिभावः ॥ ८ ॥ ज्ञानमिति । शब्दादीना-

द्रष्टा जीवोऽन्तःकरणमिन्द्रियाणि च सर्वशः । दृश्यानि ज्ञानरूपश्च विचारः प्रोक्त आन्तरः ॥ ६ ॥
जीवेऽस्ति वेदनं तत्र कियदस्तीन्द्रियेष्वथ । वेदनं चान्तःकरणे कियदस्तीति मे वद ॥ ७ ॥ श्रीहरि-
रुवाच–शब्दादीनामिहार्थानामिन्द्रियैस्तु पृथक् पृथक् । प्रत्यक्षं वेदनं स्याद्वै सामान्यत इतीयताम्
॥ ८ ॥ ज्ञानं शुभाशुभत्वादेः शब्दादीनां विशेषतः । जायते यन्नूनमन्तःकरणैर्मनआदिभिः ॥ ९ ॥
तद्भोगात्सुखिदुःखित्ववेदनं त्वात्मनो मतम् । एवं भेदेन यज्ज्ञानं तत्तु स्यान्निर्बलात्मनः ॥ १० ॥
यदिन्द्रियान्तःकरणनिष्ठं वेदनमस्ति तत् । ज्ञानादिबलसम्पन्नो विद्याद्वस्तुत आत्मनः ॥ ११ ॥

मर्थानाम् । शुभाशुभत्वादेः । विशेषतः । यत् । ज्ञानं सविकल्पवेदनम् । जायते । तत् । मनआदिभिः । अन्तःकरणैः । जायते । नूनम् । विषयेन्द्रियसम्बन्धानन्तरं विशेषव्यक्त्या यत्तत्स्वरूपवेदनं तावन्मात्रमन्तःकरणे वेदनमस्तीतिभावः ॥ ९ ॥ तदिति । तद्भोगात्सविवेकमिन्द्रियद्वारा शब्दाद्यर्थोपभोगात् । सुखिदुःखित्ववेदनम् । आत्मनः । मतम् । इन्द्रियान्तःकरणैरर्थभोगजन्यसुखदुःखेऽनुभूतेऽपि तेषां जडत्वेन तत्संज्ञानाभावाज्ज्ञानपूर्वं तदनुभवनं यत्तावन्मात्रं जीवे वेदनमस्तीतिभावः । एवममुना प्रकारेण । भेदेन । यत् । ज्ञानम् । तत्तु । निर्बलात्मन आत्मज्ञानादिबलरहितस्य । केवलं देहाभिमानिन इत्यर्थः । स्यात् ॥ १० ॥ यदिति । इन्द्रियान्तःकरणनिष्ठम् । यत् । वेदनम् । अस्ति । तत् । ज्ञानादिबलसम्पन्नः स्वात्मादेः स्वरूपस्य यथार्थतयाऽवबोधादिबलेन युक्तः भक्तः । वस्तुतः । आत्मनः । विद्यात् । चित्सुखात्मस्वरूपं स्वात्मानं जडान्तःकरणेन्द्रियादीनि मया चेतनीकृतानीति चाबुध्वाऽन्तकरणेन्द्रियादिना ज्ञानवानहं सुखी दुःख्यस्मीति जानन्देहाभिमानवान् । अस्ति । मदात्मना चेतनान्यन्तःकरणादीनि न किमपि ततः कथं तन्निमित्तं सुखी दुःखी वा स्यामिति जानंस्तदभिमानरहित आत्माभिमानवानस्तीति भावः ॥ ११ ॥

स्वातन्त्र्येणेति । स ज्ञानादिबलसम्पन्नो भक्तस्तु । स्वातन्त्र्येणैव । योग्यान् । अर्थान् । गृह्णीयात् । अयोग्यान् । अर्थान् । वर्जयेदेव । तद्वशग इन्द्रियार्थाधीनः । न भवेत् । ध्रुवम् ॥१२॥ दुःस्वप्न इति । बलीयसः स्वात्मादिविचारबलयुक्तस्य । जितेन्द्रियान्तःकरणबलस्य । हरिसेविनः । तस्य भक्तस्य । क्वापि कदाचिदपि । दुःस्वप्नः स्वधर्मविरोधित्वादयोग्यः स्वप्नः । नैव । जायते ॥१३॥ इन्द्रियेति । अथ च । अन्यो देहाभिमानी निर्बलभक्तः । इन्द्रियादिवशः । अतएव । तदाकृष्टः । सन् । अवकृष्यते । ततोहेतोः । अतिदुःखी । भवति जायते । तस्माद्धेतोः । स निर्बलोभक्तः । बलमात्मज्ञानादिसामर्थ्यम् । अर्जयेत्सम्पादयेत् ॥१४॥ अथेति । अथैवंविधश्रीहरिवाक्यश्रवणानन्तरम् । सः । साधुर्मुक्तानन्दमुनिः । नारायणम् । तं श्रीहरिम् । पुनः । अपृच्छत् । हे प्रभो ! । निर्बलेन भक्तेन । केन । उपायेन । दृढम् । बलम् । सम्पाद्यम् ॥ १५ ॥ तमिति । तमेवंपृच्छन्तं मुक्तानन्दमुनिम् । प्रभुः श्रीहरिः । उवाच । हे मुने ! । तेन निर्बलभक्तेन । साङ्ख्याभ्यासेनात्मानात्मविवेकरूपसाङ्ख्याभ्यसनेन । सद्रूपात्मतया । स्थितिरवस्थानरूपम् । बलम् । तत्त्वतो याथार्थ्यतः । सम्प्राप्यते । नूनम् ॥ १६ ॥ अथवेति । अथवेति पक्षान्तरे । कृष्णे श्रीहरौ ।

स्वातन्त्र्येणैव गृह्णीयाद्योग्यानर्थान् स तु ध्रुवम् । अयोग्यान् वर्जयेदेव न तु तद्वशगो भवेत् ॥ १२ ॥ दुःस्वप्नो जायते नैव तस्य क्वापि बलीयसः । जितेन्द्रियान्तःकरणबलस्य हरिसेविनः ॥ १३ ॥ इन्द्रियादिवशोऽथान्यस्तदाकृष्टोऽवकृष्यते । ततोऽतिदुःखी भवति स तस्माद्बलमर्जयेत् ॥ १४ ॥ अथापृच्छत्स साधुस्तं पुनर्नारायणं प्रभो ! । केनोपायेन सम्पाद्यं निर्बलेन बलं दृढम् ॥१५॥ तमुवाच प्रभुस्तेन सांख्याभ्यासेन तत्त्वतः । सम्प्राप्यते बलं नूनं सद्रूपात्मतया स्थितिः ॥१६॥ अथवाऽतिशयप्रीत्या कृष्णे तत्सत्सु चादरात् । तत्सेवया च नवधा भक्त्या तल्लभ्यते दृढम् ॥ १७ ॥ साधुसेवासमं नास्ति साधनं सर्वसिद्धिदम् । तस्मात्सैव विधातव्या श्रद्धयैव बलार्थिभिः ॥ १८ ॥ माननीयाः सदा सन्तो नापमान्याः कदाचन । तन्माननं महापुण्यं महाघं तदमाननम् ॥ १९ ॥ दर्शनस्यापि माहात्म्यं सतां वक्तुं न शक्यते । यमदूता अपि यतः पलायन्ते ससम्भ्रमम् ॥ २० ॥

तत्सत्सु तदेकान्तिकसाधुषु । अतिशयप्रीत्या गाढानुरागेण । आदरात् । तत्सेवया कृष्णतत्सेवनेन च । नवधा भक्त्या श्रीहरेः श्रवणादि नवधा सेवनेन च । दृढम् । तद्बलम् । लभ्यते ॥ १७ ॥ अथ स्वसाधूनां स्वस्वरूपस्य यथार्थज्ञत्वादत्याग्रहेणाप्यन्येभ्यस्तस्य यथार्थबोधनशीलत्वात्स्वधर्मज्ञानवैराग्यादिस्वप्रियबहुगुणयुक्तत्वाच्च तत्सेवां स्वसेवामिवाधिकतया दर्शयति नवभिः । साध्विति । साधुसेवासमम् । सर्वसिद्धिदम् । साधनम् । नास्ति । तस्माद्धेतोः । बलार्थिभिः स्वात्मादिबलप्राप्तीच्छुभिः । सा साधुसेवैव । श्रद्धयैव विधातव्या ॥ १८ ॥ माननीया इति । सन्तः । सदा । माननीयाः । कदाचन । नापमान्याः । तन्माननं साधुसन्माननम् । महापुण्यं बहुसुकृतप्रदम् । अस्ति । तदमाननं सदपमानाचरणम् । महाघं महापापजनकम् । अस्ति ॥ १९ ॥ दर्शनस्येति । सताम् । दर्शनस्यापि । माहात्म्यम् । वक्तुम् । न शक्यते । यतो यस्मात्सतां दर्शनात् । यमदूता अपि । ससम्भ्रमं सभयंयथातथा । पलायन्ते ॥ २० ॥

अन्तकाल इति । नृणां भक्तजनानाम् । अन्तकाले देहावसानसमये सति । देहे । अनेकशोऽनेकविधाः । व्यथाः पीडाः । जायन्ते । ता व्यथाः । अपि । तेन सद्दर्शनेन । नश्येयुः । सद्गतिर्भगवत्पदप्राप्तिश्च । भवेत् जायेतैव ॥ २१ ॥ अत इति । अतोहेतोः । कृष्णाश्रिताः प्रत्यक्षश्रीहर्याश्रयिणः । सन्तः । ब्रह्ममूर्त्तयोऽक्षरब्रह्मस्वरूपा एव । सन्ति । इतीत्थमेव । हृदि विज्ञाय । तेषु सत्सु । मर्त्यधीर्मनुष्यबुद्धिः । न कार्या । हि ॥ २२ ॥ स्वेति । यथा नृणां जनानाम् । स्वजनेषु । प्रीतिरनुरागः । तेषां स्वजनानाम् । पक्षपातश्च । सर्वथा । अस्ति । तद्वत्तथैव । सतां साधुसम्बन्धिनौ । उभौ । तौ प्रीतिपक्षपातौ । कार्यौ ॥ २३ ॥ सदिति । सत्सेविनि सदा साधुसेवोद्यते । नरे भक्ते । ममापि । नित्यम् । भृशमतिशयिता । रुचिः प्रीतिः । अस्ति । सद्द्रोही मत्साधुद्रोहकर्त्ता । जनस्तु । क्वापि कदाचिदपि । मम । दृष्टयेऽपि । न रोचते ॥ २४ ॥ महेति । महापापी अपि । नरः । कर्हिचित् । स्वात्स्वकीयात् । पापान्महाघात् । मोक्ष्यते । सद्द्रोही । नरस्तु । स्वात् । पातकात्सद्द्रोहरूपादघात् । कल्पान्तेऽपि । न मोक्ष्यते ॥ २५ ॥ तस्मादिति । तस्माद्धेतोः । सन्तः । सदा । पूज्याः । सर्वथा । माननीयाः सत्कार्याः । श्रद्धया । सेवनीयाश्च । यतः सत्पूजनादिभ्यः । वाञ्छितं सकलस्वाभीष्टफलम् । सिद्ध्यति ॥ २६ ॥ इतीति । इत्येवंविधम् । सुधां पीयूषसन्निभम् । हरिवचनम् । परममुदैव । निपीय । स साधुर्मुक्तानन्दमुनिः । तोषम् । आपत् । महति । तत्र तस्मिन् । सदसि सभायाम् । उपविष्टाः । अपरे । मुनिगृहिणश्चापि । तद्वन्मुक्तानन्दमुनिवदेव । तोषम् । आपुः ॥ २७ ॥ जीवादिज्ञानलक्ष्मोक्त्वा स्वसतां सेवनस्य तु । माहात्म्यं येन हरिणा प्रोक्तं तन्मे ददातु सः ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्स्नुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां शताधिकषण्णवतितमस्तरङ्गः ॥ १९६ ॥ ६३ ॥

अन्तकाले नृणां देहे जायन्तेऽनेकशो व्यथाः । तेन ता अपि नश्येयुर्भवेदेव च सद्गतिः ॥ २१ ॥ अतः कृष्णाश्रिताः सन्तो ब्रह्ममूर्त्तय एव हि । इत्येव हृदि विज्ञाय न कार्या तेषु मर्त्यधीः ॥ २२ ॥ स्वजनेषु यथा प्रीतिः पक्षपातश्च सर्वथा । तेषामस्ति नृणां तद्वत्सतां कार्यावुभौ च तौ ॥ २३ ॥ सत्सेविनि नरे नित्यं ममाप्यस्ति रुचिर्भृशम् । सद्द्रोही तु मम क्वापि दृष्टयेऽपि न रोचते ॥ २४ ॥ महापाप्यपि पापात्स्वात्कर्हिचिन्मोक्ष्यते नरः । सद्द्रोही तु पातकात्स्वात्कल्पान्तेऽपि न मोक्ष्यते ॥२५॥ तस्मात्सन्तः सदा पूज्या माननीयाश्च सर्वथा । श्रद्धया सेवनीयाश्च यतः सिद्ध्यति वाञ्छितम् ॥२६॥ इति हरिवचनं सुधां स साधुः परममुदैव निपीय तोषमापत् । महति सदसि तत्र चोपविष्टा मुनिगृहिणो ह्यपरेऽपि तद्वदेव ॥२७॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते शताधिकषट्नवतितमस्तरङ्गः ॥ १९६ ॥ ६३ ॥

सर्वेभ्योऽन्यावतारेभ्यः कृष्णस्याधिकता स्फुटम् । चतुःषष्टितमे प्रोक्ता दिव्यैश्वर्योक्तिपूर्विका ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८८१) सहस्य-शुक्लसप्तम्यां पौषमासस्य शुक्लपक्षागतसप्तमीतिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमाख्यमहीक्षितः । दुर्गे । वासुदेवालयस्य । वेद्यां बहिर्वेदिकायाम् । पीठे स्वास्तृते पर्यङ्कासने । असौ श्रीहरिः । उपाविशत् ॥ २ ॥ सितेति । सितसर्वाम्बरं परिहितसकलश्वेतवसनम् । नानाभक्त-सङ्घैर्नानादेशागतत्यागिगृहिस्वाश्रितजनवृन्दैः । परिश्रितं महासभायां संवेष्टितम् । उद्गाननमुदगास्यतयोपविष्टम् । तं श्रीहरिम् । स्वयम्प्रकाशानन्दोमुनिः । अपृच्छत् ॥ ३ ॥ अवतारा इति । हे स्वामिन् ! । हरेरक्षरधामावस्थितकृष्णापराभिधस्य हरिनाम्नः । तव सकलावतारधारिणो भगवतः । सहस्रशोऽसङ्ख्याताः । अवताराः । सन्ति । तेष्ववतारेषु । तारतम्यं न्यूनाधिकभावः । अस्ति । अथवा । अखिला अपि । तेऽवताराः । समानाः । सन्तिः ॥ ४ ॥ 'स्वयम्प्रकाशानन्देन सतेत्थं पुरुषोत्तमः । स सम्पृष्टोऽब्रवीत्तं च सुखयन्नपरानिति । अनादिश्रीकृष्णनामा स्वयं श्रीहरिरेव सः । सर्वावतारधर्त्तारं तं स्वमाह परोक्षतः' । मयेति । हे मुने ! ।

शकाब्दे विक्रमार्कस्य चन्द्राष्टवसुभूमिते । सहस्यशुक्लसप्तम्यां वचोऽमृतमिदं हरेः ॥ १ ॥ तत्र दुर्गपुरे दुर्गे उत्तमाख्यमहीक्षितः वासुदेवालयस्यासौ वेद्यां पीठ उपाविशत् ॥२॥ सितसर्वाम्बरं नानाभक्तसङ्घैः परिश्रितम् । स्वयम्प्रकाशानन्दस्तमपृच्छदुदगाननम् ॥३॥ अवतारा हरेः स्वामिंस्तव सन्ति सहस्रशः । तेष्वस्ति तारतम्यं वा समानास्तेऽखिला अपि ॥ ४ ॥ श्रीहरिरुवाच—मया व्यास-कृता ग्रन्थाः सन्ति सर्वेऽपि संश्रुताः । तदर्थो निश्चितश्चास्ति पौर्वापर्यविचारतः ॥५॥ तत्रावताराः कृष्णस्य मत्स्यकूर्मादयोऽखिलाः । आविर्भूता यथाकार्यं कृष्णस्तु भगवान्स्वयम् ॥६॥ अतोऽवतारी कृष्णोऽन्येऽवतारा इति निश्चयः । स हीष्टदेवोऽस्त्यस्माकमुद्धवा-ध्वनि तिष्ठताम् ॥ ७ ॥ बलिष्ठोऽप्यस्त्यसौ भीरुः काम्यपि ब्रह्मचर्यभाक् । शूरोऽप्यतिदयोऽस्तीति चित्रमैश्वर्यमस्य हि ॥ ८ ॥

मया । व्यासकृताः । सर्वेऽपि । ग्रन्थाः । संश्रुताः । सन्ति । पौर्वापर्यविचारतः । तदर्थो व्यासोक्तसर्वग्रन्थार्थश्च । निश्चितः । अस्ति ॥ ५ ॥ तत्रेति । तत्र तेषु ग्रन्थेषु । यथाकार्यम् । आविर्भूताः । मत्स्यकूर्मादयः । अखिलाः । अवताराः । कृष्णस्य । सन्तीत्युक्तमितिशेषः । कृष्णस्तु । स्वयम् । भगवान्सर्वावतारधर्त्ता । इत्युक्तमिति योजनीयम् । तथाचोक्तं श्रीभागवते । 'एते चांशकलाः पुंसः कृष्णस्तु भगवान्स्वयम् । इन्द्रारिव्याकुलं लोकं मृडयन्ति युगेयुगे' इति ॥ ६ ॥ अत इति । अतोहेतोः । कृष्णः । अवतारी सर्वावतारनिदानम् । अन्ये । अवताराः । इतीत्थम् । निश्चयः । अस्ति । अवताराणां यथाकार्याविर्भूतत्वादैश्वर्यतारतम्येन तेषु तारतम्यमस्ति । अव-तारिणः कृष्णस्य तन्निदानत्वात्सकलैश्वर्यसम्पन्नत्वाच्च तस्मिंस्तारतम्यं नास्तीति प्रश्नोत्तराशयः । स श्रीकृष्णः । उद्धवाध्वनि । तिष्ठताम् । अस्माकम् । इष्टदेवः । अस्ति । हि । औद्धवीयानां श्रीकृष्णेष्टदेवत्वाचस्य च मद्रूपत्वादहमेव तेषां इष्टदेवोऽस्मीति गूढोऽभिप्रायः ॥ ७ ॥ साम्प्रतं श्रीकृष्णस्य सर्वावतारित्व सर्वैश्वर्यवत्त्वोक्तौ परस्परविरुद्धगुणानां तदेकनिष्ठत्वादिना तदैश्वर्यचित्रजनकतामाह । बलिष्ठ इति । असौ श्रीकृष्णः । बलिष्ठः सर्वातिशायिबलवान्सन्नपि । भीरुः पलायनाचरणादिना भयभावः ।

अस्ति । कामी गोपिकास्कन्धोद्वहनादिचरित्रेण स्वीयकामितां दर्शयन्नपि । ब्रह्मचर्यभाक् नैष्ठिकब्रह्मचर्यवान् । अस्ति । श्रीकृष्णब्रह्मचारित्वं गोपालतापन्युपनिषदो बोध्यम् । शूरोऽपि शौर्यतया लक्षशोऽसुरनृपादीन् युद्धे व्यापादयन्सन्नपि । अतिदयस्तेषां मुक्तिप्रदत्वेन दयालुताऽतिशयं प्रदर्शयन् । अस्ति । इत्येवंविधम् । अस्य श्रीकृष्णस्य । चित्रं नानाविधाश्चर्यजनकम् । ऐश्वर्यम् । अस्ति । हि ॥ ८ ॥ श्रीमदिति । श्रीमद्भागवतीये श्रीमद्भागवतपुराणसम्बन्धिनि । दशमे । स्कन्धे । आदितः । अस्य श्रीकृष्णस्य । सकलान्यपि । चरित्राणि । व्यासेन । उक्तानि । सन्ति ॥ ९ ॥ अत इति । अतोहेतोः । सः । स्कन्धो दशमस्कन्धः । अस्माकम् । विशेषत एव । प्रमाणम् । अस्ति । अत्र दशमस्कन्धे । इष्टदेवमाहात्म्यस्यास्माकमुपास्यश्रीकृष्णस्य । महिम्नः । वर्णनात् । स च दशमस्कन्धः । भक्तिशास्त्रं भक्तिशास्त्रत्वेन सम्मतः । अस्ति । तस्य माहात्म्यावगमादेव तत्र भक्तिसम्भवादितिभावः ॥ १० ॥ यत्रेति । यत्र येषु ग्रन्थेषु । कृष्णावताराणाम् । वर्णनम् । तत्त्वतः । भवेत् । ते । सर्वेऽपि ग्रन्थाः । सामान्यतः । मम । मान्याः । सन्ति ॥ ११ ॥ अथेति । अथैवंविधश्रीहरिवाक्यश्रवणानन्तरम् । सदःस्थः सभोपविष्टः । पुरुषोत्तमः

श्रीमद्भागवतीयेऽस्य स्कन्धे दशम आदितः । सन्त्युक्तानि चरित्राणि व्यासेन सकलान्यपि ॥ ९ ॥ अतः प्रमाणं सोऽस्माकं स्कन्धोऽस्त्येव विशेषतः । भक्तिशास्त्रं चेष्टदेवमाहात्म्यस्यात्र वर्णनात् ॥१०॥ यत्र कृष्णावताराणां वर्णनं तत्त्वतो भवेत् । ग्रन्थाः सर्वेऽपि ते मान्याः सन्ति सामान्यतो मम ॥११॥ अथ तं ब्राह्मणो विद्वान् पुरुषोत्तम ईश्वरम् । नत्वा सदस्थः पप्रच्छ बद्धाञ्जलिपुटोऽस्मयः ॥१२॥ श्रीकृष्णो भगवान् स्वीये त्वं परेऽक्षरधामनि । कीदृशो वर्त्तसे स्वामिन् ! । ब्रह्माण्डेषु च कीदृशः ॥ १३ ॥ श्रीहरिरुवाच–ब्रह्मधाम्नि हरिः साक्षादस्ति दिव्यासनस्थितः । सेवितोऽनेकमुक्तौघैर्दिव्यानेकोपचारकैः ॥१४॥ सर्वेश्वरेश्वरः सोऽयं महाराजाधिराजवत् । वर्त्तते पूज्यमानांघ्रिर्नैकब्रह्माण्डनायकैः ॥ १५ ॥

स्वावासभूतनन्दिग्रामाद्दर्शनार्थमागतो भट्टावटङ्कः पुरुषोत्तमनामा । विद्वान् पण्डितः । ब्राह्मणः । बद्धाञ्जलिपुटः । अस्मयो विद्यागर्वरहितः सन् । ईश्वरं प्रत्यक्षपरमेश्वरम् । तं श्रीहरिम् । नत्वा । पप्रच्छ ॥ १२ ॥ श्रीकृष्ण इति । हे स्वामिन् ! । भगवान्सकलैश्वर्यसम्पन्नः । श्रीकृष्णः । त्वम् । स्वीये । परे सर्वोत्तमे मायातः परे वा । अक्षरधामनि । कीदृशः । वर्त्तसे । ब्रह्माण्डेषु च । कीदृशः । वर्त्तसे ॥ १३ ॥ 'पुरुषोत्तमभट्टेन श्रीकृष्णः पृष्ट इत्यसौ । नन्दयंस्तं द्विजं चान्यानूचे वित्थं परात्परः' । ब्रह्मेति । हे विप्र ! । ब्रह्मधाम्नि । साक्षात् । हरिः । दिव्यासनस्थितो रमणीयसिंहासनावस्थितः । अनेकमुक्तौघैरक्षरब्रह्मभावापन्नानन्तमुक्तवृन्दैः । दिव्यानेकोपचारकैः । सेवितः सन् । अस्ति वर्त्तते ॥ १४ ॥ सदा दिव्यपुरुषाकृतिः पुरुषोत्तमः श्रीहरिस्तथाविधब्रह्मभावापन्नानेकमुक्तैर्दिव्योपहारार्चितोऽस्तीत्युक्त्या स्वधाम्नि त्वं कीदृशो वर्त्तसे इति प्रथमप्रश्नोत्तरं कृत्वा तत्प्रतापमाह द्वाभ्याम् । सर्वेति । सर्वेश्वरेश्वरः । सः । अयं श्रीहरिः । नैकब्रह्माण्डनायकैर्महापुरुषादिभिः । पूज्यमानाङ्घ्रिरनुवेलं सम्पूजितपादपद्मः सन् । महाराजाधिराजवत्सम्राट्नृपतिवत् । वर्त्तते ॥ १५ ॥

वर्त्तेत इति । यथा खण्डाधिपतयः खण्डमण्डलनृपाः । सम्राजश्चक्रवर्त्तिनृपस्य । आज्ञायाम् । सभयम् । वर्त्तन्ते । तथा । ते नैकब्रह्माण्डनायकाः । अस्य श्रीहरेः । आज्ञायाम् । सभयम् । वर्त्तन्ते । क्वचित्कदाचिदपि । स्वातन्त्र्येण स्वतन्त्रतया न तु नैव वर्त्तन्ते ॥ १६ ॥ प्राप्नोतीति । स श्रीहरिः । तत्रस्थः स्वाक्षरधामावस्थितः । सन्नेव । उष्णांशुर्भास्वान् । गगनस्थः सन् । मरीचिभिः स्वकीरणैः । सर्वान् । देशानिव । स्वशक्तिभिस्तरतमावस्थितस्वान्तर्यामिशक्तिभिः । ब्रह्माण्डानि महापुरुषद्वारा स्वसृष्टानन्तब्रह्माण्डावस्थितेश्वरजीवानित्यर्थः । व्याप्नोति । तत्तत्स्वरूपस्थितिप्रवृत्तिपूर्वकं यथावेलोपभोग्यतत्तद्विहितकर्मफलप्रदानायावस्थितो भवतीत्यर्थः ॥ १७ ॥ एक इति । स्वतन्त्रः । एकोऽस्वतुल्यः । स श्रीहरिः । प्रयोजनवशात् । इच्छया स्वसङ्कल्पेनैव । अण्डेषु ब्रह्माण्डेषु । अनेकसङ्ख्याकैरगणितैः । स्वावतारतो वराहादिस्वावतारैः । जायते । स्वयंतया स्वैकान्तिकमुक्तेषु स्वैश्वर्यगुणाद्यावेशतया चानेकावतारैः प्रादुर्भवतीत्यर्थः ॥ १८ ॥ स्वान्तर्यामिशक्त्या स्वावतारशक्त्या च ब्रह्माण्डेष्ववस्थानोक्त्या ब्रह्माण्डेषु कीदृशस्त्वं वर्त्तस इति द्वितीयप्रश्नोत्तरं कृत्वा तत्प्रतापमाह चतुर्भिः । अनन्नेति । अनन्तैश्वर्यसम्पन्नः । अनन्तशक्तिपतिः । स श्रीहरिः ।

वर्त्तन्ते तेऽस्य चाज्ञायां स्वातन्त्र्येण तु न क्वचित् । यथा खण्डाधिपतयः सम्राजः सभयं तथा ॥ १६ ॥ व्याप्नोत्येव स तत्रस्थो ब्रह्माण्डानि स्वशक्तिभिः । गगनस्थ इवोष्णांशुर्देशान् सर्वान्मरीचिभिः ॥ १७ ॥ एकोऽप्यनेकसंख्याकैः प्रयोजन वशाच्च सः । जायतेऽण्डेष्विच्छयैव स्वतन्त्रः स्वावतारतः ॥१८॥ अनन्तैश्वर्यसम्पन्नोऽनन्तशक्तिपतिः स च । स्वशक्त्या सृजति क्वापि ब्रह्माण्डानि सहस्रशः ॥१९॥ लक्षशः कोटिशः क्वापि शतशश्चैकमेव वा । एवमेव हि संहारं स तेषां विदधाति च ॥ २० ॥ स लये पृथिवीमेतां नयते परमाणुताम् । सर्गकाले पुनस्तां च करोत्येवातिविस्तृताम् ॥ २१ ॥ सविद्युतो घनान् व्योम्नि प्रादुर्भावयति क्वचित् । पुनस्तिरोभावयति स्वशक्त्या तान्कदा च सः ॥ २२ ॥ अचिन्त्यवैभवः स्वामी स इत्थं वर्त्तते हरिः । स एव भुवि कृष्णाख्यो त्वाकृतिर्निकटेऽस्ति वः ॥ २३ ॥

क्वापि । स्वशक्त्या । सहस्रशः । ब्रह्माण्डानि । सृजति ॥ १९ ॥ लक्षश इति । क्वापि । लक्षशः । कोटिशः । शतशः । ब्रह्माण्डानि । सृजति । अथवा एकमेव । ब्रह्माण्डम् । सृजति । एवममुना प्रकारेणैव । स श्रीहरिः । तेषां ब्रह्माण्डानाम् । संहरम् । विदधाति । चकारात्स्थितिमपि विदधातीति ज्ञेयम् ॥ २० ॥ स इति । स श्रीहरिः । लये प्रलयकाले । एताम् । पृथिवीम् । परमाणुताम् । नयते । तां परमाणुतां नीतां पृथ्वीम् । पुनः । सर्गकाले । अतिविस्तृतां विशेषवाच्यामेव । करोति ॥ २१ ॥ सविद्युत इति । स श्रीहरिः । क्वचित् । सविद्युतः । घनान् । व्योम्न्याकाशे । स्वशक्त्या । स्वप्रादुर्भावयति । कदाच कदाचन । तान्सविद्युतो घनान् । स्वशक्त्या । पुनः तिरोभावयति ॥ २२ ॥ अचिन्त्येति । इत्थममुना प्रकारेण । अचिन्त्यवैभवोऽतर्क्यानन्तशक्तिः । स्वामी । सः । हरिः । वर्त्तते । स श्रीहरिरेव । भुवि । त्वाकृतिः । कृष्णाख्यः । सन् । वो युष्माकम् । निकटे समीपप्रदेशे । अस्ति वर्त्तते ॥ २३ ॥

पूर्ण इति । सकलाभिः । कलाभिः । पूर्णः । एष श्रीहरिः । एकः केवल एव । वो युष्माकम् । सेव्य उपास्यः । भवति । इतीत्थम् । वित्त जानीत । इत्येवंविधम् । अस्य श्रीहरेः । वाक्यामृतम् । पित्वा । तदीयैः श्रीहरिसमाश्रितैः । सर्वैस्त्यागिभिर्गृहिभिश्च । साकम् । सः । विप्रः पुरुषोत्तमनामा द्विजः । मुमुदे ॥२४॥ सर्वावतारधारित्वं सर्वकारणताऽऽत्मनः । येनोक्ता श्रीहरिः सोऽस्तु सदैव मम मानसे ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्पदानुरघु-वीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां शताधिकसप्तनवतितमस्तरङ्गः ॥ १९७ ॥ ६४ ॥

साक्षाच्छ्रीहरिकृष्णस्य स्वरूपे मोह उद्भवेत् । स्वसमानतया नृणां संत्याज्यः स तु सर्वथा ॥ १ ॥ स्वधर्मज्ञानवैराग्ययुक्ता माहात्म्यबोधयुक् । अस्यैव भक्तिः कार्येति पञ्चषष्टितमे स्मृतम् ॥ २ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८८१) सहस्यशुक्लैकादश्यां पौषमासस्य शुक्लपक्षागतैकादशी तिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमस्य । भूभुजः । दुर्गे । श्रीवासुदेवालये । वेद्यां बर्हिर्वेदिकायाम् । निजासने स्वास्तृते

पूर्णः कलाभिः सकलाभिरेष सेव्यो व एको भवतीति वित्त । पित्वेति वाक्यामृतमस्य सर्वैः साकं तदीयैर्मुमुदे स विप्रः ॥ २४ ॥

इति श्रीहरिवाक्यसुधासिंधौ शतानन्दमुनिविरचिते शताधिकसप्तनवतितमस्तरङ्गः ॥ १९७ ॥ ६४ ॥

शकाब्दे विक्रमार्कस्य चन्द्राष्टवसुभूमिते । सहस्यशुक्लैकादश्यां वचोऽमृतमिदं हरेः ॥ १ ॥
तत्र दुर्गपुरे दुर्गं उत्तमस्य स भूभुजः । वासुदेवालये वेद्यां व्यराजत्स निजासने ॥ २ ॥
सितसर्वाम्बरोऽनेकैस्त्यागिभिर्गृहिभिश्च सः । परीतः परितो भक्तैः शुश्रूषूनाह तान्स्वयम् ॥ ३ ॥
नृणां निश्श्रेयसायैव प्रादुर्भावो भुवि प्रभोः । रामकृष्णादिरूपो हि जायते मानुषाकृतिः ॥ ४ ॥
मायामयेऽत्र जगति प्रभोस्तस्य तु कुत्रचित् । जायते नैव मोहो वै रम्येऽर्थेऽन्यजीववत् ॥ ५ ॥

स्वकीये पर्यङ्कासने । स श्रीहरिः । व्यराजत् ॥ २ ॥ सितेति । सितसर्वाम्बरः परिधृतसकलश्वेतवसनः । अनेकैर्नानादेशागतत्वाद्बहुभिः । त्यागिभिः । गृहिभिश्च । भक्तैः । परितः सर्वतः । परीतः सभायां संवेष्टितः । स श्रीहरिः । शुश्रूषून्स्ववार्त्ताश्रवणेच्छावतः । तान् स्वभक्तान् । स्वयमेव । आह ॥ ३ ॥ स भक्तानां मध्ये केषांचित्स्वस्वरूपे कदाचिदपि जातजनिष्यमाणानीश्वरत्वादिमोहकार्यनिवृत्तये साक्षात्स्वमुखेन स्वमहिम्नो वक्तुमशक्यत्वात्स्वावताररामकृष्णादिकोद्देशेन परोक्षतया तं स्वमहिमानं स्वैकान्तिकभक्तिं चोपदिशति । नृणामिति । हे भक्ताः ! । भुवि । नृणां सकलजनानाम् । निःश्रेयसायैव । प्रभोः श्रीहरेः । मानुषाकृतिः । रामकृष्णादिरूपः । प्रादुर्भावः । जायते । हि ॥ ४ ॥ मायेति । मायामये मायाविकारे । अत्रास्मिन् । जगति । रम्ये रमणीयेऽपि । कुत्रचित्कस्मिंश्चित् । अर्थे पदार्थे । अन्यजीववत् । प्रभोः । तस्य रामकृष्णादेः । मोहः । नैव जायते । वै ॥ ५ ॥

निजेनेति । स प्रभुः । निजेन । अलौकिकेन । प्रतापेनैव । सर्वत्र सर्वस्मिन्नपि मायिकपदार्थे । सर्वदा । असङ्ग आसक्तिरहितः । स्वतन्त्रः स्वाधीनसर्वक्रियः । अच्युतोऽन्याहतैश्वर्यः सन्नेव । वर्त्तते ॥ ६ ॥ निजेति । स प्रभुः । निजभक्तजनानाम् । भक्तिम् । स्वीकर्त्तुम् । तदर्पितान्निजभक्तजनसमर्पितान् । पश्चापि । विषयान् । आत्मना स्वयम् । सादरम् । भुङ्क्ते ॥७॥ तस्मिन्निति । दुर्विदग्धा विद्वांसः सन्तोऽपि विवेकविनयाद्यभावाद्वस्तुतः पण्डितंमन्याः । केचन । पूरुषाः । अतिसमर्थेऽपि । तस्मिन् । प्रभौ । स्वसाम्येनात्मौपम्येन । दोषान् । आरोपयन्ति । अहो आश्चर्यमिदम् ॥ ८ ॥ दोषारोपप्रकारमाह । अयमिति । अयम् । लोके । ईशतया परमेश्वरत्वेन । प्रथितो विख्यातः सन्नपि । अस्मदादितोऽपि । अखिलेष्वपि । विषयेषु । सर्वदा अत्यासक्तः । अस्ति ॥ ९ ॥ एवमिति । एवममुना प्रकारेण । वदन्तः । मूढा विवेकाभावाद्भगवत्स्वरूपानभिज्ञाः । ते । दुर्विदग्धपुरुषाः । तं प्रभुम् । स्वसममात्मतुल्यम् । नरं मनुष्यम् । विदुः । ईशस्य परमेश्वरस्य तस्य । अतिमानुषं मनुष्येष्वसम्भावनीयम् । अत एव । अलौकिकम् । माहात्म्यम् । न तु नैव विदुः ॥ १० ॥ एषेति । नृत्वं मनुष्यभावम् । नाटयतोऽनुकुर्वतः । हरेः । एषा । एव ।

निजेनालोकिकेनैव प्रतापेन स सर्वदा । असङ्ग एव सर्वत्र स्वतन्त्रो वर्त्ततेऽच्युतः ॥ ६ ॥ निजभक्तजनानां स स्वीकर्त्तुं भक्तिमात्मना । तदर्पितांश्च विषयान्भुङ्क्ते पश्चापि सादरम् ॥ ७ ॥ तस्मिन्नपि समर्थेऽपि प्रभौ केचन पूरुषाः । दुर्विदग्धाः स्वसाम्येन दोषानारोपयन्त्यहो ॥ ८ ॥ अयमीशतया लोके प्रथितोऽप्यस्मदादितः । अत्यासक्तोऽस्ति विषयेष्वखिलेष्वपि सर्वदा ॥ ९ ॥ एवं वदन्तस्ते मूढाः स्वसमं तं विदुर्नरम् । नत्वलौकिकमीशस्य माहात्म्यमतिमानुषम् ॥ १० ॥ एषैव माया विज्ञेया नृत्वं नाटयतो हरेः । विदुषामपि यद्बुद्धावन्यथा ज्ञानसम्भवः ॥ ११ ॥ न मोहो ब्रह्मनिष्ठानामपि स्यादर्थपञ्चके । कुतस्तर्हि भवेत्तत्र स परब्रह्मणः कचित् ॥ १२ ॥ अतो नराकृतौ कृष्णे स्वदृष्टान्तेन योद्भवेत् । ग्राम्यार्थमोहशङ्का सा परित्याज्यैव सर्वथा ॥ १३ ॥ सर्वथा च विधातव्या भक्तिरेवास्य धर्मयुक् । धीमद्भिः श्रेयसे स्वस्य ज्ञानवैराग्यशालिभिः ॥ १४ ॥

माया मनुष्यतया संस्थानरूपा योगमाया । विज्ञेया । यद्यया हरिमायया । विदुषां पण्डितानाम् । बुद्धावपि । अन्यथाज्ञानसम्भव ईश्वरेऽनीश्वरत्वावगमः । तथाचोक्तं भगवद्गीतायाम् । 'नाहं प्रकाशः सर्वस्य योगमायासमावृतः । मूढोऽयं नाभिजानाति लोको मामजमव्यय'मिति ॥ ११ ॥ नेति । ब्रह्मनिष्ठानां साक्षाद्भगवदुपासनया ब्रह्मभावं प्राप्तानां साधूनामपि । अर्थपञ्चके मायिकेषु शब्दादिषु पञ्चसु विषयेषु । मोहो भोगबुद्धिः । न स्यात् । तर्हि । परब्रह्मस्तस्य । तत्र विषयपञ्चके । स मोहः । कचित्कदाचिदपि । कुतः । भवेत् । न भवेदेवेत्यर्थः ॥ १२ ॥ अत इति । अतोहेतोः । नराकृतौ । कृष्णे । या । स्वदृष्टान्तेन । ग्राम्यार्थमोहशङ्का मायिकविषयभोगाशङ्का । उद्भवेत् । सा । सर्वथैव । परित्याज्या ॥१३॥ सर्वथेति । किञ्च । ज्ञानवैराग्यशालिभिः । धीमद्भिर्विवेकयुक्तमतिभिर्भगवद्भक्तैः । स्वस्यात्मनः । श्रेयसे । अस्य साक्षात्कृष्णस्य । धर्मयुक्स्वधर्मसहितैव । भक्तिः सर्वथा । विधातव्या ॥ १४ ॥

पूर्ण इति । सकलाभिः । कलाभिः । पूर्णः । एष श्रीहरिः । एकः केवल एव । वो युष्माकम् । सेव्य उपास्यः । भवति । इतीत्थम् । वित्त जानीत । इत्येवंविधम् । अस्य श्रीहरेः । वाक्यामृतम् । पिला । तदीयैः श्रीहरिसमाश्रितैः । सर्वैस्त्यागिभिर्गृहिभिश्च । साकम् । सः । विप्रः पुरुषोत्तमनामा द्विजः । मुमुदे ॥२४॥ सर्वावतारधारित्वं सर्वकारणताऽऽत्मनः । येनोक्ता श्रीहरिः सोऽस्तु सदैव मम मानसे ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्स्वनुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां शताधिकसप्तनवतितमस्तरङ्गः ॥ १९७ ॥ ६४ ॥

साक्षाच्छ्रीहरिकृष्णस्य स्वरूपे मोह उद्भवेत् । स्वसमानतया नृणां संत्याज्यः स तु सर्वथा ॥ १ ॥ स्वधर्मज्ञानवैराग्ययुक्ता माहात्म्यबोधयुक् । अस्यैव भक्तिः कार्येति पञ्चषष्ठितमे स्मृतम् ॥ २ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८८१) सहस्यशुक्लैकादश्यां पौषमासस्य शुक्लपक्षागतैकादशी तिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमस्य । भूभुजः । दुर्गे । श्रीवासुदेवालये । वेद्यां वहिर्वेदिकायाम् । निजासने स्वास्तृते

पूर्णः कलाभिः सकलाभिरेष सेव्यो व एको भवतीति वित्त । पित्वेति वाक्यामृतमस्य सर्वैः साकं तदीयैर्मुमुदे स विप्रः ॥ २४ ॥

इति श्रीहरिवाक्यसुधासिंधौ शतानन्दमुनिविरचिते शताधिकसप्तनवतितमस्तरङ्गः ॥ १९७ ॥ ६४ ॥

शकाब्दे विक्रमार्कस्य चन्द्राष्टवसुभूमिते । सहस्यशुक्लैकादश्यां वचोऽमृतमिदं हरेः ॥ १ ॥
तत्र दुर्गपुरे दुर्गे उत्तमस्य स भूभुजः । वासुदेवालये वेद्यां व्यराजत्स निजासने ॥ २ ॥
सितसर्वाम्बरोऽनेकैस्त्यागिभिर्गृहिभिश्च सः । परीतः परितो भक्तैः शुश्रूषूनाह तान्स्वयम् ॥ ३ ॥
नृणां निश्रेयसायैव प्रादुर्भावो भुवि प्रभोः । रामकृष्णादिरूपो हि जायते मानुषाकृतिः ॥ ४ ॥
मायामयेऽत्र जगति प्रभोस्तस्य तु कुत्रचित् । जायते नैव मोहो वै रम्येऽर्थेऽन्यजीववत् ॥ ५ ॥

स्वकीये पर्यङ्कासने । स श्रीहरिः । व्यराजत् ॥ २ ॥ सितेति । सितसर्वाम्बरः परिधृतसकलश्वेतवसनः । अनेकैर्नानादेशागतत्वाद्बहुभिः । त्यागिभिः । गृहिभिश्च । भक्तैः । परितः सर्वतः । परीतः सभायां संवेष्टितः । स श्रीहरिः । शुश्रूषून्स्ववार्ताश्रवणेच्छावतः । तान् स्वभक्तान् । स्वयमेव । आह ॥ ३ ॥ स भक्तानां मध्ये केषांचित्स्वस्वरूपे कदाचिदपि जातजनिष्यमाणानीश्वरत्वादिमोहकार्यनिवृत्तये साक्षात्स्वमुखेन स्वमहिम्नो वक्तुमशक्यत्वात्स्वावताररामकृष्णादिकोद्देशेन परोक्षतया तं स्वमहिमानं स्वैकान्तिकभक्तिं चोपदिशति । नृणामिति । हे भक्ताः ! । भुवि । नृणां सकलजनानाम् । निःश्रेयसायैव । प्रभोः श्रीहरेः । मानुषाकृतिः । रामकृष्णादिरूपः । प्रादुर्भावः । जायते । हि ॥ ४ ॥ मायेति । मायामये मायाविकारे । अत्रास्मिन् । जगति । रम्ये रमणीयेऽपि । कुत्रचित्कस्मिंश्चित् । अर्थे पदार्थे । अन्यजीववत् । प्रभोः । तस्य रामकृष्णादेः । मोहः । नैव जायते । वै ॥ ५ ॥

निजेनेति । स प्रभुः । निजेन । अलौकिकेन । प्रतापेनैव । सर्वत्र सर्वस्मिन्नपि मायिकपदार्थे । सर्वदा । असङ्ग आसक्तिरहितः । स्वतन्त्रः स्वाधीनसर्वक्रियः । अच्युतोऽव्याहतैश्वर्यः सन्नेव । वर्त्तते ॥ ६ ॥ निजेति । स प्रभुः । निजभक्तजनानाम् । भक्तिम् । स्वीकर्त्तुम् । तदर्पितान्निजभक्तजनसमर्पितान् । पश्चापि । विषयान् । आत्मना स्वयम् । सादरम् । भुङ्क्ते ॥७॥ तस्मिन्निति । दुर्विदग्धा विद्वांसः सन्तोऽपि विवेकविनयाद्यभावाद्वस्तुतः पण्डितंमन्याः । केचन । पूरुषाः । अतिसमर्थेऽपि । तस्मिन् । प्रभौ । स्वसाम्येनात्मौपम्येन । दोषान् । आरोपयन्ति । अहो आश्चर्यमिदम् ॥ ८ ॥ दोषारोपप्रकारमाह । अयमिति । अयम् । लोके । ईशतया परमेश्वरत्वेन । प्रथितो विख्यातः सन्नपि । अस्मदादितोऽपि । अखिलेष्वपि । विषयेषु । सर्वदा अत्यासक्तः । अस्ति ॥ ९ ॥ एवमिति । एवममुना प्रकारेण । वदन्तः । मूढा विवेकाभावाद्भगवत्स्वरूपानभिज्ञाः । ते । दुर्विदग्धपुरुषाः । तं प्रभुम् । स्वसममात्मतुल्यम् । नरं मनुष्यम् । विदुः । ईशस्य परमेश्वरस्य तस्य । अतिमानुषं मनुष्येष्वसम्भावनीयम् । अत एव । अलौकिकम् । माहात्म्यम् । न तु नैव विदुः ॥ १० ॥ एषेति । नृत्वं मनुष्यभावम् । नाटयतोऽनुकुर्वतः । हरेः । एषा । एव ।

निजेनालोकिकेनैव प्रतापेन स सर्वदा । असङ्ग एव सर्वत्र स्वतन्त्रो वर्त्ततेऽच्युतः ॥ ६ ॥ निजभक्तजनानां स स्वीकर्त्तुं भक्तिमात्मना । तदर्पितांश्च विषयान्भुङ्क्ते पश्चापि सादरम् ॥ ७ ॥ तस्मिन्नपि समर्थेऽपि प्रभौ केचन पूरुषाः । दुर्विदग्धाः स्वसाम्येन दोषानारोपयन्त्यहो ॥ ८ ॥ अयमीशतया लोके प्रथितोऽप्यस्मदादितः । अत्यासक्तोऽस्ति विषयेष्वखिलेष्वपि सर्वदा ॥ ९ ॥ एवं वदन्तस्ते मूढाः स्वसमं तं विदुर्नरम् । नत्वलौकिकमीशस्य माहात्म्यमतिमानुषम् ॥ १० ॥ एषैव माया विज्ञेया नृत्वं नाटयतो हरेः । विदुषामपि यद्बुद्धावन्यथा ज्ञानसम्भवः ॥ ११ ॥ न मोहो ब्रह्मनिष्ठानामपि स्यादर्थपञ्चके । कुतस्तर्हि भवेत्तत्र स परब्रह्मणः क्वचित् ॥ १२ ॥ अतो नराकृतौ कृष्णे स्वदृष्टान्तेन योद्भवेत् । ग्राम्यार्थमोहशङ्का सा परित्याज्यैव सर्वथा ॥ १३ ॥ सर्वथा च विधातव्या भक्तिरेवास्य धर्मयुक् । धीमद्भिः श्रेयसे स्वस्य ज्ञानवैराग्यशालिभिः ॥ १४ ॥

माया मनुष्यतया संस्थानरूपा योगमाया । विज्ञेया । यया हरिमायया । विदुषां पण्डितानाम् । बुद्धावपि । अन्यथाज्ञानसम्भव ईश्वरेऽनीश्वरत्वावगमः । तथाचोक्तं भगवद्गीतायाम् । 'नाहं प्रकाशः सर्वस्य योगमायासमावृतः । मूढोऽयं नाभिजानाति लोको मामजमव्यय'मिति ॥ ११ ॥ नेति । ब्रह्मनिष्ठानां साक्षाद्भगवदुपासनया ब्रह्मभावं प्राप्तानां साधूनामपि । अर्थपञ्चके मायिकेषु शब्दादिषु पञ्चसु विषयेषु । मोहो भोगबुद्धिः । न स्यात् । तर्हि । परब्रह्मस्तस्य । तत्र विषयपञ्चके । स मोहः । क्वचित्कदाचिदपि । कुतः । भवेत् । न भवेदेवेत्यर्थः ॥ १२ ॥ अत इति । अतोहेतोः । नराकृतौ । कृष्णे । या । स्वदृष्टान्तेन । ग्राम्यार्थमोहशङ्का मायिकविषयभोगाशङ्का । उद्भवेत् । सा । सर्वथैव । परित्याज्या ॥१३॥ सर्वथेति । किञ्च । ज्ञानवैराग्यशालिभिः । धीमद्भिर्विवेकयुक्तमतिभिर्भगवद्भक्तैः । स्वस्यात्मनः । श्रेयसे । अस्य साक्षात्कृष्णस्य । धर्मयुक्स्वधर्मसहितैव । भक्तिः सर्वथा । विधातव्या ॥ १४ ॥

सवैराग्यमिति । सवैराग्यं वैराग्यसहितम् । ज्ञानमात्मवेदनमपि । मापतेर्लक्ष्मीकान्तस्य कृष्णस्य । भक्तिम् । विना तु । निर्लवणम् । भोज्यम् । यथा । निरर्थकमेव । भवति ॥ १५ ॥ अत इति । अतोहेतोः । ज्ञानादिगुणवान् । ब्रह्मविद्वर आत्मनिष्ठमुख्यः । शुको वैयासकिरपि । श्रीभागवतम् । अधीत्य । हरेः । भक्तिमेव । आचरत् ॥ १६ ॥ अपीति । भक्तिमता केवलंभक्तियुक्तेनापि भक्तेन । अन्यत्र कृष्णेतरमायिकपदार्थे । प्रीतिहानायानुरागनिवृत्तये । भक्तिपोषकम् । ज्ञानम् । वैराग्यम् । चकारात्स्वधर्मोऽपि । सर्वथा । सम्पादनीयम् ॥ १७ ॥ माहात्म्येति । यस्य भक्तस्य । माहात्म्यज्ञानयुक् श्रीहरिमहिमज्ञानोपेता । ज्ञानवैराग्यशोभना ज्ञान-वैराग्याभ्यां शोभावती । इदं स्वधर्मोपेततायाअप्युपलक्षणम् । अतएव । दृढा सुस्थिरा भक्तिः । नित्यं सर्वदा । भवेत् । सः । एकान्तिकः । भक्तः । ज्ञेयः । हि ॥ १८ ॥ धर्मेति । इत्येवंविधम् । धर्मात्मजस्य श्रीहरेः । सुधोपमेयम् । वचः । निशम्य । सुधियः । सदोनिषण्णाः । सन्तः । गृहस्थाश्च । अखिलाः । ते प्रसिद्धाः

सवैराग्यमपि ज्ञानं विना भक्तिं तु मापतेः । यथा निर्लवणं भोज्यं भवत्येव निरर्थकम् ॥ १५ ॥ अतो ज्ञानादिगुणवान् शुकोऽपि ब्रह्मविद्वरः । अधीत्य श्रीभागवतं भक्तिमेवाचरद्धरेः ॥ १६ ॥ अपि भक्तिमताऽन्यत्र प्रीतिहानाय सर्वथा । सम्पादनीयं ज्ञानं च वैराग्यं भक्तिपोषकम् ॥१७॥ माहात्म्यज्ञानयुग्भक्तिर्ज्ञानवैराग्यशोभना । दृढा यस्य भवेन्नित्यं भक्त एकान्तिको हि सः ॥ १८ ॥ धर्मात्मजस्येति वचो निशम्य सुधोपमेयं सुधियोऽखिलास्ते । सन्तो गृहस्थाश्च तदीयभक्ताः सदोनिषण्णा मुदिता बभुवुः ॥ १९ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते शताधिकाष्टनवतितमस्तरङ्गः ॥ १९८ ॥ ६५ ॥

शकाब्दे विक्रमार्कस्य चन्द्राष्टवसुभूमिते । पौषकृष्णप्रतिपदि वचोऽमृतमिदं हरेः ॥ १ ॥
तत्र दुर्गपुरे दुर्गे उत्तमस्य वेश्मनः । प्राङ्मुखस्य बहिर्वेद्यां व्यराजत सदासने ॥ २ ॥

। तदीयभक्ताः । मुदिताः । बभूवुः ॥ १९ ॥ मोहवर्जनपूर्वं तु स्वस्मिन्नैकान्तिकी स्वकैः । येनोक्ता हरिणा कार्या भक्तिस्तां मे ददातु सः ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्स्नुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां शताधिकाष्टनवतितमस्तरङ्गः ॥ १९८ ॥ ६५ ॥

साधून षट् महतः प्रश्नान् सम्पृच्छ्य श्रीहरिः स्वयम् । तदुत्तराणि षट्षष्टितमे सम्प्रोक्तवान् स्फुटम् ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८८१) पौषकृष्णप्रतिपदि पौषमासस्य कृष्णपक्षसम्बन्धिन्यामाद्यतिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमस्य राज्ञः । दुर्गे । प्राङ्मुखस्य । वेश्मनस्तस्यैवभवनस्य । बहिर्वेद्याम् । सदासने नित्योपवेशनीयस्वास्तृतपर्यङ्कासने स श्रीहरिः । व्यराजत ॥ २ ॥

पीतेति । पीतानां पीतवर्णानां रक्तानां रक्तवर्णनामतिसुरभीणामतिसुगन्धयुक्तानां पुष्पाणां यथाक्रमं सहस्रदल—मन्दारसुमनसां हाराः स्रजोऽवतंस आपीडश्च यस्य तथाभूतः । सिताम्बरः परिहितसकलश्वेतवसनः । अनेकैर्नानादेशागतत्वाद्बहुभिः । त्यागिभिश्च । स्वकैः स्वभक्तैः । वृतः सभायां परिवेष्टितः ॥ ३ ॥ गीतानीति । साधुभिर्मुक्तानन्दादिमुनिभिः । सवादित्रं मृदङ्गवीणादिवाद्यवादनयुतं यथातथा । गीतानि । कृष्णपद्यानि श्रुत्वा । हृष्टः प्रसन्नः । सः श्रीहरिः । पुरतः स्वाग्रप्रदेशे । निषण्णान् । सतः साधून् । अब्रवीत् । इतिद्वयोरेकसम्बन्धः ॥ ४ ॥ अद्येति । हे साधवः ! । अद्य साम्प्रतम् । अहम् । महतो गुणगरिष्ठान् । सतः साधून् । यत् । पृच्छामि । तत् । निशम्यताम् । इतीत्थम् । स श्रीहरिः । उक्त्वा । आदौ प्रथमतः । संसदि । स्थितमितिशेषः । आनन्दमुनिमानन्दानन्दसाधुम् । पप्रच्छ ॥ ५ ॥ अस्तीति । हे मुने ! । कश्चित् । एकः । पुरुषो भक्तः । स पुरुषः । अल्पधीरल्पमतिः सन्नपि । स्वकान्स्वीयान् । दोषान् । पश्यति । परेषां हरिभक्तसाधूनां तु । गुणानेव । पश्यति । इतरान्दोषान् । न च नैव पश्यति ॥ ६ ॥ अथेति । अथ च । कश्चित् । एकः । पुमान्

पीतरक्तातिसुरभिपुष्पहारावतंसकः । सिताम्बरो वृतोऽनेकैस्त्यागिभिर्गृहिभिः स्वकैः ॥ ३ ॥ गीतानि कृष्णपद्यानि सवादित्रं च साधुभिः । श्रुत्वा हृष्टः स पुरतो निषण्णानब्रवीत्सतः ॥ ४ ॥ अद्य पृच्छामि महतः सतोऽहं तन्निशम्यताम् । स इत्युक्त्वाऽऽनन्दमुनिमादौ पप्रच्छ संसदि ॥ ५ ॥ अस्त्येकः पुरुषः कश्चित्सोऽल्पधीरपि पश्यति । दोषान् स्वकान् परेषां तु गुणानेव न चेतरान् ॥ ६ ॥ अथैकोऽस्ति पुमान्कश्चित्स धीमानपि नात्मगान् । दोषान्विचष्टेऽन्येषां तु दोषानेव सतामपि ॥ ७ ॥ एवं बुद्धिमतोऽप्यस्य स्वदोषानवबोधने । अस्ति किं कारणमिति प्रश्नोत्तरमुच्यताम् ॥ ८ ॥ यथामत्युत्तरे तेन कृतेऽपि मुनिनाऽथ सः । तत्सम्यग्नेति मन्वानः स्वयमेव तदूचिवान् ॥ ९ ॥ नेक्षेत यः स्वगान् दोषान्न गुणांश्च सतां नरः । प्राग्जन्मन्यत्र वा तेन कृतो द्रोहो महासतः ॥ १० ॥

भक्तः । अस्ति । स पुमान् । धीमान्बहुबुद्धियुक्तः सन्नपि । आत्मगान्स्वनिष्ठान् । दोषान् । न विचष्टे नैव पश्यति । अन्येषां भक्तानाम् । सतां साधुनां चापि । दोषानेव । विचष्टे । न तु । गुणान् ॥ ७ ॥ एवमिति । एवममुना प्रकारेण । बुद्धिमतो बहुबुद्धियुक्तस्यापि । अस्य भक्तस्य । स्वदोषानवबोधने । किम् । कारणं को हेतुः । अस्ति । इत्येवंविधस्य । प्रश्नस्य । उत्तरम् । उच्यताम् ॥ ८ ॥ यथेति । अथैवंविधश्रीहरिकृतप्रश्नश्रवणानन्तरम् । तेन । मुनिनाऽऽनन्दानन्दसाधुना । यथमति । उत्तरे । कृते सत्यपि । स श्रीहरिः । तत्तत्कृतमुत्तरम् । सम्यक् यथार्थतया । न जातम् । इतीत्थम् । मन्वानः सन् । तत्स्वकृतप्रश्नोत्तरम् । स्वयमेव । ऊचिवान् ॥ ९ ॥ नेति । हे मुने ! । यः । नरो भक्तः । स्वगान् स्वनिष्ठान् । दोषान् । नेक्षेत । सतां साधूनाम् । गुणांश्च । नेक्षेत । किन्तु दोषानेवेक्षेत । तेन भक्तेन । प्राग्जन्मनि । अथवा । अत्रास्मिन् जन्मनि । महासतः कस्यचिन्महतः सत्पुरुषस्य । द्रोहोऽपराधः । कृतः । अस्ति ॥ १० ॥

तेनेति । हे मुने !। तेन तद्द्रोहरूपेण । पापेन । अस्य भक्तस्य । महत्यपि । धीर्मतिः । दूषिता दोषयुक्ता । अस्ति । अतोहेतोः । विपर्ययमात्मदोषानवलोकन सद्दोषावलोकनरूपं वैपरीत्यम् । प्राप्ता । इत्येवंविधम् । उत्तरं त्वां प्रति मया कृतस्य प्रश्नस्य प्रतिवचनम् । अस्ति ॥ ११ ॥ इतीति । इत्यमुना प्रकारेण । तमानन्दानन्दमुनिं प्रति । उक्त्वा । प्रभुः । स श्रीहरिः । नित्यानन्दमुनिम् । पप्रच्छ । हे मुने ! । नृणां जनानाम् । आत्यन्तिकम् । श्रेयः । केन । साधनेन । भवेत् ॥ १२ ॥ साक्षादिति । साक्षात्कृष्णाश्रयेण प्रत्यक्षश्रीहर्याश्रयेणैव श्रेयो भवेत् । इतीत्थम् । उच्येत यदि त्वया कथ्येत तर्हि तु । धर्मज्ञानविरागाणाम् । भक्तेर्वा । किम् । प्रयोजनम् । अस्ति ॥ १३ ॥ इतीति । इत्यमुना प्रकारेण । पृष्टः श्रीहरिणानुयुक्तः । सः । मुनिर्नित्यानन्दसाधुरपि । यथामति । उत्तरम् । ददौ । तत्तत्कृतमुत्तरमपि । अजातमयथार्थतया कृतम् । मन्वानः । स्वयं श्रीहरिरेव । तत्स्वकृतप्रश्नोत्तरम् । तं नित्यानन्दमुनिं प्रति । आह ॥ १४ ॥ श्रेय इति । हे मुने ! । यत् । आत्यन्तिकम् । श्रेयः । तत्तु । साक्षाद्धरेः । समाश्रयादेव । भवति । इतीत्थम् । जानीहि । ईदृक् श्रीहरिसमाश्रयसदृशम् । साधनान्तरमन्यत्साधनम् । नास्ति

तेन पापेन धीरस्य महत्यप्यस्ति दूषिता । अतो विपर्ययं प्राप्ता भवतीत्युत्तरं मुने ! ॥ ११ ॥ इत्युक्त्वा तं स पप्रच्छ नित्यानन्दमुनिं प्रभुः । श्रेय आत्यन्तिकं केन साधनेन नृणां भवेत् ॥१२॥ साक्षात्कृष्णाश्रयेणैवेत्युच्येत यदि तर्हि तु । धर्मज्ञानविरागाणां भक्तेर्वा किं प्रयोजनम् ॥ १३ ॥ इति पृष्टः सोऽपि मुनिर्यथामत्युत्तरं ददौ । तदप्यजातं मन्वानः स्वयमेव तमाह तत् ॥ १४ ॥ श्रेय आत्यन्तिकं यत्तद्धरेः साक्षात्समाश्रयात् । भवतीत्येव जानीहि नास्तीदृक्साधनान्तरम् ॥ १५ ॥ अन्यानि धर्ममुख्यानि साधनानि तु सत्पतेः । तस्याज्ञयैव पाल्यानि तस्यैव प्रीतये प्रभोः ॥ १६ ॥ अपि कालश्च माया च ब्रह्मेशो भास्करादयः । तस्याज्ञामनुवर्त्तन्ते नियन्तुः सभयाः सदा ॥१७॥ अतो भक्तेन कृष्णस्य सावधानतयैव हि । तदाज्ञा पालनीयैव यया सिद्ध्यति दासता ॥१८॥ एवं सत्येकमेवास्ति श्रेयसे साधनं नृणाम् । इति दत्त्वोत्तरं ब्रह्मानन्दं पप्रच्छ स प्रभुः ॥ १९ ॥

॥ १५ ॥ अन्यानीति । धर्ममुख्यानि स्वधर्मप्रभृतीनि चत्वारि । अन्यानि । साधुनानि तु । सत्पतेः । प्रभोः । तस्य श्रीहरेः । प्रीतये प्रसन्नतार्थमेव । तस्य । आज्ञया । पाल्यान्येव । भगवतो धर्मादिप्रियत्वादितिभावः ॥ १६ ॥ अत्र हेतुमाह द्वाभ्याम् । अपीति । कालः । माया च । ब्रह्मा । ईशः शिवः । भास्करादयश्चापि सदा । सभयाः सन्तः । नियन्तुः कालादिप्रशासकस्य । तस्य श्रीहरेः । आज्ञाम् । अनुवर्त्तन्ते ॥ १७ ॥ अत इति । अतोहेतोः । कृष्णस्य । भक्तेन । तदाज्ञा धर्मादिपालनरूपस्तत्कृतनिदेशः । सावधानतयैव । पालनीयैव । यया स्वेनपालितया कृष्णाज्ञया । दासता स्वस्य तद्दासभावः । सिद्ध्यति । दासदास्य स्वस्वामिप्रीणनफलत्वादितिभावः ॥१८॥ एवमिति । एवंसति । नृणाम् । श्रेयसे । एकं श्रीहर्याश्रयरूपमेव । साधनम् । अस्ति । इत्येवंविधम् । उत्तरम् । दत्त्वा । प्रभुः । स श्रीहरिः । ब्रह्मानन्दं मुनिम् । पप्रच्छ ॥ १९ ॥

देह इति । हे मुने ! । अत्रास्मिन् । देहे यः । जीवः । अस्ति । असौ जीवः । साकृतिर्देवमनुष्यादिदेहावयवसमानावयववान् । अस्ति । अथवा । निराकृतिर्निरवयवः । अस्ति । इतीत्थम् । पृष्टः श्रीहरिणानुयुक्तः । सः । मुनिर्ब्रह्मानन्दसाधुः । साकारो जीवः सावयवोऽस्ति । इति । तं श्रीहरिम् । प्राह ॥ २० ॥ तमिति । तमेवंवदन्तं ब्रह्मानन्दमुनिम् । स्वामी श्रीहरिः । उवाच । हे मुने ! । यदि । जीवः । साकारः सावयवः । भवेत् । तदा । ईशः परमेश्वरः । जीवानाम् । सुखाय धर्मादिचतुर्विधपुरुषार्थसुखं गमयितुम् । बुद्धीन्द्रियादीन् । कुतः । सृजेत् ॥ २१ ॥ बुद्धीति । प्रभुः । जनानाम् । बुद्धीन्द्रियमनःप्राणान् । अनेन सूक्ष्मशरीरमुक्तं तच्च स्थूलस्याप्युपलक्षणं बोध्यम् । मात्रार्थं विषयभोगार्थम् । अनेन कामउक्तः । भवार्थं सद्धर्मार्जितापूर्वलभ्यदेवत्वाद्यर्थम् । अनेन धर्मउक्तः । आत्मने साक्षाद्भगवत्सम्बन्धादि कृत्वा मोक्षप्राप्त्यर्थम् । अनेन मोक्षउक्तः कल्पनाय धर्माद्यर्जनहेत्वर्थसम्पादनाय च । अनेनार्थउक्तः । असृजन् ॥ २२ ॥ इतीति । इतीत्थम् । श्रीभागवते । उक्तम् । ततः श्रीभागवतश्लोकार्थदृष्ट्या जीवस्य निरवयवत्व प्रत्ययोदयाद्धेतोः । जीवः स्वरूपतः । स्वभावतश्च । चिद्रूपः । सन्मात्रश्च

देहे जीवोऽस्ति योऽत्रासौ साकृतिर्वा निराकृतिः । अस्तीति पृष्टः साकार इति प्राह स तं मुनिः ॥ २० ॥ तं स्वाम्युवाच साकारो यदि जीवो भवेत्तदा । बुद्धीन्द्रियादीन् जीवानां सुखायेशः कुतः सृजेत् ॥ २१ ॥ बुद्धीन्द्रियमनःप्राणान् जनानामसृजत्प्रभुः । मात्रार्थं च भवार्थं च ह्यात्मने कल्पनाय च ॥ २२ ॥ इत्युक्तं श्रीभागवते ततो जीवः स्वरूपतः । स्वभावतश्च चिद्रूपः सन्मात्रश्चास्ति निश्चितम् ॥ २३ ॥ अनाद्यज्ञानरूपेण वपुषा कारणेन तु । स चावृतोऽस्ति वै नित्यं यथा वीजं त्वचाऽऽवृतम् ॥ २४ ॥ चुम्बको लोहमाकृष्य स्वशक्त्या तेन सज्जते । यथा तथेशसृष्टेन स च वुद्धीन्द्रियादिना ॥ २५ ॥ अज्ञानेनैव तस्मिंश्चाहम्मतिं विदधाति सः । न त्वसौ वस्तुतस्तादृगित्युक्तः सोऽब्रवीन्मुनिः ॥ २६ ॥

। अस्ति । निश्चितम् । स्वरूपतः स्वभावतश्च तस्य सच्चिन्मात्रात्मकत्वादनिर्वचनीयत्वाच्च निरवयवः प्रकाशरूपो ज्ञाता च जीवोऽस्तीत्यर्थः ॥ २३ ॥ अनादीति । स एवंभूतो जीवः । यथा । बीजम् । त्वचा । नित्यम् । आवृतम् । अस्ति । तथा । अनाद्यज्ञानरूपेण । कारणेन । वपुषा । नित्यम् । आवृतः । अस्ति । वै । तथा-चोक्तं पाद्मे । 'तण्डुलस्य यथा चर्म यथा ताम्रस्य कालिमा । नश्येत् क्रियया राजंस्तथा पुंसो मलग्रह' इति ॥ २४ ॥ चुम्बक इति । यथा । चुम्बकः । स्वशक्त्या । लोहम् । आकृष्य । तेन लोहेन सह । सज्जते लग्नो भवति । तथा । स कारणशरीरयुक्तो जीवः । ईशसृष्टेन चतुर्वर्गसिद्ध्यर्थं योगशक्त्या मायया सृष्टा परमेश्वरदत्तेन । बुद्धीन्द्रियादिना सूक्ष्मशरीरेण स्थूलशरीरेण च सहेत्यर्थः । स्वशक्त्या स्वस्वरूपानादिकालस्थाज्ञानकृतानादिविषयासक्तिसामर्थ्येनेत्यर्थः । सज्जते ॥ २५ ॥ अज्ञानेनेति । स जीवः । अज्ञानेनैव । तस्मिन्सूक्ष्मस्थूलात्मकदेहे । अहम्मतिं देहोऽहमित्यहंबुद्धिम् । विदधाति । असौ जीवः । वस्तुतः स्वरूपतः । तादृग्देहसदृशः । न तु नैवास्ति । इतीत्थम् । उक्तः श्रीहरिणा कथितः । सः । मुनिर्ब्रह्मानन्दसाधुः । अब्रवीत् ॥ २६ ॥

कृष्णेति । हे हरे ! । असौ जीवः । कृष्णैकान्तिकभक्त्या श्रीहरेस्तवैकान्तिकोपासनया । अज्ञानविनिवृत्तितः स्वनिष्ठानाद्यज्ञाननिवृत्त्या । यदा । त्रिदेहमुक्तः । स्यात् । तदा । कीदृग्रूपः । भवेत् ॥ २७ ॥ तमिति । तमेवंपृच्छन्तं ब्रह्मानन्दमुनिम् । हरिः । उवाच । हे मुने ! । यर्हि । श्रीकृष्णोपासनाबलाच्छ्रीहरेरेकान्तिकभक्तिप्रतापात् । अस्य जीवस्य । वपुस्त्रयम् । लीयते विनिवृत्तं जायते । तदा । चिद्रूपः प्रकाशात्मकब्रह्मस्वरूपः । जायते ॥ २८ ॥ कृष्णेति । हे मुने ! । अथानन्तरम् । अस्य चिद्रूपस्य जीवस्य । कृष्णेच्छया सम्यगुपासितश्रीहरिसङ्कल्पेन । पराप्रकृतितोऽक्षरब्रह्मात्मकपराप्रकृतेः सकाशात् । दिव्यः । देहो ब्रह्ममयतनुः । आविर्भवति स एवंभूतो भगवद्भक्तात्मा । तेन स्वाविर्भूतब्रह्मशरीरेण सह । संयुज्यते तदभिमानयुक्तो । भवति । 'गुणापाये ब्रह्मशरीरमेती'ति श्रुतेः ॥ २९ ॥ तादृश इति । अथ च । तादृशो ब्रह्ममयतनुः । असौ भक्तः । तस्मिन् छान्दोग्याद्युपनिषत्प्रसिद्धे । अक्षरधामनि । प्रीत्या साहजिकातिस्नेहेन । हरिम् । सेवमानः सन् । वर्त्तते । इत्येवंविधम् । प्रश्नोत्तरम् । ईरितम् ॥ ३० ॥ तत इति । ततस्तदनन्तरम् । हरिः । साधुवरं सकलसाधुश्रेष्ठम् । गोपालानन्दं मुनिम् । पप्रच्छ । हे

कृष्णैकान्तिकभक्त्याऽसावज्ञानविनिवृत्तितः । यदा त्रिदेहमुक्तः स्यात्कीदृग्रूपस्तदा भवेत् ॥ २७ ॥ तमुवाच हरिर्यर्हि श्रीकृष्णोपासनाबलात् । वपुस्त्रयं लीयतेऽस्य चिद्रूपो जायते तदा ॥२८॥ कृष्णेच्छयाऽथ दिव्योऽस्य पराप्रकृतितो मुने ! । आविर्भवति देहो वै तेन संयुज्यसे च सः ॥ २९ ॥ तादृशोऽथ हरिं प्रीत्या तस्मिन्नक्षरधामनि । सेवमानो वर्त्ततेऽसौ प्रश्नोत्तरमितीरितम् ॥ ३० ॥ ततः पप्रच्छ गोपालानन्दं साधुवरं हरिः । भगवन्तं भजन्तेऽत्र बहवः पुरुषा मुने ! ॥ ३१ ॥ केषांचिज्जायते तत्र साक्षाद्दर्शनमात्मनः । अष्टाङ्गस्य च योगस्य सिद्धिरप्यतिदुर्लभा ॥ ३२ ॥ सिद्ध्यत्येतद् द्वयमपि कृपया कृष्णतत्सताम् । अतस्तेष्वेव तेषां तु सर्वदा लग्नतोचिता ॥ ३३ ॥ तथापि कस्यचिद्योगसिद्धौ च स्वात्मदर्शने । जायते तत्रैव तस्यातिलग्नता पुंस ईक्ष्यते ॥३४॥ तद्धेतौ तु हरौ सत्सु तस्या गौणत्वमीक्ष्यते । तत्र किं कारणं साधो ! ब्रूहीत्युक्तोऽब्रवीत्स तम् ॥ ३५ ॥

मुने ! । अत्र सत्सङ्गे । बहवः । पुरुषा भक्ताः । भगवन्तम् । भजन्ते ॥ ३१ ॥ केषांचिदिति । तत्र तेषु भक्तेषु मध्ये । केषांचिद्भक्तानाम् । आत्मनः स्वक्षेत्रज्ञस्य । साक्षाद्दर्शनम् । जायते । अतिदुर्लभा । अष्टाङ्गस्य । योगस्य । सिद्धिश्चापि । जायते ॥ ३२ ॥ सिद्ध्यतीति । एतद्द्वयमपि । कृष्णतत्सताम् । कृपया । सिद्ध्यति । अतोहेतोः । तेषां भक्तानाम् । तेषु कृष्णतत्सत्स्वेव । सर्वदा । लग्नता । उचिता योग्या । अस्ति ॥ ३३ ॥ तथेति । तथापि । कस्यचिद्भक्तस्य । योगसिद्धौ स्वात्मदर्शने च । जाते सति । तस्य योगसिद्धिस्वात्मदर्शनवतः । पुंसो भक्तस्य । तत्र योगसिद्धौ स्वात्मदर्शने एव । अतिलग्नता । ईक्ष्यते ॥ ३४ ॥ तदिति । हे साधो ! । तद्धेतौ योगसिद्धिस्वात्मदर्शनोद्भवकारणे । हरौ । सत्सु तत्साधुषु तु । तस्या अतिलग्नतायाः । गौणत्वममुख्यत्वम् । ईक्ष्यते । तत्रैवंविधार्थे । किं कारणं को हेतुरस्ति । ब्रूहि । इतीत्थम् । उक्तः श्रीहरिणा पृष्टः । स गोपालानन्दमुनिः । तं श्रीहरिम् । अब्रवीत् ॥ ३५ ॥

पुंस इति । हे हरे ! । अस्यैवं विधस्य । पुंसो भक्तस्य । योगसंसिद्धया । स्वात्मनः । दर्शनेन च हृदि । मानः । जात उत्पन्नोऽस्ति । इति हेतोः । तस्य भक्तस्य । ईदृशीवृत्तिः । ईक्ष्यते ॥ ३६ ॥ इतीति । इतीत्थम् । उक्तवन्तम् । तं गोपालानन्दमुनिं प्रति । हरिः । आहः । हे मुने ! । सः । पुमान् भक्तः । यदा । सिद्धयोगः । आत्मदृक् च । स्यात् । तदा । ब्रह्मरूपः । भवेत् ॥ ३७ ॥ तस्मिन्निति । हे मुने ! । तथाविधे ब्रह्मरूपे । तस्मिन् भक्ते । मानः । वक्तुम् । न शक्यः । वै । देहाभिमानवत्स्वेव मानसम्भवाद् ब्रह्मरूपाणां तदभावादेवंविधेषु स सर्वथा नैवाभिहितुमर्हं इत्यर्थः । एवं गोपालानन्दमुनि-कृतस्वप्रश्नोत्तरं निषिद्धय यथार्थं तदुत्तरं स्वयमेवाह । किन्तु । तेनैवंविधभक्तेन । योगसिद्धिमतामात्मदर्शनवतां च वर्त्तनप्रकारः । न विज्ञातम् ॥ ३८ ॥ योगेति । पुरातनाः पूर्वकालभवाः । योगसिद्धाः । आत्मदृशः सन्तः । ब्रह्मीभूताः सम्प्राप्तात्माक्षरब्रह्मैकत्वाश्च । भक्ताः । यथा । अवर्त्तन्त । तत्तथाविधं तेषां वर्त्तनम् । तेन भक्तेन । शास्त्रचक्षुषा । ज्ञातव्यम् ॥ ३९ ॥ यज्ज्ञानप्रकारमाह पञ्चभिः । योगस्येति । हे मुने ! । प्राक् पूर्वम् । व्यासनन्दनो व्यासपुत्रः शुकः । योगस्य । परमाम् । सिद्धिम् । सम्प्राप्तः । आत्मदर्शनः सम्प्राप्तात्मसाक्षात्कारः । अतएव । ब्रह्मानन्दनिमग्नश्च । आसीत् ॥ ४० ॥ तथेति । असौ शुकः । तथाविधः सन्नपि । श्रीमद्भागवतम् । अधीत्य । हरौ । परमाम् । भक्तिम् । चकार । तस्य हरेः । आत्मप्रियः स्वात्मवत्प्रेमास्पदं च । अभवत् ॥ ४१ ॥ भक्तेरिति । स शुकः । भक्तेर्भगवदुपासनायाः । वृध्यै पुष्टयर्थमेव । नित्यम् । साधुवैष्णवसङ्गमम् । इच्छन्सन् । संसदि । तत्पुराणस्य श्रीभागवतपुराणस्य । कथाम् । चक्रे । तथाचोक्तं श्रीभागवते । 'हरेर्गुणाक्षिप्तमतिर्भगवान्बादरायणिः । अध्यगान्महदाख्यानं नित्यं विष्णुजनप्रिय' इति । विष्णुजनप्रिय इत्यस्यायं भावः । व्याख्यानादिप्रसङ्गेन तत्सङ्गतिकाम इति ॥ ४२ ॥ एवमिति । एवममुना प्रकारेण । अन्येऽपि । बहवः । आत्मनिष्ठाः । योगिनश्च । कृष्णतत्सेवकेष्वेव । अतिलग्नताम् । सम्प्रापुः ॥ ४३ ॥ आत्मेति । एताम् । आत्मदृग्योगिनामात्मदृशां सिद्धयोगानां च । परिपाटीम् । अत्र सत्सङ्गे । अधुना साम्प्रतमपि । ये भक्ताः । विदुः । ते । भक्ता अपि । तद्वत्प्राचीनशुकाद्या-

पुंसोऽस्य योगसंसिद्धया स्वात्मनो दर्शनेन च । हृदि मानो जात इति वृत्तिस्तस्येदृशीक्ष्यते ॥ ३६ ॥ इत्युक्तवन्तं प्रत्याह तं हरिः स यदा पुमान् । सिद्धयोगश्चात्मदृक् स्याद् ब्रह्मरूपस्तदा भवेत् ॥३७॥ तस्मिंस्तथाविधे मानो वक्तुं शक्यो न वै मुने ! । किन्तु तेन न विज्ञातं योगसिद्धादिवर्त्तनम् ॥ ३८ ॥ योगसिद्धाश्चात्मदृशो ब्रह्मीभूताः पुरातनाः । यथाऽवर्त्तन्त तेन ज्ञातव्यं शास्त्रचक्षुषा ॥ ३९ ॥ योगस्य सिद्धिं परमां सम्प्राप्तश्चात्मदर्शनः । ब्रह्मानन्दनिमग्नश्च प्रागासीद् व्यासनन्दनः ॥४०॥ तथाविधोऽप्यधीत्यासौ श्रीमद्भागवतं हरौ । चकार परमां भक्तिं तस्य चात्मप्रियोऽभवत् ॥४१॥ भक्तेरेव स वृद्धयै च साधुवैष्णवसङ्गमम् । नित्यमिच्छन्कथां चक्रे तत्पुराणस्य संसदि ॥ ४२ ॥ एवमन्येऽपि बहव आत्मनिष्ठाश्च योगिनः । कृष्णतत्सेवकेष्वेव सम्प्रापुरतिलग्नताम् ॥ ४३ ॥ आत्मदृग्योगिनामेतां परिपाटीं तु ये विदुः । अधुनाऽप्यत्र ते भक्ता वर्त्तन्ते तद्वदेव हि ॥ ४४ ॥

त्मनिष्ठयोगिवदेव । वर्त्तन्ते । हि ॥ ४४ ॥ अत इति । अतोहेतोः । यस्य भक्तस्य । ईदृशी हरितत्सत्सु मनोलग्नतारूपा । वृत्तिः । न स्यात् । तेन भक्तेन तु । शास्त्रतः । प्राग्योगिवृत्तान्तम् । बुध्वा । निजः स्वकीयः । दोषो हरितत्सत्स्वतिमनोलग्नत्वाभावरूपोऽगुणः । अचिराच्छीघ्रमेव । हेयः ॥ ४५ ॥ येनेति । येन भक्तेन । स्वकः । दोषः । कथंचन । विदितः । नैव स्यात् । तेन भक्तेन । दिने दिने । पूजनान्ते । हरिः । प्रार्थनीयः ॥ ४६ ॥ प्रार्थनामन्त्रमाह । नारायणेति । हे नारायण ! । हे स्वामिन् ! । हे दीनवत्सल ! । हे हरे ! । मयि । संस्थितः । यः । कश्चित् । दोषः । स्यात् । स दोषः । त्वया । कृपया । नाश्यः ॥ ४७ ॥ इतीति । इतीत्थमम् । सम्प्रार्थितः । ईश्वरेश्वरः । साक्षात् । भगवान् । हृद्गतः स्वभक्तहृदयावस्थितः सन् । नचिरेणाल्पकालेनैव । दोषान् । अशेषतो निःशेषतः । हन्ति नाशयति ॥ ४८ ॥ इतीति । इत्यमुना प्रकारेण । अस्मै गोपालानन्दमुनये । शास्त्रसम्मतम् । प्रश्नोत्तरम् । दत्त्वा । स्वामी श्रीहरिः । पुरोनिषण्णं

अतो यस्येदृशी वृत्तिर्न स्यात्तेन तु शास्त्रतः । बुद्ध्वा प्राग्योगिवृत्तान्तं हेयो दोषो निजोऽचिरात् ॥४५॥ येन दोषः स्वको नैव विदितः स्यात्कथंचन । पूजनान्ते हरिस्तेन प्रार्थनीयो दिने दिने ॥४६॥ नारायण ! हरे ! स्वामिन् ! यः कश्चिन्मयि संस्थितः । दोषः स्यात्स त्वया नाश्यः कृपया दीनवत्सल ! ॥४७॥ इति सम्प्रार्थितः साक्षाद्भगवानीश्वरेश्वरः । दोषानशेषतो हन्ति नचिरेणैव हृद्गतः ॥ ४८ ॥ इति प्रश्नोत्तरं स्वामी दत्वाऽस्मै शास्त्रसम्मतम् । पुरो निषण्णं पप्रच्छ मुक्तानन्दं महामुनिम् ॥ ४९ ॥ कृतावतारोऽपि हरिः स्वतन्त्रोऽस्त्येव सर्वदा । मानुष्यं नाटयन् क्वापि स स्वैश्वर्यं न दर्शयेत् ॥ ५० ॥ मन्त्रयन्त्रादिवित्कश्चित्प्राकृतोऽपि पुमान्मुहुः । चमत्कारान्बहून्सद्यो दर्शयेदञ्जसाऽऽश्रितान् ॥५१॥ तद्दर्शनेन भक्तस्य नृवृत्तिं भजतो हरिम् । ततो यायात्परावृत्तिं न वा यायान्मनो वद ॥ ५२ ॥ इति पृष्टः स तं प्राह यदि भक्तेन तेन सः । सम्यक् स्यान्निश्चितस्तर्हि परावर्त्तेत तन्न वै ॥ ५३ ॥

स्वाग्रप्रदेशावस्थितम् । महामुनिम् । मुक्तानन्दम् । पप्रच्छ ॥ ४९ ॥ कृतेति । हे मुने ! । कृतावतारो मनुष्यभावेन प्रादुर्भूतोऽपि । हरिः । सर्वदा । स्वतन्त्र एव । अस्ति । सर्वकालं सकलस्वैश्वर्यसम्पन्न एवास्तीतिभावः । स श्रीहरिः । मानुष्यम् । नाटयन्ननुकुर्वन्सन् । क्वापि कदाचित् । स्वैश्वर्यम् । न दर्शयेत् ॥ ५० ॥ मन्त्रेति । मन्त्रयन्त्रादिवित् । कश्चित् । प्राकृतो लौकिकोऽपि । पुमान् । आश्रितान्स्वाश्रितनरान् । बहून् । चमत्कारान् । मुहुः पुनः पुनः । सद्यः । अञ्जसाऽनायासेनैव । दर्शयेत् ॥५१॥ तदिति । नृवृत्तिं चमत्काराप्रदर्शनपूर्वं मनुष्यसमानतया वर्त्तमानम् । हरिम् । भजतः । भक्तस्य । मनः । ततो हरेः सकाशात् । परावृत्तिम् । यायात् । अथवा । न यायात् । वद ॥ ५२ ॥ इतीति । इतीत्थम् । पृष्टः श्रीहरिणानुयुक्तः । स मुक्तानन्दमुनिः । तं श्रीहरिम् । प्राह । हे हरे ! । यदि । तेन । भक्तेन । स श्रीहरिः सम्यग्यथार्थतया । माहात्म्यज्ञानसहितमित्यर्थः । निश्चितः । स्यात् । तर्हि । तद्भक्तमनः । न परावर्त्तेत हरेः सकाशात्परावृत्तिं न यायात् । वै ॥ ५३ ॥

यदीति । यदि । प्राकृतजीवस्य । चमत्कारसमीक्षणात् । भक्तस्य । मनः । नृशीलिनो नरानुकरणशीलात् । कृष्णाच्छ्रीहरेः । परावर्त्तेत । तर्हीत्युत्तरेण सम्बन्धः ॥ ५४ ॥ तर्हीति । तर्हि । तेन भक्तेन । हरिः । यथार्थतः माहात्म्यावगमसहितमित्यर्थः । नैव ज्ञातः । खलु । इत्येवंविधम् । उत्तरम् । श्रुत्वा । हरिः । तं मुक्तानन्दमुनिम् । प्राह । हे मुने ! । त्वया । सत्यं यथार्थमुत्तरम् ईरितं प्रोक्तम् ॥ ५५ ॥ पप्रच्छेति । अथो अथानन्तरम् । प्रभुः श्रीहरिः । शुकमुनिं शुकानन्दसाधुम् । पप्रच्छ । हे साधो ! । अत्र सत्सङ्गे । यस्य । देहिनो भक्तजनस्य । साक्षाद्धरेः । अथ च । तत्सतां श्रीहर्येकान्तिकसाधूनाम् । प्राप्तिः । जाता । अस्ति ॥ ५६ ॥ जीवत इति । अत्र लोके । जीवतः प्राणान् धारयतः । अस्य भक्तस्य । कः । लाभः । जायते । देहान्ते देहपतनानन्तरम् । कश्च । लाभः । जायते । इतीत्थम् । पृष्टः श्रीहरिणानुयुक्तः । स शुकानन्दमुनिः । तं श्रीहरिम् । प्राह । हे हरे ! । अस्य त्वत्प्रश्नस्य । उत्तरम् । त्वमेव । कुरु ॥ ५७ ॥ इत्थं

यदि प्राकृतजीवस्य चमत्कारसमीक्षणात् । परावर्त्तेत भक्तस्य मनः कृष्णान्नृशीलिनः ॥ ५४ ॥ तर्हि तेन हरिर्नैव ज्ञातः खलु यथार्थतः । इत्युत्तरं हरिः श्रुत्वा प्राह तं सत्यमीरितम् ॥५५॥ पप्रच्छाथो शुकमुनिं प्रभुः साधोऽत्र देहिनः । यस्य साक्षाद्धरेः प्राप्तिर्जाताऽस्त्यथ च तत्सताम् ॥ ५६ ॥ जीवतोऽत्रास्य को लाभो देहान्ते कश्चन जायते । इति पृष्टः स तं प्राह त्वमेवास्योत्तरं कुरु ॥ ५७ ॥ श्रीहरिरुवाच—कालोऽस्य जीवतः कृष्णकथासंश्रवणादिना । सर्वोऽपि यात्यथेक्षा स्याद् ब्रह्मरूपात्मनो मुने ! ॥ ५८ ॥ अवस्थात्रितयाक्रान्तिः स्वधर्मे चाचलस्थितिः । त्यागश्चाधर्मसर्गस्य सर्वदा सर्वथैव हि ॥५९॥ कृष्णेतरपदार्थेषु वैराग्यं च सदा दृढम् । एष लाभोऽत्र विज्ञेयो हरिभक्तस्य जीवतः ॥६०॥ देहान्ते त्वस्य भगवत्साधर्म्याप्तिश्च जायते । ब्रह्मधामनि कृष्णस्य सेवा तेन च लभ्यते ॥ ६१ ॥ तत्र तेनानुभूयन्ते यथावच्च रमापतेः । स्वरूपं च स्वभावश्च सद्गुणाश्च विभूतयः ॥ ६२ ॥

शुकानन्दसता पृष्टः स पुरुषोत्तमः । अब्रवीन्नन्दयंस्तं च निजानिति सतोऽपरान्' । काल इति । हे मुने ! । जीवतः । अस्य भक्तस्य । सर्वोऽपि । कालः । कृष्णकथासंश्रवणादिना । याति । अथ च । ब्रह्मरूपात्मनो ब्रह्मभावापन्नस्य स्वजीवस्य । ईक्षा दर्शनम् । स्यात् ॥ ५८ ॥ अवस्थेति । अवस्थात्रितयाक्रान्तिर्जाग्रदाद्यवस्थात्रयभावमतिक्रम्य वर्त्तनम् । स्यात् । स्वधर्मे । अचलस्थितिश्च । स्यात् । अधर्मसर्गस्य लोभादेः । त्यागश्च । सर्वथैव । स्यात् । हि ॥ ५९ ॥ कृष्णेति । कृष्णेतरपदार्थेषु । सदा । दृढम् । वैराग्यं च । स्यात् । अत्र लोके । जीवतः । हरिभक्तस्य । एषः । लाभः । विज्ञेयः ॥ ६० ॥ देहेति । अस्य भक्तस्य । देहान्ते तु । भगवत्साधर्म्याप्तिः । जायते । यथा स्वयं भगवान्कालकर्ममायादिबन्धनरहितो भवति तथाऽयमपि जायते इतिभावः । तेन तथाविधेन भक्तेन । ब्रह्मधामनि । कृष्णस्य । सेवा च । लभ्यते ॥ ६१ ॥ तत्रेति । तत्राक्षरधाम्नि । तेन भक्तेन । रमापतेर्लक्ष्मीकान्तस्य श्रीहरेः । स्वरूपं स्वाभिमतानुरूपैकरूपाचिन्त्यनित्याद्भुतनिरवद्यनिर-

तिशयौज्ज्वल्य सौन्दर्य सौगन्ध्य सौकुमार्य लावण्य यौवनादिरूपम् । स्वभावोऽपारकारुण्यसौशील्यवात्सल्यौदार्यैश्वर्यादिरूपश्च । सद्गुणाः साहजिकानवधिकातिशयज्ञान-बलैश्वर्यवीर्यशक्तितेज आदिरूपाश्च । विभूतयो विचित्रानन्तभोग्यभोक्तृवर्गभोगोपकरणभोगस्थान निखिलजगदुदयविभवलयलीला चादयश्च । यथावद्यथार्थतया । अनुभूयन्ते ॥ ६२ ॥ एवमिति । हे मुने ! । एवममुना प्रकारेण । श्रीकृष्णभक्तस्य । अत्रास्मिल्लोके । परत्राक्षरधाम्नि च । लाभः । अस्ति । इत्येवंविधम् । प्रश्नोत्तरम् । प्रोक्तं मया तुभ्यं कथितम् । हृदि स्वमानसे । अवधारय मननेन तत्स्थिरीकुरु ॥ ६३ ॥ प्रश्नेति । इत्येवंविधम् । ईश्वरस्य प्रत्यक्षपरमेश्वरस्य । तस्य श्रीहरेः । प्रश्नोत्तरात्मकवचोऽमृतम् । श्रवणैः । निपीयात्यादरेण श्रुत्वेत्यर्थः । मुनिवराः । ते आनन्दानन्दादयः षट् साधवः । अथो अथ च । सदःस्थाः । सर्वे मुनयः । अपरे । गृहाश्रमिणः । पुमांसश्चापि । परम् । हर्षम् । ययुः ॥ ६४ ॥ यः पृष्ट्वा षट् महासाधून् प्रश्नान् कृत्वोत्तराणि तान् । हर्षयामास स हरिर्हर्षदोऽस्तु सदा मम ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्सूनुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां शताधिकनवनवतितमस्तरङ्गः ॥ १९९ ॥ ६६ ॥

एवं श्रीकृष्णभक्तस्य लाभोऽत्रास्ति परत्र च । प्रश्नोत्तरमिति प्रोक्तं मुने ! हृद्यवधारय ॥ ६३ ॥ प्रश्नोत्तरात्मकवचोऽमृतमीश्वरस्य तस्येति ते मुनिवराः श्रवणैर्निपीय । हर्षं परं ययुरथो मुनयः सदःस्थाः सर्वेऽपरेऽपि च गृहाश्रमिणः पुमांसः ॥ ६४ ॥

इति श्रीहरिवाक्यसुधासिंधौ शतानन्दमुनिविरचिते शताधिकनवनवतितमस्तरङ्गः ॥ १९९ ॥ ६६ ॥

शकाब्दे विक्रमार्कस्य चन्द्राष्टवसुभूमिते । माघकृष्णतृतीयायां वचोऽमृतमिदं हरेः ॥ १ ॥
तत्र दुर्गपुरे दुर्गे उत्तमस्य महीभुजः । निजावासादपाग्देश उपगङ्गाजलप्रहेः ॥ २ ॥
वेद्यां निषद्य राजन् स स्वासने विशदांशुकः । सद्गीतकृष्णपद्यानि भक्तसङ्घवृतोऽशृणोत् ॥ ३ ॥

ब्रह्मरूपेषु भक्तेषु हरौ भेदो यथाञ्जसा । सेव्यसेवकता हेतुः सप्तषष्टितमे स्मृतः ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८८१) माघकृष्णतृतीयायां माघमासस्य कृष्णपक्षागततृतीयातिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥१॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमस्य । महीभुजः । दुर्गे । निजावासात् । अपाग्देशे दक्षिणदिक्प्रदेशे । गङ्गाजलप्रहेः साक्षाद्भगवच्चरणारविन्दप्रक्षालनोदकनिभृतता सञ्जातगङ्गाजलयाख्यस्य कूपस्य उप समीपप्रदेशे ॥ २ ॥ वेद्यामिति । वेद्याम् । स्वासने स्वास्तृतपर्यङ्कासने । निषद्योपविश्य । राजन्नुपवेशनचातुर्येण शोभमानः । विशदांशुकः परिधृतसकलश्वेतवसनः । भक्तसङ्घवृतो नानादेशागतत्यागिगृहिस्वाश्रितजनवृन्दैः सभायां संवेष्टितः । स श्रीहरिः । सद्गीतकृष्णपद्यानि मृदङ्गविपञ्च्यादिसहितं यथातथा मुक्तानन्दादिमुनिसंगीतकृष्णकीर्त्तनानि । अशृणोत् । इतिद्वयोरेकसम्बन्धः ॥ ३ ॥

कीर्त्तनेति । कीर्त्तनान्ते सद्गीतकीर्त्तनसमाप्तौ सत्यामित्यर्थः । प्रसन्नः । असौ श्रीहरिः । पुरोगतान्स्वाग्रप्रदेशावस्थितान् । सतः साधून् । ऊचे । भो सन्तः । युष्मान् । किञ्चन । पृच्छामि । तत् । सर्वे भवन्तः । शृण्वन्तु ॥ ४ ॥ एकान्तिका इति । ब्रह्मतां ब्रह्मभावम् । गताः प्राप्ताः । हरेः । एकान्तिकाः । भक्ताः । देहान्ते । परमम् । तत्साम्यं भगवतः साधर्म्यम् । प्राप्य । तद्धाम्नि श्रीहरेरक्षरधामनि । भूरिशो बहवः । सन्ति सम्यगवस्थिता वर्त्तन्ते ॥ ५ ॥ तेष्विति । तेषु तथाविधभक्तेषु । कृष्णे श्रीहरौ च । कः । भेदः । अस्ति । येन भेदेन । ते भक्ताः । सेवकाः । मताः । भगवान् स्वयं श्रीहरिः । सेवनीयः स्वामी । मतः । तद्ब्रूतेतिशेषः । इतीत्थम् । पृष्टाः श्रीहरिणानुयुक्ताः । ते साधवः । ऊचिरे । प्रश्नस्येति । हे स्वामिन् ! । अस्य । प्रश्नस्य । उत्तरम् । त्वयैव । भविष्यति । हि । इतीत्थम् । उक्तः प्रश्नोत्तराय प्रेरितः । स श्रीहरिः । हसन्सन् । ऊचे । अहम् । तन्मतप्रश्नोत्तरम् । ब्रुवे । श्रूयताम् ॥ ७ ॥ कृष्णेति । हे मुनयः !

कीर्त्तनान्ते प्रसन्नोऽसौ सत ऊचे पुरोगतान् । सर्वे शृण्वन्तु भो सन्तो ! युष्मान् पृच्छामि किञ्चन ॥ ४ ॥ एकान्तिका हरेर्भक्ता देहान्ते ब्रह्मतां गताः । तत्साम्यं परमं प्राप्य सन्ति तद्धाम्नि भूरिशः ॥ ५ ॥ तेषु कृष्णे च को भेदो येन ते सेवका मताः सेवनीयश्च भगवानिति पृष्टास्त ऊचिरे ॥ ६ ॥ प्रश्नस्यास्योत्तरं स्वामिंस्त्वयैव हि भविष्यति । इत्युक्तः स हसन्नूचे श्रूयतां तदहं ब्रुवे ॥ ७ ॥ कृष्णभक्ताः कालकर्ममायावरणवर्जिताः । ब्रह्मीभूता ब्रह्मधाम्नि वसन्ति हरिसन्निधौ ॥ ८ ॥ भूरितेजोमयाङ्गास्ते कृष्णाग्रे त्वल्पतेजसः । तारका इव चन्द्राग्रे दृश्यन्त इति गम्यताम् ॥ ९ ॥ रूपसौन्दर्यमैश्वर्यं गुणाः कल्याणकारिणः । कृष्णदत्ताः सन्ति तेषु कृष्णे तु सहजस्थिताः ॥ १० ॥ दीयमानमपि स्वेभ्य ऐश्वर्यं राधिकापतेः । अर्णवाम्भ इवापारमवितर्क्यं च वर्त्तते ॥ ११ ॥ अस्ति कृष्णे निरवधिमहैश्वर्यमखन्डितम् । तत्रस्थमुक्तपुंसां तदत्यन्तमपि सावधि ॥ १२ ॥

। कालकर्ममायावरणवर्जिताः । ब्रह्मीभूताः । कृष्णभक्ताः श्रीहरेरेकान्तिकोपासकाः । ब्रह्मधाम्नि । हरिसन्निधौ श्रीहरेसमीपसेवायाम् । वसन्ति ॥ ८ ॥ भूरीति । भूरितेजोमयाङ्गाः प्रचुरतेजःपुञ्जद्योतमानशरीराः । ते भक्ताः । कृष्णाग्रे कोटिकोटयहस्करनिशाकरादिभ्योऽप्यनवधिकातिशयतेजोमयतनोः श्रीहरेरग्रे तु । चन्द्राग्रे । तारका इव । अल्पतेजसः । दृश्यन्ते । इतीत्थम् । गम्यताम् ॥ ९ ॥ रूपेति । रूपसौन्दर्यं मूर्त्तिसुन्दरता । ऐश्वर्यम् । कल्याणकारिणः । गुणाः । तेषु भक्तेषु । कृष्णदत्ताः श्रीहर्यर्पिताः । सन्ति । कृष्णे तु । सहजस्थिताः । सन्ति ॥ १० ॥ दीयमानमिति । स्वेभ्यः स्वकीयभक्तेभ्यः । दीयमानं सदपि राधिकापतेः श्रीहरेः । ऐश्वर्यम् । अर्णवाम्भ इव । अपारम् । अवितर्क्यं च । वर्त्तते ॥ ११ ॥ अस्तीति । कृष्णे श्रीहरौ । महैश्वर्यम् । निरवध्यन्तवर्जितम् । अखण्डितम् । अस्ति । तत्रस्थमुक्तपुंसामक्षरधामस्थमुक्तभक्तानाम् । अत्यन्तमतिशयितमपि । तन्महैश्वर्यम् । सावधि परिछिन्नम् । अस्ति ॥ १२ ॥

ब्रह्माण्डानीति । ते भक्ताः । कृष्णस्य श्रीहरेः । आज्ञयैव । क्वचित्कदाचित् । ब्रह्माण्डानि । सृजेयुः । तानि ब्रह्माण्डानि । पालयेयुः । संहरेयुश्च । आत्मनः । इच्छया । न तु ब्रह्माण्डसर्गादि नैव विदध्युः ॥ १३ ॥ अनेकेति । प्रभौ श्रीहरौ तु । अनेककोटिब्रह्माण्डस्रष्टृत्वादीनि । स्वातन्त्र्येण । भवन्ति । इत्येतत् । तस्य श्रीहरेः । तेषां मुक्तभक्तानां च । भेदकृत् परस्परभेदकारकम् । अस्ति ॥ १४ ॥ एवमिति । एवमादिगुणैः । कृष्णस्य । स्वामिता । ज्ञेया । तथा ब्रह्मस्वरूपिणाम् । मुक्तपुंसाम् । सेवकत्वम् । ज्ञेयम् ॥ १५ ॥ अमृतमिति । इत्येवंविधम् । स्वगुरोः श्रीहरेः । अमृतं सुधातुल्यम् । वचनम् । निशम्य । ते समेप-

ब्रह्मान्डानि सृजेयुस्ते कृष्णस्यैवाज्ञया क्वचित् । पालयेयुः संहरेयुस्तानि न त्विच्छयात्मनः ॥ १३ ॥ अनेक-कोटिब्रह्माण्डस्रष्टृत्वादीनि तु प्रभौ । स्वातन्त्र्येण भवन्तीति तस्य तेषां च भेदकृत् ॥ १४ ॥ एवमादिगुणैर्ज्ञेया कृष्णस्य स्वामिता तथा । मुक्तपुंसां सेवकत्वं ज्ञेयं ब्रह्मस्वरूपिणाम् ॥ १५ ॥ अमृतं वचनं स्वगुरोरिति ते मुन-यस्तु निशम्य मुदं परमाम् । गृहिणश्च जना निखिला अगमन् विनयेन च तं स्म नमन्ति हि ते ॥ १६ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते द्विशततमस्तरङ्गः ॥ २०० ॥ ६७ ॥

विष्टाः । मुनयः । निखिलाः । गृहिणः । जनाश्च । परमाम् । मुदम् । अगमन् । ते सर्वेभक्ताः । विनयेन । तं श्रीहरिन् । नमन्ति स्म । हि ॥ १६ ॥ स्वेषु ब्रह्म-स्वरूपेषु स्वस्मिन् भेदो यथाऽक्षरे । स्वपदे येन हरिणा प्रोक्तो ध्येयोऽस्तु मे स वै ॥ १ ॥ यः स्वाश्रितान्स्ववचनामृतपानतृप्तान्निष्कारणातिकरुणामयमूर्त्तिरीशः । चक्रेऽक्षराख्यपदवास उरुश्रवास्तं श्रीभक्तिधर्मतनयं पितरं नमामि ॥ २ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्सूनुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां द्विशततमस्तरङ्गः ॥ २०० ॥ ६७ ॥

## मध्यप्रकरणं सम्पूर्णम्

# श्रीवृत्तालयप्रकरणम्

श्रीहरिकृष्णाय भगवते नमोनमः । सर्वावतारधर्त्तारं सर्वकारणकारणम् । वन्देऽक्षरपदावासं श्रीहरिं भक्तिधर्मजम् ॥ १ ॥ स्वाश्रितान्सुखयामास यः स्वकीयवचोऽमृतैः । निष्कारणदयावार्द्धिः स पिता मेऽस्तु मानसे ॥ २ ॥ वृत्तालयपुरीया ये तरङ्गा विंशतिः शुभाः । हरिवाक्यसुधासिन्धोस्तद्व्याख्या क्रियते मया ॥ ३ ॥ तत्र तु प्रथमे प्रोक्तं निर्विकल्पस्थितेः स्फुटम् । लक्षणं स्वमनःशत्रोर्जयार्थोद्यमनं यथा ॥ ४ ॥ शकेति । विक्रमार्कस्य विक्रमादित्यनृपतेः । नेत्राष्टवसुभूमिते द्व्यष्टाष्टैकसंमिते । शकाब्दे शकवर्षे । संवदष्टादशशताधिकद्व्यशीतितमे वर्षे इत्यर्थः । (१८८२) ऊर्जशुक्ले कार्त्तिकमासस्य शुक्लपक्षे । एकादश्यां तिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । वृत्तालयपुरे । गोमतीसरसो गोमत्याख्यसरोवरस्य । तटे । महापीठे । वृत्तालयपुरान्तर्वर्त्तिश्रीलक्ष्मीनारायणमन्दिरादुत्तरपश्चिमेवर्त्तमानस्य गोमत्याख्यपद्माकरस्योपकण्ठस्थाम्रारामान्तर्गतेष्टिकारचितवेदिवर्त्तमानमहार्हासने इत्यर्थः । भक्तसङ्घैर्नानादेशायातत्यागिगृहिस्वभक्तवृन्दैः । परिश्रितः सभायां

शकाब्दे विक्रमार्कस्य नेत्राष्टवसुभूमिते । एकादश्यामूर्जशुक्ले वचोऽमृतमिदं हरेः ॥ १ ॥ तत्र वृत्तालयपुरे गोमतीसरसस्तटे । स व्यराजन्महापीठे भक्तसङ्घैः परिश्रितः ॥ २ ॥ शोणशीर्षस्कन्धपटो धृतश्वेताङ्गरक्षकः । श्वेतसुरवारधरो जम्ब्वाभकटिबन्धनः ॥ ३ ॥ स्थलपद्मस्रगापीडकेयूरकरभूषणम् । तमुदग्वदनं शोभारामः पप्रच्छ शास्त्रवित् ॥ ४ ॥ प्राप्नुयात्कृष्णभक्तो यो निर्विकल्पस्थितिं स ते । एकान्तिकः स्थितप्रज्ञो निर्भयो मुक्त ईरितः ॥ ५ ॥ यस्तु नैतां स्थितिं भक्तः प्राप्तः स्यात्तेऽस्य कीदृशी । गतिः स्यादिति सम्पृष्टस्तमुवाच स सत्पतिः ॥ ६ ॥

परिवेष्टितः । स श्रीहरिः । व्यराजत् ॥ २ ॥ तं विशिनष्टि । शोणेति । शोणौ कौसुम्भवर्णौ शीर्षस्कन्धपटावुष्णीषप्रावरणीयवसने यस्य सः । धृतं परिहितं श्वेतं धवलमङ्गरक्षकं येन सः । श्वेतस्य श्वेतवर्णस्य सुरवारस्य निचोलस्य धरः । जम्ब्वाभं पक्वजम्बूफलसमरङ्गं कटिबन्धनं ककुद्मतीबन्धनवस्त्रं यस्य सः ॥ ३ ॥ स्थलेति । स्रजो हाराश्च आपीडाः शेखराश्च केयूरे अङ्गदे च करभूषणे वलये च तानि स्थलपद्मानां स्रगादीनि यस्य तम् । उदग्वदनमुदगास्यम् । तं श्रीहरिम् । शास्त्रविन्न्यायशास्त्राभिज्ञः । शोभारामो वटपत्तनावासःशोभारामनामाविप्रः । पप्रच्छ ॥ ४ ॥ प्राप्नुयादिति । हे कृष्ण ! हे हरे ! । यः । ते तव । भक्तः । निर्विकल्पस्थितिम् । प्राप्नुयात् । स भक्तः । एकान्तिकः । स्थितप्रज्ञः समाधिनिष्ठः । निर्भयः । मुक्तः । ईरितः ॥ ५ ॥ य इति । यः । ते तव । भक्तः । एतां पूर्वश्लोकोक्तविधाम् । स्थितिम् । प्राप्तः । न स्यात् । अस्य तव भक्तस्य । गतिः । कीदृशी । स्यात् । इतीत्थम् । पृष्टः शोभारामशास्त्रिणानुयुक्तः । सत्पतिः । स श्रीहरिः । तं शोभा-

रामशास्त्रिणम् । उवाच ॥ ६ ॥ मन इति । हे शास्त्रिन् ! । कृष्णे साक्षाच्छ्रीहरिस्वरूपे । मनःप्राणनिरोधः । स्यात् । इत्येवंविधा । केवलमेकैव । निर्विकल्पस्थितिः। नैवास्ति । किन्तु । सा निर्विकल्पस्थितिः । अन्यथा प्रकारान्तरेणापि । अस्ति । हि ॥ ७ ॥ अन्यथा निर्विकल्पस्थितिप्रकारं दर्शयति पञ्चभिः । विश्वेति । विश्वस्य ब्रह्माण्डस्य सर्गविसर्गादीनि यानि नव लक्षणानि तैर्लक्षितः स्वरूपस्वभावगुणविभूत्यैश्वर्यादियुक्ततया यथार्थमवगतः । आश्रय आश्रयशब्दाभिहितः । सर्वाधारतया सम्मत इत्यर्थः । श्रीकृष्णः । श्रीमद्भागवतादिषु । प्रोक्तः । तथाचोक्तं श्रीभागवते । 'अत्र सर्गो विसर्गश्च स्थानं पोषणमूतयः । मन्वन्तरेशानुकथा निरोधो मुक्तिराश्रयः । दशमस्य विशुद्ध्यर्थं नवानामिह लक्षणम् । वर्णयन्ति महात्मानः श्रुतेनार्थेन चाञ्जसे'ति । 'विश्वसर्गविसर्गादिनवलक्षणलक्षितम् । श्रीकृष्णाख्यं परंब्रह्म जगद्धाम नमाम तदि'ति श्रीधरस्वामिनाऽपि । सर्गादि लक्षणानि श्रीभागवतस्य द्वितीयद्वादशस्कन्धाभ्यामवगन्तव्यानि ॥ ८ ॥ साक्षादिति । नराकृतेरेवमनवधिकातिशयगुणविभूत्यैश्वर्यादिमतः सन्तोऽपि निष्कारणापारकरुणया स्वभक्तहितार्थं सम्प्राप्तमनुष्यसमानाकृतेः । अतएव साक्षात्प्रत्यक्षस्य । तस्य कृष्णस्य सम्बन्धी । मुमुक्षोर्भक्तस्य । यः । दृढनिश्चयः ।

मनःप्राणनिरोधः स्यात्कृष्ण इत्येव केवलम् । निर्विकल्पस्थितिर्नैव किन्तु साऽस्त्यन्यथाऽपि हि ॥ ७ ॥ विश्वसर्गविसर्गादिनवलक्षणलक्षितः । श्रीकृष्ण आश्रयः प्रोक्तः श्रीमद्भागवतादिषु ॥ ८ ॥ साक्षान्नराकृतेस्तस्य मुमुक्षोर्दृढनिश्चयः । स्वपित्रादेरिवाचाल्यः क्वापि केनापि यो भवेत् ॥ ९ ॥ निर्विकल्पसमाधिः स प्रोक्तो मुक्तो भवेत्स यत् । तस्मिन् सति मनःप्राणनिरोधो नास्त्यपेक्षितः ॥१०॥ तावतैव कृतार्थोऽसौ भवतीत्यवगम्यताम् । तं विना प्राणरोधस्तु ज्ञेयोऽकिंचित्करं खलु ॥ ११ ॥ प्राणरोधविहीनोऽपि यः कृष्णदृढनिश्चयी । भवेत्पुमान् स विज्ञेयो निर्विकल्पसमाधिमान् ॥ १२ ॥ कीदृक् कृष्णस्वरूपं स्यात् परमे ब्रह्मधामनि । श्वेतद्वीपे च वैकुण्ठे कीदृक् कीदृग्भवेच्च तत् ॥ १३ ॥

नराकृतिरपि श्रीहरिः पुराणेतिहासोपनिषद्वर्णितमहिमाऽक्षरधामस्थानेकमुक्तोपासितचरणाब्ज एवास्तीति सुस्थिरनिर्णय इत्यर्थः । स्वपित्रादिरिव । क्वापि कदाचिदपि । केनापि शुद्धाद्वैतवादिनास्तिकादिना येन केनचिज्जनेनापि । अचाल्योऽक्षोभ्यः । भवेत् ॥ ९ ॥ निरिति । स एवंविधो निश्चयः । निर्विकल्पसमाधिः । प्रोक्तः । स भक्तः । यद् येन एवंविधनिर्विकल्पसमाधिना । मुक्तः । भवेत् । तस्मिंस्तथाविधे निश्चये सति । मनःप्राणनिरोधो मनःप्राणनिरोधरूपो निर्विकल्पसमाधिः । अपेक्षितः । नास्ति । स प्राणनिरोधो भवतु मा भवतु वा तस्यापेक्षैव नास्तीत्यर्थः ॥१०॥ तावतेति । असौ भक्तः । तावता तथाविधेनैकेन भगवन्निश्चयेनैवेत्यर्थः । कृतार्थः । भवति इतीत्थम् । अवगम्यताम् । तं निश्चयं विना । प्राणरोधः प्राणनिरोधलक्षणो निर्विकल्पसमाधिस्तु । अकिञ्चित्करः । ज्ञेयः ॥ ११ ॥ प्राणेति । यः । पुमान् भक्तः । प्राणरोधविहीनः सन्नपि । कृष्णदृढनिश्चयी । भवेत् । स भक्तः । निर्विकल्पसमाधिमान् । विज्ञेयः ॥ १२ ॥ विपक्षेदोपमाह त्रिभिः । कीदृगिति । परमे । ब्रह्मधामनि । कृष्णस्य प्रत्यक्षस्य श्रीहरेः । रूपम् । कीदृक्किंविधम् । स्यात् । श्वेतद्वीपे । तत्कृष्णरूपम् । कीदृक् । भवेत् । वैकुण्ठे लोके च । तत् । कीदृक् । भवेत् ॥ १३ ॥

दर्शनमिति । मम । तस्य । रूपस्य ब्रह्मधामाद्यवस्थितश्रीहरिस्वरूपस्येत्यर्थः । दर्शनम् । कदा कस्मिन्काले । भविष्यति । ईदृशा एवंविधाः । विकल्पाः । यस्य भक्तस्य । हृदये । मुहुः पुनः पुनः । भवेयुः ॥ १४ ॥ दैवेति । तस्य तथाविधभक्तस्य । दैवेच्छातः । मन्मूर्त्तितत्सम्बन्धिवस्त्रवेत्रादि दर्शनमात्रतोऽपि सर्वेषां समाधिर्भवत्विति प्रत्यक्षभगवत्कृतसङ्कल्पजायमानसमाधिप्रकरणवशत इत्यर्थः । क्वचित् । समाधौ । जाते सत्यपि । एकान्तिकभक्तत्वम् । नैव । भवेत् । यत एकान्तिकभक्तत्वतः । परा सर्वोत्कृष्टा । मुक्तिः । भवेत् । परामुक्तिर्नाम ब्रह्मधाम्नि ब्रह्मात्मना श्रीहरिसेवायामवस्थानमिति बोध्यम् । इतित्रयाणा-मेकसम्बन्धः ॥ १५ ॥ अत इति । अतोहेतोः । यस्य भक्तस्य । नराकृतौ । कृष्णे एव । अचला सुस्थिरा । मतिरक्षरधामादिसकलधामाधिपतिस्तत्रावस्थितदिव्य-तनुमाननन्तगुणनिधिर्योऽस्ति स एवायं नातः परः कश्चनाप्यस्तीति बुद्धिरित्यर्थः । भवेत् । त्यागिनः साध्वादेः । गृहिणो गृहस्थस्य चापि । तस्य भक्तस्यैव । मुक्ति-रुक्तलक्षणा । स्यात् ॥ १६ ॥ इतीति । हे विप्र ! । इत्यमुना प्रकारेण । ज्ञात्वा । अत्र सत्सङ्गे । मुमुक्षुणा । भक्तेन । सा प्रत्यक्षकृष्णेऽचलामतिरेव । दृढा सुस्थिरा

दर्शनं तस्य रूपस्य भविष्यति कदा मम । विकल्पा ईदृशा यस्य भवेयुर्हृदये मुहुः ॥ १४ ॥ दैवेच्छातः क्वचिज्जाते समाधावपि तस्य तु । नैवैकान्तिकभक्तत्वं यतो मुक्तिर्भवेत् परा ॥ १५ ॥ अतो नराकृतावेव कृष्णे यस्याचला मतिः । भवेत्तस्यैव मुक्तिः स्यात्त्यागिनो गृहिणोऽपि च ॥ १६ ॥ इति ज्ञात्वा सैव दृढा कर्त्तव्याऽत्र मुमुक्षुणा । तयैव च कृतार्थत्वं स्वस्य ज्ञेयं न चान्यथा ॥ १७ ॥ इति प्रश्नोत्तरं श्रुत्वा स हृष्टोऽभूद्द्विजोत्तमः । दीनानाथोऽथ पप्रच्छ तं कविः प्राञ्जलिः प्रभुम् ॥ १८ ॥ विकल्पानां प्रशमने यथा शक्त्युद्यमे कृते । सम्यक् तत्स्यान्न चेत्तर्हि प्रभो ! कीदृग्गतिर्भवेत् ॥ १९ ॥ तमुवाच हरिः शक्त्या क्रियमाणे तदुद्यमे । सम्यग्जये न जातोऽपि दुर्गतिस्तु भवेन्न हि ॥२०॥ न हि कल्याणकृत्कश्चिद् दुर्गतिं तात ! गच्छति । इति कृष्णस्य वचनं प्रमाणमिह विद्यते ॥ २१ ॥

। कर्त्तव्या । तयैव । स्वस्य । कृतार्थत्वं कृतकृत्यत्वम् । ज्ञेयम् । अन्यथा समाध्यादिना । न च नैव ज्ञेयम् ॥ १७ ॥ इतीति । इत्येवंविधम् । प्रश्नोत्तरम् । श्रुत्वा । द्विजोत्तमः । स शोभारामः । हृष्टः । अभूत् । अथानन्तरम् । कविर्नूतनकाव्यकर्त्ता । दीनानाथो विप्रः । प्राञ्जलिः सन् । प्रभुम् । तं श्रीहरिम् । पप्रच्छ ॥ १८ ॥ विकल्पानामिति । हे प्रभो ! । विकल्पानां कीदृगित्यादिश्लोकद्वयोक्तानाम् । प्रशमने निवर्त्तके । उद्यमे । यथाशक्ति । कृते सत्यपि । चेद्यदि । तदुद्यमकृतमपि विकल्पप्रशमनम् । सम्यक् । न स्यात् । तर्हि । कीदृक्किंविधाः । गतिः । भवेत् । तथाविधविकल्पवांस्त्वद्भक्तः कां गतिं यायादित्यर्थः ॥ १७ ॥ तमिति । तमेवंपृच्छन्तं कवीन्द्रं दीनानाथभट्टद्विजम् । हरिः । उवाच । हे विप्र ! । शक्त्या स्वसामर्थ्यानुसारेण । तदुद्यमे विकल्पप्रशमनोद्योगे । क्रियमाणे सत्यपि । जये विकल्पप्रशमने । सम्यक् । न जाते सत्यपि । दुर्गतिस्तु । न भवेत् । हि ॥ २० ॥ नेति । हे तातानुकम्प्यार्जुन ! । कल्याणकृत् साक्षाद्भगवदाश्रयं कृत्वा यथाशक्ति विकल्पजयो-

द्यमाचरणपूर्वं तद्भक्तिरूपसुकृतकर्त्तेत्यर्थः । कश्चिदपि भक्तः । दुर्गतिम् । न गच्छति । इत्येवंविधम् । कृष्णस्य । वचनं भगवद्गीतायामर्जुनं प्रत्युक्तवाक्यम् । इहार्थे । प्रमाणम् । विद्यते ॥ २१ ॥ इहास्मिन् जन्मन्येव । जये । जाते सति । निर्विकल्पस्थितिः । भवेत् । क्वचित्कदाचित् । जये । न जाते सत्यपि । सा निर्विकल्पस्थितिः । अन्यजन्मनि । स्यादेव ॥ २२ ॥ एवं त्रिभिर्विकल्पाजयजायमानदुर्गतिभीतं भक्तमन्यजन्मन्यपि तदुदयप्रदर्शनेन धृतिदानपूर्वमाश्वास्यान्यजन्मनि तदुत्पत्तिहेतुं पूर्वाभ्यासमाह । योगेति । योगभ्रष्टस्य विकल्पजयोद्यमं कुर्वतोऽपि दुरत्ययकालगत्या स्वप्रारब्धकर्मसमाप्त्याप्तदेहावसानेन साक्षाद्भगवत्स्वरूपदृढनिश्चयरूपयोगाच्च्युतस्य । अस्य । पुंसो भक्तस्य । पूर्वाभ्यासः । पुनः । प्रभौ श्रीहरौ । अचलाम् । मतिम् । कारयत्येव । अत्रार्थे । संशयः । नैवास्ति । 'पूर्वाभ्यासेन तेनैव ह्रियते ह्यवशोऽपि स' इति भगवद्गीतोक्तेः ॥ २३ ॥ तदिति । तत्तस्माद्धेतोः । मुमुक्षुणा भक्तेन । विकल्पात्मना विकल्परूपेण । मनसा सह । जिगीषुणा निजारिविजयेच्छुना नृपतिना । स्वारिणा स्ववैरिणा सहेव । नित्यम् । युद्धमेव । विधातव्यम् । यथा नृपतिर्वैर्यङ्गभूतसैनिकविनाशनेन तज्जयं गच्छति तद्वदत्रापि मनोवैरिणोऽङ्गभूतविकल्पविनाश-

इहैव हि जये जाते निर्विकल्पस्थितिर्भवेत् । क्वचिज्जये न जातेऽपि सा स्यादेवान्यजन्मनि ॥ २२ ॥ योगभ्रष्टस्य पुंसोऽस्य पूर्वाभ्यासः पुनः प्रभौ । अचलां कारयत्येव मतिं नैवात्र संशयः ॥ २३ ॥ तद्विकल्पात्मना नित्यं मनसा तु मुमुक्षुणा । विधातव्यं युद्धमेव स्वारिणेव जिगीषुणा ॥ २४ ॥ युद्धे जये त्विह प्राप्ती राज्यादेरस्य जायते । रिपोरभिमुखे मृत्यावपि स्वर्गोपलम्भनम् ॥ २५ ॥ रिपुं बलिष्ठं ज्ञात्वैव तद्भीत्या यः पलायते । तस्य त्वत्रायशोऽमुत्र भवत्येवाधमा गतिः ॥ २६ ॥ विकल्पबलिनस्तस्माद् भेतव्यं मनसो न वै । शक्त्याऽनेन तु योद्धव्यं सद्गतिर्भविता ततः ॥ २७ ॥ यैर्न शत्रुर्मनो ज्ञातं कृतं युद्धं न तेन च । जाताश्च तदधीनास्ते प्राप्ता एव हि दुर्गतिम् ॥ २८ ॥

तज्जयसाधनं युद्धशब्दार्थः ॥ २४ ॥ पुनरपि विजिगीषुनृपतिदृष्टान्तविवृतिपूर्वं सिद्धान्तार्थं द्रढयति चतुर्भिः । युद्ध इति । हे विप्र ! । युद्धे । रिपोः । जये सति । अस्य नृपतेः । इह लोके । राज्यादेः । प्राप्तिः । जायते । रिपोः । अभिमुखे । मृत्यौ सत्यपि । स्वर्गोपलम्भनम् । जायते । 'हतो वा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीमि'ति भगवद्गीतोक्तेः ॥ २५ ॥ रिपुमिति । यो राजा । रिपुम् । बलिष्ठम् । ज्ञात्वा तद्भीत्या बलिष्ठरिपुभयेन । पलायते । तस्य राज्ञस्तु । अत्र लोके । अयशो दुष्कीर्त्तिः । भवति जायते । अमुत्र परलोके । अधमा । गतिरेव । भवति ॥ २६ ॥ विकल्पेति । तस्मादेवंविधत्वाद्धेतोः । विकल्पबलिनः । मनसः सकाशात् । न भेतव्यम् । भक्तेनेतिशेषः । अनेन मनसा सह । शक्त्या । योद्धव्यम् । ततस्तेन यावज्जीवं युद्धाचरणादेव । सद्गतिर्भगवति दृढनिष्ठारूपा शुभगतिः । भविता ॥ २७ ॥ यैरिति । यैर्भक्तैः । मनो विकल्पात्मकं स्वमानसम् । शत्रुररिरूपम् । न ज्ञातम् । तेन तथाभूतेन मनसा सह । युद्धं च । न कृतम् । ते भक्ताः । तदधीना मनःशत्रुवशंवदाः । जाताः सन्तः । दुर्गतिमेव । प्राप्ताः । हि ॥ २८ ॥

सुधेति । इत्येवंविधाम् । तस्य श्रीहरेः । सुधोपमेयाम् । वाचम् । निशम्य । सः । विप्रो दिनानाथब्राह्मणः । तत्सदःस्थास्तस्यां सभायां निषण्णाः । विरक्तसङ्घा मुनिसमूहाः । सर्वे । गृहस्थाश्चापि । हृदये स्वस्वमानसे । प्रतोषम् । समीयुः प्रापुः ॥ २९ ॥ निर्विकल्पस्थितिमतः स्वभक्तस्य तु लक्षणम् । जयार्थोद्यमनं तस्यापकस्य च मनोरिपोः ॥ १ ॥ येन श्रीहरिणा प्रोक्तमेतद्द्वितयमात्मनः । भक्तेभ्यः स च मे दद्यान्निर्विकल्पस्थितिं दृढाम् ॥ २ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्यैकान्तिकोपासकश्रीहरिकृष्णभगवत्स्वनुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां द्विशताधिकप्रथमस्तरङ्गः ॥ २०१ ॥ १ ॥

हरेः सदा साकृतिताज्ञानं तत्प्रीतिकारणम् । वेदादीनां साररूपं द्वितीये प्रोक्तमञ्जसा ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८८२) ऊर्जशुक्लत्रयोदश्यां कार्त्तिकमासस्य शुक्लपक्षागतत्रयोदशीतिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । वृत्तालयपुरे । गोमतीसरसः । तटे । सहकारवने । वेद्याम् । स्वासने स्वास्तृतपर्यङ्कासने । स श्रीहरिः । उपाविशत् ॥२॥ तं विशिनष्टिद्वाभ्याम् । पीतेति । पीताम्बरधरः कचूराभकौशेयसुरवारधृत् । हैमबुट्ट-

सुधोपमेयामिति तस्य वाचं निशम्य विप्रः स च तत्सदःस्थाः । सर्वे गृहस्थाश्च विरक्तसङ्घा अपि प्रतोषं हृदये समीयुः ॥ २९ ॥

इति श्रीहरिवाक्यसुधासिंधौ शतानन्दमुनिविरचिते द्विशताधिकप्रथमस्तरङ्गः ॥ २०१ ॥ १ ॥

शकाब्दे विक्रमार्कस्य नेत्राष्टवसुभूमिते । ऊर्जशुक्लत्रयोदश्यां वचोऽमृतमिदं हरेः ॥ १ ॥ तत्र वृत्तालयपुरे गोमतीसरसस्तटे । सहकारवने वेद्यां स्वासने स उपाविशत् ॥ २ ॥ पीताम्बरधरो हैमबुट्टशोणाङ्गरक्षकः । हैमसूत्राढ्यकौसम्भप्रावारोष्णीषमण्डितः ॥३॥ चम्पकापीडधवलपुष्पहारालिराजितः । नानादेशागतस्वीयनानाभक्तगणावृतः ॥ ४ ॥ प्रश्नोत्तराणि कुरुतेत्याह स स्वान् जनान् प्रभुः । नत्वा पप्रच्छ तं भक्तः कर्णगुप्ताभिधस्ततः ॥ ५ ॥ केनोपायेन भगवन्साक्षात्कृष्णः प्रसीदसि । इति पृष्टः स ऊचे तं स स्वाद्रोहात्प्रसीदति ॥ ६ ॥

---

शोणाङ्गरक्षकः सुवर्णसूत्ररचितान्तर्बुट्टशोणवर्णनीशारधरः । हैमसूत्राढये सुवर्णसूत्ररचितप्रान्तपल्लववती कौसुम्भेऽग्निशिखरञ्जिते ये प्रावरोष्णींषे प्रावरणीय शिरोवेष्टनीयवसने ताभ्यां मण्डितः शोभमानः ॥ ३ ॥ चम्पकेति चम्पकानां चम्पकप्रसूनानामापीडाः शेखराश्च धवलपुष्पहारालयः श्वेतसुमनःस्रक्श्रेणयश्च ताभिः राजितोऽतिशोभनः । नानादेशागता अनेकदेशेभ्यः स्वदर्शनार्थमागताः स्वीयाः स्वाश्रिता ये नानाभक्तगणा नैकत्यागिगृहिभक्तव्रजास्तैरावृतः सभायां परिवेष्टितः ॥ ४ ॥ प्रश्नेति । प्रभुः । स श्रीहरिः । हे भक्ताः ! । यूयम् । प्रश्नोत्तराणि । कुरुत । केचनान्योऽन्यं प्रश्नान् पृच्छत्वपरे तत्प्रतिवचनानि च विदधतामित्यर्थः । इतीत्थम् । स्वान्स्वकीयान् । जनान् भक्तान्प्रति । आह । ततस्तदनन्तरम् । कर्णगुप्ताभिधः काह्नमदेशान्तर्गत ध्रुवाख्यग्रामावासो वैश्यज्ञातीय एतन्नामा भक्तः । तं श्रीहरिम् । नत्वा । पप्रच्छ ॥ ५ ॥ केनेति । हे भगवन् ! । साक्षात्प्रत्यक्षः । कृष्णोऽक्षरधामाधिपतिः स्वयं श्रीहरिस्त्वम् । केन । उपायेन । प्रसीदसि । इतीत्थम् । पृष्टः कर्णगुप्ताभिधस्वभक्तेनानुयुक्तः ।

स श्रीहरिः । तं कर्णगुप्तभक्तम् । ऊचे । हे भक्त ! । स साक्षात्कृष्णः । स्वाद्रोहात्स्वद्रोहानाचरणात् । प्रसीदति ॥ ६ ॥ द्रोहस्वरूपं स्वयमेवाह । द्रोह इति । ईश्वराणां कालादीनामपि । ईशितुर्नियन्तुः । विश्वसर्गादिकर्त्तुरनेकब्रह्माण्डोत्पत्तिस्थितिलयान्विदधतोऽपि । अस्य श्रीहरेः । सर्वथा । अकर्त्तृत्वादिविज्ञानम् । अकर्त्तृत्वस्य निराकारत्वस्यानीश्वरत्वादेश्चावगम इत्यर्थः । द्रोहः कृष्णद्रोहाचरणमुच्यते ॥ ७ ॥ ननु द्रोहित्वात्ते कृष्णाकर्त्तृत्वादिं विदन्तु परं ते केषां कर्त्तृत्वं ब्रुवते इतिचेद् भ्रान्तानां तेषामेकबुद्धित्वाभावात्कालादेस्तदाहुरित्याह । आहुरिति । केचित्पुरुषाः । कालस्य कर्त्तृत्वं जगत्सर्गादिविधातृत्वम् । आहुः । केचित् । कर्मणः । कर्त्तृत्वम् । आहुः । केचन । मायायाः । कर्त्तृत्वम् । प्राहुः ॥ ८ ॥ सम्यगिति । तेषां कालादिकर्त्तृत्वं वदतां पुंसाम् । शास्त्रार्थ विज्ञानम् । सम्यक् । नास्ति । इतीत्थम् । गम्यते । यतोहेतोः । वेदादौ सच्छास्त्रे । कालादेः । कृष्णशक्तित्वम् । वर्णितम् । अस्ति । ज्ञः कालकाल'इतिश्रुतेः । कालसंज्ञां तदा देवीं बिभ्रच्छक्तिमुरुक्रमः । कालकर्मस्वभावं च मायेशो मायया स्वये'त्यादिश्रीभागततोक्तेश्च कालादीनां कृष्णशक्तित्वं प्रसिद्धमेवास्ति ॥ ९ ॥ नेति । कालादीनाम् । विश्वसर्गादौ । स्वतन्त्रता । नास्त्येव ।

द्रोहस्तु विश्वसर्गादिकर्त्तुरप्यस्य सर्वथा । अकर्त्तृत्वादिविज्ञानमीश्वराणामपीशितुः ॥ ७ ॥
आहुः कालस्य कर्त्तृत्वं केचित्केचिच्च कर्मणः । मायायाः केचन प्राहुः स्वभावस्यापि केचन ॥ ८ ॥
सम्यक् शास्त्रार्थविज्ञानं तेषां नास्तीति गम्यते । कालादेः कृष्णशक्तित्वं वेदादौ वर्णितं यतः ॥ ९ ॥
नास्त्येव विश्वसर्गादौ कालादीनां स्वतन्त्रता । तत्तत्क्रिया विदधते हरेः प्रेरणयैव ते ॥ १० ॥
सम्राज आज्ञयैवास्ति यथा मण्डलभूभृताम् । प्रजाप्रशासनं तद्वत्कालादीनां तदाज्ञया ॥ ११ ॥
एवं सर्वनियन्तारं सर्वकर्त्तारमेव च । तं यो विद्यात्स वै भक्तः प्रोक्तो द्रोहीतरस्तथा ॥ १२ ॥
विद्वांसोऽप्यत्र केचिच्च तं सदा दिव्यविग्रहम् । अप्यरूपं विदुर्विद्धि तदपि द्रोहमेव हि ॥ १३ ॥

यतः । ते कालादयः । हरेः । प्रेरणया सर्गादौ प्रेरणारूपानुग्रहेणैव । तत्तत्क्रिया विश्वसर्गादिकास्तास्ताः क्रियाः । विदधते कुर्वन्ति । तथाचोक्तं श्रीभागवते । 'द्रव्यं कर्म च कालश्च स्वभावो जीव एव च । यदनुग्रहतः सन्ति न सन्ति यदुपेक्षये'त्यादिना ॥ १० ॥ एतदेव दृष्टान्तेन द्रढयति । सम्राजइति । यथा । सम्राजश्चक्रवर्त्तिनृपस्य आज्ञयैव । मण्डलभूभृताम् । प्रजाप्रशासनम् । अस्ति । तद्वत्तथैव । तदाज्ञया प्रेरणारूपेण श्रीहरिनिदेशेनैव । कालादीनाम् । विश्वसर्गादिकर्त्तृत्वमस्ति ॥ ११ ॥ एवमिति । एवममुना प्रकारेण । यो जनः । तं श्रीहरिमेव । सर्वनियन्तारम् । सर्वकर्त्तारं च । विद्यात् । स जनः । भक्तः । प्रोक्तः । तथा । इतर एवंतमविद्वान् । द्रोही तस्य द्रोहकर्त्ता । प्रोक्तः । वै ॥ १२ ॥ विद्वांस इति । किञ्च । अत्र लोके । विद्वांसः शास्त्रज्ञा अपि । केचिच्छुद्धाद्वैतमतस्थाः पुरुषाः । सदा दिव्यविग्रहमपि तं श्रीहरिम् । अरूपं निराकारम् । विदुः । तत्तदरूपवेदनमपि । द्रोहमेव । विद्धि । हि ॥ १३ ॥

एतदेव दृष्टान्तेन द्रढयति द्वाभ्याम् । सम्पूर्णेति । यथा । कश्चन राजसेवकः । सम्पूर्णाङ्गं परिपूर्णसकलावयवमपि । स्वनृपतिम् । असौ । राजा । नासाकर्णादिहीनः । अस्ति । इतीत्थम् । कीर्त्तयेत् । ईदृगित्युत्तरेण सम्बन्धः ॥ १४ ॥ ईदृगिति । ईदृगेतादृशम् । वाक्यम् । नरपतेः । द्रोह एव । अस्ति । तथा दिव्याङ्गस्यापि । हरेः । अरूपत्वकथनं निरवयवत्ववचनम् । द्रोहः । ईयताम् ॥ १५ ॥ अरूपस्येति । किञ्च । सर्गारम्भे । मायासमीक्षणं नेत्रेन्द्रियेण 'स ऐक्षत'-तिश्रुत्युक्तं प्रकृतिसमीक्षणम् । अरूपस्य नेत्राद्यवयववर्जितस्य । हरेः । न सम्भवेत् । अतोहेतोः । स श्रीहरिः । नित्यम् । दिव्यविग्रहः । ज्ञेयः ॥ १६ ॥ वस्तुत इति । ये पुरुषाः । कृष्णम् । वस्तुतः स्वरूपतः । करपादादिहीनम् । अवेत्य ज्ञात्वा । तं कृष्णम् । चन्दनाद्यैः । अर्चेयुः । ते पुरुषा अपि । तद्द्रोहिणः कृष्णद्रोहकर्त्तार एव । मताः ॥ १७ ॥ एवं भगवन्निराकारत्वादिवादे सर्वथा तद्द्रोहित्वमुक्त्वा साम्प्रतं वेदादिसच्छास्त्रसम्मततदीयसदादिव्याकृतिमत्त्वोक्त्ये वेदादिसच्छास्त्रसिद्धान्तं वदति चतुर्विंशत्या । वेदेष्विति । वेदेषु । भगवद्रूपम् । सम्यक् पुरुषविध इत्यादिवाक्यैर्यथार्थतया । निरूपितम् । अस्ति । तथापि । तद्भगवत्स्वरूपम् ।

सम्पूर्णाङ्गं स्वनृपतिं यथा कश्चन कीर्त्तयेत् । नासाकर्णादिहीनोऽस्ति राजाऽस्माकमसाविति ॥ १४ ॥ ईदृग्वाक्यं नरपतेर्द्रोह एव तथा हरेः । दिव्याङ्गस्याप्यरूपत्वकथनं द्रोह ईयताम् ॥ १५ ॥ अरूपस्य हरेः सर्गारम्भे मायासमीक्षणम् । न सम्भवेदतो नित्यं स ज्ञेयो दिव्यविग्रहः ॥ १६ ॥ वस्तुतः करपादादिहीनं कृष्णमवेत्य ये । तमर्चेयुश्चन्दनाद्यैस्तेऽपि तद्द्रोहिणो मताः ॥ १७ ॥ वेदेषु भगवद्रूपं सम्यगस्ति निरूपितम् । अपि तन्न सुबोधं यत्तत्र मुह्यन्ति सूरयः ॥ १८ ॥ स्वस्वरूपावबोधार्थं ततो भगवतैव हि । प्रवर्त्तितानि शास्त्राणि सांख्यादीनि धरातले ॥ १९ ॥ आचार्यः सांख्यशास्त्रस्य महर्षिः कपिलोऽभवत् । चतुर्विंशति-तत्त्वानि तेन तत्रोदितानि च ॥ २० ॥ तत्त्वात्मकशरीरेभ्यो जीवेशास्तु पृथक् क्वचित् । न स्थातुं शक्नुवन्तीति तेन तेऽपि निरूपिताः ॥ २१ ॥ परमात्मा पञ्चविंशस्तन्नित्यन्तृतया पृथक् । तेभ्यो निरूपितोऽस्तीति तत्रापीशोऽस्ति साकृतिः ॥ २२ ॥

सुबोधं सुखेन बोद्धुं शक्यम् । नाभवत् । यद्यतोहेतोः । तत्र वेदेषु । सूरयो विद्वांसो ब्रह्मादयो देवाः । मुह्यन्ति । 'मुह्यन्ति यत्सूरय'इतिश्रीभागवतोक्तेः ॥ १८ ॥ स्वेति । ततोहेतोः । भगवतैव । स्वस्वरूपावबोधार्थम् । साङ्ख्यादीनि । शास्त्राणि । धरातले । प्रवर्त्तितानि तत्तदाचार्यरूपेण भूत्वा प्रवृत्तिं कारितानि । हि ॥ १९ ॥ एत-देव सुस्पष्टमाह । आचार्य इति । साङ्ख्यशास्त्रस्य । आचार्यः । महर्षिः । कपिलः । अभवत् । तेन कपिलाचार्येण । तत्र साङ्ख्यशास्त्रे । चतुर्विंशतितत्त्वानि । उदि-तानि । सन्ति ॥ २० ॥ तत्त्वेति । जीवेशाः जीवाः स्थूलादिदेहत्रयाभिमानिन ईशा विराडादिदेहत्रयाभिमानिनश्चेत्यर्थः । तत्त्वात्मशरीरेभ्यः । पृथक् भिन्नतया । स्थातुम् । क्वचित्कदाचिदपि । न शक्नुवन्ति । इतिहेतोः । तेन तत्त्वकथनेन । ते जीवेशा अपि । निरूपिताः । सन्ति ॥ २१ ॥ परमात्मेति । परमात्मा श्रीकृष्णः । तन्नि-यन्तृतया तत्त्वात्मकशरीराभिमानिजीवेश्वरप्रशासकतया । तेभ्यो जीवेश्वरेभ्यः । पृथक् । पञ्चविंशश्च । निरूपितः । अस्ति । इतिहेतोः । तत्र साङ्ख्यशास्त्रेऽपि ।

ईशः श्रीकृष्णपरमात्मा । साकृतिर्नियन्तृताया मूर्त्तकर्मत्वात्साकारः । अस्ति ॥ २२ ॥ पृथक्त्वमिति । अथानन्तरम् । कालेन कालातिक्रमेण । जीवेशपरमात्मनाम् । पृथक्त्वं स्वरूपस्वभावादिभिर्भिन्नत्वम् । मुमुक्षतां मुमुक्षुजनानाम् । तच्छास्त्रेण साङ्ख्यशास्त्रेण । सुस्पष्टं यथातथा । वेद्यम् । नाभवत् ॥ २३ ॥ तदेति । तदा तस्मिन्समये । हिरण्यगर्भेणैतन्नाम्ना महर्षिणा । योगशास्त्रम् । प्रवर्त्तितम् । तत्र योगशास्त्रे । क्षेत्रज्ञवित् जीवेश्वराख्यक्षेत्रज्ञः । तत्त्वात्मकस्वस्वशरीराभिमानिनो जीवा ईश्वराश्चेत्यर्थः । चतुर्विंशतितत्त्वेभ्यः पृथक् । उक्तः ॥ २४ ॥ परमात्मेति । भगवान्सकलैश्वर्यनिधिः । परमात्मा कृष्णस्तु । पृथक् जीवेश्वररूपक्षेत्रज्ञेभ्यो भिन्नः । षड्विंशः । ईरितो योगशास्त्रे कथितः । अस्ति । एवं तथैव । तत्र योगशास्त्रे । तद्धयेयो जीवेश्वररूपक्षेत्रज्ञध्यानास्पदरूपः । कृष्णः । साकृतिः सदादिव्यमूर्त्तिः । उक्तः । अस्ति । हि ॥ २५ ॥ सुबोधमिति । तत्र योगशास्त्रे । कृष्णस्य । रूपस्य दिव्याकृतेः । वर्णनम् । सुबोधम् । नाभूत् । कालेनेतिशेषः । ततोहेतोः । भगवान् श्रीहरिः । नारदात्मना देवर्षिनारदरूपेण । पञ्चरात्रं शास्त्रम् । चक्रे ॥ २६ ॥ वासुदेवेति । तत्र पञ्चरात्रे । कृष्णोऽक्षरधामाधिपतिः स्वयं श्रीहरिः । वासुदेवादिरूपेण । चतुर्व्यूहः ।

पृथक्त्वमथ सुस्पष्टं जीवेशपरमात्मनाम् । कालेन भवद्वेद्यं तच्छास्त्रेण मुमुक्षताम् ॥ २३ ॥ तदा हिरण्यगर्भेण योगशास्त्रं प्रवर्त्तितम् । चतुर्विंशतितत्त्वेभ्यस्तत्रोक्तः क्षेत्रवित्पृथक् ॥ २४ ॥ परमात्मा तु भगवान् षड्विंशः पृथगीरितः । एवं तत्रास्ति तद्ध्येय उक्तः कृष्णो हि साकृतिः ॥२५॥ सुबोधं तत्र कृष्णस्य नाभूद्रूपस्य वर्णनम् । पञ्चरात्रं ततश्चक्रे भगवान्नारदात्मना ॥ २६ ॥ वासुदेवादिरूपेण चतुर्व्यूहो निरूपितः । तत्र कृष्णस्ततस्तस्याकृतिः स्पष्टं विभाव्यते ॥ २७ ॥ नारायणो वासुदेवः स एव स्वेच्छया प्रभुः । चतुर्भुजादिरूपेण वैकुण्ठादौ च वर्त्तते ॥ २८ ॥ रामकृष्णादिरूपेण यथाकार्यं स भूतले । स्वातन्त्र्येणावतीर्णः सन् निघ्नन् दुष्टान्सतोऽवति ॥ २९ ॥ एवं साकृतिता तस्य वेदादौ वर्णिताऽस्त्यतः । सत्सङ्गिनश्च तं बुद्ध्वा भजन्ते सर्वकारणम् ॥ ३० ॥ वेदादीनां च तात्पर्यं वासुदेवे हि साकृतौ । अस्तीति श्रीभागवते सूतः प्राह विधिश्च तत् ॥ ३१ ॥

निरूपितः । ततस्तदनन्तरम् । तस्य कृष्णस्य । आकृतिः । स्पष्टं यथा तथा । विभाव्यते पञ्चरात्रागमविद्भिर्ज्ञायते ॥ २७ ॥ नारायण इति । नारायणः । वासुदेवः । प्रभुः । स श्रीकृष्ण एव । स्वेच्छया । वैकुण्ठादौ लोके । चतुर्भुजादिरूपेण च । वर्त्तते ॥ २८ ॥ रामेति । स कृष्ण एव । स्वातन्त्र्येण । यथाकार्यम् । रामकृष्णादिरूपेण । भूतले । अवतीर्णः सन् । दुष्टानसुरान् । निघ्नन्विनाशयन्सन् । सतः स्वैकान्तिकभक्तान्साधून् । अवति रक्षति ॥ २९ ॥ एवमिति । एवममुना प्रकारेण । वेदादौ । तस्य श्रीहरेः । साकृतिता सदा दिव्याकृतिमत्ता । वर्णिता । अस्ति । अतोहेतोः । सत्सङ्गिन उद्धवसम्प्रदायस्थाः सर्वे मदाश्रिताः । तं श्रीहरिम् । सर्वकारणम् । बुद्ध्वा । भजन्ते ॥ ३० ॥ वेदिति । किञ्च । वेदादीनाम् । तात्पर्यम् । साकृतौ । वासुदेवे श्रीहरावेव । अस्ति । हि । इतिहेतोः । श्रीभागवते । सूत उग्रश्रवाः । विधिर्ब्रह्मा च । तत्तेषां वासुदेवे तात्पर्यम् । प्राह ॥ ३१ ॥

तत्र सूत्रोक्तं तेषां वासुदेवपरत्वमाह द्वाभ्याम् । वासुदेवेति । वेदाः । वासुदेवपराः वासुदेवोऽक्षरब्रह्मधामाधिपतिर्ब्रह्मभूतानन्तमुक्तसेवितपदाब्जो दिव्यानन्तलावण्यैकाधार–भाल–नयन–श्रुति–नासाऽऽस्य–कण्ठ–हृन्नाभ्युदर–बाहूरु–जानु–जङ्घा–गुल्फनखेंदुः पुरुषोत्तमः करुणार्णवो दिव्यानन्तैश्वर्यगुणवैभवः श्रीहरिः परस्तात्पर्यभूमिर्येषां तथाभूताः । मखा यज्ञाः । वासुदेवपरा वासुदेवः परः प्रधानतयाऽऽराध्यो येषां तथाभूताः । योगा उद्गीथार्कमनोऽक्षिपूरुषादिछान्दोग्याद्युपनिषदुक्ता उपासनाभेदात्मका उपायाः । वासुदेवपरा वासुदेवः परो विषयो येषां तथाभूताः । उद्गीथादिप्रतिपादनेन तदन्तर्यामिवासुदेवोपासनाया एवाभिहितत्त्वादुद्गीथविद्याद्युदितफलस्य वासुदेवमृतेऽन्यत्र प्रदानत्वासम्भवाच्चेति भावः । क्रिया आवसथ्याधानादिकाः स्मार्त्ताः । वासुदेवपराः प्रधानतया वासुदेवाराधनात्मकाः । सन्ति ॥ ३२ ॥ वासुदेवेति । ज्ञानं प्रकृतिपुरुषादिविवेकात्मकम् । वासुदेवपरं तत्स्थितिप्रवृत्त्याधारवासुदेवविषयकम् । तपः कृच्छ्रचान्द्रायणादिरूपम् । वासुदेवपरं वासुदेवाराधनपरम् । धर्मो वर्णाश्रमविहितः सदाचारः । वासुदेवपरो वासुदेवाधीनस्थितिप्रवृत्तिः । गतिः स्वधर्माद्यवस्थानलभ्या स्वर्गादिप्राप्तिः । वासुदेवेनैव प्रापणीया अस्ति ॥ ३३ ॥ अथ विध्युक्तं

वासुदेवपरा वेदा वासुदेवपरा मखाः । वासुदेवपरा योगा वासुदेवपराः क्रियाः ॥ ३२ ॥
वासुदेवपरं ज्ञानं वासुदेवपरं तपः । वासुदेवपरो धर्मो वासुदेवपरा गतिः ॥ ३३ ॥
नारायणपरा वेदा देवा नारायणाङ्गजाः । नारायणपरा लोका नारायणपरा मखाः ॥ ३४ ॥
नारायणपरो योगो नारायणपरं तपः । नारायणपरं ज्ञानं नारायणपरा गतिः ॥ ३५ ॥
एवं वेदादिभिः शास्त्रैरेकवाक्यतयैव ये । कृष्णं विदुः परं तत्त्वं त एव ज्ञानिसत्तमाः ॥ ३६ ॥
पृथक्पृथक्तया त्वस्य शास्त्रेषु महिमोदितः । न तावतो वस्तुभेद इति ज्ञेयं मनीषिभिः ॥ ३७ ॥

तेषां वासुदेवपरत्वमाह द्वाभ्याम् । नारायणेति । वेदाः । नारायणपरा नारायणः परं कारणं प्रतिपाद्यो वा येषां तथाभूताः । देवा ब्रह्मादयः । नारायणाङ्गजा नाभ्याद्यङ्गोत्पन्नाः । लोका जनाः । नारायणपरा नारायणैकस्वामिकाः । मखाः क्रतवः । नारायणपरा नारायणैकाराधनीयाः ॥ ३४ ॥ नारायणेति । योग उपासनात्मकः । नारायणपरो ध्येयनारायणबोधकः । तपः । नारायणपरम् । ज्ञानम् । नारायणपरम् । गतिः । नारायणपरा ॥ ३५ ॥ एवमिति । एवममुना प्रकारेण । वेदादिभिर्वेद–साङ्ख्य–पातञ्जल–पञ्चरात्राख्यैः । शास्त्रैः । एकवाक्यतया चतुर्भिरप्येकस्य वासुदेवस्य प्रतिपादनीयत्वेन हेतुनैव । ये भक्ताः । कृष्णं श्रीहरिमेव । परम् । तत्त्वं कारणम् । विदुः । ते भक्ता एव । ज्ञानिसत्तमा एकान्तिकोत्तमाः । ज्ञेयाः ॥ ३६ ॥ ननु वेदादीनामेको वासुदेव एव प्रतिपादनीयश्चेत्तर्हि तेऽन्तर्यामिपुरुषमहापुरुषचतुर्व्यूहादिभेदैः कथं तं ब्रुवन्तीतिचेत्तथात्वेनास्य महिमैवोदितोऽस्ति न स्वरूपभेद इत्याह । पृथगिति । शास्त्रेषु वेदादिषु पृथक् पृथक्तया तु । अस्य वासुदेवस्य । महिमा । उदितः । तावता । वस्तुभेदः स्वरूपभेदः । नास्ति । इतीत्थम् । मनिषिभिः । शास्त्रनिष्ठबुद्धिमद्भिर्भक्तैः । ज्ञेयम् ॥ ३७ ॥

एतदेव दृष्टान्तेन द्रढयति द्वाभ्याम् । दृष्ट्येति । यथा । एकमपि । पयो दुग्धम् । दृष्ट्या चक्षुरिन्द्रियेण । सितं श्वेतवर्णम् । त्वचा त्वगिन्द्रियेण । शीतं हिमम् । जिह्वया रसनेन्द्रियेण । मधुरं मिष्टम् । घ्राणेन नासिकेन्द्रियेण । सुरभि सुगन्धिमत् । इतीत्थम् । बहुधा । उक्तम् ॥ ३८ ॥ सर्वे इति । सर्वे । गुणाः सितादयः । पयसो हि दुग्धस्यैव । भवन्ति । किन्तु । गुणैः सितादिभिः । कृत्वा । पयः । भिन्नं पृथक्पृथक् । नहि नैव विद्यते । एवं हि तथैव । भगवान् वासुदेवः । एकः । अस्ति । तद्गुणा अन्तर्यामित्वादयः । भूयांसो बहवः । सन्ति । तथाचोक्तं श्रीभागवते 'यथेन्द्रियैः पृथग्द्वारैरर्थो बहुगुणाश्रयः । एको नानेयते तद्वद्भगवाञ्छास्त्रवर्त्मभि'रिति ॥ ३९ ॥ पृथगिति । किञ्च । शास्त्रेषु वेदादिषु । ते वासुदेवगुणाः । युक्तिभिः । पृथक् पृथक् । तन्महत्वावबोधाय श्रीवासुदेवस्य महत्तामवगन्तुम् । बहुधैव । प्रोक्ताः । स वासुदेवस्तु । एक एव । हि ॥ ४० ॥ एवमिति । एवममुना प्रकारेण । भगवतो वासुदेवस्य श्रीहरेः । ज्ञानं विना साकारताद्यवबोधमृते । द्रोहस्तद्द्रोहाचरणम् । भवेत् ।

दृष्ट्या सितं त्वचा शीतं जिह्वया मधुरं यथा । घ्राणेन सुरभीत्येकमप्युक्तं बहुधा पयः ॥ ३८ ॥ सर्वे गुणा हि पयसो गुणैर्भिन्नं पयो न हि । एवं हि भगवानेको भूयांसः सन्ति तद्गुणाः ॥ ३९ ॥ पृथक् पृथक् च शास्त्रेषु युक्तिभिर्बहुधैव ते । तन्महत्वावबोधार्थं प्रोक्ताः स त्वेक एव हि ॥४०॥ एवं भगवतो ज्ञानं विना द्रोहो भवेत् खलु । तस्मात्तदेव यत्नेन संसाध्यं सन्निषेवया ॥४१॥ भक्तत्वं स्वस्य तेनैव तेनैव च रमापतेः । प्रसन्नता भवेन्नित्यमिति प्रश्नोत्तरं तव ॥४२॥ श्रुत्वेति तस्यामृततुल्यवाचं वैश्यः स चान्ये गृहिणश्च सन्तः । सदोनिषण्णाः सकलास्तदीया भक्ता अवापुः परमं प्रहर्षम् ॥ ४३ ॥

इति श्रीहरिवाक्यसुधासिंधौ शतानन्दमुनिविरचिते द्विशताधिकद्वितीयस्तरङ्गः ॥ २०२ ॥ २ ॥

शकाब्दे विक्रमार्कस्य नेत्राष्टवसुभूमिते । एकादश्यामूर्जकृष्णे वचोऽमृतमिदं हरेः ॥ १ ॥

खलु । तस्माद्धेतोः । सन्निषेवया श्रीहरेरेकान्तिकसाधूनां छन्दानुवृत्तिपूर्वकया परिचर्यया । तत्तथाविधं ज्ञानमेव । यत्नेन । संसाध्यम् ॥ ४१ ॥ भक्तत्वमिति । हे भक्त ! । तेन ज्ञानेनैव । स्वस्य । भक्तत्वम् । भवेत् । रमापतेः श्रीहरेः । नित्यम् । प्रसन्नता च । तेनैव । भवेत् । इतीत्थंभूतम् । तव प्रश्नोत्तरम् । भवति ॥ ४२ ॥ श्रुत्वेति । इत्येवंविधाम् । तस्य श्रीहरेः । अमृततुल्यवाचम् । श्रुत्वा । वैश्यस्तृतीयवर्णः । स कर्णगुप्तो भक्तः । सदोनिषण्णाः । तदीयाः । भक्ताः । अन्ये । सकलाः । सन्तः । गृहिणश्च । परमम् । प्रहर्षम् । अवापुः ॥४३॥ सदा साकृतिताज्ञानं स्वस्य स्वप्रीतिकारणम् । वेदादिसारं यः प्राह सोऽव्यात्तन्मे दृढं हरिः ॥१॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्स्नुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां शताधिकद्वितीयस्तरङ्गः ॥ २०२ ॥ २ ॥

हरेर्माहात्म्यबोधेन युतो भक्तिगुणस्तु यः । धर्माद्यङ्गत्रयस्यैव प्रापको द्विविधा तु या ॥ १ ॥ भक्तिश्च ये पराभक्तेः सन्तः सम्प्राप्तिहेतवः । स्युस्तेषां यानि लक्ष्माणि यान्युक्तानि तृतीयके ॥२॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । ऊर्जकृष्णे कार्त्तिकमासस्य कृष्णपक्षे । एकादश्यां तिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥

तत्रेति । तत्र तिथौ । वृत्तालयपुरे । लक्ष्मीनारायणालयात्प्राग्द्वारश्रीलक्ष्मीनारायणभगवन्मन्दिरात्सकाशात् । प्रत्यक् पश्चिमदिग्भागे । मन्दिरस्य पश्चिमदिशि वर्त्तमानायामित्यर्थः । स्वास्तृतायाम् । वेद्याम् । वेदिकोपर्यास्तृत सपार्श्विक सश्वेतोत्तरच्छदस्थूलतूलिकासने इत्यर्थः । सिताम्बरः परिधृतसकलश्वेतवसनः । स श्रीहरिः । व्यराजत् ॥ २ ॥ त्यागिभिरिति । त्यागिभिः । गृहिभिश्च । स्वभक्तैर्नानादेशागतैः स्वाश्रितजनैः । परितः । वृत्तः सभायां परिवेष्टितः । स्थलाब्जानां याः शेखरस्रजः आपीडहारास्ताभिः । शोभमान उष्णीषे आपीडैर्गले हारैश्च विराजमानः । असौ श्रीहरिः । सतो मुक्तानन्दादिसाधून् । अब्रवीत् ॥ ३ ॥ औद्धव इति । हे सन्तः ! । अस्मिन् । औद्धवे । सम्प्रदाये । यस्य सत्सङ्गिनः । ज्ञानवैराग्यधर्मयुक् । दृढा । भक्तिः । भवेत् । स सत्सङ्गी तु । एकान्तिको भक्तः । उच्यते ॥ ४ ॥ मुमुक्षूणामिति । मुमुक्षूणां भक्तानाम् । सेवनीयः । स एकान्तिक भक्तः । प्राधान्यं सर्वभक्तेषु मुख्यत्वम् । अर्हति । अत्रास्मिन्नर्थे । वो युष्मान् । किञ्चित् । पृच्छामि । तत् । श्रुत्वा । उत्तरम् । कार्यम् ॥ ५ ॥ भक्तीति । भक्त्यादिषु भक्तिप्रभृतिषु । एषु । चतुर्षु गुणेषु मध्ये । एकतमे ।

तत्र वृत्तालयपुरे लक्ष्मीनारायणालयात् । प्रत्यग्वेद्यां स्वास्तृतायां व्यराजत्स सितांबरः ॥ २ ॥ त्यागिभिर्गृहिभिश्चासौ स्वभक्तैः परितो वृतः । स्थलाब्जशेखरस्रग्भिः शोभमानोऽब्रवीत्सतः ॥ ३ ॥ औद्धवे सम्प्रदायेऽस्मिन्स त्वेकान्तिक उच्यते । भक्तिर्दृढा भवेद्यस्य ज्ञानवैराग्यधर्मयुक् ॥ ४ ॥ मुमुक्षुणां सेवनीयः स च प्राधान्यमर्हति । अत्र पृच्छामि वः किञ्चिच्छ्रुत्वा तत्कार्यमुत्तरम् ॥ ५ ॥ भक्त्यादिषु चतुर्ष्वेषु यस्मिन्नेकतमे गुणे । प्राप्तेऽपरे त्रयोऽपि स्युस्तदन्तः समुपागताः ॥ ६ ॥ तं गुणं ब्रूत यूयं मेऽवश्यसाध्यं मुमुक्षुभिः । मुक्तानन्दश्च गोपालानन्दस्तं तत ऊचतुः ॥ ७ ॥ धर्मोऽस्ति तादृश इति हृदये प्रतिभाति नौ । हरिरूचेऽथ धर्मस्तु विमुखेऽपि भवेन्नरे ॥ ८ ॥ न स तेन गुणेनान्यान् गुणांस्त्रीन् प्राप्नुयात् क्वचित् । इत्युक्त्वा स्वयमेवाह तदुत्तरमपि प्रभुः ॥ ९ ॥

यस्मिन् । गुणे । प्राप्ते सति । अपरे । त्रयोऽपि गुणाः । तदन्तस्तस्यैकस्य गुणस्य मध्ये । समुपागताः समायाताः । स्युः ॥ ६ ॥ तमिति । मुमुक्षुभिर्भक्तैः । अवश्यसाध्यम् । तं तथाविधम् । गुणम् । मे मह्यम् । यूयम् । ब्रूत । तत एवंविधश्रीहरिप्रश्नश्रवणानन्तरम् । मुक्तानन्दः । गोपालानन्दश्च मुनी । तं श्रीहरिम् । ऊचतुः ॥ ७ ॥ धर्म इति । हे हरे ! । तादृशस्तथाविधो गुणस्तु । धर्मः स्वधर्मः । अस्ति । इतीत्थम् । नौ आवयोः । हृदये । प्रतिभाति । अथैवंविधमुनिद्वयकृतस्वप्रश्नप्रतिवचनश्रवणानन्तरम् । हरिः । ऊचे तौ प्रत्युवाच । हे मुनी ! । धर्मस्तु । विमुखे भगवत्प्रतिकूले । इतरेऽपि । भवेत् । साक्षाद्भगवद्द्रोहिषु कर्णजरासङ्घादिषु तथाविधत्वदर्शनादिति भावः ॥ ८ ॥ नेति । स धर्मवानपि भगवद्विमुखो नरः । तेन केवलेन । गुणेन धर्मेण । अन्यान् । त्रीन् भक्तिज्ञानवैराग्याख्यान् । गुणान् । क्वचित्कदाचिदपि । न प्राप्नुयात् । विमुखस्य धर्मवत्त्वेऽपि तन्मात्रतयाऽन्यत्रिगुणागमाभावात् तथाविध उद्धवाध्वमुख्यत्वं न प्राप्नुयादितिभावः । इतीत्थम् । उक्त्वा

प्रश्नः । स्वयं श्रीहरिरेव । तदुत्तरं स्वकृतप्रश्नप्रतिवचनमपि । आह । यदाऽऽभ्यां महद्भ्यां मुनिभ्यां धर्मश्रेष्ठत्वमुक्तं तदान्यो ज्ञानमपरो विरागमितरो भगवन्माहात्म्य-रहितां भक्तिं च वदिष्यति तदा मदभिप्रेतार्थस्य तद्वाक्येष्वनागमादहमेवान्योच्चारणात्प्रागेव ब्रूयामिति मनसि विचार्य स्वयमेव तदुत्तरमुवाचेत्यर्थः ॥ ९ ॥ महत्तेति । हे साधवः ! । भगवतः श्रीहरेः । महत्त्वावोधयुक् माहात्म्यज्ञानयुक्ता । दृढा । या भक्तिः । स भक्त्यात्मकः । गुणः । तथाविधः स्वागमनमात्रेणान्यत्रिगुणागमहेतुः । ज्ञेयः । अतएव । अन्ये स्वधर्मादयः । गुणास्तु । तदान्तरास्तदन्तर्गताः । ज्ञेयाः ॥ १० ॥ एतदेव सुस्पष्टमाह द्वाभ्याम् । हरेरिति । ब्रह्माक्षरब्रह्म च कालश्च ईश्वरो मूलप्रकृत्यधिष्ठाता महापुरुषश्च ते आद्यो येषां प्रधानपुरुष—महत्तत्त्वादितत्त्व—वैराजपुरुषादीनां ते । हरेः । आज्ञाम् । पालयन्ति । एवममुना प्रकारेण । महत्तां श्री-हरेर्माहात्म्यम् । बुद्ध्वैव । यो भक्तः । दृढाम् । भक्तिम् । कुरुते ॥११॥ तदिति । स भक्तः । तदाज्ञप्तान् हितकारित्वाच्छ्रीहरिणा पालनायादिष्टान् । धर्मादीन्स्वधर्म-ज्ञानविरागान् । कदाचनापि । नातिक्रामेन्नोल्लङ्घयेत्पालयेदित्यर्थः । एवममुना प्रकारेण । धर्मादयः । गुणाः । भक्तेर्माहात्म्यज्ञानसहितोपासनायाः । अन्तर्गताः । ज्ञेयाः

महत्ताबोधयुग्भक्तिर्दृढा भगवतः स हि । गुणस्तथाविधो ज्ञेयो गुणास्त्वन्ये तदान्तराः ॥ १० ॥
हरेराज्ञां पालयन्ति ब्रह्मकालेश्वरादयः । एवं महत्तां बुद्ध्वैव भक्तिं यः कुरुते दृढाम् ॥ ११ ॥
तदाज्ञप्तान्स धर्मादीन्नातिक्रामेत्कदाचन । एवं धर्मादयो भक्तेर्ज्ञेया अन्तर्गता गुणाः ॥ १२ ॥
अथाह तं शुकमुनिर्भक्त्या यद्येकयाऽखिलाः । प्राप्ता भवेयुर्धर्माद्या नोक्ता सैकैव किं तदा ॥ १३ ॥
एकान्तिकश्चतुर्भिः स्याद् गुणैरित्युच्यते कुतः । इति पृष्टस्तु मुनिना तेन प्रत्याह तं हरिः ॥ १४ ॥
पराऽपरेति भेदेन भक्तिस्तु द्विविधा मता । कृष्णमाहात्म्यबोधेन युक्ता तत्रादिमोदिता ॥ १५ ॥
दृढा सैव भवेद्यस्य तस्य पुंसस्तु सर्वथा । धर्मादिसाधनोद्योगः पृथङ्नास्त्येव निश्चितम् ॥ १६ ॥

॥ १२ ॥ अथेति । अथानन्तरम् । शुकमुनिः शुकानन्दसाधुः । तं श्रीहरिम् । आह । हे हरे ! । यदि । एकया । भक्त्या । माहात्म्यज्ञानसहितोपासनयेत्यर्थः । अखिलाः । धर्माद्या गुणाः । प्राप्ताः । भवेयुः । तदा । एका । सा तथाविधा भक्तिरेव । किं नोक्ता ॥१३॥ एकेति । चतुर्भिः । गुणैः स्वधर्मज्ञानवैराग्यभक्त्याख्यैः । एकान्तिको भक्तः । स्यात् । इतीत्थम् । कुतः कस्माद्धेतोः । उच्यते भवता तत्र कथ्यते । इत्यमुना प्रकारेण । तेन । मुनिना शुकानन्दसाधुना । पृष्टोऽनुयुक्तः । हरिः । तं शुकानन्दमुनिं प्रति । आह ॥ १४ ॥ परेति । हे मुने ! । भक्तिस्तु । परा । अपरा । इत्येवंविधेन । भेदेन । द्विविधा । मता । तत्र द्विविधभक्त्योर्मध्ये । आदिमा प्रथमा परा भक्तिः । कृष्णमाहात्म्यबोधेन । युक्ता । उदिता ॥ १५ ॥ दृढेति । यस्य । पुंसो भक्तस्य । दृढा । सा परा भक्तिरेव । भवेत् । तस्य । भक्तस्य । सर्वथा । धर्मादिसाधनोद्योगः । पृथक् पराभक्तितः पृथग्भूतः । नास्ति । निश्चितमेव ॥ १६ ॥

ताद्दश इति । ताद्दशः पराभक्तिमान् । पृथुर्नृपतिः । भक्तः । अभूत् । येन पृथुना भक्तेन । वरदायिनः स्वस्मै वरप्रदानोद्युक्तात् । हरेः सकाशात् । कथायाः । श्रवणे कथाश्रवणनिमित्तम् । कर्णायुतम् । वृतम् । दशसहस्रपरिमितकर्णैः कथाश्रवणेन यावानानन्दो जायते तावन्तमानन्दं कर्णद्वयेन कथाश्रवणेन जायमानम-वृतेत्यर्थः । अन्यत्तदितरत्किमपि । न तु नैव वृत्तम् । 'विधत्स्व कर्णायुतमेष मे वर' इति श्रीभागवतोक्तेः ॥ १७ ॥ वेण्विति । किञ्च । हरेः श्रीकृष्णस्य । वेणुनादम् । श्रुत्वा श्रीकृष्णमुखमारुतापूरितवंशीक्वाणमाश्रुत्येत्यर्थः । तत्पार्श्वं श्रीकृष्णसमीपम् । यियासवो यातुमिच्छवः । स्वैः स्वसम्बन्धिभिः । रुद्धा अपवरकादौ प्रवेश्य द्वारपि-धानाचरणेन निरुद्धाः । अतएव । त्यक्तवपुषः । कृष्णविरहेण संत्यक्तगुणात्मकशरीरत्रयः दिव्यदेहेन श्रीकृष्णान्तिकं प्राप्ता इत्यर्थः । व्रजाङ्गना गोप्यः । ताद्दश्यः पराभक्तिमत्यः । अभूवन् ॥ १८ ॥ सामान्यत इति । यस्य । पुंसो भक्तस्य । सामान्यतः । प्रभोः श्रीहरेः । या । भक्तिः । भवेत् । माहात्म्यज्ञानरहिता । सा । भक्तिः । अपरा । ज्ञेया । तेनापराभक्तिमता भक्तेन तु । तत्त्रयं स्वधर्मादित्रिकम् । साध्यम् ॥ १९ ॥ चतुर्भिरिति । स संसाधितधर्मादित्रिकयुक्तापराभक्तिमान् भक्तः

ताद्दशस्तु पृथुर्भक्तः कथायाः श्रवणे हरेः । कर्णायुतं वृतं येन न त्वन्यद्वरदायिनः ॥ १७ ॥ वेणुनादं हरेः श्रुत्वा तत्पार्श्वं च यियासवः । स्वैरुद्धास्त्यक्तवपुस्ताद्दश्यश्च व्रजाङ्गनाः ॥१८॥ सामान्यतो भवेद्यस्य भक्तिः पुंसोऽपरा प्रभोः । माहात्म्यज्ञानरहिता साध्यं तेन तु तत्त्रयम् ॥ १९ ॥ चतुर्भिः साधनैर्युक्तो भवेदेकान्तिको हि सः । एवं व्यवस्था विज्ञेया पुंसां भक्तेस्तु भेदतः ॥ २० ॥ ब्रह्मानन्दोऽथ पप्रच्छ केनोपायेन सत्पते ! । प्राप्ता भवेत्परा भक्तिस्तव पुंसो मुमुक्षतः ॥ २१ ॥ तमुवाच हरिः सा तु प्राप्यते सेवया सताम् । चतुर्विधास्तेऽपि सन्ति ते च ज्ञेया निदर्शनैः ॥ १२ ॥ दीपाभा दीपिकाभाश्च तडिद्भाश्चौर्वसन्निभाः । कृष्णमाहात्म्यबोधस्य तारतम्येन ते तथा ॥ २३ ॥

। चतुर्भिः । साधनैः । युक्तः सन् । एकान्तिकः । भवेत् । हि । एवममुना प्रकारेण । भक्तेः । भेदतः । पुंसां भगवद्भक्तजनानाम् । व्यवस्था विभेदः । विज्ञेया । अस्यायंभावः । पृथ्वादिवत्पराभक्तिमत्येकान्तिकभक्ते भगवन्माहात्म्यज्ञानाधिक्यान्मालामणिषु सूत्रमिव स्वधर्मादयोऽनुवर्त्तन्ते । अपराभक्तिमतस्तु भगवन्माहात्म्यज्ञानस्य न्यूनत्वाच्चतुर्णामपेक्षाऽस्ति सोऽपि तद्वान्सन्माहात्म्यज्ञानाधिक्येन पराभक्तिमानेकान्तिकभक्तो भविष्यतीति ॥ २० ॥ ब्रह्मानन्द इति । अथानन्तरम् । ब्रह्मानन्दोमुनिः । पप्रच्छ । हे सत्पते ! । तव । पराभक्तिः । मुमुक्षतः । पुंसो भक्तस्य । केन । उपायेन । प्राप्ता । भवेत् ॥ २१ ॥ तमिति । तमेवं पृच्छन्तं ब्रह्मानन्दमुनिम् । हरिः । उवाच । हे मुने ! । सा पराभक्तिस्तु । सतां प्रत्यक्षभगवद्भक्तसाधूनाम् । सेवया । प्राप्यते । ते सन्तोऽपि । चतुर्विधाः । सन्ति । ते चतुर्विधाः सन्त-श्चापि । निदर्शनैर्दृष्टान्तैः । ज्ञेयाः ॥ २२ ॥ निदर्शनान्याह । दीपेति । दीपाभाः प्रदीपसन्निभाः । दीपिकाभा दीपिकासन्निभाः । तडिद्भा वैद्युतानलसन्निभाः । और्व-सन्निभा वडवानलसमानाश्च । इति । ते चतुर्विधाः सन्तः । कृष्णमाहात्म्यबोधस्य । तारतम्येन न्यूनाधिकभावेन । तथा चतुर्विधाः । मताः ॥ २३ ॥

तान् लक्षणतो निर्दिशति सार्द्धैः पञ्चभिः । तत्रेति । तत्र तेषु चतुर्विधेषु मध्ये । ये । सन्तः । विषयवायुना मायिकसामान्यविषयसम्बन्धरूपपवनवेगेन । कचित्कदाचित् । भ्रष्टतां स्वधर्मादेश्च्युततम् । यायुः । ते सन्तः । आद्या दीपाभाः कथिताः । ते दीपाभाः सन्तः । चिराद् बहुकालेन । सिद्धतामेकान्तिकतारूपां सिद्धदशाम् । यास्यन्ति ॥२४॥ विषयैरिति । ये सन्तः । इह लोके । तीव्रवायूपमैः । रमणीयैः । विषयैः । कचित्कदाचित् । भ्रष्टताम् । यायुः । ते सन्तः । द्वितीया दीपिकाभाः । उदीरिताः ॥२५॥ वर्षेति । ये सन्तः । वर्षोदकेन । विद्युद्वत्तडिदिव । सर्वैः । रमणीयारमणीयैः सकलैः । मायिकवस्तुभिः । कचित्कदाचिदपि । क्षोभम् । नाप्नुयुः । ते सन्तः । तृतीयकास्तडिद्भाः । प्रोक्ताः ॥२६॥ यथेति । यथा । और्वः । समुद्रगः सन्नपि । तदम्बुना समुद्रोदकेन । न क्षीयते निर्वाणं न गच्छति । प्रत्युत क्षारं लवणम् । तत्समुद्राम्बु । आपीय । मधुरं मिष्टम् । कृत्वा । उज्झति पायुना त्यजति । एतदेव मेघैरादाय वृष्टं सद्धान्याद्युत्पादनहेतुर्भवतीति कथा पुराणान्तराज्ज्ञेया । तथेत्युत्तरेण सम्बन्धः ॥ २७ ॥ तथेति । तथा । ये सन्तः । सर्वान् । विषयान् मायिकार्थान् । सेवमानाः सन्तोऽपि । कचित् । अणुमणुप्रमाणमपि । क्षोभम् । न

तत्र ये भ्रष्टतां यायुः कचिद्विषयवायुना । आद्यास्ते कथिताः सन्तश्चिराद्यास्यन्ति सिद्धताम् ॥ २४ ॥ विषयै रमणीयैस्तु तीव्रवायूपमैरिह । कचिद्ये भ्रष्टतां यायुस्ते द्वितीया उदीरिताः ॥ २५ ॥ वर्षोदकेन विद्युद्वत् सर्वैर्मायिकवस्तुभिः । ये कचिन्नाप्नुयुः क्षोभं ते तु प्रोक्तास्तृतीयकाः ॥ २६ ॥ यथा समुद्रगोऽप्यौर्वः क्षीयते न तदम्बुना । प्रत्युतापीय तत्क्षारं कृत्वा मधुरमुज्झति ॥ २७ ॥ तथा ये विषयान्सर्वान्सेवमाना अपि कचित् । यायुर्नाणुमपि क्षोभं कुर्युस्तच्छ्रेय एव च ॥ २८ ॥ तं तुरीया निगदिता एवं सन्तश्चतुर्विधाः । तत्राद्याश्च द्वितीयाश्च सेवार्हा न मुमुक्षताम् ॥ २९ ॥ पराभक्तीप्सुभिर्नित्यमितरेषां तु यत्नतः । मनोवाक्तनुभिः सेवा कर्त्तव्या निजशक्तितः ॥ ३० ॥ तत्रापि सन्तो विद्युद्भा ज्ञेया एकान्तिका हरेः । और्वाभास्तु हरेरेव परमैकान्तिका मताः ॥ ३१ ॥

यायुः । तच्छ्रेयः स्मस्मै अन्नवस्त्रादिप्रदविमुखपापिजनस्यापि कल्याणमेव । कुर्युः । ते इत्युत्तरेण सम्बन्धः ॥ २८ ॥ तइति । ते तथाविधाः सन्तः । तुरिया और्वसन्निभाः । निगदिताः । एवममुना प्रकारेण । चतुर्विधाः । सन्तः । ज्ञेयाः । तत्र चतुर्विधसाधुषु मध्ये आद्या दीपाभाः सन्तः । द्वितीया दीपिकाभाः सन्तश्च । मुमुक्षतां पराभक्तीच्छतां मुमुक्षुभक्तजनानाम् । सेवार्हाः सेवायोग्याः । न भवन्ति ॥२९॥ परेति । पराभक्तीप्सुभिः पराभक्तिमाप्तुमिच्छद्भिर्भक्तैः । इतरेषां तडिद्भानामौर्वसन्निभानां सताम् । सेवा । मनोवाक्तनुभिः । यत्नतः । निजशक्तितः । नित्यम् । कर्त्तव्या । स्वस्वधर्मेषु स्थित्वेतिशेषः ॥ ३० ॥ तत्रेति । तत्र तडिद्भानामौर्वसन्निभानां च मध्येऽपि । विद्युद्भाः । सन्तः । हरेः । एकान्तिकाः । ज्ञेयाः । और्वाभाः । सन्तस्तु । हरेः । परमैकान्तिका एव । मताः । अत्रैकान्तिकाः साधनदशायांस्थिताः परमैकान्तिकाः सिद्धदशावन्त इति भेदो बोध्यः ॥ ३१ ॥

इतीति । इत्येवंविधम् । तस्य श्रीहरेः । वचोऽमृतं वाक्यपीयूषम् । पीत्वा । सः । मुनिर्ब्रह्मानन्दसाधुः । अतिमुदम् । आप । सदोनिषण्णाः । तदीयाः । भक्ताः । ये । अपरे । अखिलाः । मुनयः । गृहिणश्च । तेऽपि । अतिमुदम् । अलभन्त ॥ ३२ ॥ धर्माद्यङ्गत्रयावाप्तिहेतोर्लक्ष्मगुणस्य च । पराऽपरेति भेदेन द्विविधं भक्तिलक्षणम् ॥ १ ॥ प्राप्तेः स्वस्य पराभक्तेर्हेतुनां स्वसतां च यः । लक्ष्माण्याह हरिर्द्यात्स मे भक्तिं परां स्वकाम् ॥ २ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्पद्मनुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां द्विशताधिकतृतीयस्तरङ्गः ॥ २०३ ॥ ३ ॥

प्रधानं साधनं त्वेकं सत्सत्सङ्गतिलक्षणम् योगिनश्च हरेर्ध्यानस्थितिस्तुर्ये समीरिता ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८८२) सहसो मार्गशीर्षमासस्य । शुक्ले शुक्लपक्षे । दशम्यां तिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । वृत्तालयपुरे । लक्ष्मीनारायणालये लक्ष्मीनारायणमन्दिरपश्चिमप्रदेशस्थवेदिकास्तृत – सश्वेतोत्तरछद–सपार्श्विक–स्थूलतूलिकासने इत्यर्थः । सितवासाः परिहितसकलश्वेतवसनः । त्यागिगृहिव्रजैर्नानादेशायातत्यागि-

इति तस्य वचोऽमृतं स पीत्वा मुनिरापातिमुदं सदोनिषण्णाः । अपरे मुनयोऽखिलाश्च भक्ता गृहिणश्चाप्यलभन्त ये तदीयाः ॥ ३२ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते द्विशताधिकतृतीयस्तरङ्गः ॥ २०३ ॥ ३ ॥

शकाब्दे विक्रमार्कस्य नेत्राष्टवसुभूमिते । दशम्यां सहसः शुक्ले वचोऽमृतमिदं हरेः ॥ १ ॥ तत्र वृत्तालयपुरे लक्ष्मीनारायणालये । सितवासा व्यराजत्स वृतस्त्यागिगृहिव्रजैः ॥ २ ॥ पप्रच्छ मुक्तानन्दस्तं तदाज्ञप्तो हरेस्तव । भक्तस्यैकं साधनं मे प्रधानं वक्तुमर्हसि ॥ ३ ॥ येनैकेन कृतेनैव साधनानीतराण्यपि । अखिलानि कृतानि स्युरिति पृष्टोऽब्रवीद्धरिः ॥ ४ ॥ साधुलक्षणयुक्तानां सतां सङ्गोऽस्ति तादृशः । इत्युक्त्वा स सतः सर्वान्पृच्छति स्म दयानिधिः ॥ ५ ॥ कृष्णस्यैकान्तिको भक्तो दक्षो योगक्रियासु च । सांख्ययोगौ कृष्णपराविति जानंश्च यो भवेत् ॥ ६ ॥

गृहिस्वाश्रितसङ्घैः । वृतः सभायां परिवेष्टितः । स श्रीहरिः । व्यराजत् ॥ २ ॥ पप्रच्छेति । तदाज्ञप्तः श्रीहरिणा प्रश्नं प्रष्टुं कृताज्ञः । मुक्तानन्दोमुनिः । तं श्रीहरिम् । पप्रच्छ । हे प्रभो ! । हरेः पुरुषोत्तमस्य । तव । भक्तस्य । एकम् । प्रधानं मुख्यम् । साधनं स्वात्यन्तिकनिःश्रयसोपायम् । मे मह्यम् । वक्तुम् । अर्हसि ॥३॥ येनेति । कृतेन त्वद्भक्तेन सम्पादितेन । येन । एकेन साधनेनैव । इतराणि । अखिलान्यपि । साधनानि । कृतानि । स्युः । इतीत्थम् । पृष्टो मुक्तानन्दमुनिनानुयुक्तः । हरिः । अब्रवीत् ॥ ४ ॥ साध्विति । हे मुने ! । साधुलक्षणयुक्तानां श्रीकृष्णाभिहितकृपाल्वादि त्रिंशल्लक्षणसम्पन्नानाम् । सतां साधूनाम् । सङ्गः कायवाङ्मनोभिस्तदुक्तैकान्तिकधर्मरूपार्थावधारणाचरणादिरूपः प्रसङ्गः । तादृशो भवदभिहितसाधनात्मकः । अस्ति । इतीत्थम् । उक्त्वा । दयानिधिः । स श्रीहरिः । सर्वान् । सतः साधून् । पृच्छति स्म ॥ ५ ॥ कृष्णस्येति । हे साधवः ! । योगक्रियास्वष्टाङ्गयोगकलासु । दक्षः । साङ्ख्ययोगौ साङ्ख्ययोगशास्त्रे । कृष्णपरौ श्रीकृष्ण-

स्वरूपप्रतिपादनविषयौ । स्तः । इतीत्थम् । जानन् । यः । कृष्णस्य । एकान्तिकः । भक्तः । भवेत् ॥ ६ ॥ तेनेति । तेन तथाविधेन भक्तेन । भगवतः । मूर्त्तौ । वृत्तिः स्वमनोवृत्तिः । सदा निरन्तरम् । कथं केन प्रकारेण । रक्ष्या । तत्प्रवणेन सर्वदा तन्मूर्त्तिसम्मुखीनेन । हृदा मनसा । मूर्त्तिः । कथम् । चालनीया ॥ ७ ॥ अन्तरिति । हे साधवः ! । तेन योगिना भक्तेन । वृत्तिर्मनोवृत्तिः । अन्तः स्वहृदये । कथम् । रक्ष्या । सा वृत्तिः । बहिः । कथम् । रक्ष्या । लये निद्रालस्यरूपे । कथम् । वृत्त्यम् । विक्षेपे सङ्कल्पविकल्परूपे च । कथम् । वृत्त्यम् ॥ ८ ॥ इतीति । इत्यमुना प्रकारेण । तेन श्रीहरिणा । पृष्टाः । सन्तो मुक्तानन्दादयः साधवः । यदा सम्यक् । तदुत्तरम् । कर्त्तुम् । नैव विदुः । तदा । स्वयं श्रीहरिरेव । तत्स्वप्रश्नोत्तरम् । तान्साधून् । आह ॥ ९ ॥ तत्रादौ मनोवृत्तिर्भगवन्मूर्त्तौ कथं रक्ष्येति बहिश्च कथं रक्ष्येति प्रश्नत्रयोत्तरं कुर्वन्नादावतःकरणाधारहृदयात्तदुद्गमनप्रकारं दृष्टान्तेनाह द्वाभ्याम् । अस्तीति । हे सन्तः ! । नृणाम् । अन्तःकरणम् । जीववृत्त्या । आचितं व्याप्तम् । अस्ति । तदन्तःकरणम् । उद्गच्छदूर्ध्वं निर्यन्नैकधारं बहुछिद्रनिःसृतत्वादनेकाल्पधारमम्बु जलं यस्मात्तथाविधं च यत् यन्त्रं तेन । सदृशं

तेन मूर्त्तौ भगवतो वृती रक्ष्या कथं सदा । कथं मूर्त्तिश्चालनीयो हृदा तत्प्रवणेन च ॥ ७ ॥
अन्तर्वृत्तिः कथं रक्ष्या कथं रक्ष्या च सा बहिः । कथं लये च विक्षेपे तेन वृत्यं तु साधवः ! ॥ ८ ॥
इति पृष्टास्तेन सन्तो यदा सम्यक् तदुत्तरम् । कर्त्तुं विदुर्नैव तदा स्वयमेव तदाह तान् ॥ ९ ॥
अस्त्यन्तःकरणं सन्तो जीववृत्याऽऽचितं नृणाम् । उद्गच्छन्नैकधाराम्बुयन्त्रेण सदृशं च तत् ॥ १० ॥
जलयन्त्रे यथा वारि भ्रमित्वोद्गच्छति द्रुतम् । तत्रेन्द्रियेष्वात्मवृत्तिस्तथा भ्रान्त्वोर्ध्वमेति हि ॥ ११ ॥
एवं सत्यत्र यो योगी स तां वर्त्तयति द्विधा । अन्तर्बहिस्ततस्ताभ्यां साक्षात्कृष्णं समीक्षते ॥ १२ ॥
अन्तर्वृत्त्या साक्षिरूपं हृदि कृष्णं स ईक्षते । दृष्टिद्वारा बहिर्वृत्त्या पुरतस्तं च वीक्षते ॥ १३ ॥

तुल्यम् । अस्ति ॥ १० ॥ जलेति । यथा । वारि केनचिच्छिल्पिना यन्त्रस्थगर्त्तनिभृतजलोर्ध्वगमनचातुर्येण सम्प्रेरितं जलम् । जलयन्त्रे । भ्रमित्वा । द्रुतं शीघ्रमेव । उद्गच्छत्यूर्ध्वं प्रयाति । तथा । आत्मवृत्तिर्मनोवृत्तिः । तत्रान्तःकरणाधारे हृदये । भ्रान्त्वा । इन्द्रियेषु चक्षुरादिपश्चाक्षेषु । उर्ध्वम् । एति । हि ॥ ११ ॥ एवमिति । एवंसति मनोवृत्तेरित्थमूर्ध्वगमनप्रकारे सति । अत्र सत्सङ्गे । यः । योगी । अस्ति । सः । तां वृत्तिम् । अन्तः । बहिः । द्विधा । वर्त्तयति । इन्द्रियद्वारा बहिर्निसृतां मनोवृत्तिमन्तर्बहिः संरक्षणात्मना द्विधा प्रवर्त्तयतीत्यर्थः । ततस्तदनन्तरम् । ताभ्यां द्विधा विभक्ताभ्यां वृत्तिभ्याम् । साक्षात्कृष्णं प्रत्यक्षं श्रीहरिम् । समीक्षते ॥ १२ ॥ एवं वृत्तिर्मूर्तौ कथं रक्ष्येति प्रश्नप्रथमस्य पञ्चेन्द्रियान्यतमद्वारान्तर्बहिः संरक्ष्येत्युत्तरं कृत्वा तृतीय चतुर्थप्रश्नोत्तरे आह त्रिभिः । अन्तरिति । स योगी । हृदि । साक्षिरूपं स्वात्मन्यवस्थितम् । कृष्णं स्वेष्टदेवं श्रीहरिम् । अन्तर्वृत्त्या । ईक्षते । दृष्टिद्वारा । बहिर्वृत्त्या । तं कृष्णम् । पुरतः । किञ्चिद् दूरे स्वाग्रप्रदेशे च च । वीक्षते ॥ १३ ॥

किञ्च । स योगी । आनखाग्रात् । आशिखं शिखापर्यन्तम् । साकल्येन समग्राङ्गतयैव । भगवन्मूर्त्तिम् । बहिः । वीक्षते । अङ्गानि चरणादितदवयवान् । पृथक्पृथक् । न तु नैव वीक्षते ॥ १४ ॥ एतदेव दृष्टान्तेन दृढयति । यथेति । यथा । कश्चित्पुमान् । महासौधम् । अथवा । महान्तम् । पर्वतमपि । साकल्येनैव । वीक्षेत । तथा । असौ योगी । प्रभुं श्रीहरिम् । साकल्येनैव । पश्यति । एवं योगिना स्वमनोवृत्तेर्भगवन्मूर्त्तौ रक्षणं नेत्राद्यन्यतमज्ञानेन्द्रियेण कर्त्तव्यं न तु पञ्चभिरपीन्द्रियैस्तथासत्यनेकधा वृत्तिसद्भावेन यथार्थतत्स्थिरीभावो न स्यादिति प्रथमप्रश्नोत्तरम् । तां द्विधा कृत्वान्तःसाक्षिरूपेण तत्समीक्षणम् । बहिः समग्राङ्गतया तत्समीक्षणमित्यन्तर्वृत्तिः कथं रक्ष्या बहिर्वृत्तिश्च कथं रक्ष्येत्यस्योत्तरं च ज्ञेयम् ॥१५॥ मनसा मूर्त्तिः कथं चालनीयेति द्वितीयप्रश्नस्योत्तरमाह सप्तभिः । मूर्त्तिमिति । बहिः स्वनेत्रयोः पुरःप्रदेशे बहिर्वृत्त्या । मूर्त्तिम् । धारयतः । तस्य योगिनः । दृक्पथं दृष्टिमार्गम् । तस्या मूर्त्तेः । ऊर्ध्वमूर्ध्वप्रदेशे । अधोऽधःप्रदेशे । अथवा । पार्श्वयोस्तस्याः पार्श्वभागयोरपि । चेद्यदि । किञ्चित् । वस्तु । आपतेत्प्राप्नुयात् ॥ १६ ॥ नेति । तदा । स योगी । प्रयतः सावधानः सन् । तां मूर्त्तिम् । अतिदूरे । न

आनखाग्रादाशिखं च साकल्येनैव वीक्षते । बहिः स भगवन्मूर्त्तिं नत्वङ्गानि पृथक् पृथक् ॥ १४ ॥ यथा कश्चिन्महासौधं महान्तं वापि पर्वतम् । साकल्येनैव वीक्षेत तथाऽसौ पश्यति प्रभुम् ॥१५॥ मूर्त्तिं बहिर्धारयतस्तस्या ऊर्ध्वमधोऽथवा । पार्श्वयोर्वापि चेत्किञ्चिद्वस्तु दृक्पथमापतेत् ॥ १६ ॥ नातिदूरे तदा तां तु पश्येत्पश्येत्स्वसन्निधौ । नासाग्रे वा भ्रुवोर्मध्ये धारयेत्प्रयतः स तु ॥ १७ ॥ एवं धारयतस्तस्य निद्रा वाऽऽलस्यमापतेत् । यदि तर्हि पुनर्दूरे धारयेत्तां स योगवित् ॥१८॥ धृतरज्जुर्यथा बालः पतङ्गं स्वेच्छया मुहुः । ऊर्ध्वं चाधः पार्श्वयोर्वा सन्नयेदानयेत्पुनः ॥ १९ ॥ तथैव योगकलया मूर्त्तिं वर्त्तयतोऽस्य च । निद्रालस्यं चापयायात् स भवेच्च सचेतनः ॥ २० ॥ ततः पुनर्नासिकाग्रे धृत्वा तामन्तरे भ्रुवोः । नीत्वा स्वान्तर्नयेत्तां च तत्स्थयैक्येन भावयेत् ॥ २१ ॥

पश्येत् । किन्तु । स्वसन्निधौ स्वसमीपप्रदेशे । पश्येत् । अथवा । नासाग्रे नासिकाया अग्रप्रदेशे । अथवा । भ्रुवोः । मध्ये मध्यप्रदेशे । धारयेत् ॥ १७ ॥ एवमिति । एवममुना प्रकारेण । धारयतो हरिमूर्त्तिधारणं कुर्वतः । तस्य योगिनः । यदि । निद्रा । अथवा । आलस्यम् । आपतेदायायात् । तर्हि । योगविन्मनसा मूर्त्तिचालनोपायज्ञः । स योगी । तां मूर्त्तिम् । पुनः । दूरे । धारयेत् ॥ १८ ॥ एवं मूर्त्तिं धारयतो योगिनो निद्रालस्यापनोदार्थं मूर्त्तिचालनप्रकारं दृष्टान्तेनाह द्वाभ्याम् । धृतेति । यथा । धृतरज्जुः । बालः स्वेच्छया । पतङ्गम् । मुहुः । ऊर्ध्वम् । अधश्च । अथवा । पार्श्वयोः । सन्नयेच्चालयेत् । पुनः । आनयेत् । स्वसमीपं प्रापयेत् । तथेत्युत्तरेण सम्बन्धः ॥ १९ ॥ तथेति । तथा तेन प्रकारेणैव । योगकलया मनसा मूर्त्तिचालनयुक्त्या । मूर्त्तिम् । वर्त्तयतश्चालयतः । अस्य । योगिनः । निद्रा । आलस्यं च । अपयायान्निवर्त्तेत । स योगी । सचेतनो जागरूकः । भवेत् ॥२०॥ तत इति । ततस्तदनन्तरम् । तां मूर्त्तिम् । पुनः । नासिकाग्रे । धृत्वा । भ्रुवोः । अन्तरे मध्ये च । नीत्वा । स्वान्तः स्वहृदयम् । नयेत् । तां मूर्त्तिम् । तत्स्थया स्वान्तःस्थया साक्षिरूपया मूर्त्या सह । ऐक्येनैकत्वेन । भावयेत् ॥ २१ ॥

आत्मेति । तदा तर्हि । द्वेधा । भूता पूर्वोक्तप्रकारेण द्विधा जाता । आत्मवृत्तिः । हृदि । एकताम् । याति । स योगी । तत्र हृदये । भागवतं भगवन्मूर्त्तिसम्बन्धिनम् । परमम् । आनन्दम् । याति ॥२२॥ अथ लये कथं वृत्यमिति पञ्चमप्रश्नस्योत्तरमाह । आलस्यमिति । अथैवंविधानन्दानुभवानन्तरम् । तत्र हृदये । आलस्यम् । अथवा । निद्रादि । यदि । पुनः । उदीयात् । तदा । पुनः । वृत्तिम् । द्विधा । कृत्वा पूर्ववद्द्विप्रकारां विधायेत्यर्थः । पूर्ववत् । आचरेत्कुर्यात् ॥ २३ ॥ नेत्रेन्द्रियद्वारा संसाधनीयतयोक्तमर्थमन्येन्द्रियाद्यैरप्येवमेव संसाध्यमित्याह द्वाभ्याम् । श्रोत्रेति । स योगी त्वगादिद्वारा । तथा । अन्तःकरणद्वारापि एवमेव योगकलाम् । मुहुः । साधयेत् ॥ २४ ॥ तथेति । तथा तेन प्रकारेण । साङ्ख्यविचारेण । देहत्रयपृथक्कृते स्थूलादिदेहत्रयात्पृथग्भाविते । अतएव । शुद्धचैतन्यरूपे । आत्मनि स्वक्षेत्रज्ञे । प्रभुं श्रीहरिम् । धारयेत् ॥ २५ ॥ अथ विक्षेपे कथं वृत्यमिति षष्ठप्रश्नोत्तरमाह । द्वाभ्याम् । अन्तरिति । अन्तः स्वहृदये । अथवा । बहिः स्वनेत्रयोःपुरःप्रदेशे । भगवन्मूर्त्तिम् । धारयतो योगिनः । यदि । क्वापि । कश्चन । व्यावहारिकविक्षेपो व्यवहारसम्बन्धी सङ्कल्पविकल्पात्मको विक्षेपः । आपतेदायायात् । तदेत्युत्तरेण

आत्मवृत्तिस्तदा द्वेधा भूता यात्येकतां हृदि । आनन्दं परमं तत्र याति भागवतं स च ॥ २२ ॥ आलस्यं वाऽपि
निद्राऽथ पुनस्तत्रोदियाद्यदि । तदा पुनर्द्विधा वृत्तिं कृत्वा पूर्ववदाचरेत् ॥२३॥ श्रोत्रत्वगादिद्वाराऽपि स च योगकलां
मुहुः । तथाऽन्तःकरणद्वारा साधयेदेवमेव हि ॥ २४ ॥ तथा सांख्यविचारेण देहत्रयपृथक् कृते । धारयेच्छुद्धचैतन्यरूप
आत्मनि च प्रभुम् ॥ २५ ॥ अन्तर्वहिर्वा भगवन्मूर्त्तिं धारयतो यदि । व्यवहारिकविक्षेप आपतेत् क्वापि कश्चन
॥ २६ ॥ तदाऽपि तं समादध्याद्धारयन्नेव तां स तु । नतु योगकलां क्वापि स्वकीयामुत्सृजेत्सुधीः ॥ २७ ॥ सांख्यं
च योगं विदुषो यथावद्भक्तस्य वृत्तिर्भवतीदृशी वै । इति प्रभोर्वागमृतं निपीय ते तोषमापुर्मुनयो गृहस्थाः ॥ २८ ॥

इति श्रीहरिवाक्यसुधासिंधौ शतानन्दमुनिविरचिते द्विशताधिकचतुर्थस्तरङ्गः ॥ २०४ ॥ ४ ॥

सम्बन्धः ॥ २६ ॥ तदेति । तदा तर्ह्यपि । सुधीः । स योगी । तां भगवन्मूर्त्तिम् । धारयन्सन्नेव । तं विक्षेपम् । समादध्यान्निवर्त्तयेत् । क्वापि कदाचिदपि । स्वकीयाम् । योगकलां मूर्त्तिधारणरूपां योगयुक्तिम् । नतूत्सृजेन्नैव त्यजेत् । मूर्त्तिं परित्यज्य विक्षेपं न निवर्त्तयेत्किन्तु तां धारयन्नेव निवर्त्तयेदित्यर्थः ॥ २७ ॥ प्रकरणार्थं निगमयत्यर्द्धेन । साङ्ख्यमिति । हे साधवः ! । साङ्ख्यम् । योगम् । यथावद्यथार्थतया । विदुषो जानतः । भक्तस्य श्रीहरिं भजतो योगिनः । ईदृशी मदुक्तप्रकारा । वृत्तिः । भवति जायते । वै । इत्येवंविधम् । प्रभोः श्रीहरेः । वागमृतम् । निपिय । ते समीपविष्टाः । मुनयो मुक्तानन्दादयः साधवः । गृहस्थाश्च । तोषम् । आपुः ॥ २८ ॥ मुख्यं साधनमुक्त्वा यः स्वभक्तस्य तु योगिनः । वृत्तिमाह हरिर्द्याचत्तां मे स दयानिधिः ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासक श्रीहरिकृष्णभगवत्स्नुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां द्विशताधिकचतुर्थस्तरङ्गः ॥ २०४ ॥ ४ ॥

प्रकारो यो हरेर्मायातरणस्य तथा हरिम् । यत्प्रपन्नस्य नुर्लक्ष्म दम्भिभक्तस्य लक्ष्म यत् ॥ १ ॥ भक्तः कनीयान् साद्यैश्च साधनैः सद्य उत्तमः । एतत्सर्वं पञ्चमे तु सुस्पष्टं समुदीरितम् ॥ २ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८८२) सहसो मार्गशीर्षमासस्य । कृष्णे वहुलपक्षे । चतुर्थ्यां तिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । वृत्तालयपुरे । गोमतीसरसः । तटे । आम्रवणे रमणीयाम्रारामे । वेद्यामुच्चवेदिकायाम् । मञ्चासने स्वास्तृतपर्यङ्कासने । एषः श्रीहरिः । व्यराजत ॥ २ ॥ तां विशिनष्टि । सितेति । सिताम्बरः परिहितातिसूक्ष्मश्वेतवसनः । स्थलाब्जानां स्रजो हाराश्च शेखरा आपीडाश्च उत्तंसौ कर्णपूरौ च तैः शोभितोऽतिशोभमानः । अनेकशो नानादेशागतत्वाद्वहुभिः । त्यागिभिः । गृहिभिः । स्वीयैः स्वभक्तैः । परितः समंततः । वृतः सभायां वेष्टितः ॥ ३ ॥ पप्रच्छेति । उदगास्यमुदङ्मुखतया वर्तमानम् । तं श्रीहरिम् । तदाज्ञयाऽऽलस्यनिवर्त्तकातिकठिनप्रश्नाचरणरूपश्रीहरिनिर्देशेन । मुक्तानन्दो मुनिः । पप्रच्छ । हे हरे ! । दैवी ह्येषा गुणमयी मम माया दुरत्यया । मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते इत्यर्जुनं प्रत्युक्तत्वद्वचनप्रामाण्याद्धेतोः ॥ ४ ॥ मायामिति । ये । नराः । कृष्णम् ।

शकाब्दे विक्रमार्कस्य नेत्राष्टवसुभूमिते । चतुर्थ्यां सहसः कृष्णे वचोऽमृतमिदं हरेः ॥१॥ तत्र वृतालयपुरे गोमतीसरस्तटे । वेद्यामाम्रवणे मञ्चासन एष व्यराजत ॥ २ ॥सिताम्बरः स्थलाब्जस्रक्शेखरोत्तंसशोभितः । त्यागिभिर्गृहिभिः स्वीयैः परितोऽनेकशो वृतः ॥ ३ ॥ पप्रच्छ मुक्तानन्दस्तमुदगास्यं तदाज्ञया । दैवी ह्येषा गुणमयीत्यादित्वद्वाक्यतो हरे ! ॥४॥ मायां तरेयुः कृष्णं त्वां प्रपद्येरन्नरास्तु ये । न तिष्ठति ततो माया प्रपन्नेषु हरिं क्वचित् ॥५॥ भक्तानां हृदि सङ्कल्पविक्षेपोऽपि समीक्ष्यते । स च मायां विना केन कृतस्तद्वक्तुमर्हसि ॥६॥ श्रीहरिरुवाच–सर्गकालेऽस्य जगतो मायायास्तु गुणत्रयात् । भूतादीनां समुत्पत्तिर्जायते भगवद्दृशा ॥ ७ ॥

त्वाम् । प्रपद्येरन् । ते तु । मायाम् । तरेयुः । ततोहेतोः । हरिं साक्षाच्छ्रीकृष्णं त्वाम् । प्रपन्नेषु नरेषु । माया । क्वचित्कदाचिदपि । न तिष्ठति । इतिद्वयोरेकसम्बन्धः ॥ ५ ॥ भक्तानामिति । किञ्च । भक्तानामुक्तविधानां त्वदाश्रितजनानाम् । हृदि । सङ्कल्पविक्षेपो मायाकार्यमनःकृतस्त्वद्ध्यानान्तरायकरो नानार्थसङ्कल्पोदयरूपो विक्षेपोऽपि । समीक्ष्यते । स सङ्कल्पविक्षेपः । मायां विना । केन । कृतः । तत् । वक्तुम् । अर्हसि । सङ्कल्पविक्षेपस्य मायाकार्यमनोहेतुत्वान्मायायाश्च सर्वथोक्तरीत्याऽभावात्तदुत्पादकं तदन्यं त्वत्तो जिज्ञासामि तं वदेत्यर्थः ॥ ६ ॥ 'इत्थं स मुक्तानन्देन मुनिना पुरुषोत्तमः पृष्टस्तं नन्दयन्प्राह स्वभक्तांश्चापरा'निति । हरिं प्रपन्नानां तद्ध्यानान्तरायकृत्सङ्कल्पोदयसत्त्वेऽपि साक्षाद्धरिस्वरूपस्य दिव्यमानुषभावैकतया दृढानिश्चितत्वेन तत्र सङ्कल्पविक्षेपाभावादुक्तविधसङ्कल्पविक्षेपोऽसङ्कल्पविक्षेप एव यतः सोऽसमर्थत्वाद्यथोत्तरवर्द्धिततन्माहात्म्यवेदनेन विनंक्ष्यत्येव ततः सङ्कल्पविक्षेपस्तु स बोध्यो यस्तत्स्वरूपनिश्चयानिष्पादक इत्युत्तरयन्मायातो भूताद्युत्पत्तिद्वारा मनःकृतसङ्कल्पोदयप्रकारमाह · पञ्चभिः । सर्गेति । हे मुने ! । अस्य । जगतो विश्वस्य । सर्गकाले सृष्टिसमये । भगवद्दृशा परंपरया प्रधानपुरुषागतश्रीकृष्णदृष्ट्या । मायायाः प्रधानप्रकृतेः सकाशात् । गुणत्रयान्महत्तत्त्वद्वारोत्पन्नत्रिविधाहङ्कारात् । भूतादीनां महाभूतेन्द्रियान्तःकरणादीनाम् । समुत्पत्तिः । जायते ॥ ७ ॥

एतदेव स्पष्टमाह सार्द्धेन । तामसादिति । तत्र त्रिविधाहङ्कारमध्ये तामसादहङ्कारात् । पञ्च पञ्चसङ्ख्याकानि महाभूतान्याकाशादीनि । जायन्ते शब्दादिद्वारोत्पद्यन्ते । राजसाहङ्कारात् । दश दशसङ्ख्याकानि । इन्द्रियाणि चक्षुरादीनि । बुद्धिः । प्राणश्च । जायन्ते ॥८॥ बाह्येति । सात्त्विकादाहङ्कारात् । बाह्यान्तःकरणेशाश्चक्षुरादिबाह्यकरणदेवा मनआद्यन्तःकरणदेवाश्चेत्यर्थः । मनश्च । जायन्ते । एभिः । तत्त्वैर्मायाकार्यैर्महाभूतादिभिरेव । सर्वशो वैराजपुरुषस्य देवमनुष्यादिसर्वेषां देहिनां चेत्यर्थः । देहाः । जायन्ते ॥९॥ एतैरिति । भक्तानां साक्षाद्भगवन्तं प्रपन्नानां जनानामपि । देहसमुद्भवः । एतैरुक्ततत्त्वैरेव । जातः । अस्ति । इतिहेतोः । सर्वत्रोक्तेषु सर्वेष्वपि । मायामयगुणात्मता मायाकार्यगुणात्मकत्वम् । अस्ति ॥ १० ॥ गुणेति । गुणात्मकान्तःकरणादुक्तरीत्यान्तःकरणस्य गुणात्मकत्वाद्धेतोः । भक्तानामपि । हृदि । वपुःक्षयः । यावत् । आदेहपातमित्यर्थः । सङ्कल्पक्षोभसम्भवः सङ्कल्पजन्यविक्षेपोदयः । जायते ॥ ११ ॥ एवमिति । एवंसति । भगवन्तं साक्षाच्छ्रीहरिम् । प्रपन्नानां शरणं प्राप्तानाम् । नृणां भक्तानाम् । मायानिवृत्तिः । यथा । जायते । तथा । वच्मि । निशम्यतां मत्तस्तदाकर्ण्यताम् ॥ १२ ॥ प्रत्यक्षेति । धृतमानुष्यनाटने सन्दर्शितमनुजानुकरणे ।

तामसात्तत्र जायन्ते महाभूतानि पञ्च च । दशेन्द्रियाणि जायन्ते बुद्धिः प्राणश्च राजसात् ॥ ८ ॥ बाह्यान्तःकरणेशाश्च जायन्ते सात्त्विकात्मनः । एभिरेव हि जायन्ते तत्त्वैर्देहास्तु सर्वशः ॥ ९ ॥ एतैरेव च भक्तानामपि देहसमुद्भवः । जातोऽस्तीत्यस्ति सर्वत्र मायामयगुणात्मता ॥ १० ॥ गुणात्मकान्तःकरणात्सङ्कल्पक्षोभसम्भवः । जायन्ते हृदि भक्तानामपि यावद्वपुःक्षयः ॥ ११ ॥ एवं सति यथा माया निवृत्तिर्जायते नृणाम् । भगवन्तं प्रपन्नानां तथा वच्मि निशम्यताम् ॥ १२ ॥ प्रत्यक्षभगवद्रूपे धृतमानुष्यनाटने । मायिकत्वस्य लेशोऽपि सर्वथैव न विद्यते ॥ १३ ॥ नराकृति परंब्रह्म भवत्येतद्धि निर्गुणम् । इति स्यान्निश्चयो यस्य पुंसो भगवतो दृढः ॥ १४ ॥ स तु मायां तीर्ण एव वर्त्तमानोऽपि तादृशे । देहे कृष्णस्यावबोधाद् गुणातीततया किल ॥ १५ ॥ क्षोभाभावाद्धरे रूपे क्रियारक्ते निजान्तरे । सङ्कल्पक्षोभदुष्टेऽपि स मायां तीर्ण एव हि ॥ १६ ॥

प्रत्यक्षभगवद्रूपे । मायिकत्वस्य त्रिगुणात्मकमायाकार्यतत्त्वमयाकृतित्वस्य । लेशोऽल्पमात्रभागोऽपि । सर्वथैव न विद्यते ॥ १३ ॥ नरेति । एतत् । नराकृति मनुष्यसमानाकारतया प्रतीयमानम् । परंब्रह्म । निर्गुणं मायिकगुणवर्जितम् । सदा स्वतोदिव्याकृतीत्यर्थः । भवति वर्त्तते । हि प्रसिद्धमेवं श्रुतिस्मृतीतिहासन्यायादिषु । इत्येवंविधः । भगवतः साक्षाद्धरेः । दृढनिश्चयः । यस्य । पुंसो भक्तस्य । स्यात् ॥ १४ ॥ स इति । स भक्तस्तु । तादृशे त्रिगुणात्मके । देहे । वर्त्तमानः सन्नपि । कृष्णस्य साक्षाच्छ्रीहरेः । गुणातीततया मायामयगुणत्रयवर्जिततया । अवबोधाद् दृढज्ञानाद्धेतोः । मायाम् । तीर्ण एव । अस्ति । किल । इति त्रयाणामेकसम्बन्धः ॥ १५ ॥ ननु सङ्कल्पविक्षेपे सत्यपि स मायां तीर्ण इति कथमुच्यते इत्यत्राह । क्षोभेति । हरेः साक्षाद्भगवतः । रूपे नृनाट्यानुकारिणि स्वरूपे । क्षोभाभावादयं परमेश्वरः स्यान्न स्याद्धेति तदन्तःसङ्कल्पविक्षेपानुदयाद्धेतोः । क्रियारक्ते सङ्कल्पाचरणरूपस्वभावाविकस्वक्रियाप्रसक्ते । निजान्तरे गुणात्मके स्वमनसि । सङ्कल्पक्षोभदुष्टेऽनेकपदार्थसङ्कल्पनविकल्पनकृतविक्षेपदूषिते सत्यपि । स तादृशनिश्चयवान् भक्तः । मायाम् । तीर्ण एवास्ति । हि ॥ १६ ॥

सङ्कल्पेति । सङ्कल्पादिरनेकपदार्थसङ्कल्पन विकल्पनप्रभृतिस्तु । मनसः । स्वाभाविकः साहजिकः । धर्मः । अस्ति । वै । अतोहेतोः । हरेः । मायायाः । तरणे । संशयः । न कार्यः ॥ १७ ॥ एतदेव सम्यग्बोधाय पुनरपि स्पष्टमाह । मायेति । यो भक्तः । धृतनराकृतिम् । हरिम् । मायातीतम् । विद्यात् । तावता मायातीततया सम्यक् श्रीहरिस्वरूपवेदनेन । स भक्तोऽपि । मायातीतः । इतीत्थम् । ध्रुवं निश्चितमेव । विज्ञेयः ॥ १८ ॥ पुनरप्येतत्स-दाचारेण द्रढयति । क्वचिदिति । कचित्कदाचित् । प्राप्तगुणक्षोभाः रजआदिमायागुणानादिसम्बन्धेन सम्प्राप्तान्तःकरणसंक्षोभा अपि । ब्रह्मादयः । सुराः । वसि-ष्ठाद्याः । मुनयश्च । तथाविधा मायातीता एव । भवन्ति ॥ १९ ॥ एतदिति । हे मुने ! । अस्य त्वत्कृतस्य प्रश्नस्य । उत्तरम् । एतदेव । भवता । ज्ञातव्यम् । मत्कृतोत्तराहतेऽन्यदत्रोत्तरं नैवास्तीतिभावः । इत्थमुना प्रकारेण । उक्तः श्रीहरिणाऽभिहितः । स मुक्तानन्दमुनिः । प्रसन्नः । अभूत् । ततस्तदनन्तरम् । नित्या-नन्दो मुनिः । अब्रवीच्छ्रीहरिं प्रश्नं पप्रच्छेत्यर्थः ॥ २० ॥ प्रपन्नस्येति । हे प्रभो ! । हरिं प्रत्यक्षपुरुषोत्तमम् । त्वां । प्रपन्नस्य । पुंसो भक्तस्य । त्वत्प्रपत्त्या माया-

सङ्कल्पादिस्तु मनसो धर्मः स्वाभाविकोऽस्ति वै । अतो न संशयः कार्यो मायायास्तरणे हरेः ॥ १७ ॥ मायातीतं हरिं विद्याद्यो वै धृतनराकृतिम् । तावता सोऽपि विज्ञेयो मायातीत इति ध्रुवम् ॥ १८ ॥ क्वचित्प्राप्तगुणक्षोभा अपि ब्रह्मादयः सुराः । वसिष्ठाद्याश्च मुनयो भवन्त्येव तथाविधाः ॥ १९ ॥ एतदेवास्य प्रश्नस्य ज्ञातव्यं भवतोत्तरम् । इत्युक्तः स प्रसन्नोऽभून्नित्यानन्दस्ततोऽब्रवीत् ॥ २० ॥ प्रपन्नस्य हरिं त्वां मे पुंसो लक्ष्म वद प्रभो ! । तमुवाच हरिस्तत्तु गीतायां हरिणोदितम् ॥ २१ ॥ सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज । अहं त्वां सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ॥ २२ ॥ मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु । मामेवैष्यसि युक्त्वैवमात्मानं मत्परायणः ॥ २३ ॥ एवं कृष्णं प्रपन्नस्य महादुःखं यदि क्वचित् । आपतेत्तर्हि स ततो रक्षां नेच्छेत्तदन्यतः ॥ २४ ॥

तीततां प्राप्तस्य भक्तस्येत्यर्थः । लक्ष्म लक्षणम् । मे मह्यम् । वद । तमेवं पृच्छन्तं नित्यानन्दमुनिम् । हरिः । उवाच । हे मुने ! । तद्धरिप्रपन्नभक्तलक्षणम् । गीता-याम् । हरिणा श्रीकृष्णेन । उदितमुक्तं भवति ॥ २१ ॥ सर्वेति । हे अर्जुन ! । सर्वधर्मान् । परित्यज्य । एकं केवलम् । माम् । शरणम् । व्रज । अहम् । त्वाम् । सर्वपापेभ्यः । मोक्षयिष्यामि । अतः । मा शुचः शोकं माकृथाः ॥ २२ ॥ मदिति । त्वम् । मन्मनाः । भव । मद्भक्तः । भव । मद्याजी । भव । माम् । नमस्कुरु । मत्परायणो मदेकशरणः । त्वम् । एवम् । आत्मानं स्वमानसम् । युक्त्वा मयि संयोज्य । मामेव । एष्यसि प्राप्स्यसि । अनयोर्भावार्थो रामानुजाचार्य-कृतभाष्यादवगन्तव्यः । अनेन श्लोकद्वयेन या सर्वथैव भगवत्परायणता सैव तत्प्रपन्नभक्तलक्षणं बोध्यमित्युक्तम् ॥ २३ ॥ एवं श्रीकृष्णोक्तं प्रपन्नलक्षणमुक्त्वा तत्र यन्न्यूनं तत्स्वयमाह त्रिभिः । एवमिति । एवममुना प्रकारेण । कृष्णं प्रत्यक्षं श्रीहरिम् । प्रपन्नस्य भक्तस्य । यदि । क्वचित्कदाचित् । महादुःखं देहान्तकष्टम् । आपतेत्प्राप्तं

भवेत् । तर्हि तदापि । स भक्तः । तदन्यतः स्वेष्टदेवकृष्णेतरस्मात् । ततो दुःखात् । रक्षाम् । नेच्छेत् । वस्तुतस्तु सः स्वत्राणमेव नेच्छेद्यदीच्छेत्तर्हि केवलं स्वेष्टदेव-छन्दमालक्ष्य तस्मादेवेच्छेन्न ततोऽर्वाचीनात्कस्माचनापीतिभावः ॥ २४ ॥ यदिति । किञ्च । स्वस्य । अभीष्टम् । यत् । यत् । सुखम् । स्यात् । तत्तत्सुखम् । स भक्तः । कर्हिचित् । कृष्णेतरस्मात् । नेच्छेत् । किन्तु । सर्वं सकलमपि स्वामीष्टसुखम् । हरेः सकाशात् । इच्छेत् । वै ॥ २५ ॥ कृष्णेति । किञ्च । स भक्तः । कृष्णे-तरम् । किञ्चिदपि । सुखप्रदम् । नैव । विद्यात् । हरेः । चिकीर्षानुगुणं कर्त्तुमभिवाञ्छितार्थानुरूपं यथातथा । सर्वदा । वर्त्तेत ॥ २६ ॥ एवमिति । हे मुने ! । हरिम् । प्रपन्नः । पुरुषो भक्तः । एवंविध इत्थंभूतलक्षणः । विज्ञेयः । इत्यमुना प्रकारेण । उक्त्वा निन्यानन्दमुनिप्रश्नोत्तरं कृत्वा । उपरतं जोषमासीनम् । तं श्रीहरिम् । क्षत्रियो द्वितीयवर्णः । नाञ्ज एतन्नामा भक्तः । पृच्छति स्म ॥२७॥ स्वस्य । हृदये मनसि । दृढं यथातथा । त्वदाश्रयः । न स्यात् । अथापि । बाह्यत उपरिष्टात्तु ।

यद्यत्सुखमभीष्टं स्यात्स्वस्य तत्तच्च कर्हिचित् । कृष्णेतरस्मान्नेच्छेद्वै सर्वमिच्छेद्धरेः स च ॥ २५ ॥
कृष्णेतरं कञ्चिदपि नैव विद्यात्सुखप्रदम् । हरेश्चिकीर्षानुगुणं स च वर्त्तेत सर्वदा ॥ २६ ॥
एवंविधस्तु विज्ञेयः प्रपन्नः पुरुषो हरिम् । इत्युक्त्वोपरतं नाञ्जः क्षत्रियस्तं स्म पृच्छति ॥ २७ ॥
दृढं त्वदाश्रयो न स्याद् हृदयेऽथापि बाह्यतः । प्रौढिं दृढाश्रितसमां स्वस्य यस्तु प्रदर्शयेत् ॥ २८ ॥
स दाम्भिको नरः स्वामिन् ! दृढभक्तसमक्रियः । कथं ज्ञेय इति पृष्टो धर्मसुनुस्तमब्रवीत् ॥ २९ ॥
स सहव्यवहारेण सहवासेन वा मुहुः । दृढवर्त्तनकाले वा सुधीभिर्ज्ञायते द्रुतम् ॥ ३० ॥
सन्मण्डले स च स्थातुं शक्नुयान्नैव सर्वथा । पृथग्भूत्वा ततः कृष्णं भजेत्स्वैरं चरेत्तथा ॥ ३१ ॥

स्वस्य । प्रौढिं ख्यातिम् । दृढाश्रितसमां सुदृढत्वदाश्रितसमानाम् । यो भक्तः । प्रदर्शयेत् ॥ २८ ॥ स इति । हे स्वामिन् ! । दृढभक्तसमक्रिय उपरिष्टात्सत्य त्वद्भक्तसमानक्रियः । सः । नरो भक्तः । दाम्भिकोऽयं केवलं दम्भेन भक्तत्वं नाटयतीति । कथं केन प्रकारेण । ज्ञेयः । इतीत्थम् । पृष्टो नाञ्जभक्तानुयुक्तः । धर्मसूनुर्धर्मात्मजः श्रीहरिः । तं नाञ्जभक्तम् । अब्रवीत् ॥ २९ ॥ स इति । हे भक्तः । मुहुर्भूयो भूयः । सहव्यवहारेण सहकृतसकलव्यवहारकृत्येन । अथवा । सह-वासेन बहुकालकृतसहनिवसनेन । अथवा । दृढवर्त्तनकाले मदादिष्टनियमानां सर्वैः समं सम्यक्तया पालनसमये । सुधीभिः सुमतिभिर्भक्तजनैः । द्रुतं शीघ्रमेव । ज्ञायते ॥ ३० ॥ एवं तद्दाम्भिकत्ववेदनप्रकारकालावुक्त्वा यदैवं सद्भिर्विदितस्तदनन्तरभाव्यं तद्वृत्तान्तमाह । सदिति । स दाम्भिको भक्तः । सन्मण्डले सत्सङ्गे इत्यर्थः । स्थातुम् । सर्वथा । नैव शक्नुयात् । ततः सन्मण्डलात् । पृथक् । भूत्वा । कृष्णम् भजेद्यथा तथा तद्भजनं कुर्यात् । तथा । स्वैरं यथेच्छम् । चरेत् ॥ ११ ॥

नन्वेवं साक्षाद्धरिं परमेश्वरं वुध्वा कृताश्रयस्यास्य भक्तस्य कथमेवं विधतेतिचेद्भगवदाश्रयस्य त्रैविध्याद्भक्तानामपि त्रैविध्यमस्तीतिब्रुवंस्तेष्वस्य कनीयस्त्वमाह । कृष्णेति । हे भक्त ! । कृष्णाश्रयोऽपि । उत्तमादिभेदेन । त्रिविधः । मतः । तद्वशात्कृष्णस्य त्रिविधाश्रयवशतः । भक्तोऽपि । त्रेधा त्रिविधः । मतः । तत्र त्रिविधभक्तेषु मध्ये । एष दाम्भिक भक्तः । कनीयान्कनिष्ठः । मतः । भक्तानामुत्तमादयो भेदाः सविस्तरमुक्ता द्विसप्ततितमे तरङ्गे ततो वोध्याः ॥ ३२ ॥ नित्यानन्द इति । अथानन्तरम् । नित्यानन्दोमुनिः । तं श्रीहरिम् । नत्वा । पप्रच्छ । हे स्वामिन् ! । असौ कनिष्ठस्त्वद्भक्तः । कदाचन कदाचिदपि । उत्तमः । स्यात् । अथवा । न स्यात् । इतीत्थम् । पृष्टो नित्यानन्दमुनिनानुयुक्तः प्रभुः श्रीहरिः । अब्रवीत् ॥ ३३ ॥ यथेति । हे मुने ! । स कनिष्ठभक्तः । यथा । भगवतः श्रीहरेः । बाह्याभ्यन्तरपूजनम् । कुर्यात् । तथा । तदुच्छिष्टैर्भगवत्प्रासादिकैः । द्रव्यैश्चन्दनादिभिः पूजोपहारैः । उत्तमान् । भक्तान् श्रीहरेरेकान्तिकभक्तजनान् । अर्चेत् ॥ ३४ ॥ भगवन्तमिति । किञ्च । भगवन्तमिव । तानुत्तमभक्तान् । सदन्नैः परमान्नादिभिः सद्भोज्यैः । प्रीत्या । भोजयेत् । कृष्णार्थमिव । तदर्थकमुत्तमभक्तार्थम् । द्रव्यव्ययं च । कुर्यात्

कृष्णाश्रयोऽप्युत्तमादिभेदेन त्रिविधो मतः । भक्तोऽपि तद्वशात्त्रेधा कनीयानेष तत्र तु ॥ ३२ ॥ नित्यानन्दोऽथ नत्वा तं प्रपच्छासौ कदाचन । स्यादुत्तमो न वा स्वामिन्निति पृष्टोऽब्रवीत्प्रभुः ॥ ३३ ॥ यथा भगवतः कुर्याद्बाह्याभ्यन्तरपूजनम् । तथा द्रव्यैस्तदुच्छिष्टैरर्चेद्भक्तान् स उत्तमान् ॥३४॥ भगवन्तमिव प्रित्या सदन्नैस्तांश्च भोजयेत् । द्रव्यव्ययं च कृष्णार्थमिव कुयात्तदर्थकम् ॥ ३५ ॥ एवमुत्तमभक्तानां सेवनं कृष्णवत्तु यः । अतिप्रीत्याऽऽचरेन्नित्यं सोऽत्रैव स्यात्खलूत्तमः ॥ ३६ ॥ अन्यथा तु कनिष्ठोऽसौ वहुभिर्जन्मभिर्हरिम् । भजन्नुत्तमतां यायादिति प्रश्नोत्तरं तव ॥ ३७ ॥ इति वचनसुधां हरेः स पीत्वा मुनिवर आप मुदं च साधवोऽन्ये । सदसि गृहिजनाश्च ये निषण्णास्तदनुचरा अतुलां च लेभिरे ते ॥ ३८ ॥

इति श्रीहरिवाक्यसुधासिंधौ शतानन्दमुनिविरचिते द्विशताधिकपञ्चमस्तरङ्गः ॥ २०५ ॥ ५ ॥

॥ ३५ ॥ एवमिति । यः कनिष्ठभक्तः । एवममुना प्रकारेण । कृष्णवत्कृष्णस्य यथा । उत्तमभक्तानाम् । सेवनम् । अतिप्रीत्या । नित्यम् । आचरेत् । सः । अत्रास्मिन् जन्मन्येव । उत्तमः । स्यात् । खलु ॥ ३६ ॥ अन्यथेति । अन्यथैवंविधाचरणाभावे तु । असौ । कनिष्ठो भक्तः । बहुभिः । जन्मभिः । हरिम् । भजन्सन् । उत्तममतामुत्तमभक्तभावम् । यायात् । हे मुने ! । इत्येवंविधम् । तव प्रश्नोत्तरम् । अस्ति ॥ ३७ ॥ इतीति । इत्येवंविधाम् । हरेः । वचनसुधाम् । पीत्वा । मुनिवरः । स नित्यानन्दोमुनिः । अतुलां निरूपमाम् । मुदम् । आप । सदसि सभायाम् । निषण्णाः । तदनुचराः श्रीहरेराश्रिताः । ये । अन्ये । साधवः । गृहिजनाश्च । ते अतुलां मुदम् । लेभिरे ॥ ३८ ॥ कृत्वा चतुर्णां प्रश्नानामुत्तराणि तु यो हरिः । स्वभक्तानन्दयामास स आनन्दप्रदोऽस्तु मे ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्पदानुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां द्विशताधिकपञ्चमस्तरङ्गः ॥ २०५ ॥ ५ ॥

कर्मणश्चाथ कालस्य तथेच्छाया हरेरपि । स्वातन्त्र्यं न कर्तृत्वे षष्ठ ईरितम् ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८८२) सहःकृष्णे मार्गशीर्षमासस्य कृष्णपक्षे । एकादश्यां तिथौ । इदम् । हरेः । वचोऽमृतम् । अभूतम् ॥१॥ तत्रेति । तत्र तिथौ वृत्तालयपुरे । लक्ष्मीनारायणालयात् । प्राच्यां पूर्वदिग्भागे । महासने स्वास्तृतोत्तमभ्रविष्टरे । सूक्ष्मविशदांशुकः परिहितनिविडाणुधवलवसनः । स श्रीहरिः । अराजत् ॥ २ ॥ पुष्पेति । पुष्पस्रक्शेखरैर्मन्दारसुमनोहारापीडैः । रम्यमतिनिरीक्षणीयम् । नानाभक्तगणावृत्तं नानादेशागतत्यागिगृहिबहुभक्तैः सभायां परिवेष्टितम् । तं श्रीहरिम् । चिन्मयरावाख्य एतन्नामा न्यग्रोधपत्तनावासः । भक्तः । कृतानतिः कृतप्रणामः सन् । अपृच्छत् ॥ ३ ॥ सकारणेति । हे हरे ! । अनेकशोऽपरिमिताः । जीवाः । सकारणशरीराः कारणदेहसहिताः सन्तः । प्रलये आत्यन्तिकलये । मायायां महाप्रकृतौ । लीनाः सन्तः । अव्यक्तभावतः । तिष्ठन्ति ॥ ४ ॥ स्थूलेति । सर्गादौ सर्गकाले । तेषां जीवानाम् । स्थूल–सूक्ष्म–शरीराप्तिपूर्वं स्थूलसूक्ष्मदेहप्रापणपूर्वकम् । विचित्रता देवमनुष्यतिर्यगादिभावेन विचित्रत्वम् । जायते । सैवंभूता विचित्रता । कर्मभिर्जीवानां सञ्चितकर्मभिः । जायते । अथवा

शकाब्दे विक्रमार्कस्य नेत्राष्टवसुभूमिते । एकादश्यां सहः कृष्णे वचोऽमृतमितमिदं हरेः ॥ १ ॥ तत्र वृत्तालयपुरे लक्ष्मीनारायणालयात् । प्राच्यां महासनेऽराजत्स सूक्ष्मविशदांशुकः ॥२॥ पुष्पस्रक्शेखरै रम्यं नानाभक्तगणावृत्तम् । भक्तश्चिन्मयरावाख्यस्तमपृच्छत्कृतानतिः ॥ ३ ॥ सकारणशरीरा हि मायायां प्रलये हरे ! । जीवा अनेकशो लीनास्तिष्ठन्त्यव्यक्तभावतः ॥४॥ स्थूलसूक्ष्मशरीराप्तिपूर्वं तेषां विचित्रता । सर्गादौ जायते सा किं कर्मभिर्वा हरीच्छया ॥ ५ ॥ सोच्येत कर्मभिस्तर्हि स्याज्जैनमतसत्यता । वैशम्यनैर्घृण्याप्तिः स्यादिच्छयाऽपि हरेस्तदा ॥ ६ ॥ यथावदेतन्मे ब्रूहि सर्वज्ञस्त्वं यतः प्रभो ! । इति पृष्टो हरिः प्रीतस्तं प्रोवाच निशम्यताम् ॥ ७ ॥ कारणाख्यं शरीरं यत्तदविद्यात्मकं मतम् । तत्रास्ति सूक्ष्मं स्थूलं च वपुर्बीजे यथा द्रुमः ॥ ८ ॥

हरीच्छया हरेस्तव सङ्कल्पेन । जायते ॥ ५ ॥ सेति । सा विचित्रता । यदि । कर्मभिः केवलैर्जीवानां सञ्चितकर्मभिः । उच्येत । तर्हि । जैनमतसत्यता । स्यात् । यतस्ते हि केवलं कर्मभिरेव जगदुत्पत्तिं ब्रुवन्तीतिभावः । यदि । हरेस्तव । इच्छया । सा । उच्येत । तदापि । वैषम्यनैर्घृण्याप्तिः । स्यात् । केषांचिद्ब्राह्मादितया सर्जनेन केषांचिद्दाहकादितया सर्जनेन च त्वयि विषमता निर्घृणतारूपदोषापत्तिर्भवेदित्यर्थः ॥ ६ ॥ यथावदिति । हे प्रभो ! । यतोहेतोः । त्वम् । सर्वज्ञः 'यः सर्वज्ञः सर्ववि'दितिश्रुत्या सकलशास्त्रार्थादिवेत्ता । असि । ततोहेतोः । एतत् । मे मह्यम् । यथावद्यथार्थतया । ब्रूहि । इत्यमुना प्रकारेण । पृष्टश्चिन्मयरावाख्यभक्तेनानुयुक्तः । हरिः । प्रीतः प्रसन्नः सन् । हे भक्त ! । निशम्यताम् । इति । तं चिन्मयरावम् । प्रोवाच ॥ ७ ॥ 'साधुकारी साधुर्भवति पापकारी पापो भवति पुण्यः पुण्येन कर्मणा पापः पापेन कर्मणे'त्यादिश्रुतिगणं 'वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथाहि दर्शयति न कर्माविभागादितिचेन्नानादित्वादुपपद्यते चाप्युपलभ्यते' चेत्यादिन्यायं 'सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पय'दितिश्रुत्युदितसृष्टिप्रवाहानादित्वं च मनसि निधाय श्रीहरिरुत्तरयति सप्तभिः । कारणेति । हे भक्त ! । यत् । कारणाख्यम् । शरीरम् । अस्ति । तत् । अविद्यात्मकमनाद्यविद्यामयम् । मतम् । यथा । बीजे । द्रुमः । अस्ति । तथा । तत्र कारणशरीरे । सूक्ष्मम् । स्थूलं च । वपुः । अस्ति ॥ ८ ॥

अत इति । अतोऽस्य सूक्ष्मस्थूलशरीरयोर्बीजभूतत्वाद्धेतोः । तच्छरीरम् । कारणसंज्ञम् । भवति । तत्कारणशरीरम् । अनादि सनातनम् । सञ्चिताख्यकर्मभिः । संयुतं च । अस्ति इतीत्थम् । अवगम्यताम् ॥ ९ ॥ जीवेनेति । बीजत्वचोरिव । गन्धभूम्योरिव । तस्य कारणशरीरस्य । जीवेन सह । समवायो नित्यसम्बन्धः । अस्ति । अतोहेतोः । स तयोः समवायः । सार्वकालिकोऽनाद्यविद्योपहतात्मसंविदः सम्बन्धोऽस्याविद्ययानादिरित्यादिवाक्यैरनादिः । उच्यते ॥ १० ॥ पृथ्वीति । यथा । पृथ्वीगतानि । बीजानि नानाविधान्यन्नानि । प्रावृट्काले वर्षासमये । अम्भसः । संयोगं सम्बन्धम् । समवाप्यैव । पृथक् । पृथक् । प्ररोहन्ति ॥ ११ ॥ सकारणेति । तथा । सकारणाङ्गाः कारणदेहसहिताः । मायायाम् । लीना अव्यक्तभावेनावस्थिताः । जीवाः । ईशितुः सर्वनियन्तुः श्रीहरेः । दृष्टिम् । प्राप्य महापुरुषादिद्वारा परंपरयोपलभ्य । उत्पत्तिकाले सृष्टिसमये । ततो मायायाः सकाशात् । प्रादुर्भवन्ति । हि ॥ १२ ॥ प्राप्नुवन्तीति । ते जीवाः । स्वस्वकर्मानुसारतः स्वस्वकर्मभिः । देहान्सूक्ष्मस्थूलशरीरप्राप्तिपूर्वकदेवमनुष्यादिविचित्रभावानित्यर्थः । प्राप्नुवन्ति । पृथक् पृथक् । प्रवर्त्तन्ते च । खेचरत्व-भूचरत्वान्नाशित्व-तृणाशित्वादिभिन्न-भिन्नकर्माणि युञ्जन्तीत्यर्थः ।

अतः कारणसंज्ञं तद्भवतीत्यवगम्यताम् । अनादि तत्सञ्चिताख्यकर्मभिश्चास्ति संयुतम् ॥ ९ ॥ जीवेन समवायोऽस्ति तस्य बीजत्वचोरिव । गन्धभूम्योरिवातः स सार्वकालिक उच्यते ॥ १० ॥ पृथ्वीगतानि बीजानी प्रावृट्काले यथा ऽम्भसः । संयोगं समवाप्यैव प्ररोहन्ति पृथक् पृथक् ॥ ११ ॥ सकारणाङ्गा मायायां लीना जीवास्तथेशितुः । दृष्टिं प्राप्योत्पत्तिकाले ततः प्रादुर्भवन्ति हि ॥ १२ ॥ प्राप्नुवन्ति च देहांस्ते स्वस्वकर्मानुसारतः । पृथक् पृथक् प्रवर्त्तन्ते साङ्कर्यं नैव यान्ति च ॥ १३ ॥ नास्तिकाः केवलं प्राहुः कर्मणामेव कर्त्तृताम् । न तु तत्फलदेशस्य ततो दुष्टं हि तन्मतम् ॥ १४ ॥ कालस्य केचन प्राहुः केवलस्यैव कर्त्तृताम् । कृष्णेच्छायाः केवलायाः केचित्केवलकर्मणः ॥ १५ ॥

साङ्कर्यं सङ्करताम् । नैव । यान्ति च । सर्वेऽपि पृथक् पृथक् तया तिष्ठन्तीत्यर्थः ॥ १३ ॥ नास्तिका इति । नास्तिका जैनाः । केवलम् । कर्मणामेव । कर्तृताम् । प्राहुः । तत्फलदेशस्य कर्मफलप्रदस्य परमेश्वरस्य । कर्त्तृताम् । न तु नैव । प्राहुः । ततोहेतोः । तन्मतं नास्तिकसिद्धान्तम् । दुष्टम् । अस्ति । हि । अस्योत्तरस्यायंभावः । कर्माण्यृते जगद्विचित्रताया असद्भावसम्भवात्तर्त्यां परमेश्वरेच्छायाः केवलाया हेतुत्वे सति तस्मिन्वैषम्यादि दोषान्वयाच्च जगद्विचित्रतायां कर्माणि हेतुभूतानि सन्ति । तेषामपि जडत्वात्तद्द्वारा तद्विचित्रतायां परमेश्वरेच्छाया अपि हेतुत्वमस्त्यतोऽस्यामुभय हेतुत्वेन न कश्चिद्बाध इति ॥ १४ ॥ एवं केवलस्य कर्मणः केवलयाः परमेश्वरेच्छायाश्च जगद्विचित्रताहेतुतां निषिध्य तदुभयस्य तत्र सहहेतुतामुक्त्वा साम्प्रतं मतभेदेनोक्तां कालादीनां स्वतन्त्रतया कर्त्तृतां निषेधंस्तेषां कर्त्तृताप्रकारं युक्त्या प्रतिपादयन्नाह कालस्येत्यादिना । केचन । केवलस्य । कालस्यैव । कर्त्तृताम् । प्राहुः । केचित् । केवलायाः । कृष्णेच्छायाः। कर्त्तृतां प्राहुः । केचित् । केवलकर्मणः कर्त्तृतां प्राहुः ॥ १५ ॥

नेति । एतत् । मतम् । शास्त्रदर्शिनां वेदादिसच्छास्त्रप्रमाणानाम् । महताम् । सताम् । न भवति । नूनम् । यतः । क्वापि कदाचित् । ईश्वरस्य परमेश्वरस्य कृष्णस्य । इच्छयैव । कर्मणः । कर्त्तृता । अस्ति ॥ १६ ॥ कर्त्तृतेति । क्वापि तदिच्छयेश्वरेच्छया । कालस्यापि । कर्त्तृता । भवति । स्वातन्त्र्येणेश्वरेच्छां विहाय स्वतन्त्रतया तु । उभयोः कर्मकालयोरपि । कर्त्तृत्वम् । नास्त्येव ॥ १७ ॥ नेति । सर्वदा सर्वं कालम् । एकस्याः केवलायाः । ईश्वरेच्छाया एव । कर्त्तृता । नास्ति । अन्यथा केवलेश्वरेच्छायाः कर्त्तृत्वे । तस्येश्वरस्य । अनन्तशक्तीनां काल-कर्म-स्वभाव-मायापुरुषादीनाम् । निष्फलता प्रयोजनशून्यता । भवेत् ॥ १८ ॥ पृथगिति । शास्त्रेषु । एतेषां कर्मादीनाम् । पृथग्भिन्नभिन्नतया । कर्तृत्वम् । उपवर्णितमस्ति । यत् । तत्र । कारणं हेतुम् । ब्रवीमि । येन कथनेन । संशयाः । नश्येयुः ॥ १९ ॥ तत्रादौ कर्मणः कारणताप्रकारमाह त्रिभिः । कलाविति । कलौ कलियुगेऽपि । यदा । हरेः । एकान्तिकाः । भक्ताः । बहवः । भवेयुः । तदा । नृणां तदाश्रयिणां जनानाम् । क्रियाः कर्माणि सत्ययुगवत् । स्युः । यथा सत्ययुगे हि तपो ज्ञान ध्यानादिसर्वकर्मभिः सर्वेषां जनानामेकरूपत्वं तद्वत्कलावपीतिभावः ॥ २० ॥ भगवदिति ।

नैतत्सतां मतं नूनं महतां शास्त्रदर्शिनाम् । ईश्वरस्येच्छयैवास्ति कर्त्तृता क्वापि कर्मणः ॥ १६ ॥ कर्त्तृता भवति क्वापि कालस्यापि तदिच्छया । स्वातन्त्र्येण तु नास्त्येव कर्त्तृत्वमुभयोरपि ॥ १७॥ न सर्वदेश्वरेच्छया एकस्या एव कर्त्तृता । अन्यथाऽनन्तशक्तीनां तस्य निष्फलता भवेत् ॥१८॥ पृथक्कर्त्तृत्वमेतेषां यच्छास्त्रेषूपवर्णितम् । ब्रवीमि कारणं तत्र नश्येयुर्येन संशयाः ॥ १९ ॥ कलावपि हरेर्भक्ता भवेयुर्बहवो यदा । एकान्तिकास्तदा सत्ययुगवत्स्युः क्रिया नृणाम् ॥ २० ॥ भगवद्भक्तिरूपस्य कर्मणोऽत्र बलिष्ठता । ज्ञेया यया घोरकालप्रवृत्तिरपि दूरिता ॥ २१ ॥ तस्यैव कर्मणः शास्त्रे कर्त्तृत्वाद्यस्ति वर्णितम् । न त्वन्यकर्मण इति नैतज्जानन्ति नास्तिकाः ॥ २२ ॥ तथाऽऽदिमे सत्ययुगे कालस्यैव बलिष्ठता । आसीद्यया कर्मबलं सर्वेषामपि दूरितम् ॥ २३ ॥ तदाऽऽसन् ब्राह्मणाः सर्वे नान्यो वर्णस्तु कश्चन । सर्वे च सत्यसङ्कल्पा मनसा सृष्टिकारकाः ॥ २४ ॥

अत्र सत्ययुगवत्सर्वेषामेकक्रियत्वे । भगवद्भक्तिरूपस्य । कर्मणः । बलिष्ठता । ज्ञेया । कृष्णेच्छयेतिज्ञेयम् । यया भक्तिरूपकर्मबलिष्ठतया । घोरकालप्रवृत्तिरतिघोरस्य कलिकालस्य सम्बन्धयधर्मप्रवर्त्तनमपि । दूरिता कृता ॥ २१ ॥ तस्येति । शास्त्रे । तस्य भक्तिलक्षणस्य । कर्मण एव । कर्त्तृत्वादिवर्णितम् । अस्ति । अन्यकर्मणो भक्तीतर-जीवादृष्टरूपकर्मणः । न तु कर्त्तृत्वादि नैव वर्णितमस्ति । इत्येतत् । नास्तिका जैनाः । न जानन्ति ॥ २२ ॥ अथ कालस्य कारणताप्रकारमाह पञ्चभिः । तथेति । तथा तेन प्रकारेणैव । आदिमे सर्गारम्भकालीने । सत्ययुगे । कालस्यैव । बलिष्ठता । आसीत् । यया तथाविधया कालस्यबलिष्ठतया । सर्वेषामपि जनानाम् । कर्मबलम् । दूरितम् ॥ २३ ॥ तदेति । तदा सत्ययुगे । सर्वे जनाः । ब्राह्मणाः । आसन् ॥ २४ ॥

गृह इति । महात्मनां महानुभावानाम् । तेषां जनानाम् । गृहे गृहे । कल्पवृक्षा । आसन् । सर्वे । कृष्णस्य । भक्ताः । आसन् । सर्वे । धर्मपरायणाश्च । आसन् ॥ २५ ॥ कालस्येति । यदा । कृष्णेच्छया । ईदृगेवंविधम् । कालस्यैव । बलम् । अभवत् । तदा । आत्मनां जीवानाम् । कर्मादीनाम् । अकिञ्चित्करतैव । आसीत् ॥ २६ ॥ कर्तृतेति । शास्त्रेऽपि । तस्य तथाविधस्य कालस्यैव । कर्तृतादीनि । उक्तानि । सन्ति । हि । सर्वस्य । कालस्यादिसत्ययुगभिन्नसत्यादेः सकलकालस्य । स्वातन्त्र्येण । न तु कर्तृतादीनि शास्त्रे नैवोक्तानि सन्ति । इतीत्थम् । गम्यताम् ॥ २७ ॥ अथ हरीच्छायाः कारणताप्रकारमाह चतुर्भिः । प्रादुरिति । हरिः । भुवि । प्रादुर्भवन्सन् । यदा । अधुना । मया । अनेन । देहेन । सर्वेषाम् । स्वाश्रितानाम् । देहिनाम् ॥ २८ ॥ श्रेय इति । श्रेयः कल्याणमेव । कर्त्तव्यम् । अस्ति । तत्पात्रतेक्षणं तेषां योग्यताविचारः । न तु नैव कर्त्तव्यमस्ति । इतीच्छेत् । तदा । कर्म जीवादृष्टम् । कालः कलियुगादिश्च । किञ्चन किमपि ।

गृहे गृहे कल्पवृक्षास्तेषां चासन्महात्मनाम् सर्वे भक्ताश्च कृष्णस्य सर्वधर्मपरायणाः ॥ २५ ॥ कालस्यैव बलं हीदृग्यदा कृष्णेच्छयाऽभवत् । अकिञ्चित्करतैवासीत्कर्मादीनां तदाऽऽत्मनाम् ॥ २६ ॥ कर्तृतादीनि शास्त्रेऽपि तस्यैवोक्तानि सिन्त हि । नतु सर्वस्य कालस्य स्वातन्त्र्येणेति गम्यताम् ॥ २७ ॥ प्रादुर्भवन् भुवि हरिर्यदा चेच्छन्मयाऽधुना । देहेनानेन सर्वेषां स्वाश्रितानां तु देहिनाम् ॥ २८ ॥ श्रेय एवास्ति कर्त्तव्यं नतु तत्पात्रतेक्षणम् । तदा कर्म च कालो वा कर्त्तुं किञ्चन न क्षमौ ॥ २९ ॥ यथा कृष्णावतारेऽत्र गोपगोपीगवां कृतम् । पक्षिणां स्थावरणां च तेन श्रेयः स्वयोगतः ॥ ३० ॥ श्रेयः कृतं च दैत्यानामपि तेन जिघांसताम् । अत्र केवलमिच्छाया हरेर्भवति कर्त्तृता ॥ ३१ ॥ एवं व्यवस्था विज्ञेया कर्मादीनां सुबुद्धिभिः । स्वातन्त्र्यं पारतन्त्र्यं च तेषामपि यथातथम् ॥ ३२ ॥

कर्तुम् । न क्षमौ समर्थौ न भवतः । इतिद्वयोरेकसम्बन्धः ॥ २९ ॥ एवं पुरुषोत्तमस्याक्षरादिनीयन्तुः स्वस्येच्छाबलमुक्त्वा तदेव स्वकीयकृष्णावतारदृष्टान्तेन द्रढयति सार्द्धेन । यथेति । यथा । कृष्णावतारे सति । अत्र लोके । गोपगोपीगवाम् । पक्षिणाम् । स्थावराणां तरूणाम् । चकारान्मालाकार-कुब्जाद्यनेकेषामपि । श्रेयः । तेन कृष्णेन । स्वयोगतः स्वसम्बन्धेन । कृतम् ॥ ३० ॥ श्रेय इति । किञ्च । तेन कृष्णेन । जिघांसतां स्वं हन्तुमिच्छताम् । दैत्यानां पुतनाऽघासुरादीनामपि । श्रेयः । कृतम् । अत्रैवंविधार्थे । केवलम् । हरेः । इच्छायाः । कर्त्तृता । भवति ॥३१॥ एवमिति । एवममुना प्रकारेण । सुबुद्धिभिः सुमतिभिर्भक्तैः । कर्मादीनाम् । व्यवस्था पृथक्कर्त्तृताऽव्यवस्थितिः । विज्ञेया । तेषां कर्मादीनाम् । स्वातन्त्र्यम् । पारतन्त्र्यं चापि । यथातथं यथावत् । विज्ञेयम् । अस्यायंभावः । उक्तरीत्या कर्मकालयोर्हरीच्छायुक्ततया स्वतन्त्रत्वे तदयुक्ततया परतन्त्रत्वे तु नास्ति संशयो यतो भगवदिच्छायुक्ते भक्तिरूपे कर्मणि स्वतन्त्रतायास्तद्रहितेऽन्यकर्मण्यकिञ्चित्करत्वेन परतन्त्रतायास्तथा तदिच्छायुक्तादिसत्ययुगे स्वतन्त्रतायास्तद्वर्जितान्यसत्ययुगादौ परतन्त्रतायाश्च सम्यग्दर्शनात् । किन्तु कृष्णेच्छायाः स्वतन्त्रत्वं परतन्त्रत्वं च कथमितिचेत्सा द्विविधा-

सामान्या विशेषा च तत्र स्वधामस्थतया तेन कृताया जगत्सर्गेच्छायाः कालकर्मादिसहायापेक्षत्वात्सामान्यतया परतन्त्रत्वं यदा स स्वयमुक्तरीत्या प्रादुर्भूय सर्वश्रेयइच्छां विदधाति तदा तस्याः । विशेषतया स्वतन्त्रत्वमिति ॥ ३२ ॥ मुख्य इति । सर्वेषां कालकर्मादीनाम् । मुख्यः स्वतन्त्रः । कर्त्तोद्भावयिता । पाता रक्षिता । हर्त्ता तिरोभावयिता च । सर्वथा । श्रीकृष्णः साक्षाच्छ्रीहरिरेव । भवति । इत्येवम् । ज्ञात्वा । स श्रीकृष्ण एव । सेव्यतां भवद्भिः सर्वैरुपास्यताम् ॥३३॥ सुधेति । इत्येवविधाम् । निजगुरोः स्वकीयहितोपदेष्टुः । तस्य श्रीहरेः । सुधातुल्याम् । वाणीम् । निशम्य । सः । नृपः । क्षत्रियचिन्मयरावभक्तः । निजहृदि स्वमानसे । परम् । तोषम् । आपत् । तथा । सदःसंस्थाः । भक्ताः । ये । अन्ये । मुनयः । गृहिणश्च । तेऽपि । परं तोषम् । आपुः । ततस्तदनन्तरम् । सर्वे चिन्मयरावादयो भक्ताः । हितकरं स्वहितकारकम् । तं श्रीहरिम् । भृशं विनयतः नेमुः ॥ ३४ ॥ स्वातन्त्र्यं यो हरिः प्राह स्वेच्छायाः कर्मकालयोः । अस्वातन्त्र्यं यथावत्स स्वस्मिन भक्तिं ददातु मे ॥१॥

मुख्यः कर्त्ता तु सर्वेषां पाता हर्त्ता च सर्वथा । श्रीकृष्ण एव भवतीत्येवं ज्ञात्वा स सेव्यताम् ॥ ३३ ॥
सुधातुल्यां वाणीमिति निजगुरोस्तस्य स नृपो निशम्यापत्तोषं निजहृदि तथान्ये च मुनयः ।
सदःसंस्था भक्ता गृहिण उत ये तेऽपि च परं ततः सर्वे नेमुर्भृशविनयतस्तं हितकरम् ॥ ३४ ॥

इति श्रीहरिवाक्यसुधासिंधौ शतानन्दमुनिविरचिते द्विशताधिकषष्ठस्तरङ्गः ॥ २०६ ॥ ६ ॥

शकाब्दे विक्रमार्कस्य नेत्राष्टवसुभूमिते । मार्गकृष्णचतुर्दश्यां वचोऽमृतमिदं हरेः ॥ १ ॥
तत्र वृत्तालयपुरे लक्ष्मीनारायणालये । व्यराजत्सितवस्त्रोऽसावुपविष्टः सदासने ॥ २ ॥
त्यागिभिर्गृहिभिर्भक्तैर्नानादेशागतैर्वृतम् । नत्वा चिन्मयरावस्तं पृच्छति स्म पुरःस्थितः ॥ ३ ॥

इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्स्वनुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां द्विशताधिकषष्ठस्तरङ्गः ॥२०६॥६॥

आसुराणां तु दैवत्वे साधनं च तथा हरेः । उक्तोऽन्वयस्य भेदश्च व्यतिरेकस्य सप्तमे ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८८२) मार्गकृष्णचतुर्दश्यां मार्गशीर्षमासीयकृष्णपक्षसम्बन्धिन्यां चतुर्दशीतिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । वृत्तालयपुरे । लक्ष्मीनारायणलये श्रीलक्ष्मीनारायणमन्दिरात्पूर्वप्रदेशे इत्यर्थः । सदासने स्वास्तृतोत्तमाश्वकासने । उपविष्टः । सितवस्त्रः परिहितसकलश्वेतवसनः । असौ श्रीहरिः । व्यराजदुपवेशनचातुर्येण शुशुभे ॥ २ ॥ त्यागिभिरिति । नानादेशागतैः । त्यागिभिः । गृहिभिः । भक्तैः । वृतं सभायां परिवेष्टितम् । तं श्रीहरिम् । नत्वा । पुरःस्थितोऽग्रे निषण्णः । चिन्मयरावः । पृच्छति स्म ॥ ३ ॥

श्रूयन्त इति । हे प्रभो ! । दैवा दैव्यासम्पदायुक्ताः । तथा । आसुरा आसुर्यासम्पदायुक्ताः । यद्वा दैवा विष्णुभक्तिपराः । आसुरास्तद्विपरीताः । इति । द्विविधाः । जीवाः । श्रूयन्ते । दैव्यासुर्यौ सम्पदौ गीतायामभयं सत्त्वसंशुद्धिरित्यादिनोक्ते । द्वितीयार्थे प्रमाणमुक्तमग्निपुराणे । 'द्वौ भूतसर्गौ लोकेऽस्मिन्दैव आसुर एव च । विष्णुभक्तिपरो दैव आसुरस्तद्विपर्यय'इति । तत्र तेषु दैवासुरेषु मध्ये । आसुरा जीवाः । क्वचित्कदाचित् । दैवत्वम् । यायुः । अथवा । न यायुः । तत् । वद मह्यं ब्रूहि ॥ ४ ॥ 'इत्थं चिन्मयरावाख्यभक्तेन भक्तिधर्मजः । स पृष्टो निजगादेति सुखयंस्तं पराञ्जिजान्' । आसुराणामिति । हे भक्त ! । आसुराणां जीवानां तु । दैवत्वं दैवत्वापत्तिः । सर्वथैव । दुर्लभम् । हि । एवं सामान्यत आसुराणां दैवत्वापत्तिदुर्लभतामुक्त्वाऽऽसुरत्वस्य साहजिकत्वमासुरसङ्गजत्वं च मनसि निधाय पुनराह । ते आसुरा जीवाः । जात्यासुरा जन्मत एवासुरभावयुक्ताः । तथा च । आविष्टासुरा आसुरसङ्गजातासुरत्वयुक्ताः । इतीत्थम् । द्विधा द्विप्रकाराः । सन्ति ॥ ५ ॥ तत्रेति । तत्र तेषु द्विधासुरेषु मध्ये । द्वितीया आविष्टासुरास्तु । उत्कृष्टसतां साक्षाद्भगवदेकान्तिकसाधूनाम् । निश्छद्मसेवया निष्क-

श्रूयन्ते द्विविधा जीवाः प्रभो ! दैवास्तथाऽसुराः । तत्रासुराः क्वचिद्यायुर्दैवत्वं वा न तद्वद ॥ ४ ॥ श्रीहरिरुवाच—
आसुराणां तु दैवत्वं दुर्लभं सर्वथैव हि । जात्यासुरास्तथाऽऽविष्टासुरा इति च ते द्विधा ॥ ५ ॥ तत्र द्वितीयास्तूत्कृष्टसतां निश्छद्मसेवया । कृष्णभक्त्या चासुरत्वमुज्झित्वा यान्ति दैवताम् ॥६॥ आद्यास्तु भक्तिं सत्सङ्गं नित्यं कुर्वन्त एव चेत् । जह्युर्देहांस्तदा लीना भवेयुर्ब्रह्मणि ध्रुवम् ॥ ७ ॥ निर्यायुश्च पुनस्तस्माल्लीयेरंस्तत्र ते पुनः । मुहुरेवं हि भवतां तेषामासुरता क्षयेत् ॥ ८ ॥ एतदन्य उपायो हि नास्त्येवासुरताक्षये । इत्युक्तः सोऽभवत्तुष्टः शोभारामस्ततोऽब्रवीत् ॥ ९ ॥ अन्वयो व्यतिरेकश्च मायायां मायिकेष्वतः । कीदृशोऽस्ति तव स्वामिन्नित्युक्तः स तमब्रवीत् ॥ १० ॥

पटया परिचर्यया । कृष्णभक्त्या साक्षाद्धरेः सधर्मनवधाभक्त्याचरणेन च । आसुरत्वम् । उज्झित्वा हित्वा । दैवताम् । यान्ति ॥ ६ ॥ आद्या जात्यासुरास्तु । नित्यम् । सत्सङ्गं हर्येकान्तिकसाधूसमागमम् । भक्तिम् । कुर्वन्तः सन्त एव । चेद्यदि । देहान् । जह्युः । तदा । ब्रह्मण्यक्षरब्रह्मप्रकाशे । लीनाः । भवेयुः । ध्रुवम् ॥ ७ ॥ निर्यायुरिति । ते आसुराः । पुनर्भूयोऽपि । तस्माद् ब्रह्मतेजसः । सकाशात् । निर्यायुस्तेषां भक्त्याऽऽसुरभावविनाशननिश्चयं बुध्वा ततस्तन्निष्क्रमणासामर्थ्यं च वीक्ष्यैते इतो निःसरन्त्विति हरिकृतसङ्कल्पेन निःसरेयुः । पुनः । तत्र ब्रह्मप्रकाशे । लीयेरन् । हरिकृतसङ्कल्पबलात्ततो निष्क्रम्य पुनर्भक्तिं कृत्वा भूयोऽपि तत्र लीना भवेयुरित्यर्थः । एवममुना प्रकारेण । मुहुर्भूयोभूयोऽनन्तवारानित्यर्थः । भवतां जायमानानाम् । तेषामासुराणाम् । आसुरता । क्षयेद्विनाशं यायात् ॥ ८ ॥ एतदिति । हे भक्त ! । आसुरताक्षये । एतदन्यो मदुक्तेतरः । उपायः । नास्त्येव । हि । इतीत्थम् । उक्तः श्रीहरिणा दत्तोत्तरः । स चिन्मयरावभक्तः । तुष्टः । अभवत् । ततस्तदनन्तरम् । शोभाराम एतन्नामा वटपत्तनावासः । शास्त्रविद्विप्रः । अब्रवीच्छ्रीहरिं पप्रच्छ ॥९॥ अन्वय इति । हे स्वामिन् ! । मायायाम् । मायिकेषु मायाकार्येषु तत्त्वादिषु

तव । अन्वयः । अतो मायातत्कार्येभ्यः । व्यतिरेकश्च । किदृशः किंविधः । अस्ति त्वं सार्द्धभागेन मायातत्कार्येष्वन्वयं प्राप्यार्द्धभागेन ततो व्यतिरेकतया पृथक्त्वावस्थितोऽसि किमथवा प्रकारान्तरेणेत्यर्थः । इत्यमुना प्रकारेण । उक्तः शोभारामशास्त्रिणानुयुक्तः । स श्रीहरिः । तं शोभारामशास्त्रिणम् । अब्रवीत् ॥ १० ॥ मायेति । हे विप्र ! । मायातदीयकार्येषु । अर्द्धस्य । हरेः । अन्वयः । न भवति । अर्द्धस्य हरेः । व्यतिरेकश्च न भवति । इति । अवगम्यताम् ॥ ११ ॥ किन्त्विति । किन्तु । प्रभुरनन्तैश्वर्यैकाश्रयतयाऽतिसमर्थः । स्वयं श्रीहरिः । स्वरूपेण स्वीयमनोहरमूर्त्त्या । पृथक् मायातत्कार्येभ्यः पृथक्कृतया । अवस्थितोऽक्षरधामनि दिव्यसिंहासनेऽनन्तमुक्तोपासितचरणारविन्दतया स्थितः सन्नेव । सर्वत्र मायातत्कार्येषु । अन्वीय स्वकीयान्तर्यामिशक्त्यान्वयं प्राप्य । वर्त्तते । हि यतः । तस्य श्रीहरेः । ईदृशमेवंविधम् । सामर्थ्यम् । अस्ति ॥१२॥ नेति । मायायाम् । प्रवेशेऽन्वये सत्यपि । अस्य हरेः । अशुद्धत्वभयं मायायादोषरूपत्वात्तत्सम्बन्धेन दोषयुक्तताभीतिः । क्वचित्कदाचिदपि । नास्ति । यतोहेतोः । तस्य श्रीहरेः । प्रवेशेन । सा मायापि । अक्षरात्मतामक्षरभावम् । याति । अतएव भगवद्गीतायां मम योनिर्महद्ब्रह्मेति श्रीकृष्णेनोक्त-

मायातदीयकार्येषु हरेरर्द्धस्य नान्वयः । नार्द्धस्य व्यतिरेकश्च भवतीत्यवगम्यताम् ॥ ११ ॥ किन्तु स्वयं स्वरूपेण पृथगेव स्थितः प्रभुः । वर्त्ततेऽन्वीय सर्वत्र साम्र्थ्यं तस्य हीदृशम् ॥१२॥ नास्य प्रवेशे मायायामशुद्धत्वभयं क्वचित् । यतस्तस्य प्रवेशेन साऽपि यात्यक्षरात्मताम् ॥ १३ ॥ अपि तत्कार्यतत्त्वानि तस्य चानुप्रवेशतः । ब्रह्मतां यान्त्यतो नेशस्तत्सम्बन्धेन दुष्यति ॥ १४ ॥ धाम्ना स्वेनैव स सदा निरस्तकुहकोऽस्ति हि । इति श्रीमद्भागवते बहुधाऽस्ति निरूपितम् ॥ १५ ॥ वृक्षस्य बीज आकाशो योऽन्वितोऽस्ति स एव हि । तच्छाखापत्रपुष्पादावन्वितो भवति ध्रुवम् ॥ १६ ॥ तथाप्यसौ न वृक्षस्य छेदे दाहे च कर्हिचित् । छिद्यते दह्यते वाऽपि यत्तद्रूपं हि तादृशम् ॥ १७ ॥

मस्तीतिभावः ॥ १३ ॥ अपीति । किञ्च । तस्य श्रीहरेः । अनुप्रवेशतः ! तत्कार्यतत्त्वान्यपि । ब्रह्मताम् । यान्ति । अतएव छान्योग्य–बृहदारण्यादिषु कं ब्रह्म खं ब्रह्म प्राणो ब्रह्म मनो ब्रह्मे'त्यादिना ब्रह्मता तत्त्वानामुक्ता भवतीतिभावः अतोहेतो । ईशः स्वसम्बन्धेन तद्गतां स्वकीयब्रह्मभावतापादनसमर्थः श्रीहरिः । तत्सम्बन्धेन मायातत्कार्यसम्बन्धेन । न दुष्यति ॥ १४ ॥ अत्र श्रीमद्भागवतवचनप्रामाण्यमाह । धाम्नेति । स श्रीहरिः । स्वेन स्वकीयेन । धाम्ना प्रतापेनैव । सदा सर्वकालम् । निरस्तकुहको मायादोषरूपकपटसम्बन्धरहितः । अस्ति । हि । इतीत्थम् । श्रीमद्भागवते । बहुधा । निरूपितम् । अस्ति ॥ १५ ॥ एतदेवदृष्टान्तेनापि त्रिभिः । वृक्षस्येति । यः । आकाशः । वृक्षस्य । बीजे । अन्वितः । अस्ति । स आकाश एव । तच्छाखापत्रपुष्पादौ । अन्वितः । भवति । ध्रुवम् ॥ १६ ॥ तथेति । तथापि । असावाकाशः । वृक्षस्य । छेदे । दाहे च सत्यपि । कर्हिचित् । न छिद्यते । न दह्यते च । यद्यतोहेतोः । तद्रूपमाकाशस्वरूपम् । तादृशं निर्लेपत्वगुणेन सर्वदा ततः पृथगेव । अस्ति । हि ॥ १७ ॥

एवमिति । एवममुना प्रकारेण । हरिः । सकार्यमायायाम् । अन्वीयान्वयमन्तर्यामिशक्त्या प्राप्यापि । ततः सकार्यमायातः । स्वरूपेण तद्दोषवर्जितत्वान्निर्लेप-स्वस्वरूपेण । सर्वदा । पृथगेव । वर्त्तते । यतः । हरिः । अच्युतः स्वैश्वर्यगुणशक्त्यादिच्युतिवर्जित एव । अस्ति ॥ १८ ॥ इतीति । इत्येवंविधम् । सुधोपमम् । हरेः । वचनम् । निशम्य । द्विजवरः । स शोभारामः । मुदम् । ययौ । तथा । सदोगताः सभायामुपविष्टाः । अपरे । सकलाः । मुनिगणाः । गृहिणश्च । मुमुदिरे । हि ॥ १९ ॥ यो दैवताप्त्युपायं च स्वान्वयव्यतिरेकयोः । भेदं प्राह स दद्यान्मे भक्तिं स्वैकान्तिकीं हरिः ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासक-श्रीहरिकृष्णभगवत्पदगुरुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां द्विशताधिकसप्तमस्तरङ्गः ॥ २०७ ॥ ७ ॥

ध्यानस्थितिर्हरे रूपे हरिभक्तस्य योगिनः । दृष्टान्तेनेर्णनामेस्तु ततोऽष्टम उदीरिता ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । पौषशुक्लचतुर्थ्यां पौषमाससम्बन्धिशुक्लपक्षीयचतुर्थी । तिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । वृत्तालयपुरे । लक्ष्मीनारायणालये श्रीलक्ष्मीनारायण-

एवं सकार्यमायायामन्वीयापि हरिस्ततः । पृथगेव स्वरूपेण वर्त्तते सर्वदाऽच्युतः ॥ १८ ॥ इति हरेर्वचनं स सुधोपमं द्विजवरस्तु निशम्य मुदं ययौ । मुनिगणा गृहिणश्च तथाऽपरे मुमुदिरे सकला हि सदोगताः ॥ १९ ॥

इति श्रीहरिवाक्यसुधासिंधौ शतानन्दमुनिविरचिते द्विशताधिकसप्तस्तरङ्गः ॥ २०७ ॥ ७ ॥

शकाब्दे विक्रमार्कस्य नेत्राष्टवसुभूमिते । पौषशुक्लचतुर्थ्यां च वचोऽमृतमिदं हरेः ॥ १ ॥ तत्र वृतालयपुरे लक्ष्मीनारायणालये । उपविष्टः स्वासनेऽसौ व्यराजत सितांशुकः ॥ २ ॥ परितोऽसौ भक्तसङ्घैः शृण्वन् पद्यानि सज्जनैः । गीयमानानि कृष्णस्य किञ्चिद्ध्यानपरोऽभवत् ॥ ३ ॥ ततो नेत्रे स उन्मील्य वीक्षमाणः सतोऽब्रवीत् । अध्यात्मवार्त्ता क्रियते मया तां शृणुताखिलाः ॥ ४ ॥ नेत्रस्य वृत्तिरेषा सा त्वरूपेव लक्ष्यते । स्थूले पदार्थे नेत्राग्रं प्राप्ते सा प्रतिरुध्यते ॥ ५ ॥

मन्दिरस्य पूर्वप्रदेशे । स्वासने स्वास्तृतोत्तमोच्चमश्वासने । उपविष्टः । सितांशुकः परिधृतसकलश्वेतवसनः । असौ श्रीहरिः । व्यराजत पार्श्विकावष्टम्भपूर्वेणोपवेशनचातुर्येण शुशुभे ॥ २ ॥ परीत इति । भक्तसङ्घैर्नानादेशागतैस्त्यागिभिर्गृहिभिश्च स्वाश्रितजनवृन्दैः । परीतः सभायां परिवेष्टितः । असौ श्रीहरिः । सज्जनैर्मुक्तानन्दादिमुनिभिः । गीयमानानि सवाद्यंगीतानि । कृष्णस्य । पद्यानि । शृण्वन्सन् । किञ्चित्किञ्चित्कालपर्यन्तम् । ध्यानपरो नासाग्रदृक्स्थैर्याचरणपूर्वमन्तर्दृष्टिः । अभवत् ॥ ३ ॥ तत इति । ततस्तदनन्तरम् । स श्रीहरिः । नेत्रे स्वनयने । उन्मील्य बहिर्वृत्तिनिकुला । वीक्षमाणः सभां परितः पश्यन्सन् । सतः स्वाग्रोपविष्टमुक्तानन्दगोपालानन्दादिमुनीन् । अब्रवीत् । हे मुनयः ! । मया । अध्यात्मवार्त्ता । क्रियते । तामध्यात्मवार्त्ताम् । अखिला यूयं सर्वे शृणुत ॥ ४ ॥ नेत्रस्येति । एषा । या नेत्रस्य । वृत्तिः । अस्ति । सा । अरूपा । इव । लक्ष्यते । तथापि । स्थूले । पदार्थे । नेत्राग्रं नयनपुरःप्रदेशम् । प्राप्ते सति । सा अरूपाऽपि नेत्रवृत्तिः । प्रतिरुध्यन्तेऽग्रे

गन्तुं न शक्नोतीत्यर्थः ॥ ५ ॥ अत इति । अतोहेतोः । सा वृत्तिः । स्थूलैव । ज्ञेया । तथा । पृथ्वीतत्त्वमयी । ज्ञेया । यदा । भक्तो भगवद्ध्याननिष्ठो योगी । तां नेत्रवृत्तिम् । परमात्मनः प्रत्यक्षस्य श्रीहरेः । स्वरूपे । योजयति ध्यानकाले प्रेरयति । तदेत्युत्तरेण सम्बन्धः ॥ ६ ॥ तदेति । तदा तु । चिन्तनं भगवद्ध्यानम् । कुर्वता । तेन भक्तेन । सा नेत्रवृत्तिः । प्रथमतः । सूक्ष्मरज्जुरिव । आयता दीर्घा । पीतवर्णा सुवर्णसूत्रवत्पीतरूपा च । लक्ष्यते ईक्ष्यते ॥ ७ ॥ ऊर्णनाभिरिति । यथा । ऊर्णनाभिर्ल्लूता । ऊर्णां स्वलालासूत्रम् । स्तम्भादाद्यस्थाणोः । स्तम्भान्तरावधि ततो नातिदूरान्यस्तम्भपर्यन्तम् । वितत्य विस्तार्य स्वयमूर्णनाभिः । क्वचित् । आद्ये प्रथमे । स्तम्भे । आस्ते । क्वापि कदाचित् । अन्तिमे द्वितीयेस्तम्भे । आस्ते लालासूत्रेण गत्वा तिष्ठति ॥ ८ ॥ क्वचिदिति । क्वचित् । तयोर्द्वयोस्तम्भयोः । मध्ये । आस्ते । तथा । स भगवद्ध्यानकर्त्ता । भक्तजीवः । क्वचित् । निजान्तःकरणे आद्यस्तम्भस्थानीये स्वान्तःकरणे । आस्ते । क्वचित् । कृष्णे द्वितीयस्तम्भस्थानीये श्रीहरिस्वरूपे । आस्ते । क्वच क्वचित् । अन्तरे स्तम्भद्वयनिबद्धलालासूत्रस्थानीयया अन्तःकरणकृष्णस्वरूपलग्नया नेत्रवृत्तिरज्ज्वा मध्यप्रदेशे । आस्ते ॥ ९ ॥

अतः स्थूलैव सा ज्ञेया पृथ्वीतत्त्वमयी तथा । भक्तस्तु तां योजयति स्वरूपे परमात्मनः ॥ ६ ॥
तदा तु सा प्रथमतः सूक्ष्मरज्जुरिवायता । लक्ष्यते पीतवर्णा च कुर्वता तेन चिंतनम् ॥ ७ ॥
ऊर्णनाभिर्यथैवोर्णां स्तम्भात्स्तम्भान्तरावधि । वितत्यास्ते क्वचित्स्तम्भ आद्ये क्वाप्यन्तिमे स्वयम् ॥ ८ ॥
क्वचिदास्ते तयोर्मध्ये भक्तजीवस्तथा च सः । क्वचिन्निजान्तःकरणे क्वचित्कृष्णे क्वचान्तरे ॥ ९ ॥
वृत्तौ तस्मिन्वर्त्तमान ऊर्णायामूर्णनाभिवत् । पीताऽपि सा चाम्बुतत्त्वप्रधाना लक्ष्यते सिता ॥ १० ॥
अग्नितत्त्वप्रधानाऽथ साऽरुणा तेन दृश्यते । वायुतत्त्व प्रधानाऽथ हरिद्वर्णेक्ष्यते च सा ॥ ११ ॥
व्योमतत्त्वप्रधानाऽथ श्यामा सा तेन वीक्ष्यते । ततः सा निर्गुणा भूत्वा जायते प्रकाशभाक् ॥ १२ ॥

वृत्ताविति । ऊर्णायाम् । ऊर्णनाभिवत् । तस्मिन् भक्तजीवे । वृत्तौ पूर्वोक्तनेत्रवृत्तिरज्ज्वाम् । वर्त्तमाने पुनः पुनर्गमनागमनं कुर्वति सतीत्यर्थः । सा वृत्तिरज्जुः । पीताऽपि । अम्बुतत्त्वप्रधाना भगवद्ध्यानातिशयबलेन स्थूलायाः पृथिव्याः सम्बन्धिनीं स्वनिष्ठां स्थूलतां परित्यज्य ततः सूक्ष्मा जलतत्त्वप्रधाना सती । सिता श्वेतवर्णा । लक्ष्यते ध्याननिष्ठभक्तेनेक्ष्यते । इदं भगवद्ध्यानातिशयबलेन वृत्तिसूक्ष्मत्वमग्रेऽपि यथानुक्रमं वेदितव्यम् ॥ १० ॥ अग्नीति । अथानन्तरम् । तेन भक्तेन । साम्बुतत्त्वप्रधाना वृत्तिः । अग्नितत्त्वप्रधाना सती । अरुणा रक्तवर्णा । दृश्यते । अथानन्तरम् । साऽग्नितत्त्वप्रधाना वृत्तिः । वायुतत्त्वप्रधाना सती । हरिद्वर्णा । ईक्ष्यते ॥ ११ ॥ व्योमेति । अथानन्तरम् । तेन भक्तेन । सा वायुतत्त्वप्रधाना वृत्तिः । व्योमतत्त्वप्रधाना सती । श्यामा कृष्णवर्णा । वीक्ष्यते । ततस्तदनन्तरम् । सा व्योमतत्त्वप्रधाना वृत्तिः । निर्गुणा गुणकार्याकाशादिभावं परित्यज्य गुणातीतात्मभावयुक्ता । भूत्वा । अतिप्रकाशभाक् । जायते ॥ १२ ॥

कृष्णेति । अथानन्तरम् । साऽऽत्माकारत्वेन निर्गुणा वृत्तिः । कृष्णस्वरूपाकारा निरवधिकातिशयसुखात्मकश्रीहरिस्वरूपाकारा सती । सुखात्मिका सुखसन्दोहानुभवरूपा । लक्ष्यते । एवममुना प्रकारेण । अभ्यसतो भगवद्ध्यानाभ्यासं कुर्वतः । तस्य भक्तस्य । सा सुखात्मिका वृत्तिः । कृष्णे श्रीहरिस्वरूपे एव । लीयते स्वरूपविस्मरणपूर्वं तदेकसुखाकारतया तिष्ठतीत्यर्थः ॥ १३ ॥ इयमिति । हरिभक्तस्य । अस्य । योगिनः । इयमात्मस्वरूपविस्मरणपूर्वं केवलं श्रीहरिस्वरूपसुखानुभवरूपैव । निद्रा । उक्ता । एवकारः प्रसिद्धनिद्राव्यवच्छेदार्थः । यो भक्तः । एवमुक्तप्रकारेण । बुभूषुर्भवितुमिच्छुः । भवेत् । स भक्तः । सर्वदा । शुचिः शुद्धात्मस्वरूपः । भवेत् ॥ १४ ॥ एतदेव दृष्टान्तेन द्रढयति द्वाभ्याम् । देवमिति । यद्वद्यथा । देवं विष्ण्वादिदेवताम् । पुपूजिषुः पूजयितुमिच्छुर्जनः । आदौ प्रथमतः । देववत् । शुचिः शुद्धः । भूत्वा । ततस्तदनन्तरम् । देवम् । समर्चयेत् । तदा । तत्फलं देवपूजाफलम् । प्राप्नुयात् ॥ १५ ॥ देहेति । तद्वत्तथा । स भक्तः । साङ्ख्यज्ञानाम्बुना साङ्ख्यशास्त्रविचारप्राप्तात्मानात्मविवेकवारिणा । देहत्रयमलं स्थूलादिदेहत्रिकपङ्कम् । धूत्वा क्षालयित्वा । शुचिरिति । शुद्धात्मस्वरूपः सन् । हरिम् । ध्यायेत् । तदा । अतिसुखभागुक्त-

कृष्णस्वरूपाकाराऽथ लक्ष्यते सा सुखात्मिका । एवमभ्यसतस्तस्य लीयते कृष्ण एव सा ॥ १३ ॥ इयमेवास्य निद्रोक्ता हरिभक्तस्य योगिनः । एवं बुभूषुर्यो भक्तः स भवेत्सर्वदा शुचिः ॥ १४ ॥ देवं पुपूजिषुर्यद्वद् भूत्वाऽऽदौ देववच्छुचिः । ततः समर्चयेद्देवं प्राप्नुयात्तत्फलं तदा ॥ १५ ॥ देहत्रयमलं तद्वत्सांख्यज्ञानाम्बुना स च । धूत्वा शुचिर्हरिं ध्यायेत्तदाऽतिसुखभाग्भवेत् ॥ १६ ॥ पीत्वा वचोऽमृतमिति स्वगुरो रसालं ते साधवश्च गृहिणोऽपि तदीय भक्ताः । तस्मिन्महासदसि ये सकला निषण्णास्ते चाप्नुवन्ननु मुदं परमां स्वहृत्सु ॥ १७ ॥

इति श्रीहरिवाक्यसुधासिंधौ शतानन्दमुनिविरचिते द्विशताधिकाष्टमस्तरङ्गः ॥ २०८ ॥ ८ ॥

शकाब्दे विक्रमार्कस्य नेत्राष्टवसुभूमिते । शुक्लाष्टम्यां सहस्यस्य वचोऽमृतमिदं हरेः ॥ १ ॥

विधातिशयितभागवतसुखयुक्तः । भवेत् ॥ १६ ॥ पीत्वेति । इत्येवंविधम् । रसालमलौकिकरसात्मकम् । स्वगुरोः श्रीहरेः । वचोऽमृतम् । पीत्वा । तदीयभक्ताः । ते मुक्तानन्दादयः । साधवः । तस्मिन् । महासदसि । निषण्णाः । ये । तदीयभक्ताः । सकलाः । गृहिणः । ते चापि । स्वहृत्सु स्वस्वमानसेषु । परमाम् । मुदम् । आप्नुवन् ॥ १७ ॥ स्वभक्तयोगिनो ध्यानाचलस्थितिरुदीरिता । स्वमूर्त्तौ येन हरिणा तां ददातु स्थितिं स मे ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्स्वगुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां द्विशताधिकाष्टमस्तरङ्गः ॥ २०८ ॥ ८ ॥

गुणात्मकं मायिकं च निर्गुणं यत्सुखं हरेः । भोगे तयोर्भेद उक्तो नवमे तु पृथक् स्फुटम् ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८८२) सहस्यस्य । शुक्लाष्टम्यां शुक्लपक्षसम्बन्धिन्यामष्टमीतिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥

तत्रेति । तत्र तिथौ । वृत्तालयपुरे । लक्ष्मीनारायणालयात् । पुरस्तात् पूर्वप्रदेशे । स्वीये स्वकीये । आसने । उच्चैस्तरे स्वास्तृतमश्वविष्टरे । सिताम्बरः परिहितसकलश्वेतवसनः । स श्रीहरिः । व्यराजत्स्ववासादागत्य तदारोहणोपवेशनलाघवेनातिशुशुभे ॥ २ ॥ नानेति । नानाभक्तैर्नानादेशायातत्यागिगृहिस्वाश्रितानेकजनैः । परिवृत्तः सभायां परिवेष्टितः । स श्रीहरिः । स्वाग्रगान्स्वपुरःप्रदेशावस्थितान् । सतो मुक्तानन्दादिसाधून् । अपृच्छत् । हे मुनयः । गुणात्मकं मायाकार्यसत्त्वादित्रिगुणमयम् । यत् । सुखम् । अस्ति । तत्सुखम् । त्र्यवस्थासु सात्त्विकं जाग्रति राजसं स्वप्ने तामसं सुषुप्तावेवं तिसृष्ववस्थासु । अनुभूयते लौकिकजनैर्यथाकर्मकृतानुभवं यथावद्दृश्यत इत्यर्थः ॥ ३ ॥ एवमिति । एवममुना प्रकारेण । निर्गुणं मायाकार्यसत्त्वादिगुणभाववर्जितत्वाद्गुणातीतम् । अखण्डितं कालादिकृतखण्डनवर्जितम् । यत् । भागवतं श्रीहरिसम्बन्धि । सौख्यम् । अस्ति । तत्सौख्यम् । सात्त्वतैर्भगवदेकान्तिकभक्तैः । सर्वावस्थासु । कथम् । अनुभूयेत भक्तास्तत्सर्वावस्थासु किंविधतयाऽनुभवन्तीत्यर्थः ॥ ४ ॥ प्रश्नस्येति । इत्येवंभूतस्य । प्रश्नस्य स्वकृतानुयोगस्य । उत्तरं प्रतिवचनम् । वक्तुम् । अविदो हरेऽस्य तत्र प्रश्नस्योत्तरं

तत्र वृत्तालयपुरे लक्ष्मीनारायणालयात् । पुरस्तादासने स्वीये व्यराजत्स सिताम्बरः ॥ २ ॥ नानाभक्तैः परिवृतः सोऽपृच्छत्स्वाग्रगान्सतः । गुणात्मकं सुखं यत्तत् त्र्यवस्थास्वनुभूयते ॥ ३ ॥ एवं भागवतं सौख्यं निर्गुणं यदखण्डितम् । कथं तदनुभूयेत सर्वावस्थासु सात्त्वतैः ॥ ४ ॥ प्रश्नस्येत्युत्तरं वक्तुमविदः प्राह तान्स्वयम् । कृष्णसौख्यानुभवप्रकारं कथयाम्यहम् ॥ ५ ॥ यद्याकाशः पृथिव्याद्यैर्भूतैर्हीनो भवेत् परम् । यावत्यस्तारकाः सन्ति तावन्तस्तत्र चेन्दवः ॥६॥ तदा सहस्थपूर्णानां तेषां कान्त्योपमीयते । सच्चिदानन्दरूपो हि चिदाकाशो महोज्ज्वलः ॥७॥ तस्मिंस्तु भगवान् कृष्णो राजते दिव्यविग्रहः । समाधौ तं समीक्षन्ते भक्तास्तत्कृपयैव हि ॥ ८ ॥

दातुं नोऽसमर्थत्वात्त्वमेव तत्कुर्विति ब्रुवाणानित्यर्थः । तान्साधून् । स्वयं श्रीहरिः । प्राह । हे साधवः ! । अहम् । कृष्णसौख्यस्य । अनुभवप्रकारम् । कथयामि ॥ ५ ॥ यदीति । यदि यर्हि । आकाशः । पृथिव्याद्यैः पृथिवीप्रभृतिभिः । भूतैस्तत्त्वैः । हीनो वर्जितः । अतएव । परं केवलः । भवेत् । किञ्च । यदि । तत्राकाशे । यावत्यः । तारकाः । सन्ति । तावन्तः । इन्दवश्चन्द्राः । भवेयुः । तदेत्युत्तरेण सम्बन्धः ॥ ६ ॥ तदेति । तदा तर्हि । सहस्थपूर्णानां प्रत्येकं सकलासम्पूर्णतां प्राप्य सहोदयं च प्राप्य सहैव तत्र स्थितानामित्यर्थः । तेषामिन्दूनाम् । कान्त्या सह । सच्चिदानन्दरूपः । महोज्ज्वलोऽतिश्वेतः । महैस्तेजोभिरुज्ज्वल इति वा । 'महोऽपि महसा सहेति' द्विरूपकोशः । चिदाकाशोऽक्षरधाम । उपमीयते ॥ ७ ॥ तस्मिन्निति । तस्मिंस्तथाविधे चिदाकाशे । दिव्यविग्रहो रूपानुरूपावयवसुन्दरातिलावण्यमयमूर्त्तिः । भगवाननन्तैश्वर्यनिधिः । कृष्णः श्रीहरिः । राजतेऽनन्तमुक्तैराजाधिराजतयोपासितपादपद्मो विराजत इत्यर्थः । भक्ताः । तत्कृपयैव । समाधौ । तमक्षरधामावस्थितं कृष्णम् । समीक्षन्ते । हि ॥ ८ ॥

तदिति । क्षणं क्षणमात्रकालपर्यन्तमपि । कृतम् । तद्दर्शनम् । तस्य तथाविधस्य । भक्तस्य । हृदि सहस्राब्दं सहस्रवर्षपर्यन्तम् । कृतमिव । अनुभवम् । याति प्राप्नोत्येव ; उक्तविधकृष्णदर्शनं सहस्रवर्षपर्यन्तमनुभूय यावत्सुखमुत्पद्यते तावत्सुखं क्षणमात्रतद्दर्शनेन तस्य जायते इत्यर्थः ॥ ९ ॥ बह्विति । मायिकम् । अतएव । गुणात्मकम् । सुखं तु । बहुकालं बहुवर्षपर्यन्तम् । भुक्तमपि । प्रान्ते भोगावसाने । नृणाम् । क्षणभुक्तमिव । जायते । हि । प्रसिद्धमेतच्छ्रीभागवते कर्दमसौभर्येलाख्यानादिषु । एतेनास्य विनाशित्वमुक्तमितिभावः ॥ १० ॥ कार्ष्णमिति । निर्गुणम् । अखण्डमविच्छिन्नतया वर्त्तमानम् । अविनाशि कालाद्यविनाश्यम् । कार्ष्णं श्रीहरिस्वरूपसम्बन्धि । सौख्यं तु । भक्तैः समाधिनिष्ठैर्भक्तजनैः । तिसृष्वपि । अवस्थासु । सदा निरन्तरम् । अनुभूयते ॥ ११ ॥ पीयूषेति । इत्येवंविधम् । पीयूषसाम्यममृततुल्यताम् । गतं प्राप्तम् । ईश्वरस्य प्रत्यक्षपरमेश्वरस्य । तस्य श्रीहरेः । वाक्यम् । निशम्य । तदीयभक्ताः । सर्वे । मुनयः । गृहस्थाश्च । हृदये स्वस्वमानसे । महान्तम् । तोषम् ।

तद्दर्शनं क्षणमपि कृतं भक्तस्य तस्य तु । सहस्राब्दं कृतमिव यात्येवानुभवं हृदि ॥ ९ ॥ बहुकालं भुक्तमपि मायिकं तु सुखं नृणाम् । क्षणभुक्तमिव प्रान्ते जायते हि गुणात्मकम् ॥१०॥ कार्ष्णं तु निर्गुणं सौख्यमखण्डमविनाशि च । सदानुभूयते भक्तैरवस्थासु तिसृष्वपि ॥ ११ ॥ पीयूषसाम्यं गतमीश्वरस्य तस्येति वाक्यं मुनयो निशम्य । सर्वे गृहस्थाश्च तदीय भक्तास्तोषं महान्तं हृदयेऽलभन्त ॥ १२ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते द्विशताधिकनवमस्तरङ्गः ॥ २०९ ॥ ९ ॥

शकाब्दे विक्रमार्कस्य नेत्राष्टवसुभूमिते । एकादश्यां पौषशुक्ले वचोऽमृतमिदं हरेः ॥ १ ॥
तत्र वृत्तालयपुरे लक्ष्मीनारायणालये । मञ्चासने व्यराजत्स पिचुमन्दतरोरधः ॥ २ ॥
सिताम्बरधरं भक्तैरनेकैः परितो वृतम् । भृगुगुप्तस्तमप्राक्षीद्बद्रायनपुरागतः ॥ ३ ॥

अलभन्त ॥ १२ ॥ गुणात्मकसुखस्याथ स्वनिर्गुणसुखस्य च । येनोक्तो भोगभेदो मे हरिर्दद्यात्स तन्निजम् ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिभगवत्पदानुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां द्विशताधिकनवमस्तरङ्गः ॥ २०९ ॥ ९ ॥

श्रीहरेरवतीर्णस्य स्वरूपैर्द्विविधैर्भुवि । आश्रयेण नृणां श्रेय उक्तं तु दशमे ततः ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८८२) पौषशुक्ले पौषमासस्य शुक्लपक्षे । एकादश्यां तिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । वृत्तालयपुरे । लक्ष्मीनारायणालये श्रीलक्ष्मीनारायणमन्दिरात्पूर्वदेशवर्त्तिन इत्यर्थः । पिचुमन्दतरोर्निम्बवृक्षस्य । अधोऽधःप्रदेशे । मञ्चासने । मञ्चाकारोच्चपादपट्टकासने । स श्रीहरिः । व्यराजदुपवेशनचातुर्येण शुशुभे ॥ २ ॥ सितेति । सिताम्बरधरं परिधृतसकलश्वेतवसनम् । अनेकैर्नानादेशागतत्वाद्बहुभिः । भक्तैस्त्यागिभिर्गृहिभिश्च स्वाश्रितजनैः । परितः समंततः । वृतं सभायां वेष्टितम् । तं

श्रीहरिम् । भद्रायनपुरागतः । भृगुगुप्तो वैश्यज्ञातीयो भृगुनामा पट्टलः । अप्राक्षीत् ॥ ३ ॥ संसार इति । हे स्वामिन् ! । संसारे । भ्रमतामनादिकालतो भ्रम्भ्रम्यमाणानाम् । आत्मनां जीवानाम् । श्रेयः कल्याणम् । संसारनिवृत्तिपूर्वं भगवद्धामप्राप्तिरित्यर्थः । कथं केनोपायेन । स्यात् । इत्यमुना प्रकारेण । पृष्टो भृगुगुप्तानुयुक्तः । स श्रीहरिः । तं भृगुगुप्तम् । प्राह । हे वैश्य ! । हरेः प्रत्यक्षभगवतः । आश्रयात् । श्रेयः । स्यात् ॥ ४ ॥ सामान्यत उत्तरं कृत्वा तदेव विशेषत आह भूतानामित्यादिना । भूमौ । भूतानां संसारे भ्रमतां जीवानाम् । श्रेयसे । अवतीर्णस्य प्रादुर्भूतस्य । तस्य श्रीहरेः । नराकाराणि मनुष्यसमानाकृतीनि । द्विविधानि । स्वरूपाणि । सन्ति । वै ॥ ५ ॥ कानीति । कानिचित् । राजरूपाणि क्षत्रकुलोत्पन्नत्वान्नृपतिसंज्ञानि । कानिचित् । साधुरूपाणि ब्राह्मणकुलोत्पन्नत्वात्साधुसंज्ञानि । सन्ति । उभयेषां द्विविधानाम् । तेषां स्वरूपाणाम् । लक्षणानि । पृथक् । पृथक् । सन्ति ॥ ६ ॥ तत्रेति । तत्र द्विविधस्वरूपेषु मध्ये । आद्यानां राजरूपाणाम् । सत्यमुख्यानि । लक्ष्माणि । सत्यं शौचं दया क्षान्तिरित्यादीन्येकोनचत्वारिंशल्लक्षणानि । भागवते श्रीमद्भागवतपुराणे । आदिमे प्रथमे । स्कन्धे । भूमिधर्मयोः ।

संसारे भ्रमतां स्वामिन्स्याच्छ्रेयः कथमात्मनाम् । इति पृष्टः स तं प्राह श्रेयः स्यादाश्रयाद्धरेः ॥ ४ ॥ भूतानां श्रेयसे भूमाववतीर्णस्य तस्य च । द्विविधानि स्वरूपाणि नराकाराणि सन्ति वै ॥ ५ ॥ कानिचिद्राजरूपाणि साधुरूपाणि कानिचित् । उभयेषां लक्षणानि सन्ति तेषां पृथक् पृथक् ॥ ६ ॥ तत्राद्यानां भागवते प्रोक्तानि स्कन्ध आदिमे । लक्ष्माणि सत्यमुख्यानि संवादे भूमिधर्मयोः ॥ ७ ॥ स्कन्ध एकादशेऽन्येषां कृपालुप्रमुखानि च । लक्ष्माण्युक्तानि तान्यादौ ज्ञेयानि श्रेय इच्छता ॥ ८ ॥ उभयेषां च साधर्म्यं न देहक्रियया त्विह । भगवत्यथ प्रपन्नानामस्ति श्रेयोविधौ त्विदम् ॥ ९ ॥ राजरूपस्तु भगवान् रामकृष्णादिरीयताम् । चतुःषष्टिः कलास्तस्मिन्नीतिश्च सकला भवेत् ॥ १० ॥ रसाः शृङ्गारमुख्याश्च मृगया चापदि क्वचित् । गृहस्थाश्रमधर्मश्च भवेत्तस्मिन् यथोचितम् ॥ ११ ॥

संवादे । प्रोक्तानि ॥७॥ स्कन्ध इति । अन्येषां साधुरूपाणाम् । कृपालुप्रमुखानि । लक्ष्माणि । कृपालुरकृतद्रोह इत्यादीनि त्रिंशल्लक्षणानि । एकादशे । स्कन्धे । उक्तानि । तान्युभयविधहरिस्वरूपलक्षणानि । श्रेयः स्वकल्याणम् । इच्छता पुंसा । आदौ प्रथमतः । ज्ञेयानि ॥ ८ ॥ उभयेषामिति । अथ च किञ्च । इह लोके । उभयेषां द्विविधानां स्वरूपाणाम् । देहक्रियया तु । साधर्म्यं समानधर्मत्वम् । न भवति । प्रपन्नानां स्वशरणं प्राप्तानां जनानाम् । श्रेयोविधौ कल्याणविधाने तु । इदं साधर्म्यम् । अस्ति ॥ ९ ॥ राजेति । राजरूपः । भगवांस्तु रामकृष्णादिः । ईयताम् । तस्मिन्राजरूपे भगवति । चतुःषष्टिः । कलाः । भवेयुः । सकला समग्रा । नीतिर्नीतिशास्त्रज्ञानं च । भवेत् ॥१०॥ रसा इति । तस्मिन् । शृङ्गारमुख्याश्च । रसाः । भवेयुः । क्वचित्कदाचित् । आपद्यापत्काले । मृगया च । भवेत् । यथोचितः । गृहस्थाश्रमधर्मश्च । भवेत् ॥ ११ ॥

साध्विति । साधुरूपः । भगवान् । आत्रेयकपिलादिको दत्तात्रेयकपिलदेवप्रभृतिः । ईयताम् । तस्मिन्साधुरूपे भगवति । सर्वाः । ज्ञानकलाः । भवेयुः । तथा । त्यागो विरक्त्यतिशयेन सर्वपदार्थवर्जनम् । योगादिश्च । भवेत् ॥ १२ ॥ रस इति । किञ्च । रसस्तु । एकः । शान्तः शान्ताख्य एव । स्यात् । सर्वथा कायवाङ्मनोभिः । जीवाहिंसा सकलप्राणिनामहननं च । स्यात् । स्त्रीणाम् । अष्टधा । त्याग एव । स्यात् । हरौ । दृढा । भक्तिश्च । स्यात् ॥ १३ ॥ एवमिति । एवमेवंविधैः । लक्षणैः । कृष्णं द्विधाप्रादुर्भूतं हरिम् । ज्ञात्वा तत्त्वतः परमेश्वरत्वेन विबुध्य । तं कृष्णम् । दृढं यथातथा । आश्रित्य । तस्य । आज्ञायाम् । स्थित्वैव । उत्तमैकान्तिकी । तद्भक्तिः । कार्या ॥ १४ ॥ अनेनेति । अनेन । उपायेनैव । मुमुक्षोः । पुरुषस्य । आत्यन्तिकम् । श्रेयः । भवेत् । हि । अन्यथाऽन्यप्रकारेण तु । न भवेत् । इत्येवंविधः । निश्चयः । अस्ति ॥ १५ ॥ प्रत्यक्ष इति । यदा । भुवि । प्रत्यक्षः । भगवान् । न स्यात् । तदा तु । ये ।

साधुरूपश्च भगवानात्रेयकपिलादिकः । तस्मिञ्ज्ञानकलाः सर्वास्त्यागो योगस्तथा भवेत् ॥ १२ ॥ रसस्तु शान्त एवैको जीवाहिंसा च सर्वथा । त्याग एवाष्टधा स्त्रीणां स्याद्भक्तिश्च हरौ दृढा ॥ १३ ॥ एवं हि लक्षणैः कृष्णं ज्ञात्वाऽऽश्रित्य च तं दृढम् । स्थित्वैव तस्य चाज्ञायां कार्या तद्भक्तिरुत्तमा ॥ १४ ॥ अनेनैव ह्युपायेन मुमुक्षोः पुरुषस्य तु । आत्यन्तिकं भवेच्छ्रेयो नान्यथेत्यस्ति निश्चयः ॥ १५ ॥ प्रत्यक्षो भगवान्न स्याद्यदा भुवि तदा तु ये । सन्तस्तं मिलितास्तेषामाश्रयादपि तद्भवेत् ॥ १६ ॥ साधुलक्षणसम्पन्नास्तेऽपि न स्युर्यदा तदा । कृष्णप्रतिकृतेर्भक्त्या तत्स्याद्धर्मयुजा दृढम् ॥ १७ ॥ श्रुत्वेति तस्यामृतसारवाचं स वैश्यवर्यश्च तथा सदःस्थाः । तदाश्रिताः साधुजनाः समस्ता गृहाश्रमस्थाश्च ययुः प्रहर्षम् ॥ १८ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते द्विशताधिकदशमस्तरङ्गः ॥ २१० ॥ १० ॥

सन्तः । तं प्रत्यक्षं भगवन्तम् । मिलिता आश्रिताः । स्युः । तेषां सताम् । आश्रयादपि । तच्छ्रेयः । भवेत् ॥ १६ ॥ साध्विति । यदा । साधुलक्षणसम्पन्नाः । ते प्रत्यक्षभगवदाश्रिताः सन्तोऽपि । न स्युः । तदा । कृष्णप्रतिकृतेः साक्षाद्भगवता स्थापितायास्तदर्चायाः । धर्मयुजा स्वधर्मसहितया । दृढं यथातथा । भक्त्याऽर्चनवन्दनादिना परिचर्यया । तच्छ्रेयः । स्यात् ॥ १७ ॥ श्रुत्वेति । इत्येवंविधाम् । तस्य श्रीहरेः । अमृतसारवाचं सर्वरससाररूपामृततुल्यां वाणीम् । श्रुत्वा । वैश्यवर्यः । स भृगुगुप्तः । तथा । सदःस्थाः । तदाश्रिताः । समस्ताः । साधुजनाः । गृहाश्रमस्थाश्च । प्रहर्षम् । ययुः ॥ १८ ॥ द्विविधैरवतीर्णस्य स्वरूपैस्तस्य चाश्रयात् । उक्तं श्रेयो नृणां येन हृदयेऽस्तु हरिः स मे ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्स्वतुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां द्विशताधिकदशमस्तरङ्गः ॥ २१० ॥ १० ॥

श्रीहरेस्तस्य भक्तानां विप्राणां द्रोहतस्तथा । दुर्बलानां जनानां च जीवनाशो नृणां यथा ॥ १ ॥ कथं जीवो विनाश्यस्तीत्यादिप्रश्नत्रयस्य च । यान्युत्तराणि तत्सर्वं तत एकादशे स्मृतम् ॥२॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८८२) सहस्यस्य पौषमासस्य । पौर्णमास्यां तिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । वृत्तालयपुरे । लक्ष्मीनारायणालये श्रीलक्ष्मीनारायणमन्दिरात्पूर्वप्रदेशे इत्यर्थः । पिचुमन्दतरोः । अधोऽधःप्रदेशे । पट्टे चतुरुच्चाङ्घ्रौ रम्यपट्टके । स्वास्तते सपार्श्विके स्थूलतूलिकासने । स श्रीहरिः । अराजत्पार्श्विकावष्टम्भपूर्वकोपवेशनस्थित्यातिशुशुभे ॥ २ ॥ सितेति । सितवासाः परिहितसकलश्वेतवसनः । त्यागिभिः । गृहिभिश्च । स्वाश्रितैः । नानादेशागतैरितिशेषः । वृत्तः सभायां परिवेष्टितः । श्वेतपुष्पाणां श्वेतवर्णानां मन्दारतरुकुसुमानां ये स्रजो हाराश्च आपीडाः शेखराश्च उत्तंसद्वयं कर्णपूरयुगलं च तैर्विराजितः शोभमानः ॥ ३ ॥ प्रसन्न इति । असौ श्रीहरिः । प्रसन्नः सन् । स्वयमेव । पुरःस्थान् । सतो मुक्तानन्दादिमुनीन् । अब्रवीत् । इति सार्द्धश्लोकस्यैकसम्बन्धः । हे सन्तः ! । मामकैर्मदाश्रितजनैः । कृष्णः स्वयं श्रीहरिश्च तद्भक्तास्तदेकशरणाः साधवश्च द्विजा विप्राश्च

शकाब्दे विक्रमार्कस्य नेत्राष्टवसुभूमिते । पौर्णमास्यां सहस्यस्य वचोऽमृतमिदं हरेः ॥ १ ॥ तत्र वृत्तालयपुरे लक्ष्मीनारायणालये । सोऽराजत् स्वासने पट्टे पिचुमन्दतरोरधः ॥ २ ॥ सितवासास्त्यागिभिश्च गृहिभिः स्वाश्रितैर्वृतः । श्वेतपुष्पस्रगापीडोत्तंसद्वयविराजितः ॥ ३ ॥ प्रसन्नः स्वयमेवासौ पुरःस्थानब्रवीत्सतः । न द्रुह्या मामकैः कृष्णतद्भक्तद्विजदुर्बलाः ॥ ४ ॥ मम त्वेष स्वभावोऽस्ति यत्कृष्णस्य च तत्सताम् । विप्राणां दुर्बलानां च द्रोहो मास्त्विति सर्वदा ॥ ५ ॥ तेभ्यो यथा बिभेम्यत्र तथाऽन्येभ्यो न कर्हिचित् । तद्द्रोहिणं च द्रष्टुं मे रोचते नैव कर्हिचित् ॥ ६ ॥ अन्येषां द्रोहतो नैव जीवो नश्यति कर्हिचित् । एतेषां द्रोहतस्तु स्याज्जीवनाशोऽपि निश्चितम् ॥७॥ अतस्तद्द्रोहतो भीर्मे वर्त्तते सर्वदा हृदि । तद्द्रोग्धृभिश्च सार्कं मे स्थातव्यं क्वापि नास्ति वै ॥८॥

दुर्बला रङ्कजनाश्च ते । न द्रुह्याः कदाचिदपि नैव द्रोग्धव्याः ॥ ४ ॥ एवं सामान्यतः स्वाश्रितानुशिष्यात्रार्थे स्वस्वभावं हेतुं ब्रुवन्नुक्तार्थमेव स्फुटयति । ममेत्यादिना । यद्यतोहेतोः । मम तु । एषः । स्वभावः साहजिकी प्रकृतिः । अस्ति । कोऽसावित्यत्राह । कृष्णस्य । तत्सताम् । विप्राणाम् । दुर्बलानां च । द्रोहः । सर्वदा । मास्तु । इति ॥ ५ ॥ तेभ्य इति । अत्र लोके । यथा । तेभ्यः कृष्णादिचतुर्भ्यः । बिभेमि तद्द्रोहाचरणाद्भयं प्राप्नोमि । तथा । अन्येभ्यः । कर्हिचित् । न बिभेमि । तद्द्रोहिणां तेषां चतुर्णां तदन्यतमस्य च । द्रोहकर्त्तारं जनम् । द्रष्टुम् । मे मह्यम् । कर्हिचित् । नैव रोचते ॥६॥ अन्येषाम् । द्रोहतः । जीवः । कर्हिचित् । नैव नश्यति । अपि तु केवलो देहो नश्यन्तीत्यर्थः । एतेषां कृष्णादिचतुर्णाम् । द्रोहतस्तु । जीवनाशोऽपि । निश्चितमेव । स्यात् ॥७॥ अत इति । अतोहेतोः । मे मम । हृदि । तद्द्रोहतः । भीर्भयम् । सर्वदा । वर्त्तते । तद्द्रोग्धृभिः । कृष्णादिचतुर्द्रोहकर्तृभिर्जनैः । साकम् । क्वापि अत्र परत्र वा । मे मम । स्थातव्यम् । नास्ति । वै ॥८॥

मुक्तानन्द इति । अथैवंविधश्रीहरिवाक्यश्रवणानन्तरम् । मुक्तानन्दोमुनिः । तं श्रीहरिम् । पप्रच्छ । हे स्वामिन् ! । जीवस्य । नाशस्तु । कुत्रचित्कस्मिंश्चिदपि सच्छास्त्रे न श्रूयते । स जीवनाशः । कथं केन प्रकारेण । जायते । वद तत्प्रकारं मह्यं ब्रूहि ॥ ९ ॥ 'मुक्तानन्देनानुयुक्तो मुनिनेत्थं स सत्पतिः । तं हर्षयन्निति प्राह स्वाश्रितानपरानपि' । पर्वतेति । हे मुने ! । पर्वतादिशरीरस्य । प्राप्तिः । अस्य जीवस्य । नाशः । कीर्त्तितः । न तु वस्तुतस्तस्य नाश उक्तोऽस्यनित्यत्वादिति भावः । यया पर्वतादिशरीरप्राप्त्या । तस्य जीवस्य । क्वापि कदाचिदपि । कल्याणम् । न भवेत् । इतीत्थम् । गम्यताम् । अनेन जघन्यगुणवृत्तिस्था अधो गच्छन्ति तामसा इति वाक्यस्य रामानुजकृतोऽर्थः स्मारितः । स यथा । तामसास्तु जघन्यगुणवृत्तिस्था उत्तरोत्तरनिकृष्टतमोवृत्तिषु स्थिता अधो गच्छन्ति । अन्त्यजत्वं ततस्तिर्यक्त्वं ततः कृमिकीटादिजन्म ततः स्थावरत्वं ततोऽपि गुल्मत्वं ततश्च शिला काष्ठ लोहत्त्वादि गच्छन्तीत्यर्थ इति ॥१०॥ अत इति । अतोहेतोः । तद्द्रोहः कृष्णादिचतुर्णां द्रोहः । न कार्यः । किं बहुना । भूरिदोषाकरः क्रोधमत्सरेर्ष्याद्रोहादिबहुदोषखनिरूपः । मानोऽपि । तेषां कृष्णादिचतुर्णाम् । अग्रे पुरतः । क्वचित्कदाचिदपि । सर्वथा न रक्षणीयः ॥११॥

मुक्तानन्दोऽथ पप्रच्छ तं जीवस्य तु कुत्रचित् । नाशो न श्रूयते स्वामिन्स कथं जायते ॥ ९ ॥ श्रीहरिरुवाच – पर्वतादिशरीरस्य प्राप्तिर्नाशोऽस्य कीर्त्तितः । यया न क्वापि कल्याणं भवेत्तस्येति गम्यताम् ॥ १० ॥ अतो न कार्यस्तद्द्रोहस्तेषामग्रे च सर्वथा । न रक्षणीयो मानोऽपि भूरिदोषाकरः क्वचित् ॥ ११ ॥ मानिनो भगवद्भक्तिरपि स्यादासुरी ध्रुवम् । मानेन भक्तभयदः पुमानप्यासुरो मतः ॥ १२ ॥
अथ तं परिपप्रच्छ गोपालानन्द ईश्वरम् । इह शास्त्रविदः केचित् पुराणज्ञाश्च केचन ॥ १३ ॥
ते मुह्यन्ति कथं स्वार्थे परेषां बोधका अपि । त्वत्त्वत्सद्भक्तमाहात्म्यं कथं सम्यग्विदुर्न ते ॥ १४ ॥

ननु मानस्य तपोभक्त्यादीनां भगवत्तोषहेतुगुणानां वृद्धिहेतुत्वदर्शनात्कथं तत्त्याग उच्यते इतिचेन्मानिना कृतानां तपोभक्त्यादिकर्मणां तस्य चासुरत्वादुच्यत इत्याह । मानिन इति । मानिनो भक्तजनस्य । भगवद्भक्तिरपि । आसुरि । स्यात् । यतो मानिना यस्य भक्तिः क्रियते स भगवानपि तन्मानखण्डनं कुर्याच्चेत्तर्हि तमपि स सर्वथा द्रुह्यादिति भावः । मानेन । भक्तभयदो भगवद्भक्तानां भयोत्पादकः । पुमानपि । आसुरः । मतः । ध्रुवं निश्चितमेव । भगवद्भक्ता अपि । तत्तथाविधदुर्गुणह्रापनाय तन्मानं खण्डयेयुस्तदा तानपि द्रोहविधानेन भयमुत्पादयेदतोऽसौ भक्तोऽप्यासुरो मत इतिभावः ॥ १२ ॥ अथेति । अथानन्तरम् । गोपालानन्दो मुनिः । ईश्वरं प्रत्यक्षपरमेश्वरम् । तं श्रीहरिम् । परिपप्रच्छ । हे हरे ! । इह लोके । केचिद्विप्राः । शास्त्रज्ञाः । सन्ति । केचन विप्राः । पुराणज्ञाश्च । सन्ति ॥ १३ ॥ त इति । परेषाम् । बोधका अपि । ते शास्त्रपुराणज्ञविप्राः । स्वार्थे कल्याणसम्पादनरूपात्मचतुर्थपुरुषार्थे । कथम् । मुह्यन्ति । तं परित्यज्य संसृतिप्रदस्त्र्यादिभरणादौ बह्वासक्तिरूपं मोहं कथं प्राप्नुवन्तीत्यर्थः । त्वत्त्वत्सद्भक्तमाहात्म्यं तव त्वदेकान्तिकसाधुभक्तानां च यथार्थं महिमानम् । ते । सम्यक् । कथम् । न विदुः ॥ १४ ॥

श्रीहरिरुवाच—शास्त्राणि च पुराणानि वृत्त्यै ते प्रवदन्ति हि । मुमुक्षुरहितत्वाच्च नाश्रयन्ते हरिं ततः ॥१५॥ हर्याश्रयं विना चैतान् कामक्रोधादयोऽरयः । जित्वा प्रवर्त्तयन्त्येव निरयाध्वनि सर्वथा ॥१६॥ ततः कृष्णं च तद्भक्तान्स्वोपम्येन विचक्षते । कामक्रोधाद्यरिजितांस्तत्तान्न बहु मन्वते ॥१७॥ एवं यथार्थमाहात्म्यं कृष्णस्य च सतामपि । विद्वांसोऽपि न जानन्ति तांश्च निदन्त्यपि क्वचित् ॥१८॥ इत्युक्त्वा तं स पप्रच्छ महतः सकलान्सतः । दीनानाथाख्यविप्रं च सर्वसंशयनाशनः ॥ १९ ॥ ये तु ब्रह्मविदः सन्तो ब्रह्मरूपा हि ते मताः परत्र वर्त्तमानाश्चावस्थात्रयवपुस्त्रयात् ॥ २० ॥ क्रियाः सर्वाश्चेन्द्रियाणां मन्यन्ते ते न चात्मनः । तानज्ञानिजना नैव जानीयुर्भुवि तत्त्वतः ॥ २१ ॥ तत्समानां स्थितिं यायुर्ये तन्माहात्म्यवेदनात् । त एव तान्विदुः सम्यक् शास्त्रज्ञा अपि नेतरे ॥ २२ ॥

'मुनिनेत्थं स गोपालानन्देन पुरुषोत्तमः । पृष्टस्तं सुखयन्नूचे निजान्सर्वान्परा'निति । शास्त्राणीति । हे मुने ! । मुमुक्षारहितत्त्वाच्चेषां मोक्षेच्छायाः सर्वथा वर्जितत्वात् । ते विप्राः । शास्त्राणि । पुराणानि च । वृत्त्यै केवलजीविकार्थम् । प्रवदन्ति । ततोहेतोः । हरिं च । नाश्रयन्ते । एते यदा बाल्यादध्येतुमारभन्ते तत आरभ्य तदध्ययनस्य केवलं स्त्र्यादिभरणविनियोगात्तत्पित्रादिभिश्च तथाबोधितत्वात्स्वतोऽपि मुमुक्षारहितत्वाच्च पठित्वापि मुह्यन्ति हरिमपि नाश्रयन्तीति प्रथमप्रश्नोत्तरं बोध्यम् ॥ १५ ॥ हरीति । किञ्च । हर्याश्रयं विना । कामक्रोधादयः । अरयोऽन्तःशत्रवः । एतानुक्तविविधविप्रान् । जित्वा स्ववशे कृत्वा । निरयाध्वनि पराङ्गनासङ्गप्राणिहिंसादिपापरूपे नरकप्राप्तिमार्गे । सर्वथा । प्रवर्त्तयन्त्येव ॥ १६ ॥ तत इति । ततोहेतोः । कृष्णं प्रत्यक्षं श्रीहरिम् । तद्भक्तांस्तदाश्रितसाधुजनांश्च । स्वौपम्येन स्वदृष्टान्तेन । कामक्रोधाद्यरिजितान् । विचक्षते पश्यन्ति । तत्तस्माद्धेतोः । तान्कृष्णतद्भक्तान् । बहु । न मन्वते महतो मत्वा नाद्रियन्ते इत्यर्थः ॥ १७ ॥ एवमिति । एवममुना प्रकारेण । विद्वांसोऽपि । कृष्णस्य । सतां तत्साधूनां चापि । यथार्थमाहात्म्यम् । न जानन्ति । क्वचित् । तान्कृष्णतत्साधून् । निन्दन्ति चापि । स्वसामान्यमानितातेषां माहात्म्यावेदनहेतुरिति द्वितीयप्रश्नोत्तरं बोध्यम् ॥ १८ ॥ इतीति । इत्यमुना प्रकारेण । तं गोपालानन्दमुनिम् । उक्त्वा तत्प्रश्नोत्तरं कृत्वेत्यर्थः । सर्वसंशयनाशनः प्रश्नोत्तराचरणमिषेण सकलसंशयनिवर्त्तक इत्यर्थः । स श्रीहरिः । सकलान् । महतः । सतो मुक्तानन्दादिमुनीन् । दीनानाथाख्यविप्रं च पप्रच्छ ॥ १९ ॥ य इति । हे मुनयः ! । हे विप्र ! । ये । सन्तः ब्रह्मविदः साक्षात्कृष्णैकान्तिकोपासनया ब्रह्मस्थितिं प्राप्ताः । सन्ति । अवस्थात्रयं जाग्रदाद्यवस्थात्रिकं च वपुस्त्रयं स्थूलादिदेहत्रिकं च तयोः समाहारस्तस्मात् । परत्र शुद्धात्मस्वरूपे । वर्त्तमानाः । ते सन्तः । ब्रह्मरूपा अक्षरब्रह्मस्वरूपाः । मताः । हि ॥ २० ॥ क्रिया इति । ते सन्तः । इन्द्रियाणाम् । सर्वाः । क्रियाः । आत्मनः । न मन्यन्ते । सर्वदाऽऽत्मस्थित्या प्राकृतविषयप्रवृत्तेन्द्रियक्रियासु न सज्जन्ते इत्यर्थः । भुवि । अज्ञानिजनाः । तांस्तथाविधान्साधून् । तत्त्वतो यथार्थतया । नैव जानीयुः ॥ २१ ॥ तदिति । ये पुरुषाः । तन्माहात्म्यवेदनात् । तत्समानां साधुतुल्याम् । स्थितिं ब्रह्मस्थितिम् । यायुः । ते पुरुषा एव । तान्साधून् । सम्यक् । विदुः । इतरे उक्तविधपुरुषभिन्नाः पुरुषाः । शास्त्रज्ञाः सन्तोऽपि । तान् । सम्यक् । न विदुः ॥ २२ ॥

तेषामिति । अत्र लोके । ये पुरुषाः । तेषां साधूनाम् । महिमानम् । तत्त्वतः । न जानन्ति । तेषां पुरुषाणाम् । ब्रह्मस्वरूपे स्थितिरपि । क्वचित् । न जायते ॥ २३ ॥ तामिति । तां ब्रह्मस्वरूपस्थितिम् । विना तामप्राप्येत्यर्थः । अपरान्स्वेतरान् । ब्रह्मस्थितिमतः साधून् । नैव विदुः । एवमनुना प्रकारेणोद्भूतस्य । अन्योऽन्यबाधस्य । परिहारो निवृत्तिः । कथम् । भवेत् । तद्यूयं ब्रूतेतिशेषो बोध्यः ॥ २४ ॥ इतीति । इत्येवंविधस्य । प्रश्नस्य श्रीहरिकृतानुयोगस्य उत्तरम् । कर्त्तुम् । ते साधुविप्राः । यदा । न विदुः । तदा । प्रभुः । असौ श्रीहरिः । स्वयमेव । तत्स्वप्रश्नोत्तरम् । तान्साधुविप्रान् कथयामास ॥ २५ ॥ कृतेति । हे सन्तः ! । हे विप्र ! । भुवि । कृतावतारं सम्प्राप्तप्रादुर्भावम् । त्वाकृतिम् । प्रत्यक्षम् । कृष्णम् । मिलिताः । ब्रह्मनिष्ठां च । प्राप्ताः । ये । अमला निर्दोषाः । साधवः । स्युः ॥ २६ ॥ अतीति । तेषु तथाविधेषु साधुषु । यदि । अतिप्रीतिः । भवेत् । तर्हि । तया तत्प्रीत्यैव । तेषां साधूनाम् । महत्त्वम् । विद्युः । ततस्तदनन्तरम् । महात्म्यवेदनाद्वा । तत्स्थितिं साधुसमानां ब्रह्मनिष्ठां च । आप्नुयुः । ततस्तान् यथार्थं विदन्तीतिभावः ॥ २७ ॥

तेषां ये महिमानं त्व न जानन्त्यत्र तत्त्वतः । तेषां ब्रह्मस्वरूपेऽपि जायते न स्थितिः क्वचित् ॥ २३ ॥ तां विना त्व विदुर्नैव ब्रह्मस्थितिमतोऽपरान् । एवमन्योन्यबाधस्य परिहारः कथं भवेत् ॥ २४ ॥ इति प्रश्नस्योत्तरं तु यदा कर्तुं न ते विदुः । तदा तत्स्वयमेवासौ कथयामास तान्प्रभुः ॥ २५ ॥ कृतावतारं कृष्णं ये प्रत्यक्षं त्वाकृतिं भुवि । मिलिता ब्रह्मनिष्ठां च प्राप्ताः स्युः साधवोऽमलाः ॥ २६ ॥ अतिप्रीतिर्भवेत्तेषु यदि तर्हि तयैव हि । तेषां महत्त्वं विद्युश्च तत्स्थितिं चाप्नुयुस्ततः ॥ २७ ॥ येषु येषां भवेत् प्रीतिस्तेषां तद्दोषदर्शनम् । नैव स्यादिति लोकेऽपि प्रसिद्धिर्वर्त्तते खलु ॥ २८ ॥ अतः सत्सु प्रीतिमतां नृणां स्वोपम्यतः क्वचित् । दोषदृष्टिर्भवेन्नैव परं स्यात्तद्गुणग्रहः ॥ २९ ॥ ब्रह्मात्मदर्शनं तेन साक्षात्कृष्णस्य चेक्षणम् । भवतीत्यवगन्तव्यं प्रश्नस्योत्तरमञ्जसा ॥ ३० ॥

एतदेव किंवदन्त्या द्रढयति अक्षराधिकसार्द्धद्वाभ्याम् । येष्विति । येषां जनानाम् । येषु जनेषु । प्रीतिः । भवेत् । तेषां जनानाम् । तद्दोषदर्शनं स्वप्रीत्यास्पदजनदोषसमीक्षणम् । नैव स्यात् । प्रत्युत तद्गुणग्रहणपूर्वं तद्वचनमाननमेव स्यादित्यर्थः । इत्येवंविधा । लोकेऽपि । प्रसिद्धिः । वर्त्तते । खलु ॥ २८ ॥ अत इति । अतोहेतोः । सत्सु । प्रीतिमताम् । नृणाम् । स्वोपम्यतस्तेषु स्वसदृशतामङ्गीकृत्येत्यर्थः । क्वचिन्कदाचिदपि । दोषदृष्टिस्तेषु दोषदर्शनम् । नैव भवेत् । परं केवलम् । तद्गुणग्रहस्तेषां साधूनां गुणग्रहणमेव । स्यात् । किं बहुना तेषां यावन्ति वचनानि स्युस्तानि तेषां सत्यान्येव भासेरन्नित्यर्थः ॥ २९ ॥ ब्रह्मेति । तेन हेतुना ब्रह्मात्मदर्शनं देहावस्थात्रिकातिरिक्तशुद्धस्वात्मसमीक्षणम् । ब्रह्मनिष्ठेत्यर्थः । साक्षात्कृष्णस्य प्रत्यक्षस्य श्रीहरेः । ईक्षणं स्वात्मनि प्रत्यक्षतया दर्शनं च । भवति जायते । ततस्तान् सम्यग्जानन्तीतिभावः । इत्यमुना प्रकारेण । प्रश्नस्य । उत्तरम् । अञ्जसा तत्त्वतः । अवगन्तव्यम् ॥ ३० ॥

वाक्यमिति । इत्येवंविधम् । ईश्वरस्य । तस्य श्रीहरेः । सुधासोदरं पीयूषसमानम् । वाक्यम् । श्रुत्वा । सविप्रा दिनानाथाख्यविप्रसहिताः । ते महान्तः साधुजनाः । अथो । अपरे सर्वे । सन्तः साधवः । गृहस्थाश्च । हृदि स्वस्वमानसे । अतितोषम् । लेभिरे ॥ ३१ ॥ स्वभक्तान् श्रीहरिर्यस्तु रसालैः स्ववचोऽमृतैः । सानन्दान्विदधे सोऽस्तु ममानन्दप्रदः प्रभुः ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्सून्नुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां द्विशताधिकैकादशस्तरङ्गः ॥ २११ ॥ ११ ॥

यः पूर्णो निश्चयः स्वस्य योऽपूर्णो निश्चयस्तथा । तयोस्तु लक्षणे चन्द्रदृष्टान्तेन यथार्थतः ॥ १ ॥ देशादीनां सदसतां योगायोगत्वतः स्फुटम् । द्वादशे हरिणा प्रोक्ते स्वभक्तानां हिताय तु ॥ २ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८८२) । पौषकृष्णद्वितीयायां पौषमाससम्बन्धिनः कृष्णपक्षस्य द्वितीयातिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । वृत्तालयपुरे । लक्ष्मीनारायणस्य । दुर्गे । निम्बतरोर्लक्ष्मीनारायणमन्दिरात्पूर्वदर्शिनः पिचुमन्दवृक्षस्य ।

वाक्यं सुधासोदरमीश्वरस्य तस्येति ते साधुजनाः सविप्राः । श्रुत्वाऽतितोषं हृदि लेभिरेऽथो सन्तो गृहस्था अपरे च सर्वे ॥ ३१ ॥

इति श्रीहरिवाक्यसुधासिंधौ शतानन्दमुनिविरचिते शद्विताधिकैकादशस्तरङ्गः ॥ २११ ॥ ११ ॥

शकाब्दे विक्रमार्कस्य नेत्राष्टवसुभूमिते । पौषकृष्णद्वितीयायां वचोऽमृतमिदं हरेः ॥ १ ॥
तत्र वृत्तालयपुरे लक्ष्मीनारायणास्य सः । दुर्गेऽधस्तान्निम्बतरोर्व्यराजतपट्टकासने ॥ २ ॥
सितधोत्रः सितोष्णीषः सितप्रावणान्वितम् । वसानः स्थलपद्माभमहावस्त्रं वृत्तो निजैः ॥ ३ ॥
स्थलाब्जहारधृक्किञ्चिद्ध्यानोन्मीलितलोचनः । कृपया लोकयन्भक्तांस्त्यागिनो गृहिणस्तथा ॥ ४ ॥
उवाच तान्सर्वेऽपि भक्ताः ! शृणुत सादरम् । सर्वेषामपि युष्माकं वार्त्तां कुर्वे हितावहाम् ॥ ५ ॥

अधस्तात् । पट्टकासने पट्टकोपरिवर्त्तमाने सपार्श्विकोत्तरछदस्थूलतूलिकास्तृते पर्यङ्कास्तृते पर्यङ्कासने इत्यर्थः । स श्रीहरिः । व्यराजत् ॥ २ ॥ तं विशिनष्टिद्वाभ्याम् । सितेति । सितधोत्रः परिहितवलक्षाधोवसनः । सितोष्णीषः स्वशिरोनिबद्धश्वेतसूक्ष्मघनरम्यदीर्घवसनः । सितप्रावरणान्वितं सुश्वेतोत्तरीयवस्त्रसहितम् । स्थलपद्माभमहावस्त्रं स्थलपद्मरङ्गसमानरङ्गान्वितानर्घ्यपार्वतीयाखुलोमरचितवसनम् । वसानः । निजैर्नानादेशागतैस्त्यागिभिर्गृहिभिश्च स्वाश्रितजनैः । वृत्तः सभायां परिवेष्टितः ॥ ३ ॥ स्थलेति । स्थलाब्जहारधृत् कण्ठे स्थलकमलहारं दधत् । किञ्चिध्यानोन्मीलितलोचनः कञ्चिदर्थं विचारयितुमन्तर्दशा कञ्चित्कालं ध्यानस्तिमितलोचनो भूत्वाऽञ्जसैवोन्मीलितस्वचक्षुरित्यर्थः । त्यागिनः । तथा । गृहिणः । भक्तान् । कृपया । आलोकयन् ॥ ४ ॥ उवाचेति । स श्रीहरिः । तान्स्वभक्तान् । उवाच । हे भक्ताः ! । युष्माकम् । सर्वेषामपि । हितावहाम् । वार्त्ताम् । कुर्वे । ताम् । सर्वेऽपि यूयम् । सादरं यथातथा शृणु ॥ ५ ॥

अनन्तेति । अनन्तकोटिपरिमितानां सूर्येन्दुवह्नीनां प्रभाकरज्योत्स्नाकराग्नीनां ज्योतींषि तेजोराशयस्तैः समा तुल्या प्रभा यस्य तस्मिन् । अक्षरब्रह्माख्ये । धाम्नि पदे । भगवाननन्तैश्वर्यनिधिः । पुरुषोत्तमः । राजते । दिव्यानन्तमुक्तसंसेवितचरणारविन्दोऽनर्घ्यदिव्यपरिच्छदो दिव्यसुन्दरमूर्त्तिर्विलसति ॥ ६ ॥ कृष्ण इति । कृष्णः श्रीकृष्णाख्यः । स पुरुषोत्तम एव । धरातले । जीवानाम् । कल्याणाय । मर्त्त्येषु । आविर्भूतः । अस्ति । स कृष्णाख्यः । स्वयं श्रीहरिः । युष्मद्दृग्गोचरो निष्कारणापारकरुणावशतया भवतां चक्षुर्विषयः । अस्ति ॥ ७ ॥ तस्येति । यस्य भक्तजीवस्य । तस्योक्तविधस्य श्रीहरेः । निश्चयः । अन्वहं प्रतिदिनम् । सत्सङ्गेन तदेकान्तिसाधुसमागमेन । पूर्णः । स्यात् । अतिक्षीणः स्वात्मानं संसारान्मोचयितुमसमर्थत्वादतिक्षीणशक्तिरपि । सः । भक्तात्मा भक्तजीवः । महीयसीमतिमहतीम् । पुष्टिं स्वस्वाश्रितानेकजनसंसृत्युद्धरणादिसामर्थ्यपोषणम् । याति ॥ ८ ॥ एतदेव दृष्टान्तेन द्रढयति द्वाभ्याम् । यथेति । यथा । अमायाममावास्यातिथौ । निष्कलः ज्योत्स्नाहेतुकलावर्जितोऽपि । शशी चन्द्रः । सौरिं सूर्यसम्बन्धिनीम् । प्रभां कान्तिम् । प्राप्य । प्रतिदिनम् । वर्द्धमानः प्रवृद्धकलःसन् । पूर्णिमातिथौ ।

अनन्तकोटिसूर्येन्दुवह्निज्योतिः समप्रभे । अक्षरे धाम्नि भगवान् राजते पुरुषोत्तमः ॥ ६ ॥ कृष्णः स एव जीवानां कल्याणाय धरातले । आविर्भूतोऽस्ति मर्त्येषु युष्मद्दृग्गोचरोऽस्ति सः ॥ ७ ॥ तस्य स्यान्निश्चयो यस्य पूर्णः सत्सङ्गतोऽन्वहम् । सोऽतिक्षीणोऽपि भक्तात्मा पुष्टिं याति महीयसीम् ॥ ८ ॥ यथाऽमायां निष्कलोऽपि सौरीं प्राप्य प्रभां शशी । वर्द्धमानः प्रतिदिनं पूर्णः स्यात् पूर्णिमातिथौ ॥ ९ ॥ तथा माहात्म्यबोधेन सह निश्चयमीशितुः । प्राप्यासावप्येधमानोऽन्वहं याति हि पूर्णताम् ॥ १० ॥ बाह्यान्तःकरणान्येनं पूर्णं निश्चयतः क्वचित् । ततश्चालयितुं नैव शक्नुवन्त्यचलस्थितिम् ॥११॥ न चासौ नरलीलायां हरेर्मुह्यति कर्हिचित् । ईदृशो निश्चयो यस्य स ज्ञेयो निर्भयः पुमान् ॥१२॥ पूर्णोऽप्येष यदि क्वापि देशादीनसतः श्रयेत् । देहाभिमानं कुर्याद्वा तदा कृष्णेन्दुवत् क्षयेत् ॥ १३ ॥

पूर्णः सम्पूर्णकलः । स्यात् ॥ ९ ॥ तथेति । तथा तद्वदेव । असौ भक्तजीवोऽपि । माहात्म्यबोधेन प्रतिदिनं संवर्धितसत्सङ्गवर्द्धमानमहिमावगमेन सह । ईशितुः सर्वनियन्तुः श्रीहरेः । निश्चयम् । प्राप्य । अन्वहम् । एधमानः सन् । पूर्णताम् । याति । हि ॥ १० ॥ बाह्येति । ततः पूर्णताप्राप्त्यनन्तरम् । बाह्यान्तःकरणानि स्वस्य बाह्यकरणानि चक्षुरादीनीन्द्रियाणि मनआदीन्यन्तःकरणानि चेत्यर्थः । पूर्णम् । अचलस्थितिं निश्चलनिष्ठम् । एनं भक्तजीवम् । निश्चयतः स्वकृतभगवत्स्वरूपयथार्थनिश्चयात् । चालयितुम् । नैव शक्नुवन्ति ॥ ११ ॥ नेति । किञ्च । असौ भक्तः । हरेः । नरलीलायां नरानुकरणार्थविहिततत्समानचरित्रे । कर्हिचित् । न मुह्यति अनीश्वरताद्यवगमरूपं मोहं न प्राप्नोति । यस्य भक्तस्य । ईदृशः पूर्णः । निश्चयः । अस्ति । सः । पुमान् । भक्तः । निर्भयः । ज्ञेयः ॥ १२ ॥ पूर्ण इति । पूर्णोऽपि । एष भक्तः । यदि । क्वापि कदाचित् । असतोऽशुभान् । देशादीन् देशकालसङ्गशास्त्रादीन् । श्रयेत् । अथवा । देहाभिमानम् । कुर्यात् । देहाभिमानिसङ्गेन देहाभि-

मानवान् भवेदित्यर्थः । तदा कृष्णेन्दुवत् कृष्णपक्षे चन्द्र इव । क्षयेत् । कृष्णपक्षेऽन्वहं चन्द्रः कलाक्षयमिव स भक्तोऽपि शक्तिनाशं यायादित्यर्थः ॥ १३ ॥ मुह्यन्निति । ततस्तदनन्तरम् । असौ भक्तः । हरेः । नृनाट्ये नरलीलायाम् । मुह्यन् । तदगुणं श्रीहरिचरित्रे दोषम् । गृह्णन्सन् । नचिरेण । स्वल्पकालेनैव । अमाचन्द्रोपमाम् । उपयाति । वै ॥ १४ ॥ द्विष इति । यथा । हरेः । नृनाट्ये । सन्देहा अनीश्वरत्वसंशयाः । अगुणग्रहो दोषग्रहणं चापि । क्षयहेतवः । सन्ति । तथा । कामक्रोधाद्याः । द्विषोऽन्तर्वैरिणोऽपि । क्षयहेतवः । न सन्ति ॥ १५ ॥ छिन्नेति । यथा । छिन्नमूलः । वृक्षः । अचिरेण । क्षयम् । याति । तद्वत्तथा । नष्टेशनिश्चयो हरिनृनाट्यसंदेहागुणग्रहैर्विनष्टतत्परमेश्वरत्वनिर्णयः । पुमान् भक्तः । श्रेयोऽध्वनः कल्याणपथात् सत्सङ्गात् । पातम् । अचिरेण । याति । वै । निश्चितमेव सत्सङ्गाद्विमुखो भवतीत्यर्थः ॥ १६ ॥ सत्सङ्ग इति । यो भक्तः । कृष्णे नृनाट्यानुकारिणि प्रत्यक्षपरमेश्वरे । दोषदर्शी । अतएव । कृष्णनिश्चयदुर्बलः शिथिलकृष्णपरमेश्वरत्वनिर्णयः । भवेत् । स भक्तः । सत्सङ्गे । वर्त्तमानः सन्नपि । इत्थमपि वक्ष्यमाणरीत्यैव । तर्कयति ॥ १७ ॥ श्रेय इति । मम । श्रेयः । भविष्यति । अथवा ।

मुह्यन् हरेर्नृनाट्येऽसौ गृह्णस्तदगुणं ततः । अमाचन्द्रोपमामेव नचिरेणापयाति वै ॥ १४ ॥ द्विषोऽपि कामक्रोधाद्या न तथा क्षयहेतवः । यथा नृनाट्ये सन्देहा हरेश्चाप्यगुणग्रहः ॥ १५ ॥ छिन्नमूलो यथा वृक्षः क्षयं यात्यचिरेण वै । नष्टेशनिश्चयस्तद्वत्पातं श्रेयोऽध्वनः पुमान् ॥ १६ ॥ सत्सङ्गे वर्त्तमानोऽपि कृष्णनिश्चयदुर्बलः । दोषदर्शी च कृष्णे यः स त्वित्थं तर्कयत्यपि ॥ १७ ॥ श्रेयो भविष्यति न वा ममाहं किं वपुः क्षये । देवो भविष्याम्यथवा राजा वाऽपि पिशाचकः ॥१८॥ एवं बहुकुतर्कोऽसौ विमुखो भविता ध्रुवम् । सन्मुखेनापि वा तेन श्रेयः सिद्ध्येन्न कस्यचित् ॥ १९ ॥ दृढनिश्चयहीनश्च पुमान् क्लीबोपमो मतः । न तस्य बोधनेन स्यादुद्धारः कस्यचिद्यतः ॥२०॥ स्ववंशे क्षीयमाणेऽपि यथा क्लीबान्न सन्ततिः । भवेत्तथा न मुक्तिः स्यात्तस्मादपि कदाचन ॥२१॥

न भविष्यति । अहम् । वपुःक्षये देहपाते सति । देवः । भविष्यामि । किम् । अथवा । राजा भूमौ कुत्रचिन्महानृपतिः । भविष्यामि । किम् । अथवा । पिशाचको भूतोऽपि । भविष्यामि । किम् ॥ १८ ॥ एवमिति । एवममुना प्रकारेण । बहुकुतर्कोऽतिशयितदुस्तर्कवान् । असौ भक्तः । ध्रुवं निश्चितमेव । विमुखः । भविता । अथवा । सन्मुखेनापि । तेन भक्तेन । कस्यचित् । श्रेयः । न सिद्ध्येत । तत्कृतवार्त्तया कल्याणहेतुः साक्षाद्भगवत्स्वरूपनिश्चयो न कस्यापि भवेदित्यर्थः ॥ १९ ॥ दृढेति । दृढनिश्चयहीनः । पुमान् भक्तः । क्लीबोपमो नपुंसकतुल्यः । मतः । यतोहेतोः । तस्योक्तविधभक्तस्य । बोधनेन । कस्यचित् । उद्धारः संसृतिनिवृत्तिः । न स्यात् ॥ २० ॥ एतदेव दृष्टान्तेन द्रढयति । स्वेति । यथा । स्ववंशे निजान्वये । क्षीयमाणे पुत्राभावात् क्षयं प्राप्नुवति सत्यपि । क्लीबान्नपुंसकात्पुरुषात् । सन्ततिस्ताद्भार्यायां पुत्रोत्पत्तिः । न भवेत् । तथा । तस्माद् दृढनिश्चयहीनभक्तबोधनादपि । कदाचन । मुक्तिः । न स्यात् । प्रत्यक्षभगवत्स्वरूपदृढनिश्चयस्यैवमोक्षहेतुत्वात्तथाविधभक्तकृतबोधनेन तथाविधनिश्चयानुदयात्तत्सङ्गिनः कुतो मुक्तिरितिभावः ॥ २१ ॥

श्रोतव्यमिति । किञ्च । तन्मुखाद् दृढभगवन्निश्चयवर्जितभक्तास्यात् । गीताभगवतादि । नैव श्रोतव्यम् । यतोहेतोः । तच्छ्रवणेन तन्मुखनिःसृतगीतादिश्रवणेनापि । अण्वणुमात्रमपि । श्रेयः । न सिद्ध्यति ॥ २२ ॥ किं वाच्यं श्रेयो न भविष्यतीति प्रत्युत पूर्वसत्संस्कारभवायाः श्रेयोबुद्धेर्भ्रंशोऽपि ततः स्यादिति दृष्टान्तेनाह । विषेति । यथा । विषदुष्टपयःपानात् । मृत्युः । स्यात् । सुखम् । न स्यात् । एवं तथा । तच्छ्रवणात् । बुद्धिभ्रंशः प्राक्तनश्रेयोबुद्धिविनाशः । स्यात् । सन्मतिः । न तु नैव स्यात् । अद्यतनकाले नवीनापि श्रेयोबुद्धिर्नैवोदीयादित्यर्थः ॥ २३ ॥ अत इति । अतोहेतोः । मुमुक्षुभिः । तथा । मुक्तैः । भक्तैः । प्रयत्नतः । सावधानैः सद्भिः । सन्त शुभा एव । देशादयः । सेव्याः । इतरे असन्तो देशादयः । नहि नैव सेव्याः ॥ २४ ॥ एवं दृढभगवन्निश्चयवर्जितलक्षणान्युक्त्वा साम्प्रतं सुदृढभगवन्निश्चयवद्भक्तलक्षणान्याह त्रिभिः । दृढेति । अजुष्टहेयदेशादिरसेवितत्याज्यासद्देशादिः । हरेः । दृढनिश्चयवान्सद्देशादिसेवनेन माहात्म्यज्ञानयुक्सुदृढभगवत्स्वरूपनिश्चयी । अतएव । पूर्णः । यः । भक्तः । भवेत् । सः चेतसि स्वमानसे । इत्थं वक्ष्यमाणप्रकारेण । वेत्ति ॥२५॥ यद्दिति । यद्दिनाद्यस्माद्दिनादारभ्य । कृष्णः साक्षात्पुरुषोत्तमः श्रीहरिः ।

श्रोतव्यं तन्मुखान्नैव गीताभागवतादि च । यतस्तच्छ्रवणेनापि श्रेयः सिद्ध्यति नाण्वपि ॥ २२ ॥ विषदुष्टपयःपानान्मृत्युः स्यान्न सुखं यथा । एवं तच्छ्रवणाद् बुद्धिभ्रंशः स्यान्न तु सन्मतिः ॥ २३ ॥ अतो देशादयः सन्त एव सेव्या न हीतरे । मुमुक्षुभिस्तथा मुक्तैः सावधानैः प्रयत्नतः ॥ २४ ॥ दृढनिश्चयवान् यस्तु भक्तः पूर्णो भवेद्धरेः । अजुष्टहेयदेशादिः स इत्थं वेत्ति चेतसि ॥२५॥ यद्दिनान्मिलितः कृष्णस्ततोऽहं तु कृतार्थताम् । प्राप्तोऽस्मि नास्ति मे कार्यं शिष्टं तद्वचनेतरत् ॥ २६ ॥ ये करिष्यन्ति मद्वीक्षां वार्त्तां श्रोष्यन्ति वाऽपि मे । मुक्ताः संसृतिबन्धात्ते यास्यन्ति परमं पदम् ॥ २७ ॥ अतो भवद्भिरप्येवं स्वनिश्चयफलं हृदि । सावधानैर्भावनीयं कृतार्थत्वं च सर्वदा ॥ २८ ॥ इत्युक्त्वा गापयामास कृष्णपद्यं स साधुभिः । धन्यं वृन्दावनमिति कृतं भक्तेन केनचित् ॥ २९ ॥

मिलितः प्राप्तः । ततस्तस्माद्दिनादारभ्य । अहं तु । कृतार्थताम् । प्राप्तः । अस्मि । तद्वचनेतरत्तदाज्ञापालनभिन्नमित्यर्थः । कार्यं कश्चनापि कर्त्तव्यार्थः । मे मम । शिष्टमवशिष्टम् । नास्ति साम्प्रतं तु केवलं तदाज्ञापालनमेव शिष्टं न त्वन्यदित्यर्थः ॥२६॥ य इति । ये जनाः मद्वीक्षां मम दर्शनम् । करिष्यन्ति । अथवा । मे मम । वार्त्ताम् । श्रोष्यन्ति । अपि चार्थे । मद्गुणग्रहणसेवादिकं च । करिष्यन्ति । ते जनाः । संसृतिबन्धात् । मुक्ताः सन्तः । परमम् । पदं भगवद्धाम । यास्यन्ति ॥ २७ ॥ अत इति । अतोऽस्यैवंविधबलत्वाद्धेतोः । भवद्भिरपि । सावधानैः सद्भिः । एवमुक्तप्रकारेण । स्वनिश्चयफलं स्वसुदृढनिश्चयफलरूपमेवंविधबलम् । कृतार्थत्वं च । हृदि स्वस्वमानसे । सर्वदा । भावनीयं विचारणीयम् ॥२८॥ इतीति । इतीत्थम् । उक्त्वा । स श्रीहरिः । केनचित् । भक्तेन नागरज्ञातीयेन भूतकाले जीर्णदुर्गवासिना नरसिंहाख्यभक्तब्राह्मणेन । कृतं रचितम् । धन्यं वृन्दावनम् । इत्येवंभूतम् । कृष्णपद्यं कृष्णमाहात्म्यबोधककीर्त्तनम् । साधुभिः प्रेमानन्दादिगायकमुनिभिः । गापयामास ॥ २९ ॥

श्रीमदिति । ततस्तदनन्तरम् । स्वयं श्रीहरिः । श्रीमद्भागवतस्य । अहो अमी देववरामरार्चितम् । इत्येनम् । एकम् । श्लोकमपि । अवदत् ॥ ३० ॥ स इति । अथानन्तरम् । स श्रीहरिः । आह । हे भक्ताः ! । श्रीहरेः । साक्षात्सम्बन्धस्य । ईदृशः श्लोककीर्त्तनयोरुदितः । महान् । प्रतापः । अस्ति । इतीत्थम् । विज्ञाय । स श्रीहरिः । परमादरात् । सेव्यः । सुदृढतन्निश्चयविधानपूर्वमेकान्तिकभावेनोपासनीयः ॥ ३१ ॥ तस्येति । एवमेवंविधम् । ईश्वरस्य । तस्य श्रीहरेः । पीयूषोपमम् । उदारं महार्थनिभृतम् । वचनम् । निशम्य । गृहिभिः । सह । सदोनिषण्णाः । तदेकचित्ताः श्रीहर्येकान्तिकभावापन्नमानसाः । भक्ताः अखिलाः । ते । सन्तः । परममुदम् । सम्प्रापुः ॥ ३२ ॥ स्वस्य निश्चययोः पूर्णापूर्णयोर्लक्षणे हरेः । सहेतुके य ऊचेऽसौ स्वं पूर्णं तं क्रियान्मयि ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्सूनुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां द्विशताधिकद्वादशस्तरङ्गः ॥ २१२ ॥ १२ ॥

समाधेर्भवने हेतु ऋते साधनसम्पदम् । व्यापकत्वं च मूर्त्तस्य हरेरुक्तं त्रयोदशे ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८८२) सहस्यकृष्ण-

श्रीमद्भागवतस्यैकं श्लोकमप्यवदत्ततः । अहो अमी देववरामरार्चितमिति स्वयम् ॥ ३० ॥ सोऽथाह श्रीहरेः साक्षात्सम्बन्धस्येदृशो महान् । प्रतापोऽस्तीति विज्ञाय सेव्यः स परमादरात् ॥ ३१ ॥ तस्यैवं वचनमुदारमीश्वरस्य पीयूषोपममखिला निशम्य भक्ताः । सन्तस्ते सह गृहिभिः सदोनिषण्णाः सम्प्रापुः परममुदं तदेकचित्ताः ॥ ३२ ॥

इति श्रीहरिवाक्यसुधासिंधौ शतानन्दमुनिविरचिते शद्विताधिकद्वादशस्तरङ्गः ॥ २१२ ॥ १२ ॥

शकाब्दे विक्रमार्कस्य नेत्राष्टवसुभूमिते । सहस्यकृष्णसप्तम्यां वचोऽमृतमिदं हरेः ॥ १ ॥ तत्र वृत्तालयपुरे लक्ष्मीनारायणस्य सः । दुर्गोऽधस्तान्निम्बतरोर्व्यराजत्पट्टकासने ॥२॥ सिताम्बरधरः श्वेतपुष्पहारविराजितः । सलीलं दाडिमफलं दधदेकेन पाणिना ॥ ३ ॥ हैमछत्रात्तराजश्रीर्वृतो भक्तैः सहस्रशः । आनन्दयन् भक्तजनान्स समैक्षत सर्वतः ॥ ४ ॥

सप्तम्यां पौषमासागतकृष्णपक्षस्य सप्तमीतिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । वृत्तालयपुरे । लक्ष्मीनारायणस्य । दुर्गे । निम्बतरोः । अधस्तात् । पट्टकासने पट्टकोपरिकृते पार्श्विकश्वेतोत्तरच्छदसहिते स्थूलतूलिकासने । स श्रीहरिः । व्यराजत्स्वावासभवनादेत्य तदारोहणपूर्वमुपवेशनचातुर्येण शुशुभे ॥ २ ॥ सितेति । सिताम्बरधरः स्वाङ्गधृतसकलश्वेतवसनः । श्वेतपुष्पहारविराजितः सुश्वेतमन्दारकुसुममालाशोभमानः । एकेन । पाणिना हस्तेन । दाडिमफलम् । सलीलमुत्क्षेपणलीलया सहितं यथातथा । दधत् ॥ ३ ॥ हैमेति । हैमछत्रात्तराजश्रीः स्वभक्तेन धृतेन सकलशसौवर्णीयछत्रेण सम्प्राप्तसामन्तनृपपतिराजाधिराजशोभः । सहस्रशो नानादेशागतत्वाद्बहुभिः । भक्तैस्त्यागिभिर्गृहिभिश्च स्वाश्रितजनैः । वृतः सभायां परिवेष्टितः । स श्रीहरिः । भक्तजनान् । आनन्दयन्सन् । सर्वतः समंततः । समैक्षत । इति द्वयोरेकसम्बन्धः ॥ ४ ॥

पप्रच्छेति । तमेवंविधशोभाविशिष्टं श्रीहरिम् । भृगुगुप्तो भद्रायनपुरागत एतन्नामावैश्यः । पप्रच्छ । हे हरे ! । साधनसम्पदम् । विनाऽष्टाङ्गयोगादिसाधनसम्पत्तिमृते । केषांचित् । पुंसाम् । समाधिः । जायते त्वद्दर्शनेनैव भवति । स समाधिः । कथम् । भवेत् । समाधेर्यमादितदष्टाङ्गसिद्धिपूर्वत्वाचां विना त्वद्दर्शनमात्रेण तद्भवने को हेतुरस्तीत्यर्थः ॥ ५ ॥ इतीति । इत्यमुना प्रकारेण । पृष्टो भृगुगुप्तेनानुयुक्तः । स श्रीहरिः । तं भृगुगुप्तम् । प्राह । हे वैश्यसत्तम ! । त्वम् । शृणु । अत्र लोके । मर्त्यानां मनुष्याणाम् । श्रेयसे कल्याणं विधातुम् । कृष्णोऽक्षरधामाधिपतिः स्वयं श्रीहरिः । नृषु । साक्षात् । जायते सकलजननयनविषयो भवति ॥ ६ ॥ राजेति । स श्रीहरिः । क्वचित् । राजरूपः । स्यात् । कर्हिचित् । साधुरूपश्च । स्यात् । उभयो द्विविधोऽपि भगवान् । स्वसम्बन्धात् । नृणाम् । श्रेयः । करोति ॥ ७ ॥ सकलेति । स श्रीहरिः । नराकारः सन्नपि । सकलैश्वर्यपूर्णः । ध्रुवमेव । स्यात् । अतोहेतोः । तस्य नराकृतिश्रीहरेः । प्राकृतनरैर्लौकिकमनुष्यैः सह । तुल्यता । न सम्भवेत् ॥ ८ ॥ एतदेव दृष्टान्तेन द्रढयति । पाषाण इति । यथा । आकर्षश्चुम्बकाश्मा । पाषाणः सन्नपि ।

पप्रच्छ भृगुगुप्तस्तं विना साधनसम्पदम् । समाधिर्जायते पुंसां केषांचित्स कथं भवेत् ॥ ५ ॥ इति पृष्टः स तं प्राह शृणु त्वं वैश्यसत्तम ! । साक्षात्कृष्णोऽत्र मर्त्यानां श्रेयसे जायते नृषु ॥ ६ ॥ राजरूपः क्वचित्स स्यात्साधुरूपश्च कर्हिचित् । उभयोऽपि स्वसवन्धान्नृणां श्रेयः करोति हि ॥७॥ सकलैश्वर्यपूर्णः स्यान्नराकारोऽपि स ध्रुवम् । अतो न प्राकृतनरैस्तुल्यता तस्य सम्भवेत् ॥ ८ ॥ पाषाणोऽपि यथाऽऽकर्षः स्वशक्त्यैवेतराश्मतः । भिद्यते भगवांस्तद्वत्स्वैश्वर्येणान्यमर्त्यतः ॥ ९ ॥ लोहकीला यथा तर्याश्चुम्बकं प्रति सर्वतः । आकृष्टाः स्वयमेव स्युः सूत्रधारक्रियां विना ॥ १० ॥ तथा कृष्णं श्रद्धया यः पश्येत्तस्येन्द्रियाण्यपि । आकृष्टानि भवेयुश्च स्वयमेव हि तं प्रति ॥ ११ ॥ ततः समाधिर्भवति व्रजे गोकुलवासिनाम् । यथा कृष्णेक्षणात्पूर्वमासीत्तद्वदितीयताम् ॥ १२ ॥

स्वशक्त्या स्वनिष्ठयाऽऽकर्षणशक्त्यैव । इतराश्मतः स्वेतरपाषाणेभ्यः । भिद्यते पृथग्भवति । तद्वत्तथैव । भगवान्मनुष्याकृतिः श्रीहरिः । स्वैश्वर्येण स्वनिष्ठासाधारणसामर्थ्येन । अन्यमर्त्यतः स्वेतरमनुष्येभ्यः । भिद्यते ॥ ९ ॥ एवं श्रीहरेः सकलजनवैलक्षण्यं दृष्टान्तेन संसाध्य साम्प्रतं सकलमनुष्यसमतया प्रतीयमानाया अपि तन्मूर्तेरलौकिकासाधारणैश्वर्यं दर्शयंस्तद्दर्शनेन साधनसिद्धिं विनापि तदीक्षकाणां समाधिप्राप्तिं दृष्टान्तेनाह सपादद्वाभ्याम् । लोहेति । यथा । तर्या नौकायाः । लोहकीलाः । सर्वतस्तस्याः समंततः प्रदेशात् । सूत्रधारक्रियां तक्षविहितावघातप्रयत्नम् । विना । चुम्बकमयस्कान्ताश्मानं प्रति । स्वयमेव । आकृष्टाः । स्युः ॥ १० ॥ तथेति । तथा । यः पुरुषः । कृष्णं प्रत्यक्षं श्रीहरिम् । श्रद्धयाऽऽदरतः । पश्येत् । तस्य पुरुषस्य । इन्द्रियाण्यपि । तं कृष्णं प्रति । स्वयमेव यमादिकाष्टाङ्गसिद्धिं विनैव । आकृष्टानि । भवेयुः । चकारोऽन्तःकरणप्राणसमुच्चयार्थकः ॥ ११ ॥ तत इति । ततः श्रीहरिमूर्त्तिदर्शनसमकालं तदिन्द्रियप्राणान्तःकरणाकर्षणानन्तरम् । समाधिः

श्रीहरिमूर्त्तौ तच्चित्तादि निरोधः । भवति जायते । एतदेव श्रीकृष्णमूर्त्तीक्षकगोपदृष्टान्तेन द्रढयति । यथा । पूर्वम् । व्रजे गोकुले । गोकुलवासिनां श्रीकृष्णे स्नेहवतां नन्दादिगोपानाम् । कृष्णेक्षणाच्छ्रीकृष्णमूर्त्तिदर्शनतः । आसीत्समाधिर्बभूव । तद्वत् । इति । ईयताम् । तद्वदेवैतेऽपि मन्मूर्त्तीक्षणतः समाधिं प्राप्ता भवन्तीति बुध्यतामित्यर्थः ॥ १२ ॥ नन्वस्त्वेवमेतेषां समाधिः परन्तु ते यथा तत्र कृष्णमपश्यंस्तथैते तत्र कं पश्यन्तीत्याकांक्षायामाह । तमिति । तथा । ते गोपाः । तत्र समाधौ । कोटिसूर्यसमद्युतिम् । श्रीकृष्णम् । अक्षरे धाम्नि । ऐक्षन्तापश्यन् । तथा । इमे समाधिमन्तः । तं कृष्णम् । मामेव । पश्यन्ति ॥ १३ ॥ अस्मिन्निति । अस्मिन् । काले वर्त्तमानसमये । भूमौ । यः । हरिः । अस्ति । तस्य हरेः । मूर्त्तिरेव । एवमेवंभूतस्य । समाधेः । कारणं । हेतुभूता । भवति । इतीत्थम् । अवगम्यताम् ॥ १४ ॥ प्राक्तनस्वावतारमूर्त्तिभ्यः साम्प्रतकालीनस्यावतारिणः श्रीहरेः स्वस्य विशेषं वक्तुं ताभ्य स्वस्य प्रतापाधिक्यमाह द्वाभ्याम् । बहूनामिति । यद्यतोहेतोः । अद्य साम्प्रतम् । हरेः बहूनाम् । जीवानाम् । उद्धारेच्छा भवाब्धेरुधृत्य स्वधामनयनसङ्कल्पः । अस्ति । ततोहेतोः । अभक्तानामपि । द्रुतं श्रीहरिमूर्त्तीक्षणसमकालम् । समाधिः ।

तमेव तत्र श्रीकृष्णं कोटिसूर्यसमद्युतिम् । यथैक्षन्ताक्षरे धाम्नि ते तथेमे तमेव माम् ॥ १३ ॥ अस्मिन्काले हरिर्भूमौ योऽस्ति तस्यैवमेव हि । समाधेः कारणं मूर्त्तिर्भवतीत्यवगम्यताम् ॥ १४ ॥ बहूनामद्य जीवानामुद्धारेच्छास्ति यद्धरेः । ततः समाधिर्भवति ह्यभक्तानामपि द्रुतम् ॥ १५ ॥ कृष्णेच्छया तिरश्चां च सोऽस्ति हीक्षणमात्रतः । किं पुनस्तर्हि भक्तानां ध्यानिनां स नृणामिति ॥ १६ ॥ अथ पप्रच्छ तं मुक्तानन्दः साधुः कृतानतिः । सर्वत्र व्यापकं ब्रह्म त्वमित्याहुर्बुधाः प्रभो ! ॥१७॥ व्यापकस्य न मूर्त्तत्वं मूर्त्तं स्याद् व्यापकं कथं । इति पृष्टस्तमवदद्धरिर्ब्रह्मास्ति मूर्त्तिमत् ॥ १८ ॥ ब्रह्म तत्कृष्ण एवोक्त एकदेशगतोऽपि सः । सर्वत्र व्यापकोऽस्त्येव स्वशक्त्या तेजसाऽर्कवत् ॥ १९ ॥

भवति । हि प्रत्यक्षमेवात्येतत् ॥ १५ ॥ कृष्णेति । किञ्च । कृष्णेच्छया श्रीहरिसङ्कल्पेन । तिरश्चां पशुपक्ष्यादिजीवानाम् । ईक्षणमात्रतः श्रीहरिमूर्त्तिदर्शनसमकालमेव । स समाधिः । अस्ति जायते । हि । तर्हि । भक्तानाम् । ध्यानिनाम् । नृणाम् । समाधिः । जायते । इत्यत्र । पुनः । किं वक्तव्यम् ॥ १६ ॥ अथानन्तरम् । मुक्तानन्दः । साधुः । कृतानतिः कृतप्रणामः । सन् । तं श्रीहरिम् । पप्रच्छ । हे प्रभो ! । सर्वत्र । व्यापकम् । ब्रह्म त्वमसि । इतीत्थम् । बुधा ज्ञानिभक्ताः । आहुः ॥ १७ ॥ व्यापकस्येति । व्यापकस्य । मूर्त्तत्वम् । न स्यात् । अतः । मूर्त्तम् । व्यापकम् । कथम् । स्यात् । इत्यमुना प्रकारेण । पृष्टो मुक्तानन्दमुनिनानुयुक्तः । हरिः । तं मुक्तानन्दमुनिम् । अवदत् । हे मुने ! । ब्रह्म । मूर्त्तिमत् । अस्ति ॥ १८ ॥ ब्रह्मेति । तद्ब्रह्म । कृष्ण एव । उक्तः । स कृष्णः । एकदेशगतोऽक्षरधामरूपैकदेशावस्थितः सन्नपि । तेजसा । अर्कवत्सूर्य इव । स्वशक्त्याऽन्तर्यामित्वरूपस्वैश्वर्येणैव । सर्वत्र सकलजीवेश्वरादौ । व्यापको यथोचिततत्तत्कर्मफलप्रदानाय व्याप्यास्थितः । अस्ति ॥ १९ ॥

मूर्त्तस्य व्यापनं द्विधा । सूर्यवत्तेजसा योगिवद् दूरश्रवणदर्शनादिना स्वैश्वर्येण च । तत्र सूर्यदृष्टान्तेन तेजःस्थानीयान्तर्यामिशक्त्या व्यापनप्रकारमुक्त्वा साम्प्रतं योगिवदैश्वर्येण तत्प्रकारमाह चतुर्भिः । यथेति । यथा । योगसिद्धोऽष्टाङ्गयोगसंसाधनश्रमदर्शनोद्भूतपरमेश्वरानुग्रहसम्भूताणिमाद्यैश्वर्यसम्पन्नः । कश्चिद्योगिभक्तः । स्वस्थानस्थितः । सन्नेव । दूरगानतिदूरदेशावस्थितमनुष्याद्युदितान् । शब्दान् । शृणोति । दूरस्थान् दूरदेशावस्थितजनादिवस्तुजातानि । वीक्षते पश्यति चापि ॥ २० ॥ तथेति । तथा । स्वाभाविकानन्तैश्वर्यसम्पन्नः । ईश्वरः सर्वनियन्ता श्रीहरिः । अक्षरे । धाम्नि । स्थितः सन्नेव । कोटिशः । अण्डानि ब्रह्माण्डावस्थितचिदचिद्वस्तूनि । व्याप्नोति स्वैश्वर्येण व्याप्यावस्थितो भवति ॥ २१ ॥ यदेति । असौ श्रीहरिः । यदा । यदा । यत्र । यत्र यस्मिन् यस्मिन्ब्रह्माण्डे । अवस्थितेभ्यो भक्तजनेभ्य इतिशेषः । स्वदर्शनम् । दातुम् । ईच्छेत् । तदा । तदा । तत्र । तत्र तस्मिंस्तस्मिन्ब्रह्माण्डे । स्वेच्छया । आविर्भवति स्वयंतया स्वैकान्तिकमुक्तेषु स्वगुणैश्वर्याद्यावेशतया च प्रादुर्भवति ॥ २२ ॥ एक इति । असौ श्रीहरिः । एकः सन्नपि । स्वसामर्थ्येन । अनेकरूपः । जायते । एवं प्रकारद्वयेन । तस्य मूर्त्तस्य श्रीहरेः । व्यापकता । ज्ञातव्या । अरूपतोऽमूर्त्तत्वेन । न तु व्यापकता नैव ज्ञातव्या ॥ २३ ॥ स्फुटबोधायोक्तार्थमेव पुनरर्द्धेनाह । एवमिति । हे मुने ! । एवममुना प्रकारेण । नित्यदिव्यतनुर्नित्यसिद्धदिव्यमूर्त्तिः । प्रभुरतिसमर्थः । स श्रीहरिः । व्यापकः । ज्ञेयः । नन्वस्तु मूर्त्तस्यैवं व्यापकत्वं परन्तु व्यापकस्य मूर्त्तत्वं स्याच्चेच्छास्त्रे तदरूपत्वं कथमुक्तमित्यात्रार्द्धेनाह । हे मुने ! । तस्य । अप्राकृतस्वरूपत्वान्मायागुणसत्त्वादिकार्यतत्त्वमयाकृतिवर्जितत्वाद्धेतोः । सः । क्वचिच्छास्त्रे । अरूपः । उच्यते न तु वस्तुत उच्यते तस्य नित्यसिद्धदिव्यमूर्त्तित्वस्यैव सकलसच्छास्त्रेषूक्तत्वात् ॥२४॥ श्रुत्वेति । इत्येवंविधाम् । धार्मेर्धर्मसूनोः । तस्य श्रीहरेः । अमृतोपमानाममृततुल्याम् । वाचम् । श्रुत्वा । स मुक्तानन्दमुनिः । सदोगताः समीपविष्टाः । भक्ताः । ये । अपरे । मुनयः । गृहिणश्च । ते च । अन्तःकरणे स्वस्वमानसे । अतितोषम् । आपुः ॥ २५ ॥ समाधेर्भवने हेतुं स्वमूर्त्तिं यो हरिर्जगौ । व्यापकत्वं च मूर्त्तस्य स्वस्य मद्धृदि सोऽस्तु वै ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्सूनुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां द्विशताधिकत्रयोदशस्तरङ्गः ॥ २१३ ॥ १३ ॥

यथा कश्चिद्योगसिद्धः स्वस्थानस्थित एव सन् । शृणोति दूरगान् शब्दान् दूरस्थान् वीक्षतेऽपि च ॥ २० ॥ तथा स्वाभाविकानन्तैश्वर्यसम्पन्न ईश्वरः । स्थित एवाक्षरे धाम्नि व्याप्नोत्यण्डानि कोटिशः ॥ २१ ॥ यदा यदा यत्र यत्र दातुमिच्छेत्स्वदर्शनम् । तदा तदा तत्र तत्र स्वेच्छयाऽऽविर्भवत्यसौ ॥ २२ ॥ एकोऽप्यनेकरूपोऽसौ स्वसामर्थ्येन जायते । एवं व्यापकता तस्य ज्ञातव्या न त्वरूपतः ॥ २३ ॥ एवं स व्यापको ज्ञेयो नित्यदिव्यतनुः प्रभुः । अप्राकृतस्वरूपत्वादरूपः क्वचिदुच्यते ॥ २४ ॥ श्रुत्वेति धार्मेरमृतोपमानां स तस्य वाचं मुनयोऽपरे च । सदोगता ये गृहिणश्च भक्तास्ते चापुरन्तःकरणेऽतितोषम् ॥ २५ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते द्विशताधिकत्रयोदशस्तरङ्गः ॥ २१३ ॥ १३ ॥

नरस्यापि कुपात्रस्य समाधेर्भवने स्फुटम् । सत्पात्रतोक्त्या कथितं कारणं तु चतुर्दशे ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८८२) सहस्यान्तनवम्यां पौषमाससम्बन्धिनः कृष्णपक्षस्य नवमीतिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । वृत्तालयपुरे । लक्ष्मीनारायणस्य । मन्दिरस्य । अग्रतः पुरःप्रदेशे । मञ्चे मञ्चासने । सितवासाः परिधृतसकलश्वेतवसनः । स श्रीहरिः । व्यराजत ॥ २ ॥ वृत्तमिति । भूरिभिर्नानादेशागतत्वाद्बहुभिः । त्यागिगृहस्थैस्त्यागिभिर्गृहिभिश्च । भक्तैः । वृतं सभायां संवेष्टितम् । तं श्रीहरिम् । वटपुरागतो न्यग्रोधपत्तनादायातः । रामचन्द्राख्यः । भक्तः दाक्षिणात्यवैश्यविशेषव्याघ्रमोटयचान्द्रोपसंज्ञ एतन्नामा भक्तजनः । आनतः कृतप्रणामः सन् । पप्रच्छ ॥ ३ ॥ कुपात्रेति । हे हरे ! । इह सत्सङ्गे । कुपात्रपुंसो वक्ष्यमाणलक्षणस्य कुपात्रपुरुषस्यापि । समाधिः । जायते । तस्य तथाविधस्यापि समाधिभवनस्य । कारणं हेतुः । किमस्ति । इतीत्थम् । पृष्टो रामचन्द्रभक्तेनानुयुक्तः । प्रभुः श्रीहरिः । तं रामचन्द्रभक्तम् । उवाच ॥ ४ ॥

शकाब्दे विक्रमार्कस्य नेत्राष्टवसुभूमिते । सहस्यान्तनवम्यां तु वचोऽमृतमिदं हरेः ॥ १ ॥ तत्र वृत्तालयपुरे लक्ष्मीनारायणस्य सः । मन्दिरस्याग्रतो मञ्चे सितवासा व्यराजत ॥ २॥ वृतं त्यागिगृहस्थैस्तं भक्तैर्भूरिभिरानतः । पप्रच्छ रामचन्द्राख्यो भक्तो वटपुरागतः ॥ ३ ॥ कुपात्रपुंसोऽपि हरे ! समाधिरिह जायते । किं तस्य कारणमिति पृष्टः प्रभुरुवाच तम् ॥ ४ ॥ धर्मशास्त्रोदितान्वर्णाश्रमधर्मान्न पालयेत् । यः कुपात्रं स कथितः सुपात्रं च तदादरः ॥ ५ ॥ कुपात्रस्यापि पुंसश्चेद् हृदये कृष्णतत्सताम् । गुणः सम्यक् प्रविष्टः स्यादगुणस्तु न सर्वथा ॥ ६ ॥ तर्ह्यसौ तेन पुण्येन स्वधर्मत्यागदोषतः । विमुच्यते सद्य एव पवित्रो जायते भृशम् ॥ ७ ॥ अतो लगति तच्चित्तं मूर्तौ भगवतो दृढम् । समाधिर्जायते तेन सहसेत्यवगम्यताम् ॥ ८ ॥

धर्मेति । हे भक्त ! । यः पुरुषः । धर्मशास्त्रोदितान् । वर्णाश्रमधर्मान् । न पालयेत् । स पुरुषः । कुपात्रं कुपात्रशब्दवाच्यः । कथितः । यः । तदादरो वर्णाश्रमधर्मपालने आदरयुक्तः । सः । सुपात्रं सुपात्रशब्दवाच्यः । कथितः ॥ ५ ॥ कुपात्रस्येति । चेद्यदि । कुपात्रस्यापि । पुंसः । हृदये । कृष्णतत्सतां प्रत्यक्षस्य श्रीहरेस्तत्साधूनां च । गुणः । सम्यक् । प्रविष्टः । स्यात् । अगुणोऽल्पमात्रोऽपि दोषस्तु । सर्वथा । प्रविष्टो न स्यात् । तर्हीत्युत्तरेण सम्बन्धः ॥ ६ ॥ तर्हीति । तर्हि तदा । असौ कुपात्रपुरुषोऽपि । तेन कृष्णतत्सद्गुणग्रहणात्मकेन । पुण्येन सुकृतेन । स्वधर्मत्यागदोषतः । सद्य एव । विमुच्यते । भृशमतिशयेन । पवित्रः । जायते ॥ ७ ॥ अत इति । अतोहेतोः । तच्चित्तं प्राक्कुपात्रपुरुषमानसम् । भगवतः श्रीहरेः । मूर्त्तौ । दृढं यथातथा । लगत्यासज्जते । तेन हेतुना । सहसा तूर्णमेव । समाधिः । जायते । इतीत्थम् । अत्रगम्यताम् । कुपात्रस्यापि पुरुषस्य समाधिहेतुस्तदन्तःकरणे साक्षात्कृष्ण तत्सद्गुणप्रवेश एवेति भाव ॥ ८ ॥

अथ सुपात्रस्यापि पुंसः साक्षात्कृष्णतत्सद्गुणग्रहणेन कृतार्थतां ब्रुवंस्तेषामगुणग्रहस्य महापापादधिकतां च ब्रुवन् युक्त्या तं निषेधति चतुर्भिः । सुपात्रमिति । लोके । शास्त्रे च । सम्मतः । यः । सुपात्रम् । पुरुषः । अस्ति । तस्यैवंविधस्यापि । पुरुषस्य । हृदये । यदि । कृष्णतत्सताम् । द्रोहधीरगुणग्रहपूर्वा द्रोहाचरणमतिः । स्यात् । तर्हीत्युत्तरेण सम्बन्धः ॥ ९ ॥ तर्हीति । तर्हि । अतिपापेनातिपापरूपेण । तेन द्रोहेण । अस्य सुपात्रपुरुषस्य । सर्वम् । सुकृतं पुण्यम् । तत्कालं तत्क्षणमेव । विलयं नाशम् । याति । अथानन्तरम् । स सुपात्रपुरुषः । पातकी कुपात्रताहेतुपापयुक्तः । जायते ॥ १० ॥ तदिति । तद्द्रोहपापं साक्षात्कृष्णतत्सद्द्रोहपातकम् । महापापाद् ब्रह्महत्यादिमहापापतोऽपि । अधिकम् । अस्ति । ध्रुवम् । यतः पुरुषः साधुसंश्रयात् कृष्णैकान्तिकसाध्वाश्रयं प्राप्य । महापापात् । प्रमुच्यते ॥११॥ पापमिति । तद्द्रोहजम् । यत् । पापम् । तत् । क्वापि कदाचिदपि । केनापि । पुण्येन । न क्षयेत् । पुण्यतीर्थकृताघस्य पुण्यतीर्थरूपकृष्णतत्सत्कृतद्रोहरूपातिपातकस्य । वज्रलेपत्वविश्रुतेः शास्त्रे वज्रलेपत्वोक्तेः । न क्षयेदितिसम्बन्धः । तथा च स्मृतिः । 'अन्यक्षेत्रे कृतं पापं तीर्थक्षेत्रे विनश्यति । तीर्थक्षेत्रे कृतं पापं वज्रलेपो भवत्यलमि'ति ॥ १२ ॥

सुपात्रं यस्तु पुरुषो लोके शास्त्रे च सम्मतः । तस्यापि हृदये कृष्णतत्सतां द्रोहधीर्यदि ॥९॥ तर्हि तेनातिपापेन सर्वं सुकृतमस्य च । तत्कालं याति विलयं जायतेऽथ स पातकी ॥ १० ॥ तद्द्रोहपापमधिकं महापापादपि ध्रुवम् । महापापात्प्रमुच्येत पुरुषः साधुसंश्रयात् ॥ ११ ॥ पापं तद्द्रोहजं यत्तत् क्वापि केनापि न क्षयेत् । पुण्यतीर्थकृताघस्य वज्रलेपत्वविश्रुतेः ॥ १२ ॥ अतो लोकैः कल्पितो यो धार्मिको न स धार्मिकः । धर्महीनस्तन्मतश्च न ज्ञेयो धर्मवर्जितः ॥ १३ ॥ अतो यस्य समाधिः स्यात्स ज्ञेयोऽतीव पुण्यवान् । बहिर्दृश्यं त्वनाचारं सोऽल्पकालेन हास्यति ॥ १४ ॥ श्रुत्वेति वाचं सुधयोपमेयां जगद्गुरोस्तस्य स तोषमाप । सन्तोऽस्य भक्ता गृहिणश्च सर्वे सभोपविष्टा मुदमापुरग्र्याम् ॥१५॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते द्विशताधिकचतुर्दशस्तरङ्गः ॥ २१४ ॥ १४ ॥

अत इति । अतोहेतोः । लोकैर्जनैः शास्त्रेण च । यः । धार्मिकः । कल्पितो मतः । सः । धार्मिकः । नास्ति । तन्मतो लोकशास्त्रसम्मतः । धर्महीनः । धर्मवर्जितः । न ज्ञेयः । नहि लोकशास्त्रैर्धार्मिकतया सम्मत एव धर्मी न च अधर्मितया मतोऽधर्मी किन्तु साक्षात्कृष्णतत्सद्गुणग्रहणदोषग्रहणे एव धर्म्यधर्मित्वहेतू निषादाधिपतिगुहजरासन्धादिषु तथा दर्शनादितिभावः ॥१३॥ अत इति । अतोहेतोः । यस्य पूर्वोक्तस्य पुरुषस्य । समाधिः । स्यात् । स पुरुषः । अतीव । पुण्यवान् । ज्ञेयः । स पुरुषः । बहिर्दृश्यमुपरिष्टादीक्ष्यम् । अनाचारं स्वीयायोग्याचरणं तु । अल्पकालेन । हास्यति त्यक्ष्यति । तद्गृहीतकृष्णतत्सद्गुणत्वेन समाधीक्षितालौकिकभगवदैश्वर्यतया च कृततदाश्रयस्य तस्य शनैः शनैरनाचारक्षयेण स शुद्धो भविष्यतीति भावः ॥ १४ ॥ श्रुत्वेति । इत्येवंविधाम् । जगद्गुरोः । तस्य श्रीहरेः । सुधया । उपमेयाम् । वाचम् । श्रुत्वा । स रामचन्द्राख्यो भक्तः । तोषम् । आप । सभोपविष्टाः । अस्य श्रीहरेः । भक्ताः । सर्वे । सन्तो मुनयः । गृहिणश्च । अग्र्यां श्रेष्ठाम् । मुदम् । आपुः ॥१५॥ कुपात्रस्य सुपात्रत्वमुक्त्वा नुर्यः स्वयोगतः । हेतुं समाधौ तच्चोचे दृगग्रे सोऽस्तु मे हरिः ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरि-

कृष्णभगवत्स्नुरघुवीराचार्यविरचितायां श्रीहरिवाक्यसुधासिन्धुटीकायां द्विशताधिकचतुर्दशस्तरङ्गः ॥ २१४ ॥ १४ ॥

आसुरत्वे च दैवत्वे जनानां कारणं परम् । दृष्टान्तदर्शनेनैव प्रोक्तं पञ्चदशे स्फुटम् ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८८२) सहस्यकृष्णैकादश्यां पौषमासीयकृष्णपक्षस्यैकादशीतिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । वृत्तालयपुरे । लक्ष्मीनारायणस्य । दुर्गे । निम्बतरोः । अधस्तात् । सुपट्टके पट्टकोपरिस्थिते पार्श्विकोपबर्हश्वेतोत्तरच्छदस्थूलतूलिकासहिते पर्यङ्कासने इत्यर्थः । स श्रीहरिः । व्यराजत ॥ २ ॥ तं विशिनष्टि । हैमेति । हैमबुट्टौ सुवर्णसूत्रकृतकनकमुद्रावर्त्तुलबुट्टयुक्तावरुणौ रक्तवर्णावनर्घ्यौ महार्हौ यौ नीशारसुरवारौ तौ । तथा । कौसुम्भावग्निशिखरङ्गरञ्जितावनर्घ्यौ सुवर्णसूत्रकृतचतुरङ्गुलपरिणाहप्रान्तलेखा रत्नीपरिणाहपल्लवलेखायुक्तत्वान्महार्हौ यौ शीर्षण्यप्रावारावुष्णीषोत्तरीयवसने तौ । धारयन्स्वाङ्गे दधानः ॥ ३ ॥ सदिति । सच्छत्रचामरैः स्वभक्तधारितसच्छत्रेण स्वभक्तवीजितसच्चामराभ्यां चेत्यर्थः । रम्यं राजाधिराजश्रिया तिरमणीयम् । नानाभक्तगणैर्नानादेशागतैस्त्यागिगृहिस्वभक्तवृन्दैः । वृतं सभायां परिवेष्टितम् । तं श्रीहरिम् ।

शकाब्दे विक्रमार्कस्य नेत्राष्टवसुभूमिते । सहस्यकृष्णैकादश्यां वचोऽमृतमिदं हरेः ॥ १ ॥ तत्र वृत्तालयपुरे लक्ष्मीनारायणस्य सः । दुर्गेऽधस्तान्निम्बतरोर्व्यराजत सुपट्टके ॥२॥ हैमबुट्टारुणानर्घ्यनीशारसुरवारकौ । कौसुम्भानर्घ्यशीर्षण्यप्रावारौ धारयंस्तथा ॥ ३ ॥ सच्छत्रचामरै रम्यं नानाभक्तगणैर्वृतम् । पप्रच्छ शोभारामस्तं शास्त्रविद्विहितानतिः ॥ ४ ॥ भवन्ति द्विविधा जीवा दैवाः केचित्तथाऽऽसुराः । तं किं स्वभावतः सन्ति तादृशा वा निमित्ततः ॥ ५ ॥ श्रीहरिरुवाच – पुरा प्रलयकाले तु मायायां द्विविधा अपि । आसन् जीवा विलीना वै सर्गकालेऽथ उद्गताः ॥ ६ ॥ यादृशं यादृशं कर्म ते कुर्वन्तोऽभवंस्तथा । तादृशं तादृशं भावं सर्गे पृथगवाप्नुवन् ॥ ७ ॥

शास्त्रवित् । शोभारामो विप्रः । विहितानतिः कृतप्रणामः सन् । पप्रच्छ ॥ ४ ॥ भवन्तीति । हे हरे ! । जीवाः । केचित् । दैवाः । तथा । केचित् । आसुराः । इति । द्विविधाः । भवन्ति । 'द्वौ भूतसर्गौ लोकेऽस्मिन्दैव आसुर एव च'तिस्मृतेः । तादृशा द्विधाः । ते जीवाः । स्वभावतः । सन्ति । किम् । अथवा । निमित्ततः केनचिद्धेतुना । सन्ति । किम् ॥ ५ ॥ इत्थं स शोभारामेण सम्पृष्टः परमेश्वरः । नन्दयंस्तं निजांश्चान्यानब्रवीदिति सर्ववित्' । एवंभूतं शास्त्रविद्विप्रप्रश्नं श्रुत्वा कांश्चन स्वभावतः कांश्चन निमित्ततश्च दैवानासुरानालक्ष्य स्वाभाविकान् नैमित्तिकानिति द्विविधांस्तांन्ब्रुवन्नुत्तरयति । पुरेति । हे द्विज ! । पुरा पूर्वम् । प्रलयकाले । द्विविधा । अपि । जीवाः । मायायाम् । विलीनाः । आसन् । अथ प्रलयकालसमाप्त्यनन्तरम् । सर्गकाले । उद्गताः पुरुषेक्षणेन मायातो वैराजादिद्वारा प्रादुर्भूताः । आसन् ॥ ६ ॥ यादृशमिति । ते द्विविधा । जीवाः । यादृशम् । यादृशं दैवमासुरं वेत्यर्थः । कर्म । कुर्वन्तः सन्तः । तथा तथाविधाः । मायायां लीना इत्यर्थः । अभवन् । प्रलयकाले इतिशेषः । सर्गे सर्गकाले । तादृशम् । तादृशम् । भावं कर्म । पृथक् भिन्नभिन्नतया । अवाप्नुवन् ॥ ७ ॥

एवं स्वाभाविकं दैवत्वमासुरत्वमभिधाय साम्प्रतं निमित्ततस्तथाभावमाह । दैवा इति । केचन जीवाः । दैवानां जीवानाम् । सङ्गेन । हेतुनापि । दैवाः । जायन्ते । केचन जीवाः । आसुराणां जीवानाम् । सङ्गेन हेतुना चापि । आसुराः । जायन्ते । अतो दैवानां सङ्गः कार्य आसुराणां त्याज्य इतिभावः ॥ ८ ॥ एवं सङ्गस्य दैवासुरत्वे हेतुमुक्त्वा सत्कोपानुग्रहयोरपि तद्धेतुतामाह । आसुरत्वे दैवत्वे च । सत्कोपानुग्रहौ साक्षाद्भगवदेकान्तिकसाधूनां क्रोधप्रसादौ । परममुत्कृष्टम् । कारणम् । भवति । इत्येतत् । प्रसिद्धम् । अवगम्यते ॥ ९ ॥ एतदेवाह द्वाभ्याम् । वैकुण्ठेति । वैकुण्ठवासिनौ । देवौ । हरेः । पार्षदप्रवरौ जयविजयौ । ब्रह्मपुत्राणां सनकादीनाम् । कोपेन । आसुरत्वम् । अवापतुः ॥ १० ॥ प्रह्लाद इति । दैत्यपुत्रो दैत्याधिपहिरण्यकशिपुसुतः । प्रह्लादः । नारदर्षेः । अनुग्रहात् । दैवत्वम् । प्राप्य । भगवद्भक्तानाम् । अग्रणीरग्रेसरः । अभूत् । प्रसिद्धमेतच्छ्रीमद्भागवते ॥ ११ ॥ जुगुप्सुनेति । ततोहेतोः । स्वदैवत्वम् । जुगुप्सुना गोप्तुमिच्छुना रिरक्षिषुणा भक्तेनेत्यर्थः । साधवः । द्रोहेण तत्प्रतिकुलाचरणेन निमित्तेन । क्वापि कदाचिदपि । न कोपनीयाः । ते साधवस्तु ।

दैवाः केचन जायन्ते जायन्ते केचनासुराः । दैवानामासुराणां च सङ्गेन हेतुनाऽपि च ॥ ८ ॥ आसुरत्वे च दैवत्वे सत्कोपानुग्रहौ परम् । कारणं भवतीत्येतत्प्रसिद्धमवगम्यते ॥ ९ ॥ वैकुण्ठवासिनौ देवौ पार्षदप्रवरौ हरेः । कोपेन ब्रह्मपुत्राणामासुरत्वमवापतुः ॥१०॥ प्रह्लादो दैत्यपुत्रश्च नारदर्षेरनुग्रहात् । दैवत्वं प्राप्य भगवद्भक्तानामग्रणीरभूत् ॥ ११ ॥ जुगुप्सुना स्वदैवत्वं कोपनीया न वै ततः । द्रोहेण साधवः क्वापि प्रसाद्यास्ते तु सर्वदा ॥ १२ ॥ इति वाक्य सुधां निपीय विप्रः स परं तोषमवाप तस्य भूम्नः । अपरे च महासभोपविष्टाः सकला भक्तजना हि ये च तेऽपि ॥ १३ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते द्विशताधिकपञ्चदशस्तरङ्गः ॥ २१५ ॥ १५ ॥

शकाब्दे विक्रमार्कस्य नेत्राष्टवसुभूमिते । पौषकृष्णत्रयोदश्यां वचोऽमृतमिदं हरेः ॥ १ ॥

सर्वदा । प्रसाद्यास्तदनुवृत्तिपूर्वकसेवया प्रसादनीयाः ॥ १२ ॥ इतीति । इत्येवंविधाम् । भूम्नो महतः ऽपि महतः । तस्य श्रीहरेः । वाक्यसुधाम् । निपीय । विप्रः । स शोभारामः । परमुत्तमम् । तोषम् । अवाप । महासभोपविष्टाः । अपरे । ये । सकलास्त्यागिनो हेणश्च । भक्तजनाः । ते चापि । परं तोषमवापुः ॥ १३ ॥ दैवासुरत्वे सङ्गं च स्वसाधुक्रुधनुग्रहौ । यो हेतून्प्राह स हरिर्दैवत्वं मे दृढं क्रियात् ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्स्नुनु-रघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां द्विशताधिकपञ्चदशस्तरङ्गः ॥ २१५ ॥ १५ ॥

शास्त्रिद्विजादिभक्तानां निजानां पुरतः स्फुटम् । स्वहार्दं षोडशे प्रोक्तं हरिणा तद्धितेच्छुना ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८८२) पौषकृष्ण-त्रयोदश्यां पौषमासस्य कृष्णपक्षागतत्रयोदशीतिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥

तत्रेति । तत्र तिथौ । वृत्तालयपुरे । लक्ष्मीनारायणस्य । दुर्गे । निम्बाधस्तान्पिचुमन्दतरोरधःप्रदेशे । शुभे स्वास्तृतत्वादतिशोभने । मञ्चे पट्टकास्थापितपर्यङ्कासने । सिताम्बरः परिहितसकलश्वेतवसनः । स श्रीहरिः । अराजत् ॥ २ ॥ नानेति । नानादेशागतैः । अतएव । बहुभिः । भक्तैस्त्यागिगृहिस्वाश्रितजनैः । परितः समंततः । वृतं सभायां वेष्टितम् । तं श्रीहरिम् । नत्वा । वटपत्तनवासिनः । शास्त्रिणः शोभाराममुख्याः शास्त्रिब्राह्मणाः । प्रोचुः ॥३॥ प्रभो इति । हे प्रभो ! । यदि । कांश्चित् । महाजनानिभ्यान्प्रभुशक्तिमतश्च जनान् । चमत्कारं समाधिविधापनादिप्रत्यभिज्ञानैश्वर्यम् । दर्शयेः । तर्हि । इह लोके । बहवः । सत्सङ्गिजनाः । स्युः । क्षराक्षरनियन्तुः पुरुषोत्तमस्य तवास्य प्राकट्यस्य निष्कारणकरुणयाऽनेकजनकल्याणविधानहेतुत्वाच्चदर्थं चमत्कारप्रदर्शनेनानेके महान्तः सत्सङ्गिरक्षकाः स्वाश्रयिणोऽवश्यं कर्त्तव्याः सम्भवन्ति तथापि तथात्वं नाचरसि तत्र ते कोऽभिप्रायोऽस्तीतिभावः ॥ ४ ॥ 'वटपूर्वासिभिर्विप्रैरित्थं प्रोक्तः स शास्त्रिभिः । श्रीकृष्णः प्राह तानन्यान् हर्षयंश्च निजानिति' । महान्त इति । हे विप्राः । अत्र लोके । ये । महान्त आढ्याः । गृहिणः । अथवा । नृपा राजानोऽपि । भवेयुः । तैराढ्यै राजभिश्च ।

तत्र वृत्तालयपुरे लक्ष्मीनारायणस्य सः । दुर्गेऽराजच्छुभे मञ्चे निम्बाधस्तात्सिताम्बरः ॥२॥ नानादेशागतैर्भक्तैर्बहुभिः परितो वृत्तम् । तं नत्वा शास्त्रिणः प्रोचुर्वटपत्तनवासिनः ॥ ३ ॥ प्रभो कञ्चिच्चमत्कारं यदि कांश्चिन्महाजनान् । दर्शयेस्तर्हि बहवः स्युः सत्सङ्गिजना इह ॥ ४ ॥ श्रीहरिरुवाच–महान्तो गृहिणो येऽत्र भवेयुर्वा नृपा अपि । न साकं सौमनस्यं तैर्भवेन्मम कदाचन ॥ ५ ॥ तेषां धनमदो राज्य मदश्चापि भवेद्धृदि । अस्माकं तु त्यागमदस्तथा भक्तिमदोऽस्ति च ॥६॥ अतो न तेषां चास्माकमैकमत्यं भवेत् क्वचित् । वैधर्म्यमुभयेषां च भवद्भिरपि बुद्ध्यते ॥७॥ आढ्यान्नृपान्वा सत्सङ्गं समाधिं कारयेय वा । यदि तर्हि प्रसन्नास्ते दद्युर्ग्रामधनादि मे ॥ ८ ॥ तल्लालसा तु मे नास्ति कृष्णध्यानैकचेतसः । ध्यानेऽस्ति यादृशं सौख्यं राज्यादौ नास्ति तादृशम् ॥ ९ ॥

साकम् । मम । सौमनस्यं परस्परानुरागः । कदाचन । न भवेत् ॥ ५ ॥ तेषामिति । तेषामाढ्यानां नृपाणां च । हृदि मनसि । धनमदः । राज्यमदश्चापि । भवेत् । अस्माकम् । हृदि तु । त्यागमदो मायिकविषयत्यागमदः । तथा । भक्तिमदः स्नेहपूर्वं भगवत्स्वरूपध्यानोत्सेकः । अस्ति ॥ ६ ॥ अत इति । अतोहेतोः । तेषाम् । अस्माकं च । ऐकमत्यम् । क्वचित्कदाचिदपि । न भवेत् । उभयेषां रागिणां तेषां त्यागिनामस्माकं च । वैधर्म्यं समानगुणाभावश्च । भवद्भिरपि । बुद्ध्यते ॥७॥ एवं प्रश्नोत्तरं कृत्वा तदर्थपोषकं स्वाभिप्रायान्तरं वदति । आढ्यानिति । यदि । आढ्यान् । अथवा । नृपान् । सत्सङ्गम् । समाधिं वा । कारयेय स्वप्रतापेनाहं विधापयेयम् । तर्हि । ते । प्रसन्नाः सन्तः । मे मह्यम् । ग्रामधनादि । दद्युः ॥ ८ ॥ तदिति । कृष्णध्यानैकचेतसः । मे मम । तल्लालसा ग्रामधनादिप्राप्तीच्छा तु । नास्त्येव । यतः । ध्याने श्रीकृष्णस्वरूपैकचिन्तने । यादृशम् । सौख्यम् । अस्ति । तादृशम् । सौख्यम् । राज्यादौ । नास्ति । नश्वरत्वानश्वरत्वेन तयोस्तेजस्तिमिरयोरिव दूरान्तत्वादितिभावः ॥ ९ ॥

एतत्सदाचारेण द्रढयति द्वाभ्याम् । सुखमिति । चेद्यदि । राज्यादौ । सुखम् । भवेत् । तर्हि । स्वायम्भुवादयः स्वायम्भुवमनुप्रभृतयो महान्तश्चक्रवर्त्तिनो नृपाः । साम्राज्यमैकपत्यं राज्यम् । मलवत् । त्यक्त्वा । तपोवनम् । कुतः । यायुः । तपोवनस्य विजनत्वात्तत्प्राप्य तत्र भगवद्ध्यानैकपरायणा अभवन्नतो भगवत्सुखं सर्वाधिकमितिभावः । 'यद्वाञ्छया नृपशिखामणयोऽङ्गवैन्यजायन्तनाहुषगयादय ऐकपत्यम् । राज्यं विसृज्य विविशुर्वनमम्बुजाक्षे'ति श्रीभागवतोक्तेः ॥ १० ॥ कृष्णेति । चेद्यदि । स्त्रैणं स्त्रीसम्बन्धि । सौख्यं चापि । कृष्णभक्तिसमं श्रीकृष्णस्वरूपध्यानभक्तिसुखतुल्यम् । स्यात् । तदा चित्रकेत्वादयश्चित्रकेतुप्रभृतयो नृपाः । अतुलमनुपमम् । सर्वं कोटिस्त्रीसम्बन्धि । तत् सुखम् । कुतः । जह्युः । न जह्युरित्यर्थः । भगवद्ध्यानसुखस्य स्त्रैणसुखस्य च काञ्चनक्षारकर्दमयोरिव दूरान्तरत्वादितिभावः ॥११॥ कृष्णेति । ब्रह्माण्डजं सकलब्रह्माण्डभवम् । सर्वम् । सुखं मायिकविषयसौख्यम् । कृष्णसौख्यस्य । पुरतः । निरयवत् । तुच्छम् । प्रोक्तम् । तथा च श्रीभागवते । 'आराध्यात्मप्रदं देवं स्वात्मानं जगदीश्वरम् । को वृणीत गुणस्पर्शं बुधः स्यान्नरकेऽपि यदि'ति । ततोहेतोः । सन्तो भगवदेकान्तिकसाधवः । तद्विषयसुखम् । नेच्छन्ति

सुखं भवेच्चेद्राज्यादौ तर्हि स्वायम्भुवादयः । साम्राज्यं मलवत्त्यक्त्वा कुतो यायुस्तपो वनम् ॥ १० ॥ कृष्णभक्तिसमं सौख्यं स्यात्स्त्रैणमपि चेत्तदा चित्रकेत्वादयो जह्युः सर्वं तदतुलं कुतः ॥ ११ ॥ कृष्णसौख्यस्य पुरतः सर्वं ब्रह्माण्डजं सुखम् । प्रोक्तं निरयवत्तुच्छं सन्तो नेच्छन्ति तत्ततः ॥१२॥ ममापि कृष्णभक्त्युत्थं सुखं यत्सुखं मतम् । सांसारिकं सुखं यत्तद् दुःखमेवाखिलं ननु ॥१३॥ ऐश्वर्यदर्शनेनात आढ्यादीन्नैव कारये । सत्सङ्गं किन्तु सहजवृत्त्यैवाहं न चाग्रहात् ॥ १४ ॥ आग्रहस्तु हरेर्भक्तौ सत्सङ्गस्य च रक्षणे । ममास्तीत्यखिलं हार्दं मयाद्य कथितं हि वः ॥ १५ ॥ श्रुत्वेति ते भक्तिसुतस्य वाचं सुधासमां शास्त्रविदो द्विजाग्र्याः । प्रहर्षमापुर्मुनयः सदःस्था तथा गृहस्थाश्च तदीयभक्ताः ॥ १६ ॥

इति श्रीहरिवाक्यसुधासिंधौ शतानन्दमुनिविरचिते द्विशताधिकषोडशस्तरङ्गः ॥ २१६ ॥ १६ ॥

॥ १२ ॥ ममेति । कृष्णभक्त्युत्थं श्रीकृष्णस्वरूपध्यानजम् । यत् । सुखम् । तदेव मयाऽपि । सुखम् । मतम् । यत् । सांसारिकं मायिकम् । सुखमस्ति । अखिलम् । दुःखमेव । मतम् । ननु ॥ १३ ॥ ऐश्वर्येति । अतोहेतोः । ऐश्वर्यदर्शनेन समाधिविधापनाद्यैश्वर्यप्रदर्शनेन । आढ्यादीन् जनान् । अहम् । सत्सङ्गम् । नैव कारये । किन्तु । सहजवृत्त्यैव कारये । आग्रहात् । न च नैव कारये ॥ १४ ॥ ननु कस्यग्रहोऽस्तीत्यत्राह । आग्रह इति । मम । आग्रहस्तु । हरेः । भक्तौ । सत्सङ्गस्य । रक्षणे साक्षाद्भगवत्स्वरूपनिश्चयादिवार्त्ताचरणेन मुमुक्षुसत्सङ्गिनां सत्सङ्गपरित्राणे च । अस्ति । इतीत्थंभूतम् । अखिलम् । हार्दं मम हृद्गतोऽभिप्रायः । मया । अद्य । वो युष्मभ्यम् । कथितम् । हि ॥ १५ ॥ श्रुत्वेति । इत्येवंविधाम् । भक्तिसुतस्य प्रेमवतीसूनोः श्रीहरेः । सुधासमाम् । वाचम् । श्रुत्वा । ते वटपत्तनवासिनः । द्विजाग्र्या ब्राह्मणश्रेष्ठाः शास्त्रविदः शोभारामादयः शास्त्रिणः । तथा । सदःस्थाः । तदीयभक्ताः । मुनयः । गृहस्थाश्च । प्रहर्षम् । आपुः ॥१६॥ शास्त्रिद्विजादिभक्तेभ्यः

स्वस्य हार्दं तु यो हरिः । अब्रवीत्स करोत्वेव मां स्वहार्दानुसारिणम् ॥ १ ॥ वृद्धौ सत्सङ्गिनां त्राणे समर्थोऽपि स्वयं हरिः । स्वहार्दं योऽब्रवीत्स्वेषां शिक्षार्थं सोऽस्तु मे हृदि ॥ २ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्सूनुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धु-टीकायां द्विशताधिकःषोडशस्तरङ्गः ॥ २१६ ॥ १६ ॥

सतां जितेन्द्रियत्वस्य प्रकारस्त्यागिनां तथा द्विविधानां सप्तदशे भेदः उक्तः सहेतुकः ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८८२) सहस्यकृष्ण-पक्षान्ते पौषमासस्यामावास्यातिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । वृत्तालयपुरे । लक्ष्मीनारायणालयात् । पुरस्तात्पूर्वप्रदेशे । हर्म्ये त्रिभूमसौधे । आत्मीये निजे । आसने पार्थिकोत्तरच्छदादियुतस्थूलतूलिकास्तृतपर्यङ्कविष्टरे । स श्रीहरिः । उपाविशत् ॥ २ ॥ सितेति । सिताम्बरः परि-हितसकलश्वेतवसनः । बहुभिर्नानादेशागतत्वादनेकैः । भक्तजनैस्त्यागिभिर्गृहिभिश्च स्वाश्रितैः । परिवारितः सभायां परिवेष्टितः । स श्रीहरिः । पुरोनिषण्णान् स्वाग्र-

शकाब्दे विक्रमार्कस्य नेत्राष्टवसुभूमिते । सहस्यकृष्णपक्षान्ते वचोऽमृतमिदं हरेः ॥ १ ॥
तत्र वृत्तालयपुरे लक्ष्मीनारायणालयात् । पुरस्ताद्धर्म्य आत्मीय आसने स उपाविशत् ॥ २ ॥
सिताम्बरो भक्तजनैर्बहुभिः परिवारितः । पुरो निषण्णान्स सतः प्रत्यूचे स्वाननेक्षणान् ॥ ३ ॥
ज्ञानेन्द्रियाणि पञ्चाथ पञ्चकर्मेन्द्रियाण्यपि । समानि सन्ति सर्वेषां साधूनां चासतामपि ॥ ४ ॥
व्यवहारश्च तैस्तेषामेकधैवास्ति नान्यथा । एवं सति तु साधूनां स्याज्जितेन्द्रियता कथम् ॥ ५ ॥
पृच्छन्तमिति साधूंस्तं मुक्तानन्दोऽब्रवीन्मुनिः । निर्विकल्पसमाधौ तु स्याज्जितेन्द्रियता सताम् ॥ ६ ॥

प्रदेशावस्थितान् । स्वाननेक्षणान् चन्द्रचकोरन्यायेन स्वमुखैकार्पितनेत्रान् । सतो मुक्तानन्दादिसाधून्प्रति । ऊचे ॥ ३ ॥ ज्ञानेति । हे मुनयः ! । पञ्च । ज्ञानेन्द्रियाणि । अथ । पञ्च । कर्मेन्द्रियाण्यपि । सर्वेषाम् । साधूनां भवदादिभगवदेकान्तिकसताम् । सर्वेषाम् । असतां साक्षाद्भगवद्विमुखलौकिकासाधूनां चापि । समानि तुल्यानि । सन्ति ॥ ४ ॥ व्यवहार इति । तेषां साधूनां च । तैर्ज्ञानकर्मेन्द्रियैः । व्यवहारः श्रवणभाषणादिका क्रिया । एकधैकप्रकार एव । अस्ति । अन्यथा प्रकारान्तरेण । नास्ति । एवं सति । साधूनाम् । जितेन्द्रियता । कथं केन प्रकारेण । स्यात् । जितेन्द्रिया अपि श्रवणेन शृण्वन्ति रसनयाऽऽस्वादयन्ति नासिकया जिघ्रन्त्यजिते-न्द्रिया अप्येवमेव । एवं सतीमे जितेन्द्रिया इत्युभयेषां भेदकं किमस्ति तत्कथ्यतामित्यर्थः ॥ ५ ॥ पृच्छन्तमिति । इत्यमुना प्रकारेण । साधून् । पृच्छन्तम् । तं श्रीहरिम् । मुक्तानन्दः । मुनिः । अब्रवीत् । हे हरे ! । सतां त्वदाश्रितसाधूनाम् । निर्विकल्पसमाधौ सति । जितेन्द्रियता । स्यात् । निर्विकल्पसमाधौ तदिन्द्रियाणां भगवन्मूर्त्येकलग्नत्वे सत्वे सत्येव जितेन्द्रियता स्यान्नान्यथेतिभावः ॥ ६ ॥

तमिति । तमेवं वदन्तं मुक्तानन्दमुनिम् । हरिः । उवाच । हे मुने ! । तेषां निर्विकल्पसमाधिमतां साधूनामपि । देहस्मृतौ प्रारब्धभोगाय पुनर्देहस्मृतौ सत्याम् । सर्वेन्द्रियक्रियाः । अज्ञानामज्ञानिसाधूनामिव । सन्ति तुल्यतया प्रतीता भवन्ति । अन्यथा प्रकारान्तरेण । न सन्त्येव । यावन्निर्विकल्पसमाधिर्भवदुक्तप्रकारेणास्तु प्रारब्धवशतया तेषां पुनर्देहस्मृतौ तु तदिन्द्रियक्रियाणामज्ञानिभिः । साम्यदर्शनाद्विलक्षणता सर्वथा नायातेति भावः ॥ ७ ॥ इतीति । इतीत्थम् । तं मुक्तानन्दमुनिम् । उक्त्वा तत्कृतोत्तरं प्रत्याख्यायेत्यर्थः । स श्रीहरिः । तत्प्रश्नोत्तरमपि । स्वयमेव । अवदत् । हे मुने ! । इन्द्रियार्थेषु मायिकेष्विन्द्रियविषयेषु । दोषदृष्ट्या । सताम् । जितेन्द्रियता । स्यात् ॥ ८ ॥ अत इति । अतोहेतोः । विषयनिष्ठा मायिकार्थावस्थिताः । ये । दोषाः । सन्ति । ते दोषाः । उत्तमेभ्य एकान्तिकेभ्यः । सद्भ्यः साधुभ्यः । आदरात् । अवगन्तव्याः । मङ्गल्याः कल्याणकारिणो महानन्दरूपाश्च । हरेः । गुणा अपारकारुण्य–सौशील्य–वात्सल्यौदार्यादयश्च । अवगन्तव्याः ॥ ९ ॥ विषयाणामिति । मायिकानाम् । विषयाणाम् । उपभोगेन यथार्हमसेवनेन । सर्वथा । महत् । नरकदुःखम् । भावी भविष्यति । इतीत्थम् । अञ्जसा तत्त्वतः । ज्ञेयम्

तमुवाच हरिस्तेषामपि सर्वेन्द्रियक्रियाः । देहस्मृताविवाज्ञानां मुने ! सन्त्येव नान्यथा ॥ ७ ॥ इत्युक्त्वा तं स तत्प्रश्नोत्तरमप्यवदत्स्वयम् । दोषदृष्ट्येन्द्रियार्थेषु स्याज्जितेन्द्रियता सताम् ॥८॥ अतो विषयनिष्ठा ये दोषास्ते सद्भ्य आदरात् । उत्तमेभ्योऽवगन्तव्या मङ्गल्याश्च गुणा हरेः ॥ ९ ॥ विषयाणां मायिकानामुपभोगेन सर्वथा । महन्नरकदुःखं च भावीति ज्ञेयमञ्जसा ॥ १० ॥ अर्था दुःखप्रदत्वाच्च ज्ञेया एते हि शत्रवः । न प्रीतिः शत्रुषु भवेत्सहवासेऽपि कस्यचित् ॥ ११ ॥ वैरिबुद्ध्या च विषयान्सेवेरन्येऽत्यभावतः । यावदर्थं सतां तेषां स्याज्जितेन्द्रियता ध्रुवम् ॥१२॥ कृष्णस्य नवधा भक्त्या तत आयुर्व्ययश्च तैः । कार्या न त्वज्ञविमुखजीववद्विषयेहया ॥ १३ ॥ इत्युक्त्वा तं हरिः सर्वानपृच्छत्त्यागिनः प्रभुः । त्यागिनो ज्ञानिनः केचिद्भक्ताः सन्ति च केचन ॥१४॥

॥ १० ॥ अर्था इति । एते मायिकाः । अर्था विषयाः । दुःखप्रदत्वादर्जनोपभोगनाशेषु दुःखदायित्वाद्धेतोः । शत्रवः । ज्ञेयाः । हि । सहवासे शत्रुभिः सहैकत्रनिवासे सत्यपि । कस्यचित् कस्यापि जनस्य । शत्रुषु । प्रीतिः । न भवेत् ॥११॥ वैरीति । किञ्च । ये सन्तः । वैरिबुध्या । अत्यभावतः । यावदर्थं यावत्प्रयोजनम् । विषयान् । सेवेरन् । नियमस्थितिपूर्वं स्वोचितानेव तान् भुञ्जीरन्नित्यर्थः । तेषाम् । सताम् । जितेन्द्रियता । ध्रुवं निश्चितमेव । स्यात् ॥ १२ ॥ कृष्णस्येति । ततस्तदनन्तरम् । तैस्तथाविधैः साधुभिः । कृष्णस्य । नवधा । भक्त्या । आयुर्व्ययः । कार्यः । अज्ञविमुखजीववत् साक्षाद्भगवत्स्वरूपानभिज्ञासाधुप्राणिवत् । विषयेहया गुणबुद्ध्या विषयसम्पादनवाञ्छया । आयुर्व्ययः । न कार्यः । विरागयुक्तत्वाद्दोषबुद्ध्या देहनिर्वाहार्थं यथा तथा विषयसेविनः साधवो जितेन्द्रियाः रागाकुलत्वाद्गुणबुद्ध्या विषयसेविनोऽसाधवोऽजितेन्द्रिया इति रागारागौ तद्भेदकाविति भावः ॥१३॥ इतीति । इतीत्थम् । तं मुक्तानन्दमुनिम् । उक्त्वा । प्रभुः । हरिः । सर्वान् । त्यागिनो गोपालानन्दनित्यानन्दादिसाधून् । अपृच्छत् । हे साधवः ! । केचित् । त्यागिनो निवृत्तधर्माध्वावस्थिताः साधवः । ज्ञानीनो निर्बीजसांख्ययोगमार्गेणात्म-

निष्ठतया केवलज्ञानिनामानः । सन्ति । केचन । त्यागिनः । भक्ताः । सबीजसांख्ययोगमार्गेणात्मनिष्ठतया सत्यपि प्रवृत्तवत्प्रतीयमानभक्तिमार्गस्था भागवतसंज्ञाः । सन्ति ॥ १४ ॥ निवृत्तेति । तत्र तेषु द्विविधेषु त्यागिषु मध्ये । निवृत्तधर्मनिरताः । आद्या ज्ञानिनः । साधवः । उन्मत्तवत् । वर्तमानाः । देहभिन्नात्ममानिनः स्वात्मानं देहावस्थात्रयातीतं मन्यमानाः । सन्ति ॥१५॥ वर्णेति । ते ज्ञानिनः साधवः । वर्णाश्रमाभिमानेन । हीनाः । लोकविलक्षणाः खानपानोत्थानावस्थानादिक्रियासून्मत्तवद्वर्त्तमानत्वेन लोकाचारबहिर्भूताः । निःसङ्गा मायिकार्थसङ्गवर्जिताः । एकचरा एकाकिन एव विचरन्तः सन्तः । कुत्रचित्कस्मिंश्चिदपि सांसारिकपदार्थे । नैव बद्ध्यन्ते ॥ १६ ॥ अन्यइति । त्यागिनः । अन्ये भक्ताः साधवस्तु । त्यक्तगृहपुत्रधनाः सन्तोऽपि । लोभक्रोधादिकारणे लोभक्रोधाद्यरिसाहचर्यहेतौ । प्रवृत्तमार्गे प्रवृत्तवत्प्रतीयमाने भक्तिमार्गे । वर्त्तन्ते ॥ १७ ॥ तदिति । तत्सम्बन्धाल्लोभक्रोधादिसम्बन्धवत्प्रवृत्तमार्गसम्पर्काद्धेतोः । हृदि । तेषां मानसे । क्वापि । कश्चन । विकारो लोभक्रोधादिपरतन्त्रतो रूपा विकृतिरपि । स्यात् । अतोहेतोः । तेषां त्यागिभक्तानाम् । अत्रोक्तविधप्रवृत्तमार्गे । वर्त्तनम् । घटते युक्तं भवति । अथवा । न घटते युक्तं न भवति

निवृत्तधर्मनिरतास्तत्राद्याः सन्ति साधवः । उन्मत्तवद्वर्त्तमाना देहभिन्नात्ममानिनः ॥ १५ ॥
वर्णाश्रमाभिमानेन हीना लोकविलक्षणाः । निःसङ्गास्ते चैकचरा बध्यन्ते नैव कुत्रचित् ॥ १६ ॥
अन्ये तु त्यागिनस्त्यक्तगृहपुत्रधना अपि । प्रवृत्तमार्गे वर्त्तन्ते लोभक्रोधादिकारणे ॥ १७ ॥
तत्सम्बन्धाद्धृदि क्वापि स्याद्विकारोऽपि कश्चन । अतो न घटते तेषां घटते वाऽत्र वर्त्तनम् ॥ १८ ॥
प्रवृत्ते वर्त्तमानानामपि स्यान्निर्विकारता । केनोपायेन तेषां तद्ब्रूतेति प्रश्नयोस्तु मे ॥ १९ ॥
हर्याज्ञयेति चेत्तर्हि भङ्गापाने तथा कृते । मत्तत्वमिव तद्वृत्त्या तयाऽपि स्याद्विकारिता ॥ २० ॥
तस्मान्न सम्मतं ह्येतदुत्तरं तत्त्वदर्शिनाम् । इत्युक्त्वा स्वयमेवाह शुश्रूषूंस्तांस्तदुत्तरम् ॥ २१ ॥

॥ १८ ॥ प्रवृत्तइति । किञ्च । प्रवृत्ते उक्तविधप्रवृत्तमार्गे । वर्त्तमानामपि । तेषां भक्तसाधूनाम् । निर्विकारता क्रोधलोभादिपरतन्त्रत्वाभावः । केन उपायेन । स्यात् । इत्येवंविधयोः । प्रश्नयोः तत्प्रसिद्धमुत्तरम् । मे मह्यम् । ब्रूत ॥ १९ ॥ ननु प्रथमप्रश्नोत्तरं पश्चात्करिष्यामो द्वितीयप्रश्नोत्तरं तु भगवदाज्ञया प्रवृत्तमार्गे प्रवर्त्तनं तेषां विकारताहेतुर्न भवेदिति । प्रसिद्धमेवास्तीत्याशङ्क्य तत्स्वयमेव प्रत्याख्याति सार्द्धेन । हरीति । हर्याज्ञया भगवदाज्ञया प्रवृत्तमार्गे प्रवर्त्तनेन विकारिता न भवेत् । इतिचेदेवंविधमुत्तरं ब्रूत यदि । तर्हि । तया हर्याज्ञया । भङ्गापाने । कृते सति । मत्तत्वमिव । तया हर्याज्ञयापि । तद्वृत्त्या प्रवृत्तमार्गप्रवर्त्तनेन विकारिता स्यात् ॥ २० ॥ तस्मादिति । तस्माद्धेतोः । तत्त्वदर्शिनां यथार्थोत्तरवेदिनाम् । एतत् उत्तरम् । न सम्मतम् । हि । एतदुत्तरं तत्त्वदर्शिनो न स्वीकुर्वन्तीत्यर्थः । इत्यमुना प्रकारेण उक्त्वा । शुश्रूषून् स्वास्यात्प्रश्नोत्तरं श्रोतुमिच्छून् । तान्साधून् । तदुत्तरम् । स्वयं श्रीहरिरेव । आह ॥ २१ ॥

निवृत्तेति । हे साधवः ! । निवृत्तधर्मवन्तः । जडवर्त्तनाः । प्रमत्तवद्वर्त्तमानाः । ये । साधवः । सन्ति । ते । केवलम् । आत्मनिष्ठाः । भक्तिवर्जिता भगवदुपासनारहिताः अत एव । भक्तोना भगवद्भक्तसाधुभ्योऽतिहीनाः । सन्ति ॥ २२ ॥ इतरइति । ये इतरे द्वितीयाः । त्यागिनो निवृत्तधर्मवन्तः । भक्ताः साधवः सन्ति । ते तु । यदि । कृष्णोक्तनियमान् श्रीहरिप्रोक्तनिर्लोभत्वादिनियमान् । नित्यम् । यथार्थतः । सर्वथा । पालयन्तः सन्तः । वर्तेरन्निति शेषः ॥ २३ ॥ कृष्णेति । चेद्यदि । कृष्णतद्भक्तसम्बन्धिप्रवृत्तावेव । रता आसक्ताः । भवेयुः । तर्हि तु । तेषां भक्तसाधुनाम् । हृदि मानसे । विक्रिया क्रोधलोभादिविकारः । न भवेत् । इतिद्वयोरेकसम्बन्धः ॥ २४ ॥ सेति । सा कृष्णतद्भक्तसम्बन्धिनी प्रवृत्तिरेव । भक्तिः । निगदिता । ततो हेतोः । तयोक्तविधप्रवृत्तिरूपया भक्त्या । मुक्तिः स्यात् । तद्भिन्ना कृष्णतद्भक्तसम्बन्धिप्रवृत्तीतरा तु । या । प्रवृत्तिः । सा तु । अधोगतिकारणं त्यागिनां नरकप्राप्तिहेतुः । स्यात् । भक्तिरूपामेव प्रवृत्तिमाचरन्तस्तदितरां तां परित्यजन्तो नियमेषु सम्यगवस्थिता भक्ताः साधवो विकृतिं न प्राप्नुवन्तीति द्वितीयप्रश्नोत्तरं बोध्यम् ॥ २५ ॥ ईदृशा इति । ईदृशाः

निवृत्तधर्मवन्तो ये साधवो जडवर्त्तनाः । केवलं ह्यात्मनिष्ठास्ते भक्तिवर्जिताः ॥ २२ ॥ इतरे त्यागिनो भक्ता ये ते तु यदि सर्वथा । कृष्णोक्तनियमान्नित्यं पालयन्तो यथार्थतः ॥ २३ ॥ कृष्णतद्भक्तसम्बन्धिप्रवृत्तावेव चेद्रताः । भवेयुस्तर्हि तु भवेन्न तेषां हृदि विक्रिया ॥ २४ ॥ सैव भक्तिर्निगदिता स्यान्मुक्तिश्च ततस्तया । तद्भिन्ना तु प्रवृत्तिर्या सा त्वधोगतिकारणम् ॥ २५ ॥ ईदृशास्त्यागिभक्तास्तु पूर्वेभ्योऽप्यधिका मताः । यत एषां क्रियाः सर्वाः कृष्णार्था एव सन्ति हि ॥ २६ ॥ कृष्णोक्तनियमान्सर्वान्पालयन्तो यथातथम् । कृष्णतद्भक्तसेवार्थं प्रवृत्तिमपि चाश्रिताः ॥ २७ ॥ निःस्पृहा निर्विकाराश्च सन्त्येते त्यागिनो यतः । तत्केवलात्मनिष्ठेभ्यस्तेभ्यस्तान्मन्य उत्तमान् ॥ २८ ॥ प्रवृत्तौ वर्त्तमानानां कृष्णार्थं च सतां कृते । हरेः कृपापात्रतां च यातानां सा न बन्धकृत् ॥ २९ ॥

। त्यागिभक्तास्तु । पूर्वेभ्यः केवलज्ञानिसाधुभ्योऽपि । अधिकाः श्रेष्ठाः । मताः । यतोहेतोः । एषां त्यागिभक्तानाम् । सर्वाः क्रियाः । कृष्णार्थाः श्रीकृष्णप्रीत्येकप्रयोजना एव सन्ति हि ॥ २६ ॥ पुनरपि केवलज्ञानिसाधुभ्यो भक्तसाधूनां श्रेष्ठत्वं हेतु प्रदर्शनेनाह द्वाभ्याम् । कृष्णेति । यतोहेतोः । एते । त्यागिनः । भक्ताः साधवः । सर्वान् । कृष्णोक्तनियमान् । यथातथं यथार्थतया । पालयन्तः । कृष्णतद्भक्तसेवार्थम् । प्रवृत्तिं प्रवृत्तिवत्प्रतीयमानं भक्तिरूपं मार्गमपि । आश्रिताः ॥ २७ ॥ निःस्पृहा इति । निःस्पृहा मायिकार्थस्पृहावर्जिताः । निर्विकाराः कृष्णोक्तनियमेषु यथार्थावस्थानजाततत्कृपया लोभक्रोधादिविकारवर्जिताश्च । सन्ति । तत्ततोहेतोः । केवलात्मनिष्ठेभ्यः । तेभ्यः साधुभ्यः । तान् भक्तान्साधून् । उत्तमान् । मन्ये । इतिद्वयोरेकान्वयः ॥ २८ ॥ प्रवृत्ताविति । कृष्णार्थं श्रीकृष्णसेवार्थम् । सतां कृते तद्भक्तसाधूनां सेवार्थं च । प्रवृत्तौ प्रवृत्तिवत्प्रतीमाने भक्तिमार्गे । वर्त्तमानानाम् । हरेः । कृपापात्रताम् । यातानां त्यागिभक्तसाधूनाम् । सा तथाविधा प्रवृत्तिः ।

बन्धकृत् । नास्ति । भक्तिरूपप्रवृत्तिमार्गस्योत्कृष्टपुरुषार्थरूपकृष्णतद्भक्तप्रीणनहेतुत्वात्कृष्णकृपापात्रतासम्पादनत्वाच्च भक्तानां तेषां तत्रावस्थानमतीव युज्यत इति प्रथमप्रश्नोत्तरं बोध्यम् ॥२९॥ सदइति । इत्येवंविधाम् । तस्य श्रीहरेः । अमृततुल्यवाचम् । श्रुत्वा । सदोगताः । ते । मुनयः । गृहस्थाश्च । हृदये स्वस्वमानसे । तोषम् । समीयुः । ततस्तदनन्तरम् । सर्वेऽपि । आत्मनाथं स्वस्वामिनम् । तं श्रीहरिम् । प्रणेमुः ॥ ३० ॥ यो जितेन्द्रियतायास्तु प्रकारं स्वसतां स्फुटम् । निवृत्तधर्मनिष्ठेभ्यः साधुभ्यः केवलं तथा ॥ १ ॥ स्वभक्तानां त्यागिनां तु श्रेष्ठत्वं साधनान्वितम् । सहेतुकं हरिः प्राह स धत्तां तां च तन्मयि ॥ २ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्तक श्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्स्नूरघुविराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां द्विशताधिकः सप्तदशस्तरङ्गः ॥ २१७ ॥ १७ ॥

वेद्यस्य सर्वथा सर्वैः सत्सङ्गिभिरवश्यतः । लक्षणं सम्प्रदायादेः सम्यगष्टादशे स्मृतम् ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् ( १८८२ ) माघशुक्लप्रतिपदि माघमाससम्बन्धिनः शुक्लपक्षस्य प्रतिपत्तिथौ इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । वृत्तालयपुरे लक्ष्मीनारायणालये श्रीलक्ष्मीनारायणापवर-

सदोगतास्ते मुनयो गृहस्थाः श्रुत्वेति तस्यामृततुल्यवाचम् । सर्वेऽपि तोषं हृदये समीयुस्ततः प्रणेमुश्च तमात्मनाथम् ॥ ३० ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते द्विशताधिकसप्तदशस्तरङ्गः ॥ २१७ ॥ १७ ॥

शकाब्दे विक्रमार्कस्य नेत्राष्टवसुभूमिते । माघशुक्लप्रतिपदि वचोऽमृतमिदं हरेः ॥ १ ॥
तत्र वृत्तालयपुरे लक्ष्मीनारायणालये । सन्ध्यानिराजनस्यान्ते स न्यषीदत्सदासने ॥ २ ॥
सितवासा वृतोऽनेकैर्नानाभक्तैः स सर्वतः । उवाच महतः साधून्प्रश्नं कुर्वे निशम्यताम् ॥ ३ ॥
सत्सङ्गिनां नृणां किं किमवश्यं ज्ञेयमञ्जसा । इति पृष्टोत्तरमपि तस्य स स्वयमाह तान् ॥ ४ ॥
सम्प्रदायस्तथाऽभीष्टग्रन्था गृहिसतां वृषाः । इष्टदेवश्चेति सम्यक् बोध्यं सत्सङ्गिपूरुषैः ॥ ५ ॥

कपुरःप्रदेशे वर्त्तिना महामण्डपस्योदङ्मुखचन्द्रशालायामित्यर्थः । सदासने पार्श्विकश्वेतोत्तरछदयुते स्थूलतूलिकासने । सन्ध्यानिराजनस्य हरेः सायन्तनारार्त्रिकस्य । अन्ते समाप्तौ सत्यामित्यर्थः । स श्रीहरिः । न्यषीदत् ॥ २ ॥ सितेति । सितवासाः परिहितसकलश्वेतवसनः । अनेकैर्नानादेशागतत्वाद्बहुभिः । नानाभक्तैस्त्यागिभिर्गृहिमिश्च स्वाश्रितजनैः । सर्वतः परितः । वृतः सभारचनया वेष्टितः । स श्रीहरिः । महतः । साधून्मुक्तानन्दादीन् । उवाच । हे साधवः ! । अहम् । प्रश्नम् । कुर्वे । निशम्यतां श्रूयताम् ॥ ३ ॥ सत्सङ्गिनामिति । सत्सङ्गिनाम् । नृणाम् । अञ्जसा तत्त्वतः अवश्यम् । किम् । किम् । ज्ञेयम् । इतीत्थम् । पृष्ट्वा । तस्य प्रश्नस्य । उत्तरमपि । तान्साधून् । स्वयम् । स श्रीहरिरेव । आह ॥ ४ ॥ सम्प्रदायइति । सम्प्रदायो गुरुपरंपरा । अभीष्टग्रन्थाः सम्प्रदायप्रवर्त्तकाभिमता ग्रन्थाः । तथा । गृहिसतां गृहस्थानां साधूनां च । वृषा धर्माः । इष्टदेवश्च । इत्येतत्सम्प्रदायादिचतुष्कम् । सत्सङ्गिपूरुषैः सम्यग्यथार्थतः । बोध्यम् ॥ ५ ॥

तत्रेति । तत्र तेषु सम्प्रदायादिषु चतुर्षु मध्ये । आद्यः प्रथमः । सम्प्रदायस्तु । स्वगुरूणाम् । परंपराऽनुक्रमः । ज्ञेयः । 'सम्प्रदायो गुरुक्रम' इत्यमरोक्तेः । तत्र तेषु गुरुषु मध्ये । अध्वप्रवर्त्तनात्स्वसम्प्रदायप्रवर्त्तनाद्धेतोः । आदिमः प्रथमः । गुरुः । उद्धवः । ज्ञेयः ॥ ६ ॥ बोध्यइति । कृष्णार्पित-गुरुत्वधूः । स उद्धवः । रामानन्दो हि रामानन्दस्वाम्येव । बोध्यो ज्ञेयः । तस्य रामानन्दस्य । स्वामिनः । गुरुः । साक्षात्प्रत्यक्षः । रामानुजो लक्ष्मणा-चार्यः । ज्ञेयः । अस्य प्राग्भवे श्रीकृष्णशिष्यत्वेऽपि दुर्वासःशापप्राप्तरामानन्दावतारे रामानुजस्य तद्गुरुत्वादेवमुक्तम् ॥ ७ ॥ एतदेव स्पष्टयितुमाह । श्रीरङ्गेति । स रामानन्दस्वामी । श्रीरङ्गाख्ये । महाक्षेत्रे । समाधौ । गुरोः । ततो रामानुजात् वैष्णवीम् दीक्षाम् । प्राप्तवान् । अहम् । तस्य रामानन्दस्वामिनः । शिष्यः । भवामि ॥ ८ ॥ मयेति । मया । धर्मवंश्ये धर्मवंशभवे । सुते दत्तविधिना पुत्रत्वेनाङ्गीकृते । अयोध्याप्रसादे । रघुवीरे च । स्विका मदीया । गुरुता आचार्यधुरा ।

तत्राद्यः सम्प्रदायस्तु स्वगुरूणां परंपरा । गुरुस्तत्रादिमो ज्ञेय उद्धवोऽध्वप्रवर्त्तनात् ॥ ६ ॥ बोध्यः स रामानन्दो हि कृष्णार्पित-गुरुत्वधूः । स्वामिनस्तस्य च ज्ञेयः साक्षाद्रामानुजो गुरुः ॥ ७ ॥ श्रीरङ्गाख्ये महाक्षेत्रे समाधौ स गुरोस्ततः । प्राप्तवान्वैष्णवीं दीक्षां तस्य शिष्यो भवाम्यहम् ॥ ८ ॥ मयाऽयोध्याप्रसादे च रघुवीरे सुते स्विका । धर्मवंश्येऽस्ति निहिता गुरुतेति गुरुक्रमः ॥ ९ ॥ ग्रन्थास्त्वभीष्टा अष्टौ हि भवन्त्युद्धववर्त्मनि । वेदाश्च व्याससूत्राणि श्रीमद्भागवतं तथा ॥ १० ॥ विष्णुनामसहस्राख्यं स्तोत्रं भगवतोदिता । गीता विदुरनीतिश्च भारतस्थमिदं त्रयम् ॥ ११ ॥ श्रीवासुदेवमाहात्म्यं तथास्कन्दपुराणगम् । याज्ञवल्क्य-स्मृतिश्चेति ग्रन्था अष्टौ प्रकीर्त्तिताः ॥ १२ ॥ त्यागिनां च गृहस्थानां धर्मा ये ते पृथक्पृथक् । श्रीवासुदेवमाहात्म्याद्विज्ञातव्या अशेषतः ॥ १३ ॥ इष्टदेवस्तु भगवान् श्रीकृष्णो राधिकापतिः । प्रत्यक्षं च परोक्षं च ज्ञेयं रूपं यदस्य तत् ॥ १४ ॥

निहिता समाहिता । अस्ति । इतीत्थम् । गुरुक्रमः सम्प्रदायः । ज्ञेयः ॥ ९ ॥ ग्रन्थाइति । ग्रन्थास्तु । उद्धववर्त्मनि । अष्टौ । अभीष्टाः । भवन्ति । हि । तान्नाम्ना निर्दिशति सार्द्धद्वाभ्याम् । वेदाश्चत्वारोऽपि निगमाः । तथा । व्याससूत्राणि । श्रीमद्भागवतं पुराणं च ॥ १० ॥ विष्णित्वति । विष्णुनामसहस्राख्यम् । स्तोत्रम् । भगवता श्रीकृष्णेन । उदिताऽर्जुनं प्रति कथिता । गीता । विदुरनीतिश्च । इदं विष्णुसहस्रनामस्तोत्रादि । त्रयम् । भारतस्थम् । ज्ञेयम् ॥ ११ ॥ श्रीवासुदेवेति । तथा । स्कन्धपुराणगम् । श्रीवासुदेवमाहात्म्यम् । याज्ञवल्क्यस्मृतिश्च । इत्येते । अष्टौग्रन्थाः । प्रकीर्त्तिताः ॥ १२ ॥ त्यागिनामिति । त्यागिनां साधूनाम् । गृह-स्थानां च । ये । धर्माः । ते तु । श्रीवासुदेवमाहात्म्यात् । पृथक् पृथक् । अशेषतः । विज्ञातव्याः ॥ १३ ॥ इष्टदेवइति । इष्टदेवस्तु । राधिकापतिः । भगवान् । श्रीकृष्णः । ज्ञेयः । अस्य श्रीकृष्णस्य । प्रत्यक्षम् । परोक्षं च । यत् रूपम् । तत् । ज्ञेयम् । दिव्यमानुषापरपर्याययोः परोक्षप्रत्यज्ञरूपयोरेकत्वं बोध्यमितिभावः ॥१४॥

परोक्षमिति परोक्षं तस्य परोक्षरूपं तु । गोलोके । तत्रापि । ब्रह्मधामस्थमक्षरधामावस्थितम् । सदा द्विभुजं भुजद्वयोपेतम् । राधया । श्रिया च । जुष्टं सेवितम् । कोटिसूर्यसमद्युति । अस्ति ॥१५॥ श्रीदामेति । तत् तस्य परोक्षरूपम् । श्रीदामनन्दप्रमुखैः पार्षदैः । निषेवितम् । स परोक्षरूपः । कृष्णः । अनन्तकोट्यण्डसर्गस्थित्यन्तकारकः । अस्ति ॥ १६ ॥ चतुरिति । स श्रीकृष्णः चतुर्भुजम् । तथा । अष्टभुजम् । सहस्रभुजं च स्वं स्वकीयम् । रूपम् । धृत्वा । धामान्तरेष्वक्षरधामेतरवैकुण्ठादिपदेषु । पृथक् । पृथक् । आस्ते ॥ १७ ॥ वासुदेवेति । प्रभुः स श्रीकृष्णः । वासुदेवादिरूपेण । चतुर्व्यूहः । जायते । असौ श्रीकृष्णः । केशवाद्यात्मना केशवादिव्यूहरूपेण चतुर्विंशतिधा च । जायते ॥१८॥ सइति । स श्रीकृष्ण एव । धरातले । वराहादीन् । अवतारान् । दधाति । सर्वशास्त्राणां वेदादीनाम् । तात्पर्यं च । तत्र वै श्रीकृष्णे एव । अस्ति । सर्वशास्त्राणि साक्षात्परंपरया वा तमेव प्रतिपादयन्तीत्यर्थः ॥ १९ ॥ परोक्षमिति । इत्यमुना प्रकारेण । कृष्णस्य परोक्षम् । रूपम् । तत्त्वतः । ज्ञेयम् । प्रत्यक्षं रूपं तु । धरातले । वर्त्तमानम् । नराकारम् । ज्ञेयम् ॥ २० ॥ नराकृतेरिति । नराकृतेः । भगवतः श्रीकृष्णस्य । अशेषतः समग्राणि । चरित्राणि । साक्षाद्भगवदवतारेण । व्यासेन कृष्णद्वैपायनेन । वर्णितानि । श्रीमद्भागवतभारतादिषु वर्णितानि सन्तीत्यर्थः । तानि । अतिभक्तितः । श्रव्याणि मुमुक्षूणां श्रोतुमर्हाणि सन्ति ॥ २१ ॥ व्यासकृतग्रन्थश्रव्यतायां तस्य भगवतारत्वं वेदाद्याचार्यत्वं वेदवत्तद्वाक्यस्य स्वतः प्रमाणत्वं च हेतुतयाऽऽह । आचार्येभ्यः । व्यास एव । महान् । मतः । हि यतः । वेदवत् । तद्वाक्यानां व्यासवचनानाम् । स्वत एव । प्रमाणत्वादप्रामाण्ये कारणरहितत्वाद्धेतोः । वेदानां भगवद्वाक्यत्वाद्व्यासस्य भगवतारत्वाद्वेदेष्विव व्यासव्याक्येष्वपि प्रमाणापेक्षाऽभावात्तद्वाक्यान्येव मुमुक्षुश्रव्याणीतिभावः ॥ २२ ॥ शाद्यौडुलोमिजैमिन्याद्याचार्याणां कृष्णावतारसमकालीनत्वात्तदप्रसिद्धेस्तान् हित्वा कलेः सार्द्धत्रिसहस्रवर्षगमनानन्तरसम्भूताः साम्प्रतकालप्रसिद्धाः शङ्कराद्या आचार्या अपि व्यासाचार्यप्रामाण्यमेव स्वीचक्रुरित्याह सार्द्धेन । आचार्याइति । शङ्करः । रामानुजः । मध्वः । तथा निम्बार्कविष्णुस्वाम्याद्याः । अपरे । आचार्याः । भुवि । सद्धर्महेतवः । अभवन् ॥ २३ ॥

परोक्षं ब्रह्मधामस्थं गोलोके द्विभुजं सदा । राधया च श्रियो जुष्टं कोटिसूर्यसमद्युति ॥ १५ ॥ श्रीदामनन्दप्रमुखैः पार्षदैस्तन्निषेवितम् । स कृष्णोऽनन्तकोट्यण्डसर्गस्थित्यन्तकारकः ॥ १६ ॥ चतुर्भुजं चाष्टभुजं स सहस्रभुजं तथा । धामान्तरेषु रूपं स्वं धृत्वाऽऽस्ते च पृथक् पृथक् ॥ १७ ॥ वासुदेवादिरूपेण चतुर्व्यूहः स जायते । केशवाद्यात्मना चासौ चतुर्विंशतिधा प्रभुः ॥ १८ ॥ स एव च वराहादीनवतारान्धरातले । दधाति सर्वशास्त्राणां तात्पर्यं चास्ति तत्र वै ॥ १९ ॥ परोक्षं रूपमित्थं हि ज्ञेयं कृष्णस्य तत्त्वतः । प्रत्यक्षं तु नराकारं वर्त्तमानं धरातले ॥ २० ॥ नराकृतेर्भगवतश्चरित्राणि त्वशेषतः । श्रव्याणि साक्षाद्व्यासेन वर्णितान्यतिभक्तितः ॥ २१ ॥ आचार्येभ्यश्च सर्वेभ्यो व्यास एव महान्मतः । स्वत एव प्रमाणत्वात्तद्वाक्यानां हि वेदवत् ॥ २२ ॥ आचार्याः शङ्करो रामानुजो मध्वस्तथाऽपरे । निम्बार्कविष्णुस्वाम्याद्या भुवि सद्धर्महेतवः ॥ २३ ॥

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.

व्यासेति । अखिलाः सर्वेऽपि । ते शङ्कराद्या आचार्याः । व्यासवाक्यानि । प्रमाणतया । जगृहुः । अतोहेतोः । तानि वाक्यानि । नोऽस्माकम् । मुख्यतयैव । प्रमाणानि प्रमाणभूतानि । सन्ति ॥ २४ ॥ सइति । स व्यासः । नृणाम् । श्रेयसे । आदौ । वेदम् । चतुर्विधमृगादिसंज्ञाभेदेन चतुष्प्रकारम् । व्यधात् कृतवान् । 'व्यदधाद्यज्ञसन्तत्यै वेदमेकं चतुर्विधमिति' श्रीभागवतोक्तेः । ततस्तदनन्तरम् । ब्राह्मादीनि । पुराणानि । भारतं च । अकरोत् ॥ २५ ॥ तथेति । तथापि एतावति प्रयत्ने व्यासेन कृते सत्यपि । मया । आत्यन्तिकश्रेयःसाधनम् । स्फुटं यथा तथा । न प्रोक्तम् । इतीत्थम् । आप्ततापः असौ व्यासः । श्रीमद्भागवतम् । व्यधात् । तत एवास्य सन्तापोपशमनपूर्वा निर्वृतिर्जातेति भावः ॥ २६ ॥ साम्प्रतं तत्कृतश्रीभागवतग्रन्थप्रशंसामाह । वेदेति । वेदशास्त्र-पुराणानाम् । पञ्चरात्रस्य । चकारादार्षरामायणादेः । अखिलम् । सारम् । आकृष्योपादाय । तेन व्यासेन । रसात्मकं रसरूपम् एतत् श्रीमद्भागवतम् । रचितम् ॥ २७ ॥

व्यासवाक्यानि जगृहुस्ते प्रमाणतयाऽखिलाः । अतस्तानि प्रमाणानि सन्ति मुख्यतयैव नः ॥ २४ ॥ स श्रेयसे नृणामादौ व्यधाद्वेदं चतुर्विधम् । ब्राह्मादीनि पुराणानि भारतं चाकरोत्ततः ॥ २५ ॥ तथाप्यात्यन्तिकश्रेयःसाधनं न स्फुटं मया । प्रोक्तमित्याप्ततापोऽसौ श्रीमद्भागवतं व्यधाम् ॥२६॥ वेदशास्त्रपुराणानां पञ्चरात्रस्य चाखिलम् । सारमाकृष्य रचितमेतत्तेन रसात्मकम् ॥२७॥ तत्र सर्वावताराणां धर्त्ता कृष्णः स्वयंप्रभुः । अवतारीति गदितः स चास्ति निर्गुणः सदा ॥२८॥ स्वनिर्गुणत्वं स्वेनैव श्रीकृष्णेनोद्धवं प्रति । प्रोक्तमेकादशस्कन्धे गुणाध्यायेऽस्ति हि स्फुटम् ॥ २९ ॥ निर्गुणस्यैव सम्बन्धाद्यस्य भावा गुणात्मकाः । अपि निर्गुणतां यान्ति ततः कृष्णोऽस्ति निर्गुणः ॥ ३० ॥ येन केनापि भावेन कामद्वेषभयादिना । ये प्राप्तास्तस्य सम्बन्धं ते च निर्गुणतां ययुः ॥ ३१ ॥ यद्यसौ निगुणो न स्याच्छुद्धसत्त्वात्मको भवेत् । तत्सम्बन्धात्कथं तर्हि निर्गुणा गोपिकादयः ॥ ३२ ॥

तत्रेति । तत्र । श्रीभागवते । प्रभुः । स्वयम् । कृष्णः । सर्वावताराणाम् । धर्त्ता अतएव । अवतारी । इतीत्थम् । गदितः । स श्रीकृष्णः । सदा । निर्गुणो मायिकगुणवर्जितः । अस्ति ॥ २८ ॥ स्वेति । स्वेन । श्रीकृष्णेन स्वयमेवेत्यर्थः । स्वनिर्गुणत्वम् । एकादशस्कन्धे । गुणाध्याये पञ्चविंशे गुणविभागाध्याये । उद्धवं प्रति । स्फुटं यथातथा । प्रोक्तम् । अस्ति । हि ॥ २९ ॥ निर्गुणस्येति । निर्गुणस्य । यस्य कृष्णस्य । सम्बन्धादेव । गुणात्मका अपि । भावाः कर्मज्ञानदेशादयः । निर्गुणताम् । यान्ति । ततोहेतोः । कृष्ण एव । निर्गुणः । अस्ति ॥ ३० ॥ येनेति । किञ्च । ये जनाः । कामद्वेषभयादिना । येन । केनापि । भावेन । तस्य निर्गुणस्य । कृष्णस्य । सम्बन्धम् । प्राप्ताः । ते जनाः । निर्गुणताम् । ययुः॥३१॥ यदीति । असौ कृष्णः । यदि । निर्गुणः । न स्यात् । शुद्धसत्त्वात्मकः । भवेत् । तर्हि । तत्सम्बन्धात् । गोपिकादयः । निर्गुणाः । कथम् । भवेयुरिति शेषः ॥ ३२ ॥

अत इति । अतोहेतोः । असौ कृष्णः । निर्गुण एव । अस्ति । अत्रास्मिन्नर्थे । संशयः । नास्त्येव । स्वस्य जन्मकर्मादेः । दिव्यत्वममायिकत्वम् । स श्रीकृष्णः । स्वयमेव । आह गीतायामर्जुनं प्रति जगाद ॥ ३३ ॥ तदेवाह । जन्मेति । हे अर्जुन ! । एवमतः पूर्ववर्त्तिश्लोकत्रयोक्तप्रकारेण । यः पुरुषः । मे मम । जन्म । कर्म चरित्रं च । तत्त्वतः यथार्थतया । दिव्यम् । वेत्ति । स पुरुषः । देहम् । त्यक्त्वा । पुनः । जन्म । नैति । किन्तु । मामेव । एति प्राप्नोति ॥ ३४ ॥ कृष्णेनेति । अनेन निर्गुणेन । कृष्णेन । निजेच्छया । केभ्यश्चित् । भक्तेभ्यः । अद्भुतानि । रूपान्तराण्यपि । दर्शितानि । भवन्ति ॥ ३५ ॥ तानि प्रदर्शयति । चतुरिति । स कृष्णः । चतुर्भुजम् । रूपम् । अष्टभुजम् । रूपम् । सहस्रभुजम् । रूपं च । इत्यपि इदं त्रिविधं रूपमपि । यथा । प्रयोजनम् । आविर्भावयति स्म देवक्यादिभक्तेभ्यः स्वैश्वर्येण दर्शयामास ॥ ३६ ॥ तेषामिति । तेषाम् । त्रिविधरूपाणाम् । तस्य निर्गुणस्य कृष्णस्य । स्वरूपतो द्विभुजाद्वास्तविकस्वरूपात्सकाशात् । भेदाद्वास्तविकपृथग्भावाद्धेतोः शास्त्रोक्तः । उपासनायाः । भेदस्तु युक्त एव । अस्ति ॥ ३७ ॥ एकस्येति । केचनोपासकाः । द्विभुजस्य । एकस्य । स्वरूपस्येव ।

अतो निर्गुण एवासावत्र नास्त्येव संशयः । दिव्यत्वं जन्मकर्मादेः स्वस्याह स्वयमेव सः ॥ ३३ ॥ जन्मकर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः । त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुन ॥ ३४ ॥ कृष्णेनानेन केभ्यश्चिद्भक्तेभ्यश्च निजेच्छया । रूपान्तराण्यद्भुतानि दर्शितानि भवन्त्यपि ॥ ३५ ॥ चतुर्भुजं चाष्टभुजं सहस्रभुजमित्यपि । यथाप्रयोजनं रूपमाविर्भावयति स्म सः ॥ ३६ ॥ तेषां त्रिविधरूपाणां भेदात्तस्य स्वरूपतः । उपासनाया भेदस्तु शास्त्रोक्तो युक्त एव हि ॥ ३७ ॥ एकस्यैव स्वरूपस्य द्विभुजस्यापि केचन । स्थानावस्थावेषभेदाद्विभिन्नोपासनं विदुः ॥ ३८ ॥ न तदस्मन्मतं तस्मात्तन्न ग्राह्यं मुमुक्षुभिः । तथैव तस्याचरणमप्याचर्यं न मच्छ्रितैः ॥ ३९ ॥ स्वधर्मज्ञानवैराग्यभक्तिबोधकराणि च । स्वस्वीयभक्तमाहात्म्यावेदकानि यथार्थतः ॥ ४० ॥ उद्धवं प्रति यान्यस्य यानि स्युश्चार्जुनं प्रति । अन्यान् भक्तान् प्रति च वा वचनानि जगद्गुरोः ॥ ४१ ॥

स्थानानि । गोकुल–मथुरा–द्वारिकादीनि च अवस्था बाल्ययौवनादिकाश्च वेषा बर्हापीडादयश्च तेषां भेदः पृथक्त्वं तस्मात् विभिन्नोपासनम् । विदुर्वदन्ति । स्थानादीन्यालम्ब्यैकस्यैव तस्य मूर्त्तिभेदस्वीकारेणोपासनाभेदान्ब्रुवन्तीत्यर्थः ॥ ३८ ॥ नेति । तत्तथाविधमुपासनम् । असन्मतम् । नास्ति । अशास्त्रीयत्वान्मया न स्वीकृतमस्तीत्यर्थः । तस्माद्धेतोः । मुमुक्षुभिः । मच्छ्रितैः । तत् । न ग्राह्यम् । तथैव तद्वदेव । तस्य कृष्णस्य । आचरणमपि । नाचर्यं नैवाचरणीयम् ॥ ३९ ॥ स्वेति । यथार्थतः । स्वधर्मज्ञानवैराग्यभक्तिबोधकराणि । स्वः स्वयं श्रीकृष्णश्च स्वीयभक्ताः स्वैकान्तिकभक्तजनाश्च तेषां यन्माहात्म्यं तस्यावेदकानि ज्ञापकानि ॥ ४० ॥ उद्धवमिति । जगद्गुरोः । अस्य श्रीकृष्णस्य । उद्धवं प्रति । यानि । वचनानि । स्युः । अर्जुनं प्रति चापि । यानि । वचनानि । स्युः । अथवा । अन्यान् । भक्तान् प्रति चापि । यानि । वचनानि । स्युः ॥ ४१ ॥

तानीति । तानि वचनान्येव । भक्तैः । आदरतः । सर्वथा । ग्रहीतव्यानि । अस्य कृष्णस्य । आचरणम् । दृष्ट्वा । तथा । तेन प्रकारेणैव आचरणम् । न कार्यम् । इति त्रयाणामेकसम्बन्धः ॥ ४२ ॥ गोपेति । किञ्च । गोपोच्छिष्टोपयोगं गोपभुक्तशेषान्नाशनम् । रासक्रीडादि च । यत् । अस्य । कृष्णस्य । चरित्रम् । तत् । वीक्ष्य । इह लोके । यः पुमान् । तद्वच्छ्रीकृष्णवत् आचरेत् ॥४३॥ सदिति । स पुमान् । सदाचारपरिभ्रष्टः साधुपुरुषनिबद्धाचारमार्गच्युतः सन् । ध्रुवं निश्चितमेव । निरये । पतेत् । तस्माद्धेतोः । पूरुषैः क्वचन कदाचिदपि । एवं कृष्णाचरणनुसारेण । न वृत्यम् ॥ ४४ ॥ अशास्त्रीयमिति । यथा अशास्त्रीयम् । लोकगर्ह्यं सकलजन-निन्द्यम् । श्रीकृष्णाचरणम् । न ग्राह्यमाचरणीयत्वेन नोपादेयम् । तथैव । स्वगुरोर्युष्माकं देशिकस्य । मे ममापि । आचरणम् । क्वचित् । न ग्राह्यम् ॥ ४५ ॥ वाक्यानीति । उद्धवपथे औद्धवाध्वनि । त्यागिगृहिणाम् । धर्मादेः स्वधर्म–ज्ञान–विरक्ति भक्तिभगवन्माहात्म्यादीनामित्यर्थः । बोधकानि प्रतिपादकानि । यानि । मे मम ।

तान्येवादरतो भक्तैर्ग्रहीतव्यानि सर्वथा । न त्वस्याचरणं दृष्ट्वा कार्यमाचरणं तथा ॥४२॥ गोपोच्छिष्टोपयोगं च रासक्रीडादि चास्य यत् । चरित्रं वीक्ष्य तत्तद्वदाचरेद्यः पुमानिह ॥४३॥ सदाचारपरिभ्रष्टः स पतेन्निरये ध्रुवम् । तस्मान्मदाश्रितैर्नैवं वृत्यं क्वचन पूरुषैः ॥ ४४ ॥ अशास्त्रीयं लोकगर्ह्यं श्रीकृष्णाचरणं यथा । न ग्राह्यं स्वगुरोर्मेऽपि तथैवाचरणं क्वचित् ॥४५॥ वाक्यानि त्यागिगृहिणां धर्मादेर्बोधकानि मे । यान्युद्धवपथे तानि पालनीयानि मच्छ्रितैः ॥ ४६ ॥ वर्त्तिष्यते-ऽन्यथा यस्तु स मदीयो न कर्हिचित् । वार्त्तैषा हृदये धार्या सर्वैः कार्या च सर्वतः ॥ ४७ ॥ पीत्वेति धर्माङ्गभवस्य वाचं सुधामिव त्यागिगृहस्थसङ्घाः । सर्वेऽपि ते तोषमगुः सदःस्था दधुश्च यत्नेन हृदम्बुजे ताम् ॥ ४८ ॥ तमेव कृष्णं च निजेश्वरं ते गुरुं च सम्यग्धृदये विदन्तः । अनन्यभक्त्या परयैव भेजुर्नगोपमानेश्वरनिश्चयास्तम् ॥ ४९ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते द्विशताधिकाष्टदशस्तरङ्गः ॥ २१८ ॥ १८ ॥

वाक्यानि । सन्ति । तानि । मच्छ्रितैः । पालनीयानि ॥ ४६ ॥ वर्त्तिष्यत इति । यो मदाश्रितजनः । अन्यथा मदुक्तान्यप्रकारेण । वर्त्तिष्यते । सः । कर्हिचित् । मदीयः । नतु नैव ज्ञेयः । एषा सम्प्रदायादिचतुष्कबोधिका । वार्त्ता । सर्वैः सकलैरपि मदाश्रितैर्भवद्भिः । हृदये स्वस्वमानसे धार्या । सर्वतः सर्वेषां मदाश्रितानां पुरत इत्यर्थः । कार्या च ॥४७॥ पीत्वेति । इत्येवंविधाम् । धर्माङ्गभवस्य धर्मसूनोः श्रीहरेः । सुधामिवामृततुल्याम् । वाचम् पीत्वा । सदःस्थाः । ते । सर्वेऽपि । त्यागि-गृहस्थसङ्घाः । तोषम् । अगुः प्रापुः । तां श्रीहरिवाचम् । हृदम्बुजे स्वस्वहृत्पद्मे । यत्नेन । दधुः ॥ ४८ ॥ तमिति । किञ्च । ते त्यागिगृहस्थसङ्घाः । निजेश्वरं स्वेष्ट-देवम् । गुरुम् । तं श्रीहरिमेव । कृष्णम् । हृदये । सम्यक् । विदन्तः । परोक्षप्रियत्वात्स्वमुखेन स्वमहिमानं वक्तुमनर्हत्वात्स्वमेव परमार्थः श्रीकृष्णः सन्नपि स्वज्ञानमुपदेष्टुं कृष्णमन्यं वदत्यथाप्ययमेव सोऽस्तीति जानन्त इत्यर्थः । अत एव । नगोपमानेश्वरनिश्चयाः पर्वता यथा सुस्थिरत्वादचलाः सन्ति तथा श्रीहरौ स्वस्वान्तःकृतसुस्थिराचल-

परमेश्वरत्वनिश्चयाः सन्त इत्यर्थः । परया सर्वोत्कृष्टया । अनन्यभक्त्यैकान्तिकोपासनया । तं श्रीहरिमेव । भेजुरसेवन्तः ॥४९॥ वेद्यं स्वभक्तैः सकलैर्योऽवश्यं लक्षणं हरिः । प्रोचे स्वसम्प्रदायादेः परोक्षत्वेन तत्र च ॥ १ ॥ प्रत्यक्षस्य परोक्षस्य स्वस्य रूपस्य च स्फुटम् । ज्ञानं यथार्थतः प्राह तज्ज्ञानं मे ददातु सः ॥२॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभवनन्नुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्सुधासिन्धुटीकायां द्विशताधिकाष्टादशस्तरङ्गः ॥ २१८ ॥ १८ ॥

हरेर्भक्तैः सर्वथैव तस्मिंस्तस्य च साधुषु । प्रीतिः । कार्येति सम्प्रोक्तमेकोनविंशके स्फुटम् ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । माघशुक्लद्वितीयायां माघमासस्य शुक्लपक्षागतद्वितीयातिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥१॥ तत्रेति । तत्र तिथौ । वृत्तालयपुरे । लक्ष्मीनारायणालये । प्राग्भागे । लक्ष्मीनारायणमन्दिरगर्भागारपुरोवर्त्तिमण्डपस्य प्रागास्थचन्द्रशालायामित्यर्थः । स्वासने सपार्श्विकस्थूलतूलिकासने । सितांशुकः परिधृतसकलश्वेतवसनः । स श्रीहरिः । उपविष्टः । अभूत् ॥२॥ स्वेति । भूरिभिर्नानादेशागतत्वाद्बहुभिः । त्यागिगृहिभिः । स्वभक्तैः । परितः । वृतः सभायां वेष्टितः । स श्रीहरिः । सन्ध्यानीराजनस्य । अन्ते समाप्तौ सत्या-

शकाब्दे विक्रमार्कस्य नेत्राष्टवसुभूमिते । माघशुक्लद्वितीयायां वचोऽमृतमिदं हरेः ॥ १ ॥ तत्र वृत्तालयपुरे लक्ष्मीनारायणालये । प्राग्भाग उपविष्टोऽभूत्स्वासने स सितांशुकः ॥२॥ स्वभक्तैस्त्यागिगृंहिभिर्भूरिभिः परितो वृतः । सन्ध्यानीराजनस्यान्ते स्वीयांस्तान्प्रत्युवाच सः ॥ ३ ॥ जीवानां भारते वर्षे नरदेहोपलम्भनम् । यदा भवेत्तदा कश्चिद्यतेत श्रेयसे सुधीः ॥४॥ साक्षात्कृष्णोऽथ वा तस्य भक्ताः श्रेयस्करा नृणाम् । भवेयुरेव धर्मिष्ठा यत्र कुत्रापि भूतले ॥५॥ शास्त्रोक्तलक्षणैस्तस्य तेषां वा यदि वेदनम् । मुमुक्षोस्तस्य पुंसः स्याद्भक्तः स्यात्तर्हि स प्रभोः ॥ ६ ॥ भक्तस्यास्य पदार्थेषु कृष्णभिन्नेषु सर्वथा । प्रीतिर्नैवोचिता क्वापि कृष्णसत्स्वेव सोचिता ॥ ७ ॥ कार्ष्णसौख्यस्य पुरतो मायिकार्थभवं सुखम् । निरयोपमस्तीति न रमेतैव तत्र सः ॥ ८ ॥

मित्यर्थः । स्वीयान्स्वाश्रितान् । तांस्त्यागिगृहिणः प्रति । उवाच ॥३॥ जीवानामिति । हे भक्ताः । भारते वर्षे । यदा । जीवानाम् । नरदेहोपलम्भनम् । भवेत् । तदा । सुधीः । कश्चित् पुरुषः । श्रेयसे स्वकल्याणाय । यतेत ॥ ४ ॥ साक्षादिति । साक्षात्कृष्णः । अथवा । नृणाम् । श्रेयस्कराः । धर्मिष्ठाः स्वधर्मनिष्ठाः । तस्य साक्षात्कृष्णस्य । भक्ताः साधवः । भूतले । यत्र कुत्रापि । भवेयुरेव ॥ ५ ॥ शास्त्रेति । मुमुक्षोः । तस्य स्वकल्याणार्थं यतमानस्य पुंसः । यदि । शास्त्रोक्तलक्षणैः । तस्य साक्षात्कृष्णस्य । अथवा । तेषां साक्षात्कृष्णोपासकानां सताम् । वेदनमयमेव साक्षात्पुरुषोत्तम एते च तद्भक्ताः सन्त इति यथार्थोऽवबोधः । स्यात् । तर्हि । स पुमान् । प्रभोः साक्षाच्छ्रीहरेः । भक्तः । स्यात् । इति त्रयाणामेकसम्बन्धः ॥ ६ ॥ भक्तस्येति । भक्तस्य । अस्य पुंसः । कृष्णभिन्नेषु श्रीहरिव्यतिरिक्तेषु । पदार्थेषु । मायिकवस्तुषु । प्रीतिः स्नेहः । सर्वथा । क्वापि । नैवोचिता नैव योग्या भवति । सा प्रीतिः । कृष्णसत्स्वेव श्रीहरौ तदाश्रितसाधुष्वेव । उचिताऽस्ति ॥ ७ ॥ अत्र हेतुमाह । कार्ष्णेति । मायिकार्थभवं प्राकृतवस्तुजनितम् । सुखम् । कार्ष्णसौख्यस्य । पुरतः । निरयोपमं नरकसुखतुल्यम् । अस्ति । इति हेतोः । तत्र नरकोपमे मायिकपदार्थसुखे । स भक्तः । नैव रमेत तदुपभोगेनानन्दवान्न स्यात् ॥ ८ ॥

एतदेव दृष्टान्तयन्ननुवदति द्वाभ्याम् । नारकाणामिति । यथा । नारकाणां नरकभवानाम् । कृमीणाम् । नरकेऽपि । रतिः । भवेत् । मनुष्याणां तु । तत्र नरके । सा प्रीतिः । क्वचित् । न स्यादेव ॥ ९ ॥ तथेति । तथैव । अज्ञानिनामज्ञातभगवत्स्वरूपसुखानामभक्तानामेव । मायिकेषु नरकतुल्येषु मायिकसुखेषु । रतिः । भवेत् । हरेः । भक्तानां तु भगवत्स्वरूपसुखाभिज्ञतदाश्रितजनानां त्वित्यर्थः । तेषु मायिकसुखेषु । सा प्रीतिः । क्वचित् । नैव जायते ॥ १० ॥ भक्तइति । यः । हरेः । भक्तः । स्यात् । स तु हरेः । पार्षद एव । मतः । हि । अतोहेतोः । स भक्तः । तत्त्वं पार्षदत्वम् । उत्सृज्य त्यक्त्वा । कृमितां मायिकार्थोपभोगेन कृमितुल्यताम् । कुतोहेतोः । आप्नुयान्नैवाप्नुयादित्यर्थः ॥ ११ ॥ किञ्चेति । किञ्च । यदा । भक्तस्य । सङ्कल्पः । सत्यः । भवेत् । तदापि । तेन भक्तेन । मायिकार्थेच्छा मायिकसुखप्राप्तिसङ्कल्पः । नैव कार्याः । नरकोपमानोक्त्या तस्यातितुच्छत्वादिति भावः । सेच्छा तु । हरौ श्रीहरिसेवायामेव । कार्या । तस्य निरवधिकातिशयालौकिकाविनाशिसुखमयमूर्त्तित्वादिति भावः ॥ १२ ॥ कुसङ्गेनेति । यदि । भक्तस्यापि । कुसङ्गेन । सा मायिकार्थेच्छा । कुत्रचित्कदाचित् । भवेत् । तर्हि ।

नारकाणां कृमीण तु नरकेऽपि भवेद्रतिः । मनुष्याणां तु सा तत्र न स्यादेव यथा क्वचित् ॥ ९ ॥ तथैवाज्ञानिनामेव मायिकेषु रतिर्भवेत् । भक्तानां तु क्वचिन्नैव तेषु जायेत सा हरेः ॥ १० ॥ भक्तो यः स्यात्स तु हरेर्मत एव हि पार्षदः । अतः स तत्त्वमुत्सृज्य कृमितामाप्नुयात्कुतः ॥११॥ किञ्च भक्तस्य सङ्कल्पो यदा सत्यो भवेत्तदा । कार्या न मायिकार्थेच्छा तेन कार्यैव सा हरौ ॥१२॥ कुसङ्गेन भवेत्सा च यदि भक्तस्य कुत्रचित् । तर्हि सा महती हानिरविवेको महांश्च सः ॥१३॥ अतो ब्रह्माण्डजं सौख्यं काकविष्ठोपमं हृदि । मत्वा कार्या दृढा प्रीतिः कृष्णे सत्सु च नान्यतः ॥१४॥ इतीशितुस्तस्य निशम्य वाचं सुधासमां ते तु सभोपविष्टाः । तदीयभक्ताः सुधियः समस्ताः प्रपेदिरे चेतसि भूरि तोषम् ॥ १५ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते द्विशताधिकैकोनविंशस्तरङ्गः ॥ २१९ ॥ १९ ॥

सा । महती । हानिः । ज्ञेया । सः । महान् । अविवेकश्च । ज्ञेयः ॥ १३ ॥ अतइति । अतोहेतोः । भक्तेन । ब्रह्माण्डजम् । सौख्यं मायिकसुखम् । हृदि स्वमनसि । काकविष्ठोपमम् । मत्वा । कृष्णे साक्षाच्छ्रीहरौ । सत्सु तद्भक्तसाधुषु च । दृढा सुनिश्चला । प्रीतिः । कार्या । अन्यतस्तदितरस्मिन्कस्मिंश्चिदपि मायिकपदार्थे । प्रीतिः । न कार्या ॥१४॥ इतीति । इत्येवंविधाम् । ईशितुरक्षरादिसकलनियन्तुः । तस्य श्रीहरेः सुधासमाम् । वाचम् । निशम्य । सभोपविष्टाः । सुधियः । समस्ताः । तदीयभक्ताः । ते त्यागिगृहिणः । चेतसि । भूरितोषम् । प्रपेदिरे ॥ १५ ॥ स्वभक्तैः सर्वथा स्वस्मिन् कार्यां प्रीतिं स्वसत्सु च । यः प्राह स हरिर्दद्यात्तां स्वस्मिन्मे स्वसाधुषु ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तक श्रीहर्यैकान्तिकोपासकश्रीहरिकृष्णभगवत्सूनुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां द्विशताधिकैकोनविंशस्तरङ्गः ॥ २१९ ॥ १९ ॥

कामादीनां त्रयाणां तु समुन्मूलनसाधनम् । ज्ञानं जनकदृष्टान्तेनोक्तं विंशे यथार्थतः ॥१॥ शकेति । शकेति । पूर्वार्द्धं व्याख्यातम् । माघशुक्लतृतीयायां माघमासीयशुक्लपक्षसम्बन्धिन्या तृतीयातिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥१॥ तत्रेति । तत्र तिथौ । वृत्तालयपुरे । लक्ष्मीनारायणस्य दुर्गे । निम्बाधस्तात् । स्वास्तृतायाम् । वेद्यां वेदिकोपरिकृते श्वेतोत्तरच्छदपार्श्विकोपबर्हान्वितस्थूलतूलिकासने इत्यर्थः । स श्रीहरिः । व्यराजत् ॥ २ ॥ सितेति । सितवासाः । परिहितसकलश्वेतवसनः । कण्ठे गले । माध्यपुष्पस्रजं कुन्दकुसुममालाम् । दधत् । स्वभक्तनिकरैर्नानादेशागतत्यागिगृहिस्वभक्तसमूहैः । वृतः सभायां परिवेष्टितः । छत्री मूर्ध्नि स्वभक्तधृतरक्तकौशेयाम्बरातपत्रः । श्रीहरिः । अखिलान् । सतः साधून् । पप्रच्छ ॥ ३ ॥ जातइति । हे मुनयः ! । रजोगुणात् । कामः । जातः । तमोगुणात् । क्रोधलोभौ । जातौ । त्रयाणाम् । तेषां कामादीनाम् । उन्मूलनसाधनं विनाशनोपायः । किं किमात्मकं भवति ॥४॥ तमिति । तमेवं पृच्छन्तं श्रीहरिम् । शुकानन्दोमुनिः उवाच । हे हरे ! ।

शकाब्दे विक्रमार्कस्य नेत्राष्टवसुभूमिते । माघशुक्लतृतीयायां वचोऽमृतमिदं हरेः ॥ १ ॥ तत्र वृत्तालयपुरे लक्ष्मीनारायणस्य सः । दुर्गे वेद्यां स्वास्तृतायां निम्बाधस्ताद् व्यराजत ॥ २ ॥ सितवासा माध्यपुष्पस्रजं कण्ठे दधद् वृतः । स्वभक्तनिकरैश्छत्री पप्रच्छ स सतोऽखिलान् ॥ ३ ॥ जातो रजोगुणात्कामः क्रोधलोभौ तमोगुणात् । जातौ तेषां त्रयाणां च किमुन्मूलनसाधनम् ॥ ४ ॥ तमुवाच शुकानन्दो निर्विकल्पो यदा भवेत् । समाधिरात्मवीक्षा च कामाद्युन्मूलनं तदा ॥५॥ श्रीहरिरुवाच–यावत्कालं समाधिः स्यादात्मनो वाऽपि दर्शनम् । प्रतिलोमदृशस्तावन्न स्यात्कामादिपीडनम् ॥ ६ ॥ समाधिमानपि यदा व्युत्थितः स्यात्तदा त्वमुम् । अर्दयन्त्येव कामाद्याः समाधिरहितं यथा ॥ ७ ॥ ब्रह्मभृङ्गिवसिष्ठाद्याः समाधिनिरता अपि । व्युत्थानकाले कामाद्यैः प्रापुरेव हि विक्रियाम् ॥ ८ ॥

यदा निर्विकल्पः समाधिः । भवेत् । आत्मवीक्षा स्वात्मदर्शनं च । भवेत् । त्वत्कृपयैतदुभयं भवेदित्यर्थः । तदा । कामाद्युन्मूलनम् । भवेत् ॥ ५ ॥ 'इत्थं शुकानन्दकृतं स्वप्रश्नोत्तरमीश्वरः । आक्षिपन्सोऽब्रवीत्तं च परान्स्वानन्दयन्निति' । यावदिति । हे मुने ! । प्रतिलोमदृशोऽन्तर्दृष्टिमतो भक्तस्य । यावत्कालम् । समाधिः । स्यात् । अथवा । आत्मदर्शनमपि स्यात् । तावत् । कामादिपीडनम् । न स्यात् ॥६॥ समाधिमानिति । समाधिमानपि भक्तः । यदा । व्युत्थितो निवृत्तसमाधित्वाद्देहानुसन्धानयुक्तः । स्यात् । तदा तु । समाधिरहितं कदाप्यजातसमाधिं पुरुषम् । यथा । तथा । अमुं समाधेर्निवृत्तं पुरुषम् । कामाद्याः । अर्दयन्त्येव ॥७॥ ब्रह्मेति । ब्रह्मा विधिश्च भृङ्गी ऋष्यशृङ्गोमुनिश्च वसिष्ठश्च ते आद्या येषां पराशरादीनां ते । समाधिनिरताः । सन्तोऽपि । व्युत्थानकाले समाधेरुपरतिसमये । कामाद्यैः । विक्रियां विकारम् । प्रापुरेव । हि प्रसिद्धम् ॥ ८ ॥

यथेति । किञ्च । यथा । अज्ञानां समाधिरहितजनानाम् । सुषुप्तिरवस्था । निर्विकारत्वकारणम् । भवति । तथा सुज्ञानां समाधिमताम् । समाधिः । निर्विकारत्व कारणम् । अस्ति । अत्रानयोः समाधिसुषुप्त्योः । कश्चन । विशेषः । नास्ति । सुषुप्त्युपरतस्य कामादिभिर्यथा पीडनं तथा समाध्युपरतस्यापि तद्दर्शनाद्विशेषाभाव इत्यर्थः ॥ ९ ॥ अतइति । अतोहेतोः । भवता । कृतम् । एतत् । उत्तरम् । समीचीनम् । नास्ति । तस्मात्कारणात् । अन्ये । साधवोऽपि । विचार्य । तन्मत्प्रश्नोत्तरम् । कथयन्तु ॥१०॥ मुक्तानन्देति । ततस्तदनन्तरम् । मुक्तानन्दादयः । ते साधवः । यथामति । तदुत्तरम् । चक्रुः । तत्तत्कृतमुत्तरमपि । असङ्गतम् । मत्वा । स्वयं श्रीहरिरेव । तान्साधून् । तत्स्वप्रश्नोत्तरम् । आह ॥११॥ विवेकेति । हे साधवः ! । जनकस्य । भूपतेरिव । यत् विवेकज्ञानदार्ढ्यं सारासारविवेचनावबोधदृढता । तदेव । कामरोषादिबीजोत्खननसाधनं कामक्रोधाद्यन्तःशत्रुमूलोन्मूलनोपायः । अस्ति ॥१२॥ एवं समासेनोत्तरं कृत्वा जनकनृपस्थित्युक्तिपूर्वं तदेव विशेषेणाह पद्भिः । संन्यासिन्येति । पुरा

यथा सुषुप्तिश्चाज्ञानां निर्विकारत्वकारणम् । तथा समाधिः सुज्ञानां विशेषो नात्र कश्चन ॥ ९ ॥ अतो नैतत्समीचीनमुत्तरं भवता कृतम् । तस्मादन्ये साधवोऽपि विचार्य कथयन्तु तत् ॥ १० ॥ मुक्तानन्दादयश्चक्रुस्ततस्ते तद् यथामति । तदप्यसङ्गतं मत्वा स्वयमेव तदाह तान् ॥ ११ ॥ विवेकज्ञानदार्ढ्यं यज्जनकस्येव भूपतेः । तदेव कामरोषादिबीजोत्खननसाधनम् ॥ १२ ॥ संन्यासिन्या सुलभया मोह्यमानोऽप्यनेकधा । जनको हि पुरा राजा न मुह्यन्नित्थमाह ताम् ॥ १३ ॥ गुरोः पञ्चशिखस्याहं कृपया सांख्ययोगयोः । निष्णातोऽस्मीति नास्त्येव मोहो मे योगिनि ! क्वचित् ॥१४॥ चन्दनेनार्चयेद्योऽङ्गं ममार्द्धं यस्तथाऽसिना । अर्द्धं छिन्द्याच्च तौ तुल्यौ भवतो म उभावपि ॥ १५ ॥ मिथिलायाः समग्राया दाहेऽपि मम किञ्चन । नास्ति दग्धव्यमित्येव निश्चयो मेऽस्ति सर्वदा ॥ १६ ॥

जनकः । राजा । सुलभयैतन्नाम्ना । संन्यासिन्या । अनेकधा । मोह्यमानो मोहनीयमानः सन्नपि । न मुह्यन् मोहं नोधिगच्छन्सन् । तां सुलभाम् । इत्थं वक्ष्यमाणप्रकारेण । आह ॥ १३ ॥ गुरोरिति । हे योगिनि सुलभे । अहम् । पञ्चशिखस्य पञ्चशिखऋषिनाम्नः । गुरोः । कृपया । सांख्ययोगयोः सांख्ययोगप्रतिपाद्यज्ञाने इत्यर्थः । निष्णातः कुशलः । अस्मि । इतिहेतोः । मे मम । क्वचित्कदाचित् । कस्मिंश्चिन्मायिकपदार्थे । वा । मोहः । नास्त्येव ॥१४॥ चन्दनेनिति । यः पुरुषः । मम । अर्द्धम् । अङ्गम् । चन्दनेन । अर्चयेत् । तथा । यः पुरुषः । मम । अर्द्धम् । अङ्गम् । असिना खड्गेन छिन्द्यात् । तौ । उभावपि पुरुषौ । मे मम । तुल्यौ । भवतः ॥ १५॥ मिथिलाया इति । समग्रायाः । मिथिलाया एतन्नाम्न्या मम नगर्याः । दाहेऽपि । मम । किञ्चन । दग्धव्यम् । नास्ति । इत्येवंविध एव । मे मम । निश्चयः । सर्वदा । अस्ति ॥ १६ ॥

असङ्गीति । अहम् । प्रवृत्त्यध्वस्थितः प्रवृत्तिमार्गावस्थितः सन्नपि । असङ्गी तत्सङ्गवर्जितः । निर्विकारः कामादिविकारवर्जितः अस्मि । हे साधवः ! । इत्येवंविधम् । तस्य जनकनृपस्य । वचनम् । श्रुत्वा । सा सुलभा । विस्मिता सती । ततो जनकनृपतिसभायाः सकाशात् । अगमन्निर्जगाम ॥ १७ ॥ अतइति । अतो हेतोः । तस्य । जनकनृपस्येव । यस्य भक्तस्य । ज्ञानदार्ढ्यं । स्यात् । स भक्त एव । प्रवृत्तौ प्रवृत्तिमार्गे । वर्त्तमानः सन्नपि कामादिविक्रियाम् । नेयान्न प्राप्नुयात् । कामादिविक्रियाया अप्रापणमेव तदुन्मूलनमित्यर्थः ॥१८॥ तदिति । तत्कामाद्युन्मूलनं येन स्यात्तथाविधम् । ज्ञानम् । समासेन । कथयामि । तत् । निशम्यताम् । एकः । हरिरेव । सारः सारः रूपः । अस्ति । ततो हरेः सकाशात् । अन्यः । अखिलः सकलोऽपि मायिकपदार्थस्तु । असारः सारवर्जितः । अस्ति ॥ १९ ॥ कृष्णेति । एकम् । कृष्णाकारम् । विहाय । तं विनेत्यर्थः । अखिलाः । मायिकाकृतयः । दुःखदाः । नाशवत्यश्च । भवन्ति । इतीत्थमेव । वेदनम् ॥ २० ॥ देहइति । अहम् । देह-

असङ्गी निर्विकारोऽस्मि प्रवृत्त्यध्वस्थितोऽप्यहम् । श्रुत्वेति तस्य वचनं विस्मिता साऽगमत्ततः ॥ १७ ॥ अतस्तस्येव यस्य स्याज्ज्ञानदार्ढ्यं स एव हि । प्रवृत्तौ वर्त्तमानोऽपि नेयात्कामादिविक्रियाम् ॥ १८ ॥ तच्च ज्ञानं समासेन कथयामि निशम्यताम् । एक एव हरिः सारोऽसारोऽन्यस्तु ततोऽखिलः ॥ १९ ॥ कृष्णाकारं विहायैकं मायिकाकृतयोऽखिलाः । दुःखदा नाशवत्यश्च भवन्तीत्येव वेदनम् ॥ २० ॥ देहत्रयपृथक्सत्तारूप आत्मैव केवलम् । हरिदासोऽहमस्मीति वेदनं ज्ञानमुत्तमम् ॥२१॥ एतज्ज्ञानवतः पुंसः प्रवृत्त्यध्वन्यपि क्वचित् । कामादिविक्रिया नैव हृदि स्यादिति निश्चितम् ॥ २२ ॥ ज्ञानी स सर्वेभ्यो भक्तेभ्यः श्रेष्ठ उच्यते । त्यागी सोऽस्त्वथवा गेही न विशेषोऽत्र कश्चन ॥ २३ ॥ एषोऽपि क्वापि देशादेः सम्बन्धादसतः पतेत् । स्वस्थितेः सन्त एवातः सेव्या देशादयोऽखिलैः ॥ २४ ॥

त्रयपृथक् सत्तारूपः । केवलम् । आत्मा निजात्मानं ब्रह्मरूपं विभाव्य वर्त्तमानः सन्नेव । हरिदासः । अस्मि । इतीत्थम् । वेदनं च । उत्तमम् । ज्ञानम् । ज्ञेयम् ॥२१॥ एतदिति । एतज्ज्ञानवतः । पुंसो भक्तस्य । प्रवृत्त्यध्वनि प्रवृत्तिमार्गे वर्त्तमानस्य सतोऽपीत्यर्थः । हृदि तन्मनसि । क्वचित्कदाचिदपि । कामादिविक्रिया । नैव स्यात् । इत्येवमेव । निश्चितं मया निर्णीतमस्ति ॥ २२ ॥ ज्ञानीति । स एवंविधः । ज्ञानी भक्त एव । सर्वेभ्यः । श्रेष्ठः । उच्यते । स एवंविधो ज्ञानिभक्तः । एव । सर्वेभ्यः । भक्तेभ्यः । श्रेष्ठः । उच्यते । स एवंविधो ज्ञानिभक्तः । त्यागी साधुः । अस्तु । अथवा । गेही गृहस्थाश्रमी । अस्तु । अत्रानयोर्विषये । कश्चन । विशेषः । नास्ति । उभावपि मे समानौ भासेते इत्यर्थः ॥ २३ ॥ एष इति । एष एतादृशो ज्ञानिभक्तोऽपि । क्वापि कदाचिदपि । असतोऽशुभस्य । देशादेर्देशकालक्रियासङ्गादेः । सम्बन्धात् । स्वस्थितेरुक्तविधनिष्ठायाः सकाशात् । पतेत् । अतोहेतोः । अखिलैर्मुमुक्षुभिश्च भक्तैः । सन्तः शुभा एव । देशादयः सेव्याः ॥२४ ॥

ब्रह्मेति । किञ्च । ब्रह्मादेः । या । विक्रिया कामादिविकारः । अभूत् । तत्र तद्विक्रियायाम् । कारणम् । क्वचित् । असद्देशादिसेवा । अस्ति । क्वचित् । ज्ञानाद्यपक्वता अस्ति । येषां ज्ञानपक्वताऽस्ति तेषां विक्रियाहेतवोऽसद्देशादिसेवनानि येषां ज्ञानापक्वताऽस्ति तेषां तु सैव विक्रियाहेतुरित्यर्थः ॥ २५ ॥ वाक्येति । इत्थमेवंविधम् । विभोरक्षरादिसर्वान्तर्यामिण इत्यर्थः । तस्य श्रीहरेः । वाक्यामृतम् । आपीय । निखिलाः । ते सन्तः । तथा । तत्सदस्थाः । अन्ये गृहस्थभक्ता अपि ।

ब्रह्मादेर्विक्रिया याऽभूत्कारणं तत्र च क्वचित् । असद्देशादिसेवाऽस्ति क्वचिज्ज्ञानाद्यपक्वता ॥ २५ ॥ वाक्यामृतं तस्य
विभोस्त इत्थमापीय सन्तो निखिलास्तथाऽन्ये । गृहस्थभक्ता अपि तत्सदःस्थाः सन्तोषमापुस्तमथ प्रणेमुः ॥ २६ ॥
इति श्रीहरिवाक्यसुधासिंधौ शतानन्दमुनिविरचिते द्विशताधिकविंशस्तरङ्गः ॥ २२० ॥ २० ॥

सन्तोषम् । आपुः । अथानन्तरम् । तं स्वावासं व्रजन्तं श्रीहरिम् । प्रणेमुर्नमश्चक्रुः ॥ २६ ॥ कामादीनां समुन्मूलसाधनं ज्ञानमाह यः । स्वभक्तान् स हरिर्मह्यं ददातु ज्ञानमेव तत् ॥ १ ॥ यः श्रीहरिर्भक्तजनान्निजान्प्रभुः स्ववाक्यपीयूषरसैर्महामुदः । चकार कारुण्यनिधिः पिता स मे ददातु भक्तिं परमां स्वपादयोः ॥ २ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्सूनुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां द्विशताधिकविंशस्तरङ्गः ॥ २२० ॥ २० ॥

## ॥ वृत्तालयप्रकरणं समाप्तम् ॥

# 卐 श्रीनगरप्रकरणम् 卐

श्री हरिकृष्णायनमोनमः ॥ श्रीहरिं कृष्णनामानं नमामि पुरुषोत्तमम् । क्षराक्षरपरं सर्वेश्वरेश्वरमहं मुदा ॥ १ ॥ यः स्ववाक्यसुधापानविधापनत आदरात् । चक्रे स्वान् सुखितांस्तस्मिन् पितर्यस्तु मनो मम ॥ २ ॥ हरिवाक्यसुधासिन्धोस्त्रयः श्रीनगरीयकाः । तरङ्गाः शोभनास्तेषां व्याख्यानं क्रियते मया ॥ ३ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८८२) तपःकृष्णे माघमासस्य कृष्णपक्षे । एकादश्यां तिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । श्रीनगरे । नरनारायणालयात्सकाशात् । उदग्वेद्यामुत्तरदिग्वर्त्तिवेद्यास्थापितपट्टके सपार्श्विकोपबर्हश्वेताेत्तरच्छदस्थूलतूलिकाकृते रुचिरासने इत्यर्थः । सिताम्बरः परिहित-सकलश्वेतवसनः स्वामी श्रीहरिः । प्रत्यङ्मुखः पश्चिमदिगभिमुखः सन् । निषसाद ॥ २ ॥ स्रजइति । स्थलपद्मानाम् । शुभाः शोभनाः । बह्वीः । स्रजो मालाः । कण्ठे । दधत् । तेषां स्थलपद्मानाम् । आपीडान् शेखरान् । उष्णीषे शिरःपटे । दधत् । तेषामेव । अवतंसकौ कर्णपूरौ । कर्णयोश्च । दधन् ॥ ३ ॥ नानेति ।

शकाब्दे विक्रमार्कस्य नेत्राष्टवसुभूमिते । एकादश्यां तपःकृष्णे वचोऽमृतमिदं हरेः ॥ १ ॥ तत्र श्रीनगरे स्वामी नरनारा-यणालयात् प्रत्यङ्मुख उदग्वेद्यां निषसाद सिताम्बरः ॥२॥ स्रजश्च स्थलपद्मानां बह्वीः कण्ठे दधच्छुभाः । तेषां चोष्णीष आपीडा-न्कर्णयोश्चावतंसकौ ॥ ३ ॥ नानादेशागतैर्भक्तैस्त्यागिभिर्गृहिभिश्च सः । वृतोऽन्तर्दृष्टिरभवन्मुहूर्त्तं व्युत्थितस्ततः ॥४॥ विलो-कयन्नसौ भक्तान् करूणापूर्णया दृशा । प्रोवाच वो ध्यानयोगं वच्म्येकतममिष्टदम् ॥५॥ मोक्षधर्मेषु कथितं गाङ्गेयेनैव भारते । महद्भिरनुभूतं च मयाऽपि परमाद्भुतम् ॥ ६ ॥ स्वाभाविकश्चमत्कारः सिद्धमन्त्रौषधादिषु । यथाऽस्ति तद्वदत्रापि सोऽस्ति तं शृणुतादरात् ॥ ७ ॥ स्वस्तिकासनमासीन ऋजुकायो रहस्थले । ध्याताऽऽदौ दक्षिणे नेत्रे ध्यायेद्भास्करमञ्जसा ॥ ८ ॥

नानादेशागतैः । त्यागिभिः । गृहिभिश्च । भक्तैः । वृतः सभायां परिवेष्टितः । स श्रीहरिः । मुहूर्त्तं द्विघटिकापर्यन्तम् । अन्तर्दृष्टिः प्रतिलोमवृत्तिः । अभवत् । ततस्तदनन्तरम् । व्युत्थितोऽन्तर्दृष्टेरुपरतः । अभवत् । इतिद्वयोरेकसम्बन्धः ॥ ४ ॥ विलोकयन्निति । असौ श्रीहरिः । करूणापूर्णया । दृशा । भक्तान् । विलोकयन्सन् । प्रोवाच । हे भक्ताः ! । इष्टदं वाञ्छितार्थप्रदम् । एकतमम् । ध्यानयोगम् । वो युष्मभ्यम् । वच्मि ॥ ५ ॥ तं विशिनष्टि । मोक्षेति । भारते कृष्णद्वैपायनकृते महाभारते । मोक्षधर्मेषु । गाङ्गेयेन भीष्मेणैव । कथितं युधिष्ठिरनृपतिं प्रति निगदितम् । महद्भिर्हिरण्यगर्भादियोगाचार्यैः । अनुभूतं कृतयथार्थानुभवम् । मयाऽपि । अनुभूतम् । अतएव । परमाद्भुतम् ॥ ६ ॥ स्वाभाविकइति । यथा । सिद्धमन्त्रौषधादिषु । स्वाभाविकः । चमत्कारः । अस्ति । तद्वत्तथा । अत्र मया कथ्यमाने ध्यानयोगेऽपि । सः स्वाभाविकचमत्कारः । अस्ति । तं ध्यानयोगम् । आदरात् । शृणुत ॥ ७ ॥ स्वस्तिकेति । ध्याता भगवत्स्वरूपध्यानकर्त्ता भक्तः । रहःस्थले ।

स्वस्तिकासनम् । आसीनः । स्वस्तिकासनं विधायोपविष्ट इत्यर्थः । ऋजुकायः सन् । आदौ । दक्षिणे । नेत्रे । भास्करं सूर्यम् । अञ्जसा तत्त्वतः । ध्यायेत् ॥ ८ ॥ ध्यायेदिति । वामे । अक्षिणि । नेत्रे । चन्द्रं च । ध्यायेत् । एवम् । अन्वहम् । यथाशक्ति । मुहुः । पुनः पुनः । ध्यायेत् । एवममुना प्रकारेण । अभ्यसतः । पुंसो ध्यातुर्भक्तस्य । तयोर्दक्षिणवामनेत्रयोः । तौ सूर्यचन्द्रौ । साक्षात्प्रत्यक्षौ । भवतः ॥ ९ ॥ दक्षइति । तदा तस्मिन्समये । दक्षे । नेत्रे । तापः । जायते । वामे । नेत्रे । शैत्यं शीतत्वं च जायते । तदा तस्मिन्काले । अनाकुलो व्याकुलतावर्जितो ध्याता । तौ सूर्यचन्द्रौ । वैपरीत्येन । तयोः । ध्यायेत् । वामनेत्रे सूर्यं दक्षिणनेत्रे चन्द्रं च ध्यायेदित्यर्थः ॥ १० ॥ ततइति । ततस्तदनन्तरम् । अन्तर्दृशा प्रतिलोमवृत्त्या । तौ सूर्यचन्द्रौ । हृदयाकाशे । चिरं बहुकालपर्यन्तम् । पश्येत् । तत्र हृदयाकाशे एव । आत्मज्योतिस्तेजोरूपं स्वात्मानम् । पश्येत् । तत्स्थं तेजोरूपे स्वात्मन्यवस्थितम् । साक्षिणं सर्वान्तरात्मानं श्रीपुरुषोत्तमं च पश्येत् ॥ ११ ॥ एवमिति । एवममुना प्रकारेण । ध्यानम् । समभ्यसन् । योगी । भ्राम्यद्भ्रमणं कुर्वत् । घटीयन्त्रमिव भाषायां यन्नाम रेटनोफालको इत्युच्यते स इव । भ्राम्यन्तम् ।

ध्यायेद्वामेऽक्षिणि चन्द्रं च यथाशक्त्यन्वहं मुहुः । एवमभ्यसतः पुंसस्तौ साक्षाद्भवतस्तयोः ॥ ॥ ९ ॥ दक्षे नेत्रे तदा तापो वामे शैत्यं च जायते । तदा तौ वैपरीत्येन तयोर्ध्यायेदनाकुलः ॥ १० ॥ ततस्तौ हृदयाकाशे पश्येदन्तर्दृशा चिरम् । आत्मज्योतिश्च तत्रैव पश्येत्तत्स्थं च साक्षिणम् ॥ ११ ॥ एवं समभ्यसन् ध्यानं योगी स्वहृदि वीक्षते । घटीयन्त्रमिव भ्राम्यल्लिङ्गदेहमपि ध्रुवम् ॥ १२ ॥ ततश्चाल्पेन कालेन विश्वरूपमपि प्रभोः । स वीक्षतेऽथ तत्र स्थाल्लोकानपि चतुर्दश ॥ १३ ॥ विराड्रूपमपि ह्येतत् स नातिमहदीक्षते । अल्पेऽपि तत्र लोकांस्तु सावकाशं समीक्षते ॥ १४ ॥ वटपत्रे शयानस्य तुन्दे बालाकृतेर्हरेः । मार्कण्डेयो यथाऽद्राक्षीत्तथैषोऽप्यखिलं जगत् ॥ १५ ॥ एवं सम्पश्यतो ध्यातुर्मुमुक्षोर्हृत्स्थसंशयाः । नश्यन्ति कृष्णविषयाः सर्वे नास्तिकता तथा ॥ १६ ॥

लिङ्गदेहमपि । स्वहृदि । वीक्षते ध्रुवम् ॥ १२ ॥ ततइति । ततस्तदनन्तरम् । अल्पेन । कालेन । स योगी । प्रभोः । श्रीहरेः । विश्वरूपं पुरुषावतारस्वरूपम् । वीक्षते । अथानन्तरम् । तत्र स्थान् विश्वरूपान्तःस्थितान् । चतुर्दश । लोकानपि । वीक्षते ॥१३॥ विराडिति । स योगी । एतत् विराड्रूपमपि । अतिमहत् । नेक्षते । किन्तु स्वल्पमात्रं समीक्षते । अल्पेऽपि । तत्र विराड्रूपे । लोकांस्तु । सावकाशमसम्बाधनया यथाऽवस्थिताः स्युस्तथा समीक्षते ॥ १४ ॥ एतन्महासाध्वनुभवप्रमाणेन द्रढयति । वटेति । यथा । वटपत्रे । शयानस्य । बालाकृतेः शिशुसमानाकारस्य । हरेर्भगवतः । तुन्दे उदरे । मार्कण्डेयो मुनिः । अखिलं चतुर्दशलोकात्मकम् । जगत् । अद्राक्षीत् । तथा । एष योग्यपि । अल्पे विराड्रूपेऽखिलं जगत्पश्यति ॥१५॥ एवमिति । एवममुना प्रकारेण । सम्पश्यतो विराड्रूपं वीक्षमाणस्य । मुमुक्षोः । ध्यातुर्योगिभक्तस्य । कृष्णविषयाः साक्षात्कृष्णैश्वर्यसम्बन्धिनः । सर्वे । हृत्थसंशयाः । नश्यन्ति । तथा । नास्तिकता साक्षाद्भगवदैश्वर्यसत्यत्वसन्देहोदयरूपो नास्तिकभावः । नश्यति ॥ १६ ॥

ऐश्वर्यमिति । स ध्याता योगिभक्तः । शास्त्रगदितम् । हरेः ऐश्वर्यम् । ऋतं सत्यम् । वेत्ति । तस्य योगिभक्तस्य । जीवोऽपि । ऐश्वर्यसंयुतः सन् । अतिबली अतिशयेन बलवान् । भवति जायते ॥ १७ ॥ यावदिति । अत्रास्मिन् ब्रह्माण्डे । सूर्येन्द्वोः । प्रकाशः । यावद्यदवधि । प्रवर्त्तते । तावत्तदवधि । अस्य योगिभक्तस्य । चक्षुर्वृत्तेः । प्रवर्त्तनमपि । जायते ॥ १८ ॥ सिद्धय इति । अणिमाद्याः । अष्टसिद्धयः । आदृता आदरयुक्ताः सत्यः । तं योगिभक्तम् । उपतिष्ठन्ते प्राप्ता भवन्ति । स योगिभक्तस्तु । भक्त्यन्तरायत्वात् श्रीहर्येकान्तिकभक्तावन्तरायरूपत्वाद्धेतोः । ताः सिद्धीः । हृदा मनसाऽपि । न गृह्णाति ॥ १९ ॥ तत इति । ततस्तदन्तरम् । स योगिभक्तः । नारदशुकादिवत् । सिद्धदशाम् । याति । एतत् । ध्यानम् । ईदृक्फलप्रदमेवंविधफलप्रतिपादकम् । अस्ति । इतीत्थम् । बुद्ध्यताम् ॥२०॥ मुक्तानन्दइति । अथैवंविधश्रीहरिवाक्यश्रवणानन्तरम् । मुक्तानन्दो मुनिः । तं श्रीहरिम् । पप्रच्छ । हे स्वामिन् ! । त्वया । उदितम् । सकलार्थप्रसाधकम् । उत्तमम् । एतत् । ध्यानम् । श्रुतम्

ऐश्वर्यं शास्त्रगदितं स च वेत्ति ऋतं हरेः । जीवोऽपि तस्यातिबली भवत्यैश्वर्यसंयुतः ॥ १७ ॥ यावत्प्रकाशः सूर्येन्द्वोर्ब्रह्माण्डेऽत्र प्रवर्त्तते । जायते तावदस्यापि चक्षुर्वृत्तेः प्रवर्त्तनम् ॥ १८ ॥ सिद्धयोऽष्टाणिमाद्यास्तमुपतिष्ठन्त आदृताः । स तु भक्त्यन्तरायत्वान्न गृह्णाति हृदाऽपि ताः ॥ १९ ॥ ततः सिद्धदशां याति स नारदशुकादिवत् । ईदृक्फलप्रदं ह्येतद्ध्यानमस्तीति बुद्ध्यताम् ॥ २० ॥ मुक्तानन्दोऽथ पप्रच्छ तमेतद्ध्यानमुत्तमम् । श्रुतं त्वयोदितं स्वामिन्सकलार्थप्रसाधकम् ॥ २१ ॥ इदं यमादियोगाङ्गसाधकस्यैव सिद्ध्यति । किं वेतरस्य पुंसोऽपीत्युक्तस्तं हरिरब्रवीत् ॥२२॥ श्रीकृष्णानन्यभक्तस्य ध्यातुरेतत्तु सिद्ध्यति । अन्यस्य तु न कस्यापि यमाद्यङ्गवतोऽपि हि ॥ २३ ॥ इति तस्य तु वाक्यमुत्तमं सुधयासम्मितमादरेण सः । अपरे च निशम्य साधवः प्रभुभक्ताः परमां मुदं ययुः ॥२४॥

इति श्रीहरिवाक्यसुधासिंधौ शतानन्दमुनिविरचिते द्विशताधिकैकविंशस्तरङ्गः ॥ २२१ ॥ १ ॥

॥ २१ ॥ इदमिति । इदं त्वदुक्तध्यानम् । यमादियोगाङ्गसाधकस्यैव । शिद्ध्यति । किं वा । इतरस्य योगाङ्गसाधनवर्जितस्य । पुंसोऽपि । सिद्ध्यति । इत्यमुनाप्रकारेण । उक्तो मुक्तानन्दमुनिनाभिहितः । हरिः । तं मुक्तानन्दमुनिम् । अब्रवीत् ॥ २२ ॥ श्रीकृष्णेति । हे मुने ! । श्रीकृष्णानन्यभक्तस्य श्रीहरेरेकान्तिकभक्तस्य । ध्यातुरेवंविधध्यानकर्त्तुर्योगिनः । एतद्ध्यानम् । सिद्ध्यति । यमाद्यङ्गवतः संसिद्धयमाद्यष्टयोगाङ्गस्यापि । अन्यस्य श्रीहर्येकान्तिकभक्तेतरस्य । कस्यापि पुंसः । एतत् । न सिद्ध्यति । हि ॥२३॥ इतीति । इत्येवंविधम् । तस्य श्रीहरेः । सुधया । सम्मितम् । उत्तमम् । वाक्यम् । आदरेण । निशम्य । स मुक्तानन्दमुनिः । प्रभुभक्ताः । अपरे साधवः । गृहिणश्च । परमाम् । मुदम् । ययुः ॥ २४ ॥ यः स्वकीयध्यानयोगमाहात्म्यमवदद्धरिः । स मे ध्याने सदैवास्तु प्रत्यक्षः पुरुषोत्तमः ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्तकश्रीहर्येकान्तिकोपासकश्रीकृष्णभगवत्स्वसुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां द्विशताधिकैकविंशस्तरङ्गः ॥ २२१ ॥ १ ॥

ज्ञानिनो ब्रह्मरूपस्य भक्तस्यैवान्यभक्ततः । उक्ताऽतिश्रेष्ठता स्पष्टं द्वितीये तु स हेतुका ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् (१८८२) तपस्य शुक्लैकादश्यां फाल्गुनमासस्य शुक्लपक्षागतैकादशीतिथौ । इदम् । हरेः वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ श्रीनगरे । नरनारायणालयात् । उदग्वेद्याम् । स्वास्तृते सपार्श्विकस्थूलतूलिकादिना कृताछादने । पट्टकासने । स्वामी श्रीहरिः । निषण्णः । अभूत् ॥ २ ॥ तं विशिनष्टि द्वाभ्याम् । सितमिति । सितं श्वेतवर्णम् । वासोऽधोंऽशुकम् । परिदधत् । सितम् । उत्तरीयं प्रावारवसनम् । दधत् । शीर्ष्णि मस्तके । पाटलं स्थलपद्मदलाभम् । पटकमुष्णीषवस्त्रम् । धारयन् । सस्मिताननो मन्दहासवदनाम्बुजः ॥ ३ ॥ हारानिति । स्थलपद्मानाम् । हारान् । अवतंसौ । शेखरान् । केयूरकटकांश्च दधत् । अनेकैर्नानादेशागतत्वाद्बहुभिः । निजाश्रितैस्त्यागिभिर्गृहिभिश्च स्वाश्रितजनैः । वृतः सभायां परिवेष्टितः ॥ ४ ॥ उवाचेति । स श्रीहरिः । प्रीतः सन् । सतः साधून्प्रति । उवाच । हे साधवः ! । किञ्चित्कमपि प्रश्नम् । पृच्छामि । तस्य प्रश्नस्य । उत्तरम् । चेतसि । विचार्यैव । यूयम् । कुरुत ॥ ५ ॥ एक इति । इह सत्सङ्गे । एकः । भक्तः । जाग्रदाद्याः । तिस्रः । अवस्थाः । व्यतीत्यातिक्रम्य । तद्भावानात्मन्यमन्यमान इत्यर्थः । ब्रह्मात्मैकत्वं ब्रह्मणा सह स्वात्मन एकभावम् । आस्थायाश्रित्य । वर्त्तमानः । भवेत् ॥ ६ ॥ शुद्धेति । स च भक्तः । मिश्रगुणत्रयं परस्परो रञ्जनपूर्वमेकीभावापत्त्या मलिनताभावसत्त्वादिगुणत्रिकं । हित्वा । शुद्धसत्त्वम् । आश्रितः । स्यात् । आत्मनः स्वस्य । धर्मं वर्णाश्रमोचितं सदाचारम् । पालयन्सन् । भक्त्या । नारायणं श्रीहरिम् । भजेत् ॥७॥ एक इति । एकोऽन्यो भक्तस्तु । अवस्थात्रितये । मलिने परस्परमिश्रे । गुणत्रये च वर्त्तमानः सन्नपि । परमेश्वरे श्रीहरौ । अतिप्रीतियुक्तः । स्यात् ॥ ८ ॥ एतयोरिति । एतयोः । उभयोर्द्वयोर्भक्तयोर्मध्ये । श्रेष्ठः । कतरः कोऽस्ति । उच्यतां भवद्भिः स कथ्यताम् । अथैवंविधश्रीहरिप्रश्नश्रवणानन्तरम् । सर्वे । साधवः । ऊचुः हे हरे ! । हरौ साक्षाद्भगवति त्वयि । अतिप्रीतिमान् । भक्तः । श्रेष्ठोऽस्ति ॥ ९ ॥

शकाब्दे विक्रमार्कस्य नेत्राष्टवसुभूमिते । तपस्यशुक्लैकादश्यां वचोऽमृतमिदं हरेः ॥ १ ॥ तत्र श्रीनगरे स्वामी नरनारायणालयात् । उदग्वेद्यां निषण्णोऽभूत्स्वास्तृते पट्टकासने ॥२॥ सितं वासः परिदधच्चोतरीयं सितं दधत् । पाटलं पटकं शीर्ष्णि धारयन्सस्मिताननः ॥ ३ ॥ हारांश्च स्थलपद्मानामवतंसौ च शेखरान् । दधत्केयूरकटकान्वृतोऽनेकैर्निजाश्रितैः ॥ ४ ॥ उवाच स सतः प्रीतः किञ्चित्पृच्छामि साधवः ! । तस्योत्तरं विचार्यैव यूयं कुरुत चेतसि ॥ ५ ॥ एको भक्तो जाग्रदाद्यास्तिस्रोऽवस्था व्यतीत्य च । ब्रह्मात्मैकत्वमास्थाय वर्त्तमानो भवेदिह ॥ ६ ॥ शुद्धसत्त्वं चाश्रितः स्याद्धित्वा मिश्रगुणत्रयम् । भजेन्नारायणं भक्त्या पालयन्धर्ममात्मनः ॥ ७ ॥ एकस्त्ववस्थात्रितये मलिने च गुणत्रये । वर्त्तमानोऽप्यतिप्रीतियुक्तः स्यात्परमेश्वरे ॥ ८ ॥ एतयोरुभयोर्मध्ये श्रेष्ठः कतर उच्यताम् । अथोचुः साधवः सर्वे श्रेष्ठोऽतिप्रीतिमान् हरौ ॥ ९ ॥

तानिति । तत एवंविधसाधुकृतस्वप्रश्नोत्तरश्रवणानन्तरम् । स्वामी श्रीहरिः । तान्साधून् । उवाच । हे मुनयः ! । एको भक्तः । स्नात्वा । शुचिः पवित्रः सन् । कृष्णं साक्षाद्भगवन्तं तत्प्रतिमां वा । अर्चयेत् । एकोऽन्यो भक्तः । अशुचिद्रव्यलिप्ताङ्गो मलमूत्राद्यशुचिपदार्थोपदिग्धशरीरः । मलिनोऽस्नातोऽशुचिद्रव्यस्पृष्टवसनोऽधौतवस्त्रश्च सन् । कृष्णम् । अर्चयेत् ॥ १० ॥ एतयोरिति । एतयोर्द्वयोर्मध्ये । श्रेष्ठः । कतरोऽस्ति । तदा । साधवः । तं श्रीहरिम् । शुचिः । अर्चकः । श्रेष्ठः । इतीत्थम् । ऊचुः । ततस्तदनन्तरम् । स्वामी श्रीहरिः । तान्साधून् । जगाद ॥ ११ ॥ एवमिति । हे साधवः ! । एवं चेच्छुचिरर्चकः श्रेष्ठो यदि । तर्हि । पूर्वस्य मया प्रथमं कृतस्य प्रश्नस्य । भवद्भिः । उक्तम् । यत् । उत्तरम् । तस्योत्तरस्य । खण्डनम् । भवद्गिरा भवतां वचनेनैव । जातम् ॥ १२ ॥ एतदेव स्पष्टमाह । भक्तमिति । भवन्तः । अमायिकोपाधिं मायिकगुणत्रयकार्याभिमानं हित्वा शुद्धसत्त्वात्मतया ब्रह्मभावावस्थितम् । भक्तं तु । अवरं कनिष्ठम् । मन्वते । मायिकोपाधिं मायिकगुणत्रयात्मकतया वर्त्तमानम् । हरौ । अतिप्रीतियुतम् । भक्तं तु । श्रेष्ठम् । मन्वते । मलिनगुणत्रयातीतशुद्धसत्त्वात्मना ब्रह्मभावापन्नस्य भक्तस्य स्नान-

तानुवाच ततः स्वामी स्नात्वैकः शुचिरर्चयेत् । कृष्णं चैकोऽशुचिद्रव्यलिप्ताङ्गो मलिनोऽर्चयेत् ॥ १० ॥ एतयोः कतरः श्रेष्ठस्तदोचुः साधवश्च तम् । शुचिः श्रेष्ठोऽर्चक इति ततः स्वामी जगाद तान् ॥ ११ ॥ एवं चेत्तर्हि पूर्वस्य प्रश्नस्योक्तं यदुत्तरम् । भवद्भिः खण्डनं तस्य जातमेव भवद्गिरा ॥ १२ ॥ भक्तं त्वमायिकोपाधिं भवन्तो मन्वतेऽवरम् । श्रेष्ठं च मायिकोपाधिमतिप्रीतियुतं हरौ ॥ १३ ॥ कथमेतदिति पृष्टाः सन्तस्ते तु तदुत्तरम् । कर्तुं नैवाशकंस्तर्हि स्वयमूचे स सद्गुरुः ॥ १४ ॥ चतुर्विधा भजन्ते मामिति कृष्णेन भाषितम् । गीतायां तत्र हि ज्ञानी भक्तः स्वात्मेति कीर्त्तितम् ॥ १५ ॥ मायिकोपाधिहीनोऽतो ब्रह्मीभूतो ह्यवासनः । भक्तोऽतिश्रेष्ठ इत्येव भवद्भिरवगम्यताम् ॥ १६ ॥ चतुर्विधो हि प्रलयः प्रोक्तो भागवतादिषु । नित्यो नैमित्तिकः सन्तः ! प्राकृतात्यन्तिकौ तथा ॥ १७ ॥

शुद्धार्चकतुल्यत्वात् हरावतिप्रीतियुक्तत्वेऽपि मलिनगुणत्रययुक्तस्य भक्तस्याशुच्यर्चकस्यापि । भवद्भिश्च पूर्वं प्रीतिमतः श्रेष्ठतयोक्तत्वात् साम्प्रतं शुच्यर्चकस्य श्रेष्ठत्वोक्त्या भवद्वचनेनैव भवत्कृतोत्तरखण्डनं जातमितिभावः ॥ १३ ॥ कथमिति । एतदेवं विपरीततया प्रश्नोत्तरम् । कथं केन प्रकारेण घटेत न घटेतैवेत्यर्थः । अतः प्रकारान्तरेणोत्तरं विधत्तेति भावः । इत्यमुना प्रकारेण । पृष्टाः श्रीहरिणानुयुक्ताः । ते । सन्तस्तु । तदुत्तरम् । यर्हि नैवाशकन् । तर्हि । सद्गुरुः । स श्रीहरिः । स्वमेव । ऊचे ॥१४॥ चतुरिति । हे साधवः ! । गीतायाम् । कृष्णेन । चतुर्विधा भजन्ते माम् । इतीत्थम् । भाषितमर्जुनं प्रति कथितमस्ति । तत्रैतदादिषु श्लोकेषु । ज्ञानी । भक्तः । स्वात्मा स्वस्य ममात्मवत्प्रियः । इतीत्थम् । कीर्त्तितं कृष्णेनैवोक्तमस्ति । हि ॥ १५ ॥ मायिकेति । अतोहेतोः । मायिकोपाधिहीनः । ब्रह्मीभूतो ब्रह्मभावं प्राप्तः । अत एव । अवासनो भगवदितरभावनावर्जितः । भक्तः । अतिश्रेष्ठः । अस्ति । इतीत्थमेव । भवद्भिः । अवगम्यताम् ॥ १६ ॥ इममेवार्थं स्पष्टयितुं चतुर्विधप्रलय-

स्वरूपोक्तिपूर्वं नित्यादिप्रलयत्रयलीनोपाधीनां पुनरुद्भवे स्वस्वोपाधिप्राप्तिमात्यन्तिकलयलीनोपाधीनां पुनस्तदप्राप्तिं तेषां स्वतन्त्रत्वं च ब्रुवन्ब्रह्मभावेन हरिं भजन्तं भक्तमेव श्रेष्ठमाह सप्तभिः । चतुर्विध इति । हे सन्तः ! । भागवतादिषु । चतुर्विधः प्रलयः । प्रोक्तः । तान्नाम्ना निर्दिशति । नित्यः । नैमित्तिकः । तथा । प्राकृतात्यन्तिकौ प्राकृतिक आत्यन्तिकश्चेत्यर्थः ॥ १७ ॥ समासेन तत्स्वरूपमाह सार्द्धेन । सुषुप्तिरिति । अस्य । जीवस्य सुषुप्तिः सुषुप्त्यवस्था । चकारान्नित्यं शरीरादिपरिणामोऽपि । नित्यो नित्यप्रलयः । मतः । अथ च । ब्रह्मणो वैराजब्रह्मणः । सा सहस्रयुगान्तप्राप्या सुषुप्त्यवस्था । नैमित्तिकः प्रलयः मतः । प्रकृतौ मूलमायायाम् । प्राकृतात्ययः सकार्यप्रधानपुरुषयोर्लयः । प्राकृतिकः प्राकृतप्रलयो मतः ॥१८॥ ज्ञानेन साक्षाद्भगवदेकान्तिकोपासनयाऽक्षरब्रह्मणा सहैकभावलक्षणेन विबोधेन । मायिकोपाधिलयः सकार्यमूलप्रकृतिरूपोपाधिव्यतिरिक्ततयावस्थानम् । चकारान्मूलप्रकृतिपूरुषयोरक्षरतेजसि तिरोभावोऽपि । आत्यन्तिकः प्रलयः । मतः । एषां नित्यादिचतुर्विधप्रलयानां मध्ये । त्रिषु नित्यादिषु त्रिषु प्रलयेषु । विलीना लयं प्राप्ताः । मायिकोपाधिसहिततया लयं प्राप्ता जीवा ईश्वराश्चेत्यर्थः । पुनर्भूयः । उद्भवं प्रादुर्भावम् । प्रयान्ति सुषुप्त्यन्ते स्वस्वोपाधियुता जीवा नैमित्तिकप्रलयान्ते स्वस्वोपाधियुता वैराजादयः प्राकृतप्रलयान्ते स्वस्वोपाधियुताः प्रधानपुरुषादयश्च पुनः प्रादुर्भावं यान्तीत्यर्थः ॥१९॥

सुषुप्तिश्चास्य जीवस्य नित्योऽथ ब्रह्मणश्च सा । नैमित्तिकः प्राकृतिकः प्रकृतौ प्राकृतात्ययः ॥ १८ ॥
ज्ञानेन मायिकोपाधिलयश्चात्यन्तिको मतः । एषां त्रिषु विलीनास्तु प्रयान्ति पुनरुद्भवम् ॥ १९ ॥
आत्यन्तिके लये लीनमायिकोपाधयस्तु ये । आत्मना न पुनस्तेषां सम्बन्धो जायते क्वचित् ॥ २० ॥
ब्रह्मीभूताश्च दिव्याङ्गाः सर्गकालेऽपि ते हरेः । भक्ता नैव प्रजायन्ते कालमायाक्रियावशात् ॥ २१ ॥
स्वातन्त्र्येण तु भक्तास्ते भगवानिव कर्हिचित् । आविर्भवन्ति लोकेषु तदाज्ञातोऽज्ञमुक्तये ॥ २२ ॥

आत्यन्तिक इति । ये भगवदेकान्तिकभक्ताः । आत्यन्तिके । लये । लीनमायिकोपाधयो विलीनसकार्यमूलप्रकृतिरूपोपाधयः । सन्ति । तेषामेकान्तिकभक्तानाम् । पुनः । आत्मना ब्रह्मभावापन्नस्वात्मना सह । सम्बन्धो मायिकोपाधिसंयोगः । क्वचित्कदाचिदपि । न जायते ॥ २० ॥ एतदेव स्पष्टमाह । ब्रह्मीभूता इति । ब्रह्मभूता ब्रह्मभावं प्राप्ताः । दिव्याङ्गा ब्रह्मरूपशरीरतयाऽक्षरधाम्नि ब्रह्मरूपमुक्तैः सह श्रीहरेः सेवायामवस्थिताः । ते तथाविधाः । हरेः । भक्ताः । सर्गकाले आत्यन्तिकप्रलयान्ते जायमाने सृष्टिसमयेऽपि । कालमायाक्रियावशात् । नैव प्रजायन्ते । अस्यायं भावः । ज्ञानप्रलयात्मको मूलप्रकृतिपुरुषलयात्मकश्च य आत्यन्तिकप्रलय उक्तस्तत्र द्वितीयप्रकारात्यन्तिकप्रलयान्ते मूलप्रकृतिपुरुषयोः पुनः प्रादुर्भावतया सर्गकाले सत्यपि ज्ञानप्रलयेन लीनोपाधयो भक्ताः कालमायाकर्मवशात् तस्मिन्काले नोत्पद्यन्त इति ॥२१॥ स्वातन्त्र्येणेति । ते तथाविधाः । भक्ताः भगवानिव श्रीहरिर्यथा । स्वातन्त्र्येण । कर्हिचित् । तदाज्ञातः श्रीहरेर्निदेशवशतया । अज्ञमुक्तये अनादिकालतो मायाबद्धानां जीवानां श्रीहर्येकान्तिकभक्त्युपदेशेन मायासम्बन्धनिवृत्तिपूर्वमात्यन्तिकमोक्षप्राप्तये । लोकेषु । आविर्भवन्ति ॥ २२ ॥

अत इति । अतोहेतोरेव । ये भक्ताः । ब्रह्मरूपाः । ज्ञानिनो भगवन्माहात्म्यातिशयबोधपूर्वमुक्तविधसम्यक् ज्ञानप्रलयनिष्ठावन्तः सन्तः । रमापतिं प्रत्यक्षं श्रीकृष्णम् । भजेयुः । ते भक्ताः । मया । श्रेष्ठाः । मताः । इतीत्थम् । हृदि स्वस्वहृदये । गम्यतां बुद्ध्यताम् ॥ २३ ॥ अनन्य इति । हे सतमाः ! । कृष्णस्य । अनन्यभक्तैरेकान्तिकभक्तजनैः इयं मया कृता । वार्त्ता । अवधारितुम् । शक्या । अखिलैः । पुंभिस्तदितरैर्भक्तजनैरपि । न त्वधारयितुं नैव शक्या । इतीत्थम् । जानीत ॥ २४ ॥ श्रुत्वेति । इत्येवंविधाम् । प्रेमवतीसुतस्य श्रीहरेः । पीयूषसमानवाचम् । श्रुत्वा । सदःस्थाः । भक्ताः । सर्वेऽपि । साधुजनाः । अन्ये । गृहिणश्च । पराम् । मुदं प्रपेदिरे ॥ २५ ॥ स्वीयस्य ज्ञानीभक्तस्य श्रेष्ठत्वं स्वान्यभक्ततः । येनोक्तं हरिणा कुर्याज्ज्ञानिभक्तं स मां निजम् ॥ १ ॥ इति श्रीमदेकान्तिधर्मप्रवर्तकश्रीहर्येकान्तिकोपासकश्रीहरिकृष्णभगवत्सूनुरघुवीरचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां द्विशताधिकद्वाविंशस्तरङ्गः ॥ २२२ ॥ २ ॥

अत एव ब्रह्मरूपा ज्ञानिनो ये रमापतिम् । भजेयुस्ते मताः श्रेष्ठा मयेति हृदि गम्यताम् ॥ २३ ॥ अनन्यभक्तैः कृष्णस्य वार्तेयं त्ववधारितुम् । शक्या न त्वखिलैः पुंभिरिति जानीत सत्तमाः ! ॥ २४ ॥ श्रुत्वेति पीयूषसमानवाचं सर्वेऽपि ते प्रेमवतीसुतस्य । मुदं परां साधुजनाः सदःस्थाः प्रपेदिरेऽन्ये गृहिणश्च भक्ताः ॥ २५ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते द्विशताधिकद्वाविंशस्तरङ्गः ॥ २२२ ॥ २ ॥

शकाब्दे विक्रमार्कस्य नेत्राष्टवसुभूमिते । तपस्यान्त्यद्वितीयायां वचोऽमृतमिदं हरेः ॥ १ ॥
तत्र श्रीनगरे स्वामी नरनारायणालयात् । उदग्वेद्यां निषण्णोऽभून्मञ्चे भक्तगणैर्वृतः ॥ २ ॥
वलक्षपरिधानश्च पाटलोष्णीषमण्डितः । सितप्रावारवसनः कुन्दपुष्पस्रगञ्चितः ॥ ३ ॥ स्थलपद्म-
कृतापीडो वीक्षमाणो दृशा निजान् । स्वयमेव सतोऽप्राक्षीत्सर्वज्ञोऽपि स लीलया ॥ ४ ॥

श्रीहरेर्ध्यानतः सम्यक् जातेनोपशमेन यः । विनाशो विषयासक्तेः कारणस्य तु संसृतेः ॥ १ ॥ प्राप्तेरुपमस्यापि श्रेष्ठोपायास्तु ये मताः । दृष्टान्तकथनादेतत्सर्वमुक्तं तृतीयके ॥ २ ॥ शकेति । शकेति पूर्वार्द्धं (१८८२) व्याख्यातम् । तपस्यान्त्यद्वितीयायां फाल्गुनमासस्य कृष्णपक्षीयद्वितीयातिथौ । इदम् । हरेः वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । श्रीनगरे । नरनारायणालयात् । उदग्वेद्याम् । मञ्चे स्वास्तृते पर्यङ्कासने । भक्तगणैर्नानादेशागतत्यागिगृहिस्वाश्रितवृन्दैः । वृतो महासभायां परिवेष्टितः । स्वामी श्रीहरिः । निषण्णः । अभूत् ॥ २ ॥ वलक्षेति । वलक्षपरिधानः परिहितश्वेताधोवसनः । पाटलोष्णीषमण्डितः स्थलपद्मदलाभशिरोवेष्टनभूषितः । सितप्रावारवसनः प्रावृतश्वेतांशुकः । कुन्दपुष्पस्रगञ्चितो माध्यसुमनोमालाशोभनोरःस्थलः ॥ ३ ॥ स्थलेति । स्थलपद्मकृतापीडः । दृशा करुणापूर्णया स्वदृष्ट्या । निजान्स्वभक्तजनान् । वीक्षमाणः । स श्रीहरिः । सर्वज्ञः सन्नपि । लीलया नृनाट्यचरित्रेण । स्वयमेव । सतः साधून् । अप्राक्षीत् । इति द्वयोरेकसम्बन्धः ॥ ४ ॥

सर्व इति । हे साधवः ! । सर्वेऽपि । जीवाः । पञ्च विषयान्मायिकार्थान् । सर्वदा । सेवन्ते । तान्विषयान् । विना विषयसेवनमृते इत्यर्थः । क्षणमपि । स्थातुम् । न शक्ताः । इतीत्थम् । ईक्ष्यते ॥५॥ शब्देति । यदा । ते जीवाः । शब्दादीन् । पञ्च विषयान् । बहिः । नाप्नुवन्ति । तदा । निजान्तःकरणे । तेषां शब्दादिविषयाणाम् । चिन्तनम् । मुहुर्भूयो भूयः । कुर्वते ॥ ६ ॥ केचिदिति । केचिज्जीवाः । तान्विषयान् । बहिरुपरिष्टात् । त्यक्त्वा । निजान्तरे स्वमानसे । चिन्तयन्ति । किन्तु । पण्डिता विद्वांसो जना अपि । सर्वथा बहिरन्तरतश्च । तत्त्यागे विषयप्रहाणे । न क्षमन्ते समर्था न भवन्ति ॥ ७ ॥ एषेति । हे सन्तः ! । एषोक्तविधा । विषयासक्तिः पञ्चस्वपि विषयेषु प्रीतिरेव । सर्वेषाम् । नृणाम् । पुनः पुनः । दुःखदायाः । संसृतेः । कारणम् । दृश्यन्ते ॥ ८ ॥ पञ्चस्विति । किञ्च । चेद्यदि । पञ्चसु विषयेषु तु । मध्ये । एकतमे एकस्मिन्विषयेऽपि । रतिः प्रीतिः । स्यात् । सर्वेषु पञ्चसु विषयेषु न स्यात् । तथापि । सा एकस्मिन्विषये रतिरपि । संसृतिं तु ।

सर्वेऽपि जीवा विषयान्सेवन्ते पञ्च सर्वदा । न तान्विना क्षणमपि स्थातुं शक्ता इतीक्ष्यते ॥ ५ ॥
शब्दादींस्ते यदा पञ्च नाप्नुवन्ति बहिस्तदा । निजान्तःकरणे तेषां कुर्वन्ते चिन्तनं मुहुः ॥ ६ ॥
केचित्त्यक्त्वा बहिस्तांस्तु चिन्तयन्ति निजान्तरे । सर्वथा न तत्त्यागे क्षमन्ते पण्डिता अपि ॥ ७ ॥
एषैव विषयासक्तिः संसृतेः कारणं नृणाम् । सर्वेषां दृश्यन्ते सन्तो दुःखदायाः पुनः पुनः ॥ ८ ॥
पञ्चस्वेकतमेऽपि स्यान्न च सर्वेषु चेद्रतिः । तथापि साऽपि कुर्यात्तु संसृतिं नात्र-संशयः ॥ ९ ॥
विशुष्कभूरिमूलस्य वटवृक्षस्य कुत्रचित् । यद्येकतममप्यार्द्रमवशिष्येत मूलकम् ॥ १० ॥
तदप्यस्य पुनारोहकारणं जायते यथा । तथैकविषयासक्तिरपि संसृतिकारणम् ॥ ११ ॥
एवं सति कथं सर्वविषयासक्तिरञ्जसा । न स्याद्भक्तस्य हृदये तद्यूयं वक्तुमर्हथ ॥ १२ ॥

कुर्यात् । अत्रार्थे । संशयः । नास्ति ॥ ९ ॥ एतदेव दृष्टान्तेन द्रढयति द्वाभ्याम् । विशुष्केति । विशुष्कभूरिमूलस्य नीरसभावापन्नबहुमूलस्य । वटवृक्षस्य । कुत्रचित्कचित्प्रदेशे । यदि । एकतममपि । आर्द्रम् । मूलकम् । अवशिष्येत ॥ १०॥ तदेति । तदेकमप्यार्द्रमूलम् । अस्य वटवृक्षस्य । पुनारोहकारणं पुनरुद्गमहेतुः । यथा । जायते । तथा । एकविषयासक्तिरपि । संसृतिकारणम् । जायते ॥ ११ ॥ एवमिति । एवं सति एकविषयासक्तेरप्येवंविधत्वे सति । भक्तस्य । हृदये । सर्वविषयासक्तिः । अञ्जसा तत्त्वतः । कथं केनोपायेन । न स्यात् । यूयम् । वक्तुम् । अर्हथ । अस्यायं भावः । यदैकस्य विषयस्याल्पाप्यासक्तिरन्तः शिष्टा सती देशकालादिसम्बन्धेन प्ररोहं प्राप्य संसृतिप्रदा स्यात्तदा सर्वविषयासक्तेस्तथात्वे किं वाच्यमतः साऽऽमूलाद्यथा भक्तहृदो विनष्टा स्यात्तथाविधोपायं ब्रूतेति ॥ १२ ॥

इतीति । इत्यमुनाप्रकारेण । पृष्टाः श्रीहरिणानुयुक्ताः । ते । साधवः यदा । सम्यक् । तदुत्तरम् । कर्त्तुम् । न विदुः । तर्हि । स्वयं श्रीहरिरेव । तान्साधून् । तत्स्वप्रश्नोत्तरम् । आह ॥ १३ ॥ यदेति । हे सन्तः ! । मुमुक्षुर्भक्तः । यदा । स्वदेहत्रयभावनां स्थूलादिस्वकीयदेहत्रयाभिमतिम् । हित्वैव । सच्चिद्रूपात्मना ब्रह्मभावापन्न-निजात्मना । साक्षात् । कृष्णं श्रीहरिम् । अन्तरे स्वान्तःकरणे । चिन्तयेत् । तदेत्युत्तरेण सम्बन्धः ॥ १४ ॥ तदेति । तदा । तद्बलत उक्तविधयाश्रीहरिमूर्त्तिचिन्तनबलात् । तस्य भक्तस्य । हृदि । उपशमः सर्वेन्द्रियान्तःकरणानामात्माकारयावस्थानम् । वर्त्तेत । तस्मिन्नुपशमे । सति सम्यक्तया वर्त्तमाने सति तु । विषयाः । अन्तरे तद्भक्तमानसे । प्रवेष्टुम् । क्षमाः समर्थाः । न भवन्ति ॥ १५ ॥ दृष्टा इति । पूर्वमुपशमोदयात्प्राक् । दृष्टाः । अथवा । श्रुताः । ये । विषयाः । ते । सर्वेऽपि । विषयाः । प्राग्जन्मश्रुतदृष्टवत्पूर्वजन्मनि श्रुता वा दृष्टा ये विषयास्ते यथा । बुद्धौ तस्य भक्तस्य मत्याम् । विस्मृतिमेव । यान्ति ॥ १६ ॥ एतदेव दृष्टान्तेन स्पष्टयति

इति पृष्टाः साधवस्ते यदा सम्यक् तदुत्तरम् । कर्त्तुं विदुर्न वै तर्हि तदाह स्वयमेव तान् ॥ १३ ॥
यदा मुमुक्षुर्हित्वैव स्वदेहत्रयभावनाम् । सच्चिद्रूपात्मना साक्षाच्चिन्तयेत्कृष्णमन्तरे ॥ १४ ॥
तदा तद्बलतस्तस्य वर्त्ततेोपशमो हृदि । सति तस्मिंस्तु विषयाः प्रवेष्टुं नान्तरे क्षमाः ॥ १५ ॥
दृष्टाः श्रुता वा ये पूर्वं तेऽपि यान्त्येव विस्मृतिम् । सर्वेऽपि विषया बुद्धौ प्राग्जन्मश्रुतदृष्टवत् ॥ १६ ॥
कामिनोऽत्र यथा यूनः सम्प्राप्तस्य प्रजागरम् । अध्वश्रान्तस्य सुदृढं सुषुप्तस्यान्तिके स्त्रियाः ॥ १७ ॥
तस्याः स्याद्विस्मृतिः पञ्चविषयाणां च सर्वथा । तथोपशममाप्तस्य तेषामस्यापि जाग्रति ॥ १८ ॥
सुषुप्त्युपशमेऽप्येवं विस्मृतिः स्यात्तमोमये । विषयाणां किमुत तज्ज्ञानोपशमवर्त्तने ॥ १९ ॥

त्रिभिः । कामिन इति । हे सन्तः ! । अत्र लोके । यथा । प्रजागरम् । सम्प्राप्तस्य सुदृढं यथातथा । अध्वश्रान्तस्य बह्वध्वातिक्रमेण श्रमितस्य । स्त्रियाः । अन्तिके । सुषुप्तस्य गाढसुषुप्त्यवस्थां प्राप्तस्य । प्रागप्राप्तस्त्रीकस्य । पश्चादत्यायासेोढपत्नीकस्य तदुपभोगक्षमत्वे तया सह सुप्त्वापि सुषुप्तिं गतस्येत्यर्थः । कामिनः कामाकुलस्य । यूनस्तरुणपुरुषस्य ॥१७॥ तस्य । इति । तस्याः । स्वान्तिकसुप्ताया नार्याः । पञ्चविषयाणां च । सर्वथा । विस्मृतिः । स्यात् । तथा । उपशमम् । आप्तस्य । अस्य भक्त-स्यापि । जाग्रति जाग्रदवस्थायाम् । तेषां विषयाणाम् । विस्मृतिः । स्यात् । इतिद्वयोरेकसम्बन्धः ॥ १८ ॥ सुषुप्तीति । एवमुनाप्रकारेण । तमोमये । सुषुप्त्युपशमेऽपि । विषयाणाम् । विस्मृतिः । स्यात् । तत्तदा । ज्ञानोपशमवर्त्तने । विषयाणाम् । विस्मृतिः स्यात् । तत्र । किमुवक्तव्यं कथनं विनापि सिद्धमेवास्तीत्यर्थः ॥ १९ ॥

एवमिति । एवममुना प्रकारेण । यदा । कृष्णध्यानोपलब्धात् । उपशमतः । विषयासक्तिः । नष्टा । स्यात् । तदा । तया नष्टया विषयासक्त्या । संसृतिः । न स्यात् ॥ २० ॥ इतीति । इत्येवंविधम् । प्रश्नस्य । सम्यक् । उत्तरम् । श्रुत्वा । ते । साधवः । मुदम् । ययुः । अथानन्तरम् । महामुनिः । नित्यानन्दः । तं श्रीहरिम् । अप्राक्षीत् ॥ २१॥ दुष्करत्वादिति । हे हरे ! । त्वया । उक्तस्य । तद्धेतोरुपशमोदयकारणस्य । त्वद्ध्यानस्य तु । सर्वथा । दुष्करत्वात् । तस्योपशमस्य । सुकरोपायः अस्ति । वा नास्ति ॥ २२ ॥ अस्तीति । चेद्यदि । विषयासक्तिहृतः । तस्योपशमस्य । स सुकरोपायः । अस्ति । तर्हि । तं सुकरोपायम् । मह्यम् । ब्रूहि । इतीत्थम् । पृष्टो नित्यानन्दमुनिनानुयुक्तः । जगद्गुरुः । असौ श्रीहरिः । तं नित्यानन्दमुनिम् । प्रोवाच ॥२३॥ कृष्णस्येति । हे मुने ! ।

एवमिति हि विषयासक्तिर्नष्टोपशमतो यदा । कृष्णध्यानोपलब्धात्स्यान्न तदा संसृतिस्तया ॥ २० ॥ इति श्रुत्वोत्तरं सम्यक् ते प्रश्नस्य ययुर्मुदम् । साधवोऽथ तमप्राक्षीन्नित्यानन्दो महामुनिः ॥ २१ ॥ दुष्करत्वात्त्वयोक्तस्य त्वद्ध्यानस्य । तु सर्वथा तद्धेतोः सुकरोपायो हरे ! तस्यास्ति वा न वा ॥ २२ ॥ अस्ति चेद्विषयासक्तिहृतस्तस्य स तर्हि तम् । मह्यं ब्रूहीति पृष्टोऽसौ तं प्रोवाच जगद्गुरुः ॥ २३ ॥ कृष्णस्य च तदीयानां बुद्ध्वा माहात्म्यमञ्जसा । श्रद्धया तान् परिचरेद्यः स तं प्राप्नुयाद् ध्रुवम् ॥ २४ ॥ निरताः परिचर्यायां सन्तः सन्त्यत्र केचन । तेषामप्यतिनिर्मानः कश्चिदेव भवेत्पुमान् ॥ २५ ॥

कृष्णस्य श्रीहरेः । तदीयानां तदेकान्तिकभक्तानां च महात्म्यम् । अञ्जसा तत्त्वतः । बुद्ध्वा । यो भक्तः । श्रद्धया परमादरेण । तान्कृष्णतदीयान् । परिचरेच्छन्दानुवृत्त्या सेवेत । स भक्तः । ध्रुवं निश्चितमेव । तमुपशमम् । प्राप्नुयात् । अयमेवोपशमोदयस्य सुकरोपाय इति भावः ॥ २४ ॥ एवं माहात्म्यावबोधपूर्वं कृष्णतद्भक्तसेवामुपशमोदयहेतुमुक्त्वा साम्प्रतं भगवद्भक्ता अपि द्विविधाः सन्ति समाना निर्मानाश्च तत्र निर्मानभक्तानामेवोपशमोदयो भवेन्न समानभक्तानां यतः कृष्णस्य निर्मानस्वसेवककृतैव सेवा रुचिकरा न तु मानिकृता निर्मानिभक्तेष्वेव भगवत्प्रसन्नताहेतुमाहात्म्यातिशयाववोधसम्भवादित्याह चतुर्भिः । निरता इति । हे मुने ! । अत्र सत्सङ्गे । केचन । सन्तो भक्ताः । परिचर्यायां कृष्णतद्भक्तसेवायाम् । निरताः । सन्ति । तेषां भक्तानां मध्येऽपि । कश्चित् । पुमान् भक्त एव । अतिनिर्मानः । भवेत् ॥ २५ ॥

कृष्णेति । स निर्मान एव । कृष्णभक्तः । इमम् । उपशमम् । लभेत । खलु । परिचर्यापरा अपि । सर्वेऽपि भक्ताः । समाना अखिला अपि भक्तजना इत्यर्थः । तमुपशमम् । न तु नैव यायुः ॥ २६ ॥ स्वामिन इति । आत्मसेविनः । स्वसेवां कुर्वतो भक्तस्य सम्बन्धी । मानः । स्वामिने श्रीहरये । नैव रोचते । अतः । आपत्काले । कदन्नवत्कुत्सितकोद्रवादिकान्नाशनमिव । स्वामी । विमना उदासीनः सन् । सेवां समानात्मभक्तपरिचर्याम् । गृह्णाति ॥ २७ ॥ प्रसन्नतेति । निर्माने । सेवके । यादृशी । सदा । प्रसन्नता । अस्ति । स्वामिन इतिशेषः । तादृशी प्रसन्नता । समाने मानयुक्ते सेवके । नास्ति । तां निर्मानभक्तलभ्यां स्वामिप्रसन्नताम् । विना । स भक्तः । तमुपशमम् नाप्नुयात् ॥ २८ ॥ अथेति । अथानन्तरम् । तं श्रीहरिम् । प्रणम्य । शुकमुनिः शुकानन्दनामा साधुः । अपृच्छत् । हे महाप्रभो ! । सविवेकमनीषया त्वत्त्वभक्तमाहात्म्यावबोधहेतुविवेकयुक्तया बुद्ध्या । मुमुक्षोस्त्वद्भक्तस्य । मानस्यागः । स्यात् ॥ २९ ॥ तेनेति । तेन

कृष्णभक्तः स एवेमं लभेतोपशमं खलु । न तु सर्वेऽपि तं यायुः परिचर्यापरा अपि ॥ २६ ॥
स्वामिने रोचते नैव मानः खल्वात्मसेविनः । गृह्णाति विमनाः सेवामापत्काले कदन्नवत् ॥ २७ ॥
प्रसन्नताऽस्ति निर्माने सेवके यादृशी सदा । न तादृशी समाने हि तां विना तं स नाप्नुयात्
॥२८॥ अथापृच्छच्छुकमुनिस्तं प्रणम्य महाप्रभो ! । मानत्यागो मुमुक्षो स्यात्सविवेकमनीषया ॥२९॥
तेन स्वामी प्रसन्नः स्या इति युक्तं त्वयोदितम् । सा स्यान्न यस्य धीस्तस्मिंस्त्वं प्रसन्नः कथं भवेः
॥३०॥ तमुवाच हरिः साधो ! कल्याणेच्छा भवेद् दृढम् । यस्य तस्मिन्सेवके तु प्रीयन्ते हरितज्जनाः
॥३१॥ विना विवेकधिषणामेकयाऽपि मुमुक्षया । विशुद्धभावैकदृशः प्रसीदन्ति स तज्जनाः ॥ ३२ ॥

मानत्यागेन । स्वामी । त्वम् । प्रसन्नः । स्याः । इतीत्थम् । त्वया । उदित्तम् । यत् । तत् । युक्तमेव । यस्य त्वभक्तस्य । सोक्तविधविवेकयुक्ता । धीर्मनीषा । न स्यात् । तस्मिन् । त्वद्भक्ते । त्वम् । प्रसन्नः । कथम् । भवेः ॥ ३० ॥ तमिति । तमेवं पृच्छन्तं शुकानन्दमुनिन् । हरिः । उवाच । हे साधो ! । यस्य भक्तस्य । कल्याणेच्छा । दृढं यथा । तथा । भवेत् । तस्मिन् । सेवके भक्ते तु । हरितज्जनाः । प्रीयन्ते ॥३१॥ एतदेव पुनः स्पष्टमाह । विनेति । विवेकधिषणाम् । विना । एकया केवलया । मुमुक्षया कल्याणेच्छयाऽपि । विशुद्धभावैकदृशो निर्मानतया स्वानुवृत्त्याचरणलक्षणतदीयभावैकसमीक्षकाः । स श्रीहरिः तज्जनाश्च । प्रसीदन्ति । भक्तनिष्ठमुमुक्षाजातहरितद्भक्तानुवृत्त्युद्भूततत्प्रसन्नताऽप्युपशमोदयसाधनमितिभावः ॥ ३२ ॥

इममेवार्थं प्रत्यक्षतया स्वनिकटस्थिततथाविधस्वसेवकप्रदर्शनेन द्रढयति । मुकुन्द इति । मुकुन्दो मुकुन्दानन्दवर्णी । रत्नजिदेतन्नामा मत्सेवकः पदातिश्च । इमौ । सदःस्थितौ । उभौ । भक्तौ । अत्र मदुक्तार्थे । दृष्टान्तत्वेन । विज्ञेयौ । यद्यतोहेतोः । इमौ द्वौ । तथाविधौ मुमुक्षावन्तौ । स्तः ॥ ३३ ॥ किञ्चेति । किञ्च । साम्प्रतम् । अत्र सत्सङ्गे । एते सभायां मत्पुरो निषण्णाः । अयोध्यावासिनः । रामप्रतापप्रमुखाः । सर्वेऽपि । द्विजा विप्राः । तादृशा मुकुन्दादिवन्मदनुवृत्तिमन्तः । सन्ति ॥ ३४॥ प्रसादयितुमिति । एते द्विजाः । कृष्णं कृष्णनामानं माम् । प्रसादयितुम् । यथा । विदुर्जानन्ति । तथा । केचन । अन्ये सत्सङ्गिनो गृहिभक्ताः । केचन बुद्धिमन्तः । साधवोऽपि । न जानन्ति ॥ ३५ ॥ अतीति । अतिविश्वासिनो मन्मद्भक्तजनैकसुदृढविश्वासाः । तथा । शुद्धान्तःकरणाः । एते द्विजाः कृष्णतद्भक्तसेवने । निश्छद्मवर्त्तनः । सन्ति ॥ ३६ ॥ तस्मादिति । हे मुने ! । तस्माद्धेतोः यस्य भक्तस्य । दृढम् । मुमुक्षा । स्यात् । सः पुमान् भक्तस्तु ।

मुकुन्दो रत्नजिच्चोभाविमौ भक्तौ सदःस्थितौ । दृष्टान्तत्वेन विज्ञेयावत्रेमौ यत्तथाविधौ ॥ ३३ ॥
किञ्च साम्प्रतमत्रैते त्वयोध्यावासिनो द्विजाः । रामप्रतापप्रमुखाः सन्ति सर्वेऽपि तादृशाः ॥ ३४ ॥
प्रसादयितुमेते हि यथा कृष्णं विदुस्तथा । नान्ये केचन जानन्ति बुद्धिमन्तोऽपि साधवः ॥ ३५ ॥
अतिविश्वासिनो ह्येते शुद्धान्तःकरणास्तथा । निश्छद्मवर्त्तनाः सन्ति कृष्णतद्भक्तसेवने ॥ ३६ ॥
तस्माद्यस्य मुमुक्षा स्याद् दृढं स तु पुमान्मुने ! । अल्पधीरपि हित्वैव मानं सेवेत सात्त्वतान् ॥ ३७ ॥
पीत्वा वचोऽमृतमिति प्रभुवक्त्रपद्मनिर्यातमाप स मुनिर्भृशमेव तोषम् । सन्तोऽपरेऽपि सकलाश्च सदोनिषण्णा आपुर्गृहस्थपुरुषाश्च तदीयभक्ताः ॥ ३८ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते द्विशताधिकत्रयोविंशस्तरङ्गः ॥ २२३ ॥ ३ ॥

अल्पधीरपि । मानम् । हित्वैव । सात्त्वतान् भगवत्तद्भक्तान् । सेवेत । तेन तथाविधमुपशमं प्राप्नुयादितिभावः ॥ ३७ ॥ पीत्वेति । इत्येवंविधम् । प्रभुवक्त्रपद्मनिर्यातं श्रीहर्यास्याब्जनिःसृतम् । वचोऽमृतम् । पीत्वा । स मुनिः शुकानन्दसाधुः । तोषम् । भृशमेव । आप । सदोनिषण्णाः । तदीयभक्ताः । अपरे । सकलाः सन्तः । गृहस्थपुरुषाश्चापि । तोषम् । भृशमेव । आपुः ॥ ३८ ॥ स्वीयस्योपशमस्थस्य लक्ष्मोपशमसाधनम् । यश्चाह स हरिः कुर्यान्मां सदोपशमस्थितम् ॥ १ ॥ लक्ष्मीपुरे स्वीयपदाब्जभक्तैः सचन्दनैर्यः स्थलपद्महारैः । तच्छेखरैः पूजित आदरेण पिता स मे श्रीहरिरस्तु चित्ते ॥ २ ॥ इति श्रीहरिमदेकान्तिकधर्मप्रवर्त्तक श्रीहर्येकान्तिकोपासक श्रीहरिकृष्णभगवत्सूनुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां द्विशताधिकत्रयोविंशस्तरङ्गः ॥ २२३ ॥ ३ ॥

स्वरूपनिश्चयः कार्यो हरेर्मोक्षेप्सुना दृढः । हरिराह चतुर्थे तु ब्रह्मधामाधिपः स्वयं ॥ १ ॥ शकाब्द इति (१८८२) पूर्वार्द्धं व्याख्यातम् । तपस्यान्ततृतीयायां फाल्गुनमासस्य यः अन्त्योऽपरपक्षः कृष्णपक्ष इत्यर्थः । तस्य तृतीयातिथिस्तस्यां हरेः प्रत्यक्षभगवतः श्रीस्वामिनारायणस्य इदं वक्ष्यमाणप्रकारं वचोऽमृतं वचनामृतमासीदित्यर्थः ॥ १ ॥ तत्रेति । तत्र तस्यां तिथौ । असौ । स्वामी श्रीसहजानन्दः । श्रीनगरे । नरनारायणालयात् श्रीनरनारायणस्य मन्दिरतः । उदग्वेद्यां उत्तराभिमुखवेदिकायां । स्वास्तृते सुष्टु आस्तृते । चारुमञ्चके सुन्दरमञ्चे । न्यषीदत् ॥२॥ तं विशिनष्टि शेखरैरिति । स्थलपद्मानां गुलाबपुष्पाणां । शेखरैः । भूरिहारावतंसकैः बहुहारकर्णगुच्छैः । केयूरैरङ्गदैश्च । विराजमानश्च । सितसूक्ष्मघनाम्बरः सितानि सूक्ष्माणि घनानि अम्बराणि वस्त्राणि यस्य सस्तथाभूतः ॥ ३ ॥ मुनिवृन्दैरिति । मुनिवृन्दैश्च । नानादेशागतैः स्वभक्तैः । वृतो वेष्टितः । तेषां भक्तानां । हितकरः । प्रभुः श्रीहरिः । स्वयमेव केनाप्यपृष्टः । प्रीतः सन् । अब्रवीत् ॥४॥ शृण्वन्त्विति । सर्वे । सादरं । शृण्वन्तु । हितावहां भवतां हितकारिणीं । वार्त्तां । कुर्वेऽहमितिशेषः । आदौ प्रथमं । भगवतः । स्वरूपनिश्चयः । दृढम् । कार्यः ॥ ५ ॥ कीदृशः

शकाब्दे विक्रमार्कस्य नेत्राष्टवसुभूमिते । तपस्यान्त्यतृतीयायां वचोऽमृतमिदं हरेः ॥१॥ तत्र श्रीनगरे स्वामी नरनारायणालयात् । उदग्वेद्यां स्वास्तृतेऽसौ न्यषीदच्चारुमञ्चके ॥२॥ शेखरैः स्थलपद्मानां भूरिहारावतंसकैः । विराजमानः केयूरैः सितसूक्ष्मघनाम्बरः ॥ ३ ॥ मुनिवृन्दैः स्वभक्तैश्च नानादेशागतैर्वृतः । स्वयमेवाब्रवीत्प्रीतस्तेषां हितकरः प्रभुः ॥ ४ ॥ शृण्वन्तु सादरं सर्वे वार्त्तां कुर्वे हितावहाम् । स्वरूपनिश्चयः कार्य आदौ भगवतो दृढम् ॥ ५ ॥ अवतारान् दधदपि स्वयमस्त्यज एव हि । त्यजन्नप्यैच्छिकं देहं भवत्येवाजरामरः ॥ ६ ॥ मायाञ्जनेन हीनत्वाद्भवत्येष निरञ्जनः । अक्षरब्रह्मरूपोऽस्ति स्वप्रकाशश्च मूर्त्तिमान् ॥ ७ ॥ अनन्तकोटिब्रह्माण्डाधीशः कर्मफलप्रदः । ईश्वराणामीश्वरोऽसौ देवानामपि देवता ॥ ८ ॥ तस्य यन्नरदेहस्य धारणं त्यजनं तथा । तत्विन्द्रजालसदृशं ज्ञेयं नटवच्चेष्टितम् ॥ ९ ॥

स्वरूपनिश्चय इत्यत आह । अवतारानिति । अवतारान् । दधदपि । स्वयं हरिस्तु । अजः अजन्मा । एवास्ति । ऐच्छिकं इच्छया धृतं । देहं । त्यजन्नपि । अजरामरः । भवत्येव । हि निश्चितम् ॥६॥ मायाञ्जनेनेति । मायाञ्जनेन । हीनत्वात् । एष भगवान् । निरञ्जनः । भवति । अक्षरब्रह्मरूपोऽस्ति । स्वप्रकाशः । अस्ति च । मूर्त्तिमान् करपादादिसहितोऽस्ति ॥७॥ अनन्त इति । अनन्तकोटीब्रह्माण्डाधीश्वरः । कर्मफलप्रदः कर्मफलप्रदाता । चास्ति । असौ प्रत्यक्षो वर्त्तमानो यो नराकारमूर्त्तिर्भगवान्स इत्यर्थः । ईश्वराणां ब्रह्मादीनां सर्वेषां । ईश्वरः नियन्ताऽस्ति । देवानामिन्द्रादिनामपि । देवताऽस्ति ॥८॥ तस्येति । तस्य भगवतः । यन्नरदेहस्य । धारणं । तथा । त्यजनम् । तत्तु । नटवच्चेष्टितमिन्द्रजालसदृशं । ज्ञेयं । यथा नट इन्द्रजालविद्यया स्वर्गे इन्द्रदिभिः सह युद्धार्थं गच्छति युद्धयति म्रियते पुनर्दृश्यतेऽपि च वस्तुतस्तु नटो न मृतो नापि युद्धे छिन्नभिन्नो जातः किन्तु इन्द्रजालविद्यया एवं दृश्यते भगवानपि देहं दधाति मुञ्चति वस्तुतस्तु स्वयमजन्माऽजरामरोऽस्तीतिभावः ॥ ९ ॥

स एवेति । सः । एव । भगवान् । भुवि । धर्मात् । मूर्त्तौ । नरनारायणो नरनारायणस्वरूपेण । समुत्पद्योत्पन्नो भूत्वा । बदरीवने । स्थितोऽस्ति ॥ १० ॥ प्रयोजनवशादिति । असौ भगवान् । प्रयोजनवशात् । भुवि । मत्स्यकूर्मादिकान । अवतारान् । धृत्वा । जीवानां । उत्तमं उत्कृष्टं । श्रेयः कल्याणं । कुरुते ॥ ११ ॥ देहाभिमानमिति । स्वसेविनां स्वाश्रितानां जीवानामित्यर्थः । देहाभिमानं । त्याजयित्वा । ब्रह्मनिष्ठां । कारयित्वा च । सद्वृषं सद्धर्मं । स्थापयित्वा ॥ १२ ॥ तत्तदिति । जीवाः । कर्मवपुः । यथा । तथा । भगवानपि । तत्तद्वपुः शरीरं । जहाति । किञ्चिन्निमित्तं । कृत्वैव । स । भगवान् । देहत्यागं । करोति ॥ १३ ॥ देहत्यागमिति । अस्य भगवतः । देहत्यागं । जीवसाम्येन जीवसादृश्येन । विलोक्य दृष्ट्वा । दुर्धियः दुष्टबुद्धयः । नास्तिकाः । भ्रान्तिमासाद्य । स्वसम्मतं स्वसदृशं भगवन्तमपि स्ववत्कालमायादिभययुक्तं । विदन्ति । हि निश्चितम् ॥ १४ ॥ आस्तिका इति । आस्तिकास्तु । अस्य भगवतः । अखिलां समग्रां । लीलामेव । विदन्तः

स एव साक्षाद्भगवान् नरनारायणो भुवि । मूर्त्तौ धर्मात्समुपद्य स्थितोऽस्ति बदरीवने ॥ १० ॥ प्रयोजनवशाच्चासौ मत्स्य-कूर्मादिकान् भुवि । धृत्वाऽवतारान् कुरुते जीवानां श्रेय उत्तमम् ॥ ११ ॥ देहाभिमानं जीवानां त्याजयित्वा स्वसेविनाम् । ब्रह्मनिष्ठां कारयित्वो स्थापयित्वा च सद्वृषम् ॥ १२ ॥ तत्तद्वपुर्जहात्येव जीवाः कर्मवपुर्यथा । किञ्चिन्निमित्तं कृत्वैव देहत्यागं करोति सः ॥१३॥ देहत्यागं विलोक्यास्य जीवसाम्येन दुर्धियः । नास्तिका भ्रान्तिमासाद्य स्वसम्मतं विदन्ति हि ॥ १४ ॥ आस्तिकास्तु विदन्तोऽस्य लीलामेवाखिलामपि । देहावस्थासु सर्वासु न मुह्यन्ति कदाचन ॥ १५ ॥ कालमायायमादीनां नियन्तुः परमेशितुः । देहावस्थास्तत्कृतास्तु सम्भवेयुर्न वै क्वचित् ॥१६॥ तासां यद्दर्शनं तत्तु तस्यैव परमात्मनः । माया-प्रदर्शनमिति ज्ञात्वा मुह्यन्ति नैव ते ॥१७॥ मायामूढा अभक्तास्तु नैवं जानन्ति नास्तिकाः । नटविद्यामजानन्तो नटमायां यथा तथा ॥ १८ ॥ अतस्तेषां मतं दुष्टं नैव ग्राह्यं मुमुक्षुभिः । अनीशभावमीशे हि गृह्णानो यात्यधोगतिम् ॥ १९ ॥

सन्तः । सर्वासु । देहावस्थासु । कदाचन । न मुह्यन्ति ॥१५॥ कालमाया इति । कालमायायमादीनां । नियन्तुः । परमेशितुः परमेश्वरस्य । देहावस्थाः । तत्कृतास्तु तत्कालादिभिः कृतास्तु । क्वचिन्न । वै सम्भवेयुः ॥ १६ ॥ तासामिति । तासां भगवतो देहवस्थानां । यद्दर्शनं । तत्तु । तस्यैव । परमात्मनः । मायादर्शनमिति । ज्ञात्वा । ते आस्तिकाः । नैव । मुह्यन्ति ॥ १७ ॥ मायामूढा इति । मायामूढाः । अभक्ताः । नास्तिकास्तु । यथा । नटविद्यामजानन्तः । नटमायां । नैव । जानन्ति । तथा । एवं भगवतो मायया देहधारणमस्ति वस्तुतस्तु नास्तीति । नैव जानन्तीत्यर्थः ॥ १८ ॥ अत इति । अतःकारणात् । तेषां नास्तिकानां । दुष्टं । मतं । मुमुक्षुभिः । नैव । ग्राह्यम् । तत्र हेतुमाह । अनीश इति । ईशे भगवति । अनीशभावं । गृह्णानो जनः । अधोगतिं । याति गच्छति ॥ १९ ॥

नरनारायणे इति । अत्र नरनारायणे । यः । पुमान् । अज्ञभावेन । जननं । मरणं । कल्पयति । सः । पुमान् । तज्जन्म । मरणं । मुहुः । प्राप्नोति । वै निश्चितम् ॥ २० ॥ य इति । यः पुमांस्तु । संसृतेः । मोचयितारं । तं भगवन्तं । अजरामरं । जानाति । स पुमांस्तु । भवपाशान्मुक्तोऽस्ति । न संशयः ॥ २१ ॥ अत इति । अतःकारणात् । मदीयैः । सकलैः समग्रैः । भक्तैः । एतत्सुनिश्चितं । ज्ञात्वा । सर्वेषु । हर्य्यवतारेषु । दिव्यधीः दिव्यबुद्धिः । कार्या ॥ २२ ॥ उपसंहरति । एतदिति । एतदित्थं । हरेः प्रत्यक्षभगवतः श्रीस्वामिनारायणस्य । वागमृतं वचनामृतमित्यर्थः । निपीय पित्वा । सर्वेऽपि । ते साधुजनास्तथा । अन्येऽपरे । गृहस्थभक्ताः । परमां । मुदं हर्षं । प्राप्य । उदारभावाः सन्तस्तं श्रीहरिं । प्रणेमुः नमस्कारं चक्रुः ॥ २३ ॥ इति श्रीकेशवप्रसादाचार्यविरचितायां श्रीहरिवाक्यसुधासिन्धुटीकायां अन्वयदीपिकायां श्रीनगरप्रकरणे चतुर्थस्तरङ्गः ॥ ४ ॥

नरनारायणे योऽत्र जननं मरणं पुमान् । कल्पयत्यज्ञभावेन स तत्प्राप्नोति वै मुहुः ॥२०॥ यस्तु मोचयितारं संसृतेरजरामरम् । जानाति स मुक्तोऽस्ति भवपाशान्न संशयः ॥ २१ ॥ अतो मदीयैः सकलैर्भक्तैरेतत्सुनिश्चितम् । ज्ञात्वा हर्यवतारेषु कार्या सर्वेषु दिव्यधीः ॥ २२ ॥ एतद्धरेर्वागमृतं निपीय सर्वेऽपि ते साधुजनास्तथाऽन्ये । गृहस्थभक्ताः परमां मुदं च प्राप्य प्रणेमुस्त उदारभावाः ॥ २३ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते श्रीनगरप्रकरणे चतुर्थस्तरङ्गः ॥ ४ ॥

शकाब्दे विक्रमार्कस्य नेत्राष्टवसुभूमिते । चतुर्थ्यां फाल्गुनस्यान्ते वचोऽमृतमिदं हरेः ॥ १ ॥ तत्र श्रीनगरे स श्रीनरनारायणालयात् । उदग्वेद्यां स्वास्तृतायां व्यराजत सिताम्बरः ॥ २ ॥ स्थलपद्मस्रजं कण्ठे दधच्छेखरमण्डितः । दक्षदोष्ण्यक्षमालं च परितः स्वाश्रितैर्वृतः ॥ ३॥ द्वाःस्थः कुबेरसिंहाख्यस्तं प्रणम्य पुरःस्थितः । पप्रच्छासाधारणं मे ब्रूहि लक्षणमैश्वरम् ॥ ४ ॥ यदज्ञानाच्छास्त्रिणोऽपि नरनाट्यधरे हरौ । मुह्यन्तो नाश्रयन्ते तं तस्मात्तद्वक्तुमर्हसि ॥ ५ ॥

पृष्टः कुबेरद्वाःस्थेन तं प्राहेति हरिरिह । ऐश्वरं लक्षणं सद्भिर्ज्ञेयं तु पञ्चमे प्रभुः ॥१॥ शकाब्द इति । पूर्वार्द्धं व्याख्यातं (१८८२) फाल्गुनमासान्ते फाल्गुनमासस्य कृष्णपक्षे चतुर्थ्यां तिथौ । हरेः प्रत्यक्षभगवतः श्रीस्वामिनारायणस्य । इदं वक्ष्यमाणप्रकारं वचनामृतम् । प्रासीत् ॥ १ ॥ तत्रेति । तत्र तस्यां तिथौ ।सिताम्बरः । स श्रीहरिः । श्रीनगरे । श्रीनरनारायणालयात् श्रीनरनारायणस्य मन्दिरतः । उदग्वेद्यां उत्तरदिशि वेदिकास्तस्यां । व्यराजत ॥२॥ स्थलपद्मस्रजमिति । कथंभूतः सः । कण्ठे स्थलपद्मस्रजं गुलाबपुष्पहारं । दधत् । शेखरमण्डितश्च । दक्षदोष्ण्यक्षमालां दक्षिणहस्तेऽक्षमालां । दधत् । परितः । स्वाश्रितैर्वृतः ॥ ३ ॥ द्वाःस्थ इति । तं तथाविधं श्रीहरिं प्रति । पुरःस्थितः अग्रे स्थितः । कुबेरसिंहाख्यः । द्वाःस्थः । पप्रच्छ । मे मम । असाधारणं । ऐश्वरं ईश्वरस्य इदं ऐश्वरं । लक्षणं । ब्रूहि ॥ ४ ॥ यदिति । यद्यस्मात्कारणात् । अज्ञानात् । शास्त्रिणोऽपि शास्त्रवेत्तारोऽपि । नरनाट्यधरे हरौ । मुह्यन्तः सन्तः । तं श्रीहरिं । नाश्रयन्ते । तस्मात्कारणात् । तद्वक्तुमर्हसि ॥ ५ ॥

अथ तदुत्तरमाह । अनेकप्राणिनामिति । अनेकप्राणिनां । प्राणनाडिसङ्कोचनेन । यत्सद्यः । समाधिकरणं तदैश्वरं ईश्वरस्येदं ऐश्वरं । लक्षणं विद्धि ॥ ६ ॥ लक्षश इति । लक्षशः । स्वाश्रितनृणां । सदा । स्वाज्ञायामेव । स्थापनेन । यद्वशीकारो वशकरणम् । तच्च ऐश्वरं । लक्षणं ॥ ७ ॥ मुक्तानामिति । अक्षरादीनां । मुक्तानां । सर्वदा । नियन्तृत्वं च । स्वस्यान्यवशत्वं अपरवश्यत्वं च । न स्यात् । तत् । पारमेश्वरं परमेश्वरस्येदं पारमेश्वरम् । लक्षणम् ॥ ८ ॥ इतीति । इति । ऐश्वरं । लक्षणं । ते तुभ्यं । कथितं । अञ्जसा तत्त्वतः । ज्ञेयम् । इत्युक्तः । स कुबेरसिंहाख्यः । द्वाःस्थः । पुनस्तं श्रीहरिं । कृतानतिः कृतनमस्कारः सन् । अपृच्छत् ॥ ९ ॥ ब्रह्माण्डानीति । हे प्रभो ! वक्तुं समर्थ । ब्रह्माण्डानि तु । अनेकानि । सन्ति । इति । श्रूयते । कृष्णस्य भगवतः । अवतारास्तु । अस्मिन्भारते । खण्डे । अखिलाः समग्राः । श्रूयत इतिसम्बन्धः ॥१० ॥ तदिति । तत्तस्य भगवतः । सम्बन्धं । विना । तत्तद्ब्रह्माण्डवासिनां । नृणां । श्रेयः कल्याणं । कथं

श्रीहरिरुवाच—अनेकप्राणिनां प्राणनाडीसङ्कोचनेन यत् । सद्यः समाधिकरणं विद्धि लक्षणमैश्वरम् ॥ ६ ॥ लक्षशः स्वाश्रितनृणां स्वाज्ञायामेव सर्वदा । स्थापनेन वशीकारस्तच्च लक्षणमैश्वरम् ॥ ७ ॥ मुक्तानामक्षरादीनां नियन्तृत्वं च सर्वदा । स्वस्य नान्यवशत्वं च लक्षणं पारमेश्वरम् ॥८॥ इत्यैश्वरं लक्षणं ते कथितं ज्ञेयमञ्जसा । इत्युक्तः स पुनर्द्वाःस्थस्तमपृच्छत्कृतानतिः ॥ ९ ॥ ब्रह्माण्डानि त्वनेकानि सन्तीति श्रूयते प्रभो !। अवतारास्तु कृष्णस्य खण्डेस्मिन् भारतेऽखिलाः ॥ १० ॥ तत्सम्बन्धं विना श्रेयस्तद्ब्रह्मण्डवासिनां । नृणां कथं भवेदेष संशयस्तं पराणुद ॥ ११ ॥ तमुवाच हरिः साक्षाज्जातः कृष्णोऽत्र योऽस्ति सः । धृत्वाऽवतारं चरति ब्रह्माण्डेष्वखिलेष्वपि ॥ १२ ॥ प्रपद्यन्ते जना ये तं शरणं दृढनिश्चयाः । ब्रह्मधाम नयत्येव स तु तानखिलानपि ॥ १३ ॥ इत्युत्तरवचः श्रुत्वा द्वाःस्थोऽपृच्छत्पुनः स तम् । किं हेयं किमुपादेयं भक्तैस्तद् ब्रूहि मे विभो ! ॥१४॥ हरिरूचेऽत्र भक्तैस्तु प्राकृतार्थस्य सर्वथा । आशा त्याज्याऽथ कार्ष्णानामर्थानां सा विधीयताम् ॥१५॥

केन प्रकारेण । भवेत् । एषः । संशयः । अस्तीतिशेषः । तं संशयं । पराणुद अपनुद ॥ ११ ॥ तमिति । तं कुबेरसिंहाख्यं द्वास्थं प्रति । हरिः । उवाच । अत्रास्मिन्खण्डे । यः । साक्षात्कृष्णः प्रत्यक्षो भगवान् । जातोऽस्ति । स भगवान् । अखिलेश्वरः । ब्रह्माण्डेषु । अवतारं । धृत्वा । चरति ॥१२ ॥ प्रपद्यन्त इति । तं कृतावतारं श्रीकृष्णभगवन्तं । दृढनिश्चयाः । ये । पुरुषाः । शरणं । प्रपद्यन्ते । तानखिलान् समग्रान्स्वशरणागतान् । स श्रीहरिस्तु । ब्रह्मधाम । नयत्येव ॥ १३ ॥ इतीति । इत्युत्तरवचः । श्रुत्वा । पुनः । स कुबेरसिंहः । द्वास्थः । तं श्रीहरिम् । अपृच्छत् । हे विभो ! वक्तुं समर्थ । भक्तैः । किं हेयं त्याज्यं । किमुपादेयं किं ग्राह्यं । तत् । मे मम । ब्रूहि ॥ १४ ॥ अथ तदुत्तरमाह । हरीति । हरिः । ऊचे । अत्र । भक्तैस्तु । सर्वथा । प्राकृतार्थस्य मायिकपञ्चविषयस्य । आशा । त्याज्या । अथानन्तरं । कार्ष्णानामर्थानां भगवत्सम्बन्धिपञ्चविषयाणां । सा आशा । विधीयताम् ॥ १५ ॥

सर्वेऽपीति । कुतः । सर्वेऽपि । प्राकृताः । अर्था विषयाः । क्षणभङ्गुराः । भवन्ति । ये । भागवताः । पदार्थाः । ते तु । नित्याः । सुखावहाः । सन्तीत्यर्थः ॥ १६ ॥ अत इति । अतःकारणात् । कदाचन कर्हिचिदपि । मायिकार्थानां मायिकपदार्थानां । आशा । न कार्या । कार्ष्णानां कृष्णसम्बन्धिपदार्थानां तु । सा आशा । विधातव्या । यद्यस्माकारणात् । ते कृष्णसम्बन्धिपदार्थाः । दुःखदाः । नैव ॥ १७ ॥ कार्ष्णमिति । कार्ष्णं सुखं कृष्णसम्बन्धिपदार्थसुखं । विहाय । अत्रास्मिल्लोके । यः पुमान् । स्त्रीपुत्रधनादिषु । मायिकार्थेषु मायिकपञ्चविषयेषु । सक्तः आसक्तिमान् । स्यात् । स पुमान् । संसृतेः । न मुच्यते ॥ १८ ॥ त्याज्या इति । च । स्वे । देहे । अहन्ताऽहंबुद्धिश्च त्याज्या । सा चाहंबुद्धिः । निजात्मनि । कार्या । दैहिके स्त्रीपुत्रधनादिपदार्थे । ममता । त्याज्या । कृष्णसेविषु भगवद्दासेषु । सा ममता । कार्या ॥ १९ ॥ तिरस्कृत्येति । भगवद्भक्तैः । तिरस्कृत्य । अपि । यद्वचस्तु । प्रोक्तं । तदेव । स्वहितं । मत्वा । हृदि । मुमुक्षुभिः । धार्यम् ॥ २० ॥

सर्वेऽपि प्राकृता ह्यर्था भवन्ति क्षणभङ्गुराः । पदार्था ये भागवतास्ते नित्याः सुखावहाः ॥ १६ ॥ अतो न मायिकार्थानामाशा कार्या कदाचन । कार्ष्णानां तु विधातव्या सा यत्ते नैव दुःखदाः ॥१७॥ कार्ष्णं सुखं विहायात्र यः स्त्रीपुत्रधनादिषु । सक्तः स्यान्मायिकार्थेषु मुच्यते न स संसृतेः ॥१८॥ त्याज्याऽहन्ता च देहे स्वे सा च कार्या निजात्मनि । दैहिके ममता त्याज्या कार्या सा कृष्णसेविषु ॥ १९ ॥ तिरस्कृत्यापि भगवद्भक्तैः प्रोक्तं तु यद्वचः । तदेव स्वहितं मत्वा हृदि धार्यं मुमुक्षुभिः ॥ २० ॥ अगुणस्तु सतां क्वापि न ग्राह्यः कृष्णसेविनाम् । इत्युत्तरं ते प्रश्नस्य कथितं यष्टिधारक ! ॥ २१ ॥ श्रुत्वेति तस्यामृततुल्यवाचं द्वाःस्थः स मोदं हृदये ह्यवाप । अन्ये च सन्तो गृहिणश्च सर्वे तेन प्रहृष्टाः प्रणमन्ति तं स्म ॥२२॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते श्रीनगरप्रकरणे पञ्चमस्तरङ्गः ॥ ५ ॥

शकाब्दे विक्रमार्कस्य नेत्राष्टवसुभूमिते । कृष्णषष्ठ्यां फाल्गुनस्य वचोऽमृतमिदं हरेः ॥ १ ॥

अगुण इति । कृष्णसेविनां । सतां साधूनां तु । अगुणोऽवगुणः । दोष इति यावत् । क्वापि । न ग्राह्यः । हे यष्टिधारक ! वेत्रधारकुबेरसिंह । इति । ते तव । प्रश्नस्य । उत्तरम् । कथितम् । ॥ २१ ॥ उपसंहरति । श्रुत्वेति । इति । तस्य प्रत्यक्षभगवतः श्रीस्वामिनारायणस्य । अमृततुल्यवाचं वचनामृतमित्यर्थः । निशम्य । सः । द्वास्थः कुबेरसिंहः । मोदं हर्षं । अवाप । हि निश्चितम् । अन्येऽपरे च । सन्तः । साधवः । गृहिणो गृहस्थाश्च । ते सर्वे । तेनोत्तरेण । प्रहृष्टाः सन्तः । श्रीहरिं । प्रणमन्ति स्म नमस्कारं चक्रुः ॥ २२ ॥ इति श्रीसहजानन्दस्वामिसूनुश्रीमदयोध्याप्रसादाचार्यात्मज श्रीकेशवप्रसादाचार्यविरचितायां श्रीहरिवाक्यसुधासिन्धुटीकायामन्वयदीपिकायां श्रीनगरप्रकरणे पञ्चमस्तरङ्गः ॥ ५ ॥

भगवन्निश्चयो यस्य हृदि जातो यथार्थतः । स कश्चिन्न चलेद्येन तदुपायं जगौ हरिः । स्वाश्रितेभ्यस्तरङ्गेऽस्मिन् षष्ठे स्वेषां हिताय वै ॥ १ ॥ शकाब्द इति । पूर्वार्द्धं

न्याख्यातम् (१८८२) फाल्गुनस्य मासस्य कृष्णपष्ठ्यां कृष्णपक्षस्य पष्ठितिथिस्तस्यां हरेः प्रत्यक्षभगवतः श्रीस्वामिनारायणस्य । इदं वक्ष्यमाणप्रकारं वचनामृतम् । आसीदित्यर्थः ॥ १ ॥ तत्रेति । तत्र तस्यां तिथौ । स । श्रीहरिः । श्रीनगरे । श्रीनरनारायणालयात् । श्रीनरनारायणस्य मन्दिरतः । उदग्वेद्यां उत्तरदिग्वेदिकायां । स्वास्तृते सुष्ठुआच्छादिते । मञ्चकोत्तमे मञ्चश्रेष्ठे । निषणोऽभूत् ॥ २ ॥ सितवासा इति । सितवासा श्वेतवस्त्रः । गले । स्थलपद्मस्रजं गुलाबपुष्पहारं । तथा । उष्णीषे । शेखरालिं च । कर्णयोः । अवतंसकौ गुच्छौ । बिभ्रत् ॥ ३ ॥ स्थलेति । करधृतं । स्थलपद्मगुच्छं । जिघ्रन् । निशामुखे सायंकाले । त्यागिभिश्च । गृहिभिर्गृहस्थैश्चापि । निजैः स्वीयैर्भक्तैः । वृतो वेष्टितः ॥ ४ ॥ सुप्रसन्नेति । सुप्रसन्नमुखाम्भोजं । तं श्रीस्वामिनारायणं प्रभुं प्रति । कुबेरसिंहो द्वाःस्थः । कृतसन्नतिः । बद्धाञ्जलिपुटः सन् । पप्रच्छ । प्रश्नमितिशेषः ॥५॥ भगवन्निति । हे प्रभो ! वक्तुं समर्थः । यस्य पुंसः । हृदये । भगवन्निश्चयः । जातः । स्यात् । तस्य

तत्र श्रीनगरे स श्रीनरनारायणालयात् । उदग्वेद्यां निषण्णोऽभूत्स्वास्तृते मञ्चकोत्तमे ॥२॥ सितवासा गले बिभ्रत्स्थलपद्मस्रजं तथा । उष्णीषे शेखरालिं च कर्णयोरवतंसकौ ॥ ३ ॥ स्थलपद्ममहागुच्छं जिघ्रन् करधृतं वृतः । त्यागिभिर्गृहिभिश्चापि निजभक्तैर्निशामुखे ॥ ४ ॥ सुप्रसन्नमुखाम्भोजं तं द्वाःस्थः कृतसंनतिः । कुबेरसिंहः पप्रच्छ बद्धाञ्जलिपुटः प्रभुम् ॥ ५ ॥ भगवन्निश्चयो यस्य यथार्थो हृदये प्रभो ! । जातः स्यात्स क्वचित्तस्य न चलेद्येन तद्वद ॥६॥ श्रीहरिरुवाच—सर्वे शृण्वन्त्विमां वार्त्तां क्रियमाणां मया हिताम् । साक्षात्कृष्णस्य माहात्म्यं ज्ञेयं तन्निश्चयार्थिभिः ॥७॥ योऽत्रास्ति भगवान् कृष्णस्तस्मादेवाखिला अपि अवतारा हि सञ्जाता अवतारी स्वयं त्विह ॥ ८ ॥ अन्तर्याम्येष एवास्ति सर्वेषामपि देहिनाम् । एष एवाक्षरस्थश्च तेजस्वी पुरुषोत्तमः ॥ ९ ॥ अनन्तकोटिब्रह्माण्डराजराजो महेश्वरः । अनन्तैश्वसम्पन्नः सर्वकारणकारणम् ॥ १० ॥

पुंसः । स भगवन्निश्चयः । क्वचित्कर्हिचिदपि । येन । न चलेत् । तद्वद कथयेत्यर्थः ॥६॥ अथ तदुत्तरमाह । सर्व इति । सर्वे । हितां वः हितावहां । मया । क्रियमाणां । इमां । वार्त्तां । शृण्वन्तु । तन्निश्चयार्थिभिः तत्तस्य भगवतो निश्चयस्यार्थो येषां ते तथाभूतैः पुरुषैः । साक्षात्कृष्णस्य प्रत्यक्षनराकृतिभगवतः । माहात्म्यं । ज्ञेयम् ॥ ७ ॥ तन्माहात्म्यं दर्शयति । य इत्यादिभिः । यः । कृष्णः । भगवानत्रास्मिल्लोकेऽस्ति तस्मान्नराकृतेर्भगवत एव । अखिलाः समग्रा अपि । अवताराः । सञ्जाताः । अवतारी सर्वावतारधृर्ता । स्वयं भगवांस्तु । इहास्मिल्लोकेऽस्ति । मनुष्याकृतिवर्त्तमानोऽयं मच्चक्षुर्विषयगोचरोऽस्ति । हि निश्चितम् ॥ ८ ॥ अन्तर्यामीति । एषः । एव । अयं नराकृतिवर्त्तमान एव । सर्वेषां । देहिनां । अपि । अन्तर्याम्यस्ति । च । एषः । एवाक्षरस्थः । तेजस्वी । पुरुषोत्तमोऽस्ति ॥९॥ अनन्तकोटीति । अनन्तकोटिब्रह्माण्डराजराजः । महेश्वरः । अनन्तैश्वर्यसंसम्पन्नः । सर्वकारणकारणम् । एष नराकृतिर्मच्चक्षुर्विषयगोचरो योऽस्ति सोऽस्तीत्यर्थः ॥ १० ॥

यदेति । यदा । आर्षभीं क्रियां ऋषभक्रियां कुर्यात्तदा । एषः । स्वयं । ऋषभः । भगवानिति । विज्ञेयं । रामक्रियां । चरन्सन् । स भगवान् । रामः । इति । विज्ञेयः ॥११॥ यदेति । यदा । कार्ष्णीं कृष्णसम्बन्धिनि । क्रियां । कुर्यात्तदा । कृष्णः । ईश्वरो भगवान् । इत्येव । सर्वथा सर्वप्रकारेण । ज्ञेयम् । अन्यथा-मतिस्तु विपरीतमतिस्तु । न कार्याः । योऽत्र मनुष्याकृतिर्भगवान्वर्त्तते स एव सर्वावतारकारणमस्तीति विज्ञेयमित्यर्थः ॥ १२ ॥ तत्र हेतुमाह । हेत्वेति । सर्वावताराणामेष भगवानेव । हेतुः कारणमस्तीतिवेदनात् । तन्निश्चयः । नगः पर्वत इवाचलः । एव । भवेत् । हि निश्चितम् ॥ १३ ॥ साक्षादिति । साक्षा-त्प्रत्यक्षकृष्णः । एषः । एव । नरनारायणात्मना । धर्मात् । भक्तौ । तयोः धर्मभक्त्योः । पोषणाय । भुवि । प्रजातोऽस्ति ॥ १४ ॥ अस्येति । अस्यैव भगवतः । अत्र । मन्दिरे । इयं । मूर्त्तिः । मया । स्थापिताऽस्ति । ततः कारणात् । अस्यां मूर्त्तौ । च मयि । अल्पोऽपि । भेदः । सर्वथा सर्वप्रकारेण । न ज्ञेयः

यदार्षभीं क्रियां कुर्यात्तदैष ऋषभः स्वयम् । भगवानिति विज्ञेयं रामो रामक्रियां चरन् ॥ ११ ॥ यदा कार्ष्णीं क्रियां कुर्यात्तदासौ कृष्ण ईश्वरः । इत्येव सर्वथा ज्ञेयं न तु कार्याऽन्यथामतिः ॥ १२ ॥ हेतुः सर्वावताराणामेष एवेति वेदनात् । तन्निश्चयो नग इव भवेदचल एव हि ॥ १३ ॥ साक्षात्कृष्णो ह्येष एव नरनारायणात्मना । धर्माद्भक्तौ प्रजातोऽस्ति पोषणाय तयोर्भुवि ॥ १४ ॥ अस्यैवेयं मूर्त्तिरत्र मन्दिरे स्थापिता मया । ततोऽस्यां मयि चाल्पोऽपि भेदो ज्ञेयो न सर्वथा ॥ १५ ॥ ब्रह्मधामनिवासी यो भगवान् पुरुषोत्तमः । नरनारायणः साक्षात्स एवायं न संशयः ॥ १६ ॥ इत्युक्तः स पुनर्द्वाःस्थस्तमपृच्छन्महाप्रभो ! । कीदृग्विधं ब्रह्मधाम तत्त्वं मां वक्तुमर्हसि ॥ १७ ॥ श्रीहरिरुवाच—या शोभा तस्य धाम्नोऽस्ति वैकुण्ठादिषु सा न हि । अतितेजोमयं तद्धि नित्यमानन्दरूपं च ॥ १८ ॥ अक्षरं ब्रह्म शास्त्रेषु वर्ण्यते यत्तदेव हि । ब्रह्मधाम ब्रह्मपुरमिति वेदनिरूपितम् ॥ १९ ॥ यथाऽऽकाशस्य नान्तोऽस्ति परितः क्वापि वै दिशि । तथैव तस्य नान्तोऽस्ति ह्यधश्चोर्ध्वं तथाऽभितः ॥ २० ॥

॥ १५ ॥ ब्रह्मधाम इति । यः । ब्रह्मधामनिवासी । भगवान् । पुरुषोत्तमः । स साक्षान्नरनारायणः । एवायं । अस्ति । न संशयः ॥ १६ ॥ इतीति । इत्युक्तः । सः । द्वाःस्थः कुबेरसिंहाख्यः । पुनस्तं श्रीहरिं प्रति । अपृच्छत् । हे महाप्रभो ! । कीदृग्विधं । ब्रह्मधामास्ति । तत्त्वं । मां । वक्तुं । अर्हसि ॥१७॥ तदुत्तरमाह । या इति । तस्य ब्रह्माख्यस्य । धाम्नः । या । शोभाऽस्ति । सा शोभा । वैकुण्ठादिषु । नास्ति । हि निश्चितं । च तदतितेजोमयं । नित्यं । आनन्दरूपं । अस्तीत्यर्थः ॥ १८ ॥ अक्षरमिति । यत् । शास्त्रेषु । अक्षरं ब्रह्म । वर्ण्यते । तदेव । ब्रह्म धाम । ब्रह्मपुरमिति । वेदे । निरूपितम् । हि निश्चितम् ॥ १९ ॥ यथेति । यथा । दिशि । परितः सर्वतः । क्वापि । आकाशस्य । अन्तः । नास्ति । वै निश्चितम् तथा । एव । तस्य ब्रह्मधाम्नः । अधः । उर्ध्वं । चाभितः सर्वतः । नान्तोऽस्ति

हि निश्चितम् ॥ २० ॥ प्रासादा इति । तत्र ब्रह्मधाम्नि । असंख्याः । मनोहराः । चिन्मयाश्चैतन्यमयाः । प्रासादाः । सन्ति । च । नित्यपुष्पफलानि । भूरीणि बहुनि । उद्यानानि । सन्ति । निश्चितम् ॥ २१ ॥ सर्वेइति । तत्रत्याः ब्रह्मधामस्थाः । सर्वेऽपि । पदार्थाः । चिन्मयाः चैतन्यमयाः । सन्ति च । तत्र । पुरुषाः । दिव्याङ्गाः । सच्चिदानन्दरूपिणः ॥२२॥ ब्रह्माण्डजन्म इति । ते ब्रह्माण्डजन्मस्थित्यन्तकार्ये । शक्ताः समर्थाः । अपि । तत्रस्थं ब्रह्मधामस्थं तं प्रभुं । सेवमानाः सन्तः । तदाज्ञायां तस्य भगवतः आज्ञायां । चरन्ति । हि निश्चितम् ॥ २३ ॥ इत्थमिति । इत्थं । ते तुभ्यं । एतद्ब्रह्मधाम । संक्षेपेण । निरूपितम् । विस्तरात्तु । तद्ब्रह्मधाम । सहस्रवदनेन शेषेणापि । वक्तुं । न शक्यं । शेषः सहस्रवदनेन ब्रह्मधामवर्णयितुं न समर्थो भवतीत्यर्थः ॥ २४ ॥ उपसंहरति । वाचमिति । इति । भूम्नः प्रत्यक्षनराकारमूर्त्तेः सर्वावतारकारणस्य भगवतः श्रीस्वामिनारायणस्य । सुधाममृततुल्यां । वाचं वचनामृतं । निशम्य । श्रुत्वा । सः । यष्टिधारी भगवतो वेत्रधारी

प्रासादाश्चिन्मयाः सन्ति तत्रासंख्या मनोहराः । उद्यानानि च भूरिणि नित्यपुष्पफलानि वै ॥ २१ ॥ सर्वे पदार्थास्तत्रत्या दिव्याः सन्ति च चिन्मयाः । दिव्याङ्गाः पुरुषास्तत्र सच्चिदानन्दरूपिणः ॥ २२ ॥ ब्रह्माण्ड-जन्मस्थित्यन्तकार्ये शक्ता अपि प्रभुम् । तत्रस्थं सेवमानास्ते तदाज्ञायां चरन्ति हि ॥ २३ ॥ इत्थं ते ब्रह्मधामैतत्संक्षेपेण निरूपितम् । सहस्रवदनेनापि वक्तुं शक्यं न विस्तरात् ॥ २४ ॥ वाचं निशम्येति स यष्टि-धारी सुधासमां हर्षमवाप भूम्नः । अन्ये सदःस्था गृहिणश्च सन्तोऽप्यापुः परं मोदमिदं निपीय ॥ २५ ॥

इति श्रीहरिवाक्यसुधासिंधौ शतानन्दमुनिविरचिते श्रीनगरप्रकरणे षष्ठस्तरङ्गः ॥ ६ ॥

शकाब्दे विक्रमार्कस्य नेत्राष्टवसुभूमिते । तपस्यकृष्णसप्तम्यां वचोऽमृतमिदं हरेः ॥ १ ॥
तत्र श्रीनगरे स श्रीनरनारायणालयात् । प्रत्यग्द्वारस्य महतो वलभ्यां समुपाविशत् ॥ २ ॥

कुबेरसिंहाख्यः । हर्षं । अवाप । अन्येऽपरे । सदःस्थाः सभायां स्थिताः । गृहिणो गृहस्थाः । सन्तः साधवश्चापि । इदं वचनामृतं । निपीय पीत्वा । परमुत्कृष्टं । मोदं हर्षं । आपुः प्रापुः ॥ २५ ॥ इति श्रीकेशवप्रसादाचार्यविरचितायां श्रीहरिवाक्यसुधासिन्धुटीकायामन्वदीपिकायां श्रीनगरप्रकरणे षष्ठस्तरङ्गः ॥ ६ ॥
कृष्णे मनः स्थिरं स्याद्वै तन्महत्त्वस्य वेदनात् । इत्याह स्वान् हरिः । श्रीमांस्तरङ्गेऽस्मिंस्तु सप्तमे ॥१॥ शकाब्द इति पूर्वार्द्धं व्याख्यातम् (१८८२) तपस्य कृष्णसप्तम्यां फाल्गुनमासस्य या कृष्णपक्षस्था सप्तमीतिथिस्तस्यां । हरेः प्रत्यक्षभगवतः श्रीस्वामिनारायणस्य । इदं वक्ष्यमाणप्रकारं वचोऽमृतं वचनामृतम् । आसी-दित्यर्थः ॥ १ ॥ तत्रेति । तत्र तस्यां तिथौ । स श्रीस्वामिनारायणो भगवान् । श्रीनगरे । श्रीनरनारायणालयाच्छ्रीनरनारायणमन्दिरतः । महतः । प्रत्यग्द्वारस्य पश्चिमद्वारस्य । वलभ्यां उपरिगृहे इत्यर्थः । समुपाविशत ॥ २ ॥

तं विशिनष्टि । निषण्ण इति । स्वास्तृते सुष्टुवाच्छादिते । पीठे । निषण्णः । सितवासा धृतश्वेतवस्त्रः । निजैः स्वीयैर्भक्तैः । वृतो वेष्टितः । स्थलाब्जभूरिहारालिशेखरालिविराजितः स्थलाब्जानां गुलाबपुष्पाणां भूरिहारालिभिः शेखरालिभिश्च विराजितः ॥३॥ पौराणिक इति । तं तथाविधं स्थितं श्रीहरिं प्रति । अग्रस्थितः । प्रयागजित् । पौराणिकः । नत्वा नमस्कारं कृत्वाऽप्राक्षीत् । त्वयि । हरौ । मनःस्थैर्यं । केनोपायेन । स्यात् । तद्वद ॥४॥ तमिति । तं प्रयागजित्पौराणिकं प्रति । हरिः । उवाच । हे विप्र ! । तव । प्रश्नोत्तरं । ब्रुवे । तन्महत्त्वस्य तत्तस्य भगवतः । महत्वस्य वेदनात् । कृष्णे प्रत्यक्षे भगवति । मनः । स्थिरं । स्याद्वै निश्चितम् ॥५॥ रामानन्द इति । बुभुत्सुना ज्ञातुमिच्छुना । मया । पूर्वं । रामानन्दः । गुरुः । पृष्टः । हे स्वामिन् ! । त्वमीश्वरोऽसीति । वयं । त्वदाश्रिताः विज्ञः ॥ ६ ॥ सनातन इति । सनातनः । मूलभूतः । ईश्वरोऽसि । अथवा । हरेः । उपासनेन । ईश्वरतां । प्राप्तः । ईश ईश्वरः । असि । तद्वद ॥ ७ ॥ इतीति । इति । मया ।

निषण्णः स्वास्तृते पीठे सितवासा वृतो निजैः । स्थलाब्जभूरिहारालिशेखरालिविराजितः ॥ ३ ॥ पौराणिकस्तमप्राक्षीन्नत्वाऽग्रस्थः प्रयागजित् । मनःस्थैर्यं त्वयि हरौ केनोपायेन तद्वद ॥ ४ ॥ तमुवाच हरिर्विप्र ! ब्रुवे प्रश्नोत्तरं तव । कृष्णे स्थिरं मनः स्याद्वै तन्महत्त्वस्य वेदनात् ॥ ५ ॥ रामानन्दो गुरुः पृष्टो मया पूर्वं बुभुत्सुना । स्वामिस्त्वमीश्वरोऽसीति विज्ञस्त्वदाश्रिताः ॥ ६ ॥ सनातनो मूलभूत ईश्वरोऽस्यथवा हरेः । उपासनेनेश्वरतां प्राप्त ईशोऽसि तद्वद ॥ ७ ॥ इति पृष्टो मया स्वामी किञ्चिदप्युत्तरं स तु । नैवाब्रवीत्संशयोऽपि न नष्टो हृदयान्मम ॥ ८ ॥ क्वचिद् दुर्भिक्षकालेऽथ मदङ्गेऽप्यभवद्गदः । अन्तर्दृष्ट्या ततोऽपश्यं समाधावद्भुतं हृदि ॥ ९ ॥ गतोऽहं क्षीरजलधिं तत्र श्रीशेषशायिनम् । लक्ष्मीसेवितपादाब्जमपश्यं परमेश्वरम् ॥ १० ॥ रामानन्दस्वामिनं च मुक्तमण्डलमध्यगम् । सितधोत्रं तथा श्वेतं प्रावारं तत्र दृष्टवान् ॥ ११ ॥ ततो नारायणमहमपृच्छं भगवन्नयम् । मुक्तस्त्वदन्तिके कोऽस्ति तद्ब्रूहीति सोऽब्रवीत् ॥ १२ ॥

पृष्टः । स्वामी श्रीरामानन्दः । स तु । किञ्चिदपि । उत्तरं नैवाब्रवीत् । मम । हृदयात् । संशयः । अपि । न नष्टः ॥ ८ ॥ अथ तदर्थं स्वीयमाहात्म्यावबोधकस्वानुभवमाह । क्वचिदित्येकादशभिः । अथानन्तरम् । क्वचित्कर्हिचित् । दुर्भिक्षकाले । मदङ्गेऽपि मच्छरीरेऽपि । गदो रोगः । अभवत् । ततः । अन्तर्दृष्ट्या । समाधौ । हृदि । अहं । अद्भुतं । अपश्यं । दृष्टवानित्यर्थः ॥९॥ किं तदद्भुतमित्यत आह । गत इति । अहं । क्षीरजलधिं दुग्धसागरं । गतः । तत्र क्षीरसागरे । लक्ष्मीसेवितपादाब्जं । श्रीशेषशायिनं परमेश्वरमपश्यम् ॥ १० ॥ रामानन्दस्वामिनमिति । तत्र । मुक्तमण्डलमध्यगं । सितधोत्रं सितं श्वेतं धोत्रं परिधानवस्त्रं यस्य स तथाभूतं । तथा । श्वेतप्रावारं शुभ्राच्छादनवस्त्रं । रामानन्दस्वामिनं । दृष्टवानहमितिशेषः ॥ ११ ॥ तत इति । ततस्तदनन्तरम् । नारायणम् । अहं । अपृच्छं । हे भगवन् ! । अयं । मुक्तस्त्वदन्तिके । कोऽस्ति । तद्ब्रूहि । इति । अथानन्तरम् । श्रीहरिः । अब्रवीत् ॥ १२ ॥

ब्रह्मवेत्तेति । एषः । महान् । ब्रह्मवेत्ता । ब्रह्मीभूतो ब्रह्मरूपः । मुक्तराट् । अस्ति । इति । तस्मिन् शेषशायिभगवति वदति सति । एव । तस्य शेषशायिभगवतः । अङ्के । स रामानन्दमुनिः । व्यलीयत लीनोऽभवदित्यर्थः ॥ १३ ॥ प्राप्येति । अहं च । देहस्मृतिं । प्राप्य । किञ्चित्कालं । स्थितोऽभवम् । पुनः । मे मम । समाधिः । आसीत् । तत्र समाधौ । मया । नन्दी शङ्करवाहनं । ईक्षितः दृष्ट इत्यर्थः ॥ १४ ॥ तमिति । द्वाभ्यां । अथानन्तरम् । तं नन्दीं । समारुह्य । अहं । कैलासं प्रति । शङ्करसन्निधौ । गतः । तावच्च । गरुडः । आयात् । तं गरुडमारुह्य । खवर्त्मना आकाशमार्गेण । अहमितियोज्यं ॥१५॥ वैकुण्ठमिति । वैकुण्ठमगमत् । तत्र वैकुण्ठे । विष्णुं । दृष्ट्वा । अग्रतः । गतः । तत्राग्रे गच्छति सति इत्यर्थः । गरुडस्य । गतिः । कुण्ठिता । आसीत् । ततस्तु । अहं ॥१६॥ आज्ञाप्येति । तं गरुडं । चाज्ञाप्य । एकः । एव । ब्रह्मधाम । अगमत् । वै निश्चितम् । तत्र । मत्तः । परतरः । पुरुषोत्तमः । न दृष्टः । सर्वे । ब्रह्माण्ड-

ब्रह्मवेत्ता महानेष ब्रह्मीभूतोऽस्ति मुक्तराट् । इति तस्मिन्वदत्येव तस्याङ्के स व्यलीयत ॥ १३ ॥ प्राप्य देहस्मृतिं चाहं कञ्चित्कालं स्थितोऽभवम् । पुनः समाधिरासीन्मे नन्दी तत्रेक्षितो मया ॥ १४ ॥ तमारुह्याथ कैलासं गतः शङ्करसन्निधौ । तावद्गरुड आयाच्च तमारुह्य खवर्त्मना ॥ १५ ॥ वैकुण्ठमगमं तत्र विष्णुं दृष्ट्वाऽग्रतो गतः । कुण्ठिता गरुडस्यासीद्गतिस्तत्र ततस्त्वहम् ॥ १६ ॥ आज्ञाप्य तं चैक एव ह्यगमं ब्रह्मधाम वै । तत्र मत्तः परतरो न दृष्टः पुरुषोत्तमः । मामेव पूजयामासुः सर्वे ब्रह्माण्ड-नायकाः ॥ १७ ॥ पुनर्देहस्मृतिं प्राप्य मया हृदि सुनिश्चितम् । अहमेवाखिलाण्डानां जन्मादेर्हेतुरस्मि वै ॥ १८ ॥ मत्तः परतरः कश्चिन्नास्त्येव भगवान् क्वचित् । मत्तेजसैव सूर्याद्याः सन्ति तेजस्विनोऽखिलाः ॥ १९ ॥ मदिच्छयैव ब्रह्माण्डस्थितिरस्ति न चान्यथा । एवं मया स्वस्वरूपं सर्वथाऽति सुनिश्चितं ॥ २० ॥ एवंविधं यस्तु बुध्वा पुमान् मामिह सर्वथा । भजेत शरणं प्राप्य तन्मनः स्यान्मयि स्थिरम् ॥२१॥ समर्थमण्डजन्मादौ करिष्यामि च तं ह्यहं । अन्तर्यामि समं कृत्वा प्रापयिष्ये स्वधाम च ॥ २२ ॥

नायका ब्रह्मविष्ण्वादयः । मामेव । पूजयामासु ॥ १७ ॥ पुनरिति । पुनः । देहस्मृतिं । प्राप्य । मया । हृदि । सुनिश्चितम् । अहमेवाखिलाण्डानां समग्रब्रह्माण्डानां । जन्मादेः । हेतुः । अस्मि । वै निश्चितम् ॥ १८ ॥ मत्त इति । मत्तः । परतरः । अन्यः । कश्चिद्भगवान् । क्वचित्कर्हिचिदपीत्यर्थः । नास्त्येव । मत्तेजसैव । अखिलाः समग्राः । सूर्याद्याः । तेजस्विनः । सन्ति ॥ १९ ॥ मदीच्छयैवेति । मदिच्छयैव । ब्रह्माण्डस्थितिः । अस्ति । न चान्यथा । एवं । मया । स्वस्वरूपं । सर्वथा सर्वप्रकारेण । सुनिश्चितमस्ति ॥२०॥ एवमिति । यस्तु । पुमान् । एवंविधं मां । बुध्वा । इहास्मिन्लोके । शरणं । प्राप्य । मां । सर्वथा । भजेत । तन्मनः । मयि । स्थिरं । स्यात् ॥ २१ ॥ समर्थमिति । तं मच्छरणं प्राप्य मां भजेत्तं पुमां सं । अहं । अण्डजन्मादौ । समर्थं । करिष्यामि । हि निश्चितम् । च । अन्तर्यामिसमं । कृत्वा । स्वधामाक्षरं । प्रापयिष्ये ॥ २२ ॥

तादृशमिति । ननु शरणागतानां तथैश्वर्यं कुतो नाधुना दृश्यते । इत्यत आह । तादृशं । तस्य भक्तस्य । सामर्थ्यं । साम्प्रतमधुना । मया । गोप्यते । आछाद्यते इत्यर्थः । अन्यथा । ऋषिरूपं । धर्मजं नरनारायणं । माम् । स भक्तः अवमन्येत । अवगणनां कुर्यादित्यर्थः ॥ २३ ॥ ज्ञानवैराग्य इति । यस्य यस्य भक्तस्य । ज्ञानवैराग्यधर्मादिसामर्थ्यं । प्राप्तं । स्यात् । आदिशब्देन भक्तेर्ग्रहणं । तेन । तेनापि । तन्मत्कृपाफलं तत्तस्य मम कृपायाः फलं । ज्ञेयं ज्ञातव्यम् ॥ २४ ॥ इतीति । इति । तुभ्यं । हे विप्र ! । मनःस्थैर्यस्य । कारणं । कथितम् । येन ज्ञातेन । भक्तस्य । भक्तत्वं । इहास्मिल्लोके । सिद्धयति ॥ २५ ॥ उपसंहरति । एतदिति । एतत् । हरेः सहजानन्दस्वामिनः । वागमृतं वचनामृतं । निपीय पीत्वा । स विप्रः प्रयागजित् । आप्तहर्षः प्राप्तहर्षः सन् । तुष्टः । अभवत् । तथाऽन्येऽपरे । गृहिणो गृहस्थाश्च । साधुजनाश्च । ये भक्तास्ते सर्वे । मुदं हर्षं । प्रापुः ॥ २६ ॥ इति श्रीकेशवप्रसादाचार्यविरचितायां श्रीहरिवाक्यसुधासिन्धु-

तादृशं तस्य सामर्थ्यं साम्प्रतं गोप्यते मया । अन्यथा ऋषिरूपं मां सोऽवमन्येत धर्मजम् ॥ २३ ॥
ज्ञानवैराग्यधर्मादिसामर्थ्यं यस्य यस्य च । प्राप्तं स्यात्तेन तेनापि ज्ञेयं तन्मत्कृपाफलं ॥ २४ ॥ इति ते
कथितं विप्र ! मनःस्थैर्यस्य कारणम् । येन ज्ञातेन भक्तस्य भक्तत्वमिह सिद्धयति ॥ २५ ॥ एतद्धरेर्वागमृतं
निपीय विप्रः स तुष्टोऽभवदाप्तहर्षः । भक्तास्तथाऽन्ये गृहिणश्च तृप्ताः प्रापुर्मुदं साधुजनाश्च सर्वे ॥ २६ ॥

इति श्रीहरिवाक्यसुधासिंधौ शतानन्दमुनिविरचिते श्रीनगरप्रकरणे सप्तमस्तरङ्गः ॥ ७ ॥

शकाब्दे विक्रमार्कस्य नेत्राष्टवसुभूमिते । कृष्णाष्टम्यां तपस्यस्य वचोऽमृतमिदं हरेः ॥ १ ॥
तत्र श्रीनगरे स्वामी नरनारायणालयात् । उदङ्महामठे साधून् भोजयामास भूरिशः ॥ २ ॥
पीताम्बरं सोत्तरीयं परिधाय स्वयं च तान् । प्रीणयन् पङ्क्तिशः सर्वान् लड्डुकान् पर्यवेषयत् ॥ ३ ॥

टीकायामन्वर्दीपिकायां श्रीनगरप्रकरणे सप्तमस्तरङ्गः ॥ ७ ॥

क्रोधोत्पादनहेतुं च तथैव तद्विवर्जनम् । प्राहात्र श्रीहरिः स्वेभ्यो ह्यष्टमे धर्मनन्दनः ॥१॥ शकाब्द इति पूर्वार्द्धं व्याख्यातम् (१८८२) तपस्यस्य फाल्गुमासस्य । कृष्णाष्टम्यां कृष्णपक्षस्य याऽष्टमी तिथिस्तस्यामित्यर्थः । हरेः प्रत्यक्षभगवतः श्रीस्वामिनारायणस्य । इदं वक्ष्यमाणप्रकारं । वचोऽमृतं वचनामृतमासीत् ॥१॥ तत्रेति । तत्र तस्यां तिथौ । स्वामी श्रीसहजानन्दः । श्रीनगरे । श्रीनरनारायणालयात् श्रीनरनारायणमन्दिरतः । उदङ्महामठे उत्तरदिशि महांश्चासौ मठः स्वशिष्यसाधुनिलयस्तस्मिन् । भूरिशः बहुशः । साधून् । भोजयामास ॥ २ ॥ पीताम्बरमिति । स्वयं च सोत्तरीयं पीताम्बरं । परिधाय । साधून् । प्रीणयन्सन् । सर्वान् । पङ्क्तिशः । लड्डुकान् । पर्यवे-

श्यत् ॥ ३ ॥ भुञ्जानेष्विति । ततस्तदनन्तरं । भुञ्जानेषु । स्वमुखार्पितदृष्टिषु । सत्सु । पीठस्थः सन् । श्रीहरिः । तद्धिताय तत्तेषां सतां हितार्थं । एव । इत्थं । वार्त्ता । चकार ॥ ४ ॥ जेय इति । मदुपाश्रितैः । साधुभिः । सर्वथा सर्वप्रकारेण । क्रोधः । जेयः जेतव्यः । अन्यथा । स क्रोधः । तपः । ज्ञानं । भस्मसात्कुरुते । ननु निश्चितम् ॥ ५ ॥ क्वचिदिति । क्वचित् कर्हिचित् । स क्रोधः । हृदि । जातोऽपि । प्रायश्चित्तेन । तत्क्षणम् । निवृर्त्तिं । प्रापणीयः । वै निश्चितम् । च । तद्वशे तत्तस्य क्रोधस्य वशे । नैव । भाव्यं भवितव्यमित्यर्थः ॥ ६ ॥ क्रोध इति । सतां साधूनां । क्रोधः । कुतः । स्यादिति । चेत् । तत्स्थानान्यपि । अहं । वो युष्माकम् । वच्मि कथयामि । प्रश्नोत्तरकृतौ । स्वोक्तस्थापने । स क्रोधः । समुद्भवेत् ॥ ७ ॥ आदानदानयोरिति । क्वापि कदाचित् । कस्यचित्पदार्थस्य । आदानदानयोर्ग्रहणदापनयोश्च । क्वचित् कर्हिचित् । शिष्यशिक्षायां । तन्मान्द्यात् शिष्यमान्द्यत्वात् । स क्रोधः । समुद्भवेत् ॥८॥ पक्षपातादिति । स्वशुश्रूषोः । पक्षपाताच्च । कुत्रचिदप-

भुञ्जानेषु ततः सत्सु स्वमुखार्पितदृष्टिषु । पीठस्थस्तद्धितायैव वार्त्तामित्थं चकार सः ॥ ४ ॥ जेयो हि सर्वथा क्रोधः साधुभिर्मदुपाश्रितैः । अन्यथा स तपो ज्ञानं भस्मसात्कुरुते ननु ॥ ५ ॥ क्वचित्स हृदि जातोऽपि प्रायश्चित्तेन तत्क्षणम् । निवृर्त्तिं प्रापणीयो वै भाव्यं नैव च तद्वशे ॥ ६ ॥ क्रोधः सतां कुतः स्याच्चेत्स्थानान्यपि वच्मि वः । प्रश्नोत्तरकृतौ स्वोक्तस्थापने स समुद्भवेत् ॥ ७ ॥ आदानदानयोः क्वापि पदार्थस्य च कस्यचित् । क्वचिच्छिष्यस्य शिक्षायां तन्मान्द्यात्स समुद्भवेत् ॥ ८ ॥ पक्षपातात्स्वशुश्रूषोरपमानाच्च कुत्रचित् । स्वासनस्थानहेतोश्च मत्सराच्च स उद्भवेत् ॥ ९ ॥ प्रसादिवस्तुदाने च न्यूनाधिक्यभेदतः । एवंविधानि स्थानानि क्रोधोत्पत्तेर्भवन्ति वै ॥ १० ॥ अल्पज्ञानां च सुज्ञानां स्वसमेष्ववरेषु च । उत्तमेष्वपि भक्तेषु क्रोधः सम्भवति ध्रुवम् ॥ ११ ॥ हरिभक्तेषु सञ्जातः क्रोधः सुकृतहृद्यतः । अतस्तस्याशु कर्त्तव्यं प्रायश्चित्तं मदाश्रितैः ॥ १२ ॥ यस्य यस्मिन् भवेत्क्रोधः स तं साष्टाङ्गमानमेत् । प्रसादयेच्च विनयात्सूक्तैर्निश्छद्म सादरं ॥ १३ ॥

मानाच्च । स्वासनस्थानहेतोश्च । मत्सरात्परोत्कर्षासहनं मत्सरस्तस्माच्च । स क्रोधः । समुद्भवेत् ॥ ९ ॥ प्रसादिवस्त्विति । प्रसादिवस्तुदाने च । न्यूनाऽधिक्यविभेदतः । क्रोधः । स्यादित्यर्थः । एवंविधानि । क्रोधोत्पत्तेः । स्थानानि । भवन्ति । वै निश्चितम् ॥ १० ॥ अल्पज्ञानामिति । अल्पज्ञानां । च । सुज्ञानां । स्वसमेषु च । अवरेषु कनिष्ठेषु । उत्तमेष्वपि । भक्तेषु । क्रोधः । सम्भवति । ध्रुवं निश्चितम् ॥ ११ ॥ हरिभक्तेष्विति । यतोहेतोः । हरिभक्तेषु । जातः । क्रोधः । सकृतहृत् । भवतीत्यर्थः । अतःकारणात् । तस्य सञ्जातस्य क्रोधस्य । मदाश्रितैः । प्रायश्चितम् । आशु शीघ्रतया । कर्त्तव्यं ॥१२॥ किं तत्प्रायश्चितमित्यत आह । यस्येति । यस्य । यस्मिन् । क्रोधः । भवेत् । सः । तं । साष्टाङ्गं । आनमेत् नमस्कारं कुर्यात् । निश्छद्म निष्कपटं । सादरं विनयात् । सूक्तैः समाधानवाक्यैः । प्रसादयेत् ॥ १३ ॥

यस्येति । यस्य । यस्मिन् । मानसः । अपि । क्रोधः । भवेत् । स क्रोधवान् । पुरुषः । तं । स्वसङ्कल्पं । निवेदयेच्च । कृताञ्जलिः सन् । प्रार्थयेत्तत्प्रार्थनां कुर्यात् । क्षमापयेदित्यर्थः ॥ १४ ॥ गृहस्थ इति । साधोः । गृहस्थे । हरिभक्ते । क्रोधः । भवेच्चेत्तदा । उपविश्य तत्समीपे स्थित्वैव । प्रणमेन्नमस्कारं कुर्यात् । न तु । अमुं । साष्टाङ्गमपि । कुर्यादित्यर्थः । साधुत्वादितिभावः ॥ १५ ॥ तत इति । ततस्तदनन्तरं । तं गृहस्थहरिभक्तं । विनयान्वितः सन् । प्रीत्या । वचसा । प्रार्थयेत् क्षमापयेत् । सांख्ययोगिभिरपि । एवं । गृहिषु गृहस्थेषु । साधुवत्कार्यम् ॥ १६ ॥ सांख्येति । सांख्ययोगस्थयोषाभिः । अपि । अन्यस्त्रीषु । साधुवत् । उपविश्यैव समीपे स्थित्वैव । नमनम् । कार्यं । च भृशमत्यन्तं । प्रार्थनं । कार्यम् ॥ १७॥ यस्येति । यस्योपरि । क्रोधः । भवेत् । तं च । नरनारायणस्य । सेवकं । ज्ञात्वैव । आशु । मानं । त्यक्त्वा । तं । आनमेन्नमनं कुर्यात् ॥ १८ ॥ अहमिति । अहं । महानस्मि । अयं तु । मत्तः मत्सकाशात् । न्यूनगुणः । अस्ति । अतःकारणात् ।

यस्य यस्मिन् मानसोऽपि भवेत्क्रोधः स तं पुमान् । निवेदयेत्स्वसङ्कल्पं प्रार्थयेच्च कृताञ्जलिः ॥ १४ ॥ गृहस्थे हरिभक्ते चेत्साधोः क्रोधो भवेत्तदा । प्रणमेदुपविश्यैव न तु साष्टाङ्गमप्यमुम् ॥ १५ ॥ ततस्तं प्रार्थयेत्प्रीत्या वचसा विनयान्वितः । साङ्ख्ययोगिभिरप्येवं कार्यं गृहिषु साधुवत् ॥ १६ ॥ साङ्ख्ययोगस्थयोषाभिरप्यन्यस्त्रीषु साधुवत् । उपविश्यैव नमनं कार्यं च प्रार्थनं भृशम् ॥ १७ ॥ यस्योपरि भवेत् क्रोधस्तं च ज्ञात्वैव सेवकम् । नरनारायणस्याशु त्यक्त्वा मानं तमानमेत् ॥ १८ ॥ अहं महानयं त्वस्ति मत्तो न्यूनगुणस्ततः । कथं नमेयमिति तु नाहं कार्यं मदाश्रितैः ॥ १९ ॥ देहात्मबुद्ध्याऽहङ्कारो जायते विदुषामपि । सा तु त्याज्यैव भगवद्भक्तैर्भक्त्यन्तरायकृत् ॥ २० ॥ अस्माकमिष्टदेवोऽसौ नरनारायणः प्रभुः । तेनापि मानः क्रोधश्च परित्यक्तोऽस्ति दूरतः ॥ २१ ॥ अत उद्धववर्त्मस्थैरस्माभिस्तदुपाश्रितैः । क्रोधमानौ परित्याज्यौ सर्वथैवेति मे मतम् ॥ २२ ॥

कथं । नमेयं । इति तु । मदाश्रितैः । नाहं कार्यं अहं ममत्वं न कार्यमित्यर्थः ॥ १९ ॥ देहात्म्यबुद्ध्येति । देहात्मबुद्ध्या देहे आत्मबुद्ध्या । विदुषां पण्डिनाम् । अहङ्कारः । जायते । सा देहात्मबुद्धिस्तु । भगवद्भक्तैः । त्याज्यैव । यतः । सा । भक्त्यन्तरायकृत् भक्तौ अन्तरायकृद्भवति । अतः । सा देहात्मबुद्धिस्तु । मदाश्रितैः मदीया ये आश्रिता भक्तास्तैस्त्याज्या । एवेत्यर्थः ॥ २० ॥ अस्माकमिति । अस्माकं । इष्टदेवः । असौ नरनारायणः । प्रभुर्भगवान् । अस्ति । तेनापि । क्रोधश्च । दूरतः । परित्यक्तः । अस्ति ॥ २१ ॥ अत इति । अतःकारणात् । उद्धववर्त्मस्थैः उद्धवसम्प्रदायस्थैः । तदुपाश्रितैः । अस्माभिः । सर्वथैव । क्रोधमानौ । परित्याज्यौ । इति । मे मया । मतम् ॥ २२ ॥

प्रायश्चित्तमिति । इदं क्रोधस्य । प्रायश्चितं । यः पुमानत्रास्मिन्ल्लोके । आशु शीघ्रतया । करिष्यति । तस्मिन् पुंसि । नरनारायणः । हरिः । प्रसन्नो । भविता । तस्मिन् श्रीनरनारायणो भगवान् प्रसन्नो भविष्यतीत्यर्थः ॥ २३ ॥ तस्येति । तस्य भक्तस्य । अन्तःकरणं च शुद्धं । भविष्यति । तेन च । क्रोधकाममानमदादयः शत्रवः । नाशमेष्यति । वै निश्चितम् ॥ २४ ॥ नेति । यस्तु । पुरुषः क्रोधी पुमान् । एतत्प्रायश्चितं । नाचरिष्यति । स पुरुषः । सर्पतुल्यः । विज्ञेयो विशेषेण ज्ञातव्यः । नतु । रमापतेः लक्ष्मीपतेर्भगवतः । भक्तः । ज्ञातव्य इत्यर्थः ॥ २५ ॥ उपसंहरति । वचनमिति । इतीत्थं-

प्रायश्चितमिदं योऽत्र क्रोधस्याशु करिष्यति । प्रसन्नो भविता तस्मिन् नरनारायणो हरिः ॥ २३ ॥ तस्यान्तःकरणं शुद्धं भविष्यति च तेन वै । नाशमेष्यन्ति च क्रोधकाममानमदादयः ॥ २४ ॥ नाचरिष्यन्ति यस्त्वेतत्प्रायश्चितं पुरुषः पुमान् । सर्पतुल्यः स विज्ञेयो न तु भक्तो रमापतेः ॥ २५ ॥ वचनं सुधया समं हरेरिति सर्वेऽपि निशम्य माधवः । परितो गृहिणश्च ये स्थिता मुदमापुः परमां च तेऽखिलाः ॥ २६ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते श्रीनगरप्रकरणे अष्टमस्तरङ्गः ॥ ८ ॥

प्रकारं । हरेः । प्रत्यक्षभगवतः श्रीस्वामिनारायणस्य । सुधया सममममृततुल्यं । वचनं । तन्निशम्य श्रुत्वा । सर्वेऽपि । साधवः । परितः । गृहिणो गृहस्थाश्च । ये । स्थितास्तेऽखिलाः समग्राः । परमामुत्कृष्टां । मुदं हर्षं । आपुः ॥ २६ ॥ इति श्रीनगरेऽष्टानां स्वेनोक्तानां च धार्मिणा । वचोऽमृतानां टीकेयं यथाबुद्धि कृता मया ॥ १ ॥ इति श्रीउद्धवसम्प्रदायप्रवर्त्तक प्रत्यक्षपुरुषोत्तमश्रीसहजानन्दस्वामिसद्गुश्रीमदयोध्याप्रसादाचार्यात्मजश्रीमत्केशवप्रसादाचार्यविरचितायां श्रीहरिवाक्यसुधासिन्धुटीकायामन्वदीपिकायां श्रीनगरप्रकरणेऽष्टमस्तरङ्गः ॥ ८ ॥

॥ इति श्रीनगरप्रकरणं समाप्तम् ॥

# ॥ अश्लालीप्रकरणम् ॥

श्रीस्वामिनारायणाय नमः ॥ ग्रामेऽश्लीले तरङ्गे तु प्रथमे श्रीहरिः स्वयम् । कार्याऽस्माभिर्हि प्रत्यक्षनरनारायणप्रभौ । निष्ठेत्यशिक्षयत्स्वीयान्स्वयमेवेश्वरेश्वरः ॥ १ ॥ शकाब्दे इति । पूर्वार्द्धं व्याख्यातम् (१८८२) चैत्रशुक्लद्वितीयायां चैत्रमासस्य या शुक्ला द्वितीया तिथिस्तस्याम् । हरेः प्रत्यक्षभगवतः श्रीस्वामिनारायणस्य । इदं वक्ष्माणप्रकारम् । वचोऽमृतं वचनामृतम् । आसीत् ॥ १ ॥ तत्रेति । तत्र तस्यां तिथौ । अश्लीलाभिधग्रामाद्बहिः । अश्लालीतिभाषायां प्रसिद्धो ग्रामस्तस्माद्बहिरित्यर्थः । आम्रवणे आम्राणां वनं समुहस्तस्मिन्नित्यर्थः । शुभ्रवसनः श्वेताम्बरः । स श्रीस्वामिनारायणः । स्वास्तृते सुष्टुतया वस्त्रादिभिराच्छादिते । मञ्चकोत्तमे मञ्चश्रेष्ठे । न्यषीदत् ॥ २ ॥ पौष्पेति । पौष्पस्रक्शेखरान् पुष्पेभ्यो जाताः स्रजो हाराश्च शेखरा आपीडाश्च तान् । बिभ्रद्दधानः । त्यागिगृहिव्रजैः त्यागिनश्च गृहिणो गृहस्थाश्च तेषां व्रजैः समूहैः । वृतो वेष्टितः । स श्रीहरिः । स्वयमेव केनाप्यपृष्ट इत्यर्थः । कृपया । पुरःस्थितान् । सतः मुक्तानन्दादीन् साधून् प्रति । अवदत्

शकाब्दे विक्रमार्कस्य नेत्राष्टवसुभूमिते । चैत्रशुक्लद्वितीयायां वचोऽमृतमिदं हरेः ॥ १ ॥ तत्राश्लीलाभिधग्रामाद्बहिराम्रवणे स तु । न्यषीदच्छुभ्रवसनः स्वास्तृते मञ्चकोत्तमे ॥ २ ॥ पौष्पस्रक्शेखरान् बिभ्रद् वृतस्त्यागिगृहिव्रजैः । सतः पुरःस्थानवदत्कृपया स्वयमेव सः ॥ ३ ॥ कृष्णस्वरूपविज्ञाने यस्य भक्तस्य किञ्चन । न्यूनत्वं स्यात्सा तु तस्य ज्ञातव्या महती क्षतिः ॥ ४ ॥ यः कृष्णो वासुदेवश्च नरनारायणो हरिः । परब्रह्मेति च प्रोक्तस्तत्सुखं तस्य नाञ्जसा ॥ ५ ॥ न चैकान्तिकभक्तत्वं जायते तस्य सर्वथा । सेवित्वाऽतः सतः सुज्ञान् ज्ञानदार्ढ्यं सुसाध्यताम् ॥ ६ ॥ प्रजापतिमुखा ये च स्रष्टारो जगतामिह । ज्ञानदार्ढ्यं विना तेऽपि हि मुच्यन्ते नैव संसृतेः ॥ ७ ॥

॥३॥ कृष्णेति । यस्य । भक्तस्य । कृष्णस्वरूपविज्ञाने भगवत्स्वरूपाववोधे । किञ्चन । न्यूनत्वं । स्यात् । तस्य भक्तस्य । सा महती । क्षतिर्हानिर्ज्ञातव्या ॥ ४ ॥ का हानिरित्यत्राह । य इति । तस्य भक्तस्य । कृष्णः कृष्णाख्यः । वासुदेवः । नरनारायणः । हरिश्च । परब्रह्म । इति । च प्रोक्तः । भगवान् । तत्सुखं तत्तस्य भगवतः सुखम् । अञ्जसा तत्वतः । यथार्थत इत्यर्थः । न नायातीत्यर्थः ॥ ५ ॥ नेति । तस्य भक्तस्य । एकान्तिकभक्तत्वं । सर्वथा । नैव । जायते । अतःकारणात् । सुज्ञान् सुष्टुज्ञानं येषां ते तथोक्तान् । सतः साधून् । सेवित्वा संसेव्येत्यर्थः । ज्ञानदार्ढ्यं ज्ञानस्य दृढत्वं । सुसाध्यतां सुष्टुतया साध्यताम् ॥ ६ ॥ कुत इत्यत आह । प्रजापतिमुखा इति । इहास्मिँल्लोके प्रजापतिमुखाः । ये । जगतां । स्रष्टारः । तेऽपि । ज्ञानदार्ढ्यं । विना । संसृतेः । नैव । मुच्यन्ते ।

ते प्रजापतयोऽपि मुहुर्मुहुः सृष्ट्या सहैवोत्पद्यन्तेऽन्ते मायायामेव लीना भवन्त्यपि श्रीपुरुषोत्तमभगवतः समिपेऽक्षरधामनि न गच्छन्ति कुतस्तेषां ज्ञाने न्यूनताऽस्तीत्यर्थः ॥ ७ ॥ तेषां ज्ञाने का न्यूनताऽस्तीति चेत्तत्राह । ज्ञाने इति । तेषां प्रजापत्यादीनां । ज्ञाने । या । न्यूनता । वर्त्तते । तां । न्यूनतामहं । ब्रुवे । ते प्रजापत्यादयः । मुक्तौ । स्वस्य स्वस्य क्रियाबलं । तत्कारणं । जानन्ति । हि निश्चितम् ॥ ८ ॥ कृष्णाश्रयबलमिति । ते प्रजापत्यादयः । मुक्तौ । कृष्णाश्रयबलं भगवदाश्रयस्य यद्बलं तत्कारणं । न विदुः नैव जानन्ति । इति । एका । न्यूनता । तेषां । ज्ञानेऽस्त्यन्यां च न्यूनतां । कीर्त्तये कथयामि ॥ ९ ॥ अक्षरब्रह्मतामिति ते प्रजापत्यादयः । अक्षरब्रह्मतां । प्राप्य । सर्वथा । नारायणनिषेवणं नारायणस्य भगवतः निषेवणं सेवनं । कार्यं । इत्येवं । मुक्तिरूपं । न । विदुर्जानन्ति ॥ १० ॥ तथेति । तथा । ते प्रजापत्यादयोऽपि । ये ते पुरुषाः । रामकृष्णमुखेषु । हर्यवतारेषु । अंशत्वं । विदुर्जानन्ति । इत्येषा । तेषां । तन्न्यूनता । मता ॥ ११ ॥

ज्ञाने या न्यूनता तेषां वर्त्तते तामहं ब्रुवे । स्वस्वक्रियाबलं ते हि मुक्तौ जानन्ति कारणम् ॥ ८ ॥
कृष्णाश्रयबलं नैव ते मुक्तौ कारणं विदुः । इत्येका न्यूनता तेषां ज्ञानेऽस्त्यन्यां च कीर्त्तये ॥ ९ ॥
अक्षरब्रह्मतां प्राप्य नारायणनिषेवणम् । सर्वथा कार्यमित्येवं मुक्तिरूपं न ते विदुः ॥ १० ॥
तथा हर्यवतारेषु रामकृष्णमुखेषु ते । अंशत्वं विदुरित्येषा तेषां तन्न्यूनता मता ॥ ११ ॥
उत्पत्त्यादिः कथं न्वस्य भवत्यण्डस्य तद्वयम् । पश्येमेत्यपि सङ्कल्पस्तेषां प्रागभवन्मृतौ ॥ १२ ॥
भक्ता अपि सन्ति ते तु सृष्ट्यादावेव कर्मणि । कृष्णेन योजिता भ्रमन्ति फलदायिना ॥ १३ ॥
सम्यग्ज्ञानं यदा ते च लप्स्यन्ते सन्निषेवणात् । तदेव मुक्तिं यास्यन्ति भविष्यन्ति महासुखाः ॥ १४ ॥
कृष्णसेवेतरा वाञ्छा भक्तैः कार्या न तत्कचित् । भक्ता अपि हरेर्ज्ञेया लक्षणैस्त्रिविधा इह ॥ १५ ॥

उत्पत्त्यादिरिति । पूर्वं । तेषां । मृतौ मृत्युकाले । नु इति वितर्केऽस्याण्डस्य ब्रह्माण्डस्य । उत्पत्त्यादिः । आदिशब्दोऽत्र स्थितिलयसंग्रहार्थः । कथं केन प्रकारेण । भवति । तद्वयं । पश्येम । इत्यपि एतादृशोऽपि । सङ्कल्पः । अभवत् ॥१२॥ भक्ता इति । ततो हेतोः । भक्ताः । अपि यद्यपि भक्ताः सन्त्यपि । ते तु । फलदायिना स्वकृतकर्मफलप्रदात्रा । कृष्णेन भगवता । सृष्ट्यादावेव । कर्मणि । योजिताः सन्तः । भ्रमन्ति ॥ १३ ॥ सम्यग्ज्ञानमिति । च । ते । यदा । सन्निषेवणात् साधुसंसेवनात् । सम्यग्ज्ञानं परिपूर्णं कृष्णस्वरूपज्ञानमित्यर्थः । लप्स्यन्ते । तदा । एव । मुक्तिं मोक्षं । यास्यन्ति प्राप्स्यन्ति । महासुखाः । भविष्यन्ति ॥१४॥ कृष्णसेवेतरेति । तत्तस्मात्कारणात् । भक्तैः । कृष्णसेवेतरा । वाञ्छा । क्वचिन्न । कार्या । इहास्मिल्लोके । हरेर्भगवतः । भक्ताः । अपि । लक्षणैस्त्रिविधाः त्रिप्रकाराः । ज्ञेया ज्ञातव्याः ॥ १५ ॥

विश्वसृष्ट्यादीति । यस्तु । भजन्सन् । कृष्णात् परमेश्वरतः । विश्वसृष्ट्यादिसामर्थ्यं । इच्छेत् । स भक्तः । ऐश्वर्यार्थी । कनीयान्कनिष्टः । इति । ज्ञेयः ॥ १६ ॥ केवलेति । यस्तु । पुमान् । केवलात्मस्वरूपेण । केवलात्मरूपो भूत्वेत्यर्थः । हरिं । भजेत् । स भक्तः । महर्षिभिः । कैवल्यार्थी च । मध्यमः । कथितः ॥ १७ ॥ भजेत इति । यः । भक्तः । अनन्यभावेन । प्रत्यक्षपुरुषोत्तमं भगवन्तं । भजेत भजनं करोति । तत्सेवाप्रियः तत्तस्य प्रत्यक्षपुरुषोत्तमस्य भगवतः सेवा प्रिया यस्य स तथाभूतः । असौ भक्तः । भगवन्निष्टो भगवति निष्ठा स्थितिर्यस्य स तथोक्तश्च । उत्तमः । कथित इत्यर्थः ॥ १८ ॥ वयमिति ।

विश्वसृष्ट्यादिसामर्थ्यमिच्छेत्कृष्णात्तु यो भजन् । ऐश्वर्यार्थी स विज्ञेयः कनियानिति च ध्रुवम् ॥ १६ ॥
केवलात्मस्वरूपेण यो भजेत हरिं पुमान् । कैवल्यार्थी स कथितो मध्यमश्च महर्षिभिः ॥ १७ ॥ भजेतानन्यभावेन प्रत्यक्षपुरुषोत्तमम् । यस्तत्सेवाप्रियश्चासौ भगवन्निष्ठ उत्तमः ॥ १८ ॥ वयं तु सर्वे प्रत्यक्षनरनारायणप्रभौ । निष्ठावन्तो भवामो हि उत्तमाः स्मो न संशयः ॥ १९ ॥ इति वागमृतं निपीय तस्य वृषसूनोरखिला हि साधवस्ते । गृहिणश्च तदीय भक्तिभाजः परमं मोदमवापुरन्तरे स्वे ॥ २० ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते अश्लालीप्रकरणे प्रथमस्तरङ्गः ॥ १ ॥

वयं तु । सर्वे । प्रत्यक्षनरनारायणप्रभौ । निष्ठावन्तः । भवामः । उत्तमाः स्म । हि निश्चितं । न संशयः । तत्र संशयो नास्तीत्यर्थः ॥ १९ ॥ उपसंहरति । इतीति । इति । तस्य । वृषसूनोः श्रीस्वामिनारायणस्य प्रत्यक्षभगवतः । वागमृतं वचनामृतमित्यर्थः । निपीय पीत्वाऽखिलाः समग्रास्तदीयभक्तिभाजस्ते । साधवश्च । गृहिणो गृहस्थाश्च । स्वेऽन्तरे । परमं । मोदं हर्षमापुः प्रापुरित्यर्थः ॥ २० ॥ ॥ इति श्रीमदुद्धवसम्प्रदायप्रवर्त्तकप्रत्यक्षपुरुषोत्तमश्रीसहजानन्दस्वामिसूनुश्रीमदयोप्रसादाचार्यविरचितायां श्रीहरिवाक्यसुधासिन्धुटीकायामन्वयदीपिकायां अश्लालिप्रकरणे प्रथमस्तरङ्गः ॥ १ ॥

## ॥ इति श्रीअश्लालीप्रकरणं समाप्तम् ॥

# जयतल्पपुरप्रकरणम्

श्रीसहजानन्दाय नमः ॥ जयतल्पपुरे त्वाथ पञ्चानां धर्मसुनुना । वचोऽमृतानां । प्रोक्तानां टीकेयं क्रियते मया ॥ १ ॥ जयतल्पपुरे प्राह प्रथमे मोक्षदो हरिः । साधुनाऽहंकृतिर्मानस्त्याज्यो भूरिगुणेन च ॥ २ ॥ शकाब्द इति । पूर्वार्द्धं व्याख्यातम् (१८८२) चैत्रशुक्लतृतीयायां । हरेः प्रत्यक्षभगवतः श्रीस्वामिनारायणस्य । इदं वक्ष्यमाणं वचोऽमृतम् । अभूदित्यर्थः ॥ १ ॥ जयतल्प इति । तत्र तस्यां तिथौ । स श्रीहरिः । जयतल्पाख्यं पुरं तत्र । राजप्रासादसन्निधौ राज्ञः प्रासादस्य समीपे । अशोकवृक्षाधोभागे । सुमञ्चके । न्यषीदत् ॥ २ ॥ कण्ठे इति । कथंभूतः सः । कण्ठे । पुष्पहाराश्च । उष्णीषे शिरोवेष्टने । पुष्पशेखरान् । श्रवसोः कर्णयोः । पुष्पावतंसौ कर्णाभरणे । करे । जम्बीरं फलम् । दधत् ॥ ३ ॥ त्यागिभिरिति । त्यागिभिः । गृहिभिर्गृहस्थैः । भक्तैः । परिवेष्टितश्च । सितांशुकः धृतश्वेतवसनः । मुमुक्षुहित-

शकाब्दे विक्रमार्कस्य नेत्राष्टवसुभूमिते । चैत्रशुक्लतृतीयायां वचोऽमृतमिदं हरेः ॥ १ ॥ जयतल्पपुरे तत्र राजप्रासादसन्निधौ । अशोकवृक्षाधोभागे स न्यषीदत्सुमञ्चके ॥२॥ कण्ठे दधत्पुष्पहारानुष्णीषे पुष्पशेखरान् । पुष्पावतंसौ श्रवसोर्जम्बीरं च फलं करे ॥३॥ त्यागिभिर्गृहिभिर्भक्तैः परितश्च सितांशुकः । उवाच कृपयैव तान्मुमुक्षुहितकृद्धि सः ॥४॥ प्रसिद्धे भवतो लोके द्वे मते सर्ववादिनाम् । अद्वैतमेकं द्वैतं च द्वितीयं परिकीर्त्तितम् ॥५॥ तत्राद्वैतं मुमुक्षुस्तु श्रयन्नात्मानमेव हि । भगवन्तं विदन् कुर्याद्यथेष्टाचरणं भुवि ॥६॥ अन्यस्मिंश्च मते जीव ईशो माया च सर्वथा । सत्या एव भवन्तीति मुक्तिर्न स्यान्मुमुक्षतः ॥७॥ मायायां विद्यमानायां मुक्तिसिद्धिः कथं भवेत् । न हि सत्कर्मभिस्तस्याः सत्याया विलयो भवेत् ॥८॥ सुषुप्तिरूपमायायां कर्मणां जायते लयः । प्रवृत्तानां च सर्वेषां निवृत्तानामपि ध्रुवम् ॥ ९ ॥

कृन्मुमुक्षुजनानां हितकर्त्ता । स श्रीहरिः । कृपया । तान् भक्तान् प्रति । उवाच ॥ ४ ॥ प्रसिद्ध इति । लोके । सर्ववादिनां । द्वे । मते । प्रसिद्धे । भवतः । तत्र एकमद्वैतं । परिकीर्त्तितम् । द्वितीयं । द्वैतं । परिकीर्त्तितम् ॥ ५ ॥ तत्रेति । तत्र । मुमुक्षुस्तु । अद्वैतं मतं । आश्रयन्सन् । आत्मानमेव । भगवन्तं । विदन् सन् । भुवि पृथिव्याम् । यथेष्टाचरणं । कुर्यात् ॥ ६ ॥ अन्यस्मिन्निति । अन्यस्मिन्मते । जीवः । ईश ईश्वरः । च । माया । सर्वथा । सत्या । एव । भवन्तीतिहेतोः । मुमुक्षतः मुक्तीच्छोः । मुक्तिर्न । स्यात् ॥ ७ ॥ मायायामिति । मायायां । विद्यमानायां सत्यां । मुक्तिसिद्धिः । कथं केन प्रकारेण । भवेत् । सत्कर्मभिः । सत्यायास्तस्या मायायाः । विलयः । न हि । भवेत् ॥ ८ ॥ सुषुप्तीति । सुषुप्तिरूपमायायां । प्रवृत्तानां । च निवृत्तानां । सर्वेषामपि । कर्मणां । लयः । जायते । ध्रुवं निश्चितं ॥ ९ ॥

लोकालोकमिति । लोकालोकं लोकालोकाभिधं । नगं पर्वतमिव । तां सुषुप्तिरूपां मायां । कोऽपि पुरुषः । उल्लङ्घयितुं उल्लङ्घनं कर्त्तुं । न शक्तः न समर्थः । तदा तर्हि । माहामायां कुतः माहामायामुल्लङ्घयितुं कुतः समर्थः । स्याच्च स्यादित्यर्थः ॥ १० ॥ अत इति । अतःकारणात् । दुस्तरायाः । अस्या मायायाः । तरणे । वो युष्माकम् । साधनं । ब्रुवेऽहमितिशेषः । तदेवाह नहीतिसार्द्धेन । माया । स्वतन्त्रा । न हि । अस्ति । यद्यस्माद्धेतोः । तन्नियन्ता नियमयिता । हरिर्भगवानस्ति ॥ ११ ॥ अत इति । अतःकारणात् । माया । परस्यैव । अत्रास्मिंल्लोके । नराकृतेः नराकारमूर्त्तेः । कृष्णस्य भगवतः । वा । तदीयानां भक्तानां सतां । आश्रयात् । तस्या मायायाः । उल्लङ्घनं । भवेत् ॥ १२ ॥ प्रतापादिति । यदा । कृष्णस्य भगवतः । प्रतापादेव । माया । उल्लङ्घिता । भवेत् तर्ह्येव । पुंसि तन्मायोल्लङ्घनकर्तृपुरुषे । सर्वे । महागुणा निष्कामादयः । आविर्भवेयुः ॥ १३ ॥ सहस्रश इति । तदा । यदा तस्मिन्महागुणा आयान्ति तदा ।

सुषुप्तिरूपां मायां तां लोकालोकं नगमिव । न कोऽप्युल्लङ्घने शक्तो महामायां कुतस्तदा ॥ १० ॥ अतोऽस्या दुस्तराया वः साधनं तरणे ब्रुवे । न हि माया स्वतन्त्रास्ति तन्नियन्ताऽस्ति यद्धरिः ॥ ११ ॥ अतो माया परस्यैव कृष्णस्यात्र नराकृतेः । आश्रयाद्वा तदीयानां तस्या उल्लङ्घनं भवेत् ॥ १२ ॥ प्रतापादेव कृष्णस्य यदा सोल्लङ्घिता भवेत् । आविर्भवेयुस्तर्ह्येव पुंसि सर्वे महागुणाः ॥ १३ ॥ सहस्रशो जनास्तं च मानयेयुस्तदा भृशम् । इन्द्रब्रह्मादिसदृशं जानीयुस्तं च ते हृदि ॥ १४ ॥ निर्विचारस्तदा भक्तो जानंस्तत्पौरुषं स्वकम् । प्राप्नोति मानहङ्कारौ स्वातन्त्र्यं च क्रियास्वपि ॥१५॥ सम्यग्विचारवान् यश्च भक्तः स तु नराकृतेः । हरेश्च तत्सतां गुर्वीं कृपां तां वेत्ति सर्वथा ॥ १६ ॥ ततो भागवतं सेतुं नातिक्रामति स क्वचित् । ईदृशो भगवद्भक्तः साधुर्भुवि सुदुर्लभः ॥ १७ ॥ तस्माद् भूरिगुणेनापि साधुनाऽहंकृतिस्तथा । मानश्च सर्वथा हेयः सेव्याः सन्तश्च दासवत् ॥ १८ ॥

तं पुरुषं । सहस्रशः । जनाः । भृशं अत्यन्तम् । मानयेयुः । ते जनाः । तं पुरुषं । इन्द्रब्रह्मादिसदृशं । हृदि । जानीयुः ॥ १४ ॥ निर्विचार इति । तदा । निर्विचारो विचारशून्य इत्यर्थः । भक्तः । तत्पौरुषं । स्वकं स्वकीयं । जानन्सन् । मानाहङ्कारौ । च स्वक्रियासु । स्वातन्त्र्यमपि । प्राप्नोति ॥ १५ ॥ सम्यगिति । यः । सम्यग् । विचारवान् । भक्तः । स तु । नराकृतेः । हरेः मनुष्याकृतिधरस्य प्रत्यक्षभगवतः । तत्सतां तत्तस्य प्रत्यक्षनराकृतेर्भगवतः सतां साधूनां । गुर्वीं महतीं । तां कृपां । सर्वथा । वेत्ति जानातीत्यर्थः ॥ १६ ॥ तत इति । ततो हेतोः । स भक्तः । भागवतं सेतुं भगवत्कृतमर्यादां । क्वचित्कर्हिचिदपि । नातिक्रामति । अतिक्रमणं न करोतीत्यर्थः । ईदृशः । भगवद्भक्तः । साधुः । भुवि पृथिव्यां । सुदुर्लभः । अस्ति ॥ १७ ॥ तस्मादिति । तस्मात्कारणात् । भूरिगुणेनापि । साधुना । अहंकृतिरहङ्कारः । तथा । मानः । सर्वथा । हेयस्त्याज्यः । च सन्तः साधवः । दासवत् दास इव भूत्वा । सेव्याः सेवनिया इत्यर्थः ॥ १८ ॥

सेव्यमिति । यद्यस्मात्कारणादत्र । भुवि पृथिव्यां । सत्सु । सेव्यत्वं । च महत्वं । अस्ति । तत्तु । भगवद्भक्तिज्ञानातिशयतः । अस्ति । खलु निश्चितम् ॥१९॥ ज्ञानभक्त्योरिति । औद्धवे । पथि सम्प्रदाये । ज्ञानभक्त्योः । अतिशयात् । महत्ताऽस्ति । न तु । लोकवत् । विद्याभिः । जात्यादिगुणयोगेन । महत्वमस्तीत्यर्थः ॥२०॥ उपसंहरति । धार्मिकस्येति । इत्थं । धार्मिकस्य धर्मनन्दनस्य श्रीस्वामिनारायणस्य प्रत्यक्षभगवतः । वचनामृतं अमृततुल्यं वचनम् । निपीय । ते निखिला । भक्ताः । ये । सदसि सभायां । स्थिताः । साधवः । गृहिजनाश्च । तेऽपि । अतिमुदं अतिहर्षं । आपुः प्रापुः । वै निश्चितम् ॥ २१ ॥ इति श्रीमत्केशवप्रसादाचार्यविरचितायां श्रीहरिवाक्यसिसुधान्धुटीकायामन्वयदीपिकायां जयतल्पपुरप्रकरणे प्रथमस्तरङ्गः ॥ १ ॥

ब्रह्मानन्देन सम्पृष्टः कीदृग्लक्ष्मा यतिर्भवेत् । तदाहेशो द्वितीये तु तरङ्गे भक्तिनन्दनः ॥ १ ॥ शकाब्दे इति । पूर्वार्द्धं व्याख्यातम् (१८८२) चैत्रशुक्लतृती-

सेव्यत्वं च महत्वं च सत्स्वेवास्त्यत्र यद् भुवि । तत्त्वस्ति भगवद्भक्तिज्ञानातिशयतः खलु ॥ १९ ॥ ज्ञानभक्त्योरति-
शयान्महत्ता साऽस्त्यौद्धवे पथि । न तु विद्याभिर्जात्यादिगुणयोगेन लोकवत् ॥ २० ॥ धार्मिकस्य वचनामृतमित्थं
ते निपीय निखिला अपि भक्ताः । साधवो गृहिजनाश्च तदापुर्ये स्थिताः सदसि तेऽतिमुदं वै ॥ २१ ॥

इति श्रीहरिवाक्यसुधासिंधौ शतानन्दमुनिविरचिते जयतल्पपुरप्रकरणे प्रथमस्तरङ्गः ॥ १ ॥

शकाब्दे विक्रमार्कस्य नेत्राष्टवसुभूमिते । चैत्रशुक्लतृतीयायां वचोऽमृतमिदं हरेः ॥ १ ॥
जयतल्पपुरे तत्र निश्यसौ कृष्णमन्दिरे । न्यषीदन्मञ्चके स्वीयैर्भक्तैः परिवृतोऽखिलैः ॥ २ ॥
सितवासा दधत्पौष्पान् हारापीडावतंसकान् । नक्तकं च करे वामे दक्षिणे जपमालिकाम् ॥ ३ ॥
कृतप्रणामः पप्रच्छ ब्रह्मानन्दस्तमीश्वरम् । कीदृग्लक्ष्मा यतिर्ज्ञेयस्तन्मे वद महाप्रभो ! ॥ ४ ॥

यायां चैत्रमासस्य शुक्लपक्षगा या तृतीया तिथिस्तस्याम् । हरेः प्रत्यक्षभगवतः श्रीस्वामिनारायणस्य । इदं वक्ष्यमाणप्रकारं । वचोऽमृतं वचनामृतम् । आसीदिति शेषः ॥ १ ॥ जयतल्पपुर इति । तत्र तिथौ । जयतल्पपुरे । निशि रात्रौ । असौ हरिः । कृष्णमन्दिरे राधाकृष्णस्य मन्दिरे । अखिलैः समग्रैः । स्वीयैः स्वकीयैः । भक्तैः त्यागिभिरित्यर्थः । परिवृतः सन् । मञ्चके । न्यषीदत् ॥ २ ॥ सितवासा इति । सितवासा धृतश्वेतवस्त्रः । पौष्पान् । हारापीडावतंसकान् हाराश्चापीडाः शेखराश्च अवतंसकौ कर्णभूषणे च तथोक्तास्तान् । दधत् । च । वामे । करे हस्ते । नक्तकं रुमालइतिभाषायां तं । च । दक्षिणे करे । जपमालिकां । दधत् ॥ ३ ॥ कृतप्रणाम इति । तं तथाविधं स्थितं । ईश्वरं । कृतप्रणामः । ब्रह्मानन्दो ब्रह्मानन्दनामा मुनिः । पप्रच्छ प्रश्नमिति शेषः । हे महाप्रभो ! वक्तुं समर्थ । यतिः । कीदृग्लक्ष्मा कीदृग्लक्षणयुक्त इत्यर्थः । ज्ञातव्यः । तत् । मे मम । वद कथय ॥ ४ ॥

तमिति । तं तथा पृच्छन्तं ब्रह्मानन्दमुनिं प्रति । हरिः श्रीस्वामिनारायणः । उवाच । यस्य पुंसः । दृढं । ब्रह्मचर्यं । भवेत् । च । सर्वाणि । इन्द्रियाणि । वशे । स्युः । स पुरुषः । यतिः । मतः ॥५॥ अथ तत्र निदर्शनमाह । हनूमान्निति । अत्र दृढब्रह्मचर्यरक्षणे । हनूमान् । च लक्ष्मणः दशरथनन्दनः । दृष्टान्तः । अवगम्यतां जानीयताम् । तत्रादौ हनूमद्वर्त्तनमाह । लङ्कामिति । हनूमान् । रामाज्ञया । सीतां । अन्वेष्टुमन्वेषणार्थं । लङ्काम् । अगात् ॥६॥ तत्रेति । तत्र लङ्कायां । स हनूमान् । अशोकवने । इतस्ततः । मार्गयन्सन् । निशि रात्रौ । निद्रिताः सुप्ताः । निद्रावशं गता इत्यर्थः । बहुशः । कुरूपाः । योषितः अद्राक्षीदपश्यदित्यर्थः ॥ ७ ॥ नेयमिति । इयं । जानकी सीता । न । इयं जानकी । न । इति वदन्सन् । अथानन्तरं । मन्दोदरीं रावणभार्यां । सुरूपां । निद्रितां निद्रावशं प्राप्तां । पुष्टां स्थूलां । दृष्ट्वा । स हनूमान् । संशयमाप सङ्कीतोऽभूत् ॥ ८ ॥ तत इति । ततस्तदन्तरम् । तेन हनूमता विचारितं । इयमपि । जानकी सिता । न । कुत इत्याह । सेति । हि यस्मात्कारणात् । रामवियोगार्त्ता रामस्य वियोगेनार्त्ता दुःखिता । सा सीता । पुष्टाङ्गी । न । भवेत् । ध्रुवं निश्चितं ॥ ९ ॥ विरहिण्या इति । विरहिण्याः ।

तं प्रति श्रीहरिराह यस्य ब्रह्मचर्यं दृढं । इन्द्रियाणि वशे यस्य यतिः स पुरुषो मतः ॥ ५ ॥ हनूमांल्लक्ष्मणश्चात्र दृष्टान्तो ह्यवगम्यताम् । लङ्कां रामाज्ञया सीतामन्वेष्टुं हनूमानगात् ॥ ६ ॥ तत्राशोकवने सीतां मार्गयन् स इतस्ततः । बहुशो योषितोऽद्राक्षीत्कुरूपा निद्रिता निशि ॥ ७ ॥ नेयं नेयं जानकीति वदन् मन्दोदरीमथ । सुरूपां निद्रितां पुष्टां दृष्ट्वा संशयमाप सः ॥ ८ ॥ ततो विचारितं तेन नैवेयमपि जानकी । सा हि रामवियोगार्त्ता न पुष्टाङ्गी भवेद् ध्रुवम् ॥ ९ ॥ विरहिण्या न निद्रा च भवेत्तस्याः कथंचन । विचार्येत्थं ततः स्थानात्स जगामान्यतः कपिः ॥ १० ॥ ततोऽनुतापं स प्राप हनूमानात्मनो हृदि । योषितां वीक्षणं त्वेतदयुक्तं हि यतेर्मम ॥११॥ स्त्रीणां वीक्षां विना सीता मार्गिता स्यात्कथं मया । अन्वेष्टुमेव तां चाहमायातोऽस्म्याज्ञया प्रभोः ॥१२॥ अतो न दोषो भविता मम रामप्रतापतः । किञ्च दोषो भवेत्तर्हि यदि क्षुभ्येत तेन हृत् ॥१३॥

तस्याः सीतायाः । निद्रा । कथंचन कर्हिचिदपि । न भवेन्न स्यात् । इत्थं । विचार्य । सः । कपिर्वानरो हनूमान् । ततः स्थानान्मदोदर्याः स्थानतः । अन्यतः अन्यत्र । जगाम ॥ १० ॥ तत इति । ततस्तदन्तरं । स हनूमान् । आत्मनः स्वस्य । हृदि हृदयेऽनुतापं परितापं । प्राप । तदेवानुतापमाह । योषितामिति । एतत् । योषितां स्त्रीणां । वीक्षणं । यतेर्ब्रह्मचारिणः । मम । अयुक्तं । न युक्तमित्यर्थः । हि निश्चितम् ॥ ११ ॥ स्त्रीणामिति । स्त्रीणां । वीक्षां निरीक्षणं । विना । मया । कथं केन प्रकारेण । मार्गिता । स्यान्न स्यादित्यर्थः । अहं । तां सीतामेव । अन्वेष्टुं अन्वेषणं कर्तुं । प्रभोः रामचन्द्रस्य । आज्ञया निदेशतः । आयातः । अस्मि । आगतोऽस्मीत्यर्थः ॥ १२ ॥ अत इति । अतःकारणात् । रामप्रतापतः । मम । दोषः यतेः स्त्रीवीक्षारूपो जात इत्यर्थः । न भविता । किञ्च । यदि यर्हि । दोषः । भवेत्स्यात्तर्हि । तेन दोषेन । हृत् । हृदयं । क्षुभ्येत क्षोभं प्राप्नुयादित्यर्थः ॥ १६ ॥

तदिति । तत्तु । किञ्चिदपि । स्वामिकृपया स्वामिनः रामचन्द्रस्य । कृपया । मे मम । क्वचित्कदाचिदपि । नास्ति । इत्थं । विचार्य विचारं कृत्वा । निश्चिन्तः गतचिन्तः । स हनुमान् । पुनः । सीताममार्गयत् ॥ १४॥ एवमिति । एवं लक्ष्मा । हनुमानिव । सर्वप्रकारेण । इह । तद्धेतौ । सत्यपि स्त्र्यादिवीक्षणादिसत्त्वेऽपि । निर्विकारान्तरः । सः । यतिर्ब्रह्मचारी । ज्ञेयः ॥ १५ ॥ अथ जितेन्द्रिय इति । एकादशभिर्लक्ष्मणस्य नैष्ठिकत्वं दर्शयति । जितेन्द्रियः जितानीन्द्रियाणि श्रोत्रादीनि येन स तथाभूतश्च । नित्यं । धर्मदृढस्थितिर्धर्मे ब्रह्मचर्ये दृढा स्थितिर्यस्य स तथाभूतः । लक्ष्मणो दशरथनन्दनः । सीतारामौ सीता च रामश्च तथोक्तौ । अतिप्रीत्या । पितराविव माता च पिता च पितरौ ताविव । सिषेवे सेवितवान् ॥ १६ ॥ तेनेति । तेन लक्ष्मणेन । सह । रामः । यदा । वने । सीतां जानकीमन्वेषयत् । तदा । सुग्रीवं वानराधिपं । प्राप्य । सीताहरणं । दुःखं । उक्तवान् ॥ १७ ॥ तत इति । ततस्तदनन्तरम् । स सुग्रीवः । तं रामं । प्राह । हे राम रामेति

तत्तु किञ्चिदपि स्वामिकृपया नास्ति मे क्वचित् । इत्थं विचार्य निश्चिन्तः सीतां सोऽमार्गयत्पुनः ॥ १४ ॥ एवं लक्ष्मा यतिर्ज्ञेयो हनुमानिव सर्वथा । निर्विकारान्तरो नित्यं तद्धेताविह सत्यपि ॥ १५ ॥ जितेन्द्रियो लक्ष्मणश्च नित्यं धर्मदृढस्थितिः । सीतारामावतिप्रीत्या सिषेवे पितराविव ॥ १६ ॥ तेन साकं यदा रामः सीतामन्वेषयत्वने । सुग्रीवं प्राप्य सीताया हरणं दुःखमुक्तवान् ॥ १७ ॥ तत प्राह स तं रामं स्त्रियं कांचन राक्षसः । रामरामेति जल्पन्तीं जहार हि विहायसा ॥ १८ ॥ अत्रस्थं सा च मां वीक्ष्य रुदन्ती खण्डवाससा । स्वालङ्कारान्निबध्यात्र प्राक्षिपत्तान्विलोकय ॥ १९ ॥ ते त्वदीया यदि तदा सा स्त्री सीता भवेद् ध्रुवं । इत्युक्त्वा दर्शयामास दिदृक्षन्तं स तान्कपिः ॥ २० ॥ दृष्ट्वैव रघुनाथोऽपि सीताया एव तानवैत् । ततः स लक्ष्मणं प्राह भगवानेतान् परीक्षताम् ॥२१॥ न व्यजानत्तदा कर्णभरणे अङ्गदे च सः । नूपुरौ तु स सीताया एवेत्याहाग्रजं विदन् ॥ २२ ॥

जल्पन्तीं । काञ्चन । स्त्रीयम् । राक्षसः । विहायसाऽऽकाशमार्गेण । जहार । निश्चितम् ॥१८॥ अत्रेति । मा स्त्री । अत्रस्थमत्र स्थितं । मां । वीक्ष्य दृष्ट्वा । रुदन्ती सति । खण्डवाससा वस्त्रखण्डेन । स्वालङ्कारान्स्वाभूषणानि । निबध्य । अत्र । प्राक्षित् । तानलङ्कारान् । विलोकय पश्य ॥ १९ ॥ त इति । तेऽलङ्काराः । यदि । त्वदीयाः । स्युश्चेत्सा । स्त्री । सीता । भवेत् । ध्रुवं । इत्युक्त्वा । दिदृक्षन्तं द्रष्टुमिच्छन्तं । तं रामं । सः । कपिः सुग्रीवः । तान् अलङ्कारान् । दर्शयामास ॥२०॥ दृष्ट्वेति । रघुनाथो रामचन्द्रोऽपि । तानलङ्कारान् । दृष्ट्वा । सीताया एव । अवैत् । ज्ञातवानित्यर्थः । ततस्तद्दर्शनानन्तरम् । स रामः । लक्ष्मणं प्रति । आह । भवान् । एतानलङ्कारान् । परीक्षणं कुर्वतामित्यर्थः ॥ २१ ॥ नेति । तदा तत्समये । स लक्ष्मणः । कर्णाभरणे कर्णयोराभरणे भूषणे च । अङ्गदे केयूरे । न व्यजानत् न ज्ञातवान् । नूपुरौ तु चरणाभरणे तु । विदन् जानन्सन् । स लक्ष्मणः । सीताया एव । इति । अग्रजं स्वज्येष्ठबन्धुरामं । प्रत्याह अकथयत् ॥ २२ ॥

राम इति । तं तथावदन्तं लक्ष्मणं । रामः । आह । श्रवसोः कर्णयोश्च । करयोरलङ्काराः । त्वया । कथं । न विदिता न ज्ञाताः । च पदोश्चरणयोः । कथं । विदिताः ज्ञाताः ॥२३॥ लक्ष्मण इति । लक्ष्मणः । तं तथा पृच्छन्तं रामं प्रत्याह । हे स्वामिन् । मया । सितायाः । नित्यदा निरन्तरम् । सहवासे सत्यपि । सकलानि सर्वाणि । अङ्गानि । अञ्जसा यथार्थत इत्यर्थः । न दृष्टानि ॥ २४ ॥ चरणाविति । चरणौ पादौ तु । अन्वहं प्रतिदिनं । प्रातःकाले । प्रणमे सति नमस्कारे कृते सति । सम्यगीक्षितौ दृष्टौ भवत इत्यर्थ । अतःकारणात् । नूपुरविज्ञानं तु । ममास्ति । अन्यत्तु । अहं । न अविदं । न जानामीत्यर्थः ॥ २५ ॥ इतीति । इत्युक्तः । रामचन्द्रोऽपि । तं लक्ष्मणं । स्तुवन्सन् । आश्चर्यमगात् । एवं । यः । जितेन्द्रियः । स्यात् । स तु । भुवि पृथिव्यां । यतिर्ब्रह्मचारी । ज्ञेयः ॥२६॥ इतीति । इति । स्वामी श्रीसहजानन्दः । तं मुनिं ब्रह्मानन्दस्वामिनं प्रति । उक्त्वा । सर्वान्सभासदः प्रति । आह । अयं । ब्रह्मानन्दो ब्रह्मानन्दनामा मुनिरपि । हनुमल्लक्ष्मणोपमः । ब्रह्मचर्ये हनुमल्लक्ष्मणसदृशोऽस्तीत्यर्थः ॥२७॥ एवमिति । एवं । सदसि सभायां । साधुवर्यं साधुश्रेष्ठं । तं ब्रह्मानन्दमुनिं । आदरात्स्तुत्वा । एव ।

रामस्तमाह श्रवसोः करयोश्च कथं त्वया । अलङ्कारानविदिता विदिताश्च पदोः कथं ॥ २३ ॥ लक्ष्मणः प्राह तं स्वामिन् ! मया दृष्टानि नाञ्जसा । सीतायाः सकलाङ्गानि सहवासेऽपि नित्यदा ॥ २४ ॥ चरणौ त्वन्वहं प्रातः प्रणामे सम्यगीक्षितौ । अतो नूपुरविज्ञानं ममास्त्यन्यत्तु नाविदम् ॥ २५ ॥ इत्युक्त आश्चर्यमगाद्रामचन्द्रोऽपि तं स्तुवन् । एवं जितेन्द्रियो यः स्यात्स तु ज्ञेयो यतिर्भुवि ॥ २६ ॥ इत्युक्त्वा तं मुनिं स्वामी सर्वान्प्राह सभासदः । ब्रह्मानन्दोऽयमप्यस्ति हनुमल्लक्ष्मणोपमः ॥ २७ ॥ एवं स्तुत्वैव सदसि साधुवर्यं तमादरात् । स्थितं नत्वा तमाशाजिद्वैश्यः पप्रच्छ सत्पतिम् ॥२८॥ जीवस्य भगवन् ! रूपं ज्ञेयं कीदृशमञ्जसा । तन्मां ब्रूहीति पृष्टोऽसौ प्राह तं हितकृन्नृणाम् ॥ २९ ॥ चिद्रूपश्चाणुमात्रोऽस्ति हृदाकाशे स निर्मलः । अछेद्यादिगुणश्चात्मा नित्यो निर्विक्रियोऽव्ययः ॥ ३० ॥

स्थितं । तं सत्पतिं हरिं प्रति । आशाजिद्वैश्यः आशाजिन्नामा वैश्यः । नत्वा नमस्कारं कृत्वा । पप्रच्छ । प्रश्नमितिशेषः ॥ २८ ॥ जीवस्येति । हे भगवन्वक्तुं समर्थ हे हरे ! । जीवस्य जीवात्मनः । रूपं । अञ्जसा यथार्थतः । कीदृशं । ज्ञेयं ज्ञातव्यम् । तन्मां । ब्रूहि कथय । इति । पृष्टः । नृणां मनुष्याणां । हितकृत् । असौ हरिः । तं आशाजिद्वैश्यं । प्रत्याह ॥ २९ ॥ चिद्रूप इति । सः । आत्मा जीवः । चिद्रूपश्चैतन्यरूपः । हृदाकाशे । अस्ति । अणुमात्रः अणुसुक्ष्मः । अणुवत्स्थूलदृष्ट्या दुर्लक्ष्य इत्यर्थः । तथा च श्रुतिः । आराग्रमात्रोऽवरोऽपि । दृष्टः । 'वालाग्रशतभागस्य शतधाकल्पितस्य च भागो जीवश्चेत्यादिः । अस्ति । निर्मलः शुद्धः । अस्ति । अछेद्यादिगुणः अछेद्याद्या गुणा यस्य स तथोक्तः । नित्यः । निर्विक्रियः । अव्ययोऽविनाश्यस्ति । उक्तं च श्रीभगवद्गीतायां । नैनं छिदन्ति शस्त्राणि नैनं दहति पावकः । न चैनं क्लेदयन्त्यापो न शोषयति मारुतः । अछेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च । नित्यः सर्वगतः स्थाणुरचलोऽयं सनातन' इति ॥ ३० ॥

शब्दादीनिति । सर्वाङ्गव्यापकः । असौ जीवः । स्वयं । स्वेच्छया । श्रोत्राद्यैः । इन्द्रियैः कृत्वा । शब्दादीन् । सर्वान्विषयान् । गृह्णाति । परः इन्द्रियेभ्यः परः । अस्तीत्यर्थः ॥ ३१ ॥ नन्वेतादृशो जीवः कथं दृश्य इति चेत्तत्राहोपासनाप्रतापेनेति । तं तथाविधं जीवात्मानं । नरनारायणप्रभोः नरनारायणभगवतः । प्रतापेन । भक्तजनाः । अञ्जसा साक्षात्पश्यन्ति । अन्ये तु भगवदुपासनारहिता भक्तास्तु । नैव । पश्यन्ति । हि निश्चितम् ॥ ३२ ॥ उपसंहरति । पीयूषतुल्यमिति । इति । हरेः श्रीस्वामिनारायणस्य प्रत्यक्षभगवतः । पीयूषतुल्यं । वचनं । निशम्य । स आशाजिद्वैश्यः । मुदं हर्षं । प्राप । स साधुर्ब्रह्मानन्दमुनिः । अन्ये ये । सदोनिषण्णाः सभायां स्थिताः । तदीयभक्तास्तस्य हरेरिमे भक्ताः । सन्तः साधवः । गृहस्थाश्च । तेऽपि । मुदं प्रापुरित्यर्थः ॥३३॥ इति श्रीकेशवप्रसादाचार्यविरचितायां श्रीहरिवाक्यसुधासिन्धुटीकायामन्वयदीपिकायां जयतल्पपुरप्रकरणे द्वितीयस्तङ्गः ॥ २ ॥

शब्दादीन् विषयान् सर्वान् श्रोत्राद्यैरिन्द्रियैः स्वयम् । गृह्णाति स्वेच्छयाऽसौ च सर्वाङ्गव्यापकः परः ॥ ३१ ॥
उपासनाप्रतापेन नरनारायणप्रभोः । पश्यन्ति तं भक्तजना अञ्जसाऽन्ये तु नैव हि ॥ ३२ ॥ पीयूषतुल्यं वचनं
निशम्य हरेरिति प्राप मुदं स वैश्यः । साधुः स चान्येऽपि सदोनिषणाः सन्तो गृहस्थाश्च तदीयभक्ताः ॥ ३३ ॥

इति श्रीहरिवाक्यसुधासिंधौ शतानन्दमुनिविरचिते जयतल्पपुरप्रकरणे द्वितीयस्तरङ्गः ॥ २ ॥

शकाब्दे विक्रमार्कस्य नेत्राष्टवसुभूमिते । चैत्रशुक्लचतुर्थ्यां हि वचोऽमृतमिदं हरेः ॥ १ ॥
जयतल्पपुरे तत्र राजप्रसादसन्निधौ । बदर्यधस्तादुद्याने न्यषीदत्स निजासने ॥ २ ॥
चम्पापुष्पस्रजः कण्ठे नानाकुसुमशेखरान् । दधच्छीर्षपटे पौष्पाववतंसौ च कर्णयोः ॥ ३ ॥
सिताम्बरो वृतो भक्तैस्त्यागिभिर्गृहिभिश्च सः । पुरःस्थानवदत्साधूंश्चिन्तयित्वा क्षणं स्वयम् ॥ ४ ॥

माहात्म्यज्ञानयुग्भक्त्या क्षयं दुर्वासना त्वियात् । प्राह धार्मिस्तृतीये तु तरङ्गे भक्तहर्षदः ॥ १ ॥ शकाब्द इति । पूर्वार्द्धं व्याख्यातम् (१८८२) चैत्रशुक्लचतुर्थ्यां चैत्रमासस्य या शुक्लपक्षस्था चतुर्थी तिथिस्तस्याम् । हरेः प्रत्यक्षभगवतः श्रीस्वामिनारायणस्य । इदं वक्ष्यमाणप्रकारं वचनामृतम् । आसीत् । हि निश्चितम् ॥ १ ॥ जयतल्पपुर इति । तत्र तस्यां तिथौ । स श्रीहरिः । जयतल्पपुरे । राजप्रसादसन्निधौ । उद्याने आक्रीडस्थाने । आराम इत्यर्थः । बदर्यधः बदरीवृक्षस्याधस्तात् । निजासने । न्यषीदत् ॥ २ ॥ तं विशिनष्टि । चम्पापुष्पस्रजः चम्पावृक्षस्य पुष्पाणां स्रजः मालिकाः । शिर्षपटे शिरोवेष्टने । नानाकुसुमशेखरान् । कर्णयोः । अवतंसौ गुच्छौ । दधत् ॥ ३ ॥ सिताम्बर इति । सिताम्बरः । धृतश्वेतवस्त्रः । त्यागिभिश्च । गृहिभिर्गृहस्थैः भक्तैः । वृतो वेष्टितः । स श्रीहरिः । क्षणं क्षणमात्रम् । स्वयं । चिन्तयित्वा विचार्य । पुरःस्थान् । साधूनवदत् ॥ ४ ॥

नेति । सतां साधूनां । दुष्टवासनातुल्यः । कश्चित्कोऽपि । रिपुः शत्रुः । नास्ति । अतःकारणात् । सा दुर्वासना । सर्वथा सर्वप्रकारेण । त्याज्या हेया इत्यर्थः । यतः सा । आत्मनः जीवस्य । संसृतेः । मूलं कारणमस्तीति । सर्वथैव हेयेत्यर्थः ॥५॥ य इति । यः । दुर्वासनायुक्तः पुमान् । ममान्तिके मत्समीपेऽपि । वसेत् । तथापि । असौ । पुमान् । अपरजीववत् अन्यजीववत् । सुखं । नैव । लभते । सुखं नैव प्राप्नोतीत्यर्थः ॥६॥ मुक्तानन्द इति । तदा । मुक्तानन्दमुनिः । अपृच्छत् । केनोपापायेन । सा दुर्वासना । हृदः हृदयसकाशात् । निवर्त्तेत निवृतिं प्राप्नुयात् । इति । पृष्टः । असौ । सतां पतिः श्रीहरिः । तं मुक्तानन्दमुनिं प्रति । उवाच ॥ ७ ॥ यदेति । यदा यर्हि । मदीयमर्यादोल्लङ्घने । मनसः । सङ्कल्पः । भवेत् । तर्हि । सा एव मन्मर्यादोलङ्घनरूपा । आत्मनो जीवात्मनः । दुर्वासना । विज्ञेया ज्ञातव्या ॥८॥ तदिति । तन्निवृत्त्यै तत्तस्या दुर्वासनाया निवृत्त्यै । धर्मस्थितेन । पुंसा पुरुषेण । माहात्म्यज्ञानयुक् माहात्म्यज्ञानेन युक्ता । नवविधा । हरेर्भगवतः । भक्तिः । दृढं

न दुष्टवासनातुल्यः कश्चिदस्तिरिपुः सताम् । अतः सा सर्वथा त्याज्या संसृतेर्मूलमात्मनः ॥ ५ ॥ यो दुष्टवासनायुक्तो वसेदपि ममान्तिके । तथाप्यसौ सुखं नैव लभतेऽपरजीववत् ॥ ६ ॥ मुक्तानन्दस्तदाऽपृच्छत्केनोपायेन सा हृदः । निवर्तेतेति पृष्टोऽसौ तमुवाच सतां पतिः ॥ ७ ॥ यदा मदीयमर्यादोल्लङ्घने मनसो भवेत् । सङ्कल्पस्तर्हि विज्ञेया सैव दुर्वासनाऽऽत्मनः ॥ ८ ॥ तन्निवृत्त्यै विधातव्या हरेर्नवविधा दृढम् । माहत्मज्ञानयुग्भक्तिः पुंसा धर्मस्थितेन वै ॥ ९ ॥ प्रत्यक्षभगवन्तं स ध्यायेच्चानन्यभावतः । नरनारायण ! स्वामिनारायण ! इतीरयन् ॥ १० ॥ एवं हि भजतस्तस्य नरनारायणः स्वयं । प्रविश्य विधुनोत्याशु सर्वां दुर्वासनां खलु ॥ ११ ॥ इति दुर्वासनानाशोपायः प्रोक्तो मयाऽञ्जसा । अन्यच्च किञ्चिद्वक्ष्यामि सर्वेषां वो हितावहं ॥ १२ ॥ स्वकीयधर्ममर्यादानोल्लंघ्या बुद्धिपूर्वकम् । प्रायश्चित्तं चाशु कार्यमज्ञानात्तदतिक्रमे ॥ १३ ॥ देहेन्द्रियान्तकरणावृत्तिसाक्षी च तादृशः । ततः परोऽस्मि चिद्रूपो विभाव्यं हृदि सर्वथा ॥ १४ ॥

यथा स्यात्तथा । विधातव्या कर्त्तव्या । वै निश्चितम् ॥९॥ प्रत्यक्षभगवन्तमिति । स दुर्वासनाक्षयेच्छुः पुमान् । अनन्यभावतः । हे नरनारायण ! हे स्वामिनारायण ! इति । इरयन्सन्नुच्चारयन्सन् । प्रत्यक्षभगवन्तम् ध्यायेत् ध्यानं कुर्यात् ॥ १० ॥ एवमिति । एवं । भजतः । तस्य । हृदि । नरनारायणो भगवान् । स्वयं । प्रविश्य । आशु शीघ्रं । सर्वां । दुर्वासनां । विधुनोति । खलु निश्चितं ॥ १२ ॥ इतीति । इति । मया । अञ्जसाऽनायासेन । दुर्वासनानाशोपायः । प्रोक्तः कथितः । अन्यच्च । किञ्चित् । वो युष्माकं । सर्वेषां । हितावहं हितकारकं । वक्ष्यामि । वचनमित्यर्थः ॥ १२ ॥ स्वकीय इति । स्वकीयधर्ममर्यादा । बुद्धिपूर्वकं । नोल्लंघ्या न उल्लङ्घनीया । अज्ञानात् । तदतिक्रमे सति । आशु शीघ्रम् । प्रायश्चित्तं । कार्यम् ॥ १३ ॥ देहेति । अहं । देहेन्द्रियान्तःकरणवृत्तिसाक्षी । एतादृशश्च । ततः देहेन्द्रियादिभ्यश्च । परः । चिद्रूपश्चैतन्यरूपः । आत्मा स एवास्मि । इति । सर्वदा निरन्तरम् । हृदि हृदये । विभाव्यं ज्ञातव्यमित्यर्थः ॥ १४ ॥

नानाविध इति । नराकृतेः मनुष्याकृतेः जीवानां श्रेयसे भुवि प्रादुर्भूतस्य । कृष्णस्य भगवतः । नानाविधचरित्रेषु । शास्त्रविरुद्धेष्वपि । दोषमतिः । न कार्या । अयं भगवान्भविष्यति न वा यदि स्याच्चेदिदग्वर्त्तनं कथमित्यादिदोषकर्तृकामतिर्बुद्धिः सा न कार्या इत्यर्थः । वै निश्चितं ॥१५॥ सतामिति । सतां साधूनामपि । अवगुणः । कदाचन कर्हिचिदपि । नैव । गृहितव्यः । स्वस्य । माने सति । वा । अपमाने सति अपि । तुल्यतया एव समतयैव । वृत्यं वर्त्तितव्यम् । हि निश्चितम् ॥ १६ ॥ कृष्णस्यैवेति । अनेन । देहेन । सर्वथा सर्वप्रकारेण । कृष्णस्यैव भगवत एव । प्रीयम् । कार्यम् । इतः भगवतः प्रीतिकरतः । महत् । परतरमन्यतमम् । किञ्चित् । कर्त्तव्यं । नास्ति । वै निश्चितम् । अनेन देहेन यथा भगवान्नराकृतिः प्रत्यक्षपुरुषोत्तमः प्रीयात्तथा कर्त्तव्यमस्तीतिभावः ॥ १७ ॥ तथेति । यथा । यथा । कृष्णो भगवान् । प्रसीदेत्प्रीतो भवेत् । तथा । कार्यं । न तु । तत्र । हितैषिणा आत्मनो हितमिच्छुना पुंसा । देहदुःखादिगण्यम् । स्वहितेच्छुना तत्र स्थले देहकष्टादिकं न मान्यमित्यर्थः ॥ १८ ॥ मानेर्ष्या इति । मानेर्ष्याक्रोधलेभाद्याः । दोषाः । दूरतः । हेयास्त्याज्या इत्यर्थः । तत्रापि । श्रेयोऽतिविघ्नकृत् । मानस्तु । सर्वथा ।

नानाविधचरित्रेषु कृष्णस्य नराकृतेः । अपि शास्त्रविरुधेषु कार्या दोषमतिर्न वै ॥१५॥ सतां चावगुणो नैव ग्रहीतव्यः कदाचन । स्वस्य मानेऽपमाने वा वृत्यं तुल्यतयैव हि ॥१६॥ कृष्णस्यैव प्रियं कार्यं देहेनानेन सर्वथा । इतः परतरं किञ्चित्कर्त्तव्यं नास्ति वै महत् ॥ १७ ॥ यथा यथा प्रसीदेच्च कृष्णः कार्यं तथा तथा । नतु स्वदेहदुखादि तत्र गण्यं हितैषिणा ॥ १८ ॥ मानेर्ष्याक्रोधलोभाद्या हेया दोषाश्च दूरतः । तत्रापि सर्वथा हेयो मानः श्रेयोऽतिविघ्नकृत् ॥ १९ ॥ भ्रष्टः स्यादेव सत्सङ्गान्मानवान् पुरुषो ध्रुवम् । ततोऽस्य नैव मुक्तिः स्याद् ग्राम्येषु भ्रमतः क्वचित् ॥२०॥ सर्वथा कृष्ण एवात्र भजनीयो दिवानिशम् । महत्त्वमस्ति तेनैव नान्यथा ह्यौद्धवे पथि ॥ २१ ॥ चतुर्दशापि यो लोकांस्तीव्रवैराग्यवेगतः । कृष्णभक्त्यैव पूर्णार्थो मन्येत च तृणोपमम् ॥ २२ ॥ देहादेर्विस्मृतिर्यस्य जाग्रत्यपि सुषुप्तिवत् । कृष्णानन्दनिमग्नस्य भवेच्च स महान् मतः ॥ २३ ॥

हेयस्त्याज्य इत्यर्थः ॥ १९ ॥ कुत इत्यत आह । भ्रष्ट इति । मानवान् । पुरुषः । सत्सङ्गात् । भ्रष्टः । स्यादेव । ध्रुवं निश्चितम् । ततः । ग्राम्येषु विषयेषु । भ्रमतः । अस्य पुंसः । क्वचित्कर्हिचिदपि । मुक्तिः । नैव । स्यात् ॥ २० ॥ अतः सर्वथैव भगवानेव भजनीय इत्याह । सर्वथेति । अतःकारणात् । सर्वथा । अत्र सत्सङ्गे । कृष्णो भगवानेव । दिवानिशं अहोरात्रं । भजनीयः सेवनीय इत्यर्थः । तेनैव । औद्धवे पथि औद्धवीयसम्प्रदाये । महत्वमस्ति । अन्यथा तमन्तरा न । महत्वं नास्तीत्यर्थः ॥ २१ ॥ तर्हि औद्धवे सम्प्रदाये कस्य महत्वमितिचेत्तत्राह । चतुर्दश इति । यः । कृष्णभक्त्या । एव । पूर्णार्थः । मन्येत । तीव्रवैराग्यवेगतः । चतुर्दशापि । लोकान् । तृणोपमं तृणसदृशम् । मन्येत । न च । तत्सुखेषु । स्पृहावान् । भवेत् ॥२२॥ देहादेरिति च । यस्य । कृष्णानन्दनिमग्नस्य भक्तस्य । सुषुप्तिवत् सुषुप्तौ यथा देहादेर्विस्मृतिर्वर्त्तते तद्वत् । जाग्रत्यपि जाग्रदवस्थायामपि । देहादेर्विस्मृतिः । विस्मरणं । भवेत् । सः । महान् । मतः ॥ २३ ॥

उपसंहरति । निशम्येति । इत्थं । सुधासमानां । धर्मात्मजवाचं धर्मपुत्रवचनम् । निशम्य श्रुत्वा । सकलाः समग्राः । सदःस्थाः सभायां स्थिताः । तद्दीयभक्ताः । सन्तः साधवश्च । गृहस्थाश्च । हर्षं । सम्प्राप्य । तं श्रीस्वामिनारायणं भगवन्तं । प्रणमन्ति स्म नमस्कारं चक्रुरित्यर्थः ॥ २४ ॥ इति श्रीकेशवप्रसादाचार्यविरचितायां श्रीहरिवाक्यसुधासिन्धुटीकायामन्वयदीपिकायां जयतल्पपुरप्रकरणे तृतीयस्तरङ्गः ॥ ३ ॥

नृणां श्रेयो भवेद्धा हरेः संनिश्रयादिति । चतुर्थेऽस्मिन्तरङ्गे तु प्रोवाच ज्ञानदो हरिः ॥ १ ॥ शकाब्द इति । पूर्वार्द्ध व्याख्यातम् (१८८२) चैत्रशुक्लचतुर्थ्यां चैत्रमासस्य या शुक्ला चतुर्थिस्तस्याम् । हरेः श्रीस्वामिनारायणस्य प्रत्यक्षभगवतः । इदं वक्ष्यमाणप्रकारम् । वचोऽमृतं वचनामृतम् । आसीत् ॥ १ ॥ जयतल्पपुर इति । तत्र तस्या तिथौ । स श्रीहरिः । जयतल्पपुरे । निशामुखे सायंकाले । राजसौधे राज्ञः प्रासादे । तूलपटे तूलसम्भृतपटे । गादीति भाषायां । पार्श्विकं । तकीयो इति भाषायां तम् । अवष्टभ्य । एव । न्यषीदत् ॥ २॥ पौष्पस्रजालिमिति । उष्णीषे शिरोवेष्टिने । पौष्पस्रजालिं पुष्पेभ्यो जाता पौष्पाश्च ताः

निशम्य धर्मात्मजवाचमित्थं सुधासमानां सकलाः सदःस्थाः । सन्तो गृहस्थाश्च तदीयभक्ताः सम्प्राप्य हर्षं प्रणमन्ति तं स्म ॥ २४ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते जयतल्पपुरप्रकरणे तृतीयस्तरङ्गः ॥ ३ ॥

शकाब्दे विक्रमार्कस्य नेत्राष्टवसुभूमिते । चैत्रशुक्लचतुर्थ्यां च वचोऽमृतमिदं हरेः ॥१॥ जयतल्पपुरे तत्र राजसौधे निशामुखे । स न्यषीदत्तूलपटे ह्यवष्टभ्यैव पार्श्विकम् ॥ २ ॥ पौष्पस्रजालिमुष्णीषे नानापुष्पस्रजो गले । अङ्गरागं कैसरं च सर्वाङ्गेष्वपि धारयन् ॥ ३ ॥ सितवासाः स्वभक्तैश्च त्यागिभिर्गृहिभिर्वृतः । साधूनुवाच स्वाग्रस्थान्स्वयमेव स सत्पतिः ॥ ४ ॥ प्रत्यक्षस्य हरेरेव निश्चयाद्दर्शनात्तथा । अखण्डस्मरणाश्चात्र श्रेयो भवति निश्चितम् ॥ ५ ॥ वैरबुद्ध्यापि कंसादेरखण्डस्मरणात्प्रभोः । श्रेयोऽभवदिति ह्युक्तं श्रीमद्भागवतादिषु ॥ ६ ॥

स्रजस्तासामालिः पङ्क्तिस्तां धारयन् । गले कण्ठे । नानापुष्पस्रजः नानापुष्पाणां मालिकाः । सर्वाङ्गेष्वपि । कैसरं । केसरसम्भूतम् । अङ्गरागमगरुचन्दनघर्षितं । धारयन्सन् ॥३॥ सितवासेति । सितवासा धृतश्वेतवसनः । त्यागिभिश्च । गृहिभिर्गृहस्थैः स्वभक्तैः । वृतो वेष्टितः । सः । सत्पतिः स्वामी श्रीसहजानन्दः । स्वयमेव केनाप्यपृष्ट एव । स्वाग्रस्थान् स्वस्य पुरःनिषणान्साधून्प्रति । उवाच ॥ ४ ॥ प्रत्यक्षस्य । हरेर्भगवतः । एव । निश्चयात्तथा । दर्शनात् । तथा अखण्डस्मरणात् । श्रेयः कल्याणम् । भवति । निश्चितम् ॥ ५ ॥ तदेव प्रमाणयति । वैरबुद्ध्यापीति । वैरबुध्यापि । कंसादेः । प्रभोः प्रत्यक्षभगवतः कृष्णस्य । अखण्डस्मरणात् । श्रेयः कल्याणमभवत् । इति श्रीमद्भागवतादिषु । उक्तं । हि निश्चितम् । "स नित्यदोद्विग्नधियो तमीश्वरं पिबन् वदन्वा विचरन् स्वपन् श्वसन् । ददर्श चक्रायुधमग्रतो यतस्तदेव रूपं दुरवापमाप" इत्यादिः ॥ ६ ॥

अण्डस्मृतिरिति । अतःकारणात् । हरेः प्रत्यक्षभगवतः । अखण्डस्मृतिरविच्युता स्मृतिरेव । श्रेयस्करी कल्याणकर्त्री । मता । वो युष्माकं । सर्वेषामपि । सा प्रत्यक्षभगवति अखण्डस्मृतिरस्ति । अतःकारणादेव । श्रेयः कल्याणम् । जातं । वो युष्माकम् । हि निश्चितम् ॥७॥ तथापीति । तथापि कल्याणं तु सर्वेषां वो मदखण्डस्मृत्या जातमस्ति तथापीत्यर्थः । मत्कृता । धर्ममर्यादा धर्मस्य मर्यादा । भवद्भिः । सर्वप्रकारेण । आदरात् । यावद्देहस्मृतिः । भवेत् । तावत्पर्यन्तमित्यर्थः । पालनीयैव ॥ ८ ॥ अखण्डस्मरमिति । यस्य पुंसः । हरेः प्रत्यक्षभगवतः । अखण्डस्मरणम् । स्यात् । सः । पुरुषोऽपि । यदि । बुद्धया ज्ञानतः । वा । प्रमादतोऽज्ञानतोऽपि । धर्महीनः । स्यात् । तथापि । तस्य पुंसः । अपुनर्भवलक्षणम् । श्रेयः कल्याणम् । स्यात् । किन्तु ब्रह्मधामाप्तिरक्षरधामप्राप्तिर्न । स्याच्च । हरेर्भगवतः । एकान्तिकता एकान्तिकभक्तत्वमित्यर्थः । तत्र । स्यादित्यर्थः ॥ ९ ॥ १० ॥ श्रेय इति । च तेन तथाविधेन पुंसा । स्वाश्रितस्यापि । कस्यचित्पुंसः । श्रेयः । नैव । स्यात् ।

अखण्डस्मृतिरेवातो मता श्रेयस्करी हरेः । सर्वेषामपि वः साऽस्ति जातं श्रेयोऽत एव हि ॥ ७ ॥ तथापि धर्ममर्यादा मत्कृता सर्वथाऽऽदरात् । भवद्भिः पालनीयैव यावद्देहस्मृतिर्भवेत् ॥ ८ ॥ अखण्डस्मरणं यस्य हरेः स्यात्सोऽपि पूरुषः । यदि स्वधर्महीनः स्याद् बुद्धया वापि प्रमादतः ॥ ९ ॥ तथापि तस्य श्रेयः स्यादपुनर्भवलक्षणम् । किन्तु न ब्रह्मधामाप्तिर्न चैकान्तिकता हरेः ॥ १० ॥ श्रेयश्च स्वाश्रितस्यापि तेन स्यान्नैव कस्यचित् । सर्वथा दुःखहीनत्वं न च तस्य भवेत्क्वचित् ॥ ११ ॥ मदुक्तेषु स्वधर्मेषु दृढस्थितिमतां तु वः । भिन्नैव प्रक्रियाऽस्तीति यूयं सर्वोत्तमा मताः ॥ १२ ॥ दर्शनात्स्पर्शनाच्चापि भवतां भोज्यदानतः । वस्त्रपात्रादिदानाच्च भवेत्पुण्यमनन्तकम् ॥ १३ ॥ फलं चानेकयज्ञानां सर्वपापविनाशनम् । स्याद्भवत्सेविनामत्र पुरुषाणां न संशयः ॥१४॥ भवन्मुखोक्तवार्त्तायाः श्रवणान्नमनाच्च वः । आश्रयाद्वा नराणां स्यान्मुक्तिरेव हि संसृतेः ॥ १५ ॥ तीर्थानि पावनानि स्युश्चरणस्पर्शतो हि वः । तरूणामपि मुक्तिः स्यात्तच्छायाफलसेवनात् ॥ १६ ॥

तस्य स्वाश्रितस्य । क्वचित्कदाचिदपि । दुःखहीनत्वं दुःखरहितत्वं । सर्वथा । नैव । भवेत् ॥११॥ मदुक्तेष्विति । मदुक्तेषु मया प्रोक्तेषु । स्वधर्मेषु । दृढस्थितिमतां । वो युष्माकं तु । भिन्ना । एव । प्रक्रिया वार्त्ता । अस्ति । इति । हेतोः । यूयं । सर्वोत्तमाः । मताः । मयेति शेषः ॥१२॥ अत एव भवतां दर्शनादितोऽनन्तफलं भवतीत्याह दर्शनादिति । कुतः । भवतां । दर्शनाच्च । स्पर्शनात् । अपि । भोज्यदानतो भोजनस्य दानतः । च । वस्त्रपात्रादिदानात् । अनन्तकं । पुण्यं । भवेत् । आदिशब्देन फलपुष्पादेर्ग्रहः ॥१३॥ फलमिति । च । भवत्सेविनां । पुरुषाणां । अनेकयज्ञानां । फलं च । सर्वपापविनाशनम् । स्यात् । अत्र । न संशयः ॥१४॥ भवन्मुखोक्तवार्त्ताया इति । भवन्मुखोक्तवार्त्तायाः । श्रवणात् । वो युष्माकं । नमनात् । वाऽथवा । आश्रयात् भवदाश्रयात् । नृणां । संसृतेः । मुक्तिः । स्यात् ॥ १५ ॥ तीर्थानीति । वो युष्माकम् । चरणस्पर्शतः । तीर्थानि । पावनानि पवित्राणि । स्युर्भवेयुः । तरूणां वृक्षाणामपि । तच्छायाफलसेवनात् । मुक्तिः । स्यात् । निश्चितम् ॥ १६ ॥

सर्वा इति । युष्माकं । सर्वाऽपि । क्रिया । नृणां । श्रेयस्करी । अस्ति । हि निश्चितम् । यतो हेतोः । वो युष्माकं । अन्तरे हृदये । साक्षात्प्रत्यक्षम् । नारायणऋषिः । अस्त्येव ॥ १७ ॥ प्रतापादिति । तस्य नारायणऋषेः । प्रतापात् । भवतां । महत्सामर्थ्यम् । अस्ति । वै निश्चितम् । च । सर्वजीवाशयज्ञत्वं सर्वेषां जीवानामाशयोऽभिप्रायस्तस्य वेदनत्वम् । ऐश्वर्यं । दुर्लभं । नास्ति । किन्तु सुलभमेव भगवत्प्रतापादस्तीत्यर्थः ॥ १८ ॥ सर्वेति । सर्वसिद्ध्यधिपत्यं सर्वासां सिद्धिनामधिपतित्वं च । निधीशत्वं निधीनां पद्मशंखादीनां इशत्वं । तथैव । ब्रह्मादीनां । क्रियाः । अपि । वो युष्माकं । सुलभाः । भवन्ति । खलु निश्चितम् । साक्षान्नरनारायणऋषेः प्रतापादिति सर्वत्रानुसङ्गः । 'महापद्मः पद्मश्च शङ्खो मकरकच्छपौ । मुकुन्दकुन्दनीलाश्च खर्वश्च निधयो नवेति' ॥ १९ ॥ किन्त्विति । किन्तु । सर्वं । तदैश्वर्यं तत्तपामैश्वर्यम् । इह । प्रत्यक्षस्य । प्रभोर्भगवतः । सुखाप्तये सुखप्राप्त्यर्थं । नारायणऋषीच्छया । गूढमाच्छादितम् । अस्ति । अन्यथा प्रत्यक्षभगवतः सुखाप्तिर्न स्यादित्यर्थः ॥२०॥ नारायणऋषिरिति । सोऽयं । नारायणऋषिः । वो युष्माकं । प्रत्यक्षं साक्षात् स्वचक्षुर्विषयगोचरं । मिलितोऽस्ति । अतःकारणात् । तमेव

सर्वाऽप्यस्ति हि युष्माकं क्रिया श्रेयस्करी नृणाम् । यतो नारायणऋषिः साक्षादस्त्येव वोऽन्तरे ॥ १७ ॥ प्रतापात्तस्य सामर्थ्यं भवतां चास्ति वै महत् । सर्वजीवाशयज्ञत्वमैश्वर्यं नास्ति दुर्लभम् ॥ १८ ॥ सर्वसिद्ध्यधिपत्यं च निधीशत्वं तथैव वः । ब्रह्मादीनां क्रियाश्चापि भवन्ति सुलभाः खलु ॥१९॥ किन्तु सर्वं तदैश्वर्यं प्रत्यक्षस्य प्रभोरिह । सुखाप्तयेऽस्ति गूढं वै नारायणऋषीच्छया ॥२०॥ नारायणऋषिः सोऽयं प्रत्यक्षं मिलितोऽस्ति वः । अतस्तमेव भजत निश्चिन्ताः सर्वदा दृढम् ॥२१॥ इत्युक्त्वोपरतं तं च वैश्यः पप्रच्छ कश्चन । भजतां वैरभावेन कथं मुक्तिः प्रजायते ॥२२॥ श्रीहरिरुवाच–सर्वासामपि वृत्तीनां हरावेकत्र योजनात् । वैरभावेऽपि स्यान्मुक्तिः ध्रुवं कंसादिनामिव ॥२३॥ मत्स्यवेधे यथा पूर्वं द्रुपदक्ष्मेशवेश्मनि । सर्ववृत्तिनिरोधोऽभूदर्जुनस्य धनुर्भृतः ॥२४॥ तथाचेत्सर्ववृत्तीनामेकत्रैव हरौ भवेत् । निरोधस्तर्हि मुक्तिः स्यान्नान्यथा त्विह वैरिणाम् ॥२५॥

साक्षान्नरनारायणं ऋषिं । निश्चिन्ताः सन्तः । सर्वदा निरन्तरम् । दृढं अत्यन्तं । भजत ॥ २१ ॥ इतीति । इत्युक्त्वा । उपरतं विरामं प्राप्तं । तं श्रीहरिम् । कश्चन । वैश्यः । पप्रच्छापृच्छत् । प्रश्नमितिशेषः । वैरभावेन । भजतां । कथं केन प्रकारेण । मुक्तिर्मोक्षः । प्रजायते ॥ २२ ॥ अथ तदुत्तरमाह श्रीहरिः । सर्वासामिति । सर्वासामपि । वृत्तीनां । हरौ भगवति । एकत्र एकस्मिन् । योजनात् । वैरभावेऽपि । कंसादीनामिव । मुक्तिर्मोक्षः । स्यात् । ध्रुवं निश्चितम् । आदिशब्दः शिशुपालदन्तवक्त्रादेर्ग्रहार्थः ॥ २३ ॥ तत्रान्यतः सर्ववृत्तिनिरोधकृत्त्वैकत्र योजने दृष्टान्तं आह । मत्सवेध इति । यथा पूर्वं । द्रुपदक्ष्मेशवेश्मनि द्रुपदराजगृहे । मत्स्यवेधे । धनुर्भृतः धनुर्धरस्यार्जुनस्य । सर्ववृत्तिनिरोधः सर्वासां वृत्तीनां निरोधः । अभूत् ॥ २४ ॥ तथेति । सिद्धान्तमाह । तथा । सर्ववृत्तीनाम् । एकत्र । हरावेव । निरोधः । भवेच्चेत् । तर्हि । मुक्तिः । स्यात् । अन्यथा तु । इह । वैरिणां । मुक्तिर्न । स्यादित्यर्थः ॥ २५ ॥

अण्डस्मृतिरिति । अतःकारणात् । हरेः प्रत्यक्षभगवतः । अखण्डस्मृतिरविच्युता स्मृतिरेव । श्रेयस्करी कल्याणकर्त्री । मता । वो युष्माकं । सर्वेषामपि । सा प्रत्यक्षभगवति अखण्डस्मृतिरस्ति । अतःकारणादेव । श्रेयः कल्याणम् । जातं । वो युष्माकम् । हि निश्चितम् ॥७॥ तथापीति । तथापि कल्याणं तु सर्वेषां वो मदखण्डस्मृत्या जातमस्ति तथापीत्यर्थः । मत्कृता । धर्ममर्यादा धर्मस्य मर्यादा । भवद्भिः । सर्वप्रकारेण । आदरात् । यावद्देहस्मृतिः । भवेत् । तावत्पर्यन्तमित्यर्थः । पालनीयैव ॥ ८ ॥ अखण्डस्मरमिति । यस्य पुंसः । हरेः प्रत्यक्षभगवतः । अखण्डस्मरणम् । स्यात् । सः । पुरुषोऽपि । यदि । बुद्ध्या ज्ञानतः । वा । प्रमादतोऽज्ञानतोऽपि । धर्महीनः । स्यात् । तथापि । तस्य पुंसः । अपुनर्भवलक्षणम् । श्रेयः कल्याणम् । स्यात् । किन्तु ब्रह्मधामासिरक्षरधामप्राप्तिर्न । स्याच्च । हरेर्भगवतः । एकान्तिकता एकान्तिकभक्तत्वमित्यर्थः । तन्न । स्यादित्यर्थः ॥ ९ ॥ १० ॥ श्रेय इति । च तेन तथाविधेन पुंसा । स्वाश्रितस्यापि । कस्यचित्पुंसः । श्रेयः । नैव । स्यात् ।

अखण्डस्मृतिरेवातो मता श्रेयस्करी हरेः । सर्वेषामपि वः साऽस्ति जातं श्रेयोऽत एव हि ॥ ७ ॥ तथापि धर्ममर्यादा मत्कृता सर्वथाऽऽदरात् । भवद्भिः पालनीयैव यावद्देहस्मृतिर्भवेत् ॥ ८ ॥ अखण्डस्मरणं यस्य हरेः स्यात्सोऽपि पूरुषः । यदि स्वधर्महीनः स्याद् बुद्ध्या वापि प्रमादतः ॥ ९ ॥ तथापि तस्य श्रेयः स्यादपुनर्भवलक्षणम् । किन्तु न ब्रह्मधामाप्तिर्न नैकान्तिकता हरेः ॥ १० ॥ श्रेयश्च स्वाश्रितस्यापि तेन स्यान्नैव कस्यचित् । सर्वथा दुःखहीनत्वं न च तस्य भवेत्क्वचित् ॥ ११ ॥ मदुक्तेषु स्वधर्मेषु दृढस्थितिमतां तु वः । भिन्नैव प्रक्रियाऽस्तीति यूयं सर्वोत्तमा मताः ॥ १२ ॥ दर्शनात्स्पर्शनाच्चापि भवतां भोज्यदानतः । वस्त्रपात्रादिदानाच्च भवेत्पुण्यमनन्तकम् ॥ १३ ॥ फलं चानेकयज्ञानां सर्वपापविनाशनम् । स्याद्भवत्सेविनामत्र पुरुषाणां न संशयः ॥१४॥ भवन्मुखोक्तवार्त्तायाः श्रवणान्नमनाच्च वः । आश्रयाद्वा नराणां स्यान्मुक्तिरेव हि संसृतेः ॥ १५ ॥ तीर्थानि पावनानि स्युश्चरणस्पर्शतो हि वः । तरूणामपि मुक्तिः स्यात्तच्छायाफलसेवनात् ॥ १६ ॥

तस्य स्वाश्रितस्य । क्वचित्कदाचिदपि । दुःखहीनत्वं दुःखरहितत्वं । सर्वथा । नैव । भवेत् ॥११॥ मदुक्तेष्विति । मदुक्तेषु मया प्रोक्तेषु । स्वधर्मेषु । दृढस्थितिमतां । वो युष्माकं तु । भिन्ना । एव । प्रक्रिया वार्त्ता । अस्ति । इति । हेतोः । यूयं । सर्वोत्तमाः । मताः । मयेति शेषः ॥१२॥ अत एव भवतां दर्शनादितोऽनन्तफलं भवतीत्याह दर्शनादिति । कुतः । भवतां । दर्शनाच्च । स्पर्शनात् । अपि । भोज्यदानतो भोजनस्य दानतः । च । वस्त्रपात्रादिदानात् । अनन्तकं । पुण्यं । भवेत् । आदिशब्देन फलपुष्पादेर्ग्रहः ॥१३॥ फलमिति । च । भवत्सेविनां । पुरुषाणां । अनेकयज्ञानां । फलं च । सर्वपापविनाशनम् । स्यात् । अत्र । न संशयः ॥१४॥ भवन्मुखोक्तवार्त्ताया इति । भवन्मुखोक्तवार्त्तायाः । श्रवणात् । वो युष्माकं । नमनात् । वाऽथवा । आश्रयात् भवदाश्रयात् । नृणां । संसृतेः । मुक्तिः । स्यात् ॥ १५ ॥ तीर्थानीति । वो युष्माकम् । चरणस्पर्शतः । तीर्थानि । पावनानि पवित्राणि । स्युर्भवेयुः । तरूणां वृक्षाणामपि । तच्छायाफलसेवनात् । मुक्तिः । स्यात् । निश्चितम् ॥ १६ ॥

सर्वा इति । युष्माकं । सर्वाऽपि । क्रिया । नृणां । श्रेयस्करी । अस्ति । हि निश्चितम् । यतो हेतोः । वो युष्माकं । अन्तरे हृदये । साक्षात्प्रत्यक्षम् । नारायणऋषिः । अस्त्येव ॥ १७ ॥ प्रतापादिति । तस्य नारायणऋषेः । प्रतापात् । भवतां । महत्सामर्थ्यम् । अस्ति । वै निश्चितम् । च । सर्वजीवाशयज्ञत्वं सर्वेषां जीवानामाशयोऽभिप्रायस्तस्य वेदनत्वम् । ऐश्वर्यं । दुर्लभं । नास्ति । किन्तु सुलभमेव भगवत्प्रतापादस्तीत्यर्थः ॥ १८ ॥ सर्वेति । सर्वसिद्ध्यधिपत्यं सर्वासां सिद्धिनामधिपतित्वं च । निधीशत्वं निधीनां पद्मशंखादीनां ईशत्वं । तथैव । ब्रह्मादीनां । क्रियाः । अपि । वो युष्माकं । सुलभाः । भवन्ति । खलु निश्चितम् । साक्षान्नरनारायणऋषेः प्रतापादिति सर्वत्रानुसङ्गः । 'महापद्मः पद्मश्च शङ्खो मकरकच्छपौ । मुकुन्दकुन्दनीलाश्च खर्वश्च निधयो नवेति' ॥ १९ ॥ किन्त्विति । किन्तु । सर्वं । तदैश्वर्यं तत्तपामैश्वर्यम् । इह । प्रत्यक्षस्य । प्रभोर्भगवतः । सुखाप्तये सुखप्राप्त्यर्थं । नारायणऋषीच्छया । गूढमाच्छादितम् । अस्ति । अन्यथा प्रत्यक्षभगवतः सुखाप्तिर्न स्यादित्यर्थः ॥२०॥ नारायणऋषिरिति । सोऽयं । नारायणऋषिः । वो युष्माकं । प्रत्यक्षं साक्षात् स्वचक्षुर्विषयगोचरं । मिलितोऽस्ति । अतःकारणात् । तमेव

सर्वाऽप्यस्ति हि युष्माकं क्रिया श्रेयस्करी नृणाम् । यतो नारायणऋषिः साक्षादस्त्येव वोऽन्तरे ॥ १७ ॥ प्रतापात्तस्य सामर्थ्यं भवतां चास्ति वै महत् । सर्वजीवाशयज्ञत्वमैश्वर्यं नास्ति दुर्लभम् ॥ १८ ॥ सर्वसिद्ध्यधिपत्यं च निधीशत्वं तथैव वः । ब्रह्मादीनां क्रियाश्चापि भवन्ति सुलभाः खलु ॥१९॥ किन्तु सर्वं तदैश्वर्यं प्रत्यक्षस्य प्रभोरिह । सुखाप्तयेऽस्ति गूढं वै नारायणऋषीच्छया ॥२०॥ नारायणऋषिः सोऽयं प्रत्यक्षं मिलितोऽस्ति वः । अतस्तमेव भजत निश्चिन्ताः सर्वदा दृढम् ॥२१॥ इत्युक्त्वोपरतं तं च वैश्यः पप्रच्छ कश्चन। भजतां वैरभावेन कथं मुक्तिः प्रजायते ॥२२॥ श्रीहरिरुवाच–सर्वासामपि वृत्तीनां हरावेकत्र योजनात् । वैरभावेऽपि स्यान्मुक्तिः ध्रुवं कंसादिनामिव ॥२३॥ मत्स्यवेधे यथा पूर्वं द्रुपदक्ष्मेशवेश्मनि । सर्ववृत्तिनिरोधोऽभूदर्जुनस्य धनुर्भृतः ॥२४॥ तथाचेत्सर्ववृत्तीनामेकत्रैव हरौ भवेत् । निरोधस्तर्हि मुक्तिः स्यान्नान्यथा त्विह वैरिणाम् ॥२५॥

साक्षान्नरनारायणं ऋषिं । निश्चिन्ताः सन्तः । सर्वदा निरन्तरम् । दृढं अत्यन्तं । भजत ॥ २१ ॥ इतीति । इत्युक्त्वा । उपरतं विरामं प्राप्तं । तं श्रीहरिम् । कश्चन । वैश्यः । पप्रच्छापृच्छत् । प्रश्नमितिशेषः । वैरभावेन । भजतां । कथं केन प्रकारेण । मुक्तिर्मोक्षः । प्रजायते ॥ २२ ॥ अथ तदुत्तरमाह श्रीहरिः । सर्वासामिति । सर्वासामपि । वृत्तीनां । हरौ भगवति । एकत्र एकस्मिन् । योजनात् । वैरभावेऽपि । कंसादीनामिव । मुक्तिर्मोक्षः । स्यात् । ध्रुवं निश्चितम् । आदिशब्दः शिशुपालदन्तवक्त्रादेर्ग्रहार्थः ॥ २३ ॥ तत्रान्यतः सर्ववृत्तिनिरोधकृत्त्वैकत्र योजने दृष्टान्तं आह । मत्सवेध इति । यथा पूर्वं । द्रुपदक्ष्मेशवेश्मनि द्रुपदराजगृहे । मत्स्यवेधे । धनुर्भृतः धनुर्धरस्यार्जुनस्य । सर्ववृत्तिनिरोधः सर्वासां वृत्तीनां निरोधः । अभूत् ॥ २४ ॥ तथेति । सिद्धान्तमाह । तथा । सर्ववृत्तीनाम् । एकत्र । हरावेव । निरोधः । भवेच्चेत् । तर्हि । मुक्तिः । स्यात् । अन्यथा तु । इह । वैरिणां । मुक्तिर्न । स्यादित्यर्थः ॥ २५ ॥

वैरभावेनेति । वैरभावेन । भजतां नृणां । असुराख्या असुरसंज्ञा तु । कर्हिचित्क्कापि । निवृत्तिं । नैव । प्राप्नुयात् । च । ते पुरुषाः । भक्ताख्यां । नाप्नुयुः । न प्राप्नुवन्तीत्यर्थः ॥ २६ ॥ अत इति । अतःकारणात् । यतात्मभिः । मुमुक्षुभिः पुरुषैस्तु । अत्रास्मिंल्लोके । भक्तपङ्क्तिषु । स्थितये स्थातुमित्यर्थः । भक्तिभावेन । भगवान् । भजनीयः ॥ २७ ॥ उपसंहरति इतीति । इतीत्थं प्रकारेण । सुधया समं अमृतेन तुल्यम् । हरेः प्रत्यक्षभगवतः श्रीस्वामिनारायणस्य । वचनं । निशम्य श्रुत्वा । सदोगताः सभायां स्थिताः । मुनिगणाश्च । सकलाः समग्राः । गृहिजनाः गृहस्थजनाः । परामुत्कृष्टामतितरामित्यर्थः । मुदं हर्षं । समधिगम्य सम्प्राप्य । तं हरिम् । ईश्वरं सर्वनियन्तारम् । ज्ञात्वा । अनमन् नमस्कारं चक्रुरित्यर्थः ॥ २८ ॥ इति श्रीकेशवप्रसादाचार्यविरचितायां श्रीहरिवाक्यसुधासिन्धुटीकायामन्वयदीपिकाख्यायां जयतल्पपुरप्रकरणे चतुर्थस्तरङ्गः ॥ ४ ॥

वैरभावेन भजतामसुराख्या तु कर्हिचित् । निवृत्तिं प्राप्नुयान्नैव भक्ताख्यां ते च नाप्नुयुः ॥ २६ ॥ अतो मुमुक्षुभिस्त्वत्र स्थितये भक्तपङ्क्तिषु । भक्तिभावेन भगवान् भजनीयो यतात्मभिः ॥ २७ ॥ इति हरेर्वचनं सुधया समं मुनिगणास्तु निशम्य सदोगताः । गृहिजनाः सकलाश्च परां मुदं समधिगम्य तमीश्वरमानमन् ॥ २८ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते जयतल्पपुरप्रकरणे चतुर्थस्तरङ्गः ॥ ४ ॥

शकाब्दे विक्रमार्कस्य नेत्राष्टवसुभूमिते । चैत्रस्य शुक्लपञ्चम्यां वचोऽमृतमिदं हरेः ॥ १ ॥
जयतल्पपुरे तत्र राजसौधस्य दक्षिणे । पार्श्वे चतुष्के सत्पीठे न्यषीदत्स उदङ्मुखः ॥ २ ॥
सार्द्धयामनिशि स्वीयैर्भक्तौघैः साधुभिर्वृतः । मुहूर्त्तार्द्धं विचिन्त्यासौ प्रोचे सर्वान्सिताम्बरः ॥ ३ ॥

पञ्चमे श्रीहरिकृष्णस्त्वक्षराधिपतिः स्वयम् । भक्तेभ्यः स्वीयसिद्धान्तं कृपया प्राह धर्मजः ॥ १ ॥ बदरीशावतारस्य श्रेष्ठत्वं चाथ तत्र तु । तेजोगोलोकदर्शनाच्छङ्कितेभ्यः स्वदर्शने । देवानां चागमं प्रोचे कुर्वन्निःसंशयांश्च तान् ॥ २ ॥ शकाब्द इति । पूर्वार्द्धं व्याख्यातम् ( १८८२ ) चैत्रस्य चैत्रमासस्य । शुक्लपञ्चम्यां । हरेः । प्रत्यक्षभगवतः श्रीस्वामिनारायणस्य । इदं वक्ष्यमाणप्रकारं वचोऽमृतं वचनामृतम् । आसीत् इत्यर्थः ॥१॥ तमेव विशिनष्टि । जयतल्पपुर इति । तत्र तस्यां तिथौ स श्रीहरिः । जयतल्पपुरे । राजसौधस्य राज्ञः सौधः मेहेल इति भाषायां तस्य । दक्षिणे । पार्श्वे भागे । चतुष्के चोकइति भाषायां प्रसिद्धस्तत्र । सत्पीठे समीचीने पीठे । उदङ्मुखः उत्तराभिमुखः सन् । न्यषीदत् ॥ २ ॥ सार्द्धयामेति । सार्द्धयामनिशि सार्द्धप्रहररात्रौ । सिताम्बरः श्वेतवस्त्रः । स्वीयैः स्वकीयैः । साधुभिः । भक्तौघैः भक्तसमूहैः । वृतः । असौ श्रीहरिः । मुहूर्त्तार्द्धं । घटीकैकं तावन्मात्रमित्यर्थः । विचिन्त्य चिन्तयित्वा । तत इतिशेषः । सर्वान्भक्तान्प्रति । प्रोचे ॥ ३ ॥

श्रूयतामिति । श्रूयतां । अद्याधुना । नोऽस्माकं । यादृक् । सिद्धान्तोऽस्ति । तं सिद्धान्तं । ब्रुवे । नृणां मनुष्याणाम् । हरिः परमेश्वरः । भजनीयः । अतः । अधिकं । परं श्रेष्ठं । नास्ति ॥ ४ ॥ यत इति । यतो हेतोः । तस्य हरेः । कृतं । सर्वं समग्रम् । भवत्येव । न चान्यथा अन्यस्य कृतं न भवति । अस्मिंस्तु । समये । अस्याः । सदः सभाया अपि । कृतं । भवतीत्यर्थः ॥ ५ ॥ तथेति । तथा च । नरनारायणस्य । प्रतापेन । अस्माकं । कृतमपि । भवति । तत्कथयामि । निशम्यतां श्रूयताम् ॥ ६ ॥ कुर्वे इति । अहं । मनसि । यथैव । सङ्कल्पं । कुर्वे । तथैव । अत्र जगति । प्रवर्त्तते । यथा । अन्तः अन्तः-करणे । धार्यते । तद्वत् । यथार्थतः यथार्थतया । भवत्येव । अपि च नाधिकन्यूनतया भवतीत्यर्थः ॥ ७ ॥ तदेव व्याकरोति तु राज्यप्राप्तिरित्यादिभिः । अस्य पुंसः । राज्यप्राप्तिर्भवतु । तस्य पुरुषस्य । तज्जायते तद्राज्यप्राप्तिर्भवत्येव । ध्रुवं निश्चितम् । अस्य पुंसः । राज्यं तु । गच्छतु । तस्य पुंसः । तद्राज्यम् । गच्छ-

श्रूयतामद्य नो यादृग्सिद्धान्तोऽस्ति च तं ब्रुवे । भजनीयो हरिर्नृणामतो नास्त्यधिकं परम् ॥ ४ ॥
यतस्तस्य कृतं सर्वं भवत्येव न चान्यथा । कृतं भवति चास्मिंस्तु समयेऽस्याः सदोऽपि च ॥ ५ ॥
तथाऽस्माकं कृतमपि नरनारायणस्य च । प्रतापेन भवति तत्कथयामि निशम्यताम् ॥ ६ ॥
कुर्वे मनसि सङ्कल्पं तथैवात्र प्रवर्त्तते । यथाऽन्तर्धार्यते तद्वद्भवत्येव यथार्थतः ॥ ७ ॥
राज्यप्राप्तिर्भवत्वस्य तस्य तज्जायते ध्रुवम् । गच्छत्वस्य राज्यं तु गच्छत्यपि हि तस्य तत् ॥ ८ ॥
अत्राद्यैतावती वृष्टिर्भवत्विति च धार्यते । तदैव तावती तत्र वृष्टिः सञ्जायते ध्रुवम् ॥ ९ ॥
नात्र वृष्टिर्भवत्विति न तत्र जायते हि सा । धनप्राप्तिर्भवत्वस्य तत्प्राप्तिस्तस्य जायते ॥ १० ॥
धनं नास्य भवत्विति तस्य तन्न भवत्यपि । अस्त्वस्य पुत्रस्तत्पुत्रो भवत्येव न संशय ॥ ११ ॥

त्यपि । हि निश्चितम् ॥ ८ ॥ अत्रेति । अत्र अस्मिन्लोके । अद्याधुना । एतावती एतावत्परिमिता । वृष्टिः । भवतु । इति । धार्यते । तदैव तत्समये । एव । तत्र तस्मिन्स्थले । तावती तावत्परिमिता । वृष्टिः । सञ्जायते । ध्रुवं निश्चितम् ॥ ९ ॥ नेति । अत्रास्मिन्स्थले तु । वृष्टिः । न भवतु । इतीत्थं प्रकारेण । धार्यते । तत्र तस्मिन्स्थले । सा वृष्टिः । न जायते । हि निश्चितम् । अस्य पुंसः । धनप्राप्तिः धनस्य प्राप्तिः । भवतु । इति च । धार्यते । तस्य पुंसः । तत्प्राप्तिस्तत्तस्य धनस्य प्राप्तिः । जायते ॥ १० ॥ धनमिति । अस्य पुंसः । धनं । न । भवतु । इति धार्यते । तस्य पुरुषस्य । तद्धनं । नापि । भवति । अस्य पुरुषस्य । पुत्रः । अस्तु । तत्पुत्रस्तत्तस्य पुरुषस्य पुत्रः । भवत्येव । न संशयः ॥ ११ ॥

नेति । अस्य । पुंसः । पुत्रः । न भवेत् । तस्य पुंसः । नापि । भवति । एव । निश्चितम् । अस्य पुंसः । रोगो व्याधिः । अस्तु भवतु । तस्य पुंसः । व्याधिः । भवेत् । अनिच्छितस्य पुंसः । न । भवति । यस्य पुंसो रोगो नेच्छामि तस्य पुंसस्तद्रोगो न भवतीतिभावः ॥१२॥ इत्थमेवं प्रकारेण । मया । मनसि । यत् । धार्यते । तत् । प्रजायते । यद्यत् मया मनसि धार्यते तत्तत्प्रजायते । यदीति । अत्र । यदि । यूयं । एवमित्थं वक्ष्यमाणप्रकारेण कथयिष्यथ । इह । सत्सङ्गिनां कथम् ॥ १३॥ सुखमिति । सुखं । दुःखं । च रोगादेः । प्राप्तिः । च । धनसम्पदो द्रव्यैश्वर्यस्य । हानिः नाशः । भवति । यत्नादपि स च यत्नादुद्योगादपि । दरिद्रः पुरुषः । धनी धनवान् । न भवेत् ॥ १४ ॥ तत्रेति । तत्राहं । वच्मि । शृणुत । तस्य तु । इदृशं कारणमस्ति । हि यस्मात्कारणात् । अस्य पुंसः । परमात्मनः हरेर्भगवतः । भजने । यावती । न्यूनताऽस्ति ॥ १५ ॥ तावतीति । अस्य पुंसः । सर्वास्वपि । क्रियासु धनप्राप्त्यादिषु । चकारात् । मोक्षादावपि । तावती । न्यूनताऽस्ति । हरेर्भगवतस्तु । अस्य सत्सङ्गिजनस्य । सम्यगेव समीचीनमेव । कर्त्तव्यमस्ति । अन्यथा । न नास्ति । हरेस्तु तस्य विपरीतं कर्त्तव्यं नास्तीतिभावः ॥ १६ ॥

नास्य पुत्रो भवेत्तस्य पुत्रो नैव भविष्यति । रोगोऽस्यास्तु च तस्य स भवेदनिच्छितस्य न ॥ १२ ॥ इत्थं मया मनसी यद्धार्यते तत्प्रजायते । यद्येवं कथयिष्यथ त्विह सत्सङ्गिनां कथम् ॥ १३ ॥ सुखं दुःखं च रोगादेः प्राप्तिश्च धनसम्पदः । हानिर्भवत्यपि यत्नाद्दरिद्रो न धनी भवेत् ॥ १४ ॥ तत्राहं वच्मि शृणुत ह्येतस्य त्वस्ति चेदृशम् । यावत्यस्य न्यूनताऽस्ति भजने परमात्मनः ॥ १५ ॥ तावत्तस्य न्यूनताऽस्ति सर्वास्वपि क्रियासु च । हरेस्त्वस्य सम्यगेव कर्त्तव्यमस्ति नान्यथा ॥ १६ ॥ शूलिकायाश्च यद्दुःखं कण्टकेनाश्रितस्य च । अपानुदतीदृशोऽस्ति नित्यं भक्तप्रियो हरिः ॥ १७ ॥ वयं त्वेवं हि जानीमो या सत्सङ्गिजनस्य च । एकवृश्चिकजा पीडा सहस्रगुणी साऽस्तु नः ॥ १८ ॥ अप्यसौ दुःखनिर्मुक्तो भवत्वस्तु सुखी सदा । एवं गुरोरपि वरो गृहितोऽस्ति मया पुरा ॥ १९ ॥

ननु भगवतस्तु किं कर्त्तव्यमस्ति तदाह । शूलिकाया इति । हरिर्भगवांस्तु । आश्रितस्य स्वाश्रितजनस्य । शूलिकायाः । चकारादन्यत्ततोऽधिकमपि यद्दुःखं । तत् । कण्टकेन । अपानुदति । इदृशः । नित्यं । भक्तप्रियः । हरिः । अस्ति । हरिस्तु नित्यं सदैव भक्तप्रियोऽस्तीतिभावः ॥ १७ ॥ वयमिति । वयं तु । एवं वक्ष्यमाणप्रकारेण । जानीमः । हि निश्चितम् । किं तत्तदाह । या । सत्सङ्गिजनस्य । एकवृश्चिकजाः । पीडा व्यथा । सा पीडा । अस्माकं । सहस्रगुणी सहस्रगुणिता । अस्तु ॥ १८ ॥ अपीति । अपि । असौ भक्तः । दुःखनिर्मुक्तः । भवतु । सदा । सुखी । अस्तु । एवं इत्थं प्रकारः । गुरोः रामानन्दस्वामिनः । अपि । वरः । मया । पुरा पूर्वं । गृहितोऽस्ति । तदेव वरमाह सत्सङ्गिजीवने प्रथमप्रकरणे एकोनपष्ठितमाध्याये । 'क्वचिदपि भुवि कृष्णभक्तिभाजां निजकृतकर्मवशादवश्यभोग्यम् । इह यदुरु तथाऽन्नवस्त्रदुःखं तदपि ममास्तु न तु प्रजेश ! तेषा''मिति ॥ १९ ॥

सर्वेषामिति । सर्वेषां । शुभं । यादृक् । स्यात् । तथा । नोऽस्माकं दृष्टिरस्ति । च यथा । हरौ भगवति । जीववृत्तिः । सदा निरन्तरम् । स्यात् । तत्तथा । यतामहे यत्नं कुर्महे ॥ २० ॥ तत्र हेतुमाह । यत इति द्वाभ्यां । यतो हेतोः । अहं तु । त्रिकालेऽपि भूतभविष्यवर्त्तमानकालेऽपि । सर्वशः । क्रियां । जानामि । इहात्र । स्थितः सन्नपि । सर्वं । वेद्मि जानामि । मातुः जनन्याः । गर्भगतः सन्नपि । अहं । सर्वं । अविदन् । तत्पूर्वमेव मातुर्गर्भगमनात्पूर्वमेवापि । सर्वमेव । यथातथं यथार्थतया । अहमविदन्निति सम्बन्धः । यतो हेतोः । अहं । भगवान्नरनारायणः । ऋषिः । अस्मि ॥ २१ ॥ २२ ॥ तत इति । ततः कारणात् । यः कश्चित् । महापापी महापापयुक्तश्चेदपि । सः । अस्मदीयाश्रयं । गतः प्राप्तश्चेदित्यर्थः । धर्मनियमे मत्कृद्धर्मनि-

सर्वेषां च शुभं यादृक् स्यात्तथा दृष्टिरस्ति नः । यथा हरौ जीववृत्तिः स्यात्सदा तद्यतामहे ॥ २० ॥
यतोऽहं त्रिकालेऽपि क्रियां जानामि सर्वशः । इहास्थितो वेद्मि सर्वं मातुर्गर्भगतोऽप्यहम् ॥ २१ ॥ अविदंस्त-
त्पूर्वमेव सर्वं चैव यथा तथम् । यतोऽहमस्मि भगवान्नरनारायण ऋषिः ॥२२॥ ततो यश्चेन्महापापी सोऽस्म-
दीयाश्रयं गतः । स्थास्यति धर्मनियमे तं प्राप्स्यामोऽक्षरे हरेः ॥ २३ ॥ यश्चाक्षरपतिः कृष्णो भगवान्पुरुषो-
त्तमः । सोऽभुद्धर्मान्मूर्त्तिदेव्यां नरनारायणात्मना ॥ २४ ॥ गत्वा चक्रे विशालायां तपो लोकहितावहम् ।
सैव दुर्वाससः शापात्स्वयं नारायणो मुनिः ॥ २५ ॥ धर्माद्भक्त्यां धर्मपोष्टा धर्मसंरक्षणाय च । पाषण्डोच्छेदको
भूत्वा सदस्यत्र विराजते ॥ २६ ॥ इत्युक्त्वा निजभक्तान्स कृत्वाऽऽनन्दयुतान्पुनः । अब्रवीद्यद्वयं श्रीमन्नरनारा
यणस्य च ॥ २७ ॥ मुहुश्च स्थापनं कुर्मस्तस्य हार्दं च श्रूयताम् । यश्चाक्षरपतिः कृष्णो भगवान्पुरुषोत्तमः
॥ २८ ॥ नरनारायणोऽत्रैव राजते सदसि सदा । तदर्थं तस्य मुख्यत्वं मानयामो मुहुर्मुहुः ॥ २९ ॥

यमस्तत्र । स्थास्यति । तं नरं । हरेर्भगवतः । अक्षरे धाम्नि । प्राप्स्यामः ॥२३॥ य इति । अक्षरपतिः । कृष्णः । भगवान् । पुरुषोत्तमः । सः । धर्मात् । मूर्त्तिदेव्याम् । नरनारायणात्मना नरनारायणस्वरूपेण । अभूत्प्रादुर्बभौ ॥ २४ ॥ गत्वेति । विशालायां बदरीकाश्रमे । गत्वा । लोकहितावहं लोकहितकरम् । तपः । चक्रे । स एव । नारायणमुनिः । दुर्वाससः । शापात् ॥ २५ ॥ धर्मादिति । धर्मात् धर्मदेवतः । भक्त्यां । भूत्वा । धर्मपोष्टा धर्मपोषणकरः सन् । धर्मरक्षणाय चकाराद्-धर्ममुन्मूलयितुं च । पाषण्डोच्छेदकः पाषण्डानां मतानामुच्छेदकः सन् । अत्रास्यां । सदसि । विराजते विशेषेण राजते ॥ २६ ॥ इतीति । इति । इत्थं प्रकारेण । उक्त्वा । स श्रीहरिः । निजभक्तान् । आनन्दयुतान् । कृत्वा । पुनः । अब्रवीत्तान्भक्तानिति सम्बन्धः । किं तत्तदाह । यत् । वयं । श्रीमत् । नरनारायणस्य

मुहुश्च स्थापनं । कूर्मः । तस्य । हार्दं रहस्यं । श्रूयताम् । यश्चाक्षरपतिः । कृष्णः । भगवान्पुरुषोत्तमः । स एव । भगवान् । नरनारायणः । अत्रैव । सदसि सभायां । सदा सर्वकालं । राजते वर्त्तते । तदर्थं तस्मादर्थहेतोः । तस्य श्रीनरनारायणस्य । मुख्यत्वं । मुहुर्मुहुर्वारंवारः । मानयामः ॥ २७ ॥ २८ ॥ २९ ॥ तत इति । ततस्तस्मात्कारणात् । अस्मद्रूपं । तं । ज्ञात्वा । च लक्षशः । धनस्य द्रव्यस्य । व्ययं । कृत्वा । अमदापुरे । मन्दिरं कारितम् ॥ ३० ॥ नरनारायणस्येति । आदौ प्रथमं । तत्र । नरनारायणस्य । स्थापनं । कृतम् । च । स श्रीनरनारायणः । अनताण्डराजास्ति । अनन्तानां अण्डानां ब्रह्माण्डानां राजाऽधिपतिरस्तीत्यर्थः । भारते भरताह्वये खण्डे तु । विशेषतः । नरनारायणः । राजाऽस्ति ॥ ३१ ॥ तमिति । तं श्रीभरतखण्डाधिपं श्रीनरनारायणं भगवन्तं । विहाय त्यक्त्वा । अत्रास्मिल्लोके । यस्तु पुमान् । अन्यं । देवं । वै निश्चियेन । भजेत् भजनं कुर्यात् । स तु पुमान् । यथा भार्या । पतिं स्वपाणिगृहीतारं । हित्वा । जारं अन्यपतिं । सेवेत् । तथाऽस्ति । हि निश्चितम् ॥ ३२ ॥ इह इति । इहास्मिन्भारते । वर्षे खण्डे । नरनारायणः । अधिराट् । वर्त्तते । अधिष्ठाताऽस्ति । वै निश्चितम् । तत्तु । भाग-

ततोऽस्मद्रूपं तं ज्ञात्वा व्ययं कृत्वा च लक्षशः । धनस्य मन्दिरं श्रेष्ठ कारितं त्वमदापुरे ॥ ३० ॥
नरनारायणस्यादौ तत्र संस्थापनं कृतम् । स चानन्ताण्डराजाऽस्ति भारते तु विशेषतः ॥ ३१ ॥
तं विहायात्र यस्त्वन्यं देवं वै भजते स तु । यथा भार्या पतिं हित्वा जारं सेवेत्तथाऽस्ति हि ॥ ३२ ॥
इह वै भारते वर्षे नरनारायणोऽधिराट् । वर्त्तते तत्तु कथितं भृशं भागवतेऽपि च ॥ ३३ ॥
वयं चेतैः समं सद्भिर्जीवानां श्रेयसे त्विह । सम्भूताः स्मोऽतो नो वाक्यमिदं सम्मानयिष्यथ ॥ ३४ ॥
चेत्तु सर्वान्निजे धाम्नि नयिष्यामो न संशय । कल्याणं च निजं जातमिति वोऽपि भविष्यति ॥ ३५ ॥

वते श्रीमद्भागवते । अपि । भृशं बहुशः । कथितं । चकाराद्भारतादावपि कथितमस्तीत्यर्थः । तदुक्तं श्रीमद्भागवते पञ्चमस्कन्धे एकोनविंशेऽध्याये । "भारतेऽपि वर्षे भगवान्नरनारायणाख्य आकल्पान्तमुपचितधर्मज्ञानवैराग्यैश्वर्योपशमोपरमात्मोपलम्भनमनुग्रहायात्मवतामनुकम्पया तपोऽव्यक्तगतिश्चरति ॥ १ ॥ तं भगवान्नारदो वर्णाश्रमवतीमिर्भारतीभिः प्रजाभिर्भगवत्प्रोक्ताभ्यां सांख्ययोगाभ्यां भगवदनुभावोपर्णनं सावर्णेरुपदेक्ष्यमाणः परमभक्तिभावेनोपसरति इदं चाभिगृहाति" । इति । विस्तरस्तु भागवतादवगन्तव्यः ॥ ३३ ॥ वयमिति । वयं तु । एतैः । सद्भिः साधुभिः । समं । जीवानां । श्रेयसे कल्याणाय । इह । सम्भूताः स्मः । अतःकारणात् । नोऽस्माकं । इदं उक्तप्रकारं । वाक्यं । सम्मानयिष्यथ । चेदित्यग्रीमश्लोकेन सम्बन्धः ॥ ३४ ॥ चेदिति । तर्हि तु । सर्वान्भक्तान् । निजे स्वीये । धाम्नि अक्षराभिधे । नयिष्यामः । न संशयः । च । वः युष्माकमपि । निजं स्वीयं । कल्याणं । जातमिति । भविष्यति ॥ ३५ ॥

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.

ईदृगिति । यूयं । ईदृक् एतादृशं । नोऽस्माकं । दृढविश्वासं । यदि यर्हि । रक्ष्यथ रक्षिष्यथ । च । यदि यर्हि । मत्कृतधर्मादिनियमान् । पालयिष्यथ ॥ ३६ ॥ दुष्कालत इति । तर्हि । सप्तेभ्यः । अपि । दुष्कालतः । रक्षिष्यामः । न संशयः । अन्यथा तु एवं यदि अस्माकं दृढविश्वासं न रक्षिष्यथ चेत्तर्हि तु इत्यर्थः । यूयं । महद् दुखं । प्राप्स्यथ । निश्चितम् ॥ ३७ ॥ नेति । नोऽस्माकं । तत्र । अल्पः । अपि । दोषः । न नास्तीत्यर्थः । यतो हेतोः । तत्रेति सम्बन्धः । मे मम । स्वार्थता । नास्ति । वयं तु । जीवानां । श्रेयसे । सदैव । यतामहे । तद्दर्शयति । जीवानामिति । जीवानां । श्रेयसे कल्याणाय तु । अस्माभिः । इहास्मिञ्जयतल्पपुरे । कतिचित् । वर्षात् । वसामः । च । कतिचित् । यज्ञाः । कृताः । अस्मिन्सरोवरे । सद्भिः साधुभिः । सह । भूरिशो बहुशः । स्नानं । कृतम् ॥ ३८ ॥ ३९ ॥ गृहे इति । गृहे गृहे । शतशः शतशो वारं । अभुञ्जत । तथा । अगमन् गृहे गृहे शतशो वारं गताः । हि निश्चितम् । पुरस्य

इदृग्नो दृढविश्वासं यदि यूयं च रक्ष्यथ । यदि मत्कृतधर्मादिनियमान्पालयिष्यथ ॥ ३६ ॥
दुष्कालतोऽपि सप्तेभ्यो रक्षिष्यामो न संशयः । अन्यथा तु महद्दुःखं यूयं प्राप्स्यथ निश्चितम् ॥ ३७ ॥
न तत्राल्पदोषोऽपि यतो मे नोऽस्ति स्वार्थता । जीवानां श्रेयसेऽस्माभिर्जयतल्पपुरे त्विह ॥ ३८ ॥
वसामः कतिचिद्वर्षाद्यज्ञाश्च कतिचित्कृताः । अस्मिन्सरोवरे सद्भिः स्नानं च भूरिशः कृतम् ॥ ३९ ॥
गृहे गृहे तु शतशो ह्यभुञ्जतागमंस्तथा । पुरस्यापि च या सीमा वृन्दारण्याद्वरीकृता ॥ ४० ॥
इत्थं च क्रियमाणायां वार्तायां हरिणा तदा । आकाशे तेजसश्चैको महान्गोलो ह्यदृश्यत ॥ ४१ ॥
ततस्तस्मात्त्रयो जाता गोलकास्तेऽतितेजसः । राजसौधोपरि व्योम्नि मुहूर्तार्द्धं त्वदृश्यत ॥ ४२ ॥
ततोऽदृश्यत्वमापन्नास्ततः सर्वेऽवदन् हरिम् । किमेतद्गगन्नासीदिति पृष्टः स उचिवान् ॥ ४३ ॥

जयतल्पपुरस्य । या । सीमा उपशल्यम् । वृन्दारण्याद्वरीकृता वृन्दावनतोऽधिका कृता ॥ ४० ॥ इत्थमिति । इत्थं प्रकारेण । हरिणा श्रीसहजानन्दस्वामिना भगवता । वार्तायां क्रियमाणायां सत्यां । तदा तर्हि । तत्समये इत्यर्थः । आकाशे । च । एकः । तेजसः । महान् । गोलकः । अदृश्यत । हि निश्चितम् ॥ ४१ ॥ तत इति । ततस्तदनन्तरम् । तस्मात् गोलकात् । त्रयः । गोलकाः । जाताः । अतितेजसः । ते त्रयो गोलकाः । राजसौधोपरि । व्योम्नि आकाशे । मुहूर्तार्द्धं घटिकैकपर्यन्तं तु । अदृश्यत ॥ ४२ ॥ तत इति । ततस्तदनन्तरम् । अदृश्यत्वं । आपन्नाः प्राप्ताः । ततः । सर्वे जनाः । हरिं प्रति । अवदन् । हे भगवन् । एतत् । किमासीत् । इति । पृष्टः । स श्रीहरिः । उवाच ॥ ४३ ॥

ब्रह्मेति । ब्रह्मा । च विष्णुस्तथा शम्भुः । त्रयः । देवाः । नित्यशः । एतत्सतां । सदः सभायाश्च । मे मम । दर्शने । उपागच्छन्ति । हि निश्चितम् अपीति । अपि । अद्य तु । हरीच्छया । विमानैस्तेऽदृश्यन्त । हि निश्चितम् ॥ ४४ ॥ उपसंहरति । इतीति । इतीव । तस्य श्रीहरेः प्रत्यक्षभगवतः श्रीस्वामिनारायणस्य । अमृततुल्यवाचं वचनामृतं । निपीय पीत्वा । सन्तः साधवश्च । सर्वे । गृहिणो गृहस्थाश्च । परां उत्कृष्टां । मुदं हर्षमापुः । च । अमुं श्रीहरिं ।

ब्रह्माविष्णुस्तथा शम्भुस्त्रयो देवाश्च नित्यशः । एतत्सतां सदो मे च ह्युपागच्छन्ति दर्शने
अप्यद्य तु विमानैस्ते ह्यदृश्यन्त हरीच्छया ॥ ४४ ॥ इतीव तस्यामृततुल्यवाचं निपीय
सन्तो गृहिणश्च सर्वे । परां मुदं प्रापुरमुं च नेमुस्तमेव स्वेष्टं दधुरन्तरे स्वे ॥ ४५ ॥

इति श्रीहरिवाक्यसुधासिंधौ शतानन्दमुनिविरचिते जयतल्पपुरप्रकरणे पञ्चमस्तरङ्गः ॥ ५ ॥

नेमुः नमस्कारं चक्रुः । तमेव स्वामिनारायणम् । स्वेष्टं । स्वेऽन्तरे स्वीयेऽन्तःकरणे । दधुः धारयामासुः ॥ ४५ ॥ इति श्रीमदौद्धवीयसम्प्रदायप्रवर्त्तक प्रत्यक्षपुरुषोत्तमात्मज श्रीमदयोध्याप्रसादाचार्यात्मज श्रीमत्केशवप्रसादाचार्यविरचितायां श्रीहरिवाक्यसुधासिंधुटीकायामन्वयदीपिकाख्यायां जयतल्पपुरप्रकरणे पञ्चमस्तरङ्गः ॥ ५ ॥

## ॥ जयतल्पपुर प्रकरणं समाप्तम् ॥

# ॥ दुर्गपुर – अन्त्य प्रकरणम् ॥

॥ श्री स्वामिनारायणनमोनमः ॥ श्रीहरिकृष्णायनमोनमः ॥ स्वीये पदे योऽक्षरनाम्नि दिव्ये सदा स्थितस्तत्स्थितमुक्तवृन्दैः । संसेवितो भक्तिभरेण वन्दे तं भक्तिधर्मात्मजमिष्टदेवम् ॥ १ ॥ यः पाययित्वा स्ववचोऽमृतानि हृष्टान्स्वकीयान्विदधे । दयाऽब्धिः । सोऽनन्यभक्त्या हृदि मेऽस्त्वजस्रं पिता हरिः स्वीयजनैकनाथः ॥ २ ॥ एकोनचत्वारिंशद्ये पुनदुर्गपुरीयकाः । हरिवाक्यसुधासिन्धोस्तरङ्गा विवृणोमि तान् ॥ ३ ॥ तत्र तु प्रथमे ज्ञानवैराग्याभ्यामविक्षतिः । असद्देशादि-योगेऽपि भक्तेः प्रोक्ता सहेतुका ॥ ४ ॥ तथाऽत्रैवाङ्गयोर्ज्ञानप्रीत्योरुक्ते तु लक्षणे । शिक्षापन्याश्च पाठादेः प्रोक्ताऽऽवश्यकता तथा ॥ ४ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् ( १८८२ ) राधकृष्णे वैशाखमासस्य कृष्णपक्षे । एकादश्यां तिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमस्य । महीभुजः । दुर्गे । वासुदेवालयस्य अग्रेऽग्रप्रदेशवर्त्तिप्रत्यग्द्वारभवनबहिर्वेद्यामित्यर्थः । वरासने उत्तमास्तरणीयाच्छादितोत्तमपर्यङ्कासने । स श्रीहरिः । न्यषी-

> शकाब्दे विक्रमार्कस्य नेत्राष्टवसुभूमिते । एकादश्यां राधकृष्णे वचोऽमृतमिदं हरेः ॥ १ ॥ तत्र दुर्गपुरे दुर्ग उत्त-
> मस्य महीभुजः । वासुदेवालयस्याग्रे स न्यषीदद्वरासने ॥ २ ॥ सन्मल्लिकासुमनसां हारशेखरदोःस्रजः । यथास्थानं
> दधच्छ्वेतवासा भक्तगणावृतः ॥ ३ ॥ स पप्रच्छ सतो भक्तिः केनोपायेन कर्हिचित् । असतो देशकालादेर्योगेऽपि
> नाप्नुयात्क्षतिम् ॥ ४ ॥ ततस्तदुत्तरं कर्त्तुमशक्तांस्तांस्तदाह सः । आत्मज्ञानेन वैराग्ययुजा क्वापि न तत्क्षतिः
> ॥ ५ ॥ विना विरक्तिं भक्तस्य मायिकेऽर्थेऽपि नश्वरे । प्रीतिर्भगवतीव स्यात्ततः पातः सदध्वनः ॥ ६ ॥

दत् ॥ २ ॥ तं विशिनष्टि । सदिति । सन्मल्लिकासुमनसामुत्तमकुन्दकुसुमानाम् । हारशेखरदोःस्रजः । यथास्थानम् । दधत् । तत्रायं विवेकः । कण्ठे हारमुष्णीषे शेखरं प्रकोष्ठयोर्वलये इति । श्वेतवासाः परिहितसकलश्वेतवसनः । भक्तगणावृतो नानादेशागतस्वाश्रितत्यागिगृहिजनवृन्दैः सभायां संवेष्टितः ॥ ३ ॥ स इति । स श्रीहरिः । सतः साधून् । पप्रच्छ । हे साधवः ! । कर्हिचित् । असतोऽशुभस्य । देशकालादेः । योगे सम्बन्धे सत्यपि । भक्तिः । क्षतिं तथाविधविघ्नप्राचुर्येण विनाशमित्यर्थः । केन । उपायेन । नाप्नुयात् ॥ ४ ॥ ततइति । तत एवंविधप्रश्नाचरणानन्तरम् । तदुत्तरं स्वकृतप्रश्नप्रतिवचनम् । कर्त्तुम् । अशक्तान् । तान्साधून् । तत्स्वकृतप्रश्नोत्तरम् । स श्रीहरिरेव । आह । हे साधवः ! । वैराग्ययुजा मायिकविषयविरक्तियुक्तेन । आत्मज्ञानेन । क्वाप्यसद्देशकालादिविघ्नयोगे सत्यपि । तत्क्षतिर्भक्तेर्विनाशः । न स्यात् ॥ ५ ॥ तदुभयं विना भक्तौ विघ्नप्रकारमाह द्वाभ्याम् । विनेति । विरक्तिं विना । भक्तस्य । नश्वरेऽपि । मायिके । अर्थे रमणीयपदार्थे । भगवतीव । प्रीतिः । स्यात् । ततस्तदनन्तरम् । सदध्वनः स्वकल्याणहेतुसत्सङ्गमार्गात्सकाशात् । पातः पतनम् । स्यात् ॥ ६ ॥

आत्मेति । आत्मज्ञानं विना तु । यदा । दैहं देहसम्बन्धि । सुखम् । दुःखम् । आपतेत् । तदा । भक्तोऽपि । हर्षशोकाभ्याम् । विह्वलतां व्याकुलताम् । इयात् ॥७॥ ततइति । ततोहेतोः । तदुभयेन । वैराग्यात्मज्ञानाभ्यामेव । भक्तिः निर्विघ्नताम् । इयात् । प्रचुरविघ्नोपनिपाते सत्यपि विनाशं न यायादित्यर्थः । ततोहेतोः । भक्तः एतद्वैराग्यात्मज्ञानलक्षणम् । साधनमेव । धिया सदसद्विवेकवत्या स्वमत्या । द्रढयेत् ॥ ८ ॥ अथ वैराग्यात्मज्ञानयोर्दृढत्वेन भक्तौ विघ्नाभावमाह द्वाभ्याम् । विरक्त्येति । विरक्त्या । सर्वशः सर्वेऽपि । मायिकाः । भगवन्मूर्त्तीतराकाराः मिथ्या कालविधेयचतुर्विधप्रलयदुःखदोषानुदर्शनेनैवासत्याः । क्रियन्ते । ततोहेतोः । तेषु भगवन्मूर्त्तीतरेषु मायिकाकारेषु । रुचिः प्रीतिः । न स्यात् ॥ ९ ॥ तथेति । तथा तेन प्रकारेण । आत्मावबोधेन । मायिकम् । सुखम् । दुःखम् । भक्तस्य । मिथ्यैव । भवेत् । आत्मसुखाग्रे मायिकसुखदुःखयोरतितुच्छत्वान्मिथ्यात्वमितिभावः । ततो हेतोः । विह्वलता मायिकसुखदुःखजातहर्षशोकाभ्यां विह्वलत्वम् न स्यात् ॥ १० ॥ एतद् द्वयं विना तु निर्विकल्पसमाधिमतामपि व्युत्थानकाले मायिकार्थरुचिः स्यात् तर्हि अन्येषां का वार्त्तेत्याह । ऐतदिति । यो भक्तः ।एतद् द्वयं विना ।

आत्मज्ञानं विना दैहं सुखं दुःखं यदाऽऽपतेत् । भक्तोऽपि हर्षशोकाभ्यां तदा विह्वलतामियात् ॥ ७ ॥ ततस्तदुभयेनैव भक्तिर्निर्विघ्नतामियात् । एतदेव ततो भक्तः साधनं द्रढयेद्धिया ॥८॥ विरक्त्या भगवन्मूर्त्तीतराकाराश्च सर्वशः । क्रियन्ते मायिका मिथ्या न स्यात्तेषु ततो रुचिः ॥९॥ तथैवात्मावबोधेन सुखं दुःखं च मायिकम् । भवेद्भक्तस्य मिथ्यैव स्यान्न विह्वलता ततः ॥१०॥ एतद् द्वयं विना यस्तु निर्विकल्पसमाधिमान् । सोऽपि व्युत्थानकाले स्यात्प्राकृतार्थरुचिः किल ॥ ११ ॥ अथ ये भगवद्भक्तास्तेषामङ्गे उभे मते । ज्ञानं प्रीतिश्चेति ते तु कर्त्तव्ये सुदृढे च तैः ॥ १२ ॥ ज्ञानाङ्गं तु भवेद्येषां माहात्म्यातिशयं हरेः । विदुस्तेऽथ क्षणमपि प्रीत्यङ्गाः स्युर्न तं विना ॥१३॥ हेमन्तसिंहभूपाद्यास्तत्राद्याङ्गा अमी स्थिताः । सच्चिदानन्दमुख्याश्च द्वितीयाङ्गा भवन्त्यमी ॥१४॥

निर्विकल्पसमाधिमान् साक्षाद्भगवदनुग्रहेण सञ्जातनिर्विकल्पसमाधिः । स्यात् । स तथाविधो भक्तोऽपि । व्युत्थानकाले समाधेर्बहिर्निष्क्रमणवेलायाम् । प्राकृतार्थरुचिर्मायिकपदार्थप्रीतियुक्तः । स्यात् । किल ॥११॥ अथेति । अथेति भिन्नोपक्रमे । ये । भगवद्भक्ताः । स्युः । तेषाम् । ज्ञानम् । प्रीतिश्च । इत्येवंविधे । उभे । अङ्गे स्थिती । मते । ते अङ्गे । तैर्भक्तैः । सुदृढे । कर्त्तव्ये ॥ १२ ॥ ज्ञानेति । येषां भक्तानाम् । ज्ञानाङ्गम् । भवेत् । ते भक्ताः । हरेः । माहात्म्यातिशयम् । विदुः । अथ च । ये । प्रीत्यङ्गा भक्ताः । भवेयुः । ते । तं हरिं विना । क्षणमपि । न स्युः स्थातुं क्षमा न भवेयुरित्यर्थः ॥१३॥ उभयविधांस्तान्नाम्ना निर्दिशति । हेमन्तेति । तत्र तेषु द्विविधभक्तेषु मध्ये । आद्याङ्गा ज्ञानाङ्गाः । हेमन्तसिंहभूपाद्याः । अमी । स्थिताः । भवन्ति । आद्यशब्देन देवरामरथकारस्य प्रभाशङ्कराख्यविप्रादेश्च ग्रहणम् । द्वितीयाङ्गाश्च । सच्चिदानन्दमुख्याः । अमी । स्थिताः । भवन्ति । मुख्यशब्देन कृपानन्दमुनि कर्पटालयग्रामीणक्षत्रजातीयपुञ्जभक्तादिग्रहणम् ॥ १४ ॥

ज्ञानाज्ञा इति । ज्ञानाज्ञा भक्ताः । कृष्णं श्रीहरिम् । देहिनां देहवतां सकलजीवेश्वराणाम् । नियन्तारं सर्वज्ञत्वाचदन्तर्यामितया तत्तत्स्वरूपस्थितिप्रवृत्तिपूर्वं यथोचिततत्तत्कर्मफलप्रदातारम् । विदुः । स्वेच्छया । सर्वम् । कर्म कुर्वन्तं च । विदुः । सकलस्वाश्रितहिताय स्वेच्छया केषांचित्सन्मानदानप्रशंसनाभाषणादिकां सकलां क्रियां कुर्वाणं जानन्तीत्यर्थः । अन्यशिक्षयाऽन्यजनकृतोपदेशेन । नतु किमपि कुवन्तं न विदुः ॥ १५ ॥ य इति । ये भक्तास्तु । स्वान्ते स्वमनसि । एतत्पूर्वोक्तम् । अन्यथा भगवानप्यन्यशिक्षितं करोतीति । विदुः । तेषां भक्तानाम् । रमापतेः । प्रत्यक्षश्रीकृष्णस्य । स्वरूपवेदनम् । सम्यग्यथार्थतः । नास्त्येव । इतीत्थम् । अवगम्यताम् ॥ १६ ॥ येषामिति । येषां भक्तनाम् । कृष्णे । प्रीतिः । भवेत् । ते भक्तास्तु । तस्य कृष्णस्य । नृनाटने कस्यचिद्वार्त्ताश्रवण तदुदितप्रकारकार्याचरणादिमनुष्यचरित्रे । क्वापि कदाचिदपि । अगुणं दोषम् । गृह्णीयुः । न तस्य कृष्णस्य । तां नृनाटनरूपाम् । लीलां च कल्याणरूपं चरित्रमेव । विद्युः ॥ १७ ॥ लोकइति । लोके लोकव्यवहारेऽपि । यस्माज्जनात् । स्वार्थसिद्धिः । स्यात् । तस्य जनस्य । अगुणम् । पुमान् । न गृह्णाति । यतोहेतोः । कार्यतः

ज्ञानाज्ञाश्च विदुः कृष्णं नियन्तारं हि देहिनाम् । स्वेच्छया कर्म कुर्वन्तं सर्वं न त्वन्यशिक्षया ॥ १५ ॥ ये त्वेतद-न्यथा स्वान्ते विदुस्तेषां रमापतेः । स्वरूपवेदनं सम्यङ्ङ् नास्त्येवेत्यवगम्यताम् ॥१६॥ येषां प्रीतिर्भवेत्कृष्णे ते तु तस्य नृनाटने । गृह्णीयुर्नागुणं क्वापि विद्युर्लीलां च तस्य ताम् ॥ १७ ॥ लोकेऽपि स्वार्थसिद्धिः स्याद्यस्मात्तस्यागुणं पुमान् । न गृह्णाति यतस्तस्मिन् प्रीतिर्जाताऽस्ति कार्यतः ॥ १८ ॥ तर्हि संसृतिविच्छेदस्वार्थसिद्धिर्यतः प्रभोः । तस्य भक्तोऽगुणं कोऽपि गृह्णीयात् प्रीतिमान्कथम् ॥ १९ ॥ यस्यैतयोरेकतममङ्गं स्यान्न दृढं स तु । भक्तः क्षणिकधी-र्बालोपमो ज्ञेयो न तूत्तमः ॥ २० ॥ वार्त्तामेतावतीं स्वामी दिवा चक्रे ततोऽगमत् । स्वावासं च पुनः सायमुत्तमस्य महीभृतः ॥ २१ ॥ प्राग्द्वारालयवेदिस्थमञ्चासन उपाविशत् । वृतः स त्यागिगृहिभिः प्रसन्नास्यः सिताम्बरः ॥ २२ ॥

स्वार्थसिद्धिरूपकार्यवशात् । तस्मिन् जने । प्रीतिः । जाता । अस्ति ॥ १८ ॥ तर्हीति । तर्हि तदा । यतो यस्मात् । प्रभोः श्रीहरेः । संसृतिविच्छेदस्वार्थसिद्धि-र्जन्मरणप्रवाहनिवृत्तिरूपस्वार्थसंसाधनम् । स्यात् । तस्य प्रभोः । अगुणम् । प्रीतिमान्स्वार्थसिद्धिनिमित्तकप्रीतियुक्तः । कोऽपि । भक्तः । कथम् । गृह्णीयादेवेत्यर्थः ॥ १९ ॥ यस्येति । यस्य भक्तस्य । एतयोर्द्वयोरङ्गयोर्मध्ये । एकतममेकमपि । अङ्गम् । दृढम् । न स्यात् । सः । भक्तस्तु । क्षणिकधीरस्थिरमतिः । अत एव । बालोपमः । ज्ञेयः । उत्तमः श्रेष्ठः । न तु नैव ज्ञेयः ॥ २० ॥ वार्त्तामिति । एतावतीमेतत्प्रमाणाम् । वार्त्ताम् । स्वामी श्रीहरिः । दिवा दिवसे । सङ्गवकाले इत्यर्थः । चक्रे । ततस्तदनन्तरम् । स्वावासम् । अगमत् । पुनश्च । सायं पट्घटिकावशेषदिनात्मके काले । उत्तमस्य । महीभृतः ॥ २१ ॥ प्रागिति । प्राग्द्वारा-लयवेदिस्थमञ्चासने । स श्रीहरिः । उपाविशत् । त्यागिगृहिभिः । वृतः सभायां परिवेष्टितः । प्रसन्नास्यः प्रसन्नमुखपङ्कजः । सिताम्बरः परिहितसकलश्वेतवसनः ॥२२॥

कुन्देति । कण्ठे । कुन्दपुष्पस्रजम् । दधत् । साधुभिर्मुक्तानन्दमुनिभिः । सवाद्यं वादित्रवादनसहितं यथातथा । गीयमानानि । सत्पद्यानि श्रीहरियशोङ्कितकीर्त्तनानि । शृण्वन् । श्रीहरिः । तान् समीपविष्टत्यागिगृहिस्वभक्तजनान् । आह सत्पद्यसमाप्ताववुवाच । इति त्रयाणामेकान्वयः ॥ २३ ॥ मयेति । हे भक्ताः ! । मया । शिक्षापत्री । लिखिता । अस्ति । तस्याः शिक्षापत्र्याः । पाठः । अखिलैः । सद्भिः साधुभिः । वर्णिभिः प्रथमाश्रमिभिः । तथा । गृहिभिः । दिने दिने । कार्यः ॥ २४ ॥ पाठेति । पाठाशक्तौ वर्णज्ञानाभावेन पाठाचरणासामर्थ्ये तु । सा शिक्षापत्री । श्रवणीया । तदयोगे तच्छ्रावकजनाप्राप्तौ तु । तस्याः शिक्षापत्र्याः । पूजनं तद्योग्यमर्चनम् । कर्त्तव्यम् । इत्येवंविधा । आज्ञा मच्छासनम् । सर्वान् । मच्छ्रितान् युष्मान्प्रति । अस्ति ॥ २५ ॥ त्रिष्विति । एतेषु । त्रिषु शिक्षापत्रीपाठश्रवणपूजनेषु मध्ये । एकतममेकमपि । क्वचित् । यदि । न स्यात् । तदा । मदाश्रितैः सर्वैर्भवद्भिः । एकम् । दिनम् । उपवासः । विधातव्यः ॥ २६ ॥ इतीति । इत्येवंविधम् । एतस्य श्रीहरेः । वचोऽमृतम् । श्रुतिभिः श्रवणपुटैः । निपीय । सदःस्थाः । भक्ताः । सर्वे । मुनिजनाः । तथैव । अपरे गृहस्थाश्चापि ।

कुन्दपुष्पस्रजं कण्ठे दधच्छृण्वंश्च साधुभिः । सवाद्यं गीयमानानि सत्पद्यानि स आह तान् ॥ २३ ॥ मयाऽस्ति लिखिता शिक्षापत्री तस्या दिने दिने । पाठः कार्योऽखिलैः सद्भिर्गृहिभिर्वर्णिभिस्तथा ॥ २४ ॥ पाठाशक्तौ तु सा श्रव्या तदयोगे तु पूजनम् । तस्याः कर्त्तव्यमित्याज्ञां सर्वान्प्रत्यस्ति मच्छ्रितान् ॥ २५ ॥ त्रिषु चैतेष्वेकतमं यदि न स्यात् क्वचित्तदा । उपवासो विधातव्यो दिनमेकं मदाश्रितैः ॥ २६ ॥ इत्येतस्य वचोऽमृतं मुनिजना भक्तास्तथैवापरे सर्वेऽपि श्रुतिभिर्निपीय परमं तोषं सदःस्था ययुः । धृत्वाऽऽज्ञां च शिरोभिरूचुरथ तं सर्वे वयं सादरं स्वामिन्प्रत्यहमेवमेव हि विधास्यामस्त्वदीया इति ॥ २७ ॥ ततः प्रसन्नो नितरां स ईशः प्रीत्या सतस्तान् परिषस्वजेऽथ । गृहस्थभक्तान्निजपादपद्मनिधानतस्तोषति स्म हृत्सु ॥ २८ ॥

इति श्रीहरिवाक्यसुधासिंधौ शतानन्दमुनिविरचिते द्विशताधिकचतुर्विंशस्तरङ्गः ॥ २२४ ॥ १ ॥

परमम् । तोषम् । ययुः । अथानन्तरम् । आज्ञां श्रीहरिनिदेशनम् । शिरोभिः । धृत्वा । हे स्वामिन् ! । त्वदीयाः । सर्वे । वयम् । प्रत्यहम् । एवमेव । सादरम् । विधास्यामः । इतीत्थम् । तं श्रीहरिम् । ऊचुः ॥ २७ ॥ ततइति । ततस्तदनन्तरम् । ईशः प्रत्यक्षपरमेश्वरः । स श्रीहरिः । नितरामतिशयेन । प्रसन्नः सन् । तान् । सतः । प्रीत्या । परिषस्वजे आशिश्लेष । अथ च । गृहस्थभक्तान् । हृत्सु वक्षःस्थलेषु । निजपादपद्मनिधानतः स्वीयचरणाब्जयुगलार्पणतः । तोषयति स्म सन्तोषयामासः ॥ २८ ॥ साधनं स्वस्य भक्तौ यद्विघ्नाभावे तथाङ्गयोः । ज्ञानप्रीत्योर्लक्षणे च येनोक्ते हरिणा स्फुटम् ॥ १ ॥ स्वकीयशिक्षापत्र्याश्च पाठादीनामवश्यता । येनोक्ता सोऽस्तु मे स्वान्ते भक्तिधर्मसुतोऽन्वहम् ॥ २ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्यकान्तिकोपासकश्रीहरिकृष्णभगवत्स्वनुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां द्विशताधिकचतुर्विंशस्तरङ्गः ॥ २२४ ॥ १ ॥

जगन्मुख्यत्वादिदोषशान्तिः स्वाज्ञावलोकनात् । भवेदित्यादिका वार्त्ता द्वितीये तूत्तमोदिता ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् (१८८२) ज्येष्ठस्य ज्येष्ठमासस्य । वलक्षे शुक्लपक्षे । षष्ठ्यां तिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमस्य । भूभुजः । दुर्गे । वासुदेवालयस्य । अग्रे । पीठोत्तमे स्वास्तृते उच्चतुःपादे चतुरस्रपट्टे । स श्रीहरिः । उपाविशत् ॥ २ ॥ तं विशिनष्टि । सितेति । सिताम्बरः परिहितसितश्लक्ष्मघनसकलवसनः । सितोष्णीषे श्वेते शिरःपटे । मल्लिकापुष्पशेखरम् । दधत् । तथा । त्यागिभिः । भक्तैर्नानादेशागतैः स्वाश्रितैः । परिवृतः सभायां संवेष्टितः ॥ ३ ॥ तानिति । स श्रीहरिः । तान्समीपविष्टभक्तान् । उवाच । हे भक्ताः ! । सर्वेऽपि । मानवाः सत्सङ्गिजनाः । अस्य । जगतः । क्षयिष्णुत्वम् । जगत्सम्बन्धिजीवानां भोग्यभोगोपकरणभोगस्थानानि नश्वराणीत्यर्थः । जानन्त्येव । तथा । आत्मनो जीवस्य । नित्यतामविनाशिताम् । जानन्त्येव ॥ ४ ॥ जीवानामिति । ते सत्सङ्गिजनाः । जीवानाम् । पारतन्त्र्यम् । परात्मनः परमात्मनः श्रीहरेः । स्वतन्त्रत्वं च । विदन्ति ॥ ५ ॥ तथेति । तथापि । तेषां सत्सङ्गिजनानाम् ।

शकाब्दे विक्रमार्कस्य नेत्राष्टवसुभूमिते । षष्ठ्यां वलक्षे ज्येष्ठस्य वचोऽमृतमिदं हरेः ॥ १ ॥ तत्र दुर्गपुरे दुर्गे उत्तमस्य स भूभुजः । वासुदेवालयस्याग्रे पीठोत्तम उपाविशत् ॥२॥ सिताम्बरः सितोष्णीषे मल्लिकापुष्पशेखरम् । दधत्परिवृतो भक्तैस्त्यागिभिर्गृहिभिस्तथा ॥ ३ ॥ तानुवाच सर्वेऽपि जानन्त्येव हि मानवाः । जगतोऽस्य क्षयिष्णुत्वं नित्यतामात्मनस्तथा ॥४॥ जीवानां पारतन्त्र्यं च स्वतन्त्रत्वं परात्मनः । सर्वथा सुखसिन्धुत्वं तस्यैव च विदन्ति ते ॥ ५ ॥ तथापि तेषां हृदये प्रधान्यं जगतः सदा । कथमस्त्यत्र तच्चितं कुतो न लगतीश्वरे ॥६॥ मुक्तानन्दस्तमूचेऽथ विरक्तेर्दृढता हृदि । तेषां नास्तीति तच्चित्तं तुच्छार्थेष्वपि सज्जते ॥ ७ ॥ तमुवाच हरिः साधो ! सत्यमेतत्त्वयोच्यते । अन्यदप्यत्र भवति कारणं तन्निशामय ॥ ८ ॥

हृदये । सदा । जगतः । प्राधान्यं मुख्यत्वम् । तदासक्तित्वमित्यर्थः । कथं केन हेतुना । अस्ति । अथ च । तच्चित्तं सत्सङ्गिजनमानसम् । ईश्वरे परमेश्वरे । कुतोहेतोः । न लगति न सज्जति ॥ ६ ॥ मुक्तानन्द इति । अथैवंविधश्रीहरिकृतप्रश्नश्रवणानन्तरम् । मुक्तानन्दमुनिः । तं श्रीहरिम् । ऊचे । हे हरे ! । तेषां तथाविधसत्सङ्गिजनानाम् । हृदि । विरक्तेः । दृढता । नास्ति । इतिहेतोः । तच्चित्तम् । तुच्छार्थेषु जगत्सम्बन्धितुच्छपदार्थेषु । सज्जते । अपिशब्दात्परमेश्वरे न सज्जति । सत्सङ्गिजनमानसस्य जगतः प्रधानतायां परमेश्वरेऽलग्नतायां च तन्मानसे दृढविरक्त्यभावो हेतुरस्तीत्यर्थः ॥ ७ ॥ अत्रार्थेऽन्यस्मिन् हेतौ सत्यप्येकमेव हेतुमुक्त्वा जोषमास्थितं मुनिमालक्ष्य तदुक्तहेतुस्वीकारपूर्वमन्यं हेतुं स्वयं यथा वक्ष्यति तत्प्रसङ्गायाह तमिति । तमेवं स्वप्रश्नोत्तरं वदन्तं मुक्तानन्दमुनिम् । हरिः । उवाच । हे साधो ! । त्वया । एतत् । सत्यम् । उच्यते । किन्तु । अत्रास्मिन्मत्प्रश्नोत्तरे । अन्यत्त्वदुक्तेतरदपि । कारणम् । भवति । तत्कारणम् । निशामय शृणु ॥ ८ ॥

यदेति । हे मुने ! । यदा । पुंसां जनानाम् । सत्सङ्गतः साक्षाद्भगवदेकान्तिकसाधुसमागमात् । ईश्वरनिश्चयोऽयं श्रीहरिः साक्षात्परमेश्वर एवेति निर्णयः । भवति । तदैव । यादृक् । अङ्गम् । बध्यते । तत्तादृगङ्गम् । सर्वदा । भवेत्तिष्ठेत् । अस्यायं भावः । सत्समागमपूर्वं तद्वार्त्ताश्रवणेन यत आरभ्य साक्षात्परमेश्वरे त्वयि निश्चयो जातस्तत आरभ्य मुहुस्तद्वार्त्ताश्रवणेन यावत्तत्तद् दृढत्वं भवेत्तावता कालेन यथाविधाङ्गबन्धनं स्यात्तथाविधाङ्गं सर्वदा तिष्ठेदिति ॥९॥ तत्त्रैविध्यं ब्रुवंस्तानि नाम्ना निर्दिशति । कस्यचिदिति । हे मुने ! । कस्यचित् । पुरुषस्य भक्तस्य तु । आत्मनिष्ठाङ्गम् । बध्यते । कस्यचित् । दास्याङ्गम् । बध्यते । कस्यचित् । पातिव्रत्याङ्गम् । बध्यते हि ॥ १० ॥ प्रत्यहमिति । प्रत्यहम् । क्रियमाणेन । सत्सङ्गेन । तद्बद्धमङ्गमेव । पुष्टिं पोषणम् । एति प्राप्नोति । तदङ्गम् । क्वापि कदाचिदपि । परिवृत्तिमन्यथाभावम् । न तु नैव प्राप्नुयात् ॥ ११ ॥ यदेति । किञ्च । पुंसां भक्तानाम् । यदा । अङ्गम् । बध्यते । तदा । कामक्रोधादिभिरिव । मनः । विभ्रान्तवदनवस्थितमिव । व्याकुलत्वम् । उपैति ॥ १२ ॥ तस्मिन्निति । तस्मिन्काले । तदङ्गम् । यादृशम् । बद्धम् । स्यात् । तादृशम् । सदा । तिष्ठति । इतिहेतोः । स्वं स्वकीयम् ।

यदा सत्सङ्गतः पुंसां भवतीश्वरनिश्चयः । तदैव बध्यते यादृगङ्गं तत्सर्वदा भवेत् ॥ ९ ॥ कस्यश्चित्त्वात्मनिष्ठाङ्गं दास्याङ्गं कस्यचित्तथा । बध्यते कस्यचित् पातिव्रत्याङ्गं पुरुषस्य हि ॥ १० ॥ प्रत्यहं क्रियमाणेन सत्सङ्गेन तदेव हि । पुष्टिमेति न तु क्वापि परिवृर्तिं तदाप्नुयात् ॥ ११ ॥ यदाङ्गं बध्यते पुंसां विभ्रान्तवन्मनः । कामक्रोधादिभिरिव व्याकुलत्वमुपैति च ॥ १२ ॥ तस्मिन्काले यादृशं तद्बद्धं स्यात्तादृशं सदा । तिष्ठतीति तदेवाङ्गं पर्यालोच्यं स्वमञ्जसा ॥ १३ ॥ तस्मिन्नपक्वे तु भवेच्छ्रीकृष्णेतरवस्तुनि । प्रीतिः पुंसोऽपि विदुषो न तु कृष्णे दृढा भवेत् ॥ १४ ॥ अतो विवेकिभिः पुंभिः स्वाङ्गं पक्वत्वसिद्धये । विशोध्यते प्रयत्नेन विचारेण महीयसा ॥१५॥ पक्वाङ्गस्यापि देशादेर्वैषम्याद्यदि कुत्रचित् । विक्षेपेण भवेत्प्रीतिः कृष्णादन्यत्र वस्तुनि ॥१६॥

तत्सदावस्थितम् । अङ्गमेव । अञ्जसा तत्त्वतः । पर्यालोच्यं विचारणीयम् । मदीयमङ्गं यथाविधं निबद्धमस्ति तथाविधं तत्पक्वमपक्वं भवतीत्यालोचनीयमित्यर्थः ॥ १३ ॥ तस्मिन्निति । तस्मिन्नङ्गे । अपक्वे सति तु । विदुषः प्रश्नोक्तप्रकारेण जानतः सतोऽपि । पुंसो भक्तस्य । श्रीकृष्णेतरवस्तुनि । प्रीतिः । भवेत् । कृष्णे । दृढा । प्रीतिः । न भवेत् । अङ्गे पक्वे सति तु केवलं भगवत्येव प्रीतिः स्यात्तदितरस्मिन् जागते पदार्थे न स्यादितिभावः । अनेन प्रश्नोत्तरमपि कृतमिति बोध्यम् ॥ १४ ॥ अतइति । अतोहेतो । विवेकिभिः । पुंभिर्भक्तैः । पक्वत्वसिद्धये स्वाङ्गपक्वतासिद्ध्यर्थम् । प्रयत्नेनातिशयितयत्ननिष्पादितेन । महीयसाऽतिमहता । विचारेण । स्वाङ्गम् । विशोध्यते तैस्तस्य विशोधनं विधीयते इत्यर्थः ॥ १५ ॥ पक्वेति । पक्वाङ्गस्य परिपक्वतापादितस्वाङ्गस्यापि भक्तस्य । कुत्रचित्कदाचित् । देशादेः । वैषम्यादसत्त्वात् । यदि । विक्षेपेण । कृष्णात् । अन्यत्र वस्तुनि । प्रीतिः । भवेत् ॥ १६ ॥

तदेति । तदा तस्मिन्काले । तेन पक्काङ्गभक्तेनापि । तां कृष्णान्यवस्तुगतप्रीतिम् । ज्ञात्वा स्वतोऽन्यतो वा बुध्वा । विचार्यासद्देशकालादिसम्बन्धेन ममैवं जातमस्तीति विचारं कृत्वा । स्वाङ्गे स्वकीये पक्काङ्गे एव । स्थेयम् । तदनुवृत्त्या पक्वङ्गानुरणेनैव । अस्य भक्तस्य । स्वास्थ्यम् । भवेत् । अन्यत्र प्रीतित्यागो भगवति तत्स्थैर्यं च भवेदित्यर्थः । अन्यथैवंविचारमन्तरा । न च स्वास्थ्यं नैव भवेत् । अनेनासद्देशकालादेस्त्यागोऽप्युक्त इति बोध्यम् । इति द्वयोरेकसम्बन्धः । आत्मनिष्ठाद्यङ्गत्रयलक्षणानि शताधिकपञ्चनवतितमात्तरङ्गात् ज्ञेयानि ॥ १७ ॥ एवमङ्गत्रयपक्वतावतामपि भक्तानां देशकालादिवैषम्ये विधेयमुक्त्वा साम्प्रतमवद्धत्र्येकाङ्गानां देशकालादिनादुःसङ्कल्पोदयवतां सत्सङ्गस्थैर्याय दुःसङ्कल्पनिवृत्त्यै चानुतापो विधेय इति सदृष्टान्तमाह द्वाभ्याम् । सुरूपेति । सुरूपस्वसृमात्रादिवीक्षायां सत्याम् । आत्मनि भ्रातृपुत्रादीनां मनसि । क्वचित् । दुःसङ्कल्पोदये उपभोगेच्छोदये सति । यादृक् । अनुतापः । जायते ॥१८॥ तादृगिति । कृष्णान्यार्थानुषज्जने श्रीकृष्णेतरमायिकपदार्थासक्तौ जातायां सत्यामित्यर्थः । सत्सङ्गिनाम् । पुंसां भक्तानाम् । मनसीतिशेषः । तादृक् । अनुतापः । अपेक्षितः कर्त्तुं योग्यः । अस्ति । अन्यथा-

तदा तेनापि तां ज्ञात्वा विचार्य स्वाङ्ग एव हि । स्थेयं तदनुवृत्त्याऽस्य भवेत्स्वास्थ्यं न चान्यथा ॥ १७ ॥
सुरूपस्वसृमात्रादिवीक्षायां क्वचिदात्मनि । दुःसङ्कल्पोदये यादृगनुतापस्तु जायते ॥ १८ ॥
तादृक् सत्सङ्गिनां पुंसां कृष्णान्यार्थानुषज्जने । अपेक्षितोऽनुतापोऽस्ति सत्सङ्गो हीयतेऽन्यथा ॥ १९ ॥
सर्वसाधनतः श्रैष्ठ्यं सत्सङ्गस्य हरिः स्वयम् । प्राह भागवतस्यैकादशस्कन्धे स्वमुद्धवम् ॥ २० ॥
न रोधयति मां योगो न सांख्यं धर्म एव च । स्वाध्यायस्तपस्त्यागो नेष्टापूर्त्तं न दक्षिणा ॥ २१ ॥
व्रतानि यज्ञश्छन्दांसि तीर्थानि नियमा यमाः । यथावरुन्धे सत्सङ्गः सर्वसङ्गापहो हि माम् ॥ २२ ॥

ऽनुतापाभावे । सत्सङ्गः । हीयते अनुतापस्य पुनस्तथाविधदुःसङ्कल्पानुदयफलत्वात्तदनाचरणस्य पुनः पुनर्दुःसङ्कल्पानुवृत्त्या सत्सङ्गच्युतिफलत्वाद्भक्तानां स युक्त एवेति भावः । इति द्वयोरेकसम्बन्धः ॥ १९ ॥ सर्वेति । भागवतस्य एकादस्कन्धे । स्वयम् । हरिः श्रीकृष्णः । सर्वसाधनतः । सत्सङ्गस्य । श्रैष्ठ्यम् । श्रेष्ठत्वात्तस्य दुर्लभत्वमित्यर्थः । स्वं स्वकीयं भक्तम् । उद्धवम् । प्राह ॥ २० ॥ नेति । हे उद्धव ! । यथा । सत्सङ्गः । माम् । अवरुन्धे वशीकरोति । तथा । योगोऽष्टाङ्गयोगः । माम् । नरोधयति न वशीकरोति । सांख्यं प्रकृतिविविक्तात्मोपासनम् । न रोधयति । धर्मोऽहिंसाब्रह्मचर्यादिरूपो वर्णाश्रमसदाचारः । न रोधयति । स्वाध्यायो वेदाध्ययनम् । न रोधयति । तपः कृच्छ्रचान्द्रायणादिकम् । न रोधयति । त्यागः सामान्यतो दानम् । न रोधयति । इष्टापूर्त्तम् । न रोधयति । तत्रेष्टं यागादि पूर्त्तं कूपारामादिनिर्माणम् । दक्षिणा क्रत्वादिसाद्गुण्यार्थं दानम् । न रोधयति ॥ २१ ॥ व्रतानीति । व्रतान्येकादश्युपवासादीनि । यज्ञश्छन्दांसि । यज्ञाः पञ्चमहायज्ञाः । छन्दांसि रहस्यमन्त्राः । तिर्थानि गङ्गादीनि । नियमाः शौचादयः । यमा अहिंसादयश्च । मां न रोधयन्ति । कुतः । हि यस्मात् । सत्सङ्गः

सर्वसङ्गापहः सर्वेषु मद्व्यतिरिक्तेषु मनसः सङ्गमपहन्तीति तथा । मनसः सर्वसङ्गापहारेण स मदेकसङ्गावहो योगादयस्तु नैवंविधा इतिभावः ॥ २२ ॥ एवमिति । हे मुने ! । एवममुना प्रकारेण । दुर्लभसत्सङ्गे । नष्टे सति । नृणां भक्तानाम् । किम् । न नष्टम् । अपि तु । सर्वमेव नष्टमितिभावः । अतोहेतोः । अतियत्नेन । तस्य सत्सङ्गस्य । रक्षणम् । कर्त्तव्यम् ॥ २३ ॥ प्रागिति । प्राक्संस्कारवतां पूर्वजन्मार्जितैकान्तिकभक्तिवासनायुक्तानाम् । पुंसां भक्तजनानामपि । संस्कारसम्भवः । सत्सङ्गादेव । जातः । अस्ति । तथा तद्वदेव । आद्यास्मिन् जन्मनि । स संस्कारः । सत्सङ्गादेव जायते ॥ २४ ॥ एवमिति । एवममुनाप्रकारेण । सत्सङ्गमाहात्म्यम् । ये । नरा भक्तजनाः । सम्यग्यथार्थतया । न विदुः । तेषाम् । बुद्धौ । जाड्यस्य मान्द्यस्य । आधिक्यम् । अस्ति । इतीत्थम् । गम्यते ॥ २५ ॥ येषां सतां सङ्गस्य दुर्लभत्वं श्रीकृष्णेनाभिहितमात्यन्तिककल्याणाय सङ्गम्यास्ते साधवो यूयमेव भवथेत्याह द्वाभ्याम् । श्वेतद्वीपेति । श्वेतद्वीपे । वैकुण्ठे । गोलोके । बदरीवने बदरीश्रमे च । यादृसी । सभा । अस्ति । तस्यास्तथाविधायाः सभायाः सकाशादपि । एषा । सभा यस्यां वयमास्महे सा पर्षद् । अधिका । अस्ति ॥ २६ ॥ अतीति ।

एवं दुर्लभसत्सङ्गे नष्टे नष्टं न किं नृणाम् । अत एवातियत्नेन कर्त्तव्यं तस्य रक्षणम् ॥२३॥ प्राक्संस्कारवतां पुंसामपि संस्कारसम्भवः । सत्सङ्गादेव जातोऽस्ति तथाऽद्य च स जायते ॥ २४ ॥ एवं सत्सङ्गमाहात्म्यं ये सम्यङ् न विदुर्नराः । तेषां बुद्धौ तु जाड्यस्याधिक्यमस्तीति गम्यते ॥२५॥ श्वेतद्वीपे वैकुण्ठे गोलोके बदरीवने । यादृश्यस्ति सभा तस्या अप्येषाऽस्त्यधिका सभा ॥ २६ ॥ अतितेजस्विनो भक्तान्सर्वान्वीक्ष इमानहम् । अत्र नास्त्येव सन्देहो यथा दृष्टं ब्रवीमि यत् ॥ २७ ॥ स्थित्वापि सङ्ग एतेषां येषां साक्षाद्धरौ न हि । प्रीतिः सम्यग्भवेत्तत्र हेतुरन्योऽपि विद्यते ॥२८॥ तेषां प्रतीतिर्हृदये परोक्षे वर्त्तते यथा । दृढा तथा न प्रत्यक्षे कृष्णे साऽस्तीति कारणम् ॥ २९ ॥

अहम् । इमान्मत्पुरोवर्त्तिनः । सर्वान् । भक्तान्युष्मान् । अतितेजस्विनः । वीक्षे पश्यामि । अत्रार्थे । सन्देहः । नास्त्येव । यद्यतोहेतोः । यथादृष्टम् । यथा पश्यामि तथेत्यर्थः । ब्रवीमि । अस्यायं भावः । सर्वपराक्षरधामाधिपस्य ब्रह्मभावापन्नाक्षरधामस्थमुक्तकोटिभिर्यथाकालं समर्चितस्य सर्वकारणकारणस्य रामकृष्णाद्यनेकावतारहेतोः पुरुषोत्तमस्य मम भवतां साक्षात्सम्बन्धाद्यूयं श्वेतद्वीपादिधामस्थसकलभक्तेभ्यो नितरामेवाधिकाः स्थेति मद्वचनात्सत्यमेव मन्तव्यमिति ॥ २७ ॥ स्थित्वेति । एतेषां भवताम् । सङ्गे । स्थित्वापि । येषां भक्तजनानाम् । साक्षाद्धरौ । सम्यक् । प्रीतिः । न भवेत् । तत्र साक्षाद्धरौ प्रीतिं हित्वाऽन्यत्र प्रीतिसद्भावे । अन्योऽनुतापात्मकतृतीयहेतोरितरः । हेतुरपि । विद्यते ॥ २८ ॥ तमाह । तेषामिति । तेषां श्रीहरौ प्रीतिं हित्वाऽन्यत्रप्रीतिमतां भक्तानाम् । हृदये । यथा । परोक्षे शास्त्रश्रुते पुरुषोत्तमे । दृढा । प्रतीतिर्विश्वासः । वर्त्तते । तथा । प्रत्यक्षे तस्मिन्नेत्र निष्कारणापारकरुणया सर्वनयनविषयतां प्राप्ते । कृष्णे श्रीहरौ । सा दृढा प्रतीतिः । नास्ति । इत्येतदेव कारणं चतुर्थो हेतुः । अस्ति ॥ २९ ॥

अतो भक्तैः परोक्षे कृष्णे इव प्रत्यक्षे कृष्णे प्रतीतिपूर्वा भक्तिः कार्येति श्रुत्यर्थकथनेनाह । भक्तिरिति । परोक्षदेवे । यादृशी । भक्तिः प्रीतिः । स्यात् । प्रत्यक्षे । स्वगुरौ । हरावपि । तादृशी भक्तिरेव । विधातव्या । इत्येवंभूता । वेदवाक् वेदार्थवचनरूपा मद्वाणी । अस्ति । तथा च श्रुतिः । "यस्य देवे पराभक्तिर्यथा देवे तथा गुरौ । तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मन' इति ॥३०॥ अतइति । अतोहेतोः । इह सत्सङ्गे । येषां भक्तानाम् ईदृक्सतां भवद्विधसाधूनाम् । सङ्गात् । साक्षाद्धरौ । सर्वाधिका । प्रीतिः । स्यात् । ते भक्ताः । ज्ञानिमुक्ताः । भवेयुः । इतीत्थम् । ईयताम् ॥३१॥ परमिति । देहान्ते । यत् । परम् । पदमक्षरधाम । प्राप्यम् । अस्ति । तत्परंपदम् । ते भक्ताः । इहास्मिन् । देहे । सत्येव । सम्प्राप्ता एव । सन्ति । ततोहेतोः । कृतार्थाः कृतकृत्याः । मताः । हि ॥ ३२ ॥ स्थूलेति । हे मुने ! । एषा मया कृता । वार्ता । स्थूला । इव भासमानापि । तादृशी स्थूला । नास्ति । किन्तु । अतिसूक्ष्मास्ति । इतीत्थम् । कुशाग्रबुद्धिभिरतिसूक्ष्ममतिभिः । सद्भिः श्रीहर्येकान्तिकसाधुभिः । बुध्यते ॥ ३३ ॥ निशम्येति । इत्येवंविधम् । तस्य श्रीहरेः । सुधोपमेयम् । वचः । निशम्य । स मुनिर्मुक्तानन्दसाधुः । तथा । सदस्थाः । भक्ताः

भक्तिः परोक्षदेवे स्याद्यादृशी स्वगुरौ हरौ । प्रत्यक्षेऽपि विधातव्या तादृश्येवेति वेदवाक् ॥ ३० ॥ अत ईदृक्सतां सङ्गाद्येषां साक्षाद्धराविह । प्रीतिः सर्वाधिका स्याच्चे ज्ञानिमुक्ता इतीयताम् ॥ ३१ ॥ परंपदं यद्देहान्ते प्राप्यं तत्त इहैव हि । देहे सत्येव सम्प्राप्ताः कृतार्थाश्च ततो मताः ॥३२॥ स्थूलेव भासमानाऽपि वार्त्तैषा नास्ति तादृशी । कुशाग्रबुद्धिभिः सद्भिरतिसूक्ष्मेति बुध्यते ॥३३॥ निशम्य तस्येति वचः सदःस्थाः सुधोपमेयं स मुनिस्तथाऽन्ये । सर्वेऽपि सन्तो गृहिणश्च भक्ताः प्रपेदिरेऽन्तःकरणे प्रमोदम् ॥३४॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते द्विशताधिकपञ्चविंशस्तरङ्गः ॥ २२५ ॥ २ ॥

शकाब्दे विक्रमार्कस्य गुणाष्टवसुभूमिते । शुचिकृष्णप्रतिपदि वचोऽमृतमिदं हरेः ॥ १ ॥
तत्र दुर्गपुरे दुर्गे उत्तमस्य स भूभुजः । भक्त्या हरिजिता नितो भक्तेनात्मनिकेतनम् ॥ २ ॥

। अन्ये । सर्वेऽपि । सन्तो मुनयः । गृहिणश्च । अन्तःकरणे स्वस्वान्तरे । प्रमोदम् । प्रपेदिरे ॥ ३४ ॥ मायिकेऽर्थेऽखिले प्रीतिर्न स्यात्स्यात्सर्वथैव सा । स्वस्मिन् येन तदूचे यः साऽस्तु तस्मिन् हरौ ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तक श्रीहर्येकान्तिकोपासक श्रीहरिकृष्णभगवत्सूनुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां द्विशताधिकपञ्चविंशस्तरङ्गः ॥ २२५ ॥ २ ॥

ब्रह्मरूपस्यापि हरौ तज्जनेषु च सर्वथा । भक्तस्योक्तौ दयास्नेहौ तृतीयेऽन्यस्य न क्वचित् ॥ १ ॥ शकेति विक्रमार्कस्य विक्रमादित्यनृपतेः । गुणाष्टवसुभूमिते त्र्यष्टाष्टैकसंमिते । शकाब्दे शकवर्षे । संवदष्टादशशताधिकत्र्यशीतितमे वर्षे इत्यर्थः । (१८८३) शुचिकृष्णप्रतिपदि आषाढमासस्य कृष्णपक्षाद्यतिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमस्य । भूभुजः । दुर्गाद् दुर्गस्थस्वावासात्सकाशात् । स श्रीहरिः । हरजिता हरजिन्नाम्ना । भक्तेन ।

भक्त्या । आत्मनिकेतनम् । नीतः प्रापितोऽभूत् ॥ २ ॥ पीठेति । तत्र हरजिद्भक्तस्य प्राङ्मुखभवनवेदिकायाम् । तेन हरिजिद्भक्तेन । कारिते स्वेष्टस्य श्रीहरेरुपवेशनाय विधापिते । शुभे शोभने । पीठोत्तमे कौशेयतूलिकया श्वेतोत्तरच्छदपार्श्विकयुतयास्तृते पर्यङ्कासने । निषण्णः प्रागास्यतयोपविष्टः । तेन हरजिद्भक्तेन । सद्गन्धकुसुमादिभिः । प्रीत्या । अभ्यर्चितश्च ॥ ३ ॥ पौष्पेति । पौष्पस्रग्वलयापीडः कुन्दकुसुमकृतहारकटकशेखरधारः । सद्भिः । गृहिभिश्च । नरैर्नानादेशागतस्वाश्रितजनैः । परीतः सभायां परिवृतः । सितवस्त्रः परिहितसकलश्वेतवसनः । असौ श्रीहरिः । स्वाग्रस्थान् । सतो मुक्तानन्दादिसाधून् । अवदत् । इतिद्वयोरेकसम्बन्धः ॥ ४ ॥ स्नेह इति । हे मुनयः ! । हरिसेविनां साक्षाद्भगवन्तं सेवमानानां साधूनाम् । हृदये । स्नेहः । दया च । भवेताम् । तत्र तदुभयनिष्ठस्नेहदययोः । वो युष्मभ्यम् । किञ्चित् । पृच्छामि । तत् । निशम्यताम् ॥ ५ ॥ स्नेह इति । स्नेहः । मधुना क्षौद्रेण । तुल्यः । अस्ति । स तथाविधः । यत्र तत्र पदार्थे । सज्जति लगति । दुःखिते । प्राणिमात्रे । भक्तानाम् । दया च । जायते ॥ ६ ॥ यथेति । यथा । आर्षभस्य ऋषभदेवपुत्रस्य भरतस्य । कृपणेऽनाथे । मृगबाले । दया । अभवत् । ततो दया-

पीठोत्तमे तत्र तेन निषण्णः कारिते शुभे । तेन चाभ्यर्चितः प्रीत्या सद्गन्धकुसुमादिभिः ॥ ३ ॥ पौष्पस्रग्वलयापीडः सद्भिश्च गृहिभिर्नरैः । परीतः सितवस्त्रोऽसौ स्वाग्रस्थानवदत्सतः ॥ ४ ॥ स्नेहो दया च हृदये भवेतां हरिसेविनाम् । तत्र पृच्छामि मुनयः ! किञ्चिद्वस्तन्निशम्यताम् ॥ ५ ॥ स्नेहोऽस्ति मधुना तुल्यो यत्र तत्र स सज्जति । दुःखिते प्राणिमात्रे च भक्तानां जायते दया ॥६॥ यथार्षभस्य कृपणे मृगबालेऽभवद्दया । ततः स्नेहोऽभवत्तेन मृगतामेव सोऽप्यगात् ॥ ७ ॥ अतः स्नेहं दयां चोभे आत्मज्ञानेन सद्धियः । अपाकुर्वन्ति हृदयाद्वैराग्येण च भूयसा ॥ ८ ॥ आत्मज्ञानेन चैतन्यादन्यकिञ्चिन्न शिष्यते । नामरूपे नाशवती विरक्त्या भवतोऽखिले ॥ ९ ॥ देहत्रयं जायते च नष्टप्रायं ततः स्वकम् । सर्वोपाधिविनिर्मुक्तं सन्मात्रं ब्रह्म शिष्यते ॥ १० ॥

वशतः । स्नेहः । अभवत् । तेन हेतुना । स पुत्रकलत्रराज्यादिपरित्यज्य परमेश्वरप्रसादनाय पुलहाश्रमं प्राप्तो भरतोऽपि । मृगतां मृगशरीरमेव । अगादवाप ॥ ७ ॥ अत इति । अतोहेतोः । सद्धियः सुमतयो भगवदेकान्तिकभक्ताः । आत्मज्ञानेन । भूयसाऽतिशयितेन । वैराग्येण च । स्नेहम् । दया च । उभे द्वे अपि । हृदयात्स्वमानसात् । अपाकुर्वन्ति त्यजन्ति ॥ ८ ॥ आत्मज्ञानवैराग्याभ्यां दयास्नेहापाकरणप्रकारमाह । आत्मेति । आत्मज्ञानेन । चैतन्याच्चिद्रूपात्मनः । अन्यद्देहादिकम् । किञ्चित्किमपि । न शिष्यते केवलमात्मैव सत्यतयाऽन्यत्सर्वमतितुच्छतया च भासते इत्यर्थः । विरक्त्या वैराग्येण । अखिले । नामरूपे मायिके नामाकृती । नाशवती नश्वरे । भवतो जायेते ॥ ९ ॥ देहेति । ततस्तदनन्तरम् । स्वकम् । देहत्रयम् । नष्टप्रायं विद्यमानं सदपि नष्टसदृशम् । जायते । सर्वोपाधिविनिर्मुक्तम् । सन्मात्रम् । ब्रह्म ब्रह्मभावापन्नः स्वात्मा शिष्यते ॥ १० ॥

एवमिति । एवममुनाप्रकारेण । स्थितिजुषामात्मनिष्ठावत्तां भक्तानाम् । कृष्णे साक्षाद्धरौ । तद्भक्तेषु । साधुषु च । दयास्नेहौ । भवेतां तिष्ठेताम् । अथवा । न भवेताम् । तद् । ब्रुवन्तु ॥ ११ ॥ इतीति । इत्यमुनाप्रकारेण । तेन श्रीहरिणा । पृष्टः । सन्तः । यदा । तदुत्तरम् । कर्त्तुम् । नाशकम् । तर्हि । स्वयम् । स श्रीहरिरेव । तत्स्वप्रश्नोत्तरम् । तान्साधून् । आह ॥ १२ ॥ गुणेति । हे सन्तः ! । ज्ञानवैराग्यवेगेन । गुणाः सत्त्वादयश्चावस्था जाग्रदादयश्च शरीराणि स्थूलादीनि च तेषाम् । त्रितयतस्त्रितयेभ्यः । गुणत्रयादवस्थात्रयाच्छरीरत्रयाच्चेत्यर्थः । आत्मा स्वजीवः । पृथग्भिन्नः । भास्यते दृश्यते । अन्यत्तदितरत्किञ्चिदपि मायिकं वस्तु । अण्वणुमात्रमपि । न भास्यते ॥ १३ ॥ एतदेव स्पष्टमाह गुणेति । तेन ज्ञानवैराग्यवेगेन । अस्यात्मनिष्ठभक्तस्य । गुणादीनां गुणावस्थाशरीराणाम् । उपाधीनाम् । लये । सति । आत्मा तज्जीवः । ब्रह्मत्वमक्षरब्रह्मणा सहैकभावम् । आप्नोति । तदा । अन्यद् गुणावस्थाशरीरादिकम् । नावशिष्यते ॥ १४ ॥ अस्मिन्निति । अस्मिन् । समये तु । यस्य भक्तस्य । माहात्म्यज्ञानयुक्तः । सदागतो भगवदेकान्तिकसद्भ्यः प्राप्तः । साक्षात्कृष्णस्य । निश्चयः । पूर्वाभ्यस्त इत्थंभूतावस्थाप्राप्तेः प्राक् कृतात्यभ्यासतः

एवं स्थितिजुषां कृष्णे तद्भक्तेषु च साधुषु । दयास्नेहौ भवेतां वा न भवेतां ब्रुवन्तु तत् ॥ ११ ॥ इति पृष्टास्तेन सन्तो यदा कर्त्तुं तदुत्तरम् । नाशकंस्तर्हि स प्रीत्या स्वयमेव तदाह तान् ॥ १२ ॥ गुणावस्थाशरीराणामात्मा त्रितयतः पृथक् । ज्ञानवैराग्यवेगेन भास्यते नान्यदण्वपि ॥१३॥ गुणादीनामुपाधीनामस्य तेन लये सति । आत्मा ब्रह्मत्वमाप्नोति तदाऽन्यन्नावशिष्यते ॥ १४ ॥ अस्मिंस्तु समये यस्य साक्षात्कृष्णस्य निश्चयः । माहात्म्यज्ञानयुक्तः स्यात्पूर्वाभ्यस्तः सदागतः ॥ १५ ॥ ब्रह्मीभूतस्यापि तस्य कृष्णे कार्ष्णेषु चानिशम् । वर्त्तेयातां दया स्नेहावितरेषां तु न क्वचित् ॥ १६ ॥ दयार्द्रकृष्णतद्भक्तसङ्गवासनयाऽस्य हृत् । वासितं भवतीत्यस्य निर्विघ्ने स्तो दयारती ॥ १७ ॥ ब्रह्मीभूतस्यापि पुंसः कृष्णे भक्तिर्भवेत्परा । तद्भक्तेषु च सौहार्दमिति गीतादिषूदितम् ॥ १८ ॥

। स्यात् ॥ १५ ॥ब्रह्मीभूतस्येति । ब्रह्मीभूतस्य ब्रह्मभावं प्राप्तस्यापि । तस्य भक्तस्य । कृष्णे । कार्ष्णेषु कृष्णभक्तसाधुषु च । अनिशं निरन्तरम् । दयास्नेहौ । वर्त्तेयाताम् । इतरेषामेवंविधकृष्णनिश्चयरहितानामभक्तानां तु । क्वचित्कदाचिदपि । तस्मिंस्तेषु च दयास्नेहौ न वर्त्तेयाताम् । इति द्वयोरेकसम्बन्धः ॥ १६ ॥ दयेति । अस्य कृष्णकार्ष्णेषु दयास्नेहवतो भक्तस्य । हृन्मनः । दयार्द्रकृष्णतद्भक्तसङ्गवासनया कृष्णस्य स्वभक्तेषु भक्तानां स्वेष्टदेवे कृष्णे तद्भक्तेषु चैवं परस्परदयास्नेहार्द्राणां कृष्णतद्भक्तानामतिविहितसङ्गभावनया । वासितं प्राप्तसंस्कारम् । भवति । इतिहेतोः । अस्यैवंविधभक्तस्य । दयारती । निर्विघ्ने विघ्नोत्पादनवर्जिते । स्तः ॥ १७ ॥ अत्रार्थे प्रमाणप्रदानाय प्रसङ्गमवतारयति । ब्रह्मीभूतस्येति । ब्रह्मीभूतस्यापि । पुंसो भक्तस्य । कृष्णे । परा । भक्तिरतिशयिता प्रीतिः । भवेत् । तद्भक्तेषु । सौहार्दं प्रीतिश्च । भवेत् । इतीत्थम् । गीतादिषु । उदितम् । भवति ॥ १८ ॥

ब्रह्मभूत इति ॥१९॥ परितिष्ठित इति ॥ २० ॥ आत्मारामा इति ॥ २१ ॥ हरेरिति । एते चत्वारः श्लोकाः प्राग्विवृताः ॥ २३ ॥ कृष्णेति । यः पुरुषस्तु । कृष्णभक्त्या । विरहितः सन् । ज्ञानविरागयोः । अभ्यासात् । मायिकोपाधिं मायाकार्यस्थूलादिदेहाभिमानरूपोपाधिम् । हित्वा । सदात्मना सद्रूपेणात्मना । तिष्ठेद्वर्तेत । तस्येत्युत्तरेण सम्बन्धः ॥ २३ ॥ तस्येति । तस्य तथाविधस्य । पुंसस्तु । कृष्णे । तस्य । साधुषु वा । दया । प्रीतिर्वापि । क्वापि कदाचिदपि । न भवेत् । यतोहेतोः । अस्यैवंविधपुंसः । गुरुर्ज्ञानवैराग्ययोरुपदेष्टा । निर्दयो भगवदभक्तत्वाद्भगवत्तद्भक्तेषु दयावर्जितः । अस्ति ॥ २४ ॥ एतदेव स्पष्टमाह द्वाभ्याम् । तस्येति । तस्य निर्दयगुरुशिष्यस्य पुंसः । साधनकाले ज्ञानवैराग्यसाधनसमये । केवलात्मविदो निर्बीजसांख्यशास्त्रश्रवणादिना केवलात्मस्वरूपज्ञस्य । गुरोः । सङ्गः । जातः । स

ब्रह्मभूतः प्रसन्नात्मा न शोचति न कांक्षति । समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम् ॥ १९ ॥ परिनिष्ठितोऽपि नैर्गुण्ये उत्तमश्लोकलीलया । गृहीतचेता राजर्षे ! आख्यानं यदधीतवान् ॥ २० ॥ आत्मारामाश्च मुनयो निर्ग्रन्था अप्युरुक्रमे । कुर्वन्त्यहैतुकीं भक्तिमित्थं भूतगुणो हरिः ॥ २१ ॥ हरेर्गुणाक्षिप्तमतिर्भगवान्बादरायणिः । अध्यगान्महदाख्यानं नित्यं विष्णुजनप्रियः ॥२२॥ कृष्णभक्त्या विरहितो यस्तु ज्ञानविरागयोः । अभ्यासान्मायिकोपाधिं हित्वा तिष्ठेत्सदात्मना ॥ २३ ॥ तस्य पुंसस्तु न क्वापि कृष्णे वा तस्य साधुषु । दयाप्रीतिर्वाऽपि भवेन्निर्दयोऽस्य गुरुर्यतः ॥ २४ ॥ तस्य साधनकाले हि केवलात्मविदो गुरोः । सङ्गो जातः स दुःसङ्ग एवेत्यस्ति सतां मतत् ॥ २५ ॥ तद्वासनावासितेऽस्य कृष्णतत्सत्सु मानसे । दयाप्रीत्युदयो न स्यात्सर्वं मिथ्येति वेदनात् ॥ २६ ॥ हरेर्दयानिधेः सङ्गो जातः स्याद्वापि तत्सताम् । यस्य तस्य तु भक्तस्य स्यातां ते ब्रह्मरूपिणः ॥ २७ ॥ इति धर्मसुतस्य सद्गिरं मुनयस्ते निखिलाः सुधोपमाम् । गृहिणश्च निशम्य लेभिरे हृदि तोषं परमं सदोगताः ॥ २८ ॥

तथाविधगुरुसङ्गः । दुःसङ्ग एवास्ति । इत्येवंविधम् । सतां भगवदेकान्तिकसाधूनाम् । मतं सिद्धान्तः । अस्ति ॥ २५ ॥ तदिति । तद्वासनावासिते इत्थंविधगुरुसङ्गभावनाभाविते । अस्य पुरुषस्य । मानसे हृदये । कृष्णतत्सत्सु । दयाप्रीत्युदयः न स्यात् । कुतः । सर्वमात्मस्वरूपातिरिक्तं सकलम् । मिथ्याऽसदस्ति । इतीत्थम् । वेदनात् ॥ २६ ॥ उक्तार्थं निगमयति । हरेरिति । यस्य भक्तस्य । दयानिधेः । हरेः । तत्सतामपि वा । सङ्गः । जातः । स्यात् । तस्य । भक्तस्य । ब्रह्मरूपिणो ब्रह्मभावापन्नस्य सतोऽपि । ते हरितत्सत्सु दयाप्रीती । स्याताम् ॥ २७ ॥ इतिति । इत्येवंविधाम् । धर्मसुतस्य श्रीहरेः । सुधोपमाम् । सद्गिरं सकलस्वाश्रिताभ्यर्हितां वाणीम् । निशम्य । सदोगताः । ते निखिलाः । मुनयः । गृहिणश्च । हृदि । परमम् । तोषम् लेभिरे ॥ २८ ॥

भक्तेनेति । अथानन्तरम् । भक्तेन । तेन हरिजिता । समर्चितः कृतार्चनः । असौ श्रीहरिः । स्वकीयैर्मुनिवर्णिपदात्यादिभिः स्वाश्रितजनैः । वृतः परिवेष्टितः सन् । पुनः । नरेशस्योत्तमनृपतेः । दुर्गे । आत्मवासं स्वनिवासभवनम् । समेत्य प्राप्य । तत्र स्वावासे । मञ्चासने स्वकीये पर्यङ्कासने । साधु सम्यग्यथा तथा विराजते स्म ॥ २९ ॥ दयास्नेहौ स्वभक्तस्य ब्रह्मरूपस्य यः सदा । ऊचे स्वस्मिन्स्वभक्तेषु स हरिर्मे ददातु तौ ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तक श्रीहर्येकान्तिकोपासक श्रीहरिकृष्णभगवत्स्वनुरघुवीराचार्यविरचातायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां द्विशताधिकः षड्विंशस्तरङ्गः ॥ २२६ ॥ ३ ॥

भक्तस्यान्तर्बाधितानुवृत्तिः सामान्यसत्तया । विशेषसत्तया चोक्ता तुर्ये जीवस्य तु स्थितिः ॥ १ ॥ शकेति पूर्वार्द्धं व्याख्यातम् । (१८८३) नभः शुक्लतृतीयायां श्रावणमासीयशुक्लपक्षस्य तृतीयातिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥१॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमस्य । भूभुजः । दुर्गे । स्वावासे स्वभवनबाह्य-वेदिकायाम् । स्वासने स्वातृतस्थूलतूलिकासने । सितवासाः परिहितसकलश्वेतवसनः । स श्रीहरिः । उदङ्मुखः सन् । अराजत् ॥ २ ॥ वृतइति । नानादेशेभ्यः ।

भक्तेन तेनाथ समर्चितोऽसौ वृतः स्वकीयैः पुनरात्मवासम् । दुर्गे नरेशस्य समेत्य तत्र मञ्चासने साधु विराजते स्म ॥ २९ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते द्विशताधिकःषड्विंशस्तरङ्गः ॥ २२६ ॥ ३ ॥

शकाब्दे विक्रमार्कस्य गुणाष्टवसुभूमिते । नभः शुक्लतृतीयायां वचोऽमृतमिदं हरेः ॥ १ ॥ तत्र दुर्गपुरे दुर्ग उत्त-मस्य स भूभुजः । स्वावासे स्वासनेऽराजत्सितवासा उदङ्मुखः ॥ २ ॥ वृतः स्वभक्तनिकरैर्नानादेशेभ्य आगतैः । उपविष्टान्स्वपुरतः प्रोवाच स सतः प्रभुः ॥ ३ ॥ ज्ञानवैराग्यवेगेन मायिकार्थेषु सर्वथा । अप्रीतस्यापि भक्तस्य कृष्ण एव रतस्य च ॥ ४ ॥ यावन्न स्यान्निर्विकल्पः समाधिस्तावदेव तु । तदन्तरे बाधितानुवृत्तिः शिष्यत एव हि ॥ ५ ॥ असत्तया निश्चितेषु स्त्रीपुत्रद्रविणादिषु । अपि प्रीतिः क्वचिन्माभूदिति तद्भीर्भवेत्तया ॥ ६ ॥

आगतैः । स्वभक्तनिकरैः स्वाश्रितत्यागिगृहिजनवृन्दैः । वृतः सभायां परिवेष्टितः । प्रभुः । स श्रीहरिः । स्वपुरतः । उपविष्टान् । सतः साधून् । प्रोवाच ॥ ३ ॥ ज्ञानेति । ज्ञानवैराग्यवेगेन । मायिकार्थेषु । सर्वथा । अप्रीतस्य स्वबन्धनकर्तृषु मायिकवस्तुषु सर्वप्रकारेण प्रीतिरहितस्येत्यर्थः । कृष्णे साक्षाद्धरावेव । रतस्य प्रीति-युक्तस्य । भक्तस्यापि । यावदित्युत्तरेण सम्बन्धः ॥४॥ यावदिति । यावद्यावत्कालपर्यन्तम् । निर्विकल्पः । समाधिः । न स्यात् । तावत्तावत्कालपर्यन्तमेव । तदन्तरे तथाविधभक्तान्तःकरणे । बाधितानुवृत्तिर्दग्धपटे पटत्वानुदर्शनवन्मिथ्यात्वेन ज्ञातस्यार्थस्याप्यनुवर्त्तनम् । शिष्यते एव ॥ ५ ॥ असदिति । असत्तया मिथ्यात्वेन । निश्चितेष्वपि स्त्रीपुत्रधनादिषु । प्रीतिः । क्वचित्कदाचिदपि । माभूत् मम मास्ता । इत्येवंविधा । तद्भीः स्त्र्यादिषु प्रीतेर्भयम् । तया बाधितानुवृत्त्या । भवेत् । बाधितमपि स्त्र्यादिकं ममानुवर्त्तते यदि तर्हि तत्र मम स्नेहो विद्यते किमिति । तस्मात्तस्य भयमुत्पद्यते इत्यर्थः ॥ ६ ॥

एतदेव दृष्टान्तेनाह । स्वेति । यद्वद्यथा । शूरस्य शौर्यवतः पुरुषस्य । स्वहतेभ्योऽपि । शत्रुभ्यः । अथवा । स्वप्नदृष्टेभ्यो मृतेभ्य एव स्वप्नेक्षितेभ्यस्तेभ्यः । क्वचित्कदाचित् । भीतिः । भवेत् । तथा । तया बाधितानुवृत्त्या तस्य तेभ्यो भीर्भवेत् ॥ ७ ॥ मायिकानामिति । असत्तया मिथ्यात्वेन । बुद्धानामपि । मायिकानाम् । पदार्थानाम् । क्वचित् । स्मृतेर्हेतोरपि । तस्य भक्तस्य । तया बाधितानुवृत्त्या । भयम् । भवति ॥ ८ ॥ निर्विकल्पेति । अत्र सत्सङ्गे । यस्य । पुंसो भक्तस्य । निर्विकल्पसमाधिः । स्यात् । तस्य भक्तस्य तु । सा बाधितानुवृत्तिः । विनष्टा । भवेत् । नूनम् । अतो हेतोः । तदपेक्षणं बाधितानुवृत्तिनिवृत्तिहेतुनिर्विकल्पसमाध्यपेक्षा । अस्ति । निर्विकल्पसमाधौ सत्येव बाधितानुवृत्तिर्निवर्त्तत इत्यर्थः ॥ ९ ॥ तस्यामिति । तस्यां बाधितानुवृत्त्याम् । वर्त्तमानायां सत्याम् । तेन निर्विकल्पसमाधिना । हीनस्य । पुंसो भक्तस्य । अन्तकाले देहावसानसमये । क्वापि कदाचित् । तद्वशाद्बाधितानुवृत्तिवशतः । विप्रलापो मातृपितृस्त्रीपुत्रादिनामग्रहणरूपो विरुद्धोक्तिरपि । भवेत् । 'विप्रलापो विरुद्धोक्तावनर्थकवचस्यपी''त्यनेकार्थसंग्रहे हेमः ॥ १० ॥ तमिति । तं तत्कृतं

स्वहतेभ्योऽपि शत्रुभ्यः स्वप्नदृष्टेभ्य एव वा । शूरस्यापि क्वचिद्भीतिर्भवेद्यद्वत्तथा तया ॥ ७ ॥ मायिकानां पदार्थानां बुद्धानामप्यसत्तया । क्वचित्स्मृतेरपि भयं तया भवति तस्य च ॥ ८ ॥ निर्विकल्पसमाधिः स्याद्यस्य पुंसोऽत्र तस्य तु । सा विनष्टा भवेन्नूनमतोऽस्ति तदपेक्षणम् ॥९॥ तस्यां च वर्त्तमानायां पुंसो हीनस्य तेन तु । अन्तकाले भवेत् क्वापि विप्रलापोऽपि तद्वशात् ॥१०॥ तं श्रुत्वा त्वगुणं तस्य केचिद् गृह्णन्त्यबुद्धयः । भक्तत्वेन श्रुतोऽप्येष ब्रूतेऽवाच्यं कथं न्विति ॥ ११ ॥ नैतावता भवेत्तस्य दुर्गतिस्तु कदाचन । कृष्णनिश्चयदार्ढ्येन स यात्येव परां गतिम् ॥ १२ ॥ कृष्णनिश्चयहीनस्तु सद्वाक्यानि ब्रुवन्नपि । म्रियेत चेत्तर्हि सोऽपि प्रयात्येवाधमां गतिम् ॥१३॥ स्मरन् कृष्णस्य नामानि यत्तद्वा प्रलपन्नपि । यो बाधितानुवृत्त्याऽसौ भक्तस्त्वन्ते व्रजेद्धरिम् ॥१४॥

विप्रलापम् । श्रुत्वा । अबुद्धयो बुद्धिवर्जिताः । केचित्पुरुषाः । तस्य भक्तस्य । अगुणं दोषम् । गृह्णन्ति । एषः । भक्तत्वेन । श्रुतः सन्नपि । अवाच्यमन्तकाले विशेषादुपादेयं भगवन्नाम हित्वा सर्वथा न वाच्यं मात्रादिनाम । कथं तु । ब्रूते । इत्यगुणं गृह्णन्तीतिसम्बन्धः ॥ ११ ॥ नेति । एतावता बाधितानुवृत्तिजातप्रलपनोच्चारणेन । तस्य भक्तस्य । दुर्गतिरसद्गतिस्तु । कदाचन । न भवेत् । स भक्तः । कृष्णनिश्चयदार्ढ्येन । पराम् । गतिं परमगतिरूपं भगवद्धामेत्यर्थः । यात्येव ॥ १२ ॥ कृष्णेति । कृष्णनिश्चयहीनः पुरुषस्तु । चेद्यदि । सद्वाक्यानि व्यवहारोचितानि समीचिनवचनानि । ब्रुवन्सन्नपि । म्रियेत । तर्हि । स सद्वाक्यब्रुवोप्यभक्तः पुरुषः । अधमाम् । गतिं यमयातनारूपाम् । प्रयात्येव ॥१३॥ स्मरन्निति । यः । भक्तः साक्षाच्छ्रीहर्याश्रितो जनः । कृष्णस्य श्रीहरेः । नामानि स्वामिनारायणादीन्यभिधानानि । स्मरन्सन्नुच्चरन्सन् । अथवा । बाधितावृत्त्या । यत्तत् । प्रलपंस्तद्विप्रलापं कुर्वन्सन्नपि । म्रियेतेतिशेषः । असौ भक्तस्तु । अन्ते देहत्यागानन्तरम् । हरिम् । व्रजेत् ॥ १४ ॥

एतावतीति । प्रभुणा । तेन श्रीहरिणा । एतावती । वार्त्ता । तद्दिने तृतीयायाः सङ्गवकाले इत्यर्थः । कृता । पुनर्भूयोऽपि । सायं पट्घटिकामितदिनावशेषकाले । पूर्वोक्तस्थाने एव । भक्तसंसदि त्यागिगृहिस्वभक्तसभायाम् । स श्रीहरिः । अराजत ॥ १५ ॥ अपृच्छदिति । स श्रीहरिः । सतः स्वपुरोनिषण्णान्साधून् । अपृच्छत् । हे साधवः ! । जीवः । देहे । एकत्रैकस्मिन्प्रदेशे । कीदृशः किंविधतया । स्थितः । अस्ति । अथ च । अखिले । देहे । व्याप्य । कीदृक्तया । स्थितः । अस्ति । तद् ब्रूतेतिशेषः ॥ १६ ॥ प्रश्नस्येति । अस्य । प्रश्नस्य । उत्तरम् । कर्त्तुम् । यदा । ते सन्तः । सम्यक् । न विदुः । तदा । स्वयम् । हरिरेव । साधून् । तत्स्वप्रश्नोत्तरम् । आह । हे सन्तः ! । निशम्यताम् ॥ १७ ॥ अस्तीति । हृदये । पाञ्चभौतिकं पृथिव्यादिपञ्चमहाभूतविकाररूपम् । एकम् । मांसचक्रम् । अस्ति । तत्र मांसचक्रे । चिद्रूपो ज्ञानस्वरूपः । अतिप्रकाशवान् । जीवात्मा । स्थितः । अस्ति ॥ १८ ॥ यथेति । यथा । तैलाक्तायां तैलाप्लुतायाम् । चीवर-

एतावती कृता वार्त्ता प्रभुणा तेन तद्दिने । पुनः सायं स तत्रैव भक्तसंसद्यराजत ॥ १५ ॥ अपृच्छत्स सतो जीवो देहे एकत्र कीदृशः । स्थितोऽस्त्यथाखिले देहे व्याप्य कीदृक्तया स्थितः ॥ १६ ॥ प्रश्नस्यास्योत्तरं कर्तुं यदा सम्यङ्न ते विदुः । तदा तत्स्वयमेवाह हरिः साधून्निशम्यताम् ॥ १७ ॥ अस्त्येकं हृदये मांसचक्रं वै पाञ्च-भौतिकम् । स्थितोऽस्ति तत्र जीवात्मा चिद्रूपोऽतिप्रकाशवान् ॥ १८ ॥ यथा चिवरवर्त्तौ स्यात्तैलाक्तायां हवि-र्भुजः । ज्योतिस्तथा तत्र जीवः संलग्नो वर्त्तते भृशम् ॥१९॥ यथाऽयोगोलके वाऽग्निः सर्वतो व्याप्य तं भवेत् । विशेषसत्तया तद्वत्तत्रासौ व्याप्य संस्थितः ॥ २० ॥ सामान्यसत्तया चैष व्याप्तोऽस्त्येवाखिलं वपुः । अतस्तत्स-र्वदेशेषु सुखं दुःखं च बुध्यते ॥२१॥ विशेषसत्तया वर्त्तौ वर्त्तमानोऽपि दीपकः । सामान्यसत्तया गेहं यथा भास-यतेऽखिलम् ॥२२॥ विशेषसत्तया तद्वत्तच्चक्रे संस्थितोऽप्यसौ सामान्यसत्तया जीवश्चेतयत्यखिलं वपुः ॥ २३ ॥

वर्त्तौ स्फाटितवस्त्रदशायाम् । हविर्भुजोऽग्नेः । ज्योतिः प्रदीपात्मकं तेजः । स्यादतिसंलग्नं भवेत् । तथा । जीवः । तत्र मांसचक्रे । भृशमतिशयेन । संलग्नः । वर्त्तते ॥ १९ ॥ यथेति । यथा वा । अग्निः । अयोगोलके । तमयोगोलकम् । सर्वतः । व्याप्य । भवेद्वर्त्तमानः स्यात् । तद्वत्तथा । असौ जीवः । तत्र मांस-चक्रे । व्याप्य तत्सर्वतोऽभिव्याप्य । विशेषसत्तया । संस्थितोऽस्ति ॥ २० ॥ सामान्येति । एष जीव एव । सामान्यसत्तया अखिलम् । वपुः स्वशरीरम् । व्याप्तः । अस्ति । अतोहेतोः । तत्सर्वदेशेष्वानखादाशिखं शारीरसर्वावयवेषु । जायमानमितिशेषः । सुखम् । दुःखं च । बुध्यते ॥ २१ ॥ एतदेव पुनर्दृष्टान्तेन स्पष्टमाह द्वाभ्याम् । विशेषेति । यथा दीपकः विशेषसत्तया । वर्त्तौ दशायाम् । वर्त्तमानः सन्नपि । सामान्यसत्तया । अखिलम् । गेहम् । भासयते ॥ २२ ॥ विशेषेति । तद्वत्तथा । असौ जीवः । विशेषसत्तया । तच्चक्रे मांसचक्रे । संस्थितः सन्नपि । सामान्यसत्तया । अखिलम् । वपुः । चेतयति ॥ २३ ॥

तैलेति । यथा । तैलाधिष्ठानवर्त्तीनां स्नेहशरावदशानाम् । सम्बन्धम् । अन्तरा विना । अग्निर्ज्वालारूपो वह्निः । न तिष्ठेत् । तथा । जीवः । तच्चक्रम् । विना । एकलः केवलः । न तिष्ठेत् ॥ २४॥ ऐक्येनेति । जीवः । ऐक्येन मांसचक्रेण सहैकभावेन । भासमानः सन्नपि । वस्तुतः स्वरूपतः । तद्भिन्नश्चक्रतः पृथगेव । अस्ति । अतोहेतोः । देहनाशे चक्राधारशरीरपाते सत्यपि । क्वचित्कदाचिदपि । तन्नाशो जीवविनाशः । न भवति ॥ २५ ॥ एतदेव दृष्टान्तेन स्पष्टमाह । यथेति । यथा । वर्त्त्या दशायाः । विनाशे सत्यपि । तदैक्येन वर्त्त्या सहैकभावेन । स्थितः । अनलः प्रदीपाग्निः । न नश्यति । तथा । जीवोऽपि । अविनाशी देहविनाशेऽपि न नश्यतीत्यर्थः । इतीत्थम् । गम्यताम् ॥ २६ ॥ देहस्येति । यथा । देहस्य । अन्तर्हृदये । जीवः । वर्त्तते । तथा । जीवस्य । अन्तः । साक्ष्यन्तर्यामिपर्यायः । तदुपास्यो जीवेनोपासनीयः । ईश्वरः । वर्त्तते कर्मफलप्रदानाय तिष्ठतीत्यर्थः ॥ २७ ॥ इत्थमिति । इत्थमेवंविधम् । गुरोः । तस्य श्रीहरेः

तैलाधिष्ठानवर्त्तीनां यथा सम्बन्धमन्तरा । नाग्निस्तिष्ठेत्तथा जीवो विना तच्चक्रमेकलः ॥ २४ ॥ ऐक्येन भासमानोऽपि तद्भिन्नोऽस्त्येव वस्तुतः । अतो न देहनाशेऽपि तन्नाशो भवति क्वचित् ॥ २५ ॥ यथा वर्त्त्या विनाशेऽपि तदैक्येन स्थितोऽनलः । न नश्यति तथा जीवोऽप्यविनाशीति गम्यताम् ॥ २६ ॥ देहस्यान्तर्यथा जीवो जीवस्यान्तस्तथेश्वरः । साक्ष्यन्तर्यामिपर्यायस्तदुपास्यो हि वर्त्तते ॥२७॥ इत्थं गुरोस्तस्य वचोऽमृतं ते निपीय भक्ता निखिलास्तदीयाः । विसृष्टगेहा गृहिणश्च सर्वे प्रापुर्महान्तं हृदये प्रमोदम् ॥ ३८ ॥

इति श्रीहरिवाक्यसुधासिंधौ शतानन्दमुनिविरचिते द्विशताधिकसप्तविंशस्तरङ्गः ॥ २२७ ॥ ४ ॥

शकाब्दे विक्रमार्कस्य गुणाष्टवसुभूमिते । भाद्रस्य शुक्लैकादश्यां वचोऽमृतमिदं हरेः ॥ १ ॥

। वचोऽमृतम् । निपीय । तदीयाः । भक्ताः । निखिलाः । ते विसृष्टगेहाः साधवः । सर्वे । गृहिणश्च । हृदये । महान्तम् । प्रमोदम् । प्रापुः ॥ २८ ॥ बाधितस्यानुवृत्तिं तु स्वभक्तस्यान्तरे स्थिताम् । सामान्यसत्तया जीवं विशेषसत्तया तथा ॥१॥ स्थितं देहे स्वकीये च दृष्टान्तकथनेन यः । स्वीयेभ्यः प्राह स हरिर्मज्जीवे वर्त्ततां सदा ॥ २ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तक श्रीहर्येकान्तिकोपासक श्रीहरिकृष्णभगवत्स्वगुरुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां द्विशताधिकसप्तविंशस्तरङ्गः ॥ २२७ ॥ ४ ॥

निर्विघ्नायाः सविघ्नायाः भक्तेर्लक्ष्म सहेतुकम् । यत्सकामस्य भक्तस्य न्यूनसौख्याप्तिरन्ततः ॥ १ ॥ अन्ते निष्कामभक्तस्य महासौख्याप्तिरेव या । एतत्सर्वं पञ्चमे तु प्रोक्तं विस्तरतः स्फुटम् ॥ २ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । ( १८८३ ) भाद्रस्य भाद्रपदमासस्य । शुक्लैकादश्यां वलक्षपक्षसम्बन्धिन्यामेकादशीतिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥

तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमस्य राज्ञः । दुर्गे । प्राचीनवक्त्रस्य प्रागास्यस्य । वेश्मनस्तस्यैव भवनस्य । वेद्यां बाह्यवेदिकायाम् । निजासने स्वास्तृते स्वीये स्थूलतूलिकासने । स श्रीहरिः । उपाविशत् ॥ २ ॥ मल्लिकेति । मल्लिकानां कुन्दकुसुमानां ये हाराः स्रजश्च वलये कटके च शेखरालि रापीडश्रेणिश्च ताभिर्विराजितोऽतिशोभमानः । सितवासाः परिहितसकलश्वेतवसनः । भक्तैर्नानादेशागतत्यागिगृहिस्वाश्रितजनैः । वृतः सभायां परिवेष्टितः । स श्रीहरिः । तान् भक्तान् । प्रश्नाय प्रश्नं कर्त्तुम् । प्रेरयत् ॥ ३ ॥ पप्रच्छेति । तं प्रश्नाय प्रेरयन्तं श्रीहरिम् । मुक्तानन्दो मुनिः । पप्रच्छ । हे हरे ! । ईशितुः साक्षात्परमेश्वरस्य । ते तव । कीदृशी । भक्तिः । अन्तरायैर्विघ्नैः । अभिभूयेत पराभूता भवेत् । कीदृशी भक्तिश्च । तथा न अन्तरायैर्नाभिभूयेत । तद्वदेतिशेषः ॥ ४ ॥ 'इत्थं स मुक्तानन्देन पृष्टः श्रीपुरुषोत्तमः । ऊचे तं चापरान् भक्तान् नन्दयन्नखिलानि'ति । माहात्म्यस्येति । हे मुने ! । हरेः । या भक्तिः । माहात्म्यस्य । अवबोधेन ज्ञानेन । युक्ता । भवेत् । सा भक्तिस्तु । विघ्नैः । सर्वथा । न विहन्येत नाभिभूयेत् । अन्या माहात्म्यज्ञानरहिता भक्तिस्तु । विघ्नैः सर्वथा । हन्येत ॥ ५ ॥ तदिति । तन्मा-

तत्र दुर्गपुरे दुर्गे उत्तमस्य वेश्मनः । वेद्यां प्राचीनवक्त्रस्य निजासन उपाविशत् ॥ २ ॥ मल्लिकाहारवलयशेखरालिविराजितः सितवासा वृतो भक्तैः प्रश्नाय प्रैरयत्सताम् ॥ ३ ॥ पप्रच्छ मुक्तानन्दस्तं कीदृशी भक्तिरीशितुः । अभिभूयेतान्तरायैः कीदृशी ते तथा न च ॥ ४ ॥ श्रीहरिरुवाच–माहात्म्यस्यावबोधेन युक्ता भक्तिस्तु या हरेः । सा विघ्नैर्न विहन्येत हन्येतान्या तु सर्वथा ॥५॥ तत्तु श्रीमद्भागवततृतीयस्कन्ध ईरितम् । देवहूत्या स्वपुत्राय तस्यै तेन च तत्त्वतः ॥ ६ ॥ यन्नामधेयश्रवणानुकीर्त्तनाद्यत्प्रह्वणाद्यत्स्मरणादपि क्वचित् । श्वादोऽपि सद्यः सवनाय कल्पते कथं पुनस्ते भगवन्नु दर्शनात् ॥७॥ अहो बत श्वपचोऽतो गरीयान् यज्जिह्वाग्रे वर्त्तते नाम तुभ्यम् । तेपुस्तपस्ते जुहुवुः सस्नुरार्या ब्रह्मानूचुर्नाम गृणन्ति ये ते ॥ ८ ॥

हात्म्यं तु । श्रीमद्भागवततृतीयस्कन्धे । देवहूत्या । स्वपुत्राय स्वपुत्रभावं प्राप्ताय कपिलभगवते । तत्त्वतः । ईरितम् । अस्ति । तेन कपिलभगवता । तस्यै मात्रे देवहूत्यै च । तत्त्वतः । ईरितम् । अस्ति ॥ ६ ॥ यदिति । हे भगवन् ! । क्वचिदपि । यन्नामधेयश्रवणानुकीर्त्तनाद्यस्य तव नामधेयस्याभिधानस्य श्रवणात् अनुकीर्त्तनाच्च । यत्प्रह्वणाद्यस्य तव प्रणामात् । यत्स्मरणाद्यस्य तव ध्यानाच्च । श्वादः श्वपचोऽपि । सद्यस्तत्क्षणमेव । सवनाय यज्ञं विधातुम् । कल्पते योग्यो भवति । यथा यज्ञसम्पादने पवित्राणां ब्राह्मणादीनां योग्यत्वं भवन्नामश्रवणादिना पवित्रतोदयस्तथा तस्यापि भवेदित्यर्थः । ते तव । दर्शनात् । कुतः । पुनर्नु । तव दर्शनेन पवित्रत्वं कृतार्थत्वं च स्यात्तत्र किं वक्तव्यमित्यर्थः ॥ ७ ॥ अहो इति । अहोबतेत्याश्चर्ये । यज्जिह्वाग्रे यस्य श्वपचस्यापि रसनाग्रभागे । तुभ्यं तव । नाम । वर्त्तते । स श्वपचोऽपि । अतस्त्वन्नामोच्चारणाद्धेतोः । गरीयान् त्वद्भक्तिवर्जितकर्मठेभ्योऽतिशयेन श्रेष्ठः । किञ्च । ये जनाः । ते तव । नाम । गृणन्त्युच्चरन्ति । ते जनाः । तपः । तेपुः कृतवन्तः । जुहुवुर्होमं चक्रुः । सस्नुस्तीर्थे स्नाताः । आर्यास्त एव सदाचाराः । ब्रह्म वेदम् । अनूचुरधीतवन्तः ॥ ८ ॥

नेति । हे मातः ! । प्रधानपुरुषेश्वरात् मूलप्रकृतिपुरुषयोरपिनियन्तुः । सर्वभूतानां सर्वेषां प्राणिनाम् । आत्मनोऽन्तर्यामिणः । भगवतः षडैश्वर्यसम्पन्नात् । मन्मत्तः । अन्यत्र । मामृते इत्यर्थः । तीव्रं दुःसहम् । भयं संसृतिभीतिः । न निवर्त्तते ॥ ९ ॥ मदिति । अयं सकलजगत्सुखप्रदः । वातो वायुः । मद्भयात् । वाति । सूर्यः । मद्भयात् । तपति । इन्द्रः । मद्भयात् । वर्षति । अग्निः । मद्भयात् । दहति । मृत्युः । मद्भयात् । चरति ॥१०॥ ज्ञानेति । योगिनो मदुपासकाः । ज्ञानवैराग्ययुक्तेन । भक्तियोगेन । क्षेमायात्यन्तिकमोक्षाय । अकुतोभयं कुतश्चिद्भयरहितम् । मे मम । पादमूलम् । प्रविशन्ति प्राप्नुवन्ति ॥ ११ ॥ एवमिति । हे मुने ! । एवममुना प्रकारेण । माहात्म्यबोधाढया । भक्तिः । निर्विघ्ना । अन्या माहात्म्यबोधरहिता । भक्तिः । सविघ्ना । इति । ईयताम् । इत्यमुना प्रकारेण । उक्तः श्रीहरिणा कृतोत्तरः । असौ । मुनिर्मुक्तानन्दः साधुः । पुनः । तं श्रीहरिम् । पप्रच्छ ॥१२॥ भक्तिरिति । हे हरे ! । ते तव । महिमोपेता । त्वन्माहात्म्यज्ञानसहितेत्यर्थः । भक्तिः । केन । उपायेन साधनेन । लभ्यते । तद्वदेतिशेषः । तमेवं पृच्छन्तं मुक्तानन्दमुनिम् । हरिः । उवाच । हे मुने ! । सा माहात्म्यज्ञानोपेता भक्तिः ।

नान्यत्र मद्भगवतः प्रधानपुरुषेश्वरात् । आत्मनः सर्वभूतानां भयं तीव्रं निवर्त्तते ॥ ९ ॥ मद्भयाद्वाति वातोऽयं सूर्यस्तपति मद्भयात् । वर्षतीन्द्रो दहत्यग्निर्मृत्युश्चरति मद्भयात् ॥ १० ॥ ज्ञानवैराग्ययुक्तेन भक्तियोगेन योगिनः । क्षेमाय पादमूलं मे प्रविशन्त्यकुतोभयम् ॥ ११ ॥ एवं माहात्म्यबोधाढया निर्विघ्ना भक्तिरीयताम् । अन्या सविघ्ने-त्युक्तोऽसो पुनः पप्रच्छ तं मुनिः ॥ १२ ॥ भक्तिस्ते महिमोपेता केनोपायेन लभ्यते । तमुवाच हरिः सा तु महतां सेवयाऽऽप्यते ॥ १३ ॥ मयोदितैरुपेता ये लक्षणैः साधवो भुवि । स्युः प्रसङ्गेन तेषां वै सोदेति हृदये नृणाम् ॥ १४ ॥ इत्युक्त्वोपरतं तं च पृच्छति स्म शुको मुनिः । स्वामिन् ! भक्तौ भगवतस्तव स्तः कौचन क्षितौ ॥ १५ ॥ कृष्णनिश्चयदार्ढ्ये तु समौ द्वौ किन्तु चेतसि । कामादिविक्रियैकस्य क्वापि स्यान्नेतरस्य तु ॥ १६ ॥

महतामेकान्तिकानां साधूनाम् । सेवया । आप्यते ॥ १३ ॥ एतदेव । स्पष्टमाह । मयेति । हे मुने ! । भुवि । ये साधवः । मया । उदितैर्हरिगीतायां कथितैः । लक्षणैर्लक्ष्मभिः । उपेता युक्ताः । स्युः । तेषां भवादृशानां साधूनाम् । प्रसङ्गेन प्रसङ्गपूर्विकया सेवया । सा माहात्म्यज्ञानोपेता भक्तिः । नृणां भक्तानाम् । हृदये । उदेति ॥ १४ ॥ इतीति । इत्यमुना प्रकारेण । उक्त्वा । उपरतं तूष्णीमासीनम् । तं श्रीहरिम् । शुकः शुकानन्दनामा । मुनिः साधुः । पृच्छति स्म । हे स्वामिन् । क्षितौ । भगवतः प्रत्यक्षपुरुषोत्तमस्य । तव कौचन । भक्तौ । स्तो भवतः ॥ १५ ॥ कृष्णेति । द्वावपि भक्तौ । कृष्णनिश्चयदार्ढ्ये श्रीकृष्णनाम्नस्तव निश्चयदृढतायां तु । समौ तुल्यौ । स्याताम् । किन्तु । एकस्य तयोराद्यस्य भक्तस्य । चेतसि । क्वापि कदाचित् । कामादीविक्रिया कामलोभक्रोधोदयजन्यो विक्षेपः । स्यात् । इतरस्य द्वितीयस्य भक्तस्य तु । चेतसि क्वापि । कामादिविक्रया । न स्यात् ॥ १६ ॥

द्वयोरिति । एतयोः । द्वयोरपि भक्तयोः । अन्ते देहत्यागानन्तरम् । सुखाप्तिस्त्वदक्षरधाम्नि सुखोपलम्भः । समा तुल्या । स्यात् । अथवा । न्यूनाधिका तारतम्येन । स्यात् । इत्यमुना प्रकारेण । पृष्टः शुकानन्दमुनिनात्तुयुक्तः । असौ श्रीहरिः । तं शुकानन्दमुनिम् । उवाच । हे मुने ! । शृणु ॥ १७ ॥ कामेति । दृढनिश्चयः साक्षाद्भगवत्स्वरूपस्य यथार्थनिश्चयवान् । यः । भक्तो द्वितीयो भक्तः । अतित्यागी सर्वथा रमणीयमायिकपदार्थमात्रापरिग्रही । अतिवैराग्ययुक्तः । तथा । भृशमतिशयेन । आत्मनिष्ठः सन् । कामक्रोधादिहीनः । अस्ति ॥१८॥ साक्षादिति । स तथाविधभक्तोऽपि । यदि । साक्षात्कृष्णेतरत्साक्षाच्छ्रीहरिस्वरूपातिरिक्तम् । किञ्चिदात्मदर्शनात्मानन्दब्रह्मानन्दादि किमपि । इच्छेत् । तर्हि तु । एष एवंविधोऽपि भक्तः । बाह्यत उपरिष्टात् । निष्कामो निष्कामवत्प्रतीयमानः सन्नपि । सकामः । न्यूनसौख्यभाक् । ज्ञेयः । इतिद्वयोरेकसम्बन्धः ॥१९॥ अन्य इति । अन्यः प्रथमः । यः । भक्तः । कामादिविक्षेपम् । प्राप्य । अनुतापवान् । स्यात् । साक्षाद्धरीतरत्

द्वयोरप्येतयोरन्ते सुखाप्तिः स्यात्समाऽथवा । न्यूनाधिकेति पृष्टोऽसौ तमुवाच मुने ! शृणु ॥ १७ ॥ कामक्रोधादिहीनो यो भक्तोऽस्ति दृढनिश्चयः । अतित्याग्यतिवैराग्य आत्मनिष्ठस्तथा भृशम् ॥१८॥ साक्षात्कृष्णेतरत्किञ्चित्सोऽपीच्छेद्यदि तर्हि तु । निष्कामो बाह्यतोऽप्येष सकामो न्यूनसौख्यभाक् ॥ १९ ॥ अन्यः कामादिविक्षेपं प्राप्य स्यादनुतापवान् । यो भक्तः क्वापि नेच्छेच्च किञ्चित्साक्षाद्धरीतरत् ॥ २० ॥ कृष्णनिश्चयवानेष मन्दज्ञानविरागवान् । सकामो दृश्यमानोऽपि निष्कामोऽस्त्येव सर्वथा ॥ २१ ॥ ततो महत्सुखं सोऽन्ते प्राप्स्यति ब्रह्मधामनि । एष एवानन्यभक्त इति जानीहि निश्चितम् ॥ २२ ॥ अतो भूरिसुखेच्छुस्तु भक्तस्त्याग्यथवा गृही । किञ्चित्कृष्णेतरद्वस्तु नैव वाञ्छेत्कदाचन ॥ २३ ॥ धर्माङ्गजस्येति सुधासमानं वचो निशम्याप मुनिः स तोषम् । अन्ये च सर्वे मुनयः सदःस्थास्तथा गृहस्थाश्च तदीयभक्ताः ॥ २४ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते द्विशताधिकाष्टविंशस्तरङ्गः ॥ २२८ ॥ ५ ॥

। किञ्चिदात्मदर्शनादि किमपि । क्वापि कदाचिदपि । नेच्छेत् ॥ २० ॥ कृष्णेति । कृष्णनिश्चवान् सुदृढश्रीहरिस्वरूपनिश्चययुक्तः । मन्दज्ञानविरागवांस्तीव्रतावर्जितात्मज्ञानवैराग्ययुक्तः । एष प्रथमो भक्तः । सकामः । दृश्यमानः । बाह्यतः सकामवत्प्रतीयमानः सन्नपीत्यर्थः । सर्वथा । निष्काम एव । अस्ति ॥ २१ ॥ तत इति । ततोहेतोः । स एष भक्तः । अन्ते स्वदेहत्यागानन्तरम् । ब्रह्मधामनि । महत् । सुखम् । प्राप्स्यति । एष एव । अनन्यभक्त एकान्तिकभक्तः । अस्ति । इतीत्थम् । निश्चितमेव । जानीहि ॥ २२ ॥ अत इति । अतोहेतोः । भूरिसुखेच्छुः । त्यागी । भक्तः । अथवा । गृही । भक्तः । कृष्णेतरत् । किञ्चित्किमपि । वस्तु । कदाचन । नैव वाञ्छेत् ॥ २३ ॥ धर्मेति । इत्येवंविधम् । धर्माङ्गजस्य धर्मसूनोः श्रीहरेः । सुधासमानम् । वचः । निशम्य । सः । मुनिः शुकानन्दसाधुः । तोषम् । आप । सदःस्थाः । तदीयभक्ताः । अन्ये । सर्वे । मुनयः । तथा । गृहस्थाश्च । तोषम् । आपुः ॥ २४ ॥ निर्विघ्नायाः सविघ्नायाः स्वभक्तेर्लक्षणं तु यः ।

निष्कामस्य सकामस्य स्वभक्तस्यावसानतः ॥१॥ तारतम्यं सुखस्यैव स्वकीयेभ्य उवाच च । एकान्तिकीं स्वभक्तिं मे दद्यात्स श्रीहरिः सदा ॥२॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तक श्रीहर्येकान्तिकोपासक श्रीहरिकृष्णभगवत्स्नुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां द्विशताधिकाष्टविंशस्तरङ्गः ॥ २२८ ॥ ५ ॥

दम्भेर्ष्याहीनया भक्त्या श्रेयोऽर्थं कृतयाऽऽत्मनः । हरिः प्रसन्नो भवति नानेवंभूतया तया ॥ १ ॥ स्याच्चेद्भक्तस्यापराधः स्वस्य दोषस्तदा तु सः । ज्ञेयो न मनआदेः स इत्युक्तं षष्ठके स्फुटम् ॥ २ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८८३) भाद्रस्य भाद्रपदमासस्य । कृष्णपञ्चम्यां कृष्णपक्षसम्बन्धिन्यां पञ्चमीतिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । । उत्तमस्य । महीभृतो नृपस्य । दुर्गे । स्वावासवेद्यां स्वनिवासभवनस्य बहिर्वेदिकायाम् । स्वासने स्वास्तृते तूलिकासने । धवलांशुकः परिहितसकलश्वेतवसनः । स श्रीहरिः । अराजत् ॥ २ ॥ त्यागिभिरिति । बहुभिर्नानादेशागतादनेकैः । त्यागिभिः । गृहिभिः । भक्तैः । परितः । वृतः सभायां संवेष्टितः । प्रसन्नवदनाब्जः । असौ श्रीहरिः । पुरःस्थान् । सतो मुक्तानन्दादिसाधून् । उचिवान् ॥३॥ भक्तिमिति । हे साधवः ! ।

शकाब्दे विक्रमार्कस्य गुणाष्टवसुभूमिते । भाद्रस्य कृष्णपञ्चम्यां वचोऽमृतमिदं हरेः ॥ १ ॥ तत्र दुर्गपुरे दुर्ग उत्तमस्य महीभृतः । स्वावासवेद्यां सोऽराजत्स्वासने धवलांशुकः ॥ २ ॥ त्यागिभिर्गृहिभिर्भक्तैर्बहुभिः परितो वृतः । प्रसन्नवदनाब्जोऽसौ पुरःस्थान्सत ऊचिवान् ॥ ३ ॥ भक्तिं कृष्णस्य नवधा श्रवणादिं य आचरेत् । स चेत्स्वश्रेयसे कुर्यात्तर्हि कृष्णः प्रसीदति ॥ ४ ॥ इर्ष्यया वापि दम्भेन चेत्तामाचरेद् भृशम् । तथापि न तथा कृष्णश्चिरेणापि प्रसीदति ॥ ५ ॥ श्रेयोर्थमेव कर्त्तव्या ततो भक्ती रमापतेः । तयैव भगवांस्तूर्णं सुप्रीतो भवति ध्रुवम् ॥ ६ ॥ साक्षात्कृष्णे प्रसन्ने तु भक्तस्य सकला अपि । सफला हि भविष्यन्ति तत्सम्बन्धिमनोरथाः ॥ ७ ॥ भक्तिं विदधतः पुंसो यदि कश्चिच्च कुत्रचित् । अपराधो भवेत्तर्हि स स्वदोष इतीयताम् ॥ ८ ॥

यो भक्तः । कृष्णस्य । श्रवणादिम् । नवधा । भक्तिम् । आचरेत् । स भक्तः । चेद्यदि । स्वश्रेयसे केवलस्वकल्याणायैव । कुर्यात् । तर्हि । कृष्णः । प्रसीदति ॥४॥ ईर्ष्ययेति । स भक्तः । चेद्यदि । ईर्ष्यया । अथवा । दम्भेनापि । तां भक्तिम् । भृशम् । आचरेत् । तथापि । तया भक्त्या । कृष्णः । चिरेण बहुकालेनापि । न प्रसीदति ॥ ५ ॥ श्रेयइति । ततोहेतोः । रमापतेर्लक्ष्मीकान्तस्य श्रीहरेः । भक्तिः । श्रेयोऽर्थमेव । कर्त्तव्या । तया तथाविधया भक्त्यैव । भगवान् । तूर्णम् । सुप्रीतः सुप्रसन्नः । भवति जायते । ध्रुवं निश्चितमेव ॥ ६ ॥ साक्षादिति । साक्षात्कृष्णे प्रत्यक्षे श्रीहरौ । प्रसन्ने सति तु । भक्तस्य । सकला अपि । तत्सम्बन्धिमनोरथा भगवत्सम्बन्धिनो मनोरथाः । सफलाः । भविष्यति । हि ॥ ७ ॥ भक्तिमिति । किञ्च । भक्तिम् । विदधतः । पुंसो भक्तस्य । यदि । कुत्रचित्कदाचित् । कश्चित् । अपराध ईर्ष्यादम्भमानादिः । भवेत् । तर्हि । सोऽपराधः । स्वदोषः स्वस्यैवागुणः । बोध्यः । इतीत्थम् । ईयताम् ॥ ८ ॥

नेति । तद्धेतुताऽपराधनिमित्तता । अन्यस्मिन् । पुरुषे यदुपरि स्वस्येर्ष्यादिर्जायते तस्मिन् जने । । क्वचित्कदाचिदपि । नारोप्या नारोपणीया । हि यतः । कश्चन कोऽपि पुरुषः । अन्यवाक्यतः । क्वापि कदाचिदपि । कूपे । न पतति ॥ ९ ॥ जीवस्येति । अपराधवतोऽपि । जीवस्य । अयम् । स्वभावः । कोऽसावित्यत्राह । परस्मिन् । दोषम् । आरोप्य । स्वस्य । निर्दोषताग्रहः । स्वस्य निर्दोषत्वप्रतिपादननिर्बन्ध इत्यर्थः ॥ १० ॥ एतदेव स्पष्टमाह । अन्येनेति । अन्येन पुरुषेण । भ्रामितेन युक्तिवैचित्र्यरचनया मनोविभ्रान्ततां नीतेन । मया । इदम् । अकार्यम् । विहितम् । एतदकार्यम् । मम । नतु नैव । कर्त्तव्यम् । इत्येवमेवंविधानि वाक्यानि । स उक्तविधो जीवः । ब्रवीति ॥ ११ ॥ एवमिति । एव ममुनाप्रकारेण । परस्मिन् । दोषः । नारोप्यः । हि यतः । स दोषस्तु । आत्मनः स्वस्यैव । अस्ति । चेद्यदि । स्वः स्वयम् । अकार्यम् । नाचरेत् । तर्हि । इतरः पुरुषः । तम् । किं कुर्यात् ॥१२॥ अत इति । अतोहेतोः । यः । पुमान् भक्तः ।

न तु तद्धेतुताऽन्यस्मिन्नारोप्या पुरुषे क्वचित् । न ह्यन्यवाक्यतः क्वापि कूपे पतति कश्चन ॥९॥ जीवस्य तु स्वभावोऽयमपराधवतोऽपि हि । परस्मिन्दोषमारोप्य स्वस्य निर्दोषताग्रहः ॥१०॥ अन्येन भ्रामितेनेदमकार्यं विहितं मया । न त्वेतन्मम कर्त्तव्यमित्येवं च ब्रवीति सः ॥ ११ ॥ एवं परस्मिन्नारोप्य दोषः स त्वात्मनोऽस्ति हि । अकार्यं नाचरेत्स्वश्चेत्किं कुर्यादितरस्तु तम् ॥ १२ ॥ अतः परस्मिन्दोषं यः पुमानारोपयेत्स तु । अतिमूर्खोऽवगतव्यः स्वदोषानवबोधनात् ॥ १३ ॥ अकार्याचरणे केचिन्मनसः सेन्द्रियस्य च । ब्रुवन्ति हेतुतां तेऽतिमूर्खा एव न संशयः ॥ १४ ॥ यन्न रोचेत जीवाय मनः सङ्कल्पयेन्न तत् । रुचिर्भवेद्यत्र तस्य तत्तु सङ्कल्पयेद्धि तत् ॥ १५ ॥ जीवस्य भगवद्ध्यानसमये स्त्र्यादिदर्शनम् । यद्यप्रियं भवेत्तर्हि मनः सङ्कल्पयेन्न तत् ॥ १६ ॥ मानसाकार्यसङ्कल्पादनुतापं व्रजेद्यदि । जीवस्तर्हि मनो भूय आचरेन्न तथाविधम् ॥ १७ ॥ सङ्कल्पान् मानसान् दुष्टान् मलिनो जीव एव चेत् । प्रीत्यैवानुसरेत्तर्हि स पतेदेव सत्पथात् ॥ १८ ॥

परस्मिन् । दोषम् । आरोपयेत् । स भक्तस्तु । स्वदोषानवबोधनात्स्वकीयदोषाज्ञानाद्धेतोः । अतिमूर्खः । अवगन्तव्यः ॥ १३ ॥ अकार्येति । किञ्च । केचिद्भक्ताः । अकार्याचरणे । सेन्द्रियस्य चक्षुरादीन्द्रियसहितस्य । मनसः । हेतुतां निमित्तताम् । ब्रुवन्ति । ते भक्ता अपि । मूर्खा एव । सन्ति । न संशयः ॥ १४ ॥ यदिति । हि यतः । यद्वस्तु । जीवाय । न रोचेत । तद्वस्तु । मनः । न सङ्कल्पेत् । तस्य जीवस्य । यत्र वस्तुनि । रुचिः । भवेत् । तत्तद्वस्तु । मनः । सङ्कल्पयेत् ॥१५॥ जीवस्येति । भगवद्ध्यानसमये श्रीहरिस्वरूपचिन्तनवेलायाम् । स्त्र्यादिदर्शनं स्त्रीप्रभृतिपदार्थेक्षणम् । यदि । जीवस्य । अप्रियम् । भवेत् । तर्हि । मनः । तत्स्त्र्यादिवस्तु । न सङ्कल्पयेत् ॥ १६ ॥ मानसेति । यदि । जीवः । मानसाकार्यसङ्कल्पान्मनःकृताविधेयविधेयसङ्कल्पनात् । अनुतापम् । व्रजेत् । तर्हि । मनः । भूयः पुनः । तथाविधमकार्यसङ्कल्पम् । नाचरेत् ॥ १७ ॥ सङ्कल्पानिति । मलिनः पापहेतुकामादिदोषयुक्तः । जीव एव । चेद्यदि । मानसान्मनःकृतान् । दुष्टान् । सङ्कल्पान् ।

प्रीत्यैव । अनुसरेत् । तर्हि । स मलिनो जीवः । सत्पथात्कल्याणमार्गात्सत्सङ्गात् । पतेदेव ॥ १८ ॥ अत इति । अतोहेतोः । शुद्धः कामादिदोषरहितः । मुमुक्षुर्भक्तस्तु । क्वापि कदाचित् । अधर्मोपदेष्टरि । स्वान्ते स्वमनसि । अथवा । अन्यस्मिन् । पुरुषे । वैरमेव । विधत्ते । हि ॥ १९ ॥ तत इति । ततस्तदनन्तरम् । मनः । अन्यपुमांश्च । तदरोचकं मुमुक्षवरुचिकरम् । अधर्मम् । क्वापि । नैवोपदिशति । तदुर्चिं मुमुक्षुनिष्ठधर्मरुचिं च अनुवर्त्तते ॥ २० ॥ दुरिति । यस्य जीवस्य । हृदये मनसि । नित्यं सर्वदा । दुःसङ्कल्पाः । जायेरन् । सः । जीव एव । मलिनः । स्वहितानुद्यतः कल्याणरूपस्वहिताचरणोद्यमवर्जितः । अस्ति । खलु ॥ २१ ॥ एवमिति । एवममुनाप्रकारेण । चक्षुरादीनि । सकलानि । इन्द्रियाण्यपि । अनुगा भृत्याः । राजानम् । यथा । तथा । तं जीवम् । अनुसृत्य । वर्त्तते । हि ॥ २२ ॥ एतदेव स्पष्टमाह । यदीति । यदि । जीवस्य । असत्स्त्र्यादिवीक्षादौ अनर्थकारकस्त्र्यादिवीक्षणादौ । रुचिः । न भवेत् । तदा । तानीन्द्रियाणि । स्वातन्त्र्येण ।

अतः शुद्धो मुमुक्षुस्तु क्वाप्यधर्मोपदेष्टरि । स्वान्ते वा पुरुषेऽन्यस्मिन्विधत्ते वैरमेव हि ॥ १९ ॥ ततो मनश्चान्यपुमान-धर्मं तदरोचकम् । नैवोपदिशति क्वापि तद्रुचिं चानुवर्त्तते ॥ २० ॥ दुःसङ्कल्पा यस्य नित्यं जायेरन् हृदये स च । जीव एवास्ति मलिनः स्वहितानुद्यतः खलु ॥ २१ ॥ एवं हि चक्षुरादीनि सकलानीन्द्रियाण्यपि । तमनुसृत्य वर्त्तते राजानमनुगा यथा ॥ २२ ॥ यद्यसत्स्त्र्यादिवीक्षादौ जीवस्य न रुचिर्भवेत् । स्वातन्त्र्येण तदा तानि न क्षमाण्येव तद्ग्रहे ॥ २३ ॥ अतः सति स्वापराधेऽन्यत्र दोषार्पणं तु यत् । तन्मौर्ख्यमेव जीवस्य निर्विवेकस्य सर्वथा ॥ २४ ॥ एवं ज्ञात्वा हरेर्भक्तिं यः कुर्यात्तं प्रधर्षितुम् । इन्द्रियाणि मनश्चान्ये पुमांसोऽपि क्षमा नहि ॥ २५ ॥ इत्थं निशम्यात्मगुरोर्वचस्ते पीयूषतुल्यं मुनयः सदःस्था । सर्वे तथाऽन्ये गृहिणः स्वभक्ता लब्ध्वातिमोदं हृदि तं प्रणेमुः ॥ २६ ॥

इति श्रीहरिवाक्यसुधासिंधौ शतानन्दमुनिविरचिते द्विशताधिकैकोनत्रिंशस्तरङ्गः ॥ २२९ ॥ ६ ॥

तद्ग्रहेऽसत्स्त्र्यादिवीक्षणादौ । क्षमाणि समर्थानि । न स्युरेव ॥ २३ ॥ अत इति । अतोहेतोः । स्वापराधे । सति । अन्यत्र पुरुषादिषु । यत् । दोषार्पणम् । तत्तु । निर्विवेकस्य विवेकरहितस्य । जीवस्य । सर्वथा । मौर्ख्यं मूर्खत्वमेव । अस्ति ॥२४॥ एवमिति । एवममुना प्रकारेण । ज्ञात्वा । यो भक्तः । हरेः । भक्तिम् । कुर्यात् । तं भक्तम् । प्रधर्षितुं पराभावयितुम् । इन्द्रियाणि । मनः । अन्ये पुमांसो विमुखजनाश्चापि । क्षमाः समर्थाः । न हि न स्युरेव ॥२५॥ इत्थमिति । इत्थमेवंविधम् । आत्मगुरोः स्वहितोपदेष्टुः श्रीहरेः । पीयूषतुल्यम् । वचः । निशम्य । सदःस्थाः । स्वभक्ताः । ते । सर्वे । मुनयः । तथा । अन्ये । गृहिणः । हृदि स्वस्वमानसे । अतिमोदम् । लब्ध्वा । तमात्मगुरुं श्रीहरिम् । प्रणेमुः ॥२६॥ स्वस्य प्रसन्नताहेतोः स्वभक्तेर्लक्ष्म चाह यः । स्वीयस्यावश्यतो ज्ञेयं स हरिर्मयि तुष्यतु ॥ १॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तक श्रीहर्येकान्तिकोपासक श्रीहरिकृष्णभगवत्स्वनुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां द्विशताधिकैकोनत्रिंशस्तरङ्गः ॥२२९॥६॥

ज्ञेयोऽवश्यं स्वभक्तानां स्वसिद्धान्तो हृदि स्थितः । सम्प्रोक्तो हरिणा तेषां पुरतः सप्तमे स्फुटम् ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । नभस्यस्य भाद्रपदमासस्य । कृष्णषष्ठ्यां बहुलपक्षीयषष्ठीतिथौ इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमस्य । भूभुजः । दुर्गे । स्वाश्रमे स्वावासे । तूलिकापीठे पार्श्विकोपबर्हान्वितस्थूलतूलिकासने । सिताम्बरः परिहितसकलश्वेतवसनः । स श्रीहरिः । व्यराजत ॥ २ ॥ बिभ्रदिति । मल्लिकाहारशेखरान्कुन्दोत्तमकुसुमकृतान् हारान्कण्ठे उष्णीषे आपीडांश्चेत्यर्थः । बिभ्रत् । नानाभक्तगणैर्नानादेशायातत्यागिगृहिस्वाश्रितवृन्दैः । परितः । वृतः सभाया संवेष्टितश्च । स श्रीहरिः । पुरोगतान् । साधून् । उवाच ॥ ३ ॥ वदामीति । हे साधवः ! । अहम् । अन्तःस्थं मदन्तःकरणावस्थितम् । स्वसिद्धान्तम् । वदामि । अखिलाः सर्वे यूयम् । शृणुत । मुमुक्षतां भक्तानाम् । कृष्णतद्भक्ततः साक्षाच्छ्रीहरेस्तदेकान्तिकसाधुभ्यश्च सकाशात् । अन्यः यः कश्चनेतरपदार्थः । सुखदः । नास्ति । किन्तु कृष्णतद्भक्ता एव सुखप्रदाः सन्तीत्यर्थः ॥ ४ ॥ अत इति । अतोहेतोः । जीवस्य । यथा स्वदेहे । आत्ममतिरात्मीयताबुद्धिः । अस्ति । तथा । कृष्णे ।

शकाब्दे विक्रमाकस्य गुणाष्टवसुभूमिते । कृष्णषष्ठयां नभस्यस्य वचोऽमृतमिदं हरेः ॥ १ ॥ तत्र दुर्गपुरे दुर्गे उत्तमस्य स भूभुजः । स्वाश्रमे तूलिकापीठे व्यराजत सिताम्बरः ॥ २ ॥ बिभ्रच्च मल्लिकाहारशेखरान् परितो वृतः । नानाभक्तगणैः साधून् स उवाच पुरोगतान् ॥३॥ वदाम्यहं स्वसिद्धान्तमन्तःस्थं शृणुताखिलाः । कृष्णतद्भक्ततो नान्यः सुखदोऽस्ति मुमुक्षताम् ॥४॥ अतो यथा स्वदेहेऽस्ति जीवस्यात्ममतिस्तथा कृष्णे च कृष्णभक्तेषु कार्या हेया च देहतः ॥५॥ पक्षपातस्तदीयश्च रक्ष्यः स्वजनवद् दृढः । तस्मिन्सत्यपमानोऽस्तु मृत्युर्वा स न हीयताम् ॥ ६ ॥ देहदैहिकतः प्रीतिस्तेषु कार्या विशेषतः । अभावस्तु कचित्तेषां ग्रहीतव्यो न चेतसि ॥७॥ एवं वर्त्तेत यो भक्तः कामक्रधादयोऽरयः । तं नाभिभवितुं शक्ता भवन्त्यतिबला अपि ॥८॥ यो ब्रह्मधाम्नि भगवान्सदाऽऽस्ते दिव्यविग्रहः । स एव साक्षात्कृष्णोऽस्ति नराकारो धरातले ॥ ९ ॥

कृष्णभक्तेषु च । कार्या । देहतः स्वशरीरात् । हेया सर्वथा परित्याज्या च ॥ ५ ॥ पक्षपात इति । तदीयः कृष्णतद्भक्तसम्बन्धी । पक्षपातः । स्वजनवत्स्वजनानामिव । दृढः । रक्ष्यः । तस्मिंस्तदीयपक्षपाते । सति कृते सति । अपमानः । अस्तु । अथवा । मृत्युः । अस्तु । तथापि । स तदीयपक्षपातः । न हीयतां मद्भक्ता नैव त्यजन्त्वित्यर्थः ॥ ६ ॥ देहेति । देहदैहिकतः । तेषु कृष्णतद्भक्तेषु । प्रीतिः । विशेषतः । कार्या । तेषां कृष्णतद्भक्तानाम् । अभावस्तु । क्वचित्कदाचिदपि । चेतसि । न ग्रहीतव्यः ॥ ७ ॥ एवमिति । एवममुना प्रकारेण । यः । भक्तः । वर्त्तेत । तं भक्तम् । अभिभवितुं पराभावयितुम् । अतिबला अत्यन्तबलवन्तोऽपि । कामक्रोधादयः । अरयोऽन्तःशत्रवः शक्ताः समर्थाः । न भवन्ति ॥ ८ ॥ य इति । यः । भगवान् । ब्रह्मधाम्न्यक्षरब्रह्माख्ये स्वपदे । दिव्यविग्रहः सदा सुन्दरदिव्यमूर्त्तिः सन् । सदा । आस्ते ब्रह्मभावापन्नमुक्तव्रातसंवेतांघ्रिर्विराजते । स भगवानेव । धरातले । नराकारः । कृष्णः श्रीकृष्णनामा सन् । साक्षाद्युष्माकं सर्वेषां चक्षु-

गोचरतया । अस्ति वर्त्तते ॥ ९ ॥ तस्येति । तस्य साक्षात्कृष्णस्य । आश्रयः । यस्य । स्यात् । तेन भक्तेन । अभयेन । भाव्यं कालमायादिभयरहिततया वृत्यम् । यद्यतोहेतोः । तस्य । पुंसो भक्तस्य । कदाचन । यमादिभ्यो भयहेतुभ्यः । भयम् । नास्ति ॥ १० ॥ यास्यामीति । किञ्च । अहम् । मृत्वा । पिशाचकः । भविता भविष्यामि । वासना शेषेण भूतो भवितास्मि किमित्यर्थः । अथवा । ऐन्द्रादि । पदमिन्द्रादिदेवतालोकम् । गन्ता गमिष्यामि कश्चिद्देवो भविष्यामि किमित्यर्थः । काम् । गतिम् । गतिद्वयमध्ये किमात्मिकां गतिमित्यर्थः । यास्यामि । इत्येवंविधा । चिन्ता । तेन भक्तेन । न कार्या ॥ ११ ॥ स इति । स भक्तः । देहान्ते । अवश्यमेव । कृष्णधाम साक्षाद्भगवतोऽक्षरपदमेव । यास्यति । कृष्णः श्रीहरिः । तं भक्तम् । मध्येऽस्माल्लोकादारभ्याक्षरपदार्वागन्तरावर्त्तिनि । कुत्रचित्कस्मिंश्चिदपि लोके । स्थातुम् । नैव । दास्यति । कृष्णप्रतात्सोऽन्तरा न स्थास्यतीत्यर्थः ॥ १२ ॥ साक्षाद्भगवत इत्थंभूतमहिमत्वात्तन्मूर्त्तीतरत्र सर्वथा मनःसङ्गं विहाय तेन तत्तस्मि-

तस्य स्यादाश्रयो यस्य भाव्यं तेनाभयेन यत् । यमादिभ्यो भयं नास्ति तस्य पुंसः कदाचन ॥ १० ॥
यास्यामि कां गतिं मृत्वा भवितास्मि पिशाचकः । पदं वैन्द्रादि गन्तेति चिन्ता कार्या न तेन च ॥ ११ ॥
सोऽवश्यमेव देहान्ते कृष्णधामैव यास्यति । स्थातुं दास्यति तं नैव कृष्णो मध्ये तु कुत्रचित् ॥ १२ ॥ अतः
साक्षाद्भगवति भक्तेन स्वमनो दृढम् । वज्रभूमौ वज्रकील इव योज्यं प्रयत्नतः ॥ १३ ॥ यः कृष्णैकमना अत्र
पुमान् स्यात्स तु सर्वथा । देहे सत्येव भगवद्धाम्न्यस्तीत्यवगम्यताम् ॥ १४ ॥ श्रुत्वेति वाचं मुनयो जगद्-
गुरोस्तस्यामृतेनोपमितां सदोगताः । ते चापरे ये गृहिणोऽपि पूरुषास्तोषं ययुस्ते हृदये महत्तमम् ॥ १५ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते द्विशताधिकत्रिंशस्तरङ्गः ॥ २३० ॥ ७ ॥

न्नेव योजनीयमित्याह । अतइति । अतः साक्षाद्भगवत इत्थंभूतमहिमत्वाद्धेतोः । भक्तेन । स्वमनः । साक्षाद्भगवति । वज्रभूमौ हीरकमय्यां पृथिव्याम् । वज्रकीलो हीरकशंकुरिव । प्रयत्नतः । दृढं यथा तथा । योज्यं योजनीयम् ॥ १३ ॥ य इति । अत्र सत्सङ्गे । यः । पुमान् भक्तः । कृष्णैकमनाः साक्षाच्छ्रीहरिस्वरूपैक-संलग्नमानसः । स्यात् । स भक्तस्तु । देहे सत्येव । सर्वथा । भगवद्धाम्नि । अस्ति स्थितो भवति । इतीत्थम् । अवगम्यताम् ॥ १४ ॥ श्रुत्वेति । इत्येवंविधाम् । जगद् गुरोः । तस्य श्रीहरेः । अमृतेन । उपमिताम् । वाचम् । श्रुत्वा । सदोगताः । ते । मुनयः । ये । अपरे । गृहिणः । पूरुषाः । ते चापि । हृदये । महत्तमम् । तोषम् । ययुः ॥ १५ ॥ यो हरिः स्वस्य सिद्धान्तं ज्ञेयं स्त्रीयैरवश्यतः । आह तत्पुरतो देयात् स मे तदनुवर्त्तनम् ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तक श्रीहर्येकान्तिकोपासक श्रीहरिकृष्णभगवत्स्वनुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां द्विशताधिकत्रिंशस्तरङ्गः ॥ २३० ॥ ७ ॥

भक्तस्य सुखदायीनि सर्वदा साधनानि च । हरिभक्तौ विघ्नरूपा दोषा अष्टम ईरिताः ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८८२) भाद्रस्य भाद्रपदमासस्य । कृष्णे कृष्णपक्षे । नवम्यां तिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमस्य राज्ञः । प्राचीनवक्त्रस्य प्राग्द्वारस्य । वेश्मनस्तस्यैव भवनस्य । वेद्यां बाह्यवेदिकायां । मञ्चोत्तमे स्वास्तृते पर्यङ्कासने । स श्रीहरिः । उपाविशत् ॥ २ ॥ सितेति । सिताम्बरः परिहितसकलश्वेतवसनः मल्लिकास्रक्शेखरैः कुन्दकुसुमकृतैः कण्ठधृतहारैरुष्णीषस्थैरापीडैश्चेत्यर्थः । सुविराजितः । नानाभक्तैर्नानादेशागतैर्बहुभिस्त्यागिभिर्गृहिभिश्च स्वाश्रितजनैः । परिवृतः सभायां संवेष्टितः । स्वयं श्रीहरिः । सतः साधून्प्रति । ऊचे ॥३॥ हरीति । हे साधवः ! । अत्र सत्सङ्गे । हरिभक्तस्य । पुंसो जनस्य । सर्वदा । सुखदायीनि । सर्वथाऽतिप्रयत्नेनापि । साध्यानि सम्पादनीयानि । कानि । साधनानि । भवन्ति । तानि ब्रुतेतिशेषः ॥ ४ ॥ इतीति । इत्यमुना प्रकारेण । पृष्टाः श्रीहरिणानुयुक्ताः । ते साधवः । तदुत्तरं श्रीहरिप्रश्नप्रतिवचनम् । यथामति । चक्रुः । ततो यथामति तैरुत्तरे कृतेऽपि तदयाथार्थ्यश्रवणत इत्यर्थः । प्रीतः प्राप्तमन्दहास इत्यर्थः ।

शकाब्दे विक्रमार्कस्य गुणाष्टवसुभूमिते । कृष्णे नवम्यां भाद्रस्य वचोऽमृतमिदं हरेः ॥ १ ॥ तत्र दुर्गपुरे दुर्ग उत्तमस्य स वेश्मनः । वेद्यां प्राचीनवक्त्रस्य मञ्चोत्तम उपाविशत् ॥ २ ॥ सिताम्बरो मल्लिकास्रक्शेखरैः सुविराजितः । नानाभक्तैः परिवृतः स्वयमूचे सतः प्रति ॥ ३ ॥ हरिभक्तस्य पुंसस्तु सुखदायीनि सर्वदा । साधनानि भवन्त्यत्र कानि साध्यानि सर्वथा ॥ ४ ॥ इति पृष्टाः साधवस्ते यथामति तदुत्तरम् । चक्रुस्ततः स्वयं प्रीतस्तदुवाच सतां पतिः ॥ ५ ॥ सुदृढेन स्वधर्मेण वैराग्येण च भूयसा । सर्वेन्द्रियवशीकारो मुख्यमेतत्तु साधनम् ॥ ६ ॥ कृष्णकार्ष्णेष्वतिप्रीतिर्मैत्रं तेषु च सर्वदा । अनौदास्यं क्वचित्तेषु रुचिस्तत्सङ्ग एव च ॥ ७ ॥ इत्येतैः साधनैर्युक्तः सर्वदा सुखदायिभिः । यो भक्तः स सुखी नित्यमिह लोके परत्र च ॥८॥ यस्येन्द्रियवशीकारो न स्यात्स तु पुमान्सताम् । मण्डले वर्त्तमानोऽपि दुःखी स्यान्न सुखी क्वचित् ॥९॥

सतांपतिः । स्वयं श्रीहरिः । तत्स्वप्रश्नोत्तरम् । उवाच ॥ ५ ॥ सुदृढेनेति । हे साधवः ! । सुदृढेन । स्वधर्मेण । भूयसाऽतितीव्रेण । वैराग्येण । च सर्वेन्द्रियवशीकारः । एतत्तु । मुख्यम् । साधनम् । अस्ति ॥ ६ ॥ कृष्णेति । कृष्णकार्ष्णेषु साक्षाच्छ्रीहरितद्भक्तेषु । अतिप्रीतिर्गाढानुरागः । तेषु कृष्णकार्ष्णेषु । सर्वदा मैत्रं मित्रभावः । तेषु । क्वचित् । अनौदास्यमुदासित्वाभावः । तत्सङ्गे तेषां प्रसङ्गविधाने एव । रुचिश्च । एवकारोऽन्यत्र रुच्यभावसूचनार्थः ॥ ७ ॥ इत्येवंविधैः सर्वदा । सुखदायिभिः । एतैः षड्भिः । साधनैः । यः । भक्तः । युक्तः । स्यात् । स भक्तः । इहास्मिन् । लोके । परत्र । लोके भगवद्धाम्नि च । नित्यं सर्वदा । सुखी भवेत् । इति त्रयाणामेकसम्बन्धः ॥ ८ ॥ साधनषट्केऽपीन्द्रियवशीकारस्य श्रैष्ठ्यमाह त्रिभिः । यस्येति । यस्य भक्तस्य । इन्द्रियवशीकारः । न स्यात् । सः । पुमान्भक्तस्तु । सतां साधूनाम् । मण्डले । वर्त्तमानः सन्नपि । दुःखी । स्यात् । क्वचित् । सुखी । न स्यात् ॥ ९ ॥

भक्तिमिति । भक्तिम् । विदधतोऽपि । अस्य भक्तस्य । इन्द्रियाणि । यर्हि । विषयान्मायिकशब्दादीन्प्रति अपकृष्यतेऽपकृष्टानि स्युः । तदा । स भक्तः । दुःखी । जायते ॥ १० ॥ इन्द्रियाणीति । यस्य भक्तस्य । इन्द्रियाणि । जितानि वशीकृतानि । स्युः । तस्य भक्तस्यैव । सर्वथा । धर्मवैराग्ययोः । दार्ढ्यम् । अन्यस्याजितेन्द्रियस्य भक्तस्य । तद्धर्मवैराग्यदार्ढ्यम् । न ज्ञेयम् । ध्रुवं निश्चितमेव । अतो भक्तैस्ताभ्यामिन्द्रियवशीकारोऽवश्यं विधेय इतिभावः ॥ ११ ॥ मुक्तानन्द इति । ततस्तदनन्तरम् । मुक्तानन्दोमुनिः । अपृच्छच्छ्रीहरिं प्रश्नं पप्रच्छ । हे प्रभो ! । कृष्णस्य । ते तव । भक्तौ । महत् । विघ्नम् । किम् । अस्ति । तद् ब्रूहीतिशेषः । इतीत्थम् । पृष्टो मुक्तानन्दमुनिनानुयुक्तः । हरिः । तं मुक्तानन्दमुनिम् । उवाच ॥१२॥ अनवेक्षेति । स्वदोषाणाम् । अनवेक्षाऽदर्शनम् । हृदः स्वमनसः । कृष्णतद्भक्ततः पार्थक्यं पृथग्भावः । भगवत्तद्भक्तरुच्यनुसारिण्याः स्वरुचेरसम्पादनतेत्यर्थः । अथ च । तेभ्यः कृष्णतद्भक्तेभ्यः

भक्तिं विदधतोऽप्यस्य विषयान्प्रति यर्हि तु । इन्द्रियाण्यपकृष्यन्ते तदा दुःखी स जायते ॥ १० ॥
इन्द्रियाणि जितानि स्युर्यस्य तस्यैव सर्वथा । धर्मवैराग्ययोर्दार्ढ्यं ज्ञेयं नान्यस्य तद्ध्रुवम् ॥ ११ ॥
मुक्तानन्दस्ततोऽपृच्छद्भक्तौ कृष्णस्य ते प्रभो ! । महद्विघ्नं किमस्तीति पृष्टो हरिरुवाच तम् ॥ १२ ॥
अनवेक्षा स्वदोषाणां कृष्णतद्भक्ततो हृदः । पार्थक्यमथ तेभ्यश्च निस्पृहत्वेन वर्त्तनम् ॥ १३ ॥ एतद्दोषत्रयं
भक्तौ महद्विघ्नमितीयताम् । अतो भक्तेन भेतव्यं तस्माच्छ्रेयोर्थिना सदा ॥ १४ ॥ इति भक्तिसुता-
स्यनिर्गतं स मुनिर्वागमृतं निपीय च । सकला मुनयः सदोगता गृहिणोऽपि प्रमुदं च लेभिरे ॥ १५ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते द्विशताधिकैकत्रिंशस्तरङ्गः ॥ २३१ ॥ ८ ॥

। निःस्पृहत्वेन । वर्त्तनम् । एतदित्युत्तरेण सम्बन्धः ॥ १३ ॥ एतदिति । एतद्दोषत्रयम् । भक्तौ । महत् । विघ्नम् । अस्ति । इतीत्थम् । ईयताम् । अतोहेतोः श्रेयोऽर्थिना स्वकल्याणार्थिना । भक्तेन । तस्माद्दोषत्रयात् । सदा । भेतव्यम् । एषु दोषेषु न प्रवृत्यमित्यर्थः ॥ १४ ॥ इतीति । इत्येवंविधम् । भक्तिसुतास्यनिर्गतं । भक्तिसूनोः श्रीहरेर्मुखचन्द्रनिःसृतम् । वागमृतम् । निपीय । सः । मुनिर्मुक्तानन्दमुनिः । सदोगताः । सकलाः । मुनयश्च । गृहिणश्चापि प्रमुदम् । लेभिरे ॥ १५ ॥ सौख्यदानि सदा स्वेषां साधनानि च यो हरिः । विघ्नरूपान्स्वस्य भक्तौ दोषांस्त्रीन्स्वेभ्य उक्तवान् ॥ १ ॥ स स्वामी तानि देयान्मे तेभ्यो मां पातु सर्वदा । श्रीभक्तिधर्मतनयः प्रद्युम्नब्रह्मपुराधिपः ॥ २ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्येकान्तिकोपासक श्रीहरिकृष्णभगवत्सूनुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां द्विशताधिककैकत्रिंशस्तरङ्गः ॥ २३१ ॥ ८ ॥

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.

साधूनां महतां ज्ञाने स्थितिर्दृष्टान्तदर्शनात् । सुस्पष्टं नवमे प्रोक्ताऽवश्यं वेद्या हरेर्जनैः ॥ १ ॥ शेकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८८१) इषस्याश्विनमासस्य । शुक्लैकादश्यां शुक्लपक्षसम्बन्धिन्यामेकादशीतिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमस्य राज्ञः । दुर्गे । प्रत्यगास्य पश्चिमद्वारस्य । वेश्मनस्तस्यैव भवनस्य । वितर्दौ बाह्यवेदिकायाम् । उत्तमेऽतिशोभनतूलिकाद्यास्तरणास्तृते । पीठे पर्यङ्कासने । श्रीहरिः । व्यराजत् ॥ २ ॥ पौष्पेति । पौष्पस्रग्वलयापीडः कुन्दकुसुमकृतभक्तार्पितहारकटकापीडधरः । सितवासाः परिधृतसकलश्वेतवसनः । त्यागिभिः । गृहस्थैश्च । नानादेशागतैरितिशेषः । निजैः स्वाश्रितजनैः । वृतः सभायां परिवेष्टितः । स श्रीहरिः । सर्वान् । भक्तान् । उवाच ॥ ३ ॥ अस्मदीया इति । हे भक्ताः ! । अत्र सत्सङ्गे । अस्मदीयाः । ये । सन्तः साधवः । सन्ति । तेषु सत्सु । ये । महान्तो गुणगरिष्ठाः साधवः । सन्ति । तेषां महतां सताम् । यादृशी । स्थितिरात्मपरमात्मस्वरूपादिज्ञाननिष्ठा । अस्ति । तां स्थितिम् । अहम् । वो युष्मभ्यम् । कथयामि ॥ ४ ॥ तामिति । तां मदुक्तां तत्स्थितिम् । श्रुत्वा । मदीयैः । अखिलैः । भक्त-

शकाब्दे विक्रमार्कस्य गुणाष्टवसुभूमिते । इषस्य शुक्लैकादश्यां वचोऽमृतमिदं हरेः ॥ १ ॥ तत्र दुर्गपुरे दुर्ग उत्तमस्य स वेश्मनः । वितर्दौ प्रत्यगास्यस्य व्यराजत् पीठ उत्तमे ॥ २ ॥ पौष्पस्रग्वलयापीडः सितवासा वृतो निजैः । त्यागिभिश्च गृहस्थैश्च सर्वान्भक्तानुवाच सः ॥ ३ ॥ अस्मदीया येऽत्र सन्तो महान्तस्तेषु चापि ये । यादृश्यस्ति स्थितिस्तेषां तामहं कथयामि वः ॥ ४ ॥ तां च श्रुत्वाऽखिलैर्भक्तैर्मदीयैः स्वस्य तादृशी । स्थितिः सम्यक् साधनीयेत्युक्त्वा तामवदच्च तान् ॥ ५ ॥ कृष्णैकान्तिकसत्प्राप्तः साक्षात्कृष्णनिजात्मनोः । सम्यक् स्वरूपबोधो यस्तज्ज्ञानमिति कथ्यते ॥ ६ ॥ तथा स्वधर्मवैराग्यभक्तीनां च यथार्थतः । बोधो यः सुदृढश्चित्ते तच्च ज्ञानमितीर्यते ॥ ७ ॥ ब्रह्मधाम्नो गोपुरं हि तच्चास्तीत्यवधार्यताम् । सन्तो महान्तो येऽस्माकं सन्ति ते तत्र संस्थिताः ॥ ८ ॥

स्त्यागिगृहिभिर्युष्माभिर्भक्तजनैः । स्वस्य । तादृशी । स्थितिः । सम्यङ् मदुक्तप्रकारेणैव । साधनीया सम्पादनीया । इत्यमुना प्रकारेण । उक्त्वा । तां स्थितिम् । तान्स्वभक्तान् । अवदत् ॥ ५ ॥ कृष्णेति । हे भक्ताः ! । कृष्णैकान्तिकसत्प्राप्तः साक्षाच्छ्रीकृष्णैकान्तिकसाधुभ्योऽधिगतः । यः । साक्षात्कृष्णनिजात्मनोः । सम्यक् । स्वरूपबोधः । प्रत्यक्षस्य श्रीहरेः स्वात्मनश्च यद्यथार्थतया स्वरूपवेदनमित्यर्थः । तत् । ज्ञानम् । इतीत्थम् । कथ्यते ॥ ६ ॥ तथेति । तथा तद्वदेव । स्वधर्मवैराग्यभक्तीनाम् । यः । चित्ते । यथार्थतः । सुदृढः । बोधः । तत् । ज्ञानम् । इति । ईर्यते । स्वधर्मादियुक्ततया यथार्थं यद्वर्त्तनं तदेव चित्ते यथार्थं सुदृढं च धर्मादेर्ज्ञानं कथितमित्यर्थः ॥ ७ ॥ ब्रह्मेति । तत्साक्षात्कृष्णस्वरूपादिज्ञानम् । ब्रह्मधाम्नोऽक्षरब्रह्माख्यस्य परमात्मनो हरेः पदस्य । गोपुरं द्वारभूतम् । अस्ति । इत्येवम् । अवधार्यताम् । अस्माकम् । ये । महान्तः । सन्तः । सन्ति । ते महान्तः सन्तः । तत्र साक्षात्कृष्णस्वरूपज्ञानादिरूपे ब्रह्मधामगोपुरे । संस्थिता अवस्थिताः । प्रत्यग्दृशा

सर्वदा तत्रैव सम्यगवस्थिताः सन्तीत्यर्थः ॥ ८ ॥ एतदेव दृष्टान्तेन स्पष्टमाह त्रिभिः । यथेति । यथा । राज्ञः । सौधस्य सदावासभवनस्य । गोपुरे द्वारे । अनुचरा द्वारपालका राजसेवकाः । तिष्ठन्ति । तान्विशिनष्टि सार्द्धेन । सन्नद्धा अकाण्डवैरिप्रवेशसमये सद्यो युद्धविधानाय वर्मधारणपूर्वं सावधानतया वर्त्तमाना इत्यर्थः । सासिचर्माणस्तरवारिशतचन्द्रधराः । विनिद्रा जागरूकाः । धैर्यशालिनः सम्प्राप्तबहुरणविजयत्वेन धृतिमन्तः ॥ ९ ॥ अन्तरिति । चौरेभ्यः । अन्तःप्रवेशम् । न ददानाः । ये चोराः । हठात् । प्रविशेयुरन्तःप्रवेशं कुर्युः । तन्नाशे तथाविधचौरविनाशने । सर्वदा सर्वकालमेव । उद्युक्ता उद्यतायुधाः । तिष्ठन्तीतिपूर्वेण सम्बन्धः ॥ १० ॥ तथेति । तथा तद्वदेव । ते महान्तः सन्तः । ज्ञाने ब्रह्मधामगोपुरभूतावबोधे । संस्थिताः । सन्ति । तदन्तर्ज्ञानगोपुरान्तरे । तच्छ्रुतिस्मृतिप्रसिद्धम् । ब्रह्मधाम । अस्ति । तत्र ब्रह्मधाम्नि । साक्षात्प्रत्यक्षतया युष्मद्दृग्विषयः । हरिः । अस्ति । ते महान्तः सन्तः । प्रभुम् । तं श्रीहरिम् । पश्यन्ति ॥ ११ ॥ तदिति । तद्दर्शने साक्षाच्छ्रीहरिदर्शने । जायमाने सति । ते महान्तः सन्तः । क्वचित् । मानसाय मनःसङ्कल्पेन स्फुरिताय । स्त्रीधनाद्यरये मायिकस्त्रीधनपुत्रादिकाय

यथा तिष्ठन्त्यनुचरा राज्ञः सौधस्य गोपुरे । संनद्धाः सासिचर्माणो विनिद्रा धैर्यशालिनः ॥ ९ ॥ अन्तःप्रवेशं चौरेभ्यो न ददाना हठात्तु ये । प्रविशेयुश्च तन्नाश उद्युक्ता सर्वदैव हि ॥१०॥ तथा ते संस्थिता ज्ञाने तदन्तर्ब्रह्मधाम तत् । तत्र चास्ति हरिः साक्षात्तं च पश्यन्ति ते प्रभुम् ॥११॥ तद्दर्शने जायमाने स्त्रीधनाद्यरये क्वचित् । मानसा-यान्तरावेशं कर्तुं न ददते च ते ॥१२॥ हठात्तु प्रविशन्तं तं ते निघ्नन्त्येव तत्क्षणम् । एवं हि सावधानस्ते धीरास्ति-ष्ठन्ति तत्र वै ॥ १३ ॥ दैह्याभ्यां सुखदुःखाभ्यां हानिवृद्धिभयादिभिः । विघ्नैश्चालयितुं ते तत्स्थानाच्छक्या न सर्वदा ॥ १४ ॥ एवं स्थितिमतां तेषां देहिकी सकला क्रिया । कथं नु जायत इति शङ्काऽपाक्रियतेऽधुना ॥ १५ ॥

चौररूपाय शत्रवे । अन्तरावेशं ज्ञानगोपुरान्तःप्रवेशम् । कर्त्तुम् । न ददते । भगवत्स्वरूपस्य स्वान्तर्यदा सम्यक् स्फूर्त्तिर्जायते तत्क्षणे पूर्ववासनेरितमनःकृतस्त्र्या-दिसङ्कल्प उत्पद्यते तं भगवद्दर्शनात्मकस्वस्वहरं सङ्कल्पचौररिपुं दूरीकृत्य केवलं भगवद्दर्शनमेव कुर्वन्तीत्यर्थः ॥ १२ ॥ हठादिति । ते महान्तः सन्तः । हठात् । प्रविशन्तम् । तं मनःसङ्कल्पितमायिकस्त्रीधनादिचौररूपारिम् । तत्क्षणम् । निघ्नन्त्येव । एवममुना प्रकारेण । सावधानाः । धीराः । ते महान्तः सन्तः । तत्र ज्ञान-गोपुरे । तिष्ठन्ति । वै ॥ १३ ॥ दैह्याभ्यामिति । दैह्याभ्यां देहसम्बन्धिभ्याम् । सुखदुःखाभ्याम् । हानिवृद्धिभयादिभिः । विघ्नैः । ते महान्तः साधवः । तत्स्थानाज्ज्ञानगोपुरकृतस्वस्थितेः सकाशात् । चालयितुम् । सर्वथा । न शक्याः । तानि विघ्नानि तांस्ततश्चालयितुं न शक्नुवन्तीत्यर्थः ॥ १४ ॥ एवमिति । एवममुना प्रकारेण । स्थितिमतां ज्ञानगोपुरे कृतावस्थानाम् । तेषां महतां सताम् । सकला । दैहिकी । क्रिया खानपानादिका । कथं नु केन प्रकारेण वा । जायते । इत्येवंविधा । शङ्का । अधुना साम्प्रतम् । महासतां ज्ञानगोपुरावस्थितिप्रकारकथनानन्तरीये काले इत्यर्थः । अपाक्रियते मया वक्ष्यमाणदृष्टान्ताभ्यां निराक्रियते ॥ १५ ॥

उदकेति । यथा । उदकार्थी । कश्चित्पुरुषः । प्रहेः कूपात्सकाशात् । उदकं जलम् । आहरन् रज्ज्वाबद्धकुम्भाकर्षणेनान्नयन्सन् । स्वपात्रे उदकाकर्षणकलशे । स्वरक्षणे कूपपतनं यथा न स्यात्तथात्मपरित्राणे च । इत्येवम् । द्वेधा । स्ववृत्तिम् । कुरुते ॥ १६ ॥ अश्वेति । यथा वा । अश्वगामी । पुरुषः । कुशिताध्वनो गर्त्ततरुलोष्ठाश्मप्राचुर्यकुमार्गतः । अश्वरक्षणे । स्वरक्षणे ततः पतनतः स्वपरित्राणे च । स्वाम् । वृत्तिम् । द्विधा । करोति ॥ १७ ॥ एवमिति । एवममुना प्रकारेण । ते महान्तः सन्तोऽपि । आत्मनः स्वस्य । वृत्तिम् । द्विधा । कृत्वा । एकया वृत्त्या । कृष्णं ज्ञानगोपुरान्तःस्थब्रह्मधामावस्थितं श्रीहरिम् । पश्यन्ति । अन्यया द्वितीयया वृत्त्या च । दैहिकीम् । क्रियाम् । कुर्वते ॥ १८ ॥ एवमिति । एवममुना प्रकारेण । महताम् । साधूनाम् । सर्वदा । स्थितिः । अस्ति । हि । तथा तेन प्रकारेणैव । युष्माभिः । सर्वैः । सा स्थितिः । अतिप्रयत्नतः । साध्या ॥ १९ ॥ विपक्षे दोषमाह त्रिभिः । सौधेति । यथा । चौराणाम् । सौधप्रवेशे सति । गोपुरस्थेषु

उदकार्थी यथा कश्चित् प्रहेरुदकमाहरन् । स्ववृत्तिं कुरुते द्वेधा स्वपात्रे च स्वरक्षणे ॥ १६ ॥ अश्वगामी यथा वाऽश्वरक्षणे कुत्सिताध्वनः । स्वरक्षणे च वृत्तिं स्वां करोति पुरुषो द्विधा ॥ १७ ॥ एवं तेऽपि द्विधा कृत्वा वृत्तिमात्मन एकया । कृष्णं पश्यन्त्यन्यया च कुर्वते दैहिकीं क्रियाम् ॥ १८ ॥ एवं हि महतामस्ति साधूनां सर्वदा स्थितिः । तथैव सर्वैर्युष्माभिः साध्या साऽतिप्रयत्नतः ॥ १९ ॥ सौधप्रवेशे चौराणां यथा राज्ञोऽरुचिर्भवेत् । स्वीयेषु गोपुरस्थेषु तद्भृत्याऽप्यपयाति च ॥ २० ॥ तथैव भजतां हृत्सु स्थाने भगवतो यदि । स्यात् प्रवेशो धनस्त्र्यादेस्तेषामनवधानतः ॥२१॥ तदा भगवतोऽरुच्या भक्तिरप्यपयाति हि । तस्मात्सर्वैः सावधानैः स्थित्वा ज्ञाने स दृश्यताम् ॥२२॥ शिक्षावचोऽमृतसमं त्विति धर्मसूनोः पीत्वाऽखिला अपि तदाश्रितपूरुषास्ते । सन्तोषमाप्य परमं हृदये बभूवुस्तद्ध्यान एव निरता अपि सावधानाः ॥२३॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते द्विशताधिकद्वात्रिंशस्तरङ्गः ॥ २३२ ॥ ९ ॥

। स्वीयेषु । गोपुररक्षकेषु स्वसेवकजनेष्वित्यर्थः । राज्ञः । अरुचिः । भवेत् । तद्भृत्या वेतनप्रतिबन्धपूर्वकं तद्भृतिभुक्तमपि । अपयाति निवर्त्तते ॥ २० ॥ तथेति । तथैव । भजतां भगवद्भक्तानाम् । हृत्सु । भगवतः श्रीहरेः । स्थाने आवासभवनभूतब्रह्मधामगोपुररूपे ज्ञाने इत्यर्थः । यदि । तेषां भजताम् । अनवधानतोऽसावधानतत्त्वतः । धनस्त्र्यादेश्चौरवैरिसदृशमायिकधनस्त्र्यादिपदार्थस्य । प्रवेशः । स्यात् ॥ २१ ॥ तदेति । तदा । भगवतः । अरुच्या । भक्तिर्नवधा भक्तिरूपा भगवत्सेवापि । अपयाति । हि । तस्माद्धेतोः । सावधानैः । सर्वैर्मद्भक्तैः । ज्ञाने ब्रह्मधामगोपुरे । स्थित्वा । स श्रीहरिः । दृश्यताम् । इति त्रयाणामेकसम्बन्धः ॥ २२ ॥ शिक्षेति । इत्येवंविधम् । धर्मसूनोः श्रीहरेः । अमृतसमम् । शिक्षावचः । पीत्वा श्रवणपुटैरापीय । अखिला अपि । ते । तदाश्रितपुरुषाः । हृदये स्वस्वमानसे । परमम् । सन्तोषम् । आप्य । तद्ध्याने श्रीहरिस्वरूपचिन्तने । निरतास्तत्परा अपि । सावधाना एव । बभूवुः ॥ २३ ॥ महतां स्वस्य साधूनामाह ज्ञानस्थितिं हरिः ।

वेद्यां स्वभक्तैर्यः सर्वैस्तां स्थितिं मे ददातु सः ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तक श्रीहर्येकान्तिकोपासक श्रीहरिकृष्णभगवत्सुनुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां द्विशताधिकद्वात्रिंशस्तरङ्गः ॥ २३२ ॥ ९ ॥

माध्ववर्त्मस्थितं विप्रं प्रश्नं पृष्ट्वा तदुत्तरम् । स्वसिद्धान्तश्च दशमे स्पष्टं श्रीहरिणोदितः ॥१॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातत् (१८८३) इषस्याश्विनमासस्य । कृष्णद्वादश्यां बहुलपक्षीयद्वादशीतिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥१॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमस्य राज्ञः । दुर्गे । प्राचीनवक्त्रस्य प्राग्द्वारस्य । वेश्मनस्तस्यैव भवनस्य । वेद्यां बाह्यवेदिकायाम् । निजे स्वकीये । आसने स्वास्तृते पर्यङ्कासने । स श्रीहरिः । न्यषीदत् ॥२॥ सितेति । सितवासाः परिधृतसकलश्वेत-वसनः । बहुभिर्नानादेशागतत्वादनेकैः । त्यागिभिः । गृहिभिश्च । भक्तैः । वृतः सभायां परिवेष्टितः । स श्रीहरिः । तत्र तस्यां सभायाम् । आगतम् । माध्ववर्त्मगं मध्वसम्प्रदायिनम् । कंचित् । द्विजं विप्रम् । अपृच्छत् ॥३॥ भवतामिति । हे विप्र ! । भवताम् । सम्प्रदाये । यत् । व्रजे । वृन्दावनम् । अस्ति । तद्वृन्दावनमेव

शकाब्दे विक्रमार्कस्य गुणाष्टवसुभूमिते । इषस्य कृष्णद्वादश्यां वचोऽमृतमिदं हरेः ॥ १ ॥
तत्र दुर्गपुरे दुर्गे उत्तमस्य स वेश्मनः । वेद्यां प्राचीनवक्त्रस्य न्यषीदन्निजआसने ॥ २ ॥
सितवासास्त्यागिभिश्च गृहिभिर्बहुभिर्वृतः । तत्रागतं द्विजं कंचित्सोऽपृच्छन्माध्ववर्त्मगम् ॥ ३ ॥
भवतां सम्प्रदायेऽस्ति व्रजे वृन्दावनं तु यत् । तदेव भगवद्धाम प्रलयेऽप्यविनाशि च ॥ ४ ॥
अस्माकं हृदि वार्त्तेयं सम्यङ् नाविशति ध्रुवम् । प्रलये पञ्चभूतानां नाशे तच्छिष्यते कथम् ॥ ५ ॥
इत्युक्त्वा श्रीभागवतं तत्रानाय्य स संसदि । वाचयामास तत्स्थं च महाप्रलयवर्णनम् ॥ ६ ॥
उवाच स ततो विप्रमत्र भागवते तथा । गीतायां चोक्त एवास्ति सर्वनाशो महालये ॥ ७ ॥

भगवद्धाम । अस्ति । कथितमितिशेष । तच्च । प्रलये महाप्रलयेऽपि । अविनाशि । अस्ति ॥ ४ ॥ अस्माकमिति । इयं प्रलयेऽपि वृन्दावनस्याविनाशित्वरूपा । वार्त्ता । अस्माकम् । हृदि मानसे । सम्यक् । ध्रुवमेव । नाविशति । अत्र हेतुमाह । प्रलये । पञ्चभूतानाम् । नाशे सति । तद्वृन्दावनम् । कथम् । शिष्यते । तस्य भूतात्मकपृथ्वीवर्त्तित्वात्तच्छेषता न युज्यते इति भावः ॥ ५ ॥ इतीति । इत्यमुना प्रकारेण । उक्त्वा । स श्रीहरिः । श्रीभागवतं पुराणम् । तत्र तस्याम् । संसदि सभायाम् । आनाय्य स्वमञ्जूषायाः शुकानन्दमुनिनाऽऽहार्य्य । तत्स्थं श्रीभागवतीयैकादशद्वादशस्कन्धावस्थितम् । महाप्रलयवर्णनम् । वाचयामास प्रयागजिता तत्कथां कारयामासेत्यर्थः ॥ ६ ॥ उवाचेति । ततस्तदनन्तरम् । स श्रीहरिः । विप्रम् । उवाच । हे विप्र ! । अत्रास्मिन् । भागवते । तथा । गीतायां च । महालये महाप्रलये । सर्वनाश एव । उक्तः । अस्ति । 'सर्वभूतानि कौन्तेय प्रकृतिं ? यान्ति मामिकाम् । कल्पक्षये पुनस्तानि कल्पादौ विसृजाम्यहमि''तिभगवद्गीतायाम् ॥ ७ ॥

मायेति । मायापुरुषयोगेन मूलप्रकृतिपुरुषसम्बन्धेन । यत् । किञ्चित् । उदयमुत्पत्तिम् । गतं प्राप्तम् । तत्सर्वम् । कालवेगेन । नश्यति । इतीत्थम् । श्रुतौ "अव्यक्तमक्षरे लीयतेऽक्षरं तमसि लीयते" इत्यादिकायाम् । श्रुतम् ॥ ८ ॥ एवमिति । एवं सति । व्रजे वृन्दावनस्य । यत् । अविनाशित्वम् । उक्तमस्तीति-शेषः । तत्र वृन्दावनस्य प्रलयेऽप्यविनाशित्वे । प्रमाणम् । ज्ञातम् । चेत् । तच्च । यदि । व्यासवचः कृष्णद्वैपायनवचनम् । स्यात् । तर्हि । ब्रूहि प्रमाणाय वद ॥ ९ ॥ व्यासादिति । व्यासात् । अन्यः कोऽपि । आचार्यः । महान् । गुणगरिष्ठः । अतएव । उत्तमोऽतिश्रेष्ठः । नास्ति । अतो व्यासस्यैव सर्वोच्चमत्वाद्धेतोः । तद्वाक्यतो व्यासवचनात् । अन्याचार्यवाक्यम् । प्रमापकं प्रमाणभूतम् । नास्ति ॥ १० ॥ आचार्या इति । ये । अपरे । आचार्याः । अभवन् । तेषामाचार्याणाम् । वाक्यानाम् । प्रमाणता तु । व्यासवाक्यानुसारेणैव । भवति । अन्यथा व्यासवाक्यानुसरणाभावे । नास्ति ॥ ११ ॥ अतइति । अतोहेतोः । तदीयवाक्येन व्यासवचनेन । अथवा कया-चन । श्रुत्यापि । भौमवृन्दावनस्य पृथ्वीस्थवृन्दावनस्यापि । नित्यता प्रलयेऽविनाशिता । चेद्यदि । स्यात् । तदा । उच्यताम् ॥ १२ ॥ किञ्चेति । किञ्च । आधुनिकैः

मायापुरुषयोगेन यत्किञ्चिदुदयं गतम् । तत्सर्वं कालवेगेन नश्यतीति श्रुतौ श्रुतम् ॥ ८ ॥ एवं सत्यविनाशित्वं व्रजे वृन्दा-वनस्य यत् । तत्र प्रमाणं ज्ञातं चेद् ब्रूहि व्यासवचो यदि ॥ ९ ॥ व्यासादन्यो न कोऽप्यस्ति महानाचार्य उत्तमः । अतस्तद्वा-क्यतो नान्याचार्यवाक्यं प्रमापकम् ॥ १० ॥ आचार्या येऽपरे तेषां वाक्यानां तु प्रमाणता । व्यासवाक्यानुसारेण भवत्येव न चान्यथा ॥ ११ ॥ अतस्तदीयवाक्येन श्रुत्या चापि कयाचन । भौमवृन्दावनस्यापि नित्यता चेत्तदोच्यताम् ॥ १२ ॥ किञ्चाचार्यै-राधुनिकैर्मतं स्वं स्वं प्रमापितम् । वाक्यैः पद्मपुराणस्य न तदप्यस्ति सम्मतम् ॥१३॥ मूलग्रन्थे तु पाद्मे ते श्लोकाः सन्ति न यत्ततः । तैरेव तत्र प्रक्षिप्ताः सुधीभिरिति कीर्त्यते ॥ १४ ॥ तत्तन्मतानुगास्तांस्तु मानयन्ति नहीतरे । अतो हि सर्वमान्यस्य ग्रन्थस्यातिप्रमाणता ॥ १५ ॥ व्यासेनापि पुराणानि ब्राह्मादीनि च भारतम् । कृत्वाऽप्यपरितोषात्तु श्रीमद्भागवतं कृतम् ॥ १६ ॥

। आचार्यैः । पद्मपुराणस्य । वाक्यैः । स्वम् । स्वम् । मतम् । प्रमापितं प्रमाणीकृतम् । तदपि तथापि । सम्मतं विद्वद्भिः प्रमाणीकृतम् । नास्ति ॥ १३ ॥ तत्र हेतुमाह । मूलेति । यद्यतोहेतोः । पाद्मे पद्मपुराणाख्ये । मूलग्रन्थे व्यासकृते मूलग्रन्थे । ते आचार्यैः स्वमतप्रमाणायोक्ताः । श्लोकाः । न सन्ति । ततोहेतोः । तैर्हठात्स्वमतस्थापकैरा-चार्यैरेव । पद्मपुराणे । प्रक्षिप्ता नूतनांस्तान्विधाय तत्र लेखायिताः । सन्ति । इतीत्थम् । सुधीभिः । कीर्त्यते । पद्मपुराणपुस्तकानि नैकविधान्यालोक्य सुमतयो विद्वांस इति कीर्त्तयन्तीत्यर्थः ॥ १४ ॥ तदिति । तान्स्वमतस्थापनायाचार्यैः स्वस्वपुस्तके प्रक्षिप्तान् श्लोकान् । तत्तन्मतानुगास्तत्तदाचार्यस्य मतानुसारिणो जनाः । मानयन्ति । इतरे तत्तदाचार्यमतस्थेभ्योऽन्ये । न हि नैव मानयन्ति । अतोहेतोः । सर्वमानस्य । ग्रन्थस्य । अतिप्रमाणता । अस्ति । हि ॥१५॥ व्यासेनेति । किञ्च । व्यासेनापि । ब्रह्मादीनि । पुराणानि । भारतं च । कृत्वाऽपि । अपरितोषात्सन्तोषमप्राप्य । श्रीमद्भागवतम् । कृतं सर्ववेदेतिहासपुराणागमसाररूपं रचितम् ॥ १६ ॥

तत इति । ततः श्रीमद्भागवतकरणानन्तरम् । अतितोषम् । आपेदे स सम्प्राप्तवान् । तस्माद्धेतोः । आर्यजना विचक्षणाः पण्डितजनाः । प्रमाणेषु । सर्वपुराणतः । तच्छ्रीमद्भागवतमेव । आधिक्येन । विदुः । चकारः सर्वपुराणान्यपहाय सर्वाचार्यसर्वपण्डितकृतैतट्टीकाप्राचुर्येणैतदाधिक्यं कथयति ॥ १७ ॥ तस्मादिति । तस्माद्धेतोः । यदि । तस्मिन् । श्रीभागवते । तन्नित्यत्वबोधको महाप्रलयेऽपि भूमिस्थवृन्दावननित्यतावगमकः । श्लोकः । स्यात् । चेद्यदि । गीतायां भारतसाररूपायां भगवद्गीतायां । वापि । तन्नित्यत्वबोधकः श्लोकः स्यात् । यदि । विदितः स भवता सम्यग्बुद्धः । स्यात् । तर्हि । कथ्यताम् ॥ १८ ॥ इतीति । इत्यमुना प्रकारेण । आक्षिप्तः श्रीहरिणा कृताक्षेपः । सः । विप्रस्तु । तं श्रीहरिम् । नत्वा प्रणम्य । कृताञ्जलिः सन् । आह । हे हरे ! हे स्वामिन् ! । अद्य साम्प्रतम् । धरातले । त्वमेव । सर्वज्ञः । अस्ति ॥ १९ ॥ त्वदिति । त्वत्प्रश्नस्य । उत्तरम् । वक्तुम् । भूतले । कोऽपि पण्डितजनः । शक्तः समर्थः । नास्ति । त्वं तु । भगवान्प्रत्यक्षः पुरुषोत्तम एव असि । इतीत्थंभूता । दृढप्रतीतिः । मम जाताः ॥ २० ॥ आचार्याणामिति । त्वम् । आचार्याणाम् । आचार्यः । असि ।

ततोऽतितोषमापेदे तस्मात्सर्वपुराणतः । आधिक्येन प्रमाणेषु तच्चैवार्यजना विदुः ॥ १७ ॥ तस्मात्तस्मिन् यदि श्लोकः स्यात्तन्नित्यत्वबोधकः । गीतायां वापि चेत्तर्हि कथ्यतां विदितो यदि ॥ १८ ॥ इत्याक्षिप्तः स विप्रस्तु तं नत्वाऽऽह कृताञ्जलिः । सर्वज्ञोऽसि हरे ! स्वामिस्त्वमेवाद्य धरातले ॥ १९ ॥ त्वत्प्रश्नस्योत्तरं वक्तुं कोऽपि शक्तो न भूतले । दृढप्रतीतिर्मम तु जाता त्वं भगवानिति ॥ २० ॥ आचार्याणां त्वमाचार्य ईश्वराणामसीश्वरः । त्वमेवास्योत्तरमतः सिद्धान्तं ब्रूहि चात्मनः ॥ २१ ॥ ब्रह्मरूपानेकमुक्तावासे वृन्दावनाभिधे । स्वीये ब्रह्मपुरे धाम्नि सदा कृष्णो विराजते ॥ २२ ॥ सच्चिदानन्दरूपोऽसावस्ति दिव्यतनुर्द्विज ! । तद्धामापि सदा दिव्यमखण्डं वर्त्तते बृहत् ॥ २३ ॥ आविर्भूय स एवात्र व्रजे वृन्दावनेऽवसत् । यत्र कृष्णो भवेत्तत्र तद्धामापि भवेद् ध्रुवम् ॥ २४ ॥

ईश्वराणाम् । ईश्वरः । असि । अतोहेतोः । अस्य त्वत्प्रश्नस्य । उत्तरम् । आत्मनस्तव सिद्धान्तं च । त्वमेव । ब्रूहि ॥ २१ ॥ 'इत्थं स माध्वर्त्मस्थविप्रेणापृष्टः ईशिता । अब्रवीन्नन्दयंस्तं च परान्सर्वान्निजानिति" ब्रह्मेति । हे विप्र ! । ब्रह्मरूपानेकमुक्तावासे । अतएव । वृन्दावनाभिधे । वृन्दानां ब्रह्मभावापन्नमुक्तव्रजानामवनं प्राप्तिपूर्वास्थितिर्यस्मिन्निति समासाश्रयणेन सम्प्राप्तवृन्दावनं संज्ञे इत्यर्थः । ब्रह्मपुरे ब्रह्मपुरापरनाम्नि । स्वीये । धाम्नि । कृष्णः । सदा । विराजते यथाकालं मुक्तवृन्दैः संसेवितः संशोभते ॥ २२ ॥ सदिति । हे द्विज ! । सच्चिदानन्दरूपः सच्चिदानन्दधर्माधारतनुः । असौ श्रीकृष्णः । अस्ति । बृहदक्षरब्रह्मसञ्ज्ञम् । दिव्यम् । तद्धामोक्तविधं श्रीकृष्णपदमपि । सदा । अखण्डम् । वर्त्तते ॥ २३ ॥ आविरिति । स एवंविधः श्रीकृष्ण एव । अत्र भूमौ । आविर्भूय परमकृपया वसुदेवगेहे प्राकट्यं प्राप्य । व्रजे व्रजभूमिस्थे वृन्दावने । अवसत्स्वभक्तगोपगोपीसुखप्रदानाय निवासं चकार । यत्र स्थाने । कृष्णः । भवेत् । तत्र । तद्धाम वृन्दावनाभिधं ब्रह्मपुरमपि । ध्रुवं निश्चितमेव । भवेत् ॥२४॥

कृष्णस्येति । अत्र लोके । ये नराः । कृष्णस्य । इच्छयैव । दिव्यदृष्टिम् । उपागताः । स्युः । ते नराः । कृष्णम् । तद्धाम च । ब्रह्मधामावस्थितं श्रीकृष्णं ब्रह्मधाम चेति द्वयमित्यर्थः । स्फुटं यथातथा । वीक्षते ॥ २५ ॥ एतदेव स्पष्टमाह । भौमेति । तेषां श्रीकृष्णेच्छया दिव्यदृष्टिमुपागतानां भक्तानाम् । भौमवृन्दावने । तद् द्वयस्यापि सनातनब्रह्मपुराधिपश्रीकृष्णस्य सनातनवृन्दावनाभिधब्रह्मपुरस्य चेति द्वितयस्यापीत्यर्थः । वीक्षणाद्धेतोः । तन्नित्यता नित्यसिद्धकृष्ण-वृन्दावनेक्षणस्थानभौमवृन्दावननित्यत्वम् । उदिता । अस्ति । तस्य भौमवृन्दावनस्य । स्वभावतः साहजिकतया तु । नैवोदितास्ति । राजकीयपुरुषे राजेत्युपचारवन्नित्य-कृष्णतद्धामदर्शनस्थानभौमवृन्दावनस्यापि नित्यत्वमितिभावः ॥ २६ ॥ इतीति । हे विप्र ! । इत्यमुना प्रकारेण । शास्त्रनिश्चितम् । प्रश्नोत्तरम् । ते तुभ्यम् । दत्तम् । अथानन्तरम् । अस्मदीयसिद्धान्तम् । ते तुभ्यम् । यथावत् । कथयामि ॥ २७ ॥ वेदेति । मया । वेदादीनि । सर्वसच्छास्त्राणि अवगाह्यालोड्य । यः । सिद्धान्तः ।

कृष्णस्यैवेच्छया येऽत्र दिव्यदृष्टिमुपागताः । स्युस्ते नरास्तु वीक्षन्ते कृष्णं तद्धाम च स्फुटम् ॥ २५ ॥ भौमवृन्दावने तेषां तद्द्वयस्यापि वीक्षणात् । तन्नित्यतोदिताऽस्त्येव न तु तस्य स्वभावतः ॥२६॥ इति प्रश्नोत्तरं विप्र ! दत्तं ते शास्त्रनिश्चितम् । अथास्मदीयसिद्धान्तं यथावत्कथयामि ते ॥ २७ ॥ वेदादीनि मया सर्वसच्छास्त्राण्यवगाह्य यः । सिद्धान्तो निश्चितस्तं त्वमव्यग्रः सन् निशामय ॥ २८ ॥ जीवा ईशा ब्रह्म माया परमेश्वर इत्यमी । अनादयो भवन्त्येव पञ्च चापि न संशयः ॥ २९ ॥ पृथिव्य-न्तःस्थबीजानि यथा मेघाम्बुयोगतः । उद्गच्छन्ति तथा जीवा मायाया ब्रह्मयोगतः ॥ ३० ॥ सर्वेषामुद्गमे स्थाने तिरोभावे च सर्वथा । इच्छैव परमेशस्य मुख्यो हेतुरितीयताम् ॥३१॥ नित्यसिद्धा एव जीवा मायायां सन्ति सर्वशः । पृथिव्यामिव बीजानि तेनोद्गच्छन्ति नूतनाः ॥३२॥ ईश्वरस्याक्षरत्वाच्च न तदंशाश्च ते मताः । परमेश्वर एकोऽस्ति सर्वेषां तु नियामकः ॥ ३३ ॥

निश्चितः । अस्ति । तं सिद्धान्तम् । त्वम् । अव्यग्रोऽनाकुलमनाः सन् । निशामय शृणु ॥ २८ ॥ जीवा इति । जीवाः । ईशा वैराजपुरुषादयः । ब्रह्माक्षर-पुरुषः । माया तदङ्गना मूलप्रकृतिः । परमेश्वरो जीवादिचतुरुपासनीयः पुरुषोत्तमः । इत्यमी । पञ्चापि । अनादयो नित्यसिद्धा एव । भवन्ति । न संशयः ॥ २९ ॥ पृथिवीति । यथा । पृथिव्यन्तःस्थबीजानि । मेघाम्बुयोगतः । उद्गच्छन्ति प्ररोहन्ति । जीवा भूमिस्थानीयमायायामनादिकालतोऽवस्थिता बीजस्थानीयक्षेत्रज्ञाः । ब्रह्मयोगतो मेघाम्बुस्थानीयमूलप्रकृतिपतिमहापुरुषेक्षणयोगतः । मायायाः सकाशात् । उद्गच्छन्ति सशरीराः प्रादुर्भवन्ति ॥ ३० ॥ सर्वेषामिति । सर्वेषां जीवादीनाम् । उद्गमे प्रादु-र्भावे । स्थाने स्थितौ । तिरोभावे च । मुख्यः । हेतुः । सर्वथा । परमेशस्य पुरुषोत्तमस्य । इच्छैव । अस्ति । इतीत्थम् । ईयताम् ॥ ३१ ॥ नित्येति । पृथि-व्याम् । बीजानीव । मायायाम् । सर्वशः । जीवाः । नित्यसिद्धा एव । सन्ति । ते जीवाः । नूतना नवीनाः । नोद्गच्छन्ति नैवोत्पद्यन्ते ॥ ३२ ॥ ईश्वरस्येति ।

किञ्च । ईश्वरस्य परमेश्वरस्य । अक्षरत्वादच्युतत्वाद्धेतोः । ते जीवाः । तदंशा ईश्वरस्य खण्डात्मकैकदेशरूपाः । न मताः । सर्वेषां जीवादीनाम् । नियामकस्तु । एकः । परमेश्वरः । अस्ति ॥ ३३ ॥ स इति । स परमेश्वरः । श्रीकृष्णः । सदा । दिव्याकृतिरमायिकसुन्दरमूर्त्तिः । स्वैः स्वभक्तैः । अक्षरमुक्तैः । प्रेम्णा । सेवितपत्कजः सन् । अक्षराख्ये । स्वे स्वकीये । धाम्नि । राजते ॥ ३४ ॥ त इति । ते जीवाः । यदा । सर्वकारणम् । साक्षाददितदयया प्रत्यक्षत्वेन वर्त्तमानम् । तं परमेश्वरम् । शरणम् । गत्वा । स्वधर्मज्ञानवैराग्ययुजा । भक्त्या । भजन्ति । चकारो भगवन्माहात्म्यं च सम्यग्जानन्तीति बोधयति । तदेत्युत्तरेण सम्बन्धः ॥ ३५ ॥ तदेति । हे द्विज ! । तदैव । तन्मायामनादिकालतो जीवाज्ञानरूपां परमेश्वरशक्तिभूतां मायाम् । तीर्त्वा । ज्ञानिभक्ताः । ते जीवाः । नारदर्षिशुकादिभिः । समानत्वमेव । प्रयान्ति ॥ ३६ ॥ ब्रह्मीभूता इति । ब्रह्मीभूताः साक्षात्परमेश्वरैकान्तिकोपासनया ब्रह्मभावं प्राप्ताः । ते जीवाः । देहान्ते स्वस्वभौतिकदेहपतनानन्तरम् ।

स श्रीकृष्णोऽक्षराख्ये स्वे धाम्नि दिव्याकृतिः सदा । राजतेऽक्षरमुक्तैः स्वैः प्रेम्णा सेवितपत्कजः ॥ ३४ ॥
ते यदा शरणं गत्वा साक्षात्तं सर्वकारणम् । स्वधर्मज्ञानवैराग्ययुजा भक्त्या भजन्ति च ॥ ३५ ॥ तदैव तीर्त्वा तन्मायां ज्ञानिभक्तास्तु ते द्विज ! । समानत्वं प्रयान्त्येव नारदर्षिशुकादिभिः ॥ ३६ ॥ ब्रह्मीभूताश्च ते गत्वा देहान्ते कृष्णधाम वै । पार्षदत्वं भगवतो यायुः सिद्धान्त एष नः ॥ ३७ ॥ इति श्रुत्वा स तद्वाक्यं त्यक्त्वैव स्वमतादरम् । कृत्वा समाश्रयं तस्य दीक्षां जगृहे औद्धवीम् ॥ ३८ ॥ इत्थं गुरोस्तस्य वचोऽमृतं ते सदोनिषण्णा मुनयः समस्ताः । निपीय भक्ता गृहिणश्च सर्वेऽप्यापुः प्रहर्षं हृदये तदीयाः ॥ ३९ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते द्विशताधिकत्रयस्त्रिंशस्तरङ्गः ॥ २३३ ॥ १० ॥

कृष्णधाम ब्रह्मपुराख्यम् । गत्वा । भगवतः पुरुषोत्तमस्य श्रीहरेः । पार्षदत्वम् । यायुः । हे द्विज ! । एषः । नोऽस्माकम् । सिद्धान्तः । अस्ति ॥ ३७ ॥ इतीति । इतीत्थंभूतम् । तद्वाक्यं श्रीहरिवचनम् । श्रुत्वा । स विप्रः । स्वमतादरम् । त्यक्त्वैव । तस्य श्रीहरेः । समाश्रयम् । कृत्वा । औद्धवीमुद्धवसम्प्रदायसम्बन्धिनीम् । दीक्षाम् । जगृहे ॥ ३८ ॥ इत्थमिति । इत्थमेवंविधम् । गुरोः । तस्य श्रीहरेः । वचोऽमृतम् । निपीय । सदोनिषण्णाः । तदीयाः । भक्ताः । समस्ताः । ते । मुनयः । सर्वे । गृहिणश्चापि । हृदये स्वस्वमानसे । प्रहर्षम् । आपुः ॥ ३९ ॥ प्रश्नं पृष्ट्वा माध्ववर्त्मस्थितं विप्रं तदुत्तरम् । हरिस्तस्मै स्वसिद्धान्तं यश्चाहास्तु स मे हृदि ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तक श्रीहर्येकान्तिकोपासक श्रीहरिकृष्णभगवत्सूनुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां द्विशताधिकत्रयस्त्रिंशस्तरङ्गः ॥ २३३ ॥ १० ॥

यानीन्द्रियाणां मनसः साधनानि जये पृथक् । निर्विकल्पस्थितिमृते शान्तेर्हेतुश्च ये हृदि ॥ १ ॥ श्रेयोमार्गादपातस्य हेतुर्यश्च महापदि । सीतादृष्टान्ततः कृष्णे स्नेहो यश्चागुणाग्रहः ॥ २ ॥ एतत्सर्वं तु संक्षेपात्स्वभक्तेषु दयावशात् । एकादशे श्रीहरिणा स्पष्टमेव प्रकीर्त्तितम् ॥ ३ ॥ शकेति । विक्रमार्कस्य विक्रमादित्यभूपतेः । वेदाष्टवसुभूमिते चतुरष्टाष्टैकसंमिते । शकाब्दे शकवर्षे । संवदष्टादशशताधिकचतुरशीतितमे वर्षे । इत्यर्थः ( १८८४ ) शुचिशुक्लतृतीयायामाषाढमासस्य शुक्लपक्षागततृतीयातिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमस्य राज्ञः । दुर्गे । प्राचीनवक्त्रस्य प्राग्द्वारस्य । वेश्मनस्तस्यैव भवनस्य । वेद्यां बहिर्वेदिकायाम् । उत्तमे उत्तमास्तरणास्तृते । मञ्चे पर्यङ्कासने । स श्रीहरिः । न्यषीदत् ॥ २ ॥ सितेति । सिताम्बरः परिधृतसकलश्वेतवसनः । सहस्रशो नानादेशागतत्वाद्बहुभिः । भक्तैस्त्यागिभिर्गृहिभिश्च स्वाश्रितजनैः । परितः । वृतः सभायां संवेष्टितः । स श्रीहरिः । अग्रे । निषण्णान् । स्वाननचक्षुषः स्वमुखचन्द्रलग्ननेत्रचकोरान् । साधून् मुक्तानन्दादिमुनीन् । पप्रच्छ ॥ ३ ॥ मनस इति । हे साधवः ! । मनसः । इन्द्रियाणां चक्षुराद्यक्षाणां च ।

शकाब्दे विक्रमार्कस्य वेदाष्टवसुभूमिते । शुचिशुक्लतृतीयायां वचोऽमृतमिदं हरेः ॥ १ ॥ तत्र दुर्गपुरे दुर्ग उत्तमस्य स वेश्मनः । वेद्यां प्राचीनवक्त्रस्य न्यषीदन्मञ्च उत्तमे ॥ २ ॥ सिताम्बरो वृतो भक्तैः परितः स सहस्रशः । अग्रे निषण्णान् पप्रच्छ साधून् स्वाननचक्षुषः ॥ ३ ॥ मनसश्चेन्द्रियाणां च जये साधनमेककम् । अस्ति वा पृथगस्तीति पृष्टास्ते तद्व्यचारयन् ॥ ४ ॥ ततोऽसावेव तान्प्राह प्रश्नोत्तरमहं ब्रुवे । इन्यािणां जयेऽस्त्यन्यत्साधनं च हृदः पृथक् ॥ ५ ॥ तपःस्वधर्मवैराग्यनियमैस्तु जयो भवेत् । इन्द्रियाणां च नवधा कृष्णभक्त्या मनोजयः ॥ ६ ॥ मुक्तानन्दस्ततोऽपृच्छद्भजतां त्वां नृणां हरे ! । निर्विकल्पसमाधौ स्याद् यादृशी शान्तिरन्तरे ॥ ७ ॥

जये वशीकरणे । एककमेकमेव । साधनम् । अथवा । पृथक् । अस्ति । इतीत्थम् । पृष्टाः श्रीहरिणानुयुक्ताः । ते साधवः । तच्छ्रीहरिकृतप्रश्नोत्तरम् । व्यचारयन् ॥ ४ ॥ तत इति । ततः विचारे कृतेऽपि प्रश्नप्रतिवचनानुपलब्ध्या तत्कृततूष्णींभावदर्शनानन्तरम् । असौ श्रीहरिरेव । तान्साधून् । प्राह । हे सन्तः ! । अहम् । प्रश्नोत्तरम् । ब्रुवे । इन्द्रियाणाम् । जये । अन्यत् । साधनम् । अस्ति । हृदो मनसः । जये च । पृथगन्यत् । साधनम् । अस्ति ॥ ५ ॥ तप इति । तपः कृच्छ्रचान्द्रायणादिकं च स्वधर्मो वर्णाश्रमोचितस्वधर्मोनुष्ठानं च वैराग्यं मायिकविषयेषु दोषदर्शनजाततदुपभोगवैतृष्ण्यं च नियमा इन्द्रियाणां स्वस्वविषये प्रवृत्तौ जातायां सद्यस्ततः प्रत्याहरणानि च तैः । इन्द्रियाणाम् । जयः । भवेत् । नवधा श्रवणादिनवप्रकारकृतया । कृष्णभक्त्या माहात्म्यज्ञानयुक्तया श्रीहरिपरिचर्यया च । मनोजयः । भवेत् ॥ ६ ॥ मुक्तानन्द इति । ततस्तदनन्तरम् । मुक्तानन्दोमुनिः । अपृच्छच्छ्रीहरिं प्रश्नमप्राक्षीत् । हे हरे ! । त्वां स्वाश्रयादिनाऽनेकजीवकल्याणाय प्रादुर्भूतं पुरुषोत्तमं भवन्तम् । भजतां सप्रेम नवधा सेवमानानाम् । नृणां जनानाम् । निर्विकल्पसमाधौ । अन्तरेऽतःकरणे । यादृशी । शान्तिः । स्यात् ॥ ७ ॥

विनेति । हे प्रभो ! । तं निर्विकल्पसमाधिम् । विनाऽपि । अन्तरे । तादृशी । शान्तिः । केन साधनेन । स्यात् । किञ्च । आपदि विषमदेशकालादिप्राप्तिरूपापत्तौ सत्यामपि । श्रेयोऽध्वनः स्वकल्याणमार्गात् । पातस्त्वद्भक्तानां पतनम् । कथं केन साधनेन । न भवेत् । इतिद्वयोरेकसम्बन्धः ॥ ८ ॥ एतदिति । एतत्प्रश्नद्वयस्यानयोः प्रश्नयोरित्यर्थः । उत्तरम् । त्वम् । अर्हसि । इत्यमुना प्रकारेण । पृष्टो मुक्तानन्दमुनिनानुयुक्तः । हरिकृष्णः । तं मुक्तानन्दमुनिम् । तदुत्तरं तत्कृतप्रश्नद्वयस्य प्रतिवचनम् । अवदत् ॥ ९ ॥ आत्मेति । हे मुने ! । यथा । स्वदेहे । आत्मबुद्ध्या । दृढप्रीतिः । अस्ति । तथा तद्वदेव । कृष्णे स्वेष्टदेवे साक्षाच्छ्रीहरौ । कार्ष्णेषु श्रीहर्येकान्तिकभक्तेषु च । सा दृढप्रीतिः । स्यात् । तर्हि । तथा । शान्तिर्निर्विकल्पसमाधिसमोपशमः । भवेत् ॥ १० ॥ भक्तस्येति । तद्वतः कृष्णकार्ष्णदृढप्रीतिमतः भक्तस्य । श्रेयोऽध्वनः । पातः । क्वचित्कदाचिदपि । न स्यात् । असद्देशादियोगे सत्यपि । स तादृशो भक्तः । सर्वथा । निर्विघ्नः । अस्ति । कृष्णकार्ष्णदृढप्रीतिरेव निर्विकल्पसमाधिसमशान्तेः साधनमसद्देशादियोगेऽपि श्रेयोऽध्वनः पतनाभावस्यापि साधनमिति प्रश्नद्वयस्यैकमेवोत्तरं बोध्यम् ॥ ११ ॥ इतीति ।

विनापि तं तादृशी स्याच्छान्तिः केनान्तरे प्रभो ! । आपद्यपि कथं श्रेयोऽध्वनः पातो भवेन्न च ॥८॥ एतत्प्रश्नद्वयस्य त्वमुत्तरं वक्तुमर्हसि । इति पृष्टस्तमवदद्धरिकृष्णस्तदुत्तरम् ॥९॥ आत्मबुद्ध्या दृढप्रीतिः स्वदेहेऽस्ति यथा तथा । सा स्यात्कृष्णेषु च कार्ष्णेषु तर्हि शान्तिस्तथा भवेत् ॥ १० ॥ भक्तस्य तद्वतो न स्यात् पातः श्रेयोऽध्वनः क्वचित् । असद्देशादियोगेऽपि निर्विघ्नः सोऽस्ति सर्वथा ॥ ११ ॥ इति प्रश्नोत्तरं दत्वा पृच्छति स्म पुनः सतः । सत्पतिः परया प्रीत्या यूयं शृणुत साधवः ! ॥१२॥ भक्तौ द्वौ भवतः कौचित्तत्रैकस्य हरौ भृशम् । श्रीराम इव जानक्याः स्नेहो भवति सर्वथा ॥ १३ ॥ रामाज्ञया यदा सीतां लक्ष्मणस्तु महावने । रथादुत्तार्य हित्वा तां चक्रे जिगमिषां ततः ॥ १४ ॥ तदा रुरोद सा तां च दृष्ट्वा सोऽप्यरुदत्ततः । उवाच सा स्वदुःखेन नैव रोदिमि लक्ष्मण ! ॥ १५ ॥ किन्तु रामोऽस्त्यतिदयः स मां लोकापवादतः । त्याजयित्वापि हृदये कुर्यादेव विचारणाम् ॥ १६ ॥

इत्यमुना प्रकारेण । प्रश्नोत्तरम् । दत्त्वा । पुनः । सत्पतिः श्रीहरिः । सतः साधून् । पृच्छति स्म । हे साधवः ! । यूयम् । परया । प्रीत्या । शृणुत ॥ १२ ॥ भक्ताविति । कौचित् । द्वौ । भक्तौ । भवतः । तत्र तयोर्द्वयोर्भक्तयोर्मध्ये । एकस्य भक्तस्य । जानक्याः सीतायाः । श्रीरामे । इव । हरौ । सर्वथा । भृशम् । स्नेहः । भवति ॥ १३ ॥ साम्प्रतं प्रश्नपुष्ट्यै श्रीरामे जानकीस्नेहं वर्णयति सार्द्धैः सप्तभिः । रामेति । यदा । लक्ष्मणः । रामाज्ञया । सीताम् । रथात् । उत्तार्य । ताम् । महावने । हित्वा । ततो महावनात् । जिगमिषामयोध्यां प्रति गन्तुमिच्छाम् । चक्रे । तदेत्युत्तरेण सम्बन्धः ॥ १४ ॥ तदेति । तदा । सा सीता । रुरोद । तां रुदन्तीं सीताम् । दृष्ट्वा । स लक्ष्मणोऽपि । अरुदत् । ततस्तदनन्तरम् । सा सीता । उवाच लक्ष्मणमुक्तवती । हे लक्ष्मण ! । अहम् । स्वदुःखेन । नैव रोदिमि ॥१५॥ किन्त्विति । किन्तु । रामः । अतिदयोऽतिशयितदयायुक्तः । अस्ति । स रामः । लोकापवादतः । माम् । त्याजयित्वाऽपि । हृदये स्वमानसे । विचारणाम् । कुर्यादेव ॥ १६ ॥

विचारणामाह । अहो कष्टम् । मया । निर्दोषा दोषवर्जिता । स्त्री जानकी । घोरमतिभयङ्करम् । वनम् । प्रहापिता त्याजिता । महासाध्व्या महापतिव्रतायाः । मदात्मनो मदेकासक्तमनसः । तस्याः सीतायाः । का । गतिः । भवित्री । भविष्यति ॥ १७ ॥ इतीति । इत्येवम् । संस्मृत्य संस्मृत्य । मुहुर्मुहुर्विचारणां कृत्वेत्यर्थः । स रामः । अतिदुःखितः । भवेत् । ततः श्रीरघुवीरदुःखस्मरणाद्धेतोः । रोदिमि । तस्मात्कारणात् । त्वम् । गत्वाऽयोध्यायां श्रीरघुवीरनिकटप्रदेशं प्राप्य । प्रभुम् । तं श्रीरघुवीरम् । इत्थं वक्ष्यमाणप्रकारेण । वदेः ॥ १८ ॥ नेति । हे राम ! । घोरेऽपि । विपिने । सीतायाः । दुःखम् । नास्त्येव । यतोहेतोः । आसन्नं समीपवर्त्तिनम् । वाल्मीकेर्मुनेः । आश्रमम् । गत्वा । त्वाम् । भजिष्यति ॥ १९ ॥ अतइति । अतोहेतोः । त्वया । तस्याः सीतायाः । दुःखेन । हृदि । न दुःखितव्यम् । इतीत्थम् । हे लक्ष्मण ! । त्वम् । प्रभुं श्रीरामम् । ब्रूयाः । हे सन्तः ! । इतीत्थम् । सा सीता । अतिभावतः । अब्रवीत् ॥ २० ॥ नेति । सा सीता । भर्त्तुः स्वपत्युः श्रीरामस्य । अगुणं दोषम् । हृदि । किञ्चिदल्पमात्रमपि । नाग्रहीत् । एवं सीतायाः श्रीरामे इव । तस्योक्तभक्तस्य । कृष्णे । कार्ष्णेषु च । अच्युतोऽखिण्डतः । दोषग्रहणवर्जित इत्यर्थः । स्नेहः । अस्ति ॥ २१ ॥ सामान्य इति । अस्यैवंविधस्याद्यस्य भक्तस्य । धर्मः । तथा । वैराग्यम् । सामान्यतः । अस्ति । धर्मवैराग्ये अतितीव्रे न स्यातामित्यर्थः । एक आद्यः । भक्तः । ईदृशः । अस्ति । तथा । एकोऽन्यो भक्तः । तद्विलक्षणः पूर्वभक्ताद्विलक्षणधर्मः । अस्ति ॥ २२ ॥ विलक्षणत्वमाहार्द्धेन । सुदृढेति । असावन्यो भक्तः । सुदृढस्नेहहीनः श्रीहरौ तद्भक्तेषु च यथा तद्दोषग्रहणं न स्यात्तथाविधसुदृढस्नेहरहितः । धर्मवैराग्यदार्ढ्यवान् धर्मवैराग्ययोर्दृढतायुक्तः । अस्ति । एतयोर्भक्तयोर्मध्ये । कतरः कः । भक्तः । स्नेहसाहचर्योचितः प्रीतिपूर्वसमागमविधानार्हः । मतः ॥२३॥ इतीति । इत्येवंविधम् । तत्प्रश्नं श्रीहरिकृतानुयोगम् । आश्रुत्य । चैतन्यानन्दो मुनिः । तं श्रीहरिम् । आह । हे हरे ! । उभये । त्वदुक्तयोर्द्वयोर्भक्तयोर्मध्ये । आदिमः प्रथमो भक्तः । स्नेहसाहचर्यो । हितावहः स्नेहपूर्वकृतसमागमः सन् । हितंकर इत्यर्थः ॥ २४ ॥ इतीति । इत्येवंविधम् । तस्य । मुनेश्चैतन्यानन्दसाधोः । उत्तरवचः । श्रुत्वा । सत्पतिः । स

अहो मया वनं घोरं निर्दोषा स्त्री प्रहापिता । भवित्री का गतिस्तस्या महासाध्व्या मदात्मनः ॥१७॥ इति संस्मृत्य संस्मृत्य भवेद्वै सोऽतिदुःखितः । ततो रोदिमि तस्मात्त्वं गत्वेत्थं तं वदेः प्रभुम् ॥१८॥ नास्त्येव दुःखं सीताया घोरेऽपि विपिने यतः । आसन्नमाश्रमं गत्वा वाल्मीकेस्त्वां भजिष्यति ॥ १९ ॥ अतो न तस्या दुःखेन दुःखितव्यं त्वया हृदि । इति ब्रूयाः प्रभुमिति साऽब्रवीदतिभावतः ॥ २० ॥ नतु सा भर्तुरगुणं किञ्चिदप्यग्रहीद्धृदि । एवं हि तस्य स्नेहोऽस्ति कृष्णे कार्ष्णेषु चाच्युतः ॥ २१ ॥ सामान्यतोऽस्ति धर्मस्तु वैराग्यं च तथास्य हि । ईदृशो भक्त एकोऽस्ति तथैकस्तद्विलक्षणः ॥ २२ ॥ सुदृढस्नेहहीनोऽसौ धर्मवैराग्यदार्ढ्यवान् । एतयोः कतरः स्नेहसाचर्योचितो मतः ॥ २३ ॥ इति तत्प्रश्नमाश्रुत्य चैतन्यानन्द आह तम् । उभयोरादिमः स्नेहसाहचर्यो हितावहः ॥ २४ ॥ इत्युत्तरवचः श्रुत्वा मुनेस्तस्य स सत्पतिः । इदमेवोत्तरं ह्यस्य प्रश्नस्यास्तीत्युवाच तम् ॥ २५ ॥

स श्रीहरिः । अस्य । प्रश्नस्य । उत्तरम् । इदमेव । अस्ति । इतीत्थम् । तं चैतन्यानन्दमुनिम् । उवाच ॥ २५ ॥ स इति । इत्थमेवंविधाम् । भक्तिपुत्रस्य श्रीहरेः । सुधासमानाम् । वाचम् । आकलय्य श्रुत्वा । सः । मुनिश्चैतन्यानन्दसाधुः । सदोनिषण्णाः । भक्ताः । अपरे । मुनयः । गृहिणश्च । सन्तोषम् । आपुः ॥ २३ ॥ प्रश्नोत्तरमयैर्यः स्वान् स्वकीयैर्वचनामृतैः श्रीहरिर्नन्दयामास स आनन्दप्रदोऽस्तु मे ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तक श्रीहर्येकान्तिकोपासक श्रीहरिकृष्णभगवत्पदानु- रघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां द्विशताधिकचतुस्त्रिंशस्तरङ्गः ॥ २३४ ॥ ११ ॥

हरेस्तस्य च भक्तानां नोपादेयोऽगुणः क्वचित् । महानर्थकरः स्वस्य महापापादितोऽधिकः ॥ १ ॥ अपि भक्तेष्वतिस्नेहो देहसम्बन्धिषु क्वचित् । न कार्यश्चेति सम्प्रोक्तं द्वादशे हरिणा स्फुटम् ॥२॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८८४) आषाढस्य मासस्य । असिताष्टम्यां कृष्णपक्षाष्टमीतिथौ । इदम् । हरेः वचोऽमृ-

स भक्तिपुत्रस्य तु वाचमित्थं सुधासमानां मुनिराकलय्य । सदोनिषण्णा मुनयोऽपरे च सन्तोषमापुर्गृहिणश्च भक्ताः ॥ २६ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते द्विशताधिकचतुस्त्रिंशस्तरङ्गः ॥ २३४ ॥ ११ ॥

शकाब्दे विक्रमार्कस्य वेदाष्टवसुभूमिते । आषाढस्यासिताष्टम्यां वचोऽमृतमिदं हरेः ॥ १ ॥
तत्र दुर्गपुरे दुर्गे उत्तमस्य स भूभृतः । स्वावासे स्वासनेऽराजन्नानाभक्तगणावृतः ॥ २ ॥
सितवासाः प्रसन्नास्यो भक्तानूचे स शिक्षयन् । मानः श्रेयोऽर्थिना त्याज्यः कुलविद्याधनादिजः ॥ ३ ॥
सत्सङ्गिनोऽवरस्यापि वृत्त्यं दासतयैव च । कृष्णतद्भक्तिभाजां च ग्राह्यो नैवागुणः क्वचित् ॥ ४ ॥
यस्यान्तः करणे लग्नः स स्यात्स तु पुमानिह । अलर्क इव विज्ञेयः स्पर्शानर्हो हि देहिनाम् ॥ ५ ॥

तम् । अभूत् ॥१॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमस्य । भूभृतो नृपस्य । दुर्गे । स्वावासे स्वावासभवनद्वितीयभूमिगवाक्षमध्ये इत्यर्थः । स्वासने सश्वेतोत्तरछ- दोपबर्हपार्श्विके स्थूलतूलिकासने । नानाभक्तगणावृतो नानादेशागतत्यागिगृहिस्वभक्तव्रजैः सभायां परिवेष्टितः । स श्रीहरिः । अराजत् ॥ २ ॥ सितेति । सितवासाः परिहितसकलश्वेतवसनः । प्रसन्नास्यः । स श्रीहरिः । भक्तान्समीपविष्टस्वभक्तजनान् । शिक्षयन्सन् । ऊचे । हे भक्ताः ! । श्रेयोऽर्थिना स्वकल्याणेच्छुना भक्तेन । कुल- विद्याधनादिजः । मानः । त्याज्यः ॥ ३ ॥ सत्सिङ्गिन इति । किञ्च । अवरस्य दीनस्यापि । सत्सङ्गिनो भक्तस्य । दासतयैव । वृत्त्यम् । कृष्णतद्भक्तिभाजाम् । अगुणो दोषः । क्वचित्कदाचिदपि । नैव । ग्राह्यः ॥ ४ ॥ यस्येति । इह सत्सङ्गे । यस्य भक्तस्य । अन्तःकरणे । स कृष्णतद्भक्तिभागगुणः । लग्न आयातः । स्यात् । सः । पुमान् भक्तस्तु । अलर्को येगितः श्वा इव । उन्मतः श्वान इवेत्यर्थः । देहिनां भक्तानाम् । स्पर्शानर्हः । विज्ञेयः । हि ॥ ५ ॥

तदिति । यथा । तल्लालास्पर्शमात्रेण योगितश्वानस्य केवलाया लालायाः स्पर्शत एव । अन्यस्य तत्स्पर्शवतो जनस्य । तद्रोगो योगितशुन आमयः । जायते । तथा । अस्य चित्तलग्नकृष्णतद्भक्तदोषस्य भक्तस्य । सङ्गादपि । कृष्णतः श्रीहरेः । वैमुख्यं विमुखीभावः । भवेत् ॥६॥ तदिति । आसुरबुद्धिकृत् । तदन्तःस्थस्तच्चित्तलग्नः । तदगुणः कृष्णतद्भक्तदोषः । क्षयरोगो राजयक्ष्मेव । अचलो निश्चलः सन् । उपायैस्तन्निवृत्तिसाधनैः । नाशितुम् । शक्यः । नैवास्ति ॥ ७ ॥ ब्रह्मेति । शास्त्रे धर्मशास्त्रे । ब्रह्महत्यादिपापानाम् । निष्कृतिः प्रायश्चितम् । प्रोक्ता । अस्ति । कृष्णतद्भक्ताल्पागुणग्रहणस्य । निष्कृतिस्तु । क्वापि कस्मिंश्चिद्धर्मशास्त्रेऽपि । न प्रोक्ताऽस्ति ॥८॥ नेति । प्रायश्चित्तशतैरपि । तत्पापस्य कृष्णतद्भक्तागुणग्रहणाघस्य । नाशः । न स्यात् । तद्वतस्तथाविधपापयुक्तस्य । पुंसः । संसृतेः । निवर्त्तनम् । नैव । स्यात् ॥ ९ ॥ अनन्तेति । तस्य । पापिनः । अनन्तकल्पेषु । पुनः । जन्म । पुनः । मृतिः । वारं वारं जन्म मरणं चेत्यर्थः । भवेत् । क्वापि कदाचिदपि । सुखक्षणः सौख्या-

तल्लालास्पर्शमात्रेण तद्रोगोऽन्यस्य जायते । यथा तथाऽस्यापि सङ्गाद्वैमुख्यं कृष्णतो भवेत् ॥६॥ तदन्तःस्थस्तदगुणः क्षयरोग इवाचलः । उपायैर्नाशितुं नैव शक्योऽस्त्यासुरबुद्धिकृत् ॥ ७ ॥ ब्रह्महत्यादिपापानां शास्त्रे प्रोक्ताऽस्ति निष्कृतिः । न क्वापि कृष्णतद्भक्तोल्पागुणग्रहणस्य तु ॥८॥ न तत्पापस्य नाशः स्यात्प्रायश्चित्तशतैरपि । पुंसश्च तद्वतो नैव संसृतेः स्यान्निवर्त्तनम् ॥ ९ ॥ अनन्तकल्पेषु भवेत्पुनर्जन्म पुनर्मृतिः । न तु क्वापि भवेत्तस्य पापिनो हि सुखक्षणः ॥ १० ॥ रोगाग्निशस्त्रव्याघ्राद्यैर्देहस्यैव मृतिर्भवेत् । न तु क्वापि हि जीवस्य साऽपि स्यादेतदंहसा ॥११॥ कल्याणसाधने स्वस्य प्रवृत्तिर्नैव कर्हिचित् । एषैव जीवस्य मृतिर्विज्ञेया खलु पाप्मनः ॥ १२ ॥ एवं दुष्परिणामत्वाद्धरेस्तस्य च सेविनाम् । ग्राह्यो नैवागुणः क्वापि द्रोहहेतुः सुबुद्धिना ॥ १३ ॥ तथा श्रेयोऽर्थिना स्वस्य देहसम्बन्धिषु क्वचित् । सत्सङ्गिष्वपि नैवातिस्नेहः कार्यश्च सर्वथा ॥१४॥ दुग्धं सशर्करमपि सर्पेण यदि दूषितम् । भवेत्तदा पेयबुद्धिस्तस्मिन्मृत्युप्रदा यथा ॥ १५ ॥

वसरः । न तु नैव । भवेत् ॥ १० ॥ रोगेति । रोगाग्निशस्त्रव्याघ्राद्यैः । देहस्यैव । मृतिर्मरणम् । भवेत् । जीवस्य तु । मृतिः । क्वापि । कदाचिदपि । न भवेत् । एतदंहसैतेन पापेन तु । सा जीवमृतिरपि । स्यात् ॥ ११ । जीवमृतेरश्रुतत्वात्तल्लक्षणमपि स्वयमेवाह । कल्याणेति । स्वस्य । कल्याणसाधने । प्रवृत्तिः । कर्हिचित् । नैव । भवेत् । एषैव । पाप्मन उक्तविधपापयुक्तस्य । जीवस्य । मृतिः । विज्ञेया । खलु ॥१२॥ एवमिति । एवममुना प्रकारेण । दुष्परिणामत्वाद् दुष्टोदर्कत्वाद्धेतोः । हरेः । तस्य हरेः । सेविनां च । द्रोहहेतुः । अगुणः । सुबुद्धिना भक्तेन । क्वापि कदाचिदपि । नैव ग्राह्यः ॥ १३ ॥ तथेति । तथा किञ्च । हे भक्ताः ! । स्वस्यात्मनः । श्रेयोऽर्थिना सत्सङ्गिना । देहसम्बन्धिषु पितृभ्रातृपुत्रादिषु । सत्सङ्गिषु विषयेष्वपि । अतिस्नेहः । क्वचित् । सर्वथा । नैव कार्यः ॥ १४ ॥ एतदेव दृष्टान्तेन द्रढयति द्वाभ्याम् । दुग्धमिति । यथा । ससर्करमपि । दुग्धम् । यदि । सर्पेण । दूषितं गरलनिःक्षेपेण प्रापितदोषम् । भवेत् । तदा । तस्मिन्दुग्धे

पेयबुद्धिः । मृत्युपदा । भवेत् । एतत्पानेनाहं मरिष्यामीति मतिरुत्पद्यतेत्यर्थः ॥ १५ ॥ तथेति । तथा तद्वदेव । ये । हरिभक्ताः । देहसम्बन्धदूषिताः । स्युः । तेषु हरिभक्तेषु । प्रीतिः । दुःखदाऽस्ति । इतिहेतोः । सुधीः स्वकल्याणमतिः । पुमान् भक्तः । तां सत्सङ्गिषु स्वदेहसम्बन्धिषु प्रीतिम् । न कुर्यात् ॥ १६ ॥ तेभ्य इति । स सुधीर्भक्तः । तेभ्यः स्वसम्बन्धिभ्यः सत्सङ्गिभ्यः । निःस्पृहः । भूत्वा । कृष्णपदाम्बुजम् । भजेत् । स्वधर्मनिष्ठः सन् प्रेम्णा सर्वदा श्रीहरिचरणपद्ममेव सेवेतेत्यर्थः । हे भक्ताः ! । श्रेयोऽन्तरायहृत्स्वकल्याणविघ्ननिवर्त्तिका । एषा । वार्त्ता । हृदि स्वस्वमानसे । सदा । धार्या ॥१७॥ श्रुत्वेति । इत्येवंविधाम् । सुधया । समानां तुल्याम् । स्वकविघ्नहर्तुः स्वकीयभक्तानां कल्याणमार्गादौ विघ्ननिवर्त्तकस्य । नारायणस्य श्रीहरेः । वाचम् । श्रुत्वा । सदःस्थाः । ते । सर्वेऽपि । भक्तजनाः । मोदम् । सम्प्राप्य । तां श्रीहरिवाचम् । हृदये । दधुः ॥ १८ ॥ महानर्थकरं स्वस्य स्वभक्तानां च योऽगुणम् । अनुपादेयमाहैव तथा भक्तेष्वपि प्रभुः ॥ १ ॥ देहसम्बन्धिषु स्नेहमकार्यं प्राह सर्वथा । ममैताभ्यां सदोषाभ्यां रक्षां कुर्यात्सदा हरिः ॥ २ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तक श्रीहर्यकान्तिकोपासक श्रीहरिकृष्णभगवत्स्वगुरुरघुवीराचार्यविरचितायां

तथैव हरिभक्ता ये देहसम्बन्धदूषिताः । तेषु प्रीतिर्दुःखदेति न कुर्यात्तां सुधीः पुमान् ॥ १६ ॥ तेभ्यः स निःस्पृहो भूत्वा भजेत्कृष्णपदाम्बुजम् । एषा वार्त्ता सदा धार्या हृदि श्रेयोऽन्तरायहृत् ॥ १७ ॥ श्रुत्वेति वाचं सुधया समानां नारायणस्य स्वकविघ्नहर्त्तुः । सर्वेऽपि ते भक्तजनाः सदःस्थाः सम्प्राप्य मोदं हृदये दधुस्ताम् ॥ १८ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते द्विशताधिकपञ्चत्रिंशस्तरङ्गः ॥ २३५ ॥ १२ ॥

शकाब्दे विक्रमार्कस्य वेदाष्टवसुभूमिते । शुचेः कृष्णनवम्यां तु वचोऽमृतमिदं हरेः ॥ १ ॥
तत्र दुर्गपुरे दुर्ग उत्तमस्यास्य सद्मनः । प्राङ्मुखस्य वितर्दौ स न्यषीदत् पीठ उत्तमे ॥ २ ॥
सिताम्बरश्च स दधन्मल्लिकाहारशेखरान् । वृतः सहस्रशो भक्तैः पुरस्थानब्रवीत्सतः ॥ ३ ॥

सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां द्विशताधिकपञ्चत्रिंशस्तरङ्गः ॥ २३५ ॥ १२ ॥

विषमदेशकालादौ निश्चलैकान्तिकस्थितिः । स्वदृष्टान्तेन हरिणा कथिता तु त्रयोदशे ॥ १ ॥ शकेति पूर्वार्द्धं व्याख्यातम् (१८८४) शुचेराषाढमासस्य । कृष्णनवम्यां कृष्णपक्षागतनवमीतिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमस्य राज्ञः । दुर्गे । प्राङ्मुखस्य । अस्यैव सद्मनो भवनस्य । वितर्दौ बाह्यवेदिकायाम् । उत्तमे स्वास्तरणास्तृते । पीठे पर्यङ्कासने । स श्रीहरिः । न्यषीदत् ॥ २ ॥ सितेति । सिताम्बरः परिधृतसकलश्वेतवसनः । मल्लिकाहारशेखरान्स्वभक्तधारितकुन्दकुसुमस्रगापीडान् । दधत्कण्ठोष्णीषयोर्दधानः । सहस्रशो नानादेशागतत्वादनेकैः । भक्तैस्त्यागिगृहिस्वाश्रितजनैः । वृतः सभायां परिवेष्टितः । स श्रीहरिः । पुरःस्थान्स्वपुरःस्थित्वा तन्त्रीमृदङ्गवाद्योपेततया स्वपुरुषोत्तमत्वावगमकपद्यानि गायत इत्यर्थः । सतो मुक्तानन्द-ब्रह्मानन्द-गोपालानन्द-नित्यानन्द-शुकानन्द-चैतन्यानन्दादिसाधून् । अब्रवीत् ॥ ३ ॥

य इति । हे साधवः ! । जीवस्य भक्तक्षेत्रज्ञस्य । यः । असौ । देहः । अस्ति । स देहः । कर्माधीनः । वर्त्तते । ततोहेतोः । तस्य देहस्य । एकस्थितेः सुखिदुःखित्वाद्येकरूपतयाऽवस्थानस्य । निर्धारोऽवधारणम् । नास्ति ॥ ४ ॥ एकस्थित्यनिर्धारप्रकारमाह त्रिभिः । क्वचिदिति । स कर्माधीनजीवदेहः । क्वचित्कदाचित् । सुखी । अस्ति । जायते । क्वचित् । दुःखी । अस्ति । क्वचित् । स्वतन्त्रः स्वैरी । अस्ति । क्वचित् । परतन्त्रः । अस्ति । क्वचित् । गेहे । अस्ति तिष्ठति । क्वचित् । वने । अस्ति ॥ ५ ॥ स्वेति । क्वचित् । अस्य जीवदेहस्य । स्वेप्सिते स्वाभीष्टे । स्थाने । स्थितिरवस्थानम् । अस्ति जायते । क्वचित् । स्वेप्सिते स्थाने स्थितिः । नास्ति । असौ जीवदेहः । क्वचित् । कर्मवशात्कर्माधीनत्वतः । सन्मण्डलात् । पृथक् । भवेत् । सन्मण्डलं परित्यज्यैवान्यत्र यायादित्यर्थः ॥ ६ ॥ दुष्टेति । असौ जीवदेहः । क्व क्वापि । दुष्टभूपवशः । भवेत् । क्वचित् । स्वान्तेन्द्रियवशो बहिर्मुखेन्द्रियान्तःकरणाधीनः । भवेत् । तदोक्तविधापदादिप्राप्तिकाले । तस्य जीवदेहस्य । सर्वथा । एकाकितया । अवस्थितिः । भवेत् ॥ ७ ॥ एवमिति । एवंसति कर्माधीनतयैतत्स्थित्यनिर्धारे सति त्वित्यर्थः । तस्य

योऽसौ देहोऽस्ति जीवस्य कर्माधीनः स वर्त्तते । एकस्थितेस्ततो नास्ति निर्धारस्तस्य साधवः ! ॥ ४ ॥ क्वचित्सुखी क्वचिद् दुःखी स्वतन्त्रोऽस्ति क्वचिच्च सः । परतन्त्रः क्वचिच्चास्ति क्वचिद् गेहे क्वचिद्वने ॥५॥ स्वेप्सितेऽस्य स्थितिः स्थाने क्वचिदस्ति क्वचिन्न च । क्वचित्कर्मवशाच्चासौ पृथक् सन्मण्डलाद्भवेत् ॥ ६ ॥ दुष्टभूपवशः क्वासौ स्वान्तेन्द्रियवशः क्वचित् । तदैकाकितया तस्य सर्वथाऽवस्थितिर्भवेत् ॥ ७ ॥ एवं सति तु सत्सङ्गवासे नियमपालने । नियतत्वं भवेन्नैव तस्य कर्मवशत्वतः ॥८॥ एकान्तिकत्वं भक्तस्य तदा सिध्येन्न सर्वथा । स्वधर्मज्ञानवैराग्ययुजा भक्त्यैव तद्यतः ॥ ९ ॥ प्राधान्ये कर्मणो हीत्थं क्वचित्कालस्य वा सति । एकान्तिकत्वं भक्तस्य कथं तिष्ठति सर्वदा ॥१०॥ इति पृष्टे भगवता महान्तः सत्सु ये तु ते । गोपालानन्दप्रमुखा यथामत्युत्तरं ददुः ॥ ११ ॥ तत्सम्यङ्नेति मन्वानः स्वयमेवाह तत्स तान् । सर्वदैकान्तिकत्वं वो मद्दृष्टान्तेन कीर्त्तये ॥ १२ ॥

जीवदेहस्य । कर्मवशत्वतः । सत्सङ्गवासे । नियमपालने सत्सङ्गोदितनिष्कामनिर्लोभत्वादिनियमरक्षणे । नियतत्वं यथोक्तैकरीत्यैवावस्थित्वम् । नैव । भवेत् ॥ ८ ॥ एकेति । तदा । भक्तस्य । एकान्तिकत्वम् । सर्वथा । न सिद्ध्येत् । यतोहेतोः । तदेकान्तिकत्वम् । स्वधर्मज्ञानवैराग्ययुजा । भक्त्यैव । सिद्ध्येत् ॥ ९ ॥ प्राधान्य इति । हे सन्तः ! । इत्थमुक्तरीत्या । कर्मणः । प्राधान्ये । सति । अथवा । क्वचित् । कालस्य । प्राधान्ये सति । भक्तस्य । एकान्तिकत्वम् । सर्वदा । कथं केनोपायेन । तिष्ठति । तद्ब्रूतेतिशेषः ॥१०॥ इतीति । इत्यमुना प्रकारेण । भगवता श्रीहरिणा । पृष्टे सति । सत्सु समीपविष्टसाधुषु मध्ये । गोपालानन्दप्रमुखाः । ये । महान्तः साधवः । अभवन् । ते । यथामति । उत्तरम् । ददुः ॥ ११ ॥ तदिति । तत्साधुकृतस्वप्रश्नोत्तरम् । सम्यक् यथार्थम् । न जातम् । इतीत्थम् । मन्वानः । स श्रीहरिः । स्वयमेव । तत्स्वप्रश्नोत्तरम् । तान्साधून् । आह । हे साधवः ! । सर्वदा । एकान्तिकत्वम् । मद्दृष्टान्तेन । वो युष्मभ्यम् । कीर्त्तये ॥१२॥

सुखस्येति । सुखस्य । अथवा । दुःखस्य । आप्तौ । सम्पदः । अथवा । विपदः । आप्तौ सत्याम् । मे मम । सर्वदैव । यादृग्यथाविधा । स्थितिरेका-न्तिकधर्मनिष्ठा । अस्ति । सा स्थितिः । निशम्यताम् ॥ १३ ॥ 'नृनाव्यमनुसृत्यैव स्वयं श्रीपुरुषोत्तमः । शिक्षणार्थं स्वसाधूनां स वक्त्येकान्तिकस्थितिम्' । महेति । अहम् । भगवतोऽक्षरधामाधिपतेः कृष्णापरनाम्नः श्रीहरेः । महैश्वर्यमक्षरपरत्वाक्षरादिनियामकत्वानन्तैश्वर्याधिपतित्वादिरूपमतिशयितमाहात्म्यम् । सम्यग्यथार्थत एव । जानामि । ततो हेतोः । चक्रवर्त्यादेश्चक्रवर्त्तिनृपादीनामित्यर्थः । सम्पदः । तृणोपमाः शुष्काल्पतृणतुल्या एव । पश्यामि ॥ १४ ॥ कृष्णमिति । कृष्णम् । सर्वा-धिकम् । ज्ञात्वा । तत्र तस्मिन्कृष्णे । मे मम । आत्मा क्षेत्रज्ञः । योजितः । अस्ति । तस्मिन्कृष्णे एव । गिरिवदचलवत् । स्थिरो निश्चलः । अतएव । दृढो गाढः । स्नेहः । कृतः । अस्ति ॥ १५ ॥ तमिति । कालः । अथवा । कर्म । अथवा । माया । एते । तं स्नेहम् । चालयितुम् । नैव । क्षमाः । समर्था न भवन्तीत्यर्थः । सुखे । दुःखे च । सम्प्राप्ते सति । स स्नेहः । सर्वदा । स्थिर एव । अस्ति ॥ १६ ॥ पुरेति । पुरदुर्गादिवासात्पुरे तत्रापि सप्तभौमसौधे इत्यनेकविधोत्तम-

सुखस्य वाऽऽप्तौ दुःखस्य सम्पदो विपदश्च वा । सर्वदेव स्थितिर्यादृगस्ति मे सा निशम्यताम् ॥ १३ ॥ महैश्वर्यं भगवतः सम्यग्जानाम्यहं ततः । सम्पदश्चक्रवर्त्यादेः पश्याम्येव तृणोपमाः ॥ १४ ॥ कृष्णं सर्वाधिकं ज्ञात्वा तत्रात्मा योजितोऽस्ति मे । तस्मिन्नेव दृढः स्नेहः कृतोऽस्ति गिरिवत्स्थिरः ॥ १५ ॥ तं कालः कर्म वा माया नैव चालयितुं क्षमाः । सुखे दुःखे च सम्प्राप्ते सर्वदाऽस्ति स तु स्थिरः ॥ १६ ॥ पुरदुर्गादिवासान्मे वने वासोऽतिरोचते । स्थित्वा रहस्येव हरिं यद् ध्यायेयमितीप्सितम् ॥ १७ ॥ रामानन्दस्वामिनश्च वीक्षातः पूर्वमेव हि । मुक्तानन्देन साकं म एव-मेवास निश्चितम् ॥ १८ ॥ अधुनापि मनोवृत्तिरेवमेवास्ति नान्यथा । बद्धोऽस्मि कृष्णभक्तेषु स्नेहपाशेन सर्वदा ॥ १९ ॥ अतो हित्वा सतां सगं गन्तुमन्यत्र न क्षमः । उदासीनश्च बहुशो यियासुरपि काननम् ॥ २० ॥

स्थाननिवासात् । वने । वासः । मे मह्यम् । अतिरोचतेऽतिप्रीतिकरो जायते । यद्यतोहेतोः । रहसि विजनप्रदेशे एव । स्थित्वा । हरिम् । ध्यायेयम् । इत्येतदेव । इप्सितं ममाभीष्टम् । अस्ति ॥ १७ ॥ रामानन्देति । किञ्च । रामानन्दस्वामिनः । वीक्षातो दर्शनात् । पूर्वमेव । मुक्तानन्देन मुनिना । साकम् । मे मम । एवं विजने स्थित्वा श्रीहरिध्यानाचरणप्रकारेणैव । निश्चितं निर्णीतम् । आस बभूव ॥१८॥ अधुनेति । अधुना साम्प्रतमपि । मनोवृत्तिः । एवमेवंविधैव । अस्ति । अन्यथा प्रकारान्तरेण । नास्ति । किञ्च । अहम् । सर्वदा । कृष्णभक्तेषु । स्नेहपाशेन । बद्धः । अस्मि । अत इत्युत्तरेण सम्बन्धः ॥ १९ ॥ अत इति । अतोहेतोः । अहम् । बहुशो बहुवारान् । उदासीनः । अत एव । काननं वनम् । यियासुर्यातुमिच्छुः सन्नपि । सतां श्रीकृष्णैकान्तिकभक्तानां साधूनाम् । सङ्गम् । हित्वा । अन्यत्र काननादिस्थले । गन्तुम् । न क्षमः समर्थो नास्मि ॥ २० ॥

अभक्तैरिति । किञ्च भूरिशुश्रूषकैरतिशयेन मम सेवां कर्त्तुमुद्युक्तैरपि । अथवा । धनिभिराढ्यैरपि । अभक्तैः । रक्ष्यमाणः स्वावासे रक्षणाय प्रार्थितः । अहम् । कुत्रचित्कस्मिंश्चिदपि । तत्स्थाने तथाविधाभक्तावासे । नैव तिष्ठेयम् ॥ २१ ॥ ईदृशीति । कृष्णे । कार्ष्णेषु तद्भक्तेषु च । मम । अनिशं सर्वदा । प्रीतिः । ईदृशी । अस्ति । तान्कृष्णकार्ष्णान् । विना तु । अतिरम्येऽतिरमणीयेऽपि । वस्तुनि कस्मिंश्चिदपि मायिकपदार्थे । अल्पाऽणुमात्रापि । सा प्रीतिः । नास्ति ॥ २२॥ अन्यत्रेति । चेद्यदि । अन्यत्र कृष्णकार्ष्णेतरवस्तुनि । अणुरपि । प्रीतिः । स्यात् । तर्हि । तावती तावन्मात्राप्रीतिः । कृष्णे । न्यूना । भवेत् । तस्माद्धेतोः । हरौ । सा प्रीतिः । पूर्णा । क्रियते । मया सम्पूर्णा विधीयते इत्यर्थः ॥ २३ ॥ कथेति । किञ्च । कृष्णस्य । कथासङ्कीर्त्तनादौ । मे मम । हृदि । अतीव । मत्तता क्षीवता । वर्त्तते । मत्तो यथा घूर्णायमानाङ्गो जायते तथा कृष्णकथाकीर्त्तनादावुभयपार्श्वयोर्घूर्णायमानाङ्गो भवामीत्यर्थः । ययाऽतीवमत्ततया । देहविस्मृतिः । स्यात् । नूनम् ॥ २४ ॥ देहेति । अहम् ।

अभक्तै रक्ष्यमाणस्तु भूरिशुश्रूषकैरपि । धनिभिर्वापि तत्स्थाने तिष्ठेयं नैव कुत्रचित् ॥ २१ ॥ ईदृश्यस्ति मम प्रीतिः कृष्णे कार्ष्णेषु चानिशम् । तान्विना स्वतिरम्येऽपि नास्ति साऽल्पाऽपि वस्तुनि ॥२२॥ अन्यत्र चेदणुरपि प्रीतिः स्यात्तर्हि तावती । कृष्णे न्यूना भवेत्तस्मात्पूर्णा सा क्रियते हरौ ॥ २३ ॥ कथासंकीर्त्तनादौ च कृष्णस्यातीव मत्तता । हृदि मे वर्त्तते न्यूनं यया स्याद्देहविस्मृतिः ॥२४॥ देहस्मृतिं तु यत्नेन स्वाश्रितानां सुखाप्तये । बलात्कृत्वा व्यवहृतिं कुर्वे लोकानुसारिणीम् ॥ २५ ॥ जानाम्यहं कृष्णमेव देहस्यास्य प्रवर्त्तकम् । न कर्मणां बलं भक्ते न च यत्कालमाययोः ॥२६॥ दासत्वेन कृतश्चास्ति तदधीनो मयाऽपि सः । अतः स्वेच्छानुसारेण प्रवर्त्तयतु तं प्रभुः ॥ २७ ॥ गजं सोऽश्वं खरं वापि तमारोहयतां क्वचित् । कारागारे क्षिपतु वा रोगिणं विदधातु वा ॥२८॥ न तु दुःखापहाराय प्रार्थयामि क्वचिद्धरिम् । रुचिः स्याद्यादृशी तस्य तथैव विदधातु सः ॥ २९ ॥ न च कृष्णप्रियाद्भिन्नं कार्यमस्ति स्वकं प्रियम् । तस्यैव यत्प्रियं तन्मे प्रियमित्यस्ति निश्चयः ॥ ३० ॥

स्वाश्रितानाम् । सुखाप्तये । यत्नेन । देहस्मृतिम् । कृत्वा । लोकानुसारिणीम् । व्यवहृतिं व्यवहारम् । बलात् । कुर्वे ॥२५॥ जानामीति । किञ्च । अहम् । अस्य । देहस्य । प्रवर्त्तकम् । कृष्णमेव । जानामि । यद्यतो हेतोः । भक्ते । कर्मणाम् । बलम् । नास्ति । कालमाययोश्च बलम् । नास्ति ॥ २६ ॥ दासत्वेनेति । मया । स देहोऽपि । दासत्वेन । तदधीनः श्रीकृष्णैकाधीनः । कृतः । अस्ति । अतोहेतोः । प्रभुः श्रीकृष्णः । स्वेच्छानुसारेण । तं मद्देहम् । प्रवर्त्तयतु ॥ २७ ॥ स्वेच्छानुसारतः कृष्णविधेयस्वदेहप्रवृत्तिप्रकारमाह द्वाभ्याम् । गजमिति । स श्रीकृष्णः । तं मद्देहम् । गजम् । अथवा । अश्वम् । अथवा । खरमपि । आरोहयताम् । अथवा । क्वचित् । कारागारे बन्दिभवने । क्षिपतु । अथवा । रोगिणं रोगयुक्तम् । विदधातु ॥ २८ ॥ नेति । दुःखापहाराय । हरिम् । क्वचित्कदाचिदपि । न तु नैव । प्रार्थयामि । तस्य हरेः । यादृशी । रुचिः । स्यात् । तथैव । स हरिः । विदधातु ॥ २९ ॥ नेति । किञ्च । कृष्णप्रियाच्छ्रीकृष्णप्रियकार्यात् । भिन्नम् ।

स्वकम् । प्रियम् । कार्यम् । नास्ति । तस्य श्रीकृष्णस्य । यत्कार्यम् । प्रियम् । तत्कार्यम् । मे ममापि । प्रियम् । इत्येवंविधः । निश्चयः । अस्ति ॥३०॥ नेति । किञ्च । कृष्णेच्छातः । अन्यत् । मम । प्रारब्धकर्म । नास्ति । यतोहेतोः । अहम् । कर्मेश्वरे कर्मफलप्रदातरि । तस्मिन् श्रीकृष्णे । लग्नतामत्यासक्तताम् । प्राप्तः । अस्मि । कर्मणां जडत्वेन स्वतःफलप्रदत्वाभावात्तत्फलदमेकं कृष्णं बुद्ध्वा तदेकलग्नचितो भवामीत्यर्थः ॥ ३१ ॥ दैहिक इति । अतोहेतोः । दैहिके । अतिसुखे । प्राप्ते सति । हर्षशोकविहीनस्य । मम । एकविधा । स्थितिः । अस्ति ॥ ३२ ॥ एवमिति । हे साधवः ! । एवममुना प्रकारेण । मदीया । अखिला । वृत्तिः । वो युष्मभ्यम् । कथिता । अन्यो मदितरो मद्भक्तोऽपि । यां मदीयां वृत्तिम् । समाश्रित्य । सर्वदा । एकान्तिक एकान्तिकस्थितियुक्तः । भवेत् ॥ ३३ ॥ उक्तमर्थं समासेन निगमति । द्वाभ्याम् । धर्ममिति । हे साधवः ! । दृढाश्रितः स्वभक्तैरतिदृढतया कृतसंश्रयः । कृष्ण एव । स्वाश्रितानां भक्तानाम् । धर्मम् । ज्ञानं । वैराग्यं

न च प्रारब्धकर्मान्यत्कृष्णेच्छातोऽस्ति वै मम । कर्मेश्वरे यतस्तस्मिन्नहं प्राप्तोऽस्ति लग्नताम् ॥ ३१ ॥ दैहिकेऽतिसुखे प्राप्ते भृशदुःखे च वा मम । हर्षशोकविहीनस्य स्थितिरेकविधाऽस्त्यतः ॥ ३२ ॥ एवं मदीया वृत्तिर्वः कथिता साधवोऽखिला । यामन्योऽपि समाश्रित्य सर्वदैकान्तिको भवेत् ॥ ३३ ॥ धर्मं ज्ञानं च वैराग्यं कृष्ण एव दृढाश्रितः । सर्वदा परितः पाति स्वाश्रितानां न संशयः ॥ ३४ ॥ क्वचिद्देशादिवैषम्याद् बाह्यतस्तच्च्युतिर्भवेत् । तथापि नान्तरे सा स्यात्प्रसादाद्राधिकापतेः ॥ ३५ ॥ सुधासमां वाचमितीश्वरस्य निशम्य ते साधुजनाः सदःस्थाः । तद्भक्तिभाजो गृहिणश्च सर्वेऽविदन्स्वशिक्षार्थमिमां तु वृत्तिम् ॥ ३६ ॥

इति श्रीहरिवाक्यसुधासिंधौ शतानन्दमुनिविरचिते द्विशताधिकषट्त्रिंशस्तरङ्गः ॥ २३६ ॥ १३ ॥

च । सर्वदा । परितः । पाति । देशकालादिवैषम्यादावपि सर्वथा रक्षतीत्यर्थः ॥ ३४ ॥ क्वचिदिति । क्वचित्कदाचित् । देशादिवैषम्यात् । बाह्यत उपरितः । तच्च्युतिर्धर्मादिभङ्गः । भवेत् । तथापि । राधिकापतेः श्रीहरेः । प्रसादात् । अन्तरे भक्तान्तःकरणे । सा धर्मादिच्युतिः । न स्यात् ॥ ३५ ॥ सुधेति । इत्येवंविधम् । ईश्वरस्य परमेश्वरस्य श्रीहरेः । सुधासमाम् । वाचम् । निशम्य । सदस्थाः । तद्भक्तिभाजः । सर्वे । ते साधुजनाः । गृहिणश्च । मोदं सम्प्रापेतिशेषः । इमां नृनाटयं पुरस्कृत्य श्रीहरिणाभिहिताम् । वृत्तिं हर्येकान्तिकभक्तसाधनीयां स्थितिम् । स्वशिक्षार्थम् । अविदन् ॥ ३६ ॥ देशादौ विषमे स्वेषां सदैवैकान्तिकस्थितिम् । स्वदृष्टान्तेन यः प्राह स हरिस्तां ददातु मे ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तक श्रीहर्येकान्तिकोपासक श्रीहरिकृष्णभगवत्स्नुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां द्विशताधिकषट्त्रिंशस्तरङ्गः ॥ २३६ ॥ १३ ॥

पृष्टानां द्वादशानां तु मुक्तानन्दादिभिर्मुदा । कृत्वोत्तराणि पृच्छानां प्रश्नमेकं स्वयं हरिः ॥ १ ॥ पृष्ट्वा तदुत्तरं सद्भ्यां कारयित्वा ह्यमन्यत । इत्थं चतुर्दशे प्रोक्तं यद्भक्तैर्धार्यमात्मनि ॥ २ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८८४) आषाढकृष्णैकादश्यामाषाढमासस्य कृष्णपक्षीयैकादशीतिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमस्य राज्ञः । दुर्गे । प्रागास्यस्य । वेश्मनस्तस्यैव भवनस्य । महावेद्यामुच्चायां वाह्यवेदिकायाम् । वरासने स्वास्तरणास्तृतोत्तमपर्यङ्कासने । स श्रीहरिः । निषसाद ॥ २ ॥ तं विशिनष्टि । सितेति । सितवासाः परिहितसकलश्वेतवसनः । पौष्पहारशेखरैः कुन्दकौसुमीयस्रगापीडैः । विभूषितः कण्ठे हारैः शिरःपटे शेखरैश्च विराजमानः । नानाविधैरनेकदेशागतत्वाद्बहुभिः । स्वभक्तैस्त्यागिगृहिस्वाश्रितजनैः । परिवृतः सभायां परिवेष्टितः । सस्मिताननः प्रसन्नमुखपङ्कजश्च ॥ ३ ॥ सद्भिरिति । सद्भिः । गीतम् । कृष्णयशः साक्षात्कृष्णयशोऽङ्कितपद्यानीत्यर्थः । श्रुत्वा । यथासुखम् । आसीनम् तं श्रीहरिम् । नत्वा । मुक्तानन्दोमुनिः । तदाज्ञया प्रश्नाचरणरूपेण श्रीहरिनिदेशेन । प्रश्नम् । पप्रच्छ ॥ ४ ॥ नेति । हे हरे ! । इह लोके । ईशेशादीश्वरेश्वरादक्षरधा-

**शकाब्दे विक्रमार्कस्य वेदाष्टवसुभूमिते । आषाढकृष्णैकादश्यां वचोऽमृतमिदं हरेः ॥१॥ तत्र दुर्गपुरे दुर्गे उत्तमस्य स वेश्मनः ।**
**प्रागास्यस्य महावेद्यां निषसाद वरासने ॥ २ ॥ सितवासाः पौष्पहारशेखरैश्च विभूषितः । नानाविधैः परिवृतः स्वभक्तैः**
**सस्मिताननः ॥ ३ ॥ सद्भिर्गीतं कृष्णयशः श्रुत्वाऽऽसीनं यथासुखम् । पप्रच्छ मुक्तानन्दस्तं नत्वा प्रश्नं तदाज्ञया ॥ ४ ॥**
**नास्तीशेशात्त्वदन्यत्तु सारवस्त्विह किञ्चन । तथापि न दृढप्रीतिर्भक्तानां त्वयि जायते ॥ ५ ॥ अत्र किं कारणमिति पृष्टः**
**स्वामी तमब्रवीत् । सारासारविवेको हि तेषां नास्तीति कारणम् ॥ ६ ॥ असारस्त्र्यादिसौख्येच्छावशात्सर्वसुखाम्बुधौ ।**
**प्रीतिं कृष्णे न कुर्युर्ये तैः स इत्थं विधीयताम् ॥ ७ ॥ यथोचितं ब्रह्मचर्यमिह पालयतामपि । अस्माकं कृष्णभक्तानां दोषः**
**कामादिवासना ॥ ८ ॥ स्त्रैणं सुखं तु सर्वासु योनिषु प्राप्तमेव नः । पश्वादियोनिषु च तन्नृभ्योऽप्यतिशयेन वै ॥ ९ ॥**

माधिपतिपुरुषोत्तमात् । त्वत्त्वत्तः । अन्यदितरत्तु । किञ्चन । सारवस्तु । नास्ति । तथापि । भक्तानां केषांचित्त्वद्भक्तजनानाम् । त्वयि । दृढप्रीतिः । न जायते । अत्रेत्युत्तरेण सम्बन्धः ॥ ५ ॥ अत्रेति । अत्रैवंविधार्थे । किं कारणम् । इतीत्थम् । पृष्टो मुक्तानन्दमुनिनानुयुक्तः । स्वामी श्रीहरिः । तं मुक्तानन्दमुनिम् । अब्रवीत् । हे मुने ! । तेषां तथाविधभक्तानाम् । सारासारविवेकः । नास्ति । इत्येतदेव । कारणं श्रीहरौ प्रीत्यनुदये हेतुरस्ति ॥ ६ ॥ असारेति । असारस्त्र्यादिसौख्येच्छावशात् । ये भक्ताः । सर्वसुखाम्बुधौ सर्वसारसुखसमुद्रे । कृष्णे । प्रीतिम् । न कुर्युः । तैर्भक्तैः । स सारासारविवेकः । वक्ष्यमाणप्रकारेण । विधीयताम् । विध्यर्थे लोट् ॥ ७ ॥ सारासारविवेकविधानप्रकारमाह नवभिः । यथेति । इह सत्सङ्गे । यथोचितं यथायोग्यम् । ब्रह्मचर्यं व्रतम् । पालयतामपि । कृष्णभक्तानाम् । अस्माकम् । कामादिवासना । दोषोऽतिदोषरूपास्ति । आदिशब्देन कामसिद्धिहेतुपदार्थीयलोभादिग्रहणम् ॥ ८ ॥ स्त्रैणमिति । सर्वासु चतुरशीतिलक्षसंख्यासु । योनिषु जन्मसु ।

स्त्रैणं स्त्रीसम्बन्धि । सुखं तु । नोऽस्माकम् । प्राप्तमेव । अस्ति । तत्स्त्रैणसुखम् । पश्वादियोनिषु । नृभ्यो मनुष्येभ्योऽपि । अतिशयेनाधिक्येन । प्राप्तमस्ति वै ॥ ९ ॥ एतदेवाह । अजत्व इति । अजत्वे स्वस्य बर्करभावे । भृशमतिशयेन । कामिना कामाकुलेन । एकेन । स्वेन । सहस्रशः । अजाश्छागिकाः । भुक्ताः । श्वत्वे स्वस्य भषकभावे । भृशं कामिनैकेन स्वेन । सहस्रशः । शुन्यः । भुक्ताः । कपित्वे स्वस्य वानरभावे । भृशं कामिनैकेन स्वेन । सहस्रशः । वानर्यः । भुक्ताः ॥ १० ॥ एवमिति । एवममुना प्रकारेण । बह्वीषु । योनिषु । तरुण्यः । रूपवत्यः । बह्वयः । तज्जातियोषितस्तत्तज्जातिजा अङ्गनाः । यत्नमन्तरा प्रयत्नं विनैव । भुक्ताः । स्युः ॥ ११ ॥ साम्प्रतमिति । चिद्यदि । साम्प्रतम् । हरेः । भक्तिम् । न करिष्यामः । तदा । अग्रेऽपि । पूर्ववत् । तास्ताः । स्त्रियः । अयत्नतः प्रयत्नमन्तरैव । प्राप्स्यामः ॥ १२ ॥ तथेति । तथा तेन प्रकारेणैव । अस्माभिः । देवत्वे स्वस्य देवभावे । महत् । देवलोकसुखम् । भुक्तमेव । अस्ति । नृपत्वे स्वस्य भूमिपतित्वे । ऐहिकं मनुष्यलोकभवम् । सुखम् । बहुशो बहुवारान् । भुक्तमस्त्येव ॥ १३ ॥ अत इति । अतोहेतोः मायिकम् । सौख्यम् । कस्यचित् ।

अजत्वे स्वेन चैकेन ह्यजा भुक्ताः सहस्रशः । श्वत्वे शुन्यः कपित्वे च वानर्यः कामिना भृशम् ॥ १० ॥ एवं योनिषु बह्वीषु बह्वयस्तज्जातियोषितः । तरुण्यो रूपवत्यश्च भुक्ताः स्युर्यत्नमन्तरा ॥ ११ ॥ साम्प्रतं च हरेर्भक्तिं करिष्यामो न चेत्तदा । अग्रेऽपि पूर्ववत्तास्ताः प्राप्स्यामोऽयत्नतः स्त्रियः ॥ १२ ॥ तथाऽस्माभिश्च देवत्वे देवलोकसुखं महत् । भुक्तमस्त्येव बहुशो नृपत्वे त्वैहिकं सुखम् ॥ १३ ॥ अतो न मायिकं सौख्यं दुर्लभं कस्यचित् क्वचित् । कार्ष्णं सुखं तु सर्वेभ्यः सुखेभ्योऽस्त्यतिदुर्लभम् ॥ १४ ॥ यत्प्राप्तये तपो घोरं कुर्वन्ति मुनयो वने । साम्राज्यं च नृपा हित्वा तपसे यान्ति काननम् ॥ १५ ॥ कृपयैव प्रभोः प्राप्तं तदप्यस्त्येव साम्प्रतम् । तद्धित्वाऽन्यातितुच्छार्थसुखेहां कुर्महे कथम् ॥ १६ ॥ एवं विवेको येषां स्यात् तेषां तु कृष्ण एव हि । प्रीतिर्भवत्यतितरां न त्वन्यत्र कदाचन ॥ १७ ॥

क्वचित्कदाचिदपि । दुर्लभम् । नास्ति । कार्ष्णं श्रीकृष्णसम्बन्धि । सुखं तु । सर्वेभ्यः । सुखेभ्यः । अतिदुर्लभम् । अस्ति ॥ १४ ॥ तदतिदुर्लभत्वमाह । यदिति । यत्प्राप्तये यस्य कार्ष्णसुखस्योपलब्ध्यर्थम् । मुनयः । वने । घोरमतितीव्रम् । तपः । कुर्वन्ति । नृपाश्चक्रवर्त्तिनो राजानश्च । साम्राज्यं चक्रवर्त्तिनृपत्वम् । हित्वा । तपसे तपश्चरणार्थम् । काननं वनमेव । यान्ति । ग्रामाद्वनं क्षितिभुजोऽपि ययुर्यदर्था इति श्रीभागवतोक्तेः ॥ १५ ॥ कृपयेति । तत्कृष्णसुखमपि । प्रभोः श्रीहरेः । कृपयैव । साम्प्रतमेव । प्राप्तम् । अस्ति । तत्कृष्णसुखम् । हित्वा । अन्यातितुच्छार्थसुखेहां परमेश्वरश्रीहरीतरमायिकात्यल्पवैषयिकसुखेच्छाम् । कथम् । कुर्महे । नैव विधास्याम इत्यर्थः ॥ १६ ॥ एवमिति । हे मुने ! । एवममुना प्रकारेण । येषां भक्तानाम् । विवेकः सारासारविचारः । स्यात् । तेषां भक्तानां तु । कृष्णे श्रीहरावेव । अतितरामत्यधिका । प्रीतिः । भवति जायते । अन्यत्र कृष्णेतरमायिकपदार्थे तु । कदाचन । अतितरां प्रीतिः । न भवति ॥ १७ ॥

एतदिति । एतद्विवेकहीना इत्थंभूतसदसद्विवेकवर्जितभक्तजनास्तु । स्त्रीरसद्रव्यजम् । सुखम् । दुर्लभम् । महच्च । मत्वा । तत्र तस्मिन्सुखे । सर्वथा । सज्जति ॥१८॥ तेनेति । तेन तथाविधसुखासक्तिरूपेण । पापेन । साक्षात्कृष्णेऽपि । प्रीतिः । न जायते । तेन पापेनैव । हृदि । मलिना दुस्त्याज्यकामादिदोषकचरा । वासना । जायते ॥१९॥ पूर्वेति । अत्रास्मिन्नर्थे । पूर्वानुभूतं मम पूर्वमनुभूतम् । दृष्टान्तम् । ते तुभ्यम् । अहम् । कथयामि । अयोध्यायाम् । शिवपूजकः । कश्चित् । कायस्थः । अभूत् ॥२०॥ स इति । स कायस्थः । नित्य प्रतिदिनम् । शिवं लिङ्गरूपिणं शङ्करम् । अर्चयित्वा । इत्थं वक्ष्यमाणप्रकारेण । वरम् । अयाचत् । वरमाह सार्द्धैस्त्रिभिः । हे विभो शिव ! । मे मम । मनुष्यजन्म । क्वापि कदाचिदपि । सर्वथा । न दद्याः ॥२१॥ मानुष्य इति । अत्रास्मिन् । मानुष्ये । मया । भूरिकामवर्द्धनमतिशयितकामवृद्धिकरम् । औषधं ताम्रभस्मादिभैषजम् । भक्ष्यते । अथापि । स्त्रैणं स्त्रीसम्बन्धि । सुखम् । सम्यक् । नावाप्यते ॥ २२ ॥ लोकेति । लोकलज्जाभयात् । सर्वः । वासरो दिवसः ।

एतद्विवेकहीनास्तु स्त्रीरसद्रव्यजं सुखम् । दुर्लभं च महन्मत्वा तत्र सज्जन्ति सर्वथा ॥१८॥ तेन पापेन न प्रीतिः साक्षात्कृष्णेऽपि जायते । तेनैव चापि मलिना वासना जायते हृदि ॥ १९ ॥ पूर्वानुभूतं दृष्टान्तमत्र ते कथयाम्यहम् । अयोध्यायामभूत्कश्चित्कायस्थः शिवपूजकः ॥ २० ॥ सोऽर्चयित्वा शिवं नित्यं वरमित्थमयाचत । मनुष्यजन्म मे क्वापि न दद्याः सर्वथा विभो ! ॥ २१ ॥ मानुष्येऽत्र मया भूरिकामवर्द्धनमौषधम् । भक्ष्यतेऽथापि न स्त्रैणं सुखं सम्यगवाप्यते ॥ २२ ॥ लोकलज्जाभयात्सर्वो व्यर्थो गच्छति वासरः । एकया च स्त्रिया रात्रौ सम्यक् शान्तिर्न जायते ॥ २३ ॥ अतो यथा दिवारात्रं भुञ्जीय बहुयोषितः । तथा खरावतारं त्वं भक्तवत्सल ! देहि मे ॥ २४ ॥ एवं स प्रार्थयन् शम्भुं मया दृष्टः शिवालये । तस्मादुक्तेन पापेन स्याद्वै मलिनवासना ॥ २५ ॥ अतस्तेन विवेकेन तद्धेयं सर्वथा जनैः । इति श्रुत्वा प्रहृष्टोऽसौ मुनिः पप्रच्छ तं पुनः ॥ २६ ॥ विवेक ईदृशो यस्य न स्यात्स तु पुमान्प्रभो ! । त्वयि प्रीतिविहीनः स्यादिति युक्तमुदीरितम् ॥ २७ ॥

व्यर्थः स्त्र्युपभोगसुखप्राप्तिवर्जितः । गच्छति । रात्रौ च । एकया । स्त्रिया । सम्यक् । शान्तिस्तदुपभोगजन्या तृप्तिः । न जायते ॥२३॥ अत इति । अतोहेतोः । हे भक्तवत्सल ! । यथा । दिवा दिवसे । रात्रौ च । बहुयोषितः । भुञ्जीय । तथा । मे मह्यम् । खरावतारं 'लम्बकर्णजन्म । त्वम् । देहि ॥ २४ ॥ एवमिति । हे मुने ! । एवममुना प्रकारेण । शिवालये । शम्भुम् । प्रार्थयन् । स कायस्थः । मया । दृष्टः । तस्माद्धेतोः । उक्तेन स्त्र्याद्याशक्तिरूपेण पूर्वाभिहितेन । पापेन । मलिनवासना । स्यात् । वै ॥ २५ ॥ अत इति । अतो हेतोः । जनैर्भगवद्भक्तैः । तेन पूर्वोक्तेन । विवेकेन । तत्स्त्र्याद्यासक्तिरूपं पापम् । सर्वथा । हेयम् । इत्येवंविधं श्रीहरिवचनम् । श्रुत्वा । प्रहृष्टः । असौ । मुनिर्मुक्तानन्दसाधुः । पुनः । तं श्रीहरिम् । पप्रच्छ ॥ २६ ॥ विवेक इति । हे प्रभो ! । ईदृश उक्तविधः । विवेकः । यस्य भक्तस्य । न स्यात् । सः । पुमान् भक्तस्तु । त्वयि । प्रीतिविहीनः । स्यात् । इतीत्थम् । युक्तम् । उदीरितम् ॥ २७ ॥

भवानिति । परम् । ब्रह्म । भवानेव । सुखाब्धित्वात् । सुखप्रदः । अस्ति । अन्यस्त्वद्व्यतिरिक्तः कोऽपि पदार्थः । सुखदायी सुखप्रदः । नास्ति । इतीत्थंभूतः । विवेकः । यस्य भक्तस्य । वर्त्तते । इत्युत्तरेण सम्बन्धः ॥२८॥ स इति । सः । भक्तोऽपि । त्वयि । प्रीतिवर्जितः । कथं केन हेतुना । दृश्यते । इतीत्थम् । मुनिना मुक्तानन्दमुनिना । पृष्टः । सतांपतिः । स श्रीहरिः । तं मुक्तानन्दमुनिम् । उवाच ॥ २९ ॥ देशेति । हे मुने ! । तस्य विवेकवतो भक्तस्य तु । अस्मिन् । जन्मनि । अथवा । अन्यस्मिन् जन्मनि । पूर्वजन्मनीत्यर्थः । दुःसङ्गेनासत्पुरुषसमागमेन । असतामशुभानाम् । देशकालक्रियादीनाम् । योगतः सम्बन्धत एव ॥३०॥ असदिति । तीक्ष्णान्यतितीव्राणि । भूरिशो बहूनि-। असत्कर्माणि । जातानि । सन्ति । तेषामसत्कर्मणाम् । वासना । उत्खातुम् । अक्षमाऽशक्या । मनसि तस्यान्तःकरणे । जाताऽस्ति ॥ ३१ ॥ अत इति । अतो हेतोः । विवेकिनोऽपि । अस्य भक्तस्य । असारवर्जने सारवर्जितमायिकसुखत्यागे । सारभूते साररूपसर्वसुखैकाधारे । हरौ । प्रीतिम्

भवानेव परं ब्रह्म सुखाब्धित्वात्सुखप्रदः । नान्योऽस्ति सुखदायीति विवेको यस्य वर्त्तते ॥ २८ ॥ सोऽपि भक्तस्त्वयि कथं दृश्यते प्रीतिवर्जितः । इति पृष्टः स मुनिना तमुवाच सतांपतिः ॥ २९ ॥ देशकालक्रियादीनामसतामेव योगतः । अस्मिन् जन्मनि वाऽन्यस्मिन् दुःसङ्गेन च तस्य तु ॥ ३० ॥ असत्कर्माणि तीक्ष्णानि सन्ति जातानि भूरिशः । तेषां मनसि जाताऽस्ति वासनोत्खातुमक्षमा ॥ ३१ ॥ अतो विवेकिनोऽप्यस्य नास्त्येवासारवर्जने । सामर्थ्यं सारभूते प्रीतिं कर्तुं हरावपि ॥ ३२ ॥ यदा चासौ सतामेव देशादीनां तु योगतः । सत्सङ्गेन च कर्माणि कुर्यात्सन्त्येव सर्वथा ॥ ३३ ॥ अस्य तीक्ष्णैस्तदा तैस्तु दुष्कर्माण्यखिलान्यपि । उन्मूल्यन्ते ततः प्रीतिः कृष्णे भवति भूयसी ॥ ३४ ॥ अथायोध्याप्रसादस्तं पप्रच्छ प्रभुमानतः । सत्सङ्गमिह कुर्वाणौ त्वद्भक्तौ स्तो नरावुभौ ॥ ३५ ॥ तयोरेकोऽतिमतिमान्विदन् शास्त्रार्थमञ्जसा । तथापि कृष्णाद्विमुखो जायमानः स ईक्ष्यते ॥ ३६ ॥

। कर्त्तुं चापि । सामर्थ्यम् । नास्त्येव । इति त्रयाणामेकसम्बन्धः ॥ ३२ ॥ यदेति । किञ्च । यदा । असौ भक्तः । सत्सङ्गेन भगवदेकान्तिकसाधुसमागमेन । सतां शुभानाम् । देशादीनाम् । योगत एव । सर्वथा । सन्ति शुभानि । कर्माण्येव । कुर्यात् ॥ ३३ ॥ अस्येति । तदा । अस्य भक्तस्य । तीक्ष्णैः । तैः सत्कर्मभिः । । अखिलान्यपि । दुष्कर्माण्यसत्कर्माणि । उन्मूल्यन्ते । ततस्तदनन्तरम् । कृष्णे । भूयस्यतिशयिता । प्रीतिः । भवति जायते । इति द्वयोरेकसम्बन्धः ॥ ३४ ॥ अथेति अथानन्तरम् । अयोध्याप्रसादः । आनतः कृतप्रणामः सन् । प्रभुम् । तं श्रीहरिम् । पप्रच्छ । हे हरे ! । इह लोके । सत्सङ्गम् । कुर्वाणौ । त्वद्भक्तौ । उभौ । नरौ पुरुषौ । स्तः ॥ ३५ ॥ तयोरिति । तयोर्द्वयोस्त्वद्भक्तयोर्मध्ये । एको भक्तः । अतिमतिमान् । शास्त्रार्थम् । अञ्जसा तत्त्वतः । विदन् । स्यात् । तथापि । स भक्तः । कृष्णात्त्वत्तः विमुखः । जायमानः । ईक्ष्यते ॥ ३६ ॥

पुमानिति । अन्यो द्वितीयः । पुमान् भक्तस्तु । अल्पमतिः । किञ्चिच्छास्त्रार्थवेदनः । स्यात् । तथापि । कृष्णं त्वाम् । सुदृढं यथातथा । आश्रितः । अस्ति । इतीत्थम् । दृश्यते ॥ ३७ ॥ अत्रेति । अत्रानयोरेवंविधत्वे । किं कारणं को हेतुरस्ति । इतीत्थम् । पृष्टोऽयोध्याप्रसादाख्यस्वपुत्रेणानुयुक्तः । हरिः । तमयोध्याप्रसादम् । अब्रवीत् । हे पुत्र ! । केचित् । देवाः । तथा । केचित् । आसुराः । इति । द्विविधाः । जीवाः । सन्ति ॥ ३८ ॥ तत्रेति । तत्र तेषु देवासुरेषु जीवेषु मध्ये । देवा जीवाः । अल्पधियः सन्तोऽपि । हरिम् । नैव । त्यजन्ति । आसुरा जीवास्तु । बुद्धिमन्तः सन्तोऽपि । तं हरिम् । सर्वथा सर्वप्रकारेण । जहति त्यजन्त्येव ॥३९॥ एतदेव दृष्टान्तेन द्रढयति चतुर्भिः । यथेति । यथा । भुवि पृथिव्याम् । मरीचबीजानि । उप्त्वा । शर्कराम्बुभिः शर्करावत्स्वादूकैः । सिञ्चितानि सत्यपि । आत्मीयम् । तैक्ष्णम् । सर्वथा । नोज्झन्ति नैव त्यजन्ति ॥ ४० ॥ एवमिति । एवमुना प्रकारेणैव । आसुराः । जीवाः । सद्वाक्यैः शर्कराम्बुस्थानीयैः सतां शिक्षावचोभिः

पुमानन्यस्त्वल्पमतिः किञ्चिच्छास्त्रार्थवेदनः । तथापि कृष्णं सुदृढमाश्रितोऽस्तीति दृश्यते ॥ ३७ ॥ अत्र किं कारणमिति पृष्टस्तं हरिरब्रवीत् । द्विविधाः सन्ति जीवास्तु देवाः केचित्तथाऽऽसुराः ॥ ३८ ॥ तत्र देवा हरिं नैव त्यजन्त्यल्पधियोऽपि हि । बुद्धिमन्तोऽप्यासुरास्तु तं जहत्येव सर्वथा ॥ ३९ ॥ यथा मरीचबीजानि भुव्युप्त्वा सिञ्चितान्यपि । शर्कराम्बुभिरात्मीयं तैक्ष्णं नोज्झन्ति सर्वथा ॥ ४० ॥ एवमेवासुरा जीवाः सद्वाक्यैर्बोधिता अपि । स्वकीयं दुर्गुणं नैव त्यजन्तीशं त्यजन्ति च ॥ ४१ ॥ इक्षुबीजानि यद्वच्च कट्वम्भःसिञ्चितान्यपि । उप्तानि भुवि माधुर्यं स्वकीयं न त्यजन्ति वै ॥ ४२ ॥ दैवा जीवास्तथैवात्र शिक्षार्थैः कटुभाषणैः । उक्ता अपि स्वसाद्गुण्यं न त्यजन्ति तथा हरिम् ॥ ४३ ॥ इति प्रश्नोत्तरं श्रुत्वा स प्रहृष्टोऽभवत्ततः । पृच्छति स्म शुकानन्दस्तं प्रणम्य कृताञ्जलिः ॥ ४४ ॥ दैवास्तथाऽऽसुरा जीवा बोध्याः कैर्लक्षणैः प्रभो ! । इति पृष्टस्तमवदत्स्वामिनारायणो मुनिम् ॥ ४५ ॥

बोधिताः सन्तोऽपि । स्वकीयम् । दुर्गुणमासुरत्वदोषम् । नैव त्यजन्ति । ईशं परमेश्वरं श्रीहरिम् । त्यजन्ति ॥ ४१ ॥ इक्ष्विति । किञ्च । यद्वद्यथा । भुवि । उप्तानि । इक्षुबीजानि । कट्वम्भःसिञ्चितानि निम्बरसवत्कटुजलसिक्तानि सन्त्यपि । स्वकीयम् । माधुर्यं मिष्टत्वम् । न त्यजन्ति वै ॥ ४२ ॥ दैवा इति । तथैव । अत्र सत्सङ्गे । दैवाः । जीवाः । शिक्षार्थैः शिक्षामात्रप्रयोजनैः । कटुभाषणैः कटुजलस्थानीयैः सतां वचनैः । उक्ता बोधिताः सन्तोऽपि । स्वसाद्गुण्यं स्वकीयं दैवीत्वसद्गुणम् । न त्यजन्ति । तथा । हरिम् । न त्यजन्ति ॥ ४३ ॥ इतीति । इत्येवंविधम् । प्रश्नोत्तरम् । श्रुत्वा । सोऽयोध्याप्रसादः । प्रहृष्टः । अभवत् । ततस्तदनन्तरम् । शुकानन्दोमुनिः । तं श्रीहरिम् । प्रणम्य । कृताञ्जलिः सन् । पृच्छति स्म ॥ ४४ ॥ देवा इति । हे प्रभो ! । दैवाः । जीवाः । तथा । आसुराः । जीवाः । कैः । लक्षणैः । बोध्याः । ब्रूतद् हीतिशेषः । इतीत्थम् । पृष्टः शुकानन्दमुनिनानुयुक्तः । स्वामिनारायणः श्रीहरिः । तम् । मुनिं शुकानन्दसाधुम् । अवदत् ॥ ४५ ॥

दैवा इति । हे मुने ! । दैवा जीवास्तु । कापि कदाचित् । असद्देशकालकर्मादियोगतः । क्रोधलोभकामादीन् । दुर्गुणान् दोषान् । प्राप्ताः सन्तोऽपि ॥ ४६ ॥ पुनरिति । पुनः सद्देशकालादीसम्बन्धम् । प्राप्य । ते दैवा जीवाः । अल्पेन । कालेन । तान्स्वीयक्रोधादिदुर्गुणान् । हित्वैव । शुभान् । सद्गुणानभयसत्वसंशुद्धयादीन् भवेयुः । इति द्वयोरेकसम्बन्धः ॥ ४७ ॥ आसुरेष्विति । आसुरेषु । जीवेषु तु । दुर्गुणाः क्रोधलोभकामादयो दोषाः । सहजाः सन्ति । ते दुर्गुणाः । सद्देशसङ्गाद्यैः । बाह्यत उपरितः । नष्टा इव । स्युः ॥४८॥ कंचिदिति । ततोहेतोः । ते आसुरा जीवाः । अधःक्षारोदाऽधःप्रदेशवर्त्तमानक्षारजला । ऊर्ध्वमिष्टनीरोर्ध्वप्रदेशस्थितमिष्टोदका । भाल्लकूपिका भाल्लदेशभूमिखातप्रहिः । यथा । प्राक् समुद्रभूतेऽपि निबिडशुष्कपङ्के भाल्लदेशे जलार्थखानितः कूप इवेत्यर्थः । कंचित्कालम् । भक्तोत्तमस्योत्तमभक्तस्येव वर्त्तनं नियमादिपालनलक्षणं येषां ते तथा भूताः । स्युः ॥ ४९ ॥ असदिति । अथ च । ते आसुरा जीवाः । असद्देशादियोगे । पुरा । यथा । पूर्वं यथाविधदुर्गुणा अभूवंस्तथाविधदुर्गुणा इत्यर्थः । भवेयुः । ते आसुरा जीवास्तु । स्वाप्रियैः स्वेषां प्रियंकरत्वेऽप्यप्रियवत्प्रतीयमानैः ।

दैवास्तु काप्यसद्देशकालकर्मादियोगतः । प्राप्ता अपि क्रोधलोभकामादीन् दुर्गुणान् मुने ! ॥ ४६ ॥ पुनः सद्देशकालादिसम्बन्धं प्राप्य तांस्तु ते । कालेनाल्पेन हित्वैव भजेयुः सद्गुणान् शुभान् ॥ ४७ ॥ आसुरेषु जीवेषु सहजाः सन्ति दुर्गुणाः । ते च सद्देशसङ्गाद्यैः स्युर्नष्टा इव बाह्यतः ॥ ४८ ॥ कंचित्कालं ततस्ते च स्युर्भक्तोत्तमवर्तनाः । यथोर्ध्वमिष्टनिराधःक्षारोदा भाल्लकूपिका ॥ ४९ ॥ असद्देशादियोगेऽथ ते भवेयुर्यथा पुरा । शिक्षावाक्यैः सतां तेऽपि स्वाप्रियैश्चाप्तमत्सराः ॥ ५० ॥ अत्यमर्षास्ततस्ते च सत्सेवा यावती पुरा । कृता तस्या लक्षगुणं द्रोहं कुर्युः सतां मुहुः ॥ ५१ ॥ इत्येतैर्लक्षणैर्बोध्या दैवा जीवास्तथाऽऽसुराः । इत्युक्त्वा विरतं मुक्तानन्दः पप्रच्छ तं पुनः ॥ ५२ ॥ सत्सङ्गाद्यैर्यदा जीवा आसुराः स्युः शुभक्रियाः । भजेयुस्त्वां तथा भक्त्या तस्मिन्काले मृता यदि ॥ ५३ ॥

सताम् । शिक्षावाक्यैः । आप्तमत्सराः । वयं किं न जानीमस्त्वमेव वेत्सीति प्राप्तमत्सरत्वेन भाषमाणा इत्यर्थः । भवेयुः ॥ ५० ॥ अतीति । तत एवं मत्सरप्राप्त्यनन्तरम् । ते आसुरा जीवाः । अत्यमर्षा गुणग्रहणं परित्यज्य प्रत्युतदोषदर्शनपूर्वं सम्प्राप्तातिक्रोधाः सन्तः । पुरा । यावती । सत्सेवा साधुपरिचर्या । कृता । तस्यास्तावत्याः सत्सेवायाः सकाशात् । लक्षगुणम् । सताम् । द्रोहम् । मुहुः । कुर्युः ॥ ५१ ॥ इतीति । इत्येवंविधैः । एतैः । लक्षणैः । दैवाः । जीवाः । तथा । आसुराः । जीवाः । बोध्याः । इतीत्थम् । उक्त्वा शुकानन्दमुनिप्रश्नोत्तरं विधाय । विरतं तूष्णीमासीनम् । तं श्रीहरिम् । पुनः । मुक्तानन्दो मुनिः । पप्रच्छ ॥ ५२ ॥ सत्सङ्गेति । हे हरे ! । आसुराः । जीवाः । यदा । सत्सङ्गाद्यैः सत्सङ्गसद्देशकालादिभिः । शुभक्रियाः । स्युः । अहिंसादिनियमान्विता भवेयुरित्यर्थः । तथा । त्वाम् । भक्त्या । भजेयुः । तस्मिन्काले । यदि । मृताः । स्युः । तर्हीत्युत्तरेण सम्बन्धः ॥ ५३ ॥

तर्हीति । हे प्रभो ! । तर्हि । तेषां तथाविधानामासुरजीवानाम् । दैवी । गतिः । भवेत् । किं वा । आसुरी । गतिः । भवेत् । ते पुनर्देहप्राप्तौ दैवाः स्युरासुरा वेत्यर्थः । तमेवं पृच्छन्तं मुक्तानन्दमुनिम् । हरिः । आह । हे मुने ! । ते शुभक्रियादियुक्ता आसुरा जीवाः । मृत्वा । दैवाः । जीवाः । भवन्ति जायन्ते । हि ॥ ५४ ॥ तत इति । ततस्तदनन्तरम् । ते दैवा जीवाः । साक्षाद्धरेः । भक्तिम् । कृत्वा । परमम् । पदं श्रीहरेर्धाम । व्रजन्ति प्राप्नुवन्ति । अथैवंविधमुक्तानन्दमुनिप्रश्नोत्तरकरणानन्तरम् । नृसिंहानन्दो मुनिः । आनतः कृतप्रणामः सन् । अमुं श्रीहरिम् । पप्रच्छ ॥ ५५ ॥ तत्रेति । हे ईश ! प्रत्यक्षपुरुषोत्तम ! । तव । नवधा भक्तौ । कतमा भक्तिः । श्रेयसतिश्रेष्ठा । मता । तमेव पृच्छन्तं नृसिंहानन्दमुनिम् । हरिः । ऊचे । हे मुने ! । यस्य । भक्तस्य । यया श्रवणाद्यन्यतया भक्त्या । हरौ । दृढः । स्नेहः । स्यात् । तस्येत्युत्तरेण सम्बन्धः ॥ ५६ ॥ तस्येति । तस्य भक्तस्य । सा हरौ दृढस्नेहविधायिनी श्रवणाद्यन्यतमा भक्तिरेव । श्रेष्ठा । मता । इतरा तद्भिन्ना । श्रेष्ठा । न मता । इतीत्थम् । अवगम्यतां त्वत्प्रश्नोत्तरं बुद्ध्यताम् । अथैवंविधनृसिंहानन्दमुनिप्रश्नोत्तरकरणानन्तरम् । गोपालानन्दसाधुः । कृतानतिः सन्

तर्हि तेषां गतिर्दैवी भवेत्किं वाऽऽसुरी प्रभो ! । हरिस्तमाह ते मृत्वा दैवा जीवा भवन्ति हि ॥ ५४ ॥ ततः साक्षाद्धरेर्भक्तिं कृत्वा ते परमं पदम् । व्रजन्त्यथामुं पप्रच्छ नृसिंहानन्द आनतः ॥ ५५ ॥ तवेश ! नवधा भक्तौ कतमा श्रेयसी मता । हरिस्तमूचे यस्य स्याद्यया स्नेहो हरौ दृढः ॥ ५६ ॥ तस्य सैव मता श्रेष्ठा नेतरेत्यवगम्यताम् । गोपालानन्दसाधुस्तमथापृच्छत्कृतानतिः ॥५७॥ किशोराणां च यूनां ते भक्तानामिह सर्वथा । भक्तानां कीदृशां सङ्गोऽवश्यकार्योऽस्ति तद्वद ॥ ५८ ॥ श्रीहरिरुवाच–वयोवृद्धाश्च ये धर्मज्ञानवैराग्यशालिनः । हरेरनन्यभक्ताः स्युस्ते तेषां सङ्गमोचिताः ॥ ५९ ॥ नाज्ञः क्षत्रमथापृच्छत्तं प्रभो ! योजितं मनः । त्वय्येकेन तु भक्तेन क्रोधेनैव दृढं सदा ॥ ६० ॥ भयेन त्वयि चैकेन स्नेहेनैकेन चेश्वरे । योजितं स्याद् दृढं स्वान्तं तेषां कतम उत्तमः ॥ ६१ ॥

। तं श्रीहरिम् । अपृच्छत् ॥ ५७ ॥ किशोराणामिति । हे हरे ! । इह सत्सङ्गे । किशोराणामापञ्चदशवर्षवयसाम् । यूनां युवावस्थावतां च । ते तव । भक्तानाम् । किशोरैर्युवमिश्र त्वद्भक्तैरित्यर्थः । कीदृशां किंविधानाम् । भक्तानाम् । सङ्गः । सर्वथा । अवश्यकार्यः । अस्ति । तत् । वद ॥ ५८ ॥ 'इत्थं श्रीहरिकृष्णोऽसौ गोपालानन्दसाधुना । पृष्टोऽब्रवीत्तं सुखयन्सर्वांश्चेति निजान् परान्' । वय इति । हे मुने ! । ये । वयोवृद्धाः । धर्मज्ञानवैराग्यशालिनः । हरेः । अनन्यभक्ता एकान्तिका भक्ताः । स्युः । ते भक्ताः । तेषां किशोराणां यूनां च भक्तानाम् । सङ्गमोचिताः प्रसङ्गाचरणार्हाः । भवन्ति ॥ ५९ ॥ नाज्ञ इति । अथ गोपालानन्दमुनिप्रश्नोत्तरकरणानन्तरम् । क्षत्रं क्षत्रियजातीयः । नाज्ञो नाज्ञनामा भक्तः । तं श्रीहरिम् । अपृच्छत् । हे प्रभो ! । एकेन । भक्तेन तु । क्रोधेनैव । त्वयि । मनः । दृढं यथा तथा । सदा । योजितम् । भवेत् ॥ ६० ॥ भयेनेति । एकेन भक्तेन । भयेन । ईश्वरे प्रत्यक्षपरमेश्वरे । त्वयि । स्वान्तं मनः । दृढं यथा तथा ।

योजितम् । स्यात् । एकेन भक्तेन । स्नेहेन च । त्वयि । स्वान्तं दृढं योजितं स्यात् । तेषां त्रयाणां त्वद्भक्तानां मध्ये । उत्तमः श्रेष्ठः । कतमः कोऽस्ति । तद्वदेतिशेषः ॥ ६१ ॥ तमिति । तमेवं पृच्छन्तं नाज्ञभक्तम् । हरिः । उवाच । हे भक्त ! । येन भक्तेन । स्नेहेन । मनः । योजितं हरौ दृढं नियोजितम् । स भक्तः । श्रेष्ठः । अथैवंविधनाज्ञभक्तप्रश्नोत्तरकरणानन्तरम् । शिवानन्दोमुनिः । कृतानतिः सन् । तं श्रीहरिम् । पप्रच्छ ॥ ६२ ॥ भजत इति । हे हरे ! । प्रभुम् । त्वां परमेश्वरं भवन्तम् । भक्त्या । भजतोऽपि । यस्य भक्तस्य । अन्तरे । सारासारविवेकः । वैराग्यं चापि । न हि नैव । भवेत् ॥६३॥ तस्येति । तस्य भक्तस्य । हृदये । एतद्द्वितयं विवेको वैराग्यं चेत्यर्थः । केन उपायेन । भवेत् । तमेवं पृच्छन्तं शिवानन्दमुनिम् । हरिः । ऊचे । हे मुने ! । तदेतद्द्वितयं तु । हरौ । गाढस्नेहेन । स्यात् । वै ॥ ६४ ॥ एवं समासेनादावुत्तरं कृत्वैतदेव सदृष्टान्तं पुनर्विशेषत आह चतुर्भिः । यस्येति । यस्य जनस्य । यस्मिन् । स्नेहः । भवेत् । चेद्यदि । कश्चित् । जनः । तत्र स्नेहे । विघ्नम् । आचरेत् । तर्हि । तस्मिन् स्वस्नेहे विघ्नकारिणि जने । क्रोधः । स्यात् । स स्नेहवान् जनः । तं स्नेहविघ्नकर्त्तारं जनम् । त्यजेत्स-

तमुवाच हरिर्येन मनः स्नेहेन योजितम् । स श्रेष्ठोऽथ शिवानन्दस्तं पप्रच्छ कृतानतिः ॥ ६२ ॥
भजतोऽपि हरे ! भक्त्या यस्य त्वामन्तरे प्रभुम् । सारासारविवेकोऽपि वैराग्यं च भवेन्न हि ॥ ६३ ॥
तस्यैतद् द्वितयं केनोपायेन हृदये भवेत् । हरिस्तमूचे तत्तु स्याद्गाढस्नेहेन वै हरौ ॥ ६४ ॥
यस्य यस्मिन्भवेत्स्नेहस्तत्र चेद्विघ्नमाचरेत् । जनः कश्चित्तर्हि तस्मिन् क्रोधः स्यात्तं च स त्यजेत् ॥ ६५ ॥
न केवलं मनुष्येषु भवत्येव पशुष्वपि । दृश्यते हि महान् क्रोधः स्वाभीष्टार्थान्तरायके ॥ ६६ ॥
महिषीं कामयन् कश्चिन्महिषो महिषान्तरम् । दृष्ट्वा क्रोधेन तं हन्ति तथा सर्वत्र दृश्यते ॥ ६७ ॥
तस्मात्कृष्णे दृढस्नेहे सति पुंसोऽप्रयत्नतः । वैराग्यं च विवेकश्च भवतीत्यवगम्यताम् ॥ ६८ ॥

र्वथा परिहरेत् ॥ ६५ ॥ नेति । केवलम् । मनुष्येषु । एवम् । न भवति । किन्तु । पशुष्वपि । स्वाभीष्टार्थान्तरायके स्ववाञ्छितार्थविघ्नविधायिनि । महानतिशयितः । क्रोधः । दृश्यते । हि । ६६ ॥ एतदेवाह । महिषीमिति । महिषीं सैरिभीम् । कामयन्नुपभोक्तुं वाञ्छन् । कश्चित् । महिषो लुलायः । महिषान्तरं स्वेन भोक्तुं वाञ्छितया महिष्या भोगं कर्त्तुमागच्छन्तमितरं रक्ताक्षम् । दृष्ट्वा । क्रोधेन । तमितरमहिषम् । हन्ति । तथा । तेन प्रकारेणैव । सर्वत्रेतरेषु पशुषु पक्ष्यादिजातिषु च दृश्यते ॥ ६७ ॥ तस्मादिति । तस्माद्धेतोः । कृष्णे । दृढस्नेहे । सति । पुंसोऽप्रयत्नतः प्रयत्नमन्तरैव । वैराग्यम् । विवेकश्च । भवति । इतीत्थम् । अवगम्यताम् । अत्रायं प्रश्नोत्तराशयः । श्रीहरौ स्नेहं विदधतो भक्तस्य तदन्यत्र रागोऽविवेकश्चेत्युभौ तत्र विघ्नकरौ भवतस्ततस्तौ स तथाविधौ बुद्ध्वा यदा तौ परिहर्त्तुं मुमुज्याचदा स्वत एवास्य वैराग्यविवेकावुदीयातां तौ विना तयोर्विनाशासम्भादिति ॥ ६८ ॥

इतीति । इत्यमुना प्रकारेण । उक्तः श्रीहरिणा कृतोत्तरः । सः । मुनिः शिवानन्दसाधुः । भूयः पुनरपि । जगद्गुरुम् । तं श्रीहरिम् । पप्रच्छ । हे हरे ! । प्रभोः साक्षात्पुरुषोत्तमस्य । भवतस्तत्र । बुद्धिमन्तौ । कौचित् । द्वौ । भक्तौ । स्तः ॥६९॥ तत्रेति । तत्र तयोर्द्वयोस्त्वद्भक्तयोर्मध्ये । एको भक्तस्तु । अतिविश्वासी त्वद्वचनेषु विश्वासवान्सन् । भवान्परमेश्वरस्त्वम् । आत्मानं स्वम् । यथा वदेत् । तथैव । असंशयं निःसंशयं यथा तथा । कुर्यात् । कचित्कदाचिदपि । स्वस्य । प्रियं तु । नैव । कुर्यात् ॥ ७० ॥ त्वदिति । अन्यो द्वितीयो भक्तस्तु । त्वदुक्तमपि । वचनम् । हृदि विचार्य । यावत् । स्वस्य । उचितं योग्यम् । स्यात् । तावदेव । कुर्यात् । अखिलं समग्रं त्वद्वचनम् । नैव । कुर्यात् ॥ ७१ ॥ एतयोरेवंविधयोर्द्वयोर्भक्तयोर्मध्ये । कतरः को भक्तः । श्रेष्ठः । अस्ति । इतीत्थम् । पृष्टः शिवानन्दमुनिनानुयुक्तः । स श्रीहरिः । तं शिवानन्दमुनिम् । अब्रवीत् । हे मुने ! । यो भक्तः । भगवद्वाक्ये । विश्वासी । स भक्त एव । उत्तमः । मतः । अतो भगवांस्तमुत्तमं स्वकीयं मत्वा तं सर्वतः पातीतिभावः ॥ ७२ ॥ तदेवाह । रामेति । रामायणे । श्रीरामस्य । एवमेव । वाक्यम् । अस्ति । अहम् । मद्दृढ-

इत्युक्तः स मुनिर्भूयस्तं पप्रच्छ जगद्गुरुम् । बुद्धिमन्तौ हरेर्भक्तौ द्वौ कौचिद्भवतः प्रभोः ॥ ६९ ॥ तत्रैकस्त्वतिविश्वासी यथात्मानं भवान्वदेत् । तथैवासंशयं कुर्यान्न तु स्वस्य प्रियं कचित् ॥ ७० ॥ त्वदुक्तमपि चान्यस्तु विचार्य वचनं हृदि । यावत्स्यादुचितं स्वस्य तावत्कुर्यान्न चाखिलम् ॥ ७१ ॥ एतयोः कतरः श्रेष्ठ इति पृष्टोऽब्रवीत्स तम् । विश्वासी भगवद्वाक्ये यः स एवोत्तमो मतः ॥ ७२ ॥ रामायणे श्रीरामस्य वाक्यमस्त्येवमेव हि । भक्तं मद्दृढविश्वासं पामि मातेव बालकम् ॥ ७३ ॥ इत्याश्रुत्य वचस्तस्य प्रसन्नः सोऽभवन्मुनिः । आत्मानन्दस्ततोऽपृच्छत्तं प्रणम्य कृताञ्जलिः ॥ ७४ ॥ यावज्जीवं हरेरेव कार्यमस्ति प्रियं मम । एवं हृदि भवेद्यस्य निश्चयः सुदृढीकृतः ॥ ७५ ॥ विश्वासः कथमागच्छेत्तस्य ते त्वत्सतां हृदि । अयमत्यन्तदृढतायुक्तोस्ति भक्तिभागिति ॥ ७६ ॥ श्रीहरिरुवाच–यदाऽसावतिरोगी स्यादस्य शुश्रूषणं न च । सम्यङ्न कुर्यात्कश्चिदपि तदापि स हरिप्रियः ॥ ७७ ॥

विश्वासं मद्वचसि सुदृढविश्वासमन्तम् । भक्तम् । माता जननी । बालकमिव । पामि रक्षामि ॥ ७३ ॥ इतीति । इत्येवंविधम् । तस्य श्रीहरेः । वचः । आश्रुत्य । सः । मुनिः शिवानन्दसाधुः । प्रसन्नः । अभवत् । ततस्तदन्तरम् । आत्मानन्दोमुनिः । तं श्रीहरिम् । प्रणम्य । कृताञ्जलिः सन् । अपृच्छत् ॥ ७४ ॥ यावदिति । हे हरे ! । मम । यावज्जीवम् । हरेः । प्रियमेव । हरये यथा रोचते तथैवेत्यर्थः । कार्यम् । अस्ति । एवमित्थंभूतः । यस्य भक्तस्य । हृदि । सुदृढीकृतः । निश्चयः । भवेत् ॥ ७५ ॥ विश्वास इति । अयम् । भक्तिभाक् भक्तः । अत्यन्तदृढतायुक्तो यावज्जीवं भगवत्प्रियाचरणातिदाढर्यवान् । अस्ति । इत्येवंविधः । तस्य भक्तस्य । विश्वासः । ते तव । त्वत्सतां च । हृदि । कथं कैर्लक्षणैः । आगच्छेत् । तद् ब्रूहीतिशेषः ॥ ७६ ॥ 'इत्यात्मानन्दमुनिना पृष्टोऽसौ पुरुषोत्तमः हर्षयंस्तं जगादेत्थं परान्सर्वान्निजांस्तथा" । यदेति । हे मुने ! । असौ भक्तः । यदा । अतिरोगी । स्यात् । अस्य । शुश्रूषणं सेवाम् । कश्चिदपि भक्तः । सुम्यक् । न कुर्यात् ।

तदाऽपि । हरिः प्रियो यस्य तथाभूतः । स भक्तः ॥ ७७ ॥ कस्येति । हरिम् । भजतः । कस्य च कस्यचिदपि जनस्य । अगुणं दोषम् । नैव गृह्णीयात् । तस्य भक्तस्य । विश्वासः । कृष्णतत्सताम् । हृदये । आगच्छेत् । इति द्वयोरेकसम्बन्धः ॥ ७८ ॥ तथेति । तथा । यदि । हरिः । तज्जनाः । वापि । निर्दोषमपि । स्वम् । क्वापि कदाचित् । अवमन्येरन् । तदाऽपि । सः । अविक्रियोऽन्तःकरणे तद्दोषग्रहणविक्रियावर्जितः । स्यात् ॥ ७९ ॥ तथेति । तथा । स्वनियमेषु मध्ये । एकस्य नियमस्यापि क्वचिदबुद्धिपूर्वमित्यर्थः । यदि । च्युतिर्भङ्गः । स्यात् । तर्हि । सः । अतिखिन्नोऽत्यन्तखेदयुक्तः सन् । तन्निष्कृतिं स्वनियमच्युतिप्रायश्चितम् । द्रुतं शीघ्रमेव । कुर्यात् ॥ ८० ॥ दुरिति । तथा । क्वापि । स्वान्ते स्वमनसि । दुःसङ्कल्पे । जाते सत्यपि । असौ भक्तः । भृशाकुलोऽत्यन्तमाकुलतायुतः सन् । दैह्ये स्वदेहनिष्पादिते । दोषे सति । अन्यो भक्तः । यथा । उत्तपेत्सन्तापं कुर्यात् । तथा । तावता मनःकृतदुःसङ्कल्पमात्रेणापि । उत्तपेत् ॥ ८१ ॥ एवमिति । एवमनुना प्रकारेण । यो भक्तः । लक्षणवान् शुभलक्षणयुक्तः । स्यात् । तस्य । भक्तस्य । असौ । दृढभक्तः । अस्ति । इत्येवंविधः । विश्वासः । हरेः । तदीयानां

कस्य चाप्यगुणं नैव गृह्णीयाद्भजतो हरिम् । आगच्छेत्तस्य विश्वासो हृदये कृष्णतत्सताम् ॥ ७८ ॥ तथा निर्दोषमपि च स्वं हरिर्वापि तज्जनाः । यदि क्वाप्यवमन्येरंस्तदापि स्यादविक्रियः ॥ ७९ ॥ तथा स्वनियमेषु स्यादेकस्यापि च्युतिः क्वचित् । यदि तर्ह्यतिखिन्नः सन्कुर्यात्तन्निष्कृतिं द्रुतम् ॥ ८० ॥ दुःसङ्कल्पे तथा क्वापि जाते स्वान्ते भृशाकुलः । दैह्ये दोषे यथाऽन्यस्तु तथासौ तावतोत्तपेत् ॥ ८१ ॥ एवं लक्षणवान् यः स्याद्विश्वासस्तस्य सर्वथा । स्याद्धरेश्च तदीयानां दृढभक्तोऽस्त्यसाविति ॥ ८२ ॥ इति प्रश्नोत्तरं श्रुत्वा प्रसन्नः सोऽभवन्मुनिः । ततो भगवदानन्दस्तं पप्रच्छ कृताञ्जलिः ॥८३॥ कथं ज्ञायेत भगवंस्तव त्वत्सेविनां सदा । माहात्म्यं हृदयेऽस्त्यस्य भक्तस्यात्र मुमुक्षतः ॥ ८४ ॥ श्रीहरिरुवाच—कुर्याद्धरेस्तत्सतां च सेवां निश्छद्म यो मुने ! । प्रीत्या तस्यास्ति हृदये तन्माहात्म्यमितीयताम् ॥८५॥ खाद्यपानशिरःपाणिपादसंवाहनादिभिः । स कुर्याद्रोगिणां सेवां साधूनां च यथोचितम् ॥८६॥

सतां च । सर्वथा । स्यात् ॥ ८२ ॥ इतीति । इत्येवंविधम् । प्रश्नोत्तरम् । श्रुत्वा । सः । मुनिरात्मानन्दसाधुः । प्रसन्नः । अभवत् । ततस्तदनन्तरम् । भगवदानन्दो मुनिः । कृताञ्जलिः सन् । तं श्रीहरिम् । पप्रच्छ ॥ ८३ ॥ कथमिति । हे भगवन् ! । अत्र सत्सङ्गे । मुमुक्षतः । अस्य भक्तस्य । हृदये । त्वत्सेविनां साधूनां च । माहात्म्यम् । सदा । अस्ति । इति । कथं किंविधैस्तदाचरणैरित्यर्थः । ज्ञायेतान्यैर्भक्तैर्बुध्येत । तद् ब्रूहीतिशेषः ॥ ८४ ॥ 'इत्थं भगवदानन्दसता स परमेश्वरः । पृष्टस्तं सुखयन्नाह परांश्चेत्यखिलान्विजान' । कुर्यादिति । हे मुने ! । यो भक्तः । हरेः । तत्सतां च । सेवाम् । प्रीत्या । निश्छद्म निष्कपटं यथातथा । कुर्यात् । तस्य भक्तस्य । हृदये । तन्माहात्म्यं हरितत्सतां च महिमा । अस्ति । इतीत्थम् । ईयतां बुद्ध्यताम् ॥८५॥ खाद्येति । खाद्यं सदन्नैराशनं च पानं मिष्टोदकपानविधापनं च शिरःपाणिपादस्य संवाहनं तान्यादयो येषां स्वास्तरणौषधविधापनादिनां तैः । रोगिणाम् । साधूनाम् । सेवाम् । स भक्तः । यथोचितं यथायोग्यम् । कुर्यात् ॥ ८६ ॥

यदिति । स्वस्य । प्रियम् । यद्यद्वस्तु । आत्मनः । अन्तिके समीपे । प्राप्तम् । स्यात् । तेभ्यो हरये तत्साधुभ्यश्चेत्यर्थः । आदौ प्रथमतः । अर्पयित्वा निवेद्य । असौ भक्तः । ततस्तदनन्तरम् । उपयुञ्ज्यात्स्वयमुपादद्यात् ॥८७॥ एवमिति । हे मुने ! । एवममुना प्रकारेण । प्रीत्या । विदधतः भक्तस्य । हृदये । कृष्णतद्भक्तमहिमा श्रीहरितत्सन्माहात्म्यम् । अस्ति । इतीत्थम् । बुद्ध्यताम् । हरितत्सतां निश्छद्मसेवनादिभिस्तदाचरणैरस्य हृदि कृष्णतत्सन्माहात्म्यमस्तीति ज्ञायतामित्यर्थः ॥ ८८ ॥ इतीति । इत्यमुना प्रकारेण । तं भगवदानन्दमुनिम् । उक्त्वा । ईशः परमेश्वरः । स श्रीहरिः । स्वयमेव । अखिलान् । सतः साधून् । अपृच्छत् । हे सन्तः ! । कश्चित् । परमात्मनः । एकान्तिकः । भक्तः । वर्त्तते ॥ ८९ ॥ धर्म इति । अस्यैकान्तिकभक्तस्य । धर्मः । ज्ञानम् । वैराग्यम् । भक्तिश्च । इत्येतत् । चतुष्टयम् । तीव्रमतिशयितमेव । अस्ति । तच्च । अन्यैः । प्रधर्षितुं निवर्त्तयितुम् । न शक्यम् ॥ ९० ॥ अथेति । अथापि । क्वचित् । तस्य । धर्मादिषु चतुर्षु । शैथिल्यसम्भवः । जायते । तत्र धर्मादिशैथिल्यसम्भवे । किम् । कारणम् । स्यात् । तत्कारणम् । उच्यताम् ॥ ९१ ॥ इतीति । इत्येवंविधम् । गुरोः स्वहितोपदेशकस्य

यद्यद्वस्तु प्रियं स्वस्य प्राप्तं स्यादात्मनोऽन्तिके । तत्तत्तेभ्योऽर्पयित्वाऽऽदावुपयुञ्ज्यादसौ ततः ॥ ८७ ॥ एवं विदधतः प्रीत्या भक्तस्य हृदये मुने ! । अखण्डं कृष्णतद्भक्तमहिमाऽस्तीति बुध्यताम् ॥ ८८ ॥ इत्युक्त्वा तं तु सोऽपृच्छत्स्वयमीशः सतोऽखिलम् । कश्चिदेकान्तिको भक्तो वर्त्तते परमात्मनः ॥ ८९ ॥ धर्मो ज्ञानं च वैराग्यं भक्तिश्चेति चतुष्टयम् । तीव्रमेवास्ति तच्चास्य नान्यैः शक्यं प्रधर्षितुम् ॥ ९० ॥ अथापि धर्मादिषु तु क्वचिच्छैथिल्यसम्भवः । जायते तस्य किं तत्र कारणं स्यात्तदुच्यताम् ॥९१॥ इति प्रश्नं गुरोः श्रुत्वा गोपालानन्द आह तम् । ब्रह्मानन्दश्च भगवन् ! दयैवात्रास्ति कारणम् ॥ ९२ ॥ एकान्तिको हि यो भक्तः स साक्षात्कृष्णवद् भुवि । प्रवर्त्तने समर्थोऽस्ति धर्मस्यैकान्तिकस्य वै ॥ ९३ ॥ दयाधिक्यवतस्तस्य यत्किञ्चिद्बाह्यदृष्टितः । वर्त्तनं तत्स्वाश्रितानां जीवानां श्रेयसे परम् ॥ ९४ ॥

श्रीहरेः । प्रश्नम् । श्रुत्वा । गोपालानन्दोमुनिः । ब्रह्मानन्दोमुनिश्च । तं स्वकीयेषु स्वस्यातिदयावत्त्वेन तद्धितार्थं स्वेन ज्ञात्वा विहिते स्वधर्मादिशैथिल्ये स्वस्यातिदयालुतामेव हेतुं मुनिद्वारा स्वीयेभ्यो ज्ञापयितुमेकान्तिकभक्तोद्देशेनात्मने प्रश्नं पृच्छन्तं श्रीहरिम् । आह । हे भगवन् ! । अत्र त्वदुक्तार्थे । दयैव । कारणम् । अस्ति ॥९२॥ एतदेव स्पष्टतया बोधयितुं विशेषत आह सप्ताक्षराधिकैस्त्रिभिः । एकेति । हे हरे ! । यः । एकान्तिकः । भक्तः । अस्ति । सः । साक्षात्कृष्णवत् । भुवि । एकान्तिकस्य । धर्मस्य । प्रवर्त्तने । समर्थः । अस्ति । वै ॥ ९३ ॥ दयेति । दयाधिक्यवतः । तस्यैकान्तिभक्तस्य । बाह्यदृष्टितः धर्मादिसंसाधितान्तर्भगवत्स्वरूपध्यानदृष्टिं परित्यागपूर्वमुपदेशादिव्यावहारिककार्यसिद्ध्यर्थं बाह्यदृष्टिरक्षणेनेत्यर्थः । यत्किञ्चित् । वर्त्तनम् । तत् । स्वाश्रितानाम् । जीवानाम् । परं केवलम् । श्रेयसे कल्याणविधार्थमेव । अस्ति ॥ ९४ ॥

स्वमिति । स्वम् । आश्रित्यैव । कतिचित् । जडार्षभशुकोपमाः । भक्ताः । भवेयुः । इतीत्थंभूतेन । स्वाश्रितजनकल्याणविधानदयालक्षणेनेत्यर्थः । हेतुनैव । स एकान्तिकभक्तः । तथा । भवेत् । धर्मादिशैथिलयुक्तः स्यात् ॥ ९५ ॥ अन्य इति । अन्य एतदर्थभिन्नः । हेतुस्तु । नास्ति । इत्येवंविधम् । प्रश्नोत्तरम् । श्रुत्वा । प्रभुः श्रीहरिः । तौ गोपालानन्दब्रह्मानन्दौ मुनी । उवाच । हे मुनी ! । अस्य प्रश्नस्य । उत्तरं तु । इदमेव । मतम् ॥ ९६ ॥ सुधेति । इत्येवंविधम् । ईश्वरस्य परमेश्वरस्य श्रीहरेः । सुधोपमाम् । वाचम् । निशम्य । त्यागिवर्यौ मुनिश्रेष्ठौ । तौ गोपालानन्दब्रह्मानन्दौ । अपरे । सर्वे । सन्तः । भक्ताः । गृहिणश्चापि । हृदि स्वस्व-मानसे । मोदम् । प्राप्य । तं स्वावासं व्रजन्तं श्रीहरिम् । प्रणेमुः ॥ ९७ ॥ स्वैः पृष्टानां द्वादशानां प्रश्नानामुत्तराणि तु । कृत्वा पृष्ट्वा स्वयं प्रश्नमेकं सद्भ्यां तदुत्तरम् ॥ १ ॥ कारयित्वा यथार्थं तत्स्वीकृत्यैव च यो हरिः । हर्षयामास तान्सोऽस्तु हर्षदायी सदैव मे ॥ २ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्तक श्रीहर्येकान्तिकोपासक

स्वमेवाश्रित्य कतिचिज्जडार्षभशुकोपमाः । भक्ता भवेयुरित्येव हेतुना स तथा भवेत् ॥ ९५ ॥ अन्यस्तु हेतुर्ना-स्तीति श्रुत्वा प्रश्नोत्तरं प्रभुः । तावुवाचास्य प्रश्नस्य त्विदमेवोत्तरं मतम् ॥ ९६ ॥ सुधोपमां वाचमितीश्वरस्य तौ त्यागिवर्यावपरे च सन्तः । निशम्य भक्ता गृहिणोऽपि सर्वे मोदं हृदि प्राप्य च तं प्रणेमुः ॥ ९७ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते द्विशताधिकसप्तत्रिंशस्तरङ्गः ॥ २३७ ॥ १४ ॥

शकाब्दे विक्रमार्कस्य वेदाष्टवसुभूमिते । शुचिकृष्णत्रयोदश्यां वचोऽमृतमिदं हरेः ॥ १ ॥ तत्र दुर्गपुरे दुर्ग उत्तमस्य स भूभुजः । स्वावासे स्वासनेऽराजत्सितसूक्ष्मघनांशुकः ॥ २ ॥ वृतः सह स्रशो भक्तैस्त्यागिभिर्गृहिभिस्तथा । हारान् दधत् कौन्दपौष्पान् स उवाच सतोऽखिलान् ॥ ३ ॥

श्रीहरिकृष्णभगवत्स्वसुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्सुधासिन्धुटीकायां द्विशताधिकसप्तत्रिंशस्तरङ्गः ॥ २३७ ॥ १४ ॥

नवाङ्गायां हरेर्भक्तौ ज्ञात्वाऽङ्गं स्वीयमादितः । भक्तैः कार्यं तदर्चादिस्त्विति पञ्चदशे स्मृतम् ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८८४) शुचि-कृष्णत्रयोदस्यामाषाढमासीयकृष्णपक्षागतत्रयोदशीतिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमस्य भूभुजः । दुर्गं । स्वावासे स्वकीयावाससौधीयद्वितीयभूमिकागवाक्षमध्ये । स्वासने श्वेतोत्तरच्छदयुते सोपबर्हपार्श्विके स्थूलतूलिकासने । सितसूक्ष्मघनांशुकः परिधृतश्वेताणुनिविडवसनः । स श्रीहरिः । अराजत् ॥२॥ वृत इति । सहस्रशो नानादेशागत्वाद्बहुमिः । त्यागिभिः । तथा । गृहिभिः । भक्तैः । वृतः सभाया परिवेष्टितः । कौन्दपौष्पान्कुन्दपुष्पकृतान् । हरान् । दधत् । स श्रीहरिः । अखिलान् । सतो मुक्तानन्दादिसाधून् । उवाच ॥ ३ ॥

कृष्णेति । हे साधवः ! । कृष्णभक्तः । यदा । एकान्ते । उपविश्य । निजान्तरे स्वान्तर्हृदये । कृष्णस्य । मानसीम् । अर्चां पूजाम् । अथवा । ध्यानम् । कर्तुम् । ईहते उद्युक्तो भवति । तदेत्युत्तरेण सम्बन्धः ॥ ४ ॥ तदेति । तदा । प्राक् पूर्वम् । असद्देशादियोगात् । विषयैर्मायिकैः शब्दादिभिः । कृतः । यः । पराभवः । आसक्तिपूर्वं तदुपभोगाचरणरूपः स्वतिरस्कार इत्यर्थः । सः । तस्य । पुंसो भक्तस्य । स्मृतिपथम् । याति । तत्स्मृतिर्जायते इत्यर्थः ॥ ५ ॥ कामेति । अथवा । कामक्रोधादिभिर्दोषैरपि । कृतः । यः । स्वपराभवः । सोऽपि । तदा तस्मिन्काले । ध्यातुर्मानसीमर्चां कुर्वतः केवलं श्रीहरिस्वरूपमेव ध्यायतो वा भक्तस्येत्यर्थः । अन्तरे । स्मरणम् । याति । स स्मृतो भवतीत्यर्थः ॥६॥ तत इति । ततोहेतोः । तस्यः भक्तस्य । ध्यानसुखम् । किञ्चन किमपि । नैव । जायते । असत्स्मृतेर्हेतोर्भगवत्स्वरूपेतरेषां मायिकविषयाणां स्मरणाद्धेतोः । हृदि । वेदना पीडा । महत्यतिशयितैव । जायते ॥ ७ ॥ भक्तेरिति । भक्तेः । नवसु । विधासु मध्ये । स्वाभीष्टतमया स्वातिप्रियया । एकया विधया । तस्या असत्स्मृतेः । नाशे । सति । कृष्णार्चाध्यानजम् । सुखम् । भवेत् ॥ ८ ॥ एतदेव दृष्टान्तोक्त्या स्पष्टमाह । युद्ध इति । यद्वद्यथा । युद्धे शस्त्रक्षतार्त्तस्य वैरिकृतखड्गादिप्रहारजातक्षतपीडावतः पुरुषस्य । युक्तपट्टकबन्धनाद्यथा व्रणवतः सुखं भवेत्तथा योग्यपट्टकबन्धनतः । अर्त्तिनाशे पीडानिवृत्तौ सत्याम् । निद्रासौख्यम् । भवेत् । तथा तद्वदेव । तत्कृष्णार्चाध्यानजं सुखं भवेत् ॥९॥ ययेति । तस्य भक्तस्य । यया भक्तिविधया । सुखं पूर्वोक्तं सौख्यम् । भवति जायते । सा भक्तिविधा । दृढीभूतम् । हितावहम् । स्वाङ्गम् । अस्ति । इतीत्थम् । अवगन्तव्यम् ॥१०॥ स्वकमिति । अतोहेतोः । भक्तः । स्वकम् । अङ्गम् । विदित्वा । तत्स्वाङ्गम् । दृढं यथातथा । आश्रित्य । हरेः । मानसपूजादि । कुर्यात् । तेनेत्थंविधानेन । सुखम् । भवेत् ॥ ११ ॥ अविदित्वेति । यो भक्तः । स्वाङ्गम् । अविदित्वा । हरेः । ध्यानादि । कुरुते । स भक्तः । तेन । सुखम् । नाप्नोति । ततोहेतोः । तत्स्वाङ्गम् । अञ्जसा तत्त्वतः । ज्ञेयम् ॥ १२ ॥

कृष्णभक्तो यदैकान्त उपविश्य निजान्तरे । कृष्णस्य मानसीमर्चां ध्यानं वा कर्त्तुमीहते ॥ ४ ॥ तदा स्मृतिपथं याति तस्य पुंसः पराभवः । असद्देशादियोगाद्यो विषयैः प्राक् कृतः स वै ॥ ५ ॥ कामक्रोधादिभिर्वापि यः कृतः स्वपराभवः । सोऽपि स्मरणमायाति तदा च ध्यातुरन्तरे ॥ ६ ॥ ततो ध्यानसुखं तस्य जायते नैव किञ्चन । वेदना तु महत्येव जायतेऽसत्स्मृतेर्हृदि ॥ ७ ॥ भक्तेर्विधासु नवसु स्वाभीष्टतमयैकया । तस्या नाशे सति भवेत्कृष्णार्चाध्यानजं सुखम् ॥ ८ ॥ युद्धे शस्त्रक्षतार्त्तस्य युक्तपट्टकबन्धनात् । अर्त्तिनाशे भवेन्निद्रासौख्यं यद्वत्तथैव तत् ॥ ९ ॥ यया तु भक्तिविधया सुखं भवति तस्य सा । स्वाङ्गमित्यवगन्तव्यं दृढीभूतं हितावहम् ॥ १० ॥ स्वकमङ्गमतो भक्तो विदित्वाऽऽश्रित्य तद् दृढम् । हरेर्मानसपूजादि कुर्यात्तेन सुखं भवेत् ॥ ११ ॥ अविदित्वा तु यः स्वाङ्गं ध्यानादि कुरुते हरेः । स नाप्नोति सुखं तेन ततस्तज्ज्ञेयमञ्जसा ॥ १२ ॥

कार्ष्णेति । स्वाङ्गानुकूलम् । विहिता । भक्तिरेव । कार्ष्णेतरान् श्रीकृष्णसङ्कल्पतोऽन्यान् । सर्वशः सर्वान् । सङ्कल्पान् । सर्वथा । हन्ति । इतीत्थम् । गम्यताम् ॥ १३ ॥ नवधेति । भक्तिस्तु । नवधा नवप्रकारापि । विधातव्या । तत्र नवधाभक्तावपि । स्वाङ्गभक्तिः । विशेषतः । विधेया । इतीत्थंभूतः । औद्धव औद्धवावतारासद्गुरुरामानन्दस्वामिप्रतिपादितः । सिद्धान्तः । ज्ञेयः ॥ १४ ॥ जगदिति । इत्येवंविधम् । जगद्गुरोः । प्रभोः तस्य श्रीहरेः । अमृतोपमानम् । वचः । निशम्य । सदोनिषण्णाः । भक्ताः । सर्वे । ते । त्यागिनो मुनयः । अथो । गृहिणश्चापि । मोदम् । अलभन्त ॥ १५ ॥ स्वध्यानादिजसौख्यस्य स्वेषां कारण माह यः । विक्षेपरहितं देयाच्छ्रीहरिस्तत्सुखं स मे ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तक श्रीहर्येकान्तिकोपासक श्रीहरिकृष्णभगवत्पदानुरघुपीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां द्विशताधिकाष्टत्रिंशस्तरङ्गः ॥ २३८ ॥ १५ ॥

काष्णेतरांस्तु सङ्कल्पान् सर्वथा हन्ति सर्वशः । स्वाङ्गानुकूलं विहिता भक्तिरेवेति गम्यताम् ॥ १३ ॥ नवधापि विधातव्या भक्तिस्तत्र विशेषतः । स्वाङ्गभक्तिर्विधेयैति ज्ञेयः सिद्धान्त औद्धवः ॥ १४ ॥ जगद्गुरोरित्यमृतोपमानं वचः प्रभोस्तस्य निशम्य सर्वे । ते त्यागिनोऽथो गृहिणोऽपि भक्ताः सदोनिषण्णा अलभन्त मोदम् ॥ १५ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते द्विशताधिकाष्टत्रिंशस्तरङ्गः ॥ २३८ ॥ १५ ॥

शकाब्दे विक्रमार्कस्य वेदाष्टवसुभूमिते । अमायां शुचिमासस्य वचोऽमृतमिदं हरेः ॥ १ ॥
तत्र दुर्गपुरे दुर्ग उत्तमस्य स सद्मनः । वेद्यां प्राचीनवक्त्रस्य न्यषीदत्तूलिकासने ॥ २ ॥
सितवासा दधत्पौष्पान् कण्ठे हारांश्च शेखरान् । उष्णीषे निजभक्तौघैर्नानादेशागतैर्वृतः ॥ ३ ॥
सतश्च गृहिणो भक्तान्सर्वान्प्रति जगाद सः । सर्वे भक्ताः ! शृणुत वः किञ्चित्पृच्छाम्यहं हितम् ॥ ४ ॥

प्रीतिः कार्या हरावेव नान्यस्मिंस्तु गुणिन्यपि । पतिव्रतावत्सद्भक्तैरित्युक्तं षोडशे स्फुटम् ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८८४) शुचिमासस्याषाढमासस्य । अमायाममावास्यातिथौ । इदम् हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमस्य राज्ञः । दुर्गे । प्राचीनवक्त्रस्य प्राग्द्वारस्य । सद्मनस्तस्यैव भवनस्य । वेद्यां वहिर्वेदिकायाम् । तूलिकासने पार्श्विकश्वेतोत्तरच्छदयुतस्थूलतूलिकाविष्टरे । स श्रीहरिः । न्यषीदत् ॥ २ ॥ तं विशिनष्टि । सितेति । सितवासाः परिहितसकलश्वेतवसनः । कण्ठे । पौष्पान्कुन्दकुसुमरचितान् । हारान् । उष्णीषे । पौष्पान् । शेखरांश्च । दधत् । नानादेशागतैः । निजभक्तौघैस्त्यागिगृहिस्वाश्रितजनानां वृन्दैः । वृतः सभायां परिवेष्टितः ॥३॥ सत इति । स श्रीहरिः । सतस्त्यागिनः । गृहिणो गृहस्थान् । सर्वान् । भक्तान् । प्रति । जगाद । हे भक्ताः ! । अहम् । वो युष्माकम् । किञ्चित्किमपि । हितम् । पृच्छामि । तत् । सर्वे यूयम् । शृणुत ॥ ४ ॥

हरिति । अत्र सत्सङ्गे । हरिभक्तस्य । पुंसो जनस्य । गुणहीनस्य । देहिनः प्राणिनः । वर्जने त्यागे । प्रयासः । नास्ति । गुणिवर्जने गुणवत्प्राणित्यागे तु । स प्रयासः । अस्ति ॥५॥ एतदेव हेतूक्तिपूर्वं विशेषतः स्पष्टमाह त्रिभिः । भूरीति । हे भक्ताः ! । धरातले । यः । पुमान् । भूरिसद्गुणयुक्तः । स्यात् । तस्य पुंसः । त्यागः । नैव । भवेत् । यतोहेतोः । गुणः । प्रीतिहेतुस्तस्मिन्स्नेहस्य कारणमस्ति ॥ ६ ॥ गुणवानिति । यः । पुरुषः । गुणवान् । स्यात् । स पुरुषः । स्वीयः स्वसम्बन्धी । अस्तु । अथवा । परः सम्बन्धिभिन्नः । अस्तु । तथापि । तस्मिन् गुणवति पुरुषे । सर्वजनस्य । प्रीतिः । अनायासेन । स्यात् । हि "गुणाः प्रियत्वेऽधिकृता न संस्तवा" इत्यभियुक्तोक्तेः ॥ ७ ॥ प्रीतिरिति । गुणजाता । या । प्रीतिः । सा । दृढा । अत एव । अविचाल्या । भवेत् । ततो हेतोः । धीमता बुद्धिमता पुरुषेणापि । गुणिनः पुरुषस्य । त्यागः । कथम् । भवेत् । न भवेदेवेत्यर्थः ॥ ८ ॥ एवमिति । एवं सति । भक्तस्य । कृष्णात्स्वेष्टदेवाच्छ्रीहरेः । अन्यत्रेतरस्मिन् । कुत्रचित्कस्मिंश्चिदपि गुणिनि पुरुषे । क्वापि कदाचिदपि । प्रीतिः । केन । उपायेन । न भवेत् । तत् । उच्यताम् ॥ ९ ॥ इतीति । इत्यमुना प्रकारेण ।

हरिभक्तस्य पुंसोऽत्र गुणहीनस्य देहिनः । वर्जने न प्रयासोऽस्ति स त्वस्ति गुणिवर्जने ॥ ५ ॥ भूरिसद्गुणयुक्तः स्यात् पुमान् यस्तु धरातले । तस्य त्यागो भवेन्नैव प्रीतिहेतुर्गुणो यतः ॥ ६ ॥ गुणवान् पुरूषो यः स्यात्सोऽस्तु स्वीयः परोऽथ वा । अनायासेन तस्मिन् स्यात्प्रीतिः सर्वजनस्य हि ॥७॥ प्रीतिस्तु गुणजाता या साऽविचाल्या भवेद् दृढा । ततः कथं भवेत्त्यागो गुणिनो धीमताऽपि च ॥८॥ एवं सति तु भक्तस्य कृष्णादन्यत्र कुत्रचित् । केनोपायेन न भवेत्प्रीतिः क्वापि तदुच्यताम् ॥९॥ इति पृष्टास्तु ते भक्ता यथामति तदुत्तरम् । यथाकथंचिदवदंस्ततः स स्वयमाह तत् ॥ १० ॥ यथा पतिव्रता नारी पत्युरन्यत्र पूरुषे । प्रीतिं न कुर्यात् क्वापीह तथाऽन्यत्र हरेस्तु सः ॥११॥ दरिद्रो वा कुरूपो वा रोगी वृद्धोऽथवा निजः । पतिरेव प्रियस्तस्या न त्वन्योऽतिगुणोऽपि वै ॥१२॥ रूपतारुण्यवित्ताद्यैः पूर्णमप्यन्यपूरुषम् । प्रीत्या तु सा क्वचिन्नैव पश्येद्वा तेन संवदेत् ॥ १३ ॥

पृष्टाः श्रीहरिणानुयुक्ताः । ते भक्ताः । तदुत्तरम् । यथामति । यथाकथंचिन्महता बुद्धिप्रयासेन । अवदन् । ततो यथार्थतया तदुत्तराभवनदर्शनानन्तरम् । स श्रीहरिः । स्वयमेव । तत्स्वप्रश्नोत्तरम् । आह ॥ १० ॥ यथेति । हे भक्ताः ! । इह लोके । यथा । पतिव्रता साध्वी । नारी । पत्युः । अन्यत्रेतरस्मिन् । क्वापि कस्मिंश्चिदपि । पूरुषे नरे । प्रीतिम् । न कुर्यात् । तथा । स भक्तः । हरेः । अन्यत्रेतरस्मिन्कस्मिंश्चिदपि गुणिनि पुरुषे । प्रीतिं न कुर्यात् ॥ ११ ॥ पतिव्रतादृष्टान्तं विवृण्वन्नेतदेव द्रढयत्येकादशभिः । दरिद्र इति । तस्याः पतिव्रतानार्याः । निजः । पतिः । दरिद्रो दुर्विधः । अथवा । कुरूपः । अथवा । रोगी । अथवा । वृद्धः सन्नपि । प्रियः प्रीतिविषय एव । भवेत् । अतिगुणो बहुगुणयुक्तोऽपि । अन्यः स्वपतीतरः पुरुषस्तु । प्रियः । न भवेत् । वै ॥१२॥ रूपेति । सा पतिव्रता स्त्री । रूपतारुण्यवित्ताद्यैः । पूर्णं सम्पन्नमपि । अन्यपूरुषं तु । प्रीत्या । क्वचित्कदाचिदपि । नैव पश्येत् । अथवा । तेन रूपादिसम्पन्नान्यपुरुषेण सह । प्रीत्या । क्वचित् । न संवदेत् ॥ १३ ॥

देवरेति । सा पतिव्रता । देवरश्वशुरादीनां स्वपत्यनुजजनकादीनाम् । अतिथीनां प्राघुर्णिकानाम् । नृणां च । पतिसम्बन्धहेतुना । अन्नाम्बुभिरन्नोदकप्रदानैः । सेवाम् । कुर्यात् ॥ १४ ॥ लेशेति । अथापि । अस्याः पतिव्रतायाः । भर्त्रन्यपुरुषे स्वपतीतरस्मिन्नरे । गुणिभावतस्तदीयं रूपादिगुणभावमुपादायेत्यर्थः । प्रीतिः । क्वापि । कदाचिदपि । स्वप्नेऽपि । लेशमात्रमणुमात्रमपि । नतु नैव । भवति जायते । ध्रुवम् ॥ १५ ॥ एवमिति । एवममुना प्रकारेण । यस्य भक्तस्य । प्रत्यक्षपुरुषोत्तमे श्रीहरौ । प्रीतिः । भवेत् । तस्य भक्तस्य । गुणिन्यपि । पूरुषे । प्रीतिः । नैव भवेत् ॥ १६ ॥ कृष्णेति । अस्य पतिव्रतायाः स्वपताविव भगवति प्रत्यक्षे श्रीहरौ प्रीतिमतो भक्तस्य । कृष्णभक्तेषु स्वेष्टदेवस्य श्रीहरेरैकान्तिकजनेषु । प्रीतिस्तु । कृष्णसम्बन्धतः स्वेष्टदेवस्य श्रीहरेर्भजनसम्बन्धमात्रत एव । भवेत् । तद्गुणदृष्ट्या भक्तानां हरिभजनेतरगुणदर्शनेन तु । प्रीतिः । न भवेत् । इत्यमुना प्रकारेण । गुणित्यागः । अवगम्यताम् ॥ १७ ॥ स्वेति । किञ्च । तस्य तथाविधभक्तस्य । स्वप्राप्ते । साक्षात्प्रत्यक्षे । श्रीहरौ । यादृशी । प्रीतिस्तु । हरेः । रूपान्तरेषु श्रीकृष्णाद्यन्यावतारेष्वपि । नैव भवेत् ॥ १८ ॥ एतदेव सदाचारेण

देवरश्वशुरादीनामतिथीनां च सा नृणाम् । कुर्यादन्नाम्बुभिः सेवां पतिसम्बन्धहेतुना ॥ १४ ॥ लेशमात्रमपि प्रीतिर्न त्वस्या गुणिभावतः । भर्त्रन्यपुरुषे क्वापि स्वप्नेऽपि भवति ध्रुवम् ॥ १५ ॥ एवं यस्य भवेत्प्रीतिः प्रत्यक्षपुरुषोत्तमे । तस्य प्रीतिर्भवेन्नैव गुणिन्यपि हि पूरुषे ॥१६॥ कृष्णभक्तेषु तु प्रीतिः कृष्णसम्बन्धतो भवेत् । नास्य तद्गुणदृष्ट्येति गुणित्यागोऽवगम्यताम् ॥ १७ ॥ स्वप्राप्ते श्रीहरौ साक्षात् प्रीतिस्तस्य च यादृशी । तादृशी तु भवेन्नैव हरे रूपान्तरेष्वपि ॥ १८ ॥ यथा हनुमतः प्रीतिर्निर्वर्त्तते चिरजीविनः । अद्यापि श्रीराम एव न तु कृष्णादिमूर्त्तिषु ॥ १९ ॥ एवं यः प्रीतिमान् कृष्णे भवेद्भक्तोऽचलस्थितिः । ऐकपत्यं तु तस्यैव ज्ञातव्यं सुदृढं सदा ॥ २० ॥ प्रतिव्रतोपमा प्रीतिः स्वस्वामिनि हरौ दृढा । यस्य न स्यात्तस्य भक्तिर्ज्ञातव्या व्यभिचारिणी ॥ २१ ॥ तस्माद्भक्तेन सुधिया सर्वथा सर्वदात्मनः । प्रीतिः कार्या हरावेव नान्यत्र तु कदाचन ॥ २२ ॥

द्रढयति । यथा । चिरजीविनः स्वेष्टदेवैककथाया अनिशश्रवणाय ततः सम्प्राप्तचिरजीवित्ववरस्य । हनुमतः । अद्यापि बहुकालातिक्रमे जातेऽप्येतत्कालपर्यन्तमपीत्यर्थः । श्रीरामे । एव । प्रीतिः । वर्त्तते । तथा । कृष्णादिमूर्त्तिषु तु । प्रीतिः । न वर्त्तते ॥ १९ ॥ एवमिति । एवममुना प्रकारेण । यः । भक्तः । कृष्णे प्रत्यक्षे श्रीहरौ । प्रीतिमान् गाढानुरागयुक्तः । एत एव । अचलस्थितिः स्थिरनिष्ठः । भवेत् । तस्य भक्तस्यैव । सदा । सुदृढम् । ऐकपत्यमेकपतित्वम् । ज्ञातव्यम् ॥ २० ॥ विपक्षे दोषमाह । पतीति । यस्य भक्तस्य । स्वस्वामिनि । हरौ । पतिव्रतोपमा । दृढा । प्रीतिः । न स्यात् । तस्य भक्तस्य । भक्तिः । व्यभिचारिणी । ज्ञातव्या ॥ २१ ॥ तस्मादिति । तस्माद्धेतोः । सुधिया सुमतिना । भक्तेन । आत्मनः स्वस्य । प्रीतिः । सर्वथा सर्वप्रकारेण । सर्वदा सर्वकालम् । हरौ स्वेष्टदेवे प्रत्यक्षे श्रीहरिकृष्णभगवत्येव । कार्या । अन्यत्र तदितरत्र कस्मिंश्चिदपि मुक्तभक्ते तदवतारे च । प्रीतिस्तु । कदाचन । न कार्या ॥ २२ ॥

श्रुत्वेति । इत्येवंविधाम् । तस्य श्रीहरेः । अमृततुल्यवाणीम् । श्रुत्वा । सदोनिषण्णाः । तदीयभक्ताः । ते । सर्वे । साधवः । अन्ये गृहिणश्चापि । हृदि मोदं प्राप्येतिशेषः । तस्मिन्स्वेष्टदेवे श्रीहरौ । दृढम् । ऐकपत्यम् । अवापुः ॥२३॥ त्यक्त्वाऽप्यन्यं तु गुणिनं स्वस्मिन्कार्यां स्वकैर्हरिः । प्रीतिं यः प्राह साध्वीवद्द्यात्तां सुदृढां स मे ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तक श्रीहर्य्येकान्तिकोपासक श्रीहरिभगवत्सन्नुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां द्विशताधिकैकोनचत्वारिंशस्तरङ्गः ॥ २३९ ॥ १६ ॥

मुमुक्षुणाऽल्पापिरतिर्हरेरन्यत्र वस्तुनि । अकार्येोक्ता सप्तदशे दृष्टान्तेनार्षभेन च ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८८४) नभोमासे श्रावणमासे । शुक्लषष्ठ्यां शुक्लपक्षस्य षष्ठीतिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमस्य राज्ञः । दुर्गे । प्राचीनवक्त्रस्य प्राग्द्वारस्य । सद्मनस्तस्यैव भवनस्य । वेद्यां बाह्यवेदिकायाम् । पीठोत्तमे स्वास्तृते पर्यङ्कासने । स श्रीहरिः । उपाविशत् ॥ २ ॥ सितेति । सितांशुकः परिहितसकल-

श्रुत्वेति तस्यामृततुल्यवाणीं ते साधवोऽन्ये च सदोनिषण्णाः । तदीयभक्ता गृहिणोऽपि सर्वे तस्मिन्नवापुर्दृढमैकपत्यम् ॥ २३ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते द्विशताधिकैकोनचत्वारिंशस्तरङ्गः ॥ २३९ ॥ १६ ॥

शकाब्दे विक्रमार्कस्य वेदाष्टवसुभूमिते । शुक्लषष्ठ्यां नभोमासे वचोऽमृतमिदं हरेः ॥ १ ॥ तत्र दुर्गपुरे दुर्गं उत्तमस्य स सद्मनः । वेद्यां प्राचीनवक्त्रस्य पीठोत्तम उपाविशत् ॥ २ ॥ सितांशुकः स्रजं पौष्पीं दधत्कण्ठे वृतो निजैः । त्यागिभिर्गृहिभिश्चासौ प्रोवाच स्वाग्रगान्सतः ॥ ३ ॥ श्रीमद्भागवते यादृक् स्कन्धे भवति पञ्चमे । राजर्षिभरताख्यानं नाख्यानं तादृशं परम् ॥ ४ ॥ अत्रैवातिचमत्कारो वर्त्तते शृण्वतां नृणाम् । कृष्णेतरपदार्थे यन्मुमुक्षोर्न मनो व्रजेत् ॥ ५ ॥ साक्षात्कृष्णावतारस्य ऋषभस्य सुतो हि सः । कृष्णार्थं मलवत्त्यक्तराज्यश्रीरात्मदर्शनः ॥ ६ ॥

श्वेतवसनः । कण्ठे । पौष्पीं कुन्दपुष्पमयीम् । स्रजं मालाम् । दधत् । त्यागिभिः । गृहिभिश्च । निजैर्नानादेशागतैः स्वाश्रितजनैः । वृतः सभायां परिवेष्टितः । असौ श्रीहरिः । स्वाग्रगान्स्वपुरोनिषण्णान् । सतः साधून् । प्रोवाच ॥ ३ ॥ श्रीमदिति । श्रीमद्भागवते । पञ्चमे । स्कन्धे । यादृक् यादृशम् । राजर्षिभरताख्यानम् । भवति । तादृशम् । परमन्यत् । आख्यानम् । न भवति ॥ ४ ॥ अत्रेति । अत्रास्मिन् राजर्षिभरताख्याने । शृण्वताम् । नृणाम् । अतिचमत्कारः । वर्त्तते । यद्येन तच्चमत्कारेण । मुमुक्षोर्भक्तस्य । मनः । कृष्णेतरपदार्थे । न व्रजेत् ॥ ५ ॥ समासोक्तमियमेवार्थं विस्तरेणाह चतुर्भिः । साक्षादिति । साक्षात्कृष्णस्य प्रत्यक्षतया वा नयनविषयस्य श्रीकृष्णाख्यभगवतोऽवतारस्य प्रादुर्भावविशेषस्य । ऋषभस्यैतन्नाम्नो भगवतः । सुतः पुत्रः । स भरतः । कृष्णार्थं कृष्णस्य निरन्तरायोपासनार्थम् । मलवत् । त्यक्तराज्यश्रीः । आत्मदर्शनः सम्प्राप्तात्मसाक्षात्कारः ॥ ६ ॥

हरीति । हरिक्षेत्रनिवासी निजजनवात्सल्यतया तदिच्छारूपतो हरेः सन्निधानभूते पुलहाश्रमे कृतावासः । अहर्निशम् । कृष्णम् । भजन् सन् । कृपया केवल दयया । मृगार्भे मृगदारके । स्नेहात्सुदृढानुरागं प्राप्य । भक्तिभ्रष्टो भगवदाराधनलक्षणभक्तिमार्गात् च्युतः सन् । मृगः । अभवन्मृगदेहं प्राप्तवान् । इति द्वयोरेकसम्बन्धः ॥ ७ ॥ एवं किञ्चित्तत्कथाव्यासमुक्त्वा कृष्णतदीयेतरस्नेहो महापापरूपो येन पुनः संसृतिरितिवदन्पुनरत्रार्थे तमेव दृष्टान्तयति । कृष्णेति । कृष्णतद्भक्तभिन्नार्थे । स्नेहः । महत् । पापम् । मतम् । येन पापेन । राजर्षिः । आर्षभः ऋषभदेवपुत्रो भरतोऽपि । द्रुतम् शीघ्रम् । मृगत्वम् अगमत् ॥ ८ ॥ अत इति । अतो हेतोः । स भरतः । मृगजन्मनः । अनन्तरम् । विप्रत्वे ब्राह्मणभावे । सम्प्राप्ते इतिशेषः । जडवृत्तिर्जडवत्कृतवर्त्तनः । हरिम् । भजन्सन् । निःसङ्गः सन्नेव । भूमौ । व्यचरत् ॥ ९ ॥ अत इति । अतो हेतोः । बुद्धिमद्भिः । मुमुक्षुभिः । भक्तैः । कृष्णेतरपदार्थेषु । अल्पापि । रतिः स्नेहः । नैव । कार्या । वै ॥ १० ॥ इतीति । इत्येवंविधम् । प्रभोः प्रत्यक्षपरमेश्वरस्य । तस्य श्रीहरेः । वचोऽमृतम् । निपीय । भक्तजनाः । ते । निखिलाः । मुनयः । गृहिणश्च । आनता एतावतीं वार्त्तां कृत्वा

हरिक्षेत्रनिवासी च भजन् कृष्णमहर्निशम् । स्नेहान्मृगार्भे कृपया भक्तिभ्रष्टोऽभवन्मृगः ॥ ७ ॥ कृष्ण-
तद्भक्तभिन्नार्थे स्नेहः पापं महन्मतम् । येनार्षभोऽपि राजर्षिर्मृगत्वमगमद् द्रुतम् ॥ ८ ॥ अत एव स
विप्रत्वेऽनन्तरं मृगजन्मनः । निःसङ्गो व्यचरद् भूमौ जडवृत्तिर्भजन् हरिम् ॥ ९ ॥ अत एव सदा
भक्तैर्बुद्धिमद्भिर्मुमुक्षुभिः । कृष्णेतरपदार्थेषु कार्या नाल्पापि वै रतिः ॥ १० ॥ इति तस्य वचोऽमृतं
प्रभोर्निखिला भक्तजना निपीय ते । मुनयो गृहिणश्च मानसे परमं हर्षमवापुरानताः ॥ ११ ॥

इति श्रीशतानन्दमुनिविरचिते हरिवाक्यसुधासिंधौ द्विशताधिकचत्वारिंशस्तरङ्गः ॥ २४० ॥ १७ ॥

शकाब्दे विक्रमार्कस्य वेदाष्टवसुभूमिते । दशम्यां नभसः कृष्णे वचोऽमृतमिदं हरेः ॥ १ ॥

सान्ध्यनीराजनकालीयश्रीकृष्णदर्शनाय गजगतिचातुर्येण व्रजते हरये कृतप्रणामाः सन्तः । मानसे । परमम् । हर्षम् । अवापुः ॥ ११ ॥ मद्भक्तैर्मामृतेऽन्यार्थं प्रीतिरल्पापि नो सदा । कार्येत्याह हरिः स्वेभ्यो यस्तस्मिन्नस्तु मे रतिः ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तक श्रीहर्येकान्तिकोपासक श्रीहरिकृष्णभगवत्पद्मजुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां द्विशताधिकचत्वारिंस्तरङ्गः ॥ २४० ॥ १७ ॥

पुत्रस्य श्रीहरेर्मेऽथ निर्लोभानन्दयोगिनः । मुनेरखण्डानन्दस्य प्रश्नानामुत्तराणि च ॥ १ ॥ विधाय श्रीहरिः प्रश्नमेकं पृष्ट्वा तदुत्तरम् । स्वयं यथायथं चक्रे त्वित्यष्टादश ईरितम् ॥ २ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । ( १८८४ ) नभसः श्रावणमासस्य । कृष्णे बहुलपक्षे । दशम्यां तिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥

तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमस्य राज्ञः । दुर्गे । प्राङ्मुखस्य प्राग्द्वारस्य । वेश्मनस्तस्यैव भवनस्य । वेद्यां बाह्यवेदिकायाम् । पीठे स्वास्तृते पर्यङ्कासने । सितांशुकः परिधृतसकलश्वेतवसनः । स श्रीहरिः । उपाविशत् ॥ २ ॥ तं विशिनष्टि । बिभ्रदिति । पुष्पस्रगापीडान् । बिभ्रत् । कौन्दकुसुमीयान् हारान्कण्ठे आपीडाञ्छुर्ष्णापे दधदित्यर्थः । सहस्रशो नानादेशागतत्वादनेकैः । स्वाननार्पितदृष्टिभिः स्वाननाम्बुजयोजितदृग्भिः । त्यागिभिः । गृहस्थैश्च । भक्तैः । वृतः सभायां परिवेष्टितश्च ॥ ३ ॥ पप्रच्छेति । पुरतः । स्थितः श्रीहरेः पुरःप्रदेशावस्थितः । रघुवीरः श्रीहरिप्रदत्तसत्सङ्घिजनगुरुतत्तत्पुत्रो रघुवीराचार्यः । तं श्रीहरिम् । प्रणम्य । पप्रच्छ । हे प्रभो ! । जीवस्य । स्थितिः । जाग्रतीव जाग्रदवस्थायां यथा । तथा । स्वप्ने स्वप्नस्थायाम् । कुतोहेतोः । न भवति ॥ ४ ॥ "मयेत्थमनुयुक्तोऽसौ सभायामीश्वरेश्वरः । मामाहानन्दयन्सर्वान्परांश्चेति निजान् पिता" । भवन्तीति । हे पुत्र ! । देहिनां जीवानाम् । तिस्रोऽपि । अवस्था जाग्रदाद्याः । त्रिगुणात्मिकाः । भवन्ति । एकैकः । गुणः सत्त्वादिरपि । पृथक् पृथक् । अन्याभ्यां गुणाभ्याम् । मिश्रः । अस्ति । सत्त्वं रजस्तमोभ्यां रजस्तमःसत्त्वाभ्यां तमः सत्त्वरजोभ्यामिति तेषां मिश्र-

तत्र दुर्गपुरे दुर्गे उत्तमस्य स वेश्मनः । उपाविशत्प्राङ्मुस्य स्ववेद्यां पीठे सितांशुकः ॥ २ ॥ बिभ्रत्पुष्पस्रगापीडान् वृतो भक्तैः सहस्रशः । त्यागिभिश्च गृहस्थैश्च स्वाननार्पितदृष्टिभिः ॥ ३ ॥ पप्रच्छ रघुवीरस्तं प्रणम्य पुरतः स्थितः । जाग्रतीव स्थितिः स्वप्ने जीवस्य न कुतः प्रभो ! ॥४॥ श्रीहरिरुवाच–भवन्ति देहिनां तिस्रोऽप्यवस्थास्त्रिगुणात्मिकाः । एकैकश्च गुणोऽप्यस्ति मिश्रोऽन्याभ्यां पृथक् पृथक् ॥ ५ ॥ रजगुणात्मिकावस्था स्वप्नसंज्ञा हि वर्त्तते । तमःसत्त्वविमिश्रस्य प्राधान्यं रजसोऽत्र हि ॥ ६ ॥ उद्रेके तमसस्तत्र जाडयाधिक्येन कर्हिचित् । अनुभूतमपि स्वप्नं देही वक्तुं न शक्नुयात् ॥ ७ ॥ सत्त्वस्य क्वचनोद्रेके जाते स्वप्ने तु देहिनः । स्थितिर्भवेज्जाग्रतीव तत्स्मृतिश्च यथाक्रमम् ॥ ८ ॥ उद्रेको रजसस्त्वत्र वर्त्तते प्रायशस्ततः । भ्रान्तत्वं जायते तेन जाग्रद्वन्नास्ति तत्स्थितिः ॥ ९ ॥ निर्लोभानन्दसाधुस्तमथापृच्छत्कृतानतिः । जाग्रत्यदृष्टं स्फुरति कथं स्वप्ने तथाऽश्रुतम् ॥ १० ॥

ताऽस्तीत्यर्थः ॥५॥ रज इति । स्वप्नसंज्ञा । अवस्था । रजोगुणात्मिका । वर्त्तते । । हि । अत्र स्वप्नावस्थायाम् । तमःसत्त्वविमिश्रस्य । रजसो रजोगुणस्य । प्राधान्यम् । वर्त्तते । हि ॥ ६ ॥ उद्रेक इति । तत्रोक्तरीत्या तमःसत्त्वमिश्ररजःप्रधानस्वप्नावस्थायाम् । कर्हिचित् । तमसस्तमोगुणस्य । उद्रेकेऽधिकत्वे सति । जाडयाधिक्येन हेतुना । अनुभूतमपि । स्वप्नम् । वक्तुम् । देही । न शक्नुयात् ॥ ७ ॥ सत्त्वस्येति । क्वचन कदाचित् । स्वप्ने स्वप्नावस्थायाम् । सत्त्वस्य गुणस्य । उद्रेके । जाते सति । देहिनः । स्थितिः । जाग्रतीव । भवेत् । तत्स्मृतिः स्वप्नानुभूतार्थस्मृतिश्च । यथाक्रमम् । भवेत् ॥ ८ ॥ उद्रेक इति । अत्र स्वप्नावस्थायाम् । रजसः । उद्रेकः । प्रायशः । वर्त्तते । ततो हेतोः । भ्रान्तत्वम् । जायते । तेन भ्रान्तत्वेन हेतुना । जाग्रद्वत् तत्स्थितिर्जीवावस्थानम् । नास्ति ॥९॥ निर्लोभानन्देति । अथैवं श्रीरघुवीरप्रश्नस्य श्रीहरिकृतोत्तरश्रवणानन्तरम् । निर्लोभानन्दसाधुः । कृतानतिः कृतप्रणामः सन् । तं श्रीहरिम् । अपृच्छत् । हे हरे ! । जाग्रति । अदृष्टम् ।

तथा । अश्रुतम् । स्वप्ने स्वप्नावस्थायाम् । कथम् । स्फुरति ॥ १० ॥ 'निर्लोभानन्दमुनिना पृष्ट इत्थं मुनीश्वरः । स प्राहानन्दस्तं च परानित्यखिलान्विजान्' । अदृष्टा इति । हे मुने ! । इह । जन्मनि । अदृष्टाः । अश्रुताश्च । ये । अर्थाः पदार्थाः । तेऽपि । चेद्यदि । स्वप्ने । स्फुरेयुः । तर्हि । एते स्वप्नस्फुरितपदार्थाः । पूर्वजन्मसु । अनुभूता दृष्टाः श्रुताश्च बोध्याः । 'अदृष्टादश्रुताद्भावान्न भाव उपजायते' इति श्रीभागवतोक्तेः ॥ ११ ॥ तेषामिति । अन्तःकरणसंस्थया । तेषां पूर्वजन्मदृष्टश्रुतपदार्थानाम् । वासनया । स्वप्ने । स्फुरणम् । जायते । नूनम् । अन्यथाऽन्तःकरणस्थतद्वासनाऽभावे । न जायते । इतीत्थम् । अवधार्यताम् ॥ १२ ॥ अखण्डानन्देति । अथैवंविधनिर्लोभानन्दमुनिप्रश्नस्य श्रीहरिकृतोत्तरश्रवणानन्तरम् । अखण्डानन्दसाधुः । कृताञ्जलिः सन् । तं श्रीहरिम् । अपृच्छत् । हे हरे ! । सर्वेषां नृणाम् । सुखम् । दुःखं च । पूर्वकर्मानुसारतः । भवति ॥ १३ ॥ भक्तस्येति । हे स्वामिन् ! । हरेस्तव । भक्तस्यापि । पूर्वकर्मणाम् । प्राबल्यं सुखदुःखप्रदानक्षमतारूपं समर्थत्वम् । कियत्कालम् । तिष्ठति । तद्वदेतिशेषः । इतीत्थम् । पृष्टोऽखण्डानन्दमुनिनाऽनुयुक्तः । प्रभुः श्रीहरिः । तमखण्डानन्दमुनिम् । अवदत् ॥ १४ ॥ यथेति । हे मुने ! । असौ भक्तः । यथा यथा । सत्सङ्गे भगवदेकान्तिकसाधुसमागमे कृते सति । प्रीत्याधिक्यं भगवति स्नेहस्यातिशयत्वम् । अवाप्नुयात् । तथा तथा । अस्य भक्तस्य । कर्माणि वासनात्मकानि पूर्वकर्माणि । जीर्णताम् । प्राप्नुयुः । खलु ॥ १५ ॥ तत इति । ततो हेतोः । जीर्णोप्तधान्यबीजानि बलवत्तरेपि क्षेत्रे उप्तानि त्रिवर्षोत्तरकालातिक्रमाज्जीर्णतां प्राप्तानि व्रीह्यादिधान्यबीजानि । प्ररोहे इवांकुरतयोद्गमने यथा क्षमाणि न भवन्ति तथेत्यर्थः । तानि जीर्णतां प्राप्तानि पूर्वकर्माणि । संसृतेः । दाने भगवद्भक्तस्य जन्ममरणरूपं संसृतिप्रदाने । न क्षमन्ते । एतत् । सर्वथा । निश्चितमेव ॥१६॥ एतदेव दृष्टान्तविवरणपूर्वं स्पष्टमाह द्वाभ्याम् । यथेति । यथा । प्ररोहे । अक्षमाण्यपि । जीर्णानि । धान्यानि । नृणाम् । भक्षणे तु । सर्वथा । उपयुक्तान्युपयोगार्हाणि । भवेयुः । वै ॥ १७ ॥

श्रीहरिरुवाच–अदृष्टाश्चाश्रुता येऽर्था इह जन्मनि तेऽपि चेत् । स्वप्ने स्फुरेयुस्तर्ह्येतेऽनुभूताः पूर्वजन्मसु ॥ ११ ॥
तेषां वासनया नूनमन्तःकरणसंस्थया । स्फुरणं जायते स्वप्ने नान्यथेत्यवधार्यताम् ॥ १२ ॥
अखण्डानन्दसाधुस्तमथापृच्छत्कृताञ्जलिः । सुखं दुःखं च सर्वेषां पूर्वकर्मानुसारतः ॥ १३ ॥
भक्तस्येति हे स्वामिन् ! प्राबल्यं पूर्वकर्मणाम् । कियत्कालं तिष्ठतीति पृष्ठस्तमवदत्प्रभुः ॥ १४ ॥
यथा यथाऽसौ सत्सङ्गे प्रीत्याधिक्यमवाप्नुयात् । तथा तथास्य कर्माणि प्राप्नुयुः खलु जीर्णताम् ॥ १५ ॥
ततो न संसृतेर्दाने क्षमन्ते तानि निश्चितम् । जीर्णोप्तधान्यबीजानि प्ररोह इव सर्वथा ॥ १६ ॥
यथा जीर्णानि धान्यानि प्ररोहेऽप्यक्षमाणि वै । भक्षणे तूपयुक्तानि भवेयुः सर्वथा नृणाम् ॥ १७ ॥

संसृतेरिति । तथा । संसृतेः । सम्प्रदानत्वे । अक्षमाण्यपि । तानि जीर्णपूर्वकर्माणि । अस्य भक्तस्य । यावज्जीवम् । दैह्ये देहसम्बन्धिनि । सौख्ये । दुःखे च । क्षमाणि । हि दैहिकसुखदुःखप्रदानसमर्थानि स्युरेवेत्यर्थः । इति द्वयोरेकसम्बन्धः । अस्य प्रश्नोत्तरस्यायं भावः । सर्वेषां भगवद्भक्तनृणां प्राक्कर्मणां द्वौ परिणामौ स्तः तत्राद्यः प्रबलत्वे संसृतिप्रदानरूपो द्वितीयो जीर्णत्वे केवलदैहिकसुखदुःखप्रदानतारूपो न तु संसृतिप्रदानतारूप एवं सति भगवदेकान्तिकसाधुसमागमेन भगवत्युत्तरोत्तरवृद्धिमति स्नेहे जायमाने सति तेषां जीर्णभावापत्त्या संसृतिप्रदानत्वे सुतरामसमर्थत्वं स्याद्यावज्जीवं केवलं दैहिकसुखदुःखप्रदत्वे समर्थत्वं च स्यादतो यावत्तेषां जीर्णत्वं न स्यात्तावत्प्रबलत्वेन तत्स्थितेर्यदा जीर्णत्वं स्यात्तदा नेति ॥ १८ ॥ अथेदानीं तज्जीर्णता कथं ज्ञेयेति बोद्धुमन्तःसङ्कल्पं कुर्वाणं तं मुनिं सर्वज्ञतयाऽऽलक्ष्य स्वयमेव तदीयां शङ्कामुद्भाव्य दृष्टान्तोक्तिपूर्वमुत्तरयति सप्तभिः । कर्मणामिति । हे मुने ! । कर्मणाम् । जीर्णता । जाता । कथम् । ज्ञेया । इति चेदित्थंभूतापि पृच्छिषा विद्यते यदि तर्हि । ब्रुवे दृष्टान्तोक्त्या कथयामि । शूरौ कौचित् । द्वौ । पुरुषौ । उद्धृतायुधौ आयुधान्युद्यम्य योद्धुं कृतोद्योगौ । भवेताम् ॥ १९ ॥

संसृतेः सम्प्रदानत्वे तथा तान्यक्षमाण्यपि । दैह्ये सौख्ये च दुःखेऽस्य यावज्जीवं क्षमाणि हि ॥१८॥ कर्मणां जीर्णता जाता कथं ज्ञेयेति चेद् ब्रुवे । द्वौ शूरौ पुरुषौ कौचिद्भवेतामुद्धृतायुधौ ॥ १९ ॥ यावत्तौ युध्यमानौ स्तः परस्परजिगीषया । तावत्तयोर्बलाधिक्यं भवेत्तुल्यं हि देहयोः ॥ २० ॥ यदा त्वेकतरो यायात्परावृत्तिं तदा स तु । पराजितो निर्बलश्च विपरीतस्तथेतरः ॥ २१ ॥ एवं कार्ष्णो जागतश्च सङ्कल्पौ द्वौ परस्परम् युध्यमानौ तुल्यबलौ भवतः समरोत्सुकौ ॥ २२ ॥ यदा कार्ष्णार्दितो यायात्परावृत्तिं तु जागतः । पूर्वकर्ममयस्तर्हि स ज्ञेयो जीर्णतां गतः ॥ २३ ॥ प्राक्कर्मवासनारूपं मनो भवति तद्युतात् । सङ्कल्पा जागताः सर्वे उद्गच्छन्ति मुहुस्ततः ॥ २४ ॥

यावदिति । तौ पुरुषौ । यावद्यावत्कालपर्यन्तम् । परस्परजिगीषया । युध्यमानौ । स्तः । तावत् । तयोः पुरुषयोः । देहयोः । बलाधिक्यम् । तुल्यम् । भवेत् । हि ॥२०॥ यदेति । यदा तु । एकतरो द्वयोर्मध्ये एकः । परावृत्तिं पराङ्मुखत्वम् । यायात् । तदा तु । स परावृत्तो योद्धा । पराजितः । निर्बलश्च । ज्ञेयः । तथा । इतरः प्रति योधरि रणात्परावृत्तेऽपि रण एवावस्थितो योद्धा । विपरितोऽपराजितः स बलश्च ज्ञेयः ॥२१॥ एवमिति । एवममुना प्रकारेण । कार्ष्णः साक्षाद्भगवत्सम्बन्धी । जागतो विश्वस्थमायिकविषयसम्बन्धी च । इति । द्वौ । सङ्कल्पौ । परस्परम् । युध्यमानौ । तुल्यबलौ । समरोत्सुकौ परस्परजिगीषया संग्रामोत्साहयुक्तौ । भवतः ॥ २२ ॥ यदेति । यदा । कार्ष्णार्दितः कृष्णसम्बन्धिसङ्कल्पेन पराजितः । पूर्वकर्ममयः । जागतः सङ्कल्पः । परावृत्तिम् । यायात् । तर्हि । स जागतः सङ्कल्पः । जीर्णताम् । गतः । ज्ञेयः ॥ २३ ॥ जागतस्य सङ्कल्पस्य पूर्वकर्ममयत्वं यदुक्तं तत्पूर्वकर्मवासनात्मना क्व स्थितमस्तीत्याशङ्कायां तन्मनसि स्थितमस्तीति ब्रुवन्कर्मानुरोधान्मनःकृतानां सङ्कल्पानां कृष्णभक्तिमहत्सङ्गाभ्यां प्रशमोक्त्या पुनरपि कर्मजीर्णतां स्पष्टमाह द्वाभ्याम् । प्रागिति । हे मुने ! । मनः । प्राक्कर्मवासनारूपम् ।

भवति । तद्युतात्प्राकर्मवासनायुक्तात् । ततो मनसः सकाशात् । जागताः । सर्वे । सङ्कल्पाः । मुहुः । उद्गच्छन्ति उत्पद्यन्ते ॥ २४ ॥ कृष्णेति । अनिशं निरन्तरम् । महत्सङ्गेन श्रीहरेरेकान्तिकसाधुप्रसङ्गेन । कृष्णभक्तिप्रतापेन श्रीहरेरेकान्तिकभक्तिप्रभावेन च । सर्वे । ते जागताः । सङ्कल्पाः । प्रशमं विनाशम् । यान्ति । सा । कर्मजीर्णता । ईयताम् ॥ २५ ॥ इतीति । इत्यमुना प्रकारेण । तमखण्डानन्दमुनिम् । उक्त्वा । सतांगतिः । स श्रीहरिः । सर्वान् । सतः साधून् । पप्रच्छ । हे मुनयः ! । यस्य भक्तस्य । देहाभिमानः । सर्वथा । नष्टः । स्यात् ॥ २६ ॥ तथेति । तथा च । सर्वाः । विषयवासनाः । नष्टाः । भवेयुः । तदुभयम् । परैरन्यैर्भक्तजनैः । कथम् । ज्ञेयम् । तदीयैः कैर्लक्षणैस्तद्बोध्यमित्यर्थः । हे साधवः ! । तद् ब्रूत इति । द्वयोरेकसम्बन्धः ॥ २७ ॥ प्रश्नस्येति । इत्येवंविधस्य । प्रश्नस्य । उत्तरम् । वक्तुम् । ते साधवः । यदा । न । विदन् । तदा । स्वामी । स्वयं श्रीहरिरेव । आत्मसंश्रितान् साधून् हर्षयन् सन् । अब्रवीत् ॥२८॥ देहेति । हे साधवः! यस्य । हरेः । भक्तस्य । देहाभिमानः । नष्टः । स्यात् । तथा । च । पञ्चविषयैषणा शब्दादिमायिकविषयभोगभावना । अन्तःकरणात् । नष्टा । स्यात् ।

कृष्णभक्तिप्रतापेन महत्सङ्गेन चानिशम् । प्रशमं यान्ति ते सर्वे सा कर्मजीर्णतेयताम् ॥ २५ ॥ इत्युक्त्वा तं स पप्रच्छ सतः सर्वान्सतां गतिः । नष्टो देहाभिमानः स्याद्यस्य भक्तस्य सर्वथा ॥ २६ ॥ तथा नष्टा भवेयुश्च सर्वा विषयवासनाः । कथं तदुभयं ज्ञेयं परैस्तद् ब्रूत साधवः ! ॥२७॥ प्रश्नस्येत्युत्तरं वक्तुं यदा ते नाविदंस्ततः । स्वयमेवाब्रवीत्स्वामी हर्षयन्नात्मसंश्रितान् ॥२८॥ देहाभिमानो नष्टः स्याद्धरेर्भक्तस्य यस्य तु । नष्टा त्र पञ्चविषयैषणाऽन्तःकरणात्तथा ॥२९॥ तस्य या याः क्रियास्तास्ताः स्युर्वै भगवदाज्ञया । यावदाज्ञं स कुर्वीत क्रिया न तु निजेच्छया ॥ ३० ॥ देहाभिमानं रक्षेत्स तत्तत्कार्योचितं तया । विषयाणां चोपभोगं कुर्यादेव यथोचितम् ॥३१॥ भूमेरुत्थापितस्य स्याद् दुर्बलस्य पशोः स्थितिः । बलिभिर्विधृतिर्यावत्तच्च्युतौ तु न सा यथा ॥ ३२ ॥

तस्येत्युत्तरेणसम्बन्धः ॥ २९ ॥ तस्येति । तस्य हरिभक्तस्य । याः । याः । क्रियाः । तास्ताः । भगवदाज्ञया । स्युः । वै । अतः । स भक्तः । यावदाज्ञं यावतीः क्रियाः कर्तुं भगवत आज्ञा स्यात्तावतीरित्यर्थः । क्रियाः । कुर्वीत । निजेच्छया । न तु नैव कुर्वीत ॥ ३० ॥ देहेति । किञ्च । स भक्तः । तत्तत्कार्योचितं तत्तत्कार्यं विधातुं योग्यम् । देहाभिमानम् । तया भगवदाज्ञया । रक्षेत् । एष भक्तः । विषयाणाम् । उपभोगं च । तया । यथोचितं यथायोग्यम् । कुर्यात् ॥ ३१ ॥ एतदेव दृष्टान्तोक्त्या स्पष्टमाह द्वाभ्याम् । भूमेरिति । यथा । बलिभिर्बलयुक्तैर्नृभिः । भूमेः सकाशात् । उत्थापितस्योर्ध्वीकृतस्य । दुर्बलस्य पङ्गोः । पशोर्गवादेः । स्थितिरूर्ध्वावस्थानम् । यावद्यावत्कालपर्यन्तम् । विधृतिर्बलिजनैर्लकुटाधःप्रवेशनादिना कृतमूर्ध्वविधारणम् । स्यात् । तावत्स्यात् । तच्च्युतौ बलिकृततद्विधृतिविनाशे तु । सा दुर्बलपशोः स्थितिः । न स्यात् । ॥ ३२ ॥

तथेति । तथा । तथाविधस्य देहमिमानविषयवासनावर्जितस्य । भक्तस्य । दैहिकी । क्रिया । स्वस्य । प्रभोः । यावती । आज्ञा । स्यात् । तावत्येव । स्यात् । अन्यथाऽऽज्ञां विनाऽऽज्ञावध्यनन्तरं चेत्यर्थः । न स्यात् ॥ ३३ ॥ नष्टेति । नष्टाभिमानविषयवासनः । उत्तमः । भक्तः । ईदृग्लक्ष्मोक्तविधलक्षणः । स्यात् । इतीत्थम् । बोद्धव्यः । तथा । विपरीत उक्तविधभक्तलक्षणवर्जितः । अन्यथा देहाभिमानविषयवासनायुक्तः । बोद्धव्यः ॥ ३४ ॥ तथेति । यः । तथाविधो देहाभिमानविषयवासनायुक्तः । भक्तः । स तु । व्यवहारक्रियासु । आसक्तः सन् । ता व्यवहारक्रियाः । हातुं त्यक्तुम् । स्वत आत्मना न शक्नुयात् । तया प्रभोराज्ञया चापि । न शक्नुयात् ॥३५॥ वाचमिति । इत्येवंविधाम् । हरेः । उदारां महार्थसंभृताम् । सुधोपमाम् । वाचम् । निशम्य । सदोनिषण्णाः । ते समस्ताः । साधुजनाः । अपरे । द्वितीयाश्रमिणो गृहस्थभक्ताश्चापि । मुदिताः । अभूवन् ॥ ३६ ॥ ममाथ निर्लोभानन्दाखण्डानन्दसतोरपि । प्रश्नानां प्रतिवाक्यानि विधाय श्रीहरिः

तथाविधस्य भक्तस्य तथा स्याद्दैहिकी क्रिया । यावत्याज्ञा प्रभोः स्वस्य तावत्येव न चान्यथा ॥ ३३ ॥ नष्टाभिमानविषयवासनो भक्त उत्तमः । ईदृग्लक्ष्मेति बोद्धव्यो विपरीतस्तथान्यथा ॥ ३४ ॥ तथाविधस्तु यो भक्तो व्यवहारक्रियासु सः । आसक्तस्ताः स्वतो हातुं शक्नुयान्न तयाऽपि च ॥ ३५ ॥ वाचं निशम्येति हरेरुदारां सुधोपमां साधुजनाः समस्ताः । ते च द्वितीयाश्रमिणोऽपरेऽपि सदोनिषण्णा मुदिता अभूवन् ॥ ३६ ॥

इति श्रीशतानन्दमुनिविरचिते हरिवाक्यसुधासिन्धौ द्विशताधिकैकचत्वारिंशस्तरङ्गः ॥ २४१ ॥ १८ ॥

शकाब्दे विक्रमार्कस्य वेदाष्टवसुभूमिते । नभःकृष्णत्रयोदश्यां वचोऽमृतमिदं हरेः ॥ १ ॥
तत्र दुर्गपुरे दुर्गे उत्तमस्य स वेश्मनः । वितर्दौ प्रत्यगास्यस्य मञ्चासन उपाविशत् ॥ २ ॥
स मल्लिकाकर्णिकारपुष्पहारान् गले दधत् । सितवासा वृतो नानाभक्तवृन्दैः सतोऽब्रवीत् ॥ ३ ॥

स्वयम् ॥ १ ॥ पृष्ट्वैकं प्रश्नमथ तदुत्तरं च यथायथम् । यः स्वानानन्दयंश्चक्रे सोऽस्त्वेव हृदि मे पिता ॥ २ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तक श्रीहर्येकान्तिकोपासक श्रीहरिकृष्णभगवत्स्वनुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां द्विशताधिकैकचत्वारिंशस्तरङ्गः ॥ २४१ ॥ १८ ॥

त्यागिभिः श्रीहरेर्भक्तैः कामना स्वजनेषु च । प्रियता सर्वथा त्याज्येत्येकोनविंश इरितम् ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८८४) नभःकृष्णत्रयोदश्यां श्रावणमासस्य कृष्णपक्षीयत्रयोदशीतिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमस्य राज्ञः । दुर्गे । प्रत्यगास्यस्य पश्चिमाभिमुखस्य । वेश्मनस्तस्यैव भवनस्य । वितर्दौ बाह्यवेदिकायाम् । मञ्चासने स्वास्तृते पर्यङ्कविष्टरे । स श्रीहरिः । उपाविशत् ॥ २ ॥ स इति । मल्लिकाकर्णिकारपुष्पहारान् । गले कण्ठे । दधत् । सितवासाः परिधृतसकलश्वेतवसनः । नानाभक्तवृन्दैर्नानादेशागतत्यागिगृहिस्वाश्रितसमूहैः । वृतः सभायां परि-

वेष्टितः । स श्रीहरिः । सतः साधून् । अब्रवीत् ॥ ३ ॥ त्यागिन इति । हे मुनयः ! । ये त्यागिनः । हरिभक्ताः । स्युः । तेषु त्यागिहरिभक्तेषु । चेद्यदि । द्वे । कुलक्षणे । भवेताम् । तत्र । एकम् । कामना स्त्र्युपभोगेच्छा । इतरद् द्वितीयम् । स्वजनप्रियता स्वकीयसम्बन्धिजनेषु स्नेहः । एते भवेतामिति सम्बन्धः ॥ ४ ॥ आभ्यामिति । तदा । द्वाभ्याम् । आभ्यां कुलक्षणाभ्याम् । तेषां त्यागिनाम् । सद्वृन्दे एकान्तिकसाधुमण्डले । शोभा । क्वचित्कदाचिदपि । न भवेत् । प्रत्युत निन्दा तु भवेदिति भावः । किञ्च । येषु त्यागिषु । एते कुलक्षणे । भवतः । ते त्यागिनः । पशुभिः । समास्तुल्याः । मताः ॥ ५ ॥ अष्टधेति । ततो हेतोः । मुमुक्षुभिः । तैस्त्यागिभिः । योषितः स्त्रियाः । अष्टधा । त्याग एव । संरक्ष्यः । स्वजनेषु । अल्पापि । प्रीतिश्च । न कार्या ॥ ६ ॥ स्वेति । अहम् । यस्य त्यागिनः । स्वसम्बन्धिषु । प्रीतिम् । क्वचित् । पश्यामि । तस्य त्यागिनः । भूयानतिशयितः । दोषोऽगुणः । मे मम । हृदये । एत्यागच्छति । हि । त्यागिनः स्वजनेषु स्नेहस्यात्ययुक्तत्वात्तद्युक्तं तं वीक्ष्य मद्धृदये तदतिदोषागमनपूर्वं तस्मिन्ममात्यरुचिर्जायते इतिभावः ॥७॥ अत्र हेतुमाह । महेति । हि यतो हेतोः । त्यागिनः

त्यागिनो हरिभक्ता ये स्युश्चेत्तेषु कुलक्षणे । भवेतां द्वे कामनैकं स्वजनप्रियतेतरत् ॥४॥ आभ्यां द्वाभ्यां न सद्वृन्दे तेषां शोभा भवेत् क्वचित् । एते च भवतो येषु ते मताः पशुभिः समा ॥ ५ ॥ अष्टधैव ततस्त्यागः संरक्ष्यो योषितस्तु तैः । स्वजनेषु च न प्रीतिः कार्याऽल्पाऽपि मुमुक्षुभिः ॥ ६ ॥ स्वसम्बन्धिषु पश्यामि यस्य प्रीतिरहं क्वचित् । तस्य मे हृदये भूयांस्त्यागिनो दोष एति हि ॥७॥ महापापादपि महत्स्वजनप्रीतिलक्षणम् । भवति त्यागिनः पापमनिवार्यं हि निष्कृतैः ॥८॥ तस्माद्देहाच्च दैह्येभ्यः पृथगात्मास्ति चिन्मयः । यः स एवाहमस्मीति बुध्वा तत्प्रीतिमुत्सृजेत् ॥ ९ ॥ प्रीतिरत्रत्यदैह्येषु प्राग्जन्मजनितेष्विव । विचार्य नैव कर्त्तव्या ह्युभयेषां समत्वतः ॥ १० ॥ कृष्णाश्रयस्य माहात्म्यात्प्रीतिं ये तेषु कुर्वते । द्विगुणा जायते तेषां सा सम्बन्धद्वयेन वै ॥ ११ ॥

। स्वजनप्रीतिलक्षणम् । पापम् । महापापादपि । महदतिशयितम् । अत एव । निष्कृतैः प्रायश्चित्तैः । अनिवार्यमनिराकरणीयम् । भवति ॥ ८ ॥ तस्मादिति । तस्माद्धेतोः । देहात् । दैह्येभ्यो देहसम्बन्धिभ्यश्च । पृथक् स्वरूपस्वभावादिना पृथगवस्थितः । चिन्मयो ज्ञातृस्वरूपः । यः । आत्मा जीवः । अस्ति । स आत्मैव । अहम् । असि । इतीत्थम् । बुध्वा । तत्प्रीतिं देहदैहिकेषु स्नेहम् । उत्सृजेत्त्यागी त्यजेत् ॥ ९ ॥ प्रीतिरिति । प्राग्जन्मजनितेष्वतीतानेकजन्मभवेषु । दैह्येषु देहसम्बन्धिष्विव । अत्रत्यदैह्येषु वर्त्तमानदेहसम्बन्धिषु । प्रीतिः । उभयेषामतीतवर्त्तमानदैह्यानाम् । समत्वतस्तुल्यताम् । विचार्य । नैव कर्त्तव्या ॥ १० ॥ ननु भगवद्विहिमुखेषु वर्त्तमानदैह्येषु पूर्वजन्मदैह्येष्विव प्रीतिर्न कार्येति तु युक्तमुक्तं किन्तु ते यदि सत्सङ्गिनः स्युस्तदा तेष्वत्रत्यदैह्येषु प्रीतिविधाने को दोष इति चेत्तान्सत्सङ्गिनो मत्वा तेषु प्रीति विधाने तस्या द्वैगुण्यसम्भवेन ते सत्पथात् । च्युता भवन्तीत्याह द्वाभ्याम् । कृष्णेति । ये त्यागिनः । कृष्णाश्रयस्य । माहात्म्यान्महिमानमालञ्य । तेषु स्वदैह्येषु सत्सङ्गिषु । प्रीतिम् । कुर्वते । तेषां त्यागिनाम् । सम्बन्धद्वयेन दैह्यकृष्णाश्रयत्वरूपसम्बन्धद्वित्वेन । सा प्रीतिः । द्विगुणा । जायते ॥ ११ ॥

तेषामिति । तद्वतां द्विगुणप्रीतियुक्तानाम् । तेषां त्यागिनाम् । कृष्णतद्भक्तेभ्योऽपि । भूयस्याधिका । सा प्रीतिः । स्वजनेष्वेव । जायते । तयाऽधिकप्रीत्या ते त्यागिनः । सत्पथात्साक्षाद्भगवदेकान्तिकसाधुमार्गात् । च्युता भ्रष्टाः । भवन्ति ॥ १२ ॥ स्वजनेष्विति । किञ्च । यथा । स्वजनेषु । प्रीतिः । नार्हा योग्या न भवति । तद्वत्तथैव । स्वशुश्रूषारतेषु स्वकीयाहर्निशपरिचर्यातत्परेषु । पुंसु त्यागिषु गृहस्थेषु नरेष्वपि । प्रीतिः । सर्वथा । नैव विधातव्या ॥ १३ ॥ हरीति । एषु स्वशुश्रूषारतेषु त्यागिगृहिनरेषु । हरिभक्ततया । प्रीतिरपि । सतां त्यागिसाधूनाम् । नैवोचिता विधातुं नैव योग्या । कुतः । सम्बन्धद्वयतः सेवकत्वहरिभक्तत्वरूपात्सम्बन्धद्वयात् । तस्याः प्रीतेः । द्वैगुण्यम् । स्वपातकृत्सन्मार्गात्स्वच्युतिकारकम् । स्यात् ॥ १४ ॥ एतदेव दृष्टान्तोक्तिपूर्वं स्पष्टयति द्वाभ्याम् । सशर्कर इति । यथा । सर्पलालया । दूषिते । सशर्करेऽपि । क्षीरे दुग्धे विषये । पेयबुद्धिः । सुखार्थिभिः । सर्वथैव । त्याज्या ॥ १५ ॥ स्वार्थेति । तथा । स्वार्थसिद्धया । स्वसेवासिद्धिरूपस्वार्थेनेत्यर्थः । दूषितेषु । प्रभोः । भक्तेष्वपि । प्रीतिः । निजश्रेयोऽर्थिभिस्त्यागिभिः । क्वचित्कदाचिदपि । न कार्या ॥ २६ ॥ विपक्षेदोषमाह ।

तेषां सा तद्वतां कृष्णतद्भक्तेभ्योऽपि भूयसी । जायते स्वजनेष्वेव तया ते सत्पथाच्च्युता ॥ १२ ॥ स्वजनेषु यथा प्रीतिर्नार्हा तद्वच्च सर्वथा । पुंसु नैव विधातव्या स्वशुश्रूषारतेष्वपि ॥ १३ ॥ हरिभक्ततयाऽप्येषु प्रीतिर्नैवोचिता सताम् । सम्बन्धद्वयतस्तस्या द्वैगुण्यं स्यात्स्वपातकृत् ॥ १४ ॥ सशर्करेऽपि हि क्षीरे दूषिते सर्पलालया । सर्वथैव यथा पेयबुद्धिस्त्याज्या सुखार्थिभिः ॥ १५ ॥ स्वार्थसिद्धया दूषितेषु तथा भक्तेष्वपि प्रभोः । प्रीतिर्न सर्वथा कार्या निजश्रेयोर्थिभिः क्वचित् ॥ १६ ॥ अन्यथा तु हरेर्ध्याने क्रियमाणे हृदम्बुजे । तेषामपि भवेत्स्फूर्त्तिः स्नेहाधिक्यान्मुहुर्मुहुः ॥ १७ ॥ भरतस्यार्षभस्यापि मृगार्भस्फुरणं मुहुः । क्रियमाणे हरेर्ध्याने स्नेहाधिक्यादभूद्यथा ॥ १८ ॥ तथा तेषामपि भवेत् कृष्णान्यस्फूरणं हृदि । एतदेव महद्विघ्नं भक्तानामिति गम्यताम् ॥ १९ ॥ एषा वार्त्ता मुख्यसद्भिः कर्त्तव्या स्वस्वमन्डले । प्रत्यहं चेतरैः सर्वैः श्रव्या त्यागिभिरादरात् ॥ २० ॥

अन्यथेति । अन्यथा हरिभक्ते स्वसेवके प्रीत्याचरणे सति तु । हृदम्बुजे । क्रियमाणे । हरेः । ध्याने । स्नेहाधिक्यात् । स्वसेवकानामपि । मुहुर्मुहुः । स्फुर्त्तिः । भवेत् ॥ १७ ॥ एतदेव पुनः सदाचारेण द्रढयति द्वाभ्याम् । भरतस्येति । यथा । आर्षभस्य ऋषभदेवपुत्रस्यापि । भरतस्य । क्रियमाणे । हरेः । ध्याने । स्नेहाधिक्यात् । मृगार्भस्फुरणम् । मुहुः । अभूत् ॥ १८ ॥ तथेति । तथा । तेषां हरिभक्तस्वसेवके स्नेहाधिक्यवतां त्यागिनामपि । हृदि । कृष्णान्यस्फुरणम् । भवेत् । भक्तानां हर्याश्रितानां त्यागिजनानाम् । एतत्कृष्णान्यसेवकादिस्फुरणमेव । महत् । विघ्नं भगवदेकान्तिकभक्तावन्तरायः । अस्ति । इतीत्थम् । गम्यताम् ॥ १९ ॥ एषेति । एषा मदुक्ता । वार्त्ता । मुख्यसद्भिः स्वस्वमण्डलमुख्यैः साधुभिः । स्वस्वमणले । प्रत्यहम् । कर्त्तव्या । इतरैर्मण्डलमुख्यान्यैः । सर्वैः । त्यागिभिः । आदरात् । प्रत्यहम् । श्रव्या ॥ २० ॥

मदाश्रितैरिति । तथा । मदाश्रितैः । वर्णिभिः । भक्तपत्तिभिश्च । एषा वार्त्ता । स्वहिताय । दिने दिने । आदरेण । कार्या । अथवा । श्रव्या ॥ २१ ॥ यस्मिन्निति । यस्मिन् । दिने । अस्याः वार्त्तायाः । श्रवणम् । अथवा । कीर्त्तनम् । न भवेत् । तत्परे तस्माद्दिनादनन्तरागामिनि । अहनि दिने । मदाज्ञया । उपवासः । कर्त्तव्यः ॥ २२ ॥ हारिप्रसादेरिति । इत्येवंविधाम् । हारिप्रसादेर्हरिप्रसादसूनोः श्रीहरेः । पीयूषतुल्याम् । वाचम् । निशम्य । भक्ताः । ते । सर्वे । मुनयः । तथा । अन्ये । ये गृहिणः । ते चापि । परमम् । मोदम् । प्रपन्नाः प्राप्ताः । अभवन्निति शेषः ॥ २३ ॥ स्वभक्तैस्त्यागिभिः कामं स्वजनेषु तथा रतिम् । त्याज्या यः प्राह स हरिस्तयोस्त्यागं ददातु मे ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तक श्रीहर्येकान्तिकोपासक श्रीहरिकृष्णभगवत्स्वगुरुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां द्विशताधिकद्विचत्वारिंशस्तरङ्गः ॥ २४२ ॥ १९ ॥

मदाश्रितैर्वर्णिभिश्च तथैषा भक्तपत्तिभिः । कार्या श्रव्या वाऽऽदरेण स्वहिताय दिने दिने ॥ २१ ॥ यस्मिन् दिनेऽस्याः श्रवणं कीर्त्तनं वा भवेन्न हि । तत्परेऽहनि कर्त्तव्य उपवासो मदाज्ञया ॥ २२ ॥ हारिप्रसादेरिति ते तु वाचं पीयूषतुल्यां मुनयो निशम्य । भक्तास्तथाऽन्ये गृहिणश्च सर्वे ये तेऽपि मोदं परमं प्रपन्नाः ॥ २३ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते द्विशताधिकद्विचत्वारिंशस्तरङ्गः ॥ २४२ ॥ १९ ॥

शकाब्दे विक्रमार्कस्य वेदाष्टवसुभूमिते । अमायां नभसः कृष्णे वचोऽमृतमिदं हरेः ॥ १ ॥
तत्र दुर्गपुरे दुर्गे उत्तमस्य स भूभृतः । स्वावासे स्वासनेऽराजत्सितवासा वृतो निजैः ॥ २ ॥
दीनानाथः पृच्छति स्म तं विप्रो विहितानतिः । कालः कर्म स्वभावश्च सुखदुःखाप्तिहेतवः ॥ ३ ॥
तत्र कालस्तव हरेः शक्तिरित्यस्ति वर्णितः । जीवेन विहितं यत्तत्कर्मेति च निरुच्यते ॥ ४ ॥

स्वभावलक्षणं तस्य निवृत्तेः साधनं तथा । विंशे सङ्कीर्त्तितं सम्यक् ज्ञेयं हृदि मुमुक्षुभिः ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८८४) नभसः श्रावणमासस्य । कृष्णे कृष्णपक्षे । अमायाममावास्यातिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तीथौ । दुर्गपुरे । उत्तमस्य । भूभृतो राज्ञः । दुर्गे । स्वावासे स्वकीयनिवासभवने । स्वासने स्वास्तृते निजपर्यङ्कासने । सितवासाः परिधृतसकलश्वेतवसनः । निजैर्नानादेशागतैः स्वकीयैस्त्यागिगृहिजनैः । वृतः सभायां परिवेष्टितः । स श्रीहरिः । अराजद्भगवत्सान्ध्यनीराजनोत्तरमुपवेशनचातुर्येण शुशुभे ॥ २ ॥ दीनानाथ इति । दीनानाथः । विप्रः । विहितानतिः कृतप्रणामः सन् । तं श्रीहरिम् । पृच्छति स्म । हे हरे ! । कालः । कर्म । स्वभावश्च । एते । सुखदुःखाप्तिहेतवो जीवानां सुखदुःखप्राप्तौ निमित्तानि । भवन्ति ॥ ३ ॥ तत्रेति । तत्र कालादिषु त्रिषु मध्ये । कालः । हरेरक्षरधामाधिपस्य । तव । शक्तिः । अस्ति । इतीत्थम् । निरूच्यते ॥ ४ ॥

स्वभावस्येति । हे स्वामिन् ! । स्वभावस्य । स्वरूपं तु । सम्यक् । नावगम्यतेऽस्माभिर्बोद्धुं न शक्यते । ततः । तत्स्वभावरूपम् । वक्तुम् । अर्हसि । इत्यमुना प्रकारेण । पृष्टो दीनानाथविप्रेणानुयुक्तः । स श्रीहरिः । तं दीनानाथविप्रम् । अब्रवीत् ॥५॥ प्रागिति । हे विप्र ! । जीवानाम् । प्राग्भवीयेषु पूर्वजन्मभवेषु । नानाकर्मसु मध्ये । यानि कर्माणि । पक्कीभूय परिपक्वदशां प्राप्य । जीवैः सह । एकरसतामयोगोलकेऽग्निवदेकीभावम् । प्राप्तानि । स्युः । तानि कर्माणि । स्वभाव इत्युत्तरेण सम्बन्धः ॥ ६ ॥ स्वभाव इति । स्वभाव इति । सम्प्रोक्तः । स्वभावसंज्ञया कथितानि भवन्तीत्यर्थः । स स्वभाव एव । प्रकृतिः । वासनेति च । सम्प्रोक्तः । इतीत्थं प्रश्नोत्तरम् । उक्त्वा । उपरतं तूष्णीमास्थितम् । तं श्रीहरिम् । मुक्तानन्दोमुनिः । नमन्कृतप्रणामः सन् । पप्रच्छ ॥ ७ ॥ जीवेति । हे स्वामिन् ! । जीवैकरसतां जीवैः सहैकरसभावम् । प्राप्ता । हृत्स्था । जीवस्य हृदयेऽवस्थानात्तेन सहैकीभावे भावस्थानादस्या अपि हृत्स्थत्वम् । या । कर्मवासना कर्मपरिपक्वता

स्वभावस्य स्वरूपं तु न सम्यगवगम्यते । तद्वक्तुमर्हसि स्वामिन्निति पृष्टोऽब्रवीत्स तम् ॥ ५ ॥
प्राग्भवीयेषु जीवानां नानाकर्मसु यानि तु । पक्कीभूयैकरसतां जीवैः प्राप्तानि तानि हि ॥ ६ ॥
स्वभाव इति सम्प्रोक्तः प्रकृतिर्वासनेति च । इत्युक्त्वोपरतं मुक्तानन्दः पप्रच्छ तं नमन् ॥ ७ ॥
जीवैकरसतां प्राप्ता हृत्स्था या कर्मवासना । सा कथं नश्यति स्वामिन्! पृष्ट इत्यवदत्स तम् ॥ ८ ॥
आत्मनिष्ठायुजा कृष्णभक्त्या सा तु विलीयते । विनात्मनिष्ठां भक्तिस्तु न स्यादेकान्तिकी ध्रुवम् ॥ ९ ॥
यथा कृष्णे तथाऽन्यत्र पदार्थे मायिकेऽपि च । तया विना भवेत्प्रीतिस्तद्युग्भक्तिरतो मता ॥ १० ॥
असद्देशादियोगेन सा चेत्क्षुब्धा भवेत् क्वचित् । तथापि सा यथापूर्वं स्थिरा स्यादात्मनिष्ठया ॥ ११ ॥
आत्मनिष्ठायुता साऽतो वासनाक्षयसाधनम् । भवतीत्यवगन्तव्यं मुमुक्षोर्दुःखसंसृतेः ॥ १२ ॥

रूपा प्रकृतिः । सा कर्मवासना । कथं केनोपायेन । नश्यति । तव भक्तैः केनोपायेन तद्विनाशः कर्त्तव्य इत्यर्थः । इतीत्थम् । पृष्टो मुक्तानन्दमुनिनानुयुक्तः । स श्रीहरिः । तं मुक्तानन्दमुनिम् । अवदत् ॥ ८ ॥ आत्मेति । हे मुने ! । सा वासना तु । आत्मानिष्ठायुजा आत्मनिष्ठायुक्तया । कृष्णभक्त्या । विलीयते । आत्मनिष्ठां विना । भक्तिस्तु । एकान्तिकयव्यभिचारिणी । न स्यात् । ध्रुवम् ॥ ९ ॥ एतदेव सहेतुकं स्पष्टमाह । यथेति । तयाऽऽत्मनिष्ठया । विना । यथा । कृष्णे । प्रीतिः । तथा । अन्यत्र कृष्णेतरस्मिन् । मायिके । पदार्थेऽपि । प्रीतिः । भवेत् । अतो हेतोः । भक्तिः । तद्युगात्मनिष्ठायुक्ता । मता ॥ १० ॥ असदिति । किञ्च । सा भक्तिः । चेद्यदि । असद्देशादियोगेन । क्वचित् । क्षुब्धा क्षोभं प्राप्ता । भवेत् । तथापि । सा भक्तिः । आत्मनिष्ठया । यथापूर्वम् । स्थिरा निश्चला । स्यात् ॥ ११ ॥ आत्मेति । अतो हेतोः । आत्मनिष्ठायुता । सा भक्तिः । दुःखसंसृतेः सकाशात् । मुमुक्षोर्मोक्तुमिच्छोर्भक्तस्य । वासनाक्षयसाधनम् । भवति । इतीत्थम् । अवगम्यताम् ॥ १२ ॥

पीत्वेति । इत्येवंविधम् । हरेः । सुधाभाम् । वाचम् । पीत्वा । स मुक्तानन्दमुनिः । हृदये । महान्तम् । तोषम् । जगाम । तथा । सदोगताः । ये । अपरे । सर्वे साधुजनाः । गृहिणश्च । ते चापि । महान्तं तोषं जग्मुः ॥ १३ ॥ उक्त्वा स्वभावलक्ष्म तन्निवृतेः साधनं हरिः । य ऊचे स्वान्स मे देयात्साधनं तद्दयानिधिः ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्तक श्रीहर्येकान्तिकोपासक श्रीहरिकृष्णभगवत्सद्गुरुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्सुधासिन्धुटीकायां द्विशताधिकत्रिचत्वारिंस्तरङ्गः ॥ २४३ ॥ २० ॥

प्रश्नोत्तरमिषेणैव महतोरस्त्यागिनोर्द्वयोः । स्वसिद्धान्तं हरिः प्राह त्वेकविंशे निजप्रियः ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८८४) भाद्रपच्छुक्ले भाद्रपदमासस्य शुक्लपक्षे । नवम्यां तिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमस्य राज्ञः । दुर्गे । प्रत्यगास्यस्य पश्चिमद्वारस्य । वेश्मनस्तस्यैव भवनस्य । वितर्दौ बाह्यवेदिकायाम् । स्वासने स्वास्तृते पर्यङ्कासने । स श्रीहरिः । समुपाविशत् ॥ २ ॥ सितेति । सितवासाः परि-

पीत्वेति वाचं स हरेः सुधाभां तोषं महान्तं हृदये जगाम । तथाऽपरे साधुजनाश्च सर्वे सदोगता ये गृहिणश्च तेऽपि ॥ १३ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते द्विशताधिकत्रिश्चत्वारिंशस्तरङ्गः ॥ २४३ ॥ २० ॥

शकाब्दे विक्रमार्कस्य वेदाष्टवसुभूमिते । नवम्यां भाद्रपच्छुक्ले वचोऽमृतमिदं हरेः ॥ १ ॥ तत्र दुर्गपुरे दुर्गे उत्तमस्य स वेश्मनः । वितर्दौ प्रत्यगास्यस्य स्वासने समुपाविशत् ॥ २ ॥ सितवासाः पुष्पहारान् दधत्कण्ठे वृतो निजैः । भक्तैश्च प्रैरयत्साधून्प्रश्नोत्तरकृते प्रभुः ॥ ३ ॥ गोपालानन्दमप्राक्षीत्ततः शुकमुनिर्मुनिम् । तरन्ति मायां जीवास्तु भक्त्या कृष्णस्य नान्यथा ॥४॥ देहान्ते ते प्राप्नुवन्ति ब्रह्मधाम तयैव च । केवलेन तु धर्मेण देवलोको ह्यवाप्यते ॥५॥ पुण्यस्यान्ते ततो जीवाः पतन्ति विवशा भुवि । अवतारास्तु कृष्णस्य जायन्ते धर्मगुप्तये ॥ ६ ॥

हितसकलश्वेतवसनः । कण्ठे गले । पुष्पहारान् श्वेतपुष्पस्रजः । दधत् । निजैः । भक्तैः । नानादेशागतैस्त्यागिगृहिस्वाश्रितजनैरित्यर्थः । वृतः सभायां परिवेष्टितः । प्रभुः श्रीहरिः । प्रश्नोत्तरकृते परस्परप्रश्नोत्तरविधानार्थम् । साधून् । प्रैरयत् ॥ ३ ॥ गोपालानन्दमिति । ततस्तदन्तरम् । शुकमुनिः शुकानन्दनामा साधुः । गोपालानन्दम् । मुनिम् । अप्राक्षीत् । हे मुने ! । जीवाः । कृष्णस्य प्रत्यक्षस्य श्रीहरेः । भक्त्या । मायाम् । तरन्ति । अन्यथा प्रकारान्तरेण । न तरन्ति ॥ ४ ॥ देहेति । ते भक्तजीवाः । तया भक्त्यैव । देहान्ते । ब्रह्मधाम । प्राप्नुवन्ति । केवलेन । धर्मेण तु । देवलोकः । अवाप्यते । हि ॥ ५ ॥ पुण्यस्येति । पुण्यस्य स्वधर्मोपार्जितसुकृतस्य । अन्तेऽवसाने सति । जीवाः । विवशाः सन्तः । ततो देवलोकात् । भुवि । पतन्ति । "क्षीणे पुण्ये मर्त्यलोकं विशन्ती"तिभगवद्गीतोक्तेः । कृष्णस्य श्रीहरेः । अवतारास्तु । धर्मगुप्तये । जायन्ते ॥ ६ ॥

भक्तेरिति । हरेः । अवतारः । भक्तेः । संस्थापनार्थं तु । न जायते । इतीत्थम् । गीतादौ । श्रूयते । तथाचोक्तं भगवद्गीतायाम् । "यदा यदा हि धर्मस्य ग्लानिर्भवति भारत !। अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् । धर्मसंस्थापनार्थाय सम्भवामि युगे युगे" इति । 'धर्मावनायोरुकृतावतार'इत्यादि श्रीभागवतोक्तेश्च । अतो हेतोः । धर्मे । किम् । गौरवं भक्तेः सकाशात्किं गरिष्ठत्वम् । भवति । भक्त्या यत्कार्यं साध्यते तद्धर्मेण तु न सिध्यति ततो भक्त्यर्थं भगवदवतरणस्य युक्तत्वात्तदर्थं तत्प्रोङ्य धर्मार्थं कथं भगवदवतारो ध्रियते । तद्वदेतिभावः ॥७॥ इतीति । इत्यमुना प्रकारेण । तेन । सता शुकानन्दमुनिना । पृष्टः । सः । मुनिर्गोपालानन्दसाधुः । यदा । तदुत्तरं शुकानन्दमुनिप्रश्नोत्तरम् । सम्यक् । कर्त्तुम् । नाशकत् । तदा । हरिः । स्वयमेव । उवाच ॥ ८ ॥ जगदिति । हे मुने ! । धर्मः । जगद्धर्त्ता । अस्ति । इति हेतोः । तस्य जगद्धारकस्य धर्मस्य । संरक्षणे । कृते सति । सर्वस्यापि । जगतः । रक्षणम् । कृतमेव । स्यात् । चकारोऽस्य ज्ञानभक्त्यादिसर्वगुणागमनैक-हेतुत्वं वदति ॥ ९ ॥ स इति । स उक्तमहिमा धर्मोऽपि । प्रवृत्तः । निवृत्तश्च । इत्येवम् । द्वेधा द्विप्रकारः । वर्त्तते । उभयः प्रवृत्तो निवृत्तश्च । धर्मः । कृष्ण-सम्बन्धात्साक्षाच्छ्रीकृष्णभक्तिसम्बन्धतः । भगवद्धर्मः । उच्यते भागवतधर्म इति कथ्यते इत्यर्थः ॥ १० ॥ स इति । भृशमतिशयेन । भगवत्तुष्टिकृत्साक्षाद्भगवतः

भक्तेः संस्थापनार्थं तु नावतारो हरेरिति । गीतादौ श्रूयतेऽतः किं धर्मे भवति गौरवम् ॥ ७ ॥ इति पृष्टः
सता तेन स मुनिर्नाशकद्यदा । कर्तुं तदुत्तरं सम्यक् तदोवाच हरिः स्वयम् ॥८॥ जगद्धर्त्ता धर्म इति तस्य संरक्षणे
कृते । सर्वस्य जगतोऽपि स्याद्रक्षणं कृतमेव च ॥९॥ सोऽपि द्वेधा प्रवृत्तश्च निवृत्त इति वर्त्तते । उभयः कृष्ण-
सम्बन्धाद्भगवद्धर्म उच्यते ॥ १० ॥ स एव भक्तिरित्युक्तो भगवत्तुष्टिकृद् भृशम् । कृष्णसम्बन्धरहितो धर्मः कर्मेति
कथ्यते ॥ ११ ॥ प्रादुर्भावे भगवतो धर्मः सर्वोऽपि भूतले । सुरक्षितो भवेदेव ह्यन्यदा तु स निर्बलः ॥ १२ ॥

प्रीत्युत्पादकः । स भागवतो धर्म एव । भक्तिः । इति । उक्तः । एवं भागवतधर्मस्य भक्तेश्चाभिन्नत्वाद्यत्र धर्मरक्षणाय भगवदवतार उक्तः स्यात्तत्र भक्त्यर्थमित्यप्यर्थादागतमेव तेन भक्तिसाध्यार्थस्यैवंविधधर्मेणापि साध्यत्वादयं धर्मो न भक्तेरपकृष्ट इति प्रश्नोत्तरं बोध्यम् । एवं प्रश्नोत्तरं कृत्वा साम्प्रतं शुकमुन्युक्तं केवलधर्मरक्षणार्थं भग-वदवतरणं यत्तस्य प्रत्याख्यानं विदधत् धर्मज्ञानभक्तिस्थापनाय भगवदवतरणं ब्रुवन् भक्तिवर्जितधर्मस्य कर्मरूपत्वं कथयंस्तद्रक्षणस्योक्तत्रिकरक्षान्तर्गतत्वं च गदन् धर्मरक्षार्थं भगवदवतारबोधकवचनेषु । ज्ञानभक्त्योरपि रक्षणं बोध्यमित्याह सार्द्धश्चतुर्भिः । कृष्णसम्बन्धरहितः । धर्मः प्रवृत्तो निवृत्तश्चेति द्विविधोऽपि वृषः । कर्म वर्णाश्रमोचित-सदाचारलक्षणा सुकृतहेतुः क्रिया । इति । कथ्यते ॥ ११ ॥ प्रादुरिति । भगवतः श्रीहरेः । प्रादुर्भावेऽवतारे सति । भूतले । सर्वोऽपि उक्तविधः प्रवृत्तो निवृत्तो भागवतश्चेति त्रिविधोऽपि । धर्मः । सुरक्षित एव । भवेत् । साक्षाद्भगवत्प्रादुर्भावे त्रिविधस्यापि धर्मस्य पुष्टिः स्यादेवेत्यर्थः । अन्यदा भगवतस्तिरोधानेनाविद्यमानत्वे सति तु । स सर्वोऽपि धर्मः । निर्बलोऽविद्यमानसदृशः । भवेत् ॥ १२ ॥

कृष्णमिति । धर्मः । भक्तिः । वेदनं सवैराग्यमात्मपरमात्मस्वरूपज्ञानं च । एतानि । कृष्णं प्रत्यक्षं श्रीहरिम् । आश्रित्य । वर्त्तते । अतो हेतोः । स कृष्णः । यत्र स्थाने । स्यात् । तत्र स्थाने । एव । तेषां धर्मादीनाम् प्रवर्त्तनम् । स्यात् । हि ॥ १३ ॥ अत इति । अतो हेतोः । क्वचित् । शास्त्रे । शास्त्रीयेषु केषुचित्केषुचिद्वचनेष्वित्यर्थः । धर्मस्य । स्थापनम् । कृष्णावतारस्य । हेतुः । मतः । क्वापि । शास्त्रे । भक्तेः । स्थापनम् । कृष्णावतारस्य हेतुर्मतः । क्वचिच्छास्त्रे । ज्ञानस्य । स्थापनम् । कृष्णावतारस्य हेतुर्मतः । तथाचोक्तं श्रीभागवते । 'तवावतारोऽयमकुण्ठधामन् । धर्मस्य गुप्त्यै जगतोऽभवाये'ति । तथा 'परमहंसानां मुनीनाममलात्मनाम् । भक्तियोगविधानार्थ'मिति । 'ज्ञानं चानुयुगं ब्रूते हरिः सिद्धस्वरूपधृगि' च ॥ १४ ॥ एकस्येति । क्वचित् । एकस्य धर्माद्यन्यतमस्य । यत् । ग्रहणम् । तत् । अन्ययोः । उपलक्षणम् । यत्र धर्मरक्षार्थं भगवदवतार उक्तः स्यात्तत्र तेन भक्तिज्ञाने उपलक्षणतो ग्राह्ये यत्र भक्ति रक्षार्थं स उक्तस्तत्र तया धर्मज्ञाने ग्राह्ये यत्र च ज्ञानरक्षार्थं स उक्तस्तत्र तेन धर्मभक्ती ग्राह्ये इत्यर्थः । इतीत्थम् । ज्ञात्वा । सर्वार्थसिद्धये धर्मादिसकलार्थसिद्धये । कृष्ण एव । सेव्यः । तस्य सर्वार्थसिद्धि-

कृष्णमाश्रित्य वर्त्तन्ते धर्मो भक्तिश्च वेदनम् । अतो यत्र स तत्रैव स्यात्तेषां हि प्रवर्त्तनम् ॥ १३ ॥
अतः कृष्णावतोरस्य हेतुः शास्त्रे मतः क्वचित् । धर्मस्य स्थापनं क्वापि भक्तेर्ज्ञानस्य च क्वचित् ॥ १४ ॥
एकस्य ग्रहणं यत्तदन्ययोरुपलक्षणम् । इति ज्ञात्वा कृष्ण एव सेव्यः सर्वार्थसिद्धये ॥ १५ ॥
उत्साह स्यान्न सेवायां माहात्म्यज्ञानमन्तरा । अतस्तद्बुद्धये सेव्याः साधवः साधुलक्षणाः ॥ १६ ॥
साक्षान्नराकृतेः कृष्णात्तत्साधुभ्यस्तथेतरत् । वस्तु किञ्चिन्न सेवार्हं प्रीतियोग्यं च कुत्रचित् ॥ १७ ॥
ममैवैतन्मतं कृष्णतदेकान्तिकभक्ततः । नान्यत्र क्वापि कर्त्तव्या प्रीतिर्विवस्तुनि सर्वथा ॥ १८ ॥

निदानत्वादितिभावः ॥ १५ ॥ उत्साह इति । माहात्म्यज्ञानमन्तरा श्रीहरेः सर्वातिशयितमहिमाववोधं विना । सेवायां श्रीहरेरेकान्तिकभक्तौ । उत्साहः । न स्यात् अतो हेतोः । तद्बुद्धये श्रीहरेर्महिमाववोधार्थम् । साधुलक्षणा हरिगीतोदितसाधुलक्षणसम्पन्नाः । साधवः । सेव्याः ॥ १६ ॥ साक्षादिति । नराकृतेः । साक्षात् । कृष्णात् । तथा । तत्साधुभ्यः कृष्णैकान्तिकसद्भ्यः । इतरत् । किञ्चिदपि । वस्तु । कुत्रचित्कदाचिदपि । सेवार्हम् । प्रीतियोग्यं स्नेहविधानोचितं च । नास्ति । किन्तु स्वयं कृष्णस्तदेकान्तिकाः सन्तश्चैव प्रीतिसेवार्हा भवन्तीतिभावः ॥ १७ ॥ साम्प्रतं स्वमानुष्यं संशोभयन्स्वस्मिन्नेकान्तिकभक्तभावं नाटयन्साक्षात्पुरुषोत्तमः स्वयं श्रीहरिः स्वभक्तशिक्षार्थं स्वसिद्धान्तं वदत्यन्तिमश्लोकवर्जं यावत्तरङ्गसमाप्तिः । ममेति । हे मुनी ! । एतद्वक्ष्यमाणम् । ममैव । मतम् । अस्ति । अत्रावधारणार्थकैव शब्दोक्त्या सर्वेश्वरेश्वरेणासंख्याताक्षरभावापन्नमुक्तव्रजसेवितपादपद्मेन पुरुषोत्तमेन मयाऽन्यस्यासदृशत्वान्मन्मद्भक्तान्यैर्वक्तुमाचरितुं चाशक्यात्वाद्वक्ष्यमाणः सिधान्तो ममैवास्तीत्युक्तमितिभावः । मतमाह । कृष्णतदेकान्तिकभक्ततः । अन्यत्र । क्वापि । वस्तुनि । प्रीतिः । सर्वथा । न कर्त्तव्या मम न विधेयास्ति ॥ १८ ॥

एतदेव पुनः स्पष्टमाह । स्वाभाविकीति । कृष्णकार्णेतरार्थे श्रीकृष्णतदेकान्तिकभक्तेतरवस्तुनि । प्रीतिः । नैव । भवेत् । इति । यत् । ईदृश्येवंविधा । मम । मनसः । वृत्तिस्तु । स्वाभाविकी । अस्ति ॥ १९ ॥ वनेति । किञ्च । शुकदत्तर्षभादिवद्वैयासकेर्दत्तात्रेयस्य ऋषभदेवस्य । आदिना जडभरतादेश्च यथा तथेत्यर्थः । वनाद्र्यादौ कान्तारमहापर्वतादिविजनस्थले । निवासे । मे मम । साहजिकी । वृत्तिः । अस्ति । महानगरादिषु । निवासे । मे वृत्तिः स्वभावत एव नास्ति ॥ २० ॥ अहमिति । अहम् । ईदृक्स्वभावः सन्नपि । कृष्णकार्ष्णानुरागतः श्रीकृष्णतदेकान्तिकभक्तेषु स्नेहेन । ग्रामे । पुरे । लक्षशः । नृणाम् । सम्मर्दे च । वसामि ॥ २१ ॥ नेति । मे मम । ग्रामपुरवासे । अन्यः कृष्णकार्ष्णानुरागत इतरः । अल्पकोऽपि । स्वार्थस्तु । नास्ति । तस्मिन् ग्रामपुरवासे लक्षशो नृणां सम्मर्दे च । सत्यपि । नगे पर्वते । वने च । इव । निर्बन्धो निःसङ्गः । भवामि । हि ॥२२॥ कृष्णेति । कृष्णार्थम् । अथवा । तदीयार्थं तदेकान्तिकभक्तार्थम् । महतीमपि । प्रवृत्तिमिष्टपूर्त्त-सदाशनादिप्रवृत्तिक्रियाम् । कुर्वाणः । सन्नपि । अहम् । हृदये । तां तथाविधां प्रवृत्तिम् । निवृत्तिम् । जानामि । किल ॥२३॥ हरीति । हे मुनी ! । हरिभक्तस्य ।

स्वाभाविकी मम त्वस्ति मनसो वृत्तिरीदृशी । कृष्णकार्ष्णेतरार्थे यत्प्रीतिर्नैव भवेदिति ॥१९॥ वनाद्र्यादौ निवासे च शुकदत्तर्षभा-दिवत् । वृत्तिः साहजिकी मेऽस्ति न महानगरादिषु ॥२०॥ अहमीदृक्स्वभावोऽपि कृष्णकार्ष्णानुरागतः । ग्रामे वसामि च पुरे सम्मर्दे लक्षशो नृणाम् ॥ २१ ॥ न ग्रामपुरवासे मे स्वार्थस्त्वन्योऽल्पकोऽपि हि । तस्मिन्सत्यपि निर्बन्धो भवामीव नगे वने ॥ २२ ॥ कृष्णार्थं वा तदीयार्थं प्रवृत्तिं महतीमपि । कुर्वाणोऽपि निवृत्तिं तां जानामि हृदये किल ॥ २३ ॥ हरिभक्तस्य दोषं तु न गृह्णामि कदाचन । दैहिकं वाचिकं वापि त्वल्पं स्वाभाविकं मुनी ! ॥२४॥ स्वगतं तं तु महता यत्नेनापि क्षिपाम्यहम् । यावत्तिष्ठेत्स विदितस्तावन्न स्यात्सुखं हृदि ॥ २५ ॥ हरिभक्ते महान्तं तु ब्रह्मचर्यच्यवादिकम् । दोषं गृह्णामि तं यत्नात्त्याजयामि च सर्वथा ॥ २६ ॥ अत्यजन्तं तु तं सद्यस्त्यजामि तमभक्तवत् । तदत्यागे तु तत्सङ्गादन्योऽपि स्याद्धि तत्समः ॥ २७ ॥

दैहिकं निद्रातन्द्रादिम् । अथवा । वाचिकं बहुभाषणाल्पभाषणादिम् । स्वाभाविकम् । अल्पम् । दोषं तु । कदाचन । न गृह्णामि तमहं न गणयामीत्यर्थः ॥ २४ ॥ स्वेति । अहम् । स्वगतं मदात्मस्थितम् । तमुक्तविधदोषं तु । महता । यत्नेनापि । क्षिपामि त्यजामि । स तथाविधो दोषः । विदितो ज्ञातः सन् । यावद्यावत्काल-पर्यन्तम् । तिष्ठेत् स्थितो भवेत् । तावत् । हृदि मन्मनसि । सुखम् । न स्यात् । अतस्तं क्षिपामीति सम्बन्धः ॥ २५ ॥ हरिति । हरिभक्ते । ब्रह्मचर्यच्यवादि-कम् । आदिशब्दात् स्वधर्मविरुद्धलोभमानादिग्रहणम् । महान्तम् । दोषं तु । गृह्णामि गणयामि । तं महादोषम् । यत्नात् । सर्वथा । त्याजयामि । तेन तत्त्यागं कारयामीत्यर्थः ॥ २६ ॥ अत्यजन्तमिति । तं महादोषम् । अत्यजन्तम् । तं हरिभक्तं तु । अभक्तवत्कुसङ्गिनमिव । सद्यः । त्यजामि । हि यतः । तदत्यागे तथाविधहरिभक्तस्यात्यजने तु । तत्सङ्गात् । अन्यस्तदितरहरिभक्तोऽपि । तत्समः । स्यात् ॥ २७ ॥

भक्तानिति । किञ्च । अहम् । भक्तान् सत्सिङ्गिनः । विवादैः । जित्वा । चेतसि । न प्रसीदामि प्रसन्नो न भवामि । तेभ्यो भक्तेभ्यः । पराजयम् । प्राप्यैव । चेतसि । प्रसीदामि ॥ २८ ॥ पराजय इति । विवादैः । भक्तस्य । यः । पराजयः । कृतः । भवेत् । तं पराजयं तु । महापापाद् ब्रह्महत्यादिमहापापतोऽपि । अधिकमेव । जानामि । हि ॥ २९ ॥ हरीति । किञ्च । यः । पुरुषः । हरिभक्तस्य । दोषम् । मम । अग्रे । वदेत् । स पुरुषः । मे मम । दृष्टिप्रियः । नास्ति । मे दृशोऽपि प्रीतिकरो न जायते इत्यर्थः । अथ च । तद्धस्तान्नाम्बु तद्धस्तपृष्टान्नजलादिकम् । मे । प्रियं रुचिकरम् । न जायते ॥ ३० ॥ देहेति । यः । देहसम्बन्धिपुरुषः । स्यात् । सोऽपि । यदि । तादृशो मत्पुरो हरिभक्तदोषवक्ता स्यात् । तर्हि । तस्मिन्देहसम्बन्धिपुरुषेऽपि । मम । प्रीतिः । सद्यः । निवर्त्तते ॥ ३१ ॥ आत्मेति । अहम् । सत्तारूपः । आत्मा । सन्नेव । कृष्णभक्तः । निश्चितमेव । अस्मि । इतीत्थम् । ज्ञानवतो मम । दैहिकेषु देहसम्बन्धिजनादिकेषु । प्रीतिः । दुस्त्यजा । नो भवति ॥३२॥ य इति । यः । पुमान् भक्तः । शुद्धात्मरूपेण । स्थातुम् । न शक्नुयात् । तं भक्तम् । कामलोभक्रुधाद्याः । शत्रवोऽन्त-

भक्तान् जित्वा विवादैश्च न प्रसीदामि चेतसि । प्रसीदामि च तेभ्योऽहं सम्प्राप्यैव पराजयम् ॥ २८ ॥ पराजयस्तु भक्तस्य विवादैर्यः कृतो भवेत् । महापापादपि तु तं जानाम्यधिकमेव हि ॥ २९ ॥ हरिभक्तस्य दोषं यो ममाग्रे पुरुषो वदेत् । न स दृष्टिप्रियो मेऽथ तद्धस्तान्नाम्बु न प्रियम् ॥ ३० ॥ देहसम्बन्धिपुरुषो यः सोऽपि यदि तादृशः । तर्हि तस्मिन्नपि प्रीतिर्मम सद्यो निवर्त्तते ॥३१॥ आत्मैव सत्तारूपोऽहं कृष्णभक्तोऽस्मि निश्चितम् । इति ज्ञानवतः प्रीतिर्दुस्त्यजा दैहिकेषु नो ॥ ३२ ॥ यस्तु शुद्धात्मरूपेण न स्थातुं शक्नुयात्पुमान् । कामलोभक्रुधाद्यास्तं पीडयेयुर्हि शत्रवः ॥३३॥ सत्सङ्गिनोऽत्र ये सन्ति तेभ्यस्तस्य पृथक्तया । वैजात्यं स्फुटमेव स्यात्तेषामेकान्तिकत्वतः ॥ ३४ ॥ एतेषु कांश्चिज्जानामि मनुजाकृतिमत्स्वपि । श्वेतवैकुण्ठगोलोककृष्णपार्षदसन्निभान् ॥ ३५ ॥ कांश्चिच्च ब्रह्मधामस्थकृष्णपार्षदयूथतः । समानत्वेन जानामि भक्तेष्वेतेषु मद्धृदि ॥ ३६ ॥

रारयः । पीडयेयुः । हि ॥ ३३ ॥ सत्सङ्गिन इति । अत्र सत्सङ्गे । ये । सत्सङ्गिनः । सन्ति । तेभ्यः सत्सङ्गिभ्यः । तस्यः शुद्धात्मस्वरूपेण स्थातुमशक्तस्य भक्तस्य । पृथक्तया । वैजात्यम् । स्फुटमेव । स्यात् । कुतः । तेषां सत्सङ्गिनाम् । एकान्तिकत्वत आत्मनिष्ठत्वादिधर्मवत्त्वैकान्तिकभक्तत्वाद्धेतोः । सत्सङ्गिन आत्मनिष्ठत्वादिनैकान्तिकास्तद्विपरीतत्वादन्योऽनेकान्तिक इति तेषां तस्य च वैजात्यं स्फुटमेवास्तीत्यर्थः ॥ ३४ ॥ एतेष्विति । मनुजाकृतिमत्स्वपि । एतेषु सत्सङ्गिष्वस्यां सभायामवस्थितेषु सर्वेष्वपि हरिभक्तेष्वित्यर्थः । कांश्चित्कतिचित्सत्सङ्गिनः । श्वेतः श्वेतद्वीपश्च वैकुण्ठो वैकुण्ठलोकश्च गोलोकश्च तेषु ये कृष्णपार्षदास्तेषां सन्निभांस्तुल्यांस्तान् । जानामि ॥ ३५ ॥ कांश्चिदिति । किञ्च । एतेषु । भक्तेषु सत्सङ्गिषु मध्ये । कांश्चित्कतिचित्सत्सङ्गिनः । ब्रह्मधामस्थाः सर्वपराक्षरपरमपदात्रस्थिता ये कृष्णपार्षदा ब्रह्मभावापन्ना मुक्तभक्तास्तेषां यूथानि वृन्दानि तैरिति ततः । समानत्वेनैव । मद्धृदि मम मानसे । जानामि ॥ ३६ ॥

न केवलमेतांस्तैः समानानेव जानामि किन्तु स्वधर्मादिमत्त्वेन ममातिवल्लभा अप्येते एव सन्तीत्याह । स्वेति । एतेषां सत्सङ्गिनाम् । हृदि । स्वधर्मज्ञानवैराग्योपेता । भक्तिः । सततम् । स्थिरा निश्चला । अस्ति । तत्ततोहेतोः । एते सत्सङ्गिनः । मे मम । अतिवल्लभाः । सन्ति ॥ ३७ ॥ विपक्षेदोपमाह । स्वेति । यस्य सत्सङ्गिनो भक्तस्य । भक्तिः । स्वधर्मादिविहिना । स्यात् । सः । पुमान् भक्तस्तु । परिणामे उत्तरकाले । विपमदेशकालादिप्राप्तौ सत्यामित्यर्थः । शैथिल्यम् । आप्नुयात् । नैव संशयः । अत्र संशयो नास्त्येवेत्यर्थः ॥३८॥ तथेति । तथाविधः । स शिथिलः । पुमान् भक्तस्तु । स्वयमेव । औद्धवाध्वतः । वहिः । भवति जायते । अथवा । तत्स्थ औद्धवाध्वावस्थितोऽपि । तत्सुखमौद्धवाध्वावस्थितैकान्तिकभक्तसौख्यम् । न हि नैव । लभते ॥ ३९ ॥ अत इति । अतोहेतोः । देहे । दैहेषु च । प्रीतिम् । सर्वथैव । परित्यज्य । एकान्तिकत्वेन स्वधर्माद्युपेततयैव । हरिः । सदा भजनीयः ॥ ४० ॥ एवमिति । एवममुना प्रकारेणैकान्तिकभावेनेत्यर्थः । ये भक्ताः । कृष्णम् । भजेयुः । तेषां भक्तानाम् । मनः । देहदुःखापमानाद्यैरपि । परागतिं सत्सङ्गतः पराङ्मुखत्वम् । क्वापि कदाचिदपि । नैव व्रजेन्नैव प्राप्नुयात् ॥ ४१ ॥ ईदृशा

स्वधर्मज्ञानवैरायोपेता भक्तिर्हृदि स्थिरा । एतेषामस्ति सततं तदेते मेऽतिवल्लभाः ॥ ३७ ॥ स्वधर्मादिविहीना स्याद्यस्य भक्तिः पुमान्स तु । शैथिल्यमाप्नुयादेव परिणामे न संशयः ॥३८॥ तथाविधस्तु स पुमान्स्वयमेवौद्धवाध्वतः । बहिर्भवति तत्स्थो वा तत्सुखं लभते न हि ॥ ३९ ॥ अत ऐकान्तिकत्वेन भजनीयो हरिः सदा । देहे दैहेषु च प्रीतिं परित्यज्यैव सर्वथा ॥४०॥ एवं कृष्णं भजेयुर्ये तेषां नैव मनो व्रजेत् । देहदुःखापमानाद्यैरपि क्वापि परां गतिम् ॥ ४१ ॥ ईदृशा वैष्णवा ये ते सुहृद्बन्धुजना मम । भवन्ति सर्वथा नान्ये दैहिका अपि ते क्वचित् ॥ ४२ ॥ यावज्जीवं स्थैयमस्ति सहैवैतैर्मम ध्रुवम् । देहान्तेऽपि हरेर्धाम्नि स्थैयमेतैः सहास्ति मे ॥ ४३ ॥ एवं हि निश्चयो मेऽतो युष्माभिश्च मदाश्रितैः । एवमेव हि कर्त्तव्योऽनान्यथेत्युदितं हितम् ॥ ४४ ॥

इति । ईदृशा एकान्तिकाः । ये । वैष्णवा सत्सङ्गिनः । सन्ति । ते सत्सङ्गिनः । मम । सर्वथा । सुहृद्बन्धुजनाः । भवन्ति । अन्येऽवैष्णवाः । दैहिका देहसम्बन्धिनोऽपि । ते सुहृद्बन्धुजनाः । क्वचिदपि । न भवन्ति । दैहाः सुहृदादयोऽप्यवैष्णवाश्चेन्न सुहृदादयो दैहसुहृदादिवर्जिता अपि वैष्णवाश्चेन्मे त एव दैहसुहृदादितुल्या इत्यर्थः ॥ ४२ ॥ यावदिति । मम । यावज्जीवम् । एतैरेकान्तिकैर्वैष्णवैः सहैव । स्थैयम् । अस्ति । मे मम । देहान्तेऽपि । हरेः । धाम्नि । एतैर्वैष्णवैः सह । स्थैयम् । अस्ति । ध्रुवम् ॥ ४३ ॥ एवमिति । मे मम । एवमुक्तविधः । निश्चयः । अस्ति । हि । अतो हेतोः । मदाश्रितैः । युष्माभिश्च भवद्भिरपि । चकारोऽप्यर्थे । एवं मदुक्तप्रकारेणैव निश्चयः । कर्त्तव्यः । अन्यथा मन्निश्चयविपरीतो निश्चयः । न कर्त्तव्यः । इत्येवंविधम् । हितं वो हितकारिवचनम् । उदितं मया कथितम् ॥ ४४ ॥

हितेति । यः । हितैषी हितेच्छुर्मित्रम् । भवेत् । तेन हितैषीणा । स्वकीयाय स्वमित्राय । तदप्रियं तस्यारोचकमपि । हितम् । वचः । वाच्यम् । ईदृशम् । मित्रलक्षणम् । अस्ति । मित्रस्य मित्रे इव हितेच्छुत्वेन मम भवत्स्वत्यन्तप्रीतिरस्तीतिभावः ॥ ४५ ॥ हरेरिति । इत्येवंविधम् । हरेः । सुधाभम् । वचः । निशम्य । तौ । उभौ । साधू गोपालानन्दशुकानन्दौ मुनी । सभोपविष्टाः । अपरे । सर्वे । सन्तः । गृहस्थाश्च । मोदम् । प्राप्य । हृदये । तत्स्वसिद्धान्तरूपं श्रीहरिवचः । दधुरेव । स्वहितं मत्वा स्वस्वहृदये सम्यगेव धारयामासुरित्यर्थः ॥ ४६ ॥ महतोस्त्यागिनोः स्वस्य प्रश्नोत्तरमिषेण यः । उचे हरिः स्वसिद्धान्तं स तं हृदि दधातु मे ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तक श्रीहर्येकान्तिकोपासक श्रीहरिकृष्णभगवत्सुतुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां द्विशताधिकचतुश्चत्वारिंशस्तरङ्गः ॥ २४४ ॥ २१ ॥

हितैषी यो भवेत्तेन स्वकीयाय हितं वचः । वाच्यं तदप्रियमपि मित्रलक्षणमीदृशम् ॥ ४५ ॥ हरेर्निशम्येति
वचःसुधाभं साधू उभौ तावपरे च सन्तः । सर्वे गृहस्थाश्च सभोपविष्टाः प्राप्यैव मोदं हृदये दधुस्तत् ॥ ४६ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते द्विशताधिकचतुश्चत्वारिंशस्तरङ्गः ॥ २४४ ॥ २१ ॥

शकाब्दे विक्रमार्कस्य वेदाष्टवसुभूमिते । भाद्रकृष्णचतुर्थ्यां तु वचोऽमृतमिदं हरेः ॥ १ ॥
तत्र दुर्गपुरे दुर्ग उत्तमस्य स सद्मनः । वितर्दौ प्रत्यगास्यस्य मञ्चकाग्र्ये उपाविशत् ॥ २ ॥
सिताम्बरः श्वेतपुष्पहारापीडविराजितः । वृतः सहस्रशो भक्तैः साधुभिर्गृहिभिस्तथा ॥ ३ ॥
गीयमानानि शुश्राव कृष्णपद्यानि साधुभिः । प्रेमभक्तिप्रधानानि स चैकाग्रमनाः प्रभुः ॥ ४ ॥

समीचीना स्वभक्तानां रीतिर्या वर्त्तनस्य तु । सोक्ता श्रीहरिणा सम्यग्द्वाविंशे स्वातिवल्लभा ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८८४) भाद्रकृष्णचतुर्थ्यां भाद्रपदमासस्य कृष्णपक्षागतचतुर्थीतिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमस्य राज्ञः । दुर्गे । प्रत्यगास्यस्य पश्चिमद्वारस्य । सद्मनस्तस्यैव भवनस्य । वितर्दौ बाह्यवेदिकायाम् । मञ्चकाग्र्ये स्वास्तृतोत्तमपर्यङ्कासने । स श्रीहरिः । उपाविशत् ॥ २ ॥ सितेति । सिताम्बरः परिहितसकलश्वेतवसनः । श्वेतपुष्पहारापीडविराजितः । सहस्रशो नानादेशागत्वाद्बहुभिः । साधुभिः । तथा । गृहिभिः । भक्तैः स्वाश्रितजनैः । वृतः सभायां परिवेष्टितः ॥ ३ ॥ गीयमानानीति । प्रभुः । स श्रीहरिः । साधुर्मुक्तानन्दप्रेमानन्दादिमुनिभिः । गीयमानानि सवाद्यमुपवीणितानि । प्रेमभक्तिप्रधानानि । कृष्णपद्यानि । एकाग्रमनाः स्वचेतसोऽन्तःसम्मुखीनताचरणेन स्थिरचेताः सन् । शुश्राव । इति द्वयोरेकसम्बन्धः ॥ ४ ॥

श्रुत्वेति । असौ श्रीहरिः । तानि कृष्णपद्यानि । श्रुत्वा । प्रहृष्टः सन् । स्वाग्रगान् स्वपुरो निषण्णान् । सतः साधून् । प्रोवाच । हे साधवः ! । ईदृशा भवद्गीतकीर्त्तनवर्णिताः । स्निग्धभक्ताः श्रीहरौ गाढानुरागवन्तो भक्तजनास्तु । भूतले । दुर्लभाः सन्ति ॥ ५ ॥ हेमन्तसिंह इति । साम्प्रतम् । हेमन्तसिंहः । नृपतिः । तादृशः स्निग्धभक्तः । अस्ति । मूलजित्पर्वताद्याः । केचन । अन्येऽपि । तादृशाः सन्ति ॥ ६ ॥ प्रेमेति । प्रेमभक्तिमतो भक्तस्य । अनायासेन । विषयवासना मायिकार्थभावनाः । संक्षीणाः । स्युः । अस्य प्रेमभक्तिमतो भक्तस्य । आत्मनिष्ठाऽपि । सर्वदा । तिष्ठेत् ॥ ७ ॥ इतीति । इतीत्थम् ब्रुवाणम् तं श्रीहरिम् । मुक्तानन्दोमुनिः । आनतः कृतप्रणामः सन् । पप्रच्छ । हे कृष्ण हरे ! । ऋषयः । मनुष्याश्च । त्वाम् । यथारुचि । भजन्ति ॥ ८ ॥ एतदेव स्पष्टमाह । त्वमिति । नारदाद्याः बहवो मुनयः । त्वाम् । दासत्वेन दासभावेन । भजन्ति । नरसिंहादयः कृतजीर्णदुर्गवासनागरविप्रज्ञातियमहितावटङ्कनरसिंहप्रभृतयः । भक्ताः । त्वाम् । साध्वीभावेन पतिव्रताभावेन । अभजन् ॥ ९ ॥ एवमिति । एवममुना प्रकारेण । द्विधाभक्तभक्त्योर्द्विविधभक्तसम्बन्धिन्यौ ये भक्ती

श्रुत्वा तानि प्रहृष्टोऽसौ प्रोवाच स्वाग्रगान्सतः । ईदृशाः स्निग्धभक्तास्तु दुर्लभाः सन्ति भूतले ॥५॥ हेमन्तसिंहो नृपतिः साम्प्रतं चास्ति तादृशः । मूलजित्पर्वताद्याश्च सन्त्यन्येऽपि च केचन ॥ ६ ॥ प्रेमभक्तिमतः स्युः संक्षीणा विषयवासनाः । अनायासेनास्य तिष्ठेदात्मनिष्ठाऽपि सर्वदा ॥ ७ ॥ इति ब्रुवाणं पप्रच्छ मुक्तानन्दस्तमानतः । कृष्णर्षयो भजन्ति त्वां मनुष्याश्च यथारुचि ॥ ८ ॥ त्वां दासत्वेन बहवो नारदाद्या भजन्ति वै । नरसिंहादयो भक्ताः साध्वीभावेन चाभजन् ॥९॥ एवं द्विधा भक्तभक्त्योर्भक्तिः का वा वरीयसी । तमुवाच हरिस्तेषां भक्तिर्द्वेधाऽपि चैकधा ॥१०॥ प्रेम्णि भेदोऽस्ति न तयोः क्रियाभेदे भवत्यपि । भक्तिं विदधतां पुंसां स्त्रीणां देहास्तु मायिकाः ॥११॥ अतस्ते नश्वराः सन्ति नित्या एव च देहिनः । चिद्रूपास्ते न हि नरा न स्त्रियश्च भवन्ति हि ॥ १२ ॥ ते स्निग्धभक्ता देहान्ते गत्वा भागवतं पदम् । कृष्णेच्छानुसृतान् देहान् प्राप्नुवन्ति हि निर्गुणान् ॥ १३ ॥

तयोर्मध्ये । का वा किंविधा नु । भक्तिः । वरीयसी अतिश्रेष्ठा । भवति । तद्वदेतिशेषः । तमेवं पृच्छन्तं मुक्तानन्दमुनिम् । हरिः । उवाच । हे मुने । तेषां द्विविधभक्तानाम् । द्वेधा द्विप्रकाराऽपि । भक्तिः । एकधैकप्रकारैव । अस्ति ॥ १० ॥ प्रेम्णीति । तयोर्द्विविधभक्त्योः । क्रियाभेदे दासत्वपातिव्रत्यरूपकर्मविभेदे । भवति विद्यमाने सत्यपि । प्रेम्णि । भगवति स्नेहविधाने । भेदः । नास्ति । भक्तिं प्रेमभक्तिम् । विदधताम् । पुंसां पुरुणाम् । स्त्रीणां तथाविधानां नारीणाम् । देहास्तु । मायिका मायाकार्यपञ्चभूतोत्पन्नाः । सन्ति ॥ ११ ॥ अत इत । अतो हेतोः । ते देहाः । नश्वराः । सन्ति । देहिनो द्विविधभक्तजीवाः । नित्या अनश्वरा एव । सन्ति । चिद्रूपाश्चैतन्यरूपाः । ते देहिनः । नराः । न भवन्ति । स्त्रियश्च । न भवन्ति । हि ॥ १२ ॥ त इति । ते द्विधाः । स्निग्धभक्ताः । देहान्ते स्वदेहावसाने । भागवतं श्रीहरिसम्बन्धि । पदमक्षरधाम गत्वा । कृष्णेच्छानुसृतान्स्वेष्टदेवश्रीकृष्णेच्छानुरोधेन प्राप्तान् । निर्गुणान्ब्रह्ममयान् । देहान् । प्राप्नुवन्ति ॥ १३ ॥

तादृशा इति । ततस्तदनन्तरम् । तादृशा ब्रह्मशरीराः । ते । भक्ताः । तत्र । धामनि सर्वपराक्षरोत्तमपदे । श्रीहरिम् । प्रेम्णा । संसेवमाना दास्यपातिव्रत्याद्यनुगुण-भावेन दिव्योपचारैः परिचरन्तः । अतिमुदान्विताः सन्तः । वर्त्तन्ते ॥ १४ ॥ उभयविधे अपि भक्ती समाने इतिप्रश्नोत्तराचरणपूर्वं ब्रह्मधाम्नि तत्फलभूतभगवत्सेवाप्तिमुक्त्वा साम्प्रतं भगवद्भक्तानां तद्भक्त्यावन्तरायकर्तृदोषादीनुदाहरंस्तेषां वर्त्तनरीतिमाहान्तिमश्लोकवर्जं यावत्तरङ्गसमाप्तिः । यस्येति । हे मुने ! । यस्य भक्तस्य । स्त्रीपुत्रद्रविणादिष्वपि । कृष्णे इव । प्रीतिः । भवेत् । स भक्तः शिथिलोऽभक्तसदृशः । अतो हेतोः । सन्मतो भगवदेकान्तिकसाधुसम्मतः । न भवेत् ॥ १५ ॥ भक्तस्येति । यदि । भक्तस्य । पुंसो नरस्य । भक्तासु भगवद्भक्तिमतीष्वपि । स्त्रीषु । क्वचित् । कुदृष्टिः कामभावेनेक्षणम् । स्यात् । तर्हि । तत्कुदृष्ट्याचरणभवम् । पापम् । महापापाधिकं ब्रह्महत्यादिमहापापतोऽप्यधिकम् । मतम् ॥ १६ ॥ स्त्रीणामिति । इहलोके । अभक्तानाम् । स्त्रीणां पराङ्गनानाम् । सङ्गेन । यत् । पापम् । भवेत् । ततस्तत्पापादपि । अधिकम् । तत्पापम् । भक्तासु स्त्रीषु । कुदृष्ट्यैव । भवेत् । ध्रुवम् ॥ १७ ॥ स्वसृेति । भक्तेन गृहिणा हरिभक्तेन । स्वयोषितः स्वपत्न्याः सका-

तादृशास्ते ततो भक्ताः श्रीहरिं तत्र धामनि । प्रेम्णा संसेवमानास्तु वर्त्तन्तेऽतिमुदान्विताः ॥ १४ ॥ यस्य भक्तस्य तु भवेत्स्त्रीपुत्रद्रविणादिषु । अपि कृष्ण इव प्रीतिः शिथिलः स न सन्मतः ॥ १५ ॥ भक्तस्य स्याद्यदि स्त्रीषु पुंसो भक्तास्वपि क्वचित् । कुदृष्टिस्तर्हि तत्पापं महापापाधिकं मतम् ॥ १६ ॥ स्त्रीणां सङ्गेन यत्पापमभक्तानां भवेदिह । ततोऽधिकं तद्भक्तासु कुदृष्ट्यैव भवेद् ध्रुवम् ॥१७॥ स्वसृमातृसमा ज्ञेया भक्तेनान्याः स्वयोषितः । तत्रापि हरिभक्तायाः स्त्रियस्तास्तु विशेषतः ॥ १८ ॥ एवं ज्ञानं दृढं यस्य स भक्तो रसिको भवेत् । तथाभवन्नन्यथा तु भवेद् भ्रष्टो न संशयः ॥१९॥ तथा स्निग्धेन भक्तेन कृष्णतत्सेविनां क्वचित् । दोषस्तु न ग्रहीतव्यो द्रोहबुद्धिर्भवेद्यतः ॥२०॥ मुहुः कृतेभ्यः पापेभ्यो महद्भ्योऽपि कदाचन । प्रायश्चित्तैश्च भोगैश्च मुक्तिः स्यादपि कस्यचित् ॥२१॥

शात् । अन्याः स्त्रियः । स्वसृमातृसमाः । ज्ञेयाः । तत्र तासु स्वपत्न्यन्यास्वपि स्त्रीषु । याः । हरिभक्ताः । स्त्रियः । स्युः । तास्तु । विशेषत आधिक्येन स्वसृमातृसमा ज्ञेयाः ॥ १८ ॥ एवमिति । एवममुना प्रकारेण । यस्य भक्तस्य । दृढम् । ज्ञानम् । भवेत् । स भक्तः । रसिको भगवति गाढानुरागवान् । भवेत् । तथाभवन् रसिकभक्तो बुभूषुः सन् । अन्यथा हरिभक्तयोषित्सु स्वस्रादिबुद्धिवर्जितः सन् । भ्रष्टो भक्तिमार्गाच्च्युतः । भवेत् न संशयः ॥ १९ ॥ तथेति । तथा । स्निग्धेन भगवति स्नेहवता । भक्तेन । कृष्णतत्सेविनाम् । दोषस्तु । क्वचित्कदाचिदपि । न ग्रहीतव्यः । यतस्तद्दोषग्रहणात् । द्रोहबुद्धिः कृष्णतत्सेविषु द्रोहमतिः । भवेत् ॥ २० ॥ मुहुरिति । कदाचन । मुहुः । कृतेभ्यः । महद्भ्यः । पापेभ्योऽपि । कस्यचिज्जनस्य । प्रायश्चित्तैः । भोगैर्यमयातनादिरूपैस्तत्फलोपभोगैश्चापि । मुक्तिस्तत्पापाद्विमोचनम् । स्यात् ॥ २१ ॥

कृष्णेति । कृष्णकार्ष्णद्रोहभवात् । पापात् । मुक्तिस्तु । कस्यचिदपि । क्वापि कस्मिंश्चित्कालेऽपि । कुत्रचित्कस्मिंश्चित्स्थलेऽपि । केनचित् । उपायेनापि । नैव भवेत् ॥ २२ ॥ संसृतिमिति । स तद्द्रोहकर्ता । पुमान् । राक्षसादिषु । योनिषु । संसृतिं जन्ममरणे । याति । अघरूपिणः । पापरूपस्य । तस्य पुंसः । आसुरी । बुद्धिः । क्वापि कदाचिदपि । न नश्येत् ॥ २३ ॥ द्रोहेति । द्रोहबुद्धिरपि । पक्वा । अपक्वा । इत्येवंभूतेन । भेदतो भेदेन । द्वेधा । अस्ति । यस्य पुंसः । सा द्रोहबुद्धिः । पक्वा । भवेत् । तस्य पुंसः । सा । कदाचन न नश्येत् ॥ २४ ॥ अपक्वेति । अपक्वद्रोहबुद्धिस्तु । अनुतापेन तद्द्रोहाचरणनिमित्तकपश्चात्तापेन । सतां भगवदेकान्तिकभक्तानाम् । निश्छद्मसेवया । स्वदैन्येन सतां पुरः स्वदीनभावेन । तद्भूरिमाहात्म्यज्ञतया सतामतिशयमहिमावबोधत्वेन च । क्षयेद्विनाशं प्राप्नुयात् ॥ २५ ॥ कृष्ण इति । कृष्णः । साक्षाच्छ्रीहरिरपि । निजजनभक्तेभ्यः । द्रुह्यत्सु स्वभक्तद्रोहं कुर्वत्स्वित्यर्थः । पुंसु । यद्वद्यथा । सर्वथा । अप्रीतोऽप्रसन्नः । जायते । तथा । अन्याघकर्तृषु इतरपापकारकेषु पुंसु । अप्रीतो न जायते ॥ २६ ॥ एतदेव प्राचीनेतिहासोक्त्या द्रढयति

कृष्णकार्ष्णद्रोहभवात्पापात्तु क्वापि कस्यचित् । केनाप्युपायेन भवेन्नैव मुक्तिश्च कुत्रचित् ॥ २२ ॥ संसृतिं याति स पुमान् राक्षसादिषु योनिषु । न नश्येदासुरी बुद्धिस्तस्य क्वाप्यघरूपिणः ॥ २३ ॥ द्रोहबुद्धिरपि द्वेधा पक्वापक्वेति भेदतः । यस्य पक्वा भवेत्तस्य सा न नश्येत्कदाचन ॥ २४ ॥ अपक्वा त्वनुतापेन सतां निश्छद्मसेवया । स्वदैन्येन च तद्भूरिमाहात्म्यज्ञतया क्षयेत् ॥ २५ ॥ कृष्णोऽपि निजभक्तेभ्यः पुंसु द्रुह्यत्सु सर्वथा । अप्रीतो जायते यद्वत्तथा नान्याघकर्तृषु ॥२६॥ वैकुण्ठे सनकादीनामपमानो यदा कृतः । जयेन विजयेनापि तदा तत्रागमद्धरिः ॥ २७ ॥ उवाच सनकादींश्च सद्भ्यो द्रुह्यन्ति ये नराः । मम ते शत्रवस्तांस्तु क्षिपाम्यासुरयोनिषु ॥ २८ ॥ स्वहस्तेन यदा द्रोहः सतां स्यात्तर्ह्यपि ध्रुवम् । छिन्द्यां तमपि तत्कालमितरस्य तु किं पुनः ॥ २९ ॥ एवमुक्तं भगवता ततस्तौ तस्य पार्षदौ । आसुरीं योनिमापन्नौ भ्रष्टौ वैकुण्ठलोकतः ॥ ३० ॥

चतुर्भिः । वैकुण्ठ इति । वैकुण्ठे लोके । जयेन । विजयेनापि । अपि चार्थः । सनकादीनाम् । अपमानः । यदा । कृतः । तदा । तत्र स्थाने । हरिः । आगमत् ॥ २७ ॥ उवाचेति । हरिः । सनकादीन् । उवाच । हे मुनयः ! । ये नराः । सद्भ्यो भवादृशसाधुभ्यः । द्रुह्यन्ति । ते नराः । मम । शत्रवः । सन्ति । तांस्तथाभूतान्नरांस्तु । आसुरयोनिषु । क्षिपामि ॥ २८ ॥ स्वेति । यदा । स्वहस्तेन । स्वहस्तवद्धितंकरेणापि भक्तेनेत्यर्थः । सताम् । द्रोहः । स्यात् । तर्ह्यपि । तं स्वहस्तमपि । तत्कालं तत्क्षणमेव । ध्रुवमेव । छिन्द्याम् । पुनः । इतरस्य जनस्य तु । किं तस्य बाहुं छिन्द्यां तत्र किं वक्तव्यम् ॥ २९ ॥ एवमिति । हे मुने ! । एवममुना प्रकारेण । भगवता वैकुण्ठनाथेन । उक्तम् । ततस्तदनन्तरम् । तस्य भगवतः । पार्षदौ । तौ जयविजयौ । वैकुण्ठलोकतः । भ्रष्टौ च्युतौ सन्तौ । आसुरीम् । योनिम् । आपन्नौ प्राप्तौ । अभूताम् । सविस्तरमेतच्छ्रीभागवततृतीयस्कन्धादवगन्तव्यम् ॥ ३० ॥

एवमिति । एवममुना प्रकारेण । अन्येऽपि । बहवः । पुरुषाः । महद्द्रोहापमानतः सतां द्रोहापमानयोराचरणात् । महत्पदव्या महापुरुषाणां मार्गात् । पतिताः । भृशमतिशयेन । दुखिताश्च । अभवन् ॥३१॥ तस्मादिति । तस्माद्धेतोः । सुखेच्छुना । पुंसा भक्तेन । सन्तः साधवः । सदैव । मान्याः । हि । क्वचित्कदाचित् । अपमाने । कृते । सति । नमनाद्यैरपि । प्रसाद्याः ॥ ३२ ॥ यथेति । हरिरताः । जनाः । स्वस्मिन् । यथा यथा । प्रसन्नाः । स्युः । तथा तथा । सुखार्थिभिर्भक्तैः । प्रयत्नेन । विधातव्यम् ॥ ३३ ॥ स इति । इत्येवंविधम् । ईश्वरस्य साक्षात्परमेश्वरस्य श्रीहरेः । सुधासमम् । वचः । निशम्य । साधुवरो मुनिश्रेष्ठः । स मुक्तानन्दमुनिः । तथा । भक्ताः । सर्वे । अन्ये । ते । सन्तः । द्वितीयाश्रमिणो गृहिणश्चापि । उदारतोषं महान्तं सन्तोषम् । प्रापुः ॥३४ ॥ स्वातिप्रियां समीचीनां स्वीयानां वर्त्तनस्य यः । रीतिं प्राह हरिर्देयात्स मे तदनुवर्त्तनम् ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तक श्रीहर्येकान्तिकोपासक श्रीहरिकृष्णभगवत्स्वगुरुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां द्विशताधिकपञ्चचत्वारिंशस्तरङ्गः ॥ २४५ ॥ २२ ॥

एवमन्येऽपि बहवो महद्द्रोहापमानतः । महत्पदव्याः पतिता दुःखिताश्चाभवन्भृशम् ॥ ३१ ॥ तस्मात्सुखेच्छुना पुंसा सन्तो मान्याः सदैव हि । प्रसाद्या नमनाद्यैश्चाप्यपमाने क्वचित्कृते ॥ ३२ ॥ यथा यथा प्रसन्नाः स्युः स्वस्मिन् हरिरता जनाः । तथा तथा विधातव्यं प्रयत्नेन सुखार्थिभिः ॥ ३३ ॥ स ईश्वरस्येति वचो निशम्य सुधासमं साधुवरस्तथाऽन्ये । सन्तो द्वितीयाश्रमिणश्च भक्ताः सर्वेऽपि ते प्रापुरुदारतोषम् ॥ ३४ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते द्विशताधिकपञ्चचत्वारिंशस्तरङ्गः ॥ २४५ ॥ २२ ॥

शकाब्दे विक्रमार्कस्य भूताष्टवसुभूमिते । आश्वयुज्यां पौर्णमास्यां वचोऽमृतमिदं हरेः ॥ १ ॥
तत्र दुर्गपुरे दुर्ग उत्तमस्य स भूभुजः । स्वावासस्याङ्गणेऽराजत्पर्यङ्के धवलाम्बरः ॥ २ ॥
परितो भक्तनिकरैर्वृतः साधूनुवाच सः । क्रियतेऽकृतपूर्वाऽद्य वार्त्ता तां शृणुताखिलाः ॥ ३ ॥

यथाकालं प्रतिदिनं हरेः पूजा तु मानसी । कार्या यथा तथा प्रोक्ता त्रयोविंशे तु तज्जनैः ॥ १ ॥ शकेति । विक्रमार्कस्य विक्रमादित्य । भूपतेः । भूताष्टवसुभूमिते पञ्चाष्टाष्टैकसंमिते । शकाब्दे शकवर्षे । संवदष्टादशशताधिकं पञ्चाशीतितमे वर्षे इत्यर्थः । (१८८५) आश्वयुज्यामश्विनमाससम्बन्धिन्याम् । पौर्णमास्यां तिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमस्य । भूभुजः । दुर्गे । स्वावासस्य स्वनिवासभवनस्य । अङ्गणे । पर्यङ्के स्वकीयपर्यङ्कासने । धवलाम्बरः परिधृतसकलश्वेतवसनः । स श्रीहरिः । अराजद्भगवतः सांध्यनीराजनोत्तरं भगवन्मन्दिराद्दागत्योपविशन्नतिशुशुभे ॥ २ ॥ परित इति । भक्तनिकरैर्नानादेशागतत्यागिगृहिस्वभक्तवृन्दैः । परितः । वृतः सभायां संवेष्टितः । स श्रीहरिः । साधून् । उवाच । हे साधवः ! । अद्यास्मिन् दिवसे । अकृतपूर्वा पूर्वं मयाऽकृता । वार्त्ता । क्रियते । तां मत्कृतां वार्त्ताम् । अखिलाः सर्वे यूयम् । शृणुत ॥ ३ ॥

कर्त्तव्येति । भक्तैः साक्षाद्भगवदुपासकैः सत्सङ्गिभिः । तत्तत्कालोचितैर्ग्रीष्मादौ तस्मिंस्तस्मिन्काले योग्यैः । स्नानाद्यैः । उपचारकैरुपहारैः । इशितुः सर्वनियन्तुः साक्षाद्धरेः । मानसी । पूजा । प्रत्यहमेव । कर्त्तव्या ॥ ४ ॥ तत्रेति । तत्र ग्रीष्मादिकालत्रयमध्ये । उष्णकाले घर्मसमये । शीतेन । सुगन्धिना च । वारिणा जलेन । हरिम् । प्रेम्णा । स्नपयित्वा । वाससा श्वेतसूक्ष्मघनमृदुशुष्कनक्तकेन । अङ्गानि श्रीहरेर्मूर्द्धादिपादान्तावयवान् । मार्जयेत् । एतत्स्नपनं सोपबर्होत्तमतूलिकादियुतानर्घ्यपर्यङ्कादुत्थापन शौचविधान कोमलदन्तधावनार्पणमुखमार्जनविधापनानन्तरं बोध्यम् ॥ ५ ॥ तत इति । ततस्तदनन्तरम् । सितम् । नवम् । सूक्ष्मम् । घनं निबिडम् । धौतम् । सुशोभनम् । वसनं कार्पासादिवासः । यथोचितं यथायोग्यम् । भक्तः । तं श्रीहरिम् । परिधापयेत् ॥ ६ ॥ शिर इति स भक्तः । सितम् । सूक्ष्मम् । शिरःपटम् । तं श्रीहरिम् । उत्तमाङ्गे मूर्द्धनि । धारयेत् । नवीनम् । तथाविधं सितसूक्ष्मम् । प्रावारमुत्तरीयवसनम् । आच्छादयेच्छ्रीहरिं प्रावारयेत् ॥ ७ ॥ हैम इति । अथानन्तरम् । हैमे सौवर्णे । सुशोभने । पीठे आसने । तं श्रीहरिम् । आस्थाप्योपावेश्य । सुगन्धिना । मलयजचन्दनेन

कर्त्तव्या मानसी पूजा भक्तैः प्रत्यहमीशितुः । तत्तत्कालोचितैरेव स्नानाद्यैरुपचारकैः ॥ ४ ॥ तत्रोष्णकाले शीतेन वारिणा च सुगन्धिना । स्नपयित्वा हरिं प्रेम्णा वाससाऽङ्गानि मार्जयेत् ॥ ५ ॥ ततः सितं नवं सूक्ष्मं घनं धौतं सुशोभनम् । यथोचितं च वसनं भक्तस्तं परिधापयेत् ॥ ६ ॥ शिरःपटं सितं सूक्ष्ममुत्तमाङ्गे च धारयेत् । आच्छादयेन्नवीनं तं प्रावारं स तथाविधम् ॥ ७ ॥ हैमे सुशोभने पीठे तमास्थाप्याथ चर्चयेत् । तदङ्गानि मलयजचन्दनेन सुगन्धिना ॥ ८ ॥ स्वयं घृष्ट्वा वाटिकायां हैम्यां भृत्वा तदात्मनः । धृत्वा करे दक्षदोष्णा ललाटं प्राक्स चर्चयेत् ॥ ९ ॥ सम्यङ् निरीक्ष्य तत्तस्य ततः पाणी स चर्चयेत् । सम्यङ् निरीक्ष्य तौ वक्ष उदरं च तथाऽर्चयेत् ॥ १० ॥ पादौ तु कुंकुमेनैव चर्चयित्वा स सर्वतः । सम्यङ् निरीक्ष्य कुसुमैरर्चयेत्तं सुगन्धिभिः ॥ ११ ॥

मलयागुरुगन्धेन । तदङ्गानि श्रीहरेर्ललाटभुजाद्यवयवान् । चर्चयेत् ॥ ८ ॥ अन्यघृष्टचन्दनाद्यर्चनेऽल्पफलत्वात्स्वयं तद् घृष्ट्वैव ललाटादि तदवयवांश्चर्चयेदीत्याह द्वाभ्याम् । स्वयमिति । स भक्तः । तन्मलयजचन्दनम् । स्वयम् । घृष्ट्वा । हैम्यां सौवर्ण्याम् । वाटिकायाम् । भृत्वा । आत्मनः स्वस्य । करे वामपाणौ । धृत्वा चन्दनभृतवाटिकां धृत्य । दक्षदोष्णा स्वदक्षिणपाणिना । प्राक् प्रथमम् । ललाटं श्रीहरेर्भालम् । चर्चयेत् ॥ ९ ॥ सम्यगिति । ततस्तदनन्तरम् । स भक्तः । तत्स्वचर्चितं श्रीहरिललाटम् । सम्यक् । निरीक्ष्य । पाणी श्रीहरेर्भुजयुगलम् । चर्चयेत् । तौ । तत्पाणी । सम्यक् । निरीक्ष्य । वक्षः श्रीहरेस्तुङ्गविशालहृदयस्थलम् । तथा । उदरमश्वत्थदलसमं तत्तुन्दम् । अर्चयेत् । चकारात्तस्य जानुनी जंघे चागुल्फान्तं समर्च्य वक्षःप्रभृतिचर्चिताङ्गं सम्यग्निरीक्षेतेति बोध्यम् ॥ १० ॥ पादाविति । स भक्तः । पादौ श्रीहरेश्चरणौ । सर्वत उपर्यधस्ताच्च । कुंकुमेनैव । चर्चयित्वा । सम्यक् । निरीक्ष्य । तं श्रीहरिम् । सुगन्धिभिः । कुसुमैर्मल्लिकाचम्पक-

स्थलाब्जादि सुमनोभिः । अर्चयेत् ॥ ११ ॥ एतदेव पुनः स्पष्टमाह । पौष्पानिति । पौष्पानुक्तकुसुमरचितान् : हारान् । शेखरान् । केयूरवलयान्युक्तकौसुमान्यङ्गद कटकानि च । यथास्थानं कण्ठे हारान् शिरःपटे आपीडान् भुजयोः केयूरौ प्रकोष्ठयोर्वलये इत्यर्थः । चकारात्पौर्ष्पीं शिरष्टोपीं तथाविधां प्रच्छदपदिकां च । धारयित्वा । तं तथाविधं श्रीहरिम् । सादरं यथातथा । निरीक्षेत ॥ १२ ॥ धूपमिति । अथानन्तरम् । स भक्तः । धूपम् । दीपम् । विधाय । नैवेद्यं चतुर्विधान्नम् । समर्पयेत् । तन्नैवेद्यं तु । यथोचितं यथायोग्यम् । यथाकालं यथासमयम् । यथास्वरुचि स्वरुच्यनुगुणम् । समर्पयेदितिसम्बन्धः । ततो मध्ये पानीयोत्तरापोशन मुखकरशुद्धिविधान मुखवासार्पणान्यपि बोध्यानि ॥ १३ ॥ नीराजयित्वेति । अर्चकः । तं श्रीहरिम् । नीराजयित्वा बहुवर्त्तिप्रदीपनेनारार्त्तिकं कृत्वा । सप्रेम सस्नेहम् । आदरात् । स्वजेताश्लिष्येत् । तदाश्लेषणम् । सकृत् । अथवा । द्विर्द्विवारम् । बहुशो बहुवारमपि । यथास्वस्नेहम् । कुर्यात् ॥ १४ ॥ तत इति । ततस्तदनन्तरम् । तस्य श्रीहरेः । पादाम्बुजे आर्द्रकुंकुमार्चिते चरणकमले । हृदि स्वहृदये । शीर्ष्णि स्वमस्तके च । धारयेत् । ततस्तदनन्तरम् । स्वं स्वकीयम् । हृद्हृदयम् । शिरो मस्तकं च । तल्ल-

पौष्पान्हारान् शेखरांश्च केयूरवलयानि च । यथास्थानं धारयित्वा ते निरीक्षेत सादरम् ॥ १२ ॥
धूपं दीपं विधायाथ नैवेद्यं च समर्पयेत् । यथोचितं यथाकालं यथास्वरुचि तत्तु सः ॥ १३ ॥
नीराजयित्वा सप्रेम स स्वजेत तमादरात् । सकृद् द्विर्वापि बहुशो यथास्वस्नेहमर्चकः ॥ १४ ॥
ततः पादाम्बुजे तस्य धारयेद् धृदि शीर्ष्णि च । तल्लग्नकुंकुमाक्तं च पश्येत्स्वं हृच्छिरस्ततः ॥ १५ ॥
परिष्वङ्गे तदङ्गस्थचन्दनेनाभिचिह्नितम् । निरीक्षेत वपुः स्वं च पुष्पहारादिभिस्तथा ॥ १६ ॥
पुष्पोद्याने ततो रम्ये निजभक्तजनैः सह । विहरन्तं प्रसन्नास्यं तं निरीक्षेत भक्तितः ॥ १७ ॥
वर्षाकाले तु भक्तस्तमादौ स्वहृदि भावयेत् । नद्यां सद्भिः सह स्नात्वा निजान्तिक उपागतम् ॥ १८ ॥

ग्नकुंकुमाक्तं श्रीहरिचरणागतार्द्रकुंकुमाङ्कितम् । पश्येत् ॥ १५ ॥ परिष्वङ्ग इति । परिष्वङ्गे श्रीहर्याश्लेषणे । तदङ्गस्थचन्दनेन । तथा । पुष्पहारादिभिस्तदङ्गस्थसुमनःहारादिभिः । अभिचिह्नितम् । स्वम् । वपुः । निरीक्षेत् ॥१६॥ पुष्पेति । ततस्तदनन्तरम् । रम्ये रमणीये । पुष्पोद्याने पुष्पवाटिकायाम् । निजभक्तजनैः सह । विहरन्तम् । प्रसन्नास्यं मन्दहासमुखपङ्कजम् । तं श्रीहरिम् । भक्तितो गाढानुरागतः । निरीक्षेत । ततस्तत्र मध्याह्ने स्वरचितोत्तमासने सुप्तो जलार्द्रोशीरव्यजनेन स्वेन वीजितः स उत्थाय करमुखशुद्धिपूर्वं शीतोदकं पीत्वा स्वाश्रितेभ्यो वार्त्तां कृत्वा पुष्पोद्यानतः स्वस्थानमागत्यान्त्ययामवाच्यकथामाश्रुत्यावस्थितं कृताशनं सायं निराजयित्वा तत्पुरस्तच्चरितयुतकीर्त्तनगानं कृत्वा तं स्वास्तृतपर्यङ्के स्वापयित्वा । तत्पादौ संवाहयन्तं स्वं विभावयन्वर्त्ततेति बोध्यम् ॥ १७ ॥ वर्षेति वर्षाकाले तु । भक्तः । नद्यामुन्मत्तगङ्गायाम् । सद्भिः सह । स्नात्वा । निजान्तिके स्वसमीपे । उपागतम् । तं श्रीहरिम् । आदौ प्रथमम् । स्वहृदि । भावयेत ॥ १८ ॥

आर्द्रेति । आर्द्रसर्वाम्बरमुन्मत्तगङ्गायां स्नात्वा स्ववासः परिधानं कृत्वा वाहमारुह्यावासागमनाय चलितेऽपि तदन्तरा जातातिवर्षणेन सछत्रत्वेऽपि जातार्द्रसकलाम्बरमित्यर्थः । तं श्रीहरिम् । दृष्ट्वा । आशु । उत्थाय । सर्वाण्यपि । वासांसि । कौसुम्भान्येव यथोचितम् । धारयेत् ॥ १९ ॥ तत इति । ततस्तदनन्तरम् । सिंहासनस्थम् । तं श्रीहरिम् । सकेसरसुगन्धिना केसरं घृतेन ससुगन्धेन चेत्यर्थः । चन्दनेन । चर्चयित्वा ललाटे समर्च्य । प्राग्वत्पूर्वोक्तप्रकारेणैव । पुष्पाद्यैः । अर्चयेत् ॥ २० ॥ पूजनेति । पूजनान्ते । महासौधविराजितम् । भक्तमण्डलमध्यस्थम् । तं श्रीहरिम् । भक्तः । परमादरात् । निरीक्षेत ॥ २१ ॥ शीतेति । शीतकाले तु । भक्तः । तं श्रीहरिम् । उष्णवारिणा । स्नपयेत् । ततस्तदनन्तरम् । सितम् । सूक्ष्मम् । घनम् । धोत्रं परिधानीयम् । परिधापयेत् ॥ २२ ॥ मृद्विति । मृदुतूलपटीछन्नेऽतिमृदुतूलिकास्तृते । सूक्ष्मप्रच्छदवाससि । पर्यङ्के । तं श्रीहरिम् । उपावेश्य । वासांसि वक्ष्यमाणानि वस्त्राणि । परिधापयेत् ॥ २३ ॥ हैमेति । शीर्ष्णि । हैमसूत्राढ्यकौसुम्भ-

आर्द्रसर्वाम्बरं तं तु दृष्ट्वोत्थायाशु धारयेत् । कौसुम्भान्येव वासांसि सर्वाण्यपि यथोचितम् ॥ १९ ॥ ततः सिंहासनस्थं तं सकेसरसुगन्धिना । चर्चयित्वा चन्दनेन पुष्पाद्यैः प्राग्वदर्चयेत् ॥ २० ॥ पूजनान्ते निरीक्षेत महासौधविराजितम् । भक्तमण्डलमध्यस्थं भक्तस्तं परमादरात् ॥ २१ ॥ शीतकाले तु तं भक्तः स्नपयेदुष्णवारिणा । सितं सूक्ष्मं घनं धोत्रं ततश्च परिधापयेत् ॥ २२ ॥ मृदुतूलपटीछन्ने सूक्ष्मप्रच्छदवाससि । तमुपावेश्य पर्यङ्के वासांसि परिधापयेत् ॥ २३ ॥ हैमसूत्राढ्यकौसुम्भपटकं शीर्ष्णि बन्धयेत् । यथास्थानं धारयेच्च नीशारं कञ्छनीं तथा ॥ २४ ॥ कटिबन्धनवासश्चामूल्यं कट्यां स बन्धयेत् । प्रावारवस्त्रमन्यच्च धारयेत्तं तथाविधम् ॥ २५ ॥ नानारत्नमयीर्हैमीः भूषास्तं धारयेत्ततः । प्रत्यङ्गं संनिरीक्षेत स सप्रेम च सादरम् ॥ २६ ॥ ललाटे चन्द्रकं चारुकुंकुमेन विधाय तम् । अर्चेत्पुष्पादिभिः प्राग्वदुपचारैर्मनोरमैः ॥ २७ ॥ अन्तर्गृहे ततो भक्तैः स्वकीयैः सह संस्थितम् । महासने भावयेत्तं स्वस्थो भक्तश्चिरं प्रभुम् ॥ २८ ॥

पटकं प्रचुरस्वर्णसूत्ररचिताग्निशिखरञ्जितानर्घ्यवसनम् । बन्धयेत् । नीशारम् । तथा । कञ्छनीं सुरवारम् । यथास्थानम् । धारयेत् ॥ २४ ॥ कटीति । स भक्तः । तं श्रीहरिम् । अमूल्यम् । कटिबन्धनवासः । कट्याम् । बन्धयेत् । तथाविधममूल्यम् । अन्यद् द्वितीयम् । प्रावारं वस्त्रं च । धारयेत् ॥ २५ ॥ नानेति । ततस्तदनन्तरम् । स भक्तः । तं श्रीहरिम् । नानारत्नमयीर्नानाविधरत्नखचिताः । हैमीः सुवर्णमयीः । भूषाः कटकादीन्याभूषणानि । इमा महामौक्तिकस्रजामप्युपलक्षणम् । धारयेत्तत्तद्भूषणधारणार्हावयवेषु प्रसाधयेत् । सप्रेम सस्नेहम् । सादरं च । प्रत्यङ्गम् । संनिरीक्षेत ॥ २६ ॥ ललाट इति । चारुकुंकुमेन वरकाश्मीरेण । चन्द्रकम् । विधाय । प्राग्वत्पूर्ववदेव । मनोरमैः । पुष्पादिभिः । उपचारैः । तं श्रीहरिम् । अर्चेत् ॥ २७ ॥ अन्तरिति । ततस्तदनन्तरम् । अन्तर्गृहे निवाते गृहमध्यप्रदेशे । महासने स्वास्तृतपर्यङ्कासने । संस्थितम् । स्वकीयैः । भक्तैः । सह वर्तमानम् । प्रभुम् । तं श्रीहरिम् । भक्तः । स्वस्थ एकाग्रमनाः सन् । चिरम् ।

भावयेच्चिन्तयेत् ॥ २८ ॥ इत्थमिति । इत्थममुना प्रकारेण । सकलैः । भक्तैः । प्रेमवृद्धिकृद्भगवति श्रीहरौ प्रेमवृद्धिकर्त्री । मानसी । पूजा । यथाकालम् । यथोचितम् । प्रत्यहम् । कर्त्तव्या ॥ २९ ॥ इतीति । इत्यमुना प्रकारेण । उक्त्वा । क्षणं क्षणकालपर्यन्तम् । स्थित्वा । प्रभुः । स श्रीहरिः । पुनः । सतः साधून् । आह । हे साधवः ! । भक्तैः । यत् । अन्यत् । बोध्यम् । तच्चापि । कथयामि । निशम्यताम् ॥ ३० ॥ यदेति । यदा । स्वस्मिन । हरेः । भक्ताः । सुप्रीता अतिप्रसन्नाः । भवेयुः । अथवा । स स्वयं श्रीहरिरेव । सुप्रीतः । भवेत् । तदा । हृदि स्वहृदये । स्वकम् । महत् । भाग्यम् । माननीयम् ॥ ३१ ॥ यदेति । यदा च । ते श्रीहरिस्तद्भक्ताश्च । कर्हिचित् । स्वशिक्षार्थम् । स्वाप्रियाण्यपि । वाक्यानि । ब्रूयुः । तदापि । स्वकम् । महत् । भाग्यम् । मान्यम् ॥३२॥ महाभाग्यमाननहेतुभूतं विचारमाह । अहो इति । निःस्पृहा अपि । दयालवः । एते श्रीहरिस्तद्भक्ताः । कृपया । मदगुणक्षत्यै मदीयदोषनाशाय । माम् । इत्यप्रियाण्यपि । शिक्षार्थवाक्यानि

इत्थं हि मानसी पूजा यथाकालं यथोचितम् । कर्त्तव्या सकलैर्भक्तैः प्रत्यहं प्रेमवृद्धिकृत् ॥२९॥ इत्युक्त्वा स क्षणं स्थित्वा पुनराह सतः प्रभुः । भक्तैरन्यच्च यद् बोध्यं कथयामि निशम्यताम् ॥ ३० ॥ यदा भवेयुः सुप्रीता हरेर्भक्ताः स एवं वा । स्वस्मिंस्तदा महद्भाग्यं माननीयं स्वकं हृदि ॥३०॥ यदा च ते स्वशिक्षार्थं स्वाप्रियाण्यपि कर्हिचित् । ब्रूयुर्वाक्यान्यपि तदा भाग्यं मान्यं महत्स्वकम् ॥ ३१ ॥ अहो मदगुणक्षत्यै कृपयैते वदन्ति माम् । निःस्पृहा अपि शिक्षार्थवाक्यानीति दयालवः ॥३३॥ न चाप्रियवचःश्रुत्या क्लेशितव्यं कदाचन । प्रसन्नैरेव सततं भाव्यं तैः स्वहितेच्छुभिः ॥ ३४ ॥ सुधोपमानामिति तस्य वाचं निशम्य ते त्यागिजनाः समस्ताः । तथा गृहस्था इतरेऽपि तोषं महान्तमापुर्हृदये सदःस्थाः ॥ ३५ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते द्विशताधिकषट्चत्वारिंशस्तरङ्गः ॥ २४६ ॥ २३ ॥

। वदन्ति । अहो आश्चर्यम् ॥ ३३ ॥ नेति । किञ्च । स्वहितेच्छुभिः । अप्रियवचःश्रुत्या स्वशिक्षार्थाप्रियवचनश्रवणेन । कदाचन । नैव क्लेशितव्यम् । सततम् । प्रसन्नैरेव । भाव्यम् ॥ ३४ ॥ सुधेति । इत्येवंविधम् । तस्य श्रीहरेः । सुधोपमानाम् । वाचम् । निशम्य । सदःस्थाः । समस्ताः । ते । त्यागिजनाः । तथा । इतरे । गृहस्था अपि । हृदये । महान्तम् । तोषम् । आपुः ॥ ३५ ॥ स्वपूजां मानसीं कार्यां स्वभक्तैः प्रत्यहं हरिः । यो यथाकालमाह स्वान् स मे पूज्योऽस्तु सर्वदा ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तक श्रीहर्येकान्तिकोपासक श्रीहरिकृष्णभगवत्सूनुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां द्विशताधिकषट्चत्वारिंशस्तरङ्गः ॥ २४६ ॥ २३ ॥

धाम्न्यक्षरे हरेः सेवासम्प्राप्तेः साधनानि तु । आपद्यपि स्वधर्मभ्योऽपतनस्य लक्षणम् ॥१॥ स्वप्रकृतेर्दुस्त्यजायास्त्यजनस्य च साधनम् । महतां हरिभक्तानां श्रेष्ठाङ्ग-कथनं तथा ॥ २ ॥ ज्ञानांशस्य तथा श्रेष्ठयं लक्षणं तस्य तत्त्वतः । विधायाः श्रवणाख्याया भक्तेः श्रेष्ठत्वमेव च ॥३॥ माहात्म्यावेदनत्वं च स्त्रीपुंसानां परस्परम् । भक्तानां सर्वमेतत्तु चतुर्विंशे प्रकीर्त्तितम् ॥४॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८८५) इषस्याश्विनमासस्य । कृष्णद्वादश्यां कृष्णपक्षीयद्वादशीतिथौ । इदम् । हरेः । वचो-ऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमस्य । भूभुजः । दुर्गे । गोपीनाथालये श्रीगोपीनाथभगवन्मन्दिरे । चक्रके तन्मण्डपप्रत्यग्द्वारान्तरा-स्थापितचक्रकासने । धवलाम्बरः परिहितसकलश्वेतवसनः । स श्रीहरिः । अराजत् ॥ २ ॥ मुक्तानन्द इति । नानाभक्तगणैर्नानादेशागतत्यागिगृहिस्वभक्त-वृन्दैः । वृतं सभायां परिवेष्टितम् । तं श्रीहरिम् । मुक्तानन्दोमुनिः । अप्राक्षीत् । हे हरे ! । त्वदीयाः । भक्ताः । तव । अक्षरे । धाम्नि । त्वत्सेवाम् । यान्ति ॥ ३ ॥ तदिति । हे स्वामिन् ! । तत्प्राप्तेरक्षरधाम्नि त्वत्सेवोपलब्धेः । यानि । साधनानि । स्युः । तानि । त्वम् । कृपया । मे मह्यम् । वक्तुम् ।

शकाब्दे विक्रमार्कस्य भूताष्टवसुभूमिते । इषस्य कृष्णद्वादश्यां वचोऽमृतमिदं हरेः ॥ १ ॥ तत्र दुर्गपुरे दुर्ग उत्तमस्य स भूभुजः । गोपीनाथालयेऽराजच्चक्रके धवलाम्बरः ॥ २ ॥ मुक्तानन्दस्तमप्राक्षीन्नानाभक्तगणै-र्वृतम् । भक्तास्त्वदीयास्त्वत्सेवां यान्ति धाम्न्यक्षरे तव ॥ ३ ॥ तत्प्राप्तेः साधनानि स्युर्यानि तानि त्वमर्हसि । वक्तुं मे कृपया स्वामिन्नित्युक्तः स उवाच तम् ॥ ४ ॥ श्रद्धा स्वधर्मो वैराग्यं सर्वथेन्द्रियनिग्रहः । अहिंसा ब्रह्मचर्यं च सत्सङ्गश्चात्मनिष्ठता ॥५॥ माहात्म्यज्ञानयुग्भक्तिः श्रीहरेरपि निश्चला । यथालब्धेन सन्तोषो निर्दम्भत्वं दया तपः ॥ ६ ॥ महत्सु हरिभक्तेषु बहुमानः समेषु च । मैत्री हीनेषु तेष्वेव हितस्याचरणं तथा ॥ ७ ॥

अर्हसि । इत्यमुना प्रकारेण । उक्तो मुक्तानन्दमुनिना पृष्टः । स श्रीहरिः । तं मुक्तानन्दमुनीम् । उवाच ॥ ४ ॥ श्रद्धेति । हे मुने ! । श्रद्धा विश्वासपूर्वकमे-कान्तिकधर्मे परमादरः । स्वधर्मो वर्णाश्रमोचितः सदाचारः । वैराग्यं श्रीकृष्णेतरसकलमायिकवस्तुष्वरुचिः । सर्वथा सर्वप्रकारेण । इन्द्रियनिग्रहो बाह्यान्तरकरणानां नियमैस्तत्तद्विषयप्रसरणनिवर्त्तनम् । अहिंसा कायवाङ्मनोभिः प्राणिद्रोहवर्जनम् । ब्रह्मचर्यं त्यागिनामष्टधा स्त्रीपरित्यागो गृहिणां पराङ्गनावर्जनमित्येवं द्विलक्षणम् । सत्सङ्गः साक्षाद्भगवदेकान्तिकसाधूनां प्रसङ्गः । आत्मनिष्ठता स्वात्मनः सदा ब्रह्मणैक्येन भावनं च ॥ ५ ॥ माहात्म्येति । माहात्म्यज्ञानयुक् श्रीहरेरक्षपरत्वादिमहिमावबोध-युक्ता । अत एव । अतिनिश्चला सुस्थिरा । श्रीहरेः । भक्तिः । यथालब्धेन दैवादकालं प्राप्तेन यथातथाविधेनान्नांशुकादिना । सन्तोषोऽलम्बुद्धिपूर्वमधिकतृष्णा-विवर्जनम् । निर्दम्भत्वं दम्भोऽधार्मिकत्वेऽपि धार्मिकत्वाख्यापनाय धर्मानुष्ठानं तथात्वरहितता । दया यथात्मबन्धनं न स्यात्तथापरदुःखासहनपूर्वं तत्प्रतिकारकरणम् । तपो व्रतोपवासकृच्छ्राणां केवलपरमेश्वरप्रीत्यै सम्यगाचरणम् । ॥ ६ ॥ महत्स्विति । महत्सु स्वतो गुणाधिकेषु । हरिभक्तेषु । बहुमानो विनयपूर्वमतिसत्कारा-

चरणं नत्वसूयाचरणम् । समेषु गुणैः स्वतुल्येषु । हरिभक्तेषु । मैत्रि मीत्रभावो नतु स्पर्धा । तथा । हीनेषु स्वतो गुणैर्निकृष्टेषु । तेषु हरिभक्तेषु । हितस्य तत्प्रियस्यैव । आचरणं नतु तिरस्करणम् ॥ ७ ॥ इतीति । हे साधो ! । इत्येवंविधैः । एतैः षोडशभिः । साधनैः । एकान्तिकाः । भक्ताः । अक्षरे । पदे धाम्नि । सुदुर्लभा-मुक्तसाधनवर्जितानेकान्तिकदुष्पापाम् । हरेः साक्षात्परमेश्वरस्य । सेवाम् । सम्यगेव । प्राप्नुवन्ति ॥ ८ ॥ अथेति । अथानन्तरम् । शुकमुनिः शुकानन्दनामा साधुः । अपृच्छच्छ्रीहरिं प्रश्नमप्राक्षीत् । हे प्रभो ! । अखिलाः । वयम् । सन्तस्त्वदीयाः साधवः । त्वदुक्तनियमेषु निर्लोभादिषु भवदभिहितस्वधर्मनियमेष्वेव । प्रीत्या । सदा । वर्त्तामहे ॥ ९ ॥ आपदीति । कच्चित्कस्यांचित् । आपद्यापत्कालेऽपि । तेभ्यो भवदुक्तनियमेभ्यः । नोऽस्माकम् । पतनम् । येन लक्षणेन । नैव स्यात् । तत्तथा-विधम् । लक्षणम् । किन्तु किं वा । भवेत् । तल्लक्षणम् । वक्तुम् । अर्हसि ॥१०॥ 'श्रीकृष्ण इत्थं सम्पृष्टः स शुकानन्दसाधुना । आनन्दयन् जगादेति तं च सर्वा-न्पराम्निजान्' । महत्स्विति । हे मुने ! । महत्सु निर्लोभब्रह्मचर्यादिषु विशेषेषु । अल्पेषु स्नानसौचादिषु सामान्येषु च । हरेः । वाक्येषु नियमरूपेषु वचनेषु ।

इत्येतैः साधनैः साधो ! भक्ता एकान्तिका हरेः । सेवां सुदुर्लभां सम्यक् प्राप्नुवन्त्यक्षरे पदे ॥ ८ ॥
अथापृच्छच्छुकमुनिः प्रभो ! सन्तो वयं सदा । त्वदुक्तनियमेष्वेव प्रीत्या वर्त्तामहेऽखिलाः ॥ ९ ॥ आप-
द्यपि कच्चित्तेभ्यो नैव स्यात् पतनं तु नः । येन तल्लक्षणं किन्तु भवेत्तद्वक्तुमर्हसि ॥ १० ॥ श्रीहरिरुवाच
महत्स्वल्पेषु च हरेर्वाक्येषु स्याद् दृशिः सदा । तेभ्योऽधिकं वा न्यूनं वा वर्त्तनं नैव कर्हिचित् ॥११॥
एतदेव हि विज्ञेयं लक्षणं कृष्णसेविनाम् । कदाचिदापत्कालेऽपि स्वधर्माच्यावकं मुने ! ॥ १२ ॥
इत्युक्त्वा स पुनः सर्वान् भक्तानवददीश्वरः । दुस्त्यजां प्रकृतिं मन्ये पुंसां सत्सङ्गिनामपि ॥ १३ ॥
सत्सङ्गे स्वार्थबुद्धिः स्याद्यस्य तस्य तु सा व्रजेत् । यथोत्तमक्षितिभृतस्तस्य सम्बन्धिनां तथा ॥ १४ ॥

सदा । दृशिर्दृष्टिः । स्यात् । सर्वदा तत्पालनानुसन्धानं सम्यक् तिष्ठेदित्यर्थः । तेभ्यो हरिवाक्येभ्यः । अधिकम् । अथवा । न्यूनम् । वर्त्तनम् । कर्हिचित् । नैव स्यात् ॥ ११ ॥ एतदिति । हे मुने ! । एतदीदृशमेव । लक्षणम् । कृष्णसेविनां साक्षाद्भगवदुपासकानां साधूनाम् । कदाचिदापत्कालेऽपि । स्वधर्माच्यावकं स्वधर्म-रूपनियमेभ्यश्चयवनाविधापकम् । तत् सतः स्वधर्मान्न पातयतीत्यर्थः । विज्ञेयम् । हि । इति द्वयोरेकसम्बन्धः ॥ १२ ॥ इतीति । इत्यमुना प्रकारेण । उक्त्वा शुका-नन्दमुनिप्रश्नोत्तरं कृत्वेत्यर्थः । ईश्वरः प्रत्यक्षपरमेश्वरः । स श्रीहरिः । पुनः । सर्वान् । भक्तान् । अवदत् । हे भक्ताः । सत्सङ्गिनामपि । पुंसां नृणाम् । प्रकृतिं स्वभावम् । दुस्त्यजाम् । मन्ये ॥ १३ ॥ सत्सङ्ग इति । यथा । उत्तमक्षितिभृतो मत्पार्श्वेऽवस्थितस्यास्योत्तमनृपतेः । तस्योत्तमनृपतेः । सम्बन्धिनां जयाललितादीनाम् । यथा । तथा । यस्य सत्सङ्गिनः । सत्सङ्गे । स्वार्थबुद्धिः स्वकीयात्यन्तिककल्याणरूपप्रयोजननिष्पत्तिमतिः । स्यात् । तस्य तु । सा प्रकृतिः । व्रजेदपयायात् ॥ १४ ॥

दृष्टान्तं विवृण्वन्नेतदेव स्पष्टमाह त्रिभिः । एतेषामिति । एतेषामुत्तमनृपादीनाम् । स्वगृहे । अस्माकम् । स्थापनलक्षणः । स्वार्थः । वर्त्तते । अतो हेतोः । यत् । असभ्यम् । रोचते । तत् । कुर्वते एते विदधते । हि ॥ १५ ॥ नेति । एते उत्तमनृपादयः । आत्मरोचकं स्वरुचिकरम् । किञ्चित्किमपि कर्म । क्वचित्कदाचिदपि । न तु नैव कुर्वते । अतो हेतोः । एतेषाम् । प्रकृतिः । सुत्यजा सुखेन त्यक्तुं योग्या । अभूत् । इतीत्थम् । ईर्यते ॥ १६ ॥ एवमिति । एवममुना प्रकारेणैव । ये सत्सङ्गिनः पुमांसः । अत्रास्मिन् । सत्सङ्गे । स्वार्थम् । मन्येरन् । तेषां सत्सङ्गिनाम् । पुंसां तु । सा प्रकृतिः । सुत्यजैव । स्यात् । न संशयः ॥ १७ ॥ भयेनेति । भयेन केषांचिद्भीत्यापि । तत्त्यागः प्रकृतित्यजनम् । अस्ति । किन्तु । असौ प्रकृतित्यागः । सर्वकालिकः । नास्ति । यस्माद्भयोत्पत्तिः स यावन्निकटस्थितः स्यात्तावत्तद्भीत्या स्वप्रकृतिं त्यजेद्यदा सोऽन्यत्र यायात्तदा पुनः स्वप्रकृतियुतः स्यादतोऽसौ तत्त्यागोऽसार्वकालिक इत्यर्थः । अत्र दृष्टान्तमाह । राजभयान्नृपतेर्भयतः । क्वचित् । तस्कराणाम् । चौर्यत्याग इव ॥ १८ ॥ दुःस्वभावेति । किञ्च । मया । दुःस्वभावापनोदार्थमसत्प्रकृतित्याजनार्थम् । प्रोक्ताः ।

एतेषां स्वगृहेऽस्माकं स्वार्थः स्थापनलक्षणः । वर्त्ततेऽतो यदसभ्यं रोचते तद्धि कुर्वते ॥ १५ ॥ न त्वेते किञ्चिदप्यात्मरोचकं कुर्वते क्वचित् । अतः प्रकृतिरेतेषां सुत्यजाऽभूदितीर्यते ॥१६॥ एवमेव हि सत्सङ्गे मन्येरन्स्वार्थमत्र ये । तेषां तु सुत्यजा पुंसां सा स्यादेव न संशयः ॥ १७ ॥ भयेनाप्यस्ति तत्त्यागो न त्वसौ सार्वकालिकः । चौर्यत्यागो राजभयात्तस्कराणामिव क्वचित् ॥१८॥ दुःस्वभावापनोदार्थं मया मर्मभिदो गिरः । प्रोक्ताः श्रुत्वाऽपि यो ग्लानिं नाप्नुयान्मनसि क्वचित् ॥१९॥ तस्योपरि तु मे प्रीतिरस्ति स्वाभाविकी ध्रुवम् । स्वप्नेऽप्यविस्मृता क्वापि नापहार्या च केनचित् ॥२०॥ इत्युक्त्वा निजभक्तानां कतीनांचित् स सर्ववित् । श्रेष्ठान्यङ्गान्यचकथद् बद्धानि निजयोगतः ॥२१॥ श्रद्धाऽस्त्यङ्गं जयायाश्च रमायास्त्याग एव च । मत्प्रीतिर्ललिताया-यास्तु श्रेष्ठमङ्गं हि विद्यते ॥२२॥ नित्यानन्दस्यापि मुनेरस्त्यङ्गं प्रीणनं मम । ब्रह्मानन्दस्य सत्सङ्गमर्यादारक्षणाग्रहः ॥ २३ ॥

मर्मभिदः । गिरः । श्रुत्वापि । यो भक्तः । मनसि । ग्लानिम् । क्वचित् । नाप्नुयात् । तस्येत्युत्तरेण सम्बन्धः ॥ १९ ॥ तस्येति । तस्य भक्तस्य । उपरि तु । मे मम । प्रीतिः प्रसन्नता स्नेहो वा । स्वाभाविकी । ध्रुवमेव । अस्ति । सा च । स्वप्नेऽपि । अविस्मृता । अस्ति । क्वापि । कदाचिदपि । केनचिन्निमित्तेनापि । अपहार्याऽपनोद्या । नास्ति ॥ २० ॥ इतीति । इत्यमुना प्रकारेण । उक्त्वा । सर्ववित् । स श्रीहरिः । कतीनांचित् । निजभक्तानाम् । निजयोगतः स्वकीयसम्बन्धात् । बद्धानि । श्रेष्ठानि । अङ्गानि साहजिकीः प्रकृतीः । अचकथत् स्वभक्तानवदत् ॥ २१ ॥ तान्येवाह सप्तभिः । श्रद्धेति । हे भक्ताः । जयाया उत्तमनृपतेर्ज्येष्ठभगिन्याः । श्रद्धा । अङ्गम् । अस्ति । रमायाः । त्याग एव । अङ्गम् । अस्ति । ललितायाः । मत्प्रीतिः । अङ्गम् । विद्यते । श्रेष्ठमिति सर्वत्रान्वेतव्यम् ॥ २२ ॥ नित्यानन्दस्येति । नित्यानन्दस्य । मुनेरपि । मम । प्रीणनम् । अङ्गम् । अस्ति । ब्रह्मानन्दस्य मुनेः । सत्सङ्गमर्यादारक्षणाग्रहः । अङ्गम् । अस्ति ॥२३॥

ममेति । मुक्तानन्दस्य मुनेः । मम । प्रीतिः । विश्वासश्च । अङ्गम् । वर्त्तते । सोमवर्मणः । सर्वदा । एकस्थितिः स्वधर्मादिमर्यादायां सर्वदैकरूपतयाऽवस्थानम् । अङ्गम् । अस्ति ॥ २४ ॥ यथेति । यथा । हरिः । प्रसन्न । स्यात् । तथा । यदि । मद्वर्त्तनम् । स्यात् । तदा । युक्तम् । इत्येवंविधम् । चैतन्यानन्दयोगिनः अङ्गम् । अस्ति ॥ २५ ॥ स्वयमिति । स्वयम्प्रकाशानन्दस्य मुनेः । माहात्म्यज्ञानसहितः । साक्षात्कृष्णस्य । निश्चयः । मुख्यं श्रेष्ठम् । अङ्गम् । वर्त्तते ॥ २६ ॥ आत्मानन्दस्येति । महतो वृद्धस्य । आत्मानन्दस्य मुनेः । मद्वाक्यस्य । अनतिक्रमोऽनुल्लङ्घनम् । मुख्यमङ्गमस्ति । हेमन्तराज्ञो हेमन्तसिंहनृपतेः । मनसः । कृष्णान्यार्थेषु श्रीहरीतरमायिकपदार्थेषु । अबन्धनं बन्धनं यथा न स्यात्तथाभावः । मुख्यमङ्गमस्ति ॥ २७ ॥ ममेति । उत्तमभूपतेः । मम । मदीयानाम् । महताम् । साधूनां चापि । हृदये । दृढः पर्वतवत्स्थिरः । भूयानतिशयितः । विश्वासः । अङ्गम् । अस्ति ॥ २८ ॥ एवमिति । एवममुना प्रकारेण । अन्येषाम् । स्वसेविनां

मम प्रीतिश्च विश्वासो मुक्तानन्दस्य वर्त्तते । अङ्गमेकस्थितिश्चास्ति सर्वदा सोमवर्मणः ॥ २४ ॥ यथा हरिः प्रसन्नः स्यात्तथा मद्वर्त्तनं यदि । स्यात्तदा युक्तमित्यङ्गं चैतन्यानन्दयोगिनः ॥ २५ ॥ स्वयम्प्रकाशनन्दस्य मुख्यमङ्गं च वर्त्तते । माहात्म्यज्ञानसहितः साक्षात्कृष्णस्य निश्चयः ॥ २६ ॥ आत्मानन्दस्य महतो मद्वाक्यस्यानतिक्रमः । हेमन्तराज्ञो मनसः कृष्णान्यार्थेष्वबन्धनम् ॥ २७ ॥ मम चापि मदीयानां साधूनां महतां दृढः । विश्वासो हृदये भूयानङ्गमुत्तमभूपतेः ॥ २८ ॥ एवमङ्गानि मुख्यानि सोऽन्येषां च स्वसेविनाम् । कथयित्वाऽथ महतः स्वभक्तान्पुनराह तान् ॥ २९ ॥ युष्माकमीदृशाङ्गानामपि कर्हिचिदापदि । देशकालादिवैषम्ये स्थितिर्नैवेदृशी भवेत् ॥ ३० ॥ विदुषामप्यविस्रब्धः षड्वर्ग इति वाक्यतः । स्यात्तदा मायिकार्थैर्वो बन्धनं नात्र संशयः ॥ ३१ ॥ तस्मिंस्तु समये यस्य ज्ञानांशाधिकता भवेत् । न तस्य बन्धनं क्वापि विषयैर्मायिकैर्भवेत् ॥ ३२ ॥

स्वभक्तनां गोपालानन्द—शुकानन्दादि—स्वान्तिकवासिनाम् । मुख्यानि । अङ्गानि । स श्रीहरिः । कथयित्वा । पुनः । तान् पूर्वोक्तान् । महतः । स्वभक्तान् । आह ॥ २९ ॥ युष्माकमिति । ईदृशाङ्गानामेवंविधाङ्गवतामपि । युष्माकम् । कर्हिचित् । देशकालादिवैशम्ये । आपदि । ईदृशी । स्थितिः । नैव भवेत् ॥ ३० ॥ विदुषामिति । षड्वर्गः समनस्कानि ज्ञानेन्द्रियाणीत्यर्थः । विदुषां ज्ञानिभक्तानामपि । अविस्रब्धोऽविस्रम्भणीयः । अविश्वसनीय इति यावत् । इति वाक्यत इत्थंभूताच्छ्रीमद्भागवतवाक्याद्धेतोः तदाऽऽपत्काले । मायिकार्थैर्मायिकैः पञ्चविषयैः । वो युष्माकम् । बन्धनम् । स्यात् । अत्र संशयः । नास्ति ॥ ३१ ॥ तस्मिन्निति । तस्मिन्नापत्प्राप्तिरूपे । समये तु । यस्य भक्तस्य । ज्ञानांशाधिकता एकान्तिकतासिद्धिहेतुषु धर्मादिचतुर्षु वर्त्तमानस्य ज्ञानरूपभागस्यात्याधिक्यम् । भवेत् । तस्य भक्तस्य । क्वापि कदाचिदपि । मायिकैः । विषयैः शब्दादिभिः । बन्धनम् । न भवेत् ॥ ३२ ॥

ननु कस्तर्हि तथाविधो ज्ञानांश इत्याशङ्कायामाह त्रिभिः । ज्ञानेति । हे भक्ताः ! । ज्ञानांशस्तु । स्वस्य । आत्मनः क्षेत्रज्ञस्य । यथावद्यथार्थतया । रूपवेदनं स्वरूपवेदनम् । देहस्य । दैहिकानां च । अञ्जसा तत्त्वतः । स्वरूपज्ञानम् ॥ ३३ ॥ विराडिति । विराट्सूत्राव्याकृतानां वैराजपुरुषस्य विराडादिदेहत्रयाणाम् । चकारान्महदादितत्त्व-सहितानां प्रधानपुरुषाणाम् । प्रकृतेर्महामायायाः । पुरुषस्य महापुरुषस्य । साक्षाद्धरेः । अक्षरब्रह्मणोऽक्षरब्रह्माख्यस्य । धाम्नश्च । वेदनं यथार्थतो ज्ञानम् ॥ ३४ ॥ तदिति । तत्परस्याक्षरब्रह्मणोऽपि स्वरूपस्वभावादिभिरत्युत्कृष्टस्य । दिव्यमूर्त्तेः । हरेः साक्षात्पुरुषोत्तमस्य चापि । यथार्थतः । ज्ञानम् । इत्याद्येतत्प्रभृति । सकलम् । यत् । स आत्मप्रभृतिसर्वेषां यद्वेदनं तदित्यर्थः । ज्ञानांशः । उच्यते ॥ ३५ ॥ तस्येति । तस्य ज्ञानांशस्य । अतिदाढर्यम् । यस्य । भक्तस्य । स्यात् । स भक्तः । कर्हिचित् । न मुह्येत् । हि । किञ्च । तस्मिन् ज्ञानांशे । सति । यत् । वैराग्यम् । भवेत् । तद्वैराग्यम् । उत्तमम् । खलु ॥ ३६॥ वैराग्यमिति । तं ज्ञानांशं ।

ज्ञानांशस्त्वात्मनः स्वस्य यथावदपवेदनम् । देहस्य दैहिकानां च स्वरूपज्ञानमञ्जसा ॥ ३३ ॥ विराट्सूत्राव्या-कृतानां प्रकृतेः पुरुषस्य च । अक्षरब्रह्मणः साक्षाद्धरेधाम्नश्च वेदनम् ॥ ३४ ॥ तत्परस्य हरेश्चापि दिव्यमूर्त्ते-र्यथार्थतः । ज्ञानमित्यादि सकलं यत्स ज्ञानांश उच्यते ॥ ३५ ॥ तस्यातिदार्ढ्यं यस्य स्यात्स न मुह्येद्धि कर्हिचित् । तस्मिन्सति च वैराग्यं यद्भवेत्तत्खलूत्तमम् ॥ ३६ ॥ वैराग्यं तं विना यत्स्यात्तत्तु निर्बलमीयताम् । नश्येद्रम्यार्थदृष्ट्यापि दीपार्चिर्वायुनेव तत् ॥ ३७ ॥ ज्ञानांशजं बलिष्ठं तद्दिव्यार्थैर्नापि हन्यते । सामुद्रैरम्बु-भिरपि यथैव वडवानलः ॥ ३८ ॥ ईदृग्ज्ञानांशदार्ढ्यं वो हृदि नित्यं भवेदिति । बहुशः क्रियते वार्त्ता मयेयं भवतां पुरः ॥३९॥ ईदृग्ज्ञानांशहीनास्तु स्युर्वै देहाभिमानिनः । मायिकार्थप्रसक्ताश्च भक्तास्ते प्राकृताः स्मृताः ॥ ४० ॥ इति वार्त्तां विधायासौ क्षणान्तेऽपि पुनर्हरिः । वार्त्तां चकार कृपया भक्तानानन्दयन्निजान् ॥ ४१ ॥

विना । यत् । वैराग्यम् । तद्वैराग्यं तु । निर्बलम् । ईयताम् । तज्ज्ञानांशरहितनिर्बलवैराग्यम् । वायुना । दीपार्चिरिव । रम्यार्थदृष्ट्यैव हि रमणीयविषयसमीक्षण-मात्रतोऽपि । नश्येत् ॥ ३७ ॥ ज्ञानेति । यथा । वडवानलः । सामुद्रैः क्षारोदधिसम्बन्धिभिरपि । अम्बुभिर्जलैः । न हन्यते । तथा । ज्ञानांशजम् । बलिष्ठम् । तद्वैराग्यम् । दिव्यार्थैः पारलौकिकैर्दैवभोग्यार्थैरपि । न हन्यते ॥ ३८ ॥ ईदृगिति । ईदृग्ज्ञानांशदार्ढ्यम् । वो युष्माकम् । हृदि । भवेत् । इति हेतोः । मया । इयं ज्ञानांशसम्बन्धिनी । वार्त्ता । भवताम् । पुरोऽग्रे । नित्यं प्रतिदिनम् । बहुशोऽहोरात्रयोरपि बहुवारान् । क्रियते ॥ ३९ ॥ ईदृगिति । ईदृग्ज्ञानांशहीनाः । भक्तास्तु । देहाभिमानिनोऽहं ममता युता इत्यर्थः । मायिकार्थप्रसक्ता मायिकविषयासक्ताश्च । स्युर्भवेयुः । ते तथाविधा भक्ताः । प्राकृताः कृतभगवद्भक्तिप्रारम्भाः । स्मृताः ॥ ४० ॥ इतीति । इत्येवंविधाम् । वार्त्ताम् । विधाय । असौ हरिः । पुनरपि । निजान् । भक्तान् । आनन्दयन्सन् । कृपया । वार्त्ताम् । चकार ॥ ४१ ॥

हरेरिति । हे भक्ताः ! । हरेः । कथायाः । वार्त्तायाश्च । विशेषतः श्रवणे । यस्य भक्तस्य । यावती । प्रीतिः । स्यात् । तस्य । तावती । भवाहचिः संसारे-ऽप्रीतिः । स्यात् ॥ ४२ ॥ कामेति । किञ्च । कामलोभक्रुधादीनाम् । शत्रुणामन्तरारीणाम् । अनुपद्रवस्तत्कृतमपीडनमित्यर्थः । तावांस्तत्परिमितः । भवेत् । अतो हेतोः । सुधिया भक्तेन । ततस्तस्मिन्हरिकथावार्त्ताश्रवणे । प्रीतिः । कर्त्तव्या ॥ ४३ ॥ सेति । यस्य भक्तस्य । सा श्रवणे प्रीतिः । भवेत् । तस्यैव । महागुणाः स्वधर्मज्ञानवैराग्यादयः । विवर्धन्ते । अन्यस्य श्रवणप्रीतिरहितस्य भक्तस्य तु । कष्टसम्पादिता अपि । गुणाः स्वधर्मादयः । क्षीयन्ते ॥ ४४ ॥ गुणेति । गुणहीनस्य । पुंसो भक्तस्यापि । तस्याः श्रवणप्रीतित एव । उत्कृष्टगुणसम्प्राप्तिः । भवेत् । तत्र तस्यां श्रवणप्रीतौ । प्रमादिनः प्रमादवतो भक्तस्य । न तूत्कृष्टगुणप्राप्तिर्नैव भवेत् ॥ ४५ ॥ शास्त्र इति । शास्त्रे श्रीभागवतादौ सच्छास्त्रे । नवधा । भक्तिः । प्रोक्ता । तत्र तस्याम् । श्रुतिः श्रवणभक्तिः । आदिमा प्रथमा । प्रोक्ता । सा श्रवणभक्तिः । यस्य भक्तस्य । परिपक्वा । स्यात् । तस्य । भक्तस्य । अखिला नवाङ्गापि । सा भक्तिः । सुलभा सुसाध्या । स्यात् ॥ ४६ ॥ प्रेमेति । प्रेमान्ताः

हरेः कथाया वार्त्तायाः श्रवणे च विशेषतः । यस्य स्याद्यावती प्रीतिस्तावती स्याद्भवारुचिः ॥ ४२ ॥ कामलोभक्रुधादीनां शत्रूणां चानुपद्रवः । तावान् भवेदतः प्रीतिः कर्त्तव्या सुधिया ततः ॥ ४३ ॥ सो भवेद्यस्य तस्यैव विवर्द्धन्ते महागुणाः । क्षीयन्तेऽन्यस्य तु गुणाः कष्टसम्पादिता अपि ॥ ४४ ॥ गुणहीनस्य पुंसोऽपि तस्या एव भवेद् ध्रुवम् । उत्कृष्टगुणसम्प्राप्तिर्न तु तत्र प्रमादिनः ॥ ४५ ॥ शास्त्रे नवविधा भक्तिः प्रोक्ता तत्रादिमा श्रुतिः । सा यस्य परिपक्वा स्यात्तस्य सा सुलभाऽखिला ॥ ४६ ॥ प्रेमान्ता भक्तिभेदा ये श्रवणं तेऽखिला अपि । सर्वथैवानुवर्त्तन्ते ततस्तत्साध्यमादितः ॥४७॥ एतावती कृता वार्त्ता सङ्घे तेन तत्र तु । मध्याह्ने स पुना राज्ञ उदगास्यमगाद् गृहम् ॥ ४८ ॥ भुञ्जाना अभवंस्तस्य महावेद्यां मुनिव्रजाः । निम्बाधस्तात्ततो वेद्यां स्वासने स उपाविशत् ॥ ४९ ॥ अभितस्तं निषेदुश्च गृहस्थास्तदुपाश्रयाः । उवाचाथ सतः सर्वान् भक्तिधर्मात्मजः प्रभुः ॥ ५० ॥

प्रेमभक्त्यवसानाः । ये । भक्तिभेदाः कीर्त्तनादयः । सन्ति । अपि । ते भक्तिभेदाः । सर्वथैव । श्रवणम् । अनुवर्त्तन्ते । ततो हेतोः । तच्छ्रवणम् । आदितः प्रथमतः साध्यम् ॥ ४७ ॥ एतावतीति । एतावती । वार्त्ता । तत्र गोपीनाथालये । सङ्घे सङ्घकाले । तेन श्रीहरिणा । कृता । ततः स स्वावासमगमदिति बोध्यम् । मध्याह्ने । स श्रीहरिः । पुनः । उदगास्यमुदग्द्वारम् । राज्ञ उत्तमनृपतेः । गृहम् । अगात् ॥ ४८ ॥ भुञ्जाना इति । तस्योदगास्योत्तमभवनस्य । महावेद्यां बाह्यवेदि-कायाः समीपवर्त्तिन्यधःप्रदेशे । मुनिव्रजाः साधुसङ्घाः । भुञ्जानाः । अभवन् । ततः साधून् परिवेष्य हस्तक्षालनविधानानन्तरम् । स श्रीहरिः । निम्बाधस्तात् । वेद्याम् । स्वासने स्वास्तृते पर्यङ्कासने । उपाविशत् ॥ ४९ ॥ अभित इति । तदुपाश्रयाः प्रत्यक्षस्य श्रीहरेः समाश्रिताः । गृहस्थाः । तं श्रीहरिम् । अभितः । निषेदुः । अथानन्तरम् । भक्तिधर्मात्मजः । प्रभुः श्रीहरिः । सर्वान् । सतः । उवाच ॥ ५० ॥

नरा इति । हे साधवः ! । अत्र । सत्सङ्गे । मच्छ्रिताः । ये । नराः । स्युः । तैस्तु । कृष्णभक्तानाम् । नारीणाम् । अतिमाहात्म्यमतिशयितो महिमा तु । सर्वथा । नेयतां नैव बुध्यताम् ॥ ५१ ॥ माहात्म्येति । तासां कृष्णभक्तनारीणाम् । माहात्म्यातिशयज्ञानात् । हृदि । चिन्तनम् । स्यात् । ततस्तच्चिन्तनात् । स्वप्ने । दर्शनं तत्समीक्षणम् । स्यात् । ततस्तासां स्वप्ने दर्शनात् । महत् । विघ्नम् । भवेत् । तदुपभोगसङ्कल्पेनात्यनर्थापत्तिः स्यादित्यर्थः ॥ ५२ ॥ अत इति । अतो हेतोः । इमा नार्यः । भक्ताः । सन्ति । इतीत्थम् । सामान्यतः । गम्यतां तन्माहात्म्यं बुध्यताम् । विशेषेण तासां विशेषमाहात्म्यज्ञानेन । तद्वार्त्ताकथनाद्यपि नतु नैव कार्यम् ॥ ५३ ॥ भक्ताभिरिति । एवममुना प्रकारेणैव । सत्सङ्गे । भक्ताभिः साक्षाद्भगवदाश्रिताभिः । स्त्रीभिरपि । हरिसेविनां हरिभक्तानाम् । पुंसाम् । विशेषमाहात्म्यम् । सर्वथा । नावगम्यम् । हि ॥ ५४ ॥ कृष्णेति । नारीणाम् । पुमांसः । कृष्णभक्तौ । विघ्नरूपिणः । भवन्ति । तेषां पुंसाम् । ता नार्यः कृष्ण-

नराः स्युर्येऽत्र सत्सङ्गे मच्छ्रितास्तैस्तु सर्वथा । नारीणां कृष्णभक्तानां नातिमाहात्म्यमीयताम् ॥ ५१ ॥
माहात्म्यातिशयज्ञानात्तासां स्याच्चिन्तनं हृदि । ततः स्वप्ने दर्शनं स्यात्ततो विघ्नं महद्भवेत् ॥ ५२ ॥ अतः
सामान्यतो भक्ता इमाः सन्तीति गम्यताम् । न तु कार्यं विशेषेण तद्वार्त्ताकथनाद्यपि ॥ ५३ ॥ भक्ताभिः
स्त्रीभिरप्येवं सत्सङ्गे हरिसेविनाम् । पुंसां विशेषमाहात्म्यं नावगम्यं हि सर्वथा ॥ ५४ ॥ कृष्णभक्तौ हि
नारीणां पुमांसो विघ्नरूपिणः । भवन्ति तेषां ताश्चेति ज्ञेयं सर्वैर्मुमुक्षुभिः ॥ ५५ ॥ इति प्रभोस्तस्य निशम्य
वाक्यं सुधासमं साधुजनाः समस्ताः । गृहाश्रमस्था अपि भक्तिभाजो मोदं महान्तं हृदयेऽलभन्त ॥ ५६ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते द्विशताधिकसप्तचत्वारिंशस्तरङ्गः ॥ २४७ ॥ २४ ॥

शकाब्दे विक्रमार्कस्य भूताष्टवसुभूमिते । ऊर्जशुक्लदशम्यां तु वचोऽमृतमिदं हरेः ॥ १ ॥

भक्तौ विघ्नरूपाः । भवन्ति । इतीत्थम् । सर्वैः । मुमुक्षुभिः । भक्तैर्भक्ताभिश्चेत्यर्थः । ज्ञेयम् ॥ ५५ ॥ इतीति । इत्येवंविधम् । प्रभोः । तस्य श्रीहरेः । सुधासमम् । वाक्यम् । निशम्य । भक्तिभाजः । समस्ताः । साधुजनाः । गृहस्था अपि । हृदये । महान्तम् । मोदम् । अलम्भत ॥ ५६ ॥ सुखयामास यः स्वीयान्स्वकीयवचनामृतैः । कृपया श्रीहरिर्मेऽस्तु सुखदायी सदैव सः ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तक श्रीहर्येकान्तिकोपासक श्रीहरिकृष्णभगवत्स्वनुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां द्विशताधिकसप्तचत्वारिंशस्तरङ्गः ॥ २४७ ॥ २४ ॥

हरेः प्रार्थ्यं फलं यत्तु भक्त्यादेः साधनस्य च । हरेः प्रसादहेतुश्चानन्यभक्तस्य लक्षणम् ॥ १ ॥ श्रीहरेरप्रियत्वस्य प्रियत्वस्य च हेतवः । दोषा गुणाश्चेति सर्वं पञ्चविंशेस्मृतं स्फुटम् ॥ २ ॥ शकेति । शकेति पूर्वार्द्धे व्याख्यातम् । ( १८८५ ) ऊर्जशुक्लदशम्यां कार्त्तिकमासस्य शुक्लपक्षागतदशमीतिथौ । इदम् । हरेः । वचो-

ऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ दुर्गपुरे । उत्तमस्य राज्ञः । दुर्गे । प्रत्यगास्यस्य पश्चिमद्वारस्य । सद्मनस्तस्यैव भवनस्य । वितर्दौ वाह्यवेदिकायाम् । सुमञ्चके स्वास्तृते पर्यङ्कासने । स श्रीहरिः । व्यराजत ॥ २ ॥ सितेति । सिताम्बरः । परिहितसकलश्वेतवसनः । त्यागिभिः । गृहिभिः । नानादेशागतैरितिशेषः । भक्तैः । च । वृतः सभायां परिवेष्टितः । स्वामी । स श्रीहरिः । पुरतः । निषण्णान् । सतः साधून् ! स्वयमेव । अब्रवीत् ॥ ३ ॥ भक्तिरिति । हे साधवः ! । इह सत्सङ्गे । मुमुक्षुभिः । नरैर्भक्तैः । भक्तिः । श्रद्धा । धर्मादि च । यद्यत् । कृष्णसम्बन्धि । किञ्चन किमपि । सत्कर्म । क्रियते ॥ ४ ॥ तदेति । सर्वम् । तत्तत्सत्कर्म । फलेच्छारहितम् । सदा । विधातव्यम् । इतीत्थम् । सच्छास्त्रे । उक्तम् । अस्ति । तत् । सत्यमेव । उक्तम् । अस्ति । इति द्वयोरेकसम्बन्धः ॥५॥ किन्त्विति । किन्तु । तैर्भक्त्यादिभिः सत्कर्मभिः । स्वस्मिन् । भगवतः । प्रसादः प्रसन्नता तु । अर्थ्यः सम्प्रार्थनीय एव । अन्यथा भगवत्प्रसन्नतारूपफलासम्प्रार्थने । तद्भक्त्यादिरूपम् । कर्म सत्क्रिया । तामसं भगवत्प्रसन्नताफलस्याज्ञानात्तमोगुणकार्याज्ञानप्रधानत्वेन तमोगुणात्मकमित्यर्थः । स्याद्भवेत् । इतीत्थम् । अवधार्यम् । अत्रावधा-

तत्र दुर्गपुरे दुर्गे उत्तमस्य स सद्मनः । वितर्दौ प्रत्यगास्यस्य व्यराजत सुमञ्चके ॥ २ ॥ सिताम्बरो वृतो भक्तैस्त्यागिभिर्गृहिभिश्च सः । स्वयमेवाब्रवीत्स्वामी निषण्णान् पुरतः सतः ॥ ३ ॥ भक्तिः श्रद्धा च धर्मादि यद्यत्सत्कर्म किञ्चन । क्रियेत कृष्णसम्बन्धि नरैरिह मुमुक्षुभिः ॥४॥ तत्तत्सर्वं विधातव्यं फलेच्छारहितं सदाः । इत्युक्तमस्ति सच्छास्त्रे सत्यमेवोक्तमस्ति तत् ॥ ५ ॥ किन्तु स्वस्मिन् भगवतः प्रसादस्त्वर्थ्य एव तैः । अन्यथा तामसं कर्म तत्स्यादित्यवधार्यताम् ॥६ ॥ प्रसन्नता भगवतो महद्भिश्चोपचारकैः । पूजकेषु भवेत्तस्य न तु रङ्केषु देहिषु ॥ ७ ॥ इति शङ्का न कर्त्तव्यो यतोऽसौ भक्तवत्सलः । श्रद्धया पूजयेद्यः कस्तस्मिन्नेव प्रसीदति ॥ ८ ॥ पत्रं पुष्पं फलं वापि श्रद्धाभक्तिसमन्वितः । अतिरङ्कोऽपि यो दद्यात् प्रीत्या गृह्णाति तत्प्रभुः ॥ ९ ॥

रणार्थकैवशब्देन भगवद्भक्तैः सर्वथा भगवत्प्रसन्नतैवेष्टव्या यतो भक्तानां वाञ्छितं सचतुर्वर्गफलं तु सुलभमेवास्तीति बुध्यते । तथाचोक्तं श्रीभागवते । "किमलभ्यं भगवति प्रसन्ने श्रीनिकेतने । तथापि तत्परा राजन्न हि वाञ्छन्ति किञ्चन । किं दुरापं मयि प्रीते तथापि विबुधर्षभाः ! । मय्येकान्तिमतिर्नान्यद् मतो वाञ्छति तत्त्ववि"दिति ॥ ६ ॥ प्रसन्नतेति । किञ्च । भगवतः । प्रसन्नता । महद्भिः । उपचारकैः । तस्य भगवतः । पूजकेषु भक्तेष्वेव । भवेत् । रङ्केषु महोपचाराभाववत्सु दरिद्रेषु । देहिषु पुजकभक्तेषु तु । न भवेत् । इतीत्युत्तरेण सम्बन्धः ॥७॥ इतीति । इत्येवंविधा । शङ्का न कर्त्तव्या । यतो हेतोः । भक्तवत्सलः । असौ भगवान् । यः कश्चिद्भक्तः । श्रद्धया । पूजयेत्स्वं यथालब्धोपचारकैरर्चयेत् । तस्मिंस्तथाविधे पूजकभक्ते । प्रसीदत्येव ॥८॥ पत्रमिति । अतिरङ्कोऽपि । यो भक्तः । श्रद्धाभक्तिसमन्वितः सन् । पत्रं तुलसीदलादि । पुष्पं वर्षाजीवन्तीकुसुमादि । अथवा । फलं कर्कन्धूफलादिकमपि । दद्याद्भगवते समर्पयेत् । तत्तथाविधपत्रादिकम् । प्रभुः । श्रीहरिः । प्रीत्या । गृह्णाति । तथाचोक्तं भगवद्गीतायाम् । 'पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति । तदहं भक्त्युपहृतमश्नामि प्रयतात्मन" इति ॥ ९ ॥

श्रद्धेति। राज्ञा नृपतिनापि । दत्तान् । श्रद्धाभक्तिविहीनान् । महतोऽपि । उपचारकान् । नादत्ते भगवान्न गृह्णाति । हि यतः । स भगवान् । सर्वैश्वर्ययुतः । अस्ति । सर्वैश्वर्ययुतस्य हरेर्नृपार्पितमहोपचारापेक्षावर्जितत्वात्स केवलं तत्प्रेमापेक्षते इति भावः ॥१०॥ य इति । यो भक्तः । भजेत्प्रेम्णोपासीत । तस्य । भक्तस्यैव । भगवान्साक्षात्प्रभुः । अस्ति । स्वं भजते भक्तायैव प्रसन्नाविनाशिसुखं प्रयच्छति नाभक्तेभ्य इति भावः । इतीत्थम् । निश्चितमेव । जानीत । तस्माद्धेतोः । स भगवान् । अनन्यभावेनैकान्तिकभावेन । सर्वदा । भजनीयः ॥ ११ ॥ एतदेव स्पष्टमाह । दारिद्र्येति । दारिद्र्यदीर्घरोगादिविपत्तौ । अथवा । सम्पद्यकस्मान्महासम्पदुपलब्धावपि । तुल्यवृत्तिः सन् । यो भक्तः । भक्तेर्भगवदेकान्तिकोपासनायाः सकाशात् । न चलेत् । स भक्तः । अनन्यभक्तिमान् । ज्ञेयः ॥ १२ ॥ अथेति । अथानन्तरम् । रमाभक्ता रमासंज्ञाभगवदेकान्तिकभक्ता । दूरे । स्थित्वा । तं श्रीहरिम् । प्रणम्य । अपृच्छत् । हे हरे ! । त्वम् । कैः । दोषैः । अप्रसन्नः । भवेः । कैः । गुणैः । प्रसन्नः । भवेः ॥ १३ ॥ 'अनुयुक्तः स रमया भक्तयेत्थं मुनीश्वरः । हर्षयंस्तामिति प्राह निजानन्यांश्च सर्वशः' । विशेषेति । हे रमे ! । हृदि स्वमनसि । विशेषवर्त्तनेच्छा-

श्रद्धाभक्तिविहीनांस्तु महतोऽप्युपचारकान् । राज्ञाऽपि दत्तान्नादत्ते सर्वैश्वर्ययुतो हि सः ॥ १० ॥ यो भजेत्तस्य भगवानिति जानीत निश्चितम् । तस्मादन्यभावेन भजनीयः स सर्वदा ॥ ११ ॥ दारिद्र्यदीर्घरोगादिविपत्तौ वापि सम्पदि । यस्तुल्यवृत्तिर्न चलेद्भक्तेः सोऽनन्यभक्तिमान् ॥ १२ ॥ अथापृच्छद्रमाभक्ता दूरे स्थित्वा प्रणम्य तम् । कैर्दोषैरप्रसन्नस्त्वं प्रसन्नः कैर्गुणैर्भवेः ॥ १३ ॥ श्रीहरिरुवाच—विशेषवर्त्तनेच्छायां हृदि सत्यां पुनः पुनः । तदाज्ञाप्रार्थनं मत्तो यत्तन्न प्रीतये हि मे ॥१४॥ ज्ञात्वाऽपि स्वेष्टदेवं मां मद्वाकयोपरि भूरिशः । प्रत्युक्त्यानयनं युक्त्या यत्तन्न प्रीतये हि मे ॥ १५ ॥ केनचित्सह सद्वार्त्ताः कुर्वाणे मयि योऽन्तरा । भाषेत तद्भाषणं मे प्रीतये नास्ति सर्वथा ॥१६॥ भक्तिधर्मादिसत्कर्माचरणे राधिकापतेः । कृपाया एव हेतुत्वकथनं प्रीतये न मे ॥ १७ ॥ अहमेवं करिष्यामीत्यादिस्वबलजल्पनम् । न तु कार्येष्वीशबलानुसृतिस्तन्न मे प्रियम् ॥ १८ ॥

यामन्यभक्तेभ्य आधिक्येन नियमादिपालनवाञ्छायाम् । सत्याम् । पुनः पुनः । मत्तः सकाशात् । तदाज्ञाप्रार्थनं विशेषवर्त्तननिदेशयाचनम् । तत् । मे मम । प्रीतये प्रसन्नतायै । न हि नैवास्ति ॥ १४ ॥ ज्ञात्वेति । माम् । स्वेष्टदेवम् । ज्ञात्वाऽपि । मद्वाक्योपरि । भूरिशो बहुवारान् । प्रत्युक्त्यानयनम् । केनचिन्मां कस्मिंश्चित्प्रश्ने पृष्टे सति यथार्थे तदुत्तरे मया कृते सत्यपि युक्त्यन्तरानयनेन मत्कृतयथार्थोत्तरस्य खण्डनविधानमित्यर्थः । यत् । तत् । मे मम । प्रीतये । न हि नास्त्येव ॥ १५ ॥ केनचिदिति । मयि केनचित् सह । सद्वार्त्ताः । कुर्वाणे सति । यो भक्तः । अन्तरा तन्मध्ये । भाषेत् । तद्भाषणम् । मे मम । प्रीतये । सर्वथा । नास्ति ॥१६॥ भक्तीति । भक्तिधर्मादिसत्कर्माचरणे । राधिकापतेः कृष्णस्य । कृपाया एव । हेतुत्वकथनं कृष्णकृपा स्याच्चेत्तद्भक्तिधर्मादिपालनं स्यादिति कथनमित्यर्थः । मे मम । प्रीतये नास्ति ॥ १७ ॥ अहमिति । अहमेव । एवम् । करिष्यामि । इत्यादिस्वबलजल्पम् । कार्येषु भक्तिधर्मादिसत्कर्मसु । ईशबलानुसृतिः परमेश्वरबलानुसरणं

तु । न भवेत् । तदुभयम् । मे मम । प्रियम् नास्ति ॥ १८ ॥ यस्येति । यस्य भक्तस्य । भाषणादौ । मुहुः । स्वाज्ञानियता । भवेत् । कदाचिदात्मनिष्ठां कदाचिद्दास्यं कदाचित्पातिव्रत्यं चेत्येवं स्वाज्ञमनियमतया गदेदित्यर्थः । तस्य भक्तस्य । अनियततालपोऽनियततया स्वाज्ञभाषणम् । मे मम । प्रीतिकरः । नास्ति । खलु ॥ १९ ॥ व्यावहारिकेति । यस्य भक्तस्य । व्यावहारिककार्येषु तु । लज्जालस्ये । न स्याताम् । हरेः । कथाकीर्त्तनादौ तु । ते लज्जालस्ये । स्याताम् । स भक्तः । मे मम । प्रियः । नास्ति ॥ २० ॥ धर्मेति । त्यागिनो भक्तस्य । अथवा । गृहस्थस्य भक्तस्य । धर्मभक्तिविरागाद्यैः सद्गुणैः । साहङ्कारभाषणम् । यत् । तत् । मम । प्रीतिकृत् । नैवास्ति ॥ २१ ॥ य इति । यो भक्तः । गुणी धर्मादिगुणवृद्धः सन् । सभाम् । एत्य । सर्वेषाम् । पश्चात् । उपविशेत् । स्वस्य । उचिते उपवेशनयोग्ये । स्थाने तु । नोपविशेत् । स तादृशो भक्तोऽपि । मे मम । प्रीतये । न हि नैवास्ति ॥ २२ ॥ तथेति । तथा तद्वदेव । यो भक्तः । सभोपविष्टान् । महतः स्वतो गुणाधिकान्भक्तान् । कूर्परादिभिः कफोणिकाग्रप्रहारादिभिः । पराकृत्य पश्चाद्विधाय । तेषां महताम् । अग्रतः पुरःप्रदेशे । निषीदेत् । स भक्तः ।

यस्य स्वाज्ञानियतता भाषणादौ भवेन्मुहुः । तस्य चानियतालापो न मे प्रीतिकरः खलु ॥ १९ ॥ व्यावहारिककार्येषु लज्जालस्ये न यस्य तु । हरेः कथाकीर्त्तनादौ स्यातां ते स न मे प्रियः ॥ २० ॥ धर्मभक्तिविरागाद्यैर्यत्साहङ्कारभाषणम् । त्यागिनो वा गृहस्थस्य तन्नैव प्रीतिकृन्मम ॥ २१ ॥ यः सभामेत्य सर्वेषां पश्चादुपविशेदु गुणी । स्वस्योचिते न तु स्थाने सोऽपि न प्रीतये हि मे ॥ २२ ॥ तथा सभोपविष्टान् यो महतः कूर्परादिभिः । पराकृत्याग्रतस्तेषां निषीदेत्स प्रियो न मे ॥ २३ ॥ न सम्यगावृताङ्गाश्च न चाधो दृष्टयो गतौ । याः स्त्रियस्ता न मे प्रीत्यै स्युश्च कुत्सितभाषणाः ॥ २४ ॥ मद्दर्शने जायमाने तत्र कस्मिंश्चिदागते । पुंसि योषिति वा वाहे पशौ वा शुनि निर्गते ॥ २५ ॥ पुनः पुनस्तमीक्षेत हित्वा मद्दर्शनं तु यः । अत्यप्रियः स मे नूनं साधुत्वात्तं न ताडये ॥ २६ ॥

मे मम । प्रियः । नास्ति ॥ २३ ॥ नेति । याः । स्त्रियो भगवद्भक्ता नार्यः । सम्यग्यथायोग्यम् । आवृताङ्गाः वस्त्रेण प्रावृतशरीराः । न स्युः । गतौ गमने । अधोदृष्टयश्च । न स्युः । कुत्सितभाषणश्च । स्युः । तास्तथाविधाः स्त्रियः । मे मम । प्रीत्यै । न सन्ति ॥ १४ ॥ मदिति । मद्दर्शने । जायमाने सति । तत्र यत्र मद्दर्शनं जायते तस्यां सभायामित्यर्थः । कस्मिंश्चित् । पुंसि । आगते सति । अथवा । कस्यांचित् । योषिति । आगतायां सत्याम् । अथवा । वाहेऽश्वे । पशौ गवादौ । शुनि भषके च । निर्गते सति ॥ २५ ॥ पुनरिति । यो भक्तः । मद्दर्शनम् । हित्वा । पुनः पुनः । तं पुरुषादिकम् । ईक्षेत । स भक्तः । मे मम । अत्यप्रियोऽतिशयेनाप्रियोऽस्ति । नूनम् । साधुत्वान्ममसाधुभावात् । तं तथाविधं भक्तम् । न ताडये चपेटादिना न ताडनं करोमि । साधूनामन्यताडनकर्मणोऽयोग्यत्वादितिभावः । इति द्वयोरेकसम्बन्धः ॥ २६ ॥

दुःसङ्कल्पानिति । यो भक्तः । स्वके । हृदि । जायमानान् । दुःसङ्कल्पान् । कथनार्हसतां तत्कथनयोग्यसाधूनाम् । स्वनिवेदितवार्तागोपनपूर्वं तद्दुःसङ्कल्पानां सयुक्त्युपदेशैर्निवर्त्तनशक्तानां त्यागिनामित्यर्थः । अग्रे पुरतः । न ब्रूयात् । स भक्तः । मे मम । प्रियः । नास्ति ॥ २७ ॥ क्रोध इति । क्रोधः । मानश्च । अन्यभयात् । महतां साधूनाम् । अग्रतः । यत् । स्वान्तःस्थाकथनं स्वहृदयावस्थितदुःखादिकस्यानिवेदनम् । तदेतत्त्रयम् । मम । प्रीतिकरम् । नैवास्ति ॥ २८ ॥ तथेति । तथैव । हरिभक्तानाम् । परस्परम् । समत्वेन समानभावेन । एकैकगौरवाज्ञानमपि । मम । प्रीतये । न भवति ॥ २९ ॥ मदिति हे रमे ! । इत्यमुना प्रकारेण । मया । मदप्रीतेः । हेतुभूताः । दोषाः । उदिताः । एभ्यो दोषेभ्यः । विपरीताः । मत्प्रीतिहेतवः । गुणाः । ज्ञेयाः । मदुक्तमदप्रीतिहेतुभूतदोषाणामेकवारं विशेषवर्त्तनेच्छाप्रार्थनारूपादिना वैपरीत्यविधानमेव गुणा बोध्या इत्यर्थः ॥ ३० ॥ नीपीयेति । इत्येवंविधम् । जगद्गुरोः । अमुष्य । श्रीहरेः । वाक्यामृतम् । निपीय । भक्ता । सा रमा । मुदम् । आप । सभोपविष्टाः । तद्भक्तिभाजः । अन्ये । सर्वे । सन्तः साधवः । गृहिणश्चापि । मुदमापुः

दुःसङ्कल्पांश्च यो भक्तो जायमानान् हृदि स्वके । कथनार्हसतामग्रे न ब्रूयात्स प्रियो न मे ॥ २७ ॥ क्रोधो मानश्चान्यभयात्स्वान्तस्थाकथनं तु यत् । महतामग्रतस्तच्च नैव प्रीतिकरं मम ॥ २८ ॥ तथैव हरिभक्तानां समत्वेन परस्परम् । एकैकगौरवाज्ञानमपि न प्रीतये मम ॥ २९ ॥ मदप्रीतेर्हेतुभूता दोषा इत्युदिता मया । विपरीता गुणा ज्ञेया एभ्यो मत्प्रीतिहेतवः ॥ ३० ॥ निपीय वाक्यामृतमित्यमुष्य जगद्गुरोः साऽऽप मुदं हि भक्ता । अन्ये च सन्तो गृहिणोऽपि सर्वे तद्भक्तिभाजश्च सभोपविष्टाः ॥ ३१ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते द्विशताधिकाष्टचत्वारिंशस्तरङ्गः ॥ २४८ ॥ २५ ॥

शकाब्दे विक्रमार्कस्य भूताष्टवसुभूमिते । एकादश्यां प्रबोधन्यां वचोऽमृतमिदं हरेः ॥ १ ॥
तत्र दुर्गपुरे दुर्गे उत्तमस्य महीभुजः । गोपीनाथालयेऽराजत्स निजैः परितो वृतः ॥ २ ॥

॥ ३१ ॥ हेतून्स्वस्याप्रियत्वस्य प्रियत्वस्य च यो हरिः । दोषान् गुणान्स्वकीयानां स्वेभ्यः प्राह दयानिधिः ॥ १ ॥ स मां तेभ्यस्तु दोषेभ्यो रक्षत्वेव सदा तथा । गुणांस्तान्मे ददात्वेव भक्तिधर्मात्मजः प्रभुः ॥ २ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तक श्रीहर्येकान्तिकोपासक श्रीहरिकृष्णभगवन्मातुलरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां द्विशताधिकाष्टचत्वारिंशस्तरङ्गः ॥ २४८ ॥ २५ ॥

मान्यानां हरिवत्तस्य भक्तानां लक्षणानि च । अपि देशादिवैषम्ये यस्य धर्मस्थितिर्दृढा ॥१॥ लक्षणं तस्य च तथा स्वधर्मे या च विघ्नता । अविघ्नता या च तयोर्लक्षणं तत्त्वतस्तु यत् ॥ २ ॥ हरेरप्रियभक्तस्य प्रियभक्तस्य लक्षणम् । एतत्सर्वं तु षड्विंशे स्पष्टत्वेन प्रकीर्त्तितम् ॥ ३ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८८५) प्रबोधन्याम् । एकादश्यां कार्त्तिकमासस्य शुक्लपक्षीयैकादशीतिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमस्य । मही-

भुजः । दुर्गे । गोपीनाथालये । चक्रकासने इतिशेषः । निजैर्नानादेशागतत्यागिगृहिस्वाश्रितजनैः । परितः । वृतः । सभायां संवेष्टितः । स श्रीहरिः । अराजत् ॥ २ ॥ सितेति । सिताम्बरः परिहितसकलश्वेतवसनः । प्रसन्नमुखाम्बुजः । स श्रीहरिः । सर्वान् । भक्तान् । उवाच । हे भक्ताः ! । वैष्णवा भगवद्भक्ताः साधवः । विष्णुवद्भगवत्समानतया । मान्याः । इतीत्थम् । शास्त्रे स्कान्दादिसच्छास्त्रे । निरूप्यते । तथा च स्कान्दे । "वैष्णवा विष्णुवत्पूज्या मम मान्या विशेषतः । येषां कृतेऽपमाने तु विनाशो जायते ध्रुवमिति' । बृहन्नारदीये च । 'अहमेव द्विजश्रेष्ठ नित्यं प्रच्छन्नविग्रहः । भगवद्भक्तरूपेण लोकान् रक्षामि सर्वदेति' ॥ ३ ॥ तेषामिति । तेषां वैष्णवानाम् । मुख्यानि । कतिचित् । लक्ष्माणि लक्षणानि । वो युष्मभ्यम् । कथयामि । ते वैष्णवाः । सर्वदा । कृष्णसम्बन्धिक्रियासु श्रीकृष्णसम्बन्धिनीषु श्रवणादिनवविधभक्तिलक्षणासु क्रियास्वेवेत्यर्थः । रतास्तत्पराः । स्युः । हि ॥ ४ ॥ बाह्येति । बाह्यान्तःकरणानां चक्षुरादीनां बाह्यकरणानां मनआदीनामन्तःकरणानां चेत्यर्थ । याः । क्रिया मायिकार्थदर्शनसङ्कल्पनादीनि कर्माणि । स्युः । तासु क्रियासु । ते । सर्वदा । तद्वशा वैराग्यबलेन तत् क्रियाधीनाः । न भवेयुः । ताः क्रियाः

सिताम्बरः प्रसन्नास्यो भक्तान् सर्वानुवाच सः । वैष्णवा विष्णुवन्मान्या इति शास्त्रे निरूप्यते ॥ ३ ॥
तेषां लक्ष्माणि मुख्यानि कतिचित्कथयामि वः । सर्वदा कृष्णसम्बन्धिक्रियास्वेव रता हि ते ॥ ४ ॥
बाह्यान्तःकरणानां याः क्रियाः स्युस्तासु सर्वदा । तद्वशा न भवेयुश्च कुर्युस्तास्त्वात्मनो वशे ॥ ५ ॥
अहिंसाब्रह्मचर्यादीन् पालयेयुर्यमान् दृढम् । ब्रह्मीभूता अपि दृढं भजेयुः कृष्णमादरात् ॥ ६ ॥
एवंविधाः कृष्णभक्ता ये स्युः कृष्णैकचेतसः । त एव हरिवत्प्रीत्या मान्याः पूज्याश्च सादरम् ॥ ७ ॥
नैतेऽन्यमनुजैस्तुल्या न च देवैः समा अपि । यतस्तेष्वीदृशी नास्ति क्रियाऽतस्तद्विलक्षणाः ॥ ८ ॥
ईदृशाः पुरुषाः सेव्याः पुरुषैस्तु मुमुक्षुभिः । ईदृश्यो योषितः सेव्या योषिद्भिश्च मुमुक्षुभिः ॥ ९ ॥

। आत्मनः स्वस्य । वशे आधीने । कुर्युः ॥ ५ ॥ अहिंसेति । ते । अहिंसाब्रह्मचर्यादीन् । यमान्सत्सङ्गप्रसिद्धान् नियमान् । दृढं यथातथा । पालयेयुः । ब्रह्मीभूताः साक्षाद्भगवदुपासनया ब्रह्मभावं प्राप्ता अपि । कृष्णं श्रीहरिम् । आदरात् । दृढम् । भजेयुः ॥ ६ ॥ एवमिति एवंविधाः । कृष्णैकचेतसः साक्षाच्छ्रीकृष्णस्वरूपैकमानसाः । कृष्णभक्ताः साधवः । स्युः । त एव । हरिवत् । प्रीत्या । सादरं यथातथा । मान्याः । पूज्याश्च । सन्ति ॥ ७ ॥ चति । एते एवंविधाः । कृष्णभक्ताः । अन्यमनुजैः । तुल्याः । न सन्ति । देवैः । समास्तुल्याश्चापि । न सन्ति । यतो हेतोः । तेषु मनुजदेवेषु । ईदृश्युक्तविधकृष्णभक्तसदृशी । क्रिया । नास्ति । अतो हेतोः । एते । तद्विलक्षणास्तेभ्यो मनुष्यदेवेभ्योः विलक्षणस्वभावाः । सन्ति ॥ ८ ॥ इदृशा इति । ईदृशा एवंविधाः । पुरुषाः कृष्णभक्ताः साधवः । मुमुक्षुभिः । पुरुषैः । सेव्याः । ईदृश्य एवंविधलक्षणाः । योषितः श्रीकृष्णभक्तानार्यः । मुमुक्षुभिः । योषिद्भिः । सेव्याः ॥ ९ ॥

आत्मानन्द इति । अथानन्तरम् । आत्मानन्दः । साधुः । विहितानतिः कृतप्रणामः सन् । तं श्रीहरिम् । पप्रच्छ । हे प्रभो ! । इह सत्सङ्गे । सत्सङ्गिनः । बहवः पुरुषाः । सन्ति ॥१०॥ त्वदिति । एते सत्सङ्गिनः । यावत् । त्वदुक्तनियमेषु । आदरात् । वर्त्तेरन् । तावत्तु । तेषां सत्सङ्गिनाम् । विषयैः । बन्धनम् । सर्वथा । नास्ति ॥११॥ क्वचिदिति । क्वचित्कदाचित् । नियमभङ्गेऽपि त्वदुक्तनियमच्युतौ सत्यामपीत्यर्थः । भुवि । विचरतां त्वदाज्ञया त्वत्स्वरूपज्ञानोपदेशेन जनकल्याणार्थं सत्सङ्गे परिभ्रमताम् । सतां साधूनाम् । शिक्षया । कृतशोधना विहितनियमभङ्गप्रायश्चित्ताः । ते सत्सङ्गिनः । यथापूर्वम् । वर्त्तेरन् । स्वस्वनियमेषु तिष्ठेयुरतो विषयबन्धनं तेषां न स्यादिति भावः ॥१२॥ देशेति । देशकालादिवैषम्यात् । देशान्तरस्थितौ । सत्याम् । तत्र देशान्तरे । क्वचित्कदाचित् । सत्सङ्गिनाम् । नृणाम् । चकारात्साधूनाम् । सम्बन्धे । असत्यविद्यमाने सति । तदेत्युत्तरेण सम्बन्धः ॥ १३ ॥ तदेति । हे प्रभो ! । तदापि । यस्य । पुंसः । सत्सङ्गिनः । यथापूर्वम् । नियमेष्वेव । स्थितिः । भवेत् । स सत्सङ्गी । कीदृशैः । लक्षणैः । विज्ञेयः । तद्वदेतिशेषः ॥ १४ ॥ "आत्मानन्देनानुयुक्तो मुनिनेत्थं स ईश्वरः । जगादानन्दयंस्तं च परान्सर्वान्निजानिति" । धर्मेति

आत्मानन्दोऽथ साधुस्तं पप्रच्छ विहितानतिः । इह सत्सङ्गिनः सन्ति बहवः पुरुषाः प्रभो ! ॥ १० ॥ त्वदुक्तनियमेष्वेते वर्त्तेरन् यावदादरात् । तावत्तु विषयैस्तेषां बन्धनं नास्ति सर्वथा ॥ ११ ॥ क्वचिन्नियमभङ्गेऽपि सतां विचरतां भुवि । शिक्षया ते यथापूर्वं वर्त्तेरन् कृतशोधनाः ॥ १२ ॥ देशकालादिवैषम्यात्सत्यां देशान्तरस्थितौ । तत्र सत्सङ्गिनां नृणां सम्बन्धे चासति क्वचित् ॥१३॥ तदापि नियमेष्वेव यथापूर्वं स्थितिर्भवेत् । यस्य पुंसः स विज्ञेयो लक्षणैः कीदृशैः प्रभो ! ॥ १४ ॥ श्रीहरिरुवाच–धर्मांशो यस्य वर्त्तेत मनीषायां विशेषतः । आस्तिक्यं लोकलज्जा च तथा पातकभीरुता ॥ १५ ॥ देशकालादिवैषम्येऽप्यसौ भ्रश्येन्न धर्मतः । तस्य क्वापि न बन्धाय विषयाः प्रभवन्त्यतः ॥१६॥ मयराममुकुन्दाद्याः सन्ति विप्रास्तथाविधाः । निष्कुलानन्दमुख्याश्च सन्तोऽप्येकधियः सदा ॥१७॥

। हे मुने ! । यस्य सत्सङ्गिनः । मनीषायां मतौ । धर्मांशः स्वधर्मरूप एकान्तिकधर्मभागः । विशेषतः । वर्त्तेत । अस्तिक्यमिहकृतानां शुभाशुभकर्मणां फलममुत्र सुखदुःखरूपमवश्यं भोक्तव्यमस्तीति वेदनरूपाऽऽस्तिकता । लोकलज्जाऽशुभं कर्म कृत्वा लोकेभ्यो धर्मशीलेभ्यः कथं मुखं दर्शयिष्याम इत्येवंरूपा त्रपा । तथा । पातकभीरुता पापकर्माचरणतो भयशीलता । एतानि । विशेषतः । वर्त्तेरन् ॥ १५ ॥ देशेति । असावेवंगुणः सत्सङ्गी । देशादिवैषम्ये सत्यपि । धर्मतो मदादिष्टनियमेभ्यः । न भ्रश्येत् । अतो हेतोः । तस्य तथाविधस्य सत्सङ्गिनः । क्वापि कदाचिदपि । विषयाः । बन्धाय । न प्रभवन्ति समर्था नैव भवेयुरित्यर्थः । इति द्वयोरेकसम्बन्धः ॥ १६ ॥ एवंविधान्कांश्चिन्नाम्ना निर्दिशति । मयरामेति । तथाविधा उक्तप्रकाराः । मयराममुकुन्दाद्या गृहाश्रमिमयरामाख्य प्रथमाश्रमिमुकुन्दानन्दप्रभृतय इत्यर्थः । विप्राः । सन्ति । सदा । एकधिय उक्तप्रकारैकविधमतयः । निष्कुलानन्दमुख्याः । सन्तः साधवश्चापि । सन्ति ॥ १७ ॥

इतीति । इत्यमुना प्रकारेण । तमात्मानन्दसाधुम् । उक्त्वा । स श्रीहरिः । निजान् । सर्वान् । साधून्प्रति । जगाद । हे साधवः ! । धर्मधियामपि । पुंसां सत्सङ्गिनाम् । द्वौ अन्तरायौ धर्मविघ्नौ । भवतः ॥१८॥ तौ नाम्ना निर्दिशति । आत्मनिष्ठेति । आत्मनिष्ठा । भगवन्माहात्म्यस्यावबोधनं च । क्वचित् । धर्मच्युतौ धर्मभ्रंशे सतीत्यर्थः । ताभ्यामात्मनिष्ठाभगवन्माहात्म्यावबोधनाभ्याम् । हृदि । अनुतापः । न भवेत् ॥१९॥ एतदेव स्पष्टमाह द्वाभ्याम् । तत्रेति । तत्र तयोरात्मनिष्ठायुक्तभगवन्माहात्म्यावबोधयुक्तपुरुषयोर्मध्ये । आत्मनिष्ठो भक्तः । आत्मा । अहम् । परं मायातीतम् । ब्रह्म । अस्मि । तं ब्रह्मरूपम् । माम् । शुभाशुभाः । क्रियाः । क्वापि कदाचिदपि । नैव स्पृशन्ति । इति । जानीयात् धर्मभङ्गरूपे जाते विद्यात् । हि ॥ २० ॥ अन्य इति । अन्यो भगवन्माहात्म्यावबोधवान् भक्तस्तु । कृष्णमाहात्म्यम् । बह्वतिशयितम् । विद्यात् । कृष्णस्य । नामस्मृत्या नामोच्चारणेनैव । अघभराः पापपुञ्जाः । नश्यन्ति । इतीत्थम् । कीर्त्तयेद्धर्मभङ्गरूपे पापे जाते कथयेच्च ॥ २१ ॥ एवमिति । एवममुना प्रकारेण । एतद् द्वयेन विघ्नरूपतया विद्यमानेनानेन द्वितयेन । धर्मपालने । शैथिल्यम् । स्यात् । अतो हेतोः । धर्मावनेच्छुना सर्वथा स्वधर्मरक्षणमिच्छता

इत्युक्त्वा तं निजान् सर्वान् साधून्प्रति जगाद सः । द्वावन्तरायौ भवतः पुंसां धर्मधियामपि ॥ १८ ॥ आत्मनिष्ठा च भगवन्माहात्म्यस्यावबोधनम् । क्वचिद्धर्मच्युतौ ताभ्यां नानुतापो भवेद्धृदि ॥ १९ ॥ तत्रात्मनिष्ठो जानीयादात्मा ब्रह्मास्म्यहं परम् । तं मां शुभाशुभाः क्वापि क्रिया नैव स्पृशन्ति हि ॥ २० ॥ अन्यस्तु कृष्णमाहात्म्यं वहु विद्याच्च कीर्त्तयेत् । नाम्नः स्मृत्यैव कृष्णस्य नश्यन्त्यघभरा इति ॥२१॥ एवमेतद्द्वयेन स्याच्छैथिल्यं धर्मपालने । अत इत्थं हृदि दृढं वेद्यं धर्मावनेच्छुना ॥ २२ ॥ धर्मसंस्थापनायैव भुवि कृष्णस्य भूरिशः । अवतारा भवन्त्यत्र तैः करोति च तत्प्रभुः ॥ २३ ॥ धर्मरक्षा ततः प्रेष्ठा तस्यास्तीत्यवगम्यते । अतो मयापि तत्प्रोक्तो धर्मः पाल्यः सदा दृढम् ॥ २४ ॥ तेनासौ मयि सुप्रीतो भविष्यति न संशयः । धर्मभङ्गे त्वस्य भृशं ह्यरुचिर्भविता मयि ॥ २५ ॥ एवं यस्य दृढग्रन्थिर्भवेद्धृदि स पूरुषः । कदाचिद्भगवत्प्रोक्तधर्मभ्रष्टो भवेन्न हि ॥ २६ ॥

भक्तेन । हृदि । इत्थं वक्ष्यमाणप्रकारेण । दृढं यथातथा । वेद्यम् ॥ २२ ॥ एतदेवाह त्रिभिः । धर्मेति । कृष्णस्य पुरुषोत्तमस्याक्षरब्रह्मधामाधिपतेर्मत्स्वामिनो भक्तिधर्मात्मजस्य श्रीहरेः । भूरिशः । अवताराः । भुवि । धर्मसंस्थापनायैव । भवन्ति । प्रभुः श्रीहरिः । तैः स्वावतारैः । अत्रास्यां भुवि । तद्धर्मसंस्थापनम् । करोति ॥ २३ ॥ धर्मेति । ततोहेतोः । तस्य श्रीहरेः । धर्मरक्षा । प्रेष्ठाऽतिप्रिया । अस्ति । इतीत्थम् । अवगम्यते । अतो हेतोः । मयापि । तत्प्रोक्तो धर्मातिप्रियेण श्रीहरिणा मह्यं पालनार्थं गदितः । धर्मः । दृढं यथातथा । सदा । पाल्यः ॥ २४ ॥ तेनेति । तेन धर्मपालनेन । असौ श्रीहरिः । मयि । सुप्रीतोऽतिप्रसन्नः । भविष्यति । धर्मभङ्गे । सति तु । मयि । अस्य श्रीहरेः । भृशम् । अरुचिः । भविता भविष्यति । न संशयः । अत्र संशयो नास्ति ॥ २५ ॥ एवमिति । एवममुना प्रकारेण । यस्य भक्तपुरुषस्य । हृदि । दृढग्रन्थिः । भवेत् । सः । पूरुषो भक्तः । कदाचिदपि । भगवत्प्रोक्तधर्मभ्रष्टः । न भवेत् । हि ॥ २६ ॥

आत्मेति । आत्मनिष्ठैर्भक्तैः । तथा । भगवन्माहात्म्यज्ञानिभिर्भक्तैः । एवमुक्तप्रकारेण । हृदि । दृढम् । बोध्यम् । तेनैवं दृढबोधनेन । धर्मस्थितिः स्वधर्मे दृढतयावस्थानम् । भवेत् ॥२७॥ एतदिति । एतज्ज्ञानविहीन एवंविधज्ञानरहितः । ज्ञानी आत्मनिष्ठो भक्तः । अथवा । भक्तिमान् भगवन्माहात्म्यावबोधवानपि भक्तः । क्वापि । धर्माच्च्युतः । भवेत् । विषयैरपि । बद्ध्येत ॥२८॥ इतीति । इत्यमुना प्रकारेण । उक्त्वा । असौ श्रीहरिः । मुहूर्त्तार्द्धं घटिकापर्यन्तम् । विरराम । अथोऽनन्तरम् । पुनः । दयानिधिः । स्वयं श्रीहरिरेव । स्वस्वभावम् । सतः साधून् । प्राह ॥ २९ ॥ स्वेति । हे मुनयः ! । यस्य भक्तस्य । स्वधर्मस्य । अथवा । विरक्तेः । अथवा । ज्ञानस्य । अथवा । तपसस्तपश्चरणस्य । अथवा । भक्तेः । अथवा । त्यागस्य । अहङ्कारः । स्यात् । स भक्तः । मे मम । प्रियः । नास्ति ॥ ३० ॥ य इति । यो भक्तः । स्वे स्वकीये । हृदि । ज्ञानभक्ती भगवत्स्वरूपस्य सुदृढवेदनं धर्मयुता भगवतो भक्तिश्चेत्यर्थः । अल्पे । स्यातां किञ्चित्किञ्चिद्भवेताम् । बाह्यतो लोकेषु तु । स्वख्यात्यै पूर्णज्ञानभक्तिमत्त्व-प्रसिद्ध्यै । भूरि अतिशयिते यथा स्यातां तथेत्यर्थः । दर्शयेत् । दम्भी धर्मध्वजी । स भक्तः । मे मम । प्रियः । नास्ति ॥ ३१ ॥ आत्मेति । यो भक्तः । कृष्णम् ।

आत्मनिष्ठैश्च भगवन्माहात्म्यज्ञानिभिस्तथा । एवं हृदि दृढं बोध्यं तेन धर्मस्थितिर्भवेत् ॥ २७ ॥ एतज्ज्ञानविहीनस्तु ज्ञानी वा भक्तिमानपि । भवेद्धर्मच्युतः क्वापि बद्ध्येत विषयैरपि ॥ २८ ॥ इत्युक्त्वा विररामासौ मुहूर्त्तार्द्धमथो पुनः । स्वयमेव सतः प्राह स्वस्वभावं दयानिधिः ॥२९॥ स्वधर्मस्य विरक्तेर्वा ज्ञानस्य तपसोऽपि वा । भक्तेस्त्यागस्य वा यस्याहङ्कारः स प्रियो न मे ॥३०॥ योऽल्पे स्यातां ज्ञानभक्ती हृदि स्वे बाह्यतस्तु ते । स्वख्यात्यै दर्शयेद्भूरि दम्भी स च न मे प्रियः ॥ ३१ ॥ आत्माभेदेन यः कृष्णं भजेत्स्वनियमेषु च । कार्ष्णेषु शिथिलो यः स्यात्तावुभौ न प्रियौ मम ॥३२॥ महत्तमत्वं कृष्णस्य विद्याद्यः स्वस्य तुच्छताम् । न तु देहान्यचिद्रूपात्मत्वं स च न मे प्रियः ॥ ३३ ॥ स्वधर्मज्ञानवैराग्यैः सम्पन्नोऽनन्यभक्तिमान् । अप्यल्पभक्तं कृष्णस्य यस्तु विद्यात्स्वतोऽधिकम् ॥ ३४ ॥ तदग्रेऽतिविनीतः स्यादात्मप्रौढिं न दर्शयन् । स पुमानात्मवत्प्रेष्ठो ममास्तीत्यवगम्यताम् ॥ ३५ ॥

आत्माभेदेनाहमेव कृष्णोऽस्मीति मत्वा स्वदासत्ववर्जनपूर्वं स्वामित्वमात्रभावेन । भजेत् । कैवल्यार्थी यथा भगवन्तं निराकारं मत्वाऽऽत्मनस्तद्भावं प्राप्तुं तमुपासीत तथोपासीतेत्यर्थः । यश्च भक्तः । कार्ष्णेषु कृष्णेन स्वस्मै पालनार्थं प्रोक्तेषु । स्वनियमेषु । शिथिलः । स्यात् । तौ । उभौ भक्तौ । मम । प्रियौ । न स्तः ॥ ३२ ॥ महदिति । यो भक्तः । कृष्णस्य । महत्तमत्वम् । विद्यात् । स्वस्य तु । तुच्छतामल्पत्वम् । विद्यात् । देहान्यचिद्रूपात्मत्वं स्थूलादिदेहत्रयविलक्षणचैतन्यरूपनिजात्म-भावं तु । न विद्यात् । स भक्तः । मे मम । प्रियः । नास्ति ॥ ३३ ॥ स्वेति । यो भक्तः । स्वधर्मज्ञानवैराग्यैः । सम्पन्नः । अनन्यभक्तिमान्माहात्म्यावबोधपूर्वं साक्षाद्भगवद्भक्तिं कुर्वाणः सन् । कृष्णस्य । अल्पभक्तमपि । स्वतः । अधिकम् । विद्यात् ॥ ३४ ॥ तदिति । तदग्रे कृष्णस्याल्पभक्तस्य पुरतः । आत्मप्रौढिं स्वमह-त्ताम् । न दर्शयन्सन् । अतिविनितस्तस्य पुरो बहुविनयवान् । स्यात् । सः । पुमान् भक्तः । मम । आत्मवत् । प्रेष्ठोऽतिप्रियः । अस्ति । इतीत्थम् । अवगम्य-

ताम् । इति द्वयोरेकसम्बन्धः ॥ ३५ ॥ पीत्वेति । इत्येवंविधम् । धर्मावतारस्यैकान्तिधर्मं प्रवर्त्तयितुं धृतावतारस्य धर्मापरसंज्ञहरिप्रसादविप्रात्प्रादुर्भावो यस्य तस्येति वा हरेः । वचनामृतम् । पीत्वा । सभानिषण्णाः । ते । समस्ताः । सन्तः साधवः । ये । गृहिणः । ते । सर्वे चापि । हृदये । मोदम् । अलम्भत ॥ ३६ ॥ स्ववचोऽमृतपानेन निजान् हरिरतर्पयत् । यस्तत्तृप्तिविधाता मे सोऽस्तु कारुण्यवारिधिः ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तक श्रीहर्येकान्तिकोपासक श्रीहरिकृष्णभगवत्सूनु-रघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां द्विशताधिकैकोनपञ्चाशतमस्तरङ्गः ॥ २४९ ॥ २६ ॥

माहात्म्याढ्यथा हरेः सेवा सद्गुणैस्तत्प्रसन्नता सद्ग्रन्थिबन्धत्वं तत्त्यागात्यागता तथा ॥ १ ॥ मानस्यात्यन्तदुष्टस्य त्यागता सर्वथैव च । हरेर्निश्चयहेतुश्च मोक्षाप्तिश्च ततो यथा ॥ २ ॥ हरिभक्तस्य बन्धूनां मोक्षाधिगमभेदता । सुखाप्तिर्जीवपरयोः सप्तविंश इतीरितम् ॥ ३ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८८५) ऊर्जमासे कार्त्तिकमासे । पौर्णमास्यां तिथौ । इदम् । हरेः वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमस्य । भूपतेः । दुर्गे । गोपीनाथा-

पीत्वेति सन्तो वचनामृतं ते धर्मावतारस्य हरेः समस्ताः । सभानिषण्णा गृहिणोऽपि ये ते सर्वे च मोदं हृदयेऽलभन्त ॥ ३६ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते द्विशताधिकैकोनपञ्चाशतमस्तरङ्गः ॥ २४९ ॥ २६ ॥

शकाब्दे विक्रमार्कस्य भूताष्टवसुभूमिते । ऊर्जमासे पौर्णमास्यां वचोऽमृतमिदं हरेः ॥ १ ॥
तत्र दुर्गपुरे दुर्गे उत्तमस्य स भूपतेः । गोपीनाथालयेऽराजत्तूलपट्यां सिताम्बरः ॥ २ ॥
नानाभक्तैः परिवृतः स उवाच सतः स्वयम् । मायिकं तुच्छमेवास्ति सुखं कार्ष्णं त्वनश्वरम् ॥ ३ ॥
समुद्रवारिणोऽन्यानि वारीणीव रमापतेः । सुखस्य शेषभूतानि सुखान्यन्यानि सर्वशः ॥ ४ ॥
शब्दाद्याः पञ्च विषयाः सन्त्यन्यत्र पृथक् पृथक् । आनन्दमूर्तौ कृष्णे तु सन्त्येकत्रैव पञ्च ते ॥ ५ ॥

लये । तूलपट्यां सूक्ष्ममृदुतूलपटिकासने । सिताम्बरः परिधृतसकलश्वेतवसनः । स श्रीहरिः । अराजत् ॥ २ ॥ नानेति । नानाभक्तैर्नानादेशागतत्यागिगृहिस्वभक्तजनैः । परिवृतः सभायां परिवेष्टितः । स श्रीहरिः । स्वयमेव । सतः । साधून् । उवाच । हे साधवः ! । मायिकं मायाकार्यपञ्चविषयभोगजम् । सुखं तुच्छं नश्वरत्वादन्य-ल्पमेवास्ति । कार्ष्णं साक्षाच्छ्रीहरिमूर्त्तिसम्बन्धि । सुखम् । अनश्वरमविनाशित्वादतिमहत् । अस्ति ॥ ३ ॥ एतदेव दृष्टान्तेन द्रढयति । समुद्रेति । समुद्रवारिणः सामुद्रोदकस्य पुरतः । अन्यानि महासरसादीनि । सर्वशः सर्वाणि । वारीणि । इव । रमापतेः श्रीहरेः । सुखस्य पुरतः । अन्यानि । सर्वशः । सुखानि । शेषभूतानि गौणत्वादत्यल्पानि । भवन्ति ॥ ४ ॥ शब्देति । शब्दादयः । पञ्च । विषया मायिकार्थाः । अन्यत्र तत्तदाधारेषु । पृथक्पृथक् । सन्ति । आनन्दमूर्त्तौ दिव्यनिरवधि-कातिशयालौकिकसकलविषयसुखैकाश्रयमूर्त्तौ । कृष्णे श्रीकृष्णरूपे । एकत्रैकस्मिन्नाधारे एव । पञ्चापि । ते विषयाः । सन्ति ॥ ५ ॥

अत इति । अतो हेतोः । प्रभोः । साक्षात्प्रत्यक्षस्य । तस्य श्रीहरेः । निरीक्षणे संदर्शने । क्रियमाणे सति । पञ्चानामपि । तेषां विषयाणाम् । अनुभवः सुखप्राप्तिः । सह हि समकालमेव । जायते ॥ ६ ॥ सुखमिति । मायिकेषु । पदार्थेषु । पृथक् पृथक् । यत् । सुखम् । अस्ति । तत्सुखमपि । अल्पमतितुच्छम् । नश्वरं विनाशि । परिणामे भोगोत्तरकाले । अतिदुःखदं च । अस्ति ॥ ७ ॥ अत इति । अतो हेतोः । मुमुक्षुभिः । अन्यत्र भगवदितरेषु सर्वेषु मायिकपदार्थेषु । विरज्य दोषदर्शनेन वैराग्यं प्राप्य । अनन्तसुखाम्भोधिः । सर्वदा । दिव्यविग्रहः । कृष्ण एव । सेव्यः ॥ ८ ॥ सेव्यमान इति । भक्त्या । सेव्यमानः । हरिः । सेवके स्वभक्ते । सम्प्रसीदति । हि ॥ ९ ॥ तस्मिन्निति । तस्मिन् श्रीहरौ । तुष्टे सति । तेषु तज्जनेषु च । तुष्टेषु सत्सु । भक्तस्य । सकला अपि । मनोरथाः । पूर्णाः । भवन्ति । नूनम् । इतीत्थम् । अवगम्यताम् ॥ १० ॥ मयीति । मयि । कृष्णः साक्षाच्छ्रीहरिः । तद्भक्ताश्च ।

अतः साक्षात्प्रभोस्तस्य क्रियमाणे निरीक्षणे । पञ्चानामप्यनुभवस्तेषां सह हि जायते ॥ ६ ॥ सुखं त्वस्ति पदार्थेषु मायिकेषु पृथक् पृथक् । तदप्यल्पं नश्वरं च परिणामेऽतिदुःखदम् ॥ ७ ॥ अतोऽनन्तसुखाम्भोधिः कृष्ण एव मुमुक्षुभिः । विरज्यान्यत्र संसेव्यः सर्वदा दिव्यविग्रहः ॥ ८ ॥ सेव्यमानो हरिर्भक्त्या सेवके सम्प्रसीदति । तस्मिन्प्रसन्ने सकलाः प्रसीदन्ति हि तज्जनाः ॥ ९ ॥ तस्मिंस्तेषु च तुष्टेषु भक्तस्य सकला अपि । पूर्णा मनोरथा नूनं भवन्तीत्यवगम्यताम् ॥ १० ॥ मयि कृष्णश्च तद्भक्ताः प्रसीदेयुः सदेति यः । कामयेत्स तु तान्नित्यमनुवर्त्तेत सादरम् ॥ ११ ॥ यस्तत्प्रसन्नताकामः पुमान् स्यात्स तु सर्वथा । तदप्रियं दुःस्वभावं जह्यादेवात्मनो द्रुतम् ॥ १२ ॥ जीवस्वरूपसंलग्नमपि तत्कामुकस्तु तम् । जह्यादेवाचिरेणैव नान्यथा तत्प्रसन्नता ॥ १३ ॥ रामानन्दगुरोरीक्षाकामोऽहं पूर्वमात्मनः । त्यागिस्वभावं हित्वाशु मुक्तानन्दमनुव्रतः ॥ १४ ॥ अन्नसत्रे रोटकादिविधाने तेन योजितः । तदप्यकरवं प्रीत्या प्रवृत्तं कर्म तन्मुदे ॥ १५ ॥

सदा । प्रसीदेयुः । इतीत्थम् । यो भक्तः । कामयेद्वाञ्छेत् । स भक्तस्तु । तान् हरितद्भक्तान् । नित्यम् । सादरम् । अनुवर्त्तेत तदनुवृत्तिं कुर्यात् ॥ ११ ॥ य इति । यः । पुमान् भक्तः । तत्प्रसन्नताकामः श्रीहरितद्भक्तप्रीणनेच्छुः । स्यात् । स भक्तस्तु । तदप्रियं श्रीहरितद्भक्तयोररुचिकरम् । आत्मनः स्वस्य । दुःस्वभावम् । सर्वथा । द्रुतं शीघ्रमेव । जह्यात् ॥ १२॥ जीवेति । तत्कामुकः श्रीहरितद्भक्तप्रसन्नतेच्छावान् भक्तस्तु । जीवस्वरूपसंलग्नमपि । तं दुःस्वभावम् । अचिरेण तद्वेदनसमकालमेव । जह्यादेव । अन्यथा स्वदुःस्वभावत्यागमन्तरा । तत्प्रसन्नता श्रीहरितद्भक्तप्रसन्नत्वम् । न स्यात् ॥ १३ ॥ एतदेव स्वदृष्टान्तेन द्रढयति द्वाभ्याम् । रामानन्देति । पूर्वम् । अहम् । रामानन्दगुरोः । ईक्षाकामो दर्शनेच्छावान्सन् । आत्मनो मम । त्यागिस्वभावम् । हित्वा । आशु तत्क्षणमेव । मुक्तानन्दमुनिम् । अनुव्रतोऽनुसृतः । अभवम् ॥ १४ ॥ अन्नेति । तेन मुक्तानन्दमुनिना । अन्नसत्रे सदादाने । रोटकादिविधाने । योजितः प्रेरितः । अहम् । तत् । प्रवृत्तम् । कर्मापि । तन्मुदे

मुक्तानन्दमुनिप्रसन्नतार्थम् । प्रीत्या स्नेहेन । अकरवम् ॥ १५ ॥ हरेरिति । अतो हेतोः । हरेः । भक्तैः पुंभिः । तदरोचको हरितद्भक्ताप्रीतिकरः । आत्मनः स्वस्य । स्वभावः । सर्वथा । त्याज्यः । अन्यथा स्वभावत्यागाभावे । तत्सुखं हरितद्भक्तप्रसन्नताजन्यस्वमनोरथपूर्णतासुखम् । न भवेत् ॥ १६ ॥ तथेति । किञ्च । तथैव । हरिभक्तैः । मानसे स्वचित्ते । निजाहिताः स्वकीयाहितकराः । सङ्कल्पग्रन्थयः । कथंचिदपि । नैव वन्धनीयाः । किन्तु स्वहितकराः सङ्कल्पग्रन्थयस्तु वध्या इति भावः ॥ १७ ॥ एतदेव स्पष्टमाह द्वाभ्याम् । अत्रेति । मया । अत्रास्मिन्स्थाने एव । निद्रा । कर्त्तव्या । अन्यत्र निद्रा नायास्यत्यतोऽत्रैवाहं स्वापं करिष्यामित्यर्थः इदमेतादृशमन्नमेव । भोक्तव्यम् । अन्यान्नानां ममारोचकत्वादिदमेवान्नमहमशिष्यामीत्यर्थः । इत्याद्या एतत्प्रभृतयः । तुच्छवस्तुनः । ग्रन्थयः । नैव निवध्याः । तासां स्वाहितकरत्वादिति भावः ॥ १८ ॥ पालयिष्ये इति । अहम् । दृढम् । ब्रह्मचर्यम् । पालयिष्ये । इत्यादयः । ये सङ्कल्पाः । स्युः । तेषां सङ्कल्पानाम् । स्वहितावहाः । ग्रन्थयः । निवध्याः ॥ १९ ॥ तत्रेति । तत्र तेषु द्विविधग्रन्थिषु मध्ये । आद्याः प्रथमाः स्वाहितकरा ग्रन्थयस्तु । मुमुक्षुभिर्भक्तैः । सतां साधूनाम् ।

हरेर्भक्तैरतस्त्याज्यस्तदरोचक आत्मनः । स्वभावः सर्वथा पुंभिर्नान्यथा तत्सुखं भवेत् ॥ १६ ॥ तथैव हरिभक्तैश्च कथञ्चिदपि मानसे । सङ्कल्पग्रन्थयो नैव बन्धनीया निजाहिताः ॥ १७ ॥ अत्रैव निद्रा कर्त्तव्या भोक्तव्यमिदमेव च । इत्याद्या ग्रन्थयो नैव निबध्यास्तुच्छवस्तुनः ॥ १८ ॥ पालयिष्ये ब्रह्मचर्यं दृढमित्यादयस्तु ये । सङ्कल्पा ग्रन्थयस्तेषां निबध्याः स्वहितावहाः ॥ १९ ॥ तत्राद्यास्तु सतां वाक्यैर्मोचनीया मुमुक्षुभिः । अन्यास्तु ग्रन्थयो नैव मोचनीयाः कदाचन ॥२०॥ ग्रन्थीनामुभयेषां च हेयत्वे नास्ति तुल्यता । तुल्यतां यस्तु जानीयात्स हि बालिश ईरितः ॥ २१ ॥ बालो यथाऽन्यवाक्येन स्वमुष्टिस्थां वराटिकाम् । जह्यात्सुवर्णमुद्रां च न तु तत्त्ववित्पुमान् ॥२२॥ हिताहितत्वं ग्रन्थीनामजानन् पुरुषस्तथा । मोचयेदुभयान् मूर्खः साम्येन न विवेकवान् ॥ २३ ॥

। वाक्यैरुपदेशवचनैः । मोचनीयाः । अन्या द्वितीयाः स्वहितकरा ग्रन्थस्तु । कदाचनापि । नैव मोचनीयाः ॥ २० ॥ ननु श्रुतौ सर्वग्रन्थीनां मोक्षेति मोक्षोक्तेः शुभा अशुभा ग्रन्थयः सर्वथा त्याज्या इति चेन्न तस्यामशुभग्रन्थीनामेव त्याग उक्तो न शुभग्रन्थीनां शुभग्रन्थित्यागे तु मोक्षमूलनिकृन्तनापत्तेरित्याह नवभिः । ग्रन्थीनामिति । उभयेषां द्विविधानाम् । ग्रन्थीनाम् । हेयत्वे । तुल्यता । नास्ति । यो भक्तः । तुल्यतां हेयत्वे उभयग्रन्थिसमानताम् । जानीयात् । स भक्तः । बालिशो मूर्खः । ईरितः । हि ॥ २१ ॥ एतदेव दृष्टान्तेन विशदयति द्वाभ्याम् । बाल इति । यथा । बालः । स्वमुष्टिस्थाम् । वराटिकाम् । सुवर्णमुद्रां च । अन्यवाक्येन । जह्यात् । तत्त्ववित्सुवर्णमुद्राया महत्त्वरूपस्य वराटिकाया अल्पत्वरूपस्य च तत्त्वज्ञः पुमान् । सर्वं न तु नैव जह्यात् । किन्तु वराटिकां त्यजेत् स्वर्णमुद्रां रक्षेदितिभावः ॥२२ ॥ हितेति । तथा तेनैव प्रकारेण । ग्रन्थीनामुभयविधानां पर्वणाम् । हिताहितत्वम् । अजानन् । मूर्खः । पुरुषो भक्तः । साम्येनोभयेषां तुल्यतावेदनेन । उभयान् द्विविधान् ग्रन्थीन् । मोचयेत् । विवेकवानुभयग्रन्थीनां हिताहितत्ववेत्ता भक्तः । न मोचयेत् । हितग्रन्थित्यागं न कुर्यादहितग्रन्थित्यागं विदध्यादितिभावः ॥ २३ ॥

तथेति । तथा तद्वदेव । यो भक्तः । उभयान् द्विविधानपि ग्रन्थीन् । नैव मोचयेत् । स भक्तोऽपि । उभयेषां द्विविधानां ग्रन्थीनाम् । उपादाने । समत्वेन । अवबोधनाद्धेतोः । बालिशः । ज्ञेयः ॥ २४ ॥ एवमिति । एवं ग्रन्थिस्वभावः उक्तरीत्योभयग्रन्थ्यत्यजनप्रकृतिर्भक्तः । चेद्यदि । यावज्जीवम् । हरिम् । भजेत् । तर्हि । श्रेयस्तस्य कल्याणम् । भवेत् । किन्तु । असावेवंविधो भक्तः । विश्वासार्हः । सत्सङ्गे पारं यास्यतीति विश्वसनीयः । नास्ति । हि ॥ २५ ॥ एतदेव हेतूक्त्या दृढयति । मानेति । क्वचित् । मानभङ्गे सति । अथवा । तीक्ष्णस्वाप्रियवाक्श्रुतौ सत्याम् । असौ भक्तः । सन्मार्गात्सत्सङ्गतः । भ्रष्टश्च्युतः । स्यादेव । अतो हेतोः । अस्य भक्तस्य । प्रतीतिर्विश्वासः । नास्ति । वै ॥ २६ ॥ सदिति । सदसद्ग्रन्थिप्रकृतिः । भक्तः । राजर्षिः । ईरितः । कृष्णप्रीत्यनुसारेण श्रीहर्यप्रियप्रकृतित्यागपूर्वं तत्प्रियप्रकृत्यनुसरणेनेत्यर्थः । भजन् श्रीहरिं सेवमानो भक्तः । ब्रह्मर्षिः । उच्यते ॥ २७ ॥ आद्यमिति । आद्यं राजर्षिम् । केचित् ।

तथा योऽप्युभयान् नैव मोचयेत्सोऽपि बालिशः । उभयेषामुपादाने समत्वेनावबोधनात् ॥ २४ ॥ एवं ग्रन्थिस्वभावश्चेद्यावज्जीवं भजेद्धरिम् । तर्हि श्रेयो भवेत्किन्तु विश्वासार्हस्तु न ह्यसौ ॥ २५ ॥ मानभङ्गे कचिद्वाऽसौ तीक्ष्णस्वाप्रियवाक्श्रुतौ । भ्रष्टः स्यादेव सन्मार्गात्प्रतीतिर्नास्त्यतोऽस्य वै ॥ २६ ॥ सदसद्ग्रन्थिप्रकृतिर्भक्तो राजर्षिरीरितः । कृष्णप्रीत्यनुसारेण भजन् ब्रह्मर्षिरुच्यते ॥ २७ ॥ आद्यं ज्ञानखलं केचित्सेवानर्हं बुधा जगुः । अन्यं त्वात्मप्रियं विष्णोर्ज्ञानिनं सेव्यमन्वहम् ॥ २८ ॥ मोचनीया हरेर्भक्तैस्तुच्छार्थग्रन्थयस्ततः । भगवद्धर्मसम्बन्धिग्रन्थयस्तु न कर्हिचित् ॥ २९ ॥ तथैव भक्तैर्मानस्तु प्रवेष्टुं निजचेतसि । न देयः स यतो दोषः कामादप्यधिको मतः ॥ ३० ॥ कामिनो गृहिणोऽनेके सन्ति सत्सङ्गिनोऽत्र हि । तथापि साधवस्तेषु कुर्वते करुणां नृषु ॥ ३१ ॥ ते च कृष्णं भजन्तोऽपि सद्भ्यः स्वन्यूनतां विदुः । अतः सदध्वनो नैव भ्रष्टतामुपयान्ति हि ॥ ३२ ॥

बुधाः । ज्ञानखलम् । सेवानर्हं मुमुक्षुवसेव्यम् । जगुः । अन्यं ब्रह्मर्षिं तु । विष्णोः श्रीहरेः । आत्मप्रियमात्मवत्प्रेष्ठम् । ज्ञानिनं ज्ञानिभक्तम् । अन्वहम् । सेव्यम् । जगुः ॥ २८ ॥ मोचनीया इति । ततो हेतोः । हरेः । भक्तैः । तुच्छार्थग्रन्थयः । मोचनीयाः । भगवद्धर्मसम्बन्धिग्रन्थयस्तु । कर्हिचित् । न मोचनीयाः ॥ २९ ॥ तथेति । तथा तद्वदेव भक्तैः । मानस्तु । निजचेतसि । प्रवेष्टुम् । न देयः । यतो हेतोः । स मानरूपः । दोषः । कामादपि । अधिकः मतः ॥ ३० ॥ कामिनो निर्मानितया सत्सङ्गेऽवस्थानदर्शनान्मानिनस्तु स्तब्धतया कृतसत्सङ्गत्यागदर्शनात्कामादपि दोषभूयस्त्वेन मानस्याधिकतामाह पञ्चभिः । कामिन इति । अत्र सत्सङ्गे । कामिनः । अनेके । गृहिणः । सत्सङ्गिनः । सन्ति । तथापि । साधवः । तेषु । नृषु गृहस्थसत्सङ्गिषु । करुणाम् । कुर्वते ॥३१॥ त इति । ते गृहस्थसत्सङ्गिनः । कृष्णम् । भजन्तः सन्तोऽपि । सद्भ्यः । स्वन्यूनतां स्वकीयापकृष्टताम् । विदुर्जानन्ति । अतो हेतोः । सदध्वनः सत्सङ्गात् । भ्रष्टताम् । नैवोपयान्ति । हि ॥ ३२ ॥

पुंस्विति । सन्तोऽपि । मानिषु । पुंसु सत्सङ्गिषु । करुणाम् । नैव कुर्वते । मानिनः । पुरुषाः । सद्भ्योऽपि । स्वाधिकतामतिश्रेष्ठताम् । विदुः । खलु ॥ ३३ ॥ निर्मानेभ्य इति । ते मानिनः पुरुषाः । निर्मानेभ्योऽपि । सद्भ्यः । स्वन्यूनतां । नैव । विदुः । अतो हेतोः । ते मानिपुरुषाः । त्यक्तगृहाश्रमाः । सन्तोऽपि । भ्रष्टाः सत्सङ्गश्च्युताः । भवन्ति ॥ ३४ ॥ ईर्ष्येति । सतां त्यागिमार्गावस्थितानामपि । मानादेव । ईर्ष्याक्रोधौ । जायेते । अतो हेतोः । हरिम् । आश्रितैर्भक्तैः । स मानः । श्रेयसे स्वकल्याणाय । सर्वथा । हेयो हरितद्भक्तमाहात्म्यावबोधेन सन्त्याज्यः ॥ ३५ ॥ निःश्रेयसहेतोर्मानत्यागस्य यथार्थं श्रीहरिस्वरूपनिश्चयपूर्वकं तदाश्रयहेतुत्वात्तन्निश्चयवतः स्वबन्धुवर्गसहितं मोक्षसम्पादकत्वात्तन्निश्चयः सम्यक्सम्पाद्य इत्याह सप्तमिः । साक्षादिति । यदा । हृदि । साक्षाद्धरेः । निश्चयः । सम्यग्यथार्थतः । स्यात् । तदा । तस्य श्रीहरेः । श्रेयोहेतुः । सुदृढः । आश्रयः । स्यात् । अन्यथा तत्सम्यग्निश्चयाभावे । न स्यात् । तदाश्रयो न भवे-

पुंसु मानिषु सन्तोऽपि करुणां नैव कुर्वते । विदुः स्वाधिकतां सद्भ्यो मानिनः पुरुषाः खलु ॥३३॥ निर्मानेभ्योऽपि सद्भ्यस्ते नैव स्वन्यूनतां विदुः । अतो भवन्ति ते भ्रष्टास्त्यक्तगेहाश्रमा अपि ॥ ३४ ॥ ईर्ष्याक्रोधौ च जायेते मानादेव सतामपि । अतः स सर्वथा हेयः श्रेयसे हरिमाश्रितैः ॥ ३५ ॥ साक्षाद्धरेर्निश्चयः स्याद्धृदि सम्यग्यदा तदा । तस्याश्रयः स्यात्सुदृढः श्रेयोहेतुर्न चान्यथा ॥३६॥ अयं पितेयं मातेति स्वपित्रोर्निश्चयो यथा । अचलोऽस्ति नृणां तद्वत्कर्त्तव्यः स हरेरपि ॥३७॥ स्वजातिकुलबन्धूनां जलाग्न्यादेश्च निश्चयः । शास्त्रश्रोतुः स्वपित्रादेरुपदेशेन जायते ॥३८॥ प्रमाणं शास्त्रमेवातः कार्याकार्यावबोधने । लोकप्रवृत्तिः सर्वापि शास्त्रमूलैव वर्त्तते ॥ ३९ ॥ अहिंसाब्रह्मचर्यादिलक्षणं शास्त्रमेव हि । कृष्णाश्रितानां साधूनां स्पष्टमस्ति निरूपितम् ॥ ४० ॥ अतस्तल्लक्षणोपेतसाधूनामुपदेशतः । साक्षात्कृष्णस्य कर्त्तव्यः श्रद्धया निश्चयोऽचलः ॥ ४१ ॥ ततः कुर्वीत तद्भक्तिं श्रेयसे यः स्वधर्मयुक् । स भक्तः स्वजनैः साकं मुच्यते भवबन्धनात् ॥ ४२ ॥

दित्यर्थः ॥ ३६ ॥ अयमिति । यथा । अयम् । पिता । इयम् । माता । इतीत्थम् । नृणाम् । स्वपित्रोः स्वजनकजनन्योः । अचलः । निश्चयः । अस्ति । तद्वत्तथा । हरेः । सोऽचलनिश्चयोऽपि । कर्त्तव्यः ॥ ३७ ॥ स्वेति । किञ्च । स्वजातिकुलबन्धूनाम् । जलाग्न्यादेश्च । निश्चयः । शास्त्रश्रोतुः । स्वपित्रादेः । उपदेशेन । जायते ॥ ३८ ॥ प्रमाणमिति । अतो हेतोः । कार्याकार्यावबोधने । शास्त्रमेव । प्रमाणम् । अस्ति । सर्वा लोकप्रवृत्तिरपि । शास्त्रमूलैव । वर्त्तते ॥ ३९ ॥ अहिंसेति । कृष्णाश्रितानाम् । साधूनाम् । अहिंसाब्रह्मचर्यादि लक्षणम् । शास्त्रे एव । स्पष्टं यथा तथा । निरूपितम् । अस्ति ॥ ४० ॥ अत इति । अतो हेतोः । तल्लक्षणोपेतसाधूनाम् । उपदेशतः । श्रद्धया । साक्षात्कृष्णस्य । अचलः । निश्चयः । कर्त्तव्यः ॥४१॥ तत इति । ततो निश्चयःकरणानन्तरम् । यो भक्तः । श्रेयसे । स्वधर्मयुक् । इदं ज्ञानवैराग्ययुक्तत्वस्याप्युपलक्षणम् । तद्भक्तिं साक्षाद्धरिनवधाभजनम् । कुर्वीत । सः । भक्तः । स्वजनैः स्वसम्बन्धिभिः । साकम् । भवबन्धनात् मुच्यते ॥ ४२ ॥

तदेति । तदा एवंविधश्रीहरिवाक्यश्रवणक्षणे । वटपुरागतो वटपत्तनाद्धरिदर्शनार्थं समायातः वैश्यो । वैश्यज्ञातीयः । नाथजिदेतन्नामा भक्तः । तं श्रीहरिम् । अपृच्छत् हे हरे ! । त्वया । भक्तस्य त्वदाश्रितस्य । बन्धूनां पितृभ्रात्रादिदैह्यसम्बन्धिनामपि । मुक्तिः । उदीरिता ॥ ४३ ॥ विनेति । हे प्रभो ! । साधनसम्पर्त्तिं विना । तेषां त्वद्भक्तबन्धूनाम् । सा मुक्तिः । जायते । तत्र तन्मुक्तिभवने । भक्तसम्बन्धस्त्वद्भक्तदैह्यसम्बन्ध एव । हेतुः । अस्ति । अथवा । अपरस्तदन्यो हेतुरस्ति । तद्वदतिशेषः ॥४४॥ 'सोऽनुयुक्तो नाथजिता भक्तेनेत्थं सतांपतिः । सुखयंस्तं जगादेति निजांश्च निखिलान्परान्' । नेति । हे भक्त ! । ते भक्तसम्बन्धिनः । तस्य भक्तस्य । सम्बन्धमात्रेण । सद्गतिम् । न हि नैव यान्ति । किन्तु । अस्मिन् भक्ते । प्रीतिम् । कुर्वतां तत्सम्बन्धिनाम् । सा सद्गतिः । भवेत् । इतीत्थम् । गम्यताम् ॥ ४५ ॥ यस्येति । इह लोके । यस्य यस्य सम्बन्धिपुरुषस्य । तस्मिन् भक्ते । स्नेहः । भवेत् । सः । सः । पुमान्सम्बन्धिपुरुषः । देहान्ते । सद्गतिम् । याति । अखिलाः स्नेहवर्जिताः सर्वे । तत्सम्बन्धिनः । सद्गतिं न यान्ति ॥ ४६ ॥ तस्मिन्निति । यतो हेतोः । तस्मिन् भक्ते । प्रीतिजुषां स्नेहवताम् । तेषां तत्सम्बन्धिनाम् । नराणाम् ।

तदाऽपृच्छन्नाथजित्तं वैश्यो वटपुरागतः । त्वया भक्तस्य बन्धुनामपि मुक्तिरुदीरिता ॥ ४३ ॥ विना साधनसम्पत्तिं तेषां सा जायते प्रभो ! । भक्तसम्बन्ध एवास्ति हेतुस्तत्रापरोऽपि वा ॥ ४४ ॥ श्रीहरिरुवाच—न हि सम्बन्धमात्रेण तस्य ते यान्ति सद्गतिम् । किन्त्वस्मिन्कुर्वतां प्रीतिं सा भवेदिति गम्यताम् ॥ ४५ ॥ यस्य यस्य भवेत्स्नेहस्तस्मिन्स स पुमानिह । देहान्ते सद्गतिं याति न तत्सम्बन्धिनोऽखिलाः ॥४६॥ तस्मिन्प्रीतिजुषां तेषां नराणां जायते हृदि । देहावसानवेलायां तस्यैव स्मरणं यतः ॥४७॥ अतस्ते भगवद्वृत्तेस्तस्यैव शुभकर्मणा । विमुक्तकिल्बिषा यान्ति देहान्ते सद्गतिं किल ॥४८॥ इति प्रश्नोत्तरं तस्मै दत्त्वोचे स पुनः सतः । सच्छास्त्रे जीवपरयोः स्वरूपं सुनिरूपितम् ॥ ४९ ॥ मया सदसि तद्वार्त्ता क्रियते या तयैव तु । तत्सम्बन्धि सुखं नैव यथावत् प्राप्यते हृदि ॥ ५० ॥ यथावत्तत्सुखाप्तिस्तु जायते हि समाधिना । देहत्यागानन्तरं वा न तु केवलवार्त्तया ॥ ५१ ॥

। देहावसानवेलायाम् । हृदि । तस्य भक्तस्यैव । स्मरणम् । जायते । अत इत्युत्तरेण सम्बन्धः ॥ ४७ ॥ अत इति । अतो हेतोः । ते भक्तसम्बन्धिनः । भगवद्वृत्तेर्निरन्तरं भगवत्स्वरूपलग्नचित्तवृत्तेः । तस्य भक्तस्य । शुभकर्मणैव । भगवति प्रीतिमतो भक्तस्य भगवत्प्रीतिरूपशुभकर्मणा भक्तकृतप्रीतिद्वारा तत्सम्बन्धिष्वपि सम्यक्संक्रमणेनेत्यर्थः । विमुक्तकिल्बिषाः सन्तः । देहान्ते । सद्गतिम् । यान्ति । किल ॥ ४८ ॥ इतीति । इत्यमुना प्रकारेण । तस्मै नाथजिद्भक्ताय । प्रश्नोत्तरम् । दत्त्वा । स श्रीहरिः । पुनः । सतः साधून् । ऊचे । हे सन्तः ! । सच्छास्त्रे । जीवपरयोरात्मपरमात्मनोः । स्वरूपम् । सुनिरूपितम् । अस्ति ॥४९॥ मयेति । मयापि । सदसि । या । तद्वार्त्ता । क्रियते । अहमपि सच्छास्त्रनिरूपितजीवपरमात्मस्वरूपनिरूपणवार्त्तां करोमीत्यर्थः । तया तत्स्वरूपनिरूपणवार्त्तयैव । तत्सम्बन्धिसुखम् । यथावत् । हृदि । नैव प्राप्यते ॥ ५०॥ यथावदिति । यथावत्तत्सुखाप्तिस्तु । समाधिना । जायते । अथवा । देहत्यागानन्तरम् । जायते । किन्तु । केवलवार्त्तया । न जायते ॥ ५१ ॥

एतदेव दृष्टान्तेन विषदयति चतुर्भिः । रम्यस्येति । यथा । रम्यस्य । शब्दस्य । सुखम् । नृभिः । श्रोत्रेणैव । तत्त्वतो यथार्थतः । अनुभूयते प्राप्यते । तद्वत्तथा । तद्वार्त्तया रमणीयशब्दवार्त्तामात्रेण । नानुभूयते । हि ॥ ५२ ॥ एतदेव स्पष्टमाह । रमणीय इति । शब्दोऽस्या वीणाया निनादः । रमणीयः । अस्ति । इत्येवंविधा । वार्त्ता । सुखेन । जायते । तस्य रमणीयशब्दस्य । अनुभवः । यथा । श्रवसा श्रोत्रेन्द्रियेण । जायते । तथा । तद्वार्त्तया न जायते ॥ ५३ ॥ स्पर्शेति । तथा च । स्पर्शादीनाम् । अर्थानां विषयाणाम् । त्वगादिभिः । इन्द्रियैः । यथा । अनुभवः । भवति जायते । तथा । तद्वार्त्तया स्पर्शादिविषयवार्त्तामात्रेण । अनुभवो न भवति । वै ॥ ५४ ॥ तथेति । तथा । आत्मकृष्णसौख्यस्यात्मपरमात्मसुखस्य । अनुभवः । यथा । समाधिना । अस्ति । अथवा । देहान्ते । अस्ति । तद्वत्तथा । तद्वार्त्तयाऽऽत्मपरमात्मसुखवार्त्तामात्रेण । स तत्सुखानुभवः । नास्ति ॥ ५५ ॥ अत इति । अतो हेतोः । भक्तः । तामात्मपरमात्मसुखवार्त्ताम् । श्रुत्वा । तस्या वार्तायाः । मननम् । स्वहृदये । अञ्जसा तत्त्वतः । नित्यम् । कुर्वीत । तथा । तन्निदिध्यासनम् । कुर्वीत ॥ ५६ ॥ सतीति । ताभ्यां तद्वार्त्तामनननिदिध्या-

रम्यस्य शब्दस्य सुखं श्रोत्रेणैव हि तत्त्वतः । यथाऽनुभूयते तद्वन्न हि तद्वार्त्तया नृभिः ॥५२॥ रमणीयोऽस्ति वै शब्द इति वार्ता सुखेन तु । जायते न त्वनुभवस्तस्य तु श्रवसा यथा ॥५३॥ स्पर्शादीनां तथाऽर्थानामिन्द्रियैश्च त्वगादिभिः । यथा भवत्यनुभवस्तथो तद्वार्त्तया न वै ॥ ५४ ॥ तथाऽऽत्मकृष्णसौख्यस्यानुभवोऽस्ति समाधिना । देहान्ते वा यथा तद्वन्नास्ति तद्वार्त्तया तु सः ॥५५॥ अतो भक्तस्तु तां श्रुत्वा तस्याः स्वहृदयेऽञ्जसा । कुर्वीत मननं नित्यं तन्निदिध्यासनं तथा ॥ ५६ ॥ सति देहेऽत्र ताभ्यां स्याज्जीवात्मपरमात्मानोः । साक्षात्कारः स्वरूपस्य देहान्तेऽपि तथा भवेत् ॥५७॥ भक्तस्यापि हरेरेतत्साधनद्वयमन्तरा । साक्षात्कारो भवेन्नैव तयोरित्यवगम्यताम् ॥५८॥ वाक्यामृतं तस्य गुरोस्त इत्थं पीत्वा हृदि त्यक्तगृहाः सुतृप्तिम् । सर्वेऽलभन्ताथ गृहस्थभक्ता ये तेऽपि मोदं च ययुः सदःस्थाः ॥५९॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते द्विशताधिकपञ्चाशत्तमस्तरङ्गः ॥ २५० ॥ २७ ॥

साभ्याम् । अत्रास्मिन् । देहे । सति विद्यमाने सत्यपि । जीवात्मपरमात्मनोः । स्वरूपस्य । साक्षात्कारः समाध्यपरपर्यायस्तत्सुखानुभवलक्षणः । स्यात् । देहान्तेऽपि । तथा तद्वदेव भवेत् । ॥५७॥ भक्तस्येति । हरेः । भक्तस्यापि । एतत् । साधनद्वयम् । अन्तरा विना । तयोर्जीवात्मपरमात्मनोः । साक्षात्कारः । नैव भवेत् । इतीत्थम् । अवगम्यताम् ॥ ५८ ॥ वाक्येति । इत्थमेवंविधम् । गुरोः । तस्य श्रीहरेः । वाक्यामृतम् । पीत्वा । सर्वे । ते । सदस्थाः । त्यक्तगृहाः साधवः । हृदि सुतृप्तिम् । अलम्भत । अथ च । ये । गृहस्थभक्ताः । ते चापि । मोदम् । ययुः ॥५९॥ स्ववाक्सुधापानतृप्तान् यश्चक्रे कृपया हरिः । स्वकीयान्स निवासं मे हृदये कुरुतात् सदा ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तक श्रीहर्येकान्तिकोपासक श्रीहरिकृष्णभगवत्स्वनुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां द्विशताधिपञ्चाशत्तमस्तरङ्गः ॥ २५० ॥ २७ ॥

भक्तेः पातापातहेतुर्हरेस्तद्भक्ततो नृणाम् । परावर्तनहेतुश्च मानत्यागस्य साधनम् ।। १ ।। लक्ष्म निष्कामभक्तस्य सुखस्यानुभवो हरेः यस्य तल्लक्षणं चेति त्वष्टात्रिंशे समीरितम् ।। २ ।। शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८८५) ऊर्जासितप्रतिपदि कार्त्तिकमासस्य कृष्णपक्षागतप्रतिपत्तिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ।। १ ।। तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमस्य । महीभुजः । नृपस्य । दुर्गे । गोपीनाथालये । चक्रके । सितवासाः परिहितसकलश्वेतवसनः । स श्रीहरिः । अराजत् ।। २ ।। जानेति । नानादेशागतैः । साधुभिः । गृहिभिश्च । भक्तैः । परितः । वृतः सभायां संवेष्टितः । स श्रीहरिः । पुरः स्वपुरोभागे । उपविष्टान् । सतः साधून् । इदं वक्ष्यमाणवचनम् । आह ।। ३ ।। कृष्णेति । हे साधवः ! । जीवः प्राणी । कारणद्वयतो द्वाभ्यां हेतुभ्याम् । कृष्णभक्तेः सकाशात् । पतेत् । कारणद्वयमाह । शुष्कवेदान्तश्रवणान्मायायामृगतृष्णावन्मिथ्यात्वोक्तिपूर्वं निराकारजीवब्रह्मैक्यप्रतिपादनलक्षणशुष्कवेदान्तग्रन्थश्रवणमात्रतः । तथा । कृष्णे साक्षाद्धरौ । दोषधियः स्वयं यथा कामितया स्त्रीसुखमिच्छति तथा कृष्णोऽपि राधालक्ष्म्यादिसम्बन्धमात्रतस्तथात्वदोषसत्याचरणतः । कृष्णभक्तेः । पतेदितिसम्बन्धः ।। ४ ।।

शकाब्दे विक्रमार्कस्य भूताष्टवसुभूमिते । ऊर्जासितप्रतिपदि वचोऽमृतमिदं हरेः ।। १ ।। तत्र दुर्गपुरे दुर्ग उत्तमस्य महीभुजः । गोपीनाथालयेऽराजत्सितवासाः स चक्रके ।। २ ।। नानादेशागतैर्भक्तैः साधुभिर्गृहिभिश्च सः । परितो वृत आहेदमुपविष्टान् पुरः सतः ।। ३ ।। कृष्णभक्तेः पतेज्जीवः कारणद्वयतः किल । शुष्कवेदान्तश्रवणात्कृष्णे दोषधियस्तथा ।। ४ ।। आकारमात्रमिथ्यात्वं वेदान्तश्रवणात्पुमान् । निश्चित्य कृष्णस्याकारमपि विद्यान्मृषा हृदि ।। ५ ।। सुखं वैषयिकं यत्तत् कृष्णस्याप्यस्ति हीप्सितम् । राधालक्ष्म्यादिभिः स्त्रीभिः स रमेतान्यथा कथम् ।। ६ ।। एवं कुबुद्ध्या कृष्णस्य स्वसाम्यावगमो भवेत् । एतद्धेतुद्वयं तस्य भक्तिभ्रंशकमीयताम् ।। ७ ।। अतो मुमुक्षुभक्तस्तु विद्यादित्थं सुनिश्चितम् । मायिकाकृतयः सर्वा वेदान्ते कीर्त्तिता मृषा ।। ८ ।।

एतदेव विशेषत आह चतुर्भिः । आकारेति । पुमान् । वेदान्तश्रवणाच्छुष्कवेदान्ताकर्णनाद्धेतोः । आकारमात्रमिथ्यात्वम् । निश्चित्य । कृष्णस्य । आकारं नित्यसिद्धदिव्यात्रयववन्मूर्त्तिमत्वरूपामाकृतिमपीत्यर्थः । हृदि । मृषा । विद्यात् ।। ५ ।। सुखमिति । वैषयिकं विषयसम्बन्धि । यत् । सुखम् । तत् । कृष्णस्यापि । ईप्सितमाप्तुं वाञ्छितम् । अस्ति । हि । अन्यथा वैषयिकसुखाप्तीच्छाभावे । स श्रीकृष्णः । राधालक्ष्म्यादिभिः । सह । कथं कस्माद्धेतोः । रमेत । अपि तु न रमेतैवेत्यर्थः ।। ६ ।। एवमिति । एवममुना प्रकारेण । कुबुद्ध्या दोषधिया । कृष्णस्य । स्वसाम्यावगमः । भवेत् । एतदेवंविधम् । हेतुद्वयम् । तस्य कृष्णस्य । भक्तिभ्रंशकं भक्तेः पतनकारकम् । इयताम् । प्रथमहेतौ तन्निराकारत्ववेदनेन निराकारस्य भक्त्याचरणाभावस्तद्भक्तेः पतनहेतुः । द्वितीयहेतौ तत्स्वसाम्यवेदनेन यथाऽहं तथा सोऽपीति मत्वा मत्समानस्यास्य भक्त्याचरणेन किमिति दूषितमतिरेव तद्भक्तेः पतनहेतुरिति भावः ।। ७ ।। अत इति । अतो हेतोः । मुमुक्षुभक्तस्तु । इत्थं वक्ष्यमाणप्रकारेण । सुनिश्चितं यथा तथा । विद्यात् । वेदान्ते शारीरकसूत्रादिवेदान्तग्रन्थे । सर्वाः । मायिकाकृतयः । मृषा मिथ्याभूताः । कीर्त्तिताः । सन्ति ।। ८ ।।

साकार इति । कृष्णस्तु । साकारः । दिव्यविग्रह एव । कथितः । मायागुणाकारहीनो मायाकार्यसत्त्वादिगुणत्रयकार्यगुणाकृतिभ्यां वर्जितत्वादित्यर्थः । निर्गुणः । निराकृतिश्च । कथितः ॥ ९ ॥ रामेति । रामानुजः शेषावतारः श्रीलक्ष्मणाचार्यः । निम्बार्को निम्बादित्यः । मध्वो मध्वाचार्यः । अथो अथ च । वल्लभादयो वल्लभाचार्यप्रभृतय आचार्याः । एवं मदुक्तप्रकारेणैव । वेदान्तसिद्धान्तं वेदान्तशास्त्रसिद्धान्तम् । स्फुटं यथातथा । ऊचिरे ॥ १० ॥ श्रुतीति । ते रामानुजादय आचार्याः । श्रुतिस्मृतिपुराणाद्यैः । प्रबलैः । प्रमाणैः । वेदान्ततात्पर्यं वेदान्तशास्त्रसिद्धान्तम् । आहुः । केवलयुक्तितो वितण्डावादैः । नतु नैवाहुः ॥ ११ ॥ तदिति । अत्र सत्सङ्गे । ये भक्ताः । तद्भाष्यै रामानुजादिकृतशारीरकसूत्रादिभाष्यैः सह वेदान्तश्रवणम् । कुर्युः । ते भक्ताः । भक्तिपुष्टिम् । प्राप्नुयुः । अत एव । भक्तितः श्रीकृष्णभक्तेः सकाशात् । न तु नैव पतेयुः ॥१२॥ वैष्णवेति । अल्पबुद्धयः । ये । नराः । वैष्णवाचार्यसिद्धातं रामानुजाचार्यादिकृतवेदान्तसिद्धान्तम् । हित्वा । शुष्कज्ञानिमुखाच्छुद्धाद्वैतवादिग्रन्थपाठकाऽऽस्यात् । वेदान्तश्रवणम् । कुर्युः । त इत्युत्तरेण सम्बन्धः ॥ १३ ॥ त इति । ते नरास्तु । कृष्णभक्तेः । सकाशात् । भ्रष्टाश्च्युताः । न भवेयुः ।

साकार एव कृष्णस्तु कथितो दिव्यविग्रहः । मायागुणाकारहीनो निर्गुणश्च निराकृतिः ॥ ९ ॥ रामानुजश्च निम्बार्को मध्वोऽथो वल्लभादयः । एवमेव हि वेदान्तसिद्धान्तं स्फुटमूचिरे ॥ १० ॥ श्रुतिस्मृतिपुराणाद्यैः प्रमाणैः प्रबलैर्हि ते । आहुर्वेदान्ततात्पर्यं न तु केवलयुक्तितः ॥ ११ ॥ तद्भाष्यैः सह वेदान्तश्रवणं कुर्युरत्र ये । प्राप्नुयुर्भक्तिपुष्टिं ते पतेयुर्न तु भक्तितः ॥ १२ ॥ वैष्णवाचार्यसिद्धान्तं हित्वा येऽत्वल्पबुद्धयः । शुष्कज्ञानिमुखात्कुर्युर्वेदान्तश्रवणं नराः ॥१३॥ ते तु भ्रष्टा भवेयुर्वै कृष्णभक्तेर्न संशयः । साक्षात्कृष्णेऽपि दुस्तर्कान् कुर्युर्ये ते तु बालिशाः ॥ १४ ॥ स्वधर्मज्ञानवैराग्यैः सहिता यस्य मापतेः । माहात्म्यबोधयुग्भक्तिः स्यात्सोऽस्ति बुद्धिमत्तरः ॥ १५ ॥ नहि तादृशभक्तस्य दुस्तर्कः स्याद्धरौ क्वचित् । पूर्णकामो हि भगवानिति तस्यास्ति निश्चयः ॥ १६ ॥ आनन्दमूर्त्तेर्नास्त्येव क्वापि कामसुखैषणा । तथाविधा क्रिया त्वस्य स्वभक्तानां सुखाय हि ॥ १७ ॥

वै न संशयः । ये भक्ताः । साक्षात्प्रत्यक्षे । कृष्णे श्रीहरावपि । दुस्तर्कानुक्तविधविषयसुखेच्छावबोधाख्यदोषबुद्धिरूपकुतर्कान् । कुर्युः । ते भक्तास्तु । बलिशा मूर्खाः । देहाभिमानितया स्वस्वभावानां भगवत्यारोपणात्कुमतय इत्यर्थः ॥ १४ ॥ स्वेति । यस्य भक्तस्य । स्वधर्मज्ञानवैराग्यैः सहिता । माहात्म्यबोधयुक् । मापतेर्लक्ष्मीकान्तस्य श्रीहरेः । भक्तिः । स्यात् । स भक्तस्तु । बुद्धिमत्तरोऽतिशयेन बुद्धिमान् ॥ १५ ॥ नेति । तादृशभक्तस्य बुद्धिमत्तरस्य भक्तस्य । हरौ । दुस्तर्कः । क्वचित्कदाचिदपि । न हि नैव स्यात् । हि यतः । भगवान्सकलैश्वर्यसम्पन्नः । श्रीहरिः । । पूर्णकामः । अस्ति । इत्येवंविधः । तस्य बुद्धिमत्तरभक्तस्य । निश्चयः । अस्ति ॥ १६ ॥ येन वेदनेनैवंविधभक्तस्यैवंविधो निश्चयोऽस्ति तं तद्वेदनप्रकारमाह सप्तभिः । आनन्देति । आनन्दमूर्त्तेः । अस्य श्रीहरेः । क्वापि । कामसुखैषणा । नास्त्येव । अस्य । तथाविधा राधारमादिभी रमणरूपा । क्रिया तु । स्वभक्तानाम् । सुखाय सुखप्राप्तये । अस्ति । हि ॥ १७ ॥

कृष्णेति । मनोहरा । कृष्णमूर्त्तिः । सर्वसुखमय्येव । अस्ति । यतो हेतोः । तां कृष्णमूर्त्तिम् । सेवमानस्य भक्तस्य । अन्यसुखैषणा । नास्त्येव ॥ १८ ॥ पूर्णेति । हरिः । पूर्णानन्दो निरवधिकातिशयानन्दपूर्णः । अस्ति । तस्य तथाविधस्य हरेः । आनन्दलेशस्य । लेशतः । अन्ये । विषयानन्दाः । सन्ति । ततोहेतोः । ते विषयानन्दाः । तुच्छा एव । सन्ति । एतस्यैवानन्दस्यान्यानि भूतानि मात्रमुपजीवन्तीतिश्रुतेः ॥ १९ ॥ अत इति । अतोहेतोः । नित्यमविनाशि । महत्सर्वसुखोत्कृष्टम् । अनन्तकं निरवधिकातिशयम् । हरेः । सौख्यम् । हित्वा । सुधीर्बुद्धिमत्तरः । कोऽपि भक्तः । तुच्छम् । अन्यद्धरेरितरन्मायिकम् । सुखम् । क्वचित्कदाचिदपि । नेच्छत्येव ॥ २० ॥ ब्रह्मेति । ब्रह्मधाम्नः । श्रीहरेरक्षरब्रह्माख्यपदस्य । सुखस्य । अग्रे । सर्वलोकसुखानि । निरौपम्यमेव । यान्ति । इतीत्थम् । भारतादिषु । उक्तम् । अस्ति ॥ २१ ॥ हरेरिति । हरेः । धाम्नोऽक्षरपदस्य । सुखम् । ईदृगेवंविधम् । अस्ति । यर्हि । तर्हि । हरेः । सौख्यस्य तु । का कथा । तत्तु सर्वसुखाधिकमेवास्तीत्यर्थः । तत्प्राप्तानां तथाविधं श्रीहरिसुखमुपगतानाम् । भक्तानाम् । अन्यसुखैषणा वैषयिकसुखप्राप्तीच्छा । नास्त्येव ॥ २२ ॥ स्वात्मेति । तर्हि

कृष्णमूर्त्तिः सर्वसुखमय्येवास्ति मनोहरा । यतस्तां सेवमानस्य नास्त्येवान्यसुखैषणा ॥ १८ ॥ पूर्णानन्दो हरिस्तस्यानन्दलेशस्य लेशतः । सन्त्यन्ये विषयानन्दास्तुच्छा एव ततो हि ते ॥ १९ ॥ अतो हित्वा हरेः सौख्यं नित्यं महदनन्तकम् । तुच्छमन्यसुखं कोऽपि नेच्छत्येव सुधीः क्वचित् ॥२०॥ ब्रह्मधाम्नः सुखस्याग्रे सर्वलोकसुखानि तु । यान्त्येव निरौपम्यमित्युक्तं भारतादिषु ॥२१॥ हरेर्धाम्नः सुखं त्वीदृक् हरेः सौख्यस्य का कथा । तत्प्राप्तानां च भक्तानां नास्त्येवान्यसुखैषणा ॥ २२ ॥ स्वात्मारामस्य कृष्णस्य कुतस्तर्हि भवेत्तु सा । अतोऽल्पकोऽपि दोषस्तु कृष्णे ज्ञेयो न कुत्रचित् ॥२३॥ एवं विदन्ति ये भक्तास्तेषां भक्तिस्तु सर्वदा । निर्विघ्नैव भवत्यत्र नूनमित्यवधार्यताम् ॥ २४ ॥ सूरवर्माऽथ पप्रच्छ तं सत्सङ्गिन ईश्वरम् । विदन्ति त्वां तु तत्त्वेन त्वत्सतश्च तथा हृदि ॥ २५ ॥ तत्रापि चित्तं केषांचिद्भक्तिं विदधतामपि । ततो याति परावृत्तिं तत्र किं कारणं प्रभो ! ॥ २६ ॥

यर्हि सम्प्राप्तहरिसुखस्य भक्तस्यापि । वैषयिकसुखैषणा नास्ति तर्हीत्यर्थः । स्वात्मारामस्य । कृष्णस्य तु । सा विषयिकसुखैषणा । कुतः । भवेत् । नैव भवेत् । अतो हेतोः । कृष्णे तु । अल्पकोऽल्पप्रमाणोऽपि । दोषः । कुत्रचित्कदाचिदपि । न ज्ञेयः ॥ २३ ॥ एवमिति । हे साधवः । एवममुना प्रकारेण । अत्र सत्सङ्गे । ये भक्ताः । विदन्ति । तेषां भक्तानाम् । भक्तिस्तु । सर्वदा । निर्विघ्नैव ततः पतनहेतुदुस्तर्कादिरूपविघ्नरहितैव । भवति जायते । नूनम् । इतीत्थम् । अवधार्यताम् ॥ २४ ॥ सूरवर्मेति । अथानन्तरम् । सूरवर्मा नागटङ्कपुराच्छ्रीहरिदर्शनार्थमायातस्तन्नामा नृपतिः । तं श्रीहरिम् । पप्रच्छ । हे हरे ! । सत्सङ्गिनः । हृदि स्वस्वमानसे । त्वां तु । ईश्वरं प्रत्यपरमेश्वरम् । तत्त्वेन । विदन्ति । तथा । त्वत्सतस्त्वदीयान्साधून् । तत्त्वेन । विदन्ति ॥ २५ ॥ तत्रेति । हे प्रभो ! । तत्र तेषु सत्सङ्गिषु मध्येऽपि । भक्तिम् । विदधतामपि । केषांचित्सत्सङ्गिनाम् । चित्तम् । ततस्त्वत्त्वत्सद्भ्यः । सकाशात् । परावृत्तिं विमुखताम् । याति । तत्र

तेभ्यस्तच्चित्तपरावृत्तौ । किम् । कारणं को हेतुरस्ति । तद्वदेतिशेषः ॥ २६ ॥ 'भक्तेनेत्थं स सम्पृष्टः श्रीकृष्णः स्वरवर्मणा । अवदन्नन्दयंस्तं च भक्तान्स्वानपरानिति' । यदेति । हे नृपते ! । तैः कृष्णतत्सत्परावृत्तैः सत्सङ्गिभिः यदा । हृदि । कृष्णतत्साधुनिश्चयः । विहितः । तदैव । तज्ज्ञाने कृष्णतत्सद्यथार्थमाहात्म्यवेदने । शिष्टाऽवशेषतां प्राप्ता । काचित् । अपक्वता । ज्ञेया । हि ॥ २७ ॥ एतदेव स्पष्टमाह षड्भिः । कृष्णेति । । तेषां तथाविधसत्सङ्गिनाम् । कृष्णनिश्चयकालेऽयं भगवानेवास्तीति श्रीहरिस्वरूपनिश्चयविधानावसरे । मनोगताः । कतिचित् । दोषा रसास्वादादयोऽगुणाः । सद्वाक्यैः । नष्टाः । केचन दोषाः । अवशिष्टाश्च । सन्ति ॥ २८ ॥ दोषेति । दोषानिर्मूलनं दोषाणां निःशेषतयाऽनिवर्त्तनरूपम् । तदपक्वत्वं हरितत्सन्माहात्म्यवेदनापक्वता कृष्णतत्साधुतः सकाशात् । चित्तपरावर्त्तनकारणम् । ईयताम् ॥ २९ ॥ रसेति । यस्य भक्तस्य । रसास्वादः । अवशिष्टः । स्यात् । तं रसास्वादम् । साधवः । यदा । खनेयुः । तर्हि । तस्य भक्तस्य । मनः । ततो रसास्वादखनकसाधुभ्यः सकाशात् । परावृत्तम् । स्यात् ॥ ३० ॥ एवमिति । एवं ह्यमुना प्रकारेणैव । अवशिष्टम् । कामसङ्कल्पम् । अथवा । धनलोभम् ।

श्रीहरिरुवाच–यदा तैः कृष्णतत्साधुनिश्चयो विहितो हृदि । तदैव काचित्तज्ज्ञाने शिष्टा ज्ञेया ह्यपक्वता ॥२७॥ कृष्णनिश्चयकाले हि तेषां दोषा मनोगताः । सद्वाक्यैः कतिचिन्नष्टा अवशिष्टाश्च केचन ॥ २८ ॥ दोषानिर्मूलनं ह्येव तदपक्वत्वमीयताम् । कृष्णतत्साधुतश्चित्तपरावर्त्तनकारणम् ॥ २९ ॥ रसास्वादोऽवशिष्टः स्याद्यस्य तं साधवो यदा । खनेयुस्तर्हि तस्य स्यात्परावृत्तं मनस्ततः ॥ ३० ॥ एवं हि कामसङ्कल्पं धनलोभं च साधवः । मानं वाप्यवशिष्टं च खनेयुर्वचनैर्यदा ॥ ३१ ॥ तदा तेभ्यः परावृत्तं मनस्तेषां भवेद् ध्रुवम् । साक्षाद्धरिः खनेद्वा तांस्तदापि स्यात्तथैव तत् ॥ ३२ ॥ यस्य निश्चयकाले तु दोषा नष्टा अशेषतः । भवेयुस्तस्य पुंसस्तु परावर्त्तेत नान्तरम् ॥ ३३ ॥ साम्प्रतं चात्र युष्मासु येषां केषांचिदन्तरे । दोषशेषो भवेत्तैस्तु सोऽन्तर्दृष्ट्याऽवधार्यताम् ॥ ३४ ॥

अथवा । मानं चापि । साधवः । वचनैः । यदा । खनेयुः । तदेत्युत्तरेण सम्बन्धः ॥३१॥ तदेति । तदा तेषामवशिष्टकामादिदोषवतां सत्सङ्गिनाम् । मनः । तेभ्यः कामसङ्कल्पादिखनकसाधुभ्यः । परावृतम् । भवेत् । अथवा । साक्षाद्धरिः । तानवशिष्टरसास्वादादिदोषान् । खनेत् । तदापि । तन्मनः । तथैव हरेः परावृतमेव । स्यात् ध्रुवम् ॥ ३२ ॥ यस्येति । यस्य भक्तस्य । निश्चयकाले । दोषाः । अशेषतः । नष्टाः । भवेयुः । तस्य पुंसो भक्तस्य । अन्तरं मानसं तु । न परावर्त्तेत कृष्णतत्सद्भिर्दोषखनने कृतेऽपि ततः परावृत्तिं न यायात् ॥ ३३ ॥ साम्प्रतमिति । साम्प्रतम् । अत्र सत्सङ्गे । युष्मासु सत्सङ्गिषु मध्ये । येषाम् । केषांचित्सत्सङ्गिनाम् । अन्तरेऽन्तःकरणे । दोषशेषः प्रायो दोषेषु विनष्टेषु सत्स्वपि कस्यचिद्दोषस्यावशेषत्वम् । भवेत् । तैः सत्सङ्गिभिः । सोऽवशिष्टदोषः । अन्तर्दृष्ट्या । अवधार्यतां विचार्यताम् ॥ ३४ ॥

तत इति । ततोऽवधारणानन्तरम् । ते सत्सङ्गिनः । अन्तःस्थम् । स्वं स्वम् । दोषम् । यथार्थतः । ज्ञास्यन्ति । भावि भविष्यत् । तत्फलं शेषदोषफलरूपम् । ईश्वरात्साक्षात्परमेश्वरात्स्वेष्टदेवाच्छ्रीहरेः । वैमुख्यं पराङ्वृत्तत्वमपि । वेत्स्यन्ति । यदा ते सत्सङ्गिनोऽन्तर्दृष्ट्या स्वान्तःकरणावशिष्टं दोषं प्रथमतो विचारयिष्यन्ति । तदाऽयं दोषोऽस्मास्ववशिष्टो भवतीति ज्ञास्यन्ति ततोऽस्मास्ववशिष्टममुं दोषं श्रीहरिस्तत्सन्तो वा खनिष्यन्ति तदा वयमवश्यमेव ततो विमुखा भविष्याम इति वेत्स्यन्तीतिभावः ॥ ३५ ॥ इतीति । इत्यमुना प्रकारेण । उक्त्वा । हरिः । तम् । भूपं सुरनृपतिम् । ब्रह्मानन्दमुनिम् । तथा । शुकं शुकानन्दमुनिम् । प्राह । हे भक्ताः ! । युष्माभिः । आत्मस्थः । कः । दोषः । अस्ति । इति । दृश्यताम् । अस्माकमन्तःकरणे को दोषोऽवशिष्टोऽस्तीति सर्वे भवन्तः स्वस्वमानसे विचारं कुर्वन्त्वित्यर्थः ॥ ३६ ॥ क्षणमिति । अथैवंविधश्रीहरिवाक्यश्रवणानन्तरम् । ते पूर्वोक्तास्त्रयः । क्षणं क्षणमात्रकालपर्यन्तम् । विचार्य । ऊचुः । हे हरे । स्वतुल्यभक्तविहितापमानात् । ग्लानिसम्भवाद्धेतोः । एकः । मानस्तु । वर्त्तते । इति ऊचुरितिसम्बन्धः ॥ ३७ ॥ अथेति । अथैवंविधतद्वचश्रवणानन्तरम् । हरिः ।

ततो ज्ञास्यन्ति तेऽन्तःस्थं स्वं स्वं दोषं यथार्थतः । वेत्स्यन्ति तत्फलमपि भावि वैमुख्यमीश्वरात् ॥ ३५ ॥ इत्युक्त्वा तं हरिर्भूपं ब्रह्मानन्दं शुकं तथा । प्राह युष्माभिरात्मस्थः को दोषोस्तीति दृश्यताम् ॥ ३६ ॥ क्षणं विचार्य तेऽथोचुर्मान एकस्तु वर्त्तते । स्वतुल्यभक्तविहितापमानाद् ग्लानिसम्भवात् ॥ ३७ ॥ अथोवाच हरिर्युष्मानत्र पृच्छामि किञ्चन । अस्ति कृष्णस्य माहात्म्यमनन्तं सर्वतोऽधिकम् ॥३८॥ द्युपतय एव ते न ययुरन्तमनन्ततया त्वमपि यदन्तराण्डनिचया ननु सावरणाः । ख इव रजांसि वान्ति वयसा सह यच्छ्रुतयस्त्वयि हि फलन्त्यतन्निरसनेन भवन्निधनाः ॥ ३९ ॥ इति वेदैर्निगदितं तद्ये जानीयुरञ्जसा । तद्भक्तेषु कथं तेषां जायते मानसंभवः ॥ ४० ॥ सर्वेश्वरत्वं सम्राजो विदुर्ये भुवि मानवाः । ते तत्पद्माग्रतो नूनं वर्त्तेरन्मानवर्जिताः ॥ ४१ ॥ खण्डमण्डलराजापि तत्पद्गमपि दुर्बलम् । बहु मन्येत तद्वाक्यानुसृतं कर्म चाचरेत् ॥ ४२ ॥

उवाच । हे भक्ताः । अत्रार्थे । युष्मान् । किञ्चन । पृच्छामि । कृष्णस्य साक्षाद्धरेः । माहात्म्यम् । अनन्तं निरवधिकातिशयम् । अत एव । सर्वतोऽक्षरादिसर्वेभ्यः । अधिकम् । अस्ति ॥ ३८ ॥ द्युपतय इति । अस्यव्याख्या शताधिकाष्टदशतरङ्गाद्बोध्या ॥ ३९ ॥ इतीति । इत्यमुना प्रकारेण । वेदैः । निगदितम् । तत्कृष्णमाहात्म्यम् । ये भक्ताः । अञ्जसा तत्त्वतः । जानीयुः । तेषां भक्तानाम् । तद्भक्तेषु कृष्णभक्तजनेषु मानसम्भवः । कथं कस्माद्धेतोः । जायते । न जायते एव ॥ ४० ॥ एतदेव दृष्टान्तेन द्रढयन् पृच्छति । त्रिपादाधिकचतुर्भिः । सर्वेति । भुवि । ये । मानवाः । सम्राजश्चक्रवर्त्तिनो राज्ञः । सर्वेश्वरत्वं सर्वाधिपतित्वम् । विदुः । ते मानवाः । तत्पद्माग्रतश्चक्रवर्त्तिनृपतिपदातिपुरःप्रदेशे मानवर्जिताः । वर्त्तेरम् । नूनम् ॥ ४१ ॥ खण्डेति । खण्डमण्डलराजापि । दुर्बलमपि । तत्पद्गं चक्रवर्त्तिनृपपदातिम् । बहु यथातथा । मन्येत सत्कुर्वीत । तद्वाक्यानुसृतम् । कर्म च । आचरेत् ॥ ४२ ॥

नेति । स खण्डमण्डलराजा । तस्य चक्रवर्त्तिनृपपद्गस्य । अग्रतः । किञ्चिदपि । मानम् । क्वचिदपि । न रक्षेत् । यतो हेतोः । सः । अन्तरे । तत्स्वामिनः पद्गस्वामिनश्चक्रवर्त्तिनृपस्य । महत्त्वम् । सम्यक् । वेत्ति ॥ ४३ ॥ एवमिति । एवममुना प्रकारेण । यो जनः । यस्य जनस्य । सर्वाधिकम् । माहात्म्यम् । विद्यात् । स जनः । तत्तदीयाग्रतो यस्य सर्वाधिकमाहात्म्यं विद्यात्तस्य तज्जनस्य च पुरःप्रदेशे । मानम् । कदाचन । नैव रक्षेत् ॥ ४४ ॥ एवमिति । एवंसति । हरेः । सम्यङ्माहात्म्यविदुषां सत्सङ्गिनामपि । तत्सत्सु श्रीहरेः साधुषु । मानः । कथं केन प्रकारेण । स्यात् । तद्वदतेतिशेषः । इत्यमुना प्रकारेण । पृष्टाः श्रीहरिणाऽनुयुक्ताः । ते त्रयोऽपि भक्ताः । ऊचिरे श्रीहरिं जगदुः ॥ ४५ ॥ सत्यमिति । हे स्वामिन् ! । त्वया । सत्यम् । उच्यते । यदि । हरेः प्रत्यक्षपुरुषोत्तमस्य । ते तव । माहात्म्यवेदनम् । सम्यक् । स्यात् । तर्हि । त्वत्सदग्रे तव साधूनां पुरः । मानिता । न स्यात् ॥ ४६ ॥ हरिरिति । अथानन्तरम् ।

न तु तस्याग्रतो मानं रक्षेत्किञ्चिदपि क्वचित् । यतस्तत्स्वामिनः सम्यङ् महत्त्वं वेत्ति सोऽन्तरे ॥ ४३ ॥ एवं यो यस्य माहात्म्यं विद्यात्सर्वाधिकं स तु । तत्तदीयाग्रतो नैव मानं रक्षेत्कदाचन ॥ ४४ ॥ एवं सति हरेः सम्यङ् माहात्म्यविदुषामपि । कथं तत्सत्सु मानः स्यादिति पृष्टास्त ऊचिरे ॥४५॥ सत्यं त्वयोच्यते स्वामिन् ! यदि माहात्म्यवेदनम् । स्यात्सम्यक् ते हरेस्तर्हि त्वत्सदग्रे न मानिता ॥४६॥ हरिराहाथ वीक्षध्वमुद्धवो बुद्धिमत्तरः । हरेरेकान्तिको भक्त आसीन्नीतिविशारदः ॥४७॥ तथापि कृष्णमाहात्म्याभिज्ञत्वाद् व्रजयोषिताम् । कृष्णैकचेतसां पादरजःस्पर्शसमीहया ॥४८॥ वृन्दावने वीरुदादावपि जन्मैच्छदात्मनः । तासामग्रे च निर्मानो भूत्वा स्वयमवर्त्तत ॥ ४९ ॥ ब्रह्मा च कृष्णसम्बन्धाद् भूरिभाग्यं व्रजौकसाम् । जानन्नीशोऽपि निर्मानो भूत्वैव तदवर्णयत् ॥ ५० ॥ अहो भाग्यमहो भाग्यं नन्दगोपव्रजौकसाम् । यन्मित्रं परमानन्दं पूर्णं ब्रह्म सनातनम् ॥ ५१ ॥

हरिः । आह । हे भक्ताः ! । ईक्षध्वं यूयं पश्यत । उद्धवः । बुद्धिमत्तरः । नीतिविशारदः । हरेः एकान्तिकः । भक्तः । आसीत् ॥ ४७ ॥ तथेति । तथापि । कृष्णमाहात्म्याभिज्ञत्वाद्धेतोः । कृष्णैकचेतसाम् । व्रजयोषितां गोपीजनानाम् । पादरजःस्पर्शसमीहया ॥ ४८ ॥ वृन्दावन इति । वृन्दावने । वीरुदादौ वल्लीप्रभृतिष्वपि । आत्मनः स्वस्य । जन्म । ऐच्छत् । तासां व्रजयोषिताम् । अग्रे । स्वयम् । निर्मानः । भूत्वा । अवर्त्तत । इति त्रयाणामेकसम्बन्धः ॥ ४९ ॥ ब्रह्मेति । ब्रह्मा विधिश्चापि । व्रजौकसां व्रजवासिजनानाम् । कृष्णसम्बन्धात् । भूरिभाग्यम् । जानन् । अतएव । ईशः सर्वप्रजोत्पादकत्वात्पितामहः सन्नपि । निर्मान एव । भूत्वा । तत्तेषां भूरिभाग्यम् । अवर्णयत् ॥५०॥ अहो इति । नन्दगोपव्रजौकसाम् । अहो भाग्यम् । अहो भाग्यम् । परमानन्दम् । सनातनं सदातनदिव्यमूर्त्तिम् । पूर्णं सर्वदिव्यगुणसम्पूर्णम् । ब्रह्म श्रीकृष्णाख्यं परब्रह्म । यन्मित्रं येषां मित्रभावेनावस्थितम् । अतस्तेषामहोभाग्यमिति सम्बन्धः ॥ ५१ ॥

एवमिति । हे भक्ताः ! । एवममुना प्रकारेण । ये भक्ताः । कृष्णमाहात्म्यम् । विदुः तेषां भक्तानाम् । चेतसि तु । तद्भक्तेषु श्रीकृष्णोपासकेषु । मानेर्ष्याक्रोधाद्याः । कदाचन । न स्युः ॥ ५२ ॥ मानेति । तेषां साक्षात्कृष्णमाहात्म्यवेदिनां भक्तानाम् । मानहानौ । सत्यां हरितत्सद्भिः स्वमानखण्डने कृते सत्यपीत्यर्थः । सत्सङ्गाद्धरितत्साधुसमागमात्शकाशात् । औदासीन्यं तत्सङ्गत्यागहेतून्मनीभावः । न भवेत् । अथवा । तत्सङ्गाचदीयसङ्गं विहायेत्यर्थः । अन्यतोऽन्यस्मिन्स्थाने । स्थितिरवस्थानम् । न भवेत् ॥ ५३ ॥ ईदृगिति । ईदृगेवंहरितद्भक्तसम्यग्माहात्म्यवेत्ता । भक्तः । दैह्यसुखार्थम् । दैन्यभाग्दीनतावान् । न भवेत् । कष्टायां शूलारोपादिकष्टरूपायाम् । दैहिकापदि सत्यामपि । स्वस्थितेः । न चलेत् ॥५४॥ प्रारब्धमिति । प्रारब्धं कर्म । भोगात् । क्षीयते । इतीत्थम् । निजान्तरे स्वमनसि । जानन्स भक्तः । स्वामी मदिष्टदेवः श्रीहरिः । दुःखात् । मोचयतु मद्दुःखोपशमं विदधातु । इत्येवम् । न सङ्कल्पयेत्सङ्कल्पमपि न कुर्यात् । वै ॥ ५५ ॥ निष्कामेति । एतस्मिन्नेवंविधे । निष्कामभक्ते । हरेः । सर्वथा । भूरिप्रसन्नता । जायते । तदीयानाम् । भक्तानां चापि । सर्वथा । भूरि-

एवं ये कृष्णमाहात्म्यं विदुस्तेषां तु चेतसि । तद्भक्तेषु न मानेर्ष्याक्रोधाद्याः स्युः कदाचन ॥ ५२ ॥ मानहानौ च तत्सङ्गात्सत्यामपि न कर्हिचित् । औदासीन्यं भवेत्तेषां तत्सङ्गाद्वाऽन्यतः स्थितिः ॥ ५३ ॥ ईदृग्भक्तो न वै दैह्यसुखार्थं दैन्यभाग्भवेत् । दैहिकापदि कष्टायामपि न स्वस्थितेश्चलेत् ॥ ५४ ॥ प्रारब्धं क्षीयते भोगादिति जानन्निजान्तरे । दुःखान्मोचयतु स्वामीत्येवं सङ्कल्पयेन्न वै ॥ ५५ ॥ निष्कामभक्ते ह्येतस्मिन् हरेर्भुरिप्रसन्नता । जायते च तदीयानां भक्तानामपि सर्वथा ॥५६॥ इति वार्त्तां विधायासौ पुनरप्याह तान्सतः । भगवत्सुखसम्प्राप्तिः स्याद् ग्राम्यार्थविरागिणाम् ॥ ५७ ॥ मत्स्यस्य जलसम्बन्धो यावत्स्यात्तावदेव सः । क्रीडेद्यथासुखं तस्याभावे तु मृत्युमाप्नुयात् ॥ ५८ ॥ तथा विषयसम्बन्धो यावत्स्यात्तावदेव ये । वर्तेरन्सुखिनस्तस्याभावे तु स्युर्मृतोपमाः ॥ ५९ ॥ पञ्चेन्द्रियार्थजीवानां तेषां भागवतं सुखम् । क्वापि न प्राप्यमस्तीति यूयं जानीत निश्चितम् ॥ ६० ॥

प्रसन्नता जायते ॥ ५६ ॥ इतीति । इत्येवंविधाम् । वार्त्ताम् । विधाय । असौ श्रीहरिः । पुनरपि । तान् । सतः साधून् । आह । हे सन्तः । ग्राम्यार्थविरागाणां मायिकविषयेषु दोषदृष्टिमत्तारूपवैराग्ययुक्तानां भक्तानाम् । भगवत्सुखसम्प्राप्तिः । स्यात् ॥ ५७ ॥ मत्स्यस्येति । यथा । मत्स्यस्य । यावत् । जलसम्बन्धः । स्यात् । तावदेव । स मत्स्यः । यथा सुखम् । क्रीडेत् । तस्य जलसम्बन्धस्य । अभावे सति तु । मृत्युम् । आप्नुयात् । तथेत्युत्तरेण सम्बन्धः ॥ ५८ ॥ तथेति । तथा । ये भक्ताः । विषयसम्बन्धः । यावत् । स्यात् । तावदेव । सुखिनः । वर्त्तेरन् । तस्य विषयसम्बन्धस्य । अभावे तु । मृतोपमा मृततुल्याः । स्युः ॥ ५९ ॥ पञ्चेति । पञ्चेन्द्रियार्थजीवानां शब्दादिपञ्चेन्द्रियविषयजीवनवताम् । तेषां भक्तानाम् । भागवतं भगवत्स्वरूपसम्बन्धि । सुखम् । क्वापि कदाचिदपि । प्राप्यम् । नास्ति । इतीत्थम् । यूयम् । निश्चितमेव । जानीत् ॥ ६० ॥

येषामिति । येषां भक्तानाम् । विषयसौख्येन । जीवनता । नष्टा । भवेत् । तेषां भक्तानामेव । कृष्णसुखस्य । अञ्जसा तत्त्वतः । अनुभवः प्राप्तिः । भवेत् ॥ ६१ ॥ तस्मादिति । तस्माद्धेतोः । मुमुक्षुणा । पुंसा भक्तजनेन । अप्रमादतः प्रमादं परित्यज्य । एकान्तिकम् । धर्मम् । श्रित्वा । विषयैषणाः । सर्वथा । हातव्याः ॥६२॥ इतीति । इत्येवंविधम् । हरेः । वचनामृतम् । निपीय । सदोगताः । तदाश्रिताः । ते । सकला अपि । मुनिगणाः । गृहिणश्च । पराम् । मुदम् । अगुः प्रापुः । तच्छ्रीहरिवचनामृतमेव । हृदि स्वस्वमानसे । दधुर्धारयामासुः ॥ ६३ ॥ यः श्रीहरिः स्ववचनामृतपानविधापनात् । तृप्तान्स्वान्दयया चक्रे तस्मिन्मेऽस्तु सदा मनः ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्यैकातिकोपासक श्रीहरिकृष्णभगवत्स्वगुरुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां द्विशताधिकैकपञ्चाशत्तमस्तरङ्गः ॥ २५१ ॥ २८ ॥

येषां विषयसौख्येन नष्टा जीवनता भवेत् तेषामेव भवेत्कृष्णसुखस्यानुभवोऽञ्जसा ॥ ६१ ॥ तस्मान्मुमुक्षुणा पुंसा सर्वथा विषयैषणाः । धर्ममेकान्तिकं श्रित्वा हातव्या अप्रमादतः ॥ ६२ ॥ इति निपीय हरेर्वचनामृतं मुनिगणाः सकला अपि ते पराम् । मुदमगुर्गृहिणश्च तदाश्रिता हृदि तदेव दधुश्च सदोगताः ॥ ६३ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते द्विशताधिकैकपञ्चाशत्तमस्तरङ्गः ॥ २५१ ॥ २८ ॥

शकाब्दे विक्रमार्कस्य भूताष्टवसुभूमिते । पौषशुक्लद्वितीयायां वचोऽमृतमिदं हरेः ॥ १ ॥
तत्र दुर्गपुरे दुर्ग उत्तमस्य स भूपतेः । स्वाश्रमं निकषा वेद्यां न्यषीदन्मञ्चके निशि ॥ २ ॥
सिताम्बरः परिवृतो निजभक्तैः सहस्रशः । अपृच्छत्स शुकानन्दं प्राञ्जलिं पुरतः स्थितम् ॥ ३ ॥
द्वौ कौचिद्धरिभक्तौ स्तस्तरुणौ समनिश्चयौ । उभौ स्वधर्मनिष्ठौ च मन्दवैराग्यशालिनौ ॥ ४ ॥

गृहात्यागोऽविरक्तस्य विरक्तस्य च तत्त्यजिः । वैराग्यप्राप्तिहेतुश्चेत्येकोनत्रिंश ईरितम् ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८८५) पौषशुक्लद्वितीयायां पौषमासस्य शुक्लपक्षागतद्वितीयातिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ दुर्गपुरे । उत्तमस्य । भूपतेः । दुर्गे । स्वाश्रमं स्वावासं स्थानम् । निकषा समीपे । वेद्याम् । मञ्चके स्वास्तृते स्वकीये पर्यङ्कासने । निशि श्रीगोपीनाथस्य सायन्तननीराजनकालीनं दर्शनं कृत्वा पुनरागत्य तस्मिन्नैशे काले इत्यर्थः । स श्रीहरिः । न्यषीदत् ॥ २ ॥ सितेति । सिताम्बरः परिहितसकलश्वेतवसनः । सहस्रशो नानादेशागतत्वाद्बहुभिः । निजभक्तैस्त्यागिगृहिस्त्र्याश्रितजनैः । परिवृतः सभायां संवेष्टितः । स श्रीहरिः । प्राञ्जलिं प्रबद्धाञ्जलिम् । पुरतः स्थितं स्वपुरोभागेऽवस्थितम् । शुकानन्दमुनिम् । अपृच्छत् ॥३॥ द्वाविति । हे मुने ! । तरुणौ सम्प्राप्ततारुण्यौ । समनिश्चयौ तुल्यभगवत्स्वरूपनिश्चयौ । कौचित् । द्वौ । हरिभक्तौ सत्सङ्गिनौ । स्तः । उभौ । स्वधर्मनिष्ठौ । मन्दवैराग्यशालिनौ च । स्तः ॥ ४ ॥

एक इति । तयोर्मध्ये । एकः । प्रारब्धवशतः । कृतोद्वाहः परिणीताङ्गनः । अभूत् । अन्यो द्वितीयस्तु । भार्येच्छुरन्तर्भार्यापरिणयनार्थसङ्कल्पवान्सन्नपि । नाप्त-दारोऽसम्प्राप्ताङ्गनः । अत एव । मुनिस्त्यागी । अभवत् ॥ ५ ॥ उभयोरिति । उभयोरेतयोर्हरिभक्तयोः । विषयास्वादे मायिकपञ्चार्थभोगे । वृत्तेर्मनोवृत्तेः । तैक्ष्ण्यं तीव्रता तु । विद्यते । तयोर्द्वयोर्मध्ये । कतरस्य कस्य । गृहस्थस्य त्यागिनो वेत्यर्थः । तद्विषयास्वादार्थकमनोवृत्तितैक्ष्ण्यम् । आशु शीघ्रम् । कुण्ठितं प्रतिहतवेगम् । भविष्यति । यतो यो मनोवृत्तितैक्ष्ण्यकुण्ठिततावान्स एव श्रेष्ठ इति शास्त्रनिश्चयादिति भावः ॥६॥ एवं सामान्यतः पृष्ट्वा पुनरपि प्रश्नमेव पुष्णाति त्रिभिः । वेद इति । वेदो यदहरेव विरजेत्तदहरेव प्रव्रजेदिति निगमस्तु । यस्य पुरुषस्य । तीव्रवैराग्यम् । स्यात् । तस्य पुरुषस्य । ब्रह्मचर्याश्रमादेव । संन्यासं संन्यासाख्यम् । आश्रमं चतुर्थाश्रमम् । सर्वथा सर्वप्रकारेण । ग्राह्यम् । प्राह ॥ ७ ॥ स्यादिति । असौ वेदः । यस्य । मन्दवैराग्यम् । स्यात् । तस्य । च । विषयेषु । वृत्तितैक्ष्ण्यस्य । कुण्ठत्वसिद्ध-ये । गार्हस्थ्यम् । आह ॥ ८ ॥ तत इति । ततो गार्हस्थ्यानन्तरम् । तस्य गार्हस्थ्यस्य । वनाश्रमं वानप्रस्थाश्रमम् । आह । ततो वनाश्रमानन्तरम् । संन्याश्रमम् ।

एकः प्रारब्धवशतः कृतोद्वाहस्तयोरभूत् । अन्यस्तु भार्येच्छुरपि नाप्तदारोऽभवन्मुनिः ॥ ५ ॥ उभयोर्विषयास्वादे
वृत्तेस्तैक्ष्ण्यं तु विद्यते । तयोस्तु कतरस्याशु कुण्ठितं तद्भविष्यति ॥ ६ ॥ वेदस्तु तीव्रवैराग्यं यस्य स्यात्तस्य
सर्वथा । ब्रह्मचर्याश्रमादेव प्राह संन्यासमाश्रमम् ॥ ७ ॥ स्याद्यस्य मन्दवैराग्यं तस्य गार्हस्थ्यमाह च । वृत्ति-
तैक्ष्ण्यस्य कुण्ठत्वसिद्धये विषयेष्वसौ ॥ ८ ॥ ततो वनाश्रमं तस्य ततः संन्यासमाह च । अतो विचार्य वक्तव्यं
प्रश्नस्यास्योत्तरं मुने ! ॥ ९ ॥ इति पृष्टो यदा सम्यक् सन् प्राहोत्तरं तदा । स्वयमेव स तत्प्राह स्वामिनारायणो
मुनिम् ॥ १० ॥ उभयोर्यः कृतोद्वाहः स श्रेष्ठ इति गम्यताम् । वृत्तितैक्ष्ण्यं कुण्ठितं स्यात्तस्यैव विषयेषु यत्
॥ ११ ॥ अन्यस्य तीव्रवैराग्यमात्मनिष्ठा च नास्त्यतः । असत्सङ्गे क्वचिज्जाते बध्येत विषयेष्वसौ ॥ १२ ॥

च आह । अतो हेतोः । हे मुने ! । अस्य । प्रश्नस्य । उत्तरम् । विचार्य । वक्तव्यम् ॥ ९ ॥ इतीति । इत्यमुना प्रकारेण । पृष्टः श्रीहरिणाऽनुयुक्तः । स शुका-नन्दमुनिः । यदा । उत्तरं स्वप्रश्नप्रतिवचनम् । सम्यक् । न प्राह । यथार्थं न चकारेत्यर्थः । स्वामिनारायणः स्वामिनारायणनाम्ना जगद्विख्यातः । स श्रीहरिः । स्वयमेव । तत्स्वप्रश्नोत्तरम् । मुनिं शुकानन्दसाधुम् । प्राह ॥ १० ॥ उभयोरिति । हे मुने ! । उभयोरुक्तविधयोर्द्वयोर्हरिभक्तयोर्मध्ये । यः । कृतोद्वाहः । स एव । श्रेष्ठः । इति । गम्यताम् । यद्यतो हेतोः । तस्य कृतोद्वाहस्यैव । विषयेषु । वृत्तितैक्ष्ण्यम् । कुण्ठितम् । स्यात् ॥ ११ ॥ अन्यस्येति । अन्यस्य वृत्तितैक्ष्ण्ये सत्यपि गृहीतत्यागित्वस्य द्वितीयभक्तस्य । तीव्रवैराग्यम् । आत्मनिष्ठा च । नास्ति । अतो हेतोः । क्वचित् । असत्सङ्गेऽसाधुपुरुषप्रसङ्गे । जाते सति । असौ द्वितीयो भक्तः । विषयेषु । बध्येत ॥ १२ ॥

येषामिति । येषां भक्तानाम् । विषयसौख्येन । जीवनता । नष्टा । भवेत् । तेषां भक्तानामेव । कृष्णसुखस्य । अञ्जसा तत्त्वतः । अनुभवः प्राप्तिः । भवेत् ॥ ६१ ॥ तस्मादिति । तस्माद्धेतोः । मुमुक्षुणा । पुंसा भक्तजनेन । अप्रमादतः प्रमादं परित्यज्य । एकान्तिकम् । धर्मम् । श्रित्वा । विषयैषणाः । सर्वथा । हातव्याः ॥६२॥ इतीति । इत्येवंविधम् । हरेः । वचनामृतम् । निपीय । सदोगताः । तदाश्रिताः । ते । सकला अपि । मुनिगणाः । गृहिणश्च । पराम् । मुदम् । अगुः प्रापुः । तच्छ्रीहरिवचनामृतमेव । हृदि स्वस्वमानसे । दधुर्धारयामासुः ॥ ६३ ॥ यः श्रीहरिः स्ववचनामृतपानविधापनात् । तृप्तान्स्वान्दयया चक्रे तस्मिन्मेऽस्तु सदा मनः ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तकश्रीहर्यैकातिकोपासक श्रीहरिकृष्णभगवत्सद्गुरुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां द्विशताधिकैकपञ्चाशत्तमस्तरङ्गः ॥ २५१ ॥ २८ ॥

येषां विषयसौख्येन नष्टा जीवनता भवेत् तेषामेव भवेत्कृष्णसुखस्यानुभवोऽञ्जसा ॥ ६१ ॥ तस्मान्मुमुक्षुणा पुंसा सर्वथा विषयैषणाः । धर्ममेकान्तिकं श्रित्वा हातव्या अप्रमादतः ॥ ६२ ॥ इति निपीय हरेर्वचनामृतं मुनिगणाः सकला अपि ते पराम् । मुदमगुर्गृहिणश्च तदाश्रिता हृदि तदेव दधुश्च सदोगताः ॥ ६३ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते द्विशताधिकैकपञ्चाशत्तमस्तरङ्गः ॥ २५१ ॥ २८ ॥

शकाब्दे विक्रमार्कस्य भूताष्टवसुभूमिते । पौषशुक्लद्वितीयायां वचोऽमृतमिदं हरेः ॥ १ ॥
तत्र दुर्गपुरे दुर्ग उत्तमस्य स भूपतेः । स्वाश्रमं निकषा वेद्यां न्यषीदन्मञ्चके निशि ॥ २ ॥
सिताम्बरः परिवृतो निजभक्तैः सहस्रशः । अपृच्छत्स शुकानन्दं प्राञ्जलिं पुरतः स्थितम् ॥ ३ ॥
द्वौ कौचिद्धरिभक्तौ स्तस्तरुणौ समनिश्चयौ । उभौ स्वधर्मनिष्ठौ च मन्दवैराग्यशालिनौ ॥ ४ ॥

गृहात्यागोऽविरक्तस्य विरक्तस्य च तत्त्यजिः । वैराग्यप्राप्तिहेतुश्चेत्येकोनत्रिंश ईरितम् ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८८५) पौषशुक्लद्वितीयायां पौषमासस्य शुक्लपक्षागतद्वितीयातिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ दुर्गपुरे । उत्तमस्य । भूपतेः । दुर्गे । स्वाश्रमं स्वावासं स्थानम् । निकषा समीपे । वेद्याम् । मञ्चके स्वास्तृते स्वकीये पर्यङ्कासने । निशि श्रीगोपीनाथस्य सायन्तननीराजनकालीनं दर्शनं कृत्वा पुनरागत्य तस्मिन्नेशे काले इत्यर्थः । स श्रीहरिः । न्यषीदत् ॥ २ ॥ सितेति । सिताम्बरः परिहितसकलश्वेतवसनः । सहस्रशो नानादेशागत्वाद्बहुभिः । निजभक्तैस्त्यागिगृहिस्वाश्रितजनैः । परिवृतः सभायां संवेष्टितः । स श्रीहरिः । प्राञ्जलिं प्रबद्धाञ्जलिम् । पुरतः स्थितं स्वपुरोभागेऽवस्थितम् । शुकानन्दमुनिम् । अपृच्छत् ॥३॥ द्वाविति । हे मुने ! । तरुणौ सम्प्राप्ततारुण्यौ । समनिश्चयौ तुल्यभगवत्स्वरूपनिश्चयौ । कौचित् । द्वौ । हरिभक्तौ सत्सङ्गिनौ । स्तः । उभौ । स्वधर्मनिष्ठौ । मन्दवैराग्यशालिनौ च । स्तः ॥ ४ ॥

एक इति । तयोर्मध्ये । एकः । प्रारब्धवशतः । कृतोद्वाहः परिणीताङ्गनः । अभूत् । अन्यो द्वितीयस्तु । भार्येच्छुरन्तर्भार्यापरिणयनार्थसङ्कल्पवान्सन्नपि । नाप्त-दारोऽसम्प्राप्ताङ्गनः । अत एव । मुनिस्त्यागी । अभवत् ॥ ५ ॥ उभयोरिति । उभयोरेतयोर्हरिभक्तयोः । विषयास्वादे मायिकपञ्चार्थभोगे । वृत्तेर्मनोवृत्तेः । तैक्ष्ण्यं तीव्रता तु । विद्यते । तयोर्द्वयोर्मध्ये । कतरस्य कस्य । गृहस्थस्य त्यागिनो वेत्यर्थः । तद्विषयास्वादार्थकमनोवृत्तितैक्ष्ण्यम् । आशु शीघ्रम् । कुण्ठितं प्रतिहतवेगम् । भविष्यति । यतो यो मनोवृत्तितैक्ष्ण्यकुण्ठितताबान्स एव श्रेष्ठ इति शास्त्रनिश्चयादिति भावः ॥६॥ एवं सामान्यतः पृष्ट्वा पुनरपि प्रश्नमेव पुष्णाति त्रिभिः । वेद इति । वेदो यदहरेव विरजेत्तदहरेव प्रव्रजेदिति निगमस्तु । यस्य पुरुषस्य । तीव्रवैराग्यम् । स्यात् । तस्य पुरुषस्य । ब्रह्मचर्याश्रमादेव । संन्यासं संन्यासाख्यम् । आश्रमं चतुर्थाश्रमम् । सर्वथा सर्वप्रकारेण । ग्राह्यम् । प्राह ॥ ७ ॥ स्यादिति । असौ वेदः । यस्य । मन्दवैराग्यम् । स्यात् । तस्य । च । विषयेषु । वृत्तितैक्ष्ण्यस्य । कुण्ठत्वसिद्ध्-ये । गार्हस्थ्यम् । आह ॥ ८ ॥ तत इति । ततो गार्हस्थ्यानन्तरम् । तस्य गार्हस्थ्यस्य । वनाश्रमं वानप्रस्थाश्रमम् । आह । ततो वनाश्रमानन्तरम् । संन्याश्रमम् ।

एकः प्रारब्धवशतः कृतोद्वाहस्तयोरभूत् । अन्यस्तु भार्येच्छुरपि नाप्तदारोऽभवन्मुनिः ॥ ५ ॥ उभयोर्विषयास्वादे वृत्तेस्तैक्ष्ण्यं तु विद्यते । तयोस्तु कतरस्याशु कुण्ठितं तद्भविष्यति ॥ ६ ॥ वेदस्तु तीव्रवैराग्यं यस्य स्यात्तस्य सर्वथा । ब्रह्मचर्याश्रमादेव प्राह संन्यासमाश्रमम् ॥ ७ ॥ स्याद्यस्य मन्दवैराग्यं तस्य गार्हस्थ्यमाह च । वृत्ति-तैक्ष्ण्यस्य कुण्ठत्वसिद्धये विषयेष्वसौ ॥ ८ ॥ ततो वनाश्रमं तस्य ततः संन्यासमाह च । अतो विचार्य वक्तव्यं प्रश्नस्यास्योत्तरं मुने ! ॥ ९ ॥ इति पृष्टो यदा सम्यक् सन् प्राहोत्तरं तदा । स्वयमेव स तत्प्राह स्वामिनारायणो मुनिम् ॥ १० ॥ उभयोर्यः कृतोद्वाहः स श्रेष्ठ इति गम्यताम् । वृत्तितैक्ष्ण्यं कुण्ठितं स्यात्तस्यैव विषयेषु यत् ॥ ११ ॥ अन्यस्य तीव्रवैराग्यमात्मनिष्ठा च नास्त्यतः । असत्सङ्गे क्वचिज्जाते बध्येत विषयेष्वसौ ॥ १२ ॥

च आह । अतो हेतोः । हे मुने ! । अस्य । प्रश्नस्य । उत्तरम् । विचार्य । वक्तव्यम् ॥ ९ ॥ इतीति । इत्यमुना प्रकारेण । पृष्टः श्रीहरिणाऽनुयुक्तः । स शुकानन्दमुनिः । यदा । उत्तरं स्वप्रश्नप्रतिवचनम् । सम्यक् । न प्राह । यथार्थं न चकारेत्यर्थः । स्वामिनारायणः स्वामिनारायणनाम्ना जगद्विख्यातः । स श्रीहरिः । स्वयमेव । तत्स्वप्रश्नोत्तरम् । मुनिं शुकानन्दसाधुम् । प्राह ॥ १० ॥ उभयोरिति । हे मुने ! । उभयोरुक्तविधयोर्द्वयोर्हरिभक्तयोर्मध्ये । यः । कृतोद्वाहः । स एव । श्रेष्ठः । इति । गम्यताम् । यद्यतो हेतोः । तस्य कृतोद्वाहस्यैव । विषयेषु । वृत्तितैक्ष्ण्यम् । कुण्ठितम् । स्यात् ॥ ११ ॥ अन्यस्येति । अन्यस्य वृत्तितैक्ष्ण्ये सत्यपि गृहीतत्यागित्वस्य द्वितीयभक्तस्य । तीव्रवैराग्यम् । आत्मनिष्ठा च । नास्ति । अतो हेतोः । क्वचित् । असत्सङ्गेऽसाधुपुरुषप्रसङ्गे । जाते सति । असौ द्वितीयो भक्तः । विषयेषु । बध्येत ॥ १२ ॥

तीव्रेति । तीव्रवैराग्यहीनस्य । अस्य भक्तस्य । त्यागः । यावज्जीवम् । न निर्वहेत् सम्यक् स्थितिं न प्राप्नुयात् । किन्तु । यदा कदापि । विषयैः । विघ्नितः सञ्जातविघ्नः । भवेत् ॥ १३ ॥ गृहस्थ इति । गृहस्थो गृहाश्रमावस्थित आद्यो भक्तस्तु । आत्मनः स्वस्य । दैन्यं दीनताम् । जानन्सन् । अन्नाम्बुवस्त्रपात्राद्यैः । आद्यशब्दादौषध पुस्तकार्पण पादसंवाहन विद्याध्यानादिग्रहणम् । सत्साधुसेवया लक्षणोपेतत्वसत्यानां साधूनां परिचर्यया । भक्तिदार्ढ्यं साक्षाद्भगवदुपासनादृढताम् । अवाप्नुयात् ॥ १४ ॥ इतीति । इत्यमुना प्रकारेण । उक्तवन्तम् । तं श्रीहरिम् । स साधुः शुकानन्दमुनिः । पप्रच्छ । हे सतांपते ! । वैराग्यमान्द्ये सत्यपि । त्वदाश्रितः । यो द्वितीयः पुमान् । त्यागी । अभूज्जातः । स इत्युत्तरेण सम्बन्धः ॥ १५ ॥ स इति । हे प्रभो ! । स त्यागी । सद्यस्त्वदेकान्तिकसाधुभ्यः । तव । माहात्म्यम् । शृणुयात् । विचारयेच्च । तर्हि । असौ त्यागो भक्तः । तीव्रवैराग्यम् । कथं केन हेतुना । न प्राप्नुयात् । तद्वदेतिशेषः ॥ १६ ॥ हेतुप्रदर्शनेन पुनः प्रश्नमेव द्रढयति । पुंस इति । हे हरे ! । यद्यतो हेतोः । आदितः प्रथमतस्तु । तीव्रवैराग्यम् । कस्यचित्पुंस एव । स्यात् ।

तीव्रवैराग्यहीनस्य यावज्जीवं न निर्वहेत् । त्यागो यदा कदाप्यस्य विषयैर्विघ्नतो भवेत् ॥ १३ ॥ गृहस्थस्त्वात्मनो दैन्यं जानन् सत्साधुसेवया । अन्नाम्बुवस्त्रपात्राद्यैर्भक्तिदार्ढ्यमवाप्नुयात् ॥ १४ ॥ इत्युक्तवन्तं पप्रच्छ तं स साधुः सतांपते ! । वैराग्यमान्द्येऽपि सति त्याग्यभूद्यस्त्वदाश्रितः ॥ १५ ॥ स सद्यस्तव माहात्म्यं शृणुयाच्च विचारयेत् । तर्ह्यसौ तीव्रवैराग्यं कथं न प्राप्नुयात्प्रभो ! ॥ १६ ॥ पुंसः कस्यचिदेव स्यात्तीव्रवैराग्यमादितः । यत् सत्साङ्गाद् बहूनां तज्जायमानं समीक्ष्यते ॥१७॥ श्रीहरिरुवाच–स्वधर्मज्ञानवैरायभक्तिसम्पन्नसाधुषु । अतिप्रीतिर्भवेद्यस्य श्रीकृष्ण इव सर्वदा ॥१८॥ दैहिकीः स्वाः क्रियाः सर्वास्तेषां रुच्यनुसारतः । कुर्वीत सभयं नित्यं नान्यथा यश्च कर्हिचित् ॥ १९ ॥ प्राप्यात्तीव्रवैराग्यं स हि मायिकवस्तुषु । यावज्जीवं निर्वहेद्वा त्यागस्तस्य विनापि तत् ॥ २० ॥

सत्सङ्गात्त्वदेकान्तिकसाधुप्रसङ्गं प्राप्य तु । तत्तीव्रवैराग्यम् । बहूनां त्वदाश्रयवतां जनानाम् । जायमानमुत्पद्यमानम् । समीक्ष्यते । सत्सङ्गतो द्वितीयोऽपि तीव्रवैराग्यप्राप्त्या वरो न भविष्यतीति तु न प्रतिभाति त्वया त्वाद्यस्यैव वरत्वमुक्तं तत्कथं बोध्यमिति भावः ॥ १७ ॥ 'इत्थं नारायणमुनिः । स शुकानन्दसाधुना । पृष्टोऽब्रवीत्तं सुखयन्निति स्वानपरांस्तथा" । स्येति । हे मुने ! । यस्य त्यागिनः । स्वधर्मज्ञानवैराग्यभक्तिसम्पन्नसाधुषु । अतिप्रीतिः । श्रीकृष्णे इव । सर्वदा भवेत् ॥ १८ ॥ दैहिकीरिति । यश्च त्यागिभक्तः । दैहिकीः । सर्वाः । स्वाः स्वकीयाः । क्रियाः । तेषां तथाविधसाधूनाम् । रुच्यनुसारतश्छदानुसारेण । सभयं तद्भयसहितं यथातथा नित्यम् । कुर्वीत । अन्यथा तद्रुचिं परित्यज्य । कर्हिचित् । न कुर्वीत ॥ १९ ॥ प्राप्नुयादिति । स एवंविधस्त्यागी । मायिकवस्तुषु । तीव्रवैराग्यम् । प्राप्नुयात् । अथवा । तत्तीव्रवैराग्योपलम्भनम् । विनापि । तस्य तथाविधत्यागिभक्तस्य । त्यागः । यावज्जीवम् । निर्वहेत् । हि निश्चितम् । इति । त्रयाणामेकसम्बन्धः ॥ २० ॥

महदिति । अतिप्रीत्या । महत्सेवां भगवदेकान्तिकसाधूनां परिचर्याम् । विना । अन्योपायेन भवदुक्तेन सद्ग्रन्थो भगवन्माहात्म्यस्य केवलश्रवणविचारादीतरसाधनेन तु । तत्तीव्रवैराग्यम् । क्वचिदपि । न स्यात् । अतीप्रीत्या । सत्सेवया भगवदेकान्तिकसाधुपरिचर्यया तु । सर्वं तीव्रवैराग्यादिसद्‌गुणवृन्दम् । सम्पद्यते सिद्ध्यति । ॥ २१ ॥ उद्धवेति । एवममुना प्रकारेण । उद्धवाध्वन्यस्मिन्नुद्धवसम्प्रदाये । इमे । सर्वे । गृहिणः । त्यागिनश्च । मयि । अनुरागिणोऽतिस्नेहयुक्ताः सन्तः । मम । निदेशकांक्षिणः । सन्ति ॥ २२ ॥ महान्त इति । ये । अपक्वास्तीव्रवैराग्यरहिताः । साधवः । सन्ति । तेऽपि । अप्रमादिनः सावधानाः सन्तः । महान्तस्तीव्रवैराग्य-सहिताः । साधव इव । मदुक्तान् । सर्वान् । नियमान् । पालयन्ति ॥ २३ ॥ एवमिति । एवममुना प्रकारेणैव । गृहस्थेषु । पुंसु । योषित्सु । वर्णिषु । पद्गेषु षदातिषु च । अस्ति । किं तदित्यत्राह । इतरे उक्तपक्वगृहस्थादिभ्यो भिन्नाः । अखिला अपक्वा अपि गृहस्थादयः सर्वे भक्ताः । उत्तमैः । तुल्यं यथा तथा । वर्त्तन्ते

महत्सेवां विनां त्वन्योपायेन स्यान्न तत्क्वचित् । तत्सेवया त्वतिप्रीत्या सर्वं सम्पद्यते खलु ॥ २१ ॥
उद्धवाध्वन्येवमिमे मयि सन्त्यनुरागिणः । गृहिणस्त्यागिनः सर्वे निदेशाकांक्षिणो मम ॥ २२ ॥
महान्तः साधव इव येऽपक्वास्तेऽपि साधवः । मदुक्तान्नियमान् सर्वान् पालयन्त्यप्रमादिनः ॥ २३ ॥
एवमेव गृहस्थेषु पुंसु योषित्सु वर्णिषु । पद्गेषु चोत्तमैस्तुल्यं वर्त्तन्त इतरेऽखिलाः ॥ २४ ॥
वयं चेत् पालयिष्यामो नियमान् सकलांस्तदा । स्वामी भक्तप्रियोऽस्माकमतिप्रीतो भविष्यति ॥ २५ ॥
नियमो यदि कश्चित्स्याच्छिथिलस्तर्हि नः प्रभुः । अप्रीतो भवितेत्येवं भीतास्ते पालयन्ति तान् ॥ २६ ॥
अतिप्रीत्यैव मय्येते यथा मद्वृत्तिवर्त्तनाः । भवन्ति तत्र वैराग्यनियमस्तु न विद्यते ॥ २७ ॥
तदाल्पमस्ति केषांचित्केषांचिच्चास्ति तद् भृशम् । तथापि मत्प्रीतिवशान्निर्वहन्त्यखिला अपि ॥ २८ ॥

॥ २४ ॥ वयमिति । चेद्यदि । वयम् । सकलान् । नियमान् । पालयिष्यामः । तदा । भक्तप्रियः । अस्माकम् । स्वामीष्टदेवः श्रीहरेः । अतिप्रीतोऽस्माखतिप्रसन्नः । भविष्यति ॥ २५ ॥ नियम इति । यदि । कश्चित् । नियमः । शिथिलः । स्यात् । तर्हि । नोऽस्माकम् । प्रभुरिष्टदेवः श्रीहरिः । अप्रीतोऽस्मास्वप्रसन्नः । भविता भविष्यति । इत्येवममुना प्रकारेण । भीताः । तेऽपक्वसाधुप्रमुखा मद्भक्ताः । तान्मदुक्तनियमान् । पालयन्ति । इति द्वयोरेकसम्बन्धः ॥ २६ ॥ अतीति । एते पूर्वोक्ता मद्भक्ताः । मयि । अतिप्रीत्यैव । यथा मद्वृत्तिवर्त्तना मद्वृत्त्यनुसारेण कृतस्ववर्त्तनाः । तत्रैवंविधतद्वर्त्तने । वैराग्यनियमस्तु । न विद्यते ॥ २७ ॥ एतदेव स्पष्टमाह । तदिति । केषांचिन्मद्भक्तानाम् । तद्वैराग्यम् । अल्पम् । अस्ति । केषांचिन्मद्भक्तानाम् । तद्वैराग्यम् । भृशमतिशयितं च । अस्ति । तथापि । मत्प्रीतिवशात् । अखिलाः सर्वेऽपि ते मद्भक्ताः । निर्वहन्ति ॥ २८ ॥

आपीयेति । इत्येवंविधम् । जगद्गुरोः । अमुष्य श्रीहरेः । वाक्यामृतम् । आपीय । सः । मुनिः शुकानन्दसाधुः । तोषम् । आप । तथा । सदःस्थाः । तदीयभक्ताः । अपरे । त्यागिजनाः । गृहस्थाश्रमस्थाश्च । तोषमापुः ॥ २९ ॥ स्वभक्तस्याविरक्तस्य गृहात्यागं च यो हरिः । विरक्तस्यैव तस्त्यागं कारणं विरतेस्तथा ॥ १ ॥ स्वभक्तेभ्योऽवदत्स्वामी दयया परयैव सः । स्वभक्तेरङ्गभूतां तां विरक्तिं प्रददातु मे ॥ २ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तक श्रीहर्येकान्तिकोपासक श्रीहरिकृष्णभगवत्स्वगुरुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां द्विशताधिकद्विपञ्चाशत्तमस्तरङ्गः ॥ २५२ ॥ २९ ॥

हरेर्यादृशभक्ते तु रुचिस्तस्यानुसन्धिता । पञ्चार्थेषु यथा चैतद् द्वयं त्रिंशे प्रकीर्त्तितम् ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८८५) सहस्यस्य पौषमासस्य । पौर्णमास्यां तिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । आभयेरभयनृपतेः स्वनोरुत्तमस्य

आपीय वाक्यामृतमित्यमुष्य जगद्गुरोराप मुनिः स तोषम् । तथाऽपरे त्यागिजनाः सदःस्था गृहाश्रमस्थाश्च तदीयभक्ताः ॥ २९ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते द्विशताधिकद्विपञ्चाशत्तमस्तरङ्गः ॥ २५२ ॥ २९ ॥

शकाब्दे विक्रमार्कस्य भूताष्टवसुभूमिते । पौर्णमास्यां सहस्यस्य वचोऽमृतमिदं हरेः ॥ १ ॥
तत्र दुर्गपुरे दुर्गं आभयेः क्षितिपस्य सः । व्यराजतासने तौले श्रीगोपीनाथमन्दिरे ॥ २ ॥
सितसर्वाम्बरो भक्तैर्वृतः स्वीयैः सहस्रशः । त्यागिभिर्गृहिभिश्चासौ स्वयमेवावदत्सतः ॥ ३ ॥
रोचते भक्त ईदृग्मे मनस्तत्रावरुध्यते । स्वधर्माचलनिष्ठो यश्चिद्रूपात्माभिमानवान् ॥ ४ ॥
तेजोराशौ हरिर्नित्यं तिष्ठतीति वदन् दृढम् । भक्तिं यस्तस्य कुर्याच्च प्रीत्या दृढविरक्तिमान् ॥ ५ ॥

। क्षितिपस्य । दुर्गे । श्रीगोपीनाथमन्दिरे । तौले प्रचुरपिचुभृते । आसने चक्रकासने । स श्रीहरिः । व्यराजत् ॥ २ ॥ सितेति । सितसर्वाम्बरः परिहितसकलश्वेतवसनः । सहस्रशो नानादेशागतत्वाद्बहुभिः । त्यागिभिः । गृहिभिश्च । स्वीयैः । भक्तैः । वृतः सभायां परिवेष्टितः । असौ श्रीहरिः । स्वयमेव । सतः साधून् । अवदत् ॥ ३ ॥ रोचत इति । हे साधवः ! । ईदृग्वक्ष्यमाणलक्षणः । भक्तः । मे मह्यम् । रोचते मत्प्रीत्यास्पदं भवति । तत्र तस्मिन् । भक्ते । मनो मन्मानसम् । अवरुध्यते । अतः परं कमपि श्रेष्ठं न पश्यामीत्यर्थः । तमाह सार्द्धद्वाभ्याम् । यो भक्तः । स्वधर्माचलनिष्ठः । चिद्रूपात्माऽभिमानवान् । स्यात् ॥ ४ ॥ तेज इति । यः । तेजोराशौ तेजश्चयात्मकेऽक्षरब्रह्मधाम्नि । हरिः । नित्यम् । तिष्ठत्यक्षरभावापन्नमुक्तकोटिसंसेवितपादाम्बुजो वर्त्तते । इतीत्थम् । दृढं यथा तथा । विदन् । भवेत् । यश्च । तस्य हरेः । भक्तिं नवधा भजनम् । प्रीत्या स्नेहेन । कुर्यात् । यश्च । दृढविरक्तिमान् । भवेत् ॥ ५ ॥

केवलमिति । यः । तपः । योगमष्टाङ्गम् । व्रतादिं कृच्छ्रचान्द्रायणव्रतादिसाधनसमूहं च । केवलम् । भगवत्प्रीत्यै । निश्छद्म निष्कपटं यथा तथा । विदधीत । यश्च । सत्समागमलालसः । भवेत् । एवंविधसप्तलक्षणवान्भक्तो मह्यं रोचते इति त्रयाणामेकसम्बन्धः ॥ ६ ॥ एतदिति । एतद्विपर्ययाचारे उक्तसप्तविधलक्षणविपरीताचरणे । वेदशास्त्ररतेऽधीतवेदादिसकलशास्त्रेऽपि । कस्मिंश्चिदपि । पूरुषे भक्ते । मे मम । रुचिः । नास्त्येव । नूनम् । वै ॥ ७ ॥ अन्यदिति । किञ्च । हे साधवः ! । अन्यदितरदपि हितवचनम् । युष्मभ्यम् । वच्मि । किं तदित्यत्राह । यत्र येषु पञ्चार्थेषु । मे मम । मनः । लग्नमत्यासक्तं सत् । सदैव । सानुसन्धानं तत्स्मृतिसहितम् । अस्ति वर्त्तते । तान् । पञ्च । अर्थान् कार्याणि । शृणुत ॥ ८ ॥ क्रियास्विति । सर्वासु । क्रियासु दैहिकीषु । सर्वदा । क्रियमाणासु सतीष्वपि । देहस्थितिर्देहावस्थानम् । क्षणमपि । भविता । इतीत्थम् । अहम् । न वेद्मि ॥ ९ ॥ एतदेव स्पष्टमाहार्द्धेन । गत इति । देहः । अद्यास्मिन्क्षणे एव । गतः । गतः । इत्येवम् । तत्त्वतः । जानामि । इत्येवंविधः । वैराग्यरूपः । मनोगतः । एकः । अर्थः । भवति ॥ १० ॥ वपुषेति । क्षणिकेन

केवलं भगवत्प्रीत्यै निश्छद्म विदधीत यः । तपोयोगं व्रतादिं च सत्समागमलालसः ॥ ६ ॥ एतद्विपर्ययाचारे कस्मिंश्चिदपि पूरुषे । रुचिर्नास्त्येव मे नूनं वेदशास्त्ररतेऽपि वै ॥ ७ ॥ अन्यच्च वच्मि युष्मभ्यं लग्नं यत्रास्ति मे मनः । सदैव सानुसन्धानं शृणुतार्थांस्तु पञ्च तान् ॥ ८ ॥ क्रियासु क्रियमाणासु सर्वास्वपि च सर्वदा । देहस्थितिः क्षणमपि भवितेति न वेद्म्यहम् ॥ ९ ॥ गतो देहागतोऽद्यैवेत्येवं जानामि तत्त्वतः । वैराग्यरूप इत्येको भवत्यर्थो मनोगतः ॥ १० ॥ वपुषा क्षणिकेनापि कर्मैतावत्तु शोभनम् । संसाधितमथैतावत्साध्यमस्ति स्वशक्तितः ॥ ११ ॥ इत्येवास्त्यनुसन्धानं सर्वदा मम मानसे । द्वितीयोऽर्थोऽयमुदितस्तृतीयं च निबोधत ॥ १२ ॥ वासना इन्द्रियार्थानां पञ्चानामपि सर्वथा । नष्टा भवन्ति ताः किं वा शिष्टा इत्यनुसन्दधे ॥ १३ ॥ यदि शिष्टास्तदोन्मूल्याः शीघ्रमेवातियत्नतः । नष्टानां च न विश्वासः क्वापि तत्पुनरुत्थितेः ॥ १४ ॥

क्षणविनाशिनाऽपि । वपुषाऽनेन देहेन । एतावदेतत्परिमितम् । शोभनं भगवत्प्रसन्नताहेतुत्वात्समीचीनम् । कर्म तु । संसाधितम् । अथ च । एतावत् । शोभनं कर्म । स्वशक्तितः । साध्यम् । अस्ति । इत्युत्तरेण सम्बन्धः ॥ ११ ॥ इतीति । इतीत्थम् । मम । मानसे । सर्वदैव । अनुसन्धानम् । अस्ति । अयम् । द्वितीयः । अर्थः । उदितः । तृतीयमर्थं च । निबोधत ॥ १२ ॥ वासना इति । पञ्चानामपि । इन्द्रियार्थानां विषयाणाम् । वासनाः । सर्वथा । नष्टा विनाशं प्राप्तास्तु । भवन्ति । तथापि । ता वासनाः । शिष्टा वा किञ्चिदवशिष्टा भवन्ति किम् । इतीत्थम् । अनुसन्दधे । श्रवणदर्शनादि तत्क्रियादर्शनेन मम तद्वासना शेषानुसन्धानं भासते इति भावः ॥ १३ ॥ यदीति । यदि । शिष्टाः वासनाः किञ्चिदवशिष्टाः । स्युः । तदा । अतियत्नतः । शीघ्रमेव । उन्मूल्या मूलत उत्पाटनीया भवन्ति । नष्टानामपि । वासनानाम् । विश्वासः । नास्ति । कुतः । क्वापि कदाचित् । तत्पुनरुत्थितेस्तासां पुनरुद्भवसम्भावनाद्धेतोः । न तद्विश्वासः ॥ १४ ॥

तृतीय इति । अयमुक्तविधः । तृतीयः । अर्थः । उदितः । महतामपि । भक्तानां मुक्तानन्दादीनाम् । निरन्तरम् । सम्यक् । हार्दावलोकनं वक्ष्यमाण प्रकारेण तन्मनोगताभिप्रायदर्शनं तु । चतुर्थः । अर्थः । उदितः ॥१५॥ तद्धार्दावलोकनप्रकारमाह । एतावत्य इति । एतेषां महतां भक्तानाम् । एतावत्यः । विषयवासनाः । नष्टाः । एतावत्यः । अवशिष्टाश्च । भवन्ति । किल । इतीत्थम् । मे मम । अनुसन्धानम् । अस्ति ॥१६॥ पञ्चम इति । पञ्चमः । अर्थस्तु । परोपकृतये मदाश्रितजनोपकारार्थम् । महता । विचारेणैव । औदासीन्यापनोदनम् । अस्ति ॥ १७ ॥ पञ्चमार्थमेव पुनः स्पष्टमाह त्रिभिः । औदासीन्ये इति । औदासीन्ये । जायमाने सति । स्वस्य मम । क्वापि । निर्गमस्तु । भवेत् । इति । जाने । अथ च यदि निर्गमः स्यात् । तेन । अन्येषां मदाश्रितानाम् । भृशमतिशयिता । ग्लानिः । स्यात् ॥ १८ ॥ अत्रेति । मे मम । अत्र सत्सङ्गे । स्थितौ सत्याम् । सर्वे । त्यागिनः । गृहिणश्चापि । मद्भक्ताः । भगवद्भक्तिम् । सहर्षम् । कुर्युः । इतीत्थम् । अनुसन्दधे ॥ १९ ॥

तृतीयोऽर्थोऽयमुदितश्चतुर्थस्तु निरन्तरम् । महतामपि भक्तानां सम्यग्घार्दावलोकनम् ॥ १५ ॥ एतावत्यः किलैतेषां नष्टा विषयवासनाः । एतावत्योऽवशिष्टाश्चेत्यनुसन्धानमस्ति मे ॥ १६ ॥ पञ्चमोऽर्थस्तु मनस औदासीन्यापनोदनम् । विचारेणैव महता परोपकृतयेऽस्ति वै ॥ १७ ॥ औदासीन्ये जायमाने तु जाने क्वापि निर्गमः । भवेत्स्वस्याथ तेन स्यादन्येषां खिन्नता भृशम् ॥ १८ ॥ अत्र स्थितौ तु मे सर्वे त्यागिनो गृहिणोऽपि च । सहर्षं भगवद्भक्तिं कुर्युरित्यनुसन्दधे ॥ १९ ॥ सोत्साहं भगवद्भक्तिं कुर्वतः सकलानिमान् । भक्तान्समीक्षमाणस्य मनो मे प्रीयतेतराम् ॥ २० ॥ स्वभक्तजनशिक्षार्थमित्थं स निजवर्त्तनम् । तानुवाच स्वयं त्वस्ति साक्षान्नारायणप्रभुः ॥ २१ ॥ आपीय तस्येति वचोऽमृतं ते भक्तप्रियस्याखिलसाधुभक्ताः । गृहस्थभक्ताश्च सभोपविष्टा महान्तमापुर्मनसि सहर्षम् ॥ २२ ॥

इति श्रीशतानन्दमुनिविरचिते हरिवाक्यसुधासिन्धौ द्विशताधिकत्रिपञ्चाशत्तमस्तरङ्गः ॥ २५३ ॥ ३० ॥

सोत्साहमिति । सोत्साहम् । भगवद्भक्तिम् । कुर्वतः । इमान् । सकलान् । भक्तान् । समीक्षमाणस्य । मे मम । मनः । प्रीयतेतरामतिशयेन प्रसन्नं जायते ॥ २० ॥ स्वेति । इत्थममुना प्रकारेण । स श्रीहरिः । स्वभक्तजनशिक्षार्थम् । निजवर्त्तनं पञ्चार्थानुसन्धानरूपां स्वकीयवृत्तिम् । तान्स्वभक्तान् । उवाच । स्वयं तु । प्रभुरक्षरादिनियमनसमर्थः । साक्षात् । नारायणः पुरुषोत्तमः । अस्ति ॥ २१ ॥ आपीयेति । इत्येवंविधम् । भक्तप्रियस्य । तस्य श्रीहरेः । वचोऽमृतम् । आपीय । सभोपविष्टाः । ते । अखिलसाधुभक्ताः । गृहस्थभक्ताश्च । मनसि । महान्तम् । प्रहर्षम् । आपुः ॥ २२ ॥ युक्तं सुरुच्या स्वं भक्तं यः प्राह श्रीहरिस्तथा । पञ्चकार्यानुसन्धानमेतद्देयात्स मे सदा ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तक श्रीहर्येकान्तिकोपासक श्रीहरिकृष्णभगवत्सूनुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां द्विशताधिकत्रिपञ्चाशत्तमस्तरङ्गः ॥ २५३ ॥ ३० ॥

याऽक्षरस्था हरेर्मूर्त्तिरत्र या मानुषाकृतिः । तयोरभेदता सम्यगेकत्रिंशे समीरिता ॥१॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८८५) तपसो माघमासस्य । शुक्ले शुक्लपक्षे । चतुर्थ्यां तिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥१॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमस्य राज्ञः । दुर्गे । प्रत्यगास्यस्य पश्चिमद्वारस्य । वेश्मनस्तस्यैव भवनस्य । वितर्द्दौ बहिर्वेदिकायाम् । मञ्चकासने स्वास्तृतपर्यङ्कविष्टरे । स श्रीहरिः । न्यषीदत् अपराह्णान्तिमकाले स्वावासादागत्योपविवेश ॥२॥ सितेति । सितवासाः परिहितसकलश्वेतवसनः । साधुभिः । गृहिभिश्च । नानादेशागतैर्भक्तैरितिशेषः । परितः । वृतः सभायां संवेष्टितः । स श्रीहरिः । सद्भिर्मुक्तानन्दादिसाधुभिः । सवाद्यं मृदङ्गतन्त्र्यादि वादनसहितं यथातथा । गीतानि । कृष्णपद्यानि । अशृणोत् ॥ ३ ॥ हरिरिति । साधुभिः । गीतम् । हरिः । मे मम । हारिलयष्टिः । इति । पद्यम् । हरि मेरे हारलकि लकरि मनक्रमवचने रसिकनन्दन इत्यादिब्रह्मदासकविरचितकीर्त्तनम् । निशम्य । संहृष्टः सुप्रीतः । स श्रीहरिः । पुनः । गातुं वक्ष्यमाणकीर्त्तनगायनं कर्त्तुम् । आजिज्ञपत्तानाज्ञापयामासः ॥ ४ ॥ यमुनाया इति । तदाज्ञया श्रीहरिनिदेशेन । यमुनायाः । तीरे । स्थितः । इति पद्यम् । जगुः । यमुनांके

शकाब्दे विक्रमार्कस्य भूताष्टवसुभूमिते । चतुर्थ्यां तपसः शुक्ले वचोऽमृतमिदं हरेः ॥ १ ॥ तत्र दुर्गपुरे दुर्ग उत्तमस्य स वेश्मनः । वितर्द्दौ प्रत्यगास्यस्य न्यषीदन्मञ्चकासने ॥ २ ॥ सितवासाः साधुभिश्च गृहिभिः परितो वृतः । सद्भिः सवाद्यगीतानि कृष्णपद्यानि सोऽशृणोत् ॥ ३ ॥ हरिर्हारिलयष्टिर्मे इति पद्यं स साधुभिः । गीतं निशम्य संहृष्टो गातुमाजिज्ञपत् पुनः ॥ ४ ॥ यमुनायाः स्थितस्तीर इति पद्यं तदाज्ञया । जगुस्तदाऽन्तर्दृष्टिः सन्स तच्छ्रुत्वाऽब्रवीत्सतः ॥ ५ ॥ तेजोराशिर्भवत्येकः कोटीन्द्वर्काग्निसप्रभः । यमाहुरक्षरं ब्रह्मानन्तं कृष्णस्य धाम च ॥ ६ ॥ अस्ति तत्र स्वयं साक्षाद्भगवान् पुरुषोत्तमः । अवतारा भवन्त्यत्र तस्मादेवाखिला अपि ॥ ७ ॥ क्षराक्षरपरः सोऽस्ति सर्वकारणकारणम् । अक्षरात्मकमुक्तौघसंसेवितपदाम्बुजः ॥ ८ ॥

तीरठाडो यमुनांकेतीर इत्यादिप्रेमानन्दरचितकीर्त्तनगानं सन्तो हर्याज्ञया चक्रुरित्यर्थः । तदा तस्मिन्समये । तच्छ्रुत्वा सद्गीतकीर्त्तनगानमाकर्ण्य । स श्रीहरिः । अन्तर्दृष्टिरन्तर्दृष्टिं कृत्वा कृतविचारः सन् । सतः साधून् । अब्रवीत् ॥ ५ ॥ तेज इति । हे साधवः ! । कोटीन्द्वर्काग्निसप्रभः कोटिकोटिचन्द्रसूर्यवह्निसमानकान्तिः । एकः । तेजोराशिर्महःपुञ्जः । भवति । यं तेजोराशिम् । अनन्तमपरिछेद्यम् । अक्षरम् । ब्रह्म । आहुः । कृष्णस्य । धाम च । आहुः ॥ ६ ॥ अस्तीति । तत्र ब्रह्मधाम्नि भगवाननन्तैश्वर्यनिधिः । साक्षात् । स्वयम् । पुरुषोत्तमः । अस्ति सर्वकालं वर्त्तते । अत्र भूमौ । अखिला । अपि । अवताराः स्वयंतया गुणाद्यावेशतया च प्रादुर्भावाः । तस्मात्स्वयंपुरुषोत्तमादेव । भवन्ति ॥ ७ ॥ क्षरेति । किञ्च । सः । क्षराक्षरपरः क्षराक्षरपुरुषेभ्यः स्वरूप स्वभाव गुण विभूत्यैश्वर्यादिभिरत्यन्तं विलक्षणः । सर्वकारणकारणम् । अक्षरात्मकमुक्तौघैरक्षरभावापन्नमुक्तवृन्दैः संसेविते । पदाम्बुजे पादपद्मे यस्य तथाभूतश्च । अस्ति ॥ ८ ॥

इति । स एवंविधमहिमः । भगवान् श्रीपुरुषोत्तम एव । अत्यन्तकारुण्यान्निरवधिकातिशयदयात्रशतः । नृणाम् । निःश्रेयसायात्यन्तिकल्याणविधानार्थम् । साक्षात्प्रत्यक्षतया । अद्य साम्प्रतं तु । युष्मद्दृग्विषयः सर्वेषां युष्माकं सर्वथा सर्वकालं नयनविषयः । वर्त्तते । वै ॥ ९ ॥ अक्षर इति । अक्षरे । धाम्नि । परमात्मनः पुरुषोत्तमस्य । या । मूर्त्तिः । वर्त्तते । तस्य । मूर्त्तेः । साक्षात्कृष्णस्य युष्माकमिष्टदेवस्य प्रत्यक्षहरेः । मूर्त्तेश्च । सदृक्षता समानता । अस्ति । यद्यपि सैवेयमस्तीति वक्तुं युक्तत्वेऽपि सादृश्योक्त्या ततोऽस्या भेदप्रदर्शनं तु तस्यां मानुष्यभावो नास्त्यस्यां तु स्वेच्छया स वर्त्तते इत्येतदर्थकमेवास्तीति भावः ॥ १० ॥ य इति । यः । भक्तः । मायिकारे साक्षाद्भगवन्मूर्त्तीतरप्राकृताकृतिमात्रे । अत्यन्तविरागवान् । स्यात् । कृष्णस्वरूपलुब्धः साक्षाच्छ्रीहरिमूर्त्तिसन्दर्शनाद्येकासक्तमनाश्च । स्यात् । स तथाविधो भक्तः । तां सदृक्षतामुभयोरेकतामित्यर्थः । हृदि स्वमानसे । अनुभवेत् ॥ ११ ॥ तां तदेकतां स्पष्टमाह । उभयोरिति । वर्णेन नवीनजीमूतमेचकवर्णेन । वयसा कैशोरावस्थया । पुष्ट्या करपादाद्यवयवपुष्टतया च । तथा । औन्नत्येन । उभयोर्मूर्त्त्योः । किञ्चिदपि । अन्तरं भेदः । सर्वथा । नास्त्येव ।

स एव भगवान् साक्षाद्युष्मद्दृग्विषयोऽद्य तु । वर्त्ततेऽत्यन्तकारण्यान्नृणां निःश्रेयसाय वै ॥९॥ अक्षरे धाम्नि या मूर्त्तिर्वर्त्तते परमात्मनः । तस्याः साक्षात्तु कृष्णस्य मूर्त्तेश्चास्ति सदृक्षता ॥ १० ॥ यो भक्तो मायिकाकारे स्यादत्यन्तविरागवान् । कृष्णस्वरूपलुब्धश्च सतामनुभवेद्धृदि ॥११॥ उभयोरन्तरं किञ्चिदपि नास्त्येव सर्वथा । वर्णेन वयसा पुष्ट्या तथौन्नत्येन च ध्रुवम् ॥१२॥ अग्रतश्चक्षुषः साक्षाद्ध्यायतो भगवत्तनुम् । पुंसोऽल्पोऽपि तयोर्भेदो नैव तिष्ठति सर्वथा ॥ १३ ॥ ध्याताऽसौ यर्हि तामेव प्रातिलोम्येन चक्षुषः । अन्तर्ध्यायेत्तदा त्वेनां पश्येत्तत्तारकासमाम् ॥ १४ ॥ ततः स प्रातिलोम्येन यदा कण्ठान्तरे च ताम् । पश्येत्तदा तु तामेव संवीक्षेत महीयसीम् ॥ १५ ॥ अत्युन्नतां चातिपुष्टामीक्षेतातिभयंकराम् । ततस्तां प्रातिलोम्येन संपश्येद्धृदये यदा ॥ १६ ॥

ध्रुवम् । अवधारणद्वयमुभयोः परमार्थैकत्वदृढत्वाय ॥ १२ ॥ इदमुभयोरभेदतया दर्शनं ध्यातुर्भक्तस्य प्रत्यक्षमस्तीत्याह । अग्रत इति । चक्षुषः । अग्रतः । साक्षात्प्रत्यक्षाम् । भगवत्तनुं श्रीहरेर्मूर्त्तिम् । ध्यायतः पुंसो भक्तस्य । तस्य । तयोर्मूर्त्त्योः । अल्पोऽपि । भेदः । सर्वथा । नैव तिष्ठति ॥ १३ ॥ साम्प्रतं येन प्रकारेण साक्षाद्भगवन्मूर्त्तिं ध्यायतो भक्तस्यास्यां च मूर्त्तौ भेदो न तिष्ठति तं प्रकारमाह पञ्चभिः । ध्यानेति । ध्याता प्रत्यक्षभगवन्मूर्त्तिध्यानकर्त्ता । असौ भक्तः । यर्हि तां प्रत्यक्षभगवन्मूर्त्तिमेव । प्रातिलोम्येन । चक्षुषः । अन्तः । ध्यायेत् । तदा तु । एनां मूर्त्तिम् । तत्तारकासमां चक्षुःकनीनिकाप्रमाणम् । पश्येत् ॥ १४ ॥ तत इति । ततस्तदनन्तरम् । स ध्याता भक्तः । प्रातिलोम्येन । यदा । कण्ठातरे गलमध्यप्रदेशे । तां मूर्त्तिम् । पश्येत् । तदा तु । तां मूर्त्तिमेव । महीयसीमतिमहतीम् । संवीक्षेत् ॥ १५ ॥ अतीति । किञ्च । अत्युन्नताम् । अतिपुष्टाम् । अतिभयङ्करां च । ईक्षते । ततस्तदनन्तरम् । तां मूर्त्तिम् । प्रातिलोम्येन । यदा । हृदये । सम्पश्येत् ॥ १६ ॥

स्वेति । तदा तु । स्वबुद्धिस्थात्मनि स्वकीयबुद्धिस्थे जीवे । अंगुष्ठमात्रकाम् । ईक्षेत । ततस्तदनन्तरम् । स ध्याता भक्तः । तां मूर्त्तिम् । प्रातिलोम्येन । अक्षरधामनि । पश्येत् । इति त्रयाणामेकसम्बन्धः ॥ १७ ॥ एतदेव स्पष्टमाह । जीवादिति । जीवाद् ध्यातुर्भक्तस्य क्षेत्रज्ञात् । परत्र परस्मिन् । कोट्यर्कचन्द्रतेजसि । तत्राक्षरधामनि तु । पूर्वम् । दृष्ट्यग्रे । यथा । दृष्टा मूर्त्तिर्वीक्षितास्ति । तथा स भक्तः । तां मूर्त्तिम् । पश्यति ॥ १८ ॥ अत इति । अतो हेतोः । गुणातीते । अक्षरे । धाम्नि । यः । स्वयम् । हरिः । अस्ति । स एव । अत्र मनुष्यलोके । प्रत्यक्षः । अस्ति । तयोर्धामस्थात्रस्थमूर्त्त्योः । अल्पापि । भिदा भेदः । नास्ति ॥ १९ ॥ मनुष्येति । मनुष्याकृतिरपि । एष युष्माकं चक्षुर्विषयः । कृष्णः कृष्णनामा श्रीहरिः । अक्षरस्थ इवाक्षरधामावस्थित इव । निर्गुणो गुणातीतदिव्यमूर्त्तिः । भवति । इती त्थमेव सूक्ष्मदर्शिभिर्दिव्याकारमानुष्याकारयोरेकत्वस्य यथार्थवेदने कुशाग्रमतिभिर्भक्तैः । विज्ञेयः । श्रीहरिर्ज्ञातव्यः ॥ २० ॥ तदिति । ध्यानिनोक्तविधेन ध्यानिभक्तेन ।

स्वबुद्धिस्थात्मनि तदा त्वीक्षेतांगुष्ठमात्रकाम् । ततस्तां प्रातिलोम्येन पश्येत्सोऽक्षरधामनि ॥ १७ ॥
जीवात् परत्र कोट्यर्कचन्द्रतेजसि तत्र तु । तां स पश्यति दृष्ट्यग्रे पूर्वं दृष्टा यथा तथा ॥ १८ ॥
अतो योऽस्त्यक्षरे धाम्नि गुणातीते हरिः स्वयम् । स एवास्त्यत्र प्रत्यक्षो नास्त्यल्पापि तयोर्भिदा ॥ १९ ॥
मनुष्याकृतिरप्येष कृष्णो भवति निर्गुणः । अक्षरस्थ इवेत्येव विज्ञेयः सूक्ष्मदर्शिभिः ॥ २० ॥ तन्मूर्तिभेदः
पूर्वं यो ध्यानिना वीक्षितः स तु । तत्तद्गुणात्मकस्थानैरेव न त्वस्ति वास्तवः ॥ २१ ॥ एवं भगवता
तेन स्वस्वरूपनिरूपणम् । कृतं स्वभक्तबोधाय कृपयैव परोक्षवत् ॥ २२ ॥ इतीशितुस्तस्य वचोऽमृतं ते
निपीय सन्तो निखिलाः प्रमोदम् । भक्ता गृहस्थाश्च सभोपविष्टाः सम्प्राप्य भक्त्यैव ववन्दिरे तम् ॥ २३ ॥

इति श्रीशतानन्दमुनिविरचिते हरिवाक्यसुधासिन्धौ द्विशताधिकचतुःपञ्चाशत्तमस्तरङ्गः ॥ २५४ ॥ ३१ ॥

पूर्वम् । यः । तन्मूर्त्तिभेदश्चक्षुरादिस्थानेषु कनीनिकादिसमानतया तन्मूर्त्तिदर्शनरूपो भेदः । वीक्षितः । स मूर्त्तिभेदस्तु । तत्तद्गुणात्मकस्थानैः नेत्रे सत्वं कण्ठे रजो बुद्धौ तम एवंरूपगुणमयस्थलैरेव । अस्ति । वास्तवः सत्यस्तु नास्ति ॥२१॥ एवमिति । एवममुना प्रकारेण । भगवता । तेन श्रीहरिणा । कृपयैव । स्वभक्तबोधाय । परोक्षवत् । स्वस्वरूपनिरूपणं स्वकीयाक्षरधामस्थपुरुषोत्तमाख्यस्वरूपवर्णनम् । कृतम् ॥ २२ ॥ इतीति । इत्येवंविधम् । ईशितुरक्षरादिनियन्तुः । तस्य श्रीहरेः । वचोऽमृतम् । निपीय । सभोपविष्टाः । भक्ताः । निखिलाः । ते । सन्तः । गृहस्थाश्च । प्रमोदम् । सम्प्राप्य । तं स्वावासं व्रजन्तं श्रीहरिम् । भक्त्याऽऽदरेणैव । ववन्दिरे ॥ २३ ॥ मूर्त्तेः स्वस्याक्षरस्थाया भूमिस्थायाश्च सर्वथा । अभेदं प्राह यः स्वेभ्यो हरिः सोऽस्त्वेव मद्हृदि ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तक श्रीहर्येकान्तिकोपासक श्रीहरिकृष्णभगवत्स्नुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां द्विशताधिकचतुःपञ्चाशत्तमस्तरङ्गः ॥ २५४ ॥ ३१ ॥

भक्तस्याहारनियमादिन्द्रियाणां जयो हरेः । माहात्म्यवेदनत्वं च द्वेधा द्वात्रिंश ईरितम् ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८८५) तपसो माघमासस्य । शुक्लपञ्चम्यां शुक्लपक्षसम्बन्धिन्यां पञ्चमीतिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमस्य राज्ञः । दुर्गे । प्रत्यगास्यस्य पश्चिमद्वारस्य । वेश्मनस्तस्यैव भवनस्य । वितर्द्दौं बाह्यवेदिकायाम् । महासनेऽनर्घ्यास्तरणास्तृतपर्यङ्कासने । स श्रीहरिः । व्यराजत ॥ २ ॥ वासन्तिकानीति । वासन्तिकानि कौसुम्भादिरङ्गसिक्तत्वाद्वसन्तकालधार्याणि । वासांसि सकलान्यपि वस्त्राणि । परिधाय । स्थितः । निजैर्नानादेशागतत्यागिगृहिस्वाश्रितानेकजनैः । वृतः सभायां परिवेष्टितः । स श्रीहरिः । सद्भिः प्रेमानन्दादिमुनिभिः । गीतानि । वासन्तकृष्णपद्यानि वसन्तर्त्तुकालगेयसाक्षात्कृष्णचरित्रयुतकीर्त्तनानि । अशृणोत् ॥३॥ अथेति । अथानन्तरम् । साधुप्रियः साधवः प्रिया यस्य प्रियाः साधवो वा यस्य । साधूनां प्रिय इति । प्रभुः । श्रीहरिः । मुक्तानन्दादीन् । साधून् । आह ।

शकाब्दे विक्रमार्कस्य भूताष्टवसुभूमिते । तपसः शुक्लपञ्चम्यां वचोऽमृतमिदं हरेः ॥ १ ॥ तत्र दुर्गपुरे दुर्ग उत्तमस्य स वेश्मनः । वितर्दौ प्रत्यगास्यस्य व्यराजत महासने ॥ २ ॥ वसन्तिकानि वासांसि परिधाय वृतो निजैः । वासन्तकृष्णपद्यानि सद्भिर्गीतानि सोऽशृणोत् ॥ ३ ॥ अथाह मुक्तानन्दादीन्साधून्साधुप्रियः प्रभुः । विषया विनिवर्त्तन्त इति पद्यार्थ उच्यताम् ॥ ४ ॥ ते रामानुजभाष्येण तदर्थमवदंस्ततः । तं श्रुत्वा सोऽब्रवीदित्थं मयाऽस्यार्थस्तु निश्चितः ॥ ५ ॥ आहारः सति तारुण्ये ह्रसनीयः शनैः शनैः । युक्तः स च विधातव्य इन्द्रियाणि जिगीषुणा ॥ ६ ॥ बलं न क्षीयते देह्यं विना त्वाहारलाघवम् । बलक्षयं विना नैव स्यादिन्द्रियजयोऽपि वै ॥७॥ युक्ताहारविहारः सन् भक्तिं नवविधां हरेः । यः कुर्यात्तस्य भक्तत्वं निर्विघ्नं परिपूर्यते ॥ ८ ॥

हे साधवः ! । विषया विनिवर्त्तन्ते । इति पद्यार्थ एवंविधभगवद्गीताश्लोकार्थः । उच्यताम् ॥ ४ ॥ त इति । ते श्रीहर्यनुयुक्ता मुक्तानन्दादयः साधवः । रामानुजभाष्येण । तदर्थं गीताश्लोकार्थम् । अवदन् । ततस्तदनन्तरम् । स श्रीहरिः । तं रामानुजभाष्यानुरोधतः कृतं श्लोकार्थम् । श्रुत्वा । अब्रवीत् । हे साधवः ! । मया । अस्य पद्यस्य । अर्थस्तु । इत्थं वक्ष्यमाणप्रकारेण । निश्चितः । अस्ति ॥ ५ ॥ आहार इति । तारुण्ये । सति । इन्द्रियाणि । जिगीषुणा भक्तेन । आहारः । शनैः । शनैः । ह्रसनीयः । स आहारश्च । युक्तो मितः । विधातव्यः ॥ ६॥ बलमिति । आहारलाघवं मिताहारत्वम् । विना तु । देह्यं देहसम्बन्धि । बलम् । न क्षीयते क्षीणं न स्यात् । बलक्षयं शरीरसामर्थ्यक्षीणताम् । विना । इन्द्रियजयोऽपि । नैव स्यात् । वै ॥ ७ ॥ युक्तेति । यो भक्तः । युक्ताहारविहारः सन् । हरेः । नवविधाम् । भक्तिम् । कुर्यादतिप्रीत्या विदध्यात् । तस्य भक्तस्य । भक्तत्वमेकान्तिकत्वम् । निर्विघ्नं यथातथा । परिपूर्यते परिपूर्णं जायते ॥ ८ ॥

विपक्षे दोषमाह । समाधीति । पुमान् भक्तः । समाधिनिष्ठः सन्नपि । इन्द्रियाणाम् । जयमुक्तरीत्याहारलाघवेन वश्यत्वम् । विना । तद्वश इन्द्रियाधीनः सन् । भ्रष्टः सत्सङ्गाद्विमुखः । भवेत् । तर्हि । अल्पसाधनो भक्तः । भ्रष्टः । भवेत् । तत्र । किमु वक्तव्यम् ॥ ९ ॥ आहारनियमप्रकारं वदन्नुक्तार्थमेव द्रढयति द्वाभ्याम् । उपवासैरिति । हे साधवः ! । बहुभिः । उपवासैः । आहारस्य । यमो युक्तत्वम् । न भवेत् । यद्यतो हेतोः । तैर्बहूपवासैः । तृष्णाया अशनलालसायाः । अतिवृद्धितोऽतिशयितया वृद्ध्या । स आहारः । वृद्धिमेव । एति ॥ १० ॥ अत इति । अतो हेतोः । पुमान् भक्तः । धीरो धैर्ययुक्तः सन् । युक्त्या । शनैः । शनैरेव । तमाहारम् । नियच्छन् युक्तं कुर्वन्सन् । कृष्णम् । भजेत् प्रेमपूर्वं नवधाभक्त्योपासीत् । ततस्तदनन्तरम् । सिद्धिं पूर्णभक्तत्वम् । अवाप्नुयात् ॥ ११ ॥ इतीति । इत्यमुना प्रकारेण । सतः साधून् । उक्त्वा । स्वामी । स श्रीहरिः । क्षणान्ते । पुनः । तान्साधून् । आह । हे साधवः ! । कृष्णस्य साक्षाच्छ्रीहरेः । भक्तिम् । कुर्व-

समाधिनिष्ठोऽपि पुमानिन्द्रियाणां जयं विना । तद्वशः सन् भवेद् भ्रष्टः किमु तर्ह्यल्पसाधनः ॥ ९ ॥
उपवासैर्न बहुभिराहारस्य यमो भवेत् । यत्स तैर्वृद्धिमेवैति तृष्णाया अतिवृद्धितः ॥ १० ॥
अतः शनैः-शनैरेव युक्त्या धीरः पुमांस्तु तम् । नियच्छंश्च भजेत् कृष्णं ततः सिद्धिमवाप्नुयात् ॥ ११ ॥
इत्युक्त्वा स सतः स्वामी क्षणान्ते पुनराह तान् । भक्तिं कृष्णस्य कुर्वद्भिर्माहात्म्यं तस्य बुद्ध्यते ॥ १२ ॥
तद्वेदनमपि द्वेधा भवतीति निरूप्यते । सतां तदन्यदसतां त्वन्यदेवेति भेदतः ॥ १३ ॥
सदा कृष्णोऽस्ति साकारो बृहद्धाम्न्यतितेजसि । योऽन्तर्यामी च सर्वेषां सर्वकारणकारणम् ॥ १४ ॥
अनेककोटिब्रह्माण्डमहाराजश्च निर्गुणः । दिव्यानन्दमयाकारः प्रत्यक्षोऽस्ति स वै हरिः ॥ १५ ॥

द्भिर्भक्तैः । तस्य कृष्णस्य । माहात्म्यम् । बुद्ध्यते ॥ १२ ॥ तदिति । तद्वेदनं तन्माहात्म्यज्ञानमपि । द्वेधा द्विप्रकारम् । भवति । इति हेतोः । निरूप्यन्ते द्वाभ्यां प्रकाराभ्यां युष्मभ्यं कथ्यते । तत्तन्माहात्म्यवेदनम् । सतां स्वधर्मादिनिष्ठत्वेन सत्यानां साधूनाम् । अन्यद्भिन्नमेवास्ति । तत् । असतां स्वधर्मादिशिथिलत्वेनासत्यानां साधूनाम् । अन्यदेवास्ति । इतीत्थंभूतात् । भेदतो भेदात् । द्वेधा भवतीतिसम्बन्धः ॥ १३ ॥ तत्र सतां कृष्णमाहात्म्यवेदनप्रकारमाह पञ्चभिः । सदेति । अतितेजसि सर्वातिशायितेजोमये । बृहद्धाम्न्यक्षरपदे । कृष्णः । सदा । साकारो मूर्तिमान् । अस्ति । यः कृष्णः । सर्वेषां जीवेश्वरादीनाम् । अन्तर्याम्यन्तःस्थित्वा नियमकर्त्ता । सर्वकारणकारणं च । अस्ति ॥ १४ ॥ अनेकेति । यश्च । अनेककोटिब्रह्माण्डमहाराजः । निर्गुणो मायिकगुणवर्जितः । दिव्यानन्दमयाकारश्च । अस्ति । स एवंभूतमहिमः कृष्णः । प्रत्यक्षः सन् । हरिर्हरिनाम्ना प्रसिद्धः । अस्ति । वै ॥ १५ ॥

तदिति । तदन्यत्प्रत्यक्षश्रीहरिमूर्त्तिभिन्नम् । अखिलम् । मायिकम् । दृश्यं पदार्थजातम् । दुःखदम् । अस्ति । ततो हेतोः । तत्र दृश्ये । रुचिम् । हित्वा । असौ प्रत्यक्षः श्रीहरिरेव । सदा । भजनीयः । हि ॥ १६ ॥ काल इति । कालः । माया । शिवः । ब्रह्मा । सूर्यचन्द्रयमादयः । सावधाना अप्रमत्ताः सन्तः । तन्मर्यादां श्रीहरिप्रदर्शितस्थितिम् । सभयं यथा तथा । पालयन्ति । हि ॥ १७ ॥ मयेति । अतो हेतोः । मया । तस्यैवं विधमहिम्नः श्रीहरेः । धर्ममर्यादा । तन्निबद्धा धर्मस्थितिरित्यर्थः । तत्प्रीतये तस्य प्रसन्नतार्थम् । सर्वथैव । पाल्या । इत्येवंविधम् । सतां सत्यसाधूनाम् । ज्ञानं श्रीहरिमाहात्म्यवेदनम् । अस्ति । इतीत्थम् । गम्यताम् ॥ १८ ॥ असन्त इति । कुधियः कुमतयः । ये । असन्तः । सन्ति । ते तु । चेतसि । इत्थं वक्ष्यमाणप्रकारेण । जानन्ति कृष्णमाहात्म्यं विदन्ति । भगवान् । कृष्णः श्रीहरिः । महत्तमः स्वभक्तदोषागणानादतिश्रेष्ठः । भक्तवत्सलो भक्तकृतस्वाल्पभक्तिमप्यतुलां मानयन्स्वभक्तेष्वतिस्निग्धः । अस्ति ॥ १९ ॥ अधर्मेति । साक्षात् ।

तदन्यदखिलं दृश्यं मायिकं चास्ति दुःखदम् । ततस्तत्र रुचिं हित्वा भजनीयो ह्यसौ सदा ॥ १६ ॥ कालो माया शिवो ब्रह्मा सूर्यचन्द्रयमादयः । तन्मर्यादां सावधानाः सभयं पालयन्ति हि ॥ १७ ॥ मयाऽतो धर्ममर्यादा पाल्या तस्यैव सर्वथा । तत्प्रीतय इति ज्ञानं सतामस्तीति गम्यताम् ॥ १८ ॥ असन्तः कुधियो ये ते त्वित्थं जानन्ति चेतसि । महत्तमोऽस्ति वै कृष्णो भगवान् भक्तवत्सलः ॥१९॥ अधर्मोद्धारकः साक्षात्स्वयं पतितपावनः । तस्याश्रयेण जातोऽस्मि सर्वदैवाकुतोभयः ॥ २० ॥ अतो धर्मच्युतौ क्वापि जातायामपि चेतसि । तच्चिन्ता नैव कर्त्तव्येत्यसतामस्ति वेदनम् ॥ २१ ॥ एवं यः कृष्णमाहात्म्यमालम्ब्यासन्मतं पुमान् । पापभीरुर्भवेन्नैव सोऽतिदुष्ट इतीयताम् ॥ २२ ॥ भक्ताभासं विदित्वा तं तस्य सङ्गः कदाचन । मुमुक्षुणा न कर्त्तव्यः कृते भ्रश्येद्धि सन्मतिः ॥ २३ ॥ सन्मतं यस्य तु भवेत्कृष्णमाहात्म्यवेदनम् । प्रयत्नेन विधातव्यः सङ्गस्तस्य मुमुक्षुणा ॥ २४ ॥

स्वयं श्रीहरिः । अधर्मोद्धारकः । पतितपावनश्चास्ति । यस्य तथाविधस्य श्रीहरेः । आश्रयेणाश्रयमात्रेण । अहम् । सर्वदैव । अकुतोभयः । जातः । अस्मि ॥२०॥ अत इति । अतो हेतोः । क्वापि । कदाचित् । धर्मच्युतौ । जातायां सत्यामपि । चेतसि । तच्चिन्ता धर्मच्युतिनिमित्तः शोकः । नैव कर्त्तव्या । इत्येवंविधम् । असताम् । वेदनं श्रीहरिमाहात्म्यज्ञानम् । अस्ति ॥२१॥ एवमिति । एवममुना प्रकारेण । असन्मतम् । कृष्णमाहात्म्यं कृष्णमहिमवेदनम् । आलम्ब्य । यः । पुमान् भक्तः । पापभीरुः पापकर्मतो भयशीलः । नैव भवेत् । स भक्तः । अतिदुष्टः । इतीत्थम् । ईयताम् ॥ २२ ॥ भक्तेति । तं तथाविधं भक्तम् । भक्ताभासं वेषेण भक्तवत्प्रतीयमानमभक्तम् । विदित्वा । तस्य । सङ्गः । मुमुक्षुणा भक्तेन । कदाचन । न कर्त्तव्यः । हि यतः । कृते तत्सङ्गे विहिते सति । सन्मतिः । भ्रश्येत् ॥ २३ ॥ सदिति । यस्य भक्तस्य । सन्मतम् । कृष्णमाहात्म्यवेदनम् । भवेत् । तस्य भक्तस्य । सङ्गः । मुमुक्षुणा भक्तेन । प्रयत्नेन । विधातव्यः ॥ २४ ॥

सुधामिति । इत्थमेवंविधम् । हरेः । उदारं महार्थसम्भृतम् । वचः । सुधामिव । आस्वाद्यापीय सदस्थाः । तदीयभक्ताः । अखिलाः । ते मुनयः । ते । गृहस्थाश्चापि । प्रमोदम् । प्रपेदिरे ॥ २५॥ स्वकानामिन्द्रियजयं चाहारनियमाद् द्विधा । प्राहात्ममहिमज्ञानं यो हरिः सोऽस्तु मद्धृदि ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तक श्रीहर्ये-कान्तिकोपासक श्रीहरिकृष्णभगवत्पत्नुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां द्विशताधिकपञ्चपञ्चाशत्तमस्तरङ्गः ॥ २५५ ॥ ३२ ॥

लक्षणं दृढभक्तानां प्रवेशस्य हरौ च तत् । त्यागश्च पञ्चविघ्नानां त्रयस्त्रिंशे स्फुटं स्मृतः ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् (१८८५) । तपस्य शुक्लैकादश्यां फाल्गुनमासस्य शुक्लपक्षीयैकादशीतिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमस्य । भूभुजः । दुर्गे । गोपीनाथस्य । मन्दिरे । सितांशुकधरः परिधृतसकलश्वेतवसनः । स श्रीहरिः । अराजचक्रकासनोपविष्टः सन्नति शुशुभे ॥ २ ॥ वृत इति । सद्भिः । गृहिभिश्च । स्वभक्तैर्नानादेशागतस्वाश्रितजनैः । परितः । वृतः सभायां संवेष्टितः । प्रभुः श्रीहरिः । स्वाग्रगान् । साधून् । उवाच । हे साधवः । सर्वे यूयम् । सादरं यथा तथा ।

सुधामिवास्वाद्य हरेरुदारमित्थं वचस्ते मुनयः प्रमोदम् । गृहाश्रमस्थाश्च तदीयभक्ताः प्रपेदिरे तेऽप्यखिलाः सदःस्थाः ॥ २५ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते द्विशताधिकपञ्चपञ्चाशतमस्तरङ्गः ॥ २५५ ॥ ३२ ॥

शकाब्दे विक्रमार्कस्य भूताष्टवसुभूमिते । तपस्यशुक्लैकादश्यां वचोऽमृतमिदं हरेः ॥ १ ॥ तत्र दुर्गपुरे दुर्गे उत्तमस्य स भूभुजः । सितांशुकधरोऽराजद्गोपीनाथस्य मन्दिरे ॥ २ ॥ वृतः सद्भिश्च गृहिभिः स्वभक्तैः परितः प्रभुः । उवाच स्वाग्रगान् साधून् सर्वे शृणुत सादरम् ॥ ३ ॥ भक्तानामिह कृष्णस्य तद्भिन्नाखिलवस्तुषु । दृढं वैराग्यमुचितं कृष्णे प्रीतिश्च भूयसी ॥ ४ ॥ स्त्रीपुत्ररसवित्तादिपदार्थाहतबुद्धिता । स्त्र्याद्यर्थं चान्यमन्त्रादौ श्रद्धाया हीनतोचिता ॥ ५ ॥ ईदृशा हरिभक्तास्तु सत्सङ्गिष्वपि दुर्लभाः । मुक्तानन्दश्च गोपालानन्द एतौ हि तादृशौ ॥ ६ ॥

शृणुत । मद्वचमितिशेषः ॥ ३ ॥ भक्तानामिति । इह सत्सङ्गे । कृष्णस्य साक्षाच्छ्रीहरेः । भक्तानाम् । तद्भिन्नाखिलवस्तुषु श्रीहरिमूर्त्तीतरमायिकपदार्थमात्रे । दृढम् । वैराग्यम् । उचितं योग्यम् । कृष्णे । भूयस्यतिशयिता । प्रीतिश्च । उचिता ॥ ४ ॥ एवं सामान्यत उक्त्वा साम्प्रतं स्त्र्यादौ विशेषतो विरक्तिविधानावधारणार्थं प्रछन्नतयाऽन्तःस्थान्यमन्त्रयन्त्रदेवतान्तरमहत्त्वश्रद्धानिषेधार्थं चोक्तार्थमेव द्रढयति । स्त्रीति । स्त्रीपुत्ररसवित्तादिपदार्थैरहतबुद्धिताऽखण्डितमतित्वम् । उचिता । स्त्र्याद्यर्थं स्त्रीपुत्रादिपदार्थप्राप्त्यर्थम् । अन्यमन्त्रादौ देवाधिदेवकृष्णमन्त्रभिन्नमन्त्रयन्त्रदेवतादौ । श्रद्धाया विश्वासस्य । हीनता राहित्यं च उचिता ॥ ५ ॥ ईदृशा इति । ईदृशाः पूर्वपूर्वतरश्लोकोक्तविधाः । हरिभक्तास्तु । सत्सङ्गिषु साक्षाद्भगवद्भक्तेषु त्यागिगृहिजनेष्वपि । दुर्लभाः । सन्ति । तादृशाविह सत्सङ्गे तथाविधौ भक्तौ तु । मुक्तानन्दोमुनिः । गोपालानन्दोमुनिश्च । एतौ हि द्वावेव । भवतः ॥ ६ ॥

अलौकिकमिति । अनयोर्द्वयोर्मुन्योः । हरिं विना । अलौकिकम् । चमत्कारम् । दर्शयति । पुरुषेऽपि । गौरवमतिरयमपि कश्चिन्महानस्तीति बुद्धिः क्वापि कदाचिदपि । न भवेत् ॥ ७ ॥ ननु तर्ह्यनयोरिवान्यस्य साधोरपि । कथं वेदनेन स्त्र्यादिषु चमत्कारदर्शनादिषु च भ्रमो न स्यादित्यत्राह द्वाभ्याम् । सदिति । यः साधुः । सच्चिद्रूपे । स्वात्मनि । दिव्याकृतिम् । साक्षात्कृष्णम् । सदा । स्थितम् । विद्यात् । सर्वान् । आन्याकारान्कृष्णेतरान्मायिकारांस्तु । नश्वरांस्तुच्छानपि विनाशिनश्च । विद्यात् ॥ ८ ॥ दृढेति । यश्च साधुः । दृढवैराग्यवान्कृष्णान्याखिलमायिकाकारेषु तीव्रदोषदृष्ट्या पर्वतप्रायवैराग्ययुक्तः । तथा । कृष्णमाहात्म्यविच्च । भवेत् । तस्य साधोः । बुद्धौ तु । क्वापि । भ्रमोऽखिलमायिकाकारेषु सत्यतादिभ्रान्तिः । न भवेत् । खलु ॥ ९ ॥ तथेति । तथाप्येवंसम्यग्वेदने सत्यपि । इह सत्सङ्गे । ईदृशैरेवंविधलक्षणैः । पुरुषैः साधुभिरपि । स्त्रीरसधनप्रसङ्गः । क्वापि कदाचिदपि । सर्वथैव । न कर्त्तव्यः । हि ॥ १० ॥ सन्त इति । महान्तः । सन्तोऽपि मुक्तानन्दादिसमानाः साधवोऽपि । एतेन स्त्र्यादिप्रसङ्गेन । सत्पथच्युताः । भवेयुः । अतिनिकृष्टत्वं च । यायुः । अत्रार्थे । संशयः । नास्त्येव ॥ ११ ॥

अलौकिकं चमत्कारं दर्शयत्यपि पूरुषे । नानयोर्गौरवमतिर्भवेत् क्वापि हरिं विना ॥ ७ ॥ सच्चिद्रूपे स्वात्मनि यः साक्षात्कृष्णं सदा स्थितम् । विद्याद्दिव्याकृतिं चान्याकारान् सर्वांस्तु नश्वरान् ॥ ८ ॥ दृढवैराग्यवान् यश्च कृष्णमाहात्म्यवित्तथा । भवेत्तस्य तु न क्वापि भवेद् बुद्धौ भ्रमः खलु ॥ ९ ॥ तथापि स्त्रीरसधनप्रसङ्गः सर्वथैव हि । ईदृशैरपि न क्वापि कर्त्तव्यः पुरुषैरिह ॥१०॥ सन्तो महान्तोऽप्येतेन भवेयुः सत्पथच्युताः । यायुश्चातिनिकृष्टत्वमत्र नास्त्येव संशयः ॥ ११ ॥ पदार्थाः स्त्र्यादयो ह्येते सुरावत्स्वोपभोगिनम् । सद्यो भ्रष्टमतिं कुर्युः पण्डितं वाऽप्यपण्डितम् ॥१२॥ प्रसङ्गो विजने स्त्रीणां सुरूपाणां भवेद्यदि । महत्तो वित्तराशेर्वा मुहुः स्यादुपलम्भनम् ॥ १३ ॥ क्रियेत वा स्वस्य नरैर्लक्षशो माननं यदि । तदा महान्तः सन्तोऽपि मुह्येरन्निति निश्चयः ॥ १४ ॥ एकं नाराणमृषिं विना तु धनयोषिताम् । प्रसङ्गेन नरः कोऽपि न भ्रष्ट इति न श्रूतः ॥ १५ ॥

पदार्था इति । हि यतः । एते स्त्र्यादयः पदार्थाः । सुरावत् । स्वोपभोगिनम् । पण्डितं विद्वांसम् । अथवा । अपण्डितमपि । सद्यः । भ्रष्टमतिम् । कुर्युः ॥ १२ ॥ विशेषतस्त्यागायैतदेव पुनः स्फुटतयाऽऽह द्वाभ्याम् । प्रसङ्ग इति । यदि । विजने रहःस्थाने । सुरूपाणाम् । स्त्रीणाम् । प्रसङ्गः । भवेत् । अथवा यदि । महतः । वित्तराशेः । मुहुः । उपलम्भनं प्राप्तिः । स्यात् ॥ १३ ॥ क्रियेतेति । अथवा । यदि । लक्षशः । नरैः । स्वस्य । माननम् । क्रियेत । तदा । महान्तः । सन्तोऽपि । मुह्येरन्मोहं प्राप्नुयुरेव । इत्येवंविधः । निश्चयः । अस्ति । इति द्वयोरेकसम्बन्धः ॥ १४ ॥ एकमिति । एकम् । नारायणम् । ऋषिम् । विना । धनयोषिताम् । प्रसङ्गेन । कोऽपि । नरः । न भ्रष्टः । इति । न श्रूतः । अपि तु सर्वेऽपि । भ्रष्टाः श्रुता एव । तथाचोक्तं श्रीभागवते । "ऋषिं नारायणमृते योषिन्मय्येह मायया' । 'येन्ये स्वतः परिहृतादपि बिभ्यति स्म' त्यादिना ॥ १५ ॥

तस्मादिति । तस्माद्धेतोः । स्वहितार्थिभिः । मच्छ्रितैः । मुमुक्षुभिः । अथवा । मुक्तैः साधुभिश्च । धनयोषिताम् । प्रसङ्गः । सर्वथा । न कार्यः ॥ १६ ॥ एवं सर्वथा भगवदेकान्तिकनामपि । स्त्र्यादिप्रसङ्गहेयतां दृढीकृत्य साम्प्रतं तेऽपि तामेकान्तिकतां दृढं सम्पाद्य श्रीहरौ प्रविश्य लक्ष्मीवत्तं सेवन्ते तदैव कालादिभयनिवृत्ति रिति वदन् हरौ प्रवेशाय तत्र स्नेहाधिक्यं कर्त्तव्यमित्याह दशभिः । स्वेति । हे साधवः ! । स्वधर्मवैराग्योपेता । दृढा माहात्म्यज्ञानसहिता । हरेः । भक्तिः । प्रयत्नेन । साधनीया सर्वैर्मद्भक्तैः सम्पादनीया । यतः स्वधर्मादियुक्त हरिभक्तिसम्पादनतः । एकान्तिकता । स्यात् ॥ १७ ॥ एकेति । यः । एकान्तिकः । भक्तः । अस्ति । स तु । वासुदेवे श्रीहरौ । प्रविश्य । आस्ते । लक्ष्मीवत् । तम् । आदरात् । सदा । सेवते च । निश्चितम् ॥ १८ ॥ तत इति । ततस्तदनन्तरम् । अस्यैकान्तिकभक्तस्य । सर्वम् । कालमायादिभयम् । निवर्त्तते । अतो हेतोः । विवेकिभिरेकान्तिकभक्तैः । अत्रैकान्तिकत्वे । विघ्नकृदन्तरायकरः । असत्प्रसङ्गः । त्याज्यः ॥ १९ ॥ प्रवेश इति । स्नेहाधिक्येन । चेतसि । तस्य श्रीहरेः । अखण्डानुसन्धानमविछेदतयाऽनुस्मरणम् । हरौ । प्रवेशः । ज्ञेयः । तस्मिन् हरौ । स्वलीनता

तस्मान्न सर्वथा कार्यः प्रसङ्गो धनयोषिताम् । मुमुक्षुभिश्च मुक्तैर्वा मच्छ्रितैः स्वहितार्थिभिः ॥ १६ ॥ स्वधर्मज्ञानवैराग्योपेता भक्तिर्दृढा हरेः । साधनीया प्रयत्नेन स्यादेकान्तिकता यतः ॥ १७ ॥ एकान्तिकस्तु यो भक्तो वासुदेवे स निश्चितम् । प्रविश्यास्ते सेवते च लक्ष्मीवत्तं सदाऽऽदरात् ॥ १८ ॥ ततोऽस्य कालमायादिभयं सर्वं निवर्त्तते । अतोऽत्र विघ्नकृत्त्याज्योऽसत्प्रसङ्गो विवेकिभिः ॥ १९ ॥ प्रवेशस्तु हरौ ज्ञेयः स्नेहाधिक्येन चेतसि । तस्याखण्डानुसन्धानं न तु तस्मिन्स्वलीनता ॥ २० ॥ यथाऽहिफेनप्रमुखे व्यसने सक्तचेतसः । तद्विना वर्त्तनं नैव भवेत्पुंसः कथंचन ॥ २१ ॥ तथैकान्तिकभक्तस्य साङ्गभक्तौ रमापतेः । विषक्तचेतसः कापि तां विना वर्त्तनं नहि ॥ २२ ॥ कट्वामयकरं लोकगर्हितं वित्तहानिकृत् । अपि न व्यसनी कापि मुञ्चति व्यसनं यदि ॥ २३ ॥ इहामुत्रातिसुखदं कृष्णं भूरियशस्करम् । तर्हि भक्तः कथं कापि मुञ्चेदाधारमात्मनः ॥ २४ ॥

जले लवणवत्स्वस्यैकीभावः । नतु प्रवेशो नैव ज्ञेयः । एतच्छताधिकैकसप्ततितमतरङ्गाद्बोध्यम् ॥ २० ॥ यथेति । यथा । अहिफेनप्रमुखेऽहिफेनमहाजिह्वादिकाशनं विना स्थातुमशक्तारूपे । व्यसने । सक्तचेतसः । पुंसः । कथंचन यदि त्वमेतद् व्यसनं जह्यास्तर्हि तुभ्यं लक्षशः सुवर्णमुद्रा दद्यामित्युक्त्वा ता दातुं तस्मिन्नुद्युक्ते सत्यपीत्यर्थः । तद्व्यसनं विना । वर्त्तनम् । नैव भवेत् । तथेत्युत्तरेण सम्बन्धः ॥ २१ ॥ तथेति । तथा । रमापतेः श्रीहरेः । साङ्गभक्तौ स्वधर्माद्यङ्गयुतायामेकान्तिकभक्तौ । विषक्तचेतस आसक्तचित्तस्य । एकान्तिकभक्तस्य । कापि कदाचिदपि । तां साङ्गभक्तिं । विना । वर्त्तनम् । न भवेत् । हि ॥ २२ ॥ कट्विति । यदि । व्यसनी पुरुषः । कटु निम्बगडूच्यादिरसवदतितीक्ष्णम् । आमयकरं नानाविधरोगवृद्धिकरम् । लोकगर्हितम् । वित्तहानिकृत् । व्यसनमपि । क्वापि कदाचिदपि । न मुञ्चति ॥ २३ ॥ इहेति । तर्हि । इह । अमुत्र । अतिसुखदम् । भूरियशस्करम् । आत्मनः । स्वस्य । आधारमेकान्तिकभक्तिप्रवृद्धस्नेहास्पदीभूतम् । कृष्णम् । भक्तः ।

अलौकिकमिति । अनयोर्द्वयोर्मुन्योः । हरिं विना । अलौकिकम् । चमत्कारम् । दर्शयति । पूरुषेऽपि । गौरवमतिरयमपि कश्चिन्महानस्तीति बुद्धिः क्वापि कदाचिदपि । न भवेत् ॥ ७ ॥ ननु तर्ह्यनयोरिवान्यस्य साधोरपि । कथं वेदनेन स्त्र्यादिषु चमत्कारदर्शनादिषु च भ्रमो न स्यादित्यत्राह द्वाभ्याम् । सदिति । यः साधुः । सच्चिद्रूपे । स्वात्मनि । दिव्याकृतिम् । साक्षात्कृष्णम् । सदा । स्थितम् । विद्यात् । सर्वान् । आन्याकारान्कृष्णेतरान्मायिकारांस्तु । नश्वरांस्तुच्छानपि विनाशिनश्च । विद्यात् ॥ ८ ॥ दृढेति । यश्च साधुः । दृढवैराग्यवान्कृष्णान्याखिलमायिकाकारेषु तीव्रदोषदृष्ट्या पर्वतप्रायवैराग्ययुक्तः । तथा । कृष्णमाहात्म्यविच्च । भवेत् । तस्य साधोः । बुद्धौ तु । क्वापि । भ्रमोऽखिलमायिकाकारेषु सत्यतादिभ्रान्तिः । न भवेत् । खलु ॥ ९ ॥ तथेति । तथाप्येवंसम्यग्वेदने सत्यपि । इह सत्सङ्गे । ईदृशैरेवंविधलक्षणैः । पुरुषैः साधुभिरपि । स्त्रीरसधनप्रसङ्गः । क्वापि कदाचिदपि । सर्वथैव । न कर्त्तव्यः । हि ॥ १० ॥ सन्त इति । महान्तः । सन्तोऽपि मुक्तानन्दादिसमानाः साधवोऽपि । एतेन स्त्र्यादिप्रसङ्गेन । सत्पथच्युताः । भवेयुः । अतिनिकृष्टत्वं च । यायुः । अत्रार्थे । संशयः । नास्त्येव ॥ ११ ॥

अलौकिकं चमत्कारं दर्शयत्यपि पूरुषे । नानयोर्गौरवमतिर्भवेत् क्वापि हरिं विना ॥ ७ ॥ सच्चिद्रूपे स्वात्मनि यः साक्षात्कृष्णं सदा स्थितम् । विद्याद्दिव्याकृतिं चान्याकारान् सर्वांस्तु नश्वरान् ॥ ८ ॥ दृढवैराग्यवान् यश्च कृष्णमाहात्म्यवित्तथा । भवेत्तस्य तु न क्वापि भवेद् बुद्धौ भ्रमः खलु ॥ ९ ॥ तथापि स्त्रीरसधनप्रसङ्गः सर्वथैव हि । ईदृशैरपि न क्वापि कर्त्तव्यः पुरुषैरिह ॥१०॥ सन्तो महान्तोऽप्येतेन भवेयुः सत्पथच्युताः । यायुश्चातिनिकृष्टत्वमत्र नास्त्येव संशयः ॥ ११ ॥ पदार्थाः स्त्र्यादयो ह्येते सुरावत्स्वोपभोगिनम् । सद्यो भ्रष्टमतिं कुर्युः पण्डितं वाऽप्यपण्डितम् ॥१२॥ प्रसङ्गो विजने स्त्रीणां सुरूपाणां भवेद्यदि । महत्तो वित्तराशेर्वा मुहुः स्यादुपलम्भनम् ॥ १३ ॥ क्रियेत वा स्वस्य नरैर्लक्षशो माननं यदि । तदा महान्तः सन्तोऽपि मुह्येरन्निति निश्चयः ॥ १४ ॥ एकं नाराणमृषिं विना तु धनयोषिताम् । प्रसङ्गेन नरः कोऽपि न भ्रष्ट इति न श्रूतः ॥ १५ ॥

पदार्था इति । हि यतः । एते स्त्र्यादयः पदार्थाः । सुरावत् । स्वोपभोगिनम् । पण्डितं विद्वांसम् । अथवा । अपण्डितमपि । सद्यः । भ्रष्टमतिम् । कुर्युः ॥ १२ ॥ विशेषतस्त्यागायैतदेव पुनः स्फुटतयाऽऽह द्वाभ्याम् । प्रसङ्ग इति । यदि । विजने रहःस्थाने । सुरूपाणाम् । स्त्रीणाम् । प्रसङ्गः । भवेत् । अथवा यदि । महतः । वित्तराशेः । मुहुः । उपलम्भनं प्राप्तिः । स्यात् ॥ १३ ॥ क्रियेतेति । अथवा । यदि । लक्षशः । नरैः । स्वस्य । माननम् । क्रियेत । तदा । महान्तः । सन्तोऽपि । मुह्येरन्मोहं प्राप्नुयुरेव । इत्येवंविधः । निश्चयः । अस्ति । इति द्वयोरेकसम्बन्धः ॥ १४ ॥ एकमिति । एकम् । नारायणम् । ऋषिम् । विना । धनयोषिताम् । प्रसङ्गेन । कोऽपि । नरः । न भ्रष्टः । इति । न श्रूतः । अपि तु सर्वेऽपि । भ्रष्टाः श्रुता एव । तथाचोक्तं श्रीभागवते । ''ऋषिं नारायणमृते योषिन्मय्येह मायया' । 'येन्ये स्वतः परिहृतादपि । बिभ्यति स्मे' त्यादिना ॥ १५ ॥

तस्मादिति । तस्माद्धेतोः । स्वहितार्थिभिः । मच्छ्रितैः । मुमुक्षुभिः । अथवा । मुक्तैः साधुभिश्च । धनयोषिताम् । प्रसङ्गः । सर्वथा । न कार्यः ॥ १६ ॥ एवं सर्वथा भगवदेकान्तिकनामपि । स्त्र्यादिप्रसङ्गहेयतां दृढीकृत्य साम्प्रतं तेऽपि तामेकान्तिकतां दृढं सम्पाद्य श्रीहरौ प्रविश्य लक्ष्मीवत्तं सेवन्ते तदैव कालादिभयनिवृत्ति रिति वदन् हरौ प्रवेशाय तत्र स्नेहाधिक्यं कर्त्तव्यमित्याह दशभिः । स्वेति । हे साधवः ! । स्वधर्मवैराग्येपेता । दृढा माहात्म्यज्ञानसहिता । हरेः । भक्तिः । प्रयत्नेन । साधनीया सर्वैर्मद्भक्तैः सम्पादनीया । यतः स्वधर्मादियुक्त हरिभक्तिसम्पादनतः । एकान्तिकता । स्यात् ॥ १७ ॥ एकेति । यः । एकान्तिकः । भक्तः । अस्ति । स तु । वासुदेवे श्रीहरौ । प्रविश्य । आस्ते । लक्ष्मीवत् । तम् । आदरात् । सदा । सेवते च । निश्चितम् ॥ १८ ॥ तत इति । ततस्तदनन्तरम् । अस्यैकान्तिकभक्तस्य । सर्वम् । कालमायादिभयम् । निवर्त्तते । अतो हेतोः । विवेकिभिरेकान्तिकभक्तैः । अत्रैकान्तिकत्वे । विघ्नकृदन्तरायकरः । असत्प्रसङ्गः । त्याज्यः ॥ १९ ॥ प्रवेश इति । स्नेहाधिक्येन । चेतसि । तस्य श्रीहरेः । अखण्डानुसन्धानमविछेदतयाऽनुस्मरणम् । हरौ । प्रवेशः । ज्ञेयः । तस्मिन् हरौ । स्वलीनता

तस्मान्न सर्वथा कार्यः प्रसङ्गो धनयोषिताम् । मुमुक्षुभिश्च मुक्तैर्वा मच्छ्रितैः स्वहितार्थिभिः ॥ १६ ॥ स्वधर्मज्ञानवैराग्योपेता भक्तिर्दृढा हरेः । साधनीया प्रयत्नेन स्यादेकान्तिकता यतः ॥ १७ ॥ एकान्तिकस्तु यो भक्तो वासुदेवे स निश्चितम् । प्रविश्यास्ते सेवते च लक्ष्मीवत्तं सदाऽऽदरात् ॥ १८ ॥ ततोऽस्य कालमायादिभयं सर्वं निवर्त्तते । अतोऽत्र विघ्नकृत्त्याज्योऽसत्प्रसङ्गो विवेकिभिः ॥ १९ ॥ प्रवेशस्तु हरौ ज्ञेयः स्नेहाधिक्येन चेतसि । तस्याखण्डानुसन्धानं न तु तस्मिन्स्वलीनता ॥ २० ॥ यथाऽहिफेनप्रमुखे व्यसने सक्तचेतसः । तद्विना वर्त्तनं नैव भवेत्पुंसः कथंचन ॥ २१ ॥ तथैकान्तिकभक्तस्य साङ्गभक्तौ रमापतेः । विषक्तचेतसः क्वापि तां विना वर्त्तनं नहि ॥ २२ ॥ कट्वामयकरं लोकगर्हितं वित्तहानिकृत् । अपि न व्यसनी क्वापि मुञ्चति व्यसनं यदि ॥ २३ ॥ इहामुत्रातिसुखदं कृष्णं भूरियशस्करम् । तर्हि भक्तः कथं क्वापि मुञ्चेदाधारमात्मनः ॥ २४ ॥

जले लवणवत्स्वस्यैकीभावः । नतु प्रवेशो नैव ज्ञेयः । एतच्छताधिकैकसप्ततितमतरङ्गाद्बोध्यम् ॥ २० ॥ यथेति । यथा । अहिफेनप्रमुखेऽहिफेनमहाजिह्वादिकाशनं विना स्थातुमशक्तारूपे । व्यसने । सक्तचेतसः । पुंसः । कथंचन यदि त्वमेतद् व्यसनं जह्यास्तर्हि तुभ्यं लक्षशः सुवर्णमुद्रा दद्यामित्युक्त्वा ता दातुं तस्मिन्नुद्युक्ते सत्यपीत्यर्थः । तद्व्यसनं विना । वर्त्तनम् । नैव भवेत् । तथेत्युत्तरेण सम्बन्धः ॥ २१ ॥ तथेति । तथा । रमापतेः श्रीहरेः । साङ्गभक्तौ स्वधर्माद्यङ्गयुतायामेकान्तिकभक्तौ । विषक्तचेतस आसक्तचित्तस्य । एकान्तिकभक्तस्य । क्वापि कदाचिदपि । तां साङ्गभक्तिं । विना । वर्त्तनम् । न भवेत् । हि ॥ २२ ॥ कट्विति । यदि । व्यसनी पुरुषः । कटु निम्बगडूच्यादिरसवदतितीक्ष्णम् । आमयकरं नानाविधरोगवृद्धिकरम् । लोकगर्हितम् । वित्तहानिकृत् । व्यसनमपि । क्वापि कदाचिदपि । न मुञ्चति ॥ २३ ॥ इहेति । तर्हि । इह । अमुत्र । अतिसुखदम् । भूरियशस्करम् । आत्मनः । स्वस्य । आधारमेकान्तिकभक्तिप्रवृद्धस्नेहास्पदीभूतम् । कृष्णम् । भक्तः ।

क्वापि । कथम् । मुञ्चेत् । न मुञ्चेदेवेत्यर्थः । इति द्वयोरेकसम्बन्धः ॥ २४ ॥ एवमिति । एवममुना प्रकारेण । कृष्णैकचित्तस्य स्नेहेन श्रीहर्यैकासक्तमानसस्य । भक्तस्य । जीवतः सतोऽपि । अथवा । मृतस्य सतोऽपि । कृष्णे । साक्षाच्छ्रीहरावेव । प्रवेशः । अस्ति । इतीत्थम् । निश्चितमेव । विज्ञेयम् ॥ २५ ॥ चतुर्धेति । एष एकान्तिकः । भक्तः । चतुर्धा । मुक्तिमपि । कर्हिचित् । न वाञ्छेत् । तर्हि नृणाम् । अल्पसुखदम् । स्वर्गम् । अथवा । राज्यादि । कुतो वाञ्छेत् । न वाञ्छेत् । किन्त्वेकां श्रीहरिसेवामेव वाञ्छेदिति भावः ॥ २६ ॥ विपक्षे दोषमाह । भक्त इति । यः । पुरुषः । विष्णोः श्रीहरेः । भक्तः । भूत्वापि । मायिके । सुखे । सज्जते । अथवा । कुसङ्गेऽपि । रज्येतानुरक्तो भवेत् । स पुरुषः । ध्रुवमेव । भ्रष्टः सत्सङ्गाच्च्युतः । भविता भविष्यति ॥ २७ ॥ देहेति । किञ्च । देहाभिमानः । नारी । दुःखभावः । धनम् । रसश्च । एते पञ्चदोषाः भक्तौ । श्रीहरेरेकान्तिकभजने । महाविघ्नाः । ज्ञेयाः । यत्नतः । त्याज्या हेयाश्च ज्ञेयाः ॥ २८ ॥ देहाभिमानादीनां भक्तौ विघ्नत्वप्रकारं दर्शयन्विशेषतस्तत्त्याज्यत्वमाह पञ्चभिः । सतीति । हे साधवः ! । देहे । अभिमाने । सति तु । क्वचित् ।

एवं कृष्णैकचित्तस्य भक्तस्य जीवतोऽपि वा । मृतस्य कृष्णे विज्ञेयं प्रवेशोऽस्तीति निश्चितम् ॥ २५ ॥ चतुर्धा मुक्तिमप्येष भक्तो वाञ्छेन्न कर्हिचित् । कुतस्तर्ह्यल्पसुखदं स्वर्गं राज्यादि वा नृणाम् ॥ २६ ॥ भक्तो भूत्वापि यो विष्णोः सुखे सज्जेत मायिके । रज्येत वा कुसङ्गेऽपि स भ्रष्टो भविता ध्रुवम् ॥ २७ ॥ देहाभिमानो नारी च दुःस्वभावो धनं रसः । एते भक्तौ महाविघ्ना ज्ञेयास्त्याज्याश्च यत्नतः ॥२८॥ सति देहेऽभिमाने तु तत्र रोगादिसम्भवे । अलाभे क्वचिदन्नादेर्वाऽऽज्ञायां तपसोऽपि वा ॥ २९ ॥ शिथिलैव भवेद्भक्तिस्तदा तस्य च चेतसि । विचारः कोऽपि तिष्ठेन्नो ततोऽकार्यरतिर्भवेत् ॥ ३० ॥ स्त्रीद्रव्यरसयोगे तु प्रीतिस्तस्य हराविव । तेष्वपि स्यात्ततो भक्तिः शिथिलत्वं व्रजेद् ध्रुवम् ॥ ३१ ॥ दुःस्वभाववशस्यापि पुंसस्तत्खननोदितैः । सद्वचोभिर्व्रजेदेव शैथिल्यं भक्तिरीशितुः ॥ ३२ ॥

तत्र देहे । रोगादिसम्भवे । अथवा । क्वचित् । अन्नादेः । अलाभे । अथवा । क्वचित् । तपसो व्रतादितपश्चरणस्य । आज्ञायां श्रीहरेर्निर्देशेऽपि । एवं प्रकारत्रये सति ॥२९॥ शिथिलेति । भक्तिः । शिथिलैव । भवेत् । तदा । तस्य भक्तस्य । चेतसि । कोऽपि । विचारः । नो तिष्ठेत् । ततस्तदनन्तरम् । अकार्यरतिः । भवेत् । अतः । भक्तिः । शिथिला । भवेदितिसम्बन्धः । इति द्वयोरेकसम्बन्धः ॥३०॥ स्त्रीति । स्त्रीद्रव्यरसयोगे स्त्र्यादिसम्बन्धे सति तु । तस्य भक्तस्य । हराविव । तेषु स्त्र्यादिष्वपि । प्रीतिः । स्यात् । ततो हेतोः । भक्तिः । ध्रुवमेव । शिथिलत्वम् । व्रजेत् ॥३१॥ दुरिति । दुःस्वभाववशस्य मानादिदुष्टप्रकृत्यधीनस्य । पुंसो भक्तस्यापि । तत्खननोदितैर्दुःस्वभावोन्मूलनायाभिहितैः । सद्वचोभिः । ईशितुः । भक्तिः । शैथिल्यमेव । व्रजेत् । स्वस्मिन्मानादिदुःस्वभावे सति तद्विनाशाय सन्तो यर्हि तत्खननं यथा स्यात्तथाविधयुक्त्या वार्ताः कुर्युस्तदनुवर्तनं निवारयेयुर्निर्मानादिसाधुरीत्या वर्तनं च कारयेयुस्तदाऽसौ विमुह्य सत्सु स्थातुमशक्नुवन् भक्तिशैथिल्यं प्राप्नुयादित्यर्थः ॥ ३२ ॥

अत इति । अतो हेतोः । सुधीर्भक्तः । स्वश्रेयसे स्वात्यन्तिककल्याणसम्पादनाय । सत्प्रसङ्गमेकान्तिकसाधुसमागमम् । चरन् कुर्वन्सन् । वैराग्याभ्यासयोगेन विरक्तिज्ञानाभ्यासम्पादनरूपोपायेन । प्रयत्नेन । एतान् । विघ्नान्देहाभिमानादीन्पञ्चहरिभक्त्यन्तरायान् । त्यजेत् जह्यादेव ॥ ३३ ॥ निशम्येति । इत्येवंविधाम् । धर्मसूनोः । तस्य श्रीहरेः । पीयूषसमानवाचम् । निशम्य । संसदि । स्थिताः । भक्ताः सर्वे । ते । अन्त्याश्रमस्थास्त्यागिसंज्ञाभागवतपरमहंसाः । गृहाश्रमस्थाश्चापि । हृदि स्वस्वमानसे । मोदम् । आपुः ॥ ३४ ॥ स्वस्यैव दृढभक्तानां प्रवेशस्य च लक्षणम् । स्वस्मिन्स्वभक्तौ विघ्नानां पञ्चानां त्यागमाह यः ॥ १ ॥ श्रीहरिः स वै मे दद्यात्स्वकीयदृढभक्तताम् । स्वस्मिन्प्रवेशं विघ्नेभ्यस्तेभ्यो मे रक्षणं क्रियात् ॥ २ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तक श्रीहर्येकान्तिकोपासक श्रीहरिकृष्णभगवत्सूनु-रघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां द्विशताधिकषट्पञ्चाशत्तमस्तरङ्गः ॥ २५६ ॥ ३३ ॥

हर्येकवासनाप्राप्तिस्तद्भिन्नवासनाक्षतेः । श्रेष्ठानि यानि भक्तानां साधनानि यथार्थतः ॥ १ ॥ हेयोपादेयतायाश्च विवेको यो रुपस्तथा । तत्सर्वं तु चतुस्त्रिंशे

अत एतान्प्रयत्नेन विघ्नान् स्वश्रेयसे सुधीः वैराग्याभ्यासयोगेन सत्प्रसङ्गं चरंस्त्यजेत् ॥ ३३ ॥ निशम्य ते संसदि धर्मसूनोस्तस्येति पीयूषसमानवाचम् । अन्त्याश्रमस्थाश्च गृहाश्रमस्थाः सर्वेऽपि भक्ता हृदि मोदमापुः ॥ ३४ ॥

इति श्रीशतानन्दमुनिविरचिते हरिवाक्यसुधासिन्धौ द्विशताधिकषट्पञ्चाशत्तमस्तरङ्गः ॥ २५६ ॥ ३३ ॥

शकाब्दे विक्रमार्कस्य भूताष्टवसुभूमिते । मधोः शुक्लतृतीयायां वचोऽमृतमिदं हरेः ॥ १ ॥
तत्र दुर्गपुरे स्वामी श्रीगोपीनाथमन्दिरे । व्यराजतासने श्वेतसर्ववासा वृतो निजैः ॥ २ ॥
तमपृच्छच्छुकमुनिः प्रणम्य पुरतः स्थितः । हिताय भजतां नृणां सर्वेषामपि ते पदम् ॥ ३ ॥
हृदि तिष्ठेत्सदैवैका कृष्णस्य तव वासना । तद्भिन्ना च विनष्टा स्याद्वासना मूलतोऽखिला ॥ ४ ॥

स्पष्टत्वेन प्रकीर्त्तितम् ॥ २ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८८५) मधोश्चैत्रमासस्य । शुक्लतृतीयायां शुक्लपक्षागततृतीयातिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । श्रीगोपीनाथमन्दिरे उत्तमनृपतिदुर्गान्तर्वर्त्तिश्रीगोपीनाथभगवत्प्रासादे । आसने चक्रकविष्टरे । श्वेतसर्ववासाः परिधृतसकलश्वेतवसनः । निजैर्नानादेशागतत्यागिगृहिस्वाश्रितजनैः । वृतः सभायां परिवेष्टितः । स्वामी श्रीहरिः । व्यराजत ॥ २ ॥ तमिति । तं श्रीहरिम् । प्रणम्य । पुरतोऽग्रप्रदेशे । स्थितः । शुकमुनिः शुकानन्दसाधुः । अपृच्छत् । हे हरे ! । हितायैकान्तिकमुक्तिरूपं स्वहितं कर्तुम् । तेऽक्षरधामाधिपतेः पुरुषोत्तमस्य तव । पदं चरणकमलम् । भजताम् । सर्वेषाम् । नृणां भक्तजनानाम् । हृदीत्युत्तरेण सम्बन्धः ॥ ३ ॥ हृदीति । हृदि मानसे । कृष्णस्य । तव सम्बन्धिनी । एका केवला । वासना । सदैव । तिष्ठेत् । तद्भिन्ना त्वत्स्वरूपवासनेतरा मायिका । अखिला । वासना । मूलतः । विनष्टा । स्यात् ॥ ४ ॥

साधनेति । हे प्रभो ! । तत्र त्वद्वासनासुस्थिरतायामन्याखिलवासनोन्मूलने चेत्यर्थः । एकं प्रथमम् । हरौ । त्वयि । प्रीतिदाढर्थम् । द्वितीयं च । विराग्ययुक् । ज्ञानं स्वात्मस्वरूपस्य परमात्मनस्तव स्वरूपस्य च यथार्थतया वेदनम् । इति । साधनद्वितयम् । मम । प्रतिभाति ॥५॥ एतदिति । यस्य भक्तस्य । स्वमानसे स्वान्तःकरणे । एतत् । द्वयमुक्तसाधनद्वितयम् । सम्यक् । न वर्त्तेत । हरेः पुरुषोत्तमस्य तव । निश्चयस्तु । सम्यक् । भवेत् । प्रत्यक्षो भगवान्मिलितोऽस्तीति कल्याणं तु स्यादेवेति विश्वासोऽपि स्यादेवेत्यर्थः । तस्येत्युत्तरेण सम्बन्धः ॥६॥ तस्येति । हे ईश्वर ! । तस्य भक्तस्य । तत्सिद्धये त्वद्वासनासुस्थिरताया अन्यवासनोन्मूलनस्य च निष्पत्त्यर्थम् । अन्यः । उपायः । अस्ति । अथवा । नास्ति । मदुक्तोपायस्यातिकठिनत्वादितरः सुकरोपायोऽस्ति चेन्मह्यं तं ब्रूहीत्यर्थः । इत्यमुना प्रकारेण । पृष्टः शुकानन्दमुनिनानुयुक्तः । धार्मिधर्मपुत्रः । स श्रीहरिः । तं शुकानन्दमुनिम् । प्रोवाच । हे सन्मते । शृणु ॥७॥ प्राकृतानामिति । प्राकृतानाम् । वासनानाम् । हृदोऽन्तःकरणात्सकाशात् । सम्यग्निवृत्तये । हृदि । कृष्णैकवासनायाः । सम्यक् संसिद्धये च ॥ ८ ॥ त्वदिति । त्वदुक्तसाधनद्वन्द्वमेव । मुख्यतया । मतम् । अत्रार्थे । साधनान्तरं वक्ष्यमाणोपाय-

साधनद्वितयं तत्र प्रतिभाति मम प्रभो ! । प्रीतिदार्ढ्यं त्वयि हरौ चैकं ज्ञानं विरागयुक् ॥ ५ ॥ एतद्द्वयं यस्य सम्यङ् न वर्त्तेत स्वमानसे । निश्चयस्तु भवेत्सम्यग्घरेः श्रद्धा च भूयसी ॥ ६ ॥ तस्य तत्सिद्धयेऽस्त्यन्य उपायो वा न हीश्वर ! । इति पृष्टः स धार्मिस्तं प्रोवाच शृणु सन्मते ! ॥ ७ ॥ प्राकृतानां वासनानां हृदः सम्यग्निवृत्तये । कृष्णैकवासनायाश्च सम्यक् संसिद्धये हृदि ॥ ८ ॥ तवदुक्तसाधनद्वन्द्वमेव मुख्यतया मतम् । साधनान्तरमप्यत्र वर्त्तते तद्वदामि ते ॥ ९ ॥ ब्रह्मचर्यव्रतं तेन त्वष्टधा स्त्रीविवर्जनम् । पालनीयं प्रयत्नेन भक्तेनात्मनिवेदिवत् ॥ १० ॥ मायिकार्थेषु कर्त्तव्या दोषदृष्टिश्च पञ्चसु । श्रद्धया च सतां सेवा भक्तिश्च नवधा हरेः ॥ ११ ॥ एतच्चतुष्टयं यस्य भवेच्छ्रितवतो हरिम् । ज्ञानप्रीती विनाऽप्यस्य भवेत्कृष्णैकवासना ॥ १२ ॥ इत्याश्रुत्य स तद्वाक्यं पुनः पप्रच्छ तं मुनिः । प्रसिद्धिरस्ति सर्वत्र कामात् क्रोधोऽभिजायते ॥ १३ ॥

चतुष्टयात्मकमन्यत्साधनमपि । वर्त्तते । तत्साधनान्तरम् । ते तुभ्यम् । वदामि । इति द्वयोरेकसम्बन्धः ॥ ९ ॥ ब्रह्मचर्येति । तेन । भक्तेन तु । अष्टधा । स्त्रीविवर्जनम् । ब्रह्मचर्यव्रतम् । आत्मनिवेदिवत् । प्रयत्नेन । पालनीयम् । एतच्चान्येषां निर्लोभादिस्वधर्मनियमानामप्युपलक्षणम् ॥ १० ॥ मायिकेति । तेन च । पञ्चसु । मायिकार्थेषु । दोषदृष्टिः । श्रद्धया । सतां श्रीहर्येकान्तिकसाधूनाम् । सेवा छन्दानुवृत्तिपूर्वा परिचर्या । हरेः । नवधा भक्तिश्च । कर्त्तव्या ॥ ११ ॥ एतदिति । हरिम् । श्रितवतः । यस्य भक्तस्य । एतच्चतुष्टयं ब्रह्मचर्याद्युक्तचतुष्करूपं साधनम् । भवेत् । अस्य भक्तस्य । ज्ञानप्रीती त्वदुक्ते विरागयुक् ज्ञानप्रीतिदाढर्ये । विनापि । कृष्णैकवासना । भवेत् । अर्थात्तदितरमायिकवासना निवर्त्तते इति बोध्यम् ॥ १२ ॥ इतीति । इत्येवंविधम् । तद्वाक्यं श्रीहरिवचनम् । आश्रुत्य । स मुनिः शुकानन्दसाधुः । पुनः । तं श्रीहरिम् । पप्रच्छ । हे हरे ! । कामात् । क्रोधः । अभिजायते । इति । सर्वत्र लोकशास्त्रयोः । प्रसिद्धिः । अस्ति ॥ १३ ॥

एतदेव स्पष्टमाह । यस्येति । स्वस्य । हृदि । यस्य यस्य । पदार्थस्य । काम इच्छा । भवेत् । तस्य तस्य । पदार्थकामस्य । प्रतिहतौ सत्याम् । भङ्गे सतीत्यर्थः । क्रोधः । भवेत् । न संशयः ॥१४॥ कार्येति । अयम् । कार्यकारणभावः । स्वाभाविकः । अस्ति । खलु । यतो हेतोः । त्यागिषु साधुष्वपि । तथा । दृश्यते । अन्यत्रान्यजनेषु । पुनः । किम् । यदा साधूनामिच्छा भङ्गे क्रोध उदेति तर्हि तथात्वे तदन्यजनानां स उदीयात्तत्र किं वक्तव्यमित्यर्थः ॥१५॥ एवमिति । हे प्रभो ! । एवं सत्यपि । कस्यापि । स्वकामोपहतौ सत्यामपि । क्वापि । क्रोधः । नैव । भवेत् । इत्येवम् । स्यात् । अथवा । नहि नैव स्यात् । अस्यायंभावः । इतरजनानां तु स्वकामोपहतौ क्रोधो जायते तत्र तेषामज्ञत्वात्स युज्यते साधूनां तथात्वे स क्वचिद् दृश्यते स युज्यते न युज्यते वेति ॥ १६ ॥ "पृष्ट इत्थं महाराजः स शुकानन्दसाधुना । ब्रूते स्मानन्दयंस्तं च निखिलान्स्वान्परानिति" । महान्त इति । अत्र सत्सङ्गे । ये । महान्तः । साधवः । सन्ति । तेषाम् । हृदि तु । धर्मपोषणकारणम् । शुभः । सङ्कल्प एव । सर्वथा । स्यात् ॥ १७ ॥ तत्रेति । तत्र तेषु महत्सु साधुषु मध्ये केषांचित्साधूनां तु स तथाविधः शुभसङ्कल्पः । हर्यनुज्ञया श्रीहरेर्निदेन ।

यस्य यस्य पदार्थस्य स्वस्य कामो भवेद्धृदि । तस्य तस्य प्रतिहतौ भवेत् क्रोधो न शंशयः ॥ १४ ॥ कार्यकारणभावोऽयमस्ति स्वाभाविकः खलु । यतस्त्यागिष्वपि तथा दृश्यतेऽन्यत्र किं पुनः ॥ १५ ॥ एवं सत्यपि कस्यापि स्वकामोपहतावपि । नैव क्रोधो भवेत्क्वापीत्येवं स्याद्वा न हि प्रभो ! ॥ १६ ॥ श्रीहरिरुवाच–महान्तः साधवो येऽत्र तेषां तु हृदि सर्वथा सङ्कल्पः शुभ एव स्याद्धर्मपोषणकारणम् ॥१७॥ तत्रापि स तु केषांचिज्जायते हर्यनुज्ञया । शास्त्रदृष्टयैव दयया केषांचित्तु स जायते ॥१८॥ ततस्तेऽत्र प्रवर्त्तन्ते धर्माध्वस्थापनोद्यताः । बोधयन्तश्चाज्ञजीवान् ज्ञानं भागवतं परम् ॥ १९ ॥ यः कश्चिद्धर्ममर्यादामुल्लङ्घ्याधर्ममाचरेत् । तस्मै क्रुध्यन्ति ते तस्य शिक्षणाय हिताय च ॥ २० ॥ अन्यथा धर्मसेतूनां रक्षणं न भवेद् ध्रुवम् । धर्मच्युतानां च नृणां न च श्रेयो भवेत् क्वचित् ॥ २१ ॥ तस्मात्सहस्रशो नृणां स्वाश्रितानां हिताय यः । शुभसङ्कल्पजः क्रोधस्तेषां नास्त्येव सोऽघकृत् ॥ २२ ॥

जायते । केषांचित्तु । शुभसङ्कल्पः । शास्त्रदृष्टया । दययैव । 'जीवाभयप्रदानस्य कुर्वीरन्कलामपि । दयया सर्वभूतेषु तुष्येदात्मप्रदो हरि'रित्यादिशास्त्रश्रवणजातभूतदयोदयेनैवेत्यर्थः । जायते ॥ १८ ॥ तत इति । ततस्तदनन्तरम् । ते साधवः । अत्र सत्सङ्गे । धर्माध्वस्थापनोद्यताः । अज्ञजीवान् । परम् । भागवतं साक्षाद्भगवत्सम्बन्धि । ज्ञानम् । बोधयन्तश्च सन्तः । प्रवर्त्तते ॥ १९ ॥ य इति । यदा । यः । कश्चित्पुमान् । धर्ममर्यादाम् । उल्लङ्घ्य । अधर्मम् । आचरेत् । तदा । ते साधवः । तस्य पुरुषस्य । शिक्षणाय । हिताय च शिक्षाचरणेन तस्य हितं कर्त्तुं चेत्यर्थः । तस्मै पुरुषाय । क्रुध्यति ॥ २० ॥ अन्यथेति । अन्यथैवंशिक्षणार्थक्रोधाभावे । धर्मसेतूनाम् । रक्षणम् । ध्रुवमेव । न भवेत् । धर्मच्युतानाम् । नृणाम् । श्रेयश्च । क्वचित् । न भवेत् ॥ २१ ॥ तस्मादिति । तस्माद्धेतोः । स्वाश्रितानाम् । सहस्रशः । नृणाम् । हिताय । तेषां साधूनाम् । शुभसङ्कल्पजः धर्मसेत्ववनरूपसङ्कल्पविघातोत्थः । यः । क्रोधः । सः । अघकृत्पापहेतुः । नास्त्येव

किन्तु तस्य धर्मस्थापनहेतुत्वात्स महापुण्यफलप्रद एवास्तीति स क्रोधोऽप्यक्रोध एवेति भावः ॥ २२ ॥ जनेति । ये साधवः । जनसङ्गम् । परित्यज्य । वनान्तरे । चरेयुः । तेषां तु । क्वापि । क्रोधः । न भवेत् । अन्येषां धर्मस्थापनाय जनसङ्गं कुर्वतां साधूनां तु सम्भवेत्क्वापि क्रोधो जायेत् ॥ २३ ॥ सहस्रश इति । सहस्रशः । नृणाम् । धर्मस्थापनेन । महत्फलम् । भवति जायते । इतीत्थमेव । मत्वैव । सन्तः । कर्हिचित् । क्रुध्यन्ति ॥ २४ ॥ धर्मेति । धर्मस्थापने निमित्ते । हरेः । आज्ञायाः । पालनेन । हरेरपि । प्रसन्नता । स्यात् । इति हेतोः । ते सन्तः । स्वकामनां क्रोधहेतुमपि स्वशुभसङ्कल्पम् । न त्यज्यन्ति ॥ २५ ॥ स्वेति । किञ्च । स्वापेक्षया स्वस्मादित्यर्थः । ये । साधवः । गुणैर्धर्मज्ञानादिभिः । महान्तः । भवेयुः । यदि । तेभ्यो गुणमहद्भ्यः साधुभ्यः । स्वश्रेयःस्वार्थसिद्धिः स्वकीयनिःश्रेयसरूपात्मार्थनिष्पतिः । मता । भवेत् । तदेत्युत्तरेण सम्बन्धः ॥ २६ ॥ तदेति । तदा तु । तेषु महासाधुषु । दृढा । प्रीतिरेव । सदा । कर्त्तव्या । तेषु । क्रोधस्तु । कदाचन । सर्वथा । नैव । कार्यः ॥ २७ ॥ एवमिति । एवंविदो भक्तस्य । स्वसङ्कल्पभङ्गेऽपि । सन्माहात्म्यावबोधनात् । क्रोधस्य । अनुदयः । भवेत् । इतीत्थम् । विजानीहि

जनसङ्गं परित्यज्य चरेयुर्ये वनान्तरे । तेषां तु न भवेत् क्वापि क्रोधोऽन्येषां तु सम्भवेत् ॥ २३ ॥ सहस्रशो नृणां धर्मस्थापनेन महत्फलम् । भवतीत्येव मत्वैव सन्तः कुध्यन्ति कर्हिचित् ॥ २४ ॥ धर्मस्थापन आज्ञायाः पालनेन हरेरपि । प्रसन्नता स्यादिति ते न त्यजन्ति स्वकामनाम् ॥ २५ ॥ स्वापेक्षया महान्तो ये भवेयुः साधवो गुणैः । स्वश्रेयःस्वार्थसिद्धिश्च यदि तेभ्यो मतो भवेत् ॥ २६ ॥ तदा तु तेषु कर्त्तव्या प्रीतिरेव दृढा सदा । क्रोधस्तु सर्वथा नैव तेषु कार्यः कदाचन ॥ २७ ॥ एवंविदः स्वसङ्कल्पभङ्गेऽप्यनुदयो भवेत् । क्रोधस्येति विजानीहि सन्माहात्म्यावबोधनात् ॥ २८ ॥ व्यावहारिकतुच्छार्थहेतोः क्रुध्येत्तु यः सते । धर्मनिष्ठाय स पुमान् ज्ञेयो मूर्खश्च पापकृत् ॥ २९ ॥ बुद्धिमानपि यः कश्चित्सते क्रुध्येत्तु तन्मतिः । ज्ञेया न परमार्थेति किन्तु सा व्यावहारिकी ॥ ३० ॥ अतो विचार्य कर्त्तव्यः क्रोधस्त्याज्यश्च सद्धिया । हेयोपादेयता त्वस्य बुद्ध्यते साधुसेविभिः ॥ ३१ ॥

॥ २८ ॥ व्यावहारिकेति । यो भक्तः । व्यावहारिकतुच्छार्थहेतोर्व्यवहारोपयोग्यल्पवस्तुप्राप्तिनिमित्तम् । धर्मनिष्ठाय । सते साधवे । क्रुध्येत् । सः । पुमान् भक्तः । मूर्खः । पापकृच्च । ज्ञेयः ॥ २९ ॥ बुद्धिमानिति । बुद्धिमानपि । यः । कश्चित् भक्तः । सते साधवे । क्रुध्येत्कस्यचनपदार्थस्यादानप्रदानार्थं क्रुध्येत् । तदा । तन्मतिः । परमार्थो कल्याणोपयोगिनी । इति । न ज्ञेया । किन्तु । सा तन्मतिः । व्यावहारिकी व्यवहारकार्यनिपुणा । ज्ञेया ॥ ३० ॥ अत इति । अतो हेतोः । सद्धिया सुमतिना भक्तेन । क्रोधः । विचार्य । कर्त्तव्यः । विचार्य त्याज्यश्च । अस्य क्रोधस्य । हेयोपादेयता तु । साधुसेविभिर्भक्तैः । बुद्ध्यते । अत्रायं प्रश्नोत्तराशयः महतां साधूनां धर्मस्थापनहेतुर्यः क्रोधः स तु महाफलजनकत्वात्पापाजनकत्वाच्च गुण एव यत्र स्वहितबुद्धिस्तत्र स्वार्थोपहतावपि तदुदयासम्भव एव यदा मायिकपदार्थहेतुकः स जायते स त्वनर्थकरत्वादगुण एवात उक्तरीत्या विचार्य स कार्यो हेयश्चेति ॥ ३१ ॥

श्रीहरेरिति । इत्येवंविधम् । श्रीहरेः । सुधोपमम् । वचो वचनं । निशम्य । एषः । साधुः शुकानन्दमुनिः । चेतसि । अलमतिशयितम् । मोदम् । आप । ये । अपरे । सकलाः । साधवः । गृहिजनाश्च । ते चापि । चेतसि । अलं मोदमापुः ॥३२॥ स्वस्यैकवासनाप्राप्तेः स्वभिन्नवासनाक्षतेः । स्वभक्तानां साधनानि श्रेष्ठानि च यथार्थतः ॥ १ ॥ हेयोपादेयतायाश्च विवेकं तु पुरुषोऽपि यः । हरिः प्राह स मे दद्यात्तानि तं च कृपानिधिः ॥ २ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तक श्रीहर्येकान्तिकोपासक श्रीहरिकृष्णभगवत्स्नुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां द्विशताधिकसप्तपञ्चाशत्तमस्तरङ्गः ॥ २५७ ॥ ३४ ॥

हर्याश्रयस्य भक्तानां दैहिकाद्यापदि ह्यपि । अचलत्वस्य यल्लक्ष्म त्याजने प्रकृतेस्तथा ॥ १ ॥ मोहभेदश्च प्रकृतेस्त्याजनावसरे तथा । यथार्थतो मनीषाया अनुमानस्य लक्षणात् ॥ २ ॥ सद्द्रोहपापाधिक्यं च लक्षणानि सतां तथा । तत्सर्वमेतत्सुपष्टं पञ्चत्रिंशे प्रकीर्त्तितम् ॥ ३ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । (१८८५) चैत्रस्य मासस्य । शुक्ले शुक्लपक्षे । नवम्यां तिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । गोपीनाथस्य ।

श्रीहरेरिति वचः सुधोपमं साधुरेष हि निशम्य चेतसि । मोदमाप सकलाश्च साधवो येऽपरे गृहिजनाश्च तेऽप्यलम् ॥ ३२ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते द्विशताधिकसप्तपञ्चाशत्तमस्तरङ्गः ॥ २५७ ॥ ३४ ॥

शकाब्दे विक्रमार्कस्य भूताष्टवसुभूमिते । शुक्ले नवम्यां चैत्रस्य वचोऽमृतमिदं हरेः ॥ १ ॥
तत्र दुर्गपुरे स्वामी गोपीनाथस्य मन्दिरे । भक्तसङ्घैः परिवृतो व्यराजत सिताम्बरः ॥ २ ॥
शुकानन्दस्तमप्राक्षीन्नत्वा सन्मण्डलस्थितः । आश्रयन्ते हरिं भक्त्या श्रेयसे त्वां मुमुक्षवः ॥ ३ ॥
सेवन्ते त्वामथ प्रीत्या त्वद्भक्तानपि चादरात् । दृढभक्ततया लोके ख्यातिं यान्ति च ते ततः ॥ ४ ॥
दैहिकापदि तेषां च वैषम्ये देशकालयोः । त्वदाश्रयस्याचलता हृत्स्था बोध्या कथं प्रभो ! ॥ ५ ॥

मन्दिरे उत्तमनृपतिदुर्गान्तर्वर्त्तिश्रीगोपीनाथभगवन्मन्दिरैकदेशस्वीयास्थापितचक्रकासने । भक्तसङ्घैर्नानादेशागतत्यागिगृहिस्वाश्रितजनवृन्दैः । परिवृतः सभायां संवेष्टितः । सिताम्बरः परिहितसकलश्वेतवसनः । स्वामी श्रीहरिः । व्यराजत् ॥ २ ॥ शुकानन्द इति । तं श्रीहरिम् । नत्वा । सन्मण्डलस्थितः । शुकानन्दोमुनिः । अप्राक्षीत् । हे हरे ! । मुमुक्षवो जनाः । हरिं स्वाश्रितानां संसृत्यार्त्तिहारिप्रत्यक्षपुरुषोत्तमम् । त्वाम् । भक्त्याऽऽदरेण । श्रेयसे । आश्रयन्ते ॥ ३ ॥ सेवन्त इति । अथाश्रयविधानानन्तरम् । ते भक्तजनाः । त्वाम् । त्वद्भक्तांश्चापि । प्रीत्या । आदरात् । सेवन्ते । ततस्तदनन्तरम् । लोके । दृढभक्ततया । ख्यातिं प्रसिद्धिम् । यान्ति ॥ ४ ॥ दैहिकेति । हे प्रभो ! । तेषां त्वद्भक्तानाम् । दैहिकापदि सत्याम् । देशकालयोः । वैषम्ये सति च । त्वदाश्रयस्य । हृत्स्था भक्तमनोऽवस्थिता । अचलता दृढता । कथम् । बोध्या ॥ ५ ॥

एतदेव हेतुप्रदर्शनेन स्पष्टमाह द्वाभ्याम् । आपदिति । हे हरे ! । हि यतः । इह सत्सङ्गे । भक्ताख्याः । बहवो जनाः । आपत्काले । तव । संश्रयमाश्रयम् । त्यजन्तः । अभक्तवत् । भ्रमन्तश्च । दृश्यन्ते ॥ ६ ॥ तस्मादिति । तस्माद्धेतोः कष्टायामपि । आपदि सत्याम् । येषां त्वद्भक्तानाम् । स्थिरा । स्थितिरचलतया त्वदाश्रयावस्थानम् । भवेत् । तेषां त्वद्भक्तानाम् । लक्षणम् । स्पष्टं यथातथा । वक्तुम् । अर्हसि ॥ ७ ॥ "सोऽनुयुक्तः शुकानन्दसतेत्थं पुरुषोत्तमः । प्राहेत्या-नन्दयंस्तं च परान्सर्वान्निजान्प्रभुः" । कृष्णस्येति । हे मुने । ये भक्ताः । कृष्णस्यैव । महत्तां महद्भ्योऽक्षरादिसर्वेभ्योऽतिशयितमहत्त्वम् । विदुः । अन्यस्य कृष्णे-तरस्य कस्यापि । महत्ताम् । कर्हिचित् । न विदुः । मायिकार्थानां च सर्वथा । तुच्छतामेव । विदुः ॥ ८ ॥ कृष्णेति । ये भक्ताः । दुस्त्यजामपि । स्वकाम् । प्रकृतिं स्वभावम् । कृष्णतद्भक्तवचनैः । सद्यः । हित्वा परित्यज्यैव । तदनुव्रताः कृष्णतद्भक्ताज्ञानुसृताः । भवेयुः ॥ ९ ॥ त्याग इति । तथा । ये । स्वकीयप्रकृतेः । त्यागे कृष्णतद्भक्तैस्तत्त्यजने कारिते सत्यपि । नैव मुह्येयुः । तेषां तथाविधलक्षणानां भक्तानाम् । आपद्यपि । कृष्णाश्रयस्य । दाढर्यम् । ज्ञेयम् । हि ॥ १० ॥

आपत्काले हि बहवो भक्ताख्यास्तव संश्रयम् । त्यजन्त इह दृश्यन्ते भ्रमन्तश्चाप्यभक्तवत् ॥ ६ ॥ तस्मादापदि कष्टायामपि येषां स्थिरा स्थितिः । भवेत्तेषां तु मे स्पष्टं लक्षणं वक्तुमर्हसि ॥ ७ ॥ कृष्णस्यैव महत्तां ये विदुर्नान्यस्य कर्हिचित् । विदुश्च मायिकार्थानां तुच्छतामेव सर्वथा ॥ ८ ॥ कृष्णतद्भक्तवचनैर्दुस्त्यजामपि ये स्वकाम् । हित्वैव प्रकृतिं सद्यो भवेयुस्तदनुव्रताः ॥ ९ ॥ त्यागेऽपि नैव मुह्येयुः स्वकीयप्रकृतेस्तथा । तेषामापद्यपि ज्ञेयं दाढर्यं कृष्णाश्रयस्य हि ॥ १० ॥ श्रुत्वेति तस्य वचनं पुनः पप्रच्छ तं स सन् । त्यागे स्वकीयप्रकृतेर्मोहस्तु हृदि सम्भवेत् ॥ ११ ॥ तारतम्यं तत्र किञ्चिद्वर्त्तते वा नहि प्रभो ! । उवाच तं हरिः साधो तारतम्यं तु विद्यते ॥ १२ ॥ यदा स्वप्रकृतिं कृष्णस्त्याजयेद्वापि तज्जनाः । तदा स्वमेव दोषं ये विदुस्ते तूत्तमा मताः ॥१३॥ कृष्णस्यैवागुणं ये तु तद्भक्तानां च वा हृदि । गृह्णीयुस्ते निकृष्टा वै विश्वास्याश्च न वै सताम् ॥ १४ ॥

श्रुत्वेति । इत्येवंविधम् । तस्य श्रीहरेः । वचनम् । श्रुत्वा । सः । सन् शुकानन्दसाधुः । तं श्रीहरिम् । पुनः । पप्रच्छ । हे हरे ! । स्वकीयप्रकृतेः । त्यागे । हृदि । मोहस्तु । सम्भवेत् ॥ ११ ॥ तारतम्यमिति । हे प्रभो ! । तत्र प्रकृतित्यागजन्यमोहे । किञ्चित् । तारतम्यं न्यूनाधिकभावः । वर्त्तते । अथवा । न वर्त्तते । तद्ब्रूहीतिशेषः । तमेवं पृच्छन्तं शुकानन्दमुनिम् । हरिः । उवाच । हे साधो ! । तारतम्यं तु । विद्यते ॥ १२ ॥ यदेति । यदा । कृष्णः श्रीहरिः । स्वप्रकृतिम् । त्याजयेत् । अथवा । तज्जनाः कृष्णभक्ताः । स्वप्रकृतिम् । त्याजयेयुः । तदा । ये भक्ताः । स्वं स्वकीयमेव । दोषम् । विदुः । ते भक्तास्तु । उत्तमाः । मताः ॥ १३ ॥ कृष्णस्येति । ये भक्तास्तु । कृष्णस्य । अथवा । तद्भक्तानाम् । अगुणं दोषमेव । हृदि । गृह्णीयुः । ते भक्ताः । निकृष्टा अधमाः । मताः । वै । सतां कृष्णाश्रितसाधूनाम् । विश्वास्या विश्वासकरणार्हाश्च । न मताः । वै ॥ १४ ॥

कृष्णेति । तेषां कृष्णतद्भक्तागुणग्राहकानां भक्तानाम् । कृष्णाश्रयस्थितिः । संदिग्धा ससंशया । अस्ति । इतीत्थम् । अवगम्यताम् । स्वदोषग्राहको मोह उत्तमः कृष्णतद्भक्तदोषग्राहको मोहो निकृष्ट इति मोहे तारतम्यमस्त्येवेति बुध्यतामिति प्रश्नोत्तराशयः । अथानन्तरम् । सः । साधुः शुकानन्दमुनिः । संशयनाशनं सकलसंशयनिवर्त्तकम् । तं श्रीहरिम् । पुनः अपृच्छत् ॥ १५ ॥ प्रकृतिरिति। हे हरे ! । यस्य भक्तस्य । प्रकृतिः । भवता साक्षात्कृष्णेन त्वया । अथवा । त्वद्भक्तैश्चापि । क्वचित् । त्याजिता । न स्यात् । हितावहाः प्रकृतित्याजनेन हितकारकाः । ते त्वत्त्वद्भक्ताश्च । तां प्रकृतिं च । त्याजयेयुः ॥१६॥ यादृशीति । हे प्रभो ! । प्रकृतित्याजनक्षणे । तन्मतिः । यादृशी । भाव्या भविष्यति । सा तन्मतिः । तेन भक्तेन । कथम् । अनुमेया । तत् । त्वम् । मे मह्यम् । कथय ॥ १७ ॥ 'पुनरित्थं स आपृष्टः शुकानन्देन साधुना । हरिकृष्णस्तमाहेति हर्षयन्स्वान्परांस्तथा' । प्रकृतेरिति । यः । पुरुषो भक्तः । स्वस्य । प्रकृतेः । वशताम-

कृष्णाश्रयस्थितिस्तेषां सन्दिग्धेत्यवगम्यताम् । अथापृच्छत्पुनः साधुः स तं संशयनाशनम् ॥ १५ ॥ प्रकृतिर्यस्य भवता त्वद्भक्तैरपि वा क्वचित् । त्याजिता स्यान्न तां ते च त्याजयेयुर्हितावहा ॥ १६ ॥ यादृशी तन्मतिर्भाव्या प्रकृतित्याजनक्षणे । साऽनुमेया कथं तेन तत्त्वं कथय मे प्रभो ! ॥ १७ ॥ श्रीहरिरुवाच–प्रकृतेर्वशतां स्वस्य बुभुत्सुः पुरुषस्तु यः । स त्वीक्षेत स्वसङ्कल्पान् जायमानान्मुहुर्हृदि ॥ १८ ॥ कार्ष्णेतरेषामर्थानां पञ्चानामपि ये हृदि। सङ्कल्पाः स्युस्तत्र तेनावधार्या बलिनस्तु ये ॥ १९ ॥ अवधारणतस्तेषां तद्वशत्वस्य निश्चयः । सर्वथैव भवेत्तस्य विचारेण स्वचेतसि ॥ २० ॥ ईदृक्सङ्कल्पवशगः क्रियास्तदनुसारिणीः । करोम्यहं मुहुरिति जानीयात्स्वस्थितिं सुधीः ॥ २१ ॥ ईदृशीं प्रकृतिं स्वीयां कृष्णः सन्तोऽथवा यदा । त्याजयिष्यन्ति मां तर्हि वैक्लव्यं मे भविष्यति ॥ २२ ॥

धीनताम् बुभुत्सुर्वोद्धुमिच्छुः । भवेत् । स भक्तस्तु । हृदि स्वमानसे । मुहुः । जायमानान् । स्वसङ्कल्पान् । ईक्षेत ॥ १८ ॥ तानाह । कार्ष्णेति । कार्ष्णेतरेषां कृष्णसम्बन्धिदर्शनादिपञ्चार्थेतरेषां मायिकानाम् । पञ्चानामपि । अर्थानां विषयाणाम् । हृदि । ये सङ्कल्पाः । स्युः । तत्र तेषु सङ्कल्पेषु मध्ये । ये सङ्कल्पाः । बलिनो बलिष्ठाः । स्युः । ते । तेन भक्तेन । अवधार्याः ॥ १९ ॥ अवधारणत इति । तेषां बलिसङ्कल्पानाम् । अवधारणतः । तद्वशत्वस्य बलिसङ्कल्पाधीनत्वस्य । निश्चय ईदृक्सङ्कल्पवशोऽहमस्मीति निर्णयः । तस्य भक्तस्य । स्वचेतसि । विचारेण । सर्वथैव । भवेत् ॥ २० ॥ ईदृमिति । अहम् । ईदृक्सङ्कल्पवशगः सन् । तदनुसारिणीस्तत्सङ्कल्पानुसृताः । क्रियाः । मुहुः । करोमि । इतीत्थम् । सुधीर्भक्तः । स्वस्थितिम् । जानीयात् ॥ २१ ॥ ईदृशीमिति । ईदृशीम् । स्वीयाम् । प्रकृतिम् । यदा । कृष्णः । अथवा । सन्तः । माम् । त्याजयिष्यन्ति । तर्हि । मे मम । वैक्लव्यं मोहः । भविष्यति ॥ २२ ॥

भक्तस्येति । एवममुना प्रकारेण यस्य । भक्तस्य । प्रकृतिः । हरिणा । अथवा । तज्जनैस्तद्भक्तसाधुभिश्च । त्याजिता । न भवेत् । तेन भक्तेन । आत्मनि मानसे । सा त्याजनकाले स्वानर्थकर्त्री प्रकृतिः । अनुमेया । इति द्वयोरेकसम्बन्धः ॥ २३ ॥ तदिति । यदि । असौ भक्तः । त्याजनात्कृष्णतत्सत्कृतप्रकृतिहापनात् । पूर्वमादावेव । मृत्युम् । आप्नुयात् । तदा तु । कृष्णभक्तिप्रतापतः । सद्गतिम् । यायात् ॥ २४ ॥ यदीति । यदि । कृष्णतत्साधवः । जीवन्तम् । तं भक्तम् । तां प्रकृतिम् । त्याजयेयुः । तदा तु । असौ भक्तः । मुह्येत् । कृष्णतत्साधुदोषं गृह्णीयात् । अथवा । ततः कृष्णतत्सङ्घयः सकाशात् । विमुखः । भवेत् । अत्रार्थे । सन्देहः । नैवास्ति ॥ २५ ॥ विमुख इति । विमुखः । असौ पुरुषः । यदि । प्रकृतेः । वशतः । क्वापि कदाचित् । सताम् । द्रोहम् । कुर्यात् । तदा तु । अस्य पुरुषस्य । भूरितरम् । दुःखम् । भवेत् ॥ २६ ॥ सतामिति । सताम् । हृदि । साक्षात् । स्वयम् । हरिः ।

भक्तस्य प्रकृतिर्यस्य हरिणा वापि तज्जनैः । न त्याजिता भवेत्तेन साऽनुमेयैवमात्मनि ॥ २३ ॥ तत्त्याजनात्पूर्वमेव यद्यसौ मृत्युमाप्नुयात् । तदा तु सद्गतिं यायात्कृष्णभक्तिप्रतापतः ॥ २४ ॥ यदि ते त्याजयेयुस्तां जीवन्तं तं तदा त्वसौ । मुह्येन्नैवात्र सन्देहो विमुखो वा भवेत्ततः ॥ २५ ॥ विमुखोऽसौ यदि क्वापि प्रकृतेर्वशतः सताम् । द्रोहं कुर्यात्तदा त्वस्य दुःखं भूरितरं भवेत् ॥ २६ ॥ सतां हृदि हरिः साक्षाद्वर्त्तते सर्वदा स्वयम् । अतः सद्द्रोहतो द्रोहो हरेरेव भवेद् ध्रुवम् ॥ २७ ॥ जगदात्मा च भगवानस्तीति द्रोहतोऽस्य च । सर्वस्य जगतो द्रोहो जायते नात्र संशयः ॥ २८ ॥ अत एव हि सद्द्रोहपातकं सर्वपापतः । धर्मशास्त्रेऽधिकं प्रोक्तमनिवार्यं च निष्कृतैः ॥ २९ ॥ कंसादीनां कथं मुक्तिः साक्षात्कृष्णद्रुहामपि । जातेति चेत्तत्र हेतुं कथयामि मुने ! शृणु ॥ ३० ॥ वैरभावेन तेषां तु सर्वदा कृष्णचिन्तनम् । आसीत्ततो भगवता मुक्तिर्दत्ता दयालुना ॥ ३१ ॥ येन केनापि भावेन यः स्वस्याखण्डचिंतनम् । करोति तस्य स श्रेयो विदधाति दयावशात् ॥ ३२ ॥

वर्त्तते । अतो हेतोः । सद्द्रोहतः । हरेरेव । द्रोहः । ध्रुवं निश्चितमेव । भवेत् ॥ २७ ॥ जगदिति । भगवान् श्रीहरिः । जगदात्मा सकलजगदन्तर्यामी । अस्ति । इति हेतोः । अस्य भगवतः । द्रोहतः । सर्वस्य । जगतः । द्रोहः । जायते । अत्रार्थे । संशयः । नास्ति ॥ २८ ॥ अत इति । अतो हेतोरेव । धर्मशास्त्रे । सद्द्रोहपातकम् । सर्वपापतः । अधिकम् । निष्कृतैः प्रायश्चित्तैः । अनिवार्यं च । प्रोक्तम् ॥ २९ ॥ कंसेति । साक्षात्कृष्णद्रुहामपि । कंसादीनामसुराणाम् । मुक्तिः । कथम् । जाता । इत्येवं पृच्छसि चेत्तर्हि । हे मुने ! । तत्र । हेतुम् । कथयामि । शृणु ॥ ३० ॥ वैरेति । तेषां कंसादीनां तु । वैरभावेन । सर्वदा । कृष्णचिन्तनम् । आसीत् । ततो हेतोः । दयालुना । भगवता श्रीकृष्णेन । मुक्तिः । दत्ता । तेषां मोक्षः कृत इत्यर्थः ॥ ३१ ॥ येनेति । यो जनः । येन । केनापि । भावेन । स्वस्य । अकुण्डचिन्तनम् । करोति । तस्य जनस्य । स श्रीकृष्णः । दयावशात् । श्रेयः । विदधाति ॥ ३२ ॥

कारुण्यमिति । स्वस्य । अखण्डचिन्तके । दोषानवेक्षणम् । यत् । ईदृशमेव । जगद्गुरोः । अस्य कृष्णस्य । कारुण्यम् । वर्त्तते । हि ॥ ३३ ॥ स्वेति । ईशः श्रीहरिः । दयालुत्वाद्धेतोः । जनैरसुरलोकैः । कृतम् । स्वापराधम् । सहेत । निजभक्तापराधं स्वकीयसाधुजनापराधं तु । कर्हिचित् । नैव । सहते ॥ ३४ ॥ अत इति । अतो हेतोरेव । सद्द्रोहः । धीमता । केनापि पुरुषेण । मनसापि । कदाचनापि । विनोदेनोपहासेनापि । नैव कर्त्तव्यः ॥ ३५ ॥ वैरिणामिति । ईशः । यः कृष्णः । दयावशात् । वैरिणामपि । श्रेयः । करोति । स कृष्णः । भक्तिमतां स्वभक्तिं कुर्वाणानां जनानाम् । तच्छ्रेयः । कुर्यात् । अत्र । संशय एव । नास्ति । इतीत्युत्तरेण सम्बन्धः ॥ ३६ ॥ इतीति । इतीत्थम् । निजभक्तिविवृद्धये । लोके । प्रथयितुम् । हरिः । असुराणाम् । श्रेयः । करोति । इतीत्थम् । आगमाः शास्त्राणि आहुः ॥ ३७ ॥ साम्प्रतमिति । साम्प्रतम् । ये । जनाः । वैरभावेन । तं हरिम् । भजेयुः । ते जनास्तु । दैतेयपक्षपातिन एव । विज्ञेयाः ।

कारुण्यमीदृशं ह्येव वर्त्ततेऽस्य जगद्गुरोः । अखण्डचिन्तके स्वस्य यत्तु दोषानवेक्षणम् ॥ ३३ ॥ स्वापराधं सहेतेशो दयालुत्वाज्जनैः कृतम् । निजभक्तापराधं तु सहते नैव कर्हिचित् ॥ ३४ ॥ अत एव हि सद्द्रोहो मनसापि कदाचन । केनापि नैव कर्त्तव्यो विनोदेनापि धीमता ॥ ३५ ॥ वैरिणामपि यः श्रेयः करोतीशो दयावशात् । तत्स भक्तिमतां कुर्यादत्र नास्त्येव संशयः ॥ ३६ ॥ इति प्रथयितुं लोके निजभक्तिविवृद्धये । असुराणां हरिः श्रेयः करोतीत्याहुरागमाः ॥ ३७ ॥ साम्प्रतं वैरभावेन भजेयुर्ये तु तं जनाः । विज्ञेयास्ते तु दैतेयपक्षपातिन एव हि ॥ ३८ ॥ न ह्येतत्सन्मतं क्वापि महान्तो मुनयो यतः । प्राहुः प्रीत्यैव भजनं हरेः श्रेयस्करं नृणाम् ॥ ३९ ॥ श्रुत्वेति सद्गुरोस्तस्य वाक्यं पप्रच्छ तं पुनः । बुभुत्सुः साधुलक्ष्माणि शुकानन्दः स सन्मतिः ॥ ४० ॥ येषां द्रोहान्महत्पापं जायते देहिनां तव । तेषां सतां लक्षणानि प्राधान्येन वद प्रभो ! ॥ ४१ ॥ श्रीहरिर्मुनिना तेन पृष्ट इत्थं स्वचेतसि । क्षणं विचार्य कृपया तमुवाच मुने ! शृणु ॥ ४२ ॥

हि ॥३८॥ नेति । एतद्वैरभावेन कंसादिवद्भजनम् । क्वापि कदाचिदपि । सन्मतम् । नहि नास्त्येव । यतो हेतोः । महान्तः । मुनयो नारदादयः । हरेः । प्रीत्या । भजनमेव । नृणाम् । श्रेयस्करम् । प्राहुः ॥ ३९ ॥ श्रुत्वेति । इत्येवंविधम् । सद्गुरोः । तस्य श्रीहरेः । वाक्यम् । श्रुत्वा । साधुलक्ष्माणि । बुभुत्सुर्बोद्धुमिच्छुः । सन्मतिः । सः शुकानन्दो मुनिः । तं श्रीहरिम् । पुनः । पप्रच्छ ॥ ४० ॥ येषामिति । हे प्रभो । तव । येषां सताम् । द्रोहात् । देहिनाम् । महत् । पापं जायते । तत्र । तेषाम् । सताम् । प्राधान्येन मुख्यतया । लक्षणानि । मुख्यानि लक्ष्माणीत्यर्थः । वद ॥ ४१ ॥ श्रीहरिरिति । इत्थममुना प्रकारेण । तेन मुनिना शुकानन्दसाधुना । पृष्टः । श्रीहरिः । स्वचेतसि । क्षणम् । विचार्य । कृपया । तं शुकानन्दमुनिम् । उवाच । हे मुने ! । शृणु ॥ ४२ ॥

दिव्येति । हरेः । नित्यं सर्वकालम् । दिव्यसाकारता । अस्ति वर्त्तते । इतीत्थम् । वेदनम् । सताम् । मुख्यम् । लक्ष्म । ज्ञेयम् । तद्वन्त एतल्लक्षणयुक्ताः । सन्तः । हरेः । प्रियाः । सन्ति । हि ॥ ४३ ॥ सत्सतां मुख्यलक्षणहेतुभूतां हरेः सदा साकारतामेव द्रढयन्नाह सार्द्धैः पञ्चभिः । क्वचिदिति । ये सन्तः । क्वचित् । वेदपुराणादौ । तन्निराकारताश्रुतौ हरेर्निराकारत्वश्रवणे सति । मायिकाकारहीनत्वम् । जानीयुः । अन्यथा वस्तुत आकारहीनत्वम् । न च नैव जानीयुः ॥४४॥ त इति । ते उक्तरीत्या हरेः सदा साकारताविद एव । सन्तः साधवः । सन्तः सत्याः साधवः । निराकारताविदो हरेर्निराकारत्वज्ञाः । नहि सत्याः सन्तो नैव । यद्यस्माद्धेतोः । शून्यवादिनाम् । तेषां हरेर्निराकारताविदां सताम् । उपासनादार्ढ्यम् । न स्यात् ॥ ४५ ॥ अनेकेति । अनेककोटीब्रह्माण्डसृष्टिस्थित्यादिकर्तृता । निराकृतेर्हरेः । कथम् । वाच्या । तस्माद्धेतोः । ईश्वरः श्रीहरिः । साकारः सदैव दिव्याकृतिः । अस्ति ॥ ४६ ॥ एकेति । उपनिषत्स्वपि । तस्य श्रीहरेः । एक-

दिव्यसाकारता नित्यं हरेरस्तीति वेदनम् । मुख्यं लक्ष्म सतां ज्ञेयं तद्वन्तो हि प्रिया हरेः ॥ ४३ ॥ क्वचिद्वेदपुराणादौ तन्निराकारता श्रुतौ । मायिकाकारहीनत्वं जानीयुर्येन चान्यथा ॥ ४४ ॥ त एव सन्तः सन्तो हि न निराकारताविदः । न स्यादुपासनादार्ढ्यं यत्तेषां शून्यवादिनाम् ॥ ४५ ॥ अनेककोटिब्रह्माण्डसृष्टिस्थित्यादिकर्तृता । निराकृतेः कथं वाच्या तस्मात्साकार ईश्वरः ॥ ४६ ॥ एकदेशस्थितिः प्रोक्ता तस्य चोपनिषत्स्वपि । निराकृतेः कथं सापि घटेत परमात्मनः ॥ ४७ ॥ विराजतेऽक्षरे धाम्नि स हि राजाधिराजवत् । स एव च नराकारो भुवि साक्षात्समीक्ष्यते ॥ ४८ ॥ एवं हि भगवज्ज्ञानं सतां लक्षणमीरितम् । तथा तस्यैव भक्तिश्च नवधा परमादरात् ॥ ४९ ॥ कुर्वत्सु तां च भक्तेषु प्रीतेरतिशयस्तथा । सत्सङ्गस्यापरित्यागः सर्वथा मनसापि च ॥ ५० ॥ सत्समूहनिवासे च यः कुर्याद्विघ्नमात्मनः । सद्य एव परित्यागो दुःस्वभावस्य तस्य तु ॥ ५१ ॥ स्वदुःस्वभावोत्खनने क्रियमाणे च साधुभिः । स्वस्यैव दोषग्रहणं न तु तेषां महात्मनाम् ॥ ५२ ॥

देशस्थितिः । प्रोक्ता । 'दिवि तिष्ठत्येक' इति श्रुतेः । सैकदेशस्थितिरपि । निराकृतेः । परमात्मनो हरेः । कथम् । घटेत ॥ ४७ ॥ विराजत इति । स श्रीहरिः । अक्षरे धाम्नि । राजाधिराजवत् । विराजते । स श्रीहरिरेव । भुवि । नराकारः । सन् । साक्षात्प्रत्यक्षः । समीक्ष्यते ॥ ४८ ॥ एवमिति । एवम् । भगवज्ज्ञानम् । सताम् । लक्षणं प्रथमं लक्ष्म । ईरितम् । तथा । तस्य हरेरेव । परमादरात् । नवधा । भक्तिः । द्वितीयं लक्ष्म ॥ ४९ ॥ कुर्वत्स्विति । तथा । तां हरेर्नवधा-नभक्तिम् । कुर्वत्सु । भक्तेषु । प्रीतेः । अतिशयः । तृतीयं लक्ष्म । मनसापि । सर्वथा । सत्सङ्गस्य तथाविधभक्तप्रसङ्गस्य । अपरित्यागः । चतुर्थं लक्ष्म ॥५०॥ सदिति । सत्समूहनिवासे । आत्मनः स्वस्य । यो दुःस्वभावः । विघ्नम् । कुर्यात् । तस्य दुःस्वभावस्य । सद्य एव । परित्यागः । पञ्चमं लक्ष्म ॥ ५१ ॥ स्वेति । साधुभिः । स्वदुःस्वभावोत्खनने । क्रियमाणे । सति । स्वस्यैव । दोषग्रहणम् । महात्मनां महानुभावानाम् । तेषां साधूनाम् । नतु नैव दोषग्रहणम् । षष्ठं लक्ष्म ॥ ५२ ॥

तावतेति । तावता तैः स्वभावखननेन कृतेऽपीत्यर्थः । विमुह्य । तेषां साधूनाम् । सङ्गस्य । वर्जने । आत्मनः स्वस्य । हृदये । सङ्कल्पस्यापि । क्वचित् । अनुदयः । सप्तमं लक्ष्म ॥५३॥ य इति । यः । यः । पदार्थः । प्रेष्ठः स्वस्यातिप्रियः । स्यात् । तस्य । तस्य पदार्थस्य । उपलम्भने प्राप्तौ सत्याम् । सद्भ्यः साधुभ्यः । तदर्पणस्यैव । सङ्कल्पः । स्यात् । इतरस्तत्स्वभोग्यतासङ्कल्पः । न च नैव स्यात् । अष्टमं लक्ष्म ॥ ५४ ॥ सद्भ्य इति । तं तं स्वप्रेष्ठपदार्थम् । सद्भ्यः । अर्पयित्वा । स्वस्य । भूरिप्रसन्नता । नवमं लक्ष्म । सत्समूहस्थितौ । स्वस्य । सुज्ञेयाशयवर्त्तनं यत्र सत्समूहे स्वस्य स्थितिः स्यात्ते सन्तो यथा स्वकीयं शुभाभिप्रायं शुभवर्त्तनं च जानीयुस्तथात्मवर्त्तनाचरणम् ॥ ५५ ॥ नेति । महताम् । सताम् । पुरतः । अपारतया । न स्थानम् । यथा तेषां सुज्ञेयाशयवर्त्तनता न स्यात्तथा न वर्त्तनमित्यर्थः । दशमं लक्ष्म । स्वभावतः सहजतया । शान्तस्य शान्तस्वभावस्यापि स्वस्य । कुसङ्गिषु । भृशमतिशयिता । अरुचिः ॥ ५६ ॥ जात इति । दुर्जनसङ्गे कुसङ्गिसमागमे । जाते सति । हृदि । उत्तापस्य परितापस्य । सम्भवः । एकादशं लक्ष्म । तथा । भगवदीयानां साक्षाद्भगवदुपासकानां भक्तजनानाम् । सङ्गे एव ।

तावता वा विमुह्यैव तेषां सङ्गस्य वर्जने । सङ्कल्पस्याप्यनुदयो हृदये क्वचिदात्मनः ॥ ५३ ॥ यो यः पदार्थः प्रेष्ठः स्यात्तस्य तस्योपलम्भने । सद्भ्यस्तदर्पणस्यैव सङ्कल्पः स्यान्न चेतरः ॥५४॥ सद्भ्योऽर्पयित्वा तं तं च स्वस्य भूरिप्रसन्नता । सत्समूहस्थितौ स्वस्य सुज्ञेयाशयवर्त्तनम् ॥५५॥ न त्वपारतया स्थानं पुरतो महतां सताम् । स्वभावतोऽपि शान्तस्य कुसङ्गिष्वरुचिर्भृशम् ॥ ५६ ॥ जाते दुर्जनसङ्गेन हृद्युत्तापस्य सम्भवः । सङ्गे भगवदीयानामेवातिस्वस्थता तथा ॥५७॥ एते गुणाः सतां ज्ञेया महतां कृष्णसेविनाम् । येषु ते स्युस्तेषु कृष्णः स्वमेव विराजते ॥ ५८ ॥ एतेषां द्रोहतः साक्षाद्धरेर्द्रोहो भवेद् ध्रुवम् । तथैतेषां सेवनाच्च स्यात्साक्षात्कृष्णसेवनम् ॥५९॥ इति वाक्यसुधां निपीय साधुः स तथान्ये मुनयश्च धर्मसूनोः । गृहिणश्च तदाश्रिताः समस्ता मुदमापुर्हृदये सदोनिषण्णाः ॥६०॥

इति श्रीशतानन्दमुनिविरचिते हरिवाक्यसुधासिन्धौ द्विशताधिकाष्टपञ्चाशत्तमस्तरङ्गः ॥ २५८ ॥ ३५ ॥

अतिस्वस्थता सौमनस्यातिशयः । द्वादशं लक्ष्म ॥ ५७ ॥ एत इति । एते उक्ता द्वादशलक्षणात्मकाः । गुणाः । कृष्णसेविनां साक्षाद्भगवदुपासकानाम् । महताम् । सताम् । ज्ञेयाः । येषु महासत्सु । ते गुणाः । स्युः । तेषु महासत्सु । कृष्णः साक्षात्स्वयं श्रीहरिः । स्वयमेव । विराजते निवसति ॥ ५८ ॥ एतेषामिति । एतेषामेतादृशानां सताम् । द्रोहतः । साक्षाद्धरेः । द्रोहः । भवेत् । तथा । एतेषां सताम् । सेवनात् । साक्षात्कृष्णसेवनम् । स्यात् । ध्रुवं निश्चितमेव ॥ ५९ ॥ इतीति । इत्येवंविधम् । धर्मसूनोः श्रीहरेः । वाक्यसुधाम् । निपीय । सः । साधुः शुकानन्दमुनिः । तथा । तदाश्रिताः । सदोनिषण्णाः । समस्ताः । अन्ये । मुनयः । गृहिणश्च । हृदये । मुदम् । आपुः ॥ ६० ॥ यः प्रश्नानां शुकानन्दमुनेः कृत्वोत्तराणि तम् । हर्षयामास स हरिर्हर्षदोऽस्तु सदैव मे ॥१॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तक श्रीहर्येकान्तिकोपासक श्रीहरिकृष्णभगवत्स्वगुरुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां द्विशताधिकाष्टपञ्चाशत्तमस्तरङ्गः ॥ २५८ ॥ ३५ ॥

आत्यन्तिकश्रेयसो यन्निर्विघ्नं साधनं महत् । श्रेयोमार्गे महाविघ्नो यश्च हेयः प्रयत्नतः ॥ १ ॥ आत्मनो ब्रह्मणश्चापि साक्षाद्दर्शनसाधनम् । यत्तत्सर्वं तु षट्त्रिंशे स्पष्टं सम्प्रोक्तमञ्जसा ॥ २ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । ( १८८५ ) राधशुक्लप्रतिपदि वैशाखमासस्य शुक्लपक्षागतप्रतिपत्तिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे निजाश्रमादुत्तमनृपतिदुर्गाभ्यन्तरवर्त्यात्मनिवासस्थानादित्यर्थः । स्वामी । स श्रीहरिः । वाहारूढः स्वाश्वाधिरूढः सन् । लक्ष्मीवाटीम् । उपागत्य । तत्र लक्ष्मीवाटयाम् । वेद्याम् । आस्ते स्म ॥ २ ॥ सद्भिरिति । स्वम् । आश्रितैः । भूरिभिर्नानादेशागतत्वाद्बहुभिः । सद्भिः साधुभिः । गृहिभिश्च । वृतः सभायां परिवेष्टितः । सितवासाः परिधृतसकलश्वेतवसनः । प्रसन्नास्यः । स श्रीहरिः । स्वाग्रगान् । सतः साधून् । पप्रच्छ ॥ ३ ॥ मुमुक्षोरिति । हे साधवः ! । इह लोके । मुमुक्षोः । जीवस्य । येन साधनेन । आत्यन्तिकम् । श्रेयः । निर्विघ्नं यथातथा । अञ्जसा तत्त्वतः । भवेत् । तत्तथाविधम् । उत्तमम् । साधनम् । किम् । भवति ॥ ४ ॥ श्रेय इति । श्रेयोऽध्वनि कल्याणमार्गे । महाविघ्नश्च । कः । अस्ति । इत्येतत्प्रश्नद्वयोत्तरम् । निगद्यताम् । इत्यमुना प्रकारेण । पृष्टाः श्रीहरिणानुयुक्ताः । ते सन्तः । यथाबुद्धि स्वस्वबुद्ध्यनुसारेण । उत्तरम् । अकुर्वत ॥ ५ ॥ सम्यगिति । अथानन्तरम् । प्रभुः उत्तरे प्रत्युत्तरे च समर्थः श्रीहरिः । तत्सन्मण्डलकृतस्वप्रश्नोत्तरम् । सम्यग्यथार्थजातम् । इतीत्थम् । न मत्वा । तत्स्वकृतप्रश्नोत्तरम् । स्वयमेव । आह । हे साधवः ! । तेन मुमुक्षुणा । आदौ प्रथमस्तु । कृष्णसाकारता । दृढं यथातथा । विज्ञेया साक्षाद्भगवत्साधुसमागमेन बोध्या ॥ ६ ॥ एतदेव पुनः स्पष्टमाह । ब्रह्मेति । ब्रह्मज्योतिःसमूहेऽक्षरब्रह्मतेजःपुञ्जे । सदा दिव्यतनुः । हरिः । अस्ति । अक्षरब्रह्मभावापन्नानन्तमुक्तकृतसेवनो वर्त्तते इत्यर्थः । स एवंविधः श्रीहरिरेव । भुवि । नृणाम् । श्रेयसे । त्वाकृतिः । जायते । इतीत्युत्तरेण सम्बन्धः ॥ ७ ॥ इतीति । इतीत्थम् । ज्ञात्वा । तस्य प्रत्यक्षस्य श्रीहरेः । अतिभावतः । दृढः । आश्रयः । कार्यः । ततस्तदनन्तरम् । अस्य श्रीहरेः । धर्मोपेता । भक्तिः । प्रीत्या । सर्वदा । कार्या ॥ ८ ॥

शकाब्दे विक्रमार्कस्य भूताष्टवसुभूमिते । राधशुक्लप्रतिपदि वचोऽमृतमिदं हरेः ॥१॥ तत्र दुर्गपुरे स्वामी वाहारूढो निजाश्रमात् । लक्ष्मीवाटीमुपागत्य वेद्यामास्ते स्म तत्र सः ॥ २ ॥ सद्भिर्वृतश्च गृहिभिर्भूरिभिः स स्वमाश्रितैः । सितवासाः प्रसन्नास्यः पप्रच्छ स्वाग्रगान्सतः ॥ ३ ॥ मुमुक्षोरिह जीवस्य किं तत्साधनमुत्तमम् । आत्यन्तिकं भवेच्छ्रेयो येन निर्विघ्नमञ्जसा ॥ ४ ॥ श्रेयोऽध्वनि महाविघ्नः कश्चास्तीति निगद्यताम् । इति पृष्टा यथाबुद्धि त उत्तरमकुर्वत ॥ ५ ॥ सम्यक्तन्नेति मत्वाऽथ स्वयमेवाह तत्प्रभुः । आदौ तेन तु विज्ञेया कृष्णसाकारता दृढम् ॥ ६ ॥ ब्रह्मज्योतिःसमूहेऽस्ति सदा दिव्यतनुर्हरिः । स एव श्रेयसे नृणां त्वाकृतिर्जायते भुवि ॥ ७ ॥ इति ज्ञात्वाऽऽश्रयस्तस्य दृढः कार्योऽतिभावतः । धर्मोपेता ततो भक्तिः प्रीत्या कार्याऽस्य सर्वदा ॥ ८ ॥

भक्तिमन्त इति । किञ्च । तेन । भक्तिमन्तः श्रीहरेरेकान्तिकोपासनायुक्ताः । ये । सन्तः । ते । परमादरात् । सेव्याः । एतदेव । मुमुक्षोः । परमम् । श्रेयः-साधनम् । मतम् ॥ ९ ॥ एवं प्रथमप्रश्नोत्तरं कृत्वा द्वितीयप्रश्नोत्तरमाह षड्भिः शुष्केति । हे साधवः ! । अत्रास्मिन् श्रेयोमार्गे । शुष्कवेदान्तिनः शुद्धाद्वैतवादिनः पुरुषस्य । सङ्गः । महान् । विघ्नः । अस्ति । इति । गम्यताम् । अस्य शुष्कवेदान्तिनः । सङ्गे समागमे कृते सति । तदीयगुणदर्शनात् । तस्मिन् । प्रीतिः । स्यात् ॥ १० ॥ गुण इति । यत्र यस्मिन् । जने । गुणः । समीक्ष्येत । तस्मिन् जने । आशु शीघ्रम् । रतिः प्रीतिः । भवेत् । इति हीत्थमेव । लोकेऽपि । ईक्ष्यते । अस्य । शुष्कवेदान्तिनः । गुणम् । ब्रुवे । शृणुत ॥ ११ ॥ आत्मेति । आत्मा जीवः । नित्यः । निर्विकारः । निराकृतिररूप एव । भवति । अस्यात्मनः । जन्म मृत्युश्च । नैव भवति । पापकर्मणम् । सङ्गश्च । नैव भवति ॥ १२ ॥ परमात्मेति । परमात्मापि । सर्वदा । नित्यादिगुणयुक्तो नित्यनिर्विकारादिगुणसहितः । अस्ति । तस्मिन्परमात्मनि । त्वय्यात्मनि च । वास्तवः । भेदः । क्वचित्कदाचिदपि । नैवास्ति । हि प्रसिद्धमेतदात्मैवेदमग्र आसीदित्यादिश्रुतिषु । एवमित्युत्तरेण सम्बन्धः

भक्तिमन्तश्च ये सन्तः सेव्यास्ते परमादरात् । श्रेयःसाधनमेतद्धि मुमुक्षोः परमं मतम् ॥९॥ शुष्कवेदान्तिनः सङ्गो महान् विघ्नोऽत्र गम्यताम् । सङ्गेऽस्य तस्मिन् प्रीतिः स्यात्तदीयगुणदर्शनात् ॥ १० ॥ गुणो यत्र समीक्ष्येत तस्मिन्नाशु भवेद्रतिः । इतीक्ष्यते हि लोकेऽपि शृणुतास्य गुणं ब्रुवे ॥ ११ ॥ आत्मा नित्यो निर्विकारो भवत्येव निराकृतिः । नैवास्य जन्ममृत्युश्च न सङ्गः पापकर्मणाम् ॥ १२ ॥ परमात्माऽपि नित्यादिगुणयुक्तोऽस्ति सर्वदा । तस्मिंस्त्वयि च नैवास्ति भेदो हि वास्तवः क्वचित् ॥ १३ ॥ एवं गुणं दर्शयित्वा कुर्यादाकारखण्डनम् । हरेस्ततः स सत्सङ्गी स्याद्भक्तिभ्रष्टतत्समः ॥ १४ ॥ अत एष महाविघ्नः श्रेयोमार्गे ततोऽस्य तु । महादुष्टस्य नो कार्यः क्वचित्सङ्गो मुमुक्षुभिः ॥ १५ ॥ इति प्रश्नोत्तरं स्वामी कृपया स महाप्रभुः । कृत्वा पुनरुपागच्छन्नगरं तद्वृतो निजैः ॥ १६ ॥ तत्र प्राचीनवक्त्रस्य वेद्यामुत्तमवेश्मनः । न्यषीदन्मञ्चकवरे परितः स वृतः स्वकैः ॥ १७ ॥

॥ १३ ॥ एवमिति । एवमेवंविधम् । गुणम् । दर्शयित्वा । हरेः परमात्मनः । आकारखण्डनम् । कुर्यात् । ततस्तनन्तरम् । सत्सङ्गी शुष्कवेदान्तिसङ्गवान् । स पुरुषः । भक्तिभ्रष्टतत्समो भगवद्भक्तिच्युतशुष्कवेदान्तिसमानः । स्यात् ॥ १४ ॥ अत इति । अतो हेतोः । एष शुष्कवेदान्तिसङ्गरूपः । श्रेयोमार्गे कल्याणमार्गे । महाविघ्नो महान्तरायोऽस्ति । ततो हेतोः । महादुष्टस्य शुष्कवेदान्तिनः । सङ्गस्तु । मुमुक्षुभिः । क्वचित्कदाचिदपि । नो कार्यः ॥ १५ ॥ इतीति । इत्यमुना प्रकारेण । प्रश्नोत्तरं स्वद्वितीयप्रश्नप्रतिवचनम् । कृपया । कृत्वा । स्वामी । महाप्रभुः । स श्रीहरिः । निजैः स्वाश्रितैस्त्यागिगृहिभक्तैः । वृतो वेष्टितः सन् । पुनः । तत् । नगरं दुर्गपत्तनम् । उपागच्छत् ॥ १६ ॥ तत्रेति । तत्र दुर्गपत्तने । प्राचीनवक्त्रस्य प्राग्द्वारस्य । उत्तमवेश्मनः स्वदुर्गान्तर्वर्त्युत्तमनृपतिभवनस्य । वेद्यां बहिर्वेदिकायाम् । मञ्चकवरे स्वास्तृतोत्तमपर्यङ्कासने । स श्रीहरिः । स्वकैः स्वाश्रितैरनेकत्यागिगृहिजनैः । वृतः सभायां परिवेष्टितः सन् । न्यषीदत् ॥ १७ ॥

साधूनिति । स श्रीहरिः । प्रसन्नः सन् । स्वयमेव । पुरःस्थान् । साधून् । पुनः । अवदत् । हे साधवः ! । मया । सर्वाणि । शास्त्राणि । अवगाह्यालोड्य । इत्थं वक्ष्यमाणप्रकारेण । निश्चितम् । अस्ति । हि ॥१८॥ आत्मन इति । आत्मनः स्वजीवस्य । ब्रह्मणः परमात्मनश्चापि । साक्षाद्दर्शनं हृदि प्रत्यक्षत्वीक्षणम् । अन्तरा विना । मायिकैः । सुखराशिभिः । कस्यापि भक्तजनस्य । शान्तिः । नैव स्यात् ॥१९॥ तदिति । तदात्मब्रह्मणोः साक्षाद्दर्शनं तु । साक्षाद्धरेः प्रत्यक्षपुरुषोत्तमस्यैव । ध्यानोपासनं नवधा भक्तिपूर्वकं चिन्तनम् । अन्तरा । तपोव्रतादिभिः । साधनानन्तरैः । नैव जायते ॥ २० ॥ तदिति । अत्र लोके । ये पुरुषाः । तच्छ्रीहरेर्ध्यानोपासनम् । हित्वा । साधनानन्तरैः । तत्प्राप्त्यै आत्मपरमात्मदर्शनार्थम् । यतन्ते । ते पुरुषास्तु । स्वेष्टरसप्राप्त्यै । जिह्वया । खमाकाशमेव । लिहन्ति । यथाऽऽकाशमनिशं लिहतामपि जनानां वाञ्छितरसप्राप्तिर्न भवेत्तथा श्रीहरिध्यानोपासनेतरसाधनैरात्मपरमात्मदर्शनं न स्यादेवेत्यर्थः ॥ २१ ॥ सर्वेति । ततो हेतोः । आत्म-

साधून् पुरःस्थानवदत्प्रसन्नः स पुनः स्वयम् । मयाऽवगाह्य शास्त्राणि सर्वाणीत्थं हि निश्चितम् ॥ १८ ॥
आत्मनो ब्रह्मणश्चापि साक्षाद्दर्शनमन्तरा । कस्यापि शान्तिर्नैव स्यान्मायिकैः सुखराशिभिः ॥ १९ ॥
तत्तु साक्षाद्धरेरेव ध्यानोपासनमन्तरा । तपोव्रतादिभिर्नैव जायते साधनान्तरैः ॥ २० ॥
तद्धित्वा ये यतन्तेऽत्र तत्प्राप्त्यै साधनान्तरैः । ते तु स्वेष्टरसप्राप्त्यै खं लिहन्त्येव जिह्वया ॥ २१ ॥
सर्वप्रयत्नेन तत आत्मब्रह्मदिदृक्षुभिः । ध्यातव्यो त्वाकृतिः कृष्णः प्रीत्येत्यस्ति मतं मम ॥ २२ ॥
केचित्सांख्येन योगेन यतन्तेऽत्र तदाप्तये । तेषां भूरिप्रयासेन कश्चिदेव तदाप्नुयात् ॥ २३ ॥
तदपि श्रीहरेरेव कृपयैव हि सिद्ध्यति । तद्भूरिकष्टं वीक्ष्याप्तकारुण्यस्यान्तरात्मनः ॥ २४ ॥
साधनान्तरमुज्झित्वा ततोऽयं मदुदीरितः । पक्षः श्रय्योऽतिसुकरः सर्वसाध्यः सुबुद्धिभिः ॥ २५ ॥

ब्रह्मदिदृक्षुभिर्भक्तैः । सर्वप्रयत्नेन । प्रीत्या । त्वाकृतिः । कृष्णः श्रीहरिः । ध्यातव्य उपासनापूर्वं चिन्तनीयः । इत्येवंविधम् । मम । मतं सिद्धान्तः । अस्ति ॥ २२ ॥ केचिदिति । अत्र लोके । केचित्पुरुषाः । तदाप्तये आत्मब्रह्मदर्शनार्थम् । सांख्येन निर्बीजसांख्ययोगेन । योगेन निर्बीजाष्टाङ्गयोगेन । यतन्ते । तेषां तथाविधानां पुरुषाणां मध्ये । कश्चिदेव । भूरिप्रयासेन । तदात्मपरमात्मादर्शनम् । आप्नुयात् ॥ २३ ॥ तदेति । तत्कस्यचित्तद्दर्शनोपलम्भनमपि । तद्भूरिकष्टम् । वीक्ष्य । आप्तकारुण्यस्य जातदयोदयस्य । अन्तरात्मनस्तत्कर्मफलप्रदान्तर्यामिणः । श्रीहरेरेव । कृपयैव । सिद्ध्यति । हि ॥ २४ ॥ साधनेति । ततो हेतोः । साधनान्तरम् । उज्झित्वा त्यक्त्वा । सुबुद्धिभिः । मदुदीरितः । सर्वसाध्यः । अतएव । अतिसुकरः । अयम् । पक्षः । श्रय्य आश्रयणीयः ॥ २५ ॥

सुधेति । इत्येवंविधाम् । ईश्वरस्य प्रत्यक्षपरमेश्वरस्य श्रीहरेः । सुधासमाम् । वाचम् । निशम्य । सदःस्थाः । भक्ताः । सर्वे । ते । साधुजनाः । द्वितीयाश्रमिणश्च । हृदि । मोदम् । प्राप्य तं । स्वावासं व्रजन्तं श्रीहरिम् । प्रणेमुः ॥२६॥ यः प्राहात्यन्तिकश्रेयःसाधनं विघ्नवर्जितम् । तन्मार्गे च महद्विघ्नमात्मनः स्वस्य चापि हि ॥ १ ॥ साक्षाद्दृष्टेः साधनं च श्रीहरिः स ददातु मे । तत्साधनं ततो विघ्नान्मां रक्षतु दयानिधिः ॥ २ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तक श्रीदर्यकान्तिकोपासक श्रीहरिकृष्णभगवत्स्नुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां द्विशताधिकैकोनषष्टितमस्तरङ्गः ॥ २५९ ॥ ३६ ॥

देशादेर्विषमत्वेऽपि विस्मृतिर्यस्य नो भवेत् । तज्ज्ञानं श्रीहरेः प्रोक्तं सप्तत्रिंशे यथार्थतः ॥ १ ॥ शकेति । शकेति पूर्वार्द्धं व्याख्यातम् । ( १८८५ ) राधशुक्लतृतीयायां वैशाखमासस्य शुक्लपक्षागततृतीयातिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमस्य । राज्ञः । दुर्गे । उदगास्यस्योदग्द्वारस्य । वेश्मनस्तस्यैव भवनस्य । वितर्द्दौ बाह्यवेदिकायाम् । चक्रकोत्तमेऽतिश्रेष्ठे चक्रकासने । स श्रीहरिः । न्यषीदत् ॥ २ ॥ सितेति । सिता-

सुधासमां वाचमितीश्वरस्य निशम्य ते साधुजनाः सदःस्थाः । भक्ता द्वितीयाश्रमिणश्च सर्वे मोदं हृदि प्राप्य च तं प्रणेमुः ॥२६॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते द्विशताधिकैकोनषष्टितमस्तरङ्गः ॥ २५९ ॥ ३६ ॥

शकाब्दे विक्रमार्कस्य भूताष्टवसुभूमिते । राधशुक्लतृतीयायां वचोऽमृतमिदं हरेः ॥ १ ॥ तत्र दुर्गपुरे दुर्गे उत्तमस्य स वेश्मनः । वितर्द्दावुदगास्यस्य न्यषीदच्चक्रकोत्तमे ॥ २ ॥ सिताम्बरो वृतो भक्तैस्त्यागिभिर्गृहिभिश्च सः । नानादेशसमायातैः प्रीतः प्रोवाच तान्स्वयम् ॥ ३ ॥ यस्य साक्षाद्भगवतो यथावन्निश्चयो हृदि । जातः स्यात्स तु न क्वापि ततोऽपसरति ध्रुवम् ॥ ४ ॥ देशकालक्रियासङ्गवैषम्येऽपि यथापुरा । स तिष्ठेन्नाल्पमात्रोऽपि ह्रासस्तस्य भवेत्क्वचित् ॥ ५ ॥ दैवात्प्राप्तस्य दारिद्र्यं राज्ञ इभ्यस्य वा यथा । कदन्नाद्यदतोऽप्यल्पं तिष्ठेत्प्राग्वैभवस्मृतिः ॥ ६ ॥

म्बरः परिहितसकलश्वेतवसनः । नानादेशसमायातैः । त्यागिभिः । गृहिभिश्च । भक्तैः । वृतः सभायां परिवेष्टितः । स श्रीहरिः । प्रीतः प्रसन्नः सन् । स्वयमेव । तान् सर्वान्स्वभक्तान् । प्रोवाच ॥ ३ ॥ यस्येति । हे भक्ताः ! । यस्य भक्तस्य । हृदि । साक्षाद्भगवतः । यथावद्यथार्थतया । निश्चयः । जातः स्यात् । स भक्तस्तु । क्वापि कदाचिदपि । ततस्तन्निश्चयात् । ध्रुवमेव । नापसरति । तस्य स निश्चयो न निवर्त्तते इत्यर्थः ॥ ४ ॥ देशेति । देशकालक्रियासङ्गवैषम्ये सत्यपि । स तन्निश्चयः । यथापुरा पूर्ववदेव । तिष्ठेत् । तस्य तन्निश्चयस्य । अल्पमात्रोऽपि । ह्रासः क्षीणता । क्वचित्कदाचिदपि । न भवेत् ॥ ५ ॥ एतदेव दृष्टान्तेन द्रढयति द्वाभ्याम् । दैवादिति । यथा । दैवात् प्रारब्धवशतः । दारिद्र्यं दरिद्रताम् । प्राप्तस्य । राज्ञः । अथवा । इभ्यस्य धनिनः पुरुषस्य । अल्पमपि । कदन्नादि कोद्रवप्रभृतिकम् । आदिशब्दाज्जीवन्तीपत्र–कपित्थ–बदरादिग्रहणम् । अदतो भुञ्जानस्य । प्राग्वैभवस्मृतिः । तिष्ठेत ॥ ६ ॥

तथेति । तथा । भागवतं साक्षाद्भगवन्निश्चयसम्बन्धि । सौख्यम् । पुरा प्रथमतः । अनुभूतवतः प्राप्तस्य भक्तस्य । दैवात्प्रारब्धवशतः । देशान्तराद्याप्तौ सत्यामपि । तत्स्मृतिर्भगवन्निश्चयसौख्यस्मरणम् । तिष्ठेत् । हि । इति द्वयोरेकसम्बन्धः ॥ ७ ॥ भजन्निति । स तथाविधो भक्तः । तत्र देशान्तराद्याप्तौ सत्यामपि । अन्तरे । हरिमेव । सदा । भजन्सन् । अविक्लवः सन्नेव । प्रारब्धप्रापिते । सुखदुःखे । भुङ्क्ते ॥ ८ ॥ तस्मादिति । तस्माद्धेतोः । नराकृतेः । साक्षात्कृष्णस्य । ज्ञानं निश्चयात्मकं वेदनम् । मुमुक्षुणा । अञ्जसा तत्त्वतः । दृढीकार्यम् । यज्ज्ञानम् । विपद्यपि । न चलेत् ॥ ९ ॥ तदिति । हे भक्ताः ! । तत् ज्ञानम् । यादृशं यथाविधम् । अस्ति । तत्तथाविधम् । वो युष्मभ्यम् । यथावत् । कथयामि । कृष्णाकृतिः श्रीहरेर्मूर्त्तिः । मायिकाकारतः । विलक्षणा । अस्ति ॥ १० ॥ तां विशिनष्टि । अतीति । अतीव रमणीयानि परस्परस्पर्द्धिरमणीयत्वान्यङ्गान्यवयवा यस्याः सा । सर्वेषां सौन्दर्याणां संग्रहो यस्यां सा । दिव्या सकललावण्यमयी । नित्या सनातना । अकालगुणा कालविधेयपरिणामत्व विनाशत्वादिगुणवर्जिता । सर्वेषां सच्चिदानन्दधर्मिणामक्षरमुक्तानां तदन्येषां च । मनोहरा यद्दर्शनानन्तरमन्यदर्शनादौ मनः कदापि

तथा भागवतं सौख्यमनुभूतवतः पुरा । दैवाद्देशान्तराद्याप्तावपि तिष्ठेद्धि तत्स्मृतिः ॥ ७ ॥
भजन्नेव स तत्रापि हरिमेवान्तरे सदा । प्रारब्धप्रापिते भुङ्क्ते सुखःदुखे अविक्लवः ॥ ८ ॥
तस्मान्नराकृतेः साक्षात्कृष्णस्य ज्ञानमञ्जसा । मुमुक्षुणा दृढीकार्यं चलेद्यन्न विपद्यपि ॥ ९ ॥
तज्ज्ञानं यादृशं तच्च यथावत्कथयामि वः । मायिकाकारतः कृष्णाकृतिरस्ति विलक्षणा ॥ १० ॥
अतीव रमणीयाङ्गा सर्वसौदर्यसंग्रहा । दिव्या नित्याऽकालगुणा सर्वेषां च मनोहरा ॥ ११ ॥
तेजःपुञ्जेऽक्षरे धाम्नि नित्यं कृष्णो विराजते । तद्भक्ताश्च तदाकाराः सेवन्ते स्वामिनं हि तम् ॥ १२ ॥
कृष्णः स्वामी सेवकास्ते पुरुषाः पुरुषोत्तमम् । भजन्तीति विशेषोऽस्ति तत्सारूप्येऽपि सेविनाम् ॥ १३ ॥

नापसरेत्तथाविधा च ॥ ११ ॥ तेज इति । तेजःपुञ्जे कोटिकोटिसूर्येन्दुवह्नितेजसोऽप्यतिशयितमहोराशिरूपे । अक्षरे । धाम्नि । अक्षरधाममध्यगतदिव्यमन्दिरान्तर्वर्तिदिव्यसिंहासने इत्यर्थः । कृष्णः श्रीहरिः । नित्यम् । विराजते । तदाकारास्तस्याकार इवाकारा येषां तथाभूताः । साक्षाद्भगवदेकान्तिकोपासनातिप्रीतततत्सम्प्राप्तसच्चिदानन्दादितद्गुणमयत्वेन येषां तत्सेवार्हास्तत्समानाः सुन्दरमूर्त्तयः सन्ति तथाविधा इत्यर्थः । तद्भक्ताः । स्वामिनमपरिमितगुणैश्वर्याद्येकाधारं स्वसेव्यम् । तं कृष्णम् । सेवन्ते ॥ १२ ॥ कृष्ण इति । कृष्णः । स्वामी । अस्ति । ते तद्भक्ताः । सेवकाः । सन्ति । पुरुषाः पुरुषाकाराः । ते भक्ताः । पुरुषोत्तमं पुरुषकारेभ्यस्तेभ्योऽप्यतिरमणीयपुरुषाकृतित्वात्तद्गुणादिभ्योऽपि तद्गुणादीनां सर्षपेभ्यः शैलस्येव महदन्तरत्वेनातिश्रेष्ठत्वादुत्तमपुरुषं कृष्णम् । भजन्ति । इत्येवंविधः । सेविनां कृष्णसेवकानाम् । तत्सारूप्ये कृष्णसमानरूपत्वे सत्यपि । विशेषस्तस्य तेषां च भेदः । अस्ति ॥ १३ ॥

कृष्णेति । कृष्णतुल्यः । कृष्ण एव । अन्यः । कोऽपि । पूरुषोऽक्षरादिको भक्तः । नतु कृष्णतुल्यो नैवास्ति । अस्य कृष्णस्य । महिम्नः । पारमन्तम् । कोऽप्यनेककोटिमुक्तान्यतमः कश्चिन्मुक्तोऽपि । कुत्रचित्कदाचिदपि । न याति ॥१४॥ अप्राकृतेति । गुणात्मका मायिकगुणमया अपि । देहिनो जीवाः । अप्राकृतगुणस्य प्रकृतिकार्यगुणवर्जितस्य । कल्याणगुणवारिधेः । अस्य साक्षात्कृष्णस्य । ध्यानेनैकान्तिकोपासनायुक्तचिन्तनेन । नैर्गुण्यम् । यान्ति । सच्चिदानन्दमयब्रह्मतनुं सम्प्राप्य श्रीहरिसेवायां तिष्ठन्तीत्यर्थः ॥ १५ ॥ ममेति । हे जनाः ! । सर्वाधीसस्य सर्वेश्वरेश्वरस्य । अस्य कृष्णस्य । आज्ञावशतः । महापुमान्महामायाधिपतिरक्षरपुरुषः । महामाया च । नैकाण्डसर्गादिम् । कुरुते । ध्रुवमेव ॥ १६ ॥ स्वधामेति । अयम् । कृष्णः । स्वधामस्थः स्वकीयाक्षरधामावस्थितः सन्नेव । ब्रह्माण्डकोटिषु । स्थिते-श्चितिशेषः । जीवेश्वरव्रजेषु जीवानामीश्वराणां च समूहेष्वपि । अन्तर्यामिस्वरूपेण । स्थितो यथायोग्यं तत्तत्कर्मफलप्रदानायावस्थितोऽस्ति ॥ १७ ॥ ननु जीवेश्वरान्तर्या-मितया तदवस्थाने तद्दोषाणां तस्मिन्नपि तद्द्वारा संक्रमः स्यादितिचेन्नाश्माद्यवस्थिताग्नावश्मादिगतदोषादर्शनादित्याह । अश्मेती । यथा । अश्मकाष्ठादिगस्य पापाणेन्धना-

कृष्णतुल्यः कृष्ण एव न त्वन्यः कोऽपि पूरुषः । पारमस्य महिम्नश्च कोऽपि याति न कुत्रचित् ॥ १४ ॥ अप्राकृत-गुणस्यास्य कल्याणगुणवारिधेः । ध्यानेन यान्ति नैर्गुण्यं देहिनोऽपि गुणात्मकाः ॥ १५ ॥ महापुमान्महामाया त्वस्या-ज्ञावशतो ध्रुवम् । सर्वाधीशस्य नैकाण्डसर्गादि कुरुते जनाः ॥ १६ ॥ स्वधामस्थः स्वयं कृष्णः स्थितो ब्रह्माण्ड-कोटिषु । अन्तर्यामिस्वरूपेण जीवेश्वरव्रजेष्वपि ॥ १७ ॥ अश्मकाष्ठादिगस्यापि वह्ने रूपं यथा पृथक् । हरेस्तेषु स्थितस्यापि त्वन्यदेव तथैव तत् ॥ १८ ॥ जीवेश्वराणां सर्वेषां जीवनं च स एव हि । तं विना ते न वै किञ्चि-त्कर्तुं भोक्तुं तथेशते ॥ १९ ॥ ईदृक्स्वतःसिद्धभूरिमहैश्वर्यनिधिः प्रभुः । जीवानां श्रेयसे भूमौ नृनाट्यं विदधात्ययम् ॥ २० ॥ इति साक्षाद्धरिं ज्ञात्वा दृढनिश्चयतोऽत्र यः । तस्यैव भक्तिं कुर्वंस्तत्सौख्यं चानुभवेद्धृदि ॥ २१ ॥

द्यवस्थितस्यापि । वह्नेः । रूपम् । पृथगश्मादीभ्योऽन्यदेव । अस्ति । तथैव । तेषु जीवेश्वरेषु । स्थितस्यापि । हरेः । तदन्तर्यामिस्वरूपम् । अन्यत्ततः पृथगेवास्ति ॥१८॥ जीवेति । सर्वान्तर्यामी श्रीहरिरेव । सर्वेषाम् । जीवेश्वराणाम् । जीवनं जीवनहेतुः । अस्ति । हि । ते जीवेश्वराः । तं तथाविधं श्रीहरिम् । विना । किञ्चित्किमपि कर्तुम् । तथा । भोक्तुम् । नेशते समर्था न भवन्ति । वै । तथाचोक्तं श्रीभागवते । "हरिर्हि साक्षाद्भगवान् शरीरिणामात्मा झषाणामिव तोयमीप्सितमि"ति । "ईशाभिसृष्टं ह्यवरुन्ध्महेऽङ्ग ! दुःखं सुखं वा गुणकर्मसङ्गात् । आस्थाय तत्तद्यदयुङ्क्त नाथश्चक्षुष्मतान्धा इव नीयमाना" इति च ॥ १९ ॥ ईदृगिति । ईदृक् स्वतःसिद्ध-भूरिमहैश्वर्यनिधिः । प्रभुः श्रीहरिः । अयं भवन्नयनविषयः सन् । भूमौ । जीवानाम् । श्रेयसे । नृनाट्यम् । विदधाति ॥ २० ॥ इतीति । इत्यमुना प्रकारेण । अत्र सत्सङ्गे । यो भक्तः । साक्षाद्धरिम् । दृढनिश्चयतः । ज्ञात्वा । तस्य श्रीहरेरेव । भक्तिम् । कुर्वन्सन् । हृदि । तत्सौख्यम् । अनुभवेत् ॥ २१ ॥

तदिति । तस्य भक्तस्य । आपत्कालेऽपि । तद्विस्मृतिर्भगवत्सुखविस्मरणम् । कर्हिचित् । न स्यात् । अतो हेतोः । मुमुक्षुर्भक्तः । एतन्मदुक्तज्ञानमेव । यत्नेन । साधयेत् । इति द्वयोरेकसम्बन्धः ॥ २२ ॥ सर्वैरिति । मच्छ्रितैः । भवद्भिः । सर्वैरपि । एतत् ज्ञानम् । परमादरात् । सर्वथैव । दृढीकार्यम् । यतो हेतोः । इदं ज्ञानम् । श्रेयोमूलमात्यन्तिककल्याणकारणभूतम् । अस्ति ॥२३॥ आपदिति । क्वचित् । आपत्काले । प्राप्ते सत्यपि । क्वचित् । सत्सङ्गात् । बहिः । निःसृतौ सत्यामपि । अस्मिन् ज्ञाने । दृढीकृते सति । स्वस्थितेः स्वकल्याणमार्गात् । भङ्गश्च्युतिस्त्वम् । न भवेत् ॥२४॥ अत इति । अतो हेतोरेव । मयाऽपि । एषा । वार्त्ता । भवताम् । अग्रे । कृता । मुमुक्षूणां भक्तानाम् । हितावहा । सैषा वार्त्ता । स्वहृदये । अवधार्या भवद्भिः सर्वथाऽवधारणीया ॥ २५ ॥ इतीति । इत्येवंविधम् । जगद्गुरोः । तस्य श्रीहरेः । सुधातुलितम् । वचः । साधु सम्यग्यथातथा । निशम्य । तदाश्रिताः । ते । मुनयः । गृहिणश्च । तुतुषुः । हृदये । तच्छ्रीहरिवचोऽमृतम् । तथा श्रीहर्युक्त-

तद्विस्मृतिर्न तस्य स्यादापत्कालेऽपि कर्हिचित् । अतो मुमुक्षुर्यत्नेन साधयेदेतदेव हि ॥ २२ ॥ सर्वैर्भव-
द्भिरप्येतन्मच्छ्रितैः परमादरात् । सर्वथैव दृढीकार्यं श्रेयो मूलमिदं यतः ॥ २३ ॥ आपत्काले क्वचित्प्राप्ते
सत्सङ्गान्निःसृतौ बहिः । अपि न स्वस्थितेर्भङ्गो भवेदस्मिन् दृढीकृते ॥ २४ ॥ अत एव मयाऽप्येषा
वार्त्ताऽग्रे भवतां कृता । साऽवधार्या स्वहृदये मुमुक्षूणां हितावहा ॥ २५ ॥ इति तस्य जगद्गुरोः
सुधातुलितं साधुवचो निशम्य ते । मुनयो गृहिणस्तदाश्रितास्तुतुषुस्तद्धृदये तथा दधुः ॥ २६ ॥

इति श्रीशतानन्दमुनिविरचिते हरिवाक्यसुधासिन्धौ द्विशताधिकषष्टीत्तमस्तरङ्गः ॥ २६० ॥ ३७ ॥

शकाब्दे विक्रमार्कस्य भूताष्टवसुभूमिते । राधशुक्लचतुर्दश्यां वचोऽमृतमिदं हरेः ॥ १ ॥
तत्र दुर्गपुरे स्वामी स गोपीनाथमन्दिरे । चक्रकासन आस्ते स्म वृतो भक्तैः सिताम्बरः ॥ २ ॥

प्रकारेणैव । दधुः ॥ २६ ॥ विषमत्वेऽपि देशादेः स्यान्न यद्विस्मृतं क्वचित् । तज्ज्ञानं स्वस्य यः प्राह देयान्मे श्रीहरिः स तत् ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तक श्रीहर्येकान्तिकोपासक श्रीहरिकृष्णभगवत्स्वनुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां द्विशताधिकषष्टितमस्तरङ्गः ॥ २६० ॥ ३७ ॥

हरेर्नराकृतेः साक्षान्नित्यता भजनीयता । षड्दोषहेयतेत्यादित्वष्टत्रिंशेऽखिलं स्मृतम् ॥ १ ॥ शकेति । शकेति पूर्वार्द्धे व्याख्यातम् । (१८८५) राधशुक्लचतुर्दश्यां वैशाखमासस्य शुक्लपक्षागतचतुर्दशीतिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । गोपीनाथमन्दिरे उत्तमनृपतिदुर्गान्निर्वर्त्ति- श्रीगोपीनाथप्रासादैकदेशे इत्यर्थः । चक्रकासने । भक्तैर्नानादेशागतत्यागिगृहिस्वाश्रितजनैः । वृतः सभायां परिवेष्टितः । सिताम्बरः परिहितसकलश्वेतवसनः । स्वामी । स श्रीहरिः । आस्ते स्म ॥ २ ॥

स इति । जगद्गुरुः । स श्रीहरिः । पुरतः स्वाग्रप्रदेशे । निविष्टान् । मुक्तानन्दप्रमुखान् । सतः साधून् । मधुरया । वाचा । आनन्दयन्सन् । उवाच ॥ ३ ॥ सम्यगिति । हे साधवः ! । मया । सम्यक् । शास्त्रविचारेण सांख्यादिशास्त्राणां सम्यग्विचारेण । सुनिश्चितम् । अस्ति । मायाकार्यसमुद्भवाः । सर्वाः । आकृतयः । मृषा कालेन विनाशनीयत्वात्सततपरिणामित्वाच्च मिथ्या भूता एव । सन्ति ॥ ४ ॥ अक्षर इति । अक्षरे । धाम्नि । कृष्णस्य । सर्वशः । तद्भक्तानां च । याः । आकृतयः । सन्ति । तास्तु । सत्याः कालेनाप्यविनाशनीया अपरिणामिन्यश्च । दिव्या अतिरमणीयाः । भासुरा दिव्यतेजोमयाश्च । सन्ति ॥ ५ ॥ पुरुषेति । तत्राक्षरे धामनि । स श्रीकृष्णः । ते तद्भक्ताश्च । पुरुषाकृतयः । सच्चिदानन्दरूपाः । दिव्यान्यङ्गान्यवयवाः वस्त्राणि भूषणानि च येषां तथाविधाश्च । सन्ति ॥ ६ ॥ तैरिति । तैस्तथाविधैर्भक्तैः । विविधैः । दिव्योपचारकैः । प्रेम्णा । संसेवितः । तेभ्यो भक्तेभ्यः । परमानन्ददः । असौ श्रीकृष्णः । तत्राक्षरधाम्नि ।

स मुक्तानन्दप्रमुखान् निविष्टान् पुरतः सतः । आनन्दयन्मधुरया वाचोवाच जगद्गुरुः ॥ ३ ॥ सम्यक् शास्त्रविचारेण मया त्वस्ति निश्चितम् । मृषैवाकृतयः सर्वा मायाकार्यसमुद्भवाः ॥ ४ ॥ अक्षरे धाम्नि कृष्णस्य तद्भक्तानां च सर्वशः । याः सन्त्याकृतयस्तास्तु सत्या दिव्याश्च भासुराः ॥ ५ ॥ पुरुषाकृतयः सन्ति स च ते तत्र धामनि । सच्चिदानन्दरूपाश्च दिव्याङ्गवस्त्रभूषणाः ॥ ६ ॥ तैः सेवितोऽसौ विविधैः प्रेम्णा दिव्योपचारकैः । परमानन्दस्तेभ्यो वर्तते तत्र सर्वदा ॥ ७ ॥ एतादृशोऽयं कारुण्याज्जातोऽस्ति श्रेयसे नृणाम् । इह दृग्विषयः सेवां हरिर्वः स्वीकरोत्यसौ ॥८॥ रूपेऽस्यास्मिन्नक्षरस्थे मूलरूपे च किञ्चन । भेदो न सर्वथाऽस्तीति जानीत निश्चितं हृदि ॥९॥ सर्वेषामक्षरादीनां नियन्ता चेश्वरेश्वरः । असावेकान्तभावेन भवद्भिः सेव्य आदरात् ॥१०॥ अस्यैव पूर्वमासन् येऽवतारा: श्रेयसे नृणाम् । वन्द्याः पूज्यास्तेऽपि सन्ति भजनीयाश्च भावतः ॥११॥

सर्वदा । वर्त्तते ॥ ७ ॥ एतादृश इति । एतादृश एवंविधमहिमः । अयं कृष्णः । नृणां स्वाश्रितजनानाम् । श्रेयसे आत्यन्तिककल्याणं विधातुम् । इह लोके । कारुण्यात् । जातः । अस्ति । हरिर्हरिनामा । असौ कृष्णः । वो युष्माकम् । दृग्विषयो नयनगोचरः सन् । सेवां युष्माभिः कृतां परिचर्याम् । स्वीकरोति ॥ ८ ॥ रूप इति । अस्य श्रीहरेः । अस्मिन् युष्मद्दग्गोचरे । रूपे । अक्षरस्थे । मूलरूपे च । किञ्चन । भेदः । सर्वथा । नास्ति । इतीत्थम् । यूयम् । हृदि । निश्चितमेव । जानीत ॥ ९ ॥ सर्वेषामिति । अक्षरादीनाम् । सर्वेषाम् । नियन्ता । ईश्वरेश्वरश्च । असौ श्रीहरिः । भवद्भिः सर्वैः । एकान्तभावेनैकान्तिकभक्त्या । आदरात् । सेव्यः ॥ १० ॥ अस्येति । अस्य श्रीहरेरेव । ये । अवतारा रामकृष्णादयः प्रादुर्भावाः । नृणाम् । श्रेयसे । पूर्वम् । आसन् । ते अवतारा अपि । भावतः । वन्द्याः । पूज्याः । भजनीयाश्च । सन्ति ॥ ११ ॥

साक्षादिति । एवममुना प्रकारेण । साक्षात्प्रत्यक्षतया वर्त्तमानम् । इमं श्रीहरिम् । तत्त्वतः । सर्वकारणम् । ज्ञात्वा । अतिप्रयत्नेन । षड्गुणान्वक्ष्यमाणान् षट्दोषान् । द्रुतं शीघ्रमेव । हित्वा । भजत ॥ १२ ॥ तानाह । धनेति । धनलोभः । स्त्रीप्रसङ्गः । देहाहन्ता । रसैषणा । स्वीयबन्धुजनप्रीतिः । कुसङ्गिषु । अनुरागिता स्नेहश्च ॥ १३ ॥ भक्ताविति । एते । षट्दोषाः । भक्तौ श्रीहर्येकान्तिकभजने । विघ्नकराः । सन्ति । अतः । धिया विचारयुक्तया मत्या । हेया एव । सतां वक्ष्यमाणलक्षणानां साधूनामेव । सङ्गः । कार्यः । तद्वाक्यं स्वहिताय तैरुक्तं वचनम् । अञ्जसा मनोवाक्तनुभिः । पाल्यम् ॥ १४ ॥ हरीति । ये सन्तः । अखिलम् । हरिवाक्यम् । बहुमानेन । पालयेयुः । क्वचित्कदाचित् । तस्याल्पस्यापि पाल्यस्य श्रीहरिवाक्यस्य । अतिक्रमे अज्ञात्वाप्युल्लङ्घने कृते सति । तस्मिन्नपालिते सतीत्यर्थः । शुचा शोकेन । भृशमतिशयेन । तप्येरन् ॥ १५ ॥ महत्स्विति । तेषु । महत्सु । स्वस्य । जीवः । विशेषतः । सर्वथा ।

साक्षादिमं तत्त्वतस्तु ज्ञात्वैवं सर्वकारणम् । भजतातिप्रयत्नेन हित्वा षड्गुणान् द्रुतम् ॥ १२ ॥
धनलोभः स्त्रीप्रसङ्गो देहाहन्ता रसैषणा । स्वीयबन्धुजनप्रीतिः कुसङ्गिष्वनुरागिता ॥ १३ ॥ भक्तौ
विघ्नकरा एते हेया दोषा धियैव षट् । कार्यः सङ्गः सतामेव तद्वाक्यं पाल्यमञ्जसा ॥ १४ ॥
हरिवाक्यं पालयेयुर्बहुमानेन येऽखिलम् । अतिक्रमे क्वचित्तस्य तप्येरंश्च भृशं शुचा ॥ १५ ॥
महत्सु तेषु तु स्वस्य जीवः सत्सु विशेषतः । सर्वथा जटितव्यश्च तेऽनुवर्त्त्या निरन्तरम् ॥ १६ ॥ दूरे
विषयसम्बन्धादञ्जसा वृत्यमन्यथा । नियमानां स्वकीयानां भङ्गः स्यान्नात्र संशयः ॥ १७ ॥ इति हरेर्वचनं
परमामृतं परमकारुणिकस्य निपीयते । मुदमवाप्य परां विनयेन तं नुनुवुरादरतस्तदुपाश्रिताः ॥ १८ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते द्विशताधिकैकाषष्टितमस्तरङ्गः ॥ २६१ ॥ ३८ ॥

जटितव्यः सम्मेलनीयः । ते महान्तः सन्तः । निरन्तरम् । अनुवर्त्त्या अनुवृत्त्या सेवनीयाः ॥ १६ ॥ दूर इति । विषयसम्बन्धात् । अञ्जसा तत्त्वतः । दूरे । वृत्यम् । अन्यथा ततो दूरे वर्त्तनाभावे । स्वकीयानाम् । नियमानाम् । भङ्गः । स्यात् । अत्रार्थे । संशयः । नास्ति ॥ १७ ॥ इतीति । इत्येवंविधम् । परमकारुणिकस्य । हरेः । परमामृतम् । वचनम् । निपीय । तदुपाश्रिताः । ते मुक्तानन्दादयो मुनयो गृहस्थाश्च । पराम् । मुदम् । अवाप्य । तं स्वावासं व्रजन्तं श्रीहरिम् । विनयेन । आदरतः । नुनुवुस्तुष्टुवुः ॥ १८ ॥ साक्षान्नराकृतेः स्वस्य सर्वथा भजनीयताम् । यो हरिर्दोषहेयत्वं चाह सोऽस्त्वेव मे हृदि ॥ १ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तक श्रीहर्येकान्तिकोपासक श्रीहरिकृष्णभगवत्सुनुरघुवीराचार्यविराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां द्विशताधिकैकषष्टितमस्तरङ्गः ॥ २६१ ॥ ३८ ॥

अहं ममत्वमायाया देहादौ हेयता यथा । आत्मनिष्ठा च मोहात्म्यज्ञाननिष्ठा हरेर्दृढा ॥ १ ॥ दृष्टान्तदर्शनेनाथ युक्तियुग्वचनोक्तिभिः । एकोनचत्वारिंशे तु स्पष्टत्वेन निरूपिता ॥ २ ॥ शकेति । विक्रमार्कस्य विक्रमादित्यनृपतेः । रसाष्टवसुभूमिते षडष्टाष्टैकसंमिते । शकाब्दे शकवर्षे । संवदष्टादशशताधिकषडशीतितमेऽब्दे इत्यर्थः (१८८६) शुचिकृष्णदशम्यामाषाढमासस्य कृष्णपक्षागतदशमीतिथौ । इदम् । हरेः । वचोऽमृतम् । अभूत् ॥ १ ॥ तत्रेति । तत्र तिथौ । दुर्गपुरे । उत्तमस्य राज्ञः । दुर्गे । प्रागास्यस्य प्राग्द्वारस्य । सद्मनस्तस्यैव भवनस्य । बहिर्वेद्याम् । मञ्चासने स्वास्तृतपर्यङ्कविष्टरे । स श्रीहरिः । उपाविशत् ॥ २ ॥ नैकैरिति । नैकैर्नानादेशागतत्वाद्बहुभिः । सद्भिः । गृहिजनैश्च । परिवृतः सभायां संवेष्टितः । सितांशुकधरः परिहितसकलश्वेतवसनः । स श्रीहरिः । प्रीत्या । स्वयमेव । सतः साधून् । अब्रवीत् ॥ ३ ॥ मायामिति । हे सन्तः ! । मायाम् । अपास्य । भगवति साक्षाच्छ्रीहरौ । सततम् । स्थिरा दृढा प्रीतिः । कार्या । इत्येवंविधः । सतां मतः सकलसाधुसम्मतः । सर्वशास्त्राणाम् । सिद्धान्तः । अस्ति ॥४॥ मायेति । देहे । अहंबुद्धिः । दैहिकेषु । ममता ममत्वबुद्धिः । माया । इतीत्थम् । विज्ञाय । सा माया । तु ।

शकाब्दे विक्रमार्कस्य रसाष्टवसुभूमिते । शुचिकृष्णदशम्यां तु वचोऽमृतमिदं हरेः ॥ १ ॥ तत्र दुर्गपुरे दुर्ग उत्तमस्य स सद्मनः । प्रागास्यस्य बहिर्वेद्यां मञ्चासन उपाविशत् ॥ २ ॥ नैकैर्भक्तैः परिवृतः सद्भिर्गृहिजनैश्च सः । सितांशुकधरः प्रीत्या स्वयमेवाब्रवीत्सतः ॥ ३ ॥ मायामपास्य सततं प्रीतिर्भगवति स्थिरा । कार्येति सर्वशास्त्राणां सिद्धान्तोऽस्ति सतां मतः ॥ ४ ॥ माया तु देहेऽहंबुद्धिर्ममता दैहिकेष्विति । विज्ञाय सा प्रयत्नेन हातव्या साधुसेवया ॥५॥ अद्य कालान्तरे वापि यदैवं यः करिष्यति । तदा सुखी स तु पुमान्भविष्यति न चान्यथा ॥ ६ ॥ हनुमन्नारदाद्यैश्च महाभागवतैरपि । इयमेवोज्झिता माया कृता प्रीतिर्दृढा हरौ ॥ ७ ॥ याचितं तैर्हरेश्चापि मायाया निजरक्षणम् । निर्मायभगवद्भक्तप्रसङ्गश्च निरन्तरम् ॥ ८ ॥ तस्माद्युष्माभिरप्येवं याच्यं कार्यं च मच्छ्रितैः । अस्यार्थस्य मदुक्तस्य श्रवणादि च सादरम् ॥ ९ ॥

साधुसेवयाऽहंममत्वरूपमायावर्जितसाधूनां निश्छद्म संसेवनेन । प्रयत्नेन प्रहातव्या ॥५॥ अद्येति । अद्य साम्प्रतम् । अथवा । कालान्तरेऽपि । यदा । यो भक्तः । एवमहंममत्वमायापरित्यागपूर्वं श्रीहरिप्रीतिं सम्पादनमित्यर्थः । करिष्यति । तदा । सः । पुमान् भक्तः । सुखी । भविष्यति । अन्यथैवंकरणमन्तरा । न च नैव सुखी भविष्यति ॥६॥ एतदेव सदाचारेण द्रढयति त्रिभिः । हनुमदिति । महाभागवतैर्भगवदेकान्तिकभक्तैः । हनुमन्नारदाद्यैश्चापि । आद्यशब्देन प्रह्लादादेर्ग्रहणम् । इयमहंममत्वरूपा । मायैव । उज्झिता त्यक्ता । हरौ । दृढा । प्रीतिः । कृता ॥ ७ ॥ याचितमिति । तैर्हनुमदाद्यैर्महाभागवतैरपि । मायाया देहाहंममत्वरूपमायातः सकाशात् । निजरक्षणम् । हरेः सकाशात् । याचितम् । निरन्तरम् । निर्मायभगवद्भक्तप्रसङ्गश्च । याचितः । चकारात्तस्मिन्प्रीतिश्च याचितेति । बोध्यम् ॥८॥ तस्मादिति । तस्माद्धेतोः । मच्छ्रितैः । युष्माभिरपि । एवं हनुमदादिवदेव । कार्यम् । याच्यं श्रीहरेः सम्प्रार्थ्यं च । मदुक्तस्य । अस्य । अर्थस्य । श्रवणादि श्रवणमनननिदिध्यासाः । सादरम् । कार्यम् ॥ ९ ॥

किञ्चेति किञ्च । ये । भगवद्भक्ताः । सन्ति । तैः । आत्मनिष्ठाबलम् । अथ च । हरेः । माहात्म्यस्य । बलम् । इति बलद्वयम् । सम्पाद्यम् ॥ १० ॥ आत्मेति । आत्मा जीवः । स्थूलादिवपुषाम् । त्रयात् । स्थूलसूक्ष्मकारणाख्यशरीरत्रिकादित्यर्थः । पृथग्भिन्नः स्वरूपस्वभावादिभिर्विलक्षण इत्यर्थः । तद्द्रष्टा स्थूलादिवपुस्त्रयसाक्षी च । अस्ति । अहम् । स उक्तविध आत्मैव । अस्मि । इत्येवंविधः । निश्चयः । तु । आत्मनिष्ठा । विज्ञेया ॥ ११ ॥ एवं सामान्यत आत्मनिष्ठास्वरूपमुक्त्वा तामेव पुनर्विशेषत आह पञ्चभिः । विप्रत्वेति । तस्योक्तविधस्यात्मनः । विप्रत्वादिः । क्वापि । जातिः । नास्ति । स आत्मा । कस्यचित् । पुत्रः । नास्ति । सः । कस्यचित् । पिता । नास्ति । सः । कस्यचित् । बन्धुरपि । नास्ति । सः । कस्यचित् । पतिर्वा । नास्ति ॥ १२ ॥ स इति । स आत्मा । ज्ञाता ज्ञानवान् । चिद्रूपो ज्ञानस्वरूपः । अग्न्यर्कवत् । प्रकाशकश्च । अस्ति । सः । हृत्पद्मस्थः सन् । तेजसा स्वकान्त्या । अखिलम् । देहम् । प्रकाशयति ॥ १३॥ नन्वग्न्यर्कवत्प्रकाशत्वे तत्तेजसोरिवैतत्तेजसोऽपि । जडता प्राप्ता तत्राह । तदिति । तत्तेज आत्मतेजस्तु । ज्ञानरूपम् । अस्ति । ज्ञातृताविशिष्टज्ञानस्वरूपं वर्त्तते इत्यर्थः । अग्न्य-

किञ्च ये भगवद्भक्तास्तैः सम्पाद्यं बलद्वयम् । आत्मनिष्ठाबलं चाथ माहात्म्य बलं हरेः ॥ १० ॥ आत्मनिष्ठा तु विज्ञेया स्थूलादिवपुषां त्रयात् । पृथगात्माऽस्ति तद्द्रष्टा स एवास्मीति निश्चयः ॥ ११ ॥ विप्रत्वादिर्न तस्यास्ति जातिः क्वापि च कस्यचित् । स पुत्रो न पिता नापि न बन्धुर्न पतिश्च वा ॥ १२ ॥ स च ज्ञाताऽस्ति चिद्रूपोऽग्न्यर्कवच्च प्रकाशकः । हृत्पद्मस्थोऽखिलं देहं प्रकाशयति तेजसा ॥१३॥ तत्तेजोऽस्ति ज्ञानरूपमग्न्यर्कादेस्तु तज्जडम् । सूक्ष्मजन्तोरपि स्पर्शं यत्तज्जानाति नेतरत् ॥ १४ ॥ देहाननेकाञ्जग्राह विससर्ज च तानसौ । तदापि न मृतो नूनं यतो जीवन् स वर्त्तते ॥ १५ ॥ अच्छेद्योऽयमदाह्योऽयमिति यं भगवाञ्जगौ । सोऽस्ति देहस्तु नैवेति ह्यात्मनिष्ठा प्रकीर्त्यते ॥ १६ ॥ सम्पन्नस्य तया देहेऽहन्ता च स्वजनादिषु । ममता नश्यति क्षिप्रमीर्ष्याक्रोधादयोऽपि च ॥ १७ ॥

र्कादेः । तत्तेजस्तु । जडम् । अस्ति । यद्यस्माद्धेतोः । तद्यत्र कुत्राप्यवयवे स्थितमात्मतेजः । सूक्ष्मजन्तोरपि । स्पर्शम् । जानाति । इतरदग्न्यर्कादितेजः । न जानाति स्थूलजन्तोः स्पर्शमपि न बुध्यते ॥ १४ ॥ देहानिति । असावात्मा । अनेकान् । देहान् । जग्राह ।ताननेकान्देहान् । विससर्ज च । तदापि । स आत्मा । नूनं निश्चितमेव । न मृतः । यतो हेतोः । सः । जीवन्सन् । वर्त्तते ॥ १५ ॥ अछेद्य इति । यमात्मानम् । भगवान् । श्रीकृष्णः । अछेद्योऽयमदाह्योऽयम् । इत्येवमादिपद्यैः । जगौ गीतायामर्जुनं प्रति कथयामास । स उक्तविध आत्मा । अहम् । अस्मि । देहस्तु । नैवास्मि । इति वेदनं यत्सा । आत्मनिष्ठा । प्रकीर्त्यते हि ॥ १६ ॥ सम्पन्नस्येति । तयाऽऽत्मनिष्ठया । सम्पनस्य । देहे । अहन्ता । स्वजनादिषु । ममता च । क्षिप्रं सद्य एव । नश्यति । ईर्ष्याक्रोधादयो दोषाश्चापि । आदिशब्दान्मानमत्सरादिग्रहणम् । नश्यन्ति ॥ १७ ॥

अन्यथेति । अन्यथाऽऽत्मनिष्ठाऽभावे । देहमानेन देहाहंमत्या । शास्त्रवित् पुमानपि । क्वचित् । आत्मदृष्टान्ततः । साध्वाचारेषु स्वमण्डलावस्थितसाधूनामाचरणेष्वपि । तेषां साहजिक वाचिक दैहिकेष्वाचरणेष्वित्यर्थः । दोषान् । गृह्णीयात् एवं कथं खादति एवं कथं वदतीत्यादिस्तद्गुणानुपादद्यादित्यर्थः ॥ १८ ॥ सतामिति । सतां साधूनाम् । दैहिके । अथवा । वाचिके । साहजिके । कर्मणि । यः । पुमान् । दोषदृक् । भवेत् । अज्ञो मूढो देहाभिमानीति यावत् । स पुमान् । भृशमतिशयिताम् । आपदम् । याति ॥१९॥ अत इति । अतो हेतोः । मुमुक्षुणा । पुंसा भक्तेन । साऽऽत्मनिष्ठैव । प्रयत्नतः । साध्या सम्पाद्या । हरेः । माहात्म्यं च । ज्ञेयम् । तन्माहात्म्यं । सक्षेपतः । ब्रुवे ॥ २० ॥ ब्रह्माण्डमिति । एतत् । ब्रह्माण्डम् । अन्तः । पञ्चाशत्कोटियोजनविस्तृतम् । भवति । चतुर्दशभिः । लोकैश्च । अन्वितम् । भवति ॥ २१ ॥ साब्धीति । किञ्च । साब्धिद्वीपनगं सप्तसिन्धु सप्तद्वीप सकलपर्वतसहितम् । देव दैत्य मर्त्यादिसम्भृतम् । ब्रह्माद्यैः । ईशैरीश्वरैः ।

अन्यथा देहमानेन साध्वाचारेष्वपि क्वचित् । आत्मदृष्टान्ततो दोषान् गृह्णीयादपि शास्त्रवित् ॥ १८ ॥ सतां साहजिके यस्तु दैहिके वाचिकेऽपि वा । दोषदृक्कर्मणि पुमान् सोऽज्ञो यात्यापदं भृशम् ॥ १९ ॥ अतो मुमुक्षुणा पुंसा सैव साध्या प्रयत्नतः । ज्ञेयं हरेश्च माहात्म्यं तच्च संक्षेपतो ब्रुवे ॥ २० ॥ ब्रह्माण्डमेतत् पञ्चाशत्कोटियोजनविस्तृतम् । अन्तर्भवति लोकैश्च चतुर्दशभिरन्वितम् ॥ २१ ॥ साब्धिद्वीपनगं देवदैत्यमर्त्यादिसम्भृतम् । त्वष्टभिः अधिष्ठितं च ब्रह्माद्यैरीशैरद्भुतदर्शनम् ॥ २२ ॥ एकैकस्माद्दशगुणैस्तच्च पृथ्वीजलादिभिः । वृतमावरणैरस्ति परितः स्थितैः ॥ २३ ॥ एतादृशान्यसंख्यानि ब्रह्माण्डानि भवन्ति हि । तेषां राजाधिराजोऽस्ति कृष्ण एकः स्वयं प्रभुः ॥ २४ ॥ संख्येयग्रामनाथस्य सम्राजोऽपि क्षितौ महत् । माहात्म्यमस्ति तर्ह्यस्य कस्तद्वर्णयितुं क्षमः ॥ २५ ॥ तस्याग्रतस्त्विमे जीवा अर्काग्रे विस्फुलिङ्गवत् । अतितुच्छा भवन्त्येव सर्वे ब्रह्माण्डवर्त्तिनः ॥ २६ ॥

अधिष्ठितमाश्रितम् । अद्भुतदर्शनं च । भवति । इति द्वयोरेकसम्बन्धः ॥ २२ ॥ एकेति । तद्ब्रह्माण्डम् । एकैकस्मात् । दशगुणैर्दशोत्तराधिकैः । परितः समंततः । स्थितैः । पृथ्वीजलादिभिः । अष्टभिः । आवरणैः । वृतं वेष्टितम् । च । अस्ति ॥ २३ ॥ एतादृशानीति । एतादृशानि । ब्रह्माण्डानि । असंख्यानि । भवन्ति । हि प्रसिद्धमेतत्पुराणेषु । तेषामसङ्ख्यब्रह्माडानाम् । राजाधिराजः । प्रभुः । एकः । स्वयम् । कृष्णः । अस्ति । सकलासङ्ख्यब्रह्माण्डानां राजानोऽक्षरपुरुषादय तेषामपि । शासकत्वात्कृष्णो राजाधिराज उच्यते ॥२४ ॥ सङ्ख्येयेति । सङ्ख्येयग्रामनाथस्य । सम्राजश्चक्रवर्त्तिनृपस्यापि । क्षितौ पृथिव्याम् । महत् । माहात्म्यम् । अस्ति । तर्हि । अस्यासङ्ख्यब्रह्माण्डनाथस्य कृष्णस्य । तन्महन्माहात्म्यम् । वर्णयितुम् । क्षमः समर्थः । कः । भवेत् ॥ २५ ॥ तस्येति । ब्रह्माण्डवर्त्तिनः । इमे । सर्वे । जीवाः । अर्काग्रे । विस्फुलिङ्गवदग्निकणा यथा । तस्यैवंविधमहिम्नः श्रीकृष्णस्य । अग्रतस्तु । अतितुच्छा एव । भवन्ति ॥ २६ ॥

सुखमिति । यथा । सारस्वादुभुजा उत्तमरसमयत्नेन साररूपसुस्वाद्वन्नभोजकेन गृहिणा । त्यक्तं भुक्त्वोज्झितम् । उच्छिष्टम् । भषकः श्वा । भुङ्क्ते । तथा । तेन कृष्णेन । दत्तम् । अल्पकम् । वैषयिकम् । सुखम् । ते ब्रह्माण्डवर्त्तिनः सर्वे जीवाः । भुञ्जते ॥ २७ ॥ तस्येति । तस्याल्पसुखस्यापि । हेतोः । तेषां जीवानाम् । इह लोके । भूयानतिशयितः । आयासः श्रमः । ईक्ष्यते । स्वजनैः सह । वैरम् । स्वस्य । अथवा । इतरस्य परस्य । हिंसा च । ईक्ष्यते ॥ २८ ॥ तदिति । तत्तुच्छं विषयसुखमपि । यदा ईदृक् । प्रेष्ठमतिप्रियम् । अतिदुर्लभं च । ईक्ष्यते । तदा । भागवतं श्रीहरिमूर्तिसम्बन्धि । सौख्यम् । तदौकसं श्रीहरेरक्षरधामसम्बन्धि । सौख्यं च । किं वर्ण्यम् । वर्णितुं न शक्यते इत्यर्थः ॥ २९ ॥ सदानन्देति । सदा सर्वकालम् । आनन्दनिधित्वादनवधिकातिशयानन्दमयत्वाद्धेतोः । अच्युते । श्रीहरौ । सहजं स्वाभाविकम् । अलौकिकं दिव्यम् । अनन्तमपरिमितम् । नित्यं सनातनम् । अक्षयमविनाशि च । सुखम् । वर्त्तते ॥ ३० ॥ तस्येति । ईशलम्भिता परंपरया मायाशबलब्रह्मणा सम्प्रापिता । तस्य भगवन्निष्ठसुखस्य । छायाऽल्पोपभोगः । सुषुप्तिसुखम् । उच्यते । रोगाद्यार्त्तो रोगादिनातिपीडितो जनः । अपि । यत्र

सुखं वैषयिकं तेन दत्तं ते भुञ्जतेऽल्पकम् । सारस्वादुभुजा त्यक्तमुच्छिष्टं भषको यथा ॥ २७ ॥
तस्यापि हेतोरायासस्तेषां भूयानिहेक्ष्यते । स्वजनैः सह वैरं च हिंसा स्वस्येतरस्य वा ॥ २८ ॥
तदपीदृग्यदा प्रेष्ठमीक्ष्यते चातिदुर्लभम् । तदा भागवतं सौख्यं किं वर्ण्यं च तदौकसम् ॥ २९ ॥
सदानन्दनिधित्वाच्च सहजं सुखमच्युते । अलौकिकमनन्तं च वर्त्तते नित्यमक्षयम् ॥ ३० ॥
तस्येशलम्भिता छाया सुषुप्तिसुखमुच्यते । रोगाद्यार्त्तोऽपि लभते निर्वृतिं यत्र भूयसीम् ॥ ३१ ॥
ईदृक्सुखनिधिः स्वामिनारायण इतीरितः । रामकृष्णादिरूपाणां हेतुः सर्वेश्वरेश्वरः ॥ ३२ ॥
अवतार्यक्षराधीशोऽक्षरमुक्तेडितश्रवाः । परात्परतरो यश्च सर्वोपर्येव यः सदा ॥ ३३ ॥

सुषुप्तिसुखे । भूयसीमतिशयिताम् । निर्वृत्तिं सुखम् । लभते ॥ ३१ ॥ ईदृगिति । ईदृक्सुखनिधिरेवंविधसुखसागरः । स्वामिनारायण इति नाम्ना । ईरितः । रामकृष्णादिरूपाणां रामकृष्णादीनामनेकेषामवताराणाम् । हेतुः । कारणम् । यः स्वयंतयाऽन्येषु स्वगुणैश्वर्याद्यावेशतया च नानावतारान्बिभर्तीत्यर्थ । सर्वेश्वरेश्वरस्तमीश्वराणां परमं महेश्वरमिति श्रुत्या सर्वेश्वरेश्वरत्वात्परममहेश्वरत्वेनोदितः ॥ ३२ ॥ अवतारीति । यः । अवतारी । अक्षराधीशोऽक्षरधामाधिपतिः । अक्षरमुक्तैरक्षरभावापन्नमुक्तवृन्दैरीडितानि सर्वोत्कर्षतया संस्तुतानि श्रवांसि यशांसि यस्य सः । यः । परात्सर्वपरादक्षरादपि । परतरः–स्वरूप–स्वभाव–गुण–विभूत्यैश्वर्यादिभिरतिविलक्षणः । 'अक्षरात्परतः परः' इति श्रुतेः । यः । सदा । सर्वोपर्येव । विराजमानः । धामरूपाक्षरब्रह्म तत्स्थतद्भावापन्नानन्तमुक्त–सकार्याक्षरपुरुष–सर्वावताराणां चूडामणिरिव वर्त्तमान इत्यर्थः ॥ ३३ ॥

साधूनिति । स्वेप्सितप्रदः स्वाश्रितजनानां वाञ्छितार्थप्रदायकः । स श्रीहरिः । अनन्यभक्तान् स्वैकान्तिकभक्तजनान् । साधूंस्त्यागिधर्मनिष्ठान् । वो युष्मान् । अन्यान् गृह्यादिस्वाश्रितजनांश्च । वाक्सुधाभिः स्ववचनामृतैः । अहर्निशम् । सुखयन्सन् । अत्र सदसि । जयति वर्त्तमानकाले सकलनयनगोचरोऽतिसुलभो युष्मत्सद्गुरुः स्वभक्तस्मरणार्थं नानाचरित्राणि कुर्वंश्च सर्वोत्कर्षतया वर्त्तते इत्यर्थः । इति त्रयाणामेकसम्बन्धः ॥ ३४ ॥ तस्येति । तस्यैवंविधमहिम्नः श्रीहरेः । पादरजश्चरणस्पृष्टोरेणुः । राधालक्ष्म्यादिशक्तिभिः । ब्रह्मादिभिर्विधिविष्णुशिवादिभिः । ईशैः । अखिलैः । योगेशैर्नारदशुकसनकादिभिश्च । प्रीत्याऽतिस्नेहेन । मूर्ध्ना स्वस्वमस्तकेन उह्यते ॥ ३५ ॥ त इति । ते राधादयो भक्ताः । मानम् । विहायैव । तस्य श्रीहरेः । भक्तिम् । नित्यदैव । कुर्वते । स श्रीहरिः । सर्वेषां जीवेश्वराणाम् । स्वातन्त्र्येण । नियामकोऽन्तर्यामिस्वरूपेण नियन्ता । अस्ति ॥ ३६ ॥ तत्रेति । तत्र श्रीहरावेव । ब्रह्मशब्दवत् । भगवच्छब्दः । मुख्यः । अस्ति । तथाचोक्तं विष्णुपुराणे । 'शुद्धे महाविभूत्याख्ये परे ब्रह्मणि शब्द्यते । मैत्रेय ! भगवच्छब्दः सर्वकारणकारणे' इति । एकः । स श्रीहरिरेव । सन् सत्यः । ईशः परमेश्वरः । अस्ति

साधून्वः सुखयन्नत्र वाक्सुधाभिरहर्निशम् । सोऽनन्यभक्तानन्यांश्च जयति स्वेप्सितप्रदः ॥ ३४ ॥ तस्य पादरजोमूर्ध्ना राधालक्ष्म्यादिशक्तिभिः । ईशैर्ब्रह्मादिभिः प्रीत्या योगेशैश्चोह्यतेऽखिलैः ॥ ३५ ॥ ते च मानं विहायैव भक्तिं तस्यैव नित्यदा । कुर्वते स च सर्वेषां स्वातन्त्र्येण नियामकः ॥ ३६ ॥ तत्रैव भगवच्छब्दो मुख्योऽस्ति ब्रह्मशब्दवत् । स एक एव सन्नीशस्तत्समोऽन्यो न नाधिकः ॥ ३७ ॥ तदुपासनया भक्तास्तत्साधर्म्यं व्रजन्ति हि । न तु ते भगवन्तस्तु स्युर्नियन्त्रनवस्थितेः ॥ ३८ ॥ प्रतीशमिच्छावैजात्यादुत्पत्त्यादेश्च सर्वथा । मर्यादा जगतां नश्येत्स्याच्च धर्मविपर्ययः ॥ ३९ ॥ न तु तौ भवतस्तस्माद्भगवानेक एव हि । ज्ञेयः स्वतन्त्रो मर्यादापाता सर्वनियामकः ॥ ४० ॥

। अन्यस्तदितरः कश्चनापि । तत्समः श्रीहरेः समानः । नास्ति । अधिकश्च । नास्ति । 'न तत्समश्चाभ्यधिकश्च दृश्यते' इति श्रुतेः ॥३७॥ तदिति । भक्तास्तदेकान्तिकोपासकाः । तदुपासनया श्रीहरेरेकान्तिकभक्त्या । तत्साधर्म्यं तत्समानधर्मत्वम् । व्रजन्ति । हि प्रसिद्धमेत'न्निरञ्जनः परमं साम्यमुपैति' श्रुतौ । 'मम साधर्म्यमागता' इति स्मृतौ च । किन्तु । ते साधर्म्यं प्राप्ता भक्ताः । भगवन्तस्तु । न स्युः । कुतः । नियन्त्रनवस्थितेरेकस्य नियन्तुर्नियमस्याभावात् ॥ ३८ ॥ ननु नियन्त्रनवस्थितिर्भवतु को दोष इत्यत्राह । प्रतीशमिति । प्रतीशमेकैकं नियन्तारं प्रति । इच्छावैजात्यादेक उत्पत्तीच्छां कुर्याच्चह्यान्यः संहारेच्छां कुर्यादित्यादितदिच्छानामेकरूपत्वाभावादित्यर्थः । जगताम् । उत्पत्त्यादेः । मर्यादा स्थितिः । सर्वथा । नश्येत् । धर्मविपर्ययश्च । स्यात् । एको मनुष्येषु पशुधर्मान्प्रवर्त्तयेदन्यः पशुषु मनुष्यधर्मानित्यादिरूपा धर्मप्रतीपता च भवेदित्यर्थः ॥ ३९ ॥ नेति । तौ मर्यादानाशधर्मविपर्ययौ तु । न भवतः । तस्माद्धेतोः । स्वतन्त्रः । मर्यादापाता । सर्वनियामकः सर्वशास्ता । भगवान् श्रीहरिः । एक एव । ज्ञेयः । हि ॥ ४० ॥

काल इति । कालः । माया च । यमराड् वैवस्वतः । अन्तकाद्या मृत्युप्रमुखाः सर्वे च । किङ्करा दासा इव । ततः श्रीहरेः सकाशात् । भीताः सन्तः । तदाज्ञायां श्रीहरिनिदेशे । सर्वदा । वर्त्तते ॥ ४१ ॥ उत्पत्तीति । अचिन्त्यविभवश्चिन्तनानर्हवैभवः । अद्भुतक्रिय आश्चर्यरूपसकलकर्मा । भगवान् श्रीहरिः । ब्रह्माण्डानाम् । उत्पत्तिस्थितिसंहारान् । निजेच्छया । करोति ॥ ४२ ॥ सृष्टाविति । तस्य श्रीहरेः । सृष्टौ । विविधं नैकप्रकारम् । अद्भुतमाश्चर्यरूपम् । चातुर्यम् । दृश्यते । तदेवाह सार्द्धेन । येन । मयूराः । चित्रिताः । कृताः । हंसाः । श्वेताः श्वेतवर्णाः । कृताः । शुकाः । हरिता हरिद्वर्णाः । कृताः ॥४३॥ नृभ्य इति । नराः । नृभ्यो मनुष्येभ्यः । पशवः । पशुभ्यः । द्रुमाः । द्रुमतो वृक्षेभ्यः । पक्षिणः । पक्षिभ्यः । कीटाः । कीटेभ्यश्च । उद्भवन्ति । इतीत्युत्तरेण सम्बन्धः ॥ ४४ ॥ इतीति । इत्याद्याश्चर्यलीलस्यैतदाद्याश्चर्यरूपचरित्रस्य । जगत्पतेः । तस्य श्रीहरेः । कृतं तेन श्रीहरिणा निर्मितमित्यर्थः । किञ्चन किमपि । क्वापि कदाचिदपि । केनापि ।

कालो माया च यमराडन्तकाद्याश्च सर्वदा । ततो भीतास्तदाज्ञायां वर्त्तते किङ्करा इव ॥ ४१ ॥
उत्पत्तिस्थितिसंहारान् ब्रह्माण्डानां निजेच्छया । करोत्यचिन्त्यविभवो भगवानद्भुतक्रियः ॥ ४२ ॥
सृष्टौ तस्य च चातुर्यं विविधं दृश्यतेऽद्भुतम् । मयूराश्चित्रिता हंसाः श्वेताश्च हरितः शुकाः ॥ ४३ ॥
नृभ्यो नराः पशुभ्यश्च पशवो द्रुमतो द्रुमाः । पक्षिभ्यः पक्षिणः कीटाः कीटेभ्यश्चोद्भवन्ति हि ॥ ४४ ॥
इत्याद्याश्चर्यलीलस्य कृतं तस्य जगत्पतेः । नान्यथा शक्यते कर्तुं केनापि क्वापि किञ्चन ॥ ४५ ॥
अङ्गाच्च्युतं पुनस्तत्र योक्तुं रोमापि तत्कृतम् । सम्राडपि क्षमो नास्ति तदा कोऽन्यस्तु शक्नुयात् ॥ ४६ ॥
इत्यादि तस्य मोहात्म्यमनन्यस्थं मुमुक्षुभिः । ज्ञात्वा कार्या रतिस्तस्मिन् विरक्तिरितरत्र च ॥ ४७ ॥
सहात्मनिष्ठया यस्य माहात्म्यज्ञानमीशितुः । स तु वैषयिके क्वापि सुखेनैव हि बध्यते ॥ ४८ ॥

अन्यथा । कर्त्तुम् । न शक्यते । 'न तस्य कश्चित्तपसा विद्यया वे'त्यादि श्रीभागवतोक्तेः ॥ ४५ ॥ अङ्गादिति । तत्कृतं श्रीहरिणा जनाद्यङ्गे निर्मितम् । अङ्गाच्छरीरात् । च्युतम् । रोमापि । पुनः । तत्र तदङ्गे । योक्तुं पूर्ववल्लगयितुम् । सम्राट् चक्रवर्त्तिनृपोऽपि । क्षमः । नास्ति । तदा तर्हि । अन्यस्तु । कः । शक्नुयात् ॥ ४६ ॥ इतीति । इत्याद्येतत्प्रभृतिः । अनन्यस्थं श्रीहरीतरस्मिन् कस्मिंश्चिदप्यनवस्थितम् । तस्य श्रीहरेः । माहात्म्यम् । ज्ञात्वा । मुमुक्षुभिर्भक्तैः । तस्मिन् श्रीहरावेव । रतिः । कार्या । इतरत्र श्रीहरीतरस्मिन्सकलमायिकपदार्थे । विरक्तिश्च । कार्या ॥ ४७ ॥ सहेति । यस्य भक्तस्य । आत्मनिष्ठया । सह । ईशितुः सर्वनियन्तुः श्रीहरेः । माहात्म्यज्ञानम् । स भक्तस्तु । वैषयिके पञ्चविषयसम्बन्धिनि । क्वापि कस्मिंश्चिदपि । सुखे । नैव । बध्यते । हि ॥ ४८ ॥

बद्ध इति । बद्धो विषयसुखासक्तोऽपि । भक्तः । ताभ्यामात्मनिष्ठाहरिमाहात्म्यज्ञानाभ्याम् । मुच्यते विषयसुखासक्तिरहितो जायते इत्यर्थः । मुक्तो विरक्त्या परित्यक्तविषयसुखो भक्तः तत्र विषयसुखे । न सज्जते पुनरासक्तो न भवति । अतो हेतोः । तयोरात्मनिष्ठाभगवत्माहात्म्यज्ञानयोः । रयो वेगः । स्वमनसि । दृढमखण्डितो यथा भवेत्तथा वर्त्तनीयः ॥ ४९ ॥ तस्येति । तस्य दृढवेगस्य । स्फुटावबोधार्थम् । मया । दृष्टान्तः । कथ्यते । तेन दृष्टान्तकथनेन । तस्य दृढवेगस्यापि । लक्षणम् । सादृश्येनैव । अनुमेयम् ॥ ५० ॥ दृष्टान्तं विवृण्वन्नुक्तार्थं सिद्धान्तयति त्रिभिः । शूरस्येति । यथा । शूरस्य । मानिनः । पुंसः । कश्चिद्रिपुः । बलात् । समक्षं तत्पुरत एव । पितरं तज्जनकम् । हन्यात् । तेन स्वपितृहननेन । स शूरः । अधिकं यथा तथा । तप्येत परितापयुक्तो जायेत ॥ ५१ ॥ पुनरिति । पुनरपि । स एव । रिपुः । तस्य शूरस्यैव । पुत्रकमेकमेवसुतम् । हन्यात् । भार्यां तत्पत्नीम् । वृत्तिं तज्जीविकां च ।

बद्धोऽपि मुच्यते ताभ्यां मुक्तस्तत्र न सज्जते । अतस्तयोः स्वमनसि वर्त्तनीयो रयो दृढम् ॥ ४९ ॥ तस्य स्फुटावबोधार्थं दृष्टान्तः कथ्यते मया । तेनानुमेयं तस्यापि सादृश्येनैव लक्षणम् ॥ ५० ॥ शूरस्य मानिनः पुंसो यथा कश्चिद्रिपुर्बलात् । समक्षं पितरं हन्यात्तेन तप्येत सोऽधिकम् ॥ ५१ ॥ पुनः स एव च रिपुर्हन्यात्तस्यैव पुत्रकम् । भार्यां वृत्तिं चापहरेत्कुर्याच्चोपद्रवान्मुहुः ॥ ५२ ॥ तैस्तस्यान्तरे तस्य चिन्ताशोकरयः सदा । वर्त्तेतात्र तथा वेगो वर्त्तनीयस्तयोरपि ॥ ५३ ॥ तद्वेगबलतः पुंसां निर्यांति विषयैषणाः । यथा देहस्थशल्यानि विशल्यौषधियोगतः ॥ ५४ ॥ विषयेच्छाशल्यहीनं निर्मलं मानसं ततः । सहेन्द्रियैर्हरावेव प्रीतिं बध्नाति वै दृढाम् ॥ ५५ ॥ एष एव हि सत्सङ्गो मुक्तिहेतुरितीर्यते । कृष्ण एव सति स्वीयमनःसङ्गस्तु यो दृढः ॥ ५६ ॥ वार्त्तेयं दैवजीवानामन्तरे श्रुतिमात्रतः । प्रविष्टाऽङ्गानि पुष्णाति परमान्नमिवाशितम् ॥ ५७ ॥

अपहरेत् । मुहुः पुनः पुनः । उपद्रवान् गृहदाहादींश्च । कुर्यात् ॥ ५२ ॥ तैरिति । तैः पुत्रहननादिदुःखैः । तस्य । तस्य शूरस्य । अन्तरे मनसि । चिन्ताशोकरयः । सदाऽवस्थात्रयेऽपि । वर्त्तेत । तथा । अत्र स्वमनसि । तयोरात्मनिष्ठाभगवन्माहात्म्यज्ञानयोरपि । वेगः । वर्त्तनीयः ॥ ५३ ॥ तदिति । यथा । विशल्योषधियोगतः । देहस्थशल्यानि । निर्यान्ति देहाद्बहिर्निर्गच्छन्ति । तथा । पुंसां भक्तानाम् । तद्वेगबलतस्तयोर्वेगबलेन । विषयैषणा विषयभोगेच्छाः । निर्यान्ति मनसः सकाशाद्बहिर्निर्गच्छन्ति ॥ ५४ ॥ ततस्तदनन्तरम् । विषयेच्छाशल्यहीनम् । अत एव । निर्मलम् । मानसम् । इन्द्रियैः सह । हरावेव । दृढम् । प्रीतिम् । बध्नाति । वै ॥ ५५ ॥ एष इति । सति सदा सत्यस्वरूपे । कृष्णे श्रीहरावेव । यः । दृढः । स्वीयमनःसङ्गः । एष एव । सत्सङ्गः । मुक्तिहेतुरात्यन्तिकमोक्षकारणम् । इतीत्थम् । ईर्यते ॥ ५६ ॥ वार्त्तेति । इयं मदुक्ता । वार्त्ता । श्रुतिमात्रतः केवलेन श्रवणेन । दैवजीवानाम् । अन्तरे । प्रविष्टा सती । अशितम् । परमान्नं पायसम् । अङ्गानि

शरीरावयवानिव । अङ्गानि स्वधर्मादीनि भक्त्यङ्गानि । पुष्णाति ॥ ५७ ॥ आसुराणामिति । सा वार्त्ता । आसुराणाम् । जीवानां तु । श्रुतेः श्रवणतः । अन्तर्गता सत्यपि । श्वभुक्तं भषकभक्षितम् । पायसमिव । द्रुतम् । बहिरेव । विनिर्याति निर्गच्छति ॥ ५८ ॥ समासत इति । इयम् । वार्त्ता । समासतः संक्षेपात् । कृतापि । सर्वार्थसम्भृता । अस्ति । इति हेतोः । अस्यां वार्त्तायाम् । विबुद्धायां सत्याम् । नरैर्भक्तैः । अखिलः । अर्थः । विबुद्धः । भवेत् ॥ ५९ ॥ सुज्ञा इति । इदम् । रहस्यम् । रहस्यरूपामिमां वार्त्तामित्यर्थः । सुज्ञा बुद्धिमन्तो भक्ताः । सद्यः । विदुः । इतरेऽल्पबुद्धयो भक्ताः । कश्चित् । सद्यः । न विदुः । तेऽल्पबुद्धयोऽपि । एतद्विदामस्या वार्त्तायाः सद्यो वेदितॄणां सुज्ञानाम् । प्रसङ्गात्तु । तथा सुज्ञवदेव । विद्युः हि ॥ ६० ॥ स्वेति । मया । इयम् । वार्त्ता । स्वबुद्धिकल्पिता । न कथिता । यथा वैतण्डितानामिवेति भावः । अथवा । स्वप्रौढिख्यापनाय स्वोत्कर्षज्ञापयितुमित्यर्थः । न कथिता । अथवा । केवलम् । शास्त्र-

आसुराणां तु जीवानां श्रुतेरन्तर्गताऽपि सा । बहिर्द्रुतं विनिर्याति श्वभुक्तमिव पायसम् ॥ ५८ ॥ समासतः कृताऽपीयं वार्त्ता सर्वार्थसम्भृता । अस्तीत्यस्यां विबुद्धायां विबुद्धोऽर्थोऽखिलो नरैः ॥५९॥ सुज्ञाः सद्यो विदुरिदं रहस्यं नेतरे कश्चित् । एतद्विदां प्रसङ्गात्तु तेऽपि विद्युस्तथैव हि ॥६०॥ स्वबुद्धिकल्पिता नेयं स्वप्रौढिख्यापनाय वा । केवलं शास्त्रदृष्ट्या या वार्त्ता न कथिता मया ॥६१॥ किन्तु स्वकीयानुभवसिद्धैवोक्ता यथातथम् । अतोऽस्ति सप्रमाणेति धार्या मनसि मामकैः ॥ ६२ ॥ स्त्रीधनग्रामनगरराजार्हविषयैर्भृशम् । योगेऽपि तेष्वनासक्तिर्वर्त्तते चारुचिर्मम ॥ ६३ ॥ फलं तच्चात्मनिष्ठाया माहात्म्यावगतेर्हरेः । ते उभे अप्यतः सद्भिः साधनीये प्रयत्नतः ॥ ६४ ॥ ततो भक्तिर्भगवति निर्विघ्नैकान्तिकी भवेत् । तदन्यत्र विरक्तिश्च नारदादेरिवाचला ॥ ६५ ॥

दृष्ट्या । न कथिता यथा पण्डितैरिवेतिभावः ॥ ६१ ॥ किन्त्विति । किन्तु । स्वकीयानुभवसिद्धैव । यथातथं यथार्थतया । उक्ता । अतो हेतोः । सप्रमाणाऽनुभवप्रमाणसहिता । अस्ति । इति हेतोः । मामकैर्मदाश्रितैर्भवद्भिः । मनसि धार्या । इति द्वयोरेकसम्बन्धः ॥ ६२ ॥ स्वानुभवदर्शयन्नुक्तार्थमनुवदति द्वाभ्याम् । स्त्रीति । स्त्री धन ग्राम नगर राजार्हविषयैः सह । भृशमतिशयिते । योगे सम्बन्धे सत्यपि । तेषु स्त्रीधनादिषु । मम । अनाशक्तिः । वर्त्तते । अरुचिस्तदासक्तेष्वप्रीतिश्च । वर्त्तते ॥ ६३ ॥ फलमिति । तन्ममैवंविधं वर्त्तनं यत्तदित्यर्थः । आत्मनिष्ठायाः । हरेः । माहात्म्यावगतेश्च । फलम् । अस्ति । अतो हेतोः । सद्भिर्मदाश्रितैः सर्वैर्भवद्भिः सत्सङ्गिभिः । ते । उभे अपि निष्ठे । प्रयत्नतः । साधनीये सम्पाद्ये ॥ ६४ ॥ तत इति । ततस्तदनन्तरम् । नारदादेरेकान्तिकभक्तस्येव । भगवति श्रीहरौ । निर्विघ्ना । अचला दृढा । एकान्तिकी । भक्तिः । भवेत् । तदन्यत्र भगवदितरस्मिन्सकलमायिकपदार्थे । अचला । विरक्तिश्च भवेत् । ॥ ६५ ॥

प्रकरणार्थं निगमयति । इतीति । हे साधवः ! । इत्येवंविधा । परमपवित्रा । स्वानुभूता । या । वार्त्ता । मया । जनानां भक्तजनानाम् । भवसरण-विमुक्त्यै संसृतिबन्धविमोचनाय । इह । सदसि । अकारि । सा वार्त्ता । भवद्भिः । सादरम् । अवधार्या । विषयविषरसेभ्यो विषये विषयरूपे विषे हालाहले रसो रागो येषां तेभ्यः । नृभ्यो जनेभ्यः । श्रावणीया च । अस्या मद्वार्त्ताया अमृतरूपत्वादमृतस्य विषप्रतियोगित्वाद्विषयविषरसवतां तदुत्तारणायास्याः श्रवणमवश्यं युक्त-मितिभावः ॥ ६६ ॥ इतीति । इत्यमुना प्रकारेण । नरनाट्यधृता । तेन श्रीहरिणा । आश्रितशिक्षणाय । एषा । वार्त्ता । निजवृत्त्या स्ववर्त्तनेोद्देशेन । परोक्षवत् । कृता । स्वयं श्रीहरिस्तु । सकलात्माऽक्षरादिसर्वेषामाधारः । पुरुषोत्तमः । स ईदृक्सुखनिधिः स्वामीत्यादिश्लोकत्रयोक्तमहिमः । साक्षात् । कृष्णः । अस्ति ॥ ६७ ॥

इति परमपवित्रा स्वानुभूता जनानां भवसरणविमुक्त्यै या मयाऽकारि वार्त्ता । इह सदसि भवद्भिः सादरं साऽवधार्या विषयविषरसेभ्यः श्रावणीया च नृभ्यः ॥ ६६ ॥ इति तेन परोक्षवत् कृतैषा निजवृत्त्याऽऽश्रित-शिक्षणाय वार्त्ता । नरनाट्यधृता स्वयं स साक्षात्सकलात्मा पुरुषोत्तमोऽस्ति कृष्णः ॥ ६७ ॥ इति हरे रुचिरं वचनामृतं सदसि भक्तजनास्तु निपीय ते । हृदि मुदं परमामभिलेभिरे तदनुवर्त्तनमेव च चक्रिरे ॥ ६८ ॥

इति श्रीहरिवाक्यसुधासिन्धौ शतानन्दमुनिविरचिते द्विशताधिकद्विषष्टितमस्तरङ्गः ॥ २६२ ॥ ३९ ॥

इतीति । इत्येवंविधम् । हरेः । रुचिरमतिसुन्दरम् । वचनामृतम् । निपीय । सदसि सभायां वर्त्तमानाः । ते भक्तजनास्त्यागिगृहिणः स्वाश्रितजनाः । हृदि । परमाम् । मुदम् । अभिलेभिरे । तदनुवर्त्तनं श्रीहरिवचनामृतानुसरणमेव । चक्रिरे च ॥ ६८॥ अहंममत्वमायाया हेयत्वं सर्वथाऽऽत्मनः । निष्ठां स्वस्य च माहात्म्यज्ञाननिष्ठां च यो हरिः ॥ १ ॥ प्राह स्वेभ्यः स्वानुभवयुक्तियुग्वचनैः स माम् । तन्मायातोऽवतु सदा निष्ठे द्वे ते ददातु मे ॥ २ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तक श्रीहर्येकान्ति-केोपासक श्रीहरिकृष्णभगवत्स्वनुरघुवीराचार्यविरचितायां सेतुमालाख्यायां श्रीहरिवाक्यसुधासिन्धुटीकायां द्विशताधिकद्विषष्टितमस्तरङ्गः ॥ २६२ ॥ ३९ ॥

## दुर्गपुर – अन्त्यप्रकरणं समाप्तम्

द्वे इति । इत्येवंविधानि । द्वे । शते । द्व्यधिकाषष्टिः । द्विशताधिकद्विषष्टिपरिमितानीत्यर्थः । एतानि । हरेः । वचोऽमृतानि । मया शतानन्दमुनिना । विभागशो नवभिर्विभागैरित्यर्थः । सत्पद्यैः शोभनश्लोकैः । ग्रथितानि हरिवाक्यसुधासिन्धुग्रन्थरुपेण सन्दब्धानि ॥ १ ॥ ननु हरिवचोऽमृतानामसंख्यातत्वात्त्वया कथमेतावन्त्येव संदब्धानीत्याशङ्कां परिहरन्नुक्ततत्संख्यात्वे हेतुमाह पड्भिः । दुर्गेति । दुर्गपत्तनमुख्येषु दुर्गनगरप्रभृतिषु । स्थानेषु । दुर्गपत्तन सारङ्गपुर कार्यायन लौहग्राम पञ्चालग्राम वृत्तालयपुर श्रीनगरेष्वित्यर्थः । संसदि तत्र स्वभक्तसभायाम् । स्वाश्रितजनहितं कर्तुम् । तेन श्रीहरिणा । वचोऽमृतानि । प्रोक्तानि । वै ॥ २ ॥ सन्त इति । मर्त्यानां सर्वमनुष्याणाम् । श्रेयस्कराणि । सच्छास्त्रैः । सम्मतानि श्रीहरिवचोऽमृतानि । भक्ताः श्रीहरेरनन्यसेवकाः । सन्तः साधवः । गृहिणश्च । सादरम् । शुश्रुवुः ॥३॥ तेष्विति । भूरिषु बहुषु । तेषु वचनामृतेषु मध्ये । एतानि । द्विशताधिकद्विषष्टिपरिमितानि (२६२) वचोऽमृतानि । धर्मयुग्भक्तिवृद्धये । अत्र धर्मयुग्भक्तिर्ज्ञानवैराग्यमाहात्म्यावबोधानामुपलक्षणम् । सद्वर्यैः सकलसाधुमुख्यैर्मुक्तानन्दादिमुनिभिः । यथामति । यथाश्रुतम् । लिखितानि । आसन् ॥ ४ ॥ सद्वर्या-

द्वे शते द्व्यधिकाषष्टिरित्येतानि हरेर्मया । वचोऽमृतानि सत्पद्यैर्ग्रथितानि विभागशः ॥१॥ दुर्गपत्तनमुख्येषु तेन स्थानेषु संसदि । वचोऽमृतानि प्रोक्तानि स्वाश्रितानां हिताय वै ॥ २ ॥ सन्तश्च गृहिणो भक्ताः शुश्रुवुस्तानि सादरम् । श्रेयस्कराणि मर्त्यानां सच्छास्त्रैः सम्मतानि च ॥ ३ ॥ तेषु भूरिषु सद्वर्यैर्धर्मयुग्भक्तिवृद्धये । एतानि लिखितान्यासन् यथामति यथाश्रुतम् ॥ ४ ॥ मुक्तानन्दश्च गोपालानन्दः सर्वसदग्रणीः । नित्यानन्दः शास्त्रवरो ब्रह्मानन्दो महाकविः ॥ ५ ॥ पञ्चमश्च शुकानन्द एतैः सङ्गत्य तत्त्वतः । संस्मृत्यैतानि लिखितान्यभवन् दुर्गपत्तने ॥ ६ ॥ श्रीहरेराज्ञयैतानि मया तत्सत्प्रसत्तये । पद्यैरानुष्टुभैः स्पष्टं ग्रथितानि यथामति ॥ ७ ॥ पारोक्ष्येणात्र कथितं माहात्म्यं हरिणास्ति यत् । कृष्णस्य च सतां तत्तु ज्ञेयं तस्य च तत्सताम् ॥ ८ ॥

न्नाम्ना निर्दिशन्नेतदेव स्पष्टमाह द्वाभ्याम् । मुक्तानन्द इति । सर्वसदग्रणीः । मुक्तानन्दः । गोपालानन्दश्च । शास्त्रवरः । महाकविः । ब्रह्मानन्दः ॥ ५ ॥ पञ्चम इति । पञ्चमः । शुकानन्दः । एतैर्मुक्तानन्दादिभिः पञ्चभिर्मुनिभिः । सङ्गत्य मिलित्वा । संस्मृत्य । तत्त्वतः । लिखितानि । एतान्युक्तसंख्यानि वचोऽमृतानि । दुर्गपत्तने । अभवन्नेकत्र कृतान्यासन् । इति द्वयोरेकसम्बन्धः ॥ ६ ॥ श्रीहरेरिति । मया । तत्सत्प्रसत्तये श्रीहरेस्तत्साधूनां च प्रसन्नतार्थम् । श्रीहरेः । आज्ञया । एतान्युक्तसंख्यानि वचोऽमृतानि । आनुष्टुब्वृत्तविशिष्टैः । पद्यैः श्लोकैः । यथामति । स्पष्टं यथा तथा । ग्रथितानि हरिवाक्यसुधासिन्धुरूपेण संदब्धानि ॥७॥ पारोक्ष्येणेति । अत्र ग्रन्थे । हरिणाऽक्षरधामाधिपतिपुरुषोत्तमेनानादिसिद्धश्रीकृष्णनाम्ना धृतकृष्णावतारेण श्रीहरिकृष्णभगवता । पारोक्ष्येण स्वस्य परोक्षप्रियत्वाद्भगवदेकान्तिकभक्तभावनाटयाङ्गीकरणछद्मरूपपरोक्षत्वेन । यत् । कृष्णस्य । सतां तत्साधूनां च । माहात्म्यम् । कथितम् । अस्ति । तत्तु । तस्य स्वयं श्रीहरेः । तत्सतां स्वयं श्रीहरिमाश्रितानां साधूनामेव । ज्ञेयम् ॥ ८ ॥

धर्मेति । या । धर्मज्ञानविरागाढ्यभक्तिशिक्षा । कृता स्वयं श्रीहरिणा विहिता । साऽपि । साक्षात्स्वभक्तानाम् । तद्दाढर्याय धर्मादिदृढत्वाय । अस्ति । इतीत्थम् । गम्यताम् ॥९॥ हरीति । अयम् । हरिवाक्यसुधासिन्धुः । तस्य श्रीहरेः । तत्सतां श्रीहर्याश्रितसाधूनां च । मुदे आनन्दाय । अस्तु । ते श्रीहरिस्तदाश्रिताः साधवश्च । स्वाश्रिते । मयि । सुप्रसन्नाश्च । सन्तु ॥१०॥ इममिति । ये जनाः । इमम् । ग्रन्थम् । आदरात् । प्रपठिष्यन्ति । अथवा । श्रोष्यन्ति । अथवा । कथयिष्यन्ति । तेभ्यो जनेभ्यः । हरिः । प्रसन्नः । भविता भविष्यति ॥ ११ ॥ तस्मिन्निति । तस्मिन् श्रीहरौ । प्रसन्ने सति । देहिनाम् । किमपि । दुर्लभम् । नास्ति । अतः । तेषाम् । सर्वे- मनोरथाः । तूर्णं सद्य एव । सफलाः । स्युः । न संशयः ॥ १२ ॥ भक्तिरिति । मुमुक्षूणाम् । एतदर्थावधारणादस्य ग्रन्थस्यार्थावधृतितः । एकान्तिकी । भक्तिः । सिद्ध्येत् । हृत्स्थाः । सकलाः । संशयाश्च । नश्यन्ति ॥ १३ ॥ ग्रन्थ इति । अयम् । ग्रन्थः । सकलार्थसाधनकरः सर्वेषां पुरुषार्थनां सम्पादकः । दुस्तर्कमूलाप-

धर्मज्ञानविरागाढ्यभक्तिशिक्षा च या कृता । सापि साक्षात्स्वभक्तानां तद्दार्ढ्यायेति गम्यताम् ॥ ९ ॥ हरिवाक्यसुधासिन्धुरयं तस्य च तत्सताम् । मुदेऽस्तु सुप्रसन्नाश्च स्वाश्रिते सन्तु ते मयि ॥ १० ॥ इमं ये प्रपठिष्यन्ति ग्रन्थं श्रोष्यन्ति वाऽऽदरात् । कथयिष्यन्ति या तेभ्यः प्रसन्नो भविता हरिः ॥ ११ ॥ तस्मिन् प्रसन्ने किमपि दुर्लभं नास्ति देहिनाम् । सर्वे मनोरथास्तूर्णं सफलाः स्युर्न संशयः ॥ १२ ॥ भक्तिरेकान्तिकी सिद्ध्येदेतदर्थावधारणात् । नश्यन्ति सकला हृत्स्था मुमुक्षूणां च संशयाः ॥ १३ ॥ ग्रन्थोऽयं सकलार्थसाधनकरो दुस्तर्कमूलापहृद् भक्तिज्ञानविरागधर्मभगवन्माहात्म्यरत्नाकरः । अत्र श्रीहरिणात्मनो ह्यनुभवः सच्छास्त्रसंमानितः प्रोक्तोऽस्तीति भजन्निमं प्रतिदिनं स्यात्पूर्णकामो नरः ॥ १४ ॥ स्थानसंख्यासंग्रहोऽथ सर्वेषां तु निरूप्यते । वचोऽमृतानामुक्तानां हरिणा स्पष्टबुद्धये ॥ १५ ॥ अष्टसप्ततिरादौ तु विद्यन्ते दुर्गपत्तने । वाक्यामृतानि सारङ्गपुरेऽष्टादश वै ततः ॥ १६ ॥ कार्यायने द्वादशाथ लोहग्रामे दशाष्ट च । पञ्चालाख्ये ततो ग्रामे विद्यन्ते सप्त तानि च ॥ १७ ॥

हृत् । भक्तिज्ञानविरागधर्मभगवन्माहात्म्यरत्नाकरो भक्त्यादिरत्नानां खनिरूपः । यद्वा । रत्नभूतभक्त्याद्युत्पत्तिहेतूरत्नाकराख्योऽम्बुधिः । अस्ति । अत्रास्मिन् ग्रन्थे । श्रीहरिणा । सच्छास्त्रसम्मानितः । आत्मनः स्वस्य । अनुभवः । प्रोक्तः । अस्ति । इति हेतोः । इमं ग्रन्थम् । नरः । प्रतिदिनम् । भजन् श्रवण- कीर्तनादिना सेवमानः सन् । पूर्णकामः पूर्णमनोरथः । स्यात् ॥१४॥ स्थानेति । अथ च । हरिणा । उक्तानाम् । सर्वेषाम् । वचोऽमृतानाम् । स्थानानि दुर्गपुरादीनि च संख्या अष्टसप्तत्यादिकाश्च तासां संग्रह एकत्रमेलनम् । स्पष्टबुद्धये स्पष्टतया तद्बोधाय । निरूप्यते ॥ १५ ॥ अष्टेति । आदौ प्रथमतस्तु । दुर्गपत्तने । अष्टसप्ततिः । वाक्यामृतानि । विद्यन्ते । श्रीहरिणा स्वीयान्प्रत्युदितानीति सर्वत्राध्याहारः । ततस्तदनन्तरम् । सारङ्गपुरे । अष्टादश । वाक्यामृतानि । विद्यन्ते ॥ १६ ॥ कार्यायन इति । अथानन्तरम् । कार्यायने । ग्रामे । द्वादश । तानि वाक्यामृतानि । विद्यन्ते । ततः । लोहग्रामे । दश । अष्ट च । अष्टादशेत्यर्थः । तानि ।

विद्यन्ते । ततः । पञ्चालख्ये । ग्रामे । सप्त । तानि । विद्यन्ते ॥ १७ ॥ पुनरिति । ततः । पुनः । दुर्गपुरे । सप्त । षष्टिः । तानि । भवन्ति । ततः । वृत्तालये । विंशतिः । तानि । भवन्ति । ततः । श्रीनगरे । त्रीणि च । तानि । भवन्ति ॥ १८ ॥ एकेति । ततः । पुनः । दुर्गपुरे । एकोनचत्वारिंशत् । तानि । भवन्ति । एवममुना प्रकारेण । सर्वशः सर्वाणि । तानि वचोऽमृतानि । द्वे । शते । द्व्यधिका । षष्टिः द्विशताधिकद्विषष्टिपरिमितानित्यर्थः । (२६२) सन्ति ॥ १९ ॥ मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि च शास्त्राणि प्रथन्तेऽध्येतारश्च वक्तारो भवन्तीति वाक्यार्थं स्मृत्वा पुनर्ग्रन्थान्ते मङ्गलमाचरति । निजेति । दयानिधिः करुणासागरः । यः । श्रीसहजानन्दो भगवान् । इह सत्सङ्गे । निजवाक्यसुधाभिः । आश्रितानेकान्तिकभावेन कृतस्वसमाश्रयान् । अखिलान् । त्यागिजनान् । गेहिनो गृहस्थांश्च । असुख- यदानन्दयामास । तम् । सहजानन्दभगवन्तम् । अहम् । नमामि ॥ २० ॥ य इति । यः श्रीहरिः । परतरे सर्वपरस्मिन् । अक्षरेऽक्षरब्रह्मसंज्ञे । स्वीयधाम्नि । निज- मुक्तसेवितः सन् । विराजते । भक्तिवृषनन्दनः । सः । एषः । श्रीहरिः । मे मम । मानसे । सदा वसतु ॥ २१ ॥ हरिवाक्यसुधासिन्धोष्टीकेयं रचिता मया ।

पुनर्दुर्गपुरे सप्तषष्टिर्वृत्तालये ततः विंशतिश्च श्रीनगरे तानि त्रीणि भवन्ति च ॥ १८ ॥ एकोनचत्वारिंशच्च पुनर्दुर्गपुरे ततः । एवं हि द्वे शते षष्टिर्द्व्यधिका तानि सर्वशः ॥ १९ ॥ निजवाक्यसुधाभिराश्रितानखिलां- स्त्यागिजनांश्च गेहिनः । य इहासुखयद्दयानिधिः सहजानन्दमहं नमामि तम् ॥ २० ॥ योऽक्षरे परतरे विराजते स्वीयधाम्नि निजमुक्तसेवितः । एष भक्तिवृषनन्दनः स मे श्रीहरिर्वसतु मानसे सदा ॥ २१ ॥

इति श्रीसहजानन्दस्वामिशिष्यशतानन्दमुनिविरचितः श्रीहरिवाक्यसुधासिन्धुः सम्पूर्णः ॥

सेतुमालाभिधा सम्यक् कृपया श्रीहरेः पितुः ॥ १ ॥ भक्तिधर्मसुतस्तेन श्रीहरिः पुरुषोत्तमः । भूयादतिप्रसन्नो मे पिता कारुण्यवारिधिः ॥ २ ॥ तदाश्रिताः साधुजना भक्ताः सत्सङ्गिनोऽखिलाः । अतिप्रसन्ना भूयासुर्मयि तेन सुमेधसः ॥ ३ ॥ यथा रत्नाकरस्येह पारं यात्येव सेतुना । तथाऽनयाऽस्य ग्रन्थस्य दुर्बोधार्थस्य सर्वथा ॥ ४ ॥ सहसा पारमायाति हरेर्भक्तो यथार्थतः । ततोऽस्याः सेतुमालेति सार्थं नाम निरुच्यते ॥ ५ ॥ एतन्महाप्रयासे तु सहाये लेखने तथा शोधनेऽभवतां द्वौ मे विद्वांसौ स्वाश्रिताविमौ ॥ ६ ॥ शुकानन्दमुनिर्विप्रो भोलानाथाभिधस्तथा । हरेरनन्यभक्तौ द्वौ तत्प्रसन्नत्वकामुकौ ॥ ७ ॥ हरिवाक्यसुधासिन्धुः सर्वग्रन्थशिरोमणिः विराजतेऽयं सकलसच्छास्त्रोपरि सर्वथा ॥ ८ ॥ सच्छास्त्राणां यथा वेदः प्रमाणमधिकं तथा । ग्रन्थोऽयं सर्वथैवास्ति हरेरास्योद्भवत्वतः ॥ ९ ॥ कथ्यते श्लोकसंख्यास्य यथाग्रथितवृत्ततः । अनुष्टुप्संख्यया चेति द्विधा सम्यक् पृथक् पृथक् ॥ १० ॥ तत्रादौ दुर्गनगरतरङ्गाणां भवन्ति हि । सहस्रे द्वे अशीतिश्च श्लोकाः पञ्च तथो- त्तमाः ॥ ११ ॥ ततः सारङ्गनगरतरङ्गाणां शतानि षट् । श्लोकाः सन्त्येकपञ्चाशन्मनोज्ञा हरिसेविनाम् ॥ १२ ॥ कार्यायनतरङ्गाणां श्लोकास्त्रीणि शतानि च तथैव

पञ्चपञ्चाशत्सन्ति श्रोतृमनोरमाः ॥ १३ लौहग्रामतरङ्गाणां श्लोका अष्टशतानि च । अष्टत्रिंशत्तथा श्रोतृभक्तमनःप्रियाः ॥ १४ ॥ पञ्चालस्य तरङ्गाणां श्लोका अष्टशतानि च । रमणीया भवन्त्येव तथा सप्तदशात्र तु ॥ १४ पुनर्दुर्गपुरस्यात्र तरङ्गाणां सहस्रकम् । एकं शतान्यष्ट सन्ति श्लोकास्त्रिंशच्च पञ्च च ॥ १६ ॥ वृतालयतरङ्गाणां श्लोकाः पञ्चशतानि च । विंशतिद्वौं तथा सन्ति हरिभक्तमनःप्रियाः ॥ १७ ॥ तथा श्रीनगरस्य तरङ्गाणां भवन्ति च । भक्ताह्लादकराः श्लोका अशीतिः सप्त वै तथा ॥ १८ ॥ पुनश्च दुर्गनगरतरङ्गाणां सहस्रकम् । एकं शतानि त्रीण्येव त्रयः श्लोकाः भवन्ति च ॥ १९ ॥ समग्रसंख्यया श्लोका यथाग्रथितवृत्ततः । सप्तोनाष्टसहस्राणि सन्ति भक्त-प्रियाः सदा ॥ २० ॥ वाक्यानि श्रीहरिरुवाचेत्यत्र सप्ततिस्तथा । द्वे च सन्त्यानन्ददानि दृष्टैव हरिसेविनाम् ॥ २१ ॥ अनुष्टुप्संख्यया श्लोकाः सहस्राण्यष्ट सन्ति च । एकं शतं तथा सार्द्धत्रिंशद्रम्या अमुष्य हि ॥ २२ ॥ हेतुः सर्वावताराणामवतारी स्वयं प्रभुः । पिता श्रीसहजानन्दः सर्वोपरि विराजते ॥ २३ ॥ यं साम्येन वदन्ति येऽक्षरपरं सर्वावतारैर्जना मन्दास्ते त्ववतारिणोऽस्य न परं जानन्ति तत्त्वं प्रभोः । यस्याज्ञां निवहन्ति मङ्गलकरां सर्वेऽक्षराद्याः सदा वन्दे तं पुरुषोत्तमं च सहजानन्दं सदानन्दम् ॥ २४ ॥ यः स्वीये परमेऽक्षरे परतरे धाम्नि प्रभूराजते मुक्तैरक्षररूपिभिश्च बहुधा संसेवितोऽभिष्टुतः । रूपैश्वर्यगुणादिभिः सुखकरैरुत्कृष्ट एवाक्षरात्सर्वेभ्यश्च तमानमामि पितरं श्रीभक्तिधर्मात्मजम् ॥ २५ ॥ इति श्रीमदेकान्तिकधर्मप्रवर्त्तक श्रीहर्येकान्तिकोपासक श्रीहरिकृष्णभगवत्सूनुरघुवीराचार्यविरचिता सेतुमालाख्या श्रीहरिवाक्यसुधासिन्धुटीका सम्पूर्णा ॥

## श्रीहरिवाक्यसुधासिन्धुः सम्पूर्णः

॥ श्री स्वामिनारायणो विजयतेतराम् ॥

संवत् २०५१ | तारीख १५-२-१९९४








श्री शतानन्द मुनि विरचितः

# श्रीहरिवाक्यसुधासिन्धुः उत्तरार्द्धः समाप्तः

संशोधक : पुराणी स्वामी पतितपावनदासजी

मुद्रक : श्री नरनारायणदेव प्रिन्टींग प्रेस
श्री स्वामिनारायण मंदिर, स्वामिनारायण रोड, भुज-कच्छ.

महा सुद ५ | मंगळवार

अ. नि. स. गु. स्वामी हरिकृष्णदासजीना स्मरणार्थे गाम माधापुरना मावजी शीवजी भुडीया तथा तेमना सर्वे कुटुम्बीजनोए आ ग्रन्थ छपाववामां संपूर्णपणे मदद करेल छे. ते श्रीजी महाराज तेओने उत्तरोत्तर चडती राखी धर्मपरायणमां [illegible] वृत्ति राखे. अ. नि. भुडीया करसनभाई कल्याणनी शुभ प्रेरणाथी.